श्रीगणेशायनमः ॥ ॥ यंप्रव्रजंतमनुपेतमपेतकृत्यंद्वैपायनोविरहकातरआजुहाव ॥ पुत्रेतितन्मयतयात
रवोऽभिनेदुस्तंसर्वभूतहृदयंमुनिमानतोऽस्मि ॥ १ ॥ नैमिषेसूतमासीनमभिवाद्यमहामतिं ॥ कथामृतरसा
स्वादकुशलःशौनकोऽब्रवीत् ॥ २ ॥ शौनकउवाच अज्ञानध्वांतविध्वंसकोटिसूर्यसमप्रभ ॥ सूताख्या
हिकथासारंममकर्णरसायनं ॥ ३ ॥ भक्तिज्ञानविरागाप्तविवेकोवर्द्धतेकथं ॥ मायामोहनिरासश्चवैष्णवैः
क्रियतेकथं ॥ ४ ॥ इहघोरेकलौप्राप्तेजीवश्चासुरतांगतः ॥ क्लेशाक्रांतस्यतस्यैवशोधनेकिंपरायणं ॥ ५ ॥
श्रेयसांयद्भवेच्छ्रेयःपावनानांचपावनं ॥ कृष्णप्राप्तिकरंशश्वत्साधनंतद्वदाधुना ॥ ६ ॥ चिंतामणिर्लोकसुखं
सुरेंद्रःस्वर्गसंपदं ॥ प्रयच्छतिगुरुःप्रीतोवैकुंठंयोगिदुर्लभं ॥ ७ ॥ सूतउवाच प्रीतिःशौनकचित्तेते
यतोवच्मिविचार्यच ॥ सर्वसिद्धांतनिष्पन्नंसंसारभयनाशनं ॥ ८ ॥ भक्त्योघवर्द्धनंयच्चकृष्णसंतोषहेतुकं ॥
तदहंतेऽभिधास्यामिसावधानतयाशृणु ॥ ९ ॥ कालव्यालमुखग्रासत्रासनिर्नाशहेतवे ॥ श्रीमद्भागवतंशा
स्त्रंकलौकीरेणभाषितं ॥ १० ॥ एतस्मादपरंकिंचिन्मनःशुद्ध्यैनविद्यते ॥ जन्मांतरेभवेत्पुण्यंतदाभागवतंल
भेत् ॥ ११ ॥ परीक्षितेकथावक्तुंसभायांसंस्थितेशुके ॥ सुधाकुंभंगृहीत्वैवदेवास्तत्रसमागमन् ॥ १२ ॥ शुकं
नत्वावदन्सर्वेस्वकार्यकुशलाःसुराः ॥ कथासुधांप्रयच्छस्वगृहीत्वैवसुधामिमां ॥ १३ ॥ एवंविनिमयेजातेसु
धाराज्ञाप्रपीयतां ॥ प्रपास्यामोवयंसर्वेश्रीमद्भागवतामृतं ॥ १४ ॥ क्वसुधाक्वकथालोकेक्वकाचःक्वमणिर्महा
न् ॥ ब्रह्मरातोविचार्येतितदादेवाञ्जहासह ॥ १५ ॥ अभक्तांस्तांश्चविज्ञायनददौसकथामृतं ॥ श्रीमद्भागवती
वार्तासुराणामपिदुर्लभा ॥ १६ ॥ राज्ञोमोक्षंतथावीक्ष्यपुराधाताऽपिविस्मितः ॥ सत्यलोकेतुलांबद्ध्वाऽतोलय
त्साधनान्यजः ॥ १७ ॥ लघून्यन्यानिजातानिगौरवेणइदंमहत् ॥ तदाऋषिगणाःसर्वेविस्मयंपरमंययुः ॥ १८ ॥
मेनिरेभगवद्रूपंशास्त्रंभागवतंक्षितौ ॥ पठनाच्छ्रवणात्सद्योवैकुंठफलदायकं ॥ १९ ॥ सप्ताहश्रवणेनैवसर्व

थामुक्तिदायकं ॥ सनकाद्यैःपुराप्रोक्तंनारदायदयापरैः ॥ २० ॥ यद्यपिब्रह्मसंबंधाच्छ्रुतमेतत्सुरर्षिणा ॥ सप्ता
हश्रवणविधिःकुमारैस्तस्यभाषितः ॥ २१ ॥ शौनकउवाच लोकविग्रहयुक्तस्यनारदस्यास्थिरस्यच ॥
विधिश्रवेकुतःप्रीतिःसंयोगःकुत्रतैःसह ॥ २२ ॥ सूतउवाच अत्रतेकीर्तयिष्यामिभक्तिपुष्टंकथानकं
शुकेनममयत्प्रोक्तंरहःशिष्यंविचार्यच ॥ २३ ॥ एकदातुविशालायांचत्वारऋषयोऽमलाः ॥ सत्संगार्थंसमा
याताददृशुस्तत्रनारदं ॥ २४ ॥ कुमाराऊचुः कथंब्रह्मन्दीनमुखःकुतश्चिंतापरोभवान् ॥ त्वरितंगम्यते
कुत्रकुतश्चागमनंतव ॥ २५ ॥ इदानींशून्यचित्तोऽसिगतवित्तोयथाजनः ॥ तवेदंमुक्तसंगस्यनोचितंवदका
रणं ॥ २६ ॥ नारदउवाच अहंतुपृथिवींयातोज्ञात्वासर्वोत्तमामिति ॥ पुष्करंचप्रयागंचकाशींगोदवरींतथा
॥ २७ ॥ हरिक्षेत्रंकुरुक्षेत्रंश्रीरंगंसेतुबंधनं ॥ एवमादिषुतीर्थेषुभ्रममाणइतस्ततः ॥ २८ ॥ नापश्यंकुत्रचिच्छ
र्ममनःसंतोषकारकं ॥ कलिनाऽधर्ममित्रेणधरेयंबाधिताऽधुना ॥ २९ ॥ सत्यंनास्तितपःशौचंदयादानंनवि
द्यते॥उदरंभरिणोजीवावराकाःकूटभाषिणः॥ ३० ॥मंदाःसुमंदमतयोमंदभाग्याह्युपद्रुताः ॥ पाखंडनिरताः
संतोविरक्ताःसपरिग्रहाः ॥ ३१ ॥ तरुणीप्रभुतागेहेशालकोबुद्धिदायकः ॥ कन्यायाविक्रयोलोभाद्दंपतीनांच
कल्कनं ॥३२॥ आश्रमायवनैरुद्धास्तीर्थानिसरितस्तथा ॥ देवतायतनान्यत्रदुष्टैर्नष्टानिभूरिशः ॥३३॥ नयो
गीनौवसिद्धोवानज्ञानीसत्क्रियोनरः ॥ कलिदावानलेनाद्यसाधनंभस्मतांगतं ॥३४॥ अट्टशूलाजनपदाःशि
वशूलाद्विजातयः ॥ कामिन्यःकेशशूलिन्यःसंभवंतिकलाविह ॥ ३५ ॥ एवंपश्यन्कलेर्दोषान्पर्यटन्नवनीमहं ॥
यामुनंतटमापन्नोयत्रलीलाहरेरभूत् ॥ ३६ ॥ तत्राश्चर्यंमयादृष्टंश्रूयतांतन्मुनीश्वराः ॥ एकातुतरुणीतत्रनि
षण्णाखिन्नमानसा ॥ ३७ ॥ द्वौवृद्धौपतितौपार्श्वेनिःश्वसंतावचेतनौ ॥ शुश्रूषंतीप्रबोधंतीरुदंतीचतयोःपुरः

पंचत्रिंशच्छ्लोकलापनश्लोकः अट्टमन्नंशिवोवेदःशूलोविक्रयउच्यते केशोभगमितिप्रोक्तमृषिभिस्तत्वदर्शिभिः ॥ १ ॥

॥ ३८ ॥ दशदिक्षुनिरीक्षंतीरक्षितारंनिजंवपुः ॥ वीज्यमानाशतस्त्रीभिर्बोध्यमानामुहुर्मुहुः ॥३९॥ दृष्ट्वादूराद्ग
तःसोऽहंकौतुकेनतदंतिकं ॥ मांदृष्ट्वाचोत्थिताबालाविह्वलाचाब्रवीद्वचः ॥४०॥ बालोवाच भोभोसाधोक्षणं
तिष्ठमच्चिंतामपिनाशय ॥ दर्शनंतवलोकस्यसर्वथाघहरंपरं ॥ ४१ ॥ बहुधातववाक्येनदुःखशांतिर्भविष्यति
यदाभाग्यंभवेद्भूरिभवतोदर्शनंतदा ॥ ४२ ॥ नारदउवाच कासित्वंकाविमौचेमानार्यःकाःपद्मलोचनाः ॥
वददेविसविस्तारंस्वस्यदुःखस्यकारणं ॥४३॥ बालोवाच अहंभक्तिरितिख्याताइमौमेतनयौमतौ ॥ ज्ञान
वैराग्यनामानौकालयोगेनजर्जरौ ॥४४ ॥ गंगाद्याःसरितश्चेमामत्सेवार्थंसमागताः ॥ तथापिनचमेश्रेयःसे
वितायाःसुरैरपि ॥ ४५ ॥ इदानींशृणुमद्वार्त्तांसचिंतस्त्वंतपोधन ॥ वार्त्तामेवितताप्यस्तितांश्रुत्वासुखमावह
॥४६॥ उत्पन्नाद्रविडेसाऽहंवृद्धिंकर्नाटकेगता ॥ क्वचित्क्वचिन्महाराष्ट्रेगुर्जरेजीर्णतांगता ॥ ४७ ॥ तत्रघोरक
लेर्योगात्पाखंडैःखंडितांगका ॥ दुर्बलाहंचिरंजातापुत्राभ्यांसहमंदतां ॥ ४८॥ वृंदावनंपुनःप्राप्यनवीनेव
सुरूपिणी ॥ जाताहंयुवतीसम्यक्प्रेष्ठरूपातुसांप्रतं ॥४९॥ इमौतुशयितावत्रसुतौमेक्लिश्यतःश्रमात् ॥ इदं
स्थानंपरित्यज्यविदेशंगम्यतेमया ॥५०॥ जरठत्वंसमायातौतेनदुःखेनदुःखिता ॥ साहंतुतरुणीकस्मात्सु
तौवृद्धाविमौकुतः ॥ ५१ ॥ त्रयाणांसहचारित्वाद्वैपरीत्यंकुतःस्थितं ॥ घटतेजरठामातातरुणौतनयाविति
॥ ५२ ॥ अतःशोचामिचात्मानंविस्मयाविष्टमानसा ॥ वदयोगनिधेधीमन्कारणंचात्रकिंभवेत् ॥ ५३ ॥ ना
रदउवाच ज्ञानेनात्मनिपश्यामिसर्वमेतत्तवानघे ॥ नविषादस्त्वयाकार्योहरिःशंतेकरिष्यति ॥५४॥ सूतउ०
क्षणमात्रेणतज्ज्ञात्वावाक्यमूचेमुनीश्वरः ॥ नारदउवाच शृणुष्वावहिताबालेयुगोऽयंदारुणःकलिः ॥ ५५ ॥
तेनलुप्तःसदाचारोयोगमार्गस्तपांसिच ॥ जनाअघासुरायंतेशाठ्यदुष्कर्मकारिणः ॥५६॥ इहसंतोविषीदं
तिप्रहृष्यंतिह्यसाधवः ॥ धत्तेधैर्यंतुयोधीमान्सधीरःपंडितोऽथवा ॥५७॥ अस्पृश्यानवलोक्येयंशेषभारकरीध

रा॥ वर्षेवर्षेक्रमाज्ज्ञातामंगलंनापिदृश्यते॥५८॥नत्वामपिसुतैःसाकंकोपिपश्यतिसांप्रतं॥ उपेक्षिताऽनुरागां
धैर्जर्जत्वेनसंस्थिता ॥ ५९ ॥ वृंदावनस्यसंयोगात्पुनस्त्वंतरुणीनवा ॥ धन्यंवृंदावनंतेनभक्तिर्नृत्यतियत्रच ॥
॥६०॥ अत्रेमौग्राहकाभावान्नजरामपिमुंचतः ॥ किंचिदात्मसुखेनेहप्रसुप्तिर्मन्यतेऽनयोः ॥६१॥ श्रीभक्तिरु
वाच कथंपरीक्षिताराज्ञास्थापितोह्यशुचिःकलिः॥ प्रवृत्तेतुकलौसर्वसारःकुत्रगतोमहान्॥ ६२ ॥ करुणाप
रेणहरिणाप्यधर्मःकथमीक्ष्यते ॥ इमंमेसंशयंछिंधित्वद्वाचासुखितास्म्यहं॥ ६३ ॥ नारदउवाच यदिपृष्टस्त्व
याबालेप्रेमतःश्रवणंकुरु ॥ सर्वंवक्ष्यामितेभद्रेकश्मलंतेगमिष्यति ॥ ६४॥ यदामुकुंदोभगवान्क्ष्मांत्यक्त्वास्व
पदंगतः॥तद्दिनात्कलिरायातःसर्वसाधनबाधकः ॥६५॥ दृष्टोदिग्विजयेराज्ञादीनवच्छरणंगतः॥नमयामार
णीयोऽयंसारंगइवसारभुक् ॥ ६६ ॥ यत्फलंनास्तितपसानयोगेनसमाधिना ॥ तत्फलंलभतेसम्यक्कलौकेश
वकीर्तनात्॥ ६७ ॥ एकाकारंकलिंदृष्ट्वासारवत्सारनीरसं ॥ विष्णुरातःस्थापितवान्कलिजानांसुखायच
॥ ६८॥ कुकर्माचरणात्सारःसर्वतोनिर्गतोऽधुना ॥ पदार्थाःसंस्थिताभूमौबीजहीनास्तुषायथा ॥६९॥ विप्रै
र्भागवतीवार्त्तागेहेगेहेजनेजने ॥ कारिताकणलोभेनकथासारस्ततोगतः ॥ ७० ॥ अत्युग्रभूरिकर्माणोना
स्तिकारौरवाजनाः ॥ तेपितिष्ठंतितीर्थेषुतीर्थसारस्ततोगतः ॥७१ ॥ कामक्रोधमहालोभतृष्णाव्याकुलचेत
सः॥ तेऽपितिष्ठंतितपसितपःसारस्ततोगतः॥७२॥मनसश्चाजयाल्लोभाद्दंभात्पाखंडसंश्रयात्॥ शास्त्रानभ्य
सनाच्चैवध्यानयोगफलंगतं॥ ७३ ॥ पंडितास्तुकलत्रेणरमंतेमहिषाइव ॥ पुत्रस्योत्पादनेदक्षाअदक्षामुक्ति
साधने ॥७४॥ नहिवैष्णवताकुत्रसंप्रदायपुरःसरा ॥ एवंप्रलयतांप्राप्तोवस्तुसारःस्थलेस्थले॥ ७५॥अयंतु
युगधर्मोहिवर्त्ततेकस्यदूषणं ॥ अतस्तुपुंडरीकाक्षःसहतेनिकटेस्थितः ॥ ७६ ॥ सूतउवाच इति तेतद्वचनंश्रु
त्वाविस्मयंपरमंगता ॥ भक्तिरूचेवचोभूयःश्रूयतांतच्चशौनक ॥ ७७ ॥ श्रीभक्तिरुवाच सुरर्षेत्वंचध

न्योऽसिमद्भाग्येनसमागतः ॥ साधूनांदर्शनंलोकेसर्वसिद्धिकरंपरं ॥ ७८॥ जयतिजयतिमायायस्यकायाधवस्तेवचनरचनमेकंकेवलंचाकलय्य ॥ ध्रुवपदमपियातोयत्कृपातोध्रुवोऽयंसकलकुशलपात्रंब्रह्मपुत्रंनताऽस्मि ॥ ७९ ॥ इतिश्रीपद्मपुणेउत्तरखंडेश्रीभागवतमाहात्म्येभक्तिनारदसमागमोनामप्रथमोऽध्यायः ॥ १ ॥ नारदउवाच वृथाखेदायसेबालेअहोचिंतातुराकथं ॥ श्रीकृष्णचरणांभोजंस्मरदुःखंगमिष्यति ॥ १ ॥ द्रौपदीचपरित्रातायेनकौरवकश्मलात् ॥ पालितागोपसुंदर्यःसकृष्णःक्वापिनोगतः ॥ २ ॥ त्वंतुभक्तेप्रियातस्यसततंप्राणतोऽधिका ॥ त्वयाहूतस्तुभगवान्यातिनीचगृहेष्वपि ॥ ३ ॥ सत्यादित्रियुगेबोधवैराग्यौमुक्तिसाधकौ ॥ कलौतुकेवलंभक्तिर्ब्रह्मसायुज्यकारिणी ॥ ४ ॥ इतिनिश्चित्यचिद्रूपःसरूपांत्वांससर्जह ॥ परमानंदचिन्मूर्तिःसुंदरींकृष्णवल्लभां ॥ ५ ॥ बध्वांजलिंत्वयापृष्टंकिंकरोमीतिचैकदा ॥ त्वांतदाज्ञापयत्कृष्णोमद्भक्तान्पोषयेतिच ॥ ६ ॥ अंगीकृतंत्वयातद्वैप्रसन्नोऽभूद्धरिस्तदा ॥ मुक्तिंदासींददौतुभ्यंज्ञानवैराग्यकाविमौ ॥ ७ ॥ पोषणंस्वेनरूपेणवैकुंठेत्वंकरोषिच ॥ भूमौभक्तिविपोषायछायारूपंत्वयाकृतं ॥ ८ ॥ मुक्तिंज्ञानंविरक्तिंचसहकृत्वागताभुवि ॥ कृतादिद्वापरस्यांतंमहानंदेनसंस्थिता ॥ ९ ॥ कलौमुक्तिःक्षयंप्राप्तापाखंडामयपीडिता ॥ त्वदाज्ञयागताशीघ्रंवैकुंठंपुनरेवसा ॥ १० ॥ स्मृतात्वयापिचात्रैवमुक्तिरायातियातिच ॥ पुत्रीकृत्यत्वयेमौचपार्श्वेस्वस्यैवरक्षितौ ॥ ११ ॥ उपेक्षातःकलौमंदौवृद्धौजातौसुतौतव ॥ तथापिचिंतांमुंचत्वमुपायंचिंतयाम्यहं ॥ ॥ १२ ॥ कलिनासदृशःकोपियुगोनास्तिवरानने ॥ तस्मिंस्त्वांस्थापयिष्यामिगेहेगेहेजनेजने ॥ १३ ॥ अन्यधर्मांतिरस्कृत्यपुरस्कृत्यमहोत्सवान् ॥ तदानाहंहरेर्दासोलोकेत्वांनप्रवर्त्तये ॥ १४ ॥ तदन्विताश्चयेजीवाभविष्यंतिकलाविह ॥ पापिनोऽपिगमिष्यंतिनिर्भयाःकृष्णमंदिरं ॥ १५ ॥ येषांचित्तेवसेद्भक्तिःसर्वदाप्रेमरूपिणी ॥ नतेपश्यंतिकीनाशंस्वप्नेप्यमलमूर्त्तयः ॥ १६ ॥ नप्रेतोनपिशाचोवाराक्षसोवासुरोपिवा ॥ भक्तियु

क्तमनस्कानांस्पर्शनेनप्रभुर्भवेत् ॥१७॥नतपोभिर्नवेदैश्चनज्ञानेनापिकर्मणा ॥ हरिर्हिसाध्यतेभक्त्याप्रमा
णंतत्रगोपिकाः ॥ १८॥ नृणांजन्मसहस्रेणभक्तौप्रीतिर्हिजायते ॥ कलौभक्तिःकलौभक्तिभक्त्याकृष्णःपुरः
स्थितः ॥१९॥ भक्तिद्रोहकरायेचतेसीदंतिजगत्रये ॥ दुर्वासादुःखमापन्नःपुराभक्तविनिंदकः॥२०॥ अलंव्र
तैरलंतीर्थैरलंयोगैरलंमखैः ॥ अलंज्ञानकथालापैर्भक्तिरेकैवमुक्तिदा ॥२१॥ सूतउवाच इतिनारदनिर्णी
तंस्वमाहात्म्यंनिशम्यसा ॥ सर्वांगपुष्टिसंयुक्तानारदंवाक्यमब्रवीत् ॥२२॥ श्रीभक्तिरुवाच अहोनारदध
न्योऽसिप्रीतिस्तेमयिनिश्चला॥ नकदाचिद्विमुंचामिचित्तेस्थास्यामिसर्वदा ॥२३॥ कृपालुनात्वयासाधोमद्बा
धाध्वंसिताक्षणात् ॥ पुत्रयोश्चेतनानास्तितत्तोबोधयबोधय ॥२४॥ सूतउवाच तस्यावचःसमाकर्ण्यकारु
ण्यंनारदोगतः ॥ तयोर्बोधनमारेभेकराग्रेणविमर्द्दयन् ॥२५॥ मुखंसंयोज्यकर्णांतेशब्दमुच्चैःसमुच्चरन्॥ ज्ञा
नप्रबुध्यतांशीघ्रंरेवैराग्यप्रबुध्यतां ॥ २६ ॥ वेदवेदांतघोषैश्चगीतापाठैर्मुहुर्मुहुः ॥ बोध्यमानौतदातेनकथं
चिच्चोत्थितौबलात् ॥२७॥ नेत्रैरनवलोकंतौजृंभंतौसालसावुभौ ॥ बकवत्पतितौप्रायःशुष्ककाष्ठसमांगकौ
॥२८॥ क्षुत्क्षामौतौनिरीक्ष्यैवपुनःस्वापपरायणौ॥ऋषिश्चिंतापरोजातःकिंविधेयंमयेतिच॥२९॥अहोनिद्रा
कथंयातिवृद्धत्वंचमहत्तरं ॥ चिंतयन्नितिगोविंदंस्मारयामासभार्गव ॥३०॥ व्योमवाणीतदैवाभून्माऋषेखि
द्यतामिति ॥ उद्यमःसफलस्तेतुभविष्यतिनसंशयः ॥३१॥एतदर्थंतुसत्कर्मसुरर्षेत्वंसमाचर॥ तत्तेकर्माभिधा
स्यंतिसाधवःसाधुभूषणाः ॥ ३२॥ सत्कर्मणिकृतेतस्मिन्सानिद्रावृद्धताऽनयोः ॥ गमिष्यतिक्षणाद्भक्तिःसर्व
तःप्रसरिष्यति ॥३३॥ इत्याकाशवचःस्पष्टंतत्सर्वैरपिविश्रुतं॥नारदोविस्मयंलेभेनेदंज्ञातमितिब्रुवन्॥३४॥
नारदउवाच अनयाऽकाशवाण्याऽपिगोप्यत्वेननिरूपितं ॥ किंवातत्साधनंकार्यंयेनकार्यंभवेत्तयोः ॥ ३५॥
क्वभविष्यंतिसंतस्तेकथंदास्यंतिसाधनं ॥ मयात्रकिंप्रकर्तव्यंयदुक्तंव्योमभाषया ॥३६॥ सूतउवाच तत्रता

वपिसंस्थाप्यनिर्गतोनारदोमुनिः॥तीर्थंतीर्थंविनिष्क्रम्यपृच्छन्मार्गेमुनीश्वरान्॥३७॥वृत्तांतःश्रूयतेसर्वैःकिं
चिन्निश्चित्यनोच्यते ॥ असाध्यंकेचनप्रोचुर्दुर्ज्ञेयमितिचापरे ॥३८॥ मूकीभूतास्तथाऽन्येतुकियंतस्तुपलायि
ताः॥हाहाकारोमहानासीत्त्रैलोक्येविस्मयावहः ॥३९॥ वेदवेदांतघोषैश्चगीतापाठैर्विबोधितं॥भक्तिज्ञानवि
रागानांनोदतिष्ठत्त्रिकंयदा॥४०॥उपायोनापरोऽस्तीतिकर्णेकर्णेऽजपन्जनाः॥योगिनानारदेनापिस्वयंनज्ञा
यतेतुयत्॥४१॥ तत्कथंशक्यतेवक्तुमितरैरिहमानुषैः॥एवंऋषिगणैःपृष्टैर्निर्णीयोक्तंदुरासदं॥४२॥ ततश्चिं
तातुरःसोऽथबदरीवनमागतः॥ तपश्चरामिचात्रेतितदर्थंकृतनिश्चयः ॥४३॥ तावद्ददर्शपुरतःसनकादीन्मुनी
श्वरान् ॥ कोटिसूर्यसमाभासानुवाचमुनिसत्तमः ॥४४॥ नारदउवाच इदानींभूरिभाग्येनभवद्भिःसंगमः
स्थितः॥ कुमारावदतांशीघ्रंकृपांकृत्वाममोपरि ॥४५॥ भवंतोयोगिनःसर्वेबुद्धिमंतोबहुश्रुताः ॥ पंचहायनसं
युक्ताःपूर्वेषामपिपूर्वजाः ॥४६॥ सदावैकुंठनिलयाहरिकीर्तनतत्पराः॥ लीलामृतरसोन्मत्ताःकथामात्रैकजी
विनः॥४७॥हरिःशरणमेवंहिनित्यंयेषांमुखेवचः॥अतःकालसमादिष्टाजरायुष्मान्नबाधते ॥४८॥ येषांभ्रूभं
गमात्रेणद्वारपालौहरेःपुरा॥भूमौनिपतितौसद्योयत्कृपातःपरंगतौ॥४९॥अहोभाग्यस्ययोगेनदर्शनंभवता
मिह॥अनुग्रहस्तुकर्त्तव्योमयिदीनेदयापरैः ॥५०॥ अशरीरगिरोक्तंयत्तत्किंसाधनमुच्यतां॥अनुष्ठेयंकथंताव
त्प्रब्रुवंतुसविस्तरं ॥५१॥ भक्तिज्ञानविरागाणांसुखमुत्पद्यतेकथं॥स्थापनंसर्ववर्णेषुप्रेमपूर्वंप्रयत्नतः ॥५२॥
कुमाराऊचुः माचिंतांकुरुदेवर्षेहर्षंचित्तेसमावह ॥ उपायःसुखसाध्योऽत्रवर्त्ततेपूर्वएवहि ॥ ५३ ॥ अहो
नारदधन्योऽसिविरक्तानांशिरोमणिः॥सदाश्रीकृष्णदासानामग्रणीर्योगभास्करः ॥५४॥ त्वयिचित्रंनमंत
व्यंभक्त्यर्थमनुवर्त्तिनि॥ घटतेकृष्णदासस्यभक्तेःस्थापनतासदा॥५५॥ ऋषिभिर्बहवोलोकेपंथानःप्रकटी
कृताः॥श्रमसाध्याश्चतेसर्वेप्रायःस्वर्गफलप्रदाः ॥५६॥ वैकुंठसाधकःपंथाःसतुगोप्योहिवर्त्तते॥तस्योपदेष्टा

पुरुषःप्रायोभाग्येनलभ्यते ॥ ५७ ॥ सत्कर्मतवनिर्दिष्टंव्योमवाचातुयत्पुरा॥तदुच्यतेशृणुष्वाद्यस्थिरचित्तः
प्रसन्नधीः ॥५८॥ द्रव्ययज्ञास्तपोयज्ञायोगयज्ञास्तथापरे ॥ स्वाध्यायज्ञानयज्ञाश्चतेतुकर्मविसूचकाः ॥५९॥
सत्कर्मसूचकोनूनंज्ञानयज्ञःस्मृतोबुधैः ॥ श्रीमद्भागवतालापःसतुगीतःशुकादिभिः ॥ ६० ॥ भक्तिज्ञानविरा
गाणांतद्घोषेणबलंमहत्॥व्रजिष्यतिद्वयोःकष्टंसुखंभक्तेर्भविष्यति॥ ६१ ॥ प्रलयंहिगमिष्यंतिश्रीमद्भागवत
ध्वनेः॥कलिदोषाइमेसर्वेसिंहशब्दाद्वृकाइव ॥६२॥ ज्ञानवैराग्यसंयुक्ताभक्तिःप्रेमरसावहा॥प्रतिगेहंप्रतिज
नंततःक्रीडांकरिष्यति ॥६३॥ नारदउवाच वेदवेदांतघोषैश्चगीतापाठैःप्रबोधितं ॥ भक्तिज्ञानविरागाणां
नोदतिष्ठत्रिकंयदा ॥ ६४ ॥ श्रीमद्भागवतालापात्तत्कथंबोधमेष्यति ॥ तत्कथासुतुवेदार्थःश्लोकेश्लोकेपदेपदे
॥६५॥छिंदंतुसंशयंह्येनंभवंतोमोघदर्शनाः ॥ विलंबोनात्रकर्तव्यःशरणागतवत्सलाः ॥ ६६ ॥ कुमाराऊचुः
वेदोपनिषदांसाराज्जाताभागवतीकथा ॥ अत्युत्तमाततोभातिपृथग्भूताफलोन्नतिः ॥ ६७ ॥ आमूलाग्रंरस
स्तिष्ठन्नास्तेनस्वादतेयथा॥संभूयसपृथग्भूतःफलेविश्वमनोहरः ॥ ६८॥ यथादुग्धेस्थितंसर्पिर्नस्वादायोप
कल्पते ॥ पृथग्भूतंहितद्दिव्यंदेवानांरसवर्द्धनं ॥ ६९ ॥ इक्षूणामपिमध्यांतंशर्कराव्याप्यतिष्ठति ॥ पृथग्भूता
चसामिष्टातथाभागवतीकथा ॥ ७० ॥ इदंभागवतंनामपुराणंब्रह्मसंमितं ॥ भक्तिज्ञानविरागाणांस्थापना
यप्रकाशितं॥ ७१ ॥ वेदांतवेदसुस्नातेगीतायाअपिकर्तरि॥परितापवतिव्यासेमुह्यत्यज्ञानसागरे ॥ ७२ ॥
तदात्वयापुराप्रोक्तंचतुःश्लोकसमन्वितं ॥ तदीयश्रवणात्सद्योनिर्बाधोबादरायणः ॥ ७३ ॥ तत्रतेविस्मयः
केनयतःप्रश्नकरोभवान् ॥ श्रीमद्भागवतश्रावेशोकदुःखविनाशनं ॥ ७४ ॥ नारदउवाच यद्दर्शनंचविनि
हंत्यशुभानिसद्यःश्रेयस्तनोतिभवदुःखदवार्दितानां ॥ निःशेषशेषमुखगीतकथैकपानःप्रेमप्रकाशकृतयेश
रणंगतोऽस्मि ॥७५॥ भाग्योदयेनबहुजन्मसमार्जितेनसत्संगमंचलभतेपुरुषोयदावै॥अज्ञानहेतुकृतमोह

मदांधकारनाशंविधायहितदोदयतेविवेकः ॥ ७६ ॥ इतिश्रीपद्मपुराणेउत्तरखंडेश्रीभागवतमाहात्म्येकुमा
रनारदसंवादोनामद्वितीयोऽध्यायः ॥ २ ॥ नारदउवाच ज्ञानयज्ञंकरिष्यामिशुकशास्त्रकथोज्वलं ॥
भक्तिज्ञानविरागाणांस्थापनार्थंप्रयत्नतः ॥ १ ॥ यत्रकार्योमयायज्ञःस्थलंतद्वाच्यतामिह ॥ महिमाशुकशा
स्त्रस्यवक्तव्योवेदपारगैः ॥ २ ॥ कियद्भिर्दिवसैःश्राव्याश्रीमद्भागवतीकथा ॥ कोविधिस्तत्रकर्त्तव्योममेदंवद
तामितः ॥ ३ ॥ कुमाराऊचुः शृणुनारदवक्ष्यामोविनम्रायविवेकिने ॥ गंगाद्वारसमीपेतुतटमानंदनामकं
॥४॥ नानाऋषिगणैर्जुष्टंदेवसिद्धनिषेवितं ॥ नानातरुलताकीर्णनवकोमलवालुकं ॥५॥ रम्यमेकांतदेशस्थंहै
मपद्मसुशोभितं ॥ यत्समीपस्थजीवानांवैरंचेतसिनस्थितं ॥ ६ ॥ ज्ञानयज्ञस्त्वयातत्रकर्त्तव्योह्यप्रयत्नतः ॥
अपूर्वारसरूपाचकथातत्रभविष्यति ॥ ७ ॥ पुरस्थंनिर्बलंचैवजराजीर्णकलेवरं ॥ तद्द्वयंचपुरस्कृत्यभक्तिस्तत्र
गमिष्यति ॥८॥ यत्रभागवतीवार्त्तातत्रभक्त्यादिकंव्रजेत् ॥ कथाशब्दंसमाकर्ण्यतत्त्रिकंतरुणायते ॥ ९ ॥ सूत
उवाच एवमुक्त्वाकुमारास्तेनारदेनसमंततः ॥ गंगातटंसमाजग्मुःकथापानायसत्वराः ॥१०॥ यदायातास्तटं
तेतुतदाकोलाहलोप्यभूत् ॥ भूर्लोकेदेवलोकेचब्रह्मलोकेतथैवच ॥११॥ श्रीभागवतपीयूषपानायरसलंपटाः
धावंतोप्याययुःसर्वेप्रथमंयेचवैष्णवाः ॥१२ ॥ भृगुर्वसिष्ठःश्च्यवनश्चगौतमोमेधातिथिर्देवलदेवरातौ ॥ राम
स्तथागाधिसुतश्चशाकलोमृकंडपुत्रोऽत्रिजपिप्पलादाः ॥१३॥ योगेश्वराव्यासपराशरौचछायाशुकोजाज
लिजन्हुमुख्याः ॥ सर्वेऽप्यमीमुनिगणाःसहपुत्रशिष्याःस्वस्त्रीभिराययुरतिप्रणयेनयुक्ताः ॥ १४ ॥ वेदांता
निचवेदाश्चमंत्रास्तंत्राःसमूर्त्तयः ॥ दशसप्तपुराणानिषट्शास्त्राणितथाऽऽययुः ॥१५॥ गंगाद्याःसरितस्तत्रपु
ष्करादिसरांसिच ॥ क्षेत्राणिचदिशःसर्वादंडकादिवनानिच ॥ १६ ॥ नगादयोययुस्तत्रदेवगंधर्वकिन्नराः ॥ गुरु
त्वात्तत्रनायातान्भृगुःसंबोध्यचानयत् ॥ १७ ॥ दीक्षितानारदेनाथदत्तमासनमुत्तमं ॥ कुमारावंदिताःसर्वैर्नि

षेदुःकृष्णतत्पराः ॥१८॥ वैष्णवाश्चविरक्ताश्चन्यासिनोब्रह्मचारिणः ॥ मुख्यभागेस्थितास्तत्रतदग्रेनारदः स्थितः॥१९॥एकभागेऋषिगणास्तदन्यत्रदिवौकसः॥वेदोपनिषदोऽन्यत्रतीर्थान्यत्रस्त्रियोऽन्यतः॥२०॥जयशब्दोनमःशब्दःशंखशब्दस्तथैवच॥चूर्णलाजाप्रसूनानांनिक्षेपःसुमहानभूत् ॥२१॥ विमानानिसमारुह्य कियंतोदेवनायकाः॥कल्पवृक्षप्रसूनानिसर्वांस्तत्रसमाकिरन् ॥ २२॥ सूतउवाच एवंतेष्वेकचित्तेषुश्रीमद्भागवतस्यच ॥ माहात्म्यमूचिरेस्पष्टंनारदायमहात्मने ॥ २३॥ कुमाराऊचुः अथतेसंप्रवक्ष्यामोमहिमाशुकशास्त्रजः ॥ यस्यश्रवणमात्रेणमुक्तिःकरतलेस्थिता ॥ २४ ॥ सदासेव्यासदासेव्याश्रीमद्भागवतीकथा॥यस्याःश्रवणमात्रेणहरिश्चित्तंसमाश्रयेत्॥२५॥ग्रंथोऽष्टादशसाहस्रोद्वादशस्कंधसंमितः॥ परीक्षिच्छुकसंवादःशृणुभागवतंचतत् ॥ २६ ॥ तावत्संसारचक्रेस्मिन्भ्रमतेऽज्ञानतःपुमान्॥ यावत्कर्णगतानास्तिशुकशास्त्रकथाक्षणं ॥२७॥ किंश्रुतैर्बहुभिःशास्त्रैःपुराणैश्चभ्रमावहैः ॥ एकंभागवतंशास्त्रंमुक्तिदानेनगर्जति ॥२८॥ कथाभागवतस्यापिनित्यंभवतियद्गृहे॥तद्गृहंतीर्थरूपंहिवसतांपापनाशनं ॥ २९॥ अश्वमेधसहस्राणिवाजपेयशतानिच ॥ शुकशास्त्रकथायाश्चकलांनार्हंतिषोडशीं ॥ ३०॥ तावत्पापानिदेहेऽस्मिन्निवसंतितपोधनाः ॥ यावन्नश्रूयतेसम्यक्श्रीमद्भागवतंनरैः ॥ ३१ ॥ नगंगानगयाकाशीपुष्करंनप्रयागकं ॥ शुकशास्त्रकथायाश्चफलेनसमतांनयेत् ॥ ३२ ॥ श्लोकार्द्धंश्लोकपादंवानित्यंभागवतोद्भवं ॥ पठस्वस्वमुखेनैवयदीच्छसिपरांगतिं ॥३३॥ वेदादिर्वेदमाताचपौरुषंसूक्तमेवच ॥ त्रयीभागवतंचैवद्वादशाक्षरएवच ॥ ३४॥ द्वादशात्माप्रयागश्चकालःसंवत्सरात्मकः ॥ ब्राह्मणाश्चाग्निहोत्रंचसुरभिर्द्वादशीतथा ॥३५॥ तुलसीचवसंतश्चपुरुषोत्तमएवच ॥ एतेषांतत्त्वतःप्राज्ञैर्नपृथग्भावइष्यते ॥ ३६ ॥ यश्चभागवतंशास्त्रंवाचयेदर्थतोऽनिशं ॥ जन्मकोटिकृतंपापंनश्यतेनात्रसंशयः ॥ ३७ ॥ श्लोकार्द्धंश्लोकपादंवापठेद्भागवतंचयः ॥ नित्यंपुण्यमवाप्नोतिराजसूया

श्वमेधयोः ॥ ३८ ॥ उक्तंभागवतंनित्यंकृतंचहरिचिंतनं ॥ तुलसीपोषणंचैवधेनूनांसेवनंसमं ॥ ३९ ॥ अंतका
लेतुयेनैवश्रूयतेशुकशास्त्रवाक् ॥ प्रीत्यातस्यैववैकुंठंगोविंदोऽपिप्रयच्छति ॥ ४० ॥ हेमसिंहयुतंचैतद्वैष्णवाय
ददातिच ॥ कृष्णेनसहसायुज्यंसपुमाँल्लभतेध्रुवं ॥ ४१ ॥ आजन्ममात्रमपियेनशठेनकिंचिच्चित्तंविधायशुक
शास्त्रकथानपीता ॥ चांडालवच्चखरवद्बततेननीतंमिथ्यास्वजन्मजननीजनिदुःखभाजा ॥ ४२ ॥ जीवंच्छवो
निगदितःसतुपापकर्मायेनश्रुतंशुककथावचनंनकिंचित् ॥ धिक्तंनरंपशुसमंभुविभाररूपमेवंवदंतिदिविदे
वसरोजमुख्याः ॥४३॥ दुर्लभैवकथालोकेश्रीमद्भागवतोद्भवा ॥ कोटिजन्मसमुत्थेनपुण्येनैवतुलभ्यते ॥४४॥
तेनयोगनिधेधीमन्श्रोतव्यासाप्रयत्नतः॥दिनानांनियमोनास्तिसर्वदाश्रवणंमतं ॥४५ ॥सत्येनब्रह्मचर्येण
सर्वदाश्रवणंमतं ॥ अशक्यत्वात्कलौबोध्योविशेषोत्रशुकाज्ञया ॥४६॥ मनोवृत्तिजयश्चैवनियमाचरणंतथा ॥
दीक्षांकर्तुमशक्यत्वात्सप्ताहश्रवणंमतं ॥ ४७ ॥ श्रद्धातःश्रवणेनित्यंमाघेतावद्धियत्फलं ॥ तत्फलंशुकदेवेनस
प्ताहश्रवणेकृतं॥४८॥मनसश्चाजयाद्रोगात्पुंसांचैवायुषःक्षयात्॥कलेर्दोषबहुत्वाच्चसप्ताहश्रवणंमतं ॥४९॥
यत्फलंनास्तितपसानयोगेनसमाधिना ॥ अनायासेनतत्सर्वंसप्ताहश्रवणेलभेत् ॥५०॥ यज्ञाद्गर्जतिसप्ताहः
सप्ताहोगर्जतिव्रतात्॥तपसोगर्जतिप्रोच्चैस्तीर्थान्नित्यंहिगर्जति ॥५१॥ योगाद्गर्जतिसप्ताहोध्यानाज्ज्ञानाच्च
गर्जति॥किंब्रूमोगर्जनंतस्यरेरेगर्जतिगर्जति ॥ ५२ ॥ शौनकउवाच साश्चर्यमेतत्कथितंकथानकंज्ञा
नादिधर्मान्विगणय्यसांप्रतं ॥ निःश्रेयसंभागवतंपुराणंजातंकुतोयोगविदादिसूचकं ॥५३॥ सूतउवाच
यदाकृष्णोधरांत्यक्त्वास्वपदंगंतुमुद्यतः ॥ एकादशंपरिश्रुत्याप्युद्धवोवाक्यमब्रवीत् ॥ ५४ ॥ उद्धवउवाच त्वं
तुयास्यसिगोविंदभक्तकार्यंविधायच ॥ मच्चित्तेमहतीचिंतातांश्रुत्वासुखमावह ॥ ५५ ॥ आगतोऽयंकलिर्घोरो
भविष्यंतिपुनःखलाः॥तत्संगेनैवसंतोऽपिगमिष्यंत्युग्रतांयदा॥५६॥तदाभारवतीभूमिर्गोरूपेयंकमाश्रयेत्

अन्योनदृश्यतेत्रातात्वत्तःकमललोचन ॥ ५७॥ अतःसत्सुदयांकृत्वाभक्तवत्सलमाव्रज ॥ भक्तार्थंसगुणोजा
तोनिराकारोऽपिचिन्मयः॥ ५८॥ त्वद्वियोगेनतेभक्ताःकथंस्थास्यंतिभूतले ॥ निर्गुणोपासनेकष्टमतःकिंचिद्वि
चारय ॥५९॥ इत्युद्धववचःश्रुत्वाप्रभासेऽचिंतयद्धरिः ॥ भक्तावलंबनार्थायकिंविधेयंमयेतिच ॥६०॥ स्वकी
यंयद्भवेत्तेजस्तच्चभागवतेदधात् ॥ तिरोधायप्रविष्टोऽयंश्रीमद्भागवतार्णवं ॥ ६१ ॥ तेनेयंवाङ्मयीमूर्त्तिःप्रत्य
क्षावर्त्ततेहरेः॥सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी॥६२॥सप्ताहश्रवणंतेनसर्वेभ्योऽप्यधिकंकृतं ॥सा
धनानितिरस्कृत्यकलौधर्मोऽयमीरितः ॥६३॥ दुःखदारिद्र्यदौर्भाग्यपापप्रक्षालनायच ॥ कामक्रोधजयार्थं
हिकलौधर्मोयमीरितः ॥६४॥ अन्यथावैष्णवीमायादेवैरपिसुदुस्त्यजा ॥ कथंत्याज्याभवेत्पुंभिःसप्ताहोतःप्र
कीर्तितः ॥ ६५॥ सूतउवाच एवंनगाहश्रवणोरुधर्मेप्रकाश्यमानेऋषिभिःसभायां॥आश्चर्यमेकंसमभूत्तदा
नींतदुच्यतेसंशृणुशौनकत्वं॥६६॥भक्तिःसुतौतौतरुणौगृहीत्वाप्रेमैकरूपासहसाविरासीत्॥श्रीकृष्णगोविंद
हरेमुरारेनाथेतिनामानिमुहुर्वदंती ॥६७॥ तांचागतांभागवतार्थभूषांसुचारुवेषांददृशुःसदस्याः ॥ कथंप्रवि
ष्टाकथमागतेयंमध्यंमुनीनामितितर्कयंतः ॥ ६८॥ ऊचुःकुमारावचनंतदानींकथार्थतोनिष्पतिताधुनेयं ॥एवं
गिरःसाससुतानिशम्यसनत्कुमारंनिजगादनम्रा ॥६९॥ भक्तिरुवाच भवद्भिरद्यैवकृतास्मिपुष्टाकलिप्रन
ष्टाऽपिकथारसेन ॥ क्वाहंतुतिष्ठाम्यधुनाब्रुवंतुब्राह्माइदंतांगिरमूचिरेते ॥७०॥भक्तेषुगोविंदसुरूपधर्त्रींप्रेमैक
कर्त्रींभवरोगहंत्री ॥ सात्वंचतिष्ठस्वसुधैर्यसंश्रयानिरंतरंवैष्णवमानसानि ॥७१॥ ततोऽपिदोषाःकलिजाइमे
त्वांद्रष्टुंनशक्ताःप्रभवोऽपिलोके ॥ एवंतदाज्ञाऽवसरेऽपिभक्तिस्तदानिषण्णाहरिदासचित्ते ॥७२॥ सकलभुव
नमध्येनिर्धनास्तेऽपिधन्यानिवसतित्वद्दियेषांश्रीहरेर्भक्तिरेका ॥ हरिरपिनिजलोकंसर्वथातोविहायप्रविश
तित्वद्दितेषांभक्तिसूत्रोपनद्धः ॥७३॥ ब्रूमोऽद्यतेकिमधिकंमहिमानमेवंब्रह्मात्मकस्यभुविभागवताभिधस्य ॥

यत्संश्रयान्निगदितेलभतेसुवक्ताश्रोतापिकृष्णसमतामलमन्यधर्मैः ॥७४॥ इतिश्रीपद्मपुराणेउत्तरखंडेश्री
भागवतमाहात्म्येभक्तिकष्टनिवर्त्तनंनामतृतीयोऽध्यायः ॥३॥ सूतउवाच अथवैष्णवचित्तेषुदृष्ट्वाभक्तिमलौ
किकीं॥निजलोकंपरित्यज्यभगवान्भक्तवत्सलः॥१॥वनमालीघनश्यामःपीतवासामनोहरः॥कांचीकला
परुचिरोल्लसन्मुकुटकुंडलः ॥२॥ त्रिभंगललितश्चारुकौस्तुभेनविराजितः॥कोटिमन्मथलावण्योहरिचंदनच
र्चितः ॥ ३ ॥ परमानंदचिन्मूर्तिर्मधुरोमुरलीधरः ॥ आविवेशस्वभक्तानांहृदयान्यमलानिच ॥४॥वैकुंठवासि
नोयेचवैष्णवाउद्धवादयः ॥ तत्कथाश्रवणार्थंतेगूढरूपेणसंस्थिताः ॥५॥ तदाजयजयारावोरसपुष्टिरलौकि
की॥चूर्णप्रसूनवृष्टिश्चमुहुःशंखरवोऽप्यभूत्॥६॥तत्सभासंस्थितानांचदेहगेहात्मविस्मृतिः॥दृष्ट्वाचतन्मया
वस्थांनारदोवाक्यमब्रवीत् ॥७॥ अलौकिकोऽयंमहिमामुनीश्वराःसप्ताहजन्योऽद्यविलोकितोमया॥मूढाःश
ठायेपशुपक्षिणोऽत्रसर्वेपिनिष्पापतमाभवंति ॥ ८ ॥ अतोनृलोकेननुनास्तिकिंचिच्चित्तस्यशोधायकलौपवि
त्रं ॥ अघौघविध्वंसकरंतथैवकथासमानंभुविनास्तिचान्यत् ॥ ९ ॥ केकेविशुद्ध्यंतिवदंतुमह्यंसप्ताहयज्ञेनक
थामयेन ॥ कृपालुभिर्लोकहितंविचार्यप्रकाशितःकोपिनवीनमार्गः ॥१०॥ कुमाराऊचुः येमानवाःपापकृत
स्तुसर्वदासदादुराचाररताविमार्गगाः ॥क्रोधाग्निदग्धाःकुटिलाश्चकामिनःसप्ताहयज्ञेनकलौपुनंतिते॥११॥
सत्येनहीनाःपितृमातृदूषकास्तृष्णाकुलाश्चाश्रमधर्मवर्जिताः॥ येदांभिकामत्सरिणोऽपिहिंसकाःसप्ताहय
ज्ञेनकलौपुनंतिते ॥१२॥पंचोग्रपापाच्छलछद्मकारिणःक्रूराःपिशाचाइवनिर्दयाश्चये॥ब्रह्मस्वपुष्टाव्यभिचार
कारिणःसप्ताहयज्ञेनकलौपुनंतिते ॥१३॥ कायेनवाचामनसाऽपिपातकंनित्यंप्रकुर्वंतिशठाहठेनये ॥ परस्व
पुष्टामलिनादुराशयाःसप्ताहयज्ञेनकलौपुनंतिते ॥१४॥ अत्रतेकीर्तयिष्यामइतिहासंपुरातनं ॥ यस्यश्रवण
मात्रेणपापहानिःप्रजायते॥१५॥ तुंगभद्रातटेपूर्वमभूत्पत्तनमुत्तमं ॥ यत्रवर्णाःस्वधर्मेणसत्यसत्कर्मतत्पराः

॥१६॥ आत्मदेवः पुरेतस्मिन्सर्ववेदविशारदः ॥ श्रौतस्मार्तेषुनिष्णातोद्वितीयइवभास्करः॥१७॥भिक्षुकोवि
त्तवान्लोकेतत्प्रियाधुंधुलीस्मृता ॥ स्ववाक्यस्थापिकानित्यंसुंदरीसुकुलोद्भवा ॥१८॥ लोकवार्त्तारताक्रूराप्रा
यशोबहुजल्पिका ॥ शूराचगृहकृत्येषुकृपणाकलहप्रिया ॥१९॥एवंनिवसतोःप्रेम्णादंपत्योरममाणयोः॥अ
र्थाःकामास्तयोरासन्नसुखायगृहादिकं ॥२०॥ पश्चाद्धर्माःसमारब्धास्ताभ्यांसंतानहेतवे॥गोभूहिरण्यवासां
सिदीनेभ्योयच्छतःसदा ॥ २१॥ धनार्द्धंधर्ममार्गेणताभ्यांनीतंतथाऽपिच॥नपुत्रोनापिवापुत्रीततश्चिंतातुरो
भृशं ॥२२॥एकदासद्विजोदुःखाद्गृहंत्यक्त्वावनंगतः ॥ मध्यान्हेतृषितोजातस्तडागंसमुपेयिवान्॥ २३ ॥ पी
त्वाजलंविषण्णस्तुप्रजादुःखेनकर्शितः ॥ मुहूर्तादपितत्रैवसंन्यासीकश्चिदागतः ॥ २४ ॥दृष्ट्वापीतजलंतंतु
विप्रोयातस्तदंतिकं ॥ नत्वाचपदयोस्तस्यनिःश्वसन्संस्थितःपुरः ॥ २५ ॥ यतिरुवाच कथंरोदिषिविप्रत्वं
कातेचिंताबलीयसी ॥ वदत्वंसत्वरंमह्यंस्वस्यदुःखस्यकारणं ॥ २६ ॥ ब्राह्मणउवाच किंब्रवीमिऋषेदुः
खंपूर्वपापेनसंचितं ॥ मदीयाःपूर्वजास्तोयंकवोष्णमुपभुंजते ॥२७॥मद्दत्तंनैवगृण्हंतिप्रीत्यादेवाद्विजातयः॥
प्रजादुःखेनशून्योऽहंप्राणांस्त्यक्तुमिहागतः ॥ २८ ॥ धिग्जीवितंप्रजाहीनंधिग्गृहंचप्रजांविना ॥ धिग्धनं
चानपत्यस्यधिक्कुलंसंततिंविना ॥२९॥ पाल्यतेयामयाधेनुःसावंध्यासर्वथाभवेत् ॥ योमयारोपितोवृक्षः
सोऽपिवंध्यत्वमाश्रयेत् ॥ ३० ॥ यत्फलंमद्गृहायातंशीघ्रंतच्चविशुष्यति॥निर्भाग्यस्यानपत्यस्यकिमतोजीवि
तेनमे ॥ ३१॥ इत्युक्त्वासरुरोदोच्चैस्तत्पार्श्वेदुःखपीडितः ॥ तदातस्ययतेश्चित्तेकरुणाऽभूद्गरीयसी ॥ ३२ ॥
तद्भालाक्षरमालांचवाचयामासयोगवान् ॥ सर्वंज्ञात्वायतिःपश्चाद्विप्रमूचेसविस्तरं ॥ ३३ ॥ यतिरुवाच मुं
चाज्ञानंप्रजारूपंबलिष्ठाकर्मणोगतिः ॥ विवेकंतुसमासाद्यत्यजसंसारवासनां ॥ ३४ ॥शृणुविप्रमयातेद्यप्रा
रब्धंतुविलोकितं ॥ सप्तजन्मावधितवपुत्रोनैवचनैवच ॥३५ ॥ संततेःसगरोदुःखमवापांगःपुरातथा ॥ रेमुं

चाद्यकुटुंबाशांसंन्यासेसर्वथासुखं ॥ ३६ ॥ ब्राह्मणउवाच विवेकेनभवेत्किंमेपुत्रंदेहिबलादपि ॥ नोचेत्त्यजा
म्यहंप्राणांस्त्वदग्रेशोकमूर्च्छितः॥३७॥ पुत्रादिसुखहीनोऽयंसंन्यासःशुष्कएवहि॥ गृहस्थःसरसोलोकेपुत्र
पौत्रसमन्वितः ॥३८॥ इतिविप्राग्रहंदृष्ट्वाप्राब्रवीत्सतपोधनः ॥ चित्रकेतुर्गतःकष्टंविधिलेखाविमार्जनात्
॥ ३९॥ नयास्यसिसुखंपुत्राद्यथादैवहतोद्यमः॥अतोहठेनयुक्तोऽसिह्यर्थिनंकिंवदाम्यहं ॥४०॥ तस्याग्रहं
समालोक्यफलमेकंसदत्तवान् ॥इदंभक्षयपत्न्यात्वंततःपुत्रोभविष्यति ॥ ४१ ॥सत्यंशौचंदयादानमेकभ
क्तंतुभोजनं॥ वर्षावधिस्त्रियाकार्यंतेनपुत्रोऽतिनिर्मलः ॥ ४२ ॥ एवमुक्त्वाययौयोगीविप्रस्तुगृहमागतः॥
पत्न्याःपाणौफलंदत्वास्वयंयातस्तुकुत्रचित् ॥४३ ॥तरुणीकुटिलातस्यसख्यग्रेचरुरोदह॥ अहोचिंताममो
त्पन्नाफलंचाहंनभक्षये ॥ ४४॥ फलभक्ष्येणगर्भःस्याद्गर्भेणोदरवृद्धिता ॥ स्वल्पभक्ष्यंततोऽशक्तिर्गृहकार्यं
कथंभवेत् ॥ ४५॥ दैवाद्धाटींव्रजेद्ग्रामेपलायेद्गर्भिणीकथं ॥ शुकवन्निवसेद्गर्भस्तंकुक्षेःकथमुत्सृजेत् ॥ ४६ ॥
तिर्यक्चेदागतोगर्भस्तदामेमरणंभवेत् ॥ प्रसूतौदारुणंदुःखंसुकुमारीकथंसहे ॥ ४७॥ मंदायांमयिसर्वस्वं
ननांदासंहरेत्तदा ॥ सत्यशौचादिनियमोदुराराध्यःसदृश्यते॥४८॥ लालनेपालनेदुःखंप्रसूतायाश्चवर्त्तते ॥
वंध्यावाविधवानारीसुखिनीचेतिमेमतिः ॥ ४९ ॥ एवंकुतर्कयोगेनतत्फलंनैवभक्षितं ॥ पत्यापृष्टंफलंभुक्तं
भुक्तंचेतितयेरितं॥५०॥ एकदाभगिनीतस्यास्तद्गृहंस्वेच्छयागता॥तदग्रेकथितंसर्वंचिंतेयंमहतीहिमे ॥५१ ॥
दुर्बलातेनदुःखेनह्यनुजेकरवाणिकिं ॥ साऽब्रवीन्ममगर्भोऽस्तितंदास्यामिप्रसूतितः ॥ ५२॥ तावत्कालंस
गर्भेवगुप्तातिष्ठगृहेसुखं ॥ वित्तंत्वंमत्पतेर्यच्छसतेदास्यतिबालकं ॥ ५३ ॥ षाण्मासिकोमृतोबालइतिलोको
वदिष्यति॥तंबालंपोषयिष्यामिनित्यमागत्यतेगृहे॥५४॥फलमर्पयधेन्वैत्वंपरीक्षार्थंतुसांप्रतं॥ तत्तदाचरितं
सर्वंतथैवस्त्रीस्वभावतः॥५५॥अथकालेनसानारीप्रसूताबालकंतदा॥आनीयजनकोबालंरहस्येधुंधुलींददौ

॥५६॥तयाचकथितंभर्त्रेप्रसूतःसुखमर्भकः॥ लोकस्यसुखमुत्पन्नमात्मदेवप्रजोदयात् ॥५७॥ ददौदानंद्विजा
तिभ्योजातकर्मविधायच॥ गीतवादित्रघोषोऽभूत्तद्वारेमंगलंबहु॥५८॥भर्त्तुरग्रेऽब्रवीद्वाक्यंस्तन्यंनास्तिकुचे
मम॥अन्यस्तन्येननिर्दुग्धाकथंपुष्णामिबालकं॥५९॥मत्स्वसायाःप्रसूतायामृतोबालस्तुवर्त्तते॥ तामाकार्य
गृहेरक्षसातेऽर्भंपोषयिष्यति ॥ ६० ॥ पतिनातत्कृतंसर्वंपुत्ररक्षणहेतवे ॥पुत्रस्यधुंधुकारीतिनाममात्राप्रति
ष्ठितं॥६१॥त्रिमासेनिर्गतेचाथसाधेनुःसुषुवेऽर्भकं॥सर्वांगसुंदरंदिव्यंनिर्मलंकनकप्रभं॥६२॥दृष्ट्वाप्रसन्नोवि
प्रस्तुसंस्कारान्स्वयमादधे॥मत्वाश्चर्यंजनाःसर्वेदिदृक्षार्थंसमागताः॥६३॥ भाग्योदयोऽधुनाजातआत्मदे
वस्यपश्यत॥धेन्वाबालःप्रसूतस्तुदेवरूपीतिकौतुकं॥६४॥नज्ञातंतद्रहस्यंतुकेनापिविधियोगतः॥ गोकर्णंच
सुतंदृष्ट्वागोकर्णंनामचाकरोत्॥ ६५॥ कियत्कालेनतौजातौतरुणौतनयावुभौ॥गोकर्णःपंडितोज्ञानीधुंधुका
रीमहाखलः ॥६६॥ स्नानशौचक्रियाहीनोदुर्भक्षीक्रोधसंयुतः॥दुष्परिग्रहकर्त्ताचशवहस्तेनभोजनः ॥६७॥
चोरःसर्वजनद्वेषीपरवेश्मप्रदीपकः॥लालनायार्भकान्धृत्वासद्यःकूपेनिपातयत्॥६८॥हिंसकःशस्त्रधारीचदी
नांधानांप्रपीडकः ॥ चांडालाभिरतोनित्यंपाशहस्तश्वसंगतः॥६९॥तेनवेश्याकुसंगेनपित्र्यंवित्तंतुनाशितं॥
एकदापितरौताड्यपात्राणिस्वयमाहरत्॥७०॥तत्पिताकृपणःप्रोच्चैर्धनहीनोरुरोदह॥वंध्यत्वंतुसमीचीनंकुपु
त्रोदुःखदायकः॥७१॥ क्वतिष्ठामिक्वगच्छामिकोमेदुःखंव्यपोहयेत्॥प्राणांस्त्यजामिदुःखेनहाकष्टंममसंस्थि
तं॥७२॥तदानींतुसमागत्यगोकर्णोज्ञानसंयुतः॥बोधयामासजनकंवैराग्यंपरिदर्शयन्॥७३॥असारःखलु
संसारोदुःखरूपीविमोहकः॥सुतःकस्यधनंकस्यस्नेहवान्ज्वलतेऽनिशं॥ ७४॥ नचेंद्रस्यसुखंकिंचिन्नसुखंच
क्रवर्तिनः॥सुखमस्तिविरक्तस्यमुनेरेकांतजीविनः॥७५॥ मुंचाज्ञानंप्रजारूपंमोहतोनरकेगतिः॥ निपतिष्य
तिदेहोऽयंसर्वंत्यक्त्वावनंव्रज ॥ ७६ ॥ तद्वाक्यंतुसमाकर्ण्यगंतुकामःपिताऽब्रवीत्॥किंकर्त्तव्यंवनेताततत्त्वंवद

सविस्तरं ॥७७॥ अंधकूपेस्नेहपाशैर्बद्धःपंगुरहंशठः॥कर्मणापतितोनूनंमामुद्धरदयानिधे॥७८॥ गोकर्णउवा
च देहेऽस्थिमांसरुधिरेऽभिमतिंत्यजत्वंजायासुतादिषुसदाममतांविमुंच॥पश्यानिशंजगदिदंक्षणभंगनिष्ठंवै
राग्यरागरसिकोभवभक्तिनिष्ठः ॥ ७९ ॥ धर्मंभजस्वसततंत्यजलोकधर्मान्सेवस्वसाधुपुरुषान्जहिकाम
तृष्णां ॥ अन्यस्यदोषगुणचिंतनमाशुमुक्त्वासेवाकथारसमहोनितरांपिबत्वं ॥ ८० ॥ एवंसुतोक्तिवशतोऽपि
गृहंविहाययातोवनंस्थिरमतिर्गतषष्टिवर्षः ॥ युक्तोहरेरनुदिनंपरिचर्ययासौश्रीकृष्णमापनियतं दशमस्यपा
ठात् ॥ ८१ ॥ इतिश्रीपद्मपुराणेउत्तरखंडेश्रीभागवतमाहात्म्येविप्रमोक्षोनामचतुर्थोऽध्यायः॥ ४॥ सू
तउवाच पितर्युपरतेतेनजननीताडिताभृशं ॥ क्ववित्तंतिष्ठतेब्रूहिहनिष्येलत्तयानचेत् ॥ १ ॥ इतितद्वाक्यसं
त्रासाज्जनन्यापुत्रदुःखतः ॥ कूपेपातःकृतोरात्रौतेनसानिधनंगता ॥ २ ॥ गोकर्णस्तीर्थयात्रार्थंनिर्गतोयो
गसंस्थितः ॥ नदुःखंनसुखंतस्यनवैरीनापिबांधवः ॥ ३ ॥ धुंधुकारीगृहेऽतिष्ठत्पंचपण्यवधूवृतः ॥ अत्युग्रक
र्मकर्त्ताचतत्पोषणविमूढधीः ॥ ४ ॥ एकदाकुलटास्तास्तुभूषणान्यभिलिप्सवः ॥ तदर्थंनिर्गतोगेहात्कामांधो
मृत्युमस्मरन् ॥५॥ यतस्ततश्चसंहृत्यवित्तंवेश्मपुनर्गतः॥ ताभ्योयच्छत्सुवस्त्राणिभूषणानिकियंतिच ॥ ६ ॥
बहुवित्तचयंदृष्ट्वारात्रौनार्योविचारयन् ॥ चौर्यंकरोत्यसौनित्यमतोराजाग्रहीष्यति ॥ ७ ॥ वित्तंहृत्वापुन
श्चैनंमारयिष्यतिनिश्चितं ॥ अतोऽर्थगुप्तयेगूढमस्माभिःकिंनहन्यते ॥ ८॥ निहत्यैनंगृहीत्वाऽर्थंयास्यामोय
त्रकुत्रचित्॥इतितानिश्चयंकृत्वासुप्तंसंबध्यरश्मिभिः ॥ ९ ॥ पाशंकंठेनिधायास्यतन्मृत्युमुपचक्रमुः॥ त्वरि
तंनममारासौचिंतायुक्तास्तदाऽभवन्॥ १०॥ तप्तांगारसमूहांश्चतन्मुखेहिविचिक्षिपुः॥ अग्निज्वालातिदुःखे
नव्याकुलोनिधनंगतः ॥ ११ ॥ तंदेहंमुमुचुर्गर्तेप्रायःसाहसिकाःस्त्रियः ॥ नज्ञातंतद्रहस्यंतुकेनापीदंतथैवच
॥१२॥ लोकैःपृष्टावदंतिस्मदूरंयातःप्रियोहिनः॥आगमिष्यतिवर्षेऽस्मिन्वित्तलोभविकर्षितः॥१३॥ स्त्रीणां

नैवतुविश्वासोमृतानांकारयेद्बुधः ॥ विश्वासेयःस्थितोमूढःसदुःखैःपरिभूयते ॥१४॥सुधामयंवचोयासांकामिनांरसवर्धनं ॥ हृदयंक्षुरधाराभंप्रियःकोनामयोषितां ॥१५॥ संहृत्यवित्तंतायाताःकुलटाबहुभर्तृकाः ॥ धुंधुकारीबभूवाथमहान्प्रेतःकुकर्मतः॥१६॥वात्यारूपधरोनित्यंधावन्दशदिशोंऽतरं॥शीतातपपरिक्लिष्टोनिराहारःपिपासितः ॥१७॥ नलेभेशरणंकुत्रहादैवेतिमुहुर्वदन् ॥ कियत्कालेनगोकर्णोमृतंलोकादबुध्यत ॥१८॥ अनाथंतंविदित्वैवगयाश्राद्धमचीकरत् ॥ यस्मिंस्तीर्थेतुसंयातितत्रश्राद्धंप्रवर्त्तयन् ॥ १९ ॥ एवंभ्रमन्सगोकर्णःस्वपुरंसमुपेयिवान्॥रात्रौगृहांगणेस्वप्तुमागतोलक्षितःपरैः॥२०॥तत्रसुप्तंसविज्ञायधुंधुकारीस्वबांधवं॥ निशीथेदर्शयामासमहारौद्रतरंवपुः ॥२१॥ सकृन्मेषःसकृद्धस्तीसकृच्चमहिषोऽभवत्॥ सकृदिंद्रःसकृच्चाग्निःपुनश्चपुरुषोऽभवत् ॥२२॥ वैपरीत्यमिदंदृष्ट्वागोकर्णोधैर्यसंयुतः॥अयंदुर्गतिकःकोऽपिनिश्चित्याथतमब्रवीत् ॥ २३ ॥ गोकर्णउवाच कस्त्वमुग्रतरोरात्रौकुतोयातोदशामिमां ॥ किंवाप्रेतःपिशाचोवाराक्षसोऽसीतिशंसनः॥२४॥सूतउवाच एवंपृष्टस्तदातेनरुरोदोच्चैःपुनःपुनः॥अशक्तोवचनोच्चारेसंज्ञामात्रंचकारह॥२५॥ ततोंऽजलौजलंकृत्वागोकर्णस्तमुदीरयत् ॥ तत्सेकाद्धतपापोसौप्रवक्तुमुपचक्रमे ॥२६॥ प्रेतउवाच अहंभ्रातात्वदीयोऽस्मिधुंधुकारीतिनामतः ॥ स्वकीयेनैवदोषेणब्रह्मत्वंनाशितंमया ॥२७॥ कर्मणोनास्तिसंख्यामेमहाज्ञानेविवर्त्तिनः ॥ लोकानांहिंसकःसोऽहंस्त्रीभिर्दुःखेनमारितः ॥२८॥ अतःप्रेतत्वमापन्नोदुर्द्दशांचवहाम्यहं॥वाताहारेणजीवामिदैवाधीनफलोदयात्॥ २९॥ अहोबंधोकृपासिंधोभ्रातर्मामाशुमोचय॥गोकर्णोवचनंश्रुत्वातस्मैवाक्यमथाब्रवीत्॥ ३० ॥ गोकर्णउवाच त्वदर्थंतुगयापिंडोमयादत्तोविधानतः ॥ तत्कथंनैवमुक्तोऽसिममाश्चर्यमिदंमहत्॥३१॥गयाश्राद्धान्नमुक्तिश्चेदुपायोनापरस्त्विह॥किंविधेयंमयाप्रेततत्त्वंवदसविस्तरं ॥३२॥ प्रेतउवाच गयाश्राद्धशतेनापिमुक्तिर्मेनभविष्यति ॥ उपायमपरंकिंचित्तद्विचारयसांप्रतं ॥३३॥ इ

तितद्वाक्यमाकर्ण्यगोकर्णोविस्मयंगतः ॥ शतश्राद्धैर्नमुक्तिश्चेदसाध्यंमोचनंतव ॥ ३४ ॥ इदानींतुनिजंस्था
नमातिष्ठप्रेतनिर्भयः ॥ त्वन्मुक्तिसाधकंकिंचिदाचरिष्येविचार्यच ॥३५॥ धुंधुकारीनिजंस्थानंतेनादिष्टस्ततो
गतः॥गोकर्णश्चिंतयामासतांरात्रिंनतदध्यगात्॥३६॥प्रातस्तमागतंदृष्ट्वालोकाःप्रीत्यासमागताः॥तत्सर्वंक
थितंतेनयज्जातंचयथानिशि ॥३७॥ विद्वांसोयोगनिष्ठाश्चज्ञानिनोब्रह्मवादिनः ॥ तन्मुक्तिंनैवपश्यंतिपश्यंतः
शास्त्रसंचयान् ॥३८॥ततःसर्वैःसूर्यवाक्यंतन्मुक्तौस्थापितंपरं॥गोकर्णःस्तंभनंचक्रेसूर्यवेगस्यवैतदा ॥३९॥
तुभ्यंनमोजगत्साक्षिन्ब्रूहिमेमुक्तिहेतुकं ॥४०॥ तच्छ्रुत्वादूरतःसूर्यःस्फुटमित्यभ्यभाषत ॥ श्रीमद्भागवतान्मु
क्तिःसप्ताहेवाचनंकुरु ॥४१॥इतिसूर्यवचःसर्वैर्धर्मरूपंतुविश्रुतं॥सर्वेऽब्रुवन्प्रयत्नेनकर्तव्यंसुकरंत्विदं॥४२॥
गोकर्णोनिश्चयंकृत्वावाचनार्थंप्रवर्तितः ॥ तत्रसंश्रवणार्थायदेशग्रामाज्जनाययुः ॥ ४३ ॥ पंग्वंधवृद्धमंदाश्च
तेपिपापक्षयायवै ॥ समाजस्तुमहान्जातोदेवविस्मयकारकः ॥ ४४ ॥ यदैवासनमास्थायगोकर्णोऽकथयत्क
थां॥सप्रेतोपिऽतदायातःस्थानंपश्यन्नितस्ततः ॥४५॥ सप्तग्रंथियुतंतत्रापश्यत्कीचकमुच्छ्रितं॥तन्मूलच्छिद्र
माविश्यश्रवणार्थंस्थितोह्यसौ ॥४६॥ वातरूपीस्थितिंकर्तुमशक्तोवंशमाविशत्॥ वैष्णवंब्राह्मणंमुख्यंश्रोता
रंपरिकल्प्यसः ॥ ४७ ॥ प्रथमस्कंधतःस्पष्टमाख्यानंधेनुजोऽकरोत्॥दिनांतेरक्षितागाथातदाचित्रंबभूवह॥
॥ ४८॥ वंशैकग्रंथिभेदोऽभूत्सशब्दंपश्यतांसतां ॥ द्वितीयेन्हितथासायंद्वितीयग्रंथिभेदनं ॥४९॥ तृतीयेन्हि
तथासायंतृतीयग्रंथिभेदनं ॥ एवंसप्तदिनैर्वंशसप्तग्रंथिविभेदनं ॥ ५० ॥ कृत्वापिद्वादशस्कंधश्रवणात्प्रेततां
जहौ ॥ दिव्यरूपधरोजातस्तुलसीदाममंडितः ॥ ५१॥ पीतवासाघनश्यामोमुकुटीकुंडलान्वितः॥ ननाम
भ्रातरंसद्योगोकर्णमितिचाब्रवीत् ॥ ५२ ॥ त्वयाहंमोचितोबंधोकृपयाप्रेतकश्मलात् ॥ धन्याभागवतीवा
र्त्ताप्रेतपीडाविनाशिनी ॥५३॥ सप्ताहोपितथाधन्यःकृष्णलोकफलप्रदः ॥ कंपंतेसर्वपापानिसप्ताहश्रवणे

वणेस्थिते ॥ ५४ ॥ अस्माकंप्रलयंसद्यःकथाचेयंकरिष्यति ॥ आर्द्रंशुष्कंलघुस्थूलंवाङ्मनःकर्मभिःकृतं ॥ ५५ ॥ श्रवणंविदहेत्पापंपावकःसमिधोयथा ॥ अस्मिन्वैभारतेवर्षेसूरिभिर्वेदसंसदि ॥ ५६ ॥ अकथाश्राविणांपुंसांनिष्फलंजन्मकीर्तितं ॥ किंमोहतोरक्षितेनसुपुष्टेनबलीयसा ॥ ५७ ॥ अध्रुवेणशरीरेणशुकशास्त्रकथांविना ॥ अस्थिस्तंभंस्नायुबद्धंमांसशोणितलेपितं ॥ ५८ ॥ चर्मावनद्धंदुर्गंधंपात्रंमूत्रपुरीषयोः ॥ जराशोकविपाकार्त्तंरोगमंदिरमातुरं ॥ ५९ ॥ दुष्पूरंदुर्धरंदुष्टंसदोषंक्षणभंगुरं ॥ कृमिविट्भस्मसंज्ञांतंशरीरमितिवर्णितं ॥ ६० ॥ अस्थिरेणस्थिरंकर्मकुतोऽयंसाधयेन्नहि ॥ यत्प्रातःसंस्कृतंचान्नंसायंतच्चविनश्यति ॥ ६१ ॥ तदीयरससंपुष्टेकायेकानामनित्यता ॥ सप्ताहश्रवणाल्लोकेप्राप्यतेनिकटेहरिः ॥ ६२ ॥ अतोदोषनिवृत्त्यर्थमेतदेवहिसाधनं ॥ बुद्बुदाइवतोयेषुमशकाइवजंतुषु ॥ जायंतेमरणायैवकथाश्रवणवर्जिताः ॥ ६३ ॥ जडस्यशुष्कवंशस्ययत्रग्रंथिविभेदनं ॥ चित्रंकिमुतदाचित्तग्रंथिभेदःकथाश्रवात् ॥ ६४ ॥ भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणिसप्ताहश्रवणेकृते ॥ ६५ ॥ संसारकर्दमालेपप्रक्षालनपटीयसि ॥ कथातीर्थेस्थितेचित्तेमुक्तिरेवबुधैःस्मृता ॥ ६६ ॥ एवंब्रुवतिवैतस्मिन्विमानमगमत्तदा ॥ वैकुंठवासिभिर्युक्तंप्रस्फुरद्दीप्तिमंडलं ॥ ६७ ॥ सर्वेषांपश्यतांभेजेविमानंधुंधुलीसुतः ॥ विमानेवैष्णवान्वीक्ष्यगोकर्णोवाक्यमब्रवीत् ॥ ६८ ॥ गोकर्णउवाच अत्रैवबहवःसंतिश्रोतारोममनिर्मलाः ॥ आनीतानिविमानानिनतेषांयुगपत्कुतः ॥ ६९ ॥ श्रवणंसमभागेनसर्वेषामिहदृश्यते ॥ फलभेदःकुतोजातःप्रब्रुवंतुहरिप्रियाः ॥ ७० ॥ हरिदासाऊचुः श्रवणस्यविभेदेनफलभेदोपिसंस्थितः ॥ श्रवणंतुकृतंसर्वैर्नतथामननंकृतं ॥ ७१ ॥ फलभेदस्ततोजातोभजनादपिमानद ॥ सप्तरात्रमुपोष्यैवप्रेतेनश्रवणंकृतं ॥ ७२ ॥ मननादितथातेनस्थिरचित्तेकृतंभृशं ॥ अदृढंचहतंज्ञानंप्रमादेनहतंश्रुतं ॥ ७३ ॥ संदिग्धोहिहतोमंत्रोव्यग्रचित्तोहतोजपः ॥ अवैष्णवोहतोदेशोहतंश्राद्ध

मपात्रकं ॥७४॥ हतमश्रोत्रियेदानमनाचारहतंकुलं ॥ विश्वासोगुरुवाक्येषुस्वस्मिन्दीनत्वभावना ॥७५॥
मनोदोषजयश्चैवकथायांनिश्चलामतिः ॥ एवमादिकृतंचेत्स्यात्तदावैश्रवणेफलं ॥ ७६ ॥ पुनःश्रवांतेसर्वेषां
वैकुंठेवसतिर्ध्रुवं॥गोकर्णतवगोविंदोगोलोकंदास्यतिस्वयं॥७७॥ एवमुक्त्वाययुःसर्वेवैकुंठंहरिकीर्तनाः॥श्रा
वणेमासिगोकर्णःकथामूचेतथापुनः ॥ ७८ ॥ सप्तरात्रवतींभूयःश्रवणंतैःकृतंपुनः ॥ कथासमाप्तौयज्जातंश्रू
यतांतच्चनारद॥७९॥विमानैःसहभक्तैश्चहरिराविर्बभूवह॥जयशब्दानमःशब्दास्तत्रासन्बहवस्तदा ॥८०॥
पांचजन्यध्वनिंचक्रेहर्षात्तत्रस्वयंहरिः॥गोकर्णंतुसमालिंग्याकरोत्स्वसदृशंहरिः॥८१॥श्रोतॄनन्यान्घनश्या
मान्पीतकौशेयवाससः ॥ किरीटिनःकुंडलिनस्तथाचक्रेहरिःक्षणात् ॥ ८२ ॥ तद्ग्रामेयेस्थिताजीवाआश्व
चांडालजातयः ॥ विमानेस्थापितास्तेऽपिगोकर्णकृपयातदा ॥८३॥ प्रेषिताहरिलोकेतेयत्रगच्छंतियोगि
नः॥गोकर्णेनसगोपालोगोलोकंगोपवल्लभं ॥ ८४ ॥ कथाश्रवणतःप्रीतोनिर्ययौभक्तवत्सलः ॥ अयोध्या
वासिनःपूर्वंयथारामेणसंगताः ॥ ८५ ॥ तथाकृष्णेनतेनीतागोलोकंयोगिदुर्लभं ॥ यत्रसूर्यस्यसोमस्यसिद्धा
नांनगतिःकदा ॥ तंलोकंहिगतास्तेतुश्रीमद्भागवतश्रवात् ॥८६॥ ब्रूमोऽद्यतेकिंफलवृंदमुज्ज्वलंसप्ताहयज्ञे
नकथासुसंचितं ॥ कर्णेनगोकर्णकथाक्षरंयैःपीतंचतेगर्भगतानभूयः ॥ ८७ ॥ वातांबुपर्णाशनदेहशोषणै
स्तपोभिरुग्रैश्चिरकालसंचितैः ॥ योगैश्चसंयांतिनतांगतिंवैसप्ताहगाथाश्रवणेनयांतियां ॥८८॥ इतिहास
मिमंपुण्यंशांडिल्योऽपिमुनीश्वरः ॥ पठतेचित्रकूटस्थोब्रह्मानंदपरिप्लुतः॥८९॥आख्यानमेतत्परमंपवित्रंश्रु
तंसकृद्वैविदहेदघौघं ॥ श्राद्धेप्रयुक्तंपितृतृप्तिमावहेन्नित्यंसुपाठादपुनर्भवंच ॥ ९० ॥ इतिश्रीपद्मपुराणेउ
त्तरखंडेश्रीभागवतमहात्म्येगोकर्णवर्णनंनामपंचमोध्यायः॥ ५ ॥ कुमाराऊचुः अथतेसंप्रव
क्ष्यामःसप्ताहश्रवणेविधिं॥ सहायैर्वसुभिश्चैवप्रायःसाध्योविधिःस्मृतः ॥१॥ दैवज्ञंतुसमाहूयमुहूर्तंपृच्छच

यत्नतः ॥ विवाहेयादृशंवित्तंतादृशंपरिकल्पयेत् ॥२॥ नभस्यआश्विनोर्जौचमार्गशीर्षःशुचिर्नभाः ॥ एतेमा
साःकथारंभेश्रोतॄणांमोक्षसूचकाः ॥ ३ ॥ मासानांविग्रहेयानितानित्याज्यानिसर्वथा ॥ सहायाश्चेतरेचात्र
कर्त्तव्याःसोद्यमाश्रये ॥ ४ ॥ देशेदेशेतथासेयंवार्त्ताप्रेष्याप्रयत्नतः ॥ भविष्यतिकथाचात्रआगंतव्यंकुटुंबि
भिः ॥ ५ ॥ दूरेहरिकथाःकेचिद्दूरेचाच्युतकीर्त्तनाः ॥ स्त्रियःशूद्रादयोयेचतेषांबोधोयतोभवेत् ॥ ६ ॥ देशेदेशे
विरक्तायेवैष्णवाःकीर्तनोत्सुकाः ॥ तेष्वेवपत्रंप्रेष्यंचतल्लेखनमितीरितं ॥ ७ ॥ सतांसमाजोभवितासप्तरा
त्रंसुदुर्लभः ॥ अपूर्वरसरूपैवकथाचात्रभविष्यति ॥८॥ श्रीभागवतपीयूषपानायरसलंपटाः ॥ भवंतश्चत
थाशीघ्रमायातप्रेमतत्पराः ॥ ९ ॥ नावकाशःकदाचिच्चेद्दिनमात्रंतथापितु ॥ सर्वथागमनंकार्यंक्षणोऽत्रैव
सुदुर्लभः ॥१०॥ एवमाकारणंतेषांकर्त्तव्यंविनयेनच ॥ आगंतुकानांसर्वेषांवासस्थानानिकल्पयेत् ॥११॥ ती
र्थेवापिवनेवापिगृहेवाश्रवणंमतं ॥ विशालावसुधायत्रकर्त्तव्यंतत्कथास्थलं ॥ १२ ॥ शोधनंमार्जनंभूमेर्लेप
नंधातुमंडनं ॥ गृहोपस्करमुद्धृत्यगृहकोणेनिवेशयेत् ॥ १३ ॥ अर्वाक्पंचाहृतोयत्नादास्तीर्णानिप्रमेलयेत् ॥
कर्त्तव्योमंडपःप्रोच्चैःकदलीखंडमंडितः ॥ १४ ॥ फलपुष्पदलैर्विष्वक्वितानेनविराजितः ॥ चतुर्दिक्षुध्वजा
रोपोबहुसंपद्विराजितः ॥१५॥ ऊर्ध्वंसप्तैवलोकाश्चकल्पनीयाःसविस्तरं ॥ तेषुविप्राविरक्ताश्चस्थापनीयाः
प्रबोध्यच ॥ १६ ॥ पूर्वंतेषामासनानिकर्तव्यानियथोत्तरं ॥ वक्तुश्चापितदादिव्यमासनंपरिकल्पयेत् १७॥
उदङ्मुखोभवेद्वक्ताश्रोतावैप्राङ्मुखस्तदा ॥ प्राङ्मुखश्चेद्भवेद्वक्ताश्रोताचोदङ्मुखस्तदा ॥१८॥ अथवापूर्व
दिक्ज्ञेयापूज्यपूजकमध्यतः ॥ श्रोतॄणामागमेप्रोक्तादेशकालादिकोविदैः ॥ १९ ॥ विरक्तोवैष्णवोविप्रोवे
दशास्त्रविशुद्धिकृत् ॥ दृष्टांतकुशलोधीरोवक्ताकार्योऽतिनिस्पृहः ॥ २० ॥ अनेकधर्मविभ्रांताःस्त्रैणाःपाखंडवा
दिनः ॥ शुभशास्त्रकथोच्चारेत्याज्यास्तेयदिपंडिताः ॥ २१ ॥ वक्तुःपार्श्वेसहायार्थमन्यःस्थाप्यस्तथाविधः ॥पं

डितःसंशयच्छेत्तालोकबोधनतत्परः ॥ २२ ॥ वक्राक्षौरंप्रकर्तव्यंदिनादर्वाग्व्रताप्तये ॥ अरुणोदयेसौनि
र्वर्त्यशौचंस्नानंसमाचरेत् ॥ २३ ॥ नित्यंसंक्षेपतःकृत्वासंध्याद्यंसंप्रयत्नतः ॥ कथाविघ्नविघातायगणनाथं
प्रपूजयेत् ॥ २४ ॥ पितॄन्संतर्प्यशुद्ध्यर्थंप्रायश्चित्तंसमाचरेत् ॥ मंडलंचप्रकर्तव्यंतत्रस्थाप्योहरिस्तथा ॥
॥ २५ ॥ कृष्णमुद्दिश्यमंत्रेणचरेत्पूजाविधिंक्रमात् ॥ प्रदक्षिणानमस्कारान्पूजांतेस्तुतिमाचरेत् ॥ २६ ॥ सं
सारसागरेमग्नंदीनंमांकरुणानिधे ॥ कर्ममोहगृहीतांगंमामुद्धरभवार्णवात् ॥२७॥ श्रीमद्भागवतस्यापिततः
पूजाप्रयत्नतः ॥ कर्तव्याविधिनाप्रीत्याधूपदीपसमन्विता ॥२८॥ ततस्तुश्रीफलंधृत्वानमस्कारंसमाचरेत् ॥
स्तुतिःप्रसन्नचित्तेनकर्तव्याकेवलंतदा ॥ २९ ॥ श्रीमद्भागवताख्योयंप्रत्यक्षःकृष्णएवहि ॥ स्वीकृतोऽसि
मयानाथमुक्त्यर्थंभवसागरे ॥ ३० ॥ मनोरथोमदीयोयंसफलःसर्वथात्वया ॥ निर्विघ्नेनैवकर्तव्योदासोहं
तवकेशव ॥ ३१ ॥ एवंदीनवचःप्रोक्त्वावक्तारंचाथपूजयेत् ॥ संभूष्यवस्त्रभूषाभिःपूजांतेतंचसंस्तवेत् ॥
॥ ३२ ॥ शुकरूपप्रबोधज्ञसर्वशास्त्रविशारद ॥ एतत्कथाप्रकाशेनमदज्ञानंविनाशय ॥ ३३ ॥ तदग्रेनियमः
पश्चात्कर्तव्यःश्रेयसेमुदा ॥ सप्तरात्रंयथाशक्त्याधारणीयःसएवहि ॥ ३४ ॥ वरणंपंचविप्राणांकथाभंगनि
वृत्तये ॥ कर्तव्यंतैर्हरेर्जाप्यंद्वादशाक्षरविद्यया ॥३५॥ ब्राह्मणान्वैष्णवांश्चान्यांस्तथाकीर्तनकारिणः ॥ नत्वा
संपूज्यदत्ताज्ञःस्वयमासनमाविशेत् ॥ ३६ ॥ लोकवित्तधनागारपुत्रचिंतांव्युदस्यच ॥ कथाचित्तःशुद्धमतिः
सलभेत्फलमुत्तमं ॥ ३७ ॥ आसूर्योदयमारभ्यसार्द्धत्रिप्रहरांतिकं॥वाचनीयाकथासम्यक्धीरकंठंसुधीमता
॥ ३८ ॥ कथाविरामःकर्तव्योमध्यान्हेघटिकाद्वयं ॥ तत्कथामनुकार्यंवैकीर्तनंवैष्णवैस्तदा ॥ ३९ ॥ मलमू
त्रजयार्थंहिलघ्वाहारःसुखावहः॥हविष्यान्नेनकर्तव्योह्येकवारंकथार्थिना॥४०॥उपोष्यसप्तरात्रंवैशक्तिश्चे
च्छृणुयात्तदा ॥ घृतपानंपयःपानंकृत्वावैशृणुयात्सुखं ॥४१॥ फलाहारेणवाश्राव्यमेकभक्तेनवापुनः ॥ सुख

साध्यंभवेद्यत्तुकर्तव्यंश्रवणायतत् ॥४२॥ भोजनंतुवरंमन्येकथाश्रवणकारकं ॥ नोपवासोवरःप्रोक्तःकथावि
घ्नकरोयदि॥४३॥सप्ताहव्रतिनांपुंसांनियमान्शृणुनारद॥विष्णुदीक्षाविहीनानांनाधिकारःकथाश्रवे॥४४॥
ब्रह्मचर्यमधःसुप्तिःपत्रावल्यांचभोजनं ॥ कथासमाप्तौभुक्तिंचकुर्यान्नित्यंकथाव्रती ॥ ४५ ॥ द्विदलंमधुतैलं
चगरिष्ठान्नंतथैवच ॥ भावदुष्टंपर्युषितंजह्यान्नित्यंकथाव्रती ॥ ४६ ॥ कामंक्रोधंमदंमानंमत्सरंलोभमेवच
दंभंमोहंतथाद्वेषंदूरयेच्चकथाव्रती॥ ४७ ॥ वेदवैष्णवविप्राणांगुरुगोव्रतिनांतथा ॥ स्त्रीराजमहतांनिंदांवर्जये
द्यःकथाव्रती॥४८॥ रजस्वलांत्यजम्लेंच्छपतितव्रातकैस्तथा ॥ द्विजद्विट्वेदबाह्यैश्चनवदेद्यःकथाव्रती॥४९॥
सत्यंशौचंदयांमौनमार्जवंविनयंतथा ॥ उदारमानसंतद्वदेवंकुर्यात्कथाव्रती ॥५०॥दरिद्रश्चक्षयीरोगीनिर्भा
ग्यःपापकर्मवान् ॥ अनपत्योमोक्षकामःशृणुयाच्चकथामिमां ॥५१॥ अपुष्पाकाकवंध्याचवंध्यायाचमृतार्भ
का॥स्त्रवद्गर्भाचयानारीतयाश्राव्याप्रयत्नतः॥५२॥एतेषुविधिनाश्रावेतदक्षय्यतरंभवेत्॥अत्युत्तमाकथादि
व्याकोटियज्ञफलप्रदा ॥५३॥ एवंकृत्वाव्रतविधिमुद्यापनमथाचरेत् ॥ जन्माष्टमीव्रतमिवकर्त्तव्यंफलकांक्षि
भिः॥५४॥ अकिंचनेषुभक्तेषुप्रायोनोद्यापनाग्रहः॥श्रवणेनैवपूतास्तेनिष्कामावैष्णवायतः ॥५५॥ एवंनगा
हयज्ञेस्मिन्समाप्तेश्रोतृभिस्तदा॥पुस्तकस्यचवक्तुश्चपूजाकार्यातिभक्तितः॥५६॥प्रसादतुलसीमालाःश्रोतृ
भ्यश्चाथदीयतां॥ मृदंगतालललितंकर्त्तव्यंकीर्तनंततः ॥५७॥ जयशब्दंनमःशब्दंशंखशब्दंचकारयेत् ॥ वि
प्रेभ्योयाचकेभ्यश्चवित्तमन्नंचदीयतां ॥ ५८ ॥ विरक्तश्चेद्भवेच्छ्रोतागीतावाच्यापरेऽहनि ॥ गृहस्थश्चेत्तदाहो
मःकर्त्तव्यःकर्मशांतये ॥ ५९ ॥ प्रतिश्लोकंचजुहुयाद्विधिनादशमस्यच ॥ पायसंमधुसर्पिश्चतिलान्नादिकसं
युतं ॥६०॥ अथवाहवनंकुर्याद्गायत्र्यासुसमाहितः ॥ तन्मयत्वात्पुराणस्यपरमस्यचतत्त्वतः ॥६१॥ होमाशक्तौ
बुधोहौम्यंदद्यात्तत्फलसिद्धये॥नानाछिद्रनिरोधार्थंन्यूनताधिकताख्ययोः॥ ६२ ॥दोषयोःप्रशमार्थंचपठेन्ना

मसहस्त्रकं॥तेनस्यात्सफलंसर्वंनास्त्यस्मादधिकंयतः ॥६३॥ द्वादशब्राह्मणान्पश्चाद्भोजयेन्मधुपायसैः॥दद्या
त्सुवर्णधेनुंचव्रतपूर्णत्वहेतवे ॥६४॥ शक्तौपलत्रयमितंस्वर्णसिंहंविधायच ॥ तत्रास्यपुस्तकंस्थाप्यंलिखितंल
लिताक्षरं॥६५॥संपूज्यावाहनाद्यैस्तदुपचारैःसदक्षिणं॥वस्त्रभूषणगंधाद्यैःपूजिताययतात्मने ॥६६॥ आचा
र्यायसुधीर्दत्वामुक्तःस्याद्भवबंधनैः ॥ एवंकृतेविधानेचसर्वपापनिवारणे ॥६७॥ फलदंस्यात्पुराणंतुश्रीमद्भा
गवतंशुभं ॥ धर्मार्थकाममोक्षाणांसाधनंस्यान्नसंशयः ॥६८॥ कुमाराऊचुः  इतितेकथितंसर्वंकिंभूयःश्रोतु
मिच्छसि ॥ श्रीमद्भागवतेनैवभुक्तिमुक्तीकरेस्थिते ॥६९॥ सूतउवाच  इत्युक्त्वातेमहात्मानःप्रोचुर्भागवतींक
थां ॥ सर्वपापहरांपुण्यांभुक्तिमुक्तिप्रदायिनीं॥७०॥शृण्वतांसर्वभूतानांसप्ताहंनियतात्मनां ॥ यथाविधिततो
देवंतुष्टुवुःपुरुषोत्तमं ॥७१॥तदंतेज्ञानवैराग्यभक्तीनांपुष्टतापरा॥तारुण्यंपरमंचाभूत्सर्वभूतमनोहरं॥७२॥
नारदश्चकृतार्थोऽभूत्सिद्धेस्वीयेमनोरथे॥पुलकीकृतसर्वांगःपरमानंदसंभृतः ॥७३॥ एवंकथांसमाकर्ण्यनार
दोभगवत्प्रियः ॥ प्रेमगद्गदयावाचातानुवाचकृतांजलिः ॥७४॥ नारदउवाच  धन्योऽस्म्यनुगृहीतोऽस्मिभव
द्भिःकरुणापरैः ॥ अद्यमेभगवान्लब्धःसर्वपापहरोहरिः ॥७५॥ श्रवणंसर्वधर्मेभ्योवरंमन्येतपोधनाः ॥ वै
कुंठस्थोयतःकृष्णःश्रवणाद्यस्यलभ्यते ॥ ७६ ॥ सूतउवाच  एवंब्रुवतिवैतत्रनारदेवैष्णवोत्तमे ॥ परिभ्रमन्
समायातःशुकोयोगेश्वरस्तदा ॥७७॥ तत्राययौषोडशवार्षिकस्तदाव्यासात्मजोज्ञानमहाब्धिचंद्रमाः ॥ क
थावसानेनिजलाभपूर्णःप्रेम्णापठन्भागवतंशनैःशनैः॥७८॥दृष्ट्वासदस्याःपरमोरुतेजसंसद्यःसमुत्थायद
दुर्महासनं ॥ प्रीत्यासुरर्षिस्तमपूजयत्सुखंस्थितोवदत्संशृणुतामलांगिरं ॥ ७९ ॥ श्रीशुकउवाच  निगमक
ल्पतरोर्गलितंफलंशुकमुखादमृतद्रवसंयुतं ॥ पिबतभागवतंरसमालयंमुहुरहोरसिकाभुविभावुकाः॥८०॥
धर्मःप्रोज्झितकैतवोऽत्रपरमोनिर्मत्सराणांसतांवेद्यंवास्तवमत्रवस्तुशिवदंतापत्रयोन्मूलनं ॥ श्रीमद्भागवते

महामुनिकृतेकिंवापरैरीश्वरःसद्योहृद्यवरुध्यतेऽत्रकृतिभिःशुश्रूषुभिस्तत्क्षणात् ॥ ८१ ॥ श्रीमद्भागवतंपुराण
तिलकंयद्वैष्णवानांधनंयस्मिन्पारमहंस्यमेवममलंज्ञानंपरंगीयते ॥ यत्रज्ञानविरागभक्तिसहितंनैष्कर्म्यमा
विष्कृतंतच्छृण्वन्प्रपठन्विचारणपरोभक्त्याविमुच्येन्नरः ॥८२॥ स्वर्गेसत्येचकैलासेवैकुंठेनास्त्ययंरसः ॥ अ
तःपिबंतुसद्भाग्यामामामुंचतकर्हिचित् ॥८३॥ सूतउवाच एवंब्रुवाणेसतिबादरायणौमध्येसभायांहरिरावि
रासीत्॥प्रऱ्हादबल्युद्धवफाल्गुनादिभिर्वृतःसुरर्षिस्तमपूजयच्चतान् ॥ ८४॥ दृष्ट्वाप्रसन्नंमहदासनेहरिंतेच
क्रिरेकीर्त्तनमग्रतस्तदा॥भवोभवान्याकमलासनस्तुतत्रागमन्कीर्त्तनदर्शनाय॥८५॥प्रऱ्हादस्तालधारीतरल
गतितयाचोद्धवःकांस्यधारीवीणाधारीसुरर्षिःस्वरकुशलतयारागकर्त्ताऽर्जुनोभूत्॥इंद्रोऽवादीन्मृदंगंजयजय
सुकराःकीर्तनेतेकुमारायत्राग्रेभाववक्तारसविरचनयाव्यासपुत्रोबभूव ॥ ८६ ॥ ननर्त्तमध्येत्रिकमेवतत्र
भक्त्यादिकानांनटवत्सुतेजसां ॥ अलौकिकंकीर्तनमेतदीक्ष्यहरिःप्रसन्नोऽपिवचोऽब्रवीत्तत् ॥ ८७॥ मत्तोव
रंभागवताव्टणुध्वंप्रीतःकथाकीर्तनतोऽस्मिसांप्रतं ॥ श्रुत्वेतितद्वाक्यमतिप्रसन्नाःप्रेमार्द्रचित्ताहरिमूचिरेते
॥ ८८ ॥ नगाहगाथासुचसर्वभक्तैरेभिस्त्वयाभाव्यमतिप्रयत्नात् ॥ मनोरथोयंपरिपूरणीयस्तथेतिचोक्त्वांत
रधीयताच्युतः ॥ ८९ ॥ततोऽनमत्तच्चरणेषुनारदस्तथाशुकादीनपितापसांश्च ॥ अथप्रहृष्टाःपरिनष्टमोहाः
सर्वेययुःपीतकथामृतास्ते ॥ ९० ॥ भक्तिःसुताभ्यांसहरक्षितासाशास्त्रेस्वकीयेऽपितदाशुकेन ॥ अतो
हरिर्भागवतस्यसेवनाच्चित्तंसमायातिहिवैष्णवानां ॥ ९१ ॥दारिद्र्यदुःखज्वरदाहितानांमायापिशाचीपरि
मर्दितानां ॥ संसारसिंधौपरिपातितानांक्षेमायवैभागवतंप्रगर्जति ॥ ९२ ॥ शौनकउवाच शुकेनो
क्तंकदाराज्ञेगोकर्णेनकदापुनः ॥ सुरर्षयेकदाब्राह्मैश्छिंधिमेसंशयंत्विमं ॥ ९३ ॥ सूतउवाच आकृष्णनि
र्गमात्त्रिंशद्वर्षाधिकगतेकलौ ॥ नवमीतोनभस्येचकथारंभंशुकोकरोत् ॥ ९४ ॥ परीक्षिच्छ्रवणांतेचकलौवर्षे

शतद्वये ॥ शुद्धेशुचौनवम्यांचधेनुजोऽकथयत्कथां ॥ ९५ ॥ तस्मादपिकलौप्राप्तेत्रिंशद्वर्षगतेसति ॥ ऊचु
रूर्जेसितेपक्षेनवम्यांब्रह्मणःसुताः ॥ ९६ ॥ इत्येतत्तेसमाख्यातंयत्पृष्टोऽहंत्वयाऽनघ ॥ कलौभागवतीवा
र्त्ताभवरोगविनाशिनी ॥ ९७ ॥ कृष्णप्रियंसकलकश्मलनाशनंचमुक्त्यैकहेतुमिहभक्तिविलासकारि ॥
संतःकथानकमिदंपिबतादरेणलोकेहितार्थपरिशीलनसेवयाकिं ॥ ९८ ॥ स्वपुरुषमभिवीक्ष्यपाशहस्तंवद
तियमःकलितस्यकर्णमूले ॥ परिहरभगवत्कथासुमत्तान्प्रभुरहमन्यनृणांनवैष्णवानां ॥ ९९ ॥ असारे
संसारेविषयविषसंगाकुलधियःक्षणार्द्धंक्षेमार्थंपिबतशुकगाथातुलसुधां ॥ किमर्थंव्यर्थंभोव्रजतकुपथेकुत्सि
तकथेपरीक्षित्साक्षीयच्छ्रवणगतमुक्त्युक्तिकथने ॥ १०० ॥ रहःप्रवाहसंस्थेनश्रीशुकेनेरिताकथा ॥ कं
ठेसंबध्यतेयेनसवैकुंठप्रभुर्भवेत् ॥ १०१ ॥ इतिचपरमगुह्यंसर्वसिद्धांतसिद्धंसपदिनिगदितंतेशास्त्रपुंजंवि
लोक्य ॥ जगतिशुककथातोनिर्मलंनास्तिकिंचित्पिबपरसुखहेतोर्द्वादशस्कंधसारं ॥ १०२ ॥ एतांयोनि
यततयाशृणोतिभक्त्यायश्चैनांकथयतिशुद्धवैष्णवाग्रे ॥ तौसम्यग्विधिकरणात्फलंलभेतेयाथार्थ्यान्नहिभुव
नेकिमप्यसाध्यं ॥ १०३ ॥ इतिश्रीपद्मपुराणेउत्तरखंडेश्रीभागवतमाहात्म्येश्रवणविधिकथनंनामषष्ठो
ध्यायः ॥ ६ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः॥ श्रीसरस्वत्यैनमः॥ नमःपरमहंसास्वादितचरणकमलचिन्मकरंदायभक्तजनमानसनिवासायश्रीरामचंद्राय॥ वागी
शायस्यवदनेलक्ष्मीर्यस्यचवक्षसि॥यस्यास्तेहृदयेसंवित्तंनृसिंहमहंभजे ॥१॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितं॥श्रीकृष्णाख्यंपरंधामज
गद्धामनमामतत् ॥ २ ॥ माधवोमाधवावीशौसर्वसिद्धिविधायिनौ॥वंदेपरस्परात्मानौपरस्परनुतिप्रियौ ॥ ३ ॥ संप्रदायानुरोधेनपौर्वाप
र्यानुसारतः॥श्रीभागवतभावार्थदीपिकेयंप्रतन्यते॥ ४ ॥ क्वाहंमंदमतिःक्वेदंमंथनंक्षीरवारिधेः॥किंतत्रपरमाणुर्वैयत्रमज्जातिमंदरः ॥५॥ मूकंक
रोतिवाचालंपंगुंलंघयतेगिरिं ॥ यत्कृपातमहंवंदेपरमानंदमाधवं॥६॥ श्रीमद्भागवताभिधःसुरतरुस्तारांकुरःसज्जनिःस्कंधैर्द्वादशभिस्ततः
प्रविलसद्भक्त्यालवालोदयः ॥ द्वात्रिंशत्त्रिशतंचयस्यविलसच्छाखाःसहस्राण्यलंपर्णान्यष्टदशोष्टदोऽतिसुलभोवर्वर्त्तिसर्वोपरि ॥ ७ ॥ अ
थनानापुराणशास्त्रप्रबंधैश्चित्तप्रसत्तिमलभमानस्तत्रतत्रापरितुष्यन्नारदोपदेशतःश्रीमद्भगवद्गुणवर्णनप्रधानंभागवतशास्त्रंप्रारिप्सुर्वेदव्यास
स्तत्प्रतिपाद्यपरदेवताऽनुस्मरणलक्षणंमंगलमाचरति जन्मादीति परंपरमेश्वरं धीमहीतिध्यायतेर्लिङ्छांदसं ध्यायेमेत्यर्थः बहुवचनंशि
ष्याभिप्रायं तमेवस्वरूपतटस्थलक्षणाभ्यामुपलक्षयति तत्रस्वरूपलक्षणंसत्यमिति सत्यत्वेहेतुः यत्रयस्मिंस्त्रयाणांमायागुणानांतमोरजः
सत्त्वानांसर्गोभूतेंद्रियदेवतारूपोमृषासन्नमृषासत्यः यत्सत्यतयामिथ्यासर्गोऽपिसत्यवत्प्रतीयतेतंपरंसत्यमित्यर्थः अत्रदृष्टांतः तेजोवारिमृ
दांयथाविनिमयोव्यत्ययःअन्यस्मिन्नन्यावभासः सयथाऽधिष्ठानसत्तयासद्वत्प्रतीयतइत्यर्थः तत्रतेजसिवारिबुद्धिर्मरीचितोयेप्रसिद्धामृदिका
चादौवारिबुद्धिरित्यादियथायथमूह्यं यद्वा तस्यैवपरमार्थसत्यत्वप्रतिपादनायतदितरस्यमिथ्यात्वमुक्तं यत्रमृषैवायंत्रिसर्गोनवस्तुतःसन्निति
यत्रेत्यनेनप्रतीतमुपाधिसंबंधंवारयति स्वेनैवधाम्नामहसानिरस्तंकुहकंकपटंयस्मिंस्तं तटस्थलक्षणमाह जन्मादीति अस्यविश्वस्यजन्म
स्थितिभंगायतोभवंतितंधीमहीति तत्रहेतुः अन्वयादितरतश्चार्थेषु कार्येषुपरमेश्वरस्यतद्रूपेणान्वयादकार्येभ्यश्चखपुष्पादिभ्यस्तद्व्यतिरेका
त् यद्वा अन्वयशब्देनानुवृत्तिरितरशब्देनव्यावृत्तिः अनुवृत्तत्वात्सद्रूपंब्रह्मकारणंमृत्सुवर्णादिवत् व्यावृत्तत्वाद्विश्वंकार्यंघटकुंडलादिव
दित्यर्थः यद्वासावयवत्वादन्वयव्यतिरेकाभ्यांयदस्यजन्मादितद्यतोभवतीतिसंबंधःयतोवाइमानिभूतानिजायंते येनजातानिजीवंतियत्प्र
यंत्यभिसंविशंतीत्याद्याःश्रुतयः स्मृतयश्च यतःसर्वाणिभूतानिभवंत्यादियुगागमे॥यस्मिंश्चप्रलयंयांतिपुनरेवयुगक्षयइत्याद्याः तर्हिकिंप्रधानं
जगत्कारणत्वाद्ध्येयमभिप्रेतंनेत्याह अभिज्ञोयस्तम् सऐक्षतलोकानुसृजाइति सइमाँल्लोकानसृजतेतिश्रुतेःईक्षतेर्नाशब्दमितिन्यायाच्च

तर्हिजीवःस्यान्नेत्याह स्वराट् स्वेनैवराजतेयः तं स्वतःसिद्धज्ञानवानित्यर्थः तर्हिकिंब्रह्मा हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेक आसीदितिश्रुतेः नेत्याह तेनइति आदिकवयेब्रह्मणेऽपिब्रह्मवेदंयस्तेनेप्रकाशितवान् योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै तंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्यइतिश्रुतेः ननुब्रह्मणोऽन्यतोवेदाध्ययनमप्रसिद्धं सत्यं तत्तुहृदामनसैवतेने अनेनबुद्धिवृत्तिप्रवर्त्तकत्वेनगायत्र्यर्थोदर्शितः वक्ष्यतिहि प्रचोदितायेनपुरासरस्वतीवितन्वताऽजस्यसतींस्मृतिंहृदि स्वलक्षणाप्रादुरभूत्किलास्यतः समेऋषीणामृषभःप्रसीदतामिति ननुब्रह्मास्वयमेवसुप्तप्रतिबुद्धन्यायेनवेदमुपलभतांनेत्याह यद्यस्मिन्ब्रह्मणिसूरयोपिमुह्यंतीति तस्माद्ब्रह्मणोपिपराधीनज्ञानत्वात्स्वतःसिद्धज्ञानःपरमेश्वरएवजगत्कारणं अतएवसत्यःअसतःसत्ताप्रदत्वाच्चपरमार्थसत्यः सर्वज्ञत्वेनचनिरस्तकु

जन्माद्यस्ययतोऽन्वयादितरतश्चार्थेष्वभिज्ञःस्वराट्तेनेब्रह्महृदायआदिकवयेमुह्यंतियत्सूरयः॥
तेजोवारिमृदांयथाविनिमयोयत्रत्रिसर्गोमृषाधाम्नास्वेनसदानिरस्तकुहकंसत्यंपरंधीमहि ॥ १ ॥

हकः तंधीमहीतिगायत्र्याप्रारंभेणचगायत्र्याख्यब्रह्मविद्यारूपमेतत्पुराणमितिदर्शितं यथोक्तंमत्स्यपुराणेपुराणदानप्रस्तावे यत्राधिकृत्यगायत्रींवर्ण्यतेधर्मविस्तरः ॥ वृत्रासुरवधोपेतंतद्भागवतमिष्यते ॥ लिखित्वातच्चयोदद्याद्धेमसिंहसमान्वितं ॥ प्रौष्ठपद्यांपौर्णमास्यांसयातिपरमंपदं ॥ अष्टादशसहस्राणिपुराणंतत्प्रकीर्त्तितं ॥ पुराणांतरेच ग्रंथोष्टादशसाहस्रोद्वादशस्कंधसंमितः ॥ हयग्रीवब्रह्मविद्यायत्रवृत्रवधस्तथा ॥ गायत्र्याचसमारंभस्तद्वैभागवतंविदुः ॥ पद्मपुराणेअंबरीषंप्रतिगौतमोक्तिःअंबरीषशुकप्रोक्तंनित्यंभागवतंशृणु ॥ पठस्वस्वमुखेनापियदीच्छसिभवक्षयमिति अतएवेदंभागवतमन्यवदित्यपिनशंकनीयं ॥ १ ॥ ॥ ॥

इदानींश्रोतृप्रवर्त्तनायश्रीभागवतस्यकांडत्रयविषयेभ्यःसर्वशास्त्रेभ्यःश्रैष्ठ्यंदर्शयति धर्मइति अत्रश्रीमतिसुंदरेभागवतेपरमोधर्मोनिरूप्य
तेपरमत्वेहेतुः प्रकर्षेणउज्झितंकैतवंफलाभिसंधिलक्षणंकपटंयस्मिन्सः प्रशब्देनमोक्षाभिसंधिरपिनिरस्तः केवलमीश्वराराधनलक्षणोध
र्मोनिरूप्यतइतिअधिकारितोऽपिधर्मस्यपरमत्वमाह निर्मत्सराणांपरोत्कर्षासहनंमत्सरस्तद्रहितानां सतांभूतानुकंपिनाम् एवंकर्मकांडवि
षयेभ्यःशास्त्रेभ्यःश्रैष्ठ्यमुक्तम् ज्ञानकांडविषयेभ्योपिश्रैष्ठ्यमाह वेद्यमिति वास्तवंपरमार्थभूतंवस्तुवेद्यंनतुवैशेषिकाणामिवद्रव्यगुणादिरू
पम् यद्वा वास्तवशब्देनवस्तुनोंऽशोजीवोवस्तुनःशक्तिर्मायावस्तुनःकार्यंजगत्तत्सर्वंवस्त्वेवनततःपृथगितिवेद्यम् अयत्नेनैवज्ञातुंशक्य

धर्मःप्रोज्झितकैतवोऽत्रपरमोनिर्मत्सराणांसतांवेद्यंवास्तवमत्रवस्तुशिवदंतापत्रयोन्मूलनम् ॥
श्रीमद्भागवतेमहामुनिकृतेकिंवापरैरीश्वरःसद्योहृद्यवरुध्यतेऽत्रकृतिभिःशुश्रूषुभिस्तत्क्षणात् ॥ २ ॥

मित्यर्थः ततःकिमतआह शिवदंपरमसुखदम् किंच आध्यात्मिकादितापत्रयोन्मूलनंच अनेनज्ञानकांडविषयेभ्यःश्रैष्ठ्यंदर्शितम् कर्तृतोऽ
पिश्रैष्ठ्यमाह महामुनिःश्रीनारायणस्तेनप्रथमंसंक्षेपतःकृतं देवताकांडविषयगतंश्रैष्ठ्यमाह परैःशास्त्रैस्तदुक्तसाधनैर्वाईश्वरोहृदिकिंवास
द्यएवावरुध्यतेस्थिरीक्रियते वाशब्दःकटाक्षे किंतुविलंबेनकथंचिदेव अत्रतुशुश्रूषुभिःश्रोतुमिच्छद्भिरेवतत्क्षणादेवावरुध्यते इदमेवत
र्हिकिमितिसर्वेनशृण्वंतितत्राह कृतिभिरिति श्रवणेच्छातुपुण्यैर्विनानोत्पद्यतइत्यर्थः तस्मादत्रकांडत्रयार्थस्यापियथावत्प्रतिपादनादिदमे
वसर्वशास्त्रेभ्यःश्रेष्ठमतोनित्यमेतदेवश्रोतव्यमितिभावः ॥ २ ॥ ॥ ॥ ॥

इदानींतुनकेवलंसर्वशास्त्रेभ्यःश्रेष्ठत्वादस्यश्रवणंविधीयतेअपितुसर्वशास्त्रफलरूपमिदमतःपरमादरेणसेव्यमित्याह निगमेति निगमोवेदः
सएवकल्पतरुःसर्वपुरुषार्थोपायत्वात्तस्यफलमिदंभागवतंनामतत्तुवैकुंठगतंनारदेनानीयमह्यंदत्तम् मयाचशुकस्यमुखेनिहितम् तच्चतन्मु
खाद्भुविगलितंशिष्यप्रशिष्यादिरूपपल्लवपरंपरयाशनैरखंडमेवावतीर्णनतूच्चपातेनस्फुटितमित्यर्थः एतच्चभविष्यदपिभूतवन्निर्दिष्टं अना
गताख्यानेनैवास्यशास्त्रस्यप्रवृत्तेः अतएवामृतरूपेणद्रवेणसंयुतम् लोकेहिशुकमुखस्पृष्टंफलममृतमिवस्वादुभवतीतिप्रसिद्धं अत्रशुकोमु
निः अमृतंपरमानंदःसएवद्रवोरसः रसोवैसः रसंह्येवायंलब्ध्वानंदीभवतीतिश्रुतेः अतोरसिकाहेरसज्ञास्तत्रापिभावुकाःहेरसविशेषभाव



निगमकल्पतरोर्गलितंफलंशुकमुखादमृतद्रवसंयुतम् ॥
पिबतभागवतंरसमालयंमुहुरहोरसिकाभुविभावुकाः ॥ ३ ॥

नाचतुराः अहोभुविगलितमित्यलभ्यलाभोक्तिः इदंभागवतंनामफलंमुहुःपिबत ननुत्वगष्ट्यादिकंविहायफलाद्रसःपीयतेकथंफलमेवपा
तव्यंतत्राह रसंरसरूपम् अतस्त्वगष्ट्यादेर्हेयांशस्याभावात्फलमेवकृत्स्नंपिबत अत्रचरसतादात्म्यविवक्षयारसवत्त्वस्याविवक्षितत्वादगुणव
चनेऽपिरसशब्देमतुपःप्राप्त्यभावात्तेनविनैवरसंफलमितिसामानाधिकरण्यम् तत्रफलमित्युक्तेपानासंभवोहेयांशप्रसक्तिश्चभवेदितितान्नि
वृत्त्यर्थंरसमित्युक्तं रसमित्युक्तेपिगलितस्यरसस्यपातुमशक्यत्वात्फलमितिद्रष्टव्यं नचभागवतामृतपानंमोक्षेऽपित्याज्यमित्याह आलयं
लयोमोक्षः अभिविधावाकारः लयमभिव्याप्य नहीदंस्वर्गादिसुखवन्मुक्तैरुपेक्ष्यतेकिंतुसेव्यतएव वक्ष्यतिहि आत्मारामाश्चमुनयोनि
र्ग्रंथाअप्युरुक्रमे ॥ कुर्वंत्यहैतुकींभक्तिमित्थंभूतगुणोहरिरिति ॥ ३ ॥ ॥ ॥ ॥

तदेवमनेनश्लोकत्रयेणविशिष्टेष्टदेवतानुस्मरणपूर्वकंप्रारिप्सितस्यशास्त्रस्यविषयप्रयोजनादिवैशिष्ट्येनसुखसेव्यत्वेनचश्रोतॄनभिमुखीकृ
त्यशास्त्रमारभते नैमिशइति ब्रह्मणाविसृष्टस्यमनोमयस्यचक्रस्यनेमिःशीर्यतेकुंठीभवतियत्रतन्नेमिशंनेमिशमेवनैमिशं तथाचवायवीये एत
न्मनोमयंचक्रंमयासृष्टंविसृज्यते ॥ यत्रास्यशीर्यतेनेमिःसदेशस्तपसःशुभः ॥ इत्युक्त्वासूर्यसंकाशंचक्रंसृष्ट्वामनोमयं ॥ प्रणिपत्यमहादेवं
विससर्जपितामहः ॥ तेपिहृष्टतमाविप्राःप्रणम्यजगतांप्रभुम् ॥ प्रययुस्तस्यचक्रस्ययत्रनेमिर्व्यशीर्यत ॥ तद्वनंतेनविख्यातंनैमिशंमुनिपू
जितमिति नैमिषइतिपाठेवाराहपुराणोक्तंद्रष्टव्यं तथाहि गौरमुखमृषिंप्रतिभगवद्वाक्यम् एवंकृत्वाततोदेवोमुनिंगौरमुखंतदा ॥ उवाच
निमिषेणेदंनिहतंदानवंबलं ॥ अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितं ॥ भविष्यतियथार्थंवैब्राह्मणानांविशेषकमिति आनिमिषःश्री
विष्णुःअलुप्तदृष्टित्वात्तस्यक्षेत्रे तथाचात्रैवशौनकादिवचनं क्षेत्रेऽस्मिन्वैष्णवेवयमिति स्वःस्वर्गेगीयतइतिस्वर्गायोहरिःसएवलोकःभक्ता

नैमिशेऽनिमिषक्षेत्रेऋषयःशौनकादयः॥सत्रंस्वर्गायलोकायसहस्रसममासत ॥४॥ तएकदातुमुनयःप्रात
र्हुतहुताग्नयः॥सत्कृतंसूतमासीनंपप्रच्छुरिदमादरात् ॥५॥ ऋषयऊचुः त्वयाखलुपुराणानिसेतिहासा
निचानघ ॥आख्यातान्यप्यधीतानिधर्मशास्त्राणियान्युत॥६॥ यानिवेदविदांश्रेष्ठोभगवान्बादरायणः॥अ
न्येचमुनयःसूतपरावरविदोविदुः॥ ७॥ वेत्थत्वंसौम्यतत्सर्वंतत्त्वतस्तदनुग्रहात् ॥ ब्रूयुःस्निग्धस्यशिष्यस्य
गुरवोगुह्यमप्युत॥८॥तत्रतत्रांजसायुष्मन्भवतायद्विनिश्चितं॥ पुंसामेकांततःश्रेयस्तन्नःशंसितुमर्हसि॥९॥

नां।निवासस्थानंतस्मैतत्प्राप्तयइत्यर्थः सहस्रंसमाःसंवत्सराअनुष्ठानकालोयस्यतत्सत्रंसत्रसंज्ञकंकर्मोद्दिश्यआसतउपविविशुः यद्वाआस
ताकुर्वंतेत्यर्थः आलभेतानिर्वपतिउपयंतीत्यादिवत्प्रत्ययोच्चारणमात्रार्थत्वेनआस्तेर्धात्वर्थस्याविवक्षितत्वात् ॥ ४ ॥ प्रातःकालेहुताएवहु
ताअग्नयोयैस्ते अनेननित्यनैमित्तिकहोमसाकल्यंदर्शितम् इदंवक्ष्यमाणमादरात्पप्रच्छुः ॥ ५ ॥ विविदिषितानर्थान्प्रष्टुंसूतस्यसर्वशास्त्र
ज्ञानातिशयमाहुः त्वयेतित्रिभिःश्लोकैः इतिहासोमहाभारतादिस्तत्सहितानि नकेवलमधीतानिअपितुआख्यातान्यपिव्याख्यातानिच
उतअपियानिधर्मशास्त्राणितान्यपि ॥ ६ ॥ किंच यानीत्यादि विदांविदुषांमध्येश्रेष्ठोव्यासोयानिवेद परावरेसगुणनिर्गुणेब्रह्मणिविदं
तीतितथा ॥ ७ ॥ वेत्थजानासि सौम्यहेसाधो तेषामनुग्रहात् तत्त्वतोज्ञानेहेतुमाह ब्रूयुरिति स्निग्धस्यप्रेमवतःउतएवरहस्यमपिब्रूयुरे
व ॥ ८ ॥ अंजसाग्रंथार्जवेन एकांततःश्रेयःअव्यभिचारिश्रेयःसाधनम् ॥ ९ ॥ ॥ ॥

अन्येपिबहुनाकालेनबहुशास्त्रश्रवणादिभिर्विचिन्वंतुनेत्याहुः प्रायेणेति हेसभ्यसाधोअस्मिन्युगेकलौअल्पायुषोजनास्तत्रापिमंदाअलसा स्तत्रापिसुमंदमतयस्तत्रापिमंदभाग्यास्तत्राप्युपद्रुतारोगादिभिः ॥ १० ॥ नचबहुशास्त्रश्रवणेऽपितावतैवफलसिद्धिरित्याहुः भूरीणिक र्माण्यनुष्ठेयानियेषुतानि समुद्धृत्ययथावदुद्धृत्य येनउद्धृतवचनेनआत्माबुद्धिःसंप्रसीदतिसम्यगुपशाम्यति ॥ ११ ॥ प्रश्नांतरंसूतजानासी तिपंचभिः भद्रंतइत्यौत्सुक्येनाशीर्वादः भगवान्निरतिशयैश्वर्यादिगुणः सात्वतांसच्छब्देनसत्वमूर्तिर्भगवान्सउपास्यत्तयाविद्यतेयेषा मितिसात्वंतोभक्ताः स्वार्थेअण्राक्षसवायसादिवत् तस्यचाश्रवणमार्षम् तदेवंसात्वंतइतिभवति तेषांपतिःपालकः यस्यार्थविशेषस्य चिकीर्षयावसुदेवस्यभार्यायांदेवक्यांजातः ॥ १२ ॥ अंगहेसूततन्नोवर्णयितुमर्हसि सामान्यतस्तावद्यस्यावताराभूतानांक्षेमायपालनाय

प्रायेणाल्पायुषःसभ्यकलावस्मिन्युगेजनाः ॥ मंदाःसुमंदमतयोमंदभाग्याह्युपद्रुताः ॥ १० ॥ भूरीणिभूरि कर्माणिश्रोतव्यानिविभागशः ॥ अतःसाधोऽत्रयत्सारंसमुद्धृत्यमनीषया ॥ ब्रूहिनःश्रद्दधानानांयेनात्मासं प्रसीदति ॥ ११ ॥ सूतजानासिभद्रंतेभगवान्सात्वतांपतिः ॥ देवक्यांवसुदेवस्यजातोयस्यचिकीर्षया ॥ १२ ॥ तन्नःशुश्रूषमाणानामर्हस्यंगानुवर्णितुं ॥ यस्यावतारोभूतानांक्षेमायचभवायच ॥ १३ ॥ आपन्नःसंसृतिंघोरांय न्नामविवशोगृणन् ॥ ततःसद्योविमुच्येतयद्बिभेतिस्वयंभयं ॥ १४ ॥ यत्पादसंश्रयाःसूतमुनयःप्रशमाय नाः ॥ सद्यःपुनंत्युपस्पृष्टाःस्वर्धुन्यापोऽनुसेवया ॥ १५ ॥ कोवाभगवतस्तस्यपुण्यश्लोकेड्यकर्मणः ॥ शु द्धिकामोनशृणुयाद्यशःकलिमलापहं ॥ १६ ॥ तस्यकर्माण्युदाराणिपरिगीतानिसूरिभिः ॥ ब्रूहिनःश्रद्द धानानांलीलयादधतःकलाः ॥ १७ ॥ ॥ ॥ ॥ ॥



भवायसमृद्धये ॥ १३ ॥ तत्प्रभावमनुवर्णयंतस्तद्यशःश्रवणौत्सुक्यमाविष्कुर्वंति आपन्नइतित्रिभिः संसृतिमापन्नःप्राप्तःविवशोऽपि त तःसंसृतेःतत्रहेतुः यद्यतोनाम्नःभयमपिआविद्यालक्षणंतमःस्वयमेवबिभेति ॥ १४ ॥ किंच यस्यपादःसंश्रयोयेषांअतएवप्रशमोऽयनंव र्त्माश्रयोवायेषांतेमुनयउपस्पृष्टाःसन्निधिमात्रेणसेविताःसद्यःपुनंति स्वर्धुनीगंगातस्याआपस्तुतत्पादान्निःसृतानतुतत्रैवतिष्ठंतिअतस्तत्सं बंधेनैवपुनंत्योऽप्यनुसेवयापुनंतिनतुसद्यइतिमुनीनामुत्कर्षोक्तिः ॥ १५ ॥ पुण्यश्लोकैरीड्यानिस्तव्यानिकर्माणियस्यतस्ययशः ॥ १६ ॥ प्रश्नांतरंतस्येतिउदाराणिमहांतिविश्वसृष्ट्यादीनि सूरिभिर्नारदादिभिः कलाःब्रह्मरुद्रादिमूर्तीः ॥ १७ ॥ ॥

अथेतिप्रश्नांतरे अवतारकथाः स्थित्यर्थमेवतत्तदवसरेयेमत्स्याद्यवतारास्तदीयाः कथाः स्वैरंलीलाः कुर्वतः श्रीकृष्णावतारप्रयोजनप्रश्नेनै
वतच्चरितप्रश्नोऽपिजातएवेतिज्ञातव्यं ॥ १८ ॥ अत्यौत्सुक्येनपुनरपितच्चरितान्येवश्रोतुमिच्छंतस्तत्रात्मनस्तृप्त्यभावमावेदयंति वयंत्वि
ति योगयागादिषुतृप्ताःस्म उद्गच्छतितमोयस्मात्सउत्तमस्तथाभूतःश्लोकोयशोयस्यतस्यविक्रमेतुविशेषेणनतृप्यामः अलमितिनमन्यामहे
तत्रहेतुः यद्विक्रमंशृण्वताम् यद्वा अन्येतृप्यंतुनामवयंतुनेतितुशब्दस्यान्वयः अयमर्थः त्रेधाह्यलंबुद्धिर्भवति उदरादिभरणेनवारसाज्ञा
नेनवास्वादुविशेषाभावाद्वा तत्रशृण्वतामित्यनेनश्रोत्रस्याकाशत्वादभरणमित्युक्तं रसज्ञानामित्यनेनचाज्ञानतः पशुवत्तृप्तिर्निराकृता इक्षु
भक्षणवद्रसांतराभावेनतृप्तिंनिराकरोति पदेपदेप्रतिक्षणं स्वादुतोपिस्वादु ॥ १९ ॥ अतः श्रीकृष्णचरितानिकथयेत्याशयेनाहुः कृतवा

अथाख्याहिहरेर्धीमन्नवतारकथाः शुभाः ॥ लीलाविदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८ ॥ वयंतुनवितृ
प्यामउत्तमश्लोकविक्रमे ॥ यच्छृण्वतांरसज्ञानांस्वादुस्वादुपदेपदे ॥ १९ ॥ कृतवान्किलवीर्याणिसहरामे
णकेशवः ॥ अतिमर्त्यानिभगवान्गूढः कपटमानुषः ॥ २० ॥ कलिमागतमाज्ञायक्षेत्रेऽस्मिन्वैष्णवेवयं ॥
आसीनादीर्घसत्रेणकथायांसक्षणाहरेः ॥ २१ ॥ त्वंनः संदर्शितोधात्रादुस्तरंनिस्तितीर्षतां ॥ कलिंसत्वहरंपुं
सांकर्णधारइवार्णवं ॥ २२ ॥ ब्रूहियोगेश्वरेकृष्णेब्रह्मण्येधर्मवर्मणि ॥ स्वांकाष्ठामधुनोपेतेधर्मः कंशरणंगतः
॥ २३ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेनैमिषेयोपाख्यानेप्रथमोऽध्यायः ॥ १ ॥ व्यासउवाच
इतिसंप्रश्नसंहृष्टोविप्राणांरौमहर्षणिः ॥ प्रतिपूज्यवचस्तेषांप्रवक्तुमुपचक्रमे ॥ १ ॥ ॥

निति अतिमर्त्यानिमर्त्यानतिक्रांतानिगोवर्द्धनोद्धरणादीनि मनुष्येष्वसंभावितानीत्यर्थः ॥ २० ॥ ननुयाजनाध्यापनादिव्यग्राणांकुतए
तच्छ्रवणावकाशः स्यादतआहुः कलिमागतंज्ञात्वातद्भियाविष्णुपदंगंतुकामादीर्घसत्रेणनिमित्तेनात्रासीनाः हरेः कथायांसक्षणालब्धावस
राः ॥ २१ ॥ अस्मिंश्चसमयेत्वद्दर्शनमीश्वरेणैवसंपादितमित्यभिनंदंति त्वमिति कलिंनिस्तर्तुमिच्छतामर्णवंतितीर्षतांकर्णधारोनाविक
इव ॥ २२ ॥ पुनः प्रश्नांतरंब्रूहीति धर्मस्यवर्मणिकवचवद्रक्षके स्वांकाष्ठांमर्यादांस्वरूपमित्यर्थः अस्यचोत्तरंकृष्णेस्वधामोपगतेधर्मज्ञा
नादिभिः सहेत्ययंश्लोकः ॥ २३ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ तदेवंप्रथमेध्याये
षट्प्रश्नामुनिभिः कृताः ॥ द्वितीयेतूत्तरंसूतश्चतुर्णामाहतेष्वथ ॥ १ ॥ विप्राणामिति एवंभूतैः सम्यक्प्रश्नैः सम्यक्हृष्टोरोमहर्षणस्यपुत्रउग्र
श्रवास्तेषांवचः प्रतिपूज्यसत्कृत्यप्रवक्तुमुपचक्रमेउपक्रांतवान् ॥ १ ॥ ॥ ॥

प्रवचनस्योपक्रमोनामगुरुदेवतानमस्कारइतितमाहत्रिभिः यमिति तत्रस्वगुरोःशुकस्यैश्वर्यंतच्चरितेनैवद्योतयन्नाह यंप्रव्रजंतंसंन्यस्यग
च्छंतं अनुपेतंमामुपनयस्वेत्युपनयनार्थमनुपसन्नं यद्वाकेनाप्यनुपेतमननुगतमेकाकिनमित्यर्थः तत्रहेतुः अपेतकृत्यंकृत्यशून्यंकर्ममार्गे
अप्रवर्त्तमानंनैष्ठिकत्वात् द्वैपायनोव्यासोविरहात्कातरोभीतःपुत्रा ३ इतिप्लुतेनाजुहावआहूतवान् दूराद्व्हानेप्लुतेसत्यपिसंधिरार्षः तदा
तन्मयतयाशुकरूपतयातरवोऽभिनेदुःप्रत्युत्तरमुक्तवंतः पितुःस्नेहानुबंधपरिहारायवृक्षरूपेणोत्तरंदत्तवानित्यर्थः तंमुनिमानतोऽस्मि त
न्मयत्वोपपादनायविशेषणं सर्वभूतानांहृन्मनःअयतेयोगबलेनप्रविशतीतिसर्वभूतहृदयस्तं ॥ २ ॥ तत्कृपालुतांदर्शयन्नाह यइति अं
धंगाढंतमःसंसाराख्यमतितर्तुमिच्छतां पुराणानांमध्येगुह्यंगोप्यं तत्रहेतुत्वेनचत्वारिविशेषणानि स्वःनिजःअसाधारणःअनुभावःप्रभा
वोयस्यतत्स्वानुभावं अखिलश्रुतीनांसारं एकमद्वितीयमनुपममित्यर्थः आत्मानंकार्यकारणसंघातमधिकृत्यवर्त्तमानमात्मतत्त्वमध्यात्मंत

**सूतउवाच ॥ यंप्रव्रजंतमनुपेतमपेतकृत्यंद्वैपायनोविरहकातरआजुहाव ॥ पुत्रेतितन्मयतयातरवोऽभिनेदु स्तंसर्वभूतहृदयंमुनिमानतोऽस्मि॥२॥ यःस्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतांतमोंधं ॥ संसारिणांकरुणयाहपुराणगुह्यंतंव्याससूनुमुपयामिगुरुंमुनीनां ॥ ३ ॥ नारायणंनमस्कृत्यनरंचैव नरोत्तमं ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥४॥ मुनयःसाधुपृष्टोऽहंभवद्भिर्लोकमंगलं ॥ यत्कृतःकृष्ण संप्रश्नोयेनात्मासुप्रसीदति ॥ ५ ॥ सवैपुंसांपरोधर्मोयतोभक्तिरधोक्षजे ॥ अहैतुक्यप्रतिहतायात्मासं प्रसीदति ॥ ६ ॥ वासुदेवेभगवतिभक्तियोगःप्रयोजितः ॥ जनयत्याशुवैराग्यंज्ञानंयत्तदहैतुकं ॥ ७ ॥**

स्यदीपंसाक्षात्प्रकाशकं उपयामिशरणंव्रजामि ॥ ३ ॥ जयंत्यनेनसंसारमितिजयोग्रंथस्तमुदीरयेदितिस्वयंतथोदीरयन्नन्यान्पौराणिका
नुपशिक्षयति ॥ ४ ॥ तेषांवचःप्रतिपूज्येतियदुक्तंतत्प्रतिपूजनंकरोति हेमनुयःसाधुयथाभवतितथाऽहंपृष्टः यतोलोकानांमंगलमेतत् य
द्यतःकृष्णविषयःसंप्रश्नःकृतः सर्वशास्त्रार्थसारोद्धारप्रश्नस्यापिकृष्णेपर्यवसानादेवमुक्तं ॥ ५ ॥ तत्रयत्प्रथमंपृष्टंसर्वशास्त्रसारमैकांतिकंश्रे
योब्रूहीतितत्रोत्तरं सवैपुंसामिति अयमर्थः धर्मोद्विविधः प्रवृत्तिलक्षणोनिवृत्तिलक्षणश्च तत्रयःस्वर्गाद्यर्थःप्रवृत्तिलक्षणःसोऽपरः यतस्तुध
र्मांच्छ्रवणादरादिलक्षणाभक्तिर्भवतिसपरोधर्मःसएवैकांतिकंश्रेयइति कथंभूता अहैतुकीहेतुःफलानुसंधानंतद्रहिता अप्रतिहताविघ्नैरन
भिभूता ॥ ६ ॥ ननुतमेतमात्मानंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसाऽनाशकेनेत्यादिश्रुतिभ्योधर्मस्यज्ञानांगत्वंप्रसिद्धं
तत्कुतोभक्तिहेतुत्वमुच्यते सत्यं तत्तुभक्तिद्वारेणेत्याह वासुदेवइति अहैतुकंशुष्कतर्काद्यगोचरमौपनिषदमित्यर्थः ॥ ७ ॥ ॥

व्यतिरेकमाह ॥ धर्मइति ॥ योधर्मइतिप्रसिद्धःसयदिविष्वक्सेनस्यकथासुरतिंनोत्पादयेत्तर्हिस्वनुष्ठितोऽपिसन्नयंश्रमोज्ञेयः ननुमोक्षार्थ
स्यापिधर्मस्यश्रमत्वमस्त्येवअतआह केवलंविफलःश्रमइत्यर्थः नन्वस्तितत्रापिस्वर्गादिफलमित्याशंक्यएवकारेणानिराकरोति क्षयिष्णु
त्वान्नतत्फलमित्यर्थः नन्वक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवतीत्यादिश्रुतेर्नतत्फलस्यक्षयिष्णुत्वमित्याशंक्याहिशब्देनसाधयति तद्य
थेहकर्मचितोलोकःक्षीयतेएवमेवामुत्रपुण्यचितोलोकःक्षीयतइतितर्कानुगृहीतयाश्रुत्याक्षयिष्णुत्वप्रतिपादनात् ॥ ८ ॥ तदेवंहरिभक्ति
द्वारातदितरवैराग्यात्मज्ञानपर्यंतःपरोधर्मइत्युक्तं अन्येतुमन्यंते धर्मस्यअर्थःफलंतस्यचकामःफलंतस्यचेंद्रियप्रीतिस्तत्प्रीतेश्चपुनरपिधर्मा
र्थादिपरंपरेति यथाहुः धर्मादर्थश्चकामश्चसाकिमर्थंनसेव्यतइत्यादि तन्निराकरोति धर्मस्येतिद्वाभ्यां आपवर्ग्यस्यउक्तन्यायेनापवर्गपर्यंत
स्यार्थायफलत्वायअर्थोनोपकल्पतेयोग्योनभवति तथाऽर्थस्याप्येवंभूतधर्माव्यभिचारिणःकामोलाभायफलत्वायनहिस्मृतोमुनिभिः ॥९॥

## धर्मःस्वनुष्ठितःपुंसांविष्वक्सेनकथासुयः ॥ नोत्पादयेद्यदिरतिंश्रमएवहिकेवलं ॥ ८ ॥ धर्मस्यह्यापवर्ग्य स्यनार्थोऽर्थायोपकल्पते ॥ नार्थस्यधर्मैकांतस्यकामोलाभायहिस्मृतः ॥ ९ ॥ कामस्यनेंद्रियप्रीतिर्लाभो जीवेतयावता ॥ जीवस्यतत्त्वजिज्ञासानार्थोयश्चेहकर्मभिः ॥ १० ॥ वदंतितत्तत्त्वविदस्तत्त्वंयज्ज्ञानमद्वयं ॥ ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते ॥ ११ ॥ तच्छ्रद्दधानामुनयोज्ञानवैराग्ययुक्तया ॥ पश्यंत्यात्मनि चात्मानंभक्त्याश्रुतगृहीतया ॥ १२ ॥ ॥ ॥ ॥ ॥

कामस्यचविषयभोगस्येंद्रियप्रीतिर्लाभःफलंनभवतिकिंतुयावताजीवेततावानेवकामस्यलाभः जीवनपर्याप्तएवकामःसेव्यइत्यर्थः जीव
स्यजीवनस्यचपुनःकर्मानुष्ठानद्वाराकर्मभिर्यइहप्रसिद्धःसोऽर्थोनभवतिकिंतुतत्त्वजिज्ञासैवेति ॥ १० ॥ ननुचतत्त्वजिज्ञासानामधर्मजि
ज्ञासैव धर्मएवहितत्त्वमितिकेचित्तत्राह तत्त्वविदस्तुतदेवतत्त्वंवदंति किंतत् यत्ज्ञानंनाम अद्वयमितिक्षणिकविज्ञानपक्षंव्यावर्त्तयति
ननुतत्त्वविदोऽपिविगीतवचनाएव मैवं तस्यैवतत्त्वस्यनामांतरैरभिधानादित्याह औपनिषदैर्ब्रह्मेतिहैरण्यगर्भैःपरमात्मेतिसात्वतैर्भग
वानितिअभिधीयते ॥ ११ ॥ तच्चतत्त्वंसपरिकरयाभक्त्यैवप्राप्यतइत्याह तच्चेत्यन्वयःज्ञानवैराग्ययुक्तयेत्यत्रज्ञानंअपरोक्षं तच्चतत्त्वमात्म
निक्षेत्रज्ञेपश्यंति किंतत् आत्मानंपरमात्मानं श्रुतेनवेदांतादिश्रवणेनगृहीतयाप्राप्तयोतिभक्तेर्दार्ढ्यमुक्तं ॥ १२ ॥ ॥

धर्मस्यफलंभक्तिर्नार्थकामादिकमितीममर्थमुपपाद्योपसंहरति अतइति हेद्विजश्रेष्ठाःहरितोषणंहरेराराधनंसांसिद्धिःफलं ॥ १३ ॥ यस्मा च्चभक्तिहीनोधर्मःकेवलंश्रमएवतस्माद्भक्तिप्रधानएवधर्मोऽनुष्ठेयइत्याह तस्मादिति एकेनएकाग्रेणमनसा ॥ १४ ॥ भक्तिरहितोधर्मःकेवलं श्रमएवेतिप्रपंचितं इदानींतुभक्तेर्मुक्तिफलत्वंप्रपंचयति यदिति यस्यानुध्याअनुध्यानंसैवअसिःखड्गःस्तेनयुक्ताविवेकिनोग्रंथिमहंकारंनि बध्नातियत्कर्मतच्छिंदंतितस्यकथायांरतिंकोनकुर्यात् ॥ १५ ॥ ननुसत्यमेवकर्मनिर्मूलनीहरिकथारतिस्तथाऽपितस्यांरुचिर्नोत्पद्यतेकिं कुर्मस्तत्राह शुश्रूषोरिति पुण्यतीर्थनिषेवणादिभिर्निष्पापस्यमहत्सेवास्यात्तयाचतद्धर्मश्रद्धाततःश्रवणेच्छाततोरुचिःस्यादित्यर्थः ॥१६॥

अतःपुंभिर्द्विजश्रेष्ठावर्णाश्रमविभागशः ॥ स्वनुष्ठितस्यधर्मस्यसंसिद्धिर्हरितोषणं ॥ १३ ॥ तस्मादेकेनमन साभगवान्सात्वतांपतिः ॥ श्रोतव्यःकीर्तितव्यश्चध्येयःपूज्यश्चनित्यदा ॥ १४ ॥ यदनुध्यासिनायुक्ताःकर्म ग्रंथिनिबंधनं ॥ छिंदंतिकोविदास्तस्यकोनकुर्यात्कथारतिं ॥ १५॥ शुश्रूषोःश्रद्दधानस्यवासुदेवकथारुचिः॥ स्यान्महत्सेवयाविप्राःपुण्यतीर्थनिषेवणात् ॥ १६ ॥ शृण्वतांस्वकथांकृष्णःपुण्यश्रवणकीर्तनः ॥ हृद्यंतस्थो ह्यभद्राणिविधुनोतिसुहृत्सतां ॥ १७ ॥ नष्टप्रायेष्वभद्रेषुनित्यंभागवतसेवया ॥ भगवत्युत्तमश्लोकेभक्ति र्भवतिनैष्ठिकी ॥ १८ ॥ तदारजस्तमोभावाःकामलोभादयश्चये ॥ चेतएतैरनाविद्धंस्थितंसत्वेप्रसीदति ॥ ॥ १९ ॥ एवंप्रसन्नमनसोभगवद्भक्तियोगतः ॥ भगवत्तत्त्वविज्ञानंमुक्तसंगस्यजायते ॥ २० ॥ भिद्यते हृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणिदृष्टएवात्मनीश्वरे ॥ २१ ॥ ॥

ततश्चशृण्वतामिति पुण्येश्रवणकीर्त्तनेयस्यसः सतांसुहृत्हितकारी हृदियान्यभद्राणिकामादिवासनास्तानि अंतस्थःहृदयस्थःसन् ॥ ॥ १७ ॥ ततश्चनष्टप्रायेष्विति सर्वाभद्रनाशस्यज्ञानोत्तरकालत्वात्प्रायग्रहणं भागवतानांभागवतशास्त्रस्यवासेवया नैष्ठिकीनिश्चलावि क्षेपकाभावात् ॥ १८ ॥ रजश्चतमश्चयेचतत्प्रभवाःकामादयःएतैरनाविद्धमनभिभूतंप्रसीदतिउपशाम्यति ॥ १९ ॥ भगवद्भक्तियोगतः प्रसन्नमनसः अतएवमुक्तसंगस्य ॥ २० ॥ ज्ञानफलमाह भिद्यतइति हृदयमेवग्रंथिश्चिज्जडग्रथनरूपोऽहंकारःअतएवसर्वेसंशयाःअसं भावनादिरूपाःकर्माण्यनारब्धफलानि आत्मनिस्वरूपभूतेईश्वरेदृष्टेसाक्षात्कृतेसति एवकारेणज्ञानानंतरमेवेतिदर्शयति ॥ २१ ॥

तत्रचसदाचारंदर्शयन्नुपसंहरति अतइति आत्मनःप्रसादनींमनःशोधनींवासुदेवेभक्तिंकुर्वंतीतिभजनीयविशेषोदर्शितः ॥ २२ ॥ तदेवोप
पादयितुंब्रह्मादीनांत्रयाणामेकात्मकत्वेऽपिवासुदेवस्याधिक्यमाह सत्वमिति इहयद्यपिएकएवपरःपुमानस्यविश्वस्यस्थित्यादयेस्थितिसृ
ष्टिप्रलयार्थंसंज्ञाःकेवलंभिन्नाःधत्ते हरिविरिंचिहराइतिवक्तव्येसंधिरार्षः तत्रतेषांमध्येश्रेयांसिशुभफलानिसत्वतनोर्वासुदेवादेवस्युः
॥ २३ ॥ उपाधिवैशिष्ट्येनफलवैशिष्ट्यंसदृष्टांतमाह पार्थिवात्स्वतःप्रवृत्तिप्रकाशरहिताद्दारुणःकाष्ठात्सकाशाद्धूमःप्रवृत्तिस्वभावस्त्रयीम
योवेदोक्तकर्मप्रचुरः ईषत्कर्मप्रत्यासत्तेः तस्मादप्यग्निस्त्रयीमयः साक्षात्कर्मसाधनत्वात् एवंतमसःसकाशाद्रजोब्रह्मदर्शनंब्रह्मप्रकाशकं
तुशब्देनलयात्मकात्तमसः सकाशाद्रजसः सोपाधिकज्ञानहेतुत्वेनकिंचिद्ब्रह्मदर्शनप्रत्यासत्तिमात्रमुक्तंनतुसर्वथातत्प्रकाशकत्वंविक्षेपकत्वा

अतोवैकवयोनित्यंभक्तिंपरमयामुदा॥वासुदेवेभगवतिकुर्वंत्यात्मप्रसादनीं ॥ २२ ॥ सत्वंरजस्तमइतिप्र
कृतेर्गुणास्तैर्युक्तःपरःपुरुषएकइहास्यधत्ते॥ स्थित्यादयेहरिविरिंचिहरेतिसंज्ञाःश्रेयांसितत्रखलुसत्वतनो
र्नृणांस्युः॥२३॥पार्थिवाद्दारुणोधूमस्तस्मादग्निस्त्रयीमयः॥ तमसस्तुरजस्तस्मात्सत्वंयद्ब्रह्मदर्शनं ॥ २४॥
भेजिरेमुनयोऽथाग्रेभगवंतमधोक्षजं॥ सत्वंविशुद्धंक्षेमायकल्पंतेयेनुतानिह ॥२५ ॥ मुमुक्षवोघोररूपान्
हित्वाभूतपतीनथ॥ नारायणकलाःशांताभजंतिह्यनसूयवः ॥ २६ ॥ रजस्तमःप्रकृतयःसमशीलाभजंति
वै॥पितृभूतप्रजेशादीन्श्रियैश्वर्यप्रजेप्सवः॥२७॥वासुदेवपरावेदावासुदेवपरामखाः॥वासुदेवपरायोगा
वासुदेवपराःक्रियाः॥२८॥ ॥ ॥ ॥

त् यत्सत्वंतत्साक्षाद्ब्रह्मदर्शनंअतस्तद्गुणोपाधीनांब्रह्मादीनामपियथोत्तरंवैशिष्ट्यमितिभावः ॥ २४ ॥ वासुदेवभक्तौपूर्वाचारंप्रमाणयति
भेजिरइति अथअतोहेतोःअग्रेपुराविशुद्धसत्वमूर्त्तिंभगवंतमधोक्षजं अतोयेताननुवर्त्ततेतइहसंसारेक्षेमायकल्पंते ॥ २५ ॥ नन्वन्यानपि
केचिद्भजंतोदृश्यंते सत्यं मुमुक्षवस्त्वन्यान्नभजंतिकिंतुसकामाएवेत्याह मुमुक्षवइतिद्वाभ्यां भूतपतीनितिपितृप्रजेशादीनामुपलक्षणं अन
सूयवःदेवतांतरानिंदकाःसंतः ॥२६॥ रजस्तमसीप्रकृतिःस्वभावोयेषांते अतएवपितृभूतादिभिःसमंशीलंयेषांते श्रियासहऐश्वर्यंचप्रजा
श्चेप्संतीतितथाते ॥ २७ ॥ मोक्षप्रदत्वाद्वासुदेवोभजनीयइत्युक्तंसर्वशास्त्रतात्पर्यगोचरत्वांदर्पीत्याहद्वाभ्यां वासुदेवःपरस्तात्पर्यगोचरोये
षांते ननुवेदामखपराहृश्यंतइत्याशंक्यतेऽपितदाराधनार्थत्वात्तत्पराएवेत्युक्तं योगाःयोगशास्त्राणि तेषामप्यासनप्राणायामादिक्रियापरत्व
माशंक्यतासामपितत्प्राप्त्युपायत्वात्तत्परत्वमुक्तं ॥ २८ ॥ ॥ ॥ ॥

ज्ञानंज्ञानशास्त्रं ननुवतज्ज्ञानपरमेवेत्याशंक्यज्ञानस्यापितत्परत्वमुक्तं तपोऽत्रज्ञानं धर्मोधर्मशास्त्रंदानव्रतादिविषयं ननुतत्स्वर्गपरमित्या
शंक्यगम्यतइतिगतिः स्वर्गादिफलंसाऽपितदानंदांशरूपत्वात्तत्परैवेत्युक्तं यद्वा वेदाइत्यनेनैवतन्मूलत्वात्सर्वाण्यपिवासुदेवपराणीत्युक्तंत
त्रननुतेषांमखयोगक्रियादीनांनानार्थपरत्वान्नतदेकपरत्वमित्याशंक यमखादीनामपितत्परत्वमित्युक्तमितिद्रष्टव्यं ॥२९॥ ननुजगत्सर्गप्र
वेशनियमनादिविलासयुक्तेवस्तुनिसर्वशास्त्रसमन्वयोदृश्यतेकथंवासुदेवपरत्वंसर्वस्यतत्राह सएवेति चतुर्भिः एतैरेवश्लोकैस्तस्यकर्माण्यु
दाराणिब्रूहीतिप्रश्नस्योत्तरमुक्तं सदसद्रूपयाकार्यकारणात्मिकया अगुणश्चेत्यन्वयः स्वतोनिर्गुणोऽपिसन्नित्यर्थः॥३०॥भगवतोजगत्कार
णत्वमुक्तं प्रवेशनियमनलक्षणांलीलामाह तयेति विलसितेषुउद्भूतेषुगुणेषुआकाशादिषुअंतःप्रविष्टःसन्गुणवानिवमदधीनाएतेगुणाइ

**वासुदेवपरंज्ञानंवासुदेवपरंतपः॥वासुदेवपरोधर्मोवासुदेवपरागतिः ॥२९॥ सएवेदंससर्जाग्रेभगवाना त्ममायया ॥सदसद्रूपयाचासौगुणमय्याऽगुणोविभुः ॥३०॥ तयाविलसितेष्वेषुगुणेषुगुणवानिव ॥अंतः प्रविष्टआभातिविज्ञानेनविजृंभितः ॥३१॥ यथाह्यवहितोवन्हिर्दारुष्वेकःस्वयोनिषु ॥ नानेवभातिविश्वा त्माभूतेषुचतथापुमान् ॥ ३२ ॥ असौगुणमयैर्भावैर्भूतसूक्ष्मेंद्रियात्मभिः ॥ स्वनिर्मितेषुनिर्विष्टोभुंक्तेभू तेषुतद्गुणान् ॥ ३३ ॥ भावयत्येषसत्वेनलोकान्वैलोकभावनः ॥ लीलावतारानुरतोदेवतिर्यङ्नरादिषु ॥ ॥ ३४ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेद्वितीयोऽध्यायः ॥ २ ॥**

त्यभिमानवानिवनतुवस्तुतस्तथा यतोविज्ञानेनचिच्छक्त्याविजृंभितःअत्यूर्जितः ॥३१॥ बहुरूपत्वलीलामाह यथेति स्वयोनिषुस्वाभि
व्यंजकेषुअवहितोनिहितः विश्वात्मापुमान्परमेश्वरोभूतेषुप्राणिषु अंतर्यामिणोऽपिप्रतियोनिनानात्वेननानात्वमिवउच्यते क्षेत्रज्ञरूपे
णवा ॥ ३२॥ भोगरूपांलीलामाह असौहरिःभूतसूक्ष्माणिचइंद्रियाणिचात्मामनश्चतैःस्वयंनिर्मितेषुभूतेषुचतुर्विधेष्वितिभोगेस्वातंत्र्यंद्यो
त्यते तद्गुणान्तत्तदनुरूपान्विषयानिच्छयाभुंक्तेभोजयतीतिणिजर्थोवाज्ञेयः पालयतीतिवा तदात्वात्मनेपदमार्षं भुजोनवनइतिस्मरणात्
॥ ३३ ॥ इदानींसूतजानासीतिप्रश्नस्योत्तरमाह भावयतिपालयति एतत्तुसर्वावतारसाधारणंप्रयोजनं विशेषतःकृष्णावतारस्यकुंतीस्तु
तौवक्ष्यते लोकभावनःलोककर्त्ता देवादिषुयेलीलावतारास्तेष्वनुरतोऽनुरक्तः ॥ ३४ ॥ इतिप्रथमेटीकायांद्वितीयोऽध्यायः ॥ २ ॥

अवतारकथाप्रश्नेतृतीयेतूत्तराभिधा ॥ पुरुषाद्यवतारोक्त्यातत्तच्चारित्रवर्णनैः ॥ १ ॥ यदुक्तमथाख्याहिहरेर्धीमन्नवतारकथाःशुभाइतित दुत्तरत्वेनावतारानानुक्रमिष्यन्प्रथमंपुरुषावतारमाह जगृहइतिपंचभिः महदादिभिर्महदहंकारपंचतन्मात्रैःसंभूतंतुनिष्पन्नं एकादशेंद्रि याणिपंचमहाभूतानीतिषोडशकलाअंशायस्मिन् यद्यपिभगवद्विग्रहोनैवंभूतस्तथापिविराड्जीवांतर्यामिणोभगवतोविराड्रूपेणोपास नार्थमेत्रमुक्तमितिद्रष्टव्यं ॥ १ ॥ कोसौभगवानित्यपेक्षायांतंविशिनष्टि यस्यांभसिएकार्णवेशयानस्यविश्रांतस्य तत्रचयोगःसमाधिस्तद्रू पांनिद्रांविस्तारयतोनाभिरेवन्हदस्तस्मिन्यदंबुजंतस्मात्सकाशाद्ब्रह्माआसीत्अभूत्पाद्मेकल्पे सपौरुषंरूपंजगृहे ॥ २ ॥ कीदृशंरूपंतदाह यस्येति ननुकीदृशोविग्रहस्तस्ययोऽभसिशेतेस्म तदाह तत्तस्यभगवतोरूपंतुविशुद्धंरजआद्यसंभिन्नं अतएवोर्जितंनिरतिशयंसत्वं॥ ३ ॥

सूतउवाच जगृहेपौरुषंरूपंभगवान्महदादिभिः ॥ संभूतंषोडशकलमादौलोकसिसृक्षया॥१॥ यस्यांभसि शयानस्ययोगनिद्रांवितन्वतः ॥नाभिन्हदांबुजादासीद्ब्रह्माविश्वसृजांपतिः॥२॥यस्यावयवसंस्थानैःकल्पि तोलोकविस्तरः॥तद्वैभगवतोरूपंविशुद्धंसत्वमूर्जितं॥३॥पश्यंत्यदोरूपमदभ्रचक्षुषासहस्रपादोरुभुजानना द्भुतम्॥सहस्रमूर्द्धश्रवणाक्षिनासिकंसहस्रमौल्यंबरकुंडलोल्लसत्॥४॥एतन्नानावताराणांनिधानंबीजमव्य यं ॥यस्यांशांशेनसृज्यंतेदेवतिर्यङ्नरादयः ॥ ५ ॥ सएवप्रथमंदेवःकौमारंसर्गमास्थितः॥चचारदुश्चरंब्रह्मा ब्रह्मचर्यमखंडितं॥६॥द्वितीयंतुभवायास्यरसातलगतांमहीम्॥उद्धरिष्यन्नुपादत्तयज्ञेशःसौकरंवपुः ॥ ७ ॥

एतच्चयोगिनांप्रत्यक्षमित्याह पश्यंतीति अदभ्रमनल्पंज्ञानात्मकंयच्चक्षुस्तेनसहस्रमपरिमितानियानिपादादीनितैरद्भुतं सहस्रंमूर्द्धादयो यस्मिंस्तत् सहस्रंयानिमौल्यादीनितैरुल्लसच्छोभमानं ॥४॥ एतत्तुकूटस्थंनत्वन्यावतारवदाविर्भावतिरोभाववदित्याह एतदादिनारायण रूपं निधियतेऽस्मिन्नितिनिधानं कार्यावसानेप्रवेशस्थानमित्यर्थः बीजमुद्गमस्थानं बीजत्वेऽपिनान्यबीजतुल्यंकिंतुअव्ययं नकेवलम वताराणामेवबीजंकिंतुसर्वप्राणिनामपीत्याह यस्यांशोब्रह्मातस्यांशोमरीच्यादिस्तेन ॥ ५ ॥ सनत्कुमाराद्यवतारंतच्चरित्रंचाह सएवेति कौमारआर्षःप्राजापत्योमानवइत्यादीनिसर्गविशेषनामानि यःपौरुषंरूपंजगृहेसएवदेवःकौमाराख्यंसर्गमास्थितःसन्ब्रह्माब्राह्मणोभूत्वा ब्रह्मचर्यंचचार प्रथमद्वितीयादिशब्दानिर्देशमात्रापेक्षया ॥ ६ ॥ वराहावतारमाह अस्यविश्वस्यभवायउद्भवायमहींमुद्धरिष्यन्नितिकर्मो क्तिः एवंसर्वत्रावतारस्तत्कर्म्मचोक्तमित्यनुसंधेयं ॥ ७ ॥ ॥ ॥ ॥

नारदावतारमाह तृतीयमिति ऋषिसर्गमुपेत्य तत्रचदेवर्षित्वमुपेत्येत्यर्थः सात्वतंवैष्णवंतंत्रंपंचरात्रागममाचष्टउक्तवान् यतस्तंत्रात् निर्गतंकर्मत्वंबंधहेतुत्वंयेभ्यस्तानिनिष्कर्माणितेषांभावोनैष्कर्म्यं कर्मणामेवमोचकत्वंयतोभवतितदाचष्टेत्यर्थः ॥ ८ ॥ नरनारायणावतारमाह तुर्येचतुर्थेऽवतारे धर्मस्यकलाअंशः भार्येत्यर्थः अर्धोवाएषआत्मनोयत्पत्नीतिश्रुतेः तस्याःसर्गे ऋषीभूत्वेत्येकावतारत्वंदर्शयति ॥९॥ कपिलावतारमाह आसुरयेतन्नाम्नेब्राह्मणाय तत्त्वानांग्रामस्यसंघस्यविनिर्णयोयस्मिंस्तत्सांख्यं ॥ १० ॥ दत्तात्रेयावतारमाह षष्ठइति अत्रेरपत्यत्वंतेनैववृतःसन्प्राप्तः अत्रेरपत्यमभिकांक्षतआहतुष्टइतिवक्ष्यमाणत्वात् कथंप्राप्तः अनसूययामत्सदृशापत्यमिषेणमामेवापत्यंवृतवानितिदोषदृष्टिमकुर्वन्नित्यर्थः आन्वीक्षिकीमात्मविद्यांप्रल्हादादिभ्यश्च आदिपदाद्यदुहैहयाद्यागृह्यंते ॥ ११ ॥ यज्ञावतारमाह सय

**तृतीयमृषिसर्गंचदेवर्षित्वमुपेत्यसः ॥ तंत्रंसात्वतमाचष्टनैष्कर्म्यंकर्मणांयतः ॥ ८ ॥ तुर्येधर्मकलासर्गेनरनारायणावृषी ॥ भूत्वात्मोपशमोपेतमकरोद्दुश्चरंतपः ॥९॥ पंचमःकपिलोनामसिद्धेशःकालविप्लुतम् ॥ प्रोवाचासुरयेसांख्यंतत्त्वग्रामविनिर्णयम् ॥ १० ॥ षष्ठेअत्रेरपत्यत्वंवृतःप्राप्तोऽनसूयया ॥ आन्वीक्षिकीमलर्कायप्रल्हादादिभ्यऊचिवान् ॥११॥ ततःसप्तमआकूत्यांरुचेर्यज्ञोऽभ्यजायत॥ सयामाद्यैःसुरगणैरपात्स्वायंभुवांतरम् ॥१२॥ अष्टमेमेरुदेव्यांतुनाभेर्जातउरुक्रमः ॥ दर्शयन्वर्त्मधीराणांसर्वाश्रमनमस्कृतम् ॥ १३ ॥ ऋषिभिर्याचितोभेजेनवमंपार्थिवंवपुः ॥ दुग्धेमामौषधीर्विप्रास्तेनायंसउशत्तमः ॥ १४ ॥ रूपंसजगृहेमात्स्यंचाक्षुषोदधिसंप्लवे ॥ नाव्यारोप्यमहीमय्यामपाद्वैवस्वतंमनुम् ॥ १५ ॥**

ज्ञोयामाद्यैःस्वस्यैवपुत्रायामानामदेवास्तदाद्यैःसहस्वायंभुवंमन्वंतरंपालितवान् तदास्वयमिंद्रोऽभूदित्यर्थः ॥ १२ ॥ ऋषभावतारमाह सर्वाश्रमनमस्कृतं अंत्याश्रमंपारमहंस्यंवर्त्मधीराणांदर्शयन्नाभेराग्नीध्रपुत्रादृषभोजातः ॥ १३ ॥ पृथोरवतारमाह पार्थिवंवपुःराजदेहंपृथुरूपं पाठांतरेपृथोरिदंपार्थवं औषधीरित्युपलक्षणं इमांपृथ्वींसर्वाणिवस्तूनिदुग्धअदुग्ध अडागमाभावस्त्वार्षः हेविप्राःतेनपृथ्वीदोहनेनसोऽयमवतारउशत्तमःकमनीयतमः वशकांतावित्यस्मात् ॥ १४ ॥ मत्स्यावतारमाह चाक्षुषमन्वंतरेयउदधीनांसंप्लवःसंश्लेषस्तस्मिन् यद्यपिमन्वंतरावसानेप्रलयोनास्तितथाऽपिकेनचित्कौतुकेनसत्यव्रतायमायाप्रदर्शिता यथाऽकांडेमार्कंडेयायेतिद्रष्टव्यं महीमय्यांनावि नौकारूपायांमह्यामित्यर्थःअपाद्रक्षितवान् वैवस्वतमितिभाविनीसंज्ञा ॥ १५ ॥ ॥ ॥

कूर्मावतारमाह कमठःकूर्मस्तद्रूपेणैकादशेऽवतारेविभुर्दध्रेदधार ॥ १६ ॥ धन्वंतर्यवतारमाह धन्वंतरंधन्वंतरिरूपम् द्वादशमादिप्रयो
गस्त्वार्षः त्रयोदशममेत्ररूपंतच्चारितेनसहदर्शयति अपाययदित्यत्रसुधामित्यध्याहारः मोहिन्यास्त्रियातद्रूपेणअन्यानसुरान्मोहयन् धन्वं
तरिरूपेणामृतमानीयमोहिन्याऽपाययदित्यर्थः ॥ १७ ॥ नृसिंहावतारमाह नारसिंहंरूपंबिभ्रत् एरकांनिर्ग्रंथितृणम् ॥ १८ ॥ वामनाव
तारमाह दुष्टानांमदंवामयतीतिवामनकंरूपम् ह्रस्वंवा प्रत्यादित्सुस्तस्मादाच्छिद्यग्रहीतुमिच्छुः ॥ १९ ॥ परशुरामावतारमाह अवतारइ
ति त्रिःत्रिगुणंयथाभवतितथासप्तकृत्वःसप्तवारान् एकविंशतिवारानित्यर्थः ॥ २० ॥ व्यासावतारमाह अल्पमेधसःअल्पप्रज्ञान्पुंसोदृष्ट्वात

सुरासुराणामुदधिंमथ्नतांमंदराचलं ॥ दध्रेकमठरूपेणपृष्ठएकादशेविभुः ॥ १६ ॥ धान्वंतरंद्वादशमंत्रयोद
शममेवच ॥ अपाययत्सुरानन्यान्मोहिन्यामोहयन्स्त्रिया ॥ १७ ॥ चतुर्दशंनारसिंहंबिभ्रद्दैत्येंद्रमूर्जितं ॥ द
दारकरजैर्वक्षस्येरकांकटकृद्यथा ॥ १८ ॥ पंचदशंवामनकंकृत्वागादध्वरंबलेः ॥ पदत्रयंयाचमानःप्रत्यादि
त्सुस्त्रिविष्टपं ॥ १९ ॥ अवतारेषोडशमेपश्यन्ब्रह्मद्रुहोन्नृपान् ॥ त्रिःसप्तकृत्वःकुपितोनिःक्षत्रामकरोन्महीं
॥ २० ॥ ततःसप्तदशेजातःसत्यवत्यांपराशरात् ॥ चक्रेवेदतरोःशाखादृष्ट्वापुंसोऽल्पमेधसः ॥ २१ ॥ नरदेव
त्वमापन्नःसुरकार्यचिकीर्षया ॥ समुद्रनिग्रहादीनिचक्रेवीर्याण्यतःपरं ॥ २२ ॥ एकोनविंशेविंशतिमेवृ
ष्णिषुप्राप्यजन्मनी ॥ रामकृष्णावितिभुवोभगवानहरद्भरं ॥ २३ ॥ ततःकलौसंप्रवृत्तेसंमोहायसुरद्विषां ॥ बु
द्धोनाम्नाऽजनसुतःकीकटेषुभविष्यति ॥ २४ ॥ अथासौयुगसंध्यायांदस्युप्रायेषुराजसु ॥ जनिताविष्णुयश
सोनाम्नाकल्किर्जगत्पतिः ॥ २५ ॥ अवताराह्यसंख्येयाहरेःसत्वनिधेर्द्विजाः ॥ यथाऽविदासिनःकुल्याःसर
सःस्युःसहस्रशः ॥ २६ ॥

दनुग्रहार्थंशाखाश्चक्रे ॥ २१ ॥ रामावतारमाह नरदेवत्वंराघवरूपेणप्राप्तःसन् अतःपरमष्टाद
शे ॥ २२ ॥ रामकृष्णावतारमाह विंशतितमइतिवक्तव्येतकारलोपश्छंदोऽनुरोधेन रामकृष्णावित्येवंनामनीजन्मनीप्राप्य ॥ २३ ॥ बुद्धा
वतारमाह अजनस्यसुतः जिनसुतइतिपाठेजिनोऽपिसएव कीकटेषुमध्येगयाप्रदेशे ॥ २४ ॥ कल्क्यवतारमाह युगसंध्यायांभाव्यायां
मित्यर्थः कलेरंतेविष्णुयशसोब्राह्मणात्सकाशाज्जनिताजनिष्यते ॥ २५ ॥ अनुक्तसर्वसंग्रहार्थमाह अवताराइति असंख्येयत्वेदृष्टांतः
यथेति अविदासिनःउपक्षयशून्यात् दसुउपक्षयइत्यस्मात् सरसःसकाशात्कुल्याःक्षुद्रप्रवाहाः ॥ २६ ॥

विभूतीराह ऋषयइति ॥ २७॥ तत्रविशेषमाह एतेचेति पुंसःपरमेश्वरस्यकेचिदंशाःकेचित्कलाःविभूतयश्च तत्रमत्स्यादीनामवतारत्वे नसर्वज्ञत्वसर्वशक्तिमत्वेऽपियथोपयोगमेवज्ञानक्रियाशक्त्याविष्करणम् कुमारनारदादिष्वाधिकारिकेषुयथोपयोगमंशकलावेशः कृष्ण स्तुभगवान्साक्षान्नारायणएवआविर्भूतः सर्वशक्तित्वात् सर्वेषांप्रयोजनमाह इंद्रारयोदैत्यास्तैर्व्याकुलमुपद्रुतंलोकंमृडयंतिसुखिनंकु र्वंति ॥२८॥ एतत्कीर्त्तनफलमाह जन्मेति गुह्यमतिरहस्यंजन्म प्रयतःशुचिःसन् दुःखग्रामात्संसारात् ॥ २९॥ विमुच्यतइतियदुक्तंतत्र कथंदेहद्वयसंबंधेसतितद्विमुक्तिरित्याशंक्यदेहद्वयसंबंधस्यभगवन्मायोत्थाविद्याविलसितत्वादेतच्छ्रवणादिजनितविद्ययातन्निवृत्तिरुपपद्य तइत्याशयेनाह एतदितिपंचाभिः अरूपस्यचिदेकरसस्यात्मनोजीवस्यएतत्स्थूलंरूपंशरीरंभगवतोयामायातस्यागुणैर्महदादिरूपैर्वि रचितम् क आत्मनि आत्मस्थानेशरीरंकृतमित्यर्थः ॥ ३०॥ कथमित्यपेक्षायांस्वरूपावरणेनतदध्यासतइतिसदृष्टांतमाह यथावाय्वाश्रि

**ऋषयोमनवोदेवामनुपुत्रामहौजसः॥ कलाःसर्वेहरेरेवसप्रजापतयस्तथा ॥२७॥ एतेचांशकलाःपुंसः कृष्णस्तुभगवान्स्वयं॥ इंद्रारिव्याकुलंलोकंमृडयंतियुगेयुगे ॥२८॥ जन्मगुह्यंभगवतोयएतत्प्रयतोनरः॥ सायंप्रातर्गृणन्भक्त्यादुःखग्रामाद्विमुच्यते॥ २९ ॥ एतद्रूपंभगवतोह्यरूपस्यचिदात्मनः॥ मायागुणैर्विर चितंमहदादिभिरात्मनि॥३०॥यथानभसिमेघौघोरेणुर्वापार्थिवोऽनिले॥एवंद्रष्टरिदृश्यत्वमारोपितमबुद्धि भिः ॥ ३१ ॥ अतःपरंयदव्यक्तमव्यूढगुणव्यूहितं॥ अदृष्टाश्रुतवस्तुत्वात्सजीवोयत्पुनर्भवः ॥ ३२ ॥**

तोमेघौघोनभसिआकाशेअबुद्धिभिरज्ञैरारोपितः यथावापार्थिवोरेणुस्तद्गतंधूसरत्वाद्यानिले एवंद्रष्टरिआत्मनिदृश्यत्वंदृश्यत्वादिधर्मकं शरीरमारोपितमित्यर्थः ॥ ३१ ॥ किंच अतःस्थूलाद्रूपात्परमन्यदपिरूपमारोपितमित्यनुषंगः कथंभूतंतत् यत्अव्यक्तंसूक्ष्मं तत्रहेतुः अ व्यूढगुणव्यूहितं व्यूहःकरचरणादिपरिणामः तथाअव्यूढाअपरिणतायेगुणास्तैर्व्यूहितंरचितं आकारविशेषरहितत्वात्अव्यक्तमित्यर्थःएत देवकुतस्तत्राह अदृष्टाश्रुतवस्तुत्वात् यच्चाकारविशेषवद्वस्तुतदस्मदादिवत्दृश्यते श्रूयतेवाइंद्रादिवत् इदंतुनतथा तर्हितस्यसत्वेकिंप्रमा णंतत्राह सजीवोजीवोपाधिः जीवोजीवेननिर्मुक्तोजीवोजीवंविहायेत्यादौजीवोपाधौलिंगदेहेजीवशब्दप्रयोगात् जीवोपाधितयाकल्प्य तइत्यर्थः ननुस्थूलमेवभोगायतनत्वाज्जीवस्योपाधिरस्तुकिमन्यकल्पनयेत्यतआह यद्यस्मात्सूक्ष्मात्पुनर्भवःपुनःपुनर्जन्म उत्क्रांतिगत्याग तीनांतेनविनाऽसंभवादितिभावः ॥ ३२ ॥ ॥ ॥ ॥ ॥

तदेवमुपाधिद्वयमुक्तातदपवादेनजीवस्यब्रह्मतामाह यत्रयदाइमेस्थूलसूक्ष्मेरूपेस्वसंविदास्वरूपसम्यक्ज्ञानेनप्रतिषिद्धेभवतः ज्ञानेनप्र
तिषेधार्हत्वेमायागुणैर्विरचितत्वमेवहेतुमाह अविद्ययाआत्मनिकृतेकल्पितेइतिहेतोः तद्ब्रह्म तदाजीवोब्रह्मैवभवतीत्यर्थः कथंभूतं दर्शनं
ज्ञानैकस्वरूपं ॥ ३३ ॥ तथाऽपिभगवन्मायायाःसंसृतिकारणभूतायाविद्यमानत्वात्कथंब्रह्मतातत्राह यर्हीतिअसंदेहेसंदेहवचनं यदिवे
दाःप्रमाणंस्युरितितद्वत् वैशारदीविशारदःसर्वज्ञईश्वरस्तदीयादेवीसंसारचक्रेणक्रीडंतीएषामायायर्ह्युपरताभवति किमित्युपरताभवेत्तत्रा
ह मतिर्विद्या अयंभावःयावदविद्यात्मनाआवरणविक्षेपौकरोतितावन्नोपरमाति यदातुसैवविद्यारूपेणपरिणतातदासदसद्रूपंजीवोपाधिंद
ग्ध्वानिरिंधनाग्निवत्स्वयमेवोपरमेदिति तदासंपन्नःब्रह्मस्वरूपंप्राप्तएवेतिविदुस्तत्त्वज्ञाः किमतोयद्येवंस्वेमहिम्निपरमानंदस्वरूपेमहीयतेपू

**यत्रेमेसदसद्रूपेप्रतिषिद्धेस्वसंविदा॥अविद्ययात्मनिकृतेइतितद्ब्रह्मदर्शनं ॥ ३३ ॥ यद्येषोपरतादेवीमाया वैशारदीमतिः॥ संपन्नएवेतिविदुर्महिम्निस्वेमहीयते॥ ३४ ॥ एवंजन्मानिकर्माणित्यकर्तुरजनस्यच ॥ वर्णयंतिस्मकवयोवेदगुह्यानिहृत्पतेः ॥३५॥ सवाइदंविश्वममोघलीलःसृजत्यवत्यत्तिनसज्जतेऽस्मिन्॥भूतेषुचांतर्हितआत्मतंत्रःषाड्वर्गिकंजिघ्रतिषड्गुणेशः ॥३६॥ नचास्यकश्चिन्निपुणेनधातुरवैतिजंतुःकुमनीषऊतीः॥नामानिरूपाणिमनोवचोभिःसंतन्वतोनटचर्यामिवाज्ञः॥ ३७॥ सवेदधातुःपदवींपरस्यदुरंतवीर्यस्यरथांगपाणेः॥ योमाययासंततयाऽनुवृत्त्याभजेततत्पादसरोजगंधं ॥ ३८ ॥ ॥ ॥**

ज्यतेविराजतइत्यर्थः ॥ ३४ ॥ यथाजीवस्यजन्मादिमायाएवमीश्वरस्यापिजन्मादिमायेत्याह एवमिति अकर्तुःकर्माणि अजनस्यज
न्मानि हृत्पतेःअंतर्यामिणः ॥ ३५ ॥ तर्हिजीवादीश्वरस्यकोविशेषः स्वातंत्र्यमेवविशेषइत्याह सवाइति षाड्वर्गिकमिंद्रियषड्वर्गविषयं
जिघ्रतिदूरादेवगंधवद्गृण्हाति नतुसज्जतइत्यर्थः कुतः षड्गुणेशःषडिंद्रियनियंता ॥ ३६ ॥ ननुकिमीश्वरस्यसृष्ट्यादिकर्मभिर्विषयभो
गैर्वातत्राह नचेति धातुर्जगद्विधातुरीश्वरस्यऊतीर्लीलाःकुमनीषःकुबुद्धिर्निपुणेनतर्कादिकौशलेननावैतिनजानाति मनसारूपाणिवच
सानामानिसंतन्वतःसम्यग्विस्तारयतः वचोभिरितिबहुत्वंश्रुत्यभिप्रायेण मनोवचोभिःसहेतिवा ॥ ३७ ॥ भक्तस्तुकथंचिज्जानातीत्या
ह सवेदेति अमाययाऽकुटिलभावेन संततयानिरंतरयाअनुवृत्त्याआनुकूल्येनभजेत ॥ ३८ ॥ ॥

भक्तिमार्गेप्रवृत्तान्नृषीनाभिनंदाति अथेति यतोभक्तएवभगवत्तत्त्वंजानातिअथअतोभगवंतःसर्वज्ञाःभवंतोधन्याःकृतार्थाः कुतः यद्यस्मादि
त्थंप्रश्नैर्वासुदेवेआत्मभावंमनोवृत्तिंकुर्वाति सर्वात्मकमैकांतिकं यत्रयस्मिन्भावेसतिभूयःपरिवर्त्तोजन्ममरणाद्यावर्त्तोनभवति ॥ ३९ ॥
सूताकिमेतच्छास्त्रमपूर्वंकथयासितत्राह ब्रह्मसम्मितंसर्ववेदतुल्यं उत्तमश्लोकस्यचरितंयस्मिंस्तत् ऋषिर्व्यासः ॥ ४० ॥ तत्संप्रदायप्रवृत्ति
माह तदिदमिति सुतंशुकम् ॥ ४१ ॥ प्रायेणमृत्युपर्यंतानाशकेनोपविष्टमितिपरमवैराग्योक्तिः ॥ ४२ ॥ ४३ ॥ हेविप्राःविप्रर्षेःसका

अथेहधन्याभगवंतइत्थंयद्वासुदेवेऽखिललोकनाथे ॥ कुर्वंतिसर्वात्मकमात्मभावंनयत्रभूयःपरिवर्त्तउग्रः
॥ ३९ ॥ इदंभागवतंनामपुराणंब्रह्मसम्मितं ॥ उत्तमश्लोकचरितंचकारभगवानृषिः ॥ ४० ॥ निःश्रेयसा
यलोकस्यधन्यंस्वस्त्ययनंमहत् ॥ तदिदंग्राहयामाससुतमात्मवतांवरं ॥ सर्ववेदेतिहासानांसारंसारंसमुद्धृ
तं ॥ ४१ ॥ सतुसंश्रावयामासमहाराजंपरीक्षितं ॥ प्रायोपविष्टंगंगायांपरीतंपरमर्षिभिः ॥ ४२ ॥ कृष्णे
स्वधामोपगतेधर्मज्ञानादिभिःसह ॥ कलौनष्टदृशामेषपुराणार्कोऽधुनोदितः ॥ ४३ ॥ तत्रकीर्तयतोविप्रावि
प्रर्षेर्भूरितेजसः ॥ अहंचाध्यगमंतत्रनिविष्टस्तदनुग्रहात् ॥ सोऽहंवःश्रावयिष्यामियथाऽधीतंयथामति ॥
॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ ॥ व्यासउवाच इतिब्रुवा
णंसंस्तूयमुनीनांदीर्घसत्रिणाम् ॥ वृद्धःकुलपतिःसूतंबह्वृचःशौनकोऽब्रवीत् ॥ १ ॥ शौनकउवाच सूतसूत
महाभागवदनोवदतांवर ॥ कथांभागवतींपुण्यांयदाहभगवान्शुकः ॥ २ ॥ ॥ ॥

शादध्यगमंज्ञातवानास्मि तत्रकीर्तयतस्तत्रनिविष्टइतिचान्वयभेदात्तत्रपदावृत्तिरदोषः यथाऽधीतंनतुस्वमतिविलासितम् तत्रतुयथामतिस्व
मत्यनुसारेणसंक्षेपतःकथितंविस्तरतःश्रावयिष्यामि ॥ ४४ ॥ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेटीकायांतृतीयोऽध्यायः ॥
॥ ३ ॥ ॥ तुर्येभागवतारंभकारणत्वेनवर्ण्यते ॥ व्यासस्यापारितोषस्तुतपःप्रवचनादिभिः ॥ १ ॥ इतिएवंप्रसन्नतयाश्रावयिष्या
मीतिब्रुवाणं मुनीनांबहूनांमध्येएकेनवक्तव्येयोवृद्धोवृद्धेष्वपिबहुषुयःकुलपतिर्गणमुख्यस्तेष्वपिबहुषुयोबह्वृचःऋग्वेदीतेनवक्तव्यं अत
एवंभूतत्वात्शौनकोऽब्रवीत् ॥ १ ॥ यत्तुयांकथामाह ॥ २ ॥ ॥ ॥

कस्मिन्वास्थानेकेनहेतुनेतिमहाभारतादिधर्मशास्त्राणिकृतवतःपुनरेतत्संहिताकरणेकिंकारणमित्यर्थः कुतइतिसार्वविभक्तिकस्तसिःकेनप्र वर्त्तितइत्यर्थः कृष्णोव्यासः ॥ ३ ॥ यदुक्तंसतुसंश्रावयामासेतितच्छुकस्यव्याख्यानादिकंकथंघाटितामितिप्रष्टुंतस्यासंगोदासीनतामाहद्वा भ्यांतस्येति समदृक्समंब्रह्मपश्यति अतोनिर्विकल्पकः स्वार्थेकः निरस्तभेदः किंच एकास्मिन्नेवांतःसमाप्तिर्यस्यास्तथाभूतामातिर्यस्य सः यत्तउन्निद्रःमायाशयनादुद्बुद्धः यानिशासर्वभूतानांतस्यांजागर्तिसंयमीतिस्मृतेः अतएवगूढःअप्रकटः मूढइवप्रतीयते ॥ ४ ॥ नि र्विकल्पकत्वंप्रपंचयति दृष्ट्वेति आत्मजंशुकंप्रव्रजंतमनुगच्छंतमृषिंव्यासमनग्नमपिदृष्ट्वाजलेक्रीडंत्योदेव्यःअप्सरसोह्रियालज्जयापरि दधुर्वस्त्रपरिधानंकृतवत्यः अनग्नमपीत्यनेनार्थात्तत्सुतोनग्नइत्युक्तं नग्नस्यपुरतोगच्छतःसुतस्यतुह्रियानपरिदधुः तच्चित्रंवीक्ष्य इयंस्त्रीअ

**कस्मिन्युगेप्रवृत्तेयंस्थानेवाकेनहेतुना ॥ कुतःसंचोदितःकृष्णःकृतवान्संहितांमुनिः ॥३॥ तस्यपुत्रोमहा योगीसमदृङ्निर्विकल्पकः ॥एकांतमातिरुन्निद्रोगूढोमूढइवेयते ॥ ४ ॥ दृष्ट्वानुयांतमृषिमात्मजमप्यन ग्नंदेव्योह्रियापरिदधुर्नसुतस्यचित्रम् ॥ तद्वीक्ष्यपृच्छतिमुनौजगदुस्तवास्तिस्त्रीपुंभिदानतुसुतस्यविवि क्तदृष्टेः ॥ ५ ॥ कथमालक्षितःपौरैःसंप्राप्तःकुरुजांगलान् ॥ उन्मत्तमूकजडवद्विचरन्गजसाह्वये ॥ ६ ॥ कथंवापांडवेयस्यराजर्षेर्मुनिनासह ॥ संवादःसमभूत्तातयत्रैषासात्वतीश्रुतिः ॥ ७ ॥ सगोदोहनमात्रं हिगृहेषुगृहमेधिनाम् ॥ अवेक्षतेमहाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ८ ॥ अभिमन्युसुतंसूतप्राहुर्भा गवतोत्तमम् ॥ तस्यजन्ममहाश्चर्यंकर्माणिचगृणीहिनः ॥ ९ ॥**

यंपुमान्इतिभिदाभेदस्तवास्ति विविक्तापूतादृष्टिर्यस्य ॥ ५ ॥ एवंभूतोऽसौकथमालक्षितोज्ञातः कुरवोजांगलाश्चदेशविशेषास्तान्संप्रा प्तस्ततोगजसाह्वयेविचरन्गजेनसहितआह्वयोनामयस्यतस्मिन्हस्तिनापुरे हस्तीनामराजातेननिर्मितत्वात् ॥ ६ ॥ एवंभूतेनमुनिनासह यत्रसंवादेएषासात्वतीभागवतीश्रुतिःसंहिता ॥ ७ ॥ एतद्व्याख्यानंबहुकालावस्थानापेक्षंतस्यत्वेकत्रावस्थानंदुर्लभमित्याह सइति गोदो हनमात्रंकालंप्रतीक्षतेतदपिनभिक्षार्थंकिंतुतेषामाश्रमंगृहंतीर्थीकुर्वन्पवित्रीकुर्वन् ॥ ८ ॥ तस्मादेवंभूतोऽत्रवक्तेत्याश्चर्यंश्रोतुस्तुचरितमतीवा श्चर्यंप्रायोपवेशनंयतःअतःकथयेत्याह अभिमन्युसुतमितिपंचभिः गृणीहिकथय ॥ ९ ॥

सम्राट्चक्रवर्ती वेतिवितर्के कस्यवाहेतोः कस्मात्कारणात् अधिराट्श्रियंअधिराजांश्रियंसंपदमनादृत्य ॥ १० ॥ यस्यपादनिकेतंचर णपीठं हरत्कुटं धनान्यानीयशत्रवोनमंति अंगहेसूत युवातरुणएवऐषतऐच्छत् अत्रार्षमात्मनेपदं असुभिःप्राणैःसह ॥ ११ ॥ विरक्त स्यकिंधनादिभिरितिचेत्तत्राह लोकस्यशिवायसुखायभवायसमृध्यैभूतयेऐश्वर्यायचतेजीवंतिनत्वात्मार्थम् एवंसत्यसौराजानिर्विद्यविर ज्यापिपरेषामाश्रयंकलेवरंकुतोहेतोर्मुमोच नहिपरोपजीवनंस्वयंत्यक्तुमुचितामित्यर्थः ॥ १२ ॥ यत्किंचनपृष्टोसितत्सर्वंनोऽस्मभ्यंसमा चक्ष्व यद्यस्मात्वाचांविषयेगिरांगोचरेऽर्थेस्नातंपारंगतंत्वांमन्ये छांदसादन्यत्रवैदिकात्व्यतिरेकेण अत्रैवर्णिकत्वात् ॥ १३ ॥ कस्मि

ससम्राट्कस्यवाहेतोःपांडूनांमानवर्धनः ॥ प्रायोपविष्टोगंगायामनादृत्याधिराट्श्रियम् ॥ १० ॥ नमंति यत्पादनिकेतमात्मनःशिवायहानीयधनानिशत्रवः ॥ कथंसवीरःश्रियमंगदुस्त्यजांयुवैषतोत्स्रष्टुमहो सहासुभिः ॥ ११ ॥ शिवायलोकस्यभवायभूतयेयउत्तमश्लोकपरायणाजनाः ॥ जीवंतिनात्मार्थमसौ पराश्रयंमुमोचनिर्विद्यकुतःकलेवरं ॥ १२ ॥ तत्सर्वंनःसमाचक्ष्वपृष्टोयदिहकिंचन ॥ मन्येत्वांविषयेवा चांस्नातमन्यत्रछांदसात् ॥ १३ ॥ सूतउवाच द्वापरेसमनुप्राप्तेतृतीयेयुगपर्यये ॥ जातःपराशरा द्योगीवासव्यांकलयाहरेः ॥ १४ ॥ सकदाचित्सरस्वत्याउपस्पृश्यजलंशुचि ॥ विविक्तदेशआसीनउ दितेरविमंडले ॥ १५ ॥ परावरज्ञःसऋषिःकालेनाव्यक्तरंहसा ॥ युगधर्मव्यतिकरंप्राप्तंभुवियुगेयुगे ॥ ॥ १६ ॥ भौतिकानांचभावानांशक्तिह्रासंचतत्कृतं ॥ अश्रद्दधानान्निःसत्वान्दुर्मेधान्ह्रसितायुषः ॥ १७ ॥ दुर्भगांश्चजनान्वीक्ष्यमुनिर्दिव्येनचक्षुषा ॥ सर्ववर्णाश्रमाणांयद्दध्यौहितममोघदृक् ॥ १८ ॥

न्युगइत्यादिप्रश्नानांव्यासजन्मकथनपूर्वकमुत्तरमाह द्वापरेसमनुप्राप्ते कदेत्यपेक्षायामाह तृतीयेयुगस्यपर्ययेपरिवर्ते वासव्यामुपरिचरस्य वसोर्वीर्याज्जातायांसत्यवत्यांयोगीज्ञानीव्यासोजातः ॥ १४ जलमुपस्पृश्यजलेस्नानादिकंकृत्वेत्यर्थः आसीनोबभूवेतिशेषः विविक्तदेश इत्यादिचित्तैकाग्र्यार्थमुक्तं अनेनैवबदरिकाश्रमस्थानंसूचितं ॥ १५ ॥ तत्रसऋषिर्युगधर्मव्यतिकरादिकंवीक्ष्य सर्ववर्णाश्रमाणांयद्धितं तद्दध्याविंतितृतीयेनान्वयः परावरज्ञःअतीतानागतवित् अव्यक्तंरंहोवेगोयस्यतेनकालेनयुगधर्माणांव्यतिकरंसंकरंप्राप्तंवीक्ष्य तथाभुवियु गेयुगे ॥ १६ ॥ भौतिकानांशरीरादीनां तत्कृतंकालकृतं निःसत्वान्धैर्यशून्यान् दुर्मेधान्मंदमतीन् ॥ १७ ॥ १८ ॥

ततश्चहोत्रोपलक्षिताश्चत्वारऋत्विजश्चतुर्होतारस्तैरनुष्ठेयंकर्मचातुर्होत्रम् शुद्धंशुद्धिकरं यज्ञसंतत्यैयज्ञानामविच्छेदाय ॥ १९ ॥ चातुर्वि ध्यमेवाह ऋगिति उद्धृताः ॥ २० ॥ २१ ॥ दारुणःअथर्वोक्ताभिचारादिप्रवृत्तेः पृथक्कृताः ॥ २२ ॥ व्यस्यन्विभक्तवंतः ॥ २३ ॥ वेदविभागप्रयोजनमाह तएवेति येपूर्वंमतिमेधाविभिर्धार्यंतेस्मतएव ॥ २४ ॥ किंच स्त्रीशूद्रेति द्विजबंधवस्त्रैवर्णिकेष्वधमाः तेषांकर्मरूपेश्रेयसिश्रेयःसाधनेएवंभवेत्अनेनैवप्रकारेणभवत्विति अतएवतेषांकृपयाभारताख्यानंमुनिनाकृतम् ॥ २५ ॥ भूतानांश्रेयसिहितेस

चातुर्होत्रंकर्मशुद्धंप्रजानांवीक्ष्यवैदिकं ॥ व्यदधाद्यज्ञसंतत्यैवेदमेकंचतुर्विधं ॥१९॥ ऋग्यजुःसामाथर्वाख्यावेदाश्चत्वारउद्धृताः ॥ इतिहासपुराणंचपंचमोवेदउच्यते ॥२०॥ तत्रर्ग्वेदधरःपैलःसामगोजैमिनिःकविः ॥ वैशंपायनएवैकोनिष्णातोयजुषामुत ॥२१॥ अथर्वांगिरसामासीत्सुमंतुर्दारुणोमुनिः ॥ इतिहासपुराणानांपितामेरोमहर्षणः ॥२२॥ तएतऋषयोवेदंस्वंस्वंव्यस्यन्ननेकधा ॥ शिष्यैःप्रशिष्यैस्तच्छिष्यैर्वेदास्तेशाखिनोऽभवन् ॥२३॥ तएववेदादुर्मेधैर्धार्यंतेपुरुषैर्यथा ॥ एवंचकारभगवान्व्यासःकृपणवत्सलः ॥ २४ ॥ स्त्रीशूद्रद्विजबंधूनांत्रयीनश्रुतिगोचरा ॥ कर्मश्रेयसिमूढानांश्रेयएवंभवेदिह ॥ इतिभारतमाख्यानंकृपयामुनिनाकृतं ॥ २५ ॥ एवंप्रवृत्तस्यसदाभूतानांश्रेयसिद्विजाः ॥ सर्वात्मकेनापियदानातुष्यद्धृदयंततः ॥ २६ ॥ नातिप्रसीदद्धृदयःसरस्वत्यास्तटेशुचौ ॥ वितर्कयन्विविक्तस्थइदंप्रोवाचधर्मवित् ॥ ॥ २७ ॥ धृतव्रतेनहिमयाछंदांसिगुरवोऽग्नयः ॥ मानितानिर्व्यलीकेनगृहीतंचानुशासनं ॥ २८ ॥ भारतव्यपदेशेनह्याम्नायार्थश्चदर्शितः ॥ दृश्यतेयत्रधर्मादिस्त्रीशूद्रादिभिरप्युत ॥ २९ ॥ अथापिबतमेदैह्योह्यात्माचैवात्मनाविभुः ॥ असंपन्नइवाभातिब्रह्मवर्चस्यसत्तमः ॥ ३० ॥ ॥ ॥

र्वात्मकेनापिअनेकोद्देशवताऽपिकर्मणा ॥ २६ ॥ नअतिप्रसीदत्हृदयंयस्यसः चित्ताप्रसत्तोहेतुंवितर्कयन्निदमुवाच स्वगतम् ॥ २७ ॥ मानिताःपूजिताः ॥ २८ ॥ २९ ॥ दैह्यःदेहेभवःआत्माजीवोवस्तुतोविभुःपरिपूर्णएव आत्मनास्वेनरूपेणासंपन्नरतादात्म्यमप्राप्तइवाभाति ब्रह्मवर्चसंवेदश्रवणाध्यापनोत्कर्षजंतेजस्तत्रसाधवोब्रह्मवर्चस्यास्तेषुसत्तमःअतिश्रेष्ठोऽपि यद्वानकेवलमसंपन्नइवाभातिप्रत्युत ब्रह्मवर्चसीब्रह्मवर्चसवानापिअसत्तमइवाभाति पाठांतरेकमनीयतमोऽपीति ॥ ३० ॥ ॥ ॥

असंपत्तौहेतुंस्वयमेवाशंकते किंवेति प्रायेणभूयस्त्वेन हियस्मात्तएवधर्माअच्युतस्यप्रियाः ॥ ३१ ॥ खिलंन्यूनम् खिद्यतःखेदंप्राप्नुवतः कृष्णस्यव्यासस्य प्रागुदाहृतंसरस्वतीतीरस्थं ॥ ३२ ॥ तंनारदमागतमभिज्ञाय सहसाप्रत्युत्थायविधिवत्पूजयामासेति ॥ ३३ ॥ इति प्रथमेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ पंचमेसर्वधर्मेभ्योहरिकीर्तनगौरवं ॥ व्यासचित्तप्रसादायनारदेनोपदिश्यते ॥ १ ॥ उपसमीपेआसीनंविप्रर्षिर्व्यासं बृहच्छ्रवाःमहायशाः स्मयन्ईषद्धसन्निवेत्यनेनमुखप्रसत्तिर्द्योत्यते यद्वा इवेत्यनधिकारार्थं अहोमहानपिमुह्यतीतिस्मयमानः ॥ १ ॥ शारीरःशरीराभिमानीआत्मा आत्मनातेनशरीरेणकच्चित्किंपरितुष्यति मानसआत्मामनोऽभिमानी तेनमनसापरितुष्यतिकच्चिन्नोवेति ॥ २ ॥

किंवाभागवताधर्मानप्रायेणनिरूताः ॥ प्रियाःपरमहंसानांतएवह्यच्युतप्रियाः ॥ ३१ ॥ तस्यैवंखिलमात्मानंमन्यमानस्यखिद्यतः ॥ कृष्णस्यनारदोऽभ्यागादाश्रमंप्रागुदाहृतं ॥ ३२ ॥ तमभिज्ञायसहसाप्रत्युत्थायागतंमुनिः ॥ पूजयामासविधिवन्नारदंसुरपूजितं ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ सूतउवाच अथतंसुखमासीनउपासीनंबृहच्छ्रवाः ॥ देवर्षिः प्राहविप्रर्षिंवीणापाणिःस्मयन्निव ॥ १ ॥ नारदउवाच पाराशर्यमहाभागभवतःकच्चिदात्मना ॥ परितुष्यतिशारीरआत्मामानसएववा ॥ २ ॥ जिज्ञासितंसुसंपन्नमपितेमहदद्भुतं ॥ कृतवान्भारतंयस्त्वंसर्वार्थपरिबृंहितं ॥ ३ ॥ जिज्ञासितमधीतंचयत्तद्ब्रह्मसनातनं ॥ अथापिशोचस्यात्मानमकृतार्थइवप्रभो ॥ ४ ॥ व्यासउवाच अस्त्येवमेसर्वमिदंत्वयोक्तंतथापिनात्मापरितुष्यतेमे ॥ तन्मूलमव्यक्तमगाधबोधंपृच्छामहेत्वात्मभवात्मभूतं ॥ ५ ॥ ॥ ॥ ॥ ॥

तेजिज्ञासितंज्ञातुमिष्टंधर्मादियत्तत्सर्वंसुसंपन्नंसम्यक्ज्ञातं अपिशब्दादनुष्ठितंचेत्यर्थः अर्थीतिपाठेसंबोधनं सुसंपन्नत्वेहेतुः महदद्भुतमित्यादि सर्वैरर्थैर्धर्मादिभिःपरिबृंहितंपरिपूर्णं ॥ ३ ॥ किंच यत्सनातनंनित्यंपरंब्रह्म तच्चत्वयाजिज्ञासितंविचारितंअधीतमधिगतंप्राप्तंचेत्यर्थः अथापिशोचसितत्किमर्थमितिशेषः ॥ ४ ॥ आत्माशारीरोमानसश्च तन्मूलंतस्यापरितोषस्यकारणं अव्यक्तमस्फुटं हेनारदत्वात्वांपृच्छामहे आत्मभवोब्रह्मा तस्यात्मनोदेहाद्भूतस्त्वं अतएवागाधोऽतिगंभीरोबोधोयस्यतंत्वां ॥ ५ ॥

अगाधबोधतांप्रपंचयन्नाह सत्वाइतिद्वाभ्याम् सर्वगुह्यज्ञानेहेतुः यद्यस्मात्पुराणःपुरुषउपासितस्त्वया कथंभूतः परावरेशःकार्यकारण नियंता मनसैवसंकल्पमात्रेणगुणैःकृत्वाविश्वंसृजतीत्यादि ॥ ६ ॥ किंच त्वंत्रिलोकींपर्यटन्अर्कइवसर्वदर्शीयोगबलेनप्राणवायुरिवसर्व प्राणिनामंतश्चरःसन्नात्मसाक्षीबुद्धिवृत्तिज्ञःअतःपरेब्रह्मणिधर्मतोयोगेननिष्णातस्य तदुक्तंयाज्ञवल्क्येन इज्याचारदमाहिंसादानस्वाध्या यकर्मणाम्॥अयंतुपरमोधर्मोयद्योगेनात्मदर्शनमिति अवरेचब्रह्मणिवेदाख्येव्रतैःस्वाध्यायनियमैर्निष्णातस्यमेअल्पमत्यर्थंयत्न्यूनंतद्विचक्ष्व वितर्कय ॥ ७ ॥ अनुदितप्रायमनुक्तप्रायम् विमलंभगवद्यशोविनायेनैवधर्मादिज्ञानेनासौभगवान्नतुष्येत तदेवदर्शनंज्ञानंखिलंन्यूनं मन्येऽहम् ॥ ८ ॥ ननुभगवद्यशएवतत्रतत्रानुवर्णितंतत्राह यथेति चशब्दाद्धर्मादिसाधनानिच तथाधर्मादिवत्प्राधान्येनवासुदेवस्यमहि

सत्वैभवान्वेदसमस्तगुह्यमुपासितोयत्पुरुषःपुराणः ॥ परावरेशोमनसैवविश्वंसृजत्यवत्यत्तिगुणैरसंगः ॥ ॥ ६ ॥ त्वंपर्यटन्नर्कइवत्रिलोकीमंतश्चरोवायुरिवात्मसाक्षी ॥ परावरेब्रह्मणिधर्मतोव्रतैःस्नातस्यमेन्यूनम लंविचक्ष्व ॥ ७ ॥ नारदउवाच भवताऽनुदितप्रायंयशोभगवतोऽमलं ॥ येनैवासौनतुष्येतमन्येतद्दर्शनं खिलं ॥ ८ ॥ यथाधर्मादयश्चार्थामुनिवर्यानुकीर्तिताः ॥ नतथावासुदेवस्यमहिमाह्यनुवर्णितः ॥ ९ ॥ नय द्वचश्चित्रपदंहरेर्यशोजगत्पवित्रंप्रगृणीतकर्हिचित् ॥ तद्वायसंतीर्थमुशंतिमानसानयत्रहंसानिरमंत्युशि क्क्षयाः ॥ १० ॥ तद्वाग्विसर्गोजनताघविप्लवोयस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्ययशोऽंकि तानियच्छृण्वंतिगायंतिगृणंतिसाधवः ॥ ११ ॥ ॥ ॥

मानत्युक्तइत्यर्थः ॥ ९ ॥ वासुदेवव्यतिरिक्तान्यविषयज्ञानवदेवान्याविषयंवाचातुर्यंचाखिलमेवेत्याह नेति चित्रपदमपियद्वचोहरेर्यशो नप्रगृणीत तद्वायसंतीर्थंकाकतुल्यानांकामिनांरतिस्थानंउशंतिमन्यंते कुतः मानसाःसत्वप्रधानेमनसिवर्त्तमानाःहंसायतयोयत्रननिर मंतिकर्हिचिदपिनितरांनरमंते उशिक्क्षयाउशिक्कमनीयंब्रह्मक्षयोनिवासोयेषांते यथाप्रसिद्धाहंसामानसेसरसिचरंतःकमनीयपद्मखंडनि वासास्त्यक्तविचित्रान्नादियुक्तेप्युच्छिष्टगर्त्तेकाकक्रीडास्थानेननिरमंतइतिशेषः ॥ १० ॥ विनापिपदचातुर्यंभगवद्यशःप्रधानंवचःपवित्र मित्याह तद्वाग्विसर्गःसचासौवाग्विसर्गोवाचःप्रयोगः जनानांसमूहोजनतातस्याअघंविप्लावयतिनाशयतीतितथासः यस्मिन्वाग्विसर्गे अबद्धवत्यपिअपशब्दादियुक्तेपिप्रतिश्लोकमनंतस्ययशसांकितानिनामानिभवंति तत्रहेतुः यत् यानिनामानिसाधवोमहांतोवक्तरिसतिशृ ण्वंति श्रोतरिसतिगृणंति अन्यदातुस्वयमेवगायंतिकीर्तयंतीति ॥ ११ ॥ ॥ ॥

भक्तिहीनं कर्मशून्यमेवेति कैमुत्यन्यायेन दर्शयाति नैष्कर्म्यमिति कर्मनिवृत्तिप्राप्यत्वान्निष्कर्म ब्रह्म तदेकाकारत्वान्निष्कर्मता रूपं नैष्कर्म्यम् अज्यतेऽनेनेत्यंजनमुपाधिस्तन्निवर्त्तकं निरंजनम् एवंभूतमपि ज्ञानं अच्युते भावो भक्तिस्तद्वर्जितं चेदलमत्यर्थं न शोभते सम्यगापरोक्षायान कल्पत इत्यर्थः तदा शश्वत् साधनकाले फलकाले चाभद्रं दुःखरूपं यत्काम्यं कर्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः तदपि कर्म ईश्वरे नार्पितं चेत्कुतः पुनः शोभेत बहिर्मुखत्वेन सत्वशोधकत्वाभावात् ॥ १२ ॥ तदेवं भक्तिशून्यानि ज्ञानवाक्चातुर्यकर्मकौशलानि व्यर्थान्येव यतः अतो हरेश्चरितमेवानुवर्णयेत्याह अथो अतः कारणात् अमोघा यथार्था दृक् धीर्यस्य शुचिशुद्धं श्रवो यशो यस्य सत्ये रतः धृतानि व्रतानि येन स भवानेवं महागुणस्तावत् अतः उरुक्रमस्य विविधं चेष्टितं लीलां समाधिना चित्तैकाग्र्येण अखिलस्य बंधमुक्तये त्वमनुस्मर स्मृत्वा वर्णयेत्यर्थः एतच्च वाक्यांतरमिति मध्यमपुरुषप्रयोगो नानुपपन्नः ॥ १३ ॥ विपक्षे दोषांतरमाह ततउरुक्रमचेष्टितात्पृथक्दृशः अतएवान्यथा प्रकारांतरेण यत्किं

**नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनं ॥ कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणं ॥ १२ ॥ अथो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः ॥ उरुक्रमस्याखिलबंधमुक्तये समाधिनाऽनुस्मर तद्विचेष्टितं ॥ १३ ॥ ततोऽन्यथा किंचन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः ॥ न कुत्रचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदं ॥ १४ ॥ जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान्व्यतिक्रमः ॥ यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ १५ ॥ ॥**

चिदर्थांतरं विवक्षतस्तया विवक्षया कृतैः स्फुरितैः रूपैर्नामभिश्च वक्तव्यत्वेनोपस्थितैर्दुःस्थिताऽनवस्थिता सती मतिः कदाचित्क्वापि विषये आस्पदं स्थानं न लभेत वातेनाहता आघूर्णिता नौरिव तदुक्तं गीतासु व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन ॥ बहुशाखा ह्यनंताश्च बुद्धयोऽव्यवसायिनामित्यादि ॥ १४ ॥ तदेवं हरियशो विना भारतादि पुरुतं धर्मादिवर्णनमाकिंचित्करमित्युक्तम् प्रत्युत विरुद्धमेव जातमित्याह जुगुप्सितं निंद्यं काम्यकर्मादि स्वभावत एव रक्तस्य तत्र रागिणः पुरुषस्य धर्मकृते धर्मार्थमनुशासतस्तव महानयं व्यतिक्रमः अन्यायः कुत इत्यत आह यस्य वाक्यतोऽयमेव मुख्यो धर्म इति स्थितः इतरः प्राकृतो जनः तस्य काम्यकर्मादेरन्येन तत्वज्ञेन क्रियमाणं निवारणं त्वयमदेवास्त्वया क्रियमाणम् यद्वा नकर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति श्रुत्या क्रियमाणं निवारणं यथार्थमेतदिति न मन्यते किंतु प्रवृत्तिमार्गानधिकृतविषयं तदिति कल्पयति तदुक्तं मतांतरोपन्यासे भट्टैः तत्रैवं शक्यते वक्तुं येऽधपंग्वादयो नराः ॥ गृहस्थत्वं न शक्ष्यंति कर्तुं तेषामयं विधिः नैष्ठिकब्रह्मचर्यं वा परिव्राजकतापि वा ॥ तैरवश्यं गृहीतव्या तेनादावेतदुच्यत इत्यादि ॥ १५ ॥ ॥ ॥ ॥

ननुयद्येवंप्रवृत्तिमार्गोनिंद्यतेतर्हिनिवृत्तिमार्गेसर्वक्रियात्यागेनैवपारमेश्वरसुखरूपानुभूतेःकिंतद्यशःकथनेनापितत्राह विचक्षणइति निपु
णःकश्चिदेवनिवृत्तितःसर्वक्रियानिवृत्याऽस्यविभोःसुखंनिर्विकल्पकसुखात्मकंस्वरूपंवेदितुंज्ञातुमर्हतिनपुनरविचक्षणःप्रवृत्तिस्वभावःविभु
त्वेहेतुः नअंतःकालतःपारंचदेशतोयस्यतस्यविभोश्चेष्टितं ततःकारणात्हेविभोअनात्मनोदेहाद्यभिमानिनःअतएवगुणैःसत्वादिभिःप्र
वर्त्तमानस्यजनस्यदर्शय भवानितित्वमित्यर्थः पाठांतरेभवन्निति संबोधनं ॥ १६ ॥ एवंतावत्काम्यकर्मादेरनर्थहेतुत्वात्तंविहायहरेर्ली
लैववर्णनीयेत्युक्तं इदानींतुनित्यनैमित्तिकस्वधर्मानिष्ठामप्यनादृत्यकेवलंहरिभक्तिरेवोपदेष्टव्येत्याशयेनाह त्यक्त्वेति ननुस्वधर्मत्यागेनभज
न्भक्तिपरिपाकेनयदिकृतार्थोभवेत्तदानकाचिच्चिंतायदिपुनरपक्वएवम्रियेततततोभ्रश्येद्वातदास्वधर्मत्यागनिमित्तोनर्थःस्यादित्याशंक्याह त
तोभजनात्कथंचित्पतेत्भ्रश्येत्म्रियेतवायदितदापिभक्तिरसिकस्यकर्मानधिकारान्नानर्थशंका अंगीकृत्याप्याह वाशब्दःकटाक्षेयत्रक्कवा
नीचयोनावपिअमुष्यभक्तिरसिकस्याभद्रमभूत्किंनाभूदेवेत्यर्थः भक्तिवासनासद्भावादितिभावः अभजद्भिस्तुकेवलंस्वधर्मतःकोवाअर्थआ

**विचक्षणोऽस्यार्हतिवेदितुंविभोरनंतपारस्यनिवृत्तितःसुखं ॥ प्रवर्तमानस्यगुणैरनात्मनस्ततोभवान्दर्श**
**यचेष्टितंविभोः ॥ १६ ॥ त्यक्त्वास्वधर्मंचरणांबुजंहरेर्भजन्नपक्वोऽथपतेत्ततोयदि ॥ यत्रक्कवाऽभद्रमभूद**
**मुष्यकिंकोवाऽर्थआप्तोभजतांस्वधर्मतः ॥ १७ ॥ तस्यैवहेतोःप्रयतेतकोविदोनलभ्यतेयद्भ्रमतामुपर्यधः॥**
**तल्लभ्यतेदुःखवदन्यतःसुखंकालेनसर्वत्रगभीररंहसा ॥१८॥नवैजनोजातुकथंचनाव्रजेन्मुकुंदसेव्यन्यवदं**
**गसंसृतिम् ॥ स्मरन्मुकुंदांघ्र्युपगूहनंपुनर्विहातुमिच्छेन्नरसग्रहोयतः ॥ १९ ॥**

प्तःप्राप्तः अभजतामिति षष्ठीतुसंबंधमात्रविवक्षया॥१७॥ ननुस्वधर्ममात्रादपिकर्मणापितृलोकइतिश्रुतेःपितृलोकप्राप्तिःफलमस्त्येवतत्रा
ह तस्यैवहेतोस्तदर्थंयत्नंकुर्यात् यत्उपरिब्रह्मपर्यंतंअधस्थावरपर्यंतंचभ्रमद्भिर्जीवैर्नलभ्यते षष्ठीतुपूर्ववत् तत्तुविषयसुखमन्यतएवप्राची
नकर्मणासर्वत्रनरकादावपिलभ्यतेदुःखवत् यथादुःखंप्रयत्नंविनापिलभ्यतेतद्वत् तदुक्तम् अप्रार्थितानिदुःखानियथैवायांतिदेहिनाम् ॥
सुखान्यपितथामन्येदैन्यमत्रातिरिच्यतइति ॥ १८ ॥ यदुक्तंयत्रक्कवाऽभद्रमभूदितितदुपपादयति नवाइति मुकुंदसेविजनोजातुकदाचित्कथं
चनकुयोनिगतोपिसंसृतिंनाव्रजेत्नाविशेत् अंगअहोअन्यवत्केवलकर्मनिष्ठवत्इतिवैधर्म्येदृष्टांतः कुतइत्यतआह मुकुंदांघ्रेरुपगूहनमा
लिंगनंपुनःस्मरन्विहातुंनेच्छेत् यतोऽयंजनोरसग्रहः रसेनरसनीयेनगृह्यतेवशीक्रियते यद्वारसेरसनीयेग्रहआग्रहोयस्य तदुक्तंभगवता यतते
चततोभूयःसंसिद्धौकुरुनंदन पूर्वाभ्यासेनतेनैवन्हियतेह्यवशोऽपिसइति ॥ १९ ॥ ॥ ॥ ॥

तदेवंभगवल्लीलांप्राधान्येनवर्णयेत्युक्तंतत्रकोभगवान्काश्चतस्यलीलाइत्यपेक्षायामाह इदंविश्वंभगवानेव सतुअस्मात्विश्वस्मादितरः
ईश्वरात्प्रपंचोनपृथक्ईश्वरस्तुप्रपंचात्पृथगित्यर्थः तत्रहेतुः यतोभगवतोहेतोर्जगतःस्थित्यादयोभवंति अनेनैवलीलाअपिदर्शिताः यद्वा
इदंविश्वंभगवान् इतरइवयःसजीवोऽपिभगवान् चेतनाचेतनःप्रपंचस्तद्व्यतिरेकेणनास्ति सएवैकस्तत्रामित्यर्थः हिशब्देनसर्वंखल्वि
दंब्रह्मेत्यादिप्रमाणंसूचितं तद्धिस्वयमेवभवान्वेद प्रादेशमात्रमेकदेशमात्रं आचार्यवान्पुरुषोवेदेत्यादिश्रुत्यर्थसंपादनायप्रदर्शितं ॥२०॥न
चतवाचार्यापेक्षाईश्वरावतारत्वादित्याह त्वमिति हेअमोघदृक्त्वमात्मनास्वयमात्मानमजमेवसंतंजगतःशिवायप्रजातमवेहि कुतः परस्य

इदंहिविश्वंभगवानिवेतरोयतोजगत्स्थाननिरोधसंभवाः ॥ तद्धिस्वयंवेदभवांस्तथाऽपिवैप्रादेशमात्रंभव
तःप्रदर्शितं ॥ २० ॥ त्वमात्मनात्मानमवेह्यमोघदृक्परस्यपुंसःपरमात्मनःकलां ॥ अजंप्रजातंजगतःशिवा
यतन्महानुभावाभ्युदयोऽधिगण्यतां ॥ २१ ॥ इदंहिपुंसस्तपसःश्रुतस्यवास्विष्टस्यसूक्तस्यचबुद्धिदत्तयोः
॥ अविच्युतोऽर्थःकविभिर्निरूपितोयदुत्तमश्लोकगुणानुवर्णनं ॥ २२ ॥ अहंपुराऽतीतभवेऽभवंमुनेदा
स्यास्तुकस्याश्चनवेदवादिनां ॥ निरूपितोबालकएवयोगिनांशुश्रूषणेप्रावृषिनिर्विविक्षतां ॥ २३ ॥ तेम
य्यपेताखिलचापलेऽर्भकेदांतेधृतक्रीडनकेऽनुवर्तिनि ॥ चक्रुःकृपांयद्यपितुल्यदर्शनाःशुश्रूषमाणेमुनयोऽ
ल्पभाषिणि ॥ २४ ॥ उच्छिष्टलेपाननुमोदितोद्विजैःसकृत्स्मभुंजेतदपास्तकिल्बिषः ॥ एवंप्रवृत्तस्यवि
शुद्धचेतसस्तद्धर्मएवात्मरुचिःप्रजायते ॥ २५ ॥ ॥ ॥ ॥ ॥

पुंसःकलामंशभूतं तत्तस्मान्महानुभावस्यहरेरभ्युदयःपराक्रमःआधिआधिकंगण्यतांनिरूप्यतां ॥२१॥ अनेनैवतपआदिसर्वंतवसफलंस्यादि
त्याह इदंहीति श्रुतादयोभावेनिष्ठाः इदमेवहितपःश्रवणादेरविच्युतोनित्योऽर्थः फलं किंतत् उत्तमश्लोकस्यगुणानुवर्णनमितियत् ॥ २२॥
सत्संगतोहरिकथाश्रवणादिफलंस्ववृत्तांतेनप्रपंचयाति अहंपुरापूर्वकल्पेअतीतभवेपूर्वजन्मनिवेदवादिनांदास्याःसकाशात् अभवं जातो
स्मि निरूपितोनियुक्तः क्व योगिनांशुश्रूषणे प्रावृषिवर्षोपलक्षितेचातुर्मास्ये निर्विविक्षतांनिर्वेशमेकत्रवासंकर्तुमिच्छतां ॥२३॥ अपेतान्यखि
लानिचापलानियस्मात्तस्मिन् दांतेनियतेंद्रिये अधृतक्रीडनकेत्यक्तक्रीडासाधने अनुवर्तिनिअनुकूले ॥२४॥ उच्छिष्टस्यलेपान्पात्रलग्नांस्तै
र्द्विजैरनुज्ञातःसन्भुंजेस्म तेनभोजनेनापास्तकिल्बिषोजातोऽस्मि तेषांधर्मेपरमेश्वरभजनेएवात्मनोमनसोरुचिःप्रजायतेस्मेत्यनुषंगः ॥२५

अशृणवंश्रुतवानास्मि मेश्रद्धयाममैवस्वतःसिद्धयानत्वन्येनबलाज्जनितया अतोममेयस्यापौनरुक्त्यम् अनुपदंप्रतिपदम् प्रियंश्रवोयस्य तस्मिन् ॥ २६ ॥ तस्मिन्भगवतिलब्धरुचेर्ममास्खलिताअप्रतिहतामातिरभवदित्यनुषंगः यथामत्यापरेप्रपंचातीतेब्रह्मरूपेमायेनइत स्थूलंसूक्ष्मंचैतच्छरीरंस्वमाययास्वाविद्ययाकल्पितंनतुवस्तुतोऽस्तीतितत्क्षणमेवपश्यामीति ॥ २७ ॥ एवंशुद्धेत्वंपदार्थेज्ञाते देहादिकृतविक्षेपनिवृत्तेस्तत्कारणभूतरजस्तमोनिवर्त्तिकादृढाभक्तिर्जातेत्याह इत्थमिति हरेर्यशः अनुसवंत्रिकालम् ॥ २८ ॥ तस्येति शुद्धत्वंपदार्थस्यदृढभक्तिमतोमेप्रश्रितस्याविनीतस्य ॥२९ ॥ गुह्यतममिति साधनभूतधर्मतत्त्वज्ञानंगुह्यम् तत्साध्यंविविकारमज्ञानंगुह्यतरम् तत्प्रा

तत्रान्वहंकृष्णकथाःप्रगायतामनुग्रहेणाशृणवंमनोहराः ॥ ताःश्रद्धयामेऽनुपदंविशृण्वतःप्रियश्रवस्यंगम माभवद्रुचिः ॥२६॥ तस्मिंस्तदालब्धरुचेर्महामुनेप्रियश्रवस्यस्खलितामतिर्मम ॥ ययाहमेतत्सदसत्स्वमायया पश्येमयिब्रह्मणिकल्पितंपरे ॥२७॥ इत्थंशरत्प्रावृषिकावृतूहरेर्विशृण्वतोमेऽनुसवंयशोऽमलं ॥ संकीर्त्यमानंमुनिभिर्महात्मभिर्भक्तिःप्रवृत्तात्मरजस्तमोपहा ॥२८॥ तस्यैवंमेऽनुरक्तस्यप्रश्रितस्यहतैनसः ॥ श्रद्दधानस्यबालस्यदांतस्यानुचरस्यच ॥ २९ ॥ ज्ञानंगुह्यतमंयत्तत्साक्षाद्भगवतोदितं ॥ अन्ववोचन्गमिष्यंतः कृपयादीनवत्सलाः ॥ ३० ॥ येनैवाहंभगवतोवासुदेवस्यवेधसः ॥ मायाऽनुभावमाविदंयेनगच्छंतितत्पदं ॥ ॥३१॥ एतत्संसूचितंब्रह्मंस्तापत्रयचिकित्सितं ॥ यदीश्वरेभगवतिकर्मब्रह्मणिभावितं ॥३२॥ आमयोयश्च भूतानांजायतेयेनसुव्रत ॥ तदेवत्यामयंद्रव्यंनपुनातिचिकित्सितं ॥ ३३ ॥ ॥ ॥

प्येश्वरज्ञानंगुह्यतमम् भगवतोदितंभागवतंशास्त्रमन्ववोचन् उपादिष्टवंतः ॥३०॥तदेवज्ञानंपूर्वोक्तत्वंपदार्थज्ञानाद्विवेकेनदर्शयाति येनैवेति अविदंज्ञातवानहं ॥३१॥ तत्साधनधर्मरहस्यंचसूचितमित्याह एतदिति तापत्रयस्याध्यात्मिकादेश्चिकित्सितंभेषजंनिवर्त्तकंस त्वशोधकामितियावत् किंतत् भगवतिभावितंसमर्पितंयत्कर्मतत् कथंभूतेभगवति ईश्वरेसर्वनियंतरि एवमपिचब्रह्मणिअप्रच्युतपूर्णरूपे॥३२॥ ननुसंसारहेतोःकर्मणःकथंतापत्रयनिवर्त्तकत्वम् सामग्रीभेदेनघटतइतिसदृष्टांतमाह द्वाभ्यां यआमयोरोगोयेनघृतादिनाजायतेतदेवकेवलमामयकारणभूतंद्रव्यंतमामयंनपुनातिननिवर्त्तयतीत्यर्थः किंतुचिकित्सितंद्रव्यांतरैर्भावितंसत्पुनात्येवयथा ॥ ३३ ॥

आत्मविनाशायकर्मनिवृत्तयेकल्पंतेसमर्थाभवंति परेईश्वरेकल्पिताअर्पिताःसंतः अत्रचप्रथमंमहत्सेवाततश्चतत्कृपाततश्चतद्धर्मश्रद्धा
ततोभगवत्कथाश्रवणंततोभगवतिरतिस्तयाचदेहद्वयविवेकात्मज्ञानंततोदृढाभक्तिस्ततोभगवत्तत्त्वज्ञानंततस्तत्कृपयासर्वज्ञत्वादिभगवद्गु
णाविर्भावइतिक्रमोदर्शितः॥३४॥ननुचज्ञानेनाज्ञानप्राप्तकर्मनाशस्तच्चज्ञानंभक्तियोगाद्भवतिकथंकर्मणाकर्मनाशःस्यात्तत्राह यदत्रेति॥३५
भगवदर्पणेनक्रियमाणंकर्मभाक्तियोगंजनयतीतिसदाचारेणदर्शयति यत्रयदाभगवतःशिक्षयाकर्माणिकुर्वाणाभवंतितदाश्रीकृष्णस्यगुण
नामानिगृणंतिअनुस्मरंतिचकृष्णमित्यर्थः इयंचभगवच्छिक्षा यत्करोषियदश्नासियज्जुहोषिददासियत् ॥ यत्तपस्यसिकौंतेयतत्कुरुष्व मद



एवंनृणांक्रियायोगाःसर्वेसंसृतिहेतवः ॥ तएवात्मविनाशायकल्पंतेकल्पिताःपरे ॥ ३४ ॥ यदत्रक्रियतेक
र्मभगवत्परितोषणं ॥ ज्ञानंयत्तदधीनंहिभक्तियोगसमन्वितं ॥ ३५ ॥ कुर्वाणायत्रकर्माणिभगवच्छिक्षया
ऽसकृत् ॥ गृणंतिगुणनामानिकृष्णस्यानुस्मरंतिच॥३६॥ नमोभगवतेतुभ्यंवासुदेवायधीमहि ॥ प्रद्युम्नाया
निरुद्धायनमःसंकर्षणायच ॥ ३७ ॥ इतिमूर्त्यभिधानेनमंत्रमूर्तिममूर्त्तिकं ॥ यजतेयज्ञपुरुषंससम्यग्दर्श
नःपुमान् ॥३८॥ इमंस्वनिगमंब्रह्मन्नवेत्यमदनुष्ठितं ॥ अदान्मेज्ञानमैश्वर्यंस्वस्मिन्भावंचकेशवः ॥ ३९ ॥
त्वमप्यदभ्रश्रुतविश्रुतंविभोःसमाप्यतेयेनविदांबुभुत्सितं ॥ आख्याहिदुःखैर्मुहुरर्दितात्मनांसंक्लेशनिर्वाण
मुशंतिनान्यथा ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेव्यासनारदसंवादेपंचमोऽध्यायः ॥ ५ ॥
सूतउवाच एवंनिशम्यभगवान्देवर्षेर्जन्मकर्मच ॥ भूयःपप्रच्छतंब्रह्मन्व्यासःसत्यवतीसुतः ॥ १ ॥

र्पणमिति॥३६॥कीर्त्तनस्मरणरूपभक्तिहेतुत्वमुक्त्वाज्ञानहेतुत्वमाह द्वाभ्याम् नमइतिनमोधीमहिमनसानमनंकुर्म्महि ॥ ३७ ॥ अमूर्त्तिकंमं
त्रोक्तव्यतिरिक्तमूर्त्तिशून्यम् यजतेपूजयति सपुमान्सम्यग्दर्शनोभवति ॥ ३८ ॥ एवंचकृतवतिमयिहरिःस्वसदृशंज्ञानादिकंदत्तवानित्या
ह इमंस्वनिगमंस्वोपदेशंमयाऽनुष्ठितंअवेत्यज्ञात्वा भावंप्रीतिंच ॥ ३९ ॥ अतस्त्वमप्येवंकुर्वित्याह त्वमिति अदभ्रमनल्पंश्रुतंयस्य
हेअदभ्रश्रुतविभोर्विश्रुतंयशःआख्याहिकथय येनविश्रुतेनबुद्धेनविदांविदुषांबुभुत्सितंबोद्धुमिच्छासमाप्यते यतोदुःखैःपीडितानांसंक्लेश
शांतिंप्रकारांतरेणनमन्यते ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेप्रथमेटीकायांपंचमोऽध्यायः ॥ ५ ॥ ॥ व्यासस्यप्रत्ययार्थंचषष्ठेप्रा
ग्जन्मसंभवं ॥ स्वभाग्यंनारदःप्राहकृष्णसंकथनोद्भवं ॥ १ ॥ १ ॥ ॥ ॥ ॥

स्वयमपितथाचिकीर्षुर्गुरूपदेशानंतरंभावितच्चारितंपृच्छति भिक्षुभिरिति विप्रवसितेदूरदेशगमनेकृतेसति विज्ञानस्यादेष्टृभिः ॥ २ ॥ परं
वयउत्तरमायुस्तत्त्वयाकथंवर्त्तितंनीतं इदमितिदासीपुत्रभूतंकलेवरमुदस्राक्षीः उत्सृष्टवानसि ॥ ३ ॥ एषकल्पांतलक्षणःकालस्तेस्मृति
कथंनव्यवधात् नखंडितवान् अडागमाभावस्त्वार्षः हियतएषसर्वस्यनिराकृतिरपलापोयस्मात्सः ॥ ४ ॥ अकारषंकृतवानहं रेफषका
रयोर्विश्लेषश्छंदोऽनुरोधेन ॥ ५ ॥ तत्रतावत्कंचित्कालंतत्रैवमातृस्नेहयंत्रितोन्यवसमित्याह त्रिभिः एकएवाहमात्मजोयस्याःसा योषि

व्यासउवाच भिक्षुभिर्विप्रवसितेविज्ञानादेष्टृभिस्तव ॥ वर्त्तमानोवयस्याद्येततःकिमकरोद्भवान् ॥ २ ॥
स्वायंभुवकयावृत्त्यावर्तितंतेपरंवयः ॥ कथंचेदमुदस्राक्षीःकालेप्राप्तेकलेवरं ॥ ३ ॥ प्राक्कल्पविषयामेतां
स्मृतिंतेसुरसत्तम ॥ नह्येषव्यवधात्कालएषसर्वनिराकृतिः ॥ ४ ॥ नारदउवाच भिक्षुभिर्विप्रवसितेविज्ञा
नादेष्टृभिर्मम ॥ वर्त्तमानोवयस्याद्येततएतदकारषं ॥५॥ एकात्मजामेजननीयोषिन्मूढाचकिंकरी ॥ मय्या
त्मजेऽनन्यगतौचक्रेस्नेहानुबंधनं ॥ ६ ॥ साऽस्वतंत्रानकल्पासीद्योगक्षेमंममेच्छती ॥ ईशस्यहिवशेलोको
योषादारुमयीयथा॥ ७ ॥अहंचतद्ब्रह्मकुलऊषिवांस्तदवेक्षया॥दिग्देशकालाव्युत्पन्नोबालकःपंचहायनः
॥एकदानिर्गतांगेहाद्दुहंतींनिशिगांपथि ॥सर्पोऽदशत्पदास्पृष्टःकृपणांकालचोदितः॥९॥तदातदहमीशस्य
भक्तानांशमभीप्सतः ॥ अनुग्रहंमन्यमानःप्रातिष्ठंदिशमुत्तरां ॥ १० ॥ ॥ ॥

दितिमूढेतिचस्नेहानुबंधेहेतुः ॥ ६ ॥ किंकरीत्यस्यार्थंप्रपंचयति अस्वतंत्रासाअतोनकल्पानसमर्थाआसीत् दारुमयीयोषेत्यतिपारवश्ये
दृष्टांतः ॥ ७ ॥ तदेवंसास्नेहंचक्रेअहंचदिगादिष्वनभिज्ञोऽतस्तत्रैवन्यवसमित्याह अहंचतस्मिन्ब्रह्मकुलेतस्यामातुःस्नेहानुबंधरयावेक्ष
या कदाविरमेदितिप्रतीक्षयेत्यर्थः ऊषिवान्वासंकृतवान्पंचहायनःपंचवर्षः ॥ ८ ॥ गेहान्निर्गतांगांदुहंतीम् हेतौशतृप्रत्ययः दोग्धुंनि
र्गतामित्यर्थः पदापादेनआस्पृष्टईषदाक्रांतः अदशत् अखादत् ॥ ९ ॥ तन्मातुर्मरणंशंकल्याणमभीप्सतईशस्यानुग्रहंमन्यमानःप्राति
ष्ठंप्रस्थितोऽस्मि ॥ १० ॥ ॥ ॥ ॥ ॥ ॥

स्फीतांन्जनपदादीनतियातःसन्महद्विपिनमद्राक्षमितिचतुर्थेनान्वयः जनपदादिषुनानागुणदोषयुक्तेषुसमदृष्टिःसन्गतोहमितितात्पर्यार्थः स्फीतान्समृद्धान् जनपदान्देशान् तत्रतस्यांदिशि पुरग्रामव्रजाकरान् तत्रपुराणिराजधान्यः ग्रामाभृगुप्रोक्ताः विप्राश्चविप्रभृत्याश्च यत्रवैवसंतिते ॥ सतुग्रामइतिप्रोक्तःशूद्राणांवासएवचेति व्रजागोकुलानि आकराररत्नाद्युत्पत्तिस्थानानितान् खेटाःकर्षकग्रामाःखर्वटागिरितटग्रामाः भृगुप्रोक्तावा एकतोयत्रतुग्रामोनगरंचैकतःस्थितं ॥ मिश्रंतुखर्वटंनामनदीगिरिसमाश्रयमिति वाटचःपूगपुष्पादीनां वाटिकास्ताः वनानिस्वतःसिद्धवृक्षाणांसमूहाः उपवनानिरोपितवृक्षाणांसमूहाः तानिच ॥ ११ ॥ चित्रैर्धातुभिःस्वर्णरजतायैर्विचित्रानद्रींश्च इभैर्भग्नाभुजाःशाखायेषांतेद्रुमायेषुतान् शिवानिभद्राणिजलानियेषांतान् नलिनीःसरसीः ॥ १२ ॥ चित्राःस्वनाःयेषांतैःप

स्फीताञ्जनपदांस्तत्रपुरग्रामव्रजाकरान् ॥ खेटखर्वटवाटीश्चवनान्युपवनानिच ॥ ११ ॥ चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ॥ जलाशयान्शिवजलान्नलिनीःसुरसेविताः ॥ १२ ॥ चित्रस्वनैःपत्ररथैर्विभ्रमद्भ्रमरश्रियः ॥ नलवेणुशरस्तंबकुशकीचकगह्वरं ॥ १३ ॥ एकएवातियातोऽहमद्राक्षंविपिनंमहत् ॥ घोरंप्रतिभयाकारंव्यालोलूकशिवाऽजिरं ॥ १४ ॥ परिश्रांतेंद्रियात्माहंतृट्परीतोबुभुक्षितः ॥ स्नात्वापीत्वाह्रदेनद्याउपस्पृष्टोगतश्रमः ॥ १५ ॥ तस्मिन्निर्मनुजेऽरण्येपिप्पलोपस्थआस्थितः ॥ आत्मनात्मानमात्मस्थंयथाश्रुतमचिंतयं ॥ १६ ॥ ध्यायतश्चरणांभोजंभावनिर्जितचेतसा ॥ औत्कंठ्याश्रुकलाक्षस्यहृद्यासीन्मेशनैर्हरिः ॥ १७ ॥ प्रेमातिभरनिर्भिन्नपुलकांगोऽतिनिर्वृतः ॥ आनंदसंप्लवेलीनोनापश्यमुभयंमुने ॥ १८ ॥

त्ररथैःपक्षिभिस्तन्नादप्रबुद्धैरित्यर्थः विभ्रमद्भिर्भ्रमरैःश्रीःशोभायासांताःनलिनीः अतियातःअतिक्रम्यगतःसन्महद्विपिनंवनमद्राक्षं कीदृशं नलवेणुशराणांस्तबैःकुशैःकीचकैश्चगह्वरंदुर्गमं तत्रवेणुजातयएवविपुलांतरालगर्भाःकीचकाः ॥ १३ ॥ घोरंदुःसहं प्रतिभयाकारंभयंकररूपं व्यालादीनामजिरंक्रीडास्थानं ॥ १४ ॥ परिश्रांतानिइंद्रियाणिआत्मादेहश्चयस्य तृषापरीतोव्याप्तः उपस्पृष्टआचांतः ॥ १५ ॥ पिप्पलोपस्थेअश्वत्थमूले आस्थितःउपविष्टः आत्मनाबुध्या आत्मस्थंहृदिस्थं आत्मानंपरमात्मानं ॥ १६ ॥ भावेनभक्त्यानिर्जितंवशीकृतंयच्चेतस्तेन औत्कंठ्येनवैवश्येनाश्रुकलायुक्तेअक्षिणीयस्य ॥ १७ ॥ प्रेम्णोऽतिभरेणनिर्भिन्नपुलकान्यंगानियस्य आनंदानांसंप्लवेमहापूरेपरमानंदे उभयमात्मानंपरंच ॥ १८ ॥ ॥ ॥ ॥

मनःकांतमभीष्टम् शुचाशोकस्तामपहंतीतितथातत् उत्तस्थेऽभ्युत्थितोऽस्मि ॥ १९ ॥ हृदिमनःप्रणिधायस्थिरीकृत्यअवितृप्तोऽहमातुरइ
वाभवमितिशेषः ॥ २० ॥ गिरामगोचरःसंवेदनस्याविषयभूतईश्वरः ॥ २१ ॥ हंतेतिसानुकंपसंबोधने माइतिमांद्रष्टुंनार्हति यतः नाविप
काःदग्धाःकषायामलाःकामादयोयेषांतेषांकुयोगिनामनिष्पन्नयोगानाम् ॥ २२ ॥ कुतस्तर्हिदृष्टोऽसितत्राह सकृद्दर्शितंमयेतियत् एतत्का
मायमय्यनुरागाय त्वत्कामेनकिमित्यतआह मत्कामःपुमान् ॥ २३ ॥ अदीर्घयाऽपिसतांसेवया अवद्यंनिंद्यं लोकंदेहं मज्जनतांमत्पार्षद

रूपंभगवतोयत्तन्मनःकांतंशुचाऽपहं ॥अपश्यन्सहसोत्तस्थेवैक्लव्याद्दुर्मनाइव ॥१९॥दिदृक्षुस्तदहंभूयःप्र
णिधायमनोहृदि ॥ वीक्षमाणोऽपिनापश्यमवितृप्तइवातुरः ॥२०॥ एवंयतंतंविजनेमामाहागोचरोगिरां ॥
गंभीरश्लक्ष्णयावाचाशुचःप्रशमयन्निव ॥२१॥ हंतास्मिन्जन्मनिभवान्नमांद्रष्टुमिहार्हति ॥ अविपक्वकषा
याणांदुर्दर्शोऽहंकुयोगिनां ॥२२॥ सकृद्यद्दर्शितंरूपमेतत्कामायतेऽनघ॥मत्कामःशनकैःसाधुःसर्वान्मुंचति
हृच्छयान् ॥ २३ ॥ सत्सेवयादीर्घयातेजातामयिदृढामतिः ॥ हित्वाऽवद्यमिमंलोकंगंतामज्जनतामसि ॥
॥ २४ ॥ मतिर्मयिनिबद्धेयंनविपद्येतकर्हिचित् ॥ प्रजासर्गनिरोधेऽपिस्मृतिश्चमदनुग्रहात् ॥ २५ ॥
एतावदुक्त्वोपरराम तन्महद्भूतंनभोलिंगमलिंगमीश्वरं ॥ अहंचतस्मैमहतांमहीयसेशीर्ष्णाऽवनामंविदधे
ऽनुकंपितः ॥ २६ ॥ नामान्यनंतस्यहतत्रपःपठन्गुह्यानिभद्राणिकृतानिचस्मरन् ॥ गांपर्यटंस्तुष्टमना
गतस्पृहःकालंप्रतीक्षन्विमदोविमत्सरः ॥ २७ ॥ एवंकृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः ॥ कालःप्रादुर
भूत्कालेविद्युत्सौदामनीयथा ॥ २८ ॥ ॥ ॥ ॥ ॥

तांगंताऽसि ॥ २४ ॥ प्रजानांसर्गेसृष्टौनिरोधेसंहारेपि प्रजासर्गस्यनिरोधइतिवा ॥ २५ ॥ तत्प्रसिद्धंमहद्भूतं अस्यमहतोभूतस्यनिःश्वसितमे
तद्यदृग्वेदइत्यादिश्रुतेः कीदृशं ईश्वरंसर्वनियंतृ नभसिलिंगंमूर्तिर्यस्यतन्नभोलिंगं सन्निहितमपिनलिंग्यतइतिअलिंगं तस्मै अदृष्टायाव
नामंप्रणामंविदधेकृतवानहं तेनानुकंपितःसन् ॥ २६ ॥ अनंतस्यनामानिपठन्निवानवरतंगृणन्हतत्रपस्त्यक्तलज्जोविमत्सरोजातइतिशे
षः॥२७॥कालेस्वावसरेकालोमृत्युःप्रादुरभूदाविर्बभूव अकस्मात्प्रादुर्भावेदृष्टांतः विद्युदिति सौदामनीतिविशेषणंस्फुटत्वप्रदर्शनार्थं॥२८॥

प्रयुज्यमानेमयितामित्ययमर्थः हित्वाऽवद्यमिमंलोकंगंतामज्जनतामसीतियाभागवतीभगवत्पार्षदरूपाशुद्धासत्त्वमयीतनुःप्रतिश्रुतातांप्राते भगवतामयिप्रयुज्यमानेनीयमानेआरब्धंयत्कर्मतन्निर्वाणंसमाप्तंयस्यआरब्धकर्मणोनिर्वाणमेवनिर्वाणंयस्योतिवासपंचभूतात्मकोदेहोन्यपतत् अनेनपार्षदतनूनामकर्मारब्धत्वंशुद्धत्वंनित्यत्वामित्यादिसूचितंभवति ॥ २९ ॥ इदंत्रैलोक्यमादायउपसंहृत्यउदन्वतएकार्णवस्यांभसिशयानेश्रीनारायणेशिशयिषोःशयनंकर्तुमिच्छोर्विभोर्ब्रह्मणःअंतःमध्यमनुप्राणंनिःश्वासेनसहविविशेप्रविष्टोऽहं ततोऽवतीर्यंविश्वात्मादेहमाविश्यचक्रिणः ॥ अवापवैष्णवींनिद्रामेकीभूयाथविष्णुनेतिकौर्मोक्तेः ॥ स्वायनेंऽभसीतिपाठे स्वायनेस्वस्यायनेअंभसिशिशयिषोर्ब्रह्मणइतिश्रीनारायणेनाभेदविवक्षयोक्तमित्यवगंतव्यं ॥ ३० ॥ प्राणेभ्यइंद्रियेभ्यः अहंमरीचिमिश्रास्तन्मुख्याऋषयश्चजज्ञिरे ॥ ३१ ॥ येकर्मिणस्तेबहिर्नियांति तपआदिभिर्ब्रह्मलोकंगतास्त्वंतर्नयांति अहंतुमहाविष्णोरनुग्रहादखंडितब्रह्मचर्यव्रतःसन्नंतर्बहिश्चपर्येमिपर्यटामि क्वचिदप्यविघाताअप्रतिहतागतिर्यस्यसः ॥ ३२ ॥ किमितिपर्यटासि ईश्वराज्ञयालोकमंगलार्थमित्याह चतुर्भिः देवेनेश्वरेणदत्तां स्वरानिषादर्षभगांधारषड्जमध्यमधैवतपंचमाइतिसप्ततएवब्रह्मब्रह्माभिव्यंजकत्वात् तेनविभूषितां स्वतःसिद्धसप्तस्वरामित्यर्थः मूर्छयित्वामूर्छनालापवर्तांकृत्वा ॥ ३३ ॥ स्वप्रयोजनमाह प्रगायतइति ॥ ३४ ॥ परप्रयोजनमाह एतद्धीति मात्राविषयास्तेषांस्पर्शाभोगास्तेषामिच्छयाआतुराणिचित्तानियेषांतेषां हरिचर्याऽनुवर्णनंयत् एतदेवभवसिंधौप्लवःपोतः नकेवलंश्रुतिप्रामाण्येन किंत्वन्वयव्यतिरेकाभ्यांदृष्टएवेत्यर्थः ॥ ३५ ॥ ॥ ॥ ॥ ॥

प्रयुज्यमानेमयितांशुद्धांभागवतींतनुं ॥ आरब्धकर्मनिर्वाणोन्यपतत्पांचभौतिकः ॥ २९ ॥ कल्पांतइदमादायशयानेंऽभस्युदन्वतः ॥ शिशयिषोरनुप्राणंविविशेंऽतरहंविभोः ॥ ३० ॥ सहस्रयुगपर्यंतउत्थायेदंसिसृक्षतः ॥ मरीचिमिश्राऋषयःप्राणेभ्योऽहंचजज्ञिरे ॥ ३१ ॥ अंतर्बहिश्चलोकांस्त्रीन्पर्येम्यस्कंदितव्रतः ॥ अनुग्रहान्महाविष्णोरविघातगतिःक्वचित् ॥ ३२ ॥ देवदत्तामिमांवीणांस्वरब्रह्मविभूषितां ॥ मूर्छयित्वाहरिकथांगायमानश्चराम्यहं ॥ ३३ ॥ प्रगायतःस्ववीर्याणितीर्थपादःप्रियश्रवाः ॥ आहूतइवमेशीघ्रंदर्शनंयातिचेतसि ॥ ३४ ॥ एतद्ध्यातुरचित्तानांमात्रास्पर्शेच्छयामुहुः ॥ भवसिंधुप्लवोदृष्टोहरिचर्याऽनुवर्णनं ॥ ३५ ॥

एतदेवेत्युक्तमवधारणमनुभवेनद्रढयति यमादिभिस्तथानशाम्यति यद्वन्मुकुंदसेवयाऽद्धासाक्षादात्मामनःशाम्यति कथंचिन्मुकुंदसेवामा
त्रेणशाम्यतिकिंपुनस्तद्गुणवर्णनेनेतिभावः ॥ ३६ ॥ भवतोमनःपरितोषकंचाख्यातं ॥ ३७ ॥ आमंत्र्यअनुज्ञाप्य यादृच्छिकःस्वप्रयोज
नसंकल्पशून्यः ॥ ३८ ॥ हरिकथागायकभाग्यंश्लाघते अहोइति मादयन्हृष्यन् तंत्र्यावीणया ॥ ३९ ॥ इतिप्रथमेटीकायांषष्ठोऽध्या
यः ॥ ६ ॥ ॥ अथभागवतश्रोतुर्जन्मवक्तुंपरीक्षितः ॥ सुप्तबालवधाद्द्रौणेर्दंडःसप्तमउच्यते ॥ १ ॥ तस्यनारदस्याभिप्रेतंश्रुतवान्स
न् ॥ १ ॥ ब्रह्मनद्यांब्रह्मदैवत्यायांब्राह्मणैराश्रितायांच शम्यायुगकीलाःप्रास्यंतेपरित्ध्यर्थंप्रक्षिप्यंतेऽस्मिन्नितिशम्याप्रासः सत्रंकर्मवर्धय

यमादिभिर्योगपथैःकामलोभहतोमुहुः ॥ मुकुंदसेवयायद्वत्तथात्माऽद्धानशाम्यति ॥ ३६ ॥ सर्वंतदिदमा
ख्यातंयत्पृष्टोऽहंत्वयाऽनघ ॥ जन्मकर्मरहस्यंमेभवतश्चात्मतोषणं ॥ ३७ ॥ सूतउवाच एवंसंभाष्यभ
गवान्नारदोवासवीसुतं ॥ आमंत्र्यवीणांरणयन्ययौयादृच्छिकोमुनिः ॥ ३८ ॥ अहोदेवर्षिर्धन्योऽयंयत्की
र्तिंशार्ङ्गधन्वनः ॥ गायन्माद्यन्निदंतंत्र्यारमयत्यातुरंजगत् ॥ ३९ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधे
व्यासनारदसंवादेषष्ठोऽध्यायः ॥ ६ ॥ ॥ शौनकउवाच निर्गतेनारदेसूतभगवान्बादरायणः ॥
श्रुतवांस्तदभिप्रेतंततःकिमकरोद्विभुः ॥ १ ॥ सूतउवाच ब्रह्मनद्यांसरस्वत्यामाश्रमःपश्चिमेतटे ॥
शम्याप्रासइतिप्रोक्तऋषीणांसत्रवर्द्धनः ॥ २ ॥ तस्मिन्स्वआश्रमेव्यासोबदरीखंडमंडिते ॥ आसीनोऽप
उपस्पृश्यप्रणिदध्यौमनःस्वयं ॥ ३ ॥ भक्तियोगेनमनसिसम्यक्प्रणिहितेऽमले ॥ अपश्यत्पुरुषंपूर्वंमायां
चतदपाश्रयां ॥ ४ ॥ ययासंमोहितोजीवआत्मानंत्रिगुणात्मकं ॥ परोऽपिमनुतेऽनर्थंतत्कृतंचाभिपद्यते ॥ ५ ॥

तीतितथा ॥ २ ॥ बदरीणांखंडेनसमूहेनमंडितेमनःप्रणिदध्यौस्थिरीचकार समाधिनानुस्मरतद्विचेष्टितमितिनारदोपदिष्टंध्यानंकृतवानि
त्यर्थः ॥ ३ ॥ प्रणिहितेनिश्चले अत्रहेतुः भक्तियोगेनामले पूर्वंप्रथमंपुरुषमीश्वरमपश्यत् पूर्णमितिवापाठः तदपाश्रयांतदधीनांमायां
चापश्यत् ॥ ४ ॥ ईशमायाकृतांचजीवानांसंसृतिमपश्यदित्याह ययासंमोहितःस्वरूपावरणेनविक्षिप्तःपरोऽपिगुणत्रयाद्व्यतिरिक्तोऽपित
त्कृतंत्रिगुणत्वाभिमानकृतमनर्थंचकर्तृत्वादिकंप्राप्नोति ॥ ५ ॥ ॥ ॥ ॥

अनर्थमुपशमयति योऽधोक्षजे साक्षाद्भक्तियोगस्तं चापश्यत् एतत्सर्वं स्वयं दृष्ट्वा एवमजानतो लोकस्यार्थे सात्वतसंहितां श्रीभागवताख्यां चक्रे तदनेन श्लोकत्रयेण भागवतार्थः संक्षेपतो दर्शितः एतदुक्तं भवति विद्याशक्त्या मायानियंता नित्याविर्भूतपरमानंदस्वरूपः सर्वज्ञः सर्वशक्तिरीश्वरस्तन्मायया संमोहितस्तिरोभूतस्वरूपस्तद्विपरीतधर्मा जीवस्तस्य चेश्वरभक्त्या लब्धज्ञानेन मोक्ष इति तदुक्तं विष्णुस्वामिना ल्हादिन्या संविदाश्लिष्टः सच्चिदानंद ईश्वरः ॥ स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः ॥ तथा स ईशो यद्वशे माया स जीवो यस्तयार्दितः ॥ स्वाविर्भूतपरानंदः स्वाविर्भूतसुदुःखभूः ॥ स्वादृगुत्थविपर्यासभवभेदजभीशुचः ॥ यन्मायया जुषन्नास्ते तमिमं नृहरिं नुम इत्यादि ॥ ६ ॥ संहितायां अनर्थोपशामकत्वं दर्शयति यस्यां वै श्रूयमाणायामेव किं पुनः श्रुतायामित्यर्थः ॥ ७ ॥ अनुक्रम्य शोधयित्वा ॥ ८ ॥ कस्य वा हेतोर्बृहतीं विततां ॥ ९ ॥

अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहितां ॥ ६ ॥ यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ॥ भक्तिरुत्पद्यते पुंसः शोकमोहजरापहा ॥ ७ ॥ स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजं ॥ शुकमध्यापयामास निवृत्तिनिरतं मुनिः ॥ ८ ॥ शौनक उवाच स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ॥ कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ॥ ९ ॥ सूत उवाच आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे ॥ कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ १० ॥ हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः ॥ अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः ॥ ११ परीक्षितोऽथ राजर्षेर्जन्मकर्मविलापनं ॥ संस्थां च पांडुपुत्राणां वक्ष्ये कृष्णकथोदयं ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

॥ ९ ॥ निर्ग्रंथाः ग्रंथेभ्यो निर्गताः तदुक्तं गीतासु यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ॥ तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य चेति यद्वा ग्रंथिरेव ग्रंथः निवृत्तः क्रोधाहंकाररूपो ग्रंथिर्येषां ते निवृत्तहृदयग्रंथय इत्यर्थः ननु मुक्तानां किं भक्त्येत्यादि सर्वाक्षेपपरिहारार्थमाह इत्थंभूतगुण इति ॥ १० ॥ भक्तिं कुर्वंतु नाम एतच्छास्त्राभ्यासे शुकस्य किं कारणमित्यत आह हरेरिति अध्यगात् अधीतवान् विष्णुजनाः प्रिया यस्येति व्याख्यानादिप्रसंगेन तत्संगतिकाम इति भावः ॥ ११ ॥ एतेन तस्य पुत्रो महायोगीत्यादिना शुकस्य व्याख्याने प्रवृत्तिः कथमिति यत्पृष्टं तस्योत्तरमुक्तं यदन्यत्पृष्टं परीक्षितः प्रायोपवेशेन श्रवणं कथमिति तस्य जन्म महाश्चर्यमित्यादिना तस्योत्तरं वक्तुमाह परीक्षित इति विलापनं मुक्तिं मृत्युं वा संस्थां महाप्रस्थानं श्रीकृष्णकथानामुदयो यथा भवति तथा ॥ १२ ॥

तत्रपरीक्षितोजन्मनिरूपयिष्यन्नादौतावद्गर्भस्थएवाश्वत्थाम्नोब्रह्मास्त्रात्कृष्णेनरक्षितइतिवक्तुंकथांप्रस्तौति यदेत्यादिना यदाद्रौणिरश्व
त्थामाकृष्णासुतानांद्रौपदीपुत्राणांशिरांसिउपाहरत्तदातन्माताऽरुदत्तांचसांत्वयन्किरीटमालीअर्जुनआहेतितृतीयेनान्वयः किमितिबा
लानांशिरांस्यानीतवानित्यपेक्षायामाह मृधेयुद्धे यद्यपिपांडवाअपिकौरवाएवतथापिसृंजयवंश्योधृष्टद्युम्नः पांडवानांसेनापतिरितिसृंजया
नामित्युक्तं वीरगतिंस्वर्गं अथोअनंतरं वृकोदरेणाविद्धायाःक्षिप्तायागदायाअभिमर्शेनघातेनभग्नौऊरुदंडौयस्यतथाभूतेधृतराष्ट्रपुत्रेदुर्योधने
सति ॥ १३ ॥ भर्त्तुर्दुर्योधनस्यस्मेतिवितर्के इतिएवंप्रियंस्यादितिपश्यन् तस्यतद्विप्रियमेवेतिवाक्यांतरं विप्रियत्वेहेतुः जुगुप्सितमि

**यदामृधेकौरवसृंजयानांवीरेष्वथोवीरगतिंगतेषु ॥ वृकोदराविद्धगदाभिमर्शभग्नोरुदंडेधृतराष्ट्रपुत्रे॥१३॥ भर्त्तुःप्रियंद्रौणिरितिस्मपश्यन्कृष्णासुतानांस्वपतांशिरांसि ॥ उपाहरद्विप्रियमेवतस्यतज्जुगुप्सितंकर्म विगर्हयंति ॥ १४ ॥ माताशिशूनांनिधनंसुतानांनिशम्यघोरंपरितप्यमाना ॥ तदाऽरुदद्बाष्पकलाकुलाक्षीतांसांत्वयन्नाहकिरीटमाली ॥ १५ ॥ तदाशुचस्तेप्रमृजामिभद्रेयद्ब्रह्मबंधोःशिरआततायिनः ॥ गांडीवमुक्तैर्विशिखैरुपाहरेत्वाक्रम्ययत्स्नास्यसिदग्धपुत्रा ॥ १६ ॥ इतिप्रियांवल्गुविचित्रजल्पैःससांत्वयित्वाऽच्युतमित्रसूतः ॥ अन्वाद्रवद्दंशितउग्रधन्वाकपिध्वजोगुरुपुत्रंरथेन ॥ १७ ॥ ॥ ॥**

ति ॥ १४ ॥ घोरंदुःसहंयथाभवति बाष्पस्यकलाभिर्बिंदुभिराकुलेअक्षिणीयस्याः किरीटस्यैकत्वेपितदग्राणांबहुत्वात्किरीटमालीत्यु
क्तं॥ १५ ॥ शुचःशोकाश्रूणि प्रमृजामिपरिमार्जयामि यत् यदाब्रह्मबंधोर्ब्राह्मणाधमस्य आततायिनइति अग्निदोगरदश्चैवशस्त्रपाणिर्धना
पहः॥ क्षेत्रदारहरश्चैवषडेतेह्याततायिनइतिस्मरणात् अत्राततायीशस्त्रपाणिस्तेनचपुत्रहंतृत्वंलक्ष्यते गांडीवाद्धनुषोमुक्तैर्विशिखैर्बाणैरुपा
हरेत्वत्समीपमानयामि यच्छिरआक्रम्यआसनंविधाय दग्धपुत्रासती ॥ १६ ॥ वल्गवोरम्याविचित्राजल्पाःभाषणानितैःसोर्जुनःअच्युत
एवमित्रंसूतश्चयस्य दंशितोबद्धकवचः उग्रंधनुश्चापंयस्य कपिर्हनुमान्ध्वजेयस्यसः गुरोःपुत्रंरथेनअन्वाद्रवत्अन्वधावत् ॥ १७ ॥

आपतंतमाधावंतं सद्रौणिः कुमारहाबालघाती उद्विग्नमनाःकंपितहृदयः प्राणपरीप्सुःप्राणान्लब्धुमिच्छुर्नतुकीर्तिं यावद्गमंयावद्गंतुं श
क्यंतावदुर्व्यांपराद्रवत्अपलायत् कःब्रह्मामृगोभूत्वासुतांयब्धुमुद्यतःसन्रुद्रस्यभयाद्यथापलायतेस्म अर्कइतिपाठेवामनपुराणकथासू
चिता तथाहि विद्युन्मालीनामकश्चिद्राक्षसोमाहेश्वरस्तस्मैरुद्रेणसौवर्णंविमानंदत्तं ततोऽसौअर्कस्यपृष्ठतोभ्राम्यन्विमानदीप्त्यारात्रिंविलो
पितवान् ततोऽर्केणनिजतेजोभिर्द्रावयित्वातद्विमानंपातितं तच्छ्रुत्वाकुपितेरुद्रेभयादर्कःपर्याद्रवत् ततोरुद्रस्यक्रूरदृष्ट्यादंदह्यमानःपतन्वा
राणस्यांपतितोलोलार्कनाम्नाविख्यातइति ॥१८॥ अशरणंरक्षकरहितं ननुपलायनमेवरक्षकमास्ति न तस्यापिकुंठितत्वादित्याह श्रांतावा

तमापतंतंसविलक्ष्यदूरात्कुमारहोद्विग्नमनारथेन ॥ पराद्रवत्प्राणपरीप्सुरुर्व्यांयावद्गमंरुद्रभयाद्यथाकः
॥ १८ ॥ यदाऽशरणमात्मानमैक्षतश्रांतवाजिनं ॥ अस्त्रंब्रह्मशिरोमेनआत्मत्राणंद्विजात्मजः ॥ १९ ॥ अ
थोपस्पृश्यसलिलंसंदधेतत्समाहितः ॥ अजानन्नुपसंहारंप्राणकृच्छ्रउपास्थिते॥ २० ॥ ततःप्रादुष्कृतंतेजः
प्रचंडंसर्वतोदिशं ॥ प्राणापदमभिप्रेक्ष्यविष्णुंजिष्णुरुवाचह ॥२१॥ अर्जुनउवाच कृष्णकृष्णमहाभाग
भक्तानामभयंकरः ॥ त्वमेकोदह्यमानानामपवर्गोऽसिसंसृतेः ॥ २२ ॥ त्वमाद्यःपुरुषःसाक्षादीश्वरःप्र
कृतेःपरः ॥ मायांव्युदस्यचिच्छक्त्याकैवल्येस्थितआत्मनि ॥ २३ ॥ सएवजीवलोकस्यमायामोहित
चेतसः ॥ विधत्सेस्वेनवीर्येणश्रेयोधर्मादिलक्षणं ॥ २४ ॥ ॥ ॥

जिनोयस्यतं ब्रह्मशिरोऽस्त्रंब्रह्मास्त्रं द्विजात्मजइत्यदीर्घदर्शितामाह ॥ १९ ॥ तत्ब्रह्मास्त्रं समाहितःकृतध्यानः उपसंहारमजानतोपिसंधाने
हेतुः प्राणकृच्छ्रइति ॥ २० ॥ ततः अस्त्रात्सर्वतोदिशंप्रादुष्कृतंप्रकटीभूतंतेजोऽभिप्रेक्ष्यततःप्राणापदंचाभिप्रेक्ष्य ॥१॥ प्रस्तुतंविज्ञापयितुंप्र
थमंस्तौति कृष्णेतिचतुर्भिः संसृतेर्हेतोर्दह्यमानानामपवर्गोऽपवर्जयिता नाशकइत्यर्थः॥२२॥यतस्त्वमीश्वरःसाक्षात् कुतःयतःप्रकृतेःपरः
पुरुषः तत्कुतः यतआद्यःकारणं कारणत्वेप्यविकारितामाह मायांव्युदस्यअभिभूयकैवल्यरूपेआत्मन्येवस्थितइति ॥ २३ ॥ त्रिवर्गदाता
पित्वमेवेत्याह सइति यस्त्वंमायामभिभूयस्थितःसएवमायाभिभूतस्यजनस्यधर्मादिफलमुपासितःसन्विधत्से वीर्येणप्रभावेन ॥ २४ ॥

तथाचानेनावतारेणतवसाधुपक्षपातोलक्ष्यतइत्याह तथेति किंभूभारहरणंमदिच्छामात्रेणनभवतीतित्राह स्वानांज्ञातीनामनुध्यानायचत
थाऽनन्यभावानामेकांतभक्तानांच ॥ २५ ॥ एवंस्तुत्वाप्रस्तुतंविज्ञापयति किमात्मकमिदंकुतोवाआयातीति स्वित्वितर्के ॥ २६ ॥ इ
दंद्रोणपुत्रस्यब्राह्ममस्त्रं तेनचप्राणबाधेप्राप्तेप्रदर्शितंकेवलं नतत्प्रयोगेकुशलइत्यर्थः यतोऽसावुपसंहारंनवेद एतच्चत्वंतुवेत्थजानासि ॥
॥ २७ ॥ प्रत्यत्रकर्शनंकृशत्वकरं निवर्त्तकमित्यर्थः अतःतदस्त्रतेजउन्नद्धमुत्कटंब्रह्मास्त्रतेजसैवजहिघातय त्वत्प्रयुक्तंचास्त्रंतदुपसंहरस्य
स्वयमुपशाम्येत् यतस्त्वमस्त्रज्ञोऽसि ॥ २८ ॥ परेशत्रवस्तएववीरास्तान्हंतीतितथाफाल्गुनोऽर्जुनःअपःस्पृष्ट्वाआचम्यतंश्रीकृष्णंपरिक्र

यथाऽयंचावतारस्तेभुवोभारजिहीर्षया ॥ स्वानांचानन्यभावानामनुध्यानायचासकृत् ॥ २५ ॥ किमि
दंस्वित्कुतोवेतिदेवदेवनवेद्म्यहम् ॥ सर्वतोमुखमायातितेजःपरमदारुणं ॥ २६ ॥ श्रीभगवानुवाच वे
त्थेदंद्रोणपुत्रस्यब्राह्ममस्त्रंप्रदर्शितं ॥ नैवासौवेदसंहारंप्राणबाधउपस्थिते ॥ २७ ॥ नह्यस्यान्यतमंकिंचि
दस्त्रंप्रत्यवकर्शनं ॥ जह्यस्त्रतेजउन्नद्धमस्त्रज्ञोह्यस्त्रतेजसा ॥ २८ ॥ सूतउवाच श्रुत्वाभगवताप्रोक्तंफा
ल्गुनःपरवीरहा ॥ स्पृष्ट्वाऽपस्तंपरिक्रम्यब्राह्मंब्राह्मायसंदधे ॥ २९ ॥ संहत्यान्योऽन्यमुभयोस्तेजसी
शरसंवृते ॥ आवृत्यरोदसीखंचववृधातेऽर्कवन्हिवत् ॥ ३० ॥ दृष्ट्वास्त्रतेजस्तुतयोस्त्रींल्लोकान्प्रदहन्महत्
॥ दह्यमानाःप्रजाःसर्वाःसांवर्त्तकममंसत ॥ ३१ ॥ प्रजोपप्लवमालक्ष्यलोकव्यतिकरंचतं ॥ मतंचवासुदेवस्यसं
जहारार्जुनोद्वयं ॥ ३२ ॥ ततआसाद्यतरसादारुणंगौतमीसुतं ॥ बबंधामर्षताम्राक्षःपशुंरशनयायथा ॥ ३३ ॥

म्यप्रदक्षिणीकृत्य ब्राह्मायब्रह्मास्त्रंनिवर्त्तयितुं ॥ २९ ॥ ततश्चउभयोर्ब्रह्मास्त्रयोस्तेजसीशरैःसंवृतेसंवेष्टितेपरस्परंमिलित्वाववृधातेअवर्धे
तां किंकृत्वा रोदसीद्यावापृथिव्यौखमंतरिक्षंचावृत्य यथाप्रलयेसंकर्षणमुखाग्निरुपरिस्थितोऽर्कश्चसंहत्यवर्धेतेतद्वत् ॥ ३० ॥ तयोर्द्रौ
णिफाल्गुनयोः तेनदह्यमानाःसांवर्त्तकंप्रलयाग्निममंसतमेनिरे ॥ ३१ ॥ लोकानांव्यतिकरंव्यत्ययंनाशमित्यर्थः वासुदेवस्यमतंचालक्ष्य
ब्रह्मास्त्रद्वयमुपसंहृतवान् ॥ ३२ ॥ गौतमवंशजागौतमीकृपीतस्याःसुतं अमर्षेणकोपेनताम्रेआक्षिणीयस्यसः निष्कृपत्वेदृष्टांतःपशुंयथे
तितस्यबंधनंधर्मइत्यत्रदृष्टांतः यथायाज्ञिकःपशुमिति रशनयारज्ज्वा ॥ ३३ ॥ ॥

शोकरोषादियुक्तस्याप्यर्जुनस्यधर्मनिष्ठाख्यापनायश्रीकृष्णवाक्यं तदाह षड्भिः शिबिराय राजनिवेशायनेतुमिच्छंतं प्रकुपितइवेति ॥ ३४ ॥ अनागसोनिरपराधान् ॥ ३५ ॥ रिपोरपिसुप्तस्यबालस्यचवधोनधर्मइत्यन्यार्थैर्दर्शयति मत्तंमद्यादिना प्रमत्तमनवहितं उन्मत्तंग्रहवातादिना जडमनुद्यमं प्रपन्नंशरणागतं विरथंभग्नरथं ॥ ३६ ॥ तद्वधोदंडरूपस्तस्यैवश्रेयःपुरुषार्थः यद्यतोदंडप्रायश्चित्तरहिताद्दोषात्सपुमानधोयातीति तथाचस्मरंति राजभिर्धृतदंडास्तुकृत्वापापानिमानवाः ॥ विधूतकल्मषायांतिस्वर्गंसुकृतिनोयथेति ॥ ३७ ॥

शिबिरायनिनीषंतंदाम्नाबद्ध्वारिपुंबलात् ॥ प्राहार्जुनंप्रकुपितोभगवानंबुजेक्षणः ॥ ३४ ॥ मैनंपार्थार्हसित्रातुंब्रह्मबंधुमिमंजहि ॥ योऽसावनागसःसुप्तानवधीन्निशिबालकान् ॥ ३५ ॥ मत्तंप्रमत्तमुन्मत्तंसुप्तंबालंस्त्रियंजडं ॥ प्रपन्नंविरथंभीतंनरिपुंहंतिधर्मवित् ॥ ३६ ॥ स्वप्राणान्यःपरप्राणैःप्रपुष्णात्यघृणःखलः ॥ तद्वधस्तस्यहिश्रेयोयद्दोषाद्यात्यधःपुमान् ॥ ३७ ॥ प्रतिश्रुतंचभवतापांचाल्यैशृण्वतोमम ॥ आहरिष्येशिरस्तस्ययस्तेमानिनिपुत्रहा ॥ ३८ ॥ तदसौवध्यतांपापआततायात्मबंधुहा ॥ भर्तुश्चविप्रियंवीरकृतवान्कुलपांसनः ॥३९॥ एवंपरीक्षताधर्मंपार्थःकृष्णेनचोदितः ॥ नैच्छद्धंतुंगुरुसुतंयद्यप्यात्महनंमहान् ॥ ४० ॥ अथोपेत्यस्वशिबिरंगोविंदप्रियसारथिः ॥ न्यवेदयत्तंप्रियायैशोचंत्याआत्मजान्हतान् ॥४१॥ तथाहृतंपशुवत्पाशबद्धमवाङ्मुखंकर्मजुगुप्सितेन ॥ निरीक्ष्यकृष्णाऽपकृतंगुरोःसुतंवामस्वभावाकृपयाननामच ॥ ४२ ॥ उवाचचासहंत्यस्यबंधनानयनंसती ॥ मुच्यतांमुच्यतामेषब्राह्मणोनितरांगुरुः ॥ ४३ ॥ सरहस्योधनुर्वेदःसविसर्गोपसंयमः ॥ अस्त्रग्रामश्चभवताशिक्षितोयदनुग्रहात् ॥ ४४ ॥

॥ ३८ ॥ ३९ ॥ यद्यपिचोदितस्तथापिहंतुंनैच्छत् आत्महनंपुत्रहंतारमपि यतोमहान् ॥ ४० ॥ गोविंदःप्रियःसारथिश्चयस्यसः आत्मजान्शोचंत्यै ॥ ४१ ॥ तथापरिभवेनाहृतमानीतं कर्मणोजुगुप्सितेनदोषेणावाङ्मुखं अपकृतमपकारिणं कृपयानिरीक्ष्य वामःशोभनःस्वभावोयस्याःसा ॥ ४२ ॥ ननामचउवाचचेतिचकाराभ्यांसंभ्रमःसूचितः बंधनेनानयनमसहमाना ॥ ४३ ॥ सरहस्योगोप्यमंत्रसहितःविसर्गःअस्त्रप्रयोगः उपसंहारः ताभ्यांसहितोऽस्त्रसमूहश्च ॥ ४४ ॥ ॥ ॥

किंच तस्यद्रोणस्यात्मादेहस्तस्यार्धंमूकृपीआस्ते अर्धत्वेहेतुः पत्नी अर्धोवाएषआत्मनोयत्पत्नीतिश्रुतेः जायापतीअग्निमादधीयातामि
तिश्रुतेरुभयोरेककारत्वावगमाच्च ननुभर्त्तरिमृतेसाकथंजीवतितत्राह नान्वगाद्भर्त्तारं यतोवीरसूःपुत्रवती ॥ ४५ ॥ तत्तस्माद्वीरवंगुरोःकु
लंभवद्भिर्वृजिनंदुःखंप्राप्तुंनार्हति किंतुपूज्यंवंद्यंच ॥ ४६ ॥ मृतवत्सामृतपुत्रा ॥ ४७ ॥ विपक्षेदोषमाह यैरिति तेषांराजन्यानांकुलं
कर्म कथंभूतंसानुबंधंसपरिवारं शुचाशोकेनार्पितंव्याप्तंचब्रह्मकुलंकर्तृप्रदहति ॥४८॥ धर्म्यामित्यादयोवचसः षड्गुणाः पूर्वश्लोकषट्केद्र
ष्टव्याः तत्रधर्म्यंधर्मादनपेतं मुच्यतांमुच्यतामिति न्याय्यंन्यायादनपेतंसरहस्यइत्यादि सकरुणंतस्यात्मनोऽर्द्धमिति निर्व्यलीकंतद्धर्मज्ञेति

सएषभगवान्द्रोणःप्रजारूपेणवर्त्तते ॥ तस्यात्मनोर्धंपत्न्यास्तेनान्वगाद्वीरसूःकृपी॥४५॥तद्धर्मज्ञमहाभाग
भवद्भिर्गौरवंकुलं ॥ वृजिनंनार्हतिप्राप्तुंपूज्यंवंद्यमभीक्ष्णशः ॥४६॥ मारोदीदस्यजननीगौतमीपतिदेवता
॥यथाऽहंमृतवत्सार्त्तारोदिम्यश्रुमुखीमुहुः॥४७॥यैःकोपितंब्रह्मकुलंराजन्यैरकृतात्मभिः॥तत्कुलंप्रदहत्या
शुसानुबंधंशुचार्पितं ॥ ४८ ॥ सूतउवाच धर्म्यंन्याय्यंसकरुणंनिर्व्यलीकंसमंमहत् ॥ राजाधर्मसुतोरा
ज्ञ्याःप्रत्यनंदद्वचोद्विजाः ॥४९॥ नकुलःसहदेवश्चयुयुधानोधनंजयः॥ भगवान्देवकीपुत्रोयेचान्येयाश्चयो
षितः ॥५०॥ तत्राहामर्षितोभीमस्तस्यश्रेयान्वधःस्मृतः ॥ नभर्त्तुर्नात्मनश्चार्थेयोऽहन्सुप्तान्शिशून्वथा
॥ ५१ ॥ निशम्यभीमगदितंद्रौपद्याश्चचतुर्भुजः ॥ आलोक्यवदनंसख्युरिदमाहहसन्निव ॥ ५२ ॥ श्रीभ
गवानुवाच ब्रह्मबंधुर्नहंतव्यआततायीवधार्हणः ॥ मयैवोभयमाम्नातंपरिपाह्यनुशासनं ॥ ५३ ॥

समंमारोदीदितिदुःखसाम्योक्तेः महत्यैःकोपितमितिनिष्ठुरोक्त्याहितोपदेशात् एवंभूतंराज्ञ्यावचोहेद्विजाःप्रत्यनंदत्अनुमोदितवान् ॥
॥ ४९ ॥ नकुलादयश्चप्रत्यनंदन् युयुधानःसात्यकिः ॥ ५० ॥ तस्यतथाविधस्यद्रौणेर्वधएवश्रेष्ठः अन्यथाऽस्यनरकपातप्रसंगःस्यात्त
दाह नभर्तुरितिअहन्जघान ॥ ५१ ॥ चतुर्भुजोक्तेरयंभावः भीमेएनंहंतुंप्रवृत्तेद्रौपद्यांचसहसातन्निवारणेप्रवृत्तायामुभयोःसंवारणायावि
ष्कृतचतुर्भुजइतिसंदिहानस्यसख्युरर्जुनस्य ॥ ५२ ॥ वधार्हणःवधार्हः मयैवशास्त्रकृता ब्राह्मणोनहंतव्यः तथाच आततायिनमायांतम
पिवेदांगपारगम् ॥ जिघांसंतंजिघांसीयान्नतेनब्रह्महाभवेदितिवदता तदुभयमप्यनुशासनंपरिपालय ॥ ५३ ॥

तवचप्रतिज्ञांपूरयेत्याह प्रियांसांत्वयतात्वयायत्प्रतिश्रुतंहननंतत्त्वसत्यंकुरुप्रियंचकुरु मह्यंमम तत्रवधेभीमस्यप्रियंभवतिअवधेद्रौपद्याः
ह्ययेश्रीकृष्णस्य ॥ ५४ ॥ हार्दमभिप्रायमाज्ञायज्ञात्वा नह्यद्वाक्यमुभयंविदध्यात् अतोस्यायमभिप्रायइतिज्ञात्वेत्यर्थः असिनाखड्गेन मू
र्द्धन्यंमूर्द्धनिजातम् सहमूर्द्धजंसकेशम् ॥ ५५ ॥ मणिनाचहीनम् निरयापयत्निःसारितवान् ॥ ५६ ॥ अनेनश्रीकृष्णोक्तंसर्वंसंपादि
तमित्याह वपनमिति ॥ ५७ ॥ निर्हरणंदाहार्थंनयनम् ॥ ५८ ॥ इतिप्रथमेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ अष्टमेकुपितद्रौणेरस्त्राद्र

कुरुप्रतिश्रुतंसत्यंयत्तत्सांत्वयताप्रियां ॥ प्रियंचभीमसेनस्यपांचाल्यामह्यमेवच ॥ ५४ ॥ सूतउवाच अ
र्जुनःसहसाज्ञायहरेर्हार्दमथासिना ॥ मणिंजहारमूर्धन्यंद्विजस्यसहमूर्धजं ॥ ५५ ॥ विमुच्यरशनाबद्धंबा
लहत्याहतप्रभं ॥ तेजसामणिनाहीनंशिबिरान्निरयापयत् ॥ ५६ ॥ वपनंद्रविणादानंस्थानान्निर्यापणंतथा
एषहिब्रह्मबंधूनांवधोनान्योऽस्तिदैहिकः ॥ ५७ ॥ पुत्रशोकातुराःसर्वेपांडवाःसहकृष्णया ॥ स्वानांमृता
नांयत्कृत्यंचक्रुर्निर्हरणादिकं ॥ ५८ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेद्रौणिनिग्रहोनामसप्तमोऽ
ध्यायः ॥ ७ ॥ छ ॥ सूतउवाच अथतेसंपरेतानांस्वानामुदकमिच्छतां ॥ दातुंसकृष्णागंगायांपुरस्कृत्य
ययुःस्त्रियः ॥ १ ॥ तेनिनीयोदकंसर्वेविलप्यचभृशंपुनः ॥ आप्लुताहरिपादाब्जरजःपूतसरिज्जले ॥ २ ॥
तत्रासीनंकुरुपतिंधृतराष्ट्रंसहानुजं ॥ गांधारींपुत्रशोकार्त्तांपृथांकृष्णांचमाधवः ॥ ३ ॥ सांत्वयामासमुनि
भिर्हतबंधून्शुचाऽर्पितान् ॥ भूतेषुकालस्यगतिंदर्शयन्नप्रतिक्रियां ॥ ४ ॥ साधयित्वाऽजातशत्रोःस्वरा
ज्यंकितवैर्हृतं ॥ घातयित्वाऽसतोराज्ञःकचस्पर्शक्षतायुषः ॥ ५ ॥ ॥ ॥

क्षापरीक्षितः ॥ श्रीकृष्णेनस्तुतिःकुंत्याराज्ञःशोकश्चकीर्त्यंते ॥ १ ॥ तेपांडवाःसंपरेतानांमृतानांगंगायामुदकंदातुंसकृष्णाःश्रीकृष्णेन
सहिताःस्त्रियःपुरस्कृत्यअग्रतःकृत्वा तस्मिन्कार्येस्त्रीपुरःसरत्वविधानात् ॥ १ ॥ निनीयदत्वा हरिपादाब्जरजोभिःपूतायासरित्गंगात
स्याजले पुनर्ग्रहणादाद्यावपिस्नाताइतिगम्यते ॥ २ ॥ कुरुपतियुधिष्ठिरम् सहानुजंभीमादिभिःसहितम् पुत्रशोकार्त्तामितितिसृणांविशे
षणम् ॥ ३ ॥ मुनिभिःसहितः ॥ ४ ॥ कितवैर्धूर्तैर्दुर्योधनादिभिःद्रौपद्याःकचग्रहणादिनाक्षतंनष्टमायुर्येषांतान् ॥ ५ ॥

याजयित्वेत्यादिभाविकथासंक्षेपः शतमन्योःशतक्रतोरिव ॥ ६ ॥ शैनेयःशिनेर्नप्तासात्यकिस्तेनचोद्धवेनचसंयुतः ॥७॥ रथमास्थितःसन्नु
त्तरांपरीक्षिन्मातरंभयेनविव्हलांव्याकुलामाभिमुखंधावंतीमुपलेभेददर्श ॥ ८ ॥ उत्तराश्रीकृष्णंप्रार्थयते पाहिपाहीतिद्वाभ्याम् अन्यस्तुप्रार्थ
नायोग्योनास्तीत्याह त्वत्त्वत्तःअन्यमभयंभयरहितंनपश्यामि यत्रलोकेपरस्परमन्योऽन्यंमृत्युर्भवतितत्र ॥ ९ ॥ प्रस्तुतंभयमावेदयति अ
भिद्रवतिअभिमुखमायाति तप्तमायसंलोहमयंशल्यंयस्यसः अतिकार्पण्यमाह काममिति कामंयथेच्छम् ॥ १० ॥ पराभवेनातिकुपित

याजयित्वाऽश्वमेधैस्तंत्रिभिरुत्तमकल्पकैः ॥ तद्यशःपावनंदिक्षुशतमन्योरिवातनोत् ॥ ६ ॥ आमंत्र्यपांडु
पुत्रांश्चशैनेयोद्धवसंयुतः ॥ द्वैपायनादिभिर्विप्रैःपूजितैःप्रतिपूजितः ॥ ७ ॥ गंतुंकृतमतिर्ब्रह्मन्द्वारकांरथ
मास्थितः ॥ उपलेभेऽभिधावंतीमुत्तरांभयविव्हलाम् ॥ ८ ॥ पाहिपाहिमहायोगिन्देवदेवजगत्पते ॥
नान्यंत्वदभयंपश्येयत्रमृत्युःपरस्परम् ॥९ ॥ अभिद्रवतिमामीशशरस्तप्तायसोविभो ॥ कामंदहतुमांनाथ
मामेगर्भोनिपात्यताम् ॥ १० ॥ सूतउवाच उपधार्यवचस्तस्याभगवान्भक्तवत्सलः ॥ अपांडवमिदं
कर्तुंद्रौणेरस्त्रमबुध्यत ॥११॥ तर्ह्येवाथमुनिश्रेष्ठपांडवाःपंचसायकान्॥आत्मनोभिमुखान्दीप्तानालक्ष्यास्त्रा
ण्युपाददुः ॥१२॥ व्यसनंवीक्ष्यतत्तेषामनन्यविषयात्मनां॥सुदर्शनेनस्वास्त्रेणस्वानांरक्षांव्यधाद्विभुः॥१३॥
अंतस्थःसर्वभूतानामात्मायोगेश्वरोहरिः ॥ स्वमाययावृणोद्गर्भंवैराट्याःकुरुतंतवे ॥ १४ ॥ यद्यप्यस्त्रं
ब्रह्मशिरस्त्वमोघंचाप्रतिक्रियं ॥ वैष्णवंतेजआसाद्यसमशाम्यद्भृगूद्वह ॥१५॥ मामंस्थाह्येतदाश्चर्यंसर्वा
श्चर्यमयेऽच्युते ॥ यइदंमाययादेव्यासृज्यत्यवतिहंत्यजः ॥ १६ ॥ ॥ ॥

स्यद्रौणेरपांडवंपांडवशून्यमिदंविश्वंकर्तुंप्रवृत्तंब्रह्मास्त्रमबुध्यत ॥ ११ ॥ अतएवबहुमुखंतदागतमित्याह तर्ह्येवेति ॥ १२ ॥ ब्रह्मास्त्रस्या
स्त्रांतरैरनिवर्त्यत्वात्तद्दुष्परिहरंव्यसनंवीक्ष्य अनन्यविषयआत्मायेषां स्वैकनिष्ठानामित्यर्थः ॥१३॥ वैराट्याउत्तरायाअंतस्थःसन्गर्भमावृ
तवान् तत्रहेतुः यतआत्माअंतर्यामी योगेश्वरइतिबाहिःस्थस्यापिप्रवेशघटनार्थमुक्तं कुरूणांतंतवेसंतानाय पांडवानामपिकुरुवंशजत्वा
देवमुक्तं ॥ १४ ॥ अमोघमप्रतिक्रियंच समशाम्यत्संशांतमासीत् ॥ १५ ॥ एतद्ब्रह्मास्त्रशमनमाश्चर्यंमामंस्थाःनमन्यस्व ॥ १६ ॥

कृष्णयासह ॥ १७ ॥ त्वात्वांनमस्येनमस्करोमि ननुकनिष्ठंमांकथंनमस्करोषितत्राह आद्यंपुरुषं कुतः प्रकृतेःपरं तत्कुतः ईश्वरंप्रकृतेरपि नियंतारं अतएवसर्वभूतानामंतर्बहिश्चपूर्णत्वेनावस्थितं तथाऽप्यलक्ष्यं ॥ १८ ॥ तत्रहेतुः मायैवजवनिकातिरस्करिणीतयाआच्छन्नंप्रतिच्छन्नम् अतोऽहमज्ञाभक्तियोगानभिज्ञाकेवलंनमस्यामि अधःअक्षजंइंद्रियजंयस्मात्तम् अव्ययमपरिच्छिन्नम् तत्प्रपंचः मूढदृशादेहाभिमानिनापुंसानत्वंलक्ष्यसे ॥ १९ ॥ किंच परमहंसानामात्मानात्मविवेकिनांततोमुनीनांमननशीलानामपिततश्चामलात्मनांनिवृत्तरागादीनामपितथातेनानिजमहिम्नानलक्ष्यसेअतोभक्तियोगंविधातुंत्वांवयंस्त्रियःकथंहिपश्येम यद्वापरमहंसादीनामपिभक्तियोगविधानार्थंत्वां

ब्रह्मतेजोविनिर्मुक्तैरात्मजैःसहकृष्णया ॥ प्रयाणाभिमुखंकृष्णमिदमाहपृथासती ॥ १७ ॥ कुंत्युवाच नमस्येपुरुषंत्वाद्यमीश्वरंप्रकृतेःपरं ॥ अलक्ष्यंसर्वभूतानामंतर्बहिरवस्थितं ॥ १८ ॥ मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् ॥ नलक्ष्यसेमूढदृशानटोनाट्यधरोयथा ॥१९॥ तथापरमहंसानांमुनीनाममलात्मनां ॥ भक्तियोगविधानार्थंकथंपश्येमहिस्त्रियः ॥ २० ॥ कृष्णायवासुदेवायदेवकीनंदनायच ॥ नंदगोपकुमारायगोविंदायनमोनमः ॥ २१ ॥ नमःपंकजनाभायनमःपंकजमालिने ॥ नमःपंकजनेत्रायनमस्तेपंकजांघ्रये ॥२२॥ यथाहृषीकेशखलेनदेवकीकंसेनरुद्धाऽतिचिरंशुचार्पिता ॥ विमोचिताऽहंचसहात्मजाविभोत्वयैवनाथेनमुहुर्विपद्गणात् ॥ २३ ॥ ॥ ॥ ॥ ॥

आत्मारामानप्यचिंत्यनिजगुणैराकृष्यभक्तियोगंविधातुंकारयितुमवतीर्णमित्यर्थः ॥ २० ॥ ज्ञानभक्त्योरशक्यत्वमुक्त्वापुनःकेवलंनमस्करोति कृष्णायेतिद्वाभ्यां ॥ २१ ॥ पंकजंनाभौयस्य पंकजानांमालाऽस्तियस्य पंकजवत्प्रसन्नेनेत्रेयस्य पंकजांकितौअंघ्रीयस्यतस्मै ॥ ॥ २२ ॥ तत्कृतोपकाराननुस्मरति यथेतिद्वाभ्यां अयमर्थः मातृतोऽपिमय्यधिकातवप्रीतिः तथाहि हेहृषीकेशयथादेवकीकंसेनरुद्धात्वयाविमोचिताअहंचतथैवकिंविमोचितेतिकाकामहान्विशेषउक्तः तंदर्शयति साऽतिचिरंरुद्धासतीतस्मादेवसकृद्विमोचिता तथाशुचाऽर्पिताचसती नचतस्याःपुत्रारक्षिताः अस्तिचान्योनाथस्तस्याः अहंतुविपद्गणात्तत्रापिमुहुःशीघ्रंचसात्मजाचत्वयैवचनाथेनेति ॥ २३ ॥

विपद्गणमेवदर्शयति विषात्भीमस्यविषमोदकदानात् महाग्नेर्जतुगृहदाहात् पुरुषादाहिडिंबादयोराक्षसास्तेषांदर्शनात् असत्सभायाद्यू तस्थानात् अभितोरक्षिताआस्मअभवाम ॥ २४ ॥ यत्यासुविपत्सु कीदृशंदर्शनम् नास्तिपुनरपिभवदर्शनंयस्मात् ॥ २५ ॥ संपद स्तुश्रेयःपरिपंथिन्यइत्याह जन्मसत्कुले जन्मादिभिरेधमानोमदोयस्यसः अभिधातुंश्रीकृष्णगोविंदेतिवक्तुमपि अकिंचनानांगोचरंविष यभूतं ॥ २६ ॥ प्रस्तुतमनोरथपूरणायप्रणमाति अकिंचनाभक्ताएववित्तंसर्वस्वंयस्यतस्मै ततःकिम् निवृत्तागुणवृत्तयोधर्मार्थकामाविष यायस्मात्तस्मै कुतः आत्मारामाय तत्कुतः शांतायरागादिरहिताय किंच कैवल्यपतयेकैवल्यंदातुंसमर्थाय ॥ २७ ॥ ननुदेवकीपुत्रं

**विषान्महाग्नेःपुरुषाददर्शनादसत्सभायावनवासकृच्छ्रतः ॥ मृधेमृधेऽनेकमहारथास्त्रतोद्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ २४ ॥ विपदःसंतुनःशश्वत्तत्रतत्रजगद्गुरो ॥ भवतोदर्शनंयत्स्यादपुनर्भवदर्शनं॥२५॥ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदःपुमान् ॥ नैवार्हत्यभिधातुंवैत्वामकिंचनगोचरं ॥ २६ ॥ नमोऽकिंचन वित्तायनिवृत्तगुणवृत्तये ॥ आत्मारामायशांतायकैवल्यपतयेनमः ॥२७॥ मन्येत्वांकालमीशानमनादि निधनंविभुं ॥ समंचरंतंसर्वत्रभूतानांयन्मिथःकलिः ॥ २८ ॥ नवेदकश्चिद्भगवंश्चिकीर्षितंतवेहमानस्य नृणांविडंबनं ॥ नयस्यकश्चिद्दयितोऽस्तिकर्हिचिद्द्वेष्यश्चयस्मिन्विषमामतिर्नृणां ॥ २९ ॥ जन्मकर्मचवि श्वात्मन्नजस्याकर्तुरात्मनः ॥ तिर्यङ्नृषिषुयादस्सुतदत्यंतविडंबनं ॥ ३० ॥**

मांकथमेवंस्तौषितत्राह मन्येत्वांकालंनतुदेवकीपुत्रम् तत्रहेतवः ईशानंनियंतारं अनादिनिधनमाद्यंतशून्यं विभुंप्रभुं समंयथाभवति तथासर्वत्रचरंतम् ननुपार्थसारथेः कथंममसाम्यंतत्राह यत् यतस्त्वत्तोनिमित्तभूतात्भूतानामेवामिथःकलिःकलहोभवतिनतुस्वतस्त्वयि वैषम्यं ॥ २८ ॥ ननुनिग्रहानुग्रहरूपंमयिप्रसिद्धंवैषम्यमतआह नवेदेति नृणांविडंबनमनुकरणमीहमानस्यकुर्वतः यस्मिंस्त्वयिविषमाम तिरनुग्रहनिग्रहरूपाभवति ॥ २९ ॥ अजस्यजन्म अकर्तुःकर्म तिर्यक्षुवराहादिरूपेण नृषुरामादिरूपेण ऋषिषुवामनादिरूपेण यादस्सुमत्स्यादिरूपेण ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

नरविडंबनमत्याश्चर्यमित्याह गोपीति यशोदात्वयिकृतागसिदधिभांडस्फोटनंकृतवतियावद्दामरज्जुंआददे जग्राहतावत्तत्क्षणमेवयातेद शाअवस्थासामांविमोहयति किंभूतस्य अश्रुभिःकलिलंव्यामिश्रमंजनंययोस्तेचतेसंभ्रमेव्याकुलेअक्षिणीयस्मिंस्तद्वक्त्रंनिनीयअधःकृत्वा ताडयिष्यतीतिभयस्यभावनयास्थितस्य यत्यतस्त्वत्तोभीरपिस्वयंबिभेतितस्यतेदशा ॥ ३१ ॥ अतएवजगन्मोहनतयादुर्ज्ञेयत्वात्तवज न्मादिबहुधावर्णयंतीत्याह केचिदितिचतुर्भिः पुण्यश्लोकस्यप्रियस्ययुधिष्ठिरस्यकीर्त्तये यदोरेवकीर्त्तयइतिवा मलयस्यकीर्तयेवंशेवाचंद नम् ॥ ३२ ॥ तथावसुदेवस्यभार्यायांदेवक्यामजएवत्वमभ्यगात् पुत्रत्वमितिशेषः प्रथमपुरुषस्त्वार्षः अभूस्त्वमितिपाठःसुगमः ता भ्यामेवपूर्वंसुतपःपृश्निरूपाभ्यांयाचितःसन् अस्यजगतःक्षेमाय ॥ ३३ ॥ आत्मभुवेतिब्रह्मप्रार्थनस्यप्राधान्यविवक्षया ॥ ३४ ॥ मतांतरं

गोप्याददेत्वयिकृतागसिदामतावद्यातेदशाऽश्रुकलिलांजनसंभ्रमाक्षं ॥ वक्त्रंनिनीयभयभावनयास्थितस्य सामांविमोहयतिभीरपियद्बिभेति ॥ ३१ ॥ केचिदाहुरजंजातंपुण्यश्लोकस्यकीर्तये ॥ यदोःप्रियस्यान्ववा येमलयस्येवचंदनं ॥ ३२ ॥ अपरेवसुदेवस्यदेवक्यांयाचितोऽभ्यगात् ॥ अजस्त्वमस्यक्षेमायवधायचसु रद्विषां ॥३३॥ भारावतरणायान्येभुवोनावइवोदधौ ॥ सीदंत्याभूरिभारेणजातोह्यात्मभुवाऽर्थितः॥३४॥ भवेऽस्मिन्क्लिश्यमानानामविद्याकामकर्मभिः ॥ श्रवणस्मरणार्हाणिकरिष्यन्नितिकेचन ॥ ३५ ॥ शृण्वं तिगायंतिगृणंत्यभीक्ष्णशःस्मरंतिनंदंतितवेहितंजनाः ॥ तएवपश्यंत्यचिरेणतावकंभवप्रवाहोपरमंपदां बुजं ॥ ३६ ॥ अप्यद्यनस्त्वंस्वकृतेहितप्रभोजिहाससिस्वित्सुहृदोऽनुजीविनः ॥ येषांनचान्यद्भवतःपदां बुजात्परायणंराजसुयोजितांहसां ॥ ३७ ॥ ॥ ॥ ॥ ॥

परमानंदस्वरूपाज्ञानमविद्याततोदेहाद्यभिमानात्कामस्ततःकर्माणितैःक्लिश्यमानानांतन्निवृत्तयेश्रवणाद्यर्हाणिकर्माणिकरिष्यन् ॥ ३५ ॥ अस्यपक्षस्यसिद्धांततामभिप्रेत्यश्रवणादिफलमाह शृण्वंतीति नंदंतिअन्यैःकीर्त्यमानमभिनंदंति येजनाईहितंचरितं तावकंत्वदीयंपदां बुजंतएवपश्यंत्येवअचिरेणैवेतिचसर्वत्रावधारणम् कीदृशम् भवप्रवाहस्यजन्मपरंपरायाउपरमोयस्मिंस्तत् ॥ ३६ ॥ इदानींतवास्मत्प रित्यागोऽनुचितइत्याशयेनाह अपीतिचतुर्भिः हेप्रभोसुहृदोऽनुजीविनश्चनोऽद्यअपिस्वित्त्वंजिहाससि येषामस्माकमन्यत्परायणंनैवा स्ति तत्कुतः राजसुयोजितमंहोदुःखंयैस्तेषाम् स्वानांकृतमीहितमपेक्षितंयेनतस्यसंबोधनम् विसर्गांतपाठेत्वंपदविशेषणं ॥ ३७ ॥

ननुतवबंधवोयदवः पुत्राश्चपांडवाः शूराः समर्थाश्चतत्किंकार्पण्यंभाषसेअतआह केवयमिति यर्हिभवतोऽदर्शनंयदात्वमस्मान्नपश्यसित
दानामरूपाभ्यांनाम्नाविख्यात्यारूपेणसमृध्याचयदुभिःसहिताः पांडवानामकेवयंनकोपि अतितुच्छाइत्यर्थः हृषीकाणामीशितुर्जीवस्या
दर्शनेयथानकिंचिन्नामचरूपंचतद्वत् ॥ ३८ ॥ किंच यथेदानीमियमस्मत्पाल्याभूमिः स्वैरसाधारणैर्वज्रांकुशादिभिर्लक्षणैर्विलक्षितैश्चि
न्हितैस्त्वत्पदैरंकितासतीभाति तत्रतदात्वयिनिर्गतेसातिनशोभिष्यते ॥ ३९ ॥ अपिच इमेजनपदादेशाः स्वृद्धाः सुसमृद्धाः संतः ॥ ४० ॥
गमनेपांडवानामकुशलंअगमनेचयादवानामित्युभयतोव्याकुलाचित्तासतीतेषुस्नेहनिवृत्तिंप्रार्थयते अथेति विश्वेशेत्यादिसंबोधनानिस्नेह

केवयंनामरूपाभ्यांयदुभिःसहपांडवाः ॥ भवतोऽदर्शनंयर्हिहृषीकाणामिवेशितुः ॥ ३८ ॥ नेयंशोभिष्य
तेतत्रयथेदानींगदाधर ॥ त्वत्पदैरंकिताभातिस्वलक्षणविलक्षितैः ॥ ३९ ॥ इमेजनपदाः स्वृद्धाः सुपक्वौ
षधिवीरुधः ॥ वनाद्रिनद्युदन्वंतोह्येधंतेतववीक्षितैः ॥ ४० ॥ अथविश्वेशविश्वात्मन्विश्वमूर्तेस्वकेषुमे ॥
स्नेहपाशमिमंछिंधिदृढंपांडुषुवृष्णिषु ॥ ४१ ॥ त्वयिमेऽनन्यविषयामतिर्मधुपतेऽसकृत् ॥ रतिमुद्वहता
द्द्धागंगेवौघमुदन्वति ॥ ४२ ॥ श्रीकृष्णकृष्णसखवृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गो
विंदगोद्विजसुरार्त्तिहरावतारयोगेश्वराखिलगुरोभगवन्नमस्ते ॥ ४३ ॥ सूतउवाच पृथयेत्थंकलपदैः
परिणूताखिलोदयः ॥ मंदंजहासवैकुंठोमोहयन्निवमायया ॥ ४४ ॥ ॥ ॥

च्छेदेसामर्थ्यंख्यापनाय दृढंसंतम् ॥ ४१ ॥ ततः किमतआह त्वयीति अनन्यविषयासतीमेमतिः रतिमुद्वहतात् अनवच्छिन्नांप्रीतिंकरो
त्वित्यर्थः ओघंपूरं यथागंगाप्रतिबंधंनगणयातिएवंमतिरपिविघ्नान्मागणयत्वितिभावः ॥ ४२ ॥ एवमभ्यर्थ्यपुनः प्रणमति हेश्रीकृष्णतेन
मः उपकाराननुस्मरंतीबहुधासंबोधयति कृष्णसखअर्जुनस्यसखे वृष्णीनामृषभश्रेष्ठ अवन्यैभूम्यैद्रुह्यंतियेराजन्यास्तेषांवंशस्यदहनएव
मप्यनपवर्गवीर्यअक्षीणप्रभाव गोविंदप्राप्तकामधेन्वैश्वर्य गोद्विजसुराणामार्त्तिहरोऽवतारोयस्येति ॥ ४३ ॥ कलानिमधुराणिपदानियेषु
तैर्वाक्यैः परिणूतोऽखिलउदयोमाहिमायस्यसः णुस्तुतावित्यस्मात् परिणुतेतिवक्तव्येदीर्घश्छंदोऽनुरोधेन मंदमीषत् तस्यहासएवमाया व
क्ष्यतिहि हासोजनोन्मादकरीचमायेति ॥ ४४ ॥ ॥ ॥ ॥

त्वयिमेनन्यविषयामतिरितियत्प्रार्थितंतद्बाढमित्यंगीकृत्यरथस्थानात्गजाह्वयमागत्यपश्चात्तांचान्याश्चसुभद्राप्रमुखाःस्त्रियउपामंत्र्यानुज्ञाप्यस्वपुरंयास्यन्राज्ञायुधिष्ठिरेणप्रेम्णाऽत्रैवकिंचित्कालंनिवसेतिसंप्रार्थ्यानिवारितः ॥ ४५ ॥ अथभीष्मनिर्याणोत्सवंवक्तुमुपोद्घातकथांप्रस्तौति व्यासाद्यैःप्रबोधितोपिशुचार्प्यास्तःसन्नाबुध्यतविवेकंनप्राप कुतः ईश्वरेहायाअज्ञैः स्वभक्तभीष्मनिर्याणमहोत्सवायराज्ञासहकुरुक्षेत्रंगंतव्यंतत्रतन्मुखेनैवायंप्रबोधनीयइतिईश्वराभिप्रायःकार्यद्वयविधायकस्तमजानद्भिरित्यर्थः श्रीकृष्णेनापिप्रबोधितोनाबुध्यतअत्रहेतुः अद्भुतकर्मणेति यथाकुरुपांडवसंधानार्थंगतोपियथोचितमेववदन्नपिविग्रहमेवदृढीकृतवान्एवमत्रापिप्रबोधयन्नबोधमेवदृढीचकारेत्यर्थः ॥ ४६ ॥ अबोधमेवप्रपंचयति आहेतिषड्भिः प्राकृतेनाविवेकव्याप्तेनात्मनाचित्तेन हेविप्राः ॥ ४७ ॥ पारक्यस्यश्वसृगालाद्या

तांबाढमित्युपामंत्र्यप्रविश्यगजसाह्वयं॥स्त्रियश्चस्वपुरंयास्यन्प्रेम्णाराज्ञानिवारितः॥४५॥व्यासाद्यैरीश्वरेहाज्ञैःकृष्णेनाद्भुतकर्मणा ॥ प्रबोधितोपीतिहासैर्नाबुध्यतशुचार्पितः ॥ ४६ ॥ आहराजाधर्मसुतश्चिंतयन्सुहृदांवधम्॥प्राकृतेनात्मनाविप्राःस्नेहमोहवशंगतः॥४७॥ अहोमेपश्यताज्ञानंहृदिरूढंदुरात्मनः॥ पारक्यस्यैवदेहस्यबह्व्योमेक्षौहिणीर्हताः॥४८॥बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ॥ नमेस्यान्निरयान्मोक्षोह्यपिवर्षायुतायुतैः॥४९॥नैनोराज्ञःप्रजाभर्तुर्धर्मयुद्धेवधोद्विषाम्॥इतिमेनतुबोधायकल्पतेशासनंवचः॥५०॥

हारस्यदेहस्यार्थे मेमया अक्षौहिणीःअक्षौहिण्यः अक्षौहिणीप्रमाणंतुव्यासेनोक्तं अक्षौहिणीप्रसंख्यातारथानांद्विजसत्तमाः ॥ संख्यागणनतत्त्वज्ञैःसहस्राण्येकविंशतिः ॥ शतान्युपरिचैवाष्टौतथाभूयश्चसप्ततिः ॥ गजानांचप्रसंख्यानमेतदेवप्रकीर्त्तितं ॥ ज्ञेयंशतसहस्रंतुसहस्राणिनवैवतु ॥ नराणामपिपंचाशच्छतानित्रीणिचैवहि ॥ पंचषष्टिसहस्राणितथाश्वानांशतानिच ॥ दशोत्तराणिषट्प्राहुःसंख्यातत्त्वविदोजनाः ॥ एतामक्षौहिणींप्राहुर्यथावदिहसंख्ययेति ॥ ४८ ॥ सुहृदःसंबंधिनः मित्राणिसखायः पितरःपितृव्याः ॥ ४९ ॥ द्विषांवधःएनःपापंनभवतीतियत्शासनंशिक्षारूपंवचः कुतोनकल्पते यतस्तद्वचःप्रजाभर्त्तुरेव अयंभावः स्वप्रजानामन्यतोबाधेप्रसक्तेतद्वधोऽनुज्ञातःदुर्योधनेनतुप्रजायांपाल्यमानायांमयाकेवलंराज्यलोभेनहतत्वात्पापमेवेदमिति ॥ ५० ॥ ॥ ॥

किंच युद्धेपुंसांवधोभवतुनामधर्मः स्त्रीणांतुमयाहताबंधवोयासांतासांयोऽसौद्रोहोऽनुद्दिष्टोप्युत्थितस्तंव्यपोहितुमपाकर्तुंकल्पः समर्थो नाहं गृहमेधीयैर्गृहाश्रमविहितैः॥५१॥ननुसर्वंपाप्मानंतरतिब्रह्महत्यांयोऽश्वमेधेनयजतेयउचैनमेवंवेदेतिश्रुतेःपापमश्वमेधेननश्येदेवेत्याशंक्यअविवेकविजृंभितंहेतुत्वादमाश्रित्यनिराकरोति यथाघनपंकेनपंकांभोनमृज्यते यथावासुरालेशकृतमपाविञ्यंबह्वचासुरयानमृज्यतेतथैवभूतहत्यामेकांप्रमादतोजातांबुद्धिपूर्वहिंसाप्रायैर्यज्ञैर्मार्ष्टुंशोधयितुंनार्हतीति ॥ ५२ ॥ इतिप्रथमेटीकायामष्टमोऽध्यायः ॥ ८ ॥

स्त्रीणांमद्धतबंधूनांद्रोहोयोऽसाविहोत्थितः ॥ कर्मभिर्गृहमेधीयैर्नाहंकल्पोव्यपोहितुम् ॥ ५१ ॥ यथापंकेनपंकांभःसुरयावासुराकृतम् ॥ भूतहत्यांतथैवैकांनयज्ञैर्मार्ष्टुमर्हति ॥ ५२ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेकुंतीस्तुतियुधिष्ठिरानुतापोनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ सूतउवाच इतिभीतःप्रजाद्रोहात्सर्वधर्मविवित्सया ॥ ततोविनशनंप्रागाद्यत्रदेवव्रतोऽपतत् ॥ १ ॥ तदातेभ्रातरःसर्वेसदश्वैःस्वर्णभूषितैः ॥ अन्वगच्छन्रथैर्विप्राव्यासधौम्यादयस्तथा ॥ २ ॥ भगवानपिविप्रर्षेरथेनसधनंजयः ॥ सतैर्व्यरोचतनृपःकुबेरइवगुह्यकैः ॥ ३ ॥ दृष्ट्वानिपतितंभूमौदिवश्च्युतमिवामरम् ॥ प्रणेमुःपांडवाभीष्मंसानुगाःसहचक्रिणा ॥ ४ ॥ तत्रब्रह्मर्षयःसर्वेदेवर्षयश्चसत्तम ॥ राजर्षयश्चतत्रासन्द्रष्टुंभरतपुंगवम् ॥ ५ ॥ पर्वतोनारदोधौम्योभगवान्बादरायणः ॥ बृहदश्वोभरद्वाजःसशिष्योरेणुकासुतः ॥ ६ ॥ वसिष्ठइंद्रप्रमदस्त्रितोगृत्समदोऽसितः ॥ कक्षीवान्गौतमोऽत्रिश्चकौशिकोऽथसुदर्शनः ॥ ७ ॥ अन्येचमुनयोब्रह्मन्ब्रह्मरातादयोमलाः ॥ शिष्यैरुपेताआजग्मुःकश्यपांगिरसादयः ॥ ८ ॥ ॥

युधिष्ठिरायभीष्मेणसर्वधर्मनिरूपणं ॥ कृष्णस्तुतिश्चमुक्तिश्चनवमेतस्यवर्ण्यते ॥१॥ यदर्थंतस्याविवेकःश्रीकृष्णेनसंवर्द्धितस्तद्दर्शयति इतीति सर्वेषांधर्माणांविवित्सयावेदितुमिच्छया विनशनंकुरुक्षेत्रम् देवव्रतोभीष्मः ॥१॥ संतःश्रेष्ठाअश्वायेषुतैरथैः ॥ २ ॥ ३ ॥ ४ ॥ तत्रतदातत्रासन् ॥ तत्क्षणमेवागताइत्यर्थः भरतपुंगवंभीष्मम्॥५॥रेणुकासुतःपरशुरामः ॥६॥७॥ ब्रह्मरातःशुकः आंगिरसोबृहस्पतिः ॥ ८ ॥

वसूत्तमोभीष्मः ॥ ९ ॥ हृदिस्थंसंतंपुरतश्चासीनंपूजयामास ॥ १० ॥ उपासीनान्समीपेउपविष्टान् प्रश्रयोविनयःप्रेमस्नेहस्ताभ्यांसंगतानुपसन्नान् पाठांतरेताभ्यामवनतान् अभ्याचष्टअभ्यभाषत अनुरागास्रैःस्नेहाश्रुभिरंधीभूतेनचक्षुषाउपलक्षितः ददर्शेतिवा ॥ ११ ॥ अभिभाषणमाह अहोइत्येकादशभिः हेधर्मनंदनाः क्लिष्टंयथाभवत्येवंजीवितुंनार्हथयूयमितियत्एतदहोकष्टंजुगुप्सितं अहोअन्याय्यंचैतत् यतोयूयंविप्राःधर्मोऽच्युतश्चाश्रयोयेषांते ॥ १२ ॥ किंच संस्थितेमृते बालाःप्रजाःपुत्रायस्याःसा वधूश्चेतिदैन्यंदर्शितं तोकान्यपत्यानितद्वतीअपत्यैःसहक्लेशान्प्राप्तेत्यर्थः ॥ १३ ॥ कालकृतत्वेनशोकंवारयति सर्वमितिद्वाभ्यां भवतामपि यद्वशेयस्यवशवर्त्ती ॥१४॥

तान्समेतान्महाभागानुपलभ्यवसूत्तमः ॥ पूजयामासधर्मज्ञोदेशकालविभागवित् ॥ ९ ॥ कृष्णंचतत्प्रभावज्ञआसीनंजगदीश्वरम् ॥ हृदिस्थंपूजयामासमाययोपात्तविग्रहं ॥ १० ॥ पांडुपुत्रानुपासीनान्प्रश्रयप्रेमसंगतान् ॥ अभ्याचष्टानुरागास्रैरंधीभूतेनचक्षुषा ॥ ११ ॥ अहोकष्टमहोऽन्याय्यंयद्यूयंधर्मनंदनाः ॥ जीवितुंनार्हथक्लिष्टंविप्रधर्माच्युताश्रयाः ॥ १२ ॥ संस्थितेऽतिरथेपांडौपृथाबालप्रजावधूः ॥ युष्मत्कृतेबहून्क्लेशान्प्राप्तातोकवतीमुहुः ॥ १३ ॥ सर्वंकालकृतंमन्येभवतांचयदप्रियं ॥ सपालोयद्वशेलोकोवायोरिवघनावलिः ॥ १४ ॥ यत्रधर्मसुतोराजागदापाणिर्वृकोदरः ॥ कृष्णोऽस्त्रीगांडिवंचापंसुहृत्कृष्णस्ततोविपत् ॥ १५ ॥ नह्यस्यकर्हिचिद्राजन्पुमान्वेदविधित्सितं ॥ यद्विजिज्ञासयायुक्तामुह्यंतिकवयोपिहि ॥ १६ ॥ तस्मादिदंदैवतंत्रंव्यवस्यभरतर्षभ ॥ तस्यानुविहितोऽनाथानाथपाहिप्रजाःप्रभो ॥ १७ ॥

अहोदुर्घटघटनापटुःकालइत्याह यत्रेति कृष्णोऽर्जुनः अस्त्रीधन्वी ततस्तत्रापिविपत् पुण्यशारीरबलास्त्रनैपुणशस्त्रदैवसंपत्तावपीत्यर्थः ॥ १५ ॥ ननुकृष्णंकथंकालोऽतिक्रमेदित्यपेक्षायामाह नह्यस्यश्रीकृष्णस्येत्यंगुल्यानिर्दिशति विधित्सितंकर्त्तुमिष्टंयत् यस्यविधित्सितस्याजिज्ञासया ॥ १६ ॥ इदंसुखादिदैवतंत्रमीश्वराधीनंव्यवस्यनिश्चित्यतस्येश्वरस्यानुविहितःअनुवर्त्तीसन् कर्त्तरिक्तः हेनाथकुलपरंपरागतस्वामिन्प्रभोसमर्थअनाथाःप्रजाःपाहि ॥ १७ ॥ ॥ ॥ ॥

अनुविधेयःपरमेश्वरश्चश्रीकृष्णएवेत्याह एषएवभगवान्सर्वेश्वरः यतःआद्यःपुमान् तच्चकुतः यतोनारायणःसाक्षात् ॥ १८ ॥ तदुपपा दयति अस्येति अनुभावंप्रभावं ॥ १९ ॥ त्वमज्ञानात्यमेवंमन्यसे मातुलेयंदेवक्याःसुतं प्रियंप्रीतिविषयं मित्रंप्रीतिकर्त्तारं सुहृत्तममुप कारानपेक्ष्योपकारकंच सौहृदादिश्वासात् अकरोःकृतवानसि सचिवंमंत्रिणं ॥ २० ॥ नन्वीश्वरश्चेत्कथंनीचेसारथ्यादौप्रवृत्तस्तत्रा ह सर्वेति तत्कृतंनीचोच्चकर्मकृतंममयोग्यमयोग्यमितिमतेर्वैषम्यंक्वचिदपिनास्ति कुतः निरवद्यस्यरागादिशून्यस्य तत्कुतः अनहंकृतेःत च्चकुतः अद्वयस्य तदपिकुतः समदृशः तत्रापिहेतुः सर्वस्यात्मनः यथेष्टंत्राहेतुहेतुमद्भावः ॥ २१ ॥ तथापिसमत्वेपि हेभूप अनुकंपि

**एषवैभगवान्साक्षादाद्योनारायणःपुमान् ॥ मोहयन्माययालोकंगूढश्चरतिवृष्णिषु ॥ १८ ॥ अस्यानुभावंभगवान्वेदगुह्यतमंशिवः ॥ देवर्षिर्नारदःसाक्षाद्भगवान्कपिलोनृप ॥ १९ ॥ यंमन्यसेमातुलेयंप्रियंमित्रंसुहृत्तमं ॥ अकरोःसचिवंदूतंसौहृदादथसारथिं ॥ २० ॥ सर्वात्मनःसमदृशोह्यद्वयस्यानहंकृतेः ॥ तत्कृतंमतिवैषम्यंनिरवद्यस्यनक्वचित् ॥ २१ ॥ तथाप्येकांतभक्तेषुपश्यभूपानुकंपितं ॥ यन्मेऽसूंस्त्यजतःसाक्षात्कृष्णोदर्शनमागतः ॥ २२ ॥ भक्त्यावेश्यमनोयस्मिन्वाचायन्नामकीर्त्तयन् ॥ त्यजन्कलेवरंयोगीमुच्यतेकामकर्मभिः ॥ २३ ॥ सदेवदेवोभगवान्प्रतीक्षतांकलेवरंयावदिदंहिनोम्यहं ॥ प्रसन्नहासारुणलोचनोल्लसन्मुखांबुजोध्यानपथश्चतुर्भुजः ॥ २४ ॥ सूतउवाच युधिष्ठिरस्तदाकर्ण्यशयानंशरपंजरे ॥ अपृच्छद्विविधान्धर्मानृषीणांचानुशृण्वतां ॥ २५ ॥ पुरुषस्वभावविहितान्यथावर्णंयथाश्रमं ॥ वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान् ॥ २६ ॥ ॥ ॥ ॥**

तमनुकंपां ॥ २२ ॥ इदानींस्वदेहत्यागपर्यंतंश्रीकृष्णावस्थानंप्रार्थयते भक्त्येतिद्वाभ्यां ॥ २३ ॥ यावदितिविलंबंद्योतयति अहंहिनो मित्यजामीतिस्वातंत्र्यं इदमित्यनात्मत्वेनज्ञातं प्रसन्नहासेनअरुणलोचनाभ्यांचउल्लसद्रुचिरंमुखांबुजंयस्य ध्यानस्यपंथाःविषयः योऽन्यैश्चिंत्यतेकेवलंसोऽग्रतःस्थितःसन्मांप्रतीक्षतामित्यर्थः ॥ २४ ॥ तत्सानुकंपंवाक्यमाकर्ण्य ॥ २५ ॥ पुरुषस्वभावेनाविहितान्नरजातिसाधारणान्वर्णयामासेतितृतीयेनान्वयः यथावर्णंवर्णधर्मान् यथाश्रममाश्रमधर्मांश्च वैराग्यरागाभ्यामुपाधिभ्यांक्रमेणाम्नातमुभयंनिवृत्तिप्रवृत्तिरूपंलक्षणंयेषांतान् ॥ २६ ॥ ॥ ॥ ॥

पुनस्तत्रैवविशेषमाह दानेति मोक्षधर्मान्शमदमादीन् भगवद्धर्मान्हरितोषणान्द्वादश्यादिनियमरूपान् समासव्यासौसंक्षेपविस्तारौ तावेवयोगौउपायौततस्ताभ्यां ॥ २७ ॥ धर्मादींश्चयथाऽधिकारंप्रतिनियतोपायसहितान् यथायथावत् नानाख्यानेषुयेयेइतिहासा स्तेषुयथासंतितथावर्णयामासेति ॥ २८ ॥ छंदेनेच्छयामृत्युर्यस्य ॥ २९ ॥ सहस्रणीःयुद्धेसमीपस्थान्सहस्रंरथिनोनयतिपालयती तिसहस्रणीर्भीष्मः सहस्त्रिणीरितिपाठेसहस्रार्थवर्तीगिरः लसंतौपीतौपटौयस्यतस्मिन् अमीलितदृगेवमनोव्यधारयत् ॥ ३० ॥ अनयै वविशुद्धयाधारणयाहतमशुभंयस्यसः तस्यश्रीकृष्णस्येक्षयाकृपादृष्ट्यैवगतआयुधश्रमोयस्यसः अतएवनिवृत्तःसर्वेंद्रियवृत्तीनांविभ्र मोविविधंभ्रमणंयस्मात्सः जन्यंदेहम् ॥ ३१ ॥ परमफलरूपांश्रीकृष्णेरतिंप्रार्थयितुंप्रथमंस्वकृतमर्पयति इतिनानाधर्माद्युपायैर्मतिर्मनो

**दानधर्मान्राजधर्मान्मोक्षधर्मान्विभागशः ॥ स्त्रीधर्मान्भगवद्धर्मान्समासव्यासयोगतः ॥ २७ ॥ धर्मार्थकाममोक्षांश्चसहोपायान्यथामुने ॥ नानाख्यानेतिहासेषुवर्णयामासतत्त्ववित् ॥ २८ ॥ धर्मंप्रव दतस्तस्यसकालःप्रत्युपस्थितः ॥ योयोगिनश्छंदमृत्योर्वांछितस्तूत्तरायणः ॥ २९ ॥ तदोपसंहृत्यगिरः सहस्रणीर्विमुक्तसंगंमनआदिपूरुषे ॥कृष्णेलसत्पीतपटेचतुर्भुजेपुरःस्थितेऽमीलितदृग्व्यधारयत् ॥३०॥ विशुद्धयाधारणयाहताशुभस्तदीक्षयैवाशुगतायुधश्रमः ॥ निवृत्तसर्वेंद्रियवृत्तिविभ्रमस्तुष्टावजन्यंविसृ जन्जनार्दनं ॥ ३१ ॥ भीष्मउवाच इतिमतिरुपकल्पितावितृष्णाभगवतिसात्वतपुंगवेविभूम्नि ॥ स्वसुखमुपगतेक्वचिद्विहर्तुंप्रकृतिमुपेयुषियद्भवप्रवाहः ॥ ३२ ॥ त्रिभुवनकमनंतमालवर्णंरविकरगौरव रांबरंदधाने ॥ वपुरलककुलावृताननाब्जंविजयसखेरतिरस्तुमेनवद्या ॥ ३३ ॥**

धारणलक्षणाउपकल्पितासमर्पिता क्व सात्वतानांपुंगवेश्रेष्ठेभगवति वितृष्णानिष्कामा अवितृष्णेतिवाछेदः अवितृप्तेत्यर्थः विगतोभू मायस्मात्तस्मिन् यमपेक्ष्यान्यत्रमहत्त्वंनास्तीत्यर्थः तदेवपरमैश्वर्यमाह स्वसुखंस्वस्वरूपभूतंपरमानंदमुपगतेप्राप्तवत्येव क्वचित्कदाचि त्विहर्तुंक्रीडितुंप्रकृतिंयोगमायामुपेयुषिस्वीकृतवति नतुस्वरूपतिरोधानेनजीववत्पारतंत्र्यमित्यर्थः विहर्तुमितियदुक्तंतत्प्रपंचयति यत्यतः प्रकृतेर्भवप्रवाहःसृष्टिपरंपराभवति ॥ ३२ ॥ इदानींश्रीकृष्णमूर्त्तिंवर्णयन्रतिंप्रार्थयते त्रिभुवनकमनंत्रिलोक्यामेकमेवकमनीयंयत्तद्व पुर्दधानेरतिर्मेऽस्तु कथंभूतंवपुः तमालवन्नीलोवर्णोयस्यतत् प्रातःकालीनारवेःकराइवस्वतएवगौरेपीतेवरेनिर्मलेचअंबरेयस्मिंस्तत् अ लककुलैरुपर्यावृतमाननाब्जंयस्मिंस्तत् विजयसखेपार्थसारथौ अनवद्याअहैतुकीफलाभिसंधिरहितारतिरस्तु ॥ ३३ ॥ ॥

विजयसखित्वमेवानुवर्णयन्रतिंप्रार्थयते युधियुद्धे तुरगाणांखुररजस्तुरगरजस्तेनविधूम्राधूसरास्तेचतेविष्वंचइतस्ततश्चलंतःकचाःकुंत
लास्तैर्लुलितंविकीर्णश्रमवारिस्वेदबिंदुरूपंतेनभक्तवात्सल्यद्योतकेनालंकृतमास्यंयस्यतस्मिन्श्रीकृष्णेममात्मामनोऽस्तु रमतामित्यर्थःपु
नःकिंभूते मदीयैर्निशितैस्तीक्ष्णैःशरैर्विभिद्यमानात्वक्यस्यतस्मिन् शरैरेवविलसत्त्रुटयत्कवचंयस्यतस्मिन्॥३४॥ किंच सपदीति सेनयोरु
भयोर्मध्येरथंस्थापयमेऽच्युत ॥ यावदेतान्निरीक्षेहंयोद्धुकामानवस्थितानितिसख्युरर्जुनस्यवचोनिशम्यसपदितत्क्षणमेवस्वपरयोर्बलयोः
सैन्ययोर्मध्येस्थितेपार्थसखेरतिरस्तु तत्रास्थित्वाकृतंसख्यंदर्शयति परस्यदुर्योधनस्यसैनिकानामायुरक्षणाकालदृष्ट्याहृतवति असौभी
ष्मःअसौद्रोणःअसौकर्णइतितत्तत्प्रदर्शनव्याजेनदृष्टचैवसर्वेषामायुराकृष्यार्जुनस्यजयंकृतवतीति ॥ ३५ ॥ नकेवलमर्जुनस्यसपत्नायुर्हं

युधितुरगरजोविधूम्रविष्वक्चलुलितश्रमवार्यलंकृतास्ये ॥ ममनिशितशरैर्विभिद्यमानत्वचिविलसत्कवचे
ऽस्तुकृष्णआत्मा ॥ ३४ ॥ सपदिसखिवचोनिशम्यमध्येनिजपरयोर्बलयोरथंनिवेश्य ॥ स्थितवतिपरसै
निकायुरक्ष्णाहृतवतिपार्थसखेरतिर्ममास्तु ॥ ३५ ॥ व्यवहितपृतनामुखंनिरीक्ष्यस्वजनवधाद्विमुखस्यदो
षबुद्ध्या ॥ कुमतिमहरदात्मविद्ययायश्चरणरतिःपरमस्यतस्यमेऽस्तु ॥ ३६ ॥ स्वनिगममपहायमत्प्रतिज्ञा
मृतमधिकर्तुमवप्लुतोरथस्थः ॥ धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिवहंतुमिभंगतोत्तरीयः ॥ ३७ ॥

रणेनैवजयमावहत्किंत्वविद्याहरणेनापीत्याह व्यवहितादूरेस्थितायापृतनातस्यामुखमिवमुखमग्रेस्थितान्भीष्मादीन्निरीक्ष्येत्यर्थः स्व
जनवधाद्विमुखस्यनिवृत्तस्य तदुक्तंगीतासु एवमुक्त्वार्जुनःसंख्येरथोपस्थउपाविशत् ॥ विसृज्यसशरंचापंशोकसंविग्नमानसइति कुमतिम
हंहंतेत्यादिकुबुद्धिम् ॥३६॥ ममतुमहांतमनुग्रहंकृतवानित्याह द्वाभ्यां स्वनिगमंअशस्त्रएवाहंसाहाय्यमात्रंकरिष्यामीत्येवंभूतांस्वप्रति
ज्ञांहित्वाश्रीकृष्णंशस्त्रंग्राहयिष्यामीत्येवंरूपांमत्प्रतिज्ञामृतंसत्यंयथाभवतितथाअधिअधिकांकर्तुंयोरथस्थःसन्नवप्लुतःसहसैवावतीर्णःसन्यो
ऽभ्ययात्अभिमुखमधावत् इभंहंतुंहरिःसिंहइव किंभूतः धृतःरथचरणश्चक्रंयेनसः तदाचसंरंभेणमानुष्यनाट्यविस्मृतेरुदरस्थसर्वभूतभुव
नभारेणप्रतिपदंचलद्गुःचलंतीगौःपृथ्वीयस्मात्सः तेनैवसंरंभेणपथिगतंपतितमुत्तरीयंवस्त्रंयस्यसमुकुंदोमेगतिभर्वत्वित्युत्तरेणान्वयः॥३७॥

एवंयदाऽभ्ययात्तदास्मयमानस्याततायिनोधन्विनोमेशितैस्तीक्ष्णैर्विशिखैर्हतः अतोविशीर्णदंशोध्वस्तकवचः क्षतजेनरुधिरेणपरिप्लुतोव्या
प्तःसन्प्रसभंबलाद्वारयंतमर्जुनमप्यतिक्रम्यमद्वधार्थमभिससारअभिजगाम एवंयोलोकप्रतीत्यार्जुनपक्षपातीवलक्षितोवस्तुतस्तुममैवा
नुग्रहंकृतवान्यन्मद्भक्तेनोक्तंवचोमामृषास्त्विति सभगवान्मेगतिर्भवत्वित्यर्थः ॥ ३८ ॥ तदेवमन्यायैरपिभृत्यरक्षाव्यग्रेकृष्णेरतिमाशास्ते
विजयोऽर्जुनस्तस्यरथएवकुटुंबमकृत्यैरपिरक्षणीयोयस्यतास्मिन् आत्तंतोत्रंप्रतोदोयेनतास्मिन् धृताश्चतेहयानांरश्मयःप्रग्रहास्तेसंतिय
स्यतस्मिन् व्रीह्यादिभ्यश्चेत्यनकारांतादपिरश्मिशब्दादिनिः तच्छ्रियातयासारथ्यश्रियाईक्षणीयेशोभमाने मुमूर्षोर्मर्तुमिच्छोः नन्वन्या
यर्वर्त्तिनिकिमितिरतिःप्रार्थ्यतेऽतआह भगवत्यचिंत्यैश्वर्ये तदाह इहयुद्धेहताःसर्वेयंनिरीक्ष्यस्वरूपंतत्समानंरूपंगताःप्राप्ताइतिदिव्यद

शितविशिखहतोविशीर्णदंशःक्षतजपरिप्लुतआततायिनोमे ॥ प्रसभमभिससारमद्वधार्थंसभवतुमेभगवा
न्गतिर्मुकुंदः ॥ ३८ ॥ विजयरथकुटुंबआत्ततोत्रेधृतहयरश्मिनितच्छ्रियेक्षणीये ॥ भगवतिरतिरस्तुमेमुमू
र्षोर्यमिहनिरीक्ष्यहतागताःस्वरूपं ॥ ३९ ॥ ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमा
नाः ॥ कृतमनुकृतवत्यउन्मदांधाःप्रकृतिमगन्किलयस्यगोपवध्वः ॥ ४० ॥ मुनिगणनृपवर्यसंकुलेऽतः
सदसियुधिष्ठिरराजसूयएषां ॥ अर्हणमुपपेदईक्षणीयोममदृशिगोचरएषआविरात्मा ॥ ४१ ॥

ष्ट्यापश्यन्नाह ॥ ३९ ॥ क्षत्रधर्मेणयुध्यमानास्तत्स्वरूपंप्रापुरित्येतन्नचित्रंयतोमदांधाअपिप्रापुरित्याह ललितगतिश्चविलासश्चरासा
दिः मंजुगत्यादिभिरात्मीयैस्तदीयैर्वाकल्पितउरुर्मानःपूजायासांताःअतउत्कटेनमदेनांधाविवशाःअतएवतदेकचित्तत्वेनतस्यकृतंकर्म
गोवर्द्धनोद्धरणादिकमनुकृतवत्योगोपवध्वोयस्यप्रकृतिंस्वरूपमगन्अगमन् मकारलोपस्त्वार्षः किलप्रसिद्धं तस्मिन्मेरतिरस्त्वितिपूर्वेणै
वान्वयः ॥ ४० ॥ जगत्पूज्यतामनुस्मरन्नाह मुनिगणैर्नृपवर्यैश्चसंकुलेव्याप्तेअंतःसदसिसभामध्येयुधिष्ठिरस्यराजसूयेएषांमुनिगणादीनां
ईक्षणीयःअहोरूपमहोमहिमेत्येवमाश्चर्येणविलोकनीयःसन् उपपेदेप्राप एषजगतामात्माममदृशिगोचरोदृष्टिविषयःसन्नाविःप्रकटोवर्त्त
तेअहोमेभाग्यमितिभावः ॥ ४१ ॥ ॥ ॥ ॥ ॥

सोऽहंकृतार्थोऽस्मीत्याह तमिममजंसम्यगधिगतः प्राप्तोऽस्मि सम्यक्त्वमाह विधूतभेदमोहः तदर्थंभेदस्यौपाधिकत्वमाह आत्मकल्पिता
नांस्वयंनिर्मितानांशरीरभाजांप्राणिनांहृदिहृदिप्रतिहृदयंधिष्ठितमधिष्ठितं अकारलोपस्त्वार्षः नैकधाअनेकधा अधिष्ठानभेदादनेकधा
भातमित्यर्थः अत्रदृष्टांतः सर्वप्राणिनांदृशंदृशंप्रतिएकमेवार्कमनेकधाप्रतीतमिवेति ॥ ४२॥ मनोवाग्दृष्टीनांवृत्तिभिः परमात्मनिश्रीकृ
ष्णे अंतरेविलीनःश्वासोयस्यसः ॥ ४३ ॥ निष्कलेनिरुपाधौ संपद्यमानंमिलितमाज्ञायआलक्ष्य ॥ ४४ ॥ देवैर्मानवैश्चवादिताः रा
ज्ञांमध्येयेसाधवःअनसूयवः ॥ ४५ ॥ निर्हरणादीनिदाहसंस्करादीनि सम्यक्परेतस्य मुक्तस्यापीत्यर्थः ॥ ४६ ॥ ४७ ॥ पितरंधृत

तमिममहमजंशरीरभाजांहृदिहृदिधिष्ठितमात्मकल्पितानां ॥ प्रतिदृशमिवनैकधार्कमेकंसमधिगतोस्मि
विधूतभेदमोहः ॥ ४२ ॥ सूतउवाच कृष्णएवंभगवतिमनोवाग्दृष्टिवृत्तिभिः ॥ आत्मन्यात्मानमावे
श्यसोंऽतःश्वासउपारमत् ॥ ४३ ॥ संपद्यमानमाज्ञायभीष्मंब्रह्मणिनिष्कले ॥ सर्वेबभूवुस्तेतूष्णींवयां
सीवदिनात्यये ॥ ४४ ॥ तत्रदुंदुभयोनेदुर्देवमानववादिताः ॥ शशंसुःसाधवोराज्ञांखात्पेतुःपुष्पवृष्टयः
॥ ४५ ॥ तस्यनिर्हरणादीनिसंपरेतस्यभार्गव ॥ युधिष्ठिरःकारयित्वामुहूर्तंदुःखितोभवत् ॥ ४६ ॥ तुष्टु
वुर्मुनयोहृष्टाःकृष्णंतद्गुह्यनामभिः ॥ ततस्तेकृष्णहृदयाःस्वाश्रमान्प्रययुःपुनः ॥ ४७ ॥ ततोयुधिष्ठिरोग
त्वासहकृष्णोगजाव्हयं ॥ पितरंसांत्वयामासगांधारींचतपस्विनीं ॥ ४८ ॥ पित्राचानुमतोराजावासुदेवा
नुमोदितः ॥ चकारराज्यंधर्मेणपितृपैतामहंविभुः ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेयुधिष्ठिर
राज्यप्रलंभोनामनवमोऽध्यायः ॥ ९ ॥ ॥ ॥ शौनकउवाच हत्वास्वरिक्थस्पृधआततायिनोयुधि
ष्ठिरोधर्मभृतांवरिष्ठः ॥ सहानुजैःप्रत्यवरुद्धभोजनःकथंप्रवृत्तःकिमकारषीत्ततः ॥ १ ॥

राष्ट्रं तपस्विनींसंतापवर्तीं ॥ ४८ ॥ राजायुधिष्ठिरः ॥ ४९ ॥ इ॰प्र॰टीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ ॥ दशमेकृतकार्यस्यह
स्तिनापुरतोहरेः ॥ स्त्रीभिःसंस्तूयमानस्यवर्ण्यतेद्वारकागमः ॥ १ ॥ राज्यंचकारेत्युक्तंतत्रपृच्छति हत्वेति स्वस्यरिक्थेधनेस्पर्द्धंतेस्मयेते
तथा यद्वा स्वरिक्थायस्पृत्संग्रामोयेषामतएवधनादिहरणादाततायिनस्तान्हत्वा प्रत्यवरुद्धभोजनोबंधुवधदुःखेनसंकुचितभोगः राज्य
लाभेनप्राप्तभोगोवा कथंराज्येप्रवृत्तः प्रवृत्तोवाततःकिमकार्षीत् ॥ १ ॥ ॥ ॥

राज्यप्रवृत्तौश्रीकृष्णस्यप्रीतिपर्यालोच्यप्रवृत्तइत्याशयेनोत्तरमाह वंशंकुरोःसंरोहयित्वापरीक्षिद्रक्षणेनसंरोह्यअंकुरितंकृत्वा कथंभूतं वंशद
वाग्निनिर्हृतंवंशएवदवोवनंतस्मादुद्भूतोयःक्रोधरूपोऽग्निस्तेननिर्हृतंदग्धं निजराज्येनिवेश्यच ॥ २ ॥ प्रवृत्तौहेतुमुक्त्वाकिमकार्षीदित्य
स्योत्तरमाह प्रवृत्तंयद्विज्ञानंपरमेश्वराधीनंजगन्नस्वतंत्रमित्येवंभूतंतेनविधूतोविभ्रमोऽहंकर्त्तेत्येवंभूतोमोहोयस्यसः अनुजैरनुवर्तितःसेवितः
सन् अजितःश्रीकृष्णएवाश्रयोयस्यसः परिधिःसमुद्रस्तत्पर्यंतांगांपृथ्वींपालयामास ॥ ३ ॥ तस्यराज्यमनुवर्णयति काममितित्रिभिः
महीसर्वकामदोग्ध्रीबभूव व्रजान्गोष्ठानि ऊधस्वतीःऊधस्वत्यःऊधःक्षीराशयस्तद्वत्यःस्थूलोधसइत्यर्थः सिषिचुरभ्यषिंचन् ॥ ४ ॥

सूतउवाच वंशंकुरोर्वंशदवाग्निनिर्हृतंसंरोहयित्वाभवभावनोहरिः ॥ निवेशयित्वानिजराज्यईश्वरोयुधि
ष्ठिरंप्रीतमनाबभूवह ॥ २ ॥ निशम्यभीष्मोक्तमथाच्युतोक्तंप्रवृत्तविज्ञानविधूतविभ्रमः ॥ शशासगामिंद्रइ
वाजिताश्रयःपरिध्युपांतामनुजानुवर्तितः ॥ ३ ॥ कामंववर्षपर्जन्यःसर्वकामदुघामही ॥ सिषिचुःस्मव्रजान्गा
वःपयसोधस्वतीर्मुदा ॥ ४ ॥ नद्यःसमुद्रागिरयःसवनस्पतिवीरुधः ॥ फलंत्योषधयःसर्वाःकाममन्वृतुतस्यवै
॥ ५ ॥ नाधयोव्याधयःक्लेशादैवभूतात्महेतवः ॥ अजातशत्रावभवन्जंतूनांराज्ञिकर्हिचित् ॥ ६ ॥ उषित्वाहा
स्तिनपुरेमासान्कतिपयान्हरिः ॥ सुहृदांचविशोकायस्वसुश्चप्रियकाम्यया ॥ ७ ॥ आमंत्र्यचाभ्यनुज्ञातःपरि
ष्वज्याभिवाद्यतं ॥ आरुरोहरथंकैश्चित्परिष्वक्तोऽभिवादितः ॥ ८ ॥ सुभद्राद्रौपदीकुंतीविराटतनयातथा ॥ गां
धारीधृतराष्ट्रश्चयुयुत्सुर्गौतमोयमौ ॥ ९ ॥ वृकोदरश्चधौम्यश्चस्त्रियोमत्स्यसुतादयः ॥ नसेहिरेविमुह्यंतोविर
हंशार्ङ्गधन्वनः ॥ १० ॥ सत्संगान्मुक्तदुःसंगोहातुंनोत्सहतेबुधः ॥ कीर्त्यमानंयशोयस्यसकृदाकर्ण्यरोचनं ॥ ११

अन्वृतुऋतावृतौ ॥ ५ ॥ आधयोमनोव्यथाः व्याधयोरोगाः क्लेशाःशीतोष्णादिकृताः दैवंचभूतानिचआत्माचहेतुर्येषामाधिदैविकादीनां
तेजंतूनांनाभवन् ॥ ६ ॥ इदानींद्वारकागमनंनिरूपयितुमाह उषित्वेति स्वसुःसुभद्रायाः ॥ ७ ॥ तंयुधिष्ठिरम् ॥ ८ ॥ युयुत्सुर्धृतरा
ष्ट्राद्वैश्यायांजातः गौतमःकृपः यमौनकुलसहदेवौ ॥ ९ ॥ अन्याश्चस्त्रियः मत्स्यसुताउत्तरा तस्याःपुनर्ग्रहणंगर्भरक्षककृष्णविरहेमोहा
धिक्यात् यद्वा मत्स्यसुतासत्यवती ॥ १० ॥ तेषांकृष्णविरहासहनंकैमुत्यन्यायेनाह सत्संगादितिद्वाभ्यां सतांसंगाद्धेतोर्मुक्तःपुत्रादिवि
षयोदुःसंगोयेनसःसद्भिःकीर्त्यमानंरुचिकरंयस्ययशःसकृदप्याकर्ण्य सत्संगंत्यक्तुंनशक्नोति ॥ ११ ॥ ॥ ॥

दर्शनादिभिस्तस्मिन् श्रीकृष्णेन्यस्ताऽभ्यस्ताधीर्येषांते ॥ १२ ॥ अतएवानिमिषैर्नेत्रैस्तमेववीक्षमाणास्तत्रतत्राहेणानयनाद्यर्थंचलंतिस्म यतःस्नेहेनसम्यक्बद्धाः अतएवतमनुद्रुतानिगतानि चेतांसियेषांते ॥ १३ ॥ अगारान्निर्यातिनिर्गच्छतिसतिऔत्कंठ्याद्धेतोःउद्गलत्स्रवत्बाष्पमश्रुन्यरुंधन्नेत्रेष्वेवस्तंभितवत्यः तत्रहेतुःअभद्रंनोस्यात् अमंगलंमाभूदित्येतदर्थम् ॥ १४ ॥ मृदंगादयोदशवाद्यभेदाः ॥ १५ ॥ प्रेमव्रीडास्मितपूर्वकमीक्षणंयासांताः ॥ १६ ॥ गुडाकानिद्रातस्याईशोजितानिद्रोऽर्जुनः ॥ १७ ॥ व्यजनेचामरेजगृहतुः मधुपतिः श्रीकृष्णः ॥ १८ ॥ सत्याःश्रीकृष्णेतासामव्यभिचारात्किंतुनानुरूपाश्चताअनुरूपाश्च निर्गुणस्यपरमानंदस्यसुखीभवत्यादयोनानुरू

तस्मिन्न्यस्तधियःपार्थाःसहेरन्विरहंकथम् ॥ दर्शनस्पर्शसंलापशयनासनभोजनैः ॥१२॥ सर्वेतेऽनिमिषैरक्षैस्तमनुद्रुतचेतसः ॥ वीक्षंतःस्नेहसंबद्धाविचेलुस्तत्रतत्रह ॥१३॥ न्यरुंधन्नुद्गलद्बाष्पमौत्कंठ्याद्देवकीसुते ॥ निर्यात्यगारान्नोऽभद्रमितिस्याद्बांधवस्त्रियः ॥१४॥ मृदंगशंखभेर्यश्चपणवानकगोमुखाः ॥ धुंधुर्यानकघंटाद्यानेदुर्दुंदुभयस्तथा ॥ १५ ॥ प्रासादशिखरारूढाःकुरुनार्योदिदृक्षया ॥ ववृषुःकुसुमैःकृष्णंप्रेमव्रीडास्मितेक्षणाः ॥ १६ ॥ सितातपत्रंजग्राहमुक्तादामविभूषितं ॥ रत्नदंडंगुडाकेशःप्रियःप्रियतमस्यह ॥ १७ ॥ उद्धवःसात्यकिश्चैवव्यजनेपरमाद्भुते ॥ विकीर्यमाणःकुसुमैरेजेमधुपतिःपथि ॥ १८ ॥ अश्रूयंताशिषःसत्यास्तत्रतत्रद्विजेरिताः ॥ नानुरूपानुरूपाश्चनिर्गुणस्यगुणात्मनः ॥ १९ ॥ अन्योन्यमासीत्संजल्पउत्तमश्लोकचेतसाम् ॥ कौरवेंद्रपुरस्त्रीणांसर्वश्रुतिमनोहरः ॥ २० ॥ सवैकिलायंपुरुषःपुरातनोयएकआसीदविशेषआत्मनि ॥ अग्रेगुणेभ्योजगदात्मनीश्वरेनिमीलितात्मन्निशिसुप्तशक्तिषु ॥ २१ ॥

पाःगुणात्मनोमानुष्यनाट्यावतारेऽनुरूपाश्चेत्यर्थः ॥ १९ ॥ सर्वासांश्रुतीनांमनोहरः उपनिषदोऽपिमूर्तिमत्यस्तंसंजल्पमभ्यनंदन्नित्यर्थः ॥ २० ॥ तत्रतेजःसौंदर्याद्यतिशयेनविस्मिताभ्यःसखीभ्योऽन्याःस्त्रियःकथयंतिनात्रविस्मयःकार्यःसाक्षादीश्वरत्वादस्येति सवाइति चतुर्भिः वैस्मरणे किलेतिप्रसिद्ध्याप्रमाणद्योतकम् यएकएवाद्वितीयःपुरुषआसीत्सएवायंश्रीकृष्णः कुत्रआसीत् अविशेषेआत्मनिनिष्प्रपंचेनिजरूपे कदा अग्रेगुणेभ्यःगुणक्षोभात्पूर्वम् तथानिशिप्रलयेच तस्यलक्षणम् जगतामात्मनिजीवे निमीलितात्मनि निमीलितात्मन्नितिलुप्तसप्तम्यंतंपदं जातावेकवचनं ईश्वरेलीनरूपेषुजीवेषुसत्स्वित्यर्थः ननुजीवानांब्रह्मत्वात्कथंलयस्तत्राह सुप्तासुशक्तिषुसतीषु जीवोपाधिभूतसत्वादिशक्तिलयएवजीवलयइत्यर्थः ॥ २१ ॥ ॥ ॥ ॥

तदेवंसृष्टेरादौप्रलयानंतरंचनिष्प्रपंचावस्थानमुक्तासृष्टिप्रलययोर्मध्येसप्रपंचावस्थानमाहुः सएवाप्रच्युतस्वरूपस्थितिरेवप्रकृतिमनुससा रअधिष्ठितवान् भूयःपुनःसृष्टिप्रवाहस्यानादित्वात् कीदृशीम् निजवीर्यचोदितांस्वकालशक्तिप्रेरिताम् स्वांशभूतानांजीवानांमायांमोहि नीम् अतएवसिसृक्षतींस्रष्टुमिच्छतीम् किमर्थमनुससार अनामरूपेआत्मनिर्जीवेरूपनामनीविधातुमिच्छन् उपाधिसृष्ट्याजीवानांभोगा येत्यर्थः कर्माणिचविधातुंवेदान्कृतवानित्याहुः शास्त्रकृदिति ॥ २२ ॥ अस्यदर्शनमतिदुर्लभमस्माभिर्लब्धमित्याहुः सवैअयम् यस्यपदं स्वरूपमंघ्रिंवा निर्जितोमातरिश्वाप्राणोयैः हस्वस्वमार्षम् तेसूरयएवपश्यंति केन भक्त्योत्कलितउत्कंठितःअमलोयआत्माबुद्धिस्तेन दृश्यतेत्वग्र्ययाबुद्ध्याइतिश्रुतेः बुद्धिवैमल्यस्याप्ययमेवहेतुरित्याहुः ननुहेसखिएषएवसत्वंबुद्धिपरिमार्ष्टुंसम्यक्शोधयितुमर्हतिनतुयोगादय इत्यर्थः यद्वानुअहोएषसत्वंज्ञानंपरिमार्ष्टुंनाशयितुंदूरगमनेनाप्रत्यक्षीभवितुंनार्हतिकिंत्वनेनसहैवास्माभिर्गंतव्यमित्यर्थः ॥ २३ ॥ पुण्य

**सएवभूयोनिजवीर्यचोदितांस्वजीवमायांप्रकृतिंसिसृक्षतीं॥अनामरूपात्मनिरूपनामनीविधित्समानोऽनु ससारशास्त्रकृत् ॥२२॥ सवाअयंयत्पदमत्रसूरयोजितेंद्रियानिर्जितमातरिश्वनः॥ पश्यंतिभक्त्युत्कलिता मलात्मनानन्वेषसत्वंपरिमार्ष्टुमर्हति॥ २३ ॥ सवाअयंसख्यनुगीतसत्कथोवेदेषुगुह्येषुचगुह्यवादिभिः॥ यएकईशोजगदात्मलीलयासृजत्यवत्यत्तिनतत्रसज्जते ॥ २४ ॥ यदाह्यधर्मेणतमोधियोनृपाजीवंतितत्रै षहिसत्वतःकिल ॥ धत्तेभगंसत्यमृतंदयांयशोभवायरूपाणिदधद्युगेयुगे ॥ २५ ॥ अहोअलंश्लाघ्यतमंय दोःकुलंअहोअलंपुण्यतमंमधोर्वनं ॥ यदेषपुंसामृषभःश्रियःप्रियःस्वजन्मनाचंक्रमणेनचांचति ॥ २६ ॥**

श्लोकतामाहुः हेसखियोवेदेषुरहस्यागमेषुचरहस्यनिरूपकैरनुगीतसत्कथः अन्वनुगीताःसत्यःकथायस्यसएवायम् गानप्रकारमाहुः य एकईशइत्यादि ॥ २४ ॥ एवंभूतस्यनानावतारेकारणमाहुः यदाहीति तमोव्याप्ताधीर्येषांतेनृपायदाअधर्मेणजीवंतिकेवलंप्राणान्पुष्णं तितत्रतदाएषएवभवायस्थित्यैसत्वतःविशुद्धसत्वेनरूपाणिदधत्भगादीनिधत्तेप्रकटयति युगेयुगेतत्तदवसरे भगमैश्वर्यम् सत्यंसत्यप्र तिज्ञत्वंऋतंयथार्थोपदेकशत्वं दयांभक्तकृपां यशःअद्भुतकर्मत्वं ॥ २५ ॥ विशेषतःश्रीकृष्णावतारसौभाग्यंवर्णयंति अहोइतिपंचाभिः यत् यस्मादेषपुरुषोत्तमःश्रियःप्रियःपतिःस्वजन्मनायदोः कुलमंचतिपूजयतिसत्करोतिअतःश्लाघ्यतमंवत् चंक्रमणेनचमधोर्वनंमथुरांस त्करोति अतस्तत्पुण्यतममितितदर्थस्याप्यत्यंतातिशयेऽलमिति तत्राप्याश्चर्येअहोइत्युक्तं ॥ २६ ॥ ॥ ॥

अहोबतअत्याश्चर्यम् किंतत् कुशस्थलीद्वारका स्वर्गंउत्कृष्टइतियत्तद्यशस्तस्यतिरस्करीपारिभवकर्त्री भुवश्चपुण्ययशःकर्त्रीभवति यद्यत
स्तत्रत्याःसर्वाःस्वानुग्रहेणइषितंप्रेषितंयत्स्मितंतत्पूर्वावलोकोयस्यतम् यद्वा अनुग्रहार्थमिषितमिष्टंस्वस्यात्मनःपतिंश्रीकृष्णंनतुपित्रादि
वद्देहमात्रपतिंनित्यंपश्यंतिस्म उषितामितिपाठेस्वानुग्रहार्थमुषितंकृतनिवासं नैतत्स्वर्गेस्तीत्यर्थः ॥ २७ ॥ हेसखि अस्यगृहीतपाणिभिःप
त्नीभिरीश्वरोऽयमेवनूनंजन्मांतरेषुसमर्चितः यस्मिन्नधरामृतेआशयश्चित्तंयासांताःसंमोहंप्राप्ताइतिमनोहरत्वमुक्तम् ॥ २८ ॥ एतत्प्रपंचः या
इतिद्वाभ्याम् वीर्यंप्रभावएवशुल्कंमूल्यंतेन शुष्मिणोबलिष्ठान् प्रद्युम्नःसांबश्चअंबश्चसुतायासांरुक्मिणीजांबवतीनाग्नजितीनांताआदिर्यां

अहोबतस्वर्यशसस्तिरस्करीकुशस्थलीपुण्ययशस्करीभुवः ॥ पश्यंतिनित्यंयदनुग्रहेषितस्मितावलोकं
स्वपतिंस्मयत्प्रजाः ॥ २७ ॥ नूनंव्रतस्नानहुतादिनेश्वरःसमर्चितोह्यस्यगृहीतपाणिभिः ॥ पिबंतियाःस
ख्यधरामृतंमुहुर्व्रजस्त्रियःसंमुमुहुर्यदाशयाः ॥ २८ ॥ यावीर्यशुल्केनहृताःस्वयंवरेप्रमथ्यचैद्यप्रमुखान्
हिशुष्मिणः ॥ प्रद्युम्नसांबांबसुतादयोऽपरायाश्चाहृताभौमवधेसहस्रशः ॥ २९ ॥ एताःपरंस्त्रीत्वमपा
स्तपेशलंनिरस्तशौचंबतसाधुकुर्वते ॥ यासांगृहात्पुष्करलोचनःपतिर्नजात्वपैत्याहृतिभिर्हृदिस्पृशन्
॥ ३० ॥ एवंविधागदंतीनांसगिरःपुरयोषितां ॥ निरीक्षणेनाभिनंदन्सस्मितेनययौहरिः ॥ ३१ ॥ अ
जातशत्रुःपृतनांगोपीथायमधुद्विषः ॥ परेभ्यःशंकितःस्नेहात्प्रायुंक्तचतुरंगिणीम् ॥ ३२ ॥ अथदूराग
तान्शौरिःकौरवान्विरहातुरान् ॥ सन्निवर्त्यदृढंस्निग्धान्प्रायात्स्वनगरींप्रियैः ॥ ३३ ॥ कुरुजांगलपां
चालान्शूरसेनान्सयामुनान् ॥ ब्रह्मावर्त्तंकुरुक्षेत्रंमत्स्यान्सारस्वतानथ ॥ ३४ ॥ ॥

सांसत्यभामादीनांताःयाश्चापराः अस्यश्लोकस्योत्तरश्लोकेनान्वयः ॥ २९ ॥ एताःस्त्रीत्वमेवपरंकेवलंसाधुशोभनंकुर्वते अपास्तंगतंपे
शलंभद्रंस्वातंत्र्यंयस्मात्तत् निरस्तंशौचंशुचित्वंयस्मात्तथाभूतमपिजातुकदाचिदपिनापैतिननिर्गच्छति आहृतिभिर्व्याहारैः यद्वापारिजा
तादिप्रियवस्त्वाहरणैः हृदिस्पृशन्नानंदयन् ॥ ३० ॥ एवंविधाविचित्रागिरःसस्मितेननिरीक्षणेनाभिनंदन्सहरिर्ययौ ॥ ३१ ॥ मधुद्विषो
पिगोपीथायरक्षणायस्नेहात्परेभ्यःशत्रुभ्यःशंकितःसन्प्रायुंक्त हस्त्यश्वरथपादातंसेनांगंयस्याश्चतुर्विधमित्येवंचतुरंगिणींपृतनांसेनां ॥ ३२ ॥
पांडोःकुरुवंशजत्वात्पांडवाअपिकौरवाएवतान् प्रियैरुद्धवादिभिःसह ॥ ३३ ॥ कुरुक्षेत्रंकुरुदेशांतरगतमेव क्रमोऽत्रनविवक्षितः ॥ ३४ ॥

मरुर्निरुदकोदेशः धन्वोऽल्पोदकः आनर्त्ताख्योद्वारकादेशः सविभुः उपागात्प्राप्तः हेभार्गव मनागीषत् श्रांतावाहायस्यसः ॥ ३५ ॥ तत्रतत्र देशेतत्रत्यैर्जनैः प्रत्युद्यतानिनिवेदितान्यर्हणान्युपायनानियस्मैसः सायमपराण्हे पश्चाद्दिशंपश्चिमांदिशंभेजेप्राप्तः तदाचगविष्ठः स्वर्गस्थः सूर्योगामुदकंगतः प्रविष्टोऽस्तंगतइत्यर्थः अद्भ्योवाएषप्रातरुदेत्यपःसायंप्रविशतीतिश्रुतेः यद्वा तदासायंकालेजातेरथादवतीर्यगविष्ठोभूमौ स्थितस्ततोगांजलाशयंगतः सन्पश्चाद्दिशंसंध्यांभेजे उपासितवानित्यर्थः ॥ ३६ ॥ इतिप्रथमस्कंधेटीकायांदशमोऽध्यायः ॥ १० ॥

मरुधन्वमतिक्रम्यसौवीराभीरयोःपरान् ॥ आनर्त्तान्भार्गवोपागाच्छ्रांतवाहोमनाग्विभुः ॥ ३५ ॥ तत्र तत्रहतत्रत्यैर्हरिःप्रत्युद्यतार्हणः ॥ सायंभेजेदिशंपश्चाद्गविष्ठोगांगतस्तदा ॥ ३६ ॥ इतिश्रीभागवते महापुराणेप्रथमस्कंधेदशमोऽध्यायः ॥ १० ॥ ॥ ॥ ॥ ॥ सूतउवाच आनर्त्तान्सउपव्र ज्यस्वृद्धान्जनपदान्स्वकान् ॥ दध्मौदरवरंतेषांविषादंशमयन्निव ॥ १ ॥ सउच्चकाशेधवलोदरोदरोऽप्यु रुक्रमस्याधरशोणशोणिमा ॥ दाध्मायमानःकरकंजसंपुटेयथाऽब्जखंडेकलहंसउत्स्वनः ॥ २ ॥ तमुपश्रु त्यनिनदंजगद्भयभयावहम् ॥ प्रत्युद्ययुःप्रजाःसर्वाभर्तृदर्शनलालसाः ॥ ३ ॥ ॥ ॥

आनर्तैःस्तूयमानस्यपुरींनिर्विश्यबंधुभिः ॥ एकादशेरतिःसम्यग्यादवेंद्रस्यवर्ण्यते ॥ १ ॥ उत्सवैरुच्चलत्पौरमुदंचत्ध्वजतोरणम् ॥ उल्लसद्र त्नदीपालिस्वपुरंप्रभुराविशत् ॥ २ ॥ स्वृद्धान्समृद्धान् दरवरंपांचजन्यंशंखंदध्मौवादितवान् ॥ १ ॥ सइति दरःशंखः उच्चकाशेअतिश येनशुशुभे कथंभूतोदरः करकंजसंपुटेदाध्मायमानःआपूर्यमाणः धवलंउदरंयस्यसः तथापिउरुक्रमस्यकृष्णस्याधरस्ययःशोणगुणस्तेन शोणिमायस्यसः कथमुच्चकाशे अब्जखंडेरक्तकमलसमूहेकलहंसोराजहंसउच्चकाशेयथातद्वत् ॥ २ ॥ जगतोयद्भयंतस्यभयावहम् प्रत्यु द्ययुःप्रत्युज्जग्मुः भर्तुर्दर्शनेलालसमौत्सुक्यंयासांताः ॥ ३ ॥ ॥ ॥ ॥

तत्रतस्मिन्श्रीकृष्णेउपनीताःसमर्पिताबलयउपायनानियाभिस्ताः निरपेक्षेऽपितस्मिन्नादरेणसमर्पणेदृष्टांतः रवेर्दीपमिवेति पितरमर्भका इवतंसर्वसुहृदमवितारमूचुरित्युत्तरेणान्वयः सुहृत्त्वेनैवावितारंनतुकामेन अत्रहेतुः आत्मारामं तत्रापिहेतुः परमानंदनिजस्वरूपलाभेनै वपूर्णकामं ॥ ४ ॥ ५ ॥ विरिंचोब्रह्मा वैरिंच्याःसनकादयः इहसंसारेपरंक्षेममिच्छतांपरायणंपरमंशरणं कुतः परेषांब्रह्मादीनांप्रभुरपि कालोयत्रप्रभुर्नभवेत् ॥ ६ ॥ अतोभवायउद्भवायनोऽस्माकंत्वंभव हेविश्वभावन कृतिनःकृतार्थाबभूविमजातावयं ॥ ७ ॥ कृतार्थत्व मेवाहुः अहोभवतावयंसनाथाःस्म यद्यस्मात्तवरूपंपश्येम त्रैविष्टपानामपिदूरेदर्शनंयस्यतत् देवानामपिदुर्लभमित्यर्थः प्रेम्णायस्मितंतद्युक्तं

तत्रोपनीतबलयोरवेर्दीपमिवादृताः ॥ आत्मारामंपूर्णकामंनिजलाभेननित्यदा ॥ ४ ॥ प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदयागिरा ॥ पितरंसर्वसुहृदमवितारमिवार्भकाः ॥५॥ नताःस्मतेनाथसदांघ्रिपंकजंविरिंचवै रिंच्यसुरेंद्रवंदितं ॥ परायणंक्षेममिहेच्छतांपरंनयत्रकालःप्रभवेत्परःप्रभुः ॥६॥ भवायनस्त्वंभवविश्वभावन त्वमेवमाताथसुहृत्पतिःपिता ॥ त्वंसद्गुरुर्नःपरमंचदैवतंयस्यानुवृत्त्याकृतिनोबभूविम ॥ ७ ॥ अहोसनाथा भवतास्मयद्वयंत्रैविष्टपानामपिदूरदर्शनं ॥ प्रेमस्मितस्निग्धनिरीक्षणाननंपश्येमरूपंतवसर्वसौभगं ॥८॥ यर्ह्यंबुजाक्षापससारभोभवान्कुरून्मधून्वाथसुहृद्दिदृक्षया ॥ तत्राब्दकोटिप्रतिमःक्षणोभवद्रविंविनाऽक्ष्णो रिवनस्तवाच्युत ॥ ९ ॥ इतिचोदीरितावाचःप्रजानांभक्तवत्सलः ॥ शृण्वानोऽनुग्रहंदृष्ट्यावितन्वन्प्राविश त्पुरीं ॥ १० ॥ मधुभोजदशार्हार्हकुकुरांधकवृष्णिभिः ॥ आत्मतुल्यबलैर्गुप्तांनागैर्भोगवतीमिव ॥ ११ ॥

स्निग्धंनिरीक्षणंयस्मिंस्तदाननंयस्मिंस्तद्रूपं सर्वेषुचांगेषुसौभगंयस्मिंस्तत् ॥ ८ ॥ अर्भकाइवसकरुणमाहुः यर्हियदा भोअंबुजाक्ष नोभ वानितिपाठे नइत्यनादरेषष्ठी अस्मान्अनादृत्यअपससारअपहायजगाम कुरून्हस्तिनापुरं मधून्मथुरांवा तत्रतदा रविंविनाआंध्याद क्ष्णोर्यथा एवंतवनःत्वदीयानामस्माकमपतित्यर्थः ॥ ९ ॥ इतिचएवंविधाअन्याश्चोचारितावाचः शृण्वन्दृष्ट्याचासाभिनंदावलोकेनानुग्रहं कुर्वन्पुरींद्वारकांप्राविशत् ॥ १० ॥ तांद्वारकांस्तौतिपंचभिः स्वतुल्यबलैर्मधुभोजादिभिर्गुप्तांरक्षिताम् ॥ ११ ॥

सर्वेषुऋतुषुसर्वेविभवाः पुष्पादिसंपदोयेषांतेपुण्यवृक्षालताश्रमालतामंडपाश्रयेषुतैरुद्यानादिभिर्वृतायेपद्माकराःसरांसितैःश्रीःशोभायस्यां तां उद्यानंफलप्रधानं उपवनंपुष्पप्रधानं आरामःक्रीडार्थवनं ॥ १२ ॥ गोपुरंपुरद्वारम् द्वारंगृहद्वारंकृतानिकौतुकेनोत्सवेनतोरणानियस्यांतां गरुडादिचिन्हांकिताध्वजाः जयप्रदयंत्रांकिताःपताकाः चित्राणांध्वजपताकानामग्रैरंतःप्रतिहतआतपोयस्यांतां ॥ १३ ॥ संमार्जितानि निःसारितरजस्कानिमहामार्गादीनियस्यांतां महामार्गाराजमार्गाः रथ्याइतरमार्गाः आपणकाःपण्यवीथयः चत्वराण्यंगनानि फलादि भिरुप्तामवकीर्णां ॥ १४॥१५॥ प्रेष्ठमंतरात्मानमायांतंनिशम्यश्रुत्वावसुदेवादयःप्रत्युज्जग्मुरितिचतुर्थेनान्वयः ॥ १६ ॥ प्रहर्षवेगेनउच्छ्व

सर्वर्त्तुसर्वविभवपुण्यवृक्षलताश्रमैः ॥ उद्यानोपवनारामैर्वृतपद्माकरश्रियं ॥ १२ ॥ गोपुरद्वारमार्गेषुकृ तकौतुकतोरणां ॥ चित्रध्वजपताकाग्रैरंतःप्रतिहतातपां ॥ १३ ॥ संमार्जितमहामार्गरथ्यापणकचत्वरां ॥ सिक्तांगंधजलैरुप्तांफलपुष्पाक्षतांकुरैः ॥ १४ ॥ द्वारिद्वारिगृहाणांचदध्यक्षतफलेक्षुभिः ॥ अलंकृतांपूर्ण कुंभैर्बलिभिर्धूपदीपकैः ॥ १५ ॥ निशम्यप्रेष्ठमायांतंवसुदेवोमहामनाः ॥ अक्रूरश्चोग्रसेनश्चरामश्चाद्भु तविक्रमः ॥ १६ ॥ प्रद्युम्नश्चारुदेष्णश्चसांबोजांबवतीसुतः ॥ प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः ॥ १७ ॥ वारणेंद्रंपुरस्कृत्यब्राह्मणैःससुमंगलैः ॥ शंखतूर्यनिनादेनब्रह्मघोषेणचादृताः ॥ प्रत्युज्जग्मूरथै र्हृष्टाःप्रणयागतसाध्वसाः ॥ १८ ॥ वारमुख्याश्चशतशोयानैस्तद्दर्शनोत्सुकाः ॥ लसत्कुंडलनिर्भातकपो लवदनश्रियः ॥ १९ ॥ नटनर्त्तकगंधर्वाःसूतमागधबंदिनः ॥ गायंतिचोत्तमश्लोकचरितान्यद्भुतानिच ॥ २० ॥

सितानिउल्लंघितानिशयनादीनियैस्ते इवसद्भुतगतौ ॥ १७ ॥ वारणेंद्रंमंगलार्थंपुरतःकृत्वा ससुमंगलैःसुमंगलंपुष्पादितद्युक्तपाणिभिः ब्रह्मघोषोमंत्रपाठः प्रणयेनस्नेहेनागतंसाध्वसंसंभ्रमोयेषांते ॥ १८ ॥ वारमुख्यानटादयश्चप्रत्युज्जग्मुः लसत्कुंडलैर्निर्भातानियानिकपो लानितैर्वदनेषुश्रीःशोभायासांताः वारमुख्याःनर्त्तक्योवेश्याइतियावत् ॥ १९ ॥ अद्भुतानिचेतिचकारस्यबंदिनश्चेत्यन्वयःनटानवरसा भिनयचतुराः तालाद्यनुसारेणनृत्यंतोनर्त्तकाः गंधर्वागायकाः सूताःपौराणिकाःप्रोक्तामागधावंशशंसकाः ॥ बंदिनस्त्वमलप्रज्ञाःप्रस्ताव सदृशोक्तयः ॥ तेसर्वेगायंतिचेतिचकारस्यान्वयः ॥ २० ॥ ॥ ॥ ॥

यथाविधियैःसहयथोचितंतैस्तथासमागमंकृत्वा सर्वैषांमानंकृतवानित्यर्थः ॥ २१ ॥ तदाह प्रह्वेति प्रह्वंप्रह्वत्वंशिरसानतिः अभिवादनं वाचानतिः आश्वास्याभयंदत्वा श्वपाकानभिव्याप्यवरैरभीष्टदानैश्चमानंकृतवान् ॥ २२ ॥ अन्यैश्चबंदिभिः ॥ २३ ॥ तस्येक्षणेनमहानुत्सवोयासांताः ॥ २४ ॥ यत्यस्मात्नित्यंसदाअच्युतंनिरीक्षमाणानामपिदृशोनैवतृप्यंतिअतआरुरुहुः कथंभूतं श्रियःशोभायाःधाम स्थानमंगंयस्यतं ॥ २५ ॥ एतदेवाभिनयेनाह श्रियोलक्ष्म्याः यस्योरोवक्षोनिवासः यस्यमुखंसर्वप्राणिनांदृशांसौंदर्यामृतपानायपात्रं यस्यबाहवोलोकपालानांनिवासः सारंश्रीकृष्णंगायंतीतिसारंगाभक्तास्तेषांयस्यपादांबुजंनिवासः तंनिरीक्षमाणानांदृशइतिपूर्वेणान्वयः

भगवांस्तत्रबंधूनांपौराणामनिवर्त्तिनां ॥ यथाविध्युपसंगम्यसर्वेषांमानमादधे ॥ २१ ॥ प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः ॥ आश्वास्यचाश्वपाकेभ्योवरैश्चाभिमतैर्विभुः ॥ २२ ॥ स्वयंचगुरुभिर्विप्रैःसदारैःस्थविरैरपि ॥ आशीर्भिर्युज्यमानोन्यैर्बंदिभिश्चाविशत्पुरं ॥ २३ ॥ राजमार्गंगतेकृष्णेद्वारकायाःकुलस्त्रियः ॥ हर्म्याण्यारुरुहुर्विप्रतदीक्षणमहोत्सवाः ॥ २४ ॥ नित्यंनिरीक्षमाणानांयदपिद्वारकौकसां ॥ नवितृप्यंतिहिदृशःश्रियोधामांगमच्युतं ॥ २५ ॥ श्रियोनिवासोयस्योरःपानपात्रंमुखंदृशां ॥ बाहवोलोकपालानांसारंगाणांपदांबुजं ॥ २६ ॥ सितातपत्रव्यजनैरुपस्कृतःप्रसूनवर्षैरभिवर्षितःपथि ॥ पिशंगवासावनमालयाबभौघनोयथाऽर्कोडुपचापवैद्युतैः ॥ २७ ॥ प्रविष्टस्तुगृहंपित्रोःपरिष्वक्तःस्वमातृभिः ॥ ववंदेशिरसासप्तदेवकीप्रमुखामुदा ॥ २८ ॥ ताःपुत्रमंकमारोप्यस्नेहस्नुतपयोधराः ॥ हर्षविह्वलितात्मानःसिषिचुर्नेत्रजैर्जलैः ॥ २९ ॥

॥ २६ ॥ सितैरातपत्रव्यजनैरुपस्कृतोमंडितः अर्कश्चउडुपोनक्षत्रसहितश्चंद्रश्चचापमिंद्रधनुश्चवैद्युतंविद्युत्तेजश्चतैः अर्कश्छत्रस्योपमानं नक्षत्राणिपुष्पवृष्टेः चंद्रःपरिभ्रमकृतमंडलाकारयोश्चामरव्यजनयोः चापंवनमालायाः विद्युत्तेजःपिशंगवाससोः अभूतोपमेयं यदिघनस्योपरिसूर्यबिंबमुभयतश्चंद्रौसर्वतोनक्षत्राणिमध्येचमिलितंचापद्वयंस्थिरंविद्युत्तेजश्चयदिभवेत्तर्हिसघनोयथाभातितथाहरिर्बभाविरत्यर्थः ॥ २७ ॥ देवकीप्रमुखाःसप्तववंदइतिमातृसौंदर्यादादरविशेषज्ञापनार्थमुक्तम् अष्टादशापिवसुदेवभार्यामातृतुल्यत्वान्नमस्कृताएव ॥ २८ ॥ २९ ॥

सहस्राणि चषोडशेतिचकारादष्टोत्तरशताधिकानीतिज्ञेयम् ॥ ३० ॥ प्रोष्यदेशांतरेउषित्वा आराद्दूरादेवविलोक्य संजातोमनसिमहोत्स वोयासांताः आसनादाशयाच्च आसनाद्देहेनोत्तस्थुः आशयोंऽतःकरणंतस्मादप्यात्मनाउत्तस्थुः श्रीकृष्णेनात्मनः संश्लेषेंऽतःकरणव्यव धानमपिनासहंतेत्यर्थः व्रीडितानिलोचनान्याननानिचयासांताः अपांगैरेववीक्षणाद्व्रीडितलोचनाः अवनतमुखत्वाद्व्रीडिताननाः सा कंव्रतैरिति हास्यक्रीडावर्जनादिनियमाअपिताभ्यउत्तस्थुरित्यर्थः धृतव्रताएवोत्तस्थुरितिवा व्रतानिचयाज्ञवल्क्योक्तानि क्रीडांशरीरसंस्का रंसमाजोत्सवदर्शनं ॥ हास्यंपरगृहेयानंत्यजेत्प्रोषितभर्तृकेति ॥ ३१ ॥ आयांतंतंपतिंदर्शनात्पूर्वमात्मनाबुध्यापरिरेभिरेततोदृष्टिभिस्त

अथाविशत्स्वभवनंसर्वकाममनुत्तमं ॥ प्रासादायत्रपत्नीनांसहस्राणिचषोडश ॥ ३० ॥ पत्न्यःपतिंप्रो ष्यगृहानुपागतंविलोक्यसंजातमनोमहोत्सवाः ॥ उत्तस्थुरारात्सहसासनाशयात्साकंव्रतैर्व्रीडितलोचना ननाः ॥ ३१ ॥ तमात्मजैर्दृष्टिभिरंतरात्मनादुरंतभावाःपरिरेभिरेपतिम् ॥ निरुद्धमप्यास्रवदंबुनेत्रयो र्विलज्जतीनांभृगुवर्यवैक्लवात् ॥ ३२ ॥ यद्यप्यसौपार्श्वगतोरहोगतस्तथापितस्यांघ्रियुगंनवंनवं ॥ पदेप देकाविरमेततत्पदाच्चलापियच्छ्रीर्नजहातिकर्हिचित् ॥ ३३ ॥ एवंनृपाणांक्षितिभारजन्मनामक्षौहिणी भिःपरिवृत्ततेजसां ॥ विधायवैरंश्वसनोयथाऽनलंमिथोवधेनोपरतोनिरायुधः ॥ ३४ ॥ सएषनरलोके स्मिन्नवतीर्णःस्वमायया ॥ रेमेस्त्रीरत्नकूटस्थोभगवान्प्राकृतोयथा ॥ ३५ ॥ ॥

तःसमीपमागतमात्मजैःपुत्रैर्गृहीतकंठमालिंगयंत्यइवस्वयमालिंगितवत्यइत्यर्थः अत्रहेतुः दुरंतभावागंभीराभिप्रायाः तदाचतासांनेत्रयो र्निरुद्धमप्यंबुवाष्पंवैक्लव्याद्दैवश्यादास्रवतईषत्सुस्राव अतएवधैर्यहान्यापिलज्जतीनां हेभृगुवर्यचित्रंशृण्विति ॥ ३२ ॥ पार्श्वगतःसमी पस्थःतत्रापिरहोगतः एकांतेप्रवर्त्ततेरम पदेपदंप्रतिक्षणंनवंनवमेव अत्रकैमुत्यन्यायःकाविरमेतेति चलाचंचलस्वभावापि ॥ ३३ ॥ उक्तंश्रीकृष्णचरितंसंक्षिप्याह एवमितिद्वाभ्यां क्षितेर्भारायजन्मयेषां अक्षौहिणीभिःकृत्वापरिवृत्तंसर्वतःप्रसृतंतेजः प्रभावोयेषां श्वसनो वायुर्वेणूनामन्योन्यसंघर्षणानलंविधायमिथोदाहेनयथोपशाम्यतितद्वत् ॥ ३४ ॥ स्त्रीरत्नकूटस्थःउत्तमस्त्रीकदंबस्थः ॥ ३५ ॥

नन्वेवंस्त्रीसंगादिभिः संसारप्रतीतेः कथंभगवानवतीर्णइत्युच्यतेतत्राह उद्दामेतिद्वाभ्याम् यासामुद्दामोगंभीरोयोभावोऽभिप्रायस्तस्यपिशुनः सूचकः अमलोवल्गुः सुंदरोहासः व्रीडावलोकश्चताभ्यांनिहतः अमदनः श्रीमहादेवोपिसंमुह्यल्लज्जयाचापंपिनाकमजहात् एवंप्रभावाः याःस्त्रियइत्येतावद्विवक्षितं यद्वा भगवतोमोहिनीरूपेणमहेशोपिमोहितएवमेताश्चहाग्विलासाएवेतितथोक्तं ताःकुहकैःकपटैर्विभ्रमैर्यस्येंद्रियंमनः विमथितुंक्षोभयितुंनशक्ताः ॥ ३६ ॥ तंश्रीकृष्णमयंप्राकृतोलोकआत्मौपम्येनस्वसादृश्येनसंगिनंमनुजंमन्यते अत्रहेतुः व्यापृण्वानंव्याप्रियमाणं यतोऽयमबुधः अतत्त्वज्ञः ॥ ३७ ॥ कुतइत्यपेक्षायामैश्वर्यलक्षणमाह एतदिति ईशस्यईशनमैश्वर्यंनामैतदेव किंतत् प्रकृतिस्थोपितस्यागुणैः सुखदुःखादिभिःसदानयुज्यतइतियत् यथाआत्मस्थैरानंदादिभिरात्माश्रयापिबुद्धिर्नयुज्यतेतद्वत् वैधर्म्येदृष्टांतोवा आत्मस्थैःसत्ताप्रकाशादिभिर्यथाबुद्धिर्युज्यतइति एवंवा असदात्मादेहस्तत्रस्थैर्गुणैस्तदाश्रयाबुद्धिस्तदुपाधिर्जीवोयथायुज्य

**उद्दामभावपिशुनामलवल्गुहासव्रीडाऽवलोकनिहतोऽमदनोपियासां ॥ संमुह्यचापमजहात्प्रमदोत्तमास्तायस्येंद्रियंविमथितुंकुहकैर्नशेकुः ॥ ३६ ॥ तमयंमन्यतेलोकोह्यसंगमपिसंगिनम् ॥ आत्मौपम्येनमनुजंव्यापृण्वानंयतोबुधः ॥ ३७ ॥ एतदीशनमीशस्यप्रकृतिस्थोपितद्गुणैः ॥ नयुज्यतेसदात्मस्थैर्यथाबुद्धिस्तदाश्रया ॥ ३८ ॥ तंमेनिरेऽबलामूढाःस्त्रैणंचानुव्रतंरहः ॥ अप्रमाणविदोभर्तुरीश्वरंमतयोयथा ॥ ॥ ३९ ॥ इतिश्रीभागवते म० प्र० श्रीकृष्णद्वारकाप्रवेशोनामैकादशोध्यायः ॥ ११ ॥ ॥ शौनकउवाच अश्वत्थाम्नोपसृष्टेनब्रह्मशीर्ष्णोरुतेजसा ॥ उत्तरायाहतोगर्भईशेनाजीवितःपुनः ॥ १ ॥**

तेएवंप्रकृतिस्थोपितद्गुणैर्नयुज्यतइतियत् एतदीशनमीशस्येति ॥ ३८ ॥ तत्पत्न्योपितस्यतत्त्वंनजानंतीत्याह तंस्त्रैणमात्मवश्यंरहएकांतेअनुव्रतमनुसृतंचमेनिरे भर्तुरप्रमाणविदः प्रमाणमियत्तांमहिमानमजानंत्यइत्यर्थः ईश्वरंक्षेत्रज्ञंमतयःअहंवृत्तयोयथास्वाधीनंस्वधर्मयोगिनंमन्यंतेतद्वत् यद्वा यथायथामतयःकल्पनास्तथातथातमीश्वरंस्त्रैणादिरूपंमेनिरइत्यर्थः ॥ ३९ ॥ ॥ इ० प्र० टी० एकादशोऽध्यायः ॥ ११ ॥ पुरोक्तंयत्प्रसंगायद्रौणिदंडादिविस्तरात् ॥ द्वादशेतुतदेवाथपरीक्षिज्जन्मवर्ण्यते ॥ १ ॥ परीक्षितोऽथराजर्षेर्जन्मकर्मविलापनम् ॥ संस्थांचपांडुपुत्राणांवक्ष्येकृष्णकथोदयमितिप्रतिज्ञायपांडवानांराज्यस्थितिरुपोद्घातरूपाप्रसंगसंगतमाध्यायमारभ्यनिरूपिता इदानींमौपोद्घातिकमुक्तानुवादपूर्वकंपृच्छति अश्वत्थाम्नेति उपसृष्टेन विसृष्टेन तस्यजन्मेत्यादेर्ब्रूहीत्युत्तरेणान्वयः ॥ १ ॥

सपरीक्षित् प्रेत्यदेहंत्यक्त्वा ॥ २ ॥ प्रार्थयेनत्वाज्ञापयामीत्याह गदितुंयदिमन्यसेअनुग्रहेणतर्हिब्रूहीति यस्यज्ञानमदाच्छुकइतिश्रवणे च्छायांकारणं ॥ ३ ॥ निस्पृहस्यापिराज्ञःश्रीकृष्णानुग्रहात्तादृक्पौत्रः समजनीतिवक्तुंतस्यश्रीकृष्णेभक्त्युद्रेकमाह अपीपलदितित्रिभिः पितृवदपीपलत्पालयामास ॥ ४ ॥ ऋतवस्तदुपार्जितालोकाश्च ॥ ५ ॥ सुरस्पार्हाःसुराणांस्पृहणीयास्तेसंपदादयःकामाविषयाराज्ञः किंमुदंप्रीतिमाधिजन्हुः अकृतवंतइत्यर्थः अत्रहेतुः मुकुंदेएवमनोयस्येति क्षुधितस्यअन्नेकमनसोयथाइतरेस्त्रक्चंदनादयोनकुर्वंतितद्वत् ॥ ६ ॥ प्रस्तुतमाह मातुरिति ॥ ७ ॥ पुरटंसुवर्णं स्फुरन्पुरटमौलिर्यस्यास्तितं व्रीह्यादिभ्यश्चेतिइनिप्रत्ययः अपीच्यमातिसुंदरंदृश्यतइ

तस्यजन्ममहाबुद्धेःकर्माणिचगृणीहिनः ॥ निधनंचयथैवासीत्सप्रेत्यगतवान्यथा ॥ २ ॥ तदिदंश्रोतुमिच्छामिगदितुंयदिमन्यसे ॥ ब्रूहिनःश्रद्दधानानांयस्यज्ञानमदाच्छुकः ॥ ३ ॥ सूतउवाच अपीपलद्धर्मराजःपितृवद्रंजयन्प्रजाः ॥ निस्पृहःसर्वकामेभ्यःकृष्णपादाब्जसेवया ॥ ४ ॥ संपदःक्रतवोविप्रामहिषीभ्रातरोमही ॥ जंबुद्वीपाधिपत्यंचयशश्चत्रिदिवंगतं ॥ ५ ॥ किंतेकामाःसुरस्पार्हामुकुंदमनसोद्विजाः ॥ अधिजन्हुर्मुदंराज्ञःक्षुधितस्ययथेतरे ॥ ६ ॥ मातुर्गर्भगतोवीरःसतदाभृगुनंदन ॥ ददर्शपुरुषंकंचिद्दह्यमानोऽस्त्रतेजसा ॥ ७ ॥ अंगुष्ठमात्रममलंस्फुरत्पुरटमौलिनम् ॥ अपीच्यदर्शनंश्यामंतडिद्वाससमच्युतं ॥ ८ ॥ श्रीमद्दीर्घचतुर्बाहुंतप्तकांचनकुंडलम् ॥ क्षतजाक्षंगदापाणिमात्मनःसर्वतोदिशम् ॥ परिभ्रमंतमुल्काभांभ्रामयंतंगदांमुहुः ॥ ९ ॥ अस्त्रतेजःस्वगदयानीहारमिवगोपतिः ॥ विधमंतंसन्निकर्षेपर्यैक्षतकइत्यसौ ॥ १० ॥ विधूयतदमेयात्माभगवान्धर्मगुब्विभुः ॥ मिषतोदशमास्यस्यतत्रैवांतर्दधेहरिः ॥ ११ ॥

तिदर्शनंरूपंयस्यतं तडिद्वाससीयस्येतिश्यामामितिचपदाभ्यांविद्युद्युक्तमेघोपमासूचिता अच्युतमाविकारं ॥ ८ ॥ तप्तंदाहोत्तीर्णंयत्कांचनंतन्मयेकुंडलेयस्य क्षतजाक्षंसंरंभादत्यारक्तनेत्रं अहोमद्भक्तस्यापिगर्भेस्त्रपीडेतिक्रोधेनेतिभावः ॥ ९ ॥ अस्त्रतेजोविधमंतंविनाशयंतंनीहारंहिमंगोपतिःसूर्यइव एवंविधंगर्भगतोबालःसन्निकर्षेसमीपेददर्शदृष्ट्वाचासौकइतिपर्यैक्षतवितर्कितवान् ॥ १० ॥ अमेयात्माकथंतद्विधूतवानित्यावितर्क्यरूपःधर्मंगोपायतीतिधर्मगुप् यद्वा धर्मंगोपायंतीतिधर्मगुपोराजानस्तत्प्रभुस्तेषामपिपालकत्वात् दशमासपरिच्छेद्यस्यतस्यमिषतःपश्यतोयत्रदृष्टस्तत्रैवांतर्हितोनत्वन्यत्रगतः यतोविभुःसर्वगतः ॥ ११ ॥ ॥

उदर्कंउत्तरफलं सर्वगुणानामुत्तरोत्तराधिक्यसूचकेलग्ने तत्रहेतुः अनुकूलैरन्यैर्ग्रहैःसहितानांशुभग्रहाणामुदयोयस्मिन् ॥ १२ ॥ जातकं
जातकर्म मंगलंपुण्याहं ॥ १३ ॥ वरान्श्रेष्ठान् स्वन्नंशोभनमन्नंच यावन्नछिद्यतेनालंतावन्नाप्नोतिसूतकम् ॥ छिन्नेनालेततःपश्चात्सूतकंतु
विधीयतइतिवचनात् ततःपूर्वंप्रादात् आमान्नंवा प्रजातीर्थेपुत्रोत्पत्तिपुण्यकाले तीर्थविद्दानकालज्ञः पुत्रेजातेव्यतीपातेदत्तंभवतिचाक्ष
यमितिस्मृतेः देवाश्चपितरश्चैवपुत्रेजातेद्विजन्मनाम् ॥ आयांतिहिनृपश्रेष्ठपुण्याहमितिचाब्रुवन्निति च ॥ १४ ॥ हेपौरवर्षभ पुरूणांपुरुवंश्या
नाम् ॥ १५ ॥ शुक्लेशुद्धेअस्मिन्प्रजातंतौ दैवेन कथंभूतेन अप्रतिघातेनदुर्वारेण संस्थांनाशमुपेयुषिगतेसातिवोऽनुग्रहार्थायस्मात्प्रभव

ततःसर्वगुणोदर्केसानुकूलग्रहोदये ॥ जज्ञेवंशधरःपांडोर्भूयःपांडुरिवौजसा ॥ १२ ॥ तस्यप्रीतमनाराजावि
प्रैर्धौम्यकृपादिभिः ॥ जातकंकारयामासवाचयित्वाचमंगलं ॥ १३ ॥ हिरण्यंगांमहींग्रामान्हस्त्यश्वान्नृप
तिर्वरान् ॥ प्रादात्स्वन्नंचविप्रेभ्यःप्रजातीर्थेसतीर्थवित् ॥ १४ ॥ तमूचुर्ब्राह्मणास्तुष्टाराजानंप्रश्रयान्वितं ॥
एषह्यस्मिन्प्रजातंतौपूरूणांपौरवर्षभ ॥ १५ ॥ दैवेनाप्रतिघातेनशुक्लेसंस्थामुपेयुषि ॥ रातोवोऽनुग्रहार्थायवि
ष्णुनाप्रभविष्णुना ॥ १६ ॥ तस्मान्नाम्नाविष्णुरातइतिलोकेबृहच्छ्रवाः ॥ भविष्यतिनसंदेहोमहाभागवतो
महान् ॥ १७ ॥ युधिष्ठिरउवाच अप्येषवंश्यान्राजर्षीन्पुण्यश्लोकान्महात्मनः ॥ अनुवर्तितासुयशसासाधु
वादेनसत्तमाः ॥ १८ ॥ ब्राह्मणाऊचुः पार्थप्रजाऽवितासाक्षादिक्ष्वाकुरिवमानवः ॥ ब्रह्मण्यःसत्यसंध
श्चरामोदाशरथिर्यथा ॥ १९ ॥ एषदाताशरण्यश्चयथाह्यौशीनरःशिबिः ॥ यशोवितनितास्वानांदौष्यंतिरिव
यज्वनाम् ॥ २० ॥ धन्विनामग्रणीरेषतुल्यश्चार्जुनयोर्द्वयोः ॥ हुताशइवदुर्धर्षःसमुद्रइवदुस्तरः ॥ २१ ॥

नशीलेनश्रीविष्णुनारातोदत्तः ॥ १६ ॥ तस्माल्लोकेविष्णुरातइतिनाम्नाभविष्यतिमहाभागवतश्च गुणैश्चमहान्भविष्यति नात्रसंदेहइति
तंराजानंब्राह्मणाऊचुरितित्रयाणामन्वयः ॥ १७ ॥ महाभागवतोभविष्यतीत्युक्तेहृष्टःपृच्छति अपिस्वित्किंस्वित् साधुवादेनसुयशसास
त्कीर्त्याचानुवर्तिताभविष्यतीतिपूर्वस्यैवातःपरमप्यनुषंगः ॥ १८ ॥ प्रजानामवितारक्षकः मानवःमनोःपुत्रः ब्राह्मणेषुहितःसत्यप्रतिज्ञश्च
श्रीरामोयथा ॥ १९ ॥ उशीनरदेशाधिपतिःशिबिः येनस्वमांसंश्येनायदत्वाशरणागतःकपोतोरक्षितः स्वानांज्ञातीनाम् यज्वनांचयशोविस्ता
रकोदौष्यंतिर्भरतइव ॥ २० ॥ अर्जुनयोः पार्थकार्तवीर्ययोः ॥ २१ ॥ ॥ ॥

हिमवानिवसतांनिषेव्यः अनन्यगतिकत्वेनवसुधेवतितिक्षुःक्षंता प्रीत्यामातापितराविवसहिष्णुः ॥ २२ ॥ पितामहोब्रह्मातेनसमः साम्ये समत्वेरमाश्रयोहरिः ॥ २३ ॥ सर्वैःसद्गुणैर्माहात्म्यंयत्तस्मिन्श्रीकृष्णतुल्यः ॥ २४ ॥ धृत्याधैर्येण सद्ग्रह:सन्भद्रःग्रहःअभिनिवेशोयस्यसः आहर्ताकर्त्ता ॥ २५ ॥ राजर्षीणांजनमेजयादीनाम् ॥ २६ ॥ द्विजपुत्रेणप्रेरितात्तक्षकादात्मनोमृत्युमुपश्रुत्यहरेःपदंप्रपत्स्यतेभजिष्यति ॥ २७ ॥ ततश्चजिज्ञासितमात्मनोयाथात्म्यंयेनसः इदंशरीरंगंगायांहित्वाअकुतोभयंपदंयास्यति ॥ २८ ॥ लब्धाउपचितिःपूजायैस्ते



मृगेंद्रइवविक्रांतोनिषेव्योहिमवानिव ॥ तितिक्षुर्वसुधेवासौसहिष्णुःपितराविव ॥ २२ ॥ पितामहसमः साम्येप्रसादेगिरिशोपमः ॥ आश्रयःसर्वभूतानांयथादेवोरमाश्रयः ॥ २३ ॥ सर्वसद्गुणमहात्म्यएषकृष्णमनुव्रतः ॥ रंतिदेवइवोदारोययातिरिवधार्मिकः ॥ २४ ॥ धृत्याबलिसमःकृष्णेप्रऱ्हादइवसद्ग्रहः ॥ आहर्तैषोऽश्वमेधानांवृद्धानांपर्युपासकः ॥ २५ ॥ राजर्षीणांजनयिताशास्ताचोत्पथगामिनाम् ॥ निग्रहीताकलेरेषभुवोधर्मस्यकारणात् ॥ २६ ॥ तक्षकादात्मनोमृत्युंद्विजपुत्रोपसर्जितात् ॥ प्रपत्स्यतउपश्रुत्यमुक्तसंगःपदंहरेः ॥ २७ ॥ जिज्ञासितात्मयाथात्म्योमुनेर्व्याससुतादसौ ॥ हित्वेदंनृपगंगायांयास्यत्यद्धाऽकुतोभयम् ॥ २८ ॥ इतिराज्ञउपादिश्यविप्राजातककोविदाः ॥ लब्धोपचितयःसर्वेप्रतिजग्मुःस्वकान्गृहान् ॥ २९ ॥ सएषलोकविख्यातःपरीक्षिदितियत्प्रभुः ॥ गर्भेदृष्टमनुध्यायन्परीक्षेतनरेष्विह ॥ ३० ॥ सराजपुत्रोववृधेआशुशुक्लइवोडुपः ॥ आपूर्यमाणःपितृभिःकाष्ठाभिरिवसोऽन्वहम् ॥ ३१ ॥ यक्ष्यमाणोऽश्वमेधेनज्ञातिद्रोहजिहासया ॥ राजाऽलब्धधनोदध्यावन्यत्रकरदंडयोः ॥ ३२ ॥

॥ २९ ॥ परीक्षिदितिनामनिर्वक्ति सएषइति यद्यस्मात्प्रभुःसमर्थःसन्गर्भेदृष्टंपुरुषमनुध्यायन्इहदृश्यमानेषुनरेषुमध्येसर्वमपिनरंपरीक्षेत अयमसौभवेदितिनोवेतिविचारयेदतःपरीक्षिदितिविख्यातः पूर्वंदृष्टमितिवापाठः ॥ ३० ॥ शुक्लेशुक्लपक्षेसप्रसिद्धउडुपोऽन्वहंयथाकाष्ठाभिःपंचदशकलाभिरापूर्यमाणोवर्द्धतेएवंपितृभिर्युधिष्ठिरादिभिःकामैश्चतुःषष्टिकलाभिश्चापूर्यमाणोववृधे ॥ ३१ ॥ पूर्वमपकृष्योक्तानश्वमेधान्स्वावसरेसप्रकारंकथयति ज्ञातिद्रोहस्यहानेच्छयायक्ष्यमाणःकरदंडयोरन्यत्रताभ्यांविनाऽलब्धधनोदध्यौचिंतयामास करदंडजस्यपरिजनभरणमात्रोपक्षीणत्वात् ॥ ३२ ॥

प्रहीणंमरुत्तस्ययज्ञेत्यक्तसुवर्णपात्रादिकमानीतवंतः ॥ ३३ ॥ संभृतसंभारःसंपादितयज्ञोपकरणः भीतोज्ञातिद्रोहात् ॥ ३४ ॥ इतिश्रीप्रथ
मेटीकायांद्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ निर्गमोधृतराष्ट्रस्यविदुरोक्त्यात्रयोदशे ॥ उक्तःपौत्राभिषेकेणवक्तुंराज्ञोमहोदयम् ॥ १ ॥
इदानींपरीक्षितः कलिनिग्रहादिकर्माणिकथयिष्यन्विदुरागमनेनधृराष्ट्रप्रस्थानंततोर्जुनागमनंततः पांडवप्रस्थानंचनिरूपयति त्रिभिर
ध्यायैः गतिंहरिम् तयात्मगत्याऽवाप्तंविविदित्सितंज्ञातुमिष्टंसर्वंयेन ॥ १ ॥ तदेवाह यावतःकर्मयोगव्रतादिविषयान्प्रश्नान्प्रथमंकृतवान् कौ

तदभिप्रेतमालक्ष्यभ्रातरोच्युतचोदिताः॥धनंप्रहीणमाजह्रुरुदीच्यांदिशिभूरिशः॥३३॥तेनसंभृतसंभारो
धर्मपुत्रोयुधिष्ठिरः॥ वाजिमेधैस्त्रिभिर्भीतोयज्ञैःसमयजद्धरिं॥३४॥इ०भा०म०प्र०परीक्षिज्जन्माद्युत्कर्षो
नामद्वादशोध्यायः॥ १२॥ ॥ ॥ सूतउवाच विदुरस्तीर्थयात्रायांमैत्रेयादात्मनोगतिं ॥ ज्ञात्वाऽ
गाद्धास्तिनपुरंतयावाप्तविविदित्सितः ॥ १ ॥ यावतःकृतवान्प्रश्नान्क्षत्ताकौषारवाग्रतः ॥ जातैकभक्ति
र्गोविंदेतेभ्यश्चोपरराम ह ॥ २ ॥ तंबंधुमागतंदृष्ट्वाधर्मपुत्रःसहानुजः ॥ धृतराष्ट्रोयुयुत्सुश्चसूतःशारद्वतः
पृथा ॥ ३ ॥ गांधारीद्रौपदीब्रह्मन्सुभद्राचोत्तराकृपी ॥ अन्याश्चजामयःपांडोर्ज्ञातयःससुताःस्त्रियः
प्रत्युज्जग्मुःप्रहर्षेणप्राणंतन्वइवागतं ॥ ४ ॥ अभिसंगम्यविधिवत्परिष्वंगाभिवादनैः ॥ मुमुचुःप्रेमबा
ष्पौघंविरहौत्कंठ्यकातराः ॥५॥ राजातमर्हयांचक्रेकृतासनपरिग्रहं ॥ तंभुक्तवंतमासीनंविश्रांतंसुखमा
सने ॥ प्रश्रयावनतोराजाप्राहतेषांचशृण्वतां ॥ ६ ॥ युधिष्ठिरउवाच अपिस्मरथनोयुष्मत्पक्षच्छा
यासमेधितान् ॥ विपद्गणाद्विषाग्न्यादेर्मोचितायत्समातृकाः ॥ ७ ॥ ॥ ॥

षारवस्यमैत्रेयस्यपुरतः पश्चात्रिचतुःप्रश्नार्थज्ञानमात्रेणगोविंदेजातैकभक्तिःकृतार्थःसंस्तेभ्यःप्रश्नेभ्यउपररामततःपरंनविजिज्ञासितवान्
॥ २ ॥ सूतःसंजयः शारद्वतःकृपः ॥ ३ ॥ कृपीद्रोणभार्या जामयोज्ञातिभार्याः अन्याश्चस्त्रियः प्राणंतन्वइवेतिकुतश्चिन्मूर्च्छादि
दोषतःप्राणेसन्नेसति तन्वःकरांघ्र्यादयोनिश्चेष्टाभवंतिपुनस्तस्मिन्नाविर्भूतेयथोत्तिष्ठंतितद्वत् ॥ ४ ॥ विरहेणयदौत्कंठ्यंतेनकातराःवि
वशाः ॥ ५ ॥ ६ ॥ पक्षिणोह्यपत्यानियथाऽतिस्नेहेनपक्षच्छाययावर्द्धयंतितद्वद्युष्मत्पक्षपातच्छाययासमेधिताःनोऽस्मान्किंनस्मरथ स
मेधितत्वमेवाह विपद्गणात्यस्मान्मोचिताःस्मः ॥ ७ ॥ ॥ ॥ ॥

वीयुष्माभिःकयावृत्त्यावर्तितंदेहवृत्तिःकृता कानिचतीर्थादीनिसेवितानीति ॥ ८ ॥ भवतांचतीर्थाटनंनस्वार्थंकिंतुतीर्थानुग्रहार्थमित्याह
भवद्विधाइति मलिनजनसंपर्केणमलिनानितीर्थानिसंतःपुनःस्वयंतीर्थीकुर्वंति स्वांतंमनस्तत्रस्थेन स्वस्यांतःस्थितेनेतिवा ॥ ९ ॥ अ
पिकिंसुखमासते भवद्भिःक्वापिदृष्टाःश्रुतावा ॥ १० ॥ ११ ॥ यदुकुलक्षयावर्णनेकारणमाह नन्विति ॥ १२ ॥ श्रेयस्कृत्तत्त्वमुपदि
शन् ॥ १३ ॥ ननुशूद्रोऽसौकथमुपदिशेत् नह्यसौशूद्रःकिंतुयमस्तद्रूपेणासीत् किंतत्रकारणंतत्राह यमेचात्रागतेअमुत्रकोदंडधरइत्यपे
क्षायामाह अबिभ्रदिति धृतवानित्यर्थः मांडव्यस्यशापात् तथाहि क्वचिच्चोराननुधावंतोराजभटामांडव्यस्यऋषेस्तपश्चरतःसमीपेतान्

कयावृत्त्यावर्तितंवश्चरद्भिःक्षितिमंडलं ॥ तीर्थानिक्षेत्रमुख्यानिसेवितानीहभूतले ॥ ८ ॥ भवद्विधाभागव
तास्तीर्थभूताःस्वयंविभो ॥ तीर्थीकुर्वंतितीर्थानिस्वांतस्थेनगदाभृता॥९॥ अपिनःसुहृदस्तातबांधवाःकृष्ण
देवताः॥ दृष्टाःश्रुतावायदवःस्वपुर्यांसुखमासते ॥१०॥ इत्युक्तोधर्मराजेनसर्वंतत्समवर्णयत् ॥ यथाऽनुभूतं
क्रमशोविनायदुकुलक्षयं॥११॥नन्वप्रियंदुर्विषहंनृणांस्वयमुपस्थितं॥नावेदयत्सकरुणोदुःखितान्द्रष्टुमक्ष
मः॥१२॥कंचित्कालमथावात्सीत्सत्कृतोदेववत्सुखं ॥ भ्रातुर्ज्येष्ठस्यश्रेयस्कृत्सर्वेषांप्रीतिमाहवन् ॥१३॥अ
बिभ्रदर्यमादंडंयथावदघकारिषु ॥ यावद्दधारशूद्रत्वंशापाद्वर्षशतंयमः ॥ १४ ॥ युधिष्ठिरोलब्धराज्योदृष्ट्वा
पौत्रंकुलंधरं॥भ्रातृभिर्लोकपालाभैर्मुमुदेपरयाश्रिया॥१५॥एवंगृहेषुसक्तानांप्रमत्तानांतदीहया॥अत्यक्रा
मदविज्ञातःकालःपरमदुस्तरः॥ १६ ॥ विदुरस्तदभिप्रेत्यधृतराष्ट्रमभाषत ॥ राजन्निर्गम्यतांशीघ्रंपश्येदं
भयमागतं॥१७॥प्रतिक्रियानयस्येहकुतश्चित्कर्हिचित्प्रभो॥सएवभगवान्कालःसर्वेषांनःसमागतः॥१८॥

संप्राप्यतेनसहनिबध्यानीयराज्ञेनिवेद्यतदाज्ञयासर्वान्शूलमारोपयामासुः ततोराजातमृषिंज्ञात्वाशूलादवतार्यप्रसादयामास ततोमुनिर्य
मंगत्वाकुपितउवाच कस्मादहंशूलमारोपितइति तेनोक्तंत्वंबाल्येशलभंकुशाग्रेणाविध्यक्रीडितवानिति तच्छ्रुत्वामांडव्यस्तंशशाप बा
ल्येऽजानतोमेमहांतंदंडंयतस्त्वंकारितवान्अतःशूद्रोभवेति ॥ १४ ॥ इदानींराज्यस्यापकर्षंनिरूपयितुमुत्कर्षंनिगमयति युधिष्ठिरइति कु
लंधरं वंशधरं॥ १५ ॥ तदीहयागृहव्यापारेणप्रमत्तानामत्यक्रामत् आयुःकालःअतिक्रांतः यद्वा तानभ्यभवदित्यर्थः ॥ १६ ॥ अभिप्रेत्य
ज्ञात्वा ॥ १७ ॥ तत्प्रतीकारःक्रियतांकिंनिर्गमनेनतत्राह प्रतिक्रियेति सर्वेषामिति यैःप्रतिकर्तव्यंतेषामपीत्यर्थः ॥ १८ ॥

कथंधनादिवियोगःसोढुंशक्योऽतआह येनचेति अभिपन्नःअभिग्रस्तः ॥ १९ ॥ तत्रावस्थानमतिदैन्यमितिदर्शयन्वैराग्यमुत्पादयति
पितृभ्रात्रितिसप्तभिः आत्माचदेहः ॥ २ ॥ येनपुत्राहतास्तेनभीमेनदत्तंपिंडमन्नंगृहपालइव गृहपालःश्वा ॥ २१ ॥ निसृष्टःप्रक्षिप्तः
गरोविषम् दूषिताःअवमताः तद्दत्तैरन्नादिभिर्लब्धैरसुभिःकियत्प्रयोजनं नकिंचिदित्यर्थः ॥ २२ ॥ तस्यापिएवंदैन्यमनुभवतोऽपि परै
तिक्षीयतेअतएवधीरोभवेति ॥ २३ ॥ किंलक्षणोधीरइत्यपेक्षायामाह गतस्वार्थंयशोधर्मादिशून्यम् मुक्तबंधनस्त्यक्ताभिमानः क्वगतइ
त्यविज्ञातागतिर्यस्यसःधीरः प्राप्तदुःखस्यस्वयंसहनेनमुक्तिप्राप्तेः ॥ २४ ॥ नरोत्तमस्तुततःप्रागेवकृतप्रतीकारः स्वकात्स्वतएव परतःप

येनचैवाभिपन्नोयंप्राणैःप्रियतमैरपि ॥ जनःसद्योवियुज्येतकिमुतान्यैर्धनादिभिः ॥१९॥ पितृभ्रातृसुहृत्पु
त्राहतास्तेविगतंवयः॥आत्माचजरयाग्रस्तःपरगेहमुपाससे॥२०॥अहोमहीयसीजंतोर्जीविताशाययाभ
वान् ॥ भीमेनावर्जितंपिंडमादत्तेगृहपालवत् ॥२१॥ अग्निर्निसृष्टोदत्तश्चगरोदाराश्चदूषिताः॥हृतंक्षेत्रंधनं
येषांतद्दत्तैरसुभिःकियत्॥२२॥ तस्यापितवदेहोयंकृपणस्यजिजीविषोः ॥ परैत्यनिच्छतोजीर्णोजरयावास
सीइव॥२३॥गतस्वार्थमिमंदेहंविरक्तोमुक्तबंधनः ॥ अविज्ञातगतिर्जह्यात्सवैधीरउदाहृतः ॥ २४ ॥ यःस्व
कात्परतोवेहजातनिर्वेदआत्मवान् ॥ हृदिकृत्वाहरिंगेहात्प्रव्रजेत्सनरोत्तमः ॥ २५॥ अथोदीचींदिशंयातुस्वै
रज्ञातगतिर्भवान्॥ इतोऽर्वाक्प्रायशःकालःपुंसांगुणविकर्षणः ॥२६॥ एवंराजाविदुरेणानुजेनप्रज्ञाचक्षुर्बो
धितोह्याजमीढः ॥ छित्वास्वेषुस्नेहपाशान्द्रढिम्नोनिश्चक्रामभ्रातृसंदर्शिताध्वा ॥ २७॥ पतिंप्रयांतंसुबल
स्यपुत्रीपतिव्रताचानुजगामसाध्वी ॥ हिमालयंन्यस्तदंडप्रहर्षंमनस्विनामिवसत्संप्रहारः ॥ २८ ॥

रोपदेशतोवा ॥ २५ ॥ त्वंतुनरोत्तमोनाभूरतइदानींधीरोभवेत्याह अथेति अर्वाक्अर्वाचीनःएष्यन्नित्यर्थः गुणान्धैर्यदयादीन्विकर्षति
आच्छिनत्तीतितथा ॥ २६ ॥ आजमीढःआजमीढवंशजःप्रज्ञाचक्षुरंधःएवंबोधितःसन् द्रढिम्नाश्चित्तदार्ढ्यात् भ्रात्रासंदर्शितःअध्वाबंध
मोक्षयोर्मार्गोयस्यसः ॥ २७ ॥ सुबलस्यपुत्रीगांधारीसाध्वीसुशीलाहिमालयंप्रयांतंपतिमनुजगाम ननुकथंसासुकुमारीहिमादिदुःखबहुलं
हिमवंतंगताअतआह न्यस्तदंडानांप्रहर्षोयस्मिंस्तम् दुःखदमपिकेषांचित्प्रहर्षहेतुर्भवतीत्यत्रदृष्टांतः मनस्विनांशूराणांयुद्धेसन्तीव्रःप्र
हारोयथा पाठांतरे सत्संप्रहारंयुद्धंयथेति ॥ २८ ॥ ॥ ॥ ॥ ॥

कृतंमैत्रंमित्रदैवत्यंसंध्यावंदनंयेन नत्वासंपूज्य पितरौविदुरधृतराष्ट्रौ ॥ २९ ॥ हेगावल्गणेगवल्गणस्यपुत्रसंजय ॥३०॥ अकृतप्रज्ञेमंदमतौ शमलमपराधम् आशंसमानः आशंकमानः भार्ययासह ॥ ३१ ॥ यौअरक्षतांतौ इतःस्थानात् ॥ ३२ ॥ कृपयास्नेहवैक्लव्याच्चातिपीडितआत्मेश्वरंधृतराष्ट्रमपश्यन्विरहकर्शितश्चसूतःसंजयोनप्रत्युत्तरमाह ॥ ३३ ॥ आत्मनाबुद्ध्याआत्मानंमनोविष्टभ्यधैर्ययुक्तंकृत्वा प्रभोर्धृतराष्ट्रस्य ॥ ३४ ॥ गांधार्याश्चव्यवसितंनिश्चितम् यतोमुषितोवंचितोऽस्मीति ॥ ३५ ॥ एवंकंचित्कालंशोचतितस्मिन् अथनारदआजगाम अत्रास्ति

अजातशत्रुःकृतमैत्रोहुताग्निर्विप्रान्नत्वातिलगोभूमिरुक्मैः ॥ गृहंप्रविष्टोगुरुवंदनायनचापश्यत्पितरौसौबलींच ॥ २९ ॥ तत्रसंजयमासीनंपप्रच्छोद्विग्नमानसः ॥ गावल्गणेक्वनस्तातोवृद्धोहीनश्चनेत्रयोः ॥ ३० ॥ अंबाचहतपुत्रार्त्तापितृव्यःक्वगतःसुहृत् ॥ अपिमय्यकृतप्रज्ञेहतबंधुःसभार्यया ॥ आशंसमानःशमलंगंगायांदुःखितोपतत् ॥३१॥ पितर्युपरतेपांडौसर्वान्नःसुहृदःशिशून् ॥ अरक्षतांव्यसनतःपितृव्यौक्वगतावितः ॥ ३२ ॥ सूतउवाच कृपयास्नेहवैक्लव्यात्सूतोविरहकर्शितः ॥ आत्मेश्वरमचक्षाणोनप्रत्याहातिपीडितः ॥ ३३ ॥ विमृज्याश्रूणिपाणिभ्यांविष्टभ्यात्मानमात्मना ॥ अजातशत्रुंप्रत्यूचेप्रभोःपादावनुस्मरन् ॥ ३४॥ संजयउवाच नाहंवेदव्यवसितंपित्रोर्वःकुलनंदन ॥ गांधार्यावामहाबाहोमुषितोऽस्मिमहात्मभिः ॥ ३५ ॥ अथाजगामभगवान्नारदःसहतुंबुरुः॥प्रत्युत्थायाभिवाद्याहसानुजोऽभ्यर्चयन्निव ॥३६॥ युधिष्ठिरउवाच नाहंवेदगतिंपित्रोर्भगवन्क्वगतावितः ॥ अंबावाहतपुत्रार्त्ताक्वगताचतपस्विनी ॥ कर्णधारइवापारेभगवान्पारदर्शकः॥३७॥ अथाबभाषेभगवान्नारदोमुनिसत्तमः ॥ माकंचनशुचोराजन्यदीश्वरवशंजगत् ॥ ३८॥ लोकाःसपालायस्येमेवहंतिबलिमीशितुः ॥ ससंयुनक्तिभूतानिसएववियुनक्तिच ॥३९॥ यथागावोनसिप्रोतास्तंत्यांबद्धाःस्वदामभिः ॥ वाक्तंत्यांनामभिर्बद्धावहंतिबलिमीशितुः ॥ ४० ॥

क्वचित्पुस्तकेपाठांतरंतदुल्लंघ्ययथासंप्रदायंव्याख्यायते शोकवेगादभ्यर्चयन्निवाहराजानत्वभ्यर्चयत् ॥ ३६ ॥ नाहंवेदवेद्मि तपस्विनीदुःखयुक्ता अपारेशोकार्णवेभगवांस्त्वमेवपारदर्शकःअतोब्रूहीतिशेषः ॥ ३७ ॥ आदावेवयथावृत्तकथनेशोकेनमूर्छितःपतेदितिप्रथमंतावच्छोकमुपशमयति माकंचनशुचःमाशोच नकेवलंतानेव यद्यस्मादीश्वराधीनंजगत् ॥ ३८ ॥ तदेवाह लोकाइति ॥ ३९ ॥ ४० ॥

प्रवृत्तौपारतंत्र्यमुक्तासंयोगवियोगयोरप्याह यथेति क्रीडोपस्कराणांक्रीडासाधनानां ॥ ४१ ॥ ईश्वराधीनत्वान्नशोकःकार्यइत्युक्तंलो
कतत्त्वेचविचार्यमाणेनिर्विषयोयंशोकइत्याह यद्यदिलोकंजनंध्रुवंजीवरूपेण अध्रुवंदेहरूपेण नचेति नध्रुवंनाप्यध्रुवं शुद्धब्रह्मरूपेण
अनिर्वचनीयत्वेनवाउभयंवाचिज्जडांशतःसर्वथाचतुर्ष्वपिपक्षेषुतेपित्रादयोनशोच्याः स्नेहादन्यत्र स्नेहएवकेवलंशोकहेतुःसचाज्ञानमू
लइत्यर्थः ॥ ४२ ॥ तस्मान्मांविनाकथंतेवर्त्तेरन्नितिमनसावैक्लव्यंचव्याकुलतांत्यज ॥४३॥ तत्रत्वद्देहतस्तेषांवृत्तिरेवतावन्नास्तीत्याह कालो
गुणक्षोभकः कर्मजन्मनिमित्तं गुणाउपादानं तदधीनःपांचभौतिकोजडस्तद्विभागेनाशवांश्च सर्पग्रस्तःअजगरगिलितोयथान्यंनरक्षतित
द्वत् ॥ ४४ ॥ ईश्वरेणविहितावृत्तिश्चसर्वतःसुलभैवेत्याह अहस्तानिपश्वादीनि अपदानितृणादीनि तत्रतेष्वहस्तादिष्वपि फल्गूनिअल्पा

यथाक्रीडोपस्कराणांसंयोगविगमाविह ॥ इच्छयाक्रीडितुःस्यातांतथैवेशेच्छयानृणां॥४१॥ यन्मन्यसेध्रु
वंलोकमध्रुवंवानचोभयं ॥ सर्वथानहिशोच्यास्तेस्नेहादन्यत्रमोहजात् ॥४२॥ तस्माज्जह्यंगवैक्लव्यमज्ञान
कृतमात्मनः ॥ कथंत्वनाथाःकृपणावर्त्तेरन्वनमाश्रिताः॥४३॥ कालकर्मगुणाधीनोदेहोऽयंपांचभौतिकः ॥
कथमन्यांस्तुगोपायेत्सर्पग्रस्तोयथापरं ॥४४॥ अहस्तानिसहस्तानामपदानिचतुष्पदां ॥ फल्गूनितत्रम
हतांजीवोजीवस्यजीवनं ॥ ४५ ॥ तदिदंभगवान्राजन्नेकआत्मात्मनांस्वदृक् ॥ अंतरोऽनंतरोभातिपश्य
तंमाययोरुधा ॥ ४६ ॥ सोऽयमद्यमहाराजभगवान्भूतभावनः ॥ कालरूपोऽवतीर्णोऽस्यामभवायसुरद्वि
षां ॥ ४७ ॥ निष्पादितंदेवकृत्यमवशेषंप्रतीक्षते ॥ तावद्यूयमवेक्षध्वंभवेद्यावदिहेश्वरः ॥ ४८ ॥

नि एवंजीवःसर्वोऽपिजीवस्यसर्वस्यजीवनंजीविका एतेनैवसर्वतोमृत्युग्रासत्वंचोक्तं ॥ ४५ ॥ मोहनिवृत्त्यर्थंद्वैतस्यावस्तुत्वमाह तदिदम
हस्तसहस्तादिरूपंजगत्स्वदृक्भगवानेवनततःपृथक् सचैकएवनतुनाना ननुसजातीयविजातीयभेदेप्रत्यक्षेकुतएतत्तत्राह आत्मनांभो
क्तृणामात्मास्वरूपं अतोनसजातीयभेदः अंतरोऽनंतरश्चअंतर्बहिश्चभोक्तृभोग्यरूपश्चभाति अतोनवाविजातीयभेदोऽपि एकःकथं तथा
प्रतीयतेअतआह माययाबहुधातंपश्येति ॥ ४६ ॥ क्वासावस्तीदृशोमहामायावी द्वारकायामित्याह सोऽयमिति अस्यांभूम्यांअभवायना
शाय ॥ ४७ ॥ तर्हिश्रीकृष्णोऽत्रास्तीत्यत्रैवास्थांमाकुथाइत्याह तच्चदेवानांकार्यंतेननिष्पादितं केवलमवशेषंप्रतीक्षते यदुकुलक्षयमिति
हृदिस्थम् ततोनिजंधामयास्यति ततोयूयमपिगच्छतेत्यर्थः तच्चभूतमपिविदुरवदेवनावर्णयत् ॥ ४८ ॥ ॥

तदेवंशोकमास्थांचनिवार्यजिज्ञासवेतस्मैयथावृत्तंकथयति धृतराष्ट्रइतिषड्भिः हिमवतोदक्षिणेभागे ॥ ४९ ॥ यावैप्रसिद्धास्वर्धुनीसाआ त्मानंयत्रसप्तधाव्यधात् किमर्थं नानापृथक्सप्तभिःस्रोतोभिःप्रवाहैःसप्तानामृषीणांप्रीतये अतएवतत्तीर्थंसप्तस्रोतोवदंति ॥ ५० ॥ तत्र तेन कृतमष्टांगयोगमाह स्नात्वेतिचतुर्भिः तत्रस्नानंहोमोऽब्भक्षणंचेतिनियमाउक्ताः भक्षस्थानेअपांस्वीकारादब्भक्षः उपशांतआत्मायस्य सः विगताःपुत्राद्येषणायस्मादितियमाउक्ताः ॥ ५१ ॥ जितासनइत्यादिनाआसनप्राणायामप्रत्याहाराउक्ताः हरिभावनयेतिधारणोक्ता ध्वस्ताःरजःसत्वतमोरूपामलायस्येतिफलतोध्यानमुक्तं ॥ ५२ ॥ समाधिमाह विज्ञानेतिद्वाभ्यां आत्मानमहंकारास्पदंस्थूलदेहाद्वियो ज्यएकीकृत्यतंचविज्ञानात्मानंद्रश्यांशाद्वियोज्यक्षेत्रज्ञेद्रष्टरिप्रविलाप्यतंचक्षेत्रज्ञंद्रष्टृंशाद्वियोज्यआधारेआश्रयसंज्ञेब्रह्मणिप्रविलाप्य घटां

धृतराष्ट्रःसहभ्रात्रागांधार्याचस्वभार्यया ॥ दक्षिणेनहिमवतऋषीणामाश्रमंगतः ॥४९॥ स्रोतोभिःसप्तभि र्यावैस्वर्धुनीसप्तधाव्यधात् ॥ सप्तानांप्रीतयेनाम्नासप्तस्रोतःप्रचक्षते ॥५०॥ स्नात्वानुसवनंतस्मिन्हुत्वाचा ग्नीन्यथाविधि ॥ अब्भक्षउपशांतात्मासआस्तेविगतैषणः ॥ ५१ ॥ जितासनोजितश्वासःप्रत्याहृतषडिं द्रियः ॥ हरिभावनयाध्वस्तरजःसत्वतमोमलः ॥५२॥ विज्ञानात्मनिसंयोज्यक्षेत्रज्ञेप्रविलाप्यतम् ॥ ब्रह्मण्या त्मानमाधारेघटांबरमिवांबरे ॥५३॥ ध्वस्तमायागुणोदर्कोनिरुद्धकरणाशयः ॥ निवर्तिताखिलाहारआस्ते स्थाणुरिवाचलः ॥ तस्यांतरायोमैवाभूःसंन्यस्ताखिलकर्मणः ॥५४॥ सवाअद्यतनाद्राजन्परतःपंचमेहनि ॥ कलेवरंहास्यतिस्वंतच्चभस्मीभविष्यति ॥५५॥ दह्यमानेऽग्निभिर्देहेपत्युःपत्नीसहोटजे ॥ बहिःस्थितापतिं साध्वीतमग्निमनुवेक्ष्यति ॥ ५६ ॥

बरंघटोपाधेर्वियोज्ययथामहाकाशेप्रविलाप्यतेतद्वत् ॥ ५३ ॥ व्युत्था नाभावमाह ध्वस्तेति अंतर्गुणक्षोभाद्वाबहिरिंद्रियविक्षेपाद्वाव्युत्थानंभवेत् तदुभयंतस्यनास्ति यतोध्वस्तोमायागुणानामुदर्कउत्तरफलं वासनायस्यसः निरुद्धानिकरणानिचक्षुरादीनिआशयोमनश्चयस्यसः अतएवनिर्वर्त्तितःअखिलआहारोभोग्यमिंद्रियैर्विषयाहरणंवा येनसः स्थाणुरिवनिश्चलआस्ते तथाभूतमप्यानेतुमुद्यतंप्रत्याह तस्येति अंतरायोविघ्नः मैवाभूरित्यडागमश्छांदसः ॥५४॥ दर्शनमपिताव त्कुर्यामित्युद्यतंप्रत्याह सवैअद्यतनादन्हः स्वंस्वाधीनंतर्हिदाहार्थंगमिष्यामिनेत्याह तच्चेति ॥५५॥ तर्हिगांधार्यानयनायगमिष्यामिनेत्याह पत्युर्देहेसहोटजेपर्णशालासहितेयोगाग्निनासहगार्हपत्यादिभिर्दह्यमानेतस्यपत्नीबहिःस्थितासतीतंपतिमन्वग्निंवेक्ष्यतिप्रवेक्ष्यति ॥ ५६ ॥

तर्हिविदुरानयनार्थंगंतव्यमेवनेत्याह विदुरस्तुतन्निशम्यदृष्ट्वाभ्रातुःसुगत्याहर्षस्तन्मृत्युनाशोकश्चताभ्यांयुक्तस्तस्मात्स्थानात्तीर्थानिसेवितुं गंतागमिष्यति ॥ ५७ ॥ शुचःशोकान् ॥ ५८ ॥ इतिप्रथमेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ चतुर्दशेत्वरिष्टानिदृष्ट्वाराजा विशंकितः ॥ अशृणोदर्जुनात्कृष्णतिरोधानमितीर्यते ॥ १ ॥ श्रीकृष्णस्यचेतिचकारेणाभिप्रायंचज्ञातुं ॥ १ ॥ कतिचित्सप्त तदाकालातिक्रमेऽपिततःद्वारकातः नायान्नागतः निमित्तानिउत्पातान् कुरूद्वहोयुधिष्ठिरः ॥ २ ॥ रौद्रांघोरां तदेवाह विपर्यस्ताऋतुधर्मायस्मिंस्तस्य वार्त्तां

विदुरस्तुतदाश्चर्यंनिशम्यकुरुनंदन ॥ हर्षशोकयुतस्तस्माद्गंतातीर्थनिषेवकः ॥ ५७ ॥ इत्युक्त्वाथारुहत्स्वर्गंनारदःसहतुंबुरुः ॥ युधिष्ठिरोवचस्तस्यहृदिकृत्वाऽजहाच्छुचः ॥ ५८ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥ सूतउवाच संप्रस्थितेद्वारकायांजिष्णौबंधुदिदृक्षया ॥ ज्ञातुंचपुण्यश्लोकस्यकृष्णस्यचविचेष्टितं ॥ १ ॥ व्यतीताःकतिचिन्मासास्तदानायात्ततोर्जुनः ॥ ददर्श घोररूपाणिनिमित्तानिकुरूद्वहः ॥ २ ॥ कालस्यचगतिंरौद्रांविपर्यस्तर्तुधर्मणः ॥ पापीयसींनृणांवार्त्तां क्रोधलोभानृतात्मनां ॥ ३ ॥ जिह्मप्रायंव्यवहृतंशाठ्यमिश्रंचसौहृदम् ॥ पितृमातृसुहृद्भ्रातृदंपतीनांच कल्कनं ॥ ४ ॥ निमित्तान्यत्यरिष्टानिकालेत्वनुगतेनृणां ॥ लोभाद्यधर्मप्रकृतिंदृष्ट्वोवाचानुजंनृपः ॥ ५ ॥ युधिष्ठिरउवाच संप्रेषितोद्वारकायांजिष्णुर्बंधुदिदृक्षया ॥ ज्ञातुंचपुण्यश्लोकस्यकृष्णस्यचविचेष्टितं ॥६॥ गताःसप्ताधुनामासाभीमसेनतवानुजः ॥ नायातिकस्यवाहेतोर्नाहंवेदेदमंजसा ॥ ७ ॥ अपिदेवर्षिणादिष्टःसकालोऽयमुपस्थितः ॥ यदात्मनोऽगमाक्रीडंभगवानुत्सिसृक्षति ॥ ८ ॥

जीविकां क्रोधलोभानृतैर्युक्तःआत्मायेषां ॥ ३ ॥ जिह्मप्रायंकपटबहुलं व्यवहृतंव्यवहारं शाठ्यंवंचनंतस्मिन्मिश्रंसौहृदंसख्यं पित्रादीनां स्वप्रतियोगिभिःकल्कनंकलहादि ॥४॥ अत्यरिष्टानिअत्यंतमशुभानिदृष्ट्वा नृणांलोभाद्यधर्मप्रकृतिंचदृष्ट्वा अनुजंभीमं ॥ ५ ॥ ६ ॥ वेतिवितर्ककस्माद्धेतोर्नायातीत्यहंनवेद्मि ॥ ७॥ अपिकिं यदाआत्मनःआक्रीडंक्रीडासाधनमंगंमनुष्यनाट्यमुत्स्रष्टुमिच्छातिसकालःप्राप्तः ॥८॥

अस्माकंसर्वपुरुषार्थत्वेहेतुःश्रीकृष्णःअतस्तद्वियोगंविनाऽनिष्टंनस्यादित्याशयेनाह यस्मात्श्रीकृष्णाद्धेतोः एतच्चोपरिष्टादर्जुनःस्पष्टीकरि
ष्यति लोकाश्रयज्ञकरणानुरूपायस्यानुग्रहात् ॥ ९ ॥ अदूरात्संनिहितं नोऽस्माकं आशंसतःउत्पातान् ॥ १० ॥ दैहिकानाह ऊर्वि
तिऊर्वादयोवामाःस्फुरंति वेपथुःकंपश्चहृदयेवर्त्तते एतेमह्यमारात्संनिहितंविप्रियंदास्यंति ॥ ११ ॥ भौमानाह सार्द्धैस्त्रिभिः शिवाक्रो
ष्ट्रीआदित्यमभिरौतिउद्यत्सूर्याभिमुखंक्रोशति अनलाननाअग्निंमुखेनवमंती अंगहेभीम मामभिलक्ष्यसारमेयःश्वाऽभिरौतिप्लुतंभषति अ
भीरुवत्निःशंकम् ॥ १२ ॥ शस्ताःगवादयोमांसव्यंवामंकुर्वंति अपरेगर्दभाद्याःप्रदक्षिणंकुर्वंति वाहान्अश्वान् ॥ १३ ॥ अयंकपो

यस्मान्नःसंपदोराज्यंदाराःप्राणाःकुलंप्रजाः ॥ आसन्सपत्नविजयोलोकाश्चयदनुग्रहात् ॥ ९ ॥ पश्यो
त्पातान्नरव्याघ्रदिव्यान्भौमान्सदैहिकान् ॥ दारुणान्शंसतोऽदूराद्भयंनोबुद्धिमोहनं ॥ १० ॥ ऊर्वक्षि
बाहवोमह्यंस्फुरंत्यंगपुनःपुनः ॥ वेपथुश्चापिहृदयेआराद्दास्यंतिविप्रियं ॥ ११ ॥ शिवैषोद्यंतमादित्यम
भिरौत्यनलानना ॥ मामंगसारमेयोऽयमभिरौतिह्यभीरुवत् ॥ १२ ॥ शस्ताःकुर्वंतिमांसव्यंदक्षिणं
पशवोऽपरे ॥ वाहांश्चपुरुषव्याघ्रलक्षयेरुदतोमम ॥ १३ ॥ मृत्युदूतःकपोतोऽयमुलूकःकंपयन्मनः ॥ प्रत्यु
लूकश्चकुह्वानैरनिद्रौशून्यमिच्छतः ॥ १४ ॥ धूम्रादिशःपरिधयःकंपतेभूःसहाद्रिभिः ॥ निर्घातश्चमहाना
सीत्साकंचस्तनयित्नुभिः ॥ १५ ॥ वायुर्वातिखरस्पर्शोरजसाविसृजंस्तमः ॥ असृग्वर्षंतिजलदाबीभत्समि
वसर्वतः ॥ १६ ॥ सूर्यंहतप्रभंपश्यग्रहमर्दंमिथोदिवि ॥ ससंकुलैर्भूतगणैर्ज्वलितेइवरोदसी ॥ १७ ॥ न
द्योनदाश्चक्षुभिताःसरांसिचमनांसिच ॥ नज्वलत्यग्निराज्येनकालोयंकिंविधास्यति ॥ १८ ॥

तोमृत्युदूतोमृत्युसूचकः प्रत्युलूकस्तत्प्रतिपक्षोघूकः काकोवा कुह्वानैःकुत्सितशब्दैर्विश्वंशून्यामिच्छतः ॥ १४ ॥ धूम्राधूसरादिशःप
रिधयोऽग्निमिवलोकमावृण्वंति दिव्यानाह सार्द्धाभ्यां निर्घातोनिरभ्रवज्रपातः स्तनयित्नवोऽत्रगर्जितानितैःसह ॥ १५ ॥ तमःविशेषे
णसृजन् असृक्रक्तम् ॥ १६ ॥ ग्रहाणांमर्दंयुद्धम् भूतारुद्रानुचरास्तेषांगणैःसंकुलैर्व्यामिश्रैःप्राणिभिःसहितैः रोदसीद्यावापृथिव्यौज्वालि
तेप्रदीप्तेइवचपश्येति ॥ १७ ॥ पुनर्भौमानाह नद्यइतिसार्द्धैस्त्रिभिः प्राणिनांमनांसिच ॥ १८ ॥ ॥ ॥

दुह्यंतीतिकर्मकर्त्तर्यार्षं नप्रस्नुवंतीत्यर्थः ॥ १९ ॥ दैवतानिप्रतिमाः अघंदुःखं ॥ २० ॥ एतैःकृत्वा नविद्यतेअन्येषुपुरुषेषुश्रीर्विज्त्रांकुशा दिशोभायेषांतैर्भगवतःपदैर्हीनाभूरित्यहंमन्ये ॥ २१ ॥ तस्यराज्ञः इतिएवंदृष्टान्यरिष्टानियेनतेनचेतसाचिंतयतःसतः ॥ २२ ॥ अय थापूर्वंनिपतितं तदेवाह आतुरमित्यादि अपांबिंदूनश्रूणिनेत्राभ्यांविसृजंतमित्यर्थः ॥ २३ ॥ उद्विग्नंकंपितंहृदयंयस्यसः विच्छायंविग तकांतिं ॥ २४ ॥ स्वजनाःबांधवाः ॥ २५ ॥ किंवक्ष्यतीतिशंकयाव्यवहितक्रमेणपृच्छाति शूरइत्यादिना मारिषःमान्योमातामहः आ

नपिबंतिस्तनंवत्सानदुह्यंतिचमातरः ॥ रुदंत्यश्रुमुखागावोनहृष्यंत्यृषभाव्रजे ॥ १९ ॥ दैवतानिरुदंती वस्विद्यंतिह्युच्चलंतिच ॥ इमेजनपदाग्रामाःपुरोद्यानाकराश्रमाः ॥ भ्रष्टश्रियोनिरानंदाःकिमघंदर्शयंति नः ॥ २० ॥ मन्यएतैर्महोत्पातैर्नूनंभगवतःपदैः ॥ अनन्यपुरुषश्रीभिर्हीनाभूर्हतसौभगा ॥ २१ ॥ इति चिंतयतस्तस्यदृष्टारिष्टेनचेतसा ॥ राज्ञःप्रत्यागमद्ब्रह्मन्यदुपुर्याःकपिध्वजः ॥ २२ ॥ तंपादयोर्निपतितम यथापूर्वमातुरं ॥ अधोवदनमब्बिंदून्मुंचंतंनयनाब्जयोः ॥ २३ ॥ विलोक्योद्विग्नहृदयोविच्छायमनुजंनृपः ॥ पृच्छतिस्मसुहृन्मध्येसंस्मरन्नारदेरितं ॥ २४ ॥ युधिष्ठिरउवाच कच्चिदानर्त्तपुर्यांनःस्वजनाःसुखमास ते ॥ मधुभोजदशार्हार्हसात्वतांधकवृष्णयः ॥ २५ ॥ शूरोमातामहःकच्चित्स्वस्त्यास्तेवाऽथमारिषः ॥ मातुलःसानुजःकच्चित्कुशल्यानकदुंदुभिः ॥ २६ ॥ सप्तस्वसारस्तत्पत्न्योमातुलान्यःसहात्मजाः ॥ आ सतेसस्नुषाःक्षेमंदेवकीप्रमुखाःस्वयं ॥ २७ ॥ कच्चिद्राजाहुकोजीवत्यसत्पुत्रोऽस्यचानुजः ॥ हृदीकःससु तोऽक्रूरोजयंतगदसारणाः ॥ २८ ॥ आसतेकुशलंकच्चिद्येचशत्रुजिदादयः ॥ कच्चिदास्तेसुखंरामोभग वान्सात्वतांप्रभुः ॥ २९ ॥ प्रद्युम्नःसर्ववृष्णीनांसुखमास्तेमहारथः ॥ गंभीररयोऽनिरुद्धोवर्धतेभगवानु त ॥ ३० ॥ सुषेणश्चारुदेष्णश्चसांबोजांबवतीसुतः ॥ अन्येचकार्ष्णिप्रवराःसपुत्राऋषभादयः ॥ ३१ ॥

नकदुंदुभिर्वसुदेवः ॥ २६ ॥ स्वसारःपरस्परं वसुदेवक्षेमेणतासामपिक्षेमंपृष्टमेवतथापिपृथक्पृच्छति स्वयमिति ॥ २७ ॥ आहुकउ ग्रसेनः असत्पुत्रोयस्य अतएवजीवनमात्रमेवपृष्टं अनुजश्चदेवकः हृदीकसुतःकृतवर्मा जयंतादयःकृष्णभ्रातरः ॥ २८ ॥ २९ ॥ सर्व वृष्णीनांमध्येमहारथः गंभीररयःयुद्धेमहावेगः वर्धते मोदतइत्यर्थः ॥ ३० ॥ कृष्णस्यापत्यानिकार्ष्णयस्तेषुप्रवराः ॥ ३१ ॥

सुनंदनंदौशीर्षण्यौमुख्यौयेषांते ॥ ३२ ॥ ३३ ॥ भगवतिसुखमास्तइतिप्रश्नस्यानौचित्यमाशंक्याह पुरइत्यादि ॥ ३४ ॥ भगवतोऽत्रावस्थानेहिलोकानांमंगलंनान्यथेत्याशयेनाह चतुर्भिः मंगलायशुभाय क्षेमायलब्धपालनाय भवायउद्भवाय अनंतसखोबलभद्रसहायः ॥ ३५ ॥ अर्चिताःसर्वैपूजिताःपरमानंदंयथाभवतितथा महापौरुषिकाःवैकुंठनाथानुचराः ॥ ३६ ॥ यस्यपादशुश्रूषणमेवमुख्यंतपआदिभ्यःश्रेष्ठंयत्कर्मतेन सत्यभामादयः संख्येयुद्धेश्रीकृष्णबलेननिर्जित्य तदाशिषःदेवभोग्यान्पारिजातादीन् वज्रायुधस्यवल्लभाशचीतस्याउचिताः ॥ ३७ ॥ यद्बाहुदंडप्रभावोपजीविनःसुधर्मांमंघ्रिभिरधिक्रामंतिसगोविंदःसुखमास्तेइतिगतपंचमश्लोकेनान्वयः ॥

तथैवानुचराःशौरेःश्रुतदेवोद्धवादयः ॥ सुनंदनंदशीर्षण्यायेचान्येसात्वतर्षभाः ॥ ३२ ॥ अपिस्वस्त्यासतेसर्वेरामकृष्णभुजाश्रयाः ॥ अपिस्मरंतिकुशलमस्माकंबद्धसौहृदाः ॥ ३३ ॥ भगवानपिगोविंदोब्रह्मण्योभक्तवत्सलः ॥ कच्चित्पुरेसुधर्मायांसुखमास्तेसुहृद्वृतः ॥ ३४ ॥ मंगलायचलोकानांक्षेमायचभवायच ॥ आस्तेयदुकुलांभोधावाद्योऽनंतसखःपुमान् ॥ ३५ ॥ यद्बाहुदंडगुप्तायांस्वपुर्यांयदवोऽर्चिताः ॥ क्रीडंतिपरमानंदंमहापौरुषिकाइव ॥ ३६ ॥ यत्पादशुश्रूषणमुख्यकर्मणासत्यादयोद्व्यष्टसहस्त्रयोषितः ॥ निर्जित्यसंख्येत्रिदशांस्तदाशिषोहरंतिवज्रायुधवल्लभोचिताः ॥ ३७ ॥ यद्बाहुदंडाभ्युदयानुजीविनोयदुप्रवीराह्यकुतोभयामुहुः ॥ अधिक्रमंत्यंघ्रिभिराहृतांबलात्सभांसुधर्मांसुरसत्तमोचितां ॥ ३८ ॥ कच्चित्तेऽनामयंतातभ्रष्टतेजाविभासिमे ॥ अलब्धमानोऽवज्ञातःकिंवातातचिरोषितः ॥ ३९ ॥ कच्चिन्नाभिहतोऽभावैःशब्दादिभिरमंगलैः ॥ नदत्तमुक्तमर्थिभ्यआशयायत्प्रातिश्रुतं ॥ ४० ॥ कच्चित्त्वंब्राह्मणंबालंगांवृद्धंरोगिणंस्त्रियं ॥ शरणोपसृतंसत्वंनात्याक्षीःशरणप्रदः ॥ ४१ ॥ ॥ ॥

॥ ३८ ॥ इदानींतस्यैवकुशलंपृच्छति कच्चिदितिषड्भिः अनामयमारोग्यम् नलब्धोमानोयेनबंधुभ्यःसकाशात् किंवातैःप्रत्युतअवज्ञातस्तिरस्कृतः यतश्चिरोषितोबहुकालंतत्रस्थितः ॥ ३९ ॥ अभावैरितिच्छेदः प्रेमशून्यः अमंगलैःपरुषैःशब्दादिभिर्नाभिहतोनताडितोसिकिम् यद्वा अर्थिभ्यःकिमपिदास्यामीतिनोक्तंकिम् यद्वा आशयासहयथाआशाभवतितथादास्यामीतिप्रतिश्रुतंसत् नदत्तंकिं ॥ ४० ॥ अन्यद्वाशरणागतंसत्वंप्राणिमात्रंनत्यक्तवानसिकिम् यतस्त्वंपूर्वंशरणप्रदःआश्रयप्रदः ॥ ४१ ॥

अगम्या।मितिच्छेदः ननिंदितांस्त्रियमगमः किंनगतवानसि असत्कृतांमलिनवस्त्रादिनानागमःकिम् नोत्तमैःअनुत्तमैःसमैरित्यर्थः अस
मैरधमैर्वाकिंनपराजितोसीत्यर्थः ॥ ४२ ॥ संभोजनार्हान्वृद्धान्बालकांश्चकिंस्वित्पर्यभुङ्थाःत्यक्त्वाभुक्तवानसिकिम् अक्षमंकर्त्तुमयो
ग्यंयत्तन्नकृतवानसिकिम् ॥ ४३ ॥ नित्यंसदाप्रेष्ठतमेनहृदयेनांतरंगेणस्वबंधुनाश्रीकृष्णेनरहितःशून्योऽस्मीतिमन्यसे अन्यथातेरुक्मनः
पीडानघटेत ॥ ४४ ॥ इतिप्रथमेठीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ कलिप्रवेशमालक्ष्यधुरंन्यस्यपरीक्षिति ॥ आरुरोहनृपः
स्वर्गमितिपंचदशेऽब्रवीत् ॥ १ ॥ कृष्णोऽर्जुनः आविकल्पितइतिच्छेदः नानाशंकास्पदंरूपमालक्ष्यविकल्पितइत्यर्थः प्रतिभाषितुंना

कच्चित्त्वंनागमोऽगम्यांगम्यांवाऽसत्कृतांस्त्रियम् ॥ पराजितोवाथभवान्नोत्तमैर्नासमैःपथि ॥४२॥ अपिस्वि
त्पर्यभुंक्थास्त्वंसंभोज्यान्वृद्धबालकान् ॥ जुगुप्सितंकर्मकिंचित्कृतवान्नयदक्षमम् ॥ ४३ ॥ कच्चित्प्रेष्ठतमेना
थहृदयेनात्मबंधुना॥शून्योऽस्मिरहितोनित्यंमन्यसेतेऽन्यथानरुक् ॥४४॥ इतिश्रीभागवतेमहापुराणेप्रथ
मस्कंधेयुधिष्ठिरवितर्कोनामचतुर्दशोऽध्यायः॥१४॥ ॥ ॥ सूतउवाच एवंकृष्णसखःकृष्णोभ्रात्रारा
ज्ञाविकल्पितः॥ नानाशंकास्पदंरूपंकृष्णविश्लेषकर्शितः॥१॥शोकेनशुष्यद्वदनहृत्सरोजोहतप्रभः॥विभुं
तमेवानुध्यायन्नाशक्नोत्प्रतिभाषितुं ॥२॥ कृच्छ्रेणसंस्तभ्यशुचःपाणिनामृज्यनेत्रयोः ॥ परोक्षेणसमुन्नद्धप्र
णयौत्कंठ्यकातरः॥३॥ सख्यंमैत्रींसौहृदंचसारथ्यादिषुसंस्मरन् ॥ नृपमग्रजमित्याहबाष्पगद्गदयागिरा
॥४॥ अर्जुनउवाच वंचितोहंमहाराजहरिणाबंधुरूपिणा ॥ येनमेऽपहृतंतेजोदेवविस्मापनंमहत् ॥ ५ ॥

शक्नोदित्युत्तरेणान्वयः तत्रहेतवः कृष्णविश्लेषेणकर्शितःकृशःकृतः ॥ १ ॥ शोकेनहेतुना वदनंचहृच्चतेएवसरोजे शुष्यतीवदनसरोजे
यस्यसः हताप्रभातेजोयस्यसः ॥ २ ॥ शुचःशोकाश्रूणियान्युद्गच्छंतितानिनेत्रयोरेवसंस्तभ्यगलितानिचपाणिनाआमृज्यपरोक्षेणदर्श
नागोचरेणश्रीकृष्णेनहेतुनासमुन्नद्धमधिकंयत्प्रेमौत्कंठ्यंतेनकातरोव्याकुलः नृपमित्याहेत्युत्तरेणान्वयः ॥ ३ ॥ सख्यंहितैषिताम् मैत्रीमु
पकारिताम् सौहृदंसंबंधितांच बाष्पेणकंठावरोधात्गद्गदया ॥ ४ ॥ येनमांवंचयता देवान्विस्मापयतियत् ॥ ५ ॥

यस्यक्षणवियोगेनेत्यादियच्छब्दानांतेनाहमद्यमुषितइतिसप्तमश्लोकस्थेनतच्छब्देनसंबंधः प्रियस्याप्यप्रियत्वेदृष्टांतः उक्थेनप्राणेन ए
षपित्रादिः ॥ ६ ॥ श्रीकृष्णोपकारानुनुस्मरति यत्संश्रयादितिदशभिः यस्यसंश्रयाद्बलात् स्मरेणकामेनदुर्मदानामतिमत्तानांतेजःप्रभा
वोहृतं धनुर्ग्रहणेनैव पश्चात्तद्धनुःसज्जीकृतंच तेनचमत्स्योयंत्रोपरिभ्रमन्विद्धः ततस्तान्विजित्यद्रौपदीप्राप्ताच ॥ ७ ॥ उइतिविस्मये
खांडवमिंद्रस्यवनंअदांदत्तवानस्मि खांडवदाहेरक्षितेनमयेनकृताचसभालब्धा अद्भुतशिल्परूपामायायस्यांसा तेअध्वरेयागेराजसूये
॥ ८ ॥ अनंतरश्लोकोविगीतस्तथापिव्याख्यायते नृपशिरःस्वांघ्रियस्यतंजरासंधंतवानुजोभीमोमखार्थमहन्हतवान् तन्निर्जयंविनाराज

यस्यक्षणवियोगेनलोकोह्यप्रियदर्शनः ॥ उक्थेनरहितोह्येषमृतकःप्रोच्यतेयथा ॥६॥ यत्संश्रयाद्द्रुपदगे
हमुपागतानांराज्ञांस्वयंवरमुखेस्मरदुर्मदानाम् ॥ तेजोहृतंखलुमयाऽभिहतश्चमत्स्यःसज्जीकृतेनधनुषाऽ
धिगताचकृष्णा ॥ ७॥ यत्सन्निधावहमुखांडवमग्नयेदामिंद्रंचसामरगणंतरसाविजित्य ॥ लब्धासभामय
कृताद्भुतशिल्पमायादिग्भ्योऽहरन्नृपतयोबलिमध्वरेते ॥ ८ ॥ यत्तेजसानृपशिरोंऽघ्रिमहन्मखार्थेआर्यो
ऽनुजस्तवगजायुतसत्ववीर्यः ॥ तेनाहृताःप्रमथनाथमखायभूपायन्मोचितास्तदनयन्बलिमध्वरेते ॥९॥
पत्न्यास्तवाधिमखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरंकितवैःसभायाम् ॥ स्पृष्टंविकीर्यपदयोःपतिताश्रु
मुख्यायस्तत्स्त्रियोऽकृतहतेशविमुक्तकेशाः ॥ १० ॥ ॥ ॥ ॥

सूयमखानुपपत्तेः गजायुतस्येवसत्वमुत्साहशक्तिर्वीर्यंबलंचयस्यसः तंहत्वा प्रमथनाथोमहाभैरवस्तस्यमखाययेराजानस्तेनाहृतास्तेचय
द्यस्मान्मोचितास्तत्तस्मात्तेऽध्वरेबलिमानीतवंतः ॥ ९ ॥ यैःकितवैर्दुःशासनादिभिस्तवपत्न्याःकबरंविकीर्यउन्मुच्यस्पृष्टंतेषांस्त्रियोहते
शाअतएववैधव्याद्विमुक्तकेशाअकृतचकार कथंभूतंकबरम् अधिमखंराजसूयमधिकृत्यक्लृप्तोरचितोयोमहाभिषेकस्तेनश्लाघ्यतमंचारुरम्यम्
यत्स्मरणात्तदानीमेवप्राप्तस्यश्रीकृष्णस्यनमनेपादयोःपतितान्यश्रूणिमुखात्यस्याःपत्न्याः पदशब्दसापेक्षस्यापिपतितशब्दस्याश्रुपदेन
समासोनित्यसापेक्षितत्वात् ॥ १० ॥ ॥ ॥ ॥ ॥

शिष्याणामयुतस्याग्रेतत्पंक्तौभुंक्तेयस्तस्माद्दुर्वाससोहेतोः अरिणारचितंयद्दुरंतंकृच्छ्रंशापलक्षणंतस्मात्सकाशान्नोऽस्मान्वनेएत्यजुगोपकिंकृ
त्वा शाकमेवान्नंतस्मिन्नेवपात्रेऽवशिष्टमुपयुज्यजग्ध्वा यतउपयोगात्सलिलेविनिमग्नोमुनीनांसंघः त्रिलोकींतृप्तामंमंस्त एवंहिभारतेक
था कदाचिद्दुर्वाससोदुर्योधनेनातिथ्यंकृतम् तेनचपरितुष्टेनवरंवृणीष्वेत्युक्तेदुर्वाससःशापात्पांडवानश्येयुरितिमनसिविधायदुर्योधनेनोक्तं
युधिष्ठिरोऽस्मत्कुलमुख्योऽतस्तस्यापिभवतैवमेवशिष्यायुतसहितेनातिथिनाभवितव्यंकिंतुद्रौपदीयथाक्षुधानसीदेत्तथातस्यांभुक्तवत्यांतद्गृहं
गंतव्यमिति ततश्चतथैवदुर्वाससिप्राप्तेपरमादरेणयुधिष्ठिरेणमाध्यान्हिकंकृत्वाआगम्यतामितिविज्ञापितोमुनिसंघोऽघमर्षणायजलेनिमम
ज्ज तत्रचिंतातुरयाद्रौपद्यास्मृतमात्रःश्रीकृष्णस्तत्क्षणमेवभक्तवात्सल्यतयाचागतः तयाचावेदितेवृत्तांतेभगवतोक्तंहेद्रौपदि अहंचबुभुक्षि
तोऽस्मिप्रथमंमांभोजयेति तयाचातिलज्जयोक्तम् स्वामिन्मद्भोजनपर्यंतमक्षयमप्यन्नंसूर्यदत्तस्थाल्यांमयाचसर्वान्संभोज्यभुक्तमतोनास्त्य

**योनोजुगोपवनमेत्यदुरंतकृच्छ्राद्दुर्वाससोऽरिविहितादयुताग्रभुग्यः ॥ शाकान्नशिष्टमुपयुज्ययतस्त्रिलोकीं**
**तृप्तामसंस्तसलिलेविनिमग्नसंघः ॥ ११ ॥ यत्तेजसाथभगवान्युधिशूलपाणिर्विस्मापितःसगिरिजोऽस्त्रमदा**
**न्निजंमे ॥ अन्येपिचाहममुनैवकलेवरेणप्राप्तोमहेंद्रभवनेमहदासनार्धम् ॥ १२ ॥ तत्रैवमेविहरतोभुजदंड**
**युग्मंगांडीवलक्षणमरातिवधायदेवाः ॥ सेंद्राःश्रितायदनुभावितमाजमीढतेनाहमद्यमुषितःपुरुषेणभूम्ना**
**॥ १३ ॥ यद्बांधवःकुरुबलाब्धिमनंतपारमेकोरथेनततरेऽहमतीर्यसत्वम् ॥ प्रत्याहृतंबहुधनंचमयापरेषांतेज**
**स्पदंमणिमयंचहृतंशिरोभ्यः ॥ १४ ॥**

न्नमिति तथाऽप्यतिनिर्बंधेनस्थालीमानाय्यतत्कंठलग्नं
किंचिच्छाकान्नंप्राश्योक्तमनेनविश्वात्माभगवान्प्रीयताम् अथभोक्तुंमुनिसंघमाह्वयेति सचतावतातितृप्तोवृथापाकभयेनपलायितइति ॥
॥ ११ ॥ गिरिजासहितोविस्मापितःसन्निजंपाशुपतमस्त्रम् अन्येपिलोकपालानिजान्यस्त्राणिअदुः अन्यदप्याश्चर्यमाह अमुनेति मह
तइंद्रस्यासनार्धम् ॥ १२ ॥ तत्रैवस्वर्गेक्रीडतः गांडीवलक्षणंचिन्हंयस्यतत् अरातयोनिवातकवचादैत्यास्तेषांवधार्थमाश्रितवंतःयेनानुभा
वितंप्रभावयुक्तंकृतम् हेआजमीढयुधिष्ठिर तेनमुषितःवंचितोऽस्मि कथंभूतेन भूम्नानिजमाहिमावस्थानेन ॥ १३ ॥ यद्बांधवइत्यादिश्लो
कत्रयस्यापितेनमुषितोऽहमितिपूर्वेणैवसंबंधः श्रीकृष्णबांधवएवाहंकौरवसैन्याब्धिंनास्त्यंतोगांभीर्येणपारंचदेशतोयस्यतंततरेतीर्णवान्
उत्तरगोग्रहेअतीर्याणिदुस्तराणिसत्वानितिमिंगिलादीनिर्भीष्मादिरूपाणियस्मिन् परैर्नीतंगोधनंप्रत्याहृतम् परेषांचशिरोभ्यःसकाशात्ते
जस्पदंप्रभावस्यास्पदमुष्णीषरूपंमाणिमयंमुकुटरत्नरूपंचबहुधनंतान्मोहनास्त्रेणमोहयित्वाहृतं यद्बांधवेनमया ॥ १४ ॥

अदभ्राअनल्पायेराजन्यवर्यास्तेषांरथमंडलैर्मंडितासुभीष्मादीनां चमूषुसारथिरूपेणममा ग्रेचर:सन्हेविभोतेषांरथयूथपानामायु रादीनियो दृशादृष्ट्यैवआच्छैत्हृतवान् मनांसीत्युत्साहादिशक्तिम् सहोबलं ओज:शस्त्रादिकौशलम् ॥ १५ ॥ यस्यदो:षुभुजेषुमामांप्रणिहितं स्थापितंतेनैवगुर्वादिभिर्निरूपित ानिप्रयुक्तान्यस्त्राणिनस्पृशंतिस्म गुरुर्द्रोण: त्रिगर्त्तदेशाधिपति:सुशर्मा शल:शल्य: सैंधव:सिंधुदेशा धिपतिर्जयद्रथ: बाल्हिक:शंतनोर्भ्राता अमोघोमहिमायेषांतथाभूतान्यापि पाठांतरेऽपिसएवार्थ: प्रतीकाराकरणेप्यस्पर्शेदृष्टांत: नृहरि दासंप्रल्हादमिवेति ॥ १६ ॥ स्वापराधमनुस्मरन्संतप्यमानआह सौत्येसारथ्येकुमतिनामेमयासवृत: कुमतित्वमेवाह आत्मदइत्यादि नाअभवायमोक्षाय भव्या:श्रेष्ठा: श्रांतावाहाअश्वायस्यतंमां जयद्रथवधेहिजलपानांविनाअश्वा:श्रांतास्ततोरथादवतीर्यबाणैर्भुवंभित्वा

**योभीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमंडलमंडितासु ॥ अग्रेचरोममविभोरथयूथपानामायुर्मनांसिचदृशासहओजआर्च्छत् ॥१५॥ यद्दो:षुमाप्रणिहितंगुरुभीष्मकर्णद्रौणित्रिगर्त्तशलसैंधवबाल्हिकाद्यै:॥ अस्त्राण्यमोघमहिमानिनिरूपितानिनोपस्पृशुर्नृहरिदासमिवासुराणि ॥ १६ ॥ सौत्येवृत:कुमतिनात्मदईश्वरोमेयत्पादपद्ममभवायभजंतिभव्या: ॥ मांश्रांतवाहमरयोरथिनोभुविष्ठंनप्राहरन्यदनुभावनिरस्तचित्ता: ॥ १७ ॥ नर्माण्युदाररुचिरस्मितशोभितानिहेपार्थहेऽर्जुनसखेकुरुनंदनेति ॥ संजल्पितानिनरदेवहृदिस्पृशानिस्मर्त्तुर्लुठंतिहृदयंममामाधवस्य ॥१८॥ शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्यऋतवानितिविप्रलब्ध: ॥ सख्यु:सखेवपितृवत्तनयस्यसर्वंसेहेमहान्महितयाकुमतेरघंमे ॥ १९ ॥ ॥**

जलंसंपादितम् तदायस्यानुभावेनानिरस्ताचित्ताअरयोमांनप्रहृतवंत:ससौत्येवृतइतिकुमतित्वम् ॥१७॥ हेनरदेव उदारंगंभीरंरुचिरंचयत् स्मितंतेनशोभितानिनर्माणिपरिहासवाक्यानितथाकार्यप्रस्तावेषुहेपार्थेत्यादीनिमधुराक्षराणिसंजल्पितानिचहृदिस्पृशानि मनोज्ञानिमाध वस्ययान्येतानितानीदानींस्मर्तुर्ममहृदयंलुठंतिलोठयंतिक्षोभयंति णिजभावआर्ष: ॥ १८ ॥ विकत्थनंस्वगुणश्लाघनम् शय्यादिषुऐक्यात्अव्यतिरेकाद्धेतो: कदाचिद्व्यभिचारंदृष्ट्वाहेवयस्यऋतवान्सत्ययुक्तस्त्वमितिवक्रोक्त्याविप्रलब्धास्तिरस्कृतोऽपि ऋभुमानितिपाठे ऋभवोदेवा:सेवका:संतियस्यस: असौमहानापिमयावयस्यइतिमत्वा विप्रलब्ध: तिरस्कृतइत्यर्थ: ऋतमानिनिपाठेवत्त्वाभावआर्ष: मे अघमपराधमसहत महितयामहत्त्वेन एकपदेअतिमहत्त्वेनेत्यर्थ: सख्युरघंसखेव तनयस्याघंपितेव ॥ १९ ॥

त्वयाशंकितंपराजयंचापिप्राप्तोऽहमित्याह तेनसख्यारहितः अतोहृदयेनअस्वहृदयेनवाशून्यः अंगहेराजन् उरुक्रमस्यपरिग्रहंषोडशसह
स्रस्त्रीलक्षणं असद्भिर्नीचैः अबलायोषेव ॥ २० ॥ श्रीकृष्णवियोगएवात्रहेतुर्नान्यइत्याह तदिति यतःयेभ्यः ईशेनरिक्तंशून्यमसत्का
र्यक्षमं सन्मंत्रविधानैरपिभस्मनिहुतमिव अतिप्रीतादपिकुहकान्मायाविनःसकाशाद्राद्धंलब्धंयथाअसत् सम्यकर्षणादिनाप्यूषरभूमौउ
प्तंबीजमिव ॥ २१ ॥ सुहृत्पुरेत्वयापृष्टानांनःसुहृदांमध्येचत्वारः पंचवावशेषिताः तत्रहेतुः विप्रशापेत्यादि वारुणीमन्नमयीम् अजा
नतामिवान्योन्यमेरकामुष्टिभिर्निघ्नतां ॥ २२ ॥ २३ ॥ अवशेषिताइत्यनेनोक्तंहेतुकर्त्तारमाहत्रिभिः प्रायेणेति भावयंतिपालयंति ॥२४॥

सोऽहंनृपेंद्ररहितःपुरुषोत्तमेनसख्याप्रियेणसुहृदाहृदयेनशून्यः॥अध्वन्युरुक्रमपरिग्रहमंगरक्षन्गोपैर
सद्भिरबलेवविनिर्जितोऽस्मि॥२०॥तद्वैधनुस्तइषवःसरथोहयास्तेसोऽहंरथीनृपतयोयतआनमंति ॥ स
वैक्षणेनतदभूदसदीशरिक्तंभस्मन्हुतंकुहकराद्धमिवोप्तमूष्याम् ॥ २१ ॥ राजंस्त्वयाऽभिपृष्टानांसुहृदांनः
सुहृत्पुरे ॥ विप्रशापविमूढानांनिघ्नतांमुष्टिभिर्मिथः ॥ २२ ॥ वारुणींमदिरांपीत्वामदोन्मथितचेतसाम् ॥
अजानतामिवान्योन्यंचतुःपंचावशेषिताः ॥ २३ ॥ प्रायेणैतद्भगवतईश्वरस्यविचेष्टितं ॥ मिथोनिघ्नंतिभू
तानिभावयंतिचयन्मिथः॥२४॥जलौकसांजलेयद्वन्महांतोऽदंत्यणीयसः ॥ दुर्बलान्बलिनोराजन्महांतोब
लिनोमिथः ॥२५॥ एवंबलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः ॥ यदून्यदुभिरन्योन्यंभूभारान्संजहारह ॥२६॥
देशकालार्थयुक्तानिहृत्तापोपशमानिच ॥ हरंतिस्मरतश्चित्तंगोविंदाभिहितानिमे ॥ २७ ॥ एवंचिंतयतो
जिष्णोःकृष्णपादसरोरुहम् ॥ सौहार्देनातिगाढेनशांतासीद्विमलामतिः ॥२८॥ वासुदेवांघ्र्यनुध्यानप
रिबृंहितरंहसा ॥ भक्त्यानिर्मथिताशेषकषायधिषणोऽर्जुनः ॥ २९ ॥ ॥ ॥

जलौकसांमत्स्यादीनांमध्येमहांतःस्थूलाः अणीयसःसूक्ष्मान्यथाभक्षयंति ॥२५॥ एवंबलिष्ठैर्महद्भिःपांडवैर्दुर्योधनजरासंधादीन्निहत्ययदू
न्यदुभिरन्योन्यंनिहत्यभगवान्भुवोभारभूतान्संहृतवान् ॥ २६ ॥ अतःपरंवक्तुंनशक्नोमीतिसूचयन्नाह देशकालोचितार्थयुक्तानिमनःपी
डोपशमकराणिचगोविंदस्यवचनानिस्मरतोमेममचित्तंहरंतिआकर्षंति ॥ २७ ॥ एवमितिसूतोक्तिः अतिदृढेनस्नेहेनचिंतयतोमतिःशांता
विशोकाविमलाविरक्ताचासीत् ॥ २८ ॥ मतिवैमल्यफलमाह वासुदेवांघ्र्यनुध्यानेनपरिबृंहितंरंहोवेगोयस्यास्तयानिर्मथिताउन्मूलिता
अशेषाःकषायाःकामादयोयस्याःसाधिषणाबुद्धिर्यस्यसः ज्ञानंपुनरध्यगमदित्युत्तरेणान्वयः ॥ २९ ॥

कालेनकर्मभिस्तमसाभोगाभिनिवेशेनचरुद्धमावृतंसत् ॥ ३० ॥ ज्ञानफलमाह विशोकइति एतदेवशोकहेत्वभावेनोपपादयति शोकस्यहि हेतुर्द्वैतभ्रमस्तस्यदेहस्तस्यलिंगंतस्यगुणास्तेषामविद्या तत्रब्रह्मसंपत्त्याब्रह्माहमितिज्ञानेनलीनाप्रकृतिरविद्यायस्मिंस्तत्त्नैर्गुण्यंभवतिनतु सुषुप्तिप्रलययोरिवाविद्याशेषम् तस्मान्नैर्गुण्याद्गुणकार्यलिंगनाशःअलिंगत्वाच्च असंभवःसम्यग्भोगायभवतिपुनःपुनरितिसंभवःस्थूलदे हस्तद्रहितः ततश्चतत्परिच्छेदाभावात्संछिन्नोद्वैतलक्षणःसंशयोभ्रमोयस्यसविशोकोजातइति ॥ ३१ ॥ भगवतोमार्गमालक्ष्य यदुकुलस्य संस्थांनाशंश्रुत्वा नारदोक्तंचानुस्मृत्य स्वःपथायस्वर्गमार्गाय निभृतात्मानिश्चलचित्तः ॥ ३२ ॥ तांदुर्विज्ञेयाम् वक्ष्यतिहि सौदामन्याय थाकाशेयांत्याहित्वाऽभ्रमंडलम् ॥गतिर्नलक्ष्यतेमर्त्यैस्तथाकृष्णस्यदैवतैरिति संसृतेरुपररामजविन्मुक्ताबभूव देहंजहावितिवा ॥ ३३ ॥ तदेव

गीतंभगवताज्ञानंयत्तत्संग्राममूर्धनि ॥ कालकर्मतमोरुद्धंपुनरध्यगमत्प्रभुः ॥ ३० ॥ विशोकोब्रह्मसंप त्त्यासंछिन्नद्वैतसंशयः ॥ लीनप्रकृतिनैर्गुण्यादलिंगत्वादसंभवः ॥ ३१ ॥ निशम्यभगवन्मार्गंसंस्थांयदु कुलस्यच ॥ स्वःपथायमतिंचक्रेनिभृतात्मायुधिष्ठिरः ॥ ३२ ॥ पृथाप्यनुश्रुत्यधनंजयोदितंनाशंयदूनांभग वद्गतिंचतां ॥ एकांतभक्त्याभगवत्यधोक्षजेनिवेशितात्मोपररामसंसृतेः ॥ ३३ ॥ ययाऽहरद्भुवोभारंतांतनुं विजहावजः ॥ कंटकंकंटकेनेवद्वयंचापीशितुःसमं ॥ ३४ ॥ यथामत्स्यादिरूपाणिधत्तेजह्याद्यथानटः ॥ भू भारःक्षपितोयेनजहौतच्चकलेवरं ॥ ३५ ॥ यदामुकुंदोभगवानिमांमहींजहौस्वतन्वाश्रवणीयसत्कथः ॥ तदाहरेवाप्रतिबुद्धचेतसामधर्महेतुःकलिरन्ववर्त्तत ॥ ३६ ॥ ॥ ॥

मुक्तमपियादवेभ्योभगवतोवैलक्षण्यमबुध्वातत्साम्यंवदतोमंदमतीन्प्रतिवैलक्षण्यंस्पष्टयतिद्वाभ्याम् ययायादवरूपयातन्वाभुवोभारंकंट केनकंटकमिवाहरत् यादवतनुर्भूभारतनुश्चेतिद्वयमपीश्वरस्यसंहार्यत्वेनसममेव ॥ ३४ ॥ श्रीकृष्णमूर्त्तेर्विशेषमाह यथेति तान्यपियथाधत्ते जहातिच तदाह यथानटोनिजरूपेणास्थितोरूपांतराणिधत्तेऽतर्धत्तेचतथातदपिकलेवरंजहौ अंतरधादित्यर्थः ॥ ३५ ॥ युधिष्ठिरस्यस्वर्गा रोहप्रसंगायकलिप्रवेशमाह यदेति स्वतन्वाजहौ सतनोरेववैकुंठारोहात् श्रवणार्हासतीकथायस्य तदायद्दहस्तस्मिन्नेव अहरितिलुप्तस प्तम्यंतंपदं अप्रतिबुद्धचेतसामिति विवेकिनांतुनप्रभुरित्युक्तम् अन्ववर्त्ततेति पूर्वमेवांशेनप्रविष्टस्यतेनरूपेणानुवृत्तिरुक्ता ॥ ३६ ॥

बुधोयुधिष्ठिरः तस्यकलेःपरिसर्पणंप्रसरणंविलोक्य कथंभूतं लोभाद्यधर्मंचक्रंयस्मिन् जिह्मंकौटिल्यम् पर्यधात्तदुचितंपरिधानमक
रोत् ॥ ३७ ॥ आत्मनःस्वस्यगुणैःसुसममतिसदृशं तोयंसर्वतःस्थितंसमुद्रोदकमेवनीवीपरिधानविशेषोयस्यास्तस्याभूमेःपतित्वेनाभिषि
क्तवान् ॥ ३८ ॥ वज्रमनिरुद्धस्यपुत्रं निरूप्यकृत्वेत्यर्थः अपिबत्आत्मन्यारोपयामास ईश्वरःसमर्थः ॥ ३९ ॥ संछिन्नान्यशेषाणिबं
धनानिउपाधयोयेन॥४०॥तदेवदर्शयतिद्वाभ्यां वाचमित्युपलक्षणं सर्वेंद्रियाणिमनसिप्रविलापितवानित्यर्थः तच्चमनःप्राणे प्राणाधीनवृ
त्तित्वात् तंचप्राणमितरेअपाने तेनाकर्षणात् अपानव्यापारउत्सर्गस्तत्सहितमपानंमृत्यौतदधिष्ठातृदेवतायां अनेनैववागादिष्वपितत्त

युधिष्ठिरस्तत्परिसर्पणंबुधःपुरेचराष्ट्रेचगृहेतदात्मनि॥विभाव्यलोभानृतजिह्महिंसनाद्यधर्मचक्रंगमनाय
पर्यधात्॥३७॥ स्वराट्पौत्रंविनयिनमात्मनःसुसमंगुणैः॥ तोयनीव्याःपतिंभूमेरभ्यषिंचद्गजाह्वये॥३८॥
मथुरायांतथावज्रंशूरसेनपतिंततः ॥ प्राजापत्यांनिरूप्येष्टिमग्नीनपिबदीश्वरः ॥३९ ॥ विसृज्यतत्रतत्स
र्वंदुकूलवलयादिकम् ॥ निर्ममोनिरहंकारःसंछिन्नाशेषबंधनः ॥ ४० ॥ वाचंजुहावमनसितत्प्राणइतरे
चतम् ॥ मृत्यावपानंसोत्सर्गंतंपंचत्वेह्यजोहवीत् ॥ ४१ ॥ त्रित्वेहुत्वाथपंचत्वंतच्चैकत्वेऽजुहोन्मुनिः ॥ स
र्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥ चीरवासानिराहारोबद्धवाङ्मुक्तमूर्धजः॥दर्शयन्नात्मनो
रूपंजडोन्मत्तपिशाचवत् ॥ ४३ ॥ अनवेक्षमाणोनिरगादशृण्वन्बधिरोयथा ॥ उदीचींप्रविवेशाशांगत
पूर्वांमहात्मभिः ॥ हृदिब्रह्मपरंध्यायन्नावर्त्तेतयतोगतः ॥४४॥ सर्वेतमनुनिर्जग्मुर्भ्रातरःकृतनिश्चयाः ॥
कलिनाऽधर्ममित्रेणदृष्ट्वास्पृष्टाःप्रजाभुवि ॥ ४५ ॥ ॥ ॥ ॥

त्कर्मसाहित्यंज्ञेयं तंमृत्युंपंचत्वेपंचभूतानामैक्येदेहे देहस्यैवमृत्युर्नात्मनइतिभावितवानित्यर्थः अजोहवीदितियङ्लुगंताल्लुङिरूपं॥४१॥
त्रित्वेगुणत्रये तच्चत्रित्वमेकत्वेअविद्यायाम् सर्वसर्वारोपहेतुमविद्यामात्मनिजीवे अजोहवीदितिवक्तव्येअजुहवीदित्यार्षम् एवंशोधितमा
त्मानंब्रह्मणिअव्ययेकूटस्थे नतस्यान्यत्रलयइत्यर्थः ॥ ४२ ॥ तदेवमात्मप्रतिपत्तिमुक्त्वाबाह्यस्थितिमाह चीरवासाइतिद्वाभ्याम् बद्धवाक्
मौनी ॥ ४४॥ अनवेक्षमाणःअनुजादिप्रतीक्षामकुर्वन् आशांदिशम् गतपूर्वांपूर्वंप्रतिष्ठांम् यतःयांदिशम् ॥४४॥ अधर्मोमित्रंयस्यतेन ॥४५॥

साधुकृताः सर्वेअर्थाधर्मादयोयैः अतएववैकुंठस्यचरणांबुजमेवआत्यंतिकंशरणंज्ञात्वा ॥ ४६ ॥ तदिति ॥ ४७ ॥ कथंभूतेपदे विधूत
कल्मषाणामास्थानंनिवासस्थानंयत्तस्मिन्विरजेनात्मनैवगतिंप्रापुर्नतुषोडशकलेनालिंगेन गतेर्वाविशेषणं विरजेनात्मनैवावस्थानरूपां
गतिंतेविधूतकल्मषाःप्रापुरिति ॥ ४८ ॥ तीर्थान्यटन्प्रभासेश्रीकृष्णावेशेनकृष्णेचित्तमावेश्यदेहंपरित्यज्यतच्चित्तएवसंस्तदानींनेतुमागतैः
पितृभिःसहस्वक्षयंस्वाधिकारस्थानंययौ ॥ ४९ ॥ आत्मानंप्रतिअनपेक्षतांतदाज्ञात्वातमाप ॥ ५० ॥ इतिएवंयत्संप्रयाणं अलमति

तेसाधुकृतसर्वार्थाज्ञात्वात्यंतिकमात्मनः ॥ मनसाधारयामासुर्वैकुंठचरणांबुजं ॥ ४६ ॥ तद्ध्यानोद्रिक्तया
भक्त्याविशुद्धधिषणाःपरे ॥ तस्मिन्नारायणपदेएकांतमतयोगतिं ॥ ४७ ॥ अवापुर्दुरवापांतेअसद्भिर्विष
यात्मभिः ॥ विधूतकल्मषाःस्थानंविरजेनात्मनैवहि ॥४८॥ विदुरोपिपरित्यज्यप्रभासेदेहमात्मवान् ॥ कृ
ष्णावेशेनतच्चित्तःपितृभिःस्वक्षयंययौ ॥४९॥ द्रौपदीचतदाज्ञायपतीनामनपेक्षतां॥वासुदेवेभगवतिह्येकां
तमतिरापतं ॥ ५० ॥ यःश्रद्धयैतद्भगवत्प्रियाणांपांडोःसुतानामितिसंप्रयाणं॥शृणोत्यलंस्वस्त्ययनंपवित्रं
लब्ध्वाहरौभक्तिमुपैतिसिद्धिं ॥ ५१ ॥ इ०भा०म०प्र०पांडवस्वर्गारोहणंनामपंचदशोऽध्यायः ॥ १५ ॥
सूतउवाच ततःपरीक्षिद्द्विजवर्यशिक्षयामहींमहाभागवतःशशासह ॥ यथाहिसूत्यामभिजातकोविदाःस
मादिशन्विप्रमहद्गुणस्तथा ॥ १॥ सउत्तरस्यतनयामुपयेमइरावतीं॥जनमेजयादींश्चतुरस्तस्यामुत्पादय
न्सुतान् ॥२॥ आजहाराश्वमेधांस्त्रीन्गंगायांभूरिदक्षिणान् ॥ शारद्वतंगुरुंकृत्वादेवायत्राक्षगोचराः ॥ ३ ॥
निजग्राहौजसावीरःकलिंदिग्विजयेक्वचित् ॥ नृपलिंगधरंशूद्रंघ्नंतंगोमिथुनंपदा ॥ ४ ॥

शयेनस्वस्त्ययनंमंगलास्पदं अलंपवित्रंच ॥ ५१ ॥ इ०प्र०टी० पंचदशोऽध्यायः ॥ १५ ॥ ॥ ततश्चषोडशेभूमिधर्मयोःकलिखि
न्नयोः ॥ संवादेवर्ण्यतेप्राप्तिःपालकस्यपरीक्षितः ॥ १ ॥ द्विजवर्याणांशिक्षया सूत्यांजन्मनि अभिजातकोविदाःजातकर्मविदः हेवि
प्रमहतांगुणायस्मिन्सः ॥ १ ॥ जनमेजयादीमित्यक्षराधिक्यंछांदसं हेतौशतृप्रत्ययः सुतानुत्पादयितुमिरावतीमुपयेमइतिवाक्ययोजना
॥ २ ॥ आजहारकृतवानित्यर्थः शारद्वतंकृपं यत्रयेषुअश्वमेधेषु ॥ ३ ॥ निजग्राहनिगृहीतवान् कलिमेवनिर्दिशति नृपेति ॥ ४ ॥

कस्यहेतोरिति अयमर्थः कलिंकस्माद्धेतोः केवलंनिजग्राहनतुहतवान् यतोऽसौशूद्रःकः अतिकुत्सितः योगांपदाऽहनत् अहन्निति ॥५॥
अस्यविष्णोःपदांभोजयोर्योमकरंदस्तंलिहंतिआस्वादयंतियेतेषांसतांमहतांवाकथाश्रयमितिसमासान्निष्कृष्टस्यानुषंगः तर्हिकथ्यतांनोचे
त्किमन्यैरसद्भिरालापैः यत्रयैःआयुषोवृथाक्षयः ॥ ६ ॥ अस्माकमयंसत्रप्रयत्नोपिहरिकथामृतपानार्थएवेत्याह सार्द्धाभ्यां क्षुद्रमल्पमा
युर्येषां अतोमर्त्यानांमरणधर्मवतां तथापिऋतंसत्यंमोक्षमिच्छतां योमृत्युःसइहसत्रेशमितुरिदंशामित्रंकर्मपशुहिंसनंतदर्थमुपहूतः ॥ ७ ॥
ततःकिमतआह नकश्चिदिति ततोपिकिमतआह अहोनृलोकेहरिलीलाऽमृतंत्र चःपीयेतेत्येतदर्थं हरिलीलैवामृतंयस्मिंस्तत् ॥ ८ ॥

शौनकउवाच कस्यहेतोर्निजग्राहकलिंदिग्विजयेनृपः ॥ नृदेवचिन्हधृक्शूद्रःकोऽसौगांयःपदाऽहनत्
॥ ५ ॥ तत्कथ्यतांमहाभागयदिकृष्णकथाश्रयं ॥ अथवाऽस्यपदांभोजमकरंदलिहांसतां ॥ किमन्यैरस
दालापैरायुषोयदसद्व्ययः ॥ ६ ॥ क्षुद्रायुषांनृणामंगमर्त्यानामृतमिच्छतां ॥ इहोपहूतोभगवान्मृत्युःशा
मित्रकर्मणि ॥ ७ ॥ नकश्चिन्म्रियतेतावद्यावदास्तइहांतकः ॥ एतदर्थंहिभगवानाहूतःपरमर्षिभिः ॥
अहोनृलोकेपीयेतहरिलीलाऽमृतंवचः ॥ ८ ॥ मंदस्यमंदप्रज्ञस्यवयोमंदायुषश्चवै ॥ निद्रयान्हियतेनक्तं
दिवाचव्यर्थकर्मभिः ॥ ९ ॥ सूतउवाच यदापरीक्षित्कुरुजांगलेवसन्कलिंप्रविष्टंनिजचक्रवर्त्तिते ॥
निशम्यवार्त्तामनतिप्रियांततःशरासनंसंयुगशौंडिराददे ॥ १० ॥ स्वलंकृतंश्यामतुरंगयोजितंरथंमृगेंद्र
ध्वजमाश्रितःपुरात् ॥ वृतोरथाश्वद्विपपत्तियुक्तयास्वसेनयादिग्विजयायनिर्गतः ॥ ११ ॥ भद्राश्वंकेतु
मालंचभारतंचोत्तरान्कुरून् ॥ किंपुरुषादीनिवर्षाणिविजित्यजगृहेबलिं ॥ १२ ॥

तदभावेवृथैवजीवनमित्याह मंदस्यअलसस्य नक्तंरात्रौयद्वयआयुस्तान्निद्रयान्हियते दिवाअन्हिचयद्वयस्तद्व्यर्थकर्मभिरपन्हियते ॥ ९ ॥
तत्रतावत्कलिनिग्रहप्रसंगमाह यदानिजचक्रवर्त्तितेस्वसेनयापालितेदेशेकलिंप्रविष्टंशुश्रावतदातामनातिप्रियांवार्त्तांकिंचित्प्रियांचयुद्ध
कौतुकसंपत्तेः तांनिशम्यततःशरासनंदुष्टनिग्रहार्थमाददे संयुगेशौंडिःयुद्धेप्रगल्भः पाठांतरेयुद्धेशौरितुल्यः ॥ १० ॥ ततश्चदिग्विजया
यनिर्गतः ॥ ११ ॥ भद्राश्वादीनिपूर्वपश्चिमदक्षिणोत्तरतःसमुद्रलग्नानिवर्षाणि मेरोःसर्वतःइलावृतं ततउत्तरतोरम्यकंहिरण्मयंचदक्षि
णतोहरिवर्षंकिंपुरुषंच तानिविजित्य ॥ १२ ॥ ॥ ॥ ॥

प्रगीयमानंयशः यशआदीनिशृण्वंस्तेभ्योददाविति तृतीयेनान्वयः ॥ १३ ॥ १४ ॥ १५ ॥ किंच स्निग्धेषुपांडवेषुविष्णोर्यानिसारथ्यादीनिकर्माणितानिशृण्वन् तथाविष्णोर्जगत्कर्तृकांप्रणतिंचशृण्वन् नृपतिःपरीक्षित्विष्णोश्चरणारविंदेभक्तिंकरोतिस्म पारषदमितिरेफषकारयोर्विश्लेषश्छांदसः तत्रपार्षदंसभापतित्वं सेवनंचित्तानुवृत्तिः वीरासनंरात्रौखड्गहस्तस्यतिष्ठतोजागरणं ॥ १६ ॥ वृत्तिमनुवर्तमानस्यसतः नातिदूरेशीघ्रमेव ॥ १७ ॥ धर्मोवृषरूपः विच्छायांहतप्रभां गांगोरूपांपृथ्वीं विवत्सांनष्टापत्यां ॥ १८ ॥ तेआत्मनोदेह

तत्रतत्रोपशृण्वानःस्वपूर्वेषांमहात्मनां ॥ प्रगीयमानंचयशःकृष्णमहात्म्यसूचकं ॥ १३ ॥ आत्मानंचपरित्रातमश्वत्थाम्नोऽस्त्रतेजसः ॥ स्नेहंचवृष्णिपार्थानांतेषांभक्तिंचकेशवे ॥ १४ ॥ तेभ्यःपरमसंतुष्टःप्रीत्युज्जृंभितलोचनः॥महाधनानिवासांसिददौहारान्महामनाः॥१५॥सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामं ॥ स्निग्धेषुपांडुषुजगत्प्रणतिंचविष्णोर्भक्तिंकरोतिनृपतिश्चरणारविंदे॥१६॥ तस्यैवंवर्त्तमानस्यपूर्वेषांवृत्तिमन्वहं ॥ नातिदूरेकिलाश्चर्यंयदासीत्तन्निबोधमे ॥१७॥ धर्मःपदैकेनचरन्विच्छायामुपलभ्यगां ॥ पृच्छतिस्माश्रुवदनांविवत्सामिवमातरं ॥ १८ ॥ कच्चिद्भद्रेनामयमात्मनस्तेविच्छायासिम्लायतेषन्मुखेन ॥ आलक्षयेभवतीमंतराधिंदूरेबंधुंशोचसिकंचनांब ॥१९ ॥ पादैर्न्यूनंशोचसिमैकपादमात्मानंवावृषलैर्भोक्ष्यमाणं ॥ अथोसुरादीन्हृतयज्ञभागान्प्रजाउतस्विन्मघवत्यवर्षति॥२०॥अरक्ष्यमाणास्त्रियउर्विबालान्शोचस्यथोपुरुषादैरिवार्त्तान्॥वाचंदेवींब्रह्मकुलेकुकर्मण्यब्रह्मण्येराजकुलेकुलाग्र्यान्॥२१॥

स्ययद्यपिबहिरामयोनलक्ष्यतेतथापिअंतर्मध्येआधिःपीडायस्यास्तांत्वामालक्षये केन यतोविच्छायासि अतईषन्म्लायतावैवर्ण्यंभजतामुखेनलिंगेन तत्रकारणानिकल्पयन्पृच्छति दूरेबंधुमित्यादिपंचभिः दूरेस्थितंबंधुम् ॥ १९ ॥ त्रिभिःपादैर्न्यूनमतएवैकपादम् मामांमल्लक्षणंजनमित्यर्थः वृषलैःइतऊर्ध्वंभोक्ष्यमाणं पुंस्त्वमात्मपदविशेषणत्वात् हृतायज्ञभागायेषांतान् यज्ञाद्यकरणात् ॥ २० ॥ हेउर्विपृथ्वि भर्तृभिररक्ष्यमाणाःस्त्रियःपितृभिररक्ष्यमाणान्बालान्प्रत्युततैरेवपुरुषादैर्निर्दयैरिवआर्त्तान्क्लिष्टान् वाचंदेवींसरस्वतींकुकर्मणिदुराचारेस्थितांकुलाग्र्यान्ब्राह्मणोत्तमान्सेवकान् ॥ २१ ॥ ॥ ॥ ॥

उपसृष्टान्व्याप्तान् अवरोपितानिउद्वासितानि व्यवायोमैथुनं इतस्ततः निषेधानादरेणसर्वतोऽशनादिषून्मुखंप्रवर्त्तमानंजीवलोकंवा ॥
॥ २२ ॥ हेअंबमातः हेधरित्रि तेतवयोभूरिभारस्तस्यावतारणार्थंकृतावतारस्यकर्माणिस्मरंतीतेनविसृष्टासतीशोचसि निर्वाणंविलंबितमा
श्रितंयेषुतानि पाठांतरेनिर्वाणंविडंबितंउपहसितंयैः मोक्षादप्यधिकसुखानीत्यर्थः ॥ २३ ॥ हेअंबतेसौभाग्यंकालेनवाहृतम् ॥ २४ ॥ भ
वान्जानात्येवतथापिवक्ष्यामीत्याह येनहेतुभूतेनत्वंचतुर्भिःपादैर्वर्त्तसे यत्रचसत्यादयोमहागुणानक्षीयंते तेनश्रीनिवासेनरहितंलोकंशो
चामीतिषष्ठेनान्वयः ॥ २५ ॥ सत्यंयथार्थभाषणम् शौचंशुद्धत्वं दयापरदुःखासहनं क्षांतिःक्रोधप्राप्तौचित्तसंयमनं त्यागःअर्थिषुमुक्तह

किंक्षत्रबंधून्कलिनोपसृष्टान्राष्ट्राणिवातैरवरोपितानि ॥ इतस्ततोवाऽशनपानवासःस्नानव्यवायोन्मुख
जीवलोकम् ॥२२॥ यद्वांऽबतेभूरिभरावतारकृतावतारस्यहरेर्धरित्रि ॥ अंतर्हितस्यस्मरतीविसृष्टाकर्माणिनि
र्वाणविलंबितानि ॥२३॥ इदंममाचक्ष्वतवाधिमूलंवसुंधरेयेनविकर्शितासि ॥ कालेनवातेबलिनांबलीय
सासुरार्चितंकिंहृतमद्यसौभगम् ॥२४॥ धरण्युवाच भवान्हिवेदतत्सर्वंयन्मांधर्मानुपृच्छसि ॥ चतुर्भि
र्वर्त्तसेयेनपादैर्लोकसुखावहैः ॥२५॥ सत्यंशौचंदयाक्षांतिस्त्यागःसंतोषआर्जवं ॥ शमोदमस्तपःसाम्यंति
तिक्षोपरतिःश्रुतं ॥ २६ ॥ ज्ञानंविरक्तिरैश्वर्यंशौर्यंतेजोबलंस्मृतिः ॥ स्वातंत्र्यंकौशलंकांतिर्धैर्यंमार्दवमेवच
॥२७॥ प्रागल्भ्यंप्रश्रयःशीलंसहओजोबलंभगः ॥ गांभीर्यंस्थैर्यमास्तिक्यंकीर्तिर्मानोऽनहंकृतिः ॥२८॥

स्तता संतोषःअलंबुद्धिः आर्जवमवक्रता शमोमनोनैश्चल्यम् दमोबाह्येंद्रियनैश्चल्यं तपःस्वधर्मः साम्यमरिमित्राद्यभावः तितिक्षापराप
राधसहनं उपरतिर्लाभप्राप्तावौदासीन्यं श्रुतंशास्त्रविचारः ॥ २६ ॥ ज्ञानमात्मविषयं विरक्तिर्वैतृष्ण्यं ऐश्वर्यंनियंतृत्वं शौर्यंसंग्रामोत्सा
हः तेजःप्रभावः बलंदक्षत्वं स्मृतिःकर्त्तव्यार्थानुसंधानं स्वातंत्र्यमपराधीनता कौशलंक्रियानिपुणता कांतिःसौंदर्यं धैर्यमव्याकुलता मा
र्दवंचित्ताकाठिन्यं ॥ २७ ॥ प्रागल्भ्यंप्रतिभातिशयः प्रश्रयोविनयः शीलंसुस्वभावः सहओजोबलानिमनसोज्ञानेंद्रियाणांकर्मेंद्रियाणांच
पाटवानि भगोभोगास्पदत्वं गांभीर्यमक्षोभ्यत्वं स्थैर्यमचंचलता आस्तिक्यंश्रद्धा कीर्तिर्यशः मानःपूज्यत्वं अनहंकृतिर्गर्वाभावः ॥२८॥

एतेएकोनचत्वारिंशत् अन्येचब्रह्मण्यशरण्यत्वादयोमहांतोगुणायस्मिन्नित्याःसहजानवियंतिनक्षीयंतेस्म ॥ २९ ॥ तेनगुणपात्रेणगुणालयेन पाप्मनापापहेतुना ॥ ३० ॥ ३१ ॥ तस्यविरहोदुःसहइत्याह चतुर्भिःब्रह्मादयोयस्याःश्रियःअपांगमोक्षःस्वस्मिन्दृष्टिपातस्तत्कामाःसंतोबहुतिथंबहुकालंतपःसमचरन्सम्यक्चरंतिस्म भगवद्भिरुत्तमैःप्रपन्नाआश्रितापिसाश्रीःयस्यपादलावण्यमलमनुरक्तासतीसेवते ॥ ३२ ॥ तस्यभगवतःश्रीमद्भिःपदैः केतुर्ध्वजः अब्जादयःकेताश्चिह्नानियेषांतैः यद्वा अब्जादीनामाश्रयैःसम्यगलंकृतमंगंयस्याः साऽहंततोभगवत्तोविभूतिसंपदमुपलभ्यप्राप्यत्रीन्लोकानतिक्रम्यअरोचेशोभितवत्यस्मि पश्चात्तस्याविभूतेरंतेनाशकालेप्राप्तेसतिउत्स्मयंतींग

एतेचान्येचभगवन्नित्यायत्रमहागुणाः॥ प्रार्थ्यामहत्त्वमिच्छद्भिर्नवियंतिस्मकर्हिचित् ॥ २९ ॥ तेनाहंगुणपात्रेणश्रीनिवासेनसांप्रतं ॥ शोचामिरहितंलोकंपाप्मनाकलिनेक्षितं ॥ ३० ॥ आत्मानंचानुशोचामिभवंतंचामरोत्तमं॥देवान्पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाश्रमान्॥३१॥ब्रह्मादयोबहुतिथंयदपांगमोक्षकामास्तपःसमचरन्भगवत्प्रपन्ना॥साश्रीःस्ववासमरविंदवनंविहाययत्पादसौभगमलंभजतेऽनुरक्ता॥३२॥ तस्याहमब्जकुलिशांकुशकेतुकेतैःश्रीमत्पदैर्भगवतःसमलंकृतांगी॥त्रीनत्यरोचउपलभ्यततोविभूतिंलोकान्समांव्यसृजदुत्स्मयतींतदंते ॥३३॥ योवैममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतंत्रः ॥ त्वांदुःस्थमूनपदमात्मनिपौरुषेणसंपादयन्यदुषुरम्यमबिभ्रदंगं ॥३४॥ कावासहेतविरहंपुरुषोत्तमस्यप्रेमावलोकरुचिरस्मितवल्गुजल्पैः॥स्थैर्यंसमानमहरन्मधुमानिनीनांरोमोत्सवोममयदंघ्रिविटंकितायाः॥३५॥

वंकुर्वाणांमांसव्यसृजत्त्यक्तवान् ॥ ३३ ॥ किंच योवैआसुरोवंशोयेषांतेषांराज्ञामक्षौहिणीशतरूपंममातिभरंभारमपनीतवान् त्वांचऊनपदत्वाद्दुःस्थंसंतंपौरुषेणपुरुषकारेणआत्मनिस्वस्मिन्संपूर्णपदंसुस्थंसंपादयन् लक्षणहेत्वोःक्रियायाइतिहेतौशतृप्रत्ययः संपादयितुमित्यर्थः अबिभ्रत्धृतवानित्यर्थः ॥ ३४ ॥ तस्यविरहंकावासहेत प्रेमावलोकश्चरुचिरस्मितंचवल्गुजल्पश्चतैर्मधुमानिनीनांसत्यभामादीनांसमानंगर्वसहितंस्थैर्यंस्तब्धत्वंयःअहरत् यस्यांघ्रिणारजस्युत्थितेनबिटंकितायाअलंकृतायाःसस्यादिमिषेणरोमोत्सवोभवाति ॥ ३५ ॥

कथयतोःसतोःप्राचींपूर्ववाहिनींकुरुक्षेत्रे ॥ ३६ ॥ इतिप्रथमेटीकायांषोडशोऽध्यायः ॥ १६ ॥ ॥ ॥ ततःसप्तदशेराज्ञाकलेर्निग्र
हउच्यते ॥ तस्यैवंवीर्यभाजोपिवैराग्यंवक्तुमद्भुतं ॥ १ ॥ हन्यमानंताडचमानं ॥ १ ॥ मृणालंपद्मकंदस्तद्वद्धवलं भयान्मेहंतंमूत्रयंतं इवेत्यने
नपादावशेषोधर्मोभयान्मूत्रयन्निवप्रतिक्षणंक्षीयमाणांशस्तस्याप्यनिर्वाहात्कंपमानइवेतिदर्शितं ॥ २ ॥ धर्मदुघांहविर्दोग्ध्रीम् क्षामां
कृशां यवसंतृणं अत्रसस्यादिप्रसवक्षयाद्वित्सेव यज्ञाद्यभावात्कृशा अतएवयज्ञभागमिच्छंतीपृथ्वीतिसूचितं ॥ ३ ॥ कार्त्तस्वरंसुवर्णं
तत्कृतःपरिच्छदःपरिकरोयस्य स्वर्णनिबद्धमित्यर्थःसज्जीकृतकार्मुकः ॥ ४ ॥ हंसिघातयसि राजाहमितिचेत्तत्राह नटइववेषमात्रेणन

तयोरेवंकथयतोःपृथिवीधर्मयोस्तदा ॥ परिक्षिन्नामराजर्षिःप्राप्तःप्राचींसरस्वतीं ॥ ३६ ॥ इतिश्रीभाग
वतेमहापुराणेप्रथमस्कंधेपृथ्वीधर्मसंवादोनामषोडशोऽध्यायः ॥ १६ ॥ ॥ सूतउवाच तत्रगो
मिथुनंराजाहन्यमानमनाथवत् ॥ दंडहस्तंचवृषलंददृशेनृपलांछनं ॥ १ ॥ वृषंमृणालधवलंमेहंतमिव
बिभ्यतम् ॥ वेपमानंपदैकेनसीदंतंशूद्रताडितम् ॥ २ ॥ गांचधर्मदुघांदीनांभृशंशूद्रपदाहताम् ॥ विवत्सां
साश्रुवदनांक्षामांयवसमिच्छतीम् ॥ ३ ॥ प्रपच्छरथमारूढःकार्त्तस्वरपरिच्छदं ॥ मेघगंभीरयावाचास
मारोपितकार्मुकः ॥ ४ ॥ कस्त्वंमच्छरणेलोकेबलाद्धंस्यबलांबली ॥ नरदेवोऽसिवेषेणनटवत्कर्मणाऽद्वि
जः ॥ ५ ॥ कस्त्वंकृष्णेगतेदूरंसहगांडीवधन्वना ॥ शोच्योऽस्यशोच्यान्रहसिप्रहरन्वधमर्हसि ॥ ६ ॥
त्वंवामृणालधवलःपादैर्न्यूनःपदाचरन् ॥ वृषरूपेणकिंकश्चिद्देवोनःपरिखेदयन् ॥ ७ ॥ नजातुपौरवें
द्राणांदोर्दंडपरिरंभिते ॥ भूतलेऽनुपतंत्यस्मिन्विनातेप्राणिनांशुचः ॥ ८ ॥ मासौरभेयानुशुचोव्येतुतेवृष
लाद्भयं ॥ मारोदीरंबभद्रंतेखलानांमयिशास्तारि ॥ ९ ॥ ॥ ॥

रदेवोऽसि कर्मणातुअद्विजःशूद्रः ॥ ५ ॥ अशोच्यान्निरपराधान्रहसियस्त्वंप्रहरन्प्रहरासिसशोच्यःसापराधोऽसिअतोवधमर्हसि ॥ ६ ॥
वृषंप्रत्याह त्वंवाकः स्वयमेवसंभावयति किंकश्चिद्देवोवृषरूपेणास्मान्परिखेदयन्वर्त्तसे ॥ ७ ॥ दोर्दंडैःपरिरंभितेविधिवत्सुरक्षिते तेशुचः
अश्रूणिविनाअन्येषामश्रूणिनानुपतंतीतिखेदहेतुत्वंदर्शितं ॥ ८ ॥ एवमुक्तेपुनरपिशोचंतंप्रत्याह भोसुरभेःपुत्रमाशुचःशोकंमाकुरु व्ये
तुअपयातु गांप्रत्याह अंबमातःशास्तरिमयिजीवतिसतितेभद्रमेवअतोमारोदीः ॥ ९ ॥ ॥ ॥ ॥

मद्धितार्थमेवैनंहनिष्यामिनतवोपकारायेत्याह यस्येतिद्वाभ्यां हेसाध्विसर्वाःयाःकाश्चिदपीत्यर्थः असाधुभिस्त्रस्यंतेपीड्यंतइत्यर्थः भगो भाग्यं गतिःपरलोकः॥ १० ॥११॥ पुनरपिशोचंतंवृषंप्रत्याह कःअवृश्चत्चिच्छेद त्वादृशास्त्वद्विधादुखिताः॥१२॥वोभद्रमस्तुआत्मनस्त वपादच्छेदेनवैरूप्यंकृतवंतंकीर्तिंदूषयतीतितथातमाख्याहि ननुतदाख्यानेकृतेकथंभद्रंस्यादित्यतआह यस्मादनागसिजनेयःअघंदुः खंयुंजन्कुर्वन्भवतिअस्यएवंभूतस्यमत्तःसकाशात्सर्वत्रापिभयंभवतिततःसाधूनांभद्रंभवेदेवेति ॥ १३ ॥ एतस्यदंडेअहमसमर्थइति माशंकीरित्याह अनागःस्विति आगस्कृत्अपराधकर्त्ता तस्यामर्त्यस्यदेवस्यापिभुजमाहर्त्तास्मिआहरिष्यामि सांगदमित्यनेनमूलतउ

यस्यराष्ट्रेप्रजाःसर्वास्त्रस्यंतेसाध्व्यसाधुभिः॥तस्यमत्तस्यनश्यंतिकीर्त्तिरायुर्भगोगतिः॥ १० ॥ एषराज्ञांप रोधर्मोत्यार्त्तानामार्त्तिनिग्रहः॥ अतएनंवधिष्यामिभूतद्रुहमसत्तमं॥ ११ ॥ कोऽवृश्चत्तवपादांस्त्रीन्सौरभे यचतुष्पद॥ माभूवंस्त्वादृशाराष्ट्रेराज्ञांकृष्णानुवर्तिनां॥ १२ ॥ आख्याहिवृषभद्रंवःसाधूनामकृतागसां॥ आत्मवैरूप्यकर्त्तारंपार्थानांकीर्त्तिदूषणं॥जनेऽनागस्यघंयुंजन्सर्वतोऽस्यचमद्भयं॥१३॥ आनागःस्विहभूते षुयआगस्कृन्निरंकुशः॥ आहर्त्तास्मिभुजंसाक्षादमर्त्यस्यापिसांगदं॥ १४ ॥ राज्ञोहिपरमोधर्मःस्वधर्मस्था नुपालनं॥ शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथानिह॥ १५॥ धर्मउवाच एतद्वःपांडवेयानांयुक्तमा र्त्ताभयंवचः॥ येषांगुणगणैःकृष्णोदौत्यादौभगवान्कृतः॥ १६॥ नवयंक्लेशबीजानियतःस्युःपुरुषर्षभ॥ पुरुषंतंविजानीमोवाक्यभेदविमोहिताः॥१७॥ केचिद्विकल्पवसनाआहुरात्मानमात्मना॥दैवमन्येऽपरेक र्मस्वभावमपरेप्रभुं॥ १८॥

त्पाट्याहरिष्यामीतिदर्शितं॥ १४॥ नन्वेकस्यनिग्रहेणान्यस्यानुग्रहेतवकिंप्रयोजनंतत्राह राज्ञो हीति अन्यान्अधर्मिष्ठान् शासतःदंडयतः ॥ १५ ॥ आर्त्तानामभयंयस्मात्तद्वचोवोयुष्माकंयुक्तमुचितमेव ॥ १६ ॥ वयंतुयतःपुरुषा त्प्राणिनांक्लेशहेतवोभवेयुस्तंपुरुषंनविजानीमः यतःवादिनांवाक्यभेदैर्विमोहिताः ॥ १७ ॥ वाक्यभेदानेवाह विकल्पंभेदंवसतेआच्छाद यंतियेयोगिनस्तेआत्मानमेवात्मनःप्रभुंसुखदुःखप्रदमाहुः तदुक्तं आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनइति यद्वा विकल्पैःकुतर्कैःप्रावृताः नास्तिकाः एवंहितेवदंति नतावद्देवतादीनांप्रभुत्वं कर्माधीनत्वात् नचकर्मणः स्वाधीनत्वात् अतःस्वयमेवप्रभुर्नचान्यःकश्चिदिति अन्येदैवज्ञाःदैवंग्रहादिरूपंदेवतां परेतुमीमांसकाःकर्म अपरेलौकायतिकाःस्वभावं ॥ १८ ॥ ॥ ॥

केष्वपिसेश्वरेषुमध्ये केष्वपीतिदुर्लभत्वंदर्शितं निश्चयइतिसिद्धांतत्वं अप्रतर्क्यान्मनोऽगोचरादनिर्देश्याद्वचनागोचरात्परमेश्वरात्सर्वंभ
वतीतिविमृशविचारयस्वबुध्या ॥ १९ ॥ विखेदोगतमोहः पर्यचष्टतप्रत्यभाषत ज्ञातवानितिवा ॥ २० ॥ अनिर्धारितमिवब्रुवन्घातकं जा
नन्नपिनसूचयेदित्येवंरूपंधर्मंब्रवीषिअतोधर्मोऽसि सूचनेकोदोषइत्यतआह यदिति स्थानंनरकादि ॥ २१ ॥ यद्वा अज्ञानादप्यकथनं
भवतीत्याह अथवेति देवस्यमायायागतिर्वध्यघातकलक्षणावृत्तिर्भूतानांचेतसोवचसश्चगोचरासुज्ञेयानभवतिइतिनिश्चयः ॥ २२ ॥ ध
र्मोऽसावितिज्ञात्वातस्यपादानुवादेनव्यवस्थामाह तपइतिद्वाभ्याम् अधर्मपादैस्तवत्रयःपादास्त्रिभिरंशैर्भग्नाः स्मयोविस्मयः ॥ २३ ॥ इ

अप्रतर्क्यादनिर्देश्यादितिकेष्वपिनिश्चयः ॥ अत्रानुरूपंराजर्षेविमृशस्वमनीषया ॥ १९ ॥ एवंधर्मेप्रव
दतिससम्राड्द्विजसत्तम ॥ समाहितेनमनसाविखेदःपर्यचेष्टत ॥ २० ॥ धर्मंब्रवीषिधर्मज्ञधर्मोऽसिवृषरू
पधृक् ॥ यदधर्मकृतःस्थानंसूचकस्यापितद्भवेत् ॥ २१ ॥ अथवादेवमायायानूनंगतिरगोचरा ॥ चेतसो
वचसश्चापिभूतानामितिनिश्चयः ॥ २२ ॥ तपःशौचंदयासत्यमितिपादाःप्रकीर्तिताः ॥ अधर्मांशैस्त्रयो
भग्नाःस्मयसंगमदैस्तव ॥२३॥ इदानींधर्मपादस्तेसत्यंनिर्वर्तयेद्यतः ॥ तंजिघृक्षत्यधर्मोऽयमनृतेनैधितः
कलिः ॥२४॥ इयंचभूर्भगवतान्यासितोरुभरासती॥श्रीमद्भिस्तत्पदन्यासैःसर्वतःकृतकौतुका॥२५॥शोच
त्यश्रुकलासाध्वीदुर्भगेवोज्झिताधुना ॥ अब्रह्मण्यनृपव्याजाःशूद्राभोक्ष्यंतिमामिति ॥ २६ ॥ इतिधर्मं
महींचैवसांत्वयित्वामहारथः ॥ निशातमाददेखड्गंकलयेऽधर्महेतवे ॥ २७ ॥ तंजिघांसुमभिप्रेत्यविहाय
नृपलांछनं ॥ तत्पादमूलंशिरसासमगाद्भयविह्वलः ॥ २८ ॥ ॥ ॥

दानींकलौहेधर्मतेपादश्चतुर्थोंऽशस्तत्रापिसत्यमेवास्ति यतःसत्यात्भवानात्मानंनिर्वर्तयेत्कथंचिद्धारयेत् यद्वा पुरुषस्त्वांसाधयेत् तमपि
पादमनृतेनसंवर्धितःकलिरूपोऽयमधर्मोग्रहीतुमिच्छति तत्रेयंस्थितिः कृतयुगेप्रथमंसंपूर्णश्चतुष्पाद्धर्मः त्रेतायांचतुर्णामपिपादानांमध्ये
स्मयेनतपःसंगेनशौचंमदेनदयाअनृतेनसत्यमिति एवंचतुर्थोंऽशोहीयते द्वापरेत्वर्धम् कलौचतुर्थोंऽशोवशिष्यते सोऽपिअंतेनंक्ष्यतीति ॥
॥ २४ ॥ न्यासितःअन्योन्यद्वारेणावतारितःउरुर्भरोभारोयस्याः कृतंकौतुकंमंगलंयस्याःसा ॥ २५ ॥ अश्रूणिकलयतिमुंचतीत्यश्रुकलाते
नत्यक्तासतीशूद्राभोक्ष्यंतिमामितिशोचति ॥ २६ ॥ निशातंनिशितम् अधर्मस्यहेतुर्यःकलिस्तंहंतुमित्यर्थः ॥ २७ ॥ अभिप्रेत्यज्ञात्वा ॥२८॥

शरण्यः आश्रयार्हः श्लोक्यःसत्कीर्त्यर्हः ॥ २९ ॥ गुडाकेशोऽर्जुनस्तस्ययशोधरायेवयंतेषां तान्प्रतिबद्धोंऽजलिर्येनतस्यते किंतु कथंच नकेनाप्यंशेननवर्त्तितव्यं यस्मात्त्वमधर्मस्यबंधुः ॥ ३० ॥ तदेवाह राजदेहेषुवर्त्तमानंत्वामनुसर्वतःप्रवृत्तः अनार्यंदौर्जन्यं अंहः स्वधर्म त्यागः ज्येष्ठाअलक्ष्मीः मायाकपटं ॥ ३१ ॥ तत्तस्माद्वर्त्तितव्येवर्त्तितुमर्हेब्रह्मावर्त्तदेशे यज्ञस्यवितानंविस्तारस्तत्रविज्ञाःनिपुणाः ॥ ३२ ॥ इज्यायागस्तद्रूपामूर्त्तिर्यस्य शंक्षेमंकामांश्च नन्विंद्रादयोदेवाइज्यंतेनतुहरिस्तत्राह एषःस्थावरादीनामात्मेति तथापिजीववन्नपरिच्छिन्न इत्याह अंतर्बहिरिति यथावायुःप्राणरूपेणांतस्थोऽपिबहिरप्यस्तितद्वत्सर्वांतर्यामीश्वरोपीति ॥ ३३ ॥ उद्यतासिमुंद्धृतखड्गंदंडपाणिंय

पतितंपादयोर्वीक्ष्यकृपयादीनवत्सलः ॥ शरण्योनावधीच्छ्लोक्यआहचेदंहसन्निव ॥२९॥ राजोवाच नते गुडाकेशयशोधराणांबद्धांजलेर्वैभयमस्तिकिंचित् ॥ नवर्तितव्यंभवताकथंचनक्षेत्रेमदीयेत्वमधर्मबंधुः ॥ ॥ ३०॥ त्वांवर्त्तमानंनरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः॥लोभोऽनृतंचौर्यमनार्यमंहोज्येष्ठाचमायाकलहश्च दंभः ॥ ३१ ॥ नवर्तितव्यंतदधर्मबंधोधर्मेणसत्येनचवर्तितव्ये ॥ ब्रह्मावर्तेयत्रयजंतियज्ञैर्यज्ञेश्वरंयज्ञविता नविज्ञाः ॥ ३२ ॥ यस्मिन्हरिर्भगवानिज्यमानइज्यामूर्त्तिर्यजतांशंतनोति ॥ कामानमोघान्स्थिरजंगमा नामंतर्बहिर्वायुरिवैषआत्मा॥३३॥ सूतउवाच परिक्षितैवमादिष्टःसकलिर्जातवेपथुः॥तमुद्यतासिमाहेदंदं डपाणिमिवोद्यतम् ॥ ३४ ॥ यत्रक्वचनवत्स्यामिसार्वभौमतवाज्ञया ॥ लक्षयेतत्रतत्रापित्वामात्तेषुशरास नं ॥ ३५ ॥ तन्मेधर्मभृतांश्रेष्ठस्थानंनिर्देष्टुमर्हसि ॥ यत्रैवनियतोवत्स्येआतिष्ठंस्तेऽनुशासनं ॥३६॥ सूतउ वाच अभ्यर्थितस्तदातस्मैस्थानानिकल्पयेददौ ॥ द्यूतंपानंस्त्रियःसूनायत्राधर्मश्चतुर्विधः ॥ ३७ ॥

मं उद्यतमुद्युक्तं ॥ ३४ ॥ अत्रनवस्तव्यमितियातवाज्ञातयायत्रक्वापिवत्स्यामिकिंतुतत्रतत्रापिआत्तोगृहीतइषुः शरासनं चयेनतंत्वामेवलक्ष ये ॥ ३५ ॥ तत्तस्मान्नियतोनिश्चलोवत्स्यामि ॥ ३६ ॥ पानंमद्यादेः सूनाःप्राणिवधाः द्यूतेअनृतं पानेमदः पूर्वंमदोदयानाशकत्वे नोक्तः अत्रतुगर्वद्वारातपोनाशकत्वेन स्त्रीषुसंगः हिंसायांक्रौर्यंदयानाशकमितिज्ञेयं यद्यपिसर्वंसर्वत्रसंभवतितथापिप्राधान्येनानृतादी नांद्यूतादिषुयथासंख्यंज्ञेयं द्वादशस्कंधेतु सत्यंदयातपोदानमितिपादाविभोर्नृपइत्यत्रदानशब्देनशौचमेवोक्तं मनःशुद्धिरूपत्वाद्भूताभय दानस्य त्रेतायांधर्मपादानांतुर्यांशोहीयतेशनैः ॥ अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैरित्यत्र चअसंतोषशब्देनतस्यहेतुर्गर्वोलक्ष्यते विग्रह शब्देनचतद्धेतुःस्त्रीसंगइत्यविरोधः ॥ ३७ ॥ ॥ ॥ ॥

चतुर्विधस्याप्येकत्रैवावस्थानंदेहीतिपुनर्याचमानायजातरूपंसुवर्णंदत्तवान् ततःसुवर्णदानात् अनृतं मदं काममितिस्त्रीपुंसंगम् रजइतिर
जोमूलांहिंसां एतानिचत्वारिपंचमंवैरंचादादिति ॥ ३८ ॥ औत्तरेयेणपरीक्षिता अमूनिअमूषुस्थानेषुन्यवसदित्यर्थः ॥ ३९ ॥ अथइतिहे
तोः बुभूषुःउद्भवितुमिच्छुः स्त्रीसुवर्णयोरसेवनंनामतयोरनासक्तिः ॥ ४० ॥ एवंकलिंनिगृह्यवृषस्यपादान्प्रतिसंदधे तपआदीनिप्रवर्त्तित
वानित्यर्थः ॥ ४१ ॥ युष्मदीयसत्रप्रवृत्तिरपितत्प्रभावादेवेत्याह त्रिभिः एतर्हिइदानींयुधिष्ठिरेणारण्यंप्रवेष्टुमिच्छताउपन्यस्तंसमर्पितमासन
मध्यास्ते ॥ ४२ ॥ अधुनासांप्रतमास्ते ॥ ४३ ॥ पालयतइतिवर्त्तमानसामीप्येवर्त्तमानवन्निर्देशः स्मेत्यध्याहारोवा सत्रायसत्रंकर्त्तुंदी

पुनश्चयाचमानायजातरूपमदात्प्रभुः ॥ ततोऽनृतंमदंकामंरजोवैरंचपंचमम् ॥ ३८ ॥ अमूनिपंचस्थानानि
ह्यधर्मप्रभवःकलिः ॥ औत्तरेयेणदत्तानिन्यवसत्तन्निदेशकृत् ॥ ३९ ॥ अथैतानिनसेवेतबुभूषुःपुरुषःक्वचित्
॥ विशेषतोधर्मशीलोराजालोकपतिर्गुरुः ॥ ४० ॥ वृषस्यनष्टांस्त्रीन्पादांस्तपःशौचंदयामिति ॥ प्रतिसंदध
आश्वास्यमहींचसमवर्धयत् ॥ ४१ ॥ सएषएतर्ह्यध्यास्तेआसनंपार्थिवोचितं ॥ पितामहेनोपन्यस्तंराज्ञारण्यं
विविक्षता ॥ ४२ ॥ आस्तेऽधुनासराजर्षिःकौरवेंद्रश्रियोल्लसन् ॥ गजाव्हयेमहाभागश्चक्रवर्तीबृहच्छ्रवाः ॥
॥ ४३ ॥ इत्थंभूतानुभावोयमभिमन्युसुतोनृपः ॥ यस्यपालयतःक्षोणींयूयंसत्रायदीक्षिताः ॥ ४४ ॥ इ० भा० प्र०
कलिनिग्रहोनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ सूतउवाच योवैद्रौण्यस्त्रविप्लुष्टोनमातुरुदरेमृतः ॥
अनुग्रहाद्भगवतःकृष्णस्याद्भुतकर्मणः ॥ १ ॥ ब्रह्मकोपोत्थिताद्यस्तुतक्षकात्प्राणविप्लवात् ॥ नसंमुमोहोरुभया
द्भगवत्यर्पिताशयः ॥ २ ॥ उत्सृज्यसर्वतःसंगंविज्ञाताजितसंस्थितिः ॥ वैयासकेर्जहौशिष्योगंगायांस्वंकले
वरम् ॥ ३ ॥ नोत्तमश्लोकवार्तानांजुषतांतत्कथामृतम् ॥ स्यात्संभ्रमोंऽतकालेपिस्मरतांतत्पदांबुजं ॥ ४ ॥

क्षिताःदीक्षांकृतवंतः ॥ ४४ ॥ इतिप्रथमेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ राज्ञस्त्वष्टादशेतस्यब्रह्मशापोनिरूप्यते ॥ सचानुग्रह
एवास्यजातोवैराग्यमावहन् ॥ १ ॥ परीक्षितोनिर्याणमत्याश्चर्यंवक्तुंतत्संभावनायजन्माश्चर्यमनुस्मारयति योवाइति विप्लुष्टोनिर्दग्धःसन्
॥ १ ॥ ब्रह्मकोपादुत्थितात्तक्षकाद्यःप्राणविप्लवःप्राणनाशस्तस्माद्यदुरुभयंतस्मान्नसंमुमोह तत्रहेतुः यस्तुभगवत्येवार्पिताशयइति ॥ २ ॥
किंतु उत्सृज्येति वैयासकेःशुकस्यशिष्यःसन् विज्ञाताअजितस्यहरेःसंस्थितिस्तत्त्वंयेनसः ॥ ३ ॥ नचैतच्चित्रमित्याह उत्तमश्लोकस्यै
ववार्त्तायेषु अतएवनित्यंतत्कथारूपममृतंजुषतांसंभ्रमोनस्यात् ॥ ४ ॥ ॥ ॥

तस्मिन्राज्ञिसुतरांतन्नचित्रमित्याशयेनाह तावदिति अभिमन्योःपुत्रःएकराट्चक्रवर्त्तीईशःपतिर्यावत् ॥ ५ ॥ ननुतदाकलेरप्रवेशएवास्तुप्र
विष्टोपिनप्राभवदितिकुतस्तत्राह यस्मिन्नहनियर्हियस्मिन्नेवक्षणेगांपृथ्वीमनुवृत्तःप्रविष्टः अधर्मस्यप्रभवोयस्मिन् ॥ ६ ॥ नन्वधर्महेतुंक
लिंसर्वथाकिंनहतवांस्तत्राह नानुद्वेष्टीति सारंगोभ्रमरइवसारग्राही सारमाह यद्यस्मिन्कुशलानिपुण्यानिआशुसंकल्पमात्रेणफलंतिइतरा
णिपापानिआशुनसिध्यंति यतस्तानिकृतान्येवसिध्यंतिनतुसंकल्पितमात्राणिइति ॥ ७ ॥ ननुदोषाधिक्याद्द्वेषएवयुक्तःन धीरेषुतस्याकिं
चित्करत्वादित्याह किन्विति किंनुतेनभवेत् बालेषुअधीरेषुअप्रमत्तःअवहितःसन्योवृकइववर्त्तते ॥ ८ ॥ पारीक्षितमाख्यानंअपृच्छतपृ

तावत्कलिर्नप्रभवेत्प्रविष्टोऽपीहसर्वतः ॥ यावदीशोमहानुर्व्यामाभिमन्यवएकराट् ॥५॥ यस्मिन्नहनियर्ह्ये
वभगवानुत्ससर्जगाम् ॥ तदैवेहानुवृत्तोऽसावधर्मप्रभवःकलिः ॥ ६ ॥ नानुद्वेष्टिकलिंसम्राट्सारंगइवसार
भुक् ॥ कुशलान्याशुसिद्ध्यंतिनेतराणिकृतानियत् ॥७॥ किंनुबालेषुशूरेणकलिनाधीरभीरुणा ॥ अप्रमत्तःप्र
मत्तेषुयोवृकोनृषुवर्त्तते ॥ ८ ॥ उपवर्णितमेतद्वःपुण्यंपारीक्षितंमया ॥ वासुदेवकथोपेतमाख्यानंयदपृच्छत ॥
॥ ९ ॥ यायाःकथाभगवतःकथनीयोरुकर्मणः ॥ गुणकर्माश्रयाःपुंभिःसंसेव्यास्ताबुभूषुभिः ॥ १० ॥ ऋषय
ऊचुः सूतजीवसमाःसौम्यशाश्वतीर्विशदंयशः ॥ यस्त्वंशंससिकृष्णस्यमर्त्यानाममृतंहिनः ॥ ११ ॥ कर्मण्य
स्मिन्ननाश्वासेधूमधूम्रात्मनांभवान् ॥ आपाययतिगोविंदपादपद्मासवंमधु ॥ १२ ॥ तुलयामलवेनापिन
स्वर्गंनापुनर्भवं ॥ भगवत्संगिसंगस्यमर्त्यानांकिमुताशिषः ॥ १३ ॥ ॥ ॥

ष्टवंतोयूयम् ॥ ९ ॥ किंबहुनानरैरेतावदेवकर्त्तव्यमितिसर्वशास्त्रार्थसारंकथयति यायाइति कथनीयान्युरूणिकर्माणियस्यतस्यगुणकर्म
विषयाः बुभूषुभिःसद्भावमिच्छद्भिः ॥ १० ॥ पुनर्विस्तरेणकथनार्थंसूतोक्तितत्संगंचाभिनंदंति सूतेतित्रिभिः शाश्वतीःसमाःअनंतान्वत्स
रान्जीव अत्यंतसंयोगेद्वितीया विशुद्धंयशःकीर्त्तयसि तच्चास्माकंमर्त्यानाममृतंमरणनिवर्त्तकम् ॥ ११ ॥ किंच अस्मिन्कर्मणिसत्रेअना
श्वासेअविश्वसनीये वैगुण्यबाहुल्येनफलनिश्चयाभावात् धूमेनधूम्रःविवर्णआत्माशरीरंयेषांतानस्मान् कर्मणिषष्ठी आसवंमकरंदं मधु
मधुरं ॥ १२ ॥ भगवत्संगिनोविष्णुभक्तास्तेषांसंगस्ययोलवःअत्यल्पकःकालस्तेनापिस्वर्गंनतुलयामसमंनपश्याम नचापवर्गम् संभाव
नायांलोट् मर्त्यानांतुच्छाआशिषोराज्याद्यानतुलयामेतिकिमुवक्तव्यम् ॥ १३ ॥ ॥ ॥

एवंसत्संगमभिनंद्यश्रवणौत्सुक्यमाविष्कुर्वंति कोनामेति रसविद्रसज्ञः महत्तमानामेकांतेनपरमयनमाश्रयोयस्तस्यकथायां अगुणस्यप्राकृत
गुणरहितस्य कल्याणगुणानामंतंयेयोगेश्वरास्तेऽपिनजग्मुः एतावंतइतिनपरिगणयांचक्रुः भवःशिवः पाद्मोब्रह्माचमुख्यौयेषांते॥१४॥
नोऽस्माकंमध्येभगवान्प्रधानंसेव्योयस्यसभगवान्नः शूश्रुषतांहरेश्चरितंविस्तारयतु ॥ १५ ॥ तच्चशुकपरीक्षित्संवादेनकथयेत्याहुः सवा
इतिद्वाभ्यां वैयासकिनाशब्दितेनकथितेनयेनज्ञानेनज्ञानसाधनेनअपवर्गइत्याख्यायस्यतत् खगेंद्रध्वजस्यहरेः पादमूलंभेजे ॥ १६ ॥ त
त् असंवृतार्थंयथातथाआख्याहि तदेवनिर्दिशति परीक्षितेकथितंपारीक्षितंआख्यानंश्रीभागवतंपुराणं परंपुण्यंसत्वशोधकंअत्यद्भुतेयोगे
निष्ठायस्य अनंतस्याचरितैरुपपन्नंयुक्तं अतएवभागवतानामभिरामंप्रियं एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वंदर्शितं॥ १७ ॥ श्री

**कोनामतृप्येद्रसवित्कथायांमहत्तमैकांतपरायणस्य ॥ नांतंगुणानामगुणस्यजग्मुर्योगेश्वरायेभवपाद्ममु
ख्याः ॥ १४॥ तन्नोभवान्वैभगवत्प्रधानोमहत्तमैकांतपरायणस्य॥ हरेरुदाराचरितंविशुद्धंशुश्रूषतांनोवि
तनोतुविद्वन् ॥ १५ ॥ सवैमहाभागवतः परिक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः ॥ ज्ञानेनवैयासकिशब्दिते
नभेजेखगेंद्रध्वजपादमूलं॥ १६ ॥ तन्नः परंपुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठं ॥ आख्याह्यनंताच
रितोपपन्नंपारीक्षितंभागवताभिरामं ॥१७॥ सूतउवाच अहोवयंजन्मभृतोऽद्यहास्मवृद्धानुवृत्त्यापिवि
लोमजाताः॥ दौष्कुल्यमाधिंविधुनोतिशीघ्रंमहत्तमानामभिधानयोगः ॥१८॥ कुतःपुनर्गृणतोनामतस्यम
हत्तमैकांतपरायणस्य ॥ योऽनंतशक्तिर्भगवाननंतोमहद्गुणत्वाद्यमनंतमाहुः ॥ १९ ॥ ॥**

भागवतव्याख्यानेलब्धप्रसंगंमहतामादरपात्रमात्मानंश्लाघतेद्वाभ्यां अहोइत्याश्चर्ये हइतिहर्षे वयमितिबहुवचनंश्लाघायांप्रविलोमजा
अपिअद्यजन्मभृतः सफलजन्मानः आस्मजाताः वृद्धानामनुवृत्याआदरेण ज्ञानवृद्धः शुकस्तस्यसेवयेतिवा यतोदुष्कुलत्वंतन्निमित्तमाधिं
चमनःपीडांमहत्तमानामभिधानयोगः लौकिकोपिसंभाषणलक्षणः संबंधः विधुनोतिअपनयति ॥ १८ ॥ कुतःपुनः किंपुनर्वक्तव्यंतस्यानंत
स्यनामगृणतः पुंसोमहत्तमानामभिधानयोगोदौष्कुल्यंविधुनोतीति यद्वा नामगृणतः पुनर्दौष्कुल्यमिति यद्वागृणतः पुंसस्तस्यनामदौष्कुल्यं
विधुनोतीतिकिंवक्तव्यमिति कैमुत्यन्यायमेवाह अनंताःशक्तयोयस्यस्वतोऽप्यनंतः किंच महत्सुगुणायस्यसमहद्गुणः तस्यभावस्तस्मात्
यंगुणतोऽप्यनंतमाहुः ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

एतत्प्रपंचयतित्रिभिः एतावतेति तस्ययदसाम्यमनतिशायनंचगुणैस्तत्साम्यंतदाधिक्यंचान्यस्यनास्तीत्यस्यार्थस्यज्ञानेएतावतासूचिते नअलंपर्याप्तं कस्तद्विस्तरतोवक्तुंशक्नोति तदेवाह इतरान्ब्रह्मादीन्प्रार्थयमानान्हित्वाविभूतिर्लक्ष्मीः अनभीप्सोरपियस्यांघ्रिरेणुंसेवत इति ॥ २० ॥ अथेत्यर्थांतरे यस्यपादनखावसृष्टंनिःसृतमपिविरंच्येनोपहृतंसमर्पितमर्हणांभः अर्घोदकमीशसहितंजगत्पुनाति विरंच्योपहृतं सेशमितिचतयोरप्युपासकत्वमुक्तम् तस्मान्मुकुंदव्यतिरिक्तःकोनामभगवत्पदस्यार्थः सर्वेश्वरइत्यर्थः ॥ २१ ॥ धीराःसंतः ऊढंधृतं अंत्यं परमकाष्ठापन्नम् तदाह यस्मिन्नहिंसाउपशमश्चस्वाभाविकोधर्मः ॥ २२ ॥ एवंस्वभाग्यमभिनंद्यपारीक्षितोपाख्यानंवक्तुमाह अहंहीति

एतावतालंननुसूचितेनगुणैरसाम्यानतिशायनस्य ॥ हित्वेतरान्प्रार्थयतोविभूतिर्यस्यांघ्रिरेणुंजुषतेऽनभीप्सोः ॥२०॥ अथापियत्पादनखावसृष्टंजगद्विरंच्योपहृतार्हणांभः ॥सेशंपुनात्यन्यतमोमुकुंदात्कोनामलोकेभगवत्पदार्थः ॥ २१ ॥ यत्रानुरक्ताःसहसैवधीराव्यपोह्यदेहादिषुसंगमूढं ॥ व्रजंतितत्पारमहंस्यमंत्यंयस्मिन्नहिंसोपशमःस्वधर्मः ॥२२॥ अहंहिपृष्टोऽर्यमणोभवद्भिराचक्षआत्मावगमोऽत्रयावान् ॥ नभःपतंत्यात्मसमंपतत्रिणस्तथासमंविष्णुगतिंविपश्चितः ॥२३॥ एकदाधनुरुद्यम्यविचरन्मृगयांवने ॥ मृगाननुगतःश्रांतःक्षुधितस्तृषितोभृशं ॥ २४ ॥ जलाशयमचक्षाणःप्रविवेशतमाश्रमं ॥ ददर्शमुनिमासीनंशांतंमीलितलोचनं ॥ २५ ॥ प्रतिरुद्धेंद्रियप्राणमनोबुद्धिमुपारतं॥ स्थानत्रयात्परंप्राप्तंब्रह्मभूतमविक्रियं ॥ २६ ॥ विप्रकीर्णजटाच्छन्नंरौरवेणाजिनेनच ॥ विशुष्यत्तालुरुदकंतथाभूतमयाचत ॥ २७ ॥ ॥

अर्यमणःहेसूर्यास्त्रयीमूर्तयःअत्रयावानात्मावगमोममज्ञानंतावदाचक्षेप्रवक्ष्यामि तथाहि यथापक्षिणोनभःआत्मसमंस्वशक्त्यनुरूपमेवोत्पतंतिनकृत्स्नम् तथाविपश्चितोपिविष्णोर्गतिंलिलांसमंस्वमत्यनुरूपमेववदंतीत्यर्थः ॥ २३ ॥ २४ ॥ अचक्षाणःअपश्यन् तंप्रसिद्धमाश्रमम् तस्मिंश्चमुनिंशमीकम् ॥ २५ ॥ प्रतिरुद्धाःप्रत्याहृताइंद्रियादयोयेनतम् अतएवोपरतंस्थानत्रयाज्जाग्रदादिलक्षणात्परंतुरीयंपदंप्राप्तम् अतएवब्रह्मभूतत्वादविक्रियम् ॥ २६ ॥ विप्रकीर्णाभिर्जटाभिराच्छन्नम् रुरुर्मृगविशेषस्तस्यचर्मणाचाच्छन्नं विशेषेणशुष्यत्तालुयस्यसः तथाभूतंमुनिमुदकमयाचत ॥ २७ ॥

नलब्धंतृणंतृणासनंभूमिरुपवेशस्थानंचयेनसः नसंप्राप्तःअर्घःसूनृतंप्रियवचनंचयेनसः ॥ २८ ॥ मत्सरस्तदुत्कर्षासहनं ॥ २९ ॥ गता
सुंमृतं धनुष्कोटयाचापाग्रेण ॥ ३० ॥ सर्पनिधानेराज्ञोऽभिप्रायमाह एषकिंप्रत्याहृतसर्वेंद्रियःसन्मीलितेक्षणःस्थितोयद्वाक्षत्रबंधुभिरा
गतैर्वाकिंनुस्यादित्यवज्ञयामृषासमाधिःसन्निति जिज्ञासयेत्यर्थः ॥ ३१ ॥ तस्यपुत्रःशृंगीनामा अघंदुःखं तत्रअर्भकमध्ये ॥ ३२ ॥ पा
लानांराज्ञां पत्रिंपुष्टानां अधर्ममेवनिर्दिशति स्वामिनिदासानांयदघंपापाचरणंबलिभुजांकाकानामिवशुनामिवचेति ॥ ३३ ॥ दा

अलब्धतृणभूम्यादिरसंप्राप्तार्घसूनृतः ॥ अवज्ञातमिवात्मानंमन्यमानश्चुकोपह ॥२८॥ अभूतपूर्वःसहसा
क्षुत्तृड्भ्यामर्दितात्मनः ॥ ब्राह्मणंप्रत्यभूद्ब्रह्मन्मत्सरोमन्युरेवच ॥२९॥ सतुब्रह्मऋषेरंसेगतासुमुरगंरुषा॥
विनिर्गच्छन्धनुष्कोटयानिधायपुरमागमत् ॥३०॥ एषकिंनिभृताशेषकरणोमीलितेक्षणः ॥ मृषासमाधिरा
होस्वित्किंनुस्यात्क्षत्रबंधुभिः ॥३१॥ तस्यपुत्रोऽतितेजस्वीविहरन्बालकोऽर्भकैः ॥ राज्ञाघंप्रापितंतातंश्रुत्वा
तत्रेदमब्रवीत् ॥३२॥ अहोअधर्मःपालानांपीव्नांबलिभुजामिव ॥ स्वामिन्यघंयद्दासानांद्वारपानांशुनामिव
॥३३॥ ब्राह्मणैःक्षत्रबंधुर्हिद्वारपालोनिरूपितः ॥ सकथंतद्गृहेद्वास्थःसभांडंभोक्तुमर्हति ॥३४॥ कृष्णेगतेभग
वतिशास्तर्युत्पथगामिनां ॥ तद्भिन्नसेतूनद्याहंशास्मिपश्यतमेबलं ॥ ३५ ॥ इत्युक्त्वारोषताम्राक्षोवयस्यानृ
षिबालकान् ॥ कौशिक्यापउपस्पृश्यवाग्वज्रंविससर्जह ॥३६॥ इतिलंघितमर्यादंतक्षकःसप्तमेऽहनि ॥ दं
क्ष्यतिस्मकुलांगारंचोदितोमेततद्रुहं ॥३७॥ ततोऽभ्येत्याश्रमंबालोगलेसर्पकलेवरं ॥ पितरंवीक्ष्यदुःखार्त्तो
मुक्तकंठोरुरोदह ॥ ३८ ॥ सवाआंगिरसोब्रह्मन्श्रुत्वासुतविलापनं ॥ उन्मील्यशनकैर्नेत्रेदृष्ट्वास्वांसेमृतोर
गं ॥ ३९ ॥ विसृज्यपुत्रंपप्रच्छवत्सकस्माद्धिरोदिषि ॥ केनवातेप्रतिकृतमित्युक्तःसन्यवेदयत् ॥ ४० ॥

सत्वंदर्शयति ब्राह्मणैरिति सभांडंभांडेएवस्थितं ॥ ३४ ॥ तत्तदनंतरं अहंशास्मिदंडयामि ॥ ३५ ॥ इतिवयस्यानुक्त्वारोषेणताम्रेअ
क्षिणीयस्यसः कौशिकींनदींतस्याःअपः संधिरार्षः वाग्वज्रंशापं ॥ ३६ ॥ इतिएवंसर्पनिक्षेपेण दंक्ष्यतिभक्षयिष्यति पाठांतरेभस्मी
करिष्यति स्मेतिपादपूरणे कुलस्यांगारतुल्यं मेमया ततेतिन्हस्वत्वमार्षं ॥ ३७ ॥ गलेसर्पकलेवरंयस्येत्यलुक्समासः मक्तकंठः उच्चै
रित्यर्थः ॥ ३८ ॥ ३९ ॥ तंसर्पंविसृज्य केनापकारःकृतः ॥ ४० ॥ ॥ ॥ ॥

अनभिनंदनवाक्यमहोइत्यादि वतकष्टं तेत्वयामहत्पापंकृतं द्रोहेअपराधे दमोदंडः ॥ ४१ ॥ परोविष्णुरित्याख्याख्यातिर्यस्यतंनरदेवं नृभिःसंमातुंसमंद्रष्टुं ॥ ४२ ॥ अलक्ष्यमाणेअदृश्यमाने अविवरूथवत्मेषसंघवत् ॥ ४३ ॥ नष्टोनाथोयस्यलोकस्यतस्यवसोर्वसुनोध नस्यविलुंपकादपहर्त्तुश्चोरादेर्हेतोर्यत्पापंभविष्यातितदस्मान्निमित्तत्वादस्मानुपैष्याति अनन्वयंसंबंधशून्यमेव तदेवपापंदर्शयति परस्परमि ति शपंतिपरुषंवदंति पश्वादीन्वृंजतेअपहरंति पुरुदस्यवःचोरबहुलाः ॥ ४४ ॥ आर्यधर्मःसदाचारः शुनांकपीनामिववार्थकामयोरे वाभिनिवेशितचित्तानां ॥ ४५ ॥ एवंराजमात्रस्यशापानर्हत्वमुक्काप्रस्तुतोविशेषमाह धर्मपालइतिसार्धेन हयमेधयाट्अश्वमेधयाजीन

निशम्यशप्तमतदर्हंनरेंद्रंसब्राह्मणोनात्मजमभ्यनंदत्॥अहोबतांहोमहदज्ञतेकृतंस्वल्पीयसिद्रोहउरुर्दमो धृतः॥४१॥ नवैनृभिर्नरदेवंपराख्यंसंमातुमर्हस्यविपक्कबुद्धे ॥ यत्तेजसादुर्विषहेणगुप्ताविंदंतिभद्राण्यकुतो भयाःप्रजाः॥४२॥अलक्ष्यमाणेनरदेवनाम्निरथांगपाणावयमंगलोकः ॥तदाहिचोरप्रचुरोविनंक्ष्यत्यरक्ष्य माणोऽविवरूथवत्क्षणात् ॥४३॥ तदद्यनःपापमुपैत्यनन्वयंयन्नष्टनाथस्यवसोर्विलुंपकात् ॥परस्परंघ्नंतिश पंतिवृंजतेपशून्स्त्रियोऽर्थान्पुरुदस्यवोजनाः ॥४४॥ तदार्यधर्मश्चविलीयतेनृणांवर्णाश्रमाचारयुतस्त्रयीम यः ॥ ततोऽर्थकामाभिनिवेशितात्मनांशुनांकपीनामिववर्णसंकरः॥४५॥धर्मपालोनरपतिःसतुसम्राट्बृह च्छ्रवाः ॥ साक्षान्महाभागवतोराजर्षिर्हयमेधयाट् ॥ क्षुत्तृट्श्रमयुतोदीनोनैवास्मच्छापमर्हति ॥ ४६ ॥ अपापेषुस्वभृत्येषुबालेनापक्कबुद्धिना ॥ पापंकृतंतद्भगवान्सर्वात्माक्षंतुमर्हति ॥ ४७ ॥ तिरस्कृताविप्रल ब्धाःशप्ताःक्षिप्ताहताअपिवा ॥ नास्यतत्प्रतिकुर्वंतितद्भक्ताःप्रभवोऽपिहि ॥ ४८ ॥ इतिपुत्रकृताघेनसोऽनु तप्तोमहामुनिः ॥ स्वयंविप्रकृतोराज्ञानैवाघंतदचिंतयत् ॥ ४९ ॥ ॥ ॥

न्वेवंभूतश्चेत्तत्कुतोऽपकृतवांस्तत्राह क्षुत्तृडिति स्वागतप्रश्नाद्यभावेनावज्ञातः प्रत्युतशापंकथमर्हतीत्यर्थः ॥ ४६ ॥ अस्यमहापापस्या न्यत्प्रायश्चित्तमदृष्ट्वापापमावेदयन्भगवंतंप्रार्थयते अपापेष्विति ॥ ४७ ॥ राजाचेत्प्रतिशापंदद्यात्तर्हिनिष्कृतिर्भवेदपितत्तुनसंभवतित स्यमहाभागवतत्वादित्याह तिरस्कृतानिंदिताः विप्रलब्धावंचिताः क्षिप्ताअवज्ञाताः हतास्ताडिताः अस्यतिरस्कारादिकर्तुः नतत्प्रती कारंकुर्वंति तद्भक्ताःविष्णुभक्ताः प्रभवःसमर्थाअपि ॥ ४८ ॥ विप्रकृतःअपकृतः अघमपराधम् ॥ ४९ ॥ ॥

युक्तं चैतादित्याह प्रायशइति द्वंद्वेषुसुखदुःखादिषु अगुणाश्रयःसुखदुःखाद्याश्रयोनभवति॥५०॥इतिप्रथ०टी०अष्टादशोऽध्यायः ॥ १८ ॥
प्रायोपविष्टेगंगायांराज्ञियोगिजनावृते ॥ शुकस्यागमनंतत्रप्रोक्तमेकोनविंशके ॥१॥ स्वकृतंतत्कर्म मुनिस्कंधेसर्पप्रक्षेपणंगर्ह्यंनिंद्यंचिंतयन्
सुदुर्मनाजातः चिंतामेवाहसार्धाभ्यां अहोइति नीचंपापं अमीवामितिपाठेसएवार्थः ब्रह्मणिब्राह्मणे गूढंगुप्तंतेजोयस्यतस्मिन् ॥ १ ॥ कृतं
यद्देवहेलनंईश्वरावज्ञापापमित्यर्थः तस्मान्मेव्यसनंभविष्यतितत्तुनातिदीर्घात्कालात्अचिरादेवास्तु तत्रापिअद्धासाक्षान्नपुत्रादिद्वारेणे
तिप्रार्थना काममसंकोचतः एवंप्रार्थनायाःप्रयोजनं अघस्यानिष्कृतायप्रायश्चित्ताय यथापुनरेवंनकुर्यामितिच ॥ २ ॥ एवंसाक्षात्स्वस्यै

प्रायशःसाधवोलोकेपरैर्द्वंद्वेषुयोजिताः॥नव्यथंतिनहृष्यंतियतआत्माऽगुणाश्रयः॥५०॥ इ०भा०म०प्र०
विप्रशापोपलंभनंनामाष्टादशोऽध्यायः ॥१८॥ ॥ ॥ सूतउवाच महीपतिस्त्वथतत्कर्मगर्ह्यंविचिंतय
न्नात्मकृतंसुदुर्मनाः॥ अहोमयानीचमनार्यवत्कृतंनिरागसिब्रह्मणिगूढतेजसि ॥१॥ ध्रुवंततोमेकृतदेवहेल
नाद्दुरत्ययंव्यसनंनातिदीर्घात्॥तदस्तुकामंत्वघनिष्कृतायमेयथानकुर्यांपुनरेवमद्धा ॥२॥ अद्यैवराज्यंबल
मृद्धकोशंप्रकोपितब्रह्मकुलानलोमे ॥ दहत्वभद्रस्यपुनर्नमेभूत्पापीयसीधीर्द्विजदेवगोभ्यः ॥ ३ ॥ सचिंतय
न्नित्थमथाशृणोद्यथामुनेःसुतोक्तोनिर्ऋतिस्तक्षकाख्यः ॥ ससाधुमेनेनचिरेणतक्षकानलंप्रसक्तस्यविरक्ति
कारणं॥४॥ अथोविहायेमममुंचलोकंविमर्शितौहेयतयापुरस्तात्॥ कृष्णांघ्रिसेवामधिमन्यमानउपाविश
त्प्रायममर्त्यनद्यां ॥५॥ यावैलसच्छ्रीतुलसीविमिश्रकृष्णांघ्रिरेण्वभ्यधिकांबुनेत्री॥पुनातिलोकानुभयत्रसे
शान्कस्तांनसेवेतमरिष्यमाणः॥६॥

व्यसनंसंप्रार्थ्यतत्प्रागेवकिंचित्प्रार्थयते अद्यैवमेराज्यादिदहतुप्रकोपितंब्रह्मकु
लमेवानलः पुनर्द्विजान्पीडयितुंधीर्मेमाभून्नभवेदित्यर्थः ॥ ३ ॥ इत्थंचिंतयन्सराजामुनेःसुतेनोक्तःसप्तमेऽहनिनिर्ऋतिर्मृत्युर्यथाभविष्य
तितथाऽशृणोत् शमीकप्रेषितशिष्याच्छ्रुत्वाचसतक्षकस्यविषाग्निंसाधुमेने यतोविषयेषुप्रसक्तस्यविरक्तिकारणं ॥ ४ ॥ अथोऽनंतरमुभौ
लोकौपुरस्ताद्राज्यमध्यएवहेयतयाविचारितौविहायश्रीकृष्णांघ्रिसेवामेवाधिमन्यमानःसर्वपुरुषार्थाधिकांजानन्प्रायमनशनंतस्मिन्नित्यर्थः
तत्संकल्पेनोपाविशदितियावत् यद्वा प्रायंप्रकृष्टमयनंशरणंयथाभवतितथा॥५॥अमर्त्यनद्यामितिविशेषणस्यफलमाह यागंगालसंतीश्री
र्यस्यास्तुलस्यास्तयाविमिश्रायेकृष्णांघ्रिरेणवस्तैरभ्यधिकंसर्वोत्कृष्टंयदंबुतस्यनेत्रीतद्वाहिनी उभयत्रअंतर्बहिश्चसेशान्लोकपालैःसहिता
न्लोकान्पुनाति मरिष्यमाणःआसन्नमरणः मरणस्यानियतकालत्वात्सर्वोपितथाअतस्तांकोनसेवेत ॥ ६ ॥ ॥

इतिएवंविष्णुपद्यांगंगायांप्रायोपवेशंप्रतिव्यवच्छिद्यानिश्चित्य पांडवेयइतितत्कुलौचित्यंदर्शयति नास्त्यन्यस्मिन्भावोयस्यसः कुतः मुनि व्रतः उपशांतः तत्कुतः मुक्तःसमस्तसंगोयेनसः ॥७॥तत्रतदातद्दर्शनार्थंमुनयउपागताःनतुतीर्थस्नानार्थं कृतार्थत्वात् ननुतादृशानामपितीर्थयात्रादृश्यतेतत्राह प्रायेणेति तीर्थयात्राव्याजैः ॥८॥९ ॥ १० ॥ अरुणादयःकांडर्षित्वविशेषेणपृथङ्निर्दिष्टाः नानायान्यार्षेयाणिऋषीणां गोत्राणितेषुप्रवरान्श्रेष्ठान् शिरसाभुवंस्पृष्ट्वाववंदे ॥ ११ ॥ विज्ञापनार्थंपुनःकृतप्रणामः विविक्तंशुद्धंचेतोयस्य अभिगृहीतौसंयोजितौपाणीयेनसः स्वचिकीर्षितंप्रायोपवेशनादियुक्तमयुक्तंवेतिविज्ञापयामास ॥ १२ ॥ अनुमोदनेनानुग्रहमालक्ष्यात्मानंश्लाघते अहोइति नृ

इतिव्यवच्छिद्यसपांडवेयःप्रायोपवेशंप्रतिविष्णुपद्याम्॥दध्यौमुकुंदांघ्रिमनन्यभावोमुनिव्रतोमुक्तसमस्तसंगः॥७॥तत्रोपजग्मुर्भुवनंपुनानामहानुभावामुनयःसशिष्याः॥ प्रायेणतीर्थाभिगमापदेशैःस्वयंहितीर्थानिपुनंतिसंतः॥८॥अत्रिर्वसिष्ठश्च्यवनःशरद्वानरिष्टनेमिर्भृगुरंगिराश्च॥ पराशरोगाधिसुतोऽथरामउतथ्यइंद्रप्रमदेध्मवाहौ ॥९॥ मेधातिथिर्देवलआर्ष्टिषेणोभारद्वाजोगौतमःपिप्पलादः ॥ मैत्रेयऔर्वःकवषःकुंभयोनिर्द्वैपायनोभगवान्नारदश्च ॥१०॥ अन्येचदेवर्षिब्रह्मर्षिवर्याराजर्षिवर्याअरुणादयश्च ॥ नानार्षेयप्रवरान्समेतानभ्यर्च्यराजाशिरसाववंदे ॥११॥ सुखोपविष्टेष्वथतेषुभूयःकृतप्रणामःस्वचिकीर्षितंयत्॥विज्ञापयामासविविक्तचेताउपस्थितोग्रेभिगृहीतपाणिः ॥ १२ ॥ राजोवाच अहोवयंधन्यतमानृपाणांमहत्तमानुग्रहणीयशीलाः ॥ राज्ञांकुलंब्राह्मणपादशौचाद्दूराद्विसृष्टंबतगर्ह्यकर्म ॥ १३ ॥ तस्यैवमेऽघस्यपरावरेशोऽव्यासक्तचित्तस्यगृहेष्वभीक्ष्णम्॥ निर्वेदमूलोद्विजशापरूपोयत्रप्रसक्तोभयमाशुधत्ते ॥१४॥

पाणांमध्येमहत्तमैरनुग्रहणीयंशीलंवृत्तंयेषांते एतच्चराज्ञामतिदुर्लभमित्याह ब्राह्मणानांपादशौचात्पादक्षालनोदकात् दूरादुच्छिष्टविण्मूत्रपादांभांसिसमुत्सृजेदितिस्मृतेर्दूरेहितैस्ताद्विसृज्यते ततोपिदूरादेवविसृष्टंक्षिप्तं तत्रापिस्थातुमयोग्यमित्यर्थः गर्ह्यंकर्मयस्येत्यात्मानमुद्दिश्यउक्तं ॥ १३ ॥ आस्तांतावदनुग्रहः ब्रह्मशापोपिभगवत्प्रसादादेवजातइत्याह तस्यगर्ह्यकर्मणएव अतःअघस्यपापात्मनोगृहेष्वासक्तचित्तस्यमेस्वप्राप्तयेपरावराणामीशएवद्विजशापतयाबभूव यत्रयस्मिन्शापेसतिगृहेषुप्रसक्तोभयंधत्तेनिर्विण्णोभवतियतोनिर्वेदमूलः निर्वेदोवैराग्यंमूलंप्राप्तिकारणंयस्मिन् स्वस्यवैराग्यप्राप्यत्वात्तस्यचभयमूलत्वात्तदर्थंद्विजशापंकारितवानित्यर्थः ॥ १४ ॥

तान्प्रार्थयते तमितिद्वाभ्यां तंमामामुपयातंशरणागतंप्रतियंतुजानंतु देवीदेवतारूपागंगाचप्रत्येतु वाशब्दःप्रतिक्रियाऽनादरे गाथाःकथाः ॥ १५ ॥ सआश्रयोयेषांतेषुप्रकृष्टःसंगोभूयात् तस्यांतस्यांसृष्टौजन्मनि ॥ १६ ॥ अध्यवसायोनिश्चयः प्राचीनानिप्रागग्राणिमूलानियेषांतेषुप्रागग्रेषुकुशेषुआस्तेस्म स्वसुतेजनमेजयेन्यस्तोभारोराज्यंयेनसः ॥ १७ ॥ मुदाव्यकिरन् देवसंघैर्वादितानेदुः ॥ १८ ॥ प्रजानुग्रहेशीलंस्वभावःसारोबलंचयेषाम् उत्तमश्लोकगुणैरभिरूपंसुंदरमिव ॥ १९ ॥ भवत्सुपांडोर्वंश्येषुयेजहुरितियुधिष्ठिराद्यभिप्रायेण ॥ २० ॥ परस्परंसंमंत्रयंते सर्वइति परंश्रेष्ठंलोकम् तत्रहेतुः विरजस्कंनिर्मायंविशोकंचयास्यतीति कुतस्तत्राह अयमिति ॥ २१ ॥

तंमोपयातंप्रतियंतुविप्रागंगाचदेवीधृतचित्तमीशे ॥ द्विजोपसृष्टःकुहकस्तक्षकोवादशत्वलंगायतविष्णुगाथाः ॥१५॥ पुनश्चभूयाद्भगवत्यनंतेरतिःप्रसंगश्चतदाश्रयेषु॥महत्सुयांयामुपयामिसृष्टिंमैत्र्यस्तुसर्वत्रनमोद्विजेभ्यः॥ १६ ॥ इतिस्मराजाध्यवसाययुक्तःप्राचीनमूलेषुकुशेषुधीरः॥उदङ्मुखोदक्षिणकूलआस्तेसमुद्रपत्न्याःस्वसुतन्यस्तभारः॥१७॥ एवंचतस्मिन्नरदेवदेवेप्रायोपविष्टेदिविदेवसंघाः॥प्रशस्यभूमौव्यकिरन्प्रसूनैर्मुदामुहुर्दुंदुभयश्चनेदुः॥१८॥ महर्षयोवैसमुपागतायेप्रशस्यसाध्वित्यनुमोदमानाः ॥ऊचुःप्रजानुग्रहशीलसारायदुत्तमश्लोकगुणाभिरूपम्॥१९॥ नवाइदंराजर्षिवर्यचित्रंभवत्सुकृष्णंसमनुव्रतेषु ॥ येऽध्यासनंराजकिरीटजुष्टंसद्योजहुर्भगवत्पार्श्वकामाः ॥ २० ॥ सर्वेवयंतावदिहास्महेऽथकलेवरंयावदसौविहाय ॥ लोकंपरंविरजस्कंविशोकंयास्यत्ययंभागवतप्रधानः ॥२१ ॥ आश्रुत्यतदृषिगणवचःपरीक्षित्समंमधुच्युद्गुरुचाव्यलीकम्॥ आभाषतैनानभिनंद्ययुक्तंशुश्रूषमाणश्चरितानिविष्णोः ॥२२॥समागताःसर्वतएवसर्वेवेदायथामूर्त्तिधरास्त्रिपृष्ठे ॥नेहाथवामुत्रचकश्चनार्थऋतेपरानुग्रहमात्मशीलम् ॥२३ ॥ ततश्चवःपृच्छ्यमिमंविपृच्छेविश्रभ्यविप्राइतिकृत्यतायाम् ॥ सर्वात्मनाम्रियमाणैश्चकृत्यंशुद्धंचतत्रामृशताभियुक्ताः ॥२४ ॥

आश्रुत्यआकर्ण्य समंपक्षपातशून्यं मधुच्युत्अमृतस्त्रावि गुरुगंभीरार्थं अव्यलीकंसत्यं ॥ २२ ॥ त्रयाणांलोकानांपृष्ठेउपरिसत्यलोकेवेदायथामूर्त्तिधराभवंतितत्तुल्याः ज्ञानातिशयमुक्त्वाकृपालुतामाह नेहेति भवतांप्रयोजनंपरानुग्रहंविनानास्ति तर्हिसएवार्थःस्यात् न आत्मशीलंस्वस्वभावं ॥ २३ ॥ पृच्छ्यंप्रष्टव्यं विश्रभ्यविश्वासंकृत्वा एवंकर्त्तव्यस्यभावइतिकृत्यतातास्मिन्विषयेसर्वात्मनासर्वावस्थासुयत्कृत्यंविशेषतश्चम्रियमाणैस्तच्चशुद्धंपापसंपर्करहितंआमृशतविचारयत अभियुक्ताःएकमतयः ॥ २४ ॥ ॥

तत्रतेषुयागयोगतपोदानादिभिर्विवदमानेषुसत्सुयदृच्छयागांपर्यटन्व्यासपुत्रस्तत्रअभवत्प्राप्तः नलक्ष्यमाश्रमादिलिंगंयस्य अवधूतःअ वज्ञायजनैस्त्यक्तोयस्तस्यैववेषोयस्यसः ॥ २५ ॥ तमित्यादीनांप्रत्युत्थिताइतितृतीयश्लोकेनान्वयः द्विगुणान्यष्टौवर्षाणियस्य सुकुमारौपा दौकरौऊरूबाहूअंसौकपोलौगात्रंचयस्य चारुणीआयतेअक्षिणीयस्मिन् उन्नतानासायस्मिन् लंबन्हस्वादिवैषम्यंविनातुल्यौकर्णौयस्मि न् शोभनेचभ्रुवौयस्मिन् एवंभूतमाननंयस्य कंबुवद्रेखात्रयांकितःसुष्ठुजातःकंठोयस्य ॥ २६ ॥ कंठस्याधोभागयोःस्थितेअस्थिनीजत्रुणी मांसेननिगूढेजत्रुणीयस्य पृथुविस्तीर्णंतुंगमुन्नतंचवक्षोयस्य आवर्त्तवन्नाभिर्यस्य वलिभिस्तिर्यङ्निम्नरेखाभिर्वल्गुरम्यमुदरंयस्यदिशएव

तत्राभवद्भगवान्व्यासपुत्रोयदृच्छयागामटमानोऽनपेक्षः ॥ अलक्ष्यलिंगोनिजलाभतुष्टोवृतस्त्रिबालैरवधूतवेषः ॥२५॥ तंद्व्यष्टवर्षंसुकुमारपादकरोरुबाह्वंसकपोलगात्रं ॥ चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननंकंबुसुजातकंठम् ॥ २६ ॥ निगूढजत्रुंपृथुतुंगवक्षसमावर्तनाभिंवलिवल्गूदरंच ॥ दिगंबरंवक्त्रविकीर्णकेशंप्रलंबबाहुंस्वमरोत्तमाभं ॥ २७ ॥ श्यामंसदाऽपीच्यवयोंऽगलक्ष्म्यास्त्रीणांमनोज्ञंरुचिरस्मितेन ॥ प्रत्युत्थितास्ते मुनयःस्वासनेभ्यस्तल्लक्षणज्ञाअपिगूढवर्चसम् ॥ २८ ॥ सविष्णुरातोतिथयआगतायतस्मैसपर्यांशिरसा जहार ॥ ततोनिवृत्ताह्यबुधाःस्त्रियोर्भकामहासनेसोपविवेशपूजितः ॥२९॥ ससंवृतस्तत्रमहान्महीयसांब्रह्मर्षिराजर्षिदेवर्षिसंघैः ॥व्यरोचतालंभगवान्यथेंदुर्ग्रहर्क्षतारानिकरैःपरीतः ॥३०॥ प्रशांतमासीनमकुंठमेधसंमुनिंनृपोभागवतोऽभ्युपेत्य ॥ प्रणम्यमूर्ध्नाऽवहितःकृतांजलिर्नत्वागिरासूनृतयान्वपृच्छत् ॥ ३१ ॥

अंबरंयस्य वक्राविकीर्णाःकेशायस्य प्रलंबौबाहूयस्य स्वमरेषुश्रेष्ठदेवेषुउत्तमोहरिस्तद्वदाभायस्यतम् ॥ २७ ॥ सदाअपीच्यमत्युत्तमंयद्वयोयौवनंतेनयाअंगलक्ष्मीर्देहकांतिस्तयारुचिरस्मितेनचगूढवर्चसमपिप्रत्युत्थितास्तंदृष्ट्वाप्रत्युद्गमंकृतवंतइत्यर्थः ॥ २८ ॥ शिरसैवसपर्यामाजहारआत्मनिवेदनंकृतवान् तेनसहागताःस्त्र्यपत्यादयोनिवृत्ताः सचोपविवेश संधिरार्षः ॥ २९ ॥ सभगवान्ब्रह्मर्ष्यादिसंघैःसंवृतःसन् अलंव्यरोचत ग्रहाःशुक्रादयः ऋक्षाण्यश्विन्यादीनि अन्यास्ताराः ॥ ३० ॥ नकुंठासर्वार्थेषुमेधायस्यतम् प्रणम्यतत्प्रश्नार्थंपुनर्नत्वा ॥ ३१ ॥

सूनृतांगिरमाह अहोइतिपंचभिः सतांसेव्याजाताः यतः अतिथिरूपेणहेतुनातीर्थकाःयोग्याः कृताः ॥ ३२ ॥ ३३ ॥ विष्णोःसान्निध्या
दसुरादयइव ॥ ३४ ॥ पांडुसुतानांप्रियःअतस्तेषांपैतृष्वस्त्रेयानांप्रीत्यर्थंतद्गोत्रस्यमेअत्तंस्वीकृतंबांधवंबंधुकृत्यंयेनसः ॥ ३५ ॥ अन्यथाश्री
कृष्णप्रसादंविना अव्यक्तागतिर्यस्य म्रियमाणानांनितरांकथंस्यात् वनायितायाचायिता वनयितृतमोवनीयांस्तस्य अत्युदारतयायाचे
थाइतिप्रवर्त्तकस्येत्यर्थः ॥ ३६ ॥ सम्यक्सिद्धिर्यस्मात्तं कार्यंकर्त्तुंयोग्यं कर्त्तव्यंतुआवश्यकमितिभेदः अतएवसर्वथाम्रियमाणस्यपुरुष
स्ययस्मिन्कृतेसंसिद्धिर्मोक्षलक्षणासिद्धिर्भवति त्वांयोगिनांगुरुंपृच्छामि ॥ ३७ ॥ यच्छ्रोतव्यंयज्जाप्यंयत्कर्तव्यंयत्स्मर्तव्यंयदाराध्यंतद्ब्रूहि

अहोअद्यवयंब्रह्मन्सत्सेव्याःक्षत्रबंधवः॥ कृपयाऽतिथिरूपेणभवद्भिस्तीर्थकाःकृताः॥३२॥ येषांसंस्मरणा
त्पुंसांसद्यःशुद्ध्यंतिवैगृहाः ॥ किंपुनर्दर्शनस्पर्शपादशौचासनादिभिः॥३३॥सान्निध्यात्तेमहायोगिन्पातका
निमहांत्यपि॥सद्योनश्यंतिवैपुंसांविष्णोरिवसुरेतराः॥३४॥अपिमेभगवान्प्रीतःकृष्णःपांडुसुतप्रियः॥पैतृ
ष्वस्त्रेयप्रीत्यर्थंतद्गोत्रस्यात्तबांधवः॥३५॥ अन्यथातेऽव्यक्तगतेर्दर्शनंनःकथंनृणां ॥ नितरांम्रियमाणानांसं
सिद्धस्यवनीयसः ॥३६॥ अतःपृच्छामिसंसिद्धिंयोगिनांपरमंगुरुं ॥ पुरुषस्येहयत्कार्यंम्रियमाणस्यसर्वथा
॥ ३७॥ यच्छ्रोतव्यमथोजाप्यंयत्कर्तव्यंनृभिःप्रभो ॥ स्मर्तव्यंभजनीयंवाब्रूहियद्वाविपर्ययं॥ ३८॥ नूनंभ
गवतोब्रह्मन्गृहेषुगृहमेधिनां ॥नलक्ष्यतेह्यवस्थानमपिगोदोहनंक्वचित् ॥ ३९ ॥ सूतउवाच एवमाभाषि
तःपृष्टःसराज्ञाश्लक्ष्णयागिरा ॥प्रत्यभाषतधर्मज्ञोभगवान्बादरायणिः ॥४०॥ इतिश्रीभा०म०अष्टादश
साहस्र्यांपारमहंस्यांसंहितायांप्रथमस्कंधेशुकागमनंनामैकोनविंशोऽध्यायः॥१९॥समाप्तोयंप्रथमस्कंधः

विपर्ययमश्रोतव्यादि ॥ ३८ ॥ तवदर्शनस्यपुनर्दुर्लभत्वादिदानीमेवकथनीयमित्याशयेनाह नूनमिति गोदोहनमात्रकालमपि ॥ ३९ ॥
एवमहोइत्यादिकयाश्लक्ष्णयामधुरयागिराआभाषितःअभिमुखीकृतःपृष्टश्च ॥ ४० ॥ आर्यधर्मंजमाहतारिमवनौकृत्वापरीक्षिन्नृपंब्रह्म
स्त्रादभिरक्षितंकलिजयख्यातंचकृत्वाभुवि ॥ अंतेयःशुकरूपतःस्वपरमज्ञानोपदेशेनतंशापादावदमुंनमामिपरमानंदाकृतिंमाधवं ॥ १ ॥
इतिश्रीमद्भागवतभावार्थदीपिकायांश्रीधरस्वामिविरचितायांप्रथमस्कंधटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ समाप्तोयंप्रथमस्कंधः

श्रीगणेशायनमः ॥ द्वितीयेतुदशाध्यायैःश्रीभागवतमादितः ॥ उद्देशलक्षणोक्तिभ्यांसंक्षेपेणोपवर्ण्यते ॥ १ ॥ तत्रतुप्रथमेऽध्यायकीर्तनश्रवणादिभिः ॥ स्थविष्ठेभगवद्रूपेमनसोधारणोच्यते ॥ २ ॥ यन्नामकीर्तनंदानतपोयोगादिसत्फलं ॥ तंनित्यंपरमानंदंहरिंनरनमस्मर ॥ ३ ॥ अथद्वितीयस्कंधव्याख्या उक्तःपूर्वमुपोद्घातःसप्रसंगःशुकागमः ॥ राज्ञापृष्टंनृणांकृत्यमथाहशुकसन्मुनिः ॥ ४ ॥ राज्ञःप्रश्नमभिनंदति वरीयानिति तेत्वयापुंसांश्रोतव्यादिषुमध्येयःपरःश्रेष्ठःगोचरःप्रश्नःकृतएषवरीयान् यतोलोकहितमेतत् मोक्षहेतुत्वात् आत्मविदांमुक्तानांचसंमतोयतः ॥ १ ॥ तत्रतावत्स्वाभाविकक्रियाणामनर्थहेतुत्वंवदन्ब्रूहि यद्वाविपर्ययमित्यस्योत्तरमाह श्रोतव्यादीनीतित्रिभिः गृहेषुसक्तानामतएवगृहमेधिनांतद्व्रतपंचसूनापराणाम् मेधेतिहिंसार्थः ॥ २ ॥ तैश्चवृथैवायुर्व्ययोभवतीत्याह नक्तंरात्रौयद्वयःआयुःतन्निद्र

**नमोभगवतेवासुदेवाय श्रीशुकउवाच वरीयानेषतेप्रश्नःकृतोलोकहितंनृप ॥ आत्मवित्संमतःपुंसांश्रोतव्यादिषुयःपरः ॥१॥ श्रोतव्यादीनिराजेंद्रनृणांसंतिसहस्रशः ॥ अपश्यतामात्मतत्त्वंगृहेषुगृहमेधिनां ॥२॥ निद्रयाह्रियतेनक्तंव्यवायेनचवावयः ॥ दिवाचार्थेहयाराजन्कुटुंबभरणेनवा ॥३॥ देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि ॥ तेषांप्रमत्तोनिधनंपश्यन्नपिनपश्यति ॥४॥ तस्माद्भारतसर्वात्माभगवान्हरिरीश्वरः ॥ श्रोतव्यःकीर्तितव्यश्चस्मर्तव्यश्चेच्छताऽभयं ॥५॥ एतावान्सांख्ययोगाभ्यांस्वधर्मपरिनिष्ठया ॥ जन्मलाभःपरःपुंसामंतेनारायणस्मृतिः ॥६॥ प्रायेणमुनयोराजन्निवृत्ताविधिषेधतः ॥ नैर्गुण्यस्थारमंतेस्मगुणानुकथनेहरेः ॥७॥**

याव्यवायेनरत्यावाह्रियते दिवाअह्नियद्वयःतत् अर्थेहयाअर्थार्थमुद्यमेन सिद्धेऽर्थेकुटुंबपोषणेनवा चकारावनुक्तसमुच्चयार्थौ ॥ ३ ॥ ननुनश्वरकुटुंबाद्यर्थंकथमायुर्व्ययंकुर्यात्तत्राह देहादिषुआत्मनःसैन्येषुपरिकरेषु असत्सुमिथ्याभूतेष्वपि प्रमत्तःप्रसक्तः तेषांपित्रादिदृष्टांतेननाशंपश्यन्नपिनानुसंधत्ते ॥४॥ एवंविपर्ययप्रश्नोत्तरमुक्त्वा श्रोतव्यादिप्रश्नस्योत्तरमाह तस्मादिति हेभारतभरतवंश्य सर्वात्मेतिश्रेष्ठत्वमाहभगवानितिसौंदर्यम् ईश्वरइत्यावश्यकत्वम् हरिरितिबंधहारित्वम् अभयंमोक्षमिच्छता ॥ ५ ॥ अतःपरमन्यच्छ्रेयोनास्तीत्याह एतावानेवजन्मनोलाभःफलम् तमाह नारायणस्मृतिरिति सांख्यादिभिःसाध्यइतितेषांस्वातंत्र्येणलाभत्वंवारयति सांख्यमात्मानात्मविवेकः योगोष्टांगः अंतेतुस्मृतिःपरोलाभः नतन्महिमावक्तुंशक्यइत्यर्थः ॥ ६ ॥ तत्रसदाचारंप्रमाणयति प्रायेणेति विधिषेधतःविधिनिषेधाभ्यांनिवृत्ताःनैर्गुण्येब्रह्मणिस्थिताअपिरमप्रसिद्धम् ॥ ७ ॥ ॥ ॥ ॥

किमिदमपूर्वंकथयसिसत्यमत्यपूर्वंमेवेदमित्याह इदंभगवत्प्रोक्तम् तन्नामैकप्रधानंपुराणम् ब्रह्मसंमितंसर्ववेदतुल्यं यद्वा ब्रह्मसम्यक्मितं
येनकुतस्त्वयाप्राप्तमतआह अधीतवानिति ॥ ८ ॥ सिद्धस्यतवकुतोऽध्ययनेप्रवृत्तिस्तत्राह परिनिष्ठितोऽपीति गृहीतचेताआकृष्टचित्तः॥
॥ ९ ॥ महापुरुषोविष्णुः तदीयःयस्ययस्मिन्श्रद्धांकुर्वतां सतीअहैतुकी ॥ १० ॥ साधकानांसिद्धानांचनातःपरमन्यच्छ्रेयोऽस्तीत्याह एतदिति
इच्छतांकामिनांतत्तत्फलसाधनमेतदेव निर्विद्यमानानांमुमुक्षूणांमोक्षसाधनमेतदेव योगिनांज्ञानिनांफलंचैतदेवनिर्णीतं नात्रप्रमाणंप्रव
क्तव्यमित्यर्थः ॥ ११ ॥ अल्पमेवायुरवशिष्टंकिमहंसाधयेयमितिमाशुचइत्याह किमितित्रिभिः परोक्षैरलक्षितैर्हायनैर्वर्षैः विदितंवृथाया
तीतिज्ञातम् यतोयेनज्ञातेनघटेतयत्नंकुर्यात् ॥ १२ ॥ खट्वांगोहिदेवपक्षेस्थित्वादैत्यानजयत्ततःप्रसन्नैर्देवैर्वरंवृणीष्वेत्युक्तोऽतस्तेनोक्तप्र

इदंभागवतंनामपुराणंब्रह्मसंमितं॥ अधीतवान्द्वापरादौपितुर्द्वैपायनादहं॥ ८॥ परिनिष्ठितोपिनैर्गुण्येउ
त्तमश्लोकलीलया ॥ गृहीतचेताराजर्षेआख्यानंयदधीतवान्॥९॥ तदहंतेऽभिधास्यामिमहापौरुषिकोभ
वान् ॥ यस्यश्रद्दधतामाशुस्यान्मुकुंदेमतिःसती ॥१०॥ एतन्निर्विद्यमानानामिच्छतामकुतोभयं ॥ योगि
नांनृपनिर्णीतंहरेर्नामानुकीर्तनं ॥११॥ किंप्रमत्तस्यबहुभिःपरोक्षैर्हायनैरिह॥ वरंमुहूर्तंविदितंघटेतश्रेयसे
यतः॥१२॥खट्वांगोनामराजर्षिर्ज्ञात्वेयत्तामिहायुषः ॥ मुहूर्तात्सर्वमुत्सृज्यगतवानभयंहरिं ॥ १३ ॥ तवा
प्येतर्हिकौरव्यसप्ताहंजीवितावधिः॥उपकल्पयतत्सर्वंतावद्यत्सांपरायिकं ॥१४॥ अंतकालेतुपुरुषआगते
गतसाध्वसः ॥ छिंद्यादसंगशस्त्रेणस्पृहांदेहेऽनुयेचतं॥१५॥गृहात्प्रव्रजितोधीरःपुण्यतीर्थजलाप्लुतः॥शुचौ
विविक्तआसीनोविधिवत्कल्पितासने ॥ १६ ॥ ॥ ॥ ॥

थमंतावन्ममायुःकथ्यतामिति ततोदेवैरुक्तंतत्तुमुहूर्तमात्रमस्तीति ततोऽतिशीघ्रंविमानेनभुवमागत्यहरिंशरणंगतइति यतइयंस्वर्गभूमीरजो
धिका कर्मभूमिःपृथ्वी ॥ १३ ॥ तवतुएतर्ह्यपिइदानीमपि तावदिति तावताकालेनसांपरायिकंपारलौकिकंसाधनंसंपादय॥ १४ ॥ तत्रवै
राग्यंतावदाह अंतकालइति गतसाध्वसःमृत्युभयशून्यः असंगोनामानासक्तिस्तेनशस्त्रेणस्पृहांसुखेच्छां तंदेहमनुयेपुत्रकलत्रादयःतेष्व
पिस्पृहांछिंद्यात् ॥ १५ ॥ किंच गृहात्प्रव्रजितःनिर्गतः गृहेस्थितस्यपुनरप्यासक्तिसंभवात् तत्राष्टांगयोगमाह धीरइति ब्रह्मचर्यादियमोपल
क्षणं पुण्यतीर्थेतिस्नानादिनियमोपलक्षणं आसनमाह शुचाविति विविक्तेएकांते विधिवत्कुशाजिनचैलैःक्रमेणनिर्मिते ॥ १६ ॥

जपगर्भंप्राणायामंवक्तुंजप्यमाह त्रिवृद्ब्रह्माक्षरंत्रिवृत्रिभिरकारादिभिर्वर्तितंग्रथितंब्रह्माक्षरंप्रणवम् मनसाऽभ्यसेत् आवर्तयेत् मनसाइंद्रियप्र त्याहारंवक्तुंप्राणायामेनमनोनियमनमाह मनोयच्छेत् वशीकुर्यात् ब्रह्मबीजंप्रणवमविस्मरन्नेवजितश्वासःसन् ॥ १७ ॥ प्रत्याहारमाहनि यच्छेत् निगृह्णीयात् अक्षान् इंद्रियाणि निश्चयात्मिकाबुद्धिःसारथिर्यस्यसः धारणामाह मनइति पुनश्चकर्मभिःतद्वासनाभिराक्षिप्तमाकृष्टं शुभार्थेभगवद्रूपे ॥ १८ ॥ ध्यानमाह तत्रेति एकमेकंपादाद्यवयवम् अव्युच्छिन्नेनसमग्ररूपादवियुक्तेनआश्रयाविशेषेणसामान्यताश्चित्त स्थिरीकरणंधारणा अवयवविभावनयातद्दार्ढ्यंध्यानमितिभेदः समाधिमाह निर्विषयंमनोयुंक्त्वासमाधायस्थिरीभूतेमनसिस्फुरत्परमानंद

अभ्यसेन्मनसाशुद्धंत्रिवृद्ब्रह्माक्षरंपरं ॥ मनोयच्छेज्जितश्वासोब्रह्मबीजमविस्मरन् ॥ १७ ॥ नियच्छेद्वि षयेभ्योऽक्षान्मनसाबुद्धिसारथिः ॥ मनःकर्मभिराक्षिप्तंशुभार्थेधारयेद्धिया ॥ १८ ॥ तत्रैकावयवंध्यायेदव्यु च्छिन्नेनचेतसा ॥ मनोनिर्विषयंयुंक्त्वाततःकिंचननस्मरेत् ॥ पदंतत्परमंविष्णोर्मनोयत्रप्रसीदति ॥ १९ ॥ रजस्तमोभ्यामाक्षिप्तंविमूढंमनआत्मनः ॥ यच्छेद्धारणयाधीरोहंतियातत्कृतंमलं ॥ २० ॥ यतःसंधार्य माणायांयोगिनोभक्तिलक्षणः ॥ आशुसंपद्यतेयोगआश्रयंभद्रमीक्षतः ॥ २१ ॥ राजोवाच यथासंधा र्यतेब्रह्मन्धारणायत्रसंमता ॥ यादृशीवाहरेदाशुपुरुषस्यमनोमलं ॥ २२ ॥ श्रीशुकउवाच जिता सनोजितश्वासोजितसंगोजितेंद्रियः ॥ स्थूलेभगवतोरूपेमनःसंधारयेद्धिया ॥ २३ ॥ विशेषस्तस्यदेहो ऽयंस्थविष्ठश्चस्थवीयसां ॥ यत्रेदंदृश्यतेविश्वंभूतंभव्यंभवच्चसत् ॥ २४ ॥ ॥

मात्राकारंकृत्वेत्यर्थः प्रसीदतिउपशाम्यति ॥ १९ ॥ गुणवशात्पुनरपिक्षोभेसतिधारणामेवस्थिरांकुर्यादित्याह रजसाआक्षिप्तंतमसाविमू ढम्स्वीयंमनोनिरुंध्यात् तत्कृतंरजस्तमोभ्यांकृतम् ॥ २० ॥ यतः यस्यांक्रियमाणायांभद्रंसुखात्मकमाश्रयंविषयंपश्यतःतत्रैवप्रीतिर्भव ति ॥ २१ ॥ यथायत्रयादृशीचेतिकर्तव्यताविषयतत्तद्विशेषणानांप्रश्नाः ॥ २२ ॥ यथेत्यस्योत्तरम् जितासनइति विषयमाह स्थूलइति सार्धेन ॥ २३ ॥ विशेषोविराट्देहःअतिस्थूलानामपिस्थूलतरःसत्कार्यमात्रम् ॥ २४ ॥ ॥ ॥ ॥

अस्यचोपलक्षणत्वेनविषयत्वं वस्तुतस्तुविराट्जीवनियंताभगवानेवविषयइत्याह आंडकोशांतर्वर्तिनिकटाहएवपृथिव्यावरणं ततअग्ने
जोवाय्वाकाशाहंकारमहत्तत्वानीतिसंप्त ॥ २५ ॥ विराट्देहतज्जीवतदंतर्यामिणामभेदमारोप्योपासनंकर्तव्यमित्याशयेनाह पातालंपाद
मूलंपादस्याधोभागं पातालादीनांतदवयवताविधीयते पातालादीनिअतलांतानि अधस्तनादारभ्यसप्तभूविवराणि पठंतिगृणंतीत्यादिप्रमा
णप्रदर्शनं पार्ष्णिप्रपदेपादस्यपश्चात्पुरोभागौ ॥ २६ ॥ ऊरुद्वयस्याधोभागेवितलमुत्तरभागेअतलमितिज्ञेयं नाभिरेवसरः ॥ २७ ॥ ज्योति
रनीकंज्योतिषांसमूहंस्त्वर्गम् महर्लोकंग्रीवेतिगृणंति तपोलोकंरराटीमूललाटम् सत्यंसत्यलोकम् ॥ २८ ॥उस्राःदेवाःतेजोमयशरीरत्वात्ते

आंडकोशेशरीरेस्मिन्सप्तावरणसंयुते ॥ वैराजःपुरुषोयोऽसौभगवान्धारणाश्रयः ॥ २५ ॥ पातालमेत
स्यहिपादमूलंपठंतिपार्ष्णिप्रपदेरसातलं ॥ महातलंविश्वसृजोथगुल्फौतलातलंवैपुरुषस्यजंघे ॥ द्वेजानु
नीसुतलंविश्वमूर्तेरूरुद्वयंवितलंचातलंच ॥ महीतलंतज्जघनंमहीपतेनभस्तलंनाभिसरोगृणंति ॥ २७ ॥
उरस्थलंज्योतिरनीकमस्यग्रीवामहर्वदनंवैजनोऽस्य ॥ तपोरराटींविदुरादिपुंसःसत्यंतुशीर्षाणिसहस्त्रशी
र्ष्णः ॥ २८ ॥ इंद्रादयोबाहवआहुरुस्राःकर्णौदिशःश्रोत्रममुष्यशब्दः ॥ नासत्यदस्रौपरमस्यनासेघ्राणो
ऽस्यगंधोमुखमग्निरिद्धः ॥ २९ ॥ द्यौरक्षिणीचक्षुरभूत्पतंगःपक्ष्माणिविष्णोरहनीउभेच ॥ तद्भ्रूविजृंभःप
रमेष्ठिधिष्ण्यमापोस्यतालूरसएवजिव्हा ॥ ३० ॥ छंदांस्यनंतस्यशिरोगृणंतिदंष्ट्रायमःस्नेहकलाद्विजानि
॥ हासोजनोन्मादकरीचमायादुरंतसर्गोयदपांगमोक्षः ॥ ३१ ॥ व्रीडोत्तरोष्ठोऽधरएवलोभोधर्मस्तनोऽधर्म
पथोऽस्यपृष्ठः ॥ कस्तस्यमेढ्रंवृषणौचमित्रौकुक्षिःसमुद्रागिरयोऽस्थिसंघाः ॥ ३२॥ ॥

बाहवइत्याहुः दिशःअस्मदादिश्रोत्राधिष्ठात्र्योदेवताः कर्णौश्रोत्रस्याधिष्ठानं शब्दस्तुश्रोत्रविषयःसतस्यश्रोत्रेंद्रियं एवंनासिकादिष्वपि
नासत्यदस्रौअश्विनौनासेनासापुटे इद्धोदीप्तः॥२९॥द्यौरंतरिक्षं अक्षिणीनेत्रगोलके चक्षुःइंद्रियं पतंगःसूर्यःअहनीरात्र्यहनीपरमेष्ठिधिष्ण्यं
ब्रह्मपदं तालुअधिष्ठानं जिव्हाइंद्रियं ॥३० ॥ छंदांसिवेदाःशिरोब्रह्मरंध्रं स्नेहकलाःपुत्रादिस्नेहलेशाः द्विजानिदंताःषंढत्वमार्ष दुरंतःअ
पारःसर्गइतियत्सतस्यकटाक्षः ॥ ३१ ॥ अधर्ममार्गोअस्यपृष्ठभागः कःप्रजापतिः मित्रौमित्रावरुणौ ॥ ३२ ॥

अनंतवीर्यंयस्यसः कालस्तस्यगमनं गुणप्रवाहः प्राणिनांसंसारः कर्मतस्यक्रीडा ॥ ३३ ॥ भूम्नः विभोः अव्यक्तंप्रधानं सप्रसिद्धः चंद्रमाः त
दीयंमनः सर्वेषांविकाराणांकोशइवाश्रयभूतं ॥३४॥ विज्ञानशक्तिंचित्तं महिंमहत्तत्त्वं अंतःकरणमहंकारं गिरित्रंश्रीरुद्रं गर्दभाद्वडवायां
उत्पन्नाअश्वतरी ॥ ३५ ॥ वयांसिपक्षिणः तस्यव्याकरणं नामरूपेव्याकरवाणीतिश्रुत्युक्तंशिल्पनैपुणं यथाहुः येनशुक्लीकृताहंसाः शुका
श्चहरितीकृताः ॥ मयूराश्चित्रितायेनसतेवृत्तिंविधास्यतीति ॥ मनुः स्वायंभुवः मनीषाबुद्धिः मनुजः पुरुषः निवासः आश्रयः पुरुषत्वेचावि
स्तारामात्मेतिश्रुतेः गंधर्वादीनांद्वंद्वैक्यं गंधर्वादयः स्वरस्मृतीः षड्जादिस्वरस्मृतयइत्यर्थः असुरानीकंवीर्यंयस्यसः स्मृतिरसुरानीकवर्यंइतिपा

नद्योऽस्यनाड्योथतनूरुहाणिमहीरुहाविश्वतनोर्नृपेंद्र ॥ अनंतवीर्यः श्वसितंमातरिश्वागतिर्वयः कर्मगुणप्र
वाहः ॥ ३३ ॥ ईशस्यकेशान्विदुरंबुवाहान्वासस्तुसंध्यांकुरुवर्यभूम्नः ॥ अव्यक्तमाहुर्हृदयंमनश्चसचंद्रमाः
सर्वविकारकोशः ॥ ३४ ॥ विज्ञानशक्तिंमहिमामनंतिसर्वात्मनोंऽतःकरणंगिरित्रम् ॥ अश्वाश्वतर्युष्ट्रग
जानखानिसर्वेमृगाः पशवः श्रोणिदेशे ॥ ३५ ॥ वयांसितद्व्याकरणंविचित्रंमनुर्मनीषामनुजोनिवासः ॥ गंधर्ववि
द्याधरचारणाप्सरः स्वरस्मृतीरसुरानीकवीर्यः ॥ ३६ ॥ ब्रह्माननंक्षत्रभुजोमहात्माविड्रुरंघ्रिश्रितकृष्णव
र्णः ॥ नानाभिधाभीज्यगणोपपन्नोद्रव्यात्मकः कर्मवितानयोगः ॥ ३७ ॥ इयानसावीश्वरविग्रहस्ययः सान्नि
वेशः कथितोमयाते ॥ संधार्यतेऽस्मिन्वपुषिस्थविष्ठेमनः स्वबुद्ध्यानयतोऽस्तिकिंचित् ॥ ३८ ॥

ठेगंधर्वादयः स्वरः असुरसमूहः श्रेष्ठः प्रल्हादः स्मृतिस्तस्येति ॥ ३६ ॥ ब्रह्माविप्रस्तस्याननंमुखं क्षत्रंक्षत्रियोभुजौयस्य विट्वैश्यः ऊरूयस्य
अंघ्रिश्रितः कृष्णवर्णः शूद्रोयस्य नानाभिधानामानियेषांतेचतेअभीज्यादेवास्तेषांगणैर्वसुरुद्रादिभिरुपपन्नोयुक्तः द्रव्यात्मकोहविः साध्यः वि
तानयोगः यज्ञप्रयोगः तस्यकर्मकार्यं आवश्यकोऽभिप्रेतइत्यर्थः ॥ ३७ ॥ इयानेतावान्सान्निवेशः अवयवसंस्थानं अस्मिन्स्वबुद्ध्यामनः
संधार्यते कैर्मुमुक्षुभिः यतोन्यतिरिक्तंकिंचिन्नास्तितस्मिन् ॥ ३८ ॥ ॥ ॥ ॥ ॥

तदेवंचित्तस्थैर्यार्थंविराट्देहजीवेश्वराणामभेदेनोपासनमुक्तंतत्रतुदेहजीवावीश्वरेप्रविलाप्यसएवध्येयइतिनिर्धारयति सइति सर्वेषांधीवृ त्तिभिरनुभूतंसर्वंयेनसएकएवसर्वांतरआत्मातमेवसत्यंभजेत अन्यत्रोपलक्षणेनसज्जेत यतआसंगात्आत्मनःपातःसंसारोभवति एकस्य तत्तदिंद्रियैःसर्वानुभूतौदृष्टांतः स्वप्नजनानामीक्षितायथेति स्वप्नेहिकदाचिद्बहून्देहान्प्रकल्प्यजीवस्तत्तदिंद्रियैःसर्वंपश्यतितद्वत् ईश्वरस्य तुविद्याशक्तित्वान्नबंधः ॥ ३९ ॥ इतिद्वितीयस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ द्वितीयेतुततःस्थूलधारणातोजितंमनः ॥ सर्वं साक्षिणिसर्वेशेविष्णौधार्यमितीर्यते ॥ १ ॥ दृश्यालंबनरूपैवमुक्तावैराजधारणा ॥ इहोच्यतेतुतत्साध्यासर्वांतर्यामिधारणा ॥२॥ तत्रतावत्पूर्वो क्तधारणायाअवांतरफलमाह एवंयाधारणातयातुष्टाद्धरेः पुराप्रलयसमयेनष्टांसृष्टिस्मृतिंप्रत्यवरुध्यलब्ध्वाअप्ययात्प्रागिदंविश्वंयथासीत्तथास

ससर्वधीवृत्त्यनुभूतसर्वआत्मायथास्वप्नजनेक्षितैकः ॥ तंसत्यमानंदनिधिंभजेतनान्यत्रसज्जेद्यतआत्मपा तः ॥ ३९ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेमहापुरुषसंस्थानुवर्णनेप्रथमोऽध्यायः ॥ १ ॥ ॥

श्रीशुकउवाच एवंपुराधारणयात्मयोनिर्नष्टांस्मृतिंप्रत्यवरुध्यतुष्टात् ॥ तथाससर्जेदममोघदृष्टिर्यथाऽप्य यात्प्राग्व्यवसायबुद्धिः ॥ १ ॥ शाब्दस्यहिब्रह्मणएषपंथायन्नामभिर्ध्यायतिधीरपार्थैः ॥ परिभ्रमंस्तत्रन विंदतेऽर्थान्मायामयेवासनयाशयानः ॥ २ ॥ अतःकविर्नामसुयावदर्थःस्यादप्रमत्तोव्यवसायबुद्धिः ॥ सिद्धेऽन्यथाऽर्थेनयतेततत्रपरिश्रमंतत्रसमीक्षमाणः ॥ ३ ॥ ॥

सर्ज व्यवसायात्मिकाबुद्धिर्यस्यसअतएवामोघादृष्टिर्यस्येति अतस्तयाधारणयाविश्वसृष्टिसामर्थ्यंभवति ॥ १ ॥ उपासनाफलादपिविरक्त स्यशुद्धात्मधारणायामधिकारः अतोवैराग्यार्थंसर्वंकर्मफलंनिंदति शाब्दंशब्दमयंब्रह्मवेदःतस्यएषपंथाः कर्मफलबोधप्रकारःकोऽसौ अ र्थशून्यैरेवस्वर्गादिनामभिः साधकस्यधीर्ध्यायतितत्तदिच्छांकरोतिइतियत् अपार्थत्वमेवाह तत्रमायामयेपथिसुखमितिवासनयाशयानः स्वप्नान्पश्यन्निवपरिभ्रमन्अर्थान्नविंदतितत्तल्लोकंप्राप्तोऽपिनिरवद्यंसुखंनलभतइत्यर्थः ॥ २ ॥ तर्हिसर्वथाकर्मफलत्यागेसद्यएवदेहपातः स्यादित्याशंक्याह अतःकविर्नामसुनाममात्रेषुभोग्येषुयावताऽर्थेनअर्थोदेहनिर्वाहोयस्यसतथाभूतःस्यात् अप्रमत्तःतावन्मात्रेप्यनासक्तः व्यवसायबुद्धिर्नेदंसुखमितिनिश्चयवान् तदापितत्रतस्मिन्नर्थेअन्यथैवसिद्धेसतितत्रयत्नेपरिश्रमंपश्यन्नयतेत ॥ ३ ॥

अन्यथासिद्धिमाहद्वाभ्यां सत्यामिति कशिपोःशय्याया स्वतःसिद्धेबाहौसतिउपबर्हणैःउच्छीर्षकैः पुरुधाबहुप्रकारयाऽन्नपात्र्याभोज
नपात्रेण ॥४॥ ननुदिक्सद्भावोनामनग्नत्वमेव वल्कलमनंतोयंवासः स्थानंतुयात्राप्रयत्नंविनाकथंप्राप्येततत्राह चीराणिवस्त्रखंडानि परान्
बिभ्रतिपुष्णंतिफलादिभिर्ये गुहाःगिरिदर्यः ननुकदाचिदेषामलाभेकिंकार्यंतत्राह अजितोहरिःउपसन्नान्शरणागतान्किंनावतिनरक्ष
ति किंशब्दस्यपूर्वत्रापिसंबंधः धनेनयोदुर्मदस्तेनांधान्नष्टविवेकान् ॥ ५ ॥ तदातेनकिंकर्तव्यंहरिस्तुसेव्यइत्याह एवंविरक्तःसन्तंभजेत
भजनीयत्वेहेतवः स्वचित्तेस्वतएवसिद्धः यतःआत्माअतएवप्रियःप्रियस्यचसेवासुखरूपैव अर्थःसत्यःनत्वनात्मवन्मिथ्याभगवान्भज
नीयगुणश्च अनंतश्चनित्यःयएवंभूतः तंभजेन्नियतार्थः निश्चितस्वरूपः तदनुभवानंदेननिर्वृतःसन्नितिस्वतःसुखात्मत्वंदर्शितंकिंच

सत्यांक्षितौकिंकशिपोःप्रयासैर्बाहौस्वसिद्धेत्युपबर्हणैःकिम् ॥ सत्यंजलौकिंपुरुधाऽन्नपात्र्यादिग्वल्कलादौ
सतिकिंदुकूलैः ॥ ४ ॥ चीराणिकिंपथिनसंतिदिशंतिभिक्षांनैवांघ्रिपाःपरभृतःसरितोऽप्यशुष्यन् ॥ रुद्धा
गुहाःकिमजितोऽवतिनोपसन्नान्कस्माद्भजंतिकवयोधनदुर्मदांधान् ॥ ५॥ एवंस्वचित्तेस्वतएवसिद्धआत्मा
प्रियोऽर्थोभगवाननंतः ॥ तन्निर्वृतोनियतार्थोभजेतसंसारहेतूपरमश्चयत्र ॥६॥ कस्तांत्वनादृत्यपरानुचिंता
मृतेपशूनसतींनामयुंज्यात् ॥ पश्यन्जनंपतितंवैतरण्यांस्वकर्मजान्परितापान्जुषाणम् ॥७॥ केचित्स्वदे
हांतर्हृदयावकाशेप्रादेशमात्रंपुरुषंवसंतम् ॥ चतुर्भुजंकंजरथांगशंखगदाधरंधारणयास्मरंति ॥ ८ ॥

यत्रयस्मिन्भजनेसति संसारहेतोरविद्यायाउपरमोनाशोभवति ॥ ६ ॥एतदेवान्यचिंतानिंदयाद्रढयति कइति तांतथाभूतांपरस्यहरेरनुचिंतां
धारणामनादृत्य पशून्कर्मजडान्विनायथापशुरेवंसदेवानामितिश्रुतेः असतींविषयाचिंतांकोनामकुर्यात् तयाचिंतयावैतरण्यांपतितं तत्रच
स्वकर्मजान्आध्यात्मिकादिक्लेशान्सेवमानंजनंपश्यन् वैतरणीयमस्यद्वारस्थानदीतत्तुल्यत्वात्संसृतिर्वैतरणी ॥ ७ ॥ तामेवधारणांसवि
शेषणामाह केचिदितिषड्भिःस्वदेहस्यांतर्मध्येयत्हृन्हृदयंतत्रयोवकाशस्तस्मिन्वसंतं प्रादेशस्तर्जन्यंगुष्ठयोर्विस्तारः सएवमात्राप्रमाणंय
स्येतिहृदयपरिमाणंतत्रोपचर्यते कंजंपद्मम् रथांगंचक्रम् ॥ ८ ॥ ॥ ॥ ॥

नलिनंपद्मंतद्वत्प्रसन्नेआयतेदीर्घेईक्षणेयस्य कदंबकुसुमस्यकिंजल्काःकेसरास्तद्वत्पिशंगेपीतेवाससीयस्य लसंतिमहारत्नानियेषुतानिसुवर्णमयान्यंगदानियस्य स्फुरंतिचतानिमहारत्नानिचतन्मयानिकिरीटकुंडलानियस्य ॥ ९ ॥ उन्निद्रंविकसितंयत्हृत्पंकजंतस्यकर्णिकैवआलयःस्थानंतस्मिन्योगेश्वरैरास्थापितौपादपल्लवौयस्य श्रीरेवलक्ष्मचिन्हंतद्युक्तं पामादिविहितोमत्वर्थीयोनप्रत्ययः कौस्तुभरत्नंकंधरायांयस्य अम्लानालक्ष्मीःशोभायस्यास्तयावनमालयाआचितंव्याप्तम् ॥ १० ॥ स्निग्धत्वादिविशिष्टैःकुंतलैर्विरोचमानेआननेयोहासस्तेनपेशलंसुंदरम् ॥ ११ ॥ अदीनमुदारंयल्लीलाहसितंतेनयदीक्षणंतस्मिन्नुल्लसंतोयेभ्रूभंगाभ्रूविक्षेपास्तैःसंसूचितोभूरिरनुग्रहोयेनाचिंतामयंचिंतयाआविर्भवंतम् ॥ १२ ॥ अस्यैवध्यानमाह एकैकशइति अनुभावयेत्ध्यायेत् यद्यज्जितमयत्नतःस्फुरितंपादगुल्फादिस्थानमवय

प्रसन्नवक्त्रंनलिनायतेक्षणंकदंबकिंजल्कपिशंगवाससम् ॥लसन्महारत्नहिरण्मयांगदंस्फुरन्महारत्नकिरीटकुंडलम् ॥ ९ ॥ उन्निद्रहृत्पंकजकर्णिकालयेयोगेश्वरास्थापितपादपल्लवम् ॥ श्रीलक्ष्मणंकौस्तुभरत्नकंधरमम्लानलक्ष्म्यावनमालयाचितम् ॥ १० ॥ विभूषितंमेखलयांगुलीयकैर्महाधनैर्नूपुरकंकणादिभिः॥ स्निग्धामलाकुंचितनीलकुंतलैर्विरोचमाननहासपेशलं ॥ ११ ॥ अदीनलीलाहसितेक्षणोल्लसद्भ्रूभंगसंसूचितभूर्यनुग्रहम्॥ ईक्षेतचिंतामयमेनमीश्वरंयावन्मनोधारणयावतिष्ठते ॥ १२ ॥ एकैकशोंऽगानिधियानुभावयेत्पादादियावद्धसितंगदाभृतः ॥ जितंजितंस्थानमपोह्यधारयेत्परंपरंशुद्ध्यतिधीर्यथायथा ॥ १३ ॥यावन्नजायेतपरावरेऽस्मिन्विश्वेश्वरेद्रष्टरिभक्तियोगः ॥तावत्स्थवीयःपुरुषस्यरूपंक्रियावसानेप्रयतःस्मरेत ॥ १४ ॥ स्थिरंसुखंचासनमाश्रितोयतिर्यदाजिहासुरिममंगलोकं ॥ कालेचदेशेचमनोनसज्जयेत्प्राणंनियच्छेन्मनसाजितासुः ॥ १५ ॥ वस्तत्तदपोह्यत्यक्त्वापरंपरंजंघाजान्वादिधारयेत्ध्यायेत् शुद्ध्यतितस्मिन्निश्चलाभवति ॥ १३ ॥ पूर्वोक्तवैराजधारणायाएतद्धारणांगत्वमाह यावदिति परेब्रह्मादयोऽवरेयस्मात् कुतः विश्वेश्वरे द्रष्टरिनतुदृश्ये चैतन्यघनत्वात् भक्तियोगःप्रेमलक्षणः क्रियावसानेआवश्यककर्मानुष्ठानानंतरम् अनेनकर्माविभक्तियोगपर्यंतमेवेत्युक्तं प्रयतोनियमतत्परः ॥ १४॥ एवंतावदासन्नमृत्योःपुंसःकृत्यमुक्तं इदानींतस्यैवस्वयंदेहंत्यक्तुमिच्छतःकृत्यमाह स्थिरमितिसार्द्धैश्चतुर्भिः अंगहेराजन् एवंभूतोयतिर्यदाइमंलोकंदेहंजिहासुर्हातुमिच्छतितदादेशेपुण्यक्षेत्रेकालेचउत्तरायणादौमनोनसज्जयेत्संगंनप्रापयेत् नदेशकालौयोगिनःसिद्धिहेतू किंतुयोगएवेतिदृढनिश्चयोभूत्वास्थिरंसुखकरंचासनमास्थितःप्राणंनियच्छेदित्यर्थः ॥ १५ ॥ ॥ ॥

तत् गृहीतविषयंमनोबुध्यानिश्चयरूपयानियम्यतन्मात्रंकृत्वाएतांबुद्धिंक्षेत्रज्ञेबुध्यादिद्रष्टरिनिनयेत् प्रविलापयेत् तंचक्षेत्रज्ञमात्मनिशुद्धे तं चशुद्धमात्मानमात्मैवाहमित्यात्मनिशुद्धेब्रह्मणिअवरुध्यएकीकृत्यलब्धोपशांतिःप्राप्तनिर्वृतिःसन्कृत्याद्विरमेत् ततःपरंप्राप्याभावात्॥१६॥ तदेवाह नयत्रेति यत्रात्मस्वरूपेकालोनप्रभुःकिमपिकर्तुंनसमर्थः अतएवदेवानप्रभवइत्याह अनिमिषांदेवानांपरःप्रभुःकालोपियत्रनप्र भुस्तत्रकुतोनुदेवाःप्रभवेयुःदेवनियम्यानांतुजगतांप्राणिनांकावार्त्तेत्याहजगतामिति कुतोनप्रभवंतीत्यपेक्षायांनिरुपाधित्वादित्याह नयत्रेति यद्वा जगत्कारणान्यपिनयस्यसृष्ट्यादौप्रभवंतीत्याह नयत्रेति विकारोऽहंकारः ॥ १७ ॥ निरुपाधित्वंकुतइत्यतआह परमितियद्यस्मा त् अतत् आत्मव्यतिरिक्तंनेतिनेतीत्येवमुत्स्रष्टुमिच्छवोदौरात्म्यंदेहाद्यात्मत्वंविसृज्यअर्हस्यपूज्यस्यश्रीविष्णोःपदंपदेपदेक्षणेक्षणेहृदाउपगुह्य

मनःस्वबुद्ध्यामलयानियम्यक्षेत्रज्ञएतांनिनयेत्तमात्मनि ॥ आत्मानमात्मन्यवरुध्यधीरोलब्धोपशांतिर्विर मेतकृत्यात् ॥ १६ ॥ नयत्रकालोऽनिमिषांपरःप्रभुःकुतोनुदेवाजगतांयईशिरे॥नयत्रसत्वंनरजस्तमश्चन वैविकारोनमहान्प्रधानं ॥ १७ ॥ परंपदंवैष्णवमामनंतितद्यन्नेतिनेतीत्यतदुत्सिसृक्षवः ॥ विसृज्यदौरा त्म्यमनन्यसौहृदाहृदोपगुह्यार्हपदंपदेपदे ॥ १८॥ इत्थंमुनिस्तूपरमेद्व्यवस्थितोविज्ञानदृग्वीर्यसुरंधिताश यः ॥ स्वपार्ष्णिनापीड्यगुदंततोऽनिलंस्थानेषुषट्सून्नमयेज्जितक्लमः ॥ १९ ॥ नाभ्यांस्थितंहृद्यधिरोप्य तस्मादुदानगत्योरसितंनयेन्मुनिः ॥ततोऽनुसंधायधियामनस्वीस्वतालुमूलंशनकैर्नयेत ॥ २० ॥ तस्माद्भ्रु वोरंतरमुन्नयेतनिरुद्धसप्तायतनोऽनपेक्षः॥स्थित्वा मुहूर्तार्धमकुंठदृष्टिर्निर्भिद्यमूर्धन्विसृजेत्परंगतः ॥ २१ ॥

आश्लिष्यनान्यस्मिन्सौहृदंयेषांतथाभूताःसंतस्तद्वैष्णवंपदमतएवपरंसर्वतःश्रेष्ठमामनंतीत्यन्वयः ॥ १८ ॥ तस्मादित्थंब्रह्मत्वेनव्यवस्थि तोमुनिरुपरमेत् तुशब्देनयदिप्रयास्यन्नितिवक्ष्यमाणात्सकामाद्विशेषउक्तः तमाह विज्ञायतेऽनेनेतिविज्ञानंशास्त्रंतेनजाताद्दृक्ज्ञानंतस्यवी र्यबलंतेनसुरंधिताविहिंसिताआशयाविषयवासनायस्यसः इदानींतस्यदेहत्यागप्रकारमाह स्वपार्ष्णिनापादमूलेनगुदंमूलाधारमापीड्य च निरुध्यअनिलंप्राणमुन्नमयेत् उर्ध्वंनयेत् जितःक्लमोयेन षट्सुस्थानेषुनाभ्यादिषु ॥ १९ ॥ नाभ्यांमणिपूरकेस्थितंहृदिअनाहतचक्रेअधि रोप्य उरसिकंठादधोदेशेस्थितेविशुद्धिचक्रे मनस्वीजितचित्तः स्वतालुमूलंतस्यैवचक्रस्याग्रदेशं ततांबहुधागमनसंभवाच्छनकैरित्यु क्तम् ॥ २० ॥ तस्माद्भ्रुवोरंतरमाज्ञाचक्रम् निरुद्धानिश्रोत्रेनेत्रेनासिकेमुखंचेत्येवंसप्तायतनानिप्राणमार्गायेनसः अनपेक्षश्चेत्परंब्रह्मगतः सन्मूर्धन्मूर्धनिब्रह्मरंध्रेनिर्भिद्यदेहमिंद्रियाणिचविसृजेत् ॥ २१ ॥ ॥ ॥

सद्योमुक्तिमुक्त्वाक्रममुक्तिप्रकारमाहयदीतिदशभिः यदितुपारमेष्ठ्यंपदंप्रयास्यन्भवति वैहायसानांखेचरणांसिद्धानांयद्विहारंक्रीडास्थानं कीदृशं अष्टावाधिपत्यानिअणिमाद्यैश्वर्याणियस्मिंस्तदपिप्रयास्यन् क्व गुणसन्निवायेगुणसमुदायरूपेब्रह्मांडे सर्वत्रेत्यर्थः तर्हिदेहत्यागा वसरेमनश्चेंद्रियाणिचनत्यजेत्किंतुतैःसहैवतत्तल्लोकभोगार्थंगच्छेत् ॥ २२ ॥ यतःकर्मगतिवन्नयोगगतिःपरिच्छिन्नेत्याह योगेश्वराणां त्रिलोक्याअंतर्बहिश्चमहर्लोकादिषुब्रह्मांडाद्बहिश्चगतिमाहुः अत्रहेतुःपवनस्यांतःआत्मालिंगशरीरंयेषामिति विद्याउपासना तपोभगव द्धर्मः योगोऽष्टांगः समाधिर्ज्ञानं तान्येभजंतितेषांयागतिस्ताम् ॥ २३ ॥ तामाह वैश्वानरमित्यष्टभिः विहायसाआकाशेन तत्रचब्रह्म लोकपथेनगतःसन्प्रथमंवैश्वानरमग्न्यभिमानिनींदेवतांयाति केनोपायेन सुषुम्नयानाड्या साचदेहाद्बहिरपिविततास्तीत्याह शोचिषा

यदिप्रयास्यन्नृपपारमेष्ठ्यंवैहायसानामुतयद्विहारम् ॥ अष्टाधिपत्यंगुणसन्निवायेसहैवगच्छेन्मनसेंद्रियैश्च ॥ २२ ॥ योगेश्वराणांगतिमाहुरंतर्बहिस्त्रिलोक्याःपवनांतरात्मनाम् ॥ नकर्मभिस्तांगतिमाप्नुवंतिविद्या तपोयोगसमाधिभाजाम् ॥ २३ ॥ वैश्वानरंयातिविहायसागतःसुषुम्नयाब्रह्मपथेनशोचिषा ॥ विधूतकल्को थहरेरुदस्तात्प्रयातिचक्रंनृपशैशुमारम् ॥ २४ ॥ तद्विश्वनाभिंत्वतिवर्त्यविष्णोरणीयसाविरजेनात्मनैकः ॥ नमस्कृतंब्रह्मविदामुपैतिकल्पायुषोयद्विबुधारमंते ॥ २५ ॥ अथोअनंतस्यमुखानलेनदंदह्यमानंसनिरी क्ष्यविश्वम् ॥ निर्यातिसिद्धेश्वरजुष्टधिष्ण्यंयद्द्वैपरार्ध्यंतदुपारमेष्ठ्यम् ॥ २६ ॥ ॥

ज्योतिर्मय्या विधूतस्त्यक्तःकल्कोमलोयेनसः क्वाप्यसज्जमानइत्यर्थः उदस्तादुपरिष्टाद्वर्तमानंहरेःसंबंधितारारूपं नारायणाधिष्ठितमित्यर्थः शैशुमारंचक्रंपंचमस्कंधेवक्ष्यमाणंशिशुमाराश्रयंज्योतिश्चक्रम् चक्रस्थानिआदित्यादिध्रुवांतानिपदानिप्रयातीत्यर्थः ॥ २४ ॥ तद्विष्णोश्चक्रं वि श्वस्यनाभिंसूर्याद्याश्रयभूतम् आविष्टलिंगत्वान्नाभिशब्दस्यनषंढत्वम् अतिवर्त्यअतिक्रम्य परतःस्वर्गिणांगत्यभावादेकएवनिर्मलेनलिंग शरीरेणब्रह्मविदांस्थानमन्यैर्नमस्कृतंमहर्लोकमुपैति यत्रयस्मिन्विबुधामहाकल्पायुषोभृग्वादयः ॥ २५ ॥ अथोअनंतरंकल्पांतेसविश्वंत्रैलो क्यमतिशयेनदह्यमानंनिरीक्ष्य तत्राप्यूष्मप्राप्तेः यत्द्विपरार्धस्थायितत्पारमेष्ठ्यंपदंप्रतिनिर्याति सिद्धेश्वरैर्जुष्टानिधिष्ण्यानिविमानानिय स्मिंस्तत् उइति श्रैष्ठ्यं सूचितम् ॥ २६ ॥ ॥ ॥ ॥

तदेवाह नयत्रेति आर्तिर्दुःखम् उद्वेगोभयं किंतु चित्ततोहेतोर्यद्दुःखमदःऋतेतदेकंविना तत्कुतोभवति अनिदंविदामिदंभगवतोध्यान मजानत्वांप्राणिनांदुरंतदुःखौघःप्रभवोजन्मतस्यान्वनुदर्शनात् तेषांकृपया यद्वा चित्ततोदोमनःपीडेतियत् तद्विनाकुतश्चिदपियत्रशोकाद योनसंतीति तत्रब्रह्मलोकंगतानांत्रिविधागतिः येपुण्योत्कर्षेणगतास्तेकल्पांतरेपुण्यतारतम्येनाधिकारिकाभवंति येतुहिरण्यगर्भाद्युपासना बले नगतास्तेब्रह्मणासहमुच्यंते येतुभगवदुपासकास्तेस्वेच्छयाब्रह्मांडंभित्वावैष्णवंपदमारुहंति ॥ २७ ॥ तत्रप्रस्तुतस्यभगवद्भक्तस्यब्रह्मांडभेदनप्र कारमाह ततइत्यादिना तत्रेयंप्रक्रिया ईश्वराधिष्ठितायाःप्रकृतेःकेनाचिदंशेनमहत्तत्त्वंभवति तस्यांशेनाहंकारःतस्यांशेनशब्दतन्मात्रद्वारानभः तस्यांशेनस्पर्शतन्मात्रद्वारावायुःतस्यांशेनरूपतन्मात्रद्वारातेजः तस्यांशेनरसतन्मात्रद्वाराआपः तदंशेनगंधतन्मात्रद्वारापृथ्वी तैश्चतुर्दशभुवना त्मकंविराट्शरीरम् तस्यचपंचाशत्कोटियोजनविशालस्यपृथिव्येवांडकटाहविशेषशब्दवाच्याकोटियोजनविशालंप्रथमावरणं पंचाश त्कोटियोजनाविशालामित्येके ततश्चाबादीनांयेपरिणताअंशास्तान्येवोत्तरोत्तरंदशगुणान्यावरणानि अष्टमंतुप्रकृत्यावरणंव्यापकमेव तदेवंस्थि

नयत्रशोकोनजरानमृत्युर्नार्तिर्नचोद्वेगऋतेकुतश्चित् ॥ यच्चित्ततोदःकृपयाऽनिदंविदांदुरंतदुःखप्रभवानुद र्शनात् ॥ २७ ॥ ततोविशेषंप्रतिपद्यनिर्भयस्तेनात्मनापोऽनलमूर्तिरत्वरन् ॥ ज्योतिर्मयोवायुमुपेत्यकालेवा य्वात्मनाखंबृहदात्मालिंगं ॥ २८ ॥ घ्राणेनगंधंरसनेनवैरसंरूपंतुदृष्ट्याश्वसनंत्वचैव ॥ श्रोत्रेणचोपेत्यनभो गुणत्वंप्राणेनचाकूतिमुपैतियोगी ॥ २९ ॥ सभूतसूक्ष्मेंद्रियसन्निकर्षंमनोमयंदेवमयंविकार्यं ॥ संसाद्यगत्या सहतेनयातिविज्ञानतत्त्वंगुणसन्निरोधं ॥ ३० ॥ ॥ ॥

तेपृथिव्याद्यावरणभेदप्रकारःकथ्यते ततोविशेषंप्रतिपद्यालिंगदेहेनपृथिव्यात्मतांप्राप्येत्यर्थः एवमुत्तरत्रापिद्रष्टव्यम् निर्भयःकथंयास्यामीति शंकाशून्यः तेनात्मनापृथिवीरूपेणतान्निरंतराअपःप्रतिपद्यअत्वरन्त्वरामकुर्वन्तत्तदात्मत्वेनक्लेददाहादिशंकाभावाद्यथेष्टंभोगान्भुंजानइ त्यर्थः एवंज्योतिर्मयःसन्कालेभोगावसानेबृहदात्मनोलिंगंपरमात्ममूर्तित्वेनोपासनेषूक्तम् यद्वा वेदशब्दात्मनातस्यप्रमापकमिति ॥ २८ ॥ इंद्रियार्थानांभूतसूक्ष्माणामतिक्रममाह घ्राणेनाधिष्ठितेनगंधमुपेत्य श्वसनंस्पर्शम् नभोगुणत्वंशब्दात्मतां प्राणेनतत्तत्कर्मेंद्रियेणआकूतिंतत्त क्रियाम् ॥ २९ ॥ तदेवंस्थूलसूक्ष्मभूतातिक्रममुक्त्वातदावरणभूताहंकारप्राप्त्यामहदादिप्राप्तिमाह सयोगीविकार्यंसंसाद्यविज्ञानतत्त्वंयाति वि विधंकार्यमस्येतिविकार्योऽहंकारःसत्रिविधः तामसोराजसःसात्विकइति तत्रतामसाज्जडानिभूतसूक्ष्माणिजायंते राजसाद्बहिर्मुखानिदशेंद्रि याणिसात्विकान्मनइंद्रियदेवताश्च तेषांलयश्चतत्तदहंकारे तत्रभूतसूक्ष्माणामिंद्रियाणांचसन्निकर्षंलयस्थानं तामसंराजसंचमनोमयंदेवमयं चसात्विकंप्राप्यगत्वाएवंगमनेनतेनाहंकारेणसहविज्ञानतत्त्वंमहत्तत्त्वंयातिततोगुणानांसन्निरोधोलयोयस्मिंस्तत्प्रधानंयाति ॥ ३० ॥

तेनात्मनाप्रधानरूपेणानंदमयःसन्नुपाधीनामवसानेशांतमविकृतमानंदंपरमात्मानमुपैति नविषज्जतेनावर्ततइत्यर्थः ॥ ३१ ॥ सृतीमार्गौ
प्रकाराविस्यर्थः हेनृप अनपेक्षोनिर्भिद्यमूर्धन्विसृजेत्परंगतइतियासद्योमुक्तिःसैकासृतिः यदिप्रयास्यन्निस्यादिनाक्रममुक्तिश्चद्वितीयासृतिः
एतेसृतीवेदेनगीतेउक्तेनतुस्वोत्प्रेक्षिते तत्र यदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिश्रिताः ॥ अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुतेइतिसद्योमुक्तिः ते
ऽर्चिरभिसंभवंतीत्यादिनाक्रममुक्तिश्चवेदेनोक्ता यद्वा नकर्मभिस्तांगतिमाप्नुवंतीतिदक्षिणमार्गस्यापिसूचितत्वादेतेसृतीइतिद्विवचनम् त्वया
भिपृष्टेयच्छ्रोतव्यमित्यादिप्रश्नेनार्थान्मुक्तिविषयेद्वेअपिसृतीपृष्टे ब्रूहियद्वाविपर्ययमितिदक्षिणमार्गोऽप्यर्थात्पृष्टः एवंत्वयाचयेपृष्टेएतेसृतीइत्य

तेनात्मनात्मानमुपैतिशांतमानंदमानंदमयोऽवसाने ॥ एतांगतिंभागवतींगतोयःसवैपुनर्नेहविषज्जतेंऽग
॥ ३१ ॥ एतेसृतीतेनृपवेदगीतेत्वयाभिपृष्टेहसनातनेच ॥ येवैपुराब्रह्मणआहपृष्टआराधितोभगवान्वासु
देवः ॥ ३२ ॥ नह्यतोऽन्यःशिवःपंथाविशतःसंसृताविह ॥ वासुदेवेभगवतिभक्तियोगोयतोभवेत् ॥ ३३ ॥
भगवान्ब्रह्मकात्स्न्र्येनत्रिरन्वीक्ष्यमनीषया ॥ तदध्यवस्यत्कूटस्थोरतिरात्मन्यतोभवेत् ॥ ३४ ॥ भगवान्स
र्वभूतेषुलक्षितःस्वात्मनाहरिः ॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टालक्षणैरनुमापकैः ॥ ३५ ॥ तस्मात्सर्वात्मनाराज
न्हरिःसर्वत्रसर्वदा ॥ श्रोतव्यःकीर्तितव्यश्चस्मर्तव्योभगवान्नृणाम् ॥ ३६ ॥ ॥

न्वयः ॥ ३१ ॥ संतिसंसरतःपुंसोबहवोमोक्षमार्गास्तपोयोगादयःसमीचीनस्त्वयमेवेत्याह नहीति यतोऽनुष्ठिताद्भक्तियोगोभवेत् अतोऽ
न्यःशिवःसुखरूपोनिर्विघ्नश्चनास्त्येव ॥ ३३ ॥ कुतएतदतआह भगवान्ब्रह्मा कूटस्थोनिर्विकारः एकाग्रचित्तःसन्नित्यर्थः त्रिस्त्रीन्वारान्का
त्स्न्र्येनसाकल्येनब्रह्मवेदमन्वीक्ष्यविचार्ययतआत्मानिहरौरतिर्भवेत्तदेवमनीषयाअध्यवस्यत्निश्चितवान् ॥ ३४ ॥ नन्वनुभूतेऽर्थेरतिर्भवतिअन
नुभूतेभगवतिकथंरतिःस्यात्तत्राह भगवान्लक्षितोदृष्टः कथम् स्वात्मनाक्षेत्रज्ञांतर्यामितया कैर्दृश्यैर्बुद्ध्यादिभिःतदेवद्वेधादर्शयति दृश्यानांज
डानांदर्शनंस्वप्रकाशंद्रष्टारंविनानघटतइत्यनुपपत्तिमुखेनलक्षणैःस्वप्रकाशांतर्यामिलक्षणैः तथाबुद्ध्यादीनिकर्तृप्रयोज्यानि करणत्वात् वा
स्यादिवत् इतिव्याप्तिमुखेनानुमापकैः स्वतंत्रश्चकर्तेत्येवमीश्वरसिद्धिः ॥ ३५ ॥ यच्छ्रोतव्यमित्यादिप्रश्नोत्तरमुपसंहरति तस्मादिति ॥ ३६ ॥

श्रवणादिफलमभिनयेनाह पिबंतीति सतामात्मनआत्मत्वेनप्रकाशमानस्यकथैवामृतम् विषयैर्विदूषितंमलिनीकृतमाशयंपुनंतिशोधयंति तस्यचरणपद्मांतिकंश्रीविष्णुपदंव्रजंति ॥ ३७ ॥ इतिद्वितीयस्कंधेटीकायांद्वितीयोध्यायः ॥ २ ॥ ॥ तृतीयेविष्णुभक्तेस्तुवैशिष्ट्यंशृण्वतोमुनेः ॥ भक्त्युद्रेकेणतत्कर्मश्रवणादरईर्यते ॥ १ ॥ इदानीमन्यदेवताभजनस्यापिपुत्रादिभजनवदेवतुच्छफलत्वेनहेयत्वंवक्तुंपूर्वोक्तमनुवदति एवमिति ममेतिमां कदाचिद्दैवयोगेनमनुष्यत्वंप्राप्तेषुजीवेषुयेमनीषिणस्तेषांतत्रापियेम्रियमाणास्तेषांविशेषतएवमेतद्धरिकथाश्रवणादिकंनिगदितंविहितमित्यर्थः ॥ १ ॥ ब्रह्मणस्पतिंवेदस्यपतिंब्रह्माणं इंद्रियपाटवकामस्त्विंद्रं प्रजाकामःप्रजापतीन्दक्षादीन् ॥

पिबंतियेभगवतआत्मनःसतांकथामृतंश्रवणपुटेषुसंभृतं ॥ पुनंतितेविषयविदूषिताशयंव्रजंतितच्चरणसरोरुहांतिकं ॥ ३७ ॥ इ० भा० म० द्वि० पुरुषसंस्थावर्णनंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ श्रीशुकउवाच एवमेतन्निगदितंपृष्टवान्यद्भवान्मम ॥ नृणांयन्म्रियमाणानांमनुष्येषुमनीषिणां ॥ १ ॥ ब्रह्मवर्चसकामस्तु यजेतब्रह्मणस्पतिं ॥ इंद्रमिंद्रियकामस्तुप्रजाकामःप्रजापतीन् ॥ २ ॥ देवींमायांतुश्रीकामस्तेजस्कामोविभावसुं ॥ वसुकामोवसून्रुद्रान्वीर्यकामोऽथवीर्यवान् ॥ ३ ॥ अन्नाद्यकामस्त्वदितिंस्वर्गकामोऽदितेःसुतान् ॥ विश्वान्देवान्राज्यकामःसाध्यान्संसाधकोविशां ॥ ४ ॥ आयुःकामोऽश्विनौदेवौपुष्टिकामइलांयजेत् ॥ प्रतिष्ठाकामःपुरुषोरोदसीलोकमातरौ ॥ ५ ॥ रूपाभिकामोगंधर्वान्स्त्रीकामोऽप्सरउर्वशीं ॥ आधिपत्यकामःसर्वेषांयजेतपरमेष्ठिनं ॥ ६ ॥ यज्ञंयजेद्यशःकामःकोशकामःप्रचेतसं ॥ विद्याकामस्तुगिरिशंदांपत्यार्थउमांसतीं ॥ ७ ॥ धर्मार्थउत्तमश्लोकंतंतुंतन्वान्पितॄन्यजेत् ॥ रक्षाकामःपुण्यजनानोजस्कामोमरुद्गणान् ॥ ८ ॥

॥ २ । मायांदुर्गाम् विभावसुमग्निम् वसुकामोधनार्थी वीर्यंप्रभावस्तत्कामोवीर्यवान्सन्रुद्रान्यजेत ॥ ३ ॥ अन्नाद्यंभोज्यंभक्ष्यंच अदितेःसुतान्द्वादशादित्यान् विशांदेशस्थप्रजानांस्वाधीनतामिच्छन्साध्यान्यजेत् ॥ ४ ॥ इलांपृथ्वीम् प्रतिष्ठांस्थानादप्रच्युतिम् रोदसीद्यावाभूमी ॥ ५ ॥ अप्सराश्चासौउर्वशीचताम् ॥ ६ ॥ यज्ञंयज्ञोपाधिंविष्णुम् कोशोवसुसंचयः वसुकामइत्यत्रधनमात्रमितिभेदः दांपत्यमन्योन्यप्रीतिस्तदेवार्थोयस्यसः ॥ ७ ॥ धर्मार्थःधर्मकामःउत्तमश्लोकोपाधिंविष्णुम् तंतुंतन्वन्संतानवृद्धिमन्विच्छन् रक्षाबाधानिवृत्तिस्तत्कामःपुण्यजनान्यक्षान् ओजोबलंतत्कामोमरुद्गणान्देवान् ॥ ८ ॥ ॥ ॥

राज्यंराजत्वंतत्कामोमनून्देवान्मन्वंतरपालान् राज्ञःकर्मराज्यंतत्कामोविश्वान्देवानितिविशेषः अभिचरन्शत्रुमरणमिच्छन् निर्ऋतिं राक्षसम् कामकामोभोगेच्छुः अकामोवैराग्यकामः पुरुषंपरंप्रकृतिव्यतिरेकोपाधिमीश्वरम् ॥ ९ ॥ अकामःएकांतभक्तः उक्तानुक्तसर्व कामोवा पुरुषंपूर्णंनिरुपाधिम् ॥ १० ॥ पूर्वोक्तनानादेवतायजनस्यापिसंयोगपृथक्त्वेनभक्तियोगफलत्वमाह एतावानिति इंद्रादीनपियज ताम् इहतत्तद्यजनेनभागवतानांसंगतोभगवत्यचलोभावोभक्तिर्भवतीतियत् एतावानेवनिःश्रेयसस्यपरमपुरुषार्थस्योदयोलाभःअन्यत्तुसर्वंतु च्छमित्यर्थः ॥ ११ ॥ भागवतसंगतइत्यनेनसूचितांहरिकथारतिंस्तौति ज्ञानमिति यत्यासुकथासुज्ञानंभवति कीदृशम् आसर्वतःप्रति निवृत्तमुपरतंगुणोर्मीणांरागादीनांचक्रंसमूहोयस्मात्तत् उतअनंतरं तद्धेतुरात्मप्रसादश्च यत्रयासुमनःप्रसादहेतुर्गुणेषुविषयेष्वसंगोवैराग्यंच

**राज्यकामोमनून्देवान्निर्ऋतिंत्वभिचरन्यजेत् ॥ कामकामोयजेत्सोममकामःपुरुषंपरं ॥ ९ ॥ अकामःसर्वकामोवामोक्षकामउदारधीः॥तीव्रेणभक्तियोगेनयजेतपुरुषंपरं ॥ १० ॥ एतावानेवयजतामिहनिःश्रेयसोदयः ॥ भगवत्यचलोभावोयद्भागवतसंगतः ॥ ११॥ ज्ञानंयदाप्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसादउतयत्रगुणेष्वसंगः॥ कैवल्यसंमतपथस्त्वथभक्तियोगःकोनिर्वृतोहरिकथासुरतिंनकुर्यात् ॥ १२ ॥ शौनकउवाच इत्यभिव्याहृतंराजानिशम्यभरतर्षभः॥ किमन्यत्पृष्टवान्भूयोवैयासकिमृषिंकविं ॥१३॥ एतच्छुश्रूषतांविद्वन्सूतनोऽर्हसिभाषितुं ॥ कथाहरिकथोदर्काःसतांस्युःसदसिध्रुवं ॥१४॥ सवैभागवतोराजापांडवेयोमहारथः॥ बालक्रीडनकैःक्रीडन्कृष्णक्रीडांयआददे॥१५॥ वैयासकिश्चभगवान्वासुदेवपरायणः॥ उरुगायगुणोदाराःसतांस्युर्हिसमागमे॥१६॥आयुर्हरतिवैपुंसामुद्यन्नस्तंचयन्नसौ॥तस्यर्तेयत्क्षणोनीतउत्तमश्लोकवार्तया ॥ १७॥**

उभयत्रेतिपाठेइहामुत्रचगुणेष्वसंगः कैवल्यमित्येवसंमतःपंथायोभक्तियोगः निर्वृतःश्रवणसुखेन अन्यत्रानिर्वृतइतिवा तासुहरिकथासु कोरतिंनकुर्यात् ॥ १२ ॥ अभिव्याहृतमुक्तम् ऋषिंपरब्रह्मदर्शिनं कविंशब्दब्रह्मनिष्णातं ॥ १३ ॥ श्रवणेच्छायांहेतुः हरिकथाएवउदर्कःउत्तरफलंयासुताःकथाःसतांभागवतानांसदसिसभायांस्युः ॥ १४ ॥ एतत्प्रपंचयति सवाइतिद्वाभ्यां कृष्णपूजादिरूपांक्रीडांयःस्वीकृतवान् ॥ १५ ॥ उरुगायस्यगुणैरुदाराःमहत्यःकथाःस्युः ॥ १६ ॥ किंच वृथैवक्षीयमाणमायुर्हरिकथयासफलंकुर्विंत्याशयेनाहत्रिभिः आयुरिति असौसूर्यउद्यन् उद्गच्छन्अस्तमदर्शनंचयन्गच्छन्यत् येनक्षणोनीतस्तस्यआयुःऋतेवर्जयित्वावृथैवहरति ॥ १७ ॥

ननुजीवनमेवतेषामायुषःफलमस्तितत्राह तरवइति ननुतेषांश्वासोनास्तितर्हिभस्त्राःचर्मकोशाः ननुतासामाहारादिकंनास्तितत्राह नखादं
तिनाश्नंतिनमेहंतिरेतःसेकंमैथुनंनकुर्वंतिकिम् उतअपिनराकारंपशुंमत्वाह अपरेइति ॥ १८ ॥ तदेवाह श्वादिभिःसंस्तुतःसदृशोनिरूपि
तः यस्यकर्णपथंकदाचिदपिनागतःसः अवज्ञास्पदत्वात्श्वभिः कश्मलविषयासक्तत्वात्विड्वराहैर्ग्रामसूकरैः कंटकवद्दुःखदविषयासक्त
त्वादुष्ट्रैःभारवाहित्वात्खरैस्तुल्यइत्यर्थः ॥ १९ ॥ तस्यांगानिचनिष्फलानीत्याह बिलेइतिपंचभिः बतेतिखेदे नशृण्वतःअशृण्वतोनरस्य
येकर्णपुटेतेबिलेवृथारंध्रे नचेदुपगायतितस्यजिव्हाअसतीदुष्टा दर्दुरोभेकस्तदीयाजिव्हेव ॥ २० ॥ पट्टवस्त्रोष्णीषेणकिरीटेनचजुष्टमपि

**तरवःकिंनजीवंतिभस्त्राःकिंनश्वसंत्युत ॥ नखादंतिनमेहंतिकिंग्रामपशवोऽपरे ॥ १८ ॥ श्वविड्वराहोष्ट्र
खरैःसंस्तुतःपुरुषःपशुः ॥ नयत्कर्णपथोपेतोजातुनामगदाग्रजः ॥ १९ ॥ बिलेबतोरुक्रमविक्रमान्येनशृ
ण्वतःकर्णपुटेनरस्य ॥ जिव्हाऽसतीदार्दुरिकेवसूतनचोपगायत्युरुगायगाथाः ॥ २० ॥ भारःपरंपट्टकिरी
टजुष्टमप्युत्तमांगंननमेन्मुकुंदं ॥ शावौकरौनोकुरुतःसपर्यांहरेर्लसत्कांचनकंकणौवा ॥ २१ ॥ बर्हायितेते
नयनेनराणांलिंगानिविष्णोर्ननिरीक्षतोये ॥ पादौनृणांतौद्रुमजन्मभाजौक्षेत्राणिनानुव्रजतोहरेर्यौ ॥ २२ ॥
जीवञ्छवोभागवतांघ्रिरेणुंनजातुमर्त्योऽभिलभेतयस्तु ॥ श्रीविष्णुपद्यामनुजस्तुलस्याःश्वसञ्छवोयस्तुनवे
दगंधम् ॥ २३ ॥ तदश्मसारंहृदयंबतेदंयद्गृह्यमाणैर्हरिनामधेयैः ॥ नविक्रियेताथयदाविकारोनेत्रेजलंगा
त्ररुहेषुहर्षः ॥ २४ ॥ अथाभिधेह्यंगमनोनुकूलंप्रभाषसेभागवतप्रधानः ॥ यदाहवैयासकिरात्मविद्यावि
शारदोनृपतिंसाधुपृष्टः ॥ २५ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेतृतीयोऽध्यायः ॥ ३ ॥**

शिरोयदिननमेत्तर्हिकेवलंभारएव शवौमृतकस्तत्करतुल्यौ लसतीकांचनकंकणेययोस्तौ अप्यर्थेवाशब्दः ॥ २१ ॥ येनयनेविष्णोर्मूर्तीर्न
निरीक्षेतेतेबर्हायितेमयूरपिच्छनेत्रतुल्ये द्रुमवज्जन्मभजतइतितथा वृक्षमूलतुल्यावित्यर्थः ॥ २२ ॥ नाभिलभेतअभितोनस्पृशेत्नधारयेत्
श्रीविष्णुपद्याःश्रीविष्णुपदलग्नायाः नवेदेति अवघ्रायनाभिनंदेदित्यर्थः ॥ २३ ॥ अश्मवत्सारोबलंकाठिन्यंयस्यविक्रियालक्षणमाह अथे
ति गात्ररुहेषुरोमसुहर्षउद्गमः ॥ २४ ॥ यस्मादभक्तस्यसर्वमेतद्व्यर्थं मनसोऽनुकूलंप्रियंब्रूषे अथअतःसाधुपृष्टःसन्वैयासकिर्नृपतिंप्रतियदाह
तदभिधेहीति ॥ २५ ॥ इतिद्वितीयस्कंधेटीकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥

तुर्येपरीक्षितापृष्टंसृष्ट्यादिहरिचेष्टितं ॥ शुकेनब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते ॥ १ ॥ राज्ञःप्रश्नंकथयितुंतस्यप्राक्तनींस्थितिमाहचतुर्भिः वैया
सकेःशुकस्यइतिएवंभूतंआत्मनस्तत्त्वस्यनिश्चयोयस्मात्तद्वचउपधार्यआकलय्य सतींकृष्णएवसेव्योनान्यइत्येवंभूतां ॥ १ ॥ आत्मादेहः
पशवोगजादयः ॥ २ ॥ इममेवार्थंहरिलीलालक्षणं ॥ ३ ॥ संस्थांमृत्युं त्रैवर्गिकंधर्मार्थकामप्रधानं संन्यस्यत्यक्त्वा आत्मभावंपरप्रेम्णा
भगवदात्मत्वंगतःप्राप्तःसन्पप्रच्छ ॥ ४ ॥ महांममतमोऽज्ञानंविशीर्यतेनश्यति तवकथयतःसतः अतःसमीचीनं ॥ ५ ॥ पुनश्चवेदितुमि

सूतउवाच वैयासकेरितिवचस्तत्त्वनिश्चयमात्मनः ॥ उपधार्यमतिंकृष्णेऔत्तरेयःसतींव्यधात् ॥ १ ॥ आ
त्मजायासुतागारपशुद्रविणबंधुषु ॥ राज्येचाविकलेनित्यंविरूढांममतांजहौ ॥ २॥ पप्रच्छचेममेवार्थंयन्मां
पृच्छथसत्तमाः ॥ कृष्णानुभावश्रवणेश्रद्दधानोमहामनाः ॥३॥ संस्थांविज्ञायसंन्यस्यकर्मत्रैवर्गिकंचयत् ॥
वासुदेवेभगवतिआत्मभावंदृढंगतः ॥ ४ ॥ राजोवाच समीचीनंवचोब्रह्मन्सर्वज्ञस्यतवानघ ॥ तमोविशी
र्यतेमह्यंहरेःकथयतःकथां ॥ ५ ॥ भूयएवविवित्सामिभगवानात्ममायया ॥ यथेदंसृजतेविश्वंदुर्विभाव्यम
धीश्वरैः ॥६ ॥ यथागोपायतिविश्वंयथासंयच्छतेपुनः ॥ यांयांशक्तिमुपाश्रित्यपुरुशक्तिःपरःपुमान् ॥ आ
त्मानंक्रीडयन्क्रीडन्करोतिविकरोतिच ॥ ७ ॥ नूनंभगवतोब्रह्मन्हरेरद्भुतकर्मणः ॥ दुर्विभाव्यमिवाभाति
कविभिश्चापिचेष्टितं ॥ ८॥ यथागुणांस्तुप्रकृतेर्युगपत्क्रमशोपिवा ॥ बिभर्तिभूरिशस्त्वेकः कुर्वन्कर्माणिज
न्मभिः ॥ ९ ॥ विचिकित्सितमेतन्मेब्रवीतुभगवान्यथा॥शाब्देब्रह्मणिनिष्णातःपरस्मिंश्चभवान्खलु ॥१०॥
सूतउवाच इत्युपामंत्रितोराज्ञागुणानुकथनेहरेः ॥ हृषीकेशमनुस्मृत्यप्रतिवक्तुंप्रचक्रमे ॥ ११ ॥

च्छामि इदंदुर्विभाव्यमवितर्क्यंविश्वंयथासृजति ॥ ६ ॥ गोपायतिपालयति संयच्छतेसंहरते पुरुशक्तिर्बहुशक्तिमान् क्रीडन्यथाकरोति
आत्मानंब्रह्मादिरूपिणंक्रीडयन्विकरोतिविविधंकरोति ॥ ७ ॥ ८ ॥ एकःपुरुषरूपेणयुगपत् जन्मभिर्ब्रह्माद्यवतारैःक्रमशोवायथाप्रकृते
र्गुणान्गृह्णाति ॥ ९ ॥ विचिकित्सितंसंदिग्धं शाब्देब्रह्मणिविचारेणनिष्णातः परस्मिन्ननुभवेन ॥ १० ॥ उपामंत्रितःप्रार्थितः प्रचक्रमे
देवतागुरुनमस्कारादिरूपमुपक्रमंकृतवानित्यर्थः ॥ ११ ॥ ॥ ॥ ॥

तदेवाहत्रयोदशभिः परस्मैसर्वोत्तमाय तत्रहेतुः भूयसेअपरिमितमहिम्ने तद्दर्शयति सतःप्रपंचस्यउद्भवादिषुनिमित्तभूतयालीलातयागृही तंब्रह्मादिरूपेणरजआदिशक्तित्रितयंयेनतस्मै अंतर्भवायअंतर्यामिणे अतएवसर्वांतरत्वादनुपलक्ष्यंवर्त्मयस्य ॥ १२ ॥ विचित्रफलदातृत्व मनुस्मरन्प्रणमति भूयःपुनश्चनमः सतांधर्मवर्तिनांवृजिनच्छिदेदुःखहंत्रे असतामधर्मशीलानामसंभवायअनुद्भवहेतवे अखिलसत्वमूर्तं येतत्तद्देवतादिरूपेणतत्तत्फलदायेत्यर्थः समग्रसत्वमूर्तयेइतिवा पुनरपिपूर्वोक्तोभयवैलक्षण्यमाह पारमहंस्येप्रत्यङ्निष्ठारूपेआश्रमेव्यव स्थितानांपुंसामनुमृग्यमतन्निरसनेनपुनःपुनर्मृग्यंयदात्मतत्त्वंतस्यदाशुषेदात्रे ॥ १३ ॥ सात्वतांभक्तानामृषभायपालकायकुयोगिनांभक्ति हीनानांविदूराकाष्ठादिगापियस्य दुर्ज्ञेयायेत्यर्थः तदेवंवैषम्यप्रतीतावपिनिर्दोषत्वायाचिंत्यमैश्वर्यमाह निरस्तंसाम्यमातिशयश्चयस्य यद

**श्रीशुकउवाच नमःपरस्मैपुरुषायभूयसेसदुद्भवस्थाननिरोधलीलया ॥ गृहीतशक्तित्रितयायदेहिनामंतर्भ वायानुपलक्ष्यवर्त्मने ॥ १२ ॥ भूयोनमःसद्वृजिनच्छिदेसतामसंभवायाखिलसत्वमूर्तये॥ पुंसांपुनःपारमहं स्यआश्रमेव्यवस्थितानामनुमृग्यदाशुषे ॥ १३ ॥ नमोनमस्तेऽस्त्वृषभायसात्वतांविदूरकाष्ठायमुहुःकुयो गिनां ॥ निरस्तसाम्यातिशयेनराधसास्वधामनिब्रह्मणिरंस्यतेनमः ॥ १४ ॥ यत्कीर्तनंयत्स्मरणंयदीक्ष णंयद्वंदनंयच्छ्रवणंयदर्हणं ॥ लोकस्यसद्योविधुनोतिकल्मषंतस्मैसुभद्रश्रवसेनमोनमः ॥ १५ ॥ विच क्षणायच्चरणोपसादनात्संगंव्युदस्योभयतोऽतरात्मनः ॥ विंदंतिहिब्रह्मगतिंगतक्लमास्तस्मैसुभद्रश्रवसे नमोनमः ॥ १६ ॥ तपस्विनोदानपरायशस्विनोमनस्विनोमंत्रविदःसुमंगलाः॥ क्षेमंनविंदंतिविनायदर्पणं तस्मैसुभद्रश्रवसेनमोनमः ॥ १७ ॥**

पेक्षयाअन्यस्यसाम्यमतिशयश्चनास्ति तेनराधसाऐश्वर्येणस्वधामनिस्वस्वरूपेब्रह्मणिरममाणाय ॥ १४ ॥ सर्वसाधनेभ्योभक्तेःश्रैष्ठ्यमनु स्मरन्प्रणमति यत्कीर्तनमितिद्वाभ्यां अर्हणंपूजनं सुभद्रंमंगलंश्रवोयशोयस्यतस्मै ॥ १५ ॥ विचक्षणाविवेकिनःयस्यचरणयोरुपसाद नात् उपसत्तेर्भजनात् अंतरात्मनोमनसःउभयत्रइहचपरत्रचसंगंव्युदस्यनिरस्य गतक्लमाःप्रयासरहिताः ॥ १६ ॥ भक्तिशून्यानांसर्व साधनवैफल्यंदर्शयन्नमति तपस्विनइति मनस्विनोयोगिनः सुमंगलाःसदाचाराःयस्मिंस्तपआद्यर्पणंविना सुभद्रश्रवसइत्यस्या वृत्तिर्यशःश्रवणादेःप्राधान्यज्ञापनाय ॥ १७ ॥ ॥ ॥

भक्तेः परमशुद्धिहेतुत्वंदर्शयन्नाह किरातादयोयेपापजातयः अन्येचयेकर्मतःपापरूपास्तेयदुपाश्रयाभागवतास्तदाश्रयाःसंतःशुध्यंति असंभा
वनाशंकांपरिहरति प्रभविष्णवेप्रभवनशीलायेति॥१८॥सर्वोपास्यत्वमनुस्मरन्प्रार्थयते सएषआत्मवतांधरिाणामात्मा आत्मत्वेनोपास्यइत्य
र्थः त्रयीमयत्वादिविशेषणैस्तत्तन्मार्गेणोपास्यत्वंविवक्षितं गतव्यलीकैर्निष्कपटैर्भक्तैर्वितर्क्यमत्याश्चर्येणवीक्षणीयंलिंगंमूर्तिर्यस्यसःप्रसीदतु
॥ १९ ॥ सर्वपालकत्वमनुस्मरन्नाह श्रियइति गतिश्चसर्वापत्सुरक्षकः ॥ २०॥ ज्ञानप्रदत्वमनुस्मरन्नाह यदंघ्रीतिद्वाभ्यां यस्यांघ्र्योरनुध्यान
मेवसमाधिस्तेनधौतयाशोधितया यथारुचंरुच्यनुसारेणसगुणनिर्गुणादिभेदैः यद्वा रुक्प्रतिभा यथामतीत्यर्थः ॥२१॥ किंच पुराकल्पादौ

किरातहूणांध्रपुलिंदपुल्कसाआभीरकंकायवनाःखसादयः ॥ येऽन्येचपापायदुपाश्रयाश्रयाःशुध्यंतितस्मै
प्रभविष्णवेनमः ॥ १८ ॥ सएषआत्मात्मवतामधीश्वरस्त्रयीमयोधर्ममयस्तपोमयः ॥ गतव्यलीकैरज
शंकरादिभिर्वितर्क्यलिंगोभगवान्प्रसीदतां ॥ १९ ॥ श्रियःपतिर्यज्ञपतिःप्रजापतिर्धियांपतिर्लोकपतिर्ध
रापतिः ॥ पतिर्गतिश्चांधकवृष्णिसात्वतांप्रसीदतांमेभगवान्सतांपतिः ॥ २० ॥ यदंघ्र्यनुध्यानसमाधि
धौतयाधियानुपश्यंतिहितत्त्वमात्मनः ॥ वदंतिचैतत्कवयोयथारुचंसमेमुकुंदोभगवान्प्रसीदतां ॥ २१ ॥
प्रचोदितायेनपुरासरस्वतीवितन्वताजस्यसतींस्मृतिंहृदि ॥ स्वलक्षणाप्रादुरभूत्किलास्यतःसमेऋषीणा
मृषभःप्रसीदतां ॥ २२ ॥ भूतैर्महद्भिर्यइमाःपुरोविभुर्निर्मायशेतेयदमूषुपूरुषः ॥ भुंक्तेगुणान्षोडशषोड
शात्मकःसोऽलंकृषीष्टभगवान्वचांसिमे ॥ २३ ॥ ॥ ॥

अजस्यहृदिसतींसृष्टिविषयांस्मृतिंवितन्वतायेनप्रचोदितासतीसरस्वतीतस्यमुखतःकिलप्रादुर्भूता स्वानिलक्षणानिशिक्षाद्युक्तानियस्याःसा
ऋषीणांज्ञानप्रदानामृषभःश्रेष्ठः ॥ २२ ॥ इदानींस्ववाचंश्रोतृजनाल्हादिनींशृंगारकरुणादिशोभांप्रार्थयते भूतैरिति समेवचांसिअलंकृषी
ष्टअलंकरोतु अन्यस्यवचसामन्येनालंकारासंभवमाशंक्यतस्यांतर्यामितामाविष्करोति योमहद्भिर्भूतैरिमाःपुरःशरीराणिसृष्ट्वाअमूषुपूर्ष्वंतर्या
मितयाशेतेवसति अत्रपुरुषसमाख्यांप्रमाणयति यद्यस्मात्पुरुषइति अतएवयःएकादशेंद्रियपंचभूतरूपान्षोडशगुणान्कलाःभुंक्तेप्रकाश
यतिपालयतीतिवा तदात्त्वात्मनेपदमार्षं अत्रहेतुः यतःषोडशानामात्माचेतयिता स्वार्थेकः नत्वत्रजीवत्वमुच्यते प्रार्थनाविरोधात् ॥ २३ ॥

श्रीव्यासंनमस्करोति नमइति सौम्याभक्ताः यस्यमुखांबुरुहेआसवोमकरंदस्तं ॥ २४ ॥ इदानींप्रश्नोत्तरतयाब्रह्मनारदसंवादंप्रस्तौति
एतदिति उत्पत्तिसमयएववेदागर्भेयस्यससाक्षाद्धरिर्यदाह ॥ २५ ॥ इतिद्वितीयस्कंधेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ पंचमेनारदे
नाथपृष्टःसृष्ट्यादिवक्त्यजः ॥ हरेर्लीलांविराट्सृष्टिंकालकर्मादिशक्तिभिः ॥ १ ॥ नारदायविपृच्छतेवेदगर्भोऽभ्यधादित्युक्तंतत्रनारदप्र
श्नमाह देवदेवेति हेभूतभावन अतएवसर्वेषांपूर्वजअनादेर्ज्ञायतेऽनेनेतिज्ञानंतत्साधनंयत्तद्विजानीहि विशेषेणज्ञापयेत्यर्थः कथंभूतं आ
त्मतत्त्वंनितरांदृश्यतेयेनतत् ॥ १ ॥ उपलक्षणभूतंविश्वमेवात्मज्ञानसाधनमतस्तद्विशेषंपृच्छति यद्रूपंयेनरूप्यतेप्रकाश्यते यदधिष्ठानंय

नमस्तस्मैभगवतेवासुदेवायवेधसे ॥ पपुर्ज्ञानमयंसौम्यायन्मुखांबुरुहासवं ॥ २४ ॥ एतदेवात्मभूराज
न्नारदायविपृच्छते ॥ वेदगर्भोऽभ्यधात्साक्षाद्यदाहहरिरात्मनः ॥ २५ ॥ इतिश्रीभागवतेमहापुराणेद्वि
तीयस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ नारदउवाच देवदेवनमस्तेस्तुभूतभावनपूर्वज ॥ तद्विजानी
हियज्ज्ञानमात्मतत्त्वनिदर्शनं ॥ १ ॥ यद्रूपंयदधिष्ठानंयतःसृष्टमिदंप्रभो ॥ यत्संस्थंयत्परंयच्चतत्तत्त्वंवद
तत्त्वतः ॥ २ ॥ सर्वंह्येतद्भवान्वेदभूतभव्यभवत्प्रभुः ॥ करामलकवद्विश्वंविज्ञानावसितंतव ॥ ३ ॥
यद्विज्ञानोयदाधारोयत्परस्त्वंयदात्मकः ॥ एकःसृजसिभूतानिभूतैरेवात्ममायया ॥ ४ ॥ आत्मन्भावय
सेतानिनपराभावयन्स्वयं ॥ आत्मशक्तिमवष्टभ्यऊर्णनाभिरिवाक्लमः ॥ ५ ॥ ॥

दाश्रयं यतः येनसृष्टं यत्संस्थंयस्मिन्लीयते यत्परंयदधीनं यच्चेतियदात्मकं स्वतः सत्कारणतोवेत्यर्थः तस्यतत्त्वंयाथार्थ्यंतत्त्वतोवद ॥२॥
नजानामीतिनवक्तव्यमित्याह सर्वमिति भूतंजातंभव्यंजनिष्यमाणंभवज्जायमानंतेषांप्रभुर्यतःअतोविशिष्टेनज्ञानेनावसितंनिश्चितं ॥ ३ ॥
आस्तामिदं आदौतावत्त्वामेवकथयेत्याह यतोविज्ञानंयस्य कस्तवविज्ञानदइत्यर्थः यदाधारःकस्तवाश्रयः यत्परःयदधीनः यदात्मकःय
त्स्वरूपः ममतुत्वमेवस्वतंत्रःपरमेश्वरइतिबुद्धिः तवतपश्चरणेनतुपरशंकयापृच्छामीत्याह सार्धैश्चतुर्भिः एकःअसहायः ॥ ४ ॥ आत्मनि
भावयसेपालयसि स्वयमेवपराभवमप्रापयन् अक्लमःश्रमरहितः यथोर्णनाभिरात्मनएवशक्तिमवष्टभ्यसृजातितद्वत् ॥ ५ ॥

तस्मादहंतु अस्मिन् विश्वस्मिन् परमुत्तममपरमधमंसममंमध्यमंचतत्रापिनाममनुष्यादिरूपंद्विपदत्वादिगुणःशुक्लत्वादितैर्भाव्यंसाध्यंतत्रापिस दसत् स्थूलंसूक्ष्मंचकिंचिदप्यन्यतोनवेदकिंतुत्वत्तएवसर्वंभवतीतिमन्ये ॥ ६ ॥ सतथाविधोपिभगवांस्तपोऽचरदितियत्तेननोऽस्मान् खे दयसेमोहयसि यतःपराशंकांईश्वरांतराशंकांप्रयच्छसि ॥ ७ ॥ यथैवाहंत्वयाऽनुशासितःशिक्षितःसन् बुध्येबुध्येयंतथाविजानीहिविशेषेण ज्ञापय ॥८॥ प्रश्नमभिनंदति वत्सहेपुत्रतवेदंविचिकित्सितंसंदेहःतत्पूर्वकःप्रश्नोऽयंसम्यगित्यर्थःयतःकारुणिकस्यतवायंप्रश्नः अत्रहेतुः यत् यतःपरधर्मेभगवद्वीर्यप्रकाशनेप्रवर्तितोऽस्मि अतस्त्वंजिज्ञासुरपिमयिकृपामेवकृतवानित्यर्थः ॥ ९ ॥ ननुत्वमेवभगवानित्युक्तंमयाएकःसृ जसिभूतानीत्यादिना सत्यम् यथामामीश्वरत्वेनप्रभाषसेतदपितवभाषणंनात्यंतमनृतं यतःकारणात् एतावत्प्रभावस्यभावः एतावत्त्वंमेअ

नाहंवेदपरंत्वस्मिन्नापरंनसमंविभो ॥ नामरूपगुणैर्भाव्यंसदसत्किंचिदन्यतः ॥ ६ ॥ सभवानचरद्घोरंयत्त पःसुसमाहितः ॥ तेनखेदयसेनस्त्वंपराशंकांप्रयच्छसि ॥ ७ ॥ एतन्मेपृच्छतःसर्वंसर्वज्ञसकलेश्वर ॥ विजानी हितथैवेदमहंबुध्येऽनुशासितः ॥ ८ ॥ ब्रह्मोवाच सम्यक्कारुणिकस्येदंवत्सतेविचिकित्सितं ॥ यदहंचो दितःसौम्यभगवद्वीर्यदर्शने ॥ ९ ॥ नानृतंतवतच्चापियथामांप्रब्रवीषिभो ॥ अविज्ञायपरंमत्तएतावत्त्वंयतोहि मे ॥ १० ॥ येनस्वरोचिषाविश्वंरोचितंरोचयाम्यहं ॥ यथाऽर्कोऽग्निर्यथासोमोयथर्क्षग्रहतारकाः ॥ ११ ॥ तस्मैन मोभगवतेवासुदेवायधीमहि ॥ यन्माययादुर्जययामांब्रुवंतिजगद्गुरुं ॥ १२ ॥ विलज्जमानयायस्यस्थातुमी क्षापथेऽमुया ॥ विमोहिताविकत्थंतेममाहमितिदुर्धियः ॥ १३ ॥ स्तिाकिंतु मत्तःपरमीश्वरमविज्ञायब्रूषे अतःसादृश्यात्तवे

यंभ्रांतिर्नतुबुद्धिपूर्वमनृतामित्यर्थः यतईश्वरान्ममएतावत्त्वंतमविज्ञायेतिवाऽन्वयः ॥ १० ॥ तर्हिकोऽसावीश्वरइत्यपेक्षायांभक्त्यानमस्कुर्वन्ने वतंकथयतित्रिभिः येनस्वप्रकाशेनरोचितंप्रकाशितमेवप्रकाशयामिसृष्ट्याभिव्यक्तंकरोमि यथाऽर्कादयश्चैतन्यप्रकाशमेवप्रकाशयंतितथाच श्रुतिः नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निःतमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीति ॥ ११ ॥ तस्मै नमोधीमहि यस्यमाययाविमोहिताः संतोयुष्मदादयोमांजगद्गुरुंजगत्कारणंवदंतितस्मै ॥ १२ ॥ यन्माययेतिमायासंबंधोक्तेस्तस्यादुर्ज यत्वोक्तेश्चतस्यापिकिमास्तिसंसारःनैवेत्याह मत्कपटमसौजानातीतियस्यदृष्टिपथेस्थातुंविलज्जमानयेवतस्मिन् स्वकार्यमकुर्वत्याअमुयामा ययाविमोहिताअस्मदादयोदुर्धियः अविद्यावृतज्ञानाएवकेवलंविकत्थंतेश्लाघंते अनेनयद्रूपमित्यस्यप्रश्नस्योत्तरमुक्तंभवति ॥ १३ ॥

तदेवंस्वस्मादन्यंपरमेश्वरंनिरूप्येदानींयदधिष्ठानमित्यादिनवप्रश्नानांसएवाधिष्ठानादिकंसर्वमित्युत्तरंवक्तुंतद्व्यतिरेकेणान्यस्यासत्वमाह द्रव्य
मिति द्रव्यंमहाभूतानिउपादानरूपाणि कर्मजन्मनिमित्तम् कालस्तत्क्षोभकः स्वभावस्तत्परिणामहेतुः जीवोभोक्ता वासुदेवात्परोऽन्यो
र्थोनास्ति कारणाव्यतिरेकात्कार्यस्य ॥ १४ ॥ तत्प्रपंचयतिद्वाभ्याम् नारायणःपरःकारणंयेषांते अनेनैवशास्त्रयोनित्वप्रतिपादनेनेश्वरेप्र
माणंसर्वज्ञत्वादिकंचोक्तं देवाश्चतदंगाज्जाताअतोनतद्व्यतिरिक्तालोकाःस्वर्गादयस्तदानंदांशाः मखास्तत्साधनभूताः ॥ १५ ॥ योगःप्राणा
यामादिःतपस्तत्साध्यंचित्तैकाग्र्यम् ज्ञानंतत्साध्यं गतिस्तत्फलं अनेनैवसर्वंतदधीनमित्युक्तं ॥ १६ ॥ तर्हित्वंकिंकरोषीत्यपेक्षायामाह तस्य
सृज्यमपितेनसृष्टोऽहंसृजामिईक्षयाकटाक्षेण तत्रहेतवः द्रष्टुरित्यादयः ॥ १७ ॥ ननुकुतोऽयंजीवेश्वरविभागोयतस्त्वंप्रेर्यःसचप्रेरकःस्या

**द्रव्यंकर्मचकालश्चस्वभावोजीवएवच ॥ वासुदेवात्परोब्रह्मन्नचान्योऽर्थोस्तितत्त्वतः ॥ १४ ॥ नारायणपरा वेदादेवानारायणांगजाः ॥ नारायणपरालोकानारायणपरामखाः ॥ १५ ॥ नारायणपरोयोगोनारायण परंतपः ॥ नारायणपरंज्ञानंनारायणपरागतिः ॥ १६ ॥ तस्यापिद्रष्टुरीशस्यकूटस्थस्याखिलात्मनः ॥ सृज्यंसृजामिसृष्टोहमीक्षयैवाभिचोदितः ॥ १७ ॥ सत्वंरजस्तमइतिनिर्गुणस्यगुणास्त्रयः ॥ स्थितिसर्ग निरोधेषुगृहीतामाययाविभोः ॥ १८ ॥ कार्यकारणकर्तृत्वेद्रव्यज्ञानक्रियाश्रयाः ॥ बध्नंतिनित्यदामुक्तंमा यिनंपुरुषंगुणाः ॥ १९ ॥ सएषभगवाँल्लिंगैस्त्रिभिरेभिरधोक्षजः ॥ स्वलक्षितगतिर्ब्रह्मन्सर्वेषांममचेश्वरः ॥ २० ॥ कालंकर्मस्वभावंचमायेशोमाययास्वया ॥ आत्मन्यदृच्छयाप्राप्तंविबुभूषुरुपाददे ॥ २१ ॥ का लाद्गुणव्यतिकरःपरिणामःस्वभावतः ॥ कर्मणोजन्ममहतःपुरुषाधिष्ठितादभूत् ॥ २२ ॥ ॥**

दित्यपेक्षायांजीवेश्वरविभागहेतुमाहत्रिभिः सत्वमिति निर्गुणस्यापीश्वरस्यैतेत्रयोगुणाबध्नंतीत्युत्तरेणान्वयः कथंभूताः तेनैवस्वातंत्र्येण
स्थित्याद्यर्थंमाययागृहीताः ॥ १८ ॥ वस्तुतःसर्वदामुक्तमपिमायिनंमायाविषयंपुरुषंजीवंबध्नंति क्वकार्यमधिभूतंकारणमध्यात्मंकर्ताऽधिदै
वतंतेषांभावस्तत्वंतास्मिन् द्रव्यंमहाभूतानिज्ञानशब्देनदेवताः क्रियाइंद्रियाणितदाश्रयास्तेषांकारणभूतास्तत्तदभिमानेनबध्नंति ॥ १९ ॥
अतःसएषवश्यमायःएभिर्गुणैःलिंगैःजीवानामावरकैरुपाधिभिः सुष्ठुअलक्षितागतिस्तत्त्वंयस्यसःस्वैर्भक्तैरेवलक्षितागतिस्तत्वंयस्येतिवा ॥
॥ २० ॥ तस्यसृष्टिप्रकारमाह कालमिति कर्मजीवादृष्टं विबुभूषुःविविधंभवितुमिच्छन् ॥ २१ ॥ गुणानांव्यतिकरःक्षोभःसाम्यत्यागः
परिणामोरूपांतरापत्तिः पुरुषईश्वरस्तेनाधिष्ठितत्वंत्रयाणांविशेषणं महतःमहत्तत्त्वस्य ॥ २२ ॥ ॥

महत्तत्त्वाद्विकुर्वाणाद्विक्रियमाणात् तस्यचक्रियाज्ञानशक्तित्वात्रिगुणत्वेऽपिरजःसत्वाभ्यामुपबृंहितत्वम् अहंकारस्यत्वावरकत्वात्तमः प्रधानत्वं अतएवाहंकारकार्येषुतामसमाकाशादिकंबहुराजसंसात्विकंचाल्पं एवंतदुपाधिकेषुजीवेष्वपितथैवतामसाधिक्यं ॥ २३ ॥ सचविकुर्वन्रूपांतरंगच्छन् त्रैविध्यमेवाह वैकारिकःसात्विकः तैजसोराजसः यद्विदायस्यभेदः द्रव्यशक्तिरित्यादीनिप्रातिलोम्येनत्रयाणांलक्षणानि द्रव्येमहाभूताख्यशक्तिर्यस्य क्रियासुइंद्रियेषुशक्तिर्यस्य ज्ञानेषुदेवेषुशक्तिर्यस्य हेप्रभोवोढुंशक्त ॥ २४ ॥ भूतादेरितितामसस्यविशेषणं ननुतामसात्प्रथमंशब्दोभवतीतिप्रसिद्धं सत्यं सतुतस्यनभसोमात्रासूक्ष्मंरूपं गुणश्चअसाधारणोव्यावर्तकोधर्मः

महतस्तुविकुर्वाणाद्रजःसत्वोपबृंहितात् ॥ तमःप्रधानस्त्वभवद्द्रव्यज्ञानाक्रियात्मकः ॥ २३ ॥ सोऽहंकारइतिप्रोक्तोविकुर्वन्समभूत्त्रिधा ॥ वैकारिकस्तैजसश्चतामसश्चेतियद्भिदा ॥ द्रव्यशक्तिःक्रियाशक्तिर्ज्ञानशक्तिरितिप्रभो ॥ २४ ॥ तामसादपिभूतादेर्विकुर्वाणादभून्नभः ॥ तस्यमात्रागुणःशब्दोलिंगंयद्द्रष्टृदृश्ययोः ॥ ॥ २५ ॥ नभसोऽथविकुर्वाणादभूत्स्पर्शगुणोऽनिलः ॥ परान्वयाच्छब्दवांश्चप्राणओजःसहोबलम् ॥ २६ ॥ वायोरपिविकुर्वाणात्कालकर्मस्वभावतः ॥ उदपद्यततेजोवैरूपवत्स्पर्शशब्दवत् ॥ २७ ॥ तेजसस्तुविकुर्वाणादासीदंभोरसात्मकम् ॥ रूपवत्स्पर्शवच्चांभोघोषवच्चपरान्वयात् ॥ २८ ॥ विशेषस्तुविकुर्वाणादंभसोगंधवानभूत् ॥ परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः ॥ २९ ॥ ॥ ॥

शब्दद्वारानभउत्पद्यतइत्यर्थः एवमेवस्पर्शादिष्वपिद्रष्टव्यं शब्दस्यलक्षणंलिंगमिति कुड्याद्यंतरितेनकेनचिदुच्चैर्गजोगजइत्युक्तेयोगजद्रष्टायश्चतेनदृश्योगजस्तयोर्लिंगंबोधकम् लिंगविशेषणत्वाद्यच्छब्दस्यषंढत्वं ॥ २५ ॥ परस्यनभसःकारणत्वेनान्वयाच्छब्दवांश्चवायुः तस्यैवलक्षणंप्राणोदेहधारणं ओजःसहोबलानिइंद्रियमनःशरीराणांपाटवानि तेषांहेतुरित्यर्थः ॥ २६ ॥ स्वतोरूपवत्तेजः वायुनभसोःकारणभूतयोरन्वयात्स्पर्शशब्दवच्च एवमंभसःपृथिव्याश्चपरान्वयाधिक्याद्गुणाधिक्यं ॥ २७ ॥ घोषःशब्दः ॥ २८ ॥ विशेषःपृथिव्याश्चपरान्वयाधिक्याद्गुणाधिक्यम् ॥ २९ ॥ ॥ ॥ ॥ ॥

मनःशब्देनैवतदधिष्ठाताचंद्रोऽपिद्रष्टव्यः अन्येचदशदेवावैकारिकाःसात्विकाहंकारकार्याः तानाह दिशश्चवातश्चअर्कश्चप्रचेताश्चअश्वि नौच एतेपंचश्रोत्रत्वक्चक्षुजिव्हाघ्राणानामधिष्ठातारः वन्हिश्चइंद्रश्चउपेंद्रश्चमित्रश्चकश्चप्रजापतिः एतेपंचवाक्पाणिपादपायूपस्थाना मधिष्ठातारः ॥ ३० ॥ यतोज्ञानशक्तिर्बुद्धिःक्रियाशक्तिःप्राणश्चतैजसाहंकारकार्यौ अतोज्ञानक्रियाविशेषरूपाणींद्रियाण्यपितैजसादभ वन्नित्यर्थः तान्याह श्रोत्रमिति दोःपाणिः मेढ्रमुपस्थः क्रमस्त्वत्रनविवक्षितः ॥ ३१ ॥ एवंकारणसृष्टिमुक्त्वाकार्यसृष्टिमाह यदाएतेअ संगताअमीलिताआसन् अतएवयदाआयतनस्यशरीरस्यनिर्माणेनशेकुः ॥ ३२ ॥ तदासदसत्त्वंप्रधानगुणभावमुपादायस्वीकृत्य उभयं

वैकारिकान्मनोजज्ञेदेवावैकारिकादश ॥ दिग्वातार्कप्रचेतोऽश्विवन्हींद्रोपेंद्रमित्रकाः ॥ ३० ॥ तैजसात्तुविकु र्वाणादिंद्रियाणिदशाभवन् ॥ ज्ञानशक्तिःक्रियाशक्तिर्बुद्धिःप्राणस्तुतैजसौ ॥ श्रोत्रंत्वग्घ्राणदृग्जिव्हावाग्दो र्मेढ्रांघ्रिपायवः ॥ ३१॥ यदैतेऽसंगताभावाभूतेंद्रियमनोगुणाः ॥ यदायतननिर्माणेनशेकुर्ब्रह्मवित्तम ॥ ३२ ॥ तदासंहत्यचान्योन्यंभगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादायचोभयंससृजुर्ह्यदः ॥ ३३ ॥ वर्षपूगसहस्रांते तदंडमुदकेशयम् ॥ कालकर्मस्वभावस्थोजीवोजीवमजीवयत् ॥ ३४ ॥ सएवपुरुषस्तस्मादंडंनिर्भिद्यनिर्ग तः॥ सहस्रोर्वंघ्रिबाह्वक्षःसहस्राननशीर्षवान् ॥३५॥ यस्येहावयवैर्लोकान्कल्पयंतिमनीषिणः॥कट्यादिभि रधःसप्तसप्तोर्ध्वंजघनादिभिः॥३६॥पुरुषस्यमुखंब्रह्मक्षत्रमेतस्यबाहवः॥ ऊर्वोर्वैश्योभगवतःपद्भ्यांशूद्रोऽभ्य जायत॥३७॥भूर्लोकःकल्पितःपद्भ्यांभुवर्लोकोऽस्यनाभितः॥हृदास्वर्लोकउरसामहर्लोकोमहात्मनः॥३८॥

समष्टिव्यष्टचात्मकंशरीरं ॥ ३३ ॥ कालकर्मस्वभावानधिष्ठायस्थितोजीवयतीतिजीवःपरमात्माअजीवमचेतनंअजीवयत्चेतयतिस्म ॥ ३४ ॥ निर्भिद्यपृथक्कृत्यस्थितइत्यर्थः ॥ ३५ ॥ तदवयवैर्लोकरचनामाह यस्येति कटिरिति ऊरुमूलयोःपश्चाद्भागः जघनंपुरोभागः अधःसप्तलोकान्अतलादीन् ऊर्ध्वंभूरादीन्सप्त ॥ ३६ ॥ वर्णानांततउत्पत्तिंदर्शयति पुरुषस्येति ब्रह्मब्राह्मणोमुखमितिकार्यकारणयो रभेदविवक्षयोक्तं बाहवइतिच क्षत्रंक्षत्रियः ॥ ३७ ॥ इदानीमुपासनार्थंलोककल्पनाभेदान्दर्शयन्सप्तलोकपक्षमाहहृद्भ्यां भूर्लोकःपा तालमारभ्यपद्भ्यांकटिपर्यंताभ्यां ॥ ३८ ॥ ॥ ॥ ॥ ॥

स्तनद्वयादितिउपासनार्थत्वादूर्ध्वाधोभाववैपरीत्यंनदोषः यद्वास्तनत्शब्दंकुर्वद्यदोष्टद्वयंतस्मादित्यर्थः ब्रह्मलोकोवैकुंठाख्यः सनातनोनि
त्यः नतुसृज्यप्रपंचांतर्वर्तीत्यर्थः ॥ ३९ ॥ इदानींचतुर्दशलोकपक्षंदर्शयति तत्रजघनादिभिर्भूरादयः पूर्वोक्ताएवसप्त कट्यादिभिरधःस
प्तलोकानाह तत्कटचामितिद्वाभ्यां शुद्धंहरिभक्तनिवासत्वात् ॥ ४० ॥ ४१ ॥ त्रिलोकपक्षमाह भूर्लोकःपातालादिसहितः ॥ ४२ ॥
इ० भा० द्वि० टी० पंचमोऽध्यायः ॥ ५ ॥ ॥ षष्ठेविराड्विभूतिश्चप्रोक्ताध्यात्मादिभेदतः ॥ दृढीकृतंचपूर्वोक्तंसर्वपुरुषसूक्ततः ॥ १ ॥
इदानींवैराजस्यविभूतिःसप्रपंचमनुवर्ण्यते वाचामस्मदादिवागिंद्रियाणांतदधिष्ठातुर्वन्हेश्चतस्यमुखंक्षेत्रमुत्पत्तिस्थानं छंदसांगायत्र्यादी

ग्रीवायांजनलोकश्चतपोलोकस्तनद्वयात् ॥ मूर्द्धभिःसत्यलोकस्तुब्रह्मलोकःसनातनः ॥३९॥ तत्कटचांचात
लंक्ष्लप्तमूरुभ्यांवितलंविभोः ॥ जानुभ्यांसुतलंशुद्धंजंघाभ्यांतुतलातलं ॥ ४० ॥ महातलंतुगुल्फाभ्यांप्रपदा
भ्यांरसातलं ॥ पातालंपादतलतइतिलोकमयःपुमान् ॥ ४१॥ भूर्लोकःकल्पितःपद्भ्यांभुवर्लोकोऽस्यनाभितः
स्वर्लोकःकल्पितोमूर्ध्नाइतिवालोककल्पना ॥ ४२ ॥ इ०भा०म०द्वि०पंचमोऽध्यायः ॥ ५ ॥ ब्रह्मोवाच वा
चांवन्हेर्मुखंक्षेत्रंछंदसांसप्तधातवः ॥ हव्यकव्यामृतान्नानांजिव्हासर्वरसस्यच ॥ १ ॥ सर्वासूनांचवायोश्चत
न्नासेपरमायने ॥ अश्विनोरोषधीनांचघ्राणोमोदप्रमोदयोः ॥२ ॥ रूपाणांतेजसांचक्षुर्दिवःसूर्यस्यचाक्षिणी॥
कर्णौदिशांचतीर्थानांश्रोत्रमाकाशशब्दयोः ॥ तद्गात्रंवस्तुसाराणांसौभगस्यचभाजनं ॥ ३॥ त्वगस्यस्पर्शवा
योश्चसर्वमेधस्यचैवहि ॥ रोमाण्युद्भिज्जजातीनांयैर्वायज्ञस्तुसंभृतः ॥ ४ ॥ ॥ ॥

नांसप्तानांतस्यसप्तधातवस्त्वगादयःक्षेत्रं हव्यंदेवानामन्नंकव्यंपितॄणां अमृतंतदुभयशेषोमनुष्याणां तेषामन्नानांसर्वरसस्यमधुरादेःषड्विधस्य
चकारादस्मदादिरसनेंद्रियस्यतदधिष्ठातुर्वरुणस्यचैतस्यजिव्हाक्षेत्रमुत्पत्तिस्थानं एवंसर्वत्रानुक्तमुन्नेयं ॥ १ ॥ सर्वासूनामस्मदादिप्राणानां
तस्यनासिनासारंध्रेपरमायनेउत्तमक्षेत्रे मोदप्रमोदयोश्चसामान्यविशेषगंधयोर्घ्राणोघ्राणेंद्रियंपरमायनं ॥ २ ॥ रूपाणांतेजसांरूपप्रकाशा
नांचचक्षुरिंद्रियं अक्षिणीनेत्रगोलके सर्वत्रषष्ठ्यंतानांप्रथमांतंक्षेत्रंद्रष्टव्यं कर्णौश्रोत्राधिष्ठानेश्रोत्रमिंद्रियं तस्यगात्रंशरीरंवस्तूनांयेसारांशा
स्तेषांभाजनंस्थानम् ॥ ३ ॥ अस्यत्वक्स्पर्शस्यवायोश्चेत्यर्थः सर्वस्यमेधस्ययज्ञस्य उद्भिज्जजातीनांसर्ववृक्षाणां यैर्वृक्षैर्यज्ञः
सम्यक्साधितःतेषामेववा ॥ ४ ॥ ॥ ॥ ॥

केशामेघानांक्षेत्रं पूर्वंतथोक्तेः श्मश्रूणिविद्युतांपादकरनखानिशिलालोहानामितिसादृश्याद्दूह्यं क्षेमकर्मणांपालनकर्तॄणां ॥ ५ ॥ विक्रमः पादन्यासोभूरादिलोकानामास्पदमाश्रयः भूरादिशब्दानामव्ययत्वात्षष्ठ्यालुक् क्षेमोलब्धरक्षणं शरणंभयाद्रक्षणं सर्वेषांकामानांवरस्य वरणस्यापिहरेरंघ्रिरास्पदं ॥ ६ ॥ वीर्यस्यशुक्रस्याशिश्नोऽधिष्ठानं उपस्थस्त्विंद्रियं प्रजात्यानंदः संतानार्थःसंभोगस्तेनयानिर्वृतिस्तापहानिस्त स्याः ॥ ७ ॥ परिमोक्षस्यमलत्यागस्यपायुरिंद्रियं गुदःस्थानं निर्ऋतेरलक्ष्म्याः ॥ ८ ॥ तमसोऽज्ञानस्य पाश्चिमःपृष्ठभागः गोत्राणांगिरी

केशश्मश्रुनखान्यस्यशिलालोहाभ्रविद्युतां ॥ बाहवोलोकपालानांप्रायशःक्षेमकर्मणां ॥ ५ ॥ विक्रमोभूर्भुवःस्वश्चक्षेमस्यशरणस्यच ॥ सर्वकामवरस्यापिहरेश्चरणआस्पदं ॥ ६ ॥ आपांवीर्यस्यसर्गस्यपर्जन्यस्यप्रजापतेः ॥ पुंसःशिश्नउपस्थस्तुप्रजात्यानंदनिर्वृतेः ॥ ७ ॥ पायुर्यमस्यमित्रस्यपरिमोक्षस्यनारद ॥ हिंसाया निर्ऋतेर्मृत्योर्निरयस्यगुदःस्मृतः ॥ ८ ॥ पराभूतेरधर्मस्यतमसश्चापिपाश्चिमः ॥ नाड्योनदनदीनांतु गोत्राणामस्थिसंहतिः ॥ ९ ॥ अव्यक्तरससिंधूनांभूतानांनिधनस्यच ॥ उदरंविदितंपुंसोहृदयंमनसःपदं ॥ १० ॥ धर्मस्यममतुभ्यंचकुमाराणांभवस्यच ॥ विज्ञानस्यचसत्वस्यपरस्यात्मापरायणं ॥ ११ ॥ अहंभवान्भवश्चैवतइमेमुनयोऽग्रजाः ॥ सुरासुरनरानागाःखगामृगसरीसृपाः ॥ १२ ॥ गंधर्वाप्सरसोयक्षारक्षोभूतगणोरगाः ॥ पशवःपितरःसिद्धाविद्याध्राश्चारणाद्रुमाः ॥ १३ ॥ अन्येचविविधाजीवाजलस्थलनभौकसः ॥ ग्रहर्क्षकेतवस्तारास्तडितस्तनयित्नवः ॥ १४ ॥ ॥ ॥

णामस्थिसंघातः ॥ ९ ॥ अव्यक्तंप्रधानं रसःअन्नादिसारः सिंधवःसमुद्रास्तेषां निधनस्यलयस्यउदरंपदंस्थानंविदितंज्ञानिभिः मनसः अस्मदादिलिंगशरीरस्य ॥ १० ॥ तुभ्यंतवकुमाराणांसनकादीनांभवस्यश्रीरुद्रस्यआत्माचित्तंपरमायनं ॥ ११ ॥ एवंतावत्परमेश्वराज्जातं विश्वंततोनभिन्नं यथाकुंडलंसुवर्णान्नपृथक् सतुसर्वनियंतासर्वप्रकाशकोनित्यमुक्तइत्यर्थादुक्तं एतदेवपुरुषसूक्तार्थकथनेनद्रढयति ब्रह्मसह स्रशीर्षेत्यर्धर्चस्यब्राह्मणोऽस्यमुखमासीदित्यादेश्चऋक्त्रयस्यार्थःपूर्वाध्यायएवदर्शितः पुरुषएवेदंसर्वमित्यस्यार्थंदर्शयति अहंभवानितिसार्ध त्रिभिः तेअग्रजाइमेसनकादयःमरीच्यादयश्च ॥ १२ ॥ १३ ॥ जलंचस्थलंचनभश्चौकांसियेषांते नभौकसइतिसंधिरार्षः ॥ १४ ॥

सर्वंपुरुषएवनततःपृथगित्यर्थः प्रपंचेनतस्यापरिच्छेदंवक्तुंसभूमिमित्यस्यार्थमाह तेनपुरुषेण विश्वमितिभूमिपदस्यार्थः वितास्तिमिति दशांगुलपदस्य अर्धात्यातिशब्दस्य सचवितस्तिमाधिकंव्याप्यातिष्ठतत्याधिक्यमात्रंविवक्षितंनपरिमाणं अनुपयोगादपरिच्छिन्नत्वाच्च ॥ १५ ॥ एतत्सदृष्टांतमाह असौप्राणः आदित्यःअसौवाआदित्यःप्राणइतिश्रुतेः स्वधिष्ण्यंमंडलंप्रकाशयन्यथाबहिश्चप्रकाशयति एवं विराट्देहंप्रकाशयन्ब्रह्मांडमंतर्बहिश्चप्रकाशयाति नित्यमुक्तत्वंदर्शयितुमुतामृतत्वस्येत्यस्यार्थमाह सइति अभयस्येतिमंत्रगतामृतपदव्या ख्या अन्नेनेतिपदंविभक्तिव्यत्ययेनव्याचष्टे मर्त्यंमरणधर्मकमन्नंकर्मफलंयस्मादत्यगात्अतिक्रांतवान् अतोनकेवलंसर्वात्मकःकिंतुअमृत त्वस्यानिजानंदस्यापीश्वरइत्यर्थः ॥ १६ ॥ प्रपंचात्मकस्यकुतोनित्यमुक्तत्वमित्याशंक्यतत्परिहारायएतावानस्येत्यस्यार्थमाह महिमेति प्रपंचात्मकस्याप्यमृतेशत्वमित्येषमाहिमादुरत्ययःअपारःप्रपंचानभिभूतत्वादितिभावः मंत्रेणचएतावानस्यमहिमाविभूतिःसतुज्यायान् महत्तरइतिवदतायमेवार्थउक्तः तदेवमीश्वरोनित्यमुक्तइत्युक्तम् तदाश्रितानांभूतानांबंधमोक्षौव्यवस्थयेतिदर्शयन्पादोऽस्यविश्वाभूतानी

सर्वंपुरुषएवेदंभूतंभव्यंभवच्चयत् ॥ तेनेदमावृतंविश्वंवितस्तिमधितिष्ठति १५ ॥ स्वधिष्ण्यंप्रतपन्प्राणोबहि श्चप्रतपत्यसौ ॥ एवंविराजंप्रतपंस्तपत्यंतर्बहिःपुमान् ॥ सोऽमृतस्याभयस्येशोमर्त्यमन्नंयदत्यगात् ॥१६॥ महिमैषततोब्रह्मन्पुरुषस्यदुरत्ययः ॥पादेषुसर्वभूतानिपुंसःस्थितिपदोविदुः ॥१७॥ अमृतंक्षेममभयंत्रिमूर्ध्नो धायिमूर्धसु ॥ पादास्त्रयोबहिश्चासन्नप्रजानांयआश्रमाः ॥ अंतस्त्रिलोक्यास्त्वपरोगृहमेधोऽबृहद्व्रतः ॥ १८॥

त्यस्यार्थमाह पादेष्विति तिष्ठंत्यत्रेतिस्थितयोभूरादिलोकास्तेपादाइवपादाःअंशायस्यसास्थितिपात्तस्यपादेष्वंशभूतेषुलोकेषुसर्वान्जी वान्विदुः मंत्रेतुपादोऽस्यविश्वाभूतानीतिसामानाधिकरण्यमधिष्ठानाधिष्ठेयाभेदविवक्षया पादइत्येकवचनंचसामान्याभिप्रायेणेतिव्याख्या तंभवाति ॥ १७ ॥ भूतेषुफलवैचित्र्यंदर्शयन्त्रिपादस्यामृतंदिवीत्यस्यार्थमाह अस्येश्वरसंबंधित्रिपादमृतंनित्यसुखंदिविऊर्ध्वलोकेषुनत्रि लोक्यामित्यर्थः तदेवत्रिपाच्छब्दोक्तंत्रैविध्यंदर्शयन्नाह त्रयाणांलोकानांमूर्धामहर्लोकस्तस्यमूर्धानस्तदुपरितनलोकास्तेषुयथाक्रममममृता दिकमधायिनिहितम् तत्रत्रिलोक्यांनश्वरमेवसुखं महर्लोकस्यक्रममुक्तिस्थानत्वेपिकल्पांतेतत्रत्यानांस्थानत्यागान्नाविनाशिसुखं जन लोकेत्वमृतमविनाशिसुखं यावज्जीवंस्वस्थानापरित्यागात्किंतुमहर्लोकवासिनांकल्पांतेत्रिलोकदाहोष्मपीडितानांतदातत्रगमनादक्षेमद र्शनमस्ति तपोलोकेतस्याभावात्क्षेममेव वक्ष्यतिहि त्रिलोक्यांदह्यमानायांशक्त्यासंकर्षणाग्निना ॥ यांत्यूष्मणामहर्लोकाज्जनंभृग्वादयोऽ र्दिताइति सत्यलोकेत्वभयंमोक्षः तत्प्रत्यासत्तेः एतदेववैचित्र्यमधिकारिभेदेनोपपादयंस्त्रिपादूर्ध्वंइत्यस्यार्थमाह नप्रजायंतेपुत्रादिरूपे णेत्यप्रजाःनैष्ठिकब्रह्मचारिवानप्रस्थयतयस्तेषामाश्रमास्त्रिलोक्याः बहिरासन्गृहमेधस्त्वंतः यस्माद्बृहद्व्रतःब्रह्मचर्यव्रतरहितः ॥ १८ ॥

अयंचाधिकारभेदएकस्यैवावस्थाभेदेननत्वस्यंताभिन्नविषयइतिदर्शयंस्ततोविष्वङ्ङित्यस्यार्थमाह विविधंसुष्ठुअंचतीतिविष्वङ्पुरुषः क्षेत्रज्ञः सृतीमार्गौदक्षिणोत्तरौविचक्रमेचलतिस्म कथंभूतेसृती साशनानशनेभोगापवर्गप्राप्तिसाधनभूते अत्रहेतुत्वेनपुनर्विशेषणम् यद्यतः अविद्याकर्मरूपाएकाविद्याचतत्साधनोपासनारूपाऽन्या ॥ १९ ॥ तदेवंविराडंतर्वर्तिनांफलवैचित्र्यमुक्त्वातत्कारणेश्वरस्यतद्वैलक्षण्यंदर्शयितुंतस्माद्विराळजायतेत्यस्यार्थमाह यस्मादंडंजज्ञेतत्रचभूतेंद्रियगुणात्मकोविराट्चजज्ञेसईश्वरस्तद्विश्वंविराट्देहंद्रव्यमंडंचअतिक्रांतवान् सूर्यइवेतिपूर्वोक्तएवदृष्टांतः ॥ २० ॥ नन्वेवंपुरुषएवचेत्सर्वंतर्हियज्ञस्यतत्साधनानांचापृथग्भावात्यज्ञैःपुरुषाराधनंनसिध्येदित्याशंक्यतत्परिहारायतत्पुरुषेणहविषेत्यादिमंत्रार्थंसंगृह्यदर्शयति यदेत्यादिना अस्येतिविराडंतर्यामिणः तस्यैवप्रकृतत्वात् नाभौभवंनाभ्यंतस्मात् यज्ञसंभारान्साधनानिनापश्यम् ॥ २१ ॥ तदातेषुसंभारेषुसाध्येषुसत्सुपुरुषावयवैरेतेसंभाराःसंभृताइतिचतुर्थेनान्वयःवनस्पतयोयूपाः देवयजनंय

सृतीविचक्रमेविष्वङ्साशनानशनेउभे ॥ यदविद्याचविद्याचपुरुषस्तूभयाश्रयः ॥१९॥ यस्मादंडंविराट्जज्ञेभूतेंद्रियगुणात्मकः ॥ तद्द्रव्यमत्यगाद्विश्वंगोभिःसूर्यइवातपन् ॥२०॥ यदास्यनाभ्यान्नलिनादहमासंमहात्मनः ॥ नाविदंयज्ञसंभारान्पुरुषावयवादृते ॥ २१ ॥ तेषुयज्ञस्यपशवःसवनस्पतयःकुशाः ॥ इदंचदेवयजनंकालश्चोरुगुणान्वितः ॥२२॥ वस्तून्योषधयःस्नेहारसलोहमृदोजलं ॥ ऋचोयजूंषिसामानिचातुर्होत्रंचसत्तम ॥२३॥ नामधेयानिमंत्राश्चदक्षिणाश्चव्रतानिच ॥ देवतानुक्रमःकल्पःसंकल्पस्तंत्रमेवच ॥२४॥ गतयोमतयश्चैवप्रायश्चित्तंसमर्पणं ॥ पुरुषावयवैरेतेसंभाराःसंभृतामया ॥२५॥ इतिसंभृतसंभारःपुरुषावयवैरहं ॥ तमेवपुरुषंयज्ञंतेनैवायजमीश्वरं ॥२६॥ ततस्तेभ्रातरइमेप्रजानांपतयोनव ॥ अयजन्व्यक्तमव्यक्तंपुरुषंसुसमाहिताः ॥२७॥

ज्ञभूमिः इदंचेतिवचनाद्यज्ञार्हेस्थानेउपविष्टःकथयतीतिगम्यते बहुगुणान्वितोवसंतादिकालः ॥ २२ ॥ वस्तूनिपात्रादीनि ओषधयोव्रीह्यादयः स्नेहाघृतादयः रसामधुरादयःसुवर्णादीनिलोहानिमृदश्च चातुर्होत्रंहौत्रादिकंकर्म ॥ २३ ॥ नामधेयानिज्योतिष्टोमादीनि ऋगादीनामुक्त्वान्मंत्राइतिस्वाहाकारादयः देवतानामनुक्रमउद्देशः कल्पोबौधायनादिकर्मपद्धतिग्रंथः अनेनाहंयक्ष्यइतिसंकल्पःतंत्रमनुष्ठानप्रकारः ॥ २४ ॥ गतयोविष्णुक्रमाद्याः मतयोदेवताध्यानानि कृतस्यभगवतिसमर्पणम् ॥ २५ ॥ संभृताःसंपादिताःसंभारायेनसोऽहंतेनैवयज्ञेनैव अनेनयज्ञेनयज्ञमयजंतेतिमंत्रार्थःसूचितः ॥ २६ ॥ तेनदेवाअयजंतेत्यस्यार्थसप्रपंचंदर्शयति ततइतिद्वाभ्याम् व्यक्तमिंद्रादिरूपेण अव्यक्तंस्वतः अनेनपुरुषंजातमग्रतइत्यस्यार्थोदर्शितः ॥ २७ ॥ ॥ ॥

कालेस्वस्वावसरे ॥ २८ ॥ यदधिष्ठानमित्येतत्प्रश्नोत्तरार्थमुपसंहरति नारायणइति आहितमधिष्ठितं भगवत्त्वेहेतुः यःस्वतोऽगुणःसर्गा
दौगृहीतामाययाउरवोगुणाःयेनतास्मिन् ॥ २९ ॥ यत्परस्त्वामित्येतत्प्रश्नोत्तरंयदुक्तंसएषभगवान्सर्वेषांममचेश्वरइतितदुपसंहरति सृजामी
ति पालनंतुस्वयमेवकरोतीत्याह विश्वमिति पुरुषरूपेणविष्णुरूपेण त्रिशक्तिर्मायातांधरतीतितथासः ॥ ३० ॥ यच्चेदंदिव्वंयदात्मकश्चत्व
मित्येवमादिसर्वप्रश्नानांसामान्योत्तरंयदुक्तंवासुदेवात्परोब्रह्मन्नचान्योर्थोऽस्तितत्त्वतइतिपुरुषएवेदंसर्वमितिश्रुत्याचयद्दृढीकृतंतदुपसंहराति इ
तीति कार्यकारणात्मकंभाव्यंसृज्यंभगवतःसकाशादन्यत्पृथङ्नभवतीत्यभिहितं ॥ ३१ ॥ यदुक्तंएतावत्त्वंयतोहिमितमविज्ञायमामीश्वरं
प्रब्रवीषीतितदुपपाद्योपसंहरति नभारतीति यत्यस्मान्मेमयाऔत्कंठ्यंभक्त्युद्रेकस्तद्युक्तेनहृदाहरिर्धृतोध्यातः अंगहेनारद अतोमेवा

**ततश्चमनवःकालेईजिरेऋषयोऽपरे ॥ पितरोविबुधादैत्यामनुष्याःक्रतुभिर्विभुं ॥ २८ ॥ नारायणेभगवति तदिदंविश्वमाहितं ॥ गृहीतमायोरुगुणःसर्गादावगुणःस्वतः ॥ २९ ॥ सृजामितन्नियुक्तोऽहंहरोहरतितद्वशः ॥ विश्वंपुरुषरूपेणपरिपातित्रिशक्तिधृक् ॥ ३० ॥ इतितेऽभिहितंतातयथेदमनुपृच्छसि ॥ नान्यद्भगवतः किंचिद्भाव्यंसदसदात्मकं ॥ ३१ ॥ नभारतीमेंगमृषोपलक्ष्यतेनवैक्वचिन्मेमनसोमृषागतिः ॥ नमेहृषीकाणि पतंत्यसत्पथेयन्मेहृदौत्कंठ्यवताधृतोहरिः ॥ ३२ ॥ सोऽहंसमाम्नायमयस्तपोमयःप्रजापतीनामभिवंदितः पतिः ॥ आस्थाययोगंनिपुणंसमाहितस्तंनाध्यगच्छंयतआत्मसंभवः ॥ ३३ ॥ नतोस्म्यहंतच्चरणंसमीयुषां भवच्छिदंस्वस्त्ययनंसुमंगलं ॥ योह्यात्ममायाविभवंस्मपर्यगाद्यथानभःस्वांतमथापरेकुतः ॥ ३४ ॥**

ङ्मनइंद्रियाणांवृत्तयःसत्यार्थाः नतुमत्प्रभावेनेत्यर्थः ॥ ३२ ॥ अत्रस्वानुभवमेवान्वयव्यतिरेकाभ्यांप्रमाणयति द्वाभ्याम् सोऽहंसमाम्ना
यादिभिःसर्वोत्कृष्टोपियोगमाश्रित्यापियतआत्मनोममसंभवोजन्मतमेवनज्ञातवान्कुतोऽन्यस्यवार्ता एतच्चतृतीयस्कंधेपद्मोद्भवेवक्ष्यते ॥
॥ ३३ ॥ तदासमीयुषांशरणागतानांसंसारनिवर्तकंमंगलावहंसुसेव्यंचतस्यचरणंनतोस्मिततोचिंत्यमहिमत्वेनज्ञातवानस्मीतिकैमुत्यन्याये
नाह योहीति स्वमायाविस्तारंयःस्वयमपिपर्यगात् परिशब्दोनिषेधे एतावानितिनज्ञातवानित्यर्थः अपरेकुतोजानीयुः तस्यचरणंनतो
स्मीतिपूर्वेणसंबंधः ननुसर्वज्ञःकथंनजानातिअंताभावादितिदृष्टांतेनाह यथास्वस्यांतंनभोनाप्नोतितद्वत् नहिखपुष्पादर्शनंसार्वज्ञ्यंविहं
तीतिभावःतथाचवक्ष्यति द्युपतयएवतेनययुरंतमनंततयात्वमपियदंतरांडानिचयाननुसावरणाइत्यादि श्रुतिश्च योअस्याध्यक्षःपरमेव्योमन्सो
अंगवेदयदिवानवेदेति ॥ ३४ ॥ ॥ ॥ ॥ ॥

एतत्प्रपंचयति नाहमितिद्वाभ्यां वामदेवोरुद्रः यस्यऋतांगतिंपरमार्थस्वरूपं किंतु इदंप्रपंचरूपंतस्यमाययाविनिर्मितंविचक्ष्महेविद्मः तदप्यात्मसमंस्वज्ञानानुरूपमेवनतुकृत्स्नं मोहितबुद्धयइत्ययंतदज्ञानेप्रपंचज्ञानेचहेतुः ॥ ३५ ॥ ननुसर्वेपितंवर्णयंतोदृश्यंतेतत्राह यस्येति॥३६॥ अवतारकर्माणिसंक्षेपतोदर्शयति सएषआद्योभगवान्यःपुरुषावतारः सन् सृष्ट्यादिकरोति आत्मात्मन्यात्मनात्मानामिति कर्ताअधिकरणंसाधनंकर्मचस्वयमेवेत्यर्थः पुरुषावतारःसृष्ट्यादीनिचकर्माणीतिसंक्षेपोक्तिः ॥ ३७ ॥ नयंविदंतितत्त्वेनेत्युक्तंकिंतत्तत्त्वमित्यपेक्षायामाह ज्ञानंकेवलंसत्यंतत्त्वं घटाद्याकारवृत्तिज्ञानव्यवच्छेदार्थंविशेषणानि विशुद्धंविषयाकारशून्यं यतःप्रत्यक्सर्वांतरं अतएवसम्यक्संदेहा

**नाहंनयूयंयदृतांगतिंविदुर्नवामदेवःकिमुतापरेसुराः॥ तन्माययामोहितबुद्धयस्त्विदंविनिर्मितंचात्मसमंविचक्ष्महे॥ ३५॥ यस्यावतारकर्माणिगायंतिह्यस्मदादयः॥ नयंविदंतितत्त्वेनतस्मैभगवतेनमः॥ ३६॥ सएषआद्यःपुरुषःकल्पेकल्पेसृजत्यजः॥ आत्मात्मन्यात्मनात्मानंसंयच्छतिचपातिच॥ ३७॥ विशुद्धंकेवलंज्ञानंप्रत्यक्सम्यगवस्थितं॥ सत्यंपूर्णमनाद्यंतंनिर्गुणंनित्यमद्वयं॥ ३८॥ ऋषेविदंतिमुनयःप्रशांतात्मेंद्रियाशयाः॥ यदातदेवासत्तर्कैस्तिरोधीयेतविप्लुतं॥ ३९॥ ॥ ॥ ॥**

दिरहितं अवस्थितंस्थिरं यतोनिर्गुणं गुणकार्यंहिगुणव्यतिकराच्चंचलंभवति यद्यपिवृत्तिज्ञानमपिस्वरूपज्ञानमेवेतिनचांचल्यादिदोषयुक्तं तथाप्यंतःकरणवृत्तिदोषैस्तथातथाभवतीतिव्यवच्छिद्यते एभिरेवविशेषणैःसत्यत्वमपिसमर्थितम् किंच यद्विकारवत्तदसत्यंदृष्टं नचास्यजन्मादयःषड्विकाराःसंतीत्याह अनाद्यंतंजन्मनाशरहितं अतएवजन्मानंतरास्तित्वलक्षणोपिविकारोनास्ति वृद्धिविपरिणामापक्षयाश्चन संति यतःपूर्णं सर्वत्रहेतुः नित्यमद्वयंनित्यंसर्वदाद्वैतप्रतीतिसमयेपिपरमार्थतोऽद्वयमिति ॥ ३८ ॥ अत्रविद्वदनुभवंप्रमाणयति हेऋषेनारद प्रशांतात्मेंद्रियाशयाःप्रसन्नदेहेंद्रियमनसोयदाभवंतितदाविदंति अन्यदातदज्ञानेकारणमाह यदातदेवप्रकाशमानमेवअसतांतर्कैर्विप्लुतंस्यात्तदातिरोधीयेतेति ३९ ॥ ॥ ॥ ॥ ॥

अवतारान्विस्तरेणाह आद्यइत्यादियावदध्यायसमाप्ति परस्यभूम्नः पुरुषःप्रकृतिप्रवर्तकःयस्यसहस्त्रशीर्षेत्युक्तोलीलाविग्रहःसआद्योऽ
वतारः वक्ष्यतिहि भूतैर्यदापंचभिरात्मसृष्टैःपुरंविराजंविरचय्यतस्मिन् ॥ स्वांशेनविष्टःपुरुषाभिधानमवापनारायणआदिदेवः यथोक्तं वि
ष्णोस्तुत्रीणिरूपाणिपुरुषाख्यान्यथोविदुः प्रथमंमहतःस्त्रष्टृद्वितीयंत्वंडसंस्थितम् ॥ तृतीयंसर्वभूतस्थंतानिज्ञात्वाविमुच्यतइति यद्यपिसर्वे
षामविशेषेणावतारत्वमुच्यतेतथापिकालश्चस्वभावश्चसदसदितिकार्यकारणात्मिकाप्रकृतिश्चएताःशक्तयः मनआदीनिकार्याणि ब्रह्मादयो
गुणावताराः दक्षादयोविभूतयइतिविवेक्तव्यं मनःमहत्तत्वं द्रव्यंमहाभूतानि क्रमोत्रनविवक्षितः विकारोऽहंकारःगुणःसत्वादिःवि
राट्समष्टिशरीरं स्वराट्वैराजः स्थास्नुस्थावरं चरिष्णुजंगमंचव्यष्टिशरीरम् ॥ ४० ॥ अहंब्रह्मा भवोरुद्रः यज्ञोविष्णुः दक्षादयोयइमे

**आद्योऽवतारःपुरुषःपरस्यकालःस्वभावःसदसन्मनश्च ॥ द्रव्यंविकारोगुणइंद्रियाणिविराट्स्वराट्स्थास्नुच
रिष्णुभूम्नः ॥ ४० ॥ अहंभवोयज्ञइमेप्रजेशादक्षादयोयेभवदादयश्च ॥ स्वर्लोकपालाःखगलोकपालानृलो
कपालास्तललोकपालाः ॥ ४१ ॥ गंधर्वविद्याधरचारणेशायेयक्षरक्षोरगनागनाथाः ॥ येवाऋषीणामृष
भाःपितृणांदैत्येंद्रसिद्धेश्वरदानवेंद्राः ॥ अन्येचयेप्रेतपिशाचभूतकुष्मांडयादोमृगपक्ष्यधीशाः ॥ ४२ ॥ य
त्किंचलोकेभगवन्महस्वदोजःसहस्वद्बलवत्क्षमावत् ॥ श्रीर्ह्रीविभूत्यात्मवदद्भुतार्णंतत्त्वंपरंरूपवदस्वरूपं
॥ ४३ ॥ प्राधान्यतोयानृषआमनंतिलीलावतारान्पुरुषस्यभूम्नः ॥ आपीयतांकर्णकषायशोषाननुक्रमिष्येत
इमान्सुपेशान् ॥ ४४ ॥ इ०भा०म०द्वितीयस्कंधेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥**

प्रजेशाःतललोकपालाःपातालाधिपतयः ॥ ४१ ॥ गंधर्वादीनामीशाः यक्षादीनांनाथाः रक्षोरगेतिसंधिरार्षः ऋषीणांपितृणांचश्रेष्ठाः प्रे
तादीनामधीशाः ॥ ४२ ॥ किंबहुनायत्किंचिद्भगवदादितत्सर्वंपरमेवतत्त्वमित्यन्वयः भगवत्ऐश्वर्ययुक्तम् महस्वत्तेजोयुक्तम् ओजःसह
सीइंद्रियमनःशक्तीतद्युक्तम् बलंदाक्ष्यम् श्रीःशोभा ह्रीरकर्मजुगुप्सा विभूतिःसंपत्तिः आत्माबुद्धिः तद्युक्तं अर्णोवर्णः अद्भुतार्णमाश्चर्यव
र्णमित्यर्थः रूपमेवस्वरूपम् स्वरूपवत्अस्वरूपंचयत्तत्सर्वंपरंतत्त्वंतद्विभूतिरित्यर्थः ॥ ४३ ॥ शुद्धसत्वावतारान्वक्तुमाह प्राधान्यतइति अस
त्कथाश्रवणैर्यैकर्णयोःकषायामलास्तान्शोषयंतीतितथातान् सुपेशान्सुंदरान् सकारलोपश्चार्षः हेऋषेतेतुभ्यमनुक्रमिष्ये तदनुक्रमेणामृतं
त्वयापीयतामित्यर्थः यद्वापीयतामितिशत्रंतं आपिबतांकर्णकषायशोषानित्यर्थः ॥ ४४ ॥ इतिद्वितीयस्कंधेटीकायांषष्ठोऽध्यायः ॥ ६ ॥

सप्तमेभगवल्लीलावताराब्रह्मणोदिताः ॥ नारदायतुतत्कर्मप्रयोजनगुणैःसह ॥ १ ॥ यत्रयदाक्षितितलोद्धरणार्थवाराहींतनुंबिभ्रत्सन्नुद्यतो ऽनंत स्तदातंसुप्रसिद्धंहिरण्याक्षंदंष्ट्रयाददार ॥ १ ॥ यज्ञावतारमाह रुचेःप्रजापतेःसकाशात्तद्भार्यायाआकूतेःसूनुःसुतःसुयज्ञोनामजातः सच स्वभार्यायांदक्षिणायांसुयमान्देवान्अजनयत् सएवइंद्रःसन्यदाआर्तिमहरत्तदापूर्वंसुयज्ञइत्युक्तोपिअनुपश्चात्मनुनामातामहेनहरिरित्यु क्तः अनेनदेवोत्पादनंलोकत्रयार्तिहरणंचतस्यकर्मदर्शितम् एवंसर्वत्रावतारस्तत्कर्मचज्ञेयं ॥ २ ॥ कपिलावतारमाह कर्दमस्यप्रजापतेर्गृहेच तद्भार्यायांदेवहूत्यांजज्ञे नवभिःस्त्रीभिर्भगिनीभिःसह सचस्वमात्रेआत्मगतिंब्रह्मविद्यामुक्तवान् ययात्मगत्यासाआत्मनः शमलंमलिनी करणंगुणसंगरूपंपंकमस्मिन्नेवजन्मनिविधूयकापिलस्यगतिंमुक्तिंप्राप्तवती ॥ ३ ॥ दत्तात्रेयावतारमाह मयाऽहमेवतुभ्यंदत्तइतियद्यतआह

ब्रह्मोवाच यत्रोद्यतःक्षितितलोद्धरणायबिभ्रत्क्रौडींतनुंसकलयज्ञमयीमनंतः ॥ अंतर्महार्णवउपागतमादि दैत्यंतंदंष्ट्रयाद्रिमिववज्रधरोददार ॥ १ ॥ जातोरुचेरजनयत्सुयमान्सुयज्ञआकूतिसूनुरमरानथदक्षिणायां ॥ लोकत्रयस्यमहतीमहरद्यदार्तिंस्वायंभुवेनमनुनाहरिरित्यनूक्तः ॥ २ ॥ जज्ञेचकर्दमगृहेद्विजदेवहूत्यांस्त्री भिःसमंनवभिरात्मगतिंस्वमात्रे ॥ ऊचेययात्मशमलंगुणसंगपंकमस्मिन्विधूयकापिलस्यगतिंप्रपेदे ॥ ३ ॥ अत्रेरपत्यमभिकांक्षतआहतुष्टोदत्तोमयाहमितियद्भगवान्सदत्तः ॥ यत्पादपंकजपरागपवित्रदेहायोगर्द्धि मापुरुभयींयदुहैहयाद्याः ॥ ४ ॥ तप्तंतपोविविधलोकसिसृक्षयामेआदौसनात्स्वतपसःसचतुःसनोऽभूत् ॥ प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वंसम्यग्जगादमुनयोयदचक्षतात्मन् ॥ ५ ॥ ॥

ततःसनाम्नादत्तोजातः स्वभक्तेभ्योयोगैश्वर्यंदानंतच्चरितंचदर्शयति यस्यपादपंकजयोःपरागस्तेनपवित्रादेहायेषांतेउभयींमैहिकीमामुष्मि कींचभुक्तिमुक्तिरूपांवा ॥ ४ ॥ कुमारावतारमाह मेमयाआदौयत्तपस्तप्तंतस्मात्स्वतपसःमत्तपसोहेतोःसहरिश्चतुःसनोभूत् सनत्कुमारः सनकःसनंदनःसनातनइतिचत्वारःसनशब्दानाम्नियस्यसः कथंभूतात्स्वतपसः सनात्अखंडितात् यद्वा स्वतपसःसनात्दानात् सम र्पणादित्यर्थः षणुदाने सचपूर्वकल्पस्यसंप्लवेप्रलयेविनष्टमुच्छिन्नसंप्रदायमात्मतत्वमिहअस्मिन्कल्पेसम्यक्जगाद उक्तवान् सम्यक्त्वंदर्श यति यद्वदितमात्रमेवमुनयआत्मन्आत्मानिमनसिअचक्षतसाक्षादपश्यन् ॥ ५ ॥ ॥ ॥

नरनारायणावतारमाह धर्मस्यपत्न्यांदक्षदुहितरिमूर्तिसंज्ञायांनारायणोनरइतिमूर्तिद्वयेनजातः कथंभूतः स्वःअसाधारणःतपःप्रभावोयस्य तदेवाह अनंगस्यपृतनादिव्योऽप्सरसोभगवतःसकाशादात्मनःस्वप्रतिरूपाउर्वश्याद्याःस्त्रीर्दृष्ट्वातस्यनियमावलोपंव्रतभंगंघटितुंसाधयितुं नशेकुः यद्वाआत्मनःस्वस्ययोनियमस्तपोनाशनरूपस्तस्यावलोपंतत्रदृष्ट्वाभगवतस्तंघटयितुंनशेकुरिति एतच्चाख्यानमेकादशेभविष्यति ॥ ६ ॥ यत्रकामविजयीक्रोधोऽपिबिभेतितत्रकामोनप्रभवतीतिकिंवक्तव्यमित्याह काममिति कृतिनःश्रीरुद्रप्रमुखारोषयुक्तयादृष्ट्याकामंदहंतिरोषंत्वात्मानंदहंतमपितेनदहंति क्रोधेनाभिभूयंतइत्यर्थः नुअहोसोऽयंरोषोयदंतरंयन्मध्यंप्रविशन्नलंबिभेति यद्वा यस्यांतःमनः कथंभूतं अमलंनिर्मलंप्रविशन्निति ॥ ७ ॥ चरित्रेणैवकमप्यवतारंसूचयति मातुःसपत्न्याःउदितानिउक्तानिवाक्यान्येवपतत्रिणोबा

**धर्मस्यदक्षदुहितर्यजनिष्टमूर्त्यांनारायणोनरइतिस्वतपःप्रभावः ॥ दृष्ट्वामनोभगवतोनियमावलोपंदेव्यस्त्वनंगपृतनाघटितुंनशेकुः ॥ ६ ॥ कामंदहंतिकृतिनोननुरोषदृष्ट्यारोषंदहंतमुततेनदहंत्यसह्यं ॥ सोऽयंयदंतरमलंनिविशन्बिभेतिकामःकथंनुपुनरस्यमनःश्रयेत ॥ ७ ॥ विद्धः सपत्न्युदितपत्रिभिरंतिराज्ञोबालोपिसन्नुपगतस्तपसेवनानि ॥ तस्माअदाद्ध्रुवगतिंगृणतेप्रसन्नोदिव्याःस्तुवंतिमुनयोयदुपर्यधस्तात् ॥ ८ ॥ यद्वेनमुत्पथगतंद्विजवाक्यवज्रविप्लुष्टपौरुषभगंनिरयेपतंतम् ॥ त्रात्वाऽर्थितोजगतिपुत्रपदंचलेभेदुग्धावसूनिवसुधासकलानियेन ॥ ९ ॥ नाभेरसावृषभआससुदेविसूनुर्योवैचचारसमदृक्जडयोगचर्याम् ॥ यत्पारमहंस्यमृषयःपदमामनंतिस्वस्थःप्रशांतकरणःपरिमुक्तसंगः ॥ १० ॥**

णास्तैर्विद्धोध्रुवः राज्ञउत्तानपदोऽतिसमीपे तपसेतपस्तप्तुं ध्रुवगतिंध्रुवपदम् यत्रयामुपरिस्थितामधस्तात्स्थिताःदिविभवादिव्याःसप्तर्षयः स्तुवंति यद्वा उपरिभृग्वादयःअधस्तात्सप्तर्षयइति ॥ ८ ॥ पृथ्ववतारमाह यद्यदाऋषिभिरर्थितस्तदावेनंत्रात्वाअन्वर्थंतत्पुत्रइतिपदंनामलेभे पुन्नाम्नोनरकाद्यस्मात्पितरंत्रायतेसुतः तस्मात्पुत्रइतिप्रोक्तःस्वयमेवस्वयंभुवेतिहिपुत्रपदव्युत्पत्तिः कथंभूतं द्विजानांशापवाक्यमेववज्रंतेनविप्लुष्टंदग्धंपौरुषंभगमैश्वर्यंचयस्यतं चरित्रांतरमाह येनचजगतिजगदर्थेवसूनिअन्नादिद्रव्याणिदुग्धा ॥ ९ ॥ ऋषभावतारमाह असौहरिर्नाभेराग्नीध्रपुत्रात्सुदेव्याःसूनुरास नाभेर्भार्यायामेरुदेव्याएवसुदेवीत्यपिसंज्ञा जडवद्योगेननित्यसमाधिनाचर्या यदितियां तत्रहेतुः समदृक् तत्रापिहेतुः स्वस्थःस्वस्वरूपेस्थितः यतःप्रशांतेंद्रियः तत्कुतः यतः परितोमुक्तसंगः ॥ १० ॥ ॥

हयग्रीवावतारमाह सत्रइति अयोइत्यर्थांतरे सएवसाक्षाद्भगवान्ममब्रह्मणःसत्रेयज्ञेहयशीर्षाआस तपनीयंसुवर्णंतद्वद्वर्णोयस्य च्छंदो मयोवेदमयः तद्विधेयायेमखाःतन्मयः अमृतमयइतिवापाठः मखैर्यजनीयाअखिलादेवतास्तदात्माच अस्यश्वसतःश्वासंमुंचतोनस्तोना सापुटात्उशतीःउशत्यःकमनीयावेदलक्षणावाचोबभूवुः ॥ ११ ॥ मत्स्यावतारमाह मत्स्योभाविनावैवस्वतेनमनुनादृष्टःक्षोणीमयःपृ थ्वीप्रधानः तदाश्रयइत्यर्थः अतएवनिखिलजीवनिकायानामाश्रयः मेमुखाद्विस्रंसितान्गलितान्वेदस्यमार्गान्वेदानादयतत्रयुगांतसलि लेविजहार हहर्षेण ॥ १२ ॥ कूर्मावतारमाह क्षीरोदधौकच्छपवपुःसन्गोत्रंमंथनार्थंमंदरगिरिंपृष्ठेनधृतवान् कदाअमृतलब्धयेक्षीरा

**सत्रेममासभगवान्हयशीरषाऽथोसाक्षात्सयज्ञपुरुषस्तपनीयवर्णः॥ छंदोमयोमखमयोऽखिलदेवतात्मावा चोबभूवुरुशतीःश्वसतोऽस्यनस्तः॥११॥ मत्स्योयुगांतसमयेमनुनोपलब्धःक्षोणीमयोनिखिलजीवनिकाय केतः॥ विस्रंसितानुरुभयेसलिलेमुखान्मेआदायतत्रविजहारहवेदमार्गान्॥१२॥क्षीरोदधावमरदानवयूथ पानामुन्मथ्नताममृतलब्धयआदिदेवः ॥ पृष्ठेनकच्छपवपुर्विदधारगोत्रंनिद्राक्षणोद्रिपरिवर्तकषाणकंडूः॥ ॥१३॥ त्रैविष्टपोरुभयहासन्नृसिंहरूपंकृत्वाभ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ॥ दैत्येंद्रमाशुगदयाऽभिपतंतमारा दूरौनिपात्यविददारनखैःस्फुरंतं॥१४॥अंतःरसस्युरुबलेनपदेगृहीतोग्राहेणयूथपतिरंबुजहस्तआर्तः॥आ हेदमादिपुरुषाखिललोकनाथतीर्थश्रवःश्रवणमंगलनामधेय॥१५॥ श्रुत्वाहरिस्तमरणार्थिनमप्रमेयश्चक्रा युधःपतगराजभुजाधिरूढः॥ चक्रेणनक्रवदनंविनिपाटयतस्माद्धस्तेप्रगृह्यभगवान्कृपयोज्जहार॥१६॥**

ब्धिमुन्मथ्नतांसतां निद्रायाःक्षणःअवसरःउत्सवोवायस्यसः निद्रावसरःकुतस्तत्राह अद्रेःपरिवर्तःपरिभ्रमएवकषाणःकषणंघर्षणंसुखप्रदो यस्यांसाकंडूर्यस्यसः यद्वा अद्रिपरिवर्तएवकषःकषणंतेनअनितिअपयातीतिकषाणाकंडूर्यस्य ॥ १३ ॥ श्रीनृसिंहावतारमाह त्रैविष्टपा देवास्तेषामुरुभयंहंतीतितथासभगवान् कथंभूतं भ्रमंत्योभ्रुकुट्योदंष्ट्राश्चयस्मिंस्तत्करालंवक्त्रंयस्मिंस्तत् दैत्येंद्रंस्फुरंतमारात्समीपएवगद याउपलक्षितमभिपतंतंनखैर्विददार ॥ १४ ॥ हरिसंज्ञकावतारमाह अंतरितियुगलेन गजयूथस्यपतिः तीर्थरूपंश्रवोयशोयस्यसतीर्थश्र वाःहेतीर्थश्रवःश्रवणेनैवमंगलंनामधेयंयस्यसः ॥ १५ ॥ तद्वचनंश्रुत्वाशरणार्थिनंतंहस्तेशुंडायांप्रगृह्य किंकृत्वा नक्रस्यग्राहस्यवदनं विनिपाटयविदार्य तस्मात्तद्वदनात् ॥ १६ ॥ ॥ ॥ ॥

वामनावतारमाह अदितेः सुतानांद्वादशादित्यानांमध्ये अधियज्ञोयज्ञाधिष्ठाताविष्णुः अवरजः कनीयानपिगुणैर्ज्यायान्ज्येष्ठः गुणाने
वाह यद्यतइमान्लोँकान्विचक्रमेपादन्यासैः क्रांतवान् अथप्रतिश्रुतानंतरमेव तत्रहेतुः बलेः क्ष्मांवामनरूपेणजगृहे नन्वीश्वरः स्वयंकिमि
तितथाचक्रेतत्राह याञ्चांविनाधर्ममार्गेवर्तमानोनचाल्यः ऐश्वर्यान्नभ्रंशनीयइति ॥ १७ ॥ ननुतर्हियाञ्चयापिचालनमनुचितमेवेत्याशंक्य
ततोधिकंस्वसालोक्यादिदास्यामीत्याशयेनहृतवानित्याह नार्थइति यद्विबुधाधिपत्यमिदानींबलात्प्राप्तमग्रेदीयमानंचअयंबलेः पुरुषार्थोनभव
ति कुतइत्यतआह आअपइतिच्छेदः उरुक्रमस्यपादशौचंचरणक्षालनरूपाअपः आसर्वतोधृतवतः क शिखांशिखायांमूर्ध्नीत्यर्थः
किंच शुक्रेणवारितः शप्तोपिअंगहेनारदयः प्रतिश्रुतंविनाअन्यन्नचिकीर्षन्कर्तुंनैच्छत् यश्चतृतीयपादपूरणार्थंहरयेआत्मानंदेहमपिअभिमेने

**ज्यायान्गुणैरवरजोऽप्यदितेः सुतानांलोकान्विचक्रमइमान्यदथाधियज्ञः ॥ क्ष्मांवामनेनजगृहेत्रिपदच्छले
नयाञ्चामृतेपथिचरन्प्रभुभिर्नचाल्यः ॥ १७ ॥ नार्थोबलेरयमुरुक्रमपादशौचमापः शिखांधृतवतोविबुधाधिप
त्यम् ॥ योवैप्रतिश्रुतमृतेनचिकीर्षदन्यदात्मानमंगशिरसाहरयेऽभिमेने ॥ १८ ॥ तुभ्यंचनारदभृशंभगवा
न्विवृद्धभावेनसाधुपरितुष्टउवाचयोगं ॥ ज्ञानंचभागवतमात्मसतत्त्वदीपंयद्वासुदेवशरणाविदुरंजसैव ॥ १९ ॥
चक्रंचदिक्ष्वविहतंदशसुस्वतेजोमन्वंतरेषुमनुवंशधरोबिभर्ति ॥ दुष्टेषुराजसुदमंव्यदधात्स्वकीर्तिंसत्येत्रिपृ
ष्ठउशतींप्रथयंश्चरित्रैः ॥ २० ॥ धन्वंतरिश्चभगवान्स्वयमेवकीर्तिर्नाम्नानृणांपुरुरुजांरुजआशुहंति ॥ य
ज्ञेचभागममृतायुरवावरुंधआयुश्चवेदमनुशास्त्यवतीर्यलोके ॥ २१ ॥ ॥ ॥**

अंगीकृतवान् एवंसदेहंत्रैलोक्यंश्रद्धयादत्तवतोविबुधाधिपत्यमर्थोनभवतीत्यर्थः ॥ १८ ॥ हंसावतारमाह तुभ्यमितिभृशंविवृद्धेनभा
वेनअत्युद्रिक्तयाभक्त्यापरितुष्टः सन् भक्तियोगंसाधुयथातथाउवाचज्ञानंचेतिज्ञानसाधनं किंतत् भागवतंनाम कथंभूतं तत्त्वमेवसतत्त्वम्
आत्मतत्त्वदीपकं विवृद्धभावेनेतिविशेषणस्यफलमाह यदिति ॥ १९ ॥ तत्तन्मन्वंतरावतारमाह चक्रमिति स्वतेजः निजंप्रभावमे
वचक्रंसुदर्शनंबिभर्ति चक्रवदप्रतिहतंप्रभावंबिभर्तीत्यर्थः तदेवाह मनुवंशपालकः संस्त्रयाणांलोकानांपृष्ठेउपरिस्थितेसत्यलोकेपिकमनीयांस्व
कीर्तिंविस्तारयन्राजसुदंडांविधत्ते ॥ २० ॥ धन्वंतर्यवतारमाह लोकेअवतीर्यधन्वंतरिः सन् पुरुरुजांमहारोगिणां स्वनाम्नैवरुजः रोगा
न्हंति स्वयमेवकीर्तिरितिकीर्त्यतिशयोक्तिः अमृतंमरणशून्यमायुर्यस्मात्सः अवअवसन्नंपूर्वंदैत्यैः प्रतिबद्धंयज्ञेभागमवरुंधेलभते अवाप
रुद्धमितिपाठेप्ययमेवार्थः आयुर्विषयंवेदंचानुशास्तिप्रवर्तयति ॥ २१ ॥ ॥ ॥

परशुरामावतारमाह जगतःक्षयायविधिनादैवेनोपभृतंसंवर्द्धितंमृत्यवेसमर्पितमितिवा ब्राह्मणेभ्योद्रुह्यतीतितथा अतःउज्झितःपंथावेदमा
र्गोयेन अतएवनरकार्तिलिप्सतीव एवंभूतमवनेःकंटकतुल्यंक्षत्रंअसौमहात्माहरिःउद्धंतिउत्पाटयति दीर्घंतीक्ष्णधारेणपरशुना ॥ २२ ॥
रामावतारमाहत्रिभिः अस्मदिति अस्माकंब्रह्मादीनांप्रसादेसुमुखःकलयाभरतादिरूपयासहकलामायातस्याईशोगुरोर्दशरथस्याज्ञायांति
ष्ठन्सीतालक्ष्मणाभ्यांसाहितोवनमाविवेश यस्मिन्विरोधंकृत्वारावणोनाशंप्राप्तः ॥ २३ यस्मैरामायउदधिर्मार्गंददौ सपदिशीघ्रंहरोयथात्रि
पुरंदिधक्षुस्तद्वदरिपुरंलंकांदग्धुमिच्छोः षष्ठीचतुर्थ्यर्थे यद्वापंचमीयं दिधक्षोःरामात्यद्भयंप्राप्तंतेनांगेकंपोयस्येति कथंभूतउदधिः ऊ

क्षत्रंक्षयायविधिनोपभृतंमहात्माब्रह्मध्रुगुज्झितपथंनरकार्तिलिप्सु ॥उद्धंत्यसाववनिकंटकमुग्रवीर्यस्त्रिःसप्त
कृत्वउरुधारपरश्वधेन ॥ २२ ॥ अस्मत्प्रसादसुमुखःकलयाकलेशइक्ष्वाकुवंशअवतीर्यगुरोर्निदेशे ॥तिष्ठन्व
नंसदयितानुजआविवेशयस्मिन्विरुध्यदशकंधरआर्तिमार्च्छत् ॥ २३ ॥ यस्माअदादुदधिरूढभयांगवेपो
मार्गंसपद्यरिपुरंहरवद्दिधक्षोः ॥ दूरेसुहृन्मथितरोषसुशोणदृष्ट्यातातप्यमानमकरोरगनक्रचक्रः ॥ २४ ॥
वक्षस्थलस्पर्शरुग्णमहेंद्रवाहदंतैर्विडंबितककुब्जुषऊढहासम् ॥ सद्योऽसुभिःसहविनेष्यतिदारहर्तुर्विस्फू
र्जितैर्धनुषउच्चरतोऽधिसैन्ये ॥ २५ ॥ ॥ ॥ ॥ ॥

ढंप्राप्तंयद्भयंतेनअंगेषुवेपःकंपोयस्य अत्रहेतुः दूरेवर्तमानासुहृत्सीतातयानिमित्तभूतयामथितःक्षुभितोरोषस्तेनसुशोणाअत्यरुणाद्दृष्टिस्त
याऽत्यंतंतप्यमानंमकराणामुरगाणांचक्राणांचचक्रंयस्मिन् ॥ २४ ॥ किंचयुद्धेरावणस्यवक्षस्थलस्पर्शेनरुग्णाभग्नायेमहेंद्रवाहस्यऐरावतस्यदं
तास्तैर्विडंबिताःस्वधवलिम्नाधवलीकृताः तत्तद्दिक्षुपतितैःप्रकाशिताइत्यर्थः याएवंभूताःककुभोदिशस्ताःजुषतेसेवतेपालयतीतितथा
तस्यदारहर्तूरावणस्यअहोमत्समःकोन्योस्तीतिमहागर्वेणऊढंप्राप्तंहासमसुभिःप्राणैःसहसद्यःशीघ्रंविनेष्यतिअपनेष्यतिकैः धुनषोविस्फूर्जि
तैःटंकारघोषैरेव कथंभूतस्य अधिसैन्येस्वपरसैन्यमध्येउच्चरतःउत्कर्षेणविचरतः ककुब्जयरूढहासामितिपाठेदंतैरुज्ज्वलितानांककुभांजये
नयोरूढहासःसंजातगर्वस्तंअपनेष्यतीत्यर्थः ॥ २५ ॥ ॥ ॥

श्रीकृष्णावतारमाह भूमेरितिदशभिः सुरेतराअसुरांशभूताराजानस्तेषांवरूथैः सैन्यैर्विमर्दितायाभारेणपीडितायाः कलयारामेणसह
जातःसन् कोऽसौजातः सितकृष्णौकेशौयस्यभगवतःसएवसाक्षात् सितकृष्णकेशत्वंशोभैवनतुवयःपरिणामकृतं अविकारित्वात् यत्तूक्तं
विष्णुपुराणे उज्जहारात्मनःकेशौसितकृष्णौमहामुनइति यच्चभारते सचापिकेशौहरिरुच्चजर्न्हेशुक्लमेकमपरंचापिकृष्णं ॥ तौचापिकेशा
वाविशेतांयदूनांकुलेस्त्रियौरोहिणींदेवकींच ॥ तयोरेकोबलभद्रोबभूवयोऽसौश्वेतस्तस्यदेवस्यकेशः ॥ कृष्णोद्वितीयःकेशवःसंबभूवकेशो
योऽसौवर्णतःकृष्णउक्तइति तत्तुनकेशमात्रावताराभिप्रायंकिंतुभारावतारणरूपंकार्यंकियदेतत् मत्केशावेवैतत्कर्तुंशक्तावितिद्योतनार्थंरामकृ
ष्णयोर्वर्णसूचनार्थंचकेशोद्धरणमितिगम्यते अन्यथातत्रैवपूर्वापरविरोधापत्तेः कृष्णस्तुभगवान्स्वयमित्येतद्विरोधाच्च कथंभूतः परमेश्वर

**भूमेःसुरेतरवरूथविमर्दितायाःक्लेशव्ययायकलयासितकृष्णकेशः ॥ जातःकरिष्यतिजनानुपलक्ष्यमार्गःक
र्माणिचात्ममहिमोपनिबंधनानि ॥ २६ ॥ तोकेनजीवहरणंयदुलूकिकायास्त्रैमासिकस्यचपदाशकटोऽपवृ
त्तः ॥ यद्रिंखतांऽतरगतेनदिविस्पृशोर्वाउन्मूलनंत्वितरथाऽर्जुनयोर्नभाव्यं ॥ २७ ॥ यद्वैव्रजेव्रजपशून्विष
तोयपीथान्पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या ॥ तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगंविहर
न्ह्रदिन्यां ॥ २८ ॥ तत्कर्मदिव्यमिवयन्निशिनिःशयानंदावाग्निनाशुचिवनेपरिदह्यमाने ॥ उन्नेष्यतिव्रज
मतोऽवसितांतकालंनेत्रेपिधाप्यसबलोऽनधिगम्यवीर्यः ॥ २९ ॥ ॥ ॥**

तयाजनैरनुपलक्ष्योमार्गोयस्य तर्हीश्वरत्वेकिंप्रमाणं अतिमानुषकर्माण्यन्यथाऽनुपपत्तिरेवेत्याह आत्मनोमहिमाउपनिबध्यतेअभिव्यज्यतेये
षुतानि ॥ २६ ॥ एतदेवप्रपंचयति तोकेनेत्यादिना बालेनपूतनायाजीवहरणं यत् रिंखताजानुभ्यांगच्छताअंतरंगतेनमध्यंप्राप्तेन दिवि
स्पृशोरत्युच्चयोः इतरथाअनीश्वरत्वेतन्नभवितव्यं ॥ २७ ॥ विषतोयपीथान्विषमयतोयस्यपीथंपानंयेषांतान् पालान् गोपांश्चकृपादृष्टि
सुधावृष्ट्याजीवयिष्यतीतियमुनायांक्रीडन् उरगंकालियमुच्चाटयिष्यति तच्छुद्धयेतस्याःह्रदिन्यानिर्विषत्वाय अतिविषवीर्येणविलोलाअ
तिचंचलाजिह्वायस्य ॥ २८ ॥ दिव्यमलौकिकमिवेतिलोकोक्तिः उन्नेष्यतिउद्धरिष्यति शुचिर्ग्रीष्मस्तत्संबंधिनिवनेशुष्कइत्यर्थः
अतोदावाग्नेर्हेतोःअवसितोनिश्चितःअंतकालोयस्यतं सबलःसरामः अनधिगम्यंदुर्ज्ञेयंवीर्यंयस्य तत्रनिशिनिःशयानमिति कालियदमने
रात्र्यांयमुनातीरे नेत्रेपिधाप्यपिहितेकारयित्वेतिमुंजाटव्यामितिज्ञेयं ॥ २९ ॥ ॥ ॥

उपबत्स्यते ऽनेनेत्युपबंधंतत्साधनंशुल्बंदामअमुष्यमातायशोदाऽग्रहीत् अमुष्यउदरेनैमातिबंधनसंमितंनभवति नपूर्यतइत्यर्थः गोपी यशोदासंवीक्ष्यदृष्ट्वाप्रतिबोधितानिजैश्वर्यंज्ञापिताआसीदितियत्तच्चकर्मादिव्यमिवेतिसर्वत्रपूर्वेणैवान्वयः ॥ ३० ॥ वरुणस्यपाशाद्यन्नयंत स्मान्मोचयिष्यति मयसूनुनाव्योमनाम्नाआपृतंव्यापृतम् निशिशयानामितिचवैकुंठप्राप्तिसाधनानुष्ठानाभावोदर्शितः उपनेष्यतिप्रापयि ष्यति गोकुलवासिनंजनम् स्मेत्याश्चर्ये ॥ ३१ ॥ देवेइंद्रे पशून्रिरक्षुः रिरक्षिषुरित्यर्थः अनवेश्रमरहितेएकस्मिन्नेवकरेसलीलंयथातथा महीध्रंगोवर्धनंधर्ताधारयिष्यति उच्छिलींध्रमुद्गतंछत्राकमिव सप्तवर्षाणिवयोयस्यसः ॥ ३२ ॥ निशिरात्रौनिशाकररश्मिभिर्गौर्याधवलायां

गृण्हीतयद्यदुपबंधममुष्यमाताशुल्बंसुतस्यनतुतत्तदमुष्यमाति॥यज्जृंभतोऽस्यवदनेभुवनानिगोपीसंवीक्ष्य शंकितमनाःप्रतिबोधिताऽसीत् ॥ ३० ॥ नंदंचमोक्ष्यतिभयाद्वरुणस्यपाशाद्गोपान्बिलेषुपिहितान्मयसूनुना च ॥ आहृत्यापृतंनिशिशयानमतिश्रमेणलोकेविकुंठउपनेष्यतिगोकुलंस्म ॥३१॥ गोपैर्मखेप्रतिहतेव्रजविप्ल वायदेवेऽभिवर्षतिपशून्कृपयारिरक्षुः॥ धर्तोच्छिलींध्रमिवसप्तदिनानिसप्तवर्षोमहीध्रमनघैककरेसलीलम् ॥ ३२ ॥ क्रीडन्वनेनिशिनिशाकररश्मिगौर्यांरासोन्मुखःकलपदायतमूर्च्छितेन ॥ उद्दीपितस्मररुजांव्रजभृद्व धूनांहर्तुर्हरिष्यतिशिरोधनदानुगस्य॥३३॥ येचप्रलंबखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाःकुजपौंड्रकाद्याः॥ अन्येचशाल्वकपिबल्वलदंतवक्रसप्तोक्षशंबरविदूरथरुक्मिमुख्याः ॥ ३४॥ येवामृधेसमितिशालिनआ त्तचापाःकांबोजमत्स्यकुरुकैकयसृंजयाद्याः ॥ यास्यंत्यदर्शनमलंबलभीमपार्थव्याजाव्हयेनहरिणानिल यंतदीयम् ॥ ३५ ॥ वनेक्रीडन् कलानिमंजुलानिपदानियस्मिंस्तच्चतत् आयतंदीर्घंमूर्च्छितमालापविशेषयुक्तंगीतंतेनउद्दीपितः स्मरएवरुक्यासांतासांगोपीनांहर्तुःशंखचूडस्यशिरोहरिष्यति ॥ ३३ ॥ येचप्रलंबादयस्तेसर्वेहरिणाहेतुभूतेनतदीयंनिलयमदर्शनंदर्शनायो ग्यंवैकुंठं अलंयास्यंतीत्युत्तरेणान्वयः खरोधेनुकःदर्दुरइवदर्दुरोबकः इभःकुबलयापीडः कपिर्द्विविदः कुजोनरकः ॥ ३४ ॥ येचमृधे आत्तचापाः समितौसंग्रामेशालंतेश्लाघंतेतेसामितिशालिनः ननुप्रलंबखरकपिबल्वलरुक्मिप्रमुखाबलभद्रेणनिहताः कांबोजादयश्चभीमा र्जुनादिभिःशंबरःप्रद्युम्नेनयवनोमुचुकुंदेननतुहरिणातत्राह बलोभीमःपार्थइत्यादयोव्याजाव्हयाःकपटनामानियस्यतेनसप्तोक्षाणस्तुतेनद मिताःकालांतरेयास्यंतीतिभावः एतच्चसर्वमपिकर्मदिव्यमिव तच्चान्यथानभाव्यमितिपूर्वेणैवसंबंधः ॥ ३५ ॥ ॥

व्यासावतारमाह अनुयुगंमीलितासंकुचिताधीर्येषाम् स्तोकमल्पमायुर्येषांते स्वनिगमःस्वकृतोवेदराशिः बतअहोदूरेपारंयस्येतिदुर्गमइ
त्यवमृश्यसत्यवत्यामाविर्भूतःसन्सएवहरिः विटपशःशाखाभेदेन ॥ ३६ ॥ बुद्धावतारमाह देवद्विषांनिष्ठितानांनितरांस्थितानां तद्द
लेनचपूर्भिः पुरीभिःअदृश्यतूर्भिःअलक्ष्यवेगाभिः मतेर्विमोहोयोग्यतात्यागोयस्मात्मतेःप्रलोभश्चायुक्तस्वीकारोयस्मात्तंपाखंडवेषंविधायते
नऔपधर्म्यंपाखंडधर्मं स्वार्थेष्यत्र् बहुभाषिष्यतइत्यर्थः ॥ ३७ ॥ कल्क्यवतारमाह यर्हियदासतामप्यालयेषुगृहेषुहरेःकथानस्युःत्रैव
र्णिकाःपाखंडिनःस्युःशूद्राश्चराजानःस्युस्तदाकल्किरूपेणकलेःशास्ताभविष्यति अत्रचब्रह्मनारदसंवादात्प्राग्भाविनोवराहादयःमन्वंतरा
वतारास्तुभूताभाविनश्च धन्वंतरिपरशुरामौतदावर्तेते श्रीरामादयस्तुभाविनः तत्रतुकचिद्भूतादिनिर्देशश्छांदसइतिद्रष्टव्यं ॥ ३८ ॥ सृष्ट्या
दिकार्यभेदेनमायागुणावतारविभूतीराह सर्गइति स्थानेस्थितौ मखोविष्णुः धर्मश्चमखश्चमनवश्चअमराश्चअवनीशाश्चअंतेसंहारे हरोरुद्रः

**कालेनमीलितधियामवमृश्यनृणांस्तोकायुषांस्वनिगमोबतदूरपारः ॥ आविर्हितस्त्वनुयुगंसहिसत्यवत्यांवे**
**दद्रुमंविटपशोविभजिष्यतिस्म ॥ ३६ ॥ देवद्विषांनिगमवर्त्मनिनिष्ठितानांपूर्भिर्मयेनविहिताभिरदृश्यतूर्भिः**
**लोकान्घ्नतांमतिविमोहमतिप्रलोभंवेषंविधायबहुभाष्यतऔपधर्म्यम् ॥३७॥ यर्ह्यालयेष्वपिसतांनहरेःक**
**थाःस्युःपाखंडिनोद्विजजनावृषलानृदेवाः॥स्वाहास्वधावषडितिस्मगिरोनयत्रशास्ताभविष्यतिकलेर्भगवा**
**न्युगांते ॥ ३८॥ सर्गेतपोहमृषयोनवयेप्रजेशाःस्थानेचधर्ममखमन्वमरावनीशाः ॥ अंतेत्वधर्महरमन्युवशा**
**सुराद्यामायाविभूतयइमाःपुरुशक्तिभाजः ॥ ३९ ॥ विष्णोर्नुवीर्यगणनांकतमोऽर्हतीहयःपार्थिवान्यपिक**
**विर्विममेरजांसि ॥ चस्कंभयःस्वरहसास्खलतात्रिपृष्ठंयस्मात्त्रिसाम्यसदनादुरुकंपयानम् ॥ ४० ॥**

मन्युवशाःसर्पाः बहुशक्तिधारिणोभगवतइमाविभूतयः ॥ ३९ ॥ इदंमयासंक्षेपेणोक्तंविस्तरेणवक्तुंनकोऽपिसमर्थइत्याह पृथिव्याःपरमा
णूनपियोविममेगणितवान् तादृशोऽपिकोनुविष्णोर्वीर्यगणनांकर्तुमर्हति कथंभूतस्य योविष्णुस्त्रिपृष्ठंसत्यलोकंचस्कंभधृतवान्किमितिच
स्कंभ यस्मात्त्रैविक्रमेअस्खलताप्रतिघातशून्येनस्वरंहसास्वपादवेगेनत्रिसाम्यरूपंसदनमधिष्ठानंतस्मादारभ्यउरुआधिकंकंपयानंकंपमानं
कंपेनयानंयस्येतिवा अतःकारणाच्चस्कंभ आत्रिपृष्ठमितिवाछेदः सत्यलोकमभिव्याप्ययःसर्वंधृतवानित्यर्थः तथाचमंत्रःविष्णोर्नुकमिति
अस्यार्थः विष्णोर्नुवीर्याणिकंप्रवोचंकःप्रवोचदित्यर्थः यःपार्थिवानिरजांस्यपिविममेसोपियोविष्णुःत्रेधाविचक्रमाणःत्रिविक्रमंकुर्वन्उत्तरं
लोकमस्कभायअवष्टब्धवान् कथंभूतम् सधस्थंसहस्यसधादेशःतिष्ठंतीतिस्थाःतत्रस्थैःदेवैःसहवर्तमानमित्यर्थः ॥ ४० ॥

एतत्प्रपंचयति नांतमिति पुरुषस्ययन्मायाबलंतस्यांतंनाविदामिनवेद्मि दशशतान्याननानियस्यसोपिअस्यगुणान्गायन्पारंनसमवस्यतिन प्राप्नोति ॥ ४१ ॥ यदिनकेपिविदंतितर्हिकथंमुच्येरन् तत्कृपयैवेत्याह येषामिति दययेत्दयांकुर्यात् तेचयदिनिष्कपटमाश्रितचरणाभवंति तेदुस्तरांदेवमायामतितरंति चकारान्मायावैभवंविदंतिच अथेतिवापाठः प्रत्यक्षमेवतेषांमायातरणमित्याह नैषामिति श्वसृगालानांभक्ष्येदेहे ॥ ४२ ॥ अंतर्ज्ञानाभावेऽपिमायेयमितिज्ञानंतत्कृपयाबहूनामस्तीत्या वेदाहमितित्रिभिःयूयमितिसनकादीनंतर्भाव्यबहुत्वम्

नांतंविदाम्यहममीमुनयोऽग्रजास्तेमायाबलस्यपुरुषस्यकुतोऽपरेये ॥ गायन्गुणान्दशशताननआदिदेवःशेषोऽधुनापिसमवस्यतिनास्यपारम् ॥४१॥ येषांसएवभगवान्दययेदनंतःसर्वात्मनाऽश्रितपदोयदिनिर्व्यलीकम् ॥ तेदुस्तरामतितरंतिचदेवमायांनैषांममाहमितिधीःश्वसृगालभक्ष्ये ॥४२॥ वेदाहमंगपरमस्यहियोगमायांयूयंभवश्चभगवानथदैत्यवर्यः ॥ पत्नीमनोःसचमनुश्चतदात्मजाश्चप्राचीनबर्हिऋभुरंगउतध्रुवश्च ॥ ॥४३॥ इक्ष्वाकुरैलमुचुकुंदविदेहगाधिरघ्वंबरीषसगरागयनाहुषाद्याः ॥ मांधात्रलर्कशतधन्वनुरंतिदेवदेवव्रतोबलिरमूर्तरयोदिलीपः ॥ ४४ ॥ सौभर्युतंकशिबिदेवलपिप्पलादसारस्वतोद्धवपराशरभूरिषेणाः ॥ येऽन्येविभीषणहनूमदुपेंद्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः ॥ ४५ ॥ तेवैविदंत्यतितरंतिचदेवमायांस्त्रीशूद्रहूणशबराअपिपापजीवाः ॥ यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जनाअपिकिमुश्रुतधारणाये ॥ ४६ ॥

दैत्यवर्यःप्रल्हादः मनुःस्वायंभुवः तस्यपत्नीच तदात्मजाः पुत्रौकन्याश्च प्राचीनबर्हिषाविसर्गलोपश्छांदसः ॥ ४३ ॥ शतधनुःअनुश्च संधिरार्षः रंतिदेवाइतिवापाठःसुगमःऐकपद्येएतैःसहितोदेवव्रतइत्यर्थः ॥ ४४ ॥ उपेंद्रदत्तःशुकः विभीषणादयोवर्यामुख्यायेषांते ॥ ४५ ॥ किंबहुना सत्संगेनसर्वेऽपिविदंतीत्याह तेवाइति अद्भुताःक्रमाःपादन्यासायस्यहरेस्तत्परायणास्तद्भक्तास्तेषांशीलेशिक्षायेषांते तथायदिभवंतितर्हितेअपिविदंतीत्यर्थः शुभेभगवतोरूपेधारणामनोनियमनंयेषांतेविदंतीतिकिमुवक्तव्यम् ॥ ४६ ॥ ॥

किंतद्भगवतःस्वरूपंयस्मिन्मनोधारणांविधायमायांतरंतीत्यपेक्षायामाह शश्वदितिद्वाभ्यां यद्ब्रह्मेतिविदुर्मनयस्तद्वैभगवतःस्वरूपं किंतद्ब्र
ह्मतदाह अजस्रंनित्यंचतत्सुखंचविशोकंचेति अजस्रसुखत्वेहेतुः शश्वत्सदाप्रशांतमतोनित्यसुखरूपं विशोकत्वेहेतुः अभयं कुतः यतः
समंभेदशून्यं अतोऽभयं द्वितीयाद्वैभयंभवतीतिश्रुतेः तत्कुतः यतःप्रतिबोधमात्रंज्ञानैकरसं ननुज्ञानस्यापिनीलपीताद्याकारेणचक्षुरादिकार
णभेदेनचभेदोदृश्यते न शुद्धंनिर्मलं ननुदार्शितोविषयकरणोपरागरूपोमलइत्यतआह सदसतःपरंविषयकरणसंगशून्यं वृत्तेरेवतदुपरा
गोनज्ञानस्येतिभावः ननुतथाऽपिज्ञात्रासहभेदःस्यात् न आत्मतत्त्वमात्मनोज्ञातुःस्वरूपमेवतत्नततोभिन्नंननुतंत्वौपानिषदंपुरुषंपृच्छामी
तिशब्दबोध्यत्वप्रतीतेःकुतोबोधरूपत्वंतत्राह शब्दोनयत्रेति आरोपितनिवृत्तावेवशब्दस्यव्यापारोनतद्बोधइत्यर्थः ननुचभवतुनामानिरस्तभे
दज्ञानरूपत्वाद्विशोकत्वंसुखस्यतुनानाकारकसाध्यक्रियाफलत्वात्कथमजस्रसुखत्वंतस्येत्यतआह यत्रबहुकारकसाध्यःक्रियार्थःउत्पाद्यादि

शश्वत्प्रशांतमभयंप्रतिबोधमात्रंशुद्धंसमंसदसतःपरमात्मतत्त्वं ॥ शब्दोनयत्रपुरुकारक
वान्क्रियाऽर्थोमायापरैत्यभिमुखेचविलज्जमाना ॥ ४७ ॥ तद्वैपदंभगवतःपरमस्यपुं
सोब्रह्मेतियद्विदुरजस्रसुखंविशोकम् ॥ सध्र्यङ्नियम्ययतयोयमकर्तहेतिंजह्युःस्वरा
डिवनिपानखनित्रमिंद्रः ॥ ४८ ॥ ॥ ॥

चतुर्विधंक्रियाफलंचनास्ति इंद्रियैर्ज्ञानांशाभिव्यक्तिरिवक्रियाभिरानंदांशाभिव्यक्तिमात्रंक्रियतेनोत्पत्त्यादिकमितिभावः ननूत्पत्त्याद्यभावेऽ
पिमायामलापाकरणेनविकार्यत्वमेवस्यात्व्रीहीणामिवतुषापाकरणेनेत्याशंक्याह मायाअभिमुखेस्थातुंविलज्जमानेवयस्मात्परैतिदूरतोऽप
सरति ॥ ४७ ॥ तस्मादेवंभूतेभगवतिनियमितमनसांकृतार्थानांनकिमपिकृत्यमस्तीत्याह सहांचतीतिसध्र्यक्सहचरंमनोयंप्रतिनियम्यय
स्मिन्स्थिरीकृत्ययतयोयत्नशीलाःकर्तोभेदस्तन्निरासोऽकर्तंस्तत्रहेतिंसाधनंजह्युस्त्यजेयुः अनुपयोगात्तन्नाद्रियंतइत्यर्थःउपयोगाभावेनसा
धनानादरेदृष्टांतः निपीयतेऽस्मिन्निितिनिपानंकूपस्तस्यखनित्रंखननसाधनंयथास्वयमेवपर्जन्यरूपेणविराजमानइंद्रोनादत्तेतद्वदिति यद्वा
स्वेनैवराजतइतिस्वराट्दरिद्रःसयथाइंद्रःसमृद्धःसन्कर्मकारदशायांगृहीतंनिपानखनित्रंजहातितद्वदित्यर्थः ॥ ४८ ॥

एवंतावदजस्रसुखंविशोकंब्रह्मैवभगवतःस्वरूपंतत्प्राप्तानांचनप्राप्यंकृत्यंवाकिंचिदस्तीत्युक्तं इदानींततःप्राक्सएवसर्वफलदातासर्वकर्मप्रवर्तकश्चेत्याह सएवश्रेयसांफलानांविभुर्दाताऽपि तत्रहेतुः भावानांब्राह्मणादीनांस्वभावैःशमदमादिभिर्विशेषणैर्विहितस्यसतःशुभस्यकर्मणोयतःप्रवर्तकात्प्रसिद्धिः यद्वा भावानांमहदादीनांस्वभावेनपरिणामेनाविहितस्यसतःकार्यस्यप्रसिद्धिः सएवस्वर्गादीनांदातेत्यर्थः ननुकर्मकर्तुर्मृतस्यकथंस्वर्गादिफलंस्यात्तत्राह स्वारंभकधातूनांभूतानांविगमेवियोगेसतिअन्वनुविशीर्यमाणेऽपिदेहेतत्रस्थंव्योमेवयस्तेनसहनविशीर्यते यतस्तेनसहनजातस्तस्यपुरुषस्यश्रेयसांप्रभुरित्यर्थः ॥ ४९ ॥ अध्यायत्रयस्यार्थमुपसंहरति सोऽयंतेसमासेनसंक्षेपेणाभिहितस्तमेवाह

**सश्रेयसामपिविभुर्भगवान्यतोऽस्यभावस्वभावविहितस्यसतःप्रसिद्धिः॥ देहेस्वधातुविगमेऽनुविशीर्यमाणेव्योमेवतत्रपुरुषोनविशीर्यतेजः॥ ४९ ॥ सोऽयंतेभिहितस्तातभगवान्विश्वभावनः॥ समासेनहरेर्नान्यदन्यस्मात्सदसच्चयत् ॥ ५० ॥ इदंभागवतंनामयन्मेभगवतोदितं॥ संग्रहोऽयंविभूतीनांत्वमेतद्विपुलीकुरु ॥ ॥ ५१ ॥ यथाहरौभगवतिनृणांभक्तिर्भविष्यति ॥ सर्वात्मन्यखिलाधारेइतिसंकल्प्यवर्णय ॥ ५२ ॥ मायांवर्णयतोऽमुष्यईश्वरस्यानुमोदतः॥ शृण्वतःश्रद्धयानित्यंमाययात्मानमुह्यति ॥५३॥ इतिश्रीभा॰म॰द्वितीयस्कंधेब्रह्मनारदसंवादेसप्तमोऽध्यायः ॥ ७ ॥ छ ॥ राजोवाच ब्रह्मणाचोदितोब्रह्मन्गुणाख्यानेगुणस्यच॥ यस्मैयस्मैयथाप्राहनारदोदेवदर्शनः॥१॥ एतद्वेदितुमिच्छामितत्त्वंवेदविदांवर ॥ हरेरद्भुतवीर्यस्यकथालोकसुमंगलाः॥२॥कथयस्वमहाभागयथाऽहमखिलात्मनि॥कृष्णेनिवेश्यनिःसंगंमनस्त्यक्ष्येकलेवरं ॥३॥**

सदसत्कार्यंकारणंचहरेरन्यन्नभवति ननुहरेस्तदव्यतिरेकेतद्गतविकारप्रसंगःस्यात् न अन्यस्मात्कारणभूताद्धरिःकार्याद्व्यतिरिक्तइत्यर्थः ॥ ॥ ५० ॥ अयंचविभूतीनांसंग्रहउदितः ॥ ५१ ॥ यथावर्णितेननृणांभक्तिर्भविष्यतीत्येवंसंकल्प्यसंचिंत्यतथाहरिलीलाप्राधान्येनश्रीभागवतंवर्णय नतुभक्तिरसविघातेनकेवलंतत्त्वमित्यर्थः ॥ ५२ ॥ ननुलीलामायाश्रयाकिंतद्वर्णनेनेत्यतआह मायामिति ॥५३॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेटीकायांसप्तमोध्यायः ॥ ७ ॥ ॥ अष्टमेदेहसंबंधमाक्षिपन्नीशजीवयोः ॥ बहून्परीक्षिदापृच्छत्पुराणार्थान्बुभुत्सितान् ॥ १ ॥ त्वमेतद्विपुलीकुर्वित्युक्तंतदेवविपुलीकरणंपृच्छति ब्रह्मणेतित्रिभिः अगुणस्यगुणातीतस्यापि देववद्दर्शनंयस्यसः ॥ ॥ १ ॥ २ ॥ निःसंगंमनःश्रीकृष्णेनिवेश्येतिस्वप्रयत्नोदर्शितः ॥ ३ ॥

सोऽपिश्रद्धयाशृण्वतोनावश्यकइत्याह शृण्वतइति स्वप्रयत्नंविनाऽपिभगवान्स्वयमेवहृदिविशति ॥४॥ भावसरोरुहंहृदयकमलंप्रविष्ट
श्चतद्गतंसर्वंमलंधुनोति सलिलस्येतिद्रव्यांतरव्यामिश्रणादिनाकुंभस्थेजलेशोधितेतदेवकेवलंशुध्यतिनतुनदीतडागादिगतं सचमलःकुं
भस्यांतस्तिष्ठत्येवनतुसर्वदाविलीयते अतएवकिंचिच्चलनेनपुनःक्षुभ्यतिच एवंतपोदानादिप्रायश्चित्तंनसर्वथासर्वेषांसर्वपापंधुनोतिकिं
तुसावशेषं तच्चकस्याचिदेवकिंचिदेव हृदिप्रविष्टमात्रस्तुश्रीकृष्णःसर्वेषांसर्वपापंनिःशेषंहरतीत्यनेनदृष्टांतेनोक्तंसलिलस्यमलंयथाशरदि
ति ॥ ५ ॥ ततश्चकृतार्थोभवतीत्याह धौतात्मानिष्पापः मुक्ताःसर्वेरागद्वेषादयःपरिक्लेशायेन पांथःप्रवासादागतः स्वशरणंगृहंयथानमुं
चतितद्वत् ॥ ६ ॥ तदेवंश्रवणौत्सुक्यमाविष्कृत्यसंदिग्धानर्थान्पृच्छति अधातुमतःधातवोभूतानितत्संबंधशून्यस्यास्यलौकिकस्यात्मनः
धातुभिर्देहारंभइतियत्एतत्किंयदृच्छयानिर्निमित्तंहेतुनावाकर्मादिना भवंतोयथावज्जानते अतःकथयंत्वितिशेषः ॥ ७ ॥ यश्चासावीश्व

**शृण्वतःश्रद्धयानित्यंगृणतश्चस्वचेष्टितं ॥ कालेननातिदीर्घेणभगवान्विशतेहृदि ॥ ४ ॥ प्रविष्टःकर्णरंध्रेणस्वा
नांभावसरोरुहं ॥ धुनोतिशमलंकृष्णःसलिलस्ययथाशरत् ॥ ५ ॥ धौतात्मापुरुषःकृष्णपादमूलंनमुंचति ॥
मुक्तसर्वपरिक्लेशःपांथःस्वशरणंयथा॥६॥ यदधातुमतोब्रह्मन्देहारंभोऽस्यधातुभिः ॥ यदृच्छयाहेतुनावाभवं
तोजानतेयथा ॥७॥ आसीद्यदुदरात्पद्मंलोकसंस्थानलक्षणं ॥ यावानयंवैपुरुषइयत्तावयवैःपृथक् ॥ तावान
सावितिप्रोक्तःसंस्थावयववानिव ॥ ८ ॥ अजःसृजतिभूतानिभूतात्मायदनुग्रहात् ॥ ददृशेयेनतद्रूपंनाभिपद्म
समुद्भवः ॥ ९ ॥ सचापियत्रपुरुषोविश्वस्थित्युद्भवाप्ययः॥ मुक्त्वात्ममायांमायेशःशेतेसर्वगुहाशयः ॥ १० ॥**

रःसोप्येतत्तुल्यदेहवान्प्रोक्तः अतस्तस्यकोविशेषइत्याशयेनपृच्छति आसीदितिसार्धेन लोकानांसंस्थानंरचनातदेवलक्षणंस्वरूपंयस्य
तत्पद्मंयस्योदरादासीत् असावीश्वरः इयत्तायुक्तैःस्वपरिमितैरवयवैरयंलौकिकःपुरुषोयावान्यत्संख्याकावयवयुक्तःतावान्प्रोक्तःसंस्था
वान्अवयववानिवप्रोक्तः अतःकोविशेषस्तस्येति ॥ ८ ॥ अवश्यंचविशेषोवाच्यइत्याह अजोब्रह्माभूतानांव्यष्ट्युपाधीनामात्मानियं
ता समष्ट्युपाधित्वात् येनचअनुगृण्हतातस्यरूपंददृशेदृष्टवान् एतच्च तस्यापिद्रष्टुरीशस्यकूटस्थस्याखिलात्मनः ॥ सृज्यंसृजामिसृष्टोऽह
मीक्षयैवाभिचोदितइत्यादिनोक्तमनूद्यते अग्रेतुस्पष्टंभविष्यति ॥ ९ ॥ प्रश्नांतरमाह सचापीति यत्रशेतेयेनरूपेणावतिष्ठते विश्वस्यस्थि
त्यादयोयस्मात् एवमादिप्रश्नानांतत्त्वतोऽर्हस्युदाहर्तुमितिसर्वांतेक्रियायाःसंबंधः ॥ १० ॥ ॥

प्रश्नांतरमाह पुरुषस्यावयवैः पूर्वंकल्पिताः यस्येहावयवैर्लोकान्कल्पयंतीत्यादौ लोकैश्चामुष्यावयवाङ्गतिपातालमेतस्याहि पादमूलमित्यादौ चत्वन्मुखात्श्रुतवंतोवयम् ॥ ११ ॥ एवंसंदेहविपर्यायाभ्यांपृष्टमिदानीमज्ञातान्बहूनर्थान्पृच्छति यावानित्यादिना कल्पोमहान्विकल्पोऽवांतरः भूतादिशब्दोयस्मात् यस्यवाचकइतिवा सतःस्थूलदेहाभिमानिनोमनुष्यापितृदेवादेःआयुषःप्रमाणम् ॥ १२ ॥ अनुमानप्रकारःपृष्टःविशेषंपृच्छति कालस्येति अनुगतिःप्रवृत्तिः कर्मगतयःकर्मप्राप्याणि स्थानानियादृशीःयादृश्यः ॥ १३ ॥ गुणानांसत्वादीनां परिणामंदेवादिरूपमिच्छतांगुणिनांजीवानांमध्येयस्मिन्परिणामेकर्मणांपुण्यपापानांसमावायःसमुदायः केनकर्मसमुदायेनकथंकृतेनकोऽ



**पुरुषावयवैर्लोकाःसपालाःपूर्वकल्पिताः ॥ लोकैरमुष्यावयवाःसपालैरितिशुश्रुम ॥ ११ ॥ यावान्कल्पोविकल्पोवायथाकालोऽनुमीयते ॥ भूतभव्यभवच्छब्दआयुर्मानंचयत्सतः ॥ १२ ॥ कालस्यानुगतिर्यातुलक्ष्यतेऽण्वीबृहत्यपि ॥ यावत्यःकर्मगतयोयादृशीर्द्विजसत्तम ॥ १३ ॥ यस्मिन्कर्मसमावायोयथायेनोपगृह्यते ॥ गुणानांगुणिनांचैवपरिणाममभीप्सतां ॥ १४ ॥ भूपातालककुब्व्योमग्रहनक्षत्रभूभृतां ॥ सरित्समुद्रद्वीपानांसंभवश्चैतदोकसां ॥ १५ ॥ प्रमाणमंडकोशस्यबाह्याभ्यंतरभेदतः ॥ महतांचानुचरितंवर्णाश्रमविनिश्चयः ॥ १६ ॥ अवतारानुचरितंयदाश्चर्यतमंहरेः ॥ युगानियुगमानंचधर्मोयश्चयुगेयुगे ॥ १७ ॥ नृणांसाधारणोधर्मःसविशेषश्चयादृशः ॥ श्रेणीनांराजर्षीणांचधर्मःकृच्छ्रेषुजीवतां ॥ १८ ॥ तत्त्वानांपरिसंख्यानंलक्षणंहेतुलक्षणं ॥ पुरुषाराधनविधिर्योगस्याध्यात्मिकस्यच ॥ १९ ॥ योगेश्वरैश्वर्यगतिर्लिंगभंगस्तुयोगिनां ॥ वेदोपवेदधर्माणामितिहासपुराणयोः ॥ २० ॥** ॥ ॥

धिकारीदेवादिभावंप्राप्नोतीत्यर्थः ॥ १४ ॥ भूरादीनांसंभवः एतानिओकांसियेषांप्राणिनांतेषांचसंभवः यच्चेतिसर्वत्रानुषंगः ॥ १५ ॥ वर्णानामाश्रमाणांचविनिश्चयस्तत्तत्स्वभावैर्निर्धारः ॥ १६ ॥ युगेयुगेप्रतियुगंयोधर्मोयच्चहरेरवतारानुचरितम् ॥ १७ ॥ सविशेषःवर्णाश्रमनिबंधनः श्रेणीनांतत्तद्व्यवसायोपजीविनांव्यवहारनियमलक्षणोधर्मः राजर्षीणांप्रजापालनाधिकारिणां कृच्छ्रेषुआपत्सुजीवतांसर्वेषां ॥ ॥ १८ ॥ सर्वेषांतत्त्वानांप्रकृत्यादीनांपरिसंख्यानंसंख्यालक्षणंस्वरूपं हेतुतोलक्षणम् तत्तत्कार्यहेतुत्वेनचलक्षणमित्यर्थः पुरुषाराधनस्यविधिर्देवपूजाप्रकारः अष्टांगयोगस्यचविधिः ॥ १९ ॥ योगेश्वराणामैश्वर्येणाणिमादिनाअर्चिरादिगतिः लिंगशरीरस्यभंगःप्रलयः वेदाऋग्वेदादयःउपवेदाआयुर्वेदादयः धर्माःधर्मशास्त्राणि तेषां इतिहासपुराणयोश्चगतिःस्वरूपम् ॥ २० ॥ ॥

संप्लवः अवांतरप्रलयः यद्वा सम्यक्प्लवनमुद्भवः विक्रमः स्थितिः प्रतिसंक्रमो महाप्रलयः इष्टं वैदिकं कर्म पूर्तं स्मार्तम् वापीकूपतडागादि देवतायतनानि च ॥ अन्नप्रदानमारामः पूर्तमित्यभिधीयत इति तत्र च काम्यानामग्निहोत्रादीनां विधिः त्रिवर्गस्य धर्मार्थकामस्य विधिः अविरोध प्रकारः ॥ २१ ॥ अनुशायिनां लीनोपाधीनां जीवानां आत्मनो जीवस्य व्यवस्थानं बंधमोक्षातिरिक्तस्वरूपेणावस्थानम् ॥ २२ ॥ उदास्ते प्रलये ॥ २३ ॥ चशब्दादपृष्टमपि ॥ २४ ॥ प्रमाणं सम्यक्ज्ञाता यतस्तव ब्रह्मनारदव्यासक्रमेण संप्रदायोस्तीति सामान्यन्यायेनाह यद्वा त्वदन्ये प्रायशो गतानुगतिका एव न तत्त्वविद इत्याह परेचेति ॥ २५ ॥ ननु तवानशन द्विजकोपाभ्यां व्याकुलस्य कुतः श्रवणं तत्राह नेति नपरायं

संप्लवः सर्वभूतानां विक्रमः प्रतिसंक्रमः ॥ इष्टापूर्तस्य काम्यानां त्रिवर्गस्य च यो विधिः ॥ २१ ॥ यश्चानुशायिनां सर्गः पाखंडस्य च संभवः ॥ आत्मनो बंधमोक्षौ च व्यवस्थानं स्वरूपतः ॥ २२ ॥ यथाऽत्मतंत्रो भगवान्विक्रीडत्यात्ममायया ॥ विसृज्य वा यथा मायामुदास्ते साक्षिवद्विभुः ॥ २३ ॥ सर्वमेतच्च भगवन्पृच्छते मेऽनुपूर्वशः ॥ तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने ॥ २४ ॥ अत्र प्रमाणं भगवान्परमेष्ठी यथात्मभूः ॥ परे चेहानुतिष्ठंति पूर्वेषां पूर्वजैः कृतं ॥ २५ ॥ न मेऽसवः परायंति ब्रह्मन्ननशनादमी ॥ पिबतोऽच्युतपीयूषमन्यत्र कुपिताद्द्विजात् ॥ ॥ २६ ॥ सूत उवाच स उपामंत्रितो राज्ञा कथायामिति सत्पतेः ॥ ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥ प्राह भागवतं नाम पुराणं ब्रह्मसंमितं ॥ ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥ यद्यत्परीक्षिदृषभः पांडूनामनुपृच्छति ॥ आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे ॥ २९ ॥ इ० भा० म० द्वि० प्रश्नविधिर्नामाष्टमोऽध्यायः ॥ ॥ ८ ॥ श्रीशुक उवाच आत्ममायामृते राजन्परस्यानुभवात्मनः ॥ न घटेतार्थसंबंधः स्वप्नद्रष्टुरिवांजसा ॥ १ ॥

तिनापगच्छंति नव्याकुलीभवंतीत्यर्थः अच्युतकीर्तिपीयूषं ॥ २६ ॥ उपामंत्रितः पृष्टः संश्रासौ पतिश्च तस्य ॥ २७ ॥ ब्रह्मकल्पे सृष्ट्युपक्रमकल्पे भागवताख्यानेनैव प्रश्नानामुत्तरं दातुमुपक्रांतवानित्यर्थः ॥ २८ ॥ पांडूनामृषभः श्रेष्ठः आनुपूर्व्येणेति प्रस्तावक्रमोऽत्र विवक्षितो न प्रश्नक्रमः ॥ २९ ॥ इ० भा० द्वि० टी० अष्टमोऽध्यायः ॥ ८ ॥ ॥ राजप्रश्नोत्तरं वक्ष्यन्ब्रह्मणे हरिणोदितम् ॥ कथयामास नवमे शुको भागवतं पुनः ॥ १ ॥ तत्र यत्तावदुक्तं यद्धातुमत इत्यनेन जीवस्य कथं देहसंबंध इति तत्रोत्तरमाह आत्मनो हरेर्मायामंतरेण अनुभवरूपस्यात्मनः अर्थेन दृश्येन देहादिना संबंधः अंजसा तत्त्वतो न घटेत अत्र हेतुः परस्येति स्वप्नद्रष्टुर्यथा स्वप्नदेहसंबंधो न घटते तद्वत् ॥ १ ॥ ॥

संसारोऽपिमाययैवेत्याह बहुरूपोबाल्युवादिरूपोदेवनारदादिरूपश्चआभाति गुणेषुदेहादिषु ॥ २ ॥ अतएवभक्तियोगेनतन्निरासेसतिमो
क्षोपिघटतइत्याह यर्हीति वावशब्दएवार्थे स्वएवमहिम्नियदारमेततदेवाह कालमाययोःपुरुषप्रकृत्योःपरस्मिन् तदाउभयमहंममेति
त्यक्त्वाउदास्तेपूर्णरूपेणावतिष्ठते तदुक्तं ययासंमोहितोजीवआत्मानंत्रिगुणात्मकं ॥ परोऽपिमनुतेनर्थंतत्कृतंचाभिपद्यते ॥ अनर्थोपश
मंसाक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतोविद्वांश्चक्रेसात्वतसंहितामिति ॥ ३ ॥ यच्चोक्तंपरमेश्वरस्यापिदेहसंबंधाविशेषात्कथंतद्भ
क्त्यामोक्षःस्यादितिआसीद्यदुदरात्पद्ममित्यादिनातत्राह आत्मनोजी वस्यतत्त्वविशुद्ध्यर्थंतत्त्वज्ञानार्थंतद्भवस्येव किंतत् यत्तपआदिनाभ
जनंभगवान्ब्रह्मणेआह किंकुर्वन् ऋतंसत्यंचिद्घनंरूपंदर्शयन् दर्शनेहेतुः अव्यलीकेनव्रतेनतपसाआदृतःसेवितःसन् अयंभावः जीवस्या
विद्ययामिथ्यारूपदेहसंबंधःईश्वरस्यतुयोगमाययाचिद्घनलीलाविग्रहाविर्भावइतिमहान्विशेषः अतस्तद्भजनान्मोक्षोपपत्तिरिति ॥ ४ ॥

**बहुरूपइवाभातिमाययाबहुरूपया ॥ रममाणोगुणेष्वस्याममाहमितिमन्यते ॥ २ ॥ यर्हिवावमहिम्निस्वेपर
स्मिन्कालमाययोः ॥ रमेतगतसंमोहस्त्यक्त्वोदास्तेतदोभयम् ॥ ३ ॥ आत्मतत्त्वविशुद्ध्यर्थंयदाहभगवानृतं ॥
ब्रह्मणेदर्शयन्रूपमव्यलीकव्रतादृतः ॥ ४ ॥ सआदिदेवोजगतांपरोगुरुःस्वधिष्ण्यमास्थायसिसृक्षयैक्षत ॥
तांनाध्यगच्छद्दृशमत्रसंमतांप्रपंचनिर्माणविधिर्यथाभवेत् ॥ ५ ॥ सचिंतयन्द्व्यक्षरमेकदांऽभस्युपाशृणोद्द्विर्ग
दितंवचोविभुः ॥ स्पर्शेषुयत्षोडशमेकविंशंनिष्किंचनानांनृपयद्धनंविदुः ॥ ६ ॥ निशम्यतद्वक्तृदिदृक्षयादि
शोविलोक्यतत्रान्यदपश्यमानः ॥ स्वधिष्ण्यमास्थायविमृश्यतद्धितंतपस्युपादिष्टइवादधेमनः ॥ ७ ॥**

भगवद्भजनादेवतत्त्वज्ञानमित्येतत्प्रपंचयिष्यन्ब्रह्मणोऽपितत्त्वज्ञानंतत्प्रसादादेवेतिदर्शयितुमितिहासमाह सइत्यादिना परोगुरुर्भक्तिरह
स्योपदेष्टा स्वधिष्ण्यंपद्ममास्थायअधिष्ठाय तस्याधिष्ठानान्वेषणायपूर्वंजलेनिमग्नः परावृत्यस्वधिष्ण्येस्थित्वेत्यर्थः ऐक्षततत्कथंस्रष्टव्यमि
त्यालोचितवान् तांदृशंप्रज्ञाम् अत्रसृष्टिविषयेसंमताम‌व्यभिचारिणीम् विधिःप्रकारः ॥ ५ ॥ सृष्टिंचिंतयन्कदाचिद्व्यक्षरंवचोंऽभसिउपा
शृणोत् उपसमीपेश्रुतवान् तेअक्षरेदर्शयति कादयोमावसानाःस्पर्शास्तेषुयत् षोडशंतकारःयच्चैकविंशंपकारः वचसोनिर्देशार्थंतदर्थमाह
हेनृपनिष्किंचनानांत्यक्तधनानांधनंयद्विदुः येनतपोधनाइतिप्रसिद्धाःतच्चाद्विर्गदितंतपतपेति लोण्मध्यमपुरुषैकवचनम् तस्यवीप्सांसादरविधि
रूपामशृणोदित्यर्थः ॥ ६ ॥ एवंनिशम्यतस्यवचसोवक्तुर्दिदृक्षयाततःप्रचलितःसन्दिशोविलोक्यपुनःस्वधिष्ण्यमास्थायकेनचित्प्रत्यक्षं
नियुक्तइवतच्चात्मनोहितंविमृश्यतपासिमनोधृतवानित्यर्थः ॥ ७ ॥ ॥ ॥

ततश्चसः ब्रह्माअखिलानांलोकानांतापनंप्रकाशकंतपः अतप्यतकृतवान् तपतपेत्येतस्यवचसोर्थेअमोघंदर्शनंयस्य जितः अनिलः आत्मा मनश्चयेन विजितानिउभयेंद्रियाणिज्ञानकर्मात्मकानियेन तपतांतपश्चरतांमध्येतपीयान् अतिशयेनतपस्वी ॥ ८ ॥ तस्मैब्रह्मणेस्वलोकंवैकुंठाख्यंपरंश्रेष्ठं नयत्परंयतःपरमुत्कृष्टमन्यन्नास्तिं तमेवलोकमनुवर्णयतिपंचभिः व्यपेताःसंक्लेशादयोयस्मात् स्वदृष्टवद्भिःसत्पुण्यवद्भिः यद्वा स्वस्यदृष्टंदर्शनमास्तियेषां आत्मविद्भिरित्यर्थः ॥ ९ ॥ तयोस्ताभ्यांमिश्रंसत्वंचनप्रवर्ततेकिंतुशुद्धमेवसत्वं कालविक्रमोनाशः अपरेरागलोभादयोनसंतीतिकिमुवक्तव्यं अनुव्रताःपार्षदाः ॥ १० ॥ श्यामाश्चतेअवदाताश्च पद्मनेत्राः पीतांबराः सुरुचःअतिकमनीयाः

दिव्यंसहस्राब्दममोघदर्शनोजितानिलात्माविजितोभयेंद्रियः ॥अतप्यतस्माखिललोकतापनंतपस्तपीयांस्तपतांसमाहितः ॥८॥ तस्मैस्वलोकंभगवान्सभाजितःसंदर्शयामासपरंनयत्परं ॥व्यपेतसंक्लेशविमोहसाध्वसंस्वदृष्टवद्भिर्विबुधैरभिष्टुतं ॥ ९ ॥ प्रवर्ततेयत्ररजस्तमस्तयोःसत्त्वंचमिश्रंनचकालविक्रमः ॥ नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः ॥ १० ॥ श्यामावदाताःशतपत्रलोचनाःपिशंगवस्त्राःसुरुचःसुपेशसः ॥ सर्वेचतुर्बाहवउन्मिषन्मणिप्रवेकनिष्काभरणाःसुवर्चसः ॥ प्रवालवैदूर्यमृणालवर्चसःपरिस्फुरत्कुंडलमौलिमालिनः ॥ ११ ॥ भ्राजिष्णुभिर्यःपरितोविराजतेलसद्विमानावलिभिर्महात्मनां ॥ विद्योतमानःप्रमदोत्तमाद्युभिःसविद्युदभ्रावलिभिर्यथानभः ॥ १२ ॥ श्रीर्यत्ररूपिण्युरुगायपादयोःकरोतिमानंबहुधाविभूतिभिः ॥ प्रेंखंश्रितायाकुसुमाकरानुगैर्विगीयमानाप्रियकर्मगायती ॥ १३ ॥ ॥

सुपेशसःअतिसुकुमाराः उन्मिषंतइवप्रभावंतोमणिप्रवेकामण्युत्तमायेषुतानिनिष्कानिपदकान्याभरणानिचयेषांते सुवर्चसःअतितेजस्विनः प्रवालादिवत्त्वचोवर्णोयेषांते परितःस्फुरंतिकुंडलानिमौलयोमालाश्चसंतियेषांते ॥ ११ ॥ पार्षदाननुवर्ण्यपुनरपिलोकमनुवर्णयति भ्राजिष्णुभिर्देदीप्यमानाभिः प्रमदोत्तमानांदिवःकांतयस्ताभिर्विद्योतमानाः सहविद्युद्भिर्वर्तमानाःसविद्युतःताभिरभ्रावलिभिः तत्राविद्युतइवास्त्रियः अभ्रपंक्तयइवाविमानानि नभइवलोकः ॥ १२ ॥ श्रीःसंपत् रूपिणीमूर्तिमती मानंपूजां विभूतिभिर्नानाविभवैः प्रेंखमांदोलंसंश्रिता कुसुमाकरोवसंतस्तस्यानुगाभ्रमरास्तैर्विविधंगयिमाना स्वयंतुप्रियस्यहरेःकर्मगायतीभवाति ॥ १३ ॥ ॥

यएवंभूतोलोकःतत्रतस्मिन् ॥ १४ ॥ भृत्यानांप्रसादेअभिमुखं दृगेवआसवइवद्रष्टॄणांहर्षकरीयस्य प्रसन्नइासमरुणलोचनमाननंयस्य व क्षसिस्थितयाचश्रियालक्षितं अलंकृतामित्यर्थः ॥ १५ ॥ अध्यर्हणीयंवरिष्ठंसिंहासनं चतस्रःप्रकृतिपुरुषमहदहंकाराः षोडशएकादशें द्रियपंचमहाभूताख्याः पंचतन्मात्ररूपायाःशक्तयस्ताभिर्वृतं स्वैर्भगैःस्वाभाविकैरैश्वर्यादिभिः इतरत्रयोगिषुअध्रुवैरागंतुकैः साधारणैरि त्यर्थः एवंसत्यपिस्वएवधामन्स्वरूपएवरममाणं अतएवेश्वरं ॥ १६ ॥ तस्यदर्शनेनयआल्हादस्तेनपरिप्लुतंव्याप्तमांतरमंतःकरणंयस्य हृ ष्यंतीरोमांचितातनुर्यस्य प्रेमभरेणअश्रूणिलोचनेषुयस्य विश्वसृक्ब्रह्मा पारमहंस्येनपथाज्ञानमार्गेण ॥ १७ ॥ तंब्रह्माणंभगवानूबभाषे

**ददर्शतत्राखिलसात्वतांपतिंश्रियःपतिंयज्ञपतिंजगत्पतिं ॥ सुनंदनंदप्रबलार्हणादिभिःस्वपार्षदमुख्यैःपरिसेवितंविभुम् ॥ १४ ॥ भृत्यप्रसादाभिमुखंदृगासवंप्रसन्नहासारुणलोचनाननं ॥ किरीटिनंकुंडलिनंचतुर्भुजंपीतांबरंवक्षसिलक्षितंश्रिया ॥ १५ ॥ अध्यर्हणीयासनमास्थितंपरंवृतंचतुःषोडशपंचशक्तिभिः ॥ युक्तंभगैःस्वैरितरत्रचाध्रुवैःस्वएवधामन्रममाणमीश्वरं ॥ १६ ॥ तद्दर्शनाल्हादपरिप्लुतांतरोहृष्यत्तनुःप्रेमभराश्रुलोचनः ॥ ननामपादांबुजमस्यविश्वसृक्यत्पारमहंस्येनपथाऽधिगम्यते ॥ १७ ॥ तंप्रीयमाणंसमुपस्थितंतदाप्रजाविसर्गेनिजशासनार्हणं ॥ बभाषईषत्स्मितशोचिषागिराप्रियःप्रियंप्रीतमनाःकरेस्पृशन् ॥ १८ ॥ श्रीभगवानुवाच त्वयाऽहंतोषितःसम्यग्वेदगर्भसिसृक्षया ॥ चिरंभृतेनतपसादुस्तोषःकूटयोगिनां ॥ १९ ॥ वरंवरयभद्रंतेवरेशंमाऽभिवांछितं ॥ ब्रह्मन्श्रेयःपरिश्रामःपुंसोमद्दर्शनावधिः ॥ २० ॥ मनीषितानुभावोऽयंममलोकावलोकनं ॥ यदुपश्रुत्यरहासिचकर्थपरमंतपः ॥ २१ ॥ ॥ ॥**

प्रजाविसर्गेकार्येनिजशासनार्हणंस्वानियोगार्हं प्रजाविसर्गेसमुपस्थितमितित्राऽन्वयःईषत्स्मितेनशोचिर्दीप्तिःशोभायस्यास्तयागिरा ॥ १८ ॥ सिसृक्षयाहेतुनाचिरंसंभृतेनतपसाऽहंसम्यक्तोषितः दुस्तोषस्तोषयितुमशक्यः ॥ १९ ॥ माइतिमां श्रेयसांफलानांपारिश्रामःपरिश्रमःसा धनप्रयासः ममदर्शनमवधिर्यस्यसतथा अतोऽधिकंतुपुनःफलंनास्तीत्यर्थः ॥ २० ॥ एतच्चमत्कृपयैवत्वयाप्राप्तमित्याह मनीषितमिच्छा तुभ्यमिदंदातव्यमितियाममेच्छातस्यानुभावोऽयं कोऽसौतमाह ममलोकस्यावलोकनंयत् नचेदंमयैवतपोबलेनप्राप्तमितिस्वातंत्र्यंमन्य स्वतत्प्रवृत्तेरपिमत्कृतत्वादित्याह रहसितपतपेतियद्वचउपश्रुत्यपरमंतपश्चकर्थकृतवानसि ॥ २१ ॥ ॥ ॥

तदपित्वांप्रतिमयैवादिष्टमुपदिष्टं कदा तत्रतदासृष्ट्यारंभेत्वयिकर्मणिकार्येऽर्थेविमोहितेसति किंच तपोनाममममैवशक्तिरित्याह तपोमे
हृदयमंतरंगाशक्तिः आत्मास्वरूपं यस्यज्ञानमयंतपइतिश्रुतेः ॥ २२ ॥ ग्रसामिसंहरामि बिभर्मिपालयामि वीर्यंशक्तिः ॥ २३ ॥ अध्य
क्षःअधिष्ठाता गुहांगुहायांबुद्धाववस्थितःसन्यद्यपिवेदतथापीत्युत्तरेणान्वयः ॥ २४ ॥ नाथमानस्ययाचमानस्यउपतप्यमानस्येतिवाहे
नाथनाथयआशंसयप्रयच्छ नाथितंयाचितं नाथृनाधृयाच्ञोपतापैश्वर्याशीःषु नाथितमेवाह परंसूक्ष्ममवरंस्थूलंचतेरूपंयथाजानीयां ॥
॥ २५ ॥ यथाचत्वंक्रीडसितद्विषयांमनीषांमयिधेहीत्युत्तरेणान्वयः नानाशक्त्युपबृंहितंविश्वंविलुंपन्विविधंसृजन्बिभ्रत्पालयन् आत्म

प्रत्यादिष्टंमयातत्रत्वयिकर्मविमोहिते ॥ तपोमेहृदयंसाक्षादात्माऽहंतपसोनघ ॥ २२ ॥ सृजामितपसैवेदं
ग्रसामितपसापुनः ॥ बिभर्मितपसाविश्वंवीर्यंमेदुश्चरंतपः ॥ २३ ॥ ब्रह्मोवाच भगवन्सर्वभूतानामध्य
क्षोवस्थितोगुहां ॥ वेदह्यप्रतिरुद्धेनप्रज्ञानेनचिकीर्षितं ॥२४॥ तथाऽपिनाथमानस्यनाथनाथयनाथितं॥
परावरेयथारूपेजानीयांतेत्वरूपिणः ॥ २५ ॥ यथात्ममायायोगेननानाशक्त्युपबृंहितं॥विलुंपन्विसृजन्
गृण्हन्बिभ्रदात्मानमात्मना ॥२६॥ क्रीडस्यमोघसंकल्पऊर्णनाभिर्यथोर्णुते ॥तथातद्विषयांधेहिमनीषांम
यिमाधव ॥२७॥ भगवच्छिक्षितमहंकरवाणिह्यतंद्रितः ॥नेहमानःप्रजासर्गंबध्येयंत्वदनुग्रहात् ॥ २८ ॥
यावत्सखासख्युरिवेशतेकृतःप्रजाविसर्गेविभजामिभोजनं ॥ अविक्लवस्तेपरिकर्मणिस्थितोमामेसमुन्नद्ध
मदोऽजमानिनः ॥ २९ ॥

नास्वयमेवआत्मानंब्रह्मादिरूपंगृह्णन्ननुगृह्णन्क्रीडसि ॥ २६ ॥ ऊर्णुतेतंतुभिरात्मानमाच्छादयति ॥ २७ ॥ तत्किंसृष्टेरुद्विग्नएवतत्त्व
ज्ञानंप्रार्थयसेनेत्याह भगवतात्वयाशिक्षितमनुशिष्टमतंद्रितःअनलसःसन्करिष्यामि तर्हिकिमनेनतत्त्वज्ञानेनतत्राह यस्मादेवंभूतात्त्वदनु
ग्रहात्प्रजासर्गमीहमानःकुर्वन्नपिअहंकारादिभिर्बद्धोनभवेयमिति ॥ २८ ॥ अवश्यंचमदोभवितासतुकंचित्कालंमाभूदितिप्रार्थयते या
वदिति भोईशतेत्वयालौकिकस्यसख्युःसखेवाहंकृतःकरस्पर्शनादिनाममत्वेनसंमानितःसन्प्रजासर्गरूपेतवपरिकर्मणिसेवायांस्थितोऽ
विक्लवोऽव्याकुलएवयावत्जनंविभजामिउत्तममध्यमादिभेदेनसृजामितावत्त्वत्संमानादहमप्यजः स्वतंत्रइतिमानिनोमेसमुन्नद्धउत्कटो
मदोमाभूत् यद्वा मदोमासमुन्नद्धमासमुन्नह्यताम् उद्रिक्तोनभवेदित्यर्थः ॥ २९ ॥ ॥ ॥

ज्ञानंशास्त्रोत्थं विज्ञानमनुभवः रहस्यंभक्तिः सुगोप्यमपिवक्ष्यामीत्यादिनिर्देशात् तस्यांगंसाधनं ॥ ३० ॥ यावान्स्वरूपतः यथाभावः यादृक्सत्तावान् यानिरूपाणिगुणाःकर्माणिचयस्य ॥ ३१ ॥ एतदेवसम्यगुपदिशन्यावानित्यस्यार्थंस्फुटयति अहमेवाग्रेसृष्टेःपूर्वमासं स्थितोनान्यत्किंचित्यत्सत्स्थूलंअसत्सूक्ष्मंपरंतयोःकारणंप्रधानं तस्याप्यंतर्मुखतयातदामय्येवलीनत्वात् अहंचतदाआसमेवकेवलंन चान्यदकरवं पश्चात्सृष्टेरनंतरमप्यहमेवास्मि यदेतद्विश्वंतदप्यहमास्मि प्रलयेयोवशिष्येतसोप्यहमेव अनेनचानाद्यनंतत्वादद्वितीयत्वा च्चपरिपूर्णोहमित्युक्तंभवति ॥ ३२ ॥ यथाऽत्ममायायोगेनेत्यनेनमायायाअपिपृष्टत्वाद्वक्ष्यमाणोपयोगित्वाच्चमायांनिरूपयतिऋतेऽर्थंविना ऽपिवास्तवमर्थंयद्यतःकिमप्यनिरुक्तंआत्मनिअधिष्ठानेप्रतीयेतसदपिचनप्रतीयेततत्आत्मनोममममायांविद्यात् यथाआभासोद्विचंद्रादिरि

**श्रीभगवानुवाच ज्ञानंपरमगुह्यंमेयद्विज्ञानसमन्वितं ॥ सरहस्यंतदंगंचगृहाणगदितंमया ॥३०॥ यावा नहंयथाभावोयद्रूपगुणकर्मकः ॥ तथैवतत्त्वविज्ञानमस्तुतेमदनुग्रहात् ॥ ३१॥ अहमेवासमेवाग्रेनान्यद्य त्सदसत्परं॥पश्चादहंयदेतच्चयोऽवशिष्येतसोस्म्यहं ॥३२॥ऋतेऽर्थंयत्प्रतीयेतनप्रतीयेतचात्मनि॥तद्विद्या दात्मनोमायांयथाभासोयथातमः ॥३३॥ यथामहांतिभूतानिभूतेषूच्चावचेष्वनु ॥ प्रविष्टान्यप्रविष्टानित थातेषुनतेष्वहं ॥३४॥ एतावदेवजिज्ञास्यंतत्त्वजिज्ञासुनात्मनः ॥ अन्वयव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्व दा ॥ ३५ ॥ एतन्मतंसमातिष्ठपरमेणसमाधिना ॥ भवान्कल्पविकल्पेषुनविमुह्यतिकर्हिचित् ॥ ३६ ॥**

ति अर्थंविनाप्रतीतौदृष्टांतः यथातमइति सतोप्रतीतौतमोराहुर्यथाग्रहमंडलेस्थितोऽपिनदृश्यते ॥ ३३ ॥ यथाभावइत्येतत्स्पष्टयति य थामहाभूतानिभौतिकेषुअनुसृष्टेरनंतरंप्रविष्टानि तेषूपलभ्यमानत्वात् अप्रविष्टानिच प्रागेवकारणतयातेषुविद्यमानत्वात् यथातेषुभूतभौ तिकेषुअहंनचतेष्वहं एवंभूताममसत्तेत्यर्थः ॥३४॥ साधनमाह आत्मनस्तत्त्वजिज्ञासुनाएतावत्त्वमेवजिज्ञास्यंविचार्यंतदेवाह अन्वयः कार्येषुकारणत्वेनानुवृत्तिःकारणावस्थायांचतेभ्योव्यतिरेकः तथाजाग्रदाद्यवस्थासुतत्तत्साक्षितयाऽन्वयः व्यतिरेकश्चसमाध्यादौएवमन्व यव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदाचतदेवात्मेति ॥ ३५ ॥ यत्प्रार्थितंनेहमानःप्रजासर्गमितितत्प्रसादीकरोति एतन्मतंसम्यगनुतिष्ठ स माधिनाचित्तैकाग्र्येण कल्पेषुविकल्पाविविधाःसृष्टयस्तेषुविमोहंकर्तृत्वाभिनिवेशंनयास्यतीति ॥ ३६ ॥ ॥ ॥

एवंसंप्रदिश्यजनानांपरमष्ठिनंपरमेआधिपत्येस्थितंब्रह्माणम् आत्मनस्तद्रूपंन्यरुणत् अंतर्हितवान् ॥ ३७ ॥ अंतर्हितइंद्रियार्थःप्रत्यक्षरूपंयेनतस्मैबद्धांजलिः ॥ ३८ ॥ तदनंतरंपूर्वोक्तोब्रह्मनारदसंवादःप्रवृत्तइत्याह प्रजापतिरितिपंचभिः प्रजानांभद्रमन्विच्छन्विमृशन्स्वैवस्वार्थेकाम्यास्वप्रयोजनेच्छातयायमनियमानन्वतिष्ठत ॥ ३९ ॥ रिक्थादानांपुत्राणांमध्येप्रियतमः तंपितरंसेवमानःशीलादिनापरितोषयामास ॥ ४० ॥ किमिच्छन्विष्णोर्मायांविविदिषन् ॥ ४१ ॥ निशम्यदृष्ट्वाज्ञात्वेत्यर्थः मामाम् ॥ ४२ ॥ भगवताचतुःश्लोक्यासंक्षेपेणप्रोक्तंविस्तरेणप्राह दशलक्षणानिलक्षणीयाअर्थाविद्यंतेयस्मिंस्तत् ॥ ४३ ॥ तत्संप्रदायतोभागवतंमयाज्ञातमित्याशयेनाह नारद

श्रीशुकउवाच संप्रदिश्यैवमजनोजनानांपरमेष्ठिनम् ॥ पश्यतस्तस्यतद्रूपमात्मनोन्यरुणद्धरिः॥३७॥अंतर्हितेंद्रियार्थायहरयेविहितांजलिः ॥ सर्वभूतमयोविश्वंससर्जेदंसपूर्ववत्॥३८॥प्रजापतिर्धर्मपतिरेकदानियमान्यमान् ॥ भद्रंप्रजानामन्विच्छन्नातिष्ठत्स्वार्थकाम्यया ॥३९॥ तंनारदःप्रियतमोरिक्थादानामनुव्रतः॥शुश्रूषमाणःशीलेनप्रश्रयेणदमेनच॥४०॥मायांविविदिषन्विष्णोर्मायेशस्यमहामतिः ॥महाभागवतोराजन्पितरंपर्यतोषयत्॥४१॥तुष्टंनिशम्यपितरंलोकानांप्रपितामहम्॥देवर्षिःपरिपप्रच्छभवान्यन्माऽनुपृच्छति॥४२॥तस्माइदंभागवतंपुराणंदशलक्षणं॥प्रोक्तंभगवताप्राहप्रीतःपुत्रायभूतकृत्॥४३॥नारदःप्राहमुनयेसरस्वत्यास्तटेनृप ॥ ध्यायतेब्रह्मपरमंव्यासायामिततेजसे ॥४४॥यदुताहंत्वयापृष्टोवैराजात्पुरुषादिदम्॥यथासीत्तदुपाख्यास्येप्रश्नानन्यांश्चकृत्स्नशः ॥ ४५ ॥ इ० भागवतेम० द्वि० नवमोऽध्यायः॥ ९ ॥

श्रीशुकउवाच अत्रसर्गोविसर्गश्चस्थानंपोषणमूतयः ॥ मन्वंतरेशानुकथानिरोधोमुक्तिराश्रयः ॥ १ ॥

इति ॥ ४४ ॥ भागवतव्याख्यानेनैवत्वत्प्रश्नानामुत्तरंदास्यामित्याह यदुतेति पुरुषावयवैर्लोकाःसपालाःपूर्वकल्पिताइत्यादिनावैराजात्पुरुषादिदंविश्वंकथमासीदितियदहंत्वयापृष्टस्तद्यथावदुपाख्यामिशृण्विति ॥ ४५ ॥ इतिद्वितीयस्कंधेटीकायांनवमोऽध्यायः ॥ ९ ॥
ततोभागवतव्याख्याद्वारैवदशमेस्फुटम् ॥ राजप्रश्नोत्तरंवक्तुमारेभेबादरायणिः ॥ १ ॥ दशलक्षणंपुराणंप्राहेत्युक्तंतानिदशलक्षणानिदर्शयति अत्रेति मन्वंतराणिईशानुकथाश्चेतिद्वंद्वः सर्गादयोत्रदशार्थालक्ष्यंते ॥ १ ॥

नन्वेवमर्थभेदाच्छास्त्रभेदः स्यात्तत्राह दशमस्याश्रयस्याविशुद्ध्यर्थं तत्त्वज्ञानार्थं नवानां लक्षणं स्वरूपं एकस्यैव प्राधान्यान्नायं दोषइत्यर्थः न न्वत्रनैवंप्रतीयतेअतआह श्रुतेनश्रुत्यैव स्तुत्यादिस्थानेषुअंजसासाक्षाद्वर्णयंति अर्थेनतात्पर्यवृत्त्या चतत्तदाख्यानेषु ॥ २ ॥ सर्गादीनां प्रत्येकंलक्षणमाह भूतानिआकाशादीनि मात्राणिचशब्दादीनि इंद्रियाणिच धीशब्देनमहदहंकारौ गुणानांवैषम्यात्परिणामात्ब्रह्मणः परमेश्वरात्कर्तुर्भूतादीनांयद्विराड्रूपेणस्वरूपतश्चजन्मससर्गः पुरुषोविराजस्तत्कृतःपौरुषश्चराचरसर्गोविसर्गइत्यर्थः ॥ ३ ॥ वैकुंठ स्यभगवतोविजयःसृष्टानांतत्तन्मर्यादापालनेनोत्कर्षःस्थितिःस्थानम् स्वभक्तेषुतस्यानुग्रहःपोषणम् तदनुगृहीतानांसतांमन्वंतराधिपती नांधर्मःकर्मणांवासनाः वेञ्तंतुसंताने ऊयंतेकर्मभिःसंतन्यंतइत्यूतयः यद्वा वृध्यर्थात्संश्लेषार्थाद्वाऽवतेर्धातोरिदं रूपम् ऊयंतेकर्मभिर्ब

दशमस्यविशुद्ध्यर्थंनवानामिहलक्षणम् ॥ वर्णयंतिमहात्मानःश्रुतेनार्थेनचांजसा ॥ २ ॥ भूतमात्रेंद्रियधियांजन्मसर्गउदाहृतः ॥ ब्रह्मणोगुणवैषम्याद्विसर्गःपौरुषःस्मृतः ॥ ३ ॥ स्थितिर्वैकुंठविजयःपोषणंतदनुग्रहः ॥ मन्वंतराणिसद्धर्मऊतयःकर्मवासनाः ॥ ४ ॥ अवतारानुचरितंहरेश्चास्यानुवर्तिनाम् ॥ पुंसामीशकथाःप्रोक्तानानाख्यानोपबृंहिताः ॥ ५ ॥ निरोधोऽस्यानुशयनमात्मनःसहशक्तिभिः ॥ मुक्तिर्हित्वाऽन्यथारूपंस्वरूपेणव्यवस्थितिः ॥ ६ ॥ आभासश्चनिरोधश्चयतश्चाध्यवसीयते ॥ सआश्रयःपरंब्रह्मपरमात्मेतिशब्द्यते ॥ ७ ॥ योऽध्यात्मिकोयंपुरुषःसोऽसावेवाधिदैविकः ॥ यस्तत्रोभयविच्छेदःसस्मृतोह्याधिभौतिकः ॥ ८ ॥

ध्यंतेसंश्लिष्यंतइतिवाऊतयइत्यर्थः ॥ ४ ॥ हरेरवतारानुचरितमस्यानुवर्तिनांचसत्कथाईशानुकथाः प्रोक्ताइत्यर्थः ॥ ५ ॥ निरोधमाह अस्यात्मनोजीवस्यहरेर्योगनिद्रामनुपश्चाच्छक्तिभिश्चोपाधिभिः सहशयनंलयोनिरोधः अन्यथारूपमविद्ययाऽध्यस्तंकर्तृत्वादिहित्वास्वरूपेणब्रह्मतयाव्यवस्थितिर्मुक्तिः ॥ ६ ॥ आभासःसृष्टिर्निरोधोलयश्चयतोभवतिअध्यवसीयतेप्रकाशतेचसपरंब्रह्मेतिपरमात्मेति प्रसिद्ध आश्रयःकथ्यते ॥ ७ ॥ आश्रयस्वरूपमपरोक्षानुभवेनस्पष्टंदर्शयितुमध्यात्मादिविभागमाह योऽयमाध्यात्मिकःपुरुषः चक्षुरादिकरणाभिमानीद्रष्टाजीवःसएवाधिदैविकश्चक्षुराद्यधिष्ठातासूर्यादिः तत्रैकस्मिन्नेवउभयोर्द्विरूपयोर्विच्छेदोयस्मात्सआधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितोदृश्योदेहःपुरुषइतिपुरुषस्यजीवस्योपाधिः सवाएषपुरुषोऽन्नरसमयइत्यादिश्रुतेः ॥ ८ ॥ ॥ ॥

एकमेकतराभावइत्यतेषामन्योन्यसापेक्षसिद्धित्वेनानात्मत्वंदर्शयति तथाहि दृशंविनातत्प्रतीत्यनुमेयंकरणंनसिध्यतिनापिद्रष्टानचतादृ
नाकरणप्रवृत्त्यनुमेयस्तदधिष्ठातासूर्यादिः नचतंविनाकरणंप्रवर्ततेनचतद्विनादृश्यमित्येवमेकतरस्याभावेएकंनोपलभामहे तत्रतदात
त्रितयमालोचनात्मकेनप्रत्ययेनयोवेदसाक्षितयापश्यतिसपरमात्माआश्रयः तेषामपिपरस्परमाश्रयत्वमस्त्येवेतितद्व्यवच्छेदार्थंविशेषणम्
स्वाश्रयःअनन्याश्रयः सचासावन्येषामाश्रयश्चेति तथाचभगवान्वक्ष्यति दृग्रूपमार्कंवपुरत्ररंध्रेपरस्परंसिध्यतियःस्वतःखे ॥ आत्माय
देषामपरोयआद्यःस्वयाऽनुभूत्याऽखिलसिद्धसिद्धिरिति एतेनैवव्यभिचारित्वात्तेषांमायामयत्वमप्युक्तं अतएवपुरुषावयवैर्लोकाःसपालाःपू
र्वंकल्पिताः॥ लोकैरमुष्यावयवाःसपालैरित्यनेनोक्तोविरोधोपिपरिहृतः ॥९॥ उक्तमेवाध्यात्मादिविभागंप्रपंचयन् यदुताहंत्वयापृष्टोवैराजा
त्पुरुषादिदम् ॥ यथाऽसीत्तदुपाख्यास्यइतियत्प्रतिज्ञातंतदुत्पत्तिप्रकारमाह पुरुषइत्यादिना पुरुषोवैराजःअंडंविनिर्भिद्यपृथक्कृत्यविनि

**एकमेकतराभावेयदानोपलभामहे ॥ त्रितयंतत्रयोवेदसआत्मास्वाश्रयाश्रयः ॥ ९ ॥ पुरुषोंऽडंविनिर्भिद्यय
दाऽसौसविनिर्गतः ॥ आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिःशुचीः ॥ १० ॥ तास्ववात्सीत्स्वसृष्टासुस
हस्रपरिवत्सरान् ॥ तेननारायणोनामयदापःपुरुषोद्भवाः ॥ ११ ॥ द्रव्यंकर्मचकालश्चस्वभावोजीवएवच ॥ यद
नुग्रहतःसंतिनसंतियदुपेक्षया ॥ १२ ॥ एकोनानात्वमन्विच्छन्योगतल्पात्समुत्थितः ॥ वीर्यंहिरण्मयंदेवो
माययाव्यसृजत्त्रिधा ॥ १३ ॥ अधिदैवमथाध्यात्ममधिभूतमितिप्रभुः ॥ अथैकंपौरुषंवीर्यंत्रिधाभिद्यततच्छृणु
॥ १४ ॥ अंतःशरीरआकाशात्पुरुषस्यविचेष्टतः ॥ ओजःसहोबलंजज्ञेततःप्राणोमहानसुः ॥ १५ ॥**

र्गतःपृथक्स्थितइत्यर्थः अयनंस्थानमन्विच्छन्विमृशन् यतःशुचिःस्वयमतःशुचीःशुद्धाः अपःगर्भोदकसंज्ञाअस्राक्षीत्ससर्ज ॥ १० ॥
अप्सुवासंनारायणनामनिरुक्त्यास्पष्टयति तेनअप्सुवासेनयद्यस्मात्पुरुषोनरस्तस्मादुद्भवोयासांताःनाराःआपोऽयनमस्येतिनारायणइत्यर्थः
तदुक्तं आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ अयनंतस्यताःपूर्वंतेननारायणःस्मृतइति ॥ ११ ॥ तस्यप्रभावमाह द्रव्यमुपादानंकर्मादीनि
निमित्तानि जीवोभोक्ता यस्यानुग्रहात्संति कार्यक्षमाभवंतीत्यर्थः ॥ १२ ॥ योगएवतल्पंशय्यातस्मात् वीर्यंगर्भरूपंदेहंहिरण्मयमिवप्र
काशबहुलं ॥ १३ ॥ तस्यैवप्रपंचः अथेत्यादिना ॥ १४ ॥ अंतःशरीरेयआकाशस्तस्मात्क्रियाशक्त्यातत्रविविधंचेष्टमानस्यसतःओजइंद्रि
यशक्तिःसहोमनःशक्तिःबलंदेहशक्तिः ततःशक्त्यात्मकात्सूक्ष्माद्रूपात्प्राणःसूत्राख्यः महान्मुख्यःअसुःप्राणःसर्वेषां ॥ १५ ॥

महत्त्वंदर्शयति प्राणाइंद्रियाणियंप्राणंतंचेष्टांकुर्वंतमनुपश्चात्प्राणंतिचेष्टांकुर्वंति अपानंतंचेष्टांत्यजंतमनुअपानंतिचेष्टांत्यजंति राजानमनुभृत्याइव ॥ १६ ॥ क्षिपताचालयतानिमित्तेनक्षुत्तृडादिकं प्रभोरितिविराड्जीवाभेदेनोपासनार्थमुक्तं आजायतेस्म ततोजक्षतःभक्षयितुमिच्छतइत्यर्थः प्राक्प्रथमंनिरभिद्यतविभक्तमभूत् ॥ १७ ॥ तालुअधिष्ठानं जिव्हाइंद्रियं नानारसोविषयः वरुणश्चदेवताज्ञातव्या एवंसर्वत्रअधिष्ठानमिंद्रियंदेवताविषयइत्येतच्चतुष्टयमनुक्तमप्यूह्यं ॥१८॥ विवक्षोर्वक्तुमिच्छोः मुखतएववन्हिर्देवता वाक्इंद्रियं व्याहृतंभाषणं तयोरितिइंद्रियदेवताऽधीनत्वंकर्मणोदर्शयति ॥१९॥ नभस्वतिप्राणवायौदोधूयतिदोधूयमानेअत्यंतंप्रचलतिसति तत्रनासिकायांवायु

अनुप्राणंतियंप्राणाःप्राणंतंसर्वजंतुषु ॥ अपानंतमपानंतिनरदेवमिवानुगाः ॥१६॥ प्राणेनक्षिपताक्षुत्तृडंतराजायतेप्रभोः ॥ पिपासतोजक्षतश्चप्राङ्मुखंनिरभिद्यत ॥१७॥ मुखतस्तालुनिर्भिन्नंजिव्हातत्रोपजायते ॥ ततोनानारसोजज्ञेजिव्हयायोऽधिगम्यते ॥१८॥ विवक्षोर्मुखतोभूम्नोवन्हिर्वाग्व्याहृतंतयोः ॥ जलेवैतस्यसुचिरंनिरोधःसमजायत ॥ १९ ॥ नासिकेनिरभिद्येतांदोधूयतिनभस्वति ॥ तत्रवायुर्गंधवहोघ्राणोनसिजिघृक्षतः ॥ २० ॥ यदात्मनिनिरालोकमात्मानंचदिदृक्षतः ॥ निर्भिन्नेह्यक्षिणीतस्यज्योतिश्चक्षुर्गुणग्रहः ॥२१॥ बोध्यमानस्यऋषिभिरात्मनस्तज्जिघृक्षतः ॥ कर्णौचनिरभिद्येतांदिशःश्रोत्रंगुणग्रहः ॥२२॥

र्देवतागंधंवहतीतितथा अनेनगंधोविषयोदर्शितःघ्राणःइंद्रियं जिघृक्षतःगंधंग्रहीतुमिच्छतः ॥२०॥ निरालोकंप्रकाशशून्यमासीदितिशेषः निर्मक्षिकमितिवदेकवद्भावः तदाआत्मानंदेहंचकारादन्यच्चवस्तुदिदृक्षतः अक्षिणीस्थानं ज्योतिःआदित्योदेवता चक्षुरिंद्रियं ततोगुणस्यरूपस्यग्रहःग्रहणं अनेनरूपंविषयोदर्शितः ॥ २१ ॥ ऋषिभिर्वेदैर्बोध्यमानस्य तत्तुआत्मनःप्रबोधनंग्रहीतुमिच्छतः ततोगुणग्रहः शब्दस्यग्रहणं ॥ २२ ॥ ॥ ॥ ॥ ॥

मृदुत्वंचकाठिन्यंचलघुत्वंचगुरुत्वंचआउष्णत्वमोषदुष्णत्वंचशीततांचेत्यर्थः यद्यप्यत्युष्णत्वमपींद्रियविषयएवतथापितस्यजिघृक्षाभावा दोष्णत्वमित्युक्तं गुर्वुष्णेतिपाठेयणादेशइछांदसः वस्तुनएतान्धर्मान्जिघृक्षतस्त्वङ्निर्भिन्ना त्वगिंद्रियाधिष्ठानंचर्मजातमित्यर्थः तस्यां रोमाणिइंद्रियंमहीरुहाश्चदेवताजाताः वस्तुनिहस्तेनातोलितेलघुत्वगुरुत्वयोर्ज्ञानात्तयोरपित्वगिंद्रियविषयत्वमितिपौराणिकाः तत्रत्व चिअंतर्बहिश्चवातोवृतःआवृत्त्यस्थितः कर्तरिनिष्ठा कथंभूतः त्वचालब्धोगुणः स्पर्शोयेन अयमर्थः त्वगिंद्रियमेवबाहिःकंडूतिसहितंस्प र्शंगृण्हल्लोमशब्देनोच्यते तत्रमहीरुहाणांदेवत्वं अंतर्बहिश्चस्पर्शंगृण्हत्तदेवत्वक्शब्देनोच्यते तत्रवातोदेवता तथाचतृतीयेवक्ष्यति त्व चमस्यविनिर्भिन्नांविविशुर्धिष्ण्यमोषधीः ॥ अंशेनलोमभिःकंडूंयैरसौप्रतिपद्यते ॥ निर्भिन्नान्यस्यचर्माणिलोकपालोऽनिलोऽविशत् ॥

## वस्तुनोमृदुकाठिन्यलघुगुर्वोष्णशीतताम्॥ जिघृक्षतस्त्वङ्निर्भिन्नातस्यांलोममहीरुहाः ॥ तत्रचांतर्बहि र्वातस्त्वचालब्धगुणोवृतः ॥ २३ ॥ हस्तौरुरुहतुस्तस्यनानाकर्मचिकीर्षया ॥ तयोस्तुबलमिंद्रश्चआ दानमुभयाश्रयं ॥ २४ ॥ गतिंजिगीषतःपादौरुरुहातेऽभिकामिकां ॥ पद्भ्यांयज्ञःस्वयंहव्यंकर्मभिःक्रिय तेनृभिः ॥२५॥ निरभिद्यतशिश्नोवैप्रजानंदामृतार्थिनः ॥ उपस्थआसीत्कामानांप्रियंतदुभयाश्रयं ॥ ॥ २६ ॥ उत्सिसृक्षोर्धातुमलंनिरभिद्यतवैगुदं ॥ ततःपायुस्ततोमित्रउत्सर्गउभयाश्रयः ॥ २७ ॥ ॥

प्राणेनांशेनसंस्पर्शंयेनासौप्रतिपद्यतइति तत्रचर्माणीतिचर्मोपलक्षितात्वागित्यर्थः प्राणेनांशेनेतिप्राणवायुव्याप्तेनत्वगिंद्रियेणेत्यर्थः बव्हृ चश्रुतौत्वेएकवांशोनिर्दिष्टः त्वङ्निरभिद्यतत्वचोलोमानिलोमभ्यओषधिवनस्पतयइति ॥२३॥ रुरुहतुर्निभिन्नौ बलमिंद्रियं इंद्रोदेवता तदुभयाश्रयमादानंकर्म ॥ २४ ॥ अभिकामिकामभीष्टांविहितामित्यर्थः पद्भ्यांसहयज्ञोविष्णुरेवस्वयंतदधिष्ठातृरूपेणस्थितः कर्मभिरिति गत्याख्याकर्मशक्तिरिंद्रियमुक्तम् हव्यंक्रियतइतिगतिप्राप्यंयज्ञार्थंद्रव्यंविषयइत्युक्तं नृभिरितिव्यष्टिजीवेष्वपिइयमेवरीतिरितिदर्शयन्नराधि कारित्वंयज्ञादीनांदर्शयति ॥ २५ ॥ प्रजाअपत्यंआनंदोरतिःअमृतंस्वर्गादितदर्थिनः शिश्नःअधिष्ठानंउपस्थंइंद्रियंप्रजापतिश्चासीदितिज्ञे यं तदुभयाश्रयंकामानांसंबंधिप्रियंसुखं ॥ २६ ॥ धातुमलंभुक्तान्नादीनामसारांशंत्यक्तुमिच्छोः गुदपायुमित्रोत्सर्गाअधिष्ठानेंद्रियदे वताविषयाः ॥ २७ ॥ ॥ ॥ ॥ ॥

पुर्य्यांदेहात्पुरोदेहांतराणिआसिसृप्सोःसर्वतोगंतुमिच्छोः निरभिद्यतेत्यनुषंगः अपानतःअपगच्छतः पृथक्कंमरणं नाभ्यादीन्यधिष्ठा
नादीनि नाभ्यांहिप्राणापानयोर्बंधविश्लेषेमृत्युरितिप्रसिद्धं ॥ २८ ॥ अन्नपानानामादित्सोःसंग्रहेच्छोःकुक्षिश्चअंत्राणिचनाड्यश्चास
न् तत्रकुक्षिरधिष्ठानं अंत्राण्यन्नसंग्रहेकरणमिंद्रियस्थानीयं नाड्यस्तुपानसंग्रहे तयोर्नाड्यंत्रवर्गयोःक्रमेणनद्यःसमुद्राश्चदेवते तुष्टिरु
दरभरणंपुष्टिस्तुरसपारिणामतःस्थौल्यं तदाश्रयेतदुभयनिमित्ते तत्रान्नसंग्रहेच्छोःकुक्ष्यंत्रसमुद्रतुष्टयइतिचतुष्टयं पानसंग्रहेच्छोःकुक्षिना
डीनदीपुष्टयइतिविवेकः ॥ २९ ॥ निदिध्यासोःनितरांचिंतयितुमिच्छोः कामोऽभिलाषःहृदयमनश्चंद्रसंकल्पाअधिष्ठानादयः ॥ ३० ॥
तदेवमधिदैवादिभेदंविभज्योक्त्वातदंशभूतानांधात्वादीनांस्वरूपमाह त्वगितिद्वाभ्यां त्वक्स्थूलं चर्मतदुपरिस्थितंसूक्ष्मं त्वगादयोऽस्थ्यं

आसिसृप्सोःपुरःपुर्यानाभिद्वारमपानतः॥ तत्रापानस्ततोमृत्युःपृथक्त्कमुभयाश्रयं ॥ २८ ॥ आदित्सोरन्न
पानानामासन्कुक्ष्यंत्रनाड्यः ॥ नद्यःसमुद्राश्चतयोस्तुष्टिःपुष्टिस्तदाश्रये ॥ २९ ॥ निदिध्यासोरात्ममा
यांहृदयंनिरभिद्यत ॥ ततोमनस्ततश्चंद्रःसंकल्पःकामएवच ॥ ३० ॥ त्वक्चर्ममांसरुधिरमेदोमज्जाऽस्थि
धातवः ॥ भूम्यतेजोमयाःसप्तप्राणोव्योमांबुवायुभिः ॥ ३१ ॥ गुणात्मकानींद्रियाणिभूतादिप्रभवागु
णाः ॥ मनःसर्वविकारात्माबुद्धिर्विज्ञानरूपिणी ॥ ३२ ॥ एतद्भगवतोरूपंस्थूलंतेव्याहृतंमया ॥ मह्या
दिभिश्चावरणैरष्टभिर्बहिरावृतं ॥ ३३ ॥ अतःपरंसूक्ष्मतममव्यक्तंनिर्विशेषणं ॥ अनादिमध्यनिधनं
नित्यंवाङ्मनसःपरं ॥ ३४ ॥ ॥ ॥ ॥ ॥

ताद्दंद्वैकवद्भावेननिर्दिष्टाःसप्तयेधातवस्तेभूम्यप्तेजोमयाः तेषांचपांचभौतिकत्वेऽपिवाय्वाकाशयोराहारादिरूपेणसंवर्धकत्वाभावादेवमुक्तं
॥ ३१ ॥ गुणात्मकानिगुणेषुशब्दादिष्वात्मायेषां विषयाभिमुखस्वभावानीत्यर्थः गुणाःशब्दादयः भूतादिरहंकारस्ततःप्रकर्षेणभवंती
तितथाअहंकारकल्पितशोभनस्वभावाः नतुवस्तुतस्तथेत्यर्थः अत्रहेतुः यतोमनएवसर्वविकाराणामात्मात्मस्वरूपं बुद्धिस्तुतथाभूतार्थवि
ज्ञानरूपिणीनतुपरमार्थग्राहिणीतिवैराग्यार्थमुक्तं अनेनैवबुद्धिमनसोःस्वरूपंचोक्तं ॥ ३२ ॥ उपसंहरति एतदिति प्रकृत्यासहाष्टभिः ॥
॥ ३३ ॥ स्थूलमुक्त्वासूक्ष्मंसमाष्टिलिंगशरीरमाह अतःपरमस्यकारणभूतंसूक्ष्ममतींद्रियं यतःअव्यक्तम् तत्कुतः यतोनिर्विशेषणं अनादि
मध्यनिधनमुत्पत्तिस्थितिलयशून्यं नित्यंसदैकरूपं अपक्षयादिशून्यमित्यर्थः अतएववाक्चमनश्चेतिद्वंद्वैक्यं तस्मात्परम् ॥ ३४ ॥

उपासनार्थंभगवत्यारोपितंरूपद्वयमपवदति अमुनीइति नगृह्णंतिवस्तुतोनांगीकुर्वंति यतोमायासृष्टे ॥ ३५ ॥ यद्रूपगुणकर्मकइतियदु क्तंभगवताब्रह्माणंप्रतितत्प्रपंचयितुंब्रह्मादिरूपाणितत्कर्माणिचाह सइत्यादिनाइत्थंभावेनेत्यतःप्राक्तनेनग्रंथेन सभगवान्ब्रह्मरूपधृक्स न्वाच्यवाचकतयावाचकतयानामानिवाच्यतयारूपाणिक्रियाश्चधत्तेसृजतीत्यर्थः माययासकर्मासव्यापारःसन्वस्तुतस्त्वकर्मकः ॥ ३६ ॥ एतत्प्रपंचयति प्रजापतीनितिसार्धैश्चतुर्भिः द्वितीयांतानांधत्तइत्यनेनान्वयः तत्रप्रजापत्यादीनिनामानितत्तद्वाच्यानिरूपाणितत्तत्क र्माणिचज्ञेयानि पृथक्तत्तदवांतरभेदेन ॥ ३७ ॥ ३८ ॥ गिरीनित्यस्यानंतरंनृपेतिसंबोधनं ॥ ३९ ॥ द्विविधाः स्थावरजंगमरूपेण

## अमुनीभगवद्रूपेमयातेअनुवर्णिते ॥ उभेअपिनगृण्हंतिमायासृष्टेविपश्चितः ॥३५॥ सवाच्यवाचकतयाभगवान्ब्रह्मरूपधृक् ॥ नामरूपक्रियाधत्तेसकर्माकर्मकःपरः ॥३६॥ प्रजापतीन्मनून्देवानृषीन्पितृगणान्पृथक् ॥ सिद्धचारणगंधर्वान्विद्याध्रासुरगुह्यकान् ॥ ३७ ॥ किन्नराप्सरसोनागान्सर्पान्किंपुरुषोरगान् ॥मातृरक्षःपिशाचांश्चप्रेतभूतविनायकान् ॥ ३८ ॥ कूश्मांडोन्मादवेतालान्यातुधानान्ग्रहानपि ॥खगान्मृगान्पशून्वृक्षान्गिरीन्नृपसरीसृपान् ॥ ३९ ॥ द्विविधाश्चतुर्विधायेऽन्येजलस्थलनभौकसः ॥ कुशलाकुशलामिश्राःकर्मणांगतयस्त्विमाः ॥४०॥ सत्वंरजस्तमइतितिस्रःसुरनृनारकाः ॥तत्राप्येकैकशोराजन्भिद्यंतेगतयस्त्रिधा ॥ यदैकैकतरोऽन्याभ्यांस्वभावउपहन्यते ॥४१॥ सएवेदंजगद्धाताभगवान्धर्मरूपधृक् ॥पुष्णातिस्थापयन्विश्वंतिर्यङ्नरसुरात्मभिः ॥ ४२ ॥ ततःकालाग्निरुद्रात्मायत्सृष्टमिदमात्मनः ॥ सन्नियच्छतिकालेनघनानीकमिवानिलः ॥ ४३ ॥

चतुर्विधाःजरायुजांडजस्वेदजोद्भिज्जरूपेण जलस्थलनभांसिओकांसियेषांतानपिधत्तइतिपूर्वेणान्वयः यच्चराज्ञापृष्टंयावत्यःकर्मगतयोयादृशीर्द्विजसत्तमेतितस्यापिप्रसंगादनेनैवोत्तरमाह कुशलाउत्तमाः अकुशलानीचाः मिश्रा इतिपदांतरं मिश्रामध्यमाः कर्मणांपुण्यपापमिश्राणां गतयःफलानि ॥ ४० ॥ सत्वादिभेदेनकर्मगतिवैचित्र्यंप्रपंचयति सत्वमितिसार्द्धेन सत्वादयस्तिस्रोगतयः सुरादिशब्दाऋष्यादीनामुपलक्षणार्थाः अन्याभ्यांगुणाभ्यां स्वभावोगुणः उपहन्यतेअनुविध्यते ॥ ४१ ॥ ब्रह्मरूपेणस्रष्टृत्वमुक्त्वाविष्णुरूपेणपालकत्वमाह सएवभगवांस्तिर्यगाद्यवतारैरिदंविश्वंस्थापयन्पालयन्धर्मरूपेणपुष्णातिभोगैःसंवर्धयति ॥ ४२ ॥ रुद्ररूपेणसंहर्तृत्वमाह ततइति आत्मनःसकाशाद्यदिदंसृष्टंतत्संनियच्छतिसंहरति ॥ ४३ ॥ ॥

कर्तृत्वाद्यपवादेनदशमस्यशुद्धिमाह इत्थंभावेनस्त्रष्टृत्वादिरूपेण तस्माद्वाएतस्मादात्मनआकाशःसंभूतःसोऽकामयतबहुस्यांप्रजायेयेत्या दिश्रुत्याकथितः सूरयस्तुपरंकेवलमेवंरूपेणैवद्रष्टुंनार्हंति ॥ ४४ ॥ तत्किम् यतःअस्यविश्वस्यजन्मादौकर्मणिपरस्येश्वरस्यइत्थंभावःकर्तृत्वं नास्तिश्रुत्याऽपितात्पर्येणनप्रतिपाद्यतेकिंतुअनुविधीयतेअनुवर्ण्यते किमर्थं कर्तृत्वप्रतिषेधार्थं हियतोमाययारोपितंप्रकाशितं तथाचश्रुतिः निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजनं इंद्रोमायाभिःपुरुरूपईयतेइत्याद्याः ॥ ४५ ॥ उक्तमर्थमुपसंहरति अयंत्विति ब्रह्मणःसंबंधीकल्पो महाकल्पोविकल्पोऽवांतरस्तत्सहितःउदाहरणत्वेनसंक्षेपतउक्तः कथंभूतः यत्रमहाकल्पेप्राकृतामहदादिसर्गाःअवांतरकल्पेचवैकृताःस्था

इत्थंभावेनकथितोभगवान्भगवत्तमः ॥ नेत्थंभावेनहिपरंद्रष्टुमर्हंतिसूरयः ॥ ४४ ॥ नास्यकर्मणिजन्मादौप रस्यानुविधीयते ॥ कर्तृत्वप्रतिषेधार्थंमाययारोपितंहितत् ॥४५॥ अयंतुब्रह्मणःकल्पःसविकल्पउदाहृतः ॥ विधिःसाधारणोयत्रसर्गाःप्राकृतवैकृताः ॥ ४६ ॥ परिमाणंचकालस्यकल्पलक्षणविग्रहं ॥ यथापुरस्ताद्व्या ख्यास्येपाद्मंकल्पमथोशृणु ॥ ४७ ॥ शौनकउवाच यदाहनोभवान्सूतक्षत्ताभागवतोत्तमः ॥चचारतीर्थानि भुवस्त्यक्त्वाबंधून्सुदुस्त्यजान् ॥४८॥ कुत्रकौषारवेस्तस्यसंवादोऽध्यात्मसंश्रितः॥ यद्वासभगवांस्तस्मैपृष्ट स्तत्त्वमुवाचह ॥४९॥ ब्रूहिनस्तदिदंसौम्यविदुरस्यविचेष्टितं ॥ बंधुत्यागनिमित्तंचतथैवागतवान्पुनः ॥५०॥

वरादिसर्गाइत्ययंविधिःप्रकारःअन्यैर्महाकल्पादिभिःसाधारणः ॥ ४६ ॥ वक्ष्यमाणंविस्तरंप्रतिजानीते परिमाणंस्थूलंसूक्ष्मंच कल्पस्यलक्षणमियानेवंरूपइतितद्विग्रहमवांतरकल्पंमन्वंतरादिरूपंविभागंचयथावद्विस्तरेणपुरस्तात्तृतीयेस्कंधेव्याख्यास्यामि तत्रपाद्मंकल्पमथोइतिकात्स्न्र्येनव्याख्यायमानंशृणु ॥ ४७ ॥ यदर्थंसृष्ट्यादिनिरूपणंतदेवसाक्षात्श्रोतुकामःकथांतरंपृच्छति यदाहेति भूवःसंबंधीनितिर्थानि यद्वा भुवःक्षेत्राणिचेति ॥ ४८ ॥ कौषारवेर्मैत्रेयस्यतस्यक्षत्तुश्चअध्यात्मज्ञानसंश्रितःसंवादः ॥४९॥ पुनरागतवान्तत्रचनिमित्तंब्रूहि॥५०॥

राज्ञापृष्टइति अयमर्थः यत्यूयंपृच्छथइदमेवराजापिशुकंपृष्टवान् शुकोऽपिविदुरमैत्रेयसंवादंपुरस्कृत्ययेपूर्वैराज्ञाकृताःप्रश्नास्तदनुसारे
णसर्वपुराणार्थमवोचत् तदेवाहंवोऽभिधास्यामितथैवशृणुतेति ॥ ५१ ॥ श्रीमद्भागवतंयेनस्वब्रह्ममुखतोमितं ॥ ब्रह्मनारदयोःप्रोक्तंतंवंदे
गुरुमीश्वरं ॥ १ ॥ यत्सूत्रयंत्रितंविश्वंनरीनर्तिजगत्रयं ॥ संतस्तमेवपृच्छंतुयदत्रस्खलितंमम ॥ २ ॥ द्वितीयस्कंधसंबंधिपदभावार्थदी

सूतउवाच राज्ञापरीक्षितापृष्टोयदवोचन्महामुनिः॥ तद्वोऽभिधास्येशृणुतराज्ञःप्रश्नानुसारतः ॥ ५१ ॥
इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेऽष्टादशसाहस्र्यांसंहितायांपुरुषसंस्थानुवर्णनंनामदशमोऽध्यायः॥
॥१०॥ ॥ ॥ ॥ द्वितीयस्कंधःसमाप्तः ॥ ॥ ॥ ॥ ॥ ॥

पिका॥उद्दीप्यतामियंसद्भिर्यथास्यात्तत्त्वदीपकं॥ ३॥ईक्षंतामिच्छयासंतःक्षमंतांममसाहसं ॥ मयाहिस्वीयबोधायकृतमेतन्नसर्वतः ॥४॥ इति
श्रीभागवतटीकायांश्रीधरस्वामिविरचितायांभावार्थदीपिकायांद्वितीयस्कंधेदशमोऽध्यायः॥१०॥द्वितीयःस्कंधःसमाप्तः श्रीकृष्णार्पणमस्तु

श्रीगणेशायनमः ॥ नमोभगवतेवासुदेवाय ॥ तृतीयेतुत्रयस्त्रिंशदध्यायैःसर्गवर्णनम् ॥ ईशेक्षयागुणक्षोभात्सर्गोब्रह्मांडसंभवः ॥ १ ॥ तत्र
तुप्रथमेऽध्यायेबंधूनूहित्वागतायुषः ॥ निर्गतस्योद्धवेनादौसंवादःक्षत्तुरुच्यते ॥ २ ॥ अथतृतीयस्कंधव्याख्या भगवद्ब्रह्मसंप्रोक्तंसंक्षिप्तंव
र्णितंपुरा ॥ प्राहभागवतंशेषप्रोक्तंविस्तरतःपुनः ॥ ३ ॥ द्वेधाहिश्रीमद्भागवतसंप्रदायप्रवृत्तिः एकतःसंक्षेपतःश्रीनारायणब्रह्मनारदादिद्वा
रेण अन्यतस्तुविस्तरतः शेषसनत्कुमारसांख्यायनादिद्वारेण तत्रद्वितीयेश्रीनारायणब्रह्मसंवादेनसंक्षेपतः चतुःश्लोक्याश्रीभागवतंनिरूपि
तं तदेवब्रह्मनारदसंवादेनदशलक्षणतयाकिंचिद्विस्तरेणोक्तम् तदेवशेषोक्तमतिविस्तरतोवक्तुंतृतीयाद्यारंभःतत्रतृतीयेप्रथमंक्षत्तुर्मैत्रेयसंगमश्च
तुर्भिरध्यायैः ततोऽष्टभिः सविसर्गः सर्गप्रपंचः ततोविसर्गप्रस्तावेनसप्तभिर्वराहावतारः ततएकेनविसर्गसमाहारः तत्प्रसंगेनचतुर्भिःक

श्रीगणेशायनमः श्रीशुकउवाच एवमेतत्पुरापृष्टोमैत्रेयोभगवान्किल ॥ क्षत्त्रावनंप्रविष्टेनत्यक्त्वास्वगृह
मृद्धिमत् ॥ १ ॥ यद्वाअयंमंत्रकृद्वोभगवानखिलेश्वरः ॥ पौरवेंद्रगृहंहित्वाप्रविवेशात्मसात्कृतं ॥२ ॥ राजो
वाच कुत्रक्षत्तुर्भगवतामैत्रेयेणाससंगमः ॥ कदावासहसंवादएतद्वर्णयनःप्रभो ॥३॥ नह्यल्पार्थोदयस्तस्य
विदुरस्यामलात्मनः ॥ तस्मिन्वरीयसिप्रश्नःसाधुवादोपबृंहितः ॥ ४ ॥ सूतउवाच सएवमृषिवर्योऽयं
पृष्टोराज्ञापरीक्षिता ॥ प्रत्याहतंसबहुवित्प्रीतात्माश्रूयतामिति ॥ ५ ॥ श्रीशुकउवाच यदातुराजास्वसु
तानसाधून्पुष्णन्नधर्मेणविनष्टदृष्टिः ॥ भ्रातुर्यविष्ठस्यसुतान्विबंधून्प्रवेश्यलाक्षाभवनेददाह ॥ ६ ॥

पिलावतारः ततोनवभिः कपिलाख्यानमितित्रयस्त्रिंशताध्यायैस्तृतीयस्कंधप्रवृत्तिःतत्रद्वितीयांते परिमाणंचकालस्यकल्पलक्षणविग्रहम् ॥
यथापुरस्ताद्व्याख्यास्येपाद्मंकल्पमथोशृण्वितिप्रतिज्ञातमर्थंविस्तरेणनिरूपयितुमितिहासंप्रस्तौतिभगवान्शुकः एवमितिद्वाभ्यांऋद्धिमत्स
र्वसंपद्भिःसंपूर्णम् ॥ १ ॥ किंचअतिश्लाघ्यंत्यागानर्हमित्याह यद्वैप्रसिद्धंगृहंवःपांडवानांमंत्रकृत्दौत्यकर्तासन्अयंश्रीकृष्णः बुद्धिसन्नि
धानादयमितिनिर्देशः पौरवेंद्रोदुर्योधनःतस्यगृहंहित्वा अनाहूतएवप्रविवेश तत्रहेतुःआत्मसात्कृतमात्मीयत्वेनगृहीतम् ॥ २ ॥ कु
त्रसंगमआसबभूव ॥ ३ ॥ वरीयसिश्रेष्ठे अल्पस्यार्थस्योदयोयस्मात् तथाभूतोनभवति साधुवादेनसतामनुमोदनेनउपबृंहितःसंवर्धितः
यद्वा साधोर्मैत्रेयस्यवादेनउत्तरेणश्लाघितइत्यर्थः ॥ ४ ॥ ५ ॥ यविष्ठस्यकनिष्ठस्यपांडोःविबंधून्पितृहीनान् ॥ ६ ॥ ॥

त्यागानर्हस्यापिगृहस्यत्यागेहेतुत्वेनकौरवापराधानाह यदेत्येकादशभिः एतेषांचतदासक्षत्ताअयादित्येकादशोक्रियासंबंधः कुरुदेवस्ययुधि
ष्ठिरस्यदेव्याःद्रौपद्याःआत्मनःस्नुषायाःस्वीयैरस्त्रैरश्रुभिः स्वकुचकुंकुमानिरिपुस्त्रीणांवातद्भर्तृवधेनहरंत्याः ॥ ७॥ सत्यावलंबस्यसत्याश्रय
स्य वनात्प्रत्यागतस्यसमयेनपूर्वकृतेनदायंयाचमानस्य यत् यदा नअदात्नददौतमोमोहंजुषाणः पुत्रंसेवमानः अविवेकंवा ॥ ८ ॥
यानिवचनानिपुंसांभीष्मादीनाममृतायनानिअमृतस्त्रावीणि राजाधृतराष्ट्रः दुर्योधनोवा उरुबहुनमेने क्षतोनष्टः पुण्यलेशोयस्यसः नसु
स्वकीर्तिधर्मादिहेतुः किंतुराज्यप्राप्तिमात्रहेतुः पुण्यलेशएवासीत् तस्यापिनष्टत्वात् अनादृतवानित्यर्थः ॥ ९ ॥ इदानींविदुरस्यैवकृतं

यदासभायांकुरुदेवदेव्याःकेशाभिमर्शंसुतकर्मगर्ह्यं ॥ नवारयामासनृपःस्नुषायाःस्वास्त्रैर्हरंत्याःकुचकुंकु
मानि ॥७॥ द्यूतेत्वधर्मेणजितस्यसाधोःसत्यावलंबस्यवनागतस्य ॥ नयाचतोऽदात्समयेनदायंतमोजु
षाणोयदजातशत्रोः ॥ ८ ॥ यदाचपार्थप्रहितःसभायांजगद्गुरुर्यानिजगादकृष्णः ॥ नतानिपुंसाममृता
यनानिराजोरुमेनेक्षतपुण्यलेशः ॥ ९ ॥ यदोपहूतोभवनंप्रविष्टोमंत्रायपृष्टःकिलपूर्वजेन ॥ अथाहतन्मं
त्रदृशांवरीयान्यन्मंत्रिणोवैदुरिकंवदंति ॥ १० ॥ अजातशत्रोःप्रतियच्छदायंतितिक्षतोदुर्विषहंतवागः ॥
सहानुजोयत्रवृकोदराहिःश्वसन्रुषायत्त्वमलंबिभेषि ॥ ११ ॥ पार्थांस्तुदेवोभगवान्मुकुंदोगृहीतवान्
सक्षितिदेवदेवः ॥ आस्तेस्वपुर्यांयदुदेवदेवोविनिर्जिताशेषनृदेवदेवः ॥ १२ ॥

पराभवंदर्शयतिषड्भिः यदापूर्वजेनधृतराष्ट्रेणमंत्रायचोपहूतोऽतगृहंप्रविष्टोमंत्रंपृष्टःसन् अथअनंतरंयदाहकिंमंत्रिणोऽद्यापियद्वैदुरिकंविदुर
वाक्यमितिप्रसिद्धंवदंति ॥ १० ॥ तदेवाह अजातशत्रोरितित्रिभिः तवआगः अपराधं सहमानस्य दायंप्रतियच्छदेहि यत्रापराधेअ
नुजैःसहवर्तमानोवृकोदररूपोऽहिः क्रोधेनश्वसन्वर्तते यत्यस्मात्त्वमलमत्यर्थंबिभेषि ॥११॥ ननुममताहशाःपुत्राबहवःसंतीतिगर्वमाकृ
थाइत्याह पार्थांस्तुमुकुंदआत्मीयत्वेनगृहीतवान्सचदेवः तत्रापिभगवान्नतुप्राकृतः किंच सहक्षितिदेवैर्देवैश्चेंद्रादिभिर्वर्तमानः यतोऽसौ
तत्रैवविप्राःदेवाश्चेत्यर्थः स्वपुर्यामेवसुखमास्तेनत्वन्यत्रगतः किंच यदुदेवानांदेवःपूज्यः यतोऽसौतत्रैवयदुप्रवीराइत्यर्थः किंचनृदेवेषुमं
डलेश्वरेषुदिग्विजयंतिप्रकाशंतइतिनृदेवदेवाराजानः विनिर्जिताअशेषानृदेवायेनयतोऽसौतत्रैवसर्वेराजानः अतःपार्थानांदायंदेहीति ॥१२॥

दुर्योधनस्तन्नमन्यतइतिचेतदआह सएषमूर्तोदोषएवगृहान्प्रविष्टआस्ते दोषत्वेहेतुःपुरुषद्विट्श्रीकृष्णद्वेष्टा कोऽसौयंत्वमपत्यमत्यापुष्णासिनत्वपत्यमसौ नपतत्यस्मादितिह्यपत्यंप्राहुः गताश्रीर्यस्मात्सत्वामित्याक्रोशातिअतएनम् अशैवममंगलंआशुत्यज कथंपुत्रस्त्याज्यस्तत्राह कुलस्यकौशलाय त्यजेदेकंकुलस्यार्थइतिहिन्यायः ॥ १३ ॥ इत्यूचिवान् एवमुक्तवान् असौक्षत्ताविदुरः सतांस्पृहणीयंशीलंयस्यसः कर्णदुःशासनशकुनिसहितेनदुर्योधनेन असत्कृतःतिरस्कृतः ॥ १४ ॥ तिरस्कारमाह कइति दासीसुतोह्यत्राह्वानानर्हः जिंह्मश्चकुटिलः जिह्मतामाह यस्यबलिनाअन्नेनपुष्टस्तस्मिन्नेवप्रतीपःप्रतिकूलःपरेषांकार्येवर्तते अतःपुरान्निर्वास्यतांश्वसानःश्वसन्जीवनमात्रशेषइत्यर्थः पाठांतरेश्मशानवदमंगलः ॥ १५ ॥ अत्युल्बणैःकर्णयोर्बाणवत्प्रविशद्भिःपरुषवाक्यैर्मर्मसुताडितोऽपि गतव्यथः तत्रहेतुः मायामुरुबहुमानयन् अहोमायायामाहात्म्यमितितामेवतत्रहेतुंमन्यमानःतन्निःसारणात्पूर्वंस्वयमेवअयात्निर्जगाम किंकृत्वाएतेनूनंम

सएषदोषःपुरुषद्विडास्तेगृहान्प्रविष्टोयमपत्यमत्या ॥ पुष्णासिकृष्णाद्विमुखोगतश्रीस्त्यजाश्वशैवंकुलकौशलाय ॥ १३ ॥ इत्यूचिवांस्तत्रसुयोधनेनप्रवृद्धकोपस्फुरिताधरेण ॥ असत्कृतःसत्स्पृहणीयशीलःक्षत्तासकर्णानुजसौबलेन ॥ १४ ॥ कएनमत्रोपजुहावजिह्मंदास्याःसुतंयद्बलिनैवपुष्टः ॥ तस्मिन्प्रतीपःपरकृत्यआस्तेनिर्वास्यतामाशुपुराच्छ्वसानः ॥ १५ ॥ सइत्थमत्युल्बणकर्णबाणैर्भ्रातुःपुरोमर्मसुताडितोऽपि ॥ स्वयंधनुर्द्वारिनिधायमायांगतव्यथोऽयादुरुमानयानः ॥१६॥ सनिर्गतःकौरवपुण्यलब्धोगजाह्वयात्तीर्थपदःपदानि ॥ अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यांस्वधिष्ठितोयानिसहस्रमूर्तिः ॥ १७ ॥ पुरेषुपुण्योपवनाद्रिकुंजेष्वपंकतोयेषुसरित्सरस्सु ॥ अनंतलिंगैःसमलंकृतेषुचचारतीर्थायतनेष्वनन्यः ॥ १८ ॥ ॥

रिष्यंतिकिंधनुषेतितस्यद्वारिधनुर्निधाय यद्वा भीमादिभिःसंगत्यअस्माभिर्योत्स्यतीतिमाशंकीतिधनुर्निधानम् ॥ १६ ॥ ततोनिर्गतस्यतीर्थाटनप्रकारमाह सइत्यष्टभिः सगजाह्वयान्निर्गतःसन्तीर्थपादोयस्यतस्यहरेःपदानिक्षेत्राणिपुण्यचिकीर्षयाअन्वाक्रमत् प्रत्यपद्यत कौरवाणांपुण्येनलब्धइतितेषांभाग्यमेवतेनरूपेणगतमितिसूचितं उर्व्यांसहस्रमूर्तिर्ब्रह्मरुद्राद्यनेकमूर्तिःसन् तीर्थपात्यानियानिअधिष्ठायस्थितः तानितानिजगामेत्यर्थः ॥ १७ ॥ पुण्यानियान्युपवनादीनितेषुकुंजंलतादिगूढस्थानम् अपंकानितोयानियेषांतेषुसरित्सरस्सुच तीर्थेषुआयतनेषुचक्षेत्रेषु कीदृशेषु अनंतस्यलिंगैर्मूर्तिभिः सम्यगलंकृतेषु अनन्यःएकाकी ॥ १८ ॥ ॥ ॥



॥ २ ॥

किंचगांपर्यटन्व्रतानिचेरेअचरत् मेध्यापवित्राविविक्ताअसंकीर्णावृत्तिर्जीविकायस्य सदाप्लुतः प्रतितीर्थस्नातः अधःशयनंयस्य अवधूतः असंस्कृतदेहः अवधूतवेषोवल्कलादिधारीअतएवस्वैरलक्षितः ॥ १९ ॥ एकस्यैवचक्रंसैन्यंयस्यां एकमेवराजचिन्हंश्वेतातपत्रंयस्यांतां अजितेनश्रीकृष्णेनसहायेन ॥ २० ॥ तत्रप्रभासेपरस्परस्पर्धयानिमित्तभूतयासुहृदांकौरवाणांविनष्टिंविनाशं अशृणोत् परस्परनाशेदृष्टांतः वेणुजंवह्निंसंश्रयतेयद्वनंतद्यथादग्धंभवति तथाप्रत्यक्उद्गमाभिमुखं ॥ २१ ॥ त्रितादीनामेकादशतीर्थानितत्तन्नाम्नाप्रसिद्धानिआसेवितवान् ॥ २२ ॥ द्विजदेवैर्ऋषिभिर्देवैश्चकृतानिअंगमंगंप्रतिवर्ततइतिप्रत्यंगानिआयुधानितेषुमुख्यंचक्रंतेनांकितानिमूर्धन्यहेमकुंभेषु

गांपर्यटन्मेध्यविविक्तवृत्तिःसदाप्लुतोऽधःशयनोऽवधूतः ॥ अलक्षितःस्वैरवधूतवेषोव्रतानिचेरेहरितोषणानि ॥ १९ ॥ इत्थंव्रजन्भारतमेववर्षंकालेनयावद्गतवान्प्रभासं ॥ तावच्छशासक्षितिमेकचक्रामेकातपत्रामजितेनपार्थः ॥ २० ॥ तत्राथशुश्रावसुहृद्विनष्टिंवनंयथावेणुजवन्हिसंश्रयं ॥ संस्पर्धयादग्धमथानुशोचन्सरस्वतींप्रत्यगियायतूष्णीं ॥ २१ ॥ तस्यांत्रितस्योशनसोमनोश्चपृथोरथाग्नेरसितस्यवायोः ॥ तीर्थंसुदासस्यगवांगुहस्ययच्छ्राद्धदेवस्यसआसिषेवे ॥ २२ ॥ अन्यानिचेहद्विजदेवदेवैःकृतानिनानायतनानिविष्णोः ॥ प्रत्यंगमुख्यांकितमंदिराणियद्दर्शनात्कृष्णमनुस्मरंति ॥ २३ ॥ ततस्त्वतिव्रज्यसुराष्ट्रमृद्धंसौवीरमत्स्यान्कुरुजांगलांश्च ॥ कालेनतावद्यमुनामुपेत्यतत्रोद्धवंभागवतंददर्श ॥ २४ ॥ सवासुदेवानुचरंप्रशांतंबृहस्पतेःप्राक्तनयंप्रतीतं ॥ आलिंग्यगाढंप्रणयेनभद्रंस्वानामपृच्छद्भगवत्प्रजानां ॥ २५ ॥ कच्चित्पुराणौपुरुषौस्वनाभ्यपाद्मानुवृत्त्येहकिलावतीर्णौ ॥ आसातउर्व्याःकुशलंविधायकृतक्षणौकुशलंशूरगेहे ॥ २६ ॥

चिन्हितानिमंदिराणियेषुतानिनानाविधानिविष्णोरायतनानिक्षेत्राणितीर्थानिचआसिषेवे येषांचक्रांकितमंदिरवतांदर्शनात् श्रीकृष्णस्मरणं भवति ॥ २३ ॥ अतिव्रज्यअतिक्रम्ययावदुद्धवःप्राप्तस्तावत्स्वयमपियमुनामुपेत्य ॥ २४ ॥ सविदुरःप्राक्तनयंपूर्वशिष्यंनीतिशास्त्रे पाठांतरेप्राक्तोनयोनीतिशास्त्रंयेनतं प्रतीतंप्रख्यातंस्वानांज्ञातीनांभद्रंअपृच्छत् प्रश्नेहेतुः भगवतःप्रजानांपोष्याणां ॥ २५ ॥ प्रथमंतावत् रामकृष्णयोःकुशलंपृच्छति कच्चिदितिप्रश्ने स्वनाभौभवःस्वनाभ्यःपाद्मोब्रह्मा तस्यानुवृत्त्याप्रार्थनयाइहावतीर्णौकुशलमासातेवर्तेते कृतक्षणौदत्तावसरौ सर्वेषांकृतोत्सवावितिवा तयोर्नित्यकुशलत्वेऽपिउक्तविशेषणविशिष्टौशूरसेनस्यगृहेकच्चिदासातेइतिप्रश्नः ॥ २६ ॥

यदूनांकुशलंपृच्छतिनवभिः भामःपूज्यःशौरिर्वसुदेवः यद्वाभामोभगिनीभर्ता कुंतीवसुदेवस्यभगिनीअतोदेवकीपांडोर्भगिनीतिलोकव्य
वहारः वरानर्थान्वदान्यःअत्युदारः वराणांतत्पतीनांतर्पणेनसंतर्पणेनसह ॥ २७ ॥ वरूथाधिपतिःसेनानीःआदिसर्गेपूर्वजन्मनि स्म
रंकामंसंतं अभिलेभेपुत्रंलब्धवती ॥ २८ ॥ सात्वतादीनामाधिपःउग्रसेनः शतपत्रनेत्रः श्रीकृष्णः नृपासनाशांराज्याभिलाषंपरिहृत्य
प्राणभयेनदूरात्स्थितमित्यर्थः ॥ २९ ॥ हेसौम्य हरेःसुतस्तेनसदृक्षःसदृशःसाधुसुखमास्ते गुहंस्वामिकार्तिकेयं अग्रेपूर्वजन्मनियोभ

कच्चित्कुरूणांपरमःसुहृन्नोभामःसआस्तेसुखमंगशौरिः॥ योवैस्वसॄणांपितृवद्ददातिवरान्वदान्योवरतर्पणे
न॥२७॥कच्चिद्वरूथाधिपतिर्यदूनांप्रद्युम्नआस्तेसुखमंगवीरः ॥ यंरुक्मिणीभगवतोभिलेभेआराध्यविप्रा
न्स्मरमादिसर्गे ॥२८॥ कच्चित्सुखंसात्वतवृष्णिभोजदाशार्हकाणामधिपःसआस्ते ॥यमभ्यषिंचच्छतपत्र
नेत्रोनृपासनाशांपरिहृत्यदूरात् ॥२९॥ कच्चिद्धरेःसौम्यसुतःसदृक्षआस्तेऽग्रणीरथिनांसाधुसांबः॥ असूत
यंजांबवतीव्रताढ्यादेवंगुहंयोंऽबिकयाधृतोऽग्रे ॥३०॥क्षेमंसकच्चिद्युयुधानआस्तेयःफाल्गुनाल्लब्धधनूरह
स्यः॥ लेभेंऽजसाधोक्षजसेवयैवगतिंतदीयांयतिभिर्दुरापां॥ ३१॥ कच्चिद्बुधःस्वस्त्यनमीवआस्तेश्वफल्क
पुत्रोभगवत्प्रपन्नः॥ यःकृष्णपादांकितमार्गपांसुष्वचेष्टतप्रेमविभिन्नधैर्यः॥ ३२ ॥ कच्चिच्छिवंदेवकभोज
पुत्र्याविष्णुप्रजायाइवदेवमातुः॥ यावैस्वगर्भेणदधारदेवंत्रयीयथायज्ञवितानमर्थं ॥ ३३ ॥

वान्यागर्भेधृतःतं ॥ ३० ॥ युयुधानःसात्यकिः क्षेमंकुशलमास्ते फाल्गुनादर्जुनाल्लब्धंधनुषोरहस्यंयेन तदीयामधोक्षजसंबंधिनीं ॥३१॥
श्वफल्कपुत्रोऽक्रूरःबुधोविद्वान् अतोभगवंतंप्रपन्नःअनुसृतःअतएवानमीवोनिष्पापः भक्तौलिंगंयोऽचेष्टतव्यलुठत् प्रेम्णाविभिन्नंविदीर्णं
धैर्यंयस्यसः स्वस्तिक्षेममास्ते ॥ ३२ ॥ देवकनामायोभोजस्तस्यपुत्र्यादेवक्याः विष्णुःप्रजापुत्रोयस्यास्तस्याःदेवमातुरदितेरिवकच्चित्शिवं
यज्ञवितानरूपमर्थंत्रयीयथाप्रकाशकतयाबिभर्तितथा दधार ॥ ३३ ॥ ॥ ॥ ॥

सात्वतानामुपासकानांकामान् दोग्धिपूरयतीतिकामदुघः भगवत्त्वेहेतुःयंशब्दस्यशास्त्रस्ययोनिंकारणमामनंतिवेदाः कुतः मनोमयं मन
सःप्रवर्तकं तत्कुतः सत्त्वस्यांतःकरणस्यचतुर्विधस्यतुरीयंतत्त्वंचतुर्थमधिदैवंचित्ताहंकारबुद्धिमनसामंतःकरणभेदानांक्रमेणवासुदेवसंकर्षण
प्रद्युम्नानिरुद्धाह्यधिष्ठातारः मनसश्चशब्दयोनित्वंप्रसिद्धं मनःपूर्वरूपंवागुत्तररूपमिति तथाअन्योंऽतरआत्मामनोमयइतिप्रस्तुत्यतस्य
यजुरेवशिरःऋग्दक्षिणःपक्षःसामोत्तरःपक्षइत्यादिश्रुतेः तथाचशिक्षायां आत्माबुध्यासमेत्यार्थान्मनोयुंक्तेविवक्षया ॥ मनःकायाग्निमा
हंतिसप्रेरयतिमारुतं ॥ मारुतस्तूरसिचरन्मंद्रंजनयतिस्वरमित्यादि ॥ ३४ ॥ अपिस्वित् किंस्वित् अन्येचस्वस्ति चरंतिनिजस्यदेहादिव्य
तिरिक्तस्यात्मनोदैवंश्रीकृष्णमनन्यवृत्त्याएकांतभक्तिभावेनयेसम्यगनुव्रताः अनुसृताःहृदीकश्चसत्यभामायाआत्मजाश्चचारुदेष्णश्चगद
श्चादिर्येषांतेपि ॥ ३५ ॥ इदानींकुरून्पृच्छतिषड्भिः अपिकिम् स्वदोर्भ्यांस्वबाहुवत्वर्तमानाभ्यांविजयाच्युताभ्यामर्जुनकृष्णाभ्यांधर्ममार्गे

अपिस्विदास्तेभगवान्सुखंवोयःसात्वतांकामदुघोनिरुद्धः ॥ यमामनंतिस्महशब्दयोनिंमनोमयंसत्वतुरीय
तत्त्वम् ॥ ३४ ॥ अपिस्विदन्येचनिजात्मदैवमनन्यवृत्त्यासमनुव्रताये ॥ हृदीकसत्यात्मजचारुदेष्णगदादयः
स्वस्तिचरंतिसौम्य ॥ ३५ ॥ अपिस्वदोर्भ्यांविजयाच्युताभ्यांधर्मेणधर्मःपरिपातिसेतुं ॥ दुर्योधनोऽतप्यत
यत्सभायांसाम्राज्यलक्ष्म्याविजयानुवृत्त्या ॥ ३६ ॥ किंवाकृताघेष्वघमत्यमर्षीभीमोऽहिवद्दीर्घतमंव्यमुंच
त् ॥ यस्यांघ्रिपातंरणभूर्नसेहेमार्गंगदायाश्चरतोविचित्रं ॥ ३७ ॥ कच्चिद्यशोधारथयूथपानांगांडीवधन्वोपर
तारिरास्ते ॥ अलक्षितोयच्छरकूटगूढोमायाकिरातोगिरिशस्तुतोष ॥ ३८ ॥ यमावुतस्वित्तनयौपृथायाःपा
र्थैर्वृतौपक्ष्मभिरक्षिणीव ॥ रेमातउद्दायमृधेस्वरिक्थंपरात्सुपर्णाविववज्रिवक्रात् ॥ ३९ ॥ ॥

णधर्मोयुधिष्ठिरः सेतुंधर्ममर्यादांपरिपाति यस्यसभायांविजयानुवृत्त्याजयपरंपरयाअर्जुनस्यसेवयेतिवा एवंभूतंयस्यैश्वर्यमित्यर्थः ॥ ३६ ॥
कृताघेषुकृतापराधेषुस्वकर्तृकमघंदीर्घतमंबहुकालानुचिंतितमहिवदत्यमर्षीभीमः किंव्यमुंचन्नोवा गदायाविचित्रंविविधंमार्गंचरतः
॥ ३७ ॥ रथयूथपानांमध्येयशोधाःकीर्तिधारीयद्वास्वीयानांतेषांकीर्तिप्रदः उपरताअरयोयस्मात् यस्यशरकूटेनबाणसमूहेनगूढःआ
च्छन्नः ॥ ३८ ॥ उतस्वित् किंस्वित् यमौनकुलसहदेवौ रेमातेक्रीडातेइत्यर्थः माद्र्याःसुतावपिपृथायास्तनयौपृथायाःपुत्रैर्वृतौसुपर्णा
विवरेमाते किंकृत्वापरात्दुर्योधनात्स्वरिक्थंस्वीयंराज्यमुद्दायआच्छिद्यवज्रिवक्रात्इंद्रस्यमुखात्स्वरिक्थममृतंगरुडइवेति यद्वासुपर्णावि
वेति यदिद्वौगरुडौअमृतमानयेतांतर्हितद्वत् अक्षिणीवेतिमर्णावादिगणत्वात्संधिः ॥ ३९ ॥ ॥ ॥

पृथायाःकिंनुकुशलंपृच्छेयं यतस्तस्याः पांडुनाविनाप्राणधारणमेवाश्चर्यमित्याह अहोइति म्रियतेजीवतिनचात्याश्चर्यं यतोऽर्भकार्थेध्रि यतेनभोगार्थंतथापित्वाश्चर्यमेवेत्याह तेनतथाभूतेनविना तदेवाह यस्त्विति धनुरेवद्वितीयंसहायोयस्य ॥ ४० ॥ पृथाअर्भकार्थेजीवती तियुक्तमेवेत्याह हेसौम्यतंधृतराष्ट्रंजीवंतमनुशोचामि तत्किमधःपतंतं तत्रहेतुःपरेतायमृतायभ्रात्रेपांडवेतत्पुत्रद्रोहेणयोविदुद्रुहेद्रोहंकृत वान् किंचजीवतोपिभ्रातुर्ममापकृतवानित्याह येनसुहृत्भ्राताअहंस्वपुर्याःसकाशान्निर्यापितःविवासितः ॥ ४१ ॥ अहोखलुविस्मयो जानतोपितस्यैवंदुश्चेष्टितंयतस्त्वंसाधुरपिदुःखंप्रापितोसीत्यतआह सोऽहंहरेःप्रसादात्तस्यपदवींमाहात्म्यंपश्यन्गतविस्मयः अत्रभूतलेना न्योपलक्ष्यःगूढःसन्सुखंविचरामि कथंभूतस्यमर्त्यविडंबनेनऐश्वर्याच्छादकेनमानुष्यानुकरणेननृणांदृशश्चित्तवृत्तीः चालयतः भ्रामय

**अहोपृथाऽपिध्रियतेऽर्भकार्थेराजर्षिवर्येणविनाऽपितेन ॥ यस्त्वेकवीरोऽधिरथोविजिग्येधनुर्द्वितीयःककुभश्चतस्रः ॥ ४० ॥ सौम्यानुशोचेतमधःपतंतंभ्रात्रेपरेतायविदुद्रुहेयः ॥ निर्यापितोयेनसुहृत्स्वपुर्याअहंस्वपुत्रान्समनुव्रतेन ॥ ४१ ॥ सोऽहंहरेर्मर्त्यविडंबनेनदृशोनृणांचालयतोविधातुः ॥ नान्योपलक्ष्यःपदवींप्रसादाच्चरामिपश्यन्गतविस्मयोऽत्र ॥४२॥ नूनंनृपाणांत्रिमदोत्पथानांमहींमुहुश्चालयतांचमूभिः ॥ वधात्प्रपन्नार्तिजिहीर्षयेशोऽप्युपैक्षताघंभगवान्कुरूणां ॥ ४३ ॥ अजस्यजन्मोत्पथनाशनायकर्माण्यकर्तुर्ग्रहणायपुंसां ॥ नन्वन्यथाकोऽर्हतिदेहयोगंपरोगुणानामुतकर्मतंत्रम् ॥ ४४ ॥ ॥ ॥ ॥**

तः ॥ ४२ ॥ ननुहरेःकिमेवंलीलयायेनस्वभक्तानांवनवासादिक्लेशाभवंति स्वस्यचदौत्येबंधनोद्यमादिपराभवःतद्वरंतेषामपराधानंतरमेव हननंनापराधोपेक्षेत्यतआह नूनंनिश्चितंत्रिभिर्मदैरुत्पथानामुद्धतानांवधाद्धेतोः प्रपन्नानामार्तिजिहीर्षयाईशः अघसमयएवहंतुंसमर्थो पिकुरूणामघमुपैक्षत तदानीमेवतेषांवधेसर्वदुष्टराजवधोनस्यादित्याशयेनेत्यर्थः विद्यामदोधनमदस्तथैवाभिजनोमदः ॥ एतेमदामदां धानांतएवहिसतांदमाः इतित्रयोमदाः ॥ ४३ ॥ सर्वदुर्वृत्तवधाद्यर्थमेवभगवतोजन्मकर्माणिनान्यथेतिकैमुत्यन्यायेनाह अजस्यापिजन्मअकर्तुरपिकर्माणिपुंसांग्रहणायकर्मसुप्रवृत्तये अन्यथानचेदेवंतर्हिभगवतोजन्मादिकथातावदास्तां कोवान्योपिगुणानांपरोगुणातीतोदेहयोगंकर्मविस्तारंवाऽर्हतीति ॥ ४४ ॥ ॥ ॥ ॥ ॥

तस्मादेवंभूतांचित्यमायाविनोदस्यकथांकथयेत्याह तस्यप्रपन्नायेऽखिललोकपालाः तेषामन्येषांचस्वीयेऽनुशासनेस्थितानामर्थायप्रयो
जनाययदुषुजातस्य तीर्थंसंसारतारिणीकीर्तिर्यस्येति ॥ ४५ ॥ इतितृतीयस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ द्वितीयेकृ
ष्णाविश्लेषादनुशोचन्नथोद्धवः ॥ क्षत्त्रेबालचरित्राणिकृष्णस्यावर्णयच्छ्वसन् ॥ १ ॥ तदेवंप्रियवार्तांपृष्टस्योद्धवस्यश्रीकृष्णविरहौत्कंठ्यावेशेन
प्रतिवचनासामर्थ्यमाहषड्भिः इतीति स्मारितईश्वरोयस्य ॥ १ ॥ एतदेवकैमुत्यन्यायेनप्रपंचयति यइतिद्वाभ्यां यःपंचवर्षोऽपिबाललीलयेतिकृष्णंकंचित्परिकल्प्यकल्पितैरेवसाधनैःपरिचर्यांकुर्वन्प्रातर्भोजनार्थंप्रार्थितोऽपितद्भोजनंनैच्छत् ॥ २ ॥ जरसंवृद्धत्वंगतःप्राप्तः

तस्यप्रपन्नाखिललोकपानामवस्थितानामनुशासनेस्वे ॥ अर्थायजातस्ययदुष्वजस्यवार्तांसखेकीर्तयतीर्थकीर्तेः ॥ ४५ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविदुरोद्धवसंवादेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥
श्रीशुकउवाच इतिभागवतःपृष्टःक्षत्त्रावार्तांप्रियाश्रयाम् ॥ प्रतिवक्तुंनचोत्सेहऔत्कंठ्यात्स्मारितेश्वरः ॥ १ ॥ यःपंचहायनोमात्राप्रातराशाययाचितः ॥ तन्नैच्छद्रचयन्यस्यसपर्यांबाललीलया ॥ २ ॥ सकथंसेवयातस्यकालेनजरसंगतः ॥ पृष्टोवार्तांप्रतिब्रूयाद्भर्तुःपादावनुस्मरन् ॥ ३ ॥ समुहूर्तमभूत्तूष्णींकृष्णांघ्रिसुधयाभृशं ॥ तीव्रेणभक्तियोगेननिमग्नःसाधुनिर्वृतः ॥ ४ ॥ पुलकोद्भिन्नसर्वांगोमुंचन्मीलद्दृशाशुचः ॥ पूर्णार्थोलक्षितस्तेनस्नेहप्रसरसंप्लुतः ॥ ५ ॥ शनकैर्भगवल्लोकान्नृलोकंपुनरागतः ॥ विमृज्यनेत्रेविदुरंप्रत्याहोद्धवउत्स्मयन् ॥ ६ ॥ उद्धवउवाच कृष्णद्युमणिनिम्लोचेगीर्णेष्वजगरेणह ॥ किंपुनःकुशलंब्रूयांगतश्रीषुगृहेष्वहं ॥ ७ ॥

॥ ३ ॥ श्रीकृष्णांघ्रिसुधयासाधुनिर्वृतः तस्यामेवतीव्रेणविवशत्वापादकेनभक्तियोगेनभृशंनिमग्नश्च ॥ ४ ॥ पुलकैरुद्भिन्नानिउत्जृंभितानिसर्वाण्यंगानियस्यमीलंत्यादृशाशुचःअश्रूणि मुंचन् तेनविदुरेणपूर्णार्थःकृतार्थोलक्षितःयतोभगवतियःस्नेहःतस्यप्रसरःपूरःतस्मिन्संप्लुतोनिमग्नः ॥ ५ ॥ भगवानेवलोकः तस्मात् नृलोकंदेहानुसंधानमुत्स्मयन् यदुकुलसंहारादिभगवच्चातुर्यस्मरणेनाविस्मयंप्राप्नुवन् ॥ ६ ॥ श्रीकृष्णविरहेणसंतप्यमानःप्रत्याह श्रीकृष्णएवद्युमणिःसूर्यःतस्यनिम्लोचेअस्तमयेसति अजगरेणकालमहासर्पेणगीर्णेषुनिगिलितेषुनोगृहेषुत्वत्पृष्टानांबंधूनांकिंनुकुशलंब्रूयाम् ॥ ७ ॥ ॥ ॥ ॥

अनुशोचन्नाह दुर्भगोभाग्यहीनः येसहवसंतोपिश्रीहरिरयमितिनविदुः यथाक्षीरसमुद्रेजातमुडुपंतदातत्रत्यामीनाः केवलंकमनीयःक
श्चिज्जलचरइत्येवंविदुः नत्वमृतमयइतितद्वत् यद्वाजलेप्रतिबिंबितंचंद्रंयथेति ॥ ८ ॥ भाग्यहीनत्वादेवनविदुः नतुज्ञानसामग्र्यभावादि
त्याह इंगितंचित्तस्थंजानंतीतितथा पुरुअतिशयेनप्रौढानिपुणाः एकस्मिन्नेवस्थानेआरमंतीतथा एवंभूताअपिभूतानामावासमीश्वरं
संतंसात्वतामृषभंसात्वतश्रेष्ठममन्यत ॥ ९ ॥ येयादवादेवमाययास्पृष्टाव्याप्ताः यादवोऽयमस्मद्बंधुरितिवदंति येचाशिशुपालादयोऽसदेवा
न्यद्वैरमाश्रिताः निंदंति तेषांवाक्यैरात्मनिहरौउप्तात्मनोनिक्षिप्तचित्तस्यमादृशस्यबुद्धिर्नभ्राम्यतेमोहंनप्राप्यते अन्येतुमूढाएवेत्यर्थः ॥
॥ १० ॥ कोसौहरिरित्यपेक्षायामाह प्रदर्श्येति नतप्ततपोयैः अतोवितृप्तादृशोयेषांतेषां स्वबिंबंश्रीमूर्तिमेतावंतंकालंदर्शयित्वायोऽतर्हि

**दुर्भगोबतलोकोयंयदवोनितरामपि ॥ येसंवसंतोनविदुर्हरिंमीनाइवोडुपम् ॥ ८ ॥ इंगितज्ञाःपुरुप्रौढा एकारामाश्चसात्वताः ॥ सात्वतामृषभंसर्वभूतावासममंसत ॥ ९ ॥ देवस्यमाययास्पृष्टायेचान्यदसदाश्रिताः ॥ भ्राम्यतेधीर्नतद्वाक्यैरात्मन्युप्तात्मनोहरौ ॥ १० ॥ प्रदर्श्यातप्ततपसामवितृप्तदृशांनृणां ॥ आदायांतरधाद्यस्तुस्वबिंबंलोकलोचनम् ॥ ११ ॥ यन्मर्त्यलीलौपयिकंस्वयोगमायाबलंदर्शयतागृहीतं ॥ विस्मापनंस्वस्यचसौभगर्द्धेःपरंपदंभूषणभूषणांगं ॥ १२ ॥ यद्धर्मसूनोर्बतराजसूयेनिरीक्ष्यदृक्स्वस्त्ययनंत्रिलोकः ॥ कार्त्स्न्येनचाद्येहगतंविधातुरर्वाक्सृतौकौशलमित्यमन्यत ॥ १३ ॥ यस्यानुरागप्लुतहासरासलीलाऽवलोकप्रतिलब्धमानाः ॥ व्रजस्त्रियोदृग्भिरनुप्रवृत्तधियोवतस्थुःकिलकृत्यशेषाः ॥ १४ ॥**

तवान् लोकस्यलोचनमादायआच्छिद्यतादृशस्यान्यस्यविलोकनीयस्याभावात् ॥ ११ ॥ तदेवबिंबंवर्णयतित्रिभिः यन्मर्त्यलीलासुऔ
पयिकंयोग्यं स्वस्यापिविस्मयजनकं यतः सौभगर्द्धेः सौभाग्यातिशयस्य परमंपदंपराकाष्ठा भूषणानांभूषणान्यंगानियस्मिन् ॥ १२ ॥
दृशांस्वस्त्ययनंपरमानंदकरं त्रिभुवनस्थोलोकः प्राणिमात्रम् अद्यइदानींमिहबिंबे अर्वाक्सृतौअर्वाचीनसंसारनिर्माणेमनुष्यनिर्माणेवा
यत्कौशलंनैपुणंतत्कार्त्स्न्येनगतमुपक्षीणं नातःपरंतस्यकौशलमस्तीत्येवंमेने तन्मूर्तौविधातुःसृज्यत्वाभावेऽपिलोकदृष्टिरियमुक्ता ॥ १३ ॥
अनुरागेणप्लुतोव्याप्तः हासः रासोविनोदश्च लीलावलोकश्चतैः स्वकृतहासाद्यनंतरं प्रतिलब्धोमानोयाभिस्तादृग्भिःसह अनुप्रवृत्तागच्छं
तंतमेवानुगताधियोयासांताः कृत्येशेषोयासांताः असमापितकृत्याएवतस्थुः ॥ १४ ॥

एवंभूतबिंबदर्शनेकारणमाह स्वीयान्येवशांतान्यशांतानिचरूपाणि तत्रशांतरूपेषुइतरैःरशांतैर्दैत्यादिभिः पीड्यमानेषुअनुकंपितःकृ
तानुकंपःआत्मायस्य अजोपिजातःआविर्भूतः महाभूतरूपेणनित्यसिद्धएवाग्निर्यथाकाष्ठेष्वाविर्भवतितद्वत् अजस्यजन्मनिहेतुः महान्म
हत्तत्वमंशःकार्यलेशोयस्याव्यक्तस्यतन्महदंशं तद्युक्तइति ॥ १५ ॥ ननुकुतोऽसौपरावराणामीशःपारतंत्र्यप्रतीतेस्तत्राह द्वाभ्यां माम
प्येतद्दुर्वितर्क्यंदुर्घटंचखेदयति तदेवाह वसुदेवगेहेबंधनागारेयज्जन्मनोविडंबनंअनुकरणं नतुनृसिंहवदकस्मादाविर्भावः कंसभया
दिवनिलीयव्रजेवासश्च कालयवनादिरिपुभयादिवपुरान्मथुरायाः व्यवात्सीत् अपलायन् ॥ १६ ॥ एतच्चहरेश्चरितंस्मरतोममचेतःक

स्वशांतरूपेष्वितरैःस्वरूपैरभ्यर्द्यमानेष्वनुकंपितात्मा ॥ परावरेशोमहदंशयुक्तोह्यजोऽपिजातोभगवान्य
थाग्निः ॥ १५ ॥ मांखेदयत्येतदजस्यजन्मविडंबनंयद्वसुदेवगेहे ॥ व्रजेचवासोऽरिभयादिवस्वयंपुराद्व्य
वात्सीद्यदनंतवीर्यः ॥१६ ॥ दुनोतिचेतःस्मरतोममैतद्यदाहपादावभिवंद्यपित्रोः ॥ तातांबकंसादुरुशंकि
तानांप्रसीदतंनोऽकृतनिष्कृतीनां ॥ १७ ॥ कोवाअमुष्यांघ्रिसरोजरेणुंविस्मर्तुमीशीतपुमान्विजिघ्रन् ॥
योविस्फुरद्भ्रूविटपेनभूमेर्भारंकृतांतेनतिरश्चकार ॥ १८ ॥ दृष्टाभवद्भिर्ननुराजसूयेचैद्यस्यकृष्णंद्विषतो
पिसिद्धिः ॥ यांयोगिनःसंस्पृहयंतिसम्यक्योगेनकस्तद्विरहंसहेत ॥ १९ ॥ तथैवचान्येनरलोकवीराय
आहवेकृष्णमुखारविंदं ॥ नेत्रैःपिबंतोनयनाभिरामंपार्थास्त्रपूताःपदमापुरस्य ॥ २० ॥ ॥

र्मभूतं दुनोतिव्यथयति तदेवदर्शयति यदाहेति हेतातहेअंब युवांप्रसीदतं प्रसादंकुरुतं नकृतानिष्कृतिःशुश्रूषणंयैस्तेषांनोऽस्माकमिति
बहुवचनंतुरामाद्यभिप्रायं ॥ १७ ॥ ननुतर्ह्यंनीश्वरएवकिंनस्यात् तवतुश्रद्धामात्रमेतत्तत्राहत्रिभिः कोवाअंघ्रिसरोजेयोरेणुस्तमपिविजि
घ्रन्सेवमानः पुमान् विस्मर्तुमीशीतशक्नुयात् विस्फुरन्भ्रूविटपः भ्रूलता सएवकृतांतस्तेन ॥ १८ ॥ नचतस्येश्वरत्वंसाधनीयंभवद्भिर
पिदृष्टत्वादित्याह दृष्टेति यांसिद्धिंसम्यक्योगेनप्राप्तुमिच्छंति ॥ १९ ॥ आहवेयुद्धेपार्थस्यास्त्रैःपूताःनिष्पापाःसंतइति ॥ २० ॥

तदेवंपरमैश्वर्येसत्यपियदुग्रसेनानुवर्तित्वंतत्पुनरस्मानत्यंतंव्यथयतीत्याह स्वयंतुयएवंभूतस्तस्यतत्कैंकर्यंनोऽस्मान्विग्लापयतीत्युत्तरेणा न्वयः नसाम्यातिशयौयस्ययमपेक्ष्यान्यस्यसाम्यमतिशयश्चनास्तीत्यर्थः तत्रहेतवः त्र्यधीशः त्रयाणांपुरुषाणांलोकानांगुणानांवाईशः स्वाराज्यलक्ष्म्यापरमानंदस्वरूपसंपत्यैवप्राप्तसमस्तभोगः बलिंकरं अर्हणंवाहरद्भिः समर्पयद्भिः चिरकालीनैर्लोकपालैः किरीटाग्रेणई डितंस्तुतंपादपीठंयस्य प्रणमतांकिरीटसंघट्टनध्वनिरेवस्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥ अंगविदुर भृतान्भृत्यान् उग्रसेनेयत्किंकरत्वंतदे वाह परमेष्ठिधिष्ण्येराजासनेनिषण्णं आसीनंस्वयंतिष्ठन् हेदेवावधारयेतिन्यबोधयत् विज्ञापितवान् ॥ २२ ॥ एवमनुवृत्तिःकृपयैवेतिसूच यन्नपकारिष्वपितस्यकृपालुतांदर्शयन्नाह अहोआश्चर्यंकृपालुतायाः हंतुमिच्छयाऽपिस्तनयोःसंभृतंकालकूटंविषंयमपाययत् बकीपुतना

**स्वयंत्वसाम्यातिशयस्त्र्यधीशःस्वाराज्यलक्ष्म्याप्तसमस्तकामः॥बलिंहरद्भिश्चिरलोकपालैःकिरीटकोटचे डितपादपीठः ॥२१॥ तत्तस्यकैंकर्यमलंभृतान्नोविग्लापयत्यंगयदुग्रसेनम्॥तिष्ठन्निषण्णंपरमेष्ठिधिष्ण्येन्य बोधयद्देवनिधारयेति॥२२॥अहोबकीयंस्तनकालकूटंजिघांसयाऽपाययदप्यसाध्वी॥लेभेगतिंधात्र्युचितां ततोऽन्यंकंवादयालुंशरणंव्रजेम ॥२३॥ मन्येऽसुरान्भागवतांस्त्र्यधीशेसंरंभमार्गाभिनिविष्टचित्तान् ॥ ये संयुगेऽचक्षतताार्क्ष्यपुत्रमंसेसुनाभायुधमापतंतम् ॥ २४ ॥ वसुदेवस्यदेवक्यांजातोभोजेंद्रबंधने ॥ चिकी र्षुर्भगवानस्याःशमजेनाभियाचितः ॥ २५ ॥ ॥ ॥**

असाध्वीदुष्टाऽपि धात्र्यायशोदायाःउचितांगतिंलेभे भक्तवेषमात्रेणयःसद्गतिंदत्तवानित्यर्थः ततोऽन्यंकंवाभजेम ॥ २३ ॥ ननुभागवता नेवभगवाननुगृह्णातीतिप्रसिद्धंसत्यं असुरानप्यहंभागवतानेवमन्ये यतोभागवताइवतेपिभगवद्ध्यानाभिनिवेशेनभगवंतमपरोक्षंपश्यं तीत्याह संरंभःक्रोधावेशःतेनमार्गेणाभिनिविष्टंचित्तंयेषांतान् अतएवयेसंग्रामे तार्क्ष्यःकश्यपः तस्यपुत्रंगरुडमंसेस्कंधेसुनाभायुधश्च क्रायुधोहरिर्यस्यतं अचक्षतापश्यन् तस्मात्तेष्वप्यनुग्रहोयुक्तएवेत्यर्थः वक्ष्यतिच तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत्इति ॥ २४ ॥ इदानींतस्यांतर्धानप्रकारंवक्तुमादितआरभ्यतच्चरितंसंक्षेपतःकथयति वसुदेवस्यभार्यायांजातः भोजेंद्रः कंसः तस्यबंधनागारे अस्याः पृथिव्याःशंसुखंस्वयंचिकीर्षुःअजेनब्रह्मणाचयाचितःसन् ॥ २५ ॥ ॥ ॥ ॥

पित्राहेतुभूतेननंदव्रजमितः गतः समाः संवत्सरान् गूढार्चिर्गुप्ततेजाः ॥ २६ ॥ व्याहरत् आक्रीडत् कूजद्भिर्द्विजैःपक्षिभिः संकुलिताङ्घ्रि
पाअंघ्रिपायस्मिन् ॥ २७ ॥ रुदन्निवेतिइवशब्दस्ययथायोगंसर्वत्राप्यन्वयः मुग्धोबालश्चयः सिंहः तद्वदवलोकनंयस्यसः ॥ २८ ॥ स
एवाधिकंवयः प्राप्तःसन् गोधनंचारयन् कथंभूतंगोधनं लक्ष्म्याःशोभादिसंपदोनिकेतनं सितागोवृषायस्मिन् नानावर्णेगोसंघे रणन्श
ब्दंकुर्वन्वेणुर्यस्य अरीरमत्रमयामास ॥ २९ ॥ व्यनुदत्जघान क्रीडनकान्तृणादिनिर्मितान् सिंहादीन्यथा ॥ ३० ॥ विपन्नान्मृतान्गो
पान् गावइतिगाश्चोत्थाप्यतदेवतोयंप्रकृतिस्थितंनिर्विषम् ॥ ३१ ॥ इंद्रपूजाभंगेनकृतागवांपूजैवगोसवस्तेनगोपराजंनंदंवित्तस्यचेतिच

ततोनंदव्रजमितःपित्राकंसाद्विबिभ्यता ॥ एकादशसमास्तत्रगूढार्चिःसबलोऽवसत् ॥२६॥ परीतोवत्सपै
र्वत्सांश्चारयन्व्याहरद्विभुः ॥ यमुनोपवनेकूजद्द्विजसंकुलितांघ्रिपे ॥२७॥ कौमारींदर्शयंश्चेष्टांप्रेक्षणीयांव्र
जौकसाम् ॥ रुदन्निवहसन्मुग्धबालसिंहावलोकनः ॥२८॥ सएवगोधनंलक्ष्म्यानिकेतंसितगोवृषं ॥ चारय
न्ननुगान्गोपान्रणद्वेणुररीरमत् ॥२९॥ प्रयुक्तान्भोजराजेनमायिनःकामरूपिणः ॥ लीलयाव्यनुदत्तांस्ता
न्बालःक्रीडनकानिव ॥३०॥ विपन्नान्विषपानेनविगृह्यभुजगाधिपम् ॥ उत्थाप्यापाययद्गावस्तत्तोयंप्रकृति
स्थितं ॥३१॥ अयाजयद्गोसवेनगोपराजंद्विजोत्तमैः ॥ वित्तस्यचोरुभारस्यचिकीर्षन्सद्व्ययंविभुः ॥३२॥ वर्षतीं
द्रेव्रजःकोपाद्भग्नमानेऽतिविव्हलः ॥ गोत्रलीलातपत्रेणत्रातोभद्रानुगृण्हता ॥३३॥ शरच्छशिकरैर्मृष्टंमानय
न्रजनीमुखं ॥ गायन्कलपदंरेमेस्त्रीणांमंडलमंडनः ॥ ३४ ॥ इ० भा० तृ० द्वितीयोध्यायः ॥ २ ॥ उद्धव
उवाच ततःसआगत्यपुरंस्वपित्रोश्चिकीर्षयाशंबलदेवसंयुतः ॥ निपात्यतुंगाद्रिपुयूथनाथंहतंव्यकर्षद्व्यसु
मोजसोर्व्याम् ॥ १ ॥ सांदीपनेःसकृत्प्रोक्तंब्रह्माधीत्यसविस्तरं ॥ तस्मैप्रादाद्वरंपुत्रंमृतंपंचजनोदरात् ॥ २ ॥

कारादिंद्रस्यमानभंगंकुर्वन्नुरुभारस्यअतिसमृद्धस्य ॥ ३२ ॥ कोपाद्वर्षति गोत्रःपर्वतएवलीलातपत्रंतेन हेभद्र ॥ ३३ ॥ मृष्टमुज्वलंस्त्री
णांमंडलंमंडयतीतितथा ॥ ३४ ॥ इतितृतीयेटीकायांद्वितीयोऽध्यायः ॥ २ ॥ ॥ तृतीयेमथुरामेत्यव्रजात्कंसवधादिकं ॥ यत्कृतंद्वा
रकायांचकृष्णेनतदवर्णयत् ॥ १ ॥ शमित्यव्ययं पित्रोःसुखस्यचिकीर्षयेत्यर्थः तुंगात्राजमंचात्रिपुयूथानांनाथंकंसं व्यसोरपिविकर्षणं
पित्रोःसुखार्थं ॥ १ ॥ ब्रह्मवेदंसविस्तरंषडंगादिसहितम् पंचजनोदरविदारणद्वारापुत्रमानीयेत्यर्थः ॥ २ ॥ ॥

भीष्मककन्ययारुक्मिण्यायेराजानःसमाहुताः ह्रस्वत्वमार्षं समाहृताइतिपाठेआकृष्टाइत्यर्थः केनसाधनेन श्रियोलक्ष्म्याःसवर्णेन समानेनरूपेण यद्यपितयाकेवलंश्रीकृष्णएवाहूतःनसर्वेतथापितस्यालावण्यंतेषामागमनेहेतुरितितयैवाहूताइत्युच्यते एषांमिषतांपश्यतांमूर्ध्निपदंदधत् तयासहगांधर्ववृत्यापरस्परसमयरूपया बुभूषयाभवितुमिच्छयाजहार कथंभूतांस्त्रभागंलक्ष्म्यंशत्वात् तयास्वात्मनोऽर्पितत्वाच्च सुपर्णः सुपतनः यद्वासुपर्णइवस्वभागंसुधामित्यर्थः यद्वाश्रियः रुक्मिण्याःसमानंवर्णद्वयंवाचकंयस्यसः श्रियासवर्णोरुक्मी तेनसमाहूताः शिशुपालादयः किमर्थंभीष्मककन्ययासहतेषांबुभूषयाभूतिर्भवत्वित्येतदर्थं तत्रशिशुपालस्याह्वानंवरत्वेनबुभूषया जरासंधादीनांतद्विवाहोत्सवेन शेषंपूर्ववत् ॥ ३ ॥ ककुद्मतोवृषभान्अविद्धनासिकान् विद्धनासिकान्कृत्वेतित्रा तैर्वृषभैः तद्दमनेन चभग्नोमानोये

समाहुताभीष्मककन्ययायेश्रियःसवर्णेनबुभूषयैषाम् ॥ गांधर्ववृत्त्यामिषतांस्वभागंजह्रेपदंमूर्ध्निदधत्सुपर्णः ॥ ३ ॥ कुकुद्मतोविद्धनसोदमित्वास्वयंवरेनाग्नजितीमुवाह ॥ तद्भग्नमानानपिगृध्यतोऽज्ञान्जघ्नेऽक्षतःशस्त्रभृतःस्वशस्त्रैः ॥४॥ प्रियंप्रभुर्ग्राम्यइवप्रियायाविधित्सुरार्च्छद्द्युतरुंयदर्थे ॥ वज्र्याद्रवत्तंसगणोरुषांऽधःक्रीडामृगोनूनमयंवधूनां ॥५॥ सुतंमृधेखंवपुषाग्रसंतंदृष्ट्वासुनाभोन्मथितंधरित्र्या ॥ आमंत्रितस्तत्तनयायशेषंदत्वातदंतःपुरमाविवेश ॥६॥ तत्राहृतास्तानरदेवकन्याःकुजेनदृष्ट्वाहरिमार्तबंधुं ॥ उत्थायसद्योजगृहुःप्रहर्षव्रीडानुरागप्रहितावलोकैः ॥७॥ आसांमुहूर्तएकस्मिन्नानागारेषुयोषितां ॥ सविधंजगृहेपाणीननुरूपःस्वमायया ॥ ८ ॥ तास्वपत्यान्यजनयदात्मतुल्यानिसर्वतः ॥ एकैकस्यांदशदशप्रकृतेर्विबुभूषया ॥ ९ ॥

षांतथापितान् गृध्यतःकामयमानान्अतएवाज्ञान्शस्त्रभृतोराज्ञः तच्छस्त्रैरक्षतएवजघान ॥ ४ ॥ यदाअदित्याःकुंडलेदातुंस्वर्गंगतस्तदाप्रभुःस्वतंत्रोपिग्राम्यःस्त्रीपरतंत्रइव प्रियायाःसत्यभामायाः प्रियंविधातुमिच्छुः द्युतरुंपारिजातमानीतवान् यदर्थेयन्निमित्तंतंकृष्णंवज्रीस्त्रीप्रेरितः योद्धुमन्वधावत् स्वकार्यसाधकेनतेनयुद्धोद्यमस्तस्यायुक्तएवेत्याह क्रीडामृगइति अयंवज्री ॥ ५ ॥ सुनाभेनचक्रेणउन्मथितंहतंसुतंभौमंदृष्ट्वा तस्यमात्राधरित्र्याभूम्या आमंत्रितःप्रार्थितःसन् तस्यतनयायभगदत्ताय हृतशेषंराज्यंदत्वा ॥ ६ ॥ तत्रांतःपुरेकुजेनभौमेन याआहृतास्ताः प्रहर्षश्चव्रीडाचअनुरागश्चतैः प्रहिताःप्रेरिताः येऽवलोकास्तैर्जगृहुःस्वीकृतवत्यः ॥ ७ ॥ आसांयोषितांपाणीन्तत्तदनुरूपःसन्सविधंविवाहोचितप्रकारसहितंयथाभवति ॥ ८ ॥ सर्वतःसर्वैर्गुणैःस्वतुल्यानि प्रकृतेर्मायायाविविधंभवनंविस्तारःतदिच्छया यद्वा प्रकृतेर्हेतोर्विविधंभवितुमिच्छया ॥ ९ ॥

कालः कालयवनः रुंधत आवृण्वतः मुचुकुंदभीमादिभिर्निमित्तमात्रैः स्वयमेव अजीघनत् घातितवान् तेन च स्वपुंसां तेजः प्रभावं कीर्तिंवा दत्तवान् ॥ १० ॥ शंबरद्विविदबल्वलानन्यानपि कांश्चित्प्रद्युम्नरामादिभिर्घातयत् अघातयत् घातयन्निति वा पाठः दंतवक्रादीन् स्वयमवधीत् ॥ ११ ॥ नृपानघातयदित्यनुषंगः कथंभूतान् कुरुक्षेत्रमापततां गच्छतां येषां बलैः सैन्यैः भूः सर्वापि चचाल चकंपे ॥ १२ ॥ सकृष्णः हताश्रीः आयुश्च यस्य भग्नौ ऊरू यस्य तम् उर्व्यां शयानं पश्यन्नपि न ननंद संतोषं न प्राप ॥ १३ ॥ अनभिनंदनप्रकारमेवाह कियानिति द्रोणादिभिर्मूलैः कारणभूतैः यदिति यः अष्टादशाक्षौहिणीयुक्तः ऋहस्वत्वमार्षं क्षपितः उरुर्भारो भुवः अयं कियान् अत्यल्प इत्यर्थः यस्मान्म

कालमागधशाल्वादीनिनकैरुंधतः पुरं ॥ अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत् ॥ १० ॥ शंबरं द्विविदं बाणं मुरं बल्वलमेव च ॥ अन्यांश्च दंतवक्रादीनवधीत्कांश्च घातयत् ॥ ११ ॥ अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान् ॥ चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥ सकर्णदुःशासनसौबलानां कुमंत्रपाकेन हताश्रियायुषं ॥ सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननंद पश्यन् ॥ १३ ॥ कियान्भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः ॥ अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनां ॥ १४ ॥ मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानां ॥ नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेंतर्दधते स्वयं स्म ॥ १५ ॥ एवं संचिंत्य भगवान्स्वराज्ये स्थाप्य धर्मजं ॥ नंदयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥ उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ॥ स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥ १७ ॥ अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ॥ सोपि क्ष्मामनुजै रक्षन्रेमे कृष्णमनुव्रतः ॥ १८ ॥ भगवानपि विश्वात्मा लोकवेदपथानुगः ॥ कामान्सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥ स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ॥ चारित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥ २० ॥

दंशैः प्रद्युम्नादिभिर्हेतुभूतैः दुर्विषहं बलमास्ते ॥ १४ ॥ न चात्रान्य उपायः प्रभवति किंतु मधुना य आमदः सर्वतो मदः तेन आताम्रविलोचनानामेषां विवादो यदा भविष्यति तदा इयान् एवैषां वधोपायः अतोऽन्यो नास्ति एकात्मनोपि मय्युद्यते सति स्वयमेव विवादेनांतर्दधरिन्नि त्यर्थः ॥ ॥ १५ ॥ एवं श्लोकद्वयेनोक्तक्रमेण संचिंत्य स्वराज्ये स्थापयित्वा ॥ १६ ॥ धृतः रक्षितः ॥ १७ ॥ अनुजैः सह ॥ १८ ॥ सांख्यं प्रकृतिपुरुषविवेकं ॥ १९ ॥ स्निग्धो यः स्मितसहितोऽवलोकस्तेन पीयूषकल्पया सुधातुल्यया पाठांतरे सुधाप्रवाहरूपया आत्मना देहेन ॥ २० ॥

क्षणदयाराज्या दत्तः क्षणः अवसरः उत्सवोवायासांस्त्रीणांतासु क्षणंसौहृदंयस्यसः ॥ २१ ॥ गृहमेधेषुगृहधर्मेषु योगेषुकामभोगोपायेषु विरागऔदासिन्यंजातमित्यर्थः ॥ २२ ॥ यदास्वाधीनेष्वपिभगवतोविरागः तदादैवाधीनेषुकोविस्त्रंभेतविश्वासंप्रीतिंवाकुर्यात् योगेनचेत् योगेश्वरंश्रीकृष्णमनुव्रतः ॥ २३ ॥ शेपुःशापंददुः भगवतोमतेअभिप्रायेकोविदाअभिज्ञाः ॥ २४ ॥ २५ ॥ वयःशीलादिबहुगुणोपेताः यागावःताः ॥ २६ ॥ कन्याश्च वृत्तिकरींजीविकापर्याप्ताम् ॥ २७ ॥ भगवदर्पणंयथाभवति गोविप्रार्थाअसवोयेषाम् ॥ २८ ॥

इमंलोकममुंचैवरमयन्सुतरांयदून् ॥ रेमेक्षणदयादत्तक्षणस्त्रीक्षणसौहृदः ॥ २१ ॥ तस्यैवंरममाणस्यसंवत्सरगणान्बहून् ॥ गृहमेधेषुयोगेषुविरागःसमजायत ॥२२॥ दैवाधीनेषुकामेषुदैवाधीनःस्वयंपुमान् ॥ कोविस्त्रंभेतयोगेनयोगेश्वरमनुव्रतः ॥२३॥ पुर्यांकदाचित्क्रीडद्भिर्यदुभोजकुमारकैः ॥ कोपितामुनयःशेपुर्भगवन्मतकोविदाः ॥२४॥ ततःकतिपयैर्मासैर्वृष्णिभोजांधकादयः ॥ ययुःप्रभासंसंहृष्टारथैर्देवविमोहिताः ॥ ॥२५॥ तत्रस्नात्वापितॄन्देवान्ऋषींश्चैवतदंभसा ॥ तर्पयित्वाथविप्रेभ्योगावोबहुगुणाददुः ॥२६॥ हिरण्यंरजतंशय्यांवासांस्यजिनकंबलान् ॥ यानंरथानिभान्कन्याधरांवृत्तिकरीमपि ॥२७॥ अन्नंचोरुरसंतेभ्योदत्वाभगवदर्पणम् ॥ गोविप्रार्थसवःशूराःप्रणेमुर्भुविमूर्धभिः ॥ २८ ॥ इ० भा० तृ० विदुरोद्धवसंवादेतृतीयोध्यायः ॥३॥ ॥ ॥ उद्धवउवाच अथतेतदनुज्ञाताभुक्त्वापीत्वाचवारुणीम् ॥ तयाविभ्रंशितज्ञानादुरुक्तैर्मर्मपस्पृशुः ॥ १ ॥ तेषांमैरेयदोषेणविषमीकृतचेतसाम् ॥ निम्लोचतिरवावासीद्वेणूनामिवमर्दनम् ॥ २ ॥ भगवान्स्वात्ममायागतिंतामवलोक्यसः ॥ सरस्वतीमुपस्पृश्यवृक्षमूलमुपाविशत् ॥ ३ ॥ अहंप्रोक्तोभगवताप्रपन्नार्तिहरेणह ॥ बदरींत्वंप्रयाहीतिस्वकुलंसंजिहीर्षुणा ॥ ४ ॥

इतितृतीयेटीकायांतृतीयोध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥ चतुर्थेबंधुनिधनंश्रुत्वात्मज्ञानलब्धये ॥ उद्धवस्योपदेशेनक्षत्तामैत्रेयमागमत् ॥ १ ॥ तैर्ब्राह्मणैरनुज्ञाताःवारुणींपैष्टींमदिराम् ॥ १ ॥ वारुण्येवमैरेयंतस्यदोषेण रवौनिम्लोचतिअस्तंगच्छातिसति मर्दनंकदनम् ॥ २ ॥ उपस्पृश्यसरस्वत्यामाचम्य ॥ ३ ॥ अहंचोक्तःपूर्वमेवद्वारकायाम् ॥ ४ ॥ ॥ ॥

तदभिप्रेतंकुलसंहारादिकं ॥ ५ ॥ कृतकेतं कृतावासं अकेतनमनाश्रयं ॥ ६ ॥ विरजंविरजसंशुद्धसत्वमयंविदितंलक्षितं कौशंकौ
शेयं ॥ ७ ॥ अधिश्रित्यउपरिस्थापयित्वा अपाश्रितःपृष्ठतोऽवष्टब्धःअर्भकःबालः कोमलोऽश्वत्थोयेनतं त्यक्तंपिप्पलंविषयसुखंयेन
तं तथापि अकृशंआनंदपूर्णं ॥ ८ ॥ द्वैपायनः सुहृत्सखाचयस्यसः स्वगुरुपुत्रत्वात् पराशरशिष्योमैत्रेयइत्यर्थः ॥ ९ ॥ प्रमोदेनभा
वेनचानताकंधरायस्य पाठांतरेप्रमोदस्यभारेण अनुरागेणसहहासोयस्यांतयासमीक्षया विश्रमयन्विगतश्रमंकुर्वन् ॥ १० ॥ तेमनसीप्सि
तमहं अंतःस्थितोवेदवेद्मि दानेहेतुः विश्वसृजांवसूनांचामिलितानांसत्रे हेवसोइतिपुरापूर्वजन्मनित्वंवसुरभूः तदामत्प्राप्तिकामेनत्वया

अथापितदभिप्रेतंजानन्नहमरिंदम ॥ पृष्ठतोऽन्वगमंभुर्तुःपादविश्लेषणाक्षमः ॥ ५ ॥ अद्राक्षमेकमासीनं
विचिन्वन्दयितंपतिम् ॥ श्रीनिकेतंसरस्वत्यांकृतकेतमकेतनं ॥ ६ ॥ श्यामावदातंविरजंप्रशांतारुणलोचनं ॥
दोर्भिश्चतुर्भिर्विदितंपीतकौशांबरेणच ॥ ७ ॥ वामऊरावधिश्रित्यदक्षिणांघ्रिसरोरुहं ॥ अपाश्रितार्भकाश्व
त्थमकृशंत्यक्तपिप्पलं ॥ ८ ॥ तस्मिन्महाभागवतोद्वैपायनसुहृत्सखः ॥ लोकाननुचरन्सिद्धआससादयदृ
च्छया ॥ ९ ॥ तस्यानुरक्तस्यमुनेर्मुकुंदःप्रमोदभावानतकंधरस्य ॥ आशृण्वतोमामनुरागहाससमीक्षयावि
श्रमयन्नुवाच ॥ ॥ १० ॥ श्रीभगवानुवाच वेदाहमंतर्मनसीप्सितंतेददामियत्तद्दुरवापमन्यैः ॥ सत्रेपु
राविश्वसृजांवसूनांमत्सिद्धिकामेनवसोत्वयेष्टः ॥ ११ ॥ सएषभावश्चरमोभवानामासादितस्तेमदनुग्रहो
यत् ॥ यन्मांनृलोकान्रहउत्सृजंतंदिष्ट्यादृदृश्वान्विशदानुवृत्त्या ॥ १२ ॥ पुरामयाप्रोक्तमजायनाभ्येपा
द्मेनिषण्णायममादिसर्गे ॥ ज्ञानंपरंमन्महिमावभासंयत्सूरयोभागवतंवदंति ॥ १३ ॥

ऽहमिष्टः अतःतत्साधनंददामिदास्यामि अन्यैर्मत्पराङ्मुखैर्दुष्प्रापं ॥ ११ ॥ तस्यभाग्यमभिनंदति सएषभावोजन्मतेभवानांमध्येचरमः
यद्यस्मिन्मदनुग्रहःआसादितःलब्धः यत्पुनर्मांरहएकांतेविशदानुवृत्त्याएकांतभक्त्या दृदृश्वान्दृष्टवानसि एतद्दिष्ट्याभद्रंजातमित्यर्थः
नृलोकान्नृशब्देनजीवाःतेषांलोकानुत्सृजंतंवैकुंठंगच्छंतमित्यर्थः ॥ १२ ॥ ददामीतियदुक्तंतदेवनिर्दिशति पुरापूर्वस्मिन्पाद्मेकल्पे
आदिसर्गेसर्गोपक्रमे ममहिमालिला ऽवभास्यतेयेनतत् ॥ १३ ॥ ॥ ॥ ॥

इत्येवमादृतश्वासावुक्तश्चाहं प्रतीक्षणंकृपावलोकएवानुग्रहःतस्यभाजनंपात्रभूतः पाठांतरेप्रतिक्षणमनुग्रहस्यपात्रमिति शुचःअश्रूणिमुंचन् आबभाषेउक्तवानस्मि ॥ १४ ॥ नहिस्वाज्ञाननिवृत्तिमात्रकामोहं किंतुत्वन्निषेवणोत्सुकःत्वयिचाघटमानंचरणंदृष्ट्वामेमोहोभवति अतस्त्वंतत्त्वज्ञानंदेहीतिप्रार्थयितुमाह कोन्विति चतुर्षुधर्मादिषु तथापितानहंनप्रवृणोमि हेभूमन् भवत्पदांभोजनिषेवणोत्सुकोऽहं ॥ १५ ॥ अघटमानाचरणंदर्शयति कर्माण्यनीहस्यनिःस्पृहस्यनिष्क्रियस्यवा अभवस्य अजन्मनोभवोजन्मकालात्मनस्तवारिभयात् दुर्गाश्रयःपलायनंच स्वात्मनिरतिर्यस्यतस्यबह्वीभिःस्त्रीभिर्गृहस्थाश्रमइतियत् ॥ इहास्मिन्संसारेविदुषामपिधीःसंशयेनखिद्यति ॥

इत्यादृतोक्तःपरमस्यपुंसःप्रतीक्षणानुग्रहभाजनोऽहं ॥ स्नेहोत्थरोमास्खलिताक्षरस्तंमुंचन्शुचःप्रांजलिराबभाषे ॥ १४ ॥ कोन्वीशतेपादसरोजभाजांसुदुर्लभोर्थेषुचतुर्ष्वपीह ॥ तथापिनाहंप्रवृणोमिभूमन् भवत्पदांभोजनिषेवणोत्सुकः ॥ १५ ॥ कर्माण्यनीहस्यभवोऽभवस्यतेदुर्गाश्रयोऽथारिभयात्पलायनं ॥ कालात्मनोयत्प्रमदायुताश्रयःस्वात्मन्रतेःखिद्यतिधीर्विदामिह ॥ १६ ॥ मंत्रेषुमांवाउपहूययत्त्वमकुंठितारखंडसदात्मबोधः ॥ पृच्छेःप्रभोमुग्धइवाप्रमत्तस्तन्नोमनोमोहयतीवदेव ॥ १७ ॥ ज्ञानंपरंस्वात्मरहःप्रकाशंप्रोवाचकस्मैभगवान्समग्रं ॥ अपिक्षमंनोग्रहणायभर्तर्वदांजसायद्वृजिनंतरेम ॥ १८ ॥ इत्यावेदितहार्दायमह्यंसभगवान्परः ॥ आदिदेशारविंदाक्षआत्मनःपरमांस्थितिम् ॥ १९ ॥ सएवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ॥ प्रणम्यपादौपरिवृत्त्यदेवमिहागतोऽहंविरहातुरात्मा ॥ २० ॥ सोहंतद्दर्शनाल्हादवियोगार्तियुतःप्रभो ॥ गमिष्येदयितंतस्यबदर्याश्रममंडलं ॥ २१ ॥

॥ १६ ॥ किंचमंत्रेषुप्रस्तुतेषुसत्सु मामाहूय वै अहोपृच्छेः अकुंठितःकालादिना अखंडः संततः सदात्मासंशयादिरहितोबोधोविद्याशक्तिर्यस्यमुग्धवत् अज्ञवत् अप्रमत्तःअवहितःसन् ॥ १७ ॥ स्वात्मनस्तवरहःरहस्यंतत्त्वंतस्यप्रकाशं कस्मैब्रह्मणे सर्वनामत्वमार्षं नोऽस्माकंग्रहणाय अपिक्षमंयदि योग्यंतर्हिवद भर्तःस्वामिन् यत्यतःवृजिनंसंसारदुःखमनायासेनतरिष्यामः ॥ १८ ॥ आवेदितोहार्दोहृदिस्थितोभिप्रायोयेनतस्मै ॥ १९ ॥ आराधितपादोभगवान् सएवतीर्थंगुरुस्तस्मात् अधीतःअधिगतः तत्त्वात्मविबोधस्यपरमार्थात्मज्ञानस्यमार्गोयेन सोहंदेवं परिवृत्यप्रदक्षिणीकृत्य ॥ २० ॥ तस्यदर्शनेनाल्हादोवियोगेनार्तिश्चताभ्यांयुतोबदर्याश्रमस्थानंगमिष्यामि ॥ २१ ॥

मृदुपरोपद्रवशून्यंतीव्रंदुश्चरंदीर्घमाकल्पांतं तेपातेतपश्चरतइत्यर्थः लोकभावनौलोकानुग्रहकारकौ ॥ २२ ॥ ज्ञानेनविवेकेन ॥ २३ ॥ विश्रंभात् विश्वासात् ॥ २४ ॥ यद्यस्मात्स्वभृत्यप्रयोजनसाधकाःसंतश्चरंति नहिकृतार्थानामन्यत्कृत्यमस्तीत्यर्थः ॥ २५ ॥ तत्त्वायसं राध्यइति अयंभावः भगवतैवस्मरणमात्रेणतवापितत्त्वमुपादिष्टप्रायंअथकेवलमसंभावनादिनिवृत्तयेज्ञानिकाश्चिदाराध्यःसचतवाराध्यःमै त्रेयःनत्वहं ममांतिकएवत्वदुपदेशेतस्यादिष्टत्वादिति ॥ २६ ॥ स्नावितः अपनीतः उरुस्तापोयस्य यमस्वसुर्यमुनायाः पुलिनेतीरे तां

यत्रनारायणोदेवोनरश्चभगवानृषिः॥मृदुतीव्रंतपोदीर्घंतेपातेलोकभावनौ ॥२२॥ श्रीशुकउवाच इत्युद्धवादुपाकर्ण्यसुहृदांदुःसहंवधं ॥ ज्ञानेनाशमयत्क्षत्ताशोकमुत्पतितंबुधः ॥ २३ ॥ सतंमहाभागवतंव्रजंतंकौरवर्षभः॥विश्रंभादभ्यधत्तेदंमुख्यंकृष्णपरिग्रहे ॥२४॥ विदुरउवाच ज्ञानंपरंस्वात्मरहःप्रकाशंयदाहयोगेश्वरईश्वरस्ते॥वक्तुंभवान्नोऽर्हतियद्धिविष्णोर्भृत्याःस्वभृत्यार्थकृतश्चरंति॥२५॥ उद्धवउवाच ननुतेतत्त्वसंराध्यऋषिःकौषारवोऽतिमे ॥ साक्षाद्भगवतादिष्टोमर्त्यलोकंजिहासता॥२६॥ श्रीशुकउवाच इतिसहविदुरेणविश्वमूर्तेर्गुणकथयासुधयाप्लावितोरुतापः ॥ क्षणमिवपुलिनेयमस्वसुस्तांसमुषितऔपगविर्निशांततोऽगात् ॥२७॥ राजोवाच निधनमुपगतेषुवृष्णिभोजेष्वधिरथयूथपयूथपेषुमुख्यः ॥ सतुकथमवशिष्टउद्धवोयद्धरिरपितत्यजआकृतिंत्र्यधीशः ॥२८॥ श्रीशुकउवाच ब्रह्मशापापदेशेनकालेनामोघवांछितः ॥ संहृत्यस्वकुलंनूनंत्यक्ष्यन्देहमचिंतयत् ॥२९॥अस्माल्लोकादुपरतेमयिज्ञानंमदाश्रयं ॥ अर्हत्युद्धवएवाद्धसंप्रत्यात्मवतांवरः ॥ ३० ॥ नोद्धवोऽण्वपिमन्न्यूनोयद्गुणैर्नार्दितःप्रभुः ॥ अतोमद्वयुनंलोकंग्राहयन्निहतिष्ठतु॥३१॥एवंत्रिलोकगुरुणासंदिष्टःशब्दयोनिना॥ बदर्याश्रममासाद्यहरिमीजेसमाधिना॥३२॥

निशांक्षणमिवसमुषितः औपगविरुद्धवः ॥ २७ ॥ ब्रह्मशापेननिधनंप्राप्तेषुयद्यस्मात्त्रयाणांब्रह्मादीनामधिशःहरिरपिआकृतिंमनुष्याकारंत्यक्तवान् ॥ २८ ॥ ब्रह्मशापःअपदेशोमिषंयस्यतेनकालेनस्वशक्तिरूपेण अमोघंवांछितंयस्य नह्यत्रशापःप्रभुः किंतुभगवदिच्छैवेत्यर्थः ॥ २९ ॥ मयिउपरतेसति ज्ञानमर्हतिज्ञातुंयोग्योभवति॥ ३० ॥ मत्तःसकाशादीषदपिन्यूनोनभवति यत् यस्मात् गुणैर्विषयैर्नक्षोभितः मद्वयुनंमद्विषयंज्ञानंलोकस्योपदिशन् ॥ ३१ ॥ एवमनेनाभिप्रायेणशब्दयोनिनावेदकर्त्रा ईजेपूजयामास ॥ ३२ ॥

॥३३॥ अन्येषांपशूनांपशुतुल्यानांविक्लवात्मनामधीरचित्तानां ॥३४॥ मनसेक्षितंचिंतितम् ॥३५॥ कालिंद्याःसकाशात् सिद्धएवविदुरःक तिपयैर्दिनैःस्वःसरितंगंगांप्रापद्यतप्राप्तः ॥ ३६ ॥ इतितृतीयेटीकायांचतुर्थोऽध्यायः ॥४॥ पंचमेभगवच्छीलांक्षत्त्रापृष्टोमहामुनिः ॥ प्रोवाच महदादीनांसर्गंतैश्चहरेस्तुतिम् ॥१॥ उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसंगमः ॥ संवादस्तुतयोःस्कंधद्वयेनाथनिगद्यते ॥२॥ द्युनद्याःगंगायाः द्वारि हरिद्वारे आसीनंनतुकर्मण्यग्रं तत्रहेतुः अगाधःअपरिच्छिन्नोबोधोयस्येतिमैत्रेयस्यसौशील्यमार्जवादिगुणाश्चकरुणादयस्तरैभितृप्तः पाठां तरेक्षत्तुःसौशील्यादिभिरभितृप्तसंतुष्टंमैत्रेयं ॥ १ ॥ प्रश्नानेवाह सुखायेतिपंचदशभिः तैःकर्मभिःसुखंवाऽन्यस्यदुःखस्योपशमंवेत्यर्थः अ

विदुरोऽप्युद्धवाच्छ्रुत्वाकृष्णस्यपरमात्मनः ॥ क्रीडयोपात्तदेहस्यकर्माणिश्लाघितानिच ॥३३॥ देहन्यासंचतस्यैवंधीराणांधैर्यवर्धनं ॥ अन्येषांदुष्करतरंपशूनांविक्लवात्मनां ॥ ३४॥ आत्मानंचकुरुश्रेष्ठकृष्णेनमनसेक्षितं॥ध्यायन्गतेभागवतेरुरोदप्रेमविह्वलः ॥३५॥ कालिंद्याःकतिभिःसिद्धअहोभिर्भरतर्षभ ॥प्रापद्यतस्वःसरितंयत्रमित्रासुतोमुनिः ॥ ३६ ॥ इतिश्रीभागवतेतृ०विदुरोद्धवसंवादेचतुर्थोऽध्यायः ॥ ४ ॥

श्रीशुकउवाच द्वारिद्युनद्याऋषभःकुरूणांमैत्रेयमासीनमगाधबोधं ॥ क्षत्तोपसृत्याच्युतभावशुद्धःपप्रच्छसौशील्यगुणाभितृप्तः ॥ १ ॥ विदुरउवाच सुखायकर्माणिकरोतिलोकोनतैःसुखंवाऽन्यदुपारमंवा ॥ विंदेतभूयस्ततएवदुःखंयदत्रयुक्तंभगवान्वदेन्नः॥२॥जनस्यकृष्णाद्विमुखस्यदैवादधर्मशीलस्यसुदुःखितस्य॥ अनुग्रहायेहचरंतिनूनंभूतानिभव्यानिजनार्दनस्य ॥ ३ ॥ तत्साधुवर्यादिशवर्त्मशंनःसंराधितोभगवान्येनपुंसां ॥ हृदिस्थितोयच्छतिभक्तिपुतेज्ञानंसतत्वाधिगमंपुराणं ॥ ४ ॥

थवान्यद्वानविंदेत किंतदित्यपेक्षायांतस्यैवनिर्देशःउपारमंवेति ततस्तैःकर्मभिःभूयःपुनःपुनर्दुःखमेवविंदेत अत्रएवंविधेसंसारेनोऽस्माकं यद्युक्तंकर्तुंयोग्यंतत्सर्वज्ञोभगवान्वदेत्निरूपयतु ॥ २ ॥ दैवात्प्राचीनकर्मणोनिमित्तभूतात्कृष्णाद्विमुखस्य अतःअधर्मशीलस्य अतःसुदुःखितस्यजनस्यानुग्रहायभव्यानिमंगलानिभूतानिचरंति भवंतःपरोपकारस्वभावाएवेत्यर्थः ॥ ३ ॥ तत्तस्मात्हेसाधुवर्य शंसुखरूपंवर्त्म नः आदिशकथय येनवर्त्मनासंराधितोहृदिस्थितःसन्तत्त्वाधिगमः आत्मापारोक्ष्यं तत्सहितंपुराणमनादिवेदप्रमाणकम् ॥ ४ ॥

करोतिकर्माणीत्यादीनांवर्णयेतिपंचमश्लोकेक्रियासंबंधः यथायेनप्रकारेणकृतावतारःसन्त्र्यधीशःत्रिगुणमायानियंताअतः स्वतंत्रएवत्वया
निकर्माणिकरोति कर्माण्येवविशेषतःपृच्छतियथेत्यादिना निरीहःनिष्क्रियःनिःस्पृहोवा संस्थाप्यसुस्थितंकृत्वावृत्तिंजीविकाम् ॥ ५ ॥
स्वेस्वीयेखेहृदयाकाशेनिवेश्यस्थापयित्वा निवृत्तावृत्तयोयस्य गुहायांयोगमायायाम् बहुधाब्रह्मादिरूपेण ॥ ६ ॥ मत्स्याद्यवतारभेदैः
क्रीडन्यानियथाकर्माणिविधत्ते पुनर्विशेषंप्रष्टुमौत्सुक्यमाविष्करोति मनइति सुश्लोकाःपुण्यकीर्तयस्तेषांमौलिरिवाधिक्येनोपरिविराज
मानस्तस्येत्यर्थः ॥ ७ ॥ अधिलोकनाथःलोकनाथाधिपतिःअलोकान्लोकालोकपर्वताद्बहिर्भागान् अचीक्लृपत्कल्पयामास यत्रयेषुस

करोतिकर्माणिकृतावतारोयान्यात्मतंत्रोभगवांस्त्र्यधीशः ॥ यथाससर्जाग्रइदंनिरीहःसंस्थाप्यवृत्तिंजग
तोविधत्ते ॥ ५ ॥ यथापुनःस्वेखइदंनिवेश्यशेतेगुहायांसनिवृत्तवृत्तिः ॥ योगेश्वराधीश्वरएकएतदनुप्रविष्टो
बहुधायथासीत् ॥ ६ ॥ क्रीडन्विधत्तेद्विजगोसुराणांक्षेमायकर्माण्यवतारभेदैः ॥ मनोनतृप्यत्यपिशृण्वतां
नःसुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥ यैस्तत्त्वभेदैरधिलोकनाथोलोकानलोकान्सहलोकपालान् ॥ अची
क्लृपद्यत्रहिसर्वसत्वनिकायभेदोऽधिकृतःप्रतीतः ॥ ८ ॥ येनप्रजानामुतआत्मकर्मरूपाभिधानांचभिदांव्यध
त्त ॥ नारायणोविश्वसृगात्मयोनिरेतच्चनोवर्णयविप्रवर्य ॥ ९ ॥ परावरेषांभगवन्व्रतानिश्रुतानिमेव्यासमु
खादभीक्ष्णम् ॥ अतृप्नुमक्षुल्लसुखावहानांतेषामृतेकृष्णकथामृतौघात् ॥ १० ॥ कस्तृप्नुयात्तीर्थपदोऽभिधा
नात्सत्रेषुवःसूरिभिरीड्यमानात् ॥ यःकर्णनाडींपुरुषस्ययातोभवप्रदांगेहरतिंछिनत्ति ॥ ११ ॥ ॥

र्वाणियानिसत्वानितेषांनिकायास्तेषांभेदः अधिकृतः तत्तत्कर्माधिकारीआश्रितइति ॥ ८ ॥ उतअपिचयेनप्रकारेण जीवानामात्मा
स्वभावः तत्कृतंकर्मतत्कृतंरूपंतत्कृताअभिधाः तासांभेदंकृतवान् विश्वस्रष्टास्वयमात्मयोनिःस्वतःसिद्धः ॥ ९ ॥ ननुमहाभारतेत्वया
सर्वंश्रुतमेवतत्राह परेत्रैवर्णिकाः अवरेशूद्रादयः तेषांव्रतानिधर्माःमेमयाअभीक्ष्णंपुनःपुनःतेषांश्रवणेनअतृप्नुम तृप्ताःस्म तेषांतुच्छसु
खावहत्वात् यस्तुतत्रकृष्णकथामृतौघःसूचितस्ततस्माद्दते तत्रत्वलंबुद्धिर्नास्तीत्यर्थः ॥ १० ॥ तत्रहेतुःकइति तीर्थपदःकृष्णस्यअभिधा
नात् कथाऽमृतात् सत्रेषुसमाजेषु सूरिभिर्नारदादिभिः ॥ ११ ॥ ॥ ॥ ॥ ॥

महाभारतस्याप्यत्रैवतात्पर्यमित्याह मुनिःश्रीकृष्णोवेदव्यासोभगवद्गुणान्मोक्षधर्मांतेनारायणीयाख्यानेवक्तुमिच्छुःसन् अर्थकामादिवर्णनं
तुहरिकथायांमतिप्रवेशार्थमेवेत्याह यस्मिन्निति नृणांमतिर्ग्राम्यसुखानुवादैर्द्वारभूतैर्नुनिश्चितंहरेः कथायांगृहीतानीता तदुक्तमितिहासस
मुच्चये कामिनोवर्णयन्कामंलोभंलुब्धस्यवर्णयन् नरःकिंफलमाप्नोतिकूपेंऽधमिवपातयन् लोकचित्तावताराथैवर्णयित्वाऽत्रतेनतौ इति
हासैःपवित्रार्थैः पुनरत्रैवनिंदितौ अन्यथाघोरसंसारबंधहेतूजनस्यतौ वर्णयेत्सकथंविद्वान्महाकारुणिकोमुनिरिति ॥ १२ ॥ श्रीहरिकथा
मतिप्रवेशस्यफलमाह साकथामतिर्वा अन्यत्रग्राम्यसुखेततःकिमतआह हरेरिति ॥ १३ ॥ एवंभूतायांकथायांयेनरमंतेतान्शोचतिशो

मुनिर्विवक्षुर्भगवद्गुणानांसखापितेभारतमाहकृष्णः ॥ यस्मिन्नृणांग्राम्यसुखानुवादैर्मतिर्गृहीतानुहरेःकथा
यां ॥ १२ ॥ साश्रद्दधानस्यविवर्धमानाविरक्तिमन्यत्रकरोतिपुंसः ॥ हरेःपदानुस्मृतिनिर्वृतस्यसमस्तदुः
खात्ययमाशुधत्ते ॥ १३ ॥ तान्शोच्यशोच्यानविदोनुशोचेहरेःकथायांविमुखानघेन ॥ क्षिणोतिदेवोनिमि
षस्तुयेषामायुर्वृथावादगतिस्मृतीनां ॥ १४ ॥ तदस्यकौषारवशर्मदातुर्हरेःकथामेवकथासुसारम् ॥ उद्धृत्य
पुष्पेभ्यइवार्तबंधोशिवायनःकीर्तयतीर्थकीर्तेः ॥ १५ ॥ सविश्वजन्मस्थितिसंयमार्थेकृतावतारःप्रगृहीत
शक्तिः ॥ चकारकर्माण्यतिपूरुषाणियानीश्वरःकीर्तयतानिमत्वं ॥ १६ ॥ श्रीशुकउवाच सएवंभगवा
न्पृष्टःक्षत्राकौषारविर्मुनिः ॥ पुंसांनिःश्रेयसार्थेनतमाहबहुमानयन् ॥ १७ ॥ मैत्रेयउवाच साधुपृष्टंत्वया
साधोलोकान्साध्वनुगृण्हता ॥ कीर्तिंवितन्वतालोकेआत्मनोऽधोक्षजात्मनः ॥ १८ ॥ नैतच्चित्रंत्वयिक्षत्तर्बा
दरायणवीर्यजे ॥ गृहीतोऽनन्यभावेनयत्त्वयाहरिरीश्वरः ॥ १९ ॥ ॥ ॥ ॥

च्यायेतेषामपिशोच्याश्चतत्राविदोभारततात्पर्यानभिज्ञान्शोच्यान् येऽपिज्ञात्वाहरेःकथायांविमुखास्तान् तेषामपिशोच्यानितियोज्यम्
अनिमिषःकालोयेषामायुःक्षिपति अत्रैवहेतुःवृथैववादगतिस्मृतयोवाग्देहमनोव्यापारायेषाम् ॥ १४ ॥ तत्तस्माद्धेकौषारव अस्यविश्व
स्यशिवायकथासुसारभूतांहरेःकथामेवोद्धृत्यनःकीर्तय यथापुष्पेभ्योमधुमधुपउद्धरतितद्वदुद्धृत्य ॥ १५ ॥ विशेषतःश्रीकृष्णकथाकथ
नीयेत्याशयेनाह सइति योविश्वसर्गाद्यर्थंपूर्वंगृहीतशक्तिःसएवपुरुषेषुकृतावतारःसन्पुरुषानतिक्रम्यवर्तमानानियानिचकारतानिविस्त
राद्वद ॥ १६ ॥ पुंसांनिःश्रेयसमेवार्थःप्रयोजनंतेनहेतुनापृष्टः ॥ १७ ॥ बहुमानमेवाह साध्वितिपंचाभिः अधोऽक्षजएवात्मामनोयस्य
तस्यात्मनःस्वस्यकीर्तिंचप्रसंगाद्वितन्वता ॥ १८ ॥ हरिर्यद्गृहीतःएतच्चित्रंनभवति कुतःबादरायणवीर्यजे ॥ १९ ॥ ॥ ॥

ननुतर्हिकथंशूद्रत्वंकथंचलोकानुग्राहकत्वंतत्राह मांडव्यशापादिति भ्रातुर्विचित्रवीर्यस्यक्षेत्रे क्षेत्रत्वेनस्वीकृतायांभुजिष्यायांदास्यांयमए
वत्वंजातोऽसि ॥ २० ॥ किंच भवानितिकुतः यस्यतवज्ञानोपदेशायमामादिष्टवान् चकारात्स्वयमपिस्मृत्यैवोपदिष्टवानिति ॥ २१ ॥
विश्वस्थित्यादयःअर्थाविषयायासांताः ॥ २२ ॥ तत्रसृष्टिलीलांवर्णयितुंततःपूर्वावस्थामाह इदंविश्वमग्रेसृष्टेःपूर्वंपरमात्माभगवानेएकएव
आसआसीत् आत्मनांजीवानां आत्मास्वरूपंविभुः स्वामीचनान्यत् द्रष्टृदृश्यात्मकंकिंचिदासीत् कारणात्मनासत्त्वेपिपृथक्प्रतीत्यभावा
दित्याह अनानामत्युपलक्षणः नानाद्रष्टृदृश्यादिमातिभिर्नोपलक्ष्यतइतितथा यद्वा अकारप्रश्लेषंविनैवायमर्थः यःसृष्टौनानामातिभिरुप
लक्ष्यते सतदाएकएवासीदितिकुतआत्मेच्छामायातस्याअनुगतौलयेसति यद्वा आत्मनएकाकित्वेनअवस्थानेच्छायामनुवृत्तायामित्य

मांडव्यशापाद्भगवान्प्रजासंयमनोयमः ॥ भ्रातुःक्षेत्रेभुजिष्यायांजातःसत्यवतीसुतात् ॥ २० ॥ भवान्भग
वतोनित्यंसंमतःसानुगस्यच ॥ यस्यज्ञानोपदेशायमादिशद्भगवान्व्रजन् ॥ २१ ॥ अथतेभगवल्लीलायोग
मायोपबृंहिताः ॥ विश्वस्थित्युद्भवांतार्थावर्णयाम्यनुपूर्वशः ॥ २२ ॥ भगवानेकआसेदमग्रआत्मात्मनांवि
भुः ॥ आत्मेच्छानुगतावात्मानानामत्युपलक्षणः ॥ २३ ॥ सवाएषतदाद्रष्टानापश्यद्दृश्यमेकराट् ॥ मेनेसंत
मिवात्मानंसुप्तशक्तिरसुप्तदृक् ॥ २४ ॥ सावाएतस्यसंद्रष्टुःशक्तिःसदसदात्मिका ॥ मायानाममहाभागययेदंनि
र्ममेविभुः ॥ २५ ॥ कालवृत्त्यातुमायायांगुणमय्यामधोक्षजः । पुरुषेणात्मभूतेनवीर्यमाधत्तवीर्यवान् ॥ २६ ॥

र्थः ॥ २३ ॥ तत्रप्रथमंमायोद्भवप्रकारमाहद्वाभ्यां सवैद्रष्टासन् दृश्यंनापश्यत् यतःसएकराट् एकएवतदाप्रकाशते तदाआत्मानमसंत
मिवमेने दृश्याभावेद्रष्टृत्वाभावात्तदाह सुप्ताःमायाद्याःशक्तयोयस्यसः नत्वसंतमेवमेने यतःअसुप्तादृक् चिच्छक्तिर्यस्येति ॥ २४ ॥ सावै
द्रष्टृदृश्यानुसंधानरूपासदसदात्मिकाकार्यकारणरूपा यद्वा सत् दृश्यमसत् अदृश्यमात्मस्वरूपंचतयोरात्मायस्याः तदुभयानुसंधानरूप
त्वात् ॥ २५ ॥ कालवृत्त्याकालशक्त्यागुणमय्यांक्षुभितगुणायां अधोऽक्षजः परमात्मा आत्मांशभूतेनपुरुषेणप्रकृत्याधिष्ठातृरूपेण वी
र्यंचिदाभासमाधत्त वीर्यवान् चिच्छक्तियुक्तः ॥ २६ ॥ ॥ ॥ ॥

कालप्रेरितादव्यक्तान्मायातः तत्त्वंपदंपरित्यज्यमहतोलक्षणं अतःपुल्लिंगनिर्देशोविज्ञानात्मेति सत्त्वप्रधानत्वात्स्वदेहस्थंविश्वमुच्छून्य बीजगतमंकुरादिरूपंवृक्षमिवव्यंजन् व्यंजयन्प्रकाशयन् यतोऽसौतमोनुदतीतितमोनुदः तदुक्तंसात्वततंत्रे विष्णोस्तुत्रीणिरूपाणिपुरुषाख्यान्यथोविदुः ॥ प्रथमंमहतःस्रष्टृद्वितीयंत्वंडसंस्थितं ॥ तृतीयंसर्वभूतस्थंतानिज्ञात्वाविमुच्यतइति ॥ २७ ॥ अहंकारोत्पत्तिमाहसार्धाभ्यां सोपीति अंशश्चिदाभासोनिमित्तंगुणाउपादानंकालःक्षोभकःतदात्मातदधीनः भगवान्सर्वाध्यक्षस्तद्दृष्टिगोचरःसन् स्वयमात्मानं व्यकरोत् रूपांतरमनयत् ॥ २८ ॥ अहंकारस्यलक्षणमाह कार्यमधिभूतंकारणमध्यात्मं कर्तृअधिदैवं तेषामात्माआश्रयः अत्रहेतुःभूतें

ततोऽभवन्महत्तत्वमव्यक्तात्कालचोदितात् ॥ विज्ञानात्मात्मदेहस्थंविश्वंव्यंजंस्तमोनुदः ॥ २७ ॥ सोऽप्यंशगुणकालात्माभगवद्दृष्टिगोचरः ॥ आत्मानंव्यकरोदात्माविश्वस्यास्यसिसृक्षया ॥ २८ ॥ महत्तत्वाद्विकुर्वाणादहंतत्त्वंव्यजायत ॥ कार्यकारणकर्त्रात्माभूतेंद्रियमनोमयः ॥ २९ ॥ वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा ॥ अहंतत्त्वाद्विकुर्वाणान्मनोवैकारिकादभूत् ॥ ३० ॥ वैकारिकाश्चयेदेवाअर्थाभिव्यंजनंयतः ॥ तैजसानींद्रियाण्येवज्ञानकर्ममयानिच ॥ तामसोभूतसूक्ष्मादिर्यतःखंलिंगमात्मनः ॥ ३१ ॥ कालमायांशयोगेनभगवद्वीक्षितंनभः ॥ नभसोऽनुसृतंस्पर्शंविकुर्वन्निर्ममेनिलं ॥ ३२ ॥ अनिलोऽपिविकुर्वाणोनभसोरुबलान्वितः ॥ ससर्जरूपतन्मात्रंज्योतिर्लोकस्यलोचनं ॥ ३३ ॥ अनिलेनान्वितंज्योतिर्विकुर्वन्परवीक्षितं ॥ आधत्तांभोरसमयंकालमायांशयोगतः ॥ ३४ ॥ ॥

द्रियमनोमयःतद्विकारवान् मनइतिदेवानामुपलक्षणं ॥ २९ ॥ एतदेवविभागतःप्रपंचयति वैकारिकइत्यादिना वैकारिकःसात्विकःतैजसोराजसः देवाश्चवैकारिकाः सात्विकाहंकारकार्यभूताइत्यर्थः यतःयेभ्यःइंद्रियाधिष्ठातृभ्यः अर्थाभिव्यंजनंशब्दादिप्रकाशोभवति ॥ ॥ ३० ॥ तैजसान्येवेत्यन्वयः ज्ञानेंद्रियाणांज्ञानमयानांसात्विकत्वशंकामाभूदित्येवकारः तामसोभूतसूक्ष्मस्यशब्दस्यादिःकारणं यतः शब्दात्खमाकाशोभवति आत्मनोलिंगंस्वगुणशब्दरूपेणप्रकाशकंहृदयाकाशतयावा यद्वा लिंगंशरीरमाकाशशरीरंब्रह्मेतिश्रुतेः ॥ ॥ ३१ ॥ नभसःस्वस्मात् अनुसृतमुद्भूतंस्पर्शंविकुर्वत् रूपांतरंनयत् अनिलंवायुमेवंसर्वत्रतन्मात्रद्वाराभूतोत्पत्तिरितिज्ञातव्यं ॥ ३२ ॥ नभसासहितःस्वयंचोरुबलान्वितः ततोज्योतिस्तेजः लोचनंप्रकाशकम् ॥ ३३ ॥ ३४ ॥

॥ ३५ ॥ हेभव्य विदुर पाठांतरेभाव्यंकार्यंयद्यदवरमवरंकार्यंतेषांकार्याणांपरैः कारणैरनुसंसर्गात् सथासंख्यं यथाक्रममुत्तरोत्तरमाधिका
नूगुणान्विदुः तथाहि नभसः शब्दएवगुणःअन्यान्वयाभावात् वायोस्तुस्पर्शः आकाशान्वयात्शब्दश्च एवंतेजसस्त्रीचरूपंच अंभ
सस्तानिरसश्च मह्याःसर्वे ॥ ३६ ॥ देवामहदाद्यभिमानिनः विष्णोःकलाअंशाःकाललिंगंविकृतिः मायालिंगंविक्षेपः अंशलिंगंचेत
नातानिविद्यंतेयेषु अतःसमत्वेननानात्वात् परस्परासंबंधात् स्वक्रियायांब्रह्मांडरचनायामनीशाः अशक्ताःसंतोविभुंपरमेश्वरंप्रोचुः॥३७॥
मिथःस्पर्धिष्णवोदेवानामिलंतःपरस्परं ॥ विश्वकर्मण्यनीशानानिर्विण्णाहरिमीडिरे ॥ प्रपन्नानांतापोपशमेआतपत्रंछत्रं तत्रहेतुः यस्य
पादारविंदस्य मूलंतलंकेतआश्रयोयेषांते संसारदुःखंबहिर्दूरतउत्क्षिपंतिपरित्यजंति यथापांथाःस्वगृहंप्राप्यमार्गश्रममिव ॥ ३८ ॥ श्र

ज्योतिषांभोनुसंसृष्टंविकुर्वद्ब्रह्मवीक्षितं ॥ महींगंधगुणामाधात्कालमायांशयोगतः ॥ ३५॥ भूतानांनभआ
दीनांयद्यद्भव्यावरावरं॥तेषांपरानुसंसर्गाद्यथासंख्यंगुणान्विदुः॥३६॥एतेदेवाःकलाविष्णोःकालमायांश
लिंगिनः॥ नानात्वात्स्वक्रियाऽनीशाःप्रोचुःप्रांजलयोविभुं॥ ३७॥ देवाऊचुः नमामतेदेवपदारविंदं
प्रपन्नतापोपशमातपत्रं॥ यन्मूलकेतायतयोंजसोरुसंसारदुःखंबहिरुत्क्षिपंति ॥३८॥ धातर्यदस्मिन्भवई
शजीवास्तापत्रयेणोपहतानशर्म॥ आत्मँल्लभंतेभगवंस्तवांघ्रिच्छायांसविद्यामतआश्रयेम॥३९॥मार्गंति
यत्तेमुखपद्मनीडैश्छंदःसुपर्णैर्ऋषयोविविक्ते॥ तस्याघमर्षोदसरिद्वारायाःपदंपदंतीर्थपदःप्रपन्नाः ॥४०॥

मांविनिवेदयंतआहुः हेधातःपितर्यद्यस्मात्भवेसंसारेआत्मन् आत्मानिसंबोधनंवा शर्मसुखंकृते यदितिपाठेयत्पादभजनंविनाशर्मनलभं
ते ननुज्ञानादज्ञानकृतस्तापोनिवर्ततेकिंमदंघ्रिच्छायाश्रयणेनतत्राहुः सविद्यांतदाश्रयणमेवविद्याप्रापकमित्यर्थः ॥ ३९ ॥ अज्ञानस्या
श्रयणायोगात्तज्ज्ञानसाधनमाहुः मार्गंति अन्वेषयंति यत्तत्तीर्थपदस्तवपदंवयंप्रपन्नाः कैर्मार्गंतिछंदःसुपर्णैःवेदपक्षिभिस्तवैवमुखपद्मं
नीडंयेषांयथापक्षिणोनीडादुद्गतास्ततस्ततःपरिभ्रम्यपुनस्तत्रैवविशंति तथावेदाअपित्वत्तउद्गतास्त्वय्येवपर्यवस्यंति अतोवेदानाश्रित्यत्व
त्पदंमृगयंतइति विविक्तेअसंगेमनसि किंचअघमर्षमघनाशकमुदमुदकंयासांसारितांतासुवरायाःगंगायाःपदमुद्गमस्थानं अतोगंगामनु
सेवमानाअपितदुद्गमस्थानंत्वत्पदंप्राप्नुवंतीत्यर्थः ॥ ४० ॥ ॥ ॥ ॥

ननुविषयाकृष्टचित्तानांकुतस्तदन्वेषणंतत्राहुः यत्श्रद्धयाहृदयेअवधायध्यात्वा वैराग्यंबलंयस्यतेनज्ञानेनधीराभवंति सरागेचित्तेध्यानमे वकुतःश्रद्धयाश्रवणपूर्विकयाभक्त्याचसंमृज्यमानेसंशोध्यमाने ॥ ४१ ॥ भक्तानुग्रहंस्मरंतआहुः विश्वस्येति ॥ ४२ ॥ अंतर्यामितया नित्यंसन्निहिते अनर्थकंव्रजनमित्याशंक्याहुः यदीति सानुबंधेसोपकरणेअसतितुच्छेपुर्यांस्वदेहेएववसतोऽपियत्सुदूरंदुष्प्रापं ॥ ४३ ॥ ननुयदिहृदिस्थस्यापिपदाब्जंकेषांचित्सुदूरंतर्हिअन्येषामपितथैवस्यात् अविशेषादित्याशंक्याहुः तानिति असद्वृत्तिभिर्बहिर्मुखैःअक्षिभिरिंद्रियैःपराहृतंदूरमपहृतमंतस्थंमनोयेषांते अथोअतएवतेनूनंतान्नपश्यंति वैप्रसिद्धं कुतःपुनस्तेषांतत्संगःस्यात् कान् तेतवपदन्यासोग

यच्छ्रद्धयाश्रुतवत्याचभक्त्यासंमृज्यमानेहृदयेऽवधाय॥ज्ञानेनवैराग्यबलेनधीराव्रजेमतत्तेंऽघ्रिसरोजपीठं ॥ ४१ ॥ विश्वस्यजन्मस्थितिसंयमार्थेकृतावतारस्यपदांबुजंते ॥ व्रजेमसर्वेशरणंयदीशस्मृतंप्रयच्छत्यभयंस्वपुंसां ॥ ४२ ॥ यत्सानुबंधेऽसतिदेहगेहेममाहमित्यूढदुराग्रहाणां ॥ पुंसांसुदूरंवसतोऽपिपुर्यांभजेमतत्तेभगवन्पदाब्जं ॥ ४३ ॥ तान्वाअसद्वृत्तिभिरक्षिभिर्येपराहृतांतर्मनसःपरेश ॥ अथोनपश्यंत्युरुगायनूनंयेतेपदन्यासविलासलक्ष्म्याः ॥४४॥पानेनतेदेवकथासुधायाःप्रवृद्धभक्त्याविशदाशयाये ॥ वैराग्यसारंप्रतिलभ्यबोधंयथांऽजसान्वीयुरकुंठधिष्ण्यं ॥ ४५ ॥ तथाऽपरेचात्मसमाधियोगबलेनजित्वाप्रकृतिंबलिष्ठां ॥ त्वामेवधीराःपुरुषंविशंतितेषांश्रमःस्यान्नतुसेवयाते ॥ ४६ ॥

मनंतस्यविलासोविभ्रमः तस्यलक्ष्मीःशोभातस्याः येत्वल्लीलाकथादिभिःशोभमानास्तान्त्वद्भक्तानित्यर्थः पथइतिलक्ष्यान्इतिचपाठे त्वत्पदन्यासविलासोलक्ष्योयेषांतान् पथस्त्वन्मार्गभूतान्सतःमार्गान्वाश्रवणादीन्नपश्यंतीत्यर्थः यद्वा येएवंभूताभागवताः तेतानुन्मत्तान्नूनंनैवपश्यंतीत्यन्वयः सत्संगाभावेनहरिकथाश्रवणाभावाद्धृदिस्थितिमपितेषांसुदूरमितिभावः ॥ ४४ ॥ एतदेवस्फुटयंति पानेनेतिद्वाभ्यां वैराग्येसारोबलंयस्यबोधस्यतंलब्ध्वाअन्वीयुः प्राप्नुयुःअकुंठधिष्ण्यंवैकुंठलोकं॥४५॥ आत्मानिसमाधिर्मनःस्थैर्यं सएवयोगउपायः तस्यबलेन ज्ञानयोगतःश्रमेणमोक्षःसत्संगतःत्वत्कथाश्रवणादिनात्वनायासेनैव अहंममताविष्टानांतुनकथंचिदितिभावः ॥ ४६ ॥

तदेवंस्तुत्वाप्रार्थयंतेचतुर्भिः तत्तस्मात् हेआद्य तेत्वदीयावयंयस्माल्लोकानांसिसृक्षयात्वयाऽनुसृष्टाः क्रमेणउत्पादिताः त्रिभिरात्मभिः स
त्वादिस्वभावैरतएवविरुद्धस्वभावत्वाद्वियुक्ताःसंतः यदर्थंसृष्टाः तत्स्वविहारतंत्रंत्वत्क्रीडोपकरणंब्रह्मांडंतेतुभ्यंप्रतिहर्तवेप्रतिहर्तुंसमर्पयि
तुंनशक्नुमः अतस्त्वंनःस्वचक्षुःपरिदेहीतित्रयाणांश्लोकानांचतुर्थेनान्वयः ॥ ४७ ॥ असामर्थ्यमेवप्रपंचयितुंकार्यस्यातिवैचित्र्यमाहुः भो
अजकालेतत्तदवसरेबलिंभोगंयावत्साकल्येनतेतुभ्यंहरामसमर्पयाम यथायेनप्रकारेणअन्नमदामभक्षयामेत्यनेनान्नमात्रंचास्माकमैश्वर्येणतु
भोगस्तवैवेत्युक्तम् उभयेषांतवचास्माकंचयत्रस्थित्वाइमेजीवाः अनूहाःअप्रत्यूहाःनिर्विघ्नाःयद्वा अनूहाःअवितर्काःनिःसंशयाइत्यर्थः
तथाचश्रुतिः ताएनमब्रुवन्नायतनंनःप्रजानीहियस्मिन्प्रतिष्ठिताअन्नमदामेति ॥ ४८ ॥ अवश्यंचत्वयाऽस्माकमेषांचकार्योपाधीनांजीवा

तत्तेवयंलोकसिसृक्षयाऽद्यत्वयानुसृष्टास्त्रिभिरात्मभिःस्म॥सर्वैर्वियुक्ताःस्वविहारतंत्रंनशक्नुमस्तत्प्रतिहर्तवे
ते॥ ४७॥ यावद्बलिंतेऽजहरामकालेयथावयंचान्नमदामयत्र॥ यथोभयेषांतइमेहिलोकाबलिंहरंतोन्नमदं
त्यनूहाः॥४८॥त्वंनःसुराणामसिसान्वयानांकूटस्थआद्यःपुरुषःपुराणः॥त्वंदेवशक्त्यागुणकर्मयोनौरेतस्त्व
जायांकविमादधेऽजः॥ ४९॥ ततोवयंसत्प्रमुखायदर्थेबभूविमात्मन्करवामकिंते॥ त्वंनःस्वचक्षुःपरिदेहिश
क्त्यादेवक्रियार्थोयदनुग्रहाणाम् ॥५०॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपंचमोऽध्यायः॥ ५॥ छ

नांवृत्तिःपरिकल्पनीया जनकत्वादित्याहुः नोऽस्माकंसान्वयानांसकार्याणाम् यद्वा अन्वेतीत्यन्वयःकारणं तत्सहितानांत्वमेवाद्यःकार
णम् अत्रहेतवःकूटस्थः अविक्रियःपुरुषः अधिष्ठाता पुराणःपुरातनः एतदुपपादयंति त्वमिति हेदेव अजएवत्वंगुणानांसत्वादीनांक
र्मणांजन्मादीनांचयोनौकारणभूतायांशक्त्यांमायायांप्रथमंरेतआदधेनिहितवानसीत्यर्थः कीदृशंकविंसर्वज्ञंमहत्तत्वरूपम् ॥ ४९ ॥ तथां
हेआत्मन् देवसत्प्रमुखामहदादयोवयंयदर्थंबभूविम तत्किंतेकार्यंकरवाम सृष्टिमितिचेत्तत्राहुः तर्हिनोस्माकं त्वंस्वचक्षुःस्वीयंज्ञानंशक्त्या
सहपरिदेहि प्रयच्छ यस्मात्त्वत्तएवानुग्रहोयेषांतेयदनुग्रहास्तेषामस्माकंक्रियाऽर्थः इयानेवएतावाननुग्रहोयेषामित्येकंवापदम् त्वदीयज्ञा
नक्रियाशक्तिभ्यामेववयंसृष्टौक्षमानान्यथेत्यर्थः ॥ ५० ॥ इतितृतीयेटीकायांपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥

षष्ठेतैरीश्वराविष्टैः सृष्टिमाहविराट्तनोः ॥ अधिदैवादिभेदंचतत्रैवभगवत्कृतम् ॥ १ ॥ स्वशक्तीनांमहदादीनामसमेत्यअमिलित्वासतीनांस्थितानांप्रसुप्तंलोकतंत्रंविश्वरचनायासाम् यद्वा प्रसुप्तजीवोपकरणानांगतिंस्थितिंदृष्ट्वाआविशदित्युत्तरेणान्वयः ॥१॥ कालेनसंज्ञाउद्बोधोयस्याः कलयतिक्षोभयतिस्वकार्याणीतिवाकालसंज्ञाप्रकृतिः तांशक्तिंप्रकृत्यासहप्रवेशात् त्रयोविंशतितत्त्वानामित्युक्तमंतर्यामितयाप्राविशत् ॥२॥ चेष्टारूपेणक्रियाशक्त्या कर्मतेषांक्रियाम् जीवानामदृष्टंवा ॥३॥ प्रबुद्धंकर्मक्रियाशक्तिर्यस्य सत्रयोविंशतेर्गणः दैवेनेश्वरेणप्रेरितः मात्राभिः अंशैः अधिपुरुषंविराट्देहम् ॥४॥ जननमेवाह परेणविश्वसृजांतत्त्वानांगणः मात्रयाचुक्षोभपरिणतः नसर्वात्मनायस्मिन्

**ऋषिरुवाच इतितासांस्वशक्तीनांसतीनामसमेत्यसः ॥ प्रसुप्तलोकतंत्राणांनिशम्यगतिमीश्वरः ॥ १ ॥ कालसंज्ञांतदादेवींबिभ्रच्छक्तिमुरुक्रमः ॥ त्रयोविंशतितत्त्वानांगणंयुगपदाविशत् ॥२॥ सोऽनुप्रविष्टोभगवान्चेष्टारूपेणतंगणं॥भिन्नंसंयोजयामाससुप्तंकर्मप्रबोधयन् ॥३॥ प्रबुद्धकर्मादैवेनत्रयोविंशतिकोगणः ॥ प्रेरितोऽजनयत्स्वाभिर्मात्राभिरधिपूरुषं ॥ ४ ॥ परेणविशतास्वस्मिन्मात्रयाविश्वसृग्गणः ॥ चुक्षोभान्योऽन्यमासाद्ययस्मिंल्लोकाश्चराचराः॥५॥ हिरण्मयःसपुरुषःसहस्रपरिवत्सरान्॥ आंडकोशउवासाप्सुसर्वसत्वोपबृंहितः ॥ ६ ॥ सवैविश्वसृजांगर्भोदेवकर्मात्मशक्तिमान् ॥ विबभाजात्मनात्मानमेकधादशधात्रिधा ॥ ७ ॥ एषह्यशेषसत्वानामात्मांशःपरमात्मनः ॥ आद्योवतारोयत्रासौभूतग्रामोविभाव्यते॥८॥ साध्यात्मःसाधिदैवश्चसाधिभूतइतित्रिधा ॥ विराट्प्राणोदशविधएकधाहृदयेनच ॥ ९ ॥**

लोकाः स्थिताः ॥ ५ ॥ सपुरुषोऽधिपुरुषइत्युक्तः आंडकोशेब्रह्मांडमध्येसर्वैःसत्वैरनुशायिभिर्जीवैःसहितः ॥ ६ ॥ गर्भःकार्यरूपोविराट् देवशक्तिर्ज्ञानशक्तिस्तयाएकधा हृदयावच्छिन्नचैतन्यरूपेण कर्मशक्तिःक्रियाशक्तिःतयादशधाप्राणरूपेण प्राणादयःपंच नागःकूर्मश्चकृकलोदेवदत्तोधनंजयः ॥ इत्येतेपंचैवंवृत्तिभेदेनदशविधःप्राणःआत्मशक्तिर्भोक्तृशक्तिस्तयाअध्यात्मादिभेदेनत्रिधात्मानंविभक्तंकृतवान् ॥ ॥७॥ एवंविभागसामर्थ्यायतस्योत्कर्षमाह एषहीति अशेषसत्वानांप्राणिनामात्माव्यष्टीनांतदंशत्वात् अंशोजीवः अवतारत्वोक्तिःतस्मिन्नारायणाविर्भावाभिप्रायेण ॥ ८ ॥ पूर्वश्लोकार्थंविवृणोति साध्यात्मः अध्यात्मानींद्रियाणितत्सहितःविराडितिसर्वत्र ॥ ९ ॥

अध्यात्मादिभेदंप्रपंचयितुमाह स्मरन्निति विज्ञापितं यावद्वलितेजहारामेत्यादि स्वेनतेजसाचिच्छक्त्या अतएतएवंकरिष्यामीत्यालोचि तवान् यस्यज्ञानमयंतपइतिश्रुतेः विवृत्तयेविविधवृत्तिलाभाय ॥ १० ॥ मेमत्तःशृणु ॥ ११ ॥ आयतनान्येवाह तस्याग्निरित्यादिचतुर्द शभिः आस्यंनिर्भिन्नं पृथक्जातं पदंस्वस्थानं स्वांशेनस्वशक्त्यावाचासहाविशत् असौजीवःवक्तव्यंप्रतिपद्यते शब्दमुच्चारयतीत्यर्थः

स्मरन्विश्वसृजामीशोविज्ञापितमधोक्षजः॥ विराजमतपत्स्वेनतेजसैषांविवृत्तये ॥ १० ॥ अथतस्याभित प्तस्यकतिचायतनानिह ॥ निरभिद्यंतदेवानांतानिमेगदतःशृणु ॥ ११ ॥ तस्याग्निरास्यंनिर्भिन्नंलोकपा लोविशत्पदं ॥ वाचास्वांशेनवक्तव्यंययासौप्रतिपद्यते ॥ १२ ॥ निर्भिन्नंतालुवरुणोलोकपालोऽविशद्धरेः ॥ जिव्हयांऽशेनचरसंययासौप्रतिपद्यते ॥ १३ ॥ निर्भिन्नेअश्विनौनासेविष्णोराविशतांपदं ॥ घ्राणेनां शेनगंधस्यप्रतिपत्तिर्यतोभवेत् ॥ १४ ॥ निर्भिन्नेअक्षिणीत्वष्टालोकपालोऽविशद्विभोः ॥ चक्षुषांऽशेनरू पाणांप्रतिपत्तिर्यतोभवेत् ॥ १५ ॥ निर्भिन्नान्यस्यचर्माणिलोकपालोनिलोविशत् ॥ प्राणेनांशेनसंस्पर्शं येनासौप्रतिपद्यते ॥ १६ ॥ कर्णावस्यविनिर्भिन्नौधिष्ण्यंस्वंविविशुर्दिशः ॥ श्रोत्रेणांशेनशब्दस्यसिद्धिं येनप्रपद्यते ॥ १७ ॥ त्वचमस्यविनिर्भिन्नांविविशुर्धिष्ण्यमोषधीः॥ अंशेनरोमभिःकंडूंयैरसौप्रतिपद्यते ॥१८॥ मेढ्रंतस्यविनिर्भिन्नंस्वधिष्ण्यंकउपाविशत् ॥ रेतसांशेनयेनासावानंदंप्रतिपद्यते ॥१९॥ गुदंपुंसो विनिर्भिन्नंमित्रोलोकेशआविशत् ॥ पायुनांशेनयेनासौविसर्गंप्रतिपद्यते॥ २० ॥ हस्तावस्यविनिर्भिन्ना विंद्रःस्वःपतिराविशत् ॥ वार्तयांऽशेनपुरुषोययावृत्तिंप्रपद्यते ॥२१॥ ॥

सर्वत्रयन्निर्भिन्नंतदधिष्ठानमग्न्यादिप्रथमांतमधिदैवं वागादींद्रियं तृतीयांतमध्यात्मं प्रतिपत्तव्यमाधिभूतं ॥ १२ ॥ हरेःविराजः ॥ १३ ॥ ॥ १४ ॥ त्वष्टाआदित्यः ॥ १५ ॥ प्राणेनेतिप्राणवद्देहव्यापिनात्वगिंद्रियेणेत्यर्थः १६ ॥ शब्दसिद्धिर्ज्ञानं ॥ १७ ॥ त्वचंचर्म ओष धीःओषधयः त्वगिंद्रियस्यैवस्थानभेदेनविषयद्वयंकंडूःस्पर्शश्च तत्रचायंनामभेदोदेवताभेदश्चेतिद्वितीयस्कंधएवव्याख्यातं ॥ १८ ॥ कःप्रजापतिः ॥ १९ ॥ २० ॥ स्वःपतिःस्वर्गस्यपतिः वार्तयाक्रयविक्रयादिशक्त्या वृत्तिंजीविकां ॥ २१ ॥

॥ २२ ॥ विक्रियां संकल्पादिरूपां ॥ २३ ॥ आत्मानमहंकारं अभिमन्यतेअनेनेत्यभिमानोरुद्रः कर्मणाअहंवृत्त्याकर्तव्यमितिक्रियां ॥ २४ ॥ सत्वमितिबुद्धिचित्तयोरभेदेननिर्देशः महानितिब्रह्मा चित्तेनचेतनया ॥ २५ ॥ त्रिलोकोत्पत्तिमाह शीर्ष्णाइति वृत्तयःपरिणामाः ॥ २६ ॥ एतदेवप्रपंचयतिद्वाभ्यां आत्यंतिकेनउर्जितेन पणव्यवहारे पणंतेयागादिनाव्यवहरंतीतिपणयोमनुष्याः ताननुयेतदुपाकरणभूताःयेगवादयस्तेऽपिधरांप्रपेदिरे ॥ २७ ॥ तृतीयंतमःतदीयेनतामसेनउभयोर्द्यावापृथिव्योरंतरंमध्यं व्योमअंतरिक्षंतदेवभगवतो नाभिःतामाश्रिताःरुद्रपार्षदांरुद्रस्यपार्षदानांभूतादीनांगणाः ॥ २८ ॥ अवर्ततप्रवृत्तं ब्रह्मवेदः यस्तुउन्मुखत्वात् मुखोद्भवत्वात् वर्णा

पादावस्यविनिर्भिन्नौलोकेशोविष्णुराविशत् ॥ गत्यास्वांशेनपुरुषोययाप्राप्यंप्रपद्यते ॥ २२ ॥ हृदयंचास्यनिर्भिन्नंचंद्रमाधिष्ण्यमाविशत् ॥ मनसांशेनयेनासौविक्रियांप्रतिपद्यते ॥ २३ ॥ आत्मानंचास्यनिर्भिन्नमभिमानोविशत्पदं ॥ कर्मणांशेनयेनासौकर्तव्यंप्रतिपद्यते ॥ २४ ॥ सत्वंचास्यविनिर्भिन्नंमहान्धिष्ण्यमुपाविशत् ॥ चित्तेनांशेनयेनासौविज्ञानंप्रतिपद्यते ॥ २५ ॥ शीर्ष्णोऽस्यद्यौर्धरापद्भ्यांखंनाभेरुदपद्यत ॥ गुणानांवृत्तयोयेषुप्रतीयंतेसुरादयः ॥ २६ ॥ आत्यंतिकेनसत्वेनदिवंदेवाःप्रपेदिरे ॥ धरांरजःस्वभावेनपणयोयेचताननु ॥ २७ ॥ तार्तीयेनस्वभावेनभगवन्नाभिमाश्रिताः ॥ उभयोरंतरंव्योमयेरुद्रपार्षदांगणाः ॥ २८ ॥ मुखतोऽवर्ततब्रह्मपुरुषस्यकुरूद्वह ॥ यस्तून्मुखत्वाद्वर्णानांमुख्योऽभूद्ब्राह्मणोगुरुः ॥ २९ ॥ बाहुभ्योवर्ततक्षत्रंक्षत्रियस्तदनुव्रतः ॥ योजातस्त्रायतेवर्णान्पौरुषःकंटकक्षतात् ॥ ३० ॥ विशोवर्तंततस्योर्वोर्लोकवृत्तिकरीर्विभोः ॥ वैश्यस्तदुद्भवोवार्तांनृणांयःसमवर्तयत् ॥ ३१ ॥ पद्भ्यांभगवतोजज्ञेशुश्रूषाधर्मसिद्धये ॥ तस्यांजातःपुराशूद्रोयद्वृत्त्यातुष्यतेहरिः ॥ ३२ ॥

नांमुख्यःमुखमिवप्रथमःगुरुश्चाभूत् सोपिमुखतोवर्ततेत्यनुषंगः अध्यापनादिना ब्राह्मणस्यवेदोवृत्तिः तयावृत्त्यासहब्राह्मणोमुखतोजातइत्यर्थः एवमुत्तरत्रवर्णत्रयेपिज्ञातव्यं ॥ २९ ॥ क्षत्रंपालनरूपावृत्तिः तत्क्षत्रमनुव्रतः अनुसृतः क्षत्रियोपिबाहुभ्योवर्ततइत्यर्थः तदनुव्रतत्वमेवाह यइति पौरुषःपुरुषस्यविष्णोरंशः कंटकाश्चोरादयस्तेभ्यःयत्क्षतमुपद्रवस्तस्मात्त्रायतेरक्षति ॥ ३० ॥ विशःकृष्यादिव्यवसायाःलोकस्यवृत्तिकरीः जीविकाहेतवःतस्यविभोरूर्वोःप्रवृत्ताः तदुद्भवःऊरुजः वार्तांजीविकांयःस्ववृत्त्यासंपादितवान् ॥ ३१ ॥ तस्यांनिमित्तभूतायां यस्यवृत्त्याहरिःस्वयमेवतुष्यते ॥ ३२ ॥

यद्यस्माज्जाताः गुरुत्वाज्जनकत्वात् वृत्तिप्रदत्वाच्चहरेराराधनंतेषांपरोधर्मइत्यर्थः ॥ ३३ ॥ भोक्षत्तः दैवकर्मात्मरूपिणः कालकर्मस्वभाव शाक्तिमतः भगवतोयोगमायाबलेनोज्जृंभितमेतद्विराड्रूपमुपाकर्तुंसाकल्येननिरूपयितुं कः श्रद्दध्यात् इच्छेत् इच्छाऽप्यशक्यानिरूपणंतुदू रतइत्यर्थः ॥ ३४ ॥ अंगविदुर अथापिहरेःकीर्तिंकीर्तयामि यथाश्रुतंगुरुमुखात् तदपिनसर्वात्मनाकिंतुयथामतिस्वमत्यनुसारेण अन्याभि धाहरिव्यतिरिक्तार्थाभिधानंतयाऽसतींमलिनांस्वीयांवाचंसत्कर्तुंपवित्रीकर्तुम् ॥ ३५ ॥ अज्ञात्वापियथामतिकीर्तनेश्रवणेवाआवश्यकं कैवल्यमित्याह एकांततोलाभंनुनिश्चितमाहुः श्रुतेःश्रोत्रस्य उपाकृतायांनिरूपितायां उपसंप्रयोगंसन्निधावर्पणम् ॥ ३६ ॥ नत्वती वज्ञानेनिर्बंधःकर्तव्यः ब्रह्मणोपिदुर्ज्ञेयत्वादित्याह आत्मनोहरेर्महिमायोगविपक्कयाऽपिसंवत्सरसहस्रांतेऽपिआदिकविनाब्रह्मणापिकिं

एतेवर्णाःस्वधर्मेणयजंतिस्वगुरुंहरिम्॥श्रद्धयात्मविशुद्ध्यर्थंयज्जाताःसहवृत्तिभिः ॥३३॥ एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ॥ कःश्रद्दध्यादुपाकर्तुंयोगमायाबलोदयम् ॥३४॥ अथापिकीर्तयाम्यंगयथामतियथा श्रुतम्॥कीर्तिंहरेःस्वांसत्कर्तुंगिरमन्याभिधाऽसतीम् ॥३५॥ एकांतलाभंवचसोनुपुंसांसुश्लोकमौलेर्गुणवा दमाहुः ॥ श्रुतेश्चविद्वद्भिरुपाकृतायांकथासुधायामुपसंप्रयोगं ॥ ३६ ॥ आत्मनोवसितोवत्समहिमाक विनादिना॥संवत्सरसहस्रांतेधियायोगविपक्कया ॥३७॥ अतोभगवतोमायामायिनामपिमोहिनी॥यत्स्व यंचात्मवर्त्मात्मानवेदकिमुतापरे ॥३८॥ यतोऽप्राप्यनिवर्तंतेवाचश्चमनसासह॥अहंचान्यइमेदेवास्तस्मै भगवतेनमः ॥ ३९ ॥ इ०भा०तृ०षष्ठोऽध्यायः ॥ ६ ॥ श्रीशुकउवाच एवंब्रुवाणंमैत्रेयंद्वैपायनसुतो बुधः ॥ प्रीणयन्निवभारत्याविदुरःप्रत्यभाषत ॥ १ ॥

मवसितः किंज्ञातः इतिकाकूक्त्याएतावानितिनज्ञातएवेत्युक्तम् ॥ ३७ ॥ यद्यस्मात्स्वयमपि आत्माहरिः आत्मवर्त्मस्वमायागतिमेताव दितिनवेद अनंतत्वात् ॥ ३८ ॥ अतोदुर्ज्ञेयत्वात्केवलंनमस्करोति यतइति यस्यज्ञानायप्रवृत्तावाचोऽपिमनसासह तमप्राप्यैवन्यवर्तं तदुर्ज्ञेयत्वात् नकेवलंवाङ्मनसी अहमहंकारस्याधिष्ठातारुद्रोऽपि इमेइंद्रियाधिष्ठातारोदेवाःअन्येच ॥ ३९ ॥ इतितृतीयस्कंधेटीकायांषष्ठः ॥ ६ ॥ ॥ सप्तमेसंशयच्छेदिप्रतिनंद्यमुनेर्वचः ॥ पुनःक्षत्त्राकृतानानाप्रश्नाःसम्यगुदीरिताः ॥ १ ॥ अथतेभगवल्लीलायोगमायोपबृंहिता इत्यादिनामायागुणैःलीलयाभगवान्सृष्ट्यादिकरोतीत्येवंब्रुवाणं भारत्याप्रार्थनारूपया प्रीणयन्निवेति अभिप्रायज्ञानेनाक्षेपात् ॥ १ ॥

निर्विकारस्यक्रियानिर्गुणस्यचगुणाःकथं लीलयेत्युक्तिःप्रयोजनाभावंपरिहरति नवस्तुविरोधमितिभावः ॥ २ ॥ अर्भकवल्लीलाऽपिनयुज्यतेवैषम्यादित्याह उद्यमयतिप्रवर्तयतीतिउद्यमः अर्भकस्यक्रीडायांप्रवृत्तिहेतुःकामोऽस्ति अन्यतरस्तुवरस्त्वंतरेणबालांतरप्रवर्तनेनबातस्यक्रीडेच्छाभवति ईश्वरस्यतुस्वतस्तृप्तस्यकथंकामः अन्यतःसदानिवृत्तस्यच असंगाद्द्वितीयस्यकथमन्यतश्चिक्रीडिषेत्यर्थः ॥ ३ ॥ यच्चोक्तंस्मरन्विश्वसृजामीशोविज्ञापितमधोक्षजइत्यादिना अविद्योपाधेर्जीवस्यभोगार्थमीश्वरःसृष्ट्यादिकरोतीति तदप्याक्षेप्तुमनुवदति अस्राक्षीदिति गुणमयीआत्मनोजीवस्यकर्तृत्वभोक्तृत्वादिमोहोत्पादिकायामायातयासृष्टवान् तदुक्तंप्रथमे ययासंमोहितोजीवआत्मानंत्रिगुणात्मकम् ॥ परोऽपिमनुतेऽनर्थंतत्कृतंचाभिपद्यतइत्यादिना अत्रच अतोभगवतोमायामायिनामपिमोहिनीति संस्थापयतिपालयति प्रत्यभिधास्यतिप्रातिलोम्येनतिरोहितंकरिष्यति पाठांतरेप्रातिलोम्येनात्मनिअभितोधारयिष्यति ॥ ४ ॥ एतच्चजीवस्याविद्याश्रयत्वेघटे

विदुरउवाच ब्रह्मन्कथंभगवतश्चिन्मात्रस्याविकारिणः ॥ लीलयाचापियुज्येरन्निर्गुणस्यगुणाःक्रियाः॥ ॥२॥क्रीडायामुद्यमोऽर्भस्यकामश्चिक्रीडिषाऽन्यतः॥स्वतस्तृप्तस्यचकथंनिवृत्तस्यसदान्यतः॥३॥अस्राक्षीद्भगवान्विश्वंगुणमय्यात्ममायया ॥ तयासंस्थापयत्येतद्भूयःप्रत्यभिधास्यति ॥४॥ देशतःकालतोयोऽसाववस्थातःस्वतोऽन्यतः ॥ अविलुप्तावबोधात्मासयुज्येताजयाकथम् ॥५॥ भगवानेकएवैकःसर्वक्षेत्रेष्ववस्थितः ॥ अमुष्यदुर्भगत्वंवाक्लेशोवाकर्मभिःकुतः ॥ ६ ॥ एतस्मिन्मेमनोविद्वन्खिद्यतेज्ञानसंकटे ॥ तन्नःपराणुदविभोकश्मलंमानसंमहत् ॥ ७ ॥

तनतुतत्संभवतीत्याह देशतइति योऽसौदेशादिभिरविलुप्तावबोधआत्माजीवःब्रह्मस्वरूपत्वात् सकथमजयाअविद्ययायुज्येत तत्रदेशतोदीपप्रभायाइवलोपोनास्तिसर्वगतत्वात् नकालतोविद्युतइवनित्यत्वात् नावस्थातःस्मृतिवत् अविक्रियत्वात् नस्वतःस्वप्नवत्सत्यत्वात् नान्यतःघटादिवत् अद्वितीयत्वात् एवमेतैर्यस्यबोधोनलुप्यतेसकथमजयायुज्येत अजाचात्राविद्यैवनमाया तस्याअवबोधेनविरोधाभावात् ॥ ५ ॥ किंचब्रह्मरूपत्वादेवजीवस्यसंसारोऽपिनविद्यतइत्याक्षिपाति सर्वक्षेत्रेष्ववस्थितोभोक्ताऽपिवस्तुतोभगवानेवाचिद्रूपत्वेनतद्व्यतिरेकाभावात् एवंचसतिअमुष्यजीवस्यदुर्भगत्वमानंदादिभ्रंशः कर्मभिर्हेतुभूतैःक्लेशोवाकुतः कर्मसंबंधाभावात् अन्यथाईश्वरस्यापितत्प्रसंगःस्यादितिभावः ॥ ६ ॥ अज्ञानमेवसंकटंदुर्गंयस्मिन्तन्मानसंकश्मलंमोहंपराणुद अपाकुरु ॥ ७ ॥

चोदितः आक्षिप्तः स्मयन्निव प्रौढिमाविष्कुर्वन्निव वस्तुतस्तुगतस्मयः ॥ ८ ॥ भगवतोऽचिंत्यशक्तेरीश्वरस्यसेयंमाया नयेनतर्केणविरुध्यतइति यत् तर्कविरोधमेवानुवदति विमुक्तस्यैवपुंसोऽविद्ययाबंधनंकार्पण्यंचेति ॥९॥ अत्रोदाहरणमाह यद्यथा अर्थेनशिरच्छेदादिनाविनाऽपि उपद्रष्टुः स्वप्नसाक्षिणः ममेदंशिरश्छिन्नमित्यात्मविपर्ययः केवलंमृषैवप्रतीयतेतद्वत् ॥ १० ॥ तर्हीश्वरस्यापिकिंनप्रतीयेततत्राह यथाजलेप्रतिबिंबितस्यैवचंद्रमसोजलोपाधिकृतः कंपादिधर्मोदृश्यते नत्वाकाशेस्थितस्य तथाअनात्मनोदेहादेर्धर्मः असन्नपितदभिमानिनोद्रष्टुरात्मनोजीवस्यैवनत्वीश्वरस्येत्यर्थः ॥ ११ ॥ तन्निवृत्त्युपायमाह सवैअनात्मनोगुणः निवृत्तिधर्मेणवासुदेवानुकंपातयाच तस्मिन्भक्तियोगः तेनातिरोधत्ते अदृश्योभवति शनैरित्यनेनसाधनानुसारेणेत्युक्तम् ॥१२॥ तर्हिसर्वानर्थनिवृत्तिः कदेत्यपेक्षायामाह यदेंद्रियाणामुपरामोनैश्चल्यं क्वद्रष्टुरात्मनि

श्रीशुकउवाच सइत्थंचोदितःक्षत्त्रातत्त्वजिज्ञासुनामुनिः ॥ प्रत्याहभगवच्चित्तःस्मयन्निवगतस्मयः ॥८॥
मैत्रेयउवाच सेयंभगवतोमायायन्नयेनविरुध्यते ॥ ईश्वरस्यविमुक्तस्यकार्पण्यमुतबंधनम् ॥ ९ ॥ यदर्थेनविनाऽमुष्यपुंसआत्मविपर्ययः ॥ प्रतीयतउपद्रष्टुःस्वशिरश्छेदनादिकः ॥ १० ॥ यथाजलेचंद्रमसःकंपादिस्तत्कृतोगुणः ॥ दृश्यतेऽसन्नपिद्रष्टुरात्मनोऽनात्मनोगुणः ॥ ११ ॥ सवैनिवृत्तिधर्मेणवासुदेवानुकंपया ॥ भगवद्भक्तियोगेनतिरोधत्तेशनैरिह ॥ १२ ॥ यदेंद्रियोपरामोथद्रष्ट्रात्मनिपरेहरौ ॥ विलीयंतेतदाक्लेशाःसंसुप्तस्येवकृत्स्नशः ॥ १३ ॥ अशेषसंक्लेशशमंविधत्तेगुणानुवादश्रवणंमुरारेः ॥ कुतःपुनस्तच्चरणारविंदपरागसेवारतिरात्मलब्धा ॥ १४ ॥ विदुरउवाच संछिन्नःसंशयोमह्यंतवसूक्तासिनाविभो ॥ उभयत्रापिभगवन्मनोमेसंप्रधावति ॥ १५ ॥ ॥ ॥ ॥

अंतर्यामिरूपे अथअनंतरमेव कृत्स्नक्लेशविलयमात्रेदृष्टांतः संसुप्तस्येवेति नतुपुनरुत्थाने ॥ १३ ॥ भक्तियोगेनक्लेशनिवृत्तिंदर्शयति अशेषेति गुणानामनुवादश्चश्रवणंच आत्मनिमनसिलब्धा श्रवणकीर्तनापेक्षयासप्रेमध्यानेकिंपुनर्न्यायोक्तिः ॥ १४॥ उक्तमभिनंदन्नात्मनःकृतार्थतामाविष्करोति संछिन्नइतिषड्भिः चिद्रूपत्वाविशेषेऽपिकथमीश्वरस्यजगत्कर्तृत्वादि कथंवाजीवस्यसंसारइतियःसंशयोममासीत् सतव सूक्तंसोपपत्तिकंवाक्यमेवासिःखड्गस्तेनसंछिन्नःअतइदानींमेमनः उभयत्रापिईश्वरस्वातंत्र्येजीवपारतंत्र्येच संप्रधावतिसम्यक्प्रविशति एवंवाअविलुप्तावबोधरूपस्यात्मनःकथमविद्ययाबंधःकुतोवातन्निवृत्तिरितिसंशयः उभयत्रेति बंधेमोक्षेचेत्यर्थः ॥ १५ ॥

यस्मात्त्वयासाधुव्याहृतम् किंतत् हरेःशक्तिर्याआत्ममायाजीवविषयातदयनंतदाश्रयमेतद्दुर्भगत्वादिकंभातीति यद्यस्मात्स्वशिरश्छेदा दिवदपार्थमवस्तुभूतंमूलशून्यंच यस्मादस्यविश्वस्यमूलंस्वाज्ञानंविनाबाहिर्नास्ति ॥ १६ ॥ अल्पज्ञत्वात्पूर्वंममसंशयोजातइत्याह यश्चे ति मूढतमोदेहाद्यासक्तः यश्चबुद्धेःप्रकृतेःपरमीश्वरंप्राप्तस्तौसुखंयथाभवतितथा एधेतेजीवतइत्यर्थः संशयक्लेशाभावात् यस्तुसुखदुःखा नुसंधानेनप्रपंचंजिहासति स्वानंदसंवेदनाभावाद्धातुंनशक्नोतिसतुक्लिश्यतीत्यर्थः ॥ १७ ॥ इदानींतुकृतार्थोऽस्मीति यतस्त्वयासंशय श्छिन्नः केवलंबाधितानुवृत्तिरेवावशिष्टा सापियुष्मत्प्रसादान्निवर्तिष्यतइत्याह नात्मनः अनात्मनः प्रपंचस्यप्रतीतस्यापिअर्थाभावम र्थोऽत्रनास्तिकिंतुप्रतीतिमात्रमितियुष्मच्चरणसेवयानिश्चित्य तांप्रतीतिमप्यहंपराणुदे अपनेष्यामीत्यर्थः ॥ १८ ॥ मधुद्विषःपादयोरतिरा

साध्वेतद्व्याहृतंविद्वन्आत्ममायायनंहरेः ॥ आभात्यपार्थंनिर्मूलंविश्वमूलंनयद्बहिः ॥ १६ ॥ यश्चमूढत मोलोकेयश्चबुद्धेःपरंगतः ॥ तावुभौसुखमेधेतेक्लिश्यत्यंतरितोजनः ॥ १७ ॥ अर्थाभावंविनिश्चित्यप्रती तस्यापिनात्मनः ॥ तांचापियुष्मच्चरणसेवयाऽहंपराणुदे ॥ १८ ॥ यत्सेवयाभगवतःकूटस्थस्यमधुद्विषः ॥ रतिरासोभवेत्तीव्रःपादयोर्व्यसनार्दनः ॥ १९ ॥ दुरापाह्यल्पतपसःसेवावैकुंठवर्त्मसु ॥ यत्रोपगीय तेनित्यंदेवदेवोजनार्दनः ॥ २० ॥ सृष्ट्वाग्रेमहदादीनिसविकाराण्यनुक्रमात् ॥ तेभ्योविराजमुद्धृत्यतम नुप्राविशद्विभुः ॥ २१ ॥ यमाहुराद्यंपुरुषंसहस्रांघ्र्यूरुबाहुकम् ॥ यत्रविश्वइमेलोकाःसविकाशंसमास ते ॥ २२ ॥ यस्मिन्दशविधःप्राणःसेंद्रियार्थेंद्रियस्त्रिवृत् ॥ त्वयेरितोयतोवर्णास्तद्विभूतीर्वदस्वनः ॥ ॥ २३ ॥ यत्रपुत्रैश्चपौत्रैश्चनप्तृभिःसहगोत्रजैः ॥ प्रजाविचित्राकृतयआसन्याभिरिदंततम् ॥ २४ ॥

सःप्रेमोत्सवस्तीव्रःदुर्वारःस्वाभाविकःव्यसनंसंसारमर्दयतिनाशयतीतितथा ॥ १९ ॥ अहोदुर्लभंप्राप्तंमयेत्याह दुरापादुर्लभा वैकुंठस्य विष्णोस्तल्लोकस्यवावर्त्मसुमार्गभूतेषुसत्सु यत्रयेषुमहत्सेवयाहरिकथाश्रवणंततोहरौप्रेमतेनचदेहाद्यनुसंधानमपिनिवर्ततइतितात्पर्यम् ॥ २० ॥ अर्थांतरंप्रष्टुंतदुक्तमनुवदतित्रिभिः सृष्ट्वेति विकारैरिंद्रियादिभिःसहितानि उद्धृत्यतदंशैर्विराजंसृष्ट्वा ॥ २१ ॥ प्रविष्टस्यस्व रूपमाह यमिति विराजंविशिनष्टि यत्रेति तइमेविश्वेसर्वेलोकाःसविकाशमसंकोचेन ॥ २२ ॥ प्राणादयःपंचनागादयःपंचेतिएवंदश विधः इंद्रियाणिचअर्थाश्च इंद्रियाणिचेतिपुनरुक्तिस्तद्देवतालक्षणार्था तत्सहितःसर्वोपबृंहकत्वात्प्राणस्यतत्साहित्यं एवंत्रिविधःप्राण स्त्वयेरितउक्तः तस्यविभूतीर्ब्रह्माद्याःविसर्गशब्दवाच्याः ॥ २३ ॥ यत्रयासुइदंविश्वंततंव्याप्तम् ॥ २४ ॥ ॥

एवमेतत्पुरापृष्टोमैत्रेयोभगवान्किलेतिपरीक्षित्प्रश्नोत्तरतयाविदुरमैत्रेयसंवादःप्रस्तावितः अतस्तानेवविदुरेणकृतान्प्रश्नानाह यावत्समाप्ति प्रजापतीनांपतिर्ब्रह्मेत्यादीनांवर्णयेतिवक्ष्यमाणेनान्वयःचक्लृपेअकल्पयत्सर्गान्नवविधान्अनुसर्गान्तद्भेदान् ॥ २५ ॥ हेमित्रायाआत्म ज ॥ २६ ॥ संस्थांसन्निवेशंसर्गाणांसंव्यूहं संविभागं गार्भस्वेदद्विजोद्भिदां गार्भाजरायुजाः स्वेदाच्चद्वाभ्यांचजाताःस्वेदद्विजाःउद्भि

प्रजापतीनांसपतिश्चक्लृपेकान्प्रजापतीन् ॥ सर्गांश्चैवानुसर्गांश्चमनून्मन्वंतराधिपान् ॥ २५ ॥ एतेषाम पिवंशांश्चवंश्यानुचरितानिच ॥ उपर्यधश्चयेलोकाभूमेर्मित्रात्मजासते ॥ २६ ॥ तेषांसंस्थांप्रमाणंचभूर्लो कस्यचवर्णय ॥ तिर्यङ्मानुषदेवानांसरीसृपपतत्रिणाम् ॥ वदनःसर्गसंव्यूहंगार्भस्वेदद्विजोद्भिदाम् ॥ २७ ॥ गुणावतारैर्विश्वस्यसर्गस्थित्यप्ययाश्रयम् ॥ सृजतःश्रीनिवासस्यव्याचक्ष्वोदारविक्रमम् ॥ २८ ॥ वर्णाश्र मविभागांश्चरूपशीलस्वभावतः ॥ ऋषीणांजन्मकर्मादिवेदस्यचविकर्षणम् ॥ २९ ॥ यज्ञस्यचवितानानि योगस्यचपथःप्रभो ॥ नैष्कर्म्यस्यचसांख्यस्यतंत्रंवाभगवत्स्मृतं ॥ ३० ॥ पाखंडपथवैषम्यंप्रतिलोमनिवेशन म् ॥ जीवस्यगतयोयाश्चयावतीर्गुणकर्मजाः ॥ ३१ ॥ धर्मार्थकाममोक्षाणांनिमित्तान्यविरोधतः ॥ वार्ताया दंडनीतेश्चश्रुतस्यचविधिंपृथक् ॥ ३२ ॥ श्राद्धस्यचविधिंब्रह्मन्पितृणांसर्गमेवच ॥ ग्रहनक्षत्रताराणांकाला वयवसंस्थितिम् ॥ ३३ ॥ दानस्यतपसोवापियच्चेष्टापूर्तयोःफलं ॥ प्रवासस्थस्ययोधर्मोयश्चपुंसउतापदि ॥ ॥ ३४ ॥ येनवाभगवांस्तुष्येद्धर्मयोनिर्जनार्दनः ॥ संप्रसीदतिवायेषामेतदाख्याहिचानघ ॥ ३५ ॥ अनुव्र तानांशिष्याणांपुत्राणांचद्विजोत्तम ॥ अनापृष्टमपिब्रूयुर्गुरवोदीनवत्सलाः ॥ ३६ ॥ ॥

दश्चतेषां ॥ २७ ॥ सर्गादीनाश्रयंचसृजतः ॥ २८ ॥ रूपंलिंगं शीलमाचारः स्वभावःशमादिः ततःविकर्षणंविभागान् ॥ २९ ॥ वितानानिविस्तारान् नैष्कर्म्यस्यचज्ञानस्यतदुपायस्यचसांख्यस्यपथः मार्गान्तंत्रंचेत्यर्थः ॥ ३० ॥ पाखंडानांपंथाःप्रवृत्तिः तदेववैषम्यं ॥ ३१ ॥ निमित्तान्युपायान्परस्पराविरोधेन ॥ ३२ ॥ ग्रहादीनांकालचक्रेसंस्थितिम् ॥ ३३ ॥ ३४ ॥ येनमार्गेणसंतुष्येत् येषामिति यादृशानां ॥ ३५ ॥ अनापृष्टमपिअपृष्टमपियद्योग्यंवक्तव्यमितिभावः ॥ ३६ ॥ ॥ ॥

प्रतिसंक्रमः प्रलयः तत्रप्रलयेइमंपरमेश्वरंशयानंराजानमिवचामरग्राहिणः केवानुशेरते शयानमनुस्वपंति ॥ ३७ ॥ पुरुषस्यसंस्थानंजी वस्यतत्त्वं परमेश्वरस्यस्वरूपं येनांशेनतयोरैक्यंतथाज्ञानंच नैगममौपनिषदं यानिसूरिभिः प्रोक्तानितस्यज्ञानस्यसाधनानिचब्रूहि ॥ ३८ ॥ गुरुंविनैतन्नभवतीत्याह स्वतइति मेप्रश्नान्ममित्रत्वात् स्निग्धत्वादितिअन्वयभेदान्नमेपदस्यपौनरुक्त्यं ॥ ३९ ॥ तत्त्वोपदेशेनजीवाभयंप्रदा नस्य ॥ ४० ॥ पुराणेकल्पतेप्रकाशतइतिपुराणकल्पोबुभुत्सितोऽर्थः आपृष्टः पुराणकल्पोयंमुनिप्रधानः सः ॥ ४१ ॥ इ० तृ० टी० सप्तमः ॥ ७ ॥ अष्ट

तत्त्वानांभगवंस्तेषांकतिधाप्रतिसंक्रमः ॥ तत्रेमंकउपासीरन्कउस्विदनुशेरते ॥ ३७ ॥ पुरुषस्यचसंस्था नंस्वरूपंवापरस्यच ॥ ज्ञानंचनैगमंयत्तद्गुरुशिष्यप्रयोजनं ॥ निमित्तानिचतस्येहप्रोक्तान्यनघसूरिभिः ॥ ॥ ३८ ॥ स्वतोज्ञानंकुतःपुंसांभक्तिर्वैराग्यमेववा ॥ एतान्मेपृच्छतःप्रश्नान्हरेःकर्मविवित्सया ॥ ब्रूहिमे ऽज्ञस्यमित्रत्वादजयानष्टचक्षुषः ॥ ३९ ॥ सर्वेवेदाश्चयज्ञाश्चतपोदानानिचानघ ॥ जीवाभयप्रदानस्यन कुर्वीरन्कलामपि ॥ ४० ॥ श्रीशुकउवाच सइत्थमापृष्टपुराणकल्पःकुरुप्रधानेनमुनिप्रधानः ॥ प्रवृद्ध हर्षोभगवत्कथायांसंचोदितस्तंप्रहसन्निवाह ॥ ४१ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेसप्तमोऽ ध्यायः ॥ ७ ॥ ॥ मैत्रेयउवाच सत्सेवनीयोबतपूरुवंशोयल्लोकपालोभगवत्प्रधानः ॥ बभूविथेहाजि तकीर्तिमालांपदेपदेनूतनयस्यभीक्ष्णं ॥ १ ॥ सोहंनृणांक्षुल्लसुखायदुःखंमहद्गतानांविरमायतस्य ॥ प्रवर्त्त येभागवतंपुराणंयदाहसाक्षाद्भगवानृषिभ्यः ॥ २ ॥ आसीनमुर्व्यांभगवंतमाद्यंसंकर्षणंदेवमकुंठसत्वं ॥ विवित्सवस्तत्त्वमतःपरस्यकुमारमुख्यामुनयोऽन्वपृच्छन् ॥ ३ ॥

मेसमभूद्ब्रह्मानाभेस्तुजलशायिनः ॥ तमजानन्जलेबिभ्यत्तपसातोषयद्विभुं ॥ १ ॥ श्रोतारमभिनंदति सतांसेवितुंयोग्यः बतअहो यद्यस्मात्इ हअस्मिन्वंशेबभूविथजातोसिकथंभूतः भगवानेवप्रधानभूतोयस्यसः अत्रहेतुःप्रतिक्षणंनूतनयसिनवीनांकरोषि ॥ १ ॥ अल्पसुखायमहद्दुःखं प्राप्तानांतस्यदुःखस्यविरमाय प्रवर्तयेप्रारभे भागवतंपुराणंयदाहसाक्षाद्भगवानृषिभ्यः ॥ २ ॥ कोसौभगवान्केभ्यश्चऋषिभ्यआह कथंचत्वया प्राप्तमित्यपेक्षायामाह आसीनमितिसप्तभिः उर्व्यांपातालतलेअकुंठसत्त्वमप्रतिहतज्ञानमतःसंकर्षणात्परस्यश्रीवासुदेवस्य ॥ ३ ॥

तमेवविशिनष्टि स्वमेवधिष्ण्यंस्वीयमाश्रयंवासुदेवसंज्ञंपरमानंदरूपंध्यानपथेऽनुभूयबहुमानयंतंसर्वोत्कर्षेणपूजयंतं प्रत्यग्धृतमंतर्मुखीकृ
तम् नेत्रांबुजमुकुलंकिंचिदुन्मीलयंतंकृपाऽवलोकेनसनत्कुमारादीनामभ्युदयार्थम् ॥ ४ ॥ मुनीनांविशेषणंसार्धेनस्वर्धुन्याउदकेनार्द्रै
रितिश्रीभागवतश्रवणार्थंसत्यलोकात्पातालंप्रत्यवतरंतोनिरंतरगंगामध्यतएवावतीर्णाइतिभावः चरणौउपधीयेतेयस्मिन्पद्मेतदुपस्पृशं
तोनमंतः कथंभूतंतदाह यत्पद्मंप्रेमसहितंयथाभवत्येवंनानोपहारैःपूजयंति वरार्थाःपतिकामाः ॥ ५ ॥ कृतानिकर्माणिगृणंतःकेनअनुरा
गेणस्खलंतिपदानियस्मिन्तेनवचसातानिजानंतीतितज्ज्ञाः सहस्रमेवसाहस्रंकिरीटानांसाहस्रेयेमणिप्रवेकाःरत्नोत्तमास्तैः प्रद्योतितमुद्दा

स्वमेवधिष्ण्यंबहुमानयंतंयंवासुदेवाभिधमामनंति ॥ प्रत्यग्धृताक्षांबुजकोशमीषदुन्मीलयंतंविबुधोदया
य ॥ ४ ॥ स्वर्धुन्युदार्द्रैःस्वजटाकलापैरुपस्पृशंतश्चरणोपधानं ॥ पद्मंयदर्चंत्यहिराजकन्याः सप्रेमनाना
बलिभिर्वरार्थाः ॥ ५ मुहुर्गृणंतोवचसाऽनुरागस्खलत्पदेनास्यकृतानितज्ज्ञाः ॥ किरीटसाहस्रमणिप्रवे
कप्रद्योतितोद्दामफणासहस्रं ॥ ६ प्रोक्तंकिलैतद्भगवत्तमेननिवृत्तिधर्माभिरतायतेन ॥ सनत्कुमारायस
चाहपृष्टःसांख्यायनायांगधृतव्रताय ॥ ७ ॥ सांख्यायनःपारमहंस्यमुख्योविवक्षमाणोभगवद्विभूतीः ॥
जगादसोऽस्मद्गुरवेऽन्वितायपराशरायाथबृहस्पतेश्च ॥ ८ ॥ प्रोवाचमह्यंसदयालुरुक्तोमुनिःपुलस्त्येनपु
राणमाद्यं ॥ सोऽहंतवैतत्कथयामिवत्सश्रद्धालवेनित्यमनुव्रताय ॥ ९ ॥ उदाप्लुतंविश्वमिदंतदासीद्यन्निद्र
याऽमीलितदृङ्न्यमीलयत् ॥ अहींद्रतल्पेऽधिशयानएकःकृतक्षणःस्वात्मरतौनिरीहः १० ॥

मफणानांसहस्रंयस्यतम् अपृच्छन्निंतिपूर्वेणान्वयः ॥ ६ ॥ तेनसंकर्षणेनसनत्कुमारायप्रोक्तं ॥ ७ ॥ पारमहंस्येधर्मेमुख्यः विवक्षमाणइ
त्यात्मनेपदंब्रुवादेशश्चवचेरुभयपादित्वात् अन्वितायअनुगताय ॥ ८ ॥ पुलस्त्येनोक्तइत्यत्रैवमाख्यायिका पितरंराक्षसभक्षितंश्रुत्वापरा
शरोराक्षससत्रेप्रवृत्तोवसिष्ठवचनान्निवृत्तस्ततःपुलस्त्येनस्वसंततिरक्षणात्तुष्टेनवरोदत्तःपुराणप्रवक्ताभविष्यसीति ॥९॥ तदेवंसंकर्षणात्संप्र
दायप्रवृत्तिंप्रदर्श्यविभूतिकथनायपद्मोद्भवंवक्तुमाह उदाप्लुतमेकार्णवोदकेनिमग्नंयत्यदाआसीत्तदाअमीलितदृक् अतिरोहितचिच्छक्तिरे
वश्रीनारायणोनेत्रेनिमीलितवानित्यर्थः मायाविनोदंपरित्यज्य स्वात्मरतौस्वरूपानंदएवकृतोत्सवःअतएवनिरीहःनिष्क्रियःसन् ॥ १० ॥

कालशक्तेः प्रेरणंपुनः सृष्ट्यवसरेप्रबोधनार्थं स्वेपदे अधिष्ठाने बहिर्वृत्त्यभावेदृष्टांतः यथाऽनलइति ॥ ११ ॥ स्वया चिच्छक्त्यासहवर्तमा नएवयोगनिद्रयास्वपन् पूर्वमेवबोधनार्थंनियुक्तयास्वकालशक्त्या आसादितंप्रापितंकर्मतंत्रंक्रियाकलापोयस्यसः अपितान्लीनान्ददर्श ॥ १२ ॥ लोकसृष्ट्यर्थमर्थसूक्ष्मेऽभिनिविष्टादृष्टिर्यस्य कालानुसारिणारजोगुणेनविद्धः संक्षोभितः सन्तनीयानतिसूक्ष्मोर्थः सूष्यन्प्रसोष्यन् उद्गविष्यन्नाभिदेशादुद्भूतइत्यर्थः ॥ १३ ॥ सः तनीयानर्थः पद्मकोशः सन्नुदतिष्ठत् कर्माणिजीवादृष्टानिप्रतिप्रबोधयतियः कालस्तेनआत्माश्रीविष्णुर्योनिर्यस्य ॥ १४ ॥ तल्लोकात्मकंपद्मंसर्वान्जीवभोग्यानर्थानवभासयतीतितथा तत् यस्माज्जातंसएवविष्णुः उइतिसंबोधने प्रावीविशत्प्रकर्षेणालुप्तशक्तिरेवांतर्यामितयाविवेश तस्मिन्विष्णुनाअधिष्ठितेपद्मेविधाताब्रह्माऽभूत्कथंभूतः स्वयमेववेदमयः न

सोंऽतःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकांशक्तिमुदीरयाणः ॥ उवासतस्मिन्सलिलेपदेस्वेयथाऽनलोदारुणिरुद्धवीर्यः ॥११॥ चतुर्युगानांचसहस्रमप्सुश्वपन्स्वयोदीरितयास्वशक्त्या ॥ कालाख्ययासादितकर्मतंत्रोलोकानपीतान्ददृशेस्वदेहे॥१२॥ तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरंतर्गतोऽर्थोरजसातनीयान्॥ गुणेनकालानुगतेनविद्धः सूष्यन्तदाऽभिद्यतनाभिदेशात् ॥१३॥ सपद्मकोशः सहसोदतिष्ठत्कालेनकर्मप्रतिबोधनेन ॥ स्वरोचिषातत्सलिलंविशालंविद्योतयन्नर्कइवात्मयोनिः ॥१४॥ तल्लोकपद्मंसउएवविष्णुः प्रावीविशत्सर्वगुणावभासं॥ तस्मिन्स्वयंवेदमयोविधातास्वयंभुवंयंस्मवदंतिसोऽभूत् ॥१५॥ तस्यांसचांभोरुहकर्णिकायामवस्थितोलोकमपश्यमानः॥ परिक्रमन्व्योम्निविवृत्तनेत्रश्चत्वारिलेभेऽनुदिशंमुखानि॥१६॥ तस्माद्युगांतश्वसनावघूर्णजलोर्मिचक्रात्सलिलाद्विरूढं ॥ अपाश्रितः कंजमुलोकतत्त्वंनात्मानमद्धाऽविददादिदेवः॥१७॥

त्वध्ययनेनप्राप्तवेदः कोऽसौअदृष्टपितृत्वेनयंस्वयंभुवंवदंतिसः प्राक्कल्पांते नारायणेनसहनिद्रयैकीभूतआसीत् तस्मिंश्चप्रबुद्धेततएवपाद्मेकल्पेपद्मद्वारेणाभिव्यक्तिंप्राप्तइत्यर्थः ॥ १५ ॥ सचतस्मिन्कल्पेचतुर्मुखोऽभूदित्याह तस्यामिति परिक्रमन्तत्रस्थएवग्रीवांचालयन् लोकनिरीक्षणार्थंविवृत्तेविचालितेनेत्रेयस्य ॥ १६ ॥ तस्यचश्रीनारायणोपासनयैवाविर्भूतज्ञानक्रियाशक्तेर्लोककर्तृकत्वंनस्वतइतिवक्तुंप्रथमंतस्यविमोहमाह तस्मात्सलिलाद्विरूढमुद्गतंकंजमपाश्रितोऽपिसाकल्येनतत्कंजंलोकतत्त्वंचात्मानंचसाक्षान्नज्ञातवान् उइतिविस्मये कथंभूताद्युगांतश्वसनः प्रलयवायुः तेनावघूर्णंतत्रतत्रप्रकंपितं यज्जलंतस्मात्सर्वतऊर्मिचक्रंयस्मिन् ॥ १७ ॥ ॥

अविदुषस्तस्यवितर्कमाह योसावहमब्जपृष्ठेएषःकः नान्यत् एकमेवैतदब्जंकुतोवाजातं यत्रैतदधिष्ठितंतेनअधस्तात्सतावर्तमानेननुनिश्चितं
भाव्यं सइत्थमुद्वीक्ष्येत्युत्तरेणान्वयः तथाचश्रुतिः सोऽपश्यत्पुष्करपर्णेतिष्ठन्सोमन्यतअस्तिवैतत् यस्मिन्निदमधितिष्ठतीति ॥ १८ ॥ तस्य
चबहिर्मुखप्रवृत्त्यामहताऽपिकालेनतदप्राप्तिमाह सइतिद्वाभ्यां तस्याब्जस्ययन्नालंतस्यनाडीभिरंतश्छिद्रैः तस्यखरनालस्यपद्मस्ययन्ना
लंतस्यनाभिमधिष्ठानंविचिन्वन्नर्वाग्गतोऽपितत्तदानाविंदत ॥ १९ ॥ आत्मसर्गं स्वकारणं त्रिणेमिःकालः अजस्यविष्णोर्हेतिः सुदर्शनरू
पंशस्त्रं देहभाजांनराणांभयमुत्पादयन्नितिसंवत्सरशतमतिक्रांतमित्युक्तंभवति ॥ २० ॥ अंतर्मुखतयातुभगवंतंदृष्टवानित्याहद्वाभ्यां त

कएषयोऽसावहमब्जपृष्ठएतत्कुतोवाऽब्जमनन्यदप्सु ॥ अस्तिह्यधस्तादिहकिंचनैतदधिष्ठितंयत्रसतानु
भाव्यं ॥१८॥ सइत्थमुद्वीक्ष्यतदब्जनालनाडीभिरंतर्जलमाविवेश ॥ नार्वाग्गतस्तत्खरनालनालनाभिंवि
चिन्वंस्तदविंदताजः ॥ १९ ॥ तमस्यपारेविदुरात्मसर्गंविचिन्वतोऽभूत्सुमहांस्त्रिणेमिः ॥ योदेहभाजांभ
यमीरयाणःपरिक्षिणोत्यायुरजस्यहेतिः ॥ २० ॥ ततोनिवृत्तोऽप्रतिलब्धकामःस्वधिष्ण्यमासाद्यपुनःसदे
वः ॥ शनैर्जितश्वासनिवृत्तचितोन्यषीददारूढसमाधियोगः ॥ २१ ॥ कालेनसोऽजःपुरुषायुषाऽभिप्रवृत्त
योगेनविरूढबोधः ॥ स्वयंतदंतर्हृदयेऽवभातमपश्यतापश्यतयन्नपूर्वम् ॥ २२ ॥ मृणालगौरायतशेष
भोगपर्यंकएकंपुरुषंशयानम् ॥ फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वांतयुगांततोये ॥ २३ ॥

तःअन्वेषणान्निवृत्तःनप्रतिलब्धःकामोमनोरथोयेन स्वधिष्ण्यंपद्मं जितेनश्वासेननिवृत्तंसंयतंचित्तंयस्यअतएवआरूढआश्रितःसमाधि
योगोयेनतथाभूतःसन् न्यषीदत् उपविवेश ॥ २१ ॥ पुरुषायुषासंवत्सरशतेनकालेनअभिप्रवृत्तःसुनिष्पन्नोयोगस्तेनविरूढउत्पन्नोबोधो
यस्य यत्पूर्वंविचिन्वन्नपिनापश्यत् तत्स्वयमेवांतर्हृदयेवभातमपश्यत् ॥ २२ ॥ यदपश्यत् तद्वर्णयति मृणालेतिनवभिः नवस्वप्यप
श्यदित्यस्यैवानुषंगः मृणालवद्गौरश्चासावायतश्च यःशेषस्तस्यभोगोदेहःसएवपर्यंकः तस्मिन्कुत्रास्थितेपर्यंके फणातपत्रैरायुताःसर्वतो
युक्तायेमूर्धानस्तेषांरत्नानिकिरिटस्थानि तेषांद्युभिःप्रभाभिर्हतध्वांतेयुगांततोये ॥ २३ ॥

कथंभूतंपुरुषं हरितोपलाद्रेः मरकतशिलामयपर्वतस्य प्रेक्षांशोभांक्षिपंतंस्वलावण्यातिशयेनतिरस्कुर्वंतं संध्याभ्रंनीवीपरिधानंयस्यतस्यशो
भांपीतांबरेणक्षिपंतं उरुरुक्ममूर्ध्नः अनेकस्वर्णशिखरस्य यस्यस्वकिरीटैः रत्नानिचउदधाराश्चऔषधयश्चसौमनस्यानिचपुष्पसमूहाः
सुमनसएववातेषांवनस्रजः वनमालायस्य वेणवएवभुजायस्यअंघ्रिपाएवांघ्रयोयस्यसचासौसचतस्य अयमर्थः यदितस्मिन्मालाइवस्थितार
त्नादयोभवंतिवेणवश्चभुजाइववृक्षाश्चपादाइवतर्हितस्यशोभांस्वीयरत्नमुक्तातुलसीपुष्पदामभिः भुजैरंघ्रिभिश्चक्षिपंतमिति ॥२४॥ किंच
आयामतोदैर्ध्येणविस्तरतश्चस्वमानदेहेनमीयतेअनेनेतिमानमुपमा शोभनश्चासावमानोनिरुपमोदेहः तेन यद्वासुष्ठुअमानः अपरिच्छि
न्नस्तेन यद्वा ताभ्यांस्वानुरूपप्रमाणेनअतएवलोकत्रयंसंगृह्यते यस्मिन्तथा विचित्राणिनानाविधानिदिव्यान्यपूर्वाणिचाभरणान्यं

प्रेक्षांक्षिपंतंहरितोपलाद्रेः संध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ॥ रत्नोदधारौषधिसौमनस्यवनस्रजोवेणुभुजांघ्रिपांघ्रेः
॥ २४ ॥ आयामतोविस्तरतःस्वमानदेहेनलोकत्रयसंग्रहेण ॥ विचित्रदिव्याभरणांशुकानांकृतश्रियाऽपा
श्रितवेषदेहं ॥ २५ ॥ पुंसांस्वकामायविविक्तमार्गैरभ्यर्चतांकामदुघांघ्रिपद्मं ॥ प्रदर्शयंतंकृपयानखेंदुम
यूखभिन्नांगुलिचारुपत्रं ॥ २६ ॥ मुखेनलोकार्तिहरस्मितेनपरिस्फुरत्कुंडलमंडितेन ॥ शोणायितेनाधरबिं
बभासाप्रत्यर्हयंतंसुनसेनसुभ्र्वा ॥ २७ ॥ कदंबकिंजल्कपिशंगवाससास्वलंकृतंमेखलयानितंबे ॥ हारे
णचानंतधनेनवत्सश्रीवत्सवक्षस्थलवल्लभेन ॥ २८ ॥ ॥ ॥

शुकानिचतेषांकृताआसमंतात् श्रीः शोभायेन तेनदेहेनविशिष्टम् एवंस्वतएवातिरम्यत्वेऽपिअपाश्रितवेषः स्वीकृतालंकारोदेहोयस्य तम
पश्यत् यद्वा केनप्रेक्षांक्षिपंतमित्यपेक्षायामेवंभूतेनदेहेनेतिसंबंधः ॥ २५ ॥ स्वाभिलषितफलायविविक्तैर्मार्गैः शुद्धैर्वेदोक्तैर्मार्गैरभ्यर्चतां
पुंसांकामदुघमंघ्रिपद्मंप्रदर्शयंतंकिंचिदुन्नमय्यसमर्पयंतम् नखाएवइंदवस्तेषांमयूखारश्मयः तैर्भिन्नाः संभिन्नाअंगुलयएवचारूणिपत्रा
णियस्यतत् ॥ २६ ॥ लोकार्तिहरंस्मितंयस्मिन्तेनपरिस्फुरद्भ्यांकुंडलाभ्यांमंडितेनअधरबिंबदीप्त्याशोणवदाचरितेनशोभननासायुक्तेनसुभ्र्वा
शोभनयाभ्रुवाचप्रत्यर्हयंतंपूजकान्प्रतिपूजयतंसंमानयंतम् ॥ २७ ॥ कदंबकिंजल्कवत्पिशंगंयद्वासस्तेनमेखलयाचनितंबेस्वलंकृतम् हेवत्स
श्रीवत्सयुक्तंयद्वक्षस्थलंतस्यवल्लभेनवक्षस्यनर्घ्येणहारेणस्वलंकृतमित्यर्थः ॥ २८ ॥ ॥ ॥ ॥

महाचंदनवृक्षरूपकेणनिरूपयितुंतंविशिनष्टि पराध्यानिश्रेष्ठानिकेयूराणिअंगदानिमणिप्रवेकाश्चमण्युत्तमास्तैः पर्यस्ताव्याप्तादोर्दंडाएव
सहस्रमनंताःशाखायस्य चंदनवृक्षोऽपिकेयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखोभवति अव्यक्तंप्रधानंमूलमधोभागोयस्य यद्वा अव्यक्तं
ब्रह्ममूलंयस्य ब्रह्माभिव्यक्तिरूपत्वाद्वृक्षस्यापिमूलंनव्यक्तं भुवनात्मकमंघ्रिपेंद्रमहींद्रस्यानंतस्यभोगैः फणैःदेहावयवैर्वा अधिवीताःसंवे
ष्टिताःस्पृष्टावल्शाःस्कंधायस्य वनस्पतेश्शतवल्शोविरोहेतिश्रुतेः॥सोऽपिसर्पैर्वेष्टितोभवति ॥ २३ ॥ प्रेक्षांक्षिपंतमित्यत्रैवपर्वतरूपेणनिरू
पितमपिविशेषणांतरैःपुनर्निरूपयति भगवानेवमहीध्रस्तं चराचरणामोकःस्थानंसोऽपितथा अहींद्रस्यबंधुं सोऽपिअहींद्राणांबंधुः सलि
लेनोपगूढमावृतं पर्वतोऽपिमैनाकादिस्तथा किरीटसाहस्रमेवहिरण्यशृंगाणियस्यसोऽपिमेर्वादिस्तथा यथापर्वतस्यगर्भेकाचिद्रत्नमाविर्भव

पराध्र्यकेयूरमणिप्रवेकपर्यस्तदोर्दंडसहस्रशाखम् ॥ अव्यक्तमूलंभुवनांघ्रिपेंद्रमहींद्रभोगैरधिवीतवल्शं
॥ २९ ॥ चराचरौकोभगवन्महीध्रमहींद्रबंधुंसलिलोपगूढम् ॥ किरीटसाहस्रहिरण्यशृंगमाविर्भवत्कौ
स्तुभरत्नगर्भं ॥ ३० ॥ निवीतमाम्नायमधुव्रतश्रियास्वकीर्तिमय्यावनमालयाहरिं ॥ सूर्येंदुवाय्वग्न्यगमं
त्रिधामभिःपरिक्रमत्प्राधनिकैर्दुरासदं ॥ ३१ ॥ तर्ह्येवतन्नाभिसरःसरोजमात्मानमंभःश्वसनंवियच्च ॥ द
दर्शदेवोजगतोविधातानातःपरंलोकविसर्गदृष्टिः ॥ ३२ ॥ सकर्मबीजंरजसोपरक्तःप्रजाःसिसृक्षन्नियदे
वदृष्ट्वा ॥ अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ॥ ३३ ॥ इतिश्रीभागवतेमहा
पुराणेतृतीयस्कंधेअष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥

ति तथाआविर्भवत्स्पष्टंदृश्यमानंकौस्तुभरत्नंगर्भेमूर्तिमध्येयस्यतं ॥ ३० ॥ किंच वनमालयानिवीतंकंठलंबिन्याव्याप्तमाम्नायावेदाएव
मधुव्रतास्तैःश्रीर्यस्यास्तया हरिमितिपर्वतादिरूपंपश्यन्हरिरसावितिज्ञातवानित्यर्थः सूर्यादिभिरगममगम्यं स्वव्याप्तैराकलयितुमशक्य
मित्यर्थः किंचत्रिष्वपिलोकेषुधामस्फुर्तिर्येषांतैः रक्षणार्थंपरिक्रामद्भिःपरितोधावद्भिःप्राधनिकैः प्रधनंसंग्रामःतत्प्रयोजनैःसुदर्शनादि
भिर्हेतुभूतैर्दुरासदंदुष्प्रापं ॥ ३१ ॥ यदैवंहरिमपश्यत्तर्ह्येवतदैव लोकविसर्गदृष्टिः सन्तस्यनाभिसरसि सरोजंश्वसनंप्रलयवायुंवियत्
आकाशंचददर्श ॥ ३२ ॥ कर्मबीजंलोकसृष्टेःकारणम् रजसाउपरक्तःरजोगुणयुक्तः अतःप्रजाःस्रष्टुमिच्छन्नियदेवनाभिसरोजादिपंच
कमेवविसर्गेपिअभिमुखःदत्तचित्तः अव्यक्तवर्त्मनिभगवतिनिवेशिताचित्तः ॥ ३३ ॥ इतितृतीयेटीकायामष्टमोध्यायः ॥ ८ ॥

नवमेतपसातुष्टंदृष्ट्वानारायणंत्वजः ॥ अस्तौदेकार्णवेसीदन्लोकसर्गचिकीर्षया ॥ १ ॥ भगवज्ज्ञानेनात्मनःकृतार्थतामाविष्कुर्वन्अज्ञां
श्चशोचन्नाह ज्ञातोसीति सुचिरात् बहुकालोपासनेन अद्यमेमयाज्ञातोसि ननुअहोदेहभाजामेतदवद्यंदोषः किंतत् यद्भगवतस्तवगतिःत
त्त्वंनज्ञायतइति यतस्त्वमेवज्ञातुंयोग्यः सत्यत्वान्नान्यत् असत्यत्वादित्याह त्वत् त्वत्तोऽन्यन्नास्ति यदप्यस्तीतिप्रतिभातितदपिशुद्धंसत्त्वं
नभवति कथमसतःप्रतीतिस्तत्राह यद्यतःमायागुणक्षोभात् त्वमेवउरुःबहुरूपोविभासि ॥ १ ॥ ननुत्वमपिसम्यक्नजानासियत् त्वयादृ
ष्टंरूपमेतदपिगुणात्मकमेव निर्गुणंब्रह्मैवतुसत्यंतत्राह रूपमितिद्वाभ्याम् अवबोधरसोदयेन।चिच्छक्त्याविर्भावेन शश्वत्सदानिवृत्तंतमोय
स्मात्तस्यतवयदेतद्रूपंत्वयैवस्वातंत्र्येणसतामुपासकानामनुग्रहायगृहीतमाविष्कृतमवतारशतस्यशुद्धसत्वात्मकस्ययदेकंबीजंमूलंतत्प्रदर्श
नार्थं गुणावतारबीजत्वंदर्शयति यन्नाभीति ॥ २ ॥ हेपरम अविद्धवर्चः अनावृतप्रकाशम् अतःअविकल्पंनिर्भेदम् अतएवानंदमात्र

ब्रह्मोवाच ज्ञातोऽसिमेऽद्यसुचिरान्ननुदेहभाजांनज्ञायतेभगवतोगतिरित्यवद्यं ॥ नान्यत्वदस्तिभगवन्न
पितन्नशुद्धंमायागुणव्यतिकराद्यदुरुर्विभासि ॥ १ ॥ रूपंयदेतदवबोधरसोदयेनशश्वन्निवृत्ततमसःसद
नुग्रहाय ॥ आदौगृहीतमवतारशतैकबीजंयन्नाभिपद्मभवनादहमाविरासं ॥ २ ॥ नातःपरंपरमयद्भवतः
स्वरूपमानंदमात्रमविकल्पमविद्धवर्चः ॥ पश्यामिविश्वसृजमेकमविश्वमात्मन्भूतेंद्रियात्मकमदस्तउपा
श्रितोस्मि ॥ ३ ॥ तद्वाइदंभुवनमंगलमंगलायध्यानेस्मनोदर्शितंतउपासकानां ॥ तस्मैनमोभगवतेऽनुविधे
मतुभ्यंयोनादृतोनरकभाग्भिरसत्प्रसंगैः ॥ ४ ॥ येतुत्वदीयचरणांबुजकोशगंधंजिघ्रंतिकर्णविवरैःश्रुति
वातनीतं ॥ भक्त्यागृहीतचरणःपरयाचतेषांनापैषिनाथहृदयांबुरुहात्स्वपुंसां ॥ ५ ॥

म् एवंभूतंयद्भवतःस्वरूपंतत् अतोरूपात्परंभिन्नंनपश्यामिकिंतुइदमेवतत् अतःकारणात्तेतवअदःइदंरूपंउपाश्रितोस्मि योग्यत्वादपी
त्याह एकमुपास्येषुमुख्यं यतःविश्वसृजमतएवअविश्वं विश्वस्मादन्यत् किंचभूतेंद्रियात्मकंभूतानामिंद्रियाणांचात्मानंकारणमित्यर्थः ॥
॥ ३ ॥ नन्वेवमपिसोपाधिकमेतदर्वाचीनमेवेत्याशंक्याह तद्वैतदेवेदं हेभुवनमंगल यतःतेत्वया नोस्माकमुपासकानांमंगलायध्यानेद
र्शितं नह्यव्यक्तवर्त्माभिनिवेशितचित्तानामस्माकंत्वयासोपाधिकदर्शनंयुक्तमितिभावः अतस्तुभ्यंनमोऽनुविधेमअनुवृत्त्याकरवाम तर्हिकिं
मितिकेचिन्मांनाद्रियंतेतत्राह योनादृतइति असत्प्रसंगैःनिरीश्वरकुतर्कनिष्ठैः ॥ ४ ॥ आदरेणतुत्वांभजंतःकृतार्थाइत्याह येत्विति श्रुति
र्वेदःसएववातःतेननीतंप्रापितंनापैषिनापयासि येत्वत्कथाश्रवणमत्यादरेणकुर्वंतितेषांहृदिनित्यंप्रकाशसइत्यर्थः ॥ ५ ॥

ततः किमतआह तावदिति द्रविणादौविद्यमानेभयंगतेशोकः पुनश्चस्पृहाततःपरिभवःतथाऽपिविपुलोलोभःतृष्णापुनःकथंचित्प्राप्तेममे त्यसदाग्रहः आर्तिमूलंभयशोकादेःकारणंनप्रवृणीतनाश्रयेत् त्वत्पादाश्रयणमात्रेणभयादिनिवृत्तिः किंपुनस्त्वत्प्रकाशेसतीतिभावः॥ ॥ ६ ॥ येनिष्कामाअपिसंतस्त्वांनाद्रियंतेतेनरकभाजइत्युक्तं येतुत्वत्कथाश्रवणादिविमुखाःसंतः काम्यकर्मपरास्तेऽतिमंदाइत्याह दैवेन तेहतधियोनष्टमतयः प्रसंगात्श्रवणकीर्तनादिरूपात्सर्वदुःखनिवर्तकाद्विमुखनींद्रियाणियेषां अकुशलानिअक्षेमकराणि ॥ ७ ॥ अ कुशलत्वमेवदर्शयति क्षुत्तृट्चत्रिधातवश्चवातपित्तश्लेष्माणः तैःइमाःप्रजाः सुदुर्भरेणदुःसहेनकामाग्निना अच्युतयारुषाअविच्छिन्न क्रोधेनच पीड्यमानाःसंपश्यतोमेमनःसीदति ॥ ८ ॥ नन्वेवंभूतायाःसंसृतेरपरमार्थत्वात्किमर्थंविषादःक्रियतेतत्राह यावदिति आत्मन

**तावद्भयंद्रविणगेहसुहृन्निमित्तंशोकःस्पृहापरिभवोविपुलश्चलोभः॥तावन्ममेत्यसदवग्रहआर्तिमूलंयाव न्नतेंऽघ्रिमभयंप्रवृणीतलोकः॥६॥दैवेनतेहतधियोभवतःप्रसंगात्सर्वाशुभोपशमनाद्विमुखेंद्रियाये॥कुर्वं तिकामसुखलेशलवायदीनालोभाभिभूतमनसोऽकुशलानिशश्वत्॥७॥क्षुत्तृट्त्रिधातुभिरिमामुहुरर्द्यमा नाःशितोष्णवातवर्षैरितरेतराच्च॥कामाग्निनाच्युतरुषाचसुदुर्भरेणसंपश्यतोमनउरुक्रमसीदतेमे॥८॥ यावत्पृथक्त्वमिदमात्मनइंद्रियार्थमायाबलंभगवतोजनईशपश्येत्॥तावन्नसंसृतिरसौप्रतिसंक्रमेतव्यर्था ऽपिदुःखनिवहंवहतीक्रियार्था॥ ९॥ अह्न्याप्टतार्तकरणानिशिनिःशयानानानामनोरथधियाक्षणभग्न निद्राः॥दैवाहतार्थरचनाऋषयोऽपिदेवयुष्मत्प्रसंगविमुखाइहसंसरंति॥१०॥त्वंभावयोगपरिभावितहृत्स रोजआस्सेश्रुतेक्षितपथोननुनाथपुंसां॥यद्यद्धियातउरुगायविभावयंतितत्तद्वपुःप्रणयसेसदनुग्रहाय॥११॥**

इदंपृथक्त्वंदेहादिभावं भगवतस्तवइंद्रियार्थरूपायामायातयाबलमाधिक्यंयस्यतत् नप्रतिसंक्रमेतनोपरमेत् दुःखसमूहंप्रापयतीति क्रिया णामर्थःफलंयस्यां ॥ ९ ॥ भवत्वेवमविवेकिनां विवेकिनस्तुमुक्ताएवेतिकिंतेषांभक्त्याकृत्यमतआह अह्निआपृतानिव्यापृतानिचतानि आर्तानिक्लिष्टानिकरणानींद्रियाणियेषां रात्रौविषयसुखलवोऽपिनास्तियतोनिशिनिःशयानाःस्वप्नदर्शनेनचक्षणेक्षणेभग्ननिद्राःदैवेनाहताः सर्वतःप्रतिहताःअर्थरचनाअर्थार्थोद्यमायेषां ॥ १० ॥ तदेवमभक्तानांसंसारानिवृत्तिमुक्त्वाभक्तानांतन्निवृत्तिमाह त्वमिति भक्तियोगेनशो धितेहृत्सरोजेआस्सेतिष्ठसि श्रुतेनश्रवणेनेक्षितःपंथायस्य किंचश्रवणंविनापित्वद्भक्तामनसायद्यत्तववपूरूपंस्वेच्छयाध्यायंतितत्तत्प्रणय सेप्रकटयासि सतांभक्तानामनुग्रहाय ॥ ११ ॥ ॥ ॥ ॥ ॥

भक्तानांचनिष्कामाणांत्वमतिसुलभोनेतरेषामित्याह नेति उपचितैरूर्जितैःउपचारैःपुष्पोपहारादिभिः यत्तुयथा असतामभक्तानामल
भ्ययादयया प्रसादेहेतुः एकइत्यादि ॥ १२ ॥ यतःसकामानांभवान्नातिप्रसीदति अतःकामप्राप्तिःक्रियाणामुत्तमंफलंनभवति किंतुत्व
त्प्रीणनमेव कामसंयोगस्तुअवांतरफलेनप्ररोचनार्थमित्याह पुंसामिति भगवतस्तवाराधनमेवसंश्वासौक्रियार्थश्चश्रेष्ठंक्रियाफलंश्रेष्ठ
त्वेहेतुः यत्रत्वय्यर्पितोधर्मोनकदाचित्म्रियतेननश्यति कामार्थस्तुधर्मःकामंदत्वानश्यतीत्यर्थः ॥ १३ ॥ अतस्त्वामेवयंनताइत्याह
शश्वत्सर्वदास्वरूपचैतन्येनैवनिरस्तभेदभ्रमाय पुनश्चबोधएवधिषणाविद्याशक्तिर्यस्य यद्वा बोधएवधिषणमाश्रयः अतएवपरस्मै अत्रहे
तुःविश्वोद्भवादिनिमित्तंयामायातस्यालीलाविलासःतयारासःक्रीडायस्य तेतुभ्यंइदंनमःनमनं चकृमकृतवंतोवयं ॥ १४ ॥ नामग्रहणमा

नातिप्रसीदतितथोपचितोपचारैराराधितःसुरगणैर्हृदिबद्धकामैः॥यत्सर्वभूतदययासदलभ्ययैकोनानाज
नेष्ववहितःसुहृदंतरात्मा ॥ १२॥ पुंसामतोविविधकर्मभिरध्वराद्यैर्दानेनचोग्रतपसाव्रतचर्ययाच ॥ आरा
धनंभगवतस्तवसत्क्रियार्थोधर्मोऽर्पितःकर्हिचिद्ध्रियतेनयत्र ॥१३॥ शश्वत्स्वरूपमहसैवनिपीतभेदमोहा
यबोधधिषणायनमःपरस्मै॥ विश्वोद्भवस्थितिलयेषुनिमित्तलीलारासायतेनमइदंचकृमेश्वराय ॥ १४ ॥य
स्यावतारगुणकर्मविडंबनानिनामानियेऽसुविगमेविवशागृणंति ॥ तेनैकजन्मशमलंसहसैवहित्वासंयां
त्यापावृतमृतंतमजंप्रपद्ये ॥१५॥ योवाअहंचगिरिशश्चविभुःस्वयंचस्थित्युद्भवप्रलयहेतवआत्ममूलं ॥ भि
त्वात्रिपाद्ववृधएकउरुप्ररोहस्तस्मैनमोभगवतेभुवनद्रुमाय ॥ १६ ॥ ॥ ॥

न्तःकैवल्यप्रदत्वेनैश्वर्यंव्यंजयन्नमस्करोति यस्येति अवतारादीनांविडंबनमनुकरणमास्तियेषु तत्रावतारविडंबनानिदेवकीनंदनइत्या
दीनि गुणविडंबनानिसर्वज्ञोभक्तवत्सलइत्यादीनि कर्मविडंबनानिगोवर्द्धनोद्धरणकंसारातिरित्यादीनि असुविगमेऽपिविवशाअपि
गृणंतिउच्चारयंतिकेवलं शमलंपापमपावृतंनिरस्तावरणं ऋतंब्रह्मप्राप्नुवंति ॥ १५ ॥ तत्रगुणावतारकर्माणिदर्शयन्प्रणमति योवैएकः
त्रिपाद् त्रयोब्रह्मादयःपादाःस्कंधायस्य प्रत्येकंचउरवःप्ररोहाःशाखोपशाखामरीच्यादिमन्वादिरूपायस्यतथाभूतःसन्ववृधे तस्मैभुवना
कारायद्रुमायनमः किंकृत्वाववृधे आत्मास्वयमेवमूलमधिष्ठानंयस्य तत्प्रधानंभित्वागुणत्रयरूपेणविभज्य त्रिपात्त्वमेवाह अहंब्रह्मागिरिश
श्चस्वयंविभुःविष्णुश्चेतिस्थित्युद्भवप्रलयहेतवोयेवयं एवंत्रिपाद्भूत्वायोववृधइत्यर्थः ॥ १६ ॥

एवंगुणात्रतारकर्मविडंबनमुक्तातस्यैवतत्कालाख्यंरूपंतत्कर्मचदर्शयन्प्रणमति लोकइतिद्वाभ्याम् विकर्मनिरतः विरुद्धकर्मनिष्ठः कु
शलेहितेस्वेआत्मीये त्वदुदितेत्वयैवसाक्षादुक्ते भवदर्चनरूपेकर्मणि उक्तंहिगीतासु यत्करोषियदश्नासियज्जुहोषिददासियत् यत्तपस्य
सिकौंतेयतत्कुरुष्वमदर्पणमिति तस्मिन्प्रमत्तः अदत्तचित्तोयावद्वर्ततेतावदस्यलोकस्य अनिमिषायकालाय ॥१७॥ आस्तांतावल्लोकस्य
कथा यस्मात्कालाख्यात्त्वत्तः यत्द्विपरार्धावस्थायिधिष्ण्यंस्थानं तदारूढोपिबिभेमिभीतश्वसन् त्वामेवावरुरुत्समानःप्राप्तुमिच्छन्तपस्त
प्तवान् कथंभूतः बहुसवःबहवःसवायागाःसंवत्सरावायस्य बहून्यागान्कृत्वापिबहून्संवत्सरान्वातपस्तप्तवानित्यर्थः अधिमखायमखा
धिष्ठात्रे ॥१८॥ इदानींतत्तत्कालभाविलीलाऽवतारकर्माणिदर्शयन्नाह तिर्यगादिषुजीवयोनिषु स्वेच्छयास्वीकृतमूर्तिःसन्स्वकृतधर्ममर्या

लोकोविकर्मनिरतःकुशलेप्रमत्तःकर्मण्ययंत्वदुदितेभवदर्चनेस्वे ॥ यस्तावदस्यबलवानिहजीविताशांसद्य
श्छिनत्त्यनिमिषायनमोऽस्तुतस्मै ॥ १७ ॥ यस्माद्बिभेम्यहमपिद्विपरार्धधिष्ण्यमध्यासितःसकललोक
नमस्कृतंयत् ॥ तेपेतपोबहुसवोऽवरुरुत्समानस्तस्मैनमोभगवतेऽधिमखायतुभ्यम्॥१८॥ तिर्यङ्मनुष्य
विबुधादिषुजीवयोनिष्वात्मेच्छयात्मकृतसेतुपरीप्सयायः ॥ रेमेनिरस्तरतिरप्यवरुद्धदेहस्तस्मैनमोभग
वतेपुरुषोत्तमाय ॥ १९ ॥ योऽविद्ययाऽनुपहतोऽपिदशार्धवृत्त्यानिद्रामुवाहजठरीकृतलोकयात्रः ॥ अं
तर्जलेहिकशिपुस्पर्शानुकूलांभीमोर्मिमालिनिजनस्यसुखंविवृण्वन् ॥ २० ॥

दापालनेच्छया रेमे वस्तुतःस्वानंदानुभवेनैवानिरस्तविषयसुखोऽपियः अतएवपुरुषोत्तमः तत्तदुपाधिधर्मासंस्पर्शात् तदुक्तंगीतासु यस्मा
त्क्षरमतीतोहमक्षरादापिचोत्तमः अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमइति ॥ १९ ॥ इदानींदृश्यमानामेवमूर्तिंप्रणमति योऽविद्ययेतिद्वाभ्यां
दशार्धाः पंचवृत्तयोयस्याःतयाअविद्ययानिद्राहेतुभूतया अनभिभूतोऽपियोगनिद्रामुवाह तस्मैतेनमइत्युत्तरेणान्वयः जठरीकृताउदरेप्र
विलापितालोकयात्रालोकस्थितिर्येन अहिरेवकशिपुःशय्या तस्याःस्पर्शोऽनुकूलोयस्यास्तांनिद्रां भीमानामूर्मीणांमालाविद्यंतेयस्मिन्
अंतर्जलेनिद्राणस्याविवेकिनोजनस्यनिद्रासुखमीदृगितिविवृण्वन्प्रदर्शयन्नुपहसन्नित्यर्थः अतएवांतर्जलादिविशेषणानि यद्वा पूर्वकल्पे
श्रांतस्यजनस्यविश्रामसुखंविवृण्वन्स्फारयन् तदातुपरोपकारायस्वयंदुःसहमपिदुःखंसोढव्यमितिद्योतनार्थंविशेषणानि ॥ २० ॥

॥ २३ ॥

किंच यस्यनाभिपद्ममेवभवनंतस्मात्‌लोकत्रयमुपकरणंयस्य यद्वा लोकत्रयस्यसृष्ट्यादिद्वारेणोपकरोतीतितथा तादृशोऽहंयदनुग्रहेण। सम्‌ उदरेस्थितःभवःसंसारप्रपंचोयस्य योगनिद्रावसानेकिंचिद्विकसत्‌नलिनवदीक्षणंयस्य ॥ २१ ॥ एवंस्तुत्वाप्रार्थयते सोऽयमितिचतु-र्भिः यत्‌ येनसत्वेनज्ञानेन भगेनैश्वर्येणच मृडयतेसुखयतिविश्वं दृशंप्रज्ञामनुस्पृशतात्‌ योजयतु यथाऽहंस्रष्टुंक्षमोभविष्यामि यतःप्रणत प्रियोसौअहंचप्रणतःनचान्यःप्रार्थनीयोऽस्ति यतःभगवान्‌ सएवसमस्तजगतांसुहृत्‌ यतोऽसौएकोऽनुस्यूतआत्माअंतर्यामी॥ २२ ॥ आत्मशक्त्यारमयासह यद्यत्कर्मकरिष्यतिस्वविक्रमंविष्णोरेवविक्रमःप्रभावोयस्मिन्‌ तदिदंविश्वंतदाज्ञयासृजतोऽपिमेचेतःसएवयुंजीतप्र

यन्नाभिपद्मभवनादहमासमीड्यलोकत्रयोपकरणोयदनुग्रहेण ॥ तस्मैनमस्तउदरस्थभवाययोगनिद्राव सानविकसन्नलिनेक्षणाय॥२१॥ सोऽयंसमस्तजगतांसुहृदेकआत्मासत्वेनयन्मृडयतेभगवान्भगेन॥तेनै वमेदृशमनुस्पृशताद्यथाऽहंस्रक्ष्यामिपूर्ववदिदंप्रणतप्रियोऽसौ ॥ २२॥ एषप्रपन्नवरदोरमयात्मशक्त्याय द्यत्करिष्यतिगृहीतगुणावतारः ॥ तस्मिन्स्वविक्रममिदंसृजतोऽपिचेतोयुंजीतकर्मशमलंचयथाविजह्यां ॥ २३ ॥ नाभिह्रदादिहसतोऽम्भसियस्यपुंसोविज्ञानशक्तिरहमासमनंतशक्तेः ॥ रूपंविचित्रमिदमस्यविवृ ण्वतोमेमारीरिषीष्टनिगमस्यगिरांविसर्गः ॥ २४ ॥ सोऽसावदभ्रकरुणोभगवान्विवृद्धप्रेमस्मितेननयनां बुरुहंविजृंभन्॥ उत्थायविश्वविजयायचनोविषादंमाध्व्यागिरापनयतात्पुरुषःपुराणः ॥ २५ ॥ मैत्रेय उवाच स्वसंभवंनिशाम्यैवंतपोविद्यासमाधिभिः ॥ यावन्मनोवचस्तुत्वाविररामसखिन्नवत्‌ ॥ २६ ॥ अथाभिप्रेतमन्वीक्ष्यब्रह्मणोमधुसूदनः ॥ विषण्णचेतसंतेनकल्पव्यतिकरांभसा ॥ २७ ॥

वर्तयतु कर्मासक्तितस्कृतंशमलंचवैषम्यादिपापंयथाविजह्यांत्यक्ष्यामि ॥ २३ ॥ अंभसिसतोयस्यनाभिह्रदादिहासं विज्ञानेशक्तिर्यस्यम हत्तत्वात्मकस्यचित्तस्यतदभिमानी अस्यरूपमिदंविस्तारयतोमेनिगमस्यावयवभूतानांगिरांविसर्गउच्चारणंमारीरिषीष्ट हलांतंब्रह्मवर्चस मितिन्यायेनमालुप्यतामित्यर्थः ॥ २४ ॥ विवृद्धप्रेम्णास्मितेनविजृंभयन्‌ विश्वस्यविजयायउद्भवाय चकारादस्मदनुग्रहायचोत्थाय ॥ ॥ २५ ॥ स्वस्यसंभवोयस्मात्तंतपःशरीरं विद्याउपासनासमाधिरैकाग्र्यं तैर्निशाम्यदृष्ट्वायथाशक्तिस्तुत्वा श्रांतवद्विरराम ॥ २६ ॥ आ त्मनोलोकसंस्थानविज्ञानेपरिखिद्यतोब्रह्मणोऽभिप्रेतमालक्ष्यतमाहेतिद्वयोरन्वयः तेनप्रलयोदकेनविषण्णचेतसं ॥ २७ ॥

॥ २३ ॥

कश्मलंमोहइवेतिसमस्तमोहाशमनंदर्शयति ॥ २८ ॥ हेवेदगर्भ तंद्रींविषादकृतमालस्यं मागाः तेनैवमेहृशमनुस्पृशतादित्यादियत्प्रा र्थयतेतदग्रेपूर्वमेवसंपादितं॥२९॥तर्हिकथमहंनजानामित्यतआह भूयइति॥३०॥भक्तियुक्तः समाहितश्चसन् आत्मनिस्वस्मिन्लोकेचमां ततंव्याप्यस्थितंद्रष्टाऽसिद्रक्ष्यसि आत्मनोजीवांश्च ॥ ३१ ॥ सर्वत्रमद्दर्शनेमोहोनिवर्ततइत्याह यदात्विति प्रतिचक्षीतपश्येत ॥ ३२ ॥ तदाचमिथ्याज्ञाननिवृत्तौमुच्यतइत्याह यदेति भूतादिभिर्विरहितं आत्मानंजीवंशुद्धत्वंपदार्थं स्वरूपेणस्वस्यात्मभूतेनमयातत्पदार्थेन उपेतमेकीभूतंपश्यन्भवतितदास्वाराज्यंमोक्षंप्राप्नोति ॥ ३३ ॥ यतःवर्षीयान् वृद्धतरः अत्यधिकोस्तीत्यर्थः ॥ ३४ ॥ अनुग्रहमेवाह

लोकसंस्थानविज्ञानआत्मनःपरिखिद्यतः॥तमाहागाधयावाचाकश्मलंशमयन्निव ॥२८॥ श्रीभगवानुवाच मावेदगर्भगास्तंद्रींसर्गेउद्यममावह ॥ तन्मयापादितंह्यग्रेयन्मांप्रार्थयतेभवान् ॥ २९ ॥ भूयस्त्वंतपआतिष्ठविद्यांचैवमदाश्रयां ॥ ताभ्यामंतर्हृदिब्रह्मन्लोकान्द्रक्ष्यस्यपावृतान् ॥३०॥ ततआत्मनिलोकेचभक्तियुक्तःसमाहितः ॥ द्रष्टाऽसिमांततंब्रह्मन्मयिलोकांस्त्वमात्मनः ॥ ३१ ॥ यदातुसर्वभूतेषुदारुष्वग्निमिवस्थितम् ॥ प्रतिचक्षीतमांलोकोजह्यात्तर्ह्येवकश्मलम् ॥ ३२ ॥ यदारहितमात्मानंभूतेंद्रियगुणाशयैः ॥ स्वरूपेणमयोपेतंपश्यन्स्वाराज्यमृच्छति ॥ ३३ ॥ नानाकर्मवितानेनप्रजाबह्वीःसिसृक्षतः ॥ नात्मावसीदत्यस्मिंस्तेवर्षीयान्मदनुग्रहः ॥३४॥ ऋषिमाद्यंनबध्नातिपापीयांस्त्वांरजोगुणः ॥ यन्मनोमयिनिर्बद्धंप्रजाःसंसृजतोपिऽते ॥ ३५ ॥ ज्ञातोऽहंभवतात्वद्यदुर्विज्ञेयोऽपिदेहिनां ॥ यन्मांत्वंमन्यसेयुक्तंभूतेंद्रियगुणात्मभिः ॥ ३६ तुभ्यंमद्विचिकित्सायामात्मामेदर्शितोबहिः ॥ नालेनसलिलेमूलंपुष्करस्यविचिन्वतः ॥ ॥ ३७ ॥ यच्चकर्थांगमत्स्तोत्रंमत्कथाऽभ्युदयांकितं ॥ यद्वातपसितेनिष्ठासएषमदनुग्रहः ॥ ३८ ॥

ऋषिमितिचतुर्भिः यद्यतस्तेत्वयामनोमयिनिर्बद्धम् ॥ ३५ ॥ यद्यस्माद्भूतैरिंद्रियैर्गुणैःसत्वादिभिरात्मनाऽहंकारेणचायुक्तंमन्यसे ॥ ३६ ॥ तुभ्यंतव नालेनमार्गेणपुष्करस्यमूलमधिष्ठानंसलिलेविचिन्वतोमयिविचिकित्सायांभवितव्यमस्याश्रयेणनचदृश्यतेततोस्तिनास्तीतिसंदेहेसति आत्मास्वरूपंमेमया अबहिरंतर्हृदिदर्शितः ॥ ३७ ॥ अंगहेब्रह्मन् चकर्थकृतवानसि मत्कथैवाभ्युदयस्तेनांकितंसएषबंधाभावः मयिमनोनिर्बंधः मज्ज्ञानंमद्रूपस्यहृदिदर्शनं मत्स्तुतिःतपोनिष्ठाचेतियत् एषसर्वोऽपिमदनुग्रहः ॥ ३८ ॥ ॥ ॥

गुणमयत्वेनप्रतीयमानमपिनिर्गुणमेवानुवर्णयन् ॥ ३९ ॥ तवप्रीतइतिकिंवक्तव्यमित्याह यइति ॥ ४० ॥ नचमत्प्रीतेरप्यधिकंकिंचि दस्तीत्याह पूर्तादिभिः राद्धंसिद्धंयन्निःश्रेयसफलंतत् मत्प्रीतिरेवेतितत्त्वविदांमतम् ॥ ४१ ॥ अत्रहेतुमाह अहमिति आत्मनामहंका रोपाधीनांजीवानामात्मा अतःप्रेयसामतिप्रियाणामपिमध्येप्रेष्ठःप्रियतमः सन्निरवद्यः यत्कृतेयदर्थम् ॥ ४२ ॥ अतस्त्वंकृतार्थएवतथा ऽपिमत्प्रियार्थंसृष्टिंकुर्वित्याह सर्वेति आत्मात्वमिदंत्रैलोक्यंयामय्यनुशेरतेताःप्रजाश्चसृज केनात्मनैवान्यनिरपेक्षेण तत्रज्ञापकापेक्षाभा



प्रीतोऽहमस्तुभद्रंतेलोकानांविजयेच्छया ॥ यदस्तौषीर्गुणमयंनिर्गुणंमानुवर्णयन् ॥ ३९॥ यएतेनपुमान्नि त्यंस्तुत्वास्तोत्रेणमांभजेत्॥तस्याशुसंप्रसीदेयंसर्वकामवरेश्वरः ॥४०॥ पूर्तेनतपसायज्ञैर्दानैर्योगसमाधि ना॥राद्धंनिःश्रेयसंपुंसांमत्प्रीतिस्तत्त्वविन्मतं ॥ ४१ ॥ अहमात्मात्मनांधातःप्रेष्ठःसन्प्रेयसामपि ॥ अतोम यिरतिंकुर्याद्देहादिर्यत्कृतेप्रियः ॥४२॥ सर्ववेदमयेनेदमात्मनात्मात्मयोनिना ॥ प्रजाःसृजयथापूर्वंयाश्चम य्यनुशेरते ॥४३॥ मैत्रेयउवाच तस्माएवंजगत्स्रष्ट्रेप्रधानपुरुषेश्वरः ॥ व्यज्येदंस्वेनरूपेणकंजनाभस्ति रोदधे ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपद्मोद्भवेविदुरमैत्रेयसंवादेनवमोऽध्यायः ॥ ९ ॥ विदुरउवाच अंतर्हितेभगवतिब्रह्मालोकपितामहः ॥ प्रजाःससर्जकतिधादैहिकीर्मानसीर्विभुः ॥ १ ॥ येचमेभगवन्पृष्टास्त्वय्यर्थाबहुवित्तम ॥ तान्वदस्वानुपूर्व्येणछिंधिनःसर्वसंशयान् ॥ २ ॥ सूतउवाच एवंसंचोदितस्तेनक्षत्राकौषारवोमुनिः ॥ प्रीतःप्रत्याहतान्प्रश्नान्हृदिस्थानथभार्गव ॥३॥ मैत्रेयउवाच विरिंचोपितथाचक्रेदिव्यंवर्षशतंतपः ॥ आत्मन्यात्मानमावेश्ययदाहभगवानजः ॥ ४ ॥

वमाह सर्ववेदमयेनेति आत्माअहंयोनिःकारणंयस्येतिज्ञानक्रियाज्ञान्यतिशयंसूचयति यथापूर्वमिति तवात्राभ्यासोप्यस्तीत्युक्तं म य्यनुशेरतइति स्थितानामभिव्यक्तिमात्रमेवकर्तव्यमित्यनायासत्वमुक्तं ॥ ४३ ॥ इदंसृज्यं व्यज्यप्रकाश्य पद्मनाभः श्रीनारायणरूपेण तिरोदधेऽदृश्योऽभवत् ॥ ४४ ॥ इतितृतीयेटीकायांनवमोऽध्यायः ॥ ९ ॥ दशमेकालसंप्रश्नंप्रतिवक्तुंतदुद्भवः ॥ प्राकृतादिविभागेनसर्ग स्तुदशधोच्यते ॥ १ ॥ १ ॥ मेमया वदस्ववद भासयस्वेतिवा ॥ २ ॥ संचोदितः प्रार्थितः हृदिस्थानेवाह नतुतेप्रश्नाःतेनवि स्मृताइत्यर्थः ॥ ३ ॥ आत्मनिश्रीनारायणे आत्मानंमनआवेश्य ॥ ४ ॥ ॥ ॥ ॥

अब्जसंभूतोब्रह्मायदधिष्ठायस्थितः कर्त्तरिक्तः तत्पद्ममंभश्चविलोक्य कथंभूतंपद्ममंभश्चतेनप्रलयकालेनकृतंवीर्यंयस्यतेनवायुनाकंपितं न्यपादित्युत्तरेणान्वयः ॥ ५ ॥ विवृद्धंविज्ञानंबलंचयस्य न्यपात् सर्वंपीतवान् ॥ ६ ॥ पुष्करंपद्मं प्राग्लीनान्त्रींल्लोकान्कल्पितास्मि स्र क्ष्यामि ॥ ७ ॥ भगवतास्वयंकरणीयेकर्मणिचोदितोनियुक्तःसन् तदापद्मकोशंप्रविश्य तमेकमेवत्रिधालोकत्रयरूपेणव्यभांक्षीत् विबभाज एकेनकमलमुकुलेनकथंलोकत्रयसृष्टिरित्यसंभावनांवारयितुंतस्यविशालतामाह द्विसप्तधा चतुर्दशलोकरूपेण उरुधाततोऽपिबहुप्रकारेण भाव्यंभावयितुंयोग्यंअतोनतेनत्रिलोकीकरणंचित्रमित्यर्थः ॥ ८ ॥ त्रिलोकीरूपेणैवविभागेहेतुमाह एतावान्त्रिलोकीरूपः जी

तद्विलोक्याब्जसंभूतोवायुनायदधिष्ठितः ॥ पद्ममंभश्चतत्कालकृतवीर्येणकंपितं ॥ ५ ॥ तपसाह्येधमाने नविद्ययाचात्मसंस्थया ॥ विवृद्धविज्ञानबलोन्यपाद्वायुंसहांभसा ॥ ६ ॥ तद्विलोक्यवियद्व्यापिपुष्करंय दधिष्ठितं ॥ अनेनलोकान्प्राग्लीनान्कल्पिताऽस्मीत्यचिंतयत् ॥ ७ ॥ पद्मकोशंतदाविश्यभगवत्कर्म चोदितः ॥ एकंव्यभांक्षीदुरुधात्रिधाभाव्यंद्विसप्तधा ॥ ८ ॥ एतावान्जीवलोकस्यसंस्थाभेदःसमाहृतः ॥ धर्मस्यह्यनिमित्तस्यविपाकःपरमेष्ठ्यसौ ॥ ९ ॥ विदुरउवाच यदात्थबहुरूपस्यहरेरद्भुतकर्मणः ॥ कालाख्यंलक्षणंब्रह्मन्यथावर्णयनःप्रभो ॥ १० ॥ ॥ ॥ ॥

वलोकस्यजीवानांभोगस्थानस्यप्रत्यहंसृज्यस्यसंस्थाभेदोरचनाविशेषउक्तः ननुपरमेष्ठिनोऽपिजीवत्वाविशेषाद्ब्रह्मलोकस्यापिकिमिति प्रत्यहंसृष्टिर्नभवतितत्राह हियस्मादनिमित्तस्यनिष्कामस्यधर्मस्यविपाकःफलरूपोऽसौ उपलक्षणमेतत्सत्यलोकस्य महःप्रभृतिलोकानांतद्वासिनांत्रैलोक्यस्यकाम्यकर्मफलत्वात्प्रतिकल्पमुत्पत्तिविनाशौभवतः महःप्रभृतीनामुपासनासमुचितनिष्कामधर्मफलत्वात् द्विपरार्धपर्यंतंननाशः तत्रस्थानांचततःपरं प्रायेणमुक्तिरितिभावः ॥ ९ ॥ कालभेदेनलोकसृष्टिभेदंश्रुत्वातमेवकालंजिज्ञासुःपृच्छति यत्कालाख्यंलक्षणंस्वरूपमात्थअब्रवीः कथंकालःकल्पतेकिंवातस्यसूक्ष्मंस्थूलंचरूपमितियथावद्वर्णयेत्यर्थः ॥ १० ॥ ॥

तत्रसामान्यतःकालस्यस्वरूपमत्रोच्यतेउत्तराध्यायेतुविशेषतः गुणानांव्यतिकरोमहदादिपरिणामः तेनैवाक्रियतेयः सकालइतिविशेषः वक्ष्यतेचैकादशे गुणव्यतिकरःकालःस्वभावःसूत्रमेवचेति स्वतस्तुनिर्विशेषः अप्रतिष्ठितःक्वाप्यपर्यवसितः आद्यंतशून्यइत्यर्थः एतदेवदर्शयितुमीश्वरःसृष्ट्यादितेननिमित्तभूतेनकरोतीत्याह पुरुषइति उपादीयतेनिमित्ततयास्वीक्रियतइतिउपादानम् सकालउपादानंनिमित्तंयस्मिंस्तं आत्मानमेवविश्वरूपेणासृजत् स्वव्यतिरेकेणसृज्यस्याभावात् एतच्चवस्तुकथनमात्रंकालेननिमित्तेनचासृजदित्येतावदेवविवक्षितं ॥ ११ ॥ स्वव्यतिरिक्तस्यसृज्याभावंदर्शयन्कालस्यसृष्टिनिमित्ततांदर्शयति विश्वमिति विष्णुमाययासंस्थितंसंहृतं ब्रह्मतन्मात्रंसद्विश्वं ईश्वरेणकर्त्राकालेननिमित्तेनपरिच्छिन्नंपृथक्प्रकाशितं अव्यक्तामूर्तिःस्वरूपंयस्येति स्वतोनिर्विशेषतादर्शिता ॥ १२ ॥

मैत्रेयउवाच गुणव्यतिकराकारोनिर्विशेषोऽप्रतिष्ठितः॥पुरुषस्तदुपादानमात्मानंलीलयाऽसृजत्॥ ११॥ विश्वंवैब्रह्मतन्मात्रंसंस्थितंविष्णुमायया ॥ ईश्वरेणपरिच्छिन्नंकालेनाव्यक्तमूर्तिना॥१२॥यथेदानींतथाऽग्रेचपश्चादप्येतदीदृशं ॥ सर्गोनवविधस्तस्यप्राकृतोवैकृतस्तुयः ॥१३॥ कालद्रव्यगुणैरस्यत्रिविधःप्रतिसंक्रमः॥ आद्यस्तुमहतःसर्गोगुणवैषम्यमात्मनः ॥१४॥द्वितीयस्त्वहमोयत्रद्रव्यज्ञानक्रियादयः॥ भूतसर्गस्तृतीयस्तुतन्मात्रोद्रव्यशक्तिमान्॥१५॥चतुर्थऐंद्रियःसर्गोयस्तुज्ञानक्रियात्मकः॥वैकारिकोदेवसर्गःपंचमोयन्मयंमनः॥१६॥षष्ठस्तुतमसःसर्गोयस्त्वबुद्धिकृतःप्रभो॥षडिमेप्राकृताःसर्गावैकृतानपिमेशृणु॥१७॥

अप्रतिष्ठितत्वंदर्शयितुंतत्कार्यविश्वप्रवाहस्याप्रतिष्ठामाह यथेदानीमस्तितथाऽग्रेपूर्वमप्यासीत्पश्चादपिभविष्यति एवंसामान्यतःकालंनिरूप्यविशेषतोनिरूपयिष्यन्तन्निमित्तस्यसर्गस्यपूर्वोक्तानेवभेदाननुवदति सर्गइति यस्तुप्राकृतोवैकृतश्चसदशमः ॥ १३ ॥ तन्निमित्तमेवत्रिविधंप्रलयमाह कालेनैवकेवलेनानित्यःप्रलयः द्रव्येणसंकर्षणाग्न्यादिनानैमित्तिकः गुणैःस्वस्वकार्यग्रसद्भिःप्राकृतिकः तानेवसर्गान्प्रपंचयतिआद्यइत्यादिनायावदध्यायसमाप्ति महतोलक्षणं आत्मनोहरेःसकाशात्गुणानांवैषम्यमिति ॥ १४ ॥ अहमः अहंकारस्यतस्यलक्षणं यत्रेति द्रव्यादयोवक्ष्यमाणास्त्रयःसर्गाः तन्मात्रोभूतसर्गः भूतसूक्ष्मसर्गइत्यर्थः द्रव्यशक्तिमान्महाभूतोत्पादकः॥१५॥ ज्ञानकर्मेंद्रियात्मकश्चतुर्थः पंचमोवैकारिकः इंद्रियाधिष्ठातारोदेवामनश्च ॥१६॥ षष्ठस्तुतमसःपंचपर्वाऽविद्यायाः अबुद्धिर्जीवानामावरणंविक्षेपश्चतांकरोतीत्यबुद्धिकृत्तस्यममेमत्तःशृणु ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥

अनुद्वेगेनश्रोतव्यतामाह यद्विषयामेधासंसारंहरति तस्यहरेर्लीला यद्वा इयामितितमआदिसर्गरूपा रजोभाजइतिब्रह्मरूपस्येत्यर्थः अ
स्मिन्पक्षेअबुद्धिकृतइतिप्रथमांतं अनवधानकृतइत्यर्थः मुखमिवप्रथमंकृतोमुख्यः सर्गः तस्थुषांस्थावराणां ॥ १८ ॥ षड्विधत्वमेवाहयेपु
ष्पंविनाफलंतितेवनस्पतयः ओषधयःफलपाकांताः लताःआरोहणापेक्षाः त्वक्सारावेण्वादयः लताएवकाठिन्येनारोहणाऽनपेक्षावी
रुधः येपुष्पैःफलंतितेद्रुमाः तेषांसाधारणंलक्षणमाह ऊर्ध्वंस्रोतःआहारःसंचारोयेषां तमःप्रायाअव्यक्तचैतन्याः अंतःस्पर्शाःस्पर्शमेवजा
नंतिनान्यत् तदप्यंतरेवनबहिः विशेषिणःअव्यवस्थितपरिणामाद्यनेकभेदवंतः ॥ १९ ॥ तिर्यक्स्रोतसांसर्गमाह तिरश्वामिति सचाष्टा

रजोभाजोभगवतोलीलेयंहरिमेधसः ॥ सप्तमोमुख्यसर्गस्तुषड्विधस्तस्थुषांचयः ॥१८॥ वनस्पत्यौषधि
लतात्वक्सारावीरुधोद्रुमाः॥उत्स्रोतसस्तमःप्रायाअंतस्पर्शाविशेषिणः॥१९॥तिरश्वामष्टमःसर्गःसोऽष्टा
विंशतिधामतः ॥ अविदोभूरितमसोघ्राणज्ञाहृद्यवेदिनः ॥२०॥ गौरजोमहिषःकृष्णःसूकरोगवयोरुरुः ॥
द्विशफाःपशवश्चेमेअविरुष्ट्रश्चसत्तम ॥ २१ ॥ खरोऽश्वोऽश्वतरोगौरःशरभश्चमरीयथा ॥ एतेचैकशफाःक्ष
त्तःशृणुपंचनखान्पशून् ॥२२॥ श्वासृगालोवृकोव्याघ्रोमार्जारःशशशल्लकौ॥सिंहःकपिर्गजःकूर्मोगोधाचम
करादयः ॥२३॥ कंकगृध्रवटश्येनभासभल्लूकबर्हिणः ॥ हंससारसचक्राव्हकाकोलूकादयःखगाः ॥२४॥
अर्वाक्स्रोतस्तुनवमःक्षत्तरेकविधोनृणां ॥ रजोऽधिकाःकर्मपरादुःखेचसुखमानिनः ॥ २५ ॥ ॥

विंशतिभेदः तिरश्वांलक्षणं अविदःश्वस्तनादिज्ञानशून्याः भूरितमसःआहारादिमात्रनिष्ठाः घ्राणेनैवेष्टमर्थंजानंतिहृद्यादिअवेदिनः दीर्घा
नुसंधानशून्याः तथाचश्रुतिः अथेतरेषांपशूनामशनापिपासेएवाभिविज्ञानंनविज्ञातंवदंतिनविज्ञातंपश्यंतिनविदुःश्वस्तनंनलोकालोका
विति ॥ २० ॥ अष्टाविंशतिभेदानेवाह गवादयउष्ट्रांताः द्विशफाद्विखुरानव ॥ २१ ॥ खरादयएकशफाःषट् ॥ २२ ॥ श्वादयोगो
धांऽताः पंचनखाद्वादश एवमेतेभूचराःसप्तविंशतिः मकरादयोजलचराः ॥ २३ ॥ कंकादयःखगाः अभूचरत्वेनैकीकृत्यगृहीताः तदे
वमष्टाविंशतिभेदाभवंति तेषुकृष्णरुरुगौरामृगविशेषाः अन्येषामपितिर्यक्प्राणिनांयथायथमेतेष्वेवांतर्भावः ॥ २४ ॥ अथआहारसंचा
रोयस्यसोऽर्वाक्स्रोताः न्हस्वत्वमार्षम् नृणांसर्गः नृणांलक्षणम् रजअधिकंयेषुते ॥ २५ ॥ ॥ ॥

एतेत्रयोवैकृताएवनकौमारवदुभयात्मकाः देवसर्गश्चवैकृतइत्यनुषंगः वैकारिकस्तुदेवसर्गःप्राकृतेषुपूर्वमेवप्रोक्तः अयंतुततोन्यूनत्वात् वैकृतः देवसर्गत्वात्तदंतर्भूतश्च सनत्कुमारादीनांसर्गस्तुप्राकृतोवैकृतश्चदेवत्वेनमनुष्यत्वेनचसृज्यइत्यर्थः ॥२६॥ वैकृतश्चदेवसर्गोऽष्टविधःतत्रविबुधादयस्त्रयोभेदाः गंधर्वाप्सरसएकः यक्षरक्षांस्येकः ॥ २७ ॥ भूतप्रेतपिशाचाएकः सिद्धचारणविद्याधराएकः किन्नरादयएकः आदिशब्दात्किपुरुषाश्वमुखादयः एतद्विशेषोध्यायेस्पष्टंभविष्यति ॥ २८ ॥ २९ ॥ ३० ॥ इतितृतीयेदशमः ॥ १० ॥ ततएकादशेकालपरमाण्वादिलक्षणैः ॥ युगमन्वंतरादिभ्यःकल्पमानादिवर्ण्यते ॥१॥ तदेवंसामान्यतः कालस्योपलक्षणभूतंगुणव्यतिकरंदशविवैकृतास्त्रयएवैतेदेवसर्गश्चसत्तम ॥ वैकारिकस्तुयःप्रोक्तःकौमारस्तूभयात्मकः ॥ २६ ॥ देवसर्गश्चाष्टविधो विबुधाःपितरोऽसुराः ॥ गंधर्वाऽप्सरसःसिद्धायक्षरक्षांसिचारणाः ॥२७॥ भूतप्रेतपिशाचाश्चविद्याध्राःकिन्नरादयः ॥ दशैतेविदुराख्याताःसर्गास्तेविश्वसृक्कृताः ॥२८॥ अतःपरंप्रवक्ष्यामिवंशान्मन्वंतराणिच ॥ एवंरजःप्लुतःस्त्रष्टाकल्पादिष्वात्मभूर्हरिः ॥ २९ ॥ सृजत्यमोघसंकल्पआत्मैवात्मानमात्मना ॥ ३० ॥ इति श्रीभागवतेमहापुराणेतृतीयस्कंधेदशमोऽध्यायः ॥१०॥ मैत्रेयउवाच ॥ चरमःसद्विशेषाणामनेको संयुतःसदा ॥ परमाणुःसविज्ञेयोनृणामैक्यभ्रमोयतः ॥ १ ॥ सतएवपदार्थस्यस्वरूपावस्थितस्ययत् ॥ कैवल्यंपरममहानविशेषोनिरंतरः ॥ २ ॥ ॥ ॥ ॥ ॥

धंनिरूप्येदानींतस्यैवविशेषंनिरूपयितुंतत्परिच्छेद्यंवस्तुलक्षयतिद्वाभ्यां सतःकार्यस्यविशेषाणामंशानांयश्चरमः अंत्यः यस्यांशोनास्ति अनेकः कार्यावस्थामप्राप्तः असंयुतःसमुदायावस्थांचाप्राप्तः अतएवसदाकार्यसमुदायावस्थयोरपगमेऽप्यस्तिसपरमाणुर्विज्ञेयः किं तत्रप्रमाणमतआह यतःयेभ्यःसमुदितेभ्यःनृणांव्यवहर्तॄणामैक्यभ्रमः अवयविबुद्धिःतथाचपंचमेऽवयविनिराकरणेवक्ष्यतियेषांसमूहेन कृतोविशेषइतिकार्यानुपपत्याकल्प्यतइतिभावः ॥ १ ॥ सूक्ष्ममुक्त्वास्थूलमाह सतएवेति यस्यचरमोंऽशःपरमाणुः तस्यैवसतःकार्यमात्रस्यस्वरूपावस्थितस्य परिणामांतरमप्राप्तस्ययत्कैवल्यमैक्यंसपरममहान् पुंस्त्वंतुपरमाणुप्रतियोगित्वात् ननुनानाविशेषवान्परस्परंभिन्नश्चसर्वःपदार्थःकथमैक्यंतस्यतत्राह अविशेषोविशेषविवक्षारहितः निरंतरभेदविवक्षारहितश्च सर्वोऽपिप्रपंचःपरममहानित्यर्थः ॥ २ ॥

यथासूक्ष्मःस्थूलश्चायंपदार्थः एवंकालोऽप्यनुमितः चकारान्मध्यमावस्थागृह्यते संस्थानंपरमाण्वाद्यवस्था तस्यभुक्तिःव्याप्तिः तयाभ
गवानितिहरेःशक्तिः स्वतोऽव्यक्तःव्यक्तंभुंक्तेव्याप्नोतिपरिच्छिनत्तीतितथा विभुः उत्पत्त्यादिषुदक्षः ॥ ३ ॥ एतदेवप्रपंचयतिसइत्यादि
ना सतःप्रपंचस्यपरमाणुतांपरमाण्ववस्थांयोभुंक्ते सकालःपरमाणुः तस्यैवाविशेषंसाकल्यंयोभुंक्तेसपरममहान् अयमर्थः ग्रहर्क्षताराच
क्रस्थइत्यादिनायत्सूर्यपर्यटनंवक्ष्यते तत्रसूर्योयावतापरमाणुदेशमातिक्रामातितावान्कालःपरमाणुः यावताचद्वादशराश्यात्मकंसर्वंभु
वनकोशंअतिक्रामाति सपरममहान्संवत्सरात्मकःकालः तस्यैवावृत्त्यायुगमन्वंतरादिक्रमेणद्विपरार्धांतत्वमिति तथाचपंचमेसूर्यगत्यै
वकालादिविभागंवक्ष्यति ॥ ४ ॥ इदानींद्व्यणुकादिलक्षणपूर्वकंमध्यमकालावस्थांकथयाति द्वौपरमाणूअणुःस्यात् त्रयोऽणवस्त्रसरेणुःस

एवंकालोप्यनुमितःसौक्ष्म्येस्थौल्येचसत्तम ॥ संस्थानभुक्त्याभगवानव्यक्तोव्यक्तभुग्विभुः ॥ ३ ॥ सका
लःपरमाणुर्वैयोभुंक्तेपरमाणुताम् ॥ततोविशेषभुग्यस्तुसकालःपरमोमहान् ॥ ४ ॥ अणुर्द्वौपरमाणूस्यात्त्रस
रेणुस्त्रयःस्मृतः ॥ जालार्करश्म्यवगतःखमेवानुपतन्नगात् ॥ ५ ॥ त्रसरेणुत्रिकंभुंक्तेयःकालःसत्रुटिःस्मृतः
॥ शतभागस्तुवेधःस्यात्तैस्त्रिभिस्तुलवःस्मृतः ॥ ६ ॥ निमेषस्त्रिलवोज्ञेयआम्नातस्तेत्रयःक्षणः ॥ क्षणान्पंच
विदुःकाष्ठांलघुतादशपंचच ॥ ७ ॥ लघूनिवैसमाम्नातादशपंचचनाडिका ॥ तेद्वेमुहूर्तःप्रहरःषड्यामःसप्तवा
नृणां ॥ ८ ॥ द्वादशार्धपलोन्मानंचतुर्भिश्चतुरंगुलैः ॥ स्वर्णमाषैःकृतच्छिद्रंयावत्प्रस्थजलप्लुतम् ॥ ९ ॥

तुप्रत्यक्षइत्याह जालार्केति गवाक्षप्रविष्टेष्वर्करश्मिष्ववगतः कोऽसौयोऽतिलघुत्वेनखमेवानुपतन्नगाद्गतः पाठांतरेखमेवानुपतन्नवग
तः नतुगांपृथ्वीं ॥ ५ ॥ शतंभागाःत्रुटिरूपाःयस्मिन्सवेधः ॥ ६ ॥ तन्निमेषास्त्रयःक्षणइत्याम्नातः काष्ठाःपंचदशएकंलघु ॥ ७ ॥
नाडिकाःपट्सप्तवाप्रहरः सएवयामोदिनस्यरात्रेश्चतुर्थोभागः ह्रासेषट्वृद्धौसप्तसंध्यांशमुहूर्तद्वयंविनेतिज्ञातव्यं तत्राप्यनियमार्थोवाश
ब्दः प्रत्यहंतद्भेदानांगणयितुमशक्यत्वात् ॥ ८ ॥ नाडिकायाउन्मानमाह उन्मीयतेअनेनेतिउन्मानंपात्रंषट्पलताम्रविरचितंपंचगुंजो
माषः तैश्चतुर्भिश्चतुरंगुलायामशलाकारूपेणरचितैःकृतमूलच्छिद्रं तेनच्छिद्रेणयावत्प्रस्थपरिमितंजलंप्रविशाति तेन चप्लुतंनिमग्नंभवति तावा
न्कालोनाडिका अत्रपलच्छिद्रयोराधिक्येशीघ्रंनिमज्जेत् अल्पत्वेचविलंबेनेतिपलशलाकयोर्नियमः ॥ ९ ॥ ॥

अहनी अहोरात्रं ॥ १० ॥ षण्मासाअयनंदिवीत्यस्योत्तरेणान्वयः ॥ ११ ॥ देवानामहोरात्रेप्राहुर्द्वादशमासाः ॥ १२ ॥ अनेनक्रमेणासौसू
र्योनित्यमायुःक्षपयतीत्याह ग्रहाश्चंद्रादयऋक्षाण्यश्विन्यादीनि ताराअन्यानिनक्षत्राणितदुपलक्षितंयत्कालवक्रंतत्रस्थितः अनिमिषःका
लात्माविभुरीश्वरःसूर्यःजगद्द्वादशराश्यात्मकंभुवनकोशंपर्येति पर्यटति ॥१३॥ संवत्सरादिभेदश्चसौरबार्हस्पत्यसावनचांद्रनाक्षत्रमासभे
देनद्रष्टव्यःकेचित्पुनरेवमाहुःयदाशुक्लपक्षप्रतिपदिसंक्रांतिर्भवति तदासौरचांद्रमासयोर्युगपदुपक्रमोभवतीतिससंवत्सरःततः सौरमानेनव
र्षेषट्दिनानिवर्धंते चांद्रमानेनवर्षेषट्दिनानिन्हसंतीतिद्वादशदिनव्यवधानात् उभयोरग्रपश्चाद्भावोभवति एवंव्यवधानतारतम्येनपंचवर्षा

यामाश्चत्वारश्चत्वारोमर्त्यानामहनीउभे ॥ पक्षःपंचदशाहानिशुक्लःकृष्णश्चमानद ॥ १० ॥ तयोःसमुच्चयो
मासःपितॄणांतदहर्निशं ॥ द्वौताव्रतुःषडयनंदक्षिणंचोत्तरंदिवि ॥ ११ ॥ अयनेचाहनीप्राहुर्वत्सरोद्वादश
स्मृतः ॥ संवत्सरशतंनॄणांपरमायुर्निरूपितं ॥ १२ ॥ ग्रहर्क्षताराचक्रस्थःपरमाण्वादिनाजगत् ॥ संवत्स
रावसानेनपर्येत्यनिमिषोविभुः॥१३॥संवत्सरःपरिवत्सरइडावत्सरएवच ॥ अनुवत्सरोवत्सरश्चविदुरैवंप्र
भाष्यते ॥१४॥यःसृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्यापुंसोभ्रमायदिविधावतिभूतभेदः॥कालाख्यया गुण
मयंक्रतुभिर्वितन्वंस्तस्मैबलिंहरतवत्सरपंचकाय ॥ १५ ॥ विदुरउवाच पितृदेवमनुष्याणामायुःपरमिदं
स्मृतम् ॥ परेषांगतिमाचक्ष्वयेस्युःकल्पाद्बहिर्विदः ॥१६॥ भगवान्वेदकालस्यगतिंभगवतोननु॥विश्वंविच
क्षतेधीरायोगराद्धेनचक्षुषा॥१७॥ मैत्रेयउवाच कृतंत्रेताद्वापरंचकलिश्चेतिचतुर्युगम्॥दिव्यैर्द्वादशभिर्वर्षैः
सावधानंनिरूपितम् ॥१८॥ णिगच्छंति तन्मध्येद्वौमलमासौभवतः पुनःषष्ठःसंवत्सरोभवति ॥ १४ ॥ एवंभूतःकालात्मा
नित्यमप्रमत्तैःपूजनीयइत्याह यइति सृज्यंकार्यमंकुरादि तद्विषयांबीजादीनांशक्तिंकालरूपयास्वशक्त्याबहुधाउच्छ्वसयन्कार्याभिमुखीं
कुर्वन् दिविअंतरिक्षेधावति कोऽसौभूतभेदःमहाभूतविशेषःतेजोमंडलरूपीसूर्यःकिमर्थंधावति पुंसःपुरुषस्य अभ्रमायभ्रमोमोहःत
न्निवृत्तयेआयुरादिव्ययेनविषयासक्तिंनिवर्तयन्नित्यर्थः सकामानांतुगुणमयंस्वर्गादिफलंक्रतुभिर्विस्तारयन् तस्मैसंवत्सरपंचकप्रवर्तकायपू
जांकुरुत ॥ १५ ॥ इदंस्वस्वमानेनवर्षशतंगणितमायुर्मानं प्रत्यहंकल्प्यतेसृज्यतइतिकल्पस्त्रैलोक्यंतस्माद्बाह्यतः विदोज्ञानिनः ॥१६॥
योगराद्धेनयोगसिद्धेन ॥ १७॥ द्वादशभिर्वर्षसहस्त्रैरित्युत्तरश्लोकसामर्थ्याज्ज्ञातव्यं अवधीयतइतिअवधानंसंध्याचांशश्चतत्सहितं ॥ १८ ॥

कृतयुगे चत्वारिसहस्राणिसंध्यासंध्यांऽशयोश्चत्वारिचत्वारीत्यष्टौशतानिच एवंत्रेतादिष्वपियोज्यम् ॥ १९ ॥ युगस्यादौसंध्याअंतेसंध्यांऽशः उक्तानिशतानिसंख्यायर्योस्तयोरंतरेणमध्येयुगंतस्यविशेषमाह यत्रेति गवालंभादिधर्मांविशेषोयत्रविधीयतइत्यर्थः साधारणधर्मस्तु संध्यांऽशयोरप्यस्त्येव॥२०॥चतुष्पात्संपूर्णःत्रेतादिषुपादेनपादेनन्योतिन्हसति पादेनपादेनवर्धमानेनाधर्मेणहेतुना एतच्चस्वरूपकथनमात्रंवैराग्यार्थंनतुधर्मसंकोचनार्थं ॥ २१ ॥ त्रिलोक्याःबहिर्महर्लोकप्रभृतिब्रह्मलोकमभिव्याप्यचतुर्युगसहस्रमेकदिनं यत्यस्यांविश्वसृक्ब्रह्मानिमीलतिस्वपितीति ॥२२॥ तत्रदिनस्थितिमाहनिशाऽवसानइत्यादिसार्धैश्चतुर्भिः चतुर्दशमनून्भुंजन्पालयन्व्याप्नुवन्नित्यर्थः ॥ २३॥

चत्वारित्रीणिद्वेचैकंकृतादिषुयथाक्रमम् ॥ संख्यातानिसहस्राणिद्विगुणानिशतानिच ॥ १९॥ संध्यांऽशयोरंतरेणयःकालःशतसंख्ययोः॥तमेवाहुर्युगंतज्ज्ञायत्रधर्मोविधीयते॥२०॥ धर्मश्चतुष्पान्मनुजान्कृते समनुवर्तते॥ सएवान्येष्वधर्मेणव्येतिपादेनवर्धता॥२१॥ त्रिलोक्यायुगसाहस्रंबहिराब्रह्मणोदिनम्॥ तावत्येवनिशातातयन्निमीलतिविश्वसृक्॥२२॥ निशाऽवसानआरब्धोलोककल्पोऽनुवर्तते॥ यावद्दिनं भगवतोमनून्भुंजंश्चतुर्दश॥२३॥ स्वंस्वंकालंमनुर्भुंक्तेसाधिकांह्येकसप्ततिम्॥ मन्वंतरेषुमनवस्तद्वंशा ऋषयःसुराः॥भवंतिचैवयुगपत्सुरेशाश्चानुयेचतान्॥ २४ ॥ एषदैनंदिनःसर्गोब्राह्मस्त्रैलोक्यवर्तनः॥ तिर्यङ्नृपितृदेवानांसंभवोयत्रकर्मभिः॥२५॥ मन्वंतरेषुभगवान्बिभ्रत्सत्त्वंस्वमूर्तिभिः॥ मन्वादिभिरिदं विश्वमवत्युदितपौरुषः॥२६॥ तमोमात्रामुपादायप्रतिसंरुद्धविक्रमः॥ कालेनानुगताशेषआस्तेतूष्णींदिनात्यये॥२७॥तमेवान्वपिधीयंतेलोकाभूरादयस्त्रयः॥निशायामनुवृत्तायांनिर्मुक्तशशिभास्करम्॥२८॥

किंचिदधिकांयुगानामेकसप्ततिंमनुवंशाःपृथ्वीपालकाःक्रमेणभवंति सप्तर्षिप्रभृतयस्तुयुगपत्समकालमेवभवंति सुरेशाःइंद्राः ताननुवर्ततेयेगंधर्वादयस्तेऽपि॥२४॥ त्रैलोक्यंवर्तयतीतितथा ॥२५॥ स्वमूर्तिभिर्मन्वंतरावतारैः मन्वादिभिर्द्वारभूतैराविष्कृतपुरुषकारःसन् विश्वंरक्षति ॥ २६ ॥ रात्रिगतांस्थितिमाहपंचाभिः तमसोमात्रांलेशम् प्रतिसंरुद्धःप्रत्याहृतोविक्रमोयेनानुगतमनुप्रविष्टमशेषंयस्मिन् ॥ ॥२७॥ तदेवस्पष्टयति अपिधीयंतइतिकर्मकर्तरिप्रयोगः तिरोहिताभवंतीत्यर्थः कथंनिर्मुक्तःरहितःशशीभास्करश्चयथाभवतितथा॥२८॥

भगवच्छक्तिरूपोयःसंकर्षणमुखाग्निस्तेनऊष्मणा अर्दिताःसंतःजनलोकंयांति ॥ २९ ॥ कल्पांतेनएधिताः सिंधवःसमुद्राः उत्कटआ
टोपःक्षोभोयेषांतेचतेचंडवातैरीरितोर्मयश्च ॥३०॥ जनलोकआलयोयेषांमहर्लोकगतानामन्येषांचतैः ॥ ३१॥ वैराग्यार्थमाह एवंविधैर
होरात्रैर्वर्षशतंसर्वेषांप्राणिनामायुषःपरमधिकमस्यब्रह्मणोयदायुस्तदप्यपक्षितामिवक्षणिमिवेतिलोकोक्तिः गतप्रायमित्यर्थः ॥३२॥ तदे
वाह यद्इति ॥३३॥ पूर्वस्यपरार्धस्यादावितित्रिभिर्वस्तुकथनमात्रम् ॥३४॥ पाद्मत्वेहेतुः यदिति ॥३५॥ अयंतुद्वितीयस्यादौकथितः ॥३६॥
तदेवंकालेननिमित्तेनसृज्यानामायुःपरिमाणमुक्त्वाकालपरिच्छेदरहितंतत्त्वमाह कालोयमितिपंचभिः उपचर्यतेकेवलंनत्वनेनापिक्रमेणायु

त्रिलोक्यांदह्यमानायांशक्त्यासंकर्षणाग्निना ॥ यांत्यूष्मणामहर्लोकाज्जनंभृग्वादयोर्दिताः ॥ २९ ॥ ताव
त्त्रिभुवनंसद्यःकल्पांतैधितसिंधवः ॥ प्लावयंत्युत्कटाटोपचंडवातेरितोर्मयः ॥ ३० ॥ अंतःसतस्मिन्सलि
लआस्तेऽनंतासनोहरिः ॥ योगनिद्रानिमीलाक्षःस्तूयमानोजनालयैः ॥ ३१ ॥ एवंविधैरहोरात्रैःकाल
गत्योपलक्षितैः ॥ अपक्षितमिवास्यापिपरमायुर्वयःशतम् ॥ ३२ ॥ यदर्धमायुषस्तस्यपरार्धमभिधीयते
॥ पूर्वःपरार्धोऽपक्रांतोह्यपरोऽद्यप्रवर्तते ॥ ३३ ॥ पूर्वस्यादौपरार्धस्यब्राह्मोनाममहानभूत् ॥ कल्पोयत्रा
भवद्ब्रह्माशब्दब्रह्मेतियंविदुः ॥ ३४ ॥ तस्यैवचांतेकल्पोऽभूद्यंपाद्ममभिचक्षते ॥ यद्धरेर्नाभिसरसआसी
ल्लोकसरोरुहम् ॥ ३५ ॥ अयंतुकथितःकल्पोद्वितीयस्यापिभारत ॥ वाराहइतिविख्यातोयत्रासीत्सूक
रोहरिः ॥ ३६ ॥ कालोयंद्विपरार्धाख्योनिमेषउपचर्यते ॥ अव्याकृतस्यानंतस्यअनादेर्जगदात्मनः ॥
॥ ३७ ॥ कालोऽयंपरमाण्वादिद्विपरार्धांतईश्वरः ॥ नैवेशितुंप्रभुर्भूम्नईश्वरोधाममानिनाम् ॥ ३८ ॥
विकारैःसहितोयुक्तैर्विशेषादिभिरावृतः ॥ आंडकोशोबहिरयंपंचाशत्कोटिविस्तृतः ॥ ३९ ॥

र्गणनंतस्येत्याह अव्याकृतस्यकार्योपाधिशून्यस्यअतएवानंतस्यअनादेश्चजगदात्मनोजगत्कारणस्य ॥ ३७ ॥ तत्परिच्छेदेकालस्यासाम
र्थ्यादित्याह कालोऽयमीश्वरःसमर्थोऽपिभूम्नःपरिपूर्णस्येशितुंनैवप्रभुःसमर्थःयतोधाममानिनांदेहगेहाभिमानिनामेवेश्वरः॥३८॥ भूम्नइत्युक्तं
तत्प्रपंचयन्नाह विकारैःषोडशभिर्युक्तैःअष्टप्रकृतिसंयुतैःसहितःतदारब्धइत्यर्थः अयमांडकोशः यत्रप्रविष्टःपरमाणुवल्लक्ष्यतइत्युत्तरेणान्व
यः कीदृशः अंतःपंचाशत्कोटियोजनविस्तृतः बहिश्चविशेषादिभिःपृथिव्यादिभिःसप्तभिरावृतः ॥ ३९ ॥

कीदृशैः आंडकोशप्रमाणाद्दशगुणमुत्तरोत्तरोऽधिकोयेषुतैः नकेवलमयमेकएवअपितुअन्येपिलक्ष्यंते ॥४०॥ सर्वेषांकारणानांकारणंधाम स्वरूपं ॥ ४१ ॥ इतितृतीयेएकादशः ॥ ११ ॥ द्वादशेतुकुमारादिमनःसर्गासमेधनात् ॥ कायद्वैधेनयौनस्तुमनुसर्गोनुवर्ण्यते ॥ १ ॥ ॥ १ ॥ अग्रइति ब्रह्मास्वसृष्टौप्रथममविद्यावृत्तीःससर्ज तत्रतमोनामस्वरूपाप्रकाशः मोहोदेहाद्यहंबुद्धिः महामोहोभोगेच्छा तामिस्रं तत्प्रतिघातेक्रोधः अंधतामिस्रंतन्नाशेऽहमेवमृतोऽस्मीतिबुद्धिःतदेवोक्तंवैष्णवे तमोविवेकोमोहःस्यादंतःकरणविभ्रमः ॥ महामोहस्तुवि

दशोत्तराधिकैर्यत्रप्रविष्टःपरमाणुवत् ॥ लक्ष्यतेंऽतर्गताश्चान्येकोटिशोह्यंडराशयः ॥४०॥ तदाहुरक्षरंब्रह्म सर्वकारणकारणं ॥ विष्णोर्धामपरंसाक्षात्पुरुषस्यमहात्मनः ॥४१॥ इति० भा० म० तृतीयस्कंधेएकादशोऽध्यायः ॥११॥ ॥ मैत्रेयउवाच इतितेवर्णितःक्षत्तःकालाख्यःपरमात्मनः ॥ महिमावेदगर्भोऽथयथाऽस्राक्षीन्निबोधमे ॥१॥ ससर्जाग्रेंऽधतामिस्रमथतामिस्रमादिकृत् ॥ महामोहंचमोहंचतमश्चाज्ञानवृत्तयः ॥ ॥ २ ॥ दृष्ट्वापापीयसींसृष्टिंनात्मानंबह्वमन्यत ॥ भगवद्ध्यानपूतेनमनसाऽन्यांततोऽसृजत् ॥ ३ ॥ सनकंच सनंदंचसनातनमथात्मभूः ॥ सनत्कुमारंचमुनीन्निष्क्रियानूर्ध्वरेतसः ॥४॥ तान्बभाषेस्वभूःपुत्रान्प्रजाःसृजत पुत्रकाः ॥ तन्नैच्छन्मोक्षधर्माणोवासुदेवपरायणाः ॥ ५ ॥ सोऽवध्यातःसुतैरेवंप्रत्याख्यातानुशासनैः ॥ क्रोधंदुर्विषहंजातंनियंतुमुपचक्रमे ॥६॥ धियानिगृह्यमाणोऽपिभ्रुवोर्मध्यात्प्रजापतेः ॥ सद्योऽजायततन्मन्युः कुमारोनीललोहितः ॥ ७ ॥ सवैरुरोददेवानांपूर्वजोभगवान्भवः ॥ नामानिकुरुमेधातःस्थानानिचजगद्गुरो ॥ ८ ॥ इतितस्यवचःपाद्मोभगवान्परिपालयन् ॥ अभ्यधाद्भद्रयावाचामारोदीस्तत्करोमिते ॥ ९ ॥

ज्ञेयोग्राम्यभोगसुखेषणा ॥ मरणंह्यंधतामिस्रंतामिस्रःक्रोधउच्यते ॥ अविद्यापंचपर्वैषाप्रादुर्भूतामहात्मनइति पातंजलेप्येतएवोक्ताः अविद्यास्मितारागद्वेषाभिनिवेशाःपंचक्लेशाइति श्रीविष्णुस्वामिप्रोक्तावाअज्ञानविपर्यासभेदभयशोकाः तदुक्तम्स्त्रादृगुत्थविपर्यासेत्यादि ॥ २ ॥ नबह्वमन्यतनाभ्यनंदत् ॥ ३ ॥ यद्यपिप्रतिकल्पंसनकादिसृष्टिर्नास्तितथापिब्राह्मसर्गत्वादिहोच्यते वस्तुतस्तुमुख्यसर्गादयएवप्रतिकल्पंभवंति सनकादयस्तुब्राह्मकल्पसृष्टाएवानुवर्तंते ॥ ४ ॥ स्वभूर्ब्रह्मा ॥ ५ ॥ अवध्यातःअवज्ञातः प्रत्याख्यातमनंगीकृतमनुशासनंयैः ॥ ६ ॥ सचासौमन्युश्चतन्मन्युः ॥ ७ ॥ ८ ॥ ९ ॥ ॥ ॥ ॥

बालकइव ॥ १० ॥ अग्रेपूर्वमेवमयाकृतानि ॥ ११ ॥ १२ ॥ १३ ॥ सयोषणःसस्त्रीकः एभिःस्थानैर्नामभिश्वयुक्तः प्रजाःसृज ॥





यदरोदीःसुरश्रेष्ठसोद्वेगइवबालकः॥ ततस्त्वामभिधास्यंतिनाम्नारुद्रइतिप्रजाः॥१०॥ हृदिंद्रियाण्यसुर्व्यो
मवायुरग्निर्जलंमही ॥ सूर्यश्चंद्रस्तपश्चैवस्थानान्यग्रेकृतानिते॥११॥मन्युर्मनुर्महिनसोमहाञ्छिवःऋतुध्व
जः॥ उग्ररेताभवःकालोवामदेवोधृतव्रतः॥१२॥धीर्वृत्तिरुशनोमाचनियुत्सर्पिरिलांऽबिका ॥ इरावतीसुधा
दीक्षारुद्राण्योरुद्रतेस्त्रियः ॥ १३ ॥ गृहाणैतानिनामानिस्थानानिचसयोषणः ॥ एभिःसृजप्रजाबह्वीःप्रजा
नामसियत्पतिः ॥ १४ ॥ इत्यादिष्टःसगुरुणाभगवान्नीललोहितः ॥ सत्वाकृतिस्वभावेनससर्जात्मसमाःप्र
जाः ॥ १५ ॥ रुद्राणांरुद्रसृष्टानांसमंताद्ग्रसतांजगत् ॥ निशाम्यासंख्यशोयूथान्प्रजापतिरशंकत ॥१६॥ अ
लंप्रजाभिःसृष्टाभिरीदृशीभिःसुरोत्तम॥मयासहदहंतीभिर्दिशश्चक्षुभिरुल्बणैः॥१७॥तपआतिष्ठभद्रंतेस
र्वभूतसुखावहम्॥ तपसैवयथापूर्वंस्त्रष्टाविश्वमिदंभवान् ॥ १८ ॥ तपसैवपरंज्योतिर्भगवंतमधोक्षजं ॥ स
र्वभूतगुहावासमंजसाविंदतेपुमान् ॥ १९ ॥ मैत्रेयउवाच एवमात्मभुवादिष्टःपरिक्रम्यगिरांपतिम् ॥
बाढमित्यमुमामंत्र्यविवेशतपसेवनम् ॥ २० ॥ अथाभिध्यायतःसर्गंदशपुत्राःप्रजज्ञिरे ॥ भगवच्छक्तियुक्त
स्यलोकसंतानहेतवः ॥ २१ ॥ मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः ॥भृगुर्वसिष्ठोदक्षश्चदशमस्तत्रनार
दः ॥ २२ ॥ उत्संगान्नारदोजज्ञेदक्षोंऽगुष्ठात्स्वयंभुवः ॥ प्राणाद्वसिष्ठःसंजातोभृगुस्त्वचिकरात्क्रतुः ॥२३॥
पुलहोनाभितोजज्ञेपुलस्त्यःकर्णयोर्ऋषिः ॥ अंगिरामुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ २४ ॥ धर्म
स्तनाद्दक्षिणतोयत्रनारायणःस्वयम् ॥ अधर्मःपृष्ठतोयस्मान्मृत्युर्लोकभयंकरः ॥ २५ ॥



॥ १४ ॥ सत्वंबलम् आकृतिर्नीललोहितता स्वभावस्तीव्रतातेन ॥ १५ ॥ रुद्राणांयूथानिदृष्ट्वा ॥ १६ ॥ १७ ॥ स्त्रष्टास्त्रक्ष्यति ॥
॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ ॥ ॥ ॥

अधरदच्छदात् अधरोष्ठात् ॥२६॥२७॥ देहांतरेणकृतंसर्गंवक्तुंतद्देहत्यागेकारणमाह वाचमित्यादिना ॥ २८ ॥ २९ ॥ त्वत् त्वत्तोयेपूर्वेब्रह्म ।द योऽन्येवातैरेतन्नकृतम् अंगजंकामं ॥ ३० ॥ तेजीयसाम् अतितेजस्विनामपिसुश्लोक्यंसत्कीर्तिदं नभवति येशंतेजीयसांवृत्तं ॥ ३१ ॥ ३२ ॥ तन्वंतनुं ॥ ३३ ॥ कथंस्रक्ष्यामीत्यभिध्यायतः स्रष्टुर्ब्रह्मणः चतुःसंख्यायुक्तात् मुखात् समवेतान्सुसंगतान् यथापुराप्राक्कल्पे ॥ ३४ ॥ चातुर्हो

हृदिकामोभ्रुवःक्रोधोलोभश्चाधरदच्छदात् ॥ आस्याद्वाक्सिंधवोमेढ्रान्निर्ऋतिःपायोरघाश्रयः ॥ २६ ॥ छायायाःकर्दमोजज्ञेदेवहूत्याःपतिःप्रभुः ॥ मनसोदेहतश्चेदंजज्ञेविश्वकृतोजगत् ॥ २७ ॥ वाचंदुहितरंतन्वींस्वयंभूर्हरतींमनः ॥ अकामांचकमेक्षत्तःसकामइतिनःश्रुतं ॥२८॥ तमधर्मेकृतमतिंविलोक्यपितरंसुताः ॥ मरीचिमुख्यामुनयोविश्रंभात्प्रत्यबोधयन् ॥ २९ ॥ नैतत्पूर्वैःकृतंत्वद्येनकरिष्यंतिचापरे ॥ यत्त्वंदुहितरंगच्छेरनिगृह्यांगजंप्रभुः ॥ ३० ॥ तेजीयसामपिह्येतन्नसुश्लोक्यंजगद्गुरो ॥ यद्वृत्तमनुतिष्ठन्वैलोकःक्षेमायकल्पते॥३१॥तस्मैनमोभगवतेयइदंस्वेनरोचिषा ॥ आत्मस्थंव्यंजयामाससधर्मंपातुमर्हति ॥ ३२ ॥ सइत्थंगृणतःपुत्रान्पुरोदृष्ट्वाप्रजापतीन् ॥ प्रजापतिपतिस्तन्वंतत्याजव्रीडितस्तदा ॥ ३३ ॥ तांदिशोजगृहुर्घोरांनीहारंयद्विदुस्तमः ॥ कदाचिद्ध्यायतःस्रष्टुर्वेदाआसंश्चतुर्मुखात् ॥ कथंस्रक्ष्याम्यहंलोकान्समवेतान्यथापुरा ॥ ३४ ॥ चातुर्होत्रंकर्मतंत्रमुपवेदनयैःसह ॥ धर्मस्यपादाश्चत्वारस्तथैवाश्रमवृत्तयः ॥ ३५ ॥ विदुरउवाच सवैविश्वसृजामीशोवेदादीन्मुखतोऽसृजत् ॥ यद्यद्येनासृजद्देवस्तन्मेब्रूहितपोधन ॥ ३६ ॥ मैत्रेयउवाच ऋग्यजुःसामाथर्वाख्यान्वेदान्पूर्वादिभिर्मुखैः ॥ शस्त्रमिज्यांस्तुतिस्तोमंप्रायश्चित्तंव्यधात्क्रमात् ॥ ३७ ॥ आयुर्वेदंधनुर्वेदंगांधर्ववेदमात्मनः ॥ स्थापत्यंचासृजद्वेदंक्रमात्पूर्वादिभिर्मुखैः ॥ ३८ ॥

त्रंहोत्रादीनांचतुर्णांकर्मतंत्रंयज्ञविस्तारः उपवेदैर्न्यायैश्चसह आश्रमास्तद्वृत्तयश्चासन् ॥ ३५ ॥ मुखतोमुखेभ्यः ॥ ३६ ॥ चातुर्होत्रसृष्टिक्रममाह शस्त्रंअप्रगीतमंत्रस्तोत्रंहोतुःकर्म इज्यामध्वर्योःकर्म स्तुतिस्तोमं स्तुतिःसंगीतं स्तोमंतदर्थमृक्समुदायंत्रिवृत्स्तोमोभवतीत्यादि विहितमुद्गातृप्रयोज्यं प्रायश्चित्तंब्राह्मं ॥ ३७ ॥ उपवेदक्रममाह आयुर्वेदमिति आत्मनोमुखैः स्थापत्यंविश्वकर्मशास्त्रं ॥ ३८ ॥

॥ ३९ ॥ कर्मतंत्रक्रममाह षोडश्युक्थाविति पुरीषीचयनं अग्निष्टुत्अग्निष्टोमः ॥ ४० ॥ विद्येति शौचंक्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मतेतिस्मृतेः दानमितिदया भूताभयप्रदानस्यकलांनार्हंतिषोडशीमितिवचनात् एवंचतपःशौचंदयासत्यमितिपादाः कृतेकृताइतिप्रथम स्कंधोक्तेरविरोधः ॥ ४१ ॥ सावित्रंब्रह्मचर्यम् उपनयनादारभ्यगायत्रीमधीयानस्यत्रिरात्रंप्राजापत्यं व्रतान्याचरतःसंवत्सरं ब्राह्मंवेदग्रह णांतं बृहन्नैष्ठिकम् वार्ताअनिषिद्धकृष्यादिवृत्तिःसंचयोयाजनादिवृत्तिः शालीनम्अयाचितवृत्तिः शिलोंछनंपतितकणिशकणवृत्तिः एकवचनमार्षं इत्येतागृहेवृत्तयइति यद्वा शिलोंछइतिद्वंद्वैक्येसप्तमी एवंवृत्तिभेदेसतिगृहेस्थिताभवंतीत्यर्थः ॥ ४२ ॥ वनेस्थिता

इतिहासपुराणानिपंचमंवेदमीश्वरः ॥ सर्वेभ्यएववक्त्रेभ्यःससृजेसर्वदर्शनः ॥ ३९ ॥ षोडश्युक्थौपूर्ववक्त्रा त्पुरीष्यग्निष्टुतावथ ॥ आप्तोर्यामातिरात्रौचवाजपेयंसगोसवं ॥ ४० ॥ विद्यादानंतपःसत्यंधर्मस्येतिपदा निच॥आश्रमांश्चयथासंख्यमसृजत्सहवृत्तिभिः॥४१॥ सावित्रंप्राजापत्यंचब्राह्मंचाथबृहत्तथा ॥ वार्तासंच यशालीनाशिलोंछइतिवैगृहे ॥ ४२ ॥ वैखानसावालखिल्यौदुंबराःफेनपावने ॥ न्यासेकुटीचकःपूर्वंबह्वोदो हंसनिष्क्रियौ ॥ ४३ ॥ आन्वीक्षिकीत्रयीवार्तादंडनीतिस्तथैवच ॥ एवंव्याहृतयश्चासन्प्रणवोह्यस्यदह्रतः ॥४४॥ तस्योष्णिगासील्लोमभ्योगायत्रीचत्वचोविभोः ॥ त्रिष्टुप्मांसात्स्नुतोऽनुष्टुप्जगत्यस्थ्नःप्रजापतेः ॥ ॥ ४५ ॥ मज्जायाःपंक्तिरुत्पन्नाबृहतीप्राणतोऽभवत् ॥ स्पर्शस्तस्याभवज्जीवःस्वरोदेहउदाहृतः ॥ ४६ ॥

श्चत्वारः तत्रवैखानसाःअकृष्टपच्यवृत्तयः वालखिल्याःनवेऽन्नेलब्धेपूर्वसंचितान्नत्यागिनः औदुंबराःप्रातरुत्थाययांदिशंप्रथमंपश्यंति ततआहृतैःफलादिभिर्जीवंतः फेनपाःस्वयंपतितैःफलादिभिर्जीवंतःकुटीचकःस्वाश्रमकर्मप्रधानः बह्वोदःकर्मोपसर्जनीकृत्यज्ञानप्र धानः हंसोज्ञानाभ्यासनिष्ठः निष्क्रियःप्राप्ततत्त्वःएतेचसर्वेयथोत्तरंश्रेष्ठाः ॥ ४३ ॥ न्यायादीनांपूर्वादिक्रमेणोत्पत्तिमाह आन्वीक्षि कीति आन्वीक्षिक्याद्यामोक्षधर्मकामार्थविद्याः भूर्भुवःस्वरितिव्यस्तास्तिस्रःसमस्ताचतुर्थी यथाहाश्वलायनः एवंव्याहृतयःप्रोक्ताव्यस्ताः समस्ताइति यद्वा महइतिचतुर्थी तथाचश्रुतिः भूर्भुवःसुवरितिवाएतास्तिस्रोव्याहृतयःतासामुहस्मैतांचतुर्थीं माहाचमस्यप्रवेदयतेमहइ ति दह्रतःहृदयाकाशात् ॥ ४४ ॥ स्नुतःस्नायुतःअनुष्टुप्स्नावानीतिश्रुतेः ॥ ४५ ॥ ४६ ॥ ॥ ॥ ॥

महाकल्पेब्रह्माशब्दरूपोऽभवदित्युक्तंतदेवदर्शयन्वर्णानामुत्पत्तिमाहस्पर्शइतिसार्द्धेन स्पर्शः कादिवर्गपंचकं स्वरोऽकारादिः ऊष्माणंश षसहचतुष्कं अंतस्थायरलवाः सप्तस्वराःषड्जादयः विहारेणक्रीडया ॥४७॥ अतएवशब्दतनुत्वाद्ब्रह्मणःपरमेश्वरोनित्यंप्रकाशतइत्या ह व्यक्तावैखरी अव्यक्तःप्रणवस्तदात्मनस्तस्यब्रह्मणः परःपरमेश्वरःअवभाति कीदृशः ब्रह्मपरिपूर्णः तत्राव्यक्तात्मनोब्रह्मरूपोविततोऽ वभाति व्यक्तात्मनोनानाशक्त्युपबृंहितइंद्रादिरूपोऽवभाति यापूर्वंविसृष्टासतीनीहारंतमोऽभवत् ततोऽपरामनिषिद्धंकामासक्तांतनुंशब्द

ऊष्माणमिंद्रियाण्याहुरंतस्थाबलमात्मनः॥स्वराःसप्तविहारेणभवंतिस्मप्रजापतेः॥४७॥शब्दब्रह्मात्मन स्तातव्यक्ताव्यक्तात्मनःपरः॥ब्रह्मावभातिविततोनानाशक्त्युपबृंहितः॥ततोऽपरामुपादायससर्गायमनो दधे॥४८॥ऋषीणांभूरिवीर्याणामपिसर्गमविस्तृतं॥ज्ञात्वातद्धृदयेभूयश्चिंतयामासकौरव॥४९॥ अहोअ द्भुतमेतन्मेव्यापृतस्यापिनित्यदा॥ नह्येधंतेप्रजानूनंदैवमत्रविघातकं॥५०॥एवंयुक्तकृतस्तस्यदैवंचावेक्ष तस्तदा॥कस्यरूपमभूद्द्वेधायत्कायमभिचक्षते॥५१॥ताभ्यांरूपविभागाभ्यांमिथुनंसमपद्यत॥ यस्तुत त्रपुमान्सोऽभून्मनुःस्वायंभुवःस्वराट्॥ ५२ ॥ स्त्रीयासीच्छतरूपाख्यामहिष्यस्यमहात्मनः॥तदामिथुन धर्मेणप्रजाह्येधांबभूविरे॥५३॥सचापिशतरूपायांपंचापत्यान्यजीजनत्॥प्रियव्रतोत्तानपादौतिस्रःकन्या श्चभारत॥५४॥ आकूतिर्देवहूतिश्चप्रसूतिरितिसत्तम॥ आकूतिंरुचयेप्रादात्कर्दमायतुमध्यमां॥ दक्षयादा त्प्रसूतिंचयतआपूरितंजगत्॥५५॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेद्वादशोऽध्यायः॥ १२॥
श्रीशुकउवाच निशम्यवाचंवदतोमुनेःपुण्यतमांनृप॥ भूयःपप्रच्छकौरव्योवासुदेवकथादृतः॥ १ ॥

ब्रह्मतनुस्तुसदाऽस्त्येव ॥ ४८ ॥ मन्वंतरग्रहणेकारणमाह ऋषीणामित्यादिना ॥ ४९ ॥ ५० ॥ युक्तकृतः यथोचितंकुर्वतः अतएवक स्यब्रह्मणइदंद्विधाभूतमित्याश्चर्यात् कायमद्याप्यभिचक्षते॥ ५१ ॥ ५२ ॥ यास्त्रीसाअस्यमहिष्यासीत् एधांबभूविरे वृद्धिंप्राप्ताः ॥ ५३ ॥ तदेवाह सचापीति ॥ ५४ ॥ यतःयासांसंततिभिः ॥ ५५ ॥ इतितृतीयस्कंधेटीकायांद्वादशोध्यायः ॥ १२ ॥ ॥ ॥ त्रयोदशे सिसृक्षायांमनोराकस्मिकाप्लुतां ॥ धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनं ॥ १ ॥ १ ॥ ॥ ॥

स्वयंभुवः पुत्रः तद्देहांशत्वात्सः ॥२॥ विष्वक्सेनोहरिरेवाश्रयोयस्यसः ॥३॥ अतस्तस्यचरितंश्रोतव्यमित्याह सुचिरंश्रमोयस्मिन् तस्यपुंसां श्रुतस्यअंजसामुख्यत्वेनायमेवार्थईडितःस्तुतः ननुमुकुंदपादारविंदंयेषांहृदयेष्वस्तितेषांभागवतानांगुणानुश्रवणं ॥ ४ ॥ सहस्त्रशीर्षाश्रीकृष्णस्तस्यचरणावुपधीयेतेयस्मिन् श्रीकृष्णःप्रीत्यायस्योत्संगेचरणौप्रसारयतीत्यर्थः तमभ्यचष्टअभ्यभाषत प्रणीयमानः तेनप्रवर्त्यमानः ॥५॥ वेदगर्भंब्रह्माणं ॥६ ॥ त्वमेवैकः पितासर्वेषांयतोजन्मकृत्वृत्तिदः पोषकश्चत्वमेव अतस्तवयद्यप्यन्यापेक्षानास्तिअथाप्यस्माकंतेशुश्रूषाकेन

विदुरउवाच सर्वैस्वायंभुवःसम्राट्प्रियःपुत्रःस्वयंभुवः ॥ प्रतिलभ्यप्रियांपत्नींकिंचकारततोमुने ॥ २ ॥ चरितंतस्यराजर्षेरादिराजस्यसत्तम ॥ ब्रूहिमेश्रद्दधानायविष्वक्सेनाश्रयोह्यसौ ॥ ३ ॥ श्रुतस्यपुंसांसुचिरश्रमस्यनन्वंजसासूरिभिरीडितोऽर्थः ॥ तत्तद्गुणानुश्रवणंमुकुंदपादारविंदंहृदयेषुयेषां ॥ ४ ॥ श्रीशुक उवाच इतिब्रुवाणंविदुरंविनीतंसहस्त्रशीर्ष्णश्चरणोपधानं ॥ प्रहृष्टरोमाभगवत्कथायांप्रणीयमानोमुनिरभ्यचष्ट ॥ ५ ॥ मैत्रेयउवाच यदास्वभार्ययासाकंजातःस्वायंभुवोमनुः ॥ प्रांजलिःप्रणतश्चेदंवेदगर्भमभाषत ॥ ६ ॥ त्वमेकःसर्वभूतानांजन्मकृद्वृत्तिदःपिता ॥ अथापिनःप्रजानांतेशुश्रूषाकेनवाभवेत् ॥ ७ ॥ तद्विधेहिनमस्तुभ्यंकर्मस्वीड्यात्मशक्तिषु ॥ यत्कृत्वेहयशोविष्वगमुत्रचभवेद्गतिः ॥ ८ ॥ ब्रह्मोवाच प्रीतस्तुभ्यमहंतातस्वस्तिस्ताद्वांक्षितीश्वर ॥ यन्निर्व्यलीकेनहृदाशाधिमेत्यात्मनाऽर्पितं ॥ ॥ ९ ॥ एतावत्यात्मजैर्वीरकार्याह्यपचितिर्गुरौ ॥ शक्त्याऽप्रमत्तैर्गृह्येतसादरंगतमत्सरैः ॥ १० ॥ सत्वमस्यामपत्यानिसदृशान्यात्मनोगुणैः ॥ उत्पाद्यशासधर्मेणगांयज्ञैःपुरुषंयज ॥ ११ ॥ परंशुश्रूषणंमह्यंस्यात्प्रजारक्षयानृप ॥ भगवांस्तेप्रजाभर्तुर्हृषीकेशोनुतुष्यति ॥ १२ ॥

कर्मणाभवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥ हेईड्य आत्मशक्तिषुअस्मच्छक्येषुकर्मसुमध्येकेनकर्मणाभवेत् तद्विधेहि इदंकर्त्तव्यमितिकथय यत्कृत्वायस्मिन्कृतेसातिविष्वक्सर्वतः अमुत्रपरलोके ॥ ८ ॥ वांयुवयोर्दंपत्योःस्वस्तिभद्रंस्तात्भूयात् यद्यतः मामांशाधिअनुशिक्षयेति आत्मनास्वयमेवार्पितंनिवेदितं अतःप्रीतोऽस्मि ॥ ९ ॥ अपचितिःपूजा गृह्येतआज्ञेतिशेषः सनकादयोनकुर्वंतिवयंकिमितिकरिष्याम इतिएवंभूतोगतोमत्सरोयेभ्यः ॥ १० ॥ गांशासशाधिपालयेत्यर्थः पुरुषंहरिं ॥ ११ ॥ प्रजापालकस्यतेतुष्टोभविष्यति ॥ १२ ॥

यज्ञलिंगः यज्ञमूर्तिः अपगतोऽर्थोयस्मात्केवलंश्रमायैवेत्यर्थः यद्यस्मादात्मैवस्वयंनादृतः तस्मिन्नतुष्टेस्वार्थस्यैवासिद्धेः सर्वात्मत्वात्तस्य ॥
॥ १३ ॥ वर्तेयर्वर्तिष्ये अमीवसूदनपापनाशन अनुजानीहि अत्रस्थातव्यमित्यनुज्ञांदेहि ॥१४॥ महीतिचैतदआह यदोकः स्थानंसाम
ह्री हेदेव अस्याःदेव्याः ॥ १५ ॥ पूर्वपानेकृतेऽपिपुनरकांडएवोद्भूतानामपांमध्येसन्नामवसन्नाम्निमग्नां समुन्नेष्येउद्धरिष्यामि ॥ १६ ॥

येषांनतुष्टोभगवान्यज्ञलिंगोजनार्दनः ॥ तेषांश्रमोह्यपार्थाययदात्मानादृतःस्वयम् ॥ १३ ॥ मनुरुवाच
आदेशेहंभगवतोवर्तेयामीवसूदन ॥ स्थानंत्विहानुजानीहिप्रजानांममचप्रभो ॥१४॥ यदोकःसर्वसत्वानां
महीमग्नामहांऽभसि ॥ अस्याउद्धरणेयत्नोदेवदेव्याविधीयताम् ॥ १५ ॥ मैत्रेयउवाच परमेष्ठीत्वपांमध्ये
तथासन्नामवेक्ष्यगां ॥ कथमेनांसमुन्नेष्यइतिदध्यौधियाचिरं ॥ १६ ॥ सृजतोमेक्षितिर्वार्भिःप्लाव्यमाना
रसांगता ॥ अथात्रकिमनुष्ठेयमस्माभिःसर्गयोजितैः ॥ १७ ॥ यस्याहंहृदयादासंसईशोविदधातुमे ॥ इ
त्यभिध्यायतोनासाविवरात्सहसाऽनघ ॥ वराहतोकोनिरगादंगुष्ठपरिमाणकः ॥१८॥ तस्याभिपश्यतःख
स्थःक्षणेनकिलभारत ॥ गजमात्रःप्रववृधेतदद्भुतमभून्महत् ॥१९॥ मरीचिप्रमुखैर्विप्रैःकुमारैर्मनुनासह॥
दृष्ट्वातत्सौकरंरूपंतर्कयामासचित्रधा ॥ २० ॥ किमेतत्सौकरव्याजंसत्वंदिव्यमवस्थितं ॥ अहोबताश्चर्य
मिदंनासायामेविनिःसृतम् ॥ २१ ॥ दृष्टोऽगुष्ठशिरोमात्रःक्षणाद्गंडशिलासमः ॥ अपिस्विद्भगवानेषयज्ञो
मेखेदयन्मनः ॥ २२ ॥ इतिमीमांसतस्तस्यब्रह्मणःसहसूनुभिः ॥ भगवान्यज्ञपुरुषोजगर्जागेंद्रसन्निभः॥
२३ ॥ ब्रह्माणंहर्षयामासहरिस्तांश्चद्विजोत्तमान् ॥ स्वगर्जितेनककुभःप्रतिस्वनयताविभुः ॥ २४ ॥

चिंतामेवाह सृजतःसतःवार्भिरद्भिः रसांरसातलम् ईश्वरेणसर्गेनियुक्तैः ॥ १७ ॥ मेअनुष्ठेयंसएवविदधातुसंपादयतु वराहतोकःसूक्ष्मो
वराहः ॥ १८ ॥ खस्थः आकाशेस्थितःसन् ॥ १९ ॥ चित्रधाअनेकधा ॥ २० ॥ २१ ॥ पूर्वमंगुष्ठाग्रप्रमाणोदृष्टः गंडशिलास्थूलपा
षाणःतत्समः यज्ञोविष्णुः निजरूपतिरोधानेनमेमनःखेदयन् ॥ २२ ॥ इतिमीमांसमानस्यसतः जगर्जअगर्जत् गिरींद्रतुल्यः ॥ २३॥
गर्जनप्रयोजनमाह ब्रह्माणमिति ॥ २४ ॥ ॥ ॥ ॥ ॥

घर्घरितंतज्जात्यनुकरणध्वनिम् अनिश्चयेनयः स्वखेदःतस्यक्षयिष्णुक्षपयिष्णुनाशकं तेइतिपुनरुक्तिः प्रसिद्धिख्यापनार्थां त्रिभिःपवित्रै ऋग्यजुःसाममंत्रैरगृणन् अस्तुवन् ॥ २५ ॥ वेदैर्वितन्यतेस्तूयतेमूर्तिर्यस्यसःअतएवात्मनोगुणान् अनुवदति तथातत्तेषांब्रह्मउच्चारितंवेद मवधार्यज्ञात्वा ॥ २६ ॥ कथंभूतःसन्आविवेशेत्यपेक्षायामाहद्वाभ्याम् उच्चैःक्षिप्तोवालःपुच्छंयेन खचरःआकाशचारी कठोरःकठिनः सटाःस्कंधवालान् खराणितीव्राणिरोमाणियस्याःसात्वग्यस्य खुरैराहतानिअभ्राणियेन सितदंष्ट्रः अतिशुक्लदंष्ट्रः ईक्षानिरीक्षणमेवज्यो तिरालोकोयस्य तदाप्रकाशांतराभावात् बभासेऽशोभत महीध्रःपृथिव्याउद्धर्ता ॥ २७ ॥ क्रोडापदेशःवराहच्छद्मा स्वयमध्वरांगोऽपिप शुरिवघ्राणेनाविजिघ्रन् गृणतःस्तोतॄन्विप्रानुद्वीक्ष्यउर्ध्वंवीक्ष्यकंजलमाविशत् ॥ २८ ॥ तदानींतनंसमुद्रध्वनिमुत्प्रेक्षते सउदन्वान्समुद्रः

**निशम्यतेघर्घरितंस्वखेदक्षयिष्णुमायामयसूकरस्य॥ जनस्तपःसत्यनिवासिनस्तेत्रिभिःपवित्रैर्मुनयोगृण न्स्म ॥२५॥ तेषांसतांवेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादं ॥ विनद्यभूयोविबुधोदयायगजेंद्रलीलो जलमाविवेश ॥ २६ ॥ उत्क्षिप्तवालःखचरःकठोरःसटाविधुन्वन्खररोमशत्वक् ॥ खुराहताभ्रःसितदंष्ट्रई क्षाज्योतिर्बभासेभगवान्महीध्रः॥२७॥ घ्राणेनपृथ्व्याःपदवींविजिघ्रन्क्रोडापदेशःस्वयमध्वरांगः ॥करा लदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्यविप्रान्गृणतोविशत्कम् ॥२८॥ सवज्रकूटांगनिपातवेगविशीर्णकुक्षिस्त नयन्नुदन्वान् ॥ उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोशयज्ञेश्वरपाहिमेति ॥ २९ ॥ खुरैःक्षुरप्रैर्दरयंस्तदाप उत्पारपारंत्रिपरूरसायां ॥ ददर्शगांतत्रसुषुप्सुरग्रेयांजीवधानींस्वयमभ्यधत्त ॥ ३० ॥ ॥ ॥**

आर्तइवस्तनयन्शब्दंकुर्वन् भोयज्ञेश्वर मामांपाहिमामवेत्येवंचुक्रोश आर्तसादृश्यमाह उत्सृष्टाःप्रसारितादीर्घाऊर्मयएवभुजास्तैर्विशि ष्टः आर्तत्वेहेतुः वज्रकूटोवज्रमयःपर्वतः तद्वदंगंयद्भगवतःतस्यनिपातवेगेनविशीर्णाकुक्षिर्यस्य ॥ २९ ॥ तदारसायांरसातले गांपृथ्वींद दर्श कः त्रिपरुः त्रीणिपरूंषिसवनात्मकानिपर्वाणियस्य यज्ञमूर्तिरित्यर्थः किंकुर्वन् क्षुरप्राआयताग्राःक्षुरास्तत्सदृशैःखुरैरपोदरयन् कथ मुत्पारपारम् उत्पाराणांपारशून्यानामप्यपांपारम् अवसानंयथाभवतितथाविदारयन् कथंभूतःअग्रेप्रलयसमये तत्रतास्वप्सुसुषुप्सुःशिशयि षुःसन्जीवाधीयंतेयस्यांसर्वजीवाधारभूतायां स्वयमभ्यधत्तआभिमुख्येनदधार जठरेधृतवानित्यर्थः अनेनतदुद्धरणेऽनायासंद्योतयति ॥३०॥

रसायाः सकाशादुत्थितः संरुरुचेसम्यगशोभत तत्रापिअंभसिगदामुद्यम्यागच्छंतंरुंधानंप्रतिघ्नंतं नसह्यः सहनानर्होविक्रमोयस्यतंदैत्यं सु
नाभंचक्रंतद्दत्तसंदीपितस्तीव्रोमन्युर्यस्य यद्वा मयिविद्यमानेकिमितिपरिभवंसहसइतिसुनाभेनसंदीपितस्तीव्रमन्युः सभगवान् सिंहोगज
मिवलीलयाजघान ॥ ३१ ॥ गजेंद्रोजगतीं क्रीडयाविदारयन् गैरिकयायथाअरुणगंडतुंडोभवति तथातस्यरक्तमेवपंकस्तेनांकितौगंडौ
तुंडंचयस्यसजघानेतिपूर्वेणैवान्वयः ॥ ३२ ॥ प्रज्ञायआलक्ष्य अनुवाकोवैदिकंसूक्तंतत्सदृशैर्वाक्यैस्तुष्टुवुः ॥ ३३ ॥ भोअजिततेस्त्वया जितं
जितमितिसंभ्रमेवीप्सा यज्ञैर्भाव्यतेआक्रियतइतितथा त्रयींवेदमयीं निलिल्युः लीनप्रायाः कारणंपृथिव्युद्धरणंतेनसूकराय ॥ ३४ ॥ यज्ञा

स्वदंष्ट्रयोद्धृत्यमहींनिमग्नांसउत्थितः संरुरुचेरसायाः॥तत्रापिदैत्यंगदयापतंतंसुनाभसंदीपिततीव्रमन्युः॥
जघानरुंधानमसह्यविक्रमंसलीलयेभंमृगराडिवांभसि ॥३१॥ तद्रक्तपंकांकितगंडतुंडोयथागजेंद्रोजगतीं
विभिंदन् ॥३२॥ तमालनीलंसितदंतकोटचाक्ष्मामुत्क्षिपंतंगजलीलयांऽग॥प्रज्ञायबद्धांजलयोऽनुवाकैर्वि
रिंचिमुख्याउपतस्थुरीशं॥३३॥ ऋषयऊचुः जितंजितंतेऽजितयज्ञभावनत्रयींतनूंस्वांपरिधुन्वतेनमः॥य
द्रोमगर्तेषुनिलिल्युरध्वरास्तस्मैनमः कारणसूकरायते ॥३४॥ रूपंतवैतन्ननुदुष्कृतात्मनांदुर्दर्शनंदेवयदध्व
रात्मकं॥ छंदांसियस्यत्वचिबर्हिरोमस्वाज्यंदृशित्वंघ्रिषुचातुर्होत्रं ॥३५॥ स्रुक्तुंडआसीत्स्रुवईशनासयोरिडो
दरेचमसाः कर्णरंध्रे॥प्राशित्रमास्येग्रसनेग्रहास्तुतेयच्चर्वणंतेभगवन्नग्निहोत्रं ॥ ३६ ॥ दीक्षाऽनुजन्मोपसदः
शिरोधरंत्वंप्रायणीयोदयनीयदंष्ट्रः ॥ जिह्वाप्रवर्ग्यस्तवशीर्षकंक्रतोः सभ्यावसथ्यंचितयोऽसवोहिते॥३७॥

त्मतांप्रपंचयंतः स्तुवंतिरूपमित्यादिचतुर्भिः छंदांसिगायत्र्यादीनि यज्ञांगभूतछंदआद्यनुवादेनभगवदवयवताविधीयते बर्हिः शब्देदीर्घाभा
वआर्षः दृशिचक्षुषि चातुर्होत्रंहोत्रादिकर्मचतुष्टयम् ॥ ३५ ॥ स्रुक्जुहूः तुंडेमुखाग्रे स्रुवोनासिकयोः इडाभक्षपात्रं चमसाग्रहाश्चसोमपा
त्राणि प्राशित्रंब्रह्मभागपात्रं ग्रस्यतेऽनेनेतिग्रसनंमुखांतर्वर्तिच्छिद्रं चर्वणंभक्षणं ॥ ३६ ॥ दीक्षादीक्षणीयेष्टिः अनुजन्मवारंवारमभिव्यक्तिः
उपसदस्तिस्रः इष्टयः शिरोधरंग्रीवा प्रायणीयादीक्षाऽनंतरेष्टिः उदयनीयासमाप्तीष्टिः तेएवदंष्ट्रेयस्य प्रवर्ग्योमहावीरः पत्युपसदः पूर्वंक्रियते
सभ्योहोमरहितोऽग्निः आवसथ्यमौपासनाग्निः तयोर्द्वंद्वैक्यं तत्तवक्रतुरूपस्यशीर्षंशिरः चितयइष्टकाचयनानिपंचअसवः प्राणाः ॥ ३७ ॥

प्रातःसवनादीनि अवस्थितिः आसनंबालाद्यवस्थावा अग्निष्टोमोऽत्यग्निष्टोमउक्थ्यःषोडशीवाजपेयोऽतिरात्रोप्तोर्याममइति सप्तसंस्थाविभेदाःत्वङ्मांसादिसप्तधातवः सत्राणिद्वादशाहादीनिबहुयागसंघातरूपाणि असोमायज्ञाः ससोमाःक्रतवःतद्रूपस्त्वमिष्टिर्यजनमनुष्ठानंतदेवबंधनंयस्यसः ॥ ३८ ॥ पुर्वोक्तमेवसपरिकरंकीर्तयंतःप्रणमंतिनमोनमइति अखिलमंत्रादिरूपायक्रियात्मनेसामान्यव्यापाररूपायकिंच वैराग्ययुक्तकर्मसाध्यासत्वशुद्धिःततोभक्तिःततआत्मजयःचित्तस्थैर्यंतेन अनुभावितंसाक्षात्कृतंयद्ज्ञानंतस्मै एवंभूतज्ञानप्रदाय गुरवेच ॥ ३९ ॥ हेभूधरसभूधरासपर्वतावनादुदकान्निर्गच्छतोगजेंद्रस्यदतादंतेन ॥ ४० ॥ त्वयाधृताभूर्विराजतइत्युक्तम् इदानींभूमंडलेनत्व

सोमस्तुरेतःसवनान्यवस्थितिःसंस्थाविभेदास्तवदेवधातवः ॥ सत्राणिसर्वाणिशरीरसंधिस्त्वंसर्वयज्ञक्रतुरिष्टिबंधनः ॥३८॥ नमोनमस्तेऽखिलमंत्रदेवताद्रव्यायसर्वक्रतवेक्रियात्मने ॥ वैराग्यभक्त्यात्मजयानुभावितज्ञानायविद्यागुरवेनमोनमः ॥३९॥ दंष्ट्राग्रकोट्याभगवंस्त्वयाधृताविराजतेभूधरभूःसभूधरा ॥ यथावनान्निःसरतोदताधृतामतंगजेंद्रस्यसपत्रपद्मिनी ॥४०॥ त्रयीमयंरूपमिदंचसौकरंभूमंडलेनाथदताधृतेनते ॥ चकास्तिशृंगोढघनेनभूयसाकुलाचलेंद्रस्ययथैवविभ्रमः ॥४१॥ संस्थापयैनांजगतांसतस्थुषांलोकायपत्नीमसिमातरंपिता ॥ विधेमचास्यैनमसासहत्वयायस्यांस्वतेजोऽग्निमिवारणावधाः ॥४२॥ कःश्रद्दधीतान्यतमस्तवप्रभोरसांगतायाभुवउद्विबर्हणं ॥ नविस्मयोऽसौत्वयिविश्वविस्मयेयोमाययेदंससृजेऽतिविस्मयं ॥४३

द्रूपंविराजतइत्याहुः त्रयीति अथेत्यर्थांतरे तेइदंरूपंदंतेनधृतंयद्भूमंडलंतेनचकास्तिशोभते शृंगेणऊढोधृतोयोघनःतेनभूयसाअतिमहताविभ्रमोविलासः ॥ ४१ ॥ लोकायत्रासस्थानार्थंतेपत्नींजगतांमातरम् यतस्त्वंपिताआसि एवंसतितत्रास्थिताःसंतः त्वयापित्रासह अस्यैमात्रेनमसाविधेम नमनंकरिष्यामः नमस्कारेणपरिचरेमेतिवा स्वतेजःधारणशक्तिं याज्ञिकाः मंत्रतोऽग्निमरणाविवअधाः निहितवानासि ॥ ४२ ॥ इदंचत्वयाअतिदुष्करंकृतमित्याहुः कइति हेप्रभो नवत्वयाकृतंभुवउद्विबर्हणम्उद्धरणं त्वदन्यःकःश्रद्दधीतस्पृहयेत् अध्यवस्येदित्यर्थःत्वयिपुनरसौविस्मयोनभवति यतोविश्वेसर्वेविस्मयायस्मिन्कुतः योभवान् अतिविस्मयमत्यद्भुतमिदंविश्वं क्रियाविशेषणंवा ससृजेसृष्टवान् ॥ ४३ ॥ ॥ ॥ ॥ ॥



॥ ३३ ॥

त्रिरमयंदर्शयंतःप्रार्थयंते विधुन्वततिहाभ्यां सटानांशिखाभिरग्रैः उद्भूताउच्छलिताः येशिवाअंबुबिंदवः तैःसिच्यमानावयं पवित्रीकृ
ताः ॥ ४४ ॥ तवकर्मणांपारंयएषते अवलोकयतिज्ञातुमिच्छतीत्यर्थः यस्यतवयोगमायया योगुणैःसहयोगस्तेनमोहितं अतोविश्वस्यशंमं
गलंविधेहि यथात्वामचिंत्यानंतशक्तिंज्ञात्वाभजेत्तथाऽनुगृहाणेत्यर्थः ॥ ४५ ॥ उपस्थीयमानःस्तूयमानः स्वखुराक्रांतइतिजलेऽपिधारण
शक्त्याधानंदर्शयति अवितारक्षकः ॥४६॥४७॥ कथनीयानिमायीनिमायावंतिचारित्राणियस्य श्रवयेतश्रावयेत हेस्वत्वमार्षे उशतींक

विधुन्वतावेदमयंनिजंवपुर्जनस्तपःसत्यनिवासिनोवयं ॥ सटाशिखोद्धूतशिवांबुबिंदुभिर्विमृज्यमानाभृ
शमीशपाविताः ॥४४॥ सवैबतभ्रष्टमतिस्तवैषतेयःकर्मणांपारमपारकर्मणः॥यद्योगमायागुणयोगमोहि
तंविश्वंसमस्तंभगवन्विधेहिशं ॥४५॥ मैत्रेयउवाच इत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ॥ स
लिलेस्वखुराक्रांतउपाधत्तावितावनिं ॥४६॥ सइत्थंभगवानुर्वीविष्वक्सेनःप्रजापतिः ॥ रसायालीलयो
न्नीतामप्सुन्यस्ययर्यौहरिः॥४७॥यएवमेतांहरिमेधसोहरेःकथांसुभद्रांकथनीयमायिनः॥ शृण्वीतभक्त्या
श्रवयेतवोशतींजनार्दनोऽस्याशुहृदिप्रसीदति ॥४८॥तस्मिन्प्रसन्नेसकलाशिषांप्रभौकिंदुर्लभंताभिरलंल
वात्मभिः ॥ अनन्यदृष्ट्याभजतांगुहाशयःस्वयंविधत्तेस्वगतिंपरःपरां॥४९॥कोनामलोकेपुरुषार्थसारवि
त्पुराकथानांभगवत्कथासुधां ॥ आपीयकर्णांजलिभिर्भवापहामहोविरज्येतविनानरेतरं ॥५०॥ इतिश्री
भागवतेमहापुराणेतृतीयस्कंधेसूकररूपानुवर्णनेत्रयोदशोऽध्यायः ॥१३॥ श्रीशुकउवाच निशम्यकौ
षारविणोपवर्णितांहरेःकथांकारणसूकरात्मनः॥ पुनःसपप्रच्छतमुद्यतांजलिर्नचातितृप्तोविदुरोधृतव्रतः १

मनीयां हृदिप्रसीदतिस्वमनसिसंतुष्यतीत्यर्थः ॥ ४८ ॥ यद्यपिसुलभास्तथापिनप्रार्थनीयाइत्याह ताभिराशीर्भिरलंलवात्मभिः तुच्छा
भिः नचतदाभजनस्यवैफल्यंशंकनीयमित्याह भगवद्भजनव्यतिरेकेणफलांतरदृष्टिंविनाभजतां स्वपदप्राप्तिस्वयमेवविधत्तेगुहाशयत्वा
दहैतुकींभक्तिंजानन् ॥ ४९ ॥ अतःकोनामपुराकथानांपूर्ववृत्तानांमध्येकथंचिदापीयविरज्येतविरमेत् नरेतरंपशुंविना ॥ ५० ॥
इतितृतीयेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशेनिदानंतुतद्वधेवक्तुमुच्यते ॥ संध्यायांकश्यपाद्गर्भसंभवःकामतोदितेः ॥ १ ॥ १ ॥

तेनैवयेनभूमिरुद्धृता अनुशुश्रुमत्वन्मुखात् ॥ २ ॥ मृधोयुद्धं ॥ ३ ॥ साधुत्वेहेतुः यद्यस्मात्त्वंहरेरवतारकथांपृच्छसीति मृत्योःपाशंवि
शातयतिमोचयतीतितथा ॥ ४ ॥ तदेवदर्शयति ययाकथयाउत्तानपदःपुत्रोध्रुवः मुनिनानारदेनअर्भकएव यदाध्रुवायसुनंदादिभिर्वि
मानमानीतंतदाऽस्यदेहत्यागोऽपेक्षितःस्यादितिमत्वामृत्यावासन्नेऽपिदेहंनतत्याज किंतुसोपानइवतस्यमूर्ध्निपदंदत्वाविमानमारुह्यावि
ष्णुपदमारूढःवक्ष्यतिहि परीत्याभ्यर्च्यधिष्ण्याग्र्यंकृतस्वस्त्ययनोद्विजैः ॥ इयेषतदधिष्ठातुंबिभ्रद्रूपंहिरण्मयमिति ॥ ५ ॥ तयोःसंग्रामेहेतुं
वक्तुमितिहासंप्रस्तौति अथेति अनुपृच्छतांदेवानांब्रह्मणावर्णितइतिहासोमयाश्रुतः ॥ ६ ॥ तदेवप्रश्नप्रस्तावायप्रथमंहिरण्याक्षहिर

विदुरउवाच तेनैवतुमुनिश्रेष्ठहरिणायज्ञमूर्तिना ॥ आदिदैत्योहिरण्याक्षोहतइत्यनुशुश्रुम ॥२॥ तस्यचो
द्धरतःक्षोणींस्वदंष्ट्राग्रेणलीलया ॥ दैत्यराजस्यचब्रह्मन्कस्माद्धेतोरभून्मृधः ॥३॥ मैत्रेयउवाच साधुवीर
त्वयापृष्टमवतारकथांहरेः ॥ यत्त्वंपृच्छसिमर्त्यानांमृत्युपाशविशातनीं॥४॥ययोत्तानपदःपुत्रोमुनिनागीत
याऽर्भकः ॥ मृत्योःकृत्वैवमूर्ध्न्यंघ्रिमारुरोहहरेःपदं ॥५॥ अथात्रापीतिहासोऽयंश्रुतोमेवर्णितःपुरा ॥ ब्रह्म
णादेवदेवेनदेवानामनुपृच्छतां ॥६॥ दितिर्दाक्षायणीक्षत्तर्मारीचंकश्यपंपतिं ॥ अपत्यकामाचकमेसंध्यायां
हृच्छयार्दिता ॥ ७ ॥ इष्ट्वाऽग्निजिह्वंपयसापुरुषंयजुषांपतिं ॥ निम्लोचत्यर्कआसीनमग्न्यागारेसमाहितं
॥ ८ ॥ दितिरुवाच एषमांत्वत्कृतेविद्वन्कामआत्तशरासनः॥ दुनोतिदीनांविक्रम्यरंभामिवमतंगजः ॥
॥ ९ ॥ तद्भवान्दह्यमानायांसपत्नीनांसमृद्धिभिः ॥ प्रजावतीनांभद्रंतेमय्यायुंक्तामनुग्रहं ॥ १० ॥ भर्त
र्याप्तोरुमानानांलोकानाविशतेयशः ॥ पतिर्भवद्विधोयासांप्रजयाननुजायते ॥ ११ ॥ ॥ ॥

ण्यकशिपूत्पत्तिप्रसंगमाह दितिरित्यादिनायावदध्यायपरिसमाप्ति मरीचेःपुत्रंकश्यपं हृच्छयःकामःतेनार्दिता अतःसंध्यायामेवकामि
तवती ॥ ७ ॥ तदप्यग्निहोत्रशालायां तत्रापिसमाहितं अग्निर्जिह्वायस्य यजुषांयज्ञानांपतिंपुरुषंश्रीविष्णुं ॥ ८ ॥ कृपणांबहुभाषिणी
मितिवक्ष्यति तत्रएषमामितिद्वाभ्यांकार्पण्यं भर्तरीतिचतुर्भिश्चबहुभाषणंवर्ण्यते दुनोतिपीडयति विक्रम्यशौर्यमाविर्भाव्य रंभांकदलीं ॥
॥ ९ ॥ आयुंक्तांसर्वतोयुनक्तुसम्यक्करोतु ॥ १० ॥ भर्तरिप्राप्तबहुमानानांस्त्रीणांयशः लोकानआविशतेव्याप्नोति प्रजयापुत्ररूपेण त
ज्जायाजायाभवतियदस्यांजायतेपुनरितिश्रुतेः ॥ ११ ॥ ॥ ॥ ॥

नोऽस्माकंपितानोऽस्मान्पृथक् अपृच्छत् अयंभावः त्रयोदशानामप्यस्माकंत्वयिभावसाम्येत्रैषम्याचरणंतवानुचितमिति ॥ १२ ॥
॥ १३ ॥ मोघंनभवतिहिमहीयासित्वादृशेमहत्तमे ॥ १४ ॥ प्रवृद्धानंगेनकश्मलंमोहोयस्यास्ताम् ॥ १५ ॥ संध्याकालवंचनाय भार्या
प्रशंसाएषइतिपंचभिः यतःयस्याःसकाशात् ॥ १६ ॥ सर्वाश्रमानुपादायेति तानप्यन्नादिदानेनकृच्छ्रतस्तारयन्स्वयंतरतीत्यर्थः ॥
॥१७॥ आत्मनोदेहस्यार्धं कर्मसुद्वयोःसहाधिकारात् यच्छब्दानांतांत्वामितितृतीयश्लोकेनसंबंधः स्वधुरंदृष्टादृष्टकर्मभारं विज्वरःनिश्चि

पुरापितानोभगवान्दक्षोदुहितृवत्सलः ॥ कंवृणीतवरंवत्साइत्यपृच्छतनःपृथक् ॥१२॥ सविदित्वात्म
जानांनोभावंसंतानभावनः ॥ त्रयोदशाददत्तासांयास्तेशीलमनुव्रताः ॥१३॥ अथमेकुरुकल्याणकामंकं
जविलोचन ॥ आर्तोपसर्पणंभूमन्नमोघंहिमहीयसि ॥ १४ ॥ इतितांवीरमारीचःकृपणांबहुभाषिणीम्॥
प्रत्याहानुनयन्वाचाप्रवृद्धानंगकश्मलाम् ॥१५॥ एषतेऽहंविधास्यामिप्रियंभीरुयदिच्छसि ॥ तस्याःका
मंनकःकुर्यात्सिद्धिस्त्रैवर्गिकीयतः ॥ १६ ॥ सर्वाश्रमानुपादायस्वाश्रमेणकलत्रवान् ॥ व्यसनार्णवमत्ये
तिजलयानैर्यथार्णवं ॥ १७ ॥ यामाहुरात्मनोह्यर्धंश्रेयस्कामस्यमानिनि॥ यस्यांस्वधुरमध्यस्यपुमांश्चर
तिविज्वरः ॥१८॥ यामाश्रित्येंद्रियारातीन्दुर्जयानितराश्रमैः ॥ वयंजयेमहेलाभिर्दस्यून्दुर्गपतिर्यथा
॥ १९ ॥ नवयंप्रभवस्तांत्वामनुकर्तुंगृहेश्वरि ॥ अप्यायुषावाकात्स्न्र्येनयेचान्येगुणगृध्नवः ॥ २० ॥ अ
थापिकाममेतंतेप्रजात्यैकरवाण्यलं ॥ यथामांनातिवोचंतिमुहूर्तंप्रतिपालय ॥ २१ ॥ एषाघोरतमावेला
घोराणांघोरदर्शना ॥ चरंतियस्यांभूतानिभूतेशानुचराणिह ॥ २२ ॥ ॥

तः ॥ १८ ॥ हेलाभिर्लीलाभिःजयेमेतिसभार्यस्यैंद्रियाणिप्रायेगेतस्ततोनसर्पंतीतिभावः ॥ १९ ॥ तामनेकोपकारकर्त्रींत्वांकात्स्र्न्येन
अनुकर्तुंप्रत्युपकारैःत्वत्सदृशाभावितुंनप्रभवःनसमर्थाः येचान्येगुणगृध्नवःगुणप्रियास्तेऽपिनसमर्थाः संपूर्णेनाप्यायुषा वाशब्दात्जन्मां
तरैरपिनप्रभवइत्युक्तम् ॥ २० ॥ यद्यपित्वदनुकरणमशक्यं प्रजात्यैपुत्रोत्पत्त्यै नातिवोचंतिननिंदंति प्रतिपालयप्रतीक्षस्व ॥ २१ ॥
स्वनिंदामगणयंतींभीषयन्श्रुद्रमनुवर्णयति एषेतिसप्तभिः घोराणामेषावेलास्वयंचघोरदर्शना ॥ २२ ॥ ॥

भूतपर्षद्भिर्भूतगणैः ॥ २३ ॥ तर्हितत्संमुखत्वमात्रंवर्जनीयमितिचेत्तत्राह श्मशानेयश्चक्रानिलःवातमंडली तस्मिन्याधूलिस्तयाधूम्रः विकीर्णोविक्षिप्तः विद्योतोद्युतिमान्जटाकलापोयस्य भस्मनाऽवगुंठःप्रावृतः अमलःरुक्मवद्देहोयस्य सदेवः त्रिभिःसोमार्काग्निनेत्रैः पश्यतीत्यस्योत्तरश्लोकत्रयेष्वनुषंगः एकस्यजामातरःपरस्परंभ्रातरोन्यवव्हियंते अतोममभ्राताअसौतवदेवरइतिलज्जार्थमुक्तम् ॥ २४ ॥ ननुतथाऽपिमहत्त्वेनादरणीयस्यस्वजनस्यचतवससर्वक्षमैवतत्राह यस्यस्वजनादिर्नास्तिसमत्वादीश्वरस्य ऐश्वर्यमेवाह येनचरणेनाप विद्धांनिर्माल्यवद्दूरतस्त्यक्तांतेनभुक्तभोगामजांमायांतन्मयींविभूतिं महाप्रसादइत्याशास्महे व्रतैस्तमाराध्य ॥ २५ ॥ अनिषिद्धसुखत्या

एतस्यांसाध्विसंध्यायांभगवान्भूतभावनः ॥ परीतोभूतपर्षद्भिर्वृषेणाटतिभूतराट् ॥ २३॥ श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः ॥ भस्मावगुंठामलरुक्मदेहोदेवस्त्रिभिःपश्यतिदेवरस्ते॥२४॥नयस्यलोकेस्वजनःपरोवानात्याद्दतेनोतकश्चिद्विगर्ह्यः ॥ वयंव्रतैर्यच्चरणापविद्धामाशास्महेऽजांबतभुक्तभोगाम् ॥२५॥ यस्यानवद्याचरितंमनीषिणोगृणंत्यविद्यापटलंबिभित्सवः ॥ निरस्तसाम्यातिशयोऽपियत्स्वयंपिशाचचर्यामचरद्गतिःसतां ॥२६॥ हसंतियस्याचरितंहिदुर्भगाःस्वात्मन्रतस्याविदुषःसमीहितं ॥ यैर्वस्त्रमाल्याभरणानुलेपनैःश्वभोजनंस्वात्मतयोपलालितं ॥ २७ ॥ ब्रह्मादयोयत्कृतसेतुपालायत्कारणंविश्वमिदंचमाया ॥ आज्ञाकरीतस्यपिशाचचर्याअहोविभूम्नश्चरितंविडंबनं ॥ २८ ॥ मैत्रेयउवाच सैवंसंविदितेभर्त्रामन्मथोन्मथितेंद्रिया ॥ जग्राहवासोब्रह्मर्षेर्वृषलीवगतत्रपा ॥ २९ ॥ ॥ ॥

गादसौपिशाचइत्युपहासोनकार्यइत्याह द्वाभ्याम् अस्यअनवद्यंविषयासक्तिशून्यमाचरितं बिभित्सवःभेत्तुमिच्छवः ॥ २६ ॥ समीहितम् अभिप्रेतंलोकशिक्षारूपम् अविदुषःअविद्वांसःयद्वा नविद्वान्यस्मादितितस्य सर्वज्ञस्येत्यर्थः दुर्भगानेवाह यैरितिश्वभोजनंशुनांभोज्यंशरीरंस्वात्मतयाअयमेवात्मेतिबुध्या ॥ २७ ॥ अहोअतर्क्यंतस्याचरणमित्याह ब्रह्मादयोयेनकृतान्सेतून्स्वस्वाधिकारान्पालयंति यःकारणंयस्य येनकृतमिदंविश्वम् मायाचयस्याज्ञाकरी विभूम्नःपरमेश्वरस्य विडंबनमतर्क्यमित्यर्थः ॥ २८ ॥ भर्त्रानिरूपकेणएवंसंविदितेज्ञापितेऽपिसति वृषलीववेश्येव ॥ २९

विकर्मणिनिषिद्धे दिष्टायदैवरूपायेश्वराय उपविवेशेतिमैथुनंलक्ष्यते ॥ ३० ॥ उपस्पृश्यस्नात्वा भर्गशब्दवाच्यंविरजंज्योतिर्ध्यायन् सनातनंब्रह्मगायत्रींप्रणवंवा जजाप॥३१॥ कर्मावद्येनकर्मदोषेण॥३२॥माऽवधीत्माहंत्वित्यर्थः वधशंकाबीजमाह रुद्रइति अंहसमंहः अपराधमकरवंकृतवत्यस्मि ॥ ३३ ॥ रुत्दुःखंतत्द्रावयतीतिरुद्रस्तस्मै उग्रायानतिलंघ्याय मीढुषेसकामेषुफलसेचनकर्त्रे निष्कामेषुशिवाय वस्तुतोन्यस्तदंडाय संहारेमन्यवे ॥ ३४ ॥भामोभगिनीभर्ता उरुरनुग्रहोयस्य व्याधस्यानिर्दयस्यापि सतीपतिरित्यनेनस्त्रीणांस्वभावंस्वयमपिवेत्ती

सविदित्वाऽथभार्यायास्तंनिर्बंधंविकर्मणि ॥ नत्वादिष्टायरहसितयाऽथोपविवेशह ॥३०॥ अथोपस्पृश्यसलिलंप्राणानायम्यवाग्यतः ॥ ध्यायन्जजापविरजंब्रह्मज्योतिःसनातनं॥३१॥ दितिस्तुव्रीडितातेनकर्मावद्येनभारत ॥ उपसंगम्यविप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥ दितिरुवाच नमेगर्भमिमंब्रह्मन्भूतानामृषभोऽवधीत् ॥ रुद्रःपतिर्हिभूतानांयस्याकरवमंहसं ॥३३॥ नमोरुद्रायमहतेदेवायोग्रायमीढुषे ॥ शिवायन्यस्तदंडायधृतदंडायमन्यवे ॥३४॥ सनःप्रसीदतांभामोभगवानुर्वनुग्रहः ॥ व्याधस्याप्यनुकंप्यानांस्त्रीणांदेवःसतीपतिः ॥ ३५ ॥ मैत्रेयउवाच स्वसर्गस्याशिषंलोक्यामाशासानांप्रवेपतीं ॥ निवृत्तसंध्यानियमोभार्यामाहप्रजापतिः ॥ ३६ ॥ कश्यपउवाच अप्रायत्यादात्मनस्तेदोषान्मौहूर्तिकादुत ॥ मन्निदेशातिचारेणदेवानांचातिहेलनात् ॥३७॥ भविष्यतस्तवाभद्रावभद्रेजाठराधमौ ॥ लोकान्सपालांस्त्रींश्चंडिमुहुराक्रंदयिष्यतः ॥३८॥ प्राणिनांहन्यमानानांदीनानामकृतागसां ॥ स्त्रीणांनिगृह्यमाणानांकोपितेषु महात्मसु ॥ ३९ ॥ तदाविश्वेश्वरःक्रुद्धोभगवाँल्लोकभावनः ॥ हनिष्यत्यवतीर्यासौयथाद्रीञ्छतपर्वधृक् ॥ ४० ॥

तिसूचयति ॥ ३५ ॥ स्वसर्गस्यस्वसंतानस्यआशिषंशुभम् लोक्यांलोकद्वयार्हां संध्यायांयोनियमःसनियमः निवृत्तोयस्य ॥ ३६ ॥ तेआत्मनश्चित्तस्य अप्रायत्यादशुचित्वात् मौहूर्तिकात्संध्यारूपात् उतअपि ममनिदेशस्याज्ञायाअतिचारेणातिक्रमेण देवानांरुद्रानुचराणां ॥ ३७ ॥ एतैश्चतुर्भिर्हेतुभिः जाठराधमौपुत्रापसदौ हेचंडिकोपने ॥ ३८ ॥ हन्यमानानांसतां ॥ ३९ ॥ शतपर्वधृक्वज्रधरइंद्रः ॥ ४० ॥

सुनाभेनोदारोबाहुर्यस्यमह्यंमम कोपितेष्वित्युक्तत्वात्शंकितचित्तासतीप्रार्थयते ब्राह्मणान्माभूदिति ॥ ४१ ॥ नारकाअपितयायांयां योनिमसौगतोभवतितत्रस्थाश्चनानुगृण्हंतिकृपांनकुर्वंति ॥ ४२ ॥ कृतोयोपराधस्तेनशोकस्ततोऽनुतापस्तेनप्रत्यवमर्शनात् युक्तायुक्तविचारात् भगवतिहरौभवेश्वरेरुद्रे एतैः पंचभिः कारणैः ॥ ४३ ॥ पुत्रस्यहिरण्यकशिपोः पुत्राणांमध्येएकःसतांमतोभविष्यति तमेववर्णयति गास्यंतीतिसार्द्धैःपंचभिः समंसहसदृक्षंवा ॥ ४४ ॥ हीनवर्णंहेमयथायोगैर्दाहादिभिरुपायैःशोध्यते तथायस्यशीलंस्वभावमनुवर्तितुमनुगंतुंप्राप्तुंनिर्वैरादिभिर्योगैरात्मानंभावयिष्यंति ॥ ४५ ॥ विश्वप्रसादेहेतुःयदात्मकंस्वदृक्आत्मसाक्षी यस्यानन्ययाभगवानेवस

दितिरुवाच वधंभगवतासाक्षात्सुनाभोदारबाहुना ॥ आशासेपुत्रयोर्मह्यंमाक्रुद्धाद्ब्राह्मणाद्विभो ॥ ४१ ॥ नब्रह्मदंडदग्धस्यनभूतभयदस्यच ॥ नारकाश्चानुगृण्हंतियांयांयोनिमसौगतः ॥ ४२ ॥ कश्यपउवाच कृतशोकानुतापेनसद्यःप्रत्यवमर्शनात् ॥ भगवत्युरुमानाच्चभवेमय्यपिचादरात् ॥ ४३ ॥ पुत्रस्यैवतुपुत्राणां भवितैकःसतांमतः ॥ गास्यंतियद्यशःशुद्धंभगवद्यशसासमं ॥ ४४ ॥ योगैर्हेमेवदुर्वर्णंभावयिष्यंतिसाधवः ॥ निर्वैरादिभिरात्मानंयच्छीलमनुवर्तितुम् ॥ ४५ ॥ यत्प्रसादादिदंविश्वंप्रसीदतियदात्मकं ॥ सस्वदृग्भगवान्यस्यतोष्यतेऽनन्ययादृशा ॥ ४६ ॥ सवैमहाभागवतोमहात्मामहानुभावोमहतांमहिष्ठः ॥ प्रवृद्धभक्त्याह्यनुभाविताशयेनिवेश्यवैकुंठमिमंविहास्यति ॥ ४७ ॥ अलंपटःशीलधरोगुणाकरोहृष्टःपरर्द्ध्याव्यथितोदुःखितेषु ॥ अभूतशत्रुर्जगतःशोकहर्तानैदाघिकंतापमिवोडुराजः ॥ ४८ ॥ अंतर्बहिश्चामलमब्जनेत्रंस्वपूरुषेच्छाऽनुगृहीतरूपं ॥ पौत्रस्तवश्रीललनाललामंद्रष्टास्फुरत्कुंडलमंडिताननं ॥ ४९ ॥

त्यइत्येवंभूतयादृशा तोष्यतेतोषंप्राप्स्यते ॥ ४६ ॥ तत्रहेतुःसवाइति महात्माअपरिच्छिन्नदृष्टिः महानुभावःमहतामपिमध्येमहिष्ठःअतिशयेनमहान् प्रवृद्धयाभक्त्यानुभावितेशोधितेचित्तेवैकुंठंहरिंनिवेश्य देहाद्यभिमानंत्यक्ष्यति ॥ ४७ ॥ महाभागवतत्वमाह अलंपटइति शीलधरःसुस्वभावःगुणानांधैर्यादीनामाकरःजन्मभूमिः परेषांसमृद्ध्याहृष्टःपरेषुदुःखितेषुसत्सु नभूतोजातःशत्रुर्यस्य निदाघेभवंतापंचंद्रोयथाहरति एवंजगतः शोकहर्ताभविष्यति ॥ ४८ ॥ अपरिच्छिन्नदृष्टित्वमाह अंतरिति स्वपुरुषाणामिच्छयापुनःपुनर्गृहीतानिरूपाणियेनश्रीरेवललनासुंदरीतस्याःललामंमंडनं द्रष्टाद्रक्ष्यति ॥ ४९ ॥ ॥ ॥

महामनाःसोत्साहचित्ताः हरिणासहयुद्धेनमरणे पुत्रयोःकीर्तिःसद्गतिश्चभवेदिति ॥ ५० ॥ इतितृतीयस्कंधेटीकायांचतुर्दशोऽध्यायः ॥
॥१४॥ हतप्रभैःसुरैःपृष्टःप्राहपंचदशेविधिः ॥ तद्वीजंविप्रशापादिवैकुंठेविष्णुभृत्ययोः ॥१॥ तदेवंदेवानांब्रह्मणश्चसंवादप्रस्तावमुक्त्वेदानीं
तंसंवादंवक्तुमाह प्राजापत्यंकाश्यपंतेजोवीर्यंपरेषांतेजोहंतीतितथा आर्षः स्वपुत्राभ्यांकरिष्यतेयत्सुराणामर्दनंपीडनंतस्मात्शंकमाना ॥
॥१॥ तेनगर्भतेजसा हतालोकेनिरस्तसूर्यादिप्रकाशे हतौजसःहतप्रभावाः ध्वांतेनव्यतिकरंसंकरम् ॥२॥ वेत्थजानासिकिंविचारयसि यद्य
तोत्रयंसंविग्नाभीताः अव्यक्तमज्ञातम् नस्पृष्टंवर्त्मज्ञानप्रचारोयस्य ॥ ३ ॥ ब्रह्माणंपरमेश्वरत्वेनस्तुवंतःप्रार्थयंतेदेवदेवेतिसप्तभिः लोकना

मैत्रेयउवाच श्रुत्वाभागवतंपौत्रंमुमोदतदितिर्भृशं ॥ पुत्रयोश्चवधंकृष्णाद्विदित्वासीन्महामनाः ॥ ५० ॥
इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेदितिकश्यपसंवादेचतुर्दशोऽध्यायः ॥ १४ ॥ मैत्रेयउवाच प्रा
जापत्यंतुतत्तेजःपरतेजोहनंदितिः ॥ दधारवर्षाणिशतंशंकमानासुरार्दनात् ॥ १ ॥ लोकेतेनहतालोकेलोक
पालाहतौजसः ॥ न्यवेदयन्विश्वसृजेध्वांतव्यतिकरंदिशां ॥ २ ॥ देवाऊचुः तमएतद्विभोवेत्थसंविग्ना
यद्वयंभृशं ॥ नह्यव्यक्तंभगवतःकालेनास्पृष्टवर्त्मनः ॥ ३ ॥ देवदेवजगद्धातर्लोकनाथशिखामणे ॥ परेषाम
परेषांत्वंभूतानामसिभाववित् ॥ ४ ॥ नमोविज्ञानवीर्यायमाययेदमुपेयुषे ॥ गृहीतगुणभेदायनमस्तेऽव्यक्त
योनये ॥ ५ ॥ येत्वानन्येनभावेनभावयंत्यात्मभावनं ॥ आत्मनिप्रोतभुवनंपरंसदसदात्मकं ॥ ६ ॥
तेषांसुपक्वयोगानांजितश्वासेंद्रियात्मनां ॥ लब्धयुष्मत्प्रसादानांनकुताश्चित्पराभवः ॥ ७ ॥ ॥

थानांशिखामणे भाववित्अभिप्रायज्ञोऽसि केनाभिप्रायेणदितेर्गर्भोवर्धतइतिजानासीत्यर्थः ॥ ४ ॥ विज्ञानंवीर्यंबलंयस्य इदंब्रह्मदेहमु
पेयुषेप्राप्तवते गृहीतोगुणभेदःरजोगुणोयेन व्यक्तस्यप्रपंचस्ययोनयेकारणाय नव्यक्ताकेनापिप्रमाणेनाविज्ञातायोनिर्यस्येतिवा ॥ ५ ॥ स
कामतयाप्रतिक्षणंदुःखमनुभवंतोनिष्कामभक्तान्स्तुवंतआहुर्द्वाभ्याम् येत्वात्वामनन्येननिष्कामेनभावेनभक्त्याध्यायंति आत्मनोजीवान्
भावयतीतितथा स्वस्मिन्प्रोतानिग्रथितानिभुवनानियेन चेतनाचेतनप्रपंचकारणमित्यर्थः तत्रहेतुः सदसदात्मकंकार्यकारणरूपं वस्तुत
स्ताभ्यांपरम् ॥ ६ ॥ जितःश्वासइंद्रियाणिआत्मामनश्चयैः अतःसुपक्वयोगाः अतएवप्राप्तोयुष्मत्प्रसादोयैस्तेषाम् ॥ ७ ॥

अन्येतुनित्यंकर्मक्लेशिनइत्याहुः यस्येति तंत्यादामन्या आयत्ताअधीनाः मुख्यायनियंत्रेप्राणरूपायेतिवा तथाचश्रुतिः तस्यवाक्तंतिर्नामा निदामानिइत्यादि ॥ ८ ॥ तमसाअहोरात्रविभागाभावेनलुप्तानिकर्माणियेषाम् आपन्नान् आपद्गतानस्मान् ॥ ९ ॥ आपत्कारणमाहुः एषगर्भःतस्यविशेषणम् अर्पितंनिक्षिप्तंकाश्यपमोजोवीर्यंदिशास्तिमिरयन् तमोव्याप्ताःकुर्वन् ॥ १० ॥ दितेःकुचेष्टितंज्ञात्वाप्रहस्यदेवानांयेशब्दाविज्ञप्तिवाक्यानि तेषांगोचरोविषयभूतःप्रत्यभाषत ॥ ११ ॥ युष्मत्सकाशात्पूर्वंजाताः ॥ १२ ॥ वैकुंठाख्यंलोकंययुः ॥ १३ ॥ तंवर्णयतिवसंतीत्यादिद्वादशभिः वैकुंठस्यहरेरिवमूर्तयेषांते निमित्तंफलंनानिमित्तंप्रवर्तकंयस्मिन् निष्कामेणधर्मेणेत्यर्थः आराधयन् आराधितवं

यस्यवाचाप्रजाःसर्वागावस्तंत्येवयंत्रिताः ॥ हरंतिबलिमायत्तास्तस्मैमुख्यायतेनमः ॥ ८ ॥ सत्वंविधत्स्वशंभूमन्तमसालुप्तकर्मणां ॥ अदभ्रदययादृष्ट्याआपन्नानर्हसीक्षितुं ॥ ९ ॥ एषदेवदितेर्गर्भओजः काश्यपमर्पितं ॥ दिशस्तिमिरयन्सर्वावर्धतेऽग्निरिवैधसि ॥ १० ॥ मैत्रेयउवाच सप्रहस्यमहाबाहोभगवान्शब्दगोचरः ॥ प्रत्याचष्टात्मभूर्देवान्प्रीणन्रुचिरयागिरा ॥ ११ ॥ ब्रह्मोवाच मानसामेसुतायुष्मत्पूर्वजाःसनकादयः ॥ चेरुर्विहायसालोकाँल्लोकेषुविगतस्पृहाः ॥ १२ ॥ तएकदाभगवतोवैकुंठस्यामलात्मनः ॥ ययुर्वैकुंठनिलयंसर्वलोकनमस्कृतं ॥ १३ ॥ वसंतियत्रपुरुषाःसर्वेवैकुंठमूर्तयः ॥ येऽनिमित्तनिमित्तेनधर्मेणाराधयन्हरिं ॥ १४ ॥ यत्रचाद्यःपुमानास्तेभगवान्शब्दगोचरः ॥ सत्वंविष्टभ्यविरजंस्वानांनोमृडयन्वृषः ॥ १५ ॥ यत्रनैश्रेयसंनामवनंकामदुघैर्द्रुमैः ॥ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिवमूर्तिमत् ॥ १६ ॥ वैमानिकाःसललनाश्चरितानियत्रगायंतिलोकशमलक्षपणानिभर्तुः ॥ अंतर्जलेऽनुविकसन्मधुमाधवीनांगंधेनखंडिताधियोऽप्यनिलंक्षिपंतः ॥ १७ ॥ ॥

तः ॥ १४ ॥ यत्रेति शब्दगोचरोवेदांतैकवेद्यः विरजंसत्वमूर्तिं विष्टभ्यधृत्वा वृषोधर्ममूर्तिः स्वानांस्वान् ॥ १५ ॥ तत्रत्यंवनंविशिनष्टियत्रेतिचतुर्भिः सर्वेष्वप्यृतुषुश्रीःपुष्पादिसंपद्येषांतैः ॥ १६ ॥ चरितानिचरित्राणि भर्तुःप्रभोः अनुविकसंत्यः मधुमकरंदःतद्युक्तामाधव्योवासंत्योलताः यद्वा अनुविकसन्मधवःप्रसरन्मकरंदाःमाधव्यःमधुकालीनाःसुमनसः तासांगंधेनखंडिताविघ्निताधीर्येषांतेऽपितद्गंधप्रापकमनिलंक्षिपंतःतिरस्कुर्वंतोगायंति अमेनभगवत्पार्षदानांनिरतिशयविषयसुखेऽपिभगवद्गुणगानानंदासक्तिर्दर्शिता ॥ १७ ॥

अन्यभृताः कोकिलाः दात्यूहश्चातकः अचिरमात्रंक्षणमात्रंविरमाति अनेनतत्रत्यपक्षिणामपिहरिकथाश्रवणादिपरमानंदोदर्शितः ॥
॥ १८ ॥ मंदारपारिजातौसुरतरुविशेषौ कुरबस्तिलकवृक्षः उत्पलंरात्रिविकाशि अंबुजंदिनविकाशि पुन्नागोनागकेसरः एताःसुमन
सःपुष्पजातयःसुगंधाअपि तुलसिकाभरणेनश्रीहरिणातुलस्यागंधेऽर्चितेसति यस्मिन्वनेतस्यास्तपोबहुमानयंति अनेनतत्रत्यागुणग्राहि
णएवनमत्सारिणइत्युक्तं एवंभूतंवनंयत्रतद्वैकुंठंययुरितिपूर्वेणान्वयः ॥ १९ ॥ पुनर्वैकुंठमेवविशिनष्टि तत्संकुलंव्याप्तंभवतिकैर्हरिपदयो
रानतिः प्रणामःतावन्मात्रेणदृष्टैर्भक्तानांविमानैः नकर्मादिप्राप्यैर्वैदूर्यमारकतैर्हैममयैश्चविमानैः बृहंतिकटितटानियासां स्मितशोभीनि

पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणांयः ॥ कोलाहलोविरमतेऽचिरमात्रमुच्चैर्भृं
गाधिपेहरिकथामिवगायमाने ॥ १८ ॥ मंदारकुंदकुरबोत्पलचंपकार्णपुन्नागनागबकुलांबुजपारिजाताः
॥ गंधेऽर्चितेतुलसिकाभरणेनतस्यायस्मिंस्तपःसुमनसोबहुमानयंति ॥ १९ तत्संकुलंहरिपदानतिमात्र
दृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ॥ येषांबृहत्कटितटाःस्मितशोभिमुख्यःकृष्णात्मनांनरजआदधुरुत्स्मया
द्यैः ॥ २० ॥ श्रीरूपिणीक्वणयतीचरणारविंदंलीलांबुजेनहरिसद्मनिमुक्तदोषा ॥ संलक्ष्यतेस्फटिककु
ड्यउपेतहेम्निसंमार्जतीवयदनुग्रहणेऽन्ययत्नः ॥ २१ ॥ ॥ ॥

मुख्यानियासांताअपि कृष्णेआत्मायेषांरजःकाममुत्स्मयाद्यैःपरिहासादिभिर्नआदधुर्नजनयामासुः ॥ २० ॥ श्रीलक्ष्मीः रूपिणीमनोहर
मूर्तिधारिणीसती श्रीहरेःसद्मनिसंमार्जनंकुर्वतीव यास्मिन्लोकेसंलक्ष्यतेचरणारविंदंक्वणयतीनूपुरेणशब्दयंती विमुक्तोदोषश्चांचल्यंयया
यद्वा मुक्तेनदोषाप्रसारितेनबाहुना कीदृशेसद्मनिस्फटिकमयानिकुड्यानियस्मिन्मध्येमध्येचशोभार्थमुपेतंसंयुक्तंहेमयस्मिन् यस्याअनुग्रह
णेश्रीरनुग्रहंकरोत्वित्येतदर्थमन्येषांब्रह्मादीनांयत्नः सा अयंभावः यद्यपितत्ररजोनास्त्येवतथाऽपिस्वर्णपट्टिकाऽवच्छिन्नभित्तिभागेषुबहु
धाप्रतिबिंबितासतीलीलांऽबुजंभ्रामयंतीविनयभक्तिभ्यांतथालक्ष्यतइति ॥ २१ ॥ ॥ ॥

अंगहेदेवाः यत्रस्मिँल्लोकेश्रीरेवंअमतअमंस्तमेने किंकुर्वतीविद्रुममयानितटानियासाम् अमलाअमृततुल्याआपोयासांतासुवापीषुनिजवने लक्ष्मीवनेपरिचारिकाभिरन्विता तुलसीभिःश्रीविष्णुंपूजयंती तदाउदकेप्रतिबिंबितशोभनालकयुक्तमुत्कृष्टनासिकायुक्तं वस्ववक्त्रंवक्षियभ गवताउच्छेषितंचुंबितमित्यमन्यत अनेनलक्ष्म्याअपिसौभाग्यसुखंभगवदनुग्रहेणैवेतिद्योतितं ॥ २२ ॥ पुनःकथंभूतंतत् यद्वैकुंठंनव्रजंति के येकुकथाःशृण्वंति कास्ताः अघंभिनत्तीत्यघभित् तस्यहरेः रचनासृष्ट्यादिलीलातस्याअनुवादादन्याविषयाः अर्थकामादिवार्ताः मतिघ्रंशिकाः तेषामव्रजनेहेतुः यास्तुहतभाग्यैर्नरैःश्रुताःसत्यः तांस्तान्श्रोतॄन् अशरणेषुनिराश्रयेषुतमःसुनरकेषुक्षिपंति हंतखेदे कथंभूताः आत्तःसारः श्रोतॄणांपुण्यंयाभिस्ताः ॥ २३ ॥ प्रसंगात्तान्शोचंति नोऽस्माभिर्ब्रह्मादिभिरप्यभ्यर्थितांनृगतिंमनुष्यजातिंप्रपन्नाः प्रा

वापीषुविद्रुमतटास्वमलामृताप्सुप्रेष्यान्वितानिजवनेतुलसीभिरीशं ॥ अभ्यर्चतीस्वलकमुन्नसमीक्ष्यव क्त्रमुच्छेषितंभगवतेत्यमतांगयच्छ्रीः ॥ २२ ॥ यन्नव्रजंत्यघभिदोरचनानुवादाच्छृण्वंतियेऽन्यविषयाःकुकथामतिघ्नीः ॥ यास्तुश्रुताहतभगैर्नृभिरात्तसारास्तांस्तान्क्षिपंत्यशरणेषुतमःसुहंत ॥ २३ ॥ येऽभ्यर्थितामपिचनोनृगतिंप्रपन्नाज्ञानंचतत्त्वविषयंसहधर्मयत्र ॥ नाराधनंभगवतोवितरंत्यमुष्यसंमोहितावितताबतमायया ते ॥ २४ ॥ यच्चव्रजंत्यनिमिषामृषभानुवृत्त्यादूरेयमाह्युपरिनःस्पृहणीयशीलाः ॥ भर्तुर्मिथःसुयशसःकथनानुरागवैक्लव्यबाष्पकलयापुलकीकृतांगाः ॥ २५ ॥ ॥

प्ताःसंतोऽपिहरेराराधनंनकुर्वंति कीदृशींनृगतिं यत्रयस्यांधर्मसहितंतत्त्वज्ञानंभवति तदुभयसाधकत्वात्तस्याः तेऽमुष्यभगवतोविस्तृतयामाययानुसंमोहिताः बतेतिखेदे यदिचैवंसंबंधःकेवलंतएवनव्रजंतिकिंतुयेभगवदाराधनंनकुर्वंतितेऽपितेषांमायामोहितत्वादिति ॥ २४ ॥ पुनःकथंभूतं यच्चनः उपरिस्थितंव्रजंति केअनिमिषांदेवानामृषभःश्रेष्ठोहरिस्तस्यानुवृत्त्या दूरेयमोयेषां यद्वा दूरीकृतयमनियमाः पाठांतरेदूरीकृताहंकाराइत्यर्थः स्पृहणीयंकरुणादिशीलंयेषां किंच भर्तुःहरेःयत्सुयशः तस्यमिथःकथने योऽनुरागस्तेनवैक्लव्यंवैवश्यं तेनबाष्पकलातयासहपुलकीकृतमंगंयेषां यद्वा नःउपरीतिव्रजतांविशेषणं निरहंकारत्वादस्मत्तोऽपियेऽधिकास्तेयद्व्रजंतीत्यर्थः ॥ २५ ॥

तत्तदा अपूर्वंविकुंठं अथोअनंतरमुपेत्यमुनयःपरामुत्कृष्टांमुदमापुः अपूर्वत्वेहेतवः विश्वगुरुणाहरिणाअधिकृतमाधिष्ठितंभुवनानामेकमे
ववंद्यंदिव्यमलौकिकं विचित्राणिविबुधाग्र्याणांविमानानितेषांशोचिर्दीप्तिर्यस्मिन् योगमायाबलेनेति अष्टांगयोगप्रभावेणोपेत्यपरमेश्वरे
तुयोगमायेतिचिच्छक्तिविलासइतिद्रष्टव्यं ॥ २६ ॥ तस्मिन्वैकुंठे षट्कक्षाःप्राकारद्वाराणि असज्जमानाः भगवद्दर्शनोत्कंठयातत्तदद्भुत
दर्शनआसक्तिमकुर्वाणाः द्वारपालौदेवावपश्यन् समानंवयोययोः गृहीतेगदेयाभ्यां परार्ध्यैःकेयूरादिभिःविटंकःसुंदरोवेषोययोः ॥२७॥
तावेववर्णयति मत्ताद्विरेफायस्यांतयावनमालयानिवीतौकंठलंबिन्याअलंकृतौ असितानीलाः चतुष्टयंचतुःसंख्याकाबाहवस्तेषांमध्ये वि

तद्विश्वगुर्वधिकृतंभुवनैकवंद्यंदिव्यंविचित्रविबुधाग्र्यविमानशोचिः ॥ आपुःपरांमुदमपूर्वमुपेत्ययोगमाया
बलेनमुनयस्तदथोविकुंठं ॥ २६ ॥ तस्मिन्नतीत्यमुनयःषडसज्जमानाःकक्षाःसमानवयसावथसप्तमायां ॥
देवावचक्षतगृहीतगदौपरार्ध्यकेयूरकुंडलकिरीटविटंकवेषौ ॥ २७ ॥ मत्तद्विरेफवनमालिकयानिवीतौवि
न्यस्तयाऽसितचतुष्टयबाहुमध्ये ॥ वक्रंभ्रुवाकुटिलयास्फुटनिर्गमाभ्यांरक्तेक्षणेनचमनाग्रभसंदधानौ ॥२८
द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वापूर्वायथापुरटवज्रकपाटिकायाः ॥ सर्वत्रतेऽविषमयामुनयःस्वदृष्ट्यावि
श्वंचरंत्यविहताविगताभिशंकाः ॥ २९ ॥ तान्वीक्ष्यवातरशनांश्चतुरःकुमारान्वृद्धान्दशार्धवयसोविदिता
त्मतत्त्वान् ॥ वेत्रेणचास्खलयतामतदर्हणांस्तौतेजोविहस्यभगवत्प्रतिकूलशीलौ ॥ ३० ॥ ॥

न्यस्तया वक्रंवमनाग्रभसंकिंचित्क्षुब्धंदधानौ स्फुटौउत्फुल्लौनिर्गमौश्वासमार्गौनासापुटेताभ्याम् ॥ २८ ॥ एतयोर्मिषतोःपश्यतोः ता
वनादृत्यापृष्ट्वैव याःपूर्वाःषट्द्वारःपुरटालंकृतवज्रमय्यःकपाटिकायासुताः यथाविविशुः तथासप्तमायामपिद्वारितेविविशुः अप्रश्नेहेतुः
सर्वत्रयेअविहताःअनिवारिताःसंचरंति निःशंकत्वेहेतुः अविषमयाचस्वदृष्ट्येति ॥ २९ ॥ वातरशनान्नग्नान्वृद्धानपिपंचवर्षबाल
कवत्प्रतीयमानान् चकारादाज्ञयाचअस्खलयतांनिवारितवंतौनतत्स्खलनमर्हंतीतितथातान् अहोअत्रापिधार्ष्ट्यमित्येवंतेजोविहस्यभग
वतोब्रह्मण्यदेवस्यप्रतिकूलंशीलंययोः ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

हरेर्द्वारपालपतिभ्यांदेवेषुपश्यत्सुवार्यमाणास्तेमुनयःकोवामित्यादिश्लोकत्रयीमूचुः सुहृत्तमःश्रीहरिः तस्यदिदृक्षितंदर्शनेच्छातस्यभंगे सतिकामस्यानुजःक्रोधःतेनसहसाऽकस्मादेवउपप्लुतानिक्षुभितान्यक्षीणियेषांते सुष्ठुपूज्यतमाअर्पीतिनिषेधानर्हत्वेक्रोधानर्हत्वेवाहेतुः ॥ ॥ ३१ ॥ उच्चैर्महत्याभगवत्परिचर्ययाएत्यप्राप्य इहवैकुंठेनिवसतांतद्धर्मिणांभगवद्धर्मिणांसमदर्शिनांमध्ये वांयुवयोरेवकोऽयंविषमःस्वभावः कैश्चित्प्रवेष्टव्यंकैश्चिन्नेत्येवंभूतः ननुस्वामिनोरक्षाऽर्थंद्वारपालयोरेषःस्वभावोगुणएवेतिचेदतआहुः तस्मिन्निति कुहकयोः कपटयोः आत्मवत्स्वदृष्टांतेन यथाआवांकपटौतथान्योऽपिकश्चित्कपटःप्रवेक्ष्यतीति अयंभावः नह्यत्रभगवद्भक्तंविनाकश्चिदागच्छाति

ताभ्यांमिषत्स्वनिमिषेषुनिषिध्यमानाःस्वर्हत्तमाह्यपिहरेःप्रतिहारपाभ्याम् ॥ ऊचुःसुहृत्तमदिदृक्षितभंगईषत्कामानुजेनसहसातउपप्लुताक्षाः ॥ ३१ ॥ मुनयऊचुः कोवामिहैत्यभगवत्परिचर्ययोच्चैस्तद्धर्मिणांनिवसतांविषमःस्वभावः ॥ तस्मिन्प्रशांतपुरुषेगतविग्रहेवांकोवात्मवत्कुहकयोःपरिशंकनीयः ॥ ३२ ॥ नह्यंतरंभगवतीहसमस्तकुक्षावात्मानमात्मनिनभोनभसीवधीराः ॥पश्यंतियत्रयुवयोःसुरलिंगिनोःकिंव्युत्पादितंह्युदरभेदिभयंयतोऽस्य ॥ ३३ ॥ तद्वाममुष्यपरमस्यविकुंठभर्त्तुःकर्तुंप्रकृष्टमिहधीमहिमंदधीभ्याम् ॥ लोकानितोव्रजतमंतरभावदृष्ट्यापापीयसस्त्रयइमेरिपवोऽस्ययत्र ॥ ३४ ॥ ॥ ॥

नचेश्वरेप्रशांतत्वादविद्यमानविरोधेभयशंका अतोयुवांकेवलंधूर्ताविवेति ॥ ३२ ॥ भयशंकाबीजंचभेदः सचकस्याप्यस्मिन्नास्तीत्याहुः नहीति समस्तंविश्वंकुक्षौयस्य यत्रयदाइहभगवतिधीराविद्वांसःआत्मनोंऽतरंभेदंनपश्यंति किंत्वस्मिन्परमात्मनिआत्मानमंतर्भूतंपश्यंतिमहाकाशेघटाकाशमिव तदायथाऽन्यस्यराजादेःउदरभेदिउदरभेदयुक्तंभयंभवति तथाऽस्यश्रीहरेस्तादृग्भयंयतःयेनकारणेनसुरवेषधारिणोर्युवयोर्विशेषेणोत्पादितं तत्किंनकिंचिदित्यर्थः ॥ ३३ ॥ तत्तस्मादमुष्यवैकुंठनाथस्यभृत्याभ्यांयुवाभ्यांप्रकृष्टंभद्रमेवकर्तुंइहास्मिन्नपराधेयद्युक्तंतद्धीमहिचिंतयेम तदेवाहुः अंतरस्यभेदस्यभावःसत्तातद्दर्शनेन इतःवैकुंठलोकात् व्रजतं यत्रयेषुलोकेषुअस्यपापीयसोंऽतरद्रष्टुःइमे कामःक्रोधस्तथालोभइतिगीतोक्तास्त्रयोरिपवोभवंति इतोवैकुंठात्पापीयसोलोकानितिवा ॥ ३४ ॥ ॥

इतितेषामीरितंभाषणंघोरमवधार्यतंचब्रह्मदंडंब्रह्मशापमवधार्यतंचास्त्रसमूहैरप्यनिवार्यमवधार्यहरेरनुचरौअतिकातरेणअतिकातर्येणभयेनत
त्पादग्रहणंकुर्वंतौसंतौदंडवदपतताम् कथंभूतस्यहरेःएवंभूतेभ्योमुनिभ्यः ताभ्यामपिउरुअधिकंबिभ्यतःभयंभावयतः ॥ ३५ ॥ अहो
अपराद्धमस्माभिरित्यनुतप्यमानान्प्रत्यूचतुः अघोनिअघवतियउचितोदंडःसएवभगवद्भिरकारि नात्रभवतामपराधःकश्चित् अतोसौ
नौआवयोःभूयात् यःअशेषमपिसुरहेलनमीईश्वराज्ञाऽतिक्रमरूपंपापंहरेत् किंतुयुष्माकंयःकृपानिमित्तोऽनुतापःतस्यलेशेन नौअ
धोऽधोमूढयोर्निर्वृजतोरपि भगवत्स्मृतिप्रतिघातकोमोहोनभवेत् किंतुमोहोऽपिस्मृतिमेवप्रवहतादितिप्रार्थना ॥ ३६ ॥ एवंस्वानांमहत्सु

तेषामितीरितमुभाववधार्यघोरंतंब्रह्मदंडमनिवारणमस्त्रपूगैः ॥ सद्योहरेरनुचरावुरुबिभ्यतस्तत्पादग्रहा
वपतताामतिकातरेण ॥ ३५ ॥ भूयादघोनिभगवद्भिरकारिदंडोयोनौहरेतसुरहेलनमप्यशेषम् ॥ मावो
ऽनुतापकलयाभगवत्स्मृतिघ्नोमोहोभवेदिहतुनौव्रजतोरधोऽधः ॥ ३६ ॥ एवंतदेवभगवानरविंदनाभः
स्वानांविबुध्यसदतिक्रममार्यहृद्यः ॥ तस्मिन्ययौपरमहंसमहामुनीनामन्वेषणीयचरणौचलयन्सहश्रीः
॥ ३७ ॥ तंत्वागतंप्रतिहृतौपयिकंस्वपुंभिस्तेऽचक्षताक्षविषयंस्वसमाधिभाग्यं ॥ हंसश्रियोर्व्यजनयोः
शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकरांबुम् ॥ ३८ ॥ ॥ ॥ ॥

अतिक्रममपराधंतत्क्षणमेवविबुध्य तस्मिन्यत्रतेरुद्धास्तंदेशंययौ आर्याणांहृद्यः
मनोज्ञः चरणौचलयन्निति अयंभावः मच्चरणदर्शनप्रतिघातजंक्रोधंतौदर्शयन्शमयिष्यामीतित्वराव्याजेनपद्भ्यामेवययौ श्रीसाहित्यंचनि
ष्कामानामपिविभूतिभिःपूरयित्वाक्षमापयितुं ॥ ३७ ॥ तत्रतैर्दृष्टंदेवमनुवर्णयतिपंचभिः तंतुआगतं तेअचक्षतअपश्यन् आपंचमादिद
मेवक्रियापदं स्वपुंभिः शीघ्रंप्रतिस्हृतमानीतमौपयिकंगमनोचितंछत्रपादुकादियस्य कथंभूतंस्वसमाधिनाभाग्यंभजनीयंफलंयद्ब्रह्मतदे
वाक्षविषयं हंसवत्श्रीर्ययोस्तयोरुभयतश्चलतोर्व्यजनयोर्यःशिवोऽनुकूलोवायुः तेनलोलंतश्चलंतः शुभ्रातपत्रशशिकेसराःशुभ्रंयदातपत्रं
तदेवशशिसादृश्याच्छशीतस्यकेसराःमुक्ताहारविलंबाः तेभ्योगलंतिशीकरांबूनियास्मिन्तं शीकरोंऽबुकणाः ॥ ३८ ॥ ॥

०१९

॥ ४० ॥

कृत्स्नस्यद्वारपालमुनिवृंदस्यप्रसादेसुमुखं स्पृहणीयानांगुणानांधामस्थानं स्नेहावलोककलयासप्रेमकटाक्षेणतद्धदिसंस्पृशंतंसुखयंतं त्रै
लोक्यविवक्षापक्षेसत्यलोकपर्यंतःस्वर्गः तस्यचूडामणिवत्स्थितं स्वधिष्ण्यंवैकुंठंसुभगयंतंशोभयंतं ॥ ३९ ॥ पृथुर्नितंबःआश्रयत्वेनावि
द्यतेयस्यतस्मिन् पीतांशुकेअलिभिर्नादितयावनमालयाचयुक्तं सुभगयंतमितिपूर्वेणैववासंबंधः वल्गुषुप्रकोष्ठेषुवलयानियस्य गरुड
स्यस्कंधेविन्यस्तएकोहस्तोयेन इतरेणान्येनअब्जंलीलाकमलंधुनानंभ्रामयंतं विन्यस्येतिपाठेचवल्गिवत्यादिहस्तस्यविशेषणं ॥ ४० ॥
स्वकांत्याविद्युतःक्षिपंतीयेमकराकारेकुंडलेतयोर्मंडनस्याईंगंडस्थलेयस्मिन् तच्चतदुन्नसंचमुखंयस्य मणियुक्तंकिरीटंयस्य दोर्दंडानां

कृत्स्नप्रसादसुमुखंस्पृहणीयधामस्नेहावलोककलयाहृदिसंस्पृशंतम् ॥ श्यामेपृथावुरसिशोभितयाश्रिया
स्वश्चूडामणिंसुभगयंतमिवात्माधिष्ण्यम् ॥ ३९ ॥ पीतांशुकेपृथुनितंबिनिविस्फुरंत्याकांच्याऽलिभिर्वि
रुतयावनमालयाच ॥ वल्गुप्रकोष्ठवलयंविनतासुतांसेविन्यस्तहस्तमितरेणधुनानमब्जम् ॥ ४० ॥ विद्युत्क्षि
पन्मकरकुंडलमंडनार्हगंडस्थलोन्नसमुखंमणिमत्किरीटम् ॥ दोर्दंडखंडविवरेहरतापरार्ध्यहारेणकंधरग
तेनचकौस्तुभेन ॥ ४१ ॥ अत्रोपसृष्टमितिचोत्स्मितमिंदिरायाःस्वानांधियाविरचितंबहुसौष्ठवाढ्यं ॥ मह्यं
भवस्यभवतांचभजंतमंगंनेमुर्निरीक्ष्यनवितृप्तदृशोमुदाकैः ॥ ४२ ॥ तस्यारविंदनयनस्यपदारविंदकिंज
ल्कमिश्रतुलसीमकरंदवायुः ॥ अंतर्गतःस्वविवरेणचकारतेषांसंक्षोभमक्षरजुषामपिचित्ततन्वोः ॥ ४३ ॥

खंडसमूहः तस्यविवरेमध्ये स्थितेनहरतामनोहरेणविहरतेतिवा परार्ध्यउत्कृष्टः तेनहारेणकंधरायांस्थितेन ॥ ४१ ॥ किंबहुनाइंदिरायाः
उत्स्मितंअहमेवसर्वसौंदर्यनिधिरित्यहंकरणमत्रभगवत्सौंदर्येउपसृष्टमस्तंगतमितिस्वानांभक्तानांधियारचितं भृत्यैःस्वमनस्येवंवितर्कितामि
त्यर्थःकुतःबहुसौष्ठवेनसौंदर्येणआढ्यंयुक्तं किंचमह्यंममभवस्येश्वरस्यभवतांचकृते अंगंभजंतंमूर्तिंप्रकटयंतम् अचक्षतनिरिक्ष्यचकैः शिरो
भिर्मुदानेमुःनमश्चक्रुः नविशेषेणतृप्ताहृशोनेत्राणियेषांते ॥ ४२ ॥ स्वरूपानंदादपितेषांभजनानंदाधिक्यमाह तस्यपादारविंदकिंजल्कैःके
सरैर्मिश्रायातुलसीतस्यामकरंदेनयुक्तोवायुः स्वविवरेणनासाछिद्रेण अक्षरजुषांब्रह्मानंदसेविनामपिसंक्षोभंचित्तेऽतिहर्षंतनौरोमांचम् ॥ ४३ ॥

॥ ४० ॥

हर्षकारितंसंभ्रममाहद्भ्याम् तेवैकिलअमुष्यवदनमेवासितपद्मस्यकोशोंऽतर्भागस्तम् आसितपद्मकोशमित्यभूतोपमा सुंदरतरेअरुणेअ धरोष्ठेकुंदवद्धासोयास्मिन् तम् ऊत् ऊर्ध्वंवीक्ष्य लब्धमनोरथाःसंतःनखाएवारुणमणयस्तेषांश्रयणमाश्रयभूतमंघ्रिद्वंद्वं पुनरवेक्ष्यअधोदृष्ट्या वीक्ष्य पुनःपुनरेवंनिरीक्ष्य युगपत्सर्वांगलावण्यग्रहणाशक्तेःपश्चान्निदध्युःध्यातवंतः ॥ ४४ ॥ योगमार्गैर्गतिंमृगयतांपुंसांध्यानस्यविष यभूतंबहुमतमत्यादरास्पदं बहूनांतत्त्वदृशांसंमतमितिवा पौंस्नंपौरुषंवपुर्दर्शयंतम् अन्येष्वसिद्धैरसाधारणैःऔत्पत्तिकैर्नित्यैरणिमाद्यष्टैश्व र्यैर्युतं समगृणन् सम्यगस्तुवन् ॥ ४५ ॥ नित्यंब्रह्मरूपेणप्रकाशतेनतच्चित्रं इदानींतुपरममंगलविशुद्धसत्वश्री मूर्त्याप्रत्यक्षोऽसिअहो भाग्यमस्माकमित्याहुः हेअनंतयस्त्वंहृद्गतोऽपिदुरात्मनामंतर्हितोनस्फुरासि सनोऽस्माकमंतर्हितोनभवसि नयनमूलंत्वद्यैवराद्धःप्राप्तो

तेवाअमुष्यवदनासितपद्मकोशमुद्वीक्ष्यसुंदरतराधरकुंदहासं ॥ लब्धाशिषःपुनरवेक्ष्यतदीयमंघ्रिद्वंद्वंन खारुणमणिश्रयणंनिदध्युः ॥ ४४ ॥ पुंसांगतिंमृगयतामिहयोगमार्गैर्ध्यानास्पदंबहुमतंनयनाभिरामं ॥ पौंस्नंवपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैःसमगृणन्युतमष्टभोगैः ॥ ४५ ॥ कुमाराऊचुः योंऽतर्हितोहृदि गतोपिदुरात्मनांत्वंसोऽद्यैवनोनयनमूलमनंतराद्धः ॥ यर्ह्येवकर्णविवरेणगुहांगतोनःपित्रानुवर्णितरहाभ वदुद्भवेन ॥ ४६ ॥ तंत्वांविदामभगवन् परमात्मतत्त्वंसत्वेनसंप्रतिरतिंरचयंतमेषां ॥ यत्तेऽनुतापविदितै र्दृढभक्तियोगैरुद्ग्रंथयोहृदिविदुर्मुनयोविरागाः ॥ ४७ ॥ ॥ ॥ ॥

ऽसि अंतर्धानाभावेहेतुः भगवतःसकाशादुद्भवोयस्यतेनास्मत्पित्रा यर्हियदैवअनुवर्णितरहःउपदिष्टरहस्यः तदैवनःकर्णमार्गेणगुहांबुद्धिं गतः प्राप्तोऽसीति ॥ ४६ ॥ ननुपित्रोपदिष्टंभवतामन्यादृश्यमदृश्यमात्मतत्त्वमहंत्वन्यएवस्यां दृश्यत्वात् नैवमस्मत्प्रत्यभिज्ञयाभेदनिरासा दित्याहुः तमिति हेभगवन् आत्मतत्वमेवपरंतंत्वांविदामविद्मःप्रत्यभिजानीमः ननुनिरुपाधेरात्मतत्वस्यकथमीदृशमैश्वर्यंस्यात् अतआ हुः सत्वेनविशुद्धसत्वमूर्त्या एषांभक्तानांसम्यक्प्रतिक्षणंसंप्रातिरतिःप्रीतिःतांरचयंतम् आत्मतत्वमेवाहुः तेऽनुतापःरुपातेनविदितैर्ज्ञातैः दृढैर्भक्तियोगैःश्रवणादिभिर्मुनयोहृदियद्विदुः कीदृशाः उद्ग्रंथयोनिरहंमानाःअतएवविगतरागाः ॥ ४७ ॥

स्वयमपिभक्तिंप्रार्थयितुंभक्तानांसुखातिशयमाहुः आत्यंतिकंमोक्षाख्यमपितवप्रसादंतेनगणयंतिनाद्रियंते किंतुकिमुतअन्यत्इंद्रादिप दं तेभ्रुवउन्नयैरुज्जृंभैःअर्पितंनिहितंभयंयस्मिन्तत् तेके अंगहेभवगन् येभवतःकथायाःरसज्ञाः कथंभूतस्य रमणीयत्वेनपावनत्वेनच कीर्तन्यंकीर्तनार्हंतीर्थंचयशोयस्य ॥ ४८ ॥ इदानींस्वीयापराधंद्योतयंतोभक्तिंप्रार्थयंते काममिति हेभगवन् इतःपूर्वमस्माकंवृजिनंनाभ वत् इदानींसर्वाण्यपिजातानि यतस्त्वद्भक्तौशमौ अतस्तैःस्ववृजिनैःनिरयेषुकामंनोऽस्माकंभवोजन्मस्तात् नुवितर्के यदितुनश्चेतस्तेपद योरमेत अलिर्यथाकंटकैराविध्यमानोऽपिपुष्पेषुरमते तद्वद्विघ्नानविगणय्ययदिरमेत अंघ्रिभ्यांशोभायासां यथाचतुलसीगुणनैरपेक्ष्ये

नात्यंतिकंविगणयंत्यपितेप्रसादंकिंत्वन्यदर्पितभयंभ्रुवउन्नयैस्ते ॥ येंऽगत्वदंघ्रिशरणाभवतःकथायाःकी र्तन्यतीर्थयशसःकुशलारसज्ञाः ॥ ४८ ॥ कामंभवःस्ववृजिनैर्निरयेषुनःस्ताच्चेतोऽलिवद्यदिनुतेपदयोरमे त ॥ वाचश्चनस्तुलसिवद्यदितेंऽघ्रिशोभाःपूर्येततेगुणगणैर्यदिकर्णरंध्रः ॥ ४९ ॥ प्रादुश्चकर्थयदिदंपुरु हूतरूपंतेनेशनिर्वृतिमवापुरलंदृशोनः ॥ तस्मादिदंभगवतेनमइद्विधेमयोनात्मनांदुरुदयोभगवान्प्रती तः ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ ब्रह्मोवाच इतितद्गृ णतांतेषांमुनीनांयोगधर्मिणां ॥ प्रतिनंद्यजगादेदंविकुंठनिलयोविभुः ॥ १ ॥ श्रीभगवानुवाच ए तौतौपार्षदौमह्यंजयोविजयएवच ॥ कदर्थीकृत्यमांयद्वोबह्वक्रातामतिक्रमं ॥ २ ॥

णत्वदंघ्रिसंबंधेनैवशोभते तथायदिनोवाचःशोभेरन् यदिचतेगुणैरापूर्येतकर्णरंध्रइत्यल्पस्यपूरणमेवयाचकरत्याप्रार्थयंते अयंतुगूढो भिप्रायः कर्णरंध्रस्याकाशत्वात्गुणगणानांचापूर्त्तत्वान्नकदाचित्पूरणमतोनित्यमेवश्रवणंफलिष्यतीति ॥ ४९ ॥ अद्यवयंकृतार्थाःस्मे त्याहुः हेपुरुहूतविपुलकीर्ते यदिदंप्रादुश्चकर्थप्रकटितवानासि दृशोनेत्राणि अनात्मनामजितेंद्रियाणांदुरुदयःअप्रकटोऽपि इत्इत्थंयः प्रतीतोसि तस्मैतुभ्यमिदंनमोविधेम ॥ ५० ॥ इतितृतीयस्कंधेटीकायांपंचदशोध्यायः ॥ १५ ॥ ॥ हरिणासांत्वितैर्विप्रैरनुतप्तै स्तुषोडशे ॥ तयोरसुरभावेपिकृतोनुग्रहईर्यते ॥ १ ॥ इतिगृणतांतेषांतद्वाक्यंप्रतिनंद्येदंजगादएतावित्येकादशभिः ॥ १ ॥ यद्यस्मात् मांकदर्थीकृत्यतुच्छीकृत्यबहुयथाभवतितथाअतिक्रमंवःकृतवंतौ ॥ २ ॥ ॥ ॥

तस्मात्सएवदंडोंऽगीकृतः ॥ ३ ॥ हियस्माद्ब्रह्म ब्राह्मणाएवमेपरमंदैवतंतत्तस्माद्यवः प्रसादयामि तवकोऽपराधइतिचेत्तत्राह तद्धीति म
दीयैःपुंभिरसत्कृताःतिरस्कृताइतियत् तदात्मकृतमेवमन्ये ॥ ४ ॥ किंच ममैवैताभ्यामनिष्टंकृतमित्याह यस्यस्वामिनोनामानितस्यकी
र्तिम् आमयोऽत्रश्वेतकुष्ठं ॥ ५ ॥ यस्यमेअमृतरूपेअमलेयशसि श्रवणेनावगाहःप्रवेशः श्वपचमभिव्याप्य जगत्सद्यस्तत्क्षणमेवपु
नाति सोहंविकुंठः भवद्भ्योहेतुभूतेभ्यः उपलब्धाप्राप्तासुशोभनातीर्थभूताकीर्तिर्येनसः स्वबाहुस्थानीयंलोकेश्वरमपिहन्यांकाऽन्यस्यक
थेत्यर्थः स्वगुणानुवर्णनंतुब्राह्मणोत्कर्षार्थमेव ॥ ६ ॥ चरणपद्मयोःस्थितःपवित्रोरेणुर्यस्य अतएवक्षतोनिरस्तःअखिलस्यलोकस्यमलो

यस्त्वेतयोर्धृतोदंडोभवद्भिर्मामनुव्रतैः ॥ सएवानुमतोस्माभिर्मुनयोदेवहेलनात् ॥ ३ ॥ तद्वःप्रसादयाम्यद्य
ब्रह्मदैवंपरंहिमे ॥ तद्धीत्यात्मकृतंमन्येयत्स्वपुंभिरसत्कृताः ॥ ४ ॥ यन्नामानिचगृण्हातिलोकोभृत्येकृताग
सि ॥ सोऽसाधुवादस्तत्कीर्तिंहंतित्वचमिवामयः ॥ ५ ॥ यस्यामृतामलयशःश्रवणावगाहःसद्यःपुनातिजग
दाश्वपचाद्विकुंठः ॥ सोऽहंभवद्भ्यउपलब्धसुतीर्थकीर्तिश्छिंद्यांस्वबाहुमपिवःप्रतिकूलवृत्तिम् ॥ ६ ॥ यत्सेव
याचरणपद्मपवित्ररेणुंसद्यःक्षताखिलमलंप्रतिलब्धशीलं ॥ नश्रीर्विरक्तमपिमांविजहातियस्याःप्रेक्षालवा
र्थइतरेनियमान्वहंति ॥ ७ ॥ नाहंतथाऽद्मियजमानहविर्विताने श्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन ॥ यद्ब्रा
ह्मणस्यमुखतश्चरतोऽनुघासंतुष्टस्यमय्यवहितैर्निजकर्मपाकैः ॥ ८ ॥ ॥ ॥ ॥

येन यद्वा चरणपद्माल्लग्नःपवित्रोरेणुर्यस्मिन्नितिक्षतोऽखिलोमलोयस्येतिचाविग्रहः प्रतिलब्धंप्राप्तंशीलंयेन येषांसेवयाएतेगुणाममअत
एवश्रीर्मांनविजहाति प्रेक्षालवार्थमवलोकनलेशार्थमितरेब्रह्मादयःतेषांवःप्रतिकूलवृत्तिंछिंद्यामितिपूर्वेणैवसंबंधः ॥ ७ ॥ किंचब्राह्म
णोममैवश्रेष्ठंमुखमतोयुष्मदवज्ञया मन्मुखतिरस्कारएवकृतइत्याह नाहमिति वितानेयज्ञे यजमानस्यहविश्चरुपुरोडाशादिहुतभुगग्निस्ते
नमुखेनअदन्अश्नन्नपि तथानाद्मिनाश्नामि यद्यथाश्च्योतताक्षरताघृतेन प्लुतंविलोडितंपायसादिप्रतिग्रासंरसास्वादपूर्वकंचरतोभुंजान
स्यज्ञानिनोब्राह्मणस्यमुखतोऽश्नामि मयिसमर्पितैःकर्मफलैःतुष्टस्यानिष्कामस्येत्यर्थः ॥ ८ ॥ ॥

किंच येषाममलमंघ्रिरजः अहंकिरीटैर्बिभर्मि तान्विप्रानपकुर्वतोऽपिकोऽन्योनविषहेत कथंभूतोऽहम् अखंडानवच्छिन्नाविकुंठाअप्रति
हताचयोगमायाविलासभूताविभूतिर्यस्यसः तथा यस्यममार्हणांभःपादोदकंचंद्रललामेनेश्वरेणसहितान्लोकान्सद्यःपुनाति एवंपरमे
श्वरःपरमपावनोपिसन्नहंबिभर्मीति ॥ ९ ॥ किंचमेतनूः अधिष्ठानानि कास्ताः द्विजवरान्दुहतीर्द्रोग्ध्रीःगाइत्यर्थः दुहितॄरितिपाठेपिगा
एवविष्णुरूपात्सूर्यादुत्पन्नत्वात्सूर्यसुताश्वगावइतिवचनात् अलब्धशरणानिरक्षकहीनानि भेदबुध्यामदधिष्ठानंनभवंतीतिपृथक्दृष्ट्या
येद्रक्ष्यंति अघेनक्षतानष्टादृष्टिर्येषांतान् मदीयोऽधिकृतोदंडनेतायोयमःतस्यगृध्राकारायेदूताः अहिवत्मन्युर्येषांक्रोधेनकुषंतिचंचुभि
श्छिदंति ॥ १० ॥ एवंभूतास्तुमांवशीकुर्वंतीत्याह येक्षिपतःपरुषंभाषमाणानपिब्राह्मणान्संबोधयंति मयियाधीस्तयावासुदेवदृष्ट्या

**येषांबिभर्म्यहमखंडविकुंठयोगमायाविभूतिरमलांघ्रिरजःकिरीटैः ॥ विप्रांस्तुकोनविषहेतयदर्हणांभःस
द्यःपुनातिसहचंद्रललामलोकान् ॥ ९ ॥ येमेतनूर्द्विजवरान्दुहतीर्मदीयाभूतान्यलब्धशरणानिचभेदबु
द्ध्या ॥ द्रक्ष्यंत्यघक्षतदृशोह्यहिमन्यवस्तान्गृध्रारुषाममकुषंत्यधिदंडनेतुः ॥ १० ॥ येब्राह्मणान्मयिधि
याक्षिपतोऽर्चयंतस्तुष्यद्धृदःस्मितसुधोक्षितपद्मवक्त्राः ॥ वाण्यानुरागकलयात्मजवद्गृणंतःसंबोधयंत्यह
मिवाहमुपाहृतस्तैः ॥ ११ ॥ तन्मेस्वभर्तुरवसायमलक्षमाणौयुष्मद्व्यतिक्रमगतिंप्रतिपद्यसद्यः ॥ भूयो
ममांतिकमितांतदनुग्रहोमेयत्कल्पतामचिरतोभृतयोर्विवासः ॥ १२ ॥ ब्रह्मोवाच अथतस्योशतींदेवी
मृषिकुल्यांसरस्वतीं ॥ नास्वाद्यमन्युदष्टानांतेषामात्माऽप्यतृप्यत ॥ १३ ॥ ॥**

अर्चयंतःसंतः तुष्यद्धृदःप्रीयमाणाचित्ताः स्मितमेवसुधातयाउक्षितंपद्मतुल्यंवक्त्रंयेषामनुरागकलयाप्रेमशोभयावाचा गृणंतःस्तुवंतःयथा
कुपितमात्मजंस्निग्धःपितासत्पुत्रोवापितरम् अहमिवभृगुंयुष्मान्वातैरहमुपाहृतोवशीकृतः ॥ ११ ॥ तत्तस्मान्मेऽवसायमभिप्रायमलक्षमा
णौअजानंतौयुष्मदपराधोचितांगतिंसद्यःप्राप्यमत्समीपं इतांप्राप्तुवतां तदितिसःमेऽनुग्रहः तमेवाह यत्भृतयोर्विवासःआचिरतःशीघ्रंक
ल्पतांसंपद्यतांसमाप्यतामिति ॥ १२ ॥ उशतींकमनीयांप्रियांदेवींद्योतमानामृषिकुल्यां ऋषयोमंत्रास्तद्रूपांतत्प्रवाहरूपां ऋषिकुल यो
ग्यामितिवा सरस्वतींवाचम्आस्वाद्यतन्माधुर्यमनुभूयसर्पप्रायेणमन्युनादष्टानामपिक्रोधविषव्याप्तानांहिमनोरसानुभवाभावात्प्रियभाषण
मपिनसहते तेषांतुआत्मामनः नातृप्यत् अलमितिनामन्यत ॥ १३ ॥ ॥ ॥

सतींश्रेष्ठांव्यादायप्रसार्यकर्णंदत्वेत्यर्थः लघ्वींमिताक्षरां गुरुभिरर्थैर्गव्हरांदुष्प्रवेशाम् अगाधामभिप्रायतःगंभीरामर्थतःविगाह्यविचार्यापि
किमस्मानभिनंदतिनिंदतिवा अस्मत्कृतंदंडंवासंकोचयतीतिनविदुः ॥ १४ ॥ ततश्चाभिनंदतीतिज्ञात्वातेप्रहृष्टाःसंतःप्रोचुः क्षुभितारोमां
चितात्वक्येषां कुपितेतिपाठेसंजातरोमकूपोत्क्यारोमांचितत्वमेवोक्तं आरब्धःआविष्कृतःपारमेष्ठ्यस्यपरमैश्वर्यस्यमहोदयःपरमोत्कर्षो
येनतम् अधिराजत्वमाविष्कृत्यराजशिक्षार्थंब्राह्मणान्मानयतीतिज्ञात्वेत्यर्थः ॥ १५ ॥ अध्यक्षःसर्वेश्वरःसन् तद्धीत्यात्मकृतंमन्यइत्यु
क्त्यामयाऽपराधःकृतइति तथातदनुग्रहोमेइत्यादिवचनेनममानुग्रहश्चेतियत्प्रभाषसेतेनयाच्चिकीर्षितंतन्नविद्मः ॥ १६ ॥ किलेतिलोक
शिक्षार्थंसूचितंपरमार्थमाहुः विप्राणामिति देवदेवानांदेवपूज्यानामपिभगवान्त्वमात्माचदैवतंच ॥ १७ ॥ लोकशिक्षार्थताप्रपंचःत्व

सतींव्यादायशृण्वंतोलघ्वींगुर्वर्थगह्वराम् ॥ विगाह्यागाधगंभीरांनविदुस्तच्चिकीर्षितं ॥ १४ ॥ तेयोग
माययारब्धपारमेष्ठ्यमहोदयम् ॥ प्रोचुःप्रांजलयोविप्राःप्रहृष्टाःक्षुभितत्वचः ॥ १५ ॥ ऋषयऊचुः
नवयंभगवन्विद्मस्तवदेवचिकीर्षितम् ॥ कृतोमेऽनुग्रहश्चेतियदध्यक्षःप्रभाषसे ॥ १६ ॥ ब्रह्मण्यस्यपरंदै
वंब्राह्मणाःकिलतेप्रभो ॥ विप्राणांदेवदेवानांभगवानात्मदैवतम् ॥ १७ ॥ त्वत्तःसनातनोधर्मोरक्ष्यतेत
नुभिस्तव ॥ धर्मस्यपरमोगुह्योनिर्विकल्पोभवान्मतः ॥ १८ ॥ तरंतिह्यंजसामृत्युंनिवृत्तायदनुग्रहात् ॥
योगिनःसभवान्किंस्विदनुगृह्येतयत्परैः ॥ १९ ॥ यंवैविभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिःस्वशिरसा
धृतपादरेणुः ॥ धन्यार्पितांघ्रितुलसीनवदामधाम्नोलोकंमधुव्रतपतेरिवकामयाना ॥ २० ॥

त्तइत्यष्टभिः धर्मस्त्वत्तएवभवतिरक्ष्यतेचत्वदवतारैः परमःफलरूपः अतएवगुह्यःगोप्यः नचस्वर्गादिफलवद्विकारी किंतुनिर्विकारोम
तः अतएवंभूतस्यतवेदंलोकशिक्षामात्रमितिभावः ॥ १८ ॥ विपरीतंचेदमित्याहुः तरंतीति यस्यानुग्रहादेवानिवृत्ताःविरक्ताः योगिनश्च
संतोमृत्युंतरंति सभवान्परैरनुगृह्येतेतिकिंस्वित् नकिंचिदित्यर्थः ॥ १९ ॥ यच्चोक्तंयत्सेवयाचरणपद्मपवित्ररेणुंसद्यःक्षताखिलमलंप्रति
लब्धशीलमित्यादि तदत्यंतमसंभावितमित्याहुर्द्वाभ्यां यंवैविभूतिर्लक्ष्मीः अनुवेलमवसरे उपयातिसेवते धृतःपादरेणुर्यस्याः धन्यैःसु
कृतिभिरर्पितमंघ्रौयत्तुलस्यानवंदाममाला तद्धामस्थानंयस्यतस्य मधुव्रतपतेर्भ्रमरमुख्यस्यलोकंस्थानम् अंघ्रिकामयमानेव ॥ २० ॥

विविक्तचरितैर्विशुद्धैः परिचरणैः अनुवर्तमानां सेवमानामपि यो नात्याद्रियत् नातीवादृतवान् स एवंभूतस्त्वम् अयंभावः इत्थं नामातिलंप टतया लक्ष्मीस्त्वां सेवते कथम् एवं हि सा मेने अयं हि सारग्राही मधुव्रतः चंचलश्च सचांघ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमते अतोऽ घ्रिलावण्यमत्याधिकं स्यात् ततोऽहं वक्षसि स्थितापि योगिजनादिबहुसेवकसंघर्षमंगीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्यामीति तदेवमत्यौत्सुक्येनानुवर्तमानामपि तां त्वं नातीवाद्रियसे यतः परमभागवतेष्वेव प्रकृष्टसंगवान् स एव परमसौभाग्यनिधिस्त्वम् अतो ब्राह्मण प्रसादात् मां श्रीर्न विजहातीति अलभ्यलाभत्वेन निर्देशो न समंजस इति किंच स्व तत एव त्वं भगभाजनः भजनीयानां गुणानामाश्रयः परमशुद्ध श्च तं त्वां द्विजानामनुपथं पथि पथि लग्नं यत्पुण्यं रजः तथा श्रीवत्सलक्ष्म च किं पुनीतः पवित्रीकुरुतः किं किमर्थं च ते उभे अगाः प्राप्तः भूषणत्वे न स्वीकृतवानसि अतो यत्सेवया चरणपद्मपवित्ररेणुमित्यादि वचनं लोकसंग्रहमात्रमित्यर्थः ॥ २१ ॥ धर्मस्येति त्रिभिः त्रिष्वेव युगेष्वा

**यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसंगः ॥ स त्वं द्विजानुपथपुण्यरजःपुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वं ॥ २१ ॥ धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् ॥ नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥ न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन ॥ तर्ह्येव नंक्ष्यति शिवस्तव देव पंथा लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् ॥ २३ ॥**

विर्भवतीति त्रियुगः यद्वा त्रीणि युगलानि त्रियुगाः षड्गुणाः भगवच्छब्दवाच्याः संत्यस्येति त्रियुगः हे त्रियुग धर्मरूपस्य तव त्रिभिः पद्भिः स्वैरसाधारणैः तपःशौचदयाभिः सत्यस्य धर्मविप्लवेऽपि कलावनुवर्तमानत्वात् त्रिभिरित्युक्तं भृतं पालितं किं कृत्वा नोऽस्माकं वरदया सत्त्वे न तनुवा तन्वा स त्वमूर्त्या तदभिघाति तेषां पादानामभिघातकं रजश्च तमश्च निरस्य निराकृत्य द्विजानां देवतानां च प्रयोजनाय नूनं भृतं यद्वा हि लोपे रूपं निरस्योति अस्माकं तन्निवर्तयेत्यर्थः ॥ २२ ॥ आत्मगोपं त्वयैव रक्षणीयं द्विजोत्तमानां कुलं यदि ह स्फुटं त्वं न गोप्ता न रक्षिता तृ न्प्रत्ययांतत्वात् न षष्ठीप्रयोगः वृषः श्रेष्ठः हे देव पंथाः वेदमार्गो नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य हि यस्मात्तत् अनर्हणमसूनृतं च अ ग्रहीष्यत् तदुक्तं गीतासु यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तत इति ॥ २३ ॥

नश्यात्विति चेत्तत्राहुः तद्देदमार्गनाशनम् इवेति लोकोक्तिः सत्वनिधित्वाज्जनायक्षेमंशंविधातुमिच्छोः अतएवनिजशाक्तिभिः राजादिभि
रुत्पाटितधर्मप्रतिपक्षस्य अतस्तवब्रह्मकुलेऽवनातियुंक्तैव ननुमहतोऽन्येष्ववनतिस्तेजोहानिकरी तत्राहुः एतावतातुधर्मत्राणप्रयोजनेन
अवनतस्यनमनंकृतवतः तवतेजःप्रभावः नक्षतंनक्षीणं यतः सनमनादिस्तेविनोदः ॥ २४ ॥ शापाग्रहंपरित्यज्याविज्ञापयंति यंवाऽ
न्यंदंडंविधास्यतिभवान्वृत्तिंनुअधिकर्जीविकांवातत्सर्वमनुमन्यामहेयेवयंनिरपराधावेतौकिल्बिषेणशापेनायुंक्ष्महियोजितवंतः ॥ २५ ॥
मत्कारितत्वाच्छापस्ययुष्माकंनापराधइत्याश्वासयन्नाह एतौसद्यएवासुरयोनिंप्राप्यभूयोप्याशुमत्समीपमागमिष्यतः संरंभेणक्रोधावेशेन
संभृतः संवृद्धोयः समाधिःएकाग्रता तेनानुबद्धोदृढीकृतोयोगोययोः हेविप्राः योवः शापोयुष्मत्कृतः शापस्तादितिसःमयैवनिमितःनिर्मितः

तत्तेऽनभीष्टमिवसत्वनिधेर्विधित्सोःक्षेमंजनायनिजशक्तिभिरुद्धृतारेः ॥ नैतावताऽधिपतेर्बतविश्वभर्तुस्ते
जःक्षतंत्ववनतस्यसतेविनोदः ॥ २४ ॥ यंवाऽनयोर्दममधीशभवान्विधत्तेवृत्तिंनुवातदनुमन्महिनिर्व्यलीक
म् ॥ अस्मासुवायउचितोध्रियतांसदंडोयेनागसौवयमयुंक्ष्महिकिल्बिषेण ॥ २५ ॥ श्रीभगवानुवाच ए
तौसुरेतरगतिंप्रतिपद्यसद्यःसंरंभसंभृतसमाध्यनुबद्धयोगौ ॥ भूयःसकाशमुपयास्यतआशुयोवःशापोम
यैवनिमितस्तदवैतविप्राः ॥ २६ ॥ ब्रह्मोवाच अथतेमुनयोदृष्ट्वानयनानंदभाजनं ॥ वैकुंठंतदधिष्ठा
नंविकुंठंचस्वयंप्रभं ॥ २७ ॥ भगवंतंपरिक्रम्यप्रणिपत्यानुमान्यच ॥ प्रतिजग्मुःप्रमुदिताःशंसंतोवैष्ण
वींश्रियं ॥ २८ ॥ भगवाननुगावाहयातंमाभैष्टमस्तुशं ॥ ब्रह्मतेजःसमर्थोऽपिहंतुंनेच्छेमतंतुमे ॥ २९ ॥

इत्यवैतजानीत ॥ २६ ॥ नेत्रोत्सवजनकंविकुंठहरिंतन्निवासंचवैकुंठंलोकम् स्वयंप्रकाशंप्रकाशांतरानपेक्षं सत्वपरिणामत्वात् ॥ २७ ॥ अनु
मान्यअनुज्ञाप्य ॥ २८ ॥ ममैत्रतुमतंसंमतम् इदमत्रतत्वम् यद्यपिसनकादीनांक्रोधोनसंभवति नचभगवत्पार्षदयोर्ब्राह्मणप्रातिकूल्यम् नचभ
गवतःस्वभक्तोपेक्षा नचवैकुंठगतानांपुनर्जन्म तथापिभगवतः सिसृक्षादिवत्कदाचिद्युयुत्सासमजानि तदाऽन्येषामल्पबलत्वात्स्वपार्षदा
नांतुल्यबलत्वेऽपिप्रातिपक्ष्यानुपपत्तेरेतावेवब्राह्मणनिवारणेप्रवर्त्य तेषुचक्रोधमुद्दीप्यतच्छापव्याजेनप्रतिपक्षौविधाययुद्धकौतुकंसंपादनी
यमितिभगवत्तैत्र्यव्यवसितमतःसर्वसंगच्छते तदिदमुक्तंशापोमयैवनिमितइतिमाभैष्टमिति अस्तुशमिति हंतुंनेच्छेमतंतुमइत्यादिच ॥ २९ ॥

प्रत्येष्यतंप्रत्येष्यथः निकाशंसमीपम् ॥ ३० ॥ ३१ ॥ दुस्तरात्ब्रह्मशापात् हरिलोकतःपतंताविति शेषः हरिलोकतएवहता श्रियावभूतामि तिवा विगतस्मयौनष्टगर्वौच ॥ ३२ ॥ विकुंठस्यधिषणात्स्थानात् पुत्रकाहेदेवाः ॥ ३३ ॥ काश्यपंतेजोवीर्यंप्राप्तौसहैवगर्भंप्रविष्टौय मौ ॥ ३४ ॥ तयोस्तेजसात्रस्तेजआक्षिप्तंतिरस्कृतं नचात्रप्रतिविधिःशक्यः यतएतर्हिइदानींभगवानेवतदेवंविधातुमिच्छति ॥ ३५ ॥ त थापिकोप्युपायोविचार्यतामितिचेत्तत्राह विश्वस्येति त्रयाणांगुणानामीशः सएवसत्वोत्कर्षकालेनःक्षेमंविधास्यति विमृशेनविमर्शनेन



मयिसंरंभयोगेननिस्तीर्यब्रह्महेलनं ॥ प्रत्येष्यतंनिकाशंमेकालेनाल्पीयसापुनः ॥३०॥ द्वास्थावादिश्यभ गवान्विमानश्रेणिभूषणं ॥ सर्वातिशययालक्ष्म्याजुष्टंस्वंधिष्ण्यमाविशत् ॥३१॥ तौतुगीर्वाणऋषभौदुस्त राद्धरिलोकतः ॥ हतश्रियौब्रह्मशापादभूतांविगतस्मयौ ॥३२॥ तदाविकुंठधिषणात्तयोर्निपतमानयोः ॥हा हाकारोमहानासीद्विमानाग्र्येषुपुत्रकाः ॥३३॥ तावेवह्यधुनाप्राप्तौपार्षदप्रवरौहरेः ॥ दितेर्जठरनिर्विष्टंका श्यपंतेजउल्बणं ॥ ३४॥ तयोरसुरयोरद्यतेजसायमयोर्हिवः ॥ आक्षिप्तंतेजएतर्हिभगवांस्तद्विधित्सति ॥ ॥ ३५॥ विश्वस्ययःस्थितिलयोद्भवहेतुराद्योयोगेश्वरैरपिदुरत्यययोगमायः ॥ क्षेमंविधास्यतिसनोभगवां स्त्र्यधीशस्तत्रास्मदीयविमृशेनकियानिहार्थः ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेषोडशोऽ ध्यायः ॥ १६ ॥ ॥ छ ॥ मैत्रेयउवाच निशम्यात्मभुवागीतंकारणंशंकयोज्झिताः ॥ ततःसर्वेन्यव र्तंतत्रिदिवायदिवौकसः ॥ १ ॥ दितिस्तुभर्तुरादेशादपत्यपरिशंकिनी ॥ पूर्णेवर्षशतेसाध्वीपुत्रौप्रसुषुवे यमौ ॥ २ ॥ उत्पाताबहवस्तत्रनिपेतुर्जायमानयोः ॥ दिविभुव्यंतरिक्षेचलोकस्योरुभयावहाः ॥ ३ ॥



॥ ३६ ॥ इतितृतीयस्कंधेटीकायांषोडशोऽध्यायः १६ ॥ ॥ ॥ ततःसप्तदशेजन्मतयोर्लोकभयंकरं ॥ हिरण्याक्षप्रभावश्चवर्ण्य तेदिग्जयेऽद्भुतः ॥ १ ॥ क्षेमंविधास्यतीतिब्रह्मवचनानंतरंशंकयात्यक्ताः ॥ १ ॥ भर्तुरादेशात् लोकान्सपालांस्त्रींश्चंडिमुहुराक्रंदयिष्य तइतिवाक्यात् स्वापत्याभ्यांपरिशंकिनीदेवोपद्रवंशंकमाना ॥ २ ॥ तत्रतदानिपेतुःउद्बभूवुः उरुभयंआसमंताद्वहंतीति ॥ ३ ॥

अचलैः सहिताभुवः प्रदेशाः केतवश्चउदयंचक्रुरितिशेषः ॥ ४ ॥ फूत्कारानितितीव्रवायुशब्दानुकरणं नगपतीन्महावृक्षान्वात्याएवअनी
कंयस्य रजएवध्वजोयस्य ॥ ५ ॥ उच्चैर्हसंत्यइवतडितोयेषुतेषामंबुदानांघटयासमूहेननष्टोभागणः सूर्यादिप्रभासमूहोयस्मिन् पदंस्थानंन
व्याहृश्यतेस्मईषदपिनादृश्यत ॥ ६ ॥ वार्धिः समुद्रः विमनाइव उद्गताऊर्मयोयस्मात् क्षुभिताउदरस्थामकरादयोयस्मिन् उदपानैर्वापीकूपा
दिभिः सहिताः शुष्काणिपंकजानियासु ॥ ७ ॥ परिधयः परिवेषाः सराह्वोः राहुग्रस्तयोः निर्घाताः निरभ्रगर्जितानि रथनिर्ह्रादतुल्याः ध्वन

सहाचलाभुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ॥ सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥४॥ ववौवायुः सुदु
स्पर्शः फूत्कारानीरयन्मुहुः ॥ उन्मूलयन्नगपतीन्वात्यानीकोरजोध्वजः ॥५॥ उद्धसत्तडिदंभोदघटयानष्टभा
गणे ॥ व्योम्निप्रविष्टतमसानस्मव्यादृश्यतेपदं ॥६॥ चुक्रोशविमनावार्धिरुदूर्मिः क्षुभितोदरः ॥ सोदपाना
श्चसरितश्चुक्षुभुः शुष्कपंकजाः ॥७॥ मुहुः परिधयोऽभूवन्सराह्वोः शशिसूर्ययोः ॥ निर्घातारथनिर्ह्रादाविव
रेभ्यः प्रजज्ञिरे ॥८॥ अंतर्ग्रामेषुमुखतोवमंत्योवह्निमुल्बणं ॥ सृगालोलूकटंकारैः प्रणेदुरशिवंशिवाः ॥९॥ सं
गीतवद्रोदनवदुन्नमय्यशिरोधरां ॥ व्यमुंचन्विविधावाचोग्रामसिंहास्ततस्ततः ॥१०॥ खराश्चकर्कशैः क्ष
त्तः खुरैर्घ्नंतोधरातलं ॥ खार्काररभसामत्ताः पर्यधावन्वरूथशः ॥११॥ रुदंतोरासभत्रस्तानीडादुदपतन्ख
गाः ॥ घोषेऽरण्येचपशवः शकृन्मूत्रमकुर्वत ॥१२॥ गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ॥ व्यरुदन्देव
लिंगानिद्रुमाः पेतुर्विनाऽनिलं ॥१३॥ ग्रहान्पुण्यतमानन्येभगणांश्चापिदीपिताः ॥ अतिचेरुर्वक्रगत्यायुयुधु
श्चपरस्परं ॥१४॥ दृष्ट्वाऽन्यांश्चमहोत्पातान्नतत्त्वविदः प्रजाः ॥ ब्रह्मपुत्रान्ऋतेभीतामेनिरेविश्वसंप्लवं ॥१५॥

यः विवरेभ्यः गिरिगुहाभ्यः ॥ ८ ॥ सृगालानामुलूकानांचटंकारैर्ध्वनिभिः सह ॥ ९ ॥ ग्रामसिंहाः श्वानः ॥ १० ॥ कर्कशैस्तीक्ष्णैर्हेक्षत्तः खा
र्कारोगर्दभजातिशब्दस्तस्मिन् रभसः संभ्रमोयेषां वरूथशः संघशः ॥ ११ ॥ रासभशब्दत्रस्ताः सर्वतः क्रोशंतः ॥ १२ ॥ गावोऽत्रसन् त्रस्ताः
असृग्दोहाश्चबभूवुः देवलिंगानिव्यरुदन् प्रतिमानामश्रुस्रावआसीदित्यर्थः ॥ १३ ॥ पुण्यतमान्गुरुबुधादीन्भगणान्बहूनिनक्षत्राणिचअ
न्येक्रूरग्रहामंगलादयः अतिचेरुः अतिक्रम्यजग्मुः वक्रगत्याप्रत्यावृत्त्यायुयुधुश्च ॥ १४ ॥ ब्रह्मपुत्रान्ऋतेविना तेषांस्ववशापादिज्ञानात् ॥ १५ ॥

व्यज्यमानमात्मपौरुषंपूर्वसिद्धंस्वपौरुषंययोः ॥ १६ ॥ निरुद्धान्याशाःकाष्ठादिशोयाभ्याम् स्फुरंत्यंगदानियेषुतेभुजाययोः अंगदेतिटाबं
तत्वमार्षं शोभनाकांचीयस्यांतयाकव्या ॥ १७ ॥ यमयोर्मध्येयःस्वदेहात्प्रथममजायततंतथाहिरण्यकशिपुंविदुः सादितिः प्रथमंयमसू
ततंहिरण्याक्षंयथाविदुःतथानामकृतवानित्यर्थः अयंभावः यदाहिगर्भाधानसमयेयोनिपुष्पंत्रिशद्वीर्यद्विधाविभक्तमादिपश्चाद्भावेनप्रवि
शत्तितदायमौभवतः तयोश्चपितृतःप्रवेशक्रमविपर्ययेणमातृतःप्रसूतिः यदाविशेद्द्विधाभूतंबीजंपुष्पंपरिक्षरत् ॥ द्वौतदाभवतोगर्भौसू

॥ ४५ ॥

तावादिदैत्यौसहसाव्यज्यमानात्मपौरुषौ ॥ ववृधातेऽश्मसारेणकायेनाद्रिपतीइव ॥१६॥ दिविस्पृशौहे
मकिरीटकोटिभिर्निरुद्धकाष्ठौस्फुरदंगदाभुजौ ॥ गांकंपयंतौचरणैःपदेपदेकट्यासुकांच्याऽर्कमतीत्यतस्थ
तुः ॥१७॥ प्रजापतिर्नामतयोरकार्षीद्यःप्राक्स्वदेहाद्यमयोरजायत ॥ तंवैहिरण्यकशिपुंविदुःप्रजायंतंहिर
ण्याक्षमसूतसाग्रतः ॥१८॥ चक्रेहिरण्यकशिपुर्दोर्भ्यांब्रह्मवरेणच ॥ वशेसपालांल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥
॥ १९ ॥ हिरण्याक्षोऽनुजस्तस्यप्रियःप्रीतिकृदन्वहम् ॥ गदापाणिर्दिवंयातोयुयुत्सुर्मृगयन्रणम् ॥ २० ॥
तंवीक्ष्यदुःसहजवंरणत्कांचननूपुरं ॥ वैजयंत्यास्रजाजुष्टमंसन्यस्तमहागदं ॥ २१ ॥ मनोवीर्यवरोत्सिक्त
मसृण्यमकुतोभयं ॥ भीतानिलिल्यिरेदेवास्ताक्ष्यंत्रस्ताइवाहयः ॥ २२ ॥ सवैतिरोहितान्दृष्ट्वामहसास्वे
नदैत्यराट् ॥ सेंद्रान्देवगणान्क्षीबानपश्यन्व्यनदद्भृशं ॥ २३ ॥ ततोनिवृत्तःक्रीडिष्यन्गंभीरंभीमनिः
स्वनं ॥ विजगाहेमहासत्वोवार्धिंमत्तइवद्विपः ॥ २४ ॥ तस्मिन्प्रविष्टेवरुणस्यसैनिकायादोगणाःसन्नाधि
यःससाध्वसाः ॥ अहन्यमानाअपितस्यवर्चसाप्रधर्षितादूरतरंप्रदुद्रुवुः ॥ २५ ॥ ॥

तिर्वेशविपर्ययादितिपिंडासिद्धिस्मरणात् अतःस्वदेहात्पूर्वंयोजातस्तस्यहिरण्यकशिपुरिति दितिःप्रथमंयमसूततस्यहिरण्याक्षइतिनामकृ
तवानिति ॥ १८ ॥ दोर्भ्यामुद्धतः ब्रह्मवरेणाकुतोमृत्युः ॥ १९ ॥ रणंयुद्धम् ॥ २० ॥ दुःसहोजवोवेगोयस्य रणंतौकांचनमयौ
नूपुरौयस्य अंसेन्यस्तामहतीगदायेन ॥ २१ ॥ मनसाशौर्येणवीर्येणबलेनवरेणचउत्सिक्तंगर्वितम् असृण्यंनिरंकुशं निलिल्यिरेलीनाबभू
वुः ॥ २२ ॥ स्वेनमहसातेजसातिरोहितान्सदृष्ट्वाज्ञात्वा क्षीबान्मत्तानपश्यन्सन् क्लीबानितिपाठेपौरुषहीनान् ॥ २३ ॥ २४ ॥ स
न्नाअवसन्नाधीर्येषां वर्चसातेजसाप्रधर्षिताअभिभूताःसंतः ॥ २५ ॥ ॥ ॥

॥ ४५ ॥

महोर्मीन् अभिजघ्ने मौर्व्यामारयतीतिमौर्वैकार्ष्णायसंतन्मय्या यद्वा मूर्वानामतृणविशेषः तन्मयरज्ज्वादृढनिबद्धयेत्यर्थः विभावरीसंज्ञांआसेदिवान् प्राप्तः ॥ २६ ॥ असुराणांलोकःपातालं तत्पालकंप्रलब्धुमुपहसितुंप्रणिपत्य ॥ २७ ॥ यद्यस्माद्राजसूयेनभवानयजत् ॥ ॥ २८ ॥ उपशमंयुद्धादिकौतुकादुपरमं ॥ २९ ॥ युद्धमार्गनिपुणंत्वांयस्तोषयिष्यतितमिहिगच्छ गृणतेस्तुवंति ॥ ३० ॥ आरात् शीघ्रं विस्मयःनष्टगर्वः वीरशयेरणांगणे रूपाणिवराहाद्यवतारान् ॥ ३१ ॥ ॥ इतितृतीयस्कंधेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥

सवर्षपूगानुदधौमहाबलश्चरन्महोर्मीन् श्वसनेरितान्मुहुः ॥ मौर्व्याऽभिजघ्नेगदयाविभावरीमासेदिवांस्तातपुरींप्रचेतसः ॥ २६ ॥ तत्रोपलभ्यासुरलोकपालकंयादोगणानामृषभंप्रचेतसं ॥ स्मयन्प्रलब्धुंप्रणिपत्यनीचवज्जगादमेदेह्यधिराजसंयुगं ॥ २७ ॥ त्वंलोकपालोऽधिपतिर्बृहच्छ्रवावीर्यापहोदुर्मदवीरमानिनां ॥ विजित्यलोकेऽखिलदैत्यदानवान्यद्राजसूयेनपुरायजत्प्रभो ॥ २८ ॥ सएवमुत्सिक्तमदेनविद्विषादृढंप्रलब्धोभगवानपांपतिः ॥ रोषंसमुत्थंशमयन्स्वयाधियाव्यवोचदंगोपशमंगतावयं ॥ २९ ॥ पश्यामिनान्यंपुरुषात्पुरातनाद्यःसंयुगेत्वांरणमार्गकोविदं ॥ आराधयिष्यत्यसुरर्षभेहितंमनस्विनोयंगृणतेभवादृशाः ॥ ३० ॥ तंवीरमारादभिपद्यविस्मयःशयिष्यसेवीरशयेश्वभिर्वृतः ॥ यस्त्वद्विधानामसतांप्रशांतयेरूपाणिधत्तेसदनुग्रहेच्छया ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेहिरण्याक्षदिग्विजयेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ मैत्रेयउवाच तदेवमाकर्ण्यजलेशभाषितंमहामनास्तद्विगणय्यदुर्मदः ॥ हरेर्विदित्वागतिमंगनारदाद्रसातलंनिर्विविशेत्वरान्वितः ॥ १ ॥ ददर्शतत्राभिजितंधराधरंप्रोन्नीयमानावनिमग्रदंष्ट्रया ॥ मुष्णंतमक्ष्णास्वरुचोऽरुणश्रियाजहासचाहोवनगोचरोमृगः ॥ २ ॥

अष्टादशेहिरण्याक्षधरोद्धर्तृवराहयोः ॥ निर्विशेषंमहायुद्धंदेवक्षोभिनिरूप्यते ॥ १ ॥ प्रतियोद्धारंश्रुत्वामहामनाःशयिष्यसइतियदुक्तंतत् विगणय्यअगणयित्वा यतोदुर्मदः ॥ १ ॥ अभितोजयतीत्यभिजित् तंश्रीहरिं प्रकर्षेणोर्ध्वंनीयमानाऽवनिर्येन अग्रदंष्ट्रयादंष्ट्राग्रेणस्वरुचः हिरण्याक्षतेजांसि अरुणश्रियायुक्तंयत्तेनअक्ष्णानेत्रेणमुष्णंतंतिरस्कुर्वंतं अहोचित्रंवनगोचरोमृगःवारिचरोवराहः ॥ २ ॥

एहिआगच्छ रसौकसांपातालवासिनांनोऽस्माकंसमर्पिता अन्यथापातालावतरणमस्यानघटतइतिभावः हिरण्याक्षेणाधिक्षेपार्थंप्रयु
क्ताऽपिभारतीवस्तुतोभगवंतंस्तौति तथाहिवनगोचरःजलेशयानःश्रीनारायणःसएवयोगिभिर्मृग्यतेदुष्टान्वाहंतुंमृगयतइतिमृगः अज्ञाना
स्तिज्ञोयस्मात्सर्वज्ञेत्यर्थः सुराअधमायस्मात्हेसुरोत्तम ममेक्षमाणस्यापिसतःमामनादृत्यापित्वमनयासहवर्तमानोनःअस्मदीयंस्वस्तिस
मस्तंमंगलंराज्यंयास्यसिप्राप्स्यसिनात्रसंदेहःतथाप्यस्मत्कृपयाविमुंचेत्यर्थः आसादितालीलयास्वीकृतासूकराकृतिर्येन ॥ ३ ॥ अभवाय
नाशाय भृतःपुष्टः वस्तुतस्तुमोक्षायभृतोधृतआश्रितइत्यर्थः योभवान्परोक्षेणचौर्येणजयतीतितथा वस्तुतस्तुदूरतएवस्थित्वाजयतीतिसं
स्थाप्यहत्वा वस्तुतस्तुयोगमायारूपमचिंत्यंबलंयस्य अल्पंपौरुषंयस्मात् तंत्वांसम्यक्स्थापयित्वाभक्त्यात्वद्दिदिस्थिरीकृत्येत्यर्थः हेमूढप्र

आहैनमेह्यज्ञमहींविमुंचनोरसौकसांविश्वसृजेयमर्पिता ॥ नस्वस्तियास्यस्यनयाममेक्षतःसुराधमासादि
तसूकराकृते ॥ ३ ॥ त्वंनःसपत्नैरभवायकिंभृतोयोमाययाहंत्यसुरान्परोक्षजित् ॥ त्वांयोगमायाबलम
ल्पपौरुषंसंस्थाप्यमूढप्रमृजेसुहृच्छुचः ॥ ४ ॥ त्वयिसंस्थितेगदयाशीर्णशीर्षण्यस्मद्भुजच्युतयायेचतुभ्य
म् ॥ बलिंहरंत्यृषयोयेचदेवाःस्वयंसर्वेनभविष्यंत्यमूलाः ॥ ५ ॥ सतुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगांगा
मुपलक्ष्यभीतां ॥ तोदंमृषन्निरगादंबुमध्याद्ग्राहाहतःसकरेणुर्यथेभः ॥ ६ ॥

मूढान्प्रातिआप्याययतीतितथा प्रापूर्त्तावितिधातुः सुहृदांशुचःसंसारदुःखानिमृजेनाशयामि यतस्त्वंस्मत्तुर्बांधवानपिमोचयसीतिभावः
॥४॥ अस्मद्भुजच्युतयापिगदयाअशीर्णशीर्षयस्यतथाभूतेत्वयिसुखंस्थितेसतियेतुभ्यमधुनाबलिंहरंति नवीनाभक्तायेचपूर्वभक्ताऋषयोदेवा
श्चतेसर्वेस्वयमेवउद्यमंविनैवअमूलानभविष्यंति किंतुदृढमूलाश्चभविष्यंतीत्यर्थः ॥५॥ सहरिःअरेर्दुरुक्तान्येवतोमराःशस्त्रविशेषाःतैस्तुद्यमा
नोव्यथ्यमानःदंष्ट्राग्रगतांपृथ्वींभीतामालक्ष्य तोदंदुरुक्तव्यथांमृषन्सहमानएवनिर्गतः करेणुर्हस्तिनी वस्तुतस्तुअरिदुरुक्तःअमरैर्निमित्त
भूतैःतुद्यमानः यथाश्रुतार्थग्राहिणांब्रह्मादीनांव्यथांदृष्ट्वाअनुकंपयापीड्यमानइत्यर्थः तोदंमृषन्इत्यस्याप्ययमेवार्थः ॥ ६ ॥

॥ ४६ ॥

सलिलान्निर्गच्छंतमनुगतः सन् हिरण्यवत्कपिशाः केशाः यस्य दैत्यस्य झषो मकरः करालादंष्ट्रा यस्य अशनिवन्निःस्वनो यस्य निर्लज्जाना मसतां किं विगर्हितमास्ति निंदाभयाभावात् पलायनं नायुक्तमित्यर्थः वस्तुतस्तु गता न्हियः प्राप्ता न्हियः नसंतो येभ्यः तेषां कृपालूनां किं विगर्हितं नकिंचित् अतः कृपालुत्वाद्दंष्ट्राश्रितभूरक्षणार्थं किंचित्पलायनमपि न निंदितमित्यर्थः यद्वा लोकोपकाराय भुवमुद्धरतो ऽनुद्रवणमनुचितंमन्वानो दैत्य आत्मानमेवाधिक्षिपाति गतन्हियां स्वार्थैकपराणामसतामस्माकं किं विगर्हितगणनास्ति अपितु नास्त्येव धिगस्मानित्यब्रवीदित्यर्थः ॥ ७ ॥ सभगवान् विश्वसृजाभिष्टुतो विबुधैश्च प्रसूनैरापूर्यमाणः पाठांतरे विश्वसृजां प्रसूनैर्विबुधैरभिष्टुत इति सलिलस्योदस्ता

**तंनिःसरंतंसलिलादनुद्रुतोहिरण्यकेशोद्विरदंयथाझषः ॥ करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्गतान्हियांकिंत्वसतांविगर्हितं ॥ ७ ॥ सगामुदस्तात्सलिलस्यगोचरेविन्यस्यतस्यामदधात्स्वसत्वं ॥ अभिष्टुतोविश्वसृजाप्रसूनैरापूर्यमाणोविबुधैःपश्यतोरेः ॥ ८ ॥ परानुषक्तंतपनीयोपकल्पंमहागदंकांचनचित्रदंशं ॥ मर्माण्यभीक्ष्णंप्रतुदंतंदुरुक्तैःप्रचंडमन्युःप्रहसंस्तंबभाषे ॥ ९ ॥ श्रीभगवानुवाच सत्यंवयंभोवनगोचरामृगायुष्मद्विधान्मृगयेग्रामसिंहान् ॥ नमृत्युपाशैःप्रतिमुक्तस्यवीराविकत्थनंतवगृण्हंत्यभद्र ॥ १० ॥ एतेवयंन्यासहरारसौकसांगतन्हियोगदयाद्राविताास्ते ॥ तिष्ठामहेऽथापिकथंचिदाजौस्थेयंक्वयामोबलिनोत्पाद्यवैरम् ॥ ११ ॥ त्वंपद्रथानांकिलयूथपाधिपोघटस्वनोऽस्वस्तयआश्वनूहः ॥ संस्थाप्यचास्मान्प्रमृजाश्रुस्वकानांयःस्वांप्रतिज्ञांनातिपिपर्त्यसभ्यः ॥ १२ ॥ ॥ ॥ ॥ ॥**

त् उपरि व्यवहारगोचरे देशे गां विन्यस्य स्वसत्वमाधारशक्तिं निहितवान् अरेस्तस्य पश्यत एव ॥ ८ ॥ पराक् पृष्ठतोऽनुषक्तं लग्नं तपनीयोपकल्पं सुवर्णाभरणम् कांचनमयं चित्रं दंशः कवचं यस्य तं दैत्यं प्रचंडमन्युत्वम् अधिक्षेपादिकं चानुकरणमात्रं दैत्यस्य वाक्यभीतानां देवानां भयनिवृत्तये वस्तुतस्तेन तथाऽनुक्तत्वेन कोपादिहेत्वभावात् ॥ ९ ॥ ग्रामसिंहान् शुनः प्रतिमुक्तस्य बद्धस्य विकत्थनं श्लाघाम् ॥ १० ॥ न्यासहराः निक्षेपहराः द्राविताः पलायनं कारिताः अथापि असमर्था अपि तिष्ठामः तर्हि किं यतः स्थेयं स्थातव्यमेवास्माभिः तत्किमित्याह क्व यामः गंतव्यदेशाभावात् ॥ ११ ॥ पद्रथानां पदातीनां ये यूथपास्तेषामधिपः मुख्य इत्यर्थः अस्वस्तये पराभवार्थम् आशु घटस्व यतस्व अनूहो निर्वितर्कः यो नातिपिपर्ति न पूरयति पालयति वा असावसभ्यः सभायामनर्हः ॥ १२ ॥ ॥

सोऽधिक्षिप्तः सत्यंत्वयमितिश्लोकेन रुषाप्रलब्धः उपहासितश्च एतेवयमितिद्वाभ्यां क्रीडांकार्यमाणोऽहिराट्महासर्पइव ॥ १३ ॥ मन्युनाप्रचलितानिक्षुभितानींद्रियाणियस्य ॥१४॥ अंतकंमृत्युम् ॥१५॥ १६ ॥ सौम्यविदुर तांगदामप्राप्तामेवाहनत् ॥ १७॥ हर्यक्षोहिरण्याक्षः ॥ १८ ॥ स्पृधोःस्पर्धमानयोः तिग्माभ्यांगदाभ्यामाहतान्यंगानियेयोः क्षतादास्रवतीतिक्षतास्रवंरुधिरं तस्यघ्राणमवघ्राणंतेनविवृद्धोमन्युर्ययोः विचित्रान्मार्गान्गदायुद्धभ्रमणभेदान् इलागौः तस्यांनिमित्तभूतायांशुष्मिणोर्मत्तयोर्वृषभयोःप्रस्तुतेऽपिइलापृथ्वीतदर्थंवृषभौहिस्व

मैत्रेयउवाच सोऽधिक्षिप्तोभगवताप्रलब्धश्चरुषाभृशं ॥ आजहारोल्बणंक्रोधंक्रीड्यमानोऽहिराडिव ॥ १३ ॥ सृजन्नमर्षितःश्वासान्मन्युप्रचलितेंद्रियः ॥ आसाद्यतरसादैत्योगदयाऽभ्यहनद्धरिम् ॥ १४॥ भगवांस्तुगदावेगंविसृष्टंरिपुणोरसि ॥ अवंचयत्तिरश्चीनोयोगारूढइवांतकं ॥ १५ ॥ पुनर्गदांस्वामादायभ्रामयंतमभीक्ष्णशः ॥ अभ्यधावद्धरिःक्रुद्धःसंरंभाद्दष्टदच्छदं ॥ १६ ॥ ततश्चगदयारातिंदक्षिणस्यांभ्रुविप्रभुः ॥ आजघ्नेसतुतांसौम्यगदयाकोविदोऽहनत् ॥ १७ ॥ एवंगदाभ्यांगुर्वीभ्यांहर्यक्षोहरिरेवच ॥ जिगीषयासुसंरब्धावन्योऽन्यमभिजघ्नतुः ॥ १८॥ तयोःस्पृधोस्तिग्मगदाहतांगयोःक्षतास्रवघ्राणविवृद्धमन्य्वोः ॥ विचित्रमार्गांश्चरतोर्जिगीषयाव्यभादिलायामिवशुष्मिणोर्मृधः ॥ १९॥ दैत्यस्ययज्ञावयवस्यमायागृहीतवाराहतनोर्महात्मनः ॥ कौरव्यमह्यांद्विषतोर्विमर्दनंदिदृक्षुरागादृषिभिर्वृतःस्वराट् ॥ २० ॥ आसन्नशौंडीरमपेतसाध्वसंकृतप्रतीकारमहार्यविक्रमं ॥ विलक्ष्यदैत्यंभगवान्सहस्रणीर्जगादनारायणमादिसूकरं ॥ ॥ २१ ॥ ब्रह्मोवाच एषतेदेवदेवानामंघ्रिमूलमुपेयुषां ॥ विप्राणांसौरभेयीणांभूतानामप्यनागसां ॥ २२ ॥

लुबहूनिदिनानिसंग्राथितोत्तुंगशृंगसंघर्षविदीर्णांगगलद्रुधिरौपरस्परोपमर्दव्यग्रोग्रसंरंभौचमत्कारितगजयूथपायुध्यमानौतिष्ठतइतिप्रासिद्धम् ॥ १९ ॥ यज्ञएवावयवायस्यतस्यच महीनिमित्तंद्विषतोः एवंविधंविमर्दनंयुद्धंदिदृक्षुः स्वराट्ब्रह्मातत्रागात् ॥ २० ॥ आगत्यचनारायणमाह किंकृत्वादैत्यंविलक्ष्य कथंभूतम् आसन्नंप्राप्तंशौंडीरंशौर्यमदोवायेन अपेतंसाध्वसंयस्मात्कृतःप्रतीकारोयेन अहार्यःअप्रतिकार्योविक्रमोयस्य सहस्रणीःसहस्राणामृषिसहस्राणांनेता ॥ २१ ॥ हेदेव तेंऽघ्रिमूलंप्राप्तानांदेवादीनामेषोऽसुरः ॥ २२ ॥

आगस्कृत्वृथैवापराधारोपकःतत्परिहारायप्रवृत्तौभयकृत् भीतंज्ञात्वादुष्कृत्अर्थप्राणादिहर्ता अस्मत्तोराद्धोलब्धोवरोयेनअन्वेषन्प्रतिरथम
वलोकयन् अप्रतिरथःप्रतिपक्षशून्यः ॥ २३ ॥ यद्यस्मात् एवंभूतोयंतस्मादेनंमाक्रीडिमाक्रीडय हेदेवयथाउत्थितंक्षुभितंआशीविषंसर्प
बालःपुच्छाकर्षणादिनाक्रीडयतितद्वत् ॥ २४ ॥ स्वामासुरीं हेदेवस्वांमायाम् ॥ २५ ॥ वेलामेवाह एषेति लोकानांछंबट्करीविना
शकरी छंबडित्यव्ययंविनाशेवर्तते ॥ २६ ॥ अभिजित्मध्याह्नःसएवमौहूर्तिकोयोगःसन्मुहूर्तःशुभदःकालः अगात्गतप्रायः अतोया
वन्मुहूर्त्तशेषोऽस्तितावदेवसुदुस्तरमेनंनिस्तरजहि ॥ २७ ॥ त्वांमृत्युंत्वयैवशापानुग्रहकालेविहितंनिर्मितं आसादितःप्राप्तः शर्मणिसु

आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः ॥ अन्वेषन्नप्रतिरथोलोकानटतिकंटकः ॥ २३ ॥ मैनंमायाविनंदृ
प्तंनिरंकुशमसत्तमम् ॥ आक्रीडबालवद्देवयथाशीविषमुत्थितं ॥ २४ ॥ नयावदेषवर्धेतस्वांवेलांप्राप्यदारु
णः ॥ स्वांदेवमायामास्थायतावज्जह्यघमच्युत ॥ २५ ॥ एषाघोरतमासंध्यालोकच्छंबट्करीप्रभो ॥ उपसर्प
तिसर्वात्मन्सुराणांजयमावह ॥ २६ ॥ अधुनैषोऽभिजिन्नामयोगोमौहूर्तिकोह्यगात् ॥ शिवायनस्त्वंसुहृदा
माशुनिस्तरदुस्तरम् ॥ २७ ॥ दिष्ट्यात्वांविहितंमृत्युमयमासादितःस्वयम् ॥ विक्रम्यैनंमृधेहत्वालोकानाधे
हिशर्मणि ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेहिरण्याक्षवधेअष्टादशोऽध्यायः ॥ १८ ॥
मैत्रेयउवाच अवधार्यविरिंचस्यनिर्व्यलीकामृतंवचः ॥ प्रहस्यप्रेमगर्भेणतदपांगेनसोग्रहीत् ॥ १ ॥
ततःसपत्नंमुखतश्चरंतमकुतोभयम् ॥ जघानोत्पत्यगदयाहनावसुरमक्षजः ॥ २ ॥ साहतातेनगदया
विहताभगवत्करात् ॥ विघूर्णिताऽपतद्रेजेतदद्भुतमिवाभवत् ॥ ३ ॥ ॥

खेआधेहिस्थापय ॥ २८ ॥ इतितृतीयेटीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ऊनविंशेत्रिरिंच्यादिप्रार्थितेनमहामृधे ॥ वरा
हेणहिरण्याक्षवधःश्लाघ्योऽनुवर्ण्यते ॥ १ ॥ निर्व्यलीकंचतदमृतंच पाठांतरेनिष्कपटाभिप्रायंचतत्ऋतंच कालात्मनोऽपिममुहूर्तब
लमुपदिशतीतिप्रहस्य अपांगालोकनेनस्वीकृतवान् ॥ १ ॥ मुखतःअभिमुखे हनौकपोलस्याधोभागे अक्षजःब्रह्मणोघ्राणेंद्रियादावि
र्भूतः ॥ २ ॥ सास्वगदयातेनहता ततोविहताविच्युतासतीविघूर्णिताभूत्वाऽपतत्रेजेच तत्भगवत्करात्पतनम् यद्वा तत्पदस्यावृत्त्या
रेजइत्यनेनापिसंबंधः तत्दैत्यपौरुषंरेजइति ॥ ३ ॥ ॥ ॥ ॥ ॥

लब्धतीर्थोलब्धावसरः सचनबबाधेनप्राहरत् समानयन्बभूवेतिवाक्यभेदात्सइत्यस्यापौनरुक्त्यं ॥ ४ ॥ ५ ॥ व्यग्रंससंभ्रमंचक्रंयस्य विषज्जमानंविशेषेणसंगंप्राप्नुवंतंप्रति अतद्विदांतत्प्रभावमजानतामासमंतादासन्स्म ॥ ६ ॥ सदैत्यः तमात्तचक्रंनिशाम्यदृष्ट्वा अग्रतोऽव्यवस्थितंचविलोक्यअमर्षेणक्रोधेनपरिप्लुतानिक्षुभितानींद्रियाणियस्यसः आदशत् दष्टवान् ॥ ७ ॥ चक्षुर्भ्यांदहन्निवसंचक्षाणःपश्यन्निवेति वस्तुतः क्रोधाभावमाह हतोऽसिज्ञातोऽसीतिवास्तवोऽर्थः ॥ ८ ॥ वातरंहसंवायुवेगां ॥ ९ ॥ घटस्वउद्यमंकुरु यतस्त्वंजेतुमिच्छासि ॥ १० ॥ ११ ॥

सतदालब्धतीर्थोपिनबबाधेनिरायुधम् ॥ मानयन्सम्मृधेधर्मंविष्वक्सेनंप्रकोपयन् ॥ ४ ॥ गदायामपविद्धायांहाहाकारेविनिर्गते ॥ मानयामासतद्धर्मंसुनाभंचास्मरद्विभुः ॥ ५ ॥ तंव्यग्रचक्रंदितिपुत्राधमेनस्वपार्षदमुख्येनविषज्जमानम् ॥ चित्रावाचोऽतद्विदांखेचराणांतत्रास्मासन्स्वस्तितेमुंजहीति ॥ ६ ॥ सतंनिशाम्यात्तरथांगमग्रतोऽव्यवस्थितंपद्मपलाशलोचनम् ॥ विलोक्यचामर्षपरिप्लुतेंद्रियोरुषास्वदंतच्छदमादशच्छ्वसन् ॥ ७ ॥ करालदंष्ट्रंचक्षुर्भ्यांसंचक्षाणोदहन्निव ॥ अभिप्लुत्यस्वगदयाहतोऽसीत्याहनद्धरिम् ॥ ॥ ८ ॥ पदासव्येनतांसाधोभगवान्यज्ञसूकरः ॥ लीलयामिषतःशत्रोःप्राहरद्वातरंहसं ॥ ९ ॥ आहचायुधमादत्स्वघटस्वत्वंजिगीषसि ॥ इत्युक्तःसतदाभूयस्ताडयन्व्यनदद्भृशं ॥ १० ॥ तांसआपततींवीक्ष्य भगवान्समवस्थितः ॥ जग्राहलीलयाप्राप्तांगरुत्मानिवपन्नगीं ॥ ११ ॥ स्वपौरुषेप्रतिहतेहतमानोमहासुरः ॥ नैच्छद्गदांदीयमानांहरिणाविगतप्रभः ॥ १२ ॥ जग्राहत्रिशिखंशूलंज्वलज्ज्वलनलोलुपं ॥ यज्ञायधृतरूपायविप्रायाभिचरन्यथा ॥ १३ ॥ तदोजसादैत्यमहाभटार्पितंचकासदंतःखउदीर्णदीधिति ॥ चक्रेणचिच्छेदनिशातनेमिनाहरिर्यथाताक्ष्र्यपतत्रमुज्झितं ॥ १४ ॥ ॥ ॥

हतोमानोगर्वोयस्य ॥ १२ ॥ ज्वलन्योज्वलनस्तद्वल्लोलुपंग्रसनव्यग्रं यज्ञायविष्णुमालक्ष्यअकार्यकरत्वदृष्टांतः विप्रमुद्दिश्याभिचारंकुर्वन्यथा ॥ १३ ॥ अंतःखे अकाशमध्ये चकासत्प्रकाशमानं उदीर्णाउत्कटादीधितिर्दीप्तिर्यस्य निशातनेमिनाशितधारेण हरिरिंद्रोयथाताक्ष्र्यस्यपतत्रमुज्झितंचिच्छेद देवान्विनिर्जित्यामृतकलशंनयतागरुडेनेंद्रप्रयुक्तवज्रस्यामोघस्यमानंदातुंपिच्छमेकंत्यक्तंतद्यथा इंद्रश्चिच्छेद छिन्नंचतद्यथाखेप्रकाशत्तद्वत्प्रकाशमानमित्यभिसंधिः ॥ १४ ॥ ॥ ॥ ॥

अराःसंत्यस्येति अरिचक्रम् तेनबहुधावृक्णेछिन्नेसति प्रत्येत्यअभिमुखमागत्य हरेरुरःवक्षःप्रहृत्य ॥ १५ ॥ मनाक्ईषदपिक्वाप्यंशे ॥
॥ १६ ॥ अस्यजगतःउपसंयमंप्रलयम् ॥ १७ ॥ पांसुकृतंतमश्चप्रेरितवंतः क्षेपणैःयंत्रैः ॥ १८ ॥ नष्टोभगणोनक्षत्रसमूहोयस्याम् अने
नदैत्यबलातिरेकात्ब्रह्मदत्तमुहूर्त्तातिक्रमोगम्यते आह्निनक्षत्राणामसंभवात् ॥ १९ ॥ नानायुधानिमुंचंतीतितथायातुधान्यःप्रत्यदृश्यंत ॥
॥ २० ॥ हिंस्राःछिंधिभिंधीत्येवंभूताःअतिवैशसाअत्युग्रावाचउत्सृष्टाइत्यत्रैवंवाक्यसमाप्तिः ॥ २१ ॥ प्रादुष्कृतानामिति प्रकटिताःमायाः

वृक्णेस्वशूलेबहुधारिणाहरेःप्रत्येत्यविस्तीर्णमुरोविभूतिमत्॥प्रवृद्धरोषःसकठोरमुष्टिनानदन्प्रहृत्यांतर
धीयतासुरः॥१५॥तेनेत्थमाहतःक्षत्तर्भगवानादिसूकरः॥नाकंपतमनाक्क्वापिस्रजाहतइवद्विपः ॥१६॥ अ
थोरुधाऽसृजन्मायांयोगमायेश्वरेहरौ॥यांविलोक्यप्रजास्त्रस्तामेनिरेऽस्योपसंयमम् ॥ १७ ॥ प्रववुर्वायव
श्चंडास्तमःपांसवमैरयन्॥दिग्भ्योनिपेतुर्ग्रावाणःक्षेपणैःप्रहिताइव॥१८॥ द्यौर्नष्टभगणाभ्रौघैःसविद्युत्स्त
नयित्नुभिः॥ वर्षद्भिःपूयकेशासृग्विण्मूत्रास्थीनिचासकृत् ॥ १९॥गिरयःप्रत्यदृश्यंतनानायुधमुचोऽनघ ॥
दिग्वाससोयातुधान्यःशूलिन्योमुक्तमूर्धजाः ॥ २०॥ बहुभिर्यक्षरक्षोभिःपत्त्यश्वरथकुंजरैः ॥ आततायिभि
रुत्सृष्टाहिंस्रावाचोतिवैशसाः ॥ २१ ॥प्रादुष्कृतानांमायानामासुरीणांविनाशयत् ॥ सुदर्शनास्त्रंभगवान्
प्रायुंक्तदयितंत्रिपात् ॥२२॥तदादितेःसमभवत्सहसाहृदिवेपथुः॥स्मरंत्याभर्तुरादेशंस्तनाच्चासृक्प्रसुस्रुवे
॥ २३ ॥ विनष्टासुस्वमायासुभूयश्चाव्रज्यकेशवं ॥ रुषोपगूहमानोमुंददृशेवस्थितंबहिः ॥२४॥ तंमुष्टिभि
र्विनिघ्नंतंवज्रसारैरधोक्षजः ॥ करेणकर्णमूलेऽहन्यथात्वाष्ट्रंमरुत्पतिः ॥ २५ ॥ सआहतोविश्वजिताह्यवज्ञ
यापरिभ्रमद्गात्रउदस्तलोचनः ॥ विशीर्णबाह्वंघ्रिशिरोरुहोऽपतद्यथानगेंद्रोलुलितोनभस्वता ॥ २६ ॥

त्रिनाशयत् विनाशनमितिपाठेयथाश्रुतैवषष्ठी त्रीणिसवनानिपादायस्य यज्ञमूर्तिरित्यर्थः त्रयोऽस्यपादाइतिश्रुतेः ॥ २२ ॥ भर्तुरादेशंत्वत्पु
त्रौभगवान्हनिष्यतीत्येवंभूतम् ॥ २३ ॥ उपगूहमानःबाह्वोरंतर्निधाय्यसंघट्टयन् ॥ २४ ॥ अहन्जघान त्वाष्ट्रंवृत्रंमरुत्पतिरिंद्रः ॥२५॥ परितो
भ्रमत्गात्रंशरीरंयस्य उदस्तेबहिर्निर्गतेलोचनेयस्य विशीर्णाबाह्वादयोयस्य नगेंद्रोमहाद्रुमःलुलितःउन्मूलितःनभस्वतावायुना ॥ २६ ॥

संस्थितिंमृत्युं ॥ २७ ॥ असतआरोपिताल्लिंगशरीरात् मोक्तुमिच्छयावराहस्यपूर्वपादयोरेवकरत्वात् करेणाहन्निति पदाहतइतिचाविरुद्धम् ॥ २८ ॥ २९ ॥ अखिलयज्ञानांतंतवेविस्तारायकारणायेतिवा अरुंतुदःमर्मभेत्ता ॥ ३० ॥ सादयित्वाहत्वेत्यर्थः पुष्करविष्टरादिभिः ब्रह्मादिभिः संस्तुतः ॥ ३१ ॥ यथाऽनूक्तंगुरूक्तिमनतिक्रम्यमयाऽवादितवकथितं हेसुमित्रयथायेनप्रकारेण ॥ ३२ ॥ हेद्विजशौनक ॥ ३३ ॥



क्षितौशयानंतमकुंठवर्चसंकरालदंष्ट्रंपरिदष्टदच्छदं॥अजादयोवीक्ष्यशशंसुरागताअहोइमांकोऽनुलभेतसंस्थितिं ॥२७॥ यंयोगिनोयोगसमाधिनारहोध्यायंतिलिंगादसतोमुमुक्षया ॥ तस्यैषदैत्यापसदःपदाहतोमुखंप्रपश्यंस्तनुमुत्ससर्जह ॥ २८॥ एतौतौपार्षदावस्यशापाद्यातावसद्गतिं ॥ पुनःकतिपयैःस्थानंप्रपत्स्येतेहजन्मभिः ॥२९॥ देवाऊचुः नमोनमस्तेऽखिलयज्ञतंतवेस्थितौगृहीतामलसत्वमूर्तये ॥ दिष्ट्याहतोऽयंजगतामरुंतुदस्त्वत्पादभक्त्यावयमीशनिर्वृताः ॥३०॥ मैत्रेयउवाच एवंहिरण्याक्षमसह्यविक्रमंससादयित्वाहरिरादिसूकरः ॥ जगामलोकंस्वमखंडितोत्सवंसमीडितःपुष्करविष्टरादिभिः ॥ ३१ ॥ मयायथानूऽक्तमवादितेहरेःकृतावतारस्यसुमित्रचेष्टितं॥यथाहिरण्याक्षउदारविक्रमोमहामृधेक्रीडनवन्निराकृतः ॥ ३२ ॥ सूतउवाच इतिकौषारवाख्यातामाश्रुत्यभगवत्कथां ॥ क्षत्तानंदंपरंलेभेमहाभागवतोद्विज ॥ ३३ ॥ अन्येषांपुण्यश्लोकानामुद्दामयशसांसतां ॥ उपश्रुत्यभवेन्मोदःश्रीवत्सांकस्यकिंपुनः ॥ ॥३४॥ योगजेंद्रंझषग्रस्तंध्यायंतंचरणांबुजं ॥ क्रोशंतीनांकरेणूनांकृच्छ्रतोमोचयद्द्रुतं ॥३५॥ तंसुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ॥ कृतज्ञःकोनसेवेतदुराराध्यमसाधुभिः ॥ ३६ ॥ योवैहिरण्याक्षवधंमहाद्भुतंविक्रीडितंकारणसूकरात्मनः ॥ शृणोतिगायत्यनुमोदतेऽजसाविमुच्यतेब्रह्मवधादपिद्विजाः ॥ ३७ ॥



कथामुपश्रुत्य ॥ ३४ ॥ भक्तिमात्रेणपशूनामपिसुलभः अन्यथादेवानामपिदुर्लभइतितत्कथाश्रवणेकस्यानंदोनस्यादित्याह यइतिद्वाभ्यां ॥ झषोग्राहः क्रोशंतीनांसतीनामितिकृपालुत्वमुक्तं संकटादमोचयत् ॥ ३५ ॥ ३६ ॥ कारणेनपृथिव्युद्धरणादिनासूकररूपस्य ॥ ३७ ॥

एतद्धरेर्विक्रीडितंशृण्वतामंतेश्रीनारायणोगतिर्भवति महापुण्यंस्वर्गादिप्रदम् अलंपवित्रमतिशयेनशोधकं धन्यंधनावहम् यशस्यंकीर्ति करम् आयुषश्चाशिषांपदंस्थानंपरित्राणंवा प्राणानामिंद्रियाणांचपदम् अंगहेविदुर ॥ ३८ ॥ इतितृतीयेटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ त्रिंशेवराहजन्मादिव्यवधानादथादितः ॥ सर्गोऽनुस्मार्यतेवक्तुमन्वयंप्रस्तुतंमनोः ॥ १ ॥ प्रतिष्ठांस्थानम् अध्यस्यप्राप्यसौते सूतस्यरोमहर्षणस्यपुत्र अत्ररमर्वाचीनंजन्मयेषांतेषामीश्वरेलीनानांमार्गायनिर्गमाय कानिद्वाराणिकृतवान् अर्वाचीनान्प्राणिनःकैरुपायैः

एतन्महापुण्यमलंपवित्रंधन्यंयशस्यंपदमायुराशिषां ॥ प्राणेंद्रियाणांयुधिशौर्यवर्धनंनारायणोऽतेगतिरंग शृण्वतां ॥ ३८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ शौनकउवाच महींप्रतिष्ठामध्यस्यसौतेस्वायंभुवोमनुः ॥ कान्यन्वतिष्ठत्द्वाराणिमार्गायावरजन्मनां ॥ ॥ १ ॥ क्षत्तामहाभागवतःकृष्णस्यैकांतिकःसुहृत् ॥ यस्तत्याजाग्रजंकृष्णेसापत्यमघवानिति ॥ २ ॥ द्वैपायनादनवरोमहित्वेतस्यदेहजः ॥ सर्वात्मानाश्रितःकृष्णंतत्परांश्चाप्यनुव्रतः ॥ ३ ॥ किमन्वपृच्छन्मैत्रेयंविरजास्तीर्थसेवया ॥ उपगम्यकुशावर्त्तआसीनंतत्त्ववित्तमं ॥ ४ ॥ तयोःसंवदतोःसूतप्रवृत्ताह्यमलाःकथाः ॥ आपोगांगाइवाघघ्नीर्हरेःपादांबुजाश्रयाः ॥ ५॥ तानःकीर्तयभद्रंतेकीर्तन्योदारकर्मणः ॥ रसज्ञःकोऽनुतृप्येतहरिलीलाऽमृतंपिबन् ॥ ६ ॥ एवमुग्रश्रवाःपृष्टऋषिभिर्नैमिषायनैः ॥ भगवत्यर्पिताध्यात्मस्तानाहश्रूयतामिति ॥ ७ ॥ सूतउवाच हरेर्धृतक्रोडतनोःस्वमाययानिशम्यगोरुद्धरणं रसातलात् ॥ लीलांहिरण्याक्षमवज्ञयाहतंसंजातहर्षोमुनिमाहभारतः ॥ ८ ॥ ॥ ॥

सृष्टवानित्यर्थः ॥ १ ॥ विदुरमैत्रेयसंवादेनैवैतज्ज्ञास्यतइतितमेवसंवादंप्रष्टुमाह क्षत्तेतिपंचभिः श्रीकृष्णसुहृत्त्वेहेतुः यइतिदुर्योधनादिभिरपत्यैःसहितमग्रजंधृतराष्ट्रम् अघवान्कृतापराधइतिहेतोः श्रीकृष्णोक्तमंत्रानादरान्यस्तत्याज ॥ २ ॥ अनवरःअन्यूनःमहित्वेमहिम्नि ॥ ३ ॥ कुशावर्त्तेगंगाद्वारे ॥ ४ ॥ यत्किमपिपृच्छतुर्किंतवेतिचेत्तत्राह तयोरिति अघघ्नीःअघघ्न्यःनूनंकथाःप्रवृत्ताः ॥ ५ ॥ कीर्तन्यानिकीर्तनार्हाणिउदाराणिकर्माणियस्यहरेः ॥ ६ ॥ एवमितिव्यासवाक्यं उग्रश्रवाःरोमहर्षणपुत्रः नैमिषमयनमाश्रयोयेषाम् अर्पितमध्यात्मंमनोयेन ॥ ७ ॥ गोःउद्धरणंलीलांहिरण्याक्षंचावज्ञयाहतंनिशम्य भारतोविदुरः ॥ ८ ॥

यस्मात्त्वमव्यक्तमार्गवित् ब्रह्मणोवाविशेषणं ॥ ९ ॥ एतत् जगत् अभावयन् उत्पादयामासुः ॥ १० ॥ सद्वितीयाःसभार्याः स्वतंत्रा भार्यानपेक्षाः कर्मसुप्रजासर्गादिषु संहताःपरस्परापेक्षाः इदंजगत् ॥ ११ ॥ ब्रह्माकिमारभतेतिप्रश्नस्ययक्षादीन्सृष्ट्वानित्युत्तरंवक्तुंपूर्वोक्तांसृष्टिमनुस्मारयति दैवेनेतिसप्तभिः मन्वादिप्रश्नानांतूत्तराध्यायमारभ्योत्तरंभविष्यति दुर्वितर्क्येणदैवेनजीवादृष्टेनपरेणप्रकृत्यधिष्ठात्रा महापुरुषेण अनिमिषेणकालेनचहेतुनाभगवतोनिर्विकारात् जातक्षोभंयद्गुणत्रयंप्रधानंतस्मात् महानासीत् तदुक्तंतंत्रे विष्णोस्तुत्रीणिरूपाणिपुरुषाख्यान्यथोविदुः ॥ प्रथमंमहतःस्रष्टृद्वितीयंत्वंडसंस्थितं ॥ तृतीयंसर्वभूतस्थंतानिज्ञात्वाविमुच्यतइति ॥ १२ ॥ महतोजातोभू

विदुरउवाच प्रजापतिपतिःसृष्ट्वाप्रजासर्गेप्रजापतीन् ॥ किमारभतमेब्रह्मन्प्रब्रूह्यव्यक्तमार्गवित् ॥९॥ येमरीच्यादयोविप्रायस्तुस्वायंभुवोमनुः ॥ तेवैब्रह्मणआदेशात्कथमेतदभावयन् ॥१०॥ सद्वितीयाःकिमसृजन्स्वतंत्राउतकर्मसु ॥ आहोस्वित्संहताःसर्वइदंस्मसमकल्पयन् ॥ ११॥ मैत्रेयउवाच दैवेनदुर्वितर्क्येणपरेणानिमिषेणच ॥ जातक्षोभाद्भगवतोमहानासीद्गुणत्रयात् ॥१२॥ रजःप्रधानान्महतस्त्रिलिंगोदैवचोदितात् ॥ जातःससर्जभूतादिर्वियदादीनिपंचशः ॥ १३ ॥ तानिचैकैकशःस्रष्टुमसमर्थानिभौतिकं ॥ संहत्यदैवयोगेनहैममंडमवासृजन् ॥१४॥ सोशयिष्टाब्धिसलिलेआंडकोशोनिरात्मकः ॥साग्रंवैवर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥ तस्यनाभेरभूत्पद्मंसहस्रार्कोरुदीधिति॥ सर्वजीवनिकायौकोयत्रस्वयमभूत्स्वराट् ॥१६॥ सोऽनुविष्टोभगवतायःशेतेसलिलाशये ॥ लोकसंस्थांयथापूर्वंनिर्ममेसंस्थयास्वया ॥ १७ ॥

तादिरहंकारस्त्रिलिंगस्त्रिगुणः रजःप्रधानादिति स्वतःसत्त्वप्रधानस्यापिमहतोहंकारोत्पत्तिकालेकार्यानुरूपंरजःप्रधानत्वंभवतीतिभावः पंचशःतन्मात्राणिमहाभूतानिज्ञानेंद्रियाणिकर्मेंद्रियाणितत्तद्देवताश्चेतिपंचपंचससर्जेत्यर्थः ॥ १३ ॥ भौतिकंहैममंडमेकैकशःप्रत्येकंस्रष्टुमसमर्थानिसंति संहत्यससृजुः ॥ १४ ॥ अन्ववात्सीत् अधिष्ठितवान् ॥ १५ ॥ सहस्रार्काणामिवोरुर्दीधितिर्यस्यतत् सर्वजीवनिकायानामोकःस्थानंपद्मं स्वराड्ब्रह्मा ॥ १६ ॥ यःसलिलाशयेगर्भोदकस्यांतःशेते तेनभगवताऽनुविष्टोऽधिष्ठितःसन् सःस्वराट् स्वयासंस्थयानामरूपादिक्रमेण ॥ १७ ॥ ॥ ॥ ॥

छायाप्रभाप्रतियोगिनी तया अबुध्येत्यर्थः यस्त्वबुद्धिकृतःप्रभोरित्युक्तत्वात् महातमइतिमहामोहः स्वरूपानिर्देशमात्रविवक्षयामोहइति प्रथमाप्रयोगः ॥ १८ ॥ तदेवंप्रथमोक्तांसाधारणांसृष्टिमनूद्यकेनचिद्विशेषेणासाधारणांसृष्टिमाहविससर्जेत्यादिनायावत्समाप्ति तद्विसृष्टं कायंरात्रिरूपंततएवजातानियक्षरक्षांसिजगृहुः क्षुत्तृषोःसमुद्भवोयस्यांताम् अत्रचयाऽस्यसातनूरासीत् तामपाहतसातामिस्राऽभवदित्या दिश्रुतिरनुसंधेया ॥ १९ ॥ उपसृष्टाअभिभूताः जग्धुमत्तुंभक्षयितुम् यतोत्रयंक्षुत्तृड्भ्यामार्दिताः अतएनंपितेतिरूपयामारक्षतेत्येके अन्ये तुजक्षध्वंभक्षयतेतिब्रुवंतः जक्षभक्षहसनयोरितिधातुः ॥ २० ॥ देवोब्रह्मा संविग्नोभीतःसन् मांमाजक्षतमाभक्षयत किंतुरक्षतअहोहे

ससर्जच्छाययाविद्यांपंचपर्वाणमग्रतः ॥ तामिस्रमंधतामिस्रंतमोमोहोमहातमः ॥ १८ ॥ विससर्जात्मनः कायंनाभिनंदंस्तमोमयम् ॥ जगृहुर्यक्षरक्षांसिरात्रिंक्षुत्तृट्समुद्भवाम् ॥ १९ ॥ क्षुत्तृड्भ्यामुपसृष्टास्तेतंजग्धु मभिदुद्रुवुः ॥ मारक्षतैनंजक्षध्वमित्यूचुःक्षुत्तृडर्दिताः ॥ २० ॥ देवस्तानाहसंविग्नोमामांजक्षतरक्षत ॥ अहो मेयक्षरक्षांसिप्रजायूयंबभूविथ॥२१॥ देवताःप्रभयायायादीव्यन्प्रमुखतोऽसृजत् ॥ तेअहार्षुर्देवयंतोविसृ ष्टांतांप्रभामहः ॥ २२ ॥ देवोऽदेवान्जघनतःसृजतिस्मातिलोलुपान् ॥ तएनंलोलुपतयामैथुनायाभिपेदिरे ॥ २३ ॥ ततोहसन्सभगवानसुरैर्निरपत्रपैः ॥ अन्वीयमानस्तरसाक्रुद्धोभीतःपराऽपतत् ॥ २४ ॥ सउप व्रज्यवरदंप्रपन्नार्तिहरंहरिम् ॥ अनुग्रहायभक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥ ॥ ॥

यक्षरक्षांसि यूयंमेप्रजाःसुताबभूविथजातास्थ एवमुग्रस्वभावायक्षराक्षसाजाताइत्यर्थः तत्रयेयक्षध्वमित्यूचुस्तेयक्षाः येतुमारक्षतेतितेराक्षसा इतिज्ञेयम् एतच्चतिर्यगादितामससर्गस्याप्युपलक्षणं ॥२१॥ प्रभयादीव्यन्द्योतमानाः यायादेवताःद्युतिमत्यः सात्त्विक्यस्तास्ताःप्रमुख तःप्राधान्येनासृजत् तेदेवाः देवताइतिस्त्रीत्वेननिर्दिष्टानामप्यर्थमात्रविवक्षयातइतिपुंस्त्वेनप्रतिनिर्देशः एवंयक्षरक्षांसीत्यत्रापिज्ञेयम् तेन विसृष्टांत्यक्तांप्रभामहःदिवसरूपांसतीं देवयंतःक्रीडयंतः अहार्षुर्जगृहुः ॥ २२॥ अदेवानितिच्छेदःसजघनादसुरानसृजतेतिश्रुतेःअतिलो लुपान्स्त्रीलंपटान् अभिपेदिरेप्राप्ताः ॥ २३॥ पराऽपतत्अपलायत् ॥ २४ ॥ भक्तेच्छानुरूपमात्मानंदर्शयतीतितथातमुपव्रज्य ॥ २५ ॥

पाहीतिद्वाभ्यांप्रार्थितवान् यभितुंमैथुनेनधर्षयितुम् ॥ २६ ॥ लोकानांजनानां तवअनासन्नौअनाश्रितौपादौयैस्तेषाम् ॥ २७ ॥ विवि
क्तमसंदिग्धमध्यात्मदर्शनंपरचित्तज्ञानंयस्यहरेः घोरांकामकश्मलांस्वतनुंविमुंचेतिउक्तवानितिशेषः इत्युक्तश्चब्रह्मातांतनुंविमुमोच सर्वं
त्रतनुत्यागोनामतत्तन्मनोभावत्यागोविवक्षितः ग्रहणंचतत्तद्भावापत्तिरितिद्रष्टव्यम् ॥ २८ ॥ साऽहोरात्रयोःसंधिरभवदितिश्रुतेः सातेन
विसृष्टातनुः सायंतनीसंध्याबभूव साचकामोद्रेकवेलाअसुराश्चराजसत्वात्स्त्रीलंपटाः अतस्तांसंध्यामेवस्त्रियंकल्पयित्वातेसंमोहंप्राप्ता
इत्याह तामितित्रिभिः नूपुराभ्यांक्वणतीचरणांभोजेयस्याः मदेनविह्वलेलोचनेयस्याः कांचीकलापेनविसलद्दुकूलं तेनाच्छन्नंरोधःक

पाहिमांपरमात्मंस्तेप्रेषणेनासृजंप्रजाः॥ ताइमायभितुंपापाउपाक्रामंतिमांप्रभो ॥ २६ ॥ त्वमेकःकिललो
कानांक्लिष्टानांक्लेशनाशनः ॥ त्वमेकःक्लेशदस्तेषामनासन्नपदांतव ॥ २७ ॥ सोऽवधार्यास्यकार्पण्यंविविक्ता
ध्यात्मदर्शनः ॥ विमुंचात्मतनुंघोरामित्युक्तोविमुमोचह ॥ २८ ॥ तांक्वणच्चरणांभोजांमदविह्वललोचनां ॥
कांचीकलापविलसद्दुकूलच्छन्नरोधसं ॥ २९ ॥ अन्योन्याश्लेषयोत्तुंगनिरंतरपयोधरां ॥ सुनासांसुद्विजां
स्निग्धहासलीलावलोकनां ॥ ३० ॥ गूहंतींव्रीडयात्मानंनीलालकवरूथिनीं ॥ उपलभ्यासुराधर्मसर्वेसंमु
मुहुःस्त्रियं ॥ ३१ ॥ अहोरूपमहोधैर्यमहोअस्यानवंवयः ॥ मध्येकामयमानानामकामेवविसर्पति ॥ ३२ ॥
वितर्कयंतोबहुधातांसंध्यांप्रमदाकृतिं ॥ अभिसंभाव्यविश्रंभात्पर्यपृच्छन्कुमेधसः ॥ ३३ ॥ कासिकस्यासि
रंभोरुकोवाऽर्थस्तेऽत्रभामिनि ॥ रूपद्रविणपण्येनदुर्भगान्नोविबाधसे ॥ ३४ ॥ ॥ ॥

टितटंयस्याःताम् ॥ २९ ॥ अन्योन्यमाश्लेषयाउपमर्दनहेतुनाउत्तुंगौनिरंतरौपयोधरौयस्याः सुद्विजांसुदतीं स्निग्धोहासोलीलाऽवलोकनं
यस्याः ॥ ३० ॥ गूहंतींवस्त्रांचलेनावृण्वानाम् नीलानामलकानांवरूथःस्तोमोविद्यतेयस्याः हेधर्मविदुर तांस्त्रियमुपलभ्यमत्वा ॥ ३१ ॥
संमूढानांविभावनाक्रममाह अहोइति ॥ ३२ ॥ अभिसंभाव्यसत्कृत्य विश्रंभात्प्रणयात् कुबुद्धयस्तेतांपप्रच्छुः ॥ ३३ ॥ कासीतित्रिभिः
काऽसिजात्याकस्यवाकन्या हेभामिनिकोपने रूपमेवद्रविणमनर्घ्यंवस्तुतदेवपण्यंक्रयाऽर्हं तेनतदसमर्पणेन नोविबाधसे ॥ ३४ ॥

किंजातिकुलादिप्रश्नेनयावाकाचित्त्व दिष्ट्याइदंतावद्भद्रंजातंयत्तवदर्शनं किंतुकेवलंनोमनःउत्सुनोषिविमथ्नासि ॥ ३५ ॥ क्षुभिताचि
त्तानांवाक्यंहेशालिनिश्लाघ्ये एकत्रनजयतिनस्थिरीभवति यद्वा नैकत्रअनेकगतिविलासेषुजयतिसर्वोत्कर्षेणवर्तते पतत्पतंगमुच्चलंतंकं
दुकम् बृहतोःस्तनयोर्भाराद्भीतंतवकृशंमध्यंविषीदतिश्राम्यति शांतामंथरेवप्रसरति सुशिखासमूहःशोभनःकेशकलापस्ते पाठांतरेसु
शिखाःशोभनान्केशान्अवकीर्यमाणान्समूहंबधानेति अत्रचअस्तंगच्छन्सूर्यएवपतत्पतंगः मेघविच्छेदोमध्यविषादः तारकारूपाह
ष्टिः तमएवकेशाइत्याद्यूह्यम् ॥ ३६ ॥ प्रमदेवाचरंतींस्त्रियंमत्वाजगृहुः ॥ ३७ ॥ प्रहस्यात्मानमात्मनाजिघ्रंत्या कांत्यासौंदर्येणप्रहस

यावाकाचित्त्वमबलेदिष्ट्यासंदर्शनंतव ॥ उत्सुनोषीक्षमाणानांकंदुकक्रीडयामनः ॥ ३५ ॥ नैकत्रतेजयति
शालिनिपादपद्मंघ्नंत्यामुहुःकरतलेनपतत्पतंगम् ॥ मध्यंविषीदतिबृहत्स्तनभारभीतंशांतेवदृष्टिरमलासु
शिखासमूहः ॥ ३६ ॥ इतिसायंतनींसंध्यामसुराःप्रमदायतीम् ॥ प्रलोभयंतींजगृहुर्मत्वामूढधियःस्त्रियं ॥
॥ ३७ ॥ प्रहस्यभावगंभीरंजिघ्रंत्यात्मानमात्मना ॥ कांत्याससर्जभगवान्गंधर्वाप्सरसांगणान् ॥ ३८ ॥
विससर्जतनुंतांवैज्योत्स्नांकांतिमतींप्रियां ॥ तएवचाददुःप्रीत्याविश्वावसुपुरोगमाः ॥ ३९ ॥ सृष्ट्वाभूतपि
शाचांश्चभगवानात्मतंद्रिणा ॥ दिग्वाससोमुक्तकेशान्वीक्ष्यचामीलयद्दृशौ ॥४०॥ जगृहुस्तद्विसृष्टांतांजृं
भणाख्यांतनुंप्रभोः ॥ निद्रामिंद्रियविक्लेदोययाभूतेषुदृश्यते ॥ येनोच्छिष्टान्धर्षयंतितमुन्मादंप्रचक्षते ॥
॥ ४१ ॥ ऊर्जस्वंतंमन्यमानआत्मानंभगवानजः ॥ साध्यान्गणान्पितृगणान्परोक्षेणासृजत्प्रभुः ॥४२॥
तमात्मसर्गंतत्कायंपितरःप्रतिपेदिरे ॥ साध्येभ्यश्चपितृभ्यश्चकवयोयद्वितन्वते ॥ ४३ ॥ ॥

नमात्मावघ्राणंचसौंदर्यानुभावचातुर्यंविकारः ॥ ३८ ॥ ज्योत्स्नांचंद्रिकारूपां तएवगंधर्वादिगणाः विश्वावसुःपुरोगमोमुख्योयेषु ॥
॥ ३९ ॥ आत्मनस्तंद्रिणाआलस्येनतांश्चमुक्तकेशान्वीक्ष्यनेत्रेनिमीलितवान् ॥ ४० ॥ इंद्रियाणांविक्लेदःस्रावोययातांनिद्रांप्रचक्षते य
नेंद्रियविक्लेदेनहेतुनाउच्छिष्टाश्चसंतःधर्षयंतिभ्रांतान्कुर्वंति तंभूतादिगणमुन्मादंप्रचक्षते तंद्राजृंभिकानिद्रोन्मादहेतुत्वेनभूतादीनांतन्
नांचचातुर्विध्यमुक्तम् ॥ ४१ ॥ ऊर्जस्वंतंबलवंतं परोक्षेणअदृश्यरूपेण ॥ ४२ ॥ आत्मनःसर्गोयस्मात्तं यत् येनकायेनसंप्रदानत्व
निमित्तेन कवयःकर्मकोविदाःसाध्येभ्यःपितृभ्यश्च स्वापितृरूपेभ्यः वितन्वतेश्राद्धादिनाहव्यंकव्यंचददति ॥ ४३ ॥

तिरोधानेनदृश्यत्वेसत्यप्यंतर्धानशक्त्या ॥ ४४ ॥ प्रत्यात्म्येनप्रतिबिंबेन आत्माभासंप्रतिबिंबं आत्मना आत्मनोमनःप्रतिबिंबदर्शिनः
सुंदरस्यशिरःकंपादिचेष्टा अतएवतत्सृष्टानांमिथःसंमानेननित्यंमिथुनभावः ॥ ४५ ॥ तत्प्रतिबिंबरूपं कर्मभिःतत्पराक्रमानुवर्णनैः ॥
॥ ४६ ॥ भोगआभोगोविस्तारःपादादिप्रसरणं तद्वतादेहेनअनुपचितेवृद्धिमप्राप्ते ततूभोगक्रोधादियुक्तं ॥ ४७ ॥ अमुतःअमुष्माद्देहा
त् येकेशाअहीयंतप्रच्युताः तेअहयोजाताः प्रसर्पंतः पादाद्याकुंचनैःप्रचलतोऽमुष्मात्सर्पाः अतएव अगानभवंतीतिनागाःअतिवेगवं
तइत्यर्थः भोगवतोजातत्वात् भोगेनफणेनउरुविस्तीर्णाकंधरायेषां सर्वेचैतेतत्क्रोधयोगात्क्रूराः तेषामत्रांतरजातिभेदःसर्पसिद्धांतेप्रसि

सिद्धान्विद्याधरांश्चैवतिरोधानेनसोऽसृजत् ॥ तेभ्योऽददात्तमात्मानमंतर्धानाख्यमद्भुतं ॥४४॥ सकिन्नरा
न्किंपुरुषान्प्रत्यात्म्येनासृजत्प्रभुः ॥ मानयन्नात्मनात्मानमात्माभासंविलोकयन् ॥४५॥ तेतुतज्जगृहूरू
पंत्यक्तंयत्परमेष्ठिना ॥ मिथुनीभूयगायंतस्तमेवोषसिकर्मभिः ॥ ४६ ॥ देहेनवैभोगवताशयानोबहुचिंत
या ॥ सर्गेऽनुपचितेक्रोधादुत्ससर्जहतद्वपुः ॥ ४७ ॥ येऽहीयंतामुतःकेशाअहयस्तेऽगजज्ञिरे ॥ सर्पाःप्रस
र्पतःक्रूरानागाभोगोरुकंधराः ॥४८॥ सआत्मानंमन्यमानःकृतकृत्यमिवात्मभूः ॥ तदामनून्ससर्जांतेमन
सालोकभावनान् ॥ ४९ ॥ तेभ्यःसोऽत्यसृजत्स्वीयंपुरंपुरुषमात्मवान् ॥ तान्दृष्ट्वायेपुरासृष्टाःप्रशशंसुः
प्रजापतिं ॥ ५० ॥ अहोएतज्जगत्स्रष्टःसुकृतंबततेकृतं ॥ प्रतिष्ठिताःक्रियायस्मिन्साकमन्नमदामहे ॥५१॥
तपसाविद्ययायुक्तोयोगेनसुसमाधिना ॥ ऋषीनृषिर्हृषीकेशःससर्जाभिमताःप्रजाः ॥ ५२ ॥

द्धः ॥ ४८ ॥ यदामन्यमानोऽभूत् तदामनून्ससर्ज ॥ ४९ ॥ तेभ्यःस्वीयंपुरुषंपुरुषाकारंपुरंदेहमत्यसृजत्ददौ तान्मनून् ॥ ५० ॥ ते
त्वयाकृतं सुकृतत्वमाहुः यस्मिन्मनुसर्गेक्रियाअग्निहोत्राद्याः अतोऽस्मिन्सर्वेवयंसाकंसहअन्नंहविर्भागादि अदामभक्षयाम हेब्रह्मन् ॥
॥ ५१ ॥ कायसृष्टिमुक्त्वाऋषीणांसृष्टिमाह तपसेति विद्याउपासना योगोऽत्रासनादिः सुसमाधिःवैराग्यैश्वर्यादियुक्तःसमाधिः तेनचयु
क्तः हृषीकेशःस्ववशेंद्रियःसन् ऋषिर्ब्रह्मा ऋषीन् प्रजाःससर्ज ॥ ५२ ॥ ॥ ॥

कितद्देहेयस्यांशमदादित्यतआह यदिति समाधिश्चयोगश्चऋद्धिश्चऐश्वर्यंतपश्चविद्याचविरक्तिश्चविद्यंतेयस्मिन्तत् ॥ ५३ ॥ इतितृती यस्कंधेटीकायांविंशोध्यायः ॥ २० ॥ ॥ एकविंशेतपोविद्यातोषितेनतुविष्णुना ॥ कर्दमस्यमनोःपुत्र्याविवाहघटनोच्यते ॥ १ ॥ ए धिरेएधांचक्रिरे ॥ १ ॥ धर्ममहींचयथाजुगुपतुः ररक्षतुः तन्मेत्रवदेतितृतीयेनान्वयः ॥ २ ॥ ३ ॥ योगलक्षणैर्यमादिभिर्युक्तायांकतिधा वीर्यंससर्ज कतिपुत्रानुत्पादयामासेत्यर्थः ॥ ४ ॥ मनोःकन्यामाकूतिंचप्रसूतिंचजायांलब्ध्वा यथाभूतानिससर्ज तत्रवदेतिचकारस्यार्थः

तेभ्यश्चैकैकशःस्वस्यदेहस्यांशमदादजः ॥ यत्तत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ॥ ५३॥ इतिश्रीभा गवतेमहापुराणेतृतीयस्कंधेविंशतितमोऽध्यायः ॥ २० ॥ ॥ विदुरउवाच स्वायंभुवस्यचमनोर्वंशःप रमसंमतः ॥ कथ्यतांभगवन्यत्रमैथुनेनैधिरेप्रजाः ॥ १ ॥ प्रियव्रतोत्तानपादौसुतौस्वायंभुवस्यवै ॥ य थाधर्मंजुगुपतुःसप्तद्वीपवतींमहीं ॥ २ ॥ तस्यवैदुहिताब्रह्मन्देवहूतीतिविश्रुता ॥ पत्नीप्रजापतेरुक्ताकर्दम स्यत्वयानघ ॥३॥ तस्यांसवैमहायोगीयुक्तायांयोगलक्षणैः ॥ ससर्जकतिधावीर्यंतन्मेशुश्रूषवेवद ॥ ४ ॥ रुचिर्योभगवान्ब्रह्मन्दक्षोवाब्रह्मणःसुतः ॥ यथाससर्जभूतानिलब्ध्वाभार्यांचमानवीं ॥ ५ ॥ मैत्रेयउवाच प्रजाःसृजेतिभगवान्कर्दमोब्रह्मणोदितः ॥ सरस्वत्यांतपस्तेपेसहस्राणांसमादश ॥६॥ ततःसमाधियुक्तेन क्रियायोगेनकर्दमः ॥ संप्रपेदेहरिंभक्त्याप्रपन्नवरदाशुषं ॥७॥ तावत्प्रसन्नोभगवान्पुष्कराक्षःकृतेयुगे ॥ दर्श यामासतंक्षत्तःशाब्दंब्रह्मदधद्वपुः ॥८॥ सतंविरजमर्काभंसितपद्मोत्पलस्रजं ॥ स्निग्धनीलालकव्रातवक्त्रा ब्जंविरजोंबरं ॥९॥ किरीटिनंकुंडलिनंशंखचक्रगदाधरं ॥ श्वेतोत्पलक्रीडनकंमनःस्पर्शस्मितेक्षणं ॥ १० ॥

॥ ५ ॥ सहस्राणांसमादश दशसहस्राणिसंवत्सरानित्यर्थः ॥ ६ ॥ ततस्तस्मिंस्तपसिक्रियायोगेनपूजाप्रकारेण संप्रपेदेसिषेवे प्रपन्ने भ्योभक्तेभ्योवरदातारम् ॥ ७ ॥ शब्दैकवेद्यंयद्ब्रह्मतन्मयंवपुर्दधत् तंप्रत्यात्मानंदर्शयामास ॥ ८ ॥ सकर्दमस्तंखेऽवस्थितंदृष्ट्वामूर्ध्नाक्षि तावपतत् गीर्भिश्चाभ्यगृणादितिचतुर्णामन्वयः पद्मोत्पलेदिनरात्रिविकासे सितानांपद्मानामुत्पलनांचस्रक्यस्यतम् स्निग्धानीलाश्चये अलकास्तेषांव्रातोवक्त्राब्जेयस्य ॥ ९ ॥ श्वेतोत्पलंक्रीडनकंयस्य मनःस्पर्शमनस्यानंदजनकंस्मितमीक्षणंयस्यतम् ॥ १० ॥

वक्षसिश्रीर्यस्य कौस्तुभः कंधरायांयस्य ॥ ११ ॥ प्रीतिरेवस्वभावः स्वतःसिद्धोधर्मोयस्य तथाविधआत्मामनोयस्य ॥ १२ ॥ त्वामृतेपर मानंदंधिगन्यवरकामुकम् ॥ अथापिकृपणंमानुगृहाणवरदानतः ॥ वर्ततेतिहर्षे हेईड्य नोऽस्माभिः समग्रसत्त्वनिधेस्तवदर्शनात् अद्याक्ष्णोः सांसिध्यंसाफल्यंजुष्टंसेवितं त्वद्दर्शनमेवमहाफलमित्युपपादयति यस्यतवदर्शनंसद्भिरुत्तरोत्तरमापादितप्रकर्षैर्जन्माभिः रूढोविरूढोयोगोयै स्तेऽपि ॥१३॥ सकामभक्तान्विगर्हयन्नाह यइति हेईश येनिरयेऽपिस्युः तेषांकामानांलवाययेत्वन्माययानष्टबुद्धयः तएवोपासते त्वंतुतेषां तान्कामानपिराशिदददासि ॥ १४ ॥ यःसकामास्तिंदामि सोऽहमपितादृशएवेत्याह तथेति गृहमेधोगृहाश्रमःतत्रधेनुंत्रिवर्गदोग्ध्रींभार्यांप

विन्यस्तचरणांभोजमंसदेशेगरुत्मतः ॥ दृष्ट्वाखेऽवस्थितंवक्षःश्रियंकौस्तुभकंधरं ॥ ११ ॥ जातहर्षोऽ पतन्मूर्ध्नाक्षितौलब्धमनोरथः ॥ गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्माकृतांजलिः ॥ १२ ॥ ऋषिरुवाच जुष्टंबताद्याखिलसत्त्वराशेःसांसिध्यमक्ष्णोस्तवदर्शनान्नः ॥ यद्दर्शनंजन्मभिरीड्यसद्भिराशासतेयोगिनो रूढयोगाः ॥ १३ ॥ येमाययातेहतमेधसस्त्वत्पादारविंदंभवसिंधुपोतम् ॥ उपासतेकामलवायतेषांरा सीशकामान्निरयेऽपियेस्युः ॥ १४ ॥ तथासचाहंपरिवोढुकामःसमानशीलांगृहमेधधेनुम् ॥ उपेयिवा न्मूलमशेषमूलंदुराशयःकामदुघांघ्रिपस्य ॥ १५ ॥ प्रजापतेस्तेवचसाऽधीशतंत्यालोकःकिलायंकामह तोनुबद्धः ॥ अहंचलोकानुगतोवहामिबलिंचशुक्लानिमिषायतुभ्यं ॥ १६ ॥

रिवोढुकामः परिणेतुमिच्छन् कामदुघांघ्रिपस्यकल्पद्रुमस्यतवपादमूलमाघ्रिमुपेयिवान् उपगतोऽस्मि ननुकामाद्यर्थमन्यत्किमप्युपास्यतां न यतः अशेषस्यपुरुषार्थस्यमूलमेतदेव ॥१५॥ ननुतर्हिमुक्त्यर्थमेवकिंनभजसि अनाधिकारादित्याह हेअधीशयस्त्वंप्रजापतिः तस्यतववच सातंत्या अयंकामहतोलोकः पशुवद्बद्धः हेशुक्लधर्ममूर्त्ते अहंचकिललोकानुगतः अतस्तुभ्यंबलिंवहामि कर्ममयींत्वदाज्ञामनुवर्त्ते आनिमि षायकालात्मने तदर्थंभार्यांचेच्छामीतिचकारस्यार्थः नकेवलंलोकानुगतोवहामिकिंतुऋणत्रयापाकरणार्थमितिकिलेत्युक्तं ॥ १६ ॥

अनिमिषयेत्यनेनकालात्मकात् त्वत्तोभीतःकर्मकरोमीत्युक्तं एतत्तुभयंत्वद्भक्तानांनास्तीत्याहद्वाभ्यां लोकान्कामाभिभूतान्ताननुसृता
न्पशूंश्चाविवेकेसत्यपिपुनःकर्मजडान्मादृशान् हित्वाअनादृत्य येतवचरणरूपमातपत्रंश्रिताः तानेवाह त्वद्गुणानांवादःकथातदेवसीधुः
मादिरासंसारविस्मारकत्वात् पीयूषंरुचिकरत्वात् तेननिर्यापिताविलापितादेहधर्माः क्षुत्पिपासादयोयैः एषामित्युत्तरेणान्वयः॥१७॥ तवय
त्रिणाभिकालचक्रंतज्जगदाच्छिद्यआकृष्यधावदपि एषांत्वद्भक्तानामायुराच्छिद्यधावन्नभवति कथंभूतं अजरंब्रह्मतस्मिन्अक्षररूपेभ्रमिर्भ्र
मणं भ्रमादित्तिचक्रव्येअतिभ्रमणशीलत्वादुपचारेणभ्रमिरित्त्यभेदनिर्देशः अधिकमासेनसहत्रयोदशमासाअरायस्य त्रिशतंषष्टिश्चाहोरात्राः
पर्वाणियस्य शतशब्देविभक्तेर्लुगार्षः षड्ऋतवोनेमयोयस्य अनंताः क्षणलवादयः छदाःपत्राणिपत्राकाराधाराःसंतियस्यत्रीणिचा

लोकांश्चलोकानुगतान्पशूंश्चहित्वाश्रितास्तेचरणातपत्रं ॥ परस्परंत्वद्गुणवादसीधुपीयूषनिर्यापितदेहध
र्माः ॥१७॥ नतेजराक्षभ्रमिरायुरेषांत्रयोदशारंत्रिशतंषष्टिपर्व॥षण्नेम्यनंतच्छदियत्रिणाभिकरालस्रोतो
जगदाच्छिद्यधावत् ॥१८॥ एकःस्वयंसन्जगतःसिसृक्षयाद्वितीययात्मन्नधियोगमायया॥ सृजस्यदःपा
सिपुनर्ग्रसिष्यसेयथोर्णनाभिर्भगवान्स्वशक्तिभिः ॥ १९ ॥ नैतद्वताधीशपदंतवेप्सितंयन्माययानस्त
नुषेभूतसूक्ष्मं ॥ अनुग्रहायास्त्वपियर्हिमाययालसत्तुलस्यातनुवाविलक्षितः ॥ २० ॥ ॥

तुर्मासस्यानिनाभयःआधारभूतानिवलयानियस्य करालस्रोतःतीव्रवेगमेतैर्विशेषणैरेवसंवत्सरात्मकंचक्रमुक्तमितिद्रष्टव्यं ॥१८॥ ननुनिरुपा
धिमुदासीनंमांकिंयाचसे तथाऽपिमाययाविश्वसृष्ट्यादिकर्तृत्वात्त्वमेवयाच्यइत्याह स्वयमेकएवसन्नपिआत्मन्यधिकृतयायोगमाययाहेतुना
याःस्वीकृताःशक्तयःसत्वाद्याः ताभिःअदोविश्वं स्वव्यतिरिक्तसाधनानपेक्षत्वेदृष्टांतः यथेति ॥ १९ ॥ यद्यपिमायिकत्वाद्भक्तेभ्योविषयसुखं
दातुंनेच्छसि तथाऽप्यस्मदभिप्रायानुसारेणतत्संपादयेत्याह नैतदिति हेअधीशनोऽस्माकंभजतांभूतसूक्ष्मरूपंपदंशब्दादिविषयसुखंमा
ययातनुषेविस्तारयसीतियत् एतत्तवयद्यपीप्सितंनभवतितथाऽप्यस्मदनुग्रहायास्तु ऋणत्रयापाकरणानंतरमेवापवर्गायभवत्वित्यर्थः यर्हिय
तः माययापरिच्छिन्नइव लसंत्यातुलस्यायुक्तस्त्वंविलक्षितोऽसि एवंभूतस्यतवदर्शनंयतोभुक्तिमुक्तिप्रदमित्यर्थः ॥ २० ॥

तंत्वात्वांभुक्तिमुक्तिप्रदंनमामि मुक्तिदत्वेहेतुः अनुभूत्याज्ञानेन उपरतःक्रियार्थःकर्मफलभोगोयस्मिन् भोगदत्वेहेतुः स्वमायया आवर्त्ति तंलोकतंत्रंविश्वोपकरणंयेनअतःसकामैर्निष्कामैश्चनमनीयंपादसरोजयुगंयस्यतं तत्रअल्पीयसिसकामेपुंसिभजनेवा कामान्वर्षतीतितथातं ॥ २१ ॥ अमृतेनसुखकरेण प्रेमस्मिताभ्यामीक्षणेनविभ्रमंतीभ्रूर्यस्य ॥ २२ ॥ चैत्यंहार्दभावं मेमयासमयोजिसंघटितं यदर्थमेवाहंसमर्चितःतत् ॥ २३ ॥ मयिसंगृभितःसंगृहीतएकाग्रीकृतआत्माचित्तंयैस्तेषां यन्मदर्हणंत्वादृशेषु अतितरांसर्वथामृषानिष्फलंनस्यात्

तंत्वाऽनुभूत्योपरतक्रियार्थंस्वमाययावर्त्तितलोकतंत्रं ॥ नमाम्यभीक्ष्णंनमनीयपादसरोजमल्पीयसिकामवर्षं ॥ २१ ॥ ऋषिरुवाच इत्यव्यलीकंप्रणुतोऽब्जनाभस्तमाबभाषेवचसाऽमृतेन ॥ सुपर्णपक्षोपरिरोचमानःप्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥ श्रीभगवानुवाच विदित्वातवचैत्यंमेपुरैवसमयोजितत् ॥ यदर्थमात्मनियमैस्त्वयैवाहंसमर्चितः ॥ २३ ॥ नवैजातुमृषैवस्यात्प्रजाध्यक्षमदर्हणं ॥ भवद्विधेष्वतितरांमयिसंगृभितात्मनां ॥ २४ ॥ प्रजापतिसुतःसम्राट्मनुर्विख्यातमंगलः ॥ ब्रह्मावर्तंयोऽधिवसन्शास्तिसप्तार्णवांमहीं ॥२५॥ सचेहविप्रराजर्षिर्महिष्याशतरूपया ॥ आयास्यतिदिदृक्षुस्त्वांपरश्वोधर्मकोविदः ॥ २६ ॥ आत्मजामसितापांगींवयःशीलगुणान्वितां ॥ मृगयंतींपतिंदास्यत्यनुरूपायतेप्रभो ॥ २७ ॥ समाहितंतेहृदयंयत्रेमान्परिवत्सरान् ॥ सात्वांब्रह्मन्नृपवधूःकाममाशुभजिष्यति ॥ २८ ॥ यात्वआत्मभृतंवीर्यंनवधाप्रसविष्यति ॥ वीर्येत्वदीयेऋषयआधास्यंत्यंजसात्मनः ॥ २९ ॥ त्वंचसम्यगनुष्ठायनिदेशंमउशत्तमः ॥ मयितीर्थीकृताशेषक्रियार्थोमांप्रपत्स्यसे ॥ ३० ॥ कृत्वादयांचजीवेषुदत्वाचाभयमात्मवान् ॥ मय्यात्मानंसहजगद्द्रक्ष्यस्यात्मनिचापिमां ॥ ३१ ॥

॥ २४ ॥ विख्यातंमंगलमभ्युदयःसदाचारादिलक्षणंयस्य ॥ २५ ॥ हेविप्र महिष्यासह ॥ २६ ॥ २७ ॥ यत्रयस्यांभार्यायां समाहितं अभिसंधानेनस्थितं नृपवधूराजकन्या ॥ २८ ॥ तेवीर्यमात्मनिभृतंधृतंयाप्रसविष्यति साभजिष्यति वीर्येवीर्यप्रसूतासुकन्यासु अंजसा आत्मनः पुत्रानाधास्यंति ॥ २९ ॥ निदेशमाज्ञां उशत्तमःशुद्धसत्त्वः तीर्थंपात्रंतेनदानंलक्ष्यते मयिसमर्पितसर्वकर्मफलइत्यर्थः ॥३०॥ गार्हस्थ्येनदयांकृत्वासंन्यासेनाभयंदत्वामयिआत्मानंजगत्रसहएकीभूतंद्रक्ष्यसि ॥ ३१ ॥

त्वद्वीर्येणसह देवहूत्यामवतीर्येतिशेषः ॥ ३२ ॥ प्रत्यग्भूतेषुअक्षेषुजायतेआविर्भवतीतिप्रत्यगक्षजः सरस्वत्यानद्यापरिश्रितात् परिवेष्टितात् ॥ ३३ ॥ अशेषैस्तपोमंत्रादिसिद्धेश्वरैः अभिष्टुतः सिद्धमार्गः वैकुंठमार्गोयस्य यद्वा अशेषसिद्धेश्वराभिष्टुतश्चासौसिद्धैर्मृग्यतइतिसिद्धमार्ग श्चसयया पत्ररथेंद्रोगरुडस्तस्यपक्षैरुदीर्णमभिव्यक्तंसामाकर्णयन् बृहद्रथंतरेपक्षावितिश्रुतेः उच्चारितम् स्तोमंचसामाधारभूतानांऋचांसमुदायंशृण्वन् स्तोमआत्मेतिश्रुतेः समासपाठेउच्चारितःस्तोमःस्तोत्रीयसमुदायोयस्यसाम्नइति ॥ ३४ ॥ तंकालंपरइवइत्युक्तंप्रतीक्षमाणः

सहाहंस्वांशकलयात्वद्वीर्येणमहामुने ॥ तवक्षेत्रेदेवहूत्यांप्रणेष्येतत्त्वसंहिताम् ॥ ३२ ॥ मैत्रेयउवाच एवंतमनुभाष्याथभगवान्प्रत्यगक्षजः ॥ जगामबिंदुसरसःसरस्वत्यापरिश्रितात् ॥ ३३ ॥ निरीक्षतस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ॥ आकर्णयन्पत्ररथेंद्रपक्षैरुच्चारितंस्तोममुदीर्णसाम ॥ ३४ ॥ अथ संप्रस्थितेशुक्लेकर्दमोभगवानृषिः ॥ आस्तेस्मबिंदुसरसितंकालंप्रतिपालयन् ॥ ३५ ॥ मनुःस्यंदनमास्थाय शातकौंभपरिच्छदम् ॥ आरोप्यस्वांदुहितरंसभार्यःपर्यटन्महीं ॥ ३६ ॥ तस्मिन्सुधन्वन्नहनिभगवान्यत्समादिशत् ॥ उपायादाश्रमपदंमुनेःशांतव्रतस्यतत् ॥ ३७ ॥ यस्मिन्भगवतोनेत्रान्न्यपतन्नश्रुबिंदवः ॥ कृपयासंपरीतस्यप्रपन्नेऽर्पितयाभृशं ॥ ३८ ॥ तद्वैबिंदुसरोनामसरस्वत्यापरिप्लुतं ॥ पुण्यंशिवामृतजलंमहर्षिगणसेवितं ॥ ३९ ॥ पुण्यद्रुमलताजालैःकूजत्पुण्यमृगद्विजैः ॥ सर्वर्तुफलपुष्पाढ्यंवनराजिश्रियाऽन्वितं ॥ ४० ॥ मत्तद्विजगणैर्घुष्टंमत्तभ्रमरविभ्रमं ॥ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलं ॥ ४१ ॥ कदंबचंपकाशोककरंजबकुलासनैः ॥ कुंदमंदारकुटजैश्चूतपोतैरलंकृतं ॥ ४२ ॥ ॥ ॥

॥ ३५ ॥ शातकौंभाःसौवर्णाःपरिकरायस्मिन् तंरथमास्थायदुहितरंचारोप्यवरान्वेषणार्थंपर्यटन् ॥ ३६ ॥ हेसुधन्वन् विदुर यदहः ॥ ३७ ॥ तत्प्रवेशमात्रेणपरमानंदंप्राप्तइतिदर्शयितुमाश्रमंवर्णयतियस्मिन्नित्यादिभिःसप्तभिःश्लोकैः प्रपन्नेकर्दमे ॥ ३८ ॥ शिवमारोग्यममृतवत्स्वादुजलं यस्मिन् ॥ ३९ ॥ कूजंतःपुण्यामृगाःद्विजायेषुतैः पुण्यद्रुमलतानांजालैःसमूहैर्युक्तम् ॥ ४० ॥ घुष्टंनादितं मत्तभ्रमराणांविभ्रमःविनोदोयस्मिन् मत्ताबर्हिणएवनटास्तेषामाटोपोनृत्यसंभ्रमोयस्मिन् आह्वयंतः मिथोमत्ताःकोकिलायस्मिन् ॥ ४१ ॥ कदंबादिभिर्वृक्षैरलंकृतं ॥ ४२ ॥

कारंडवादिभिः पक्षिभिः वल्गुयथातथाकूजितं ॥ ४३ ॥ हरिणादिभिर्वृतं तत्रक्रोडः सूकरः श्वावित् शल्लकः मर्कोमर्कटः तद्विशेषागोपुच्छाः हार्विानरः सिंहोवा नाभिः कस्तूरीमृगः ॥ ४४ ॥ हुतः हुताशनोब्रह्मचारियोग्योयेन ॥ ४५ ॥ उग्रायुक्त्योयोगोयस्यतेनवपुषाविद्योतमानं॥ ४६॥ तस्यभगवतोव्याहृतंभाषणमेवअमृतकला अमृतमयस्यचंद्रस्यकला तन्मयंपीयूषं तस्यश्रवणेनचनातिक्षामंतपसाकृशंसंतमप्यकृशं प्रांशुमुन्नतं उपसंसृत्यसमीपंगत्वा मलिनंददर्शेतिपूर्वेवक्रिया अर्ह्यतेअनेनेतिअर्हणंमहारत्नं तत् असंस्कृतमनिर्णिक्तंयथामलिनंदृश्यतेतद्व

कारंडवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः ॥ सारसैश्चक्रवाकैश्चचकोरैर्वल्गुकूजितं ॥ ४३ ॥ तथैवहरिणैः क्रोडैः श्वाविद्गवयकुंजरैः ॥ गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतं ॥ ४४ ॥ प्रविश्यतत्तीर्थवरमादिराजः सहात्मजः ॥ ददर्शमुनिमासीनंतस्मिन्हुतहुताशनं ॥ ४५ ॥ विद्योतमानंवपुषातपस्युग्रयुजाचिरं ॥ नातिक्षामंभगवतः स्निग्धापांगावलोकनात् ॥ ४६ ॥ तद्व्याहृतामृतकलापीयूषश्रवणेनच ॥ प्रांशुंपद्मपलाशाक्षंजटिलंचीरवाससं ॥ उपसंसृत्यमलिनंयथाऽर्हणमसंस्कृतं ॥ ४७ ॥ अथोटजमुपायातंनृदेवंप्रणतंपुरः ॥ सपर्ययापर्यगृण्हात्प्रतिनंद्यानुरूपया ॥ ४८ ॥ गृहीतार्हणमासीनंसंयतंप्रीणयन्मुनिः ॥ स्मरन्भगवदादेशमित्याहश्लक्ष्णयागिरा ॥ ४९ ॥ नूनंचंक्रमणंदेवसतांसंरक्षणायते ॥ वधायचासतांयस्त्वंहरेः शक्तिर्हिपालिनी ॥ ॥ ५० ॥ योर्केंद्वग्नींद्रवायूनांयमधर्मप्रचेतसाम् ॥ रूपाणिस्थानआधत्सेतस्मैशुक्लायतेनमः ॥ ५१ ॥ न यदारथमास्थायजैत्रंमणिगणार्पितं ॥ विस्फूर्जच्चंडकोदंडोरथेनत्रासयन्नघान् ॥ ५२ ॥ ॥

त् ॥ ४७ ॥ उटजंपर्णशालांप्राप्तं पुरः पादसमीपेप्रणतं आशीर्भिरभिनंद्यसपर्ययापूजयाप्रत्यगृह्णात् सत्कृतवान् ॥ ४८ ॥ ४९ ॥ तेचंक्रमणंपर्यटनं हियस्मात् ॥ ५० ॥ मनुस्त्वंविष्णुंप्रणमति यइति स्थानेतत्तत्कार्यावसरे शुक्लायविष्णवे ॥ ५१ ॥ नयदेतिपंचानामयमर्थः यद्यपिधर्मरक्षार्थंसर्वतः पर्यटतस्तवप्रसंगादप्यागमनंसंभवातितथाऽपिविशेषकार्यंचेदस्तितत्कथ्यतामिति जैत्रंजयप्रदं मणिगणाअर्पितायस्मिन् तंरथमारुह्य त्वंयदाभुवोमंडलंनपर्यटसितदासेतवोभियेराज्ञींतित्रयाणामन्वयः विस्फूर्जन्नादंकुर्वन् चंडंकोदंडंधनुर्यस्य ॥ ५२ ॥

स्वसैन्यस्यचरणैः क्षुण्णंसंघट्टितम् ॥ ५३ ॥ वर्णाश्रमाणांनिबंधनंयैः बतअहो ॥ ५४ ॥ निरंकुशैर्नृभिर्निमित्तभूतैः शयानेनिश्चिते ॥ ५५ ॥ निर्व्यलीकेनसंहर्षेण प्रतिपद्यामहेस्वीकुर्महे ॥ ५६ ॥ इतिश्रीभागवतेतृतीयस्कंधेटीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥
द्वाविंशेकर्दमायादाद्यथादिष्टंहिविष्णुना ॥ मनुर्दुहितरंदेवहूतिमित्युपवर्ण्यते ॥ १ ॥ एवमाविष्कृतःअभिष्टुतःअशेषाणांगुणानांकर्मणां चउदयउत्कर्षोयस्यससम्राट्मनुः सव्रीडइवस्वकीर्तिश्रवणात् प्रत्याख्यानशंकयावा तंमुनिमुवाच उपारतंनिवृत्तिनिरतम् ॥ १ ॥ मदी

स्वसैन्यचरणक्षुण्णंवेपयन्मंडलंभुवः ॥ विकर्षन्बृहतींसेनांपर्यटस्यंशुमानिव ॥५३॥ तदैवसेतवःसर्वेवर्णाश्रमनिबंधनाः ॥ भगवद्रचिताराजन्भिद्येरन्बतदस्युभिः ॥ ५४ ॥ अधर्मश्चसमेधेतलोलुपैर्व्यंकुशैर्नृभिः ॥ शयानेत्वयिलोकोयंदस्युग्रस्तोविनंक्ष्यति ॥५५॥ अथापिपृच्छेत्वांवीरयदर्थंत्वमिहागतः ॥ तद्वयंनिर्व्यलीकेनप्रतिपद्यामहेहृदा ॥ ५६ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेएकविंशतितमोऽध्यायः ॥ २१ ॥
मैत्रेयउवाच एवमाविष्कृताशेषगुणकर्मोदयोमुनिं ॥ सव्रीडइवतंसम्राट्उपारतमुवाचह ॥ १ ॥ मनुरुवाच ब्रह्माऽसृजत्स्वमुखतोयुष्मानात्मपरीप्सया ॥ छंदोमयस्तपोविद्यायोगयुक्तानलंपटान् ॥ २ ॥ तत्त्राणायासृजच्चास्मान्दोःसहस्रात्सहस्रपात् ॥ हृदयंतस्यहिब्रह्मक्षत्रमंगंप्रचक्षते ॥ ३ ॥ अतोह्यन्योऽन्यमात्मानंब्रह्मक्षत्रंचरक्षतः ॥ रक्षतिस्माव्ययोदेवःसयःसदसदात्मकः ॥ ४ ॥ तवसंदर्शनादेवच्छिन्नामेसर्वसंशयाः ॥ यत्स्वयंभगवान्प्रीत्याधर्ममाहरिरक्षिषोः ॥ ५ ॥ दिष्ट्यामेभगवान्दृष्टोदुर्दर्शोयोऽकृतात्मनां ॥ दिष्ट्यापादरजःस्पृष्टंशीर्ष्णामेभवतःशिवम् ॥ ६ ॥ ॥ ॥ ॥

याकन्यात्वयापरिणेयेतिविज्ञापयिष्यन् युष्मदस्मत्संबंधस्तावदीश्वरेणपूर्वमेवघटितइत्याहब्रह्मेतिसार्धाभ्याम् आत्मनःपरीप्सयापर्याप्तुमिच्छया छंदोमयस्यात्मनःपर्याप्तिःपालनंवेदप्रवर्तनंतस्येच्छया युष्मान्ब्राह्मणान् ॥ २ ॥ तत्त्राणायब्राह्मणपालनाय ब्रह्मब्राह्मणजातिः क्षत्रंक्षात्रियजातिः ॥ ३ ॥ एवंसदेवएवरक्षातिस्म कोऽसौयःसदसदात्मकःसर्वात्मकः तथाऽपिअव्ययोनिर्विकारः ॥ ४ ॥ तंविज्ञापयितुमेवतद्दर्शनादिकमभिनंदति तवेतित्रिभिः ॥ ५ ॥ ६ ॥ ॥ ॥ ॥

अनुग्रहोऽनुशासनादिरूपएव उशतीः उशत्यः ॥ ७ ॥ विज्ञापयतिसभवानितिसप्तभिः दुहितुःस्नेहेनपरिक्लिष्टआत्मायस्य श्रावितंविज्ञापनम् ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेतिपुत्रिकाकरणशंकानिरस्ता ममसुतेतिक्षत्रकन्यातवयोग्येतिदर्शितम् ॥ ९ ॥ १० ॥ प्रतीच्छस्वीकुरु ॥ ११ ॥ उद्यतस्यस्वतःप्राप्तस्य प्रतिवादःप्रत्याख्यानं ॥ १२ ॥ कीनाशंकृपणं अवज्ञयापरापमानेन ॥ १३ ॥ यस्यसावधिब्र

दिष्ट्यात्वयाऽनुशास्तोहंकृतश्चानुग्रहोमहान् ॥ अपावृतैःकर्णरंध्रैर्जुष्टादिष्ट्योशतीर्गिरः ॥ ७ ॥ सभवान्दुहितृस्नेहपरिक्लिष्टात्मनोमम ॥ श्रोतुमर्हसिदीनस्यश्रावितंकृपयामुने ॥ ८ ॥ प्रियव्रतोत्तानपदोःस्वसेयंदुहितामम ॥ अन्विच्छतिपतिंयुक्तंवयःशीलगुणादिभिः ॥ ९ ॥ यदातुभवतःशीलश्रुतरूपवयोगुणान् अशृणोन्नारदादेषात्वय्यासीत्कृतनिश्चया ॥ १० ॥ तत्प्रतीच्छद्विजाग्र्येमांश्रद्धयोपहृतांमया ॥ सर्वात्मनाऽनुरूपांतेगृहमेधिषुकर्मसु ॥ ११ ॥ उद्यतस्यहिकामस्यप्रतिवादोनशस्यते ॥ अपिनिर्मुक्तसंगस्यकामरक्तस्यकिंपुनः ॥ १२ ॥ यउद्यतमनादृत्यकीनाशमभियाचते ॥ क्षीयतेतद्यशःस्फीतंमानश्चावज्ञयाहतः ॥ १३ ॥ अहंत्वाऽशृणवंविद्वन्विवाहार्थंसमुद्यतम् ॥ अतस्त्वमुपकुर्वाणःप्रत्तांप्रतिगृहाणमे ॥ १४ ॥ ऋषिरुवाच बाढमुद्वोढुकामोऽहमप्रत्ताचतवात्मजा ॥ आवयोरनुरूपोसावाद्योवैवाहिकोविधिः ॥ १५ ॥ कामःसभूयान्नरदेवतस्याःपुत्र्याःसमाम्नायविधौप्रतीतः ॥कएवतेतनयांनाद्रियेतस्वयैवकांत्याक्षिपतीमिवश्रियं ॥ १६ ॥ यांहर्म्यपृष्ठेक्कणदंघ्रिशोभांविक्रीडतींकंदुकविव्हलाक्षीं ॥ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्यसंमोहविमूढचेताः ॥ १७ ॥ ॥ ॥ ॥

ह्मचर्यंसउपकुर्वाणः प्रत्तांमयादत्तां ॥ १४ ॥ अप्रत्ताचेतिमय्येवकृतनिश्चयत्वात् कस्मैचित्प्रतिश्रुताचनभवतीत्यर्थः आद्यःप्रथमः ततःपूर्वंविवाहाभावात्मुख्यइतिवा ॥ १५ भूयान् भवेत्प्रतीतः गृभ्णामितेसौभगत्वायहस्तंमयापत्येत्यादिमंत्रप्रसिद्धः स्वयांगकांत्यैवश्रियंभूषणादिशोभां ॥ १६ ॥ यांविलोक्यन्यपतत् संमोहेनविमूढंव्याकुलंचेतोयस्य क्वणद्ध्वानांघ्रिभ्यांशोभायस्याः ॥ १७ ॥

तांललनानांललामंभूषणभूतां असेवितौश्रियश्चरणौयैस्तैरदृष्टांद्रष्टुमप्ययोग्यां उत्त्वपदः उत्तानपादस्य अभियातांस्वयंप्राप्तां ॥ १८ ॥ भजिष्येस्वीकरिष्ये यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततःपरंसंन्यासइति भाषाबंधःसमयः तमेवाह यावत् आत्मनोममचतेजोगर्भंबिभृया त् यद्वा ममात्मनोदेहाच्युतंतेजोवीर्यंबिभृयादिति अतःपरंपारमहंस्यंज्ञानंतास्मिन्मुख्यान् शुक्लेनविष्णुनासाक्षात् प्रकर्षेणोक्तान् अवि हिंस्रान्हिंसारहितान्शमादीन्बहुयथाभवतिएवमनुष्ठेयान्मन्ये ॥ १९ ॥ ननुतवपितुःप्रजापतेराज्ञासृष्टावेवनसंन्यासेतत्राह यतइति सं

तांप्रार्थयंतींललनाललाममसेवितश्रीचरणैरदृष्टाम् ॥वत्सांमनोरुच्चपदःस्वसारंकोनानुमन्येतबुधोऽभिया ताम् ॥१८॥ अतोभजिष्येसमयेनसाध्वींयावत्तेजोबिभृयादात्मनोमे ॥ अतोधर्मान्पारमहंस्यमुख्यान्शु क्लप्रोक्तान्बहुमन्येऽविहिंस्रान् ॥१९॥ यतोऽभवद्विश्वमिदंविचित्रंसंस्थास्यतेयत्रचवावतिष्ठते॥प्रजापती नांपतिरेषमह्यंपरंप्रमाणंभगवाननंतः ॥ २० ॥ मैत्रेयउवाच सउग्रधन्वन्नियदेवाबभाषआसीच्चतूष्णी मरविंदनाभम्॥धियोपगृण्हन्स्मितशोभितेनमुखेनचेतोलुलुभेदेवहूत्याः॥२१॥सोऽनुज्ञात्वाव्यवसितंमहि ष्यादुहितुःस्फुटम्॥तस्मैगुणगणाढ्यायददौतुल्यांप्रहर्षितः ॥२२॥शतरूपामहाराज्ञीपारिबर्हान्महाधना न्॥दंपत्योःपर्यदात्प्रीत्याभूषावासःपरिच्छदान्॥२३॥प्रत्तांदुहितरंसम्राट्सदृक्षायगतव्यथः ॥उपागुह्यच बाहुभ्यामौत्कंठ्योन्मथिताशयः ॥२४॥ अशक्नुवंस्तद्विरहंमुंचन्बाष्पकलांमुहुः ॥ आसिंचदंबवत्सेतिनेत्रो दैर्दुहितुःशिखाः॥२५॥आमंत्र्यतंमुनिवरमनुज्ञातःसहानुगः॥प्रतस्थेरथमारुह्यसभार्यःस्वपुरंनृपः ॥ २६॥

स्थास्यतेचलयंयास्यतिवा वेतिएवार्थे ऋणत्रयापाकरणानंतरंसंन्यासएवमादृशानांभगवतोक्तइत्यर्थः ॥ २० ॥ हेउग्रधन्वन् लुलुभेमुने र्मुखेनप्रलोभ्यतेस्म यद्वा मुखेनप्रलोभितवान् ॥ २१ ॥ समनुः अनंतरंमहिष्याश्चव्यवसितंनिश्चयंज्ञात्वा ॥ २२ ॥ पारिबर्हान्विवाहकाले प्रदेयान् भूषाःभूषणानिच वासांसिपरिच्छदान् गृहोपकरणानिच ॥ २३ ॥ प्रत्तांप्रदत्तां सदृक्षायसदृशाय गताव्यथाचिंतायस्य औत्कं ठ्येनोन्मथितःक्षुभितःआशयोयस्य ॥ २४ ॥ तस्याविरहंसोढुं हेअंबहेवत्सेइतिब्रुवन् संधिरार्षः शिखाःकेशानासिंचत् ॥ २५ ॥ २६ ॥

ऋषिकुलहितायाः उभयोः सुरोधसोःशोभनतटयोः ॥ २७ ॥ अभिप्रेत्यज्ञात्वा ब्रह्मावर्त्तात्देशात्प्रजाःप्रजापतिंप्रत्युज्जग्मुः ॥ २८ ॥
कोऽसौब्रह्मावर्तइत्यपेक्षायामाह यत्रबर्हिष्मतीनामपुरीतिसाऽपिकुत्र यत्रयज्ञस्ययज्ञवराहस्यरोमाणिन्यपतन्निति यत्रेतिसर्वत्रसंबध्यते
॥ २९ ॥ बर्हिष्मतीनामनिरुक्तिंब्रुवन्प्रसंगाद्देशस्यश्रैष्ठ्यमाहद्वाभ्यां कुशाःकाशाश्चासन् शश्वत्नित्यं हरितंवर्चोवर्णोयेषां यज्ञघ्नान्रा
क्षसादीन्पराभवंनीत्वा यज्ञंविष्णुं ॥ ३० ॥ यज्ञपुरुषंविष्णुं यतइतियत्रायजत् भुवंस्थानं लब्धेतितृन्प्रत्ययांतं लब्धवान्सन्नित्यर्थः यतो
लब्धवान्तंयज्ञपुरुषमितिवा स्वर्गादपिभूमिःश्रेष्ठा तत्रापितत्स्थानंश्रेष्ठमित्युक्तंभवति ॥ ३१ ॥ प्रस्तुतमाह यांबर्हिष्मतींनामपुरींसमावस

उभयोर्ऋषिकुल्यायाःसरस्वत्याःसुरोधसोः॥ऋषीणामुपशांतानांपश्यन्नाश्रमसंपदः॥२७॥तमायांतमभि
प्रेत्यब्रह्मावर्त्तात्प्रजापतिं॥गीतसंस्तुतिवादित्रैःप्रत्यदीयुःप्रहर्षिताः॥२८॥बर्हिष्मतीनामपुरीसर्वसंपत्सम
न्विता॥न्यपतन्यत्ररोमाणियज्ञस्यांगंविधुन्वतः॥२९॥कुशाःकाशास्तएवासन्शश्वद्धरितवर्चसः॥ऋषयोयैः
पराभाव्ययज्ञघ्नान्यज्ञमीजिरे॥३०॥कुशकाशमयंबर्हिरास्तीर्यभगवान्मनुः॥अयजद्यज्ञपुरुषंलब्धास्थानं
यतोभुवं॥३१॥बर्हिष्मतींनामविभुर्यांनिर्विश्यसमावसत्॥तस्यांप्रविष्टोभवनंतापत्रयविनाशनं॥सभार्यःस
प्रजःकामान्बुभुजेऽन्याविरोधतः॥३२॥संगीयमानसत्कीर्तिःसस्त्रीभिःसुरगायकैः॥प्रत्यूषेष्वनुबद्धेनहृदा
शृण्वन्हरेःकथाः॥३३॥निष्णातंयोगमायासुमुनिंस्वायंभुवंमनुं॥यदाभ्रंशयितुंभोगानशेकुर्भगवत्परं॥३४॥
अयातयामास्तस्यासन्यामाःस्वांतरयापनाः ॥ शृण्वतोध्यायतोविष्णोःकुर्वतोब्रुवतःकथाः ॥ ३५ ॥

त् पूर्वंयस्यामुषितस्तस्यांनिर्विश्यभवनंप्रविष्टःसन्भोगान्बुभुजइत्यन्वयः अन्येषांधर्मादीनामविरोधेन ॥ ३२ ॥ प्रत्यूषेषुउषःसु संगीय
मानासत्कीर्तिर्यस्य तथापिस्वयंहरेरेवकथाःशृण्वन्भोगान्बुभुजे ॥ ३३ ॥ योगमायासुऐच्छिकभोगरचनासु यद्यतः आभ्रंशयितुं आ
ईषदपिभ्रंशयितुमभिभवितुं ॥ ३४ ॥ अयातोयामोयस्यपक्वस्यान्नस्यतद्गतसारंभवति अतोऽन्यदपिगतसारंयातयाममुच्यते अयातयामाः
अगतसाराः आसन् स्वांतरंतदीयंमन्वंतरंयापयंतियेयामाःकालावयवाः कुर्वतःस्ववाक्यैरुपनिबध्नतः ॥ ३५ ॥

परिभूतंगतित्रयंजाग्रदादिसात्विकादिवायेन ॥ ३६ ॥ दिव्यास्त्वंतरिक्षाःमानुषाःशत्रुप्रभवाःभौतिकाःशीतोष्णादिप्रभवाः वैयासेर्विदुर ॥ ३७ ॥ तस्यज्ञानातिशयमाह यद्वेति नृणांसाधारणधर्मान् ॥ ३८ ॥ तस्ययदपत्यंदेवहूतिस्तस्योदयंप्रभावं ॥ ३९ ॥ इतितृतीयेटीकायांद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ त्रयोविंशेततोयोगनिर्मितेसर्वसंपदि ॥ विमानेकामगेचित्रातयोरतिरुदीर्यते ॥ १ ॥ प्रस्थितेगमनेकृतेसति ॥१॥२॥ दंभंकपटं अघम्निषिद्धाचरणं तेजीयांसंअतितेजस्विनं ॥ ३ ॥ दैवाद्गरीयसःदैवादपिगुरुतरात् दैवमप्यन्य

सएवंस्वांतरंनिन्येयुगानामेकसप्ततिम् ॥ वासुदेवप्रसंगेनपरिभूतगतित्रयः ॥३६॥ शारीरामानसादिव्यावैयासेयेचमानुषाः ॥ भौतिकाश्चकथंक्लेशाबाधंतेहरिसंश्रयं ॥३७॥ यःपृष्टोमुनिभिःप्राहधर्मान्नानाविधान्शुभान् ॥ नृणांवर्णाश्रमाणांचसर्वभूतहितःसदा ॥३८॥ एततआदिराजस्यमनोश्चरितमद्भुतं ॥ वर्णितंवर्णनीयस्यतदपत्योदयंशृणु ॥ ३९ ॥ इतिश्रीभा०तृ०द्वाविंशतितमोऽध्यायः ॥२२॥ ॥ मैत्रेयउवाच पितृभ्यांप्रस्थितेसाध्वीपतिमिंगितकोविदा ॥ नित्यंपर्यचरत्प्रीत्याभवानीवभवंप्रभुं ॥ १ ॥ विश्रंभेणात्मशौचेनगौरवेणदमेनच ॥ शुश्रूषयासौहृदेनवाचामधुरयाचभो ॥ २ ॥ विसृज्यकामंदंभंचद्वेषंलोभमघंमदं ॥ अप्रमत्तोद्यतानित्यंतेजीयांसमतोषयत् ॥३॥ सर्वैदेवर्षिवर्यस्तांमानवींसमनुव्रतां ॥ दैवाद्गरीयसःपत्युराशासानांमहाशिषः ॥४॥ कालेनभूयसाक्षामांकर्शितांव्रतचर्यया ॥ प्रेमगद्गदयावाचापीडितःकृपयाऽब्रवीत् ॥५॥ तुष्टोऽहमद्यतवमानविमानदायाःशुश्रूषयापरमयापरयाचभक्त्या ॥ योदेहिनामयमतीवसुहृत्स्वदेहोनावेक्षितःसमुचितःक्षपितुंमदर्थे ॥६॥ येमेस्वधर्मनिरतस्यतपःसमाधिविद्यात्मयोगविजिताभगवत्प्रसादाः ॥ तानेवतेमदनुसेवनयाऽवरुद्धान्दृष्टिंप्रपश्यवितराम्यभयानशोकान् ॥ ७ ॥

थाकर्तुंसमर्थादित्यर्थः ॥ ४ ॥ व्रतचर्ययाकर्शितांतत्रापिभूयसाकालेनातिक्षामामित्यर्थः ॥ ५ ॥ सुहृत्प्रियःमदर्थेक्षपयितुंनावेक्षितःनगणितः समुचितःश्लाघ्योऽपिमत्सेवासक्तयाउपेक्षितइत्यर्थः ॥ ६ ॥ तपश्चसमाधिश्चविद्याचउपासनातासुयआत्मयोगःचित्तैकाग्र्यंतेनविजिताःप्राप्ताःभगवत्प्रसादाःदिव्याभोगाःतानेवतेअवरुद्धान्त्वयाऽपिवशीकृतान्प्रपश्यते दिव्यांदृष्टिंवितरामि ययादृष्टचाद्रक्ष्यसि ॥७॥

अन्येपुनर्भोगाः किं नकिमपि अतितुच्छाइत्यर्थः तत्रहेतुः भगवतउरुक्रमस्ययाभ्रूस्तस्याउद्विजृंभोवक्रीभावस्तेनविभ्रंशिताअर्थरचनामनोरथायेषुनिजधर्मेणपातिव्रत्येनदुह्यंतइत्तितथातान् दुरधिगान्दुष्प्रापान् नृपावयमितियाविक्रियास्तत्तद्भोगविकृतयःताभिः ॥ ८ ॥ अखिलायोगमायाश्चतत्तदुपासनास्तासुविचक्षणंनिपुणमेवंब्रुवाणंपतिमवेक्ष्यगताधिःनिश्चिंताजाता संप्रश्रयोविनयः प्रणयःप्रेमताभ्यांविह्वलागद्गदातयागिराईषद्व्रीडासहितोयोऽवलोकस्तेन विलसद्धसितमाननंयस्याःसा आहजगाद॥ ९॥बतेतिहर्षे द्विजवृषद्विजश्रेष्ठ हेभर्त्तःत्वयिएतत्सर्वंराद्धंसिद्धमेव तदहमवैमिजानामि किंतुयस्तेत्वयासमयोऽभिहितः सतावद्भूयात्सकृदितिगर्भसंभवमात्रपर्यंतइत्यर्थः यस्मात्

अन्येपुनर्भगवतोभ्रुवउद्विजृंभविभ्रंशितार्थरचनाःकिमुरुक्रमस्य ॥ सिद्धाऽसिभुंक्ष्वविभवान्निजधर्मदोहान्दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥८॥ एवंब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणमवेक्ष्यगताधिरासीत् ॥ संप्रश्रयप्रणयविह्वलयागिरेषद्व्रीडाऽवलोकविलसद्धसिताननाह ॥९॥ देवहूतिरुवाच राद्धंबतद्विजवृषैतदमोघयोगमायाधिपेत्वयिविभोतदवैमिभर्त्तः ॥ यस्तेऽभ्यधायिसमयःसकृदंगसंगोभूयाद्गरीयसिगुणःप्रसवःसतीनां ॥ १० ॥ तत्रेतिकृत्यमुपशिक्षयथोपदेशंयेनैषमेकर्शितोऽतिरिरंसयात्मा ॥ सिध्येतत्तेकृतमनोभवधर्षितायादीनस्तदीशभवनंसदृशंविचक्ष्व ॥११॥ मैत्रेयउवाच प्रियायाःप्रियमन्विच्छन्कर्दमोयोगमास्थितः ॥ विमानंकामगंक्षत्तस्तर्ह्येवाविरचीकरत् ॥ १२ ॥ ॥ ॥

गरीयसिश्रेष्ठेभर्त्तरिहेतुभूतेस्त्रीणांप्रसवोगुणः महान्लाभः समासपाठेगरीयसिपत्यौसतिसतीनांयतोगुणप्रसवःगुणविस्तारोभवति अतः पुत्रोत्पत्त्याममगुणविस्तारेजातेपश्चात्त्वदुक्तंसर्वंभवत्वितिभावः ॥ १० ॥ अंगसंगार्थंचप्रथममितिकर्त्तव्यतांसंपादयेत्याह हेईश तत्रअंगसंगे इतिकृत्यंसाधनम् यथोपदेशंकामशास्त्रानुसारेणउपशिक्षसंजानीहि उपकल्पयेत्यर्थः येनसाधनेनाभ्यंगभोजनपानादिना अतीवरंतुमिच्छयाकर्शितोदीनश्च ममैषआत्मादेहः सिध्येतरतिसमर्थोभवेत् कथंभूतायाः तेत्वयैवकृतःक्षोभितोयोमनोभवस्तेनधर्षितायाः तत्ततोऽनुरूपंभवनंविचक्ष्ववितर्कय विचारयेतियावत् ॥ ११ ॥ तर्हितत्क्षणमेव आविरचीकरत्आविर्भावयांबभूव ॥ १२ ॥

तदेवविशिनष्टि सर्वकामदुघमितिनवभिः सर्वैश्चरत्नादिभिःसमन्वितं सर्वर्द्धीनांसर्वसंपदांयउपचयस्तस्य उदर्कउत्तरोत्तराभिवृद्धिर्यस्मि
नूउपस्कृतंशोभितं ॥ १३ ॥ उपकरणंपरिकरः पट्टिकाःअल्पविस्तारपट्टवस्त्रविशेषाः पताकाःविस्तृतास्ताभिः ॥ १४॥ विचित्राणिमा
ल्यानिपुष्पाणियासु मंजुयथाभवति एवंसिंजंतःषडंघ्रयोयासुताभिः स्रग्भिः ॥ १५ ॥ उपर्युपरिविरचितगृहेषु कशिपुभिःशय्याभिः कां
तंकमनीयम् पर्यंकादिभिश्चकांतम् ॥ १६ ॥ १७ ॥ द्वास्सुद्वारेषु विद्रुमनिर्मितादेहलीउदुंबरस्तयाभातंशोभितम् वज्रखचितकपाटयुक्तं

सर्वकामदुघंदिव्यंसर्वरत्नसमन्वितं ॥ सर्वर्द्ध्युपचयोदर्कंमणिस्तंभैरुपस्कृतं ॥ १३ ॥ दिव्योपकरणोपेतंस
र्वकालसुखावहं ॥ पट्टिकाभिःपताकाभिर्विचित्राभिरलंकृतं ॥ १४ ॥ स्रग्भिर्विचित्रमाल्याभिर्मंजुसिंजत्
षडंघ्रिभिः ॥ दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितं ॥ १५ ॥ उपर्युपरिविन्यस्तानिलयेषुपृथक्पृथक् ॥ क्षि
प्तैःकशिपुभिःकांतंपर्यंकव्यजनासनैः ॥ १६ ॥ तत्रतत्रविनिक्षिप्तनानाशिल्पोपशोभितं ॥ महामरकतस्थ
ल्याजुष्टंविद्रुमवेदिभिः ॥ १७ ॥ द्वास्सुविद्रुमदेहल्याभातंवज्रकपाटमत् ॥ शिखरेष्विंद्रनीलेषुहेमकुंभैर
धिश्रितं ॥ १८ ॥ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषुनिर्मितैः ॥ जुष्टंविचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९ ॥
हंसपारावतव्रातैस्तत्रतत्रनिकूजितं ॥ कृत्रिमान्मन्यमानैःस्वानधिरुह्याधिरुह्यच ॥ २० ॥ विहारस्थानवि
श्रामसंवेशप्रांगणाजिरैः ॥ यथोपजोषंरचितैर्विस्मापनमिवात्मनः ॥ २१ ॥ ईदृग्गृहंतत्पश्यंतींनातिप्रीते
नचेतसा ॥ सर्वभूताशयाभिज्ञःप्रावोचत्कर्दमःस्वयं ॥ २२ ॥ निमज्ज्यास्मिन्ह्रदेभीरुविमानमिदमारुह ॥
इदंशुक्लकृतंतीर्थमाशिषांयापकंनृणां ॥ २३ ॥

इंद्रनीलमयेषुशिखरेषुप्रासादाग्रभागेषु ॥ १८ ॥ चक्षुष्मंतइवयेप
द्मरागाग्र्यास्तैः यद्वा चक्षुष्मदिव कैः पद्मरागाग्र्यैः विचित्रैर्वितानैर्वितानसमूहैः ॥ १९॥ कृत्रिमानपिहंसादीन्स्वान्सजातीयान्मन्यमानै
स्तत्रतत्राधिरुह्याधिरुह्यनिकूजितं ॥२०॥ विहारस्थानंक्रीडाप्रदेशः विश्रामःशयनगृहं संवेशउपभोगस्थानम् प्रांगणंगृहाद्बहिः अजि
रंप्राकाराद्बहिः यथोपजोषंयथासुखमात्मनःस्वस्यमायाविनोऽपिविस्मयजनकमिव ॥ २१ ॥ नातिप्रीतेनमलिनदेहत्वात्परिचारिकाभा
वाच्च ॥ २२ ॥ अस्मिन्ह्रदेबिंदुसरसि आरुहअधिरोह शुक्लेनविष्णुनाकृतमानंदबिंदुनिपातनेन यापकंप्रापकं ॥२३ ॥ ॥

समादायआहृत्य सरजंमलिनं वेणीभूतान्जटिलान् ॥२४॥ शबलौविवर्णौस्तनौयस्मिन्तत् सरस्वत्याः शिवानिजलानिआशेरतेयस्मिन्शि वाजलाशयाजलचरायस्मिन्इतिवा ॥ २५ ॥ सातत्रनिमग्नासतीविस्मयंददर्श तमाहसांऽतःसरसीतिदशभिः उत्पलगंधयःकमलगंधि न्यः ॥२६॥ स्त्रियःप्रोचुः तुभ्यंतवकर्मकरीःपरिचारिकावयमस्मान्आज्ञापयेति ॥ २७ ॥ ततश्चस्नानेनस्नानयोग्यतैलादिना ॥ २८ ॥ परा र्ध्यानिउत्कृष्टानि वरीयांसितत्प्रियाणि दीप्तिमंतिच पानंपेयंअमृतंस्वादु आसवंमादकं ॥ २९ ॥ आदर्शेस्वमात्मानंददर्शेतिशेषः आ

सातद्भर्तुःसमादायवचःकुवलयेक्षणा ॥ सरजंबिभ्रतीवासोवेणीभूतांश्चमूर्धजान् ॥२४॥ अंगंचमलपंकेनसंछन्नंशबलस्तनं ॥ आविवेशसरस्वत्याःसरःशिवजलाशयं ॥२५॥ सांऽतःसरसिवेश्मस्थाःशतानिदशकन्यकाः ॥ सर्वाःकिशोरवयसोददर्शोत्पलगंधयः ॥२६॥ तांदृष्ट्वासहसोत्थायप्रोचुःप्रांजलयःस्त्रियः ॥ वयंकर्मकरीस्तुभ्यंशाधिनःकरवामकिं ॥२७॥ स्नानेनतांमहार्हेणस्नापयित्वामनस्विनीं ॥ दुकूलेनिर्मलेनूत्नेददुरस्यैचमानद ॥२८॥ भूषणानिपरार्ध्यानिवरीयांसिद्युमंतिच ॥ अन्नंसर्वगुणोपेतंपानंचैवामृतासवम् ॥२९॥ अथादर्शेस्वमात्मानंस्रग्विणंविरजांबरं ॥ विरजंकृतस्वस्त्ययनंकन्याभिर्बहुमानितं ॥ ३० ॥ स्नातंकृतशिरस्नानंसर्वाभरणभूषितं ॥ निष्कग्रीवंवलयिनंकूजत्कांचननूपुरं ॥ ३१ ॥ श्रोण्योरध्यस्तयाकांच्याकांचन्याबहुरत्नया ॥ हारेणचमहार्हेणरुचकेनचभूषितं ॥ ३२ ॥ सुदतासुभ्रुवाश्लक्ष्णस्निग्धापांगेनचक्षुषा ॥ पद्मकोशस्पृधानीलैरलकैश्चलसन्मुखं ॥ ३३ ॥ यदासस्मारऋषभमृषीणांदयितंपतिं ॥ तत्रचास्तेसहस्त्रीभिर्यत्रास्तेसप्रजापतिः ॥ ३४ ॥

त्मानंविशिनष्टिचतुर्भिः कृतंस्वस्त्ययनंमंगलंयस्य पुंस्त्वमात्मशब्दसामानाधिकरण्यात् ॥३०॥ विरजमित्यस्यप्रपंचःस्नातंउद्वर्त्यक्षालितं कृतंशिरःस्नानमभ्यंगोयेन भूषितत्वमेवाह निष्कंपदकंग्रीवायांयस्य ॥३१॥ बहूनिरत्नानियस्यांतया रुचकेनमंगलद्रव्येणकुंकुमादिना तदुक्तंविश्वप्रकाशे रुचकंमंगलद्रव्येग्रीवाभरणदंतयोरिति ॥ ३२ ॥ सुदतासुभ्रुवाचक्षुषेतिचजातावेकवचनानि एतैर्लसत्शोभमानंमुखंयस्य कथंभूतेनचक्षुषा श्लक्ष्णोमनोहरःस्निग्धोऽपांगोनेत्रप्रांतोयस्य पद्मकोशेनस्पर्धतइतिपद्मकोशस्पृत्तेन ॥ ३३ ॥ दृष्ट्वाचयदापतिंसस्मारतदायत्रासौतत्रैवस्वयमप्यास्ते ॥ ३४ ॥ ॥ ॥

आत्मानंनिशाम्यदृष्ट्वा तांचतस्ययोगगतिंयोगप्रभावंदृष्ट्वा संशयंकिमिदमितिविस्मयं॥ ३५ ॥ समुनिर्विवाहात्प्राक्यदात्मनोरूपंतदेवपुन
र्बिभ्रतीं संवीतौप्रावृतौरुचिरौस्तनौयस्याः पाठांतरेतुरूपविशेषणं ॥ ३६ ॥ शोभनेवाससीयस्याः जातोभावःप्रेमयस्य हेअमित्रहन्जितका
म ॥ ३७ ॥ तस्मिन्विमानेमुनिर्बभ्राजे नलुप्तोमहिमास्वातंत्र्यंयस्य उपचीर्णंशुश्रूषितंवपुर्यस्य विकसितकुमुद्गणवान् अपीच्योऽतिसुंदरः पू
र्णचंद्रवत् मुनिर्नभइवविमानं ताराइवताःस्त्रियः कुमुदानीवतासांनेत्राणीतिज्ञेयं ॥३८॥ तेनविमानेन अष्टलोकपालानांविहारोयस्मिन् कु

भर्तुःपुरस्तादात्मानंस्त्रीसहस्त्रवृतंतदा ॥ निशाम्यतद्योगगतिंसंशयंप्रत्यपद्यत ॥ ३५ ॥ सतांकृतमलस्ना
नांविभ्राजंतीमपूर्ववत् ॥ आत्मनोबिभ्रतीरूपंसंवीतरुचिरस्तनीं ॥ ३६ ॥ विद्याधरीसहस्त्रेणसेव्यमानां
सुवाससं ॥ जातभावोविमानंतदारोहयदमित्रहन् ॥ ३७ ॥ तस्मिन्नलुप्तमहिमाप्रिययाऽनुरक्तोविद्याध
रीभिरुपचीर्णवपुर्विमाने ॥ बभ्राजउत्कचकुमुद्गणवानपीच्यस्ताराभिरावृतइवोडुपतिर्नभस्थः ॥ ३८ ॥
तेनाष्टलोकपविहारकुलाचलेंद्रद्रोणीष्वनंगसखमारुतसौभगासु ॥ सिद्धैर्नुतोद्युधुनिपातशिवस्वनासुरेमे
चिरंधनदवल्ललनावरूथी ॥ ३९ ॥ वैश्रंभकेसुरसनेनंदनेपुष्पभद्रके ॥ मानसेचैत्ररथ्येचसरेमेरामयारतः
॥ ४० ॥ भ्राजिष्णुनाविमानेनकामगेनमहीयसा ॥ वैमानिकानत्यशेतचरन्लोकान्यथाऽनिलः ॥ ४१ ॥
किंदुरापादनंतेषांपुंसामुद्दामचेतसां ॥ यैराश्रितस्तीर्थपदश्चरणोव्यसनात्ययः ॥ ४२ ॥ प्रेक्षयित्वाभुवो
गोलंपत्न्यैयावान्स्वसंस्थया ॥ बह्वाश्चर्यंमहायोगीस्वाश्रमायन्यवर्तत ॥ ४३ ॥ विभज्यनवधात्मानंमा
नवींसुरतोत्सुकां ॥ रामांनिरमयन्रेमेवर्षपूगान्मुहूर्तवत् ॥ ४४ ॥ ॥ ॥ ॥

लाचलेंद्रोमेरुः तस्यद्रोणीषुदरीषु अनंगस्यसखायोमारुतःशीतसुगंधमंदाऽनिलः तेनसौभगंसौभाग्यंसौंदर्ययासु सिद्धैर्नुतःस्तुतःसन् द्युधु
निर्गंगातस्याःपातेनशिवःस्वनोयासुतासुरेमे ललनावरूथीस्त्रीरत्नसमूहवान् ॥ ३९ ॥ वैश्रंभकादिषुदेवोद्यानेषु मानसेचसरसि रतःप्रीतः
सन् ॥ ४० ॥ अत्यशेतअतिक्रम्यास्थितः ॥ ४१ ॥ उद्दामचेतसांधीराणांव्यसनंसंसारस्तस्यात्ययोयस्मात् ॥ ४२ ॥ प्रेक्षयित्वादर्शयित्वा गोलं
मंडलं स्वसंस्थयाद्वीपवर्षादिरचनया यावान्तावंतंबहून्याश्चर्याणियस्मिन्तम् ॥ ४३ ॥ विभज्यनवधानवप्रभेदेनात्मानंकृत्वा ॥ ४४ ॥

॥४५॥ शरदः संवत्सराः मनागीषदिव व्यतीयुः ॥४६॥ आत्मनास्वदेहार्धरूपेणअतिप्रीत्याभावयन् तथासातिसदपत्यंभर्त्रेदिति नोधानवधा सर्वसंकल्पविदिति तस्याःबहुपत्यसंकल्पंजानन्नित्यर्थः विभुस्तथाकर्तुंसमर्थश्च आत्मविदितिच तस्यामनासक्तत्वात् स्त्रियोजाताइतिभावः पुमान्पुंसोऽधिकेशुक्रेस्त्रीभवत्यधिकेस्त्रियाइतिस्मृतेः ॥ ४७ ॥ अतःअनंतरमेव सद्यःएकस्मिन्नेवाहनि चारूणिसर्वाण्यंगानियासां ॥४८॥ प्रव्रजिष्यंतं आलक्ष्यावितर्क्य स्मयमानाबहिः अंतस्तुविक्लवेनव्याकुलेन विदूयतासंतप्यमानेनहृदा उवाचेत्युत्तरेणान्वयः॥४९॥नखाएवमण यःतैःश्रीःशोभायस्यतेनपदा भुवंलिखंतीतिदुरंतचिंतालक्षणं॥५०॥ उपोवाहसंपादितवान् अभयमितिभाविनोदैन्यात्संसाराच्चयद्भयंतन्नि

तस्मिन्विमानउत्कृष्टांशय्यांरतिकरींश्रिता ॥ नचाबुध्यतकालंपत्याऽपीच्येनसंगता ॥ ४५ ॥ एवंयोगानु भाविनदंपत्योरममाणयोः ॥ शतंव्यतीयुःशरदःकामलालसयोर्मनाक् ॥ ४६ ॥ तस्यामाधत्तरेतस्तांभावय न्नात्मनात्मवित् ॥ नोधाविधायरूपंस्वंसर्वसंकल्पविद्विभुः ॥ ४७ ॥ अतःसासुषुवेसद्योदेवहूतिःस्त्रियःप्र जाः ॥ सर्वास्ताश्चारुसर्वांग्योलोहितोत्पलगंधयः ॥ ४८ ॥ पतिंसाप्रव्रजिष्यंतंतदालक्ष्योशतीसती ॥ स्म यमानाविक्लवेनहृदयेनविदूयता ॥ ४९ ॥ लिखंत्यधोमुखीभूमिंपदानखमणिश्रिया ॥ उवाचललितांवाचं निरुध्याश्रुकलांशनैः ॥ ५० ॥ सर्वंतद्भगवान्मह्यमुपोवाहप्रतिश्रुतं ॥ अथापिमेप्रपन्नायाअभयंदातुमर्हति ॥ ५१ ॥ ब्रह्मन्दुहितृभिस्तुभ्यंविमृग्याःपतयःसमाः ॥ कश्चित्स्यान्मेविशोकायत्वयिप्रव्रजितेवनं ॥ ५२ ॥ एतावताऽलंकालेनव्यतिक्रांतेनमेप्रभो ॥ इंद्रियार्थप्रसंगेनपरित्यक्तपरात्मनः ॥ ५३ ॥ इंद्रियार्थेषुसज्जं त्याप्रसंगस्त्वयिमेकृतः ॥ अजानंत्यापरंभावंतथाऽप्यस्त्वभयायमे ॥५४॥ संयोगःसंसृतेर्हेतुरसत्सुविहितो ऽधिया ॥ सएवसाधुषुकृतोनिःसंगत्वायकल्पते ॥ ५५ ॥ ॥ ॥

वर्तयेत्यर्थः॥५१॥तत्रदैन्यंनिवेदयतितुभ्यंतवदुहितृभिःस्वयमेवात्मनःसमायोग्याःपतयोविमृग्याइतिदैन्यंप्राप्तं संसारभयमुररीकृत्याह कश्चि दिति विशोकायज्ञानोपदेशाय स्त्रीभिर्ऋणानपाकरणात् कंचित्कालंत्वदवस्थानेनब्रह्मवित्पुत्रःकश्चित्किंस्यादित्यर्थः ॥५२॥ विषयान्भुं क्ष्वकिंब्रह्मविद्ययेतिचेत्तत्राह एतावताअलंपूर्यतां परित्यक्तःपरआत्माययातस्याःमम ॥५३॥ स्वकृतमनुशोचंत्याह इंद्रियार्थेष्वितिचतुर्भिः मेमयापरंभावंतत्त्वंब्रह्मविदिति ॥ ५४ ॥ प्रसंगःकथमभयायास्तुतत्राह संगइति अधियाअज्ञानेन ॥ ५५ ॥ ॥ ॥

स्वभावतः प्रवृत्तंयस्यकर्मधर्मार्थंनकल्पतेधर्माभिमुखंनभवेत् तत्रापिनिष्कामधर्मद्वाराविरागायनकल्पते तद्वाराचतर्थिपदस्यहरेःसेवार्थं
नपर्यवस्येदित्यर्थः ५६ ॥ नमुमुक्षेयमोक्तुमिच्छांनकृतवत्यस्मि॥५७॥इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांत्रयोविंशतितमोऽध्या
यः॥२३॥ ॥ ॥ चतुर्विंशेततोजन्मकपिलस्याहतत्पितुः ॥ प्रव्रज्यांतमनुज्ञाप्यऋणत्रयविमोक्षतः ॥ १ ॥ शालिनींश्लाघ्याम्
शुक्लेनाभिव्याहृतंसहाहंस्वांशकलयेत्यादि ॥ १ ॥ इत्थंमाखिदःखेदंमाकार्षीः आत्मानंप्रति अहंभाग्यहीनेति अदूरात्शीघ्रं ॥ २ ॥

नेहयत्कर्मधर्मायनविरागायकल्पते ॥ नतीर्थपदसेवायैजीवन्नपिमृतोहिसः ॥ ५६ ॥ साहंभगवतोनूनंवंचि
तामाययादृढं ॥ यत्त्वांविमुक्तिदंप्राप्यनमुमुक्षेयबंधनात् ॥५७॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधे
कापिलेयोपाख्यानेत्रयोविंशतितमोऽध्यायः॥२३॥ ॥ ॥ मैत्रेयउवाच निर्वेदवादिनीमिवंमनो
र्दुहितरंमुनिः ॥ दयालुःशालिनीमाहशुक्लाभिव्याहृतंस्मरन् ॥ १ ॥ ऋषिरुवाच माखिदोराजपुत्री
त्थमात्मानंप्रत्यनिंदिते ॥ भगवांस्तेक्षरोगर्भमदूरात्संप्रपत्स्यते ॥ २ ॥ धृतव्रतासिभद्रंतेदमेननियमेनच ॥
तपोद्रविणदानैश्चश्रद्धयाचेश्वरंभज ॥ ३ ॥ सत्वयाराधितःशुक्लोवितन्वन्मामकंयशः ॥ छेत्ताते हृदयग्रंथि
मौदर्योब्रह्मभावनः ॥ ४ ॥ मैत्रेयउवाच देवहूत्यपिसंदेशंगौरवेणप्रजापतेः ॥ सम्यक्श्रद्धायपुरुषं
कूटस्थमभजद्गुरुम् ॥ ५ ॥ तस्यांबहुतिथेकालेभगवान्मधुसूदनः ॥ कार्दमंवीर्यमापन्नोजज्ञेऽग्निरिवदारुणि
॥ ६ ॥ अवादयंस्तदाव्योम्निवादित्राणिघनाघनाः॥गायंतितंस्मगंधर्वानृत्यंत्यप्सरसोमुदा ॥७॥ पेतुःसुम
नसोदिव्याःखेचरैरपवर्जिताः ॥ प्रसेदुश्चदिशःसर्वाअंभांसिचमनांसिच ॥८॥ तत्कर्दमाश्रमपदंसरस्वत्या
परिश्रितम् ॥ स्वयंभूःसाकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९ ॥ ॥ ॥ ॥

दमेनइंद्रियसंयमेन नियमेनस्वधर्मेण तपांसिद्रविणदानानिचतैः ॥ ३ ॥ हृदयग्रंथिंचिज्जडात्मकम् अहंकारलक्षणंबंधंछेत्ताछेत्स्यति
औदर्यःपुत्रःसन्ब्रह्मभावयतिउपदिशतीतितथा ॥ ४ ॥ श्रद्धायविश्वस्य ॥ ५ ॥ बहुतिथेबहुतरेकालेऽतिक्रांतेकार्दमंकर्दमसंबंधि ॥
॥ ६ ॥ घनाघनाइत्येकंपदं वर्षंतोमेघाः गायंतिस्मनृत्यंतिस्म ॥ ७ ॥ अपवर्जितामुक्ताः ॥ ८ ॥ परिश्रितंवेष्टितं ॥ ९ ॥

आगत्यकिंकृतवानूतदाह भगवंतमितिद्वाभ्यां तत्त्वानांसंख्यानंयस्मिनूतस्यसांख्यस्यविज्ञप्त्यैविशेषेणज्ञापनायभगवंतंजातंविद्वानूअजोब्र
ह्मास्वराट्स्वतःसिद्धज्ञानः ॥१०॥ तस्यचिकीर्षितंसभाजयनूपूजयनू प्रहृष्यमाणैरसुभिरिंद्रियैरुपलक्षितः ॥ कर्दमं वेदनभ्यधादितिद्वयो
रन्वयः चकराद्देवहूतिंच ॥ ११ ॥ तत्रत्वयेतिपंचभिःकर्दमंप्रत्याह अपचितिःपूजाकृता यद्यस्मात् निष्कपटंसम्यग्गृहीतवान् ॥ १२ ॥
अनुमन्येतेति यत् एतावत्येव ॥ १३ ॥ अनेकप्रभावैः वंशैर्बृंहयिष्यंतिवर्धयिष्यंति ॥ १४ ॥ ऋषिमुख्येभ्योमरीच्यादिभ्यः ॥ १५ ॥

भगवंतंपरंब्रह्मसत्वेनांशेनशत्रुहनू॥ तत्वसंख्यानविज्ञप्त्यैजातंविद्वानजःस्वराट्॥ १० ॥ सभाजयनूविशु
द्धेनचेतसातच्चिकीर्षितं ॥प्रहृष्यमाणैरसुभिःकर्दमंचेदमभ्यधात् ॥ ११ ॥ ब्रह्मोवाच त्वयाऽपचिति
स्तातकल्पितानिर्व्यलीकतः ॥ यन्मेसंजगृहेवाक्यंभवान्मानदमानयनू॥१२॥ एतावत्येवशुश्रूषाकार्यापि
तरिपुत्रकैः॥बाढमित्यनुमन्येतगौरवेणगुरोर्वचः॥१३॥इमादुहितरःसभ्यतववत्ससुमध्यमाः॥सर्गमेतंप्रभा
वैःस्वैर्बृंहयिष्यंत्यनेकधा॥१४॥ अतस्त्वमृषिमुख्येभ्योयथाशीलंयथारुचि ॥ आत्मजाःपरिदेह्यद्यविस्तृणी
हियशोभुवि॥१५॥ वेदाहमाद्यंपुरुषमवतीर्णंस्वमायया ॥भूतानांशेवधिंदेहंबिभ्राणंकपिलंमुने ॥ १६ ॥
ज्ञानविज्ञानयोगेनकर्मणामुद्धरनूजटाः॥हिरण्यकेशःपद्माक्षःपद्ममुद्रापदांबुजः॥१७॥एषमानवितेगर्भंप्र
विष्टःकैटभार्दनः॥अविद्यासंशयग्रंथिंछित्वागांविचरिष्यति ॥ १८ ॥ अयंसिद्धगणाधीशःसांख्याचार्यैःसु
संमतः॥ लोकेकपिलइत्याख्यांगंतातेकीर्तिवर्धनः ॥ १९॥ मैत्रेयउवाच तावाश्वास्यजगत्स्रष्टाकुमा
रैःसहनारदः॥ हंसोहंसेनयानेनत्रिधामपरमंययौ ॥ २०॥ गतेशतधृतौक्षत्तःकर्दमस्तेनचोदितः॥यथोदितं
स्वदुहितॄःप्रादाद्विश्वसृजांततः ॥ २१ ॥ पुत्रस्तुसाक्षादीश्वरइत्याह वेदाहमिति शेवधिंनिधिं सर्वाभीष्टदम् ॥ १६ ॥
देवहूतिंप्रत्याहत्रिभिः ज्ञानंशास्त्रोक्तम् विज्ञानमपरोक्षंच तेएवयोगउपायस्तेनकर्मणांजटाःमूलानिवासनाउद्धरनूउत्पाटयिष्यन् पद्म
मुद्रायुक्तंपदांबुजंयस्य ॥ १७ ॥ हेमानविअविद्यास्वरूपाज्ञानं संशयाःमिथ्याज्ञानानि तन्मयंतवहृदयग्रंथिम् ॥ १८ ॥ सुसंमतःसुपूजि
तःसनूगंताप्राप्स्यति ॥ १९ ॥ कुमारैःसहेतिशेषः सहनारदःनारदसाहितश्चमरीच्यादीनूविवाहार्थमत्रस्थाप्य नैष्ठिकैरेतैःपंचभिः सहि
तःहंसोब्रह्माययौ त्रिधामतृतीयंधामस्वर्गः तस्यपरांकाष्ठांसत्यलोकम् ॥ २० ॥ शतधृतौब्रह्मणि ॥ २१ ॥ ॥ ॥

॥ २२ ॥ युक्तांयोग्यां अयच्छत्अदात् ॥ २३ ॥ वितन्यतेसमृद्धःक्रियते शांत्यधिष्ठात्रींदेवतामित्यर्थः समलालयत् संतोषितवान् ॥
॥ २४ ॥ निमंत्र्यपृष्ट्वानंदिंहर्षंप्राप्ताःसंतः ॥ २५ ॥ सचमुनिः त्रियुगंविष्णुं विविक्तेरहासि ॥ २६ ॥ पापच्यमानानांभृशंदह्यमानानां
निरयेसंसारेस्वीयैरमंगलैः ॥ २७ ॥ कुतःसर्वादेवताःप्रसन्नाइतिज्ञातम्अलभ्यलाभादित्याहद्वाभ्यां बहुषुजन्मसुविपक्वेनसुसिद्धेन सम्य
क्योगोभक्तियोगस्तस्मिन्समाधिरैकाग्र्यंतेनशून्यागारेषुविविक्तस्थानेषुयस्यतवपदम् ॥ २८ ॥ हेलनमवज्ञां लाघवंनगणय्यअगणयि

मरीचयेकलांप्रादादनसूयामथात्रये ॥ श्रद्धामंगिरसेयच्छत्पुलस्त्यायहविर्भुवम् ॥ २२ ॥ पुलहायगतिंयु
क्तांक्रतवेचक्रियांसतीम् ॥ ख्यातिंचभृगवेयच्छद्वसिष्ठायाप्यरुंधतीं ॥ २३ ॥ अथर्वणेऽददाच्छांतिंययायज्ञोवि
तन्यते ॥ विप्रर्षभान्कृतोद्वाहान्सदारान्समलालयत् ॥ २४ ॥ ततस्तऋषयःक्षत्तःकृतदारानिमंत्र्यतं ॥ प्रा
तिष्ठन्नंदिमापन्नाःस्वंस्वमाश्रममंडलं ॥ २५ ॥ सचावतीर्णंत्रियुगमाज्ञायविबुधर्षभं ॥ विविक्तउपसंगम्यप्र
णम्यसमभाषत ॥ २६ ॥ अहोपापच्यमानानांनिरयेस्वैरमंगलैः ॥ कालेनभूयसानूनंप्रसीदंतीहदेवताः
॥ २७ ॥ बहुजन्मविपक्वेनसम्यग्योगसमाधिना ॥ द्रष्टुंयतंतेयतयःशून्यागारेषुयत्पदं ॥ २८ ॥ सएवभ
गवानद्यहेलनंनगणय्यनः ॥ गृहेषुजातोग्राम्याणांयःस्वानांपक्षपोषणः ॥ २९ ॥ स्वीयंवाक्यमृतंकर्तुमवती
र्णोऽसिमेगृहे ॥ चिकीर्षुर्भगवान्ज्ञानंभक्तानांमानवर्द्धनः ॥ ३० ॥ तान्येवतेऽभिरूपाणिरूपाणिभगवंस्तव
॥ यानियानिचरोचंतेस्वजनानामरूपिणः ॥ ३१ ॥ त्वांसूरिभिस्तत्त्वबुभुत्सयाऽद्धासदाऽभिवादार्हणपादपी
ठं ॥ ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रियांपूर्तमहंप्रपद्ये ॥ ३२ ॥ ॥ ॥ ॥

त्वाउचितमेवतवैतदित्याह यस्त्वंस्वानांभक्तानांपक्षंपुष्णासीतितथासः ॥ २९ ॥ एतत्प्रपंचयतिद्वाभ्यां स्वयमेवावतीर्णोऽसिस्ववाक्यं
तवपुत्रोभविष्यामीतियत् तत्सत्यंकर्तुं ज्ञानंज्ञानसाधनंसांख्यंचचिकीर्षुःसन् ॥ ३० ॥ यानितवालौकिकानिचतुर्भुजादिरूपाणितान्येव
तेऽभिरूपाणियोग्यानि यानिचस्वजनानांरोचंतेमनुष्यसरूपाणितान्यपितेरोचंतइत्यर्थः अरूपिणःप्राकृतरूपरहितस्य ॥ ३१ ॥ अभि
वादार्हंपादपीठंयस्य ऐश्वर्यादिभिः पूर्तंपूर्णम् ॥ ३२ ॥ ॥ ॥ ॥

ऐश्वर्यादिकंविवृण्वन्नाह परंपरमेश्वरं तत्रहेतुः स्वछंदाःस्वाधीनाःशक्तयोयस्य ताएवाह प्रधानंप्रकृतिरूपंपुरुषंतदधिष्ठातारंमहांतंमह
त्तत्त्वरूपं कालंतेषांक्षोभकं त्रिवृतंअहंकाररूपं लोकात्मकंतत्पालात्मकंच तदेवंमाययाप्रधानादिरूपतामुक्त्वाचिच्छक्त्याऽनिष्प्रपंचतामा
ह आत्मानुभूत्याचिच्छक्त्याअनुगतःस्वस्मिन्‌लीनःप्रपंचोयस्यतं कविंसर्वज्ञं प्रधानाद्याविर्भावलयसाक्षिणमित्यर्थः ॥ ३३ ॥ संन्यासानु
ज्ञांप्रार्थयते आस्माभिपृच्छेयरिंकाचिदभिपृच्छामीत्यर्थः त्वयापुत्ररूपेणावतीर्णानिनिवृत्तानिऋणानिदेवादिरूपाणियस्यसः आप्तकामश्चा
हंपरिव्रजतांसंन्यासिनांपदवींमार्गमाश्रितःसन्‌ त्वांयुंजन्‌स्मरन्‌विचरिष्यामि ॥ ३४ ॥ अहंतावज्ज्ञानोपदेशायैवत्वद्गृहेऽवतीर्णःअतस्तव

परंप्रधानंपुरुषंमहांतंकालंकविंत्रिवृतंलोकपालम् ॥ आत्मानुभूत्याऽनुगतप्रपंचंस्वच्छंदशक्तिंकपिलंप्रपद्ये ॥ ३३ ॥ आस्माभिपृच्छेऽद्यपतिंप्रजानांत्वयाऽवतीर्णार्णउताप्तकामः ॥ परिव्रजत्पदवीमास्थितोऽहंचरिष्ये त्वांहृदियुंजन्विशोकः ॥ ३४ ॥ श्रीभगवानुवाच मयाप्रोक्तंहिलोकस्यप्रमाणंसत्यलौकिके ॥ अथाजनिमयातुभ्यंयदवोचमृतंमुने ॥ ३५ ॥ एतन्मेजन्मलोकेस्मिन्‌मुमुक्षूणांदुराशयात् ॥ प्रसंख्यानायतत्त्वानांसंमतायात्मदर्शने ॥ ३६ ॥ एषआत्मपथोऽव्यक्तोनष्टःकालेनभूयसा ॥ तंप्रवर्तयितुंदेहमिमंविद्धिमयाभृतं ॥ ३७ ॥ गच्छकामंमयापृष्टोमयिसंन्यस्तकर्मणा ॥ जित्वासुदुर्जयंमृत्युममृतत्वायमांभज ॥ ३८ ॥ मामात्मानंस्वयंज्योतिःसर्वभूतगुहाशयं ॥ आत्मन्येवात्मनावीक्ष्यविशोकोभयमृच्छसि ॥ ३९ ॥ ॥

गृहेवसतोऽपिमुक्तिःसुलभैव यद्यवश्यंगंतव्यमेवेत्याग्रहस्तथाऽपिमामेवानुस्मरन्‌गच्छेत्याशयेनाह मयेतिषड्भिः सत्यलौकिकेवैदिकेलौकि
केचऋत्ये स्वोक्तस्यप्रामाण्यमभिदर्शयति यद्यस्मात्‌तुभ्यंतवपुत्रोभविष्यामीत्यवोचम् अथअतएवतत्‌ऋतंयथाभवतितथामयाऽजनिजन्म
स्वीकृतम् ॥ ३५ ॥ दुराशयात्‌लिंगात्‌ मुमुक्षूणांमुनीनामात्मदर्शनेसंमतायतत्त्वानांप्रसंख्यानायविद्धीत्युत्तरस्यानुषंगः ॥ ३६ ॥ नन्व
यमात्मज्ञानमार्गःपूर्वसिद्धएवनेदानीमपूर्ववत्‌प्रवर्त्तनीयस्तत्राह एषइति अव्यक्तःसूक्ष्मः ॥ ३७ ॥ कामंयथेच्छम् आपृष्टःअनुज्ञातः
यद्वा यथात्वंगंतुंमांपृष्टवान्‌तथाऽत्रव्यवस्थातुंमयाऽपित्वमापृष्टइत्यर्थः मयिसंन्यस्तेनसमर्पितेनकर्मणाआविद्यया मृत्युंतीर्त्वाविद्ययाऽमृतम
श्नुतइतिश्रुतेः ॥ ३८ ॥ ततश्चमांपरमंपरमात्मानम् आत्मानिस्वास्मिन्‌आत्मनामनसाअन्वक्षिमाणोऽभयंमोक्षंप्राप्स्यसि ॥ ३९ ॥

मात्रेदेवहूत्यै शमनीं उन्मूलनीं भयमतिशयेनतरिष्यतिपरमानंदंचप्राप्स्यतीतिचकारार्थः ॥ ४० ॥ समुदितःसम्यगुक्तःसन् तंप्रदक्षिणीकृत्य ॥ ४१ ॥ मुनीनांव्रतंमौनम् अहिंसालक्षणम् ॥ ४२ ॥ सदसतःपरंयत्तस्मिन्ब्रह्मणि गुणावभासके निर्गुणे एकभक्त्याअव्यभिचारिण्याभक्त्याअनुभाविते अपरोक्षीकृते ॥ ४३ ॥ अतोदेहादिष्वहंकारादिरहितः अतएवनिर्द्वंद्वःशीतोष्णाद्यनाकुलः समदृक्भेदाग्राहकः किंतुस्वदृक्स्वमेवपश्यन् प्रत्यक्प्रवणाप्रशांताविक्षेपरहिताधीर्यस्य ॥ ४४ ॥ तदेवंविधकल्पितोपाधिनिवृत्तिमुक्तापरमेश्वरपदप्राप्तिमाह वासुदेवइतित्रिभिः प्रतीचीजीवस्यात्मानिलब्धःआत्माचित्तंयेन यतोमुक्तंबंधनमज्ञानंयस्य ॥ ४५ ॥ लब्धात्मतामेवाह आत्मानमिमात्रेआध्यात्मिकींविद्यांशमनींसर्वकर्मणाम् ॥ वितरिष्येययाचासौभयंचातितरिष्यति ॥ ४० ॥ मैत्रेयउवाच एवंसमुदितस्तेनकपिलेनप्रजापतिः ॥ दक्षिणीकृत्यतंप्रीतोवनमेवजगामह ॥ ४१ ॥ व्रतंसआस्थितोमौनमात्मैकशरणोमुनिः ॥ निःसंगोव्यचरत्क्षोणीमनग्निरनिकेतनः ॥ ४२ ॥ मनोब्रह्मणियुंजानोयत्तत्सदसतःपरं ॥ गुणावभासेविगुणएकभक्त्यानुभाविते ॥४३॥ निरहंकृतिर्निर्ममश्चनिर्द्वंद्वःसमदृक्स्वदृक् ॥ प्रत्यक्प्रशांतधीर्धीरःप्रशांतोर्मिरिवोदधिः ॥४४॥ वासुदेवेभगवतिसर्वज्ञेप्रत्यगात्मनि॥ परेणभक्तिभावेनलब्धात्मामुक्तबंधनः ॥ ४५ ॥ आत्मानंसर्वभूतेषुभगवंतमवस्थितं ॥ अपश्यत्सर्वभूतानिभगवत्यपिचात्मनि ॥४६ ॥ इच्छाद्वेषविहीनेनसर्वत्रसमचेतसा ॥ भगवद्भक्तियुक्तेनप्राप्ताभागवतीगतिः ॥४७॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयेचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ ॥ शौनकउवाच कपिलस्तत्त्वसंख्याताभगवनात्ममायया ॥ जातःस्वयमजःसाक्षादात्मप्रज्ञप्तयेनृणाम् ॥ १ ॥ ति ॥ ४६ ॥ तदेवंतेनभागवतीगतिःप्राप्ता पाठांतरेसएवतांगतिंप्राप्तइति ॥ ४७ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ॥ पंचविंशेजनन्यातुपृष्टोबंधविमोचनं ॥ आदावाहपरंभक्तिलक्षणंकपिलःसुतः ॥ १ ॥ कपिलेनार्पितामात्रेगूढभावानियंत्रिता ॥ योगमाणिक्यमंजूषास्फुटमुद्रा व्यतेऽधुना ॥ २ ॥ उक्तमनुवादपूर्वकंकापिलंयोगंपृच्छति कपिलइतित्रिभिः तत्त्वानांसंख्यातागणकः सांख्यप्रवर्तकइत्यर्थः अजएवस्वयंजातः आत्मप्रज्ञप्तयेआत्मतत्त्वज्ञापनाय ॥ १ ॥

पुंसांमध्येवर्ष्मणःवृद्धस्यउत्तमस्येत्यर्थः सर्वयोगिनांमध्येवरिम्णः वरस्यभावोवरिमा भवितृप्रधानोऽयंनिर्देशः वरिष्ठस्येत्यर्थः यद्वा वरीयस्त्वादित्यर्थः विश्रुतौकीर्तौ असवइंद्रियाणिभूरिअलंनतृप्यंति श्रुतेनश्रवणेनदव्यतिद्योततइतितथातस्य यद्वा भूरिबहुशःश्रुतोदेवो येनतस्यापिमे असवइतिसंबंधः ॥ २ ॥ स्वानांछंदेनइच्छयाआत्मादेहोयस्यसः यद्यत्कर्मविधत्तेतानिकर्माणिकीर्तनार्हाणिअनुकीर्त्तय ॥ ॥ ३ ॥ यथात्वंमांप्रचोदयासि एवंप्रचोदितःसन् तथा तत्प्रश्नानुसारेण आन्वीक्षिक्यामात्मविद्यायाम् ॥ ४ ॥ बिंदुसरेइति आर्षः बिंदुसरसि ॥ ५ ॥ तत्त्वमार्गस्याग्रंपारंदर्शयतीतितथा एषमानावितेगर्भंप्रविष्टःकैटभार्दनइत्यादिधातुर्वचःसंस्मरंतीप्राह ॥ ६ ॥ असता

नह्यस्यवर्ष्मणःपुंसांवरिम्णःसर्वयोगिनां ॥ विश्रुतौश्रुतदेवस्यभूरितृप्यंतिमेऽसवः ॥ २ ॥ यद्यद्विधत्ते भगवान्स्वच्छंदात्मात्ममायया॥तानिमेश्रद्दधानस्यकीर्त्तन्यान्यनुकीर्त्तय ॥ ३॥ सूतउवाच द्वैपायन सखस्त्वेवंमैत्रेयोभगवांस्तथा ॥ प्राहेदंविदुरंप्रीतआन्वीक्षिक्यांप्रचोदितः ॥ ४ ॥ मैत्रेयउवाच पितरिप्रस्थितेऽरण्यंमातुःप्रियचिकीर्षया ॥ तस्मिन्बिंदुसरेऽवात्सीद्भगवान्कपिलःकिल ॥५॥ तमासीनमकर्माणंतत्त्वमार्गाग्रदर्शनं ॥ स्वसुतंदेवहूत्याहधातुःसंस्मरतीवचः ॥ ६ ॥ देवहूतिरुवाच निर्विण्णानितरांभूमन्नसदिंद्रियतर्षणात् ॥ येनसंभाव्यमानेनप्रपन्नांऽधंतमःप्रभो ॥७॥ तस्यत्वंतमसोंऽधस्य दुष्पारस्याद्यपारगम् ॥ सच्चक्षुर्जन्मनामंतेलब्धंमेत्वदनुग्रहात् ॥ ८ ॥ यआद्योभगवान्पुंसामीश्वरोवैभवान्किल ॥ लोकस्यतमसांऽधस्यचक्षुःसूर्यइवोदितः ॥ ९ ॥ अथमेदेवसंमोहमपाक्रष्टुंत्वमर्हसि ॥ योऽवग्रहोऽहंममेतीत्येतस्मिन्योजितस्त्वया ॥ १० ॥ तंत्वागताऽहंशरणंशरण्यंस्वभृत्यसंसारतरोःकुठारं ॥ जिज्ञासयाऽहंप्रकृतेःपूरुषस्यनमामिसद्धर्मविदांवरिष्ठं ॥ ११ ॥ ॥ ॥

मिंद्रियाणांतर्षणात् विषयाभिलाषात् निर्विण्णाश्रांताऽस्मि येनसंभाव्यमानेनपूर्यमाणेन ॥ ७ ॥ पारंगमयतीतिपारंगत्वमेवश्रेष्ठंचक्षुर्मे मयालब्धं त्वदनुग्रहाज्जन्मनामंतेभाव्येसाति ॥ ८ ॥ तत्प्रपंचयतिसभगवान् भवान्चक्षुरूपउदितः सूर्योयथा ॥ ९ ॥ अपाक्रष्टुमपनेतुं कोऽसौसंमोहः तमाह एतस्मिन्देहादौत्वयैवयोजितोयोऽहंममेत्यवग्रहःआग्रहः द्वितीयइतिशब्दस्तत्कार्यरागादिग्रहणार्थः ॥ १० ॥ प्रकृतेःपुरुषस्यचजिज्ञासया त्वामहंशरणंगतासतीनमामीत्यन्वयः कुठारंछेत्तारम् ॥ ११ ॥ ॥ ॥

अपवर्गवर्धनंमोक्षेरतिजनकमीषत्स्मितेनशोभितमाननंयस्य ॥१२॥ आध्यात्मिकआत्मनिष्ठः यत्रयस्मिन् ॥१३॥१४॥ तत्र सर्वांगनैपुणंचि त्तसंयमाधीनमितिदर्शयन्नाह चेतइति अस्यात्मनोजीवस्यगुणेषुविषयेषुपुंसिपरमेश्वरे वाशब्दस्तुशब्दार्थे ॥ १५ ॥ यथाचचित्तसंयमेपुरुषा र्थसिद्धिस्तद्दर्शयतित्रिभिः मलैर्वीतंविरहितंयदाशुद्धंमनोभवति मनःशुद्धेर्ज्ञापकमाह अदुःखमिति ॥ १६॥ निरंतरंनिर्भेदम् अणिमानंसूक्ष्म

मैत्रेयउवाच इतिस्वमातुर्निरवद्यमीप्सितंनिशम्यपुंसामपवर्गवर्धनं ॥ धियाऽभिनंद्यात्मवतांसतांगति र्बभाषईषत्स्मितशोभिताननः ॥१२॥ श्रीभगवानुवाच योगआध्यात्मिकःपुंसामतोनिःश्रेयसायमे ॥ अत्यंतोपरतिर्यत्रदुःखस्यचसुखस्यच॥१३॥तमिमंतेप्रवक्ष्यामियमवोचंपुराऽनघे ॥ ऋषीणांश्रोतुकामानां योगंसर्वांगनैपुणं ॥ १४ ॥ चेतःखल्वस्यबंधायमुक्तयेचात्मनोमतं ॥ गुणेषुसक्तंबंधायरतंवापुंसिमुक्तये ॥ ॥ १५ ॥ अहंममाभिमानोत्थैःकामलोभादिभिर्मलैः ॥ वीतंयदामनःशुद्धमदुःखमसुखंसमं ॥ १६ ॥ तदापु रुषआत्मानंकेवलंप्रकृतेःपरं ॥ निरंतरंस्वयंज्योतिरणिमानमखंडितं ॥१७॥ ज्ञानवैराग्ययुक्तेनभक्तियुक्ते नचात्मना ॥ परिपश्यत्युदासीनंप्रकृतिंचहतौजसं॥१८॥ नयुज्यमानयाभक्त्याभगवत्यखिलात्मनि ॥ सदृ शोऽस्तिशिवःपंथायोगिनांब्रह्मसिद्धये ॥ १९ ॥ प्रसंगमजरंपाशमात्मनःकवयोविदुः॥सएवसाधुषुकृतो मोक्षद्वारमपावृतं ॥ २० ॥ तितिक्षवःकारुणिकाःसुहृदःसर्वदेहिनां ॥ अजातशत्रवःशांताःसाधवःसाधुभू षणाः ॥ २१ ॥ मय्यनन्येनभावेनभक्तिंकुर्वंतियेदृढां ॥ मत्कृतेत्यक्तकर्माणस्त्यक्तस्वजनबांधवाः ॥२२॥ मदाश्रयाःकथामृष्टाःशृण्वंतिकथयंतिच ॥ तपंतिविविधास्तापानैतान्मद्गतचेतसः ॥ २३ ॥

मखंडितमपरिच्छिन्नम् ॥१७॥ हतौजसंक्षीणबलाम् ॥ १८ ॥ मनःशुद्धौचभक्तिरेवांतरंगसाधनमित्याह नेति ॥ १९ ॥ अस्यसर्वस्यापिसत्सं गोमूलमित्याह प्रसंगमिति अपावृतंनिरावरणम् ॥२०॥ साधूनांलक्षणमाह तितिक्षवइतिचतुर्भिः साधवःशास्त्रानुवर्त्तिनः साधुसुशीलंतदे वभूषणंयेषां ॥ २१ ॥ २२ ॥ एतानुक्तलक्षणान्तापाआध्यात्मिकादयोनतपंतिनव्यथयंति कुतःमद्गतंचेतोयेषांतान् ॥ २३ ॥

येतापैर्नाभिभूयंतेतेसाधत्रइत्यर्थः ॥ २४ ॥ सत्संगस्यभक्त्यंगतामुपपादयाति सतामिति वीर्यस्यसम्यक्त्वेदनंयासुतावीर्यसंविदः हृत्कर्ण योरसायनाः सुखदाः तासांजोषणात्सेवनात् अपवर्गोऽविद्यानिवृत्तिर्वर्त्मयस्मिन्तास्मिन्हरौ प्रथमंश्रद्धाततोरतिःततोभक्तिः अनुक्रमिष्य ति अनुक्रमेणभविष्यतीत्यर्थः ॥ २५ ॥ ततःकिमतआह भक्त्येति ममरचनायासृष्ट्यादिलीला तस्याअनुचिंतयायाभक्तिस्तयाऐंद्रिया त्सुखाज्जातविरागःसन् दृष्टश्रुतात्ऐहिकामुष्मिकात् ततोयत्तउद्युक्तःसन् चित्तस्यग्रहणेयतिष्यतेयतिष्यति ऋजुभिःभक्तिप्रधानत्वादना यासैः ॥ २६ ॥ तदेवंप्रकृतेर्गुणानामसेवयाज्ञानादिभिश्च अयंजीवइहैवदेहेमामेवावरुंधेप्राप्नोति ॥ २७ ॥ काचिदिति कास्विदित्यर्थः

तएतेसाधवःसाध्विसर्वसंगविवर्जिताः ॥ संगस्तेष्वथतेप्रार्थ्यःसंगदोषहराहिते ॥ २४ ॥ सतांप्रसंगा न्ममवीर्यसंविदोभवंतिहृत्कर्णरसायनाःकथाः ॥ तज्जोषणादाश्वपवर्गवर्त्मनिश्रद्धारतिर्भक्तिरनुक्रमिष्य ति ॥ २५ ॥ भक्त्यापुमान्जातविरागऐंद्रियाद्दृष्टश्रुतान्मद्रचनानुचिंतया ॥चित्तस्ययत्तोग्रहणेयोगयुक्तो यतिष्यतेऋजुभिर्योगमार्गैः ॥ २६ ॥ असेवयाऽयंप्रकृतेर्गुणानांज्ञानेनवैराग्यविजृंभितेन ॥ योगेनम य्यर्पितयाचभक्त्यामांप्रत्यगात्मानमिहावरुंधे ॥ २७ ॥ देवहूतिरुवाच काचित्त्वय्युचिताभक्तिःकी दृशीममगोचरा ॥ ययापदंतेनिर्वाणमंजसाऽन्वश्नवाअहं ॥ २८ ॥ योयोगोभगवद्बाणोनिर्वाणात्मंस्त्वयो दितः ॥ कीदृशःकतिचांगानियतस्तत्त्वावबोधनं ॥ २९ ॥ तदेतन्मेविजानीहियथाऽहंमंदधीर्हरे ॥ सुखं बुध्येयदुर्बोधंयोषाभवदनुग्रहात् ॥ ३० ॥ मैत्रेयउवाच विदित्वाऽर्थंकपिलोमातुरित्थंजातस्नेहोय त्रतन्वाऽभिजातः ॥ तत्त्वाम्नायंयत्प्रवदंतिसांख्यंप्रोवाचवैभक्तिवितानयोगं ॥ ३१ ॥

उचितायोग्या तत्रापिममास्त्रियाःकीदृशीगोचरायोग्या निर्वाणंमोक्षात्मकंतवपदंस्वरूपम्अन्वश्नवैअनंतरमेवसर्वात्मनाप्राप्स्यामि अंज सास्विति पाठे अहंस्त्विति संबंधः ॥ २८ ॥ भगवद्बाणोयोभगवंतंलक्ष्यीकरोतीत्यर्थः यतः यस्मात्योगात् ॥ २९ ॥ विजानीहिविशेषेण ज्ञापय सुखमनायासेन ॥ ३० ॥ इत्थंमातुरर्थंप्रयोजनंविदित्वा जातस्नेहत्वेहेतुः यत्रयस्यांतन्वादेहेनाविर्भूतः तत्त्वान्याम्नायंतेअनुक्र म्यंतेयस्मिन् किंतत् यत्सांख्यंप्रवदंतितत्प्रोवाच भक्तिवितानंचयोगंच ॥ ३१ ॥ ॥ ॥

काचित्त्वय्युचिताभक्तिरितिपृष्टामुत्तमांभक्तिंलक्षयति गुणाःविषयाःलिंग्यंतेज्ञायंतेयैस्तेषांदेवानां द्योतनात्मकानामिंद्रियाणांतदधिष्ठा
तृणांवा सत्वेसत्वमूर्तौहरावेवयावृत्तिःसाभक्तिः सिद्धेर्मुक्तेरपिगरीयसीत्युत्तरेणान्वयः कथंभूता अनिमित्तानिष्कामास्वाभाविकीअयत्न
सिद्धा तेषामेवंविधवृत्तौहेतुमाह गुरोरुच्चारणमनुश्रूयतइत्यनुश्रवोवेदः तद्विहितमानुश्रविकंतदेवकर्मयेषामतएवएकमेकरूपमविकृतंमनोय
स्यपुंसःशुद्धसत्त्वस्येत्यर्थः ॥ ३२ ॥ भक्तिश्चप्रासंगिकीभवत्येत्याह याभक्तिः कोशंलिंगशरीरंजरयतिक्षपयति स्वप्रयत्नंविनैवसिद्धौदृष्टां
तः निगीर्णंभुक्तमन्नमनलोजाठरोयथाजरयतीति ॥३३॥ भक्तेर्गरिष्ठत्वमेवोपपादयति नैकात्मतामितिपंचभिः एकात्मतांसायुज्यमोक्षं
मदर्थमीहाक्रियायेषां प्रसज्यआसक्तिंकृत्वा पौरुषाणिवीर्याणि ॥ ३४ ॥ प्रसन्नानिवक्त्राणि अरुणानिलोचनानिचयेषुतैर्मद्रूपैःसाकंसहनि

श्रीभगवानुवाच देवानांगुणलिंगानामानुश्रविककर्मणाम् ॥ सत्त्वएवैकमनसोवृत्तिःस्वाभाविकीतुया
॥ ३२ ॥ अनिमित्ताभागवतीभक्तिःसिद्धेर्गरीयसी ॥ जरयत्याशुयाकोशंनिगीर्णमनलोयथा ॥ ३३ ॥
नैकात्मतांमेस्पृहयंतिकेचिन्मत्पादसेवाऽभिरतामदीहाः ॥ येऽन्योऽन्यतोभागवताःप्रसज्यसभाजयंतेम
मपौरुषाणि ॥ ३४ ॥ पश्यंतितेमेरुचिराण्यंबसंतःप्रसन्नवक्त्रारुणलोचनानि ॥ रूपाणिदिव्यानिवरप्रदा
निसाकंवाचंस्पृहणीयांवदंति ॥ ३५ ॥ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ॥ हृतात्मनोहृ
तप्राणांश्चभक्तिरनिच्छतोमेगतिमण्वींप्रयुंक्ते ॥ ३६ ॥ अथोविभूतिंममायाविनस्तामैश्वर्यमष्टांगमनुप्र
वृत्तम् ॥ श्रियंभागवतींवाऽस्पृहयंतिभद्रांपरस्यमेतेऽश्नुवतेतुलोके ॥ ३७ ॥ ॥ ॥

त्यंपरमेश्वरानुभवसुखंभक्तावाधिकमितिभावः ॥ ३५ ॥ आत्मानंदस्त्ववश्यंभावीत्याह तैरिति दर्शनीयामनोहराअवयवाःमुखनेत्रादयो
येषुतैः हृतःआत्माचित्तंयेषां हृताआकृष्टाःप्राणाश्चेंद्रियाणियेषांतान् भजतःअनिच्छतःइच्छाहीनानपि अण्वींगतिंमुक्तिंप्रयुंक्तेप्रापयति
कैःसाधनैः हृतात्मनः उदारैर्विलासादिभिः तत्रविलासोलीला वामंमनोहरं सूक्तंमधुरभाषणम् ॥ ३६ ॥ विभूत्यादिकंचतत्राधिकमि
त्याह अथोअविद्यानिवृत्त्यनंतरंविभूतिंसत्यलोकाधिगतांभोगसंपत्तिम् अणिमाद्यष्टांगमैश्वर्यं अनुप्रवृत्तं भक्तिमनुस्वतएवप्राप्तमपि भाग
वतींचश्रियंवैकुंठस्थांसंपत्तिं अस्पृहयंति तेयद्यपिनस्पृहयंतीत्यर्थः तथापितुलोकेवैकुंठेअश्नुवतेप्राप्नुवंत्येव ॥ ३७ ॥

नन्वेवंतर्हिलोकत्वाविशेषात्स्वर्गादिवद्मोकृभोग्यानांकदाचिद्विनाशःस्यात्तत्राह हेशांतरूप यद्वा शांतंशुद्धसत्वंतद्रूपेवैकुंठे मत्पराःक दाचिदपिननंक्ष्यंतिभोग्यहीनानभवंति अनिमिषोमेहेतिःमदीयंकालचक्रंचनोलेढितान्नग्रसाति तत्रहेतुर्येषामिति सुतइवस्नेहविषयःसखेव विश्वासास्पदं गुरुरिवोपदेष्टा सुहृदिवहितकारी इष्टंदैवमिवपूज्यः एवंसर्वभावेनमांयेभजंतितान्मदीयंकालचक्रंनग्रसतीत्यर्थः ॥ ३८॥ एवंभूतांतुमुक्तिमेकांतभक्तेभ्योददामीत्याहइमामितिद्वाभ्यां उभयायिनंलोकद्वयगामिनंआत्मानंसोपाधिकमात्मानमनुयेपुत्रकलत्रादयः ये चपश्वादयः रायःधनानि ॥ ३९ ॥ अन्यांश्चपरिग्रहान्मृत्योःसंसारात् अतिपारये अतितारयामि ॥ ४० ॥ अभक्तानांतुकथंचिदपिनमो क्षइत्याह नेति मद्भगवतोन्यत्रभगवतोमत्तोविना सर्वभूतानामात्मनोभगवदादिविशेषणत्रयेणसामर्थ्यंनिरपेक्षत्वंहितकारित्वंचोक्तं ॥४१॥

**नकर्हिचिन्मत्पराःशांतरूपेनंक्ष्यंतिनोमेनिमिषोलेढिहेतिः ॥ येषामहंप्रियआत्मासुतश्चसखागुरुःसुहृदो दैवमिष्टं ॥३८॥ इमंलोकंतथैवामुमात्मानमुभयायिनं ॥ आत्मानमनुयेचेहयेरायःपशवोगृहाः ॥३९॥ विसृ ज्यसर्वानन्यांश्चमामेवंविश्वतोमुखं ॥ भजंत्यनन्ययाभक्त्यातान्मृत्योरतिपारये ॥४०॥ नान्यत्रमद्भगवतः प्रधानपुरुषेश्वरात् ॥ आत्मनःसर्वभूतानांभयंतीव्रंनिवर्तते ॥४१॥ मद्भयाद्वातिवातोऽयंसूर्यस्तपतिमद्भया त् ॥ वर्षतींद्रोदहत्यग्निर्मृत्युश्चरतिमद्भयात् ॥४२॥ ज्ञानवैराग्ययुक्तेनभक्तियोगेनयोगिनः ॥ क्षेमायपाद मूलंमेप्रविशंत्यकुतोभयं ॥ ४३ ॥ एतावानेवलोकेस्मिन्पुंसांनिःश्रेयसोदयः ॥ तीव्रेणभक्तियोगेनमनोम य्यर्पितंस्थिरं ॥ ४४ ॥ इ०भा०म०तृ०कापिलेयोपाख्यानेपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ ॥ श्रीभगवानुवाच अथतेसंप्रवक्ष्यामितत्त्वानांलक्षणंपृथक् ॥ यद्विदित्वाविमुच्येतपुरुषःप्राकृतैर्गुणैः ॥१॥**

ऐश्वर्यंस्फुटयति मद्भयादिति श्रुतिश्च भीषाऽस्माद्वातःपवतेभीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति ॥ ४२ ॥ मद्भज नादेवमोक्षइत्यत्रसदाचारंप्रमाणयति ज्ञानेति ॥ ४३ ॥ उपसंहरति एतावानिति मय्यर्पितंसत्मनःस्थिरंभवतीति यत्एतावानेव ॥ ॥ ४४ ॥ इतितृ०टी०पंचविंशतितमोऽध्यायः ॥ २५ ॥ षड्विंशेपुंप्रकृत्योस्तुविवेकायोपवर्ण्यते ॥ सांख्येनसर्वभावानांजन्मलक्षणभेदतः ॥ १ ॥ धात्रापुत्राययत्प्रोक्तंक्षत्रेमित्रासुतेनयत् ॥ मात्रेसांख्यंतदध्यात्मंप्राधान्येनाहतत्त्ववित् ॥ २ ॥ तत्वाम्नायंयत्प्रवदंतिसांख्यमित्यत्र सांख्यंभक्तिर्योगश्चेतित्रयमुपाक्षिप्तं तत्रभक्तिमुक्त्वाइदानींसांख्यमाह अथेति ॥ १ ॥

ननुमुक्तिरात्मज्ञानादेवनतुतत्त्वलक्षणज्ञानात् तमेवविदित्वाऽतिमृत्युमेतीतिश्रुतेरतआह ज्ञानमिति अदर्शनरूपंज्ञानं अतएवहृदयग्रंथिभेदनंअहंकारनिवर्त्तकं निःश्रेयसप्रयोजनाययदाहुः तत्तेवर्णयामि तत्त्वलक्षणादेवविविक्तात्मज्ञानंभवतीतिभावः ॥ २ ॥ तत्रपुरुषंलक्षयति अनादिरिति आत्मैवपुरुषः कोऽसावात्माप्रत्यक्प्रतिलोमंधामस्फूर्तिर्यस्य क्षणिकपक्षंव्यावर्तयति अनादिरिति संसारित्वपक्षंव्यावर्त्तयति प्रकृतेःपरः अन्यःअसंगः ज्ञानादिगुणत्वंवारयति निर्गुणः मीमांसकाद्यभिमतज्ञानविषयत्वंवारयाति स्वयंज्योतिः अनेनैवप्राभाकराभिमतंज्ञानाधारत्वेनस्फुरणमपिनिरस्तं स्वयंज्योतिष्ट्वेहेतुः विश्वंयेनसमन्वितं प्रकाशतइतिशेषः एतैरेवहेतुभिः पुरुषस्यप्रकृतेःपरत्वमपिसिद्धं ॥ ३ ॥ अत्रावरणविक्षेपशक्तिभेदेनप्रकृतिर्द्विविधा तत्रावरणशक्त्यासैवजीवोपाधिरविद्या विक्षेपशक्त्यासैवमाया

**ज्ञानंनिःश्रेयसार्थायपुरुषस्यात्मदर्शनं ॥ यदाहुर्वर्णयेतत्तेहृदयग्रंथिभेदनम् ॥२॥ अनादिरात्मापुरुषोनिर्गुणःप्रकृतेःपरः ॥प्रत्यक्धामास्वयंज्योतिर्विश्वंयेनसमन्वितम् ॥ ३ ॥ सएषप्रकृतिंसूक्ष्मांदैवींगुणमयींविभुः ॥ यदृच्छयैवोपगतामभ्यपद्यतलीलया ॥४॥ गुणैर्विचित्राःसृजतींसरूपाःप्रकृतिंप्रजाः ॥ विलोक्यमुमुहेसद्यःसइहज्ञानगूहया ॥ ५ ॥ एवंपराभिध्यानेनकर्तृत्वंप्रकृतेःपुमान् ॥ कर्मसुक्रियमाणेषुगुणैरात्मनिमन्यते ॥ ६ ॥ तदस्यसंसृतिर्बंधःपारतंत्र्यंचतत्कृतं ॥ भवत्यकर्तुरीशस्यसाक्षिणोनिर्वृतात्मनः ॥ ७ ॥**

पारमेश्वरी पुरुषश्चजीवेश्वररूपेणद्विविधः तत्रयः प्रकृत्यविवेकेनसंसरतिसजीवः यस्तुप्रकृतिंवशीकृत्यविश्वसृष्ट्यादिकरोतिसपरमेश्वरः तत्रप्रकृत्यविवेकेनजीवस्यसंसारप्रकारमाह सएषइतिपंचभिः सूक्ष्मामव्यक्तांदैवींदेवस्यविष्णोःशक्तिं लीलयाउपगतांयदृच्छयैवाभ्यपद्यतेत्यन्वयः ॥ ४ ॥ तस्यालीलामाह गुणैरिति ज्ञानंगूहयतिआवृणोतीतिज्ञानगूहातया तथाचश्रुतिः अजामेकांलोहितशुक्लकृष्णांबह्वींप्रजांजनयंतींसरूपां अजोह्येकोजुषमाणोऽनुशेतेजहात्येनांभुक्तभोगामजोन्यइति मुमुहेआत्मानंविस्मृतवान् ॥ ५ ॥ पराभिध्यानंप्रकृत्यध्यासः तेनप्रकृतेर्गुणैःकर्मसुक्रियमाणेषु कर्तृत्वमात्मनिमन्यते ॥ ६ ॥ तदितिकर्तृत्वमनतमेव अस्यपुरुषस्यसाक्षिमात्रत्वात् अकर्तुरेवसतः कर्मभिर्बंधः ईशस्यपरतंत्रस्यैवकर्मबंधकृतंभोगेपारतंत्र्यं निर्वृतात्मनःसुखात्मकस्यैवसंसृतिर्जन्ममृत्युप्रवाहः प्रकृत्यविवेककृतमेतत्सर्वंभवतीत्यर्थः ॥ ७ ॥ ॥ ॥ ॥ ॥

ननुचैतन्यसामानाधिकरण्येनैवकर्तृत्वादिप्रतीतेः स्वस्यैवतदंगीक्रियतांनेत्याहकार्यंशरीरंकारणमिंद्रियंकर्तादेवतावर्गः तद्भावापत्तौपुरु
षस्यप्रकृतिंकारणंविदुः कूटस्थस्यस्वतोविकाराभावात् प्रकृतिपरिणामभूतदेहाद्यहंकारकृतमेवकर्तृत्वादिकमित्यर्थः भोक्तृत्वेतुपुरुषंकारणं
विदुरित्यस्यायंभावः यद्यप्यहंकारगतमेवकर्तृत्वादिकंभोक्तृत्वंचतथाऽपिविकारस्यजडावसानत्वादुपाधिप्राधान्यं भोगस्यचिदवसानत्वा
त्उपहितप्राधान्यमिति ॥ ८ ॥ तदेवंसंसारिणंपुरुषंतद्धेतुंप्रकृतिंचज्ञात्वेदानींजगत्कारणमीश्वरंतत्प्रकृतिंचपृच्छति प्रकृतेरितिअस्यविश्व
स्यसदसच्चस्थूलंसूक्ष्मंचकार्यंयदात्मकंतयोःप्रकृतिपुरुषयोः ॥ ९ ॥ तत्रप्रकृतिंलक्षयतियत्प्रधानंतदेवप्रकृतिंप्राहुः किंतत्प्रधानंस्वतोऽविशे

कार्यकारणकर्तृत्वेकारणंप्रकृतिंविदुः ॥ भोक्तृत्वेसुखदुःखानांपुरुषंप्रकृतेःपरम् ॥ ८ ॥ देवहूतिरुवाच
प्रकृतेःपुरुषस्यापिलक्षणंपुरुषोत्तम ॥ ब्रूहिकारणयोरस्यसदसच्चयदात्मकं ॥ ९ ॥ श्रीभगवानुवाच
यत्तत्त्रिगुणमव्यक्तंनित्यंसदसदात्मकं ॥ प्रधानंप्रकृतिंप्राहुरविशेषंविशेषवत् ॥१०॥ पंचभिःपंचभिर्ब्रह्म
चतुर्भिर्दशभिस्तथा॥एतच्चतुर्विंशतिकंगणंप्राधानिकंविदुः ॥११॥ महाभूतानिपंचैवभूरापोऽग्निर्मरुन्नभः॥
तन्मात्राणिचतावंतिगंधादीनिमतानिमे ॥१२॥ इंद्रियाणिदशश्रोत्रंत्वग्दृग्रसननासिकाः॥ वाक्करौचरणौमे
ढ्रंपायुर्दशमउच्यते ॥ १३ ॥ मनोबुद्धिरहंकारश्चित्तमित्यंतरात्मकं॥चतुर्धालक्ष्यतेभेदोवृत्त्यालक्षणरूपया
॥ १४ ॥ एतावानेवसंख्यातोब्रह्मणःसगुणस्यह ॥ सन्निवेशोमयाप्रोक्तोयःकालःपंचविंशकः ॥ १५ ॥

षंविशेषवत् विशेषाणामाश्रयःतर्हिकिंब्रह्मनत्रिगुणंकिंमहत्तत्वादिनअव्यक्तमकार्यंकिंकालादिनसदसदात्मकंकार्यकारणरूपं किंजीवःप्रकृ
तिःननित्यं॥१०॥अन्येषांतत्त्वानांलक्षणंवक्तुंतानिगणयति पंचभिरित्यादिसंख्याभेदेनएतच्चतुर्विंशतिकंएतानिचतुर्विंशतिर्यस्मिन्गणेतंग
णंप्राधानिकंप्रधानकार्यात्मकंब्रह्मविदुः ॥ ११ ॥ एतद्विवृणोतिमहाभूतानीतित्रिभिः तावंतिपंचैव ॥ १२ ॥ १३ ॥ अंतरात्मकमंतःकरणंल
क्षणरूपयाव्यवच्छेदिकया ॥ १४ ॥यावन्मयाप्रोक्तः एतावानेवसंख्यातः तत्वज्ञैः कालेतुमतद्वयमाहयःकालःसपंचविंशकः अल्पार्थेकप्र
त्ययःप्रकृतेरेवावस्थाविशेषइत्यर्थः ॥ १५ ॥ ॥ ॥ ॥

एकेतुपौरुषंपुरुषस्येश्वरस्यप्रभावम् विक्रमंकालमाहुः तमेवकालंद्वेधालक्षयति यतोभयंभवति कस्यप्रकृतिमीयुषःप्राप्तस्यअतएवदेहे अहंकारेणविमूढस्यकर्तुर्जीवस्य अनेनसंहारकत्वेनलक्षितः ॥ १६ ॥ सृष्टिहेतुत्वेनलक्षयतिप्रकृतेरिति ॥ १७ ॥ कोऽसौभगवान्तमाह अंतरिति अंतःसर्वप्राणिनांयःपुरुषरूपेणनियंतृत्वेनसमन्वेति सम्यक्तद्विकाररहितएवानुस्यूतोवर्त्तते बहिश्चकालरूपेण एषभगवान् यद्वा यःपुरुषइतिप्रसिद्धःकालःसपंचविंशः एकेतुपुरुषस्यप्रभावंकालमाहुः प्रभावस्यैवलक्षणंयतइति पुरुषस्यैवकालत्वेहेतुः प्रकृतेरिति उभयथाविवक्षायांहेतुः अंतरिति शेषंसमानं तदेवंप्रकृतेश्चतुर्विंशतिभेदाःजीवेश्वरयोश्चैक्यविवक्षया अतःपंचविंशतिस्तत्वानिभवंति तयोर्भेदविवक्षयाचषड्विंशतिर्भवंति ॥ १८ ॥ इदानींतत्त्वानामुत्पत्तिपूर्वकंलक्षणान्याह दैवादित्यादिना एतान्यसंहत्येत्यतःप्राक्तनेनग्रं

## प्रभावंपौरुषंप्राहुःकालमेकेयतोभयं ॥ अहंकारविमूढस्यकर्तुःप्रकृतिमीयुषः ॥ १६ ॥ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्यमानवि ॥ चेष्टायतःसभगवान्कालइत्युपलक्षितः ॥ १७ ॥ अंतःपुरुषरूपेणकालरूपेणयोबहिः ॥ समन्वेत्येषसत्त्वानांभगवानात्ममायया ॥ १८ ॥ दैवात्क्षुभितधर्मिण्यांस्वस्यांयोनौपरःपुमान् ॥ आधत्तवीर्यंसाऽसूतमहत्तत्वंहिरण्मयं ॥ १९ ॥ विश्वमात्मगतंव्यंजन्कूटस्थोजगदंकुरः ॥ स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनंतमः ॥ २० ॥ यत्तत्सत्त्वगुणंस्वच्छंशांतंभगवतःपदं ॥ यदाहुर्वासुदेवाख्यंचित्तंतन्महदात्मकं ॥ २१ ॥

थेन तत्रचित्तस्योत्पत्तिपूर्वकंलक्षणमाहचतुर्भिः दैवात्जीवादृष्टात् क्षुभिताधर्मागुणायस्याः योनौअभिव्यक्तिस्थाने प्रकृतौवीर्यंचिच्छक्तिम् साप्रकृतिर्महत्तत्वमसूत महतःस्वरूपमाह हिरण्मयंप्रकाशबहुलम् ॥ १९ ॥ विश्वमहंकारादिप्रपंचं आत्मगतंस्वास्मिन्सूक्ष्मरूपेणस्थितंव्यंजन्प्रकटयन्महान्तीव्रंप्रलयकालीनंतमोऽपिबत् कूटस्थःलयविक्षेपशून्यः आत्मानंप्रस्वापयतीतितथा यत्पूर्वंप्रलयसमयेमहांतंप्रकृतौविलापयामासेत्यर्थः ॥ २० ॥ प्रसंगाच्चतुर्व्यूहोपासनामाह यत्तदिति सर्वागमप्रसिद्धत्वमाह स्वच्छंविशदं शांतंरागादिरहितं भगवतःपदमुपलब्धिस्थानम् अतएववासुदेवाख्यंयदाहुः अयमर्थः अधिभूतरूपेणतस्यैवमहानितिसंज्ञा अध्यात्मरूपेणचित्तमिति उपास्यरूपेणवासुदेवइति अधिष्ठातातुतस्यक्षेत्रज्ञएवमहंकारेसंकर्षणउपास्यः रुद्रोऽधिष्ठाता मनस्यनिरुद्धउपास्यः चंद्रोऽधिष्ठाता बुद्धौप्रद्युम्नउपास्यःब्रह्माऽधिष्ठातेतिज्ञातव्यम् ॥ २१ ॥ ॥ ॥ ॥

स्वच्छत्वंभगवद्बिंबग्राहित्वम् अविकारित्वंलयविक्षेपराहित्यम् अपांप्रकृतिःफेनतरंगादिरहिताऽवस्था पराभूसंसर्गात्प्राक्तनीयायथाम
धुरास्वच्छाशांताचतद्वदित्यर्थः ॥ २२ ॥ अहंकारस्योत्पत्तिपूर्वकंलक्षणमाह महत्तत्त्वादितिचतुर्भिः क्रियासुशक्तिर्यस्यसःक्रियाशक्तिः
॥ २३ ॥ त्रैविध्यमाह वैकारिकइति तस्यकार्यमाह यतःयस्मात् मनआदीनांभवउत्पत्तिः ॥ २४ ॥ तस्मिन्नुपास्यव्यूहमाह सहस्रशिर
समिति॥२५॥लक्षणमाह कर्तृत्वमिति कर्तृत्वंदेवतादिरूपेणकरणत्वमिंद्रियरूपेणकार्यत्वंभूतरूपेण शांतत्वादिकंतुतत्कारणगुणत्रयरू
पेण॥२६॥मनसउत्पत्तिपूर्वकंलक्षणमाह वैकारिकादितिद्वाभ्याम् संकल्पश्चितनंविकल्पोविशेषचिंतनंयस्यमनसःसंकल्पविकल्पाभ्यांका

स्वच्छत्वमविकारित्वंशांतत्वमितिचेतसः ॥ वृत्तिभिर्लक्षणंप्रोक्तंयथाऽपांप्रकृतिःपरा ॥ २२ ॥ महत्तत्वाद्वि
कुर्वाणाद्भगवद्वीर्यसंभवात् ॥ क्रियाशक्तिरहंकारस्त्रिविधःसमपद्यत ॥२३॥ वैकारिकस्तैजसश्चतामसश्च
यतोभवः ॥ मनसश्चेंद्रियाणांचभूतानांमहतामपि ॥ २४ ॥ सहस्रशिरसंसाक्षाद्यमनंतंप्रचक्षते ॥ संकर्ष
णाख्यंपुरुषंभूतेंद्रियमनोमयं ॥ २५ ॥ कर्तृत्वंकरणत्वंचकार्यत्वंचेतिलक्षणं ॥ शांतघोरविमूढत्वमितिवास्या
दहंकृतेः ॥२६॥ वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत॥यत्संकल्पविकल्पाभ्यांवर्ततेकामसंभवः॥२७॥
यद्विदुर्ह्यनिरुद्धाख्यंहृषीकाणामधीश्वरं ॥ शारदेंदीवरश्यामंसंराध्यंयोगिभिःशनैः ॥२८॥ तैजसात्तुवि
कुर्वाणाद्बुद्धितत्त्वमभूत्सति ॥ द्रव्यस्फुरणविज्ञानमिंद्रियाणामनुग्रहः ॥२९॥ संशयोऽथविपर्यासोनिश्च
यःस्मृतिरेवच ॥ स्वापइत्युच्यतेबुद्धेर्लक्षणंवृत्तितःपृथक् ॥ ३० ॥ ॥ ॥ ॥

मसंभवोवर्ततइति कामरूपावृत्तिर्लक्षणत्वेनोक्तानतुप्रद्युम्नव्यूहोत्पत्तिः तस्यसंकल्पादिकार्यत्वाभावात् उपास्यव्यूहस्यचानिरुद्धस्योक्तेः
॥ २७ ॥ शारदंशरत्कालीनमिंदीवरंनीलोत्पलंतद्वदिवश्यामम् यत्शनैः संराध्यंवशीकर्तुंयोग्यंदुर्ग्रहत्वात् ॥ २८ ॥ बुद्धेरुत्पत्तिपूर्वकं
लक्षणमाह तैजसादितिद्वाभ्याम् हेसति द्रव्यस्फुरणरूपंविज्ञानमितिचित्तव्यावृत्यर्थमुक्तं इंद्रियाणामनुग्रहइतिसविकल्पज्ञाने हृषीका
णामधीश्वरमितियदुक्तंतत्तुनिर्विकल्पकज्ञाने ॥ २९ ॥ द्रव्यस्फुरणस्यैवप्रपंचःसंशयादिः विपर्यासोमिथ्याज्ञानम् निश्चयःप्रमाणंज्ञानं
स्वापोनिद्रा प्रमाणविपर्ययविकल्पनिद्रास्मृतयइति पातंजलोक्तेः ॥ ३० ॥ ॥ ॥

इंद्रियाणामुत्पत्तिमाह तैजसानितैजसाहंकाराज्जातानि ज्ञानेंद्रियाणांवैकारिकत्वशंकानिवृत्त्यर्थमेवकारःद्विविधान्यपींद्रियाणितैजसान्ये
वेत्यन्वयः तत्रहेतुः प्राणस्येति हियस्मात्प्राणस्याक्रियाशक्तिर्बुद्धेश्चविज्ञानशक्तिताअतःप्राणस्यतैजसत्वात्तत्क्रियाशक्तिमतामिंद्रियाणांतैज
सत्वंतथाबुद्धेस्तैजसत्वात्तदीयज्ञानशक्तिमतामपींद्रियाणांतैजसत्वमित्यर्थः ॥ ३१ ॥ तन्मात्रोत्पत्तिपूर्वकमाकाशादिमहाभूतोत्पत्तिंतल्लक्ष णं
चाहतामसादितिपंचदशभिःश्रोत्रंतुशब्दगमित्यादिभिर्विषयोत्पत्त्यनंतरंतत्संबंधमात्रंकथ्यतेनतूत्पत्तिःप्रागेवोत्पन्नत्वात् शब्दंगच्छतिप्राप्नो
तीतिशब्दगम् ॥ ३२ ॥ शब्दस्यलक्षणमाह अर्थाश्रयत्वमर्थवाचकत्वं द्रष्टुर्लिंगत्वंकुड्यांतरितस्यवक्तुर्ज्ञापकत्वम् तदुक्तंलिंगंयद्द्रष्टृद
श्ययोरिति नभस्तन्मात्रत्वंसूक्ष्मत्वंशब्दस्यलक्षणमित्यन्वयः ॥ ३३ ॥ नभसोलक्षणमाह भूतानामिति छिद्रदातृत्वमत्रकाशदातृत्वं बाहि

तैजसानींद्रियाण्येवक्रियाज्ञानविभागशः ॥ प्राणस्यहिक्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥ तामसा
च्चविकुर्वाणाद्भगवद्वीर्यचोदितात् ॥ शब्दमात्रमभूत्तस्मान्नभःश्रोत्रंचशब्दगम् ॥ ३२ ॥ अर्थाश्रयत्वंशब्द
स्यद्रष्टुर्लिंगत्वमेवच ॥ तन्मात्रत्वंचनभसोलक्षणंकवयोविदुः ॥ ३३ ॥ भूतानांछिद्रदातृत्वंबहिरंतरमेवच ॥
प्राणेंद्रियात्मधिष्ण्यत्वंनभसोवृत्तिलक्षणं ॥ ३४ ॥ नभसःशब्दतन्मात्रात्कालगत्याविकुर्वतः ॥ स्पर्शोऽभ
वत्ततोवायुस्त्वक्स्पर्शस्यचसंग्रहः ॥ ३५ ॥ मृदुत्वंकठिनत्वंचशैत्यमुष्णत्वमेवच ॥ एतत्स्पर्शस्यस्पर्शत्वंत
न्मात्रत्वंनभस्वतः ॥ ३६ ॥ चालनंव्यूहनंप्राप्तिर्नेतृत्वंद्रव्यशब्दयोः ॥ सर्वेंद्रियाणामात्मत्वंवायोःकर्मा
भिलक्षणम् ॥ ३७ ॥ ॥ ॥ ॥ ॥

रंतर्व्यवहारास्पदत्वं आत्मामनः प्राणादीनांधिष्ण्यत्वमाश्रयत्वं नाड्यादिछिद्ररूपेणवृत्तिः कार्यमेवलक्षणंवृत्तिलक्षणं एवमुत्तरत्राप्येके
नश्लोकेनतन्मात्रमहाभूतयोरुत्पत्तिःद्वितीयेनतन्मात्रलक्षणं तृतीयेनमहाभूतलक्षणमित्यनुसंधेयं ॥ ३४ ॥ कासात्वक् स्पर्शस्यसंग्रहःस
स्यग्रहणंयया पुंस्त्वंनियतलिंगत्वात् यद्वा स्पर्शस्यसंग्रहस्ततोभवतीतिशेषः शब्दतन्मात्रादित्यादितन्मात्राणामुत्तरतउत्तरान्वयार्थमुक्तं ॥
॥ ३५ ॥ स्पर्शलक्षणमाह मृदुत्वमिति स्पर्शत्वंस्वरूपलक्षणमित्यर्थः नभस्वतोवायोस्तन्मात्रत्वंच ॥ ३६ ॥ चालनंवृक्षशाखादेः व्यूह
नंमेलनंतृणादेः प्राप्तिःसंयोगः द्रव्यस्यगंधवतोघ्राणंप्रति तथाशैत्यादिमतःस्पर्शनंप्रति शब्दस्यश्रोत्रंप्रतिनेतृत्वं सर्वेंद्रियाणामात्मत्वमु
पोद्बलकत्वं कर्मणाकार्येणाभिलक्षणं भावेल्युट् कर्मैत्राभिलक्षणमितिविग्रहेतुकरणे ॥ ३७ ॥ ॥ ॥ ॥

॥ ३८ ॥ द्रव्याकृतित्वंद्रव्यस्याकारसमर्पकत्वं गुणताद्रव्योपसर्जनप्रतीतिः शब्दस्यतुस्वातंत्र्येणैवप्रतीतिः अप्रत्यक्षद्रव्यत्वस्यस्पर्शादेर
पिस्वातंत्र्येणैवप्रतीतिः रूपस्यतुनैवमितितस्यायंविशेषउक्तः व्यक्तिसंस्थात्वं द्रव्यस्ययासंस्थासन्निवेशःसैवसंस्थायस्य तत्परिणामतया
प्रतीतिरित्यर्थः तेजसस्तेजस्त्वमसाधारणत्वम् ॥ ३९ ॥ द्योतनंप्रकाशनं पचनंतंडुलादेः क्षुत्तृट् अशनापिपासाचहरिणपानमदनम् ॥
॥ ४० ॥ जिव्हारसनेंद्रियं रसोगृह्यतेऽनयेतिरसग्रहः यद्वा रसग्रहस्ततोभवतीतिशेषः ॥ ४१ ॥ कषायादिषुलवणोऽपिद्रष्टव्यः भौतिका
नांसंसर्गिद्रव्याणांयएकोमधुरएवसन्नेवमनेकधाभिद्यतेसरसइत्यर्थः ॥ ४२ ॥ क्लेदनमार्द्रीकरणं पिंडनंमृदादेःपिंडीकरणं तृप्तिस्तृप्तिदा

वायोश्चस्पर्शतन्मात्रात्रूपंदैवेरितादभूत् ॥ समुत्थितंततस्तेजश्चक्षूरूपोपलंभनम् ॥ ३८ ॥ द्रव्याकृतित्वं
गुणताव्यक्तिसंस्थात्वमेवच ॥ तेजस्त्वंतेजसःसाध्विरूपमात्रस्यवृत्तयः ॥ ३९ ॥ द्योतनंपचनंपानमदनंहि
ममर्दनम् ॥ तेजसोवृत्तयस्त्वेताःशोषणंक्षुत्तृडेवच ॥४० ॥ रूपमात्राद्विकुर्वाणात्तेजसोदैवचोदितात् ॥ रस
मात्रमभूत्तस्मादंभोजिव्हारसग्रहः ॥ ४१ ॥ कषायोमधुरस्तिक्तःकट्वम्लइतिनैकधा ॥ भौतिकानांविकारे
णरसएकोविभिद्यते ॥ ४२ ॥ क्लेदनंपिंडनंतृप्तिःप्राणनाप्यायनोदनं ॥ तापापनोदोभूयस्त्वमंभसोवृत्तय
स्त्विमाः ॥ ४३ ॥ रसमात्राद्विकुर्वाणादंभसोदैवचोदितात् ॥ गंधमात्रमभूत्तस्मात्पृथ्वीघ्राणस्तुगंधगः ॥
॥ ४४ ॥ करंभपूतिसौरभ्यशांतोदग्रादिभिःपृथक् ॥ द्रव्यावयववैषम्याद्गंधएकोविभिद्यते ॥ ४५ ॥ भावनं
ब्रह्मणःस्थानधारणंसद्विशेषणम् ॥ सर्वसत्त्वगुणोद्भेदःपृथिवीवृत्तिलक्षणम् ॥ ४६ ॥

तृत्वं प्राणनंजीवनं आपोमयःप्राणइतिस्मृतेःआप्यायनंतृड्वैक्लव्यनिवर्त्तनं उदनंमृदूकरणं ओदनमितिपाठेऽपिसएवार्थः भूयस्त्वंकूपादा
वुद्धृतस्यापिपुनःपुनरुद्भवः ॥ ४३ ॥ गंधगः गंधंप्राप्नोति ॥ ४४ ॥ करंभोमिश्रगंधः यथाव्यंजनादीनांहिंग्वादिसंस्कारेण पुतिर्दुर्गंधः
सौरभ्यःकर्पूरादेः शांतःशतपत्रादेः उग्रोलशुनादेः संसर्गिणांद्रव्यावयवानांवैषम्यात् यएवंविभिद्यतेसगंधइत्यर्थः ॥ ४५ ॥ ब्रह्मणो
भावनंप्रतिमादिरूपेणसाकारतापादनं स्थानंजलादिविलक्षणतयातन्नैरपेक्ष्येणस्थितिः धारणंजलाद्याधारत्वं सतामाकाशादीनांविशेषण
मवच्छेदकत्वं सर्वेषांसत्वानांप्राणिनांतद्गुणानांचपुंस्त्वादीनामुद्भेदःपरिणामविशेषैःप्रकटीकरणं ॥ ४६ ॥ ॥ ॥

श्रोत्रादीनांशब्दादिग्राहकत्वमुक्तं तेषांचलक्षणंतदेवेत्याहपंचभिःश्लोकार्द्धैः नभसोगुणविशेषःशब्दोयस्यार्थोविषयः ॥ ४७ ॥ ४८ ॥ गुणविशेषशब्दव्यावृत्त्यर्थंदर्शयति परस्येति परस्यकारणस्य धर्मःशब्दादिःअपरस्मिन्कार्येवाय्वादौकारणान्वयाद्दृश्यते अतोभावानामाकाशादीनांविशेषोगुणः सर्वोऽपिशब्दादिर्भूमावेवोपलक्ष्यते चतुर्णांतत्रान्वयात् जलादिषुयथाऽन्वयमेवनसर्वः आकाशेत्वन्यान्वयाभावादेकएवेति ॥ ४९ ॥ एवंकारणोत्पत्तिमुक्त्वाकार्योत्पत्तिमाहसार्द्धैस्त्रिभिः एतान्यसंहत्यआमिलित्वायदास्थितानितदाजगदादिरंडवरः प्राविशत् सप्तेतिचप्राधान्याभिप्रायेणोक्तं प्रवेशस्तुसर्वेष्वपिविवक्षितएव ॥ ५० ॥ अनुविद्धेभ्यःक्षुभितेभ्यः यस्मादंडादसौविराट्पुरुष

नभोगुणविशेषोऽर्थोयस्यतच्छ्रोत्रमुच्यते ॥ वायोर्गुणविशेषोऽर्थोयस्यतत्स्पर्शनंविदुः ॥ ४७ ॥ तेजोगुणविशेषोऽर्थोयस्यतच्चक्षुरुच्यते ॥ अंभोगुणविशेषोऽर्थोयस्यतद्रसनंविदुः ॥ भूमेर्गुणविशेषोऽर्थोयस्यसघ्राणउच्यते ॥ ४८ ॥ परस्यदृश्यतेधर्मोह्यपरस्मिन्समन्वयात् ॥ अतोविशेषोभावानांभूमावेवोपलक्ष्यते ॥ ४९ ॥ एतान्यसंहत्ययदामहदादीनिसप्तवै ॥ कालकर्मगुणोपेतोजगदादिरुपाविशत् ॥ ५० ॥ ततस्तेनानुविद्धेभ्योयुक्तेभ्योंऽडमचेतनम् ॥ उत्थितंपुरुषोयस्मादुदतिष्ठदसौविराट् ॥ ५१ ॥ एतदंडंविशेषाख्यंक्रमवृद्धैर्दशोत्तरैः ॥ तोयादिभिःपरिवृतंप्रधानेनावृतैर्बहिः ॥ यत्रलोकवितानोऽयंरूपंभगवतोहरेः ॥ ५२ ॥ हिरण्मयादंडकोशादुत्थायसलिलेशयात् ॥ तमाविश्यमहादेवोबहुधानिर्बिभेदखं ॥ ५३ ॥ निरभिद्यतास्यप्रथमंमुखंवाणीततोऽभवत् ॥ वाण्यावन्हिरथोनासेप्राणोतोघ्राणएतयोः ॥ ५४ ॥ घ्राणाद्वायुरभिद्येतामक्षिणीचक्षुरेतयोः ॥ तस्मात्सूर्योन्यभिद्येतांकर्णौश्रोत्रंततोदिशः ॥ ५५ ॥ ॥ ॥ ॥ ॥

उदतिष्ठत् ॥ ५१ ॥ भगवतोरूपमितिपुरुषाभेदाभिप्रायेण ॥ ५२ ॥ तस्मिन्नध्यात्मादिविभागमाहहिरण्मयादितिनवभिः उत्थायऔदासीन्यंविहायतमाविश्यअधिष्ठाय महांश्चासौदेवश्च खंछिद्रं ॥ ५३ ॥ वाण्यासहवह्निरभवत्प्राविशत् ॥ नासेनिरभिद्येतां प्राणोतः प्राणेनऊतःस्यूतःसन् घ्राणः एतयोर्नासिकयोरभवदित्यनुषंगः ॥ ५४ ॥ घ्राणादनंतरंवायुश्च प्राणोतइतिविशेषणंसर्वेंद्रियेष्वपिद्रष्टव्यंन्यभिद्येतामन्वभिद्येतामितिपाठद्वयेऽप्येकएवार्थः ततोदिशः प्राविशन् ॥ ५५ ॥

आदिशब्देनकेशाः ॥ ५६ ॥ ५७ ॥ स्वराडिंद्रः हरिर्विष्णुः ॥ ५८ ॥ आभृतंजातम् ॥ ५९ ॥ बुद्ध्यादिषुहृदयमेवाधिष्ठानं गिरांप



निर्बिभेदविराजस्त्वग्रोमश्मश्र्वादयस्ततः ॥ ततऔषधयश्चासन्शिश्नंनिर्बिभिदेततः ॥ ५६ ॥ रेतस्तस्मादापआसन्निरभिद्यतवैगुदं ॥ गुदादपानोऽपानाच्चमृत्युर्लोकभयंकरः ॥ ५७ ॥ हस्तौचनिरभिद्येतांबलंताभ्यांततःस्वराट् ॥ पादौचनिरभिद्येतांगतिस्ताभ्यांततोहरिः ॥ ५८ ॥ नाड्योऽस्यनिरभिद्यंतताभ्योलोहितमाभृतं ॥ नद्यस्ततःसमभवन्नुदरंनिरभिद्यत ॥ क्षुत्पिपासेततःस्यातांसमुद्रस्त्वेतयोरभूत् ॥ ५९ ॥ अथास्यहृदयंभिन्नंहृदयान्मनउत्थितं ॥ मनसश्चंद्रमाजातोबुद्धिर्बुद्धेर्गिरांपतिः ॥ अहंकारस्ततोरुद्रश्चित्तंचैत्त्यस्ततोऽभवत् ॥ ६० ॥ एतेह्यभ्युत्थितादेवानैवास्योत्थापनेऽशकन् ॥ पुनराविविशुःखानितमुत्थापयितुंक्रमात् ॥ वन्हिर्वाचामुखंभेजेनोदतिष्ठत्तदाविराट् ॥ ६१ ॥ घ्राणेननासिकेवायुर्नोदतिष्ठत्तदाविराट् ॥ अक्षिणीचक्षुषादित्योनोदतिष्ठत्तदाविराट् ॥ ६२ ॥ श्रोत्रेणकर्णौचदिशोनोदतिष्ठत्तदाविराट् ॥ त्वचंरोमभिरौषध्योनोदतिष्ठत्तदाविराट् ॥ ६३ ॥ रेतसाशिश्नमापस्तुनोदतिष्ठत्तदाविराट् ॥ गुदंमृत्युरपानेननोदतिष्ठत्तदाविराट् ॥ ६४ ॥ हस्ताविंद्रोबलेनैवनोदतिष्ठत्तदाविराट् ॥ विष्णुर्गत्यैवचरणौनोदतिष्ठत्तदाविराट् ॥ ६५ ॥ नाडीर्नद्योलोहितेननोदतिष्ठत्तदाविराट् ॥ क्षुत्तृड्भ्यामुदरंसिंधुर्नोदतिष्ठत्तदाविराट् ॥ ६६ ॥ हृदयंमनसाचंद्रोनोदतिष्ठत्तदाविराट् ॥ बुद्ध्याब्रह्माऽपिहृदयंनोदतिष्ठत्तदाविराट् ॥ रुद्रोभिमत्याहृदयंनोदतिष्ठत्तदाविराट् ॥ ६७ ॥ चित्तेनहृदयंचैत्त्यःक्षेत्रज्ञःप्राविशद्यदा ॥ विराट्तदैवपुरुषःसलिलादुदतिष्ठत ॥ ६८ ॥ ॥ ॥



तिर्ब्रह्माचैत्त्यःक्षेत्रज्ञः ॥ ६० ॥ अन्वयव्यतिरेकाभ्यांक्षेत्रज्ञंविवेक्तुंसर्वेषांपुनःप्रवेशमाह एतइतिनवभिः ॥ ६१ ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

विराड्देहस्यव्यष्टिदेहंदृष्टांतत्वेनदर्शयन्सांख्यानुकथनस्यप्रयोजनमाह यथेतिद्वाभ्यां प्रथमंपरमेश्वरेभक्तिस्ततोऽन्यत्रविरक्तिः ततोयोगप्रवृत्ताधीःएकाग्रंचित्तम् ततोयज्ज्ञानंतेनप्रत्यगात्मानंक्षेत्रज्ञमस्मिन्आत्मानिकार्यकारणसंघातेविविच्यचिंतयेत् ॥ ६९ ॥ ७० ॥ इतितृतीयेटी० षड्विंशतितमः ॥ २६ ॥ ॥ ॥ सप्तविंशेततःसम्यक्बहुसाधनयोगतः ॥ पुंप्रकृत्योर्विवेकेनमोक्षरीतिर्निरूप्यते ॥ १ ॥ विवेकज्ञानेन मोक्षमुपपादयितुंशुद्धस्यैवपुरुषस्यपुर्वोक्तंप्रकृत्याविवेकतःपुर्वोक्तंसंसारमनुस्मारयतिप्रकृतिस्थोऽपीतित्रिभिःदेहस्थोपिनाज्यतेनलिप्यतेगुणैस्तत्कृतैःसुखदुःखादिभिः निर्गुणत्वादकर्तृत्वंततोविकारित्वंतस्मात् ॥१॥२॥ अनिवृंतःसन् प्रकृतिसंगकृतैःसदसान्मिश्रयोनिषुदेवातिर्यङ्गरा

यथाप्रसुप्तंपुरुषंप्राणेंद्रियमनोधियः ॥ प्रभवंतिविनायेननोत्थापयितुमोजसा ॥६९॥ तमस्मिन्प्रत्यगात्मानंधियायोगप्रवृत्तया ॥ भक्त्याविरक्त्याज्ञानेनविविच्यात्मनिचिंतयेत् ॥७०॥ इतिश्रीभागवतेमहापुराणे तृतीयस्कंधेकापिलेयेतत्त्वसमाम्नायेषड्विंशतितमोऽध्यायः ॥ २६ ॥ श्रीभगवानुवाच प्रकृतिस्थोपिपुरुषो नाज्यतेप्राकृतैर्गुणैः ॥ अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥ सएषयर्हिप्रकृतेर्गुणेष्वभिविषज्जते ॥ अहंक्रियाविमूढात्माकर्तास्मीत्यभिमन्यते ॥ २ ॥ तेनसंसारपदवीमवशोऽभ्येत्यनिर्वृतः ॥ प्रासंगिकैःकर्मदोषैःसदसन्मिश्रयोनिषु ॥ ३ ॥ अर्थेह्यविद्यमानेऽपिसंसृतिर्ननिवर्त्तते ॥ ध्यायतोविषयानस्यस्वप्नेऽनर्थागमोयथा ॥ ४ ॥ अतएवशनैश्चित्तंप्रसक्तमसतांपथि ॥ भक्तियोगेनतीव्रेणविरक्त्याचनयेद्वशं ॥ ॥ १५ ॥ यमादिभिर्योगपथैरभ्यसञ्छ्रद्धयाऽन्वितः ॥ मयिभावेनसत्येनमत्कथाश्रवणेनच ॥ ६ ॥ सर्वभूतसमत्वेननिर्वैरेणाप्रसंगतः ॥ ब्रह्मचर्येणमौनेनस्वधर्मेणबलीयसा ॥ ७ ॥ ॥ ॥

दिषुसंसारपदवींप्राप्नोति ॥ ३॥ ननुतर्ह्यवास्तवत्वात्संसृतेःकिंतन्निवृत्तिप्रयासेनतत्राह अर्थेहीति ॥४॥ यतोविषयध्यानमनर्थहेतुःअतोमनोनियंतव्यमित्याह अतएवेति असतामिंद्रियाणांपाथिविषयमार्गेतीव्रेणदृढेनविरक्त्याचतीव्रया ॥ ५ ॥ भक्तिविरक्त्योस्तीव्रत्वेकारणानिवर्णयन्ज्ञानेनमोक्षप्रकारमाहषड्भिः यमादिभिर्योगमार्गैः चित्तमभ्यसन्पुनःपुनरेकाग्रींकुर्वन् आत्मानमुपलभ्यसर्वानुस्यूतमद्वयंपरमात्मानंप्रतिपद्यतइतिषष्ठेनान्वयः सत्येननिष्कपटेन भावेनप्रेम्णा ॥ ६ ॥ अप्रसंगतःसंगत्यागेन बलीयसाईश्वरेऽर्पितेन ॥ ७ ॥ ॥

विविक्तशरणएकांतवासी ॥ ८ ॥ असदाग्रहमहंममतां प्रकृतेःपुरुषस्यचदृष्टंतत्त्वंयेन तेनज्ञानेन ॥ ९ ॥ निवृत्तानिबुध्यवस्थानानिजा
ग्रदादीनियस्यसः अतएवदूरीभूतमन्यदर्शनंयस्य आत्मनाअहंकारावच्छिन्नेन आत्मानंशुद्धमुपलभ्यएकस्यैवावच्छेदानवच्छेदाभ्यांकरणकर्मत्वेप्र
दृष्टांतमाह चक्षुषाचक्षुरवच्छिन्नेनार्केणगगनस्थमर्कमिव एवमात्मदृक्शुद्धमात्मानंपश्यन् ॥ १० ॥ मुक्तलिंगंनिरुपाधिकमसतिमिथ्या
भूतेऽहंकारेसदाभासंसद्रूपेणाभासमानंब्रह्मप्राप्नोति शुद्धजीवस्वरूपाद्विशेषमाह सतःकारणस्यप्रधानस्य बंधुमधिष्ठानं असतः कार्यस्य
चक्षुरिवप्रकाशकं सर्वेषुकार्यकारणेषुअनुस्यूतम् अद्वयंपरिपूर्णं ॥ ११ ॥ अहंकारोपहितेनशुद्धब्रह्मप्रतिपत्तिसदृष्टांतमाह यथेति जले

**यदृच्छयोपलब्धेनसंतुष्टोमितभुङ्मुनिः ॥ विविक्तशरणःशांतोमैत्रःकरुणआत्मवान् ॥ ८॥ सानुबंधेचदेहेऽ
स्मिन्नकुर्वन्नसदाग्रहं ॥ ज्ञानेनदृष्टतत्त्वेनप्रकृतेःपुरुषस्यच ॥ ९ ॥ निवृत्तबुद्ध्यवस्थानोदूरीभूतान्यदर्शनः ॥
उपलभ्यात्मनात्मानंचक्षुषेवार्कमात्मदृक् ॥१०॥मुक्तलिंगंसदाभासमसतिप्रतिपद्यते ॥ सतोबंधुमसच्चक्षुः
सर्वानुस्यूतमद्वयं ॥ ११ ॥ यथाजलस्थआभासःस्थलस्थेनावदृश्यते ॥ स्वाभासेनतथासूर्योजलस्थेनादि
विस्थितः ॥ १२ ॥ एवंत्रिवृदहंकारोभूतेंद्रियमनोमयैः ॥ स्वाभासैर्लक्षितोऽनेनसदाभासेनसत्यदृक् ॥
॥ १३ ॥ भूतसूक्ष्मेंद्रियमनोबुद्ध्यादिष्विहनिद्रया ॥ लीनेष्वसतियस्तत्रविनिद्रोनिरहंक्रियः ॥ १४ ॥**

स्थितआभासः सूर्यप्रतिबिंबोयदागृहांतर्वर्त्तिभित्तौस्फुरति तदागृहकोणस्थितैःपुरुषैर्भित्यादौस्थलेस्थितेनस्वाभासेनसूर्यप्रतिबिंबेनयथाप्र
थमंजलस्थआभासोऽवदृश्यतेलक्ष्यते गगनस्थस्यगृहमध्येप्रतिबिंबायोगात् चार्थेतथाशब्दः यथाचेत्यर्थः यथाचजलस्थेनदिविस्थितःसू
र्यःलक्ष्यते ॥ १२ ॥ एवंभूतेंद्रियमनोमयैःदेहेंद्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिबिंबैस्त्रिगुणोऽहंकारः सतोब्रह्मणआभासोयस्मिन्
तेनरूपेणलक्षितः अहंकारस्थाभासंविनाविषयभासानुत्पत्तेः अनेनचाहंकारेणसदाभासवतासत्यदृक्परमार्थज्ञप्तिरूपआत्मालक्षितइत्य
र्थः ॥ १३ ॥ इदानींसुषुप्तिसाक्षित्वेनशुद्धात्मप्रतिपत्तिमनुभवतोदर्शयतित्रिभिः भूतादिषुअसतिअसत्तुल्येअव्याकृते निद्रयालीनेषुसत्सुय
स्तत्रसदाविनिद्रोनिरहंक्रियस्तमात्मानंप्रतिपद्यतइतितृतीयेनान्वयः॥ १४ ॥ ॥ ॥

ननुयदितदाविनिद्रोऽसावस्तितर्हिजाग्रत्स्वप्नयोरिवस्फुटःकिंनावभासते तत्राह पूर्वंसद्द्रष्टाऽतोद्रष्टृत्वेनसाविकल्पतयास्फुटं प्रतीतः सुषुप्तौ तुभूतादेरहंकारत्रिषयस्यलीनत्वात् तद्विषयेऽहंकारेनष्टेसतिस्वयमनष्टोऽपिमृषैवात्मानंनष्टवन्मन्यमानोयः अन्यस्यनाशेऽन्यस्यनष्टतुल्यत्वेदृष्टांतः नष्टवित्तोयथाआतुरोविवशः नष्टवद्भवतीत्यर्थः ॥ १५ ॥ननुसुषुप्तौनकिंचिदनुभूयते मैवम् सुखमहमस्वाप्संनकिंचिदवेदिषमितिविशेषज्ञानंबिनाकेवलस्यात्मनःप्रतिसंधानादित्याह एवमिति ननुप्रतिसंधानेसाहंकारस्यप्रतीतेःकथंनिरहंक्रियत्वंतत्राह साहंकारस्यद्रव्यस्यकार्यकारणसंघातस्यअनुग्रहःप्रकाशकः अवस्थानंचद्रव्यविशेषणतयाऽहंकारस्यापिदृश्यत्वाच्चतद्द्रष्टात्मातद्व्यतिरिक्तः तमात्मानमित्यन्वयः ॥ १६ ॥ भक्तिविरक्तिभ्यांसत्यपिविवेकेप्रकृतिपुरुषयोः परस्परत्यागाभावात्कथंमुक्तिरितिपृच्छति पुरुषमितिचतुर्भिः ॥

मन्यमानस्तदात्मानमनष्टोनष्टवन्मृषा ॥ नष्टेहंकरणेद्रष्टानष्टवित्तइवातुरः ॥ १५ ॥ एवंप्रत्यवमृश्यासावात्मानंप्रतिपद्यते ॥ साहंकारस्यद्रव्यस्ययोऽवस्थानमनुग्रहः ॥ १६ ॥ देवहूतिरुवाच पुरुषंप्रकृतिर्ब्रह्मन्नविमुंचतिकर्हिचित् ॥ अन्योऽन्यापाश्रयत्वाच्चनित्यत्वादनयोःप्रभो ॥ १७ ॥ यथागंधस्यभूमेश्चनभावोव्यतिरेकतः ॥ अपांरसस्यचयथातथाबुद्धेःपरस्यच ॥ १८ ॥ अकर्तुःकर्मबंधोयंपुरुषस्ययदाश्रयः ॥ गुणेषुसत्सुप्रकृतेःकैवल्यंतेष्वतःकथम् ॥ १९ ॥ क्वचित्तत्त्वावमर्शेननिवृत्तंभयमुल्बणम् ॥ अनिवृत्तनिमित्तत्वात्पुनःप्रत्यवतिष्ठते ॥ २० ॥ श्रीभगवानुवाच अनिमित्तनिमित्तेनस्वधर्मेणामलात्मना ॥ तीव्रयामयिभक्त्याचश्रुतसंभृतयाचिरं ॥ २१ ॥ ज्ञानेनदृष्टतत्त्वेनवैराग्येणबलीयसा ॥ तपोयुक्तेनयोगेनतीव्रेणात्मसमाधिना ॥ २२ ॥

॥ १७ ॥ व्यतिरेकाभावमात्रेदृष्टांतः यथाव्यतिरेकतोभावःसत्तानास्ति गंधस्यकदाचिदक्षयदर्शनाद्दृष्टांतांतरम् अपामिति बुद्धेःप्रकृतेः परस्यचपुरुषस्य ॥ १८ ॥ ततःकिमतआह अकर्तुरिति येगुणाआश्रयोयस्यसः तेषुप्रकृतेर्गुणेषुसत्सुपुरुषस्यकैवल्यंकथम् ॥ १९ ॥ अतएवक्वचित्निवृत्तप्रायस्यापिसंसारभयस्यपुनरुद्भवोदृश्यतइत्याह क्वचिदिति ॥ २० ॥ नहिप्रकृतिसंबंधमात्रंबंधहेतुः किंतुगुणबुध्यातदासक्तिः तन्निवृत्तौसत्यांमोक्षोघटते क्वचिदुद्भवस्तुसाधनवैकल्यादित्यभिप्रेत्यसाधनातिशयंकथयन्परिहरतित्रिभिःनिमित्तंफलं तन्ननिमित्तंप्रवर्त्तकंयस्मिन् निष्कामेणधर्मेणअमलात्मनानिर्मलेनमनसा श्रुतेनकथाश्रवणेनसंभृतयापुष्टया ॥ २१ ॥ २२ ॥

दह्यमानाअभिभूयमानातिरोहिताभवति ॥ २३ ॥ एवंचसतिपुनरुद्भवोनास्तीत्याह भुक्तोभोगोयस्याः नित्यशः सदादृष्टोदोषोयस्याः अतएवपरित्यक्तासतीश्वरस्यापरतंत्रस्यस्वेमहिम्निस्थितस्यस्वानंदंप्राप्तस्य ॥ २४ ॥ अविवेकावस्थायामनर्थहेतुरपिविवेकानंतरंभवती तिसदृष्टांतमाह यथेतिद्वाभ्यां प्रस्वापः स्वप्नः बह्वनर्थान् बिभर्तिपुष्णाति प्रतिबुद्धस्यसंस्कारवशेनस्फुरन्नपि ॥ २५ ॥ २६ ॥ उप संहरति यदैवमितित्रिभिः बहूनिजन्मानियस्मिन्काले ॥ २७ ॥ प्रतिबुद्धार्थः विदितात्मतत्त्वः कैवल्याख्यंस्वसंस्थानंदेहादिव्यतिरिक्त

प्रकृतिःपुरुषस्येहदह्यमानात्वहर्निशं ॥ तिरोभवित्रीशनकैरग्नेर्योनिरिवारणिः ॥ २३ ॥ भुक्तभोगापरित्य क्तादृष्टदोषाचनित्यशः ॥ नेश्वरस्याशुभंधत्तेस्वेमहिम्निस्थितस्यच ॥ २४ ॥ यथाह्यप्रतिबुद्धस्यप्रस्वापोबह्व नर्थभृत् ॥ सएवप्रतिबुद्धस्यनवैमोहायकल्पते ॥ २५ ॥ एवंविदिततत्त्वस्यप्रकृतिर्मयिमानसं ॥ युंजतोनाप कुरुतआत्मारामस्यकर्हिचित् ॥ २६ ॥ यदैवमध्यात्मरतःकालेनबहुजन्मना ॥ सर्वत्रजातवैराग्यआब्रह्म भवनान्मुनिः ॥ २७ ॥ मद्भक्तःप्रतिबुद्धार्थोमत्प्रसादेनभूयसा ॥ निःश्रेयसंस्वसंस्थानंकैवल्याख्यंमदाश्रयं ॥ २८ ॥ प्राप्नोतीहांजसाधीरःस्वदृशाच्छिन्नसंशयः ॥ यद्गत्वाननिवर्त्तेतयोगीलिंगाद्विनिर्गमे ॥ २९ ॥ य दानयोगोपचितासुचेतोमायासुसिद्धस्यविषज्जतेऽग ॥ अनन्यहेतुष्वथमेगतिःस्यादात्यंतिकीयत्रनमृत्यु हासः ॥ ३० ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेसप्तविंशतितमोऽध्यायः ॥ २७ ॥

स्वरूपंमदाश्रयंनिःश्रेयसंनिरतिशयानंदं ॥ २८ ॥ स्वदृशा आत्मज्ञानेनाछिन्नाः संशयाः मिथ्याज्ञानानियस्य लिंगाद्विनिर्गमेलिंगश रीरनाशेसतीत्यर्थः ॥ २९ ॥ तदातुअणिमादिसिद्धयोऽतरायरूपाभवंतितासुयोगेनोपचितासुसमृद्धासु नयोगादन्योहेतुर्यासांतासुयदासि द्धस्यचेतोनविषज्जते अंगहेमातः अथतदाअंतमतिक्रांतोऽत्यंतोयोऽहंतत्संबंधिनि यत्रयस्यांगतौमृत्योर्हासोनभवति विषक्तौतुसिद्धोपिम यावशीकृतइतिमृत्योर्हासोगर्वोभवतीत्यर्थः ॥ ३० ॥ इतितृतीयेटीकायांसप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥

अष्टाविंशेततोऽष्टांगयोगेनध्यानशोभिना ॥ सर्वोपाधिविनिर्मुक्तस्वरूपज्ञानमीर्यते ॥ १ ॥ भक्तिसंक्षेपतःप्रोच्यसांख्यमाख्यायविस्तृतं ॥
अथाहवैष्णवंयोगमष्टांगंकपिलोहरिः ॥ २ ॥ सबीजस्यसालंबनस्य प्रसन्नंसत् ॥ १ ॥ तत्रयमानियमानाहत्रिभिरक्षरद्वयाधिकैःशक्त्या
स्वधर्माचरणं ॥ २ ॥ ग्राम्यस्त्रैवर्गिकोधर्मः तस्मान्निवृत्तिः मितंचतन्मेध्यंशुद्धंचतस्यादनं तत्रमितंनाम द्वौभागौपूरयेदन्नैस्तोयेनैकंप्रपूर
येत् मारुतस्यप्रचारार्थंचतुर्थमवशेषयेदितिस्मृतिप्रसिद्धं विविक्तंविजनंक्षेमंनिर्बाधंतस्यस्थानस्यसेवनम् ॥ ३ ॥ यावतार्थःप्रयोजनंतावन्मात्रस्यपरिग्रहः ॥ ४ ॥ आसनादीन्यंगान्याहत्रिभिः सतआसनस्यजयेनस्थैर्यं ॥ ५ ॥ स्वधिष्ण्यानांप्राणस्थानानांमूलाधारादी

श्रीभगवानुवाच योगस्यलक्षणंवक्ष्येसबीजस्यनृपात्मजे ॥ मनोयेनैवविधिनाप्रसन्नंयातिसत्पथं ॥ १ ॥
स्वधर्माचरणंशक्त्याविधर्माच्चनिवर्तनं ॥ दैवाल्लब्धेनसंतोषआत्मविच्चरणार्चनं ॥२ ॥ ग्राम्यधर्मनिवृत्तिश्च
मोक्षधर्मरतिस्तथा ॥ मितमेध्यादनंशश्वद्विविक्तक्षेमसेवनं ॥३॥ अहिंसासत्यमस्तेयंयावदर्थपरिग्रहः ॥ ब्र
ह्मचर्यंतपःशौचंस्वाध्यायःपुरुषार्चनं ॥४॥ मौनंसदासनजयःस्थैर्यंप्राणजयःशनैः ॥ प्रत्याहारश्चेंद्रियाणां
विषयान्मनसाहृदि ॥ ५ ॥ स्वधिष्ण्यानामेकदेशेमनसाप्राणधारणं ॥ वैकुंठलीलाभिध्यानंसमाधानंतथा
त्मनः॥६॥एतैरन्यैश्चपथिभिर्मनोदुष्टमसत्पथं ॥ बुद्ध्यायुंजीतशनकैर्जितप्राणोह्यतंद्रितः ॥ ७ ॥ शुचौदे
शेप्रतिष्ठाप्यविजितासनआसनं ॥ तस्मिन्स्वस्तिसमासीनऋजुकायःसमभ्यसेत् ॥ ८ ॥ प्राणस्यशोधये
न्मार्गंपूरकुंभकरेचकैः ॥ प्रतिकूलेनवाचित्तंयथास्थिरमचंचलं ॥ ९ ॥ ॥ ॥

नांमध्येएकस्मिन्देशेमनसासहप्राणस्यधारणम् आत्मनोमनसः समाधानमात्माकारता ॥ ६ ॥ अन्यैश्चव्रतदानादिभिः पथिभिरुपायैः
॥ ७ ॥ आसनादीनिप्रपंचयति शुचावितियावत्समाप्ति आसनंकुशाजिनचैलोत्तरंप्रतिष्ठाप्यस्वस्तिकासनेनयथासुखमितिवासमभ्य
सेत्प्राणमितिशेषः ऊरूजंघांऽतराधायपादाग्रेजानुमध्यगे ॥ योगिनोयदवस्थानंस्वस्तिकंतद्विदुर्बुधाः ॥ ८ ॥ बाह्यवायोरंतःप्रवेशनंपूरकः
प्रवेशितस्यधारणंकुंभकः धृतस्यबहिर्निःसारणंरेचकः प्रतिकूलेनरेचककुंभकपूरकैः यद्वा इडयापूर्यपिंगलयारेचनंपिंगलयापूर्यइडयारेच
नमिति एवंप्रतिकूलेन वाशब्दश्चार्थे स्थिरंसत्पुनरपिचंचलंयथानभवति तयाशोधयेत् ॥ ९ ॥ ॥

ध्मातंसंतप्तमित्यर्थः लोहंसुवर्णंयथामलंत्यजतितथामनोविरजंस्यात् ततश्चंचलंनस्यादितिभावः ॥ १० ॥ प्राणायामादीनांसमाध्यंता रकार्याण्याह प्राणायामैरिति दोषान्वातश्लेष्मादीन् संसर्गान्विषयसंसर्गान् अनीश्वरान्रागादीन् वायुनासहमनसःस्थिरीकरणंधारणा स्थिरस्यवृत्तिसंततिर्ध्यानम् वृत्तिनिरोधःसमाधिरितिभेदः ॥ ११ ॥ सुसमाहितंस्थिरंजातम् काष्ठांकलांमूर्त्तिमित्यर्थः स्वनासाग्रेऽवलो कनंयस्य एतच्चलयविक्षेपयोःपरिहाराय ॥ १२ ॥ ध्येयंहरिमाहसप्तभिः प्रसन्नंवदनांभोजंयस्यतं ध्यायेदितिषष्ठेनान्वयः पद्मगर्भवद रुणेईक्षणेनेत्रेयस्य नीलोत्पलदलवत्श्यामम् ॥ १३ ॥ लसत्पंकजस्यकिंजल्कवत् पीतेकौशेयवाससीयस्य श्रीवत्सोलांछनंवक्षसिय

मनोऽचिरात्स्याद्विरजंजितश्वासस्ययोगिनः ॥ वाय्वग्निभ्यांयथालोहंध्मातंत्यजतिवैमलं ॥ १० ॥ प्राणाया मैर्दहेद्दोषान्धारणाभिश्चकिल्बिषान् ॥ प्रत्याहारेणसंसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ११ ॥ यदामनः स्वंविरजंयोगेनसुसमाहितं ॥ काष्ठांभगवतोध्यायेत्स्वनासाग्रावलोकनः ॥ १२ ॥ प्रसन्नवदनांभोजंपद्मग र्भारुणेक्षणं ॥ नीलोत्पलदलश्यामंशंखचक्रगदाधरं ॥ १३ ॥ लसत्पंकजकिंजल्कपीतकौशेयवाससं ॥ श्री वत्सवक्षसंभ्राजत्कौस्तुभामुक्तकंधरं ॥ १४ ॥ मत्तद्विरेफकलयापरीतंवनमालया ॥ परार्ध्यहारवलयकिरी टांगदनूपुरं ॥ १५ ॥ कांचीगुणोल्लसच्छ्रोणिंहृदयांभोजविष्टरं ॥ दर्शनीयतमंशांतंमनोनयनवर्धनं ॥ १६ ॥ अपीच्यदर्शनंशश्वत्सर्वलोकनमस्कृतं ॥ संतंवयसिकैशोरेभृत्यानुग्रहकातरं ॥ १७ ॥ कीर्त्तन्यतीर्थयश संपुण्यश्लोकयशस्करं ॥ ध्यायेद्देवंसमग्रांगंयावन्नच्यवतेमनः ॥ १८ ॥ स्थितंव्रजंतमासीनंशयानंवागु हाशयं ॥ प्रेक्षणीयेहितंध्यायेच्छुद्धभावेनचेतसा ॥ १९ ॥ ॥ ॥

स्य भ्राजत्कौस्तुभेनामुक्तासंश्लिष्टाकंधरायस्य ॥ १४ ॥ मत्तद्विरेफाणांकलोमधुरोध्वनिर्यस्यांतयापरीतंव्याप्तं परार्ध्यानिअमूल्यानि हारादीनियस्य ॥ १५ ॥ कांचीगुणेनोल्लसंतीश्रोणीयस्य भक्तानांहृदयांभोजमेवविष्टरमासनंयस्य भक्तानांमनोनयनानिवर्धयतिहर्षय तीतितथा ॥ १६ ॥ अपीच्यमतिसुंदरंभक्तविषयंदर्शनंयस्य कैशोरेतारुण्येवयसिसंतंस्थितं भृत्यानामनुग्रहेकातरंव्यग्रं ॥ १७ ॥ की र्त्तन्यंकीर्तनार्हंतीर्थंयशोयस्य पुण्यश्लोकाबलिप्रमुखाः तेषांयशस्करं समग्राण्यंगानियस्मिन् नच्यवतेनापयातिनपर्योति ॥ १८ ॥ प्रेक्षणी यमीहितंलीलायस्य ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

तदेवंसमग्रध्यानमुक्त्वाएकैकावयवध्यानमाह तस्मिन्लब्धंपदंस्थितिर्येनतत्चित्तंविशेषेणलक्षीकृत्यएकत्रएकास्मिन्नंगइत्यर्थः ॥ २० ॥ तेद
वपादादिक्रमेणाइत्रयोदशभिः सम्यक्चिंतयेत् पादतलेरेखात्मकानिवज्रादीनिलांछनानितैराढ्यंयुक्तं उत्तुंगाश्वरक्ताश्वविलसंतोनखा
स्तेषांचक्रवालंमंडलंतस्यज्योत्स्नाभिराहतोमहतांध्यातॄणांहृदयांधकारोयेन एतच्चसर्वमुपादेयविशेषणंध्येयत्वेनैवोच्यते ॥ २१ ॥ किं
चयस्यशौचेनक्षालनेननिःसृतायाः सरित्प्रवरायाः गंगायाःउदकेनतीर्थेनसंसारतारकेणमूर्ध्निअधिकृतेनधृतेनशिवोपिशिवोऽभूत् अत्यधिकं
सुखंप्रापेत्यर्थः ध्यातुर्मनसियःशमलशैलःपापपर्वतःतस्मिन्निसृष्टंक्षिप्तंवज्रमिवयत्यद्वा शमलशैलेनिसृष्टंस्वलांछनरूपंवज्रंयेनतत् ॥ २२॥
विभोर्जानुद्वयंतत्पर्यंतंजंघाद्वयंअखिलस्यविधातुर्ब्रह्मणः जनन्यालक्ष्म्यासंलालितं स्पर्शचातुर्येणसंसेवितं संसारित्वमित्रप्रतीतंवारयाति

तस्मिन्लब्धपदंचित्तंसर्वावयवसंस्थितम् ॥ विलक्ष्यैकत्रसंयुज्यादंगेभगवतोमुनिः ॥ २०॥ संचिंतयेद्भगव
तश्चरणारविंदंवज्रांकुशध्वजसरोरुहलांछनाढ्यम् ॥ उत्तुंगरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमह
द्धृदयांधकारम् ॥२१॥ यच्छौचनिःसृतसरित्प्रवरोदकेनतीर्थेनमूर्ध्न्यधिकृतेनशिवःशिवोऽभूत् ॥ ध्यातुर्मनः
शमलशैलनिसृष्टवज्रंध्यायेच्चिरंभगवतश्चरणारविंदं ॥ २२ ॥ जानुद्वयंजलजलोचनयाजनन्यालक्ष्म्याऽ
खिलस्यसुरवंदितयाविधातुः ॥ ऊर्वोर्निधायकरपल्लवरोचिषायत्संलालितंहृदिविभोरभवस्यकुर्यात्॥२३॥
ऊरूसुपर्णभुजयोरधिशोभमानावोजोनिधीअतसिकाकुसुमावभासौ ॥ व्यालंबिपीतवरवाससिवर्तमान
कांचीकलापपरिरंभिनितंबबिंबं ॥ २४ ॥ नाभिह्रदंभुवनकोशगुहोदरस्थंयत्रात्मयोनिधिषणाखिललो
कपद्मं ॥ व्यूढंहरिन्मणिवृषस्तनयोरमुष्यध्यायेद्द्वयंविशदहारमयूखगौरं ॥ २५ ॥ ॥

अभवस्येति हृदिकुर्यात्ध्यायेत् ॥ २३ ॥ सुपर्णस्यभुजयोःस्कंधयोःअधिउपरि ओजसोबलस्यनिधीआधारौअतसिकायाःकुसुमवत्कांत्या
वभासमानौ व्यालंविआगुल्फंलंबमानंयत्पीतांबरंवासस्तस्मिन्वर्तमानोयःकांचीकलापस्तेनपरिरंभःसंश्लेषोविद्यतेयस्यतद्विभोर्नितंबबिंबं
हृदिकुर्यादितिपुर्वेणैवान्वयः ॥ २४ ॥ अमुष्यहरेर्नाभिह्रदंध्यायेत् कथंभूतं भुवनानांकोशस्यसमूहस्यगुहाअधिष्ठानंयदुदरंतत्रस्थितं
यत्रनाभिह्रदे आत्मयोनेर्ब्रह्मणोधिषणंधिष्ण्यमखिललोकात्मकंपद्मंव्यूढमुत्थितं तथाहरिन्मणिवृषौमरकतमणिश्रेष्ठाविवयौस्तनौतयोर्द्व
यंध्यायेत् विशदहाराणांमयूखैर्गौरंश्वेतं ॥ २५ ॥ ॥ ॥ ॥

ऋषभस्यश्रेष्ठस्यमहाविभूतेर्महालक्ष्म्याअधिवासंस्थानंवक्षः कंठंचमनसिकुर्यात् कथंभूतंकंठंकौस्तुभमणिर्योभूषणार्थंधृतः तस्यअधिकंभूषणमर्थःप्रयोजनंयस्य कौस्तुभमणिमेवस्वयमलंकुर्वंतमित्यर्थः पुंसांस्मर्तॄणांचमनोनयनानांनिर्वृतिमादधानमित्युभयोर्विशेषणं ॥ २६ ॥ निर्णिक्तानिउज्वलीकृतानिबाहुवलयान्यंगदानियेषु अधिश्रितालोकपालायेषु दशशतारंचक्रं नसह्यंतेजोयस्यकरसरोरुहराजहंसमिव॥ २७॥ अरातयोयेभटायोद्धारस्तेषांशोणितमेवकर्दमस्तेनदिग्धांलिप्तां अस्यकंठेमालांमणिंचस्मरेत् मधुव्रतानांवरूथस्यगिराउपघुष्टांनादितां चैतन्यस्यजीवस्यतत्त्वं तदुक्तंवैष्णवे आत्मानमस्यजगतोनिर्लेपमगुणामलं ॥ बिभर्त्तिकौस्तुभमणिस्वरूपंभगवान्हरिरिति ॥ २८ ॥ भृत्येष्वनुकं

वक्षोऽधिवासमृषभस्यमहाविभूतेःपुंसांमनोनयननिर्वृतिमादधानं ॥ कंठंचकौस्तुभमणेरधिभूषणार्थंकुर्यान्मनस्यखिललोकनमस्कृतस्य ॥२६॥ बाहूंश्चमंदरगिरेःपरिवर्तनेननिर्णिक्तबाहुवलयानधिलोकपालान् ॥ संचिंतयेद्दशशतारमसह्यतेजःशंखंचतत्करसरोरुहराजहंसं॥२७॥कौमोदकींभगवतोदयितांस्मरेतदिग्धामरातिभटशोणितकर्दमेन ॥ मालांमधुव्रतवरूथगिरोपघुष्टांचैत्यस्यतत्त्वममलंमणिमस्यकंठे ॥ २८ ॥ भृत्यानुकंपितधियेहगृहीतमूर्तेःसंचिंतयेद्भगवतोवदनारविंदं ॥ यद्विस्फुरन्मकरकुंडलवल्गितेनविद्योतितामलकपोलमुदारनासं॥२९॥यच्छ्रीनिकेतमलिभिःपरिसेव्यमानंभूत्यास्वयाकुटिलकुंतलवृंदजुष्टं ॥ मीनद्वयाश्रयमधिक्षिपदब्जनेत्रंध्यायेन्मनोमयमतंद्रितउल्लसद्भ्रु ॥३०॥ तस्यावलोकमधिकंकृपयाऽतिघोरतापत्रयोपशमनायनिसृष्टमक्ष्णोः॥स्निग्धस्मितानुगुणितंविपुलप्रसादंध्यायेच्चिरंविपुलभावनयागुहायां ॥३१॥

पिताकृतानुकंपायाधीस्तयागृहीतामूर्तिर्येन तस्यविस्फुरतीयेमकरकुंडलेतयोर्वल्गितेनप्रचलनेनविद्योतितौअमलौकपोलौयस्मिन् तत् उदाराउन्नतानासायस्मिन् तत् ॥ २९ ॥ यच्चस्वयाभूत्याशोभया अलिभिःपरिसेव्यमानंमीनद्वयाश्रयंचश्रीनिकेतनंपद्ममधिक्षिपद्वर्ततेतत्ध्यायेत् तत्रकुंतलैरलीनामधिक्षेपः नेत्रद्वयेनमीनद्वयस्येतिद्रष्टव्यं अब्जेइवनेत्रेयस्मिन्नित्युपमानांतरमुल्लसंत्यौभ्रुवौयस्मिन्मनोमयंमनस्याविर्भवत् ॥ ॥ ३० ॥ कृपयाअधिकमित्यर्थः अक्षिभ्यांनिसृष्टंप्रयुक्तं स्निग्धस्मितेनानुगुणितंसंयुक्तं विपुलःप्रसादोयस्मिन् गुहायांहृदि ॥ ३१ ॥

अवनतायेऽखिललोकास्तेषांतीव्रशोकेनयान्यश्रूणितेषांसागरंविशोषयतीतितथातं हरेर्हासमस्यअत्युदारंभ्रूमंडलंचध्यायेत् कथंभूतंनि
जमाययामकरध्वजस्यापिसंमोहनायरचितं मुनिकृतेमुनीनामुपकाराय मुनीनांसंमोहनेप्रवृत्तंकाममेवमोहयितुमित्यर्थः ॥ ३२ ॥ मंदहा
सध्यानमुक्तास्फुटहासध्यानमाह विष्णोःप्रहसितमुच्चैर्हसितंध्यायेत् कीदृशं ध्यानायनं अतिसुंदरतयाप्रयत्नंविनैवध्यानस्यविषयभूतं
सौंदर्यमेवाह बहुलयाअधिकयाअधरोष्ठस्यभासाकांत्या अरुणीभूतास्तनवःसूक्ष्माद्विजाएवकुंदमुकुलानितेषांपंक्तिःस्फुरतियस्मिंस्तत्दे
हकुहरेहृदयाकाशे अवसितस्यज्ञातस्यप्रेमरसेनार्द्रयाभक्त्यातस्मिन्नेवार्पितमनाःसन्पृथक्तद्व्यतिरिक्तंद्रष्टुंनेच्छेत् नचित्तंविचालयेदित्य
र्थः ॥ ३३ ॥ समाधिमाह एवमिति द्वाभ्यां निर्बीजःसबीजश्चेतिद्विविधोयोगः तत्रनिर्बीजयोगोयतोयतोनिश्चरतिमनश्चंचलमस्थिरं ॥ त
तस्ततोनियम्यैतदात्मन्येववशंनयेत् इतिगीताद्युक्तमार्गेणक्रियमाणोऽपिदुष्करःसमाधिःसबीजेतुसुकरः तत्राहिपरमानंदमूर्त्तौहरौध्याय

**हासंहरेरवनताखिललोक तीव्रशोकाश्रुसागरविशोषणमत्युदारं ॥ संमोहनायरचितंनिजमाययास्यभ्रूमंड
लंमुनिकृतेमकरध्वजस्य ॥ ३२ ॥ ध्यानायनंप्रहसितंबहुलाधरोष्ठभासारुणायिततनुद्विजकुंदपंक्ति ॥ ध्या
येत्स्वदेहकुहरेऽवसितस्यविष्णोर्भक्त्यार्द्रयाऽर्पितमनानपृथग्दिदृक्षेत् ॥ ३३ ॥ एवंहरौभगवतिप्रतिल
ब्धभावोभक्त्याद्रवद्धृदयउत्पुलकःप्रमोदात् ॥ औत्कंठ्यबाष्पकलयामुहुरर्द्यमानस्तच्चापिचित्तबडिशंश
नकैर्वियुंक्ते ॥ ३४ ॥ मुक्ताश्रयंयर्हिनिर्विषयंविरक्तंनिर्वाणमृच्छतिमनःसहसायथाऽर्चिः ॥ आत्मानमत्र
पुरुषोऽव्यवधानमेकमन्वीक्षतेप्रतिनिवृत्तगुणप्रवाहः ॥ ३५ ॥ ॥ ॥ ॥**

मानेऽयत्नतएवचित्तोपरमोभवति तदुक्तं हृतात्मनोहृतप्राणांश्चभक्तिरनिच्छतोगतिमण्वींप्रयुंक्तइति अतःसएवोपक्षिप्तः योगस्यलक्षणं
वक्ष्येसबीजस्येतितदेवायत्नसिद्धत्वंदर्शयति एवंध्यानमार्गेणहरौप्रतिलब्धोभावःप्रेमयेन तयाभक्त्याद्रवत्हृदयंयस्य प्रमोदादुद्गतानिपुल
कानियस्य औत्कंठ्यप्रवृत्ताश्रुकलयाचमुहुरर्द्यमानः आनंदसंप्लवेनिमज्जमानः दुर्ग्रहस्यभगवतोग्रहणेबडिशंमत्स्यवेधनमिवोपायभूतंचि
त्तमपिध्येयाद्वियुंक्ते तद्धारणेशिथिलप्रयत्नोभवतीत्यर्थः ॥ ३४ ॥ यर्हियदा एवंनिर्विषयंभवति अतएवमुक्ताश्रयंचध्येयसंबंधंविनाधातर्य
वस्थानासंभवात् नचपूर्ववत्शब्दादिर्विषयःस्यात्यतस्तत्रविरक्तंपरमानंदानुभवेन अतोनिर्वाणंलयमृच्छति वृत्तिरूपतांपरित्यज्य ब्रह्मा
कारेणपरिणमतइत्यर्थः यथाऽर्चिर्ज्वालाआश्रयविषयापगमेमहाभूतज्योतीरूपेणपरिणमते अत्रअस्यांदशायामव्यवधानं ध्यातृध्येयविभाग
शून्यमेकमखंडं आत्मानमनुगतमीक्षतेअत्रहेतुः प्रतिनिवृत्तोपगतोगुणप्रवाहोदेहाद्युपाधिर्यस्य ॥ ३५ ॥ ॥ ॥

नचसुप्तोत्थितइवपुनःसंसरतीत्याह सोऽपिसएवपुरुषः तस्मिन्महिम्निब्रह्मरूपेअवसितःअवसानंनिष्ठांप्राप्तः कयामनसोनिवृत्त्याचरमया ऽविद्यारहितयेतिसुषुप्ताद्विशेषःतत्रह्यविद्याऽस्तिनत्विदानीं अत्रहेतुः एतयायोगाभ्यासकृतयेत्यर्थः नन्वेवमपिसुखदुःखयोरात्मधर्मत्वे कुतोब्रह्मैक्यंतत्राह दुःखयोःसुखदुःखयोर्हेतुत्वंभोक्तृत्वंयत्पूर्वमासीत् तदपिअसतिअविद्याकृतेकर्तरि अहंकारेविधत्ते तन्निष्ठमेवपश्यती त्यर्थःयतःउपलब्धपरात्मकाष्ठः अपरोक्षीकृतात्मतत्त्वः ॥ ३६ ॥ तस्यजीवन्मुक्तिमाहदेहंचेतिद्वाभ्यां चरमउक्तलक्षणः सिद्धोदेहम पिनविपश्यतिकुतःसुखदुःखे आसनादुत्थितमुत्थायतत्रैवस्थितंतत्स्थानादपेतंततोदैववशात्पुनरपिउपेतंवानविपश्यति यतःस्वरूपंप्रा प्तःयतोदेहात्स्वरूपमध्यगमत् तंदेहमितिवा सतोप्यननुसंधानेदृष्टांतः वासःपरिकृतंकटितटेपरिवेष्टितं स्थितंगतंवा मदिरामदेनांधोयथा

सोप्येतयाचरमयामनसोनिवृत्त्यातस्मिन्महिम्न्यवसितःसुखदुःखबाह्ये ॥ हेतुत्वमप्यसतिकर्त्तरिदुःखयो र्यत्स्वात्मन्विधत्तउपलब्धपरात्मकाष्ठः ॥ ३६ ॥ देहंचतंनचरमःस्थितमुत्थितंवासिद्धोविपश्यतियतोऽध्य गमत्स्वरूपं ॥ दैवादुपेतमथदैववशादपेतंवासोयथापरिकृतंमदिरामदांधः ॥ ३७ ॥ देहोपिदैववशगःख लुकर्मयावत्स्वारंभकंप्रतिसमीक्षतएवसासुः ॥ तंसप्रपंचमधिरूढसमाधियोगःस्वाप्नंपुनर्नभजतेप्रतिबुद्ध वस्तुः ॥ ३८ ॥ यथापुत्राच्चवित्ताच्चपृथङ्मर्त्यःप्रतीयते ॥ अप्यात्मत्वेनाभिमताद्देहादेःपुरुषस्तथा ॥ ३९ ॥ यथोल्मुकाद्विस्फुलिंगाद्धूमाद्वापिस्वसंभवात् ॥ अप्यात्मत्वेनाभिमतात्तदग्निःपृथगुल्मुकात् ॥ ४० ॥

नपश्यतीति ॥ ३७ ॥ ननुतर्हिदेहस्यकथंप्रवृत्तिनिवृत्तीजीवनंच तत्राह देहोऽपीति दैवंपूर्वसंस्कारस्तद्वशेनगच्छन् यावत्स्वारंभकंकर्मा स्तितावत्प्रतिसमीक्षतेजीवत्येव सासुःसेंद्रियः ननुतर्हितस्मिन्पुनःसंगःस्यात्तत्राह तंदेहंस्वाप्नदेहादितुल्यं सप्रपंचंपुत्रादिसहितंपुनर्नभज ते अहंममेतिनाभिमन्यते आरूढःप्राप्तःसमाधिपर्यंतोयोगोयेन अतएवप्रतिबुद्धंवस्तुआत्मतत्त्वंयनसः ॥ ३८ ॥ प्रतिबोधप्रकारमाहषड्भिः यथेति अतिस्नेहवशादात्मत्वेनाभिमतादपिपुत्रादेःमर्त्यःपित्रादिः पुरुषोदेहादेर्द्रष्टा ॥ ३९ ॥ पृथगवस्थानाभावेऽपिभेदंसदृष्टांतमाह य थोल्मुकादिदानींज्वलतःकाष्ठात् स्वसंभवादग्नेःसंभूतात् आत्मत्वेनअग्नेःस्वरूपत्वेनाभिमतादपि अत्यंताविवेकिनोहिधूमेऽप्यग्न्यभिमा नोऽस्ति उल्मुकात्पूर्वसिद्धादपितद्दाहकःप्रकाशकश्चाग्निःपृथगेव ॥ ४० ॥

भूतादेर्द्रष्टातेभ्यःपृथक् तस्मादपिजीवसंज्ञिताद्ब्रह्मसंज्ञितःपृथक् तथाप्रधानादपितत्प्रवर्तकोभगवान्पृथगित्यर्थः ॥ ४१ ॥ उपाधितोवि
वेकमुक्तातस्यैक्यमाह सर्वभूतेष्विति भूतेषुचतुर्विधेषुतदात्मतांमहाभूतात्मताम् ॥ ४२ ॥ धर्मभेदस्याप्यौपाधिकतांसदृष्टांतामाह स्वयो
निषुज्योतिरग्निः गुणवैषम्यात्दीर्घन्हस्वादिभेदात् प्रकृतौदेहे ॥ ४३ ॥ स्वांशस्यजीवस्यबंधहेतुं दैवींदेवस्यविष्णोःशक्तिं पराभाव्यतत्प्र
सादेनैवजित्वा स्वरूपेणब्रह्मत्वेनावतिष्ठते ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायामष्टाविंशतितमोऽध्यायः ॥२८॥ ॥

भूतेंद्रियांतःकरणात्प्रधानाज्जीवसंज्ञितात् ॥ आत्मातथापृथग्द्रष्टाभगवान्ब्रह्मसंज्ञितः ॥४१॥ सर्वभूतेषु
चात्मानंसर्वभूतानिचात्मनि ॥ ईक्षेतानन्यभावेनभूतेष्विवतदात्मतां ॥ ४२ ॥ स्वयोनिषुयथाज्योतिरेकंना
नाप्रतीयते ॥ योनीनांगुणवैषम्यात्तथात्माप्रकृतौस्थितः ॥४३॥ तस्मादिमांस्वांप्रकृतिंदैवींसदसदात्मिका
म् ॥ दुर्विभाव्यांपराभाव्यस्वरूपेणावतिष्ठते ॥४४॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयेसा
धनानुष्ठानंनामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ ॥ देवहूतिरुवाच लक्षणंमहदादीनांप्रकृतेः
पुरुषस्यच ॥ स्वरूपंलक्ष्यतेऽमीषांयेनतत्पारमार्थिकं ॥ १ ॥ यथासांख्येषुकथितंयन्मूलंतत्प्रचक्षते ॥ भक्ति
योगस्यमेमार्गंब्रूहिविस्तरशःप्रभो ॥ २ ॥ विरागोयेनपुरुषोभगवन्सर्वतोभवेत् ॥ आचक्ष्वजीवलोकस्यवि
विधालोकसंसृतीः ॥ ३ ॥ कालस्येश्वररूपस्यपरेषांचपरस्यते ॥ स्वरूपंबतकुर्वंतियद्धेतोःकुशलंजनाः ॥ ४ ॥

एकोनत्रिंशकेभक्तियोगस्तुबहुधोच्यते ॥ कालस्यचबलंघोरासंसृतिश्चविरक्तये ॥ १ ॥ उक्तानुवादपूर्वकंभक्तिमार्गभेदान्पृच्छतिद्वाभ्यां
लक्षणंमहदादीनांयथासांख्येषुतथाकथितं येनलक्षणेनतत्पारमार्थिकंपरस्परविभक्तमित्यर्थः ॥ १ ॥ योभक्तियोगोमूलंप्रयोजनंयस्यतद्य
न्मूलंतत्कथितं तस्यभक्तियोगस्यमार्गंप्रकारंविस्तरतोमेब्रूहि ॥ २ ॥ येनसंसृतीनामाख्यानेनविगतरागोभवेत् ॥ ३ ॥ ईश्वररूपस्यम
हाप्रभावस्यतेत्वदात्मकस्य यद्धेतोर्यद्भयात् कुशलंपुण्यंकुर्वंति ॥ ४ ॥

अचक्षुषःअज्ञस्य अतोमिथ्याभूतेदेहादावभिमतिरहंकारोयस्य अतःकर्मस्वनुविद्धयाआसक्तयाधियाश्रांतस्य अतएवअनाश्रये अपारेतम
सिसंसारेचिरंप्रसुप्तस्यलोकस्यप्रबोधायत्वंयोगप्रकाशकोभास्करः किलाविर्भूतोसि ॥ ५ ॥ श्लक्ष्णंसुंदरं ॥ ६ ॥ मार्गैःप्रकारविशेषैः
तानेवाह स्वभावभूतायेगुणास्तेषांमार्गेणवृत्तिभेदेनभावःअभिप्रायः फलसंकल्पभेदात्भक्तिभेदइत्यर्थः ॥ ७ ॥ अभिसंधायसंकल्प्यसं
रंभीक्रोधीभिन्नदृक्भेददर्शीयोभावंभक्तिंकुर्यात् सत्रिविधोऽपितामसः ॥ ८ ॥ पृथग्भावःभेददर्शी ॥ ९ ॥ कर्मनिर्हारंपापक्षयंपरस्मिन्प
रमेश्वरेतदर्पणंकर्मार्पणंभगवत्प्रीतिमुद्दिश्येत्यर्थः यष्टव्यमितिविधिसिद्धिमुद्दिश्येत्यर्थः भेददर्शित्वमर्चादावर्चनंचत्रिष्वपिसमानम्तदेवं ता

लोकस्यमिथ्याभिमतेरचक्षुषश्चिरंप्रसुप्तस्यतमस्यनाश्रये ॥ श्रांतस्यकर्मस्वनुविद्धयाधियात्वमाविरासीः
किलयोगभास्करः ॥ ५ ॥ मैत्रेयउवाच इतिमातुर्वचःश्लक्ष्णंप्रतिनंद्यमहामुनिः ॥ आबभाषेकुरु
श्रेष्ठप्रीतस्तांकरुणाऽर्दितः ॥ ६ ॥ श्रीभगवानुवाच भक्तियोगोबहुविधोमार्गैर्भामिनिभाव्यते ॥ स्व
भावगुणमार्गेणपुंसांभावोविभिद्यते ॥ ७ ॥ अभिसंधाययद्धिंसांदंभंमात्सर्यमेववा ॥ संरंभीभिन्नदृक्
भावंमयिकुर्यात्सतामसः ॥ ८ ॥ विषयानभिसंधाययशऐश्वर्यमेववा ॥ अर्चादावर्चयेद्योमांपृथक्भावः
सराजसः ॥ ९ ॥ कर्मनिर्हारमुद्दिश्यपरस्मिन्वातदर्पणं ॥ यजेद्यष्टव्यमितिवापृग्भावःससात्विकः ॥ १० ॥
मद्गुणश्रुतिमात्रेणमयिसर्वगुहाशये ॥ मनोगतिरविच्छिन्नायथागंगांऽभसोंबुधौ ॥ ११ ॥ लक्षणंभक्ति
योगस्यनिर्गुणस्यत्युदाहृतम् ॥ अहैतुक्यव्यवहितायाभक्तिःपुरुषोत्तमे ॥ १२ ॥ सालोक्यसार्ष्टिसामी
प्यसारूप्यैकत्वमप्युत ॥ दीयमानंनगृण्हंतिविनामत्सेवनंजनाः ॥ १३ ॥

मसादिभक्तिषुत्रयस्त्रयोभेदाः तासुयथोत्तरंश्रैष्ठ्यम् एवंचश्रवणकीर्त्तनादयोनवापिप्रत्येकंनवनवभेदाः तदेवंसगुणाभक्तिरेकाशीतिभेदा
भवति ॥ १० ॥ निर्गुणातुभक्तिरेकविधैवतामाह मद्गुणश्रुतिमात्रेणेतिद्वाभ्यां अविच्छिन्नासंतता ॥ ११ ॥ अहैतुकीफलानुसंधानशून्या
अव्यवहिताभेददर्शनरहिताच मद्गुणश्रुतिमात्रेण मयिपुरुषोत्तमेमनोगतिरितियाभक्तिःसानिर्गुणस्यभक्तियोगस्यलक्षणमित्यन्वयः लक्षणं
स्वरूपं ॥ १२ ॥ भक्तानांनिष्कामताकैमुत्यन्यायेनाह सालोक्यंमयासहैकस्मिन्लोकेवासम् सार्ष्टिसमानैश्वर्यं सामीप्यंनिकटवर्त्तित्वं
सारूप्यंसमानरूपतामेकत्वंसायुज्यमुतअपिदीयमानमपिनगृह्णंतिकुतस्तत्कामनेत्यर्थः ॥ १३ ॥

किमितितर्हिभजंतेभक्तेरेवपरमफलत्वादित्याह सएवेति ननुत्रैगुण्यंहित्वाब्रह्मप्राप्तिःपरमफलंप्रसिद्धं सत्यं तत्तुभक्तावानुषांगिकमि त्याह येनभक्तियोगेनमद्भावायब्रह्मत्वाय ॥ १४ ॥ एवंभूतायाभक्तेःसाधनान्याहपंचभिः निषेवितेनसम्यगनुष्ठितेन अनिमित्तेनस्वधर्मेणनित्यनैमित्तिकेन महीयसाश्रद्धादियुक्तेन क्रियायोगेनपंचरात्राद्युक्तपूजाप्रकारेण शस्तेननिष्कामेण ॥ १५ ॥ मद्धिष्ण्यंमत्प्रतिमादितस्यदर्शनादिभिः सत्त्वेनधैर्येण असंगमेनवैराग्येण ॥१६॥१७॥१८॥ मद्धर्मणःभगवद्धर्मानुष्ठातुःपुरुषस्याशयश्चित्तं ॥ १९ ॥ प्रयत्नंविनैवप्राप्नोद्दष्टां

सएवभक्तियोगारूयआत्यंतिकउदाहृतः ॥ येनातिव्रज्यत्रिगुणंमद्भावायोपपद्यते ॥ १४ ॥ निषेवितेनानिमित्तेनस्वधर्मेणमहीयसा ॥ क्रियायोगेनशस्तेननातिहिंस्रेणनित्यशः ॥ १५ ॥ मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवंदनैः ॥ भूतेषुमद्भावनयासत्त्वेनासंगमेनच ॥ १६ ॥ महतांबहुमानेनदीनानामनुकंपया ॥ मैत्र्याचैवात्मतुल्येषुयमेननियमेनच ॥ १७ ॥ आध्यात्मिकानुश्रवणान्नामसंकीर्तनाच्चमे ॥ आर्जवेनार्यसंगेननिरहंक्रिययातथा ॥ १८ ॥ मद्धर्मणोगुणैरेतैःपरिसंशुद्धआशयः ॥ पुरुषस्यांजसाऽभ्येतिश्रुतमात्रगुणंहिमां ॥ १९ ॥ यथावातरथोघ्राणमावृंक्तेगंधआशयात् ॥ एवंयोगरतंचेतआत्मानमविकारियत् ॥ २० ॥ अहंसर्वेषुभूतेषुभूतात्मावस्थितःसदा ॥ तमवज्ञायमांमर्त्यःकुरुतेर्चाविडंबनं ॥ २१ ॥ योमांसर्वेषुभूतेषुसंतमात्मानमीश्वरं ॥ हित्वार्चांभजतेमौढ्याद्भस्मन्येवजुहोतिसः ॥ २२ ॥ द्विषतःपरकायेमांमानिनोभिन्नदर्शिनः ॥ भूतेषुबद्धवैरस्यनमनःशांतिमृच्छति ॥ २३ ॥ अहमुच्चावचैर्द्रव्यैःक्रिययोत्पन्नयाऽनघे ॥ नैवतुष्येऽर्चितोऽर्चायांभूतग्रामावमानिनः ॥ २४ ॥ ॥ ॥

तः वातोरथःप्रापकोयस्यगंधस्य आशयात्स्थानात् आवृंक्तेआत्मसात्करोति अविकारिसमंयच्चेतः ॥ २० ॥ चित्तशुद्धिश्चसर्वभूतात्मदृष्ट्यैवभवतीतिवकुंकेवलप्रतिमादिनिष्ठांनिंदन्नाह अहमितिसप्तभिः अर्चैवविडंबनमनुकरणं अर्चायांपूजाविडंबनमितिवा अवज्ञोपेक्षाद्वेषानिंदाःक्रमेणचतुर्भिर्निषिध्यंते ॥२१॥ हित्वाउपेक्ष्य ॥२२॥२३॥ द्रव्यैरुत्पन्नयाक्रियया भूतग्रामावमानिनःतन्निंदकस्य ॥ २४ ॥

तर्हिकिमर्चादावर्चनमनर्थकमेवनेत्याह अर्चादाविति सर्वभूतेष्ववस्थितंमांस्वहृदियावन्नवेदस्वकर्मकृत् कर्माविरोधेन यथावकाशं अने
नकर्मनिष्ठायाअपिसएवावधिरित्युक्तंभवति ॥ २५ ॥ अंतराअंतरंभेदमुतअपि अरमल्पं अल्पमपिभेदंयःपश्यतीत्यर्थः यद्वा अंतराम
ध्येउदरंशरीरंमृत्युरहंतस्यभयंविदधेकरोमि ॥ २६ ॥ अथअतः सर्वभूतेषुकृतालयंकृतावासं तत्रहेतुः भूतानामात्मानंअंतर्यामिणं अभि
न्नेनचक्षुषासमदर्शनेन ॥२७॥ तत्रापियथोत्तरंमानाद्यतिशयःकर्त्तव्यइतिवक्तुंतारतम्यमाह जीवाइतिसार्द्धैःषड्भिः अजीवानांअचेतनेभ्यः
ततस्तेष्वपिप्राणभृतःप्राणवृत्तिमंतः सचित्ताःज्ञानवंतः इंद्रियाणांवृत्तयोयेषु इंद्रियवृत्तयोवृक्षाणामपिसूक्ष्माःसंत्येव तथाहिमहाभारतेमोक्ष

अर्चादावर्चयेत्तावदीश्वरंमांस्वकर्मकृत् ॥ यावन्नवेदस्वहृदिसर्वभूतेष्ववस्थितं ॥ २५ ॥ आत्मनश्चपरस्या
पियःकरोत्यंतरोदरं ॥ तस्यभिन्नदृशोमृत्युर्विदधेभयमुल्बणं ॥ २६ ॥ अथमांसर्वभूतेषुभूतात्मानंकृताल
यं ॥ अर्हयेद्दानमानाभ्यांमैत्र्याऽभिन्नेनचक्षुषा ॥ २७ ॥ जीवाःश्रेष्ठाह्यजीवानांततःप्राणभृतःशुभे ॥ त
तःसचित्ताःप्रवरास्ततश्चेंद्रियवृत्तयः ॥ २८ ॥ तत्रापिस्पर्शवेदिभ्यःप्रवरारसवेदिनः ॥ तेभ्योगंधविदः
श्रेष्ठास्ततःशब्दविदोवराः ॥२९ ॥ रूपभेदविदस्तत्रततश्चोभयतोदतः ॥तेषांबहुपदाश्रेष्ठाश्चतुष्पादस्त
तोद्विपात्॥३०॥ततोवर्णाश्चचत्वारस्तेषांब्राह्मणउत्तमः ॥ ब्राह्मणेष्वपिवेदज्ञोह्यर्थज्ञोभ्यधिकस्ततः॥३१॥
अर्थज्ञात्संशयच्छेत्तातततःश्रेयान्स्वकर्मकृत् ॥ मुक्तसंगस्ततोभूयानदोग्धाधर्ममात्मनः ॥ ३२ ॥ तस्मान्म
य्यर्पिताशेषक्रियार्थात्मानिरंतरः ॥ मय्यर्पितात्मनःपुंसोमयिसंन्यस्तकर्मणः ॥ ३३ ॥

धर्मेषुस्मर्यंते तस्मात्पश्यंतिपादपाः तस्माज्जिघ्रंतिपादपाइत्यादिप्रसिद्धातरुषुप्रभूतातुस्पर्शनेंद्रियवृत्तिरेव ॥ २८ ॥ अतस्तेभ्यःस्पर्शवेदि
भ्योरसवेदिनोमत्स्यादयःश्रेष्ठाः गंधविदोभ्रमरादयः शब्दविदःसर्पादयः ॥ २९ ॥ रूपभेदविदःकाकादयः उभयतोदंतायेषां अपादे
भ्यस्तेभ्योबहुपादाः तेभ्यश्चतुष्पादाइत्यर्थः द्विपान्मनुष्यः ॥ ३० ॥ ततस्तेषुवर्णाः ॥ ३१ ॥ संशयच्छेत्तामीमांसकः ततोऽपिकेवला
त्स्वकर्मकृत् मुक्तसंगस्यलक्षणं आत्मनोधर्ममदोग्धानिष्कामइत्यर्थः ॥३२ ॥ अर्पिताःअशेषाःक्रियाःअर्थास्तत्फलानि आत्मादेहश्चयेन
अतएवनिरंतरः अव्यवहितः ॥ ३३ ॥

अकर्त्तुः कर्तृत्वाभिमानशून्यात् जीवानांकलयापरिकलनेन अंतर्यामितयाप्रविष्टइतिद्दष्टयेत्यर्थः ॥ ३४ ॥ उक्तंभक्तियोगंपूर्वोक्तेनाष्टांगयो
गेनसहोपसंहरति भक्तियोगश्चेति हेमानवि पुरुषंपरमेश्वरं ॥ ३५॥ यदन्यत्पृष्टंजविस्यसंसृतीःकालस्यस्वरूपंचाचक्ष्वेति तदाह एतादि
तिसार्धेन एतत्सर्वंनियंतृयद्भगवतोरूपं कीदृशंप्रधानपुरुषात्मकंपरंतद्व्यतिरिक्तंच एतदेवदैवमित्यभिधीयते कीदृशंकर्मणोविचेष्टितं ना
नासंसृतिलक्षणंयस्मात्तत् दैवप्रेरितकर्मकृताःसंसृतयोविचित्राइत्यर्थः ॥ ३६ ॥ एतदेवभगवतोरूपंकालइतिचाभिधीयते कीदृशंरूपभे
दस्यवस्तूनामन्यथात्वस्य आस्पदमाश्रयःकारणं उक्तंहि कालाद्गुणव्यतिकरइति वक्ष्यतेचगुणव्यतिकरःकालइति दिव्यमद्भुतप्रभावं

नपश्यामिपरंभूतमकर्तुःसमदर्शनात् ॥ मनसैतानिभूतानिप्रणमेद्बहुमानयन् ॥ ईश्वरोजीवकलयाप्रवि
ष्टोभगवानिति ॥ ३४ ॥ भक्तियोगश्चयोगश्चमयामानव्युदीरितः ॥ ययोरेकतरेणैवपुरुषःपुरुषंव्रजेत् ॥
॥ ३५ ॥ एतद्भगवतोरूपंब्रह्मणःपरमात्मनः ॥ परंप्रधानंपुरुषंदैवंकर्मविचेष्टितं ॥ ३६ ॥ रूपभेदास्पदंदि
व्यंकालइत्यभिधीयते ॥ भूतानांमहदादीनांयतोभिन्नदृशांभयं ॥ ३७ ॥ योऽतःप्रविश्यभूतानिभूतैरत्त्यखि
लाश्रयः ॥ सविष्णवाख्योऽधियज्ञोऽसौकालःकलयतांप्रभुः ॥ ३८ ॥ नचास्यकश्चिद्दयितोनद्वेष्योनचबांध
वः ॥ आविशत्यप्रमत्तोसौप्रमत्तंजनमंतकृत् ॥ ३९ ॥ यद्भयाद्वातिवातोयंसूर्यस्तपतियद्भयात् ॥ यद्भयाद्वर्ष
तेदेवोभगणोभातियद्भयात् ॥ ४० ॥ यद्वनस्पतयोभीतालताश्चौषधिभिःसह ॥ स्वेस्वेकालेऽभिगृण्हंतिपु
ष्पाणिचफलानिच ॥ ४१ ॥ स्रवंतिसरितोभीतानोत्सर्पत्युदधिर्यतः ॥ अग्निरिंधेसगिरिभिर्भूर्नमज्जतियद्भ
यात् ॥ ४२ ॥ नभोददातिश्वसतांपदंयन्नियमाददः ॥ लोकंस्वदेहंतनुतेमहान्सप्तभिरावृतं ॥ ४३ ॥ गुणा
भिमानिनोदेवाःसर्गादिष्वस्ययद्भयात् ॥ वर्ततेऽनुयुगंयेषांवशएतच्चराचरम् ॥ ४४ ॥ ॥

तदेवाह भूतानामितियावत्समाप्ति महदादीनांतत्तदभिमानिनांजीवानां ॥ ३७ ॥ भयहेतुत्वमाह यइति भूतैरेवभूतान्यत्तिसंहरति अ
धियज्ञःयज्ञफलदाता कलयतांवशीकुर्वतां ॥ ३८ ॥ ३९ ॥ ४० ॥ यद्यस्मात्भीताः ॥ ४१ ॥ यतोभीताःसरितःस्रवंति इंधे
दीप्यतेसहगिरिभिर्भूः ॥ ४२ ॥ अदःनभः यन्नियमात् यस्याज्ञयामहान्महत्तत्त्वमंकुरात्मकंस्वदेहंलोकत्वेनतनुतेविस्तारयति ॥ ४३ ॥
गुणाभिमानिनोगुणनियंतारोदेवाब्रह्मादयः अस्यविश्वस्यसर्गादिषुप्रवर्तंते अनुयुगंवारंवारमित्यर्थः ॥ ४४ ॥ ॥

जनेनपित्रादिनाजनंपुत्रादिंजनयन्नादिकृत् मृत्युनाअंतकमपिमारयन्नंतकरः स्वयंत्वनादिरनंतोऽव्ययश्च ॥ ४५ ॥ इतिश्रीभागवतेमहा
पुराणेतृतीयस्कंधेटीकायामेकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ त्रिंशेतुकायकांतादिलालनाकुलचेतसां ॥ कामिनांतामसीपापादधो
गतिरुदीर्यते ॥ १ ॥ कालप्रभाववर्णनपूर्वकंवैराग्यायविचित्रकर्मकृतांसंसृतिमध्यायत्रयेणप्रपंचयति तस्यैतस्यबलिनःकालस्य बलिने
तिवापाठः काल्यमानःविचाल्यमानोऽपिवायोर्विक्रमंयथामेघपंक्तिर्नवेद ॥ १ ॥ विक्रममेवाह यंयमर्थंदुःखेनप्रयासेनोपादत्तेआपादय
ति तंतंभगवान्कालोधुनोतिविनाशयाति यत्कृतेयन्निमित्तं ॥ २ ॥ शोकेहेतुः यद्यस्मात्सानुबंधस्यकलत्रादिसहितस्यदेहस्यसंबंधीनिगृ

सोऽनंतोऽतकरःकालोऽनादिरादिकृदव्ययः ॥ जनंजनेनजनयन्मारयन्मृत्युनांतकं॥४५॥इतिश्रीभागव
तेमहापुराणेतृतीयस्कंधेएकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ कपिलउवाच तस्यैतस्यजनोनूनंनायंवेदो
रुविक्रमं ॥ काल्यमानोऽपिबलिनोवायोरिवघनावलिः ॥ १ ॥ यंयमर्थमुपादत्तेदुःखेनसुखहेतवे ॥ तंतं
धुनोतिभगवान्पुमान्शोचतियत्कृते ॥ २ ॥ यदध्रुवस्यदेहस्यसानुबंधस्यदुर्मतिः ॥ ध्रुवाणिमन्यतेमोहाद्गृह
क्षेत्रवसूनिच ॥ ३ ॥ जंतुर्वैभवएतस्मिन्यांयांयोनिमनुव्रजेत् ॥ तस्यांतस्यांसलभतेनिर्वृतिंनविरज्यते ॥ ४ ॥
नरकस्थोऽपिदेहंवैनपुमांस्त्यक्तुमिच्छति ॥ नारक्यांनिर्वृतौसत्यांदेवमायाविमोहितः ॥५॥ आत्मजायासु
तागारपशुद्रविणबंधुषु ॥ निगूढमूलहृदयआत्मानंबहुमन्यते ॥ ६ ॥ संदह्यमानसर्वांगएषामुद्वहनाधिना॥
करोत्यविरतंमूढोदुरितानिदुराशयः॥७॥आक्षिप्तात्मेंद्रियःस्त्रीणामसतीनांचमायया ॥ रहोरचितयालापैः
शिशूनांकलभाषिणां ॥८॥ गृहेषुकूटधर्मेषुदुःखतंत्रेष्वतंद्रितः ॥ कुर्वन्दुःखप्रतीकारंसुखवन्मन्यतेगृही॥९॥

हादीनि वसुद्रव्यं अनुक्तसमुच्चयार्थश्चकारः ॥ ३ ॥ दुर्मतित्वंदर्शयन्दुःखंप्रपंचयति जंतुरितिचतुर्दशभिः ॥ ४ ॥ नारक्यांनरकाहारा
दिभिर्जातायां ॥ ५ ॥ निगूढमूलंप्रसृतमनोरथंहृदयंयस्य बहुमन्यते कृतार्थोऽहमितिश्लाघते ॥ ६ ॥ उद्वहनाधिनापोषणचिंतया ॥
॥ ७ ॥ दुराशयत्वमाह आक्षिप्तआत्माइंद्रियाणिचयस्य कयाअसतीनांपुंश्चलीनामपिरहसिरचितयासंभोगादिरूपयामधुरभाषिणांशि
शूनामालापैश्च सुखवन्मन्यतइत्युत्तरेणान्वयः ॥ ८ ॥ कूटाःवित्तशाठ्यादिबहुलाधर्मायेषु दुःखप्रधानेषु ॥ ९ ॥ ॥

येषां पोषणेनाधोयाति तान्पुष्णाति शेषभुगितिभोगोऽपितस्यदुर्लभइत्यर्थः ॥ १० ॥ वार्तायांजीविकायां निःसत्वःअशक्तः परार्थेपर
स्वे ॥ ११ ॥ अकल्पः असमर्थः ॥ १२ ॥ पूर्वंयथाआद्रियंतेतथाआदरंनकुर्वंति ॥ कीनाशाःकृपणाः कृषीवलागोजरंवृद्धंबलीवर्दम् ॥
॥ १३ ॥ भ्रियमाणःपुष्यमाणः ॥ १४ ॥ अवमत्याऽवज्ञयाउपन्यस्तंसमीपेप्रक्षिप्तंदत्तं गृहपालःश्वाआहरन्भुंजानः आमयावीरोगी ॥
॥ १५ ॥ उत्तारोबहिर्निर्गतनेत्रः कफेनसंरुद्धानाड्योमार्गभूतायस्य कासश्वासाभ्यांकृतआयासोयस्य घुरघुरइतिशब्दंकरोति ॥ १६ ॥ परि

अथैरापादितैर्गुर्व्याहिंसयेतस्ततश्चतान् ॥ पुष्णातियेषांपोषेणशेषभुग्यात्यधःस्वयं ॥ १० ॥ वार्तायांलुप्य
मानायामारब्धायांपुनःपुनः ॥ लोभाभिभूतोनिःसत्त्वःपरार्थेकुरुतेस्पृहाम् ॥ ११ ॥ कुटुंबभरणाकल्पोमंदभा
ग्योवृथोद्यमः ॥ श्रियाविहीनःकृपणोध्यायञ्छ्वसितिमूढधीः ॥ १२ ॥ एवंस्वभरणाकल्पंतत्कलत्रादयस्तदा ॥
नाद्रियंतेयथापूर्वंकीनाशाइवगोजरम् ॥ १३ ॥ तत्राप्यजातनिर्वेदोभ्रियमाणःस्वयंभृतैः ॥ जरयोपात्तवैरू
प्योमरणाभिमुखोगृहे ॥ १४ ॥ आस्तेऽवमत्योपन्यस्तंगृहपालइवाहरन् ॥ आमयाव्यप्रदीप्ताग्निरल्पाहारो
ऽल्पचेष्टितः ॥ १५ ॥ वायुनोत्क्रमतोत्तारःकफसंरुद्धनाडिकः ॥ कासश्वासकृतायासःकंठेघुरघुरायते ॥ १६ ॥
शयानःपरिशोचद्भिःपरिवीतःस्वबंधुभिः ॥ वाच्यमानोऽपिनब्रूतेकालपाशवशंगतः ॥ १७ ॥ एवंकुटुं
बभरणेव्यापृतात्माऽजितेंद्रियः ॥ म्रियतेरुदतांस्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥ यमदूतौतदाप्राप्तौ
भीमौसरभसेक्षणौ ॥ सदृष्ट्वात्रस्तहृदयःशकृन्मूत्रंविमुंचति ॥ १९ ॥ यातनादेहआवृत्यपाशैर्बध्वागले
बलात् ॥ नयतोदीर्घमध्वानंदंड्यंराजभटायथा ॥ २० ॥ तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ॥ पथि
श्वभिर्भक्ष्यमाणआर्तोऽघंस्वमनुस्मरन् ॥ २१ ॥ क्षुत्तृट्परीतोऽर्कदवानलानिलैःसंतप्यमानःपथितप्तवा
लुके ॥ कृच्छ्रेणपृष्ठेकशयाचताडितश्चलत्यशक्तोऽपिनिराश्रमोदके ॥ २२ ॥ ॥ ॥

वीतःपरिवेष्टितः वाच्यमानः बंधोतातेत्याहूयमानः ॥ १७ ॥ अस्तधीर्नष्टमतिः ॥ १८ ॥ मृतस्यपुण्यपापाभ्यांद्वेगतीतत्रपापगतिमाह यम
दूतावित्यादियावत्समाप्ति सरभसंसक्रोधमीक्षणंययोस्तौदृष्ट्वा ॥ १९ ॥ आवृत्यनिरुध्य ॥ २० ॥ तयोस्तर्जनैर्निर्भिन्नंहृदयंयस्य आर्तःसन्च
लतीतिद्वितीयेनान्वयः ॥ २१ ॥ क्षुत्तृड्भ्यांपरीतोव्याप्तः तप्ताःवालुकाःयस्मिन्निर्गतआश्रमोविश्रामस्थानमुदकंचयस्मिन् ॥ २२ ॥ ॥

यमसादनंनीतोभवति ॥२३॥ तत्रैवंविशेषमाह अध्वनःसंबंधिनांयोजनानां नवतिनवचसहस्राणिपापाधिक्येनद्वाभ्यांनीतःसन् ॥ २४ ॥ यातनाःसंक्षेपतोदर्शयतिचतुर्भिः आदीपनंप्रज्वलनंप्राप्नोति स्वेनकृत्तंछिन्नंयत्स्वस्यमांसंतस्यभक्षणमित्यर्थः ॥ २५ ॥ आत्मनोवैशसंपीडाम् ॥ २६ ॥ भिदापनंभेदप्रापणम् ॥ २७ ॥ २८ ॥ नचैतदसंभावितंअत्रापिदृश्यमानत्वादित्याह अत्रैवेति ॥ २९ ॥ उभयंकुटुंबं स्वंदेहंच ॥३०॥ पापार्जितंधनंभुंजतेबहवः कर्त्तैवनरकंयातीत्याह एकइति भूतद्रोहेणयद्भृतंतत्स्थूलंकलेवरंवाइहैवाहित्वा कुशलादितर

तत्रतत्रपतन्श्रांतोमूर्च्छितःपुनरुत्थितः ॥ यथापापीयसानीतस्तमसायमसादनम् ॥ २३॥ योजनानांसहस्राणिनवतिंनवचाध्वनः ॥ त्रिभिर्मुहूर्तैर्द्वाभ्यांवानीतःप्राप्नोतियातनाः ॥२४॥ आदीपनंस्वगात्राणांवेष्टयित्वोल्मुकादिभिः॥आत्ममांसादनंक्वापिस्वकृत्तंपरतोऽपिवा ॥२५॥ जीवतश्चांत्राभ्युद्धारःश्वगृध्रैर्यमसादने॥ सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥ २६ ॥ कृंतनंचावयवशोगजादिभ्योभिदापनम्॥पातनंगिरिशृंगेभ्योरोधनंचांबुगर्तयोः ॥२७॥यास्तामिस्रांधतामिस्रारौरवाद्याश्चयातनाः ॥ भुंक्तेनरोवानारीवामिथःसंगेननिर्मिताः॥२८॥अत्रैवनरकःस्वर्गइतिमातःप्रचक्षते ॥ यायातनावैनारक्यस्ताइहाप्युपलक्षिताः॥२९॥ एवंकुटुंबंबिभ्राणउदरंभरएववा॥ विसृज्येहोभयंप्रेत्यभुंक्तेतत्फलमीदृशम् ॥३०॥ एकःप्रपद्यतेध्वांतंहित्वेदंस्वंकलेवरम्॥ कुशलेतरपाथेयोभूतद्रोहेणयद्भृतम् ॥३१॥ दैवेनासादितंतस्यशमलंनिरयेपुमान् ॥ भुंक्तेकुटुंबपोषस्यहृतवित्तइवातुरः ॥३२॥ केवलेनह्यधर्मेणकुटुंबभरणोत्सुकः ॥ यातिजीवोऽधतामिस्रंचरमंतमसःपदं ॥ ३३ ॥ अधस्तान्नरलोकस्ययावतीर्यातनादयः ॥ क्रमशःसमनुक्रम्यपुनरत्राव्रजेच्छुचिः ॥ ३४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयोपाख्यानेकर्मविपाकोनामात्रिंशत्तमोऽध्यायः ॥ ३० ॥

त् पापंतदेवपाथेयंभोग्यंयस्य ॥ ३१ ॥ ननुपापमपिविहायगच्छतुतत्राह दैवेनेति तस्यकुटुंबपोषणस्य शमलंपापंदैवेनईश्वरेणप्रापितं भुंक्ते ॥ ३२ ॥ ननुकुटुंबपोषणंविहितमेवतत्राह केवलेति तमसोनरकस्यचपरमंपदंस्थानम् ॥ ३३ ॥ पुनर्मनुष्यशरीरप्राप्तिप्रकारमाहनरलोकस्यमनुष्यदेहस्यप्राप्तेरधस्तात्अर्वाक् यावत्योयातनाः आदिशब्देनश्वसूकरादियोनयश्चयास्ताःसर्वाःक्रमेणसंप्राप्यभोगेनक्षीणपापः शुचिःसन्अत्रपुनःनरत्वंप्राप्नोतीत्यर्थः ॥ ३४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांत्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥

एकत्रिंशेविमिश्रैस्तुपुण्यपापैरिहांतरा मनुष्ययोनिसंप्राप्तिर्वर्ण्यतेराजसींगतिः ॥ १ ॥ पुनरत्राव्रजेदित्युक्तंतदेवविशेषतोदर्शयति कर्म णापूर्वकृतेनदैवमीश्वरःतदेवनेत्रंनेतृप्रवर्त्तकंयस्य प्रविष्टोभवति ॥ १ ॥ कललंशुक्रशोणितामिश्रितंभवति बुद्बुदंवर्तुलाकारम् कर्कंधूर्बद रीफलंतदाकारंकठिनं पेशीमांसंपिंडाकारम् अंडंवायोन्यंतरे ॥ २ ॥ बाव्हंघ्र्यादीनामंगानांविग्रहोविभागः लिंगंचछिद्राणिचतेषामुद्भवः ॥ ३ ॥ जरायुणागर्भवेष्टनेन वीतःप्रावृतः ॥ ४ ॥ मातुर्जग्धेनभक्षितेनान्नेनपानाद्यैश्चएधमानाधातवोयस्यजंतूनांसंभवोयास्मिन्तास्मिन्

श्रीभगवानुवाच कर्मणादैवनेत्रेणजंतुर्देहोपपत्तये ॥ स्त्रियाःप्रविष्टउदरंपुंसोरेतःकणाश्रयः ॥ १ ॥ कललं त्वेकरात्रेणपंचरात्रेणबुद्बुदम् ॥ दशाहेनतुकर्कंधूःपेश्यंडंवाततःपरं ॥२॥ मासेनतुशिरोद्वाभ्यांबाव्हंघ्र्याद्यंग विग्रहः ॥ नखलोमास्थिमर्माणिलिंगच्छिद्रोद्भवस्त्रिभिः ॥ ३ ॥ चतुर्भिर्धातवःसप्तपंचभिःक्षुत्तृडुद्भवः ॥ षड्भि र्जरायुणावीतःकुक्षौभ्राम्यतिदक्षिणे ॥४॥ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमते ॥ शेतेविण्मूत्रयोर्गर्तेसजंतु र्जंतुसंभवे ॥ ५ ॥ कृमिभिःक्षतसर्वांगसौकुमार्यात्प्रतिक्षणम् ॥ मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैःक्षुधितैर्मुहुः ॥ ६ ॥ कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ॥ मातृभुक्तैरुपस्पृष्टःसर्वांगोत्थितवेदनः ॥ ७ ॥ उल्बे नसंवृतस्तस्मिन्नंत्रैश्चबहिरावृतः ॥ आस्तेकृत्वाशिरःकुक्षौभुग्नपृष्ठशिरोधरः ॥८॥ अकल्पःस्वांगचेष्टायांश कुंतइवपंजरे ॥ तत्रलब्धस्मृतिर्दैवात्कर्मजन्मशतोद्भवं ॥ स्मरन्दीर्घमनुच्छ्वासंशर्मकिंनामविंदते ॥ ९ ॥ आरभ्यसप्तमान्मासाल्लब्धबोधोऽपिवेपितः ॥ नैकत्रास्तेसूतिवातैर्विष्ठाभूरिवसोदरः ॥ १०॥

असंमतेगर्तेशेते तथाचमार्कंडेयपुराणे नाडीचाप्यायनीनामनाभ्यांतस्यनिबध्यते ॥ स्त्रीणांतथांऽत्रसुषिरेसानिबद्धोपजायते क्रमंतेभुक्तपी तानिस्त्रीणांगर्भोदरेतथा तैराप्यायितदेहोऽसौजंतुर्वृद्धिमुपैतिवाइति ॥ ५ ॥ तत्रत्यैःकृमिभिःखादाद्भिः सौकुमार्यात् कोमलत्वेन क्ष तानिसर्वांगाणियस्य ॥ ६ उल्बणैःदुःसहैःसर्वेष्वंगेषुउत्थितावेदनायस्य आस्तइत्युत्तरेणान्वयः ॥ ७ ॥ उल्बेनजरायुणा भुग्नंकुटिली भूतंपृष्ठंशिरोधराग्रीवाचयस्य ॥ ८ ॥ दैवात्पूर्वकर्मवशात् लब्धास्मृतिर्येनसः दीर्घंदुरंतमनुच्छ्वासंयथाभवातितथातत्रास्थितःसन् ॥ ॥ ९ ॥ सूतिहेतुभिर्वातैर्वेपितः सोदरःसमानोदरजन्मा विष्ठाभूःकृमिरिवेति ॥ १० ॥ ॥ ॥

नाथमानोयाचमानः उपतप्यमानइतिवा ऋषिर्देहात्मदर्शी भीतः पुनर्गर्भवासात् सप्तवध्रयोबंधनभूताः धातवोयस्यसः विक्लवयाव्याकुल
या ॥ ११ ॥ उपसन्नंजगद्रक्षितुंस्वेच्छयागृहीतनानामूर्त्तेः भगवतश्चरणारविंदमकुतोभयंसोऽहंशरणंव्रजामि भुविचलदितिश्रीकृष्णावता
राभिप्रायेण असतोमेअनुरूपायोग्या येनेदृशीगर्भवासलक्षणागतिर्दर्शितातस्य ॥ १२ ॥ ननुकोऽसौयंशरणंव्रजासिकोवातवतस्यच वि
शेषः येनसेव्यसेवकत्वमित्यपेक्षायामाह अत्रमातुर्देहेभूतेंद्रियाशयमयींदेहाकारपरिणतांमायामवलंब्यआश्रित्य कर्मभिरावृतस्वरूप
इवबद्धइवचयः आस्तेसोऽहं यस्तुअत्रैवास्तेतंनमामि कथंभूतमित्यपेक्षायांतुशब्दोक्तंविशेषंदर्शयति आतप्यमानेहृदयेऽवसितंप्रतीतमे
वमप्यविकारंकुतः विशुद्धंनिरुपाधिं तत्कुतः अखंडोबोधोयस्यतम् ॥ १३ ॥ ननुत्वमपिवस्तुतः शुद्धएव असंगोह्ययंपुरुषइत्यादिश्रुतेः

**नाथमानऋषिर्भीतः सप्तवध्रिः कृतांजलिः ॥ स्तुवीततंविक्लवयावाचायेनोदरेऽर्पितः ॥ ११ ॥ जंतुरुवाच
तस्योपसन्नमवितुंजगदिच्छयात्तनानातनोर्भुविचलच्चरणारविंदं ॥ सोऽहंव्रजामिशरणंह्यकुतोभयंमेये
नेदृशीगतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥ यस्त्वत्रबद्धइवकर्मभिरावृतात्माभूतेंद्रियाशयमयीमवलंब्यमा
यां ॥ आस्तेविशुद्धमविकारमखंडबोधमातप्यमानहृदयेऽवसितंनमामि ॥ १३ ॥ यः पंचभूतरचितेर
हितः शरीरेछन्नोयथेंद्रियगुणार्थचिदात्मकोऽहं ॥ तेनाविकुंठमहिमानमृषिंतमेनंवंदेपरंप्रकृतिपूरुषयोः पु
मांसं ॥ १४ ॥ यन्माययोरुगुणकर्मनिबंधनेऽस्मिन्सांसारिकेपथिचरंस्तदभिश्रमेण ॥ नष्टस्मृतिः पुनरयं
प्रवृणीतलोकंयुक्त्याकयामहदनुग्रहमंतरेण ॥ १५ ॥ ॥ ॥**

तत्कथंयुवयोरयंविशेषस्तत्राह यः पंचभिर्भूतैः रचितेशरीरे अयथामिथ्यैवच्छन्नः नवस्तुतः यतस्तेनशरीरेणराहितः असंगः अतोयथैवइंद्रि
यगुणार्थचिदात्मकः इंद्रियाणिचगुणाश्च अर्थाश्चचिदाभासश्चतदात्मकः सोऽहंतंवंदे कथंभूतं तेनशरीरेणअविकुंठोमहिमायस्यतम् अ
वगुंठेतिपाठेअवसन्नंगुंठनमावरणंयस्यसमहिमायस्येत्यर्थः तत्रहेतुः प्रकृतिपुरुषयोः परंनियंतारं कुतः ऋषिंसर्वज्ञंविद्याशक्तिमित्यर्थः वि
द्याऽविद्याकृतोविशेषइतिभावः ॥ १४ ॥ ननुज्ञानेनायंबंधोनिवर्तिष्यतेकिंपरमेश्वरवंदनेनतत्राह यस्यमाययानष्टस्मृतिः संसारसंबंधिनिप
थितदभिश्रमेणतत्कृतेनक्लेशेनचरन्नयंजीवः महतस्तस्यैवेश्वरस्यानुग्रहंविनापुनः कयायुक्त्यालोकंनिजस्वरूपंप्रवृणीतसंभजेत अभिश्रम
हेतुत्वेनपंथानंविशिनष्टि उरूणिगुणनिमित्तानिकर्माणिनितरांबंधनानियस्मिन् ईश्वरस्यप्रसादंविनाज्ञानाभावात्सएवसेव्यइत्यर्थः ॥ १५ ॥

ईश्वरएवज्ञानदइत्युपपादयन्नाह यदेतत् त्रिकालविषयंज्ञानंतत्तंविनाकतमोमय्यदधान्नकोऽपि किंतुसदेवःईश्वरएव ननुअन्यःप्रकृष्टो
जीवःदधातुनेत्याह जीवरूपांकर्मपदवीमनुवर्त्तमानावयामितितद्व्यतिरेकेणनकोपिसमर्थइत्यर्थः अन्यस्यात्रासंभवमुक्तातस्यसंभवमाह
स्थिरेषुचरेषुच अंतर्यामिरूपोऽनुवर्तितोंऽशोयेनतंभजेम ॥ १६ ॥ स्वदुःखंविज्ञापयन्नाह देहीति अन्यदेहविवरेमातुरुदरकुहरेयोऽसृग्वि
ण्मूत्रकूपःतस्मिन्पतितःतत्रजठराग्निनाभृशंतप्तोदेहोयस्य अतएवकृपणधीःइतोविवरात्विवासितुंनिर्गंतुमिच्छन् स्वमासान्गणयन् असौक
दानु अहोबहिर्निर्वास्यते ॥१७॥ तत्कृतमुपकारंस्मरन्आह येनेदृशींगतिंज्ञानं भवादृशेनेतिनिरुपमेनेत्यर्थः स्वकृतेनैवस्त्वयंतुष्यतुअंज
लिमात्रंविनातत्कृतोपकारेप्रत्युपकारंकःकुर्यादित्यर्थः ॥१८॥ ईदृशींगतिमित्यनेनजात्यंतरविलक्षणज्ञानंप्रापितवानित्युक्तं तदेववैलक्षण्य

ज्ञानंयदेतददधात्कतमःसदेवस्त्रैकालिकंस्थिरचरेष्वनुवर्त्तितांशः ॥ तंजीवकर्मपदवीमनुवर्त्तमानास्तापत्र
योपशमनायवयंभजेम ॥ १६ ॥ देह्यन्यदेहविवरेजठराग्निनाऽसृग्विण्मूत्रकूपपतितोभृशतप्तदेहः ॥ इच्छ
न्नितोविवसितुंगणयन्स्वमासान्निर्वास्यतेकृपणधीर्भगवन्कदानु ॥ १७॥ येनेदृशींगतिमसौदशमास्यईशसं
ग्राहितःपुरुदयेनभवादृशेन ॥ स्वेनैवतुष्यतुकृतेनसदीननाथःकोनामतत्प्रतिविनांऽजलिमस्यकुर्यात् ॥१८॥
पश्यत्ययंधिषणयाननुसप्तवध्रिःशारीरकेदमशरीर्यपरःस्वदेहे ॥ यत्सृष्टयासतमहंपुरुषंपुराणंपश्येबहिर्हृ
दिचचैत्यमिवप्रतीतं ॥ १९ ॥ सोऽहंवसन्नपिविभोबहुदुःखवासंगर्भान्ननिर्जिगमिषेबहिरंधकूपे ॥ यत्रो
पयातमुपसर्पतिदेवमायामिथ्यामतिर्यदनुसंसृतिचक्रमेतत् ॥ २० ॥ ॥

माह पश्यतीति अयमपरमःपश्वादिःसप्तवध्रिर्जीवः स्वदेहेशारीरकेशरीरभवेसुखदुःखेकेवलंननुपश्यति अहंपुनर्यत्सृष्टयाधिषणयायद्द
त्तेनविवेकज्ञानेनदमशरीरीदमइत्युपलक्षणंशमदमादियुक्तशरीरवान्आसमभवंतमेवचपुराणमनादिंपुरुषंपूर्णंबहिश्चहृदिचपश्येपश्यामीत्य
न्वयः कथमपरोऽक्षतयाप्रतीतंचैत्यमिव अहंकारास्पदंभोक्तारमिवेत्यर्थः ॥१९॥ विवेकज्ञानकृतंसंसारोद्वेगमनुवदन्मोक्षमार्गमेवाध्यवस्यति
सोऽहमितिद्वाभ्यां हेविभोबहुदुःखवासंयथाभवातितथागर्भेवसन्नपिसोऽहंगर्भाद्बहिःननिर्गंतुमिच्छामि तत्रहेतुः अंधकूपप्रायेयत्रबहिरुपयातं
गतंप्राणिनंदेवस्यतवमायाउपसर्पतिव्याप्नोति यदनुयांमायामनुमिथ्यामातिर्देहेऽहंबुद्धिः संसृतिचक्रंचकलत्रपुत्रादिसंबंधानुरत पंति ॥२०॥

तस्मादत्रैवास्थितोपिविगतविक्लवःआव्याकुलःसन्सुहृदाआत्मनासारथिरूपयाबुद्ध्यैव आत्मानंतमसः संसारादुद्धरिष्यामि अनेकरंध्रंना
नागर्भवासरूपमेतद्व्यसनंदुःखंयथामेमाभविष्यत् नभविष्यति तथा कात्रतवसाधनसामग्रीतत्राह उपसादितौहृदयंप्रापितौविष्णोः
पादौयेनमयासः ॥ २१ ॥ दशमासाःपरिच्छेदकायस्येतिप्रसूतिपूर्वक्षणोपलक्षणं ऋषिर्जीवः सद्यःतत्क्षणमेव अवाचीनमवा
ङ्मुखंसूतिहेतुर्मारुतः क्षिपतिनुदति ॥ २२ ॥ अवसृष्टःअधःक्षिप्तःसन् ॥ २३ ॥ रोरूयतिरोरूयते ॥ २४॥ परस्यच्छंदमभिप्रायमाविदु



तस्मादहंविगतविक्लवउद्धरिष्यआत्मानमाशुतमसःसुहृदात्मनैव ॥ भूयोयथाव्यसनमेतदनेकरंध्रंमामेभ
विष्यदुपसादितविष्णुपादः ॥२१॥ कपिलउवाच एवंकृतमतिर्गर्भेदशमास्यःस्तुवन्नृषिः ॥ सद्यःक्षिपत्यवा
चीनंप्रसूत्यैसूतिमारुतः ॥ २२ ॥ तेनावसृष्टःसहसाकृत्वावाक्शिरआतुरः ॥ विनिष्क्रामतिकृच्छ्रेणनिरुच्छ्वा
सोहतस्मृतिः ॥२३॥ पतितोभुव्यसृङ्मूत्रेविष्ठाभूरिवचेष्टते ॥ रोरूयतिगतेज्ञानेविपरीतांगतिंगतः ॥२४॥
परच्छंदंनविदुषापुष्यमाणोजनेनसः ॥ अनभिप्रेतमापन्नःप्रत्याख्यातुमनीश्वरः ॥ २५ ॥ शायितोऽशुचि
पर्यंकेजंतुस्वेदजदूषिते ॥ नेशःकंडूयनेऽगानामासनोत्थानचेष्टने ॥ २६ ॥ तुदंत्यामत्वचंदंशामशकामत्कुणा
दयः ॥ रुदंतंविगतज्ञानंकृमयःकृमिकंयथा ॥ इत्येवंशैशवंभुक्त्वादुःखंपौगंडमेवच ॥ २७ ॥ अलब्धाभी
प्सितोज्ञानादिद्धमन्युःशुचार्पितः ॥ सहदेहेनमानेनवर्धमानेनमन्युना ॥ करोतिविग्रहंकामीकामिष्वंता
यचात्मनः ॥२८॥ भूतैःपंचभिरारब्धेदेहेदेह्यबुधोऽसकृत् ॥ अहंममेत्यसद्ग्राहःकरोतिकुमतिर्मतिं ॥ २९ ॥

षाअनभिप्रेतंस्तन्यार्थंरोदनेउदरव्यथांप्रकल्प्यनिंबरसपानं उदरव्यथयारोदनेस्तनपानमित्यादि ॥२५॥ आसनोत्थानचेष्टनेचानीशःसन्रो
रूयतिइत्यनुषंगः ॥२६॥ आमाकोमलात्वग्यस्यतं विगतंगर्भेजातंज्ञानंयस्य शैशवंपंचवर्षाणि ततःपौगंडं यौवनादर्वाक्तत्रचाध्ययनादि
दुःखं ॥ २७ ॥ यौवनदुःखमाह सार्धैस्त्रिभिः अलब्धाभिप्सितत्वेनशुचार्पितःव्याप्तः अज्ञानादिद्धोदीप्तोमन्युर्यस्यसः देहेनसहैववर्ध
मानेनाभिमानेनमन्युनाचविग्रहंविरोधंकरोति आत्मनोऽतायनाशाय ॥ २८ ॥ अज्ञानंप्रपंचयति भूतैरारब्धेदेहेअसतिदेहादावाग्रहोयस्य
असदाग्रहोऽहंममेतिमतिंकरोति ॥ २९ ॥ ॥ ॥ ॥ ॥

तदर्थंदेहार्थंयद्येनकर्मणाबद्धः योदेहः अनुयातिपुनःपुनरायाति अनुवर्त्ततिइतिवा कुतः अविद्याकर्मभ्यांबध्यतइतितथा ॥ ३० ॥ यद्य
सद्भिरास्थितः अधिष्ठितःसन् तेषांपथिरमते पथिसन्मार्गेआस्थितोऽपियद्यसद्भिः सहरमतइतिवा तर्हियातनादेहआवृत्त्येत्यादिपूर्वोक्त
प्रकारेणनरकंप्रविशति ॥ ३१ ॥ असत्संगांनिंदतिसत्यमितित्रिभिः ॥ ३२ ॥ खंडितात्मसुदेहात्मबुद्धिषु योषितांक्रीडामृगवदधीनेषु ॥
॥ ३३ ॥ यथाचयोषित्संगिनांसंगतोबंधः तथाऽन्यप्रसंगतोनभवेत् ॥ ३४ ॥ योषित्संगस्यानर्थहेतुतांप्रपंचयतिप्रजापतिरितिसप्तभिः

तदर्थंकुरुतेकर्मयद्बद्धोयातिसंसृतिं ॥ योऽनुयातिददत्क्लेशमविद्याकर्मबंधनः ॥ ३० ॥ यद्यसद्भिःपथिपुनः
शिश्नोदरकृतोद्यमैः ॥आस्थितोरमतेजंतुस्तमोविशतिपूर्ववत् ॥३१॥ सत्यंशौचंदयामौनंबुद्धिःश्रीर्ह्रीर्यशः
क्षमा ॥ शमोदमोभगश्चेतियत्संगाद्यातिसंक्षयं ॥ ३२ ॥ तेष्वशांतेषुमूढेषुखंडितात्मस्वसाधुषु ॥ संगंनकुर्या
च्छोच्येषुयोषित्क्रीडामृगेषुच॥३३॥नतथाऽस्यभवेन्मोहोबंधश्चान्यप्रसंगतः ॥ योषित्संगाद्यथापुंसोयथात
त्संगिसंगतः ॥ ३४ ॥ प्रजापतिःस्वांदुहितरंदृष्ट्वातद्रूपधर्षितः ॥ रोहिद्भूतांसोऽन्वधावदृक्षरूपीहतत्रपः ॥
॥ ३५ ॥ तत्सृष्टसृष्टसृष्टेषुकोन्वखंडितधीःपुमान् ॥ ऋषिंनारायणमृतेयोषिन्मय्येहमायया ॥ ३६ ॥बलंमे
पश्यमायायाःस्त्रीमय्याजयिनोदिशां ॥ याकरोतिपदाक्रांतान्भ्रूविजृंभेणकेवलं ॥ ३७ ॥ संगंनकुर्यात्प्रम
दासुजातुयोगस्यपारंपरमारुरुक्षुः ॥ मत्सेवयाप्रतिलब्धात्मलाभोवदंतियानिरयद्वारमस्य ॥ ३८ ॥ योऽप
यातिशनैर्मायायोषिद्देवविनिर्मिता ॥ तामीक्षेतात्मनोमृत्युंतृणैःकूपमिवावृतं ॥ ३९ ॥ यामन्यतेपतिंमोहा
न्मन्मायामृषभायतीं ॥ स्त्रीत्वंस्त्रीसंगतःप्राप्तोवित्तापत्यगृहप्रदं ॥ ४० ॥ ॥ ॥

रोहिद्भूतांमृगीरूपांसतीमृक्षरूपीमृगाकारःसन् हतत्रपोनिर्लज्जः ॥ ३५ ॥ तेनब्रह्मणासृष्टामरीच्यादयः तैःसृष्टाःकश्यपादयः तैरपिदेव
मनुष्यादयः तेषुकोनुपुमानखंडितधीः अनाकृष्टमनाः ॥ ३६ ॥ दिशांजयिनःशूरानपि ॥ ३७ ॥ प्रतिलब्धःआत्मरूपलाभोयेन अ
स्यमुमुक्षोर्याःप्रमदाःनिरयद्वारंवदंतियोगिनः ॥ ३८ ॥ शनैःशुश्रूषादिमिषेणोपयातियायोषिद्रूपामायातांमृत्युंप्रतिकूलामीक्षेत ॥ ३९ ॥
मुमुक्षुंस्त्रियंप्रत्येतदेवाह यामन्यतेइतिद्वाभ्यां ऋषभायतींपुरुषवदाचरंतींयांममायां वित्तादिप्रदंमन्यते तदातांपुरुषरूपांमायांमृत्युंविद्या
दित्युत्तरेणान्वयः यतःपर्वजन्मनिस्वयंपुमान्स्त्रीसंगतः अंतकालेस्त्रीत्वंप्राप्तोजीवः ॥ ४० ॥ ॥

तांपत्यादिरूपंमृत्युंविजानीयात् मृगयोर्लुब्धकस्यगायनमनुकूलत्वेनप्रतीयमानमपियथामृगस्यमृत्युः ॥ ४१ ॥ तदेवंजीवस्यसंसृतिःप्रपं
चिता तत्रचतस्यकर्मवशेनलोकाल्लोकांतरगमनंजन्ममरणंचोक्तं तत्रैवंशंक्यते ननुव्यापकस्यकथंलोकाल्लोकांतरगमनं नित्यस्यचकथं
जन्ममरणेभोगेनकर्मक्षयेचसतिजन्ममरणंचेष्यते तत्कुतःपुनरपितस्यकर्मसंभवइति तत्रलोकांतरगमनंकर्मचसंभवतीत्याह देहेनेति
जीवस्योपाधितयाभूतेनजातेनजीवेनलिंगदेहेनलोकांतरमनुव्रजन् अविरतंकर्माणिकरोतीतिकर्मणामसमाप्तिरुक्ता ॥ ४२ ॥ जन्ममरणसंभ
वमाह जीवोपाधिर्लिंगदेहः अस्यात्मनः अनुगतःअनुवर्त्तीभूतेंद्रियमनोमयः स्थूलभूतादिविकारोदेहःभोगायतनं तयोर्निरोधः कार्या
योग्यता तदस्यजीवस्यमरणमुच्यते आविर्भावस्तुसंभवोजन्मोच्यते ॥ ४३ ॥ एतदेवदृष्टांतेनस्पष्टयति द्रव्योपलब्धिस्थानस्यनेत्रगोल

**तामात्मनोविजानीयात्पत्यपत्यगृहात्मकं ॥ दैवोपसादितंमृत्युंमृगयोर्गायनंयथा ॥४१॥ देहेनजीवभूतेन लोकाल्लोकमनुव्रजन् ॥ भुंजानएवकर्माणिकरोत्यविरतंपुमान् ॥ ४२ ॥ जीवोस्यानुगतोदेहोभूतेंद्रियमनोमयः ॥ तन्निरोधोस्यमरणमाविर्भावस्तुसंभवः ॥ ४३ ॥ द्रव्योपलब्धिस्थानस्यद्रव्येक्षाऽयोग्यतायदा ॥ तत्पंचत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनं ॥ ४४ ॥ यथाऽक्ष्णोर्द्रव्यावयवदर्शनायोग्यतायदा ॥ तदैवचक्षुषोद्रष्टुर्द्रष्टृत्वायोग्यताऽनयोः ॥ ४५ ॥ तस्मान्नकार्यःसंत्रासोनकार्पण्यंनसंभ्रमः ॥ बुध्वाजीवगतिंधीरोमुक्तसंगश्चरेदिह ॥ ४६ ॥ सम्यग्दर्शनयाबुद्ध्यायोगवैराग्ययुक्तया ॥ मायाविरचितेलोकेचरेन्न्यस्यकलेवरं ॥ ४७ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयोपाख्यानेजीवगतिरेकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥**

कादेर्द्रव्येक्षायांरूपादिदर्शनेकाचकामलादिदोषेणयदाऽयोग्यताभवति तदैवचक्षुषइंद्रियस्याप्ययोग्यताअनयोःस्थानचक्षुषोर्यदाऽयोग्यता
तदैवद्रष्टुर्जीवस्यद्रष्टृत्वायोग्यता एवंस्थूलदेहवैकल्येलिंगस्यवैकल्यंतदेवजीवस्यमरणंनस्वतइत्यर्थः ॥ ४४ ॥ क्वचिदेकःश्लोकःपठ्यते
तत्रायमर्थः द्रव्योपलब्धिस्थानस्यस्थूलशरीरस्यद्रव्येक्षायांयदाऽयोग्यतातत्पंचत्वंमरणं अहंमानात् इदमेवाहमित्यभिमानेनद्रव्यस्यस्थूल
शरीरस्यदर्शनमुत्पत्तिः अक्ष्णोर्गोलकयोः द्रव्यावयवस्यरूपादेर्दर्शनेयोग्यता शेषंसमानं ॥ ४५ ॥ यस्मान्नवस्तुतोजीवस्यजन्ममरणा
दितस्मान्मरणात्संत्रासोनकार्यः जीवनेनचकार्पण्यंदैन्यंकार्यं संभ्रमश्चजीवनप्रयत्ने ॥ ४६ ॥ ननुसर्वथामुक्तसंगत्वेकथंजीवितमतआ
ह सम्यक्पश्यतिविचारयतीतिसम्यग्दर्शनातयाबुध्या मायाविरचितेलोकेकलेवरंन्यस्यनिक्षिप्य तस्मिन्नासक्तिंत्यक्त्वाविचरेदित्यर्थः
॥ ४७ ॥ इतितृतीयेटीकायामेकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ ॥ ॥

द्वात्रिंशेसात्त्विकैर्धर्मैरूर्ध्वंगतिरुदीर्यते ॥ तत्वज्ञानविहीनस्यततश्चपुनरागतिः ॥ १ ॥ तदेवंपापकर्मणोगतिरुक्ताइदानींकाम्यकर्मणोग
तिमाह अथेतिचतुर्भिः योगृहएवावसन्स्वान्धर्मान्दोग्धि दोह्यमाह काममर्थंच तान्दुग्धान्धर्मान्भूयः पिपर्तिपूरयति अनुतिष्ठति
॥ १ ॥ सोपिभगवदाराधनरूपाद्धर्मात्पराङ्मुखःसन्प्राकृतानपिदेवान्पितॄंश्चयजते ॥ २ ॥ ततःकिंतत्राह तेषांश्रद्धयाआक्रांताव्याप्ता
मतिर्यस्य पित्रर्थंदेवार्थंचव्रतंनियमोयस्य सोमपाः तत्रसोमंपीत्वेत्यर्थः ॥३॥ लोकेतिष्ठत्यपिपुण्यक्षयात्पातमुक्त्वालोकानामपिलयमाह
यदाचाहरहःप्रलये ॥ ४ ॥ भगवद्धर्मनिष्ठानांतत्प्राप्तिमेवगतिमाहात्रिभिः येतुकामार्थप्रयोजनायस्वधर्मान्नदुह्यंतिनदुहंति निःसंगाः

कपिलउवाच अथयोगृहमेधीयान्धर्मानेवावसन्गृहे ॥ काममर्थंचधर्मांश्चदोग्धिभूयःपिपर्त्तितान् ॥१॥ स चापिभगवद्धर्मात्काममूढःपराङ्मुखः ॥ यजतेक्रतुभिर्देवान्पितॄंश्चश्रद्धयान्वितः ॥ २ ॥ तच्छ्रद्धयाक्रांतमतिःपितृदेवव्रतःपुमान् ॥ गत्वाचांद्रमसंलोकंसोमपाःपुनरेष्यति ॥३॥ यदाचाहींद्रशय्यायांशेतेऽनंतासनोहरिः ॥ तदालोकालयंयांतितएतेगृहमेधिनाम् ॥४॥ येस्वधर्मान्नदुह्यंतिधीराःकामार्थहेतवे ॥ निःसंगान्यस्तकर्माणःप्रशांताःशुद्धचेतसः ॥५॥ निवृत्तिधर्मनिरतानिर्ममानिरहंकृताः ॥ स्वधर्माख्येनसत्त्वेनपरिशुद्धेनचेतसा ॥६॥ सूर्यद्वारेणतेयांतिपुरुषंविश्वतोमुखम् ॥ परावरेशंप्रकृतिमस्योत्पत्त्यंतभावनं ॥७॥ द्विपरार्द्धावसानेयःप्रलयोब्रह्मणस्तुते ॥ तावदध्यासतेलोकंपरस्यपरचिंतकाः ॥८॥ क्ष्मांऽभोनलानिलवियन्मनइंद्रियार्थभूतादिभिःपरिवृतंप्रतिसंजिहीर्षुः ॥ अव्याकृतंविशतियर्हिगुणत्रयात्माकालंपराख्यमनुभूयपरःस्वयंभूः ॥९॥

आनासक्ताः न्यस्तानिईश्वरेसमर्पितानिकर्माणियैः ॥ ५ ॥ ६ ॥ विश्वतोमुखंपरिपूर्णंपुरुषंयांति तथाचश्रुतिः सूर्यद्वारेणतेविरजाःप्रयां
तियत्रामृतःपुरुषोह्यव्ययात्मेति प्रकृतिमुपादानकारणम् ॥ उत्पत्त्यंतभावनंनिमित्तकारणम् ॥ ७ ॥ परमेश्वरदृष्ट्याहिरण्यगर्भोपासका
नामपिक्रमेणतत्प्राप्तिमाह द्विपरार्धावसानइतित्रिभिः परस्यहिरण्यगर्भस्य परचिंतकाःपरमेश्वरदृष्ट्याहिरण्यगर्भोपासकाः ॥ ८ ॥
क्ष्मादीनिपंचमहाभूतानिमनश्चेंद्रियाणिच अर्थाश्चशब्दादयः भूतादिश्चाहंकारःएवमादिभिः परिवृतंयुक्तं ब्रह्मांडंप्रतिसंहर्तुमिच्छुःसन्
अव्याकृतमीश्वरंपराख्यंद्विपरार्द्धलक्षणंकालं ॥ ९ ॥ ॥ ॥ ॥ ॥

परेत्यदूरंगत्वाभगवंतंहिरण्यगर्भमनुप्राविष्टायेयोगिनः अमृतंपरमानंदरूपं प्रधानमुत्कृष्टंब्रह्मतेनैवसहोपयांतिनतुपूर्वं यतस्तदाअगताभि
मानाः तथाचस्मृतिः ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे परस्यांतेकृतात्मानःप्रविशंतिपरंपदमिति ॥ १० ॥ भगवदुपासकास्तुसाक्षादेव
तंप्राप्नुवंतिनतुक्रमेण अतस्त्वंसाक्षात्तमेवभजेत्याह अथतस्माद्भावेनप्रेम्णा ॥ ११ ॥ एवंतावद्भगवद्भक्तानांनिरंतरमेवतत्प्राप्तिःभगवदभे
देन हिरण्यगर्भोपासकानांतुक्रमेणेत्युक्तं भेदेनोपासनेतुब्रह्मादयोऽप्यावर्त्ततेकिमुतान्यइत्याह आद्यइतिचतुर्भिः योवेदगर्भःसोऽपिगुणव्य
तिकरेजातेपूर्वंयथाब्रह्मपदाधिकृतःसन्प्रजायते नकेवलंसएवैकः किंतुऋषिभिर्मरीच्यादिभिःयोगेश्वरादिभिश्चसह ॥ १२ ॥ जन्म

**एवंपरेत्यभगवंतमनुप्रविष्टायेयोगिनोजितमरुन्मनसोविरागाः ॥ तेनैवसाकममृतंपुरुषंपुराणंब्रह्मप्रधान
मुपयांत्यगताभिमानाः ॥ १० ॥ अथतंसर्वभूतानांहृत्पद्मेषुकृतालयं ॥ श्रुतानुभावंशरणंव्रजभावेनभामिनि
॥ ११ ॥ आद्यःस्थिरचराणांयोवेदगर्भःसहर्षिभिः ॥ योगेश्वरैःकुमाराद्यैःसिद्धैर्योगप्रवर्त्तकैः ॥ १२ ॥ भेददृ
ष्ट्याऽभिमानेननिःसंगेनापिकर्मणा ॥ कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभः ॥ १३ ॥ ससंसृत्यपुनःकालेकाले
नेश्वरमूर्तिना ॥ जातेगुणव्यतिकरेयथापूर्वंप्रजायते ॥ १४ ॥ ऐश्वर्यंपारमेष्ठ्यंचतेपिधर्मविनिर्मितं ॥ निषे
व्यपुनरायांतिगुणव्यतिकरेसति ॥ १५ ॥ येत्विहासक्तमनसःकर्मसुश्रद्धयान्विताः ॥ कुर्वंत्यप्रतिषिद्धानि
नित्यान्यपिचकृत्स्नशः ॥ १६ ॥ रजसाकुंठमनसःकामात्मानोजितेंद्रियाः ॥ पितॄन्यजंत्यनुदिनंगृहेष्वभिर
ताशयाः ॥ १७ ॥ त्रैवर्गिकास्तेपुरुषाविमुखाहरिमेधसः ॥ कथायांकथनीयोरुविक्रमस्यमधुद्विषः ॥ १८ ॥**

निर्हेतुत्वंभेददृष्ट्याभिमानेनकर्तृत्वादितिचयथापूर्वत्वेहेतुः निःसंगेनानिष्कामेणकर्मणेति ॥ १३ ॥ किंकृत्वाऽत्रप्रजायते प्रथमंपारमेष्ठ्य
मैश्वर्यंनिषेव्यपश्चात्प्रलयेसगुणंगुणाधिष्ठातारंप्रथमावताररूपंपुरुषंसंसृत्यप्राप्य ॥ १४ ॥ तेऽपिऋषिप्रमुखाःस्वकर्मनिर्मितमैश्वर्यंनिषे
व्यपुरुषंचसंसृत्ययथापूर्वंस्वस्वाधिकारेणपुनरायांतीत्यन्वयः ॥ १५ ॥ यदाब्रह्मोपासकानामपिभेददर्शनाभिमानाभ्यामेवमावृत्तिस्त
दाकाम्यकर्मिणांकिंवक्तव्यमितितान्निंदन्नाहषड्भिः येत्विहकर्मस्वासक्तमनसःसंतःअप्रतिषिद्धानिकाम्यानिनित्यानिचकर्माणिकृत्स्नानि
कुर्वंति तेअर्यम्णोदक्षिणेनपथाधूममार्गेणपितृलोकंव्रजंतीतिपंचमेनान्वयः मध्येतन्निंदा ॥ १६ ॥ १७ ॥ हरतिसंसारंमेधायस्य
कथनीयाउरवोविक्रमायस्यतस्यमधुद्विषः कथायांविमुखाःसंतोयेत्रैवर्गिकाः ॥ १८ ॥ ॥

येचाच्युतस्यकथासुधांहित्वाअसतांगाथाःशृण्वंतितेनूनंदैवेनविहताइत्यन्वयः ॥ १९ ॥ पितृलोकात्पुनःप्रजामनुपुत्रादिषुप्रजायंते ग
र्भाधानादारभ्यश्मशानांताःक्रियाःकृतवंतः यथोक्तकारिणइत्यर्थः ॥ २० ॥ कथंप्रजायंते तदाह ततस्तेपुनरिमंलोकंप्रतिपतंति वि
भ्रंशितउदयोभोगसाधनंयेषां ॥ २१ ॥ परमेष्ठिनंपरमेश्वरंप्रीत्या तस्यगुणानाश्रयतेयाभक्तिस्तया ॥ २२ ॥ भजनेचज्ञानवैराग्येस्वतएव
भवतइत्याह वासुदेवइति ॥ २३ ॥ तदेवोपपादयाति यदाऽस्यभक्तस्यचित्तंभगवद्गुणानुरागेणतस्मिन्नेवनिश्चलंसदिंद्रियवृत्तिभिर्वैषम्यम
र्थेषुनगृह्णाति ॥२४॥ तदैवात्मनात्मानंस्वप्रकाशमीक्षते कथंभूतं समंचतद्दर्शनंच तत्कुतः निःसंगं संगाद्धिवैषम्यंभवति निःसंगत्वेहेतुः

नूनंदैवेनविहतायेचाच्युतकथासुधां ॥ हित्वाशृण्वंत्यसद्गाथाःपुरीषमिवविड्भुजः ॥ १९ ॥ दक्षिणेनपथा
र्यम्णःपितृलोकंव्रजंतिते ॥ प्रजामनुप्रजायंतेश्मशानांतक्रियाकृतः ॥ २० ॥ ततस्तेक्षीणसुकृताःपुन
र्लोकमिमंसति ॥ पतंतिविवशादेवैःसद्योविभ्रंशितोदयाः ॥२१ ॥ तस्मात्त्वंसर्वभावेनभजस्वपरमेष्ठिनं ॥
तद्गुणाश्रययाभक्त्याभजनीयपदांबुजं ॥ २२ ॥ वासुदेवेभगवतिभक्तियोगःप्रयोजितः ॥ जनयत्याशुवै
राग्यंज्ञानंयद्ब्रह्मदर्शनं॥२३॥यदाऽस्यचित्तमर्थेषुसमेष्विंद्रियवृत्तिभिः ॥नविगृण्हातिवैषम्यंप्रियमप्रियमि
त्युत ॥ २४ ॥ सतदैवात्मनात्मानंनिःसंगंसमदर्शनं ॥ हेयोपादेयरहितमारूढंपदमीक्षते ॥ २५॥ ज्ञान
मात्रंपरंब्रह्मपरमात्मेश्वरःपुमान् ॥ दृश्यादिभिःपृथग्भावैर्भगवानेकईयते ॥ २६ ॥ एतावानेवयोगेनस
मग्रेणेहयोगिनः ॥ युज्यतेभिमतोह्यर्थोयदसंगस्तुकृत्स्नशः ॥ २७ ॥ ज्ञानमेकंपराचीनैरिंद्रियैर्ब्रह्मनिर्गु
णं ॥ अवभात्यर्थरूपेणभ्रांत्याशब्दादिधर्मिणा ॥ २८ ॥

हेयोपादेयरहितं तत्कुतः पदंव्यवसितमारूढंपरमानंदोहमितिनिश्चयंप्राप्तमित्यर्थः २५ ॥ समेष्वर्थेष्वित्युक्तं तदेवसाम्यंदर्शयति ज्ञान
मात्रमेवपरब्रह्मादिशब्दैःप्रसिद्धं दृश्यादिभिःदृश्यद्रष्टृकरणरूपेणपृथक्प्रतीयते ज्ञानमात्रत्वेनसमेष्वित्यर्थः ॥ २६ ॥ ननुज्ञानमात्रमा
त्मनःस्वरूपत्वान्नित्यप्राप्तमेवेतिकिमनेकसाधनसाध्येनयोगेनप्राप्यते तदाह एतावानिति युज्यतेप्राप्यतेप्रपंचसंगव्युदासएवयोगफलमि
त्यर्थः ॥ २७ ॥ ननुकथंप्रत्यक्षादिप्रतीतःप्रपंचोव्युदसितुंशक्यतेप्रतीतेर्भ्रांतित्वादित्याह ज्ञानमितिपराचीनैःपराङ्मुखैः शब्दादिध
र्मायस्य तेनार्थरूपेणज्ञानरूपंनिर्गुणंब्रह्मैवावभाति नत्वर्थःपृथगस्तीत्यर्थः ॥ २८ ॥ ॥ ॥

अर्थरूपत्वमेवोदाहृत्यदर्शयति यथेति अहंरूपःअहंकारः सचत्रिवृत्त्रिगुणात्मकः पुनश्चभूतरूपेणपंचविधः इंद्रियरूपेणैकादशावि
धश्च स्वराट्जीवरूपः तस्यजीवस्यवपुरंडंजगच्च यतोयेभ्योमहदादिभ्यः तथाऽवभाति ॥ २९ ॥ ननुतर्हिजनःकिमित्येवंनप्रत्येति तत्रा
ह एतद्ब्रह्म ॥ ३० ॥ उक्तमेवार्थंसुखप्रतिपत्त्यर्थंसंक्षेपेणानुवदति इतीति हेशुर्विपूज्ये ॥ ३१ ॥ अनेनचज्ञानयोगेनभगवानेवप्राप्योय
थाभक्तियोगेनेत्याह नैर्गुण्योज्ञानयोगश्चमन्निष्ठोभक्तिलक्षणश्चयोयोगस्तयोर्द्वयोरप्येकएवार्थःप्रयोजनं कोऽसौभगवच्छब्दोलक्षणंज्ञापकोय
स्य तदुक्तंगीतासु तेप्राप्नुवंतिमामेवसर्वभूतहितेरताइति ॥ ३२ ॥ ननुज्ञानयोगस्यआत्मलाभःफलंशास्त्रेणावगम्यते भक्तियोगस्यतुभ

यथामहानहंरूपस्त्रिवृत्पंचविधःस्वराट्॥ एकादशविधस्तस्यवपुरंडंजगद्यतः ॥२९॥ एतद्वैश्रद्धयाभक्त्या
योगाभ्यासेननित्यशः ॥ समाहितात्मानिःसंगोविरक्त्यापरिपश्यति ॥ ३० ॥ इत्येतत्कथितंगुर्विज्ञानं
तद्ब्रह्मदर्शनं ॥ येनानुबुध्यतेतत्त्वंप्रकृतेःपुरुषस्यच ॥ ३१ ॥ ज्ञानयोगश्चमन्निष्ठोनैर्गुण्योभक्तिलक्षणः ॥ द्व
योरप्येकएवार्थोभगवच्छब्दलक्षणः ॥ ३२ ॥ यथेंद्रियैःपृथक्द्वारैरर्थोबहुगुणाश्रयः ॥ एकोनानेयतेतद्व
द्भगवाञ्छास्त्रवर्त्मभिः ॥ ३३ ॥ क्रिययाक्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः ॥ आत्मेंद्रियजयेनापिसंन्या
सेनचकर्मणां ॥ ३४ ॥ योगेनविविधांगेनभक्तियोगेनचैवहि ॥ धर्मेणोभयचिह्नेनयःप्रवृत्तिनिवृत्तिमान्
॥ ३५ ॥ आत्मतत्त्वावबोधेनवैराग्येणदृढेनच ॥ ईयतेभगवानेभिःसगुणोनिर्गुणःस्वदृक् ॥ ३६ ॥ प्रावो
चंभक्तियोगस्यस्वरूपंतेचतुर्विधं ॥ कालस्यचाव्यक्तगतेर्योऽतर्धावतिजंतुषु ॥ ३७ ॥ ॥

जनीयेश्वरप्राप्तिः कुतस्तयोरेकार्थत्वमित्याशंक्यदृष्टांतेनोपपादयति यथाबहूनांरूपरसादीनांगुणानामाश्रयोगुडक्षीरादिः एकएवार्थो
मार्गभेदप्रवृत्तैरिंद्रियैर्नानाप्रतीयते चक्षुषाशुक्लइतिरसनेनमधुरइतिस्पर्शनेनशीतइत्यादि तथाभगवानेवतत्तद्रूपेणावगम्यते ॥ ३३ ॥ शा
स्त्रमार्गानेवप्रपंचयति क्रिययेतित्रिभिः क्रिययापूर्तरूपया क्रतुभिर्यागैः मर्शनंमीमांसा आत्मेंद्रियजयोनिषिद्धवर्जनं ॥ ३४ ॥ उभयचिन्हे
नसकामनिष्कामलक्षणेन तमेवाह यइति सकामधर्मप्राप्यंस्वर्गाद्यपिभगवतएवसगुणंस्वरूपमितिभावः ॥ ३५ ॥ एभिर्वर्त्मभिःस्वदृक्
स्वप्रकाशः ॥ ३६ ॥ तदेवंज्ञानयोगमुपसंहृत्यतस्यचभक्तियोगेनसमानार्थत्वमुक्त्वाभक्तियोगाद्युपसंहरतिप्रावोचमितिद्वाभ्यांचतुर्वि
धंत्रिगुणनिर्गुणभेदेन अंतर्धावतिउत्पत्तिनिधनादिकरोति ॥ ३७ ॥ ॥ ॥

अंगहेमातः ॥ ३८ ॥ उपदेशेऽनधिकारिणोदर्शयति नैतदितिद्वाभ्यां खलायपरोद्देजकाय भिन्नायदुराचाराय धर्मध्वजायदांभिकाय ॥ ३९ ॥ ४० ॥ अधिकारिणआह श्रद्दधानायेतिद्वाभ्यां ॥४१॥ ४२ ॥ एतच्छ्रवणकीर्तनपरस्यापिभगवत्पदप्राप्तिरेवफलमित्याह यइ तिअप्यर्थेचकारः सोपिमत्पदवींमेति हिनिश्चितम् ॥४३॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेटीकायांद्वात्रिंशतितमोऽध्यायः ॥ ३२॥ त्रयस्त्रिंशेतुतस्यैवकपिलस्योपदेशतः ॥ ज्ञानभावेनतन्मातुर्जीवन्मुक्तिरुदीर्यते ॥ १ ॥ विस्रस्तंमोहरूपंपटलमावरणंयस्याःसा तत्त्वा

जीवस्यसंसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥ यास्वंगप्रविशन्नात्मानवेदगतिमात्मनः ॥ ३८ ॥ नैतत्खला योपदिशेन्नाविनीतायकर्हिचित् ॥ नस्तब्धायनभिन्नायनैवधर्मध्वजायच ॥ ३९ ॥ नलोलुपायोपदिशे न्नगृहारूढचेतसे ॥ नाभक्तायचमेजातुनमद्भक्तद्विषामपि ॥ ४० ॥ श्रद्दधानायभक्तायविनीतायानसूय वे ॥ भूतेषुकृतमैत्रायशुश्रूषाऽभिरतायच ॥ ४१ ॥ बहिर्जातविरागायशांतचित्तायदीयतां ॥ निर्मत्सरा यशुचयेयस्याहंप्रेयसांप्रियः ॥ ४२ ॥ यइदंशृणुयादंबश्रद्धयापुरुषःसकृत् ॥ योवाऽभिधत्तेमच्चित्तःसह्ये तिपदवींचमे ॥ ४३ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥

मैत्रेयउवाच एवंनिशम्यकपिलस्यवचोजनित्रीसाकर्दमस्यदयिताकिलदेवहूतिः ॥ विस्रस्तमोहपटला तमभिप्रणम्यतुष्टावतत्त्वविषयांकितासिद्धिभूमिम् ॥ १ ॥ देवहूतिरुवाच अथाप्यजोऽतःसलिलेश यानंभूतेंद्रियार्थात्ममयंवपुस्ते ॥ गुणप्रवाहंसदशेषबीजंदध्यौस्वयंयज्जठराब्जजातः ॥ २ ॥

न्येवविषयस्तेनांकितासिद्धिःसांख्यज्ञानंतस्यभूमिंक्षेत्रंप्रवर्त्तकं ॥ १ ॥ अथेतिवाक्यांतरे अजोपितववपुःकेवलंदध्यौ नतुदृष्टवान् सच स्वयंसाक्षाद्यस्यतवजठराब्जाज्जातः सभवानेवविश्वस्यसर्गादिविधत्ते नतुतवसर्गादिकर्त्ताकश्चिदस्ति एवंभूतस्त्वंमेमयाकथंजठरेणधृत इतित्रयाणामन्वयः कथभूंतंवपुः सत् व्यक्तम् तत्रहेतुः अंतःसलिलेशयानं कीदृशम् भूतानींद्रियाणिच अर्थाश्चशब्दादयः आत्माचम नःएतन्मयमेतैर्व्याप्तमित्यर्थः कुतः गुणानांप्रवाहोयस्मिन्तत् कुतःअशेषस्यकार्यकारणस्यबीजंकारणं ॥ २ ॥

कथंभूतोभवान्सर्गादिविधत्ते गुणप्रवाहरूपेण विभक्तंवीर्यंशक्तिर्येनसः शक्तिद्वारेणविधत्तेनसाक्षादित्यर्थः यतः अनीहोनिष्क्रियः त
हिंकथंशक्तिद्वारेणापिसर्गादिविधत्ते अवितथाभिसंधिःसत्यसंकल्पः किमर्थंविधत्ते आत्मनांजीवानामीश्वरः जीवानांभोगार्थमित्यर्थः
ननुकथंविचित्रान्भोगान्एकएवविदध्यात् तत्राह अतर्क्याः सहस्रमपरिमिताःशक्तयोयस्य ॥ ३ ॥ किंचप्रलयेयस्योदरेएतत्विश्वमा
सीत् सत्वंमयाजठरेणकथंधृतः ननुशिशौमयिकिमेतदुच्यते तत्राह वटपत्रइति अंघ्रिपादांगुष्ठंपिबतीत्यंघ्रिपानः इदमपिशिशुत्वंतद्देव
मायाइतिभावः ॥ ४ ॥ अथवानत्वंमयाअपत्यांतरमिवजठरेभृतः किंतुवाराहाद्यवतारवदिच्छयैवाविर्भूतोसीत्याह त्वंदेहतंत्रेदेहपरिकरः

सएवविश्वस्यभवान्विधत्तेगुणप्रवाहेणविभक्तवीर्यः ॥ सर्गाद्यनीहोवितथाभिसंधिरात्मेश्वरोऽतर्क्यसह
स्रशक्तिः ॥३॥ सत्वंभृतोमेजठरेणनाथकथंनुयस्योदरएतदासीत् ॥ विश्वंयुगांतेवटपत्रएकःशेतेस्ममाया
शिशुरंघ्रिपानः ॥४॥ त्वंदेहतंत्रःप्रशमायपाप्मनांनिदेशभाजांचविभोविभूतये॥ यथावतारास्तवसूकराद
यस्तथायमप्यात्मपथोपलब्धये ॥ ५ ॥ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपिक्वचित् ॥
श्वादोऽपिसद्यःसवनायकल्पतेकुतःपुनस्तेभगवन्नदर्शनात् ॥ ६ ॥ अहोबतश्वपचोऽतोगरीयान्यज्जि
ह्वाऽग्रेवर्ततेनामतुभ्यम् ॥ तेपुस्तपस्तेजुहुवुःसस्नुरार्याब्रह्मानूचुर्नामगृणंतियेते ॥ ७ ॥

स्वीकृतमूर्त्तिरसि पाप्मनांदुष्टानांदेशभाजामाज्ञाऽनुवर्त्तिनांविभूतयेसमृद्धये आत्मपथोपलब्धयेज्ञानमार्गप्रदर्शनाय ॥ ५ ॥ अतस्त्व
द्दर्शनादहंकृतार्थाऽस्मीतिकैमुत्यन्यायेनाह यन्नामधेयस्यश्रवणमनुकीर्तनंचतस्मात् क्वचित्कदाचिदपि श्वानमत्तीतिश्वादःश्वपचःसोऽ
पिसवनायसोमयागायकल्पतेयोग्योभवति अनेनपूज्यत्वंलक्ष्यते ॥ ६ ॥ तदुपपादयति अहोबतेत्याश्चर्ये यस्यजिह्वाऽग्रेतवनामवर्तते
सश्वपचोऽपि अतःअस्मादेवहेतोर्गरीयान् यद्यस्माद्वर्त्ततेअतइतिवा कुतइत्यतआह तएवतपस्तेपुःकृतवंतः जुहुवुर्होमंकृतवंतःसस्नुस्ती
र्थेषुस्नाताःआर्यास्तएवसदाचाराःब्रह्मवेदमनूचुःअधीतवंतः त्वन्नामकीर्तनेतपआद्यंतर्भूतमतस्तेपुण्यतमाइत्यर्थः यद्वा जन्मांतरेतैस्तपो
होमादिसर्वंकृतमितित्वन्नामकीर्तनेनमहाभाग्योदयादवगम्यतइत्यर्थः ॥ ७ ॥ ॥ ॥

प्रत्यक्स्रोतसिप्रत्याहृते आत्मनिमनसिसंविभाव्यंसंचिंत्यं वेदागर्भेयस्यसः ॥ ८ ॥ अविक्लवयागंभीरयावाचा ॥ ९ ॥ तेतवसुसेव्येनसुखसेव्येनमेमयाउदितेन आस्थितेनानुष्ठितेनपरांकाष्ठांजीवन्मुक्तिमवरोत्स्यसिप्राप्स्यसि ॥१०॥ यायाःयास्यसि अतद्विदःमन्मतमविद्वांसः ॥ ॥ ११ ॥ अनुमतःअनुज्ञातः ॥ १२ ॥ सरस्वत्याआपीडेपुष्पमुकुटतुल्ये सरस्वत्येतिपाठेमुकुटेनेवसंवेष्टितेबिंदुसरसिसमाहिताबभूव ॥१३॥ कथंभूतासतीसमाहिता तदाह अभीक्ष्णंत्रिषवणमवगाहःस्नानं तेनकपिशान्पिशंगान्स्वतएवकुटिलान्अलकान्केशान्तथाआत्मानं

तंत्वामहंब्रह्मपरंपुमांसंप्रत्यक्स्रोतस्यात्मनिसंविभाव्यं ॥ स्वतेजसाध्वस्तगुणप्रवाहंवंदेविष्णुंकपिलंवेदगर्भं ॥ ८ ॥ मैत्रेयउवाच ईडितोभगवानेवंकपिलाख्यःपरःपुमान् ॥ वाचाविक्लवयेत्याहमातरंमातृवत्सलः ॥ ९ ॥ कपिलउवाच मार्गेणानेनमातस्तेसुसेव्येनोदितेनमे ॥ आस्थितेनपरांकाष्ठामचिरादवरोत्स्यसि ॥ १० ॥ श्रद्धस्वैतन्मतंमह्यंजुष्टंयद्ब्रह्मवादिभिः ॥ येनमामभवंयायामृत्युमृच्छंत्यतद्विदः ॥ ११ ॥ मैत्रेयउवाच इतिप्रदर्श्यभगवान्सतींतामात्मनोगतिं ॥ स्वमात्राब्रह्मवादिन्याकपिलोऽनुमतोययौ ॥१२॥ साचापितनयोक्तेनयोगादेशेनयोगयुक् ॥ तस्मिन्नाश्रमआपीडेसरस्वत्याःसमाहिता ॥१३॥ अभीक्ष्णावगाहकपिशान्जटिलान्कुटिलालकान् ॥आत्मानंचोग्रतपसाबिभ्रतीचीरिणंकृशं ॥१४॥ प्रजापतेःकर्दमस्यतपोयोगविजृंभितं ॥ स्वगार्हस्थ्यमनौपम्यंप्रार्थ्यंवैमानिकैरपि ॥१५॥ पयःफेननिभाःशय्यादांतारुक्मपरिच्छदाः ॥ आसनानिचहैमानिसुस्पर्शास्तरणानिच ॥ १६ ॥ स्वच्छस्फटिककुड्येषुमहामारकतेषुच ॥ रत्नप्रदीपाआभांतिललनारत्नसंयुताः ॥ १७ ॥ गृहोद्यानंकुसुमितैरम्यंबह्वमरद्रुमैः ॥ कूजद्विहंगमिथुनंगायन्मत्तमधुव्रतं ॥ १८ ॥ ॥ ॥ ॥ ॥

देहंचीरधारिणंकृशंचबिभ्रतीसती ॥ १४ ॥ प्रजापतेःकर्दमस्य तपोयोगाभ्यांविजृंभितमतिशयितं स्वगार्हस्थ्यंहित्वापुत्रभूतेश्वरविरहातुरासतीवदनंकिंचिदनिर्वाच्यंशोकव्याकुलंचकारेतिषष्ठेनान्वयः ॥ १५ ॥ यत्रगार्हस्थ्येक्षीरफेननिभाः मृदुशुभ्राः शय्याःआस्तरणानिदंतघटितामंचकाश्चस्वर्णमयाःपरिकराः आसनानिपीठादीनि सुस्पर्शान्यास्तरणानियेषु ॥ १६ ॥ १७ ॥ बहुभिरमरद्रुमैरम्यं ॥ १८ ॥

यत्रोद्यानेप्रविष्टमात्मानंदेवहूतिमिति ॥ १९ ॥ आखंडलइंद्रस्तस्ययोषितस्तासामपिईप्सिततमंप्राप्तुमिष्टतमम् तत्रहित्वातत्राभिमानंत्यक्त्वा ॥ २० ॥ सुहृद्वियोगस्यदुःसहतामाह वनमिति नष्टेवत्सेवत्सलागौरिवाभूत् ॥ २१ ॥ विरहकृतध्यानफलमाह निस्पृहानिर्वासनावत्सविदुर ॥ २२॥ ततःस्वसुतःकपिलोयदाह तद्भगवतोरूपंध्यायतीतदाआत्मानंचविश्वतोमुखंसर्वगतंध्यायती ब्रह्मण्यवस्थितमतिर्बभूवेतिपूर्वस्यैवानुषंगः केनध्यायतीविशुद्धेनात्मनामनसा ॥ २३ ॥ विशुद्धौकारणान्याह भक्तिप्रवाहरूपेणयोगेनवैराग्येणचयुक्तानुष्ठानेनजातंयज्ज्ञानं तेनच युक्तानुष्ठानंचगीतासूक्तं युक्ताहारविहारस्ययुक्तचेष्टस्यकर्मसु ॥ युक्तस्वप्नावबोधस्ययोगोभवतिदुःखहेति ब्रह्महेतुनाब्रह्मत्वापादकेन

यत्रप्रविष्टमात्मानंविबुधानुचराजगुः ॥ वाप्यामुत्पलगंधिन्यांकर्दमेनोपलालितं ॥ १९ ॥ हित्वातदीप्सिततमम्प्याखंडलयोषितां ॥ किंचिच्चकारवदनंपुत्रविश्लेषणातुरा ॥ २० ॥ वनंप्रव्रजितेपत्यावपत्यविरहातुरा ॥ ज्ञाततत्त्वाऽप्यभून्नष्टेवत्सेगौरिववत्सला ॥ २१ ॥ तमेवध्यायतीदेवमपत्यंकपिलंहरिं ॥ बभूवाचिरतोवत्सनिस्पृहाताद्दशेगृहे ॥ २२ ॥ ध्यायतीभगवद्रूपंयदाहध्यानगोचरं ॥ सुतःप्रसन्नवदनंसमस्तव्यस्तचिंतया ॥ २३ ॥ भक्तिप्रवाहयोगेनवैराग्येणबलीयसा ॥ युक्तानुष्ठानजातेनज्ञानेनब्रह्महेतुना ॥ ॥ २४ ॥ विशुद्धेनतदात्मानमात्मनाविश्वतोमुखं ॥ स्वानुभूत्यातिरोभूतमायागुणविशेषणं ॥ २५ ॥ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवापत्तित्वात्क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ नसस्मारतदात्मानंस्वप्नेदृष्टमिवोत्थितः ॥ २७ ॥ ॥

॥ २४ ॥ विश्वतोमुखत्वेहेतुः स्वानुभूत्यास्वरूपप्रकाशेनतिरोभूतं मायागुणैर्विशेषणंपरिच्छेदोयस्य ॥ २५ ॥ कथंभूतेब्रह्मणि आत्मनांजीवानांसंश्रयेभगवति तस्याजीवन्मुक्तिमाहसार्द्धैस्त्रिभिः तदाचनिवृत्ताजीवापत्तिर्जीवभावोयस्यास्तस्याःभावस्तत्त्वंतस्मात् विगतक्लेशाप्राप्तनिर्वृतिश्चसतीआत्मानंदेहंनसस्मारेत्युत्तरेणान्वयः ॥ २६ ॥ ननुतथापिगुणानांविद्यमानत्वात्कथमस्मरणं तत्राह नित्यरूढोलब्धप्रतिष्ठः समाधिर्यस्यास्तस्याभावस्तत्त्वंतस्मात् परावृत्तःशांतोगुणनिमित्तोभ्रमोयस्याःसा ॥ २७ ॥ ॥ ॥

परतःपराभिरेवकर्दमसृष्टविद्याधरीभिःपोषःपोषणंयस्य आधिर्मनोग्लानिस्तदसंभवादकृशः मलैरवच्छन्नोबभौ ॥ २८ ॥ दैवगुप्तमारब्ध कर्मपालितं ॥ २९ ॥ निर्वाणंनित्यमुक्तं ॥ ३० ॥ हेवीरविदुर उपेयुषीप्राप्ता ॥ ३१ ॥ हेसौम्यतस्यास्तन्मर्त्यंशरीरंसरिदभूत् कथंभूतं योगेनविधूताविलीनामार्त्यादैहिकाधातुमलायस्य ॥ ३२ ॥ कपिलोपियथाविस्त्युक्तंतदेवप्रपंचयति कपिलोपीतित्रिभिः समनुज्ञाप्य

तद्देहःपरतःपोषोऽप्यकृशश्चाध्यसंभवात् ॥ बभौमलैरवच्छन्नःसधूमइवपावकः ॥२८॥ स्वांगंतपोयोगमयं मुक्तकेशंगतांबरं ॥ दैवगुप्तंनबुबुधेवासुदेवप्रविष्टधीः ॥ २९ ॥ एवंसाकपिलोक्तेनमार्गेणाचिरतःपरं ॥ आत्मानंब्रह्मनिर्वाणंभगवंतमवापह ॥ ३० ॥ तद्वीरासीत्पुण्यतमंक्षेत्रंत्रैलोक्यविश्रुतं ॥ नाम्नासिद्धपदंयत्रसा संसिद्धिमुपेयुषी ॥ ३१ ॥ तस्यास्तद्योगविधुतमार्त्यंमर्त्यमभूत्सरित् ॥ स्रोतसांप्रवरासौम्यसिद्धिदासिद्ध सेविता॥३२॥कपिलोऽपिमहायोगीभगवान्पितुराश्रमात्॥मातरंसमनुज्ञाप्यप्रागुदीचींदिशंययौ॥३३॥ सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः॥स्तूयमानःसमुद्रेणदत्तार्हणनिकेतनः॥३४॥ आस्तेयोगंसमास्थाय सांख्याचार्यैरभिष्टुतः॥ त्रयाणामपिलोकानामुपशांत्यैसमाहितः॥३५॥ एतन्निगदितंतातयत्पृष्टोहंतवानघ॥कपिलस्यचसंवादोदेवहूत्याश्चपावनः॥ ३६ ॥ यइदमनुशृणोतियोऽभिधत्तेकपिलमुनेर्मतमात्मयोगगुह्यं ॥भगवतिकृतधीःसुपर्णकेतावुपलभतेभगवत्पदारविंदं ॥३७॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयोपाख्यानेत्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ ॥ ॥ ॥

अनुज्ञांसंप्रार्थ्य ॥ ३३ ॥ दत्तमर्हणमर्घ्यंनिकेतनंचयस्मै ॥ ३४ ॥ उपशांत्यर्थंसमाहितआस्ते ॥ ३५ ॥ प्रकरणार्थमुपसंहरति एतदिति तवत्वया ॥ ३६ ॥ एतच्छ्रवणकीर्त्तनफलमाह यइति सुपर्णकेतौगरुडध्वजे उपलभतेप्राप्नोति ॥ ३७ ॥ इतिश्रीभागवतेमहापुराणे तृतीयस्कंधेभावार्थदीपिकायांश्रीधरस्वामिविरचितायांत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ समाप्तोयंतृतीयःस्कंधः ॥ ॥

श्रीगणेशायनमः ॥ नमःश्रीपरमहंसास्वादितचरणकमलाचिन्मकरंदायभक्तजनमानसानिवासायश्रीरामचंद्राय अथैकात्रिंशताऽध्यायैर्विसर्गस्तुर्यईर्यते ॥ विसर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिःकृतः ॥ १ ॥ तत्रतुप्रथमेऽध्यायेमनुकन्याऽन्वयाःपृथक् ॥ वर्ण्यंतेयत्रयज्ञादिमूर्तिभिःप्रभवोहरेः ॥ २ ॥ मनुकन्याऽन्वयंविस्तरेणवक्तुमाह मनोस्त्विति चकाराद्द्वौपुत्रौच ॥ १ ॥ तुशब्दादन्यतोऽपिपुत्रलाभःसूचितस्तद्दर्शयितुमाह पुत्रिकाधर्ममाश्रित्येति अभ्रातृकांप्रदास्यामितुभ्यंकन्यामलंकृतां अस्यांयोजायतेपुत्रःसमेपुत्रोभवेदितिभाषाबंधेनकन्यादानंपुत्रिकाधर्मः सचाभ्रातृकायांकन्यायांपुत्रार्थिनएवप्रसिद्धस्तथापिपुत्रबाहुल्यकामस्तथाकृतवानित्याह भ्रातृमतीमपीति ॥ २ ॥ मिथुनंपुरुषंस्त्रियं

श्रीगणेशायनमः मैत्रेयउवाच मनोस्तुशतरूपायांतिस्रःकन्याश्चजज्ञिरे ॥ आकूतिर्देवहूतिश्चप्रसूतिरितिविश्रुताः ॥ १ ॥ आकूतिंरुचयेप्रादादपिभ्रातृमतींनृपः ॥ पुत्रिकाधर्ममाश्रित्यशतरूपानुमोदितः ॥ २ ॥ प्रजापतिःसभगवान्रुचिस्तस्यामजीजनत् ॥ मिथुनंब्रह्मवर्चस्वीपरमेणसमाधिना ॥ ३ ॥ यस्तयोःपुरुषःसाक्षाद्विष्णुर्यज्ञस्वरूपधृक् ॥ यास्त्रीसादक्षिणाभूतेरंशभूताऽनपायिनी ॥ ४ ॥ आनिन्येस्वगृहंपुत्र्याःपुत्रंविततरोचिषं ॥ स्वायंभुवोमुदायुक्तोरुचिर्जग्राहदक्षिणां ॥ ५ ॥ तांकामयानांभगवानुवाहयजुषांपतिः ॥ तुष्टायांतोषमापन्नोऽजनयद्द्वादशात्मजान् ॥ ६ ॥ तोषःप्रतोषःसंतोषोभद्रःशांतिरिडस्पतिः ॥ इध्मःकविर्विभुःस्वन्हःसुदेवोरोचनोद्विषट् ॥ ७ ॥ तुषितानामतेदेवाआसन्स्वायंभुवांतरे ॥ मरीचिमिश्राऋषयोयज्ञःसुरगणेश्वरः ॥ ८ ॥ प्रियव्रतोत्तानपादौमनुपुत्रौमहौजसौ ॥ तत्पुत्रपौत्रनप्तॄणामनुवृत्तंतदंतरं ॥ ९ ॥ देवहूतिमदात्तातकर्दमायात्मजांमनुः ॥ तत्संबंधिश्रुतप्रायंभवतागदतोमम ॥ १० ॥ ॥

च समाधिनाईश्वरध्यानेन ॥ ३ ॥ भूतेर्लक्ष्म्याअंशभूताअतस्तयोर्विवाहोनविरुद्धइतिभावः ॥ ४ ॥ ५ ॥ यजुषांयज्ञानांमंत्राणांवापतिर्विष्णुः ॥ ६ ॥ द्विषट्द्वादश ॥ ७ ॥ प्रसंगात्स्वायंभुवमन्वंतरगतंषट्कमाह तुषिताइतिद्वाभ्यां मन्वंतरंमनुर्देवामनुपुत्राःसुरेश्वरः ॥ ऋषयोंऽशावतारश्चहरेः षड्विधमुच्यतइतिवक्ष्यति तत्रस्वायंभुवोमनुः तुषितादेवाः मरीचिप्रमुखाःसप्तर्षयः यज्ञोहरेरवतारः सएवसुरगणेश्वरइंद्रः ॥ ८ ॥ प्रियव्रतोत्तानपादौमनुपुत्रौपृथ्वीपालकौ तदेवंयज्ञस्यद्वैरूप्येणषड्विधत्वं तयोःपुत्रपौत्रनप्तॄणांवंशैरनुवृत्तंव्याप्तंपालितंतन्मन्वंतरं ॥ ९ ॥ श्रुतप्रायंबाहुल्येनश्रुतंतत्कन्यावंशानामश्रुतत्वात्प्रायग्रहणं ॥ १० ॥ ॥ ॥

॥ ११ ॥ प्रसूतिप्रसवंपुत्रपौत्रादिभिर्विस्तारं ॥ १२ ॥ ययोर्वंशेनापूरितं ॥ १३ ॥ कश्यपस्यवंशंषष्ठेवक्ष्यति द्वितीयस्यत्रंशमाह पूर्णिमे ति देवकुल्यांनामकन्यांच हरेःपादक्षालनाज्जन्मांतरेयादिवःसरिद्गंगाऽभूत् ॥ १४ ॥ आत्मेशब्रह्मसंभवान् विष्णुरुद्रब्रह्मणामंशैःसंभवा न् ॥ १५ ॥ किंचित्किंस्वित् किंकर्तुमिच्छवइतिवा ॥ १६ ऋक्षंनामकुलाद्रिं तपसिस्थितःसन् ॥ १७ ॥ तस्मिन्कुलाद्रौ प्रसूनानां

दक्षायब्रह्मपुत्रायप्रसूतिंभगवान्मनुः ॥ प्रायच्छद्यत्कृतःसर्गस्त्रिलोक्यांविततोमहान् ॥ ११ ॥ याःकर्द मसुताःप्रोक्तानवब्रह्मर्षिपत्नयः ॥ तासांप्रसूतिप्रसवंप्रोच्यमानंनिबोधमे ॥ १२ ॥ पत्नीमरीचेस्तुकला सुषुवेकर्दमात्मजा ॥ कश्यपंपूर्णिमानंचययोरापूरितंजगत् ॥ १३ ॥ पूर्णिमासूतविरजंविश्वगंचपरंतप ॥ देवकुल्यांहरेःपादशौचाद्याऽभूत्सरिद्दिवः ॥ १४ ॥ अत्रेःपत्न्यनुसूयात्रीन्जज्ञेसुयशसःसुतान् ॥ दत्तंदु र्वाससंसोममात्मेशब्रह्मसंभवान् ॥ १५ ॥ विदुरउवाच अत्रेर्गृहेसुरश्रेष्ठाःस्थित्युत्पत्त्यंतहेतवः ॥ किं चिच्चिकीर्षवोजाताएतदाख्याहिमेगुरो ॥ १६ ॥ मैत्रेयउवाच ब्रह्मणानोदितःसृष्टावत्रिर्ब्रह्मविदांवरः ॥ सहपत्न्याययावृक्षंकुलाद्रिंतपसिस्थितः ॥ १७ ॥ तस्मिन्प्रसूनस्तबकपलाशाशोककानने ॥ वार्भिःस्र वद्भिरुद्घुष्टेनिर्विंध्यायाःसमंततः ॥ १८ ॥ प्राणायामेनसंयम्यमनोवर्षशतंमुनिः ॥ अतिष्ठदेकपादेननिर्द्व न्द्वोऽनिलभोजनः ॥ १९ ॥ शरणंतंप्रपद्येऽहंयएवजगदीश्वरः ॥ प्रजामात्मसमांमह्यंप्रयच्छत्वितिचिंतय न् ॥ २० ॥ तप्यमानंत्रिभुवनंप्राणायामैधसाऽग्निना ॥ निर्गतेनमुनेर्मूर्ध्नःसमीक्ष्यप्रभवस्त्रयः ॥ २१ ॥ अप्सरोमुनिगंधर्वसिद्धविद्याधरोरगैः ॥ वितायमानयशसस्तदाश्रमपदंययुः ॥ २२ ॥ तत्प्रादुर्भावसं योगविद्योतितमनामुनिः ॥ उत्तिष्ठन्नेकपादेनददर्शविबुधर्षभान् ॥ २३ ॥ ॥

स्तबकायेषुपलाशाशोकेषुतेषांकानने निर्विंध्यानामनदी तस्याःस्रवद्भिर्वार्भिरुद्घुष्टेनादिते ॥ १८ ॥ १९ ॥ २० ॥ प्राणायामएवएधः संदीपकोयस्यतेनमुनेर्मूर्ध्नोनिर्गतेनाग्निनातप्यमानंसमीक्ष्यतदाश्रमपदंययुरितिउत्तरेणान्वयः ॥ २१ ॥ अप्सरःप्रमुखैर्वितायमानंविस्तार्य माणंयशोयेषांत ॥ २२ ॥ तेषांप्रादुर्भावःप्राकट्यं तस्यसंयोगःसन्निधिः तेनविद्योतितंमनोयस्य उत्तिष्ठन् उत्कर्षेणतिष्ठन् ॥ २३ ॥

अर्हणंपुष्पादिकमंजलौयस्य उपतस्थेपूजयामास वृषाद्यारूढान्स्वैःस्वैश्चिन्हैःत्रिशूलकमंडलुचक्रादिभिः ॥ २४ ॥ रुपयाऽवलोकोयस्मि
न् हसच्चतद्वदनंचतेनउपलंभितान्प्रसन्नत्वेनज्ञापितान् तेषांरोचिषादीप्त्या ॥ २५ ॥ श्लक्ष्णयामधुरया सूक्तयागंभीरार्थया ॥ २६ ॥
अनुयुगंकल्पेकल्पेविभज्यगृहीतोदेहोयैस्ते प्रसिद्धब्रह्मविष्णुगिरिशायूयंवःयुष्मान्प्रणतोऽस्मितेभ्यःसकाशादेकएवमेमयाउपहूतः शरणं
तंप्रपद्येइत्येकस्यैवनिर्दिष्टत्वात् सचयुष्मासुकइतियुष्माभिरेवकथ्यतामित्यर्थः ॥ २७ ॥ अस्यप्रपंचः एकइति विविधैःप्रधानैरुपचारैः

प्रणम्यदंडवद्भूमावुपतस्थेऽर्हणांजलिः ॥ वृषहंससुपर्णस्थान्स्वैःस्वैश्चिन्हैश्चचिन्हितान् ॥ २४ ॥ कृपाव
लोकेनहसद्वदनेनोपलंभितान् ॥ तद्रोचिषाप्रतिहतेनिमील्यपुनरक्षिणी ॥ २५ ॥ चेतस्तत्प्रवणंयुंजन्न
स्तावीत्संहतांजलिः ॥ श्लक्ष्णयासूक्तयावाचासर्वलोकगरीयसः ॥ २६ ॥ अत्रिरुवाच विश्वोद्भवस्थि
तिलयेषुविभज्यमानैर्मायागुणैरनुयुगंविगृहीतदेहाः ॥ तेब्रह्मविष्णुगिरिशाःप्रणतोऽस्म्यहंवस्तेभ्यःकए
वभवतांमइहोपहूतः ॥ २७ ॥ एकोमयेहभगवान्विविधप्रधानैश्चित्तीकृतःप्रजननायकथंनुयूयं ॥ अत्रा
गतास्तनुभृतांमनसोऽपिदूराद्ब्रूतप्रसीदतमहानिहविस्मयोमे ॥ २८ ॥ मैत्रेयउवाच इतितस्यवचःश्रु
त्वात्रयस्तेविबुधर्षभाः ॥ प्रत्याहुःश्लक्ष्णयावाचाप्रहस्यतमृषिंप्रभो ॥ २९ ॥ देवाऊचुः यथाकृतस्तेसं
कल्पोभाव्यंतेनैवनान्यथा ॥ सत्संकल्पस्यतेब्रह्मन्यद्वैध्यायतितेवयं ॥ ३० ॥ अथास्मदंशभूतास्तेआ
त्मजालोकविश्रुताः ॥ भवितारोंऽगभद्रंतेविस्रप्स्यंतिचतेयशः ॥ ३१ ॥ एवंकामवरंदत्वाप्रतिजग्मुःसुरे
श्वराः ॥ सभाजितास्तयोःसम्यग्दंपत्योर्मिषतोस्ततः ॥ ३२ ॥ ॥ ॥

विबुधप्रधानइतिवापाठः प्रजननायपुत्रोत्पत्त्यै चित्तीकृतःचित्तेनैक्यंनीतः मनसोपिदूराःअगोचराःसंतःकथंनुत्रयोप्यत्रागताः ॥ २८ ॥
॥ २९ ॥ तेत्वयायथाकृतःसंकल्पस्तेनतथैवभाव्यंनान्यथा यतःसत्संकल्पस्यतेसंकल्पः तर्हिकथमेकस्मिन्ध्यायमानेत्रयःप्रतीतास्थतत्रा
हुःयदेकंजगदीश्वराख्यंतत्वंभवान्ध्यायाति तएतेवयंत्रयोऽपितदेवैकंतत्वंनास्माकंभेदोस्तीत्यर्थः ॥ ३० ॥ विस्रप्स्यंतिविस्तारयिष्यंति
अंतर्भूतणिजर्थस्यसृप्लृगतावित्यस्यरूपं ॥ ३१ ॥ ताभ्यांसम्यक्सभाजिताःपूजिताःसंतः ततःस्थानात्प्रतिजग्मुः ॥ ३२ ॥

अंगिरसःब्रह्मणस्तृतीयपुत्रस्य निबोधबुध्यस्व ॥३३॥ ताःकन्यानिर्दिशति सिनीवालीति शशिनिदृष्टेसिनीवालीस्यात् नष्टेकुहूरमावास्या अनुमतिरूनेराकासंपूर्णेपूर्णमासचि ॥३४॥३५॥ पुलस्त्यः हविर्भुविपत्न्यामित्यन्वयः सोऽगस्त्यः दन्हाग्निर्जाठराग्निः विश्रवाश्चपुलस्त्यस्य सुतइतिशेषः ॥३६॥ तस्यविश्रवसः इडविडायांजातःकुबेरः अन्यस्यांभार्यायांकेशिन्यांरावणादयस्त्रयःसुताः ॥ ३७ ॥ ३८ ॥ ज्वलतः

सोमोऽभूद्ब्रह्मणोंऽशेनदत्तोविष्णोस्तुयोगवित् ॥ दुर्वासाःशंकरस्यांशोनिबोधांगिरसःप्रजाः ॥ ३३ ॥ श्रद्धा त्वंगिरसःपत्नीचतस्रोऽसूतकन्यकाः ॥ सिनीवालीकुहूराकाचतुर्थ्यनुमतिस्तथा ॥ ३४ ॥ तत्पुत्रावपरावा स्तांख्यातौस्वारोचिषेंऽतरे ॥ उतथ्योभगवान्साक्षात्ब्रह्मिष्ठश्चबृहस्पतिः ॥३५॥ पुलस्त्योजनयत्पत्न्यामग स्त्यंचहविर्भुवि ॥ सोऽन्यजन्मनिदन्हाग्निर्विश्रवाश्चमहातपाः ॥३६॥ तस्ययक्षपतिर्देवःकुबेरस्त्विडविडासु तः ॥ रावणःकुंभकर्णश्चतथाऽन्यस्यांबिभीषणः ॥ ३७ ॥ पुलहस्यगतिर्भार्यात्रीनसूतसतीसुतान् ॥ कर्मश्रे ष्ठंवरीयांसंसहिष्णुंचमहामते ॥ ३८ ॥ क्रतोरपिक्रियाभार्यावालखिल्यानसूयत ॥ ऋषीन्षष्टिसहस्राणि ज्वलतोब्रह्मतेजसा ॥३९॥ ऊर्जायांजज्ञिरेपुत्रावासिष्ठस्यपरंतप ॥ चित्रकेतुप्रधानास्तेसप्तब्रह्मर्षयोऽमलाः ॥ ४० ॥ चित्रकेतुःसुरोचिश्चविरजामित्रएवच ॥ उल्बणोवसुभृद्यानांद्युमान्शक्त्यादयोऽपरे ॥ ४१ ॥ चि त्तिस्त्वथर्वणःपत्नीलेभेपुत्रंधृतव्रतं ॥ दध्यंचमश्वशिरसंभृगोर्वंशंनिबोधमे ॥ ४२ ॥ भृगुःख्यात्यांमहाभागः पत्न्यांपुत्रानजीजनत् ॥ धातारंचविधातारंश्रियंचभगवत्परां ॥ ४३ ॥ आयतिंनियतिंचैवसुतेमेरुस्तयोर दात् ॥ ताभ्यांतयोरभवतांमृकंडःप्राणएवच ॥ ४४ ॥ मार्कंडेयोमृकंडस्यप्राणाद्वेदशिरामुनिः ॥ कविश्चभा र्गवोयस्यभगवानुशनासुतः ॥ ४५ ॥ तएतेमुनयःक्षत्तर्लोकान्सर्गैरभावयन् ॥ एषकर्दमदौहित्रसंतानःक थितस्तव ॥ शृण्वतःश्रद्दधानस्यसद्यःपापहरःपरः ॥ ४६ ॥

प्रकाशमानान् ॥ ३९ ॥ चित्रकेतुप्रमुखाःजज्ञिरे तेचसप्तर्षयोजाताः॥४०॥तानेवाह चित्रकेतुरिति वसुभृद्यानोनामैकःशक्त्यादयोऽपरेऽन्यस्याः पुत्राः ॥ ४१ ॥ ४२ ॥ ख्यात्यांपत्न्यांपुत्रान्पु त्रीपुत्रींचतानेवाह धातारमिति ॥ ४३ ॥ तयोर्धातृविधात्रोः ॥४४॥ कविश्चभार्गवःभृगोःपुत्रः यस्यकवेःसुतःउशना ॥ ४५ ॥ ४६ ॥

अजात्मजःब्रह्मपुत्रः नतुप्राचेतसः ॥ ४७ ॥ युक्तेभ्यःसंयतेभ्यः मिलितेभ्योवा ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सर्वेषांगुणानामुत्पत्ति र्यस्यांसा ॥ ५२ ॥ ५३ ॥ उपतस्थुःभेजुः ॥ ५४ ॥ निजयामाययायास्मिन्नात्मनि खेगगने रूपभेदंगंधर्वनगरमिवेदंविश्वंविरचितं त स्यात्मनः प्रतिचक्षणायप्रकाशनाय आत्मानंयोऽयप्रादुश्चकारप्रकटितवान् तस्मैपुरुषायनमः केनरूपेणप्रादुश्चकार ऋषेर्मूर्तिराकारो

प्रसूतिमानवींदक्षउपयेमेह्यजात्मजः ॥ तस्यांससर्जदुहितॄःषोडशामललोचनाः ॥ ४७ ॥ त्रयोदशादाद्ध र्मायतथैकामग्नयेविभुः ॥ पितृभ्यएकांयुक्तेभ्योभवायैकांभवच्छिदे ॥ ४८ ॥ श्रद्धामैत्रीदयाशांतिस्तुष्टिःपु ष्टिःक्रियोन्नतिः ॥ बुद्धिर्मेधातितिक्षाह्रीर्मूर्तिर्धर्मस्यपत्नयः ॥ ४९ ॥ श्रद्धाऽसूतशुभंमैत्रीप्रसादमभयंदया ॥ शांतिःसुखंमुदंतुष्टिःस्मयंपुष्टिरसूयत ॥ ५० ॥ योगंक्रियोन्नतिर्दर्पमर्थंबुद्धिरसूयत ॥ मेधास्मृतिंतितिक्षातु क्षेमंह्रीःप्रश्रयंसुतम् ॥५१॥ मूर्तिःसर्वगुणोत्पत्तिर्नरनारायणावृषी ॥ ययोर्जन्मन्यदोविश्वमभ्यनंदत्सुनि र्वृतं ॥५२॥ मनांसिककुभोवाताःप्रसेदुःसरितोऽद्रयः ॥ दिव्यवाद्यंततूर्याणिपेतुःकुसुमवृष्टयः ॥५३॥ मुन यस्तुष्टुवुस्तुष्टाजगुर्गंधर्वकिन्नराः ॥ नृत्यंतिस्मस्त्रियोदेव्यआसीत्परममंगलं ॥ देवाब्रह्मादयःसर्वेउपतस्थुर भिष्टवैः ॥ ५४ ॥ देवाऊचुः योमाययाविरचितंनिजयात्मनीदंखेरूपभेदमिवतत्प्रतिचक्षणाय ॥ एतेनध र्मसदनेऋषिमूर्तिनाद्यप्रादुश्चकारपुरुषायनमःपरस्मै ॥५५॥ सोऽयंस्थितिव्यतिकरोपशमायसृष्टान्सत्त्वेन नःसुरगणाननुमेयतत्त्वः ॥ दृश्याददभ्रकरुणेनविलोकनेनयच्छ्रीनिकेतममलंक्षिपतारविंदं ॥५६ ॥ एवं सुरगणैस्तातभगवंतावभिष्टुतौ ॥ लब्धावलोकैर्ययतुरर्चितौगंधमादनं ॥ ५७ ॥

यस्मिन्तेनरूपेण ॥ ५५ ॥ सोऽयंनोऽस्मान्सुरगणान् अनल्पकरुणायुक्तेन विलोकनेन विशिष्टनेत्रेणदृश्यात्पश्यतु कथंभूतेन यच्छ्रीनिके तममलमरविंदं तत्क्षिपतातिरस्कुर्वता कथंभूतः अनुमेयंशास्त्रतोविचार्यनत्वस्माकमपरोक्षंतत्वंयस्य कथंभुतानस्मान् स्थितेर्जगन्मर्या दायाव्यतिकरोऽन्यथात्वं तस्योपशमायसत्वेनगुणेनसृष्टान् ॥ ५६ ॥लब्धोऽवलोकोयैःसुरगणैस्तैरभिष्टुतौआर्चितौसंतौययतुः ॥ ५७ ॥

भुवोभारस्यव्ययायनाशाय चकारएकवाक्यत्वार्थः तौचसांप्रतमिहागतावित्यर्थः तदुक्तंतत्रे अर्जुनेतुनरावेशःकृष्णोनारायणःस्वयमिति ॥
यदूद्वहः श्रीकृष्णः कुरूद्वहोऽर्जुनः उभावपिकृष्णनामानौ ॥ ५८ ॥ अग्न्यभिमानिनोदेवान् स्वहानामतस्यभार्या हुतभोजनमितित्रया
णांविशेषणं ॥ ५९ ॥ पितरस्त्रयः पितामहएकःतैःसाकंसह ॥ ६० ॥ वैतानिकेवैदिकेकर्मणियज्ञे येषांनामभिरग्निदेवताकाइष्टयोनिरू
प्यंतेक्रियंतेतएतेऽग्नयोनलौकिकाः अतोबहूनांनवैय्यर्थ्यमितिभावः ॥ ६१ ॥ सौम्याःसोमपाः येषामग्नौकरणमस्तितेसाग्नयः तद्रहि

ताविमौवैभगवतोहरेरंशाविहागतौ॥भारव्ययायचभुवःकृष्णौयदुकुरूद्वहौ ॥५८ ॥स्वाहाऽभिमानिनश्चाग्ने
रात्मजांस्त्रीनजीजनत् ॥ पावकंपवमानंचशुचिंचहुतभोजनं ॥ ५९॥ तेभ्योऽग्नयःसमभवंश्चत्वारिंशच्चपंचच॥
तएवैकोनपंचाशत्साकंपितृपितामहैः ॥ ६० ॥ वैतानिकेकर्मणियन्नामभिर्ब्रह्मवादिभिः ॥ आग्नेय्यइष्टयो
यज्ञेनिरूप्यंतेऽग्नयस्तुते ॥६१॥ अग्निष्वात्ताबर्हिषदःसौम्याःपितरआज्यपाः॥साग्नयोऽनग्नयस्तेषांपत्नीदा
क्षायणीस्वधा ॥ ६२ ॥ तेभ्योदधारकन्येद्वेवयुनांधारिणींस्वधा ॥ उभेतेब्रह्मवादिन्यौज्ञानविज्ञानपारगे ॥
॥ ६३ ॥ भवस्यपत्नीतुसतीभवंदेवमनुव्रता ॥ आत्मनःसदृशंपुत्रंनलेभेगुणशीलतः ॥ ६४ ॥पितर्यप्रतिरूपे
स्वेभवायानागसेरुषा ॥ अप्रौढैवात्मनात्मानमजहाद्योगसंयुता ॥ ६५ ॥ इतिश्री० चतुर्थस्कंधेविदुरमैत्रे
यसंवादेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ विदुरउवाच भवेशीलवतांश्रेष्ठेदक्षोदुहितृवत्सलः ॥
विद्वेषमकरोत्कस्मादनादृत्यात्मजांसतीं ॥१॥ कस्तंचराचरगुरुंनिर्वैरंशांतविग्रहं ॥आत्मारामंकथंद्वेष्टिजग
तोदैवतंमहत् ॥ २ ॥

तास्त्वनग्नयः ॥ ६२ ॥ तयोस्तुसंततिर्नाभवत् जीवन्मुक्तत्वादित्याह उभेतइति ॥६३॥ गुण
शीलतःआत्मनःसदृशंदेवमनुव्रताऽपिसतीपुत्रंनलेभे ॥ ६४ ॥ तत्रहेतुःस्वेपितरि दक्षेअप्रतिरूपेअसदृशेप्रतिकूलेसतीत्यर्थः आत्मनास्वयमे
वात्मानंदेहमजहात्त्यक्तवती योगसंयुतायोगमाश्रित्येति ॥ ६५ ॥ इतिचतुर्थेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ द्वितीयेप्रथमा
ध्यायोपक्षिप्तभवदक्षयोः ॥ विद्वेषेवर्ण्यतेहेतुर्विश्वसृग्यज्ञसंभवः ॥ १ ॥ सतींसतीनाम्नीम् ॥ १ ॥ नचासौकस्यचिद्द्वेषार्हइत्याह कइतिचरा
चरगुरुंजगतांदैवतंचतंकोद्वेष्टिकथंचनिर्वैरंद्वेष्टि निर्वैरत्वेहेतुः भावकःशांतंशांतिरेवविग्रहोयस्य कुतः आत्मन्येवारामोरतिर्यस्यतमप्यद्दा
कःप्रजापतिर्दक्षःकथंद्वेष्टि एवंभूतेतस्मिन्द्वेषोऽयुक्तोशक्यश्चेत्यर्थः ॥ २ ॥

यतोहेतोर्विद्वेषः यतोविद्वेषात्प्राणांस्तत्याज एतदाख्याहि ॥ ३ ॥ तदेवाख्यातुमितिहासंप्रस्तौति पुरेति समेताआसन् ॥४॥ प्रविष्टंदक्षमि
तिशेषः महत्सदःमहतींसभां ॥ ५ ॥ स्वधिष्ण्येभ्यःस्वीयासनेभ्यः ॥ ६ ॥ ७ ॥ प्राक्स्वोपवेशनात्पूर्वमेवनिषण्णमुपविष्टंमृडंशिवं
तदनाद्दतः तेनाभ्युत्थानादिभिरकृतादरः नामृष्यन्नासहत वामंवक्रंयथाभवतितथाऽभिवीक्ष्य ॥ ८ ॥ मेवचनंश्रूयतां अज्ञानान्मत्सराच्च

एतदाख्याहिमेब्रह्मन्जामातुःश्वशुरस्यच॥विद्वेषस्तुयतःप्राणांस्तत्यजेदुस्त्यजान्सती॥३॥मैत्रेयउवाच पुरा
विश्वसृजांसत्रेसमेताःपरमर्षयः॥तथाऽमरगणाःसर्वेसानुगामुनयोऽग्नयः ॥ ४ ॥ तत्रप्रविष्टमृषयोदृष्ट्वार्कमि
वरोचिषा॥भ्राजमानंवितिमिरंकुर्वंतंतन्महत्सदः॥५॥उदतिष्ठन्सदस्यास्तेस्वधिष्ण्येभ्यःसहाग्नयः॥ऋतेविरिं
च्यंशर्वंचतद्भासाक्षिप्तचेतसः॥६॥ सदसस्पतिभिर्दक्षोभगवान्साधुसत्कृतः॥ अजंलोकगुरुंनत्वानिषसादत
दाज्ञया॥७॥प्राङ्निषण्णंमृडंदृष्ट्वानामृष्यत्तदनादृतः॥उवाचवामंचक्षुर्भ्यामभिवीक्ष्यदहन्निव ॥८॥ श्रूयतां
ब्रह्मर्षयोमेसहदेवाःसहाग्नयः॥ साधूनांब्रुवतोवृत्तंनाज्ञानान्नचमत्सरात् ॥ ९ ॥ अयंतुलोकपालानांयशोघ्नो
निरपत्रपः॥सद्भिराचरितःपंथायेनस्तब्धेनदूषितः ॥१०॥ एषमेशिष्यतांप्राप्तोयन्मेदुहितुरग्रहीत्॥पाणिंवि
प्राग्निमुखतःसावित्र्याइवसाधुवत् ॥११॥ गृहीत्वामृगशावाक्ष्याःपाणिंमर्कटलोचनः॥ प्रत्युत्थानाभिवादार्हे
वाचाऽप्यकृतनोचितं ॥१२॥ लुप्तक्रियायाशुचयेमानिनेभिन्नसेतवे ॥ अनिच्छन्नप्यदांबालांशूद्रायेवोशतीं
गिरं ॥ १३ ॥ प्रेतावासेषुघोरेषुप्रेतैर्भूतगणैर्वृतः ॥ अटत्युन्मत्तवन्नग्नोव्युप्तकेशोहसन्रुदन् ॥ १४ ॥

नब्रुवतः ॥ ९ ॥ स्तब्धेनउचिताक्रियाशून्येन ध्वस्तेनेतिपाठेभ्रष्टेन ॥ १० ॥ तदेवाह एषइति यद्यस्माद्विप्राग्निसमक्षंसावित्रीतुल्यायामेदु
हितुःपाणिमग्रहीत् ॥ ११ ॥ मृगशावस्यहरिणबालस्याक्षिणीवाक्षिणीयस्याः प्रत्युत्थानाभिवादार्हेमयिउचितंसन्मानंवाचाऽपिनाकरोत्
॥ १२ ॥ अनर्हायकन्यादत्तेत्यनुतप्यमानआह लुप्तक्रियायेतिसार्धैश्चतुर्भिः उशतींवेदलक्षणांगिरं ॥ १३ ॥प्रेतावासेषुश्मशानेषुव्युप्ताविकीर्णाःकेशायस्य ॥ १४ ॥

चिताभस्मनाकृतंस्नानंयेन प्रेतानांस्रजोमाल्यानियस्यप्रेतस्रक् नृणामस्थीनिभूषणानियस्य शिवइत्यपदेशोनाममात्रंयस्य तमोमात्रात्म
कः केवलतमोरूपआत्मास्वभावोयेषां ॥ १५ ॥ उन्मादाभूतावेशोषास्तेषांनाथायदुर्हृदेदुष्टचित्ताय बतेतिखेदे वास्तवस्त्वयमर्थः लुप्ताः
क्रियाः यस्मिन् परब्रह्मरूपत्वात् अतएवनास्तिशुचिर्यस्मात् अमानिनेअभिन्नसेतवेइतिचच्छेदः तस्यपरमेश्वरस्यमदीयामानुषीकन्या कथं
योग्यास्यादितिलज्जादिनादातुमनिच्छन्नपितत्संबंधलोभेनदत्तवान् शूद्रायेतिअनर्हत्वमात्रेदृष्टांतः नहीनत्वे पूर्वापरस्ववचनविरोधापत्तेः
एतदुक्तंभवति यथाकश्चिच्छूद्रायवेदमर्थलोभेनददाति प्रेतावासेष्वित्यादिसर्वविडंबनमात्रमिति स्वयमेवाह उन्मत्तवदिति अन्यथा

चिताभस्मकृतस्नानः प्रेतस्रङ्न्रस्थिभूषणः॥ शिवापदेशोह्यशिवोमत्तोमत्तजनप्रियः ॥ पतिःप्रमथभूतानां
तमोमात्रात्मकात्मनां॥ १५ ॥ तस्माउन्मादनाथायनष्टशौचायदुर्हृदे ॥ दत्ताबतमयासाध्वीचोदितेपरमेष्ठि
ना ॥ १६ ॥ मैत्रेयउवाच विनिंद्यैवंसगिरिशमप्रतीपमवस्थितं ॥दक्षोऽथापउपस्पृश्यक्रुद्धःशप्तुंप्रच
क्रमे ॥ १७॥ अयंतुदेवयजनइंद्रोपेंद्रादिभिर्भवः॥ सहभागंनलभतांदेवैर्देवगणाधमः॥ १८॥ निषिध्यमा
नःससदस्यमुख्यैर्दक्षोगिरित्रायविसृज्यशापं॥ तस्माद्विनिष्क्रम्यविवृद्धमन्युर्जगामकौरव्यनिजंनिकेतनं ॥
॥ १९ ॥ विज्ञायशापंगिरिशानुगाग्रणीर्नंदीश्वरोरोषकषायदूषितः ॥ दक्षायशापंविससर्जदारुणंयेचान्वमो
दंस्तदवाच्यतांद्विजाः ॥ २० ॥

उन्मत्तइत्येवावक्ष्यत् अशिवः नास्तिशिवोयस्मात् अमत्तोऽमत्तजनप्रियइतिच्छेदःपतिः प्रमथभूतानामितिभक्तवात्सल्यमाह तामसानपि
दोषमपनीयपातीति नष्टानामपिशौचंशुद्धिर्यस्मात् दुष्टेष्वप्येतेमयाऽनुकंप्याइतिहृन्मनोयस्यसदुर्हृत्तस्मै बतेतिहर्षे ब्रह्मणोवाक्याल्लज्जा
भयादिकंपरित्यज्यदत्तेत्यर्थः ॥ १६ ॥ अप्रतीपमप्रतिकूलंयथाभवतिएवमवस्थितमपिविनिंद्य १७ ॥ देवानांयजनसमयेदेवैः सहभागंन
लभतां किंतुतेभ्यःपूर्वमेवलभतां अग्रभोजित्वात् यद्वा तेषुभुक्तवत्सुलभतांसर्वपोषकत्वात् तत्रहेतुः देवगणोऽधमोयस्मात्सःदेवगणाधीशइ
त्यर्थः ॥ १८ ॥ सदक्षस्तस्मात्स्थानाद्विनिष्क्रम्यजगाम हेकौरव्य ॥ १९ ॥ गिरिशस्यानुगानामग्रणीर्मुख्यःरोषएवकषायस्तेनदूषितःआर
क्तनेत्रइत्यर्थः तस्यगिरिशस्यावाच्यतांवचनानर्हतां निंद्यतामित्यर्थः तेभ्योऽपिशापंविससर्ज ॥ २० ॥

दक्षंशपतिसार्धैस्त्रिभिः एतन्मर्त्यंदक्षशरीरमुद्दिश्यश्रेष्ठंमत्वाअप्रतिद्रुहिप्रतिद्रोहमकुर्वति पृथग्दृष्टिःभेददर्शी तत्त्वतःपरमार्थात् ॥२१ ॥ अज्ञत्वमेवाह गृहेष्विति कर्मतंत्रंकर्मपरिकरम् वेदेयेवादाअर्थवादाः अक्षय्यंहवैचातुर्मास्ययाजिनः सुकृतंभवतीत्यादयस्तैर्विपन्नाविनष्टाधीर्यस्य ॥२२ ॥ परोदेहादिः तमेवात्मत्वेनाभितोध्यातुंशीलंयस्यास्तयाबुध्याविस्मृताआत्मनोगतिस्तत्त्वंयेन अतःपशुतुल्यः अतितरांस्त्रीकामोऽस्त्वितिद्वितीयःशापःबस्तस्यमुखमेवमुखंयस्येतितृतीयःशापः ॥ २३॥ अयंचशापोऽस्यानुरूपएवेत्याह विद्याबुद्धिः इयमेवतत्त्वविद्येतिबुद्धिर्यस्य अतोसौजडएव द्विजान्शपतिसंसरंत्विवितिसार्धद्वाभ्यां शर्वमवमन्यंतइतितथा तममुंदक्षंयेचअनुवर्तंतेतेसंसरंतु जन्ममरणा

यएतन्मर्त्यमुद्दिश्यभगवत्यप्रतिद्रुहि॥द्रुह्यत्यज्ञःपृथक्दृष्टिस्तत्त्वतोविमुखोभवेत् ॥ २१ ॥ गृहेषुकूटधर्मेषुसक्तोग्राम्यसुखेच्छया ॥ कर्मतंत्रंवितनुतेवेदवादविपन्नधीः ॥ २२ ॥ बुध्यापराभिध्यायिन्याविस्मृतात्मगतिःपशुः ॥ स्त्रीकामःसोऽस्त्वतितरांदक्षोबस्तमुखोऽचिरात् ॥ २३ ॥ विद्याबुद्धिरविद्यायांकर्ममय्यामसौजडः ॥ संसरंत्विहयेचामुमनुशर्वावमानिनम् ॥ २४ ॥गिरःश्रुतायाःपुष्पिण्यामधुगंधेनभूरिणा ॥ मथ्नाचोन्मथितात्मानःसंमुह्यंतुहरद्विषः ॥ २५॥ सर्वभक्षाद्विजावृत्त्यैधृतविद्यातपोव्रताः ॥ वित्तदेहेंद्रियारामायाचकाविचरंत्विह ॥ २६ ॥ तस्यैवंवदतःशापंश्रुत्वाद्विजकुलायवै ॥ भृगुःप्रत्यसृजच्छापंब्रह्मदंडंदुरत्ययम् ॥ ॥ २७॥ भवव्रतधरायेचयेचतान्समनुव्रताः ॥ पाखंडिनस्तेभवंतुसच्छास्त्रपरिपंथिनः ॥२८॥ नष्टशौचामूढधियोजटाभस्मास्थिधारिणः ॥ विशंतुशिवदीक्षायांयत्रदैवंसुरासवम् ॥ २९॥

द्यनुभवंत्वितिएकःशापः ॥ २४ ॥ श्रुतायावेदरूपायाःपुष्पिण्याः पुष्पाणीवार्थवादाःमनःक्षोभकत्वात् अर्थवादबहुलायाइत्यर्थः मधुगंधतुल्येनप्ररोचनेन मथ्नामनःक्षोभकेनोन्मथितआत्मामनोयेषांते संमुह्यंतु कर्मस्वासक्ताभवंत्विवितिद्वितीयःशापः ॥ २५ ॥ सर्वभक्षाः भक्ष्याभक्ष्यविचारशून्याः वृत्त्यैदेहादिपोषणायधृतानिविद्यातपोव्रतानियैःवित्तादिष्वेवारामोरतिर्येषांते याचकाःसंतोविचरंत्विवितिचशापचतुष्टयं ॥ ॥ प्रत्यसृजत्प्रत्यदात् शापरूपंब्रह्मदंडं ॥ २७ ॥ सच्छास्त्रस्यपरिपंथिनःप्रतिकूलाः ॥२८ ॥ सुरागौडीपैष्टीमाध्वीच आसवस्तालादिसंभवंमद्यं द्वंद्वैक्यात् षंढत्वं तद्यत्रदैवंपूज्यंदेवतावदादरणीयमितिवा ॥ २९ ॥

ब्रह्मवेदम् कथंभूतम् सेतुंमर्यादारूपम् तदेवाह पुंसांवर्णाश्रमाचारवतांविधारणंधारकम् ॥ ३० ॥ सेतुत्वंप्रपंचयतिद्वाभ्याम् एषःवेदलक्षण एवशिवःपंथाः यंपूर्वेऋषयः अनुसंतस्थुःआश्रितवंतः यद्यस्मिन्जनार्दनः प्रमाणंमूलं ॥ ३१ ॥ भूतराट् भूतानांतामसानांपतिः ॥३२॥ अन्योऽन्यशापेनउभयोर्नाशाद्विमनाइति तथाऽपिभगवदनुगृहीतानांनाशोनस्यादितिहेतोर्विमनाइवेतिभावः ॥ ३३ ॥ ऋषभःसर्वश्रेष्ठः हरिर्यत्रइज्यःपूज्यःतत्सत्रंसम्यग्विधाय हेमहेष्वासविदुर ॥ ३४ ॥ यत्रप्रयागेऽन्वितातत्रावभृथस्नानंकृत्वाततःस्थानाद्ययुः ॥ ३५ ॥

ब्रह्मचब्राह्मणांश्चैवयद्यूयंपरिनिंदथ ॥ सेतुंविधारणंपुंसामतःपाखंडमाश्रिताः ॥३०॥ एषएवहिलोकानां शिवःपंथाःसनातनः ॥ यंपूर्वेचानुसंतस्थुर्यत्प्रमाणंजनार्दनः ॥ ३१ ॥ तद्ब्रह्मपरमंशुद्धंसतांवर्त्मसनातनम् ॥ विगर्ह्ययातपाखंडंदैवंवोयत्रभूतराट् ॥ ३२ ॥ मैत्रेयउवाच तस्यैवंददतःशापंभृगोःसभगवान् भवः ॥ निश्चक्रामततःकिंचिद्विमनाइवसानुगः ३३ ॥ तेपिविश्वसृजः सत्रंसहस्रपरिवत्सरान् ॥ संविधाय महेष्वासयत्रेज्यऋषभोहरिः ॥३४॥ आप्लुत्यावभृथंयत्रगंगायमुनयान्विता॥ विरजेनात्मनासर्वेस्वंस्वंधा मययुस्ततः ॥ ३५ ॥ इतिश्रीभा॰चतुर्थस्कंधेदक्षशापोनामद्वितीयोऽध्यायः ॥ २ ॥ ॥छ॥ ॥छ॥

मैत्रेयउवाच सदाविद्विषतोरेवंकालोवैध्रियमाणयोः ॥ जामातुःश्वशुरस्यापिसुमहानतिचक्रमे ॥ १ ॥ यदाभिषिक्तोदक्षस्तुब्रह्मणापरमेष्ठिना ॥ प्रजापतीनांसर्वेषामाधिपत्येस्मयोऽभवत् ॥२॥ इष्ट्वासवाजपेये नब्रह्मिष्ठानभिभूयच ॥ बृहस्पतिसवंनामसमारेभेक्रतूत्तमम् ॥ ३॥

इतिचतुर्थेटीकायांद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ तृतीयेतुसतीतातयज्ञोत्सवदिदृक्षया ॥ गमिष्यंतीमहेशेनवारितानीतिहेतु भिः ॥ १ ॥ ध्रियमाणयोःअवतिष्ठमानयोः धृङ्अवस्थानइत्यस्मात् ॥ १ ॥ रुद्रविहीनोयज्ञोनास्त्येव तथाऽपिदक्षस्यरुद्रपरित्यागोद्वेषा त्गर्वाच्च तत्रद्वेषेहेतुरुक्तः गर्वेहेतुमाह यदातुप्रजापतीनामाधिपत्येऽभिषिक्तः तदातस्यस्मयोगर्वोऽभवत् ॥२॥ गर्वादेवब्रह्मिष्ठान्सेश्वरानभि भूयतिरस्कृत्य वाजपेयेनेष्ट्वाबृहस्पतिसवेनयजेतेतिश्रुतेः वाजपेयेनेष्ट्वांसमारेभे ॥ ३ ॥

कृतस्वस्त्ययनाः कृतमंगलाः सभर्तृकाइतिदक्षिणादिभिःप्रथममर्हितानामपिपत्न्यर्हणेपुनरर्हणमुक्तम् ॥ ४ ॥ तत्तदा खेचराणांप्रजल्पतां सतांपितृयज्ञमहोत्सवंश्रुत्वा ॥ ५ ॥ तत्रव्रजतीः उपदेवानांगंधर्वादीनांवरस्त्रियश्च स्वस्यनिलयस्याभ्याशेसमीपेदृष्ट्वाऔत्सुक्यात् पतिम भ्यभाषतेतित्रयाणामन्वयः कथंभूताःस्त्रियोदृष्ट्वा विमानानियानानियासांताः प्रेष्ठैःसहिताःनिष्कानिपदकानिकंठेषुयासां शोभमानानिवा सांसियासां ॥ ६ ॥ लोलानिचंचलान्यक्षीणियासां मृष्टानिउज्ज्वलानिकुंडलानियासांताः ॥ ७ ॥ निर्यापितःप्रवर्तितः हेवामशिव तेय द्यर्थिताइच्छार्तार्हिवयंचतत्राभिसरामगच्छामः नचाद्यापियागोनिवृत्तःयतोऽमीविबुधाव्रजंति ॥ ८ ॥ औत्सुक्यंप्रकटयंत्याह तस्मिन्निति

तस्मिन्ब्रह्मर्षयःसर्वेदेवर्षिपितृदेवताः॥ आसन्कृतस्वस्त्ययनास्तत्पत्न्यश्चसभर्तृकाः ॥४॥ तदुपश्रुत्यनभसि खेचराणांप्रजल्पताम् ॥ सतीदाक्षायणीदेवीपितुर्यज्ञमहोत्सवम् ॥५॥ व्रजतीःसर्वतोदिग्भ्यउपदेववरस्त्रियः ॥ विमानयानाःसप्रेष्ठानिष्ककंठीःसुवाससः ॥ ६ ॥दृष्ट्वास्वनिलयाभ्याशेलोलाक्षीर्मृष्टकुंडलाः ॥ पतिंभूतपतिंदेवमौत्सुक्यादभ्यभाषत ॥ ७ ॥ सत्युवाच प्रजापतेस्तेश्वशुरस्यसांप्रतंनिर्यापितोयज्ञमहोत्सवः किल ॥ वयंचतत्राभिसरामवामतेयद्यर्थिताऽमीविबुधाव्रजंतिहि ॥ ८ ॥ तस्मिन्भगिन्योममभर्तृभिःस्वकैर्ध्रुवंगमिष्यंतिसुहृद्दिदृक्षवः ॥ अहंचतस्मिन्भवताऽभिकामयेसहोपनीतंपरिबर्हमर्हितुम् ॥९॥ तत्रस्वसॄर्मेननुभर्तृसंमितामातृष्वसॄःक्लिन्नधियंचमातरं ॥ द्रक्ष्येचिरोत्कंठमनामहर्षिभिरुन्नीयमानंचमृडाध्वरध्वजं ॥१०॥ त्वय्येतदाश्चर्यमजात्ममाययाविनिर्मितंभातिगुणत्रयात्मकं ॥ तथाऽप्यहंयोषिदतत्त्वविच्चतेदीनादिदृक्षेभव मेभवक्षितिम् ॥ ११ ॥

षड्भिः पितृभ्यामुपनीतंदत्तंपरिबर्हमलंकारादिद्रव्यंभवतासहार्हितुंस्वीकर्तुमभि कामये अर्हितमितिपाठेसत्कृतंपरिबर्हमिच्छामीति ॥ ९ ॥ स्वसॄःभगिनीः भर्तृभिःसंमिताःसदृशीः क्लिन्नधियंस्नेहार्द्रचित्तां चिरमुत्कंठमुत्सुकंमनोयस्याःसाहंद्रक्ष्यामि हेमृड उन्नीयमानंप्रवर्त्यमानं अध्वरेध्वजमिवदृश्यंश्रेष्ठमध्वरं यद्वा उत्क्षिप्यमाणंयज्ञेकेतुंयूपंवा ॥१०॥ अहोकिं तत्राश्चर्यंयेनतवैतदौत्सुक्यमितिचेदतआह हेअज एतद्विश्वमाश्चर्यरूपंत्वय्येवत्वन्माययारचितंविभाति अतोयद्यपितवनाश्चर्यबुद्धिस्तथाऽप्यहं योषिदुत्सुकस्वभावातवतत्त्वंनजानामि अतोदीनाकृपणासती हेभव मेभवक्षितिंजन्मभूमिं दिदृक्षेद्रष्टुमिच्छामि ॥ ११ ॥

दिदृक्षामेवकैमुत्यन्यायेनव्यनक्ति पश्येतिद्वाभ्यां हेअभवेति सुहृद्वियोगदुःखंत्वयानास्वादितमितिभावः अन्यायोषितः संबंधरहिताअ पिप्रयांतीःपश्यकांतसखाभर्तृसहिताः वरूथशःसंघशः कथंभूताः यासांविमानैर्नभोमंडितंताः हेशितिकंठनीलकंठ इतिपरानुग्रहायत्व याविषमापिभक्षितामितिसूचयति ॥ १२॥ तदाहेसुरश्रेष्ठ पितृगेहोत्सवंनिशम्यसुतायादेहःकथंनेंगतेद्रष्टुंनप्रचलति तथाऽप्यनाहुताःसंतःकथं गच्छामस्तत्राह सौहृदंकेतनंमित्रगृहंतथाभर्त्रादीनांचगृहमनाहुताअप्याभियंतिसंतः ऽहस्वत्वमार्ष ॥ १३॥ हेअमर्त्यतत्तस्मात्प्रसीदइदंमेवा च्छितंकर्तुंभवानर्हति कारुणिकत्वमेवाह अदभ्रचक्षुषाअनल्पज्ञानेनापित्वयाआत्मनोदेहस्यार्धेऽहंनिरूपिताधृता यतोऽर्धनारीश्वरइति

पश्यप्रयांतीरभवान्ययोषितोऽप्यलंकृताःकांतसखावरूथशः ॥ यासांव्रजद्भिःशितिकंठमंडितंनभोविमा नैःकलहंसपांडुभिः ॥ १२ ॥कथंसुतायाःपितृगेहकौतुकंनिशम्यदेहःसुरवर्यनेंगते॥ अनाहुताअप्यभियंति सौहृदंभर्तुर्गुरोर्देहकृतश्चकेतनं ॥ १३ ॥ तन्मेप्रसीदेदममर्त्यवांछितंकर्तुंभवान्कारुणिकोबतार्हति॥ त्वयात्म नोऽर्धेऽहमदभ्रचक्षुषानिरूपितामाऽनुगृहाणयाचितः॥ १४ ॥ ऋषिरुवाच एवंगिरित्रःप्रिययाऽभि भाषितः प्रत्यभ्यधत्तप्रहसन्सुहृत्प्रियः॥संस्मारितोमर्मभिदःकुवागिषून्यानाहकोविश्वसृजांसमक्षतः॥ १५॥ श्रीभगवानुवाच त्वयोदितंशोभनमेवशोभनेअनाहुताअप्यभियंतिबंधुषु ॥ तेयद्यनुत्पादितदोषदृष्टयोबली यसाऽनात्म्यमदेनमन्युना ॥ १६ ॥ विद्यातपोवित्तवपुर्वयःकुलैःसतांगुणैःषड्भिरसत्तमेतरैः॥ स्मृतौहतायां भृतमानदुर्दृशस्तब्धानपश्यंतिहिधामभूयसां ॥१७॥

ख्यातोऽसिअतोमामनुगृहाण याचितःसन्॥ १४ ॥ अभिभाषितोयाचितःकःदक्षःयानाह मर्मभिदंतियेतान्कुवागिषून्दुरुक्तिबाणान्संस्मारि तःसन् ॥ १५ ॥ अनाहुताअपीतित्वयायदुदितमुक्तंतच्छोभनमेव किंतुअनात्म्यंदेहादावहंकारः तत्कृतेनमदेनमन्युनाचतेबंधवोयद्यनुत्पा दितदोषदृष्टयोभवंतितर्हिनउत्पादिताआरोपितादोषदृष्टिर्येषांते ॥ १६ ॥ ननुविद्यादिगुणदुक्तोदक्षस्त्वादृशेषुमहत्सुकथंदोषदृष्टिर्भवेत्तत्रा ह विद्यादिभिरेवस्मृतौहतायांविवेकज्ञानेनष्टेसति भूयसांमहत्तमानांधामतेजोनपश्यंतिहि ननुगुणैः कथंविवेकनाशस्तत्राह सतांगुणैः विवेकहेतुभिरपिअसत्तमानामितरैःदोषभूतैःअतएवतैर्भृतःधृतःपुष्टोवाअहंविद्वान्तापसइत्यादिनामानोगर्वस्तेनदुष्टादृष्टिर्येषांते ॥ १७ ॥

स्वजनव्यपक्षयाबधुदृष्टयागृहान्नप्रतीयान्नावलोकयेत् अनवस्थितचित्तत्वमेवाह येवक्रधियाकुटिलयाबुध्यापश्यंति आरोपिताउत्तंभिताभ्रूर्येषुतान्यारोपितभ्रूणितैः आरोपिताभिर्भ्रूभिरितिवा अमर्षणैःसक्रोधैरक्षिभिः ॥ १८ ॥ ननुस्वजनानांगृहंसुहृद्भिर्गंतव्यंतेषांदुश्चेष्टितंचसोढव्यंनतस्यदुःसहत्वादित्याह तथेति अरिभिःशिलीमुखैर्बाणैरर्दितांगःखंडितगात्रोऽपितथानव्यथते यतःशेतेस्वपिति स्वानांदुरुक्तिभिर्मर्मसुताडितोयथादूयताव्यथ्यमानेनहृदादिवानिशंतप्याति ॥ १९ ॥ मयितत्रगतायांनैयंशंकेतिचेत्तत्राह व्यक्तंनिश्चितं उत्कृष्टागतिःस्थितिर्यस्यतस्यात्मजानांकन्यानांमध्येत्वंप्रियोतिमेसंमताऽसि पितुःसकाशान्मानंनलप्स्यसे मदाश्रयान्मत्संबंधात् ॥ २० ॥

नैतादृशानांस्वजनव्यपेक्षयागृहान्प्रतीयादनवस्थितात्मनां ॥ येऽभ्यागतान्वक्रधियाऽभिचक्षतेआरोपितभ्रूभिरमर्षणाक्षिभिः ॥ १८ ॥ तथाऽरिभिर्नव्यथतेशिलीमुखैःशेतेर्दितांगोहृदयेनदूयता ॥ स्वानांयथावक्रधियांदुरुक्तिभिर्दिवानिशंतप्यतिमर्मताडितः ॥ १९ ॥ व्यक्तंत्वमुत्कृष्टगतेःप्रजापतेःप्रियात्मजानामसि सुभ्रुसंमता ॥ अथापिमानंनपितुःप्रपत्स्यसेमदाश्रयात्कःपरितप्यतेयतः ॥ २० ॥ पापच्यमानेनहृदातुरेंद्रियःसमृद्धिभिःपूरुषबुद्धिसाक्षिणाम् ॥ अकल्पएषामधिरोढुमंजसापदंपरंद्वेष्टियथाऽसुराहरिं ॥ २१ ॥ प्रत्युद्गमप्रश्रयणाभिवादनंविधीयतेसाधुमिथःसुमध्यमे ॥ प्राज्ञैःपरस्मैपुरुषायचेतसागुहाशयायैवनदेहमानिने ॥ २२ ॥

ननुभगवन्त्वयाकिमितिदक्षास्तिरस्कृतः यतोऽसौत्वांद्वेष्टिअतआह पापच्यमानेनअलंदह्यमानेनत्हृदामनसादुःखितेंद्रियः काभिः पुरुषोजीवः तस्यबुद्धिश्चित्तं तत्साक्षिणांनिरहंकाराणामित्यर्थः समृद्धिभिः पुण्यकीर्त्यादिभिः एषांपदंस्थानमैश्वर्यंप्राप्तुमकल्पःअशक्तःसन्परंद्वेष्टि असुरायथाहरिंकेवलंद्विषंति ॥ २१ ॥ ननुत्वयाप्रत्युत्थानविनयाद्यकरणादवज्ञातएवासौतत्राह हेसुमध्यमे प्रत्युद्गमादिकंमिथोजनैर्यद्विधीयतेतत्प्राज्ञैः साधुविधीयते साधुत्वमेवाह परस्मैश्रीवासुदेवाय गुहाशयाय अंतर्यामिणएव तच्चचेतसैवपारिपूर्णेतस्मिन् कायिकव्यापारायोगात् अतोऽतर्यामिदृष्टचामनसासर्वंकृतमितिभावः ॥ २२ ॥

किंच नकेवलमभ्यागतेष्वेववासुदेवदृष्ट्यानमनंक्रियते किंतु नित्यमेवमनसिवासुदेवश्चिंत्यतइत्याह विशुद्धंसत्त्वमंतः करणंसत्त्वगुणोवाव सुदेवशब्दितंवसुदेवशब्देनोक्तम् कुतः यस्मात्तत्रसत्त्वेपुमान्वासुदेवईयतेप्रकाशते अपगतमावृतमावरणंयस्मात्सः अयमर्थः वसुदेवेभगव तिप्रतीयतइतिहिवासुदेवःपरमेश्वरः प्रसिद्धःसचविशुद्धेसत्त्वेप्रतीयते अतःप्रत्ययार्थेनप्रसिद्धेनप्रकृत्यर्थोनिर्धार्यते ततश्चवासयतिदेवमिति व्युत्पत्त्यावसत्यस्मिन्निति वासुःदेवःदीव्यतेद्योततइतिवा वसुभिःपुण्यैर्दीव्यतेप्रकाशतइतिवा वसुदेवशब्दवाच्यंशुद्धंसत्त्वं ततःकिमतआह सत्त्वेचतस्मिन्मैमयानमसानमस्कारेणानुविधीयतेसेव्यतइत्यर्थः मनसेतिपाठेमनसाविशेषेणविधीयतेचिंत्यतइत्यर्थः यतःअधोभूतेषुप्र

सत्त्वंविशुद्धंवसुदेवशब्दितंयदीयतेतत्रपुमानपावृतः ॥ सत्त्वेचतस्मिन्भगवान्वासुदेवोह्यधोऽक्षजोमेन मसाविधीयते ॥ २३ ॥ तत्तेनिरीक्ष्योनपिताऽपिदेहकृद्दक्षोममद्विट्तदनुव्रताश्चये ॥ योविश्वसृग्यज्ञगतंवरो रुमामनागसंदुर्वचसाऽकरोत्तिरः ॥२४॥ यदिव्रजिष्यस्यतिहायमद्वचोभद्रंभवत्यानततोभविष्यति॥संभा वितस्यस्वजनात्पराभवोयदाससद्योमरणायकल्पते ॥ २५ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेउमारु द्रसंवादेतृतीयोऽध्यायः ॥ ३ ॥ ॥छ॥ मैत्रेयउवाच एतावदुक्त्वाविररामशंकरःपत्न्यंगनाशंह्युभय त्रचिंतयन् ॥ सुहृद्दिदृक्षुःपरिशंकिताभवान्निष्क्रामतीनिर्विशतीद्विधाससा ॥ १ ॥ सुहृद्दिदृक्षाप्रतिघातदुर्म नाःस्नेहाद्रुदत्यश्रुकलाऽतिविह्वला ॥ भवंभवान्यप्रतिपूरुषंरुषाप्रधक्ष्यतीवैक्षतजातवेपथुः ॥ २ ॥

त्यावृतेष्वक्षेषुजायतेप्रकाशते इंद्रियागोचरइत्यर्थः ॥ २३ ॥ तत्तस्मात्त्वयाननिरीक्ष्यः देहकृदपीतिपोषकत्वादिभिरौपचारिकापितृत्वव्या वृत्यर्थं द्विट्शत्रुः तदेवाह हेवरोरु योदक्षः विश्वसृजांयज्ञगतंमांनिरपराधंतिरोकरोत्तिरस्कृतवान् ॥ २४ ॥ विपक्षेदोषमाह यदीति मद्व चोऽतिहायअतिक्रम्य यतः संभावितस्यसुप्रतिष्ठितस्ययदापराभवोभवतितदासपराभवःमरणायकल्पते ॥ २५ ॥ इतिचतुर्थेटीकायांतृ तीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ चतुर्थेतुपतिंहित्वागतापित्राऽवमानिता ॥ रुषानिर्भर्त्स्यतंयज्ञेजहौदेहमितीर्यते ॥ १ ॥ उभयत्रा नुज्ञानेबलान्निवारणेच सुहृद्दिदृक्षुः निष्क्रामतीभवात्परिशंकितापुनर्निर्विशतीचतदासासतीद्विधाआसबभूव नगतानचस्थिताआंदोलावद्व तिरभवत् ॥ १ ॥ सुहृदांदिदृक्षायाःप्रतिघातेनदुर्मनाःअश्रूणांकलाभिःलेशैरतिविह्वलाव्याकुला अप्रतिपूरुषंस्वसमानपुरुषांतररहितम् प्रधक्ष्यतीवभस्मीकरिष्यतीव रुषाजातोवेपथुःकंपोयस्याः ॥ २ ॥

ततस्तंविहायपित्रोर्गृहानगात् कथंभूतं यःप्रीत्यातस्यैआत्मनोदेहस्यार्धमदात् त्यागेहेतुः स्त्रैणंस्त्रीस्वभावः तेनविमूढाधीर्यस्याः ॥ ३ ॥
द्रुतविक्रमांशीघ्रंगच्छंतीं सहपार्षदैः यक्षैर्वर्तमानाः मणिमन्मदश्चादिर्येषांते पुरः पुरतोवृषेंद्रोयेषांते गतव्यथानिर्भयाः रुद्रातिक्रमेणत
स्यागमनादागतव्यथाइतिवा ॥ ४ ॥ तांवृषेंद्रमारोप्यसारिकादिभिः क्रीडोपकरणैः श्वेतातपत्रादिभिश्चमहाराजविभूतिभिः सह विटंकि
ताः शोभिताययुः सारिकापठननिरूपितापक्षिणी गीतायनैर्गीताश्रयैः ॥ ५ ॥ आसमंताद्योवेदघोषस्तेनोर्जितंशोभमानंयज्ञसंबंधिपशु
विशसनंयस्मिन् यद्वा तेनोर्जितमतिशयितंयज्ञवैशसंपरस्परस्पर्धायस्मिन् तद्यजनंयज्ञस्थानंसमाविशद्देवी त्रिबुधैश्चजुष्टं मृदादिभिर्निसृ

ततोविनिःश्वस्यसतीविहायतंशोकेनरोषेणचदूयताहृदा ॥ पित्रोरगात्स्त्रैणविमूढधीर्गृहान्प्रेम्णात्मनोयोऽर्ध
मदात्सतांप्रियः ॥ ३ ॥ तामन्वगच्छन्द्रुतविक्रमांसतीमेकांत्रिनेत्रानुचराः सहस्रशः ॥ सपार्षदयक्षामणिम
न्मदादयःपुरोवृषेंद्रास्तरसागतव्यथाः ॥ ४ ॥ तांसारिकाकंदुकदर्पणांबुजश्वेतातपत्रव्यजनस्रगादिभिः ॥
गीतायनैर्दुंदुभिशंखवेणुभिर्वृषेंद्रमारोप्यविटंकितायुः ॥ ५ ॥ आब्रह्मघोषोर्जितयज्ञवैशसंविप्रर्षिजुष्टंवि
बुधैश्चसर्वशः ॥ मृद्दार्वयःकांचनदर्भचर्मभिर्निसृष्टभांडंयजनंसमाविशत् ॥ ६ ॥ तामागतांतत्रनकश्चना
द्रियद्विमानितांयज्ञकृतोभयाज्जनः ॥ ऋतेस्वसॄर्वैजननींचसादराःप्रेमाश्रुकंठ्यःपरिषस्वजुर्मुदा ॥ ७ ॥ सो
दर्यसंप्रश्नसमर्थवार्तयामात्राचमातृष्वसृभिश्चसादरं ॥ दत्तांसपर्यांवरमासनंचसानादत्तपित्राऽप्रतिनंदितास
ती ॥ ८ ॥ अरुद्रभागंतमवेक्ष्यचाध्वरंपित्राचदेवेकृतहेलनंविभौ ॥ अनादृतायज्ञसदस्यधीश्वरीचुकोपलोका
निवधक्ष्यतीरुषा ॥ ९ ॥

ष्टानिनिर्मितानिभांडानिपात्राणियस्मिन् ॥ ६ ॥ कश्चननाद्रियत् नाद्द
तवान् यज्ञकृतोदक्षात्यद्भयंतस्मात् तत्रहेतुः तेनविमानितां स्वसॄर्जननींचऋतेविना तास्तुसादराःपरिषस्वजुःआलिंगितवत्यः प्रेमाश्रुभिर्निरु
द्धःकंठोयासां ॥ ७ ॥ अप्रतिनंदिताअनादृतासतीनादत्तनगृहीतवती कथंसोदर्येणसोदरत्वेनभागिनीनांयःसंप्रश्नः तत्रसमर्थायोग्याया
वार्ता तयासहतांच नादत्तनाशृणोदित्यर्थः ॥ ८ ॥ नविद्यतेरुद्रस्यभागोयस्मिंस्तं देवेरुद्रेकृतंहेलनमवज्ञांआह्वानाद्यकरणात् ॥ ९ ॥

जगर्हनिंदितवती अमर्षेणकोपेनाविपन्नाअव्यक्ततया शिवंद्वेष्टिइतिशिवद्विट्तं धूमपथःकर्ममार्गस्तत्रश्रमोऽभ्यासस्तेनस्मयोगर्वोयस्य दक्षवधायसमुत्थितान् स्वाज्ञयानिगृह्यनिवार्य ॥ १० ॥ निंदामेवाह नयस्येतित्रयोदशभिः मुक्तवैरकेत्यक्तविरोधेतास्मिन्शिवे भवंतमृते विनाकतमःप्रतीपयेत्प्रतिकूलमाचरेत् वैराभावेहेतवः यस्यलोकेअतिशायनःआतिशायितोनास्ति तथाप्रियश्चाप्रियश्चनास्ति समासपाठेआति शयेनप्रियोनास्ति देहभृतांप्रियोऽयमात्मातस्यसमस्तस्यात्मानिकारणभूतेसमस्तरूपइतिवा ॥ ११ ॥ तस्यचप्रतिकूलकरणंद्वेधा म हत्तमद्रोहेणसाक्षात्तद्द्रोहेणच तत्रपुरुषाणांचातुर्विध्यंवदंतीमहत्तमद्रोहमाह दोषानितिद्वाभ्यां हेद्विजेत्याधिक्षेपः भवादृशाःत्वद्विधाः

जगर्हसाऽमर्षविपन्नयागिराशिवद्विषंधूमपथश्रमस्मयं ॥ स्वतेजसाभूतगणान्समुत्थितान्निगृह्यदेवीजग तोऽभिशृण्वतः ॥१०॥ श्रीदेव्युवाच नयस्यलोकेऽस्त्यतिशायनःप्रियस्तथाऽप्रियोदेहभृतांप्रियात्मनः॥ तस्मिन्समस्तात्मनिमुक्तवैरकेऋतेभवंतंकतमःप्रतीपयेत् ॥ ११ ॥ दोषान्परेषांहिगुणेष्वसाधवोगृह्णंतिके चिन्नभवादृशाद्विज ॥ गुणांश्चफल्गून्बहुलीकरिष्णवोमहत्तमास्तेष्वविदद्भवानघं ॥ १२ ॥ नाश्चर्यमेतद्यद सत्सुसर्वदामहद्विनिंदाकुणपात्मवादिषु ॥ सेर्ष्यंमहापूरुषपादपांसुभिर्निरस्ततेजःसुतदेवशोभनं ॥१३॥

असूयकाःपरेषांगुणेषुदोषानेवगृण्हंतिनतुगुणान् केचिन्मध्यस्थागुणेषुदोषान्नगृण्हंति किंतुयथास्थितान्गुणदोषान्विवेकेनगृण्हंतितेतुमहांत उच्यंते साधवस्तुकेवलंगुणानेवगृण्हंतिनदोषान् तेतुमहत्तराउच्यंते महत्तमास्तुदोषान्नगृण्हंत्येव तेचप्रत्युतफल्गून्तुच्छानपिगुणान्बहुली कुर्वंतिइतिकरिष्णवोभवंतितेषुभवान् अघमविदत्नाविदितवान् कल्पितवानित्यर्थः तच्चब्रह्मिष्ठानभिभूयकल्पितवानित्यनेनसूचितं ॥ ॥ १२ ॥ एतच्चदुर्जनेषुयुक्तमेवेत्याह नेति कुणपंजडंशरीरंतदेवआत्मेतिवदंतियेतेषु ईर्ष्यांअक्षांतिः सेर्ष्यंयथाभवत्येवंमहतांविनिंदेति यत् एतदाश्चर्यंनभवति सेर्ष्यंनिरस्तंतेजःप्रभावोयेषामितिवा यद्यपिमहापुरुषाःस्वनिंदांसहंतेतथाऽपितत्पादरेणवस्तदसहमानाः तेषांतेजो निरस्यंति अतोऽशक्तेषुमहन्निंदनमेवोचितमित्यर्थः ॥ १३ ॥

तदेवंमहत्तमद्रोहमुक्त्वातस्मिन्नेवकृतंद्रोहमाहयदितिद्वाभ्यां यद्यस्यद्व्यक्षरमात्रंशिवइतितत्प्रसिद्धंनामनृणांसर्वेषामाशुअघंसर्वंहंति केवलंगि
रैवेरितमुच्चारितंनतुमनःपूर्वकं तत्तुसकृदपिप्रसंगादपि तंशिवंद्वेष्टि नलंध्यंशासनमाज्ञायस्य अहोशिवेतरः अमंगलरूपः ॥ १४ ॥ पापह
रत्वमुक्त्वाभुक्तिमुक्तिप्रदत्वेनशिवंवर्णयंस्राह यस्यपादपद्मंमनांस्येवालयस्तैः ब्रह्मरसोब्रह्मानंदःसएवासवोमकरंदःतदर्थिभिः यच्चार्थिनः
सकामस्य ताअशिषोवर्षति ॥ १५ ॥ यदुक्तंशिवापदेशोह्याशिवइतियच्चोक्तंप्रेतावासेष्वित्यादितदाक्षिपंत्याह किंवेति योजटाअवकीर्य
श्मशानेअवसत्‌वसतिस्म तस्यश्मशानमाल्यानिभस्मानिनृकपालानिचभूषणत्वेनसंतियस्यतं त्वत्तोऽन्येनविदुः किंतेविदंत्येवेतिचेत्‌न

यद्व्यक्षरंनामगिरेरितंनृणांसकृत्प्रसंगादघमाशुहंतितत्॥पवित्रकीर्तितमलंघ्यशासनंभवानहोद्वेष्टिशिवंशि
वेतरः॥१४ ॥यत्पादपद्मंमहतांमनोऽलिभिर्निषेवितंब्रह्मरसासवार्थिभिः॥लोकस्ययद्वर्षतिचाशिषोऽर्थिनस्त
स्मैभवान्द्रुह्यतिविश्वबंधवे ॥ १५ ॥ किंवाशिवाख्यमशिवंनविदुस्त्वदन्येब्रह्मादयस्तमवकीर्यजटाःश्मशा
ने ॥ तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्येमूर्द्धभिर्दधातितच्चरणावसृष्टम् ॥ १६ ॥ कर्णौपिधायनिरया
द्यदकल्पईशेधर्मावितर्यसृणिभिर्नृभिरस्यमाने ॥ छिंद्यात्प्रसह्यरुशतीमसतींप्रभुश्चेज्जिव्हामसूनपिततोवि
सृजेत्सधर्मः ॥ १७ ॥ अतस्तवोत्पन्नमिदंकलेवरंनधारयिष्येशितिकंठगर्हिणः ॥ जग्धस्यमोहाद्धिविशु
द्धिमंधसोजुगुप्सितस्योद्धरणंप्रचक्षते ॥ १८ ॥

तथासतितेषांतद्दास्यानुपपत्तेरित्याह तच्चरणादवसृष्टंगलितंनिर्माल्यंमूर्धभिर्धारयंति ॥ १६ ॥ इदानींदेहंत्यक्तुकामाधर्मतत्त्वमाह कर्णावा
च्छाद्यनिर्गच्छेत् यद्यदिमर्तुंमारयितुंवाकल्पोनभवति कदा धर्मावितरिधर्मरक्षकेईशेस्वामिनि असृणिभिर्निरंकुशैर्नृभिरस्यमानेऽधिक्षि
प्यमाणे प्रभुःशक्तश्चेत् रुशतीमकल्याणवादिनींप्रसह्यबलाच्छिंद्यात् ततोऽपिस्वयंप्राणान्विसृजेदितियत्सधर्मः ॥ १७ ॥ तवत्वत्तःउत्प
न्नम् शितिकंठोनीलकंठः तान्निंदकात् प्रमादादापन्नस्यापवित्रस्यत्यागंविनानशुद्धिरितिदृष्टांतेनाह जग्धस्यभाक्षितस्यान्नस्योद्धरणंवमतमेव
पुंसःविशुद्धिंप्रचक्षते ॥१८ ॥

यदुक्तंलुप्तक्रियायाशुचयइतितत्प्रत्याह नेति वेदवादान् विधिनिषेधरूपान् स्वएवलोकेस्वात्मन्येवरममाणस्यमहतोमुनेः सम्यग्विरक्तस्य मतिर्नानुवर्तते निवृत्ताधिकारत्वात् अधिकारभेदेदृष्टांतः यथादेवानांगतिराकाशएवमनुष्याणांपृथिव्यामेव अतः स्वएवधर्मेप्रवृत्तिलक्ष णेनिवृत्तिलक्षणेवास्थितःसन् परमन्यधर्मपुरुषंवानक्षिपेन्ननिंदेत व्यवस्थिताधिकारत्वेनोभयोः सत्यत्वात्नक्षिपेदेवेतिवान्वयः ॥१९॥ एत देवोपपादयंत्याह प्रवृत्तमग्निहोत्रादिनिवृत्तंशमदमादि ऋतंसत्यमेव यतः वेदेआश्रितंविहितं तच्चविविच्यव्यवस्थयाश्रितंनत्वविशेषेण, व्य वस्थामेवाह उभयंरागवैराग्यलक्षणंलिंगंचिह्नमधिकारिविशेषणंयस्मिन्तत् ननुयावज्जीवमग्निहोत्रंजुहोतिशांतोदांतइत्यादिषुनैवंव्यवस्था प्रतीयते सत्यं तथाऽप्युभयोरेकाधिकारविरोधात्तथापर्यवस्यतीत्याह युगपद्भावोयौगपद्यं यौगपदेनैकस्मिन्कर्तरितत्कर्मद्वयं विरो

नवेदवादाननुवर्त्ततेमतिःस्वएवलोकेरमतोमहामुनेः ॥ यथागतिर्देवमनुष्ययोःपृथक्स्वएवधर्मेनपरंक्षिपे त्स्थितः ॥१९॥ कर्मप्रवृत्तंचनिवृत्तमप्यृतंवेदेविविच्योभयलिंगमाश्रितं ॥ विरोधितद्यौगपदैककर्तरिद्वयंत थाब्रह्मणिकर्मनर्च्छति ॥२०॥ मावःपदव्यःपितरस्मदास्थितायायज्ञशालासुनधूमवर्त्मभिः॥तदन्नतृप्तैरसु भृद्भिरीडिताअव्यक्तलिंगाअवधूतसेविताः ॥२१॥ नैतेनदेहेनहरेकृतागसोदेहोद्भवेनालमलंकुजन्मना ॥ व्रीडाममाभूत्कुजनप्रसंगतस्तज्जन्मधिग्योमहतामवद्यकृत् ॥ २२ ॥

धि ननुतर्हिनिवृत्तकर्मांशिवेनापिकर्तव्यमेव नेत्याह ब्रह्मणिसदाशिवेकिंचिदपिकर्मनऋच्छतिनप्राप्नोति अतोयथाप्रवृत्तनिवृत्तयोः पर स्परधर्मांकरणेनदोषः तथेश्वरेएतदुभयधर्माकरणेऽपीतिभावः ॥ २० ॥ चिताभस्मकृतस्नानः तथानग्नइत्यादिनायोभोगाद्यभाव उक्त स्तत्राह हेपितःअस्माभिरास्थिताः आश्रिताःपदव्यः अणिमादिसमृद्धयः वोयुष्माकंमा नसंतीत्यर्थः यतोवः पदव्योयज्ञशालास्वे वभवंति ताश्चतदन्नेनयज्ञगतेनान्नेनतृप्तैः केवलमीडिताधूमवर्त्मभिश्चभुज्यंते याअस्मत्पदव्यस्तास्तुनैवंभूताः किंत्वव्यक्तलिंगाःनव्यक्तं लिंगंहेतुर्यासां इच्छामात्रप्रभवत्वात् अवधूतैःब्रह्मविद्भिःसेविताः अतोऽहमाढ्योरुद्रोदरिद्रइतिगर्वमाकृथाइतिभावः ॥ २१ ॥ किं बहुनोक्तेनइमंदेहंत्यक्ष्याम्येवेत्याह द्वाभ्यां एतेननालंनपूर्यतेकिं अपित्वलमेव कथंभूतेन कुजन्मना तदेवाह हरेकृतापराधस्यतवदेहादुद्भू तेनउत्पन्नेन ननुश्लाघ्योऽयंदेहःकथंत्याज्यस्तत्राह कुजनस्यतवप्रसंगतःसंबंधात् ममलज्जाऽभूत् अतोयोमहतामप्रियकर्तातस्मात्यज्ज न्मताद्धिक् त्वत्संबंधादश्लाघ्यमित्यर्थः ॥ २२ ॥

किंच परिहासादिषुविनोदेनापिदाक्षायणीतिसंबोधयन् त्वदीयंत्वत्संबंधवाचकंगोत्रनामयदावृषध्वजआहगृण्हाति तदाहंव्यपेतनर्मस्मितं यथाभवत्येवंसुदुर्मनाअतिदुःखितचित्ताभवामिं तस्माद्विनिश्चितमेतत् कुणपप्रायंव्युत्स्रक्ष्येत्यक्ष्यामि ॥ २३ ॥ दक्षंप्रत्यनुवादंकृत्वाशत्रुह न्क्रोधादिरिपुघातिन् उदीचीमुदीच्यांदिशि पाठांतरेउदङ्मुखीशांतवाक् गृहीतमौनाजलंस्पृष्ट्वाआचम्य दृक्दृशं ॥ २४ ॥ योगमा र्गमेवाह कृत्वेति अनिलौप्राणापानावूर्ध्वाधोवृत्तिकरौनिरोधेनसमानौए ऽरूपौनाभिचक्रेकृत्वा ततउदानमुत्थाप्यधियासहहृदिस्थाप

गोत्रंत्वदीयंभगवान्वृषध्वजोदाक्षायणीत्याहयदासुदुर्मनाः ॥व्यपेतनर्मस्मितमाशुतद्ध्यहंव्युत्स्रक्ष्यएतत् कुणपंत्वदंगजं ॥ २३ ॥ मैत्रेयउवाच इत्यध्वरेदक्षमनूद्यशत्रुहन्क्षितावुदीचींनिषसादशांतवाक् ॥ स्पृष्ट्वाजलंपीतदुकूलसंवृतानिमील्यदृग्योगपथंसमाविशत्॥ २४ ॥ कृत्वासमानावनिलौजितासनासोदा नमुत्थाप्यचनाभिचक्रतः॥शनैर्हृदिस्थाप्यधियोरसिस्थितंकंठाद्भ्रुवोर्मध्यमनिंदिताऽनयत् ॥ २५ ॥ एवंस्व देहंमहतांमहीयसामुहुःसमारोपितमंकमादरात् ॥ जिहासतीदक्षरुषामनस्विनीदधारगात्रेष्वनिलाग्निधा रणां ॥२६ ॥ततःस्वभर्तुश्चरणांबुजासवंजगद्गुरोश्चिंतयतीनचापरं॥ददर्शदेहोहतकल्मषासतीसद्यःप्रजज्वा लसमाधिजाग्निना ॥ २७ ॥ तत्पश्यतांखेभुविचाद्भुतंमहद्धाहेतिवादःसुमहानजायत ॥ हंतप्रियादैवतमस्य देवीजहावसून्केनसतीप्रकोपिता॥ २८ ॥अहोअनात्म्यंमहदस्यपश्यतप्रजापतेर्यस्यचराचरंप्रजाः ॥ जहा वसून्यद्विमतात्मजासतीमनस्विनीमानमभीक्ष्णमर्हति ॥ २९ ॥ सोयंदुर्मर्षहृदयोब्रह्मध्रुक्चलोकेऽपकीर्तिं महतीमवाप्स्यति ॥ यदंगजांस्वांपुरुषद्विडुद्यतांनप्रत्यषेधन्मृतयेऽपराधतः ॥ ३० ॥

यित्वा कंठमार्गेणभ्रुवोर्मध्यमनयत् ॥ २५ ॥ महतांपूज्यतमेनश्रीरुद्रेण ॥ २६ ॥ चरणांबुजेआसवंभजनानंदं भर्तुरपरंनददर्श देहश्चसद्यः प्रज्वलितोऽभूत् समाधिनायोऽग्निस्तेन ॥ २७ ॥ खेभुविचहाहेत्यादिवादः तमेवाह हंतेतिविषादे दैवतमस्यपूज्यतमस्यप्रिया केनदक्षेसप्र कोपितासती ॥ २८ ॥ महदनात्म्यंदौर्जन्यं अस्यसर्वत्रस्नेहएवन्याय्यइत्याहुः यस्येति येनविमताअवज्ञाता ॥ २९ ॥ दुर्मर्षमसह्यसहनं हृदयंयस्य लोकेजनमध्ये चशब्दान्नरकंच यद्यतः स्वीयामंगजांसुतां अपराधतःस्वावज्ञया मृतयेमरणायोद्यतांननिवारितवान् पुरुषद्विट् शिवद्वेषी ॥ ३० ॥

अद्भुतंचदृष्ट्वा ॥ ३१ ॥ यत् यज्ञघ्नान्हंतीतियज्ञघ्नघ्नंतेनापहतंरक्षइत्यादिना ॥ ३२ ॥ अध्वर्युणाभृगुणा येतपसासोमंप्राप्ताःऋभवोनामदे
वाउत्थिताः॥ ३३ ॥ ब्रह्मतेजसा उशद्भिर्देदीप्यमानैः ॥ ३४ ॥ इतिचतुर्थेटीकायांचतुर्थोऽध्यायः ॥४॥ ॥ ॥ पंचमेतुसतीदेहत्यागमा
कर्ण्यशंकरः॥वीरभद्रंरुषोत्पाद्यतेनदक्षमघातयत् ॥ १ ॥ प्रजापतेर्हेतोर्निधनं कुतः तेनासत्कृतायाः तस्याध्वरेऋभवोदेवास्तैः॥१॥ सधूर्ज
टिःरुद्रःघोरःसन् जटामुत्कृत्योत्पाट्योत्थितःसन् तांभुविविससर्ज सुदष्टःओष्ठपुटोयेन तडितांवन्हीनांचसटाज्वालास्तद्वदुग्रंशोचिर्यस्या

वदत्येवंजनेसत्यादृष्ट्वासुत्यागमद्भुतं ॥ दक्षंतत्पार्षदाहंतुमुदतिष्ठन्नुदायुधाः ॥३१॥ तेषामापततांवेगंनिश
म्यभगवान्भृगुः ॥ यज्ञघ्नघ्नेनयजुषादक्षिणाग्नौजुहावह ॥ ३२ ॥ अध्वर्युणाहूयमानेदेवाउत्पेतुरोजसा ॥
ऋभवोनामतपसासोमंप्राप्ताःसहस्रशः ॥ ३३ ॥ तैरलातायुधैःसर्वैःप्रमथाःसहगुह्यकाः ॥हन्यमानादिशो
भेजुरुशद्भिर्ब्रह्मतेजसा ॥३४॥ इतिश्रीभा० महापुराणेचतुर्थस्कंधेसतीदेहोत्सर्गोनामचतुर्थोऽध्यायः ॥४॥
मैत्रेयउवाच भवोभवान्यानिधनंप्रजापतेरसत्कृतायाअवगम्यनारदात् ॥स्वपार्षदसैन्यंचतदध्वरर्भुभि
र्विद्रावितंक्रोधमपारमादधे ॥१॥ क्रुद्धःसुदष्टौष्ठपुटःसधूर्जटिर्जटांतडिद्वन्हिसटोग्ररोचिषं ॥ उत्कृत्यरुद्रःसह
सोत्थितोहसन्गंभीरनादोविससर्जतांभुवि ॥ २ ॥ ततोऽतिकायस्तनुवास्पृशन्दिवंसहस्रबाहुर्घनरुक्त्रिसू
र्यदृक् ॥ करालदंष्ट्रोज्वलदग्निमूर्धजःकपालमालीविविधोद्यतायुधः ॥ ३ ॥ तंकिंकरोमीतिगृणंतमाहबद्धां
जलिंभगवान्भूतनाथः ॥ दक्षंसयज्ञंजहिमद्भटानांत्वमग्रणीरुद्रभटांशकोमे ॥ ४ ॥ आज्ञप्तएवंकुपितेनमन्यु
नासदेवदेवंपरिचक्रमेविभुं ॥ मेनेतदात्मानमसंगरंहसामहीयसांतातसहःसहिष्णुं ॥ ५॥

स्तां ॥ २ ॥ ततोजटायाःसकाशात् अतिकायोवीरभद्रोजातइतिशेषः तनुवातन्वादेहेन दिवंस्पृशन् अत्युच्चइत्यर्थः घनरुक्कृष्णवर्णःत्रयः
सूर्यइवदृशोयस्य करालास्तुंगादंष्ट्रायस्य ज्वलदग्निरिवमूर्धजायस्य कपालमालायुक्तः विविधान्युद्यतान्यायुधानियस्य ॥ ३ ॥ हेरुद्र हे
भटयुद्धकुशल मद्भटानांत्वमग्रणीःसन् सयज्ञंदक्षंजहि ब्रह्मतेजोदुर्जयमितिमामंस्थाःयतस्त्वंमेअंशकः ॥ ४ ॥ मन्युनारुद्रेण परिचक्रमे
प्रदक्षिणीचकार असंगमप्रतिघातंयत्रंहोवेगःतेन भोतात महीयसांबलीयसामपिसहःसहिष्णुंबलंसोढुंक्षमंमेने ॥ ५ ॥

जगदंतकोमृत्युः तस्याप्यंतकंशूलं घोषयंतिशब्दंकर्वतीतिघोषणानिनूपुरादीनिभूषणानिययोस्तावंघ्रीयस्यसः ॥ ६ ॥ ककुभिदिशितमोन भवतिकिंतुरजइतिज्ञात्वाहुः रजएतत्कुतोऽभूत् दध्युः चिंतयामासुः ॥ ७ ॥ हेत्वंतरासंभवेनौत्पातिकंकल्पयंति वाताइति दस्यूनामभावेहेतुः प्राचीनबर्हिस्तदानींतनोराजाजीवतीति नकाल्यंतेनशीघ्रंनीयंते ॥८॥ प्रसूतिर्दक्षपत्नीसामिश्रामुख्यायासां विपाकःफलं पश्यंतीनामिति तस्यादुःखाधिक्येहेतुः अवदध्यौअवज्ञातवान् अनागामनागसं ॥ ९ ॥ नचेदंसुताऽवज्ञामात्रंकिंतुरुद्रावज्ञानंच अतोनास्यभद्रंभाविष्यती

अन्वीयमानःसहरुद्रपार्षदैर्भृशंनदद्भिर्व्यनदत्सुभैरवं ॥ उद्यम्यशूलंजगदंतकांतकंसंप्राद्रवद्घोषणभूषणांघ्रिः ॥६ ॥ अथर्त्विजोयजमानःसदस्याःककुभ्युदीच्यांप्रसमीक्ष्यरेणुं॥ तमःकिमेतत्कुतएतद्रजोऽभूदितिद्विजाद्विजपत्न्यश्चदध्युः ॥ ७॥ वातानवांतिनाहिसंतिदस्यवःप्राचीनबर्हिर्जीवतिहोग्रदंडः॥गावोनकाल्यंतइदंकुतोरजोलोकोऽधुनाकिंप्रलयायकल्पते ॥८॥ प्रसूतिमिश्राःस्त्रियउद्विग्नचित्ताऊचुर्विपाकोवृजिनस्यैषतस्य ॥ यत्पश्यंतीनांदुहितॄणांप्रजेशःसुतांसतीमवदध्यावनागां॥ ९॥ यस्त्वंतकालेव्युप्तजटाकलापःस्वशूलसूच्यर्पितदिग्गजेंद्रः ॥ वितत्यनृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक्॥ १०॥ अमर्षयित्वातमसह्यतेजसंमन्युप्लुतंदुर्विषहंभ्रुकुट्या॥करालदंष्ट्राभिरुदस्तभागणंस्यात्स्वस्तिकिंकोपयतोविधातुः॥११॥ बह्वेवमुद्विग्नदृशोच्यमानेजनेनदक्षस्यमखेमहात्मनः ॥ उत्पेतुरुत्पाततमाःसहस्रशोभयावहादिविभूमौचपर्यक् ॥ १२ ॥

स्याहुः यस्त्विति द्वाभ्यां व्युप्तोविकीर्णोजटाकलापोयस्य स्वशूलस्यसूच्यामग्रेअर्पिताःप्रोताःदिग्गजेंद्रायस्य उदितान्युन्नमितानिअस्त्राणियैस्ते दोषोबाहवएवध्वजास्तान्वितत्यहर्षेणनृत्यति उच्चःअट्टहासः कठोरोहासएवस्तनयित्नुर्गर्जितंतेन भिन्नाविदीर्णादिशोयेनसः ॥ १० ॥ अमर्षयित्वाअसहनयुक्तंकृत्वा मन्युप्लुतंक्रोधव्याप्तं उदस्तःविक्षिप्तोभागणोनक्षत्रसंघोयेन पुनश्चतंकोपयतोविधातुरपिकिंस्वस्तिस्यान्नस्यादेव कान्यस्यकथा ॥ ११ ॥ उद्विग्नाप्रचलितादृक्यस्य तेनजनेनबहुयथाभवत्येवमुच्यमानेसति उत्पाततमाःमहोत्पाताउत्थिताः पर्यक्सर्वतश्च कथंभूताः महात्मनोऽपिदक्षस्यभयावहाः ॥ १२ ॥

नानाआयुधानियेषां वामनकैः=ह्रस्वैः उद्यतायुधैः पिंगैः कपिलैः पिशंगैः पीतैः मकरस्येवोदरमाननंचयेषांतैः परितोधावद्भिः अवरुद्धः ॥
॥ १३ ॥ यज्ञशालायाःपूर्वपश्चिमस्तंभयोः अर्पितंपूर्वपश्चिमायतंकाष्ठंप्राग्वंशःतम् यज्ञशालायाःपश्चिमतःपत्नीशालाताम् यज्ञशाला
याःपुरतःस्थितंसदोमंडपं सदसःपुरोहविर्धानं तस्योत्तरतआग्नीध्रशालां तद्विहारंयजमानगृहं महानसंपाकभोजनशालां ॥ १४ ॥ रु
रुजुःबभंजुः उत्तरवेद्याःमेखलाःसीमासूत्राणि आज्ञागुरूणांह्यविचारणीयाइतिहेतोर्नैतेदोषभाजिनइतिभावः ॥ १५ ॥ प्रत्यासन्नान्प
लायितान् समीपस्थान्पलायितानपिजगृहुः ॥ १६ ॥ १७ ॥ ग्रावभिरर्द्यमानाः नैकधाअनेकधादुद्रुवुः ॥ १८ ॥ स्रुवोहस्तेयस्य भ

तावत्सरुद्रानुचरैर्मखोमहान्नानायुधैर्वामनकैरुदायुधैः ॥ पिंगैःपिशंगैर्मकरोदराननैःपर्याद्रवद्भिर्विदुरान्व
रुध्यत ॥ १३ ॥ केचिद्बभंजुःप्राग्वंशंपत्नीशालांतथापरे ॥ सदअग्नीध्रशालांचतद्विहारंमहानसं ॥१४॥ रु
रुजुर्यज्ञपात्राणितथैकेऽग्नीननाशयन् ॥ कुंडेष्वमूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः ॥ १५ ॥ अबाधंतमुनीनन्य
एकेपत्नीरतर्जयन् ॥ अपरेजगृहुर्देवान्प्रत्यासन्नान्पलायितान् ॥ १६ ॥ भृगुंबबंधमणिमान्वीरभद्रःप्र
जापतिं ॥ चंडीशःपूषणंदेवंभगंनंदीश्वरोऽग्रहीत् ॥ १७ ॥ सर्वएवर्त्विजोदृष्ट्वासदस्याःसदिवौकसः ॥ तैर
र्द्यमानाःसुभृशंग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥ जुह्वतःस्रुवहस्तस्यश्मश्रूणिभगवान्भवः ॥ भृगोर्लुलुंचेसदसियो
ऽहसत्श्मश्रुदर्शयन् ॥ १९ ॥ भगस्यनेत्रेभगवान्पातितस्यरुषाभुवि ॥ उज्जहारसदस्थोऽक्ष्णायःशपंतमसूसु
चत् ॥ २० ॥ पूष्णश्चापातयद्दंतान्कालिंगस्ययथाबलः ॥ शप्यमानेगरिमाणियोऽहसद्दर्शयन्दतः ॥ २१ ॥

वोवीरभद्रः लुलुंचेउत्पाटितवान् ॥ १९ ॥ उज्जहारउद्धृतवान् सदस्थःसभायांस्थितःसन् शपंतंशिवनिंदांकुर्वंतंदक्षमक्ष्णाअक्षिसंकोचे
न असूसुचत् ॥ २० ॥ कलिंगदेशराजस्यानिरुद्धोद्वाहेबलभद्रोयथाद्यूतेदंतान्पातितवान् गरिमणिगुरुतरेरुद्रे निंद्यमाने दतःदंतान् दर्श
यन्योजहास ॥ पूष्णोरितिपाठेद्विवचनमैंद्रापौष्णश्चरुर्भवतीत्यत्रान्यसाहितस्यापिपूष्णोदंतपातप्राप्त्यर्थंसूचितवान् तथाहि पूषाप्रपिष्टभा
गोऽदंतकोहितंदेवाअब्रुवन्निति विहितस्यपेषणस्यद्विदैवत्याभावात् तत्रतस्यदंताःसंतीतिवक्तव्यंस्यात् नचैतत्संगच्छतइत्याशंक्यतत्रापितस्य
दंतपातोअवस्थाभेदेप्रवृत्तेनद्विवचनेनप्राप्यते अतएवपूष्णोऽनुग्रहंद्वेधावक्ष्यति पूषातुयजमानस्यदद्भिर्जक्षतुपिष्टभुक्इति केवलश्चेत्प्रपिष्टभुक्
भविष्यति अन्यसहितश्चेद्यजमानस्यदद्भिर्भक्षयिष्यतीत्यर्थः ॥ २१ ॥

छिंदन्नपीत्यत्रशिरइत्युपरिव्यक्तीभविष्यति त्र्यंबकोवीरभद्रः ॥ २२ ॥ अस्त्रान्वितैर्मंत्रसहितैः अनिर्भिन्नात्वग्यस्य तथाभूतंदृष्ट्वावेतिशेषः ॥ २३ सपशूनांपतिः मखेसंज्ञपनंयोगंकंठनिष्पीडनादिरूपंमारणोपायंदृष्ट्वा तेनोपायेनाहरत् ॥ २४ ॥ अन्येषांब्राह्मणादीनांतद्विपर्ययः असाधुवादःअभूदितिशेषः ॥ २५ ॥ गुह्यकालयंकैलासं ॥ २६ ॥ इतिचतुर्थटीकायांपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ षष्ठेतुदेवसंघेनसहगत्वाभवंविधिः ॥ सांत्वयामासदक्षादिजीवितार्थमादरात् ॥ १ ॥ अथदेवगणाःस्वयंभुवेन्यवेदयन्इतिद्वितीयेनान्वयः

आक्रम्योरसिदक्षस्यशितधारेणहेतिना ॥ छिंदन्नपितदुद्धर्तुंनाशक्नोत्र्यंबकस्तदा ॥२२॥ शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचंहरः ॥ विस्मयंपरमापन्नोदध्यौपशुपतिश्चिरं ॥ २३ ॥ दृष्ट्वासंज्ञपनंयोगंपशूनांसपतिर्मखे यजमानपशोःकस्यकायात्तेनाहरच्छिरः ॥ २४ ॥ साधुवादस्तदातेषांकर्मतत्तस्यशंसतां ॥ भूतप्रेतपिशाचानामन्येषांतद्विपर्ययः ॥ २५ ॥ जुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः ॥ तद्देवयजनंदग्ध्वाप्रातिष्ठद्गुह्यकालयं ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेदक्षयज्ञविध्वंसोनामपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ मैत्रेयउवाच अथदेवगणाःसर्वेरुद्रानीकैःपराजिताः ॥ शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः ॥ १ ॥ संछिन्नभिन्नसर्वांगाःसर्त्विक्सभ्याभयाकुलाः ॥ स्वयंभुवेनमस्कृत्यकार्त्स्न्येनैतन्न्यवेदयन् ॥ २ ॥ उपलभ्यपुरैवैतद्भगवानब्जसंभवः ॥ नारायणश्चविश्वात्मानकस्याध्वरमीयतुः ॥ ३ ॥ तदाकर्ण्यविभुःप्राहतेजीयसिकृतागसि ॥ क्षेमायतत्रसाभूयान्नप्रायेणबुभूषतां ॥ ४ ॥ अथापियूयंकृतकिल्बिषाभवंयेबर्हिषोभागभाजंपरादुः ॥ प्रसादयध्वंपरिशुद्धचेतसाक्षिप्रप्रसादंप्रगृहीतांघ्रिपद्मं ॥ ५ ॥

॥ १ ॥ शूलादिभिः संछिन्नानित्रुटितानि भिन्नानिविदीर्णान्यंगानियेषां सहऋत्विग्भिःसभ्यैश्चवर्तमानाः ॥ २ ॥ कस्यदक्षस्ययज्ञे ब्रह्माविष्णुश्चनेयतुःनजग्मतुः यत्रारुद्रकोयज्ञस्तत्रनारायणविरिंच्यावपिनागतौ ॥ ३ ॥ विभुर्ब्रह्मा तेजीयसि अतितेजस्विनिपुरुषे कृतागसिसत्यपि स्वयंतत्रकृतागसांबुभूषतामपराधंकर्तुमिच्छतांसातथाबुभूषातेषांक्षेमायनभूयात् प्रायेणेतिलोकोक्तिः नभवेदेवेत्यर्थः ॥ ४ ॥ अथापिप्रसादयध्वंक्षमापयत येभवंतः बर्हिषोयज्ञस्यभागभाजंपरादुः दूरेखंडितवंतः प्रगृहीतांघ्रिपद्मं पादौप्रगृह्येत्यर्थः ॥ ५ ॥

अध्वरस्यजीवितंपुनःसंधानंप्रार्थयमानाःसंतः यस्मिन्कुपितेसति सपालोलोकःनभवेन्नश्येदित्यर्थः ॥ ६ ॥ वयंतुतत्रगंतुंबिभीमःत्वमेव किंचिदुपायंविधत्स्वेतिचेदतआह नेति यज्ञस्तदानींतनइंद्रः यस्यतत्त्वंबलवीर्ययोःप्रमाणमियत्तांचनविदुः वीर्यंपराक्रमः पापमितिपाठे ऽपराधं ॥ ७ ॥ ८ ॥ कैलासंवर्णयति जन्मौषधीत्यादिचतुर्दशभिः नरेतरैर्देवैर्जुष्टं ॥ ९ ॥ शृंगैरमणंरतिप्रदमित्युत्तरेणान्वयः कथंभूतैर्नाना धातुभिर्विचित्रितैःनानाद्रुमलतागुल्माश्रयेषु ॥ १० ॥ नानाअमलानिप्रस्रवणानियेषु नानाकंदराःसानवश्चयेषु रमणैःसहक्रीडंतीनां

आशासानाजीवितमध्वरस्यलोकःसपालःकुपितेनयस्मिन् ॥ तमाशुदेवंप्रिययाविहीनंक्षमापयध्वंत्दृदि विद्धंदुरुक्तैः ॥ ६ ॥ नाहंनयज्ञोनचयूयमन्येयेदेहभाजोमुनयश्चतत्त्वं॥विदुःप्रमाणंबलवीर्ययोर्वायस्यात्म तंत्रस्यकउपायंविधित्सेत् ॥७॥ सइत्थमादिश्यसुरानजस्तैःसमन्वितःपितृभिःसप्रजेशैः॥ययौस्वधिष्ण्या न्निलयंपुरद्विषःकैलासमद्रिप्रवरंप्रियंप्रभोः ॥ ८॥ जन्मौषधितपोमंत्रयोगसिद्धैर्नरेतरैः॥ जुष्टंकिन्नरगंध र्वैरप्सरोभिर्वृतंसदा ॥ ९ ॥ नानामणिमयैःशृंगैर्नानाधातुविचित्रितैः॥नानाद्रुमलतागुल्मैर्नानामृगगणावृ तैः ॥ १०॥ नानाऽमलप्रस्रवणैर्नानाकंदरसानुभिः॥रमणंविहरंतीनांरमणैःसिद्धयोषितां ॥११॥ मयूरके काभिरुतंमदांधालिविमूर्छितं ॥ प्लावितैरक्तकंठानांकूजितैश्चपतत्रिणां ॥ १२ ॥ आह्वयंतमिवोद्धस्तैर्द्विजा न्कामदुघैर्द्रुमैः॥ व्रजंतमिवमातंगैर्गृणंतमिवनिर्झरैः ॥१३॥ मंदारैःपारिजातैश्चसरलैश्चोपशोभितं॥ तमा लैःशालतालैश्चकोविदारासनार्जुनैः॥ १४॥ चूतैःकदंबैर्नीपैश्चनागपुन्नागचंपकैः ॥ पाटलाशोकबकुलैःकुं दैःकुरबकैरपि ॥ १५॥

॥ ११ ॥ मयूराणांकेकाभिःस्वनैर्नादितं मदांधैरलिभिर्विमूर्छितं मूर्छनारागगतिविशेषः त द्यासंकृतं रक्तकंठानांकोकिलानां प्लावितैःप्लुतत्वंनीतैःस्वरैः अन्येषांचपतत्रिणांकूजितैः ॥ १२ ॥ उद्धस्तैःउन्नतशाखैर्द्रुमैर्द्विजान्पक्षिण आह्वयंतमिव लोकेहिहस्तमुत्क्षिप्योच्चैःस्वरेणाह्वानमर्थिनांकुर्वंति अद्रिश्चोत्क्षिप्तहस्ताकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्चतथालक्ष्यतइत्यर्थः व्रज द्भिर्मातंगैर्व्रजंतमिव निर्झरध्वनिभिर्गृणंतंभाषमाणमिव ॥ १३ ॥ १४ ॥ चूताम्रयोरवांतरजातिभेदः वेणुकीचकयोश्चनीरंध्रसरंध्र त्वेनभेदः ॥ १५ ॥

वेणुकजातिभिरित्यत्रवेणुकाएला जातिर्मालती ॥ १६ ॥ १७ ॥ द्रुमजातिभिरित्यत्रजातिरवांतरभेदसामान्यं ॥ १८ ॥ कुमुदादिसमृद्धिभिर्नलिनीषुसरःसु कलंमधुरंयथाभवतिएवंकूजंतियानिपक्षिवृंदानितैरुपशोभितं ॥ १९ ॥ मृगादिभिर्निर्जुष्टंनिषेवितं नाभिभिःकस्तूरीमृगैः पूर्वंमृगगणाःशृंगविशेषणत्वेनोक्ताः इदानींस्वातंत्र्येणेत्यपौनरुक्त्यं ॥ २० ॥ कदलीखंडैःसंरुद्धानिआवृतानिनलिनीनांपुलिनानितैःश्रीःशोभायस्मिन् नंदयागंगयापर्यस्तंपरिवेष्टितम् सत्याःभवान्याः स्नानेनपुण्यंपुण्यतरमतिसुगंधमुदकंयस्याम् ॥ २१ ॥ तत्र

स्वर्णार्णशतपत्रैश्चवरवेणुकजातिभिः ॥ कुब्जकैर्मल्लिकाभिश्चमाधवीभिश्चमंडितं ॥ पनसोदुंबराश्वत्थप्लक्षन्यग्रोधहिंगुभिः ॥ १६ ॥ भूर्जैरोषाधिभिःपूगैराजपूगैश्चजंबुभिः ॥खर्जूराम्रातकाम्राद्यैःप्रियालमधुकेंगुदैः॥ ॥ १७ ॥ द्रुमजातिभिरन्यैश्चराजितंवेणुकीचकैः ॥ कुमुदोत्पलकल्हारशतपत्रवनर्द्धिभिः ॥१८॥ नलिनीषु कलंकूजत्खगवृंदोपशोभितं ॥ १९ ॥ मृगैःशाखामृगैःक्रोडैर्मृगेंद्रैर्ऋक्षशल्यकैः॥ गवयैर्नाभिभिर्व्याघ्रैर्निर्जुष्टंमहिषादिभिः ॥ २० ॥ कदलीखंडसंरुद्धनलिनीपुलिनश्रियं॥पर्यस्तंनंदयासत्याःस्नानपुण्यतरोदया॥ विलोक्यभूतेशगिरिंविबुधाविस्मयंययुः॥२१॥ददृशुस्तत्रतेरम्यामलकांनामवैपुरीं ॥ वनंसौगंधिकंचापि यत्रतन्नामपंकजं ॥ २२ ॥ नंदाचालकनंदाचसरितौबाह्यतःपुरं ॥ तीर्थपादपदांभोजरजसाऽतीवपावने ॥ ॥ २३ ॥ ययोःसुरस्त्रियःक्षत्तरवरुह्यस्वधिष्ण्यतः ॥ क्रीडंतिपुंसःसिंचंत्योविगाह्यरतिकर्शिताः ॥ २४ ॥ ययोस्तत्स्नानविभ्रष्टनवकुंकुमपिंजरं ॥ वितृषोऽपिपिबंत्यंभःपाययंतोगजागजीः ॥२५॥ तारहेममहारत्नविमानशतसंकुलां ॥ जुष्टांपुण्यजनस्त्रीभिर्यथाखंसतडिद्घनं ॥२६॥

गिरौवनंचददृशुः यत्रवनेतन्नामसौगंधिकंपंकजंभवति जातावेकवचनं ॥ २२ ॥ पुरींवर्णयतिनंदाचेतिचतुर्भिः सरितौ पुराद्बाह्यतोभवतः तीर्थपादस्यहरेःपादांभोजरजसा ॥ २३ ॥ ययोर्विगाह्यप्रविश्यक्रीडंति ॥ २४ ॥ ययोरंभोविगततृषोगजाःपिबंति तत्रहेतुः तासांसुरस्त्रीणांस्नानेनभ्रष्टंगालितंयन्नवंकुंकुमंतेनपिंजरंपीतवर्णं गजीःकरिणीः ॥२५ ॥ तारंरूप्यं तारादिमयविमानानांशतैःसंकुलांतडिद्भिःस्त्रीणांघनैर्विमानानांखेनपुर्याःसादृश्यं॥२६॥

यक्षेश्वरपुरींहित्वाऽतिक्रम्यतद्वनंचदृष्ट्वा तेदेवाःआराद्दूरात् वटंददृशुरितिचतुर्थेनान्वयः कथंभूतंवनं चित्राणिमाल्यानिफलानिछदाश्वपत्रा णियेषुतैर्द्रुमैः हृद्यंसुखकरं ॥ २७ ॥ रक्तकंठखगानामनीकस्यस्वरैर्मंडिताःषट्पदस्वरायस्मिन् कलहंसानांकुलस्यप्रेष्ठं खरदंडानिपद्मा नितैर्युक्ताजलाशयायस्मिन् ॥ २८ ॥ वनकुंजरैःसंघृष्टायेहरिचंदनद्रुमाः तत्संबंधिनावायुनापुण्यजनस्त्रीणांमनः अधिकमुन्मथयन् ॥ ॥ २९ ॥ यत्रचोत्पलमालिन्योवाप्यस्तत्रकिंपुरुषैः प्राप्तंवनंदृष्ट्वा पाठांतरेकिंपुरुषैःप्राप्तावापीश्वदृष्ट्वाइत्यर्थः ॥ ३० ॥ योज

हित्वायक्षेश्वरपुरींवनंसौगंधिकंचतत् ॥ द्रुमैःकामदुघैर्हृद्यंचित्रमाल्यफलच्छदैः ॥ २७ ॥ रक्तकंठखगानीक स्वरमंडितषट्पदं ॥ कलहंसकुलप्रेष्ठंखरदंडजलाशयं ॥ २८ ॥ वनकुंजरसंघृष्टहरिचंदनवायुना ॥ अधिपु ण्यजनस्त्रीणांमुहुरुन्मथयन्मनः ॥ २९ ॥ वैदूर्यकृतसोपानावाप्यउत्पलमालिनीः ॥ प्राप्तंकिंपुरुषैर्दृष्ट्वातआ राद्ददृशुर्वटं ॥ ३० ॥ सयोजनशतोत्सेधःपादोनविटपायतः ॥ पर्यक्कृताचलच्छायोनिर्नीडस्तापवर्जितः ॥ ३१ ॥ तस्मिन्महायोगमयेमुमुक्षुशरणंसुराः ॥ ददृशुःशिवमासीनंत्यक्तामर्षमिवांतकं ॥ ३२ ॥ सनंदना द्यैर्महासिद्धैःशांतैःसंशांतविग्रहं ॥ उपास्यमानंसख्याचभर्त्रागुह्यकरक्षसां ॥ ३३ ॥ विद्यातपोयोगपथमा स्थितंतमधीश्वरं ॥ चरंतंविश्वसुहृदंवात्सल्याल्लोकमंगलं ॥ ३४ ॥ लिंगंचतापसाभीष्टंभस्मदंडजटाजिनं अंगेनसंध्याऽभ्ररुचाचंद्रलेखांचबिभ्रतं ॥ ३५ ॥ उपविष्टंदर्भमय्यांबृष्यांब्रह्मसनातनं ॥ नारदायप्रवोचंतंपृ च्छतेशृण्वतांसतां ॥ ३६ ॥

नशतमुत्सेधउच्छ्रायोयस्य पादोनैःसर्वतःपंचसप्ततियोजनप्रमाणैर्विटपैःशाखाभिरायतोविस्तृतः पर्यक्सर्वतःकृताअचलाछायायेन निर्गतं नीडंयस्मात् ॥ ३१ ॥ मुमुक्षूणांशरणमाश्रयं त्यक्तामर्षोऽतकस्तत्तुल्यं ॥ ३२ ॥ तंविशिनष्टिसनंदनाद्यैरितिपंचभिः सख्याकुबेरेणो पास्यमानं ॥ ३३ ॥ विद्याउपासना तपश्चित्तैकाग्र्यं योगःसमाधिस्तेषांपंथानंप्रवर्त्तनद्वारं लोकस्यमंगलंहितं ततोवात्सल्यात्स्नेहाच्चरंतं ॥ ३४ ॥ संध्याऽभ्ररुचारक्तवर्णेनांगेनभस्मादिलिंगंचंद्रलेखांचाबिभ्रतं ॥ ३५ ॥ व्रतीनामासनंबृषीतस्यां ब्रह्मप्रवोचंतं ॥ ३६ ॥

सव्यंपादपद्मंदक्षिणेऊरौकृत्वाविन्यस्यजानुनिचसव्येबाहुंकृत्वाप्रकोष्ठेमणिबंधस्थानेअक्षमालांचकृत्वा दक्षिणहस्तकृतयातर्कमुद्रयाउप
लक्षितमासीनमित्यर्थः तदुक्तंयोगशास्त्रे एकपादमथैकस्मिन्विन्यसेदूरुसंस्थितं ॥ इतरस्मिंस्तथाबाहुंवीरासनमिदंस्मृतं ॥ तर्कमुद्राचोक्ता
तर्जन्यंगुष्ठयोरग्रेमिथःसंयोज्यचांगुलीः ॥ प्रसार्यबंधनंप्राहुस्तर्कमुद्रेतिमांत्रिकाइति ॥ ३७ ॥ ब्रह्मनिर्वाणंब्रह्मानंदः तत्रसमाधिरैकाग्र्यं
तमाश्रितं योगकक्षांयोगपट्टंवामजानुदृढीकरणार्थंविशेषेणोपाश्रितवंतं मननशीलामनवस्तेषामाद्यंमुख्यं ॥ ३८ ॥ अर्हत्तमोविष्णुर्वामन
मूर्तिर्यथाकश्यपस्य ॥ ३९ ॥ महर्षिभिःसहिताःयेनीललोहितमनुवर्ततेतेऽपितस्मैवंदनंचक्रुः एवंसर्वैर्नमस्कृतःप्राह कृतःप्रणामोदेवैर्य

कृत्वोरौदक्षिणेसव्यंपादपद्मंचजानुनि॥बाहुंप्रकोष्ठेऽक्षमालामासीनंतर्कमुद्रया ॥३७॥ तंब्रह्मनिर्वाणसमा
धिमाश्रितंव्युपाश्रितंगिरिशंयोगकक्षां ॥ सलोकपालामुनयोमनूनामाद्यंमनुंप्रांजलयःप्रणेमुः ॥ ३८ ॥
सतूपलभ्यागतमात्मयोनिंसुरासुरेशैरभिवंदितांघ्रिः ॥ उत्थायचक्रेशिरसाभिवंदनमर्हत्तमःकस्ययथैवविष्णुः ॥ ३९ ॥ तथापरेसिद्धगणामहर्षिभिर्येवैसमंतादनुनीललोहितं ॥ नमस्कृतःप्राहशशांकशेखरंकृतप्रणामंप्रहसन्निवात्मभूः॥ ४० ॥ ब्रह्मोवाच जानेत्वामीशंविश्वस्यजगतोयोनिबीजयोः ॥ शक्तेःशिवस्यचपरंयत्तद्ब्रह्मनिरंतरं ॥४१॥ त्वमेवभगवन्नेताच्छिवशक्त्योःसरूपयोः ॥ विश्वंसृजसिपास्यत्सिक्रीडन्नूर्णपटोयथा ॥ ४२ ॥ त्वमेवधर्मार्थदुघाभिपत्तयेदक्षेणसूत्रेणससर्जिथाध्वरं ॥ त्वयैवलोकेऽवसिताश्चसेतवोयान्ब्राह्मणाःश्रद्दधतेधृतव्रताः ॥ ४३ ॥

स्मैतं ॥ ४० ॥ यद्यपित्वंनीचवन्मांनमस्करोषि तथाऽपितवैश्वर्यमहंवेद्मीत्याह जानइति विश्वस्येशंजाने तत्रहेतुः जगतोयोनिर्याशक्तिः
प्रकृतिर्बीजंच शिवःपुरुषस्तयोःकारणं तथाऽपिनिरंतरंनिर्भेदंयद्ब्रह्मानिर्विकारंतदेवत्वामितिजाने ॥ ४१ ॥ ननुविरुद्धमेतत्तत्राह त्वमेवसरू
पयोरविभक्तयोःशिवशक्त्योःक्रीडन्विश्वसृष्ट्यादिकरोषि ऊर्णनाभिरिव स्वरूपयोरितिपाठेस्वांशयोः अतोनविरोधः॥ ४२ ॥ धर्ममर्थंच
दोग्धियात्रयीतस्याअभिपत्तयेरक्षणायाध्वरंसृष्टवानासि यद्वा हेधर्मार्थदुघ धर्माद्यभिपत्तयेतत्प्राप्तये दक्षेणसूत्रेणानिमित्तेनसेतवोवर्णा
श्रमर्यादाश्चअवसिताः निबद्धाः निर्णीताइतिवा श्रद्दधते श्रद्धयाअनुतिष्ठंति ॥ ४३ ॥

सर्वकर्मफलदातापित्वमेवेत्याह हेमंगल मंगलानांशुभानांकर्मणांकर्त्तुः स्वःस्वर्गंपरंमोक्षंवातनुषे अमंगलानामशुभानांकर्मणांकर्तुश्चत
मिस्रंनरकंतनुषे तत्रकेनहेतुना तदेवतस्मिन्नेवकस्यचिद्विपर्ययोभवति ॥ ४४ ॥ त्वत्कोपोऽत्रहेतुरित्यसंभावितमितिकैमुत्यन्यायेनाह नवैस
तांसतःरोषोभभवेत् तवत्वां द्वितीयार्थेषष्ठ्यौ पशुमज्ञंयथाऽभिभवति तद्वत् ॥ ४५ ॥ अतःयेपृथग्धियःभेददृशः अतःकर्मण्येवदृष्टिर्येषां
दुष्टआशयोयेषां परेषामुदयेनसंपदाअर्पितात्हृदिरुग्येषामरुंतुदामर्मभेत्तारः दैवेनैववधोयेषांतान् भवद्विधःनिरुपमःसाधुः मावधीन्नहन्यात्
॥ ४६ ॥ प्रत्युतसाधूनांवृत्तमालोक्यानुग्रहमेवकर्तुमर्हसीत्याहद्वाभ्यां यास्मिन्देशेयदाकाले स्पृष्टधियोमोहितचित्ताः पृथग्दृशोभवं

त्वंकर्मणांमंगलमंगलानांकर्तुःस्मलोकेतनुषेस्वःपरंवा ॥ अमंगलानांचतमिस्रमुल्बणांविपर्ययःकेनतदेव
कस्यचित् ॥ ४४ ॥ नवैसतांत्वच्चरणार्पितात्मनांभूतेषुसर्वेष्वभिपश्यतांतव ॥ भूतानिचात्मन्यपृथग्दिदृक्ष
तांप्रायेणरोषोऽभिभवेद्यथापशुं ॥ ४५ ॥ पृथग्धियःकर्मदृशोदुराशयाःपरोदयेनार्पितहृद्रुजोनिशं ॥ परान्दु
रुक्तैर्वितुदंत्यरुंतुदास्तान्माऽवधीद्दैववधान्भवद्विधः ॥४६॥ यस्मिन्यदापुष्करनाभमाययादुरंतयास्पृष्टधि
यःपृथग्दृशः ॥ कुर्वंतितत्रत्यनुकंपयाकृपांनसाधवोदैवबलात्कृतेक्रमं ॥ ४७ ॥ भवांस्तुपुंसःपरमस्यमायया
दुरंतयास्पृष्टमतिःसमस्तदृक् ॥ तयाहतात्मस्वनुकर्मचेतःस्वनुग्रहंकर्तुमिहार्हसिप्रभो ॥४८॥ कुर्वध्वरस्योद्ध
रणंहतस्यभोत्वयाऽसमाप्तस्यमनोप्रजापतेः ॥ नयत्रभागंतवभागिनोददुःकुयज्विनोयेनमखोनिनीयते ॥
॥ ४९ ॥ जीवताद्यजमानोयंप्रपद्येताक्षिणीभगः ॥ भृगोःश्मश्रूणिरोहंतुपूष्णोदंताश्चपूर्ववत् ॥५०॥ देवानां
भग्नगात्राणामृत्विजांचायुधाश्मभिः ॥ भवताऽनुगृहीतानामाशुमन्योऽस्त्वनातुरं ॥ ५१ ॥

ति तत्रापराधेसाधवोहिअनुकंपयाअनंतरमेवपरदुःखासहिष्णुतयाचित्तप्रकंपेनकृपांकुर्वंति नतुक्रमंपराक्रमं कुतःदैवबलात् कृतेऽर्थम
मैवदैवमेवंभूतंकोऽत्रापराधस्तेषामितिमत्वाहननंनकुर्वतइत्यर्थः ॥ ४७ ॥ भवांस्तुअस्पृष्टमतिः अतएवसमस्तदृक्सर्वज्ञः तयामाययाहत
आत्मायेषांतेषुअतएवकर्मानुगताचित्तेषु इहअपराधेअनुग्रहंकर्तुमर्हसि ॥ ४८ ॥ एवंसामान्येनोक्त्वाप्रस्तुतमाह कुर्विति त्रिभिः त्वयाहत
स्यअतएवासमाप्तस्यप्रजापतेरध्वरस्य हेमनो यत्राध्वरेकुयाज्ञिकाः भागिनोऽपितवभागंनददुः भागार्हत्वमाह येनत्वयामखोनिनीय
तेफलंप्राप्यते ॥ ४९ ॥ ५० ॥ हेमन्यो अनातुरमारोग्यमस्तु ॥ ५१ ॥

भागश्चतवास्त्वित्याह एषइति हेरुद्र यावदित्यर्थेयदित्यव्ययं यज्ञेकृतेयावानुच्छिष्टःअवशिष्टोऽर्थःतावानेषतवभागोऽस्तु हेरुद्र तेनभा गेनाद्ययज्ञः कल्पतांसंपद्यतां ॥ ५२ ॥ इतिचतुर्थेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ सप्तमेविष्णुरुद्भूतःस्तुतोदक्षभवा दिभिः॥यज्ञंप्रवर्तयामासदक्षेणेतिनिरूप्यते ॥१॥ अजेनयोनुनीतःप्रार्थितोभवस्तेनाभिहितं ॥ १ ॥ अघमपराधं ॥ २ ॥ स्वापराधमपदद

एषतेरुद्रभागोस्तुयदुच्छिष्टोऽध्वरस्यवै ॥ यज्ञस्तेरुद्रभागेनकल्पतामद्ययज्ञहन् ॥ ५२ ॥ इतिश्रीभागव तेमहापुराणेचतुर्थस्कंधेरुद्रसांत्वनंनामषष्ठोऽध्यायः ॥ ६॥ ॥७॥ ॥७॥ मैत्रेयउवाच इत्यजेनानुनीतेनभवेनपरितुष्यता ॥ अभ्यधायिमहाबाहोप्रहस्यश्रूयतामिति ॥ १ ॥ श्रीमहादेवउवाच नाघंप्रजेशबालानांवर्णयेनानुचिंतये ॥ देवमायाभिभूतानांदंडस्तत्रधृतोमया ॥२॥ प्रजापतेर्दग्धशीर्ष्णोभ वत्वजमुखंशिरः ॥ मित्रस्यचक्षुषेक्षेतभागंस्वंबर्हिषोभगः ॥३॥ पूषातुयजमानस्यदद्भिर्जक्षतुपिष्टभुक् ॥ देवाःप्रकृतसर्वांगायेमउच्छेषणंददुः ॥ ४ ॥ बाहुभ्यामश्विनोःपूष्णोहस्ताभ्यांकृतबाहवः ॥ भवंत्वध्वर्यव श्चान्येबस्तश्मश्रुर्भृगुर्भवेत् ॥ ५ ॥ मैत्रेयउवाच तदासर्वाणिभूतानिश्रुत्वामीढुष्टमोदितम्॥परितु ष्टात्मभिस्तातसाधुसाध्वित्यथाब्रुवन् ॥६॥ ततोमीढ्वांसमामंत्र्यशुनासीराःसहर्षिभिः॥भूयस्तद्देवयजनंसमी ढ्वद्वेधसोययुः ॥७॥ विधायकार्त्स्न्येनचतद्यदाहभगवान्भवः॥संदधुःकस्यकायेनसवनीयपशोःशिरः॥ ८ ॥

त्यानुगृण्हाति दग्धंशीर्षंयस्यप्रजापतेः अजस्यमुखंयस्मिन् तत्तथाभूतंशिरोऽस्तु बर्हिषःसंबंधिनं भागं मित्रनाम्नोदेवस्य ॥ ३ ॥ प्रकर्षेणकृतानिलग्नान्यंगानियेषांतेभवंतु उच्छेषणंयज्ञावशिष्टं ॥ ४ ॥ येषांत्वंगानिनष्टानितेतुअश्विनो र्बाहुभ्यांकृतबाहवः पूष्णोहस्ताभ्यांकृतहस्ताश्चभवंतु अध्वर्यवः अन्येचऋत्विजः बस्तस्यश्मश्रूण्येवश्मश्रूणियस्य ॥ ५ ॥ मीढुष्टमःशि वः तेनोक्तं परितुष्टैश्चित्तैः ॥६॥ मीढ्वांसंशिवं त्वयागत्यसर्वंकार्यमित्यामंत्र्यसंप्रार्थ्यशुनासीरादेवाः सहमीढुषावेधसाचवर्त्तमानाः समीढ्व द्वेधसः ॥ ७ ॥ कार्त्स्न्येनवक्रहस्तबाह्वादिसाधारण्यंविधाय ॥८ ॥

॥ ९ ॥ पूर्ववृषध्वजद्वेषेणकालिलःकलुषीकृतआत्मायस्यसः तदाङ्गारत्कालेनोन्हदइवामलोभवत् ॥ १० ॥ ११ ॥ १२ ॥ यदापियद्यपिप्रलब्धःपराभूतोमयाभवान् तथाऽपित्वयादंडोभृतःशिक्षाकृतानतूपेक्षितोऽस्मि युक्तमेवैतदित्याह ब्रह्मबंधुषुचब्राह्मणाभासेष्वपितुभ्यंतव हरेश्चेतिवांयुवयोरवज्ञाउपेक्षानास्ति ॥ १३ ॥ तत्रहेतुमाह विद्येति ब्रह्माभूत्वा त्वमस्राक्अस्राक्षीः किमर्थं आत्मतत्वमवितुं यद्वा ब्रह्मवेदमात्मतत्त्वंचअवितुंसंप्रदायप्रवर्तनेनज्ञापयितुमित्यर्थः तत्तस्मात् हेपरमउत्कृष्ट ॥ १४ ॥ अत्रचप्रत्युपकारोनास्तीत्याह योऽसाविति अ

संधीयमानेशिरसिदक्षोरुद्राभिवीक्षितः॥सद्यःसुप्तइवोत्तस्थौददृशेचाग्रतोमृडम् ॥ ९ ॥ तदावृषध्वजद्वेषकलिलात्माप्रजापतिः॥शिवावलोकादभवच्छरद्ध्रदइवामलः॥१०॥ भवस्तवायकृतधीर्नाशक्नोदनुरागतः ॥ औत्कंठ्याद्बाष्पकलयासंपरेतांसुतांस्मरन् ॥ ११ ॥कृच्छ्रात्संस्तभ्यचमनःप्रेमविह्वलितःसुधीः ॥ शशंस निर्व्यलीकेनभावेनेशंप्रजापतिः ॥ १२ ॥ दक्षउवाच भूयाननुग्रहअहोभवताकृतोमेदंडस्त्वयामयि भृतोयदपिप्रलब्धः ॥ नब्रह्मबंधुषुचवांभगवन्नवज्ञातुभ्यंहरेश्चकुतएवधृतव्रतेषु ॥ १३ ॥ विद्यातपोव्रतधरान्मुखतःस्मविप्रान्ब्रह्मात्मतत्त्वमवितुंप्रथमंत्वमस्राक् ॥ तद्ब्राह्मणान्परमसर्वविपत्सुपासिपालःपशूनिव विभोप्रगृहीतदंडः॥ १४॥ योऽसौमयाऽविदिततत्त्वदृशासभायांक्षिप्तोदुरुक्तिविशिखैरगणय्यतन्माम्॥अर्वाक्पतंतमर्हत्तमनिंदयाऽपात्दृष्ट्यार्द्रयासभगवान्स्वकृतेनतुष्येत् ॥ १५॥ मैत्रेयउवाच क्षमाप्यैवंसमीढ्वांसंब्राह्मणाचानुमंत्रितः॥ कर्मसंतानयामाससोपाध्यायर्त्विगग्निभिः ॥ १६ ॥ वैष्णवंयज्ञसंतत्यैत्रिकपालंद्विजोत्तमाः॥ पुरोडाशंनिरवपन्वीरसंसर्गशुद्धये ॥ १७ ॥ अध्वर्युणात्तहविषायजमानोविशांपते ॥ धियाविशुद्धयादध्यौतथाप्रादुरभूद्धरिः॥ १८ ॥

विदिततत्त्वदृशाअप्राप्ततत्त्वज्ञानेन तदगणय्यविस्मृत्य अर्हत्तमनिंदयाअर्वांगधःपतंतंमामपात्रक्षितवान् स्वकृतेनैवपरानुग्रहेणैवतुष्येत् मयातत्प्रतिकर्तुमशक्यमित्यर्थः ॥ १५ ॥ अनुमंत्रितोऽनुज्ञातःउपाध्यायसहितैःऋत्विगादिभिः अनुवर्तयामास ॥ १६ ॥ वीराणांप्रमथादीनां संसर्गकृतदोषस्यशुद्धयेनिवृत्त्यर्थं ॥ १७ ॥ उपात्तहविषाध्वर्युणासहविशुद्धयाबुध्यादध्यौ हेविशांपतेविदुर ॥ १८ ॥

स्वयाप्रभयातेषांतेजोमुष्णन् तिरस्कुर्वन् उपानीतःसमीपंप्रापितः स्तोत्रेबृहद्रथंतरेवाजौपक्षौतद्वता बृहद्रथंतरेपक्षाविति श्रुतेः ॥ १९ ॥ त
मेवानुवर्णयतिश्यामइतिद्वाभ्यां हिरण्यवद्रशनायस्येतिवस्त्रंलक्ष्यते अर्कतुल्येनकिरीटेनजुष्टः नीलालकाएवभ्रमरास्तैर्मंडितंकुंडलयुक्त
मास्यंयस्य कंब्वादिभिरायुधैः भृत्यरक्षार्थंव्यग्रैर्हिरण्मयैर्भुजैः पुष्पितःकर्णिकारइव वृक्षविशेषः शोभमानः भुजानांहिरण्मयत्वंकेयूर
कंकणमुद्रिकाद्यलंकारैः ॥ २० ॥ वक्षसि अधिश्रितावधूर्लक्ष्मीर्यस्यसः उदारोहासोअवलोकश्च तयोःकलालेशेन पार्श्वेउभयतोभ्र
मतीव्यजनचामरे चामरव्यजनेएवराजहंसौयस्मिन्सः रज्यमानःशोभातिशयंनीयमानः ॥ २१ ॥ ब्रह्मेंद्रत्र्यक्षनायकामुख्यायेषांते

तदास्वप्रभयातेषांद्योतयंत्यादिशोदश ॥ मुष्णंस्तेजउपानीतस्तार्क्ष्येणस्तोत्रवाजिना ॥ १९ ॥ श्यामोहिर
ण्यरशनोऽर्ककिरीटजुष्टोनीलालकभ्रमरमंडितकुंडलास्यः ॥ कंब्वब्जचक्रशरचापगदाऽसिचर्मव्यग्रैर्हिरण्म
यभुजैरिवकर्णिकारः ॥ २० ॥ वक्षस्यधिश्रितवधूर्वनमाल्युदारहासावलोककलयारमयंश्चविश्वं ॥ पार्श्वभ्र
मद्व्यजनचामरराजहंसःश्वेतातपत्रशशिनोपरिरज्यमानः ॥ २१ ॥ तमुपागतमालक्ष्यसर्वेसुरगणादयः ॥ प्र
णेमुःसहसोत्थायब्रह्मेंद्रत्र्यक्षनायकाः ॥ २२ ॥ तत्तेजसाहतरुचःसन्नजिव्हाःससाध्वसाः ॥ मूर्ध्नाधृतांजलिपु
टाउपतस्थुरधोऽक्षजं ॥ २३ ॥ अप्यर्वाग्वृत्तयोयस्यमहित्वात्मभुवादयः ॥ यथामतिगृणंतिस्मकृतानुग्रह
विग्रहं ॥ २४ ॥ दक्षोगृहीतार्हणसादनोत्तमंयज्ञेश्वरंविश्वसृजांपरंगुरुं ॥ सुनंदनंदाद्यनुगैर्वृतंमुदागृणन्प्रपे
देप्रयतःकृतांजलिः ॥ २५ ॥

॥ २२ ॥ हतरुचःतिरस्कृतप्रभाः सन्नजिव्हागद्गदवाचः ससाध्वसाःतन्महिम्नाक्षुभित
चित्ताः उपतस्थुस्तुष्टुवुः ॥ २३ ॥ यस्यमहिमानंप्रतितु अर्वागेववृत्तिर्येषांतेऽपियथामतिगृणंतिस्मअस्तुवन् कृतःप्रकटीकृतोऽनुग्रहार्थंविग्र
होयेनतं यद्वा तेषामर्वाग्वृत्तित्वेहेतुः तेतुयस्यमहिमहिमा विभूतिमात्ररूपाइत्यर्थः ॥ २४ ॥ तत्रतावत्दक्षस्तुतिप्रकारमाह दक्षइति गृही
तमर्हणसादनोत्तमंयेनतमुत्तमेपात्रेआसाद्य अर्हणेषुसमर्पितेषु प्रीत्यासार्हणपात्रंस्वयमेवयेनगृहीतमित्यर्थः यद्वा कथंप्रपेदे गृहीतमर्हण
सादनोत्तमंयथाभवतितद्गृहीत्वाप्रपेदइत्यर्थः गृहीत्वेतिपाठस्तुसुगमः गृणन्स्तुवन् प्रपेदे शरणंजगाम दक्षऋत्विक्सदस्येशभृगुब्रह्मेंद्रयो
षितः ॥ ऋषयश्चतथासिद्धयजमानीचलोकपाः ॥ योगिब्रह्माग्निदेवाश्चस्तुवंतिजगदीश्वरं ॥ तथागंधर्वविद्याध्रब्राह्मणाश्चपृथक्ततैः ॥ २५ ॥

ननुसाक्षात्परमेश्वरएवरुद्रः तस्यब्रह्मपुत्रत्वेनजीवत्वमनुकारमात्रंहंताकिमितित्वयाभेददृष्ट्याऽसौअवज्ञातइतिमांभगवान् आक्षेप्स्यतीत्या
शंक्याप्रच्युतस्वरूपस्यजीवधर्मनाटचंतवैवसंगच्छतेनान्यस्येत्याह शुद्धमिति स्वधाम्निस्वस्वरूपेतिष्ठन् भगवान्शुद्धचिन्मात्रंचैतन्यघनः
शुद्धत्वेहेतुः उपरतानित्यनिवृत्ताअखिलाबुध्यवस्थायस्मात् अतः एकंभेदशून्यं अतएवअभयंद्वितीयाद्वैभयंभवतीतिश्रुतेः जीवस्यापि
वस्तुतएवंभूतत्वात्तद्वैलक्षण्यार्थमुक्तं मायांप्रतिषिध्यअभिभूय स्वतंत्रएवसन्तयामाययापुरुषत्वंमनुष्यनाटचमुपेत्य तस्यांमायायांतिष्ठन्
अपरिशुद्धइवरागादिमानिवास्से रामकृष्णाद्यवतारे तथाप्रतीयतेभवानित्यर्थः अन्येत्वविद्योपाधयोमायाऽभिभूताःसंसरंति अतस्त्वमेवे

दक्षउवाच शुद्धंस्वधाम्न्युपरताखिलबुद्ध्यवस्थंचिन्मात्रमेकमभयंप्रतिषिध्यमायां ॥ तिष्ठंस्तयैवपुरुषत्व
मुपेत्यतस्यामास्तेभवानपरिशुद्धइवात्मतंत्रः ॥ २६ ॥ ऋत्विजऊचुः तत्त्वंनतेवयमनंजनरुद्रशापात्क
र्मण्यवग्रहधियोभगवन्विदामः॥धर्मोपलक्षणमिदंत्रिवृदध्वराख्यंज्ञातंयदर्थमधिदैवमदोव्यवस्थाः॥२७॥

श्वरोनरुद्रादयइतिभावः अतएवेमांदृष्टिंभगवान्वारयिष्यति अहंब्रह्माचशर्वश्चजगतः
कारणंपरमित्यादिना॥२६॥ऋत्विजोऽपिस्वस्यापराधंपरिहरंतःस्तुवंति भोअनंजनउपाधिमलशून्य यद्यपित्वमेवरुद्रादिदेवतारूपःतथाऽ
पिनंदीश्वरशापात् कर्मण्येवदुराग्रहाधियःसंतस्तवतत्त्वंनविद्मः किंतुधर्मस्यापूर्वस्योपलक्षणभूतंत्रिवृत्त्रयीप्रतिपाद्यमध्वराख्यं तवरूपम
स्माभिर्ज्ञातं कीदृशं यस्यसिद्धयेऽधिदैवं देवताऽधिकारेणादोव्यवस्थाःअमव्यवस्थाः अत्रेयमेवदेवतानान्येत्येवंभूतानियमाइत्यर्थः य
द्वा व्यवस्थाइत्याख्यातं अडागमाद्यभावआर्षः यदर्थमदइदमिंद्राद्यधिदैवंरूपंविशेषेणास्थितवानसीत्यर्थः ॥ २७ ॥

सदस्यास्तुनिरीश्वरेऽपिदक्षाध्वरेधनलोभिनस्वप्रवृत्तिमनुचिंत्यानुतप्ताविरक्तिमाशासानाःस्तुवंति ईशरणदआश्रयप्रद उत्पत्त्यध्वनिसंसार मार्गेवर्तमानोअज्ञानांसार्थःसमूहस्तेपादौकस्त्वत्पादरूपंनिवासंकदायास्यति अशरणेविश्रामस्थानशून्ये उरुक्लेशाएवदुर्गमस्थानानि यस्मिन् अंतकएवोग्रोव्यालस्तेनान्विष्टेलक्षीकृते विषयरूपामृगतृष्णायस्मिन् आत्माहंकारास्पदंशरीरंममत्वास्पदंगेहंच सएवउरुर्भारो यस्यसः द्वंद्वानिसुखदुःखादीन्येवश्वभ्राणिगर्तायस्मिन् खलाएवमृगाव्याघ्रादयस्तेभ्योभयंयस्मिन् शोकएवदावाग्निर्यस्मिन् कामेनउप सृष्टःपीडितः ॥ २८ ॥ श्रीरुद्रस्तुपूर्वममनिंदादुःसहासीत्इदानींतुतांनगणयामीत्याह तवेति आशिषाकामेन असक्तैर्निष्कामैःरचित

सदस्याऊचुः उत्पत्त्यध्वन्यशरणउरुक्लेशदुर्गेऽतकोग्रव्यालान्विष्टेविषयमृगतृष्णात्मगेहोरुभारः॥द्वंद्वश्वभ्रे खलमृगभयेशोकदावेऽज्ञसार्थःपादौकस्तेशरणदकदायातिकामोपसृष्टः ॥ २८ ॥ रुद्रउवाच तववरदवरां घ्रावाशिषेहाखिलार्थेह्यपिमुनिभिरसक्तैरादरेणार्हणीये॥यदिरचितधियंमाविद्यलोकोपविद्धंजपतिनगणये तत्त्वत्परानुग्रहेण ॥ २९ ॥ भृगुरुवाच यन्माययागहनयाऽपहृतात्मबोधाब्रह्मादयस्तनुभृतस्तमसि स्वपंतः ॥ नात्मन्श्रितंतवविदंत्यधुनाऽपितत्त्वंसोयंप्रसीदतुभवान्प्रणतात्मबंधुः ॥ ३० ॥ ब्रह्मोवाच नैत त्स्वरूपंभवतोऽसौपदार्थभेदग्रहैःपुरुषोयावदीक्षेत् ॥ज्ञानस्यचार्थस्यगुणस्यचाश्रयोमायामयाद्व्यतिरिक्तो यतस्त्वं ॥ ३१ ॥ इंद्रउवाच इदमप्यच्युतविश्वभावनंवपुरानंदकरंमनोदृशां ॥ सुरविद्विट्क्षपणैरु दायुधैर्भुजदंडैरुपपन्नमष्टभिः ॥ ३२ ॥

धियमभिनिवेशितचित्तं अविद्यलोकःअविद्यःविद्याहीनोलोकःमामां यद्यपविद्धंजपतिआचारभ्रष्टंजल्पाते तज्जल्पनंतवयःपरोऽनुग्रहस्तेन त्वत्पराणांवायोऽनुग्रहस्तेन ॥ २९ ॥ भृगुस्तुस्वभावतस्तत्वज्ञानहीनाजीवाःअतोऽज्ञानकृतंममदुश्चेष्टितंक्षमस्वेत्याह यन्मायेतिआत्मन्वात्म निश्रितमनुगतंतवतत्वंनविदंति प्रणतानामात्माबंधुश्च ॥ ३० ॥ ब्रह्मादयोनविदंतीतिभृगुणोक्तेतदसहमानोब्रह्मातत्वज्ञानमाविष्कुर्वन्नि वाह नैतदिति पदार्थभेदग्राहकैरिंद्रियैर्गुणस्येंद्रियस्य यद्वा ज्ञानार्थयोःकारणस्यसत्वादेः अतएवअसतःमायामयात्व्यतिरिक्तोभवान् ॥ ३१॥ ॥ इंद्रस्तुइंद्रियविषयः सर्वोऽपिमिथ्येतिब्रह्मणोक्तमसहमानआह इदंतववपुरापिउपपन्नमेव नतुप्रपंचवदनिर्वचनीयतयाऽनुपपन्नं सुराणां विद्विषःक्षपयंतीतितथातैर्भुजदंडैरुपलक्षितं ॥ ३२ ॥

ऋत्विजांपत्न्यःस्तुवंति यज्ञोऽयंतवयजनायत्वांयष्टुं केनब्रह्मणापूर्वंसृष्टः हेयज्ञात्मन्तंनोयज्ञंनलिनकांत्यादृशानेत्रेणपुनीहि पवित्रंकुरुकथंभू
तंयज्ञं शवाःशेरतेयस्मिन्निति शवशयनंश्मशानंतद्वदाभाप्रतीतिर्यस्यसचासौशांतमेधश्चोपरतोत्सवः मेधशब्देनपशुहिंसाद्युत्सवोलक्ष्यते
शवमुदकंतत्रशेतेइतितथापद्मं तन्नाभेतिसंबोधनंवा ॥ ३३ ॥ ऋषयस्तुकर्माण्यनुतिष्ठंतस्तत्पुण्येनतत्फलेनचयुज्यंते भगवतितुतदभा
वमालक्ष्यविस्मिताःस्तुवंति अनन्वितमघटमानंयद्यस्मादात्मनास्वयंकर्माचरसिअनुतिष्ठसि नत्वज्यसेलिप्यसे यतश्चान्योविभूतयेसंपदेईश्व
रीमुपसेदुःलक्ष्मींभेजुः यद्वा यतइतिसार्वविभक्तिकस्तासिः यामित्यर्थः भवांस्तुस्वयमेवानुवर्तमानांतांनमन्यतेनाद्रियते ॥ ३४ ॥
सिद्धास्तुतत्कथासुखमभिनंदंतःस्तुवंति अयंनोमनोगजःत्वत्कथैवमृष्टंशुद्धंपीयूषं तन्मयीयानदीतस्यामवगाढः प्रविष्टोदावाग्नितुल्यंसंसा

पत्न्यऊचुः यज्ञोऽयंतवयजनायकेनसृष्टोविध्वस्तःपशुपतिनाद्यदक्षकोपात् ॥ तंनस्त्वंशवशयनाभशांत
मेधंयज्ञात्मन्नलिनरुचादृशापुनीहि ॥ ३३ ॥ ऋषयऊचुः अनन्वितंतेभगवन्विचेष्टितंयदात्मनाचरसिहि
कर्मनाज्यसे ॥ विभूतयेयतउपसेदुरीश्वरींनमन्यतेस्वयमनुवर्त्ततींभवान् ॥ ३४ ॥ सिद्धाऊचुः अयंत्वत्क
थामृष्टपीयूषनद्यांमनोवारणःक्लेशदावाग्निदग्धः ॥ तृषार्त्तोऽवगाढोनसस्मारदावंननिष्क्रामतिब्रह्मसंपन्न
वन्नः ॥ ३५ ॥ यजमान्युवाच स्वागतंतेप्रसीदेशतुभ्यंनमःश्रीनिवासश्रियाकांतयात्राहिनः ॥ त्वामृतेऽ
धीशनांगैर्मखःशोभतेशीर्षहीनःकबंधोयथापूरुषः ॥ ३६ ॥ लोकपालाऊचुः दृष्टःकिंनोदृग्भिरसद्ग्रहैस्त्वंप्र
त्यग्द्रष्टादृश्यतेयेनदृश्यं ॥ मायाह्येषाभवदीयाहिभूमन्यस्त्वंषष्ठःपंचभिर्भासिभूतैः ॥ ३७ ॥

रतापंनसंस्मरति नचततोनिर्गच्छति ब्रह्मसंपन्नवत्ब्रह्मैक्यंप्राप्तइव ॥ ॥३५॥ यजमानीदक्षपत्नीस्तौति तेस्वागतंभद्रमागमनंजातं हेअ
धीशयथाशिरसाहीनःकबंधमात्रःपुरुषोंऽगैःकरचरणाद्यवयवैः शोभमानैरपिनशोभते तथात्वांविनाकेवलंप्रयाजाद्यंगैर्मखोनशोभते अतोनः
श्रियासहत्रायस्व त्वद्भक्तान्कुर्वित्यर्थः ॥३६॥ लोकपालास्त्वीश्वरत्वाभिमानारूढाभगवतस्तत्त्वमपश्यंतःऊचुः दृष्टःकिंनदृष्टइत्यर्थःकुतः
असद्ग्रहैः पुरस्त्वमाविष्टालिंगत्वादसत्प्रकाशरूपाभिःदृग्भिरिंद्रियैः अयंभावःशुद्धचित्तानां त्वंशुद्धसत्वमूर्तिर्भासि अस्माकंतुबहिर्मुखेंद्रिया
णांपंचभूतोपलक्षितोजीवाविशेषइवावभासि अतस्त्वमस्मदिंद्रियगोचरोनभवासि धिगस्मज्जीवितमिति ॥ ३७ ॥

योगेश्वरास्तदभेदेनभजतामनुग्रहभाक्त्वंमन्यमानाः स्वामिभृत्यभावेनभजतामप्यनुग्रहंप्रार्थयमानाःस्तुवंतिद्वाभ्यां प्रेयानिति विश्वात्मनि परब्रह्मणि त्वयियआत्मनः पृथक्त्वंनेक्षेत अमुतःअमुष्मादन्यः तेप्रेष्ठोनास्ति आत्मनोजीवान् पृथक्त्वंनेक्षेतेतिवा हेवत्सलभक्तजनप्रिय अनन्यवृत्याअव्यभिचारिण्याभक्त्याभजतोऽनुगृहाणेत्यर्थः ॥ ३८ ॥ अव्यभिचारिणीभक्तिःकथंस्याद्भजनीयानांबहुत्वादित्याशंक्याहुः जगतउद्भवादिषुनिमित्तेषुदैवतोजीवादृष्टाद्बहुधाभिद्यमानागुणायस्यास्तयास्वमाययात्मनिस्वरूपेरचिताब्रह्मादिभेदमतिर्येनतस्मै स्वसंस्थयाकेवलस्वरूपावस्थानेनचविनिवर्त्तितोभेदभ्रमोगुणाश्चतद्धेतवआत्मनियेनतस्मै ॥ ३९ ॥ शब्दब्रह्मस्तौति नमस्तइति श्रितंस्वीकृतं

योगेश्वराऊचुः प्रेयान्नतेऽन्योऽस्त्यमुतस्त्वयिप्रभोविश्वात्मनीक्षेन्नपृथग्यआत्मनः ॥ अथापिभक्त्येशतथोपधावतामनन्यवृत्त्याऽनुगृहाणवत्सल ॥३८ ॥ जगदुद्भवस्थितिलयेषुदैवतोबहुभिद्यमानगुणयात्ममायया ॥ रचितात्मभेदमतयेस्वसंस्थयाविनिवर्त्तितभ्रमगुणात्मनेनमः ॥ ३९ ॥ ब्रह्मोवाच नमस्तेश्रितसत्वायधर्मादीनांचसूतये ॥ निर्गुणायचयत्काष्ठांनाहंवेदापरेऽपिच ॥ ४० ॥ अग्निरुवाच यत्तेजसाऽहंसुसमिद्धतेजाहव्यंवहेस्वध्वरआज्यसिक्तं ॥ तंयज्ञियंपंचविधंचपंचभिःस्विष्टंयजुर्भिःप्रणतोस्मियज्ञं ॥ ४१ ॥

सत्वंयेन अतःभक्त्यादिफलप्रसवित्रेसत्वगुणत्वंनिर्गुणत्वंचैकस्यकथमित्याशंक्याह यस्यकाष्ठांतत्वंनाहंवेद्मि अपरेब्रह्मादयश्चनविदुस्तस्मै ॥ ४० ॥ अग्निस्तुयज्ञमूर्तिंप्रणमति यस्यतेजसासुष्ठुसमिद्धंप्रदीप्तंतेजोयस्य सोऽहंप्रशस्तेअध्वरेहविर्वहामि तंयज्ञियं यज्ञायहितं पालकं यज्ञंयज्ञमूर्तिम् पंचविधत्वमैतरेयकेउक्तं सएषयज्ञः पंचविधोऽग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यानिपशुः सोमइतिपंचभिर्यजुर्भिर्मंत्रैः स्विष्टंसुपूजितं तथाचश्रुतिः ओश्रावयेतिचतुरक्षरमस्तुश्रौषडितिचतुरक्षरंयजेतिद्व्यक्षरंयेयजामहइतिपंचाक्षरंद्व्यक्षरोवषट्कारः स्मृतिश्चचतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचाभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदत्विति ॥ ४१ ॥

देवास्तुसत्यंवयमपिदेवास्तथाऽपिजगदाद्यंतयोस्त्वमेवनान्यःकश्चिदित्याहुः पुरेति कल्पापायेप्रलयेविकृतंकार्यजातमुदरीकृत्यसंहृत्यत्व मेवाद्यःपुमान् उरगेंद्रएवाधिकंशयनंशय्यातस्मिन् शेषेशयनंकरोषि सिद्धैर्जनलोकादिवासिभिः विमृशिताविचिंतिताऽध्यात्मपदवीज्ञान मार्गोयस्यसएवत्वं यइदानीमक्ष्णोःपथिचरासिप्रत्यक्षोसि अवासिरक्षसि॥४२॥गंधर्वाप्सरसस्तुवयंभियाकेवलंसर्वानपिपरमेश्वरत्वेनोपइलो कयामः त्वमेवतुपरमेश्वरः अन्येतुत्वदंशाएवेत्याहुः अंशांशाइति हेभूमन्महत्तम क्रीडाभांडंक्रीडोपकरणंविश्वंब्रह्मांडंयस्यतस्मैतेनमनं कुर्मः ॥ ४३ ॥ विद्याधरास्तुकेवलंविद्याभिःसंपदःप्राप्यंते अहंकारादिव्यामोहानिवृत्तिस्तुत्वत्कथाश्रवणंविनानास्तीत्याहुः अर्थं

देवाऊचुः पुराकल्पापायेस्वकृतमुदरीकृत्यविकृतंत्वमेवाद्यस्तस्मिन्सलिलउरगेंद्राधिशयने ॥ पुमान्शे षेसिद्धैर्हृदिविमृशिताध्यात्मपदविःसएवाद्याक्ष्णोर्यःपथिचरसिभृत्यानवसिनः ॥ ४२ ॥ गंधर्वाऊचुः अं शांशास्तेदेवमरीच्यादयएतेब्रह्मेंद्राद्यादेवगणारुद्रपुरोगाः॥ क्रीडाभांडंविश्वमिदंयस्यचभूमन्तस्मैनित्यं नाथनमस्तेकरवाम ॥४३॥ विद्याधराऊचुः त्वन्माययाऽर्थमभिपद्यकलेवरेऽस्मिन्कृत्वाममाहमितिदुर्म तिरुत्पथैःस्वैः ॥ क्षिप्तोप्यसद्विषयलालसआत्ममोहंयुष्मत्कथामृतनिषेवकउद्व्युदस्येत् ॥ ४४ ॥ ब्राह्म णाऊचुः त्वंक्रतुस्त्वंहविस्त्वंहुताशःस्वयंत्वंहिमंत्रःसमिद्दर्भपात्राणिच ॥ त्वंसदस्यर्त्विजोदंपतीदेवताअग्नि होत्रंस्वधासोमआज्यंपशुः ॥ ४५ ॥ त्वंपुरागांरसायामहासूकरोदंष्ट्रयापद्मिनींवारणेंद्रोयथा ॥ स्तूयमा नोनदँल्लीलयायोगिभिर्व्युज्जहर्थत्रयीगात्रयज्ञक्रतुः ॥ ४६ ॥

पुरुषार्थसाधनंकलेवरमभिपद्यप्राप्यत्वन्माययाऽस्मिन्ममेत्यहमितिचाभिमानंकृत्वाइममात्ममोहंयुष्मत्कथाऽमृतनिषेवकउत्उच्चैर्व्यदस्येत्प रित्यजेन्नान्यः ननुस्वैःपुत्रादिभिरधिक्षिप्तोदुःखितःसन्परित्यजेदेवनेत्याहुः क्षिप्तोऽपिदुर्मतिःअसत्सुविषयेष्वेवलालसातृष्णायस्यसः॥४४॥ ब्राह्मणाःस्तुवंतित्वमितित्रिभिः सदस्याश्चऋत्विजश्च॥ ४५ ॥गांपृथ्वीं रसायाःरसातलात् दंष्ट्रयाव्युज्जहर्थविशेषेणोद्धृतवानासियोगिभिस्तू यमानःहेत्रयीगात्र वेदमूर्त्ते यज्ञोयागः सयूपःक्रतुस्तद्विशेषः तद्रूपी यज्ञसंकल्परूपइतिवा यज्ञःक्रतुःकर्मयस्येतिवा ॥ ४६ ॥

सत्वमस्माकंत्वद्दर्शनमाकांक्षतांप्रसीद अस्मद्यज्ञमप्युद्धरेत्यर्थः नचाशक्यंतवएतत् यतस्तवनाम्निकीर्त्यमानएवयज्ञविघ्नाःक्षयंयांति एवंप्र
भावोयस्तस्मैनमः ॥ ४७ ॥ इत्यनेनप्रकारेणसर्वैःकीर्त्यमाने हेभद्रविदुर संनिन्येप्रवर्त्तयामास ॥ ४८ ॥ सर्वात्मतयासर्वभागभोक्ताऽपिभग
वान्निजानंदतृप्तोऽपिस्वेनभागेनत्रिकपालपुरोडाशेनप्रीयमाणइव दक्षमाभाष्यसंबोध्यवचोबभाषे ॥ ४९ ॥ योऽहंजगतःकारणंआत्माचेश्व
रश्चउपद्रष्टासाक्षीचस्वयंप्रकाशश्चानिरुपाधिश्चसएवब्रह्माशर्वश्चेत्यन्वयः ॥ ५० ॥ कुतइत्यतआह अहमेवात्ममायामाधिष्ठायजगत्सृष्ट्यादि

सप्रसीदत्वमस्माकमाकांक्षतांदर्शनंतेपरिभ्रष्टसत्कर्मणां ॥ कीर्त्यमानेनृभिर्नाम्नियज्ञेशतेयज्ञविघ्नाःक्षयंयां
तितस्मैनमः ॥ ४७ ॥ मैत्रेयउवाच इतिदक्षःकविर्यज्ञंभद्ररुद्रावमर्शितं ॥ कीर्त्यमानेहृषीकेशेसंनिन्ये
यज्ञभावने ॥ ४८ ॥ भगवान्स्वेनभागेनसर्वात्मासर्वभागभुक् ॥ दक्षंबभाषआभाष्यप्रीयमाणइवानघ
॥ ४९ ॥ श्रीभगवानुवाच अहंब्रह्माचशर्वश्चजगतःकारणंपरं ॥ आत्मेश्वरउपद्रष्टास्वयंदृगविशेषणः॥
॥ ५० ॥ आत्ममायांसमाविश्यसोऽहंगुणमयींद्विज ॥ सृजन्रक्षन्हरन्विश्वंदध्रेसंज्ञांक्रियोचितां ॥ ५१ ॥
तस्मिन्ब्रह्मण्यद्वितीयेकेवलेपरमात्मनि ॥ ब्रह्मरुद्रौचभूतानिभेदेनाज्ञोऽनुपश्यति ॥ ५२ ॥ यथापुमान्न
स्वांगेषुशिरःपाण्यादिषुक्वचित् ॥ पारक्यबुद्धिंकुरुतेएवंभूतेषुमत्परः ॥ ५३ ॥ त्रयाणामेकभावानांयोनप
श्यतिवैभिदां ॥ सर्वभूतात्मनांब्रह्मन्सशांतिमधिगच्छति ॥ ५४ ॥ मैत्रेयउवाच एवंभगवतादिष्टःप्रजा
पतिपतिर्हरिं ॥ अर्चित्वाक्रतुनास्वेनदेवानुभयतोऽयजत् ॥ ५५ ॥ रुद्रंचस्वेनभागेनह्युपाधावत्समाहितः ॥
कर्मणोदवसानेनसोमपानितरानपि ॥ उदवस्यसहर्त्विग्भिःसस्नाववभृथंततः ॥ ५६ ॥

कुर्वन्सन्सचाक्रियोचितांसंज्ञांधारयामि ॥ ५१ ॥ तस्मिन्केवलेऽद्वितीयेसमानासमानजातीयभेदरहितेब्रह्मणिमयि ब्रह्मरुद्रौभूतानिचभेदेना
ज्ञःपश्यतीत्यर्थः ॥ ५२ ॥ विद्वांस्तुभेदंनपश्यतीतिसदृष्टांतमाह यथेति ॥ ५३ ॥ तस्मादेवमैक्यंपश्यन्कृतार्थोभवतीत्याह त्रयाणामेकोभावः
स्वरूपंयेषां ॥ ५४ ॥ स्वेनक्रतुनात्रिकपालेष्ट्या उभयतःअंगैःप्रधानेनच ॥ ५५ ॥ स्वेनभागेनयज्ञावशिष्टेन उदवस्यतेसमाप्यतेऽनेने
त्युदवसानंतेनकर्मणा सोमपानितरानपिउपाधावदित्यनुषंगः ततश्चउदवस्यकर्मसमाप्य अवभृथरूपंयथाभवातितथास्नातवान् ॥ ५६ ॥

स्वेनैवानुभावेनाप्तराधसेप्राप्तसिद्धयेतस्माअपि ॥ ५७ ॥ ५८ ॥ आवृंक्तेभजतेस्म अनन्यभावानामेकैवगतिः यःतं प्रलयकालेसुप्ताशक्तिरी
श्वरमिव ॥ ५९ ॥ बृहस्पतेःशिष्यान्मयाश्रुतं । ६० ॥ परंपवित्रंयआकर्ण्यतथाऽनुकीर्त्तयेत्सः आत्मनःपरस्यापिअघंसंसारव्यसनंसर्वदाधुनो
ति ॥ ६१ ॥ इतिचतुर्थेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ दक्षकन्याऽन्वयेप्राप्तादक्षयज्ञकथोदिता ॥ मनुपुत्रान्वयेप्राप्ताध्रुवचर्याऽ
थपंचभिः ॥ १ ॥ अष्टमेगुरुदारोक्तिरोषमत्सरतःपुरात् ॥ निर्गतेनध्रुवेणाहतपसातोषणंहरेः ॥ एवंतावन्मनुकन्याऽन्वयोक्त्यैवमरीच्यादीनां

तस्माअप्यनुभावेनस्वेनैवावाप्तराधसे ॥ धर्मएवमतिंदत्वात्रिदशास्तेदिवंययुः ॥ ५७ ॥ एवंदाक्षायणी
हित्वासतीपूर्वकलेवरं ॥ जज्ञेहिमवतःक्षेत्रेमेनायामितिशुश्रुम ॥ ५८ ॥ तमेवदयितंभूयआवृंक्तेपतिमं
बिका ॥ अनन्यभावैकगतिंशक्तिःसुप्तेवपूरुषं ॥५९ ॥ एतद्भगवतःशंभोःकर्मदक्षाध्वरद्रुहः ॥ श्रुतंभाग
वताच्छिष्यादुद्धवान्मेबृहस्पतेः ॥६०॥ इदंपवित्रंपरमीशचेष्टितंयशस्यमायुष्यमघौघमर्षणं ॥ योनित्यदा
कर्ण्यनरोऽनुकीर्तयेद्धुनोत्यघंकौरवभक्तिभावतः ॥ ६१ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेदक्षयज्ञसं
धानोनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ मैत्रेयउवाच सनकाद्यानारदश्चऋभुर्हंसोऽरुणिर्यतिः ॥नैते
गृहान्ब्रह्मसुताह्यावसन्नूर्ध्वरेतसः ॥ १ ॥ मृषाधर्मस्यभार्यासीद्दंभंमायांचशत्रुहन् ॥ असूतमिथुनंतत्तुनि
र्ऋतिर्जगृहेऽप्रजः ॥ २ ॥ तयोःसमभवल्लोभोनिकृतिश्चमहामते ॥ ताभ्यांक्रोधश्चहिंसायद्दुरुक्तिःस्व
साकलिः ॥ ३ ॥ दुरुक्तौकलिराधत्तभयंमृत्युंचसत्तम ॥ तयोश्चमिथुनंजज्ञेयातनानिरयस्तथा ॥ ४ ॥
संग्रहेणमयाख्यातःप्रतिसर्गस्तवानघ ॥ त्रिःश्रुत्वैतत्पुमान्पुण्यंविधुनोत्यात्मनोमलं ॥ ५ ॥

ब्रह्मपुत्राणांवंशावर्णिताः तत्रावशिष्टंकिंचिदाह सनकाद्याइति नावसन्नाश्रिताः ऊर्ध्वरेतसोनैष्ठिकाः अतस्तेषांवंशोनास्ति ॥ १ ॥
अधर्मोऽपिब्रह्मपुत्रस्तस्यवंशमाह मृषेतिचतुर्भिः दंभःपरप्रतारणं मायातदुचिताचेष्टा तयोःसोदरयोरपिदांपत्यमधर्मांशतया एवमुपर्यपि
अप्रजःअपुत्रः ॥ २ ॥ निकृतिःशठता यत्याभ्यां कलिश्चतस्यस्वसादुरुक्तिश्चेत्यर्थः ॥ ३ ॥ यातनातीव्रवेदना ॥ ४ ॥ प्रतिसर्गोऽनुसर्गएव यद्वा
प्रतिसर्गःप्रलयःअधर्मस्यप्रलयहेतुत्वात्प्रतिसर्गत्वं एतत्एतमधर्मवंशं पुण्यमिति वर्जनद्वारापुण्यहेतुत्वात् ॥ ५ ॥ ॥

मनोःपुत्रवंशं हरेरंशोब्रह्मातस्यांशाद्देहार्धाज्जन्मयस्य ॥ ६ ॥ जगतोरक्षायांस्थितौ ॥ ७ ॥ सुनीतिःसुरुचिश्चजायेतयोर्मध्ये ॥ ८ ॥ तयोः प्रियाप्रियत्वंप्रपंचयन्ध्रुवचरित्रमाहपंचभिरध्यायैः सुरुचेः पुत्रमुत्तमसंज्ञंलालयन् ॥ ९ ॥ तथाअंकारोहणंचिकीर्षमाणं ॥ १० ॥ गर्वो क्तिमेवाहत्रिभिःनेति नृपतेर्धिष्ण्यमासनं नृपात्मजोऽपिभवान्नारोढुमर्हति ॥ ११ ॥ १२ ॥ पुरुषमीश्वरं ॥ १३ ॥ मिषंतंपश्यंतं सन्नवाचं





अथातःकीर्तयेवंशंपुण्यकीर्तेःकुरूद्वह ॥ स्वायंभुवस्यापिमनोर्हरेरंशांशजन्मनः ॥ ६ ॥ प्रियव्रतोत्तानपादौशतरूपापतेःसुतौ ॥ वासुदेवस्यकलयारक्षायांजगतःस्थितौ ॥ ७ ॥ जायेउत्तानपादस्यसुनीतिःसुरुचिस्तयोः ॥ सुरुचिःप्रेयसीपत्युर्नेतरायत्सुतोध्रुवः ॥ ८ ॥ एकदासुरुचेःपुत्रमंकमारोप्यलालयन् ॥उत्तमंनारुरुक्षंतंध्रुवंराजाऽभ्यनंदत ॥ ९ ॥ तथाचिकीर्षमाणंतंसपत्न्यास्तनयंध्रुवं ॥ सुरुचिःशृण्वतोराज्ञःसेर्ष्यमाहातिगर्विता ॥ १० ॥ नवत्सनृपतेर्धिष्ण्यंभवानारोढुमर्हति ॥ नगृहीतोमयायत्त्वंकुक्षावपिनृपात्मजः ॥ ११ ॥ बालोऽसिबतनात्मानमन्यस्त्रीगर्भसंभृतं ॥ नूनंवेदभवान्यस्यदुर्लभेऽर्थेमनोरथः ॥ १२ ॥ तपसाराध्यपुरुषंतस्यैवानुग्रहेणमे ॥ गर्भेत्वंसाधयात्मानंयदीच्छसिनृपासनं ॥ १३ ॥ मैत्रेयउवाच मातुःसपत्न्याःसुदुरुक्तिविद्धःश्वसन्रुषादंडहतोयथाऽहिः ॥ हित्वामिषंतंपितरंसन्नवाचंजगाममातुःप्ररुदन्सकाशं ॥ १४ ॥ तंनिःश्वसंतंस्फुरिताधरोष्ठंसुनीतिरुत्संगउदूह्यबालं ॥ निशम्यतत्पौरमुखान्नितांतंसाविव्यथेयद्गदितंसपत्न्याः ॥ १५ ॥ सोत्सृज्यधैर्यंविललापशोकदावाग्निनादावलतेवबाला ॥ वाक्यंसपत्न्याःस्मरतीसरोजश्रियादृशाबाष्पकलामुवाह ॥ १६ ॥ दीर्घंश्वसंतीवृजिनस्यपारमपश्यतीबालकमाहबाला ॥ मामंगलंतातपरेष्वमंस्थाभुंक्तेजनोयत्परदुःखदस्तत् ॥ १७ ॥



कुंठितवाचं ॥ १४ ॥ उदूह्यआरोप्य अंतःपुरजनमुखात्श्रुत्वा ॥ १५ ॥ शोकएवदावाग्निस्तेन दावाग्निगतालतेवस्थितासाबाला । विलापंचकार ॥ १६ ॥ वृजिनस्यदुःखस्य अमंगलमपराधं परेषुमामंस्थाः यद्यतःपरेभ्योदुःखंददातियःसःस्वदत्तमेवदुःखंभुंक्ते ॥ १७ ॥

दुर्भगयामयाउदरेगृहीतः तस्याएवस्तन्येनवृद्धश्च दुर्भगत्वमेवाह यांमामिडस्पतिर्भूपतिर्भार्येतिवोढुंस्वीकर्तुंविलज्जते वाशब्दद्दासीत्यपि ॥१८॥पितृभार्यात्वेनमात्रासमामातुःसपत्नी तयापियदुक्तंतपसाराध्यपुरुषमित्यादितदातिष्ठकुरु अध्यासनंयदीच्छसि ॥ १९ ॥ परिचर्यानिषेव्य विश्वविभावनायपालनायात्तास्वीकृता गुणाभिपत्तिःसत्त्वगुणाधिष्ठानंयेनतस्य जितआत्मामनःश्वसनःप्राणश्चयैस्तैरभिवंद्यं ॥ २०॥

सत्यंसुरुच्याऽभिहितंभवान्मेयद्दुर्भगायाउदरेगृहीतः ॥ स्तन्येनवृद्धश्चविलज्जतेयांभार्येतिवावोढुमिडस्पतिर्माम् ॥ १८ ॥ आतिष्ठतत्तातविमत्सरस्त्वमुक्तंसमात्राऽपियदव्यलीकं ॥ आराधयाधोक्षजपादपद्मंयदीच्छसेऽध्यासनमुत्तमोयथा ॥ १९ ॥ यस्यांघ्रिपद्मंपरिचर्यविश्वविभावनायात्तगुणाभिपत्तेः ॥ अजोऽध्यतिष्ठत्खलुपारमेष्ठ्यंपदंजितात्मश्वसनाभिवंद्यं ॥ २० ॥ तथामनुर्वोभगवान्पितामहोयमेकमत्यापुरुदक्षिणैर्मखैः ॥ इष्ट्वाऽभिपेदेदुरवापमन्यतोभौमंसुखंदिव्यमथापवर्ग्यं ॥२१॥ तमेववत्साश्रयभृत्यवत्सलंमुमुक्षुभिर्मृग्यपदाब्जपद्धतिं ॥ अनन्यभावेनिजधर्मभावितेमनस्यवस्थाप्यभजस्वपूरुषं ॥२२॥ नान्यंततःपद्मपलाशलोचनाद्दुःखच्छिदंतेमृगयामिकंचन ॥ योमृग्यतेहस्तगृहीतपद्मयाश्रियेतरैरंगविमृग्यमाणया ॥२३॥ मैत्रेयउवाच एवंसंजल्पितंमातुराकर्ण्यार्थागमंवचः ॥ संनियम्यात्मनात्मानंनिश्चक्रामपितुःपुरात् ॥२४॥ नारदस्तदुपाकर्ण्यज्ञात्वातस्यचिकीर्षितं ॥ स्पृष्ट्वामूर्धन्यघघ्नेनपाणिनाप्राहविस्मितः ॥ ॥२५॥ अहोतेजःक्षत्रियाणांमानभंगममृष्यतां ॥ बालोऽप्ययंहृदाधत्तेयत्समातुरसद्वचः ॥ २६ ॥ नारदउवाच नाधुनाऽप्यवमानंतेसन्मानंवापिपुत्रक ॥ लक्षयामःकुमारस्यसक्तस्यक्रीडनादिषु ॥ २७ ॥

एकमत्यासर्वांतर्यामिदृष्ट्या ॥ २१ ॥ मृग्यापदाब्जयोःपद्धतिर्मार्गोयस्य तमेवाश्रयशरणंव्रज तेतोभजस्व नान्यस्मिन्भावोयस्यतस्मिन् निजधर्मैर्भाविते शोधिते ॥ २२ ॥ तमेवेत्यनेनसूचितंसर्वोत्तमत्वंप्रपंचयतिनान्यमिति हस्तेनगृहीतंदीपवत्पद्मंयया इतरैर्ब्रह्मादिभिः ॥२३ ॥ संजल्पितंविलापं ततः अर्थस्यागमोयस्मात्तथाभूतंवचआकर्ण्य ॥ २४ ॥ २५॥ विस्मितइत्युक्तंतदेवाह अहोतेजःप्रभावः ॥ २६ ॥ २७ ॥

विकल्पेमानापमानाविवेकेसत्यपि भिन्नानसंतिकिंतुमोहकाल्पिताएवेत्यर्थः कुतः यत्सुखंदुःखंवातन्निजकर्मभिरेवभवतियतः ॥ २८ ॥ उपशमोपदेशेनानिवर्तयाति परितुष्येदितिषड्भिः ईश्वरगतिंवीक्ष्यईश्वरानुकूल्यंविनानोद्यमाःफलहेतवइतिज्ञात्वा परितुष्येत्संतोषमेवकुर्यात् ॥ २९ ॥ दुष्करश्चतवायमुद्यमइत्याहअथेतिद्वाभ्यां यस्यप्रसादमवरोढुंप्राप्तुमिच्छसि ॥३०॥ निःसंगेनतीव्रयोगेनसमाधिनामृगयंतोऽपियस्यपदवींमार्गंनाविदुःसदेवोदुराराध्यः ॥ ३१ ॥ श्रेयसांकालेवृद्धत्वे ॥३२॥ सुखदुःखयोर्मध्येसुखेसतिपुण्यंक्षीयतइतिदुःखेसतिपापं

विकल्पेविद्यमानेऽपिनह्यसंतोषहेतवः ॥ पुंसोमोहमृतेभिन्नायल्लोकेनिजकर्मभिः ॥ २८ ॥ परितुष्येत्ततस्तातताववन्मात्रेणपूरुषः ॥ दैवोपसादितंयावद्वीक्ष्येश्वरगतिंबुधः ॥ २९ ॥ अथमात्रोपदिष्टेनयोगेनावरुरुत्ससि ॥ यत्प्रसादंसवैपुंसांदुराराध्योमतोमम ॥ ३० ॥ मुनयःपदवींयस्यनिःसंगेनोरुजन्मभिः ॥ नविदुर्मृगयंतोऽपितीव्रयोगसमाधिना ॥३१॥ अतोनिवर्ततामेषनिर्बंधस्तवनिष्फलः ॥ यतिष्यतिभवान्कालेश्रेयसांसमुपस्थिते ॥३२॥ यस्ययद्दैवविहितंसतेनसुखदुःखयोः॥आत्मानंतोषयन्देहीतमसःपारमृच्छति ॥ ३३ ॥ गुणाधिकान्मुदंलिप्सेदनुक्रोशंगुणाधमात् ॥ मैत्रींसमानादन्विच्छेन्नतापैरभिभूयते ॥ ३४ ॥ ध्रुवउवाच सोऽयंशमोभगवतासुखदुःखहतात्मनां ॥ दर्शितःकृपयापुंसांदुर्दर्शोऽस्मद्विधैस्तुयः ॥ ३५ ॥ अथापिमेविनीतस्यक्षात्रंघोरमुपेयुषः ॥ सुरुच्यादुर्वचोबाणैर्नभिन्नेश्रयतेहृदि ॥ ३६ ॥ पदंत्रिभुवनोत्कृष्टंजिगीषोःसाधुवर्त्ममे ॥ ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितं ॥३७॥ नूनंभवान्भगवतोयोऽगजःपरमेष्ठिनः ॥ वितुदन्नटतेवीणांहितार्थंजगतोऽर्कवत् ॥ ३८ ॥ मैत्रेयउवाच इत्युदाहृतमाकर्ण्यभगवान्नारदस्तथा ॥ प्रीतःप्रत्याहतंबालंसद्वाक्यमनुकंपया ॥ ३९ ॥　　॥　　॥

क्षीयतइत्यात्मानंतोषयन्तमसःपारंमोक्षंप्राप्नोति ॥ ३३ ॥ किंच गुणैरधिकात्पुंसइतिल्यब्लोपेपंचमी तंदृष्ट्वाप्रीतिंकुर्यात् नत्वसूयामित्यर्थः अनुक्रोशंकृपांलिप्सेत् नतुतिरस्कारं समानान्मैत्रींनतुस्पर्धां ॥ ३४ ॥ ३५ ॥ क्षात्रंस्वभावंप्राप्तवतः अतएवाविनीतस्य दुर्वाक्यबाणैर्भिन्नेहृदिनश्रयतेनातिष्ठति ॥ ३६ ॥ अन्यैरनाधिष्ठितंत्रिभुवनेउत्कृष्टपदंजेतुमिच्छोर्मे साधुवर्त्ममार्गंब्रूहि ॥ ३७ ॥ अंकजइतिपाठे उत्संगाज्जातोयोनारदःसभवान् वीणांवितुदन्वादयन् हिताय अटति ॥ ३८ ॥ ३९ ॥　　॥　　॥

निःश्रेयसस्यअभिप्रेतार्थस्यपंथाः कोऽसावित्यतआह भगवान्वासुदेवः अतएवतंभज ॥ ४० ॥ ४१ ॥ मधुवनाख्यंयमुनायास्तटंगच्छ यत्रमधुवने ॥ ४२ ॥ अध्ययनाद्यभावेऽपिआत्मनउचितानियोग्यानिदेवतानमस्कारादीनि कृत्वेतियमनियमाउक्ताः आसनकल्पनंचकुशादिभिःस्वस्तिकादिभिश्च ॥ ४३ ॥ प्राणेंद्रियमनसांमलंचांचल्यंव्युदस्योति प्राणायामप्रत्याहारौ धारणामाहअभिध्यायेदित्यादिषड्भिः

नारदउवाच जनन्याभिहितःपंथाःसवैनिःश्रेयसस्यते ॥ भगवान्वासुदेवस्तंभजतत्प्रवणात्मना॥४०॥ धर्मार्थकाममोक्षाख्यंयइच्छेच्छ्रेयआत्मनः ॥ एकमेवहरेस्तत्रकारणंपादसेवनं ॥ ४१ ॥ तत्तातगच्छभद्रंतेयमुनायास्तटंशुचि ॥ पुण्यंमधुवनंयत्रसान्निध्यंनित्यदाहरेः ॥ ४२ ॥ स्नात्वाऽनुसवनंतस्मिन्कालिंद्याःसलिलेशिवे ॥ कृत्वोचितानिनिवसन्नात्मनःकल्पितासनः ॥ ४३ ॥ प्राणायामेनत्रिवृताप्राणेंद्रियमनोमलं ॥ शनैर्व्युदस्याभिध्यायेन्मनसागुरुणागुरुं ॥ ४४ ॥ प्रसादाभिमुखंशश्वत्प्रसन्नवदनेक्षणं ॥ सुनासंसुभ्रुवंचारुकपोलंसुरसुंदरं ॥ ४५ ॥ तरुणंरमणीयांगमरुणोष्ठेक्षणाधरं ॥ प्रणताश्रयणंनृम्णंशरण्यंकरुणार्णवं ॥ ४६ ॥ श्रीवत्सांकंघनश्यामंपुरुषंवनमालिनं ॥ शंखचक्रगदापद्मैरभिव्यक्तचतुर्भुजं ॥४७॥ किरीटिनंकुंडलिनंकेयूरवनमालिनं ॥ कौस्तुभाभरणग्रीवंपीतकौशेयवाससं ॥ ४८ ॥ कांचीकलापपर्यस्तंलसत्कांचननूपुरं ॥ दर्शनीयतमंशांतंमनोनयनवर्धनं ॥ ४९ ॥ पद्भ्यांनखमणिश्रेण्याविलसद्भ्यांसमर्चतां ॥ हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितं ॥ ५० ॥ ॥ ॥

गुरुणाधीरेणमनसागुरुंश्रीहरिम् ॥ ४४ ॥ सुरेषुसुंदरम् ॥४५॥ रमणीयान्यंगानियस्य ओष्ठश्चईक्षणाचओष्ठेक्षणेअरुणेओष्ठेक्षणेधारयतीतितथातम् अरुणमोष्ठमीक्षणंचधारयतीतिवा नृम्णंसुखकरम् यद्वा नृम्णंधनंसर्वपुरुषार्थनिधिमित्यर्थः ॥ ४६ ॥ पुरुषंपुरुषलक्षणयुक्तम् ॥ ॥ ४७ ॥ कौस्तुभस्याभरणंग्रीवायांयस्य ॥ ४८ ॥ कांचीकलापेनपर्यस्तंपरिवेष्टितम् मनोनयनयोर्वर्धनंहर्षकरम् ॥ ४९ ॥ हृत्पद्मकर्णिकायांधिष्ण्यंमध्यस्थानंतदाक्रम्य समर्चतामात्मनिमनासिस्थितम् ॥ ५० ॥ ॥ ॥ ॥ ॥

ध्यानमाह स्मयमानामिति नियतेनप्रागुक्तयाधारणयासुस्थिरे अतएकभूतेनएकाग्रेण धारणोक्तानिविशेषणानिध्यानेऽपिद्रष्टव्यानियद्वा यथोक्तमात्रमेव तदुक्तमेकादशस्कंधे नान्यानिचिंतयेद्भूयःसुस्मितंभावयेन्मुखमिति ॥ ५१ ॥ समाधिमाह एवमिति तूर्णं शीघ्रंसंपन्नं सत् ॥ ५२ ॥ जप्योमंत्रः ॥ ५३ ॥ ५४ ॥ द्रव्याण्येवाह सलिलैरिति शस्तैःदूर्वांकुरैः वन्यैरेवांशुकैःभूर्जत्वगादिभिः ॥ ५५ ॥ पूजाया अधिष्ठानमाह लब्ध्वासंपाद्य द्रव्यमयींशिलादिनिर्मितां पूजासाद्गुण्यहेतूनाहसार्द्धाभ्यां आभृतात्माधृतचित्तः मितंवन्यं भुंक्तइति तथा

स्मयमानमभिध्यायेत्सानुरागावलोकनं ॥ नियतेनैकभूतेनमनसावरदर्षभं ॥ ५१ ॥ एवंभगवतोरूपं सुभद्रंध्यायतोमनः ॥ निवृत्त्यापरयातूर्णंसंपन्नंननिवर्त्तते ॥ ५२ ॥ जप्यश्चपरमोगुह्यःश्रूयतांमेनृपात्मज ॥ यंसप्तरात्रंप्रपठन्पुमान्पश्यतिखेचरान् ॥ ५३ ॥ ओंनमोभगवतेवासुदेवाय मंत्रेणानेनदेवस्यकुर्याद्द्रव्यमयींबुधः ॥ सपर्यांविविधैर्द्रव्यैर्देशकालविभागवित् ॥ ५४ ॥ सलिलैःशुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः ॥ शस्तांकुरांशुकैश्चार्चेत्तुलस्याप्रिययाप्रभुं ॥ ५५ ॥ लब्ध्वाद्रव्यमयीमर्चांक्षित्यंब्वादिषुवार्चयेत् ॥ आभृतात्मामुनिःशांतोयतवाङ्मितवन्यभुक् ॥ ५६ ॥ स्वेच्छाऽवतारचरितैरचिंत्यनिजमायया ॥ करिष्यत्युत्तमश्लोकस्तद्ध्यायेद्धृदयंगतं ॥ ५७ ॥ परिचर्याभगवतोयावत्यःपूर्वसेविताः ॥ तामंत्रहृदयेनैव प्रयुंज्यान्मंत्रमूर्त्तये ॥ ५८ ॥ एवंकायेनमनसावचसाचमनोगतं ॥ परिचर्यमाणोभगवान्भक्तिमत्परिचर्यया ॥ ५९ ॥ पुंसाममायिनांसम्यग्भजतांभाववर्धनः ॥ श्रेयोदिशत्यभिमतंयद्धर्मादिषुदेहिनां ॥ ६० ॥ विरक्तश्चेंद्रियरतौभक्तियोगेनभूयसा ॥ तंनिरंतरभावेनभजेताद्धाविमुक्तये ॥ ६१ ॥ इत्युक्तस्तंपरिक्रम्य प्रणम्यचनृपार्भकः ॥ ययौमधुवनंपुण्यंहरेश्चरणचर्चितम् ॥ ६२ ॥ ॥ ॥

॥ ५६ ॥ यत्करिष्यतीतितदानीमवतारप्राचुर्याभावात् ॥ ५७ ॥ पूर्वसेविताःसेवनंकारिताःकार्यत्वेनविहिताइत्यर्थः मंत्रहृदयेनद्वादशाक्षरेण ॥ ५८ ॥ एवमुक्तरीत्यामनोगतंयथाभवतितथा कायादिभिर्भक्तिमत्यापरिचर्ययापरिचर्यमाणोधर्मार्थकामेषुयत्अभिमतंतत्श्रेयोदिशतीतिद्वयोरन्वयः ॥ ५९ ॥ ६० ॥ विरक्तःसन्भजेत्किमर्थंमुक्तये ॥ ६१ ॥ हरेश्चरणाभ्यांचार्चितंमंडितं ॥ ६२ ॥ ॥

अर्हितंसत्कृत्यसमर्पितमर्हणमर्घादिकंयस्मै ॥ ६३ ॥ किंवानरिष्यतेननश्यतीतिसवितर्कःप्रश्नः ॥ ६४ ॥ मात्रासहनिर्वासितइतितस्या अप्यनादृतत्वात् ॥ ६५ ॥ मास्मादंतिकिंस्विन्नखादंतीत्यर्थः ॥ ६६ ॥ ६७ ॥ देवेनश्रीहरिणागुप्तमात्मसात्कृत्वारक्षितं यस्ययशो

तपोवनंगतेतास्मिन्प्रविष्टोंऽतःपुरंमुनिः ॥ अर्हितार्हणकोराज्ञासुखासनिउवाचतं ॥ ६३ ॥ नारदउवाच राजन्किंध्यायसेदीर्घंमुखेनपरिशुष्यता ॥ किंवानरिष्यतेकामोधर्मोवाऽर्थेनसंयुतः ॥ ६४ ॥ राजोवाच सुतोमेबालकोब्रह्मन्स्त्रैणेनाकरुणात्मना ॥ निर्वासितःपंचवर्षःसहमात्रामहान्कविः ॥ ६५ ॥ अप्यनाथंवनेब्रह्मन्मास्मादंत्यर्भकंवृकाः ॥ श्रांतंशयानंक्षुधितंपरिम्लानमुखांबुजं ॥ ६६ ॥ अहोमेबतदौरात्म्यं स्त्रीजितस्योपधारय ॥ योंऽकंप्रेम्णारुरुक्षंतंनाभ्यनंदमसत्तमः ॥ ६७ ॥ नारदउवाच मामाशुचःस्व तनयंदेवगुप्तंविशांपते ॥ तत्प्रभावमविज्ञायप्रावृंक्तेयद्यशोजगत् ॥ ६८ ॥ सुदुष्करंकर्मकृत्वालोकपालै रपिप्रभुः ॥ एष्यत्यचिरतोराजन्यशोविपुलयंस्तव ॥ ६९ ॥ मैत्रेयउवाच इतिदेवर्षिणाप्रोक्तंविश्रुत्य जगतीपतिः ॥ राजलक्ष्मीमनादृत्यपुत्रमेवान्वचिंतयत् ॥ ७० ॥ तत्राभिषिक्तःप्रयतस्तामुपोष्यविभा वरीं ॥ समाहितःपर्यचरदृष्यादेशेनपूरुषं ॥ ७१ ॥ त्रिरात्रांतेत्रिरात्रांतेकपित्थबदराशनः ॥ आत्मवृत्त्य नुसारेणमासंनिन्येऽर्चयन्हरिं ॥ ७२ ॥ द्वितीयंचतथामासंषष्ठेषष्ठेऽर्भकोदिने ॥ तृणपर्णादिभिःशीर्णैः कृतान्नोऽभ्यर्चयद्विभुं ॥ ७३ ॥ तृतीयंचानयन्मासंनवमेनवमेऽहनि ॥ अब्भक्षउत्तमश्लोकमुपाधावत्स माधिना ॥ ७४ ॥ चतुर्थमपिवैमासंद्वादशेद्वादशेऽहनि ॥ वायुभक्षोजितश्वासोध्यायन्देवमधारयत् ॥ ॥ ७५ ॥ पंचमेमास्यनुप्राप्तेजितश्वासोनृपात्मजः ॥ ध्यायन्ब्रह्मपदैकेनतस्थौस्थाणुरिवाचलः ॥ ७६ ॥

जगत्प्रावृंक्तेव्याप्नोति ॥ ६८ ॥ विपुलयन्विस्तारयन् ॥ ६९ ॥ ७० ॥ ध्रुवोमधुवनेकिमकरोदित्यपेक्षायामाह तत्रेत्यादिना अभिषिक्तः स्नातःयस्यांप्राप्तःतां ॥ ७१ ॥ कपित्थानिबदराणिचअशनंयस्य आत्मवृत्तिःदेहस्थितिःतदनुसारेण ॥ ७२ ॥ ७३ ॥ तृतीयंचआनयन् ईषदिवनयन्नुपाधावदित्यन्वयः प्रतिमाससमाहारसंकोचंतपोऽतिरेकंचकृतवानित्यर्थः ॥ ७४ ॥ ७५ ॥ ७६ ॥

भूतानिशब्दादीनिइंद्रियाणिचआशेरतेयास्मिन् तन्मनआकृष्यब्रह्मध्यायन् ॥ ७७॥ धारयमाणस्यसतः तस्यतेजःसोढुमशक्नुवंतः॥७८॥ तस्यांगुष्ठेननिर्पीडिता आक्रांतासतीमहीतत्रतदाअर्धंननाम समेंशके अर्धशब्दस्यनपुंसकत्वादंशांशिनोरभेदाच्चैवंसामानाधिकरण्यं इभें द्रेणाधिष्ठितातरीनौर्यथापदेपदेसव्यतोदक्षिणतश्चनमतितद्वत् ॥ ७९ ॥ अन्यदप्याश्चर्यमाह तस्मिन्ध्रुवे विश्वंविश्वात्मकंविष्णुमात्मनः सकाशादनन्ययाधियाआत्माभेददृष्ट्या अभिध्यायतिसति किंकृत्वा असुंप्राणंतद्द्वारंचनिरुध्यआत्मन्येकीकृत्यस्वप्राणनिरोधेकृतेविश्वस्य

सर्वतोमनआकृष्यहृदिभूतेंद्रियाशयं ॥ ध्यायन्भगवतोरूपंनाद्राक्षीत्किंचनापरं ॥ ७७ ॥ आधारंमहदादीनांप्रधानपुरुषेश्वरं ॥ ब्रह्मधारयमाणस्यत्रयोलोकाश्चकंपिरे ॥ ७८ ॥ यदैकपादेनसपार्थिवार्भकस्तस्थौतदंगुष्ठनिपीडितामही ॥ ननामतत्रार्धमिभेंद्राधिष्ठितातरीवसव्येतरतःपदेपदे ॥ ७९ ॥ तास्मिन्नभिध्यायतिविश्वमात्मनोद्वारंनिरुध्यासुमनन्ययाधिया ॥ लोकानिरुच्छ्वासनिपीडिताभृशंसलोकपालाःशरणंययुर्हरिं ॥ ८० ॥ देवाऊचुः नैवंविदामोभगवन्प्राणरोधंचराचरस्याखिलसत्त्वधाम्नः ॥ विधेहितन्नोवृजिनाद्विमोक्षंप्राप्तावयंत्वांशरणंशरण्यं ॥ ८१ ॥ श्रीभगवानुवाच माभैष्टबालंतपसोदुरत्ययान्निवर्त्तयिष्येप्रतियातस्वधाम ॥ यतोहिवःप्राणनिरोधआसीदौत्तानपादिर्मयिसंगतात्मा ॥ ८२ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेध्रुवचरितेअष्टमोऽध्यायः ॥ ८ ॥ ॥ मैत्रेयउवाच तएवमुच्छिन्नभयाउरुक्रमेकृतावनामाःप्रययुस्त्रिविष्टपं॥सहस्रशीर्षाऽपिततोगरुत्मतामधोर्वनंभृत्यादिदृक्षयागतः॥१॥

प्राणनिरोधोजातइतिभावः ॥ ८० ॥ एवंप्राणनिरोधंकदाचिदपिनविद्मः अखिलसत्वधाम्नः सर्वप्राणिशरीरस्य तस्माद्वृजिनात् क्लेशात् ॥ ८१ ॥ यतोबालात् कोसौबालः कथंचतस्मात्प्राणनिरोधइत्यतआह उत्तानपादस्यपुत्रोमयिविश्वरूपेसंगतात्मा ऐक्यंप्राप्तोवर्त्ततइति ॥ ८२ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेटीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमेतुहरिंस्तुत्वालब्ध्वातस्माद्वरंध्रुवः ॥ प्रत्यागत्याकरोद्राज्यंपित्रादत्तमितीर्यते ॥ १ ॥ एवंभगवद्वाक्येनगतभयाः ॥ १ ॥ ॥ ॥

सवैध्रुवःयोगविपाकेनदाढर्येननिश्चलया गरुडाधिरूढंपुरतःस्थितमपियदांऽतर्दृष्टित्वादसौनापश्यत्तदाभगवतैवांतःस्वरूपमाकृष्टमंतास्ति
रोहितमुपलक्ष्यव्युत्थितःसन् तदवस्थंयादृगंतःस्फुरितस्तादृशं ॥ २ ॥ आगतसाध्वसःजातसंभ्रमः विनमय्यआनतंकृत्वा संभ्रममेवाह
दृग्भ्यांप्रपिबन्निवपश्यन्नवंदत आस्येनचुंबन्निवावदंत भुजाभ्यामाश्लिषन्निवावंदतेत्यर्थः ॥ ३ ॥ विवक्षंतंतद्गुणान्वक्तुमिच्छंतं अतद्विदं
स्तुत्यादिकर्त्तुमजानंतं अस्यध्रुवस्यसर्वस्यचहृद्यवस्थितत्वात् ज्ञात्वा ब्रह्ममयेनवेदात्मकेनशंखेन ॥ ४ ॥ भगवताप्रतिपादितांगिरंप्रति
पद्येतिशेषः प्रतिपद्यतामितिपाठेतांवेदात्मिकां परिज्ञातःपरात्मनोरीश्वरजीवयोर्निर्णयोयेनसः अतएवभक्त्याभावःप्रेमयस्य असत्वरं

सवैधियायोगविपाकतीव्रयाहृत्पद्मकोशेस्फुरितंताडित्प्रभं ॥ तिरोहितंसहसैवोपलक्ष्यबहिःस्थितंतदव
स्थंददर्श ॥ २ ॥ तद्दर्शनेनागतसाध्वसःक्षितावंदतांगंविनमय्यदंडवत् ॥ दृग्भ्यांप्रपश्यन्प्रपिबन्निवा
र्भकश्चुंबन्निवास्येनभुजैरिवाश्लिषन् ॥ ३ ॥ सतंविवक्षंतमतद्विदंहरिर्ज्ञात्वाऽस्यसर्वस्यचहृद्यवस्थितः ॥ कृ
तांजलिंब्रह्ममयेनकंबुनापस्पर्शबालंकृपयाकपोले ॥ ४ ॥ सवैतदैवप्रतिपादितांगिरंदैवींपरिज्ञातपरात्म
निर्णयः ॥ तंभक्तिभावोऽभ्यगृणादसत्वरंपरिश्रुतोरुश्रवसंध्रुवक्षितिः ॥ ५ ॥ ध्रुवउवाच योंऽतःप्रविश्य
ममवाचमिमांप्रसुप्तांसंजीवयत्यखिलशक्तिधरःस्वधाम्ना ॥ अन्यांश्चहस्तचरणश्रवणत्वगादीन्प्राणान्न
मोभगवतेपुरुषायतुभ्यं ॥ ६ ॥ एकस्त्वमेवभगवन्निदमात्मशक्त्यामायाख्ययोरुगुणयामहदाद्यशेषं ॥
सृष्ट्वाऽनुविश्यपुरुषस्तदसद्गुणेषुनानेवदारुषुविभावसुवद्विभासि ॥ ७ ॥ ॥

स्थैर्येणपरितःश्रुतंविख्यातमुरुश्रवःकीर्त्तिर्यस्यतं ध्रुवाक्षितिःस्थानंयस्येतिभावनिर्देशः ॥ ५ ॥ ईशानुग्रहसंप्राप्तवागाद्यद्भुतवृत्तिभिः ॥
द्वादशादित्यसंकाशैःश्लोकैरस्तौद्धरिंध्रुवः ॥ योमेप्रसुप्तांलीनांवाचमन्यांश्चप्राणानिंद्रियाणिस्वधाम्नाचिच्छक्त्यासंजीवयति यतः आखि
लाश्चक्षुरादिज्ञानक्रियाशक्तीर्धारयतीतितथापुरुषायांतर्यामिणे ॥ ६ ॥ ननुवागादींद्रियशक्तिधरावन्ह्यादयःप्रसिद्धानाहमित्यतआह एक
इति अनुविश्यपुरुषोंऽतर्यामीत्वमेकएव तस्यामायायाः असत्सुगुणेष्विंद्रियादिषुस्थितःसन् तत्तद्देवतारूपोनानेवभासि नतुत्वद्व्यतिरेकेण
ज्ञानक्रियाशक्तिधरःकश्चिदस्तीत्यर्थः ॥ ७ ॥ ॥ ॥ ॥

अपिच किंवक्तव्यंवह्न्यादयोज्ञानादिशक्तिधरानभवंतीति यस्मात्ब्रह्मणोऽपिज्ञानंत्वदधीनमेवेत्याह त्वद्दत्तयावयुनयाज्ञानेनभवंतंशरणं प्रपन्नोब्रह्माइदंविश्वमचष्टअपश्यत् कथंसुप्तःपुरुषःप्रबुद्धःसन्यथापश्यतितद्वत् अतःआपवर्ग्यामुक्तास्तेषामपिशरणं कृतविदासर्वेंद्रिय जीवनेनत्वत्कृतमुपकारंजानताकथंविस्मर्यते एवंभूतंत्वामभजंतःकृतघ्नाइत्यर्थः ॥ ८ ॥ येचमादृशाःकामाद्यर्थंभजंतितेऽतिमूढाइत्याह नूनमिति भवाप्ययौजन्ममरणेतद्विमोक्षेहेतुंत्वामन्यहेतोःकामाद्यर्थंभजंति तेनूनंविमुष्टमतयः वंचितचित्ताः यतस्तेकल्पतरुंत्वामर्चंति ततःकुणपतुल्येनदेहेनोपभोग्यंसुखमिच्छंति नचेच्छायोग्यंतदित्याह यत्स्पर्शजंविषयसंबंधजन्यंसुखंतन्नरकेऽपिभवति ॥ ९ ॥ ननुस्व

त्वद्दत्तयावयुनयेदमचष्टविश्वंसुप्तप्रबुद्धइवनाथभवत्प्रपन्नः ॥ तस्यापवर्ग्यशरणंतवपादमूलंविस्मर्यतेकृतविदाकथमार्तबंधो ॥ ८ ॥ नूनंविमुष्टमतयस्तवमाययातेयेत्वांभवाप्ययविमोक्षणमन्यहेतोः ॥ अर्चंतिकल्पकतरुंकुणपोपभोग्यमिच्छंतियत्स्पर्शजंनिरयेऽपिनृणां ॥ ९ ॥ यानिर्वृतिस्तनुभृतांतवपादपद्मध्यानाद्भवज्जनकथाश्रवणेनवास्यात् ॥ साब्रह्मणिस्वमहिमन्यपिनाथमाभूत्किंत्वंतकासिलुलितात्पततांविमानात् ॥ १० ॥ भक्तिंमुहुःप्रवहतांत्वयिमेप्रसंगोभूयादनंतमहताममलाशयानां ॥ येनांजसोल्बणमुरुव्यसनंभवाब्धिंनेष्येभवद्गुणकथाऽमृतपानमत्तः ॥ ११ ॥ तेनस्मरंत्यतितरांप्रियमीशमर्त्यंयेचान्वदःसुतसुहृद्गृहवित्तदाराः ॥ येत्वब्जनाभभवदीयपदारविंदसौगंध्यलुब्धहृदयेषुकृतप्रसंगाः ॥ १२ ॥

गांदि सुखंसकामैःप्राप्यतेनिष्कामभजनेतन्नस्यादित्यतआह येति स्वमहिमानिनिजानंदरूपेऽपिमाभूत् नभवत्वित्यर्थः अंतकस्यासिना कालेन लुलितात्खंडितात्विमानात्पततांसानास्तीतिकिमुवक्तव्यं ॥ १० ॥ अतस्तेकथाश्रवणायसत्संगातिंदेहीत्याह भक्तिंत्वयिप्रवहतांसातत्येनकुर्वतां ननुमोक्षंकिंनयाचसेअतआह येनमहत्प्रसंगेनअंजसाअयत्नतएवउरूणिव्यसनानियस्मिन् तंनेष्येपारंगमिष्यामि भवद्गुणकथैवामृतंतस्यपानेनमत्तःसन् ॥ ११ ॥ कथाऽमृतपानस्यमादकत्वमाह तेअतितरांप्रियमपिमर्त्यंदेहंनस्मरंति नानुसंदधते येच सुतादयः अदःमर्त्यमनुसंबद्धास्तानपि केतेनस्मरंति येकृतप्रसंगाः केषुभवदीयपदारविंदसौगंध्येनलुब्धंहृदयंयेषांतेषु तुशब्देनान्येषां केवलयोगादिनिष्ठानांदेहाद्यभिमानान्निवृत्तिंदर्शयति ॥ १२ ॥ ॥ ॥ ॥

नन्वेवंविद्वानपित्वंकिमित्यभिमानंवहस्यतआह तिर्यगिति तिर्यङ्नगादिभिःपरिचितंव्याप्तं संतोऽसंतश्चविशेषायस्य महदादीन्यनेकानि
कारणानियस्य हेपरम अज तेइदंस्थविष्ठंविराड्रूपंकेवलंवेद्मि अतःपरमीश्वरस्वरूपंनवेद्मि यत्रवादःशब्दव्यापारोनास्तितद्ब्रह्मरूपंचन
वेद्मि अतोऽभिमानोननिवर्त्ततइतिभावः ॥१३॥ तदेवंभगवदनुकंपयातद्रूपद्वयंज्ञात्वेश्वररूपमनुवर्णयन्नमस्करोति कल्पांतएतादिति ए
तत्त्रैलोक्यंयःपुमान्शेते स्वस्मिन्नेवहृक्नबहिर्यस्ययोगनिद्रारूढत्वात् अनंतसखःशेषसहायः तदंकेशेषोत्संगे यस्यनाभिरेवसिंधुःसमुद्रः
तस्मिन्रोहतीतितथा तस्मिन्कांचनलोकपद्मस्यगर्भेकार्णिकायां द्युमान्तेजस्वीब्रह्माभवति तंप्रणतोऽस्मीत्यर्थः ॥१४॥ ननुममापिस्वापा

तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिःपरिचितंसदसद्विशेषं ॥ रूपंस्थविष्ठमजतेमहदाद्यनेकंनातः
परंपरमवेद्मिनयत्रवादः ॥ १३ ॥ कल्पांतएतदखिलंजठरेणगृण्हन्शेतेपुमान्स्वदृगनंतसखस्तदंके ॥
यन्नाभिसिंधुरुहकांचनलोकपद्मगर्भेद्युमान्भगवतेप्रणतोऽस्मितस्मै ॥१४॥त्वंनित्यमुक्तपरिशुद्धविबुद्धआ
त्माकूटस्थआदिपुरुषोभगवांस्त्र्यधीशः ॥ यद्बुद्ध्यवस्थितिमखंडितयास्वदृष्ट्याद्रष्टास्थितावधिमखोव्यति
रिक्तआस्से ॥ १५ ॥ यस्मिन्विरुद्धगतयोह्यनिशंपतंतिविद्यादयोविविधशक्तयआनुपूर्व्यात् ॥ तद्ब्रह्मविश्व
भवमेकमनंतमाद्यमानंदमात्रमविकारमहंप्रपद्ये ॥ १६ ॥ ॥ ॥

द्व्यवस्थावत्त्वेकोजीवाद्विशेषइत्यतआह त्वंतुव्यतिरिक्तःजीवविलक्षणः आस्सेतिष्ठसि वैलक्षण्यमेवाह त्वंतुनित्यमुक्तःजीवस्तुत्वत्प्रसादा
न्मुच्यते त्वंपरिशुद्धः सतुमलिनः त्वंतुविबुद्धः सत्वज्ञः त्वमात्मा सतुजडः त्वंकूटस्थः सतुविकारी त्वमादिपुरुषः सत्वादिमान् त्वंतुभगवान्
सतुभगहीनः त्वंत्रयाणांगुणानामधीशः सतुपरतंत्रः कुतएतद्वैलक्षण्यं यद्यतः बुद्ध्यवस्थितिंबुद्धेस्तांतामवस्थामखंडितयास्वदृष्ट्याचिच्छ
क्त्याद्रष्टापश्यति द्रष्टेतितृन्प्रत्ययांतः अतोबुद्ध्यवस्थितिमित्यत्रषष्ठ्यभावः तथाभूतएवत्वंस्थितौपालनेअधिमखः यज्ञाधिष्ठाताश्रीविष्णुः
॥ १५ ॥ तमेवब्रह्मरूपेणज्ञातंनमस्करोति यस्मिन्निति पतंतिअकस्मादुद्भवंति विश्वस्यभवोयस्मात् एकमखंडं आद्यमनादिम् ॥ १६ ॥

सकामभजनादपिमोक्षमाशासानआह हेभगवन् पुरुषार्थः परमानंदः सएवमूर्त्तिर्यस्य तस्यतवपादपद्ममाशिषोराज्यादेःसकाशात् सत्या आशीः परमार्थफलंनिश्चितं कस्य तथातेनप्रकारेणत्वमेवपुरुषार्थइत्येवंनिष्कामतयाअन्वनुभजतः यद्यप्येवंतथापि हेआर्यस्वामिन् दीनान्सकामानपि अस्मान् भगवान्परिपाति संसारभयात्रक्षत्येव यतः अनुग्रहेहिताचरणे कातरःपरवशः यथानवप्रसूतावाश्राधेनुर्वत्सं क्षीरंपाययतिवृकादिभ्योरक्षतितद्वत् ॥ १७ ॥ १८ ॥ व्यवसितंसंकल्पितं ॥ १९ ॥ तत्प्रयच्छामीत्युक्तंकिंतदित्यपेक्षायामाह नान्यैरितिसार्धद्वाभ्यां हेभद्र ध्रुवाक्षितिर्निवासोयस्मिन् आहितमर्पितं ॥ २० ॥ धान्याक्रमणायभ्राम्यमाणानांपशूनांबंधनस्तंभोमेढीतस्यांबलीवर्दसमूहवत् अवांतरकल्पवासिनांपरस्तादपिस्थास्नुलोकत्रयनाशेऽप्यनश्वरं धर्माग्न्यादयोनक्षत्ररूपाः वनौकसःसप्तर्षयः यत्प्रदक्षिणीकृत्यभ्रमंतश्चरंति ॥ २१ ॥ एतच्चराज्यानंतरंभविष्यतीत्याह प्रस्थितइति तुभ्यंपृथ्वींदत्वावनंप्रस्थितेभावेकः वनंप्रतिदीर्घगमनेकृतेसतिरक्षितारक्षिष्यसिं ॥ २२ ॥ त्वयाअसंकल्पितमपिमद्भक्तस्यतवद्रोहादेवंभविष्यतीत्याह त्वद्भ्रातरीति सासुरुचिःदावाग्निंप्रवेक्ष्यति ॥ ॥ २३ ॥ किंच इष्ट्वामांयज्ञोहृदयंप्रियामूर्तिर्यस्यतं ॥ २४ ॥ यतःस्थानात् ॥ २५ ॥ ॥ ॥

सत्याशिषोहिभगवंस्तवपादपद्ममाशीस्तथाऽनुभजतःपुरुषार्थमूर्त्तेः ॥ अप्येवमार्यभगवान्परिपातिदीनान्वाश्रेववत्सकमनुग्रहकातरोऽस्मान् ॥ १७ ॥ मैत्रेयउवाच अथाभिष्टुतएवंवैसत्संकल्पेनधीमता ॥ भृत्यानुरक्तोभगवान्प्रतिनंद्येदमब्रवीत् ॥ १८ ॥ श्रीभगवानुवाच वेदाहंतेव्यवसितंहृदिराजन्यबालक ॥ तत्प्रयच्छामिभद्रंतेदुरापमपिसुव्रत ॥ १९ ॥ नान्यैरधिष्ठितंभद्रयद्भ्राजिष्णुध्रुवक्षिति ॥ यत्रग्रहर्क्षताराणांज्योतिषांचक्रमाहितं॥२०॥मेढ्यांगोचक्रवत्स्थास्नुपरस्तात्कल्पवासिनां॥धर्मोग्निःकश्यपःशुक्रोमुनयोयेवनौकसः॥चरंतिदक्षिणीकृत्यभ्रमंतोयत्सतारकाः॥२१॥ प्रस्थितेतुवनंपित्रादत्वागांधर्मसंश्रयः॥षट्त्रिंशद्वर्षसाहस्रंरक्षिताव्यंडलंभुवः॥२२॥त्वद्भ्रातर्युत्तमेनष्टेमृगयायांतुतन्मनाः॥अन्वेषंतीवनंयातादावाग्निंसाप्रवेक्ष्यति ॥२३॥ इष्ट्वामांयज्ञहृदयंयज्ञैःपुष्कलदक्षिणैः ॥ भुक्त्वाचेहाशिषःसत्याअंतेमांसंस्मरिष्यसि ॥२४॥ ततोगंतासिमत्स्थानंसर्वलोकनमस्कृतं ॥ उपरिष्टादृषिभ्यस्त्वंयतोनावर्ततेगतः ॥ २५ ॥

आतिदिश्यदत्वा ॥ २६ ॥ संकल्पजंमनोरथं पादसेवयाप्रापितंसंकल्पस्यानिर्वाणंसमाप्तिर्यस्मात् ॥ २७ ॥ मायाविनः सकामस्ययत्सु
दुर्लभंहरेःपदंतदेकेनैवजन्मनालब्ध्वापिस्वमात्मानंमनःअसिद्धार्थमप्राप्तमनोरथमिवकथममन्यत पुरुषार्थविदपि ॥ २८ ॥ २९ ॥ ताप
मेवाह समाधिनेतिसार्धैःषड्भिः नैकेअनेकेभवायास्मिन् बहुजन्माभ्यस्तेनेत्यर्थः प्रणामस्तुत्यादिसमयेगरुडाधिरूढस्यहरेःपादच्छायायां
स्थितमात्मानंस्मरन्नाह छायामुपेत्योति पृथङ्मतिःभेददृष्टिःसन् हाकष्टमितिभावः ॥ ३० ॥ अनात्म्यमात्मशून्यत्वमज्ञत्वं भवच्छेत्तुःयदं

मैत्रेयउवाच इत्यर्चितःसभगवानतिदिश्यात्मनःपदं ॥ बालस्यपश्यतोधामस्वमगाद्गरुडध्वजः ॥ २६ ॥
सोपिसंकल्पजंविष्णोःपादसेवोपसादितं ॥ प्राप्यसंकल्पनिर्वाणंनातिप्रीतोभ्यगात्पुरं ॥ २७ ॥ वि
दुरउवाच सुदुर्लभंयत्परमंपदंहरेर्मायाविनस्तच्चरणार्चनार्जितं ॥ लब्ध्वाप्यसिद्धार्थमिवैकजन्मनाक
थंस्वमात्मानममन्यतार्थवित् ॥ २८ ॥ मैत्रेयउवाच मातुःसपत्न्यावाग्बाणैर्हृदिविद्धस्तुतान्स्मरन् ॥
नैच्छन्मुक्तिपतेर्मुक्तिंतस्मात्तापमुपेयिवान् ॥ २९ ॥ ध्रुवउवाच समाधिनानैकभवेनयत्पदंविदुःसनं
दादयऊर्ध्वरेतसः ॥ मासैरहंषड्भिरमुष्यपादयोश्छायामुपेत्यापगतःपृथङ्मतिः ॥ ३० ॥ अहोबतममा
नात्म्यंमंदभाग्यस्यपश्यत ॥ भवच्छिदःपादमूलंगत्वायाचेयदंतवत् ॥ ३१ ॥ मतिर्विदूषितादेवैःपतद्भि
रसहिष्णुभिः ॥ योनारदवचस्तथ्यंनाग्राहिषमसत्तमः ॥ ३२ ॥ दैवींमायामुपाश्रित्यप्रसुप्तइवभिन्नदृक्
॥ तप्येद्वितीयेऽप्यसतिभ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥ मयैतत्प्रार्थितंव्यर्थंचिकित्सेवगतायुषि ॥ प्रसाद्य
जगदात्मानंतपसादुःप्रसादनं ॥ भवच्छिदमयाचेहंभवंभाग्यविवर्जितः ॥ ३४ ॥ ॥

तवत्तदयाचेयाचितवानस्मि ॥ ३१ ॥ अज्ञत्वेकारणंसंभावयति मतिरिति पतद्भिर्मदपेक्षयाअधःप्राप्नुवद्भिः अतएवासहनशीलैः नाधु
नाप्यत्रमानंते इत्यादिसत्यमपिनारदस्यवचोयोनगृहीतवानस्मितस्यमेमतिर्विदूषिता ॥ ३२ ॥ किंच दैवीमिति प्रसुप्तःस्वप्नानिवपश्य
न्द्वितीयेअसत्यपि भ्रातैवभ्रातृव्यःशत्रुरितिदृष्ट्या हृद्रुजाहृदयशोकेन तप्येतापमनुभवामि ॥ ३३ ॥ किंच मयाप्रसाद्ययत्प्रार्थितंतद्व्यर्थ
मित्याह भवच्छिदमिति ॥ ३४ ॥ ॥ ॥ ॥ ॥

एतदेवसदृष्टांतमाह स्वाराज्यंनिजानंदंप्रयच्छतःसकाशादभिमानःक्षीणपुण्येनमयाभिक्षितःयाचितः क्षीणेनपुण्येनेतिवादृष्टांतएवसंबंधः यथाऽधनःईश्वराच्चक्रवर्तिनःफलीकारान्सतुषतंदुलकणान्याचतेतद्वत् ॥ ३५ ॥ एवंनिस्पृहत्वंतस्ययुक्तमित्याह तस्यदास्यंविना अन्यमर्थमात्मनोनैववांच्छंति यदृच्छयैवलब्धेनमनसः समृद्धिर्येषांते ॥ ३६ ॥ प्रस्तुतमाह आकर्ण्येति संपरेत्यमृत्वा आगतमाकर्ण्य

स्वाराज्यंयच्छतोमौढ्यान्मानोमेभिक्षितोबत ॥ ईश्वरात्क्षीणपुण्येनफलीकारानिवाधनः ॥ ३५ ॥ मैत्रेयउवाच नवैमुकुंदस्यपदारविंदयोरजोजुषस्तातभवादृशाजनाः ॥ वांछंतितद्दास्यमृतेऽर्थमात्मनोयदृच्छयालब्धमनःसमृद्धयः ॥ ३६ ॥ आकर्ण्यात्मजमायांतंसंपरेत्ययथागतं ॥ राजानश्रद्दधेभद्रमभद्रस्यकुतोमम ॥ ३७ ॥ श्रद्धायवाक्यंदेवर्षेर्हर्षवेगेनधर्षितः ॥ वार्त्ताहर्तुरतिप्रीतोहारंप्रादान्महाधनं ॥३८॥ सदश्वंरथमारुह्यकार्तस्वरपरिष्कृतं ॥ ब्राह्मणैःकुलवृद्धैश्चपर्यस्तोऽमात्यबंधुभिः ॥ ३९ ॥ शंखदुंदुभिनादेनब्रह्मघोषेणवेणुभिः ॥ निश्चक्रामपुरात्तूर्णमात्मजाभीक्षणोत्सुकः ॥४०॥ सुनीतिःसुरुचिश्चास्यमहिष्यौरुक्मभूषिते ॥ आरुह्यशिबिकांसार्धमुत्तमेनाभिजग्मतुः ॥ ४१ ॥ तंदृष्ट्वोपवनाभ्याशआयांतंतरसारथात् ॥ अवरुह्यनृपस्तूर्णमासाद्यप्रेमविह्वलः ॥४२॥ परिरेभेऽगजंदोर्भ्यांदीर्घोत्कंठमनाःश्वसन्॥ विष्वक्सेनांघ्रिसंस्पर्शहताशेषाघबंधनं ॥ ४३ ॥ अथाजिघ्रन्मुहुर्मूर्ध्निशीतैर्नयनवारिभिः ॥ स्नापयामासतनयंजातोद्दाममनोरथः ॥४४॥ अभिवंद्यपितुःपादावाशीर्भिश्चाभिमंत्रितः ॥ननाममातरंशीर्ष्णासत्कृतःसज्जनाग्रणीः ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥

यथातथानश्रद्दधेविश्वासंनचकार अभद्रस्यममभद्रंकुतइतिमत्वा ॥ ३७ ॥ एष्यत्यचिरतइतिदेवर्षेर्वाक्यंश्रद्धाय ॥ ३८ ॥ ब्राह्मणादिभिःपर्यस्तःपरिवृतः ॥ ३९ ॥ ४० ॥ अस्यराज्ञोमहिष्यौमध्येउत्तमंनिधायएकामेवशिबिकांनरविमानमारुह्य ॥ ४१ ॥ उपवनस्याभ्याशेसमीपे ॥ ४२ ॥ विष्वक्सेनांघ्रिसंस्पर्शेनहतमशेषमघंबंधनंचयस्य ॥ ४३ ॥ जातउद्दामोमहान्मनोरथोयस्य ॥ ४४ ॥ अभिमंत्रितःपितुराशीर्भिः सहतेनकृतसंभाषणः ॥ ४५ ॥ ॥ ॥ ॥ ॥

॥ ४६ ॥ सुरुच्याःप्रीतिर्नासंभाविताइत्याह यस्येति नमंति अनुसरंति आपोयथास्वयमेवनिम्नंदेशंतरंति ॥ ४७ ॥ ऊहतुःदधतुः ॥ ४८ ॥
॥ ४९ ॥ हेवीर वीरसुवोध्रुवमातुः अभिषिच्यमानाभ्यांपयस्तदासुस्राव ॥ ५० ॥ चिरंनष्टःदर्शनमप्राप्तः रक्षितारक्षिष्यति ॥ ५१ ॥
॥ ५२ ॥ एवमिति व्यवहितंपित्राद्युपलालनंपरामृश्यते ॥ ५३ ॥ पुरंवर्णयति तत्रतत्रेतिचतुर्भिः सवृंदैःफलमंजरीयुक्तैःपूगानांपोतैर्बा

सुरुचिस्तंसमुत्थाप्यपादावनतमर्भकं ॥ परिष्वज्याहजीवेतिबाष्पगद्गदयागिरा ॥ ६ ॥ यस्यप्रसन्नोभगवा
न्गुणैर्मैत्र्यादिभिर्हरिः ॥ तस्मैनमंतिभूतानिनिम्नमापइवस्वयं ॥ ४७॥ उत्तमश्चध्रुवश्चोभावन्योऽन्यंप्रेमवि
ह्वलौ ॥ अंगसंगादुत्पुलकावस्रौघंमुहुरूहतुः ॥ ४८॥ सुनीतिरस्यजननीप्राणेभ्योऽपिप्रियंसुतं॥उपगुह्य
जहावाधिंतदंगस्पर्शनिर्वृता ॥४९॥ पयस्तनाभ्यांसुस्रावनेत्रजैःसलिलैःशिवैः॥तदाभिषिच्यमानाभ्यांवी
रवीरसुवोमुहुः॥५०॥तांशशंसुर्नराराज्ञींदिष्ट्यातेपुत्रआर्तिहा॥प्रतिलब्धश्चिरंनष्टोरक्षितामंडलंभुवः॥५१॥
अभ्यर्चितस्त्वयानूनंभगवान्प्रणतार्त्तिहा ॥ यदनुध्यायिनोवीरामृत्युंजिग्युःसुदुर्जयं ॥ ५२ ॥ लाल्यमानंज
नैरेवंध्रुवंसभ्रातरंनृप॥आरोप्यकरिणींहृष्टःस्तूयमानोविशत्पुरं॥५३॥तत्रतत्रोपसंक्लृप्तैर्लसन्मरकतोरणैः॥
सवृंदैःकदलीस्तंभैःपूगपोतैश्चतद्विधैः ॥ ५४॥ चूतपल्लववासस्त्रङ्मुक्तादामविलंबिभिः ॥ उपस्कृतंप्रति
द्वारमपांकुंभैःसदीपकैः॥५५॥प्राकारैर्गोपुरागारैःशातकुंभपरिच्छदैः॥सर्वतोऽलंकृतंश्रीमद्विमानशिखरद्यु
भिः ॥ ५६ ॥ मृष्टचत्वररथ्याट्टमार्गंचंदनचर्चितं ॥ लाजाऽक्षतैःपुष्पफलैस्तंदुलैर्बलिभिर्युतं ॥ ५७ ॥

लवृक्षैः तद्विधैः सवृंदैरुपस्कृतंप्रतिद्वारमित्युत्तरेणान्वयः ॥ ५४ ॥ चूतपल्लवाश्चवासांसिचस्रजश्चमुक्तादामानिच तेषांविशिष्टंलंबनम
स्तियेषुकुंभेषु ॥ ५५ ॥ गोपुरैरगारैश्चशातकुंभाः परिच्छदाःपरिकरायेषु विमानानामिवशिखरैर्द्युतिर्येषां ॥ ५६ ॥ चत्वरमंगनं रथ्या
महामार्गः अट्टउच्चस्योपरिनिर्मिताभूमिका मार्गोऽवांतरः मृष्टाःसंमार्जिताश्चत्वरादयोयस्मिन् ॥ ५७ ॥ ॥ ॥

सिद्धार्थःश्वेतसर्षपः अक्षतायवाः ॥ ५८ ॥ उपजन्हुःन्यकिरन् सतीःसत्यः ॥ ५९ ॥ ६० ॥ यत्रभवनोत्तमे ॥ ६१ ॥ ६२ ॥ ६३ ॥ कुमुत्कुमुदं पद्मादिमत्योवाप्यः ॥ ६४ ॥ ६५ ॥ ऊढवयसंप्राप्तयौवनं अनुरक्ताःप्रजायस्मिन् ॥ ६६ ॥ प्रवयसंवृद्धं ॥ ६७ ॥ इ



ध्रुवायपथिदृष्टायतत्रतत्रपुरास्त्रियः ॥ सिद्धार्थाक्षतदध्यंबुदूर्वापुष्पफलानिच ॥ ५८ ॥ उपजन्हुःप्रयुंजानावात्सल्यादाशिषःसतीः ॥ शृण्वन्तद्वल्गुगीतानिप्राविशद्भवनंपितुः ॥५९॥ महामणिव्रातमयेसतस्मिन्भवनोत्तमे ॥ लालितोनितरांपित्रान्यवसद्दिविदेववत् ॥६०॥ पयःफेननिभाःशय्यादांतारुक्मपरिच्छदाः ॥ आसनानिमहार्हाणियत्ररौक्माउपस्कराः ॥ ६१ ॥ यत्रस्फटिककुड्येषुमहामारकतेषुच ॥ मणिप्रदीपाआभांतिललनारत्नसंयुताः ॥६२॥ उद्यानानिचरम्याणिविचित्रैरमरद्रुमैः ॥ कूजद्विहंगमिथुनैर्गायन्मत्तमधुव्रतैः ॥६३॥ वाप्योवैदूर्यसोपानाःपद्मोत्पलकुमुद्वतीः ॥ हंसकारंडवकुलैर्जुष्टाश्चक्राह्वसारसैः ॥ ६४ ॥ उत्तानपादोराजर्षिःप्रभावंतनयस्यतं ॥ श्रुत्वादृष्ट्वाद्भुततमंप्रपेदेविस्मयंपरं॥६५॥ वीक्ष्योढवयसंतंचप्रकृतीनांचसंमतं ॥ अनुरक्तप्रजंराजाध्रुवंचक्रेभुवःपतिं ॥ ६६ ॥ आत्मानंचप्रवयसमाकलय्यविशांपतिः ॥ वनंविरक्तःप्रातिष्ठद्विमृशन्नात्मनोगतिं ॥ ६७ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेनवमोऽध्यायः ॥ ९ ॥ ॥ मैत्रेयउवाच प्रजापतेर्दुहितरंशिशुमारस्यवैध्रुवः ॥ उपयेमेभ्रमिंनामतत्सुतौकल्पवत्सरौ ॥ इलायामपिभार्यायांवायोःपुत्र्यांमहाबलः ॥ पुत्रमुत्कलनामानंयोषिद्रत्नमजीजनत् ॥ २ ॥ उत्तमस्त्वकृतोद्वाहोमृगयायांबलीयसा ॥ हतःपुण्यजनेनाद्रौतन्मातास्यगतिंगता ॥ ३ ॥ ध्रुवोभ्रातृवधंश्रुत्वाकोपामर्षशुचार्पितः ॥ जैत्रंस्यंदनमास्थायगतःपुण्यजनालयं ॥ ४ ॥



तिचतुर्थेटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ ॥ दशमेभ्रातृहंतॄणांयक्षाणामकरोद्वधं ॥ एकएवालकांगत्वातस्यविक्रमउच्यते ॥ १ ॥ १ ॥ योषितांरत्नमिवातिमनोहरं कन्यारत्नमितिवा ॥ २ ॥ यक्षेणाद्रौहिमवतिहतः आजावितिपाठेयुद्धेअस्यगतिंगतामृतेत्यर्थः ॥ ३ ॥ कोपामर्षशुचांद्वंद्वैक्यं तेनार्पितोव्याप्तः जैत्रंजयहेतुं पुण्यजनालयमलकां ॥ ४ ॥ ॥ ॥

रुद्रानुचराभूतादयः ॥ ५ ॥ दध्मौवादितवान् येनशंखवादनेन हेक्षत्तःउपदेव्योयक्षस्त्रियः ॥ ६ ॥ ७ ॥ एकैकंत्रिभिस्त्रिभिरित्येवंसर्वा
न्त्रयोदशायुतानियक्षान् युगपदहन्जघान ॥ ८ ॥ निरस्तंपराजितं तस्यध्रुवस्यतत्कर्मआशंसन्तुष्टुवुः ॥ ९ ॥ तेऽपितत्कर्मासहमाना
अमुमविध्यन् द्विगुणंयथाभवत्येवंषड्भिः प्रतिकुर्त्तुमिच्छंतः ॥ १० ॥ चित्रवाजैःविचित्रपक्षैः ॥ ११ ॥ १२ ॥ धारासंपातेनछन्नोगिरि

गत्वोदीचींदिशंराजारुद्रानुचरसेवितां ॥ ददर्शहिमवद्द्रोण्यांपुरींगुह्यकसंकुलां ॥५॥ दध्मौशंखंबृहद्बाहुःखं
दिशश्चानुनादयन् ॥ येनोद्विग्नदृशःक्षत्तरुपदेव्योऽत्रसन्भृशं ॥६॥ ततोनिष्क्रम्यबलिनउपदेवमहाभटाः॥
असहंतस्तन्निनादमभिपेतुरुदायुधाः ॥७॥ सतानापततोवीरउग्रधन्वामहारथः ॥ एकैकंयुगपत्सर्वानहन्
बाणैस्त्रिभिस्त्रिभिः॥८॥तेवैललाटलग्नैस्तैरिषुभिःसर्वएवहि ॥ मत्वानिरस्तमात्मानमाशंसन्कर्मतस्यतत् ॥
॥९॥ तेऽपिचामुममृष्यंतःपादस्पर्शमिवोरगाः॥शरैरविध्यन्युगपत्द्विगुणंप्रचिकीर्षवः॥१०॥ ततःपरिघनि
स्त्रिंशैःप्रासशूलपरश्वधैः ॥ शक्त्यृष्टिभिर्भृशुंडीभिश्चित्रवाजैःशरैरपि॥११॥अभ्यवर्षन्प्रकुपिताःसरथंसह
सारथिं ॥ इच्छंतस्तत्प्रतीकर्त्तुमयुतानित्रयोदश ॥१२॥ औत्तानपादिःसतदाशस्त्रवर्षेणभूरिणा ॥ नउपादृ
श्यतछन्नआसारेणयथागिरिः ॥१३॥ हाहाकारस्तदैवासीत्सिद्धानांदिविपश्यतां ॥ हतोऽयंमानवःसूर्योम
ग्नःपुण्यजनार्णवे ॥१४॥ नदत्सुयातुधानेषुजयकाशिष्वथोमृधे ॥ उदतिष्ठद्रथस्तस्यनीहारादिवभास्करः॥
॥१५॥ धनुर्विस्फूर्जयन्दिव्यंद्विषतांखेदमुद्वहन् ॥ अस्त्रौघंव्यधमद्बाणैर्घनानीकमिवानिलः ॥१६॥ तस्य
तेचापनिर्मुक्ताभित्वावर्माणिरक्षसां ॥ कायानाविविशुस्तिग्मागिरीनशनयोयथा ॥ १७ ॥ भल्लैःसंछिद्य
मानानांशिरोभिश्चारुकुंडलैः ॥ उरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः ॥ १८ ॥

रिवनैवादृश्यत ॥ १३ ॥ सूर्यतुल्यः ॥ १४ ॥ यातुधानेषुराक्षसेषुजयकाशिषुजितंजितमितिजयप्रकाशकेषुसत्सु ॥ १५ ॥ १६ ॥ व्य
धमत्संचूर्णयामास वर्माणिकवचानि ॥ १७ ॥ शिरःप्रमुखैरास्तृताःप्रकीर्णारेजुरितिद्वयोरन्वयः ॥ १८ ॥ ॥

॥ १९ ॥ प्रायः बाहुल्येनविवृक्णाः संछिन्नाः अवयवायेषां ॥ २० ॥ आततायिनंशस्त्रपाणिं ॥ २१ ॥ इतिब्रुवन्नित्यत्रापिनमायिनामि त्यादेरनुषंगः चित्ररथोध्रुवः यत्तः यत्नवान् प्रतियोगः पुनरुद्योगः तस्माच्छंकितः नभस्वतोवायोर्हेतोः ॥ २२ ॥ विस्फुरंत्यस्तडितोय स्मिन् तेनत्रासयंतः स्तनयित्नवोऽशनयोयस्मिन् ॥ २३ ॥ ववृषुः निपेतुरित्यर्थः नसृजतिशरीरमित्यसृगिह श्लेष्मादि मेदसः पुंस्त्वमार्षं मे



हारकेयूरमुकुटैरुष्णीषैश्चमहाधनैः ॥ आस्तृतास्तारणभुवोरेजुर्वीरमनोहराः ॥ १९ ॥ हतावशिष्टाइत रेरणाजिराद्रक्षोगणाः क्षत्रियवर्यसायकैः ॥ प्रायोविवृक्णावयवाविदुद्रुवुर्मृगेंद्रविक्रीडितयूथपाइव ॥ ॥२०॥ अपश्यमानः सतदाततायिनंमहामृधेकंचनमानवोत्तमः ॥ पुरींदिदृक्षन्नपिनाविशद्द्विषांनमायिनां वेदचिकीर्षितंजनः ॥ २१ ॥ इतिब्रुवंश्चित्ररथः स्वसारथिंयत्तः परेषांप्रतियोगशंकितः ॥ शुश्रावशब्दंज लधेरिवेरितंनभस्वतोदिक्षुरजोऽन्वदृश्यत ॥२२॥ क्षणेनाच्छादितंव्योमघनानीकेनसर्वतः॥विस्फुरत्तडि तादिक्षुत्रासयन्स्तनयित्नुना ॥ २३ ॥ ववृषूरुधिरौघासृक्पूयविण्मूत्रमेदसः ॥ निपेतुर्गगनादस्यकबंधा न्यग्रतोऽनघ ॥२४॥ ततः खेऽदृश्यतगिरिर्निपेतुः सर्वतोदिशं ॥ गदापरिघनिस्त्रिंशमुशलाः साश्मवर्षिणः ॥ २५ ॥ अहयोऽशनिनिःश्वासावमंतोऽग्निंरुषाऽक्षिभिः ॥ अभिधावन्गजामत्ताः सिंहव्याघ्राश्चयूथशः ॥ २६ ॥ समुद्रऊर्मिभिर्भीमः प्लावयन्सर्वतोभुवं ॥ आससादमहान्हादः कल्पांतइवभीषणः ॥२७॥ एवं विधान्यनेकानित्रासनान्यमनस्विनां ॥ ससृजुस्तिग्मगतयआसुर्यामायया ऽसुराः ॥ २८ ॥ ध्रुवेप्रयुक्ता मसुरैस्तांमायामतिदुस्तरां ॥ निशम्यतस्यमुनयः शमाशंसन्समागताः ॥ २९ ॥

दांसिअस्याग्रतोनिपेतुः ॥ २४ ॥ साश्मवर्षिणः अश्मसहितंयद्वर्षंतद्वंतः ॥ २५ ॥ अशनिवन्निःश्वासोयेषां ॥ २६ ॥ २७ ॥ त्रासनानिभयं कराणि तिग्माक्रूरागतिः प्रवृत्तिर्येषां असुरराक्षसादिशब्दैरदूरांतरत्वेनयक्षाएवोच्यंते ॥२८॥ तस्यशंकल्याणमाशंसन् प्रार्थितवंतः ॥ २९ ॥

तवविपक्षान् शत्रून्नाशयतु अद्धासाक्षात् अंजसासुखेनैवमृत्युंतराति ॥ ३० ॥ इतिश्रीभागवतेचतुर्थस्कंधेटीकायांदशमोऽध्यायः ॥ १० ॥
एकादशेतुयक्षाणांक्षयंदृष्ट्वामनुःस्वयं ॥ आगत्यवारयामासध्रुवंतत्त्वोपदेशतः ॥ १ ॥ एवंगदतांवचनमुपदेशमिवानिशम्य उपस्पृश्यआचम्य यन्नारायणनिर्मितंनारायणास्त्रंसंदधे ॥ १ ॥ क्लेशारागादयोयथा ॥ २ ॥ किंच तस्यार्षास्त्रमृषेर्नारायणात् उद्भूतमस्त्रं प्रयुंजतःसंदधतःसतः

मुनयऊचुः औत्तानपादेभगवांस्तवशार्ङ्गधन्वादेवःक्षिणोत्ववनतार्त्तिहरोविपक्षान् ॥ यन्नामधेयमभिधायनिशम्यचाद्धालोकोंऽजसातरतिदुस्तरमंगमृत्युं ॥ ३० ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधे दशमोऽध्यायः ॥ १० ॥ ॥ ॥ मैत्रेयउवाच निशम्यगदतामेवमृषीणांधनुषिध्रुवः ॥ संदधेऽस्त्रमुपस्पृश्ययन्नारायणनिर्मितं ॥ १ ॥ संधीयमानएतस्मिन्मायागुह्यकनिर्मिताः ॥ क्षिप्रंविनेशुर्विदुरक्लेशाज्ञानोदयेयथा ॥ २ ॥ तस्यार्षास्त्रंधनुषिप्रयुंजतःसुवर्णपुंखाःकलहंसवाससः ॥ विनिःसृतानिर्विविशुर्द्विषद्बलंयथावनंभीमरवाःशिखंडिनः ॥ ३ ॥ तैस्तिग्मधारैःप्रधनेशिलीमुखैरितस्ततःपुण्यजनाउपद्रुताः ॥ तमभ्यधावन्कुपिताउदायुधाःसुपर्णमुन्नद्धफणाइवाहयः ॥ ४ ॥ सतान्पृषत्कैरभिधावतोमृधेनिकृत्तबाहूरुशिरोधरोदरान् ॥ निनायलोकंपरमर्कमंडलंव्रजंतिनिर्भिद्ययमूर्ध्वरेतसः ॥ ५ ॥ तान्हन्यमानानभिवीक्ष्यगुह्यकाननागसश्चित्ररथेनभूरिशः ॥ औत्तानपादिंकृपयापितामहोमनुर्जगादोपगतःसहर्षिभिः ॥ ६ ॥ मनुरुवाच अलंवत्सातिरोषेणतमोद्वारेणपाप्मना ॥ येनपुण्यजनानेतानवधीस्त्वमनागसः ॥ ७ ॥ नास्मत्कुलोचितंतातकर्मैतत्सद्विगर्हितं ॥ वधोयदुपदेवानामारब्धस्तेऽकृतैनसां ॥ ८ ॥

सुवर्णमयाःपुंखाःमूलप्रांतायेषां कलहंसानांवासांसिपक्षायेषां शराविनिःसृताइतिद्रष्टव्यं उपरिष्टाच्छिलीमुखग्रहणात् ॥ ३ ॥ प्रधनेयुद्धेउन्नद्धाःउच्छ्रिताःफणायेषांतेसर्पाः ॥ ४ ॥ पृषत्कैर्बाणैर्निकृत्ताबाव्हादयोयेषांतान् परंलोकंनिनाय कथंभूतं ऊर्ध्वरेतसः संन्यासिनोऽर्कमंडलंनिर्भिद्ययंव्रजंतितं ॥ ५ ॥ तान् अनागसोनिरपराधान् ॥ ६ ॥ तमसोनरकस्यद्वारेण येनरोषेण ॥ ७ ॥ ८ ॥

ननुमद्भ्रातृहंतारः कथमकृतैनसोऽतआह नन्विति ॥ ९ ॥ सत्यप्यपराधेचतवैतदुचितंनभवतीत्याह नायमिति पराग्गृह्यपराग्भूतंदेहमात्मानंगृहीत्वा पशवोयथादेहाभिमानादन्योऽन्यंघ्नंतितथाभूतानांवैशसंहिंसेतियत् ॥ १० ॥ त्वंचबाल्येसाधुःसन्निदानींकथमन्यथाकृतवानित्याह सर्वभूतात्मभावेनेतिद्वाभ्यां ॥ ११ ॥ अनुध्यातः हरेःहृदिस्थितःज्ञातोवा तत्पुंसांहरिदासानामपिसाधुत्वेनमतः ॥ १२ ॥ सतांव्रतमेवाह महत्सुतितिक्षयानीचेषुकरुणयासमेषुमैत्र्याअखिलेषुजंतुषुसमत्वेनच ॥ १३ ॥ ततःकृतार्थोभवतीत्याह संप्रसन्ने गुणैर्विमुक्तोऽतएवतत्कार्येणजीवेनलिंगशरीरेणनिर्मुक्तःसन् निर्वाणंसुखात्मकंब्रह्मप्राप्नोति ॥ १४॥ भ्रातृहंतृत्वमंगीकृत्योक्तमिदानींतुनात्मनोभ्रातृपुत्रादिसंबंधः

नन्वेकस्यापराधेनप्रसंगाद्बहवोहताः ॥ भ्रातुर्वधाभितप्तेनत्वयांगभ्रातृवत्सल ॥ ९ ॥ नायंमार्गोहिसाधूनांहृषीकेशानुवर्तिनां ॥ यदात्मानंपराग्गृह्यपशुवद्भूतवैशसं ॥ १० ॥ सर्वभूतात्मभावेनभूतावासंहरिंभवान्॥आराध्यापदुराराध्यंविष्णोस्तत्परमंपदं ॥ ११ ॥ सत्वंहरेरनुध्यातस्तत्पुंसामपिसंमतः ॥ कथंत्ववद्यंकृतवाननुशिक्षन्सतांव्रतं ॥ १२ ॥ तितिक्षयाकरुणयामैत्र्याचाखिलजंतुषु ॥ समत्वेनचसर्वात्माभगवान्संप्रसीदति ॥ १३ ॥ संप्रसन्नेभगवतिपुरुषःप्राकृतैर्गुणैः ॥ विमुक्तोजीवनिर्मुक्तोब्रह्मनिर्वाणमृच्छति ॥१४॥ भूतैःपंचभिरारब्धैर्योषित्पुरुषएवहि ॥ तयोर्व्यवायात्संभूतिर्योषित्पुरुषयोरिह ॥ १५ ॥ एवंप्रवर्ततेसर्गःस्थितिःसंयमएवच ॥ गुणव्यतिकराद्राजन्माययापरमात्मनः ॥ १६ ॥ निमित्तमात्रंतत्रासीन्निर्गुणःपुरुषर्षभः ॥ व्यक्ताव्यक्तमिदंविश्वंयत्रभ्रमतिलोहवत् ॥ १७॥ ॥ ॥

नचान्योऽन्यंहंतृत्वादिकमपीत्याह भूतैरितिदशभिःभूतैःपंचभिरारब्धैर्देहाद्याकारेणपरिणतैर्योषित्पुरुषश्चेतिप्रसिद्धिः तयोर्व्यवायान्मैथुनात्संभूतिरन्ययोर्योषित्पुरुषयोरिहसंसारेभवति ॥ १५ ॥ एवंतावत्सर्गःप्रवर्त्तते एवंपालकाकारेणपरिणतैरेवस्थितिः हंतृदेहाकारपरिणतैःसंयमः सचपरमात्मनोमाययागुणानांव्यतिकरान्नतुस्वतः॥ १६ ॥ ननुजडानांदेहानांगुणानांवाकथंसर्गादिहेतुत्वंतत्राह निमित्तमात्रंपुरुषर्षभईश्वरः यत्रयस्मिन्निमित्तेसति कार्यकारणात्मकंविश्वंभ्रमतिपरिवर्त्तते यथाअयस्कांतेनिमित्तेसतिलोहंप्रवर्त्तते तद्वत् ॥ १७ ॥

ननुसचेन्निमित्तंतर्हितस्याविशेषाद्युगपदेवसर्गादित्रयंभवेत् अतआह सखल्विति कालशक्त्याक्रमेणगुणानांप्रवाहःक्षोभस्तेन विभक्तंसृ
ष्ट्यादिविषयंवीर्यंशक्तिर्यस्य ननुकालोऽपिगुणान्युगपदेवक्षोभयतुतत्राह चेष्टाकालशक्तिः दुर्विभाव्याअचिंत्या ॥ १८ ॥ ननुपित्रादिः
सृजति पालयतिराजादिः निहंतिचचोरादिःनत्वीश्वरस्तत्राह सइति जनेनपित्रादिनाजनंपुत्रादिंजनयन्नादिकृत् अंतकंचोरादिकंतन्मृ
त्युहेतुनामारयन्नंतकरः स्वयंतु अनंतोऽनादिश्चअव्ययोऽक्षीणशक्तिश्च अयंभावः पित्रादयोऽन्यतउत्पत्त्यादिमंतोनस्वातंत्र्येणकारणंकिं
त्वीश्वरएवतान्नियंतासर्वकारणमिति ॥ १९ ॥ नचैवंकुर्वतोऽपिवैषम्यप्रसक्तिपक्षपाताभावादित्याशंक्याहद्वाभ्यां नवाइति मृत्युरूपस्य
समंयथाभवतितथाप्रजाःकर्मभूताविशतःतस्यसाम्येऽपिभूतेषुफलवैषम्यंतत्कर्मवशादितिसदृष्टांतमाह तंधावंतमनु अनीशाःकर्माधीनाभू

**सखल्विदंभगवान्कालशक्त्यागुणप्रवाहेणविभक्तवीर्यः ॥ करोत्यकर्तैवनिहंत्यहंताचेष्टाविभून्नःखलुदुर्वि**
**भाव्या ॥ १८ ॥ सोऽनंतोंतकरःकालोऽनादिरादिकृदव्ययः ॥ जनंजनेनजनयन्मारयन्मृत्युनांतकं ॥ १९ ॥**
**नवैस्वपक्षोऽस्यविपक्षएववापरस्यमृत्योर्विशतःसमंप्रजाः ॥ तंधावमानमनुधावंत्यनीशायथारजांस्यनि**
**लंभूतसंघाः ॥ २० ॥ आयुषोऽपचयंजंतोस्तथैवोपचयंविभुः ॥ उभाभ्यांरहितःस्वस्थोदुःस्थस्यविदधात्य**
**सौ ॥ २१ ॥ केचित्कर्मवदंत्येनंस्वभावमपरेनृप ॥ एकेकालंपरेदैवंपुंसःकाममुतापरे ॥ २२ ॥ अव्यक्तस्या**
**प्रमेयस्यनानाशक्त्युदयस्यच ॥ नवैचिकीर्षितंतातकोवेदाथस्वसंभवं ॥ २३ ॥ ॥ ॥**

तसंघाःधावंति अनिलंधावंतमनुरजांसीव तत्रयथारजसांतमःप्रकाशजलाग्न्यादिप्रवेशेऽपिनानिलस्यवैषम्यमेवमीश्वरस्यापीतिभावः ॥
॥ २० ॥ अपचयमकालमृत्युं उपचयंकालमृत्योरपिरक्षां यद्वा अपचयंमशकादौउपचयंदेवादौस्वस्थत्वात् उपचयापचयाभ्यांरहितोऽ
सौविभुःदुःस्थस्यकर्माधीनस्याविदधाति ॥ २१ ॥ एवंभूतश्चेश्वरःसर्ववादिसंमतः विवादस्तुनाममात्रइत्याह केचिदिति पुंसःकामंवात्स्या
यनादयःश्रुतिश्च कामोकार्षीत्कामःकरोतिकामःकर्त्ताकामःकारयितेत्यादि ॥ २२ ॥ ननुकर्मादीनांजडत्वादिनास्वरूपतोपिभिन्नत्वात्कथमै
कमत्यंतत्राह अव्यक्तस्यातएवाप्रमेयस्यतथाऽपिसत्वहेतुः नानाशक्तीनांमहदादीनामुदयोयस्मात् चिकीर्षितमेवतावत्कोपिनवेद अथस्व
स्यसंभवोयस्मात्तमीश्वरंकोवेद नकोऽपि अद्धेतिपाठेसाक्षात् अतस्तत्त्वज्ञानाभावाद्विशेषांशेविवादइत्यर्थः तथाचश्रुतिः कोअद्धावेद
कइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयतआबभूवेत्यादि ॥ २३ ॥ ॥

ईश्वरवादस्यप्रकृतोपयोगमाह नचैतेभ्रातुर्हंतारः उक्तमेवहेतुमनुवदति विसर्गादानयोर्मृत्युजन्मनोः यद्वा विसर्गःसृष्टिः आदानंसंहारःदैवमीश्वरएवहिकारणं ॥ २४ ॥ तथाऽपिनिर्लेपतामाह सएवेति ॥ २५ ॥ अनहंकारत्वेहेतुमाह एषइति ॥ २६ ॥ सत्यमीश्वरएवकर्तातथाऽप्यहंकारादिमयानत्यक्तुंशक्यमितिचेदतआह तमेवेतिचतुर्भिःमृत्युमभक्तानांभक्तानांत्वमृतं उपैहिशरणंगच्छ तमेवेत्यवधारणेहेतुः यस्मैनासिनासिकायांदामभिर्बद्धाःगावइवविश्वसृजोऽपिनामभिर्यंत्रिताबद्धाःसंतोबालिंहरंति तत्कारितंकर्मकुर्वंतीत्यर्थः ॥ २७ ॥

नचैतेपुत्रकभ्रातुर्हंतारोधनदानुगाः ॥ विसर्गादानयोस्तातपुंसोदैवंहिकारणं ॥ २४ ॥ सएवविश्वंसृजतिसएवावतिहंतिच ॥ अथापिह्यनहंकारान्नाज्यतेगुणकर्मभिः ॥ २५ ॥ एषभूतानिभूतात्माभूतेशोभूतभावनः ॥ स्वशक्त्यामाययायुक्तःसृजत्यत्तिचपातिच ॥ २६ ॥ तमेवमृत्युममृतंतातदैवंसर्वात्मनोपैहिजगत्परायणं ॥ यस्मैबलिंविश्वसृजोहरंतिगावोयथावैनसिदामयंत्रिताः ॥ २७ ॥ यःपंचवर्षोजननींत्वंविहायमातुःसपत्न्यावचसाभिन्नमर्मा ॥ वनंगतस्तपसाप्रत्यगक्षमाराध्यलेभेमूर्ध्निपदंत्रिलोक्याः ॥ २८ ॥ तमेनमंगात्मनिमुक्तविग्रहंव्यपाश्रितंनिर्गुणमेकमक्षरं ॥ आत्मानमन्विच्छविमुक्तआत्मदृक्यस्मिन्निदंभेदमसत्प्रतीयते ॥ २९ ॥ त्वंप्रत्यगात्मनितदाभगवत्यनंतआनंदमात्रउपसन्नसमस्तशक्तौ ॥ भक्तिंविधायपरमांशनकैरविद्याग्रंथिंविभेत्स्यसिममाहमितिप्ररूढं ॥ ३० ॥ संयच्छरोषंभद्रंतेप्रतीपंश्रेयसांपरं ॥ श्रुतेनभूयसाराजन्नगदेनयथामयं ॥ ३१ ॥ येनोपसृष्टात्पुरुषाल्लोकउद्विजतेभृशं ॥ नबुधस्तद्वशंगच्छेदिच्छन्नभयमात्मनः ॥ ३२ ॥

तदाराधनंचतवसुशकमेवेत्याह यःपंचवर्षःसत्वंयमाराध्यत्रिलोक्यामूर्ध्निपदंस्थानंलेभेलब्धवानासि इदानींतमेवान्विच्छअवलोकयेत्युत्तरेणान्वयः प्रत्यंचिअक्षाणियस्मिन् क्रियाविशेषणंवा ॥ २८ ॥ हरिंध्यायंतंप्रत्याह हेअंगध्रुव मुक्तविरोधेआत्मनिमनसिव्यपाश्रितमवस्थितमात्मदृक् प्रत्यक्दृष्टिःसन् अयंभेदोयस्मिन्तादिदंभेदमसदेवविश्वंयास्मिन्प्रतीयते ॥ २९ ॥ तदन्वेषणफलमाह त्वंतदाअन्वेषणकालएव ॥ ३० ॥ उपदेशसारमाह संयच्छेतिद्वाभ्यां प्रतीपंप्रतिकूलं अगदेनौषधेनयथारोगंनियच्छाति ॥ ३१ ॥ येनरोषेणोपसृष्टात्व्याप्तात् ॥ ३२ ॥

अन्यच्चत्वयाकार्यमित्याह हेलनमितिद्वाभ्यां यद्यतःजघ्निवान्घातितवान् ॥ ३३ ॥ ३४ ॥ ३५ ॥ इतिश्रीभागवतेचतुर्थेटीकायामेकाद
शोऽध्यायः ॥ ११ ॥ ॥ ॥ ॥ ॥ द्वादशेधनदेनाभिनंदितःपुरमागतः ॥ यज्ञैरिष्ट्वाहरेःस्थानमारुरोहेतिकीर्त्यते ॥ १ वैशसाद्वधा
न्निवृत्तंज्ञात्वा ॥ १ ॥ हेक्षत्रियदायादक्षत्रियपुत्र अत्यजःत्यक्तवानसि ॥ २ ॥ नचवैरस्यकारणमस्तीत्याह नभवानिति अप्ययभावयोः

हेलनंगिरिशभ्रातुर्धनदस्यत्वयाकृतं ॥ यज्जघ्निवान्पुण्यजनान्भ्रातृघ्नानित्यमर्षितः ॥ ३३ ॥ तंप्रसादयव
त्साशुसन्नत्याप्रश्रयोक्तिभिः ॥ नयावन्महतांतेजःकुलंनोभिभविष्यति ॥ ३४ ॥ एवंस्वायंभुवःपौत्रमनु
शास्यमनुर्ध्रुवं ॥ तेनाभिवंदितःसाकमृषिभिःस्वपुरंययौ ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेए
कादशोऽध्यायः ॥ ११ ॥ ॥ ॥ मैत्रेयउवाच ध्रुवंनिवृत्तंप्रतिबुध्यवैशसादपेतमन्युंभगवान्धनेश्वरः ॥
तत्रागतश्चारणयक्षकिन्नरैःसंस्तूयमानोभ्यवदत्कृतांजलिं ॥ १ ॥ धनदउवाच भोभोक्षत्रियदायादपरि
तुष्टोऽस्मितेऽनघ ॥ यत्त्वंपितामहादेशाद्वैरंदुस्त्यजमत्यजः ॥ २ ॥ नभवानवधीद्यक्षान्नयक्षाभ्रातरंतव ॥
कालएवहिभूतानांप्रभुरप्ययभावयोः ॥ ३ ॥ अहंत्वमित्यपार्थाधीरज्ञानात्पुरुषस्यहि ॥ स्वाप्नावाभात्य
तद्ध्यानाद्ययाबंधविपर्ययौ ॥ ४ ॥ तद्गच्छध्रुवभद्रंतेभगवंतमधोक्षजं ॥ सर्वभूतात्मभावेनसर्वभूतात्मवि
ग्रहं ॥ ५ ॥ भजस्वभजनीयांघ्रिमभवायभवच्छिदं ॥ युक्तंविरहितंशक्त्यागुणमय्यात्ममायया ॥ ६ ॥
वृणीहिकामंनृपयन्मनोगतंमत्तस्त्वमौत्तानपदेविशंकितः ॥ यतोवरार्होंऽबुजनाभपादयोरनंतरंत्वांवयमंग
शुश्रुम ॥ ७ ॥ मैत्रेयउवाच सराजराजेनवरायचोदितोध्रुवोमहाभागवतोमहामतिः ॥ हरौसवव्रे
ऽचलितांस्मृतिंययातरत्ययत्नेनदुरत्ययंतमः ॥ ८ ॥ मृत्युजन्मनोः ॥ ३ ॥ कथंतर्हिअहंहंतेत्यादिबुद्धिस्तत्राह अह
मिति आभातिप्रकाशतेजायतइत्यर्थः अतद्ध्यानात् देहानुसंधानाद्ययाधियाबंधः विपर्ययोदुःखादिः ॥ ४ ॥ तत्तस्माद्गच्छगत्वाचभग
वंतंभजस्वेत्युत्तरेणान्वयः सर्वभूतात्मकोविग्रहोयस्य ॥ ५ ॥ माययायुक्तंविरहितंसगुणनिर्गुणभेदेन ॥ ६ ॥ काममसंकोचेन अविशंकि
तःनिर्भयः अनंतरमतिनिकटं ॥ ७ ॥ सवरायचोदितइत्यनुवादरूपंपृथक्वाक्यं अतःसवव्रइतितच्छब्दस्यापौनरुक्त्यं ॥ ८ ॥

॥ ९ ॥ द्रव्यक्रियादेवतानांकर्मसाध्यंफलरूपंकर्मफलप्रदंचेत्यर्थः ॥ १० ॥ सर्वस्यआत्मनिअसर्वेसर्वोपाधिविवर्जिते ॥ ११ ॥ १२ ॥ भोगैःऐश्वर्यादिभिःअभोगैःयज्ञाद्यनुष्ठानैः ॥ १३ ॥ बहवःसवायागाःसंवत्सरावायस्मिन् तंकालंत्रिवर्गसाधकंनीत्वा आविचलानिसं यतानींद्रियाणियस्य ॥ १४ ॥ इदंदेहादिभगवान्माययाआत्मनिस्वस्मिन्रचितंमन्यमानः अत्राविद्यासृष्टिदृष्टांतयति अविद्यारचितमिति ॥ १५ ॥ आत्मादेहः आत्मादिमायिकमपिपुनःकालेनोपसृष्टमनित्यमाकलय्यविचिंत्य विशालांबदरिकाश्रमं ॥ १६ ॥ तत्रतत्कृतमष्टां



तस्यप्रीतेनमनसातांदत्वैडाविडासुतः ॥ पश्यतोंऽतर्दधेसोऽपिस्वपुरंप्रत्यपद्यत ॥ ९॥ अथायजतयज्ञेशंक्रतुभिर्भूरिदाक्षिणैः ॥द्रव्यक्रियादेवतानांकर्मकर्मफलप्रदं॥१०॥ सर्वात्मन्यच्युतेऽसर्वेतीव्रौघांभक्तिमुद्वहन् ॥ ददर्शात्मनिभूतेषुतमेवावस्थितंविभुं ॥ ११ ॥ तमेवंशीलसंपन्नंब्रह्मण्यंदीनवत्सलं ॥ गोप्तारंधर्मसेतूनांमेनिरेपितरंप्रजाः ॥ १२ ॥ षट्त्रिंशद्वर्षसाहस्रंशशासक्षितिमंडलं ॥ भोगैःपुण्यक्षयंकुर्वन्नभोगैरशुभक्षयं ॥ ॥ १३ ॥ एवंबहुसवंकालंमहात्माविचलेंद्रियः ॥ त्रिवर्गौपयिकंनीत्वापुत्रायादान्नृपासनं ॥ १४ ॥ मन्यमानइदंविश्वंमायारचितमात्मनि ॥ अविद्यारचितंस्वप्नगंधर्वनगरोपमं ॥१५॥ आत्मस्त्र्यपत्यसुहृदोबलमृद्धकोशमंतःपुरंपरिविहारभुवश्चरम्याः ॥भूमंडलंजलधिमेखलमाकलय्यकालोपसृष्टमितिसप्रययौविशालां ॥ १६ ॥ तस्यांविशुद्धकरणःशिववार्विगाह्यबध्वासनंजितमरुन्मनसाहृताक्षः ॥ स्थूलेदधारभगवत्प्रतिरूपएतद्ध्यायंस्तदव्यवहितोव्यसृजत्समाधौ ॥१७॥ भक्तिंहरौभगवतिप्रवहन्नजस्रमानंदबाष्पकलयामुहुरर्द्यमानः ॥ विक्लिद्यमानहृदयःपुलकाचितांगोनात्मानमस्मरदसावितिमुक्तलिंगः ॥ १८ ॥

गयोगमाह तस्यांशिवंवाः उदकंविगाह्यप्रविश्येतिस्नानादिनियमाउक्ताः विशुद्धकरणइतिशमादयोयमाः आसनादीनिस्फुटमेवोक्तानि जितोमरुत्प्राणोयेन आहृतान्यक्षाणियेन भगवतःप्रतिनिधिभूतेस्थूलेविराड्रूपेतन्मनोदधार ध्यायन्नव्यवहितोध्यातृध्येयभेदशून्यः सन्समाधौस्थितःसन्स्थूलंव्यसृजत् ॥ १७ ॥ एवमजस्रंनित्यंहरौभक्तिप्रकर्षेणवहन्नसौध्रुवोऽहंइत्यात्मानंनसस्मार यतोमुक्तलिंगस्त्यक्तशरीराभिमानः तत्रहेतवः आनंदबाष्पकलयाबिंदुप्रवाहेणाभिभूयमानः विक्लिद्यमानंद्रवद्धृदयंयस्य पुलकैर्व्याप्तांगः ॥ १८ ॥

॥ १९ ॥ अनुअनंतरंदेवप्रवरौददर्शेत्यनुषंगः गदामवष्टभ्यस्थितौ किरीटादिभिःसहितेचारुणीकुंडलेययोः ॥२० ॥ उत्तमगायःपुण्यश्लोकः
तस्यकिंकरौतौविज्ञाय मधुद्विषःपार्षत्प्रधानावितिहेतोःसाध्वसेनसंभ्रमेणविस्मृतपूजाक्रमः केवलंतस्यनामानिगृणन्ननाम ॥ २१ ॥ २२ ॥
सुभद्रमितिसशरीरस्यैवविष्णुपदारोहाभिप्रायं अतीतृपत्तार्पितवान् ॥ २३ ॥ आवांतस्यपार्षदौ ॥ २४ ॥ सुदुर्जयत्वेहेतुःसूरयःसप्तर्षयोऽपि

सददर्शविमानाग्र्यंनभसोऽवतरद्ध्रुवः ॥ विभ्राजयद्दशदिशोराकापतिमिवोदितं ॥ १९ ॥ तत्रानुदेवप्रवरौ
चतुर्भुजौश्यामौकिशोरावरुणांबुजेक्षणौ ॥ स्थिताववष्टभ्यगदांसुवाससौकिरीटहारांगदचारुकुंडलौ ॥
॥ २० ॥ विज्ञायतावुत्तमगायकिंकरावभ्युत्थितःसाध्वसविस्मृतक्रमः ॥ ननामनामानिगृणन्मधुद्विषःपा
र्षत्प्रधानावितिसंहतांजलिः ॥ २१ ॥ तंकृष्णपादाभिनिविष्टचेतसंबद्धांजलिंप्रश्रयनम्रकंधरं ॥ सुनंदनं
दावुपसृत्यसस्मितंप्रत्यूचतुःपुष्करनाभसंमतौ ॥ २२ ॥ सुनंदनंदावूचतुः भोभोराजन्सुभद्रंतेवाचं
नोऽवहितःशृणु ॥ यःपंचवर्षस्तपसाभवान्देवमतीतृपत् ॥ २३ ॥ तस्याखिलजगद्धातुरावांदेवस्यशार्ङ्गि
णः ॥ पार्षदाविहसंप्राप्तौनेतुंत्वांभगवत्पदं ॥ २४ ॥ सुदुर्जयंविष्णुपदंजितंत्वयायत्सूरयोऽप्राप्यविचक्ष
तेपरं ॥ आतिष्ठतच्चंद्रदिवाकरादयोग्रहर्क्षताराःपरियंतिदक्षिणं ॥ २५ ॥ अनास्थितंतेपितृभिरन्यैरप्यं
गकर्हिचित् ॥ आतिष्ठजगतांवंद्यंतद्विष्णोःपरमंपदं ॥ २६ ॥ एतद्विमानप्रवरउत्तमश्लोकमौलिना ॥ उ
पस्थापितमायुष्मन्नधिरोढुंत्वमर्हसि ॥ २७ ॥ मैत्रेयउवाच निशम्यवैकुंठनियोज्यमुख्ययोर्मधुच्यु
तांवाचमुरुक्रमप्रियः ॥ कृताभिषेकःकृतनित्यमंगलोमुनीन्प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥ परीत्या
ऽभ्यर्च्यधिष्ण्याग्र्यंपार्षदावभिवंद्यच ॥ इयेषतदधिष्ठातुंबिभ्रद्रूपंहिरण्मयं ॥ २९ ॥

यदप्राप्यकेवलमधःस्थिताःपश्यंति यच्चंद्रादयःप्रदक्षिणंयथाभवतिएवंपरिक्रामंतितदातिष्ठअधितिष्ठ ॥ २५ ॥ २६ ॥ आयुष्मान्नित्यापिसशरी
रस्यानाभिप्रायमेत्र ॥ २७ ॥ मधुच्यवतेस्रवतीतिमधुच्युत् तां पाठांतरेमधुच्युतंयस्यांताममृतस्राविणीमित्यर्थः कृतंनित्यंकर्ममंगलंचालंकर
णंयेन अभ्यवादयत्रवादयामास ॥ २८ ॥ तदेवरूपंहिरण्मयंप्रकाशबहुलंबिभ्रत्सान्नियेषऐच्छत् ॥ २९ ॥

गृहंविमानं अयंभावः यदाध्रुवःविमानमारोढुमैच्छत्तदामृत्युरागत्यप्रणम्योवाच हेमहाराजमामंगीकुरु उवाचध्रुवः स्वागतंते क्षणंतावदुपविश एवमुक्त्वाध्रुवः विष्णोःस्मरणंकृत्वामृत्योर्मूर्ध्निपदंदत्वाविमानाग्र्यमारुरोह ॥ ३० ॥ ३१ ॥ दीनांहित्वा अगंदुर्गमंत्रिविष्टपंयास्यामीत्यन्वस्मरत् ॥ ३२ ॥ व्यवसितमभिप्रायं व्यवसीयज्ञात्वा ॥ ३३ ॥ ३४ ॥ देवयानेनदेवमार्गेणविमानेनेतिवा मुनीन्सप्तर्षीनपिततःपरस्ताद्वि

तदोत्तानपदःपुत्रोददर्शांतकमागतं ॥ मृत्योर्मूर्ध्निपदंदत्वाआरुरोहाद्भुतंगृहं ॥ ३० ॥ तदादुंदुभयोनेदुर्मृदंगपणवादयः ॥ गंधर्वमुख्याःप्रजगुःपेतुःकुसुमवृष्टयः ॥३१॥ सचस्वर्लोकमारोक्ष्यन्सुनीतिंजननींध्रुवः ॥ अन्वस्मरदगंहित्वादीनांयास्येत्रिविष्टपं ॥३२॥ इतिव्यवसितंतस्यव्यवसीयसुरोत्तमौ ॥ दर्शयामासतुर्देवींपुरोयानेनगच्छतीं ॥ ३३ ॥ तत्रतत्रप्रशंसद्भिःपथिवैमानिकैःसुरैः ॥ अवकीर्यमाणोददृशेकुसुमैःक्रमशोग्रहान् ॥३४॥ त्रिलोकींदेवयानेनसोऽतिव्रज्यमुनीनपि ॥ परस्ताद्यद्ध्रुवगतिर्विष्णोःपदमथाभ्यगात् ॥३५॥ यद्भ्राजमानंस्वरुचैवसर्वतोलोकास्त्रयोह्यनुविभ्राजंतएते ॥ यन्नाव्रजन्जंतुषुयेऽननुग्रहाव्रजंतिभद्राणिचरंतियेऽनिशं ॥ ३६ ॥ शांताःसमदृशःशुद्धाःसर्वभूतानुरंजनाः ॥ यांत्यंजसाऽच्युतपदमच्युतप्रियबांधवाः ॥ ॥ ३७ ॥ इत्युत्तानपदःपुत्रोध्रुवःकृष्णपरायणः ॥ अभूत्त्रयाणांलोकानांचूडामणिरिवामलः ॥ ३८ ॥ गंभीरवेगोनिमिषंज्योतिषांचक्रमाहितं ॥ यस्मिन्भ्रमतिकौरव्यमेढ्यामिवगवांगणः ॥ ३९ ॥ महिमानंविलोक्यास्यनारदोभगवानृषिः ॥ आतोद्यंवितुदन्श्लोकान्सत्रेऽगायत्प्रचेतसां ॥ ४० ॥

ष्णोःपदंतदभ्यगात् ध्रुवागतिर्यस्यसः ॥ ३५ ॥ यत्भ्राजमानमनुयस्यरुचालोकाविभ्राजंते येअननुग्रहानिष्कृपाः तेयन्नाव्रजन्नगतवंतः ॥ ३६ ॥ अच्युतःप्रियोबांधवोयेषां ॥ ३७ ॥ ३८ ॥ अनिमिषमनलसंज्योतिषांचक्रंयास्मिन्नाहितमार्पितंसद्भ्रमति मेढ्यामाहितोगंभीरवेवोगवांगणइव ॥ ३९ ॥ आतोद्यंवीणां वीतुदन्वादयन् प्रचेतसांब्रह्मसत्रेभगवन्माहात्म्यप्रसंगेनध्रुवमहिमप्रतिपादनपरान्त्रीन्श्लोकानगायत् ॥ ४० ॥

ननूमिति पतिरेवदेवतायस्यास्तस्याः सुतस्ययःतपःप्रभावः तस्यतांगतिंफलमधिगंतुं वेदवादनशीलाब्रह्मर्षयोऽपिनैवप्रभवंति अभ्युपा यान्भगवद्धर्मान्दृष्ट्वाऽपि किंपुनर्नृपाः ॥ ४१ ॥ तपःप्रभावंगतिंचविशिनष्टिद्वाभ्यां गुरुदाराःपितृपत्नीसुरुचिः तस्यावाक्शरैर्भिन्नेन हृदयेनवनंयातःसन् अजितमपिजिगायवशीकृतवान् ॥ ४२ ॥ तस्याधिरूढंतेनप्राप्तंपदंयोभुविक्षत्रबंधुः क्षत्रियोभवेत्सः तमनुवर्षसमूहै रपिआरोढुमिच्छेदपि किंतत्संकल्पोऽप्यशक्यः दूरतआरोहणमित्यर्थः कथंभूतंपदं षट्पंचवावर्षाणियस्यसः अल्पैरेवाहोभिः वैकुंठं

नारदउवाच नूनंसुनीतेःपतिदेवतायास्तपःप्रभावस्यसुतस्यतांगतिं ॥ दृष्ट्वाऽभ्युपायानपिवेदवादिनोन वाधिगंतुंप्रभवंतिकिंनृपाः ॥४१ ॥ यःपंचवर्षोगुरुदारवाक्शरैर्भिन्नेनयातोहृदयेनदूयता॥वनंमदादेशकरो ऽजितंप्रभुंजिगायतद्भक्तगुणैःपराजितं ॥ ४२॥ यःक्षत्रबंधुर्भुवितस्याधिरूढमन्वारुरुक्षेदपिवर्षपूगैः ॥ षट् पंचवर्षोयदहोभिरल्पैःप्रसाद्यवैकुंठमवापतत्पदं ॥ ४३ ॥ मैत्रेयउवाच एतत्तेऽभिहितंसर्वंयत्पृष्टोऽह मिहत्वया ॥ ध्रुवस्योद्दामयशसश्चरितंसंमतंसतां ॥४४॥ धन्यंयशस्यमायुष्यंपुण्यंस्वस्त्ययनंमहत् ॥ स्वर्ग्यं ध्रौव्यंसौमनस्यंप्रशस्यमघमर्षणं ॥ ४५ ॥ श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टितं ॥ भवेद्भक्तिर्भगवतिय यास्यात्क्लेशसंक्षयः ॥ ४६ ॥ महत्त्वमिच्छतांतीर्थंश्रोतुःशीलादयोगुणाः ॥ यत्रतेजस्तदिच्छूनांमानोयत्रम नस्विनां ॥ ४७ ॥ प्रयतःकीर्तयेत्प्रातःसमवायेद्विजन्मनां ॥ सायंचपुण्यश्लोकस्यध्रुवस्यचरितंमहत् ॥ ४८ ॥ पौर्णमास्यांसिनीवाल्यांद्वादश्यांश्रवणेऽथवा ॥ दिनक्षयेव्यतीपातेसंक्रमेऽर्कदिनेऽपिवा ॥४९॥ श्रावयेच्छ्रद्द धानानांतीर्थपादपदाश्रयः ॥ नेच्छंस्तत्रात्मनात्मानंसंतुष्टइतिसिद्ध्यति ॥ ५० ॥

प्रसाद्ययत्तस्यपदमवापतत् ॥ ४३ ॥ उद्दाममुत्कृष्टंयशोयस्य ॥ ४४ ॥ धनादेर्निमित्तं ध्रौव्यंध्रुवस्थानप्रापकं प्रशस्यंप्रशंसाऽर्हं अघमर्ष णंपापनाशनं ॥ ४५ ॥ अच्युतप्रियस्यध्रुवस्यचेष्टितंश्रुत्वायोवर्ततेतस्यभक्तिर्भवेत् ॥ ४६ ॥ तीर्थंमहत्त्वावाप्तिस्थानं गुणाःयत्रभवंति ॥ ॥ ४७ ॥ समवायेसभायां ॥ ४८ ॥ ४९ ॥ नेच्छन्निष्कामस्तत्रश्रवणे आत्मैवात्मानंप्रतिसंतुष्टोभवतिइतिहेतोःसिद्धिंप्राप्नोति ॥ ५० ॥

किंच सत्पथेभगवन्मार्गेऽमृतरूपंज्ञानंयोदद्यात् ॥ ५१ ॥ ध्रुवस्यचरितंमयातेऽभिहितंमातुर्गृहंचहित्वा ॥ ५२ ॥ इतिश्रीभागवतेमहापु
राणेचतुर्थस्कंधेटीकायांद्वादशोऽध्यायः ॥ १२ ॥ एवंपंचभिरध्यायैर्ध्रुवचर्यानुवर्णिता ॥ अथैकादशभिश्चित्रंपृथुचारित्रमुच्यते ॥ १ ॥
तत्रत्रयोदशेवक्तुंपृथोर्जन्मध्रुवान्वये ॥ अंगोवेनपितापुत्रक्रौर्याद्गतइतीर्यते ॥ २ ॥ प्ररूढोभावोभाक्तिर्यस्य ॥ १ ॥ अन्ववायेवंशे ॥ २ ॥
नारदेनप्रचेतसांसत्रेवर्णिताःकथाःप्रष्टुंतन्महिमानमाह मन्यइति देवस्यदर्शनंयस्य हरेःपरिचर्याप्रकारः क्रियायोगः पंचरात्रेयेनप्रोक्तः ॥

ज्ञानमज्ञानतत्त्वाययोदद्यात्सत्पथेऽमृतं॥कृपालोर्दीननाथस्यदेवास्तस्यानुगृण्हते॥५१॥इदंमयातेऽभिहितं
कुरूद्वहध्रुवस्यविख्यातविशुद्धकर्मणः॥हित्वाऽर्भकःक्रीडनकानिमातुर्गृहंचविष्णुंशरणंयोजगाम॥५२॥इ०
भा०म०चतुर्थस्कंधेध्रुवचरितंनामद्वादशोऽध्यायः॥ १२ ॥ ॥छ॥ सूतउवाच निशम्यकौषारविणोपवर्णि
तंध्रुवस्यवैकुंठपदाधिरोहणं॥ प्ररूढभावोभगवत्यधोक्षजेप्रष्टुंपुनस्तंविदुरःप्रचक्रमे॥ १॥ विदुरउवाच
केतेप्रचेतसोनामकस्यापत्यानिसुव्रत॥ कस्यान्ववायेप्रख्याताःकुत्रवासत्रमासते॥ २॥ मन्येमहाभागवतं
नारदंदेवदर्शनं॥ येनप्रोक्तःक्रियायोगःपरिचर्याविधिर्हरेः॥३॥ स्वधर्मशीलैःपुरुषोभगवान्यज्ञपूरुषः॥ इ
ज्यमानोभक्तिमतानारदेनेरितःकिल॥ ४॥ यास्तादेवर्षिणातत्रवर्णिताभगवत्कथाः॥ मह्यंशुश्रूषवेब्रह्म
न्कात्स्न्र्येनाचष्टुमर्हसि॥५॥ मैत्रेयउवाच ध्रुवस्यचोत्कलःपुत्रःपितरिप्रस्थितेवनं॥ सार्वभौमश्रियंनैच्छ
दधिराजासनंपितुः॥ ६॥ सजन्मनोपशांतात्मानिःसंगःसमदर्शनः॥ ददर्शलोकेविततमात्मानंलोकमात्म
नि॥ आत्मानंब्रह्मनिर्वाणंप्रत्यस्तमितविग्रहं॥ अवबोधरसैकात्म्यमानंदमनुसंततं॥ ८॥

॥ ३ ॥ स्वधर्मशीलैः प्रचेतोभिः ॥ ४ ॥ ५ ॥ ध्रुवस्यवंशेतेजाताइतिवक्तुंध्रुवस्यवंशमनुक्रामतिध्रुवस्येत्यादिना पितुःसार्वभौमश्रियंनै
च्छत् अधिराजासनंच ॥ ६ ॥ अनिच्छायांहेतुमाह सइतिचतुर्भिः ॥ ७ ॥ आत्मानंस्वरूपभूतंब्रह्मावरुंधानः आप्नुवन् जानन् आत्म
नेनान्यंतदैक्षत स्वयंतुसर्वस्माद्भिन्नःसन् कथंभूतंब्रह्म निर्वाणंशांतं अवबोधरसेनैकात्म्यंयस्य ॥ ८ ॥ ॥

कथंभूतः अव्यवच्छिन्नोयोयोगःसएवाग्निस्तेनदग्धःकर्ममलाशयोवासनायस्य ॥ ९ ॥ जडादीनामिवाकृतिर्यस्यतथाभूतोलक्षितःअत
न्मतिः नतेषामिवमतिर्यस्यसर्वज्ञत्वात् प्रशांतान्यर्चींषिज्वालायस्यानलस्यतद्वत्स्थितः ॥ १० ॥ यवीयांसमुत्कलात्कनिष्ठं ॥ ११ ॥ इष्टा
प्रियाभार्या ॥ १२ ॥ १३ ॥ निशीथोमध्यरात्रिः व्युष्टःप्रातःकालःतदभिमानिन्योदेवताः ॥ १४ ॥ ससर्वतेजाः चक्षुःसंज्ञंमनुं सुतंपुत्र

अव्यवछिन्नयोगाग्निदग्धकर्ममलाशयः ॥ स्वरूपमवरुंधानोनात्मनोऽन्यंतदैक्षत ॥ ९ ॥ जडांधबाधिरो
न्मत्तमूकाकृतिरतन्मतिः ॥ लक्षितःपथिबालानांप्रशांतार्चिरिवानलः ॥ १० ॥ मत्वातंजडवन्मत्तंकुलवृ
द्धाःसमंत्रिणः ॥ वत्सरंभूपतिंचक्रुर्यवीयांसंभ्रमेःसुतं ॥ ११ ॥ स्वर्वीथिर्वत्सरस्येष्टाभार्याऽसूतषडात्मजा
न् ॥ पुष्पार्णंतिग्मकेतुंचइषमूर्जंवसुंजयं ॥ १२ ॥ पुष्पार्णस्यप्रभाभार्यादोषाचद्वेबभूवतुः ॥ प्रातर्मध्यं
दिनंसायमितिह्यासन्प्रभासुताः ॥ १३ ॥ प्रदोषोनिशीथोव्युष्टइतिदोषासुतास्त्रयः ॥ व्युष्टःसुतंपुष्क
रिण्यांसर्वतेजसमादधे ॥ १४ ॥ सचक्षुःसुतमाकूत्यांपत्न्यांमनुमवापह ॥ मनोरसूतमहिषीविरजान्नड्वला
सुतान् ॥ १५ ॥ पुरुंकुत्संत्रितंद्युम्नंसत्यवंतंधृतव्रतं ॥ अग्निष्टोममतीरात्रंप्रद्युम्नंशिबिमुल्मुकं ॥ १६ ॥
उल्मुकोऽजनयत्पुत्रान्पुष्करिण्यांषडुत्तमान् ॥ अंगंसुमनसंख्यातिंक्रतुमंगिरसंगयं ॥ १७ ॥ सुनीथां
गस्ययापत्नीसुषुवेवेनमुल्बणं ॥ यद्दौःशील्यात्सराजर्षिर्निर्विण्णोनिरगात्पुरात् ॥ १८ ॥ यमंगशेपुःकु
पितावाग्वज्रामुनयःकिल ॥ गतासोस्तस्यभूयस्तेममंथुर्दक्षिणंकरं ॥ १९ ॥ अराजकेतदालोकेदस्युभिः
पीडिताःप्रजाः ॥ जातोनारायणांशेनपृथुराद्यःक्षितीश्वरः ॥ २० ॥ विदुरउवाच तस्यशीलनिधेःसाधोर्ब्र
ह्मण्यस्यमहात्मनः ॥ राज्ञःकथमभूद्दुष्टाप्रजायाद्विमनाययौ ॥ २१ ॥ ॥ ॥

मवाप मनोःमाहिषीनड्वलाविरजान्शुद्धान् पुरुप्रमुखान्एकादशसुतानसूत ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अंगहेविदुर वागेववज्रं
येषां ॥ १९ ॥ मथनेहेतुः अराजकइति आद्यःपुरग्रामादीनांतेनरचितत्वात् ॥ २० ॥ यद्यस्याःप्रजायाहेतोर्विमनाःसन्ययौ ॥ २१ ॥

किंवा अंहःअपराधं वेनमुद्दिश्यआलक्ष्य ॥ २२ ॥ यतोऽयमधर्मइत्याह नावध्येयःअवज्ञेयोऽपिनभवति ॥ २३ ॥ परावरविदांमध्येअ
तिश्रेष्ठः ॥ २४ ॥ अभावीपुत्रःकाम्यकर्मणाबलादापादितोनसुखायभवेदितिद्योतयन्नंगस्यपुत्रोत्पत्तिक्रममाह अंगइत्यादिना ॥ २५ ॥
॥ २६ ॥ अयातयामानिअगतंवीर्याणि ॥ २७ ॥ २८ ॥ यज्ञेगृहीतमौनोऽपिवाचंव्यसृजत्प्रायुंक्त ॥ २९ ॥ आहुताआहूताःग्रहान्सोमपात्रा



किंवांऽहोवेनमुद्दिश्यब्रह्मदंडमयूयुजन् ॥ दंडव्रतधरेराज्ञिमुनयोधर्मकोविदाः ॥ २२ ॥ नावध्येयःप्रजापा
लःप्रजाभिरघवानपि ॥ यदसौलोकपालानांबिभर्त्योजःस्वतेजसा ॥ २३ ॥ एतदाख्याहिमेब्रह्मन्सुनीथा
त्मजचेष्टितं ॥ श्रद्दधानायभक्तायत्वंपरावरवित्तमः ॥२४॥ मैत्रेयउवाच अंगोऽश्वमेधंराजर्षिराजहार
महाक्रतुं ॥ नाजग्मुर्देवतास्तस्मिन्नाहूताब्रह्मवादिभिः ॥२५॥ तमूचुर्विस्मितास्तत्रयजमानमथर्त्विजः ॥
हवींषिहूयमानानिनतेगृण्हंतिदेवताः ॥ २६ ॥ राजन्हवींष्यदुष्टानिश्रद्धयासादितानिते ॥ छंदांस्ययात
यामानियोजितानिधृतव्रतैः ॥२७॥ नविदामेहदेवानांहेलनंवयमण्वपि ॥ यन्नगृण्हंतिभागान्स्वान्ये
देवाःकर्मसाक्षिणः ॥२८॥ मैत्रेयउवाच अंगोद्विजवचःश्रुत्वायजमानःसुदुर्मनाः ॥ तत्प्रष्टुंव्यसृजद्वाचं
सदस्यांस्तदनुज्ञया ॥ २९ ॥ नागच्छंत्याहुतादेवानगृण्हंतिग्रहानिह ॥ सदसस्पतयोब्रूतकिमवद्यंमयाकृ
तं ॥३०॥ सदसस्पतयऊचुः नरदेवेहभवतोनाघंतावन्मनाक्स्थितं ॥ अस्त्येकंप्राक्तनमघंयदिहेदृक्त्वमप्र
जः ॥ ३१ ॥ तथासाधयभद्रंतेआत्मानंसुप्रजंनृप ॥ इष्टस्तेपुत्रकामस्यपुत्रंदास्यतियज्ञभुक् ॥ ३२ ॥ तथा
स्वभागधेयानिग्रहीष्यंतिदिवौकसः ॥ यद्यज्ञपुरुषःसाक्षादपत्यायहरिर्वृतः ॥ ३३ ॥ ॥

णि इहयज्ञेनगृण्हंति ॥ ३० ॥ इहजन्मनिनतावन्मनाक्ईषदपिअघंस्थितं कथंचिज्ज्ञातस्याघस्यसद्यएवप्रायश्चित्तैःक्षालनात् किंतुप्राक्तनमे
कमघमस्ति यद्यस्मात् ईदृक्गुणाधिकोऽपित्वंप्रजारहितः ॥ ३१ ॥ अतोयथादेवाहविर्गृण्हंतितथात्मानंसुप्रजंसाधय कथंसाधनीयंतदा
हुःइष्टइति ॥ ३२ ॥ तथासतिस्वभागान्ग्रहीष्यंति यद्यतोहरिःसाक्षाद्वृतःस्यात् अतस्तेनसहसर्वेदेवाआगमिष्यंतीत्यर्थः ॥ ३३ ॥

नन्वतितुच्छान्कामान्हरिःकथंदद्यात्तत्राह तांस्तानिति ॥ ३४ ॥ प्रजातयेपुत्रोत्पत्तये शिपिविष्टायपशुषुयज्ञरूपेणप्रविष्टाय तथाचश्रुतिः यज्ञोवैविष्णुःपशवःशिपिर्यज्ञएवपशुषुप्रतितिष्ठतीति ॥ ३५ ॥ तस्मादिति योग्यतयाऽग्नेः ॥ ३६ ॥ ३७ ॥ पुमांसंसूतेऽनेनेतितथातत् प्राश्यपत्युःसकाशात् गर्भमादधे अप्रजासती ॥ ३८ ॥ मातामहंमृत्युं मृत्योर्हिपुत्रीसुनीथा ॥ ३९ ॥ मृगयुर्लुब्धकःसतंदृष्ट्वावे

तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामयतेजनः ॥ आराधितोयथैवैषांतथापुंसांफलोदयः ॥ ३४ ॥ इतिव्यवसिताविप्रास्तस्यराज्ञःप्रजातये ॥ पुरोडाशंनिरवपन्शिपिविष्टायविष्णवे ॥३५॥ तस्मात्पुरुषउत्तस्थौहेममाल्यमलांबरः ॥ हिरण्मयेनपात्रेणसिद्धमादायपायसं ॥ ३६ ॥ सविप्रानुमतोराजागृहीत्वांऽजलिनौदनं ॥ अवघ्रायमुदायुक्तःप्रादात्पत्न्याउदारधीः॥३७॥सातत्पुंसवनंराज्ञीप्राश्यवैपत्युरादधे॥गर्भंकालउपावृत्तेकुमारंसुषुवेऽप्रजा॥३८॥सबालएवपुरुषोमातामहमनुव्रतः॥अधर्मांशोद्भवंमृत्युंतेनाभवदधार्मिकः ॥३९॥ सशरासनमुद्यम्यमृगयुर्वनगोचरः॥हंतिसाधून्मृगान्दीनान्वेनोऽसावित्यरौज्जनः ॥४०॥ आक्रीडेक्रीडतोबालान्वयस्यानतिदारुणः ॥ प्रसह्यनिरनुक्रोशःपशुमारममारयत् ॥ ४१ ॥ तंविचक्ष्यखलंपुत्रंशासनैर्विविधैर्नृपः ॥ यदानशासितुंकल्पोभृशमासीत्सुदुर्मनाः॥४२॥ प्रायेणाभ्यर्चितोदेवोयेऽप्रजागृहमेधिनः ॥ कदपत्यभृतंदुःखंयेनविंदंतिदुर्भरं ॥ ४३ ॥ यतःपापीयसीकीर्तिरधर्मश्चमहान्नृणां ॥ यतोविरोधःसर्वेषांयतआधिरनंतकः॥४४॥कस्तंप्रजाऽपदेशंवैमोहबंधनमात्मनः ॥ पंडितोबहुमन्येतयदर्थाःक्लेशदागृहाः॥४५॥

नोसावागच्छतीतिजनःसर्वोऽप्यरौत्चुक्रोश॥४०॥आक्रीडेक्रीडास्थाने बालान्पशूनिवामारयत्॥४१॥ विचक्ष्यदृष्ट्वा॥४२॥दुर्मनसस्तस्यकुपुत्रनिंदावाक्यान्याह प्रायेणेतित्रिभिः अप्रजायेतैरभ्यर्चितः तत्रहेतुःकुत्सितैरपत्यैःसंभृतंदुर्भरंधारयितुमशक्यंदुःखंयेनविंदंति ॥४३॥ सर्वेषांसर्वैःसह आधिर्मानसीव्यथा॥४४॥तंप्रजाऽपदेशंपुत्रनाममात्रमपिआत्मनोमोहेनबंधनं यदर्थाःयन्निमित्ताःक्लेशदागृहाभवंति ॥ ४५ ॥

इदानींनिर्वेदहेतुत्वेनकुत्सितमेवापत्यमभिनंदति कदपत्यामिति शुचांपदात्‌शोकानांस्थानात्‌ वरत्वेहेतुः निर्विद्येतेति तत्कुतः यद्यतः
कदपत्यात्‌गृहाः क्लेशनिवहाभवंति ॥४६॥ महतामुदयानांविभूतीनामुदयोयस्मिन्‌ तस्मात्‌गृहाद्गतः यावेनंसूतेस्मतां ॥४७॥ प्रजाःपुरोहि
तादयश्चविचिक्युःअन्वेषितवंतःतंतत्रैवसंतमपिनापश्यन्नितिदृष्टांतेनाह यथेति ॥४८॥ साश्रवःरुदंतः भर्तुर्विप्लवंनाशमदर्शनमित्यर्थः ॥



कदपत्यंवरंमन्येसदपत्याच्छुचांपदात्‌ ॥ निर्विद्येतगृहान्मर्त्योयत्क्लेशनिवहागृहाः ॥ ४६ ॥ एवंसनिर्विण्ण
मनानृपोगृहान्निशीथउत्थायमहोदयोदयात्‌ ॥ अलब्धनिद्रोऽनुपलक्षितोनृभिर्हित्वागतोवेनसुवंप्रसुप्तां ॥
॥ ४७ ॥ विज्ञायनिर्विद्यगतंपतिंप्रजाःपुरोहितामात्यसुहृद्गणादयः ॥ विचिक्युरुर्व्यामतिशोककातरायथा
निगूढंपुरुषंकुयोगिनः ॥ ४८ ॥ अलक्षयंतःपदवींप्रजापतेर्हतोद्यमाःप्रत्युपसृत्यतेपुरीं ॥ ऋषीन्समेतानभि
वंद्यसाश्रवोन्यवेदयन्पौरवभर्तृविप्लवं ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेत्रयोदशोऽध्यायः
॥ १३ ॥ मैत्रेयउवाच भृग्वादयस्तेमुनयोलोकानांक्षेमदर्शिनः ॥ गोप्तर्यसतिवैनृणांपश्यंतःपशुसा
म्यतां ॥ १ ॥ वीरमातरमाहूयसुनीथांब्रह्मवादिनः ॥ प्रकृत्यसंमतंवेनमभ्यषिंचन्पतिंभुवः ॥ २ ॥ श्रुत्वानृ
पासनगतंवेनमत्युग्रशासनं ॥ निलिल्युर्दस्यवःसर्वेसर्पत्रस्ताइवाखवः ॥ ३ ॥ सआरूढनृपस्थानउन्नद्धोऽ
ष्टविभूतिभिः ॥ अवमेनेमहाभागांस्तब्धःसंभावितःस्वतः ॥४॥ एवंमदांधउत्सिक्तोनिरंकुशइवद्विपः ॥ पर्य
टन्रथमास्थायकंपयन्निवरोदसी॥५॥नयष्टव्यंनदातव्यंनहोतव्यंद्विजाःक्वचित्‌ ॥इतिन्यवारयद्धर्मंभेरीघो
षेणसर्वशः ॥६॥ वेनस्यावेक्ष्यमुनयोदुर्वृत्तस्यविचेष्टितं ॥ विमृश्यलोकव्यसनंकृपयोचुःस्मसत्रिणः ॥ ७ ॥

॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेत्रयोदशोऽध्यायः ॥१३॥ चतुर्दशेतुदुष्पुत्रभयादंगेगतेद्विजैः ॥ अभिषिक्तस्यवेनस्यरोषात्तैर्व
धउच्यते ॥ १ ॥ क्षेमदर्शिनःक्षेमचिंतकाः पशुसमानरूपतांपश्यंतः ॥ १ ॥ अमात्यादीनांप्रकृतीनामसंमतंपाठांतरेप्रकृत्यास्वभावेनासंमतं
॥२॥चोराःसर्वेलीनाःबभूवुः॥३॥आरूढंनृपस्थानंराजासनंयेनअष्टविभूतिभिः लोकपालैश्वर्यैः ॥४॥५॥६॥ सत्रिणः मिलिताःसंतः॥७॥

मूलतश्चाग्रतश्चदीप्तेज्वलितेकाष्ठेतन्मध्यवर्तिनांपिपीलिकादीनांयथोभयतोव्यसनं एवंतस्करेभ्यः पालकाच्चदुःखंप्राप्तमित्यर्थः ॥ ८ ॥
तदेवाहुः अराजकभयादिति अतदर्हणःराजानर्हः ॥९॥ अस्माकमप्यनिष्टंजातमित्याहुः अहेर्यथापयःपोषःक्षीरेणपोषणंपोषकस्याप्यनर्थांबि
भर्त्तिपुष्णाति तदेवाहुः वेनइति ॥ १० ॥ निरूपितःनियुक्तोऽस्माभिः सांत्वयेमउपपत्तिभिःप्रार्थयिष्यामः तस्यपातकं ॥ ११ ॥ स्वस्य

अहोउभयतःप्राप्तंलोकस्यव्यसनंमहत् ॥ दारुण्युभयतोदीप्तेइवतस्करपालयोः ॥ ८ ॥ अराजकभया
देषकृतोराजाऽतदर्हणः ॥ ततोऽप्यासीद्भयंत्वद्यकथंस्यात्स्वास्तिदेहिनां ॥ ९ ॥ अहेरिवपयःपोषःपोषक
स्याप्यनर्थभृत् ॥ वेनःप्रकृत्यैवखलःसुनीथागर्भसंभवः ॥१०॥ निरूपितःप्रजापालःसजिघांसतिवैप्रजाः ॥
तथापिसांत्वयेमामुंनास्मांस्तत्पातकंस्पृशेत् ॥ ११ ॥ तद्विद्वद्भिरसद्वृत्तोवेनोऽस्माभिःकृतोनृपः ॥ सांत्वि
तोयदिनोवाचंनग्रहीष्यत्यधर्मकृत् ॥ १२ ॥ लोकधिक्कारसंदग्धंदहिष्यामःस्वतेजसा ॥ एवमध्यवसायै
नंमुनयोगूढमन्यवः ॥ उपव्रज्याब्रुवन्वेनंसांत्वयित्वाचसामभिः ॥ १३ ॥ मुनयऊचुः नृपवर्यनिबोधै
तद्यत्तेविज्ञापयामभोः ॥ आयुःश्रीबलकीर्तिनांतवतातविवर्द्धनं ॥ १४ ॥ धर्मआचरितःपुंसांवाङ्मनःका
यबुद्धिभिः ॥ लोकान्विशोकान्वितरत्यथानंत्यमसंगिनां ॥ १५ ॥ सतेमाविनशेद्वीरप्रजानांक्षेमलक्षणः ॥
यस्मिन्विनष्टेनृपतिरैश्वर्यादवरोहति ॥१६॥ राजन्नसाध्वमात्येभ्यश्चोरादिभ्यःप्रजान्नृपः ॥ रक्षन्यथाबलिं
गृण्हन्इहप्रेत्यचमोदते ॥ १७ ॥ तस्यराष्ट्रेपुरेचैवभगवान्यज्ञपूरुषः ॥ इज्यतेस्वेनधर्मेणजनैर्वर्णाश्रमा
न्वितैः ॥१८॥ तस्यराज्ञोमहाभागभगवान्भूतभावनः ॥ परितुष्यतिविश्वात्मातिष्ठतोनिजशासने ॥१९॥
तस्मिंस्तुष्टेकिमप्राप्यंजगतामीश्वरेश्वरे ॥ लोकाःसपालाह्येतस्मैहरंतिबलिमादृताः ॥ २० ॥

तत्पातकस्पर्शेहेतुः तत्पातकत्वांविद्वद्भिः ॥ १२ ॥ गूढोमन्युर्येषां सामभिःप्रियोक्तिभिः ॥ १३ ॥ १४ ॥ निष्कामानामानंत्यंमोक्षमपि
॥ १५ ॥ माविनशेत् माविनश्यतु ॥ १६ ॥ असाधवोयेअमात्यास्तेभ्यः यथायथाशास्त्रं ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

सर्वान्लोकांश्चतत्पालानमरांश्चतत्प्रापकान्यज्ञांश्चसंगृह्णातिनियच्छतीतितथातं विचित्रैःद्रव्ययज्ञादिभिः भवायसमृद्धये स्वदेशान्तद्वासिनोजनान् अनुरोद्धुमनुवर्तितुं ॥ २१ ॥ युष्मद्विषयेत्वद्देशेहरेःकलाःअंशाःसुराः तेषांसुराणांहेलनमवज्ञां ॥ २२ ॥ बालिशाःअज्ञाः



तंसर्वलोकामरयज्ञसंग्रहंत्रयीमयंद्रव्यमयंतपोमयं ॥ यज्ञैर्विचित्रैर्यजतोभवायतेराजन्स्वदेशाननुरोद्धुमर्हसि ॥२१॥ यज्ञेनयुष्मद्विषयेद्विजातिभिर्वितायमानेनसुराःकलाहरेः ॥ स्विष्टाःसुतुष्टाःप्रदिशंतिवांछितंतद्धेलनंनार्हसिवीरचेष्टितुं ॥ २२ ॥ वेनउवाच बालिशाबतयूयंवाअधर्मेधर्ममानिनः ॥येवृत्तिदंपतिंहित्वाजारंपतिमुपासते ॥ २३ ॥ अवजानंत्यमीमूढाभूपरूपिणमीश्वरं॥नानुविंदंतितेभद्रमिहलोकेपरत्रच॥२४॥ कोयज्ञपुरुषोनामयत्रवोभक्तिरीदृशी ॥ भर्तृस्नेहविदूराणांयथाजारेकुयोषितां ॥२५॥ विष्णुर्विरिंचोगिरिशइंद्रोवायुर्यमोरविः ॥ पर्जन्योधनदःसोमःक्षितिरग्निरपांपतिः ॥ २६ ॥ एतेचान्येचविबुधाःप्रभवोवरशापयोः ॥ देहेभवंतिनृपतेःसर्वदेवमयोनृपः ॥ २७ ॥ तस्मान्मांकर्मभिर्विप्रायजध्वंगतमत्सराः ॥ बलिंचमह्यंहरतमत्तोऽन्यःकोग्रभुक्पुमान् ॥ २८ ॥ मैत्रेयउवाच इत्थंविपर्ययमतिःपापीयानुत्पथंगतः ॥ अनुनीयमानस्तद्याञ्चांनचक्रेभ्रष्टमंगलः ॥ २९ ॥ इतितेऽसत्कृतास्तेनद्विजाःपंडितमानिना॥ भग्नायांभव्ययाञ्चायांतस्मैविदुरचुक्रुधुः ॥३० ॥ हन्यतांहन्यतामेषपापःप्रकृतिदारुणः ॥ जीवन्जगदसावाशुकुरुतेभस्मसाद्ध्रुवं ॥ ३१ ॥ नायमर्हत्यसद्वृत्तोनरदेववरासनं ॥ योऽधियज्ञपतिंविष्णुंविनिंदत्यनपत्रपः ॥ ३२ ॥

वृत्तिदमन्नादिप्रदंमांहित्वा ॥ २३ ॥ २४ ॥ भर्तृस्नेहोविदूरोयेषां ॥ २५ ॥ २६ ॥ देहेभवंतिनृपतेःअतोनृपतिरेवेश्वरइतरेतदंशाइतिभावः ॥ २७ ॥ बलिंचकरादिकं अग्रभुगाराध्यः २८ ॥ २९ ॥ तेनासत्कृताः भग्नायांयाञ्चायांचुक्रुधुः ॥ ३० ॥ ३१ ॥ ३२ ॥

परिचक्षितानिंदेत अशुभंवेनंविना कृतघ्नतामाहुः यदनुग्रहविषयःसन्नीदृशमैश्वर्यंयःप्राप्तः ॥ ३३ ॥ पूर्वंगूढमन्यवःइदानीं रूढमन्यवःहुं कृतैःहुंकारैः ॥ ३४ ॥ स्वाश्रमपदंप्रतिऋषिभिर्गतेगमनेकृते विद्यायोगेनमंत्रसहितयायुक्त्याओषधिबलेनपालयामास ॥ ३५ ॥ पुंवद्भावआर्षःसरस्वत्याःसलिलेआप्लुताइत्यर्थः ॥ ३६ ॥ तदातूत्पातान्वीक्ष्य भुवःअभद्रंनभवेत्किमित्याहुश्च ॥ ३७ ॥ एवंमृशंतऋषयःस्थिताः तदाधावतांचोराणांभूरिःपांसुःसमुत्थितः ॥३८॥ततूतदातेषांलोकस्यधनंलुंपतांजिघांसतांचोरोपद्रवमाज्ञाय॥३९॥तथाचोरप्रायमराजकंहीनसत्वंचजनपदमाज्ञाय शक्ताअप्यवारणेदोषदर्शिनोऽपिलुंपतोलोकान्नावारयन्नित्यन्वयः॥४०॥शक्तानांक्षत्रियाणामवारणेदोषइतिकिं

कोवैनंपरिचक्षीतवेनमेकमृतेऽशुभं ॥ प्राप्तईदृशमैश्वर्यंयदनुग्रहभाजनः॥३३॥ इत्थंव्यवसिताहंतुमृषयोरूढमन्यवः ॥ निजघ्नुर्हुंकृतैर्वेनंहतमच्युतनिंदया ॥ ३४ ॥ ऋषिभिःस्वाश्रमपदंगतेपुत्रकलेवरं ॥ सुनीथापालयामासविद्यायोगेनशोचती ॥३५॥ एकदामुनयस्तेतुसरस्वत्सलिलाप्लुताः ॥हुत्वाऽग्नीन्सत्कथाश्चक्रुरुपविष्टाःसरित्तटे ॥ ३६ ॥ वीक्ष्योत्थितान्महोत्पातानाहुर्लोकभयंकरान् ॥ अप्यभद्रमनाथायादस्युभ्योनभवेद्भुवः ॥ ३७ ॥ एवंमृशंतऋषयोधावतांसर्वतोदिशः ॥ पांसुःसमुत्थितोभूरिश्चोराणामभिलुंपतां ॥ ३८ ॥ तदुपद्रवमाज्ञायलोकस्यवसुलुंपतां ॥ भर्तर्युपरतेतस्मिन्नन्योन्यंचजिघांसतां ॥ ३९ ॥ चोरप्रायंजनपदंहीनसत्त्वमराजकं ॥ लोकान्नावारयन्शक्ताअपितद्दोषदर्शिनः ॥४०॥ ब्राह्मणःसमदृक्शांतोदीनानांसमुपेक्षकः ॥ स्त्रवतेब्रह्मतस्यापिभिन्नभांडात्पयोयथा ॥ ४१ ॥ नांगस्यवंशोराजर्षेरेषसंस्थातुमर्हति ॥ अमोघवीर्याहिनृपावंशेऽस्मिन्केशवाश्रयाः ॥ ४२ ॥ विनिश्चित्यैवमृषयोविपन्नस्यमहीपतेः॥ममंथुरूरुंतरसातत्रासीद्बाहुकोनरः ॥ ४३ ॥ ॥ ॥ ॥

वक्तव्यं समदृगपिशांतोऽपिब्राह्मणोपियदिदीनानांसमुपेक्षकोभवेत्तर्हितस्यापिब्रह्मतपःस्त्रवति ॥४१॥४२॥ अतउपेक्षादोषपरिहारायनांगस्येत्यादिविनिश्चित्यमहीपतेरूरुंतरसाममंथुरित्यन्वयः संस्थातुंनाशंगंतुं यद्वा ऋषयएवलुंपतोलोकान्नावारयन् कथंभूताःहुंकारेणैववेनंनिवारयितुंशक्ताअपितर्हिकितस्मिन्निवारणादिदोषदर्शिनः नचोदासन् चोरोपद्रुतेदीनोपेक्षायांतपोहानिप्रसंगात् नचान्यंतन्निवारकंराजानमकुर्वन् अंगवंशोच्छेदस्यानर्हत्वात् अतोवेनस्यैवदेहंममंथुरितियोज्यं बाहुकोवामनः ॥ ४३ ॥ ॥

तमेवाह काकइवकृष्णः महत्यौहनूकपोलप्रांतौयस्य ऱ्हस्वौपादौयस्य ॥ ४४ ॥ ४५ ॥ गिरिःकाननंगोचरःआश्रयोनतुपुरादिप्रवेशोयेषांतत्रहेतुः येनकारणेनासावहरत् ततस्तस्यवंश्यास्तथाभूताः ॥ ४६ ॥ इतिचतुर्थेटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ ॥
ततःपंचदशेविप्रैर्मंथनाद्देनबाहुतः ॥ जातस्यतुपृथोरुक्तमभिषेकार्हणादिकं ॥ १ ॥ १ ॥ २ ॥ किमित्यूचुरित्यतआह एषइतिचतुर्भिः



काककृष्णोऽतिऱ्हस्वांगोऱ्हस्वबाहुर्महाहनुः ॥ ऱ्हस्वपान्निम्ननासाग्रोरक्ताक्षस्ताम्रमूर्द्धजः ॥ ४४ ॥ तंतु तेऽवनतंदीनंकिंकरोमीतिवादिनं ॥ निषीदेत्यब्रुवंस्तातसनिषादस्ततोभवत् ॥ ४५ ॥ तस्यवंश्यास्तु नैषादागिरिकाननगोचराः ॥ येनाहरज्जायमानोवेनकल्मषमुल्बणं ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणे चतुर्थस्कंधेपृथुचरितेनिषादोत्पत्तिर्नामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ मैत्रेयउवाच अथतस्यपुनर्विप्रैरपुत्रस्यमहीपतेः ॥ बाहुभ्यांमथ्यमानाभ्यांमिथुनंसमपद्यत ॥ १ ॥ तद्दृष्ट्वामिथुनंजातमृषयोब्रह्मवादिनः ॥ ऊचुःपरमसंतुष्टाविदित्वाभगवत्कलां ॥ २ ॥ ऋषयऊचुः एषविष्णोर्भगवतःकलाभुवनपालनी ॥ इयंचलक्ष्म्याःसंभूतिःपुरुषस्यानपायिनी ॥ ३॥ अयंतुप्रथमोराज्ञांपुमान्प्रथयितायशः ॥ पृथुर्नाममहाराजोभविष्यतिपृथुश्रवाः ॥ ४ ॥ इयंचसुदतीदेवीगुणभूषणभूषणा ॥ अर्चिर्नामवरारोहापृथुमेवावरुंधती ॥ ५ ॥ एषसाक्षाद्धरेरंशोजातोलोकरिरक्षया ॥ इयंचतत्पराहिश्रीरनुजज्ञेऽनपायिनी ॥ ॥ ६ ॥ मैत्रेयउवाच प्रशंसंतिस्मतंविप्रागंधर्वप्रवराजगुः ॥ मुमुचुःसुमनोधाराःसिद्धानृत्यंतिस्वःस्त्रियः ॥ ७ ॥ शंखतूर्यमृदंगाद्यानेदुर्दुंदुभयोदिवि ॥ तत्रसर्वउपाजग्मुर्देवर्षिपितृणांगणाः ॥ ८ ॥ ब्रह्माजगद्गुरुर्देवैःसहासृत्यसुरेश्वरैः ॥ वैन्यस्यदक्षिणेहस्तेदृष्ट्वाचिन्हंगदाभृतः ॥ ९ ॥ ॥ ॥



लक्ष्म्याःसंभूतिःकला ॥ ३ ॥ अत्रयःपुमान्सतुमहाराजोभविष्यति ॥ ४ ॥ सुदतीशोभनदंतवती गुणानांभूषणानांचभूषणरूपा अवरुंधतीभर्तृत्वेनभजंतीभविष्यति ॥ ५ ॥ अत्रहेतुः एषइति लोकस्यरिरक्षयारिरक्षयिषया ॥ ६ ॥ स्वःस्त्रियःअप्सरसोनृत्यंतिस्म ॥ ७ ॥ ॥ ८ ॥ देवैःसहासृत्यआगत्य वैन्यस्यपृथोः चिन्हंरेखात्मकंचक्रं ॥ ९ ॥ ॥ ॥

अप्रतिहतंरैखांतरैरभिन्नंचक्रंयस्यचिह्नंसपरमेश्वरस्यांशः ॥ १० ॥ आभिषेचनिकानिअभिषेकसाधनानि ॥ ११ ॥ १२ ॥ १३ ॥ हेवी
र वरासनमुत्तमासनं सलिलस्यस्त्रावोयस्मात् ॥ १४ ॥ द्वेवालव्यजने ॥ १५ ॥ ब्रह्ममयंवर्मकवचं तत्पत्नीश्रीः श्रियंसंपदं ॥ १६ ॥ द
शचंद्राकाराणिबिंबानिकोशेयस्यतं असिखड्गं शतचंद्रंचर्म रूपाश्रयमतिसुंदरं ॥ १७ ॥ अजस्यगोश्चशृंगाभ्यांनिर्मितंचापं योगमय्यौ

पादयोरररविंदंचतंवैमेनेहरेःकलां ॥ यस्याप्रतिहतंचक्रमंशःसपरमेष्ठिनः ॥१०॥ तस्याभिषेकआरब्धोब्रा
ह्मणैर्ब्रह्मवादिभिः ॥ आभिषेचनिकान्यस्मैआजह्रुःसर्वतोजनाः ॥११॥ सरित्समुद्रागिरयोनागागावःख
गामृगाः ॥द्यौःक्षितिःसर्वभूतानिसमाजह्रुरुपायनं ॥१२॥ सोऽभिषिक्तोमहाराजःसुवासाःसाध्वलंकृतः॥
पत्न्याऽर्चिषाऽलंकृतयाविरेजेऽग्निरिवापरः ॥१३॥ तस्मैजहारधनदोहैमंवीरवरासनं॥वरुणःसलिलस्त्राव
मातपत्रंशशिप्रभं ॥१४॥ वायुश्चवालव्यजनेधर्मःकीर्तिमयींस्रजं ॥ इंद्रःकिरीटमुत्कृष्टंदंडंसंयमनंयमः॥
॥१५॥ब्रह्माब्रह्ममयंवर्मभारतीहारमुत्तमं ॥हरिःसुदर्शनंचक्रंतत्पत्न्यव्याहतांश्रियं ॥१६॥ दशचंद्रमसिंरु
द्रःशतचंद्रंतथांऽबिका ॥ सोमोऽमृतमयानश्वांस्त्वष्टारूपाश्रयंरथं ॥१७॥ अग्निराजगवंचापंसूर्योरश्मिम
यानिषून् ॥ भूःपादुकेयोगमय्यौद्यौःपुष्पावलिमन्वहं ॥१८॥ नाट्यंसुगीतंवादित्रमंतर्धानंचखेचराः॥ऋ
षयश्चाशिषःसत्याःसमुद्रःशंखमात्मजं॥१९॥सिंधवःपर्वतानद्योरथवीथीर्महात्मनः॥सूतोऽथमागधोबंदीतं
स्तोतुमुपतस्थिरे ॥ २० ॥ स्तावकांस्तानभिप्रेत्यपृथुर्वैन्यःप्रतापवान् ॥ मेघनिर्ह्रादयावाचाप्रहसन्निद
मब्रवीत् ॥ २१ ॥ पृथुरुवाच भोसूतहेमागधसौम्यबंदिँल्लोकेऽधुनास्पष्टगुणस्यमेस्यात् ॥ किमाश्र
योमेस्तवएषयोज्यतांमामय्यभूवन्वितथागिरोवः ॥ २२ ॥

पादस्पर्शमात्रेणाभीष्टदेशप्रापिके ॥ १८ ॥
नाटचादिकौशलंखेचराः आत्मजंस्वप्रभवं ॥ १९ ॥ तंस्तोतुमुपास्थिताः ॥ २० ॥ स्तावकान्स्तोतुमुद्यतान् अभिप्रेत्यज्ञात्वा ॥२१॥
लोकेस्पष्टगुणस्यसतोमेस्तुतिःस्यात् अधुनातुकिमाश्रयोमेस्तवोयोज्यतां अतोवोगिरोऽधुनामयिवितथामाभूवन् यद्वा लोकेअधुनाअस्प
ष्टगुणस्यमे किमाश्रयःस्तवःस्यात् अतएषःक्रियमाणःस्तवः मेमदन्यस्ययोज्यतां नतुमे वितथाभिमानापत्तेरित्यर्थः ॥ २२ ॥

तस्मात्परोक्षे कालांतरे स्पष्टेषुगुणेषुसत्सु अस्माकमुपश्रुतानियशांसिप्रति स्तोत्रमलमत्यर्थंकरिष्यथ हेअपीच्यवाचःमधुरगिरः सभ्यैःप्रे
रितावयंत्वामेवस्तुमइतिचेत्तत्राह उत्तमश्लोकस्यगुणानुवादेकार्येसतिजुगुप्सितमर्वाचीनंनस्तवयंति ॥ २३ ॥ ननुसंभावितैरेवगुणैरात्मा
नंजनस्तावयतीतिचेत्तत्राह महतांगुणानात्मनिसंपादयितुंशक्तोऽपि असतोगुणान्संभावनामात्रेणकःस्तावयते यद्वा आदावेवसतोऽपिकः
स्तावयते स्वतएवप्रख्यातिसिद्धेः अन्यस्तुमिथ्यागुणस्तुतिश्लाघीमंदइत्याह तइति यद्ययंशास्त्राभ्यासादिकमकरिष्यत्तर्ह्यस्यविद्यादयोगुणा
अभविष्यन्निति क्रियानिष्पत्त्याविप्रलब्धोजनानामवहासंनवेद ॥ २४ ॥ किंच प्रभवोऽपिविश्रुताअपिन्हीमंतोऽपिजुगुप्संति वेतिदृष्टांते

तस्मात्परोक्षेऽस्मदुपश्रुतान्यलंकरिष्यथस्तोत्रमपीच्यवाचः ॥सत्युत्तमश्लोकगुणानुवादेजुगुप्सितंनस्तव
यंतिसभ्याः ॥२३॥ महद्गुणानात्मनिकर्तुमीशःकस्तावकैस्तावयतेऽसतोपि ॥ तेऽस्याभविष्यन्नितिविप्रल
ब्धोजनावहासंकुमतिर्नवेद॥२४॥प्रभवोह्यात्मनस्तोत्रंजुगुप्संत्यपिविश्रुताः ॥न्हीमंतःपरमोदाराःपौरुषं
वापिगर्हितं ॥२५॥ वयंत्वविदिताल्लोकेसूताद्यापिवरीमाभिः ॥ कर्मभिःकथमात्मानंगापयिष्यामबालवत्
॥ २६ ॥ इतिश्रीभा॰म॰चतुर्थस्कंधेपृथुचरितेपंचदशोऽध्यायः ॥ १५ ॥ ॥ मैत्रेयउवाच इतिब्रुवाणं
नृपतिंगायकामुनिचोदिताः ॥तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥१॥नालंवयंतेमहिमानुवर्णनेयोदेववर्यो
ऽवततारमायया ॥ वेनांगजातस्यचपौरुषाणितेवाचस्पतीनामपिबभ्रमुर्धियः॥२॥अथाप्युदारश्रवसःपृथो
र्हरेःकलाऽवतारस्यकथाऽमृतादृताः ॥ यथोपदेशंमुनिभिःप्रचोदिताःश्लाघ्यानिकर्माणिवयंवितन्महि ॥३॥

यथाऽतिस्तुतौक्रियमाणायांविगर्हितंब्राह्मणवधादिपौरुषंनिंदंति तथाउचितामपिस्तुतिंनसहंतइत्यर्थः ॥ २५ ॥ वरीमाभिरितिदीर्घत्वमार्ष
भवितृप्रधानोऽयंनिर्देशः वरिष्ठैःकर्मभिरविदिताइत्यर्थः ॥ २६ ॥ इतिचतुर्थेटीकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ षोडशेसर्वलोके
शैःसत्कृतंभार्ययायुतं ॥ मुनिप्रयुक्ताःसूताद्याःस्तुवंतिस्मेतिवर्ण्यते ॥ १ ॥ १ ॥ नालंनसमर्थाः योभवान् अवतारेष्वपि अस्याधिक्यमाहुः
वेनस्यांगात् जातस्यतेपौरुषाणिप्रति अवितर्क्यतयाब्रह्मादीनामपिधियोबभ्रमुः कुतःपुनर्वयंतद्वर्णनेसमर्थाभवेम ॥ २ ॥ अथापियथावद्व
र्णयितुमशक्ताअपिकथाऽमृतेसादराः मुनिभिरुपदेशंयोगबलेनहृदिप्रकाशनं तदनतिक्रम्य वितन्महिविस्तारयामः ॥ ३ ॥

॥ ४ ॥ तनौस्वदेहे लोकपालानांतनूर्मूर्तीः कालेकालेबिभर्ति यथाभागंपालनपोषणानुरंजनादिकार्यानुसारेणयज्ञादिप्रवर्तनेनस्वर्गस्य
हितंवृष्ट्यादिनाचभूर्लोकस्यहितंयथाभवतितथा ॥ ५ ॥ सूर्यादितनुधारणमेवाहाष्टभिः वसुधनंकरादानकालेआदत्ते दुर्भिक्षादिकालेवि
मुंचतिच अष्टौमासान्सूर्योयथावसुजलमादत्तेवर्षासुविमुंचतितद्वत् ॥ ६ ॥ मस्तकेपादेनाक्रमतामप्यार्तानांभूतानामातिक्रमंसहिष्यतेक्षि
तेर्वृत्तिःसर्वसहनं सावृत्तिर्यस्यास्तिसतथा ॥ ७ ॥ देवेऽवर्षतिएषकृच्छ्रंगताःप्राणायासांताःप्रजाः स्वयंवृष्टिंकृत्वारक्षिष्यति अत्रहेतुः असौ
नरदेववपुर्हरिरिति ॥ ८ ॥ वदनमेवामृतमूर्तिश्चंद्रस्तेनसानुरागोऽवलोकोयस्मिन् विशदंस्मितंतेनचारुणा अत्रचक्वचिद्वर्तमानसामीप्येव

एषधर्मभृतांश्रेष्ठोलोकंधर्मेऽनुवर्तयन् ॥ गोप्ताचधर्मसेतूनांशास्तातत्परिपंथिनां ॥ ४ ॥ एषवैलोकपाला
नांबिभर्त्येकस्तनौतनूः ॥ कालेकालेयथाभागंलोकयोरुभयोर्हितं ॥ ५ ॥ वसुकालउपादत्तेकालेचायंवि
मुंचति॥समःसर्वेषुभूतेषुप्रतपन्सूर्यवद्विभुः ॥ ६ ॥ तितिक्षत्यक्रमंवैन्यउपर्याक्रमतामपि॥भूतानांकरुणः
शश्वदार्तानांक्षितिवृत्तिमान् ॥ ७ ॥ देवेऽवर्षत्यसौदेवोनरदेववपुर्हरिः ॥ कृच्छ्रप्राणाःप्रजाह्येषरक्षिष्यत्यं
जसेंद्रवत् ॥ ८ ॥ आप्यायत्यसौलोकंवदनामृतमूर्तिना ॥सानुरागावलोकेनविशदस्मितचारुणा ॥ ९ ॥
अव्यक्तवर्त्मैषनिगूढकार्योगंभीरवेधाउपगुप्तवित्तः॥अनंतमाहात्म्यगुणैकधामापृथुःप्रचेताइवसंवृतात्मा
॥ १० ॥ दुरासदोदुर्विषहआसन्नोऽपिविदूरवत् ॥ नैवाभिभवितुंशक्योवेनारण्युत्थितोनलः ॥ ११ ॥अं
तर्बहिश्चभूतानांपश्यन्कर्माणिचारणैः ॥ उदासीनइवाध्यक्षोवायुरात्मेवदेहिनां ॥ १२ ॥ ॥

र्तमानवद्वेतिभूतनिर्देशश्च आशंसायांभूतवच्चेतिद्रष्टव्यं ॥ ९ ॥ नव्यक्तंवर्त्मप्रवेशनिर्गममार्गोयस्य निगूढंनिष्पत्तेःपूर्वमविज्ञातंकार्यंयस्य
तच्चकार्यंगंभीरंकिमर्थमेतत्कृतमित्यन्यैरज्ञाताभिप्रायंविधत्तइतितथा उपगुप्तंसुरक्षितंवित्तंयस्य अनंतमाहात्म्यश्चासौगुणानामेकं धामवि
ष्णुर्यस्मिन् अनंतमाहात्म्योपेतागुणाएवएकंधामस्थानंयस्येतिवा संवृतात्मासंयतमूर्तिः समुद्रचरत्वेनवरुणस्याप्येतेगुणाद्रष्टव्याः॥ १० ॥
दुरासदःशत्रोर्मनसाऽपिप्राप्तुमशक्यः दुर्विषहःशत्रुभिःसोढुमशक्यः विदूरवत्पौरुषेणाभिभावितुमशक्यः वेनएवारणिस्तस्मादुत्थितः ॥
॥ ११ ॥ चारणैर्गुप्तभृत्यैःपश्यन्नपिस्वस्तुतिर्निंदादावुदासीनइववर्तिष्यतेयथादेहिनामध्यक्षोऽविकृतआत्मभूतोवायुःसूत्रात्मातद्वत् ॥ १२ ॥

आत्मद्विषांसुतामिति सुतग्रहणंस्वात्मजसाम्यार्थं धर्मपथेयमस्यवृत्तेस्थितः ॥ १३ ॥ चक्रमाज्ञासेनावारथस्यवाचक्रं मानसाचलमाभिव्या प्यप्रवर्तते किंपर्यंतामित्यतआह अर्कोरश्मिगणैर्यावत्तपतितावत् ॥ १४ ॥ यद्यस्माद्रंजयिष्यति अथतस्मान्मनोरंजनैर्हेतुभिरमुंराजान माहुः मनोरंजनकैरितिचेष्टितविशेषणं ॥ १५ ॥ १६ ॥ मातरीवभक्तिर्भजनंयस्य आत्मनोदेहस्यार्द्धइवपत्न्यांप्रीतिमान् ॥ १७ ॥ नंदिसुखंवर्द्धयतीतितथा मुक्तसंगेषुप्रकृष्टःसंगोयस्य दंडपाणिरित्यपराधानुपेक्षणमुच्यते नादंड्यमित्यत्रपक्षपाताभावउक्तः ॥ १८ ॥

नादंड्यंदंडयत्येषसुतमात्मद्विषामपि ॥ दंडयत्यात्मजमपिदंड्यंधर्मपथेस्थितः ॥१३॥ अस्याप्रतिहतंचक्रं पृथोरामानसाचलात् ॥ वर्ततेभगवानर्कोयावत्तपतिगोगणैः ॥१४॥ रंजयिष्यतियल्लोकमयमात्मविचेष्टितैः ॥ अथामुमाहूराजानंमनोरंजनकैःप्रजाः ॥१५॥ दृढव्रतःसत्यसंधोब्रह्मण्योवृद्धसेवकः ॥ शरण्यःसर्वभूतानांमानदोदीनवत्सलः ॥१६॥ मातृभक्तिःपरस्त्रीषुपत्न्यामर्धइवात्मनः ॥ प्रजासुपितृवत्स्निग्धःकिंकरोब्रह्मवादिनां ॥१७॥ देहिनामात्मवत्प्रेष्ठःसुहृदांनंदिवर्द्धनः ॥ मुक्तसंगप्रसंगोयंदंडपाणिरसाधुषु ॥ १८ ॥ अयंतुसाक्षाद्भगवांस्त्र्यधीशःकूटस्थआत्माकलयाऽवतीर्णः ॥ यस्मिन्नविद्यारचितंनिरर्थकंपश्यंतिनानात्वमपिप्रतीतं ॥ १९ ॥ अयंभुवोमंडलमोदयाद्रेर्गोप्तैकवीरोनरदेवनाथः ॥ आस्थायजैत्रंरथमात्तचापःपर्यस्यतेदक्षिणतोयथाऽर्कः ॥२०॥ अस्मैनृपालाःकिलतत्रतत्रबलिंहरिष्यंतिसलोकपालाः ॥ मंस्यंतएषांस्त्रियआदिराजंचक्रायुधंतद्यशउद्धरंत्यः ॥२१॥ अयंमहींगांदुदुहेऽधिराजःप्रजापतिर्वृत्तिकरःप्रजानां ॥ योलीलयाऽद्रीन्स्वशरासकोट्याभिंदन्समांगामकरोद्यथेंद्रः ॥ २२ ॥ विस्फूर्जयन्नाजगवंधनुःस्वयंयदाचरत्क्ष्मामविषह्यमाजौ ॥ तदानिलिल्युर्दिशिदिश्यसंतोलांगूलमुद्यम्ययथामृगेंद्रः ॥ २३ ॥

अयंत्विति तुशब्देननिरुपमत्वंदर्शयति कोऽसावात्मातमाह यस्मिन्प्रतीतमपिनानात्वमर्थशून्यंपश्यंति ॥ १९ ॥ आउदयाद्रेस्तत्पर्यंतं गोप्तागोपायिष्यति तदर्थंपर्यस्यतेपर्यटिष्यति प्रदक्षिणीकरिष्यतीत्यर्थः ॥ २० ॥ तदाप्रदक्षिणांकुर्वतेअस्मैमंस्यंतेज्ञास्यंति तस्ययशउद्धरंत्यः कीर्तयंत्यः ॥ २१ ॥ इंद्रइवाद्रीन्विभिंदन् ॥ २२ ॥ लांगूलमुन्नमय्ययथामृगेंद्रश्चरतितथाधनुर्विस्फूर्जयन्यदाक्ष्मामचरत् ॥ २३ ॥

प्रादुरभाविप्रादुरभूत् कर्मकर्तरिचिण् तत्राहार्षीत् हरणंकरिष्यतीत्यर्थः ॥ २४ ॥ २५ ॥ विश्रुताविक्रमायस्य गाथाःप्रबंधान् आत्मा
श्रिताःविष्णवाश्रिताः ॥ २६ ॥ उपगीयमानोमहानुभावोयस्य ॥ ॥ २७ ॥ इतिचतुर्थेटीकायांषोडशोऽध्यायः ॥ १६ ॥ ततःसप्तद
शेलोकक्षुधाःप्रशमयन्पृथुः ग्रस्तबीजांमहींहंतुंयत्तोभीत्यातयास्तुतः ॥ १ ॥ छंदयामासतोषितवान् ॥ १ ॥ भृत्यानमात्यान् पुरोधसः

एषोऽश्वमेधान्शतमाजहारसरस्वतीप्रादुरभावियत्र ॥ अहारषीद्यस्यहयंपुरंदरःशतक्रतुश्चरमेवर्तमाने ॥
॥ २४ ॥ एषस्वसद्मोपवनेसमेत्यसनत्कुमारंभगवंतमेकं ॥ आराध्यभक्त्यालभतामलंतज्ज्ञानंयतोब्रह्मपरं
विदंति ॥ २५ ॥ तत्रतत्रगिरस्तास्ताइतिविश्रुतविक्रमः ॥ श्रोष्यत्यात्माश्रितागाथाःपृथुःपृथुपराक्रमः ॥
॥२६॥ दिशोविजित्याप्रतिरुद्धचक्रःस्वतेजसोत्पाटितलोकशल्यः ॥ सुरासुरेंद्रैरुपगीयमानमहानुभावोभ
वितापतिर्भुवः ॥ २७ ॥ इतिश्रीभा०म०च०षोडशोऽध्यायः ॥ १६ ॥ मैत्रेयउवाच एवंसभगवान्वैन्यः
ख्यापितोगुणकर्मभिः ॥ छंदयामासतान्कामैःप्रतिपूज्याभिनंद्यच ॥१॥ ब्राह्मणप्रमुखान्वर्णान्भृत्यामात्यपु
रोधसः ॥ पौरान्जानपदान्श्रेणीःप्रकृतीःसमपूजयत् ॥ २ ॥ विदुरउवाच कस्माद्दधारगोरूपंधरित्रीब
हुरूपिणी ॥ यांदुदोहपृथुस्तत्रकोवत्सोदोहनंचकिं ॥ ३ ॥ प्रकृत्याविषमादेवीकृतातेनसमाकथं ॥ तस्य
मेध्यंहयंदेवःकस्यहेतोरपाहरत् ॥ ४ ॥ सनत्कुमाराद्भगवतोब्रह्मन्ब्रह्मविदुत्तमात् ॥ लब्ध्वाज्ञानंसविज्ञा
नंराजर्षिःकांगतिंगतः ॥ ५ ॥ यच्चान्यदपिकृष्णस्यभगवान्भगवतःप्रभोः ॥ श्रवःसुश्रवसःपुण्यंपूर्वदेह
कथाश्रयं ॥ ६ ॥ भक्तायमेऽनुरक्तायतवचाधोक्षजस्यच ॥ वक्तुमर्हतियोऽदुह्यद्वैन्यरूपेणगामिमां ॥ ७ ॥
सूतउवाच चोदितोविदुरेणैवंवासुदेवकथांप्रति ॥ प्रशस्यतंप्रीतमनामैत्रेयःप्रत्यभाषत ॥ ८ ॥

पुरोहितांश्च श्रेणीःतैलिकतांबूलकादीन् पौरविशेषान् प्रकृतीःनियोगिनः ॥ २ ॥ दोहनंपात्रं ॥ ३ ॥ मेध्यंयज्ञार्हं ॥ ४ ॥ सविज्ञा
नमपरोक्षज्ञानसहितं ॥ ५ ॥ पूर्वदेहःपृथ्ववतारः तत्कथाश्रयं सुष्ठुश्रवोयस्य ॥ ६ ॥ अदुह्यत्दुग्धवान् ॥ ७ ॥ ८ ॥

जनतायास्त्वंपालइत्यामंत्रितोनियुक्तः तदानिरन्नेक्षितितलेसति क्षुधाक्षामाःक्षीणादेहायासांताः प्रजाएत्यपतिंपृथुमब्रुवन् ॥ ९ ॥ जाठरेणाग्निनाऽभितप्ताःयःसाधितः विप्रैर्मंथनेनसंपादितः तंत्वांशरणंयाताः ॥ १० ॥ तत्तस्मान्नोऽस्माकमन्नं रातवेरातुंदातुं ईहतुईहतांयत्नंक

मैत्रेयउवाच यदाभिषिक्तःपृथुरंगविप्रैरामंत्रितोजनतायाश्चपालः ॥ प्रजानिरन्नेक्षितिपृष्ठएत्यक्षुत्क्षामदेहाःपतिमभ्यवोचन् ॥ ९ ॥ वयंराजन्जाठरेणाभितप्तायथाऽग्निनाकोटरस्थेनवृक्षाः ॥ त्वामद्ययाताः शरणंशरण्यंयःसाधितोवृत्तिकरःपतिर्नः ॥ १० ॥ तन्नोभवानीहतुरातवेन्नंक्षुधार्दितानांनरदेवदेव ॥ यावन्ननंक्ष्यामहउज्झितोर्जावार्तापतिस्त्वंकिललोकपालः ॥ ११ ॥ मैत्रेयउवाच पृथुःप्रजानांकरुणंनिशम्यपरिदेवनं ॥ दीर्घंदध्यौकुरुश्रेष्ठनिमित्तंसोऽन्वपद्यत ॥ १२ ॥ इतिव्यवसितोबुद्ध्याप्रगृहीतशरासनः ॥ संदधेविशिखंभूमेःक्रुद्धस्त्रिपुरहायथा ॥ १३ ॥ प्रवेपमानाधरणीनिशम्योदायुधंचतं ॥ गौःसत्यपाद्रवद्भीतामृगीवमृगयुद्रुता ॥ १४ ॥ तामन्वधावत्तद्वैन्यःकुपितोऽत्यरुणेक्षणः ॥ शरंधनुषिसंधाययत्रयत्रपलायते ॥ १५ ॥ सादिशोविदिशोदेवीरोदसीचांतरंतयोः ॥ धावतीतत्रतत्रैनंददर्शानूद्यतायुधं ॥ १६ ॥ लोकेनाविंदतत्राणंवैन्यान्मृत्योरिवप्रजाः ॥ त्रस्तातदानिववृतेहृदयेनविदूयता ॥ १७ ॥ उवाचचमहाभागंधर्मज्ञापन्नवत्सल ॥ त्राहिमामपिभूतानांपालनेऽवस्थितोभवान् ॥ १८ ॥ सत्वंजिघांससेकस्माद्दीनामकृतकिल्बिषां ॥ अहनिष्यत्कथंयोषांधर्मज्ञइतियोमतः ॥ १९ ॥ प्रहरंतिनवैस्त्रीषुकृतागःस्वपिजंतवः ॥ किमुतत्वद्विधाराजन्करुणादीनवत्सलाः ॥ २० ॥

रोतु उज्झितोर्जास्त्यक्तान्नाःसत्यःवार्त्तायाःजीविकायाःपतिः ॥ ११ ॥ परिदेवनंविलापं निमित्तंहेतुमन्वपद्यत ज्ञातवान् ॥ १२ ॥ पृथिव्याओषधिबीजानिग्रस्तानीतिव्यवसितोनिश्चितवान्सन् ॥ १३ ॥ मृगयुनाद्रुताअनुगतामृगीव ॥ १४ ॥ १५ ॥ रोदसीद्यावापृथिव्यौतयोरंतरमंतरिक्षंच अनुपृष्ठतःउद्यतमायुधंयेन ॥ १६ ॥ १७ ॥ १८ ॥ योधर्मज्ञइतिमतःसभवान् योषांमांकथमहनिष्यत्हनिष्यति ॥ १९ ॥ २० ॥

अजरांदृढां धास्यसिधारयिष्यसि ॥ २१ ॥ बर्हिषियज्ञेयाभवतीदेवतारूपेणभागंवृंक्ते वसुधान्यादिकं ॥ २२ ॥ गोरूपेणतुयवसंतृणंजग्धि
अत्तीत्यर्थः पयस्तुनैवदोग्धिदुग्धंनस्रवति अत्रास्मिन्नपराधे ॥ २३ ॥ आत्मनिदेहेरुद्धानि ॥ २४ ॥ मद्वधेसर्वथाअन्नंनस्यादितिचेदत
आह अमूषांप्रजानां मेदसामांसेन ॥ २५ ॥ यदुक्तंयोषांकथंहनिष्यतीतितत्राह पुमानिति तस्यवधोऽवधएव ॥ २६ ॥ यच्चोक्तंकथमंभसि
धास्यसीतितत्राह त्वामिति तिलशःतिलप्रमाणानिखंडानिइत्येवंभूतामवस्थांनीत्वा ॥ २७ ॥ मन्युमयींमूर्तिंबिभ्रतं कृतांततुल्यत्वमुच्यते

मांविपाट्याजरांनावंयत्रविश्वंप्रतिष्ठितं ॥ आत्मानंचप्रजाश्चेमाःकथमंभसिधास्यसि ॥ २१ ॥ पृथुरु
वाच वसुधेत्वांवधिष्यामिमच्छासनपराङ्मुखीं ॥ भागंबर्हिषियावृंक्तेनतनोषिचनोवसु ॥ २२ ॥ यवसं
जग्ध्यनुदिनंनैवदोग्ध्यौधसंपयः ॥ तस्यामेवंहिदुष्टायांदंडोनात्रनशस्यते ॥ २३ ॥ त्वंखल्वौषधिबीजानिप्रा
क्सृष्टानिस्वयंभुवा ॥ नमुंचस्यात्मरुद्धानिमामवज्ञायमंदधीः ॥ २४ ॥ अमूषांक्षुत्परीतानामार्तानांपरिदे
वितं ॥ शमयिष्यामिमद्बाणैर्भिन्नायास्तवमेदसा ॥ २५ ॥ पुमान्योषिदुतक्लीबआत्मसंभावनोऽधमः ॥ भूतेषु
निरनुक्रोशोनृपाणांतद्वधोऽवधः ॥ २६ ॥ त्वांस्तब्धांदुर्मदांनीत्वामायागांतिलशःशरैः ॥ आत्मयोगबलेने
माधारयिष्याम्यहंप्रजाः ॥ २७ ॥ एवंमन्युमयींमूर्तिंकृतांतमिवबिभ्रतं ॥ प्रणताप्रांजलिःप्राहमहीसंजा
तवेपथुः ॥ २८ ॥ धरोवाच नमःपरस्मैपुरुषायमाययाविन्यस्तनानातनवेगुणात्मने ॥ नमःस्वरूपा
नुभवेननिर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥ येनाहमात्मायतनंविनिर्मिताधात्रायतोयंगुणसर्ग
संग्रहः ॥ सएवमांहंतुमुदायुधःस्वराडुपस्थितोऽन्यंशरणंकमाश्रये ॥ ३० ॥

नतुकृतांतस्यमन्युमयीमूर्तिरिति ॥ २८ ॥ शुद्धसत्वतनुंदेवमकस्मादतिदारुणं वीक्ष्यमाणापृथुंपृथ्वीतुष्टावकरुणोक्तिभिः ॥ माययाविन्य
स्ताःरचितानानाघोरादितनवोयेन गुणात्मनेगुणमयत्वेनप्रतीयमानाय वस्तुतस्तुनिर्धूतानिरस्ताःद्रव्यक्रियाकारकेषुअधिभूताध्यात्माधिदैवे
षुविभ्रमोऽहंकारः तन्निमित्ताऊर्मयोरागद्वेषादयश्चयस्मिन्तस्मै ॥ २९ ॥ अहोसर्वजीवाश्रयत्वेनसृष्टांमांकथंहंतुंप्रवर्ततइत्याह येनविधा
त्राआत्मनांजीवानामायतनमहंनिर्मिता यतःयस्यांमयिगुणसर्गस्यचतुर्विधभूतग्रामस्यसंग्रहःधारणं स्वराट्स्वतंत्रः ॥ ३० ॥

सृष्टिसंहारकारकोऽहमेवेति चेत्तथाऽपि प्रजापालने प्रवृत्तस्य मद्वधोनुचितएवेत्याह यएतादेति आत्माश्रययाजीवत्रिषयिण्या ॥ ३१ ॥ अ
तोदुर्ज्ञेयमीश्वरचेष्टितमित्याह नूनमिति अकृतात्मभिःविक्षिप्तचित्तैः यईश्वरःस्वतंत्रःअकरोत्ब्रह्माणं परतइति तेनब्रह्मणाचराचरम
कारयत् यश्वस्वतएकः परतोमाययाअनेकः ॥ ३२ ॥ तस्मादचिंत्यशक्तयेकेवलंनमइत्याह सर्गादिजन्मास्थितिभंगमस्यजगतःअनुरुण
द्धि अनुवर्ततेकरोति द्रव्याणिमहाभूतानि क्रियाइंद्रियाणि कारकादेवाः चेतनाबुद्धिः आत्माऽहंकारःतैःस्वशक्तिरूपैःसमुन्नद्धाःसमुत्क
टानिरुद्धाःशक्तयोयस्य ॥ ३३ ॥ प्राणिनांधारणार्थंमांरसातलादुद्धृत्येदानींप्रजारक्षणेप्रवृत्तस्यमद्वधोनयुक्तइतिसकरुणमाहद्वाभ्यां हेअ

**यएतदादावसृजच्चराचरंस्वमाययात्माश्रययावितर्क्यया ॥ तयैवसोऽयंकिलगोप्तुमुद्यतःकथंनुमांधर्मपरो जिघांसति ॥ ३१ ॥ नूनंबतेशस्यसमीहितंजनैस्तन्माययादुर्जययाऽकृतात्मभिः ॥ नलक्ष्यतेयस्त्वकरोद कारयद्योऽनेकएकःपरतश्चईश्वरः ॥३२॥ सर्गादियोऽस्यानुरुणद्धिशक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः ॥ तस्मैसमुन्नद्धनिरुद्धशक्तयेनमःपरस्मैपुरुषायवेधसे ॥ ३३ ॥ सवैभवानात्मविनिर्मितंजगद्भूतेंद्रियांतःक रणात्मकंविभो ॥ संस्थापयिष्यन्नजमांरसातलादभ्युज्जहारांभसआदिसूकरः ॥ ३४ ॥ अपामुपस्थेमयि नाव्यवस्थिताःप्रजाभवानद्यरिरक्षिषुःकिल ॥ सवीरमूर्तिःसमभूद्धराधरोयोमांपयस्युग्रशरोजिघांससि ॥ ॥ ३५ ॥ नूनंजनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया ॥ नज्ञायतेमोहितचित्तवर्त्मभिस्तेभ्योनमो वीरयशस्करेभ्यः ॥ ३६ ॥ इतिश्रीभा०म०च०पृथुविजयेधरित्रीनिग्रहोनामसप्तदशोऽध्यायः ॥ १७ ॥**

जयःसृष्टवान्सएवभवान् स्वनिर्मितंचराचरंजगत् सम्यक्स्थापयितुमादिसूकरःसन् मामभ्युज्जहार ॥ ३४ ॥ सएवधराधरोवराहोऽद्य
अपामुपस्थेउपरिमयिनावि आधारभूतायामवस्थिताःप्रजारक्षितुमिच्छुः वीरमूर्तिःपृथुरूपःसमभूत्एवंभूतःसत्वंपयसिनिमित्तेमांजिघांस
सीतिचित्रमित्यर्थः ॥ ३५ ॥ तस्मादीश्वरचेष्टितंदुर्ज्ञेयंकिमितिकैमुत्यन्यायेनोपसंहराति नूनमिति तस्येश्वरस्यगुणसर्गरूपयामाययामो
हितंचित्तमेववर्त्मयेषांमोहितानिचित्तवर्त्मानियेषामितिवा तैर्जनैः ईश्वराणांहरिभक्तानामेवतावदीहितंनज्ञायते किंपुनस्तस्यपरमेश्वरस्य
अतएवपरमेश्वरवत् तेभ्योऽपिनमएवंकेवलं वीराणांजितेंद्रियाणांयशःकुर्वंतियेतेभ्यः यथावीराणांयशोवर्धततथाचेष्टतांनतुयथेष्टमि
तिभावः ॥ ३६ ॥ ॥ इ० भा० म० च० सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥

अष्टादशेमहीवाक्याद्वत्सपात्रादिभेदतः ॥ पृथ्व्यादिभिस्तुसादुग्धास्वंस्वंदुग्धमितीर्यते ॥ १ ॥ १ ॥ हे अभिभोप्रभो यद्वा भोदेवअभिअभयं यथाभवत्येवंमन्युंसंनियच्छ श्रावितंविज्ञापितं नमद्वाक्येऽनादरःकर्तव्यइत्याह बुधोहिसर्वतःसारमादत्ते ॥ २ ॥ मयिजीर्णाश्चौषधीरुपा येनगृहाणेतिवक्तुमुपायेनसर्वंसिद्ध्यतिनान्यथेत्याह अस्मिन्निति त्रिभिः पुंसांश्रेयसःपुरुषार्थस्यप्रसिद्ध्येअस्मिन्लोकेकृष्यादयः अमुष्मि श्चलोकेऽग्निहोत्रादयोयोगाउपायादृष्टाः प्रयुक्ताअनुष्ठिताश्च ॥ ३ ॥ पूर्वैर्दर्शितान्अवरोऽर्वाचीनः ॥ ४ ॥ अविद्वान्विद्वानपीतिवा व्यभि

मैत्रेयउवाच इत्थंपृथुमभिष्टूयरुषाप्रस्फुरिताधरं ॥ पुनराहावनिर्भीतासंस्तभ्यात्मानमात्मना ॥१॥ सन्नि यच्छाभिभोमन्युंनिबोधश्रावितंचमे ॥ सर्वतःसारमादत्तेयथामधुकरोबुधः ॥ २ ॥ अस्मिन्लोकेऽथवाऽ मुष्मिन्मुनिभिस्तत्त्वदर्शिभिः ॥ दृष्टायोगाःप्रयुक्ताश्चपुंसांश्रेयःप्रसिद्धये ॥३॥ तानातिष्ठतियःसम्यगुपाया न्पूर्वदर्शितान् ॥ अवरःश्रद्धयोपेतउपायान्विंदतेंऽजसा ॥४॥ताननादृत्ययोविद्वानर्थानारभतेस्वयं ॥ तस्य व्यभिचरंत्यर्थाआरब्धाश्चपुनःपुनः ॥५॥ पुरासृष्टाह्यौषधयोब्रह्मणायाविशांपते ॥ भुज्यमानामयादृष्टाअ वद्भिरधृतव्रतैः ॥ ६ ॥ अपालिताऽनादृताचभवद्भिर्लोकपालकैः ॥ चोरीभूतेऽथलोकेऽहंयज्ञार्थेऽग्रसमौष धीः ॥७॥ नूनंतावीरुधःक्षीणामयिकालेनभूयसा ॥ तत्रयोगेनदृष्टेनभवानादातुमर्हति ॥ ८ ॥ वत्संकल्प यमेवीरयेनाहंवत्सलातव ॥ धोक्ष्येक्षीरमयान्कामाननुरूपंचदोहनं ॥ ९ ॥ दोग्धारंचमहाबाहोभूतानांभू तभावन ॥ अन्नमीप्सितमूर्जस्वद्भगवान्वांछतेयदि ॥ १० ॥ समांचकुरुमांराजन्देववृष्टंयथापयः ॥ अप र्तावपिभद्रंतेउपावर्तेतमेविभो ॥ ११ ॥ इतिप्रियंहितंवाक्यंभुवआदायभूपतिः ॥ वत्संकृत्वामनुंपाणावदु हत्सकलौषधीः ॥ १२ ॥ ॥ ॥ ॥ ॥

चरंतिनसिध्यंति ॥५॥ सहेतुकमुपायमाह पुरेतिषड्भिः भवद्भिरितिराजसामान्याभिप्रायेण वेनादिभिरितिवा ॥ ६ ॥ अपालिताचोराद्यनिवारणात् अनादृताचयज्ञादिप्रवर्तनाऽभावात् यज्ञार्थेअग्रसंगिलितवती अन्यथाऽधृतव्रतै र्भुक्ताःनप्रसोष्यंतेततश्चयज्ञादयोनासिध्येरन्नितिभावः॥ ७ ॥ क्षीणाःजीर्णाः ॥८॥ वत्संस्वकुलेमुख्यं दोहनंदोहपात्रंदोग्धारंचोपकल्पय धो क्ष्येप्रपूरयिष्यामि ॥ ९ ॥ भूतानामभीप्सितमन्नमूर्जस्वत्बलप्रदं ॥ १० ॥ अपगतेऽपिवर्षर्तौयथामेसर्वतोवर्तेत ॥ ११ ॥ १२ ॥

प्रसंगादर्थांतरमाह तथेति यथापृथुः एवंसर्वत्रवाक्येपरेऽपिसारमाददते प्रस्तुतमनुवर्तयति ततोऽन्येचऋष्यादयः पंचदशदुदुहुः पृथुभा
वितांवशीकृतां ॥ १३ ॥ देवींपृथ्वीं वाङ्मनःश्रवणैर्वेदग्रहणादिंद्रियाणांपात्रत्वं ॥ १४ ॥ सोमममृतं वीर्यंमनःशक्तिं ओजइंद्रियशक्तिं बलं
देहशक्तितदेवपयः ॥ १५ ॥ सुरामासवंचतालादिमद्यं ॥ १६ ॥ मधुवाङ्माधुर्यं सौभगंसौंदर्यंतत्सहितं ॥ १७॥ कव्यंपितॄणामन्नं आमपात्रेअ
पक्केमृण्मयेअधुक्षतदुदुहुः ॥ १८ ॥ संकल्पनामयीमणिमादिसिद्धिंयेविद्याधरादयस्तेचतमेववत्संप्रकल्प्यनभस्येत्रपात्रेखेचरत्वादिरूपांवि

तथापरेचसर्वत्रसारमाददतेबुधाः ॥ ततोऽन्येचयथाकामंदुदुहुःपृथुभावितां ॥ १३ ॥ ऋषयोदुदुहुर्देवीमिं
द्रियेष्वथसत्तम ॥ वत्संबृहस्पतिंकृत्वापयच्छंदोमयंशुचि ॥१४॥ कृत्वावत्संसुरगणाइंद्रंसोममदूदुहन् ॥
हिरण्मयेनपात्रेणवीर्यमोजोबलंपयः ॥१५॥ दैतेयादानवावत्संप्रऱ्हादमसुरर्षभं॥विधायादूदुहन्क्षीरमयः
पात्रेसुराऽसवं ॥ १६ ॥ गंधर्वाप्सरसोऽधुक्षन्पात्रेपद्ममयेपयः ॥ वत्संविश्वावसुंकृत्वागांधर्वंमधुसौभगं॥
॥१७ वत्सेनपितरोऽर्यम्णाकव्यंक्षीरमधुक्षत॥आमपात्रेमहाभागाःश्रद्धयाश्राद्धदेवताः ॥१८॥ प्रकल्प्य
वत्संकपिलंसिद्धाःसंकल्पनामयीं ॥ सिद्धिंनभसिविद्यांचयेचविद्याधरादयः ॥१९॥अन्येचमायिनोमाया
मंतर्धानाद्भुतात्मनां ॥ मयंप्रकल्प्यवत्संतेदुदुहुर्धारणामयीं ॥२०॥ यक्षरक्षांसिभूतानिपिशाचाःपिशिता
शनाः॥भूतेशवत्सादुदुहुःकपालेक्षतजासवं ॥ २१ ॥ तथाऽहयोदंदशूकाःसर्पानागाश्चतक्षकं ॥ विधायव
त्संदुदुहुर्बिलपात्रेविषंपयः ॥२२॥ पशवोयवसंक्षीरंवत्संकृत्वाचगोवृषं ॥ अरण्यपात्रेचाधुक्षन्मृगेंद्रेणचदं
ष्ट्रिणः ॥२३॥ क्रव्यादाःप्राणिनःक्रव्यंदुदुहुःस्वेकलेवरे ॥ सुपर्णवत्साविहगाश्चरंचाऽचरमेवच ॥ २४ ॥
वटवत्सावनस्पतयःपृथग्रसमयंपयः ॥ गिरयोहिमवद्वत्सानानाधातून्स्वसानुषु ॥ २५ ॥

द्यांदुदुहुः ॥ १९ ॥ अन्येचकिंपुरुषादयअंतर्धानेनाद्भुतात्मनांसंबंधिनीं मायांधारणामयीं संकल्पमात्रप्रभवां ॥ २० ॥ भूतेशोरुद्रःसएववत्सो
येषां क्षतजंरुधिरंतदेवासवं ॥ २१ ॥ अहयोनिष्फणाःदंदशूकावृश्चिकादयः सर्पाःसफणास्तएवकद्रुसंततिजानागाःबिलपात्रेमुखे ॥
॥ २२ ॥ यवसंतृणं गोवृषंरुद्रवाहंवृषभं मृगेंद्रेणेत्युत्तरेणान्वयः ॥ २३ ॥ क्रव्यंमांसं चरंकीटादि अचरंफलादि ॥ २४ ॥ २५ ॥

अनुक्तसर्वसंग्रहार्थमाह सर्वैस्वजातीयोमुख्यस्तेनवत्सेन ॥ २६ ॥ उपसंहरति एवमिति स्वन्नमभीष्टमन्नं तमेवक्षीरभेदं दुदुहुः दोहंपात्रं ॥ २७ ॥ इमांपृथ्वीं ॥ २८ ॥ धनुषोऽग्रेणगिरिशृंगाणिचूर्णयन्राज्ञांराजा सर्वेषामाजीविकादानात् ॥ २९ ॥ ३० ॥ ग्रामाहट्टादिशून्याः पुरिह ट्टादिमत्यस्ताएवमहत्यःपत्तनानि दुर्गाणिविविधानि यथाहबृहस्पतिःऔदकंपार्वतंवार्क्षमैरिणंधान्वनंतथेति घोषान्आभीराणांनिवासान् व्रजान्गवांनिवासान् शिबिरंसेनानिवासस्थानं तत्सहितान् आकरान्स्वर्णादिस्थानानि खेटाःकर्षकग्रामाः खर्वटाःपर्वतप्रांतग्रामा

सर्वैस्वमुख्यवत्सेनस्वेस्वेपात्रेपृथक्पयः ॥ सर्वकामदुघांपृथ्वींदुदुहुःपृथुभाविताम् ॥२६॥ एवंपृथ्वादयःपृथ्वीमन्नादाःस्वन्नमात्मनः ॥ दोहवत्सादिभेदेनक्षीरभेदंकुरूद्वह ॥ २७ ॥ ततोमहीपतिःप्रीतःसर्वकामदुघांपृथुः ॥ दुहितृत्वेचकारेमांप्रेम्णादुहितृवत्सलः ॥ २८ ॥ चूर्णयन्स्वधनुःकोट्यागिरिकूटानिराजराट् ॥ भूमंडलमिदंवैन्यःप्रायश्चक्रेसमंविभुः ॥ २९ ॥ अथास्मिन्भगवान्वैन्यःप्रजानांवृत्तिदःपिता॥ निवासान्कल्पयांचक्रेतत्रतत्रयथाऽर्हतः ॥ ३० ॥ ग्रामान्पुरःपत्तनानिदुर्गाणिविविधानिच ॥ घोषान्व्रजान्सशिबिरानाकरान्खेटखर्वटान् ॥३१॥ प्राक्पृथोरिहनैवैषापुरग्रामादिकल्पना॥यथासुखंवसंतिस्मतत्रतत्राकुतोभयाः ॥ ३२ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपृथुविजयेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥

मैत्रेयउवाच अथादीक्षितराजातुहयमेधशतेनसः ॥ ब्रह्मावर्तेमनोःक्षेत्रेयत्रप्राचीसरस्वती ॥ १ ॥ तदभिप्रेत्यभगवान्कर्मातिशयमात्मनः ॥ शतक्रतुर्नममृषेपृथोर्यज्ञमहोत्सवं ॥२॥ यत्रयज्ञपतिःसाक्षाद्भगवान्हरिरीश्वरः॥ अन्वभूयतसर्वात्मासर्वलोकगुरुःप्रभुः ॥ ३ ॥ अन्वितोब्रह्मशर्वाभ्यांलोकपालैःसहानुगैः ॥ उपगीयमानोगंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥ ४ ॥ ॥ ॥ ॥

श्च ॥ ३१ ॥ ३२ ॥ इतिचतुर्थेटीकायामष्टादशोऽध्यायः ॥ १८ ॥ ऊनविंशेऽश्वमेधांगहयापहरणात्पृथोः इंद्रंहंतुंप्रवृत्तस्यधात्रावारणमुच्यते ॥ १ ॥ हयमेधशतेननिमित्तेन अदीक्षतदीक्षितोऽभूत् शताश्वमेधसंकल्पमकरोदित्यर्थः ब्रह्मावर्ते सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरं तंदेवनिर्मितंदेशंब्रह्मावर्तंप्रचक्षते ॥ १ ॥ आत्मनःस्वस्यकर्मातिशेतइत्यतिशयमभिप्रेत्यज्ञात्वा तदितितं पृथोर्यज्ञमहोत्सवंनममृषेनसेहे ॥ २ ॥ अतिशयमेवदर्शयतियत्रेतिसप्तभिः साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ॥ ३ ॥ ४ ॥ ॥

सिद्धादयश्चतंहरिमन्वीयुरित्युत्तरेणान्वयः ॥ ५ ॥ ६ ॥ धर्मंदुघाहविर्दोग्ध्रीधेनुःसती ॥ ७ ॥ ऊहुः वहंतिस्म सर्वरसान्इक्षुद्राक्षादिर सान्क्षीरंचदधिचअन्नंचपाकादि गोरसोघृतंतक्रंचतांश्च भूरीणिविस्तृतानिवर्ष्माणिशरीराणियेषांतेफलादिप्रासूयंत मधुच्युतःमधुस्राविणः संतः ॥ ८ ॥ चतुर्विधंभक्ष्यंभोज्यंचोष्यंलेह्यंच ॥ ९ ॥ अधोक्षजःईशोनाथोयस्य परमउदयोऽभिवृद्धिर्यस्मिंस्तत्कर्मअसूयन् असहमा

सिद्धविद्याधरादैत्यादानवागुह्यकादयः ॥ सुनंदनंदप्रमुखाःपार्षदप्रवराहरेः ॥५॥ कपिलोनारदोदत्तोयोगेशाःसनकादयः ॥ तमन्वीयुर्भागवतायेचतत्सेवनोत्सुकाः ॥६॥ यत्रधर्मदुघाभूमिःसर्वकामदुघासती ॥ दोग्धिस्माभीप्सितानर्थान्यजमानस्यभारत ॥ ७॥ ऊहुःसर्वरसान्नद्यःक्षीरदध्यन्नगोरसान्॥तरवोभूरिवर्ष्माणःप्रासूयंतमधुच्युतः॥ ८ ॥ सिंधवोरत्ननिकरान्गिरयोन्नंचतुर्विधं ॥ उपायनमुपाजन्हुःसर्वेलोकाःसपालकाः ॥ ९ ॥ इतिचाधोक्षजेशस्यपृथोस्तुपरमोदयं ॥ असूयन्भगवानिंद्रःप्रतिघातमचीकरत्॥१०॥चरमेणाश्वमेधेनयजमानेयजुष्पतिं ॥ वैन्येयज्ञपशुंस्पर्धन्नपोवाहतिरोहितः ॥११ ॥ तमत्रिर्भगवानैक्षत्त्वरमाणंविहायसा ॥ आमुक्तमिवपाखंडंयोऽधर्मेधर्मविभ्रमः ॥ १२ ॥ अत्रिणाचोदितोहंतुंपृथुपुत्रोमहारथः ॥ अन्वधावतसंक्रुद्धस्तिष्ठतिष्ठेतिचाब्रवीत् ॥ १३ ॥ तंतादृशाकृतिंवीक्ष्यमेनेधर्मंशरीरिणं ॥ जटिलंभस्मनाच्छन्नंतस्मैबाणंनमुंचति ॥१४॥ वधान्निवृत्तंतंभूयोहंतवेऽत्रिरचोदयत् ॥ जहियज्ञहनंतातमहेंद्रंविबुधाधमं ॥ १५ ॥ एवंवैन्यसुतःप्रोक्तस्त्वरमाणंविहायसा ॥ अन्वद्रवदभिक्रुद्धोरावणंगृध्रराडिव ॥ १६ ॥ सोऽश्वंरूपंचतद्धित्वातस्माअंतर्हितःस्वराट् ॥ वीरःस्वपशुमादायपितुर्यज्ञमुपेयिवान् ॥१७॥तत्तस्यचाद्भुतंकर्मविचक्ष्यपरमर्षयः ॥ नामधेयंददुस्तस्मैविजिताश्वइतिप्रभो ॥ १८॥

नःप्रतिघातंविघ्नंचकारेत्यर्थः ॥ १० ॥ यजमानेवैन्ये यजुष्पतिंविष्णुंयजमानेसति स्पर्धमानइंद्रस्तिरोहितःसन्नपहृतवान् ॥ ११ ॥ त्वरमाणंधावंतं आमुक्तःप्रतिमुक्तश्चपिनद्धश्चापिनद्धवत् ॥ सन्नद्धोवर्मितःसज्जइत्यमरसिंहः पाखंडंवेषंकवचमिवगृहीतवंतमित्यर्थः अधर्मेधर्मविभ्रमःधर्मोऽयमितिभ्रांतिकरोयस्तं ॥ १२ ॥ १३ ॥ नमुंचतिस्म ॥ १४ ॥ हंतवेहंतुं यज्ञहनंयज्ञंहतवंतं ॥ १५ ॥ गृध्रराट्जटायुः ॥ १६ ॥ तस्मैहित्वातदर्थमुत्सृज्य ॥ १७ ॥ विचक्ष्यदृष्ट्वा ॥ १८ ॥ ॥ ॥

तेनछन्नःसन् चषालोयूपाग्रेनिक्षिप्तःकाष्ठकटकः तद्युक्ताद्यूपात् हिरण्यनिर्मितारशनायस्यतं रशनायाहृढत्वेनछेदाशक्त्यारशनासहित
मेवोद्धृत्ययूपाग्रान्नीतवानित्यर्थः विभुःसमर्थः ॥ १९ ॥ २० ॥ २१ ॥ अवद्यंनिंदितंरूपंमंदप्रज्ञाजगृहुः ॥ २२ ॥ तदेवपाखंडनामनिरु
क्त्यादर्शयति यानीतिबहुवचनेनचान्यान्यपिगृहीतानीत्युक्तं ॥ २३ ॥ तत्प्रभृतिपाखंडमार्गाःप्रवृत्ताइत्याह एवमिति तेनगृहीतेषुपुनर्विसृ

उपसृज्यतमस्तीव्रंजहाराश्वंपुनर्हरिः ॥ चषालयूपतश्छन्नोहिरण्यरशनंविभुः ॥ १९ ॥ अत्रिःसंदर्शयामासत्वरमाणंविहायसा ॥ कपालखट्वांगधरंवीरोनैनमबाधत ॥ २० ॥ अत्रिणाचोदितस्तस्मैसंदधेविशिखंरुषा ॥ सोऽश्वंरूपंचतद्धित्वातस्थावंतर्हितःस्वराट् ॥ २१ ॥ वीरश्चाश्वमुपादायपितृयज्ञमथाव्रजत् ॥ तदवद्यंहरेरूपंजगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥ यानिरूपाणिजगृहेइंद्रोहयजिहीर्षया ॥ तानिपापस्यखंडानिलिंगंखंडमिहोच्यते ॥ २३ ॥ एवमिंद्रेहरत्यश्वंवैन्ययज्ञजिघांसया ॥ तद्गृहीतविसृष्टेषुपाखंडेषुमतिर्नृणां ॥ ॥ २४ ॥ धर्मइत्युपधर्मेषुनग्नरक्तपटादिषु ॥ प्रायेणसज्जतेभ्रांत्यापेशलेषुचवाग्मिषु ॥ २५ ॥ तदभिज्ञायभगवान्पृथुःपृथुपराक्रमः ॥ इंद्रायकुपितोबाणमादत्तोद्यतकार्मुकः ॥ २६ ॥ तमृत्विजःशक्रवधाभिसंधितंविचक्ष्यदुःप्रेक्ष्यमसह्यरंहसं ॥ निवारयामासुरहोमहामतेनयुज्यतेत्रान्यवधःप्रचोदितात् ॥ २७ ॥ वयंमरुत्वंतमिहार्थनाशनंह्वयामहेत्वच्छ्रवसाहतत्विषं ॥ अयातयामोपहवैरनंतरंप्रसह्यराजन्जुहवामतेऽहितं ॥ २८ ॥ इत्यामंत्र्यक्रतुपतिंविदुरास्यर्त्विजोरुषा ॥ स्रुग्घस्तान्जुह्वतोऽभ्येत्यस्वयंभूःप्रत्यषेधत ॥ २९ ॥

ष्टेषु ॥ २४ ॥ नग्नाजैनाःरक्तपटाबौद्धाः आदिशब्देनकापालिकादयस्तेषुउपधर्मेषुधर्मोपमेषु धर्मएवायमितिमतिःसज्जतइतिद्वयोरन्वयः
पेशलेषुआपाततोरम्येषुवाग्मिषुहेतूक्तिचतुरेषु ॥ २५ ॥ २६ ॥ शक्रवधेऽभिसंधितंकृताभिप्रायं प्रचोदितात्पशोर्वधादन्यस्यवधस्तवनयु
ज्यते ॥ २७ ॥ तद्वधंतुवयंकरिष्यामइत्याहुः वयमिहयज्ञनाशकं त्वत्कीर्त्यैवहतप्रभमिंद्रमाव्हयामहे कैःअयातयामैरगतवीर्यैराव्हानमंत्रैः
अनंतरंचततत्वाहितंजुहवामहोष्यामः ॥ २८ ॥ अस्यपृथोः स्रुक्हस्तेयेषांतान् ॥ २९ ॥ ॥ ॥

यमिंद्रंयज्ञेनजिघांसथ यज्ञेनेष्टाःसर्वेसुरायस्यतनवःसइंद्रोभवतांवधार्होनभवति यद्यस्माद्यज्ञोनामायमिंद्रोभगवतस्तनुःअवतारः ततःसप्त
मआकूत्यांरुचेर्यज्ञोऽभ्यजायत ॥ सयामाद्यैःसुरगणैरपात्स्वायंभुवांतरामित्युक्तत्वात् ॥ ३०॥ अतोबलीयसाऽनेनसख्यमेवकर्तव्यमन्यथा
भूयःपाखडंस्त्रक्ष्यतीत्याशयेनाह तदिदमिंद्रेणानुष्ठितंमहदन्याय्यपंश्यत किमित्यपेक्षायामाह धर्मस्यव्यतिकरंविपर्ययंपाखंडंपथं ॥ ३१ ॥
तर्हिकिमत्रयुक्तमित्यतआह पृथुकीर्तेरिति एकेनोनंशतंयस्मिन् तादृशःक्रतुः क्रतुप्रयोगः पृथोर्भूयात् पृथुरितिपाठे एकोनशतंक्रतवोय
स्यतादृशोऽपिमहेंद्रात्पृथुकीर्तिर्भूयादित्यर्थः तदेवमृत्विजःप्रत्युक्त्वापृथुंप्रत्येवाह अलमिति ॥ ३२ ॥ आत्मनैवात्मनेमहेंद्रायरोषंकर्तुंनार्हसि

नवध्योभवतामिंद्रोयद्यज्ञोभगवत्तनुः ॥ यंजिघांसथयज्ञेनयस्येष्टास्तनवःसुराः ॥३०॥ तदिदंपश्यतमह
द्धर्मव्यतिकरंद्विजाः ॥ इंद्रेणानुष्ठितंराज्ञःकर्मैतद्विजिघांसता ॥ ३१ ॥ पृथुकीर्तेःपृथोर्भूयात्तर्ह्येकोनशतक्र
तुः ॥ अलंतेक्रतुभिःस्विष्टैर्यद्भवान्मोक्षधर्मवित् ॥ ३२ ॥ नैवात्मनेमहेंद्रायरोषमाहर्तुमर्हसि ॥ उभाव
पिहिभद्रंतेउत्तमश्लोकविग्रहौ ॥ ३३ ॥ मास्मिन्महाराजकृथाःस्मचिंतांनिशामयास्मद्वचआदृतात्मा ॥
यद्ध्यायतोदैवहतंनुकर्तुंमनोतिरुष्टंविशतेतमोऽधं ॥ ३४ ॥ क्रतुर्विरमतामेषदेवेषुदुरवग्रहः ॥ धर्मव्यतिकरो
यत्रपाखंडैरिंद्रनिर्मितैः ॥ ३५ ॥ एभिरिंद्रोपसंसृष्टैःपाखंडैर्हारिभिर्जनं ॥ ह्रियमाणंविचक्ष्वैनंयस्तेय
ज्ञध्रुगश्वमुट् ॥ ३६ ॥ भवान्परित्रातुमिहावतीर्णोधर्मंजनानांसमयानुरूपं ॥ वेनापचारादवलुप्तमद्यतद्दे
हतोविष्णुकलासिवैन्य ॥ ३७ ॥ ॥ ॥ ॥ ॥

तत्रहेतुः उभावपीति ॥३३॥ तथापिक्रतुसमाप्तिमेवध्यायंतंप्रत्याह अस्मिन्यज्ञविघ्नेचिंतांमास्मकृथाः यद्यस्माद्दैवहतंकार्यंकर्तुंध्यायतोमनो
नुनिश्चितमतिरुष्टंसदंधंतमोमोहं विशति नतुशांतिंलभते ॥ ३४ ॥ अतएवतवक्रतुर्विरमतु नन्विंद्रःकिंननिवार्यतेऽतआह यतोदेवेषुदुरा
ग्रहोभवतीति यत्रक्रतौ ॥३५॥ इंद्रदुराग्रहकृतमनर्थंपश्येत्याह एभिरिंद्रेणोपसंसृष्टैरधिष्टितैर्हारिभिश्चित्ताकर्षकैः यइंद्रस्तेऽश्वंमुष्णातीति
तथा यज्ञायद्रुह्यतीतितथा तेनसृष्टैः ॥ ३६॥ ततोममकिमितिचेत्तत्राह भवानितिद्वाभ्यां सांख्ययोगादिनानासिद्धांतानुरूपंधर्मं वेनस्या
न्यायात् लुप्तंपरित्रातुं तद्देहाद्विष्णोःकलैवत्वमवतीर्णोऽसि ॥ ३७ ॥ ॥ ॥ ॥ ॥

अस्यविश्वस्योद्भवंविचार्ययैरुत्पादितोऽसितेषांविश्वसृजांसंकल्पं पिपर्पिपृहि आर्षःप्रयोगः पूरयेत्यर्थःप्रचंडोयः पाखंडमार्गः सैवैंद्री मायो
पधर्मजननी तांजहि ॥ ३८ ॥ तथाचकृत्वायज्ञाग्रहंहित्वा वात्सल्यंस्नेहंकृत्वाइंद्रेणसहसंधानंचकृतवान् ॥ ३९ ॥ कृतमवभृथसंबंधि
स्नानंयेनसतस्मै ॥ ४० ॥ ४१ ॥ तुष्टानांवाक्यंत्वयेति ॥ ४२ ॥ इतिचतुर्थेटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ॥ विंशेतु
विष्णुनासाक्षात्पृथोर्यज्ञेऽनुशासनं ॥ वरदानप्रसंगेनप्रीतिश्चान्योन्यमीर्यते ॥ १ ॥ मघवतासाकमिंद्रेणसहवर्तमानः ॥ १ ॥ आत्मानं

सत्वंविमृश्यास्यभवंप्रजापतेसंकल्पनंविश्वसृजांपिपीपृहि ॥ ऐंद्रींचमायामुपधर्ममातरंप्रचंडपाखंडपथंज
हिप्रभो ॥ ३८ ॥ मैत्रेयउवाच इत्थंसलोकगुरुणासमादिष्टोविशांपतिः ॥ तथाचकृत्वावात्सल्यंमघो
नापिचसंदधे ॥ ३९ ॥ कृतावभृथस्नानायपृथवेभूरिकर्मणे ॥ वरान्ददुस्तेवरदायेतद्बर्हिषितर्पिता ॥ ४० ॥
विप्राःसत्याशिषस्तुष्टाःश्रद्धयालब्धदक्षिणाः ॥ आशिषोयुयुजुःक्षत्तरादिराजायसत्कृताः ॥ ४१ ॥ त्वया
हूतामहाबाहोसर्वएवसमागताः ॥ पूजितादानमानाभ्यांपितृदेवर्षिमानवाः ॥ ४२ ॥ इतिश्रीभागवते
महापुराणेचतुर्थस्कंधेपृथुविजयेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ऋषिरुवाच भगवानपिवैकुंठः
साकंमघवताविभुः ॥ यज्ञैर्यज्ञपतिस्तुष्टोयज्ञभुक्तमभाषत ॥ १ ॥ श्रीभगवानुवाच एषतेऽकारषीद्भंगं
हयमेधशतस्यह ॥ क्षमापयतआत्मानममुष्यक्षंतुमर्हसि ॥ २ ॥ सुधियःसाधवोलोकेनरदेवनरोत्तमाः
॥ नाभिद्रुह्यंतिभूतेभ्योयर्हिनात्माकलेवरं ॥ ३ ॥ पुरुषायदिमुह्यंतित्वादृशादेवमायया ॥ श्रमएवपरंजातोदी
र्घयावृद्धसेवया ॥ ४ ॥ अतःकायमिमंविद्वानविद्याकामकर्मभिः ॥ आरब्धइतिनैवास्मिन्प्रतिबुद्धोऽनुषज्ज
ते ॥ ५ ॥ असंसक्तःशरीरेऽस्मिन्नमुनोत्पादितेगृहे ॥ अपत्येद्रविणेवाऽपिकःकुर्यान्ममतांबुधः ॥ ६ ॥

त्वांक्षमांकारयतोऽमुष्यत्वमपिक्षंतुमर्हसि ॥ २ ॥ यर्हियस्मात्कलेवरमात्मानभवति अतस्तदभिमानेनभूतेभ्योनाभिद्रुह्यंति ॥ ३ ॥ ४ ॥
अविद्यास्वरूपाज्ञानं ततःकामस्ततःकर्मतैरारब्धइतिविद्वानतएवप्रतिबुद्धआप्मज्ञोऽस्मिन्नैवानुषज्जते ॥ ५ ॥ तथापिपुत्रादिममत्वेनभूतद्रो
हेणचसंगोभवेत्तत्राह असंसक्तइति ॥ ६ ॥ ॥ ॥ ॥ ॥

प्रतिबोधकमंविवृण्वन्देहेऽनुषंगाभावमाह एकइतिद्वाभ्यां असावात्मा आत्मनोदेहात्परोभिन्नस्तत्रनवधावैलक्षण्येनभेदंसाधयति एकइतिनवभिःपदैः देहोहिबालयुवादिभेदादनेकः मलिनश्चजडश्चसगुणश्चस्वकारणभूतगुणाश्रितश्चपरिच्छिन्नश्चगृहादिभिरावृतश्चदृश्यश्च स्वात्माच आत्मातुनैवमतोभिन्नः ॥ ७ ॥ आत्मस्थंस्वास्मिन्स्थितं प्रकृतिस्थोऽपितद्विकारैर्नलिप्यते यतः समयिब्रह्मणिस्थितः ॥ ८॥ इयमवस्थाकस्योत्पद्यतइत्यपेक्षायामाह यःस्वधर्मेणेतिचतुर्भिः ॥ ९ ॥ भवतुमनःप्रसन्नंततःकिंतत्राह यर्हिविशदाशयःप्रसन्नमनास्तदापरित्यक्तगुणःसन् सम्यग्दर्शनोभूत्वाशांतिमश्नुते शांतिमेवाह ममसम्यगौदासीन्येनावस्थानमेवब्रह्मतदेवकैवल्यमश्नुते ॥ १० ॥ सम्यग्द

एकःशुद्धःस्वयंज्योतिर्निर्गुणोसौगुणाश्रयः ॥ सर्वगोऽनावृतःसाक्षीनिरात्मात्मात्मनःपरः ॥ ७ ॥ यएवंसंतमात्मानमात्मस्थंवेदपूरुषः ॥ नाज्यतेप्रकृतिस्थोऽपितद्गुणैःसमयिस्थितः॥ ८ ॥यःस्वधर्मेणमांनित्यंनिराशीःश्रद्धयाऽन्वितः ॥ भजतेशनकैस्तस्यमनोराजन्प्रसीदति ॥ ९ ॥ परित्यक्तगुणःसम्यग्दर्शनोविशदाशयः॥ शांतिंमेसमवस्थानंब्रह्मकैवल्यमश्नुते ॥ १० ॥ उदासीनमिवाध्यक्षंद्रव्यज्ञानक्रियात्मनां ॥ कूटस्थमिममात्मानंयोवेदाप्नोतिशोभनं ॥ ११ ॥ भिन्नस्यलिंगस्यगुणप्रवाहोद्रव्यक्रियाकारकचेतनात्मनः ॥ दृष्टासुसंपत्सुविपत्सुसूरयोनविक्रियंतेमयिबद्धसौहृदाः ॥ १२ ॥ समःसमानोत्तममध्यमाधमःसुखेचदुःखेचजितेंद्रियाशयः ॥ मयोपक्लृप्ताखिललोकसंयुतोविधत्स्ववीराखिललोकरंजनं ॥ १३ ॥

र्शनमेवाह उदासीनमेवात्मानंद्रव्यज्ञानक्रियात्मनांदेहज्ञानकर्मेंद्रियमनसामध्यक्षमिवस्थितमात्मानंयोवेद ॥ ११ ॥ संसारिणःकथंकूटस्थत्वमतआह भिन्नस्यलिंगस्यदेहस्यगुणप्रवाहःसंसारः भिन्नत्वेहेतुः द्रव्याद्यात्मकस्य तत्रचेतनाचिदाभासः अतोदृष्टासुप्राप्तासुहर्षशोकादिभिर्नविक्रियंते ॥ १२ ॥ त्वंचसूरिः अतःसुखेदुःखेचसमःसन् समानाउत्तममध्यमाधमायस्य जितानींद्रियाण्याशयश्चयेनसःत्वमखिललोकरक्षणंविधत्स्व कथमेकेनमयारक्षणंकर्तुंशक्यंतत्राह मयेश्वरेणउपक्लृप्ताःसंपादितायेऽखिलालोकामात्यादयस्तैःसंयुतः ॥ १३ ॥

ननुरक्षणंदंडादिसापेक्षमतस्तपोऽन्यद्वापुण्यंकरिष्यामीतिचेदतआह श्रेयइति यद्यस्मात्सांपरायेपरलोकेप्रजाभिःकृतात्सुकृतात्षष्ठमंशंह
र्ताहरतिअरक्षणेदोषमाह अन्यथाप्रजाभिर्हृतंपुण्यंयस्यस प्रजानामघमत्तिपापंभुंक्ते अन्यथेत्यस्यविवरणं करहारःसन्नरक्षिताचेत्॥ १४ ॥
एवंचमोक्षोऽप्यनायासेनभविष्यतीत्याह द्विजाग्र्याणांअनुमतश्चासावनुवृत्तश्चपरंपराप्राप्तोयोधर्मःसएवप्रधानमर्थकामौतुप्रासंगिकौयस्यअ
न्यतमोऽतिशयेनान्यः धर्मादिष्वनासक्तइत्यर्थः ऐकपद्यपाठेधर्मप्रधानावन्यतमावर्थकामौयस्येत्यर्थः अस्याःपृथिव्याअवितासन्अल्पेन
कालेनगृहागतान्सनकादीन्द्रक्ष्यसि अनुरक्तोलोकोयस्मिन्सः ॥ १५ ॥ मत्मत्तःसकाशात्किंचिद्वरंवृणीष्व गुणाःशमादयः शीलंनिर्म

**श्रेयःप्रजापालनमेवराज्ञोयत्सांपरायेसुकृतात्षष्ठमंशं ॥ हर्ताऽन्यथाहृतपुण्यःप्रजानामरक्षिताकरहारो**
**घमत्ति ॥ १४ ॥ एवंद्विजाग्र्यानुमतानुवृत्तधर्मप्रधानोऽन्यतमोऽविताऽस्याः ॥ ह्रस्वेनकालेनगृहोपया**
**तान्द्रष्टासिसिद्धाननुरक्तलोकः ॥ १५ ॥ वरंचमत्कंचनमानवेंद्रवृणीष्वतेऽहंगुणशीलयंत्रितः ॥ नाहं**
**मखैर्वैसुलभस्तपोभिर्योगेनवायत्समचित्तवर्ती ॥ १६ ॥ मैत्रेयउवाच सइत्थंलोकगुरुणाविष्वक्से**
**नेनविश्वजित् ॥ आनुशासितआदेशंशिरसाजगृहेहरेः ॥ १७ ॥ स्पृशंतंपादयोःप्रेम्णाव्रीडितंस्वेनकर्म**
**णा ॥ शतक्रतुंपरिष्वज्यविद्वेषंविससर्जह ॥ १८ ॥ भगवानथविश्वात्मापृथुनोपहृतार्हणः ॥ समुज्जिहा**
**नयाभक्त्यागृहीतचरणांबुजः ॥ १९ ॥ प्रस्थानाभिमुखोऽप्येनमनुग्रहविलंबितः ॥ पश्यन्पद्मपलाशा**
**क्षोनप्रतस्थेसुहृत्सतां ॥ २० ॥ सआदिराजोरचितांजलिर्हरिंविलोकितुंनाशकदश्रुलोचनः ॥ नकिंचनो**
**वाचसबाष्पविक्लवोहृदोपगुह्यामुमधादवस्थितः ॥ २१ ॥ ॥ ॥**

त्सरत्वादिस्वभावस्तैरहंयंत्रितोवशीकृतः तद्रहितैस्तुमखादिभिर्नाहंसुलभः यतः समंचित्तंयेषांतेष्वेववर्तितुंशीलंयस्यसोहं ॥ १६ ॥
॥ १७ ॥ क्षमापयितुंपादयोःस्पृशंतं स्वेनकर्मणाऽश्वापहरणेनव्रीडितं प्रेम्णापरिष्वज्य ॥ १८ ॥ भगवान्प्रस्थानाभिमुखोऽप्यनुग्रहेण
विलंबितःसन्नप्रतस्थेप्रयाणंनकृतवानितिद्वयोरन्वयः कथंभूतः उपहृतमर्पितमर्हणंयस्मै समुज्जिहानयासमुद्गच्छंत्यावर्धमानयाभक्त्यागृ
हीतेचरणांबुजेयस्य ॥ १९ ॥ पद्मपलाशवदक्षिणीयस्यतथाभूतःसन् एनंपृथुंपश्यन् ॥ २० ॥ भगवतस्तत्कृपाऽतिरेकमुक्तात्स्यभक्त्यु
द्रेकमाह सइतिद्वाभ्यां बाष्पविक्लवत्वेनतूष्णीमवस्थितःसन् अमुंहृदोपगुह्याधात्धृतवान् ॥ २१ ॥ ॥ ॥

अतृप्तयोर्दृशोर्गोचरंविषयभूतं पदाक्षितिंस्पृशंतमिति· अयंभावः नखलुदेवाःपदाभुवंस्पृशंति अतःकृपापरवशोनूनंहरिरात्मानंविस्मृतवा
निवेति अतएवस्खलनपरिहारायैवगरुडस्योन्नतेस्कंधेविन्यस्तंहस्ताग्रंयेनतं ॥ २२ ॥ वरंवृणीष्वेतियदुक्तंतदसहमानआह हेविभोवरदानांब्र
ह्मादीनामीश्वराद्वरप्रदात्त्वत्तःसकाशाद्बुधः कथंवरान्वृणीतइति कीदृशान् गुणैर्विक्रियतइतिगुणविक्रियोहंकारः सएवात्मायेषांतेषांब्र
ह्मादीनांसंबंधिनः देहाभिमानिनांभोग्यानितिवा तथाचेद्बुधएवनभवतीत्यर्थः जुगुप्सितत्वादपीत्याह येइति बुधएवाहमपिनवृणेइतिस
मुच्चयायचकारः ॥ २३ ॥ कैवल्यपतइतिसंबोधनात्कैवल्यंवरिष्यतीतिमाशंकीरित्याह नेति महत्तमानामंतर्हृदयान्मुखद्वारेणनिर्गतोभव
त्पदांभोजमकरंदोयशःश्रवणादिसुखंयत्रनास्तितादृशंचेत्कैवल्यंतर्हितत् क्वचित्कदाचिदपिनकामये तर्हिकिंकामयसेतदाह यशःश्रव

अथवमृज्याश्रुकलाविलोकयन्नतृप्तदृग्गोचरमाहपूरुषं॥पदास्पृशंतंक्षितिमंसउन्नतेविन्यस्तहस्ताग्रमुरंग
विद्विषः॥ २२॥ पृथुरुवाच वरान्विभोत्वद्वरदेश्वराद्बुधःकथंवृणीतेगुणविक्रियात्मनां॥ येनारकाणाम
पिसंतिदेहिनांतानीशकैवल्यपतेवृणेनच ॥ २३ ॥ नकामयेनाथतदप्यहंक्वचिन्नयत्रयुष्मच्चरणांबुजासवः ॥
महत्तमांतर्हृदयान्मुखच्युतोविधत्स्वकर्णायुतमेषमेवरः॥ २४ ॥ सउत्तमश्लोकमहन्मुखच्युतोभवत्पदांभो
जसुधाकणानिलः॥ स्मृतिंपुनर्विस्मृततत्त्ववर्त्मनांकुयोगिनांनोवितरत्यलंवरैः ॥२५॥ यशःशिवंसुश्रवआ
र्यसंगमेयदृच्छयाचोपशृणोतितेसकृत् ॥ कथंगुणज्ञोविरमेद्विनापशुंश्रीर्यत्प्रवव्रेगुणसंग्रहेच्छया ॥ २६ ॥

णाय कर्णानामयुतंविधत्स्व ननुकोऽप्येवंनवृतवान् किमन्यच्चिंतयेत्याह ममतुएषएववरः ॥ २४ ॥ ननुतर्हिकैवल्याभावेरागद्वेषाद्याकु
लानांभक्तिसुखमपिनस्यादित्याशंक्याह सइति भवत्पदांभोजसुधायाः कणोलेशस्तत्संबंधीयोऽनिलः सएवदूरादपि किंचिद्यशःश्रवण
मात्रमित्यर्थः विस्मृतंतत्त्ववर्त्मयैःकुयोगिभिस्तेषामपिपुनःस्मृतिमात्मज्ञानंवितरति अतोनखलुभक्तानांरागादिसंभवोऽतोनोऽस्माकंसारग्रा
हिणामन्यैर्वरैरलं भक्तावेवमोक्षादिसर्वसुखांतर्भावादितिभावः ॥ २५ ॥ ननुभक्तिर्मुक्तिफलैव अतःफलंविहायसाधनेभवतःकोऽयमाग्र
हइत्याशंक्याह हेसुश्रवःमंगलकीर्तेतेशिवंयशःसतांसंगमेयःसकृदपियदृच्छयाऽपिउपशृणोतिगुणज्ञश्चेत्सःपशुंविनाऽन्यःकथंविरमेत् गु
णातिशयंसूचयति श्रीर्यत् यशएवप्रकर्षेणवृतवती गुणानांसर्वपुरुषार्थानांसंग्रहःस्वस्मिन्समाहारस्तदिच्छया ॥ २६ ॥ ॥

अतोलक्ष्मीरिवान्यवरत्यागेनत्वामेवाहंभजइत्याह अथेति लालसउत्सुकःसन् कर्मणिक्रियमाणेयथेंद्रेणसहकलिः एवंभक्तावपिकिंल
क्ष्म्यासहकलिःस्यादितिवितर्कयति एकस्मिन्पत्यौस्पर्धमानयोरपिकिंकलिर्नस्यादितिकाक्कावितर्कः ननुपर्यायेणसेवायांनस्यात् नैवंकृत
स्त्वच्चरणयोरेवैकस्तानोमनोवृत्तिस्ताराेयाभ्यांतयोः ॥ २७ ॥ भवतुवाकालिस्तस्थाऽपिभजेयमेवेत्याह जगज्जनन्यांवैशसंविरोधःस्यादेवतत्र
हेतुर्यस्याःकर्मणिनःसमीहितमिच्छाभवति तथाऽपिइंद्रविरोधेमत्पक्षपातवदत्रापितवपक्षपातएवस्यादित्याह फल्गुतुच्छमपिउरुबहुकरो
षियतोदीनेषुवत्सलः स्वेस्वरूपएवरतस्यतयाकिंप्रयोजनंतांनाद्रियसइत्यर्थः ॥ २८ ॥ यतस्त्वंदीनवत्सलःअतएवसाधवोनिष्कामाअ

अथाभजेत्वाऽखिलपूरुषोत्तमंगुणालयंपद्मकरेवलालसः ॥ अप्यावयोरेकपतिस्पृधोःकलिर्नस्यात्कृतत्वच्च
रणैकतानयोः ॥ २७ ॥ जगज्जनन्यांजगदीशवैशसंस्यादेवयत्कर्मणिनःसमीहितं ॥ करोतिफल्ग्वप्युरुदीन
वत्सलःस्वएवधिष्ण्येभिरतस्यकिंतया ॥ २८ ॥ भजंत्यथत्वामतएवसाधवोव्युदस्तमायागुणविभ्रमोदयं॥
भवत्पदानुस्मरणादृतेसतांनिमित्तमन्यद्भगवन्नविद्महे ॥ २९ ॥ मन्येगिरंतेजगतांविमोहिनींवरंवृणी
ष्वेतिभजंतमात्थयत् ॥ वाचानुतंत्यायदितेजनोऽसितःकथंपुनःकर्मकरोतिमोहितः ॥ ३० ॥ त्वन्मायया
द्धाजनईशखंडितोयदन्यदाशास्तऋतात्मनोऽबुधः ॥ यथाचरेद्बालहितंपितास्वयंतथात्वमेवार्हसिनःसमी
हितुं ॥ ३१ ॥ मैत्रेयउवाच इत्यादिराजेननुतःसविश्वदृक्तमाहराजन्मयिभक्तिरस्तुते ॥ दिष्ट्येदृ
शीधीर्मयितेकृतायया मायांमदीयांतरतिस्मदुस्त्यजां ॥ ३२ ॥

थज्ञानानंतरमपित्वांभजंति कथंभूतं मायागुणानांविभ्रमोविलासस्तस्योदयः कार्यंसनिरस्तोयस्मिंस्तं तेकिमर्थंभजंतितत्राह भवत्पदानु
स्मरणाद्विनाऽन्यत्तेषांनिमित्तंफलंनविद्मः॥ २९॥ वरैःप्रलोभनंचकृपालोस्तवानुचितमित्याशयेनाह मन्यइतिनुअहोतेवाचातंत्यायदिजनोऽ
यमसितःअबद्धःस्यात्तर्हिपुनःपुनःफलैर्मोहितःसन्कथंकर्मकरोति ॥ ३० ॥ त्वन्माययाखंडितस्यत्वयापुनःखंडनंनकर्तव्यं किंतुहितंचेष्टितव्य
मित्याह त्वन्माययाऋतादात्मनस्त्वत्तःखंडितः पृथक्कृतोयद्यतोऽन्यत्पुत्रादिकमाशास्ते अतःस्वयमपितदेवहितंचेष्टितुमर्हसि ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ वाग्वित्तांजलिभिर्भाक्तितः पूजिताःसंतोवैंकुंठानुगताःपार्षदाश्च ॥ ३६ ॥ अमुष्यराज्ञोहरन्निवेतिलोकोक्तिः व
स्तुतस्तस्यमनःसर्वदैवतदधीनमस्त्येव स्वधामराज्ञोहृदयं ॥ ३७ ॥ अदृष्टायलोचनपथमतिक्रांताय संदर्शितआत्मायेनतस्मै वस्तुतोऽ
व्यक्ताय ॥ ३८ ॥ इतिचतुर्थेटीकायांविंशोऽध्यायः ॥ २० ॥ एकविंशेतुपृथुनाप्रजानामनुशासनं ॥ महासत्रेसुरादीनांमहासदसिवर्ण्य

तत्त्वंकुरुमयादिष्टमप्रमत्तःप्रजापते ॥ मदादेशकरोलोकःसर्वत्राप्नोतिशोभनं ॥ ३३ ॥ मैत्रेयउवाच इति
वैन्यस्यराजर्षेःप्रतिनंद्यार्थवद्वचः ॥ पूजितोऽनुगृहीत्वैनंगंतुंचक्रेऽच्युतोमतिं ॥ ३४ ॥ देवर्षिपितृगंधर्वसिद्ध
चारणपन्नगाः ॥ किन्नराप्सरसोमर्त्याःखगाभूतान्यनेकशः ॥ ३५ ॥ यज्ञेश्वरधियाराज्ञावाग्वित्तांजलिभ
क्तितः ॥ सभाजिताययुःसर्वेवैकुंठानुगतास्ततः ॥३६॥ भगवानपिराजर्षेःसोपाध्यायस्यचाच्युतः ॥ हर
न्निवमनोऽमुष्यस्वधामप्रत्यपद्यत ॥३७॥ अदृष्टायनमस्कृत्यनृपःसंदर्शितात्मने ॥ अव्यक्तायचदेवानांदे
वायस्वपुरंययौ ॥ ३८ ॥ इतिश्रीभा०म०चतुर्थस्कंधेविंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ मैत्रेयउवाच मौ
क्तिकैःकुसुमस्रग्भिर्दुकूलैःस्वर्णतोरणैः ॥ महासुरभिभिर्धूपैर्मंडितंतत्रतत्रवै ॥ १ ॥ चंदनागुरुतोयार्द्ररथ्या
चत्वरमार्गवत् ॥ पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिभिरर्चितं ॥ २ ॥ सवृंदैःकदलीस्तंभैःपूगपोतैःपरिष्कृतं ॥ त
रुपल्लवमालाभिःसर्वतःसमलंकृतं ॥ ३ ॥ स्त्रियस्तंदीपबलिभिःसंभृताशेषमंगलैः ॥ अन्वीयुर्मृष्टकन्या
श्चमृष्टकुंडलमंडिताः ॥ ४ ॥ शंखदुंदुभिघोषेणब्रह्मघोषेणचर्त्विजां ॥ विवेशभवनंवीरःस्तूयमानोगत
स्मयः ॥ ५ ॥ पूजितःपूजयामासतत्रतत्रमहायशाः ॥ पौरान्जानपदांस्तांस्तान्प्रीतःप्रियवरप्रदः ॥६॥

ते ॥ १ ॥ पुरंययावित्युक्तंतत्पुरमनुवर्णयति मौक्तिकैरितित्रिभिः ॥ १ ॥ चंदनागुरुयुक्तैस्तोयैरार्द्रारथ्यादयस्तद्युक्तं तोक्मैःहरितयवैरंकु
रैरितिवाऽर्चिभिर्दीपैः ॥ २ ॥ सवृंदैःपुष्पफलयुक्तैःकदलीस्तंभैःपूगैर्वृक्षैस्तथाविधैःसर्वतःसमलंकृतंशोभितं ॥ ३ ॥ संभृतान्यशेषाणिमं
गलानिदध्यादीनितैःसहाभिजग्मुः मृष्टाउज्वलाःकन्याश्च ॥ ४ ॥ गतस्मयोनिरहंकारः ॥ ५ ॥ प्रियान्वरान्प्रददातीतितथा ॥ ६ ॥

गुणैर्महान् अतएवमहत्तमः ॥ ७ ॥ गुणैर्विजृंभितमूर्जितंगुणवद्भिःसभाजितंसत्कृतंयशोगृणंतमर्चयन्प्राह सदसस्पते शौनक ॥ ८ ॥
लब्धान्यशेषसुराणामर्हणानियेनसः किमकरोदितिशेषः ॥ ९ ॥ श्रवणौत्सुक्यमाविष्कुर्वन्प्रार्थयते कोन्विति यस्यविक्रमःपृथ्वीदोहनंत
स्योच्छिष्टतुल्यं कामं तत्तस्यकर्मवद ॥१०॥ प्राचीनकर्मभिःप्रारब्धानेवबुभुजेनतुभोगांतरार्थंकर्माणिकरोति तदपिभोगेनपुण्यक्षपणेच्छ
यानतुसुखासक्त्येत्यर्थः ॥ ११ ॥ अस्खलितोऽप्रतिहतआदेशआज्ञायस्य सप्तसुद्वीपेष्वेकएवदंडंधारयतीतितथा किंसर्वत्रनेत्याह ब्रह्मकु

सएवमादीन्यनवद्यचेष्टितःकर्माणिभूयांसिमहान्महत्तमः ॥ कुर्वन्शशासावनिमंडलंयशःस्फीतंनिधायारु
रुहेपरंपदं ॥ ७॥ सूतउवाच श्रुत्वादिराजस्ययशोविजृंभितंगुणैरशेषैर्गुणवत्सभाजितं ॥ क्षत्तामहाभागव
तःसदस्पतेकौषारविंप्राहगृणंतमर्चयन् ॥८॥ विदुरउवाच सोऽभिषिक्तःपृथुर्विप्रैर्लब्धाशेषसुरार्हणः ॥ बि
भ्रत्सवैष्णवंतेजोबाह्वोर्याभ्यांदुदोहगां ॥ ९ ॥ कोन्वस्यकीर्तिंनशृणोत्यभिज्ञोयद्विक्रमोच्छिष्टमशेषभूपाः ॥
लोकाःसपालाउपजीवंतिकाममद्यापितन्मेवदकर्मशुद्धं ॥ १० ॥ मैत्रेयउवाच गंगायमुनयोर्नद्योरंतरा
क्षेत्रमावसन् ॥ आरब्धानेवबुभुजेभोगान्पुण्यजिहासया ॥ ११॥ सर्वत्रास्खलितादेशःसप्तद्वीपैकदंडधृक्
॥ अन्यत्रब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥१२ ॥ एकदासीन्महासत्रदीक्षातत्रदिवौकसां ॥ समाजोब्रह्म
र्षीणांचराजर्षीणांचसत्तम ॥ १३ ॥ तस्मिन्नर्हत्सुसर्वेषुस्वर्चितेषुयथाऽर्हतः ॥ उत्थितःसदसोमध्येताराणामु
डुराडिव ॥ १४ ॥ प्रांशुःपीनायतभुजोगौरःकंजारुणेक्षणः ॥ सुनासःसुमुखःसौम्यःपीनांसःसुद्विजस्मितः
॥ १५ ॥ व्यूढवक्षाबृहच्छ्रोणिर्वलिवल्गुदलोदरः ॥ आवर्तनाभिरोजस्वीकांचनोरुरुदग्रपात् ॥ १६ ॥

लव्यतिरेकेण अच्युतगोत्रप्रवर्तकतुल्यायेषांवैष्णवानांतद्व्यतिरेकेण च ॥१२॥एकदातस्यमहासत्रदीक्षाआसीत्तत्रसत्रेदेवादीनांसमाजआसी
दित्यर्थः ॥१३॥ तस्मिन्पूज्येषुअर्चितेषुसत्सु सदसोमध्येउत्थितःसन् समंततःसमैक्षतेतिषष्ठेनान्वयः॥ १४॥ प्रांशुरुन्नतःपीनावायतौभुजौ
यस्य कंजवदरुणेईक्षणेयस्य शोभनाद्विजाःस्मितंचयस्य॥ १५ ॥ व्यूढंविस्तीर्णंवक्षोयस्य वलिभिस्तिसृभिर्वल्गुसुंदरंदलवदधोऽग्रमश्वत्थ
पत्रमिवउपरिविस्तृतमधस्तात्संकुचितमुदरंयस्य आवर्तवन्निम्नानाभिर्यस्य कांचनवदुज्ज्वलावूरूयस्य उदग्रावुन्नताग्रौपादौयस्य ॥ १६॥

सूक्ष्माश्चतेवक्राश्चासिताश्चस्निग्धाश्चमूर्द्धजायस्य कंबुवत्त्रिरेखांकिताकंधरायस्य परिधायवसित्वा उपवीयउत्तरीयंकृत्वा ॥ १७ ॥ निय
मेनिमित्तेन्यस्तानित्यक्तानिभूषणानियेनसः अतएवतैरनावृतत्वाद्व्यंजिताअशेषगात्रेषुश्रीःस्वाभाविकीशोभायेन कृतान्युचितानिकर्माणि
येन ॥ १८ ॥ शिशिरेसंतापहरेस्निग्धेचतारेययोस्तेऽक्षिणीयस्य इदंवक्ष्यमाणंवाक्यमुक्तवांश्च चारुश्रोत्रप्रियं चित्राणिपदानियास्मिन् श्ल
क्ष्णंप्रशस्तं मृष्टंशुद्धं गूढंगंभीरार्थं अविक्लवमव्याकुलं ॥ १९ ॥ भाषणेहेतुः धर्मजिज्ञासुभिःपुंभिः सत्सुस्वमनीषितमावेद्यंवक्तव्यं अतःप्र

सूक्ष्मवक्रासितस्निग्धमूर्धजःकंबुकंधरः ॥ महाधनेदुकूलाग्र्येपरिधायोपवीयच ॥ १७ ॥ व्यंजिताशेष
गात्रश्रीर्नियमेन्यस्तभूषणः ॥ कृष्णाजिनधरःश्रीमान्कुशपाणिःकृतोचितः ॥ १८ ॥ शिशिरस्निग्धतारा
क्षःसमैक्षतसमंततः ॥ ऊचिवानिदमुर्वीशःसदःसंहर्षयन्निव ॥ चारुचित्रपदंश्लक्ष्णंमृष्टंगूढमविक्लवं ॥ १९ ॥
राजोवाच सभ्याःशृणुतभद्रंवःसाधवोयइहागताः ॥ सत्सुजिज्ञासुभिर्धर्ममावेद्यंस्वमनीषितं ॥ २० ॥
अहंदंडधरोराजाप्रजानामिहयोजितः ॥ रक्षितावृत्तिदःस्वेषुसेतुषुस्थापितापृथक् ॥ २१ ॥ तस्यमेतदनु
ष्ठानाद्यानाहुर्ब्रह्मवादिनः ॥ लोकाःस्युःकामसंदोहायस्यतुष्यतिदिष्टदृक् ॥ २२॥ यउद्धरेत्करंराजाप्रजा
धर्मेष्वशिक्षयन् ॥ प्रजानांशमलंभुंक्तेभगंचस्वंजहातिसः ॥ २३॥ तत्प्रजाभर्तृपिंडार्थंस्वार्थमेवानसूयवः
॥ कुरुताधोक्षजधियस्तर्हिमेऽनुग्रहःकृतः ॥ २४ ॥ यूयंतदनुमोदध्वंपितृदेवर्षयोमलाः ॥ कर्तुःशास्तुर
नुज्ञातुस्तुल्यंयत्प्रेत्यतत्फलं ॥ २५ ॥ ॥ ॥ ॥ ॥

जानुशासनमिषेणजिज्ञासैवक्रियते नयुष्मान्प्रतिधर्मप्रवचनमितिभावः ॥ २० ॥ इदानींप्रजाःशिक्षयिष्यन् प्रजाशिक्षणादिकंममावश्य
कमित्याह अहमितित्रिभिः पृथक्सेतुषुस्थापिता ॥ २१ ॥ दिष्टदृक्प्राक्कर्मसाक्षीश्वरोयस्यतुष्यति तस्यवेदवादिनोयान्लोकानाहुः प्रजार
क्षणाद्यनुष्ठानात्तेलोकामेस्युः कामानांसम्यक्दोहःप्रपूरणंयेषु ॥ २२ ॥ अन्यथात्वनिष्टंस्यादित्याह यइति शमलंपापं भगमैश्वर्यं ॥ २३ ॥
तत्तस्माद्वेप्रजाः भर्तुर्ममपिंडदानवत् परलोकहितार्थंस्वकार्यमेवकुरुत स्वधर्ममेवानुतिष्ठत अधोक्षजेधीर्येषांतादृशाःसंतः वासुदेवार्पणदृष्ट्या
इत्यर्थः अनुग्रहःकृतोभवेदितिशेषः ॥ २४ ॥ शास्तुःशिक्षयितुरनुज्ञातुरनुमोदितुश्चप्रेत्यपरलोकेयत्फलंतत्तुल्यं ॥ २५ ॥ ॥

कर्मकर्तव्यमित्यनुमोदामहेनतुवासुदेवेऽर्पणीयमिति वेनादिभिस्तदनंगीकारादित्येवंवादिनःशनैःसंबोधयन्नाह हेअर्हसत्तमाःयज्ञपति
र्नामपरमेश्वरःकेषांचिन्मतेतावदस्तितथाऽपिविप्रतिपत्तेर्नतत्सिद्धिरित्याशंक्यजगद्वैचित्र्यान्यथानुपपत्तिंप्रमाणयति इहामुत्रचज्योत्स्नाव
त्यःकांतिमत्योभुवोभोगभूमयःशरीराणिच ॥ २६ ॥ नन्विदंकर्मवैचित्र्यादेवसेत्स्यति तथाऽपिविद्वदनुभवेनेश्वरसिद्धिरित्याह मनोरिति
त्रिभिः अस्मत्पितामहस्यांगस्य ॥ २७ ॥ कृत्यमस्ति अवश्यंकर्मफलदात्राभाव्यमितितेषांमतमित्यर्थः ॥ २८ ॥ मृत्योर्दौहित्रादीन्विना
धर्मेविमोहितान् अतःशोच्यान् ननुकर्मैवफलंदास्यतिविध्युद्देशगतावादेवताः किंपरमेश्वरेणतत्राह वर्गेति वर्गोऽत्रत्रिवर्गःस्वर्गोधर्मस्य

अस्तियज्ञपतिर्नामकेषांचिदर्हसत्तमाः ॥ इहामुत्रचलक्ष्यंतेज्योत्स्नावत्यःक्वचिद्भुवः ॥ २६ ॥ मनोरुत्तान
पादस्यध्रुवस्यापिमहीपतेः ॥ प्रियव्रतस्यराजर्षेरंगस्यास्मत्पितुःपितुः ॥ २७ ॥ ईदृशानामथान्येषामजस्य
चभवस्यच ॥ प्रल्हादस्यबलेश्चापिकृत्यमस्तिगदाभृता ॥ २८ ॥ दौहित्रादीनृतेमृत्योःशोच्यान्धर्मविमोहि
तान् ॥ वर्गस्वर्गापवर्गाणांप्रायेणैकात्म्यहेतुना ॥ २९ ॥ यत्पादसेवाऽभिरुचिस्तपस्विनामशेषजन्मोप
चितंमलंधियः ॥ सद्यःक्षिणोत्यन्वहमेधतीसतीयथापदांगुष्ठविनिःसृतासरित् ॥ ३० ॥ विनिर्धुताशेषमनो
मलःपुमानसंगविज्ञानविशेषवीर्यवान् ॥ यदंघ्रिमूलेकृतकेतनःपुनर्नसंसृतिंक्लेशवहांप्रपद्यते ॥ ३१ ॥

फलमपवर्गोमोक्षस्तेषामैकात्म्येनैकरूप्येणसर्वानुगतेनहेतुनातत्रापिप्रायेणहेतुना अयंभावः नतावज्जडस्यकर्मणःफलदातृत्वंघटते नचा
र्वाग्देवतानांस्वातंत्र्यंअंतर्यामिश्रुतेः नचतदाकर्मसाम्येफलतारतम्यंक्वचित्तदसिद्धिश्चसंभवति अतःस्वातंत्र्येणकर्तुमकर्तुमन्यथाकर्तुंसम
र्थेनपरमेश्वरेणभाव्यमिति ॥ २९ ॥ किंच जीवानांमोक्षदःपरमेश्वरएव नार्वाग्देवतास्तासामपिजीवत्वाविशेषादित्याशयेनाहत्रिभिः
यस्यपादयोःसेवायामभिरुचिस्तपस्विनां संसारतप्तानामशेषैर्जन्मभिःसमृद्धंधियोमलं सद्यःक्षपयति तमेवभजतेतितृतीयेनान्वयः कथं
भूता अहन्यहनिवर्द्धमानासतीसात्त्विकी तत्पादसंबंधस्यैवैषमहिमेतिदृष्टांतेनाह यथेति ॥ ३० ॥ विनिर्धूताअशेषामनोमलायस्य असंगो
वैराग्यंतेनविज्ञानस्यविशेषःसाक्षात्कारस्तदेववीर्यंयस्य यस्यांघ्रिमूलेकृताश्रयःसन् ॥ ३१ ॥ ॥

आत्मवृत्तिभिरध्यापनादिभिर्मनोवचःकायानांगुणैर्ध्यानस्तुतिसपर्याभिरमायिनोनिष्कपटाःसंतः ननुब्रह्मादिभिःसेव्येकिमस्मद्भक्त्याभविष्यतितत्राह यथाधिकारमेवावसितानिश्चितासमाप्तावाऽर्थसिद्धिर्येषां ॥ ३२ ॥ स्वकर्मभिर्यागादिभिर्भजतेत्युक्तं तत्रब्रह्मार्पणंब्रह्महविरितिन्यायेनसर्वेषुयागतदंगतत्फलेषुभगवद्दृष्ट्याकर्मकर्तव्यंनभिन्नदृष्ट्येतिवक्तुंतेषांभगवद्रूपतामाहद्वाभ्यां असौभगवानेवस्वरूपतोविशुद्धविज्ञानघनोऽप्यगुणोनिर्विशेषणोऽपिसन्निहकर्ममार्गेऽनेकगुणोनानाविशेषणवान्अध्वरोयज्ञःसंपद्यते यज्ञोवैविष्णुरितिश्रुतेः अनेकगुणत्वमेवाह पृथग्विधानियानिद्रव्यादीनितैः तत्रद्रव्याणिव्रीह्यादीनि गुणाःशुक्लादयः क्रियाअवघातादयः उक्तयोमंत्राः अर्थोंऽगसाध्यउपकारः आशयः संकल्पः लिंगंपदार्थानांशक्तिः नामज्योतिष्टोमादितैश्चाध्वरःसंपद्यते ॥ ३३ ॥ यागफलस्यापिभगवद्रूपतामाहप्रधानेति

**तमेवयूयंभजतात्मवृत्तिभिर्मनोवचःकायगुणैःस्वकर्मभिः ॥ अमायिनःकामदुघांघ्रिपंकजंयथाऽधिकारावसितार्थसिद्धयः ॥ ३२ ॥ असाविहानेकगुणोऽगुणोऽध्वरःपृथग्विधद्रव्यगुणक्रियोक्तिभिः ॥ संपद्यतेऽर्थाशयलिंगनामभिर्विशुद्धविज्ञानघनःस्वरूपतः ॥ ३३ ॥ प्रधानकालाशयधर्मसंग्रहेशरीरएषप्रतिपद्यचेतनां ॥ क्रियाफलत्वेनविभुर्विभाव्यतेयथाऽनलोदारुषुतद्गुणात्मकः ॥ ३४ ॥ अहोममामीवितरंत्यनुग्रहंहरिंगुरुंयज्ञभुजामधीश्वरं ॥ स्वधर्मयोगेनयजंतिमामकानिरंतरंक्षोणितलेदृढव्रताः ॥ ३५ ॥ माजातुतेजःप्रभवेन्महर्द्धिभिस्तितिक्षयातपसाविद्ययाच ॥ देदीप्यमानेऽजितदेवतानांकुलेस्वयंराजकुलाद्द्विजानां ॥ ३६ ॥**

एषविभुःपरमानंदोऽपिशरीरेचेतनांविषयाकारांबुद्धिंप्रतिपद्यतदभिव्यंग्यानंदरूपः सन् क्रियाफलत्वेनप्रतीयते एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः यथाऽनलोदारुषुस्थितस्तद्गुणात्मकोदारुधर्मदैर्घ्यवक्रत्वादिमांस्तद्वत् कथंभूतेशरीरे प्रधानमव्यक्तं कालःक्षोभकः आशयोवासना धर्मोऽदृष्टंतैःसंगृह्यतेजन्यतइतितथातस्मिन् ॥ ३४ ॥ तदेवमप्रवृत्तान्भगवद्भजनेप्रवर्त्यस्वतःप्रवृत्तानांप्रवृत्तिमभिनंदनेनद्रढयाति अहोइति वितरंतिकुर्वंति ॥ ३५ ॥ इदानींहरिभक्तिदार्ढ्यायब्राह्मणभक्तिंविधत्तेमाजात्वित्यष्टभिः महत्यश्चताऋद्धयश्चताभिर्यद्राजकुलस्यतेजस्तस्मात्सकाशात्द्विजानांकुलेअजितोदेवतायेषांवैष्णवानांतेषांचकुले माजातुप्रभवेत्कदाचिदपिप्रभावंनकरोतुकथंभूते समृद्धिभिर्विनाऽपिस्वयमेवतितिक्षादिभिर्देदीप्यमाने ॥ ३६ ॥ ॥ ॥

ब्राह्मणांस्तुवन्नाह यच्चरणाभिवंदनाद्धरिर्लक्ष्मींयशश्चावाप ॥ ३७ ॥ यत्सेवयाचेश्वरस्तुष्यतितदेवब्रह्मकुलंनिषेव्यतामितिद्वयोरन्वयः ह
रेर्लोकसंग्रहरूपोयोधर्मस्तत्परैः ॥ ३८ ॥ ननुब्रह्मकुलएवनित्यंसेव्यमानेसर्वदेवतामुखभूतेऽग्नौयज्ञाद्यनुष्ठानंनस्यान्न चतेनविनाचित्तशु
द्धिर्नचतयाविनामोक्षःस्यादित्याशंक्याह पुमानितिद्वाभ्यां यस्यब्रह्मकुलस्यनित्यंसंबंधेननिषेवयापुमान्स्वयमेवज्ञानाभ्यासादिकंविनाऽ
प्युत्तमंमोक्षंलभेत कुतःयत्सेवयास्वतएवानतिवेलंशीघ्रंप्रसीदतःशुद्ध्यतःआत्मनश्चित्तात्ततःपरंश्रेष्ठंदेवानांकिंमुखमस्ति ब्राह्मणसेवयैव
यज्ञादिफलंज्ञानफलंतत्सर्वंभवतीत्यर्थः ॥ ३९ ॥ हरेरपितदेवपरंमुखमित्याह अश्नातीतिइज्यानांपूज्यानामिंद्रादीनांनामभिर्यस्यमुखे
श्रद्धयाहुतंहविरनंतोयथाऽश्नातितथाचेतनयारहितेहुताशनेहुतंनाश्नाति कैर्हुतमश्नाति तत्त्वकोविदैःसर्वदेवमयश्चैतन्यमूर्तिरनंतइतितत्त्वं

**ब्रह्मण्यदेवःपुरुषःपुरातनोनित्यंहरिर्यच्चरणाभिवंदनात्॥ अवापलक्ष्मीमनपायिनींयशोजगत्पवित्रंचमह त्तमाग्रणीः॥३७॥यत्सेवयाऽशेषगुहाशयःस्वराड्विप्रप्रियस्तुष्यतिकाममीश्वरः॥तदेवतद्धर्मपरैर्विनीतैःस र्वात्मनाब्रह्मकुलंनिषेव्यतां॥३८॥ पुमान्लभेताननतिवेलमात्मनःप्रसीदतोऽत्यंतशमंस्वतःस्वयं॥ यन्नित्यसं बंधनिषेवयाततःपरंकिमत्रास्तिमुखंहविर्भुजां ॥ ३९ ॥ अश्नात्यनंतःखलुतत्त्वकोविदैःश्रद्धाहुतंयन्मुखइ ज्यनामभिः॥ नवैतथाचेतनयाबहिष्कृतेहुताशनेपारमहंस्यपर्यगुः ॥४०॥ यद्ब्रह्मनित्यंविरजंसनातनंश्रद्धा तपोमंगलमौनसंयमैः ॥ समाधिनाबिभ्रतिहार्थदृष्टयेयत्रेदमादर्शइवावभासे ॥ ४१ ॥ तेषामहंपादस रोजरेणुमार्यावहेयाधिकिरीटमायुः ॥ यंनित्यदाबिभ्रतआशुपापंनश्यत्यमुंसर्वगुणाभजंति ॥ ४२ ॥**

विद्वद्भिः कुतएवंभूतोऽसौतत्राहपारमहंस्यंज्ञानंतत्परानर्हंति अधिकुर्वंतीतिपारमहंस्यपर्यास्तागावोवाचोयस्मिन् उपनिषद्भिर्ज्ञानघनत्वे
नोक्तइत्यर्थः यद्वा परमहंसानांज्ञाननिष्ठानांगम्यःपारमहंस्यःपरितोनगच्छंतिगावोवाचोयस्मिन्सपर्यगुरिंद्रियनियंतासचासौ सचपारम
हंस्यपर्यगुर्ज्ञानरूपःसर्वांतर्यामीत्यर्थः ॥ ४० ॥ नकेवलंचेतनत्वेनहुताशनाद्विशेषः किंतुवेदज्ञानादपीत्याह यदित्यव्ययं येब्रह्मवेदंनि
त्यंबिभ्रतितेषामित्युत्तरेणान्वयः मंगलंनाम प्रशस्ताचरणंनित्यमप्रशस्तस्यवर्जनं ॥ एतद्धिमंगलंप्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ मौनमध्य
यनाविरोधिवार्तात्यागःसमाधिनाचित्तस्थैर्येण अर्थदृष्टयेवेदार्थमपिविचारयंतीत्यर्थः यत्रवेदेइदंविश्वं ॥ ४१ ॥ हेआर्याआयुर्यावज्जीवम
धिकिरीटंमुकुटस्योपरि वहेयेतिप्रार्थनायांलिङ् यंरेणुं ॥ ४२ ॥ ॥ ॥ ॥

गुणभजनस्यफलमाह गुणायनमन्वनुसंपदःसंवृणुतेसम्यक्भजंति तस्मात्प्रसीदतांप्रसीदतुगवांचकुलं ॥ ४३ ॥ ४४ ॥ साधुवादमाह पुत्रेणेतिषड्भिः यद्यतोवेनोऽपितमोनरकमत्यतरत् अतितताार ॥ ४५ ॥ ४६ ॥ ४७ ॥ मुकुंदनाथाःस्म त्वन्नाथत्वमेवमुकुंदनाथत्वेपर्यवसितमित्यर्थःतत्रहेतुर्यइति ॥ ४८ ॥ आर्जीविनांसेवकानां अनुशासनंप्रजास्वनुरागः प्रकृतिःस्वभावः ॥ ४९ ॥ उपासादितःप्रापितः



गुणायनंशीलधनंकृतज्ञंवृद्धाश्रयंसंवृणुतेऽनुसंपदः ॥ प्रसीदतांब्रह्मकुलंगवांचजनार्दनःसानुचरश्चमह्यं ॥ ॥ ४३ ॥ मैत्रेयउवाच इतिब्रुवाणंनृपतिंपितृदेवद्विजातयः ॥ तुष्टुवुर्हृष्टमनसःसाधुवादेनसाधवः ॥ ४४ ॥ पुत्रेणजयतेलोकानितिसत्यवतीश्रुतिः ॥ ब्रह्मदंडहतःपापोयद्वेनोऽत्यतरत्तमः ॥ ४५ ॥ हिरण्यकशिपुश्चापिभगवन्निंदयातमः ॥ विविक्षुरत्यगात्सूनोःप्रह्लादस्यानुभावतः ॥ ४६ ॥ वीरवर्यपितःपृथ्व्याःसमाःसंजीवशाश्वतीः ॥ यस्येदृश्यच्युतेभक्तिःसर्वलोकैकभर्तरि ॥ ४७ ॥ अहोवयंह्यद्यपवित्रकीर्तेत्वयैवनाथेनमुकुंदनाथाः ॥ यउत्तमश्लोकतमस्यविष्णोर्ब्रह्मण्यदेवस्यकथांव्यनक्ति ॥ ४८ ॥ नात्यद्भुतमिदंनाथतवाजीव्यानुशासनं ॥ प्रजानुरागोमहतांप्रकृतिःकरुणात्मनां ॥ ४९ ॥ अद्यनस्तमसःपारस्त्वयोपासादितःप्रभो ॥ भ्राम्यतांनष्टदृष्टीनांकर्मभिर्दैवसंज्ञितैः ॥ ५० ॥ नमोविवृद्धसत्त्वायपुरुषायमहीयसे ॥ योब्रह्मक्षत्रमाविश्यबिभर्तीदंस्वतेजसा ॥ ५१ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेएकविंशोऽध्यायः ॥ २१ ॥ ॥ मैत्रेयउवाच जनेषुप्रगृणत्स्वेवंपृथुंपृथुलविक्रमं ॥ तत्रोपजग्मुर्मुनयश्चत्वारःसूर्यवर्चसः ॥ १ ॥ तांस्तुसिद्धेश्वरान्राजाव्योम्नोऽवतरतोऽर्चिषा ॥ लोकानपापान्कुर्वत्यासानुगोऽचष्टलक्षितान् ॥ २ ॥



कर्मभिर्भ्राम्यतां ॥ ५० ॥ ईश्वरदृष्ट्याविप्रादयोऽपिप्रणमंति नमइति ब्रह्माविश्यब्राह्मणजातिमधिष्ठायक्षत्रंक्षात्रियांबिभर्ति क्षत्रं चाविश्य ब्रह्माबिभर्तितदुभयंचाविश्यइदंविश्वंबिभर्ति ॥ ५१ ॥ इतिचतुर्थेटीकायामेकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशेतुपरंज्ञानंपृथवेहरिशासनात् ॥ सनत्कुमारोभगवानुपादिशदितीर्यते ॥ १ ॥ १ ॥ अर्चिषालक्षितान् सनकादयइतिज्ञापितान् अचष्टअपश्यत् ॥ २ ॥

तेषांदर्शनेनोद्गतान्प्राप्तुमिच्छुरिव अयंभावः ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआयति प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्रतिपद्यतइतिश्रु
तेःप्राणास्तावत्तत्तेजसाक्षिप्तास्तान्प्रत्युद्गच्छंति अतःस्वयमनुद्गच्छतःप्राणहानिःस्यादितिभयादिवससंभ्रमंप्रत्युद्गमंचकारेति सहसदस्यैर
नुगैश्चवर्तमानःइंद्रियेशोजीवःगुणान्गंधादीन्प्रतियथोद्गच्छतीत्यौत्सुक्येदृष्टांतः ॥ ३ ॥ यंत्रितोवशीकृतःगृहीतमर्ध्यर्हणमर्ध्यमासनंचयैस्ता
न् ॥ ४ ॥ मार्जितंक्षालितमलकबंधनंयस्य मानयन्निवस्वयंचचार ॥ ५ ॥ भवस्याप्यग्रजत्वेनमान्यान् ॥ ६ ॥ प्रीतःप्राहेत्युक्तं तदेवप्रीति
पूर्वकंवचनमाह अहोइतिदशभिः हेमंगलायनाः मंगलमयनंयेषा मयाकिंमंगलमाचरितं यस्यमेयोगिभिरपिदुर्दर्शानांवोदर्शनमासीत् ॥

तद्दर्शनोद्गतप्राणान्प्रत्यादित्सुरिवोत्थितः ॥ ससदस्यानुगोवैन्यइंद्रियेशोगुणानिव ॥३॥ गौरवाद्यंत्रितः
सभ्यःप्रश्रयानतकंधरः ॥ विधिवत्पूजयांचक्रेगृहीताध्यर्हणासनान् ॥४॥ तत्पादशौचसलिलैर्मार्जिता
लकबंधनः ॥ तत्रशीलवतांवृत्तमाचरन्मानयन्निव ॥५॥ हाटकासनआसीनान्स्वधिष्ण्येष्विवपावकान् ॥
श्रद्धासंयमसंयुक्तःप्रीतःप्राहभवाग्रजान् ॥६॥ पृथुरुवाच अहोआचरितंकिंमेमंगलंमंगलायनाः ॥ य
स्यवोदर्शनंह्यासीद्दुर्दर्शानांचयोगिभिः ॥७॥ किंतस्यदुर्लभतरमिहलोकेपरत्रच ॥ यस्यविप्राःप्रसीदंतिशि
वोविष्णुश्चसानुगः ॥ ८ ॥ नैवलक्षयतेलोकोलोकान्पर्यटतोपियान् ॥ यथासर्वदृशंसर्वेआत्मानंयेऽस्यहे
तवः ॥ ९ ॥ अधनाअपितेधन्याःसाधवोगृहमेधिनः ॥ यद्गृहाह्यर्हवर्यांबुतृणभूमीश्वरावराः ॥ १० ॥
व्यालालयद्रुमावैतेऽप्यरिक्ताखिलसंपदः ॥ यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ॥ ११ ॥

॥ ७ ॥ ८ ॥ दुर्दर्शत्वमेवाह नैवेति सर्वदृशमात्मानंयथासर्वेदृश्यानलक्षयंते येऽस्यविश्वस्यहेतवोमहदादयोमन्वादयोवा यद्वा कथंभूतान् येऽ
स्यसर्वदृगात्मदर्शनस्यहेतवस्तान् ॥ ९ ॥ येषांसाधूनांगृहाअर्हाणांपूज्यानांवर्याःवरणीयाःस्वीकारार्हाः अंब्वादयोयेषुतादृशाः अंबुचतृणं
चभूमिश्चईश्वरोगृहस्वामीचावराभृत्यादयश्च ॥ १० ॥ व्यालानामालयाद्रुमाएवतेअरिक्ताःपूर्णाअखिलाःसंपदोयेषु तादृशाअपियद्गृहाः
येगृहास्तीर्थपादीयावैष्णवास्तेषांपादतीर्थेनाविवर्जिताः ॥ ११ ॥ ॥ ॥

स्वागतंभद्रमागमनंजातं यद्यस्माद्बालाएवभवंतोबृहंतिव्रतानिचरंति यद्वा येषांवोव्रतानिअन्येबालाश्चरंति ॥ १२ ॥ इंद्रियार्थमेवार्थंये विदंतितेषांनोव्यसनान्युप्यंतेयस्मिंस्तस्मिन्संसारे ॥ १३ ॥ नन्वभ्यागतानांकुशलंपृच्छचतेलोकेनत्वात्मनस्तत्राह भवत्स्विति ॥ १४ ॥ तत्तस्मात्कृतविश्वासःसन् तपस्विनांसंतप्तानांसुहृदोयुष्मान्पृच्छामि ॥ १५ ॥ नखल्वन्ययोगितुल्यायूयंकिंतुसाक्षाद्भगवानेवेत्याह व्यक्तंनिश्चितं आत्मवतांधीराणामात्मातेष्वात्मत्वेनप्रकाशमानः आत्मानंभावयतिप्रकाशयतीतितथा इमांपृथ्वींचरति ॥ १६ ॥ सूक्तं

स्वागतंवोद्विजश्रेष्ठायद्व्रतानिमुमुक्षवः ॥ चरंतिश्रद्धयाधीराबालाएवबृहंतिच ॥ १२ ॥ कच्चिन्नःकुशलंना थाइंद्रियार्थार्थवेदिनां ॥ व्यसनावापएतस्मिन्पतितानांस्वकर्मभिः ॥ १३ ॥ भवत्सुकुशलप्रश्नआत्मारा मेषुनेष्यते ॥ कुशलाकुशलायत्रनसंतिमतिवृत्तयः ॥ १४ ॥ तदहंकृतविश्रंभःसुहृदोवस्तपस्विनां ॥ सं पृच्छेभवएतस्मिन्क्षेमःकेनांजसाभवेत् ॥ १५ ॥ व्यक्तमात्मवतामात्माभगवानात्मभावनः ॥ स्वानाम नुग्रहायेमांसिद्धरूपीचरत्यजः ॥ १६ ॥ मैत्रेयउवाच पृथोस्तत्सूक्तमाकर्ण्यसारंसुष्ठुमितंमधु ॥ स्म यमानइवप्रीत्याकुमारःप्रत्युवाचह ॥ १७ ॥ सनत्कुमारउवाच साधुपृष्टंमहाराजसर्वभूतहितात्म ना ॥ भवताविदुषाचापिसाधूनांमतिरीदृशी ॥ १८ ॥ संगमःखलुसाधूनामुभयेषांचसंमतः ॥ यत्संभा षणसंप्रश्नःसर्वेषांवितनोतिशं ॥ १९ ॥ अस्त्येवराजन्भवतोमधुद्विषःपादारविंदस्यगुणानुवादने ॥ रति र्दुरापाविधुनोतिनैष्ठिकीकामंकषायंमलमंतरात्मनः ॥ २० ॥ ॥ ॥

शोभनवचनं सारंन्याय्यं सुष्ठुगंभीरार्थं मितमल्पाक्षरं मधुश्रोत्रप्रियम् मुखप्रसत्त्यास्मयमानइवप्रतीयमानः ॥ १७ ॥ विदुषाजानताऽ पि ईदृशीपरार्थैकपरा ॥ १८ ॥ स्वयमपिपृथोःसंगममभिनंदति संगमइति उभयेषांवक्तृणांश्रोतृणांच येषांसंभाषणसहितःसंप्रश्नःसर्वे षांशंसुखंविस्तारयति ॥ १९ ॥ तदेवंसंगमंप्रश्नंचाभिनंद्यानुवादमुखेनैवमोक्षसाधनमुपदिशति अस्त्येवेति गुणानामनुवादने प्रश्नद्वारेणा नुवादप्रवर्तनेश्रवणइत्यर्थः आत्मनोमनसोंऽतरस्थं कामात्मकंमलंविधुनोति कषायंधातुरागवदनिवर्त्यं ॥ २० ॥

चित्तशुद्ध्यैवबहिर्वैराग्यमात्मरतिश्चभवति नचततोऽधिकंसाधनमस्ति शास्त्रेषुतयोरेवमोक्षहेतुत्वनिश्चयादित्याह शास्त्रेष्विति सद्ब्यग्वि मृशेषुसम्यक्विचारवत्सु क्षेमस्यहेतुरेतावानेवसुनिश्चितः कोऽसौ आत्मव्यतिरिक्ते असंगोवैराग्यमात्मनिचरतिः आत्मनोविशेषणं निर्गुणेब्रह्मणीति॥२१॥ नन्वेतदेवातिदुर्लभमित्याशंक्योत्तमाधिकारिणःश्रवणमात्रेणभवति अन्यस्यतुचित्तशुध्यनुसारेणसाधनतारतम्यतोवर्धमानयाभक्त्येत्यभिप्रेत्याह सेतिचतुर्भिः साब्रह्मणिरतिरसंगश्चश्रद्धादिभिःस्यादितिचतुर्थेनान्वयः जिज्ञासयातत्ताद्विशेषबुभुत्सया पुण्यं श्रवोयस्यतस्यहरेः पुण्यायाकथातयाच ॥ २२ ॥ अर्थारामाअर्थनिष्ठास्तामसाइंद्रियारामाः कामनिष्ठाराजसास्तैःसह यागोष्ठीतस्यामतृ

शास्त्रेष्वियानेवसुनिश्चितोनृणांक्षेमस्यसध्र्यग्विमृशेषुहेतुः ॥ असंगआत्मव्यतिरिक्तआत्मनिदृढारतिर्ब्रह्मणिनिर्गुणेचया ॥२१॥ साश्रद्धयाभगवद्धर्मचर्ययाजिज्ञासयाध्यात्मिकयोगनिष्ठया ॥ योगेश्वरोपासनयाचनित्यंपुण्यश्रवःकथयापुण्ययाच ॥२२॥ अर्थेंद्रियारामसगोष्ठ्यतृष्णयातत्संमतानामपरिग्रहेण॥विविक्तरुच्यापरितोषआत्मन्विनाहरेर्गुणपीयूषपानात् ॥२३॥ अहिंसयापारमहंस्यचर्ययास्मृत्यामुकुंदाचरिताग्र्यसीधुना ॥ यमैरकामैर्नियमैश्चाप्यनिंदयानिरीहयाद्वंद्वतितिक्षयाच॥२४॥हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेनविजृंभमाणया ॥ भक्त्याह्यसंगःसदसत्यनात्मनिस्यान्निर्गुणेब्रह्मणिचांजसारतिः ॥ २५ ॥

ष्णया तेषांचयेसंमताअर्थाःकामाश्च तेषामपरिग्रहेणाविविक्तेविजनेयारुचिस्तयाऽत्मन्येवपरितोषेसतिस्यात् किंतुहरेर्गुणपीयूषपानाद्विना तस्मिन्सतिविविक्तेरुचिर्नकार्या नचात्मनिपरितोषःकार्यइत्यर्थः ॥ २३ ॥ पारमहंस्यचर्ययाउपशमादिप्रधानयावृत्त्या स्मृत्याआत्महितानुसंधानेन मुकुंदाचरितमेवाग्र्यंसीधुश्रेष्ठममृतंतच्चरितस्मृतिसुखेनेत्यर्थः मार्गांतरस्यानिंदया निरीहयायोगक्षेमार्थक्रियाराहित्येन शीतोष्णादिद्वंद्वसहनेन ॥ २४ ॥ कथयेत्यत्रोक्तमपिकथनंभक्त्यावंतरंगत्वेनपुनरुच्यते तत्पराहरिभक्तास्तेषांकर्णपूराःकर्णालंकारभूतायेहरेर्गुणास्तेषामाभिधानेनसदसतिकार्यकारणरूपे ॥ २५ ॥ ॥ ॥ ॥

भवत्वन्यत्रासंगआत्मरतिश्चततः किमतआह यदानिष्ठांप्राप्तारतिर्भवतितदाचार्यवान्सन्ज्ञानवैराग्ययोर्वेगेनावीर्यंनिर्वासनंसज्जीवस्यको
शमात्रकंहृदयंपुमान्दहाति कथंभूतं पंचमहाभूतप्रधानं यद्वा अविद्यास्मितारागद्वेषाभिनिवेशाःपंचतदात्मकं उत्थितःप्रज्वलितोऽग्निर्यो
निमरणिमिव यद्वा यदारतिराचार्यानुग्रहश्चतदाज्ञानविरागयोर्वेगेनोत्थितःसाक्षात्कारोऽवीर्यंपुनःप्ररोहक्षमंयथानभवत्येवंहृदयंदहाति शेषं
समानं ॥ २६ ॥ ततः किमतआह दग्धआशयोहृदयमुपाधिर्यस्य अतएवमुक्ताःसमस्तास्तद्गुणाःकर्तृत्वादयोयेन आत्मनःसकाशाद्बहि
र्घटादि अंतःसुखदुःखादिनैवविचष्टेनपश्यत्येव कुतइत्यपेक्षायांद्रष्टृदृश्यप्रतीतिरंतःकरणहेतुत्वादित्याह परोदृश्यआत्माद्रष्टा तयोर्यद्व्यव
धानंभेदकंपूर्वमासीत्तस्याविनाशेसतियथास्वप्नेराजाऽहमित्यारोपितंसैन्यादिद्रष्टारंदृश्यंसैन्यंचस्वाप्नावस्थानाशेनपश्यतितद्वत् ॥ २७ ॥ द्र

**यदारतिर्ब्रह्मणिनैष्ठिकीपुमानाचार्यवान्ज्ञानविरागरंहसा ॥ दहत्यवीर्यंहृदयंजीवकोशंपंचात्मकंयोनिमि
वोत्थितोऽग्निः ॥२६॥ दग्धाशयोमुक्तसमस्ततद्गुणोनैवात्मनोबहिरंतर्विचष्टे॥परात्मनोर्यद्व्यवधानंपुरस्ता
त्स्वप्नेयथापुरुषस्तद्विनाशे ॥ २७ ॥ आत्मानमिंद्रियार्थंचपरंयदुभयोरपि ॥ सत्याशयउपाधौवैपुमान्प
श्यतिनान्यदा ॥ २८ ॥ निमित्तेसतिसर्वत्रजलादावपिपूरुषः॥ आत्मनश्चपरस्यापिभिदांपश्यतिनान्यदा
॥ २९ ॥ इंद्रियैर्विषयाकृष्टैराक्षिप्तंध्यायतांमनः ॥ चेतनांहरतेबुद्धेःस्तंबस्तोयमिवन्हदात् ॥ ३० ॥**

ष्टृदृश्यभेदप्रतीतेरंतःकरणहेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति आत्मानमिति आत्मानंद्रष्टारमिंद्रियार्थंदृश्यमुभयोस्तयोःपरंसंबंधहेतु
महंकारंचाशयेंऽतःकरणेसत्येवजाग्रत्स्वप्नयोःपश्यति अन्यदासुषुप्तौनतदुक्तं दृश्यानुरंजितंद्रष्टृदृश्यंद्रष्टनुरंजितं ॥ अहंकृत्योभयंरक्तंतन्नाशेऽ
द्वैततात्मनइति ॥ २८ ॥ एकस्मिन्नात्मानिदृश्यादिभेदप्रतीतिरौपाधिकीतिभेददृष्टांतेनस्पष्टयति निमित्तइति लोकेपिचसर्वत्रजलदर्प
णादौभेदनिमित्तेसत्येवात्मनोबिंबभूतस्यपरस्परप्रतिबिंबस्यचभेदंपश्यति नतुजलाद्यभावे ॥ २९ ॥ तदेवंचतुर्भिरसंगात्मरत्योर्मोक्षहेतुत्व
मुक्तमिदानीमनात्मरतेःसंसारहेतुत्वमाह इंद्रियैरितिचतुर्भिः ध्यायतांगुणारोपेणस्मरतांपुंसामिंद्रियाणिरमृतैर्विषयैराकृष्यंते तैश्चमनआकृ
ष्यते विषयासक्तिंप्राप्यते तच्चबुद्धेःसकाशात्तद्धर्मंचेतनांविचारसामर्थ्यंहरति एतच्चाविवेकिनानलक्ष्यतइतिदृष्टांतेनाह तीरजःकुशादिस्तं
बोयथामूलैस्तोयंहृदादपहरतितद्वत् ॥ ३० ॥ ॥ ॥ ॥ ॥

चित्तंचेतनामनुतस्यामपहृतायांस्मृतिःपूर्वापरानुसंधानंभ्रश्यति एवंतद्रोधंज्ञानभ्रंशमात्मनएवहेतोरात्मनोऽपन्हवंनाशंप्राहुः॥ ३१ ॥ एवं
भूतोनाशोभवतुततश्चकिमित्यतआह यदधियमधिकृत्यान्यस्यविषयस्यप्रियतमत्वमात्मनस्तुकामायसर्वंप्रियंभवतीतिश्रुतेः तस्यात्मनः
स्वेनैवयोव्यतिक्रमोऽपह्नवस्तस्माद्यःस्वार्थनाशोऽतःपरतरःस्वार्थनाशोनास्ति ॥ ३२ ॥ कुतइत्यतआह अर्थस्याभिध्यानमिंद्रियस्यार्थः
कामस्तस्याभिध्यानंसर्वार्थनाशः ज्ञानंविज्ञानंचपरोक्षापरोऽक्षं येनध्यानेनमुख्यतांस्थावरतां ॥ ३३ ॥अनात्मरतेरनर्थहेतुत्वमुक्तंसंगस्याप्याह
नेति यद्वस्तुधर्मादीनांविघातकंतास्मिन्संगं तमःसंसारं ॥ ३४ ॥ तुल्यवन्निर्देशात्पुरुषार्थसाम्यभ्रांतिंवारयाति तत्रापीति कृतांतःकालः

भ्रश्यत्यनुस्मृतिश्चित्तंज्ञानभ्रंशःस्मृतिक्षये ॥ तद्रोधंकवयःप्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥ नातःपरत
रोलोकेपुंसःस्वार्थव्यतिक्रमः ॥ यदध्यन्यस्यप्रेयस्त्वमात्मनःस्वव्यतिक्रमात् ॥ ३२ ॥ अर्थेंद्रियार्थाभिध्या
नंसर्वार्थापन्हवोनृणां ॥ भ्रंशितोज्ञानविज्ञानाद्येनाविशतिमुख्यतां ॥३३॥ नकुर्यात्कर्हिचित्संगंतमस्तीव्रं
तितीरिषुः ॥ धर्मार्थकाममोक्षाणांयदत्यंतविघातकं ॥ ३४ ॥ तत्रापिमोक्षएवार्थआत्यंतिकतयेष्यते ॥
त्रैवर्ग्योऽर्थोयतोनित्यंकृतांतभयसंयुतः ॥ ३५ ॥ परेऽवरेचयेभावगुणव्यतिकरादनु ॥ नतेषांविद्यतेक्षेम
मीशविध्वंसिताशिषां ॥ ३६ ॥ तत्त्वंनरेंद्रजगतामथतस्थुषांचदेहेंद्रियासुधिषणात्मभिरावृतानां ॥ यः
क्षेत्रवित्तपतयाहृदिविष्वगाविःप्रत्यक्चकास्तिभगवांस्तमवेहिसोऽस्मि ॥ ३७ ॥ ॥

॥ ३५ ॥ भयसंयुतत्वमेवाह परेब्रह्मादयोऽवरेऽस्मदादयोगुणक्षोभादनुपश्चाद्भवंति ईशःकालस्तेनविध्वंसिताआशिषोयेषां ॥ ३६ ॥
यस्मादनात्मरतिरनर्थहेतुस्तस्माज्जगतांजंगमानांतस्थुषांस्थावरणांचदेहादिभिरात्मनाहंकारेण चावृतानांहृदियश्चकास्तिप्रकाशतेतमवेहि
कथंसोऽस्मीति सोऽस्तीतिपाठेसएवैकोऽस्तिततोऽन्यदसदित्यर्थः ननुजीवोहृदिचकास्तिनान्यस्तत्राह क्षेत्रविदंजीवंतपतिनियमयतीति
क्षेत्रवित्तपस्तस्यभावस्तत्ता तयांऽतर्यामिरूपेण यद्वा क्षेत्रवित्तेअहंममतास्पदेपातीतिक्षेत्रवित्तपस्तेनरूपेण जीवस्तुपारतंत्र्यान्नपाति
ननुकर्मजीवंनियच्छति न आविःप्रत्यक्षःतर्हिबुद्धिः न प्रत्यक्प्रतिलोमंचकास्ति बुद्धिस्तुपराग्विषयाकारेण तर्ह्यहंकारः न विष्वक्व्या
प्तत्वेनसतुपरिच्छिन्नःएवंभूतोयोभगवान् तमवेहीति ॥ ३७ ॥ ॥ ॥

स्थावरजंगमादीनांहृदिचकास्तीत्युक्तेतेषांसत्त्वंतत्संबंधादीश्वरस्यमालिन्यंप्रसक्तंनिराकुर्वन्नुद्रिक्तभक्त्यातंप्रणमति यस्मिन्निदंविश्वंसदसदात्मतयोत्कृष्टनिकृष्टभावेनकार्यकारणभावेनवामाययैवाविभातितंप्रपद्ये मायात्वेहेतुः विवेकेनविधुतिर्निराकृतिर्यस्यतत् स्रजिवेतिवाशब्दो दृष्टांते नित्यमुक्तं यतः परिशुद्धं तत्कुतः विबुद्धंतत्त्वंसत्यमतएवप्रत्यूढाऽभिभूताकर्मभिःकलिलामलिनाप्रकृतिर्येनतं ॥ ३८ ॥ तमवेहीतिज्ञानमुपदिष्टं तस्यदुष्करत्वेनभक्तिमुपदिशतिद्वाभ्यां यस्यपादपंकजयोःपलाशयान्यंगुलयस्तेषांविलासः कांतिस्तस्यभक्त्यास्मृत्या कर्माशयमहंकाररूपंहृदयग्रंथिंकर्मभिरेवग्रंथितं रिक्तानिर्विषयामतिर्येषां रुद्धःप्रत्याहृतःस्रोतोगणइंद्रियवर्गोयैःअरणंशरणं ॥ ३९ ॥ ननुब्रह्म



यस्मिन्निदंसदसदात्मतयाविभातिमायाविवेकविधुतिस्रजिवाऽहिबुद्धिः ॥ तन्नित्यमुक्तपरिशुद्धविबुद्धतत्त्वप्रत्यूढकर्मकलिलप्रकृतिंप्रपद्ये ॥ ३८ ॥ यत्पादपंकजपलाशविलासभक्त्याकर्माशयंग्रथितमुद्ग्रथयंतिसंतः ॥ तद्वन्नरिक्तमतयोयतयोऽपिरुद्धस्रोतोगणास्तमरणंभजवासुदेवं ॥ ३९ ॥ कृच्छ्रोमहानिहभवार्णवमप्लवेशांषड्वर्गनक्रमसुखेनतितीरषंति ॥ तत्त्वंहरेर्भगवतोभजनीयमंघ्रिंकृत्वोडुपंव्यसनमुत्तरदुस्तरार्णं ॥४०॥ मैत्रेयउवाच सएवंब्रह्मपुत्रेणकुमारेणात्ममेधसा ॥ दर्शितात्मगतिःसम्यक्प्रशस्योवाचतंनृपः ॥ ४१ ॥ राजोवाच कृतोमेनुग्रहःपूर्वंहरिणार्तानुकंपिना ॥ तमापादयितुंब्रह्मन्भगवन्यूयमागताः ॥४२ ॥ निष्पादितंचकात्स्न्र्येनभगवद्भिर्घृणालुभिः ॥ साधूच्छिष्टंहिसर्वंमेआत्मनासहकिंददे ॥ ४३ ॥

विदाप्नोतिपरमितिश्रुतेः कथंयतयोनोद्ग्रथयंतीत्युच्यते तत्राह कृच्छ्रइति अप्लवेशांनप्लवस्तरणहेतुरीट्ईशोयेषांतेषां महानिहतरणेकृच्छ्रः क्लेशः तेहिअसुखेनयोगादिनेंद्रियषड्वर्गग्राहंभवार्णवंतितीर्षंति तत्तस्मात्उडुपंप्लवं दुस्तरार्णवमित्यर्थः यद्वा अर्णशब्देवकाराभावआर्षः दुस्तरोदकरूपंव्यसनमित्यर्थः ॥ ४० ॥ आत्ममेधसाब्रह्मविदादर्शिताआत्मनोगतिस्तत्त्वंयस्मैसः ॥ ४१ ॥ ब्रह्मन्नितिसंबोधनंप्राधान्यादेकस्य यूयमित्युक्तिःसर्वान्प्रति ॥ ४२ ॥ आत्मनादेहेनसहसर्वंराज्यादिकंमदीयंसाधूच्छिष्टं साधुभिःस्वीयंसन्मह्यंप्रसादरूपेणदत्तं अतस्तत्रममस्वत्वाभावात् गुरुदक्षिणार्थंकिंददे नहिपित्रादत्तंमोदकादितस्मैदानरूपेणप्रत्यर्प्यते ॥ ४३ ॥ ॥

निवेदनंतुतदीयस्यैवसमर्पणंयथाभृत्योराज्ञेसेवादिरूपेणतांबूलादिकमर्पयति तथामयाऽपिसर्वंनिवेदितंस्वीकुरुतेत्याह प्राणाइति ॥४४॥
आत्मनःस्वत्वाभावंप्रपंचयति सैनापत्यंचेति द्वाभ्यां ॥ ४५ ॥ वस्तेपरिधत्ते अन्नमात्रंकेवलंभुंजतेनतुदानेस्वतंत्राः ॥ ४६ ॥ सत्यपिस्वत्वे
सर्वस्वेनापिनगुरोःप्रत्युपकर्तुंशक्यमित्याह यैरिति आत्मवादेध्यात्मविचारेएकांततोनिश्चयेननिगमिभिर्वेदविद्भिस्तेनित्यमनल्पकरुणाः
स्वकृतेनैवदीनोद्धरणकर्मणातुष्यंतु कोनामतत्कृतमुपकारंप्रतिस्वयमुपकरोत्युदपात्रमंजालिंविना मयांऽजालिरेवतेभ्योबद्धइत्यर्थः यद्वा वि

प्राणादाराःसुताब्रह्मन्गृहाश्चसपरिच्छदाः॥राज्यंबलंमहीकोशइतिसर्वंनिवेदितं ॥४४॥ सैनापत्यंचरा
ज्यंचदंडनेतृत्वमेवच॥सर्वलोकाधिपत्यंचवेदशास्त्रविदर्हति ॥ ४५॥ स्वमेवब्राह्मणोभुंक्तेस्वंवस्तेस्वंददाति
च ॥ तस्यैवानुग्रहेणान्नंभुंजतेक्षत्रियादयः ॥४६॥ यैरीदृशीभगवतोगतिरात्मवादेएकांततोनिगमिभिःप्र
तिपादितानः ॥ तुष्यंत्वदभ्रकरुणाःस्वकृतेननित्यंकोनामतत्प्रतिकरोतिविनोदपात्रं ॥४७॥ तआत्मयोगम
तयआदिराजेनपूजिताः॥शीलंतदीयंशंसंतःखेऽभूवन्मिषतांनृणां ॥ ४८ ॥ वैन्यस्तुधुर्योमहतांसंस्थित्याऽ
ध्यात्मशिक्षया ॥ आप्तकाममिवात्मानंमेनेआत्मन्यवस्थितः ॥ ४९॥ कर्माणिचयथाकालंयथादेशंयथाब
लं ॥ यथोचितंयथावित्तमकरोद्ब्रह्मसात्कृतं ॥ ५० ॥ फलंब्रह्मणिविन्यस्यनिर्विषंगःसमाहितः ॥ कर्माध्यक्षं
चमन्वानआत्मानंप्रकृतेःपरं ॥५१॥ गृहेषुवर्तमानोऽपिससाम्राज्यश्रियान्वितः॥ नासज्जतेंद्रियार्थेषुनिरहं
मतिरर्कवत्॥५२॥एवमध्यात्मयोगेनकर्माण्यनुसमाचरन् ॥ पुत्रानुत्पादयामासपंचार्चिष्यात्मसंमतान्॥
॥ ५३ ॥ विजिताश्वंधूम्रकेशंहर्यक्षंद्रविणंवृकं ॥ सर्वेषांलोकपालानांदधारैकःपृथुर्गुणान् ॥ ५४ ॥ गोपी
थायजगत्सृष्टेःकालेस्वेस्वेऽच्युतात्मकः ॥ मनोवाग्वृत्तिभिःसौम्यैर्गुणैःसंरंजयन्प्रजाः ॥ ५५ ॥

नोदपात्रमुपहासास्पदंप्रत्युपकारेप्रवृत्तोजनानामुपहासास्पदंभवेदित्यर्थः ॥ ४७ ॥ खेअभूवन् आकाशमार्गेणोद्गताः ॥ ४८ ॥ धुर्योमुख्यः
अध्यात्मशिक्षयासंस्थितिरेकाग्रतातयाआत्मन्यवस्थितःसन्मेने ॥ ४९ ॥ ब्रह्मसात्कृतंब्रह्मण्यर्पितंयथाभवति ॥ ५० ॥ निर्विषंगःकर्मस्वनास
क्तःकर्माध्यक्षंकर्मसाक्षिणमुदासीनंमन्वानोऽकरोदितिपूर्वेणैवान्वयः नासज्जतेत्युत्तरेणवा ॥ ५१॥५२ ॥ अर्चिषिभार्यायां ॥ ५३॥ ५४॥५५॥

सोमश्चासौराजाचसइव भुवोवसुधनंगृह्णन्विसृजंश्चासौसूर्यवद्राज्ञः प्रतपनमाज्ञाकरणं ॥ ५६ ॥ अग्निरिवदुर्धर्षः द्यौःस्वर्गइव ॥ ५७ ॥ समुद्रोयथागांभीर्येणैतावानितिनबुध्यते तथासावभिप्रायतोदुर्बोधोऽचलराण्मेरुरिव ॥ ५८ ॥ ५९ ॥ सर्वात्मासर्वत्रसंचारशक्तिर्बलादिभिर्मातरिश्वेव भूतराट्श्रीरुद्रः ॥ ६० ॥ अजोब्रह्मेव ॥६१॥ आत्मवत्त्वेजितेंद्रियत्वे भक्त्यादिभिःपरार्थोद्यमेचात्मनैवतुल्योनिरुपमः ॥ ६२ ॥ पुंभिःसत्पुरुषैरामःसीतापतिर्यथासतांकर्णरंध्रेषुप्रविष्टः ॥ ६३ ॥ इतिचतुर्थेटीकायांद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥



राजेत्यधान्नामधेयंसोमराजइवापरः ॥ सूर्यवद्विसृजन्गृण्हन्प्रतपंश्चभुवोवसु ॥ ५६ ॥ दुर्धर्षस्तेजसेवाग्निर्महेंद्रइवदुर्जयः ॥ तितिक्षयाधरित्रीवद्यौरिवाभीष्टदोनृणां ॥ ५७॥ वर्षतिस्मयथाकामंपर्जन्यइवतर्पयन् ॥ समुद्रइवदुर्बोधःसत्वेनाचलराडिव ॥ ५८ ॥ धर्मराडिवशिक्षायामाश्चर्येहिमवानिव ॥ कुबेरइवकोशाढ्योगुप्तार्थोवरुणोयथा ॥ ५९ ॥ मातरिश्वेवसर्वात्माबलेनसहसौजसा ॥ अविषह्यतयादेवोभगवान्भूतराडिव ॥६०॥ कंदर्पइवसौंदर्येमनस्वीमृगराडिव ॥ वात्सल्येमनुवन्नृणांप्रभुत्वेभगवानजः ॥ ॥ ६१ ॥ बृहस्पतिर्ब्रह्मवादेआत्मवत्त्वेस्वयंहरिः ॥ भक्त्यागोगुरुविप्रेषुविष्वक्सेनानुवर्तिषु ॥ न्हियाप्रश्रयशीलाभ्यामात्मतुल्यःपरोद्यमे ॥ ६२ ॥ कीर्त्योर्ध्वगीतयापुंभिस्त्रैलोक्येतत्रतत्रह ॥प्रविष्टःकर्णरंध्रेषुस्त्रीणांरामःसतामिव ॥६३॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपृथुचरितेद्वाविंशतितमोऽध्यायः॥२२॥

मैत्रेयउवाच　दृष्ट्वात्मानंप्रवयसमेकदावैन्यआत्मवान् ॥ आत्मनावर्द्धिताशेषस्वानुसर्गःप्रजापतिः ॥ ॥ १ ॥ जगतस्तस्थुषश्चापिवृत्तिदोधर्मभृत्सतां ॥ निष्पादितेश्वरादेशोयदर्थमिहजज्ञिवान् ॥२॥ आत्मजेष्वात्मजांन्यस्यविरहाद्रुदतीमिव ॥ प्रजासुविमनास्वेकःसदारोऽगात्तपोवनं ॥ ३ ॥ ॥

त्रयोविंशेसभार्यस्यवनेनित्यसमाधितः ॥ विमानमाधिरुह्याथवैकुंठगतिरीर्यते ॥ १ ॥ प्रवयसंवृद्धंदृष्ट्वातपोवनमगादितितृतीयेनान्वयः स्वकृतोऽनुसर्गोऽन्नादिसर्गःपुरग्रामादिसर्गश्च वर्द्धितोऽशेषःस्वानुसर्गोयेन ॥ १ ॥ जज्ञिवान्जातआविर्भूतइति ॥ २ ॥ आत्मजांपृथ्वींविमनासुचिंतातुरासुप्रजासुसदारःसभार्यस्तपोवनमगादिति ॥ ३ ॥ ॥ ॥

अदाभ्याविघ्नैर्नाशयितुमशक्यानियमायस्य वानप्रस्थानांसुसंमतेउग्रेतपस्यारब्धःप्रवृत्तः कर्तरिक्तः यथास्वस्यधरामंडलस्यविजयेपूर्वंमहताय
त्नेनप्रवृत्तस्तथेति॥४॥उग्रंतपोदर्शयति कंदमूलेतित्रिभिः क्वचित्कदाचित्॥५॥चतुर्दिक्षुचत्वारोऽग्नयउपरिसूर्यइतिपंचानांतपःसंतापोयस्य
पंचतपाः आसारंसहतइत्यासारषाट् शिशिरऋतौस्थंडिलेशयोभूमिशयनःसर्वदा॥६॥७॥तेनतपसाक्रमानुसिद्धेनशनैःप्राप्तेनध्वस्तानिक
र्माणियस्यातोऽमलआशयोयस्य छिन्नानिबंधनानिवासनायस्य॥८॥९॥१०॥ परिकर्मणापरिचर्ययाशुद्धसत्वआत्मामनोयस्यतस्यज्ञानम

तत्राप्यदाभ्यनियमोवैखानससुसंमते ॥ आरब्धउग्रतपसियथास्वविजयेपुरा ॥ ४ ॥ कंदमूलफलाहा
रःशुष्कपर्णाशनःक्वचित् ॥ अब्भक्षःकतिचित्पक्षान्वायुभक्षस्ततःपरं ॥ ५ ॥ ग्रीष्मेपंचतपावीरोवर्षास्वा
सारषाण्मुनिः ॥ आकंठमग्नःशिशिरउदकेस्थंडिलेशयः ॥ ६ ॥ तितिक्षुर्यतवाक्दांतउर्ध्वरेताजितानि
लः ॥ आरिराधयिषुःकृष्णमचरत्तपउत्तमं ॥ ७ ॥ तेनक्रमानुसिद्धेनध्वस्तकर्मामलाशयः ॥ प्राणायामैः
सन्निरुद्धषड्वर्गश्छिन्नबंधनः ॥ ८ ॥ सनत्कुमारोभगवान्यदाहाध्यात्मिकंपरं ॥ योगंतेनैवपुरुषमभजत्पुरु
षर्षभः ॥ ९ ॥ भगवद्धर्मिणःसाधोःश्रद्धयायततःसदा ॥ भक्तिर्भगवतिब्रह्मण्यनन्यविषयाऽभवत् ॥
॥ १० ॥ तस्यानयाभगवतःपरिकर्मशुद्धसत्वात्मनस्तदनुसंस्मरणानुपूर्त्या ॥ ज्ञानंविरक्तिमदभून्निशितेन
येनचिच्छेदसंशयपदंनिजजीवकोशं ॥ ११ ॥ छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽछिनदिदंव
युनेनयेन ॥ तावन्नयोगगतिभिर्यतिरप्रमत्तोयावद्गदाग्रजकथासुरतिंनकुर्यात् ॥ १२ ॥ एवंसवीरप्रवरः
संयोज्यात्मानमात्मनि ॥ ब्रह्मभूतोदृढंकालेतत्याजस्वंकलेवरं ॥ १३ ॥ ॥ ॥

भूत् कीदृशं येननिजमुपाधिंजीवकोशंहृदयग्रंथिंसंशयानामसंभावनादीनांपदमाश्रयंचिच्छेद कीदृशेन अनयाभक्त्यानिशितेन कथंभूत
या तस्यभगवतोऽनुसंस्मरणेनानुपूर्तिःसंपूर्तिर्यस्यास्तयानिशितेन ॥ ११ ॥ किंचछिन्नाऽन्यधीर्देहात्मबुद्धिर्यस्य यतोऽधिगतात्मगतिरतएव
निरीहःप्राप्तासुसिद्धिषुनिस्पृहः येनवयुनेनज्ञानेन इदंसंशयपदंचिच्छेदतत्त्यजेत्यक्तवान् तत्प्रयत्नादप्युपररामेत्यर्थः तस्ययोगसिद्धिष्व
पिनिस्पृहत्वंयुक्तमेवेत्याह तावन्नाप्रमत्तः किंतुप्रमत्तोभवति तस्यश्रीकृष्णकथारतत्वान्नतासुलोभोजातइत्यर्थः ॥ १२ ॥ १३ ॥

देहत्यागप्रकारमाह संपीड्येतिपंचभिः पायुंगुदंसंपीड्येतिमुक्तासनंसूचितं संपीड्यसीवनींसूक्ष्मांगुल्फेनैवतुमध्यमः ॥ सव्येदक्षिणगु
ल्फेनमुक्तासनमितीरितं ॥ मूलाधाराद्वायुमुत्सारयन् नाभ्यामत्रस्थाप्यतत कोष्ठेष्ववस्थाप्य अयूयुजदित्युत्तरेणान्वयः कोष्ठान्येवाह हृ
दादीनांद्वंद्वैक्यं शीर्षंभ्रूमध्यंतास्मिन् ॥ १४ ॥ तंवायुं पाठांतरेएवमसून्प्राणानुत्सर्पयन् क्रमेणमूर्ध्निब्रह्मरंध्रेआवेश्य ततोदेहारंभकपंचभू
तानिसमष्टिभूतेषुविलापितवान् तदाह वायुंवायावयूयुजदेकीकृतवान् कायंदेहगतंकाठिनांशंक्षितौ ॥ १५ ॥ खानिइंद्रियच्छिद्राणि द्र
वांशंतोये तदेवंदेहंप्रविलाप्याद्वितीयात्मप्रतिपत्त्यर्थंमहाभूतानामपिलयमाह क्षितिमंभस्येकीकृतवान् तदंभोऽदस्तेजोऽमुंवायुं ॥ १६ ॥
तदेवंतामसाहंकारकार्यस्याकाशपर्यंतस्यलयमुक्त्वासात्विकराजसाहंकारकार्याणांलयमाह इंद्रियेष्विति इंद्रियेषुमनइतिदेवानामप्युपल
क्षणंसविकल्पकज्ञानेनमनसइंद्रियैराकर्षणात्तेषुलयाभिधानंनतुकार्यत्वात् तदुक्तंगीतासु इंद्रियाणांहिचरतांयन्मनोऽनुविधीयतइति अत्र

**संपीड्यपायुंपार्ष्णिभ्यांवायुमुत्सारयन्शनैः ॥ नाभ्यांकोष्ठेष्ववस्थाप्यहृदुरःकंठशीर्षणि ॥ १४ ॥ उत्स
र्पयंस्तुतंमूर्ध्निक्रमेणावेश्यनिस्पृहः ॥ वायुंवायौक्षितौकायंतेजस्तेजस्ययूयुजत् ॥ १५ ॥ खान्याकाशेद्र
वंतोयेयथास्थानंविभागशः ॥ क्षितिमंभसितत्तेजस्यदोवायुंनभस्यमुं ॥ १६ ॥ इंद्रियेषुमनस्तानितन्मा
त्रेषुयथोद्भवं ॥ भूतादिनाऽमून्युत्क्षिप्यमहत्यात्मनिसंदधे ॥ १७ ॥ तंसर्वगुणविन्यासंजीवेमायामयेन्य
धात् ॥ तंचानुशयमात्मस्थमसावनुशयीपुमान् ॥ ज्ञानवैराग्यवीर्येणस्वरूपस्थोऽजहात्प्रभुः ॥ १८ ॥**

च इंद्रियैर्विषयाकृष्टैराक्षिप्तंध्यायतांमनइति इंद्रियेषुनभइतिपाठेऽप्ययमर्थः भट्टादीनांमतेनभश्चाक्षुषं केषांचिन्मानसं आनुमानिकत्वम
तेऽपींद्रियव्यापारोऽस्त्येव नभोगुणश्चशब्दःश्रोत्रग्राह्योऽतइंद्रियग्राह्यत्वादिंद्रियेषुनभोविलापितमितितानींद्रियाणि यथोद्भवमुद्भवोऽत्रवृ
त्तिलाभः सचविषयाधीनइतिश्रोत्रादीनांविषयेषुशब्दादिषुलयः यद्वा तन्मात्रकार्याण्येवेंद्रियाणिमनोऽप्यपंचीकृततन्मात्रकार्यं अहंका
रिकत्वाभिधानंतदधीनविवक्षयाइत्यविरोधः भूतादिनाऽहंकारेणप्रागवशिष्टनभःसहितानींद्रियाण्युत्कृष्यपरतोनीत्वाभूतादौक्षिप्त्वातेनस
हमहत्तत्वेसंदधइत्यर्थः ॥ १७ ॥ सर्वेषांगुणानांकार्याणांविन्यासःस्थितिर्यस्मिंस्तंमहांतं मायामयेमायोपाधिप्रधानेजीवे तंचानुशयमु
पाधिं यःपूर्वमनुशयीपुमान्जीवोऽसौपृथुर्ब्रह्मणिस्थितःसन्नजहादित्यर्थः ॥ १८ ॥ ॥ ॥

वनप्रवेशमारभ्यराज्ञःकथामाह अर्चिर्नामेतिचतुर्भिः अनुगताऽनुजगाम अतदर्हातदापिनार्हंतिया किंपद्भ्यांभुवःस्पर्शनमितियत् ॥ १९ ॥
भर्तुर्व्रतंयद्भूमिशयनादितस्मिन्धर्मेयानिष्ठातया ऋषीणामियमार्षीदेहयात्राकंदमूलादिवृत्तिस्तयाच।र्तिंदुःखंनप्राप तत्रहेतुः प्रेयसःकरेण
स्पर्शनंमानश्चताभ्यांनिर्वृतिर्यस्याः ॥ २० ॥ पृथिव्याःपत्युर्दुहितृत्वंतुतस्यादेवतारूपेण विपन्नंनष्टमखिलंचेतनादिकंयस्मिंस्तथाभूतंदे

अर्चिर्नाममहाराज्ञीतत्पत्न्यनुगतावनं ॥ सुकुमार्यतदर्हाचयत्पद्भ्यांस्पर्शनंभुवः ॥१९॥अतीवभर्तुर्व्रतधर्मनिष्ठयाशुश्रूषयाचारषदेहयात्रया॥ नाविंदतार्तिंपरिकर्शिताऽपिसाप्रेयस्करस्पर्शनमाननिर्वृतिः ॥ २० ॥
देहंविपन्नाखिलचेतनादिकंपत्युःपृथिव्यादयितस्यचात्मनः ॥ आलक्ष्यकिंचिच्चविलप्यसासतीचितामथारोपयदद्रिसानुनि ॥२१॥ विधायकृत्यंन्हदिनीजलाप्लुतादत्त्वोदकंभर्तुरुदारकर्मणः ॥ नत्वादिविस्थांस्त्रिदशांस्त्रिःपरीत्यविवेशवन्हिंध्यायतीभर्तृपादौ ॥२२॥ विलोक्यानुगतांसाध्वींपृथुंवीरवरंपतिं ॥ तुष्टुवुर्वरदादेवैर्देवपत्न्यःसहस्रशः ॥ २३ ॥ कुर्वंत्यःकुसुमासारंतस्मिन्मंदरसानुनि ॥ नदत्स्वमरतूर्येषुगृणंतिस्मपरस्परं ॥२४॥ देव्यऊचुः अहोइयंवधूर्धन्यायाचैवंभूभुजांपतिं ॥ सर्वात्मनापतिंभेजेयज्ञेशंश्रीर्विधूरिव ॥ २५ ॥ सैषानूनंव्रजत्यूर्ध्वमनुवैन्यंपतिंसती ॥ पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येनकर्मणा ॥ २६ ॥
तेषांदुरापंकिंत्वन्यन्मर्त्यानांभगवत्पदं ॥ भुविलोलायुषोयेवैनैष्कर्म्यंसाधयंत्युत ॥ २७ ॥ सवंचितोबतात्मध्रुक्कृच्छ्रेणमहताभुवि ॥ लब्ध्वापवर्ग्यंमानुष्यंविषयेषुविषज्जते ॥ २८ ॥ मैत्रेयउवाच स्तुवंतीष्वमरस्त्रीषुपतिलोकंगतावधूः ॥ यंवाआत्मविदांधुर्योवैन्यःप्रापाच्युताशयः ॥ २९ ॥

हमालक्ष्यतंदेहंचितामारोपयत् ॥ २१ ॥ कृत्यंतत्कालोचितंविधायन्हदिन्याजलेआप्लुतास्नातासतीभर्तुरुदकंदत्वादिव्यंतरिक्षेस्थितान्न
त्वावन्हिंप्रदक्षिणीकृत्य ॥ २२ देवैःसहिताः ॥ २३ ॥ गृणंतिस्मअभाषंत ॥ २४ ॥ २५ ॥ २६ ॥ भगवान्पद्यतेगम्यतेऽनेनेतितथा
तन्नैष्कर्म्यंज्ञानं येचंचलायुषोपिसाधयंतितेषामन्यद्देवादिपदंकिमुदुर्लभं नकिंचिदित्यर्थः ॥ २७ ॥ अभक्तंशोचंति सवंचितइति यत
आत्मनेद्रुह्यति योऽपवर्गसाधनंमानुष्यंलब्ध्वाऽपिविषयेष्वासक्तिंयाति ॥ २८ ॥ २९ ॥ ॥ ॥ ॥

॥ ३० ॥ ३१ ॥ बिशांपश्वादीनांवैश्यादीनांवापतिःस्यात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ यद्यपिबहूनिफलानिभवंतितथा ऽपिमुक्तान्यसंगएवश्रवणादिकुर्यात् ॥ ३७ ॥ महतोभगवतोमाहात्म्यस्यसूचकं पार्थवींपृथुसंबंधिनीं पार्थिवीमितिवापाठः ॥ ३८ ॥ प्रथयन्कीर्तयन् भवसिंधौपोतःपादोयस्य ॥ ३९ ॥ इतिचतुर्थेटीकायांत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ ॥ एकादशभिरध्यायैःपृ



इत्थंभूतानुभावोसौपृथुःपृथुपराक्रमः ॥ कीर्तितंतस्यचरितमुद्दामचरितस्यते ॥ ३० ॥ यइदंसुमहत्पुण्यंश्रद्ध याऽवहितःपठेत् ॥ श्रावयेच्छृणुयाद्वापिसपृथोःपदवीमियात् ॥ ३१ ॥ ब्राह्मणोब्रह्मवर्चस्वीराजन्योजगतीप तिः ॥ वैश्यःपठन्विट्पतिःस्याच्छूद्रःसत्तमतामियात् ॥ ३२ ॥ त्रिःकृत्वइदमाकर्ण्यनरोनार्यथवादृता ॥ अप्र जःसुप्रजतमोनिर्धनोधनवत्तमः ॥ ३३ ॥ अस्पष्टकीर्तिःसुयशामूर्खोभवतिपंडितः ॥ इदंस्वस्त्ययनंपुंसाममं गल्यनिवारणं ॥ ३४ ॥ धन्यंयशस्यमायुष्यंस्वर्ग्यंकलिमलापहं ॥ धर्मार्थकाममोक्षाणांसम्यक्सिद्धिमभी प्सुभिः ॥ ३५ ॥ श्रद्धयैतदनुश्राव्यंचतुर्णांकारणंपरं ॥ विजयाभिमुखोराजाश्रुत्वैतदनुयातियान् ॥ बलिंत स्मैहरंत्यग्रेराजानःपृथवेयथा ॥ ३६ ॥ मुक्तान्यसंगोभगवत्यमलांभक्तिमुद्वहन् ॥ वैन्यस्यचरितंपुण्यंशृणुया च्छ्रावयेत्पठेत् ॥ ३७ ॥ वैचित्रवीर्याभिहितंमहन्माहात्म्यसूचकं ॥ अस्मिन्कृतमतिर्मर्त्यःपार्थवींगतिमाप्नु यात् ॥ ३८ ॥ अनुदिनमिदमादरेणशृण्वन्पृथुचरितंप्रथयन्विमुक्तसंगः ॥ भगवतिभवसिंधुपोतपादेसच निपुणांलभतेगतिंमनुष्यः ॥ ३९ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥

मैत्रेयउवाच विजिताश्वोऽधिराजासीत्पृथुपुत्रःपृथुश्रवाः ॥ यवीयेभ्योऽददात्काष्ठाभ्रातृभ्योभ्रातृवत्स लः ॥ १ ॥ हर्यक्षायादिशत्प्राचींधूम्रकेशायदक्षिणां ॥ प्रतीचींवृकसंज्ञायतुर्यांद्रविणसेविभुः ॥ २ ॥



थोश्चरितमीरितं ॥ प्रचेतसामथाष्टाभिस्तन्मध्येपंचभिःपितुः ॥ १ ॥ चतुर्विंशेप्रपौत्रात्तुपृथोःप्राचीनबर्हिषः ॥ प्रचेतसांपुनस्तेभ्योरुद्रगी तंचवर्ण्यते ॥ २ ॥ अधिराजआसीदित्यर्थः यवीयेभ्यःकनिष्ठेभ्यः काष्ठादिशः ॥ १ ॥ तुर्यांचतुर्थीं ॥ २ ॥

शक्राल्लब्ध्वावरमंतर्धानसंज्ञितोबभूव पृथोरश्वमेधेऽश्वविजयावसरे ॥ ३ ॥ अपत्यत्रयमेवाह पावकइति पुरायःशापस्तस्मान्मनुष्येषुउ त्पन्नाःसंतः योगगतिमग्नित्वंप्राप्ताः ॥ ४ ॥ नभस्वत्यामन्यस्यांभार्यायां अंतर्धानस्यविशेषणं यइति एतेनशक्रादंतर्धानगतिलाभेका रणमुक्तं ॥ ५ ॥ सचांतर्धानोराज्ञांवृत्तिंकरादानादिभिर्दारुणांपरपीडात्मिकांमन्यमानोविससर्जह ॥ ६ ॥ हंतिस्त्रानांक्लेशामितिहंसस्तंपु रुषंपूर्णं कुशलंपुण्यंतद्रूपेणसमाधिना ॥ ७ ॥ ८ ॥ हाविर्धानिर्हविर्धानस्यपुत्रःयोगेषुचप्राणायामादिषु ॥ ९ ॥ क्रियाकांडनिष्णातत्व

अंतर्धानगतिंशक्राल्लब्ध्वांऽतर्धानसंज्ञितः ॥ अपत्यत्रयमाधत्तशिखंडिन्यांसुसंमतं ॥ ३ ॥ पावकःपवमान श्चशुचिरित्यग्नयःपुरा ॥ वसिष्ठशापादुत्पन्नाःपुनर्योगगतिंगताः ॥ ४ ॥ अंतर्धानोनभस्वत्यांहविर्धानमविं दत ॥ यइंद्रमश्वहर्तारंविद्वानपिनजघ्निवान् ॥ ५ ॥ राज्ञांवृत्तिंकरादानदंडशुल्कादिदारुणां ॥ मन्यमानोदीं र्घसत्रव्याजेनविससर्जह ॥ ६ ॥ तत्रापिहंसंपुरुषंपरमात्मानमात्मदृक् ॥ यजंस्तल्लोकतामापकुशलेनसमा धिना ॥ ७ । हविर्धानाद्धविर्धानीविदुरासूतषट्सुतान् ॥ बर्हिषदंगयंशुक्लंकृष्णंसत्यंजितव्रतं ॥ ८ ॥ बर्हिष त्सुमहाभागोहाविर्धानिःप्रजापतिः ॥ क्रियाकांडेषुनिष्णातोयोगेषुचकुरूद्वह ॥ ९ ॥ यस्येदंदेवयजनमनुय ज्ञंवितन्वतः ॥ प्राचीनाग्रैःकुशैरासीदास्तृतंवसुधातलं ॥ १० ॥ सामुद्रींदेवदेवोक्तामुपयेमेशतद्रुतिं ॥ यांवी क्ष्यचारुसर्वांगींकिशोरींसुष्ठ्वलंकृतां ॥ परिक्रमंतीमुद्वाहेचकमेऽग्निःशुकीमिव ॥ ११ ॥ विबुधासुरगंधर्वमुनि सिद्धनरोरगाः ॥ विजिताःसूर्ययादिक्षुक्कणयंत्यैवनूपुरैः ॥ १२ ॥ ॥ ॥ ॥

माह यस्येति इदंवसुधातलंदेवयजनंयज्ञवाटं वितन्वतःयत्रैकोयज्ञःकृतस्तत्समीपएवयज्ञांतरंकुर्वतःसतः अतएवप्राचीनबर्हिरित्युच्यते ॥ १० ॥ समुद्रस्यकन्यां देवदेवेनब्रह्मणोपदिष्टांशतद्रुतिंनामकिशोरींबालांपरिक्रमंतींप्रदक्षिणंगच्छंतींशुकीमिवेति एवंव्याख्यायते सप्त र्षीणांसत्रेतद्भार्यादर्शनेनाग्निःकामसंतप्तोभूत् तंचतद्भार्यास्वाहानामसप्तर्षिभार्यारूपधारिणिसितंरमयामास रमयित्वाचतद्रेतःशुकीरूपेण शरस्तंबेनिधायागच्छत् तांयथासप्तर्षिभार्याभ्रांत्याऽग्निःकामितवान्तद्वदिति स्तुकीमिवेतिपाठे स्तोकधृतधारामिवेत्यर्थः ॥ ११ ॥ सूर्य यानवोढयैवविबुधादयोविजिताअभिभूतास्तत्रनूपुरैःपादौक्कणयंत्यैव तद्ध्वनिमात्रेणेत्यर्थः ॥ १२ ॥ ॥

तुल्यंनामव्रतमाचारश्चयेषां धर्मस्नाताःधर्मपारगाः ॥ १३ ॥ तपसातपसांपतिंहरिमर्चन् अर्चयामासुः ॥ १४ ॥१५ ॥ १६ ॥ मुनयोऽपिसंगत्यागेनाप्तुमिष्टंयंदध्युरेत्रकेवलंनतुप्रापुः तेनशिवेन ॥ १७ ॥ ननुमुनीनांकिंतद्ध्यानेनघोरत्वादित्याशंक्याह आत्मारामोऽपिलोकरचनायाःपालनाय ॥ १८ ॥ गुर्वाज्ञाकारिणांशिवदर्शनंस्वतएवभवतीत्याशयेनाह प्रचेतसइति ॥ १९ ॥ समुद्रमुपसमुद्रात्किंचिन्न्यूनंउपपोधिके चेतिकर्मप्रवचनीयः प्रसन्नाःसलिलाशयाःमत्स्यादयोयस्मिन् ॥ २० ॥ नीलोत्पलादीनामाकरंजन्मस्थानं उत्पलांभोजक-

प्राचीनबर्हिषःपुत्राःशतद्रुत्यांदशाभवन् ॥ तुल्यनामव्रताःसर्वेधर्मस्नाताःप्रचेतसः ॥ १३ ॥ पित्रादिष्टाः प्रजासर्गेतपसेऽर्णवमाविशन् ॥ दशवर्षसहस्राणितपसार्चंस्तपस्पतिं ॥ १४ ॥ यदुक्तंपथिदृष्टेनगिरिशेनप्रसीदता ॥ तद्ध्यायंतोजपंतश्चपूजयंतश्चसंयताः ॥ १५ ॥ विदुरउवाच प्रचेतसांगिरित्रेणयथासीत्पथिसंगमः ॥ यदुताहहरःप्रीतस्तन्नोब्रह्मन्वदार्थवत् ॥ १६ ॥ संगमःखलुविप्रर्षेशिवेनेहशरीरिणां ॥ दुर्लभोमुनयोदध्युरसंगाद्यमभीप्सितं ॥ १७ ॥ आत्मारामोऽपियस्त्वस्यलोककल्पस्यराधसे ॥ शक्त्यायुक्तोविचरतिघोरयाभगवान्भवः ॥ १८ ॥ मैत्रेयउवाच प्रचेतसःपितुर्वाक्यंशिरसादायसाधवः ॥ दिशंप्रतीचींप्रययुस्तपस्यादृतचेतसः ॥ १९ ॥ समुद्रमुपविस्तीर्णमपश्यन्सुमहत्सरः ॥ महन्मनइवस्वच्छंप्रसन्नसलिलाशयं ॥ २० ॥ नीलरक्तोत्पलांभोजकल्हारेंदीवराकरं ॥ हंससारसचक्राह्वकारंडवनिकूजितं ॥ २१ ॥ मत्तभ्रमरसौस्वर्यहृष्टरोमलताऽंघ्रिपं ॥ पद्मकोशरजोदिक्षुविक्षिपत्पवनोत्सवं ॥ २२ ॥ तत्रगांधर्वमाकर्ण्य दिव्यमार्गमनोहरं ॥ विसिस्म्यूराजपुत्रास्तेमृदंगपणवाद्यनु ॥ २३ ॥ ॥ ॥

ल्हाराणिरात्रिदिनसंध्याविकासीनि इंदीवरंनीलोत्पलंतस्यपुनरुक्तिः प्राचुर्यज्ञापनार्थं हंसादिभिर्निकूजितं ॥ २१ ॥ मत्तानांभ्रमराणांसौस्वर्येणहृष्टरोमाणोलतांऽघ्रिपायस्मिन् पद्मकोशरजोदिक्षुविक्षिपतापवनेनोत्सवोस्मिन् ॥ २२ ॥ तत्रमृदंगपणवादिवाद्यमनुपश्चाद्दिव्यैर्मार्गभेदैर्मनोहरं गांधर्वगानमाकर्ण्यविस्मयंप्राप्ताःपाठांतरे मृदंगपणवादिअत्रतूरक्षत् तेषांध्वनिमतिरस्कुर्वन्नित्यर्थः ॥ २३ ॥ ॥

तेचत्रिलोचनंवीक्ष्यजाताश्चर्याः प्रणेमुरित्युत्तरेणान्वयः ॥ २४ ॥ तप्तहेमराशिसदृशकांतिं शितिर्नीलःकंठोयस्यतं ॥ २५॥ २६ ॥ वेदि षदोबर्हिषदाश्चिकीर्षितंभगवदाराधनंविदितं ॥ २७ ॥ अनुग्रहकारणमाह यःसाक्षाद्वासुदेवंप्रपन्नःसहिमेप्रियः कथंभूतं रंहसःसूक्ष्मात्त्रि गुणात्प्रधानात् जीवसंज्ञितात्पुरुषाच्चपरं प्रकृतिपुरुषयोर्नियंतारामित्यर्थः ॥ २८ ॥ तत्किंतस्यमहत्तमत्वादित्याह स्वधर्मनिष्ठःपुमान्बहुभिर्ज न्मभिर्विरिंचतांप्राप्नोतिततोऽपिपुण्यातिशयेनमामेति भागवतस्तु अथदेहांतेअव्याकृतंप्रपंचातीतंवैष्णवंपदमेति यथाऽहंरुद्रोभूत्वाऽधिका

तर्ह्येवसरसस्तस्मान्निष्क्रामंतंसहानुगं॥ उपगीयमानममरप्रवरांविबुधानुगैः॥२४॥तप्तहेमनिकायाभंशि तिकंठंत्रिलोचनं ॥ प्रसादसुमुखंवीक्ष्यप्रणेमुर्जातकौतुकाः ॥ २५ ॥ सतान्प्रपन्नार्तिहरोभगवान्धर्म वत्सलः ॥ धर्मज्ञान्शीलसंपन्नान्प्रीतःप्रीतानुवाचह ॥ २६ श्रीरुद्रउवाच यूयंवेदिषदःपुत्राविदितंव श्चिकीर्षितं ॥ अनुग्रहायभद्रंवएवंमेदर्शनंकृतं ॥ २७ ॥ यःपरंरंहसःसाक्षात्त्रिगुणाज्जीवसंज्ञितात् ॥ भगवंतंवासुदेवंप्रपन्नःसप्रियोहिमे ॥ २८ ॥ स्वधर्मनिष्ठःशतजन्मभिःपुमान्विरिंचतामेतिततःपरंहिमां ॥ अव्याकृतंभागवतोऽथवैष्णवंपदंयथाऽहंविबुधाःकलाऽत्यये ॥ २९॥ अथभागवतायूयंप्रियास्थभग वान्यथा ॥ नमेभागवतानांचप्रेयानन्योऽस्तिकर्हिचित् ॥३०॥ इदंविविक्तंजप्तव्यंपवित्रंमंगलंपरं ॥ नि श्रेयसकरंचापिश्रूयतांतद्वदामिवः ॥ ३१ ॥ मैत्रेयउवाच इत्यनुक्रोशहृदयोभगवानाहतान्शिवः ॥ ब द्धांजलीन्राजपुत्रान्नारायणपरोवचः ॥ ३२ ॥ श्रीरुद्रउवाच जितंतेआत्मविद्धुर्यस्वस्तयेस्वस्तिरस्तुमे॥ भवताराधसाराद्धंसर्वस्माआत्मनेनमः ॥ ३३ ॥ ॥ ॥ ॥

रिकवद्वर्तमानः विबुधादेवाश्चाधिकारिकाः कलात्ययेअधिकारांतेलिंगभंगेसत्येष्यंति ॥ २९ ॥ अथभागवतत्वाद्यूयंमेप्रियाःस्थ भवद्भिर पिमयिप्रीतिःकार्येत्याशयेनाह मेमदन्योभागवतानांचप्रेयान्नास्ति ॥ ३०॥ अतइदंजप्तव्यंश्रूयतामिति विविक्तमसंकीर्णंयथाभवति ॥३१॥ सृष्ट्यादौब्रह्मणासृष्टापुत्रेभ्यःप्रोक्तमिष्टदं ॥ स्तोत्रंप्राहप्रचेतोभ्यःकृपयाभगवान्शिवः ॥ ३२ ॥ तेजितंतवोत्कर्षः आत्मविद्धुर्याणांस्व स्तयेशोभनसत्तायैस्वानंदलाभायेत्यर्थः अतोमेस्वस्तिःस्वानंदसत्ताऽस्तु ननुममोत्कर्षोमदर्थएवकिंनस्यात्तत्राह भवताराधसास्वानंदरूपे णराद्धंसिद्धं त्वंपरमानंदरूपेणैवनित्यंस्थितइत्यर्थः अतएवंभूतायात्मनेतुभ्यंनमः सर्वस्मैसर्वरूपायच ॥ ३३ ॥ ॥

सर्वरूपत्वंप्रपंचयन्प्रणमतिसार्धैर्दशभिः पंकजंलोकात्मकंनाभौयस्यतस्मैकारणात्मनेनमः कारणत्वादेवसृज्यानांप्राणिनांयेउपाधयोभूतानिसूक्ष्माणितन्मात्राणींद्रियाणि चतेषामात्मनेनियंत्रे अंतःकरण चतुष्टयाधिष्टातृत्वेनप्रणमति चतुर्भिःश्लोकार्धैः वासुदेवायचित्ताधिष्ठात्रे कूटस्थायनिर्विकारायचित्तस्यैकरूपत्वात् ॥ ३४ ॥ संकर्षणायाहंकाराधिष्ठात्रे सूक्ष्मायाव्यक्तायदुरंतायानंतायांतकायमुखाग्निनालोकदाहकाय विश्वस्यप्रकृष्टोबोधोयस्मात् अंतरात्मनेबुध्यधिष्ठात्रे ॥ ३५ ॥ हृषीकाणामीशांयदिंद्रियंमनस्तदात्मने सूर्यरूपेणप्रणमति परमहंसायसूर्याय पूर्णायतेजसाविश्वव्यापिने निभृतात्मनेक्षयवृद्धिशून्याय ॥ ३६ ॥ स्वर्गापवर्गद्वारायच शुचिन्यंतःकरणेनिषीदतीतिशुचिष

**नमःपंकजनाभायभूतसूक्ष्मेंद्रियात्मने ॥ वासुदेवायशांतायकूटस्थायस्वरोचिषे ॥ ३४ ॥ संकर्षणायसूक्ष्मायदुरंतायांतकायच ॥ नमोविश्वप्रबोधायप्रद्युम्नायांतरात्मने ॥ ३५ ॥ नमोनमोऽनिरुद्धायहृषीकेशेंद्रियात्मने ॥ नमःपरमहंसायपूर्णायनिभृतात्मने ॥ ३६ ॥ स्वर्गापवर्गद्वारायनित्यंशुचिषदेनमः ॥ नमोहिरण्यवीर्यायचातुर्होत्रायतंतवे ॥ ३७ ॥ नमऊर्जइषेत्रय्याःपतयेयज्ञरेतसे ॥ तृप्तिदायचजीवानांनमःसर्वरसात्मने ॥ ३८ ॥ सर्वसत्त्वात्मदेहायविशेषायस्थवीयसे ॥ नमस्त्रैलोक्यपालायसहओजोबलात्मने ॥ ३९ ॥ अर्थलिंगायनभसेनमोंऽतर्बहिरात्मने ॥ नमःपुण्यायलोकायअमुष्मैभूरिवर्चसे ॥ ४० ॥ प्रवृत्तायनिवृत्तायपितृदेवायकर्मणे ॥ नमोधर्मविपाकायमृत्यवेदुःखदायच ॥ ४१ ॥ ॥ ॥**

त्तस्मै हंसःशुचिषदितिश्रुतेः हिरण्यंवीर्यंयस्यतस्मैअग्निरूपाय चातुर्होत्रंकर्मतस्मैतत्साधनायेत्यर्थः कुतस्तंतवे तद्विस्तारकाय ॥ ३७ ॥ सोमत्वमाह ऊर्जेपितॄणामन्नाय इषेदेवानामन्नाय यज्ञरेतसेसोमाय सहिपितॄणांदेवानांचान्नं एवंरूपायत्रय्याःपतयेहरयेनमः सूर्याग्निसोमत्वेनैवतेजस्त्वमुक्तं जलत्वमाह सर्वरसात्मनेजलरूपाय ॥ ३८ ॥ विशेषायपृथ्वीरूपाय सर्वेषांसत्त्वानांप्राणिनांयेआत्मानस्तेषांदेहाय स्थवीयसेविराड्देहायच त्रैलोक्यपालायवायवे सहआदिरूपाय सहिप्राणरूपेणत्रैलोक्यंपालयति सहआदिधर्मायच ॥ ३९ ॥ नभसे आकाशायार्थानांलिंगायज्ञापकायशब्दगुणत्वात् अंतर्बहिरात्मनेऽंतर्बहिर्व्यवहारालंबनाय एवंमहाभूतरूपत्वमुक्तं अमुष्मैस्वर्गायभूरिवर्चसे एषवैज्योतिष्मंतंपुण्यलोकंयातीतिश्रुतेः ॥ ४० ॥ प्रवृत्तायचनिवृत्तायचकर्मणेपितृदेवाय यथाक्रमंपितृदेवप्राप्तिफलायाधर्मफलरूपायचमृत्यवे ॥ ४१ ॥

हेईशआशिषांकारणात्मनेसर्वकर्मफलदात्रे मनवेसर्वज्ञायमंत्रात्मकायेतिवा विष्णुत्वेनप्रणमति बृहतेधर्मायपरधर्मात्मनेकृष्णाय ॥ ४२ ॥
रुद्ररूपेणप्रणमति मीढुषेरुद्राय अहंकृतमहंकारस्तदात्मने सचकर्तृकरणकर्मशक्तित्रयसमेतस्तस्मै ब्रह्मत्वेनप्रणमति चेतोज्ञानमाकूतिः
क्रियातद्रूपाय वाचांविविधाविभूतिःसृष्टिर्यस्मात्तस्मै ॥ ४३ ॥ एवंनमस्कृत्यदर्शनंप्रार्थयतेदर्शनमितिनवभिः भागवतैःसत्कृतंदर्शनंदे
हीत्यस्यविवरणंरूपामित्यादिप्रदर्शयेत्यंतं स्वानांभक्तानांप्रियतमंरूपंप्रदर्शयेतिनवमेनान्वयः सर्वेषामिंद्रियाणांयेगुणाविषयास्तेषामंजनं
व्यंजकंसर्वेंद्रियविषयविषयिरूपमित्यर्थः सर्वेंद्रियाणिस्वगुणैरनक्तिरंजयतीतिवा ॥ ४४ ॥ स्निग्धःप्रावृषियोघनस्तद्वत्श्यामं सर्वेषांसौंद

नमस्तेआशिषामीशमनवेकारणात्मने ॥ नमोधर्मायबृहतेकृष्णायाकुंठमेधसे ॥ पुरुषायपुराणायसांख्य
योगेश्वरायच ॥४२॥ शक्तित्रयसमेतायमीढुषेऽहंकृतात्मने॥चेतआकूतिरूपायनमोवाचोविभूतये ॥४३॥
दर्शनंनोदिदृक्षूणांदेहिभागवतार्चितं ॥ रूपंप्रियतमंस्वानांसर्वेंद्रियगुणांजनं ॥४४॥ स्निग्धप्रावृट्घनश्या
मंसर्वसौंदर्यसंग्रहं ॥ चार्वायतचतुर्बाहुंसुजातरुचिराननं ॥ ४५ ॥ पद्मकोशपलाशाक्षंसुंदरभ्रुवनासिकं ॥
सुद्विजंसुकपोलास्यंसमकर्णविभूषणं ॥ ४६ ॥ प्रीतिप्रहसितापांगमलकैरुपशोभितं ॥ लसत्पंकजकिंजल्क
दुकूलंमृष्टकुंडलं ॥ ४७ ॥ स्फुरत्किरीटवलयहारनूपुरमेखलं॥शंखचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ॥
॥४८॥ सिंहस्कंधत्विषोबिभ्रत्सौभगग्रीवकौस्तुभं ॥ श्रियाऽनपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ॥४९॥

र्याणांसंग्रहोयस्मिन् चारवआयताश्चत्वारोबाहवोयस्मिन् सुजातंयथोचितंसर्वावयवरुचिरमाननंयस्मिन् ॥ ४५ ॥ पद्मस्यकोशेमध्येया
निपलाशानितद्वदक्षिणीयस्मिन् सुकपोलमास्यंयस्मिन् समौकर्णौविभूषणंयस्य कुंडलयोरग्रेवक्ष्यमाणत्वात् ॥ ४६ ॥ प्रीत्याप्रहसिता
विवापांगौयस्मिन् ॥ ४७ ॥ स्फुरंतिकिरीटादीनियस्मिन् शंखादिमदुत्तमर्द्धिर्लक्ष्मीः यद्वा एतैरुत्तमाऋद्धिरुत्कर्षोयस्यास्तितत् ॥ ४८ ॥
सौभगयुक्ताग्रीवायेन सिंहस्यस्कंधेपरितःकेसराएवत्विषस्तादृशीःसर्वतस्त्विषोबिभ्रच्चासौसौभगग्रीवःकौस्तुभोयस्मिन् यद्वा सिंहस्येवस्कं
धौतयोस्त्विषःकुंडलहारादिदीप्तीर्बिभ्रदितिपृथग्विशेषणंसौभगयुक्ताग्रीवायेनसकौस्तुभोयस्मिन् श्रियाहेतुभूतयाक्षिप्तस्तिरस्कृतेनिकषा
श्मोस्वर्णरेखांकितोनिकषणपाषाणोयेन तादृशेनोरसाउल्लसच्छोभमानं ॥ ४९ ॥ ॥

श्वासोच्छ्वासाभ्यांसंविग्नाश्चंचलावलयस्ताभिर्वल्गुसुंदरंदलवदश्वत्थपत्रसदृशमुदरंयस्मिन् प्रतिसंक्रामयत् यतोनिर्गतंतेनैवद्वारेणपुनःप्रवेशयदिव ॥ ५० ॥ श्यामश्रोण्याऽधिकंरोचिष्णुयत्पीतंदुकूलं तत्रस्वर्णमयीमेखलायस्मिन् अंघ्रीचजंघेचऊरूचनिम्नेअनुन्नतेजानुनीचसमैश्चारुभिरेतैःशोभनंदर्शनंयस्य समाश्चारवोंऽघ्र्यादयोयस्मिन् शोभनंदर्शनंयस्येतिपदत्रयंवा ॥ ५१ ॥ पदादीपरधानीयेन यद्वा एवंभूतेनपदोपलक्षितंरूपंपदंशरणंप्रदर्शयेत्यर्थः शरत्पद्मंतस्यपलाशंतद्वद्रोचिर्यस्यतेन नखद्युमिभिरंतर्भवमघमज्ञानंविधुन्वता स्वीयंरूपंपदंप्रदर्शय अपास्तंप्रन्ह्लादादीनांसाध्वसंयेनतत् हेगुरोयतस्त्वमेवतमोजुषामज्ञानामस्माकंमार्गप्रदर्शकोगुरुः ॥ ५२ ॥ अतिदुर्लभमिदंमयाप्रार्थितमितिस्तौतैवाह एतद्रूपमनुध्येयंध्यानार्हमेव नतुप्रत्यक्षतःप्राप्यमित्यर्थः ॥ ५३ ॥ तर्हिकिंकेनापिनप्राप्यतेतत्राह भवानिति

**पूररेचकसंविग्नवलिवल्गुदलोदरं॥प्रतिसंक्रामयद्विश्वंनाभ्यावर्तगभीरया॥५०॥श्यामश्रोण्याधिरोचिष्णु दुकूलस्वर्णमेखलं॥ समचार्वंघ्रिजंघोरुनिम्नजानुसुदर्शनं ॥५१॥ पदाशरत्पद्मपलाशरोचिषानखद्युभिर्नोऽतरघंविधुन्वता ॥ प्रदर्शयस्वीयमपास्तसाध्वसंपदंगुरोमार्गगुरुस्तमोजुषां॥५२॥ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सता ॥ यद्भक्तियोगोऽभयदःस्वधर्ममनुतिष्ठतां ॥ ५३ ॥ भवान्भक्तिमतालभ्योदुर्लभःसर्वदेहिनां॥ स्वाराज्यस्याप्यभिमतएकांतेनात्मविद्गतिः॥५४॥तंदुराराध्यमाराध्यसतामपिदुरापया॥एकांतभक्त्याकोवांछेत्पादमूलंविनाबहिः॥५५॥यत्रनिर्विष्टमरणंकृतांतोनाभिमन्यते ॥ विश्वंविध्वंसयन्वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५६ ॥ क्षणार्द्धेनापितुलयेनस्वर्गंनापुनर्भवं ॥ भगवत्संगिसंगस्यमर्त्यानांकिमुताशिषः ॥ ५७ ॥**

दुर्लभत्वमेवाह स्वर्गेराज्यंयस्य तस्याप्यभिमतःस्पृहणीयः किंच एकांतेनात्मवित्तस्यापिगतिर्गम्यः ॥ ५४ ॥ अतस्त्वद्व्यतिरेकेणनकिंचिद्वांछामीत्याह तंत्वामेकांतभक्त्याऽऽराध्य बहिःस्वर्गादिसुखं ॥ ५५ तत्रहेतुः यत्रपादमूलेशरणंप्रविष्टंकृतांतःकालोममायंवशइतिनाभिमानंकरोति किंकुर्वन् वीर्यंप्रभावः शौर्यमुत्साहः ताभ्यांविस्फूर्जितयाक्षुभितयाभ्रुवाविश्वंविध्वंसयन्नपि ॥ ५६ ॥ त्वत्पादमूलेप्रविष्टस्यकृतांतभयाभावःकियानयंलाभःयतस्त्वद्भक्तसंगएवसकलपुरुषार्थश्रेणिशिरसिनरीनर्तीत्याह भगवतस्तवसंगिनांसंगस्यक्षणार्द्धेनाऽपिस्वर्गंनतुलयेनगणयामि नचापुनर्भवंमोक्षं मर्त्यानामाशिषोराज्याद्याःकिमुत ॥ ५७ ॥ ॥ ॥

अथ अतोहेतोरनघावघहरावंघ्रीयस्यतस्यतवकीर्तिर्यशस्तीर्थंगंगा।तयोः क्रमेणांतर्बहिः स्नानाभ्यांविधूतः पाप्मायेषां अतएवभूतेष्वनुक्रोशः कृपा सुसत्वंचरागादिरहितंचित्तंशीलंचार्जवादिविद्यतेयेषांसंगमोऽस्माकंस्यात् एषएवनस्त्वदनुग्रहः ॥५७॥ तत्वज्ञानंचत्वद्भक्तसंगादेवभवतीत्याहनयस्येति येषांसतांभक्तियोगेनानुगृहीतंशुद्धंसद्यस्यचित्तंबाह्यार्थविक्षिप्तंनभवति तमोरूपायांगुहायांचनाविशत्लयंनप्राप तत्रतदामुनिस्त्वगतिंतत्वंनपश्यति ॥५९॥ कीदृशंतत्वंतदाह यत्रेति ॥६०॥ जगतउपादानत्वेनतत्त्वंलक्षितं निमित्तत्वेनापितदेवलक्षयन्नाह यइदंविश्वंसदिवपरमार्थमिवासृजत् कथंभूतया ययाभेदबुद्धिरन्येषांभवति तयाआत्मनित्वयि दुस्थयास्वकार्यकर्तुमसम

अथानघांघ्रेस्तवकीर्तितीर्थयोरंतर्बहिःस्नानविधूतपाप्मनां ॥ भूतेष्वनुक्रोशसुसत्वशीलिनांस्यात्संगमोऽनुग्रहएषनस्तव ॥ ५८ ॥ नयस्यचित्तंबहिरर्थविभ्रमंतमोगुहायांचविशुद्धमाविशत् ॥ यद्भक्तियोगानुगृहीतमंजसामुनिर्विचष्टेननुतत्रतेगतिं ॥ ५९ ॥ यत्रेदंव्यज्यतेविश्वंविश्वस्मिन्नवभातियत् ॥ तत्त्वंब्रह्मपरंज्योतिराकाशमिवविस्तृतं ॥ ६० ॥ योमाययेदंपुरुरूपयाऽसृजद्बिभर्तिभूयःक्षपयत्यविक्रियः ॥ यद्भेदबुद्धिःसदिवात्मदुस्थयातमात्मतंत्रंभगवन्प्रतीमहि ॥६१॥ क्रियाकलापैरिदमेवयोगिनःश्रद्धान्विताःसाधुयजंतिसिद्धये ॥ भूतेंद्रियांतःकरणोपलक्षितंवेदेचतंत्रेचतएवकोविदाः ॥ ६२॥ त्वमेकआद्यःपुरुषःसुप्तशक्तिस्तयारजःसत्त्वतमोविभिद्यते ॥ महानहंखंमरुदग्निवार्धराःसुरर्षयोभूतगणाइदंयतः ॥ ६३ ॥ ॥

र्थया तंत्वांनिरस्तभेदंप्रतीमहिजानीमः ॥ ६१ ॥ यद्यपित्वमेवनिर्भेदंब्रह्मतथापिप्राशुक्तंसाकारंतवरूपंयद्इदंयजंतितत्ववेदागमतत्त्वज्ञाइत्याह क्रियाकलापैर्यैकर्मयोगिनःपूजयंतितएवकोविदाः नत्वेतदनादृत्यकेवलज्ञानेप्रवृत्ताःतंत्रेआगमे कथंभूतमिदं भूतेंद्रियांतःकरणैरस्वतत्रैर्यदुपलक्ष्यतेनियंतृरूपंतत् ॥ ६२ ॥ नन्वभिन्नेमयिभेदंकुर्वंतःसंतःकथंतेकोविदाःनहितैर्भेदःक्रियतेत्वयैवक्रीडार्थंचेतनात्मकोभेदःकृतइत्याह त्वमितिआद्यस्त्वमेकएव सुप्तामायाख्याशक्तिर्यस्य पश्चात्तयाशक्त्यारजःसत्त्वतमसांद्वैक्यं यतोरजआदेर्महानहंकारः खंचमरुदग्निर्वार्धराश्च वारुदकं सुराश्चर्षयश्चभूतगणाश्चैवमिदंजगद्यतोभवतितद्विभिद्यतइत्यन्वयः ॥ ६३ ॥

एतदुपपादयति जरायुजांडजस्वेदजोद्भिज्जरूपेणचतुर्विधंस्वांशेनप्रविष्टः अथोइतिहेतोः पुरस्यांतःसंतमंशंचिदाभासं पुरिशयनात्पुरुषं
विदुः तर्हिकिमीश्वरमेवसंसारिणंविदुः नेत्याह सरघामधुमक्षिकास्ताभिःसृष्टंमध्विव क्षुद्रकंविषयसुखमविद्यावृतःसन्योभुंक्तेतंजीवंविदुःत
थाचश्रुतिः तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति निर्णीतंचगुहांप्रविष्टावात्मानौहितद्दर्शनादित्यत्र ॥६४॥ तवतुसर्वनियं
तुःकुतःसंसारइत्याह यःस्वशक्त्येदंसृष्टवान् सएषत्वंखलुभूतैरेवभूतानि मेघपंक्तीर्वायुरिवकालयन्विचालयन्लोकान्विचकर्षसि संहर
सिअनुमेयतत्त्वोऽलक्ष्यस्वरूपः ॥ ६५ ॥ विकर्षणप्रकारमाह प्रमत्तमिति इतिकृत्यमेवमेवेदंकर्तव्यमितितिचिंतयोच्चैःप्रमत्तं तत्रहेतुः विषये

सृष्टंस्वशक्त्येदमनुप्रविष्टश्चतुर्विधंपुरमात्मांशकेन ॥ अथोविदुस्तंपुरुषंसंतमंतर्भुंक्तेहृषीकैर्मधुसारघंयः ॥
॥ ६४ ॥ सएषलोकानतिचंडवेगोविकर्षसित्वंखलुकालयानः ॥ भूतानिभूतैरनुमेयतत्त्वोघनावलीर्वायुरि
वाऽविषह्यः ॥ ६५ ॥ प्रमत्तमुच्चैरितिकृत्यचिंतयाप्रवृद्धलोभंविषयेषुलालसं॥त्वमप्रमत्तःसहसाऽभिपद्यसे
क्षुल्लेलिहानोऽहिरिवाखुमंतकः ॥ ६६ ॥ कस्त्वत्पदाब्जंविजहातिपंडितोयस्तेऽवमानव्ययमानकेतनः ॥
विशंकयाऽस्मद्गुरुरर्चतिस्मयद्विनोपपत्तिंमनवश्चतुर्दश ॥६७॥ अथत्वमसिनोब्रह्मन्परमात्मन्विपश्चितां॥
विश्वंरुद्रभयध्वस्तमकुतश्चिद्भयागतिः ॥ ६८ ॥ इदंजपतभद्रंवोविशुद्धान्नृपनंदनाः ॥ स्वधर्ममनुतिष्ठंतो
भगवत्यर्पिताशयाः ॥६९॥ तमेवात्मानमात्मस्थंसर्वभूतेष्ववस्थितं ॥ पूजयध्वंगृणंतश्चध्यायंतश्चासकृ
कृद्धरिं ॥७०॥ योगादेशमुपासाद्यधारयंतोमुनिव्रताः ॥ समाहितधियःसर्वएतदभ्यसतादृताः॥ ७१॥
इदमाहपुराऽस्माकंभगवान्विश्वसृक्पतिः ॥ भृग्वादीनामात्मजानांसिसृक्षुःसांसिसृक्षतां ॥ ७२ ॥ ॥

षुलालसमतिकामुकं प्राप्तेऽपिविषयेप्रवृद्धलोभं अंतकस्त्वमभिपद्यसेआक्रमसि क्षुधालेलिहानोजिह्वयौष्ठप्रांतौस्पृशन्सर्पोमूषकमिव ॥
॥ ६६ ॥ अतःकस्तवपदाब्जंत्यजेत्पंडितश्चेत् कथंभूतः यस्तवावमानोऽनादरस्तेनव्ययमानंशरीरंयस्यसः यदस्माकंगुरुर्ब्रह्माऽर्चतिस्म
सर्वेषांस्तोतॄणांवाक्यंचविशंकयानाशशंकयाविनोपपत्तिमिति दृढविश्वासेनमनवश्चतुर्दशार्चंतिस्म ॥ ५६ ॥ उपसंहरति अथेति रुद्रभ
येनध्वस्तं अतोनकुतश्चिद्भयंयस्यांतादृशीगतिरसि ॥ ६८ ॥ ६९ ॥ ७० ॥ योगादेशंनामैतत्स्तोत्रमुपासाद्यपाठतःप्राप्य मनसाधारयं
तोऽभ्यासेनजपत ॥ ७१ ॥ विश्वसृजांपतिर्ब्रह्मा ॥ ७२ ॥ ॥ ॥ ॥

सिसृक्ष्मःसृष्टवंतः ॥ ७३ ॥ युक्तएकाग्रचित्तः ॥ ७४ ॥ ज्ञानमेवनौर्यस्य ॥ ७५ ॥ योऽधीयानोभवति ॥ ७६ ॥ असावमुष्माद्धरेः असत्वरन्स्थिरःसन् मद्गीतंस्तोत्रंतेनगीतात् एकएववल्लभःप्रियआश्रयस्तस्मात् ॥ ७८ ॥ कल्येउषसि ॥ ७८ ॥ तपश्चरत तपसोंऽते प्सितंप्राप्स्यथ ॥ ७९ ॥ इतिचतुर्थेटीकायांचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ॥ प्रचेतस्सुतपस्यत्सुतत्पित्रेनारदोघृणी ॥ प्राचीनबार्हिषेऽध्यात्मंपारोक्ष्येणाहपंचभिः ॥ १ ॥ पुरंजनकथाव्याजात्पंचविंशेतुनारदः ॥ आत्मनोबुद्धिसंगेनाविविधामाहसंसृतिं ॥ २ ॥ प्रचेतर

तेवयंनोदिताःसर्वेप्रजासर्गेप्रजेश्वराः ॥ अनेनध्वस्ततमसःसिसृक्ष्मोविविधाःप्रजाः ॥ ७३ ॥ अथेदंनित्यदायुक्तोजपन्नवहितःपुमान् ॥ अचिराच्छ्रेयआप्नोतिवासुदेवपरायणः ॥ ७४ ॥ श्रेयसामिहसर्वेषांज्ञानंनिःश्रेयसंपरं ॥ सुखंतरतिदुष्पारंज्ञाननौर्व्यसनार्णवं ॥ ७५ ॥ यइमंश्रद्धयायुक्तोमद्गीतंभगवत्स्तवं ॥ अधीयानोदुराराध्यंहरिमाराधयत्यसौ ॥ ७६ ॥ विंदतेपुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरन् ॥ मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७७ ॥ इदंयःकल्यउत्थायप्रांजलिःश्रद्धयाऽन्वितः ॥ शृणुयाच्छ्रावयेन्मर्त्योमुच्यतेकर्मबंधनैः ॥ ७८ ॥ गीतंमयेदंनरदेवनंदनाःपरस्यपुंसःपरमात्मनस्तवं ॥ जपंतएकाग्रधियस्तपोमहच्चरध्वमंतेततआप्स्यथेप्सितं ॥ ७९ ॥ इ० भा० म० च० रुद्रगीतंनामचतुर्विंशोऽध्यायः ॥ २४ ॥ मैत्रेयउवाच इतिसंदिश्यभगवान्बार्हिषदैरभिपूजितः ॥ पश्यतांराजपुत्राणांतत्रैवांतर्दधेहरः ॥ १ ॥ रुद्रगीतंभगवतःस्तोत्रंसर्वेप्रचेतसः ॥ जपंतस्तेतपस्तेपुर्वर्षाणामयुतंजले ॥ २ ॥ प्राचीनबर्हिषंक्षत्तःकर्मस्वासक्तमानसं ॥ नारदोऽध्यात्मतत्त्वज्ञःकृपालुःप्रत्यबोधयत् ॥ ३ ॥ श्रेयस्त्वंकतमद्राजन्कर्मणात्मनईहसे ॥ दुःखहानिःसुखावाप्तिःश्रेयस्तन्नेहचेष्यते ॥ ॥ ४ ॥ राजोवाच नजानामिमहाभागपरंकर्मापविद्धधीः ॥ ब्रूहिमेविमलंज्ञानंयेनमुच्येयकर्मभिः ॥ ५ ॥

स्सुतपस्तीव्रंतप्यमानेषुनारदः ॥ पुरंजनकथाकूटंप्राहप्राचीनबर्हिषे ॥ ३ ॥ १ ॥ २ ॥ प्रचेतस्सुतपश्चरत्सु नारदःप्राचीनबार्हिषंबोधितवान् अतःप्रचेतसांकथामसमाप्यैतवत्पितुर्वृत्तमाह प्राचीनबार्हिषामिति ॥ ३ ॥ श्रेयःफलमीहसेइच्छसि इहकर्मणितदुभयंनेष्यतेविचारकैः ॥ ४ ॥ परंश्रेयोमोक्षं कर्मभिरपविद्धाविक्षिप्ताधीर्यस्य ॥ ५ ॥ ॥ ॥ ॥

किंच गृहेषुस्थितः पुत्रादिष्वेवपुरुषार्थधीर्यस्य ॥ ६ ॥ कर्मफलेषुवैराग्यमुत्पाद्यब्रह्मविद्यामुपदेष्टुंयोगानुभावेनयज्ञपशून्प्रत्यक्षंप्रदर्श्याह भोभोइति संज्ञापितान्मारितान् ॥ ७ ॥ एतेत्वांसंपरेतंसंप्रतीक्षंते वैशसंत्वत्कृतांपीडांस्मरंतः ततश्चायःकूटैर्लोहयंत्रमयैःशृंगैः छिंदंतिछेत्स्यंति ॥ ८ ॥ अत्रास्मिन्संकटेनिस्तारकममुमितिहासंकथयिष्यामि ॥ ९ ॥ तत्रजीवस्यविषयासक्त्यासंसारःसचईश्वरानुग्रहेणनिवर्ततइति वक्तुंविपर्ययगृहीतस्यसाक्षाद्बोधयितुमशक्तेःराजवृत्तांतमिवाहआसीदिति पुरंजनादीन्स्वयमेवातः पंचमेध्यायेव्याख्यास्यति तथापिसुखग्रहणाययथोपयोगंकिंचित्किंचिद्व्याख्यास्यामः तत्रस्वकर्मभिः पुरंजनयतीतिपुरंजनोजीवः नविज्ञातंनामयस्यनचाविज्ञातंचेष्टितंयस्यसईश्वरस्तस्य सखा यद्वा विज्ञातंचेष्टितंजीवप्रेरणादिलक्षणंयस्य जीवपारतंत्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥ शरणंभोगायतनंदेहं ॥ ११ ॥ यावत्यःपुरस्तास्त

गृहेषुकूटधर्मेषुपुत्रदारधनार्थधीः ॥ नपरंविंदतेमूढोभ्राम्यत्संसारवर्त्मसु ॥ ६ ॥ नारदउवाच भोभोप्रजापतेराजन्पशून्पश्यत्वयाऽध्वरे ॥ संज्ञापितान्जीवसंघान्निर्घृणेनसहस्रशः ॥ ७ ॥ एतेत्वांसंप्रतीक्षंतेस्मरंतोवैशसंतव ॥ संपरेतमयःकूटैश्छिंदंत्युत्थितमन्यवः ॥ ८ ॥ अत्रतेकथयिष्येऽमुमितिहासंपुरातनं ॥ पुरंजनस्यचरितंनिबोधगदतोमम ॥ ९ ॥ आसीत्पुरंजनोनामराजाराजन्बृहच्छ्रवाः ॥ तस्याविज्ञातनामासीत्सखाऽविज्ञातचेष्टितः ॥ १० ॥ सोऽन्वेषमाणःशरणंबभ्रामपृथिवींप्रभुः ॥ नानुरूपंयदाऽविंदद्भूत्सविमनाइव ॥ ११ ॥ नसाधुमेनेताःसर्वाभूतलेयावतीःपुरः ॥ कामान्कामयमानोसौतस्यतस्योपपत्तये ॥ १२ ॥ सएकदाहिमवतोदक्षिणेष्वथसानुषु ॥ ददर्शनवभिर्द्वार्भिःपुरींलक्षितलक्षणां ॥ १३ ॥ प्राकारोपवनाट्टालपरिखैरक्षतोरणैः ॥ स्वर्णरौप्यायसैःशृंगैःसंकुलांसर्वतोगृहैः ॥ १४ ॥

स्यतस्यकामस्योपपत्तयेप्राप्त्यै असौसाधुनमेने गवादिदेहानामैहिकपारलौकिकभोगभोग्यत्वाभावात् तथाचश्रुतिः ताभ्योगामानयत्ताअब्रुवन्नवैनोऽयमलमिति ताभ्योऽश्वमानयत्ताअब्रुवन्नवैनोऽयमलमितीति ॥ १२ ॥ हिमवतोदक्षिणेषुसानुषु कर्मक्षेत्रेभारतवर्षे पुरींमनुष्यशरीरं लक्षितानिदृष्टानिसर्वाणिलक्षणानियस्यां अंधपंगुत्वादिदोषरहितामित्यर्थः ॥ १३ ॥ तामनुवर्णयतित्रिभिः अत्रकिंचित्किंचित्सादृश्यमवलंब्यकथासौंदर्यायप्राकारादीनिवर्ण्यंते परिखैरितिपुंस्त्वमार्षं अक्षाणिगवाक्षाः त्वगादयःशरीरावयवाःप्राकारादिषुपुरावयवत्वेनानिरूप्यंते स्वर्णादिशृंगैःशिखरैर्युक्तायेगृहास्तैःसंकुलमिति आधारादिचक्राणिगृहाःशृंगाणिचराजसादिस्वभावाविवक्षिताः ॥ १४ ॥

नीलादिभिः क्लृप्ताहर्म्यस्थलीयस्यां अरुणंमाणिक्यं स्थलीहृदयं नाडचोनीलादिभावेननिरूप्यंतेतत्तद्विषयवासनाबा भोगवतींनागानां पुरीमिव ॥ १५ ॥ सभासमाजस्थानं चत्वरंचतुष्पथः रथ्याराजमार्गः आक्रीडायतनंद्यूतादिस्थानं आपणोहट्टस्तैः चैत्यंजनानांविश्रामस्थानं ध्वजेषुपताकास्ताभिश्चयुक्तां ॥ १६ ॥ अत्रचविषयनिष्ठबुद्धियोगेनजीवस्यदेहसंबंधइतिविवक्षयाविषयवर्गंबाह्योपवनत्वेननिरूपयति तद्विशेषान्स्रक्चंदनादीन्दिव्यद्रुमलतादिभावेन शेषःकथाऽलंकारः बाह्योपवनेप्रमदांददर्शेतिचतुर्थेनान्वयः नदतांविहंगालिकुलानांकोलाहलोयेषुतेजलाशयायस्मिन् ॥ १७ ॥ हिमनिर्झराणांविप्रुषोबिंदवस्तद्वताकुसुमाकरसंबंधिनावायुना चलंतःप्रवालाविटपाःशाखाश्चयेषांतैर्वृक्षैर्नलिनीनांसरसीनांतटेषुसंपत्समृद्धिर्यस्मिन् ॥ १८ ॥ अनाबाधेतत्कृतबाधारहिते मुनिव्रातैरहिंस्त्रैः आत्मानमाहूतंमन्यतेयत्रतत्रप्रमदोत्तमांविषयविवेकवर्तीबुद्धिंददर्श यदृच्छयागतामिति तयोःसंबंधस्यदुर्निरूप्यत्वंदर्शयाति ॥ १९ ॥ तामनुवर्णयति सार्द्धैश्चतुर्भिः दशभिर्ज्ञानकर्मेंद्रियैः एकैकंप्रत्येकंशतमनंतावृत्तयस्तासांनायकैः पतिभिःसह पाठांतरेनायिकास्त्रियोयेषांतैः ॥ २० ॥ पंचशीर्षाणिवृत्तयोयस्य तेनाहिनाप्राणेनप्रतीहारेणपालकेनगुप्तां ऋषभंभर्तारं अप्रौढांषोडशवार्षिकीं ॥ २१ ॥ गंधज्ञानादिभिर्बुध्द्यवयवैःसुनासत्वादिनिरूप्यते समंविन्यस्तौरचितौकर्णौताभ्यांकुंडलशोभांदधतीं ॥ २२ ॥ अन्नमयंहिसौम्यमनइतियत्कृष्णंतदन्नस्येत्यादिश्रुत्यनुसारेणश्यामामित्युक्तं नूपुरैःक्वणद्भ्यां नूपुरेणपादांगुलीयकानामप्युपलक्षणाद्बहुवचनं ॥ २३ ॥ ॥ ॥

नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः ॥ क्लृप्तहर्म्यस्थलींदीप्तांश्रियाभोगवतीमिव ॥ १५ ॥ सभाचत्वररथ्याभिराक्रीडायतनापणैः ॥ चैत्यध्वजपताकाभिर्युक्तांविद्रुमवेदिभिः ॥१६॥ पुर्यास्तुबाह्योपवनेदिव्यद्रुमलताकुले ॥ नदद्विहंगालिकुलकोलाहलजलाशये ॥ १७ ॥ हिमनिर्झरविप्रुष्मन्कुसुमाकरवायुना ॥ चलत्प्रवालविटपनलिनीतटसंपदि ॥ १८ ॥ नानाऽरण्यमृगव्रातैरनाबाधेमुनिव्रतैः ॥ आहूतंमन्यतेपांथोयत्रकोकिलकूजितैः ॥ १९ ॥ यदृच्छयागतांतत्रददर्शप्रमदोत्तमां ॥ भृत्यैर्दशभिरायांतीमेकैकशतनायकैः ॥ २० ॥ पंचशीर्षाहिनागुप्तांप्रतीहारेणसर्वतः ॥ अन्वेषमाणामृषभमप्रौढांकामरूपिणीं ॥ २१ ॥ सुनासांसुदतींबालांसुकपोलांवराननां ॥ समविन्यस्तकर्णाभ्यांबिभ्रतींकुंडलश्रियं ॥ २२ ॥ पिशंगनीवींसुश्रोणींश्यामांकनकमेखलां ॥ पद्भ्यांक्वणद्भ्यांचलतींनूपुरैर्देवतामिव ॥ २३ ॥

व्यंजितकैशोरयौवनोपक्रमोयाभ्यां समौचवृत्तौच ॥ २४ ॥ तामाहेति तयोःसंवादोक्तिःसंवंधदाढर्याय अपांगएवपुंखोमूलप्रांतोयस्यक टाक्षस्यबाणस्यतेनस्पृष्टोविद्धः प्रेम्णाउच्चैर्भ्रमंतीभ्रूर्धनुस्थानीयायस्मिंस्तेन ॥ २५ ॥ कुतःस्थानादिहागताऽसि हेसतिपुर्याःसमीपस्थाउप पुरीभूस्तामालक्ष्यकिंकर्तुमिच्छसीत्यर्थः ॥ २६ ॥ तेतवयेऽनुपथाअनुवर्तिनएतेके एकादशोमहाभटोबृहद्बलत्वेनवक्ष्यमाणोयेषुदशसुते बुद्धेर्मनसःपृथगुपादानंबुद्धिपरिचारकेंद्रियसहायतयातत्परिचारकत्वविवक्षया ॥ २७ ॥ त्वंन्ह्रीःकिंपतिंधर्मंविचिन्वती अथवाभवानीप तिंशिवंविचिन्वती अथवाकिंवाक्सरस्वतीपतिंब्रह्माणं रमापतिंविष्णुं मुनिरिवसंयतासती कथंभूतंपतिं त्वदंघ्रिकामैनैवत्वत्स्वरूपयात्वदं

स्तनौव्यंजितकैशोरौसमवृत्तौनिरंतरौ ॥ वस्त्रांतेननिगूहंतींव्रीडयागजगामिनीं॥२४॥तामाह ललितंवीरः सव्रीडस्मितशोभनां ॥ स्निग्धेनापांगपुंखेनस्पृष्टःप्रेमोद्भ्रमद्भ्रुवा ॥ २५ ॥ कात्वंकंजपलाशाक्षिकस्यासीहकु तःसति ॥ इमामुपपुरींभीरुकिंचिकीर्षसिशंसमे ॥ २६ ॥ कएतेऽनुपथाएतएकादशमहाभटाः ॥ एतावाललल नाःसुभ्रूःकोऽयंतेहिपुरःसरः ॥२७॥ त्वंन्ह्रीर्भवान्यस्यथवाक्रमापतिंविचिन्वतीकिंमुनिवद्रहोवने ॥ त्वदंघ्रि कामाप्तसमस्तकामंक्कपद्मकोशःपतितःकराग्रात्॥ २८॥ नासांवरोर्वन्यतमाभुविस्पृक्पुरीमिमांवीरवरे णसाकं ॥ अर्हस्यलंकर्तुमदभ्रकर्मणालोकंपरंश्रीरिवयज्ञपुंसा॥२९॥ यदेषतेऽपांगविखंडितेंद्रियंसव्रीडभा वस्मितविभ्रमद्भ्रुवा ॥ त्वयोपसृष्टोभगवान्मनोभवःप्रबाधतेऽथानुगृहाणशोभने ॥ ३० ॥ तदाननंसुभ्रुसुता रलोचनंव्यालंबिनीलालकवृंदसंवृतं ॥ उन्नीयमेदर्शयवल्गुवाचकंयद्व्रीडयानाभिमुखंशुचिस्मिते ॥ ३१ ॥

घ्रिकामनयैवप्राप्ताःसमस्ताःकामायेनतं ॥ २८ ॥ हेवरोरुआसांमध्येत्वमन्यतमाऽपिनसंभवसि यतोभुविस्पृक् नहिदेवताभुवंस्पृशंति वीर वरेणमया ननुत्वमकर्माकथंत्वयासहालंकरोमीतिचेत्तत्राह अदभ्रमनल्पंकर्मत्वत्संगाद्यस्यममतेनत्वतोऽकर्मत्वेनत्वत्संगात्सकर्माभवा मीत्यर्थःपरंवैकुंठं ॥ २९ ॥ यद्यस्मात्तवापांगेनविखंडितमिंद्रियंमनोयस्यतंमांमनोभवोबाधते अथतस्मादनुगृहाण सव्रीडंयद्भावेनप्रेम्णा स्मितंतेनविभ्रमंतीयाभ्रूस्तयोपसृष्टःप्रेरितः ॥ ३० ॥ यद्व्रीडयासंमुखंनभवतितदाननमुन्नीयमेदर्शय शोभनेभ्रुवौयस्मिन् सुतारेशोभनक नीनिकेलोचनेयस्मिन् व्यालंबिनोदीर्घायेअलकास्तेषांवृंदेनसंवृतं वल्गूनिवाचकानियस्मिन् ॥ ३१ ॥ ॥ ॥

हेवीर सापितंदृष्ट्वामोहितासतीतमाह ॥ ३२ ॥ यत्पृष्टंकस्यासीत्यनेनकस्यपुत्रीगोत्रजावेतिकात्वमितिचकिंनामासीतितत्राह आत्मनो ममपरस्यतवापिकर्तारंसम्यक्नविद्मः गोत्रंनामचयत्कृतंभवतितंचनविद्मः ॥ ३३ ॥ आत्मनोममशरणमियंपुरीयेननिर्मितातंचनविद्मः ॥ ३४ ॥ यत्पृष्टंकएतअनुपथाइतितत्राह एतइति ॥ ३५ ॥ आस्तांनामगोत्रादियदत्रागतोऽसिएतद्दिष्ट्याभद्रंतावत् ग्राम्यान् इंद्रियग्राह्यान् उद्वहिष्यामिसंपादयिष्यामि स्वबंधुभिःसखीभिश्च ॥ ३६ ॥ समाःसंवत्सरान् मनुष्यदेहप्रवेशाच्छतामित्युक्तं ॥ ३७ ॥ प्रवृत्तिस्व

नारदउवाच इत्थंपुरंजनंनारीयाचमानमधीरवत् ॥ अभ्यनंदततंवीरहसंतीवीरमोहिता ॥ ३२ ॥ नविदामवयंसम्यक्कर्त्तारंपुरुषर्षभ ॥ आत्मनश्चपरस्यापिगोत्रंनामचयत्कृतं ॥ ३३ ॥ इहाद्यसंतमात्मानंनविदामततःपरं ॥ येनेयंनिर्मितावीरपुरीशरणमात्मनः ॥ ३४ ॥ एतेसखायःसख्योमेनरानार्यश्चमानद ॥ सुप्तायांमयिजागर्तिनागोऽयंपालयन्पुरीं ॥ ३५ ॥ दिष्ट्यागतोऽसिभद्रंतेग्राम्यान्कामानभीप्ससे ॥ उद्वहिष्यामितांस्तेऽहंस्वबंधुभिररिंदम ॥ ३६ ॥ इमांत्वमधितिष्ठस्वपुरींनवमुखींविभो ॥ मयोपनीतान्गृण्हानःकामभोगान्शतंसमाः ॥ ३७ ॥ कंनुत्वदन्यंरमयेह्यरतिज्ञमकोविदं ॥ असंपरायाभिमुखमश्वस्तनविदंपशुं ॥ ॥ ३८ ॥ धर्मोह्यत्रार्थकामौचप्रजानंदोऽमृतंयशः ॥ लोकाविशोकाविरजायान्नकेवलिनोविदुः ॥ ३९ ॥ पितृदेवर्षिमर्त्यानांभूतानामात्मनश्चह ॥ क्षेमंवदंतिशरणंभवेऽस्मिन्यद्गृहाश्रमः ॥ ४० ॥ कानामवीरविख्यातंवदान्यंप्रियदर्शनं ॥ नवृणीतप्रियंप्राप्तंमादृशीत्वादृशंपतिं ॥ ४१ ॥ कस्यामनस्तेभुविभोगिभोगयोः स्त्रियानसज्जेद्भुजयोर्महाभुज ॥ योऽनाथवर्गाधिमलंघृणोद्धतस्मितावलोकेनचरत्यपोहितुं ॥ ४२ ॥

भावत्वात्निवृत्तिनिंदापूर्वकंतत्संगमाभिनंदतिपंचभिः त्वत्तोऽन्यंकंनुरमये अरतिज्ञंनैष्ठिकं अकोविदमनिषिद्धसुखत्यागिनं संपरायोमृत्युस्तदनभिमुखंपरलोकचिंताशून्यमश्वस्तनविदंइदंकर्तव्यमितीहलोकचिंताशून्यं पशुतुल्यं ॥ ३८ ॥ अत्रगार्हस्थ्ये प्रजानंदःपुत्रसुखं अमृतंमोक्षःकेवलिनोयतयः ॥ ३९ ॥ गृहाश्रमइतियत् एतत्क्षेमार्हंशरणमाश्रयंवदंति ॥ ४० ॥ ४१ ॥ भोगिभोगयोःसर्पदेहाकारयोस्तवभुजयोर्मनसज्जेत् एवंभूतंकस्याःस्त्रियामनःस्यात्नकस्याअपि योभवान् अनाथवर्गाःदीनस्तेषामाधिमलमत्यर्थमपोहितुंसर्वत्रचरति केनापोहितुं घृणयोद्धतःअतिशयितोयःस्मितपूर्वकोऽवलोकस्तेन ॥ ४२ ॥ ॥

समुच्चसमुदीर्य समाःसंवत्सरान् ॥४३॥ तत्रजाग्रदवस्थांसंक्षेपेणाह उपगीयमानइति सुषुप्तावस्थामाह ह्रदिनींहृदयाकाशं स्वापस्थानं शुचौनिदाघे ॥४४॥ इदानींनवद्वारप्रदर्शनपूर्वकंजाग्रदवस्थांप्रपंचयति सप्तेतियावदध्यायसमाप्ति तस्याःपुरउपरिकृताः द्वारःसप्त वृताइतिपाठेसंवृताःनेत्रेनासिकेश्रोत्रेमुखंचेतिसप्त अधोद्वेद्वारौगुदालिंगे यःकश्चनेति आत्मनःसम्यगविज्ञानादनियतत्वाच्च ॥ ४५ ॥ तासुसप्तसु पंचद्वारः पौरस्त्याःपूर्वदिग्भवाः ॥४६॥ खद्योतवदल्पप्रकाशावामनेत्ररूपा आविःप्रकटंमुखंयस्याःसा बहुप्रकाशादक्षिणनेत्रलक्षणात स्माद्दक्षिणांगमात्मनोवीर्यवत्तरमितिश्रुतेः स्वानुभवाच्चतत्रप्रकाशाधिक्यं एकत्रसंलग्ने विभ्राजितंरूपं द्युमत्सखःचक्षुःसहितः ॥ ४७ ॥ नलनालशब्दौछिद्रवचनौ तद्वतीनलिनीनालिनीच वामदक्षिणनासिकेअत्रापिसंज्ञाभेदादेवकार्ये न्यूनाधिक्यंपूर्ववत्ज्ञेयं अवधूतोवाय्यवधि

नारदउवाच इतितौदंपतीतत्रसमुच्चसमयंमिथः ॥ तांप्रविश्यपुरींराजन्मुमुदातेशतंसमाः ॥ ४३ ॥ उपगीयमानोललितंतत्रतत्रचगायकैः ॥ क्रीडन्परिवृतःस्त्रीभिर्ह्रदिनीमाविशच्छुचौ ॥ ४४॥ सप्तोपरिकृताद्वारःपुरस्तस्यास्तुद्वेअधः ॥ पृथग्विषयगत्यर्थंतस्यांयःकश्चनेश्वरः ॥४५॥ पंचद्वारस्तुपौरस्त्यादक्षिणैकातथोत्तरा ॥ पश्चिमेद्वेअमूषांतेनामानिनृपवर्णये ॥ ४६ ॥ खद्योताविर्मुखीचप्राक्द्वारावेकत्रनिर्मिते ॥ विभ्राजितंजनपदंयातिताभ्यांद्युमत्सखः ॥४७॥ नलिनीनालिनीचप्राक्द्वारावेकत्रनिर्मिते ॥ अवधूतसखस्ताभ्यांविषयंयातिसौरभं ॥ ४८ ॥ मुख्यानामपुरस्ताद्वास्तयापणबहूदनौ ॥ विषयौयातिपुरराड्रसज्ञविपणान्वितः ॥४९॥ पितृहूर्नृपपुर्याद्वार्दक्षिणेनपुरंजनः ॥ राष्ट्रंदक्षिणपंचालंयातिश्रुतिधरान्वितः ॥५०॥

ष्ठितोघ्राणःसौरभंगंधं ॥४८॥ मुख्याप्रधानाआस्यं आपणोभाषणं बहूदनश्चित्रमन्नं बव्होदनइत्यनुक्तिःपरोक्षवादत्वाय रसज्ञंरसनेंद्रियं विपणोवागिंद्रियंताभ्यामान्वितः ॥ ४९ ॥ दक्षिणेनेतिनतृतीयाकिंतुदक्षिणस्यांदिशीत्यस्मिन्नर्थेताद्धितोऽयमेनप्प्रत्ययोऽव्ययसंज्ञः एवमुत्तरेणेति अयमर्थः पंचानांविषयाणामन्यतोऽनवगतानांप्रकाशनायालमितिपंचालंशास्त्रं श्रवणकालेचबलाधिक्याद्दक्षिणकर्णःप्रथमंप्रवर्तते शास्त्रेचप्रथमंश्रोतव्यंकर्मकांडमित्येतावतासाम्येनप्रवृत्तसंज्ञस्यकर्मकांडस्यदक्षिणकर्णेनश्रवणमिष्यते अतस्तदर्थमनुष्ठानायपितृभिराहूतःपितृलोकप्रापकंपितृयानंप्रपद्यते तदनेनप्रकारेणपितृणामाव्हानमनेनभवतीतिपितृहूर्दक्षिणकर्णः एवंतद्वैपरीत्येनोत्तरःकर्णोदेवहूः तथाचव्यास्यास्यति पितृहूर्दक्षिणःकर्णउत्तरोदेवहूःस्मृतः प्रवृत्तंचनिवृत्तंचशास्त्रंपंचालसंज्ञितं ॥ पितृयानंदेवयानंश्रोत्राच्छ्रुतिधराद्व्रजेदिति ॥ ५० ॥

॥ ५१ ॥ आसुराइंद्रियारामास्तेषांमियमासुरीशिश्नद्वाः ग्रामकंग्रामस्थजनानांकंसुखंव्यवायं दुर्मदेनगुह्येंद्रियेण ॥ ५२ ॥ निर्ऋतिर्नामगु
दः मृत्युद्वारत्वात् वैशसंमलविसर्गं लुब्धकेनपायुनातेनोक्रांतस्यदुःखप्राप्तेर्लुब्धकसाम्यं ॥ ५३ ॥ अमीषांमध्येनिर्वाक्पादःपेशस्कृत् ह
स्तःतावुभावंधौ छिद्राभावात् स्वतोज्ञानाक्रियाशक्त्यभावाच्च अक्षण्वतामिंद्रियवतां देहानामाधिपतिःपुरंजनः त्वगिंद्रियस्यानुक्तिःसर्वे

देवहूर्नामपुर्याद्वाउत्तरेणपुरंजनः ॥ राष्ट्रमुत्तरपंचालंयातिश्रुतिधरान्वितः ॥५१॥ आसुरीनामपश्चाद्द्वास्त
यायातिपुरंजनः ॥ ग्रामकंनामविषयंदुर्मदेनसमन्वितः ॥५२॥ निर्ऋतिर्नामपश्चाद्द्वास्तयायातिपुरंजनः ॥
वैशसंनामविषयंलुब्धकेनसमन्वितः ॥५३॥ अंधावमीषांपौराणांनिर्वाक्पेशस्कृतावुभौ ॥ अक्षण्वतामधि
पतिस्ताभ्यांयातिकरोतिच ॥५४॥ सयर्ह्यंतःपुरगतोविषूचीनसमन्वितः ॥ मोहंप्रसादंहर्षंवायातिजायात्म
जोद्भवं ॥५५॥ एवंकर्मसुसंयुक्तःकामात्मावंचितोबुधः ॥ महिषीयद्यदीहेततत्तदेवान्ववर्तत ॥५६॥ क्वचित्पि
बंत्यांपिबतिमदिरांमदविह्वलः ॥ अश्नंत्यांक्वचिदश्नातिजक्षंत्यांसहजक्षति ॥५७॥ क्वचिद्गायतिगायंत्यां
रुदंत्यांरुदतिक्वचित् ॥ क्वचिद्धसंत्यांहसतिजल्पंत्यामनुजल्पति ॥५८॥ क्वचिद्धावतिधावंत्यांतिष्ठंत्यामनु
तिष्ठति ॥ अनुशेतेशयानायामन्वास्तेक्वचिदासतीं ॥५९॥ क्वचिच्छृणोतिशृण्वंत्यांपश्यंत्यामनुपश्यति ॥
क्वचिज्जिघ्रतिजिघ्रंत्यांस्पृशंत्यांस्पृशतिक्वचित् ॥ ६० ॥ क्वचिच्चशोचतींजायामनुशोचतिदीनवत् ॥ अनुहृष्य
तिहृष्यंत्यांमुदितामनुमोदते ॥ ६१ ॥ विप्रलब्धोमहिष्यैवंसर्वप्रकृतिवंचितः ॥ नेच्छन्ननुकरोत्यज्ञःक्लैब्यात्क्री
डामृगोयथा ॥ ६२ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपंचविंशोऽध्यायः ॥ २५ ॥

ष्वंतर्भावात् ॥ ५४ ॥ अंतःपुरंहृदयंगतः विषूचीनंसर्वतोमुखंमनः मोहप्रसादहर्षास्तमःसत्वरजःकर्याणि जायाबुद्धिः आत्मजाइंद्रिय
परिणामास्तदुद्भवं ॥५५॥५६॥ जक्षंत्यांभक्षयंत्यां ॥५७॥५८॥ आसतीमासीनां ॥५९॥६०॥६१॥ सर्वाअसंगत्वादिलक्षणाप्रकृतिःस्वभा
वोवंचितोयस्य सर्वथाप्रकृत्यावंचितइतिवा नेच्छन्अनिच्छन् क्लैब्यात्पारवश्यात् ॥ ६२ ॥ इतिचतुर्थेटीकायांपंचविंशोऽध्यायः॥ २५॥

षड्विंशेमृगयाव्याजात्स्वप्नजागरणोक्तितः ॥ सद्बुद्धित्यागयोगाभ्यांसंसृतिःसाप्रपंच्यते ॥ १॥ तदेवमात्मनउपाधिकृतांसुषुप्तावस्थांजाग्रद वस्थांचोक्काइदानींस्वप्नावस्थामाह सएकदेतिदशभिः महानिष्वासोधनुःकर्तृत्वभोक्तृत्वाद्यभिनिवेशोयस्यसरथमारुह्यपंचप्रस्थंवनम गादितितृतीयेनान्वयः रथंतदानीमेवविधृतंस्वप्नदेहंजाग्रद्देहस्यशतसंवत्सररोभभोग्यपुरत्वेनोक्तत्वात् पंचज्ञानेंद्रियाण्यश्वायस्य आशुगं शीघ्रगतिं द्वेअहंताममतेईशेदंडिकेयस्य द्वेपुण्यपापेचक्रेस्यय एकंप्रधानमक्षोयस्य त्रयोगुणावेणवोध्वजायस्य पंचप्राणाबंधुराणिवंध नानियस्य ॥ १ ॥ एकंमनोरश्मिःप्रग्रहोयस्य एकाबुद्धिर्दमनःसूतोयस्य तंचतंच एकंहृदयंनीडंरथिनउपवेशस्थानंयस्मिन् द्वौशोकमोहौ कूवरौयुगबंधनस्थानंयस्य पंचशब्दादयोविषयाःप्रान्हियंतेप्रक्षिप्यंतेयस्मिन् अस्यव्याख्यानंभविष्यतिपंचेंद्रियार्थप्रक्षेपइति सप्तधात

नारदउवाच सएकदामहेष्वासोरथंपंचाश्वमाशुगं॥ द्वीषंद्विचक्रमेकाक्षंत्रिवेणुंपंचबंधुरं ॥१॥ एकरश्म्ये कदमनमेकनीडंद्विकूबरं ॥ पंचप्रहरणंसप्तवरूथंपंचविक्रमं॥२॥ हैमोपस्करमारुह्यस्वर्णवर्माक्षयेषुधिः॥ ए कादशचमूनाथःपंचप्रस्थमगाद्वनं ॥३॥ चचारमृगयांतत्रदृप्तआत्तेषुकार्मुकः॥विहायजायामतदर्हांमृगव्य सनलालसः ॥४॥ आसुरींवृत्तिमाश्रित्यघोरात्मानिरनुग्रहः॥न्यहनन्निशितैर्बाणैर्वनेषुवनगोचरान् ॥ ५ ॥

वोवरूथारक्षार्थंचर्माद्यावरणानियस्य पंचकर्मेंद्रियाणिविक्रमागतिप्रकारायस्य ॥ २ ॥ हैमोपस्करंसौवर्णाभरणं स्वर्णवर्मावर्मकवचं रजोगुणावृतःअक्षयेषुधिः इषुधिर्निषंगःअनंतवासनाऽहंकारोपाधिः एकादशोमनोरूपश्चमूनाथःसेनापतिर्यस्य वासनामयस्यमनसः प्रग्रहत्वंसंकल्पविकल्पात्मकस्यबृहद्बलत्वेनवक्ष्यमाणस्यचमूनाथत्वमितिविभागः पंचशब्दादयोविषयाःप्रस्थाःसानवोयस्मिन् तद्वनंभ जनीयंदेशमगात् ॥ ३ ॥ आत्तागृहीताइषवोरागादिरूपाःकार्मुकंचभोगाद्यभिनिवेशरूपंयेन जायांविवेकवतींबुद्धिंविहाय अतदर्हांत्या गानर्हांत्यागेहेतुः मृग्यंतइतिमृगाःविषयाःतेषुव्यसनंभोगासक्तिःतेनलालसाऽतिस्पृहायस्य ॥ ४ ॥ बाणैःरागादिभिः वनेषुभजनीयदेशे षुवनगोचरान्भजनीयविषयान्न्यहनत् आत्मसात्कृतवान् कथापक्षेतुस्पष्टमेव ॥ ५ ॥ ॥

नन्वासुरींवृत्तिमाश्रित्येतिकिमितिमृगयानिंद्यतेकथापक्षेतावद्राज्ञोविहितैवसाअध्यात्मपक्षेऽपिजीवस्यविषयभोगोविहितएवेत्याशंक्याह तीर्थेष्वितित्रिभिः ॥ अयंभावः नहिमृगयाविधीयतेरागप्राप्तत्वात् किंतुनियम्यतेप्रवृत्तिःसंकोच्यते नियममेवषड्विधंदर्शयति यद्यलमत्य र्थंलुब्धोरागीसन्हन्यात्तर्हितीर्थेषुश्राद्धादिष्वेव तत्रापिप्रतिदिष्टेषुप्रख्यातेष्वेवननित्यश्राद्धादिषु तत्रापिराजैवमेध्यानेववनएवयावदुपयोग मेवेति एवंजीवस्यविषयसेवापियावदुपयोगंनयथेष्टमितिनियमएवेत्यर्थः ॥ ६ ॥ अतोनावश्यकत्वमित्याह यइति एवंनियतंकर्माविद्वान् तेनेत्युपलक्षणं तेनान्येनवाकर्मणैवमनुष्ठितेनयत्ज्ञानंभवतितेनज्ञानेनहेतुनासोऽनुष्ठातानलिप्यते ॥ ७ ॥ अन्यथानियमोल्लंघनेनअंतः करणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढःकर्मभिरनुबद्ध्यते ततश्चगुणप्रवाहेपतितोऽधोव्रजति ॥ ८ ॥ प्रासंगिकंपरिसमाप्यपुनर्मृगया

तीर्थेषुप्रतिदिष्टेषुराजामेध्यान्पशून्वने ॥ यावदर्थमलंलुब्धोहन्यादितिनियम्यते ॥ ६ ॥ यएवंकर्मनियतं विद्वान्कुर्वीतमानवः ॥ कर्मणातेनराजेंद्रज्ञानेननसलिप्यते ॥ ७ ॥ अन्यथाकर्मकुर्वाणोमानारूढोनिबध्य ते ॥ गुणप्रवाहेपतितोनष्टप्रज्ञोव्रजत्यधः ॥ ८ ॥ तत्रनिर्भिन्नगात्राणांचित्रवाजैःशिलीमुखैः ॥ विप्लवोभू द्दुःखितानांदुःसहःकरुणात्मनां॥ ९॥ शशान्वराहान्माहिषान्गवयान्रुरुशल्यकान्॥मेध्यानन्यांश्चविविधा न्विनिघ्नन्श्रममध्यगात् ॥ १० ॥ ततःक्षुत्तृट्परिश्रांतोनिवृत्तोगृहमेयिवान् ॥ कृतस्नानोचिताहारःसंवि वेशगतक्लमः ॥ ११ ॥ आत्मानमर्हयांचक्रेधूपलेपस्रगादिभिः ॥ साध्वलंकृतसर्वांगोमहिष्यामादधेमनः ॥ ॥ १२ ॥ तृप्तोहृष्टःसुदृप्तश्चकंदर्पाकृष्टमानसः ॥ नव्यचष्टवरारोहांगृहिणींगृहमेधिनीं ॥ १३ ॥ अंतःपुर स्त्रियोऽपृच्छद्विमनाइववेदिषत् ॥ अपिवःकुशलंरामाःसेश्वरीणांयथापुरा ॥ १४ ॥ ॥ ॥

मेवानुवर्तयति तत्रेति चित्रावाजाःपक्षायेषांतैः विप्लवोनाशः करुणात्मनांकृपालूनांदुःसहः ॥ ९ ॥ १० ॥ तदेवंस्वप्नावस्थादर्शिता इदानींपुनरपिविवेकवत्याबुद्ध्यारममाणस्यपुत्रादिसंततिंप्रपंचयिष्यन् कथासौंदर्यायतस्याःप्रणयकुपितायाअनुनयंप्रस्तावसहितमाहतत इत्यारभ्ययावदध्यायसमाप्ति एयिवान्आगतः कृतंस्नानमुचितआहारश्चयेन संविवेश शय्यामाश्रितः ॥ ११ ॥ १२ ॥ गृहमेधिनींसा त्विकींबुद्धिं राजस्यांबुद्ध्यांवर्तमानोनापश्यत् ॥ १३ ॥ वेदिषत्हेप्राचीनबर्हिः अंतःपुरस्त्रियःतत्सखीः सेश्वरीणांस्वामिनीसहितानां यथापुरेत्यादिपृथग्वाक्यं ॥ १४ ॥ ॥ ॥ ॥

व्यंगेचक्रादिहीने ॥ १५ ॥ १६ ॥ निरवस्तारेआस्तरणरहिते ॥ १७ ॥ अवधूतांत्यक्तदेहादरां तत्संगेनोन्मथितंव्याकुलंज्ञानंयस्य ॥ १८ ॥ स्नेहसंरंभःप्रणयकोपस्तस्यलिंगंकुटिलदृष्ट्यादि स्वस्मिन्नलब्धवान् ॥ १९ ॥ उत्संगमारोप्यलालितां ॥ २० ॥ कृतमागअपराधोयैस्तेषु आत्मसात्कृत्वाअस्मदधीनोऽयमितिमत्वा शिक्षार्थंदंडंनकुर्वंति तेभृत्यामंदभाग्याः ॥ २१ ॥ यतःपरमोऽनुग्रहोदंडः यस्तुदंडतोविषीदतिसोऽज्ञ इत्याह बालइति बंधुकृत्यंशिक्षाकरणं अमर्षणःक्रोधी ॥ २२ ॥ हेसुदति हेसुभ्रुहेमनस्विनि सात्वमस्माकंस्वामिनीअतःस्वानांमुखंप्रदर्शय

नतथैतर्हिरोचंतेगृहेषुगृहसंपदः ॥ यदिनस्याद्गृहेमातापत्नीवापतिदेवता ॥ व्यंगेरथइवप्राज्ञःकोनामासीतदीनवत् ॥ १५ ॥ क्ववर्ततेसाललनामज्जंतंव्यसनार्णवे ॥ यामामुद्धरतेप्रज्ञांदीपयंतीपदेपदे ॥ १६ ॥ रामाऊचुः नरनाथनजानीमस्त्वत्प्रियायद्व्यवस्यति ॥ भूतलेनिरवस्तारेशयनांपश्यशत्रुहन् ॥ १७ ॥ नारदउवाच पुरंजनःस्वमहिषींनिरीक्ष्यावधुतांभुवि ॥ तत्संगोन्मथितज्ञानोवैक्लव्यंपरमंययौ ॥ १८ ॥ सांत्वयन्श्लक्ष्णयावाचाहृदयेनविदूयता ॥ प्रेयस्याःस्नेहसंरंभलिंगमात्मनिनाभ्यगात् ॥ १९ ॥ अनुनिन्येथशनकैर्वीरोऽनुनयकोविदः ॥ पस्पर्शपादयुगलमाहचोत्संगलालितां ॥ २० ॥ पुरंजनउवाच नूनंत्वकृतपुण्यास्तेभृत्यायेष्वीश्वराःशुभे ॥ कृतागःस्वात्मसात्कृत्वाशिक्षादंडंनयुंजते ॥ २१ ॥ परमोऽनुग्रहोदंडोभृत्येषुप्रभुणार्पितः ॥ बालोनवेदतत्तन्विबंधुकृत्यममर्षणः ॥ २२ ॥ सात्वंमुखंसुदतिसुभ्र्वनुरागभारव्रीडाविलंबविलसद्धसितावलोकं ॥ नीलालकाभिरुपस्कृतमुन्नसंनःस्वानांप्रदर्शयमनास्विनिवल्गुवाक्यं ॥ २३ ॥ तस्मिन्दधेदममहंतववीरपत्नियोन्यत्रभूसुरकुलात्कृतकिल्बिषस्तं ॥ पश्येनवीतभयमुन्मुदितंत्रिलोक्यामन्यत्रवैमुररिपोरितरत्रदासात् २४

कीदृशं अनुरागभारेणव्रीडियायोविलंबःमंथरतातेनविलसत्हासितावलोकोयास्मिन् नीलाअलकाएवालयस्तैरुपस्कृतंभूषितं उन्नतनासिकं वल्गुवाक्यंयस्मिन्तत् ॥ २३ ॥ हेवीरपत्निवीरस्यममभार्ये यस्तेकृतापराधस्तस्मिन्नहंब्राह्मणकुलादन्यत्रान्यस्मिन्मुररिपुदासादितरत्रच दमंदधेदंडंकरोमि किंतुतंविगतभयमुच्चैर्मुदितंत्रिलोक्यामन्यत्रलोकत्रयाद्बहिरपिनपश्यामि मद्भयादेवासौमरिष्यतीत्यर्थः ॥ २४ ॥

तेवक्त्रमितःपूर्वंकदाचिदपिवितिलकंनपश्यामि संरंभेणकोपावेशेनभीमंभयंकरं अविमृष्टमनुज्ज्वलं अपेतरागंस्नेहशून्यं तथातेसुजातौ शोभनौस्तनावपिशोकाश्रुभिरुपहतौनपश्यामि तथाबिंबफलाकारमधरंच विगतःकुंकुमपंकतुल्यस्तांबूलरागोयस्मात्तादृशंनपश्यामि इदानींकुतएवंजातमितिशेषः पाठांतरेएवंभूतंमुखंस्तनौचपश्यन्शंनविंदामीत्यन्वयः विगतःकुंकुमपंकरागोयाभ्यामितिस्तनयोर्विशेषणं ॥ २५ ॥ तत्तस्मात्कृतंकिल्बिषमपराधोयेन तस्यकिल्बिषमेवाह स्वैरंस्वातंत्र्येणत्वामपृष्ट्वामृगयांगतस्य देवोदेवनंक्रीडातांरातिददातीतिदे वरःकांतःतं कामवेगेनविस्रस्तंगतंपौंस्त्वंपौरुषंधैर्यंयस्यतं उशतीकामयमाना कृत्येकर्तुंयोग्येअर्थेकानभजेत ॥ २६ ॥ इतिचतुर्थेटीका यांषड्विंशोऽध्यायः ॥ २६ ॥ ॥ सप्तविंशेप्रियापुत्राद्यासक्त्याविस्मृतात्मनः ॥ कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥ १ ॥ तदेवजी

वक्त्रंनतेवितिलकंमलिनंविहर्षंसंरंभभीमविमृष्टमपेतरागं ॥ पश्येस्तनावपिशुचोपहतौसुजातौबिंबाधरं विगतकुंकुमपंकरागं ॥ २५ ॥ तन्मेप्रसीदसुहृदःकृतकिल्बिषस्यस्वैरंगतस्यमृगयांव्यसनातुरस्य ॥ कादेव रंवशगतंकुसुमास्त्रवेगविस्रस्तपौंस्त्वमुशतीनभजेतकृत्ये ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपु रंजनोपाख्यानेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ॥ नारदउवाच इत्थंपुरंजनंसध्र्यक्वशमानीयविभ्र मैः ॥ पुरंजनीमहाराजरेमेरमयतीपतिं ॥१॥ सराजमहिषींराजन्सुस्नातांरुचिराननां॥कृतस्वस्त्ययनांतृप्ता मभ्यनंददुपागतां॥२॥तयोपगूढःपरिरब्धकंधरोरहोऽनुमंत्रैरपकृष्टचेतनः॥ नकालरंहोबुबुधेदुरत्ययंदिवा निशेतिप्रमदापरिग्रहः ॥३॥ वस्यानुनयादिकथासौंदर्येणात्यंतमुपाधिवश्यत्वमुक्त्वातन्निमित्तांसंसारपरंपरांनिरूपयितुमाह इत्थमिति अत्रचप्रतिपदंकथंचिदध्यात्मपक्षेपियोजयितुंशक्यमेव श्रीनारदेनतुजीवस्यस्त्रीपुरुषवासनादार्ढ्येनाविचित्रासंसृतिर्भवतीत्येता वदेवकथातात्पर्यंदर्शितं क्वचित्पुमान्क्वचिच्चस्त्रीक्वचिन्नोभयमंदधीः॥ देवोमनुष्यस्तिर्यग्वायथाकर्मगुणंभवइतिवदताः तत्रादौपुंस्त्वेनसंसृति रध्यायत्रयेणोक्ता ततश्चैकेनाध्यायेनस्त्रीत्वेनसंसृतिंप्रदर्श्येश्वरप्रसादलब्धज्ञानेनमोक्षइत्युक्तं ततस्तदेवयथोपयोगंव्याख्यातमितिपंचा ध्याय्यारंभःप्रतीयते प्रतिपदमध्यात्मयोजनातुदुर्घटानिष्प्रयोजनाचेतिस्वप्रौढिख्यापनमनादृत्ययथोपयोगमेवव्याख्यास्यामः सध्र्यक्स म्यक् विभ्रमैर्विलासैः ॥ १ ॥ कृतंस्वस्त्ययनंमंगलंकुंकुमासिंदूरादिभिर्यस्यास्तां ॥ २ ॥ उपगूढःपरिरब्धः परिरब्धाकंधरातस्यायेन रहएकांते अनुमंत्रैःअनुकूलैःगुह्यभाषणैः अपकृष्टाचेतनाविवेकोयस्य कालरंहःआयुर्व्ययंप्रमदैवपरिग्रहोनज्ञानसाधनंयस्य ॥ ३ ॥

महार्हतल्पेउत्कृष्टशय्यायांशयानः महिष्याभुजउपधिःउपधानमुच्छीर्षकंयस्य अविसर्गपाठेशयनक्रियाविशेषणं तांमहिषीमेवपरंपुरुषार्थं ममन्यतनतुयन्निजंरूपंब्रह्मतत् तमसाअज्ञानेनाभिभूतोयतः॥४॥ ५॥पुत्रानिंद्रियपरिणामान् दुहितृस्तदनंतरंबुद्धिवृत्तीः पुत्रसंख्याचबाहुल्य मात्रविवक्षया दुहितृसंख्यातुपुत्रेभ्योन्यूनत्वेनगार्हस्थ्यसौंदर्यार्थमेव विराट्सम्राट् आयुषोर्धमित्याद्यपिकथासौंदर्यार्थमेव ॥६॥ पुरंजनकन्या त्वात्पौरंजन्यः हेप्रजापते ॥ ७ ॥ दारैः परिणामानंतरंहिताहिताचिंताभिः वरैरुचितविषयभोगैः ॥ ८ ॥ पुत्राणांपुत्राःकर्माणि पंचालेषुशब्दा



शयानउन्नद्धमदोमहामनामहार्हतल्पेमहिषीभुजोपधिः ॥ तामेववीरोमनुतेपरंयतस्तमोभिभूतोननिजंप रंचयत् ॥ ४ ॥ तयैवंरममाणस्यकामकश्मलचेतसः ॥ क्षणार्धमिवराजेंद्रव्यतिक्रांतंनवंवयः ॥ ५ ॥ तस्या मजनयत्पुत्रान्पुरंजन्यांपुरंजनः ॥ शतान्येकादशविराडायुषोऽर्धमथात्यगात् ॥ ६ ॥ दुहितृर्दशोत्तरश तंपितृमातृयशस्करीः ॥ शीलौदार्यगुणोपेताःपौरंजन्यःप्रजापते ॥ ७ ॥ सपंचालपतिःपुत्रान्पितृवंश विवर्द्धनान् ॥ दारैःसंयोजयामासदुहितृःसदृशैर्वरैः ॥ ८ ॥ पुत्राणांचाभवन्पुत्राएकैकस्यशतंशतं ॥ यैर्वै पौरंजनोवंशःपंचालेषुसमेधितः ॥ ९ ॥ तेषुतद्रिक्थहारेषुगृहकोशानुजीविषु ॥ निरूढेनममत्वेनविषयेष्व नुबल्ध्यत ॥ १० ॥ ईजेचक्रतुभिर्घोरैर्दीक्षितःपशुमारकैः ॥ देवान्पितॄन्भूतपतीन्नानाकामोयथाभ वान् ॥ ११ ॥ युक्तेष्वेवंप्रमत्तस्यकुटुंबासक्तचेतसः ॥ आससादसवैकालोयोऽप्रियःप्रिययोषितां ॥ १२ ॥ चंडवेगइतिख्यातोगंधर्वाधिपतिर्नृप ॥ गंधर्वास्तस्यबलिनःषष्ट्युत्तरशतत्रयं ॥ १३ ॥ गंधर्व्यस्तादृशीर स्यमैथुन्यश्चसितासिताः ॥ परिवृत्त्याविलुंपंतिसर्वकामविनिर्मितां ॥ १४ ॥ तेचंडवेगानुचराःपुरंजनपुरं यदा ॥ हर्तुमारेभिरेतत्रप्रत्यषेधत्प्रजागरः ॥ १५ ॥ ॥ ॥ ॥

दिविषयेषु ॥ ९ ॥ तेषुपुत्रादिषुतेषामपियेरिक्थहाराःपुत्रास्तेषुच ॥१०॥११॥ युक्तेष्वात्महितेषुकर्मस्वनवहितस्य सवैकालःजरासमयः ॥१२॥ चंडवेगःसंवत्सरेणावर्तमानेनोपलक्षितः गंधर्वादिवसाः ॥ १३ ॥ गंधर्व्योरात्रयः तादृशीःतादृश्यः मैथुन्यःदिवसैर्मिथुनीभूयास्थिताः सिता श्चासिताश्चशुक्लकृष्णपक्षीयाः परिभ्रमणेनसर्वैःकामैःसहविनिर्मितांपुरीमपहरंति ॥ १४ ॥ प्रजागरःप्राणः ॥ १५ ॥

विंशत्याचसह ॥ १६ ॥ स्वसंबंधेस्वसंबंधिनिप्राणे ॥ १७ ॥ सएवमधुभुक्क्षुद्रसुखभोक्ता स्वपार्षदैरिंद्रियैः नाविदत्नालोचितवान् ॥
॥ १८ ॥ कालस्यदुहिताजरास्तितांनप्रत्यनंदतनैच्छत् बर्हिष्मन्हेप्राचीनबर्हिः ॥१९॥ पूरवेययातिपुत्राय तेनवृतासतांविरमदात् य
यातिःशुक्रशापाज्जरांप्राप्यपुत्रानुवाच इमांगृण्हीतेति तांज्येष्ठाश्चत्वारोनजगृहुः पुरुस्तुजगृहे ततोययातिःतस्मैराज्यंददावितिजरैवादा
दित्युक्तं ॥ २० ॥ बृहद्व्रतंनैष्ठिकं ॥ २१ ॥ प्रत्याख्यातवतिमयिसंरभ्यक्रोधंकृत्वानैकत्रस्थातुमर्हसीतिशापमदात् ॥ २२ ॥ आधयोन्या

ससप्तभिःशतैरेकोविंशत्याचशतंसमाः ॥ पुरंजनपुराध्यक्षोगंधर्वैर्युयुधेबली ॥ १६॥ क्षीयमाणेस्वसंबंधेए
कस्मिन्बहुभिर्युधा ॥ चिंतांपरांजगामार्तःसराष्ट्रपुरबांधवः ॥१७॥सएवपुर्यांमधुभुक्पंचालेषुस्वपार्षदैः ॥
उपनीतंबलिंगृण्हन्स्त्रीजितोनाविदद्भयं ॥१८॥ कालस्यदुहिताकाचित्त्रिलोकींबरमिच्छती ॥ पर्यटंतीनब
र्हिष्मन्प्रत्यनंदतकश्चन ॥१९॥ दौर्भाग्येनात्मनोलोकेविश्रुतादुर्भगेतिसा॥यातुष्टाराजर्षयेतुवृताऽदात्पूर
वेवरं ॥२०॥ कदाचिदटमानासाब्रह्मलोकान्महींगतं॥वव्रेबृहद्व्रतंमांतुजानतीकाममोहिता ॥२१॥ मयिसं
रभ्यविपुलमदाच्छापंसुदुःसहं॥स्थातुमर्हसिनैकत्रमद्यांञावविमुखोमुने॥२२॥ततोविहतसंकल्पाकन्यकाय
वनेश्वरं॥मयोपदिष्टमासाद्यवव्रेनाम्नाभयंपतिं ॥२३॥ऋषभंयवनानांत्वांवृणेवीरेप्सितंपतिं॥संकल्पस्त्वयि
भूतानांकृतःकिलनरिष्यति ॥ २४ ॥ द्वाविमावनुशोचंतिबालावसदवग्रहौ ॥ यल्लोकशास्त्रोपनतंनराति
नतदिच्छति ॥ २५ ॥ अथोभजस्वमांभद्रभजतींमेदयांकुरु ॥ एतावान्पौरुषोधर्मोयदार्ताननुकंपते ॥
॥ २६ ॥ कालकन्योदितवचोनिशम्ययवनेश्वरः ॥ चिकीर्षुर्देवगुह्यंसससस्मितांतामभाषत ॥ २७ ॥

धयश्चयवनास्तेषामीश्वरंभयनामानंवव्रे ॥ २३ ॥ हेवीरत्वामीप्सितंपतिंवृणेनरिष्यतिननश्यति ॥ २४ ॥ लोकतोवेदतश्चयद्देयत्वे नग्रा
ह्यत्वेनउपनतंप्राप्तंतद्याच्यमानंयोनददातियश्चदीयमानंनेच्छातिनगृण्हाति इमौद्वौकर्मभूतावनुशोचंतिसंतः ॥ २५ ॥ पुरुषेणकर्तव्योध
र्मःपौरुषः॥ २६ ॥ देवगुह्यंमरणं तद्धिप्राणिनांवैराग्यानुदयायदेवैर्गोप्यते ॥ २७ ॥ ॥ ॥ ॥

तुभ्यंतव आत्मसमाधिनाज्ञानदृष्ट्या याच्यमानोयंलोकस्त्वांनेच्छति अतोऽव्यक्तगतिःकुतःप्राप्तेत्यलक्षितगतिःसता लोकमाक्रम्यभुंक्ष्व एवंसर्वोऽपिलोकस्तवपतिःस्यादित्यर्थः ॥ २८ ॥ नचैवंत्वयाशंकनीयंप्रतिकूलांकोहनिष्यतीति यस्मात्त्वमेवप्रजानाशंकरिष्यसीत्याह याहीति यामदीयायवनपृतनातयायुक्ता ॥ २९ ॥ किंच प्रज्वारइति मारकोवैष्णवोज्वरः माहेश्वरस्यव्याध्यंतःपातित्वात् भीमाःघोराःसैनिकायस्य ॥ ३० ॥ इतिचतुर्थेटीकायांसप्तविंशोऽध्यायः ॥ २७॥ अष्टाविंशेतुवैदर्भ्याख्यानेनस्त्रीविचिंतया ॥ स्त्रीत्वंप्राप्तस्यदैवेनकदा

मयानिरूपितस्तुभ्यंपतिरात्मसमाधिना ॥ नाभिनंदतिलोकोऽयंत्वामभद्रामसंमतां ॥ त्वमव्यक्तगतिर्भुंक्ष्वलोकंकर्मविनिर्मितम् ॥ २८ ॥ याहिमेपृतनायुक्ताप्रजानाशंप्रणेष्यसि ॥ २९ ॥ प्रज्वारोऽयंममभ्राताखंचमेभगिनीभव ॥ चराम्युभाभ्यांलोकेऽस्मिन्नव्यक्तोभीमसैनिकः ॥ ३० ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपुरंजनोपाख्यानेसप्तविंशोऽध्यायः ॥ २७॥ छ ॥ नारदउवाच सैनिकाभयनाम्नोयेबर्हिष्मन्दिष्टकारिणः ॥ प्रज्वारकालकन्याभ्यांविचेरुरवनीमिमां ॥ १ ॥ तएकदातुरभसापुरंजनपुरींनृप ॥ रुरुधुर्भौमभोगाढ्यांजरत्पन्नगपालितां ॥ २ ॥ कालकन्यापिबुभुजेपुरंजनपुरंबलात् ॥ ययाऽभिभूतःपुरुषःसद्योनिःसारतामियात् ॥ ३ ॥ तयोपभुज्यमानांवैयवनाःसर्वतोदिशं ॥ द्वार्भिःप्रविश्यसुभृशंप्रार्दयन्सकलांपुरीं ॥ ४ ॥ तस्यांप्रपीड्यमानायामभिमानीपुरंजनः ॥ अवापोरुविधांस्तापान्कुटुंबीममताकुलः ॥ ५ ॥ कन्योपगूढोनष्टश्रीःकृपणोविषयात्मकः ॥ नष्टप्रज्ञोहृतैश्वर्योगंधर्वयवनैर्बलात् ॥६॥ विशीर्णांस्वपुरींवीक्ष्यप्रतिकूलाननादृतान् ॥ पुत्रान्पौत्रानुगामात्यान्जायांचगतसौहृदां ॥ ७ ॥

चिन्मुक्तिरुच्यते ॥ १ ॥ इदानींतुपुरंजनस्यपुंदेहत्यागपूर्वकंस्त्रीत्वप्रकारमाह सैनिकाइत्यादिराजसिंहस्यवेश्मनीत्यंतेन दिष्टंदैवंकुर्वंति अधिकुर्वंतीति तथामृत्योरादेशकारिणइतिवा ॥१॥ जरत्पन्नगेनजीर्णप्राणेनपालितां ॥ २ ॥ ३ ॥ द्वार्भिश्चक्षुरादिभिःरोगरूपेणप्रविश्य ॥४॥ ॥ ५ ॥ कन्ययाजरयोपगूढःसन्तत्प्रतिक्रियांनलेभेइतितृतीयेनान्वयः हृतैश्वर्यःउत्थानादिष्वशक्तेः ॥ ६ ॥ प्रतिकूलान् अनपेक्षितविषयप्रापणान् अनादृतान्आदरमकुर्वाणान् स्वाधीनत्वाभावात् अनुगाइंद्रियाणिअमात्याइंद्रियदेवाः गतसौहृदांअध्यवसायाभावात् ॥ ७ ॥

आत्मानामिति जरयाग्रस्तं पंचालान्विषयान् अरिभिर्विघ्नादिभिर्दूषितान् ॥ ८ ॥ कालकन्ययाहेतुभूतया यातयामान्निःसारानपिका मानभिलषन् विगताआत्मनोगतिःपारलौकिकीऐहिकःपुत्रादिस्नेहश्चयस्यसः स्नेहादितिवापाठः ॥ ९ ॥ सराजापुरंजनोहातुंप्रचक्रमेउ पक्रांतवानितिद्वयोरन्वयः अनिकामतःअनिच्छयापि ॥ १० ॥ ११ ॥ सपरिच्छदःमृत्युवर्गसाहितः कुटुंबेनदीव्यतीतिकौटुंबिकःकुटुं

आत्मानंकन्ययाग्रस्तंपंचालानरिदूषितान्॥दुरंतचिंतामापन्नोनलेभेतत्प्रतिक्रियां॥८॥ कामानभिलषन्दीनोयातयामांश्चकन्यया ॥ विगतात्मगतिस्नेहः पुत्रदारांश्चलालयन् ॥९॥ गंधर्वयवनाक्रांतांकालकन्योपमर्दितां ॥ हातुंप्रचक्रमेराजातांपुरीमनिकामतः॥१०॥भयनाम्नोऽग्रजोभ्राताप्रज्वारःप्रत्युपस्थितः॥ददाहतां पुरींकृत्स्नांभ्रातुःप्रियचिकीर्षया ॥११॥तस्यांसंदह्यमानायांसपौरःसपरिच्छदः॥कौटुंबिकःकुटुंबिन्याउपतप्यतसान्वयः॥ १२ ॥ यवनोपरुद्धायतनोग्रस्तायांकालकन्यया ॥ पुर्यांप्रज्वारसंसृष्टःपुरपालोऽन्वतप्य त ॥१३॥नशेकेसोऽवितुंतत्रपुरुकृच्छ्रोरुवेपथुः ॥ गंतुमैच्छत्ततोवृक्षकोटरादिवसानलात्॥१४॥शिथिलावयवो यर्हिगंधर्वैर्हृतपौरुषः॥यवनैररिभीराजन्नुपरुद्धोरुरोदह॥१५॥दुहितॄःपुत्रपौत्रांश्चजामिजामातृपार्षदान्॥ स्वत्वावशिष्टंयत्किंचिद्गृहकोशपरिच्छदं॥१६॥अहंममेतिस्वीकृत्यगृहेषुकुमतिर्गृही ॥दध्यौप्रमदयादीनोविप्रयोगउपस्थिते ॥ १७ ॥ लोकांतरंगतवतिमय्यनाथाकुटुंबिनी ॥ वर्तिष्यतेकथंत्वेषाबालकाननुशोचती ॥ ॥ १८ ॥ नमय्यनाशितेभुंक्तेनास्नातेस्नातिमत्परा ॥ मयिरुष्टेसुसंत्रस्ताभर्त्सितेयतवाग्भयात् ॥ १९ ॥

बिन्यासंधिर्नात्रविवक्षितः सान्वयःपुत्रादिसहितः ॥ १२ ॥ यवनैरुपरुद्धान्यायतनानियस्यसः पुरपालः ॥ १३ ॥ पुरुबहुकृच्छ्रंतेनउरुर्वेपथुर्यस्य वृक्षकोटरादिवसर्पः ॥ १४ ॥ कंठेउपरुद्धोरुरोद घुरघुरध्वनिंचकार ॥ १५ ॥ दुहित्रादन्दिध्यावित्युत्तरेणान्वयः जामयोऽत्रस्नुषाः स्वत्वमात्रेणावशिष्टंभोगस्तुप्रागेवक्षीणः ॥ १६ ॥ १७ ॥ ध्यानमेवाह लोकांतरमिति ॥ १८ ॥ अनाशिते अभोजिते भर्त्सितेभर्त्सनेकृते यतवाग्भवति ॥ १९ ॥ ॥ ॥ ॥

अज्ञमविवेकिनंमां व्युषितेदेशांतरंगते गृहमेधीयंवर्त्मगृहधर्ममपिकिंनेष्यति अनुवर्तयिष्यतियुक्तमेतत् यतोवीरसूः पुत्रवती किंवामद्विर हमसहमानामारिष्यस्येवेत्यर्थः ॥ २० ॥ नाविद्यतेपरमयनमाश्रयोयेषां अपरायणाःपुत्राःकन्याश्च यद्वा पराश्रयाःकन्याः भिन्नानौर्येषां ॥ ॥ २१ ॥ अतदर्हणंवस्तुतस्तस्यब्रह्मत्वात् ॥ २२ ॥ एषः यदाक्षयंस्थानंनयिमानस्तदा अनुपथाःप्राणाइंद्रियाणि तथाचश्रुतिः तमनु क्रामंतंप्राणोऽनुक्रामतिप्राणमनुक्रामंतंसर्वेप्राणाअनुक्रामंतीति ॥ २३ ॥ प्रकृतिं महाभूतात्मतां ॥ २४ ॥ नाविंदत् नसस्मार पुरःपूर्वं सखायंसंतमश्चिरं ॥ २५ ॥ अदयालुना काम्यकर्मसुयेसंज्ञप्ताःहताः अमीवंपापं क्रौर्यंवा ॥ २६ ॥ शाश्वतीःसमाःआर्तिमनुभूय ॥

प्रबोधयतिमामज्ञंव्युषितेशोककर्शिता ॥ वर्त्मैतद्गृहमेधीयंवीरसूरपिनेष्यति ॥२०॥ कथंनुदारकादीना दारकीर्वापरायणाः ॥ वर्तिष्यंतेमयिगतेभिन्ननावइवोदधौ ॥२१॥ एवंकृपणयाबुद्ध्याशोचंतमतदर्हणं॥ ग्रहीतुंकृतधीरेनंभयनामाभ्यपद्यत ॥ २२ ॥ पशुवद्यवनैरेषनीयमानःस्वकंक्षयं ॥ अन्वद्रवन्ननुपथाः शोचंतोभृशमातुराः ॥ २३ ॥ पुरींविहायोपगतउपरुद्धोभुजंगमः ॥ यदातमेवानुपुरीविशीर्णाप्रकृतिंग ता ॥२४॥ विकृष्यमाणःप्रसभंयवनेनबलीयसा॥नाविंदत्तमसाविष्टःसखायंसुहृदंपुरः ॥२५॥ तंयज्ञपश वोऽनेनसंज्ञप्तायेदयालुना ॥ कुठारैश्चिच्छिदुःक्रुद्धाःस्मरंतोऽमीवमस्यतत् ॥२६॥ अनंतपारेतमसिमग्नो नष्टस्मृतिःसमाः॥शाश्वतीरनुभूयार्तिंप्रमदासंगदूषितः ॥२७॥ तामेवमनसागृण्हन्बभूवप्रमदोत्तमा॥अनं तरंविदर्भस्यराजसिंहस्यवेश्मनि ॥ २८ ॥

॥ २७ ॥ अंतकालेतांभार्यामेवमनसागृह्णन्स्मरन् अनंतरंविदर्भस्यवेश्मनिप्रमदोत्तमाबभूव अतःपरमास्मिन्प्रकरणेएतावदेवप्रकृतोपयो गिविवक्षितं स्त्रीध्यानेनस्त्रीत्वप्राप्तावपिपतिव्रताध्यानेनपूर्वादृष्टेनचधार्मिकाद्विदर्भाज्जन्माभूत् धार्मिकसंगेनचविशुद्धस्यभागवतनेमलय ध्वजेनसंगोऽभूत् ततोविष्णुभक्तिस्ततोवैराग्यंततस्तमेवभर्तृरूपंगुरुंपातिव्रत्यधर्मेणभजतोभगवत्प्रसादलब्धज्ञानेनमोक्षइति अन्यत्तुकथा लंकारमात्रंतथाऽपिकिंचिद्वृत्तिसामान्येनेहयोजयिष्यामः विदर्भस्यविशिष्टदर्भोपलक्षितस्यकर्मठस्य राजसमूहस्यधर्मेणगार्हिप्रजापालनेन यज्ञादिनाचक्षात्रियाराजंते तेषुश्रेष्ठस्यवेश्मनि ॥ २८ ॥ ॥ ॥ ॥

मलयोपलक्षितेदक्षिणदेशे ध्वजइवदर्शनीयः सहिश्रीविष्णुभक्तप्रधानोदेशः तत्रमुख्यःमहाभागवतइत्यर्थः पंडानिश्चयबुद्धिःतामर्हतीति पांड्यःसउपयेमे पुरंजनोभागवतसंगंप्राप्तइत्यर्थः ॥ २९ ॥ आत्मजांश्रीकृष्णसेवारुचिं तत्संगेनभगवद्धर्मेरुचिरभूदित्यर्थः असितस्यश्रीकृष्णस्येक्षणंययातां यवीयसःसप्तसुतान् श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनं ॥ अर्चनंवंदनंदास्यमितिभक्तिप्रकारान् सख्यात्मनिवेदनयोस्त्वंपदार्थज्ञानोत्तरकालत्वात् तस्यचभगवतैवोत्तरत्रोपदेक्ष्यमाणत्वादिदानीमनुत्पत्तेःसप्तेत्युक्तं भगवद्धर्मरुच्यातच्छ्रवणकीर्तनादिकंजातमित्यर्थः द्रविडभूमिपालकान् द्रविडभूमिपैर्हिश्रवणादिभक्तिरेवसुरक्षिताऽस्तीतिप्रसिद्धं ॥ ३० ॥ अर्बुदमिति श्रवणादीनांप्रत्येकमनेकेप्रकाराअभवन्नित्यर्थः तदुक्तं भक्तियोगोबहुविधोमार्गैर्भामिनिभाव्यतेइति ॥ येषांवंशधरैःयतःप्रवृत्तैःसंप्रदायभेदैः कृत्स्नामहीमन्वंतरंततःपरंचभोक्ष्यते अविद्याकामकर्मभ्योऽपिरक्षिष्यते ॥ ३१ ॥ अगस्त्यः अंगानिनिष्क्रियाणिगात्राणिस्त्यायातिसंघातयतीत्य

उपयेमेवीर्यपणांवैदर्भीमलयध्वजः ॥ युधिनिर्जित्यराजन्यान्पांड्यःपरपुरंजयः ॥ २९॥ तस्यांसजनयांचक्रेआत्मजामसितेक्षणां ॥ यवीयसःसप्तसुतान्सप्तद्रविडभूभृतः ॥३०॥ एकैकस्याभवत्तेषांराजन्नर्बुदमर्बुदं ॥ भोक्ष्यतेयद्वंशधरैर्महीमन्वंतरंपरं ॥ ३१॥ अगस्त्यःप्राग्दुहितरमुपयेमेधृतव्रतां ॥ यस्यांदृढच्युतोजातइध्मवाहात्मजोमुनिः ॥३२॥ विभज्यतनयेभ्यःक्ष्मांराजर्षिर्मलयध्वजः ॥ आरिराधयिषुःकृष्णंसजगामकुलाचलं ॥३३॥ हित्वागृहान्सुतान्भोगान्वैदर्भीमदिरेक्षणा ॥ अन्वधावतपांड्येशंज्योत्स्नेवरजनीकरं॥३४॥

गस्त्योमनः सप्राक्प्रथमजातांदुहितरंकृष्णसेवारुचिमुपयेमे तस्यांमनःकृष्णेदृढांरतिंबबंधेत्यर्थः धृतानिशमदमादीनिव्रतानिययातांरतिंदृढेभ्यःसत्यलोकादिभोगेभ्योऽपिच्युतस्तद्रहितः कृष्णरताविहामुत्रभोगविरागोजातइत्यर्थः सएवोपशमात्मकत्वान्मुनिः कथंभूतः इध्मवाहआत्मजोयस्यसः तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्सामित्पाणिःश्रोत्रियंब्रह्मनिष्ठमित्यादिश्रुतिप्रसिद्धासमिद्वहनोपलक्षितागुरूपसत्तिर्वैराग्यादभूदित्यर्थः नह्यविरक्तस्यगुरूपसत्तिःसंभवति कथापक्षेयथाश्रुतमेव ॥ ३२ ॥ क्ष्मांविभज्यतत्रश्रवणादिभक्तिभेदंव्यवस्थाप्य ॥ ॥ ३३ ॥ इदानींपुरंजनस्यस्त्रीभावंप्राप्तस्यसर्वतोविरक्तस्य पतिरेवगुरुःस्त्रीणामितिवचनात्पतिसेवया गुरुशुश्रूषाप्रकारंदर्शयितुमाह हित्वेत्यादिनामनोदधदित्यंतेनग्रंथेन मदयतीतिमदिरमीक्षणंयस्यां ॥ ३४ ॥ ॥ ॥

तत्रचंद्रमसाद्यानद्यस्तासांपुण्यैःसलिलैरुभयत्रांतर्बहिश्चात्मनोमलंक्षालयन् तपआस्थितइत्युत्तरेणान्वयः ॥ ३५ ॥ अस्यतेभूमौक्षिप्यत इत्यष्टिर्बीजं ॥ ३६ ॥ ३७ ॥ विद्ययाउपासनया पक्वकषायः दग्धकामादिवासनःयुयुजे आत्मनोब्रह्मतांभावयामास अक्षाणींद्रियाणि अनिलःप्राणःआशयश्चित्तं विजिताअक्षादयोयेन ॥ ३८ ॥ आस्तेस्मवर्षशतामितिज्ञानस्यदुःसाधनतांदर्शयति अतएवभक्तिंकृतवानित्याह वासुदेवेरतिमुद्वहन् अन्यद्देहादिकंनवेद ॥ ३९ ॥ सएवंवर्तमानःआत्मन्यात्मानंविद्वान् अन्यस्मादुपरराम कथंविद्वान्व्यतिरिक्ततया देहादिव्यतिरिक्तत्वेनकुतःव्यापकतयादेहादिप्रकाशकत्वेन ननुदेहाद्याकारोविमर्शएतत्प्रकाशयति नतुनिराकारआत्मातआह आ

तत्रचंद्रमसानामताम्रपर्णीवटोदका ॥ तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनोमृजन् ॥ ३५ ॥ कंदाष्टिभिर्मूलफलैःपुष्पपर्णैस्तृणोदकैः ॥ वर्तमानःशनैर्गात्रकर्षणंतपआस्थितः ॥ ३६ ॥ शीतोष्णवातवर्षाणिक्षुत्पिपासेप्रियाप्रिये ॥ सुखदुःखेइतिद्वंद्वान्यजयत्समदर्शनः ॥ ३७ ॥ तपसाविद्ययापक्वकषायोनियमैर्यमैः ॥ युयुजेब्रह्मण्यात्मानंविजिताक्षानिलाशयः ॥ ३८ ॥ आस्तेस्थाणुरिवैकत्रदिव्यंवर्षशतंस्थिरः ॥ वासुदेवेभगवतिनान्यद्वेदोद्वहन्रतिं ॥ ३९ ॥ सव्यापकतयात्मानंव्यतिरिक्ततयात्मनि ॥ विद्वान्स्वप्नइवामर्शसाक्षिणंविररामह ॥ ४० ॥ साक्षाद्भगवतोक्तेनगुरुणाहरिणानृप ॥ विशुद्धज्ञानदीपेनस्फुरताविश्वतोमुखं ॥ ४१ ॥ परेब्रह्मणिचात्मानंपरंब्रह्मतथात्मनि ॥ वीक्षमाणोविहायेक्षामस्मादुपरराम ह ॥ ४२ ॥ पतिंपरमधर्मज्ञंवैदर्भीमलयध्वजं ॥ प्रेम्णापर्यचरद्धित्वाभोगान्सापतिदेवता ॥ ४३ ॥ ॥

मर्शस्यापिसाक्षिणं अयंभावः आमर्शोनामांतःकरणवृत्तिः साचजडत्वादात्मप्रकाश्यैवेति यथास्वप्नेममेदंशिरश्छिन्नमित्यादिप्रतीतौतद्व्यतिरिक्तमात्मानंवेत्तितद्वत् ॥ ४० ॥ केनविद्वान्तत्राह साक्षाद्धरिरेवयोगुरुस्तेनोक्तेनसर्वतोमुखंयथातथास्फुरता अनवच्छिन्नेनज्ञानेन ॥ ॥ ४१ ॥ तदेवाह परइति ब्रह्मैवाहंनसंसारीति ब्रह्मण्यात्मनईक्षणेशोकादिनिवृत्तिः अहमेवब्रह्मेत्यात्मनिब्रह्मणईक्षणेब्रह्मपारोक्ष्यनिवृत्तिः अतोव्यतिहारेणेक्षमाणःअस्मात्संसारादुपरराम नन्वेवमपिजीवस्यकुतोब्रह्मत्वापात्तिःईक्षणस्यैवव्यवधायकत्वादित्याशंक्याहईक्षां विहायदग्धेंधनानलवत्तस्याःस्वयमेवोपशांतेरितिभावः ॥ ४२ ॥ ॥ ४३ ॥ ॥ ॥

उपपतिं पत्युःसमीपे यद्वापत्युःकिंचिन्मात्रंन्यूना तत्समानासतीबभावित्यर्थः उपोऽधिकेचेतिकर्मप्रवचनीयःतद्योगेचद्वितीया शांतमं
गारावस्थमनलमुपशांताशुद्धाज्वालायथाभवतितद्वत् ॥ ४४ ॥ तदानीमपिसुस्थिरमासनंयस्य अतएवाजानतीयदातदायथापूर्वमसेवत ॥
॥४५॥ पत्युरंघ्रिमर्चयंती यदातस्मिन्नंघ्रावूष्माणंनापश्यत् ॥ ४६ ॥ अबंधुंपतिरहितं अश्रुभिरासिच्य ॥ ४७ ॥ क्षत्रबंधुभ्यः अधार्मिकक्षत्रि
येभ्योऽपि ॥ ४८ ॥ अवर्तयत् प्रवर्तयामास ॥ ४९ ॥ तस्यांनिधायाग्निदानेनादीप्यच ॥ ५० ॥ पूर्वतरःअनादिरीश्वरःसखा द्वासुपर्णावि

चीरवासाव्रतक्षामावेणीभूतशिरोरुहा ॥ बभावुपपतिंशांताशिखाशांतमिवानलं ॥ ४४ ॥ अजानतीप्रियत
मंयदोपरतमंगना॥सुस्थिरासनमासाद्ययथापूर्वमुपाचरत्॥४५॥यदानोपालभेतांघ्रावूष्माणंपत्युरर्चती ॥
आसीत्संविग्नहृदयायूथभ्रष्टामृगीयथा ॥ ४६ ॥ आत्मानंशोचतीदीनमबंधुंविक्लवाऽश्रुभिः ॥ स्तनावासि
च्यविपिनेसुस्वरंप्ररुरोदसा ॥ ४७॥ उत्तिष्ठोत्तिष्ठराजर्षेइमामुदधिमेखलां ॥ दस्युभ्यःक्षत्रबंधुभ्योबिभ्यतीं
पातुमर्हसि ॥ ४८ ॥ एवंविलपतीबालाविपिनेनुगतापतिं॥ पतितापादयोर्भर्तूरुदंत्यश्रूण्यवर्तयत् ॥४९॥
चितिंदारुमयींचित्वातस्यांपत्युःकलेवरं ॥ आदीप्यचानुमरणेविलपंतीमनोदधे ॥ ५० ॥ तत्रपूर्वतरःकश्चि
त्सखाब्राह्मणआत्मवान् ॥ सांत्वयन्वल्गुनासाम्नातामाहरुदतींप्रभो ॥५१॥ ब्राह्मणउवाच कात्वंकस्यासि
कोवाऽयंशयानोयस्यशोचसि ॥ जानासिकिंसखायंमांयेनाग्रेविचचर्थह ॥ ५२ ॥ अपिस्मरसिचात्मानम
विज्ञातसखंसखे ॥ हित्वामांपदमन्विच्छन्भौमभोगरतोगतः ॥ ५३ ॥ हंसावहंचत्वंचार्यसखायौमानसाय
नौ ॥ अभूतामंतरावोकःसहस्रपरिवत्सरान् ॥ ५४ ॥ सत्वंविहायमांबंधोगतोग्राम्यमतिर्महीं ॥ विचरन्प
दमद्राक्षीःकयाचिन्निर्मितंस्त्रिया ॥ ५५ ॥

तिश्रुतेः साम्नाप्रियवाक्येनसंबोधयन् ॥ ५१ ॥ यस्ययंशोचासि अग्रेसृष्टेः
पूर्वंविचचर्थह मयिस्थितत्वेनसख्यंसुखमनुभूतवानासि ॥ ५२ ॥ यद्यपिमांनजानासितथाऽप्यात्मानंत्वामविज्ञातसखं अविज्ञातः कश्चि
न्मेसखाआसीदित्येवंकिंस्मरसि सखइतिपुंस्त्वनिर्देशःप्राक्तनपुंस्त्वस्मरणाय सख्यंस्मारयन् स्ववियोगकृतमनर्थमाह हित्वेतिसार्द्धैःषड्
भिः पदंस्थानं ॥ ५३ ॥ हंसौशुद्धौ मानसंहृदयमयनंययोःकथापक्षेमानससरसिस्थितौपक्षिणावभूतांजातौ ओकोगृहं अंतराविनैववा
शब्दएवार्थे सहस्रपरिवत्सरान् महाप्रलयोयावत् ॥ ५४ ॥ हे बंधो ग्राम्येसुखेमतिर्यस्य स्त्रियामायया ॥ ५५ ॥ ॥ ॥

पंचारामाउपवनानियस्मिन् नवद्वाराणिप्राणच्छिद्राणियस्मिन् एकःप्राणःपालोयस्मिन् त्रीणिपृथिव्यप्तेजांसि कोष्ठानिप्राकारायस्मिन् षट् ज्ञानेंद्रियमनांसिकुलानिअभीष्टविषयसमर्पकावणिजोयस्मिन् पंचविपणाहट्टाःकर्मेंद्रियाणियस्मिन् पंचभूतानिप्रकृतिःउपादानकारणंय स्य स्त्रीबुद्धिरेवधवःपतिःस्वामिनीयस्मिन् ॥५६॥ स्वयमेवेमंश्लोकंव्याचष्टे पंचेंद्रियार्थाइतिषट्कुलमिति एकपालमितिचस्पष्टत्वान्नव्या ख्यातं ॥ ५७ ॥ भूतान्येवप्रकृतिरुपादानंयस्य स्त्रीधवमित्यस्यव्याख्यानं शक्तिरधीशायस्य तद्वशःसन्नित्यर्थः ॥ ५८ ॥ रुद्र :अभिभूतः अ तोनविद्यतेश्रुतेब्रह्मत्वेस्मृतिर्यस्य ॥५९॥ तत्त्वमुपदिशति नत्वमितिचतुर्भिः सुहृत्पतिः नवद्वारेपुरेययारुद्धोऽसितस्याः ॥६०॥ पुमांसंपूर्वज

पंचारामंनवद्वारमेकपालंत्रिकोष्ठकं ॥ षट्कुलंपंचविपणंपंचप्रकृतिस्त्रीधवं ॥ ५६ ॥ पंचेंद्रियार्थाआरामा द्वारःप्राणानवप्रभो ॥ तेजोऽबन्नानिकोष्ठानिकुलमिंद्रियसंग्रहः ॥ ५७ ॥ विपणस्तुक्रियाशक्तिर्भूतप्रकृति रव्यया ॥ शक्त्यधीशःपुमांस्त्वत्रप्रविष्टोनावबुध्यते ॥ ५८ ॥ तस्मिंस्त्वंरामयापृष्टोरममाणोऽश्रुतस्मृतिः ॥ तत्संगादीदृशींप्राप्तोदशांपापीयसींप्रभो ॥ ५९ ॥ नत्वंविदर्भदुहितानायंवीरःसुहृत्तव ॥ नपतिस्त्वंपुरंज न्यारुद्धोनवमुखेयया ॥ ६० ॥ मायाह्येषामयासृष्टायत्पुमांसंस्त्रियंसतीं ॥ मन्यसेनोभयंयद्वैहंसौपश्याव योर्गतिं ॥ ६१ ॥ अहंभवान्नचान्यस्त्वंत्वमेवाहंविचक्ष्वभो ॥ ननौपश्यंतिकवयश्छिद्रंजातुमनागपि ॥ ६२ ॥ यथापुरुषआत्मानमेकमादर्शचक्षुषोः ॥ द्विधाभूतमवेक्षेततथैवांतरमावयोः ॥ ६३ ॥ एवंसमानसोहंसोहं सेनप्रतिबोधितः ॥ स्वस्थस्तद्व्यभिचारेणनष्टामापपुनःस्मृतिं ॥ ६४ ॥ ॥ ॥

न्मानि यदमन्यथाइदानींचसतींश्रेष्ठांस्त्रियंयन्मन्यसे एषामाया यतउभयमपिवस्तुतोनास्ति यस्मादावांहंसौशुद्धौ नौआवयोर्वक्ष्यमाणांगतिं स्वरूपंपश्य ॥६१॥ तत्त्वंपदार्थयोश्चिदंशेनैक्यमाह अहमेवभवान् उपचारंवारयति नचान्यइति व्यतिहारोपदेशःउक्ताभिप्रायः छिद्र मंतरं ॥६२॥ तर्हिकथमावयोरज्ञत्वसर्वज्ञत्वादिभेदस्तत्राह यथेति आत्मानंदेहमादर्शेनिर्मलंमहांतंस्थिरंचावेक्षेत परस्यचक्षुषिचतद्विपरीतं विद्याविद्योपाधिकृतोधर्मभेदइत्यर्थः॥६३॥ एवंनारदवाक्यं एवममुनाप्रकारेणसमानसोहंसःक्षेत्रज्ञः हंसेनपरमात्मना बोधितःसन् स्वस्थः आत्मनिस्थितःसन् चिरंध्वात्वातद्व्यभिचारेणेश्वरवियोगेनविषयाभिलाषबुध्यानष्टांस्मृतिमहंब्रह्मास्मीतिज्ञानंपुनःप्राप्तवान् ॥ ६४ ॥

कथामात्रमितिबुद्धिंवारयति बर्हिष्मन्निति पारोक्ष्येण राजकथामिषेण तत्रहेतुः यद्यस्मात् हेबर्हिष्मन् प्राचीनबर्हिः एतद्राजकथामिषे णआत्मकथाप्रदर्शिता यस्माद्देवःश्रीनारायणः परोक्षप्रियः साक्षादात्मज्ञानकथनेनतवचेतसिकथानायातीतिभावः ॥ ६५ ॥ इतिचतु र्थेटीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ ऊनात्रिंशेपरोक्षार्थव्याख्यानेनोपसंहृतं ॥ स्त्रीसंगतोभवस्त्वीशसंगान्मुक्तिरितिस्फुटं ॥ ॥ १ ॥ कवयःअध्यात्मविदः ॥ १ ॥ व्यनक्तिलिंगयति चेतनीकरोतीत्यर्थः यद्वाव्यनक्तिप्रकटयति ततश्चस्वकर्मणापुरंजनयतीतिपुरंज

बर्हिष्मन्नेतदध्यात्मंपारोक्ष्येणप्रदर्शितं ॥ यत्परोक्षप्रियोदेवोभगवान्विश्वभावनः ॥ ६५ ॥ इतिश्री भागवतेमहापुराणेचतुर्थस्कंधेपुरंजनोपाख्यानेअष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ प्राचीनबर्हि रुवाच भगवंस्तेवचोऽस्माभिर्नसम्यगवगम्यते ॥ कवयस्तद्विजानंतिनवयंकर्ममोहिताः ॥ १ ॥ नार दउवाच पुरुषंपुरंजनंविद्याद्यद्व्यनक्त्यात्मनःपुरः ॥ एकद्वित्रिचतुष्पादंबहुपादमपादकं ॥ २ ॥ योऽवि ज्ञाताहृतस्तस्यपुरुषस्यसखेश्वरः ॥ यन्नविज्ञायतेपुंभिर्नामभिर्वाक्रियागुणैः ॥ ३ ॥ यदाजिघृक्षुःपुरुषःका र्त्स्न्येनप्रकृतेर्गुणान् ॥ नवद्वारंद्विहस्तांघ्रितत्रामनुतसाध्विति ॥४॥ बुद्धिंतुप्रमदांविद्यान्ममाहमितियत्कृतं ॥ यामधिष्ठायदेहेस्मिन्पुमान्भुंक्तेऽक्षभिर्गुणान् ॥ ५ ॥ सखायइंद्रियगणाज्ञानंकर्मचयत्कृतं ॥ सख्यस्तद्वृत्त यःप्राणःपंचवृत्तिर्यथोरगः ॥ ६ ॥ बृहद्बलंमनोविद्यादुभयेंद्रियनायकं ॥ पंचालाःपंचविषयायन्मध्येनवखं पुरं ॥ ७ ॥ अक्षिणीनासिकेकर्णौमुखंशिश्नगुदाविति ॥ द्वेद्वेद्वारौबहिर्यातियस्तदिंद्रियसंयुतः ॥ ८ ॥ अक्षि णीनासिकेआस्यमितिपंचपुरःकृताः ॥ दक्षिणादक्षिणःकर्णउत्तराचोत्तरःस्मृतः ॥ ९ ॥ ॥

नपदंव्याख्यातंभवति एकद्व्यादयःपादायस्य ॥ २ ॥ अविज्ञातशब्देनाहृतः व्याहृतः उक्तोयःसईश्वरः अविज्ञातनामानिरुक्तिःयद्यस्मा त्पुंभिर्नामादियोगेन नविज्ञायते ॥ ३ ॥ तत्रतेषुपुरेषुमध्ये ॥ ४ ॥ अक्षभिरिंद्रियैः ॥ ५ ॥ पंचवृत्तित्वात् पंचशिराःसर्पइवप्राणः ॥ ॥ ६ ॥ एकादशमहाभटइत्यनेनएकादशोमहाभटोनायकइत्युक्तःतंदर्शयति बृहद्बलंयस्यतन्मनः नव खानि द्वाराणियस्य ॥ ७ ॥ द्युमत्सखइत्यादेरर्थंसंक्षेपेणाह यस्तदिंद्रियसंयुतःस आत्माताभिर्द्वार्भिः बहिर्यातीति ॥ ८ ॥ पुरः पूर्वभागेकृताः ॥ ९ ॥

नेत्रेइति रूपमितिचक्षुषेतिखद्योतादीनांव्याख्यानं शेषोऽनुवादः ईश्वरःपुरंजनः ॥ १० ॥ नासेइतिव्याख्या अवधुनोतीत्य
वधूतोवायुः तदात्मकेनोच्छ्वासेनसहैकस्थानत्वात् घ्राणोऽवधूतःआस्यमितिव्याख्या रसज्ञविपणान्वितइत्यत्ररसज्ञशब्दनिर्दिष्टस्यरसवि
दित्यनुवादः रसइतिव्याख्या रसनेंद्रियमित्यर्थः विपणोवाग्रसविद्रसइत्येवपाठः आर्षत्वान्नदोषः ॥ ११ ॥ अंधःअन्नं ॥ १२ ॥ १३ ॥
ग्रामकमित्यस्यानुवादः ग्रामिणांरतिरिति तस्यव्याख्याव्यवायइति ॥ १४ ॥ १५ ॥ विषूचीनपदार्थानुवादोविषूचीरिति तद्गुणैर्मनोगुणै

पश्चिमेइत्यधोद्वारौगुदंशिश्नमिहोच्यते ॥ खद्योताविर्मुखीचात्रनेत्रेएकत्रनिर्मिते ॥ रूपंविभ्राजितंताभ्यां
विचष्टेचक्षुषेश्वरः ॥ १० ॥ नलिनीनालिनीनासेगंधःसौरभउच्यते ॥ घ्राणोऽवधूतोमुख्यास्यंविपणोवाग्रस
विद्रसः ॥ ११ ॥ आपणोव्यवहारोत्रचित्रमंधोबहूदनं ॥ पितृहूर्दक्षिणःकर्णउत्तरोदेवहूःस्मृतः ॥ १२ ॥ प्रवृ
त्तंचनिवृत्तंचशास्त्रंपंचालसंज्ञितं ॥ पितृयानंदेवयानंश्रोत्राच्छ्रुतधराद्व्रजेत् ॥ १३ ॥ आसुरीमेढ्रमर्वाग्द्वार्व्य
वायोग्रामिणांरतिः ॥ उपस्थोदुर्मदःप्रोक्तोनिर्ऋतिर्गुदउच्यते ॥ १४ ॥ वैशसंनरकंपायुर्लुब्धकोंधौतुमेशृणु
॥ हस्तपादौपुमांस्ताभ्यांयुक्तोयातिकरोतिच ॥ १५ ॥ अंतःपुरंचहृदयंविषूचीर्मनउच्यते ॥ तत्रमोहंप्रसादंवा
हर्षंप्राप्नोतितद्गुणैः ॥ १६ ॥ यथायथाविक्रियतेगुणाक्तोविकरोतिवा ॥ तथातथोपद्रष्टात्मातद्वृत्तीरनुकार्यते
॥ १७ ॥ देहोरथस्त्विंद्रियाश्वःसंवत्सररयोगतिः ॥ द्विकर्मचक्रस्त्रिगुणध्वजःपंचासुबंधुरः ॥ १८ ॥ मनोर
श्मिर्बुद्धिसूतोहृन्नीडोद्वंद्वकूबरः ॥ पंचेंद्रियार्थप्रक्षेपःसप्तधातुवरूथकः ॥ १९ ॥ ॥

स्तमःसत्वरजोभिः ॥ १६ ॥ महिषीयद्यदीहेतेत्यादेरर्थंसंगृह्याह यथायथाबुद्धिःस्वप्नेविक्रियते जाग्रतिविकरोतिवाइंद्रियाणिपरिणमयति
तस्यागुणैरक्तोलिप्तआत्मातथातथातस्यावृत्तीःदर्शनस्पर्शनाद्याःकेवलमुपद्रष्टैवसन्बलादनुकार्यते ॥ १७ ॥ आशुगमित्येतद्व्याचष्टे संव
त्सरस्येवाप्रतिहतोरयोवेगःप्रतीतोयस्य ससंवत्सररयःवस्तुतस्तुअगतिःस्वप्नशरीरादेर्बुद्धावेवविवृतत्वेनदेशांतरगत्यभावात् पाठांतरेसंव
त्सरश्चतत्कृतंवयश्चताभ्यांगतिर्यस्येतिद्वाषमित्यस्यव्याख्यानारदेनकृता द्विचक्रमित्यस्यव्याख्या द्विकर्मचक्रइति त्रिगुणध्वजइति त्रिवे
णुपदव्याख्या ॥ १८ ॥ पंचप्रहरणमित्येतद्व्याचष्टे पंचेंद्रियार्थप्रक्षेपइति ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पंचेंद्रियैःसूनाविनोदमिवान्यायेनविषयसेवांकरोतीतिपंचसूनाविनोदकृत् अनेनचचारमृगयांतत्रेत्यादिव्याख्यातं ॥ २० ॥ परिक्रांत्याप रिक्रमणेन ॥ २१ ॥ भगिनीत्वेनजगृहे लोकानांक्षयाय ॥ २२ ॥ चराःसंचारिणः भूतानामुपसर्गेपीडायामाशुशीघ्रोमृत्युहेतुः रयोवेगोयस्य प्रज्वारस्येतिप्रशब्दव्याख्या पाठांतरेभूतकृताःअरयः अनेनचारिभिरुपरुद्धइत्यपिपदंव्याख्यातं द्विविधःशीतोष्णरूपेणप्रवेशनिर्गमभेदा त् ॥ २३ ॥ एवंपरोक्षत्वेनोक्तमर्थंव्याख्यायसर्वकथातात्पर्यमाह एवमित्यादिविरमक्रमेणेत्यंतेन आधिदैविकादिभिर्दुःखैः क्लिश्यमानोम माहमितिदेहेशतंवर्षाणिशेतेवर्ततइतिद्वयोरन्वयः ॥ २४॥ अशनापिपासादीन्प्राणधर्मान् अंधत्वादीनिंद्रियधर्मान् कामादीन्मनोधर्मांश्च

आकूतिर्विक्रमोबाह्योमृतत्तृष्णांप्रधावति ॥ एकादशेंद्रियचमूःपंचसूनाविनोदकृत् ॥ संवत्सरश्चंडवेगःका लोयेनोपलक्षितः॥२०॥ तस्याहानीहगंधर्वागंधर्व्योरात्रयःस्मृताः॥ हरंत्यायुःपरिक्रांत्याषष्ट्युत्तरशतत्रयं ॥२१॥कालकन्याजरासाक्षाल्लोकस्तांनाभिनंदति॥स्वसारंजगृहेमृत्युःक्षयाययवनेश्वरः॥२२॥आधयोव्या धयस्तस्यसैनिकायवनाश्चराः॥भूतोपसर्गाशुरयःप्रज्वारोद्विविधोज्वरः॥२३॥एवंबहुविधैर्दुःखैर्दैवभूतात्म संभवैः॥क्लिश्यमानःशतंवर्षंदेहेदेहीतमोवृतः ॥ २४॥ प्राणेंद्रियमनोधर्मानात्मन्यध्यस्यनिर्गुणः ॥ शेतेका मलवान्ध्यायन्ममाहमितिकर्मकृत् ॥२५ ॥ यदात्मानमविज्ञायभगवंतंपरंगुरुं ॥ पुरुषस्तुविषज्जेतगुणेषुप्र कृतेःस्वदृक् ॥ २६ ॥ गुणाभिमानीसतदाकर्माणिकुरुतेवशः ॥ शुक्लंकृष्णंलोहितंवायथाकर्माभिजायते ॥ ॥२७॥ शुक्लान्प्रकाशभूयिष्ठान्लोकानाप्नोतिकर्हिचित्॥दुःखोदर्कान्क्रियायासांस्तमःशोकोत्कटान्कचि त् ॥२८॥ कचित्पुमान्कचिच्चस्त्रीकचिन्नोभयमंधधीः ॥ देवोमनुष्यस्तिर्यग्वायथाकर्मगुणंभवः ॥२९॥ क्षुत्परीतोयथादीनःसारमेयोगृहंगृहं ॥ चरन्विंदतियद्दिष्टंदंडमोदनमेववा ॥ ३० ॥

निर्गुणोऽप्यात्मन्यध्यस्यकामलवान् विषयसुखलेशान्ध्यायन्कर्मकृत् ॥ २५॥ ततःकिमतआह यदेतिद्वाभ्यां स्वदृक्प्रकाशकस्वभावो ऽपि ॥ २६ ॥ शुक्लंसात्विकं कृष्णंतामसं लोहितंराजसं यथाकर्मतथाजायते ॥ २७ ॥ तदेवाह शुक्लानितिद्वाभ्यां प्रकाशोभूयिष्ठोयेषु दुःखमु दर्कंउत्तरफलंयेषु क्रिययाआयासोयेषुतान् लोहितान् तमःशोकावुत्कटौयेषुतान् कृष्णानितिज्ञेयं ॥ २८ ॥ नोभयंनपुंसकं यथाकर्मगुणंक र्मगुणावनतिक्रम्य ॥ २९ ॥ तेषुदैववशेनसुखदुःखेप्राप्नोतीतिसदृष्टांतमाहद्वाभ्यां क्षुधापरीतोव्याप्तः सारमेयःश्वा दंडंदंडेनताडनं ॥ ३० ॥

कामम्यात्म आशयोयस्य ॥ ३१ ॥ ननुतर्हिसुखस्यसंभवाद्दुःखस्यचप्रतीकारसंभवान्नैकांततोहेयत्वंतत्राह दुःखेष्विति दुःखस्यप्रतीकार
स्तावन्नास्तिस्याच्चेत्तस्यतस्यप्रतिक्रियातथाऽपित्रिविधेषुदुःखेषुमध्येएकतरेणापिदुःखेनव्यवच्छेदोवियोगोनास्ति ॥ ३२ ॥ प्रतिक्रियाणा
मपिदुःखरूपत्वादितिसदृष्टांतमाह यथाहीति ॥ ३३ ॥ दुःखस्यमूलभूतानिकर्माणिप्रतिक्रियादिकर्मभिर्नैवनिवर्तंतइत्याह नैकांततःअ
त्यंतं सवासनं केवलंज्ञानरहितं अविद्योपसृतंप्राप्तं अतोविरोधाभावान्ननिवर्तकत्वमितिभावः अत्रदृष्टांतःस्वप्नेदृष्टःस्वप्नः प्रबोधंविनायथात्यं
स्वप्नमत्यंतंनप्रतिकरोतीत्यर्थः ॥ ३४ ॥ ननुतर्हिअज्ञानविलसितत्वेनसंसृतिहेतोर्देहादेरप्यसत्त्वाच्छंकितन्निवर्तनप्रयासेनतत्राह अर्थेहीति

तथाकामाशयोजीवउच्चावचपथाभ्रमन् ॥ उपर्यधोवामध्येवायातिदिष्टंप्रियाप्रियं ॥ ३१ ॥ दुःखेष्वेकत
रेणापिदैवभूतात्महेतुषु ॥ जीवस्यनव्यवच्छेदःस्याच्चेत्तत्तत्प्रतिक्रिया ॥ ३२ ॥ यथाहिपुरुषोभारंशिरसागु
रुमुद्वहन् ॥ तंस्कंधेनसआधत्तेतथासर्वाःप्रतिक्रियाः ॥ ३३ ॥ नैकांततःप्रतीकारःकर्मणांकर्मकेवलं ॥ द्वयं
ह्यविद्योपसृतंस्वप्नेस्वप्नइवानघ ॥ ३४ ॥ अर्थेह्यविद्यमानेऽपिसंसृतिर्ननिवर्तते ॥ मनसालिंगरूपेणस्वप्ने
विचरतोयथा ॥ ३५ ॥ अथात्मनोऽर्थभूतस्ययतोनर्थपरंपरा ॥ संसृतिस्तद्व्यवच्छेदोभक्त्यापरमयागुरौ ॥
॥ ३६ ॥ वासुदेवेभगवतिभक्तियोगःसमाहितः ॥ सध्रीचीनेनवैराग्यंज्ञानंचजनयिष्यति ॥ ३७ ॥ सोऽ
चिरादेवराजर्षेस्यादच्युतकथाश्रयः ॥ शृण्वतःश्रद्दधानस्यनित्यदास्यादधीयतः ॥ ३८ ॥ यत्रभागवताराजन्
साधवोविशदाशयाः ॥ भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ॥ ३९ ॥ ॥ ॥

लिंगरूपेण उपाधिभूतेन ॥ ३५ ॥ तदेवंसंसृतिप्रकारमुक्त्वातन्निवृत्तिप्रकारमाह अथतस्मात्पुरुषार्थभूतस्यैवात्मनःयतोऽज्ञानान्मनसोवा
अनर्थपरंपरारूपासंसृतिर्भवति तस्याव्यवच्छेदोगुरुरूपेवासुदेवेभक्त्यैव ॥ ३६ ॥ ननुसंसृतिनिवृत्तिर्वैराग्यपूर्वकात्ज्ञानादेवनतुभक्त्यात
रतिशोकमात्मविदित्यादिश्रुतेस्तत्राह वासुदेवइति सध्रीचीनेनसमीचीनेनप्रकारेण ॥ ३७ ॥ नन्वसौमहाफलोभक्तियोगःकथंस्यादत
आह सतुअच्युतस्यकथामाश्रित्यवर्तमानोऽचिरात्स्यात्कस्यस्यात्तदाह शृण्वतःअधीयानस्य ॥ ३८ ॥ कुत्रस्यात्तदाह यत्रेति भगवतो
गुणानुकथनेश्रवणेचव्यग्रंसत्वरंचेतोयेषांते ॥ ३९ ॥ ॥ ॥ ॥

ननुसत्संगमंतरेणस्वयमेवकथाचिंतनादिनाभक्तिर्भवेदेवेत्याशंक्याहद्वाभ्यां तस्मिन्स्थानेमहद्भिर्मुखरिताः कीर्तिताः मधुभिदश्चरित्रमेव पीयूषंतदेवशिष्यतइतिशेषोयासु असारांशरहितशुद्धामृतवाहिन्यइत्यर्थः अवितृषः अलंबुद्धिशून्याःसंतःगाढैःसावधानैः कर्णैर्यंताःसरितःपिबंतिसेवंते अशनशब्देनक्षुल्लक्ष्यते अशनादयस्तान्नस्पृशंति भक्तिरसिकान्नबाधंतइत्यर्थः ॥ ४० ॥ सत्संगमंतरेणस्वयमेवकथाचिंतनादिनाबालस्यादिनारसावेशाभावाच्चक्षुत्पिपासाद्यभिभूतस्यभक्तिर्नसंभवतीत्याह एतैरिति ॥ ४१ ॥ भगवदनुग्रहमंतरेणनतुकस्यापिज्ञानसंभवइतिकैमुत्यन्यायेनाहचतुर्भिः प्रजापतिपतिर्ब्रह्मा ॥ ४२ ॥ मदंताःअहंनारदःअंतेयेषां ॥ ४३ ॥ वाचांपतयोपिविद्यासमाधि

**तस्मिन्महन्मुखरितामधुभिच्चरित्रपीयूषशेषसरितःपरितःस्रवंति ॥ तायेपिबंत्यवितृषोनृपगाढकर्णैस्तान्नस्पृशंत्यशनतृड्भयशोकमोहाः ॥ ४० ॥ एतैरुपद्रुतोनित्यंजीवलोकःस्वभावजैः ॥ नकरोतिहरेर्नूनं कथाऽमृतनिधौरतिं ॥ ४१ ॥ प्रजापतिपतिःसाक्षाद्भगवान्गिरिशोमनुः ॥ दक्षादयःप्रजाध्यक्षानैष्ठिकाःसनकादयः ॥ ४२ ॥ मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः ॥ भृगुर्वसिष्ठइत्येतेमदंताब्रह्मवादिनः ॥ ॥ ४३ ॥ अद्यापिवाचस्पतयस्तपोविद्यासमाधिभिः ॥ पश्यंतोऽपिनपश्यंतिपश्यंतंपरमेश्वरं ॥ ४४ ॥ शब्दब्रह्मणिदुष्पारेचरंतउरुविस्तरे ॥ मंत्रलिंगैर्व्यवच्छिन्नंभजंतोनविदुःपरं ॥ ४५ ॥ यदायमनुगृह्णातिभगवानात्मभावितः ॥ सजहातिमतिंलोकेवेदेचपरिनिष्ठितां ॥ ४६ ॥ तस्मात्कर्मसुबर्हिष्मन्नज्ञानादर्थकाशिषु ॥ मार्थदृष्टिंकृथाःश्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ४७ ॥ ॥**

भिरुपायैः पश्यंतोविचिन्वंतोपिपश्यंतंसर्वसाक्षिणंनपश्यंति ॥ ४४ ॥ कुतइत्यतआह शब्दब्रह्मणिवेदेउरुर्विस्तारोयस्य अर्थतोऽपिपारशून्येतस्मिन् वर्तमानाःमंत्राणांलिंगैर्वज्रहस्तत्वादिगुणयुक्तविविधदेवताऽभिधानसामर्थ्यैःपरिच्छिन्नमेवेंद्रादिरूपंतत्तत्कर्माग्रहेणभजंतःपरंपरमेश्वरंनाविदुः ॥ ४५ ॥ तर्ह्यन्यःकोनामकर्माद्याग्रहंहित्वापरमेश्वरमेवभजेदित्यतआह यदायमनुगृह्णाति अनुग्रहेहेतुः आत्मनि भावितःसन् सतदालोकेलोकव्यवहारेवेदेचकर्ममार्गेपरिनिष्ठितांमतिंत्यजति ॥ ४६ ॥ अर्थकाशिषु परमार्थत्वेनप्रकाशमानेषु पुरुषार्थबुद्धिमाकृथाः प्ररोचनायकेवलंश्रोत्रप्रियेषु नस्पृष्टंवस्तुयैः ॥ ४७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुवेदेनस्वर्गादिसाधनत्वेनोक्तानिकर्माणीतिवेदवादिनोवदंति कथमस्पृष्टवस्तुष्वित्युच्यतेतत्राह येधूम्रधियोमलिनबुद्धयः सकर्मकंकर्मप रंवेदमाहुस्ते अतद्विदःअवेदज्ञाः यतस्तेस्वंस्वरूपभूतंलोकमात्मतत्त्वंवेदतात्पर्यगोचरंनाविदुः यत्रदेवोऽस्ति॥४८॥त्वंतुमहामूर्खइत्याह आ स्तीर्यैति बृहद्धाद्बहुपशुवधात् मानीयज्वाहमित्यहंकारी अतस्तब्धःअविनीतःसन् कर्मनावैषि परंविद्यास्वरूपंतच्चनवेत्सि नारदःस्वयंकृ पयातद्द्वयंनिरूपयति हरिंतोषयतीतिहरितोषंयत्तदेवकर्म ययातास्मिन् हरौमतिर्भवतिसैवविद्यामहाफलत्वात् ॥ ४९ ॥ कुतइत्यपेक्षायांहरेःप रमफलत्वंदर्शयन्नाहद्वाभ्यां हरिर्देहभृतामात्माईश्वरश्च तत्रहेतुः स्वयंस्वातंत्र्येण प्रकृतिःकारणमतस्तेषांतत्पादमूलमेवशरणमाश्रयःयतःय

**स्वलोकंनविदुस्तेवैयत्रदेवोजनार्दनः॥ आहुर्धूम्रधियोवेदंसकर्मकमतद्विदः॥ ४८ ॥ आस्तीर्यदर्भैःप्रागग्रैः कार्त्स्न्येनक्षितिमंडलं ॥स्तब्धोबृहद्वधान्मानीकर्मनावैषियत्परं ॥ तत्कर्महरितोषंयत्साविद्यातन्मतिर्यया ॥४९॥हरिर्देहभृतामात्मास्वयंप्रकृतिरीश्वरः॥तत्पादमूलंशरणंयतःक्षेमोनृणामिह॥ ५०॥सवैप्रियतमश्चा त्मायतोनभयमण्वपि॥इतिवेदसवैविद्वान्योविद्वान्सगुरुर्हरिः॥ ५१॥ नारदउवाच प्रश्नएवंहिसंछिन्नोभ वतःपुरुषर्षभ ॥ अत्रमेवदतोगुह्यंनिशामयसुनिश्चितं ॥ ५२॥ क्षुद्रंचरंसुमनसांशरणेमिथित्वारक्तंषडंघ्रिग णसामसुलुब्धकर्णं ॥ अग्रेवृकानसुतृपोऽविगणय्ययांतंपृष्ठेमृगंमृगयलुब्धकबाणभिन्नं ॥ ५३ ॥**

स्मिन् ॥ ५० ॥ नचतद्भजनेअन्यभजनइवदुःखंभयंचेत्याह सवाइति इतियोवेदसएवविद्वान्हरिश्च उक्तमुपसंहरति ॥ ५१ ॥ एवंभवतःप्रश्नः संछिन्नःपरिहृतःतदेवमात्मनोबंधमोक्षप्रकारेकथारूपेणकथितेऽपि नातिनिर्विण्णचित्तंपुत्रागमनंप्रतीक्षमाणंसंतंतत्क्षणमेवमहाभयकंपित सकलगात्रंगृहान्निर्वासयितुंहरिणरूपकमाह अत्रेति वदतोमेवचः॥ ५२ ॥ क्षुद्रमल्पंचरतीतितथातं अलुक् सुमनसांपुष्पाणांशरणे आ श्रमेवाटिकायां मिथित्वामिथःपरस्परंस्त्रियासहमिलित्वा तत्रैवरक्तमासक्तं षडंघ्रयोभ्रमरास्तेषांगणास्तेषांसामसुगीतेषुलुब्धःकर्णोयस्यतं पेरषामसुभिर्हृतैःस्वीयानसूंस्तर्पयंतीत्यसुतृपः तानविगणय्य अगणयित्वा लुब्धकस्यबाणेनाभिन्नंमृगंमृगयान्वेषय ॥ ५३ ॥

श्लोकंप्रस्तुतेयोजयन्व्याचष्टे सुमनोभिः समानोधर्मःपरिणामविरसत्वंयासांस्त्रीणां मिथित्वेत्यस्यव्याख्यामिथुनीभूय स्त्रीभिःसहेतिशे
षः रक्तमित्यस्यव्याख्यातास्वभिनिवेशितंमनोयेन असुतृपइत्यस्यव्याख्याआयुर्हरतइति यांतमित्यस्यव्याख्याविहरंतमिति अंतर्नलिका
यांगूढेनशरेणपराविध्यतिदूरादेवताडयति ॥ ५४ ॥ उपदेशसारमाह सइति विचक्ष्यविचार्य अंतर्हृदिचित्तं कर्णयोर्धुनींनदींमिवब
हिर्वृत्तिंचित्तेनियच्छ एतच्चसर्वेंद्रियोपलक्षणार्थं गृहाश्रमंचजहि कीदृशं असत्तमानामतिकामुकानांयानियूथानितेषांगाथावार्तायस्मिन्

सुमनसःसमधर्माणांस्त्रीणांशरणआश्रमेपुष्पमधुगंधवत्क्षुद्रतमंकाम्यकर्मविपाकजंकामसुखलवंजैह्वचो
पस्थादिविचिन्वंतंमिथुनीभूयतदभिनिवेशितमनसंषडंघ्रिगणसामगीतवदतिमनोहरवनितादिजनाला
पेष्वतितरामतिप्रलोभितकर्णमग्रेवृकयूथवदात्मनआयुर्हरतोऽहोरात्रांतान्काललवविशेषानविगणय्य
गृहेषुविहरंतंपृष्ठतएवपरोक्षमनुवृत्तोलुब्धकः कृतांतोंऽतःशरेणयमिहपराविध्यतितमिममात्मानमहोरा
जन्भिन्नहृदयंद्रष्टुमर्हसीति ॥ ५४ ॥ सत्वंविचक्ष्यमृगचेष्टितमात्मनोंऽतश्चित्तंनियच्छहृदिकर्णधुनींच
चित्ते ॥ जह्यंगनाश्रममसत्तमयूथगाथंप्रीणीहिहंसशरणंविरमक्रमेण ॥ ५५ ॥ राजोवाच श्रुतम
न्वीक्षितंब्रह्मन्भगवान्यदभाषत ॥ नैतज्जानंत्युपाध्यायाःकिंनब्रूयुर्विदुर्यदि ॥ ५६ ॥ संशयोऽत्रतुमेवि
प्रसंछिन्नस्तत्कृतोमहान् ॥ ऋषयोऽपिहिमुह्यंतियत्रनेंद्रियवृत्तयः ॥ ५७ ॥ कर्माण्यारभतेयेनपुमानि
हविहायतं ॥ अमुत्रान्येनदेहेनजुष्टानिसयदश्नुते ॥ ५८ ॥ ॥ ॥

जीवानांशरणमीश्वरं एवंक्रमेणसर्वतोविरम ॥ ५५ ॥ अर्थांतरंप्रष्टुंपूर्वोक्तमर्थमनुवदति श्रुतमन्वीक्षितंविचारितंच ब्रह्मन्हेनारद एतत्त्व
दुक्तमात्मतत्त्वमुपाध्यायाःयेममकर्मोपदेष्टारःआचार्यास्तेनजानंति॥ ५६॥ अतस्तत्कृतउपाध्यायकृतः तद्वाक्यविरोधेनात्मत्वेऽसंभावनारू
पोमहान्संशयःसंछिन्नस्त्वया अत्रतुकश्चित्संशयोवर्तते यत्रेंद्रियवृत्तीनामप्रवृत्तेःमुह्यंति ॥५७॥ संशयमाह द्वाभ्यां कर्माणियेनदेहेनकरो
तितमत्रैवविहायअमुत्रलोकांतरेकर्मोपस्थापितेनअन्येनदेहेनजुष्टान्युपभुक्तानिजीवोऽश्नुतेप्राप्नोति ॥ ५८ ॥ ॥

इतिवादः श्रूयते प्राप्यपुण्यकृताल्लोकानिति शरीरजैःकर्मदोषैर्यातिस्थावरतांनरइति त्वयाचोक्तंशाश्वतीरनुभूयार्तिमिति एतच्चकर्तृभोक्तृदेहभेदेनकृतनाशाकृताभ्यागमप्रसंगान्नसंगच्छतइतिभावः संशयांतरमाह प्रोक्तंवेदोक्तंकर्मक्रियतेजनैः तच्चानंतरक्षणएवपरोक्षमदृश्यंसन्न प्रकाशते अतःकर्मणोनष्टत्वात्तद्भोगोऽपिदुर्घटइतिभावः ॥ ५९ ॥ प्रथमस्यैवोत्तरं येनैवेति अव्यवधानेनकर्तृभोक्तृदेहविच्छेदं विनास्थूलदेहनाशेऽपिमनःप्रधानस्यलिंगदेहस्यानाशान्नोक्तदोषप्रसंगइत्यर्थः ॥ ६० ॥ लिंगदेहविशिष्टस्यभोक्तृत्वंस्वप्नदृष्टांतेनस्पष्टयाति शयानमिमंजाग्रद्देहंश्वसंतंजीवंतमुत्सृज्यतदभिमानंत्यक्त्वाआत्मानिमनसिसंस्काररूपेणाहितंकर्मयथाभुंक्तेतादृशेनशयानदेहसदृशेनकर्मोपस्थापितेनदेहेनान्येनवापश्वादिदेहेनतथालोकांतरेपीतिभावः ॥ ६१ ॥ ननुभवतुनामलिंगविशिष्टस्यानेनदृष्टांतेनभोक्तृत्वं कर्तृत्वंतुदान प्रतिग्रहादिषुस्थूलविशिष्टस्यैवदृश्यतेतत्राह ममैतेपुत्रादयःअसावहंब्राह्मणइतिब्रुवन्मनसायद्यद्देहंगृण्हीयात्तत्ततोदेहाद्राद्धंसिद्धंकर्मपुमान् गृण्ही

इतिवेदविदांवादःश्रूयतेतत्रतत्रह ॥ कर्मयत्क्रियतेप्रोक्तंपरोक्षंनप्रकाशते ॥ ५९ ॥ नारदउवाच येनैवारभतेकर्मतेनैवामुत्रतत्पुमान् ॥ भुंक्तेह्यव्यवधानेनलिंगेनमनसास्वयं ॥ ६० ॥ शयानमिममुत्सृज्य श्वसंतंपुरुषोयथा ॥ कर्मात्मन्याहितंभुंक्तेतादृशेनेतरेणवा ॥ ६१ ॥ ममैतेमनसायद्यदसावहमितिब्रुवन् ॥ गृण्हीयात्तत्पुमान्राद्धंकर्मयेनपुनर्भवः ॥ ६२ ॥ यथाऽनुमीयतेचित्तमुभयैरिंद्रियेहितैः ॥ एवंप्राग्देहजंकर्म लक्ष्यतेचित्तवृत्तिभिः ॥ ६३ ॥ नानुभूतंक्वचानेनदेहेनादृष्टमश्रुतं ॥ कदाचिदुपलभ्येतयद्रूपंयादृगात्मनि ॥ ६४ ॥ तेनास्यतादृशंराजन्लिंगिनोदेहसंभवं ॥ श्रद्धस्वाननुभूतोऽर्थोनमनःस्प्रष्टुमर्हति ॥ ६५ ॥

यात् येनकर्मणाअहंकारगृहीतेनपुनर्भवोभवति अन्यथाजन्मानुपपत्तेः अतोऽभिमंतुर्मनोविशिष्टस्यैवकर्तृत्वमाभिमानविषयस्यतुदेहस्यपुत्रादिदेहवत्द्वारमात्रत्वामितिभावः ॥ ६२ ॥ यदुक्तंकर्मणोनष्टत्वान्नामुत्रभोगइतितत्राह यथेति उभयैर्ज्ञानकर्मरूपैरिंद्रियाणामीहितैः कदाचिच्चित्तवृत्तिभिश्चित्तमनुमीयते सत्यपिसर्वेंद्रियाविषयसंबंधेयुगपज्ज्ञानानुत्पत्तेः तदुक्तमक्षपादेनयुगपज्ज्ञानानुत्पत्तिर्मनसोलिंगमिति एवंचित्तवृत्तिभिरपिपूर्वदेहजंकर्मलक्ष्यते तासामपियुगपदनुत्पत्तेः ॥ ६३ ॥ इतोऽपिकर्मलक्ष्यतइत्याह नानुभूतमिति द्वाभ्यां अनेनवर्तमानेनदेहेनक्वचकुत्रचिदपियन्नानुभूतमननुभूतमनुपभुक्तमदृष्टंचाश्रुतंचयद्रूपंयदात्मकंयादृक्यत्प्रकारंचतत्कदाचित्स्वप्नमनोरथादिषुआत्मनिमनसिउपलभ्येत ॥ ६४ ॥ तेनहेतुनाऽस्यलिंगिनोवासनाश्रयस्यजीवस्यतादृशंतदनुभवादियुक्तंपूर्वदेहसंभवंश्रद्धस्वनिश्चयेनमन्यस्व नह्यननुभूतोऽर्थोमनःस्प्रष्टुंमनसिस्फुरितुमर्हति ॥ ६५ ॥ ॥ ॥ ॥

किंच मनोवृत्त्यैवपूर्वापराणिशुभाशुभनिमित्तानिशरीराणिज्ञायंतइत्याह मनएवेति भद्रंतइतिसम्यगवधानार्थमाशिषाऽभिनंदति भविष्यत
उद्भवंप्राप्स्यतः नभविष्यतः नीचत्वंप्राप्स्यतोऽपिभावीनिरूपाणिशंसति मनएवौदार्यकार्पण्यादिवृत्तिभिः पूर्वमप्येवमेवासीत्पश्चादप्येव
मेवभविष्यतीतिज्ञापयतीत्यर्थः ॥ ६६ ॥ ननुकदाचिद्दर्शनानर्हमपिस्वप्नेप्रतीयते यथापर्वताग्रेसमुद्रः दिवानक्षत्राणि स्वशिरश्छेदइत्यादित
त्राह अदृष्टमिति अन्यदेशाश्रयंसमुद्रादिकंपर्वताग्रेनिशाश्रयंनक्षत्रादिकंदिवाअभ्यंगादि क्रियाश्रयस्वशिरश्छेदनादिनिद्रादिदोषेणाहित
थाप्रतीयतइत्यनुमंतव्यं परस्यापितदनुपपत्तेस्तुल्यत्वादितिभावः ॥ ६७ ॥ ननुदरिद्रः कचिदात्मानंमहाराजंपश्यति तत्कथमसंभावितंसं
गच्छेत्तत्राह सर्वइति आयांतिभोग्यत्वेनप्राप्नुवंति यांतिचभोगानंतरं यदिचकश्चिदमनाभवेत्तर्ह्येवंनस्यात् नत्वेतदस्तीत्याह सर्वेसमनस
इति अतःसर्वेषांसमनस्कत्वान्मनसिचसर्वार्थानांक्रमेणप्रवेशान्नात्यंताद्दृष्टचरःकस्यापिकश्चिदर्थोऽस्तीत्यर्थः ॥ ६८ ॥ तदेवंसर्वैरपिस

मनएवमनुष्यस्यपूर्वरूपाणिशंसति ॥ भविष्यतश्चभद्रंतेतथैवनभविष्यतः ॥ ६६ ॥ अदृष्टमश्रुतंचात्रकचि
न्मनसिदृश्यते ॥ यथातथाऽनुमंतव्यंदेशकालक्रियाश्रयं ॥ ६७ ॥ सर्वेक्रमानुरोधेनमनसींद्रियगोचराः ॥
आयांतिवर्गशोयांतिसर्वेसमनसोजनाः ॥ ६८ ॥ सत्वैकनिष्ठेमनसिभगवत्पार्श्ववर्तिनि ॥ तमश्चंद्रमसीवे
दमुपरज्यावभासते ॥ ६९ ॥ नाहंममेतिभावोऽयंपुरुषेव्यवधीयते ॥ यावद्बुद्धिमनोक्षार्थगुणव्यूहोह्यनादि
मान् ॥ ७० ॥ सुप्तिमूर्छोपतापेषुप्राणायनविघाततः ॥ नेहतेऽहमितिज्ञानंमृत्युप्रज्वारयोरपि ॥ ७१ ॥

र्वैरर्थाःक्रमेणदृश्यंतइत्युक्तं इदानींयुगपदपिसर्वदर्शनंकदाचिद्भवतीत्याह सत्वैकनिष्ठेभगवत्पार्श्ववर्तिनिभगवद्ध्यानपरेमनसिइदंविश्व
मुपरज्यसंयोगमिवप्राप्यावभासते प्रतीत्यनर्हस्यापिकदाचित्प्रतीतौदृष्टांतः चंद्रमसिउपरज्यतमःराहुरिव तदिदंशुद्धेमनसिसर्वविषयस्फु
रणंयोगिप्रत्यक्षमितिप्रसिद्धं ॥ ६९ ॥ तदेवंस्थूलदेहनाशेऽपिलिंगदेहस्यानाशादन्यःकर्ताभोक्तेतिदोषोनास्तीत्युक्तं तत्रैवंशंकते ननुलिंगदे
हस्यस्थूलदेहद्वारेणैवकर्तृत्वभोक्तृत्वेनतुकेवलस्य तत्रकदाचित्स्थूलदेहाभावेजीवस्यकर्तृत्वभोक्तृत्वाभावान्मुक्तिःप्रसज्येततत्राह अहंममे
तिभावःस्थूलदेहसंबंधःपुरुषेजीवेनव्यवधीयतेनविच्छिन्नोभवति किंपर्यंतं बुद्ध्यादीनांव्यूहःपरिणामोलिंगंयावदस्ति अनादिमान्अना
दिःसन् ॥ ७० ॥ स्वापादावहंकाराद्यभावात्तद्विच्छेदमाशंक्याह द्वाभ्यां सुप्त्यादिषुउपतापः इष्टवियोगादिदुःखं तेष्वहमितिज्ञानम
हंकारः नेहतेनप्रकाशते प्राणायतनानामिंद्रियाणांविघातात् इंद्रियैरहंकारास्पदवस्तुग्रहणेह्यहंकारःस्फुरतिनान्यथेत्यर्थः ॥ ७१ ॥

अपौष्कल्यादसंपूर्णत्वात्प्राणायतनानामितिशेषः यूनस्तरुणस्ययदेकादशविधमेकादशेंद्रियैः स्फुटंलिंगमहंकरणंतन्नदृश्यतेगर्भादाविति
सतोऽप्यनभिव्यक्तौदृष्टांतः कुह्वाममावास्यायांचंद्रमसोलिंगंरूपमिव ॥ ७२ ॥ तस्मादहंकारास्पदस्यस्थूलदेहस्याविच्छेदाद्वस्तुभूतार्थाभा
वेऽपिसंसृतिनिवृत्तिर्नास्तीत्याह अर्थेहीति ॥ ७३ ॥ यावल्लिंगंस्थूलदेहाविच्छेदात्संसारानिवृत्तिरित्येतत्प्रपंचयति एवमिति सार्धैस्त्रिभिः
पंचविधंपंचतन्मात्रात्मकं त्रिवृत्त्रिगुणं षोडशविकारात्मनाविस्तृतं ॥ ७४ ॥ ७५ ॥ नन्वेकंदेहंविसृज्यदेहांतरप्रवेशात्पूर्वंविदेहता

गर्भेबाल्येऽप्यपौष्कल्यादेकादशविधंयदा ॥ लिंगंनदृश्यतेयूनःकुह्वांचंद्रमसोयथा ॥ ७२ ॥ अर्थेह्यविद्य
मानेऽपिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयानस्यस्वप्नेनर्थागमोयथा ॥ ७३ ॥ एवंपंचविधंलिंगंत्रिवृत्षो
डशविस्तृतं ॥ एषचेतनयायुक्तोजीवइत्यभिधीयते ॥७४॥ अनेनपुरुषोदेहानुपादत्तेविमुंचति ॥ हर्षंशो
कंभयंदुःखंसुखंचानेनविंदति ॥ ७५ ॥ यथातृणजलूकेयंनापयात्यपयातिच ॥ नत्यजेन्म्रियमाणोपिप्रा
ग्देहाभिमतिंजनः ॥ ७६ ॥ यावदन्यंनविंदेतव्यवधानेनकर्मणां ॥ मनएवमनुष्येंद्रभूतानांभवभावनं ॥
॥ ७७ ॥ यदाऽक्षैश्चरितान्ध्यायन्कर्माण्याचिनुतेऽसकृत् ॥ सतिकर्मण्यविद्यायांबंधःकर्मण्यनात्मनः॥
॥ ७८ ॥ अतस्तदपवादार्थंभजसर्वात्मनाहरिं ॥ पश्यंस्तदात्मकंविश्वंस्थित्युत्पत्त्यप्ययायतः ॥ ७९ ॥
मैत्रेयउवाच भागवतमुख्योभगवान्नारदोहंसयोर्गतिं ॥ प्रदर्श्यह्यमुमामंत्र्यसिद्धलोकंततोऽगमत् ॥
॥ ८० ॥ प्राचीनबर्हीराजर्षिःप्रजासर्गाभिरक्षणे ॥ आदिश्यपुत्रानगमत्तपसेकपिलाश्रमं ॥ ८१ ॥ त
त्रैकाग्रमनावीरोगोविंदचरणांबुजं ॥ विमुक्तसंगोऽनुभजन्भक्त्यातत्साम्यतामगात् ॥ ८२ ॥ ॥

स्यादेवेत्यतआह यथेति नापयातिपूर्वंतृणस्यात्यागात् अपयातिचतृणांतरधारणात् तथाप्राक्देहाभिमतिंनत्यजेत्म्रियमाणोऽपि ॥
॥ ७६ ॥ अन्यंदेहंकर्मणांप्राग्देहारंभकाणांव्यवधानेनविच्छेदेनसमाप्त्या प्रकरणार्थमुपसंहरति मनएवेति भवभावनंसंसारहेतुः ॥
॥ ७७ ॥ कथंसतितदाहयदेति चरितान्उपभुक्तान् यतःकर्मणिसति नन्वसंगस्यकुतःकर्मतत्राह अविद्यायांसत्यांअनात्मनोदेहादेःक
र्मणिबंधोभवति ॥ ७८ ॥ विश्वस्थित्यादयोयतोहरेर्भवंति ॥ ७९ ॥ हंसयोर्जीवेश्वरयोः ॥ ८० ॥ पुत्रानादिश्येति पुत्राणामादेशंमांत्रि
णामग्रेकथयित्वा कपिलाश्रमंगंगासागरसंगमं ॥ ८१ ॥ ८२ ॥ ॥ ॥ ॥

॥८३॥ आत्मशौचंमनःशोधकं पारमेष्ठ्यंसर्वोत्कृष्टफलदं ॥ ८४ ॥ स्त्रीबुद्धिस्तत्साहितस्याश्रमोऽहंकारश्छिन्नोभवति अमुत्रकर्मफलभोगःक थमितिसंशयश्छिन्नः ॥८५॥ इतिचतुर्थेटीकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥ प्रसंगात्पंचभिःप्रोक्तंवृत्तंप्राचीनबर्हिषः ॥ वर्ण्यतेचपुनर्द्वाभ्यां प्रस्तुतंतत्प्रचेतसां ॥१॥ तत्रत्रिंशेतपस्तुष्टाद्दीशाल्लब्धवरास्ततः ॥ आगत्यवार्क्षीमुद्वाह्यराज्यंचक्रुरितीर्यते॥२॥हरिंप्रतोष्यकांसिद्धिमापुः ॥१॥ हेबार्हस्पत्य कस्यांचिद्विद्यायांबृहस्पतेर्मैत्रेयःशिष्यइतिज्ञातव्यंते यदृच्छयागिरिशंप्राप्यतस्यैवकैवल्यनाथप्रियस्यगिरिशस्यपार्श्ववर्तिनःत

एतदध्यात्मपारोक्ष्यंगीतंदेवर्षिणाऽनघ ॥ यःश्रावयेद्यःशृणुयात्सलिंगेनविमुच्यते ॥ ८३ ॥ एतन्मुकुं दयशसाभुवनंपुनानंदेवर्षिवर्यमुखनिःसृतमात्मशौचं ॥ यःकीर्त्यमानमधिगच्छतिपारमेष्ठ्यंनास्मिन्भवेभ्र मतिमुक्तसमस्तबंधः ॥८४॥ अध्यात्मपारोक्ष्यमिदंमयाऽधिगतमद्भुतं॥एवंस्त्रियाश्रमःपुंसश्छिन्नोऽमुत्रच संशयः ॥ ८५ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेविदुरमैत्रेयसंवादेप्राचीनबर्हिनारदसंवादोनाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ॥ विदुरउवाच येत्वयाऽभिहिताब्रह्मन्सुताःप्राचीनबर्हिषः ॥ तेरुद्रगीतेनहरिंसिद्धिमापुःप्रतोष्यकां ॥ १ ॥ किंबार्हस्पत्येहपरत्रवाथकैवल्यनाथप्रियपार्श्ववर्तिनः ॥ आसाद्यदेवंगिरिशंयदृच्छयाप्रापुःपरंनूनमथप्रचेतसः ॥ २ ॥ मैत्रेयउवाच प्रचेतसोंऽतरुदधौपितु रादेशकारिणः ॥ जपयज्ञेनतपसापुरंजनमतोषयन् ॥ ३ ॥ दशवर्षसहस्रांतेपुरुषस्तुसनातनः ॥ तेषामा विरभूत्कृच्छ्रंशांतेनशमयन्रुचा ॥ ४ ॥ सुपर्णस्कंधमारूढोमेरुशृंगमिवांबुदः ॥ पीतवासामणिग्रीवःकु र्वन्वितिमिरादिशः ॥ ५ ॥ काशिष्णुनाकनकवर्णविभूषणेनभ्राजत्कपोलवदनोविलसत्किरीटः ॥ अष्टा युधैरनुचरैर्मुनिभिःसुरेंद्रैरासेवितोगरुडकिन्नरगीतकीर्तिः ॥ ६ ॥ ॥ ॥

दनुगृहीताःसंतोनूनंपरंमोक्षंप्रापुरेव ततःपूर्वंतुइहाथवापरत्रकिंप्रापुः ॥२॥ रुद्रगीतजपरूपेणयज्ञेनतपसाच पुरंजनंहरिं ॥ ३ ॥ तेषांकृच्छ्रंत पःक्लेशंरुचाकांत्याशमयन्शांतेनसत्वेनवपुषाआविर्भूतः ॥ ४ । सुपर्णस्कंधमारूढइत्यादिनाबार्हिष्मतःसुतानाहइतितृतीयेनान्वयः ॥ ५ ॥ कनकमयेनवर्णवताविभूषणेनभ्राजमानंकपोलंवदनंयस्य अष्टभिरायुधैः गरुडएवकिन्नरःतेनपक्षस्वनैर्गीताकीर्तिर्यस्य ॥ ६ ॥

पीनाश्चतेआयताअष्टौभुजास्तेषांमंडलंसमूहः तन्मध्येस्थितयालक्ष्म्यास्पर्धमानाश्रीः शोभायस्याः तयावनमालयापरिवृतः आद्यः पुरुषआह पर्जन्यस्यनादइवरुतंनादोयस्याः तयावाचा सघृणोऽवलोकोयस्य ॥ ७ ॥ यूयंमेमत्तोवृणध्विंसौहार्देनहेतुनाअपृथक्धर्मोयेषांतेषांसंबोधनं वः परस्परंसौहृदेनतुष्टोऽहं ॥ ८ ॥ भूतेषुसौहृदंचभविष्यति ॥ ९ ॥ तेभ्योदास्ये किंपुनर्युष्मभ्यमितिशेषः ॥ १० ॥ अग्रहीषुः गृहीतवंतः अथोइतिहेतोः लोकेषुभविष्यति यद्वा लोकाननुभविष्यतिद्रक्ष्यतिव्याप्स्यतीत्यर्थः ॥ ११ ॥ आत्मनोवीर्येणसंतानेन ॥ १२ ॥



पीनायताष्टभुजमंडलमध्यलक्ष्म्यास्पर्धच्छ्रियापरिवृतोवनमालयाद्यः ॥ बर्हिष्मतः पुरुषआहसुतान्प्रपन्नान्पर्जन्यनादरुतयासघृणावलोकः ॥ ७ ॥ श्रीभगवानुवाच वरंवृणीध्वंभद्रंवोयूयंमेनृपनंदनाः ॥ सौहार्देनापृथक्धर्मास्तुष्टोऽहंसौहृदेनवः ॥ ८ ॥ योऽनुस्मरतिसंध्यायांयुष्माननुदिनंनरः ॥ तस्यभ्रातृष्वात्मसाम्यंतथाभूतेषुसौहृदं ॥ ९ ॥ येतुमांरुद्रगीतेनसायंप्रातःसमाहिताः ॥ स्तुवंत्यहंकामवरान्दास्येप्रज्ञांचशोभनां ॥ १० ॥ यद्यूयंपितुरादेशमग्रहीष्टमुदान्विताः ॥ अथोवउशतीकीर्तिर्लोकाननुभविष्यति ॥ ११ ॥ भविताविश्रुतःपुत्रोऽनवमोब्रह्मणोगुणैः ॥ यएतामात्मवीर्येणत्रिलोकींपूरयिष्यति ॥ १२ ॥ कंडोःप्रम्लोचयालब्धाकन्याकमललोचना ॥ तांचापविद्धांजगृहुर्भूरुहान्नृपनंदनाः ॥ १३ ॥ क्षुत्क्षामायामुखेराजासोमःपीयूषवर्षिणीं ॥ देशिनींरोदमानायानिदधेसदयाऽन्वितः ॥ १४ ॥ प्रजाविसर्गआदिष्टाःपित्रामामनुवर्तता ॥ तत्रकन्यांवरारोहांतामुद्वहतमाचिरं ॥ १५ ॥ अपृथक्धर्मशीलानांसर्वेषांवःसुमध्यमां ॥ अपृथक्धर्मशीलेयंभूयात्पत्न्यर्पिताशया ॥ १६ ॥ ॥ ॥

पुत्रार्थमादौभार्यांसंपादयति कंडोरितित्रिभिः तपोनाशार्थमिंद्रप्रेषितयाप्रम्लोचयाकंडुर्नामऋषिःबहुकालंरेमे साचततःस्वर्गंगच्छंतीकंडोर्जातंगर्भंवृक्षेषुत्यक्त्वाजगाम तदेतदुक्तं अपाविद्धांत्यक्तां ॥ १३ ॥ प्रसिद्धोवनस्पतीनांराजासोमःअमृतस्राविणींदेशिनींतर्जनींरुदंत्यास्तस्यामुखेनिदधे अनेनाप्सरोगर्भसंभवेनामृताहारेणचतस्यालावण्यंक्लमस्वेददौर्गंध्यादिराहित्यंचोक्तं ॥ १४ ॥ मामनुवर्तमानेनपित्रानियुक्ताःसंतःतत्रप्रजाविसर्गेनिमित्तेतामुद्वहत ॥ १५ ॥ ननु बहूनांकथमेकाभार्यास्यात्तत्राह अपृथक्धर्मःशीलंयेषां तेषांवःपत्नीभूयात् अर्पितोभर्तृषुआशयोयया धर्मशीलयोरैक्यात्मद्वाक्याच्चनदृष्टादृष्टविरोधइतिभावः ॥ १६ ॥ ॥

अहतौजसः अप्रतिहतबलाःसंतः ॥ १७ ॥ पक्कगुणोदग्धकामादिमलआशयोयेषां अतःलोकद्वयभोगान्निरयप्रायान्निर्विघ्नमत्स्थानं प्रा प्स्यथ ॥ १८ ॥ ननुगृहेषुप्रविष्टानामस्माकंतदासक्त्याबंधएवस्यात्कुतस्तत्रह्निर्वेदोवातत्राह गृहेष्विति कुशलंमय्यर्पितंकर्मयेषां म द्वार्तायांयातोयामःकालोयेषां ॥ १९ ॥ त्वद्वार्ताश्रोतॄणांगृहैर्नबंधइतिकुतस्तत्राह नव्यवादिति यद्यस्मात्कथाश्रवणात्तज्ज्ञःसर्वज्ञोऽहमी श्वरः ब्रह्मवादिभिः प्रवक्तृभिर्निमित्तभूतैःश्रोतॄणांहृत्हृदयंनव्यवत्प्रतिपदंनूतनवत्अयंप्राप्नोमि ब्रह्मसाक्षात्कारोभवतीत्यर्थः ननुत्व त्कथाश्रवणेकथंब्रह्मसाक्षात्कारस्तत्राह योऽहमेतदेवब्रह्म तत्रहेतुः यतोगताःयंमांप्राप्ताःसंतोमोहशोकहर्षान्नप्राप्नुवंतिअतोमत्कथा

दिव्यवर्षसहस्राणांसहस्रमहतौजसः॥भौमान्भोक्ष्यथभोगान्वैदिव्यांश्चानुग्रहान्मम॥१७॥ अथमय्यन पायिन्याभक्त्यापक्कगुणाशयाः ॥ उपयास्यथमद्धामनिर्विद्यनिरयादतः ॥१८॥ गृहेष्वाविशतांचापिपुंसांकु शलकर्मणां ॥ मद्वार्तायातयामानांनबंधायगृहामताः ॥१९॥ नव्यवद्धृदयेयज्ज्ञोब्रह्मैतद्ब्रह्मवादिभिः ॥ नमु ह्यंतिनशोचंतिनहृष्यंतियतोगताः ॥ २० ॥ मैत्रेयउवाच एवंब्रुवाणंपुरुषार्थभाजनंजनार्दनंप्रांजल यःप्रचेतसः ॥ तद्दर्शनध्वस्ततमोरजोमलागिराऽगृणन्गद्गदयासुहृत्तमं॥२१॥ प्रचेतसऊचुः नमोनमःक्लेश विनाशनायनिरूपितोदारगुणाह्वयाय ॥ नमोवचोवेगपुरोजवायसर्वाक्षमार्गैरगताध्वनेनमः ॥ २२ ॥ शु द्धायशांतायनमःस्वनिष्ठयामनस्यपार्थंविलसद्द्वयाय ॥ नमोजगत्स्थानलयोदयेषुगृहीतमायागुणविग्रहा य ॥ २३ ॥ नमोविशुद्धसत्त्वायहरयेहरिमेधसे ॥ वासुदेवायकृष्णायप्रभवेसर्वसात्वतां ॥ २४ ॥

श्रवणेननव्यवन्ममहृद्याविर्भावादस्यैवब्रह्मसाक्षात्कारत्वात्गृहेषुवसतामपिनबंधइत्यर्थः ॥ २० ॥ पुरुषार्थंभाजयतिप्रापयतीतितथातं ॥ २१ ॥वेदैःसकलश्रेयःसाधनत्वेननिरूपिताउदारगुणाःआह्वयानामानियस्य मनोवचसोर्वेगादपिपुराऽग्रेजवोवेगोयस्य मनोवचसोर गोचरायेत्यर्थः अतएवसर्वेषामक्षाणांमार्गैःअगतः अनवगतोऽध्वायस्य तस्मैतेनमः ॥ २२ ॥ स्वनिष्ठयास्वरूपस्थित्याशुद्धाय अतः शांताय मनसिनिमित्तेसतिअपार्थंव्यर्थमेवविलसत्विस्फुरितंद्वयंयस्मिन् गृहीतामायागुणैर्विग्रहाब्रह्मादिमूर्तयोयेन ॥ २३ ॥ स्वतस्तु विशुद्धसत्त्वरूपाय संसारंहरतिमेधाज्ञानंयस्यतस्मै ॥ २४ ॥ ॥ ॥ ॥ ॥

॥ २५ ॥ अयुंक्ष्महि कृतवंतोवयं ॥ २६ ॥ यदुक्तंवरंवृणीध्वमितितन्मनसिनिधायाहुः रूपमिति समस्तानांक्लेशानांसंक्षयोयस्मात् नः आविष्कृतंप्रकटितं अतोऽन्यत्किमनुकंपितमनुकंपा इयमेवास्माकंपरमानुकंपेत्यर्थः ॥ २७ ॥ कुतइत्यतआह हेअभद्ररंधनअमंगल नाशन त्वयाप्रत्ययोऽत्रनविवक्षितः एतावदेवदीनेषुवत्सलैःप्रभुभिर्भाव्यंकार्यं किंतत्तदाह यदिति अस्मदीयाएतइतिबुध्याउचितेकाले ऽनुस्मर्यतइतियत् त्वयातुरूपमपिदर्शितमितिभावः ॥ २८ ॥ येनानुस्मरणेनस्मृतानांतेषामुपशांतिःसुखंभवति किंच क्षुल्लकानामपिभू तानामंतर्हृदये अंतर्हितःअंतर्यामित्वेनस्थितोभवानीहतामिच्छतांत्वदुपासकानांनोऽस्माकमाशिषःकस्माद्धेतोर्नवेद जानात्येवेत्यर्थः ॥ २९ ॥ तथाऽपिवक्तव्यंचेत्तर्हियेषामस्माकंभगवान्प्रसन्नःअसावेववरः भगवत्प्रसादएवास्माकमीप्सितोवरइत्यर्थः अपवर्गगुरुर्मोक्ष

नमःकमलनाभायनमःकमलमालिने ॥ नमःकमलपादायनमस्तेकमलेक्षण ॥२५॥ नमःकमलकिंजल्क पिशंगामलवाससे ॥ सर्वभूतनिवासायनमोऽयुंक्ष्महिसाक्षिणे ॥ २६ ॥ रूपंभगवतात्वेतदशेषक्लेशसंक्ष यं ॥ आविष्कृतंनःक्लिष्टानांकिमन्यदनुकंपितं ॥ २७ ॥ एतावदेवप्रभुभिर्भाव्यंदीनेषुवत्सलैः ॥ यदनु स्मर्यतेकालेस्वबुद्ध्याऽभद्ररंधन ॥ २८ ॥ येनोपशांतिर्भूतानांक्षुल्लकानामपीहतां ॥ अंतर्हितोंऽतर्हृदयेक स्मान्नोवेदनाशिषः ॥ २९ ॥ असावेववरोऽस्माकमीप्सितोजगतःपते ॥ प्रसन्नोभगवान्येषामपवर्गगु रुर्गतिः ॥ ३० ॥ वरंवृणीमहेऽथापिनाथत्वत्परतःपरात् ॥ नह्यंतस्त्वद्विभूतीनांसोऽनंतइतिगीयसे ॥ ३१ ॥ पारिजातेंऽजसालब्धेसारंगोऽन्यन्नसेवते ॥ त्वदंघ्रिमूलमासाद्यसाक्षात्किंकिंवृणीमहि ॥ ३२ ॥ यावत्तेमा ययास्पृष्टाभ्रमामइहकर्मभिः ॥ तावद्भवत्प्रसंगानांसंगःस्यान्नोभवेभवे ॥ ३३ ॥ ॥

मार्गप्रदर्शकः गतिः स्वतश्चपुरुषार्थभूतः ॥ ३० ॥ यद्यप्येवंतथापिहेनाथ त्वत्त्वत्तःवरमेकंवृणीमहे कथंभूतात्परतः कारणादपिपरात् अ क्षरात्परतःपरइतिश्रुतेः अतोयद्यपित्वंदातुंसमर्थःनचदेयानांत्वद्विभूतीनामंतोऽस्तियतोऽनंतविभूतित्वादनंतइतिगीयसे ॥ ३१ ॥ तथाऽ पियथासारंगोभ्रमरः पारिजातेसुखेनलब्धेसतिसुलभमप्यन्यद्वृक्षांतरंनसेवतेतथावयमपिसाक्षात्त्वदंघ्रिमूलंप्राप्यकिंकिंवृणीमहिनकिंचिदि त्यर्थः यद्वाकिमप्यन्यत्तुच्छंकिमर्थंवृणीमहि यद्वा यदिवृणीमहितर्हिकिंकिंवृणीमहि अनंतत्वेनमनोरथानामनवस्थानादित्यर्थः ॥ ३२ ॥ अतएतावदेवप्रार्थयामइत्याहुः यावदिति स्पृष्टाः व्याप्ताः भवतिप्रकृष्टः संगोयेषांतेषांसंगोऽस्माकंस्यात् ॥ ३३ ॥ ॥

ननुराज्यभोगान्स्वर्गापवर्गौचविहायकिमिदंप्रार्थ्यतेतत्राहुः तुलयामेति भगवत्संगिनांसंगस्यलवेनापि ॥ ३४ ॥ सत्संगस्यश्रैष्ठ्यंप्रपं
चयति यत्रेतित्रिभिः यत्रयेषु यतःयाभ्यःकथाभ्यःनिर्वैरंवैराभावः ॥ ३५ ॥ ३६ ॥ पद्म्यांपावनेच्छया संसाराद्भीतस्य ॥ ३७ ॥ सत्सं
गफलमस्माभिरेवानुभूतमित्याहुः वयंत्विति तवयःप्रियःसखातस्यभवस्य अत्यंतमचिकित्सस्यभवस्यजन्मनोमृत्योश्चभिषक्तमंसद्वैद्यंत्वां
गतिंप्राप्ताः ॥ ३८ ॥ वरांतरंवृणते यन्नइतिद्वाभ्यां नताःनमस्कृताः ॥ ३९ ॥ निरंधसांनिरन्नानां अदभ्रंबहुकालंतेपरितोषणायभवत्वि

तुलयामलवेनापिनस्वर्गंनापुनर्भवं ॥ भगवत्संगिसंगस्यमर्त्यानांकिमुताशिषः ॥ ३४ ॥ यत्रेड्यंतेकथामृ
ष्टास्तृष्णायाःप्रशमोयतः ॥ निर्वैरंयत्रभूतेषुनोद्वेगोयत्रकश्चन ॥ ३५ ॥ यत्रनारायणःसाक्षाद्भगवान्न्यासि
नांगतिः ॥ संस्तूयतेसत्कथासुमुक्तसंगैःपुनःपुनः ॥ ३६ ॥ तेषांविचरतःपद्भ्यांतीर्थानांपावनेच्छया ॥ भीत
स्यकिंनरोचेततावकानांसमागमः ॥ ३७ ॥ वयंतुसाक्षाद्भगवन्भवस्यप्रियस्यसख्युःक्षणसंगमेन ॥ सुदु
श्चिकित्सस्यभवस्यमृत्योर्भिषक्तमंत्वाऽद्यगतिंगताःस्म ॥ ३८ ॥ यन्नःस्वधीतंगुरवःप्रसादिताविप्राश्चवृद्धा
श्चसदानुवृत्त्या ॥ आर्यानताःसुहृदोभ्रातरश्चसर्वाणिभूतान्यनसूययैव ॥ ३९ ॥ यन्नःसुतप्तंतपएतदीशनिरं
धसांकालमदभ्रमप्सु ॥ सर्वंतदेतत्पुरुषस्यभूम्नोवृणीमहेतेपरितोषणाय ॥ ४० ॥ मनुःस्वयंभूर्भगवान्भवश्च
येऽन्येतपोज्ञानविशुद्धसत्त्वाः ॥ अदृष्टपाराअपियन्महिम्नःस्तुवंत्यथोत्वात्मसमंगृणीमः ॥ ४१ ॥ नमःसमाय
शुद्धायपुरुषायपरायच ॥ वासुदेवायसत्त्वायतुभ्यंभगवतेनमः ॥ ४२ ॥ मैत्रेयउवाच इतिप्रचेतोभिरभि
ष्टुतोहरिःप्रीतस्तथेत्याहशरण्यवत्सलः ॥ अनिच्छतांयानमतृप्तचक्षुषांययौस्वधामानपवर्गवीर्यः ॥ ४३ ॥

तिवृणीमहे ॥ ४० ॥ अज्ञानामप्यस्माकंत्वत्स्तुतिर्नायुक्तेत्याहुः मनुरिति यस्यतवमहिम्नोनदृष्टंपारंयैस्तेऽपित्वामात्मसमंस्वमत्यनुरूपंयथा
स्तुवंति अथोऽतःवयमपिगृणीमः ॥ ४१ ॥ सत्त्वमूर्तयेवासुदेवाय ॥ ४२ ॥ यानंस्वप्रयाणंअनिच्छतामपिसतांस्वधामययौभक्तहृदयंवि
वेश अनपवर्गवीर्यःअकुंठितप्रभावः ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उदन्वतः सिंधोः सलिलान्निर्यायनिर्गत्यगांस्वर्गरोद्धुमिवोच्छ्रितैर्द्रुमैर्गांमहींछन्नांवीक्ष्यद्रुमेभ्योऽकुप्यन् तदाहिप्राचीनबर्हिषः प्रव्रजितत्वाद राजकेकर्षणाद्यभावात्द्रुमैर्भूमिश्छन्नाऽभूत् ॥ ४४ ॥ निरस्तावीरुधोऽपियस्यास्तथाभूतांकर्तुं संवर्तकः कालाग्निरुद्रः ॥ ४५ ॥ नयैर्युक्तिभिः ॥ ४६ ॥ उज्जन्हुः समर्पयामासुः ॥ ४७ ॥ मारिषांवार्क्षीं अजनयोनिर्ब्रह्मातस्माज्जातोदक्षः महतः श्रीमहादेवस्यावज्ञानात् पूर्वमजनयोनिजोब्रह्मपुत्रोऽपिसन्क्षत्रियजातौयस्यामजनिजातः ॥ ४८ ॥ प्राक्सर्गेपूर्वदेहेकालेनविद्रुतेदैवेनेश्वरेण चोदितः सन्इष्टाःप्रजाः



अथनिर्यायसलिलात्प्रचेतसउदन्वतः ॥ वीक्ष्याकुप्यन्द्रुमैश्छन्नांगांगांरोद्धुमिवोच्छ्रितैः ॥ ४४ ॥ ततोऽग्निमारुतौराजन्नमुंचन्मुखतोरुषा ॥ महींनिर्वीरुधंकर्तुंसंवर्तकइवात्यये ॥ ४५ ॥ भस्मसात्क्रियमाणांस्तान्द्रुमान्वीक्ष्यपितामहः ॥ आगतःशमयामासपुत्रान्बर्हिष्मतोनयैः ॥ ४६ ॥ तत्रावशिष्टायेवृक्षाभीतादुहितरंतदा ॥ उज्जन्हुस्तेप्रचेतोभ्यउपदिष्टाःस्वयंभुवा ॥ ४७ ॥ तेचब्रह्मणआदेशान्मारिषामुपयेमिरे ॥ यस्यांमहदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥ चाक्षुषेत्वंतरेप्राप्तेप्राक्सर्गेकालविद्रुते ॥ यःससर्जप्रजाइष्टाःसदक्षोदैवचोदितः ॥ ४९ ॥ योजायमानःसर्वेषांतेजस्तेजस्विनांरुचा ॥ स्वयोपादत्तदाक्ष्याच्चकर्मणांदक्षमब्रुवन् ॥ ५० ॥ तंप्रजासर्गरक्षायामनादिरभिषिच्यच ॥ युयोजयुयुजेऽन्यांश्चसर्वैःसर्वप्रजापतीन् ॥ ५१ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेत्रिंशोऽध्यायः ॥ ३० ॥ ॥ ॥ मैत्रेयउवाच ततउत्पन्नविज्ञानाआश्वधोक्षजभाषितं ॥ स्मरंतआत्मजेभार्यांविसृज्यप्राव्रजन्गृहात् ॥ १ ॥

ससर्जसदक्षइतिप्रसिद्धः ॥ ४९ ॥ स्वयारुचाप्रभयातेजउपादत्तआच्छादितवान् यंचकर्मदाक्ष्याद्दक्षमब्रुवन् ॥ ५० ॥ तमभिषिच्यानादिर्ब्रह्माप्रजासर्गरक्षायांयुयोज सचदक्षोऽन्यान्मरीच्यादींस्तत्तद्व्यापारेषुनियुक्तवान् ॥ ५१ ॥ ॥ इतिचतुर्थेटीकायांत्रिंशोऽध्यायः ॥ ३० ॥ एकत्रिंशेसुतेदक्षेधुरंन्यस्यत्वनेसतां ॥ नारदोक्तेनमार्गेणमुक्तिरुक्ताप्रचेतसां ॥ १ ॥ ततःदिव्यवर्षसहस्राणांसहस्रस्यांते उत्पन्नविवेकज्ञानास्ते उपयास्यथमद्धामानिर्विघ्ननिरयादतइत्यधोक्षजभाषितंस्मरंतआशुप्राव्रजन् ॥ १ ॥ ॥ ॥ ॥

ब्रह्मसत्रेणात्मविमर्शेनर्दीक्षिताः कृतसंकल्पाबभूवुः सर्वेषुभूतेष्वात्मेतिमेधाज्ञानंयस्मिन्तेन क वेलायांसमुद्रतटे जाजलिर्नामऋषिः॥२॥ निर्जिताःप्राणमनोवचोदृशोयैस्तान् शांताउपरताःसमानामूलाधारादारभ्यऋजवोविग्रहायेषां ब्रह्मणियोजितआत्मायैः सुरासुरैरीडयो दृष्टवान् ॥३॥ उत्थायप्रणिपत्ययथादेशंयथाविधिपूजयित्वा ॥४॥५॥ आदिष्टमुपदिष्टंयदात्मतत्त्वं क्षपितंविस्मृतं ॥६॥७॥ इतिप्रचेतोभिः पृष्टः ॥ ८ ॥ अहोगृहप्रसक्त्याहरिसेवांविनासर्वजन्मकर्मादिकंव्यर्थीकृतमितितान्शोचन्नाह तज्जन्मेतिचतुर्भिः यतोजन्मादेर्हरिसेवैवफल

दीक्षिताब्रह्मसत्रेणसर्वभूतात्ममेधसा ॥ प्रतीच्यांदिशिवेलायांसिद्धोऽभूद्यत्रजाजलिः ॥ २ ॥ तान्निर्जित प्राणमनोवचोदृशोजितासनान्शांतसमानविग्रहान् ॥ परेऽमलेब्रह्मणियोजितात्मनःसुरासुरेड्योददृशे स्मनारदः ॥ ३ ॥ तमागतंतउत्थायप्रणिपत्याभिनंद्यच ॥ पूजयित्वायथादेशंसुखासीनमथाब्रुवन् ॥ ४ ॥ प्रचेतसऊचुः स्वागतंतेसुरर्षेऽद्यदिष्ट्यानोदर्शनंगतः ॥ तवचंक्रमणंब्रह्मन्नभयाययथारवेः ॥ ५ ॥ यदा दिष्टंभगवताशिवेनाधोक्षजेनच ॥ तद्गृहेषुप्रसक्तानांप्रायशःक्षपितंप्रभो ॥ ६ ॥ तन्नःप्रद्योतयाध्यात्मज्ञा नंतत्त्वार्थदर्शनं ॥ येनांजसातरिष्यामोदुस्तरंभवसागरं ॥ ७ ॥ मैत्रेयउवाच इतिप्रचेतसांपृष्टोभगवा न्नारदोमुनिः ॥ भगवत्युत्तमश्लोकआविष्टात्माऽब्रवीन्नृपान् ॥ ८ ॥ नारदउवाच तज्जन्मतानिकर्माणि तदायुस्तन्मनोवचः ॥ नृणांयेनेहविश्वात्मासेव्यतेहरिरीश्वरः ॥ ९ ॥ किंजन्मभिस्त्रिभिर्वेहशौक्रसावि त्रयाज्ञिकैः ॥ कर्मभिर्वात्रयीप्रोक्तैःपुंसोपिविबुधायुषा ॥ १० ॥ श्रुतेनतपसावाकिंवचोभिश्चित्तवृत्तिभिः ॥ बुद्ध्यावाकिंनिपुणयाबलेनेंद्रियराधसा ॥ ११ ॥ किंवायोगेनसांख्येनन्यासस्वाध्याययोरपि ॥ किंवा श्रेयोभिरन्यैश्चनयत्रात्मप्रदोहरिः ॥ १२ ॥ ॥ ॥ ॥

मतस्तद्विहीनंसर्वंव्यर्थमित्यर्थः ॥९॥ शुक्रसंबंधिजन्मविशुद्धमातापितृभ्यामुत्पत्तिः सावित्रमुपनयनेन याज्ञिकंदीक्षया विबुधानामिवदीर्घा युषाअपि ॥ १० ॥ वचोभिःवाग्विलासैः चित्तवृत्तिभिःनानाऽवधानसामर्थ्यैः इंद्रियाणांराधसापाटवेन ॥ ११ ॥ योगेनप्राणायामादिना सांख्येनदेहादिव्यतिरिक्तात्मज्ञानमात्रेण संन्यासवेदाध्ययनाभ्यामपि अन्यैरपिव्रतवैराग्यादिभिःश्रेयःसाधनैः ॥ १२ ॥

नन्वेषांनानाफलसाधनानांहरिसेवाभावमात्रेणकुतोवैयर्थ्यंतत्राह श्रेयसांफलानामात्मैवावधिःपराकाष्ठा अर्थतः परमार्थतःआत्मार्थत्वेनै
वान्येषांप्रियत्वादित्यर्थः भवत्वात्माअवधिःहरेःकिमायातंतत्राह सर्वेषामपीति आत्माआत्मदश्चाविद्यानिरासेनस्वरूपाभिव्यंजकः ऐश्व
रेणापिरूपेणबालिप्रभृतिभ्यइवात्मप्रदःप्रियश्चपरमानंदरूपत्वात् ॥ १३ ॥ किंचनानाकर्मभिस्तत्तद्देवताप्रीतिनिमित्तान्यपिफलानिहरि
प्रीत्याभवंतिकेवलंतत्तद्देवताराधनेनतुनकिंचिदितिसदृष्टांतमाह यथेति मूलात्प्रथमविभागाःस्कंधाः तद्विभागाभुजाः तेषामपिउपशा
खाःउपलक्षणं पत्रपुष्पादयोऽपितृप्यंति नतुमूलमेकंविनाताःस्वस्वनिषेचनेन प्राणस्योपहारोभोजनंतस्मादेवेंद्रियाणांतृप्तिःनतुतत्तदिंद्रि
येषुपृथक्पृथगन्नलेपनेन तथाऽच्युताराधनमेवसर्वदेवताराधनंनपृथगित्यर्थः ॥ १४ ॥ कुतःसर्वमूलत्वादितिसदृष्टांतमाह यथैववारःज

श्रेयसामपिसर्वेषामात्माह्यवधिरर्थतः ॥ सर्वेषामपिभूतानांहरिरात्मात्मदःप्रियः ॥ १३ ॥ यथातरोर्मूल
निषेचनेनतृप्यंतितत्स्कंधभुजोपशाखाः ॥ प्राणोपहाराच्चयथेंद्रियाणांतथैवसर्वार्हणमच्युतेज्या ॥ १४ ॥
यथैवसूर्यात्प्रभवंतिवारःपुनश्चतस्मिन्प्रविशंतिकाले ॥ भूतानिभूमौस्थिरजंगमानितथाहरावेवगुणप्रवा
हः ॥ १५ ॥ एतत्पदंतज्जगदात्मनःपरंसकृद्विभातंसवितुर्यथाप्रभा ॥ यथाऽसवोजाग्रतिसुप्तशक्तयोद्र
व्यक्रियाज्ञानभिदाभ्रमात्ययः ॥ १६ ॥ ॥ ॥ ॥ ॥

लानिवर्षाकालेसूर्यादुद्भवंतिग्रीष्मेतस्मिन्नेवप्रविशंति अस्याप्रसिद्धत्वेनदृष्टांतांतरमाह
यथाभूतानिभूमाविति गुणप्रवाहश्चेतनाचेतनात्मकःप्रपंचः ॥ १५ ॥ ननुहरावेवगुणप्रवाहइत्युक्तेतदाधारत्वेनसोपाधिकत्वंहरेःस्यादि
त्याशंक्याह एतादिति एतद्विश्वंविष्णोस्तत्सर्वशास्त्रप्रसिद्धंपदंपरंसर्वोपाधिरहितंतदुत्पन्नत्वात्ततःपृथगित्यर्थः तर्हिकथमन्यथाभातितत्रा
हसकृदिति सकृत्कदाचिद्विभातंस्फुरितंगंधर्वनगरवत् यथासवितुःप्रभानततोभिन्ना यथाचजाग्रतिअसवइंद्रियाणिस्फुरंति सुषुप्तौतुसुप्त
शक्तयोभवंतीत्यर्थः कथंभूतोऽसौहरिः द्रव्यादीनांत्रिविधाहंकारकार्याणांतन्निमित्तस्यभेदभ्रमस्यचात्ययोयस्मात्सः यद्वा अजाग्रतिसुषुप्तौ
असवःसुप्ताःशक्तयोयेषांतेभवंति सवितुःप्रभेत्युद्गतौदृष्टांतइति ॥ १६ ॥ ॥ ॥ ॥

नन्वसंगेहरौकथंप्रपंचोत्पत्तिलयौतत्राह यथेति अभ्रतमःप्रकाशाआगमापायिनोरजस्तमःसत्त्वस्थानीयाः हेभूपाःप्रचेतसः अमूःशक्तय उद्भवंति नभवंतिलीयंते इतिएवमयंजगत्प्रवाहः ॥ १७ ॥ तेनसर्वकारणत्वेनहेतुना कालोनिमित्तं प्रधानमुपादानं पुरुषःकर्त्ता एतात्रि तयात्मकत्वात्सर्वकारणंपरमीश्वरमद्धासाक्षाद्भजध्वं कथमात्मनएकभावेनाभिन्नत्वेन ॥ १८ ॥ साधनमाह दयादिभिःशीघ्रंतुष्यति ॥ ॥ १९ ॥ ततोनकदाचित्त्यजतीत्याह अपहतानिरस्ताःसकलाएषणाः कामायस्मात्सचासावमलआत्मामनस्तास्मिन्सतांमनासिनि रंतरंसमेधितयाभावनयोपहूतःसन्नक्षरोहरिःछिद्रवत्तत्रत्याकाशवत्ततोनसरतिनापयातिहि किंकुर्वन् आत्मनोनिजजनवशगत्वंस्वभक्ता

यथानभस्यभ्रतमःप्रकाशाभवंतिभूपानभवंत्यनुक्रमात् ॥ एवंपरेब्रह्मणिशक्तयस्त्वमूरजस्तमःसत्त्वमिति प्रवाहः ॥ १७ ॥ तेनैकमात्मानमशेषदेहिनांकालंप्रधानंपुरुषंपरेशं ॥ स्वतेजसाध्वस्तगुणप्रवाहमात्मैक भावेनभजध्वमद्धा ॥ १८ ॥ दययासर्वभूतेषुसंतुष्ट्यायेनकेनवा ॥ सर्वेंद्रियोपशांत्याचतुष्यत्याशुजनार्दनः ॥ १९ ॥ अपहतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः ॥ निजजनवशगत्वमात्मनोऽयन्नसर तिछिद्रवदक्षरःसतांहि ॥ २० ॥ नभजतिकुमनीषिणांसइज्यांहरिरधनात्मधनप्रियोरसज्ञः ॥ श्रुतधनकु लकर्मणांमदैर्येविदधतिपापमकिंचनेषुसत्सु ॥ २१ ॥ श्रियमनुचरतींतदर्थिनश्चद्विपदपतीन्विबुधांश्चयत्स्व पूर्णः ॥ नभजतिनिजभृत्यवर्गतंत्रःकथमममुद्विसृजेत्पुमान्कृतज्ञः ॥ २२ ॥ मैत्रेयउवाच इतिप्रचेत सोराजन्नन्याश्चभगवत्कथाः ॥ श्रावयित्वाब्रह्मलोकंययौस्वायंभुवोमुनिः ॥ २३ ॥ ॥

धीनत्वमयन्नवगच्छन् ॥ २० ॥ सतामेववश्योऽसौअसतांतुपूजामपिनगृण्हातीत्याह नेति कुमनीषिणांकुत्सितमतीनांअधनाश्चतेआत्म धनाश्चभगवद्धनास्तेप्रियायस्य स्सज्ञःभक्तिसुखज्ञः केकुमनीषिणस्तानाह श्रुतादिनिमित्तैर्मदैर्येसत्सुपापंतिरस्कारंकुर्वंति ॥ २१ ॥ भ क्ताधीनत्वंप्रपंचयन्नाह अनुवर्तमानामपिश्रियंतदर्थिनःसकामान्द्विपदपतीन्नरेंद्रान्विबुधान्देवानपियोनानुवर्तते यतःस्वेनैवपूर्णःअतः स्वभृत्यवर्गानुरक्तएव एवंभूतममुंतुईषदपिकथंपरित्यजेत् ॥ २२॥ प्रचेतसःकर्मभूतान् अन्याश्चनूनंसुनीतेरित्यादिध्रुवचरिताद्याः सन्त्रेऽ गायत्प्रचेतसामित्युक्तत्वात् ॥ २३ ॥ ॥ ॥ ॥ ॥

॥ २४ ॥ प्रचेतसांनारदस्यचसंवादरूपमेतदाख्यानंतेभिहितं हरेःकीर्तनंयास्मिन्तत् ॥ २५ ॥ यएषवंशःसोऽनुवर्णितः ॥ २६ ॥ यः प्रियव्रतः ॥ २७ ॥ २८ ॥ २९ ॥ स्वान्ज्ञातीन्दिदृक्षुः ॥ ३० ॥ राज्ञांचरितमितिशेषः ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधे





तेऽपितन्मुखनिर्यातंयशोलोकमलापहं ॥ हरेर्निशम्यतत्पादंध्यायंतस्तद्गतिंययुः॥२४॥एतत्तेभिहितंक्षत्तर्य न्मांत्वंपरिपृष्टवान् ॥ प्रचेतसांनारदस्यसंवादंहरिकीर्तनं ॥२५॥ श्रीशुकउवाच यएषउत्तानपदोमानव स्यानुवर्णितः ॥ वंशःप्रियव्रतस्यापिनिबोधनृपसत्तम ॥२६॥ योनारदादात्मविद्यामधिगम्यपुनर्महीं ॥ भुक्त्वाविभज्यपुत्रेभ्यऐश्वरंसमगात्पदं ॥ २७ ॥ इमांतुकौषारविणोपवर्णितांक्षत्तानिशम्याजितवादसत्क थां ॥ प्रवृद्धभावोऽश्रुकलाकुलोमुनेर्दधारमूर्ध्नाचरणंहृदाहरेः ॥२८॥ विदुरउवाच सोऽयमद्यमहायोगि न्भवताकरुणात्मना ॥ दर्शितस्तमसःपारोयत्राकिंचनगोहरिः ॥ २९ ॥ श्रीशुकउवाच इत्यानम्यत मामंत्र्यविदुरोगजसाह्वयं ॥ स्वानांदिदृक्षुःप्रययौज्ञातीनांनिर्वृताशयः ॥ ३० ॥ एतद्यःशृणुयाद्राजन्राज्ञां हर्यर्पितात्मनां ॥ आयुर्धनंयशःस्वस्तिगतिमैश्वर्यमाप्नुयात् ॥३१॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधे ऽष्टादशसाहस्र्यांसंहितायांप्राचेतसोपाख्यानंनामएकत्रिंशोऽध्यायः ॥ ३१ ॥ स्कंधश्चचतुर्थःसमाप्तः



श्रीधरस्वामिविरचितायांश्रीभागवतभावार्थदीपिकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ॥

श्रीगणेशायनमः नमःश्रीमत्परमहंसास्वादितचरणकमलचिन्मकरंदायभक्तजनमानसनिवासायश्रीरामाय अथातःपंचमस्कंधव्याख्या
नेकविशेषवान् ॥ प्रियव्रतान्वयोयत्रसप्रपंचःप्रपंच्यते ॥ षड्विंशत्याऽधुनाऽध्यायैःपंचमेस्थानमीर्यते ॥१॥ लोकद्वीपादिमर्यादापालनाख्यमने
कधा॥पृथिव्युपर्यधोलोकैर्मर्यादात्रिविधामता ॥२॥ पुनश्चैकैकशस्तेषुमर्यादाबहुधामता ॥ भुवोद्वीपादिमर्यादाःपाल्यंतेराजभिःपृथक्॥३॥भूमे
रुपरिदेवाद्यैस्ततश्चाधोऽसुरादिभिः ॥ तत्राध्यायैस्तुविंशत्याप्रियव्रतपुरःसरैः ॥ ४ ॥ भुवोद्वीपादिमर्यादाःपालिताइतिवर्ण्यते ॥ त्रिभिःसूर्यादि
भिर्ज्योतिश्चक्रादिष्वितिकीर्त्यते ॥ ५ ॥ अतलादिषुदैत्याद्यैःपालनंचततस्त्रिभिः ॥ तत्रतुप्रथमेऽध्यायेज्ञानिनोराज्यनिर्वृतिः ॥६ ॥ पुनश्चज्ञान
निष्ठेतिप्रियव्रतकथाद्भुता॥वंशंप्रियव्रतस्यापिनिबोधनृपसत्तम ॥७॥योनारदादात्मविद्यामधिगम्यपुनर्महीं ॥भुक्त्वाविभज्यपुत्रेभ्यऐश्वरंसमगा

राजोवाच प्रियव्रतोभागवतआत्मारामःकथंमुने ॥ गृहेरमतयन्मूलःकर्मबंधःपराभवः ॥ १ ॥ ननूनंमु
क्तसंगानांतादृशानांद्विजर्षभ ॥ गृहेष्वभिनिवेशोऽयंपुंसांभवितुमर्हति ॥ २ ॥ महतांखलुविप्रर्षेउत्तमश्लो
कपादयोः ॥ छायानिर्वृतचित्तानांनकुटुंबेस्पृहामतिः ॥ ३ ॥ संशयोऽयंमहान्ब्रह्मन्दारागारसुतादि
षु ॥ सक्तस्ययत्सिद्धिरभूत्कृष्णेचमतिरच्युता ॥ ४ ॥ ॥ ॥ ॥

त्पदमितिपूर्वस्कंधांतेउक्तं प्रियव्रतस्यप्रथममात्मविद्याततोगृहाश्रमः ततःसर्वसंगत्यागेनमोक्षइत्युक्तं तत्रविस्मितःपृच्छति प्रियव्रतोभागव
तःअतएवात्मारामःगृहेकथमरमत ननुरमतांकोदोषइतिचेदतआह कर्मणांबंधःपराभवश्चस्वरूपतिरस्कारोयन्मूलोभवति यद्गृहंमूलंकार
णंयस्य ॥ १ ॥ गृहेषुरतिश्चतत्राभिनिवेशात्स्यात्सचभागवतानामात्मारामाणांनसंभवतीत्याह ननूनमिति ॥ २ ॥ गृहासक्तिर्हिकुटुंबादिस्पृ
हयाभवतिसाचतेषांनास्तीत्याह महतामितिउत्तमश्लोकपादयोः छायाकामादिसंतापहारिणीतयानिर्वृतंचित्तंयेषांतेषांस्पृहायुक्तामतिर्ना
स्ति ॥ ३ ॥ दाराद्यासक्तस्यतुमोक्षः श्रीकृष्णेऽस्खलितामतिश्चाभूदितियत् अयंचमहान्संशयइत्याह संशयइति ॥ ४ ॥ ॥

अंगीकृत्यपरिहरति बाढमभिनिवेशादिकंनास्तीतिसत्यमेव तथाऽपिविघ्नवशेनतेषांप्रवृत्तिःपूर्वाभ्यासबलेनपुनर्निवृत्तिश्चसंगच्छतइत्याह भगवतः श्रीमच्चरणारविंदमकरंदरूपोयोरसस्तस्मिन्नावेशितंचेतोयैस्तेऽपिकेनचिदंतरायेणविघ्नेनविहताआपिस्वांशिवतमांपदवींमार्गंन हिन्वंतिनत्यजंति काम् भागवताएवपरमहंसास्तेषांदयितस्यप्रियस्यश्रीवासुदेवस्यकथांनत्यजंति ॥ ५ ॥ प्रियव्रतस्यब्रह्माज्ञैवांतराय रूपाबभूवेतिसप्रसंगमाह यर्हीत्यादिनाविमुक्तसंगःप्रकृतिंभजस्वेत्यंतेन यर्हिवावहयदाहिवावेतिप्रसिद्ध्यादौहइतिच सःस्वपित्रामनुना अवनितलपरिपालनायोपामंत्रितोनियुक्तोनैवाभ्यनंदन्नैच्छत् अथहतदैवभगवानादिदेवोब्रह्मास्वभवनादवततारेत्यन्वयः उपामंत्रणेहे

श्रीशुकउवाच बाढमुक्तंभगवतउत्तमश्लोकस्यश्रीमच्चरणारविंदमकरंदरसआवेशितचेतसोभागवतपरमहंसदयितकथांकिंचिदंतरायविहताःस्वांशिवतमांपदवींनप्रायेणहिन्वंति ॥ ५॥ यर्हिवावहराजन्सराजपुत्रःप्रियव्रतःपरमभागवतोनारदस्यचरणोपसेवयांऽजसाऽवगतपरमार्थसतत्त्वोब्रह्मसत्रेणदीक्षिष्यमाणोऽवनितलपरिपालनायाम्नातप्रवरगुणगणैकांतभाजनतयास्वपित्रोपामंत्रितोभगवतिवासुदेवएवाऽव्यवधानसमाधियोगेनसमावेशितसकलकारकक्रियाकलापोनैवाभ्यनंदद्यद्यपितदप्रत्याम्नातव्यंतदाधिकरणआत्मनोऽन्यस्मादसतोऽपिपराभवमन्वीक्षमाणः॥६॥ अथहभगवानादिदेवएतस्यगुणविसर्गस्यपरिबृंहणानुध्यानव्यवसितसकलजगदभिप्रायआत्मयोनिरखिलनिगमनिजगणपरिवेष्टितःस्वभवनादवततार॥७॥

तुः आम्नाताःराज्ञांशास्त्रेणोक्तायेप्रवराःश्रेष्ठागुणास्तेषांगणस्यैकांतभाजनतयानियताश्रयत्वेन अनिच्छायांहेतुः परमार्थसतत्त्वमात्मयाथात्म्यमवगतंतद्येनसतथा अतःब्रह्मसत्रेणात्मध्यानेनकार्येणदीक्षिष्यमाणःनियमंग्रहीष्यन् प्रागपिवासुदेवएवानिरंतरसमाधियोगेनाचित्तैकाग्र्येणसमावेशितःसमर्पितःसकलकारकाणामिंद्रियाणांयाःक्रियास्तासांकलापोयेनसः यद्यपितत्पित्रोक्तंनप्रत्याख्येयंतथाऽपितदधिकरणेराज्याधिकारेअसतोऽपिमिथ्याभूतादपिराज्यप्रपंचादात्मनःपराभवमालोचयन्नाभ्यनंदत् ॥ ६ ॥ गुणविसर्गस्यगुणसृष्टेःपरिबृंहणंसमृद्धिस्तदनुचिंतयाव्यवसितःसकलजगतामभिप्रायोयेनसः यथाराज्ञाचारैर्मंडलेश्वराणामभिप्रायोनिश्चीयतेतद्वत् अखिलैर्निगमैर्मूर्तिमद्भिर्वेदैर्निजगणैश्चमरीच्यादिभिःपरिवृतःसत्यलोकादवतीर्णः ॥ ७ ॥ ॥ ॥ ॥

सचब्रह्मातत्रतत्रउडुपतिश्चंद्रइवप्रकाशमानोगंधमादनस्यद्रोणींदरीमवभासयन्नुपससर्पेत्यन्वयः अमरपरिवृढैर्देवेंद्रादिभिः ॥ ८ ॥ हंस
यानेनोपलक्षणेनएनंपितरमुपलभमानःमत्पिताऽयमितिलक्षयन्पितापुत्राभ्यांमनुप्रियव्रताभ्यांसहनारदः कृतांजलिःसन्सहसैवाभ्युत्थाया
र्हणेनपूजयासहोपतस्थेतुष्टाव प्रियव्रतंतदामंदरद्रोण्यांनारदःउपदिशति मनुश्चतंनेतुमागतोऽस्तीतिज्ञातव्यम् ॥ ९ ॥ हेभारतभगवा
नादिपुरुषोब्रह्माऽपितंप्रियव्रतमितिहोवाचेत्यन्वयः तेननारदेनोपनीतमर्हणंयस्यसः सूक्तवाकेनयथोचितवाक्येनअतिशयेनउदितावर्णि
तागुणगणाः अवताराः सुजयाःसर्वोत्कर्षाश्चयस्य ॥ १० ॥ प्रवृत्तिनिष्ठंमद्वाक्यंप्रतिकूलंमत्वामय्यसूयांकरिष्यतीतिशंकमानोनाहमेवंव

सतत्रतत्रगगनतलउडुपतिरिवविमानावलिभिरनुपथममरपरिवृढैरभिपूज्यमानःपथिपथिचवरूथशःसि
द्धगंधर्वसाध्यचारणमुनिगणैरुपगीयमानोगंधमादनद्रोणीमवभासयन्नुपससर्प ॥८॥ तत्रहवाएनंदेवर्षिर्हं
सयानेनपितरंभगवंतंहिरण्यगर्भमुपलभमानःसहसैवोत्थायार्हणेनसहपितापुत्राभ्यामवहितांजलिरुप
तस्थे ॥९॥ भगवानपिभारततदुपनीतार्हणःसूक्तवाकेनातितरामुदितगुणगणावतारसुजयःप्रियव्रतमादि
पुरुषस्तंसदयहासावलोकइतिहोवाच ॥१०॥ श्रीभगवानुवाच निबोधतातेदमृतंब्रवीमिमाऽसूयितुंदेवम
र्हस्यप्रमेयम् ॥ वयंभवस्तेततएषमहर्षिर्वहामसर्वेविवशायस्यादिष्टम् ॥ ११ ॥ नतस्यकश्चित्तपसाविद्य
यावानयोगवीर्येणमनीषयावा ॥ नैवार्थधर्मैःपरतःस्वतोवाकृतंविहंतुंतनुभृद्विभूयात् ॥ १२ ॥ भवायना
शायचकर्मकर्तुंशोकायमोहायसदाभयाय ॥ सुखायदुःखायचदेहयोगमव्यक्तदिष्टंजनताऽगधत्ते ॥ १३ ॥

दामिकिंतुमन्मुखेनहरिरेवत्वामाज्ञापयतीतिवदन्प्रवृत्तिनिवृत्तिरहस्यमाह निबोधेतिनवभिः ऋतंसत्यम् अप्रमेयंदेवमसूयितुंदोषारोपेणद्र
ष्टुंनार्हसि तेतवततःतातःएषःत्वद्गुरुश्चमहर्षिः दिष्टमादिष्टमाज्ञां विवशाअस्वतंत्राःसंतोवहामः ॥ ११ ॥ विवशत्वमेवाहचतुर्भिः नेति
तस्यकृतंतेननिर्मितं तनुभृज्जीवः तपआदिभिर्विहंतुमन्यथाकर्तुंनाविभूयात्प्रभुर्नभवेत् मनीषयासामादिबुद्धिबलेन परतःबलवदाश्रयात्
॥१२॥ तत्रदेहयोगेतावत्पारतंत्र्यंप्रसिद्धमित्याह भवायेति भवोजन्म भवाद्यर्थमव्यक्तेनेश्वरेणदिष्टंदत्तंदेहयोगंजनताजीवसमूहःसदाधत्ते
नत्वन्यथाकर्तुंशक्नोति अंगहेप्रियव्रत ॥ १३ ॥ ॥ ॥ ॥ ॥

कर्मकरणेऽपिपारतंत्र्यमाह यद्वाचीति यस्यत्वाचित्रेदलक्षणायांतंत्यांदामन्याम् गुणाःसत्वादयःतत्पूर्वकाणि चयानिकर्माणितन्निबंधनैर्दा
मभिर्ब्राह्मणादिशब्दैःसुदुस्तरैःसुदृढैःहेवत्सवयंसर्वेसुयोजिताः निबद्धाःसंतस्तस्मैईश्वरायबलिंवहामः तदिच्छयाकर्मकुर्मःनसिनासिका
यांप्रोताबद्धाःसंतश्चपुष्पदोबलीवर्दायथाद्विपदेपुरुषाय ॥ १४ ॥ भोगेषुपारतंत्र्यमाह ईशाईश्वरेणअभिसृष्टंदत्तमेव अंगहेप्रियव्रत अव
रुंध्महेस्वीकुर्मः यथास्वामिनादत्तमेवकणिशादिबलीवर्दाभक्षयंतिनस्वेच्छयातद्वत् नचैवंवैषम्यमीश्वरस्य यतोगुणकर्मसंगान्नाथोयद्यद्देव
तिर्यगादिलक्षणंदेहमयुंक्तयोजितवान् तत्तदास्थायस्वीकृत्य यथांऽधाःचक्षुष्मताछायामातपंवानीयमानाःसंतः ॥ १५ ॥ नन्वेतत्सर्वमावि
दुषएवनत्वात्मविदइत्याशंक्याह मुक्तोऽपीति यावत्प्रारब्धंकर्मतावत् यथास्वप्नेअनुभूतंप्रतियातनिद्रःगतनिद्रःअभिमानशून्यएवानुस्मर

यद्वाचितंत्यांगुणकर्मदामभिःसुदुस्तरैर्वत्सवयंसुयोजिताः ॥ सर्वेवहामोबलिमीश्वरायप्रोतानसीवद्विपदे
चतुष्पदः ॥ १४ ॥ ईशाभिसृष्टंह्यवरुंध्महेंऽगदुःखंसुखंवागुणकर्मसंगात् ॥ आस्थायतत्तद्यदयुंक्तनाथ
श्चक्षुष्मतांऽधाइवनीयमानाः ॥ १५ ॥ मुक्तोपितावद्बिभृयात्स्वदेहमारब्धमश्नन्नभिमानशून्यः ॥ यथाऽ
नुभूतंप्रतियातनिद्रःकिंत्वन्यदेहायगुणान्नवृंक्ते ॥ १६ ॥ भयंप्रमत्तस्यवनेष्वपिस्याद्यतःसआस्तेसहषट्
सपत्नः ॥ जितेंद्रियस्यात्मरतेर्बुधस्यगृहाश्रमःकिंनुकरोत्यवद्यम् ॥ १७ ॥ यःषट्सपत्नान्विजिगीषमा
णोगृहेषुनिर्विश्ययतेतपूर्वम् ॥ अत्येतिदुर्गाश्रितऊर्जितारीन्क्षीणेषुकामंविचरेद्विपश्चित् ॥ १८ ॥

ति तर्हिभोगवासनयापुनर्जन्मभवेत्तत्राह किंतुदेहांतरारंभकान्गुणान्कर्माणिवासनाश्चनवृंक्तेनसंभजते ॥ १६ ॥ ननुगृहेवर्तमानस्यभो
गान्भुंजानस्यकुतोऽभिमानाभावोमोक्षोवा अतस्तत्त्यागेनवनवासएवयुक्तस्तत्राह भयंसंसारःस्यादेव प्रमत्तस्यअजितेंद्रियस्य वनेष्विति
संगभियावनाद्वनांतरंगच्छतोपीत्यर्थः सहैवषट्सपत्नाःशत्रवोमनोबुद्धींद्रियाणि चयस्यसतथाभूतएववनेष्वपियतआस्तेबुधत्वेनजितेंद्रि
यत्वादात्मरतेःआत्मारामस्य अवद्यंरागादिदोषंकिंकरोतिनकरोत्येव ॥ १७ ॥ ननुगृहेवसतःपुरुषस्यरागादयःसंभवंतिनतुवनइत्याशंक्याह
यइति यःषट्वैरिणःषडिंद्रियाणि विजिगीषमाणःसपूर्वंगृहेषुस्थित्वातेषामत्यंतंनिरोधमकुर्वन्जेतुंयतेत क्षीणेष्वरिषुकामंगृहेऽन्यत्रवाविच
रेत् यतोलोकेऊर्जितारीन्दुर्गाश्रितएवात्येतिजयाति पश्चाद्दुर्गेवाऽन्यत्रवावर्तते युध्येतेतिपाठेप्रहरेदित्यर्थः ॥ १८ ॥ ॥

इदंचगृहदुर्गाश्रयणंप्राकृतानां त्वंतुअब्जनाभस्यांघ्रिसरोजकोशएवदुर्गंतदाश्रितः अतएवनिर्जितषट्सपत्नश्चतथाऽपिपुरुषेणेश्वरेणा तिदिष्टान्दत्तान्भोगांस्तावत्भुंक्ष्व पश्चाद्विमुक्तसंगःसन्प्रकृतिंस्वरूपंभजस्व आत्मनिष्ठोभवेत्यर्थः ॥ १९ ॥ आत्मनस्ततोलघुतया अल्पतयातच्छासनमंगीचकार यद्वा आत्मनोयदनुशासनंतत् अलघुतयागौरवेणबाढंतथाकरिष्यामीतिअवनतकंधरःसन्जग्राह ॥ २० ॥ मनुनासंतुष्टेनउपकल्पितापूजायस्य प्रियव्रतस्ययोगभ्रंशात्नारदस्यचशिष्यनाशात्कुटिलमीक्षणंसंभवतितत्तुनास्तीत्याह अविषमंयथातथातयोरभिसमीक्षमाणयोःसतोः आत्मनःसम्यगवस्थानं अवाङ्मनसंवाङ्मनसयोरविषयं क्षयंनिवासंजगाम पाठांतरे अवाग्वाचामगोच



त्वंत्वब्जनाभांघ्रिसरोजकोशदुर्गाश्रितोनिर्जितषट्सपत्नः ॥ भुंक्ष्वेहभोगान्पुरुषातिदिष्टान्विमुक्तसंगःप्रकृतिंभजस्व ॥ १९ ॥ श्रीशुकउवाच इतिसमभिहितोमहाभागवतोभगवतस्त्रिभुवनगुरोरनुशासनमात्मनो लघुतयाऽवनतशिरोधरोबाढमितिसबहुमानमुवाह ॥ २० ॥ भगवानपिमनुनायथावदुपकल्पितापचितिःप्रियव्रतनारदयोरविषममभिसमीक्षमाणयोरात्मसमवस्थानमवाङ्मनसंक्षयमव्यवहृतंप्रवर्तयन्नगमत् ॥ २१ ॥ मनुरपिपरेणैवंप्रतिसंधितमनोरथःसुरर्षिवरानुमतेनात्मजमखिलधरामंडलस्थितिगुप्तयेआस्थाप्यस्वयमतिविषमविषयविषजलाशयाशायाउपरराम ॥ २२ ॥ इतिहवावसजगतीपतिरीश्वरेच्छयाऽधिनिवेशितकर्माधिकारोऽखिलजगद्बंधध्वंसनपरानुभावस्यभगवतआदिपुरुषस्यांघ्रियुगलानवरतध्यानानुभावेनपरिरंधितकषायाशयोऽवदातोऽपिमानवर्धनोमहतांमहितलमनुशशास ॥ २३ ॥

रंकथंचिन्मनसःक्षयंविषयमतःअव्यवहृतंव्यवहारशून्यंब्रह्मनिवृत्तंप्रवर्तयन् व्यवहाराद्विषण्णःसन्व्यवहारातीतंस्वरूपंचिंतयन्नंतर्हितइत्यर्थः ॥ २१ ॥ पुत्रंराज्येऽभिषिच्यवनंयास्यामीत्येवंयोमनोरथःसःपरेणब्रह्मणैवप्रतिसंधितःसंपादितोयस्यसः नारदस्यानुमतेनराज्येस्थापयित्वाअतिविषमोदुस्तरोयोविषयविषजलाशयोगृहंतस्यआशादिक्प्रवृत्तिवासनाभोगेच्छावातस्याःउपरतोऽभूत् ॥ २२ ॥ यत्पृष्टंगृहेकथमरमतत्रोक्तमुत्तरमुपसंहरति इतिहवावइत्थमेवाहिअधिनिवेशितःप्रापितः कर्माधिकारोयस्य अखिलस्यजगतोबंधध्वंसनःपरोऽनुभावोयस्यतस्ययदंघ्रियुगलंतस्यानवरतंध्यानंतदनुभावेनपरिरंधितकषायोदग्धरागादिमलआशयोयस्य अतःअवदातःशुद्धोऽपिमहतांब्रह्मादीनामाज्ञापालनेनमानवर्धनः ॥ २३ ॥ ॥ ॥ ॥ ॥

उइतिविस्मये हइतिप्रसिद्धौ वावेतिनिश्चये आत्मनः समानैः शीलादिभिरुदारान्महतोदशपुत्रान् जनयामास ॥ २४ ॥ तानाह आग्नीध्र ःइध्म जिह्वः यज्ञबाहुः महावीरः हिरण्यरेताः घृतपृष्ठः सवनः मेधातिथिःवीतिहोत्रः कविश्चेतिअग्नीनांनामानियेषांते ॥ २५ ॥ अर्भभावाद्बाल्यादारभ्य ॥ २६ ॥ तस्मिन्पारमहंस्याश्रमेश्रीमच्चरणारविंदयोरविरतस्मरणेनाविगलितःअखंडितोयःपरमोभक्तियोगस्तस्यानुभावेनविशोधितांतःकरणेप्रतीतोयोभगवांस्तस्मिन्नात्मनःत्वंपदार्थस्यतादात्म्यं अविशेषेणाविशेषोदेहाद्युपाधिःतदपोहेनप्रापुः ॥ २७ ॥ २८ ॥ उपशमाश्रयेषु सत्सुदशकोटिभिरेकमर्बुदंएतादृशानिवर्षाणामेकादशार्बुदानिजगतींबुभुजइत्यन्वयः राज्ञोधर्मपालनंविषयभोगप्रभावैर्भाव्यंतत्रानयासे

अथचदुहितरंप्रजापतेर्विश्वकर्मणउपयेमेबर्हिष्मतींनामतस्यामुहवावआत्मजानात्मसमानशीलगुणकर्म रूपवीर्योदारान्दशभावयांबभूवकन्यांचयवीयसीमूर्जस्वतींनाम ॥ २४॥ आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीर हिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्र[illegible]त्रयइतिसर्वएवाग्निनामानः ॥२५॥ एतेषांकविर्महावीरःसवनइतित्रयआसन्नूर्ध्वरेतसस्तआत्मविद्यायामर्भभावादारभ्यकृतपरिचयाः पारमहंस्यमेवाश्रममभजन् ॥ ॥ २६ ॥ तस्मिन्नुहवाउपशमशीलाःपरमर्षयःसकलजीवनिकायावासस्यभगवतोवासुदेवस्यभीतानांशरणभूतस्यश्रीमच्चरणारविंदाविरतस्मरणाविगलितपरमभक्तियोगानुभावेनपरिभावितांतर्हृदयाधिगतेभगवतिसर्वेषांभूतानामात्मभूतेप्रत्यगात्मन्येवात्मनस्तादात्म्यमविशेषेणसमीयुः ॥२७॥अन्यस्यामपिजायायांत्रयःपुत्राआसन्नुत्तमस्तामसोरैवतइतिमन्वंतराधिपतयः ॥२८॥ एवमुपशमायनेषुस्वतनयेष्वथजगतीपतिर्जगतीमर्बुदान्येकादशपरिवत्सराणामव्याहताखिलपुरुषकारसारसंभृतदोर्दंडयुगलापीडितमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षोबर्हिष्मत्याश्चानुदिनमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिःपराभूयमानविवेकइवानवबुद्ध्यमानइवमहामनाबुभुजे॥२९॥ नैवहताअखिलाःपुरुषकाराः पौरुषाणियस्मात्तेनसारेणबलेनसंभृतौपूर्णौदोर्दंडौतयोर्युगलंतेनापीडितआकृष्टोमौर्वीगुणस्तस्यस्तनितंटंकारःतेनैवयुद्धंविनाविरमितानिरस्ताधर्मप्रतिपक्षायेन भोगातिशयमाहबर्हिष्मत्याः स्वभार्यायाःअनुदिनमेधमानैःप्रमोदादिभिः पराभूयमानविवेकइव अतएवविषयासक्त्याआत्मानमनवबुध्यमानइवबुभुजे तत्रप्रमोदःपतिदृष्ट्वाहर्षःततःप्रसरणमभ्युत्थानादिर्लीलाततोयौषिण्यंयोषित्स्वभावकृतशृंगारानुभावप्रकाशनं ततोव्रीडयाप्रमुषिताःसंकुचिताहासावलोकाःततोरुचिरक्ष्वेल्यादयःपरिहासवाक्यादीनितैः ॥ २९ ॥

प्रभावातिशयमाह यावद्वसुधातलंलोकालोकपर्यंतमवभासयतिमेरुंप्रदक्षिणीकुर्वन्नादित्यःतस्मिन्नर्द्धेनैवोपलक्षितंप्रतपतिप्रकाशयति अ
र्धेन वा च्छादयतितमसाआवृणोति तदाद्वितीयःपतंगःसूर्यइवपर्यक्रामत् नचेदमसंभावितं यतोभगवदुपासनेनोपचितःअतिपुरुषःपु
रुषानतिक्रांतःप्रभावोयस्य ॥ ३० ॥ येत्रैउहआतिप्रसिद्धास्तस्यरथचक्राग्रकृताःपरिखातागर्ताः यतःयैरेवकृतास्ते ॥३१॥ तानाह तेषां
परिमाणंशृण्वितिशेषः पूर्वस्ययद्विस्तारमानंउत्तरस्ततोद्विगुणेनविस्तारमानेनेत्येवंसिंधुभ्योबहिःसमंततः उपक्लृप्ताःरचिताः ॥ ३२ ॥यथा



यावदवभासयतिसुरगिरिमनुपरिक्रामन्भगवानादित्योवसुधातलमर्धेनैवप्रतपत्यर्धेनावच्छादयतितदाहि
भगवदुपासनोपचितातिपुरुषप्रभावस्तदनभिनंदन्समजवेनरथेनज्योतिर्मयेनरजनीमपिदिनंकरिष्यामी
तिसप्तकृत्वस्तरणिमनुपर्यक्रामत्द्वितीयइवपतंगः॥३०॥येवाउहतद्रथचरणनेमिकृतपरिखातास्तेसप्तसिंध
वआसन्यतएवकृताःसप्तभुवोद्वीपाः ॥३१ ॥ जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करसंज्ञास्तेषांपरिमाणंपूर्व
स्मात्पूर्वस्मादुत्तरउत्तरोयथासंख्यंद्विगुणमानेनबाहिःसमंततउपक्लृप्ताः॥३२॥ क्षारोदेक्षुरसोदसुरोदघृतोद
क्षीरोददधिमंडोदशुद्धोदाःसप्तजलधयःसप्तद्वीपपरिखाइवाभ्यंतरद्वीपसमानाएकैकश्येनयथापूर्वंसप्तस्व
पिबहिर्द्वीपेषुपृथक्परितउपकल्पितास्तेषुजंब्वादिषुबर्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिह्वयज्ञबा
हुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान्यथासंख्येनैकैकस्मिन्नेकमेवाधिपतिंविदधे ॥३३॥ दुहितरं
चोर्जस्वतींनामोशनसेप्रायच्छद्यस्यामासीद्देवयानीनामकाव्यसुता ॥३४॥ नैवंविधःपुरुषकारउरुक्रमस्यपुं
सांतदंघ्रिरजसाजितषड्गुणानाम्॥चित्रंविदूरविगतःसकृदाददीतयन्नामधेयमधुनासजहातिबंधम्॥३५॥

सिंधुभ्योबहिरेकैकशोद्वीपाएवंद्वीपानामपिबाहिःसिंधवइत्याह क्षारोदेति दधिमंडोमथितंदधि एतेसप्तजलधयःसप्तद्वीपानांपरिखाइवा
भ्यंतरेतैःसंवेष्टितायेद्वीपाःतैःसमानाविस्तारतः बहिर्नीतः पृथक्असंकीर्णतया ॥ ३३ ॥ ३४ ॥ अहोआश्चर्यंराज्ञःसामर्थ्यमितिपरीक्षिद



भिप्रायज्ञोभगवान्बादरायणिराह नैवमिति जिताः षड्गुणाःइंद्रियाणिषड्ऊर्मयोवायैस्तेषामेवंविधःपुरुषकारइतिनचित्रंनासंभावितं यतो
विदूरविगतःअंत्यजोपि यस्योरुक्रमस्यनामसकृदुच्चारयेद्यःसअधुनातत्क्षणमेवबंधंसंसारम् तन्वमितिपाठेऽप्ययमेवार्थः पाठांतरेतत्त्वं
चांडालत्वंजहाति शुद्धोभवतीत्यर्थः ॥ ३५ ॥ ॥ ॥ ॥

तस्यपराक्रममुपसंहरन्निवृत्तिक्रममाह सएवमिति देवर्षिचरणयोरनुशयनमुपसत्तिःतदनुपतितोयोगुणविसर्गोराज्यादिप्रपंचःतत्संसर्गेण आत्मनिमनसिनिर्वेदोयस्य ॥ ३६ ॥ तमाह मयाअसाध्वनुष्ठितंयद्यतोऽभिनिवेशितः तत्ततःअलमलंविषयैः विनोदमृगंमर्कटम् ॥ ३७ ॥ परदेवतायाःहरेःप्रसादेनाधिगतःप्राप्तोयआत्मप्रत्यवमर्शोविवेकस्तेननारदस्यपदवींतदुपदिष्टमार्गमेवपुनरनुससारेत्यन्वयःकिंकृत्वा अनुगतेभ्यःपुत्रेभ्यइमांपृथ्वींविभज्य भुक्तोभोगोयस्याःतांभार्यांमहाविभूतिःसाम्राज्यसंपत्तत्साहितांमाहिषींमृतशरीरमिवपरित्यज्य तत्रहेतुः

सएवमपरिमितबलपराक्रमएकदातुदेवर्षिचरणानुशयनानुपातितगुणविसर्गसंसर्गेणानिर्वृतमिवात्मानंमन्यमानआत्मनिर्वेदइदमाह ॥ ३६ ॥ अहोअसाध्वनुष्ठितंयदभिनिवेशितोऽहमिंद्रियैरविद्यारचितविषमविषयांधकूपेतदलमलममुष्यावनितायाविनोदमृगंमांधिग्धिगितिगर्हयांचकार ॥ ३७ ॥ परदेवतायाःप्रसादाधिगतात्मप्रत्यवमर्शेनानुप्रवृत्तेभ्यःपुत्रेभ्यइमांयथादायंविभज्यभुक्तभोगांचमहिषींमृतकमिवसहमहाविभूतिमपहायस्वयंनिहितनिर्वेदोहृदिगृहीतहरिविहारानुभावोभगवतोनारदस्यपदवींपुनरेवानुससार ॥ ३८ ॥ तस्यहवाएतेश्लोकाः ॥ प्रियव्रतकृतंकर्मकोनुकुर्याद्विनेश्वरम् ॥ योनेमिनिम्नैरकरोच्छायांघ्नन्सप्तवारिधीन् ॥३९॥ भूसंस्थानंकृतंयेनसरिद्गिरिवनादिभिः ॥ सीमाचभूतनिर्वृत्त्यैद्वीपेद्वीपेविभागशः॥४०॥ भौमंदिव्यंमानुषंचमहित्वंकर्मयोगजम् ॥ यश्चक्रेनिरयौपम्यंपुरुषानुजनप्रियः ॥ ४१ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेभुवनकोशेप्रियव्रतविजयेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥

हृदिनिहितोनिर्वेदोयेन हृदीत्यस्योत्तरत्राप्यन्वयः हृदिगृहीतोनिश्चितोहरिविहारस्तेनानुभावःत्यागसामर्थ्यंयस्य ॥ ३८ ॥ तस्यमहिमोपनिबंधनश्लोकाःपूर्वसिद्धाःकथ्यंते यथावेदेतदप्येषश्लोकोभवतीति कोनुकोनामकुर्यात् छायांघ्नन्तमोनिरस्यन् ॥ ३९ ॥ भूसंस्थानंद्वीपैःकृतंसरिद्गिरिवनादिभिःसीमाचयेनकृता भूतानांनिर्वृत्त्यैसुखायअविवादाय ॥ ४० ॥ भौमंपातालजंदिव्यंस्वर्गजंमानुषंमर्त्यलोकजंमहित्वंवैभवंयोनिरयतुल्यंमेने पुरुषानुजनाविष्णुभक्तास्तएवाप्रियायस्येति ॥ ४१ ॥ इतिपंचमेटीकायांप्रथमोऽध्यायः ॥ १ ॥

द्वितीयेप्रोक्तमाग्नीध्रचरित्रंस्त्रैणसंमतं ॥ पत्न्यांहिपूर्वचित्त्यांयोनाभिमुख्यानजीजनत् ॥ १ ॥ अस्मिन्वंशेप्रसिद्धोऽयमाग्नीध्रःस्त्रैणपुंगवः ॥ विहसन्निवतस्येदंचरितंमुनिरब्रवीत् ॥ २ जंबुद्वीपमोकोयासांताःप्रजाःपुत्रवत्पालयामास धर्मावेक्षमाणः धर्ममवेक्षमाणइत्यर्थः ॥ १ ॥ पितृलोककामःपुत्रकामः सुरवराणांवनितास्तासामाक्रीडाचलोमंदरः तस्यद्रोण्यामाभृतानिसंपादितानिपरिचर्योपकरणानिपुष्पादीनि येन ॥ २ ॥ तदुपलभ्यज्ञात्वाब्रह्मअभियापयामाससंभोगार्थंप्रस्थापयामास ॥ ३ ॥ साचतदाश्रमोपवनमुपबभ्रामेत्यन्वयः रमणी



श्रीशुकउवाच एवंपितरिसंप्रवृत्तेतदनुशासनेवर्तमानआग्नीध्रोजंबुद्वीपौकसःप्रजाऔरसवद्धर्मावेक्षमाणःपर्यगोपायत् ॥ १ ॥ सचकदाचित्पितृलोककामःसुरवरवनिताक्रीडाचलद्रोण्यांभगवंतंविश्वसृजांपतिमाभृतपरिचर्योपकरणआत्मैकाग्र्येणतपस्वीआराधयांबभूव ॥ २ ॥ तदुपलभ्यभगवानादिपुरुषःसदसिगायंतींपूर्वचित्तिंनामाप्सरसमभियापयामास ॥ ३ ॥ साचतदाश्रमोपवनमतिरमणीयंविविधनिबिडविटपिविटपनिकरसंश्लिष्टपुरटलतारूढस्थलविहंगममिथुनैःप्रोच्यमानश्रुतिभिःप्रतिबोध्यमानसलिलकुक्कुटकारंडवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ॥ ४ ॥ तस्याःसुललितगमनपदविन्यासगतिविलासायाश्चानुपदंखणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्यनरदेवकुमारःसमाधियोगेनामीलितनयननलिनमुकुलयुगलमीषद्विकचय्यव्यचष्ट ॥ ५ ॥ ॥

यत्वमेवाह विविधाश्चनिबिडाश्चयेविटपिनस्तेषांविटपाःतेषांनिकरास्तैःसंश्लिष्टाःपुरटलताःस्वर्णवल्लयःतास्वारूढाःस्थलविहंगा मयूरादयस्तेषांमिथुनैः प्रोच्यमानाभिःश्रुतिभिःउच्चार्यमाणैःषड्जादिस्वरैः प्रतिबोध्यमानायेसलिलकुक्कुटादयस्तैर्विचित्रंयथातथोपकूजितनादिताअमलाजलाशयास्तेषुकमलानितेषामाकरमुपवनं ॥ ४ ॥ सुललितेगमनेयेपदविन्यासास्तैर्गतौविलासोयस्याः चकारस्तस्याश्चेत्येकवाक्यत्वाय खणखणेतिध्वनिंकुर्वतोरुचिरस्यचरणाभरणस्यस्वनं आमीलितेनयनेएवनलिनमुकुलेतयोःयुगलमीषद्विकचय्यकिंचिदुन्मील्यव्यचष्टददर्श ॥ ५ ॥ ॥ ॥ ॥ ॥

तामेवदेवींमकरध्वजस्यवशमुपनीतःसन् जडवदितिहवक्ष्यमाणान्दशश्लोकानुवाच जाड्यानुकरणंचवैदग्ध्येनतद्वशीकारार्थं दिविजा नांदेवानांमनुजानांचयानिमनांसिनयनानिचतेषामाल्हाददुघैर्गत्यादिभिःनृणांमनसिकामस्यविवरंप्रवेशद्वारंविदधतीं गतिश्चविहारश्चक्री डाविनययुक्तोऽवलोकश्चसुस्वराण्यक्षराणिचअवयवाश्चनेत्रादयस्तैः ॥ ६॥ निजमुखाद्विगलितममृतमिवस्वादु आसवइवमादकंचयत्स हासंभाषणंतस्मिन्आमोदोनिःश्वासगंधःतेनमदांधायेमधुकरानिकरास्तैरुपरोधःआवरणंतेनभयात्द्रुतःशीघ्रोयः पदविन्यासःतेनवल्गुस्पंद नंकिंचिच्चलनंस्तनकलशयोःकबरभारेरशनायांचयस्यास्तां तस्याअवलोकनेनाविवृतावसरस्यदत्तावकाशस्य ॥ ७ ॥ कात्वंशैलेगिराव

तामेवाविदूरेमधुकरीमिवसुमनसउपजिघ्रतींदिविजमनुजमनोनयनाल्हाददुघैर्गतिविहारविनयावलोक सुस्वराक्षरावयवैर्मनसिनृणांकुसुमायुधस्यविंदधतींविवरम् ॥ ६ ॥ निजमुखविगलितामृतासवसहासभा षणामोदमदांधमधुकरनिकरोपरोधेनद्रुतपदविन्यासेनवल्गुस्पंदनस्तनकलशकबरभाररशनांदेवींतदव लोकनेनविवृतावसरस्यभगवतोमकरध्वजस्यवशमुपनीतोजडवदितिहोवाच॥ ७॥कात्वंचिकीर्षसिचार्किंमुनि वर्यशैलेमायाऽसिकाऽपिभगवत्परदेवतायाः॥विज्येबिभर्षिधनुषीसुहृदात्मनोऽर्थेकिंवामृगान्मृगयसेविपि नेप्रमत्तान् ॥८॥ बाणाविमौभगवतःशतपत्रपत्रौशांतावपुंखरुचिरावतितिग्मदंतौ ॥ कस्मैयुयुंक्षसिवने विचरन्नविद्मःक्षेमायनोजडधियांतवविक्रमोऽस्तु ॥ ९ ॥ ॥ ॥ ॥

स्मिन्किंचिकीर्षसि मुनिवर्येत्यादिपुंस्त्वेनसंबोधनादिजाड्यानुकरणार्थं हेमुनिवर्य नूनंभगवतःपरदेवताभूतस्यमायाऽसि भ्रुवावाल क्ष्यआह हेसुहृत्सखेविज्येनिर्गुणेधनुषीबिभर्षिकिमात्मनोऽर्थेतवैवाभ्यांकिंकार्यमस्ति किंवाप्रमत्तान्अजितेंद्रियान्मृगतुल्यानस्मदादी न्मृगयसे तान्वशीकर्तुंधनुषीधारयसीत्यर्थः ॥ ८ ॥ कटाक्षावालक्ष्याह बाणाविमौशतपत्रेनेत्रकमलेतेएवपत्राणिपिच्छानिययोः शांतौ विभ्रमेणमंथरौ पुंखाभ्यांविनाऽपिरुचिरौ पत्रतयाकल्पितनेत्राभ्यांपरभागस्यपुंखस्थानीयस्याभावात् अतितिग्मौतीक्ष्णौदंतौययोस्तौ कस्मैप्रयोक्तुमिच्छसीतिनाविद्मः अतोभयादेतावत्प्रार्थयामहेतवायंविक्रमोऽस्माकंक्षेमायास्तु ॥ ९ ॥

तदंगपरिमललोभेनानुगच्छतोभ्रमरानालक्ष्याह शिष्याइति अजस्रंसंततंयुष्मच्छिखातोविलुलिताविगलिताःसुमनसामभितोवृष्टीःगलि
तानिकुसुमानिभजंतीत्यर्थःशुद्धत्वेनोपमावेदशाखाइवेति ॥ १० ॥ नूपुरस्वनमाकर्ण्याह वाचमितितुभ्यंतवचरणगतपंजरयोःनूपुरयोस्तित्ति
रीणामंतर्गतरत्नानांकेवलंवाचंशृणुमः कथंभूताम् अरूपाअदृष्टवक्तृकामुखराअतिप्रकटाचतांचतां च पीतंपरिधानवस्त्रंनितंबकांतित्वेनप्र
कल्प्याह कदंबकुसुमस्यरुचिर्दीप्तिःअंकविटंकबिंबेचनितंबस्यसुंदरमंडलेकलब्धा पाठांतरे अंगेतिसंबोधनं मेखलामालक्ष्याह यस्यामला
तपरिधिर्वर्तते वस्त्रंनितंबकांतित्वेनप्रकल्प्यवस्त्रमदृष्ट्वैवपृच्छति क्वचतेवल्कलमिति ॥ ११ ॥ स्तनावालक्ष्याह शृंगयोःस्तनयोःकिंसंभृतंकिंपू

शिष्याइमेभगवतःपरितःपठंतिगायंतिसामसरहस्यमजस्रमीशम् ॥ युष्मच्छिखाविलुलिताःसुमनोभि
वृष्टीःसर्वेभजंत्यृषिगणाइववेदशाखाः ॥ १० ॥ वाचंपरंचरणपंजरतित्तिरीणांब्रह्मन्नरूपमुखरांशृणवाम
तुभ्यम् ॥ लब्धाकदंबरुचिरंकविटंकबिंबेयस्यामलातपरिधिःक्वचवल्कलंते ॥ ११ ॥ किंसंभृतंरुचिरयो
र्द्विजशृंगयोस्तेमध्येकृशोवहसियत्रदृशिःश्रितामे ॥ पंकोरुणःसुरभिरात्मविषाणईदृक्येनाश्रमंसुभगमे
सुरभीकरोषि ॥ १२ ॥ लोकंप्रदर्शयसुहृत्तमतावकंमेयत्रत्यइत्थमुरसाऽवयवावपूर्वौ ॥ अस्मद्विधस्यमनउ
न्नयनौबिभर्तिबह्वद्भुतंसरसरासुधादिवक्त्रे ॥ १३ ॥ ॥ ॥ ॥

र्णमस्तिमनोहरंकिंचिदस्तीत्येतावत्तुजानामि यतोमध्येकृशोऽपित्वंकृच्छ्रेणवहसिधारयसि यत्रचमेदृशिर्दृष्टिः श्रितासंलग्नास्ति अंन्यथेदंद्वयं
नघटतेइतिभावः स्तनगतंकुंकुममालक्ष्याह पंकोऽरुणआत्मनस्तवविषाणेईदृक्अत्यपूर्वःकुतइत्यतआह येनपंकेनआश्रमंसुरभीकरोषिसु
गंधयुक्तंकरोषीति ॥ १२ ॥ लोकंस्थानं यत्रत्योजनःउरसाइत्थमपूर्वावयवौबिभर्ति मनसउन्नयनौक्षोभकौ पाठांतरेइत्थंभूत लक्षणेतृतीया
वक्त्रेचबह्वद्भुतंबिभर्ति किंतदाह रसोमधुरालापःरासोविलासस्ताभ्यांसाहितासुधाअधरामृतमादिशब्दात्स्मितनर्मादि ॥ १३ ॥

कावातवलोकेआत्मनोदेहस्यवृत्तिराहारः अंगहेसखे अदनाच्चर्वणात्‌हविरिति त्त्संबंधीगंधोवातिआगच्छति इतितांबूलाभिप्रायं अद नाद्दहिरंगभातीतिपाठेममतावद्भोजनात्‌दहिर्भूतैववृत्तिर्भातीत्यर्थः यतस्त्वंविष्णोःकलाऽसि विष्णुश्चनाश्नाति अनश्नन्नन्योअभिचाक शीतीतिश्रुतेः विष्णोःकलाऽसीत्यत्रहेतुः तवचकर्णौविष्णोरिवानिमिषोन्मकरौ अनिमिषौरत्ननेत्रत्वेननिमेषशून्यौउल्लसंतौमकरौतदा कारेकुंडलेययोस्तौ किंचतवमुखंसरइत्सरइव तदेवाह उद्विग्नंचंचलंमीनयुगलमिवनेत्रद्वयंयस्मिन् द्विजाःदंताःतेषांपंक्त्याशोचिःशोभा यस्मिन् सरसितुद्विजाराजहंसाः आसन्नोभृंगनिकरइवकेशस्तोमःपरिमललुब्धभृंगस्तोमोवायस्मिन् ॥ १४ ॥ पतंगःकंदुकःभ्रमतःभ्रम

कावात्मवृत्तिरदनाद्धविरंगवातिविष्णोःकलास्यनिमिषोन्मकरौचकर्णौ ॥ उद्विग्नमीनयुगलंद्विजपंक्तिशो चिरासन्नभृंगनिकरंसरइन्मुखंते ॥१४॥ योऽसौत्वयाकरसरोजहतःपतंगोदिक्षुभ्रमन्भ्रमतएजयतेऽक्षिणी मे ॥ मुक्तंनतेस्मरसिवक्रजटावरूथंकष्टोऽनिलोहरतिलंपटएषनीवीम् ॥१५॥ रूपंतपोधनतपश्चरतांतपोघ्नं ह्येतत्तुकेनतपसाभवतोपलब्धम् ॥ चर्तुंतपोर्हसिमयासहमित्रमह्यंकिंवाप्रसीदतिसवैभवभावनोमे ॥ १६ ॥ नत्वांत्यजामिदयितंद्विजदेवदत्तंयस्मिन्मनोदृगपिनोनावियातिलग्नं ॥ मांचारुशृंग्यर्हसिनेतुमनुव्रतंतेचित्तं यतःप्रतिसरंतुशिवाःसचिव्यः ॥१७॥ श्रीशुकउवाच इतिललनाऽनुयातिविशारदोग्राम्यवैदग्ध्यया परिभाषयातांविबुधवधूंविबुधमतिरधिसभाजयामास ॥ १८ ॥

त्त्चित्तस्यमेअक्षिणीएजयतेचंचलतांनयति वक्रकेशसमूहंमुक्तबंधनंनस्मरसिनसंभावयसिकिं कष्टःधूर्तोनीवींहरति एतन्नस्मरासिकिं ॥ १५॥ उपलब्धंप्राप्तं मह्यंमम हेमित्रमयासहतपश्चर्तुमर्हसि किंच सवैभवभावनःसंसृतिविस्तारकोब्रह्मामेप्रसीदति त्वांभार्यांकल्पयतीत्य र्थः॥१६॥द्विजदेवेनब्रह्मणादत्तं दृक्मनश्चलग्नंसन्नापयाति हेचारुशृंगि यतस्तेचित्तंतत्रमांत्वदधीनंनेतुमर्हसि सचिव्यस्तवसख्योऽपिशि वाअनुकूलाःसत्यःमांप्रतिसरंतुअनुवर्ततां यद्वा एतावत्पर्यंतंमेयाःसचिव्यःसख्यः शिवाःफेरवःताःप्रतिसरंतुनिर्यांतु यद्वा वनवासेस हचर्योहरिण्यःशिवाःप्रतिसरंतुप्रदाक्षिणंगच्छंतु ॥ १७ ॥ ग्राम्येषुवैदग्ध्यंयस्याः ॥ १८ ॥

बुध्यादीनांद्वंद्वैक्यं ॥ १९ ॥ सूत्वाप्रसूय उपतस्थेअभजत् ॥ २० ॥ औत्पत्तिकेनैवस्वभावेनसंहननंदृढांगत्वं ॥ २१ ॥ कामानांभोगैःअ
धिअधिकंमन्यमानः श्रुतिभिःवेदोक्तैःकर्मभिःआवारुंधप्राप मादयंतेमोदंते ॥ २२ ॥ इतिएवंभूताः संज्ञायासांताःपरिणीतवंतः ॥ २३ ॥
इतिपंचमस्कंधेटीकायांद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ तृतीयेचरितंनाभेःपरंमंगलमीर्यते ॥ यस्ययज्ञेप्रतीतःसन्पुत्रोऽभूदृषभोहरिः ॥ १ ॥



साचततस्तस्यवीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येणपराक्षिप्तमनास्तेनसहायुतायुतपरिवत्सरोपलक्ष
णंकालंजंबूद्वीपपतिनाभौमस्वर्गभोगान्बुभुजे ॥ १९ ॥ तस्यामुहवाआत्मजान्राजवरआग्नीध्रोनाभिकिंपु
रुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नवपुत्रानजनयत् ॥ सासूत्वाऽथसुतान्नवानुव
त्सरंगृहएवापहायपूर्वचित्तिर्भूयएवाजंदेवमुपतस्थे ॥२०॥ आग्नीध्रसुतास्तेमातुरनुग्रहादौत्पत्तिकेनैवसंहन
नबलोपेताःपित्राविभक्ताआत्मतुल्यनामानियथाभागंजंबूद्वीपवर्षाणिबुभुजुः ॥२१॥ आग्नीध्रोराजाऽतृप्तः
कामानामप्सरसमेवानुदिनमधिमन्यमानस्तस्याःसलोकतांश्रुतिभिरवारुंधयत्रपितरोमादयंते ॥ २२ ॥ सं
परेतेपितरिभ्रातरोमेरुदुहितॄर्मेरुदेवींप्रतिरूपामुग्रदंष्ट्रींलतांरम्यांश्यामांनारींभद्रांदेववीतिमितिसंज्ञानवोद
वहन् ॥ २३ ॥ इ० भा० पं० आग्नीध्रवर्णनंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥छ॥ ॥छ॥ ॥छ॥
श्रीशुकउवाच नाभिरपत्यकामोऽप्रजयामेरुदेव्याभगवंतंयज्ञपुरुषमवहितात्माऽयजत ॥१॥ तस्यहवाव
श्रद्धयाविशुद्धभावेनयजतःप्रवर्ग्येषुप्रचरत्सुद्रव्यदेशकालमंत्रर्त्विग्दक्षिणाविधानयोगोपपत्त्यादुरधिगमोऽपि
भगवान्भागवतवात्सल्यतयासुप्रतीकआत्मानमपराजितंनिजजनाभिप्रेतार्थविधित्सयागृहीतहृदयोहृद
यंगमंमनोनयनानंदनावयवाभिराममाविश्चकार ॥ २ ॥



नाभिराग्नीध्रसुतः अपुत्रयामेरुदेव्याभार्ययासह ॥ १ ॥ प्रवर्ग्यसंज्ञकेषुकर्मसुक्रियमाणेषुद्रव्यादयः सप्तयेयोगाउपायास्तेषामुपपत्त्यासंप
त्त्यादुरधिगमोदुष्प्रापोऽपिभागवतेषुकृपालुतयासुप्रतीकः शोभनावयवः सन्नात्मानमाविश्चकार अपराजितंस्वतंत्रं निजभक्तानांयेऽभिप्रेता
र्थास्तेषांविधित्सयागृहीतमाकृष्टंहृदयंचित्तंयस्य हृदयंगमंसुखकरं यतःमनोनयनान्यानंदयंतियेऽवयवास्तैरभिरामंसुंदरं ॥ २ ॥

अथहेत्यादिनिपातबाहुल्यंवाक्यालंकाराय आविष्कृतंभुजानांयुगलद्वयंचतुष्टयंयेन हिरण्मयंतेजोमयं पुरुषेषुविशिष्यतइतितथापुरु षोत्तममित्यर्थः अर्हणेनार्घ्येणसहोपतस्थुःअभजान्नित्यन्वयः विलसन्श्रीवत्सएवललामंचिन्हंयस्य दरवरःशंखः वनरुहंपद्मं अछूरि चक्रम् अमृतमणिःकौस्तुभः एवमादिभिःउपलक्षितम् ॥ ३ ॥ स्फुटकिरणायेप्रवरामणयः तन्मयानियानिमुकुटादीन्यंगानांभूषणानि तैर्विभूषितं बहुमानेदृष्टांतः अधनाइवोत्तमधनंनिधिम् ॥ ४ ॥ अर्हसीत्यादिनानिगदेनस्तुवंति हेअर्हत्तम परिपूर्णोऽपित्वमनुपथानांभृत्या नामस्माकमर्हणंमुहुःस्वयमेवस्वीकर्तुमर्हसि नतुवयंस्तोतुंशक्ताइत्याहुः नमोनमइत्येतदेवास्माकंसद्भिरुपशिक्षितम् त्वद्रूपस्यदुर्ज्ञेयत्वात्

अथहतमाविष्कृतभुजयुगलद्वयंहिरण्मयंपुरुषविशेषंकपिशकौशेयांबरधरमुरसिविलसच्छ्रीवत्सललामंद रवरवनरुहवनमालाऽछूर्यमृतमणिगदादिभिरुपलक्षितम् ॥ ३ ॥ स्फुटकिरणप्रवरमुकुटकुंडलकटककटि सूत्रहारकेयूरनूपुराद्यंगभूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधनाइवोत्तमधनमुपलभ्यसबहुमानमर्ह णेनावनतशीर्षाणउपतस्थुः ॥ ४ ॥ ऋषयऊचुः अर्हसिमुहुरर्हत्तमार्हणमस्माकनुपथानांनमोनमइत्ये तावत्सदुपशिक्षितंकोऽर्हतिपुमान्प्रकृतिगुणव्यतिकरमतिरनीशईश्वरस्यपरस्यप्रकृतिपुरुषयोरर्वाक्तना भिर्नामरूपाकृतिभीरूपनिरूपणं॥५॥ सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथना दृते ॥ ६ ॥ परिजनानुरागविरचितशबलसंशब्दसलिलसितकिसलयतुलसिकादूर्वांकुरैरपिसंभृतयासपर्य याकिलपरमपरितुष्यसि ॥ ७॥

तदेवाहुः कोऽर्हतीति प्रकृतिगुणानांव्यतिकरः प्रपंचस्तस्मिन्नेवमतिर्यस्य अतए वानीशःप्रकृतिपुरुषयोःपरस्यअतएवईश्वरस्य अर्वाक्तनाभिस्त्वामस्पृशंतीभिः प्रपंचांतर्गताभिः नामचरूपंचआकृतिश्चआकारस्ताभिस्त वस्वरूपनिरूपणंकर्तुंकोनामपुमानर्हति ॥ ५ ॥ सह्येतन्मात्रमेवार्हतिनाधिकमित्याहुः सकलजननिकायस्यवृजिनंनिरस्यंतीतितथा शिवत माःप्रवराश्चयेगुणगणास्तेषामेकदेशस्तस्यकथनाद्विनाअधिकंनार्हति ॥ ६ ॥ वाङ्मनसाऽगोचरोऽपित्वंभक्तानांसुखाराध्यएवेत्याहुः हेपर म परिजनैरनुरागेणविरचितायेशबलसंशब्दाःगद्गदाक्षरस्तुतयः सलिलंचसिताः किसलयाश्चशुद्धपल्लवाः शिलेतिपाठेशिलंकुशादिमंज री एवमादिभिःसंभृतयासंपादितयापूजयापरितुष्यसि ॥ ७ ॥

अथेतिप्रकारांतरे अन्यथातुअनयाइज्ययायागेनापिउरुभारभरयाअनेकांगसमृद्ध्याऽपिभवतः समुपाचितमपेक्षितंप्रयोजनंनैवपश्यामः ॥ ८ ॥ अत्रहेतुः आत्मनः स्वतएव अनुसवनंसर्वदा अंजसासाक्षात् बोभूयमानाअतिशयेनभवंतोयेऽशेषाःपुरुषार्थास्तेस्वरूपंयस्य परमानंदस्य नचैवंसत्यपियागानर्थक्यामित्याहुः किंत्विति सकामानामस्माकमेवैतदुपपद्यतेनतवेत्यर्थः ॥ ९ ॥ स्वोपयोगमेवप्रदर्शयंति तद्यथेति परमेभ्योऽपिपरमपुरुषप्रकर्षयुक्तयाकरुणयाउपकल्पयिष्यन् संपादयिष्यन् चकारात्कामितंच नापचितःअनपाचितः अपूजितए



अथानयाऽपिनभवतइज्ययोरुभारभरयासमुचितमर्थमिहोपलभामहे ॥ ८ ॥ आत्मनएवानुसवनमंजसा बोभूयमानाशेषपुरुषार्थस्वरूपस्यकिंतुनाथाशिषआशासानानामेतदभिसंराधनमात्रंभवितुमर्हति॥९॥तद्य थाबालिशानांस्वयमात्मनः श्रेयःपरमविदुषांपरमपरमपुरुषप्रकर्षकरुणयास्वमहिमानंचापवर्गाख्यमुप कल्पयिष्यन्स्वयंनापचितएवेतरवदिहोपलक्षितः ॥१०॥ अथायमेववरोह्यर्हत्तमयर्हिबर्हिषिराजर्षेर्वरदर्ष भोभगवान्निजपुरुषेक्षणविषयआसीत् ॥ ११ ॥ असंगनिशितज्ञानानलविधूताशेषमलानांभवत्स्वभावाना मात्मारामाणांमुनीनामनवरतपरिगुणितगुणगणपरममंगलायनगुणगणकथनोऽसि ॥ १२ ॥ अथकथंचि त्स्खलनक्षुत्पतनजृंभणदुरवस्थानादिषुविवशानांनःस्मरणायज्वरमरणदशायामपिसकलकश्मलनिरस नानितवगुणकृतनामधेयानिवचनगोचराणिभवंतु ॥ ॥ १३ ॥

वपूजाऽनपेक्षत्वात्स्वयमेवोपलक्षितः दृष्टोऽसि इतरवत्सापेक्षवत् ॥ १० ॥ यद्यपित्वंवरान्दातुमाविर्भूतोऽसितथाऽपिहेअर्हत्तमराजर्षेर्ब र्हिषियज्ञेनिजपुरुषाणांत्वद्भक्तानामस्माकमीक्षणाविषयोभवान्यार्हियदाआसीत्तदाह्ययमेववरःसंजातः ॥ ११ ॥ दर्शनस्यदुर्लभतामाहुःअ संगेनवैराग्येणनिशितंयज्ज्ञानंसएवानलस्तेनविधूताअशेषामलायेषां अतोभवतइवस्वभावोयेषां तानेवाह आत्मारामाणामेवंभूतानांमु नीनामपिपरममंगलायनंगुणगणकथनमेवनतुदर्शनंयस्य अतस्तैरनवरतंपरिगुणिताअभ्यस्तागुणगणायस्येतिसंबोधनं ॥ १२ ॥ दर्श नेनैवकृतार्थाअपिपरमेकंप्रार्थयंते अथेति स्मरणाविवशानांत्वांस्मर्तुमशक्तानांनः ॥ १३ ॥

अन्यच्चप्रार्थनीयमस्तीत्याहुः किंचेति आशिषामैहिकानांस्वर्गापवर्गयोरपीश्वरंत्वामुपधावति प्रजायामेवपुरुषार्थइतिप्रत्ययोयस्य अध
नोयथाफलीकरणंतुषकणादिकमाशासानोधनदमुपधावति ॥ १४ ॥ इदंचनातिचित्रमित्याहुः इहसंसारेतेऽपराजितयामायया अ
नवसितपदव्याऽलक्षितमार्गयाअपराजितः कोवानकोऽपि अतस्तयाऽनावृतमतिःकः अतएवविषयएवविषंतस्यरयावेगास्तैरनावृताप्रकृतिर्य
स्यसः कः यद्यनुपासितमहच्चरणः अतस्त्वन्माययामोहितस्यैवमाशंसाघटतइत्यर्थः ॥ १५ ॥ अदभ्रकर्तः हेबहुकार्यकारिन् अल्पी

किंचायंराजर्षिरपत्यकामःप्रजांभवादृशीमाशासानईश्वरमाशिषांस्वर्गापवर्गयोरपिभगवंतमुपधावतिप्रजा
यामर्थप्रत्ययोधनदमिवाधनःफलीकरणं ॥ १४ ॥ कोवाइहतेऽपराजितोऽपराजितयामाययाऽनवसितप
दव्याऽनावृतमतिर्विषयविषरयानावृतप्रकृतिरनुपासितमहच्चरणः ॥ १५ ॥ यदुहवावतवपुनरदभ्रकर्त
रिहसमाहूतस्तत्रार्थधियांमंदानांनस्तद्यद्देवहेलनंदेवदेवार्हसिसाम्येनसर्वान्प्रतिवोढुमविदुषां ॥१६॥ इति
निगदेनाभिष्टूयमानोभगवाननिमिषर्षभोवर्षधराभिवादिताभिवंदितचरणःसदयमिदमाह ॥ १७ ॥ श्री
भगवानुवाच अहोबताहमृषयोभगवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितोयदमुष्यआत्मजोमयासदृ
शोभूयादितिममाहमेवाभिरूपःकैवल्यादथापिब्रह्मवादोनमृषाभवितुमर्हतिममैवहिमुखंयत्द्विजदेवकुलं॥
॥ १८ ॥ ततआग्नीध्रीयेंऽशकलयाऽवतरिष्यामिआत्मतुल्यमनुपलभमानः ॥ १९ ॥ इतिनिशामयंत्यामे
रुदेव्याःपतिमभिधायांतर्दधेभगवान् ॥ २० ॥

यसेकार्यायत्वंयस्मादिहसमाहूतोसि तत्रप्रजायामर्थे
धीर्येषांमंदानांतेषांनोयद्देवहेलनमवज्ञानंतत्सर्वान्प्रतितवसाम्येनहेतुना प्रतिवोढुमर्हसि ॥ १६ ॥ इतिनिगदेनगद्यात्मकस्तोत्रेण वर्षधरोभार
तवर्षपतिर्नाभिःतेनाभिवादितायेऋत्विजस्तैराभिवंदितौचरणौयस्य ॥ १७ ॥ असुलभत्वेहेतुः ममाहमेवाभिरूपःसदृशः कैवल्यात्अ
द्वितीयत्वात् द्विजेषुदेवाइवब्राह्मणास्तेषांकुलं ॥ १८ ॥ आग्नीध्रीयेनाभौ ॥ १ ॥ पतिंनाभिं ॥ २० ॥

हेविष्णुदत्ततस्यावरोधायनेअंतःपुरे मेरुदेव्यांशुक्कयाशुद्धसत्त्वमूर्त्याऽवततार केषांधर्मान् वातरशनानां दिग्वाससां पाषांडिव्यावृत्त्यर्थंमा
ह श्रमणानांतपस्विनां ऋषीणांज्ञानिनां ऊर्ध्वमथिनांनैष्ठिकब्रह्मचारिणां ॥ २१ ॥ इतिपंचमेटीकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥
चतुर्थादित्रिभिःप्रोक्तमृषभस्येहितंमहत् ॥ लोकार्थयेनसत्कर्मनैष्कर्म्यंचनिदर्शितं ॥ १ ॥ चतुर्थेशतपुत्रस्यराज्यंतस्योपवर्ण्यते ॥ यस्यरा
ज्येजनःसर्वःसंतोषामृतनिर्वृतः ॥ २ ॥ अभिव्यज्यमानानिभगवल्लक्षणानिपादतलादिषुवज्रांकुशादीनियस्य महाविभूतिःसर्वसंपत्तिःसा

बर्हिषितस्मिन्नेवविष्णुदत्तभगवान्परमर्षिभिःप्रसादितोनाभेःप्रियचिकीर्षयातदवरोधायनेमेरुदेव्यांधर्मा
न्दर्शयितुकामोवातरशनानांश्रमणानामृषीणामूर्ध्वमंथिनांशुक्कयातनुवाऽवततार॥ २१ ॥इतिश्रीभा०म०
पंचमस्कंधेतृतीयोऽध्यायः॥३॥ ॥छ॥ श्रीशुकउवाच अथतमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं
साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावंप्रकृतयःप्रजाब्राह्मणादेवताश्चावनितलसम
वनायातितरांजगृधुः ॥ १ ॥ तस्यहवाइत्थंवर्ष्मणावरीयसाबृहच्छ्लोकेनचओजसाबलेनश्रियायशसावीर्य
शौर्याभ्यांचपिताऋषभइतीदंनामचकार ॥ २ ॥ तस्यहींद्रःस्पर्द्धमानोभगवान्वर्षेनववर्षतदवधार्यभगवा
नृषभदेवोयोगेश्वरःप्रहस्यात्मयोगमाययास्ववर्षमजनाभंनामाभ्यवर्षत् ॥ ३ ॥ नाभिस्तुयथाऽभिलषि
तंसुप्रजस्त्वमवरुध्यातिप्रमोदभरविह्वलोगद्गदाक्षरयागिरास्वैरंगृहीतनरलोकसधर्मंभगवंतंपुराणपुरुषं
मायाविलसितमतिर्वत्सतातेतिसानुरागमुपलालयन्परांनिर्वृतिमुपगतः ॥ ४ ॥



स्यादिभिःसहवर्द्धमानप्रभावं प्रकृतयोऽमात्यादयःजगृधुःअभिकांक्षंतिस्म॥ १ ॥ वर्ष्मणादेहेन तस्यविशेषणद्वयं वरीयसाश्रेष्ठतमेन बृहंतः
श्लोकाःपद्यानिकवीनांयस्मिन्तेनच ओजस्तेजः वीर्यप्रभावः शौर्यमुत्साहः एतैर्गुणैरतिश्रेष्ठत्वादृषभःश्रेष्ठइतिनामचकार ॥ २ ॥ तस्यवर्षे
मंडले ॥ ३ ॥ अवरुध्यप्राप्य स्वैरमिच्छयागृहीतोनरलोकसमानधर्मोमनुष्याकारोयेनतं अतएवमाययास्वपुत्रइतिविलासितामतिर्यस्य ॥४ ॥

आपौरप्रकृति पौरान्प्रकृतींश्चाभिव्याप्य विदितोऽनुरागोयस्मिन् कथंभूतोनाभिः जनपदः जनाःपौरादयः पदंप्रमाणंयस्यसः आत्मजंधर्म मर्यादारक्षणार्थमभिषिच्य ब्राह्मणानामुत्संगेनिधायविशालायांबदरिकाश्रमेप्रसन्नंपरानुद्वेजकंनिपुणंचतीव्रंतेनउपासीनःसेवमानः कालेन तन्महिमानंजीवन्मुक्तिमवाप ॥ ५ ॥ नाभेःतत्प्रसिद्धंकर्म अनुतदनंतरंकोनुपुमानाचरेत् नकोपीत्यर्थः ॥६॥मंगलैर्दक्षिणाभिः पूजिताःसं

विदितानुरागमापौरप्रकृतिजनपदोराजानाभिरात्मजंसमयसेतुरक्षायामभिषिच्यब्राह्मणेषूपनिधायसहमे रुदेव्याविशालायांप्रसन्ननिपुणेनतपसासमाधियोगेननरनारायणाख्यंभगवंतंवासुदेवमुपासीनःकालेन तन्महिमानमवाप ॥५॥ यस्यहपांडवेयश्लोकावुदाहरंति ॥ कोनुतत्कर्मराजर्षेर्नाभेरन्वाचरेत्पुमान् ॥ अ पत्यतामगाद्यस्यहरिःशुद्धेनकर्मणा ॥ ६ ॥ ब्रह्मण्योऽन्यःकुतोनाभेर्विप्रामंगलपूजिताः॥यस्यबर्हिषियज्ञेशं दर्शयामासुरोजसा ॥ ७ ॥ अथहभगवानृषभदेवःस्ववर्षंकर्मक्षेत्रमनुमन्यमानःप्रदर्शितगुरुकुलवासोलब्ध वरैर्गुरुभिरनुज्ञातोगृहमेधिनांधर्माननुशिक्षमाणोजयंत्यामिंद्रदत्तायामुभयलक्षणंकर्मसमाम्नायाम्नातम भियुंजन्नात्मजानामात्मसमानानांशतंजनयामास ॥ ८॥ येषांखलुमहायोगीभरतोज्येष्ठःश्रेष्ठगुणआसीत् येनेदंवर्षंभारतमितिव्यपदिशंति॥ ९॥तमनुकुशावर्तइलावर्तोब्रह्मावर्तोमलयःकेतुर्भद्रसेनइंद्रस्पृक्विदर्भः कीकटइतिनववनवतिप्रधानाः ॥ १० ॥ कविर्हविरंतरिक्षःप्रबुद्धःपिप्पलायनः॥ आविर्होत्रोथद्रुमिलश्चमसः करभाजनः॥ इतिभागवतधर्मदर्शनानवमहाभागवतास्तेषांसुचरितंभगवन्महिमोपबृंहितंवसुदेवनारदसं वादमुपशमायनमुपरिष्टाद्वर्णयिष्यामः ॥ ११ ॥ यवीयांसएकाशीतिर्जायंतेयाःपितुरादेशकरामहाशालीना महाश्रोत्रियायज्ञशीलाःकर्मविशुद्धाब्राह्मणाबभूवुः ॥ १२ ॥

तः ओजसामंत्रबलेन ॥ ७ ॥ अन्येषांग्रहणा यप्रदर्शितो गुरुकुलवासोयेन अनुशिक्षमाणःअनुशिक्षयन् उभयविधिंश्रुतिस्मृतिलक्षणंकर्मविधिमभियुंजन्अनुतिष्ठन् जयंत्यांभार्यायामा त्मजानांशतंजनयामास ॥ ८ ॥ ॥ ९ ॥ तंभरतमनुकुशावर्तादयोनवपुत्राः नवतेःप्रधानाज्येष्ठाः ॥ १० ॥ तदनंतरंकविप्रमुखानवभागवत धर्मप्रदर्शकाः वसुदेवनारदयोःसंवादोयस्मिन् उपरिष्टात्एकादशस्कंधे ॥ ११ ॥ महाशालीनाअतिविनीताः ॥ १२ ॥

केवलःशुद्धः विपरीतवदनीश्वरवत् कर्माणिकुर्वन् नियमयत्नियमितवान् पाठांतरेनितरामरमयत् कर्मकरणेहेतुः अनुगतमुत्सन्नंध
र्मस्वयमाचरणेनातद्विदामुपशिक्षयन् कथं धर्मादीनामवरोधेनसंग्रहेण आनंदोभोगः अमृतंमोक्षः ॥ १३ ॥ शीर्षण्यःश्रेष्ठः तेनाचरितंतत्त
दनुवर्ततेयतः॥१४॥सकलोधर्मोयस्मिंस्तत् ब्राह्मंगुह्यंवेदरहस्यंयद्यपिस्वेनैवविदितंतथाऽपिब्राह्मणानृपृष्ट्वैवकरोतीत्यर्थः ॥ १५ ॥ द्रव्यादि
भिरुपाचितैर्यज्ञैरिष्टवान् तत्रवयोयौवनं युवैवधर्ममन्विच्छेदितिवचनात् विविधोद्देशाः नानादेवतोद्देशाः यथोपदेशंयथाविधि ॥ १६ ॥ अ

भगवानृषभसंज्ञआत्मतंत्रःस्वयंनित्यनिवृत्तानर्थपरंपरःकेवलानंदानुभवईश्वरएवविपरीतवत्कर्माण्यारभ
माणःकालेनानुगतंधर्ममाचरणेनोपशिक्षयन्नतद्विदांसमउपशांतोमैत्रःकारुणिकोधर्मार्थयशःप्रजानंदामृता
वरोधेनगृहेषुलोकंनियमयत् ॥ १३ ॥ यद्यच्छीर्षण्याचरितंतत्तदनुवर्ततेलोकः॥ १४ ॥ यद्यपिस्वविदितं
सकलधर्मंब्राह्मंगुह्यंब्राह्मणैर्दर्शितमार्गेणसामादिभिरुपायैर्जनतामनुशशास ॥ १५ ॥ द्रव्यदेशकालव
यःश्रद्धर्त्विग्विविधोद्देशोपचितैःसर्वैरपिक्रतुभिर्यथोपदेशंशतकृत्वइयाज ॥ १६ ॥ भगवतर्षभेणपरिरक्ष्य
माणएतस्मिन्वर्षेनकश्चनपुरुषोवांछत्यविद्यमानमिवात्मनोऽन्यस्मात्कथंचनकिमपिकर्हिचिदवेक्षतेभर्तर्यनु
सवनंविजृंभितस्नेहातिशयमंतरेण ॥ १७ ॥ सकदाचिदटमानोभगवानृषभोब्रह्मावर्तगतोब्रह्मर्षिप्रवरसभा
यांप्रजानांनिशामयंतीनामात्मजानवहितात्मनःप्रश्रयप्रणयभरसुयंत्रितानप्युपशिक्षयन्नितिहोवाच॥१८॥
॥ इ० भा०म०पं० ऋषभदेवानुचरितेचतुर्थोऽध्यायः ॥४॥ ॥छ॥ ऋषभउवाच नायंदेहोदेहभा
जांनृलोकेकष्टान्कामानर्हतेविड्भुजांये ॥ तपोदिव्यंपुत्रकायेनसत्त्वंशुद्ध्येद्यस्माद्ब्रह्मसौख्यंत्वनंतं ॥ १ ॥

न्यस्मात्सकाशादात्मनःकश्चिदपिकिमपिकथंचनापिनवांच्छति इच्छानुदयेदृष्टांतः अविद्यमानंखपुष्पादिकमिवनचान्यदीयमवेक्षतेऽपी
त्यर्थः भर्तरिऋषभदेवेप्रतिक्षणमुल्लसितस्नेहोद्रेकंविनाऽन्यन्नवांच्छति ॥ १७ ॥ अवहितात्मनःसंयतचित्तानपिप्रजानुशासनार्थमुपशिक्षय
न्नितिहवक्ष्यमाणमुवाच ॥ १८ ॥ इ० पं०टी०चतुर्थोऽध्यायः ॥४॥ ॥छ॥ पंचमेमोक्षधर्मोपदेशैःपुत्रानुशासनं॥ उक्तंपारमहंस्यंचत
स्यहंहतितिक्षया ॥ १ ॥ विट्भुजामपियेसंतितान्कष्टान्दुःखदान्कामान्विषयान्नार्हतेतद्योग्योऽयंमनुष्यदेहोनभवति दिव्यमुत्कृष्टं येनत
पसायस्मात्शुद्धात्सत्त्वादनंतंब्रह्मसुखंभवति ॥ १ ॥

मोक्षबंधयोर्निदानमाह महत्सेवामिति तमसः संसारस्यद्वारंयोषितांयेसंगिनस्तेषांसंगं महतांलक्षणमाहसार्द्धेन महांतइति साधवःसदाचाराः ॥ २ ॥ मयिईशेकृतंसौहृदमेवअर्थःपुरुषार्थोयेषां वाशब्देनान्यनिरपेक्षस्यैवास्यलक्षणत्वंदर्शयाति देहंबिभर्तीतिदेहंभराविषयवार्तैत्रनवर्मा विषयायेषुतेषुजनेषुजायादियुक्तेषुगृहेषुचरातिर्मित्रंधनंवा पाठांतरेजायादिप्रदेषु यावदर्थाश्चयावदर्थमेवार्थोयेषामितिमध्यमपदलोपसमासः देहनिर्वाहाधिकस्पृहाशून्याइत्यर्थः ॥ ३ ॥ कामान्नार्हतीतियदुक्तंतदुपपादयाति नूनमिति यद्यदाइंद्रियप्रीतयेआपृणोतिव्याप्रियतेतदाप्रमत्तः सन्विकर्मपापंनूनंकुरुते यतोविकर्मणः प्राचीनादयंक्लेशदोदेहोजातः तस्यैवपुनःकरणंसाधुनमन्ये ॥ ४ ॥ देहादेर्नश्वरत्वात्कियानयमनर्थइत्याशंक्याह पराभवोदेहादिनास्वरूपाभिभवःअज्ञानकृतस्तावद्भवातितत्रहेतुः यावत्क्रियाःस्युःतावदिदंमनोहिकर्मस्वभावमेवस्यात् येनकर्मात्मकेनमनसा ॥ ५ ॥ उक्तमुपसंहरति एवंपूर्वकृतंकर्मकर्तृभूतंमनःकर्मभूतंवशंप्रयुंक्तेपुनःकर्मनिष्ठंकरोतीति जीवन्मुक्तकर्मण्यावृत्त्यर्थमाह अविद्ययेति अविद्ययाआत्मनिउपधीयमानेआच्छाद्यमानेसतिएवंमनःकर्तृपुरुषंकर्मवशंप्रयुंक्ते ॥ ६ ॥ नकेवलंदेहयोगमात्रमनर्थातिरंचेत्याह यदागुणानामिंद्रियाणामीहांचेष्टामयथामिथ्याआत्मीयानभवतीतिविपश्चित्विवेकीसन्नपश्याते नुपश्यतीतिपाठेअयथाआत्मयित्वेनेत्यर्थः तत्रतदासहसागतस्मृतिःस्वरूपस्मृतिशून्यःसन् अज्ञोमूढःमैथुनसुखप्रधानंगृहंप्राप्यतापान्विंदति ॥ ७ ॥

महत्सेवांद्वारमाहुर्विमुक्तेस्तमोद्वारंयोषितांसंगिसंगं ॥ महांतस्तेसमचित्ताःप्रशांताविमन्यवःसुहृदःसाधवोये ॥ २ ॥ येवामयीशेकृतसौहृदार्थाजनेषुदेहंभरवार्तिकेषु ॥ गृहेषुजायात्मजरातिमत्सुनप्रीतियुक्तायावदर्थाश्चलोके ॥ ३ ॥ नूनंप्रमत्तःकुरुतेविकर्मयदिंद्रियप्रीतयआपृणोति ॥ नसाधुमन्येयतआत्मनोऽयमसन्नपिक्लेशदआसदेहः ॥ ४ ॥ पराभवस्तावदबोधजातोयावन्नजिज्ञासतआत्मतत्त्वं ॥ यावत्क्रियास्तावदिदंमनोवैकर्मात्मकंयेनशरीरबंधः ॥ ५ ॥ एवंमनःकर्मवशंप्रयुंक्तेअविद्ययात्मन्युपधीयमाने ॥ प्रीतिर्नयावन्मयिवासुदेवेनमुच्यतेदेहयोगेनतावत् ॥ ६ ॥ यदानपश्यत्ययथागुणेहांस्वार्थेप्रमत्तःसहसाविपश्चित् ॥ गतस्मृतिर्विंदातितत्रतापानासाद्यमैथुन्यमगारमज्ञः ॥ ७ ॥ ॥ ॥

ननुयथोपयोगंस्त्रियामिथुनीभूयसुखमात्रमनुभवतःकुतस्तापाःस्युस्तत्राह पुंसइति प्रत्येकंतयोरेकैकोहृदयग्रंथिरस्त्येव एनंमिथःस्थूलम
न्यंहृदययोर्ग्रंथिंदुर्भेदंवदंति कुतइत्यतआह अतःअस्मान्मिथुनीभावात् प्रत्येकंहृदयग्रंथिनातुदेहेंद्रियमात्रेऽहंममेतिमोहःअस्मात्तुगृहा
दिभिर्विषयभूतैर्महान्मोहोभवेदित्यर्थः ॥ ८ ॥ कदातर्हितस्यनिवृत्तिरतआह यदाऽस्यजनस्यकर्मभिरनुबद्धोदृढोमनोरूपोहृदयग्रंथिःशि
थिलोभवेत्तदाऽस्मान्मिथुनीभावान्निवर्तते ततश्चहेतुमहंकारंत्यक्तामुक्तःसन्परंपदंयाति ॥ ९ ॥ हेतुमतिहायेत्युक्तंतत्रपंचविंशतिसाधना
न्याहचतुर्भिः हंसेमयिगुरौभक्तिःसेवाअनुवृत्तिस्तत्परता विगततृष्णया सर्वलोकांतरेऽपिव्यसनावगत्यादुःखानुसंधानेन ईहानिवृत्त्या

पुंसःस्त्रियामिथुनीभावमेतंतयोर्मिथोहृदयग्रंथिमाहुः ॥ अतोगृहक्षेत्रसुताप्तवित्तैर्जनस्यमोहोऽयमहंममे
ति ॥ ८ ॥ यदामनोहृदयग्रंथिरस्यकर्मानुबद्धोदृढआश्लथेत ॥ तदाजनःसंपरिवर्ततेऽस्मान्मुक्तःपरंयात्य
तिहायहेतुं ॥ ९ ॥ हंसेगुरौमयिभक्त्याऽनुवृत्त्यावितृष्णयाद्वंद्वतितिक्षयाच ॥ सर्वत्रजंतोर्व्यसनावगत्या
जिज्ञासयातपसेहानिवृत्त्या ॥ १० ॥ मत्कर्मभिर्मत्कथयाचनित्यंमद्देवसंगाद्गुणकीर्तनान्मे ॥ निर्वैरसाम्यो
पशमेनपुत्राजिहासयादेहगेहात्मबुद्धेः ॥ ११ ॥ अध्यात्मयोगेनविविक्तसेवयाप्राणेंद्रियात्माभिजयेनस
ध्र्यक् ॥ सच्छ्रद्धयाब्रह्मचर्येणशश्वदसंप्रमादेनयमेनवाचां ॥ १२ ॥ सर्वत्रमद्भावविचक्षणेनज्ञानेनविज्ञान
विराजितेन ॥ योगेनधृत्युद्यमसत्त्वयुक्तोलिंगंव्यपोहेत्कुशलोऽहमाख्यं ॥ १३ ॥ कर्माशयंहृदयग्रंथिबंधम
विद्ययासादितमप्रमत्तः ॥ अनेनयोगेनयथोपदेशंसम्यग्व्यपोह्योपरमेतयोगात् ॥ १४ ॥ ॥

काम्यकर्मत्यागेन ॥ १० ॥ मदर्थैःकर्मभिःअहमेवदेवोयेषांतैःसंगात् हेपुत्राः देहगेहयोरात्मबुद्धेःअहंममेतिबुद्धेः ॥ ११ ॥ अध्यात्म
योगेनअध्यात्मशास्त्राभ्यासेन सध्र्यक्सम्यक् इतिसर्वत्रसंबंधः असंप्रमादेनकर्तव्यस्यापरित्यागेन ॥ १२ ॥ सर्वत्रमद्भावोमद्भावना त
त्रविचक्षणेननिपुणेनविज्ञानविराजितेनअनुभवपर्यंतेनज्ञानेन योगेनसमाधिना धृत्युद्यमसत्त्वयुक्तःधैर्यप्रयत्नविवेकैर्युक्तःसन्नहंकाराख्य
मुपाधिंव्यपोहेत्निरस्येत् ॥ १३ ॥ ततःसाधनादुपरमेदित्याह कर्माण्याशेरतेयस्मिन् योगेनउपायेनयद्यपिफलेसिद्धेसाधनोपरमःसिद्ध
एवतथाऽपियावद्देहपातंतदभ्यासशंकावारणायोक्तं ॥ १४ ॥ ॥ ॥

किंच पुत्रान्पिताशिष्यान्वागुरुः नृपश्च प्रजाएवमनुशिक्षयेत् ममलोकंयःकामयते यद्वा मदनुग्रहएवार्थोयस्य विमन्युःशिक्षितस्याकरणे ऽपिकोपशून्यः अतज्ज्ञान्तत्त्वमविदुषः श्रेयोबुद्ध्याकमसुमूढान् अन्यथोपदेशेप्रत्यवायमाह मनुजःकाम्यकर्मसुपुरुषंयोजयन्गर्तेसंसार कूपेपातयतितंसमनुजःकमर्थंपुरुषार्थंलभेत नकमपीत्यर्थः ॥ १५ ॥ नयोजयेदित्येतदुपपादयति लोकइतित्रिभिः नष्टदृष्टित्वेहेतुःयइ ति निकाममतिशयेनकामोयस्य ॥ १६ ॥ तमीदृशंकुबुद्धिंदृष्ट्वातत्रैवकस्तंप्रवर्तयेन्नकोपि उत्पथेनगच्छंतमंधंयथातेनैवगच्छेतिकोब्रूया त् ॥ १७ ॥ समुपेतःसंप्राप्तोमृत्युःसंसारोयेनतं ततोभक्तिमार्गोपदेशेनयोनमोचयेत्सगुर्वादिर्नभवतीत्यर्थः यद्वा यस्तंमोचयितुंनशक्नुया

पुत्रांश्चशिष्यांश्चनृपोगुरुर्वामल्लोककामोमदनुग्रहार्थः ॥इत्थंविमन्युरनुशिष्यादतज्ज्ञान्नयोजयेत्कर्मसुकर्म मूढान् ॥ कंयोजयन्मनुजोऽर्थंलभेतनिपातयन्नष्टदृशंहिगर्ते ॥ १५ ॥ लोकःस्वयंश्रेयसिनष्टदृष्टिर्योऽर्थान्स मीहेतनिकामकामः ॥ अन्योऽन्यवैरःसुखलेशहेतोरनंतःदुःखंचनवेदमूढः ॥ १६ ॥ कस्तंस्वयंतदभिज्ञोविप श्चिदविद्यायामंतरेवर्तमानं॥दृष्ट्वापुनस्तंसघृणःकुबुद्धिंप्रयोजयेदुत्पथगंयथांधं॥ १७॥गुरुर्नसस्यात्स्वजनो नसस्यात्पितानसस्याज्जननीनसास्यात् ॥ दैवंनतत्स्यान्नपतिश्चसस्यान्नमोचयेद्यःसमुपेतमृत्युं ॥ १८ ॥ इ दंशरीरंममदुर्विभाव्यंतत्त्वंहिमेहृदयंयत्रधर्मः ॥ पृष्ठेकृतोमेयदधर्मआरादतोहिमामृषभंप्राहुरार्याः॥ १९॥

त् अतस्तस्यगुर्वादिर्नस्यादितिनिषेधः ततश्चपितानस्यादितिपुत्रोत्पत्तौयत्नोनकार्यइत्यर्थः दैवंदेवतानस्यादितिपूजानग्राह्येत्यर्थःएवमन्यद पिद्रष्टव्यं ॥ १८ ॥ एवंमोक्षधर्मानुपदिश्यभ्रातृशुश्रूषणलक्षणंधर्मंस्पर्द्धादिनिवृत्तयेतेषांजन्मकथनपूर्वकमाहद्वाभ्यां इदंमनुष्याकारंशरीरं ममदुर्विभाव्यमवितर्क्यंमदिच्छाविलसितं नत्वहंप्राकृतोमनुष्यइत्यर्थः मेहृदयंतुतत्त्वंकिंतद्धृदयं यत्रधर्मः तत्शुद्धंसत्त्वमित्यर्थः कुतः य द्यस्मान्मयाऽधर्मोदूरादेवपृष्ठेकृतःउत्सारितः अतएवमामृषभंश्रेष्ठंप्राहुः ॥ १९ ॥

भवंतश्चहृदयेनशुद्धसत्वमयेनजाताःतस्मान्मत्सरंहित्वामहत्तमंसनाभंसोदरंभजध्वं ननुत्वत्पुत्रत्वात्त्वांवयंभजेमराजपुत्रत्वात्प्रजाश्चपा
लयामेतिचेदतआह तदेवमेशुश्रूषणंप्रजानांचपालनं भरतानुवृत्त्यैवसर्वंकृतंस्यादितिभावः ॥ २० ॥ इदानींब्राह्मणाश्चसेव्याइत्याशये
नतेषांसर्वेभ्यःश्रैष्ठ्यमाहपंचभिः भूतेषुचेतनाचेतनेषुविरोहंतीतिवीरुधःस्थावराःउत्तउच्चैः अतिशयेनोत्तमाः तेभ्योपियेसरीसृपाःसर्पंती
तिजंगमाः तेउदुत्तमाइतिसर्वत्रानुषंगः तेष्वपिसबोधानिष्ठास्थितिर्येषांपश्वादीनांतेकीटकादिभ्यः ततःतेष्वपिमनुष्याः ततोऽपिप्रमथाः
भूतप्रेतादयः ततोऽपिगंधर्वाः ततःसिद्धाः ततोऽन्येविबुधानुगाःकिन्नरादयः ॥ २१ ॥ तेभ्योऽसुराः देवासुरेभ्यःसंधिरार्षः देवाश्चमघव

तस्माद्भवंतोहृदयेनजाताःसर्वेमहीयांसममुंसनाभं ॥ अक्लिष्टबुद्ध्याभरतंभजध्वंशुश्रूषणंतद्भरणंप्रजानां
॥ २० ॥ भूतेषुवीरुद्भ्यउदुत्तमायेसरीसृपास्तेषुसबोधनिष्ठाः ॥ ततोमनुष्याःप्रमथास्ततोऽपिगंधर्वसिद्धा
विबुधानुगाये ॥ २१ ॥ देवासुरेभ्योमघवत्प्रधानादक्षादयोब्रह्मसुतास्तुतेषां ॥ भवःपरःसोऽथविरिंचवीर्यः
समत्परोऽहंद्विजदेवदेवः॥२२॥ नब्राह्मणैस्तुलयेभूतमन्यत्पश्यामिविप्राःकिमतःपरंतु ॥ यस्मिन्नृभिःप्रहुतं
श्रद्धयाऽहमश्नामिकामंनतथाऽग्निहोत्रे ॥ २३ ॥ धृतातनूरुशतीमेपुराणीयेनेहसत्त्वंपरमंपवित्रं ॥ शमोदमः
सत्यमनुग्रहश्चतपस्तितिक्षाऽनुभवश्चयत्र ॥ २४ ॥ मत्तोप्यनंतात्परतःपरस्मात्स्वर्गापवर्गाधिपतेर्नकिंचि
त् ॥ येषांकिमुस्यादितरेणतेषामकिंचनानांमयिभक्तिभाजां ॥ २५ ॥ ॥ ॥

त्प्रधानाःदेवेभ्यइंद्रःश्रेष्ठइत्यर्थः ततोऽपिब्रह्मसुतादक्षादयः तेषांमध्येभवःपरःश्रेष्ठः सभवःविरिंचवीर्यःविरिंचोवीर्यंशक्तिःकारणंयस्यस
विरिंचवीर्यः अतस्तज्जनकत्वाद्विरिंचस्ततःपरइत्यर्थः सविरिंचोमत्परःअहंपरोयस्य द्विजदेवाब्राह्मणाएवदेवाःपूज्यायस्यसोहं ॥ २२ ॥
ब्राह्मणैरन्यद्भूतंनतुलयेसमंनपश्यामि अतोब्राह्मणात्परंतुभूतंकिंपश्यामिनाकिंचित् विप्राइतितत्रत्यानांब्राह्मणानांसंबोधनं समस्यैवाभा
वादधिकंकुतस्त्यामित्यर्थः तत्रहेतूनाहसार्द्धाभ्यां यस्मिन्ब्राह्मणेश्रद्धयाप्रकर्षेणहुतमन्नादिकामंयथेष्टमहमश्नामि ॥ २३ ॥ मेतनूर्मूर्तिर्वेदा
ख्यायेनब्राह्मणेनइहलोकेधृता यत्रचब्राह्मणेसत्त्वादयोऽष्टौगुणाःसंतिततःपरंकिंपश्यामीत्यन्वयः ॥ २४ ॥ निस्पृहत्वमाह मत्तोऽपिये
षांनकिंचित्प्रार्थनीयमस्तितेषामितरेणराज्यादिनाकिमुस्यान्नकिमपि ॥ २५ ॥ ॥ ॥

तदेवंब्राह्मणसंमानंविधायेदानींसर्वभूतसंमानंविधत्ते हेसुताःसर्वाणिजंगमानिस्थावराणिचभूतानिमदधिष्ठानतयावोयुष्माभिःसंमाननीया
नि पदेपदेक्षणेक्षणेविविक्तापूतामत्सरादिरहिताद्दृष्टिर्येषांतैः तदेवममार्हणं ॥ २६ ॥ सर्वकर्मणामीश्वरार्पणंविधत्ते मनोवचोदृशामन्ये
षांचकरणानामीहितस्यव्यापारस्यमेपरिबर्हणमाराधनमेवसाक्षात्कृतं फलं येनपरिबर्हणेनविनाकालपाशाद्विमोक्तुंनईशोनसमर्थोभवेत्॥

सर्वाणिमद्धिष्ण्यतयाभवद्भिश्चराणिभूतानिसुताध्रुवाणि ॥ संभावितव्यानिपदेपदेवोविविक्तदृग्भिस्तदु
हार्हणंमे ॥ २६ ॥ मनोवचोदृक्करणेहितस्यसाक्षात्कृतंमेपरिबर्हणंहि ॥ विनापुमान्येनमहाविमोहात्कृतां
तपाशान्नविमोक्तुमीशेत् ॥ २७ ॥ श्रीशुकउवाच एवमनुशास्यात्मजान्स्वयमनुशिष्टानपिलोकानु
शासनार्थंमहानुभावःपरमसुहृद्भगवानृषभापदेशउपशमशीलानामुपरतकर्मणांमहामुनीनांभक्तिज्ञानवै
राग्यलक्षणंपारमहंस्यधर्ममुपशिक्षमाणःस्वतनयशतज्येष्ठंपरमभागवतंभगवज्जनपरायणंभरतंधरणिपा
लनायाभिषिच्यस्वयंभवनएवोर्वरितशरीरमात्रपरिग्रहउन्मत्तइवगगनपरिधानःप्रकीर्णकेशआत्मन्या
रोपिताहवनीयोब्रह्मावर्तात्प्रवव्राज ॥ २८ ॥ जडांधमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमा
णोऽपिजनानांगृहीतमौनव्रतस्तूष्णींबभूव ॥ २९ ॥ ॥ ॥ ॥

॥ २७ ॥ स्वतएवसुशिक्षितानपिलोकानुशासनार्थमनुशास्यमुनीनांपारमहंस्यधर्ममुपशिक्षयिष्यन्भरतमभिषिच्यऋषभइत्यपदेशो
नामयस्यभगवान्ब्रह्मावर्तात्स्वदेशात्प्रवव्राजेत्यन्वयः उर्वरितोऽवशिष्टःशरीरमात्रपरिग्रहोयस्य ॥ २८ ॥ अभिभाष्यमाणोऽपिजनानांम
ध्येजडादिवद्वर्तमानःतूष्णींबभूव अवधूतस्येववेषोयस्य ॥ २९ ॥ ॥ ॥ ॥ ॥

तत्रपुरादिष्वनुपथंमार्गेमार्गेअवनिचरापसदैर्दुर्जनैस्तर्जनादिभिः परिभूयमानोऽपितदविगणयन्नेवैकचरएकाकीपृथिवींपरिबभ्रामेत्यन्व
यः तत्रपुरंपत्तनं ग्रामाहट्टवंतः आकरःखनिः खेटःकृषीवलग्रामः वाटःपुष्पादिवाटिका शिबिरंसेनायावासस्थानं व्रजोगवांस्थानं घो
षोगोपानां सार्थोयात्रिकजनसंघातः आश्रमाःऋषीणां तर्जनंभयजननं ताडनंप्रहारः अवमेहनमुपरिमूत्रणं ष्ठीवनंफूत्कृत्यश्लेष्मप्रक्षे
पः ग्राव्णांशकृतोरजसश्चप्रक्षेपः पूतिवातोऽधोवायुः दुरुक्तंशापः एतैः अगणनेदृष्टांतः मक्षिकाभिरिवेति तत्रहेतुः असतिमिथ्याभूतेसंस्था
नेसंनिवेशे देहइत्युपलक्षणमाकारोयस्य सदित्यपदेशमात्रंयस्यतस्मिन्निरभिमानत्वात् केनहेतुना उभयोःसदसतोर्योऽनुभवः तत्स्वरूपे
णयत्स्वमाहिम्न्यवस्थानंतेन अतएवाखंडितंमनोयस्यसःपरिबभ्राम ॥ ३० ॥ सचतदाग्रहगृहीतइवादृश्यत तत्रहेतुः पराक्पुरतोऽवलंबमा

तत्रतत्रपुरग्रामाकरखेटवाटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपथमवनिचरापसदैःपरिभूयमानो मक्षिकाभिरिववनगजस्तर्जनताडनावमेहनष्ठीवनग्रावशकृद्रजःप्रक्षेपपूतिवातदुरुक्तैस्तदविगणयन्नेवास त्संस्थानएतस्मिन्देहोपलक्षणेसदपदेशउभयानुभवस्वरूपेणस्वमहिमावस्थानेनासमारोपिताहंममाभि मानत्वादविखंडितमनाःपृथिवीमेकचरःपरिबभ्राम ॥ ३० ॥ अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंस गलवदनाद्यवयवविन्यासःप्रकृतिसुंदरस्वभावहाससुमुखोनवनलिनदलायमानशिशिरताराऽरुणायतनय नरुचिरःसदृशसुभगकपोलकर्णकंठनासोविगूढस्मितवदनमहोत्सवेनपुरवनितानांमनसिकुसुमशरासन मुपदधानःपरागवलंबमानकुटिलजटिलकपिशकेशभूरिभारोऽवधूतमलिननिजशरीरेणग्रहगृहीतइवादृ श्यत ॥ ३१ ॥

नाश्चतेकुटिलाश्चतेजटिलाश्चकपिशाश्चकेशाःतेषांभूरिभारोयस्यसः अवधूतमनादृतमतएवमलिनंनिजशरी
रंतेन कथंभूतोऽप्येवमदृश्यत अतिसुकुमाराणिकरचरणोरःस्थलानितथाविपुलाबाह्वादयःतएवावयवाःतेषांविशिष्टोन्यासःसन्निवेशोय
स्यसः तथाप्रकृत्यैवसुंदरः स्वभावसिद्धोहासःतेनशोभनंमुखंयस्य तथानवनलिनदलवत्आचरतोयेशिशिरतारेतापहारिकनीनिकेअरुणे
आयतेनयनेताभ्यांरुचिरः तथासदृशाअन्यूनाधिकाःसुभगाश्चकपोलकर्णकंठनासिकायस्यतस्य विगूढस्मितंयद्वदनंतस्यमहोत्सवेनविभ्र
मेणपुरांगनानांमनसिकाममुद्दीपयन् एवंभूतोऽपितथाऽदृश्यतेत्यन्वयः ॥ ३१ ॥ ॥ ॥

यर्हियदालोकंजनंयोगस्यप्रतिपक्षमाचक्षाणःपश्यन्बभूव तस्यप्रतिक्रियाकरणंकर्मचनिंदितमित्याचक्षाणःतदाआजगरंव्रतमास्थितःसन् शयानएवाश्नातिस्मेत्यन्वयः आजगरंव्रतंनामएकत्रैवास्थित्वाप्रारब्धकर्मोपभोगः अवमेहतिमूत्रयति हदतिपुरीषमुत्सृजति उच्चरितेपु रीषेचेष्टमानोविलुठन् तेनैवादिग्धाआलिप्ताउद्देशादेहप्रदेशायस्यसः ॥ ३२ ॥ बीभत्सामिवाशंक्याह तस्येति पुरीषस्यसुरभिणागंधेन सौगंध्यंयस्यसवायुः ॥ ३३ ॥ एवंगवादिचर्ययापानादिकरोतिस्म तदेवाह व्रजन्नित्यादिना काकमृगगवामिवान्यदपिचरितंवृत्तिर्यस्य॥

यर्हिवावसभगवान्लोकमिमंयोगस्याद्धाप्रतीपमिवाचक्षणस्तत्प्रतिक्रियाकर्मबीभत्सितमितिव्रतमागरमा स्थितःशयानएवाश्नातिपिबतिखादत्यवमेहतिहदतिस्मचेष्टमानउच्चरितआदिग्धोद्देशः ॥ ३२ ॥ तस्यह यःपुरीषसुरभिसौगंध्यवायुस्तंदेशंदशयोजनंसमंतात्सुरभिंचकार ॥ ३३ ॥ एवंगोमृगकाकचर्ययाव्रजं स्तिष्ठन्नासीनःशयानःकाकगोमृगचरितःपिबतिखादत्यवमेहतिस्म ॥ ३४ ॥ इतिनानायोगचर्याचरणोभ गवान्कैवल्यपतिर्ऋषभोऽविरतपरममहानंदानुभवआत्मनिसर्वेषांभूतानामात्मभूतेभगवतिवासुदेवआ त्मनोऽव्यवधानानंतरोदरभावेनसिद्धसमस्तार्थपरिपूर्णोयोगैश्वर्याणिवैहायसमनोजवांतर्धानपरकायप्र वेशदूरग्रहणादीनियदृच्छयोपगतानिनांजसानृपहृदयेनाभ्यनंदत् ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणे पंचमस्कंधेऋषभदेवानुचरितेपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥

॥ ३४ ॥ नानायोगचर्याआचरतीतितथा लोकयात्रापरिहाराययोगिभिरेवंवर्तितव्यमितिप्रदर्शनायतथाकृतवान् वस्तुतस्तुभगवान्यतःअ विरतःपरममहान्उत्तरोत्तरशतगुणत्वेनोत्कोयआनंदःतदनुभवस्वरूपः किंच वासुदेवेआत्मनोऽव्यवधानेनअभेदेननविद्यते अन्येषामिव अंतरामध्येउदरस्यदेहोपाधेर्भावस्तेन नित्यनिवृत्तोपाधित्वेनेत्यर्थः स्वतएवसिद्धैःसमस्तैरर्थैःफलैःपरिपूर्णत्वाद्योगैश्वर्याणिनाभ्यनंदत् वैहायसंखेचरत्वं मनोजवंमनसइवदेहस्यवेगं दूरग्रहणंदूरदर्शनं हेनृप हृदयेनमनसा ॥ ३५ ॥ इतिपंचमेटीकायांपंचमोऽध्यायः ॥ ५ ॥

षष्ठेलीनाभिमानस्यदेहत्यागक्रमाभिधा ॥ प्रदहंतंदवाग्निंयःपश्यन्नपिनपश्यति ॥ १ ॥ योगैश्वर्याणिनाभ्यनंददित्युक्तंतत्रपृच्छाति नेति भगवःहेभगवन् योगेनसमीरितमुद्दीपितंयज्ज्ञानंतेनावभर्जितानिदग्धानिकर्मबीजानिरागादीनियैः तेषांयदृच्छयाप्राप्तानियोगैश्वर्याणि पुनःक्लेशदानिभवितुंनार्हंति अतःकिमितिनाभ्यनंददित्यर्थः ॥ १ ॥ अंगीकृत्यपरिहरति सत्यमिति एकेबुद्धिमंतोऽनवस्थानस्यचंचलस्य मनसोविश्वासंनसंगच्छंतेनसम्यक्प्राप्नुवंति शठःकिरातोयथाधृतेष्वपिमृगेषु शठेकिरातेयथामृगाइतिसन्नम्यंतंवा पाठांतरेशठोवंचकः किरातोवणिक्व्यवहर्तरियथा अस्मिन्वाव्यवहर्ताविश्वासंनयातीत्यर्थः पाक्षिकोदोषोवर्जनीयइत्युपदेष्टुंनाभ्यनंददितिभावः ॥ २ ॥ यद्विश्रंभात्यस्यविश्वासात् चिराच्चीर्णंबहुकालसंचितंतपःचस्कंदसुस्राव ऐश्वरंविष्णोर्मोहिनीरूपदर्शनेन यद्वा ईश्वराणांसमर्थानामपिसौ

**राजोवाच** ननूनंभगवआत्मारामाणांयोगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणिपुनःक्लेशदानि भवितुमर्हंतियदृच्छयोपगतानि ॥ १ ॥ **ऋषिरुवाच** सत्यमुक्तंकिंत्विहवाएकेनमनसोऽद्धाविश्रंभमनव स्थानस्यशठकिरातइवसंगच्छंते ॥ २ ॥ तथाचोक्तं ॥ नकुर्यात्कर्हिचित्सख्यंमनसिह्यनवस्थिते ॥ यद्विश्रंभा च्चिराच्चीर्णंचस्कंदतपऐश्वरं ॥३॥ नित्यंददातिकामस्यच्छिद्रंतमनुयेऽरयः ॥ योगिनःकृतमैत्रस्यपत्युजायेवपुं श्चली ॥ ४ ॥ कामोमन्युर्मदोलोभःशोकमोहभयादयः ॥ कर्मबंधश्चयन्मूलःस्वीकुर्यात्कोनुतद्बुधः ॥ ५ ॥ अथैवमखिललोकपालललामोविलक्षणैर्जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावोयोगिनांसां परायविधिमनुशिक्षयन्स्वकलेवरंजिहासुरात्मन्यात्मानमसंव्यवहितमनर्थांतरभावेनान्वीक्षमाणउपरता नुवृत्तिरुपरराम ॥ ६ ॥

भरिप्रभृतीनांतपः ॥ ३ ॥ तत्रहेतुः नित्यमिति कृतविश्वासोयोयोगीतदीयंमनःकामस्यतमनुयेऽरय स्तेषांचछिद्रमवकाशंददाति यथाकृतविश्वासस्यपत्युःपुंश्चलीजायाजाराणामवकाशंदत्वापतिंघातयतितथामनोऽपिकामादिभिर्योगिनंभ्रं शयतीत्यर्थः ॥ ४ ॥ अरीन्कथयन्नुपसंहरति कामइति यन्मूलःयन्निमित्तोभवतितन्मनः कोनुबुधःस्वीकुर्यात्स्वाधीनमितिमन्येत ॥ ५ ॥ प्रासंगिकंसमाप्यप्रस्तुतमाह अथेति अखिलानांलोकपालानांललामोमंडनभूतोऽपिउपरताबाधिताऽनुवृत्तिर्यस्मात्सउपररामदेहाभिमानं जहौ विलक्षणैरनेकप्रकारैरवधूतवेषादिभिर्नविलक्षितोभगवत्प्रभावोयस्मिन् सांपरायविधिंदेहत्यागप्रकारं आधाराधेयभावव्यावृत्त्यर्थमाह अनर्थांतरभावेनअभेदेन उपासनाव्यावृत्यमाह असंव्यवहितं ॥ ६ ॥ ॥ ॥ ॥ ॥

मनसास्त्वयंत्यक्तेऽप्यभिमानेकेनापिसंस्कारेणदेहःप्रचलति यथाकुलालचक्रं सोऽयमभिमानाभासः तेनसचजीवन्मुक्तानामाविद्यावास
नयाभवतीतिततोविशेषमाह योगमायावासनयेति ॥ ७ ॥ कोंकादीन्देशानूगतःसन् कयापिवासनयाआस्येकृतःअश्मकवलोयेन अ
संवीतोनग्नः ॥ ८ ॥ समीरवेगेनविधूतानांकंपितानांवेणूनांसंघर्षणेनजातउग्रोदावानलःआलेलिहानःसर्वतोग्रसन् ॥ ९ ॥ अवधूतवेषे
णऋषभदेवस्तत्रगतइत्येतस्यसूचकमाह यस्यकिलाश्रमातीतमनुचरितंतद्देशवासिभ्यउपाकर्ण्य अर्हन्निति नामयस्यसराजास्वयंतत्रउपशि

तस्यहवाएवंमुक्तलिंगस्यभगवतऋषभस्ययोगमायावासनयादेहइमांजगतमभिमानाभासेनचंक्रममाणः ॥ ७ ॥ कोंकवेंककुटकान्दक्षिणकर्णाटकान्देशान्यदृच्छयोपगतःकुटकाचलोपवनआस्यकृताश्मकवलउन्मादइवमुक्तमूर्धजोसंवीतएवविचचार ॥ ८ ॥ अथसमीरवेगविधूतवेणुविकर्षणजातोग्रदावानलस्तद्वनमालेलिहानःसहतेनददाह ॥९॥ यस्यकिलानुचरितमुपाकर्ण्यकोंकवेंककुटकानांराजाऽर्हन्नामोपशिक्ष्यकलावधर्मउत्कृष्यमाणेभवितव्येनविमोहितःस्वधर्मपथमकुतोभयमपहायकुपथपाषंडमसमंजसंनिजमनीषयामंदःप्रवर्तयिष्यते ॥ १० ॥ येनहवावकलौमनुजापसदादेवमायामोहिताःस्वविधिनियोगशौचचारित्रविहीनादेवहेलनान्यपव्रतानिनिजेच्छयागृण्हानाअस्नानानाचमनाशौचकेशोल्लुंचनादीनिकलिनाऽधर्मबहुलेनोपहतधियोब्रह्मब्राह्मणयज्ञपुरुषलोकाविदूषकाःप्रायेणभविष्यंति॥११॥तेचह्यर्वाक्तनयानिजलोकयात्रयांऽधपरंपरयाश्वस्तास्तमस्यंधेस्वयमेवप्रपतिष्यंति ॥ १२ ॥ ॥

क्ष्यशिक्षित्वाकुपथश्चासौपाषंडश्चतंनिजमनीषयासंप्रवर्तयिष्यतइत्यन्वयः तत्रहेतुः कलावित्यादि भवितव्येनप्राणिपूर्वसंचितपापफलेन
॥ १० ॥ येनप्रवर्तकेनमनुजेष्वपसदानिकृष्टाःस्वविधिनानियोगोयस्मिन्शौचचारित्रेतद्विहीनाः देवावज्ञारूपाण्यस्नानादीनिकुव्रतानिगृ
ह्णानाःवेदादीनांविदूषकाभविष्यंति ॥ ११ ॥ तत्फलंचांधंतमःप्राप्स्यंतीत्याह तेचेति अर्वाक्तनयाअवेदमूलया निजलोकयात्रयास्वेच्छा
कृतप्रवृत्त्याआश्वस्ताःकृतविश्वासाः ॥ १२ ॥ ॥ ॥ ॥ ॥

ननुतर्ह्यनर्थकारीकिमर्थोऽयमृषभावतारस्तत्राह अयमिति रजोव्याप्तानांजनानांमोक्षमार्गोपशिक्षणार्थः तस्यकैवल्योपशिक्षणस्यानु रूपान् ॥ १३ ॥ अधिकंपुण्यंयस्मिन् एतद्भारतंवर्षं ऋषभाद्यवतारयुक्तानिकर्माणि ॥ १४ ॥ प्रियव्रतस्यवंशःअवदातःशुद्धः यत्रवंशे यद्यस्मात् अकर्मामोक्षस्तस्यहेतुंधर्मंचचार ॥ १५ ॥ अपरःकोनुयोगीअस्यकाष्ठांदिशमप्यनुगच्छेत् योयोगीयेनऋषभेणअसत्तयाअवस्तुत्वेनउदस्तानिरस्तायोगमायाःसिद्धीर्वांछति कथंभूताःकृतःप्रयत्नोयासु तदर्थंप्रयत्नंचकरोतीत्यर्थः यद्वा कथंभूताउदस्ताःकृतप्रयत्नाःसेवि

अयमवतारोरजसोपप्लुतकैवल्योपशिक्षणार्थः ॥ तस्यानुगुणान्श्लोकान्गायंति ॥ १३ ॥ अहोभुवःसप्त समुद्रवत्याद्वीपेषुवर्षेष्वधिपुण्यमेतत् ॥ गायंतियत्रत्यजनामुरारेःकर्माणिभद्राण्यवतारवंति ॥ १४ ॥ अहोनु वंशोयशसाऽवदातःप्रैयवतोयत्रपुमान्पुराणः ॥ कृतावतारःपुरुषःसआद्यश्चचारधर्मंयदकर्महेतुं ॥ १५ ॥ कोन्वस्यकाष्ठामपरोनुगच्छेन्मनोरथेनाप्यभवस्ययोगी ॥ योयोगमायाःस्पृहयत्युदस्ताह्यसत्तयायेनकृतप्रयत्नाः ॥ १६ ॥ इतिहस्मसकलवेदलोकदेवब्राह्मणगवांपरमगुरोर्भगवतऋषभाख्यस्याविशुद्धाचरितोरितंपुंसांसमस्तदुश्चरिताभिहरणं ॥ परममहामंगलायनमिदमनुश्रद्धयोपचितयाऽनुशृणोत्याश्रावयतिवाऽवहितोभगवतितस्मिन्वासुदेवएकांततोभक्तिरनयोरपिसमनुवर्तते ॥ १७ ॥ यस्यामेवकवयआत्मानमविरतंविविधवृजिनसंसारपरितापोपतप्यमानमनुसवनंस्नापयंतस्तयैवपरयानिर्वृत्त्याह्यपवर्गमात्यंतिकंपरमपुरुषार्थमपिस्वयमासादितंनोएवाद्रियंतेभगवदीयत्वेनैवपरिसमाप्तसवार्थाः ॥ १८ ॥

तुमुद्यताअपीत्यर्थः ॥ १६ ॥ विशुद्धाचरितेयत्ईरितंकथितंतत्समस्तंदुश्चरितमभितोहरतीतितथा परममहामंगलानामयनंच अवहितःसन् अनयोरपिश्रोतृश्रावयित्रोरविशेषेणभक्तिःसम्यक्अनुवृत्ताभवतीत्यर्थः ॥ १७ ॥ भक्तेःपरमपुरुषार्थत्वमाह यस्यांभक्तावेवनतुयोगादिषुअनुसवनमविरतमात्मानंस्नापयंतः स्वयमासादितमप्रार्थितंभगवतास्वयमेवदीयमानमपि अनादरेहेतुः भगवदीयत्वेनैवपरितःसमाप्ताःसम्यक्प्राप्ताःसर्वेपुरुषार्थायैस्ते ॥ १८ ॥ ॥ ॥ ॥ ॥

ननुभगवतोऽतिसुलभत्वदर्शनान्मोक्षस्यचातिदुर्लभत्वादियमस्तुतिरेवेत्याशंक्याह हेराजन् भवतांपांडवानांयदूनांचपतिःपालकःगुरुः उपदेष्टा दैवमुपास्यः प्रियःसुहृत् कुलस्यपतिःनियंता किंबहुना क्वचकदाचित्दौत्यादिषुवःपांडवानांकिंकरोऽपिआज्ञानुवर्ती अस्तु नामैवंतथाऽप्यन्येषांनित्यंभजतामपिमुक्तिंददाति नतुकदाचिदपिसप्रेमभक्तियोगं ॥ १९ ॥ वर्णितमृषभावतारंनमस्करोति नित्यमनुभूतंयन्निजंरूपंसएवलाभःतेननिवृत्तातृष्णायस्यसः अतद्वचनयादेहाद्यर्थमनोरथेन श्रेयसिविषयेचिरंसुप्ताबुद्धिर्यस्यतस्यजनस्य करुणया

राजन्पतिर्गुरुरलंभवतांयदूनांदैवंप्रियःकुलपतिःक्वचकिंकरोवः ॥ अस्त्वेवमंगभगवान्भजतांमुकुंदोमुक्तिंददातिकर्हिचित्स्मनभक्तियोगं ॥ १९ ॥ नित्यानुभूतनिजलाभनिवृत्ततृष्णःश्रेयस्यतद्रचनयाचिरसुप्तबुद्धेः ॥ लोकस्ययःकरुणयाभयमात्मलोकमाख्यान्नमोभगवतेऋषभायतस्मै ॥ २० ॥ इतिश्रीभागवतेम० पंच० ऋषभदेवानुचरितेषष्ठोऽध्यायः ॥ ६ ॥ ॥ श्रीशुकउवाच भरतस्तुमहाभागवतोयदाभगवताऽवनितलपरिपालनायसंचिंतितस्तदनुशासनपरःपंचजनींविश्वरूपदुहितरमुपयेमे ॥ १ ॥ तस्यामुहवाआत्मजान्कार्त्स्न्येनानुरूपानात्मनःपंचजनयामासभूतादिरिवभूतसूक्ष्माणि ॥ २ ॥ सुमतिंराष्ट्रभृतंसुदर्शनमावरणंधूम्रकेतुमिति ॥ अजनाभंनामैतद्वर्षंभारतमितियतआरभ्यव्यपदिशंति ॥ ३ ॥ सबहुविन्महीपतिः पितृपितामहवदुरुवत्सलतयास्वेस्वेकर्मणिवर्तमानाःप्रजाःस्वधर्ममनुवर्तमानःपर्यपालयत् ॥ ४ ॥ ॥

निर्भयमात्मस्वरूपंयआख्यातवांस्तस्मैनमः ॥ २० ॥ इतिपंचमस्कंधेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ अध्यायानांत्रयेणैवमृषभाख्यानमीरितं ॥अष्टभिर्भरताख्यानमतःप्रस्तूयतेऽमृतं ॥ १ ॥ सप्तमेभरतोराज्येचिरंयज्ञैर्हरिंयजन् ॥ आरब्धकर्मनिर्वाणेहरिक्षेत्रेऽभजद्धरिं ॥ २ ॥ संचिंतितःसंकल्पेनैवराज्यादौनियुक्तः ॥ १ ॥ आत्मनोऽनुरूपान् भूतादिरहंकारइवभूतसूक्ष्माणीतिसंततिवृद्धौदृष्टांतः ॥ २ ॥ भारतमितिस्वनाम्नाख्यापकत्वेनधर्माद्यतिशयःसूचितः ॥ ३ ॥ बहुवित्सर्वज्ञः ॥ ४ ॥

यज्ञाअयूपाः क्रतवः सयूपाः तद्रूपं उच्चावचैर्महद्भिरल्पैश्चक्रतुभिः कर्मभिः श्रद्धयाईजेच तानेवाह आहृताः स्वाधिकारेणात्मसात्कृतायेअग्नि
होत्रादयः तेषांप्रकृतिविकृतिभिः अग्निहोत्रादयोद्विविधाः सकलांगयुक्ताः प्रकृतयः विकलांगाविकृतयइति तैर्द्विविधैरपीष्टवानित्यर्थः अनुसवन
मित्यंतंवाचातुर्होत्रविधिनेत्यंतंवागद्यं॥५॥किंच संप्रचरत्सुप्रवर्तमानेषुनानायागेषुविरचिताअनुष्ठिताअगंक्रियायेषांतेषुयदपूर्वंतद्वासुदेवएव
भावयमानः चिंतयन्सयजमानोयज्ञभाजोयेदेवाः सूर्यादयस्तान्पुरुषस्यवासुदेवस्यावयवेषुचक्षुरादिष्वभ्यध्यायत् नतुपृथक्त्वेनेत्यन्वयः अपू
र्वेपक्षद्वयंमीमांसकानां तदानीमेवसूक्ष्मत्वेनोत्पन्नंफलमेवापूर्वंकालांतरफलोत्पादिकाकर्मशक्तिर्वेति तदुक्तं यागादेवफलंतद्धिशक्तिद्वारे
णसिद्ध्यति ॥ सूक्ष्मंशक्त्यात्मकंवाऽपिफलमेवोपजायतइति तदेवाह क्रियाफलंधर्माख्यमितिच ननुयद्यंगंदेवताः कर्मप्रधानमितिमतंत
र्हिकर्तृनिष्ठमपूर्वंस्यात् तदुक्तं कर्मभ्यः प्रागयोग्यस्यकर्मणः पुरुषस्यवा ॥ योग्यताशास्त्रगम्यायापरासाऽपूर्वमिष्यतइति अथदेवताप्रधानं

**ईजेचभगवंतंयज्ञक्रतुरूपंक्रतुभिरुच्चावचैः श्रद्धयाहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानांप्रकृतिवि**
**कृतिभिरनुसवनंचातुर्होत्रविधिना ॥ ५ ॥ संप्रचरत्सुनानायागेषुविरचितांगक्रियेष्वपूर्वंयत्तत्क्रियाफलं**
**धर्माख्यंपरेब्रह्मणियज्ञपुरुषेसर्वदेवतालिंगानांमंत्राणामर्थनियामकतयासाक्षात्कर्तरिपरदेवतायांभगव**
**तिवासुदेवएवभावयमानआत्मनैपुणमृदितकषायोहविष्वध्वर्युभिर्गृह्यमाणेषुसयजमानोयज्ञभाजोदेवा**
**स्तान्पुरुषावयवेष्वभ्यध्यायत् ॥ ६ ॥ ॥ ॥ ॥ ॥**

कर्मतुदेवताराधनार्थंतदादेवताप्रसादरूपत्वादपूर्वस्यदेवताश्रयत्वमेवयुक्तंप्रोक्षणाद्यपूर्वस्येवव्रीह्याद्याश्रयत्वं कुतोवावासुदेवाश्रयमपूर्वंभा
वयति उच्यते यदिकर्तृनिष्ठमपूर्वंतर्हिवासुदेवस्यांतर्यामिणः प्रवर्तकत्वेनमुख्यकर्तृत्वात्तदाश्रयमेवापूर्वंनतुतत्प्रयोज्ययजमानाश्रयं शास्त्र
फलंप्रयोक्तरीतिन्यायात् अन्यथाऋत्विजामप्यपूर्वाश्रयत्वप्रसंगात् तदेवाह साक्षात्कर्तरीति देवताश्रयत्वेऽपिवासुदेवाश्रयत्वमेवेत्याह
परदेवतायामिति परदेवतात्वेहेतुः सर्वदेवतालिंगानांतत्तद्देवताप्रकाशकानांमंत्राणांयेऽर्थाइंद्रादिदेवतास्तेषांनियामकतयातस्यैवप्रसा
दनीयत्वात् फलदातृत्वाच्चयुक्तमेवापूर्वाश्रयत्वामित्यर्थः एवंभावनमेवात्मनोनैपुणंकौशलंतेनमृदिताः क्षीणाः कषायाः रागादयोयस्य अध्व
र्युभिरितिबहुवचनंनानाकर्माभिप्रायेण ॥ ६ ॥

एवंभूतयाकर्मविशुद्ध्याविशुद्धसत्त्वस्यभक्तिरजायतेत्यन्वयः क्व अंतर्हृदयेयआकाशःसएवशरीरमभिव्यक्तिस्थानंयस्यतस्मिन्ब्रह्मणिकीदृ
शेमहापुरुषरूपस्योपलक्षणमाकारोयस्यतस्मिन् किंचश्रीवत्सादिभिरुपलक्षितेनिजपुरुषाणांनारदादीनांहृदिलिखितवन्निश्चलतया
स्थितेनउक्तेनपुरुषरूपेण आत्मनिस्वमनसिविरोचमानेकद्दिशभक्तिःअत्यंतातिशयेनएधमानोरयोवेगःप्रकर्षोयस्याः ॥ ७ ॥ एवमनुवृ
त्त्यावर्षाणामयुतानितेषांसहस्रंतत्पर्यंतकालेऽवसितोनिश्चितःकर्मनिर्वाणावसरःराज्यभोगादृष्टसमाप्तिसमयोयेनसः अधिकृत्यभुज्यमानं

एवंकर्मविशुद्ध्याविशुद्धसत्त्वस्यांतर्हृदयाकाशशरीरेब्रह्मणिभगवतिवासुदेवेमहापुरुषरूपोपलक्षणेश्रीवत्स
कौस्तुभवनमालाऽरिदरगदादिभिरुपलक्षितेनिजपुरुषहृल्लिखितेनात्मनिपुरुषरूपेणविरोचमानउच्चैस्तरां
भक्तिरनुदिनमेधमानरयाऽजायत ॥ ७ ॥ एवंवर्षायुतसहस्रपर्यंतावसितकर्मनिर्वाणावसरोऽधिभुज्यमा
नंस्वतनयेभ्योरिक्थंपितृपैतामहंयथादायंविभज्यस्वयंसकलसंपन्निकेतात्स्वनिकेतात्पुलहाश्रमंप्रवव्राजय
त्रहवावभगवान्हरिरद्यापितत्रत्यानांनिजजनानांवात्सल्येनसंन्निधाप्यतेइच्छारूपेण ॥ ८ ॥ यत्राश्रमपदा
न्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदीनामसरित्प्रवरासर्वतःपवित्रीकरोति ॥ ९ ॥ तस्मिन्वावकिलसएकलः
पुलहाश्रमोपवनेविविधकुसुमकिसलयतुलसिकांऽबुभिःकंदमूलफलोपहारैश्चसमीहमानोभगवतआराध
नंविविक्तउपरतविषयाभिलाषउपभृतोपशमःपरांनिर्वृतिमवाप ॥ १० ॥ ॥ ॥

रिक्थंधनंयथाविभागंविभज्यसकलसंपदांनिकेतात् आश्रयात् स्वगृहात्पुलहाश्रमंहरिक्षेत्रंप्रवव्राज यत्रक्षेत्रेविद्याधरकुंडेवात्सल्यंकर्तुं तेन
सन्निहितःक्रियते भक्तानामपेक्षितेनरूपेणसान्निहितोभवतीत्यर्थः ॥ ॥ ८ ॥ आश्रमस्थानानिउभयतउपर्यधश्चनाभिर्येषांतैर्दृषच्चक्रैः शि
लामध्यगतैश्चक्रैःचक्रनदीगंडकीसरितांश्रेष्ठापवित्रीकरोति ॥ ९ ॥ एकलःएकः आराधनंसमीहमानःकुर्वाणः विविक्तःशुद्धः अतएवउ
परतोविषयाभिलाषोयस्य उपभृतःसंवृद्धःउपशमोयस्य ॥ १० ॥ ॥ ॥

प्रवर्धमानानुरागस्य भरेणयत्द्रुतंद्रवीभूतंहृदयंतस्मिन्शैथिल्यमनुद्यमोयस्य आत्मनिदेहेउद्भिद्यमानरोमपुलककुलंरोमांचवृंदंयस्य क
कारःसमासांतः औत्कंठ्यात्प्रवृत्तेनप्रणयबाष्पेणनिरुद्धोऽवलोकोययोःतेनयनेयस्यसः एवंवर्तमानस्तामपिभगवत्सपर्यांनसस्मारेत्यन्वयः
तत्रहेतुः निजरमणस्यस्वप्रीतिदातुर्येअरुणेचरणारविंदेतयोरनुध्यानेनपरिचितःसमृद्धोभक्तियोगःतेनपरिप्लुतःसर्वतोव्याप्तःपरमआल्हादः
परमानंदोयस्मिन्गंभीरहृदयन्हदेतस्मिन्नवगाढानिमग्नाधिषणायस्य ॥ ११ ॥ धृतानिभगवद्व्रतानियेनसभगवंतंसूर्यमंडलेऽभ्युपतिष्ठन्नेतदु
होवाचेत्यन्वयः कीदृशःएण्याहरिण्याअजिनमैणेयंतदेववासस्तेनअनुसवनाभिषेकेणार्द्राः कपिशाश्चयाःकुटिलाजटास्तासांकलापेनच

तयेत्थमविरतपुरुषपरिचर्ययाभगवतिप्रवर्धमानानुरागभरद्रुतहृदयशैथिल्यःप्रहर्षवेगेनात्मन्युद्भिद्यमान
रोमपुलककुलकऔत्कंठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयनएवंनिजरमणारुणचरणारविंदानुध्यानप
रिचितभक्तियोगेनपरिप्लुतपरमाल्हादगंभीरहृदयहृदावगाढधिषणस्तामपिक्रियमाणांभगवत्सपर्यांनस
स्मार ॥ ११ ॥ इत्थंधृतभगवद्व्रतऐणेयाजिनवाससाऽनुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेनचविरो
चमानःसूर्यर्चाभगवंतंहिरण्मयंपुरुषमुज्जिहानेसूर्यमंडलेऽभ्युपतिष्ठन्नेतदुहोवाच ॥१२॥ परोरजःसवितुर्जा
तवेदोदेवस्यभर्गोमनसेदंजजान ॥ सुरेतसादःपुनराविश्यचष्टेहंसंगृध्राणंनृषद्रिंगिरामिमः ॥१३॥ इतिश्री
भागवतेमहापुराणेपंचमस्कंधेभरतचरित्रेभगवत्परिचर्यायांसप्तमोऽध्यायः ॥ ७ ॥

विरोचमानःसूर्यप्रकाशिकयाऋचाहिरण्मयं ध्येयःसदासवितृमंडलमध्यवर्तीत्यादिनोक्तं उज्जिहानेउद्गच्छतिसति सकारांतपाठेसन्नं
तात्पचाद्यच् अर्थस्तुसएव ॥ १२ ॥ परोरजःरजसःप्रकृतेःपरंः शुद्धसत्वात्मकं सवितुर्देवस्यसूर्यस्यभर्गःस्वरूपभूतंतेजः जातंवेदो
धनंकर्मफलंयस्मात्तत्कर्मफलदमित्यर्थः अत्रहेतुः यन्मनसैवेदंविश्वंजजानससर्ज पुनश्चअदःसृष्टंविश्वमंतर्यामिरूपेणप्रविश्यगृध्राणंकांक्षं
तंहंसंजीवंसुरेतसाचिच्छक्त्याविचष्टेपश्यति पालयतीत्यर्थः नृषुसीदतिउपाधितयातिष्ठतीतिनृषत्बुद्धिःतस्यांरिंगिरिंगणंगतिंरातीति नृष
द्रिंगिरां वाछंदसीत्यमिपूर्वरूपत्वाभावः तद्भर्गः इमःशरणंव्रजामः ॥ १३ ॥ इतिपंमपस्कंधेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥

अष्टमेभजतोविष्णुंतस्यकर्मांतरायतः ॥ एणरक्षाप्रसक्तस्यजातमेणत्वमीर्यते ॥ १ ॥ कृपयापिकृतःसंगःपतनायैवयोगिनः ॥ इतिप्र दर्श यन्नाहभरतस्यैणपोषणं ॥ २ ॥ नैयमिकंनित्यनैमित्तिकविधिप्राप्तं आवश्यकमर्थप्राप्तंमूत्रोत्सर्गादि कृतमभिषेकादिकंयेन ब्रह्माक्षरंप्र णवं जपन् उदकांतेनद्यास्तीरे जलाशयाभ्याशंनद्याःसमीपे पेपीयमानेअत्यासक्त्यापीयमानेसति तावदेवतत्क्षणमेव अविदूरेणसन्निधौमृग पतेःसिंहस्यउन्नादोमहान्नाद उद्गतः ॥ १ ॥ प्रकृत्यास्वभावतएवविक्लवाव्याकुलासुतरांतुहरिभयस्याभिनिवेशेनव्यग्रंव्याकुलंहृदयंयस्याः पारिप्लवदृष्टिःपरिभ्रांतनेत्रा नगतातृषातृट्यस्याः उच्चक्रामनदीमुल्लंघितवती ॥२॥ अंतर्वत्न्याःगर्भिण्याः उरुभयेनस्थानाद्विचलितोयोने

श्रीशुकउवाच एकदातुमहानद्यांकृताभिषेकनैयमिकावश्यकोब्रह्माक्षरमभिगृणानोमुहूर्तत्रयमुदकांतउप विवेशतत्रतदाराजन्हरिणीपिपासयाजलाशयाभ्याशमेकैवोपजगामतयापेपीयमानउदकेतावदेवाविदूरे णनदतोमृगपतेरुन्नादोलोकभयंकरउदपतत् ॥ १ ॥ तमुपश्रुत्यसामृगवधूःप्रकृतिविक्लवाचकितनिरीक्षणा सुतरामपिहरिभयाभिनिवेशव्यग्रहृदयापारिप्लवदृष्टिरगततृषाभयात्सहसैवोच्चक्राम ॥ २ ॥ तस्याउत्पतं त्याअंतर्वत्न्याउरुभयावगलितोयोनिनिर्गतोगर्भःस्त्रोतसिनिपपात ॥ तत्प्रसवोत्सर्पणभयखेदातुरास्वगणे नवियुज्यमानाकस्यांचिद्दर्यांकृष्णसारसतीनिपपातअथचममार ॥ ३ ॥ तंत्वेणकुणकंकृपणंस्त्रोतसाऽनूह्यमान मभिवीक्ष्यापविद्धंबंधुरिवानुकंपयाराजर्षिर्भरतआदायमृतमातरमित्याश्रमपदमनयत् ॥ ४ ॥ तस्यहवाए णकुणकेउच्चैरेतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनलालनप्रीणनानुध्यानेनात्मनियमाःसह यमाःपुरुषपरिचर्यादयएकैकशःकतिपयेनाहर्गणेनवियुज्यमानाःकिलसर्वएवोदवसन् ॥ ५ ॥

र्निर्गतःसन्स्त्रोतसिप्रवाहेनिपतितः तत्प्रसवोगर्भपातःउत्सर्पणमुल्लंघनंभयंचएतैःखेदेनातुरापीडिता दर्यांगिरिगुहायांहरिणवधूःपपात अथानंतरंमृताच ॥ ३ ॥ एणकुणकंहरिणबालकं अपविद्धंबंधुभिस्त्यक्तमितिएतैःकृपणत्वादिहेतुभिर्याऽनुकंपातयाअनयत् ॥ ४ ॥ कृतो निजःस्वीयइत्यभिमानोयेन पोषणंतृणादिना पालनंवृकादिभ्योरक्षणं लालनंचुंबनादिना प्रीणनंकंडूयनादिना एतैर्यदनुध्यानमासक्ति स्तेनआत्मनोनियमाःस्नानादयः यमाअहिंसादयः तत्सहिताईश्वरपरिचर्यादयश्च प्रत्यहमेकैकशोवियुज्यमानाःसंतःकतिपयेनाहर्गणेनस र्वेउत्सन्नाबभूवुः ॥ ५ ॥ ॥ ॥ ॥ ॥

आसक्तिंप्रपंचयति अहोइत्यादिनाइतिकृतानुषंगइत्येतत्पर्यंतेन ईश्वररथ चरणः कालचक्रंतस्यपरिभ्रमणवेगेनस्वगणादिभ्योविभ्रंशितः मा
इतिमांचशरणंप्रापितः मामेवमातापित्रादिबुध्याउपेयायप्राप्तः यौथिकान्यूथसंघातिनः अनसूयुनाएतान्निमित्तंममस्वार्थोभ्रश्यतीति दोषदृ
ष्टिमकुर्वता ॥६॥ तदेवाह नूनंहीति ॥७॥ इतिएवंकृतोऽनुषंगःआसक्तिर्येन मृगजहुनामृगापत्येनसहस्नेहेनानुबद्धंहृदयंयेन ॥८॥ स्नेहा नुबंध

॥ १८ ॥ अहोबतायंहरिणकुणकःकृपणईश्वररथचरणपरिभ्रमणरयेणस्वगणसुहृद्बंधुभ्यःपरिवर्जितःशरणंचमोपसा
दितोमामेवमातापितरौभ्रातृज्ञातीन्यौथिकांश्चैवोपेयायनान्यंकंचनवेदमय्यतिविस्रब्धश्च्अतएवमयामत्प
रायणस्यपोषणपालनप्रणिनलालनमनसूयुना ऽनुष्ठेयंशरण्योपेक्षादोषविदुषा ॥६॥ नूनंह्यार्याःसाधवउप
शमनशीलाःकृपणसुहृदएवंविधार्थेस्वार्थानपिगुरुतरानुपेक्षंते ॥७॥ इतिकृतानुषंगआसनशयनाटनस्था
नाशनादिषुसहमृगजहुनास्नेहानुबद्धहृदयआसीत् ॥ ८ ॥ कुशकुसुमसमित्पलाशफलमूलोदकान्याहरि
ष्यमाणोवृकसालावृकादिभ्योभयमाशंसमानोयदासहहरिणकुणकेनवनंसमाविशति ॥ ९ ॥ तदापथि
षुचमुग्धभावेनतत्रतत्रविषक्तमतिप्रणयभरहृदयःकार्पण्यात्स्कंधेनोद्वहतिएवमुत्संगेउरसिचाधायोपला
लयन्मुदंपरमामवाप ॥ १० ॥ क्रियायांनिर्वर्त्यमानायामंतरालेषूत्थायोत्थाययदैनमभिचक्षीततर्हिवाव
सवर्षपतिःप्रकृतिस्थेनमनसातस्माआशिषआशास्तेस्वस्तिस्ताद्वत्सतेसर्वतइति ॥ ११ ॥ अन्यदाभृशमु
द्विग्नमनानष्टद्रविणइवकृपणःसकरुणमतितर्षेणहरिणकुणकविरहविह्वलहृदयसंतापस्तमेवानुशोचान्कि
लकश्मलंमहदभिरंभितइतिहोवाच ॥ १२ ॥ ॥ ॥ ॥ ॥ १८ ॥

मेवप्रपंचयति कुशकुसुमेत्यादिनास्वधयतीत्यंतेनसालावृकाःश्वानः यदाभयंशंकमानोभवातितदातेनसहवनंसमाविशाति ॥ ९ ॥ अतिशयि
तः प्रणयभरोयस्यतद्धृदयंयस्यसः ॥१०॥ वर्षपतिर्भरतः प्रकृतिस्थेनस्वस्थेन स्तात्भूयात् ॥ ११ ॥ अन्यदाअदर्शनेसकरुणंयथाभवत्येवमनु
शोचन्इतिहोवाचेत्यन्वयः अतितर्षेणअत्यौत्सुक्येनहरिणकुणकाविरहेणाविह्वलेहृदयेसंतापोयस्य कश्मलंमोहंप्रापितःसन् ॥ १२ ॥

अपीतिसंभावनायां बतेत्यनुकंपायां अहोइतिखेदे शठाकिरातयोरिववंचनपराक्रूराचमतिर्यस्य अकृतसुकृतस्यनिर्भाग्यस्यममतच्छाठचा
दिकमगणयन्नचिंतयन्नागामिष्यतिकिं अपराधाचिंतनेहेतुः आत्मप्रत्ययेनस्वचित्तशुध्याकृतविश्वासःसन्सुजनोनयथागणयातितद्वत् ॥
॥ १३ ॥ शष्पाणिकोमलतृणानि ॥ १४ ॥ नैकचरोयूथचरःसूकरादिः यद्वा एकएवचरतियःक्रूरस्वभावोव्याघ्रादिर्नभक्षयतिकिं ॥ १५ ॥
सकललोकस्यक्षेमोयस्मात्सउदयोयस्य वेदत्रयीआत्मास्वरूपंयस्यसः सूर्येनिम्लोचतिअस्तंयाति मृगवधवान्यासोनिक्षेपभूतः ॥ १६ ॥

अपिवतसवैकृपणएणबालकोमृतहरिणीसुतअहोममानार्यस्यशठकिरातमतेरकृतसुकृतस्यकृतविस्त्रंभआ
त्मप्रत्ययेनतदविगणयन्सुजनइवागमिष्यतिकिम् ॥ १३ ॥ अपिक्षेमेणास्मिन्नाश्रमोपवनेशष्पाणि
चरंतंदेवगुप्तंद्रक्ष्यामि ॥ १४ ॥ अपिचनवृकःसालावृकोऽन्यतमोवानैकचरएकचरोवाभक्षयति ॥ १५ ॥
निम्लोचतिहभगवान्सकलजगत्क्षेमोदयस्त्रय्यात्माऽद्यापिममनमृगवधून्यासआगच्छति ॥ १६ ॥ अपि
स्विदकृतसुकृतमागत्यमांसुखयिष्यतिहरिणराजकुमारोविविधरुचिरदर्शनीयानिजमृगदारकाविनोदैरसं
तोषंस्वानामपनुदन् ॥ १७ ॥ क्ष्वेलिकायांमांमृषासमाधिनाआमीलितदृशंप्रेमसंरंभेणचकितचकितआवृत्य
पृषदपरुषविषाणाग्रेणलुठति ॥ १८ ॥ आसादितहविषिबर्हिषिदूषितेमयोपालब्धोभीतभीतःसपद्युप
रतरासऋषिकुमारवदवहितकरणकलापआस्ते ॥ १९ ॥ ॥ ॥ ॥

हरिणएवराजकुमारःआगत्यमामपिस्वित्सुखयिष्यतीत्यन्वयः किंकुर्वन् विविधैरुचिरैर्दर्शनीयैर्निजैर्मृगदारकविनोदैः स्वीयानांखेदमपनु
दन् ॥ १७ ॥ संभवतिचैतदित्याह क्ष्वेलिकायांक्रीडायांमृषायःसमाधिस्तेनामीलितेदृशौयेनतंमांप्रेमसंरंभेणप्रणयकोपेन पृषत्जलबिं
दुःतद्वदपुरुषेणमृदुनाविषाणाग्रेणलुठतिसंघट्टयति ॥ १८ ॥ आसादितंहविर्यस्मिन्बर्हिषिदर्भेदंताकर्षणादिनाचापलेनदूषितेसाति दूषि
त्वेतिपाठेबर्हिषिविषयेदूषणंकृत्वेत्यर्थः मयाऽधिक्षिप्तःसंस्तत्क्षणमेवोपरतक्रीडोनिश्चलआस्ते ॥ १९ ॥ ॥ ॥

इतिबहुधाप्रलप्योत्थायबहिर्निर्गह्यतत्खुरखातभूभागोपलंभसंभ्रांतहृदयआह किंवेति अरेअहोअनयाक्षित्याकिंवातपआचरितंतपस्वि
न्यासभाग्यया यद्यस्मादियंसविनयस्यकृष्णसारतनयस्यतनुतराःसुभगाश्चशिवतमाश्चाखराश्चखुरायेषुतेषांपदानांतत्रतत्रांकितानांपंक्ति
भिः द्रविणंमृगस्तेनरहितस्यअतएवातुरस्यदुःखितस्यममद्रविणमार्गंसूचयंतीसती स्वात्मानंचताभिःकृतमंडनंद्विजानांदेवयजनंयज्ञभू
मिंकरोति यस्मिन्देशेमृगःकृष्णस्तस्मिन्धर्मान्निबोधतेतिस्मृतेः ॥ २० ॥ तावदुदितेचंद्रेमृगंदृष्ट्वास्वमृगत्वंसंभावयन्नाह अपिस्विदिति॥

किंवाअरेआचरितंतपस्तपस्विन्याऽनयायदियमवनिःसविनयकृष्णसारतनयतनुतरसुभगाशिवतमाखर
खुरपदपंक्तिभिर्द्रविणविधुरातुरस्यकृपणस्यममद्रविणपदवींसूचयंत्यात्मानंचसर्वतःकृतकौतुकंद्विजानांस्वर्गा
पवर्गकामानांदेवयजनंकरोति ॥२०॥ अपिस्विदसौभगवानुडुपतिरेनंमृगपतिभयान्मृतमातरंमृगबालकं
स्वाश्रमपरिभ्रष्टमनुकंपयाकृपणजनवत्सलःपरिपाति ॥ २१ ॥ किंवात्मजविश्लेषज्वरदवदहनशिखाभि
रुपतप्यमानहृदयस्थलनलिनीकंमामुपसृतमृगीतनयंशिशिरशांतानुरागगुणितनिजवदनसलिलामृतम
यगभस्तिभिःस्वधयतीतिच ॥ २२ ॥ ॥ ॥ ॥ ॥

॥ २१ ॥ चंद्ररश्मिस्पर्शसुखंप्राप्याह किंवेतिसंभावनायां आत्मजविश्लेषेणज्वरस्तापःसएवदवदहनःतस्यज्वालाभिरुपतप्यमानाहृद
यरूपास्थलनलिनीयस्य जलस्थंपद्मंतापंसोढुंक्षममितिस्थलग्रहणं उपसृतोमृगीतनयोयेनतंमांचंद्रःस्वधयतिशांतिंगमयाति कैः शिशि
रंचतच्छांतंचमय्यनुरागेणगुणितंचआवर्तितंपुनःपुनः स्रवद्यद्वदनसलिलंतदेवामृतमयागभस्तयःतै लोकेहिमंत्रवादिनोवदनसलिलैस्ता
पंशमयंतीतिप्रसिद्धं उपसृत्यमृगीतनयइतिपाठे मनोरथांतरमेतत् उपसृत्यमृगीतनयःकिंवामांस्वधयिष्यतीति शेषंसमानम् ॥ २२ ॥

मृगदारकवदाभासमानेन भगवदाराधनलक्षणात्कर्मणश्चविभ्रंशितः प्रारब्धकर्मत्वेहेतुः कथमितरथेति साक्षात्स्वपुत्रवत्कथमासंगःस्या
त् पूर्वपरित्यक्तादुस्त्यजाऔरसायेन अंतरायेणविहतंयोगारंभणंयस्य आत्मानमविगणयतःआत्मचिंतामकुर्वतः तावदेवतीव्रवेगःकालो
मृत्युसमयश्चापद्यत ॥ २३ ॥ लोकंदेहंमृगेणसहितंविसृज्यप्राकृतइवमृगशरीरमवाप कथंभूतः कलेवरंमृतमनुनमृतानविनष्टापूर्वजन्मा
नुस्मृतिर्यस्य ॥ २४ ॥ आहस्वचित्ते ॥ २५ ॥ अहोकष्टंधीराणांमार्गाद्भ्रष्टोऽहं भ्रंशमेवाह यद्यतःविमुक्ताःसमस्ताःसंगायेन विविक्तं

एवमघटमानमनोरथाकुलहृदयोमृगदारकाभासेनस्वारब्धकर्मणायोगारंभणतोविभ्रंशितःसयोगतापसो
भगवदाराधनलक्षणाच्चकथमितरथाजात्यंतरएणकुणकआसंगःसाक्षान्निःश्रेयसप्रतिपक्षतयाप्राक्परि
त्यक्तदुस्त्यजहृदयाभिजातस्यतस्यैवमंतरायविहतयोगारंभणस्यराजर्षेर्भरतस्यतावन्मृगार्भकपोषणपा
लनप्रीणनलालनानुषंगेणाविगणयतआत्मानमहिरिवाखुबिलंदुरतिक्रमःकालःकरालरभसआपद्यत ॥
॥ २३ ॥ तदानीमपिपार्श्ववर्तिनमात्मजमिवानुशोचंतमभिवीक्ष्यमाणोमृगएवाभिनिवेशितमनाविसृज्य
लोकमिमंसहमृगेणकलेवरंमृतमनुनमृतजन्मानुस्मृतिरितरवन्मृगशरीरमवाप॥२४॥तत्रापिहवाआत्मनो
मृगत्वकारणंभगवदाराधनसमीहानुभावेनानुस्मृत्यभृशमनुतप्यमानआह ॥ २५ ॥ अहोकष्टंभ्रष्टोऽहमा
त्मवतामनुपथाद्यद्विमुक्तसमस्तसंगस्यविविक्तपुण्यारण्यशरणस्यात्मवतआत्मनिसर्वेषामात्मनांभगवति
वासुदेवेतदनुश्रवणमननसंकीर्तनाराधनानुस्मरणाभियोगेनाशून्यसकलयामेनसमावेशितंसमाहितंका
र्त्स्न्येनमनस्तत्तुपुनर्ममाबुधस्यारान्मृगसुतमनुपरिसुस्राव ॥ २६ ॥ इत्येवंनिगूढनिर्वेदोविसृज्यमृगीमात
रंपुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितंशालग्रामंपुलस्त्यपुलहाश्रमंकालंजरात्प्रत्याजगाम ॥ २७ ॥

पुण्यारण्यंशरणंयस्य आत्मवतोधीरस्यममनःसर्वेषांभूतानामात्मनिवासुदेवेसमावेशितंचनिश्चलंसत्आरात्दूरादेवसुस्रावगलितंनिःसृतं
केनसमावेशितं तस्यानुश्रवणादिष्वभियोगेनअभिनिवेशेनअशून्याः सकलायामायस्मिन्तेनकालेन ॥ २६ ॥ निगूढोऽनाविष्कृतोनि
र्वेदोयेन शालवृक्षोपलक्षितंग्रामं कालंजरायत्रहरिणोजातस्तस्मात्पर्वतात् ॥ २७ ॥

आत्मैवसहचरोयस्यएकाकी प्रतीक्षमाणस्यैवप्रपंचः मृगत्वनिमित्तेति तीर्थोदकेनाक्लिन्नमार्द्रमर्धोदकस्थमित्यर्थः ॥ २८ ॥ इतिपंचमेटीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ नवमेजडविप्रत्वेतस्यरागाद्यभावतः ॥ भद्रकालीपशुत्वेऽपिनिर्विकारत्वमीर्यते ॥ १ ॥ पितुः प्राप्तात्मविज्ञानोभरतोमृगतांगतः ॥ प्रारब्धकर्मवेगेनतदंतेजडविप्रतां ॥ २ ॥ आंगिरसगोत्रजानांप्रवरस्यश्रेष्ठस्यशमादियुक्तस्य त्यागोन्नातिथ्यादिभ्योऽन्नदानादि विद्याकर्मविद्या आत्मज्ञानंदेहादिव्यतिरिक्तभोक्तात्मज्ञानं आनंदोधर्मसंपत्तिजः आत्मनासदृशाःश्रुतादयो

तस्मिन्नपिकालंप्रतीक्षमाणःसंगाच्चभृशमुद्विग्नआत्मसहचरःशुष्कपर्णतृणवीरुधावर्तमानोमृगत्वनिमित्तावसानमेवगणयन्मृगशरीरंतीर्थोदकक्लिन्नमुत्ससर्ज ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेभरतचरितेअष्टमोऽध्यायः ॥८॥ श्रीशुकउवाच अथकस्यचिद्द्विजवरस्यांगिरःप्रवरस्यशमदमतपःस्वाध्यायाध्ययनत्यागसंतोषतितिक्षाप्रश्रयविद्याऽसूनयात्मज्ञानानंदयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणानवसोदर्याअंगजाबभूवुर्मिथुनंचयवीयस्यांभार्यायां ॥ १ ॥ यस्तुतत्रपुमांस्तंपरमभागवतंराजर्षिप्रवरंभरतमुत्सृष्टमृगशरीरंचरमशरीरेणविप्रत्वंगतमाहुः ॥ २॥ तत्रापिस्वजनसंगाच्चभृशमुद्विजमानोभगवतःकर्मबंधविध्वंसनश्रवणस्मरणगुणविवरणचरणारविंदयुगलंमनसाविदधदात्मनःप्रतिघातमाशंकमानोभगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडांधबधिरस्वरूपेणदर्शयामासलोकस्य ॥३ ॥ ॥

गुणायेषांतेसमानोदरानवपुत्राबभूवुः यवीयस्यांकनिष्ठायांचमिथुनंस्त्रीपुरुषयुग्मं ॥ १ ॥ उत्सृष्टंमृगशरीरंयेनतं शुचीनांश्रीमतांगेहेयोगभ्रष्टोऽभिजायतइतिस्मृतेः ॥ २ ॥ तत्रापिचान्यसंगादात्मनोभ्रंशमाशंकमानश्चात्मानमुन्मत्तादिरूपेणदर्शयामासेत्यन्वयः किंकुर्वन् कर्मबंधविध्वंसनंश्रवणंस्मरणंगुणानांविवरणंकथनंचयस्यतद्भगवतश्चरणारविंदयुगलंमनसाविशेषेणधारयन् प्रतिघातशंकायांहेतुः अनुस्मृतास्वीयपूर्वजन्मनामावलिःपरंपरायेनसः ॥ ३ ॥

पुत्रस्नेहेऽनुबद्धंमनोयस्य जडस्यगार्हस्थ्यानधिकारात्समावर्तनांतान्संस्कारान्विदधानस्तमुपनयिउपनीतस्यपुनःशौचादीन्तस्यानभिप्रेतानपिशिक्षितवान् तत्रहेतुः अनुशिष्टेनहिभाव्यंपितुःशकाशात्पुत्रेणेति ॥ ४ ॥ सोऽपिचपितुःशिक्षानिर्बंधनिवृत्तयेअसध्रीचीनमसमीचीनमिवकरोतिस्म उपाकरणवेदव्रताद्यनंतरंश्रावणादिमासेषुवेदानध्यापयिष्यन्नादौतावत्व्याहृतिभिःसहप्रणवशिरःसहितांत्रिपदींचैत्रादिचतुरोमासानधीयानमप्यसमवेतरूपंयथाभवत्येवंग्राहयामास तावताऽपिकालेनस्वरानुपूर्व्यादियुक्तंव्याहृत्यादितस्यनागतामित्यर्थः ॥

तस्यापिहवाआत्मजस्यविप्रःपुत्रस्नेहानुबद्धमनाआसमावर्तनात्संस्कारान्यथोपदेशंविदधानउपनीतस्यच पुनःशौचाचमनादीन्कर्मनियमाननभिप्रेतानपिसमशिक्षयत्अनुशिष्टेनहिभाव्यंपितुःपुत्रेणेति॥४॥ सचापितदुहपितृसन्निधावेवासध्रीचीनामिवस्मकरोतिछंदांस्यध्यापयिष्यन्सहव्याहृतिभिःसप्रणवशिरस्त्रिपदींसावित्रींग्रैष्मवासंतिकान्मासानधीयानमप्यसमवेतरूपंग्राहयामास ॥ ५ ॥ एवंस्वतनुजआत्मन्यनुरागावेशितचित्तःशौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणककर्माण्यनभियुक्तान्यपिसमनुशिष्टेनभाव्यमित्यसदाग्रहःपुत्रमनुशास्यस्वयंतावदनधिगतमनोरथःकालेनाप्रमत्तेनस्वयंगृहएवप्रमत्तउपसंहृतः॥ ॥ ६ ॥ अथयवीयसीद्विजसतीस्वगर्भजातंमिथुनंसपत्न्याउपन्यस्यस्वयमनुसंस्थायापतिलोकमगात्पितर्युपरतेभ्रातरएनमतत्प्रभावविदस्त्रय्यांविद्यायामेवपर्यवसितमतयोनपरविद्यायांजडमतिरितिभ्रातुरनुशासननिर्बंधान्न्यवृत्सत ॥ ७ ॥

॥ ५ ॥ आत्मभूतेस्वतनुजेअनुरागेणावेशितंचित्तंयेन शौचादीनियान्यौपकुर्वाणकस्यसावधिब्रह्मचर्यवतःकर्माणितेनानभियुक्तानिअनादृतान्यपितंपुत्रंप्रत्यनुशास्यापिअप्राप्तपुत्रपांडित्यमनोरथःस्वयंकालेनोपसंहृतःमृतइत्यर्थः अनुशासननिर्बंधेपुनस्तमेवहेतुमाह अनुशिष्टेनभाव्यमित्यसन्नयोग्यआग्रहोयस्य ॥ ६ ॥ सपत्न्यैसमर्प्य अनुसंस्थयाअनुमरणेन सप्तम्यंतपाठेप्ययमेवार्थः न्यवृत्सतनिवर्तितुमैच्छन् निवृत्ताइत्यर्थः ॥ ७ ॥ ॥ ॥

यदाऽभिभाष्यमाणस्तदातदनुरूपाणिभाषते मूल्यमंतरेणबलाद्यत्कर्मकार्यतेसाविष्टिः वेतनंमूल्यं विष्ट्यादिभिरुपसादितमन्नमभ्यवहरति परंभुंक्तेकेवलंनात्विंद्रियप्रीतये ॥ ८ ॥ अत्रहेतुद्वयमाह नित्यंसदानिवृत्तंनिमित्तंयस्मात् उत्पादकशून्यः स्वसिद्धःअभिव्यंजकशून्यः विशुद्धःकेवलोयोऽनुभवःसएवानंदरूपःस्वात्मातस्यलाभःएवंभूतोऽहमितिज्ञानंतस्याधिगमःप्राप्तिरस्तियस्य द्वंद्वानिसन्मानावमानादीनि तद्धेतुकयोःसुखदुःखयोरकृतदेहाभिमानः तस्मान्नेंद्रियप्रीतिनिमित्तमभ्यवहरतीत्यन्वयः ॥ ९ ॥ अतएवशीतोष्णादिष्वनावृतांगःविचचारेत्यन्वयः कीदृशः पीनःपुष्टः संहननांगःसंहन्यंतेनिबिडीभवंतिस्मअंगानियस्य कठिनावयवइत्यर्थः स्थंडिलसंवेशनंभूमिशयनं अनु

सचप्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणोयदातनुरूपाणिप्रभाषतेकर्माणिसचकार्यमाणःपरेच्छयाकरोतिविष्टितोवेतनतोवायाच्ञयायदृच्छयावोपसादितमल्पंबहुमिष्टंकदन्नंवाऽभ्यवहरातिपरंनेंद्रियप्रीतिनिमित्तं ॥८॥ नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानंदस्वात्मलाभाधिगमःसुखदुःखयोर्द्वंद्वनिमित्तयोरसंभावितदेहाभिमानः ॥९ ॥ शीतोष्णवातवर्षेषुवृषइवानावृतांगःपीनःसंहननांगःस्थंडिलसंवेशनानुन्मर्दनामज्जनरजसामहामणिरिवानभिव्यक्तब्रह्मवर्चसःकुपटावृतकटिरुपवीतेनोरुमषिणाद्विजातिरितिब्रह्मबंधुरितिसंज्ञयाअतज्ज्ञजनावमतोविचचार ॥१०॥ यदातुपरतआहारंकर्मवेतनतईहमानःस्वभ्रातृभिरपिकेदारकर्मणिनिरूपितस्तदपिकरोतिकिंतुनसमंविषमन्यूनमधिकमितिवेदकणापिण्याकफलीकरणकुल्माषस्थालपुरीषादीन्यप्यमृतवदभ्यवहरति ॥ ११ ॥ ॥ ॥

न्मर्दनंमर्दनाभावः अमज्जनंस्नानाभावः तैर्यद्रजःतेनाप्रकटंब्रह्मवर्चसंब्राह्मंतेजोयस्य यथामहामणिरनभिव्यक्ततेजाभवति कुत्सितेनपटेनावृताकटिर्यस्य उरुमषिणाअतिमलिनेनतत्त्वतस्तंनजानांतियेतैर्जनैरवमतःसन् ॥ १० ॥ यदातुपरेभ्यःकर्ममूल्येनाहारमपेक्षमाणोभवतितदाकेदारकर्मणिशालिक्षेत्रेकर्दमविलोडनादौआहारप्रलोभनेननियुक्तःसन्करोति किंतुअत्रकर्दमस्यप्रक्षेपेक्षेत्रंसमंभवेत् इतःउद्धरणेविषमंस्यादित्यादिनवेद भ्रातृभिर्दत्तान्कणादीनप्यमृतवद्भुंक्ते कणाश्चूर्णतंडुलाः पिण्याकंतैलयंत्रोद्धृतंतिलकिट्टम् फलीकरणंतु षाः कुल्माषाःकीटदष्टामाषाः स्थालीपुरीषंस्थाल्लिग्नंदग्धान्नम् ॥ ११ ॥ ॥ ॥

तस्यरागादिरहित्यमलौल्यंचैवमीरितं ॥ अथान्यच्चरितंप्राहचित्रंमृत्यावसंभ्रमः॥वृषलपतिःशूद्रसामंतश्चोरराजः आलभतआलब्धुंप्रवृत्तः ॥ १२ ॥ दैवाद्बंधनाद्विमुक्तस्यपशोः तमसाव्याप्तायांनिशितत्रापिनिशिथिसमयेअर्द्धरात्रावसरे आकस्मिकोदैवनिर्मितोविधिःप्रकारस्तेन वीरासनेनऊर्ध्वावस्थानेन १३ ॥अवमृश्यज्ञात्वा ॥ १४॥ पणयःचोराः अहतेननूतनेन उपस्कृतमलंकृतं वैशससंस्थयाहिंसाविधानेन

अथकदाचित्कश्चिद्वृषलपतिर्भद्रकाल्यैपुरुषपशुमालभतापत्यकामः ॥ १२ ॥ तस्यहदैवमुक्तस्यपशोःप दवींतदनुचराःपरिधावंतोनिशिनिशीथसमयेतमसावृतायामनधिगतपशवआकस्मिकेनाविधिनाकेदारान् वीरासनेनमृगवराहादिभ्यःसंरक्षमाणमांगिरःप्रवरसुतमपश्यन् ॥ १३ ॥ अथतएनमनवद्यलक्षणमवमृ श्यभर्तृकर्मनिष्पत्तिंमन्यमानाबध्वारशनयाचंडिकागृहमुपनिन्युर्मुदाविकसितवदनाः ॥ १४ ॥ अथपण यस्तंस्वविधिनाऽभिषिच्याहतवाससाच्छाद्यभूषणालेपस्रक्तिलकादिभिरुपस्कृतंभुक्तवंतंधूपदीपमाल्य लाजकिसलयांकुरफलोपहारोपेतयावैशससंस्थयामहतागीतस्तुतिमृदंगपणवघोषेणचपुरुषपशुंभद्रका ल्याःपुरतउपवेशयामासुः ॥ १५ ॥ अथवृषलराजपणिःपुरुषपशोरसृगासवेनदेवींभद्रकालींयक्ष्यमाण स्तदभिमंत्रितमसिमतिकरालनिशितमुपाददे ॥ १६ ॥इतितेषांवृषलानांरजस्तमःप्रकृतीनांधनमदरज उत्सिक्तमनसांभगवतकलावीरकुलंकदर्थीकृत्योत्पथेनस्वैरंविहरतांहिंसाविहाराणांकर्मातिदारुणंयद्ब्रह्म भूतस्यसाक्षाद्ब्रह्मर्षिसुतस्यनिर्वैरस्यसर्वभूतसुहृदःसूनायामप्यननुमतमालंभनंतदुपलभ्यब्रह्मतेजसाऽअ तिदुर्विषहेणदंदह्यमानेनवपुषासहसोच्चचाटसैवदेवीभद्रकाली ॥ १७ ॥ ॥ ॥

गीतादिघोषेणसह ॥ १५ ॥ वृषलराजस्यपाणिःपुरोहितत्वेनवर्तमानश्चोरःतदभिमंत्रितंभद्रकालमित्राभिमांत्रितं ॥ १६ ॥ धनमदएवरजः तेनोत्सिक्तंत्यक्तमर्यादंमनोयेषां भगवत्कलायुक्तंवीराणांब्राह्मणानांकुलंतुच्छीकृत्ययथेच्छंवर्तमानानांयत्कर्मतदुपलभ्यदेवउच्चचाट प्रतिमांत्यक्त्वाबहिर्निर्गता कथंभूतमालंभनं सूनायामपिआपत्कालेऽनुज्ञातायामपिहिंसायामनुज्ञातं भद्रकालीत्यंतंगद्यं ॥ १७ ॥

अमर्षोपराधासहनंरोषश्चवपुषोदाहनंतयोरावेशस्तस्यरभसेनवेगेनाविलसितउत्तंभितोभ्रुकुटिलक्षणोविटपःशाखा कुटिलादंष्ट्राश्चअरुणा
नीक्षणानितेषांचआटोपःसंभ्रमस्तेनातिभयानकंवदनंयस्याः इदंतुजगद्धंतुमुद्यतेव महांतमट्टहासंसनादंहासं ततःस्थानादुत्पत्याविवृक्णा
निछिन्नानिशीर्षाणियेषां गणेनपरिवारेणसहाशिरांस्येवंकंदुकानितेषांलीलयाचिक्रीडे च ॥ १८ ॥ ननुकथंदेव्याराधकानामेवंविपरीतंफ
लंतत्राह एवमेवेति महत्सुअभिचाररूपोऽतिक्रमःअपराधः ॥ १९ ॥ नन्वसंभावितमिदमेवंयन्मरणेऽप्यव्याकुलत्वंमारकेषुचक्रोधाभावइ

भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदनाहंतुकामेवेदंमहा
ट्टहासमतिसंरंभेणविमुंचंतीततउत्पत्त्यपापीयसांदुष्टानांतेनैवासिनाविवृक्णशीर्ष्णांगलात्स्रवंतमसृगास
वमत्युष्णंसहगणेननिपीयातिपानमदविह्वलोच्चैस्तरांस्वपार्षदैःसहजगौननर्तचविजहारचशिरःकंदुकली
लया ॥ १८ ॥ एवमेवखलुमहदभिचारातिक्रमःकार्त्स्न्येनात्मनेफलति ॥ १९ ॥ नवाएतद्विष्णुदत्तमह
दद्भुतंयदसंभ्रमःस्वशिरश्छेदनआपतितेऽपिविमुक्तदेहाद्यात्मभावसुदृढहृदयग्रंथिनांसर्वसत्त्वसुहृदात्मनां
निर्वैराणांसाक्षाद्भगवताअनिमिषारिवरायुधेनाप्रमत्तेनतैस्तैर्भावैःपरिरक्ष्यमाणानांतत्पादमूलमकुतश्चि
द्भयमुपसृतानांभागवतपरमहंसानाम् ॥ २० ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेजडभरतचरितं
नामनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ ॥ ॥

त्यादि तत्राह नवाइति विमुक्तोदेहाद्यात्मभावलक्षणःसुदृढोहृदयग्रंथिर्यैः सर्वसत्वानांसुहृदःआत्मानश्चयेतेषां नचतेषांदेहाद्यभिमानसद्भा
वेऽपिमरणादिभयमस्तीत्याह साक्षाद्भगवताऽभितोरक्ष्यमाणानां केन अनिमिषःकालःसएवअरिचक्रंतेनवरायुधेनतैस्तैर्भावैश्चअंतर्यामितया
प्रवर्त्यमानैर्भद्रकाल्यादिरूपैः नकुतश्चिदपिभयंयस्मिन् भागवतानांभगवदुपासकानांपरमहंसानां ॥ २० ॥ इतिपंचमस्कंधेटीकायां
नवमोऽध्यायः ॥ ९ ॥ ॥ ॥

दशमेक्षिपताराज्ञाशिबिकांस्वांवहन्मुनिः ॥ स्वदुर्वादानुवादेनाविज्ञायाशुप्रसादितः ॥ १ ॥ एवंभूताविकारित्वमज्ञसर्वज्ञयोःसमं ॥ इति
सर्वज्ञतासिद्ध्यैरहूगणकथेरणं ॥ २ ॥ रहूगणोनामसिंधुसौवीरदेशयोःराजातत्त्वजिज्ञासुःकपिलाश्रमंयदागच्छातिस्मतदायद्वृत्तंतदाह
अथेति इक्षुमत्यानद्यास्तीरे तेषांशिबिकावाहानांकुलस्यनाथेनएषगौरिवखरइव चभारंवोढुंसमर्थइतिधियापूर्वंयेके वनविष्टयाबलाद्गृहीता
स्तैः सहप्रसभंबलात्गृहीतःसन्अतदर्होऽपिसमहानुभावःशिबिकामुवाहेत्यन्वयः ॥ १ ॥ हिंसापरिहारार्थमिषुमात्रप्रदेशावलोकस्या

श्रीशुकउवाच अथसिंधुसौवीरपतेरहूगणस्यव्रजतइक्षुमत्यास्तटेतत्कुलपतिनाशिबिकावाहपुरुषान्वेषण
समयेदैवेनोपसादितःसद्विजवरउपलब्धएषपीवायुवासंहननांगोगोखरवद्धुरंवोढुमलमितिपूर्वविष्टिगृही
तैःसहगृहीतःप्रसभमतदर्हउवाहशिबिकांसहमहानुभावः ॥१॥ यदाहिद्विजवरस्येषुमात्रावलोकानुगतेर्न
समाहितापुरुषगतिस्तदाविषमगतांशिबिकांरहूगणउपधार्यपुरुषानधिवहतआहहेवोढारःसाध्वतिक्रमत
किमितिविषममुह्यतेयानमिति ॥ २ ॥ अथतईश्वरवचःसोपालंभमुकपाकर्ण्योपायतुरीयाच्छंकितमनसस्तं
विज्ञापयांबभूवुः ॥ ३ ॥ नवयंनरदेवप्रमत्ताभवन्नियमानुपथाःसाध्वेववहामःअयमधुनैवनियुक्तोऽपिनद्रुतं
व्रजतिनानेनसहवोढुमुहवयंपारयामइति ॥ ४ ॥ सांसर्गिकोदोषएवनूनमेकस्यापिसर्वेषांसांसर्गिकाणांभ
वितुमर्हतीतिनिश्चित्यनिशम्यकृपणवचोराजारहूगणउपासितवृद्धोऽपिनिसर्गेणबलात्कृतईषदुत्थितमन्यु
रविस्पष्टब्रह्मतेजसंजातवेदसमिवरजसावृतमतिराह ॥ ५ ॥ ॥ ॥ ॥

नुपश्चाद्यागतिस्तस्याहेतुभूतायाःपुरुषाणांगतिर्नसम्यगाहिताएकरूपानाभूत् ॥ २ ॥ सोपालंभंसाक्षेपं सामदानभेददंडेषुउपायेषुचतुर्था
च्छंकिताचित्ताः ॥ ३ ॥ भवन्नियमानुपथाःत्वदाज्ञानुवर्तिनः नपारयामःनशक्नुमः ॥ ४ ॥ कृपणानांवचोनिशम्य सांसर्गिकःसंसर्गनि
मित्तः एकस्यापिदोषःसर्वेषामेवभवितुमर्हतीतिनिश्चित्यरहूगणआहेत्यन्वयः कथंभूतः उपासितावृद्धायेनसोऽपिस्वभावेनबलात्परवशः
कृतःसन् कथंभूतंप्रत्याह नस्पष्टंब्रह्मतेजोयस्मिन्भस्मनाच्छन्नमाग्निमिवास्थितम् ॥ ५ ॥ ॥ ॥

भ्रातरितिसंबोधनमाक्षेपाभिप्रायं व्यक्तंनिश्चितमुरुअधिकंपरिश्रांतोऽसीत्यादीनिविपरीतार्थानिषड्वाक्यानि ऊहिवान्प्रापितवान् तत्रापिसु
चिरं जरसा चवृद्धत्वेन संघट्टिनःसहचराः बहुयथाभवत्येवंविप्रलब्धोऽपित्रकोक्त्याउपहसितोऽपितूष्णीमुवाहेत्यन्वयः तूष्णींभावेहेतुः अवि
द्ययारचिताद्रव्यादयोयस्मिन् स्वचरमकलेवरेनाध्यारोपितोमिथ्याप्रत्ययोयेनतत्रद्रव्याणिमहाभूतानिगुणाइंद्रियाणिकर्माणिपुण्यपापानि
आशयोंऽतःकरणं यतःब्रह्मभूतः ॥ ६ ॥ मामनादृत्यभर्तुःस्वामिनोममशासनमाज्ञामतिक्रामसि चिकित्सांशास्तिं दंडपाणिर्यमोयथाजनस

अहोकष्टंभ्रातर्व्यक्तमुरुपरिश्रांतोदीर्घमध्वानमेकएवऊहिवान्सुचिरंनातिपीवानसंहननांगोरजसाचोपद्रु
तोभवान्सखेनोएवापरएतेसंघट्टिनइतिबहुविप्रलब्धोऽप्यविद्ययाविहितद्रव्यगुणकर्माशयस्वचरमकले
वरेऽवस्तुनिसंस्थानविशेषेऽहंममेत्यनध्यारोपितमिथ्याप्रत्ययोब्रह्मभूतस्तूष्णींशिबिकांपूर्ववदुवाह ॥ ६ ॥
अथपुनःस्वशिबिकायांविषमगतायांप्रकुपितउवाचरहूगणः किमिदमरेत्वंजीवन्मृतोमांकदर्थीकृत्यभर्तृशा
सनमतिचरसिप्रमत्तस्यचतेकरोमिचिकित्सांदंडपाणिरिवजनतायायथाप्रकृतिंस्वांभजिष्यसइति ॥ ७ ॥
एवंबह्वबद्धमपिभाषमाणंनरदेवाभिमानंरजसातमसाऽनुविद्धेनमदेनतिरस्कृताशेषभगवत्प्रियनिकेतंपंडि
तमानिनंसभगवान्ब्राह्मणोब्रह्मभूतःसर्वभूतसुहृदात्मायोगेश्वरचर्यायामतिव्युत्पन्नमतिःस्मयमानइववि
गतस्मयइदमाह ॥ ८ ॥ ॥ ॥ ॥ ॥

मूहस्यशास्तिंकरोति यथास्वांप्रकृतिमप्रमत्ततां ॥ ७ ॥ अबद्धमनन्वितं नरदेवोऽहमित्यभिमानोयस्यतं अनुविद्धेनसंगुणितेनतिरस्कृतः अशे
षःसंपूर्णोभगवतःप्रियोनिकेतआश्रयोयेनतं यद्वाऽशेषाणांभगवत्प्रियाणांनिकेतः सर्वेषांभूतानांसुहृच्चआत्माच योगेश्वराणांचर्याजडादि
वत्आचरणंतस्यांचात्यंतंव्युत्पन्नापरिचितामतिर्यस्यसतं स्मयमानःहसन्निवेतिमुखप्रसत्तिर्द्योत्यते विगतस्मयःगतगर्वः ॥ ८ ॥

तत्रवक्रोक्त्याय दुक्तंत्वंनश्रांतःनचदीर्घमध्वानमागतइतितत्रोत्तरमाह त्वयायदुदितमुक्तंश्रमादिनास्तीतितद्व्यक्तंस्फुटंतत्तथैवअविप्रलब्धं
विप्रलंभोनभवतितदेवाह हेवीरयदिभारोनामकश्चित्स्यात्सचभर्तुर्वोढुर्देहस्ययदिस्यात्सचमेयदिप्रसक्तःस्यात्तर्हीदानींभाराभावाद्विप्रलंभः
स्यान्नत्वेतदस्ति भारस्यवोढुश्चानिरूप्यत्वान्ममचतत्संबंधाभावात् तथागंतुरधिगम्यंप्राप्यमध्वावायादिस्यात् अद्धेतिपाठेसाक्षात्परमार्थतः
तत्रमेयदिस्यादित्यादियोज्यं यत्त्वयोक्तंनातिपीवेतितत्राह चेतनमुद्दिश्यत्वंपीवेतिप्रवादोविदांविदुषांनभवतिकिंतुमूर्खाणां यतोऽयंप्रवादो
राशौभूतसंघेदेहेएवनत्वात्मनि देहएवपीनोनाहमित्यर्थः ॥९॥ एतत्प्रपंचयति स्थौल्यमिति कलिःकलहःअहंकारेणमदश्चदेहेनसहतदभि
मानेनजातस्यहिभवंतिममतुनिरभिमानस्यनसंति यद्वा देहेजातेयोजातस्तस्यैवतानिममतुतत्रनजातस्यनसंति ॥ १० ॥ यच्चोक्तंजीवन्मृतोऽ
सीतितत्राप्याह जीवन्मृतत्वंनकेवलंममकिंतुविकृतस्यसर्वपरिणामिनोदृष्टं यद्यस्माद्विकृतंप्रतिक्षणमाद्यंतवत् यदुक्तंभर्तृशासनमतिचरसीति

**ब्राह्मणउवाच त्वयोदितंव्यक्तमविप्रलब्धंभर्तुःसमेस्याद्यदिवीरभारः॥ गंतुर्यदिस्यादधिगम्यमध्वापीवेति राशौनविदांप्रवादः॥९॥ स्थौल्यंकार्श्यंव्याधयआधयश्चक्षुत्तृट्भयंकालिरिच्छाजराच॥निद्रारतिर्मन्युरहंमदःशुचोदेहेनजातस्यहिमेनसंति॥१०॥ जीवन्मृतत्वंनियमेनराजन्नाद्यंतवद्यद्विकृतस्यदृष्टं॥ स्वस्वाम्यभावो ध्रुवईडचयत्रतर्ह्युच्यतेऽसौविधिकृत्ययोगः ॥ ११॥ विशेषबुद्धेर्विवरंमनाक्चपश्यामियन्नव्यवहारतोऽन्यत् ॥ कईश्वरस्तत्रकिमीशितव्यंतथापिराजन्करवामकिंते ॥ १२ ॥ उन्मत्तमत्तजडवत्स्वसंस्थांगतस्यमेवीरचिकित्सितेन ॥ अर्थःकियान्भवताशिक्षितेनस्तब्धप्रमत्तस्यचपिष्टपेषः ॥ १३ ॥**

तत्राह स्वंचस्वाम्यंचतयोर्भावःसत्ता हेईडच यत्रपक्षेध्रुवःयदिव्यवस्थितःस्यादित्यर्थः तर्हिविधिर्नियोगःकृत्यंकर्मतयोर्योगोध्रुवउच्यते
उचितोभवति उचसमवायेइतिधातुः यदितुतवराज्यभ्रंशोममचराज्यंस्यात्तदासर्वमेतद्विपरीतंस्यादित्यर्थः ॥ ११ ॥ ननुयावद्राजाऽहंता
वत्तवस्वामीभवाम्येवेतिचेत्तत्राह विशेषोराजभृत्यादिभेदस्तंबुद्धेर्विवरमवकाशंव्यवहारादन्यन्नपश्यामिमनाक्ईषदपि अथापितवा यम
भिमानश्चेत्तर्हिब्रूहिकिंतेकरवामेति ॥ १२ ॥ यत्तूक्तंप्रमत्तस्यतेचिकित्सांकरोमियथास्वांप्रकृतिंभजिष्यसइतितत्राह उन्मत्तादिवद्वर्तमान
स्यवस्तुतःस्वसंस्थांब्रह्मभावंगतस्यभवताकृतेनचिकित्सितेनदंडेनशिक्षितेनवाकियानर्थः मुक्तस्यार्थानर्थयोरसंभवात् यदिपुनरहंनमुक्तः
किंतुप्रमत्तःस्तब्धएवतथाऽपिममशिक्षादिकंपिष्टपेषणवद्व्यर्थमित्यर्थः नहिजडस्वभावःशिक्षयाऽपिपटूकर्तुंशक्यतइति ॥ १३ ॥

अनुवादरूपयापरिभाषयाभाषणेनतंप्रत्युत्तरंदत्वाउपरतमनात्म्येदेहात्मत्वेनिमित्तमविद्यायस्य आरब्धफलंकर्मक्षपयन् ॥ १४ ॥ हेपांड वेयसम्यक्श्रद्धातयैवतत्त्वजिज्ञासायांप्राप्तोऽधिकारोयेन यथादर्शपूर्णमासाधिकृतस्यैवगोदोहनेनपशुकामस्यापःप्रणयेदितिगुणफलसं बंधेऽप्यधिकारः एवंसात्विकश्रद्धायामधिकृतस्यैवास्यामधिकारइत्यर्थः बहुयोगग्रंथसंमतंद्विजस्यतद्वचःश्रुत्वाविगतोनृपदेवोऽधिराजइति गर्वोयस्य ॥ १५ ॥ द्विजानांमध्येकतमः यतःसूत्रमुपवीतंबिभर्षि यद्वा दत्तात्रेयादीनांमध्येकतमोऽवधूतःइहापिकस्माद्धेतोःप्राप्तःनोऽ

श्रीशुकउवाच एतावदनुवादपरिभाषयाप्रत्युदीर्यमुनिवरउपशमशीलउपरतानात्म्यनिमित्तउपभोगे नकर्मारब्धंव्यपनयन्राजयानमपितथोवाह ॥ १४ ॥ सचापिपांडवेयसिंधुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक्श्रद्धयाऽधिकृताधिकारस्तत्हृदयग्रंथिमोचनंद्विजवचआश्रुत्यबहुयोगग्रंथसंमतंत्वरयाऽवरुह्यशि रसापादमूलमुपसृतःक्षमापयन्विगतनृपदेवस्मयउवाच ॥ १५ ॥ कस्त्वंनिगूढश्चरसिद्विजानांबिभर्षिसू त्रंकतमोऽवधूतः ॥ कस्यासिकुत्रत्यइहापिकस्मात्क्षेमायनश्चेदसिनोतशुक्लः ॥ १६ ॥ नाहंविशंकेसुर राजवज्रान्नत्र्यक्षशूलान्नयमस्यदंडात् ॥ नाग्न्यर्कसोमानिलवित्तपास्त्राच्छंकेभृशंब्रह्मकुलावमानात् ॥ १७ ॥ तद्ब्रूह्यसंगोजडवन्निगूढविज्ञानवीर्योविचरस्यपारः ॥ वचांसियोगग्रथितानिसाधोननःक्षमंतेमनसाऽपिभे त्तुं ॥ १८ ॥ अहंचयोगेश्वरमात्मतत्त्वविदांमुनीनांपरमंगुरुंवै ॥ प्रष्टुंप्रवृत्तःकिमिहारणंतत्साक्षाद्धरिं ज्ञानकलावतीर्णं ॥ १९ ॥ ॥ ॥ ॥ ॥

स्माकंक्षेमायचेत्प्राप्तःतर्हिशुक्लःकपिलोमुनिर्नभवासिकिं उतोतिवितर्के ॥ १६ ॥ किमनया वैतयाशिबिकांतात्रद्दहामीति चेदेतआह नाह मिति वित्तपःकुबेरः ॥ १७ ॥ यस्मात्भृशंशंकेतस्मात्कस्त्वामित्यादिप्रश्नानामुत्तरंब्रूहि निगूढंपिहितंविज्ञानरूपंवीर्यंप्रभावोयेन अपारः अनंतमाहिमा तत्रहेतुः नोमनसाऽपिभेत्तुंनक्षमंनशक्यं किंभेत्तुमित्यपेक्षायामाह तेवचांसीति यद्वा मनसायुक्ताःसूक्ष्मदृष्टयोऽपिभेत्तुंनशक्नुवं तीत्यर्थः ॥ १८ ॥ स्वस्यज्ञानार्थितांदर्शयति अहंचेति इहसंसारे यत्अरणंशरणंतत्किमितिप्रष्टुंप्रवृत्तोऽस्मि ज्ञानशक्त्याऽवतीर्णंकपिलं ॥ १९ ॥

सएवभवान्किंस्विदेवंविचरति गृहाविष्टःकथंविचक्षीतपश्येत् ॥ २० ॥ एवंतत्स्वरूपंपृष्ट्वातदुक्तोत्तराण्याक्षिपाति तत्रयदुक्तंममश्रमो ना
स्तीतितत्राह दृष्टइति आत्मनोमेअनुमन्येअनुमिमे अनुमानंचैवं भवान्भारवाहनादिनाश्रांतःकर्तृत्वात् यःकर्तासश्राम्यति यथाऽहंयुद्धा
दिकर्ताइति नन्विदंव्यवहारमात्रंनतुसत्यं तदुक्तंव्यवहारतोऽन्यन्नपश्यामीति तत्राह यथेति व्यवहारमार्गःप्रपंचःसमूलःसप्रमाणकएवदृ
ष्टः यथायथावत् असताघटादिनाउदकानयनादेरभावात् एवंप्रयोगःप्रपंचःसत्यःअर्थक्रियाकारित्वात् यःपुनरसत्यः नासावर्थक्रिया
कारी यथामिथ्याघटादिरिति ॥ २१ ॥ यदुक्तमुपाधिधर्माःस्थौल्यादयोमेनवस्तुतःसंतीति तत्रऔपाधिकत्वेऽपिसत्यत्वंकिंनस्यादित्याह

सवैभवाँल्लोकनिरीक्षणार्थमव्यक्तलिंगोविचरत्यपिस्वित् ॥ योगेश्वराणांगतिमंधबुद्धिःकथंविचक्षीतगृहा
नुबंधः ॥ २० ॥ दृष्टःश्रमःकर्मतआत्मनोमेभर्तुर्गंतुर्भवतश्चानुमन्ये ॥ यथाऽसतोदानयनाद्यभावात्समूल
दृष्टोव्यवहारमार्गः ॥ २१ ॥ स्थाल्यग्नितापात्पयसोऽभितापस्तत्तापतस्तंडुलगर्भरंधिः ॥ देहेंद्रियास्वा
शयसन्निकर्षात्तत्संसृतिःपुरुषस्यानुरोधात् ॥ २२ ॥ शास्ताऽभिगोप्तानृपतिःप्रजानांयःकिंकरोवैनपिन
ष्टिपिष्टम् ॥ स्वधर्ममाराधनमच्युतस्ययदीहमानोनिजहात्यघौघम् ॥ २३ ॥ ॥

स्थाल्याअग्निनातापात्तन्मध्यवर्तिनःक्षीरस्यतापः तस्यतापात्तंडुलानांबहिर्भागस्यततस्तद्गर्भस्यचरंधिःपाकः नचात्रकिंचिन्मिथ्या एवंदे
हादिभिःसन्निकर्षात्संबंधात्तन्निमित्तासंसृतिः पुरुषस्यभवति असवःप्राणाःआशयोमनः अनुरोधादुपाधिधर्मानुवृत्तेन तथाहि निदाघा
दिनादेहेतप्तेइंद्रियाणांतापः ततःप्राणस्यततोमनसइत्येवंयथायथमूह्यं ॥ २२ ॥ यदुक्तंस्वस्वाम्यभावोऽध्रुवइतितत्राह शास्तेति अध्रुवत्वे
ऽपियदायोनृपतिः सप्रजानांशास्तागोप्ताच यच्चोक्तंस्तब्धादेःशिक्षापिष्टपेषइतितत्राह योऽच्युतस्यकिंकरःसपिष्टंनपिनष्टिनिष्फलंनकरो
ति स्तब्धत्वाद्यनपगमेऽपिशास्तुरीश्वराज्ञासंपादनेनैवसफलत्वात्तदाह स्वधर्मरूपमच्युतस्याराधनंकुर्वन्यस्मादघौघंनिजहाति ॥ २३ ॥

यस्मादेवंममत्वदुक्तंविपरीतंप्रतिभाति तत्तस्मात् नरदेवाभिमानमदेनतुच्छीकृताःतिरस्कृताःसत्तमाभवादृशायेनतस्यमेमैत्रीदृशंस्नेहयुक्तांदृ ष्टिंकृषीष्टकरोतु सतामवज्ञारूपंपापंयथातरिष्यामि ॥ २४ ॥ ननुममावज्ञाकृतविकाराभावात्कुतःपापंतत्राह नेति यद्यपितवविक्रियाना स्ति विश्वस्यसुहृत्त्वात्सौसखाचतस्य अतःसर्वत्रसाम्येनस्वदेहेविगताभिमानस्य तथाऽपिमहतामवमानान्मादृशोविनंक्ष्यति अदूरात्क्षिप्रं शूलपाणिरिवातिसमर्थोऽपीत्यर्थः ॥ २५ ॥ इतिपंचमेटीकायांदशमोऽध्यायः ॥ १० ॥ ॥ ॥ एकादशेतुसंपृष्टोरहूगणमही भृता ॥ उपादिशत्परंज्ञानंसयोगीतिनिगद्यते ॥ १ ॥ अकोविदःअविद्वानपित्वंकोविदानांवादाउद्ग्राहणिकास्तत्तुल्यान्वादानेववदसि अथोअतःअत्यंतंविदुषांमध्येश्रेष्ठोनभवसि कुतः हियस्मात् यंस्वामिभृत्यादिलौकिकव्यवहारंत्वंसत्यमात्थ एतंसूरयस्तत्त्वाविचारेणसहन

**तन्मेभवान्नरदेवाभिमानमदेनतुच्छीकृतसत्तमस्य ॥ कृषीष्टमैत्रीदृशमार्तबंधोयथातरेसदवध्यानमंहः ॥ ॥ २४ ॥ नविक्रियाविश्वसुहृत्सखस्यसाम्येनवीताभिमतेस्तवापि ॥ महद्विमानात्स्वकृताद्धिमादृङ्नंक्ष्यत्य दूरादपिशूलपाणिः ॥ २५ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेदशमोऽध्यायः ॥ १० ॥ ॥**

**ब्राह्मणउवाच अकोविदःकोविदवादवादान्वदस्यथोनातिविदांवरिष्ठः ॥ नसूरयोहिव्यवहारमेतंतत्त्वा वमर्शेनसहामनंति ॥ १ ॥ तथैवराजन्नुरुगार्हमेधवितानविद्योरुविजृंभितेषु ॥ नवेदवादेषुहितत्त्ववादः प्रायेणशुद्धोनुचकास्तिसाधुः ॥ २ ॥ नतस्यतत्त्वग्रहणायसाक्षाद्वरीयसीरपिवाचःसमासन् ॥ स्वप्ननि रुक्त्यागृहमेधिसौख्यंनयस्यहेयानुमितंस्वयंस्यात् ॥ ३ ॥ ॥ ॥**

वदंतिकिंत्वविचारसुंदरंवदंति अतोनसत्यः ॥ १ ॥ वैदिकोऽपिकर्मव्यवहारोनसत्यइत्याह तथैवेति उरवोगार्हागृहसंबंधिनोमेधायज्ञा स्तेषांवितानोविस्तारःतद्विषयासुविद्यासुउरुअधिकंविजृंभितेषुविलसितेषुवेदवादेषुतत्त्ववादःनुनिश्चितंनचकास्तिनप्रकाशते तथाचश्रुतिः नेहनानास्तिकिंचनेत्यादि शुद्धोहिंसादिशून्यःसाधुःरागादिशून्यश्च प्रायेणेति ईश्वरार्पितकर्मणांपरमार्थफलत्वाभिप्रायेणोक्तं ॥ २ ॥ न नुश्रुतवेदांतस्यापिपुंसःकर्मसुप्रवृत्तेःकथमसत्यता तत्राह नेति साक्षाद्यथावत्तत्त्वज्ञानायवरीयस्योऽपिवेदांतवाचस्तस्यनसम्यगासन्बभूवुः स्वप्नेयानिरुक्तिस्तयास्वप्नदृष्टांतेनदृश्यत्वादिहेतुनास्वयमेवहेयत्वेनानुमितंयस्यनस्यात् ॥ ३ ॥ ॥ ॥

एवंप्रपंचस्यसत्यत्वंतदुक्तंनिराकृत्यसंसारस्यापितदुक्तांसत्यतांनिराकर्तुंतस्यमनोनिमित्ततामाह यावदित्यादिनायावत्समाप्ति मनोय।वद्रज आदिभिर्गुणैरनुरुद्धंवशीकृतंभवतितावत्तन्मनोनिरंकुशंसत्पुरुषस्यकुशलंधर्ममितरमधर्मंवाआतनोतिकैः चेतोभिःज्ञानेंद्रियैः आकूतिभिः कर्मेंद्रियैश्च: ॥ ४ ॥ ततश्चधर्माधर्मवासनायुक्तंतदेवानेकदेहादिवैचित्र्यंकरोतीत्याह सइति पुंस्त्वमात्मशब्दविशेषणत्वेन तन्मनइत्यर्थः वासनायुक्तआत्मोपाधित्वादात्मा अतोविषयैरुपरक्तोऽनुबिद्धः अतोगुणप्रवाहःगुणैरितस्ततश्चाल्यमानः अतएवविकृतःकामादिपारिणामवान् षोडशात्माषोडशकलासुभूतेंद्रियरूपासुमुख्यः पृथक्नामभिःसहपृथक्रूपभेदंदेवतिर्यगादिरूपंबिभ्रत् अंतर्बहिष्ट्वमुत्कृष्टत्वंनिकृष्टत्वंचपुरैस्तैरेवदेहैःहेतुभूतैस्तनोति नामभिरित्यत्ररेफलोपेदीर्घाभावआर्षः ॥ ५ ॥ फलंचतदनुरूपंकरोतीत्याह दुःखंसुखंव्यतिरिक्तंचमो

यावन्मनोरजसापूरुषस्यसत्वेनवातमसावाऽनुरुद्धं ॥ चेतोभिराकूतिभिरातनोतिनिरंकुशंकुशलंचेतरंवा ॥ ॥ ४ ॥ सवासनात्माविषयोपरक्तोगुणप्रवाहोविकृतःषोडशात्मा ॥ बिभ्रत्पृथङ्नामभिरूपभेदमंतर्बहिष्ट्वंचपुरैस्तनोति ॥ ५ ॥ दुःखंसुखंव्यतिरिक्तंचतीव्रंकालोपपन्नंफलमाव्यनक्ति ॥ आलिंग्यमायारचितांतरात्मास्वदेहिनंसृंतिचक्रकूटः ॥ ६ ॥ तावानयंव्यवहारःसदाविःक्षेत्रज्ञसाक्ष्योभवतिस्थूलसूक्ष्मः ॥ तस्मान्मनोलिंगमदोवदंतिगुणागुणत्वस्यपरावरस्य ॥ ७ ॥ गुणानुरक्तंव्यसनायजंतोःक्षेमायनैर्गुण्यमथोमनःस्यात् ॥ यथाप्रदीपोघृतवर्तिमश्नन्शिखाःसधूमाभजतिह्यन्यदास्वं ॥ ८ ॥

हंतीव्रंदुर्निवारंकालप्राप्तंफलंसर्वतोभिव्यनक्तिसृजाति ननुजडःकथंसृजातितत्राह स्वदेहिनमालिंग्य आलिंगनेकारणमाह मायारचितः अंतरात्माजीवोपाधिः उपाधितामाह संसृतिचक्रेकूटयतिछलयतीतितथा यथाग्रामकूटकइति ॥ ६ ॥ एवमयंमनोनिबंधःसंसारोजविफलतीत्याह तावानिति आविःप्रकाशमानः सदाक्षेत्रज्ञस्यसाक्ष्यःदृश्योभवति स्थूलसूक्ष्मःजाग्रत्स्वप्नस्वरूपः मनसःसंसारहेतुत्वमुपसंहरन्मोक्षस्यापितदेवकारणमित्याह तस्मादिति अदोमनः लिंगंकारणं गुणत्वंगुणाभिमानत्वंतद्राहित्यंतदेवपरमवरंचतस्य ॥ ७ ॥ कथमेकमेवविलक्षणयोःकारणमवस्थाभेदादित्याह गुणेति नैर्गुण्यंनिर्गुणं अथोइतिकार्त्स्न्येन दृष्टांतेनस्फुटयति यथेति अन्यदातुघृतक्षये स्वंपदंशुक्लंभास्वररूपंमहाभूतात्मत्वंवा ॥ ८ ॥ ॥ ॥ ॥

अन्यत्रअन्यदा वृत्तीर्दर्शयति एकादशवृत्तयःआसन् आकूतयःक्रियाकाराःपंच धियश्वज्ञानाकाराःपंचअभिमानश्चेति ॥ ९ ॥ हेवीर भूमीःविषयान् विषयानेवाह गंधादयःपंचज्ञानेंद्रियद्वाराधीवृत्तीनांविषयाः आकृतिःरूपं श्रवःशब्दः विसर्गादयःपंचकर्मेंद्रियद्वाराकर्माकारवृत्तीनांविषयाः रतिःसंभोगः अर्तिर्गतिः ॥ १० ॥ पुरस्याभिमानविषयत्वप्रकारमाह एकादशंपुरं स्वीक्रियतइतिस्वीकरणं अयमर्थः शरीरमभिमानस्यनज्ञेयतयागंधादिवद्विषयः नापिकार्यतयाविसर्गादिवत् किंतुममेतिभोगायतनत्वेस्वीकार्यतयाविषयइति एकेतुविवेकिनामेवपुरंममत्वाभिमानविषयःनतुमूढानामतोमूढदृष्ट्याअहमहंकारंद्वादशंवृत्त्यंतरमाहुः तस्यचपुरमेवशय्यासंज्ञंद्वादशंविषयमाहुः तत्रहिजीवोऽहंकारेणशेते यतःपुरिशयनात्पुरुषइत्युच्यते तासांवृत्तीनामवांतरभेदैरानंत्यमाह द्रव्याणिविषयाः स्वभावःपरिणामहेतुः आ

पदंतथागुणकर्मानुबद्धंवृत्तीर्मनःश्रयतेऽन्यत्रतत्त्वं ॥ एकादशासन्मनसोहिवृत्तयआकूतयःपंचधियोऽभिमानः ॥ ९ ॥ मात्राणिकर्माणिपुरंचतासांवदंतिहैकादशवीरभूमीः ॥ गंधाकृतिःस्पर्शरसश्रवांसिविसर्गरत्यर्त्यभिजल्पशिल्पाः ॥ १० ॥ एकादशंस्वीकरणंममेतिशय्यामहंद्वादशमेकआहुः ॥ द्रव्यस्वभावाशयकर्मकालैरेकादशामीमनसोविकाराः ॥ सहस्रशःशतशःकोटिशश्चक्षेत्रज्ञतोनमिथोनस्वतःस्युः ॥ ११ ॥ क्षेत्रज्ञएतामनसोविभूतीर्जीवस्यमायारचितस्यनित्याः ॥ आविर्हिताःक्वापितिरोहिताश्चशुद्धोविचष्टेह्यविशुद्धकर्तुः ॥ १२ ॥

शयःसंस्कारः कर्मअदृष्टं कालःक्षोभकः तैर्निमित्तभूतैः प्रथमंशतशःततःसहस्रशःततःकोटिशःस्युःनतुमिथःस्युः नचस्वतः किंतु क्षेत्रज्ञतःपरमेश्वरात् तस्यचानंतशक्तित्वात् अनंताःस्युरित्यर्थः यद्वातासांमिथ्यात्वमनेनोच्यते कोटिशोभवंत्यतस्ताःक्षेत्रज्ञतएवस्युः तस्सत्तयैवसत्तांलभेरन्नतुमिथोनचस्वतइति यद्वा क्षेत्रज्ञोजीवस्तस्मान्नस्युः तस्याविकारित्वात् नमिथःइतरेतराश्रयत्वापत्तेःनस्वतः आत्माश्रयत्वापत्तेःअतोमिथ्याभूताएव ॥ ११ ॥ तदेवंश्लोकत्रयेणगुणकर्मानुरुद्धंमनोवृत्तीः श्रयतइतियदुक्तंतत्प्रपंचितं अन्यदातत्त्वंश्रयतइति यदुक्तंतदेवतत्त्वमाह क्षेत्रज्ञइति जीवस्यजीवोपाधेःअविशुद्धकर्तुर्मनसः नित्याःप्रवाहरूपेणाविच्छिन्नाः जाग्रत्स्वप्नयोराविर्भूताःपश्यति क्वापिसुषुप्तौतिरोभूताःपश्यति अवस्थात्रयसाक्षी क्षेत्रज्ञआत्मतत्त्वमित्यर्थः ॥ १२ ॥ ॥ ॥ ॥

क्षेत्रज्ञोद्विविधःत्वंपदार्थोजीवः तत्पदार्थईश्वरश्च तत्राद्योनिरूपितःइदानींतत्प्राप्यमीश्वरंनिरूपयाति क्षेत्रज्ञआत्माव्यापीपुराणोजगत्का
रणभूतः पुरुषः साक्षादपरोक्षः सचस्वयंज्योतिः नतुज्ञानस्यविषयत्वेनाश्रयत्वेनवापरोक्षः अजःजन्मादिशून्यः परेषांब्रह्मादीना
मपिईशः नारंजीवसमूहःसअयनंयस्यनियंतुः भगवानैश्वर्यादिषड्गुणवान् वासुदेवःसर्वभूतानामाश्रयः स्वाधीनयामाययाआत्मनिजी
वेअवधीयमानःअवस्थाप्यमानः कर्मकर्तरिप्रयोगः तन्नियंतृत्वेनवर्तमानइत्यर्थः ॥ १३ ॥ एतत्सदृष्टांतमाह यथेति आत्मस्वरूपेणप्राण
रूपेणईशोनियमयति इदंविश्वं ॥ १४ ॥ तदेवमात्मनःशुद्धत्वंसंसारस्यचमिथ्यात्वंप्रदर्श्येदानींतन्निवृत्तिमाह तनुभृद्देहीवयुनोदयेनज्ञा
नोत्पत्त्यायावन्मायांविधूयात्मतत्त्वंनवेदतावदिहभ्रमति ॥ १५ ॥ यावच्चविषयानुरक्तंमनएवानर्थहेतुरितिनवेदतावन्निर्वेदाभावात्परिभ्रमत्ये

क्षेत्रज्ञआत्मापुरुषःपुराणःसाक्षात्स्वयंज्योतिरजःपरेशः ॥ नारायणोभगवान्वासुदेवः स्वमाययात्मन्यव
धीयमानः ॥ १३ ॥ यथाऽनिलःस्थावरजंगमानामात्मस्वरूपेणनिविष्टईशेत् ॥ एवंपरोभगवान्वासुदेवः
क्षेत्रज्ञआत्मेदमनुप्रविष्टः ॥ १४ ॥ नयावदेतांतनुभृन्नरेंद्रविधूयमायांवयुनोदयेन ॥ विमुक्तसंगोजितषट्स
पत्नोवेदात्मतत्त्वंभ्रमतीहतावत् ॥ १५ ॥ नयावदेतन्मनआत्मलिंगंसंसारतापावपनंजनस्य ॥ यच्छोक
मोहामयरागलोभवैरानुबंधंममतांविधत्ते ॥ १६ ॥ भ्रातृव्यमेनंतददभ्रवीर्यमुपेक्षयाऽध्येधितमप्रमत्तः ॥
गुरोर्हरेश्चरणोपासनास्त्रोजहिव्यलीकंस्वयमात्ममोषं ॥ १७ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधे
रहूगणसंवादेएकादशोऽध्यायः ॥ ११ ॥ ॥ रहूगणउवाच नमोनमःकारणविग्रहायस्वरूपतुच्छी
कृतविग्रहाय ॥ नमोऽवधूतद्विजबंधुलिंगनिगूढनित्यानुभवायतुभ्यं ॥ १ ॥ ॥ ॥

वेत्याह नेति आत्मनोलिंगमुपाधिभूतंमनःसंसारतापानामावपनंक्षेत्रंयावन्नवेदतावद्भ्रमतीत्यनुषंगः तापावपनत्वेहेतुः यन्मनःशोकाद्यनु
बंधंममतांचविधत्ते ॥ १६ ॥ तत्तस्मात्भ्रातृव्यंशत्रुंअध्येधितंसंप्रवृद्धंस्वयंव्यलीकंमिथ्याभूतंतथाप्यात्मानंमुष्णातीतितथातंगुरुरेवहरि
स्तस्यचरणोपासनमेवास्त्रंयस्यतथाभूतःसन्जहिघातय ॥ १७ ॥ इतिपंचमस्कंधेटीकायामेकादशोऽध्यायः ॥ ११ ॥ ॥ द्वादशे
पुनरापृष्टःसंदेहेनमहीभृता ॥ सयोगीसर्वसंदेहानपानुददितीर्यते ॥ १ ॥ कारणमीश्वरःतस्यैवलोकसंरक्षणार्थोविग्रहोयस्य स्वरूपेण
परमानंदप्रकाशेनतुच्छीकृतोविग्रहोयेन हेअवधूतयोगेश्वर द्विजबंधोर्लिंगेनवेषेणानिगूढोनित्यानुभवोयेनतस्मैनमः ॥ १ ॥

विशेषतः प्रष्टुंतद्वाक्यमभिनंदति ज्वरएवामयोरोगस्तेनार्तस्ययथासत्स्वादुअगदमौषधं यथाचनिदाघेनदग्धस्यसंततस्यहिमांभःशीतल
मुदकंगंगोदकंवा तथाहेब्रह्मन्कुत्सितेदेहेयोमानः अहंकारःसएवाहिःतेनविशेषेणदष्टाद्दृष्टिर्विवेकलक्षणायस्यतस्यमेतवेदंवचःअमृततुल्य
मौषधं ॥ २ ॥ ममसंशयविषयमर्थंपश्चात्प्रवक्ष्यामि अधुनातावत्त्वदुक्तंवचःअध्यात्मयोगेनग्रथितंदुर्बोधंसुबोधंयथाभवतिएवंव्याख्याहि
कौतूहलयुक्तंचेतोयस्यतस्यमम ॥ ३ ॥ त्वयोदितंव्यक्तमविप्रलब्धमित्यादिनाभारवाहनादिक्रियाचतत्फलंचश्रमादिप्रत्यक्षादिभिर्दृश्यमानं
सत्अबाधितमपिव्यवहारमात्रमूलं यद्वासतःअबाधितव्यवहारस्यमूलंकारणमपिनह्यंजसातत्त्वविमर्शनायक्षममितिभवान्यदाह अमुष्मि

ज्वरामयार्तस्ययथागदंसन्निदाघदग्धस्ययथाहिमांभः ॥ कुदेहमानाहिविदष्टदृष्टेर्ब्रह्मन्वचस्तेऽमृतमौषधंमे
॥ २ ॥ तस्माद्भवंतंममसंशयार्थंप्रक्ष्यामिपश्चादधुनासुबोधं ॥ अध्यात्मयोगग्रथितंतवोक्तमाख्याहिकौतूह
लचेतसोमे ॥ ३ ॥ यदाहयोगेश्वरदृश्यमानंक्रियाफलंसद्व्यवहारमूलं ॥ नह्यंजसातत्त्वविमर्शनायभवानमु
ष्मिन्भ्रमतेमनोमे ॥ ४ ॥ ब्राह्मणउवाच अयंजनोनामचलन्पृथिव्यांयःपार्थिवःपार्थिवकस्यहेतोः ॥ तस्या
पिचांघ्र्योरधिगुल्फजंघाजानूरुमध्योरशिरोधरांसाः ॥ ५ ॥ अंसेऽधिदार्वीशिबिकाचयस्यांसौवीरराजेत्य
पदेशआस्ते ॥ यस्मिन्भवान्रूढनिजाभिमानोराजाऽस्मिसिंधुष्वितिदुर्मदांधः ॥ ६ ॥ शोच्यानिमांस्त्वमधि
कष्टदीनान्विष्ट्यानिगृण्हन्निरनुग्रहोऽसि ॥ जनस्यगोप्ताऽस्मिविकत्थमानोनशोभसेवृद्धसभासुधृष्टः ॥ ७ ॥

न्नर्थेममममनोभ्रमति ॥ ४ ॥ अबाधितत्वमसिद्धमित्याह हेपार्थिव यःपार्थिवोविकारःसएवकस्यहेतोः कस्माच्चित्कारणात्पृथिव्यांचलन्न
यंभारवाहकादिर्जनोनामप्रसिद्धः यस्तुनचलतिसपाषाणादिरित्येतावानेवभेदः तस्यचजडत्वान्नभारःश्रमश्च किंचभवेदेवंयदिश्रमस्या
श्रयोनिरूप्येतनत्वेतदस्ति अवयवव्यतिरेकेणश्रमास्पदस्यावयविनोऽनिरूपणादित्याशयेनाह तस्यापिपृथ्वीकारस्यापि अंघ्र्योःआधिउ
पर्युपरिगुल्फादयः उरसः सलोपआर्षः ॥ ५ ॥ शिबिकायामप्यवयवीनास्तित्वव्यापिनास्तितदाह सौवीरराजेत्यपदेशोनाममात्रंयस्यस
पार्थिवोविकारआस्ते राजेतिसंधिरार्षः यस्मिन्भवान्निरूढात्माभिमानः सिंधुषुराजाऽस्मीतिदुर्मदेनांधःसन् ॥ ६ ॥ शोच्यान्विष्ट्यानि
गृण्हन्निष्कृपोवर्तसेऽतोमिथ्यैवगोप्ताऽस्मीतिश्लाघमानोमहतांसभासुनशोभसे यतोधृष्टः ॥ ७ ॥ ॥

नचोतरोत्तरावयवभारःपूर्वपूर्वावयवानांभवेदितिवाच्यं तेषामप्यनिरूपणादित्याशयेनाह यदेति निष्ठांनाशंप्रभवमुत्पत्तिंविदामः तत्तदा क्षितेरन्यस्यविकारस्याभावात्नाममात्रादन्यत्व्यवहारस्यमूलंकारणमर्थक्रिययासदित्यनुमेयंनिरूप्यतां तथाचश्रुतिः वाचारंभणंविकारोना मधेयंमृत्तिकेत्येवसत्यमिति ॥ ८ ॥ तर्हिक्षितेःसत्यतास्यात्तत्राह एवंक्षितिशब्दस्यापिवृत्तंवर्तनमर्थंविनैवनिरुक्तं यद्वाक्षितिशब्दस्यवृत्तंयास्मिन् तदपिमिथ्यात्वेननिरुक्तमित्यर्थः कुतः असत्सुसूक्ष्मेषुपरमाणुषुस्वकारणभूतेषुनिधानात्लयात् अतःपरमाणुव्यतिरेकेणाक्षितिर्नास्तीत्यर्थः प रमाणवस्तर्हिसत्याःस्युस्तत्राहतेमनसाकार्यानुपपत्त्यावादिभिःकल्पिताःकल्पनाबीजमाह येषांसमूहेनविशेषःकृतस्तेषांसमूहःपृथ्वीबुध्या लंबनमित्यर्थः अवयविनोनिरस्तत्वात्समूहग्रहणं तथापिसत्याःस्युःन अविद्ययाप्रपंचस्यभगवन्मायाविलसितत्वादज्ञानेनकल्पिताः ॥९॥

**यदाक्षितावेवचराचरस्यविदामनिष्ठांप्रभवंचनित्यं ॥ तन्नामतोऽन्यद्व्यवहारमूलंनिरूप्यतांसत्क्रिययाऽनुमे यं ॥ ८ ॥ एवंनिरुक्तंक्षितिशब्दवृत्तमसन्निधानात्परमाणवोये ॥ अविद्ययामनसाकल्पितास्तेयेषांसमू हेनकृतोविशेषः ॥ ९ ॥ एवंकृशंस्थूलमणुर्बृहद्यदसच्चसज्जीवमजीवमन्यत् ॥ द्रव्यस्वभावाशयकालकर्म नाम्नाऽजयावेहिकृतंद्वितीयं ॥ १० ॥ ज्ञानंविशुद्धंपरमार्थमेकमनंतरंत्वबहिर्ब्रह्मसत्यं ॥ प्रत्यक्प्रशांतंभ गवच्छब्दसंज्ञंयद्वासुदेवंकवयोवदंति ॥ ११ ॥ रहूगणैतत्तपसानयातिनचेज्ययानिर्वपणाद्गृहाद्वा ॥ न च्छंदसानैवजलाग्निसूर्यैर्विनामहत्पादरजोऽभिषेकं ॥ १२ ॥ ॥ ॥**

एवमन्यदपिकृशत्वादिधर्मकंबुध्याप्रतीतंद्वितीयंद्वैतंद्रव्यादिनाम्नाउपलक्षितयाऽजयामाययाकृतमवेहि तत्रकृशंह्रस्वं स्थूलंतत्प्रतियोगि अणुबृहतोःपृथगुपादानात् असत्कारणं सत्कार्यं जीवंचेतनमजीवंजडं ॥ १० ॥ तर्हिकिंसत्यंतदाहज्ञानंसत्यं व्यावहारिकसत्यत्वंव्यावर्त यति परमार्थं वृत्तिज्ञानव्यवच्छेदार्थानिषट्विशेषणानि विशुद्धं तत्त्वाविद्यकं एकं तत्तुनानारूपं अनंतरंत्वबहिःबाह्याभ्यंतरशून्यं तत्तुवि परीतं ब्रह्मपरिपूर्णं तत्तुपरिच्छिन्नं प्रत्यक् तत्तुविषयाकारं प्रशांतंनिर्विकारं तदेवस्वरूपज्ञानंसत्यमित्युक्तं कीदृशंतत् ऐश्वर्यादिषड्गुण त्वेनभगवच्छब्दःसंज्ञायस्य यच्चज्ञानंवासुदेवंवदंति ॥११॥ एतत्प्राप्तिस्तुमहत्सेवांविनानभवतीत्याह हेरहूगण एतत्ज्ञानंतपसापुरुषोनयाति इज्ययावैदिककर्मणा निर्वपणात्अन्नादिसंविभागेन गृहाद्वातन्निमित्तपरोपकारेण छंदसावेदाभ्यासनेन जलाग्न्यादिभिरुपासितैः ॥१२॥

महत्सेवायास्तत्प्राप्त्युपायतामाह यत्रयेषुमहत्सु ग्राम्यकथानांविघातोयस्मात् ॥ १३ ॥ विषयसंगस्तुयोगभ्रंशकइतित्वदन्करस्त्वंनिगूढश्चरसी
तिप्रश्नस्योत्तरमाह अहमितिद्वाभ्यां विमुक्तोदृष्टश्रुताभ्यांसंगनिमित्तोबंधोयेन हतोऽर्थः प्रयोजनंयस्य ॥ १४ ॥ श्रीकृष्णार्चनंभ्रष्टमप्युद्धरतीतिया
ह सेति जनसंगात्वविशंकमानः अविवृतः अप्रकटः ॥ १५ ॥ असंगैर्महद्भिर्यः सुसंगस्तेनजातंज्ञानमेवासिः खड्गस्तेनच्छिन्नमोहः सन् अध्वनः
संसारमार्गस्यअतिशयितंश्रेष्ठंपारंहरिंयाति यद्वापारमतिआतिक्रम्यहरिंयाति अतिरतिक्रमणेचेतिकर्मप्रवचनीयत्वाद्द्वितीया तस्यहरेरीहानांक
थनस्मृतिभ्यांलब्धास्मृतिर्येनसः ॥ १६ ॥ इतिपंचमेटीकायांद्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशेविरक्तायवृथातत्त्वानिरूपणं ॥ इतिवैराग्यदा

यत्रोत्तमश्लोकगुणानुवादः प्रस्तूयतेग्राम्यकथाविघातः ॥ निषेव्यमाणोऽनुदिनंमुमुक्षोर्मतिंसतींयच्छतिवा
सुदेवे ॥ १३ ॥ अहंपुराभरतोनामराजाविमुक्तदृष्टश्रुतसंगबंधः ॥ आराधनंभगवतईहमानोमृगोऽभवंमृ
गसंगाद्धतार्थः ॥ १४ ॥ सामांस्मृतिर्मृगदेहेऽपिवीरकृष्णार्चनप्रभवानोजहाति ॥ अथोअहंजनसंगादसंगो
विशंकमानोऽविवृतश्चरामि ॥ १५ ॥ तस्मान्नरोऽसंगसुसंगजातज्ञानासिनेहैवविवृक्णमोहः ॥ हरिंतदीहा
कथनस्मृतिभ्यांलब्धस्मृतिर्यात्यतिपारमध्वनः ॥ १६ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेब्राह्मणरहू
गणसंवादेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ ब्राह्मणउवाच दुरत्ययेऽध्वन्यजयानिवेशितोरजस्तमःसत्व
विभक्तकर्मदृक् ॥ सएषसाऽर्थोर्थपरः परिभ्रमन्भवाटवींयातिनशर्मविंदति ॥ १ ॥ यस्यामिमेषण्नरदेव
दस्यवः सार्थंविलुंपंतिकुनायकंबलात् ॥ गोमायवोयत्रहरंतिसार्थिकंप्रमत्तमाविश्ययथोरणंवृकाः ॥ २ ॥

र्थायभवाटव्युपवर्ण्यते ॥ १ ॥ अध्वनः पारमित्युक्तमेवाध्वानंप्रसिद्धमार्गरूपकेणवैराग्यायप्रपंचयति दुरत्ययेदुस्तरेअध्वनिप्रवृत्तिमा
र्गेरजस्तमःसत्वैर्विभक्तानिकर्माणिकार्यतयापश्यतीतितथा सएषप्रसिद्धः सार्थोजीवसमूहः अर्थपरः सुखार्थः सन् यथावणिक्सार्थोऽर्थार्ज
नायगच्छन्नटवींयातितद्वत् ॥ १ ॥ अस्याध्यायस्यव्याख्यानरूपउत्तराध्यायोऽस्तितथापिसुखप्रतिपत्तयेकिंचित्किंचिद्व्याख्यायते ॥ य
स्यांभवाटव्यामिमेइंद्रियनामानः षट्दस्यवः चोराः कुत्सितोनायकः सारथिर्बुद्धिर्यस्यतंसार्थंविलुंपंति तस्यधर्म्यंधनमुपभोगेनमुष्णंतीत्यर्थः
गोमायवः सृगालतुल्यादारापत्यादयः त्वंमेभर्तापितेत्येवंप्रविश्य प्रमत्तंसार्थिकंसार्थेस्थितंहरंतिइतस्ततआकर्षंति उरणंमेषं ॥ २ ॥

वीरुधोलताः तृणानिचगुल्मानिचलतादिजालानि प्रभूतैरेतैर्गह्वरेदुष्प्रवेशेक्षेत्रेकठोरैस्तीव्रैर्दंशैर्मक्षिकाविशेषैर्मशकैश्चयथाकश्चिदुपद्रुतोभवति एवंकामकर्मादिभिर्गह्वरेगृहाश्रमेवर्तमानोदुर्जनैरुपद्रुतोभवतीत्यर्थः गंधर्वपुरवदघटमानमेवदेहादिकंप्रकर्षेणसत्यमेवेदमितिपश्यति क्वचित्क्वचित्क्वापिक्वापिआशुरयःअतिवेगउल्मुकाकारोग्रहःपिशाचस्तत्तुल्यंसुवर्णमुपादेयत्वेनप्रपश्यतीत्यर्थः ॥ ३ ॥ निवासादिष्वात्मास्वभावोयस्याःसाबुद्धिर्यस्यसःततस्ततोधावतीत्युभयत्रतावानेवार्थः वात्याचक्रवातस्तस्यामुत्थितःपांसुस्तेनधूम्रादिशः रजस्वलैरजोभ्याप्ते अक्षिणीयस्यसयथानजानाति तथावात्येवभ्रमयतीयास्त्रीतस्यामुद्भूतैरागादिभिरप्रकाशमानादिक्देवताःकर्मसाक्षिभूतानजानातीत्यर्थः ॥ ४ ॥ अदृश्यानांझिल्लीनांभृंगारिकासंज्ञानांकीटविशेषाणांस्वनैःकर्णयोःशूलोव्यथायस्य उलूकाघूकास्तेषांवाग्भिर्व्यथितोऽन्तरात्मा

**प्रभूतवीरुत्तृणगुल्मगह्वरेकठोरदंशैर्मशकैरुपद्रुतः ॥क्वचित्तुगंधर्वपुरंप्रपश्यतिक्वचित्क्वचिच्चाशुरयोल्मुकग्रहं॥३॥ निवासतोयद्रविणात्मबुद्धिस्ततस्ततोधावतिभोअटव्यां ॥ क्वचिच्चवात्योत्थितपांसुधूम्रादिशोनजानातिरजस्वलाक्षः॥४॥अदृश्यझिल्लीस्वनकर्णशूलउलूकवाग्भिर्व्यथितांतरात्मा॥अपुण्यवृक्षाञ्छ्रयतेक्षुधाऽर्दितोमरीचितोयान्यभिधावतिक्वचित् ॥५॥क्वचिद्वितोयाःसरितोऽभियातिपरस्परंचालषतेनिरंधः॥आसाद्यदावंक्वचिदग्नितप्तोनिर्विद्यतेक्वचयक्षैर्हृतासुः ॥ ६ ॥ शूरैर्हृतस्वःक्वचनिर्विण्णचेताःशोचन्विमुह्यन्नुपयातिकश्मलं ॥ क्वचिच्चगंधर्वपुरंप्रविष्टःप्रमोदतेनिर्वृतवन्मुहूर्तं ॥ ७ ॥ चलन्क्वचित्कंटकशर्कराङ्घ्रिर्नगारुरुक्षुर्विमनाइवास्ते ॥ पदेपदेऽभ्यंतरवन्हिनाऽर्दितःकौटुंबिकःक्रुध्यतिवैजनाय ॥ ८ ॥**

नोयस्य अत्रचपरोक्षमप्रियवक्तारोझिल्लीतुल्याः प्रत्यक्षमप्रियवक्तारोघूकतुल्याः येषांछायापिपापहेतुस्तेअपुण्यवृक्षाः तत्तुल्यानधार्मिकान्सेवते मरीचितोयानीतिनिष्फलत्वेनापिविषयान् ॥ ५ ॥ वितोयासुसरित्सुपतितस्यगात्रभंगात्सद्योदुःखंभवतिनचोदकलाभः तद्वदिहचपरत्रचदुःखदान्पाखंडानभियाति आलषतेदायादादिभ्योऽन्नादिवांछति उभयत्रापिसएवार्थः दावंदावाग्नितुल्यंदुःखदंगृहंप्राप्यशोकाग्निनातप्तोनिर्विद्यतेविषीदति तत्रचयक्षराक्षसतुल्यैराजभिर्हृतमसुवत्प्रेष्ठंधनंयस्यसानिर्विद्यते ॥ ६ ॥ अन्यैश्चशूरैर्हृतंस्वंवित्तंयस्य निर्विण्णंविषण्णंचेतोयस्य कश्मलंमूर्छां गंधर्वपुरमिवमनोरथोपगतपितृपुत्रादिसमाजंप्रविष्टःसन् ॥ ७ ॥ कंटकादिविद्धांघ्रिरिवाविघ्नैरभिभूतःसन्नगतुल्यंमहत्कर्मारोढुंकर्तुमिच्छुर्विमनाइवआस्ते पदेपदेक्षणेक्षणे अभ्यंतरेणवन्हिनाजाठरेण ॥ ८ ॥

अजगराहिनानिद्रारूपेणगिलितोनवेत्ति विपिनेत्यक्तःशवइवदंदशूकैर्हिंस्रैर्दुर्जनैर्दष्टःपीडितः अंधोलुप्तविवेकः अंधकूपेमोहेपतितः तमिस्रेदुःखेशेतेलीयते ॥ ९ ॥ क्षुद्ररसान्परयोषादीन्विचिन्वन्गवेषयंस्तन्माक्षिकाभिर्योषादिस्वामिभिःविमानःअवज्ञातःताडितःसन्व्यथितोभवति यदिकथंचित्तत्रातिक्लेशेनप्रतिलब्धमानः प्राप्तयोषादिर्भवतितदाबलादन्येऽपहरंतितान्यदाऽभियुंक्तेतदाततोऽप्यन्येहरंति ॥ ॥ १० ॥ यत्किंचित्अत्यल्पकमपिमिथोव्यवहरन् क्रियादिनागृह्णन् वित्तशाठ्यात्धनवंचनात् ॥ ११ ॥ शय्यादिहीनः आस्यतेऽस्मिन्नित्यासनंकंबलादि स्थीयतेऽत्रेतिस्थानंगृहं विहरंत्यनेनेतिविहारोयानादि याचमानोऽपियदापरस्मादप्राप्तकामस्तदापरकीयेवस्तुनिदृष्टि

क्वचिन्निगीर्णोऽजगराहिनाजनोनावैतिकिंचिद्विपिनेऽपविद्धः॥दष्टःस्मशेतेक्वचदंदशूकैरंधोंऽधकूपेपतितस्तमिस्रे॥९॥कर्हिस्मचित्क्षुद्ररसान्विचिन्वंस्तन्माक्षिकाभिर्व्यथितोविमानः॥तत्रातिकृच्छ्रंप्रतिलब्धमानोबलाद्विलुंपंत्यथतंततोऽन्ये॥१०॥क्वचिच्चशीतातपवातवर्षप्रतिक्रियांकुर्तुमनीशआस्ते॥क्वचिन्मिथोविपणन्यच्चकिंचिद्विद्वेषमृच्छत्युतवित्तशाठ्यात् ॥११॥ क्वचित्क्वचित्क्षीणधनस्तुतस्मिन्शय्यासनस्थानविहारहीनः॥याचन्परादप्रतिलब्धकामःपारक्यदृष्टिर्लभतेऽवमानं॥१२॥ अन्योन्यवित्तव्यतिषंगवृद्धवैरानुबंधोविवहन्मिथश्च॥अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन्विपन्नः॥१३॥तांस्तान्विपन्नान्सहितत्रतत्रविहायजातंपरिगृह्यसार्थः॥आवर्ततेद्यापिनकश्चिदत्रवीराध्वनःपारमुपैतियोगं॥१४॥मनस्विनोनिर्जितदिग्गजेंद्राममेतिसर्वेभुविबद्धवैराः॥मृधेशयीरन्नतुतद्व्रजंतियन्न्यस्तदंडोगतवैरोऽभियाति ॥ १५ ॥

रभिलाषोयस्यसोऽवमानंप्राप्नोति ॥ १२ ॥ एवमन्योऽन्यंवित्तव्यतिषंगेणधनविनिमयेनविवृद्धोवैरानुबंधोयस्यतथाविधोपिपरस्परंविहरन्विवाहादिसंबंधंकुर्वन्नुरुभिःकृच्छ्रैःश्रमैर्वित्तबाधैरुपसर्गैश्चद्वेषादिभिर्विपन्नोमृतप्रायोभवति ॥ १४ ॥ दुरत्ययत्वमध्वनोदर्शयति तांस्तान्विपन्नान्मृतान्विहायजातंजातंपरिगृह्यविहरन्यतःप्रस्थितस्तंप्रतिनावर्तते हेवीरअध्वनःपारंयोयोगस्तंचनोपैति अत्रसार्थे कश्चिदतिसमर्थोऽपि ॥ १४ ॥ तदेवाह मनस्विनःशूराः निर्जितादिग्गजेंद्रायैः ममेयंभूर्ममेयमितिभुविनिमित्तभूतायांबद्धंवैरंयैः न्यस्तदंडःसंन्यासीयद्विष्णोःपदमभियातितत्तुनव्रजंति ॥ १५ ॥ ॥ ॥ ॥

सिंहावलोकनेनपुनर्भवाटवीमेवानुवर्तयति प्रसज्जातिआसक्तिंकरोति कीदृशः लतानांभुजाःशाखास्तद्वत्सुकुमारायेस्त्रीणांभुजास्तदाश्रयः सन् तदाश्रयाअव्यक्तपदाअस्फुटाक्षराःकलभाषिणोयेद्विजाःपक्षिणस्ततुल्येषुस्त्रीसंगप्रसक्तेष्वासक्तेषुस्पृहायस्यतादृशोभूत्वाहरिचक्रंसिंह समूहस्ततुल्यात्कालचक्रनिमित्ताज्जन्ममरणादेस्त्रसन्तत्परिहारायकैश्चित्प्रलोभितोबकादिवद्वंचकैःक्षुद्रैःक्रूरैश्चपाखंडैःसहसख्यंकरोतिते षुप्रविशति ॥ १६ ॥ तैर्वंचितस्तत्रफलाभावंज्ञात्वाहंसानांब्राह्मणानांकुलंपुनःप्रविशन् तेषांशीलंप्रायश्चित्तपूर्वकंपुनरुपनयनाद्याचार मरोचयन्अप्रियंपश्यन्वानरतुल्यान्भ्रष्टाचारान्शूद्रप्रायानुपैति तज्जातिरासेनवानरजातिक्रीडयास्त्रियामिथुनीभूयपरस्परमुखेक्षणेनवि

**प्रसज्जतिक्वापिलताभुजाश्रयस्तदाश्रयाव्यक्तपदद्विजस्पृहः ॥ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्सख्यंविधत्ते बककंकगृध्रैः ॥ १६ ॥ तैर्वंचितोहंसकुलंसमाविशन्नरोचयञ्छीलमुपैतिवानरान् ॥ तज्जातिरासेनसुनि र्वृतेंद्रियःपरस्परोद्वीक्षणविस्मृतावधिः ॥१७॥ द्रुमेषुरंस्यन्सुतदारवत्सलोव्यवायदीनोविवशःस्वबंधने ॥ क्वचित्प्रमादाद्गिरिकंदरेपतन्वल्लींगृहीत्वागजभीतआस्थितः ॥ १८ ॥ अतःकथंचित्सविमुक्तआपदःपुन श्वसार्थंप्रविशत्यरिंदम ॥ अध्वन्यमुष्मिन्नजयानिवेशितोभ्रमज्जनोऽद्यापिनवेदकश्चन ॥ १९ ॥ रहूगण त्वमपिह्यध्वनोऽस्यसंन्यस्तदंडःकृतभूतमैत्रः ॥ असज्जितात्माहरिसेवयाशितज्ञानासिमादायतरातिपा रं ॥ २० ॥ राजोवाच अहोनृजन्माखिलजन्मशोभनंकिंजन्मभिस्त्वपरैरप्यमुष्मिन् ॥ नयद्धृषीकेश यशःकृतात्मनांमहात्मनांवःप्रचुरःसमागमः ॥ २१ ॥ ॥ ॥**

स्मृतोजीवितावधिर्येन ॥ १७ ॥ द्रुमवत्केवलदृष्टार्थेषुगृहेषु व्यवायदीनःसुरतेच्छयाकृपणः एवंस्वस्ययद्बंधनंप्राप्तंतस्मिन्विवशःपरिहर्तुं मशक्तः पाठांतरेतुवनेसंसारेचरन्नित्यर्थः गिरिकंदरवदतिभयानकेरोगादिदुःखेपतन्कंदरस्थगजतुल्यान्मृत्योर्भीतःसन्वल्लीतुल्यंप्राचीनं कर्मावलंब्यावास्थितोभवति ॥ १८ ॥ सार्थंप्रविशतियथापूर्वंप्रवृत्तिमार्गेरमते ॥ १९ ॥ त्वमपिअध्वनिनिवेशितइत्यनुषंगःअतोऽस्याध्व नःपारमतितर असज्जितात्माविषयेष्वनभिनिवेशितचित्तःसन् हरिसेवयाशितंतीक्ष्णीकृतं ॥ २० ॥ अखिलजन्मसुशोभनंनृजन्मैव नप रंश्रेष्ठंयेभ्योदेवादिजन्मभ्यस्तैरपिकिममुष्मिन्स्वर्गेऽपिजन्मभिःकिंनकिंचित् यत्येषुजन्मसुयत्रस्वर्गेवा वोमहात्मनांसमागमःप्रचुरोनभ वति हृषीकेशस्ययशसाकृतःशोधितआत्मायैस्तेषां ॥ २१ ॥

संततमुपासितैः त्वत्पदाब्जरेणुभिर्हतमंहोयस्यतस्याधोक्षजेनिर्मलाभक्तिर्भवतीतिनैवाद्भुतं यस्यतवमुहूर्तमात्रभवात्समागममात्रादपिदुस्तर्केणबद्धमूलोऽपिममअविवेकोनष्टः ॥ २२ ॥ ब्रह्मविदः केनरूपेणविचरंतीत्यज्ञानात्सर्वान्नमस्यति नमइति येबटवः क्रीडारतत्वादश्रद्धेयचैरेयास्तानप्यभिव्याप्यसर्वेभ्योनमइत्यर्थः स्वदृष्टांतेनराज्ञांमहदवज्ञांसंभाव्याह राज्ञांशिवमस्त्विति ॥ २३ ॥ उत्तरामातायस्यहेउत्तरामातः विगणयतः नगणयतः अवमंतर्यपिपरमकरुणाकरत्वेनसिंधुपतयेआत्मतत्त्वमुपादिश्य निभृताः शांताः करणानामूर्मयोयस्मिन्सआशयोयस्य ॥ २४ ॥ सुजनात्तस्मात्सम्यगवगतंपरमात्मसतत्त्वंयेनतथाभूतः सन् तदानीमेवदेहेआत्ममतिंचाविससर्ज हेनृपभगवदाश्रितो

नह्यद्भुतंत्वच्चरणाब्जरेणुभिर्हतांहसोभक्तिरधोक्षजेऽमला ॥ मौहूर्तिकाद्यस्यसमागमाच्चमेदुस्तर्कमूलोऽपहतोऽविवेकः ॥ २२ ॥ नमोमहद्भ्योस्तुनमः शिशुभ्योनमोयुवभ्योनमआबटुभ्यः ॥ येब्राह्मणागामवधूतलिंगाश्चरंतितेभ्यः शिवमस्तुराज्ञां ॥ २३ ॥ श्रीशुकउवाच इत्येवमुत्तरामातः सवैब्रह्मर्षिसुतः सिंधुपतयआत्मसतत्त्वंविगणयतः परानुभावः परमकारुणिकतयोपदिश्यरहूगणेनसकरुणमभिवंदितचरणआपूर्णार्णवइवनिभृतकरणोर्म्याशयोधरणिमिमांविचचार ॥ २४ ॥ सौवीरपतिरपिसुजनसमवगतपरमात्मसतत्त्वआत्मन्यविद्याऽध्यारोपितांदेहात्ममतिंविससर्जएवंहिनृपभगवदाश्रिताश्रितानुभावः॥२५॥ राजोवाच योहवाइहबहुविदामहाभागवतत्वयाऽभिहितः पारोक्ष्येणवचसाजीवलोकभवाध्वासह्यार्यमनीषिकयाकल्पितविषयोनांजसाऽव्युत्पन्नलोकसमधिगमः अथतदेवैतद्दुरवगमंसमवेतानुकल्पेननिर्दिश्यतामिति ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥

भरतस्तदाश्रितोरहूगणोयस्तस्यानुभावः सद्योदेहाहंकारत्यागः ॥ २५ ॥ पारोक्ष्येणवणिक्सार्थकरूपकेण आर्याणांविवेकिनांमनीषयैवदस्युस्थानीयानींद्रियाणि गोमायुस्थानीयान्यपत्यादीनीत्येवंकल्पितविषयः अव्युत्पन्नस्यतुलोकस्यजनस्य सम्यक्अधिगमोनभवतिअथअतः तदेतदेवभवाध्वरूपंसमवेतानुकल्पेनप्रस्तुतेतत्तदनुरूपार्थोपकल्पनेन ॥ २६ ॥ इतिपंचमस्कंधेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥

चतुर्दशेभवारण्यरूपकव्याकृतिःकृता ॥ प्रस्तुतेतस्यगोमायुमशकाद्यर्थकल्पनं ॥ १ ॥ यःपरीक्षितापृष्टःसःश्रीशुकउवाच सहेति सूतोक्तिः
दुरत्ययेऽध्वन्यजयानिवेशितइतियदुक्तंतदेवनिवेशनप्रकारकथनेनप्रपंचयति यएषप्रसिद्धोजीवलोकःअयंविष्णोर्मायया अतुग मेऽध्वन्या
पतितोभवाटवींगतःसन्हरिरूपस्यगुरोश्चरणारविंदेयेमधुकराःसेवकास्तेषामनुपदवींतैरनुष्ठितंभक्तिमार्गमद्यापिनावरुंधेनसंप्राप्नो तीत्यन्वयः
मायायाःस्वकार्यद्वारेणसंसारमार्गपातहेतुत्वमाह देहात्ममानिनांसत्वादिगुणविशेषैर्विकल्पितानिविभक्तानियानिकुशलाकुश लविमिश्र
कर्माणितैर्विनिर्मिताभिर्विविधदेहावलीभिर्वियोगसंयोगादिर्योऽनादिःसंसारस्तदनुभवस्यद्वारभूतेनतस्मिन्संसाररूपेदुर्गमार्गवदसु गमेऽध्व

सहोवाच यएषदेहात्ममानिनांसत्वादिगुणविशेषविकल्पितकुशलाकुशलसमवहारविनिर्मिताविविधदे
हावलिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्यद्वारभूतेनषडिंद्रियवर्गेणतस्मिन्दुर्गाध्ववदसुगमेऽध्वन्या
पतितईश्वरस्यभगवतोविष्णोर्वशवर्तिन्यामाययाजीवलोकोऽयंयथावणिक्सार्थोऽर्थपरःस्वदेहनिष्पादित
कर्मानुभवःश्मशानवदशिवतमायांसंसाराटव्यांगतोनाद्यापिविफलबहुप्रतियोगेहस्तत्तापोपशमनींहरिगु
रुचरणारविंदमधुकरानुपदवीमवरुंधे ॥ यस्यामुहवाएतेषडिंद्रियनामानःकर्मणादस्यवएवते ॥ १ ॥ तद्य
थापुरुषस्यधनंयत्किंचित्साक्षाद्धर्मौपयिकंबहुकृच्छ्राधिगतंसाक्षात्परमपुरुषाराधनलक्षणोयोऽसौधर्मस्तं
तुसांपरायउदाहरंति॥तद्धर्म्यंधनंदर्शनस्पर्शनश्रवणास्वादनावघ्राणसंकल्पव्यवसायगृहग्राम्योपभोगेन
कुनाथस्याजितात्मनोयथासार्थस्यतथाऽजितात्मनोविलुंपंति ॥ २॥ अथचयत्रकौटुंबिकादारापत्यादयोना
म्नाकर्मणावृकसृगालाएवअनिच्छतोऽपिकदर्यस्यकुटुंबिनउरणकवत्संरक्ष्यमाणंमिषतोऽपहरंति ॥ ३ ॥

न्यापतितोयथावणिजांसार्थःसमूहःअर्थार्जनपरः स्वदेहनिष्पादितानांकर्मणांफलद्वारेणानुभवोयस्य विफलाश्चबहुप्रतियोगाः बहुविघ्ना
श्चईहाश्चेष्टायस्यसः तस्यांसंसाराटव्यांयेतापास्तेषामुपशमनींनाशनीं यस्यामित्यादिव्याचष्टे यस्यांभवाटव्यां ॥ १ ॥ दस्युतुल्यंतेषांक
र्मदर्शयति तद्यथेति धर्मौपयिकंधर्मकारणं तमेवस्वाभिप्रेतंधर्ममाह साक्षादिति तंतुसांपरायेपरलोकार्थमुदाहरंति तद्धर्म्यंधर्मार्हंधनम्
दर्शनाद्याःपंचज्ञानेंद्रियाणांवृत्तयः संकल्पव्यवसायावंतःकरणस्य एतैर्गृहेयोग्राम्यउपभोगस्तेनकुनाथस्यकुबुद्धेरजितात्मनोविलुंपंति
यथाचोराः कुपालकस्यानवहितात्मनः सार्थस्यधनंहरंतितद्वत् ॥ २ ॥ गोमायवोयत्रेत्येतद्व्याचष्टे अथचेत्यर्थांतरोपन्यासे कर्मणातेतुवृ
काःसृगालाश्च कदर्यस्यातिलुब्धस्य ॥ ३ ॥ ॥ ॥ ॥ ॥

प्रभूतवीरुत्तृणगुल्मगह्वरमित्येतद्व्याचष्टे यथाहीति नदग्धानिबीजानियस्मिन् यद्यस्माद्योऽयमावसथआश्रमः एषकामानांकरंडः यथाक पूरभाजनेकपूरक्षयेऽपिपरिमलोनक्षीयतेएवमत्रवासनानामक्षीणत्वान्नकर्माण्युत्सीदंतीत्यर्थः ॥ ४ ॥ दंशमशकतुल्यैरपसदैर्नीचैः शलभा दिभिश्चउपरुध्यमानः पीड्यमानोबहिःप्राणोवित्तंयस्यतथाविधोऽप्यस्मिन्नध्वनिपरिभ्रमन् अविद्यादिभिरुपरक्तेनमनसागंधर्वपुरतुल्यम घटमानंनरलोकंसत्यतयामिथ्यादृष्टिरनुपश्यति ॥ ५ ॥ प्रपश्यतीतिप्रशब्दसूचितमर्थांतरंदर्शयति तत्रचगंधर्वपुरेक्वचिदातपोदकंमृगतृष्णाज लंतत्तुल्यान्विषयानुपधावतीति ॥ ६ ॥ क्वचित्क्वचिच्चाशुरयोल्मुकग्रहमित्येतद्व्याचष्टे क्वचिच्चाशेषाणांदोषाणांनिषदनंस्थानंपुरीषविशेष

यथाह्यनुवत्सरंकृष्यमाणमप्यदग्धबीजंक्षेत्रंपुनरेवावपनकालेगुल्मतृणवीरुद्भिर्गह्वरमिवभवतिएवमेवगृहा श्रमःकर्मक्षेत्रंयस्मिन्नहिकर्माण्युत्सीदंतियदयंकामकरंडएषआवसथः ॥४॥ तत्रगतोदंशमशकसमापस दैर्मनुजैःशलभशकुंततस्करमूषकादिभिरुपरुध्यमानोबहिःप्राणःक्वचित्परिवर्तमानोस्मिन्नध्वन्यविद्याकाम कर्मभिरुपरक्तमनसाऽनुपपन्नार्थंनरलोकंगंधर्वनगरमुपपन्नमितिमिथ्यादृष्टिरनुपश्यति ॥ ५ ॥ क्वचिदा तपोदकनिभान्विषयानुपधावतिपानभोजनव्यवायादिव्यसनलोलुपः ॥ ६ ॥ क्वचिच्चाशेषदोषनिषदनं पुरीषविशेषंतद्वर्णगुणनिर्मितमतिःसुवर्णमुपादित्सत्यग्निकामकातरइवोल्मुकपिशाचं ॥ ७ ॥ अथकदाचि न्निवासपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेशएतस्यांसंसाराटव्यामितस्ततःपरिधावति ॥८॥ क्वचि च्चवात्यौपम्ययाप्रमदयारोहमारोपितस्तत्कालरजसारजनीभूतइवासाधुमर्यादोरजस्वलाक्षोपिदिग्देवता अतिरजस्वलमतिर्नविजानाति ॥ ९ ॥

मग्नेर्विष्ठातस्यपुरीषस्येवलोहितोवर्णोयस्यरजोगुणस्यतेननिर्मितातद्विष यामतिर्यस्यसःसुवर्णमुपादातुमिच्छति अग्निकामेनकातरःपरवशःउल्मुकसदृशंपिशाचमिव शीतातुरोह्यरण्येऽग्निवज्ज्वाज्वल्यमानंतत स्ततोधावंतमुल्मुकपिशाचमग्निबुध्याऽनुधावतिनतुतंप्राप्नोति कथंचित्प्राप्तश्चेत्तर्हितेनभक्षितःसन्म्रियते एवंसुवर्णमनुधावन्नपीत्यर्थः ॥ ७ ॥ निवासतोयद्रविणेत्येतद्व्याचष्टे अथेति निवासादिष्वनेकेष्वात्मनःउपजीव्येषुअभिनिवेशोयस्य ॥ ८ ॥ क्वचिच्चवात्योत्थितेत्ये तद्व्याचष्टे क्वचिच्चेति आरोहमंकं तस्मिन्कालेयद्रजःरागस्तेनस्वदृष्ट्यावरकेणरजन्यांरात्रौभूताइव ह्रस्वपाठे रजनीभूतस्तमोमयइवा तीवरजसाछन्नमतिः अतएवरजोव्याप्तचक्षुरिव दिक्षुस्थितामर्यादाऽतिक्रमसाक्षिभूतादेवतानजानाति ॥ ९ ॥

अनुपादेयमेवोपादेयतयागृह्णातीतिप्रक्रमसाजात्यादुत्तरश्लोकचतुर्थपादंप्रथमंव्याचष्टे क्वचित्सकृदिति क्वचिदातपोदकनिभानित्यत्रामिथ्या
विषयेषुलंपटत्वमुक्तं निवासतोयेत्यत्रतदर्जनप्रयासउक्तः अत्रतुबाधितेष्वपिपुनःप्रवृत्तिरुच्यतेइत्यपौनरुक्त्यं स्वयमेवसकृदवगतंविषया
णांवैतथ्यंविफलत्वंयेन पराभिध्यानेनदेहाभिनिवेशेनविभ्रंशितास्मृतिर्यस्य तयैवविभ्रंशितयास्मृत्यास्मृतिभ्रंशादेवेत्यर्थः ॥ १० ॥ अदृ
श्यझिल्लीस्वनेत्येतद्व्याचष्टे क्वचिदुलूकेति अतिपरुषोरभसउत्साहस्तेनाटोपःसंभ्रमोयथाभवत्येवं रिपूणांराजकुलस्यचानिर्भर्त्सितेन आति
व्यथितंकर्णमूलंहृदयंचयस्य ॥ ११ ॥ अपुण्यवृक्षानित्येतद्व्याचष्टे सयदेति दुग्धमुपभुक्तंपूर्वंसुकृतंयेन तदाकारस्करोविषतिंदुःतरुप्रमुखाः
येऽपुण्यद्रुमास्तथाविधालताश्च विषोदपानाश्चविषकूपाः तत्तुल्यान्दृष्टादृष्टप्रयोजनशून्यधनान् ॥ १२ ॥ क्वचिद्वितोयाःसरितइत्येतद्व्या

**क्वचित्सकृदवगतविषयवैतथ्यःस्वयंपराभिध्यानेनविभ्रंशितस्मृतिस्तयैवमरीचितोयप्रायांस्तानेवाभिधा
वति ॥ १० ॥ क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपंप्रत्यक्षंपरोक्षंवारिपुराजकुलनिर्भर्त्सितेनाति
व्यथितकर्णमूलहृदयः ॥ ११ ॥ सयदादुग्धपूर्वसुकृतस्तदाकारस्करकाकतुंडाद्यपुण्यद्रुमलताविषोदपा
नवदुभयार्थशून्यद्रविणान्जीवन्मृतान्स्वयंजीवन्म्रियमाणउपधावति ॥ १२ ॥ एकदाऽसत्प्रसंगा
न्निकृतमतिर्व्युदकस्रोतःस्खलनवदुभयतोऽपिदुःखदंपाखंडमभियाति ॥ १३ ॥ यदातुपरबाधयांऽध
आत्मनेनोपनमतितदाहिपितृपुत्रबर्हिष्मतःपितृपुत्रान्वाखलुभक्षयति ॥ १४ ॥ क्वचिदासाद्यगृहंदाव
वत्प्रियार्थविधुरमसुखोदर्कशोकाग्निनादह्यमानोभृशंनिर्वेदमुपगच्छति ॥ १५ ॥ क्वचित्कालविषमितरा
जकुलरक्षसाऽपहृतप्रियतमधनासुःप्रमृतकइवविगतजीवलक्षणआस्ते ॥ १६ ॥**

चष्टे एकदाक्वचिदसतांप्रसंगान्निकृतावंचितामतिर्यस्यसः निरुदकनदीगर्तपातेयथासद्यःशिरःस्फुटतिपश्चादपितद्वेदनाऽनुवर्ततेएवमिह
परत्रचदुःखदं ॥ १३ ॥ परस्परंचालषतेनिरंधइत्येतद्व्याचष्टेयदात्विति अंधःअन्नंनोपनमतिनोपतिष्ठति पितृपुत्राणांबर्हिःकुशस्तद्वतः
पितुःपुत्राणांवाकुशादितृणमात्रमपियेषुपश्यतितान्भक्षयतिबाधतइत्यर्थः पितृपुत्रबर्हिष्ठानितितुपाठःसुगमः ॥ १४ ॥ आसाद्यदावमि
त्येतद्व्याचष्टे क्वचिदासाद्येति ॥ १५ ॥ क्वचयक्षैर्हृतासुरित्येतद्व्याचष्टे क्वचित्कालेनविषमितंप्रतिकूलतांनीतंयद्राजकुलंतदेवरक्षस्तेनअप
हृताःप्रियतमधनरूपाःअसवोयस्य विगतानिजीवलक्षणानिहर्षादीनियस्य शूरैर्हृतस्वइत्यप्यनेनैवव्याख्यातं ॥ १६ ॥

कचिच्चगंधर्वपुरंप्रविष्टइत्येतद्व्याचष्टे कदाचिन्मनोरथप्राप्तंपित्राद्यसदेवसदितिमत्वा पूर्वंगंधर्वपुरवदघटमानंदर्शनमुक्तमिदानींतन्निमित्तसु
खासक्तिरुच्यतइतिभेदः ॥ १७ ॥ चलन्कचिदित्येतद्व्याचष्टे कचिद्गृहाश्रमे याःकर्मचोदनास्तासामतिभरोऽतिविस्तारःसएवगिरिस्तमा
रुरुक्षन्तदंतंगंतुमिच्छन् ॥ १८ ॥ पदेपदेऽभ्यंतरवन्हिनेतिव्याचष्टे कचिच्चदुःसहेनेति ॥ १९ ॥ कचिन्निगीर्णइत्येतद्व्याचष्टे सएवेति
॥ २० ॥ दष्टःस्मशेतेइतिव्याचष्टे कदाचिदिति मानोगर्वएवदंष्ट्रापरपीडाकरत्वात् भग्नामानदंष्ट्रायस्य अतएवनलब्धोनिद्रायाःक्षणोऽपि
येन ॥ २१ ॥ कर्हिस्मचित्क्षुद्ररसानित्येतद्व्याचष्टे कर्हिस्मचित्काममधुलवानिति यदानिहतोभवतितदासद्यएवनिरयेपतति ॥ २२ ॥

कदाचिन्मनोरथोपगतपितृपितामहाद्यसत्सदितिस्वप्ननिर्वृतिलक्षणमनुभवति ॥१७॥ कचिद्गृहाश्रमकर्म
चोदनाऽतिभरगिरिमारुरुक्षमाणोलोकव्यसनकर्षितमनाःकंटकशर्कराक्षेत्रंप्रविशन्निवसीदति ॥ १८ ॥
कचिच्चदुःसहेनकायाभ्यंतरवह्निनागृहीतसारःस्वकुटुंबायक्रुध्यति ॥१९॥ सएवपुनर्निद्राऽजगरगृहीतोंऽधे
तमसिमग्नःशून्यारण्यइवशेतेनान्यत्किंचनवेदशवइवापविद्धः ॥ २० ॥ कदाचिद्भग्नमानदंष्ट्रोदुर्जनदंदशूकै
रलब्धनिद्राक्षणोव्यथितहृदयेनानुक्षीयमाणविज्ञानोंऽधकूपेंऽधवत्पतति ॥ २१ ॥ कर्हिस्मचित्काममधुल
वान्विचिन्वन्यदापरदारपरद्रव्याण्यवरुंधानोराज्ञास्वामिभिर्वानिहतःपतत्यपारेनिरये ॥ २२ ॥ अथचत
स्मादुभयथाऽपिहिकर्माऽस्मिन्नात्मनःसंसारावपनमुदाहरंति ॥२३॥ मुक्तस्ततोयदिबंधाद्देवदत्तउपाच्छिन
त्तितस्मादपिविष्णुमित्रइत्यनवस्थितिः ॥ २४ ॥ कचिच्चशीतवाताद्यनेकाधिदैविकभौतिकात्मीयानांद
शानांप्रतिनिवारणेअकल्पोदुरंतचिंतयाविषण्णआस्ते ॥ २५ ॥ कचिन्मिथोव्यवहरन्यत्किंचिद्धनमन्येभ्यो
वाकाकिणिकामात्रमपहरन्यत्किंचिद्वाविद्वेषमेतिवित्तशाठ्यात् ॥२६॥ प्रसंगात्प्रवृत्तस्यकर्मणःसंसारहेतुत्वंस्फुटयति
अथचेति यस्मादेवंतस्मात् अथअनंतरमेव उभयथाइहचपरत्रच अस्मिन्प्रवृत्तिमार्गे संसारस्यावपनंजन्मक्षेत्रंकर्मोदाहरंति ॥ २३ ॥ तत्रा
तिकृच्छ्रंप्रतिलब्धमानइत्येतद्व्याचष्टे मुक्तइतियदिबंधान्मुक्तोभवति तर्हिततःसकाशादन्योहरतितस्मादप्यन्यःनत्वसौभोक्तुंलभतइत्यर्थः
॥२४॥ कचिच्चशीतातपेत्येतद्व्याचष्टे कचिच्चेति शीतादयोऽनेकाअधिदैविकाद्यायादशाःदुःखावस्थास्तासां ॥२५॥ कचिन्मिथइत्येतद्व्या
चष्टे कचिन्मिथोयत्किंचिद्धनंव्यवहरन् काकिणिकामात्रंविंशतिकपर्दकमात्रं ततोपिन्यूनंवायत्किंचिदपहरन्विद्वेषमेति ॥ २६ ॥

अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैरित्युक्तानुपसर्गान्प्रपंचयति अध्वन्यमुष्मिन्निमेउरुकृच्छ्रवित्तबाधादयः तथासुखदुःखादयश्च ॥ २७ ॥ व्युत्क्रमैः पुनरुक्तैश्चनानापाठैरतः परं ॥ दुर्गमोऽपिभवाध्वाऽयंसंप्रदायेनतीर्यते ॥ १ ॥ तत्रप्रसज्जतिक्वापरियादिनासिंहावलोकन न्यायेनोक्तमर्थमपकृष्यक्रमेणव्याचष्टे क्वापिदेवमाययेति प्रस्कन्नमपगतंविवेकज्ञानंयस्य यस्याःस्त्रियाविहारगृहंक्रीडागृहंतदारंभेआकुलंहृदयंयस्य अनेनप्रसज्जतीतिव्याख्यातं तदाश्रयेत्यादिव्याचष्टे तस्याआश्रयेऽवसक्ताः संलग्नाः सुताःदुहितरश्चकलत्रंचसैवस्त्रीतेषां भाषितादिभिरपहृतंहृदयंयस्य प्रहिणोतिप्रक्षिपाति ॥ २८ ॥ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्नित्येतद्व्याचष्टे कदाचिदीश्वरस्येति परमाणु

अध्वन्यमुष्मिन्निमउपसर्गास्तथासुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्याऽवमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः ॥ २७ ॥ क्वापिदेवमाययास्त्रियाभुजलतोपगूढःप्रस्कन्नविवेकविज्ञानोयद्विहारगृहारंभाकुलहृदयस्तदाश्रयावसक्तसुतदुहितृकलत्रभाषितावलोकाविचेष्टितापहृतहृदयआत्मानमजितात्माऽपारेंऽधेतमसिप्रहिणोति ॥ २८ ॥ कदाचिदीश्वरस्यभगवतोविष्णोश्चक्रात्परमाण्वादिद्विपरार्द्धापवर्गोपलक्षणात्परिवर्तितेनवयसारंहसाहरतआब्रह्मतृणस्तंबादीनांभूतानामानिमिषतोमिषतांवित्रस्तहृदयस्तमेवेश्वरंकालचक्रनिजायुधंसाक्षाद्भगवंतंयज्ञपुरुषमनादृत्यपाखंडदेवताःकंकगृध्रबकवटप्रायाआर्यसमयपरिहृताःसांकेत्येनाभिधत्ते ॥ २९ ॥

रादिःद्विपरार्द्धःअपवर्गोऽतःतदेवोपलक्षणंयस्यतस्मात् कालोपलक्षणादितिपृथक्पदत्वेनपाठेकालस्वरूपादित्यर्थः रंहसाशीघ्रेणपरिवार्तितेनपरिभ्रमेणनवयसाबाल्यादिक्रमेणब्रह्माणमभिव्याप्यतृणस्तंबादिनिभूतानि चक्रतःसकाशाद्वित्रस्तहृदयः सन्पाखंडदेवताआभिमुख्येनधत्तइत्यन्वयः अनिमिषतःनिमेषमकुर्वतःअप्रमत्तादित्यर्थः मिषतांप्रतिकर्तुमशक्तानामित्यर्थः कर्मणिषष्ठ्यः कालचक्रंनित्यमायुधंयस्य सांकेत्येनमूलप्रमाणशून्येनपाखंडागमेन ॥ २९ ॥ ॥ ॥

तैर्वंचितइत्येतद्व्याचष्टे यदात्विति आत्मनावंचितैः उरुअधिकंवंचितःसन् तेषांब्राह्मणानांयच्छीलमुपनयनादितदरोचयञ्छूद्रवद्वर्तते निग
मोक्ताचारेअशुद्धितःस्वस्यशुध्यभावात् यस्यशूद्रस्यकेवलंमिथुनीभावःकुटुंबभरणंचव्यापारोनाग्निहोत्रादेः ॥ ३० ॥ तज्जातिरासेने
त्यादिव्याचष्टे तत्रापिनिरवरोधःप्रतिबाधरहितः स्वैरेणस्वेच्छयाक्रीडन्विस्मृतमृत्युकालःसन् ॥ ३१ ॥ द्रुमेषुरंस्यन्नित्येतद्व्याचष्टे क्वचिद्द्रु
मवदिति व्यवायक्षणःमिथुनोत्सवोभवाति ॥ ३२ ॥ क्वचित्प्रमादादित्येतद्व्याचष्टे एवमध्वनिसुखदुःखाद्यवरुंधानोगिरिकंदरप्रायेतमसिरो

यदापाखंडिभिरात्मवंचितैस्तैरुरुवंचितोब्रह्मकुलंसमावसंस्तेषांशीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठानेन
भगवतोयज्ञपुरुषस्यआराधनमेवतदरोचयञ्छूद्रकुलंभजतेनिगमाचारेशुद्धितोयस्यमिथुनीभावःकुटुंबभर
णंयथावानरजातेः ॥ ३० ॥ तत्रापिनिरवरोधःस्वैरेणविहरन्नतिकृपणबुद्धिरन्योऽन्यमुखनिरीक्षणादिना
ग्राम्यकर्मणैवविस्मृतकालावधिः ॥ ३१ ॥ क्वचिद्द्रुमवदैहिकार्थेषुरंस्यन्यथावानरःसुतदारवत्सलोव्यवा
यक्षणः ॥ ३२ ॥ एवमध्वन्यवरुंधानोमृत्युगजभयात्तमसिगिरिकंदरप्राये ॥ ३३ ॥ क्वचिच्छीतवाताद्य
नेकदैविकभौतिकात्मीयानांदुःखानांप्रतिनिवारणेअकल्पोदुरंताविषयाविषण्णआस्ते ॥ ३४ ॥ क्वचिन्मि
थोव्यवहरन्यत्किंचिद्धनमुपयातिवित्तशाठ्येन ॥ ३५ ॥ क्वचित्क्षीणधनःशय्यासनाशनाद्युपभोगविही
नोयावदप्रतिलब्धमनोरथोपगतादानेऽवसितमतिस्ततस्ततोऽवमानादीनिजनादभिलभते ॥ ३६ ॥ ए
वंवित्तव्यतिषंगविवृद्धवैरानुबंधोऽपिपूर्ववासनयामिथउद्वहत्यथापवहति ॥ ३७ ॥ ॥

गाद्यापदिपततीतिशेषः ॥ ३३ ॥ क्वचिच्छीतवातेत्यादिपूर्वस्मादधिकोक्तिःरोगाद्यापदिपतितःसन्शीतादिभिः क्लिश्यन्नास्तइत्यर्थः ॥ ३४ ॥
तदेवंसिंहावलोकनन्यायेनोक्तमर्थंयथास्थानमपकृष्यव्याख्यायक्रमस्थमनुवर्तयितुंपूर्वोक्तमेवानुवदाति क्वचिन्मिथइति वित्तशाठ्येनकदा
चिद्यत्किंचिद्धनमुपयाति ॥ ३५ ॥ क्वचित्क्वचित्क्षीणधनास्त्वितिव्याचष्टे क्वचित्क्षीणधनइति अप्रतिलब्धंयन्मनोरथेनोपगतंवांछितंत
स्यादानेस्वीकारेनिश्चितमातिःसन् ॥ ३६ ॥ अन्योऽन्यवित्तव्यतिषंगेनेत्येतद्व्याचष्टे एवंवित्तव्यतिषंगेति अपवहतित्यजति ॥ ३७ ॥

अध्वन्यमुष्मिन्नित्यादिव्याचष्टे एतस्मिन्निति आपन्नआपदंप्राप्तः विपन्नोविनष्टोवायत्रयस्तमितरस्तत्रविसृज्यनह्यमानःवहमानःसाधुवर्जि
तःसाधुव्यतिरिक्तः ॥ ३८ ॥ अनावृत्तौहेतुमाह यदिदमिति ॥ ३९ ॥ मनस्विनइत्यादिव्याचष्टे यदपीति येवैराजर्षयस्तेऽपिनावरुंधते
किंतुपरंकेवलंमृधेशयीरन् प्रसज्जतीत्यादिगिरिकंदरइत्यंतमपकृष्यव्याख्यातग्रंथमतिक्रम्यवल्लींगृहीत्वेत्यादिग्रंथंव्याचष्टे कर्मवल्लीमिति
एवमुपरिस्वर्गतोऽपिनरलोकसार्थमेवोपयाति ॥ ४० ॥ तदेवंभरतोक्तिव्याख्यायतच्चरितेसंग्रहश्लोकानाह तस्येदंकर्मश्लोकैरुपगायंति

एतस्मिन्संसाराध्वनिनानाक्लेशोपसर्गबाधितआपन्नविपन्नोयस्तमुहवावेतरस्तत्रविसृज्यजातंजातमुपा
दायशोचन्मुह्यन्बिभ्यद्विवदन्क्रंदन्संहृष्यन्गायन्नह्यमानःसाधुवर्जितोनैवावर्ततेऽद्यापियतआरभ्यए
षनरलोकसार्थोयमध्वनःपारमुपदिशंति ॥ ३८ ॥ यदिदंयोगानुशासनंनवाएतदवरुंधतेयन्न्यस्तदंडा
मुनयउपशमशीलाउपरतात्मानःसमवगच्छंति ॥ ३९ ॥ यदपिदिगिभजयिनोयज्विनोयेवैराजर्षयःकिं
तुपरंमृधेशयीरन्नस्यामेवममेयमितिकृतवैरानुबंधायांविसृज्यस्वयमुपसंहृताःकर्मवल्लीमवलंब्यततआपदः
कथंचिन्नरकाद्विमुक्तःपुनरप्येवंसंसाराध्वनिवर्तमानोनरलोकसार्थमुपयातिएवमुपरिगतोऽपि ॥ ४० ॥
तस्येदमुपगायंति ॥ आर्षभस्येहराजर्षेर्मनसाऽपिमहात्मनः ॥ नानुवर्त्माऽर्हतिनृपोमक्षिकेवगरुत्मतः ॥
॥ ४१ ॥ योदुस्त्यजान्दारसुतान्सुहृद्राज्यंहृदिस्पृशः ॥ जहौयुवैवमलवदुत्तमश्लोकलालसः ॥ ४२ ॥
योदुस्त्यजान्क्षितिसुतस्वजनार्थदारान्प्रार्थ्यांश्रियंसुरवरैःसदयावलोकां ॥ नैच्छन्नृपस्तदुचितंमहतां
मधुद्विट्सेवाऽनुरक्तमनसामभवोऽपिफल्गुः ॥ ४३ ॥ ॥ ॥ ॥

आर्षभस्यऋषभपुत्रस्यअन्योनृपःअनुवर्त्मनार्हतिवर्त्मानुगंतुंनशक्नोति ॥ ४१ ॥ तत्रहेतुमाह यइति सुहृद्राज्ययोर्द्वंद्वैक्यं योदुस्त्यजान्दा
रादीन्विष्ठामिवजहौतस्यार्षभस्येतिसंबंधः दुस्त्यजत्वेहेतुः हृदिस्पृशःमनोज्ञान् त्यागेहेतुः उत्तमश्लोकेलालसालंपटत्वंयस्य ॥ ४२ ॥ त
स्यैवंविषयत्यागोनचित्रमित्याह यएवंभूतोऽसौनृपःसक्षित्यादीन्नैच्छादितियत्तदुचितं सदयावलोकांभरतस्यदयायथाभवतिएवमवलोकोय
स्याइतिपरिजनावलोकःश्रियामुपचर्यते यतःमधुद्विषःसेवायामनुरक्तंमनोयेषांतेषांमहतामभवोमोक्षोऽपिफल्गुस्तुच्छएव ॥ ४३ ॥

तस्यसेवानुरागमेवाह यज्ञायेति यज्ञरूपायधर्मपतयेयज्ञादिफलदात्रे विधौनैपुण्यंयस्यतस्मैधर्मानुष्ठात्रे योगोऽष्टांगस्तस्मै सांख्यंज्ञानं तच्छिरःप्रधानंफलंयस्यतस्मैयोगाय प्रकृतीश्वरायमायानियंत्रे अतएवनारंजीवसमूहःसःअयनमाश्रयोयस्यसर्वजीवनियंत्रे एवंकर्म ज्ञानदेवताकांडैः प्रतिपादितायहरयेनमइतिउदारमुच्चैर्यःसम्यगुच्चारितवान् मृगत्वंमृगदेहमपिहास्यन्त्यक्ष्यन् यएवंभूतस्तस्यतदुचितमि तिवातस्यानुवर्त्मनार्हतीतिवासंबंधः ॥ ४४ ॥ भरतचरितश्रवणादिफलमाह इदमिति भागवतैःसभाजिताःअवदाताःशुद्धाःगुणाःक



यज्ञायधर्मपतयेविधिनैपुणाययोगायसांख्यशिरसेप्रकृतीश्वराय ॥ नारायणायहरयेनमइत्युदारंहास्य न्मृगत्वमपियःसमुदाजहार ॥ ४४ ॥ इदंभागवतसभाजितावदातगुणकर्मणोराजर्षेर्भरतस्यानुचरितंस्व स्त्ययनमायुष्यंधन्यंयशस्यंस्वर्ग्यापवर्ग्यंवाऽनुशृणोत्याख्यास्यतिअभिनंदतिचसर्वाएवाशिषआत्मनआ शास्तेनकांचनपरतइति ॥ ४५ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेभरतोपाख्यानेब्राह्मणरहूगणसं वादेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ श्रीशुकउवाच भरतस्यात्मजःसुमतिर्नामाभिजितोयमुहवावके चित्पाखंडिनऋषभपदवीमनुवर्तमानंचानार्याअवेदसमाम्नातांदेवतांस्वमनीषयापापीयस्याकलौकल्पयि ष्यंति ॥ १ ॥ तस्माद्वृद्धसेनायांदेवताजिन्नामपुत्रोऽभवत् ॥ २ ॥ अथासूर्यांतत्तनयोदेवद्युम्नस्ततोधेनु मत्यांसुतःपरमेष्ठीतस्यसुवर्चलायांप्रतीहउपजातः ॥ ३ ॥

र्माणिचयस्यतस्यभरतस्यानुचरितंयोऽनुशृणोतिआत्मनएवसकाशात्सर्वाआशिषआशास्तेस्वतएवप्राप्नोतिनतुकांचिदपिपरस्मादपेक्ष तइ र्थः ॥ ४५ ॥ इतिपंचमेटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ एवमष्टभिरध्यायैर्भरतस्योक्तमीरितं ॥ ततःपंचदशेत स्यकीर्त्यंतेवंशजानृपाः ॥ १ ॥ ऋषभपदवींजीवन्मुक्तमार्गमनुवर्तमानंयंदृष्ट्वेतिशेषः यद्वा यंसुमतिमवेदसमाम्नातांदेवतांकल्पयिष्यंति बुद्धोयंसाक्षादवतीर्णइतिमंस्यंतइत्यर्थः ॥ १ ॥ २ ॥ तत्तनयःदेवताजितःपुत्रः ॥ ३ ॥

आत्मविद्यांबहुभ्यआख्यायन्याख्यानेनैवस्वयंसंशुद्धोऽनुसस्मारअपरोक्षतयाऽनुभूतवान् प्रतिहर्ताप्रस्तोताउद्गातेतित्रयोयज्ञनिपुणाः सूनव आसन् अजनिषातांजातौ ॥ ४ ॥ त्द्दयजःपुत्रोजगतोरिरक्षिषयारक्षितुमिच्छयागृहीतंसत्त्वंयेनतस्यविष्णोःकलांशःसन् ॥ ५ ॥ महापुरुषत्वमेवाह सवैइति धर्मस्तस्यद्विविधः अभिषिक्तत्वात्प्रजापालनादिरेकःगृहस्थत्वादिज्यादिश्चापरःद्विविधोऽपिभगवतिसर्वात्म न्यर्पितःसन्परमार्थलक्षणः तेनपरिभाविताासंस्कृताआतिशुद्धामतिर्यस्य अतएवोपरतमनात्म्यंदेहाद्यहंभावोयस्मिंस्तस्मिन्नात्मानिचि

यआत्मविद्यामाख्यायस्वयंसंशुद्धोमहापुरुषमनुसस्मारप्रतीहात्सुवर्चलायांप्रातिहर्त्रादयस्त्रयआसन्निज्या कोविदाःसूनवःप्रतिहर्तुःस्तुत्यामजभूमानौअजनिषातां ॥४॥ भूम्नऋषिकुल्यायामुद्गीथःसुतःप्रस्तावोदेव कुल्यायांप्रस्तावान्नियुत्सायांत्द्दयजआसीद्विभुर्विभोरत्यांचपृथुषेणस्तस्मान्नक्तआकूत्यांजज्ञेनक्ताद्द्रुतिपु त्रोगयोराजर्षिप्रवरउदारश्रवाअजायतसाक्षाद्भगवतोविष्णोर्जगद्रिरक्षिषयाग्रहीतसत्त्वस्यकलात्मवत्त्वा दिलक्षणेनमहापुरुषतांप्राप्तः॥५॥सवैस्वधर्मेणप्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनचभग वतिमहापुरुषेपरावरेब्रह्मणिसर्वात्मन्यर्पितपरमार्थलक्षणेनब्रह्मविच्चरणानुसेवयापादितभगवद्भजनेज्या दिभक्तियोगेनचाभीक्ष्णशःपरिभावितातिशुद्धमतिरुपरतानात्म्येआत्मनिस्वयमुपलभ्यमानब्रह्मात्मानुभ वोऽपिनिरभिमानएवावनिमजूगुपत्तस्येमांगाथांपांडवेयपुराविदउपगायंति ॥६॥ गयंनृपःकःप्रतियाति कर्मभिर्यज्वाऽभिमानीबहुविद्धर्मगोप्ता॥समागतश्रीःसदसःपतिःसतांसत्सेवकोऽन्योभगवत्कलामृते॥७॥

त्तेस्वयमेवोपलभ्यमानेब्रह्मण्यात्मानुभवोयस्यताद्दशोऽपिनिरभिमानएवअवनिमजूगुपत्पालयामास ॥ ६ ॥ कर्मभिर्गयंकःप्रतियाति अनुकरोतिनकोपि अत्रहेतुः यज्वादिरूपांभगवत्कलांगयमृतेऽन्यःकइत्यनुषंगः अभिमानीसर्वतोमानास्पदंमनस्वीतिवा समागतासंप्रा प्ताश्रीर्येनयामितिवा सतांसदसःसभायाःपतिः सतांसेवकः यद्वा यज्वादिरूपोभगवत्कलामृतेगयंकोन्यःप्रतियातीत्यन्वयः ॥ ७ ॥

सतीःसत्यः सत्याआशिषोयासांताः दक्षकन्याःश्रद्धामैत्रीदयेत्याद्याः निराशिषोऽपियस्यप्रजानामाशिषःकामान्धरादुदुहे तस्यगुणा एववत्सस्तेनस्नुतमूधोयस्याःपृथिव्याः यच्छब्दानांतंगयंकःप्रतियातीतिसंबंधः ॥ ८ ॥ छंदांसिवेदाः तद्विहितकर्माणिचदुदुहुः युधिप्र त्यंचितावाणैःप्रतिपूजितानृपाःयस्यबलिमाजन्हुःअर्पयामासुः धर्मेणपालनेनदक्षिणादीभिश्चयदाप्रत्यंचिताविप्रास्तदापरेत्यलोकांतरेआशि षांधर्मफलानांषष्ठमंशमाजन्हुः पुण्यषड्भागमादत्तेन्यायेनपरिपालयन्निति स्मृतेः ॥ ९ ॥ उरुसोमपीथेबहुसोमपानेऽध्वरेमघो

यमभ्यषिंचन्परयामुदासतीःसत्याशिषोदक्षकन्याःसरिद्भिः॥यस्यप्रजानादुदुहेधराशिषोनिराशिषोगुणव त्सस्नुतोधाः॥ ८ ॥ छंदांस्यकामस्यचयस्यकामान्दुदूहुराजन्हुरथोबलिंनृपाः प्रत्यंचितायुधिधर्मेणविप्रा यदाशिषांषष्ठमंशंपरेत्य ॥ ९ ॥ यस्याध्वरेभगवानध्वरात्मामघोनिमाद्यत्पुरुसोमपीथे ॥ श्रद्धाविशुद्धाचल भक्तियोगसमर्पितेज्याफलमाजहार ॥ १० ॥ यत्प्रीणनाद्बर्हिषिदेवतिर्यङ्मनुष्यवीरुत्तृणमाविरंच्यात्॥प्री येतसद्यःसहविश्वजीवःप्रीतःस्वयंप्रीतिमगाद्गयस्य ॥ ११ ॥ गयाद्गयंत्यांचित्ररथःसुगतिरवरोधनइति त्रयःपुत्राबभूवुश्चित्ररथादूर्णायांसम्राडजनिष्ट ॥ १२ ॥ ततउत्कलायांमरीचिर्मरीचेर्बिंदुमत्यांबिंदुमानु दपद्यततस्मात्सरघायांमधुनामाऽभवन्मधोः सुमनसिवीरव्रतस्ततोभोजायांमंथुप्रमंथूजज्ञातेमंथोःसत्या यांभौवनस्ततोदूषणायांत्वष्टाऽजनिष्टत्वष्टुर्विरोचनायांविरजोविरजस्यशतजित्प्रवरंपुत्रशतंकन्याचविषूच्यां किलजातं ॥ १३ ॥ तत्रायंश्लोकः॥ प्रैयव्रतंवंशमिमंविरजश्चरमोद्भवः ॥ अकरोदत्यलंकीर्त्याविष्णुःसु रगणंयथा ॥ १४ ॥

निंद्रेमाद्यतिमदंप्राप्नुवतिसति श्रद्धयाविशुद्धोयोऽचलोभक्तियोगस्तेनसमार्पितमिज्याफलमा जहार अर्हणमिवप्रत्यक्षतःस्वीकृतवानित्यर्थः ॥ १० ॥ यस्यभगवतः प्रीणनात् देवादीनांद्वंद्वैक्यं तत्सद्यःप्रीयेतप्रीतिंगच्छेत् सविश्वजीवःस र्वांतर्यामीस्वयंप्रीतिरूपएवबर्हिषियज्ञेगयस्य हस्फुटं प्रीतिमगात्तृप्तोऽस्मीतिप्रत्यक्षंप्रीतिमाविष्कृतवानित्यर्थः ॥ ११ ॥ १२ ॥ सुमनासिस्त्रि यां ॥ १३ ॥ कीर्त्याअतिशयेनअलमकरोत्भूषितवान् ॥ १४ ॥

इतिपंचमेटीकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ ॥॥ ॥ ॥ ॥ ॥ ॥ पूर्वोक्तद्वीपसिंध्वादिमानाचिन्हस्वरूपतः॥स्पष्टंप्रव
कुमारब्धापंचाध्यायीततःपरं ॥ १ ॥ पाडेशेऽधस्तथाचोर्ध्वपरितःसान्निवेशत ः॥ मेरोःस्थितिर्महीकंजकर्णिकाचोपवर्ण्यते ॥ २ ॥ प्रियव्रत
चरित्रोक्तावुक्ताद्वीपादिकल्पना ॥ तद्विशेषविजिज्ञासुःकथांतेपरिपृच्छति ॥ ३ ॥ उक्तइति किंपर्यंतमुक्तस्तदाह यावदादित्यस्तपति य

इतिश्रीभागवतेमहापुराणेपंचमस्कंधेप्रियव्रतवंशानुकीर्तनंनामपंचदशोऽध्यायः ॥ १५ ॥ ॥छ॥
राजोवाच उक्तस्त्वयाभूमंडलायामविशेषोयावदादित्यस्तपतियत्रचासौज्योतिषांगणैश्चंद्रमावासहदृश्य
ते ॥१॥ तत्रापिप्रियव्रतरथचरणपरिखातैःसप्तभिःसप्तसिंधवउपक्लृप्तायतएतस्याःसप्तद्वीपविशेषविकल्प
स्त्वयाभगवन्खलुसूचितएतदेवाखिलमहंमानतोलक्षणतश्चसर्वंविजिज्ञास्यामि ॥ २ ॥ भगवतोगुण
मयेस्थूलरूपआवेशितंमनोह्यगुणेऽपिसूक्ष्मतमआत्मज्योतिषिपरेब्रह्मणिभगवतिवासुदेवाख्येक्षममावे
शितुंतदुहैतद्गुरोऽर्हस्यनुवर्णयितुमिति ॥ ३ ॥ ऋषिरुवाच नवैमहाराजभगवतोमायागुणविभूतेः
काष्ठांमनसावचसावाऽधिगंतुमलंविबुधायुषाऽपिपुरुषस्तस्मात्प्राधान्येनैवभूगोलकविशेषंनामरूपमानल
क्षणतोव्याख्यास्यामः ॥४॥ योवाऽयंद्वीपःकुवलयकमलकोशाभ्यंतरकोशोनियुतयोजनविशालःसमवर्तु
लोयथापुष्करपत्रं ॥ ५ ॥

त्रचासौशुक्लकृष्णपक्षयोर्नक्षत्रगणैःसहचंद्रमावादृश्यतेतावत् ॥१॥यतःयेभ्यःसिंधुभ्यः
एतस्याःभुवः सूचितःसंक्षेपतोदर्शितः ॥ २ ॥ जिज्ञासायाःफलमाह भगवतइति ॥ ३ ॥ यामायागुणविभूतिस्तस्याः काष्टामंतं रूपं
संनिवेशः लक्षणंचिन्हं ॥ ४ ॥ कुवलयंभूमंडलंतदेवकमलंतस्यकोशाःसप्तद्वीपास्तेष्वभ्यंतरकोशःप्रथमोजंबूद्वीपः नियुतयोजनविशालः
लक्षयोजनविस्तीर्णः ॥ ५ ॥

नवयोजनसहस्रमायामोयेषां आयामोऽत्र विस्तारः एतच्चभद्राश्वकेतुमालव्यतिरेकेणद्रष्टव्यंतयोश्चतुस्त्रिंशद्योजनसहस्रायामत्वात् केचि त्तुनीलनिषधयोःसंलग्नाग्रयोः समुद्रप्रवेशमंगीकृत्यतयोरपिसंकुचितत्वेननवसहस्रायामत्वंसंपादयंति संनिवेशश्चवायुनोक्तः धनुर्वत्सं स्थितेज्ञेयेद्वेवर्षेदक्षिणोत्तरे दीर्घाणितत्रचत्वारिचतुरस्रमिलावृतमिति ॥ ६ ॥ नाभ्यांमध्ये द्वीपस्यायामोलक्षयोजनप्रमाणंतावान्समु न्नाहउच्छ्रायोयस्य ॥ ७ ॥ मूलेषोडशयोजनसहस्रंविततः तावताषोडशयोजनसहस्रमानेन चतुरशीतियोजनसहस्रमानेनचबहिर्दृश्यते एवंलक्षयोजनोन्नाहः उत्तरोत्तरेणेलावृतस्योत्तरोत्तरतःक्रमेणनीलादयस्त्रयोमर्यादागिरयः प्रागायताः पूर्वतोदीर्घाः क्षारोदोऽवधि

यस्मिन्नववर्षाणिनवयोजनसहस्रायामान्याष्टभिर्मर्यादागिरिभिःसुविभक्तानिभवंति ॥ ६॥ एषांमध्येइला वृतंनामाभ्यंतरवर्षंयस्यनाभ्यामवस्थितःसर्वतःसौवर्णःकुलगिरिराजोमेरुर्द्वीपायामसमुन्नाहःकर्णिकाभूतः कुवलयकमलस्य॥७॥मूर्द्धनिद्वात्रिंशत्सहस्रयोजनविततोमूलेषोडशसहस्रंतावतांऽतर्भूम्यांप्रविष्टउत्तरोत्तरेणे लावृतंनीलःश्वेतःशृंगवानितित्रयोरम्यकहिरण्मयकुरूणांवर्षाणांमर्यादागिरयःप्रागायताउभयतःक्षारोदाव धयोद्विसहस्रपृथवएकैकशःपूर्वस्मात्पूर्वस्मादुत्तरउत्तरोदशांशाधिकांशेनदैर्घ्यएवन्हसंति ॥ ८ ॥ एवंद क्षिणेनेलावृतंनिषधोहेमकूटोहिमालयइतिप्रागायतायथानीलादयअयुतयोजनोत्सेधाहरिवर्षकिंपुरुषभा रतानांयथासंख्यं ॥ ९ ॥ तथैवेलावृतमपरेणपूर्वेणचमाल्यवद्गंधमादनावानीलनिषधायतौद्विसहस्रंप प्रथुः ॥ १० ॥ केतुमालभद्राश्वयोःसीमानंविदधाते ॥ ११ ॥

येषां द्विसहस्रयोजनविस्तीर्णाः दशांशादीषदधिकोयोंऽश स्तेनदैर्घ्यएवन्हसंतिनतूच्चत्वेपृथुत्वेवा यथोक्तंविष्णुपुराणे लक्षप्रमाणौद्वौमध्येदशहीनास्तथाऽपरइति एतच्चस्थूलदृष्ट्यैवोक्तं तयोरपिय थावन्मध्यमत्वाभावेनलक्षप्रमाणत्वाभावात् ॥८॥ अयुतयोजनउत्सेधःउच्छ्रायोयेषां अयंचोत्सेधोनीलादीनामपिद्रष्टव्यः नीलादिपृथु त्वंचैषामपिद्रष्टव्यं यथासंख्यंमर्यादागिरयइतिशेषः ॥ ९ ॥ आनीलनिषधायतौउत्तरतोनीलपर्यंतंदक्षिणतोनिषधपर्यंतंचदीर्घौ पप्रथुः विस्तीर्णौभवतः ॥ १० ॥ तावेवकेतुमालभद्राश्वयोर्वर्षयोःसीमानंकुर्वाते ॥ ११ ॥

नन्वेवंसतिपूर्वापररेखायामिलावृतवेष्टितोमेरुर्मध्येततःपूर्वापरतोगिरिद्वयंवर्षद्वयंच नातःकिंचिदस्ति दक्षिणोत्तररेखायांतुतथैवेलावृतवे
ष्टितोमध्येमेरुरुभयतस्त्रीणित्रीणिवर्षाणिगिरयश्च तत्कथंसर्वतोलक्षप्रमाणत्वंजंबूद्वीपस्य उच्यते मेरोःषोडशसहस्राणि सर्वतःस्थितत्वादि
लावृतस्याष्टादश अन्येषांषण्णांचतुःपंचाशत् गिरीणांषण्णांद्वादशेत्येवंदक्षिणोत्तररेखायांतावल्लक्षं पूर्वापररेखायामपिसुमेरोरिलावृतस्य
चतुस्त्रिंशत् गिर्योश्चत्वारि शेषाणिद्विषष्टिसहस्राणिपूर्वापरवर्षयोरासमुद्रंदैर्ध्येद्रष्टव्यानि अतोनविरोधः अयुतयोजनप्रमाणौविस्तारोन्ना
होयेषां विस्तीर्णमूर्ध्नोमेरोरवष्टंभत्वात्पूर्वपाश्चिमौगिरीदक्षिणोत्तरविस्तारौदक्षिणोत्तरौचपूर्वापरविस्तारौद्रष्टव्यौ सर्वतोदशयोजनसहस्र

मंदरोमेरुमंदरःसुपार्श्वःकुमुदइतिअयुतयोजनविस्तारोन्नाहामेरोश्चतुर्दिशमवष्टंभगिरयउपक्लृप्ताः ॥१२॥
चतुर्ष्वेतेषुचूतजंबूकदंबन्यग्रोधाश्चत्वारःपादपप्रवराःपर्वतकेतवइवाधिसहस्रयोजनोन्नाहास्तावद्विटपवि
ततयःशतयोजनपरिणाहाः ॥ १३ ॥ ह्रदाश्चत्वारःपयोमध्विक्षुरसमृष्टजलायदुपस्पर्शिनउपदेवगणायो
गैश्वर्याणिस्वाभाविकानिभरतर्षभधारयंति ॥ १४ ॥ देवोद्यानानिचभवंतिचत्वारिनंदनंचैत्ररथंवैभ्राजकंस
र्वतोभद्रमिति ॥१५॥ येष्वमरपरिवृढाःसहसुरललनाललामयूथपतयउपदेवगणैरुपगीयमानमहिमानः
किलविहरंति ॥ १६ ॥ मंदरोत्संगएकादशशतयोजनोत्तुंगदेवचूतशिरसोगिरिशिखरस्थूलानिफलान्य
मृतकल्पानिपतंति ॥ १७ ॥ ॥ ॥ ॥ ॥

विस्तारांगीकारेस्विलावृतलोपात्पूर्वेणेलावृतमुपप्लावयतीत्यादिविरोधःस्यात् ॥ १२ ॥ अधिसहस्रमेकादशशतानिउन्नाहोयेषांतावत्प्रमा
णंविटपवितततिर्येषां शतयोजनंपरिणाहोविस्तारोयेषां ॥१३॥ यदुपस्पर्शिनः यत्सेविनः॥१४॥ १५॥ ललामोभूषणं सुरललनानांभूष
णभूताःश्रेष्ठायाःस्त्रियस्तासांयूथस्यपतयः सहसंभूययेषुविहरंति ॥ ॥१६ ॥ एकादशशतयोजनमुत्तुंगोयोदेवचूतस्तस्यशिरसःसकाशा
त् फलप्रमाणमुक्तंवायुपुराणे अरत्नीनांशतान्यष्टावेकषष्टचाधिकानिच ॥ फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिरिति ॥ १७ ॥

अतिमधुरश्चासौस्वतःसुरभिश्चसुगंधिश्च नचान्येषांगंधैरधिवासितः बहुलश्चारुणश्चरसःसएवउदमुदकंतेन ॥ १८ ॥ यदुपजोषणात् यस्यर सस्यसेवनात् ॥१९॥ अनास्थिप्रायाणामतिसूक्ष्मबीजानां यत्रनिपततितत्श्चारभ्यात्मनोदक्षिणतःसर्वमिलावृतंव्याप्यवहतीत्यर्थः ॥ २० ॥

तेषांविशीर्यमाणानामतिमधुरसुरभिसुगंधिबहुलारुणरसोदेनारुणोदानामनदीमंदरागिरिशिखरान्निपतं तीपूर्वेणेलावृतमुपप्लावयति ॥ १८ ॥ यदुपजोषणाद्भवान्याअनुचरीणांपुण्यजनवधूनामवयवस्पर्शसुगं धवातोदशयोजनंसमंतादनुवासयति ॥ १९ ॥ एवंजंबूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रा याणामिभकायनिभानांरसेनजंबूनामनदीमेरुमंदरशिखरादयुतयोजनादवनितलेनिपतंतीदक्षिणेनात्मा नंयावदिलावृतमुपस्पंदयति ॥ २० ॥ तावदुभयोरपिरोधसोर्यामृत्तिकातद्रसेनानुविध्यमानावाय्व र्कसंयोगविपाकेनसदाऽमरलोकाभरणंजांबूनदंनामसुवर्णंभवति ॥ २१ ॥ यदुहवावविबुधादयःसह युवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेणखलुधारयंति ॥ यस्तुमहाकदंबःसुपार्श्वनिरूढोयास्त स्यकोटरेभ्योविनिःसृताःपंचायामपरिणाहाःपंचमधुधाराःसुपार्श्वशिखरात्पतंत्योऽपरेणात्मानमिलावृत मनुमोदयंति ॥ २३ ॥ यात्युपयुंजानानांमुखनिर्वासितोवायुःसमंताच्छतयोजनमनुवासयति ॥ २४ ॥ एवंकुमुदनिरूढोयःशतवल्शोनामवटस्तस्यस्कंधेभ्योनीचीनाःपयोदधिमधुघृतगुडान्नाद्यंबरशय्यासना भरणादयःसर्वएवकामदुघानदाःकुमुदाग्रात्पतंतस्तमुत्तरेणेलावृतमुपयोजयंति ॥ २५ ॥ यानुपजुषाणा नांनकदाचिदपिप्रजानांबलीपलितक्लमस्वेददौर्गंध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवंतियावज्जीवंसुखंनिरतिशयमेव ॥ २६ ॥ ॥ ॥

तावत्सर्वतः रोधसोस्तटयोः ॥ २१ ॥ २२ ॥ आयामोऽत्रव्यामः सचव्यामोबाह्वोःसकरयोस्ततयोस्तिर्यगंतरमित्युक्तलक्षणः पंचव्यामंपरि णाहःस्थौल्यंयासामित्यर्थः केचित्तुपंचव्यामपरिणाहाइत्येवपठंति ॥ २३ ॥ २४ ॥ नीचीनाअधोमुखाः ॥ २५ ॥ २६ ॥

॥ २७ ॥ चतुर्दिक्षुमेरुमूलाद्योजनसहस्रंत्यक्त्वाऽग्नेःपरितःपरिधयइवजठरदेवकूटादयास्तिष्ठंति अतोऽष्टादशयोजनसहस्रंप्रमाणमत्रोक्तं वै
ष्णवादिपुराणेषुपरिमाणादियत्पुनः ॥ अन्यथावर्णितंतत्तुकल्पभेदाद्यपेक्षया ॥द्विसहस्रंपृथूचतुंगौच ॥२८॥२९॥ यथादिशंप्राच्यादिदिक्षु य
थारूपमिंद्रादिवर्णानतिक्रमेण तुरीयमानेनसार्धद्विसहस्रप्रमाणेन नामानिपुराणांतराज्ज्ञातव्यानि यथोक्तं मेरौनवपुराणिस्युर्मनोवत्यमराव
ती ॥ तेजोवतीसंयमनीतथाकृष्णांगनापरा॥श्रद्धावतीगंधवतीतथाचान्यामहोदया॥यशोवतीचब्रह्मेंद्रवन्ह्यादीनांयथाक्रमामिति ॥ ३० ॥
इतिपंचमेटीकायांषोडशोध्यायः ॥१६॥ ततःसप्तदशेगंगागमनंतच्चतुर्दिशं॥इलावृतेचरुद्रेणसंकर्षणनिषेवणं॥१॥यज्ञलिंगस्यबलेर्यज्ञे।लिं

कुरंगकुररकुसुंभवैकंकत्रिकूटशिशिरपतंगरुचकनिषधशिनीवासकपिलशंखवैदूर्यजारुधिहंसर्षभनागका
लंजरनारदादयोविंशतिगिरयोमेरोःकर्णिकायाइवकेसरभूतामूलदेशेपरितउपक्लृप्ताः ॥ २७ ॥ जठरदेव
कूटौमेरुंपूर्वेणाष्टादशयोजनसहस्रमुदगायतौद्विसहस्रंपृथुतुंगौभवतःएवमपरेणपवनपारियात्रौदक्षिणेन
कैलासकरवीरौप्रागायतावेवमुत्तरतस्त्रिशृंगमकरावष्टभिरेतैःपरिस्तृतोऽग्निरिवपरितश्चकास्तिकांचनागि
रिः ॥ २८ ॥ मेरोर्मूर्द्धनिभगवतआत्मयोनेर्मध्यतउपक्लृप्तांपुरीमयुतयोजनसाहस्रींसमचतुरस्रांशातकौं
भींवदंति ॥ २९ ॥ तामनुपरितोलोकपालानामष्टानांयथादिशंयथारूपंतुरीयभागेनपुरोऽष्टावुपक्लृप्ताः ॥
॥३०॥ इतिश्रीभा०म०पंचमस्कंधेभुवनकोशवर्णनंनामषोडशोऽध्यायः॥१६ ॥ श्रीशुकउवाच तत्रभग
वतःसाक्षाद्यज्ञलिंगस्यविष्णोर्विक्रमतोवामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणांतःप्रविष्टायाबाह्यज
लधारातच्चरणपंकजावनेजनारुणकिंजल्कोपरंजिताखिलजगदघमलापहोपस्पर्शनाऽमलासाक्षाद्भगव
त्पदीत्यनुपलक्षितवचोऽभिधीयमानाऽतिमहताकालेनयुगसहस्रोपलक्षणेनदिवोमूर्द्धन्यवततार ॥ १ ॥

गंत्रिविक्रममूर्तियस्य विक्रमतःदक्षिणेनपदाभुवंक्रांत्वावामपदमुत्क्षिपतः वामपादांगुष्ठनखेननिर्भिन्नमूर्ध्वमुपरिभागोयस्यांडकटाहस्यत
स्यविवरेणांतःप्रविष्टायाबाह्यजलधारासादिवोमूर्धन्यवततारेत्यन्वयः तस्ययच्चरणपंकजंतस्यावनेजनेनक्षालनेनअरुणंतद्रतंकुंकुमंतदेव
किंजल्कास्तैरुपरंजिताअतएवाखिलस्यजगतोऽघमलापहमुपस्पर्शनंयस्यास्तथाऽप्यमलातन्मलसंगशून्यासाक्षाद्भगवत्पदीतियदनुपल
क्षितंजान्हवीभागीरथीत्याद्युपलक्षणांतररहितंवचोनामतेनाभिधीयमाना तस्मिन्समयेभगवत्पदीनामपश्चान्नामांतराणिजातानि ॥ १ ॥

कोऽसौ दिवोमूर्द्धांतमाह यदिति किंतद्विष्णुपदंतदाह यत्रेति वीरव्रतः दृढसंकल्पः अस्मत्कुलदेवतायाहरेश्चरणारविंदोदकमितिहेतोःप
रमादरेणबिभर्तीत्यन्वयः कथंभूतः सन् प्रतिक्षणंवर्धमानेनभगवद्भक्तियोगेनदृढमत्यंतंक्लिद्यमानमंतर्हृदयंयस्य अतएवऔत्कंठ्येनविवश
मामीलितंयल्लोचनयुगलंतदेवकुड्मलेताभ्यांविगलितममलंबाष्पंतस्यकलयासहअभिव्यज्यमानंरोमपुलकानांकुलंयस्य ॥ २ ॥ ततःस
प्तऋषयस्तस्यागंगायाःप्रभावाभिज्ञाःसंतोयांजटाजूटैरुद्वहंतीत्यन्वयः एतावत्येवनातोऽधिकास्तीत्यभिप्रायवंतः तत्रहेतुः भगवतिसंत



यत्तद्विष्णुपदमाहुःयत्रहवाववीरव्रतऔत्तानपादिःपरमभागवतोऽस्मत्कुलदेवताचरणारविंदोदकमिति
यामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेनदृढंक्लिद्यमानांतर्हृदयऔत्कंठ्यविवशामीलितलोचनयुगलकु
ड्मलविगलितामलबाष्पकलयाऽभिव्यज्यमानरोमपुलकोऽधुनापिपरमादरेणशिरसाबिभर्ति ॥ २ ॥ तत
ऋषयस्तत्प्रभावाभिज्ञायांननुतपसआत्यंतिकीसिद्धिरेतावतीभगवतिसर्वात्मनिवासुदेवेऽनुपरतभक्तियो
गलाभेनैवोपेक्षितान्यार्थात्मगतयोमुक्तिमिवागतांमुमुक्षवइवसबहुमानमद्यापिजटाजूटैरुद्वहंति ॥ ३ ॥ त
तोऽनेकसहस्रकोटिविमानानीकसंकुलदेवयानेनावतरंतींदुमंडलमावार्यब्रह्मसदनेनिपतति ॥ ४ ॥ तत्रच
तुर्द्धाभिद्यमानाचतुर्भिर्नामभिश्चतुर्दिशमभिस्पंदंतीनदनदीपतिमेवाभिनिविशति ॥ ५ ॥ सीताऽलकनंदा
चक्षुर्भद्रेति सीतातुब्रह्मसदनात्केसराचलादिगिरिशिखरेभ्योऽधोऽधःप्रस्रवंतीगंधमादनमूर्द्धसुपतित्वा
अंतरेणभद्राश्ववर्षंप्राच्यांदिशिक्षारसमुद्रमभिप्रविशति ॥ ६ ॥ ॥ ॥

तंभक्तियोगलाभेनैवोपेक्षिताअन्येपुरुषार्थाआत्मज्ञानंचयैः कामिवकइवधारयंतिप्रत्यक्षंमुक्तिमिवतामागतांमुमुक्षवोजनाइवेति ॥ ३ ॥ त
तोऽनेकसहस्रकोटीनांविमानानामनीकैः संकुलेनदेवयानेनआकाशमार्गेणावतरंतीसप्तऋषिभ्योऽर्वागेवप्रायशः कर्मिणांगतिरितिततोऽर्वा
गेवसंकुलत्वमुक्तंआवार्यआप्लाव्य मेरुमूर्द्धस्थेब्रह्मसदनेनिपतति ॥ ४ ॥ अभिस्पंदंतीअभितोगच्छंती ॥ ५ ॥ केसराचलानांमेरुसमानो
च्छ्रायत्वात् प्रथमंतेषामादिशिखरेषुमुख्यशृंगेषुपतितिततस्तेभ्योऽधोऽधःप्रस्रवंतीसती ॥ ६ ॥

माल्यवच्छिखरात्केतुमालाभिमुखंनिष्पतंती चक्षुःसंज्ञा ॥ ७ ॥ गिरिशिखरादिति कुमुदशिखरादुच्चलितानीलशिखरंततउच्चलिताइवेत शिखरंतदप्यतिहायशृंगवतःशृंगादधःस्रवंती ॥ ८ ॥ अतिरभसतररंहसाअस्खलिततीव्रतरवेगेन ॥ ९ ॥ बहुशःबहुविधाः मेर्वादिगिरीणां दुहितरः तत्प्रसूताः ॥ १० ॥ दिव्यभौमविलभेदात्रिविधःस्वर्गः तत्रभौमस्वर्गस्यपदानिस्थानानिव्यपदिशंति ॥ ११ ॥ अयुतंपुरुषमानेन

एवंमाल्यवच्छिखरान्निष्पतंतीततोऽनुपरतवेगाकेतुमालमभिचक्षुःप्रतीच्यांदिशिसरित्पतिंप्रविशति ॥ ७ ॥ भद्राचोत्तरतोमेरुशिरसोनिपतितागिरिशिखराद्गिरिशिखरमतिहायशृंगवतःशृंगादवस्पंदमानाउत्तरांस्तु करूनभितउदीच्यांदिशिजलधिमभिप्रविशति ॥ ८ ॥ तथैवालकनंदादक्षिणेनब्रह्मसदनाद्बहूनिगिरिकूटा न्यतिक्रम्यहेमकूटाद्धैमकूटान्यतिरभसतररंहसालुठयंतीभारतमभिवर्षंदक्षिणस्यांदिशिजलधिमभिप्रवि शति ॥ ९ ॥ यस्यांस्नानार्थंचागच्छतःपुंसःपदेपदेऽश्वमेधराजसूयादीनांफलंनदुर्लभमिति अन्येचनदानद्य श्चवर्षेवर्षेसंतिबहुशोमेर्वादिगिरिदुहितरःशतशः ॥ १० ॥ तत्रापिभारतमेववर्षंकर्मक्षेत्रमन्यान्यष्टवर्षाणि स्वर्गिणांपुण्यशेषोपभोगस्थानानिभौमानिस्वर्गपदानिव्यपदिशंति ॥ ११ ॥ एषुपुरुषाणामयुतंपुरुषायुर्व र्षाणांदेवकल्पानांनागायुतप्राणानांवज्रसंहननबलवयोमोदप्रमुदितमहासौरतमिथुनव्यवायापवर्गवर्षधृ तैकगर्भकलत्राणांतत्रतुत्रेतायुगसमःकालोवर्तते ॥ १२ ॥

आयुर्वर्षाणियेषां वज्रवद्दृढंसंहननंशरीरंतस्मिन्बलवयोमो दाद्यैःप्रमुदितानियानिमहासौरतानिमिथुनानितेषांव्यवायापवर्गेसंभोगावसानेएकवर्षशेषेआयुषिधृतएकोगर्भोयैस्तादृशानिकलत्राणियेषां त्रे तायुगसमः विषयसुखोत्कर्षात् कृतयुगेहिसर्वेध्याननिष्ठाः द्वापरादौतुदुःखबहुलाः ॥ १२ ॥

यत्रहयेषुहिवर्षेषुदेवपतयःस्वैःस्वैःसेवकगणेषुमुख्यैःकृतमहोपचाराःसंतःस्वैरंविहरंतीत्यन्वयः केषुस्थानेषु सर्वेषुऋतुषुकुसुमस्तवका दीनांश्रियासमृध्याऽत्यंतंनम्यमानाविटपास्तदाश्रितालताश्चयेषुतैर्विटपिभिरुपशुंभमानानिशोभमानानिरुचिराणिकाननानियेषुतेष्वाश्रमाय तनेषुवर्षगिरिद्रोणीषुच तथाअमलेषुजलाशयेषुविकचानिविकाशीनियानिनवानिवनरुहाणिनीरजानितेषामामोदनमुदितैराजहंसादिभिर्म धुकरनिकराणांचआकृतिभिर्जातिविशेषैरुपकूजितेषु कामेनकालिलैःक्षुभितैर्विलासादिभिराकृष्टंमनोदृष्टिश्चयेषांते ॥ १३ ॥

यत्रहदेवपतयःस्वैःस्वैर्गणनायकैर्विहितमहार्हणाःसर्वर्तुकुसुमस्तबकफलकिसलयश्रियानम्यमानविटपल ताविटपिभिरुपशुंभमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषुतथाचामलजलाशयेषुविकचाविविधनवव नरुहामोदमुदितराजहंसजलकुक्कुटकारंडवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषुजलक्री डादिभिर्विचित्रविनोदैःसुललितसुरसुंदरीणांकामकलिलविलासहासलीलाऽवलोकाकृष्टमनोदृष्टयःस्वैरं विहरंति ॥ १३ ॥ नवस्वपिवर्षेषुभगवान्नारायणोमहापुरुषःपुरुषाणांतदनुग्रहायात्मतत्त्वव्यूहेनात्मनाऽ द्यापिसन्निधीयते ॥ १४ ॥ इलावृतेतुभगवान्भवएकएवपुमान्नह्यन्यस्तत्रापरोनिर्विशतिभवान्याःशाप निमित्तज्ञोयत्प्रवेक्षतःस्त्रीभावस्तत्पश्चाद्वक्ष्यामि ॥१५॥ भवानीनाथैःस्त्रीगणार्बुदसहस्रैरवरुद्ध्यमानोभ गवतश्चतुर्मूर्तेर्महापुरुषस्यतुरीयांतामसींमूर्तिंप्रकृतिमात्मनःसंकर्षणसंज्ञामात्मसमाधिरूपेणसन्निधाप्यै तदभिगृणन्भवउपधावति ॥ १६ ॥



नवस्वपिवर्षेषुयेपुरुषास्तेषांतदनुग्रहाय सचासौवक्ष्यमाणोऽनुग्रह स्तदर्थमात्मतत्त्वव्यूहेनस्वमूर्तिसमूहेनसन्निधीयतेसंनिहितोभवति ॥ १४॥ अपरःअर्वाचीनः पश्चान्नवमस्कंधे ॥ १५ ॥ भवानीनाथास्वा मिनीयेषांतैःस्त्रीगणानामर्बुदसहस्रैरवरुध्यमानःसर्वतःसेव्यमानः आत्मनः प्रकृतिकारणं आत्मनिसमाधिर्ध्यानंयस्यतेनरूपेणएतद्वक्ष्य माणंमंत्रादिकमभिगृणन्जपन् ॥ १६ ॥

सर्वेषांगुणानांसंख्यानंप्रकाशोयस्मात् स्वयंतुअव्यक्तायअप्रमेयाय ॥१७॥ हेभजन्यभजनीय त्वात्वांपरमेश्वरंभजइत्यन्वयः अरणंश
णंपादपंकजंयस्य कृत्स्नस्यभगस्यऐश्वर्यादिषाड्गुण्यस्यपरमयनमाश्रयं भक्तेषुअलमत्यर्थभावितंप्रकटितंभूतभावनंस्वरूपंयेन भवापहं
संसारहरं भक्तेषुइत्यनुषंगः भवंभावयतीतितथातं अर्थादभक्तेषुइतिद्रष्टव्यं ॥१८॥ ईश्वरत्वमुपपादयंस्तामसत्वेनप्रसक्तमनादईवारयति न
यस्येति निरीक्षमाणस्यापिदृष्टिर्मायागुणैर्विषयैश्चित्तवृत्तिभिःकरणैश्चअण्वपिईषदपिनाज्यतेनलिप्यते किमर्थंनिरिक्षमाणस्य ईशेईश
नायनियमनाय ईशनमीट् संपदादित्वाद्भावेक्विप् अत्रवैधर्म्येदृष्टांतः यथाअजितक्रोधवेगानांनोऽस्माकंदृष्टिरज्यतेनतथेति अतःआत्म

श्रीभगवानुवाच ॐनमोभगवतेमहापुरुषायसर्वगुणसंख्यानायानंतायाव्यक्तायनमइति ॥ १७ ॥ भ
जेभजन्यारणपादपंकजंभगस्यकृत्स्नस्यपरंपरायणं ॥ भक्तेष्वलंभावितभूतभावनंभवापहंत्वाभवभावमी
श्वरं ॥ १८ ॥ नयस्यमायागुणचित्तवृत्तिभिर्निरीक्षतोह्यण्वपिदृष्टिरज्यते ॥ ईशेयथानोजितमन्युरंहसांक
स्तंनमन्येतजिगीषुरात्मनः ॥ १९ ॥ असद्दृशोयःप्रतिभातिमाययाक्षीबेवमध्वासवताम्रलोचनः ॥ ननागव
ध्वोऽर्हणईशिरेन्हियायत्पादयोःस्पर्शनधर्षितेंद्रियाः ॥ २० ॥ यमाहुरस्यस्थितिजन्मसंयमंत्रिभिर्विहीनंय
मनंतमृषयः ॥ नवेदसिद्धार्थमिवक्वचित्स्थितंभूमंडलंमूर्द्धसहस्रधामसु ॥ २१ ॥

नइंद्रियाणिजिगीषुःजेतुमिच्छुर्मुमुक्षुस्तंकोनमन्येतनाद्रियेत ॥ १९ ॥ ननुसुरामद्याभ्यांमत्तस्यकुतोदृष्टिर्नाज्यतेतत्राह असतीदृष्टिर्यस्य
तस्यस्वमाययाक्षीबामत्तइवयोभयंकरःप्रतिभाति मध्वासवाभ्यामाताम्रलोचनइव नागवधूविमोहनेनतथाप्रतिभानंयुक्तमित्याह नेति
पादार्चनेयस्यपादयोःस्पर्शनेनधर्षितंमोहितमिंद्रियंमनोयासांताःन्हियालज्जयाभुजाद्यर्हणेनईशिरेनशेकुः कस्तंनमन्येतेतिपूर्वेणैवान्वयः
॥ २० ॥ अस्यविश्वस्यस्थितिजन्मसंयमहेतुंयमाहुः अतएवत्रिभिःस्थित्यादिभिर्विहीनमनंतंचयमाहुः ऋषयोमंत्राः छंदोऽनुरोधेनदीर्घ
पाठेऋकारोदेवमातालक्ष्मीःसाचऋषयश्चेत्यर्थः अनंतत्वंदर्शयति मूर्द्धसहस्रमेबधामानिस्थानानितेषुक्वचिदेकदेशस्थितंभूमंडलंयानवेद
सिद्धार्थंसर्षपमिव तस्मैनमइतिचतुर्थेनान्वयः ॥ २१ ॥

तत्रजन्महेतुत्वंमहदादिद्वारेणप्रपंचयति यस्यगुणनिमित्तोमहान्नामविग्रहआसीत् विज्ञानंसत्वंधिष्ण्यमाश्रयोयस्यसः तस्यचित्तरूपत्वेन सत्वप्रधानत्वात् सएवकिलाधिदैवोवासुदेवाभेदविवक्षया भगवानजोब्रह्मा यत्संभवःयस्माद्ब्रह्मणःसंभूतः अहंरुद्रःत्रिवृतात्रिगुणेनस्व तेजसास्वविभूतिरूपेणाहंकारेणवैकारिकंदेवतावर्गंतामसंभूतवर्गमैंद्रियमिंद्रियवर्गंचसृजेसृजामि ॥ २२॥ किंच एतेवयंमहदादयःसर्वेय स्यानुग्रहादिदंब्रह्मांडंसृजामः कथंभूताः यस्यमहात्मनोवशेस्थिताःसंतः यतः सूत्रेणक्रियाशक्त्यायंत्रिताःप्रोताःशकुंताःपक्षिणइवलौ किकेनसूत्रेण वयमित्युक्तानेवाह महानहंकारश्च वैकृतादयःपूर्वोक्तावर्गाश्च ॥ २३ ॥ स्थितिलयहेतुत्वंदर्शयन्प्रणमति यंनानिर्मिता

यस्याद्यआसीद्गुणविग्रहोमहान्विज्ञानधिष्ण्योभगवानजःकिल ॥ यत्संभवोऽहंत्रिवृतास्वतेजसावैकारिकं तामसमैंद्रियंसृजे ॥ २२ ॥ एतेवयंयस्यवशेमहात्मनःस्थिताः शकुंताइवसूत्रयंत्रिताः ॥ महानहंवैकृततामस सेंद्रियाःसृजामसर्वेयदनुग्रहादिदं ॥ २३ ॥ यन्निर्मितांकर्ह्यपिकर्मपर्वणींमायांजनोऽयंगुणसर्गमोहितः ॥ न वेदनिस्तारणयोगमंजसातस्मैनमस्तेविलयोदयात्मने ॥ २४ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधे सप्तदशोऽध्यायः ॥ १७ ॥ ॥छ॥ ॥छ॥ ॥छ॥ श्रीशुकउवाच तथाचभद्रश्रवा नामधर्मसुतस्तत्कुलपतयः पुरुषाभद्राश्ववर्षेसाक्षाद्भगवतोवासुदेवस्यप्रियांतनूंधर्ममयींहयशीर्षाभिधानीं परमेणसमाधिनासन्निधाप्येदमभिगृणंतउपधावंति ॥ १ ॥

मेतांमायामेवायंजनोऽजसावेदनतुतान्निस्तारणयोगमुपायंकर्हि चिदपिवेदेतिस्थितिहेतुत्वंदर्शितं कीदृशींकर्माण्येवपर्वाणिग्रंथयस्तानिनयतिप्रापयतीतितथातां प्रलयहेतुत्वमाह विलीयतेऽस्मिन्निति विलयः उदेत्यस्मादितिउदयः विलयश्चोदयश्चात्मास्वरूपंयस्यतस्मैनमः॥ २४ ॥इतिपंचमेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ ॥ अष्टादशेततोमेरोःपूर्वादिक्रमतस्त्रिषु ॥ त्रिषुचोत्तरवर्षेषुसेव्यसेवकवर्णनं ॥ १ ॥ भद्रश्रवावर्षपतिः तस्यकुलंपतयः सेवकमुख्याश्च ॥ १ ॥

भद्रश्रवसऊचुरिति प्राणभृतउपदधातीतिवद्वणलक्षणयातद्योगाद्वणिषुलिंगसमवायन्यायेनबहुवचनं ॥ २ ॥ अयंजनोमिषन्नपिपश्यन्नपि घ्नंतांहिंसंतंनपश्यातिनालोचयतीतिभगवद्विचेष्टितमेवतच्चविचित्रं अदर्शनेलिंगं पुत्रंबालंपितरंवृद्धंमृतंनिर्हृत्यदग्ध्वास्वयंतदुभयधनैर्जिजीविषतिजीवितुमिच्छति पाठांतरेतुछंदःसामंजस्यं किंधर्माद्यर्थं न यर्हियतःअसत्तुच्छंविषयसुखंसेवितुंविकर्मपापमेवध्यायन् ॥ ३ ॥ न न्वविद्वान्नपश्यतिकिमत्रचित्रंतत्राह नश्वरंवदंतिस्मशास्त्रतः पश्यंतिचसमाधौ हेअज तथापिमाययामुह्यंति एतच्चतवकृत्यंचेष्टितंसुवि

भद्रश्रवसऊचुः ॐनमोभगवतेधर्मायात्मविशोधनायनमइति ॥ २ ॥ अहोविचित्रंभगवद्विचेष्टितंघ्नंतं जनोऽयंहिमिषन्नपश्यति ॥ ध्यायन्नसद्यर्हिविकर्मसेवितुंनिर्हृत्यपुत्रंपितरंजिजीविषुः ॥ ३ ॥ वदंतिविश्वंक वयःस्मनश्वरंपश्यंतिचाध्यात्मविदोविपश्चितः ॥ तथाऽपिमुह्यंतितवाजमाययासुविस्मितंकृत्यमजंनतोऽस्मितं ॥ ४ ॥ विश्वोद्भवस्थाननिरोधकर्मतेह्यकर्तुरंगीकृतमप्यपावृतः ॥ युक्तंनचित्रंत्वयिकार्यकारणेसर्वात्मनिव्यतिरिक्तेचवस्तुतः ॥ ५ ॥ वेदान्युगांतेतमसातिरस्कृतान्रसातलाद्योनृतुरंगविग्रहः ॥ प्रत्याददेवैकवयेऽभियाचतेतस्मैनमस्तेऽवितथेहितायतइति ॥ ६ ॥

स्मितमतिचित्रमतःशास्त्रादिश्रमंविहायतंत्वामजंनतोऽस्मि ॥ ४ ॥ इदमपरंचित्रंवत्प्रतीयमानमपित्वयिनाचित्रमित्याह विश्वोद्भवादिकर्मअकर्तुरपि अपगताआवृत्आवरणंयस्मात्तादृशस्यापितेअंगीकृतंवदेन त्वयितन्नचित्रं यतःमाययासर्वात्मनिकार्यस्यकारणेस्त्रष्टरिकर्मयुक्तं वस्तुतःसर्वव्यतिरिक्तेनिरुपाधावनावृतत्वमकर्तृत्वंचयुक्तं ॥ ॥५ ॥ परमेश्वरत्वेनस्तुत्वाप्रस्तुतावतारचरितमाह वेदानिति तमसादैत्यरूपेणतिरस्कृतान्अपनीतान् नाचतुरंगश्चनृतुरंगौतद्रूपोविग्रहोयस्य कवयेब्रह्मणे तदर्थमवितथेहितायसत्यसंकल्पाय ॥ ६ ॥

उत्तरत्रप्रऱ्हादचरित्रे महापुरुषस्यगुणानांभाजनआश्रयः दैत्यदानवकुलस्यतीर्थीकरणंशीलमाचरितंचयस्य फलसंकल्पेनव्यवधानशू न्यश्चासावनन्यश्चाव्यभिचारीयोभक्तियोगस्तेनउपास्तेसेवते॥ ७॥ तेजसामपितेजसे आविराविः अतिप्रकटोभव वीप्साबा कर्माशया न्कर्मवासनाः कर्माश्रयानितिपाठेरागादीन्रंधयनिर्दह भूयिष्ठाःभूयाः ॥ ८ ॥ विश्वस्यस्वास्तिप्रार्थनेखलस्यापिभवेत् तत्रसाधुपीडांविना नस्यात् अन्योऽन्यममंगलंध्यायतांचभूतानामन्योन्यघातंविनानभवेदित्याशंक्याह खलःप्रसीदतांक्रौर्यंत्यजतु भूतानिचमिथःशिवमे

हरिवर्षेचापिभगवान्नरहरिरूपेणास्तेतद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्यतेतद्दयितंरूपंमहापुरुषगुणभाज नोमहाभागवतोदैत्यदानवकुलतीर्थीकरणशीलाचरितःप्रऱ्हादोऽव्यवधानानन्यभक्तियोगेनसहतद्वर्षपुरुषै रुपास्तेइदंचोदाहरति॥७॥ॐनमोभगवतेनरसिंहायनमस्तेजस्तेजसेआविराविर्भववज्रनखवज्रदंष्ट्रकर्मा शयान्रंधयरंधयतमोग्रसॐस्वाहाअभयमभयमात्मनिभूयिष्ठाॐक्ष्रौं॥८॥स्वस्त्यस्तुविश्वस्यखलःप्रसी दतांध्यायंतुभूतानिशिवंमिथोधिया ॥ मनश्चभद्रंभजतादधोक्षजआवेश्यतांनोमतिरप्यहैतुकी ॥ ९ ॥ मा ऽगारदारात्मजवित्तबंधुषुसंगोयदिस्याद्भगवत्प्रियेषुनः ॥ यःप्राणवृत्त्यापरितुष्टआत्मवान्सिद्ध्यत्यदूरान्न तथेंद्रियप्रियः ॥ १० ॥ यत्संगलब्धंनिजवीर्यवैभवंतीर्थंमुहुःसंस्पृशतांहिमानसं ॥ हरत्यजोंऽतःश्रुतिभिर्ग तोंऽगजंकोवैनसेवेतमुकुंदविक्रमं ॥ ११ ॥

वध्यायंतु तेषांमनश्चभद्रमुपशमादिकंभजतु नोऽस्माकमपिमतिः अपिशब्दात्भूतानांचमतिः अहैतुकीनिष्कामासती ॥ ९ ॥ नःसंगःक्वापिमास्यात् यदिकथंचित्स्यात्तर्हिअगारादिषुमास्यात्किंतुभगव त्प्रियेष्वेव अगारादिसंगेदोषमाह यइति इंद्रियप्रियोगृहाद्यासक्तः ॥ १० ॥ भगवत्प्रियसंगेगुणमाह येषांभगवत्प्रियाणांसंगाल्लब्धंमुकुंद विक्रमंश्रुतिभिःश्रवणादिभिःसंस्पृशतांसेवमानानांपुंसामंतर्गतोऽजोमानसंमलंहरति कथंभूतंविक्रमं निजमसाधारणंवीर्यवैभवंप्रभावा तिशयोयस्य तीर्थंतुगंगादिमुहुःसंस्पृशतामंगजंमलंकेवलंहरति तान्कोवैनसेवेतेत्यन्वयः ॥ ११ ॥

मानसमलापगमफलमाह यस्येति अकिंचनानिष्कामाः मनःशुद्धौहरेर्भक्तिर्भवतिततश्चतत्प्रसादेसतिसर्वैर्देवाःसर्वैर्गुणैर्धर्मज्ञानादिभिः सहतत्रसम्यगासतेनित्यंवसंति गृहाद्यासक्तस्यतुहरिभक्त्यसंभवात्कुतोमहतांगुणाःज्ञानवैराग्यादयोभवंति असतिविषयसुखेमनोरथेनब हिर्धावतः ॥ १२ ॥ ननुहरिविमुखस्यगृहाद्यासक्तस्यापिलोकेमहत्त्वंदृश्यते सत्यंदृश्यतेतत्तूपहासास्पदमितिसहेतुकमाह हरिर्हीति य थाझषाणांमीनानामीप्सितंतोयमेवात्मातेनविनाजीवनाभावात्महानतिप्रसिद्धोऽपिगृहेयदिसज्जतेतदादंपतीनांमिथुनानांशूद्रादिष्वपिप्रसिद्धं वयसैवकेवलंयन्महत्त्वंतदेवतस्यभवति नतुज्ञानादिना मिथुनेषुस्त्रीभ्यःपुंसांमहत्त्वंबालमिथुनेभ्यश्चवृद्धमिथुनानांमहत्त्वंयथेत्यर्थः

यस्यास्तिभक्तिर्भगवत्यकिंचनासर्वैर्गुणैस्तत्रसमासतेसुराः ॥ हरावभक्तस्यकुतोमहद्गुणामनोरथेनासति धावतोबहिः ॥ १२ ॥ हरिर्हिसाक्षाद्भगवाञ्छरीरिणामात्माझषाणामिवतोयमीप्सितं ॥ हित्वामहांस्तंयदि सज्जतेगृहेतदामहत्त्वंवयसादंपतीनां ॥ १३॥ तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलं॥हित्वा गृहंसंसृतिचक्रवालंनृसिंहपादंभजताकुतोभयमिति॥१४॥केतुमालेऽपिभगवान्कामदेवस्वरूपेणलक्ष्म्याः प्रियचिकीर्षयाप्रजापतेर्दुहितॄणांपुत्राणांतद्वर्षपतीनांपुरुषायुषाऽहोरात्रपरिसंख्यानानांयासांगर्भामहा पुरुषमहास्त्रतेजसोद्वेजितमनसांविध्वस्ताव्यसवःसंवत्सरांतेविनिपतंति ॥ १५ ॥

॥ १३ ॥ यस्मादेवंतस्मात्गृहंहित्वाऽकुतोभयंनृसिंहपादंभजतेत्यसुराननुपदिशति कीदृशंगृहं रजस्तृष्णारागोऽभिनिवेशः रजआदीनांमू लंकारणमतएवसंसृतीनांजन्ममरणादीनांचक्रवालंमंडलमविच्छेदोयस्मात् ॥१४॥ केतुमालेऽपिकामदेवस्वरूपेणआस्तइतिशेषः किमर्थ मास्तेअतआह लक्ष्म्याइति प्रजापतिःसंवत्सरः संवत्सरोवैप्रजापतिरितिश्रुतेः तस्यदुहितरोरात्र्यभिमानिन्योदेवताः पुत्रादिवसाभिमा निनोदेवाः तेषांचप्रियचिकीर्षया पुरुषायुषावर्षशतेनयान्यहोरात्राणितैः परिसंख्यानंगणनायेषां षट्त्रिंशत्सहस्राणामित्यर्थः यासांदु हितॄणां महापुरुषस्यमहास्त्रंचक्रंतस्यतेजसा ॥ १५ ॥

रमांरमयन्स्वीयानींद्रियाणिरमयते केनसाधनेनरमयन्तदाह अतीवसुललितयागत्यायोविलासस्तेनाविलसितोरुचिरोहासलेशोमंदास्मितंतत्सहितोऽवलोकएवलीलातयाकिंचिदुत्तंभितमुत्तुंगितंसुंदरंयद्भ्रूमंडलंतेनसुभगंवदनारविंदंतस्यश्रिया ॥ १६ ॥ तद्भर्तृभिर्दिवसाधिष्ठातृभिरुपेता ॥ १७ ॥ सर्वैर्गुणविशेषैःश्रेष्ठवस्तुभिर्विलक्षितोलक्षीकृतआत्मायस्य आकूतीनांक्रियाणांचित्तीनांज्ञानानांचेतसांसंकल्पाध्यवसायादीनांविशेषाणांतत्तद्विषयाणांषोडशकलाअंशाएकादशेंद्रियपंचविषयलक्षणायस्य छंदोमयायवेदोक्तकर्मप्राप्यायअन्नमयायअन्नोपष्टभ्यत्वात् अमृतमयायपरमानंदाविष्कारत्वात् सर्वमयायसर्वाविषयत्वात् सहसेओजसेबलायतद्धेतुत्वात् ॥ १८ ॥ त्वत्कामे

अतीवसुललितगतिविलासविलासितरुचिरहासलेशावलोकलीलयाकिंचिदुत्तंभितसुंदरभ्रूमंडलसुभगवदनारविंदश्रियारमांरमयन्निंद्रियाणिरमयते ॥ १६ ॥ तद्भगवतोमायामयरूपंपरमसमाधियोगेनरमादेवीसंवत्सरस्यरात्रिषुप्रजापतेर्दुहितृभिरुपेताऽहस्सुचतद्भर्तृभिरुपास्तेइदंचोदाहरति॥ १७॥ॐऱ्हांऱ्हींऱ्हूंॐनमोभगवतेहृषीकेशायसर्वगुणविशेषैर्विलक्षितात्मनेआकूतीनांचित्तीनांचेतसांविशेषाणांचाधिपतयेषोडशकलायछंदोमयायान्नमयायामृतमयायसर्वमयायसहसेओजसेबलायकांतायकामायनमस्तेउभयत्रभूयात्॥ १८॥स्त्रियोव्रतैस्त्वाहृषिकेश्वरंस्वतोह्याराध्यलोकेपतिमाशासतेऽन्यं॥तासांनतेवैपरिपांत्यपत्यंप्रियंधनायूंषियतोऽस्वतंत्राः ॥ १९ ॥ सवैपतिःस्यादकुतोभयःस्वयंसमंततःपातिभयातुरंजनं ॥ सएकएवेतरथामिथोभयंनैवात्मलाभादधिमन्यतेपरं॥ २०॥

नैवत्वत्सेवकत्वादहंकृतार्थास्मि अन्यकामनयातुत्वामर्चंत्योनपरिपूर्णमनोरथाःस्युरित्याह स्त्रियइति स्वतएवहृषीकाणामीश्वरंपतिंसंतंत्वामाराध्ययाःस्त्रियोऽन्यंपतिंप्रार्थयंते पतिकामानांहिकामाराधनंव्रतेषुप्रसिद्धं तासामपत्यादीनितेपतयोनपातुंशक्ताः ॥ १९ ॥ अतस्तेपतयएवनभवंतीत्याह सवाइति सचैवंभूतःपतिः भवानेकएवनान्योयोभवानात्मलाभात्परमन्यदधिकंनमन्यतइतरथाऽन्याधीनसुखस्यनस्वतंत्रता स्वतंत्रनानात्वेचमंडलेश्वराणामिवमिथोभयंस्यादित्यर्थः ॥ २० ॥

किंच निष्कामभजनेऽप्रार्थिताएवसर्वेकामाभवंति सकामभजनेतुकामितमात्रमनित्यंचेत्याह यास्त्वीतस्य उक्तलक्षणस्यतवपादसरोरुह स्यार्हणंपूजामेवकामयेतूनफलांतरं साअखिलेषुकामेषुलंपटा सर्वान्कामान्प्राप्नोतीत्यर्थः ईप्सितमीप्सितःफलांतरमाप्तुमपेक्षितःसन् अर्चितश्चेत्तर्हितदेवैकंशासिददासि किंच यद्यतः फलभोगानंतरंभग्नायात्स्त्रायाचितोऽर्थोयस्याःसाप्रतप्यतेदुःखंप्राप्नोति तदेवरासिनतु नित्यं ॥ २१ ॥ ननुममार्हणेकुतःसर्वकामप्राप्तिस्त्वमेवकामार्थिभिःसेव्यसेअतआह मत्प्राप्तयेब्रह्मादयस्तपस्तप्यंतेकुर्वंति कथंभूताः ऐंद्रियेसुखेधीर्येषां अलुक्समासः तथाऽपिभवत्पादपरायणादृतेमांनविंदंति मत्कटाक्षविलसितविभूतिंनलभंतइत्यर्थः यतःत्वय्येवत्हृदयं

यातस्यतेपादसरोरुहार्हणंनिकामयेत्साऽखिलकामलंपटा ॥ तदेवरासीप्सितमीप्सितोऽर्चितोयद्भग्नयाञ्चा भगवन्प्रतप्यते॥२१॥मत्प्राप्तयेऽजेशसुरासुरादयस्तप्यंतउग्रंतपऐंद्रियेधियः॥ ऋतेभवत्पादपरायणान्न मांविंदंत्यहंत्वद्धृदयायतोऽजित॥२२॥सत्वंममाप्यच्युतशीर्ष्णिवंदितंकरांबुजंयत्त्वदधायिसात्वतां ॥ बिभर्षिमालक्ष्मवरेण्यमाययाकईश्वरस्येहितमूहितुंविभुरिति॥२३॥रम्यकेचभगवतःप्रियतमंमात्स्यमवताररूपंतद्वर्षपुरुषस्यमनोःप्राक्प्रदर्शितंसइदानीमपिमहताभक्तियोगेनाराधयतीदंचोदाहरति॥२४॥ॐनमोभगवतेमुख्यतमायनमःसत्त्वायप्राणायौजसेसहसेबलायमहामत्स्यायनमइति ॥२५॥ अंतर्बहिश्चाखिललोकपालकैरदृष्टरूपोविचरस्युरुस्वनः॥ सईश्वरस्त्वंय इदंवशेनयन्नाम्नायथादारुमयींनरःस्त्रियं ॥ २६ ॥

स्याःसाऽहंत्वत्परतंत्रत्वात्त्वदनुवर्तिनमेवविलोकयामिनान्यमित्यर्थः ॥ २२ ॥ इदानींकृपांप्रार्थयते सत्वमिति यद्भजनंविनानकश्चित्पुरुषार्थःसत्वं त्वदिति त्वयायत्करांबुजंसात्त्वतांभक्तानांशीर्ष्णिअधायिकृपयान्यस्तंतन्ममापिशीर्ष्णिनिधेहीतिशेषः कथंभूतं वंदितंसर्वकामवर्षित्वेनसद्भिःस्तुतं नचमयितवानादरः यतः हेवरेण्य मांवक्षसिलक्ष्मबिभर्षि अहोचित्रमेतत् मयिकेवलमादरमात्रंभक्तेषुतुपरमाकृपाअतईश्वरस्यतवयन्माययाईहितंतत्कोवितर्कयितुंसमर्थः ॥२३॥ २४ ॥ सत्वायसत्वप्रधानाय मुख्यतमायप्राणायसूत्रात्मने ॥ २५ ॥ उरुःस्वनोवेदात्मकोनादोयस्य यइदंविश्वंब्राह्मणादिनाम्नाविधिनिषेधालंबनभूतेनवशेऽनयत्नियमितवान्सत्वमीश्वरः तथाचश्रुतिःतस्यवाक्तंतिर्नामानिदामानीति ॥ २६ ॥

नन्विंद्रादयोवशंनयंतिलोकपालत्वात्कुतोऽहंतत्राह यमिति मत्सरएवज्वरोयेषांते यंहित्वाद्विपदःचतुष्पदःसरीसृपंजंगमंस्थाणुस्थाव
रंचयदत्रदृश्यतेतत्किंचिदपिपातुंनशक्ताः सत्वमेवप्राणरूपेणपालकईश्वरश्चेत्यर्थः तथाचश्रुतिः ताअहिंसंताहमुक्थमस्म्यहमुक्थमस्मी
त्यादि ॥ २७ ॥ अवतारचरितमाह भवानिमांक्षोणींमयामनुनासहमत्साहितांधृत्वेत्यध्याहारः ऊर्मिमालावतिप्रलयार्णवेओजसाक्रम
तेविचरति यद्वा पातुमित्यस्यानुषंगः क्षोणींपातुंक्रमते उत्सहतइत्यर्थः यतःअजः कीदृशीं ओषधीनांवीरुधांचनिधिमाश्रयभूतां तस्मै
नमः जगतोयःप्राणगणस्तस्यात्मनेनियंत्रे ॥ २८ ॥ तत्प्रियतमांतांप्रियतनुं ॥ २९ ॥ अकूपारायकूर्माय सर्वःसंपूर्णःसत्वगुणोविशेषणं

यंलोकपालाःकिलमत्सरज्वराहित्वायतंतोऽपिपृथक्समेत्यच॥पातुंनशेकुर्द्विपदश्चतुष्पदःसरीसृपंस्थाणुय
दत्रदृश्यते ॥२७॥ भवान्युगांतार्णवऊर्मिमालिनिक्षोणीमिमामोषधिवीरुधांनिधिं ॥ मयासहोरुक्रमतेज
ओजसातस्मैजगत्प्राणगणात्मनेनमइति ॥२८॥ हिरण्मयेऽपिभगवान्निवसतिकूर्मतनुंबिभ्राणस्तस्यत
त्प्रियतमांतनुमर्यमासहवर्षपुरुषैःपितृगणाधिपतिरुपधावति मंत्रमिमंचानुजपति ॥२९॥ ॐनमोभगव
तेअकूपारायसर्वसत्त्वगुणविशेषणायनोपलक्षितस्थानायनमोवर्ष्मणेभूम्नेनमोनमोऽवस्थानायनमस्ते ॥
॥३०॥ यद्रूपमेतन्निजमाययाऽर्पितमर्थस्वरूपंबहुरूपरूपितं॥संख्यानयस्यास्त्ययथोपलंभनात्तस्मैनमस्ते
ऽव्यपदेशरूपिणे ॥ ३१ ॥जरायुजंस्वेदजमंडजोद्भिदंचराचरंदेवर्षिपितृभूतमैंद्रियं ॥ द्यौःखंक्षितिःशैलसरि
त्समुद्रद्वीपग्रहर्क्षेत्यभिधेयएकः ॥ ३२ ॥

यस्य नउपलक्षितंस्थानंयस्य वारिचरत्वात् वर्ष्मणेवर्षीयसे काला
नवच्छिन्नाय भूम्नेसर्वगताय अवस्थानायआधाराय ॥ ३० ॥ निजमाययाऽर्पितंप्रकाशितमेतदर्थस्वरूपंदृश्यंपृथिव्यादियस्यैवरूपं
यतःपृथक्नास्ति कथंभूतं बहुभिःरूपैरूपितंनिरूपितं यस्यचसंख्यानास्ति कुतः अयथामिथ्यैवोपलंभनात् नहिमरीचिजलमेतावदिति
संख्यातुंशक्यते अव्यपदेशरूपिणेअनिरुक्तप्रपंचाकाराय ॥ ३१ ॥ बहुरूपत्वंदर्शयंस्तस्येश्वरादव्यतिरेकमाह जरायुजमितिद्वीपग्रहर्क्षमि
त्याभिधेयस्त्वमेवैको नत्वद्व्यतिरिक्तोऽस्ति सर्वंखल्विदंब्रह्मेत्यादिश्रुतेरित्यर्थः ॥३२ ॥

सप्रपंचतामनूयतन्निरासेनप्रणमति यस्मिन्निति असंख्येयाअनंताविशेषायेषांतानिनामानिरूपाण्याकृतयश्चयस्यताहशेयास्मिन्त्वयि कविभिःकपिलादिभिरियंचतुर्विंशत्यादिसंख्याकाल्पितासतीययातत्त्वदृशायेनतत्त्वज्ञानेनापनीयतेतस्मैसांख्यासिद्धांतरूपायनमः परमार्थ रूपायेतिवा ॥ ३३ ॥ एषाभूरुपधावतिहिंस्यन्वयः ॥ ३४ ॥ मंत्रैस्तत्त्वेनलिंग्यतइतितथातस्मै यज्ञाअयूपाःक्रतवःसयूपास्तद्रूपाय अ तएवमहांतोध्वराअवयवभूतायस्य कर्मणाशुक्लायशुद्धाययज्ञानुष्ठात्रे त्रियुगायकृतयुगेयज्ञाभावात् यद्वाकालियुगेछन्नत्वात् ॥ ३५ ॥ कवयोविद्वांसः विपश्चितोनिपुणाःगुणेषुदेहेंद्रियादिषुमथ्नंतिविचिन्वंति मथ्नाविवेकसाधनेनमनसाक्रियार्थैःकर्मभिस्तत्फलैश्चगूढमप्रकाश

यस्मिन्नसंख्येयविशेषनामरूपाकृतौकविभिःकल्पितेयं ॥ संख्याययातत्त्वदृशाऽपनीयतेतस्मैनमःसांख्य निदर्शनायतइति ॥ ३३ ॥ उत्तरेषुचकुरुषुभगवान्यज्ञपुरुषःकृतवराहरूपआस्तेतंतुदेवीहैषाभूःसहकुरुभि रस्खलितभक्तियोगेनोपधावतिइमांचपरमामुपनिषदमावर्त्तयति ॥ ३४॥ ॐनमोभगवतेमंत्रतत्त्वालिंगायय ज्ञक्रतवेमहाध्वरावयवायमहापुरुषायनमःकर्मशुक्लायत्रियुगायनमस्ते ॥ ३५ ॥ यस्यस्वरूपंकवयोविप श्चितोगुणेषुदारुष्विवजातवेदसं ॥ मथ्नंतिमथ्नामनसादिदृक्षवोगूढंक्रियार्थैर्नमईरितात्मने ॥३६॥ द्रव्यक्रि याहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने ॥ अन्वीक्षयांऽगातिशयात्मबुद्धिभिर्निरस्तमायाकृतये नमोनमः ॥ ३७ ॥ करोतिविश्वस्थितिसंयमोदयंयस्येप्सितंनेप्सितमीक्षितुर्गुणैः॥ मायायथाऽयोभ्रमतेत दाश्रयंग्राव्णोनमस्तेगुणकर्मसाक्षिणे ॥ ३८॥

मानंदिदृक्षवः एवंमंथनेईरितःप्रकटितःआत्मास्वरूपंयस्यतस्मैनमः ॥ ३६ ॥ मथनमेवदर्शयन्नाह द्रव्यंविषयः क्रियाइंद्रियव्यापारःहे तुर्देवता अयनंदेहः ईशःकालः कर्ताअहंकारः एतैर्मायायागुणैःकार्यैरुपलक्षणैर्वस्तुत्वेनानिरीक्षितोयआत्मातस्मै अन्वीक्षयाविचारे ण अंगैर्यमनियमादिभिः अतिशयात्मानिश्चयवतीबुद्धिर्येषांतैः निरस्तामायानिमित्ताआकृतिर्यस्मात्तस्मै ॥ ३७ ॥ तदेवंनिर्गुणरूपेणन त्वापरमेश्वररूपेणप्रणमति करोतीति यस्येक्षितुर्जीवार्थमीप्सितमत्यंतानिच्छायामीक्षणायोगात् स्वार्थंतुनेप्सितं विश्वस्थित्यादिस्वगुणै र्मायाकरोति तस्याजडत्वेपीश्वरसन्निधानात्प्रवृत्तिदृष्टांतेनाह यथाअयोलोहंग्राव्णोऽयस्कांतान्निमित्तात्भ्रमते तदाश्रयंतदभिमुखंसत्गु णानांकर्मणांजीवादृष्टानांचसाक्षिणेतस्मैतेनमः ॥ ३८ ॥

अवतारचरितमाह प्रमथ्येति योजगतामादिःकारणभूतःसूकरः मांपृथ्वीमग्रदंष्ट्रेदंष्ट्राऽग्रेकृत्वा रसातलादारभ्यउदन्वतःप्रलयार्णवात् इ भोगजइवनिरगात् ततश्चप्रतिगजतुल्यंदैत्यंप्रमथ्ययःक्रीडन्स्थितस्तंविभुंप्रणताऽस्मीत्यन्वयः ॥ ३९ ॥ इतिपंचमेटीकायामष्टादशोऽध्याय ॥ १८ ॥ ॥ ॥ ऊनविंशेकिंपुरुषेभारतेचोपवर्ण्यते॥सेव्यसेवकभावश्चभारतश्रैष्ठ्यमेवच ॥१॥ किंपुरुषेवर्षइति ॥१॥ भर्ताचासौ भगवांश्चतस्यकथां ॥२॥ आर्याणिलक्षणानिशीलंव्रतंचयस्मिन् उपशिक्षितात्मनेसंयतचित्ताय उपासितोऽनुसृतोलोकोयेन साधुवादः

प्रमथ्यदैत्यंप्रतिवारणंमृधेयोमांरसायाजगदादिसूकरः ॥ कृत्वाऽग्रदंष्ट्रेनिरगादुदन्वतःक्रीडन्निवेभःप्रणताऽस्मितंविभुमिति ॥ ३९ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेभुवनकोशवर्णनंनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ छ ॥ श्रीशुकउवाच किंपुरुषेवर्षेभगवंतमादिपुरुषंलक्ष्मणाग्रजंसीताऽभिरामंतच्चरणसन्निकर्षाभिरतःपरमभागवतोहनुमान्सहकिंपुरुषैरविरतभक्तिरुपास्ते ॥१॥ आर्ष्टिषेणेनसहगंधर्वैरनुगीयमानांपरमकल्याणींभर्तृभगवत्कथांसमुपशृणोतिस्वयंचेदंगायति ॥ २ ॥ ॐनमोभगवतेउत्तमश्लोकायनमआर्यलक्षणशीलव्रतायनमउपशिक्षितात्मनेउपासितलोकायनमःसाधुवादनिकषणायनमोब्रह्मण्यदेवायमहापुरुषायमहाराजायनमइति ॥ ३ ॥ यत्तद्विशुद्धानुभवमात्रमेकंस्वतेजसाध्वस्तगुणव्यवस्थं ॥ प्रत्यक्प्रशांतंसुधियोपलंभनंह्यनामरूपंनिरहंप्रपद्ये ॥ ४ ॥

साधुत्वप्रसिद्धिस्तस्यनिकषणायनिकषाइमवन्निर्द्धारस्थानायपरमसीम्नइत्यर्थः ॥ ३ ॥ श्रीरामंपरमार्थरूपेणप्रणमति यदेकंवेदांतेषुप्रसिद्धंतत्तत्त्वंप्रपद्ये तत्कथंभूतं विशुद्धश्चासावनुभवश्चसएवमात्रास्वरूपंयस्य विशुद्धत्वेहेतुः प्रशांतं तत्रापिहेतुः स्वतेजसास्वरूपप्रकाशेन ध्वस्ताःगुणानांविविधाजाग्रदाद्यवस्थायस्मिन् अनुभवमात्रत्वेहेतुः प्रत्यक्दृश्यादन्यत् तत्कुतः अनामरूपंननुवस्तुतएवंभूतस्यापिजीवस्योक्तसर्वविपर्ययोदृश्यतेतत्राह निरहमहंकाराभावात् नतथावैपरीत्यमित्यर्थः ननुश्रीरामस्यरूपंनैवंप्रतीयतेतत्राह सुधियापुंसाउपलभ्यत इत्युपलंभनं शुद्धचित्तेनब्रह्मत्वेनैवोपलभ्यतइत्यर्थः ॥ ४ ॥

कथंतर्हिदशरथपुत्रत्वंतत्राह विभोर्मर्त्यावतारस्तुरक्षसोरावणस्यवधाय तस्यमनुष्यादन्यतोऽवध्यत्वात् नकेवलमेतावत्किंत्विहसंसारे स्त्रीसंगादिकृतंदुःखंदुर्वारमितिमर्त्यानांशिक्षणंच शिक्षार्थमपीत्यर्थः अन्यथास्वेस्वरूपेरममाणस्यजगदात्मनःसीताविरहकृतानिव्यसनानिइतिकुतःस्युः ॥ ५ ॥ विषयासक्त्यभावेनव्यसनानर्हत्वमुपपादयति नवैसभगवान्त्रिलोक्यांक्वापिसक्तः यतआत्मवतांधीराणामात्मासुहृत्तमश्च अतोनस्त्रीकृतंमोहंप्राप्नुयात् लक्ष्मणंचेति देवदूतेनश्रीराममंत्रयताविज्ञापितमत्रागतस्त्वयावध्यइतितदैवद्वारिस्थितंलक्ष्मणंदुर्वाससमागतंविज्ञापयितुंप्रविष्टंहंतुमुद्यतोवसिष्ठवाक्यात्तत्याज तच्चनयुज्येतेत्यर्थः ॥ ६ ॥ अतःश्रीरामएवसर्वैःसेव्यइतिवक्तुंनतस्यतोष

मर्त्यावतारस्त्विहमर्त्यशिक्षणंरक्षोवधायैवनकेवलंविभोः ॥ कुतोऽन्यथास्यूरमतःस्वआत्मनःसीताकृतानि व्यसनानीश्वरस्य ॥ ५ ॥ नवैसआत्मात्मवतांसुहृत्तमःसक्तस्त्रिलोक्यांभगवान्वासुदेवः ॥ नस्त्रीकृतंकश्मलमश्नुवीतनलक्षणंचापिविहातुमर्हति ॥ ६ ॥ नजन्मनूनंमहतोनसौभगंनवाङ्नबुद्धिर्नाकृतिस्तोषहेतुः ॥ तैर्यद्विसृष्टानपिनोवनौकसश्चकारसख्येबतलक्ष्मणाग्रजः ॥७॥ सुरोऽसुरोवाऽप्यथवानरोनरःसर्वात्मनायःसुकृतज्ञमुत्तमं ॥ भजेतरामंमनुजाकृतिंहरिंयउत्तराननयत्कोसलान्दिवमिति ॥८॥ भारतेपिवर्षेभगवान्नरनारायणाख्यआकल्पांतमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलंभनमनुग्रहायात्मवतामनुकंपयातपोऽव्यक्तगतिश्चरति॥९॥तंभगवान्नारदोवर्णाश्रमवतीभिर्भारतीभिःप्रजाभिर्भगवत्प्रोक्ताभ्यांसांख्ययोगाभ्यांभगवदनुभावोपवर्णनंसावर्णेरुपदेक्ष्यमाणःपरमभक्तिभावेनोपसरतिइदंचाभिगृणाति ॥ १०॥

हेतुःसत्कुलजन्मादिर्किंतुभक्तिरेवेत्याह नजन्मेति महतःपुरुषाज्जन्ममहतःश्रीरामस्येतिवा सौभगंसौंदर्यंआकृतिर्जातिःयद्यस्मात्तैर्जन्मादिभिर्विसृष्टान्त्यक्तानापिनोवनचरान् बतअहो लक्ष्मणस्याग्रजोऽपिसाखित्वेकृतवान् ॥ ७ ॥ तस्मात्सुरोवाअन्योवायःकोपिश्रीराममेवसर्वप्रकारेणभजेत् सुकृतज्ञमल्पीयस्यपिभजनेबहुमानिनं उत्तरान्कोसलान्अयोध्यावासिनः ॥ ८ ॥ उपचितैर्धर्मादिभिरात्मोपलभ्यतेयेनतत्तपश्चरति तत्रउपशमइंद्रियाणांसंयमः उपरमोनिरहंकारता आत्मवतामनुग्रहायनस्वार्थं ईश्वरत्वात् ॥ ९ ॥ भगवदनुभावउपवर्ण्यतेयेनपंचरात्रेणतत्सावर्णेर्मनोः उपसरतिसेवते ॥ १० ॥ ॥ ॥ ॥

उपरतानात्म्यायनिरहंकाराय ॥ ११ ॥ असक्तश्चासौविविक्तश्चसाक्षीचतस्मैनमः असक्तत्वंदर्शयति अस्यविश्वस्यसर्गादिषुकर्ताऽपियो नबध्यतेअहंकर्तेतिनमन्यते विविक्तत्वमाह देहगतोऽपिदैहिकैःक्षुत्पिपासादिभिर्योनहन्यतेनाभिभूयते साक्षित्वमाह यस्यद्रष्टुरपिसतो दृष्टिर्गुणैर्दृश्यैर्नविदूष्यतेनविक्रियते ॥ १२ ॥ योगकौशलंनिरूपयन्योगंप्रार्थयते इदमितित्रिभिः हेयोगेश्वर हिरण्यगर्भोयद्योगनैपुणं जगाद इदमेव तत्किं जन्मप्रभृतिभक्त्याअंतकालेपुमांस्त्वयिमनोधारयेदितियत् कथंभूतःसन् उज्झितंदुष्कलेवरंतदभिमानोयेन ॥ १३ ॥

ॐनमोभगवतेउपशमशीलायोपरतानात्म्यायनमोऽकिंचनवित्तायऋषिऋषभायनरनारायणायपरमहंसपरमगुरवेआत्मारामाधिपतयेनमोनमइति ॥ ११ ॥ गायतिचेदंकर्ताऽस्यसर्गादिषुयोनबध्यतेनहन्यतेदेहगतोऽपिदैहिकैः ॥ द्रष्टुर्नदृग्यस्यगुणैर्विदूष्यतेतस्मैनमोऽसक्तविविक्तसाक्षिणे ॥ १२ ॥ इदंहियोगेश्वरयोगनैपुणंहिरण्यगर्भोभगवान्जगादयत् ॥ यदंतकालेत्वयिनिर्गुणेमनोभक्त्यादधीतोज्झितदुष्कलेवरः ॥ १३ ॥ यथैहिकामुष्मिककामलंपटःसुतेषुदारेषुधनेषुचिंतयन् ॥ शंकेतविद्वान्कुकलेवरात्ययाद्यस्तस्ययत्नःश्रमएवकेवलं ॥ १४ ॥ तन्नःप्रभोत्वंकुकलेवरार्पितांत्वन्मायायाऽहंममतामधोक्षज ॥ भिंद्यामयेनाशुवयंसुदुर्भिदांविधेहियोगंत्वयिनःस्वभावजमिति ॥ १५ ॥ भारतेप्यस्मिन्वर्षेसरिच्छैलाःसंतिबहवोमलयोमंगलप्रस्थोमैनाकस्त्रिकूटऋषभःकूटकःकोल्लकःसह्योदेवगिरिर्ऋष्यमूकःश्रीशैलोवेंकटोमहेंद्रोवारिधारोविंध्यःशुक्तिमानृक्षगिरिःपारियात्रोद्रोणश्चित्रकूटोगोवर्द्धनोरैवतकःककुभोनीलोगोकामुखइंद्रकीलःकामगिरिरितिचान्येचशतसहस्रशःशैलास्तेषांनितंबप्रभवानदानद्यश्चसंत्यसंख्याताः ॥ १६ ॥ ॥

अन्यथातस्यशास्त्राभ्यासादिश्रमोव्यर्थइत्याह ऐहिकामुष्मिककामेषुलंपटोमूर्खःसुतादिषुयोगक्षेमांचिंतयन्कुत्सितस्यकलेवरस्यात्ययात्मृत्योःशंकेत तथाविद्वानपिसन्यःशंकेततस्ययत्नःश्रमएव ॥ १४ ॥ यस्माद्विदुषोऽपीयमेवदशातत्तस्माद्धेप्रभोअधोक्षजत्वमेवनोयोगंविधेहि कीदृशं त्वयिस्वभावजंसहजवासनारूपं येनयोगेनवयंत्वन्माययानःकुकलेवरेअर्पितामहंममतांशीघ्रंभिंद्यामत्यजेम दुर्भिदामुपायांतरैःसर्वथात्यक्तुमशक्यां ॥ १५ ॥ इलावृतवदस्मिन्नपिवर्षेसरितःशैलाश्चसंति नितंबप्रभवाःतटेभ्यःसंभूताः ॥ १६ ॥

आत्मनाचदेहेनाप्युपस्पृशंति ॥ १७ ॥ १८ ॥ लब्धंजन्मयैस्तैः पुरुषैः सात्विकादिस्वकृतेनकर्मणादिव्यादिगतयआत्मनोविधीयंतेसाध्यं
ते हियस्मात् सर्वाएवगतयः कर्मानुसारेणसर्वेषांभवंति यस्यवर्णस्ययद्विधानंमोक्षप्रकारः संन्यासवनस्थत्वादिस्तदनातिक्रमणोऽस्मिन्नेव वर्षे
नृणामपवर्गश्चभवति एतच्चकर्मादिबहुसाधनसंभवाभिप्रायेणोक्तंनत्वन्यत्रापवर्गाभावेन तदुपर्यपिबादरायणसंभवादितिदेवानामपिमोक्ष
स्यसूचितत्वात् ॥ १९ ॥ अपवर्गस्वरूपमाह योऽसाविति अनात्म्येआत्मनिभवमात्म्यंरागादितद्रहिते अनिरुक्तवाचामगोचरे अनिल

एतासामपोभारत्यःप्रजानामभिरेवपुनंतीनामात्मनाचोपस्पृशंति ॥१७॥ चंद्रवशाताम्रपर्णीअवटोदाकृत
मालवैहायसीकावेरीवेणीपयस्विनीशर्करावर्तातुंगभद्राकृष्णावेण्याभीमरथीगोदावरीनिर्विंध्यापयोष्णी
तापीरेवासुरसानर्मदाचर्मण्वतीसिंधुःअंधःशोणश्चनदौमहानदीवेदस्मृतीऋषिकुल्यात्रिसामाकौशिकीमं
दाकिनीयमुनासरस्वतीदृषद्वतीगोमतीसरयूरोधस्वतीसप्तवतीसुषोमाशतद्रूश्चंद्रभागामरुद्वृधावितस्ताअ
सिक्नीविश्वेतिमहानद्यः ॥१८॥ अस्मिन्नेववर्षेपुरुषैर्लब्धजन्माभिःशुक्ललोहितकृष्णवर्णेनस्वारब्धेनकर्मणा
दिव्यमानुषनारकगतयोबह्व्यआत्मनआनुपूर्व्येणसर्वाह्येवसर्वेषांविधीयंतेयथावर्णविधानमपवर्गश्चापि
भवति ॥ १९ ॥ ॥ योऽसौभगवतिसर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयनेपरमात्मनिवासुदेवेऽनन्यनि
मित्तभक्तियोगलक्षणोनानागतिनिमित्ताऽविद्याग्रंथिरंधनद्वारेणयदाहिमहापुरुषपुरुषप्रसंगः ॥ २० ॥
एतदेवहिदेवागायंतिअहोअमीषांकिमकारिशोभनंप्रसन्नएषांस्विदुतस्वयंहरिः ॥ यैर्जन्मलब्धंनृषुभार
ताजिरेमुकुंदसेवौपयिकंस्पृहाहिनः ॥२१॥

यनेअनाधारे अनन्यनिमित्तोऽहैतुकोभक्तियोगएवलक्षणंस्वरूपंयस्य कथंभवतिना
नागतीनांनिमित्तंयोऽविद्याग्रंथिस्तस्यरंधनंछेदनंतद्द्वारेणमहापुरुषपुरुषाविष्णुभक्तास्तैःप्रकृष्टःसंयोगोयदाभवतितदा ॥ २० ॥ एतदेवमा
नुष्यमेत्रसर्वपुरुषार्थसाधनंगायंति अमीषामेभिः उतस्वित् अथवा स्वयमेवसाधनंविनैवहरिरेषांप्रसन्नोऽभूत् एवंभूतस्यपुण्यस्यदुष्करत्वात्
भारताजिरेभारतांगनेनःकेवलंस्पृहैव यत्रतन्मुकुंदसेवोपयोगिनृषुजन्मयैर्लब्धं ॥ २१ ॥ ॥ ॥

स्पृहामेवाह किमित्यादिसप्तभिः दुष्करैः क्रत्वादिभिर्नः फल्गुनातुच्छेनद्युजयेनस्वर्गप्राप्त्या।किंनार्किंचित्फलं कुतः यत्रनारायणपादपंकज
स्मृतिर्नास्ति प्रत्युतअतिशयितादिंद्रियाणामुत्सवात्भोगात्प्रमुष्टाऽभूत् ॥ २२ ॥ क्षणमल्पमेवायुर्येषां वरत्वेहेतुः मर्त्येनापिदेहेनक्षणेनैव
कालेनकृतंकर्मसंन्यस्यहरेः पदंसम्यग्यांति ॥ २३ ॥ अतःयत्रवैकुंठकथामृतनद्योनसंति तदाश्रयाःकथापगाश्रयामहांतोनृत्याद्युत्सवायेषु
तादृशायज्ञेशस्यमखाश्वपूजाःसःसुरेशस्यब्रह्मणोऽपिलोकोनसेव्यतां ॥ २४ ॥ अमुमुक्षून्नरान्निंदति प्राप्ताइति ज्ञानंचतदर्थाःक्रियाश्चत
दर्थानिद्रव्याणिचतेषांकलापेनसंभृतांपूर्णां अपुनर्मृतायमोक्षाय वनौकाइव वनौकसःपक्षिणोयथालुब्धकान्मुक्ताअपिपुनर्यदितस्मिन्नेव



किंदुष्करैर्नःक्रतुभिस्तपोव्रतैर्दानादिभिर्वाद्युजयेनफल्गुना ॥ नयत्रनारायणपादपंकजस्मृतिःप्रमुष्टाऽति
शयेंद्रियोत्सवात् ॥२२ ॥ कल्पायुषांस्थानजयात्पुनर्भवात्क्षणायुषांभारतभूजयोवरं ॥ क्षणेनमर्त्येनकृ
तंमनस्विनःसंन्यस्यसंयांत्यभयंपदंहरेः ॥ २३ ॥ नयत्रवैकुंठकथासुधापगानसाधवोभागवतास्तदाश्र
याः ॥ नयत्रयज्ञेशमखामहोत्सवाःसुरेशलोकोऽपिनवैससेव्यतां ॥२४॥ प्राप्तानृजातिंत्विहयेचजंतवोज्ञा
नक्रियाद्रव्यकलापसंभृतां ॥ नवैयतेरन्नपुनर्मृतायतेभूयोवनौकाइवयांतिबंधनं ॥ २५ ॥ यैःश्रद्धयाब
र्हिषिभागशोहविर्निरुप्तमिष्टंविधिमंत्रवस्तुतः ॥ एकःपृथङ्नामभिराहुतोमुदागृण्हातिपूर्णःस्वयमाशिषां
प्रभुः ॥ २६ ॥ सत्यंदिशत्यर्थितमर्थितोनृणांनैवार्थदोयत्पुनरर्थितायतः ॥ स्वयंविधत्तेभजतामनिच्छता
मिच्छापिधानंनिजपादपल्लवं ॥ २७ ॥ ॥ ॥ ॥

वृक्षेप्रमत्ताविहरंतितर्हियथाबध्यंतेतद्वत् ॥ २५ ॥ अहोभारतवासिनांभाग्यमित्याहुः यैरिति अग्नयेजुष्टंनिर्वपामिइंद्रायजुष्टंनिर्वपामीत्ये
वंभागशोनिरुप्तंपृथक्कृतं कथं विधिनाप्रकारेणमंत्रेणच वस्तुतश्चरुपुरोडाशादिभेदेनइष्टंदेवतामुद्दिश्यत्यक्तंनिरुप्तंचममेदमितिस्वीकृत्य
त्यागानंतरमश्नातीत्यर्थः पृथक्इंद्रादिनामभिराहुतःआहूतःआशिषांप्रभुः स्वयंपूर्णोऽपिहरिः ॥ ३२ ॥ तत्रापिनिष्कामाःकृतार्थाइत्या
हुः सत्यमिति प्रार्थितःसन्नर्थितंददातीति सत्यंतथापिपरमार्थदोनभवत्येव यद्यस्माद्यतोदत्तानंतरंपुनरर्थिताभवति ननुनार्थितश्चेत्किमपि
नदद्यादित्याशंक्याह अनिच्छतांनिष्कामानां तदुत्थानांपिधानमाच्छादकंसर्वकामपरिपूरकंनिजपादपल्लवंस्वयमेवसंपादयाति ॥ २७ ॥

स्विष्टस्यसम्यग्यजनस्य सूक्तस्यप्रवचनस्य कृतस्यअन्यस्यापिकर्मणः स्वर्गसुखादुपभुक्तादवशेषितंयदिकिंचिदस्तितेनाजनाभेवर्षेनोऽस्माकंजन्मस्यात् कीदृशं स्मृतिमत् हरिरेवसेव्यइत्यनुसंधानयुक्तं यतोहरिर्भजतांशंसुखंतनोति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ इति पंचमेटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ॥ विंशेप्लक्षादिषड्द्वीपस्थितिमाहसहार्णवैः ॥ लोकालोकस्थितिश्चांतर्बहिर्भा

यद्यत्रनःस्वर्गसुखावशेषितंस्विष्टस्यसूक्तस्यकृतस्यशोभनं ॥ तेनाजनाभेस्मृतिमज्जन्मनःस्याद्वर्षेहरिर्यद्भजतांशंतनोति ॥ २८ ॥ श्रीशुकउवाच जंबूद्वीपस्यचराजन्नुपद्वीपानष्टौहैकउपदिशंतिसगरात्मजैरश्वान्वेषणइमांमहींपरितोनिखनद्भिरुपकल्पितान् ॥ २९ ॥ तद्यथास्वर्णप्रस्थश्चंद्रशुक्लआवर्तनोरमणकोमंदरहरिणःपांचजन्यःसिंहलोलंकेति ॥ ३० ॥ एवंतवभारतोत्तमजंबूद्वीपवर्षविभागोयथोपदेशमुपवर्णित इति ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेजंबूद्वीपवर्णनोनामएकोनविंशतितमोऽध्यायः ॥ १९ ॥ श्रीशुकउवाच अतःपरंप्लक्षादीनांप्रमाणलक्षणसंस्थानतोवर्षविभागउपवर्ण्यते ॥ १ ॥ जंबूद्वीपोऽयं यावत्प्रमाणविस्तारस्तावताक्षारोदधिनापरिवेष्टितोयथामेरुर्जंब्वाख्येनलवणोदधिरपिततोद्विगुणविशालेनप्लक्षाख्येनपरिक्षिप्तोयथापरिखाबाह्योपवनेनप्लक्षोजंबूप्रमाणोद्वीपाख्याकरोहिरण्मयउत्थितोयत्राग्निरुपास्तेसप्तजिह्वस्तस्याधिपतिःप्रियव्रतात्मजइध्मजिह्वःस्वंद्वीपंसप्तवर्षाणिविभज्यसप्तवर्षनामभ्यआत्मजेभ्यआकलय्यस्वयमात्मयोगेनोपरराम ॥ २ ॥ शिवंयवयसंसुभद्रंशांतंक्षेममममृतमभयमितिवर्षाणितेषुगिरयोनद्यश्चसप्तैवाभिज्ञाताः ॥ ३ ॥ ॥ ॥ ॥ ॥

गादिमानतः ॥ १ ॥ १ ॥ तावतालक्षविस्तारेणपरिक्षिप्तःपरिवेष्टितः उपास्तेतिष्ठति आकलय्यसमर्प्य ॥ २ ॥ अभिज्ञाताःप्रसिद्धाः सप्तैवअन्येचपर्वतानद्यश्चसहस्रशःसंतीत्यर्थः मानसोत्तरस्यमंडलाकारत्वोक्तेरेतेषुप्लक्षादिपंचद्वीपेषुवर्षाद्रयस्तिर्यग्रेखाकाराउभयतोऽब्धिस्पृशंतइतिगम्यते अन्यथासप्तवर्षविभागासंभवात् वैष्णवेवर्षाणांपूर्वादिक्रमोक्तेश्च ॥ ३ ॥ ॥ ॥

जलोपस्पर्शनेनविधूतंरजस्तमश्चयेषां हंसादयोब्राह्मणादिस्थानीयाःवर्णाः विबुधोपमंसंदर्शनंक्लमस्वेदादिरहितंरूपंप्रजननमपत्योत्पादनंचयेषां ॥ ४ ॥ विगीताअपिद्वीपमंत्राव्याख्यायंते प्रत्नस्यपुराणपुरुषस्यविष्णोर्यद्रूपंतंसूर्यमीमहीति शरणंव्रजेम कथंभूतं सत्यादीना

मणिकूटोवज्रकूटइंद्रसेनोज्योतिष्मान्सुपर्णोहिरण्यष्ठीवोमेघमालइतिसेतुशैलाः अरुणानृम्णांगिरसीसावित्रीसुप्रभाताऋतंभरासत्यंभराइतिमहानद्यः यासांजलोपस्पर्शनविधूतरजस्तमसोहंसपतंगोर्ध्वायनसत्यांगसंज्ञाश्चत्वारोवर्णाःसहस्रायुषोविबुधोपमसंदर्शनप्रजननाःस्वर्गद्वारंत्रय्याविद्ययाभगवंतंत्रयीमयंसूर्यमात्मानंयजंते ॥ ४ ॥ प्रत्नस्यविष्णोरूपंचसत्यस्यऋतस्यब्रह्मणोऽमृतस्यचमृत्योश्चसूर्यमात्मानमीमहीति ॥ ५ ॥ प्लक्षादिषुपंचसुपुरुषाणामायुरिंद्रियमोजःसहोबलंबुद्धिर्विक्रमइतिचसर्वेषामौत्पत्तिकीसिद्धिरविशेषेणवर्तते ॥ ६ ॥ प्लक्षःस्वसमानेनेक्षुरसोदेनावृतोयथातथाद्वीपोऽपिशाल्मलोद्विगुणविशालःसमानेनसुरोदेनावृतःपरिवृंक्ते ॥७॥ यत्रहवैशाल्मलीप्लक्षायामायस्यांवावकिलनिलयमाहुर्भगवतश्छंदःस्तुतःपत्रत्रिराजस्यसाद्वीपहूतयेउपलक्ष्यते ॥ ८ ॥ तद्द्वीपाधिपतिःप्रियव्रतात्मजोयज्ञबाहुःस्वसुतेभ्यःसप्तभ्यस्तन्नामानिसप्तवर्षाणिव्यभजत्सुरोचनंसौमनस्यंरमणकंदेववर्षंपारिभद्रमाप्यायनमविज्ञातमिति ॥ ॥ ९ ॥ तेषुवर्षाद्रयोनद्यश्चसप्तैवाभिज्ञाताःस्वरसःशतशृंगोवामदेवःकुंदोमुकुंदःपुष्पवर्षःसहस्रश्रुतिरितिअनुमतिःसिनीवालीसरस्वतीकुहूरजनीनंदाराकेति ॥ १० ॥ तद्वर्षपुरुषाःश्रुतधरवीर्यधरवसुंधरेषंधरसंज्ञाभगवंतंवेदमयंसोममात्मानंवेदेनयजंते ॥ ११ ॥ ॥ ॥ ॥

मात्मानमधिष्ठातारं तत्रसत्यमनुष्ठीयमानोधर्मः ऋतंप्रमीयमाणोधर्मः ब्रह्मणस्तद्बोधकस्य वेदस्य अमृतस्यशुभफलस्य मृत्योरशुभफलस्य ॥ ५ ॥ ॥ ६ ॥ ७ ॥ सुपर्णोऽसिगरुत्मान्त्रिवृत्तोशिरइत्यादिश्रुतेः छंदोभिःस्वावयवैःश्रीविष्णुंस्तौतीतिछंदःस्तुत् तस्यद्वीपस्य हूतयेव्यपदेशाय ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ॥ ॥

स्वगोभिः स्वरश्मिभिः अंधः अन्नं सोमोनोराजास्तुआभिमुख्येनभवतु ह्रस्वपाठेत्वविवक्षयासंध्यभावः ॥ १२ ॥ एवंसुरोदाद्बहिर्घृतोदेना
वृतः कुशद्वीपइत्यन्वयः स्वशष्पाणिस्वकोमलशिखास्तेषांरोचिषा ॥१३॥१४॥१५॥१६॥ हेजातवेदः त्वंसाक्षात्परस्यब्रह्मणोहरेर्हव्यवाड

स्वगोभिःपितृदेवेभ्योविभजन्कृष्णशुक्लयोः ॥ प्रजानांसर्वासांराजांऽधःसोमोनआस्त्विति॥१२॥ एवंसुरोदाद्बहिस्तद्विगुणःसमानेनावृतोघृतोदेनयथापूर्वःकुशद्वीपोयस्मिन्कुशस्तंबोदेवकृतस्तद्वीपाख्याकरोज्वलनइवापरःस्वशष्परोचिषादिशोविराजयति॥१३॥तद्वीपपतिःप्रैयव्रतोराजाहिरण्यरेतोनामस्वंद्वीपंसप्तभ्यःस्वपुत्रेभ्योयथाभागंविभज्यस्वयंतपआतिष्ठत ॥ १४ ॥ वसुवसुदानदृढरुचिनाभिगुप्तस्तुत्यव्रतविविक्तवामदेवनामभ्यस्तेषांवर्षेषुसीमागिरयोनद्यश्चाभिज्ञाताःसप्तैवचक्रश्चतुःशृंगःकपिलश्चित्रकूटोदेवानीकऊर्ध्वरोमाद्रविणइति ॥१५॥रसकुल्यामधुकुल्यामित्रविंदाश्रुतविंदादेवगर्भाघृतच्युतामंत्रमालेतियासांपयोभिःकुशद्वीपौकसःकुशलकोविदाभियुक्तकुलकसंज्ञाभगवंतंजातवेदसरूपिणंकर्मकौशलेनयजंते ॥ १६ ॥ परस्यब्रह्मणःसाक्षाज्जातवेदोऽसिहव्यवाट्॥देवानांपुरुषांगानांयज्ञेनपुरुषंयजेति ॥१७॥ तथाबहिःक्रौंचद्वीपोद्विगुणःस्वमानेनक्षीरोदेनपरितउपक्लृप्तोवृतोयथाकुशद्वीपोघृतोदेनयस्मिन्क्रौंचोनामपर्वतराजोद्वीपनामनिर्वर्तकआस्ते ॥ १८ ॥ योऽसौगुहप्रहरणोन्मथितनितंबकुंजोऽपिक्षीरोदेनासिच्यमानोभगवतावरुणेनाभिगुप्तोविभयोबभूव ॥१९॥तस्मिन्नपिप्रैयव्रतोघृतपृष्ठोनामाधिपतिःस्वेद्वीपेवर्षाणिसप्तविभज्यतेषुपुत्रनामसुसप्तरिक्थादान्वर्षपान्निवेश्यस्वयंभगवान्भगवतःपरमकल्याणयशसआत्मभूतस्यहरेश्चरणारविंदमुपजगाम ॥२०॥ आमोमधुरुहोमेघपृष्ठोसुधामाभ्राजिष्ठोलोहितार्णोवनस्पतिरितिघृतपृष्ठसुतास्तेषांवर्षगिरयःसप्तसप्तैवनद्यश्चाभिख्याताःशुक्लोवर्द्धमानोभोजनउपबर्हिणोनंदोनंदनःसर्वतोभद्रइति ॥२१॥

सि अतोदेवानांयज्ञेनपुरुषंहरिमेवयज अंगानांनाम्नादत्तमंगिनेसमर्पयेत्यर्थः॥१७॥ उपक्लृप्तोवेष्टितःयथाकुशद्वीपोघृतोदेनावृतः॥१८॥ गुहस्यकार्तिकेयस्य प्रहरणेनआयुधेन उन्मथितानितंबाः कुंजानिचयस्य॥१९॥स्वयंभगवान्ज्ञानी परमकल्याणंयशोयस्येति ॥ २० ॥ २१ ॥

आपोमयमम्मयं ॥ २२ ॥ हेआपः पुरुषवीर्याईश्वरात्लब्धसामर्थ्याः स्थभवथ अतएवभूर्भुवःस्वःत्रैलोक्यंपुनंत्यस्ताः भवत्योनोस्माकं स्पृशतांस्पर्शनंकुर्वतांभुवः शरीराणिपुनंतु यतआत्मनास्वरूपेणैवअमीवघ्नीःपापहंत्र्यः ॥ २३ ॥ दध्नोमंडंरसःसएवोदकंयस्य यस्यपर्णा





अभयाअमृतौघाआर्यकातीर्थवतीवृत्तिरूपवतीपवित्रवतीशुक्केतियासामंभः पवित्रममलमुपयुंजानाः पुरुषऋषभद्रविणदेवकसंज्ञावर्षपुरुषाआपोमयंदेवमपांपूर्णेनांजलिनायजंते ॥ २२ ॥ आपः पुरुषवीर्यास्थ पुनंतीर्भूर्भुवःसुवः ॥ तानःपुनीताममीवघ्नीःस्पृशतामात्मनाभुवइति ॥ २३ ॥ एवंपुरस्तात्क्षीरोदात्परितउपवेशितःशाकद्वीपोद्वात्रिंशल्लक्षयोजनायामःसमानेनचदधिमंडोदेनपरीतोयस्मिन्शाकोनाममहीरुहःस्वक्षेत्रव्यपदेशकोयस्यहमहासुरभिगंधस्तंद्वीपमनुवासयति ॥ २४ ॥ तस्यापिप्रैयव्रतएवाधिपतिर्नाम्नामेधातिथिःसोऽपिविभज्यसप्तवर्षाणिपुत्रनामानितेषुस्वात्मजान्पुरोजवमनोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधारसंज्ञान्निधाप्याधिपतीन्स्वयंभगवत्यनंतेआवेशितमतिस्तपोवनंप्रविवेश ॥ २५ ॥ एतेषांवर्षमर्यादागिरयोनद्यश्चसप्तसप्तैवईशानउरुशृंगोबलभद्रःशतकेसरःसहस्रस्रोतोदेवपालोमहानसइति ॥ २६ ॥ अनघायुर्दाउभयस्पृष्टिरपराजितापंचपदीसहस्रस्रुतिर्निजधृतिरिति ॥ २७ ॥ तद्वर्षेपुरुषाऋतसत्यव्रतदानव्रतानुव्रतनामानोभगवंतंवाय्वात्मकंप्राणायामविधुतरजस्तमसःपरमसमाधिनायजंति ॥ २८ ॥ अंतःप्रविश्यभूतानियोबिभर्त्यात्मकेतुभिः ॥ अंतर्यामीश्वरःसाक्षात्पातुनोयद्वशेस्फुटं ॥ २९ ॥



न्यंतःखरस्पर्शानिबहिर्मृदुस्पर्शानिसशाकोनामवृक्षः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ आत्मकेतुभिः प्राणादिवृत्तिभिः ॥ २९ ॥

ज्वलनशिखावदमलानांकनकपत्राणामयुतानामयुतानियस्यतत् देवानामहोरात्राभ्यामुत्तरदक्षिणायनाभ्यामित्यर्थः ॥ ३० ॥ ३१ ॥ ब्रह्मरू
पिणंकमलासनमूर्तिं सकर्मकेनब्रह्मसालोक्यादिसाधनेन॥३२॥कर्ममयंकर्मफलरूपं ब्रह्मलिंग्यतेयस्मात् एकस्मिन्नेवपरमेश्वरेअंतोनिष्ठा
यस्यतदतएववस्तुतोऽद्वैतं ॥३३॥ ततःशुद्धोदात्परस्तात् लोकःसूर्याद्यालोकवान्देशः अलोकस्तद्रहितस्तयोरंतरालेमध्ये तयोर्विभागार्थंमि
त्यर्थः ॥३४ ॥ ततःपरस्तादित्युक्तस्तदेवकियतांऽतरेणेत्यपेक्षायांतदंतर्वर्तिनींभूमिमाह यावन्मानसोत्तरमेर्वोरंतरंसार्द्धसप्तलक्षोत्तरं सार्धको

एवमेवदधिमंडोदात्परतःपुष्करद्वीपस्ततोद्विगुणायामःसमंततउपकल्पितःसमानेनस्वादूदकेनसमुद्रेणब
हिरावृतोयस्मिन्बृहत्पुष्करंज्वलनशिखामलकनकपत्रायुतायुतंभगवतःकमलासनस्याध्यासनंपरिकल्पि
तंतद्द्वीपमध्येमानसोत्तरनामैकएवार्वाचीनपराचीनवर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रयायामोयत्रतुचतसृ
षुदिक्षुचत्वारिपुराणिलोकपालानामिंद्रादीनांयदुपरिष्टात्सूर्यरथस्यमेरुंपरिभ्रमतःसंवत्सरात्मकंचक्रंदेवा
नामहोरात्राभ्यांपरिभ्रमति ॥ ३० ॥ एतद्द्वीपस्याप्यधिपतिःप्रैयव्रतोवीतिहोत्रोनामैतस्यात्मजौरमणक
धातकिनामानौवर्षपतीनियुज्यस्वयंपूर्वजवद्भगवत्कर्मशीलइत्यास्ते ॥ ३१ ॥ तद्वर्षपुरुषाभगवंतंब्रह्मरू
पिणंसकर्मकेनकर्मणाराधयंतिइदंचोदाहरंति ॥ ३२ ॥ यत्कर्ममयंलिंगंब्रह्मलिंगंजनोऽर्चयेत् ॥ एकांत
मद्वयंशांतंतस्मैभगवतेनमइति ॥ ३३ ॥ ऋषिरुवाच ततःपरस्ताल्लोकालोकनामाऽचलोलोकालोकयोरं
तरालेपरितउपक्षिप्तः ॥ ३४ ॥ यावन्मानसोत्तरमेर्वोरंतरंतावतीभूमिःकांचन्यन्यादर्शतलोपमायस्यांप्र
हितःपदार्थोनकथंचित्पुनःप्रत्युपलभ्यतेतस्मात्सर्वसत्त्वपरिहृतासीत् ॥ ३५ ॥

टिपरिमितंतावतीभूःशुद्धोदात्परास्ति तत्रचप्राणिनोऽपिसंति ततःकांचनीभूमिरन्यास्तीत्यर्थः साचैकोनचत्वारिंशल्लक्षोत्तरकोटयष्टकपरि
मिताज्ञेया एवंहिसतिमेरुलोकालोकयोरंतरंसार्द्धद्वादशकोटिपरिमितंवक्ष्यमाणमुपपन्नंभवति एतदेवशैवतंत्रेषूक्तं कोटिद्वयंत्रिपंचाशल्ल
क्षाणिचततःपरं ॥ पंचाशच्चसहस्राणिसप्तद्वीपाससागरा ॥ ततोहेममयीभूमिर्दशकोटयोवरानने ॥ देवानांक्रीडनार्थायलोकालोकस्ततःपर
मिति अत्रचदशकोटित्वंपूर्वोक्तभूम्यासहद्रष्टव्यं सर्वसत्त्वपरिहृतेतिदेवव्यतिरेकेणेतिविज्ञेयं देवानांक्रीडनार्थायेत्युक्तत्वात् ॥ ३५ ॥

॥ ३६ ॥ लोकत्रयस्यांतेपरितोमर्यादारूपोविहितः यस्मात्प्रतिबंधकात् सूर्यआदिर्येषां ध्रुवोपवर्गोऽतोयेषां आवितन्वानाःसमंतात्प्रकाशयंतःपरतोगंतुंनशक्नुवंति तावदुन्नहनमुत्सेधस्तदनुरूपआयामश्चविस्तारोयस्य ध्रुवादप्युच्छ्रितत्वात्त्रिलोकीमर्यादाभूतइत्यर्थः ॥ ३७ ॥ सोऽयंतुलोकालोकाचलः तुरीयभागश्चतुर्थोंऽशःसार्द्धद्वादशकोटचः मेरोरेकतइतिद्रष्टव्यं ॥ ३८ ॥ आशासुदिक्षुयेऽधिनिवेशितास्तेआ

लोकालोकइतिसमाख्यायदनेनाचलेनलोकालोकस्यांतर्वर्तिनाऽवस्थाप्यते ॥ ३६ ॥ सलोकत्रयांतेपरितईश्वरेणविहितोयस्मात्सूर्यादीनांध्रुवापवर्गाणांज्योतिर्गणानांगभस्तयोर्वाचीनास्त्रीन्लोकानावितन्वानानकदाचित्पराचीनाभवितुमुत्सहंतेतावदुन्नहनायामः ॥ ३७ ॥ एतावाँल्लोकविन्यासोमानलक्षणसंस्थाभिर्विचिंतितःकविभिःसतुपंचाशत्कोटिगणितस्यभूगोलस्यतुरीयभागोऽयंलोकालोकाचलः ॥ ३८ ॥ तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाऽखिलजगद्गुरुणाऽधिनिवेशितायेद्विरदपतयऋषभःपुष्करचूडोवामनोऽपराजितइतिसकललोकस्थितिहेतवः ॥ ३९ ॥ तेषांस्वविभूतीनांविविधवीर्योपबृंहणायभगवान्परममहापुरुषोमहाविभूतिपतिरंतर्याम्यात्मनोविशुद्धसत्त्वंधर्मज्ञानवैराग्यैश्वर्याद्यष्टमहासिद्ध्युपलक्षणंविष्वक्सेनादिभिःस्वपार्षदप्रवरैःपरिवारितोनिजवरायुधोपशोभितैर्निजभुजदंडैःसंधारयमाणस्तस्मिन्गिरिवरेसमंतात्सकललोकस्वस्तयआस्ते ॥ ४० ॥ ॥ ॥ ॥

सते ॥ ३९ ॥ तेषांदिग्गजानांस्वविभूतीनांस्वांशभूतानांमहेंद्रादीनांचविविधवीर्योपबृंहणायसकललोकस्वस्तयेचभगवांस्तास्मिन्नास्ते इत्यन्वयः किंकुर्वन् आत्मनःस्वस्ययद्विशुद्धंसत्त्वंतत्संधारयमाणःआविष्कुर्वन् कीदृशं धर्मज्ञानादीन्यष्टमहासिद्धयश्चोपलक्षणंयस्यतत् दोर्दंडैरुपलक्षितःसन्महाविभूतेःपरमैश्वर्यस्यपतित्वादेकयैवमूर्त्यासमंतादास्ते ॥ ४० ॥ ॥ ॥

नन्वंतर्यामिणांऽतःस्थेनैवसर्वंकर्तुंशक्यंकिंतस्यबहिःसमंतावदस्थानेनेत्याशंक्यतस्यार्थंस्वयमेवव्याचष्टे आत्मनोयोगमाययाविरचिताया
विविधलोकयात्रातस्यागोपीथायरक्षणायएषभगवानेवंभूतः आकल्पंवेषंगतोलीलयाप्राप्तइतिसमंतादास्तइत्यस्यार्थः ॥ ४१ ॥ अलो
कपरिमाणंचमेरोरेकतःसार्द्धद्वादशकोटचः ततोलोकालोकात् अलोकाद्वापरस्तात् विशुद्धांद्विजपुत्रानयनेऽर्जुनस्यश्रीकृष्णेनप्रदर्शितां
॥ ४२ ॥ विस्तरेणोक्तंब्रह्मांडमानंसर्वतोऽपिनिरूपयति अंडमध्यगतः किंतन्मध्यंतदाह द्यावाभूम्योःपूर्वोत्तरकपालयोर्यदंतरंमध्यस्थानं

आकल्पमेवंवेषंगतएषभगवानात्मयोगमाययाविरचितविविधलोकयात्रागोपीथायेति ॥४१॥ योंऽतर्वि
स्तारएतेनह्यलोकपरिमाणंचव्याख्यातंयद्बहिर्लोकालोकाचलात्ततःपरस्ताद्योगेश्वरगतिंविशुद्धामुदाह
रंति ॥ ४२ ॥ अंडमध्यगतःसूर्योद्यावाभूम्योर्यदंतरं॥सूर्यांडगोलयोर्मध्येकोटचःस्युःपंचविंशतिः ॥४३॥
मृतेंऽडएषएतस्मिन्यदभूत्ततोमार्तंडइतिव्यपदेशः ॥ हिरण्यगर्भइतियद्धिरण्यांडसमुद्भवः ॥ ४४ ॥ सूर्ये
णहिविभज्यंतेदिशःखंद्यौर्महीभिदा ॥ स्वर्गापवर्गौनरकारसौकांसिचसर्वशः ॥४५॥ देवतिर्यङ्मनुष्या
णांसरीसृपसवीरुधां ॥ सर्वजीवनिकायानांसूर्यआत्मादृगीश्वरः ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणेपं
चमस्कंधेभुवनकोशवर्णनेसमुद्रद्वीपवर्षसन्निवेशपरिमाणलक्षणोविंशतितमोऽध्यायः ॥ २० ॥ ॥

सर्वतःपंचविंशतिकोटचः ॥ ४३ ॥ अंडमध्यावस्थानेकारणंतन्नामनिर्वचनेनाह मृतेअचेतनेएषसूर्योवैराजरूपेणयस्मात्प्रविष्टः॥ ४४ ॥
किंचसूर्येणैवविभज्यंतेदिशः खमंतरिक्षं भिदाअन्योऽपिविभागः स्वर्गापवर्गौभोगमोक्षदेशौ रसौकांसिअतलादीनि ॥ ४५ ॥ उपास
नार्थमाह देवादीनांसूर्यआत्मा दृगीश्वरोनेत्राधिष्ठाताच ॥ ४६ ॥ इतिपंचमेटीकायांविंशतितमोऽध्यायः ॥ २० ॥

एवमध्यायविंशत्याभूमर्यादानिरूपिता ॥ अतःपरंद्युमर्यादापालनंत्रिभिरुच्यते ॥१॥ एकविंशेरवेःकालचक्रेणभ्रमतोऽन्वहं ॥ स्वगत्या राशिसंचारैर्लोकयात्रानिरूप्यते ॥ २ ॥ एतावान्विस्तारेणकोटयःपंचाशत् उत्सेधेनपंचविंशतिः ॥ १ ॥ द्विदलयोर्मध्येयथैकस्यमाने नापरस्यमानमुपदिश्यतेतद्वत् तेअंतरेणतयोर्मध्ये तदुभयसंधितंताभ्यामुभयतः संलग्नं ॥ २ ॥ उदगयनादिसंज्ञाभिर्मंदक्षिप्रसमगतिभि र्यथाकालमारोहणादिस्थानेष्वारोहणाद्यभिपद्यमानोमकरादिष्वहोरात्राणिदीर्घऱ्हस्वसमानानिविधत्ते ॥ ३ ॥ तत्प्रपंचयति यदेति अत्यं



श्रीशुकउवाच एतावानेवभूवलयस्यसन्निवेशप्रमाणलक्षणतोव्यारूयातएतेनहिदिवोमंडलमानंतद्विदउ पदिशंति ॥१॥ यथाद्विदलयोर्निष्पावादीनांतेअंतरेणांतरिक्षंतदुभयसंधितं ॥ २ ॥ तन्मध्यगतोभगवां स्तपतांपतिस्तपनआतपेनत्रिलोकींप्रतपत्यवभासयत्यात्मभासा सएषउदगयनदक्षिणायनवैषुवतसं ज्ञाभिर्मांद्यशैघ्र्यसमानाभिर्गतिभिरारोहणावरोहणसमानस्थानेषुयथासवनमभिपद्यमानोमकरादिषुत्रि ष्वहोरात्राणिदीर्घऱ्हस्वसमानानिविधत्ते ॥३॥ यदामेषतुलयोर्वर्ततेतदाऽहोरात्राणिसमानानिभवंतियदा वृषभादिषुपंचसुराशिषुचरतितदाऽहान्येववर्धंतेऱ्हसतिचमासिमास्येकैकाघटिकारात्रिषु ॥४॥यदावृश्चि कादिषुपंचसुवर्ततेतदाऽहोरात्राणिविपर्ययाणिभवंति ॥ ५ ॥ यावद्दक्षिणायनमहानिवर्द्धंतेयावदुदगयनं रात्रयः ॥ ६ ॥

तत्रवैषम्याभावात्समानानीत्युक्तं सर्वथासाम्यंत्वेकस्यैवाहोरात्रस्य यद्यपिवृषभमिथुनयोरेवान्हांवृद्धिःकर्कटादिषुऱ्हासः तथाऽपिरात्र्यपेक्ष याअधिकत्वाद्वर्द्धंतइत्युक्तं एवंरात्रिवृद्धावपिदिनावपेक्षयाऱ्हसंतीत्युक्तं एकैकेतिस्थूलदृष्ट्योक्तं वृद्धिऱ्हासयोःप्रतिमासवैषम्यात् ॥ ४ ॥ विपर्ययाणीति अहानिन्यूनानिरात्रयोऽधिकाइत्यर्थः ॥ ५ ॥ तद्वृद्धिऱ्हासकालमाह यावदिति ॥ ६ ॥

एवंमंदादिगतिभिः नवकोटयइति मेरोरुभयतोमानसोत्तरस्यांतर्विस्तारणपंचदशलक्षाधिककोटित्रयपरिमितेनेदंपरिमंडलमानमुन्नेयंएवं पंचदशभिर्घटिकाभिरित्यादिष्वपित्रैराशिकगणितेनतत्तन्मानमुन्नेयंअत्रापेक्षितोविशेषःपुराणांतरादवगंतव्यः तत्रारोहणादिस्थानानिवा युपुराणेदर्शितानि सर्वग्रहाणांत्रीण्येवस्थानानिद्विजसत्तमाः स्थानंजरद्गवंमध्यंतथैरावतमुत्तरं वैश्वानरंदक्षिणतोनिर्दिष्टमिहतत्त्वतइति ॥ तदेवमध्यमोत्तरदक्षिणमार्गत्रयंप्रत्येकंवीथीत्रयेणात्रिधाभिद्यते त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथीगजवीथीऐरावतीचेत्युत्तरमार्गेवीथी त्रयं आर्षभीगोवीथीजरद्गवीचेतिवैषुवतेमध्यममार्गेवीथीत्रयं अजवीथीमृगवीथीवैश्वानरीचेतिदक्षिणमार्गेवीथीत्रयं तदप्युक्तंतत्रैव अश्वि नीकृत्तिकायाम्यानागवीथीतिशाब्दिता रोहिण्यार्द्रामृगशिरोगजवीथ्यभिधीयते पुष्याश्लेषातथादित्यावीथीचैरावतीस्मृता एतास्तुवीथयस्ति स्त्रउत्तरोमार्गउच्यते तथाद्वेचापिफाल्गुन्यौमघाचैवार्षभीमता हस्तश्चित्रातथास्वातीगोवीथीतितुशाब्दिता ज्येष्ठाविशाखाऽनुराधावीथीजा रद्गवीमता एतास्तुवीथयस्तिस्रोमध्यमोमार्गउच्यते मूलाषाढोत्तराषाढाअजवीथ्यभिशाब्दिता श्रवणंचधनिष्ठाचमार्गीशतभिषस्तथा ॥

**एवंनवकोटयएकपंचाशल्लक्षाणियोजनानांमानसोत्तरगिरिपरिवर्तनस्योपदिशंतितस्मिन्नैंद्रींपुरींपूर्वस्मा न्मेरोर्देवधानींनामदक्षिणतोयाम्यांसंयमनींनामपश्चाद्वारुणींनिम्लोचनींनामउत्तरतःसौम्यांविभावरींना मतासूदयमध्याह्नास्तमयनिशीथानीतिभूतानांप्रवृत्तिनिमित्तानिसमयविशेषेणमेरोश्चतुर्दिशं ॥ ७ ॥**

वैश्वनारीभाद्रपदेरेवतीचैवकीर्तिता ॥ एतास्तुवीथयस्तिस्रोदक्षिणोमार्गउच्यतइति ॥ याम्याभरणीआदित्याआदितिदेवताकापुनर्वसुः मार्गीमृगवीथी एवंस्थितेउत्तरायणेध्रुवेणयुगाक्षकोटिनिबद्धवायुपाशद्वयाकर्षणेरथस्यारोहणं तथाभ्यंतरमंडलप्रवेशोगतिमांद्यंचेतिदिनवृ द्धिःरात्रिर्ह्रासश्च दक्षिणायनेचपाशप्रेरणादवरोहणेबहिर्मंडलप्रवेशोगतिशैघ्र्यंचेत्यहोरात्रयोर्विपर्ययः वैषुवतेतुपाशसाम्यात्समावस्थानेम ध्यमंडलप्रवेशोगतिसाम्यंचेत्यहोरात्रयोःसाम्यमिति तथाचपुराणांतरं आकृष्यैतेयदातौतुध्रुवेणसमाधिष्ठितौ ॥ तदाभ्यंतरतःसूर्योभ्रमतेमं डलानितु ॥ ध्रुवेणमुच्यमानेनपुनाराश्मियुगेनतु ॥ तथैवबाह्यतःसूर्योभ्रमतेमंडलानिचेति तदेतदुक्तं यदामेषतुलयोरित्यादिना उदयास्ता दिकंवक्तुमाह तस्मिन्मानसोत्तरेमेरोःपूर्वतऐंद्रींपुरीमुपदिशंतीत्यनुषंगःतासुपुरीषुउदयादीन्युपदिशंति चतुर्दशमित्युक्तेयेमेरोर्दक्षिणेदेशेते षामैंद्रीमारभ्यपूर्वादयःयेपश्चिमेतेषांयाम्यामारभ्य येउत्तरेतेषांवारुणीमारभ्य येपूर्वेतेषांसौम्यामारभ्य ॥ ७ ॥ ॥

तत्रत्यानांमेरुस्थानां सव्येनेति नक्षत्राभिमुखतयास्वगत्यामेरुंवामतः कुर्वन्नपिप्रदक्षिणावर्तप्रवहाख्यवायुभ्राम्यमाणज्योतिश्चक्रवशात्प्र त्यहंदक्षिणतःकरोति अतश्चक्रगतिवशादतिदूरतोभूसंलग्नस्येवदर्शनमुदयः आकाशमारूढस्येवदर्शनंमध्यान्हः भूमिंप्रविष्टस्येवादर्शनम स्तमयः ततोऽतीवदूरगमनेनिशीथइति समुद्रतरिस्थदृष्ट्याचअद्धोवाएषप्रातरुदेत्यपःसायंप्रविशतीतिश्रुतिव्यवहारोनवस्तुतः तदुक्तंवैष्ण वे उदयास्तमयेचैवसर्वकालंतुसंमुखे ॥ दिशास्वशेषासुतथामैत्रेयविदिशासुच ॥ यैर्यत्रदृश्यतेभास्वान्सतेषामुदयःस्मृतः ॥ तिरोभावं चयत्रैतितत्रैवास्तमनंरवेः ॥ नैवास्तमनमर्कस्यनोदयःसर्वदास्मृतः ॥ उदयास्तमनाख्यंहिदर्शनादर्शनंरवेः ॥ शक्रादनिांपुरेतिष्ठन्स्पृशस्ये

तत्रत्यानांदिवसमध्यंगतएवसदादित्यस्तपतिसव्येनाचलंदक्षिणेनकरोति ॥८॥ यत्रोदेतितस्यहसमानसूत्रनिपातेनिम्लोचतियत्रक्वचनस्यंदेनाभितपतितस्यहैषसमानसूत्रनिपातेप्रस्वापयतितत्रगतंनपश्यंतियेतंसमनुपश्येरन् ॥ ९ ॥ यदाचैंद्र्याःपुर्याःप्रचलतेपंचदशघटिकाभिर्याम्यांसपादकोटिद्वयंयोजनानांसार्द्धद्वादशलक्षाणिसाधिकानिचोपयाति ॥ १० ॥ एवंततोवारुणींसौम्यामैंद्रींचपुनस्तथाऽन्येचग्रहाःसोमादयोनक्षत्रैःसहज्योतिश्चक्रेसमभ्युद्यंतिसहवानिम्लोचंति ॥ ११ ॥ एवंमुहूर्तेनचतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानिसौरोरथस्त्रयीमयोऽसौचतसृषुपरिवर्ततेपुरीषु ॥ १२ ॥ ॥ ॥

षपुरत्रयं ॥ विकर्णौद्वौविकर्णस्थस्त्रीन्कोणान्द्वेपुरेतथेति ॥अतएवतत्रैवोक्तं तस्माद्दिश्युत्तरस्यांवैदिवारात्रिःसदैवहि ॥ सर्वेषांद्वीपवर्षाणां मेरोरुत्तरतःस्थितिरिति ॥ यतोयत्रयःपश्यतिसवैतस्यप्राची तस्यचवामतोमेरुस्तिष्ठतीति ॥ ८ ॥ यथोक्तमुदयास्तमनाद्यानियमंदर्शयति यत्रोदेतीत्यादिना स्यंदेनस्वेदोद्गमेन प्रस्वापयतिनिशीथंकरोति येतंसमनुपश्येरन् प्रस्वापसमानसूत्रस्थाः ॥ ९ ॥ साधिकानिपंचविंशति सहस्राधिकानि ॥ १० ॥ सहवासहैव यद्यपिवस्तुतःसूर्यस्यापिनक्षत्रैःसहैवोदयास्तमयौतथाऽतत्साहित्यादर्शनात्सोमादनिामेवतत्साहि त्यमुक्तं ॥ ११ ॥ त्रयीमयइत्याद्युपासनार्थं ॥ १२ ॥ ॥ ॥ ॥

द्वादशमासाअरायस्य षट्ऋतवोनेमयोयस्य त्रीणिचातुर्मास्यानिनाभयोयस्य कृतइतरभागोयस्य मानसोत्तरगिरौलक्षार्द्धार्दुपरिवायुबद्धभू मावितिद्रष्टव्यं चक्रंवातावदुच्छ्रितमितिमंतव्यं अन्यथाऽयुतमात्रोच्छ्रायत्वान्मानसोत्तरस्यमेरोश्चतुरशीत्युच्छ्रायत्वादक्षस्यसाम्यानुपपत्तेः ॥ ॥ १३ ॥ तस्मिन्नक्षेचक्रप्रांतेकृतमूलोनिबद्धपूर्वभागः प्रथमाक्षोमेरुमानसोत्तरायतःसार्द्धसप्तलक्षाधिकसार्द्धकोटिप्रमाणःतस्यतुर्यमानेन सार्द्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिंशल्लक्षमानेन ध्रुवेकृतोवायुपाशेननिबद्धउपरिभागोयस्य ॥ १४ ॥ नीडउपवेशस्थानंगायत्र्यादि

यस्यैकंचक्रंद्वादशारंषण्नेमित्रिणाभिसंवत्सरात्मकंसमामनंतितस्याक्षोमेरोर्मूर्द्धनिकृतेतरभागोयत्रप्रोतंर विरथचक्रंतैलयंत्रचक्रवद्भ्रमन्मानसोत्तरगिरौपरिभ्रमति ॥ १३ ॥ तस्मिन्नक्षेकृतमूलोद्वितीयोऽक्षस्तुर्य मानेनसंमितस्तैलयंत्राक्षवत्ध्रुवेकृतोपरिभागः ॥ १४ ॥ रथनीडस्तुषट्त्रिंशल्लक्षयोजनायतस्तत्तुरीय भागविशालस्तावान्रविरथयुगोयत्रहयाश्छंदोनामानःसप्तारुणयोजितावहंतिदेवमादित्यं ॥ १५ ॥ पुर स्तात्सवितुररुणःपश्चाच्चनियुक्तःसौत्येकर्मणिकिलास्ते ॥ १६ ॥ तथावालखिल्याऋषयोंऽगुष्ठपर्वमात्राः षष्टिसहस्राणिपुरतःसूर्यंसूक्तवाकायनियुक्ताःसंस्तुवंति ॥ १७ ॥ तथान्येचऋषयोगंधर्वाप्सरसोनागा ग्रामण्योयातुधानादेवाइत्येकैकशोगणाःसप्तचतुर्दशमासिमासिभगवंतंसूर्यमात्मानंनानानामानंपृथङ्ना नानामानःपृथक्कर्मभिर्द्वंद्वशउपासते ॥ १८ ॥ ॥ ॥ ॥

च्छंदोनामानः अरुणेनयोजिताःसंतोदेवंवहंति ॥ १५ ॥ पुरस्तात्स्थितोऽपिपश्चात्प्रत्यङ्मुखआस्ते यद्वा यत्सूर्यस्यपुरस्तात्तस्यवैपाश्चि मत्वात्पश्चादित्युक्तं अश्वस्थानंचवायुनोक्तं सप्ताश्वरूपच्छंदांसिवहंतेवामतोरविं ॥ चक्रपक्षनिबद्धानिचक्रेचाक्षःसमाहितइति ॥ १६ ॥ सूक्तवाकायसुभाषिताय ॥ १७ ॥ एकैकशश्चतुर्दशद्वंद्वशःसप्तगणाःसंतोमासिमास्युपासतइत्यन्वयः ॥ १८ ॥

गव्यूतिःक्रोशद्वयं सगव्यूत्युत्तरंयथाभवतितथा ॥ १९ ॥ इतिपंचमेटीकायामेकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशेसोमशुक्रादेःस्थानमाहोत्त
रोत्तरं तत्तद्गत्यनुसारेणइष्टानिष्टेतथानृणां ॥ १ ॥ राशीनामभिमुखमप्रदक्षिणंचउपवर्णितंसव्येनचलनूदक्षिणेनकरोतीतिवदता अमुष्यवयं
कथमनुमिमीमहिएतत्कथंज्ञास्यामोविरुद्धत्वादित्यर्थः ॥१॥ चक्रवशात्स्वतश्चगतिद्वयमविरुद्धमितिपरिहारार्थः ॥ २ ॥ तत्कालनियमेन

लक्षोत्तरंसार्द्धनवकोटियोजनपरिमंडलंभूवलयस्यक्षणेनसगव्यूत्युत्तरंद्विसहस्त्रयोजनानिसभुंक्ते ॥ १९ ॥
इतिश्रीभा०म०पंचमस्कंधेज्योतिश्चक्रसूर्यरथमंडलवर्णनंनामैकविंशतितमोऽध्यायः ॥ २१ ॥ राजो
वाच यदेतद्भगवतआदित्यस्यमेरुंध्रुवंचप्रदक्षिणेनपरिक्रामतोराशीनामभिमुखंचप्रचलितंचाप्रदक्षिणं
भगवतोपवर्णितममुष्यवयंकथमनुमिमीमहीति ॥ १ ॥ सहोवाच यथाकुलालचक्रेणभ्रमतासहभ्रमतां
तदाश्रयाणांपिपीलिकादीनांगतिरन्यैवप्रदेशांतरेष्वप्युपलभ्यमानत्वात्एवंनक्षत्रराशिभिरुपलक्षितेनका
लचक्रेणध्रुवंमेरुंचप्रदक्षिणेनपरिधावतासहपरिधावमानानांतदाश्रयाणांसूर्यादीनांग्रहाणांगतिरन्यैवन
क्षत्रांतरेराश्यंतरेचोपलभ्यमानत्वात् ॥ २ ॥ सएषभगवानादिपुरुषएवसाक्षान्नारायणोलोकानांस्वस्तय
आत्मानंत्रयीमयंकर्मविशुद्धिनिमित्तंकविभिरपिचवेदेनविजिज्ञास्यमानोद्वादशधाविभज्यषट्सुवसंतादि
षुऋतुषुयथोपजोषमृतुगुणान्विदधाति ॥ ३ ॥ तमेतमिहपुरुषास्त्रय्याविद्ययावर्णाश्रमाचारानुपथाउच्चा
वचैःकर्मभिराम्नातैर्योगवितानैश्चश्रद्धयायजंतोंऽजसाश्रेयःसमधिगच्छंति ॥ ४ ॥ ॥

कर्मणांविशुद्धेःसाद्गुण्यस्यनिमित्तभूतमात्मानंविभज्य विजिज्ञास्यमानःवितर्क्यमाणः यथोपजोषंयथाकर्मभोगं ऋतुगुणानूशीतोष्णादीन्
॥ ३ ॥ वर्णाश्रमानुचारानुवर्तिनःपुरुषास्त्रय्याआम्नातैःकर्मभिरिंद्रादिरूपंयोगवितानैश्चध्यानादिभिरंतर्यामिरूपंपूजयंतः ॥ ४ ॥

सएवस्वगत्यामासादिव्यवहारकारणमित्याह सएषलोकानामात्मा द्यावापृथिव्योरंतरेणमध्येयन्नभोवलयंमंतरिक्षंतस्यमध्येयत्काल चक्रंत
द्गतः राशिभिर्मेषादिभिः संज्ञायेषां चैत्रादिसंज्ञास्तुचांद्रमासानां मासमाह पक्षद्वयंमासइतिचांद्रेणमानेन सपादंमहानक्षत्रद्वयंसौरेण।दि
वानक्तंचअहोरात्रमितिपित्र्येण षष्ठमंशंराशिद्वयं ॥ ५ ॥ ६ ॥ मंडलाभ्यांसहभुंजीत सहसाहिसूर्यः यदाशुक्लप्रतिपदिसंक्रांतिर्भवतितदासौर
चांद्रयोर्मासयोर्युगपदुपक्रमोभवति ससंवत्सरः ततःसौरमानेनवर्षेषट्दिनानिवर्द्धंते चांद्रमानेनषट्‌ह्रसंतीतिद्वादशदिनव्यवधानादुभयोर

अथसएषआत्मालोकानांद्यावापृथिव्योरंतरेणनभोवलयस्यकालचक्रगतोद्वादशमासान्भुंक्तेराशिसंज्ञा
न्संवत्सरावयववान्मासःपक्षद्वयंदिवानक्तंचेतिसपादर्क्षद्वयमुपदिशंतियावताषष्ठमंशंभुंजीतसवैऋतुरित्युप
दिश्यतेसंवत्सरावयवः ॥ ५ ॥ अथचयावताऽर्द्धेननभोवीथ्यांप्रचरतितंकालमयनमाचक्षते ॥ ६ ॥ अथच
यावन्नभोमंडलंसहद्यावापृथिव्योर्मंडलाभ्यांकात्स्न्येनसहभुंजीततंकालंसंवत्सरंपरिवत्सरमिडावत्सरमनु
वत्सरंवत्सरमितिभानोर्मांद्यशैघ्र्यसमगतिभिःसमामनंति॥७॥एवंचंद्रमाअर्कगभस्तिभ्यउपरिष्टाल्लक्षयो
जनतउपलभ्यमानोऽर्कस्यसंवत्सरभुक्तिंपक्षाभ्यांमासभुक्तिंसपादर्क्षाभ्यांदिनेनैवपक्षभुक्तिमग्रचारीद्रुत
तरगमनोभुंक्ते ॥ ८ ॥ अथवापूर्यमाणाभिश्चकलाभिरमराणांक्षीयमाणाभिश्चकलाभिःपितॄणामहोरा
त्राणिपूर्वपक्षापरपक्षाभ्यांवितन्वानःसर्वजीवनिवहप्राणोजीवश्चएकमेकंनक्षत्रंत्रिंशतामुहूर्तैर्भुंक्ते ॥ ९ ॥
यएषषोडशकलःपुरुषोभगवान्मनोमयोऽन्नमयोऽमृतमयोदेवपितृमनुष्यभूतपशुपक्षिसरीसृपवीरुधांप्रा
णाप्यायनशीलत्वात्सर्वमयइतिवर्णयंति ॥ १० ॥ ॥ ॥ ॥ ॥

ग्रपश्चाद्भावोभवति एवंपंचवर्षाणिगच्छंतितन्मध्येद्वौमलमासौभवतः ततःपुनःषष्ठःसंवत्सरोभवति तदेवमवांतरभेदेनसंवत्सरादिपंचकं
समामनंति ॥ ७ ॥ सोमादीनामपिस्थानंकार्यंचाह एवंचंद्रमाइति अर्कगभस्तिभ्यःमंडलरूपेभ्यः सपादर्क्षाभ्यांसपाददिनद्वयेन ॥८॥
सर्वेषांजीवनिवहानांप्राणःअन्नमयत्वादमृतमयत्वाच्च अतएवजीवहेतुत्वाज्जीवश्च ॥ ९ ॥ तदेवाह यएषइति ॥ १० ॥

दक्षिणेनैव नतुतेषांपृथगन्यागतिरस्तीत्यर्थः कालायनेकालचक्रे उत्तराषाढाश्रवणसंधावभिजिन्नक्षत्रंफलविशेषेणपृथक्कल्पितंतेनसहत थाचश्रुतिः अभिजिन्नामनक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणायाइति ॥ ११ ॥ पुरतःसूर्येणभोक्ष्यमाणेनक्षत्रेपश्चाद्भुक्ते सहैवभुज्यमाने चारेणक्रमस्थनक्षत्राद्यातिक्रमेण वृष्टेर्विष्टंभःस्तंभनंयस्मात्ग्रहात्तमुपशमयतीतितथा ॥ १२ ॥ बुधोव्याख्यातः पुरतःपश्चात्सहैववाचर



ततउपरिष्टात्त्रिलक्षयोजनतोनक्षत्राणिमेरुंदक्षिणेनैवकालायनईश्वरयोजितानिसहाभिजिताऽष्टाविंशतिः ॥ ११॥ ततउपरिष्टादुशनाद्विलक्षयोजनतउपलभ्यतेपुरतःपश्चात्सहैववाऽर्कस्यशैघ्र्यमांद्यसाम्याभिर्गतिभिरर्कवच्चरतिलोकानांनित्यदाऽनुकूलएवप्रायेणवर्षयंश्चारेणानुमीयतेसवृष्टिविष्टंभग्रहोपशमनः ॥१२॥ उशनसाबुधोव्याख्यातस्ततउपरिष्टाद्द्विलक्षयोजनतोबुधःसोमसुतउपलभ्यमानःप्रायेणशुभकृद्यदाऽर्काद्व्यतिरिच्येततदाऽतिचरताऽभ्रप्रायानावृष्ट्यादिभयमाशंसते॥१३॥ अतऊर्ध्वमंगारकोऽपियोजनलक्षद्वितयउपलभ्यमानस्त्रिभिस्त्रिभिःपक्षैरेकैकशोराशीन्द्वादशानुभुंक्तेयदिनवक्रेणाभिवर्ततेप्रायेणाशुभग्रहोऽघशंसः ॥ १४ ॥ ततउपरिष्टाद्द्विलक्षयोजनांतरगतोभगवान्बृहस्पतिरेकैकस्मिन्राशौपरिवत्सरंचरतियदिनवक्रःस्यात्प्रायेणानुकूलोब्राह्मणकुलस्य ॥ १६ ॥ ततउपरिष्टाद्योजनलक्षद्वयात्प्रतीयमानःशनैश्चरएकैकस्मिन्राशौत्रिंशन्मासान्विलंबमानःसर्वानेवानुपर्येतितावद्भिरनुवत्सरैःप्रायेणहिसर्वेषामशांतिकरः ॥ ॥ १६ ॥ ततउत्तरस्मादृषयएकादशलक्षयोजनांतरउपलक्ष्यंते ॥ यएवलोकानांशमनुभावयंतोभगवतोविष्णोर्यत्परमंपदंप्रदक्षिणंप्रक्रमंति ॥ १७ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेज्योतिश्चक्रवर्णने द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ॥ ॥ ॥



तीति किंचिद्विशेषंचाह ततइत्यादिना आशंसतेसूचयति ॥ १३ ॥ अघशंसःदुःखसूचकः यदिनवक्रेणाभिवर्तते तर्हित्रिभिस्त्रिभिःपक्षैः ॥ १४ ॥ यदिनवक्रःस्यात्तर्हिपरिवत्सरं ॥ १५ ॥ १६ ॥ १७ ॥ इतिपंचमेटीकायांद्वाविंशोऽध्यायः ॥ २२ ॥

त्रयोविंशेध्रुवस्थानंज्योतिश्चक्राश्रयंततः ॥ शिशुमारस्यरूपेणहरेश्चास्थितिरुच्यते॥१॥यत्तत्प्रसिद्धंविष्णोःपदं यत्रध्रुवउपास्तेतिष्ठतीत्यन्वयः
समकालमेवयुज्यंतइतितथा तैर्नक्षत्ररूपैः ॥ १ ॥ मेढीस्तंभेबद्धाधान्याक्रमणपशवोबलीवर्दाः ॥ २ ॥ कर्मसारथिःसहायोयेषां ॥ ३ ॥ इश्वरा

श्रीशुकउवाच अथतस्मात्परतस्त्रयोदशलक्षयोजनांतरतोयत्तद्विष्णोःपरमंपदमभिवदंतियत्रहमहाभा
गवतोध्रुवऔत्तानपादिरग्निनेंद्रेणप्रजापतिनाकश्यपेनधर्मेणचसकालयुग्भिःसबहुमानंदक्षिणतःक्रियमा
णइदानीमपिकल्पजीविनामाजीव्यउपास्ते तस्येहानुभावउपवर्णितः ॥१॥ सहिसर्वेषांज्योतिर्गणानां
ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसाभगवताकालेनभ्राम्यमाणानांस्थाणुरिवावष्टंभईश्वरेणविहितः
शश्वदवभासते यथामेढीस्तंभआक्रमणपशवःसंयोजितास्त्रिभिस्त्रिभिःसवनैर्यथास्थानंमंडलानिचरंति॥
॥ २ ॥ एवंभगणाग्रहादयएतस्मिन्नंतर्बहिर्योगेनकालचक्रआयोजिताध्रुवमेवावलंब्यवायुनोदीर्यमाणा
आकल्पांतंपरिचक्रमंतिनभसियथामेघाःश्येनादयोवायुवशाःकर्मसारथयःपरिवर्ततेएवंज्योतिर्गणाःप्रकृ
तिपुरुषसंयोगानुगृहीताःकर्मनिर्मितगतयोभुविनपतंति ॥ ३ ॥ केचनैतज्ज्योतिरनीकंशिशुमारसंस्थाने
नभगवतोवासुदेवस्ययोगधारणायामनुवर्णयंति ॥ ४ ॥ यस्यपुच्छाग्रेऽवाक्शिरसःकुंडलीभूतदेहस्यध्रुव
उपकल्पितः तस्यलांगूलेप्रजापतिरग्निरिंद्रोधर्मइतिपुच्छमूलेधाताविधाताचकट्यांसप्तर्षयस्तस्यदक्षिणाव
र्तेकुंडलीभूतशरीरस्ययान्युदगयनानिदक्षिणपार्श्वेतुनक्षत्राण्युपकल्पयंति दक्षिणायनानितुसव्येयथाशि
शुमारस्यकुंडलाभोगसन्निवेशस्यपार्श्वयोरुभयोरप्यवयवाःसमसंख्याभवंतिपृष्ठेत्वजवीथीआकाशगंगा
चोदरतः ॥ ५ ॥

धारत्वात्पतनशंकैवनास्तीतिवक्तुंमतांतरमाह केचनेति ज्योतिरनीकंज्योतिश्चक्रं योगधारणायांस्थितमितिशेषः ॥ ४ ॥ लांगूलेअग्रादधो
भागे उदगयनानिअभिजिदादीनिपुनर्वस्वंतानिचतुर्दशदक्षिणपार्श्वे दक्षिणायनानिपुष्यादन्युत्तराषाढांतानिचतुर्दशवामपार्श्वे ॥ ५ ॥

तदेवस्थानविशेषेणविभज्यदर्शयति पुनर्वसुपुष्यावित्यादिना पुनर्वसुरुदगयनांत्यंनक्षत्रं पुष्योदक्षिणायनस्याद्यं आर्द्राश्लेषेतयोर्निरंतरं अभिजिदुत्तराषाढेउत्तरदक्षिणायनयोराद्यंतनक्षत्रेश्रवणपूर्वाषाढेधनिष्ठामूलंचतयोरप्युत्तरपूर्वंमघादीनियान्यनुराधांतानिदक्षिणायनान्यष्ट तानिवामपार्श्ववंक्रिषुवामपार्श्वास्थिषु मृगशीर्षादीनिप्रातिलोम्येनपूर्वाभाद्रपदांतानियान्युदगयननक्षत्राण्यष्टतानिदक्षिणपार्श्वे शत



पुनर्वसुपुष्यौदक्षिणवामयोःश्रोण्योरार्द्राश्लेषेचदक्षिणवामयोःपश्चिमयोःपादयोरभिजिदुत्तराषाढेदक्षिणवामयोर्नासिकयोर्यथासंख्यंश्रवणपूर्वाषाढेदक्षिणवामयोर्लोचनयोर्धनिष्ठामूलंचदक्षिणवामयोःकर्णयोर्मघादीन्यष्टनक्षत्राणिदक्षिणायनानिवामपार्श्ववंक्रिषुयुंजीततथैवमृगशीर्षादीन्युदगयनानिदक्षिणपार्श्ववंक्रिषुप्रातिलोम्येनप्रयुंजीतशतभिषाज्येष्ठेस्कंधयोर्दक्षिणवामयोर्न्यसेत् ॥ ६ ॥ उत्तराहनावगस्तिरधराहनौयमोमुखेषुचांगारकःशनैश्चरउपस्थेबृहस्पतिःककुदिवक्षस्यादित्योहृदयेनारायणोमनसिचंद्रोनाभ्यामुशनास्तनयोरश्विनौबुधःप्राणापानयोराहुर्गलेकेतवःसर्वांगेषुरोमसुसर्वेतारागणाः ॥७॥ एतदुहैवभगवतोविष्णोःसर्वदेवतामयंरूपमहरहःसंध्यायांप्रयतोवाग्यतोनिरिक्षमाणउपतिष्ठेतनमोज्योतिर्लोकायकालायनायानिमिषांपतयेमहापुरुषायधीमहीति ॥ ८ ॥ ग्रहर्क्षतारामयमाधिदैविकंपापापहंमंत्रकृतांत्रिकालं ॥ नमस्यतःस्मरतोवात्रिकालंनश्येततत्कालजमाशुपापं ॥ ९ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेशिशुमारसंस्थाननामत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ छ ॥

भिषक्ज्येष्ठेउत्तरदक्षिणायनयोर्येऽवशिष्टेतेस्कंधयोः ॥ ६ ॥ यमोनक्षत्ररूपः तथानारायणोऽश्विनौचककुदिगलपृष्ठशृंगे ॥ ७ ॥ ज्योतिषोलोकायाश्रयायकालायनायकालचक्ररूपायनमोधीमहीतिमंत्रेणोपतिष्ठेत ॥ ८ ॥ मंत्रकृतांपूर्वोक्तंमंत्रंजपतां ॥ ९ ॥ इतिपंचमेटीकायांत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ ॥ ॥

एवंत्रिभिर्द्युमर्यादापालनंवर्णितंतथा ॥ अथोभुवनमर्यादापालनंत्रिभिरुच्यते ॥ १ ॥ चतुर्विंशेरवेरर्वाक्स्वर्भान्वादिस्थितिः क्रमात् ॥ अतला दिबिलस्वर्गमर्यादाःसप्तवर्णिताः ॥ २ ॥ सूर्यमारभ्यध्रुवांतंसंनिवेशंनिरूप्येदानींसूर्यादधस्तान्निरूपयति अधस्तादिति स्वर्भानुःराहुः अ लभततेऽन्ने सिंहिकायाःपुत्रः ॥ १ ॥ ग्रहणंवक्तुमाह यददःप्रतपतस्तरणेर्मंडलं अमृतपानेमध्यप्रवेशेनतयोर्व्यवधानंकरोतीतितथा अ तएवैताभ्यांसूचितत्वाद्वैरमनुबध्नातीतितथा ॥ २ ॥ भागवतंचक्रंपरिवर्तमानंपरिभ्रमत् अभिअभिमुखंमुहूर्तमवस्थितःसन्इतिएवमंतरा

श्रीशुकउवाच अधस्तात्सवितुर्योजनायुतेस्वर्भानुर्नक्षत्रवच्चरतीत्येके योऽसावमरत्वंग्रहत्वंवाऽलभतभग वदनुकंपयास्वयमसुरापसदःसैंहिकेयोह्यतदर्हः तस्यतातजन्मकर्माणिचोपरिष्टाद्वक्ष्यामः ॥१॥यददस्तर णेर्मंडलंप्रतपतस्तद्विस्तरतोयोजनायुतमाचक्षतेद्वादशसहस्रंसोमस्यत्रयोदशसहस्रंराहोर्यःपर्वणितद्व्यव धानकृद्वैरानुबंधःसूर्यचंद्रमसावभिधावति ॥२॥ तन्निशम्योभयत्रापिभगवतारक्षणायप्रयुक्तंसुदर्शनंनाम भागवतंदयितमस्त्रंतत्तेजसादुर्विषहंमुहुःपरिवर्तमानमभ्यवस्थितोमुहूर्तमुद्विजमानश्चकितहृदयआरादेव निवर्ततेतदुपरागमितिवदंतिलोकाः ॥ ३ ॥ ततोऽधस्तात्सिद्धचारणविद्याधराणांसदनानितावन्मात्रए व ॥ ४ ॥ ततोऽधस्ताद्यक्षरक्षःपिशाचप्रेतभूतगणानांविहाराजिरमंतरिक्षंयावद्वायुःप्रवातियावन्मेघाउ पलभ्यंते ॥ ५ ॥ ततोऽधस्ताच्छतयोजनांतरइयंपृथिवीयावद्धंसभासश्येनसुपर्णादयःपतत्रिप्रवराउत्पतं तीति ॥ ६ ॥ उपवर्णितंभूमेर्यथासंनिवेशावस्थानमवनेरप्यधस्तात्सप्तभूविवराएकैकशोयोजनायुतांतरे णायामविस्तारेणोपक्लृप्ताःअतलंवितलंतलातलंमहातलंरसातलंपातलमिति ॥ ७ ॥

तदवस्थानमुपरागंवदंति तत्रचक्रजुवकस्थितिभ्यामर्द्धग्राससर्वग्रासौ नतुग्रासोऽस्तिदूरांतरत्वात् ॥ ३ ॥ तावन्मात्रेयोजनायुते ॥ ४ ॥ अंतरिक्षंग्रइहीनं तस्यावधिमाह यावद्वायुःप्रवातीति तीव्रोवाति तस्याप्यवधिमाह यावन्मेघाः ॥ ५ ॥ पृथिव्याउपरिभूर्लोकावधिमाह यावद्धंसादयःपार्थिवाविकाराः ॥ ६ ॥ योजनायुतांतरेणप्रत्येकमुच्छ्रिताः आयामोयःकटाहस्यतावद्विस्तारेण ॥ ७ ॥

सामान्येनाविवराणिवर्णयति एतेष्वित्यादिनाअथातलइत्यतःप्राक्तनेनग्रंथेन एतेषुदैत्यादयोनिवसंतीन्वयः कथंभूतेषु अधिकःकामभोग श्चऐश्वर्यानंदश्चविभूतिश्चसंपत्तिस्तैः सुसमृद्धाभवनादयोयेषु कथंभूताः नित्यप्रमुदिताअनुरक्ताःकलत्रादयोयेषां नप्रतिहतःकामोयेषां मा याविनोदायेषां ॥ ८ ॥ किंच हेमहाराजयेषुमयेनानिर्मिताः पुरश्चचकासतीत्यन्वयः कथंभूताः नानायेमणिप्रवरास्तेषांप्रवेकाःमुख्यास्तै विरचितैर्विचित्रैर्भवनादिभिः तथाविवरेश्वराणांगृहोत्तमैश्चसमलंकृताः कीदृशैर्गृहोत्तमैः नागाश्चअसुराश्च मिथुनभूताःपारावतादयश्चतै राकीर्णाःकृत्रिमाभूमयोयेषुतैः पाठांतरेनानास्वनत्वंमिथुनविशेषणं ॥ ९ ॥ उद्यानानिचअतितराममरलोकश्रियमतिशायितानियेषुचका



एतेषुहिबिलस्वर्गेषुस्वर्गादप्यधिककामभोगैश्वर्यानंदविभूतिभिःसुसमृद्धभवनोद्यानाक्रीडविहारेषुदैत्यदानवकाद्रवेयानित्यप्रमुदितानुरक्तकलत्रापत्यबंधुसुहृदनुचरागृहपतयईश्वरादप्यप्रतिहतकामामायाविनोदानिवसंति ॥८॥ येषुमहाराजमयेनमायाविनाविनिर्मिताःपुरोनानामणिप्रवरप्रवेकविरचितविचित्रभवनप्राकारगोपुरसभाचैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैःसमलंकृताश्चकासति ॥ ९ ॥ उद्यानानिचातितरांमनइंद्रियानंदिभिःकुसुमफलस्तबकसुभगकिसलयावनतरुचिरविटपविटपिनांलतांऽगालिंगितानांश्रीभिःसमिथुनविविधविहंगमजलाशयानाममलजलपूर्णानांझषकुलोल्लंघनक्षुभितनीरनीरजकुमुदकुवलयकल्हारनीलोत्पललोहितशतपत्रादिवनेषुकृतनिकेतनामामेकविहाराकुलमधुरविविधस्वनादिभिरिंद्रियोत्सवैरमरलोकश्रियमतिशयितानि ॥१०॥

सतीत्यन्वयः काभिः श्रीभिः केषां कुसुमफलस्तबकाश्चसुभगकिसलयानिचतैरवनतारुचिराविटपायेषांविटपिनां लतानामंगैरालिंगितानांश्रीभिः तथासमिथुनाश्चक्रवाकादिमिथुनसहितायेविविधाविहंगास्तद्युक्तानांजलाशयानांचश्रीभिः कीदृशानाममलैर्जलैःपूर्णानां पुनरपिकैरतिशयितानि झषकुलोल्लंघनेनक्षुभितंयज्जलाशयानांनीरंतस्मिन्यानिनीरजादीनितेषांवनेषुकृतंनिकेतनंयैस्तेषामर्थात्पाक्षिणामेकोऽखंडोयोविहारस्तेनाकुलाश्चतेमधुराश्चविविधस्वनादयस्तैर्येइंद्रियोत्सवास्तैश्चयथा समिथुनेत्यादेरुत्तरेणैवसंबंधःमनइंद्रियादिभिरितिस्वनादीनांविशेषणं तत्रनीरजंसामान्येनकमलं लोहितंशतपत्रंतद्विशेषः ॥ १० ॥ ॥ ॥

अहोरात्रादिभिर्यद्द्वयंतन्नोपलक्ष्यते सूर्याद्यभावात् ॥ ११ ॥ १२ ॥ क्लमःश्रमः ग्लानिरनुत्साहः ॥ १३ ॥ कल्याणानांमंगलरूपाणां ॥ १४ ॥ यस्मिन्भगवत्तेजसिप्रविष्टे पुंसवनानिगर्भाः आचतुर्थाद्भवेत्स्रावःपातःपंचमषष्ठयोरितिस्रावपातौज्ञेयौ ॥ १५ ॥ सवर्णेरताःस्वैरिण्यः कामिन्यस्त्वसवर्णेऽपि तत्राप्यतिचंचलाःपुंश्चल्यः बिलायनंबिलायतनं साधयित्वासंभोगसमर्थंकृत्वा स्त्रेयेअसाधारणाविलासा

यत्रहवावनभयमहोरात्रादिभिःकालविभागैरुपलक्ष्यते ॥ ११ ॥ यत्रहिमहाहिप्रवराशिरोमणयःसर्वंत मःप्रबाधंते ॥१२॥ नवाएतेषुवसतांदिव्यौषधिरसरसायनान्नपानस्नानादिभिराधयोव्याधयोवलीपलितजरादयश्चदेहवैवर्ण्यदौर्गंध्यस्वेदक्लमग्लानिरितिवयोवस्थाश्चभवंति ॥ १३ ॥ नहितेषांकल्याणानांप्रभवतिकुतश्चनमृत्युर्विनाभगवत्तेजश्चक्रापदेशात् ॥ १४ ॥ यस्मिन्प्रविष्टेऽसुरवधूनांप्रायःपुंसवनानिभयादेवस्रवंतिपतंति ॥ १५ ॥ अथातलेमयपुत्रोऽसुरोबलोनिवसतियेनहवाइहसृष्टाःषण्णवतिर्मायाःकाश्चनाद्यापिमायाविनोधारयंतियस्यचजृंभमाणस्यमुखतस्त्रयस्त्रीगणाउदपद्यंतस्वैरिण्यःकामिन्यःपुंश्चल्यइतियावैबिलायनंप्रविष्टंपुरुषंरसेनहाटकाख्येनसाधयित्वास्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिःस्वैरंकिलरमयंतियस्मिन्नुपयुक्तेपुरुषईश्वरोऽहंसिद्धोऽहमितिअयुतमहागजबलआत्मानमभिमन्यमानःकत्थतेमदांधइव ॥ १६ ॥ ततोधऽस्ताद्वितलेहरोभगवान्हाटकेश्वरःस्वपार्षदभूतगणावृतःप्रजापतिसर्गोपबृंहणायभवोभवान्यासहमिथुनीभूतआस्ते यतःप्रवृत्तासरित्प्रवराहाटकीनामभवयोर्वीर्येणयत्रचित्रभानुर्मातरिश्वनासमिध्यमानओजसापिबतितन्निष्ठ्यूतंहाटकाख्यंसुवर्णभूषणेनासुरेंद्रावरोधेषुपुरुषाःसहपुरुषीभिर्धारयंति ॥ १७ ॥ ॥ ॥ ॥ ॥

स्तत्पूर्वकोऽवलोकस्तेनानुरागयुक्तंस्मितं तेनसंलापउपगूहनंचतदादिभिः यस्मिन्रसेउपयुक्तेसेविते ॥ १६ ॥ भवयोर्भत्रस्यभवान्याश्च चित्रभानुरग्निस्तेननिष्ठ्यूतंफूत्कृत्यत्यक्तं असुरेंद्राणामवरोधेषुअंतःपुरेषु पुरुषीभिःस्त्रीभिः ॥ १७ ॥ ॥ ॥

सुतलेबलिरधुनाऽप्यास्तइत्यन्वयः कथंभूतः महेंद्रस्यप्रियंकर्तुमिच्छताप्रथमंपराक्षिप्तमपहृतंलोकत्रयंयस्यसःपुनर्भगवतोऽनुकंपयैवतत्रप्रवेशितःसन्कीदृशेनयोऽदितेःसकाशाद्भूत्वाबटुवामनरूपेणलब्धकायस्तेन ॥ १८ ॥ केचित्तस्यसुतलराज्यंभूमिदानफलंमन्यंतेतान्निराकरोति नोएवैतदिति यद्बिलनिलयेविवरस्थानेऐश्वर्यमेतत्भूमिदानस्यसाक्षात्कारःफलंनभवत्येव कुतइत्यपेक्षायामेवंभूतस्यदानस्यसाक्षादपवर्गहेतुत्वादित्याह यत्प्रसिद्धंदानंतस्य तदेवाह भगवत्यशेषजीवनिकायानांजीवभूतश्चासावात्मभूतश्चसर्वजीवनियंताचासावात्मारामश्चेत्यर्थः तस्मिन्संप्रतिपादितस्य ॥ १९ ॥ किंच यस्यनामक्षुतादिषुचविवशोऽपिसकृदपिगृणन्कर्मबंधंविधुनोति कथंभूतंयस्यप्रति

ततोऽधस्तात्सुतलउदारश्रवाःपुण्यश्लोकोविरोचनात्मजोबलिर्भगवतामहेंद्रस्यप्रियंचिकीर्षमाणेनादितेर्लब्धकायोभूत्वाबटुवामनरूपेणपराक्षिप्तस्वलोकत्रयोभगवदनुकंपयैवपुनःप्रवेशितइंद्रादिष्वविद्यमानयासुसमृद्धयाश्रियाऽभिजुष्टःस्वधर्मेणाराधयंस्तमेवभगवंतमाराधनीयमपगतसाध्वसआस्तेऽधुनापि ॥१८॥ नोएवैतत्साक्षात्कारोभूमिदानस्ययत्तद्भगवत्यशेषजीवनिकायानांजीवभूतात्मभूतेपरमात्मनिवासुदेवेतीर्थतमेसर्वजीवनियंतर्यात्मारामेपात्रउपपन्नेपरयाश्रद्धयापरमादरसमाहितमनसासंप्रतिपादितस्यसाक्षादपवर्गद्वारस्ययद्बिलनिलयैश्वर्यं ॥१९॥ यस्यहवावक्षुतपतनप्रस्खलनादिषुविवशःसकृन्नामाभिगृणन्पुरुषःकर्मबंधनमंजसाविधुनोतियस्यहैवप्रतिबाधनंमुमुक्षवोऽन्यथैवोपलभंते ॥ २० ॥ तद्भगवतामात्मवतांसर्वेषामात्मन्यात्मद आत्मतमेच ॥ २१ ॥ नवैभगवान्नूनममुष्यानुजग्राह यदुतपुनरात्मानुस्मृतिमोषणंमायामयभोगैश्वर्यमेवातनुतेति ॥ २२ ॥ ॥ ॥ ॥

बाधनंत्विहमुमुक्षवोऽन्यथैवोपलभंते यन्निवृत्त्यर्थंयोगसांख्यादिक्लेशाननुभवंतीत्यर्थः तंकर्मबंधंत्यजति ॥ २० ॥ तत्तस्मिन्भगवतांभक्तानांज्ञानिनांचयथायथमात्मदेज्ञानदेहरौआत्मतमेचसमर्पितस्यभूमिदानस्यनतत्फलमितिपूर्वेणैवसंबंधः ॥ २१ ॥ किंच नेदंभगवदनुकंपाफलमपिकिंत्वेकांतभक्तस्यतस्यांतरायमात्रमित्याह नेति भगवान्अमुष्यअमुंनैवानुगृहीतवान् तत्रहेतुः यदुतेति आत्मनईश्वरस्यानुस्मृतिंमुष्णातीतितथा तदुक्तं वासुदेवेमनोयस्यजपहोमार्चनादिषु ॥ तस्यांतरायोमैत्रेयदेवेंद्रत्वादिकंफलमिति ॥ २२ ॥

तस्यैकांतभक्तिसप्रपंचामाह यत्तदिति प्रसिद्धमितिवक्ष्यमाणमुवाचहेत्यन्वयः कथंभूतः अनधिगतःअन्यउपायोयेन तेनभगवतायाच्ञा
छलेनापहृतंस्वशरीरमात्रावशेषितंलोकत्रयंयस्य सम्यक्प्रतिमुक्तोबद्धः अपविद्धःप्रक्षिप्तोऽपिसन् ॥ २३ ॥ बतेतिखेदे भगवान्विद्वानपि
योऽसाविंद्रोयस्यैकांतेनबृहस्पतिःसचिवःसहायो यतोमंत्रार्थंवृतः सोऽपिपुरुषार्थेषुनूनंननिष्णातोनानिपुणः यतउपेंद्रेणद्वारभूतेन तमुपें
द्रंविहायात्मानंमांलोकत्रयमयाचत तंमंत्रप्रदंबृहस्पतिमातिहायेतिवा तस्मिन्प्रसन्नेसएववरणीयोनलोकत्रयंयतस्तदातितुच्छमित्याह अति
गंभीरमनंतंवयोयस्यतस्यकालस्ययन्मन्वंतरंतेनपरिवृतंविपर्यस्तंलोकत्रयमिदंकियत् ॥ २४ ॥ प्रन्हादस्त्वेकएवार्थेनिष्णातइत्याह य

यत्तद्भगवताऽनधिगतान्योपायेनयाच्ञाछलेनापहृतस्वशरीरावशेषितलोकत्रयोवरुणपाशैश्चसंप्रतिमुक्तो
गिरिदर्यांचापविद्धइतिहोवाच ॥ २३ ॥ नूनंबतायंभगवानर्थेषुननिष्णातोयोऽसाविंद्रोयस्यसचिवोमंत्राय
वृतएकांततोबृहस्पतिस्तमतिहायस्वयमुपेंद्रेणात्मानमयाचतआत्मनश्चाशिषोनोएवतद्दास्यमतिगंभीरव
यसःकालस्यमन्वंतरपरिवृतंकियल्लोकत्रयमिदं ॥ २४ ॥ यस्यानुदास्यमेवास्मत्पितामहःकिलववेनतुस्व
पित्र्यंयदुताकुतोभयंपदंदीयमानंभगवतःपरमितिभगवतोपरतेखलुस्वपितरि ॥ २५ ॥ तस्यमहानुभाव
स्यानुपथमसृजितकषायःकोवाऽस्मद्विधःपरिहीणभगवदनुग्रहउपजिगमिषतीति ॥ २६ ॥ अथतस्यानुच
रितमुत्तरस्माद्विस्तरिष्यतेयस्यभगवान्स्वयमखिलजगद्गुरुर्नारायणोद्वारिगदापाणिरवतिष्ठतेनिजजनानु
कंपितहृदयोयेनांगुष्ठेनपदादशकंधरोयोजनायुतायुतंदिग्विजयउच्चाटितः ॥ २७ ॥ ॥

स्यानुदास्यमिति स्वपितरिउपरतेसतिस्वपित्र्यंपदंभगवतादीयमानमपिभगवतःखलुपरमन्यदितिकृत्वानतुजग्राहेत्यर्थः ॥ २५ ॥ ननु
त्वमतिवीरःकुतस्तमेवबहुमन्यसेतत्राह तस्यानुपथमनुवर्त्म अमृजिताअक्षीणाःकषायारागादयोयस्य परिहीणोभगवदनुग्रहोयस्य सको
वाउपगंतुमिच्छतीति ॥ २६ ॥ अथशुकोक्तिः नन्वेवंभूतश्चेद्बलिस्तर्हितस्यैवचरितंविस्तरेणकथ्यतांतत्राह तस्यबलेरनुचरितमुपरिष्टाद
ष्टमेविस्तरिष्यते यस्यद्वार्यवतिष्ठते निजजनेष्वनुकंपितंकृतानुकंपंहृदयंयस्य द्वारपालकर्मदर्शयति येनश्रीनारायणेनबलेर्द्वारिविशन्दश
कंधरउच्चाटितः केन पदा तत्राप्यंगुष्ठेनैव ॥ २७ ॥ ॥ ॥ ॥

यथाहरिणास्वभक्तोबलिः सुतलेनिहितः सुखमास्ते एवंमहादेवभक्तोऽपिमयस्तलातलेसुखमास्तइत्याह ततइति लब्धंपदंस्थानंयेन महीयतेपूज्यते ॥ २८ ॥ नैकशिरसामनेकफणानांगणोऽस्ति एतत्प्रपंचयति कुहकेति महाभोगवंतोमहाकायाः पुरुषवाहात्हरेर्वाहनात् ॥ ॥२९॥ विबुधप्रत्यनीकाःदेवशत्रवः सकलेष्वपिलोकेष्वनुभावोयस्यतस्यैवतेजसादर्शनेनप्रतिहतोबलावलेपोवीर्यमदोयेषां बिलेशयाः



ततोऽधस्तात्तलातलेमयोनामदानवेंद्रस्त्रिपुराधिपतिर्भगवतापुरारिणात्रिलोकीशंचिकीर्षुणानिर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदोमायाविनामाचार्योमहादेवेनपरिरक्षितोविगतसुदर्शनभयोमहीयते ॥ २८ ॥ ततोऽधस्तान्महातलेकाद्रवेयाणांसर्पाणांनैकशिरसांक्रोधवशोनामगणःकुहकतक्षककालियसुषेणादिप्रधानामहाभोगवंतःपतत्रिराजाधिपतेःपुरुषवाहादनवरतमुद्विजमानाःस्वकलत्रापत्यसुहृत्कुटुंबसंगेनक्वचित्प्रमत्ताविहरंति ॥ २९ ॥ ततोऽधस्ताद्रसातलेदैतेयादानवाःपणयोनामनिवातकवचाःकालेयाहिरण्यपुरवासिनइतिविबुधप्रत्यनीकाउत्पत्त्यामहौजसोमहासाहसिनोभगवतःसकललोकानुभावस्यहरेरेवतेजसाप्रतिहतबलावलेपाबिलेशयाइववसंति येवैसरमयेंद्रदूत्यावाग्भिर्मंत्रवर्णाभिरिंद्राद्बिभ्यति ॥ ३० ॥ ततोऽधस्तात्पातालेनागलोकपतयोवासुकिप्रमुखाःशंखकुलिकमहाशंखश्वेतधनंजयधृतराष्ट्रशंखचूडकंबलाश्वतरदेवदत्तादयोमहाभोगिनोमहामर्षानिवसंतितेषामुहवैपंचसप्तदशशतसहस्रशीर्षाणांफणासुविरचितामहामणयोरोचिष्णवःपातालविवरतिमिरनिकरंस्वरोचिषाविधमंति ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ ॥ ॥



सर्पाइव इंद्रदूत्याप्रयुक्ताभिर्मंत्ररूपाभिर्वाग्भिः एवंहिवैदिकमाख्यानं पणिभिरसुरैर्निगूढागामन्वेष्टुंसरमांदेवशुनीमिंद्रेणप्रहितांसंधिमिच्छंतःपणयःप्राहुः किमिच्छंतीसरमेत्यादिसाचसंधिमनिच्छंतींद्रस्तुतिपूर्वकंतान्प्रतिपरुषमाह हताइंद्रेणपणयःशयध्वमित्यादि तेचतच्छ्रुत्वाबिभ्यतीति ॥३०॥ महाभोगिनोमहाफणाः महानमर्षःक्रोधोयेषां पंचादिसंख्यानिशीर्षाणियेषां शीर्ष्णामितिवक्तव्येशीर्षाणामित्यार्षः ॥ ३१ ॥ इतिपंचमेटीकायांचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ॥ ॥

पंचविंशेततोऽधस्तादाहशेषस्यसांस्थितिं संजिहीर्षोरिदंकालेयत्ररुद्रसमुद्भवः ॥ १ ॥ तस्यपातालस्य कोऽसावनंतः सात्वतीयाःसात्वततं
त्रनिष्ठाः चतुर्व्यूहोपासनेयंसंकर्षणमित्याचक्षते तथाख्यानेहेतुः द्रष्टृदृश्ययोःसम्यक्कर्षणमेकीकरणंयेनतत् कुतः अहमित्यभिमानोलक्षणं
चिन्हमधिष्ठातुर्यस्य अहंकाराधिष्ठानेनदृग्दृश्यसंकर्षणात्संकर्षणइत्यर्थः ॥ १ ॥ अनंतत्वमाह यस्येदमिति यच्छब्दानांसएषभगवाननंतइ
त्युत्तरेणान्वयः ॥२॥ तामसत्वमाह यस्येदंविश्वमुपसंहर्तुमिच्छतःअमर्षेणाविरचितेरुचिरीकृतेकुटिलीकृतेभ्रमंत्यौभ्रुवौतयोर्मध्यं उत्तंभयन्नुन्न

श्रीशुकउवाच तस्यमूलदेशेत्रिंशद्योजनसहस्त्रांतरआस्तेयावैकलाभगवतस्तामसीसमाख्याताऽनंतइ
तिसात्वतीयाद्रष्टृदृश्ययोःसंकर्षणमहमित्यभिमानलक्षणंसंकर्षणमित्याचक्षते ॥ १ ॥ यस्येदंक्षितिमंड
लंभगवतोऽनंतमूर्तेःसहस्त्रशिरसएकस्मिन्नेवशीर्षणिध्रियमाणंसिद्धार्थइवलक्ष्यते ॥ २ ॥ यस्यहवाइदंका
लेनोपसंजिहीर्षतोऽमर्षविरचितरुचिरभ्रमद्भ्रुवोरंतरेणसांकर्षणोनामरुद्रएकादशव्यूहस्त्र्यक्षस्त्रिशिखंशूल
मुत्तंभयन्नुदतिष्ठत् ॥ ३ ॥ यस्यांघ्रिकमलयुगलारुणविशदनखमणिखंडमंडलेष्वहिपतयःसहसात्वतर्ष
भैरेकांतभक्तियोगेनावनमंतःस्ववदनानिपरिस्फुरत्कुंडलप्रभामंडलमंडितगंडस्थलान्यतिमनोहराणिप्र
मुदितमनसःखलुविलोकयंति ॥ ४॥ यस्यैवहिनागराजकुमार्यआशिषआशासानाश्चार्वंगवलयविलसित
विशदविपुलधवलसुभगरुचिरभुजरजतस्तंभेष्वगुरुचंदनकुंकुमपंकानुलेपेनावलिंपमानास्तदभिमर्शनो
न्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागमदमुदितमदविघूर्णितारुणकरुणाऽवलोकनय
नवदनारविंदंसव्रीडंकिलविलोकयंति ॥ ५ ॥ ॥ ॥ ॥

मयन् ॥३॥ सुभगत्वमाह यस्यांघ्रिकमलयुगलेऽरुणाविशदानखाएवमणयस्तेषांखंडःसमूहस्तस्यमंडलेषुपरिस्फुरतांकुंडलानांप्रभयामंडिता
निगंडस्थलानियेषुतानि ॥४॥चारुणीअंगवलयेविलसिताश्चतेविशदाश्चविपुलाश्चधवलाश्चसुभगाश्चरुचिराश्चभुजाएवरजतस्तंभास्तेषुअगु
रुचंदनकुंकुमानांपंकएवानुलेपस्तेनावलिंपमानाः तेषामभिमर्शनेनोन्मथितेहृदयेमकरध्वजस्यावेशेनरुचिरंचललितंचास्मितंयासांताः त
स्यानुरागेणमदेनचमुदितंचतन्मदेनाविघूर्णितेप्रचलितेचआईषदरुणेकरुणावलोकयुक्तेनयनेयस्मिंस्तद्वदनारविंदंविलोकयंति ॥ ५ ॥

अमर्षोऽसहनं रोषः क्रोधः उपसंहृतस्तयोर्वेगोयेन ॥ ६ ॥ उपासनार्थमाह सुरादिभिर्ध्यायमानः चिंत्यमानः अनवरतमदेनमुदितश्चासौ विकृतविह्वललोचनश्चसुललितेनमुखरिकाऽमृतेनस्वपार्षदान्विबुधयूथपानांपतींश्चाप्यायमानः हर्षयन् नीलेवाससीयस्य एकमेवकुंडलं यस्य हलस्यककुदिपृष्ठेकृतोन्यस्तः सुभगश्चसुंदरश्चभुजोयेन उदारालीलायस्यसः नपरिम्लानोरागः कांतिर्यस्यास्तस्यानवतुलसिकाया आमोदमध्वासवेनसुरभिमधुरसेनमाद्यतांमधुकराणां येव्रातास्तेषांमधुरगीतेनश्रीर्यस्यास्तांवनमालां कक्षांवरत्राम् ॥ ७ ॥ संश्लोकयामास वर्णयामास ॥ ८ ॥ अस्यजगतउत्पत्त्यादिहेतवोगुणायस्येक्षयाकल्पाः स्वस्वकार्यसमर्थाआसन् यस्यतुरूपंध्रुवमनंतमकृतमनादि तत्रहेतुः

सएवभगवाननंतोऽनंतगुणार्णवआदिदेवउपसंहृतामर्षरोषवेगोलोकानांस्वस्तयआस्ते॥ ६॥ ध्यायमानः सुरासुरोरगसिद्धगंधर्वविद्याधरमुनिगणैरनवरतमदमुदितविव्हललोचनः सुललितमुखरिकामृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेनमाद्यन्मधुकरव्रातमधुरगीतश्रियंवैजयंतींस्वांवनमालांनीलवासाएककुंडलोहलककुदिकृतसुभगसुंदरभुजोभगवान्माहेंद्रोवारणेंद्रइवकांचनींकक्षामुदारलीलोबिभर्ति॥ ७॥ यएषएवमनुश्रुतोध्यायमानोमुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयंहृदयग्रंथिंसत्वरजस्तमोमयमंतर्हृदयंगतआशुनिर्भिनत्तितस्यानुभावान्भगवान्स्वायंभुवोनारदःसहतुंबुरुणासभायांब्रह्मणःसंश्लोकयामास ॥ ८ ॥ उत्पत्तिस्थितिलयहेतवोऽस्यकल्पाःसत्वाद्याःप्रकृतिगुणायदीक्षयासन्॥ यद्रूपंध्रुवमकृतंयदेकमात्मन्नानाधात्कथमुहवेदतस्यवर्त्म ॥९॥ मूर्तिंनःपुरुकृपयाबभारसत्त्वंसंशुद्धंसदसदिदंविभातियत्र॥ यल्लीलांमृगपतिराददेऽनवद्यामादातुंस्वजनमनांस्युदारवीर्यः॥ १० ॥

यदेकमेवसत् आत्मन्आत्मनिनानाकार्यप्रपंचमधात् तस्यब्रह्मरूपस्यवर्त्मतत्त्वंजनः कथमुहवेद नैववेदेत्यर्थः ॥ ९ ॥ तर्हिकथंमुमुक्षुभिः सेव्यतेतत्राह मूर्तिमिति यत्रेदंसदसद्विभातिसः नोऽस्माकंभक्तानांबहुकृपयासंशुद्धंसत्त्वंमूर्तिंबभार स्वजनानांमनांस्यादातुंवशीकर्तुंकृतांयस्य लीलांमृगपतिः सिंहआददेअशिक्षत् यतः उदाराणिवीर्याणियस्य तस्मादन्यंमुमुक्षुःकमाश्रयेदित्युत्तरेणान्वयः यद्वाकृपयेत्यत्रहेतुः यद्यस्मात्स्वजनानांमनांस्यादातुं लीलामाददे मृगपतिरिवोदारवीर्यः यद्वामृग्यंतइतिमृगाः कामप्रदास्तेषांपतिर्मुख्यः ॥ १० ॥ ॥

किंच आस्तांतस्यरूपयावपुर्धारणंतद्भजनंवा तन्नामौदार्यमेवातिचित्रमित्याह यस्यनामयदिपतितोमाहापातक्यपिअनुकीर्तयेत्तर्हिसशुध्ये
दितिकिमुवक्तव्यं यतोऽसावेवनृणामशेषमंहःसद्योहंति कथमनुकीर्तयेत् अन्यतःश्रुतंवाअकस्माद्वाआर्तोवासन्प्रलंभनाद्वापरिहासा
त्तस्माच्छेषादन्यं ॥ ११ ॥ गिर्यादिसहितंभूगोलं सत्वानिप्राणिनः सहस्रजिह्वोऽपिकोगणयेत् ॥ १२ ॥ दुरंतंवीर्यंबलंयस्य उरवोगु
णाःअनुभावश्चयस्यसचसच रसायाभूमेर्मूलेस्थितःतिष्ठति आत्मतंत्रःआत्माधारः ॥ १३ ॥ उक्तस्यलोकविभागस्योपयोगंवदन्नुपसंहरति
एताह्येवेहकामान्कामयमानैर्नृभिरुपगंतव्याइत्यन्वयः ॥ १४॥ तस्यप्रपंचः एतावत्योविपाकगतयःफलभूतागतयःताःव्याचख्ये व्याख्या

यन्नामश्रुतमनुकीर्तयेदकस्मादार्तोवायदिपतितःप्रलंभनाद्वा ॥ हंत्यंहःसपदिनृणामशेषमन्यंकंशेषाद्भग
वतआश्रयेन्मुमुक्षुः ॥ ११ ॥ मूर्द्धन्यर्पितमणुवत्सहस्रमूर्ध्नोभूगोलंसगिरिसरित्समुद्रसत्वं ॥ आनंत्यादनि
मितविक्रमस्यभूम्नःकोवीर्याण्यधिगणयेत्सहस्रजिह्वः ॥१२॥ एवंप्रभावोभगवाननंतोदुरंतवीर्योरुगुणानु
भावः ॥ मूलेरसायाःस्थितआत्मतंत्रोयोलीलयाक्ष्मांस्थितयेबिभर्ति ॥ १३ ॥ एताह्येवेहनृभिरुपगंत
व्यागतयोयथाकर्मनिर्मितायथोपदेशमनुवर्णिताःकामान्कामयमानैः ॥ १४ ॥ एतावतीर्हिराजन्पुंसःप्रवृ
त्तिलक्षणस्यधर्मस्यविपाकगतयउच्चावचाविसदृशायथाप्रश्नंव्याचख्येकिमन्यत्कथयामइति ॥१५॥ इति
श्रीभागवतेमहापुराणेपंचमस्कंधेभूविवरविध्युपवर्णनंनामपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ ॥
राजोवाच महर्षएतद्वैचित्र्यंलोकस्यकथमिति ऋषिरुवाच त्रिगुणत्वात्कर्तुःश्रद्धयाकर्मगतयःपृथ
ग्विधाःसर्वाएवसर्वस्यतारतम्येनभवंति ॥ १ ॥ ॥ ॥ ॥

तवानस्मि ॥ १५ ॥ इतिपंचमेटीकायांपंचविंशतितमोऽध्यायः ॥ २५ ॥ ॥ ॥ षड्विंशेतुततोऽधस्तान्नरकस्थितिरुच्यते
॥पापिनोयत्रदह्यंतेयमदूतैर्यथायथं ॥ १ ॥ पुंसोगतयउच्चावचाविसदृशाइतिभोगवैचित्र्यमुक्तंतदेतत्कुतइतिपृच्छति महर्षइति कर्मणःस
मानत्वेऽपिश्रद्धावैचित्र्यात्फलवैचित्र्यमितिपरिहरति त्रिगुणत्वादिति सात्विक्याश्रद्धयाकर्तुःसुखित्वंराजस्यासुखित्वंदुःखित्वंचताम
स्यादुःखित्वंमूढत्वंच तत्रापितासांश्रद्धानांतारतम्यात्सुखादितारतम्यंसर्वेषामित्यर्थः ॥ १ ॥

प्रतिषिद्धंप्रतिषेधःसएवलक्षणंप्रमाणंयस्यअधर्मस्यकर्तुःश्रद्धावैसादृश्यंतमसस्तारतम्यात्तत्रापिकारणंदर्शयन्नाह अनाद्यविद्याकृतानांकामा नांसृतयोनरकास्तासां अथेदानींताःप्राचुर्येणानुवर्णयिष्यामइत्यन्वयः ॥ २ ॥ किंभूमावेवदेशविशेषाः त्रिलोक्याःब्रह्मांडाद्बहिर्वा आवरणे

अथेदानींप्रतिषिद्धलक्षणस्याधर्मस्यतथैवकर्तुःश्रद्धयावैसादृश्यात्कर्मफलंविसदृशंभवति याह्यनाद्यविद्याकृतकामानांतत्परिणामलक्षणाःसृतयःसहस्रशःप्रवृत्तास्तासांप्राचुर्येणानुवर्णयिष्यामः ॥ २ ॥ राजोवाच नरकानामभगवन्किंदेशविशेषाअथवाबहिस्त्रिलोक्याआहोस्विदंतरालइति ॥ ३ ॥ ऋषिरुवाच अंतरालएवत्रिजगत्यास्तुदिशिदक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्चजलाद्यस्यामग्निष्वात्तादयःपितृगणादिशिस्वानांगोत्राणांपरमेणसमाधिनासत्याएवाशिषआशासानानिवसंति ॥ ४ ॥ यत्रहवावभगवान्पितृराजोवैवस्वतःस्वविषयंप्रापितेषुस्वपुरुषैर्जंतुषुसंपरेतेषुयथाकर्मावद्यंदोषमेवानुल्लंघितभगवच्छासनःसगणोदमंधारयति ॥ ५ ॥ तत्रहैकेनरकानेकविंशतिंगणयंतिअथतांस्तेराजन्नामरूपलक्षणतोऽनुक्रमिष्यामस्तामिस्रोंऽधतामिस्रोरौरवोमहारौरवःकुंभीपाकःकालसूत्रमसिपत्रवनंसूकरमंधकूपःकृमिभोजनःसंदंशस्तप्तसूर्मिर्वज्रकंटकशाल्मलीवैतरणिपूयोदःप्राणरोधोविशसनंलालाभक्षःसारमेयादनमवीचिरयःपानमिति किंचक्षारकर्दमोरक्षोगणभोजनःशूलप्रोतोदंदशूकोऽवटनिरोधनःपर्यावर्तनःसूचीमुखमित्यष्टाविंशतिनरकाविविधयातनाभूमयः ॥ ६ ॥ तत्रयस्तुपरवित्तापत्यकलत्राण्यपहरतिसहिकालपाशबद्धोयमपुरुषैरतिभयानकैस्तामिस्रेनरकेबलान्निपात्यतेअनशनानुदपानदंडताडनसंतर्जनादिभिर्यातनाभिर्यात्यमानोजंतुर्यत्रकश्मलमासादितएकदैवमूर्छामुपयातितामिस्रप्राये ॥ ७ ॥

षुमध्येअंतरालेवाभूमिव्यतिरिक्ते॥ ३ ॥ ४ ॥ कर्मदोषमेवदमंपापफलंदंडंकरोति नउल्लंघितंभगवच्छासनंयेन ॥ ५ ॥ मतांतरेणाष्टाविंशति माह किंचेति ॥ ६ ॥ पापभेदेनचतत्तन्नरकयातनाभेदंप्रपंचयाति यस्त्वित्यादिना यात्यमानः पीड्यमानःएकदैवतदैव ॥ ७ ॥

पुरुषंपतिंवंचयित्वा ॥ ८ ॥ एतत्शरीरमहमितिइदंधनादिममेतिमत्वास्वयंचकुटुंबमेवपुष्णाति तेनाशुभेन ॥ ९ ॥ रुरवोभुत्वेतिकर्मा

एवमेवांधतामिस्त्रेयस्तुवंचयित्वापुरुषंदारादीनुपयुंक्तेयत्रशरीरीनिपात्यमानोयातनास्थोवेदनयानष्टमति
र्नष्टदृष्टिश्चभवतियथावनस्पतिर्वृश्च्यमानमूलस्तस्मादंधतामिस्त्रंतमुपादिशांति॥८॥यस्त्विहवाएतदहमिति
ममेदमितिभूतद्रोहेणकेवलंस्वकुटुंबमेवानुदिनंप्रपुष्णातिसतदिहविहायस्वयमेवतदशुभेनरौरवेनिपतति॥
॥ ९ ॥ येत्विहयथैवामुनाविहिंसिताजंतवःपरत्रयमयातनामुपगतंतएवरुरवोभूत्वातथातमेवविहिंसंतित
स्माद्रौरवमित्याहुः रुरुरितिसर्पादतिक्रूरसत्वापदेशः ॥ १० ॥ एवमेवमहारौरवोयत्रनिपतितंपुरुषंक्रव्या
दानामरुरवस्तंक्रव्येणघातयंतियःकेवलंदेहंभरः ॥ ११ ॥ यस्त्विहवाउग्रःपशून्पक्षिणोवाप्राणतउपरंधय
तितमपकरुणंपुरुषादैरपिविगर्हितममुत्रयमानुचराःकुंभीपाकेतप्ततैलेउपरंधयंति ॥ १२ ॥ यस्त्विहपितृवि
प्रब्रह्मध्रुक्सकालसूत्रसंज्ञकेनरकेअयुतयोजनपरिमंडलेताम्रमयेतप्तखलेउपर्यधस्तादग्न्यर्काभ्यामातित
प्यमानेऽभिनिवेशितःक्षुत्पिपासाभ्यांचदह्यमानांतर्बहिःशरीरआस्तेशेतेचेष्टतेअवतिष्ठतिपरिधावतिचया
वंतिपशुरोमाणितावद्वर्षसहस्राणि ॥ १३ ॥ यस्त्विहवैनिजवेदपथादनापद्यपगतःपाखंडंचोपगतस्त
मसिपत्रवनंप्रवेश्यकशयाप्रहरंतितत्रहासावितस्ततोधावमानउभयतोधारैस्तालवनासिपत्रैश्छिद्यमान
सर्वांगोहाहतोऽस्मीतिपरमयावेदनयामूर्छितःपदेपदेनिपततिस्वधर्महापाखंडानुगतंफलंभुंक्ते ॥ १४ ॥

ण्येवतथापरिणामंप्राप्येत्यर्थः अतिक्रूरस्यभारशृंगाख्यस्यसत्वस्यापदेशःसंज्ञायस्य ॥ १० ॥ क्रव्येणनिमित्तेनमांसार्थमित्यर्थः ॥ ११ ॥
प्राणतःसजीवान्उपरंधयतिपचति अपकरुणंनिष्कृपं ॥ १२ ॥ खलेसमेदेशे ॥ १३ ॥ स्वधर्महाधर्मत्यागी ॥ १४ ॥ ॥

स्वनयन्रुदन्कश्मलंमोहमुपगतोभवति अदृष्टदोषास्तेनोपरुद्धाः संतोयथाकश्मलमुपगतास्तद्वत् ॥ १५ ॥ ईश्वरेणोपकल्पितामनुष्यर
क्तपानादिलक्षणावृत्तिर्येषांमत्कुणादीनां नविविक्ताविज्ञातापरव्यथायैरविवेकिभिस्तेषां पुरुषेणब्राह्मणादिभावेनविधिनिषेधपूर्वकंकल्पि
तावृत्तिर्यस्य विविक्तापरव्यथायेनविवेकिना अभिद्रुग्धाहिंसिताः विहतानिद्रारूपानिर्वृतिर्यस्य नलब्धमवस्थानंयेन सतमसिपरिक्रामति

यस्त्विहवैराजाराजपुरुषोवाअदंड्येदंडंप्रणयतिब्राह्मणेवाशरीरदंडंसपापीयान्नरकेऽमुत्रसूकरमुखेनिपत
तितत्रातिबलैर्विनिष्पिष्यमाणावयवोयथैवेहेक्षुखंडआर्तस्वरेणस्वनयन्क्वचिन्मूर्छितःकश्मलमुपगतोयथै
वेहादृष्टदोषाउपरुद्धाः ॥१५॥ यस्त्विहवैभूतानामीश्वरकल्पितवृत्तीनामविविक्तपरव्यथानांस्वयंपुरुषोपक
ल्पितवृत्तिर्विविक्तपरव्यथोव्यथामाचरतिसपरत्रांधकूपेतदभिद्रोहेणनिपततितत्रहासौतैर्जंतुभिःपशुमृगप
क्षिसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्येकेचाभिद्रुग्धास्तैःसर्वतोऽभिद्रुह्यमाणस्तमसिविहतनिद्रानि
र्वृतिरलब्धावस्थानःपरिक्रामतियथाकुशरीरेजीवः॥१६॥यस्त्विहवाअसंविभज्याश्नातियत्किंचनोपनतम
निर्मितपंचयज्ञोवायससंस्तुतःसपरत्रकृमिभोजनेनरकाधमेनिपतातितत्रशतसहस्रयोजनेकृमिकुंडेकृमिभू
तःस्वयंकृमिभिरेवभक्ष्यमाणःकृमिभोजनोयावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानंयातयते ॥१७॥ यस्त्वि
हवैस्तेयेनबलाद्वाहिरण्यरत्नादीनिब्राह्मणस्यवाऽपहरत्यन्यस्यवाऽनापदिपुरुषस्तममुत्रराजन्यमपुरुषा
अयस्मयैरग्निपिंडैःसंदंशैस्त्वचिनिष्कुषंति ॥१८॥ यस्त्विहवाअगम्यांस्त्रियमगम्यंवापुरुषंयोषिदभिगच्छ
तितावमुत्रकशयाताडयंतास्तिग्मयासूर्म्यालोहमय्यापुरुषमालिंगयंतिस्त्रियंचपुरुषरूपयासूर्म्या ॥१९॥

॥ १६ ॥ यत्किंचनभक्ष्यादिकमुपनतंप्राप्तंतदसंविभज्यनानिर्मिताःपंचयज्ञायेन अतएववायसैःसंस्तुतःसमत्वेनवर्णितः कृमिभोजनःकृमी
नेवभुंजानः यावत्तत्यावंतियोजनानितत्कृमिकुंडंतावंतिवर्षाणियावद्वातत्पातकमित्यर्थः अप्रत्तमसंविभक्तं अप्रहुतंवाऽस्तीतितथासः अ
निर्वेशमकृतप्रायश्चित्तं ॥ १७ ॥ निष्कुषंति छिंदंति ॥ १८ ॥ तिग्मयातप्तया सूर्म्याप्रतिमया ॥ १९ ॥ ॥

सर्वाभिगमःपश्वाद्युपगंता ॥ २० ॥ अपाखंडाःसत्कुलीनाःसंतः द्वितीयांतपाठेसेतुविशेषणं नदींविशिनाष्टि विण्मूत्रेति ॥ २१ ॥
पशुचर्यांस्वेच्छाचारं ॥ २२ ॥ अतीर्थेविहितादन्यत्र विध्यंतीतिप्राणनिरोधोदर्शितः ॥ २३ ॥ निरयपतयोयमपुरुषाः ॥ २४ ॥ ला

यस्त्विहवैसवर्णाभिगमस्तममुत्रनिरयेवर्तमानंवज्रकंटकशाल्मलीमारोप्यनिष्कर्षंति॥२०॥येत्विहवैराजन्या
राजपुरुषावाअपाखंडाधर्मसेतून्भिंदंतितेसंपरेत्यवैतरण्यांनिपतंतिभिन्नमर्यादास्तस्यांनिरयपरिखाभूता
यांनद्यांयादोगणैरितस्ततोभक्ष्यमाणाआत्मनानवियुज्यमानाश्चासुभिरुह्यमानाःस्वाघेनकर्मपाकमनुस्म
रंतउपतप्यंतोविण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यंते॥२१॥येत्विहवैवृषलीपत
योनष्टशौचाचारनियमास्त्यक्तलज्जाःपशुचर्यांचरंतितेचापिप्रेत्यपूयविण्मूत्रश्लेष्ममलापूर्णार्णवेनिपतंतित
देवातिबीभत्सितमश्नंति ॥ २२ ॥ येत्विहवैश्वगर्दभपतयोब्राह्मणादयोमृगयाविहाराअतीर्थेचमृगान्निघ्नं
तितानपिसंपरेताँल्लक्ष्यभूतान्यमपुरुषाइषुभिर्विध्यंति॥२३॥येत्विहवैदांभिकादंभयज्ञेषुपशून्विशसंतिता
नमुष्मिँल्लोकेवैशसेनरकेपतितान्निरयपतयोघातयित्वाविशसंति॥२४॥ यस्त्विहवैसवर्णांभार्यांद्विजोरेतःपा
तयतिकाममोहितस्तंपापकृतममुत्ररेतःकुल्यायांपातयित्वारेतःसंपाययंति ॥ २५ ॥ येत्विहवैदस्यवोग्निदा
गरदाग्रामान्सार्थान्वाविलुंपंतिराजानोराजभटास्तांश्चापिहिपरेत्ययमदूतावज्रदंष्ट्राःश्वानःसप्तशतानिविं
शतिश्चसरभसंखादंति॥२६॥यस्त्विहवाअनृतंवदतिसाक्ष्येद्रव्यविनिमयेदानेवाकथंचित्सवैप्रेत्यनरकेऽवी
चिमत्यधःशिरानिरवकाशेयोजनशतोच्छ्रायाद्गिरिमूर्ध्नःसंपात्यतेयत्रजलमिवस्थलमश्मपृष्ठमवभासतेतद
वीचिमत्तिलशोविशीर्यमाणशरीरोनम्रियमाणःपुनरारोपितोनिपतति ॥ २७ ॥

लाभक्षमाह यस्त्विवति रेतःपानंकारयंति ॥ २५ ॥ यमदूतायेश्वानः सरभसंससंभ्रमं ॥ २६ ॥ द्रव्यविनिमयेक्रयादौ निरवकाशेनिरा
लंबेअवीचिशब्दार्थमाह यत्रेति वीचिस्तरंगस्तद्रहितत्वादवीचिः ॥ २७ ॥

योविप्रस्तत्कलत्रंवासुरांपिबति अन्योऽपिवाव्रतस्थःसन्राजन्योवैश्योवासोमपीथःकृतसोमपानइत्यन्वयः तयोःसोमस्थानेफलचमसवि धानात् सोमपाननिषेधाच्च तथाचश्रुतिः न्यग्रोधस्त्रिभिराहृत्यताःसंपिष्यदधत्युपमृज्यतमस्मैभक्षंसंप्रयच्छेन्नसोमामिति ॥ २८ ॥ सपूर्वम पिमृतकएवसन्मृत्वा ॥ २९ ॥ पुरुषस्यमेधेनहिंसयाभैरवादीन्यजंते याश्चस्त्रियःकामरूपाः रक्षोगणाभूत्वायथेहतेपुरुषादाःसंतःपूर्वमनृ



यस्त्विहवैविप्रोराजन्योवैश्योवासोमपीथस्तत्कलत्रंवासुरांव्रतस्थोऽपिवापिबतिप्रमादतस्तेषांनिरयभीता नामुरसिपदाक्रम्यास्येवह्निनाद्रवमाणंकार्ष्णायसंनिषिंचंति ॥२८॥ अथचयस्त्विहवाआत्मसंभावनेनस्व यमधमोजन्मतपोविद्याचारवर्णाश्रमवतोवरीयसोनबहुमन्येतसमृतकएवमृत्वाक्षारकर्दमेनिरयेऽवाक्शि रानिपातितोदुरंतायातनाह्यश्नुते ॥ २९ ॥ येत्विहवैपुरुषाःपुरुषमेधेनयजंतेयाश्चस्त्रियोनृपशून्खादंतितां श्चतेपशवइवनिहतायमसदनेयातयंतोरक्षोगणाःसौनिकाइवस्वधितिनाऽवदायासृक्पिबंतिनृत्यंतिचगा यंतिचहृष्यमाणायथेहपुरुषादाः ॥ ३० ॥ येत्विहवाअनागसोऽरण्येग्रामेवावैश्रंभिकैरुपसृतानुपविश्रंभ य्यजिजीविषून्शूलसूत्रादिषूपप्रोतान्क्रीडनकतयायातयंतितेऽपिचप्रेत्ययमयातनासुशूलादिषुप्रोतात्मा नःक्षुत्तृड्भ्यांवाऽभिहताःकंकवटादिभिश्चेतस्ततस्तिग्मतुंडैराहन्यमानाआत्मशमलंस्मरंति ॥३१॥येत्विह वैभूतान्युद्वेजयंतिनराउल्बणस्वभावायथादंदशूकास्तेऽपिप्रेत्यनरकेदंदशूकाख्येनिपतंतियत्रनृपदंदशूकाः पंचमुखाःसप्तमुखाउपसृत्यग्रसंतियथाबिलेशयान् ॥३२॥ येत्विहवाअंधावटकुसूलगुहादिषुभूतानिनिरुं धंतितथाऽमुत्रतेष्वेवोपवेश्यसगरेणवन्हिनाधूमेननिरुंधंति ॥३३॥ यस्त्विहवाअतिथीनभ्यागतान्वागृहप तिरसकृदुपगतमन्युर्दिधक्षुरिवपापेनचक्षुषानिरीक्षतेतस्यवाऽपिनिरयेपापदृष्टेरक्षिणीवज्रतुंडागृध्राःकंक काकवटादयःप्रसह्योरुबलादुत्पाटयंति ॥ ३४ ॥ ॥ ॥ ॥



त्यंततद्वत् ॥ ३० ॥ वैश्रंभकैःविश्वासोपायैः उपविश्रंभय्यावि श्वास्य ॥ ३१ ॥ बिलेशयान्मूषकान् ॥ ३२ ॥ सगरेणसविषेण ॥ ३३ ॥ अतिथयोऽज्ञातपूर्वास्तान् पापेनवक्रीकृतेन ॥ ३४ ॥

आढ्याभिमतिः धनगर्वितः अहंकृतिः श्रेष्ठोऽहमितिमानी तिर्यक्प्रेक्षणंयस्य सर्वतः गुर्वादेरपिधनंचोरयिष्यंतीतिविशंकमानः परिशुष्यमा णंहृदयंवदनंचयस्य अनवगतःअप्राप्तः तस्यार्थस्योत्पादनादिभिः शमलंगृह्णातितथा परिवर्यंतिसूत्रप्रोतान्कुर्वंति ॥ ३५ ॥ इतरत्रस्व र्गादौइहमर्त्यलोके पुनर्भवेपुनर्जन्मनिमित्तं उभयोर्धर्माधर्मयोःशेषाभ्यां आदावेवद्वितीयस्कंधेवैश्वानरंयातीत्यादिना उपगेयमुपानिषदं

यस्त्विहवाआढ्याभिमतिरहंकृतिस्तिर्यक्प्रेक्षणःसर्वतोऽभिविशंकीअर्थव्ययनाशचिंतयापरिशुष्यमाणहृदयवदनोनिर्वृत्तिमनवगतोग्रहइवार्थमभिरक्षतिसचापिप्रेत्यतदुत्पादनोत्कर्षणशमलग्रहःसूचीमुखेनरके निपततियत्रहवित्तग्रहंपापपुरुषंधर्मपुरुषावायकाइवसर्वतोंऽगेषुसूत्रैःपरिवयंति ॥ ३५ ॥ एवंविधानरकायमालयेसंतिशतशःसहस्रशस्तेषुसर्वेषुचसर्वएवाधर्मवर्तिनोयेकेचिदिहोदिताअनुदिताश्चावनिपतेपर्यायेणविशंतितथैवधर्मानुवर्तिनइतरत्रइहतुपुनर्भवेतउभयशेषाभ्यांनिविशंति ॥ निवृत्तिलक्षणमार्गआदावेवव्याख्यातः एतावानेवांडकोशोयश्चतुर्दशधापुराणेषुविकल्पितउपगीयतेयत्तद्भगवतोनारायणस्यसाक्षान्महापुरुषस्यस्थविष्ठंरूपमात्ममायागुणमयमनुवर्णितमादृतःपठतिशृणोतिश्रावयतिसउपगेयंभगवतःपरमात्मनोऽग्राह्यमपिश्रद्धाभक्तिविशुद्धबुद्धिर्वेद ॥ ३६ ॥ श्रुत्वास्थूलंतथासूक्ष्मंरूपंभगवतोयतिः ॥ स्थूलेनिर्जितमात्मानंशनैःसूक्ष्मंधियानयेदिति ॥ ३७ ॥ भूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागणलोकसंस्था ॥ गीतामयातवनृपाद्भुतमीश्वरस्यस्थूलंवपुःसकलजीवनिकायधाम ॥ ३८ ॥ इतिश्रीभागवते महापुराणेपारमहंस्यांसंहितायांपंचमस्कंधेनरकानुवर्णनोनामषड्विंशतितमोऽध्यायः ॥ २६ ॥

श्रद्धाभक्तिभ्यांविशुद्धाबुद्धिर्यस्य ॥ ३६ ॥ यथावच्छ्रुत्वा ॥ ३७ ॥ कथंभूतासंस्था सकलानांजीवनिकायानांधामआश्रयभूतंवपुरिति ॥ ३८ ॥ पंचमस्कंधसंबंधिपदभावार्थदीपनैः ॥ प्रीयतांपरमानंदनृहरिर्बालभाषितैः ॥ १ ॥ इतिश्रीभागवतेमहापुराणेश्रीधरस्वामिविरचितायांपंचमस्कंधटीकायांषड्विंशतितमोऽध्यायः ॥ २६ ॥ समाप्तोयंपंचमःस्कंधः ॥ ॥ ॥

॥ अथ श्रीमद्भागवते षष्ठस्कंधः प्रारभ्यते ॥

श्रीगणेशायनमः पुण्यारण्येनृसिंहैकनामसिंहोविराजते ॥ यन्नादतःपलायंतेमहाकल्मषकुंजराः ॥ १ ॥ विसर्गसंभवान्जीवान्स्वमर्यादासुसंस्थितान् ॥ विष्णुःपात्यखिलैरूपैरित्येवंपंचमेस्थितम् ॥ २ ॥अध्यायैकोनविंशत्याषष्ठेपोषणमुच्यते ॥ अतिलंघितमर्यादभक्तरक्षणलक्षणम् ॥ ३ ॥ अजामिलोमनुष्येषुमहापापोयथावितः ॥विश्वरूपादिघातीचयथादेवेषुवासवः ॥ ४ ॥ अजामिलस्यभक्तत्वंविष्णुदूतैर्निरूपितम् ॥ संकेतभगवन्नामपुत्रस्नेहानुषंगजम् ॥ ५ ॥ इंद्रोपिभगवद्भक्तःसख्येनोपेंद्रसेवकः ॥ तदधीनसुरैश्वर्यशत्रुनिर्जयजीवितः ॥ ६ तत्रादौत्रिभिरध्यायैरजामिलकथोच्यते ॥ विश्वरूपकथाषड्भिरिंद्रदोषोक्तयेततः ॥ ७ ॥ इंद्रस्यैवतुदोषोक्त्यैवृत्राख्यानंततोऽष्टभिः ॥ द्वाभ्यांचमरुदाख्यानमेवंप्रकरणक्रमः ॥ ८ ॥ तत्रादौप्रथमेविष्णोर्दूतैःपातकिमोचने ॥ तत्पापख्यापनायोक्तंयाम्यैर्धर्मादिलक्षणम् ॥ ९ ॥ अथषष्ठस्कंधोव्याख्यायते पूर्वोक्तानुवादपूर्वकंनिरंतरोक्तनरकपरिहारोपायंपृच्छतिनिवृत्तिमार्गइतिषड्भिः आदौद्वितीयस्कंधे वैश्वानरंयातीत्यादिनाभगवतात्वयायथायथावत् यत् येनमार्गेणयोगोऽर्चिरादिप्राप्तिस्तेनोपलब्धोब्रह्मातेनसहासंसृतिर्मोक्षोभवति ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदमितिवचनात् ॥ १ ॥ त्रैगुण्यंस्वर्गादिसुखंतदेवविषयः प्राप्यंयस्य नलीनाप्रकृतिर्यस्यतस्यपुंसः पुनःपुनर्गुणसर्गःभोगार्थदेहारंभरूपोयोमार्गः सचकथितस्तृतीयेदक्षिणेनपथाऽर्यम्णःपितृलोकंव्रजंतितइत्यादिना ॥ २ ॥ अनुवर्णितानिरंतराध्याये व्याख्यातश्चतुर्थस्यादौ यतःयास्मिन् ॥ ३ ॥ द्वीपादीन् भागतोलक्षणतोमानतश्च धरामंडलस्यसंस्थानंज्योतिषांविवराणांचइदंसंस्थानंविभुर्यथाऽसृजत्तथाव्याख्यातामित्यर्थः ॥ ४ ॥ ५ ॥ नानाउग्रायातनायेषुतान्नरकान्यथायेनोपायेननइयात्नगच्छेत् तन्मेऽधुनाव्याख्यातुमर्हसि ॥ ६ ॥ ॥ ॥

श्रीगणेशायनमः राजोवाच निवृत्तिमार्गःकथितआदौभगवतायथा ॥ क्रमयोगोपलब्धेनब्रह्मणायदसंसृतिः ॥ १ ॥ प्रवृत्तिलक्षणश्चैवत्रैगुण्यविषयोमुने ॥ योऽसावलीनप्रकृतेर्गुणसर्गःपुनःपुनः ॥ २ ॥ अधर्मलक्षणानानानरकाश्चानुवर्णिताः ॥ मन्वंतरश्चव्याख्यातआद्यःस्वायंभुवोयतः ॥ ३ ॥ प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानिच ॥ द्वीपवर्षसमुद्राद्रिनद्युद्यानवनस्पतीन् ॥ ४ ॥ धरामंडलसंस्थानंभागलक्षणमानतः ॥ ज्योतिषांविवराणांचयथेदमसृजद्विभुः ॥ ५ ॥ अधुनेहमहाभागयथैवनरकान्नरः ॥ नानोग्रयातनांनेयात्तन्मेव्याख्यातुमर्हसि ॥ ६ ॥ ॥ ॥

तत्रतावन्मन्वाद्युक्तप्रायश्चित्तंविनानरकादुर्निवाराइत्याह नचेदितिद्वाभ्याम् मनउक्तिपाणिभिर्मनोवाक्कायैः कृतस्यांहसस्तैरेवइहैवाप चितिंप्रायश्चित्तंनकुर्याच्चेत्तर्हिपुरुषःप्रेत्यमृत्वानरकान्ध्रुवमुपैति मेमयायेभवतःकीर्तिताः तिग्मादारुणायातनायेषुतान् ॥ ७ ॥ यस्मादेवं तस्मात्पापस्यप्रायश्चित्तेयतेत कदा मृत्योःपुरैव तत्रापि अविपद्यताअम्रियमाणेनात्मनादेहेन यद्वाअविपत्विपत्तिरहितोयावत् यतात्मना संयतेनमनसा तत्रापिआशु अन्यथाअतीवचिरकालेतुद्विगुणंव्रतमर्हतीतिद्वैगुण्यापत्तेः तत्रचपापस्यमहत्त्वमल्पत्वंचावेक्ष्यतदनुरूपेप्राय श्चित्तेयतेत रुजांरोगाणांनिदानविद्यथावैद्यस्तदनुरूपंचिकित्सेतततद्वत् ॥ ८ ॥ अत्रचोदयतिद्वाभ्याम् दृष्टंराजदंडादि श्रुतंनरकपाता दि ताभ्यामात्मनःपापमहितंजानन्नपिभूयःप्रायश्चित्तानंतरंकरोति अथोअतःकारणात् द्वादशाब्दादिकथंप्रायाश्चित्तं तेनसमूलस्यदोषस्या

**श्रीशुकउवाच** नचेदिहैवापचितिंतथांऽहसःकृतस्यकुर्यान्मनउक्तिपाणिभिः॥ ध्रुवंसवैप्रेत्यनरकानुपैति येकीर्तितामेभवतास्तिग्मयातनाः ॥ ७ ॥ तस्मात्पुरैवाश्विहपापनिष्कृतौयतेतमृत्योरविपद्यतात्मना ॥दोषस्यदृष्ट्वागुरुलाघवंयथाभिषक्चिकित्सेतरुजांनिदानवित् ॥ ८ ॥ **राजोवाच** दृष्टश्रुताभ्यांयत्पापंजानन्नप्यात्मनोऽहितम् ॥ करोतिभूयोविवशःप्रायश्चित्तमथोकथम् ॥ ९ ॥ क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः ॥ प्रायश्चित्तमतोऽपार्थंमन्येकुंजरशौचवत् ॥ १० ॥ **श्रीशुकउवाच** कर्मणाकर्मनिर्हारोनह्यात्यंतिकइष्यते ॥ अविद्वदधिकारित्वात्प्रायश्चित्तंविमर्शनम् ॥ ११ ॥ नाश्नतःपथ्यमेवान्नंव्याधयोऽभिभवंतिहि॥ एवंनियमकृद्राजन्शनैःक्षेमायकल्पते ॥ १२ ॥ ॥ ॥ ॥

निवृत्तेः निवृत्तौवापुनश्चपापप्ररोहयोगादितिभावः ॥ ९ ॥ किंच क्वचित्कदाचिदभद्रात्पापान्निवर्तते क्वचित्तदेवपुनराचरति यथा कुंजरःस्नातोऽपिरजोभिरात्मानंमलिनीकरोतितथापापस्यपुनर्दुर्निवारत्वेन नरकपातस्यावश्यंभावित्वात्प्रायश्चित्तंव्यर्थमिति ॥ १० ॥ परिहरति कर्मणाकृच्छ्रादिप्रायश्चित्तेनकर्मणःपापस्यनिर्हारोनाशआत्यंतिकःसमूलोनहीष्यते अविद्वानाधिकारीयस्मिंस्तस्यभावस्तत्त्वंतस्मात् अतोऽविद्यायानाशाभावान्नष्टेऽपितस्मिन्पापेतत्संस्कारेणपापांतरस्यपुनःपुनःप्ररोहोभवत्येव किंतर्हिमुख्यंप्रायश्चित्तंतदाह प्रायाश्चित्तंतु विमर्शनंज्ञानम् ॥ ११ ॥ तच्चनित्यमप्रमत्तःशनैर्लभतेनान्यइतिसदृष्टांतमाह नेति पथ्यमेवान्नमश्नतःपुरुषान् यथाव्याधयोनबाधंते तथानियमादिकर्तांक्षेमायतत्त्वज्ञानायसमर्थोभवति ॥ १२ ॥ ॥ ॥ ॥

एतदेवविशदयतिद्वाभ्याम् तपसाऐकाग्र्येण मनसश्चेंद्रियाणांचऐकाग्र्यंपरमंतपइतिस्मृतेः ब्रह्मचर्येणाष्टांगेन तदुक्तम् स्मरणंकीर्तनंकेलिः
प्रेक्षणंगुह्यभाषणम् ॥ संकल्पोऽध्यवसायश्चक्रियानिर्वृतिरेवच ॥ एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः ॥ विपरीतंब्रह्मचर्यमेतदेवाष्टलक्षणमि
ति शमोमनसोनियमनम् दमोबाह्येंद्रियाणाम् त्यागोदानम् यमोऽहिंसादिः नियमोजपादिः ॥ १३ ॥ १४ ॥ अस्यातिदुष्करत्वान्मुख्यमे
वान्यत्प्रायश्चित्तमाह केचिदिति अनेनैवंभूताभक्तिप्रधानाविरलाइतिदर्शयति केवलयातपआदिनिरपेक्षया वासुदेवपरायणाइतिनाधिका
रिविशेषणमेतत्किंत्वन्येषां अश्रद्धयातत्राप्रवृत्तेरर्थात्तेष्वेवपर्यवसानादनुवादमात्रम् ॥ १५ ॥ एतच्चज्ञानमार्गादपिश्रेष्ठमित्याह नतथापूयेत

तपसाब्रह्मचर्येणशमेनचदमेनच ॥ त्यागेनसत्यशौचाभ्यांयमेननियमेनच ॥ १३ ॥ देहवाग्बुद्धिजंधीरा
धर्मज्ञाःश्रद्धयान्विताः ॥ क्षिपंत्यघंमहदपिवेणुगुल्ममिवानलः ॥ १४ ॥ केचित्केवलयाभक्त्यावासुदेवपराय
णाः ॥ अघंधुन्वंतिकार्त्स्न्येननीहारमिवभास्करः ॥ १५ ॥ नतथाह्यघवान्राजन्पूयेततपआदिभिः ॥ यथाकृ
ष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ १६ ॥ सध्रीचीनोह्ययंलोकेपंथाःक्षेमोकुतोभयः ॥ सुशीलाःसाधवोयत्र
नारायणपरायणाः ॥ १७ ॥ प्रायश्चित्तानिचीर्णानिनारायणपराङ्मुखम् ॥ ननिःपुनंतिराजेंद्रसुराकुंभमिवा
पगाः ॥ १८ ॥ सकृन्मनःकृष्णपदारविंदयोर्निवेशितंतद्गुणरागियैरिह ॥ नतेयमंपाशभृतश्चतद्भटान्स्वप्ने
पिपश्यंतिहिचीर्णनिष्कृताः ॥ १९ ॥ अत्रोदाहरंतीममितिहासंपुरातनम् ॥ दूतानांविष्णुयमयोःसंवाद
स्तंनिबोधमे ॥ २० ॥ ॥ ॥ ॥ ॥

शुद्ध्येत् तत्पुरुषनिषेवयाकृष्णेऽर्पिताःप्राणायेन ॥ १६ ॥ तत्रहेतुः सध्रीचीनःसमीचीनः अयंपंथाःभक्तिमार्गः यतःक्षेमः क्षेमत्वेहेतुः नकु
ताश्चिद्विघ्नादेर्भयंयस्मिन् तदेवाह सुशीलाःकृपालवः साधवोनिष्कामाः यत्रधर्मनिष्ठाअतोनज्ञानमार्गइवासहायतानिमित्तंभयंनापिकर्ममा
र्गवन्मत्सरादियुक्तेभ्योभयमितिभावः भक्तेरन्यनिरपेक्षत्वमुक्तम् ॥ १७ ॥ कृच्छ्रादीनितुभक्तिंविनानशोधयंतीत्याह प्रायश्चित्तानीति महता
मप्यशोधकत्वेदृष्टांतमाह सुराकुंभमिवापगाइति ॥ १८ ॥ भक्तिःस्वल्पाऽपिपुनात्येवेत्याह सकृदिति तस्यगुणेषुरागमात्रमस्तिनतुज्ञानंय
स्यतन्मनः तावतैवचीर्णनिष्कृतंप्रायश्चित्तंयैः ॥ १९ ॥ इममर्थमितिहासेनोपपादयाति अत्रेति मेमत्तः ॥ २० ॥ ॥

कान्यकुब्जेपुरेदास्याःपतिः नाम्नाअजामिलः ॥ २१ ॥ बंदीग्रहेणअक्षैश्चद्यूतेनकैतवैर्वंचनादिभिश्चवृत्तिंजीविकांबिभ्रत्पुष्णन् यातयामा सपीडयामास ॥ २२ ॥ आयुषःसंबंधीमहान्कालोऽत्यगात् सक्रियानित्यपेक्षायामाह अष्टाशीत्यासंख्ययायुक्ताःसमाःसंवत्सराः ॥ २३ ॥ प्रव यसःप्रवृद्धस्य ॥ २४ ॥ बद्धंहृदयंयेन जरठोवृद्धः ॥ २५ ॥ २६ ॥ एतच्चतदुपलालनादिश्रीनारायणनामोच्चारमाहात्म्येनभक्तिरेवाभूदि

कान्यकुब्जेद्विजःकश्चिद्दासीपतिरजामिलः ॥ नाम्नानष्टसदाचारोदास्याःसंसर्गदूषितः ॥ २१॥ बंध्यक्षकैतवैश्चौर्यैर्गर्हितांवृत्तिमास्थितः ॥ बिभ्रत्कुटुंबमशुचिर्यातयामासदेहिनः ॥ २२ ॥ एवंनिवसतस्तस्यलालयानस्यतत्सुतान्॥ कालोऽत्यगान्महान्राजन्नष्टाशीत्यायुषःसमाः ॥ २३ ॥ तस्यप्रवयसःपुत्रादशतेषांतुयोऽवमः ॥ बालोनारायणोनाम्नापित्रोश्चदयितोभृशम् ॥ २४ ॥ सबद्धहृदयस्तस्मिन्नर्भकेकलभाषिणि ॥ निरीक्षमाणस्तल्लीलांमुमुदेजरठोभृशम् ॥ २५॥ भुंजानःप्रपिबन्खादन्बालकस्नेहयंत्रितः ॥ भोजयन्पाययन्मूढोनवेदागतमंतकम् ॥ २६ ॥ सएवंवर्तमानोऽज्ञोमृत्युकालउपस्थिते ॥ मतिंचकारतनयेबालेनारायणाव्हये ॥ २७॥ सपाशहस्तांस्त्रीन्दृष्ट्वापुरुषान्भृशदारुणान् ॥ वक्रतुंडानूर्ध्वरोमानात्मानंनेतुमागतान् ॥२८॥ दूरेक्रीडनकासक्तंपुत्रंनारायणाव्हयम् ॥ प्लावितेनस्वरेणोच्चैराजुहावाकुलेंद्रियः ॥ २९ ॥ निशम्यम्रियमाणस्यब्रुवतोहरिकीर्तनम्॥भर्तुर्नाममहाराजपार्षदाःसहसाऽपतन्॥३०॥विकर्षतोंऽतर्हृदयाद्दासीपतिमजामिलम्॥यमप्रेष्यान्विष्णुदूतावारयामासुरोजसा॥३१॥ऊचुर्निषेधितास्तांस्तेवैवस्वतपुरःसराः॥केयूयंप्रतिषेद्धारोधर्मराजस्यशासनम् ॥३२॥ कस्यवाकुतआयाताःकस्मादस्यनिषेधथ ॥ किंदेवाउपदेवावायूयंकिंसिद्धसत्तमाः॥३३॥ सर्वेपद्मपलाशाक्षाःपीतकौशेयवाससः ॥ किरीटिनःकुंडलिनोलसत्पुष्करमालिनः ॥ ३४ ॥

तिसिद्धांतोपयोगित्वेनापिद्रष्टव्यम् ॥ २७ ॥ वक्राणितुंडानिमुखानियेषाम् ऊर्ध्वाणिरोमाणियेषांतान् ॥ २८ ॥ प्लावितेनप्लुतत्वंनीतेन ॥ २९ ॥ हरिकीर्तनंनिशम्यआपतन् यतस्तद्भर्तुर्नाम ॥ ३० ॥ ३१ ॥ पुरःसराभृत्याः ॥ ३२ ॥ अस्यनयनंनिषेधथ ॥ ३३ ॥ वयंयुष्मान्नजानीमइतिनकोपःकार्योयतोऽलौकिकाद्भुतरूपायूयमित्याहुः सर्वइतिसार्धाभ्याम् लसंत्यःपुष्करमालाःसंतियेषाम् ॥ ३४ ॥

नूत्नंनवंवयोयेषाम् निषंगइषुधिः धनुर्निषंगादिभिःश्रीःशोभायेषांते ॥ ३५ ॥ विगतंतिमिरमालोकश्चान्यस्यप्रकाशोयासुतथाभूतादिशःकुर्वं
तः भवतामेतदनुचितमित्याहुः किमर्थमिति ॥ ३६ ॥ अहोदंडचादंडचादिज्ञानशून्याएतेचोराएवास्मद्धियाधर्मराजस्यकिंकराइत्यनृतंवदं
तीतिविस्मयेनप्रहस्यतान्प्रत्यूचुः मेघस्येवनिर्ह्रादोध्वनिर्यस्यास्तया ॥ ३७ ॥ ३८ ॥ कथंस्वित्केनप्रकारेण स्थानंविषयः कारिणःकर्मिणः नृ
णामिति नराएवनपश्वादयः तेष्वपिकतिचिदेवेत्यर्थः ॥ ३९ ॥ वेदेनप्रणिहितोविहितोधर्मः वेदप्रमाणकइत्यर्थःअनेनयोवेदप्रमाणकःसधर्मः
योधर्मःसवेदप्रमाणकइतिस्वरूपंप्रमाणंचोक्तम् यथाहजैमिनिः चोदनालक्षणोऽर्थोधर्मइति व्याख्यातंचभट्टैः द्वयमेकेनसूत्रेणश्रुत्यर्थाभ्यांनि

सर्वेचनूत्नवयसःसर्वेचारुचतुर्भुजाः ॥ धनुर्निषंगासिगदाशंखचक्रांबुजश्रियः ॥ ३५ ॥ दिशोवितिमिरा
लोकाःकुर्वंतःस्वेनरोचिषा ॥ किमर्थंधर्मपालस्यकिंकरान्नोनिषेधथ ॥ ३६ ॥ श्रीशुकउवाच इत्युक्ते
यमदूतैस्तैर्वासुदेवोक्तकारिणः ॥ तान्प्रत्यूचुःप्रहस्येदंमेघनिर्ह्रादयागिरा ॥ ३७ ॥ विष्णुदूताऊचुः
यूयंवैधर्मराजस्ययदिनिर्देशकारिणः ॥ ब्रूतधर्मस्यनस्तत्त्वंयच्चधर्मस्यलक्षणम् ॥ ३८ ॥ कथंस्विद्ध्रियते
दंडःकिंवास्यस्थानमीप्सितम् ॥ दंडचाःकिंकारिणःसर्वेआहोस्वित्कतिचिन्नृणाम् ॥ ३९ ॥ यमदूताऊचुः
वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः ॥ वेदोनारायणःसाक्षात्स्वयंभूरितिशुश्रुम ॥ ४० ॥ येनस्वधाम्न्य
मीभावारजःसत्त्वतमोमयाः ॥ गुणनामक्रियारूपैर्विभाव्यंतेयथातथम् ॥ ४१ ॥

रूप्यतइति अपृष्टस्याप्यधर्मस्यस्वरूपंलक्षणंचदंडस्थानकथनायाहुः तद्विपर्ययःयोवेदनिषिद्धःसोऽधर्मःनिषेधश्चतस्मिन्प्रमाणमित्यर्थः वेद
स्यप्रामाण्येहेतुःवेदोनारायणादुद्भूतः सएवसाक्षादित्युपचारः स्वयंभूरितिचनिःश्वासमात्रेणस्वयमेवभवतीति तथाचश्रुतिः अस्यमहतोभूत
स्यनिःश्वसितमेतद्यदृग्वेदइति ॥ ४० ॥ कोसौनारायणस्तत्राहुः येनस्वधाम्निस्वस्वरूपेअमीभावाःप्राणिनःगुणाःशांतत्वादयः नामानिब्रा
ह्मणइत्यादीनि क्रियाश्चाध्ययनाद्याः रूपाणिवर्णाश्रमादयस्तैर्विभाव्यंतेविविच्यंते यथातथंयथावत्सनारायणः ॥ ४१ ॥

तथाप्यधर्मोऽनेनकृतइतिकुतोज्ञायतेतत्राहुः सूर्यइति अहनीअहश्चरात्रिश्च कमुदकं कुःपृथ्वी दैह्यस्यजीवस्य यथाहुः आदित्यचंद्रावनि लोऽनलश्चद्यौर्भूमिरापोहृदयंयमश्च ॥ अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तमिति ॥ ४२ ॥ स्थानमाहुः एतैर्निमित्तभूतैर्विज्ञातः दंडचानाहुः सर्वइति ॥ ४३ ॥ विपरीतानिअभद्राण्यपिकर्मिणांसंभवंति यतस्तेषांगुणसंगोऽस्ति यदिकश्चिदकर्तास्यात्तर्हितस्याभद्राणिन स्युःनत्वेतदस्तीत्याहुः नहिदेहवानकर्मकृदस्तीति अतःसर्वेकर्मिणः कर्मिणांचपापस्यावश्यंभावित्वात्तेसर्वेदंडमर्हंतीत्यर्थः॥ ४४ ॥ कथंस्वि ध्रियतेदंडइत्यस्योत्तरं येनेति धर्मोवेतिदृष्टांतःअधर्मानुसारेणदंडोधर्मानुसारेणसुखवदित्यर्थः ॥ ४५ ॥ नकेवलंसूर्यादयएवज्ञापकाःकिंत्व

सूर्योग्निःखंमरुद्गावःसोमःसंध्याऽहनीदिशः ॥ कंकुःकालोधर्मइतिह्येतेदैह्यस्यसाक्षिणः ॥ ४२ ॥ एतैरधर्मो विज्ञातःस्थानंदंडस्ययुज्यते ॥ सर्वेकर्मानुरोधेनदंडमर्हंतिकारिणः ॥ ४३ ॥ संभवंतिहिभद्राणिविपरीतानि चानघाः ॥ कारिणांगुणसंगोऽस्तिदेहवान्नह्यकर्मकृत् ॥ ४४ ॥ येनयावान्यथाधर्मोऽधर्मोवेहसमीहितः ॥ सएवतत्फलंभुंक्तेतथातावदमुत्रवै ॥ ४५ ॥ यथेहदेवप्रवरास्त्रैविध्यमुपलभ्यते ॥ भूतेषुगुणवैचित्र्यात्तथा ऽन्यत्रानुमीयते ॥ ४६ ॥ वर्तमानोऽन्ययोःकालोगुणाभिज्ञापकोयथा ॥ एवंजन्मान्ययोरेतद्धर्माधर्मनिदर्श नम् ॥ ४७ ॥ मनसैवपुरेदेवःपूर्वरूपंविपश्यति ॥ अनुमीमांसतेपूर्वंमनसाभगवानजः ॥ ४८ ॥

र्थापत्तिरपीत्याहुः यथेति हेदेवप्रवराः इहजन्मनिशांतघोरमूढत्वेनवासुखदुःखमिश्रत्वेनवाधार्मिकत्वादिनात्रैविध्यंभूतेषुयथोपलभ्य तेतथाऽन्यत्रजन्मांतरेऽनुमीयतेत्रैविध्यान्यथाऽनुपपत्त्याकल्प्यते ॥ ४६ ॥ वर्तमानजन्मनापूर्वापरजन्मधर्माधर्मज्ञानंभवतीतिसदृष्टांत माहुः वर्तमानोवसंतादिकालःअन्ययोर्भूतभविष्ययोर्वसंतयोर्येगुणाः पुष्पफलादयस्तेषामभिज्ञापकोयथा एवमेतज्जन्मअन्ययोर्भूतभा विजन्मनोःधर्माधर्मौनिदर्शयतीतितथा ॥ ४७ ॥ अयंचधर्माधर्मज्ञानप्रकारोऽन्येषांधर्मराजस्तुमनसैवसर्वंपश्यतीत्याहुः पुरेसंयामिन्यां स्थितएवदेवोयमः देहेस्थितोऽतर्यामीवा जीवस्यपूर्वरूपंधर्माधर्मादियुक्तंविशेषेणपश्यति अनुअनंतरंपूर्वरूपंमीमांसते यद्यस्यानुरूपंतत् विचारयति यतोऽसौभगवानजः ॥ ४८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

जीवस्तुईश्वरेणउपस्थापितंवर्तमानंदेहंपश्यतिनतुपूर्वमपरंचेत्याहुः यथेति अज्ञःआविद्योपाधिर्जीवस्तु व्यक्तमेवप्राचीनकर्माभिव्यक्तंवर्तमानमेवदेहाद्युपास्तेअहमितिमन्यते पूर्वमपरंवानवेद अत्रहेतुः नष्टाजन्मनास्मृतिर्यस्य अत्रदृष्टांतः तमसानिद्रयायुक्तोयथास्वप्नेऽभिव्यक्तमेवदेहाद्युपास्ते नतुजाग्रद्देहादिपूर्वंस्वप्नादिगतंवातद्वदित्यर्थः ॥ ४९ ॥ एवंभूतस्यजीवस्यसंसारंप्रपंचयतिपंचभिःश्लोकैः पंचभिःकर्मेंद्रियैःस्वार्थानुपादानादीन् पंचशब्दादीन्वेद पंचभिर्ज्ञानेंद्रियैः षोडशेनमनसासहसप्तदशः षोडशोपाध्यंतर्गतोऽपिस्वयंत्वेकएव सर्वेंद्रियविषयप्रतिसंधानात् त्रीन्ज्ञानकर्मेंद्रियमनोविषयान्प्राप्नोति ॥ ५० ॥ तदेतल्लिंगशरीरंशक्तित्रयंगुणत्रयकार्यं महदनादि पुंसिजीवेअन्वनुसंसृतिंधत्ते ॥ ५१ ॥ नेच्छन्अनिच्छन्नपिअनेनैवकर्माणिकार्यंते कोशकारःकीटविशेषः मुह्यतिनिर्गमोपायंनजानाति ॥ ५२ ॥ कार्यतइ

यथाज्ञस्तमसायुक्तउपास्तेव्यक्तमेवहि ॥ नवेदपूर्वमपरंनष्टजन्मस्मृतिस्तथा ॥४९॥ पंचभिःकुरुतेस्वार्थान् पंचवेदाथपंचभिः ॥एकस्तुषोडशेनत्रीन्स्वयंसप्तदशोऽश्नुते ॥ ५० ॥ तदेतत्षोडशकलंलिंगंशक्तित्रयंमहत् ॥धत्तेऽनुसंसृतिंपुंसिहर्षशोकभयार्तिदाम् ॥ ५१ ॥ देह्यज्ञोजितषड्वर्गोनेच्छन्कर्माणिकार्यते ॥ कोशकारइवात्मानंकर्मणाच्छाद्यमुह्यति ॥ ५२ ॥ नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् ॥ कार्यतेह्यवशःकर्मगुणैःस्वाभाविकैर्बलात् ॥ ५३ ॥ लब्ध्वानिमित्तमव्यक्तंव्यक्ताव्यक्तंभवत्युत ॥ यथायोनियथाबीजंस्वभावेनबलीयसा ॥ ५४॥ एषप्रकृतिसंगेनपुरुषस्यविपर्ययः ॥ आसीत्सएवनचिरादीशसंगाद्विलीयते ॥ ५५ ॥ अयंहिश्रुतसंपन्नःशीलवृत्तगुणालयः ॥ धृतव्रतोमृदुर्दांतःसत्यवान्मंत्रविच्छुचिः ॥ ५६ ॥

त्यत्रानुभवंप्रमाणयति नहीति गुणैर्गुणकार्यरागादिभिः स्वाभाविकैःपूर्वकर्मसंस्कारोद्भूतैः ॥ ५३ ॥ कर्मवशेनचतदनुरूपोदेहोभवतीत्याह लब्ध्वेति अव्यक्तमदृष्टंनिमित्तंलब्ध्वाव्यक्ताव्यक्तंतदनुरूपंस्थूलंसूक्ष्मंचशरीरंभवति यथायोनिमातृसदृशं यथाबीजंपितृसदृशं स्वभावोवासना शुक्रशोणितयोरेकत्वेपिकर्मवासनयामातृपितृसदृशोदेहोभवतीत्यर्थः ॥ ५४ ॥ संसारचक्रमुपसंहरंतोमुक्तिप्रकारमाहुः एषइति ईशसंगात्परमेश्वरभजनात् ॥ ५५ ॥ तदेवंसामान्यतोधर्मादिनिर्णयमुक्त्वाप्रस्तुतस्याजामिलस्याधर्मप्रपंचयंतोदंडयत्वमाहुः अयंहीतियावदध्यायसमाप्ति तत्रद्वाभ्यां तत्पूर्ववृत्तांतानुवादोऽन्यायातिरेकप्रदर्शनार्थःशीलंसुस्वभावःवृत्तंसदाचारःगुणाःक्षमादयस्तेषामालयः ॥ ५६ ॥

॥ ४ ॥

निरहंकृतोनिरहंकारः ॥ ५७ ॥ आवृत्तोवनात्परावृत्तः ॥ ५८ ॥ भुजिष्ययाभोगस्त्रियादास्या मैरेयंमधुपैष्टींसुरांपीत्वा मदेनाघूर्णितेभ्रांते नेत्रेयस्याः ॥ ५९ ॥ विशेषेणश्लथंतीनीवीयस्यास्तयासह व्यपेतंस्वाचाराद्भ्रष्टम् ॥ ६० ॥ कामेनकामोद्दीपकेनतदंगरागेणहरिद्रादि नालिप्तेन ॥ ६१ ॥ सत्वंधैर्यं श्रुतंज्ञानम् तद्बलेनस्तंभयन्नपिमदेनकंपितंमनःसमाधातुंनियमितुंशक्तोनाभूत् ॥ ६२ ॥ तद्दर्शनमेवनि

गुर्वग्न्यतिथिवृद्धानांशुश्रूषुर्निरहंकृतः ॥ सर्वभूतसुहृत्साधुर्मितवागनसूयकः ॥५७॥ एकदाऽसौवनंयातः पितृसंदेशकृद्द्विजः ॥ आदायततआवृत्तःफलपुष्पसमित्कुशान् ॥५८॥ददर्शकामिनंकंचिच्छूद्रंसहभुजि ष्यया ॥ पीत्वाचमधुमैरेयंमदाघूर्णितनेत्रया ॥ ५९ ॥ मत्तयाविश्लथन्नीव्याव्यपेतंनिरपत्रपम्॥क्रीडंतम नुगायंतंहसंतमनयांऽतिके ॥६०॥ दृष्ट्वातांकामलिप्तेनबाहुनापरिरंभितां ॥ जगामहृच्छयवशंसहसैवावि मोहितः ॥६१॥ स्तंभयन्नात्मनात्मानंयावत्सत्वंयथाश्रुतं ॥ नशशाकसमाधातुंमनोमदनवेपितं ॥ ६२ ॥ तन्निमित्तस्मरव्याजग्रहग्रस्तोविचेतनः ॥ तामेवमनसाध्यायन्स्वधर्माद्विरराम ह ॥६३॥तामेवतोषयामा सपित्र्येणार्थेनयावता ॥ ग्राम्यैर्मनोरमैःकामैःप्रसीदेतयथातथा ॥६४॥ विप्रांस्वभार्यामप्रौढांकुलेमहतिलं भितां ॥ विससर्जाचिरात्पापःस्वैरिण्याऽपांगविद्धधीः॥६५॥ यतस्ततश्चोपनिन्येन्यायतोऽन्यायतोधनं ॥ बभारास्याःकुटुंबिन्याःकुटुंबंमंदधीरयं ॥६६॥ यदसौशास्त्रमुल्लंघ्यस्वैरचार्यार्यगर्हितः ॥ अवर्ततचिरंकाल मघायुरशुचिर्मलात् ॥६७॥ततएनंदंडपाणेःसकाशंकृतकिल्बिषम् ॥ नेष्यामोऽकृतनिर्वेशंयत्रदंडेनशुध्य ति ॥ ६८ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेअजामिलोपाख्यानेप्रथमोऽध्यायः ॥ १ ॥ ॥

मित्तंयस्यस्मरव्याजग्रहस्यतेनग्रस्तः विचेतनोगतस्मृतिः ॥ ६३ ॥ यावतासमग्रेण ॥ ६४ ॥ लंभितांपरिणिताम् ॥ ६५ ॥ ६६ ॥ अघरूपमायुर्यस्य मलमेवतदीयमन्नादिकमत्तीतिमलात् ॥ ६७ ॥ अकृतनिर्वेशमकृतप्रायश्चित्तम् अस्यैवचहितार्थेनेष्यामइत्याहुः यत्रे ति ॥ ६८ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥

द्वितीयेवैष्णवैर्यांम्यान्नाममाहात्म्यमद्भुतम् ॥ श्रावयित्वाद्विजोविष्णोर्लोकंनीतइतीर्यते ॥ १ ॥ नयकोविदाःन्यायनिपुणाः ॥ १ ॥ धर्मं द्रष्टांसभ्यामधर्मःस्पृशति तदाहुः यत्रसभायां यैर्धर्मद्दग्भिः तेषांतांसभाम् ॥ २ ॥ पितरःपितृवत्पालकाः शास्तारःअनुशिक्षकाः वैषम्यमदंडचदंडनम् ॥ ३ ॥ एतत्प्रवर्तितमधर्ममन्योऽपिकरिष्यतीतिमहत्कष्टमभूदित्याहुः यद्यदिति श्रेयान्श्रेष्ठः ॥ ४ ॥ विश्वस्तघातादपीत्याहुःयस्येतिद्वाभ्याम् निर्वृतोनिश्चिंतः ॥ ५ ॥ विश्वासेननितरामार्पितआत्मायेनतं विश्रंभणीयोविश्वसनीयः सघृणश्चेत् ॥ ६ ॥

श्रीशुकउवाच एवंतेभगवद्दूतायमदूताभिभाषितं ॥ उपधार्याथतान्राजन्प्रत्याहुर्नयकोविदाः ॥ १ ॥ विष्णुदूताऊचुः अहोकष्टंधर्मदृशामधर्मःस्पृशतेसभां ॥ यत्रादंड्येष्वपापेषुदंडोयैर्ध्रियतेवृथा ॥ २ ॥ प्रजानांपितरोयेचशास्तारःसाधवःसमाः ॥ यदिस्यात्तेषुवैषम्यंकंयांतिशरणंप्रजाः ॥ ३ ॥ यद्यदाचरति श्रेयानितरस्तत्तदीहते ॥ सयत्प्रमाणंकुरुतेलोकस्तदनुवर्तते ॥ ४ ॥ यस्यांकेशिरआधायलोकःस्वपिति निर्वृतः ॥ स्वयंधर्ममधर्मंवानहिवेदयथापशुः ॥ ५ ॥ सकथंन्यर्पितात्मानंकृतमैत्रमचेतनं ॥ विश्रंभणीयोभूतानांसघृणोद्रोग्धुमर्हति ॥ ६ ॥ अयंहिकृतनिर्वेशोजन्मकोट्यंहसामपि ॥ यद्व्याजहारविवशोनाम स्वस्त्ययनंहरेः ॥ ७ ॥ एतेनैवह्यघोनोऽस्यकृतंस्यादघनिष्कृतं ॥ ॥ ॥

नन्वस्यपापिनोदंडेकिमर्थमाक्रोशःक्रियतेतत्राहुः अयंहीति यद्यस्मात्विवशोपिहरेर्नामव्याजहारउच्चारितवान् नकेवलंप्रायश्चित्तमात्रंहरेर्नामअपितुस्वस्त्ययनंमोक्षसाधनमपीति सकृदुच्चरितंयेनहरिरित्यक्षरद्वयं ॥ बद्धःपरिकरस्तेनमोक्षायगमनंप्रतीतिस्मृतेः ॥ ७ ॥ ननुकर्मसाद्गुण्यकरंहरेर्नामेतियुक्तं यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतमित्यादिवचनात् स्वातंत्र्येण स्वघनिवर्तकंहरेर्नामकथंस्यात्तत्राहुः एतेनैवेति अघोनःअघवतः मघवच्छब्दवद्रूपं यत् आइतिच्छेदः आईषत् आभासमात्रंचतुरक्षरं यन्नामजगाद एतेनैवकेवलेनचतुरक्षरमित्यनेनाधिक्यंचदर्शितं ॥ ॥ ॥ ॥

कथंजगाद नारायण आय आगच्छ इत्येवंविक्रोशरूपेणपुत्राव्हानेन अयंभावः कर्मांगत्वेऽपिहरिनाम्नःस्वादिरत्वादिवत्संयोगपृथ क्त्वेनसर्वप्रायश्चित्तार्थत्वंयुक्तमेव तथाहि अवशेनापियन्नाम्निकीर्तितेसर्वपातकैः पुमान्विमुच्यतेसद्यःसिंहत्रस्तैर्मृगैरिवेत्यादिभिःपुराणे तावत्सहस्रशोनाम्नःस्वातंत्र्यमवगम्यते नचैतेऽर्थवादाइतिशंकनीयं विधिशेषत्वाभावात् नचाविध्यश्रवणादन्यशेषताकल्पनीया यदाऽ ग्नेयोष्टाकपालोभवतीत्यादिवदप्राप्तत्वेनविधिकल्पनोपपत्तेः मंत्रेषुच मर्त्याअमर्त्यस्यतेभूरिनाममनामहे विप्रासोजातवेदसः आस्यजानं तोनामचिद्विवक्तनेत्यादिषुनाम्नस्तपोदानादिसर्वधर्माधिक्यमवगम्यते उपपादितंचमंत्रार्थवादानामपिस्वार्थेप्रामाण्यंदेवताऽधिकरणेतस्मा त्श्रीनारायणनामाभासमात्रेणैवसर्वाघनिष्कृतंकृतंस्यादिति ॥ ८ ॥ ननुकामकृतानांबहूनांमहापातकानांसहस्रशआवर्तितानांद्वादशा

**यदानारायणायेतिजगादचतुरक्षरं ॥ ८ ॥ स्तेनःसुरापोमित्रध्रुग्ब्रह्महागुरुतल्पगः ॥ स्त्रीराजपितृगोहं तायेचपातकिनोऽपरे ॥ ९ ॥ सर्वेषामप्यघवतामिदमेवसुनिष्कृतं ॥ नामव्याहरणंविष्णोर्यतस्तद्विषया मतिः ॥ १० ॥ ननिष्कृतैरुदितैर्ब्रह्मवादिभिस्तथाविशुद्ध्यत्यघवान्व्रतादिभिः ॥ यथाहरेर्नामपदैरुदाहृ तैस्तदुत्तमश्लोकगुणोपलंभकं ॥ ११ ॥ नैकांतिकंतद्धिकृतेऽपिनिष्कृतंमनःपुनर्धावतिचेदसत्पथे ॥ तत्क र्मनिर्हारमभीप्सतांहरेर्गुणानुवादःखलुसत्त्वभावनः ॥ १२ ॥ ॥ ॥**

ब्दकोटिभिरप्यनिवर्त्यानांकथमिदमेकमेवप्रायश्चित्तंस्यात्तत्राहुः स्तेनइतिद्वाभ्याम् ॥ ९ ॥ सुनिष्कृतंश्रेष्ठंप्रायश्चित्तमिदमेव तत्रहेतुः य तोनामव्याहरणात् तद्विषयानामोच्चारकपुरुषविषया मदीयोऽयंमयासर्वतोरक्षणीयइतिविष्णोर्मतिर्भवति ॥ १० ॥ श्रेष्ठत्वमेवोपपादयं ति नेतिद्वाभ्याम् ब्रह्मवादिभिर्मन्वादिभिरुक्तैर्व्रतादिभिर्निष्कृतैस्तथानशुद्ध्यति उदाहृतैरुच्चारितैर्यथानामपदैरित्यनेननमामीत्यादिक्रि यायोगोऽपिनापेक्षितइतिदर्शितम् किंच तन्नामपदोच्चारणमुत्तमश्लोकस्यगुणानांचोपलंभकंज्ञापकंभवतिनतुकृच्छ्रचांद्रायणादिवत्पाप निवृत्तिमात्रोपक्षीणमित्यर्थः ॥ ११ ॥ नैकांतिकंनात्यंतशोधकं तन्निष्कृतम् यस्मिन्कृतेपिअसत्पथेपापमार्गेमनोधावतिचेत्कर्मणांपापा नांनिर्हारमात्यंतिकंनाशमिच्छतांहरेर्गुणानुवादएवप्रायश्चित्तम् यतोऽसौखलुसत्वभावनःचित्तशोधकः ॥ १२॥ ॥

अथतस्मादेनंमाअपमार्गेणनयत कृतमशेषाणामघानांनिष्कृतंयेन यद्यस्मात्समग्रहीत्संपूर्णमुच्चारितवान् नामैकदेशेनाप्यलमितिभावः म्रियमाणइत्यनेनपुनःपापांतरासंभवउक्तः नतुतत्कालमेवाविवक्षितंतदानींकृच्छ्रादिविधिवन्नामोच्चारणविधेरप्यसंभवात् नचविधिंविना काकतालीयनामोच्चारणंपापापहमितिप्रमाणमस्ति ॥ १३ ॥ नन्वयंपुत्रनामाग्रहीन्नतुभगवन्नामतत्राहुः सांकेत्यंपुत्रादौसंकेतितम् पारिहास्यंपरिहासेनकृतम् स्तोभंगीतालापपूरणार्थंकृतं हेलनंकिंविष्णुनाइतिसावज्ञमपिचवैकुंठनामोच्चारणम् ॥ १४ ॥ ननुनायंसंकल्पपूर्वकंवैकुंठनामाग्रहीत्किंतुपुत्रस्नेहपरवशःसंस्तत्राहुः पतितइति अवशेनापियोहरिरित्याहसयातनांनार्हति पुमानित्यनेननात्रवर्णाश्रमादिनियम इत्युक्तम् अवशत्वमेवाह पतितःप्रासादादिभ्यः स्खलितोमार्गे भग्नो भग्नगात्रः संदष्टःसर्पादिभिः तप्तोज्वरादिना आहतोदंडादिना ॥ १५ ॥ ननुमहतःपापस्यमहदेवप्रायाश्चित्तंयुक्तंनत्वल्पंनामग्रहणमात्रं पापतारतम्येनकृच्छ्रादितारतम्यवत् तत्राहुर्द्वाभ्याम्

**अथैनंमाऽपनयतकृताशेषाघनिष्कृतं॥यदसौभगवन्नामम्रियमाणःसमग्रहीत् ॥१३॥सांकेत्यंपारिहास्यंवा स्तोभंहेलनमेववा॥वैकुंठनामग्रहणमशेषाघहरंविदुः॥१४॥पतितःस्खलितोभग्नःसंदष्टस्तप्तआहतः॥हरिरित्यवशेनाहपुमान्नार्हतियातनां॥१५॥गुरूणांचलघूनांचगुरूणिचलघूनिच ॥ प्रायश्चित्तानिपापानांज्ञात्वोक्तानिमहर्षिभिः॥१६॥तैस्तान्यघानिपूयंतेतपोदानजपादिभिः॥नाधर्मजंतद्धृदयंतदपीशांघ्रिसेवया॥१७॥**

गुरूणांपापानांगुरूणिप्रायश्चित्तानिलघूनांचलघूनिचतारतम्यंज्ञात्वामन्वादिभिरुक्तानि अतस्तत्रतथैवव्यवस्था हरिनाम्नस्तुनेयंव्यवस्थोक्ता विष्णोःस्मरणमात्रेणमुच्यतेसर्वपातकैरितिवचनात् नचसुराबिंदुपानेमहापातकत्वस्मरणवन्नाम्नस्तत्प्रायश्चित्तत्वस्मरणस्यायमतिभारः ॥ १६ ॥ किंच तैस्तपोदानादिभिस्तान्यघान्येवपूयंतेनश्यंति अधर्माज्जातंमलिनंतुतस्यपापकर्तुर्हृदयम् यद्वातेषामघानांहृदयंसूक्ष्मंरूपंसंस्काराख्यंनशुध्यति तदपीशांघ्रिसेवयाकीर्तनादिनाशुध्यतीत्यर्थः अयंभावः महांत्यपिपापानिसकृदुच्चारितेनैवनाम्नानश्यंति सकृत्प्रवर्तितेनदीपेनचगाढध्वांतानि तदावृत्त्यातुपापांतरस्यानुत्पत्तिः दीपधारणइवतमोंऽतरस्य ततश्चवासनाक्षयाद्धृदयशुद्धिः एतदर्थमेवतत्रतत्रावृत्तिविधानंपापक्षयश्चभवतिस्मरतांतमहर्निशामित्यादिषु तदेवात्राप्युक्तं गुणानुवादःखलुसत्वभावनः तदपीशांघ्रिसेवयेतिच अतोस्यहरिनाम्नैवसर्वपापक्षयः वासनाक्षयस्तुमहापुरुषदर्शनादिभिरिति ॥ १७ ॥ ॥

तथाऽपिपापप्रायश्चित्तमिदमितिज्ञात्वानोच्चारितमितिचेत्तत्राहुः अज्ञानादिति बालकेनाज्ञानादपिप्रक्षिप्तोऽग्निर्यथाकाष्ठराशिंदहतितद्वत्
॥ १८ ॥ नन्विदमपिपर्षदनुपादिष्टंश्रद्धाहीनंचकथंप्रायश्चित्तंस्यात्तत्राहुः यथेति अगदमौषधं वीर्यवत्तममितिवक्तव्येवीर्यतममित्युक्तं यदृ
च्छयाश्रद्धादिहीनमुपयुक्तंभक्षितंपर्षन्मुखादजानतोऽपिस्वगुणमारोग्यंकुर्यात् मंत्रोऽपिनामात्मकस्तथास्वकार्यंकुर्यादेव नहिवस्तुशक्तिः
श्रद्धादिकमपेक्षतेइत्यर्थः तदुक्तंविष्णुधर्मेषु हरिर्हरतिपापानिदुष्टचित्तैरपिस्मृतः ॥ अनिच्छयाऽपिसंस्पृष्टोदहत्येवाहिपावकः ॥ १९ ॥

अज्ञानादथवाज्ञानादुत्तमश्लोकनामयत् ॥ संकीर्तितमघंपुंसोदहेदेधोयथाऽनलः ॥१८॥ यथाऽगदंवीर्यत
ममुपयुक्तंयदृच्छया ॥ अजानतोऽप्यात्मगुणंकुर्यान्मंत्रोऽप्युदाहृतः ॥ १९ ॥ श्रीशुकउवाच तएवंसु
विनिर्णीयधर्मंभागवतंनृप ॥ तंयाम्यपाशान्निर्मुच्यविप्रंमृत्योरमूमुचन् ॥ २० ॥ इतिप्रत्युदितायाम्यादू
तायात्वायमांतिके ॥ यमराज्ञेयथासर्वमाचचक्षुररिंदम ॥ २१ ॥ द्विजःपाशाद्विनिर्मुक्तोगतभीःप्रकृतिंगतः॥
ववंदेशिरसाविष्णोःकिंकरान्दर्शनोत्सवः ॥ २२ ॥ तंविवक्षुमभिप्रेत्यमहापुरुषकिंकराः ॥ सहसापश्य
तस्तस्यतत्रांतर्दधिरेऽनघ ॥ २३ ॥ अजामिलोप्यथाकर्ण्यदूतानांयमकृष्णयोः ॥ धर्मंभागवतंशुद्धंत्रैवि
द्यंचगुणाश्रयं ॥ २४ ॥ भक्तिमान्भगवत्याशुमाहात्म्यश्रवणाद्धरेः ॥ अनुतापोमहानासीत्स्मरतोऽशु
भमात्मनः ॥ २५ ॥ अहोमेपरमंकष्टमभूदविजितात्मनः ॥येनविप्लावितंब्रह्मवृषल्यांजायतात्मना॥२६॥
धिङ्मांविगर्हितंसद्भिर्दुष्कृतंकुलकज्जलं ॥ हित्वाबालांसतींयोऽहंसुरापामसतीमगां ॥ २७ ॥ वृद्धावना
थौपितरौनान्यबंधूतपस्विनौ ॥ अहोमयाऽधुनात्यक्तावकृतज्ञेननीचवत् ॥ २८ ॥

तंविप्रममूमुचन्मोचयामासुः ॥ २० ॥ प्रत्युदिताःनिराकृताःसंतोयात्वागत्वायमराजाययथावत्कथयामासुः ॥ २१ ॥ दर्शनेनोत्सवोय
स्य ॥ २२ ॥ विवक्षुंवक्तुमिच्छंतंज्ञात्वा ॥ २३ ॥ त्रैविद्यंवेदत्रयप्रतिपाद्यम् गुणाश्रयं यमदूतानांधर्मंकृष्णदूतानांचभागवतंभगवत्प्रणी
तंशुद्धंनिर्गुणंधर्ममाकर्ण्यइतियोज्यम् भक्तिमानासीदित्युत्तरस्यानुषंगः ॥ २४ ॥ २५ ॥ अनुतापंप्रपंचयति अहोइतिचतुर्भिः येनआत्म
नामयावृषल्यांपुत्रतयाजायमानेनब्रह्मब्राह्मणजातिर्विप्लावितंनाशितं ॥ २६ ॥ दुष्कृतदोषकर्तारं कुलस्यकज्जलंकलंकं ॥ २७ ॥ ना
स्त्यन्योबंधुःपुत्रादिर्ययोः तपस्विनौसंतप्तौ अधुनातत्क्षणमेव ॥ २८ ॥ ॥ ॥

॥ २९ ॥ इदानींतस्यविमर्शपूर्वकंमोक्षक्रममाह किमिदमित्यष्टभिः साक्षात्प्रत्यक्षामिहजाग्रतवैदृष्टम् ॥ ३० ॥ येमांव्यमोचयन्तेचक्रग ताः ॥ ३१ ॥ यद्यप्यहमस्मिन्जन्मनिदुर्भगःपापीयानथापिजन्मांतरेनूनंपुण्यवानित्याह विबुधोत्तमदर्शनइतिनिमित्तसप्तमी तेषांदर्श नार्थंपूर्वेणमंगलेनमहतापुण्येनभवितव्यम् येनदर्शनेन ॥ ३२ ॥ अन्यथापूर्वपुण्यंविना कथंभूतंवैकुंठनाम गृह्यतेवशीक्रियतेअनेनेतिग्र

॥७॥

सोऽहंव्यक्तंपतिष्यामिनरकेभृशदारुणे ॥ धर्मघ्नाःकामिनोयत्रविंदंतियमयातनाः ॥ २९ ॥ किमिदंस्वप्न आहोस्वित्साक्षाद्दृष्टमिहाद्भुतम् ॥ क्वयाताअद्यतेयेमांव्यकर्षन्पाशपाणयः ॥ ३० ॥ अथतेक्वगताःसिद्धा श्चत्वारश्चारुदर्शनाः ॥ व्यमोचयन्नीयमानंबध्वापाशैरधोभुवः ॥३१॥ अथापिमेदुर्भगस्यविबुधोत्तमदर्श ने ॥ भवितव्यंमंगलेनयेनात्मामेप्रसीदति ॥ ३२ ॥ अन्यथाम्रियमाणस्यनाशुचेर्वृषलीपतेः ॥ वैकुंठ नामग्रहणंजिव्हावक्तुमिहार्हति ॥ ३३ ॥ क्वचाहंकितवःपापोब्रह्मघ्नोनिरपत्रपः ॥ क्वचनारायणेत्येतद्भग वन्नाममंगलं ॥ ३४ ॥ सोऽहंतथायतिष्यामियतचित्तेंद्रियानिलः ॥ यथानुभूयआत्मानमंधेतमसिमज्जये ॥ ३५ ॥ विमुच्यतमिमंबंधमविद्याकामकर्मजं ॥ सर्वभूतसुहृच्छांतोमैत्रःकरुणआत्मवान् ॥ ३६ ॥ मो चयेग्रस्तमात्मानंयोषिन्मय्यात्ममायया ॥ विक्रीडितोययैवाहंक्रीडामृगइवाधमः ॥ ३७ ॥ ममाहमि तिदेहादौहित्वाऽमिथ्याऽर्थधीर्मतिं ॥ धास्येमनोभगवतिशुद्धंतत्कीर्तनादिभिः ॥ ३८ ॥ इतिजातसुनिर्वे दःक्षणसंगेनसाधुषु ॥ गंगाद्वारमुपेयायमुक्तसर्वानुबंधनः ॥ ३९ ॥ श्रीशुकउवाच सतस्मिन्देवसदन आसीनोयोगमाश्रितः ॥ प्रत्याहृतेंद्रियग्रामोयुयोजमनआत्मनि ॥ ४० ॥ ततोगुणेभ्यआत्मानंवियु ज्यात्मसमाधिना ॥ युयोजभगवद्धाम्निब्रह्मण्यनुभवात्मनि ॥ ४१ ॥ ॥ ॥

॥७॥

हणं ॥ ३३ ॥ ब्रह्मघ्नोविप्रत्वनाशकः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ अमिथ्याभूतेऽर्थेधीर्यस्यतथाभूतःसन्देहादौममाहमितिमतिंहि त्वाधास्ये ॥ ३८ ॥ मुक्तंसर्वमनुबंधनंपुत्रादिस्नेहोयेनसः ॥ ३९ ॥ प्रत्याहृतइंद्रियग्रामोयेन ॥ ४० ॥ गुणेभ्योदेहेंद्रियादिभ्यआत्मानं वियुज्यविशोध्य आत्मसमाधिनाचित्तैकाग्र्येण भगवतोधाम्निस्वरूपे ॥ ४१॥ ॥ ॥

तस्मिन्भगवद्धाम्निउपरतानिश्चलाधीर्यस्यसः तस्मिन्कालेअद्राक्षीदितिवा पुरःपुरतः ततश्चप्रागुपलब्धानेवतानुपलभ्यप्रत्यभिज्ञायव वं दे ॥ ४२ ॥ ४३ ॥ ४४ ॥ उपसंहरति एवमितिद्वाभ्यां विद्धाविताःसर्वेधर्मायेन हतंव्रतंस्वदारानियमादियस्य ॥ ४५ ॥ कर्मनिबंधस्य पापमूलस्यकृंतनंछेदकमतःपरंनास्ति कस्मात्परं तीर्थपदस्यानुकीर्तनात् तत्रहेतुः यत्यतोऽनुकीर्तनात् ततोऽनुकीर्तनात् अन्यथाप्राय श्चित्तांतरैःरजस्तमोभ्यांकलिलंमलिनमेवतिष्ठतियत्तन्मनःकर्मसुपुनर्नसज्जते॥४६॥४७॥नचेक्षितोभवति॥४८॥ म्रियमाणःअत्रशठत्वेनश्र

यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः ॥ उपलभ्योपलब्धान्प्राग्ववंदेशिरसाद्विजः ॥ ४२ ॥ हित्वा कलेवरंतीर्थेगंगायांदर्शनादनु ॥ सद्यःस्वरूपंजगृहेभगवत्पार्श्ववर्तिनां ॥ ४३॥ साकंविहायसाविप्रोम हापुरुषकिंकरैः ॥ हैमंविमानमारुह्ययायौयत्रश्रियःपतिः ॥ ४४॥ एवंसविप्लावितसर्वधर्मादास्याःपतिः पतितोगर्ह्यकर्मणा ॥ निपात्यमानोनिरयेहतव्रतःसद्योविमुक्तोभगवन्नामगृण्हन् ॥ ४५ ॥ नातःपरंकर्म निबंधकृंतनंमुमुक्षतांतीर्थपदानुकीर्तनात् ॥नयत्पुनःकर्मसुसज्जतेमनोरजस्तमोभ्यांकलिलंततोऽन्यथा ॥ ॥ ४६ ॥ यएवंपरमंगुह्यमितिहासमघापहं ॥ शृणुयाच्छ्रद्धयायुक्तोयश्चभक्त्यानुकीर्तयेत् ॥४७॥ नवै सनरकंयातिनेक्षितोयमकिंकरैः ॥ यद्यप्यमंगलोमर्त्योविष्णुलोकेमहीयते ॥ ४८ ॥ म्रियमाणोहरेर्ना मगृणन्पुत्रोपचारितं ॥ अजामिलोऽप्यगाद्धामकिंपुनःश्रद्धयागृणन् ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणे षष्ठस्कंधेअजामिलोपाख्यानेद्वितीयोऽध्यायः ॥ २ ॥ ॥ राजोवाच निशम्यदेवःस्वभटोपवर्णितंप्रत्या हकिंतान्प्रतिधर्मराजः ॥ एवंहताज्ञोविहतान्मुरारेर्नैदेशिकैर्यस्यवशेजनोऽयं ॥ १ ॥

द्धाविहीनोपि॥४९॥इतिश्रीभागवतेषष्ठस्कंधेटीकायांद्वितीयोऽध्यायः ॥२॥ ॥तृतीयेतुयमेनापिवैष्णवोत्कर्षवर्णनैः ॥सांत्वयित्वास्वदूतांस्ते वैष्णवैःकिंकरीकृताः॥१॥विष्णुदूतैर्निर्णीतंशास्त्रार्थंयममुखेनद्रढयितुंतृतीयाध्यायारंभः तत्रयदुक्तंयमराज्ञेतथासर्वमाचचक्षुरिति ततःकिंतत्र वृत्तमितिपृच्छति निशम्येति मुरारेर्नैदेशिकैःकिंकरैरेवंविहतान् अतएवहताआज्ञायस्य यस्यवशवर्तीअयंजनःसोऽपितान्प्रतिकिमाह ॥१॥

अत्याश्चर्यमेतादित्याह यमस्येति हेऋषेयमस्यदंडभंगः कुतश्चनकस्माच्चिदपिश्रुतपूर्वोनासीत् एतत् एतस्मिन्नर्थे यद्वानश्रुतपूर्वः एतत् यमदूतनिराकरणंचासीत् अतः सर्वस्यापिलोकस्यसंशयोवर्ततेतंत्वत्तोऽन्योनच्छिनत्तीतिमेनिश्चितमतः कथयेतिशेषः ॥ २ ॥ भगवतः पुरुषैः प्रतिहतउद्यमोयेषांते याम्याः पुरुषाः ॥३॥ कतिसंतीत्याक्षेपोक्तिः त्रैविध्यंत्रिविधं स्वार्थेष्यञ् यद्वात्रैविध्यंयथाभवतितथाकर्मकुर्वतः तदर्थेचकर्मफलस्याभिव्यक्तिहेतवः कतिसंतीति ॥ ४ ॥ संतुबहवः कोबाधस्तत्राहुः यदीति मृत्युर्दुःखममृतंसुखं तेषांविप्रतिपत्तौतेउभेकस्यस्यातांनकस्यापि परस्परविरोधेनोभयोरपिप्रातिबंधात् ऐकमत्येतुकस्यवानस्यातां एकः सुखंकर्तुमिच्छतिदुःखंचान्यः ऐकमत्येचतयोः पर

यमस्यदेवस्यनदंडभंगः कुतश्चनर्षेश्रुतपूर्वआसीत्॥एतन्मुनेवृश्चतिलोकसंशयंनाहित्वदन्योइतिमेविनिश्चितम् ॥ २ ॥ श्रीशुकउवाच भगवत्पुरुषैराजन्याम्याः प्रतिहतोद्यमाः ॥ पतिंविज्ञापयामासुर्यमंसंयमिनीपतिम् ॥ ३ ॥ यमदूताऊचुः कतिसंतीहशास्तारोजीवलोकस्यवैप्रभो ॥ त्रैविध्यंकुर्वतः कर्मफलाभिव्यक्तिहेतवः ॥ ४ ॥ यदिस्युर्बहवोलोकेशास्तारोदंडधारिणः ॥ कस्यस्यातांनवाकस्यमृत्युश्चामृतमेववा ॥ ५ ॥ किंतुशास्तृबहुत्वेस्याद्बहूनामिहकर्मिणाम् ॥ शास्तृत्वमुपचारोहियथामंडलवर्तिनाम्॥ ६ ॥ अतस्त्वमेकोभूतानांसेश्वराणामधीश्वरः ॥ शास्तादंडधरोनृणांशुभाशुभविवेचनः॥ ७ ॥ तस्यतेविहितोदंडोनलोकेवर्ततेऽधुना ॥ चतुर्भिरद्भुतैः सिद्धैराज्ञातेविप्रलंभिता ॥ ८॥ नीयमानंतवादेशादस्माभिर्यातनागृहान् ॥ व्यमोचयन्पातकिनंछित्वापाशान्प्रसह्यते ॥ ९ ॥ ॥ ॥

स्परकार्यानुमोदनेनोभयोरपिप्राप्तेकस्यवातेउभेआपिनस्यातामित्यर्थः ॥ ५॥ ननुबहूनांकर्मिणांव्यवस्थयाबहवः शास्तारोभवंतु तथासति नायंदोषः स्यात्तत्राहुः बहूनांकर्मिणांव्यवस्थयाशास्त्रबहुत्वेशास्तृत्वंस्यात् घटेत किंतुतदायत्सर्वंशास्तरिमुख्यंशास्तृत्वंतदेकदेशेउपचारमात्रमेवस्यात् यथाचक्रवर्तिनएवमुख्यंशास्तृत्वंमंडलवर्तिनामुपचारमात्रं निरंकुशत्वाभावात् ॥ ६ ॥ यस्मादेवंशास्तृबहुत्वंनघटतेअतस्त्वमेकएवशास्ता शुभाशुभेविविनक्तीतितथा ॥ ७ ॥ विप्रलंभितावंचिता लंघितेत्यर्थः ॥ ८ ॥ तदेवाहुः नीयमानमिति ॥ ९ ॥

तेत्वत्तः यदिनोऽस्माकंक्षमांहितंमन्यसे अन्यथाअज्ञानतस्तदवज्ञानेतथाप्यनर्थःस्यात् अतकर्योहितेषांप्रभावः यतोनारायणायेतिकेवलम भिहितेमाभयंकुर्वितिवदंतःशीघ्रमागताः ॥ १० ॥ प्रजाःसंयमयतीतितथा ॥ ११ ॥ मत्तोऽन्योजगतस्तस्थुषश्चपरोऽधीश्वरोऽस्ति अहंतु जंगमानामेवतत्रापिनृणामेवतत्रापिपापिनामेव तत्किंकरःसन्ईश्वरः सतुसर्वेश्वरःकोऽसौ यत्रयस्मिन्विश्वमोतंप्रोतंचऊर्ध्वंतिर्यक्तंतुषुप टवत्यस्यत्रंशेभ्योविष्णुब्रह्मरुद्रेभ्योऽस्यस्थित्यादयोभवंति यस्यचवशेलोकोवर्तते नसिनासिकायांप्रोतबलीवर्दवत् ॥ १२ ॥ एतत्प्रपं चयतिब्राह्मणादिनामभिर्वाचिनिजायांतंत्यांदामन्यांजनान्योबध्नाति दामभिर्गाःबलीवर्दानिव तइमेजीवानामकर्मभिर्निबंधैर्बद्धायस्मै

तांस्तेवेदितुमिच्छामोयदिनोमन्यसेक्षमम् ॥ नारायणेत्यभिहितेमाभैरित्याययुर्द्रुतं ॥ १० ॥ श्रीशुकउवाच इतिदेवःसआपृष्टःप्रजासंयमनोयमः ॥ प्रीतःस्वदूतान्प्रत्याहस्मरन्पादांबुजंहरेः ॥ ११ ॥ यम उवाच परोमदन्योजगतस्तस्थुषश्चओतंप्रोतंपटवद्यत्रविश्वं ॥ यदंशतोऽस्यस्थितिजन्मनाशानस्योतवद्यस्यवशेचलोकः ॥ १२ ॥ योनामभिर्वाचिजनान्निजायांबध्नातितंत्यामिवदामभिर्गाः ॥ यस्मैबलिंतइमे नामकर्मनिबंधबद्धाश्चकितावहंति ॥ १३ ॥ अहंमहेंद्रोनिर्ऋतिःप्रचेताःसोमोऽग्निरीशःपवनोर्कोविरिंचः॥ आदित्यविश्वेवसवोऽथसाध्यामरुद्गणारुद्रगणाःससिद्धाः ॥ १४ ॥ अन्येचयेविश्वसृजोऽमरेशाभृग्वादयोऽस्पृष्टरजस्तमस्काः ॥ यस्येहितंनविदुःस्पृष्टमायाःसत्त्वप्रधानाअपिकिंततोन्ये ॥ १५ ॥ यंवैनगोभिर्मनसासुभिर्वाहृदागिरावाऽसुभृतोविचक्षते ॥ आत्मानमंतर्हृदिसंतमात्मनांचक्षुर्यथैवाकृतयस्ततःपरं ॥ १६ ॥

बलिंत्रहंति यदधीनाःकर्मकुर्वंतीत्यर्थः ॥ १३ ॥ यस्यचलीलादुर्विभाव्येत्याह अहमितिद्वाभ्यां ॥ १४ ॥ नस्पृष्टंरजस्तमश्चयैः ईहित मभिप्रेतंचेष्टितंवानविदुः स्पृष्टमायाःमाययास्पृष्टाः ततस्तेभ्योऽन्येनविदुरितिकिंपुनर्वक्तव्यम् ॥ १५ ॥ तन्माययाविमोहितत्वान्नजानं तीत्युक्तमविषयत्वाच्चतस्येत्याह यमितिगोभिरिंद्रियैर्हृदाचित्तेननाविचक्षतेनपश्यंति यद्वाचाऽनभ्युदितंयन्मनोनमनुतइत्यादिश्रुतेः आत्म नांजीवानामात्मानंद्रष्टारमाकृतयोरूपाणिचक्षुर्यथाकर्मभूतंनजानंति ततःपरमाकृतीनांप्रकाशकम् नहिप्रमाताप्रमाणस्यविषयइति भावः एवंभूतःपरमेश्वरोमदन्योऽस्तीतिपूर्वेणैवसंबंधः ॥ १६ ॥ ॥ ॥ ॥

भवत्वेवंभूतोऽन्यःपरमेश्वरोयेपुनरस्मान्निर्भर्त्सयंपापिनंरक्षितवंतस्तेकेतानाह तस्यैतिद्वाभ्याम् तस्यैवरूपं गुणाःप्रभावादयः स्वभावो
भक्तवात्सल्यादिर्येषांते ॥ १७ ॥ विष्णोर्भूतानिभृत्याः दुर्दर्शानिद्रष्टुमप्यशक्यानिर्लिंगानिरूपाणियेषांतानि तद्भक्तिमतोविष्णुभक्ता
न् परेभ्यःशत्रुभ्यःसर्वतःअग्न्यादिभ्यश्चरक्षंति ॥ १८ ॥ ननुविष्णुभक्ताश्चेत्कथमधर्मपक्षपातंकृतवंतस्तत्राह धर्ममिति ऋषयोभृग्वा
दयः ॥ १९ ॥ ननुकेचिन्नजानंतितस्यसत्त्वेकिंप्रमाणंतत्राह स्वयंभूरिति कुमारःसनत्कुमारः वयमित्यात्मानमेवबहुमन्यमानोनिर्दि
शति ॥ २० ॥ हेभटाः ॥ २१ ॥ तमेवधर्ममाह एतावानिति ॥२२॥ नचात्रप्रमाणंवक्तव्यंदृष्टत्वादित्याह नामोच्चारणेति येनैवकेवलेन
सकृदुच्चारितेन ॥ २३ ॥ ननुनामाभासेनकथंसर्वपापक्षयःस्यात् श्रद्धाभक्त्यावृत्यादेरपिविधानात् तथाहि सायंप्रातर्गृणन्भक्त्यादुःख

**तस्यात्मतंत्रस्यहरेरधीशितुःपरस्यमायाऽधिपतेर्महात्मनः ॥ प्रायेणदूताइहवैमनोहराश्चरंतितद्रूपगुणस्व भावाः ॥ १७ ॥ भूतानिविष्णोःसुरपूजितानिदुर्दर्शलिंगानिमहाद्भुतानि ॥ रक्षंतितद्भक्तिमतःपरेभ्योमत्त श्चमर्त्यानथसर्वतश्च ॥ १८ ॥ धर्मंतुसाक्षाद्भगवत्प्रणीतंनवैविदुर्ऋषयोनापिदेवाः ॥ नसिद्धमुख्याअसु रामनुष्याःकुतश्चविद्याधरचारणादयः ॥ १९ ॥ स्वयंभूर्नारदःशंभुःकुमारःकपिलोमनुः ॥ प्रह्लादोजन कोभीष्मोबलिर्वैयासकिर्वयम् ॥ २० ॥ द्वादशैतेविजानीमोधर्मंभागवतंभटाः ॥ गुह्यंविशुद्धंदुर्बोधंयंज्ञा त्वाऽमृतमश्नुते ॥ २१ ॥ एतावानेवलोकेऽस्मिन्पुंसांधर्मःपरःस्मृतः ॥ भक्तियोगोभगवतितन्नामग्रहणा दिभिः ॥ २२ ॥ नामोच्चारणमाहात्म्यंहरेःपश्यतपुत्रकाः ॥ अजामिलोऽपियेनैवमृत्युपाशादमुच्यत ॥ ॥ २३ ॥ एतावताऽलमघनिर्हरणायपुंसांसंकीर्तनंभगवतोगुणकर्मनाम्नाम् ॥**

ग्रामाद्विमुच्यतइति अनुदिनमिदमादरेणशृण्वन्निति श्रवणंकीर्तनंध्यानंहरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानांचतदर्थेऽखिलचेष्टितमित्याद्य
स्मिन्नेवपुराणेतत्रतत्रपठ्यते पुराणांतरेच पापक्षयश्चभवतिस्मरतांतमहर्निशमिति ॥ अत्रैवच तस्मात्संकीर्तनंविष्णोर्जगन्मंगलमंहसाम् ॥
महतामपिकौरव्यविद्ध्यैकांतिकनिष्कृतमित्यादिनासम्यक्कीर्तनादेवमन्यते किंच तथासतिकिमितिमन्वादयोद्वादशाब्दादीनिस्मरेयुःत
स्मादिदमनुपपन्नमिवतत्राह एतावतेति भगवतोगुणानांकर्मणांचनाम्नांचसम्यक्कीर्तनमितियत् एतावतापुंसामघनिर्हरणायपापक्षय
मात्रायअलमुपयोगोनास्ति अलंशब्दोऽत्रवारणे यथाहामरसिंहः अलंभूषणपर्याप्तिशक्तिवारणवाचकमिति उपयोगाभावमेवाह

अजामिलोमहापातक्यपिनारायणेतिविक्रुश्यनतुसम्यक्कीर्तयित्वा तत्पुत्रंविक्रुश्यनतुहरिम् अघवान् अशुचिरपिम्रियमाणोऽस्वस्थचि त्तोऽपिमुक्तिमवाप नत्वघनिर्हरणमात्रमतोनामाभासेनापिसर्वपापक्षयइत्येवतत्त्वम् आवृत्तिश्रद्धादिविधयस्तुपापवासनाक्षयार्थाइत्युक्त मेवहरेर्गुणानुवादःखलुसत्वभावनइत्यत्र ॥ २४ ॥ यत्तूक्तंव्यर्थंतर्हिद्वादशाब्दादिस्मरणमितितत्राह प्रायेणेति महाजनोमन्वादिः अ यंभावः यथामृतसंजीवनौषधिमजानंतोवैद्यारोगनिर्हरणायत्रिकटुकादिंवादीनिस्मरंति तथास्वयंभूशंभुप्रमुखद्वादशव्यतिरेकेणायंमहाज नोऽतिगुह्यमिदंज्ञात्वाद्वादशाब्दादिकंस्मरतीति किंच माययादेव्याअलंविमोहितमतिरयंजनःमधुमधुरंयथाभवत्येवंपुष्पितायांपुष्पस्था नीयैरर्थवादैर्मनोहरायांत्रय्यांजडीकृताअभिनिविष्टामतिर्यस्य अतोमहत्येवकर्मणिश्रद्धयायुज्यमानोनाल्पेप्रवर्तते दृश्यतेहिप्राकृतस्य

विक्रुश्यपुत्रमघवान्यदजामिलोऽपिनारायणेतिम्रियमाणइयायमुक्तिम् ॥ २४ ॥ प्रायेणवेदतदिदंनमहा जनोऽयंदेव्याविमोहितमतिर्बतमाययाऽलम् ॥ त्रय्यांजडीकृतमतिर्मधुपुष्पितायांवैतानिकेमहतिकर्मणि युज्यमानः ॥ २५ ॥ एवंविमृश्यसुधियोभगवत्यनंतेसर्वात्मनाविदधतेखलुभावयोगम् ॥ तेमेनदंडमर्हंत्यथ यद्यमीषांस्यात्पातकंतदपिहंत्युरुगायवादः ॥ २६ ॥ तेदेवसिद्धपरिगीतपवित्रगाथायेसाधवःसमदृशो भगवत्प्रपन्नाः ॥ तान्नोपसीदतहरेर्गदयाऽभिगुप्तान्नैषांवयंनचवयःप्रभवामदंडे ॥ २७ ॥ ॥

लोकस्यमहतिमंत्रादौश्रद्धाअल्पेचाश्रद्धा तस्मादस्यग्राहकोनास्तीतितैर्नोक्तम् यद्वास्वाधीनः सिंहोऽस्त्येतावताश्वसृगालादिनिवारणा यतंयथानप्रयुंजतेतथाऽतितुच्छत्वात्पापस्यनतन्निरसनायपरममंगलंहरेर्नामस्मरंति यद्वानाममाहात्म्यज्ञानेसर्वमुक्तिप्रसंगादित्येषादिक्ग्रं थविस्तरभयात्तुनातिप्रपंच्यते ॥ २५ ॥ भावयोगंभक्तियोगम् अमीषांपातकंनस्यादेव यदिस्यादुरुगायस्यवादःकीर्तनं ॥ २६ ॥ त देवंधर्मतत्त्वंनिर्णीयभृत्याननुशास्ति तइति येभगवंतंप्रपन्नास्तेदेवैः सिद्धैश्चपरिगीतपवित्रगाथाःवर्णितपवित्रकथाः अतस्तान्नोपसी दत तत्समीपमपिनगच्छत वयःकालोपिनप्रभवति ॥ २७ ॥ ॥ ॥ ॥

केतर्हिदंडार्थमानेयाइत्यत्राह तानितिद्वाभ्यां असतःदुष्टान् तानेवाह मुकुंदपादरविंदयोर्यांमकरंदरूपोरसस्तस्माद्विमुखान् कथंभूतात् निष्किंचनैरजस्रंजुष्टात् तेषांज्ञापकमाह निरयवर्त्मनिस्वधर्मशून्येगृहेबद्धातृष्णायैस्तान् ॥ २८ ॥ किंच जिव्हेत्यादि यद्येषांजिव्हेत्याद्य न्वयः नकृतंविष्णुकृत्यंभगवद्व्रतंयैः ॥ २९ ॥ भगवंतंक्षमापयाति तदिति अयंभावः नःस्वपुरुषैरस्मदीयत्वेनस्थितैःस्वीयैरेवपुरुषैर्यदस्मा दसत् अन्याय्यंकृतम् तत्तस्मात्स्वयमेवक्षम्यतांसहताम् स्वानांस्वीयानांभक्तानांनः अस्माकंनविदुषांअज्ञानां अहोगरीयसितस्मिन्क्षां

तानानयध्वमसतोविमुखान्मुकुंदपादारविंदमकरंदरसादजस्रम् ॥ निष्किंचनैःपरमहंसकुलैरसङ्गैर्जुष्टाद्गृहेनिरयवर्त्मनिबद्धतृष्णान् ॥ २८ ॥ जिव्हानवक्तिभगवद्गुणनामधेयंचेतश्चनस्मरतितच्चरणारविंदम् ॥ कृष्णायनोनमतियच्छिरएकदाऽपितानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥ तत्क्षम्यतांसभगवान्पुरुषःपुराणोनारायणःस्वपुरुषैर्यदसत्कृतंनः ॥ स्वानामहोनविदुषांरचितांजलीनांक्षांतिर्गरीयसिनमःपुरुषायभूम्ने ॥ ३० ॥ तस्मात्संकीर्तनंविष्णोर्जगन्मंगलमंहसाम् ॥ महतामपिकौरव्यविद्ध्येकांतिकनिष्कृतम् ॥ ३१ ॥ शृण्वतांगृणतांवीर्याण्युद्दामानिहरेर्मुहुः ॥ यथासुजातयाभक्त्याशुद्ध्येन्नात्माव्रतादिभिः ॥ ३२ ॥ कृष्णांघ्रिपद्ममधुलिण्नपुनर्विसृष्टमायागुणेषुरमतेवृजिनावहेषु ॥ अन्यस्तुकामहतआत्मरजःप्रमार्ष्टुमीहेतकर्मयतएवरजःपुनःस्यात् ॥ ३३ ॥ ॥ ॥ ॥ ॥



तिर्युक्तैव महइतिपाठेस्वीयानांमाहात्म्यमविदुषांनःक्षमांकरोत्वित्यर्थः ॥ ३० ॥ तस्मादित्यादिशुकोक्तिः जगतोऽपिमंगलरूपम् ॥ ३१ ॥ एकांतिकत्वमेवाह शृण्वतामिति व्रतादिभिस्तथानशुध्येत् ॥ ३२ ॥ एतदुपपादयति कृष्णांघ्रिपद्मयोर्मधुलेढिआस्वादयतीतितथा मधु लिहतीतिमधुलिट् अतितुच्छत्वेनविसृष्टायेमायागुणाःविषयास्तेषुपुनर्नरमते अन्यस्तुतन्मध्वास्वादरहितः अतएवकामाभिभूतःःसन्नात्म नोरजः पापंप्रमार्ष्टुमपिकर्मैवप्रायश्चित्तरूपमीहेत यतःकर्मणःपुनरपिरजःपापंस्यादेव कुंजरशौचवत् सत्वशोधकत्वाभावात् ॥ ३३ ॥

नैवविस्मितधियोबभूवुः किंतुसत्यमुक्तमित्येवमेनिरे ततःप्रभृतिप्रतिशंकमानाःअस्मानेवैषहन्यादितिशंकांवहंतस्तंद्रष्टुमपिबिभ्यातिस्मपाठां
तरेतुविस्मितधियोजाताः तेचततःप्रभृतिबिभ्यतिस्मेत्यर्थः ॥ ३४ ॥ कुंभसंभवोऽगस्त्योमलयेपर्वतेआसीनोऽव्यग्रोहरिमर्चयन् पुनःपुन
र्विश्वासार्थंहरेःपादौस्पृशन्नित्यर्थः ॥ ३५ ॥ इतिश्रीभागवतेषष्ठस्कंधेटीकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ चतुर्थादित्रिभिर्वि
श्वरूपजन्मविवक्षया ॥ प्रचेतःसुतदक्षस्यवंशस्तावत्प्रतन्यते ॥ १ ॥ चतुर्थेतुप्रजासृष्ट्यैदक्षेणाराधनंहरेः ॥ तपसाहंसगुह्याख्यस्तोत्रेणच

इत्थंस्वभर्तृगदितंभगवन्महित्वंसंस्मृत्यविस्मितधियोयमकिंकरास्ते ॥ नैवाच्युताश्रयजनंप्रतिशंकमाना
द्रष्टुंचबिभ्यतिततःप्रभृतिस्मराजन् ॥ ३४ ॥ इतिहासमिमंगुह्यंभगवान्कुंभसंभवः ॥ कथयामासमल
यआसीनोहरिमर्चयन् ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ राजोवाच
देवासुरनृणांसर्गोनागानांमृगपक्षिणाम् ॥ सामासिकस्त्वयाप्रोक्तोयस्तुस्वायंभुवेंऽतरे ॥ १ ॥ तस्यैवव्या
समिच्छामिज्ञातुंतेभगवन्यथा ॥ अनुसर्गंययाशक्त्याससर्जभगवान्परः ॥ २ ॥ सूतउवाच इतिसंप्र
श्नमाकर्ण्यराजर्षेर्बादरायणिः ॥ प्रतिनंद्यमहायोगीजगादमुनिसत्तमः ॥ ३ ॥ श्रीशुकउवाच यदाप्र
चेतसःपुत्रादशप्राचीनबर्हिषः ॥ अंतःसमुद्रादुन्मग्नाददृशुर्गांद्रुमैर्वृताम् ॥ ४ ॥ द्रुमेभ्यःक्रुध्यमानास्तेत
पोदीपितमन्यवः ॥ मुखतोवायुमग्निंचससृजुस्तद्दिधक्षया ॥ ५ ॥ ताभ्यांनिर्दह्यमानांस्तानुपलभ्यकुरूद्व
ह ॥ राजोवाचमहान्सोमोमन्युंप्रशमयन्निव ॥ ६ ॥ ॥ ॥ ॥

निरूप्यते ॥ २ ॥ प्रसक्तानुप्रसक्तेनस्वायंभुवसुतान्वये ॥ नामप्रभावमाकर्ण्यवंशव्यासंबुभुत्सते ॥ ३ ॥ देवासुरेतिद्वाभ्याम् सामासिकः
संक्षिप्तोयःप्रोक्तस्तृतीयस्कंधे ॥ १ ॥ व्यासंविस्तारम् तेत्वत्तः ययाशक्त्यायथाससर्जतांशक्तिंतत्प्रकारंचज्ञातुमिच्छामि अनुसर्गमनुवृत्तंस
र्गं ॥ २ ॥ ३ ॥ दक्षादिरूपेणससर्जेतिवक्तुंदक्षजन्मप्रकारमाह यदेति प्राचीनबर्हिषःपुत्रायदासमुद्रमध्यादुन्मग्नानिर्गतास्तदागांपृथ्वीं
द्रुमैर्वृतांददृशुः नारदोपदेशतःप्राचीनबर्हिषोनिवृत्त्याअराजकेसतिकृष्याद्यभावात् ॥ ४ ॥ तपसादीपितोमन्युर्येषांते तेषांद्रुमाणांदग्धु
मिच्छया ॥ ५ ॥ ताभ्यांवाय्वग्निभ्यांदह्यमानांस्तान्द्रुमान् वनस्पतीनांराजासोमउवाच ॥ ६ ॥ ॥

माद्रुमेभ्यइतिनवभिः हेमहाभागाः विवर्धयिषवोविशेषेणवर्धयितुमिच्छवः ॥ ७ ॥ प्रजापतीनांतद्भक्ष्यभोज्यदाहोऽनुचितइत्याह अहोइ
तित्रिभिः उर्जंभक्ष्यमिषमन्नम् ॥ ८ ॥ अचराःफलाद्याः अपदास्तृणाद्याः अहस्ताःपश्वाद्याः चतुष्पदोमेषाद्याः ॥ ९ ॥ १० ॥ अतःआति
ष्ठतआश्रयत सतांमार्गमुपशमंपित्रादिभिर्जुष्टम् ॥ ११ ॥ प्रजानांप्रजापतिरेवबंधुरतस्तज्जीविकानाशोनकर्तव्यइतिदृष्टांतपंचकेनाह तो



माद्रुमेभ्योमहाभागादीनेभ्योद्रोग्धुमर्हथ ॥ विवर्धयिषवोयूयंप्रजानांपतयःस्मृताः ॥ ७ ॥ अहोप्र
जापतिपतिर्भगवान्हरिरव्ययः ॥ वनस्पतीनोषधीश्चससर्जोर्जमिषंविभु ॥ ८ ॥ अन्नंचराणामचराह्यप
दःपादचारिणाम् ॥ अहस्ताहस्तयुक्तानांद्विपदांचचतुष्पदः ॥ ९ ॥ यूयंचपित्राऽन्वादिष्टादेवदेवेनचान
घाः ॥ प्रजासर्गायहिकथंवृक्षान्निर्दग्धुमर्हथ ॥ १० ॥ आतिष्ठतसतांमार्गंकोपंयच्छतदीपितम् ॥ पित्रा
पितामहेनापिजुष्टंवःप्रपितामहैः ॥ ११ ॥ तोकानांपितरौबंधुर्दृशःपक्ष्मस्त्रियाःपतिः ॥ पतिःप्रजानांभिक्षू
णांगृह्यज्ञानांबुधःसुहृत् ॥ १२ ॥ अंतर्देहेषुभूतानामात्मास्तेहरिरीश्वरः ॥ सर्वंतद्धिष्ण्यमीक्षध्वमेवंवस्तो
षितोह्यसौ ॥ १३ ॥ यःसमुत्पतितंदेहआकाशान्मन्युमुल्बणं ॥ आत्मजिज्ञासयायच्छेत्सगुणानतिवर्तते ॥
॥ १४ ॥ अलंदग्धैर्द्रुमैर्दीनैःखिलानांशिवमस्तुवः ॥ वार्क्षीह्येषावराकन्यापत्नीत्वेप्रतिगृह्यताम् ॥ १५ ॥
इत्यामंत्र्यवरारोहांकन्यामाप्सरसींनृप ॥ सोमोराजाययौदत्वातेधर्मेणोपयेमिरे ॥ १६ ॥ तेभ्यस्तस्यांस
मभवद्दक्षःप्राचेतसःकिल ॥ यस्यप्रजाविसर्गेणलोकाआपूरितास्त्रयः ॥ १७ ॥ ॥ ॥



कानांबालानांमातापितरौ अज्ञानांज्ञानदोबुधएवसुहृत् ॥ १२ ॥ ईश्वराधिष्ठानत्वाच्चभूतद्रोहोनयुक्तइत्याह अंतर्देहेष्विति वोयुष्माभिः ॥ १३ ॥
आकाशाद्देहेसमुत्पतितमाकस्मिकमित्यर्थः आत्मविचारेणनियच्छेत् ॥ १४ ॥ खिलानांशेषाणांवोयुष्माकंचशिवमस्तु वृक्षरक्षणार्थंतदीयां
कन्यांददाति वार्क्षीवृक्षैःपालिता ॥ १५ ॥ आमंत्र्यसांत्वयित्वा आप्सरसींअप्सरसःप्रम्लोचायाःसुताम् ॥ १६ ॥ १७ ॥ ॥

दुहितृवत्सलइतितस्यकन्यावंशएवेत्युक्तम् ममसत्तः ॥ १८ ॥ प्रजापतिर्दक्षः ॥ १९ ॥ अबृंहितमसंवृद्धम् विंध्यस्यपादान्सान्निहितप र्वतान् ॥ २० ॥ २१ ॥ हंसगुह्याख्येनस्तोत्रेण कस्यदक्षस्य ॥ २२ ॥ परायसर्वोत्तमायनमोदधेनमनंकरोमि परत्वेहेतुः अवितथाअनु भूतिश्चिच्छक्तिर्यस्य अतोगुणत्रयाभासोजीवोनिमित्तंमायाचतयोर्बंधवेनियंत्रे एवमपिगुणेषुतत्त्वबुद्धिर्येषांतैर्जीवैरदृष्टंधामस्वरूपंयस्यतत्रहे तुः निवृत्तंमानंयस्मात् पाठांतरेनिरस्तंमानमवधिश्चयस्मात् तर्हिकथंतस्यसिद्धिरतआह स्वयंभुवेस्वप्रकाशाय ॥ २३ ॥ अदृष्टधामत्वंद र्शयन्नाह नेति पुरुषसखाजीवः अस्मिन्पुरेदेहे वसन्नपिअत्रैवसंवसतःसख्युर्यस्यसख्यकरणंप्रवर्तकादिकंनावैतिनजानातितस्मै कुतः

यथाससर्जभूतानिदक्षोदुहितृवत्सलः ॥ रेतसामनसाचैवतन्ममावहितःशृणु ॥ १८ ॥ मनसैवासृजत्पूर्वं प्रजापतिरिमाःप्रजाः ॥ देवासुरमनुष्यादीन्नभस्थलजलौकसः ॥ १९ ॥ तमबृंहितमालोक्यप्रजासर्गंप्र जापतिः ॥ विंध्यपादानुपव्रज्यसोऽचरद्दुष्करंतपः ॥ २० ॥ तत्राघमर्षणंनामतीर्थंपापहरंपरम् ॥ उपस्पृश्यानु सवनंतपसाऽतोषयद्धरिं ॥ २१ ॥ अस्तौषीद्धंसगुह्येनभगवंतमधोक्षजं ॥ तुभ्यंतदभिधास्यामिकस्यातुष्य द्यतोहरिः ॥ २२ ॥ प्रजापतिरुवाच नमःपरायावितथानुभूतयेगुणत्रयाभासनिमित्तबंधवे ॥ अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानायदधेस्वयंभुवे ॥ २३ ॥ नयस्यसख्यंपुरुषोऽवैतिसख्युःसखावसन्संवसतःपुरेऽ स्मिन् ॥ गुणोयथागुणिनोव्यक्तदृष्टेस्तस्मैमहेशायनमस्करोमि ॥ २४ ॥ देहोऽसवोऽक्षामनवोभूतमा त्रानात्मानमन्यंचविदुःपरंयत् ॥ सर्वंपुमान्वेदगुणांश्चतज्ज्ञोनवेदसर्वज्ञमनंतमीडे ॥ २५ ॥

व्यक्तदृष्टेःप्रपंचद्रष्टुः नहिद्रष्टादृश्योभवतीति प्रथमांतपाठेव्यक्तेप्रपंचएवदृष्टिर्यस्यसः गुणोविषयोगुणिनोविषयिणइंद्रियादेःसख्यंप्रका शकत्वंयथानवेत्तितद्वत् ॥ २४ ॥ ननुगुणोजडत्वान्नजानाति जीवस्तुचेतनःकिमितिनजानाति अतआह देहइति देहाश्चासवश्चप्राणा अक्षाणींद्रियाणिमनवश्चअंतःकरणानिभूतानिचमात्राश्चतन्मात्राणिआत्मानंस्वरूपंदृश्यमन्यामिंद्रियवर्गंतयोःपरंदेवतावर्गंचनविदुः पुमान् जीवस्तुसर्वमेतत्त्रयंवेद गुणांश्चतन्मूलभूतान्वेद तज्ज्ञोऽपिसन्यंसर्वज्ञंनवेद तमनंतमीडेस्तौमि ॥ २५ ॥ ॥ ॥

अद्दष्टधामत्वमुक्त्वास्वप्रकाशत्वमाह यदामनसउपरामःसमाधिर्नतुसुषुप्ताविवलयो नचजाग्रत्स्वप्नयोरिवविक्षेपस्तदाह नामरूपेरूप्येतेये नतत्तथातस्य उपरामेहेतुः द्दष्टंदर्शनंस्मृतिश्च तयोःसप्रंमोषान्नाशात्तदायःकेवलेनस्वरूपज्ञानेनप्रतीयतेतस्मैहंसायशुद्धाय शुचिशुद्धंम नःसद्मप्रतीतिस्थानंयस्यतस्मैनमः ॥ २६ ॥ एवंभूतःकेषांप्रतीयतइत्यपेक्षायामाह मनीषिणइतिद्वाभ्याम् विवेकिनोयंनिष्कर्षंतिविवि च्यध्यायंतिसनिर्वाणसुखानुभूतिर्ममप्रसीदतामितिद्वयोरन्वयः एवंनिष्कर्षतांप्रतीयतइतिभावः किमितिनिष्कर्षंति स्वशक्तिभिर्गूढमप्रका शमानम् कतिभिर्नवभिः पुनश्चत्रिवृद्भिःत्रिगुणाभिः सप्तविंशत्युपाधिभिर्गूढमष्टाविंशंनिष्कर्षंतीत्यर्थः यद्वा नवभिःप्रकृतिपुरुषमहदहं कारपंचतन्मात्ररूपाभिः त्रिवृद्भिःत्रिगुणात्मिकाभिः चकारात्षोडशविकाररूपाभिश्च कथंभूतंनिष्कर्षंति मनीषयाऽतर्हृदिसंनिवेशितंनि श्चलीकृतंपांचदश्यंपंचदशसामिधेनीमंत्रैःप्रकाश्यंअलौकिकंवन्हिमिवाहंकारास्पदादात्मनोऽन्यंपरमात्मानंनिष्कर्षंतीत्यर्थः ॥ २७ ॥ अ

**यदोपरामोमनसोनामरूपरूपस्यद्दष्टस्मृतिसंप्रमोषात् ॥ यईयतेकेवलयास्वसंस्थयाहंसायतस्मैशुचिस द्मनेनमः ॥ २६ ॥ मनीषिणोऽतर्हृदिसंनिवेशितंस्वशक्तिभिर्नवभिश्चत्रिवृद्भिः ॥ वन्हिंयथादारुणिपांच दश्यंमनीषयानिष्कर्षंतिगूढं ॥ २७ ॥ सवैममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ॥ ससर्वनामा सचविश्वरूपःप्रसीदतामनिरुक्तात्मशक्तिः ॥२८॥ यद्यन्निरुक्तंवचसानिरूपितंधियाऽक्षाभिर्वामनसावोत यस्य ॥ माभूत्स्वरूपंगुणरूपबृंहितंसवैगुणापायविसर्गलक्षणः ॥ २९ ॥ ॥**

शेषाविशेषायस्यास्तस्यामायायानिषेधेननिर्वाणसुखेअनुभूतिर्यस्य अप्रसक्तनिषेधासंभवात्प्रसक्तिमाह सएवसर्वनामासएवविश्वरूपइति तद्रूपत्वेपिवास्तवत्वाभावान्निषेधःसंभवतीत्याहअनिरुक्ताआत्मनिशक्तिर्मायायस्यसः ॥ २८ ॥ ननुयदिकेवलयास्वसंस्थयाप्रतीयतेतर्हि सर्वनामत्वंविश्वरूपत्वंचानुपपन्नंवागाद्यगोचरत्वादित्याशंक्यसर्वैर्नामभिर्वाच्यंप्रत्यक्षादिद्दश्यंचतस्यस्वरूपंवस्तुतोमाभूत्तथापिमाययाघ टतइतिश्लोकत्रयेणोपपादयन्नमस्करोति यद्यदिति यद्यद्वचसानिरुक्तमभिहितंधियानिरूपितंव्यवसितमक्षभिर्वाइंद्रियैर्निरूपितंगृहीतमु तअपिमनसाऽपिनिरूपितंसंकल्पितंयस्यस्वप्रकाशत्वंतस्यतत्स्वरूपंमाभूत् स्वरूपत्वाभावेहेतुः हियस्मात्तद्गुणानामेवरूपंपाठांतरेगु णैर्वर्धितं सतुगुणव्यतिरिक्तः यतोगुणानामपायविसर्गाभ्यांप्रलयोत्पत्तिभ्यांलक्ष्यतइतितथा चेतनाधिष्ठानंविनातयोरसंभवात् यद्वा यस्य स्वरूपंमाभून्नभवतितस्मैनमइतितृतीयेनान्वयः ॥ २९ ॥ ॥ ॥ ॥

तदेवंवस्तुतोगुणस्वरूपत्वाभावमंगीकृत्यअनिरुक्तात्मशक्तिरित्यनेनद्योतितंमाययासर्ववाच्यत्वेनविश्वरूपत्वमाह यस्मिन्नधिकरणे यतोऽ
पादानात् येनकरणेन यस्यसंबंधि यस्मैसंप्रदानाय यदीप्सिततमं यःकर्ता कुरुतेस्वतंत्रः कार्यतेचान्येनप्रयोज्यकर्त्रा तद्ब्रह्मेतिप्रत्येकं
संबंधःअत्रचसप्तभिर्यच्छब्दैःसप्तविभक्त्यर्थादर्शिताः यथेतिचक्रियाकारकसंबंधप्रकारवाचिनामव्ययानामर्थाः कुरुतेकार्यतेचेतिस्वार्थप
रार्थक्रियाऽन्वयश्चसर्वेषांदर्शितः चशब्देनभावकर्मादिविहितप्रत्ययार्थाःसंगृहीताःतद्ब्रह्मैवेतिकुतस्तत्राह तद्धेतुस्तेषांकारणम् तत्कुतः
सर्वेभ्यःप्राक्प्रसिद्धं ननुब्रह्मादयस्तद्धेतवःश्रूयंतेअवरेचदृश्यंतेतत्कथंब्रह्मैवतद्धेतुस्तत्राह परेषामवरेषांचहेतूनांपरमंकारणम् ननुसर्व
कारणत्वेतस्यकिंनामसहकारिभवेत्तदानीमन्यस्याभावात् सत्यं निरपेक्षमेवतत्कारणमित्याह अनन्यत् विजातीयशून्यम् एकंसजाती
यशून्यंचतस्मैनमइत्युत्तरेणान्वयः ॥ ३० ॥ नन्वेवंचेद्विश्वस्यहेतुस्तर्हिनकदाचिदनीदृशंजगदितिवदंतोमीमांसकाःकुतोऽत्रविवदंते

यस्मिन्यतोयेनचयस्ययस्मैयद्योयथाकुरुतेकार्यतेच ॥ परावरेषांपरमंप्राक्प्रसिद्धंतद्ब्रह्मतद्धेतुरनन्यदेकं
॥ ३० ॥ यच्छक्तयोवदतांवादिनांवैविवादसंवादभुवोभवंति ॥ कुर्वंतिचैषांमुहुरात्ममोहंतस्मैनमोऽनंत
गुणायभूम्ने ॥ ३१ ॥ अस्तीतिनास्तीतिचवस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ॥ अवेक्षितंकिंचन
योगसांख्ययोःसमंपरंह्यनुकूलंबृहत्तत् ॥ ३२ ॥ ॥ ॥ ॥ ॥

तैश्चान्येस्वभाववादिनःसंवदंते तेचतेचतत्त्वविद्भिर्बोधिताअपिकुतःपुनःपुनर्मुह्यंतितत्राह यस्यमायाविद्याद्याःशक्तयोविवादस्यकाचित्सं
वादस्यभुवःस्थानानिभवंतितस्मैनमः ॥ ३१ ॥ ननुकिंतद्ब्रह्मयस्यशक्तयोविवादादिभुवोभवंतितत्राह अस्तीति योगउपासनाशास्त्रम्
तत्रहिविराड्रूपेणोपासनायांपातालपादादिकमस्तीत्युपास्यत्वेनविधीयते नास्तीतिसांख्यंज्ञानशास्त्रम् तत्रह्यपाणिपादः अचक्षुर
श्रोत्रमितिचपादादिनास्तीतिनिषिध्यते तयोर्योगसांख्ययोर्यत्किंचित्सममनुवर्तमानमवेक्षितंप्रतीतंतद्बृहत्ब्रह्म विवादास्पदंब्रह्मेत्यर्थः
विवादंस्फुटयति भिन्नौअस्तिनास्तीत्येवंभूतौविरुद्धौधर्मौययोः तयोर्भिन्नविषयत्वेऽपिविरोधोनस्यादित्येकस्थयोरित्युक्तमेकविषययोः कु
तः वस्तुनिष्ठयोःपादादिविधिप्रतिषेधयोरेकवस्तुनिष्ठत्वात् समत्वेहेतुः परम् हियतः विधिप्रतिषेधयोरविषयस्तयोःपादादिविषयत्वा
त् तथातर्हिअविषयस्यसद्भावेकिंप्रमाणंतदाह अनुकूलमधिष्ठानंविनापादादिकल्पनाऽयोगात् अवधिंविनातन्निषेधायोगाच्च तयोरुप
पादकत्वेनसिद्धमित्यर्थः तस्मैनमइतिपूर्वस्यानुषंगः ॥ ३२ ॥ ॥ ॥ ॥

ननूदासीनस्यसमस्यनमस्कारेकोलाभस्तत्राह यइति पादमूलंभजतामनुग्रहार्थंप्राकृतनामरूपराहितोऽपिजन्मभिरवतारैर्विशुद्धोर्जितसत्वानिरूपाणिकर्मभिर्नामानिचयोभेजे तत्कुतः भगवानचिंत्यैश्वर्यः समह्यंप्रसीदतु ॥ ३३ ॥ ननुत्वादृशाःसकामागणेशादीन्प्रार्थयंतेत्वंतुतान्विहायकिमितिभगवंतमेवप्रार्थयसेतत्राह प्राकृतैरर्वाचीनैर्ज्ञानपथैरुपासनामार्गैर्यथाशयंतत्तद्वासनाऽनुसारेणयोदेहगतोंऽतर्यामीतत्तद्देवतारूपेणविविधोभाति यथावायुःपार्थिवंचंपकादिगंधभेदमाश्रित्यनानागंधवान्विभाति रेणुगुणंधूसरत्वादिकमाश्रित्यनानारूपवान्प्रतीयते तद्वत्तस्यैवतत्तद्देवतारूपेणफलदातृत्वात्सईश्वरएवमेमनोरथंसत्यंकरोतुकिमंतर्गतबहुभिर्देवताऽतरैरित्यर्थः तदु

योऽनुग्रहार्थंभजतांपादमूलमनामरूपोभगवाननंतः ॥ नामानिरूपाणिचजन्मकर्मभिर्भेजेसमह्यंपरमः प्रसीदतु ॥ ३३ ॥ यःप्राकृतैर्ज्ञानपथैर्जनानांयथाशयंदेहगतोविभाति ॥ यथानिलःपार्थिवमाश्रितोगुणं सईश्वरोमेकुरुतान्मनोरथं ॥ ३४ ॥ श्रीशुकउवाच इतिस्तुतःसंस्तुवतःसतस्मिन्नघमर्षणे ॥ आविरासीत्कुरुश्रेष्ठभगवान्भक्तवत्सलः ॥ ३५ ॥ कृतपादःसुपर्णांसेप्रलंबाष्टमहाभुजः ॥ चक्रशंखासिचर्मेषुधनुःपाशगदाधरः ॥ ३६ ॥ पीतवासाघनश्यामःप्रसन्नवदनेक्षणः ॥ वनमालानिवीतांगोलसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥ महाकिरीटकटकःस्फुरन्मकरकुंडलः ॥ कांच्यंगुलीयवलयनूपुरांगदभूषितः ॥ ३८ ॥ त्रैलोक्यमोहनंरूपंबिभ्रत्त्रिभुवनेश्वरः ॥ वृतोनारदनंदाद्यैःपार्षदैःसुरयूथपैः ॥ ३९ ॥ स्तूयमानोऽनुगायद्भिःसिद्धगंधर्वचारणैः ॥ रूपंतन्महदाश्चर्यंविचक्ष्यगतसाध्वसः ॥ ४० ॥ ॥ ॥

क्तंगीतासु योयोयांयांतनुंभक्तःश्रद्धयाऽर्चितुमिच्छति ॥ तस्यतस्याचलांश्रद्धांतामेवाविदधाम्यहं ॥ सतयाश्रद्धयायुक्तस्तस्याराधनमीहते ॥ लभतेचततःकामान्मयैवविहितान्हितानिति ॥ येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहमितिचेति ॥ ३४ ॥ संस्तुवतोदक्षस्यसभगवान्प्रत्यक्षोऽभूत् ॥ ३५ ॥ तंवर्णयतिसार्धैश्चतुर्भिः सुपर्णस्यांसेस्कंधेकृतौपादौयेन प्रलंबाअष्टौमहांतोभुजायस्य चक्राद्यष्टायुधधरः ॥ ॥ ३६ ॥ प्रसन्नंवदनमीक्षणेयस्य वनमालयानिवीतंकंठादिपादांतव्याप्तमंगंयस्य लसंतौश्रीवत्सकौस्तुभौयस्य ॥ ३७ ॥ महांतिकिरीटकटकानियस्य स्फुरंतीमकरकुंडलेयस्य कांच्यादिभिर्विभूषितः वलयमत्रपादभूषणंद्रष्टव्यं कटकस्योक्तत्वात् ॥ ३८ ॥ त्रैलोक्यमोहनंश्रीपुरुषोत्तमाख्यम् सुरयूथपैर्लोकपालैः ॥ ३९ ॥ ४० ॥ ॥ ॥ ॥

॥ ४१ ॥ आपूरितानिमनोद्वाराणिइंद्रियाणितैर्यथाऽऽह्रदिन्योनद्योनिर्झरैरापूर्यंतेतथामहानंदपूर्णत्वेनावृत्तिकत्वाद्वागादीनांनकिंचिद्दकुंश
क्तोऽभूदित्यर्थः यद्यसौनावोचत्तथाऽपिचित्तज्ञइदंवक्ष्यमाणमाह ॥ ४२ ॥ भावंभक्तिंगतःप्राप्तः ॥ ४३ ॥ यत्यतस्तेतपःअस्यविश्वस्य
उद्बृंहणंवृद्धिकरमतस्तेऽहंप्रीतः मत्तपसोलोकसमृध्यर्थत्वेत्वत्प्रीतेःकिंकारणं तत्राह ममेति भूतानांविभूतयःसमृद्धयोभूयासुरितियत्
एषएवममकामःअतोमत्कामपूरणादेवाहंप्रीतोऽस्मीत्यर्थः ॥ ४४ ॥ भूतिविस्तारप्रयत्नश्चतवोचितएवेत्याह ब्रह्मेति भवंतःप्रजापतयः
भूतेरुद्भवस्यहेतवः ॥ ४५ ॥ विश्ववृध्यर्थेनत्वत्तपसाऽहंप्रीतइत्युक्तंतदेवतपःस्तुवन्प्रसंगादन्यान्यपिलोकवृद्धिकराणिविद्यादीनिस्तौति

ननामदंडवद्भूमौप्रहृष्टात्माप्रजापतिः ॥ नकिंचनोच्चारयितुमशकत्तीव्रयामुदा ॥ ४१ ॥ आपूरितमनोद्वारै
र्ह्रदिन्यइवनिर्झरैः ॥ तंतथाऽवनतंभक्तंप्रजाकामंप्रजापतिं॥चित्तज्ञःसर्वभूतानामिदमाहजनार्दनः॥४२॥
श्रीभगवानुवाच प्राचेतसमहाभागसंसिद्धस्तपसाभवान् ॥ यच्छ्रद्धयामत्परयामयिभावंपरंगतः ॥४३॥
प्रीतोऽहंतेप्रजानाथयत्तेऽस्योद्बृंहणंतपः ॥ ममैषकामोभूतानांयद्भूयासुर्विभूतयः॥४४॥ब्रह्माभवोभवंतश्चम
नवोविबुधेश्वराः॥विभूतयोममह्येताभूतानांभूतिहेतवः॥४५॥तपोमेहृदयंब्रह्मंस्तनुर्विद्याक्रियाकृतिः॥अंगा
निक्रतवोजाताधर्मआत्माऽसवःसुराः ॥४६ ॥ अहमेवासमेवाग्रेनान्यत्किंचांतरंबहिः ॥ संज्ञानमात्रमव्य
क्तंप्रसुप्तमिवविश्वतः॥४७॥मय्यनंतगुणेऽनंतेगुणतोगुणविग्रहः॥यदासीत्ततएवाद्यःस्वयंभूःसमभूदजः४८

तपोयमनियमादिसहितंध्यानंमेहृदयम् विद्यासांगमंत्रजपः ध्यानंतनोतीतितनुर्देहः क्रियाध्यानादिविषयःपुंव्यापारोभावनाशब्दवा
च्यस्तेनहिध्यानादिकमाक्रियतइत्याकृतिः जाताःसुनिष्पन्नाः क्रतवोंगानि शिरोवाएतद्यत्प्रवर्ग्यः ग्रीवाउपसदश्चक्षुषीआज्यभागावित्या
दिश्रुतेः धर्मःक्रत्वाद्यपूर्वं आत्मामनः हृदयाश्रयत्वात् सुरायज्ञभुजस्तएवअसवःप्राणाः संतर्पणीयत्वात् ॥ ४६ ॥ तपसःसंतानवृद्धि
हेतुत्वंदर्शयितुंद्वितीयतृतीयोक्तमितिहासमाह चतुर्भिः अहमेवेतिवस्त्वंतरव्यावृत्तिः आसमेवेतिक्रियांऽतरव्यावृत्तिः आंतरंग्राहकं बहिर्ग्रा
ह्यम् संज्ञानमात्रंचेतन्यमात्रम् अव्यक्तमिंद्रियवृत्तिभिरनाभिव्यक्तम् अतएवप्रसुप्तमिव विश्वतःसर्वत्र ॥ ४७ ॥ गुणतोमायातः गुणमयो
विग्रहोब्रह्मांडम् ततस्तदैव अजःअयोनिजः ॥ ४८ ॥ ॥ ॥ ॥ ॥ ॥

खिलमसमर्थमिव ॥ ४९ ॥ मेमयातपतपेत्यभिहितःसन् येनतपसा ॥ ५० ॥ संततिवृध्द्युपायमाह एषेति अंगहेदक्ष पंचजनाख्यस्य प्रजापतेः ॥ ५१ ॥ मिथुनस्ययोव्यवायोरतिःसएवधर्मोयस्यसत्वम् तथाभूतायांतस्याम् ॥ ५२ ॥ माययानिमित्तभूतया स्त्रियासहमिथुनीभूय भविष्यंतिपुत्रादिरूपेणोत्पत्स्यंते ॥ ५३ ॥ ५४ ॥ इतिषष्ठेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥पंचमेनारदेनाथवाचःकूटैस्तुनाशितान् ॥ सुतानाकर्ण्यदक्षोऽमुंशशापेतिनिरूप्यते ॥ १ ॥ १ ॥ अपृथग्धर्मशीलाएकाचारस्वभावाः ॥२॥ तत्रप्रतीच्यांदिशिसिंधोर्नद्याः

सवैयदामहादेवोममवीर्योपबृंहितः ॥ मेनेखिलमिवात्मानमुद्यतःसर्गकर्मणि॥४९॥अथमेऽभिहितोदेवस्तपोतप्यतदारुणं ॥ नवविश्वसृजोयुष्मान्येनादावसृजद्विभुः ॥५०॥ एषापंचजनस्यांगदुहितावैप्रजापतेः ॥ असिक्नीनामपत्नीत्वेप्रजेशप्रतिगृह्यतां ॥५१॥ मिथुनव्यवायधर्मस्त्वंप्रजासर्गमिमंपुनः ॥ मिथुनव्यवायधर्मिण्यांभूरिशोभावयिष्यसि ॥५२॥ त्वत्तोऽधस्तात्प्रजाःसर्वामिथुनीभूयमायया ॥ मदीययाभविष्यंतिहरिष्यंतिचमेबलिं ॥ ५३ ॥ श्रीशुकउवाच इत्युक्त्वामिषतस्तस्यभगवान्विश्वभावनः॥स्वप्नोपलब्धार्थइवतत्रैवांतर्दधेहरिः ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीशुकउवाच तस्यांसपांचजन्यांवैविष्णुमायोपबृंहितः ॥ हर्यश्वसंज्ञानयुतंपुत्रानजनयद्विभुः ॥ १ ॥ अपृथक्धर्मशीलास्तेसर्वेदाक्षायणान्नृप ॥ पित्राप्रोक्ताःप्रजासर्गेप्रतीचींप्रययुर्दिशं ॥ २॥ तत्रनारायणसरस्तीर्थंसिंधुसमुद्रयोः॥संगमोयत्रसुमहन्मुनिसिद्धनिषेवितं ॥३॥ तदुपस्पर्शनादेवविनिर्धूतमलाशयाः ॥ धर्मेपारमहंस्येचप्रोत्पन्नमतयोऽप्युत ॥ ४ ॥ तेपिरेतपएवोग्रंपित्रादेशेनयंत्रिताः ॥ प्रजाविवृद्धयेयत्तान्देवर्षिस्तान्ददर्शह ॥ ५ ॥ उवाचचाथहर्यश्वाःकथंस्रक्ष्यथवैप्रजाः ॥ अदृष्ट्वांतंभुवोयूयंबालिशाबतपालकाः ॥ ६ ॥

समुद्रस्यचयत्रसंगमस्तत्रस्थंनारायणसरोनामतीर्थंप्रययुरित्यन्वयः सुमहत् अतिविस्तीर्णम् ॥ ३ ॥ विनिर्धूतोमलोरागादिर्यस्मात्सआशयोयेषाम् ॥ ४ ॥ तान्शुद्धसत्वानपिपित्रादेशजाड्येनप्रजाविवृद्धयेयत्तानुद्युक्तान्ददर्श ॥ ५॥ अहोमोक्षमार्गाधिकारिणःसंतयेतेप्रवृत्तिनिष्ठैःकर्मभिर्नश्येरन्निति कृपयातान्निगूढार्थैर्वाक्यैरुपादिशातिस्म तदाह उवाचेतिचतुर्भिः पालकाःसंतोऽपिबालिशाअज्ञाःयूयंकथंप्रजाःस्रक्ष्यथ बालकाइतिपाठेबालिशत्वेहेतुः ॥ ६ ॥ ॥ ॥ ॥

एकएवपुरुषोयस्मिन् तद्राष्ट्रमदृक्ष्वेत्यनुषंगः बिलंचेत्यादिद्वितीयांतानामविज्ञायकथंसर्गंकरिष्यथेतितृतीयेनान्वयः ॥ ७ ॥ पंचपंचानां पंचविंशतेरद्भुतंगृहम् क्षौरपव्यंक्षुरैःपविभिर्वज्रैश्चनिर्मितमिवातितीक्ष्णंदृढंचेत्यर्थः स्वयंस्वतंत्रं भ्रमिभ्रमणस्वभावम् ॥ ८ ॥ विपाश्चितः सर्वज्ञस्यस्वपितुरादेशमात्मनोनुरूपमविद्वांसोऽजानंतःपूर्वोक्तंचैकपुरुषंराष्ट्रमित्याद्यविज्ञायअहोकथंसर्गंकरिष्यथेत्यन्वयः ॥ ९ ॥ वाचः कूटंपरोक्षवादेनार्थांतरमिवप्रतीयमानंवचनम् औत्पत्तिकीसहजामनीषाविचारशक्तिर्यस्यास्तयाधियास्वयमेवविमृशुर्विचारितवंतः ॥ ॥ १० ॥ नारदोक्तदशवाक्यानांतैर्विमृश्यानिर्णीतानर्थानाह दशभिःअदृष्ट्वांतंभुवइत्यत्रभूशब्दार्थमाह भूरिति क्षेत्रंतच्चात्रजीवसंज्ञंलिंग

तथैकपुरुषंराष्ट्रंबिलंचादृष्टनिर्गमं ॥ बहुरूपांस्त्रियंचापिपुमांसंपुंश्चलीपतिम् ॥ ७ ॥ नदीमुभयतोवाहांपंचपंचाद्भुतंगृहं ॥ क्वचिद्धंसंचित्रकथंक्षौरपव्यंस्वयंभ्रमि ॥ ८ ॥ कथंस्वपितुरादेशमविद्वांसोविपश्चितः ॥ अनुरूपमविज्ञायअहोसर्गंकरिष्यथ ॥ ९ ॥ श्रीशुकउवाच तन्निशम्याथहर्यश्वाऔत्पत्तिकमनीषया ॥ वाचःकूटंतुदेवर्षेःस्वयंविममृशुर्धिया ॥ १० ॥ भूःक्षेत्रंजविसंज्ञंयदनादिनिजबंधनं ॥ अदृष्ट्वातस्यनिर्वाणंकिमसत्कर्मभिर्भवेत् ॥ ११ ॥ एकएवेश्वरस्तुर्योभगवान्स्वाश्रयःपरः ॥ तमदृष्ट्वाऽभवंपुंसःकिमसत्कर्मभिर्भवेत् ॥ १२ ॥ पुमान्नैवैतियद्गत्वाबिलस्वर्गंगतोयथा ॥ प्रत्यग्धामाऽविदइहकिमसत्कर्मभिर्भवेत् ॥ १३ ॥ नानारूपात्मनोबुद्धिःस्वैरिणीवगुणान्विता ॥ तन्निष्ठामगतस्येहकिमसत्कर्मभिर्भवेत् ॥ १४ ॥

शरीरं यत्निजबंधनमात्मनोबंधकारणंजन्महेतुः अंतशब्दार्थमाहतस्यजीवसंज्ञितस्यलिंगशरीरस्यनिर्वाणंनाशमदृष्ट्वाअसद्भिर्मोक्षानुपयोगिभिःकर्मभिःकिंभवेन्नकिमपि ॥ ११ ॥ एकपुरुषमित्यस्यार्थमाह एकएवेति तुर्यःसर्वसाक्षी स्वाश्रयःस्वाधारः अभवंनित्यमुक्तम् असद्भिरीश्वरासमर्पितैःकर्मभिः ॥ १२ ॥ बिलंचादृष्टनिर्गममित्यस्यार्थमाह पुमान्यद्गत्वाप्राप्यबिलस्वर्गंपातालंगतइवनैवैतिनावर्तते तत्प्रत्यक्धामज्योतीरूपंब्रह्म अविदःअविदुषः असद्भिर्नश्वरस्वर्गादिसाधनैःकर्मभिः ॥ १३ ॥ बहूरूपांस्त्रियमित्यस्यार्थमाहनानारूपेति स्वैरिणीवपुंश्चलीवविमोहकैः रजआदिगुणैरन्विता तन्निष्ठां तस्यअवसानंविवेकमगतस्यअप्राप्तस्य असद्भिरशांतैः ॥ १४ ॥

पुमांसंपुंश्चलीपतिमित्यस्यार्थमाह तस्याःसंगेनभ्रंशितमैश्वर्यंस्वातंत्र्यंयस्य कुत्सिताभार्यायस्यतद्वत् तस्यागतीःसुखदुःखलक्षणाःसंसरंतंग च्छंतंजीवमबुधस्यअजानतः असद्भिर्बुध्याविवेकप्राप्तैः ॥ १५ ॥ नदीमुभयतोवाहामित्यस्यार्थमाह सृष्ट्यप्ययौकरोतीत्युभयतः प्रवाहोदर्शि तः वेलाकूलंप्रवाहपतितानांनिर्गमस्थानंतपोविद्यादितस्यांतेसमीपेवेगितांनिर्गमप्रतिबंधायक्रोधाहंकारादिभिःकृतवेगाम् मत्तस्यतद्वेगेन विवशस्य अतएवतांतथाभूतामविज्ञस्यअविचारयतः असद्भिर्मायिकैः यद्वा वेलाकूलंसमुद्रस्यव्यवहारस्थानंतस्यसमीपेसमुद्रवृद्धिन्हासा भ्यांयथाउभयतोंऽतर्बहिःकृतवेगानदीभवति एवंसमुद्रतुल्यस्यआत्मनोव्यवहारस्थानेदेहेजन्ममरणादिभिःकृतवेगामित्यर्थः वेगिनीमिति पाठे वेगवतीम् ॥ १६ ॥ पंचपंचेत्यस्यार्थमाह पंचविंशतितत्त्वानांपुरुषोंऽतर्यामीअद्भुतदर्पणमाश्चर्यरूपआश्रयः अध्यात्मंकार्यकारणसंघा

तत्संगभ्रंशितैश्वर्यंसंसरंतंकुभार्यवत्॥तद्गतीरबुधस्येहकिमसत्कर्मभिर्भवेत् ॥ १५ ॥ सृष्ट्यप्ययकरींमायांवेलाकूलांतवेगितां ॥ मत्तस्यतामविज्ञस्यकिमसत्कर्मभिर्भवेत् ॥ १६ ॥ पंचविंशतितत्त्वानांपुरुषोऽद्भुतदर्पणं ॥ अध्यात्ममबुधस्येहकिमसत्कर्मभिर्भवेत्॥ १७ ॥ ऐश्वरंशास्त्रमुत्सृज्यबंधमोक्षानुदर्शनं ॥ विविक्तपदमज्ञायकिमसत्कर्मभिर्भवेत् ॥ १८ ॥ कालचक्रंभ्रमिस्तीक्ष्णंसर्वंनिष्कर्षयज्जगत् ॥ स्वतंत्रमबुधस्येहकिमसत्कर्मभिर्भवेत्॥ १९ ॥शास्त्रस्यपितुरादेशंयोनवेदनिवर्तकं॥कथंतदनुरूपायगुणविश्रंभ्युपक्रमेत् ॥ २० ॥

ताधिष्ठातारंतमबुधस्य असद्भिर्मिथ्यास्वातंत्र्यकृतैः ॥ १७ ॥ क्वचिद्धंसमित्यस्यार्थमाह ऐश्वरमीश्वरप्रतिपादकम् विविक्तंपदंचिज्जडरूपंव स्तुयेनेतिहंसपदव्याख्यानम् बंधमोक्षावनुदर्शयतीतितथा अनेनचित्राःकथायस्येतिव्याख्यातम् तदुत्सृज्यअनभ्यस्य अज्ञायअविदुषः अस द्भिर्बहिर्मुखैः ॥ १८ ॥ क्षौरपव्यमित्यस्यार्थमाह कालचक्रमिति भ्रमिर्भ्रमणात्मकम् तीक्ष्णमितिनिष्कर्षयदितिचक्षौरपव्यपदंव्याख्यातम् तदबुधस्यअतएवफलस्यनित्यबुध्याकाम्यकर्मानुष्ठानेवैगुण्यबाहुल्यादसद्भिः॥ १९ ॥स्वपितुरादेशमित्यस्यार्थमाह शास्त्रस्यस्वपितुर्द्वितीयज न्महेतोः तदनुरूपायनिवृत्त्यनुरूपाय निवर्तकमादेशंयोनवेदसकथंगुणविश्रंभीगुणमयप्रवृत्तिमार्गविश्वासवान्सन् उपक्रमेत् सृष्ट्यादौप्रवर्ते त मोक्षेशब्रह्मबुद्धीनांजीवमायांऽतरात्मनाम् ॥ शास्त्रकालोपदेशानामज्ञानेकिमुकर्मभिरितिवाचःकूटसंग्रहश्लोकः ॥ २० ॥

इतिव्यवसिताःएवंनिश्चितवंतः एकचेतसःऐकमत्ययुक्ताः तंनारदंप्रदक्षिणीकृत्यअपुनरावृत्तिंमार्गंप्रययुः ॥ २१॥ निर्भांतःसाक्षात्कृतोयोहृषी केशस्तस्यपदांबुजे अनुचरत् अन्वचरदित्यर्थः ॥२२॥ नाशमदर्शनंस्वधर्मभ्रंशंवा शीलेनशालंतेशोभंतइतितथातेषां कोदक्षः सुप्रजस्त्वंस त्पुत्रवत्त्वम् शुचांशोकानांस्थानम् ॥ २३ ॥ अजेनब्रह्मणा सहस्रशःसहस्रसंख्यान् ॥ २४ ॥ २५ ॥ परमंब्रह्मप्रणवंवक्ष्यमाणमंत्रंवा ॥ २६ ॥

इतिव्यवसिताराजन्हर्यश्वाएकचेतसः ॥ प्रययुस्तंपरिक्रम्यपंथानमनिवर्तनं ॥ २१ ॥ स्वरब्रह्मणिनिर्भात त्हृषीकेशपदांबुजे ॥ अखंडंचित्तमावेश्यलोकाननुचरन्मुनिः ॥ २२ ॥ नाशंनिशम्यपुत्राणांनारदाच्छीलशा लिनां ॥ अन्वतप्यतकःशोचन्सुप्रजस्त्वंशुचांपदं ॥ २३ ॥ सभूयःपांचजन्यायामजेनपरिसांत्वितः ॥ पुत्रा नजनयद्दक्षःसबलाश्वान्सहस्रशः ॥ २४ ॥ तेऽपिपित्रासमादिष्टाःप्रजासर्गेधृतव्रताः ॥ नारायणसरोजग्मु र्यत्रसिद्धाःस्वपूर्वजाः ॥ २५ ॥ तदुपस्पर्शनादेवविनिर्धूतमलाशयाः ॥ जपंतोब्रह्मपरमंतेपुस्तत्रमहत्तपः ॥ ॥२६ ॥ अब्भक्षाःकतिचिन्मासान्कतिचिद्वायुभोजनाः॥ आराधयन्मंत्रमिममभ्यस्यंतइडस्पतिम्॥२७॥ ओंनमोनारायणायपुरुषायमहात्मने ॥ विशुद्धसत्त्वधिष्ण्यायमहाहंसायधीमहि ॥ २८ ॥ इतितानपिराजें द्रप्रतिसर्गधियोमुनिः ॥ उपेत्यनारदःप्राहवाचःकूटानिपूर्ववत् ॥ २९ ॥ दाक्षायणाःसंशृणुतगदतोनिगमं मम ॥ अन्विच्छतानुपदवींभ्रातॄणांभ्रातृवत्सलाः ॥ ३० ॥ भ्रातॄणांप्रायणंभ्रातायोऽनुतिष्ठतिधर्मवित् ॥ स पुण्यबंधुःपुरुषोमरुद्भिःसहमोदते ॥ ३१ ॥ एतावदुक्त्वाप्रययौनारदोऽमोघदर्शनः ॥ तेऽपिचान्वगमन्मार्गं भ्रातॄणामेवमारिष ॥ ३२ ॥ ॥ ॥ ॥ ॥

इडस्पतिंवाचांमंत्राणांपतिंविष्णुमाराधयामासुः ॥ २७ ॥ विशुद्धसत्त्वाश्रयायपरमहंसायनमोधीमहि ॥ २८ ॥ प्रतिसर्गेधीर्येषांतान् वाचःकू टानिअदृष्ट्वांऽतंभुवइत्यादीनिपूर्वोक्तानिप्राह ॥ २९ ॥ हेदाक्षायणाःसंशृणुतेत्यादिपुनरन्यदपिप्राह निगममुपदेशम् अन्विच्छत अवलोक यत ॥ ३० ॥ प्रायणंप्रकृष्टमयनम् पुण्यमेवबंधुर्यस्य मरुद्भिर्भ्रातृवत्सलैर्देवैः ॥ ३१ ॥ अमोघंदर्शनंयस्य हेमारिषआर्य ॥ ३२ ॥

सध्रीचीनंसमीचीनं प्रतीचीनंप्रत्यग्वृत्तिलभ्यम् अनुपथंअनुगुणंपंथानम् पश्चिमायामिनिर्गितारात्रयइव ॥ ३३ ॥ ३४ ॥ पुत्राणांपारम
हंस्यनिष्ठामुपश्रुत्यदक्षोपिप्रायशोविरक्तःस्यादितितदनुग्रहार्थंदेवर्षिस्तत्पार्श्वंगतस्तदातमुपलभ्यदक्षआह ॥ ३५ ॥ साधोरिवलिंगंवेषो
यस्यतेनत्वयानोऽस्मदीयानामर्भकाणामसाधुअकारिकृतं तदेवाह साधूनांस्वधर्मेप्रवृत्तानांभिक्षोर्योमार्गःसप्रदर्शितः ॥ ३६ ॥ ननुसंन्या
सिनोमार्गःसाधुरेवमोक्षहेतुत्वात् सत्यं ऋणत्रयापाकरणंविनातुमहानर्थएवेत्याह ऋणैरिति जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायते
ब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यः एषवाअनृणोयःपुत्रीयज्वाब्रह्मचारीतिश्रुतेः ऋणैरमुक्तानां नमीमांसितानिविचारितानि

**सध्रीचीनंप्रतीचीनंपरस्यानुपथंगताः ॥ नाद्यापितेनिवर्तंतेपश्चिमायामिनीरिव ॥ ३३ ॥ एतस्मिन्कालउ
त्पातान्बहून्पश्यन्प्रजापतिः ॥ पूर्ववन्नारदकृतंपुत्रनाशमुपाशृणोत् ॥ ३४ ॥ चुक्रोधनारदायासौपुत्रशोक
विमूर्छितः ॥ देवर्षिमुपलभ्याहरोषाद्विस्फुरिताधरः ॥ ३५ ॥ दक्षउवाच अहोअसाधोसाधूनांसाधुलिंगेनन
स्त्वया ॥ असाध्वकार्यर्भकाणांभिक्षोर्मार्गःप्रदर्शितः ॥ ३६ ॥ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणां ॥ वि
घातःश्रेयसःपापलोकयोरुभयोःकृतः ॥ ३७ ॥ एवंत्वंनिरनुक्रोशोबालानांमतिभिद्धरेः ॥ पार्षदमध्येचरासि
यशोहानिरपत्रपः ॥ ३८ ॥ ननुभागवतानित्यंभूतानुग्रहकातराः ॥ ऋतेत्वांसौहृदघ्नंवैवैरंकरमवैरिणां ॥ ३९ ॥**

कर्मांणियैः तेषांतावदृणविमोकोनास्ति तदुत्तरकालभावित्वाच्चपुत्रोत्पादनयज्ञानुष्ठानयोरभावेनपितृदेवर्षिऋणाद्विमुक्तिश्चनास्ति अतः
हेपाप विषयभोगत्यागादिहलोकेश्रेयसोविघातःकृतः मोक्षानधिकारित्वाच्च परलोकेपिश्रेयसोविघातःकृतइत्यर्थः तथाचमनुः ऋणा
नित्रीण्यपाकृत्यमनोमोक्षेनिवेशयेत् ॥ अनपाकृत्यमोक्षंतुसेवमानोव्रजत्यधइति ॥ ३७ ॥ बालानांमतिंपुत्रादिविषयांभिनत्तीतितथा ए
वंनिरनुक्रोशोनिर्घृणः हरेर्यशोनाशकःसंस्तत्पार्षदानांमध्येकथंचरसि ॥ ३८ ॥ निर्लज्जत्वमेवाह नन्विति त्वामृतेभागवताःसर्वेभूतानुग्र
हपरवशास्त्वंतुभूतविप्रियंकुर्वन्कथंनलज्जसइतिभावः ॥ ३९ ॥ ॥ ॥ ॥

ननुवैराग्यादुपशमउपशमाच्चभूतस्नेहपाशच्छेदनंभवति नचविरक्तस्यऋणत्रयापाकरणमावश्यकं यदहरेवविरजेत्तदहरेवप्रव्रजेत् यदिवेत
रथाब्रह्मचर्यादेवप्रव्रजेदित्यादिश्रुतेः अतोवैराग्योपदेशेनतेषांमयाऽनुग्रहएवकृतइतिचेत्तत्राह नेति यद्यपित्वमेवंमन्यसेतथापिमृषाकेव
लिनाज्ञानं विनाऽवधूतवेषेणत्वयाइत्थंमतिचालनेकृतेऽपिपुंसांविरागोनैवस्यात् नचविरागंविनोपशमः नचतेनविनास्नेहपाशनिकृंतनमि
त्यर्थः ॥ ४० ॥ इत्थंविरागोनस्यादित्यत्रहेतुमाह नानुभूयअननुभूयविषयाणांतीक्ष्णतांदुःखहेतुत्वंनजानाति तस्माद्विषयानुभवेनतीक्ष्ण
त्वज्ञानात् ॥ ४१ ॥ अतस्त्वयाऽस्माकमप्रियमेवकृतंतथाऽपिवयंनकुर्मइत्याह यदिति कर्मसंधानांकर्ममर्यादानाम् कर्तुमंधानामितिपाठे

नेत्थंपुंसांविरागःस्यात्त्वयाकेवलिनामृषा ॥ मन्यसेयद्युपशमंस्नेहपाशनिकृंतनम् ॥४०॥नानुभूयनजानाति
पुमान्विषयतीक्ष्णताम् ॥ निर्विंद्येतस्वयंतस्मान्नतथाभिन्नधीःपरैः ॥४१॥ यन्नस्त्वंकर्मसंधानांसाधूनांगृहमे
धिनाम् ॥ कृतवानसिदुर्मर्षंविप्रियंतवमर्षितम् ॥४२॥ तंतुकृंतनयन्नस्त्वमभद्रमचरःपुनः ॥ तस्माल्लोकेषुतेमूढ
नभवेद्भ्रमतःपदं ॥४३॥ श्रीशुकउवाच प्रतिजग्राहतद्बाढंनारदःसाधुसंमतः ॥ एतावान्साधुवादोहितितिक्षेतेश्वरःस्वयं ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेदक्षनारदशापोनामपंचमोऽध्यायः ॥ ५ ॥
श्रीशुकउवाच ततःप्राचेतसोऽसिक्न्यामनुनीतःस्वयंभुवा ॥ षष्टिंसंजनयामासदुहितॄःपितृवत्सलाः ॥१॥
दशधर्मायकायेंदोर्द्विषट्त्रिणवदत्तवान् ॥ भूतांगिरःकृशाश्वेभ्योद्वेद्वेतार्क्ष्यायचापराः ॥ २ ॥

विप्रियंकर्तुमजानतामित्यर्थः दुःसहंयत्त्वंकृतवानासितन्मार्षितंसोढम् ॥ ४२ ॥ तथाऽपितवाभद्रंभविष्यत्येवेत्याह तंतुकृंतनसंतानच्छेदक
यद्यस्मात् अभद्रंपुत्राणांस्थानभ्रंशमचरस्तत्तस्मात्तवलोकेषुभ्रमतःपदंस्थानंनभवेदितिमृदुच्छलेनशापः ॥ ४३ ॥ बाढंतथेतिस्वीकृतवान्
ईश्वरोऽपिप्रतिशप्तुंसमर्थोऽपितितिक्षेतसहेतेतियत् एतावानेव ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेटीकायांपंचमोध्यायः ॥ ५ ॥
षष्ठेदक्षेणसृष्टायांकन्याषष्ट्यांप्रकीर्तिताः ॥ पृथग्वंशायतोजातोविश्वरूपोदितेःसुतात् ॥ १ ॥ नारदात्पुत्राणांनाशमाशंकमानोदुहितॄर्ज
नयामास ॥ १ ॥ कायकश्यपाय द्विषट्द्विगुणाःषट्द्वादशयासुताः त्रयोदशेत्यर्थः इंदोःसोमाय त्रिणवसप्तविंशतिम् तार्क्ष्यायनामांतरं
प्राप्तायकश्यपायैव अपराअवशिष्टाश्चतस्रः ॥ २ ॥ ॥ ॥ ॥ ॥

सापत्यानामपत्यसहितानाम् मेमत्तःशृणु प्रसूतिप्रसवैःपुत्रपौत्रादिभिः ॥ ३ ॥ ४ ॥ ततोदेवऋषभात् ॥ ५ ॥ यतःकीकटात्भूवोदुर्गा
णिदुर्गाभिमानिनोदेवाः जामेयःजाम्याःपुत्रःस्वर्गः ततःस्वर्गात्नंदिःपुत्रोऽभवादिति ॥ ६ ॥ तत्सुतः साध्यानांसुतः ॥ ७ ॥ ८ ॥



नामधेयान्यमूषांत्वंसापत्यानांचमेशृणु ॥ यासांप्रसूतिप्रसवैर्लोकाआपूरितास्त्रयः ॥ ३ ॥ भानुर्लंबाककु
ब्जामिर्विश्वासाध्यामरुत्वती ॥ वसुर्मुहूर्तासंकल्पाधर्मपत्न्यःसुताञ्छृणु ॥ ४ ॥ भानोस्तुदेवऋषभइंद्रसे
नस्ततोनृप ॥ विद्योतआसील्लंबायास्ततश्चस्तनयित्नवः ॥ ५ ॥ ककुभःसंकटस्तस्यकीकटस्तनयोयतः॥
भुवोदुर्गाणिजामेयःस्वर्गोनंदिस्ततोऽभवत् ॥ ६ ॥ विश्वेदेवास्तुविश्वायाअप्रजांस्तान्प्रचक्षते॥ साध्यो
गणस्तुसाध्यायाअर्थसिद्धिस्तुतत्सुतः ॥ ७ ॥ मरुत्वांश्चजयंतश्चमरुत्वत्यांबभूवतुः ॥ जयंतोवासुदेवांश
उपेंद्रइतियंविदुः ॥ ८ ॥ मौहूर्तिकादेवगणामुहूर्तायाश्चजज्ञिरे ॥ येवैफलंप्रयच्छंतिभूतानांस्वस्वकालजं
॥ ९ ॥ संकल्पायाश्चसंकल्पःकामःसंकल्पजःस्मृतः ॥ वसवोष्टौवसोःपुत्रास्तेषांनामानिमेशृणु ॥ १०॥
द्रोणःप्राणोध्रुवोर्कोऽग्निर्दोषोवसुर्विभावसुः ॥ द्रोणस्याभिमतेःपत्न्याहर्षशोकभयादयः ॥ ११ ॥ प्राण
स्योर्जस्वतीभार्यासहआयुःपुरोजवः ॥ ध्रुवस्यभार्याधरणिरसूतविविधाःपुरः ॥ १२ ॥ अर्कस्यवासनाभा
र्यापुत्रास्तर्षादयःस्मृताः ॥ अग्नेर्भार्यावसोर्धारापुत्राद्रविणकादयः ॥ १३ ॥ स्कंदश्चकृत्तिकापुत्रोयेवि
शाखादयस्ततः ॥ दोषस्यशर्वरीपुत्रःशिशुमारोहरेःकला ॥ १४ ॥ वसोरांगिरसीपुत्रोविश्वकर्माकृती
पतिः ॥ ततोमनुश्चाक्षुषोभूद्विश्वेसाध्यामनोःसुताः ॥ १५ ॥ ॥ ॥

॥ ९ ॥ वसोर्वंशस्यभूयस्त्वादंतेनिर्देशः मेमत्तः ॥ १० ॥ अभिमतिर्नामपत्नीतस्याहर्षादयःपुत्राः ॥ ११ ॥ सहश्चआयुश्चपुरोजवश्चपु
त्राः पुरःपुराणि ॥ १२ ॥ १३ स्कंदश्चकृत्तिकासुतोऽग्नेःपुत्रः षाण्मातुरइतिअग्निभूरितिचप्रसिद्धेः ततःस्कंदात् ॥ १४ ॥ आकृतीपतिः
शिल्पाचार्यः ततोविश्वकर्मणःचाक्षुषोमनुरासीत् ॥ १५ ॥ ॥ ॥ ॥

विभावसोः उषानामभार्या अथआतपात्पंचयामोदिवसोजातः अतएवरात्रिस्त्रियामा प्रदोषप्रत्यूषयोर्दिवसस्यावयवत्वात् ॥ १६ ॥ भूतस्यद्वेभार्येतयोर्वंशमाह सरूपेति ॥ १७ ॥ महानित्येवमेकादशरूपस्यरुद्रस्यपार्षदाःप्रेतादयः अन्येअन्यस्यांजाताः ॥ १८ ॥ अंगिरसःस्वधासतीचेतिद्वेभार्येतयोर्वंशमाह प्रजापतेरिति स्वधानामपत्नीपितॄन्पुत्रत्वेऽकरोत् अथसतीचअथर्वांगिरसंनामवेदम् ॥ १९ ॥ कृशाश्वस्यअर्चिर्धिषणेतिद्वेभार्येतयोर्वंशमाह कृशाश्वइति ॥ २० ॥ २१ ॥ सुपर्णाविनता अनूरुमरुणम् ॥ २२ ॥ रोहिण्यामेवप्रेमा

विभावसोरसूतोषाव्युष्टंरोचिषमातपम् ॥ पंचयामोऽथभूतानियेनजाग्रतिकर्मसु ॥१६॥ सरूपासूतभूतस्य भार्यारुद्रांश्चकोटिशः॥ रैवतोऽजोभवोभीमोवामउग्रोवृषाकपिः ॥१७॥ अजैकपादहिर्बुध्न्योबहुरूपोमहानिति ॥ रुद्रस्यपार्षदाश्चान्येघोराभूतविनायकाः ॥ १८॥ प्रजापतेरंगिरसःस्वधापत्नीपितॄनथ ॥ अथर्वांगिरसंवेदंपुत्रत्वेचाकरोत्सती ॥१९ ॥ कृशाश्वोऽर्चिषिभार्यायांधूम्रकेशमजीजनत् ॥ धिषणायांवेदशिरादेवलंवयुनंमनुम् ॥२०॥ तार्क्ष्यस्यविनताकद्रूःपतंगीयामिनीइति ॥ पतंग्यसूतपतगान्यामिनीशलभानथ ॥ ॥२१॥सुपर्णाऽसूतगरुडंसाक्षाद्यज्ञेशवाहनम्॥सूर्यसूतमनूरुंचकद्रूर्नागाननेकशः ॥२२॥कृत्तिकादीनिनक्षत्राणींदोःपत्न्यस्तुभारत॥दक्षशापात्सोऽनपत्यस्तासुयक्ष्मग्रहार्दितः ॥ पुनःप्रसाद्यतंसोमःकलालेभेक्षयेदिताः ॥ २३ ॥ शृणुनामानिलोकानांमातॄणांशंकराणिच ॥ अथकश्यपपत्नीनांयत्प्रसूतमिदंजगत् ॥२४॥ अदितिर्दितिर्दनुःकाष्ठाअरिष्टासुरसाइला ॥ मुनिःक्रोधवशाताम्रासुरभिःसरमातिमिः ॥ २५ ॥ तिमेर्यादोगणाआसन्श्वापदाःसरमासुताः ॥ सुरभेर्महिषागावोयेचान्येद्विशफान्नृप ॥ २६ ॥

तिशयेनान्यासामुपेक्षणात्कुपितस्यदक्षस्यशापाद्यक्ष्मग्रहार्दितःक्षयरोगपीडितःसंस्तास्वनपत्योऽभूत् तंदक्षंप्रसाद्यकेवलंकलाएवलेभेन त्वपत्यानि कथंभूताः क्षयेकृष्णपक्षेदिताःखंडिताःसतीः पाठांतरेक्षयेसतिपुनरेधितास्तेनैववर्धिताःसतीः ॥ २३ ॥ २४ ॥ २५ ॥ अल्पत्वेनसुगमत्वाद्यथायथंव्युत्क्रमेणतासांवंशानाह तिमेरित्यादिना ॥ २६ ॥ ॥ ॥

॥ २७ ॥ सौरसाः सुरसायाः पुत्राः ॥ २८ ॥ प्राधानिकान् मुख्यानष्टादशशृणु ॥ २९ ॥ ३० ॥ ३१ ॥ वैश्वानरोदनोः पुत्रस्तस्यसुताः ॥ ३२ ॥ कः प्रजापतिः कश्यपउपयेमे दानवीपरिणयनेहेतुः ब्रह्मणाचोदितइति ॥ ३३ ॥ तयोः षष्टिसहस्राणिनिवातकवचाः पुत्राजा



ताम्रायाः श्येनगृध्राद्यामुनेरप्सरसांगणाः ॥ दंदशूकादयः सर्पाराजन् क्रोधवशात्मजाः ॥२७॥ इलायाभूरुहाः सर्वेयातुधानाश्चसौरसाः॥अरिष्टायाश्चगंधर्वाः काष्ठायाद्विशफेतराः ॥२८॥ सुतादनोरेकषष्टिस्तेषांप्राधानिकान् शृणु ॥ द्विमूर्धाशंबरोऽरिष्टोहयग्रीवोविभावसुः ॥२९॥ अयोमुखः शंकुशिराः स्वर्भानुः कपिलोऽरुणः ॥ पुलोमावृषपर्वाचएकचक्रोऽनुतापनः ॥ ३० ॥ धूमकेशोविरूपाक्षोविप्रचित्तिश्चदुर्जयः ॥ स्वर्भानोः सुप्रभांकन्यामुवाहनमुचिः किल ॥ वृषपर्वणस्तुशर्मिष्ठांययातिर्नाहुषोबली ॥ ३१ ॥ वैश्वानरसुतायाश्चचतस्रश्चारुदर्शनाः॥उपदानवीहयशिरापुलोमाकालकातथा ॥३२ ॥ उपदानवींहिरण्याक्षः क्रतुर्हयशिरांनृप॥पुलोमांकालकांचद्वेवैश्वानरसुतेतुकः ॥ उपयेमेऽथभगवान्कश्यपोब्रह्मचोदितः ॥३३ ॥ पौलोमाः कालकेयाश्चदानवायुद्धशालिनः ॥ तयोः षष्टिसहस्राणियज्ञघ्नांस्तेपितुः पिता ॥ जघानस्वर्गतोराजन्नेकइंद्रप्रियंकरः ॥ ३४ ॥ विप्रचित्तिः सिंहिकायांशतंचैकमजीजनत् ॥ राहुज्येष्ठंकेतुशतंग्रहत्वंयउपागतः ॥३५॥ अथातः श्रूयतांवंशोयोऽदितेरनुपूर्वशः ॥ यत्रनारायणोदेवः स्वांशेनावतरद्विभुः ॥ ३६ ॥ विवस्वानर्यमापूषात्वष्टाऽथसविताभगः ॥ धाताविधातावरुणोमित्रः शक्रउरुक्रमः ॥३७॥ विवस्वतः श्राद्धदेवंसंज्ञासूयतवैमनुम् ॥ मिथुनंचमहाभागायमंदेवंयमींतथा ॥ सावैभूत्वाऽथवडवानासत्यौसुषुवेभुवि ॥ ३८॥ छायाशनैश्चरंलेभेसावर्णिंचमनुंततः ॥ कन्यांचतपतींयावैवव्रेसंवरणंपतिम् ॥ ३९ ॥



तास्तांश्चस्वर्गतः संस्तेपितामहोऽर्जुनोजघान ॥ ३४ ॥ राहुर्ज्येष्ठोयस्य ॥ ३५ ॥ ३६ ॥ ३७ ॥ असूयतअजनयत् भुविवर्तमाना ॥ ३८ ॥ ततोविवस्वतः ॥ ३९ ॥ ॥ ॥ ॥

चर्षणयः कृताकृतज्ञानवंतः पश्यतिकर्मत्वेननिघंटावुक्तेः यत्रयेषुआत्मानुध्यानविशेषेणमानुषीजातिश्चोपकल्पिता तथाचश्रुतिः पुरुषत्वे चाविस्तरामात्माइति ॥ ४० ॥ कुपितंहरमितिशेषः विवृताद्विजःप्रकटितदंतःसन् ॥ ४१ ॥ ४२ ॥ यद्यदाविमतेनअवज्ञातेनबृहस्पति नापरित्यक्तास्तदाद्विषतांशत्रूणांभागिनेयमपिविश्वरूपंपौरोहित्येवृतवंतः ॥ ४३ ॥ इतिषष्ठेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ सप्तमोवि श्वरूपोऽसौपौरोहित्येवृतःसुरैः ॥ गुरुणासंपरित्यक्तैःपौरोहित्यमथाकरोत् ॥ १ ॥ कस्यहेतोःकस्माद्धेतोःआत्मनःशिष्याःसुराःपरित्य

अर्यम्णोमातृकापत्नीतयोश्चर्षणयःसुताः ॥ यत्रवैमानुषीजातिर्ब्रह्मणाचोपकल्पिता ॥ ४० ॥ पूषाऽनप त्यःपिष्टादोभग्नदंतोऽभवत्पुरा ॥ योऽसौदक्षायकुपितंजहासविवृतद्विजः ॥ ४१ ॥ त्वष्टुर्दैत्यानुजाभार्यार चनानामकन्यका ॥ संनिवेशस्तयोर्जज्ञेविश्वरूपश्चवीर्यवान् ॥ ४२ ॥ तंवव्रिरेसुरगणादौहित्रंद्विषतामपि ॥ विमतेनपरित्यक्तागुरुणांगिरसेनयत् ॥ ४३ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेषष्ठोऽध्यायः ॥ ६ ॥

राजोवाच कस्यहेतोःपरित्यक्ताआचार्येणात्मनःसुराः ॥ एतदाचक्ष्वभगवन्शिष्याणामक्रमंगुरौ ॥ १ ॥

श्रीशुकउवाच इंद्रस्त्रिभुवनैश्वर्यमदोल्लंघितसत्पथः ॥ मरुद्भिर्वसुभीरुद्रैरादित्यैर्ऋभुभिर्नृप ॥ २ ॥ विश्वेदेवैश्चसाध्यैश्चनासत्याभ्यांपरिश्रितः ॥ सिद्धचारणगंधर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥ विद्याध राप्सरोभिश्चकिन्नरैःपतगोरगैः ॥ निषेव्यमाणोमघवान्स्तूयमानश्चभारत ॥ ४ ॥ उपगीयमानोललि तमास्थानाध्यासनाश्रितः ॥ पांडुरेणातपत्रेणचंद्रमंडलचारुणा ॥ ५ ॥ युक्तश्चान्यैःपारमेष्ठ्यैश्चामरव्यज नादिभिः ॥ विराजमानःपौलोम्यासहार्धासनयाभृशम् ॥ ६ ॥ ॥ ॥

क्ताः अक्रममपराधम् ॥ १ ॥ सइंद्रोयदासंप्राप्तंवाचस्पतिंनाभ्यनंदतनादृतवांस्तदासआंगिरसस्ततोनिर्गत्यतूष्णींस्वगृहमाययावित्यष्टा नामन्वयः अनादरेहेतुंमदंदर्शयितुंतंविशिनष्टि त्रिभुवनैश्वर्यमदेनोल्लंघितःसतांपंथायेनसः ॥ २ ॥ परिश्रितःपरिवृतः ॥ ३ ॥ ४ ॥ आस्था नंसभातस्मिन्नध्यासनंसिंहासनंतदास्थितः ॥ ५ ॥ पारमेष्ठ्यैर्महाराजचिह्नैःआसनस्यार्धेस्थितयापौलोम्यासहविराजमानःसन् ॥ ६ ॥

उत्थानादिनानाभ्यनंदत ॥ ७ ॥ नचोच्चचालआसनएवस्थितोऽपिकिंचिन्नचलितवान् ॥८॥ श्रीमदेनयाविक्रियातांविद्वान्जानन् ॥९॥ प्रतिबुध्यअनुस्मृत्य ॥ १० ॥ ममकृतंकर्मअहोअसाधुयद्यस्मात्दभ्रबुद्धिनाअल्पमतिनामयाकाल्कृतास्तिरस्कृतः ॥ ११ ॥ विबुधानांसात्विकानांदेवानामीश्वरोप्यहम् ॥ १२ ॥ ननुसिंहासनस्थोराजाऽभ्युत्थानंनकुर्यादितिवृद्धावदंति तत्राह यइतिद्वाभ्याम् धिषणमासनं

सयदापरमाचार्यंदेवानामात्मनश्चह ॥ नाभ्यनंदतसंप्राप्तंप्रत्युत्थानासनादिभिः ॥७॥ वाचस्पतिंमुनिवरंसुरासुरनमस्कृतम् ॥ नोच्चचालासनादिंद्रःपश्यन्नपिसभागतं ॥ ८ ॥ ततोनिर्गत्यसहसाकविरांगिरसःप्रभुः ॥ आययौस्वगृहंतूष्णींविद्वाञ्छ्रीमदविक्रियाम् ॥ ९ ॥ तर्ह्येवप्रतिबुध्येंद्रोगुरुहेलनमात्मनः ॥ गर्हयामाससदसिस्वयमात्मानमात्मना ॥ १० ॥ अहोबतममासाधुकृतंवैदभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेनगुरुःसदसिकात्कृतः ॥ ११ ॥ कोगृध्येत्पंडितोलक्ष्मींत्रिविष्टपपतेरपि ॥ ययाऽहमासुरंभावंनीतोद्यविबुधेश्वरः ॥ १२ ॥ येपारमेष्ठ्यंधिषणमधितिष्ठन्नकंचन ॥ प्रत्युत्तिष्ठेदितिब्रूयुर्धर्मंतेनपरंविदुः ॥ १३ ॥ तेषांकुपथदेष्टॄणांपततांतमसिह्यधः ॥ येश्रद्दध्युर्वचस्तेवैमज्जंत्यश्मप्लवाइव ॥ १४ ॥ अथाहममराचार्यमगाधधिषणंद्विजम् ॥ प्रसादयिष्येनिशठःशीर्ष्णातच्चरणंस्पृशन् ॥ १५ ॥ एवंचिंतयतस्तस्यमघोनोभगवान्गृहात् ॥ बृहस्पतिर्गतोऽदृष्टांगतिमध्यात्ममायया ॥ १६ ॥ गुरोर्नाधिगतःसंज्ञांपरीक्षन्भगवान्स्वराट् ॥ ध्यायन्धियासुरैर्युक्तःशर्मनालभतात्मनः ॥ १७ ॥ तच्छ्रुत्वैवासुराःसर्वेआश्रित्यौशनसंमतं ॥ देवान्प्रत्युद्यमंचक्रुर्दुर्मदाआततायिनः ॥ ॥ १८ ॥ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुबाहवः ॥ ब्रह्माणंशरणंजग्मुःसहेंद्रानतकंधराः ॥ १९ ॥

॥ १३ ॥ कुपथंदिशंतिउपदिशंतीतिकुपथदेष्टारस्तेषांवचः अश्ममयःप्लवोयेषांतेयथामज्जंतंप्लवमनुमज्जंतितद्वत् ॥ १४ ॥ अगाधागंभीराधिषणायस्यतम् निशठःशाठ्यहीनःसन् ॥ १५ ॥ अधिकयाआत्ममायया ॥ १६ ॥ गुरोःसंज्ञांज्ञानोपायंपरीक्षमाणोऽपिनाधिगतःअप्राप्तःसन् ॥ १७ ॥ आततायिनःउद्यतास्त्राः ॥ १८ ॥ निर्भिन्नान्यंगानिउत्तमांगानिशिरांसिउरवोबाहवश्चयेषाम् ॥ १९ ॥

॥ २० ॥ वोयुष्माकंकृतंकरणंमहदभद्रं तदाह ब्रह्मिष्ठमिति नाभ्यनंदतनाभिनंदितवंतः ॥ २१ ॥ परेभ्यःशत्रुभ्योवःपराभवइतियत् अयंत
स्यअनयस्यअन्यायस्यसंबंधीफलरूपआसीत् उक्तंच ब्राह्मणंकुलसंपन्नंभक्तंविष्णोर्महात्मनः ॥ आयांतंवीक्ष्यनोत्तिष्ठेत्सदुःखैःपरिभूयतइ
ति स्वयमेववैरिणोहंतारोयेषांतेभ्यः ॥ २२ ॥ गुरुतिरस्कारसत्काराववापचयोपचयकारणमित्यसुरदृष्टांतेनाह मघवन्निति द्विषतःशत्रून् का
व्यंभार्गवंगुरुमेवासेव्योपचितान् उपचितत्वमेवाह आददीरन्गृण्हीयुः ॥ २३ ॥ अभेद्योमंत्रोयेषाम् अनुशिक्षितार्थाःशिष्याः यतः विप्रा

तांस्तथाऽभ्यर्दितान्वीक्ष्यभगवानात्मभूरजः ॥ कृपयापरयादेवउवाचपरिसांत्वयन् ॥ २० ॥ ब्रह्मोवाच
अहोबतसुरश्रेष्ठाह्यभद्रंवःकृतंमहत् ॥ ब्रह्मिष्ठंब्राह्मणंदांतमैश्वर्यान्नाभ्यनंदत ॥ २१ ॥ तस्यायमनयस्यासी
त्परेभ्योवःपराभवः ॥ प्रक्षीणेभ्यःस्ववैरिभ्यःसमृद्धानांचयत्सुराः ॥ २२ ॥ मघवन्द्विषतःपश्यप्रक्षीणान्गु
र्वतिक्रमात् ॥ संप्रत्युपचितान्भूयःकाव्यमाराध्यभक्तितः ॥ आददीरन्निलयनंममापिभृगुदेवताः ॥ २३ ॥ त्रि
विष्टपंकिंगणयंत्यभेद्यमंत्राभृगूणामनुशिक्षितार्थाः ॥ नविप्रगोविंदगवीश्वराणांभवंत्यभद्राणिनरेश्वराणां
॥ २४ ॥ तद्विश्वरूपंभजताशुविप्रंतपस्विनंत्वाष्ट्रमथात्मवंतं ॥ सभाजितोऽर्थान्सविधास्यतेवोयदिक्षमिष्य
ध्वमुतास्यकर्म ॥ २५ ॥ श्रीशुकउवाच तएवमुदिताराजन्ब्रह्मणाविगतज्वराः ॥ ऋषिंत्वाष्ट्रमुपव्रज्य
परिष्वज्येदमब्रुवन् ॥ २६ ॥ देवाऊचुः वयंतेऽतिथयःप्राप्ताआश्रमंभद्रमस्तुते ॥ कामःसंपाद्यतांतात
पितृणांसमयोचितः ॥ २७ ॥ पुत्राणांहिपरोधर्मःपितृशुश्रूषणंसतां ॥ अपिपुत्रवतांब्रह्मन्किमुतब्रह्मचारि
णां ॥ २८ ॥ आचार्योब्रह्मणोमूर्तिःपितामूर्तिःप्रजापतेः ॥ भ्रातामरुत्पतेर्मूर्तिर्माताऽसाक्षात्क्षितेस्तनुः ॥ २९ ॥
दयायाभगिनीमूर्तिर्धर्मस्यात्मातिथिःस्वयं ॥ अग्नेरभ्यागतोमूर्तिःसर्वभूतानिचात्मनः ॥ ३० ॥

गोविंदोगावश्चेश्वराःअनुग्राहकायेषांतेषामेवअभद्राणिनभवंतिअन्येषांतुभवंति ॥ २४ ॥ तत्तस्मात् अथअनंतरमेवभजत अस्यकर्मअसुरप
क्षपातम् ॥ २५ ॥ उदिताउक्ताः ॥ २६ ॥ २७ ॥ २८ ॥ अतिथीनांपितॄणांचप्रशंसार्थमाहुः आचार्यउपनीयवेदाध्यापकः ब्रह्मणोवेदस्यमूर्तिः ॥
॥ २९ ॥ धर्मस्यात्मामूर्तिरतिथिःस्वयंसाक्षात् आत्मनःश्रीविष्णोः यद्वा आत्मनःस्वस्य सर्वभूतेष्वात्मदृष्टिःकर्तव्येत्यर्थः ॥ ३० ॥

परेभ्यः पराभवएवार्तिस्तां ॥ ३१ ॥ संदेशमाहुः वृणीमहइति ॥ ३२ ॥ ननूपाध्यायत्वेकनिष्ठस्यममाभिवंदनंकरिष्यथतच्चगर्हितंतत्रा
हुःनेति अर्थेषुप्रयोजनानिमित्तंयाविष्ठानामाभिवादनंनानिंदंति किंच छंदोभ्योमंत्रेभ्योऽन्यत्रवयोज्यैष्ठ्यस्यकारणंनतुमंत्रेषु अतोऽस्मभ्यंमंत्र
दातृत्वेनत्वमेवज्येष्ठोभाविष्यासि यद्वा छंदोभ्योऽन्यत्रवेदान्विहायवयएवज्यैष्ठ्यस्यकारणंनभवतिकिंतुवेदाएवमुख्यंकारणं तत्साम्येतुवयः
वेदज्ञत्वाच्चत्वमेवज्येष्ठइत्यर्थः ॥ ३३ ॥ ३४ ॥ निंदितमपीदंयुष्मद्याज्ञाभंगभयेनकरिष्यामीत्याह सार्धेन विगर्हितंपौरोहित्यंधर्मशीलैःअ
धर्महेतुत्वात् किंच ब्रह्मवर्चउपव्ययंपूर्वसिद्धस्यब्रह्मवर्चसोव्ययकरं प्रत्याख्यातुंचमादृशोनार्हतीत्याह कथंन्विति तेषांशिष्यःशिक्षणार्हः

तस्मात्पितॄणामार्तानामार्तिंपरपराभवं ॥ तपसापनयंस्तातसंदेशंकर्तुमर्हसि ॥ ३१ ॥ वृणीमहेत्वोपाध्यायं ब्रह्मिष्ठंब्राह्मणंगुरुम् ॥ यथांऽजसाविजेष्यामःसपत्नांस्तवतेजसा ॥ ३२ ॥ नगर्हयंतिह्यर्थेषुयविष्ठांघ्र्यभिवादनं ॥ छंदोभ्योऽन्यत्रनब्रह्मन्वयोज्यैष्ठ्यस्यकारणं ॥ ३३ ॥ ऋषिरुवाच अभ्यर्थितःसुरगणैःपौरोहित्येमहातपाः ॥ सविश्वरूपस्तानाहप्रसन्नःश्लक्ष्णयागिरा ॥ ३४ ॥ विश्वरूपउवाच विगर्हितंधर्मशीलैर्ब्रह्मवर्चउपव्ययं ॥ कथंनुमद्विधोनाथालोकेशैरभियाचितं ॥ प्रत्याख्यास्यतितच्छिष्यःसएवस्वार्थउच्यते ॥ ३५ ॥ अकिंचनानांहिधनंशिलोंछनंतेनेहनिर्वर्तितसाधुसत्क्रियः ॥ कथंविगर्ह्यंनुकरोम्यधीश्वराःपौरोधसंहृष्यतियेनदुर्मतिः ॥ ३६ ॥ तथापिनप्रतिब्रूयांगुरुभिःप्रार्थितंकियत् ॥ भवतांप्रार्थितंसर्वंप्राणैरर्थैश्चसाधये ॥ ३७ ॥ श्रीशुकउवाच तेभ्यएवंप्रतिश्रुत्यविश्वरूपोमहातपाः ॥ पौरोहित्यंवृतश्चक्रेपरमेणसमाधिना ॥ ३८ ॥

सएवप्रत्याख्यानाभावएवहिशिष्यस्यस्वार्थउच्यते ॥ ३५ ॥ ननुपौरोहित्येनधनलाभाद्धर्मःसिध्येत् अन्यथानिर्धनस्यकुतोधर्मःअतएव
तेनलोकोहृष्यतितत्राह आकिंचनानांशिलोंछनंहिधनं क्षेत्रेस्वाम्युपेक्षितकणिशोपादानंशिलं हट्टादौपातितव्रीह्यादेरुपादानमुंछनं इह
गृहाश्रमे तेनैवनिर्वर्तितासाधूनांसत्क्रियायेन ॥ ३६ ॥ कियदेतत्प्रार्थितमल्पमेव अभ्याधिकमपिकरिष्यामीत्याह भवतामिति ॥ ३७ ॥
समाधिनापरमोद्यमेन ॥ ३८ ॥ ॥ ॥ ॥ ॥

वैष्णव्याश्रीनारायणकवचात्मिकया ॥ ३९ ॥ असुरचमूर्दैत्यसेनाः ॥ ४० ॥ इतिषष्ठस्कंधेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ अ
ष्टमेविश्वरूपस्तुवर्मनारायणात्मकम् ॥ इंद्रायप्राहयेनेंद्रोगुप्तोदैत्यानथाजयत् ॥ १ ॥ त्रिलोक्याःसंबंधिनींश्रियम् ॥ १ ॥ २ ॥ ३ ॥
मंत्राभ्यामष्टाक्षरद्वादशाक्षराभ्याम् कृतःस्वांगेषुकरयोश्चन्यासोयेन नारायणमयंवर्मसंनह्येत्बध्नीयात् ॥ ४ ॥ तत्राष्टाक्षरेणपादाद्यष्टांगेषु
न्यासमाह पादयोरितिसार्धेन प्रणवसंपुटितमोंकाराद्येकैकमक्षरंविन्यसेत् विपर्ययंयथाभवत्येवंशिरआदिपादांतंवाविन्यसेत् उत्पत्ति

सुरद्विषांश्रियंगुप्तामौशनस्यापिविद्यया ॥ आच्छिद्यादान्महेंद्रायवैष्णव्याविद्ययाविभुः ॥ ३९॥ ययागुप्तः
सहस्राक्षोजिग्येऽसुरचमूर्विभुः ॥ तांप्राहसमहेंद्रायविश्वरूपउदारधीः ॥ ४० ॥ इतिश्रीभागवतेमहापुरा
णेषष्ठस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ राजोवाच ययागुप्तःसहस्राक्षःसवाहान्रिपुसैनिकान् ॥
क्रीडन्निवविनिर्जित्यत्रिलोक्याबुभुजेश्रियम् ॥ १ ॥ भगवंस्तन्ममाख्याहिवर्मनारायणात्मकं ॥ यथातता
यिनःशत्रून्येनगुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुकउवाच वृतःपुरोहितस्त्वाष्ट्रोमहेंद्रायानुपृच्छते ॥ नारा
यणाख्यंवर्माहतदिहैकमनाःशृणु ॥ ३ ॥ विश्वरूपउवाच धौतांघ्रिपाणिराचम्यसपवित्रउदङ्मुखः ॥ कृत
स्वांगकरन्यासोमंत्राभ्यांवाग्यतःशुचिः ॥ नारायणमयंवर्मसन्नह्येद्भयआगते ॥ ४ ॥ पादयोर्जानुनोरूर्वोरु
दरेहृद्यथोरसि ॥ मुखेशिरस्यानुपूर्व्यादोंकारादीनिविन्यसेत् ॥ ओंनमोनारायणायेतिविपर्ययमथापिवा ॥
॥ ५ ॥ करन्यासंततःकुर्याद्द्वादशाक्षरविद्यया ॥ प्रणवादियकारांतमंगुल्यंगुष्ठपर्वसु ॥ ६ ॥ न्यसेद्धृदयमोंकारं
विकारमनुमूर्धनि ॥ षकारंतुभ्रुवोर्मध्येणकारंशिखयादिशेत् ॥ वेकारंनेत्रयोर्युंज्यान्नकारंसर्वसंधिषु ॥ ७ ॥
मकारमस्त्रमुद्दिश्यमंत्रमूर्तिर्भवेद्बुधः ॥ सविसर्गंफडंतंतत्सर्वदिक्षुविनिर्दिशेत् ॥ ॐविष्णवेनमइति ॥ ८ ॥

न्यासंसंहारन्यासंवाकुर्यादित्यर्थः ॥ ५ ॥ द्वादशाक्षरस्योद्धारः प्रणवादियकारांतमिति प्रणवसंपुटितमेकैकमक्षरंदक्षिणतर्जनीमारभ्यवा
मतर्जनीपर्यंतमंगुलिषु परिशिष्टमक्षरचतुष्टयमंगुष्ठयोराद्यंतपर्वसुन्यसेत् ॥ ६ ॥ मंत्रांतरन्यासमाह न्यसेदिति षकारणकारयोर्विश्ले
षेणषडक्षराणिहृदयादिषुन्यसेत् ॥ ७ ॥ मकारमस्त्रमुद्दिश्यध्यात्वातन्मकारास्त्रं मःअस्त्रायफडित्येवंदिग्बंधेविनिर्दिशेत् ॥ ८ ॥

ध्येयमीश्वररूपमात्मानंध्यायेत् षट्शक्तिभिःऐश्वर्यादिभिर्भगशब्दवाच्याभिः विद्याचतेजश्चतपश्चमूर्तिर्यस्यतम् इमंवक्ष्यमाणंश्रीमन्नाराय
णकवचाख्यम् ॥ ९ ॥ अष्टगुणःअणिमाद्यष्टैश्वर्ययुक्तः ॥ १० ॥ यादसांगणाएववरुणस्यपाशास्तस्मात् ॥ ११ ॥ अटवीआजिमुखंसं
ग्रामोपग्रहश्चआदिर्येषांतेषुसंकटस्थानेषु ॥ १२ ॥ असौप्रसिद्धोवराहोमामध्वनिरक्षतु यज्ञैरवयवरूपैःकल्प्यतेनिरूप्यतइतितथा उन्नी
ताउद्धृताधरायेनसः अद्रिकूटेषुगिरिशिखरेषु रामोजामदग्न्यः ॥ १३ ॥ उग्रधर्मादभिचारादिलक्षणात् हासाद्गर्वान्नरःअवतु दत्तोद

आत्मानंपरमंध्यायेद्ध्येयंषट्शक्तिभिर्युतम्॥विद्यातेजस्तपोमूर्तिमिमंमंत्रमुदाहरेत् ॥ ९ ॥ ॐहरिर्विदध्या
न्ममसर्वरक्षांन्यस्तांघ्रिपद्मःपतगेंद्रपृष्ठे॥दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥१०॥
जलेषुमांरक्षतुमत्स्यमूर्तिर्यादोगणेभ्योवरुणस्यपाशात् ॥ स्थलेषुमायाबटुवामनोऽव्यात्त्रिविक्रमःखेऽवतु
विश्वरूपः॥११॥दुर्गेष्वटव्याजिमुखादिषुप्रभुःपायान्नृसिंहोऽसुरयूथपारिः॥ विमुंचतोयस्यमहाट्टहासंदि
शोविनेदुर्न्यपतंश्चगर्भाः॥१२॥रक्षत्वसौमाऽध्वनियज्ञकल्पःस्वदंष्ट्रयोन्नीतधरोवराहः॥रामोऽद्रिकूटेष्वथ
विप्रवासेसलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान्॥१३॥मामुग्रधर्मादखिलात्प्रमादान्नारायणःपातुनरश्चहासा
त्॥दत्तस्त्वयोगादथयोगनाथःपायाद्गुणेशःकपिलःकर्मबंधात् ॥१४॥ सनत्कुमारोऽवतुकामदेवाद्धयशीर्षा
मांपथिदेवहेलनात्॥देवर्षिवर्यःपुरुषार्चनांतरात्कूर्मोहरिर्मांनिरयादशेषात्॥१५॥धन्वंतरिर्भगवान्पात्वप
थ्याद्द्वंद्वाद्भयादृषभोनिर्जितात्मा॥यज्ञश्चलोकादवताज्जनांताद्बलोगणात्क्रोधवशादहींद्रः॥१६॥द्वैपायनोभ
गवानप्रबोधाद्बुद्धस्तुपाखंडगणात्प्रमादात्॥कल्किःकलेःकालमलात्प्रपातुधर्मावनायोरुकृतावतारः१७

त्त्रेयः अयोगाद्योगभ्रंशात् ॥१४॥ पथियद्देवहेलनंनमस्कारमकृत्वागमनंतस्मात् पुरुषार्चनस्यांतरात्देवपूजाच्छिद्रात्द्वात्रिंशदपराध
रूपान्नारदः ॥ १५ ॥ लोकाज्जनापवादाद्यज्ञः जननिमित्तोयोंतउपघातस्तस्माद्बलभद्रःअवतात् कृतांतादितिपाठेकृतांतात्काला
द्रक्षतु क्रोधवशात्सर्पाणांगणात् अहींद्रःशेषः॥१६॥कालमलभूतात्कलेःकल्किः धर्मावनायधर्मरक्षणार्थमधिकंस्वीकृतावतारः॥१७॥

दिनस्यषट्सुभागेषुक्रमेणप्रातरादिसंज्ञेषुरात्रेश्चप्रदोषादिसंज्ञेषुरक्षाप्रार्थनम् मांकेशवइतित्रिभिः आसंगवंसंगवमाभिव्याप्य ॥ १८ ॥ त्रि
धामाब्रह्मादित्रिमूर्तिःश्रीमाधवः दोषेप्रदोषे अर्धरात्रेअर्धरात्रिपर्यंतेकालेनिशीथेचएकएवपद्मनाभोऽवतु ॥१९॥ अपररात्रेईशःश्रीवत्सधा
मावतु प्रत्यूषईशःश्रीजनार्दनः श्रीदामोदरःप्रभाते श्रीविश्वेश्वरोऽनुसंध्यम् ॥ २० ॥ युगांतानलवत्तिग्मातीक्ष्णानेमिर्यस्यतच्चक्रंभग
वताप्रयुक्तंसत् अरिसैन्यंदंदग्धिदंदग्धिअतिशयेनदहति तस्यायंस्वभावएवनतुतस्मात्प्रार्थनीयामित्यर्थः ॥ यद्वादंदग्धीतिलोण्मध्यमपुरुषः
अत्रत्वमेवंभूतंचक्रमितिस्वरूपमुक्त्वासंबोध्यप्रार्थ्यतेअतिशयेनदहेति कक्षंशुष्कतृणम् ॥ २१ ॥ अशनिवत्स्पर्शोयेषांतेविस्फुलिंगायस्या

मांकेशवोगदयाप्रातरव्याद्गोविंदआसंगवमात्तवेणुः॥ नारायणःप्राण्हउदात्तशक्तिर्मध्यंदिनेविष्णुररींद्रपा
णिः॥ १८ ॥ देवोऽपराण्हेमधुहोग्रधन्वासायंत्रिधामाऽवतुमाधवोमां ॥ दोषेहृषीकेशउतार्धरात्रेनिशीथए
कोऽवतुपद्मनाभः ॥१९॥ श्रीवत्सधामाऽपररात्रईशःप्रत्यूषईशोऽसिधरोजनार्दनः॥ दामोदरोऽव्यादनुसं
ध्यंप्रभातेविश्वेश्वरोभगवान्कालमूर्तिः ॥ २० ॥ चक्रंयुगांतानलतिग्मनेमिभ्रमत्समंताद्भगवत्प्रयुक्तं ॥
दंदग्धिदंदग्ध्यरिसैन्यमाशुकक्षंयथावातसखोहुताशः॥२१॥ गदेऽशनिस्पर्शनविस्फुलिंगेनिष्पिंढिनिष्पिं
ढ्यजितप्रियाऽसि॥कूश्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णयचूर्णयारीन् ॥२२॥ त्वंयातुधानप्रमथप्रेतमातृ
पिशाचविप्रग्रहघोरदृष्टीन्॥दरेंद्रविद्रावयकृष्णपूरितोभीमस्वनोऽरेर्हृदयानिकंपयन् ॥२३॥ त्वंतिग्मधारा
ऽसिवरारिसैन्यमीशप्रयुक्तोममछिंधिछिंधि ॥ चक्षूंषिचर्मन्शतचंद्रछादयद्विषामघोनांहरपापचक्षुषां ॥
॥२४॥यन्नोभयंग्रहेभ्योऽभूत्केतुभ्योनृभ्यएवच ॥ सरीसृपेभ्योदंष्ट्रिभ्यस्तथाअंहोभ्यएववा ॥२५॥

स्तस्याःसंबोधनंहेगदे त्वमजितस्यप्रियाऽसि अहमुच्यतस्यदासः अतःकूश्मांडादीन्निष्पिंढिनिष्पिंढि संचूर्णयसंचूर्णयअरींश्चचूर्णयचूर्ण
यसर्वत्रवीप्साअतिशीघ्रत्वाय ॥ २२ ॥ हेदरेंद्रपांचजन्य त्वंयातुधानादीन्विद्रावय विप्रग्रहाब्रह्मराक्षसाः येऽन्येचघोरदृष्टयस्तान् ॥ २३ ॥
तिग्माधारायस्यहेतिग्मधार असिवरखड्गश्रेष्ठ त्वंममारिसैन्यंछिंधिछिंधि शतंचंद्राकाराणिमंडलानियस्मिन्हेशतचंद्रचर्मन् अघोनामघ
वतांद्विषांचक्षूंषिछादयपापचक्षुषांचउग्रदृष्टीनांचक्षूंषिहर ॥ २४ ॥ यत्येभ्योभयम् अंहोभ्यःपापेभ्यः ॥ २५ ॥ ॥

श्रेयःप्रतीपकाइष्टव्याघातकाः ॥ २६ ॥ स्तोत्राणिबृहद्रथंतरादिसामानितैःस्तोभ्यतेसंस्तूयतइतिस्तोत्रस्तोभः छंदोमयोवेदमूर्तिः सुप र्णोऽसिगरुत्मानित्यादिश्रुतेः ॥ ऐकपद्यपाठे स्तोभाःगीतिपूरकाक्षराणि स्तोत्रस्तोमेतिपाठेसामाधारभूतऋक्स्तोमः ॥ २७ ॥ नामानि चरूपाणिचयानानिचवाहनानिआयुधानिचनोबुद्ध्यादीन्पांतु पार्षदभूषणाःपार्षदमुख्याश्चपांतु ॥ २८ ॥ सच्चअसच्चमूर्तामूर्तंयत्तत्सर्वंजगत् ॥ २९ ॥ ऐकात्म्यस्यानुभावोऽनुध्यानंयेषांतेषां विकल्पोभेदस्तद्रहितोऽपि ॥ ३० ॥ सत्यमानेनसत्यभूतेनप्रमाणेन ॥ ३१ ॥



सर्वाण्येतानिभगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयांतुसंक्षयंसद्योयेनःश्रेयःप्रतीपकाः ॥२६॥ गरुडोभगवान् स्तोत्रस्तोभश्छंदोमयःप्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्योविष्वक्सेनःस्वनामभिः ॥ २७ ॥ सर्वापद्भ्योहरेर्नामरूपयानायुधानिनः ॥ बुद्धींद्रियमनःप्राणान्पांतुपार्षदभूषणाः ॥२८॥ यथाहिभगवानेववस्तुतःसदसच्चयत् ॥ सत्येनानेननःसर्वेयांतुनाशमुपद्रवाः ॥२९॥ यथैकात्म्यानुभावानांविकल्परहितःस्वयम् ॥ भूषणायुधलिंगाख्याधत्तेशक्तीःस्वमायया ॥३०॥ तेनैवसत्यमानेनसर्वज्ञोभगवान्हरिः ॥ पातुसर्वैःस्वरूपैर्नःसदासर्वत्रसर्वगः ॥३१॥ विदिक्षुदिक्षूर्ध्वमधःसमंतादंतर्बहिर्भगवान्नारसिंहः ॥ प्रहापयँल्लोकभयंस्वनेनस्वतेजसाग्रस्तसमस्ततेजाः ॥३२॥ मघवन्निदमाख्यातंवर्मनारायणात्मकं ॥ विजेष्यस्यंजसायेनदंशितोऽसुरयूथपान् ॥ ३३ ॥ एतद्धारयमाणस्तुयंयंपश्यतिचक्षुषा ॥ पदावासंस्पृशेत्सद्यःसाध्वसात्सविमुच्यते ॥ ३४ ॥ नकुतश्चिद्भयंतस्यविद्यांधारयतोभवेत् ॥ राजदस्युग्रहादिभ्योव्याघ्रादिभ्यश्चकर्हिचित् ॥ ३५ ॥ इमांविद्यांपुराकश्चित्कौशिकोधारयन्द्विजः ॥ योगधारणयास्वांगंजहौसमरुधन्वनि ॥ ३६ ॥

पुनरपिश्रीनृसिंहएवप्रार्थ्यते विदिक्ष्विति पात्वित्यनुषंगः यद्वानारसिंहःप्रल्हादः स्वनेनश्रीनृसिंहनामगर्जनेन स्वतेजसास्वप्रभावेण ग्रस्तानिसमस्तानि दिग्गजविषशस्त्रजलवाय्वग्न्यादीनांतेजांसिप्रभावायेनसः ॥ ३२ ॥ दंशितःकवचितः ॥ ३३ ॥ सोऽपिसाध्वसाद्भयाद्विमुच्यते ॥ ३४ ॥ तस्यतुभयंनभवेदेव ॥ ३५ ॥ एतद्विद्याप्रभावमितिहासेनाह इमामितिसार्धैस्त्रिभिः मरुधन्वनिनिरुदकेदेशे अनेनविद्यायाः क्षेत्रतीर्थानपेक्षत्वंदर्शितम् ॥ ३६ ॥ ॥ ॥ ॥

यत्रद्विजस्यक्षयोदेहत्यागस्तस्योपरि ॥ ३७ ॥ सद्यस्तत्क्षणादेवगगनान्न्यपतत् पाठांतरे अंगनाभिःसह वालखिल्योपदेशात् तस्यास्थी
निप्रास्यप्रक्षिप्यविस्मितःसन्स्वंधामगंधर्वलोकंजगाम ॥ ३८ ॥ ३९ ॥ अधिगतःप्राप्तःसन् ॥ ४० ॥ इतिषष्ठेटीकायामष्टमोऽध्यायः
॥ ८ ॥ नवमेविश्वरूपेतुहतेशक्रेणकोपतः ॥ त्वष्ट्राचोत्पादितेवृत्रेभीतैर्देवैर्हरेस्तुतिः ॥ १ ॥ सोमस्यपीथंपानंयस्मिन् एवंसुरापीथम् अ
न्नमत्तीत्यन्नादम् अत्रविश्वरूपोवैत्वाष्ट्रःपुरोहितोदेवानामासीदित्यादिश्रुतिरनुसंधेया ॥ १ ॥ तस्यासुरपक्षपातमाह सवाइतिद्वाभ्याम् प्र

तस्योपरिविमानेनगंधर्वपतिरेकदा ॥ ययौचित्ररथःस्त्रीभिर्वृतोयत्रद्विजक्षयः ॥ ३७ ॥ गगनान्न्यपतत्सद्यः सविमानोह्यवाक्शिराः ॥ सवालखिल्यवचनादस्थीन्यादायविस्मितः ॥प्रास्यप्राचीसरस्वत्यांस्नात्वाधाम स्वमन्वगात् ॥ ३८ ॥ श्रीशुकउवाच यइदंशृणुयात्कालेयोधारयतिचादृतः ॥ तंनमस्यंतिभूतानिमुच्यते सर्वतोभयात् ॥ ३९ ॥ एतांविद्यामधिगतोविश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मींबुभुजेविनिर्जित्यमृधेऽसु रान् ॥ ४० ॥ इतिश्रीभा०म०ष०नारायणवर्मनामाष्टमोऽध्यायः ॥ ८ ॥ श्रीशुकउवाच तस्यासन्विश्व रूपस्यशिरांसित्रीणिभारत ॥ सोमपीथंसुरापीथमन्नादमितिशुश्रुम ॥१॥ सवैबर्हिषिदेवेभ्योभागंप्रत्यक्ष मुच्चकैः ॥ अवदद्यस्यपितरोदेवाःसप्रश्रयंनृप ॥२॥ सएवहिददौभागंपरोक्षमसुरान्प्रति ॥ यजमानोवहद्भा गंमातृस्नेहवशानुगः ॥३॥ तद्देवहेलनंतस्यधर्मालीकंसुरेश्वरः ॥ आलक्ष्यतरसाभीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥४॥ सोमपीथंतुयत्तस्यशिरआसीत्कपिंजलः ॥ कलविंकःसुरापीथमन्नादंयत्सतित्तिरिः ॥५॥ ब्रह्महत्यामंज लिनाजग्राहयदपीश्वरः ॥ संवत्सरांतेतदघंभूतानांसविशुद्धये ॥ भूम्यंबुद्रुमयोषिद्भ्यश्चतुर्धाव्यभजद्धरिः ॥६॥

त्यक्षंप्रकटंयथाभवतितथासविनयंदेवेभ्योहविर्भागंइंद्रायेदमग्नयइदमित्युच्चैरवदत् अत्रहेतुः यस्यपितरोदेवाःसः ॥ २ ॥ असुरेभ्यस्तुपरो
क्षंगुप्तंभागंददौ तदेवाह देवान्यजमानोऽसावसुरान्प्रतिभागमवहत् ॥ ३ ॥ ४ ॥ ५ ॥ तांवारयितुंसमर्थस्तथापिजग्राह संवत्सरंतथैव
स्थित्वासंवत्सरांतेभूताक्रोशभीतःसन्भूतानांमध्येविशुद्धयेलोकापवादपरिहारायसहारिरिंद्रोभूम्यादिभ्यस्तदघंविभज्यददौ ॥ ६ ॥

तुरीयंचतुर्थंभागं खातस्यगर्तस्यपूरः पूरणंतेनवरेण यदिखातपूरणंस्वतएवभविष्यतितर्हिग्रहीष्यामीत्येवंभाषाबंधेनजग्राहेत्यर्थः ईरणमूष रम् अतएवोषरेऽध्ययनादिनिषिध्यते ॥ ७ ॥ छेदेसतिपुनर्विरोहः प्ररोहोभवत्वितिवरेण निर्यासरूपेणब्रह्महत्यायादृष्टत्वान्निर्यासोनभ क्ष्यः ॥ ८ ॥ शश्वत्कामवरेणयावत्प्रसवंगर्भानुपघातेनैवसंभोगवरेण अतएवरजोदर्शनेतत्संगादिनकार्यम् ॥ ९ ॥ द्रव्यभूयोवरेणय स्मिन्द्रव्येक्षीरादावापोमिश्राभवेयुस्तस्यभूयस्त्वमाधिक्यंस्यादितिवरेण यद्वा स्वस्यैवनिर्झरोद्गमादिनाभूयस्त्ववरेण द्रवभूयइतिपाठेऽप्य यमेवार्थः यद्वा द्रवभूयस्त्वंसांसिद्धिकद्रवत्वंतेनवरेण अस्याविभागस्यविश्वरूपोवैत्वाष्ट्रइत्यस्यांश्रुतावुक्तेः तद्विभागफलमाह तत्पापंह रतिनिराकरोति कः क्षिपन् बुद्बुदादिजलाद्बहिः प्रक्षिपन्नित्यर्थः यद्वाक्षिपन् जलंपापंहरतिआहरतिगृह्णातीत्यर्थः अयंचतस्मादापोनपरि

भूमिस्तुरीयंजग्राहखातपूरवरेणवै ॥ ईरणंब्रह्महत्यायारूपंभूमौप्रदृश्यते ॥ ७ ॥ तुर्यंछेदविरोहेणवरेणजगृहु र्द्रुमाः ॥ तेषांनिर्यासरूपेणब्रह्महत्याप्रदृश्यते ॥ ८ ॥ शश्वत्कामवरेणांहस्तुरीयंजगृहुः स्त्रियः ॥ रजोरूपेणतास्वं होमासिमासिप्रदृश्यते ॥ ९ ॥ द्रव्यभूयोवरेणापस्तुरीयंजगृहुर्मलं ॥ तासुबुद्बुदफेनाभ्यांदृष्टंतद्धरतिक्षिपन् ॥ ॥ १० हतपुत्रस्ततस्त्वष्टाजुहावेंद्रायशत्रवे ॥ इंद्रशत्रोविवर्धस्वमाचिरंजहिविद्विषम् ॥ ११ ॥ अथान्वाहार्य पचनादुत्थितोघोरदर्शनः ॥ कृतांतइवलोकानांयुगांतसमयेयथा ॥ १२ ॥ विष्वग्विवर्धमानंतमिषुमात्रंदिने दिने ॥ दग्धशैलप्रतीकाशंसंध्याऽभ्रानीकवर्चसं ॥ १३ ॥ तप्तताम्रशिखाश्मश्रुंमध्याह्नार्कोग्रलोचनं ॥ १४ ॥

चक्ष्याइत्यादिश्रुत्यर्थउक्तः पाठांतरे हरिकिल्बिषमिंद्रपापम् ॥ १० ॥ इंद्रायइंद्रंहंतुम् शत्रवेशत्रूत्पत्त्यै तदाह इंद्रशत्रोविवर्धस्वेति अ त्रचेंद्रशत्रुपदस्याद्युदात्तत्वाद्बहुव्रीहौप्रकृत्यापूर्वपदमितिस्मृतेर्बहुव्रीहिलक्षणापत्त्याइंद्रएवतस्यशत्रुरभूत् तदुक्तंश्रुत्या यदब्रवीत्स्वाहेंद्रशत्रु र्वर्धस्वेतितस्मादस्येंद्रः शत्रुरभवादिति तथाचाशिक्षायां मंत्रोहीनः स्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह ॥ सवाग्वज्रोयजमानंहिनस्ति यथेंद्रशत्रुः स्वरतोपराधादिति ॥ ११ ॥ अन्वाहार्यपचनाद्दक्षिणाग्नेः ॥ १२ ॥ तंवीक्ष्यवित्रस्तालोकादशदिशोविदुद्रुवुरितिपंचमेना न्वयः कथंभूतं विष्वक्समंततः इषुविक्षेपमात्रंप्रतिदिनंवर्धमानं दग्धशैलप्रतीकाशंकृष्णवर्णम् संध्याऽभ्रानीकवद्वर्चोदीप्तिर्यस्यतम् ॥ ॥ १३ ॥ तप्तताम्रवच्छिखाः श्मश्रूणिचयस्य मध्याह्नार्कवदुग्रेलोचनेयस्य ॥ १४ ॥ ॥ ॥

रोदसीआरोप्येवेत्यर्थः ॥ १५ ॥ दरीवत्गंभीरेणवक्रेणमुहुर्मुहुर्जृंभमाणमित्यन्वयः कथंभूतेन नभस्तलंपिबता ऋक्षाणिजिह्वयालिहता
भुवनत्रयंग्रसता ॥ १६ ॥महताविस्तीर्णेन रौद्रादंष्ट्रायस्मिन् ॥ १७ ॥ वृत्रनामनिर्वक्ति येनावृताइति त्वाष्ट्रोमूर्तिर्यस्यतमसस्तेन तथा
चश्रुतिः सइमाँल्लोकानावृणोत्तद्वृत्रस्यवृत्रत्वमिति ॥ १८ ॥ अग्रसद्भक्षितवान् ॥ १९ ॥ ग्रस्तंतेजोयेषाम् प्रत्यश्चमंतर्यामिणं त्रिभुवनस्य
तेनव्याप्तत्वात्क्वापिगमनासंभवात्तत्रैवस्थितत्वातुष्टुवुरित्यर्थः महाभयेपरित्राणमन्यतोनभवेदिति ॥ हरिमेवप्रपद्यंतेसुराःशरणमातुराः ॥
॥ २० ॥ वाय्वादीनिपंचमहाभूतानितैर्निर्मिताख्रयोलोकास्तेषामधिपतयोब्रह्मादयश्चततोऽर्वाचीनावयंचसर्वेयस्मैअंतकायकालायउद्वि

देदीप्यमानेत्रिशिखेशूलआरोप्यरोदसी॥नृत्यंतमुन्नदंतंचचालयंतंपदामहीम् ॥१५॥ दरीगंभीरवक्रेणपि
बताचनभस्तलम् ॥ लिहताजिव्हयर्क्षाणिग्रसताभुवनत्रयम् ॥१६॥ महतारौद्रदंष्ट्रेणजृंभमाणंमुहुर्मुहुः ॥
वित्रस्तादुद्रुवुर्लोकावीक्ष्यसर्वेदिशोदश ॥ १७॥ येनावृताइमेलोकास्तमसात्वाष्ट्रमूर्तिना ॥ सवैवृत्रइतिप्रो
क्तःपापःपरमदारुणः ॥ १८॥ तंनिजघ्नुरभिद्रुत्यसगणाविबुधर्षभाः ॥ स्वैःस्वैर्दिव्यास्त्रशस्त्रौघैःसोऽग्रसत्ता
निकृत्स्नशः ॥१९॥ ततस्तेविस्मिताःसर्वेविषण्णाग्रस्ततेजसः ॥ प्रत्यञ्चमादिपुरुषमुपतस्थुःसमाहिताः ॥
॥२०॥ देवाऊचुः वाय्वंबराग्न्यप्क्षितयस्त्रिलोकाब्रह्मादयोयेवयमुद्विजंतः ॥ हरामयस्मैबलिमंतको
ऽसौबिभेतियस्मादरणंततोऽस्तुनः ॥२१॥ अविस्मितंतंपरिपूर्णकामंस्वेनैवलाभेनसमंप्रशांतं ॥ विनोप
सर्पत्यपरंहिबालिशःश्वलांगुलेनातितितर्तिसिंधुम् ॥ २२ ॥ ॥ ॥ ॥

जंतःसंतोबलिंहराम असावपियस्माद्बिभेतिततःपरमेश्वरादेवनोऽस्माकमरणंशरणंरक्षणमस्तु ॥ २१ ॥ ततएवेत्यवधारणेहेतुमाहुः अवि
स्मितंनिरहंकारं कुतूहलशून्यंवा कुतः प्रशांतंरागादिशून्यं तच्चकुतः स्वेनैवलाभेनपरिपूर्णकामं तच्चकुतः सममुपाधिपरिच्छेदशून्यं ए
वंभूतंपरमेश्वरंविनाअपरंयःशरणार्थमुपसर्पतिसबालिशोऽज्ञः यतोऽसौशुनोलांगूलेनपुच्छेनसमुद्रमतितितर्तिअतितर्तुमिच्छतीत्यर्थः य
थातेनसमुद्रतरणंनभवतितथानिरीश्वराश्रयणेनव्यसनार्णवतरणंनभवतीतिभावः ॥ २२ ॥ ॥ ॥

महाभयेसएवरक्षकइतिदृष्टमित्याहुः यस्येतिद्वाभ्यां यस्यमहाशृंगेजगतींपृथ्वीमेवस्वनावंबध्वामनुःसत्यव्रतोयथावत्दुर्गंसंकटंततारसए
वत्वारिचरोमत्स्यमूर्तिर्नोऽस्मानप्याश्रितान्सतोनूनंत्राताराक्षिष्यति ॥ २३ ॥ संयमांभसिप्रलयोदके उदीर्णैरुद्भतैर्वातैर्यऊर्मयस्तेषांरवैःकराले
भयंकरे अरविंदान्नाभिकमलात् पतितप्रायः एकःअसहायएव तस्माद्भयाद्येनततार सएवनःपारस्तारकोऽस्तु ॥ २४ ॥ किंचवयंभग
वतैवसृष्टाःपालिताश्चबहुशोऽतस्तमेवशरणंव्रजामेत्याहुः यएकइतित्रिभिः येनानुगृहीताःसंतोविश्वंसृजाम ननुयूयमेवस्त्रष्टारोनान्योयुष्मा
कमनुग्राहकोऽस्तितस्यादर्शनात्तत्राहुः अस्मत्तःपुरःपूर्वमेवांतर्यामितयासमीहमानस्यापियस्यालिंगंरूपंनपश्यामः तत्रहेतुः पृथक्पृथगी

**यस्योरुशृंगेजगतींस्वनावंमनुर्यथाबध्यततारदुर्गं ॥ सएवनस्त्वाष्ट्रभयाद्दुरंतात्त्राताश्रितान्वारिचरोऽपिनूनं ॥२३ ॥पुरास्वयंभूरपिसंयमांभस्युदीर्णवातोर्मिरवैःकराले ॥ एकोरविंदात्पतितस्ततारतस्माद्भयाद्येनसनोऽस्तुपारः ॥२४॥ यएकईशोनिजमाययानःससर्जयेनानुसृजामविश्वं ॥ वयंनयस्यापिपुरःसमीहतःपश्यामलिंगंपृथगीशमानिनः ॥ २५ ॥ योनःसपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषुनित्यएव ॥ कृतावतारस्तनुभिःस्वमाययाकृत्वात्मसात्पातियुगेयुगेच ॥ २६ ॥ तमेवदेवंवयमात्मदैवतंपरंप्रधानंपुरुषंविश्वमन्यं ॥ व्रजामसर्वेशरणंशरण्यंस्वानांसनोधास्यतिशंमहात्मा ॥ २७ ॥ श्रीशुकउवाच इतितेषांमहाराजसुराणामुपतिष्ठतां ॥ प्रतीच्यांदिश्यभूदाविःशंखचक्रगदाधरः ॥ २८ ॥ आत्मतुल्यैःषोडशभिर्विनाश्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्रशरदंबुरुहेक्षणं ॥ २९ ॥ ॥ ॥ ॥ ॥**

शाइत्यभिमानिनः ॥ २५ ॥ देवादिषुउपेंद्रपरशुराममत्स्यरामादितनुभिःकृतावतारःसन्आत्मसात्कृत्वापातिच ॥ २६ ॥ आत्मभूतदैवतं
कुतः विश्वात्मकम् तथाऽपिविकारंवारयंति अन्यं विश्वात्मत्वेहेतुः परंकारणं ननुप्रधानंपुरुषश्चविश्वस्यकारणंतत्राहुः प्रधानंपुरुषंच
तदात्मकोपिसएवेत्यर्थः सएवनःशंविधास्यति ॥ २७ ॥ प्रतीच्यांदिशिहृदिप्रथममाविरभूत् ॥ २८ ॥ पुनश्चतंपुरोदृष्ट्वाईक्षणाल्हादेन
विवशाअवनौदंडवत्पतिताःसंतःशनैरुत्थायतुष्टुवुरित्यन्वयः कथंभूतंश्रीवत्सकौस्तुभौविनास्वतुल्यैःषोडशभिःसुनंदादिभिःपरितःसेवित
म् उन्निद्रशरदंबुरुहवदीक्षणेयस्यतम् ॥ २९ ॥ ॥ ॥ ॥

॥ ३० ॥ यज्ञोवीर्यंस्वर्गादिफलजननायसामर्थ्यंयस्यतस्मैनमः वयसेउततत्फलपरिच्छेदककालात्मनेपि ताद्विघातकेषुदैत्येषुअस्तंप्रक्षिप्तंचक्रंयेन एवंभूतैःप्रभावैःसुपुरुहूतयेशोभनबहुनाम्ने ॥ ३१ ॥ ननुममगुणातीतंरूपंविहायगुणोपाधिकंयज्ञवीर्यत्वादिकिमितिवर्ण्यतेतत्राहुः यत्तत्रगुणत्रयस्येशितुर्नियंतुस्त्रिगुणात्मकानांतिसृणांगतीनां परमंपदंनिर्गुणस्वरूपंतद्विसर्गस्यार्वाचीनइदानींतनो हेधातर्वेदितुंनार्हति अतःकेवलंतस्मैनमोऽस्तु ॥ ३२ ॥ मिताक्षराणिपद्यानिनमीयंतेहरेर्गुणाः॥ इतिपद्यैरतुष्यंतःसद्योगद्येनतुष्टुवुः ॥ भक्त्युद्रेकेणबहुधा

दृष्ट्वातमवनौसर्वेईक्षणाल्हादविक्लवाः ॥ दंडवत्पतिताराजञ्शनैरुत्थायतुष्टुवुः ॥ ३० ॥ देवाऊचुः नमस्तेयज्ञवीर्यायवयसेउततेनमः ॥ नमस्तेह्यस्तचक्रायनमःसुपुरुहूतये ॥ ३१ ॥ यत्तेगतीनांतिसृणामीशितुःपरमंपदं ॥ नार्वाचीनोविसर्गस्यधातर्वेदितुमर्हति ॥ ३२ ॥ ओंनमस्तेऽस्तुभगवन्नारायणवासुदेवादिपुरुषमहापुरुषमहानुभावपरममंगलपरमकल्याणपरमकारुणिककेवलजगदाधारलोकैकनाथसर्वेश्वरलक्ष्मीनाथपरमहंसपरिव्राजकैः परमेणात्मयोगसमाधिनापरिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारेचित्तेऽपावृतआत्मलोकेस्वयमुपलब्धनिजसुखानुभवोभवान् ॥ ३३ ॥ १ ॥ दुरवबोधइवतवायंविहारयोगोयदशरणोऽशरीरइदमनवेक्षितास्मत्समवायआत्मनैवाविक्रियमाणेनसगुणमगुणःसृजसिपासिहरसि ॥ ३४ ॥ २ ॥ ॥ ॥ ॥ ॥

संबोधयंतोदुर्ज्ञेयत्वंप्रपंचयंति भगवन्नित्यादि परमंमंगलंशुद्धोधर्मोयस्मिन् आत्मयोगेनाष्टांगेनयःसमाधिश्चित्तैकाग्र्यंतेनपरिभावितःसुशीलितःपरिस्फुटोयः पारमहंस्यधर्मोभगवद्भजनंतेनउद्घाटितंतमोरूपंकपाटंयस्मिंस्तद्द्वारभूतेचित्तेअपावृतेकपाटेआत्मलोकेप्रत्यग्रूपेस्वयमेवोपलब्धमभिव्यक्तंयन्निजसुखंतदनुभवरूपोभवान् ॥ ३३ ॥ १ ॥ ननुकेवलानुभवरूपत्वेममसृष्ट्यादिकर्तृत्वंकथंतत्राहुः दुरवबोधइवतवायंविहारयोगः यद्यस्मात् अशरणोनिराश्रयः इदंविश्वं अनवेक्षितोऽस्माकंसमवायोमेलनंसाहाय्यंयेनसः ॥ ३४ ॥ २ ॥

दुर्ज्ञेयांतरमाहुः अथतत्रेति यथेहदेवदत्तोगृहादिनिर्मायतत्रस्वकृतशुभाशुभयोः फलमुपादत्तेएवंभवान्ब्रह्मस्वरूपोजीवरूपेणगुणविसर्गे पतितः सन्नुपाददाति यद्वा समंजसमप्रच्युतंदर्शनंचिच्छक्तिर्यस्यसभवानुदास्तेउदासीनः साक्षितयावर्ततइति ॥ ३५ ॥ ३ ॥ तदेवांविरोधेनदुर्ज्ञेयत्वमुक्तातत्परिहारेणज्ञानप्रकारमाहुः नहीति विरुध्यतइतिविरोधउभयंनविरुद्धमित्यर्थः नह्यन्यदृष्टांतेनत्वयिविकल्पोयुज्यते अतर्क्यैश्वर्यत्वादित्याहुःभगवतीति अपरिमितागुणगणायस्यतस्मिन्नीश्वरेस्वतंत्रेऽनवगाह्यमतर्क्यंमाहात्म्यंयस्यतस्मिन् विकल्प एवंवाएवंवेति वितर्कः किमत्रयुक्तमिति विचारइत्थमेवेति तत्रप्रमाणाभासास्तदनुग्राहकाः कुतर्काश्चार्वाचीनावस्तुस्वरूपासंस्पर्शिनोये

अथतत्रभवान्किंदेवदत्तवदिहगुणविसर्गपतितः पारतंत्र्येणस्वकृतकुशलाऽकुशलंफलमुपाददात्याहोस्विदात्मारामउपशमशीलः समंजसदर्शनउदास्तइतिहवावनविदामः ॥ ३५ ॥ ३ ॥ नहिविरोधउभयंभगवत्यपरिगणितगुणगणईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलांतःकरणाश्रयदुरवग्रहवादिनांविवादानवसरउपरतसमस्तमायामयेकेवलएवात्ममायामंतर्धायकोन्वर्थोदुर्घटइवभवतिस्वरूपद्वयाभावात् ॥ ३६ ॥ ४ ॥ समविषममतीनांमतमनुसरसियथारज्जुखंडःसर्पादिधियाम् ॥ ३७ ॥ ५ ॥　　॥　　॥　　॥

विकल्पादयस्तेयेषुशास्त्रेषुतैः कलिलंव्याकुलमंतःकरणमाश्रयोयस्यदुरवग्रहस्यतेनवादिनांविवादस्यानवसरेअगोचरे ननुश्रद्धामात्रमेतत् युक्तिरुच्यतांतत्राहुः उपरतोमायामयः संसारोयस्मिंस्तस्मिन् केवलेऽप्यात्ममायांमध्येनिधायकोन्वर्थः कर्तृत्वादिर्नसंभवतियदिवस्तुतः कर्तृत्वादिभवेत्तर्हिविरोधःस्यात् नतुतदस्तीत्याहुः स्वरूपद्वयाभावादिति ॥ ३६ ॥ ४ ॥ अनुग्रहनिग्रहादिकंतुतत्तन्मतिभेदेनत्वन्मायात्वयिस्फुरतीत्याहुः समाविषमाचमतिर्येषांतेषांमतमभिप्रायं सर्पादिविषयाधीर्येषां यथारज्जुखंडस्तथातथाभाति यद्वातमेवाविरोधंपुरुषमतिभेदेनदर्शयाति समविषमेति ॥ ३७ ॥ ५ ॥　　॥　　॥　　॥　　॥　　॥　　॥

तदेवंविरोधंपरिहृत्यनिश्चितंपरमार्थमाहुः सएवहिनानारूपेणप्रतीतः वस्तुस्वरूपःसद्रूपः सर्वेषांगुणानांविषयाणामाभासैःप्रकाशैरुप
लक्षितः ननुतैर्जीवएवोपलक्ष्यते न सर्वप्रत्यगात्मत्वात् सर्वजीवांतर्यामित्वाज्जडतादात्म्याध्यासेनजीवस्यापिजडप्रायत्वान्नतेनविनाप्र
काशइतिभावः पर्यवशेषितःनेतिनेतीत्यादिश्रुतिभिः ॥ ३८ ॥ ६ ॥ अतस्त्वद्भक्तिरेवपरमपुरुषार्थइत्याहुः अथहेतिपर्यावर्तइत्यंतेन य
स्मादेवंभूतस्त्वंपरमेश्वरः अथहवावअतएवहि हेमधुमथनपरमभागवताएतेत्वत्पादांभोजानुसेवांकथंमुहुर्मुहुर्विसृजंतीत्यन्वयः हियस्मा
त्स्वार्थेपुरुषार्थेकुशलाःनिपुणाः अतएवआत्मात्वमेवप्रियःसुहृच्चयेषांतेसाधवोरागादिशून्याः तत्रहेतुः तवमहिमैवामृतरससमुद्रस्तस्य

सएवहिपुनःसर्ववस्तुनिवस्तुस्वरूपःसर्वेश्वरःसकलजगत्कारणकारणभूतःसर्वप्रत्यगात्मत्वात्सर्वगुणाभा
सोपलक्षितएकएवपर्यवशेषितः ॥ ३८ ॥ ६ ॥ अथहवावतवमहिमामृतरससमुद्रविप्रुषासकृदवलीढयास्व
मनसिनिष्पंदमानानवरतसुखेनविस्मारितदृष्टश्रुतविषयसुखलेशाभासाःपरमभागवताएकांतिनोभगव
तिसर्वभूतप्रियसुहृदिसर्वात्मनिनितरांनिरंतरंनिर्वृतमनसःकथमुहवाएतेमधुमथनपुनःस्वार्थकुशलाःस्वात्म
प्रियसुहृदःसाधवस्त्वच्चरणांबुजानुसेवांविसृजंतिनयत्रपुनरयंसंसारपर्यावर्तः ॥ ३९ ॥ ७ ॥ त्रिभुवनात्मभ
वनत्रिविक्रमत्रिनयनत्रिलोकमनोहरानुभावतवैवविभूतयोदितिजदनुजादयश्चापितेषामनुपक्रमसमयोऽ
यमितिस्वात्ममाययासुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधंदंडंदंडधरदधर्थएवमेनमपिभगवन्ज
हिवाष्ट्रमुतयदिमन्यसे ॥ ४० ॥ ८ ॥ ॥ ॥ ॥

विप्रुषाबिंदुमात्रेणसकृदवलीढयाआस्वादितयास्वमनसिनिष्पंदमानमतिशयेनस्रवद्यन्निरंतरंसुखंतेनविस्मारिताद्दष्टश्रुताविषयाः सुखलेशा
भासायेषांते अतएवभगवतित्वयिनितरांनिरंतरंनिर्वृतंचमनोयेषांते यत्रयस्यामनुसेवायांसत्यां ॥ ३९ ॥ ७ ॥ प्रस्तुतंविज्ञापयंतित्रिभुव
नेत्यादिनायावत्समाप्ति त्रिभुवनमात्मास्वरूपंभवनंचयस्य त्रिभुवनस्यात्माभवनंचेतिवा त्रयोविक्रमायस्य त्रीन्लोकान्नयतीतितथा त्र
याणांलोकानांमनोहरोऽनुभावोयस्य एवंचतुर्धासंबोध्याहुः तेषामनुपक्रमसमयःउद्यमकालोनभवतीतिमत्वाहेदंडधरपूर्वंयथादंडंदधर्थधृ
तवानसिएवमेवत्वाष्ट्रमपिजहि यदिमन्यसेहंतुंयदीच्छसि ॥ ४० ॥ ८ ॥ ॥ ॥

प्रथमंतावत्त्वदीयानामस्माकमंतस्तापंशमयितुमर्हसि तावकानामित्यत्रहेतुः हेपितः हेपितामह तवचरणनलिनयुगलध्यानेनैवानुबद्धो हृदयेनिगडःशृंखलायेषां स्वलिंगविवरणेननिजमूर्तिप्रकटनेनस्वीकृतानां केन अनुकंपयाऽनुरंजितंसानुरागंचतदनुविशदंरुचिरंचास्मितंतत्सहितेनावलोकेन तथाऽनुकंपयैवविगलितोमधुरोमुखरसःप्रियवाक्सैवामृतकलातयाच ॥ ४१ ॥ ९ ॥ किंचअस्मदभिप्रायस्त्वयाज्ञायतएवकिमत्रास्माभिर्विज्ञापनीयमित्याहुः अथहेभगवन् तवास्माभिरिहकियान्वाऽर्थविशेषोविज्ञापनीयःस्यादित्यन्वयः यथाहिरण्यरेतसोऽग्नेस्तदंशभूतैर्विस्फुलिंगादिभिःप्रकाशोनक्रियतेतथातवास्माभिःकार्यार्थप्रकाशनंनकार्यमित्यर्थः अत्रहेतुगर्भाणिविशेषणानि अखि

अस्माकंतावकानांतवनतानांततततामहतवचरणनलिनयुगलध्यानानुबद्धहृदयनिगडानांस्वालिंगविवरणे नात्मसात्कृतानामनुकंपाऽनुरंजितविशदरुचिरशिशिरस्मितावलोकेनविगलितमधुरमुखरसामृतकलया चांतस्तापमनघार्हसिशमयितुं ॥ ४१ ॥ ९ ॥ अथहभगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयानिमित्तायमानदिव्यमायाविनोदस्यसकलजीवनिकायानामंतर्हृदयेषुबहिरपिचब्रह्मप्रत्यगात्मस्वरूपेणप्रधानरूपेणचयथादेशकालदेहावस्थानविशेषंतदुपादानोपलंभकतयाऽनुभवतःसर्वप्रत्ययसाक्षिणआकाशशरीरस्यसाक्षात्परब्रह्मणःपरमात्मनःकियानिहवाअर्थविशेषोविज्ञापनीयःस्याद्विस्फुलिंगादिभिरिवहिरण्यरेतसः ॥ ४२ ॥ १० ॥ अतएवस्वयंतदुपकल्पयास्माकंभगवतःपरमगुरोस्तवचरणशतपलाशच्छायांविविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानांवयंयत्कामेनोपसादिताः ॥ ४३ ॥ ११ ॥ ॥

लजगतामुत्पत्त्यादिषुनिमित्तायमानयादिव्यमायया विनोदोयस्य अतएवसर्वजीवनिकायानामंतर्हृदयेषुब्रह्मस्वरूपेणप्रत्यगात्मांतर्यामीतद्रूपेणचबहिरपिप्रधानरूपेणदेशकालदेहावस्थानविशेषाननुलंघ्यानुभवतः कथं तेषामुपादानतयाउपलंभकतयाचउपादनस्योपलंभकतयेतिवा अतएवसर्वेषांप्रत्ययानांबुद्ध्यादीनामपिसाक्षिणः साक्षित्वेहेतुः आकाशवत् अलिप्तंशरीरंस्वरूपंयस्यअलिप्तत्वेहेतुद्वयं साक्षात्परब्रह्मणोनिरुपाधेः परमात्मनःशुद्धसत्वमूर्तेश्च ॥ ४२ ॥ १० ॥ अतएवसर्वज्ञत्वादेववयंयत्कामेनयस्यकार्यस्यकामेनोपसादिताः प्रापितास्तदस्माकंकार्यंस्वयमेवोपकल्पयसंपादयेति चरणमेवशतपलाशंकमलंतस्यछायांविविधैर्वृजिनैर्यः संसारपरिश्रमस्तस्योपशमकरीमुपसृतानांप्राप्तानां ॥ ४३ ॥ ११ ॥ ॥ ॥ ॥ ॥

पूर्वंभक्तेरुत्कर्षोक्तेस्तत्कामशंकामाभूदितिस्वकामंकथयंति अथोऽनंतरमेव ॥४४॥ शीघ्रंतद्दधायपुनःप्रणमंति हंसायशुद्धायहरयेआर्तिहरायते
नमः शुद्धत्वेहेतवः दन्हनिलयायहृदयाकाशनिकेताय निरीक्षकायबुद्ध्यादिसाक्षिणे कृष्णायसदानंदरूपाय कृषिर्भूवाचकःशब्दोणश्चनि
र्वृतिवाचकः॥तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयतेइतिनिरुक्तेः आर्तिहरत्वेहेतवःमृष्टंरुचिकरंयशोयस्य निरुपक्रमायआदिशून्याय सद्भिःसं
गृह्यतइतितथातस्मै भवपांथःभवरूपेपथिवर्तमानः तस्यजनस्यनिजाश्रमाप्तौस्वशरणप्राप्तौसत्यांसंसारस्यांतेपरीष्टासर्वतःपूजिताउत्तमग
तिःफलंयस्तस्मै॥४५॥अभिनंदितःसंतोषितः॥४६॥मदीयमुपस्थानंस्तोत्रंतत्सहितयाविद्ययाज्ञानेन आत्मनऐश्वर्यमसंसारित्वंतस्यस्मृतिर्य

अथोईशजहित्वाष्टंग्रसंतंभुवनत्रयम् ॥ ग्रस्तानियेननःकृष्णतेजांस्यस्त्रायुधानिच ॥ ४४ ॥ हंसायदन्हनिल
यायनिरीक्षकायकृष्णायमृष्टयशसेनिरुपक्रमाय ॥ सत्संग्रहायभवपांथनिजाश्रमाप्तावंतेपरीष्टगतयेहरये
नमस्ते ॥ ४५ ॥ श्रीशुकउवाच अथैवमीडितोराजन्सादरंत्रिदशैर्हरिः ॥ स्वमुपस्थानमाकर्ण्यप्राह
तानभिनंदितः ॥ ४६ ॥ श्रीभगवानुवाच प्रीतोहंवःसुरश्रेष्ठामदुपस्थानविद्यया ॥ आत्मैश्वर्यस्मृ
तिःपुंसांभक्तिश्चैवययामयि ॥ ४७ ॥ किंदुरापंमयिप्रीतेतथाऽपिविबुधर्षभाः ॥ मय्येकांतमतिर्नान्यन्मत्तो
वांछतितत्त्ववित् ॥ ४८ ॥ नवेदकृपणःश्रेयआत्मनोगुणवस्तुदृक् ॥ तस्यतानिच्छतोयच्छेद्यदिसोऽपितथा
विधः ॥ ४९ ॥ स्वयंनिःश्रेयसंविद्वान्नवक्त्यज्ञायकर्महि ॥ नरातिरोगिणोऽपथ्यंवांछतोहिभिषक्तमः ॥ ५० ॥
मघवन्यातभद्रंवोदध्यंचमृषिसत्तमम् ॥ विद्याव्रततपःसारंगात्रंयाचतमाचिरम् ॥ ५१ ॥

या नहिविरोधउभयमित्यादिनाकर्तृत्वभोक्तृत्वादेर्मायिकत्वोक्तेः भक्तिश्चययाभवति ॥४७॥ अथहभगवन्नित्यादिनाभक्तेःसर्वोत्कर्षोक्तेर्भक्तम
भिनंदति किमिति॥४८॥यदुक्तंदेवैःस्वयंतदुपकल्पयास्माकमित्यादितत्संपादनंकृपालोर्ममानुचितमित्याशयेनाह नवेदेतिद्वाभ्याम् गुणेषु
तत्त्वदर्शीतान्विषयान् तथाविधोऽज्ञएव॥४९॥कर्मनवक्तिप्रवृत्तिमार्गंनवक्तिहि अपथ्यंयथानरातिनददाति भिषक्तमःसद्वैद्यः॥५०॥एवंतत्त्व
कथनेनानौचित्यंपरिहृत्यतदभिप्रायमनुसरन्नाह मघवन्निति विद्ययाव्रतैस्तपसाचसारंदृढंगात्रंशरीरं याचतयाचध्वम् ॥ ५१ ॥

तत्रतदीयंविद्याऽतिशयमाह सवाइतिद्वाभ्याम् एवंह्यत्रप्रसिद्धाकथा निशम्याथर्वणंदक्षंप्रवर्ग्यंब्रह्मविद्ययोः ॥ दध्यंचंसमुपागम्यतमूचतुरथाश्विनौ ॥ भगवन्देहिनौविद्यामितिश्रुत्वासचाब्रवीत् ॥ कर्मण्यवस्थितोऽद्याहंपश्चाद्वक्ष्यामिगच्छतं ॥ तयोर्निर्गतयोरेवशक्रआगत्यतंमुनिम्॥उवाचाभिषजोर्विद्यांमाऽवदीरश्विनोर्मुने ॥ यदिमद्वाक्यमुल्लंघ्यब्रवीषिसहसैवते ॥ शिरश्छिंद्यांनसंदेहइत्युक्त्वासययौहरिः ॥ इंद्रेगतेतथाऽभ्येत्यनासत्यावूचतुर्द्विजम् ॥ तन्मुखादिंद्रगदितंश्रुत्वातावूचतुःपुनः ॥ आवांतवशिरश्छित्वापूर्वमश्वस्यमस्तकम् ॥ संधास्यावस्ततोब्रूहितेनविद्यांचनौद्विज ॥ तस्मिन्निंद्रेणसंछिन्नेपुनःसंधायमस्तकम् ॥ निजंतेदक्षिणांदत्वागमिष्यावोयथातथम् ॥ एतच्छ्रुत्वातयोवाचदध्यङ्ःाथर्वणस्तयोःप्रवर्ग्यंब्रह्मविद्यांचसत्कृतोऽसत्यशंकितइति ततश्चायमर्थः ॥ दध्यङ्निष्कलंशुद्धंनिर्विकारंब्रह्मअधिगतःज्ञातवान् पाठांतरेतुनिष्कृतंनितरांकृतंभवतितंप्रवर्ग्यंचाधिगतःज्ञातवान् ततोऽश्विभ्यांप्रादादित्युत्तरस्यानुषंगः उपदिदेशेत्यर्थः कथंभूतं

सवाअधिगतोदध्यङ्ङश्विभ्यांब्रह्मनिष्कलम् ॥ यद्वाअश्वशिरोनामतयोरमरतांव्यधात् ॥ ५२ ॥ दध्यङ्ङाथर्वणस्त्वष्ट्रेवर्माभेद्यंमदात्मकम्॥विश्वरूपाययत्प्रादात्त्वष्टायत्त्वमधास्ततः ॥५३॥ युष्मभ्यंयाचितोऽश्विभ्यांधर्मज्ञोऽगानिदास्यति ॥ ततस्तैरायुधश्रेष्ठोविश्वकर्मविनिर्मितः ॥ ५४ ॥ येनवृत्रशिरोहर्तामत्तेजउपबृंहितः ॥ तस्मिन्विनिहतेयूयंतेजोऽस्त्रायुधसंपदः ॥ भूयःप्राप्स्यथभद्रंवोनहिंसंतिचमत्परान् ॥५५॥
इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेनवमोऽध्यायः ॥ ९ ॥ ॥ ॥

ब्रह्म यद्वैअश्वशिरसाप्रोक्तत्वादश्वशिरोनामप्रसिद्धम् तयोरमरतांजीवन्मुक्तत्वंव्यधात् तथाचश्रुतिः अश्वस्यशीर्ष्णाप्रयदीमुवाचेति॥५२॥ मदात्मकंवर्मश्रीनारायणकवचमधिगतइतिपूर्वस्यानुषंगः तत्रहेतुः यद्यस्मात्त्वष्ट्रेप्रादात्किंतत् यत् त्वष्टाविश्वरूपायपुत्रायप्रादात् कीदृशम् यत्त्वंततोविश्वरूपात् अधाःधृतवानसि तदेवंविद्ययासारंगात्रंयाचध्वमित्यर्थः॥५३॥ ननुप्रेष्ठंदेहंकथंदास्यतितत्राह युष्मभ्यमंगानिअर्थीनियाचितःसन्दास्यति यतोधर्मज्ञः विशेषतोऽश्विभ्यांशिष्यप्रीत्यादास्यति अर्थीनीत्यनेनहेयत्वंदर्शितं तैरस्थिभिर्विश्वकर्मणाविनिर्मितआयुधश्रेष्ठोवज्रोभविष्यतीतिशेषः ॥ ५४ ॥ येनभवान् वृत्रशिरोहर्ताहरिष्यति ममतेजसाउपबृंहितःसन् तेजश्चअस्त्राणिचसंपदश्चभूयःप्राप्स्यथमहाकायस्त्रिभुवनग्रासोसिएवास्मान्हन्यादितिशंकाकुलचित्तान्प्रत्याह मत्परांश्चकेऽपिनहिंसंतिअतोयुष्माकंभद्रमेवेति ॥ ॥ ५५ ॥ इतिषष्ठस्कंधेटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ ॥ ॥

दशमेकेशवादिष्टदध्यङ्ङस्थिजवज्रधृक् ॥ इंद्रोऽयुध्यतवृत्रेणसासुरेणसनिर्जरः ॥ १ ॥ १ ॥ मोदमानएवतन्मुखाद्धर्मंश्रोतुकामःप्रत्याचक्षा
णइवोवाच ॥ २ ॥ अपीतिद्वाभ्यां हेवृंदारकाः अपिकिंसंस्थायांमृत्यौयोऽभिद्रोहोदुःखंतंनजानीथ ॥ ३ ॥ आत्मादेहः वयंजानीमएवकिं
तुश्रीविष्णुरस्मन्मुखेनयाचतइतिचेत्तत्राह याचतेविष्णवेऽपिदातुंकउत्सहेत ॥ ४ ॥ पुण्यश्लोकैरीडयानिकर्माणियेषां ॥ ५ ॥ याचकोय
दिवेदतर्हिनयाचेत यदीश्वरो दानसमर्थश्चेत्तर्हिसोऽपिनेतिनाहअतोयथातवसंकटंस्वार्थपरानजानीमः एवंप्रत्याचक्षाणस्त्वमरमत्संकटं

श्रीशुकउवाच इंद्रमेवंसमादिश्यभगवान्विश्वभावनः ॥ पश्यतामनिमेषाणांतत्रैवांतर्दधेहारिः ॥ १ ॥ त
थाऽभियाचितोदेवैर्ऋषिराथर्वणोमहान् ॥ मोदमानउवाचेदंप्रहसन्निवभारत ॥ २ ॥ अपिवृंदारकायूयंन
जानीथशरीरिणां ॥ संस्थायांयस्त्वभिद्रोहोदुःसहश्चेतनापहः ॥ ३ ॥ जिजीविषूणांजीवानामात्माप्रेष्ठइहे
प्सितः ॥ कउत्सहेततंदातुंभिक्षमाणायविष्णवे ॥ ४ ॥ देवाऊचुः किंनुतद्दुस्त्यजंब्रह्मन्पुंसांभूतानुकंपिनां ॥
भवद्विधानांमहतांपुण्यश्लोकेड्यकर्मणां ॥ ५ ॥ ननुस्वार्थपरोलोकोनवेदपरसंकटं ॥ यदिवेदनयाचेतनेति
नाहयदीश्वरः ॥ ६ ॥ ऋषिरुवाच धर्मंवःश्रोतुकामेनयूयंमेप्रत्युदाहृताः ॥ एषवःप्रियमात्मानंत्यजंतंसं
त्यजाम्यहं ॥ ७ ॥ योऽध्रुवेणात्मनानाथानधर्मंनयशःपुमान् ॥ ईहेतभूतदययासशोच्यःस्थावरैरपि ॥ ८ ॥
एतावानव्ययोधर्मःपुण्यश्लोकैरुपासितः ॥ योभूतशोकहर्षाभ्यामात्माशोचतिहृष्यति ॥ ९ ॥ अहोदैन्यम
होकष्टंपारक्यैःक्षणभंगुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यःस्वज्ञातिविग्रहैः ॥ १० ॥ श्रीशुकउवाच एवंकृ
तव्यवसितोदध्यङ्ङाथर्वणस्तनुम् ॥ परेभगवतिब्रह्मण्यात्मानंसन्नयन्जहौ ॥ ११ ॥ ॥

नजानासीतिभावः ॥ ६ ॥ मेमयाप्रत्युदाहृताःप्रत्युक्ताः मांत्यजंतंत्यक्ष्यामितमात्मानंदेहं ॥ ७ ॥ अध्रुवेणात्मनादेहेन हेनाथाः ॥ ८ ॥ भू
तानांशोकेनशोचतिहर्षेणहृष्यातियआत्मास्वयंतस्ययोधर्मः एतावानेवाव्ययइत्यर्थः ॥ ९ ॥ पारक्यैः श्वसृगालादिभक्ष्यैः अस्वार्थैःआ
त्मोपयोगशून्यैः स्वंवित्तं ज्ञातयःपुत्रादयः विग्रहोदेहः तैर्नोपकुर्यादितियत् ॥ १० ॥ कृतंव्यवसितंनिश्चयोयेनआत्मानंक्षेत्रज्ञंसन्नयन्ने
कीकुर्वंस्तनुंजहौ ॥ ११ ॥ ॥ ॥ ॥ ॥

यताअक्षादयोयेन तत्त्वंपश्यतीतितथा ध्वस्तानिबंधनानियस्य ॥ १२ ॥ अथेंद्रःअशोभतेत्युत्तरेणान्वयः मुनेःशुक्तिभिरस्थिभिर्निर्मितम्
उत्सिक्तःऊर्जितः मुनेःशक्तिभिरितिवापाठः ॥ १३ ॥ १४ ॥ असुरानीकानांयूथपैः पर्यस्तंपरिवृतम् ॥ १५ ॥ रणःसंग्रामः प्रथमेचतु
र्युगेत्रेतायुगस्यमुखेआरंभे ॥ १६ ॥ १७ ॥ नामृष्यन्नासहंत ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ शतघ्नीचचतुर्हस्तालोहकंटक



यताक्षासुमनोबुद्धिस्तत्त्वदृक्ध्वस्तबंधनः ॥ आस्थितःपरमंयोगंनदेहंबुबुधेगतं ॥ १२ ॥अथेंद्रोवज्रमुद्यम्य
निर्मितंविश्वकर्मणा ॥ मुनेःशुक्तिभिरुत्सिक्तोभगवत्तेजसाऽन्वितः ॥ १३ ॥ वृतोदेवगणैःसर्वैर्गजेंद्रोपर्यशो
भत ॥ स्तूयमानोमुनिगणैस्त्रैलोक्यंहर्षयन्निव ॥ १४ ॥ वृत्रमभ्यद्रवच्छेत्तुमसुरानीकयूथपैः ॥ पर्यस्तमोज
साराजन्क्रुद्धोरुद्रइवांतकं ॥ १५ ॥ ततःसुराणामसुरैरणःपरमदारुणः ॥ त्रेतामुखेनर्मदायामभवत्प्रथमे
युगे ॥ १६ ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यांपितृवन्हिभिः ॥ मरुद्भिर्ऋभुभिःसाध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७ ॥
दृष्ट्वावज्रधरंशक्रंरोचमानंस्वमायया ॥ नामृष्यन्नसुराराजन्मृधेवृत्रपुरःसराः ॥ १८ ॥ नमुचिःशंबरोऽनर्वा
द्विमूर्धाऋषभोंबरः ॥ हयग्रीवःशंकुशिराविप्रचित्तिरयोमुखः ॥ १९ ॥ पुलोमावृषपर्वाचप्रहेतिर्हेतिरुत्कलः
दैतेयादानवायक्षारक्षांसिचसहस्रशः ॥ २० ॥ सुमालिमालिप्रमुखाःकार्तस्वरपरिच्छदाः ॥ प्रतिषिध्येंद्रसे
नाग्र्यंमृत्योरपिदुरासदं ॥ २१ ॥ अभ्यर्दयन्नसंभ्रांताःसिंहनादेनदुर्मदाः ॥ गदाभिःपरिघैर्बाणैःप्रासमु
द्गरतोमरैः ॥ २२ ॥ शूलैःपरश्वधैःखड्गैःशतघ्नीभिर्भुशुंडिभिः ॥ सर्वतोऽवाकिरञ्छस्त्रैरस्त्रैश्चविबुधर्षभान् ॥
॥ २३ ॥ नतेऽदृश्यंतसंछन्नाःशरजालैःसमंततः ॥ पुंखानुपुंखपतितैर्ज्योतींषीवनभोघनैः ॥ २४ ॥ नतेशस्त्रा
स्त्रवर्षौघाह्यासेदुःसुरसैनिकान् ॥ छिन्नाःसिद्धपथेदेवैर्लघुहस्तैःसहस्रधा ॥ २५ ॥ ॥



संचिता ॥ भुशुंडीसर्वतोलोहकंटकानुक्रमोन्नतेत्यभिधानं ॥ २३ ॥ पुंखोमूलदेशःएकस्यमूलदेशमनुतत्संलग्नोऽपरस्यपुंखोयथाभवतित
था नभस्थैर्घनैर्ज्योतींषीवेत्यनेनतेषांतदप्राप्तिःसूचिता ॥ २४ ॥ तामेवाह नतइति शस्त्राणामस्त्राणांचयानिवर्षाणितेषामोघाः नासेदुःन
प्रापुः सिद्धपथेआकाशे ॥ २५ ॥ ॥ ॥ ॥ ॥

क्षीणाअस्त्राणांचशस्त्राणांचओघायेषां गिरिशृंगैर्द्रुमैरुपलैश्च ॥ २६ ॥ तानिंद्रसैनिकान्शस्त्राणामस्त्राणांचपूगैःसमूहैरक्षतान्क्षतशून्या
न्स्वस्तिमतःसुखिनःद्रुमादिभिश्चअविक्षतान्निशम्यदृष्ट्वा वृत्रोनाथोयेषांते तत्रसुःभीताः ॥ २७ ॥ कृताःकृताःपुनःपुनःकृताःकृष्णोऽनु
कूलोयेषांतेषुदेवगणेषु रुशतीःरुशत्यःअकल्याण्योरूक्षाःपरुषावाचोयथामहत्सुक्षोभकर्त्र्योनभवंतितद्वत् ॥ २८ ॥ हतोयुद्धेदर्पोयेषांते
आत्तःपरैर्गृहीतःसारोधैर्यंयेषांतेअतिप्रसिद्धाअपितेदैत्याएव तेइत्यस्यापौनरुक्त्यं आजिमुखेयुद्धारंभे पतिंविसृज्यपलायनायमनोदधुः
यतोहरावभक्ताः ॥ २९ ॥ प्रधावतःपलायमानान्प्रेक्ष्य आदावेवतीव्रेणभयेनपलायितंभग्नंचतद्बलंसैन्यंतच्चप्रेक्ष्यएतद्वक्ष्यमाणंबभाषे ॥

अथक्षीणास्त्रशस्त्रौघागिरिशृंगद्रुमोपलैः ॥ अभ्यवर्षन्सुरबलंचिच्छिदुस्तांश्चपूर्ववत् ॥ २६ ॥ तानक्षतान्स्व
स्तिमतोनिशम्यशस्त्रास्त्रपूगैरथवृत्रनाथाः ॥ द्रुमैर्दृषद्भिर्विविधाद्रिशृंगैरविक्षतांस्तत्रसुरिंद्रसैनिकान् ॥ २७ ॥
सर्वेप्रयासाअभवन्विमोघाःकृताःकृतादेवगणेषुदैत्यैः ॥ कृष्णानुकूलेषुयथामहत्सुक्षुद्रैःप्रयुक्तारुशतीरूक्ष
वाचः ॥ २८ ॥ तेस्वप्रयासंवितथंनिरीक्ष्यहरावभक्ताहतयुद्धदर्पाः ॥ पलायनायाजिमुखेविसृज्यपतिंमनस्ते
दधुरात्तसाराः ॥ २९ ॥ वृत्रोऽसुरांस्ताननुगान्मनस्वीप्रधावतःप्रेक्ष्यबभाषएतत् ॥ पलायितंप्रेक्ष्यबलंचभग्नं
भयेनतीव्रेणविहस्यवीरः ॥ ३० ॥ कालोपपन्नांरुचिरांमनस्विनामुवाचवाचंपुरुषप्रवीरः ॥ हेविप्रचित्तेनमु
चेपुलोमन्मयानर्वन्शंबरमेशृणुध्वं ॥ ३१ ॥ जातस्यमृत्युर्ध्रुवएषसर्वतःप्रतिक्रियायस्यनचेहक्लृप्ता ॥ लोको
यशश्चाथततोयदिह्यमुंमृत्युंवरंकोनवृणीतयुक्तं ॥ ३२ ॥ द्वौसंमताविहमृत्यूदुरापौयद्ब्रह्मसंधारणयाजिता
सुः ॥ कलेवरंयोगरतोविजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३३ ॥ इ० भा० ष० दशमोध्यायः ॥ १० ॥

॥ ३० ॥ तदेवविशिनष्टि कालोपपन्नामवसरोचितां मनस्विनांरुचिरां हेमय हेअनर्वन् मेवाचंशृणुत ॥ ३१ ॥ ततोमृत्योरिहयशोलो
कः स्वर्गश्चयदिस्यात्अथतर्हि अमुंमृत्युं युक्तंसमीचीनंप्राप्तं ॥ ३२ ॥ ब्रह्मसंधारणयाकलेवरंजह्यादितियत्सएकोमृत्युः वीरशयेरणभू
मौअनिवृत्तःअपराङ्मुखःसन्जह्यादितियत्सएवैकः तौद्वाविहशास्त्रेसंमतौमृत्यू तथाचस्मृतिः द्वाविमौपुरुषौलोकेसूर्यमंडलभेदिनौ ॥ प
रिव्राड्योगयुक्तश्चरणेचाभिमुखोहतइति ॥ ३३ ॥ इतिटीकायांदशमोऽध्यायः ॥ १० ॥ ॥

एकादशेतुवृत्रस्ययुध्यमानस्यवज्रिणा ॥ भक्तिज्ञानबलोदर्काश्चित्रावाचोऽनुवर्णिताः ॥ १ ॥ शंसतःकथयतःपत्युर्वचः ॥ १ ॥ काला नुकूलैःकालानुवर्तिभिः काल्यमानांविद्राव्यमाणां ॥ २ ॥ अमर्षितःअसहमानस्तांस्त्रिदशान्निवार्यनिर्भर्त्स्यचेदंवक्ष्यमाणमुवाच ॥ ३ ॥ तदेवाह द्वाभ्यां मातुरुच्चरितैःपुरीषप्रायैः प्रथमांतपाठेदेवानांसंबोधनं पृष्ठतोहतैर्दैत्यैःकिंनाकिंचित् नयशोनापिधर्मः तदेवाहनहीं



श्रीशुकउवाच तएवंशंसतोधर्मंवचःपत्युरचेतसः ॥ नैवागृण्हन्भयत्रस्ताःपलायनपरान्नृप ॥ १ ॥ विशीर्यमाणांपृतनामासुरीमसुरर्षभः ॥ कालानुकूलैस्त्रिदशैःकाल्यमानामनाथवत् ॥ २ ॥ दृष्ट्वाऽतप्यत संक्रुद्धइंद्रशत्रुरमर्षितः ॥ तान्निवार्यौजसाराजन्निर्भर्त्स्येदमुवाचह ॥ ३ ॥ किंवउच्चरितैर्मातुर्धावद्भिःपृष्ठतोहतैः ॥ नहिभीतवधःश्लाघ्योनस्वर्ग्यःशूरमानिनां ॥ ४ ॥ यदिवःप्रधनेश्रद्धासारंवाक्षुल्लकाहृदि ॥ अग्रेतिष्ठतमात्रंमेनचेत्ग्राम्यसुखेस्पृहा ॥ ५ ॥ एवंसुरगणान्क्रुद्धोभीषयन्वपुषारिपून् ॥ व्यनदत्सुमहाप्राणोयेनलोकाविचेतसः ॥ ६ ॥ तेनदेवगणाःसर्वेवृत्रविस्फोटनेनवै ॥ निपेतुर्मूर्च्छिताभूमौयथैवाशनिनाहताः ॥ ७ ॥ ममर्दपद्भ्यांसुरसैन्यमातुरंनिमीलिताक्षंरणरंगदुर्मदः ॥ गांकंपयन्नुद्यतशूलओजसानालंवनंयूथपतिर्यथोन्मदः ॥ ८ ॥ विलोक्यतंवज्रधरोऽत्यमर्षितःस्वशत्रवेऽभिद्रवतेमहागदां ॥ चिक्षेपतामापततींसुदुःसहांजग्राहवामेनकरेणलीलया ॥ ९ ॥ सइंद्रशत्रुःकुपितोभृशंतयामहेंद्रवाहंगदयोग्रविक्रमः ॥ जघानकुंभस्थलउन्नदन्मृधेतत्कर्मसर्वेसमपूजयन्नृप ॥ १० ॥ ऐरावतोवृत्रगदाऽभिमृष्टोविघूर्णितोऽद्रिःकुलिशाहतोयथा ॥ अपासरद्भिन्नमुखःसहेंद्रोवमन्नसृक्सप्तधनुर्भृशार्तः ॥ ११ ॥ ॥



ति ॥ ४ ॥ प्रधनेसंग्रामे सारंधैर्यंहृदिचेत्तर्हि हेक्षुल्लकाःक्षुद्राः मात्रंक्षणमात्रमग्रेतिष्ठत नचेदिहलोकभोगेस्पृहाऽस्ति ॥ ५ ॥ सुरगणान् रिपून् सुमहान्प्राणोबलंयस्य येनविचेतसोबभूवुः ॥ ६ ॥ वृत्रस्यविस्फोटनेननादेन ॥ ७ ॥ उद्यतंशूलंयेन नालंवनंनलानांवनं उद्वृतोमदोयस्यसयूथपतिर्गजोयथामर्दयति ॥ ८ ॥ ९ ॥ १० ॥ सप्तधनुःप्रमाणंदेशम् ॥ ११ ॥

सन्नोऽत्रसन्नोवाहोयस्यतस्मैनप्रायुंक्त अमृतस्यंदीअमृतस्रावीयःस्वकरस्तेनाभिमर्शःस्पर्शस्तेनवीतव्यथोगतदुःखः क्षतोवाहोयस्येंद्रस्यस तथाभूतोऽवतस्थे ॥१२॥ सवृत्रः हेनृपेंद्र आहवकाम्ययायुद्धेच्छयाऽवस्थितं भ्रातृहणंभ्राताविश्वरूपस्तस्यहंतारं नृशंसंक्रूरंतदेवांहःपापं तस्यकर्मस्मरन् ॥ १३ ॥ योब्रह्महा ब्राह्मणंहतवान् विशेषतःस्वगुरुंममचभ्रातरं सभवानग्रतःसमवस्थितः एतद्दिष्ट्याभद्रंजातं दि ष्ट्येत्यव्ययं हेअसत्तम ममशूलेननिर्भिन्नंदृषत्तुल्यंहृतूहृदयंयस्यतेनत्वयानिमित्तभूतेन अद्यअचिरादेवभ्रातुरनृणोऽहंस्यांएतच्चदिष्ट्या

नसन्नवाहायविषण्णचेतसेप्रायुंक्तभूयःसगदांमहात्मा ॥ इंद्रोऽमृतस्यंदिकराभिमर्शवीतव्यथःक्षतवाहोऽ वतस्थे ॥ १२ ॥ सतंनृपेंद्राहवकाम्ययारिपुंवज्रायुधंभ्रातृहणंविलोक्य॥स्मरंश्चतत्कर्मनृशंसमंहःशोकेन मोहेनहसन्जगाद ॥ १३ ॥ वृत्रउवाच दिष्ट्याभवान्मेसमवस्थितोरिपुर्योब्रह्महागुरुहाभ्रातृहाच ॥ दिष्ट्याऽनृणोऽद्याहमसत्तमत्वयामच्छूलनिर्भिन्नदृषद्धृदाचिरात् ॥ १४ ॥ योनोऽग्रजस्यात्मविदोद्विजाते र्गुरोरपापस्यचदीक्षितस्य ॥ विश्रभ्यखड्गेनशिरांस्यवृश्चत्पशोरिवाऽकरुणःस्वर्गकामः ॥ १५ ॥ ह्रीश्री दयाकीर्तिभिरुज्झितंत्वांस्वकर्मणापुरुषादैश्चगर्ह्यम् ॥ कृच्छ्रेणमच्छूलविभिन्नदेहमस्पृष्टवन्हिंसमदंतिगृ ध्राः ॥ १६ ॥ अन्येऽनुयेत्वेहनृशंसमज्ञायेत्युद्यतास्त्राःप्रहरंतिमह्यम् ॥ तैर्भूतनाथान्सगणान्निशातत्रि शूलनिर्भिन्नगलैर्यजामि ॥ १७ ॥ अथोहरेमेकुलिशेनवीरहर्ताप्रमथ्यैवशिरोयदीह॥ तत्रानृणोभूतबलिं विधायमनस्विनांपादरजःप्रपत्स्ये ॥ १८ ॥ ॥ ॥ ॥ ॥

॥ १४ ॥ स्वर्गकामोयोभवान्अवृश्चत् स्वर्गकामोयाज्ञिकःपशोरिवेतिवा ॥ १५ ॥ तंत्वामस्पृष्टवन्हिमदग्धदेहंसमदंति वर्तमानसामी प्येवर्तमानवन्निर्देशः ॥ १६ ॥ अन्येऽपिअज्ञाइहत्वात्त्वांनृशंसमनुमह्यमुद्यतास्त्राःसंतोयदिप्रहरंतितैर्भूतनाथान्भैरवादीन्यक्ष्यामि कथं भूतैः निशातंतीक्ष्णीकृतंयन्ममात्रिशूलंतेननिर्भिन्नोगलोयेषांतैः ॥ १७ ॥ अथोअथवा हरेभोइंद्र यदिभवानेवममशिरोहर्ताहरिष्यति त त्रतथासतिअनृणोविमुक्तकर्मबंधः संस्तेभ्योबलिंदेहेनविधायमनस्विनांपादरजःप्रपत्स्येधीराणांपदंप्राप्स्यामि ॥ १८ ॥

जीवितादपिमृत्युरेवममाभिमतइत्याशयेनाह सुरेशेति नहिनोषिनहिक्षिपसि गदेवविफलोयास्यतीतिसंशयंमाकार्षीः कृपणादर्थःप्रयोजनंयस्याःसायाञ्चायथानिष्फलातथानस्यात् ॥ १९ ॥ अमोघत्वेहेतुंवदंस्तंप्रोत्साहयाति नन्विति तेजितस्तीक्ष्णीकृतः शत्रुंमांजहि विष्णुनायंत्रितःप्रेरितः ॥ २० ॥ हननेनममपीडास्यादित्यपिमासंशयिष्ठाइत्याह अहमिति संकर्षणोमत्पतिर्यथाहतथातदीयचरणारविंदे मनःसमाधायमुनेर्योगिनोगतिमहंयास्यामि तववज्रस्यरंहसालुलितश्छिन्नोग्राम्यपाशोविषयभोगलक्षणोयस्य अपविद्धलोकस्त्यक्तदेहः ॥ २१ ॥ तर्हिभगवान्संकर्षणःस्वभृत्यायमह्यमेवस्वर्गादिसंपदोदास्यतीत्यपिमासंशयिष्ठाइत्याह पुंसामिति स्वर्गेभूमौरसातलेचयाःसंपद

सुरेशकस्मान्नहिनोषिवज्रंपुरःस्थितेवैरिणिमय्यमोघं ॥ मासंशयिष्ठानगदेववज्रंस्यान्निष्फलंकृपणार्थेवयाञ्चा ॥ १९ ॥ नन्वेषवज्रस्तवशक्रतेजसाहरेर्दधीचेस्तपसाचतेजितः ॥ तेनैवशत्रुंजहिविष्णुयंत्रितोयतोहरिर्विजयःश्रीर्गुणास्ततः ॥२०॥ अहंसमाधायमनोयथाहसंकर्षणस्तच्चरणारविंदे ॥ त्वद्वज्ररंहोलुलितग्राम्यपाशोगतिंमुनेर्याम्यपविद्धलोकः ॥२१॥ पुंसांकिलैकांतधियांस्वकानांयाःसंपदोदिविभूमौरसायां ॥ नरातियद्द्वेषउद्वेगआधिर्मदःकलिर्व्यसनंसंप्रयासः ॥ २२ ॥ त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्तेपुरुषस्यशक्र ॥ ततोऽनुमेयोभगवत्प्रसादोयोदुर्लभोऽकिंचनगोचरोऽन्यैः ॥ २३ ॥ अहंहरेतवपादैकमूलदासानुदासोभवितास्मिभूयः ॥ मनःस्मरेतासुपतेर्गुणांस्तेगृणीतवाक्कर्मकरोतुकायः ॥ २४ ॥ ननाकपृष्ठंनचपारमेष्ठ्यंनसार्वभौमंनरसाऽधिपत्यं ॥ नयोगसिद्धीरपुनर्भवंवासमंजसत्वाविरहय्यकांक्षे ॥ २५ ॥

स्ताःकिलनिश्चितंनरातिनददाति तत्रहेतुः यत्याभ्योद्वेषादयोभवंति॥२२॥ तर्हिस्वभक्तस्यार्किविधत्तेतत्राह त्रैवर्गिकोधर्मार्थकामाविषयोयआयासस्तस्यविघातंविधत्ते ततआयासोपरमादनुमेयोनत्वैश्वर्यादिना अतःसम्यक्भगवत्प्रसादाभावात्तवसंपदोभविष्यंतीतिभावः ॥ २३ ॥ एवमिंद्रायस्वाभिप्रायंनिवेद्यभगवंतंप्रार्थयते अहमिति तवपादावेवएकंमूलमाश्रयोयेषां तेषांदासानामनुदासःभूयोभविताऽस्मिभविष्यामिभवेयं असुपतेःप्राणनाथस्यतवगुणान्मममनःस्मरतु वागपितानेवकीर्तयतु कायस्तवैवकर्मकरोतु॥२४॥ननुर्किदास्येनतुभ्यंमहाफलानिदास्यामितत्राह नाकपृष्ठंध्रुवपदंब्रह्मलोकादिकंच हेसमंजसनिखिलसौभाग्यनिधे त्वात्वांविरहय्यपृथक्कृत्य नकांक्षेनेच्छामि ॥ २५ ॥

तर्हिकिमिच्छसितदाह अजातपक्षाःखगाःवृकादिभिःपीडितायथामातरं यथाचदाम्नाबद्धाबालवत्साःस्तन्यं यथाचव्युषितंदूरदेशंगतंप्रि यंकामेनविषण्णाप्रिया तथामेमनस्तापत्रयपीडितंकर्मभिर्बद्धंचकामादिभिर्विषण्णंचत्वांदिदृक्षते द्रष्टुमिच्छतीत्यर्थः ॥ ६ ॥ उत्तम श्लोकस्यतत्रजनेषुभक्तेष्वेवसख्यंभूयात् त्वन्माययादेहादिष्वासक्तचित्तस्यभूयोऽपितेष्वासक्तिर्नभूयात् ॥ २७ ॥ इतिषष्ठस्कंधेटीकायां

अजातपक्षाइवमातरंखगाःस्तन्यंयथावत्सतराःक्षुधार्ताः॥प्रियंप्रियेवव्युषितंविषण्णामनोरविंदाक्षदिदृक्षतेत्वां ॥ २६ ॥ ममोत्तमश्लोकजनेषुसख्यंसंसारचक्रेभ्रमतःस्वकर्मभिः ॥ त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्यननाथभूयात् ॥ २७ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेएकादशोऽध्यायः ॥ ११ ॥ ऋषिरुवाच एवंजिहासुर्नृपदेहमाजौमृत्युंवरंविजयान्मन्यमानः ॥ शूलंप्रगृह्याभ्यपतत्सुरेंद्रंयथामहापुरुषंकैटभोऽप्सु ॥ १ ॥ ततोयुगांताग्निकठोरजिव्हमाविध्यशूलंतरसासुरेंद्रः॥क्षिप्त्वामहेंद्रायविनद्यवीरोहतोऽसिपापेतिरुषाजगाद ॥ २ ॥ खआपतत्तद्विचलद्ग्रहोल्कवन्निरीक्ष्यदुष्प्रेक्ष्यमजातविक्लवः ॥ वज्रेणवज्रीशतपर्वणाऽच्छिनद्भुजंचतस्योरगराजभोगं ॥३॥ छिन्नैकबाहुःपरिघेणवृत्रःसंरब्धआसाद्यगृहीतवज्रं॥हनौतताडेंद्रमथामरेभंवज्रंचहस्तान्न्यपतन्मघोनः ॥ ४॥ वृत्रस्यकर्मातिमहाद्भुतंतत्सुरासुराश्चारणसिद्धसंघाः ॥ अपूजयंस्तत्पुरुहूतसंकटंनिरीक्ष्यहाहेतिविचुक्रुशुर्भृशं ॥ ५ ॥ इंद्रोनवज्रंजगृहेविलज्जितश्च्युतंस्वहस्तादरिसन्निधौपुनः ॥ तमाहवृत्रोहरआत्तवज्रोजहिस्वशत्रुंनविषादकालः ॥ ६ ॥ ॥

मेकादशोऽध्यायः ॥ ११ ॥ ॥ द्वादशेऽतिविषण्णेनस्वयमुत्साहितेनतु ॥ महेंद्रेणमहायुद्धेवृत्रस्यवधईर्यते ॥ १ ॥ महापुरुषं श्रीविष्णुं अप्सुप्रलयोदके ॥ १ ॥ युगांताग्निवत्कठोराजिव्हाशिखायस्यतत् आविध्यभ्रामयित्वा ॥ २ ॥ तत्खेआपतत्आगच्छत् विचलत्परिभ्रमत्ग्रहश्चउल्काचग्रहोल्कंतद्वद्दुष्प्रेक्ष्यं शतंपर्वाणियस्यतेन उरगराजोवासुकिस्तस्यभोगोदेहस्तदाकारं ॥ ३ ॥ हनौकपोलप्रांते अमरेभमैरावतंच ॥ ४ ॥ ५ ॥ पुनश्चतमाहवृत्रः हेहरेइंद्र ॥ ६ ॥ ॥ ॥

सदाजयोनैवार्कितुकुत्रचिज्जयएकत्रकुत्रचिन्नैव यद्वाकुत्रचिदपियुयुत्सतांसदाजयोनैवार्कितुएकत्रवै कदाचिदेवेत्यर्थः परोदेहआत्माये
षांपराधीनात्मनामितिवा आद्यमनादिं सनातनंनित्यं ॥ ७ ॥ पराधीनतामेवाह लोकाइतिसप्तभिः यस्यवशेस्थिताःस्वयंविवशाः
संतःश्वसंतिचेष्टंते द्विजाःपक्षिणः शिचाजालेन कालःकलयतीतिभगवान् इहजयादौकारणं ॥ ८ ॥ ओजआदिरूपंकालंतंहे
तुमज्ञायअविज्ञायजडंसंतमात्मानंदेहंहेतुंमन्यते ॥ ९ ॥ १० ॥ ननुस्वारंभकप्रधानपुरुषादितंत्राणीतियुक्तंतत्राह पुरुषइति व्यक्तंमहत्तत्व



युयुत्सतांकुत्रचिदाततायिनांजयःसदैकत्रनवैपरात्मनां ॥ विनैकमुत्पत्तिलयस्थितीश्वरंसर्वज्ञमाद्यंपुरुषंस
नातनम् ॥ ७ ॥ लोकाःसपालायस्येमेश्वसंतिविवशावशे ॥ द्विजाइवशिचाबद्धाःसकालइहकारणं ॥
॥ ८ ॥ ओजःसहोबलंप्राणममृतंमृत्युमेवच ॥ तमज्ञायजनोहेतुमात्मानंमन्यतेजडं ॥ ९ ॥ यथादारुमयी
नारीयथायंत्रमयोमृगः ॥ एवंभूतानिमघवन्नीशतंत्राणिविद्धिभोः ॥ १० ॥ पुरुषःप्रकृतिर्व्यक्तमात्माभूतेंद्रि
याशयाः ॥ शक्नुवंत्यस्यसर्गादौनविनायदनुग्रहात् ॥ ११ ॥ अविद्वानेवमात्मानंमन्यतेऽनीशमीश्वरं ॥ भू
तैःसृजतिभूतानिग्रसतेतानितैःस्वयं ॥ १२ ॥ आयुःश्रीःकीर्तिरैश्वर्यमाशिषःपुरुषस्यया ॥ भवंत्येवहित
त्कालेयथाऽनिच्छोर्विपर्ययाः ॥ १३ ॥ तस्मादकीर्तियशसोर्जयापजययोरपि ॥ समःस्यात्सुखदुःखाभ्यां
मृत्युजीवितयोस्तथा ॥ १४ ॥ सत्वंरजस्तमइतिप्रकृतेर्नात्मनोगुणाः ॥ तत्रसाक्षिणमात्मानंयोवेदनसबध्य
ते ॥ १५ ॥ पश्यमांनिर्जितंशक्रवृक्णायुधभुजंमृधे ॥ घटमानंयथाशक्तितवप्राणजिहीर्षया ॥ १६ ॥

मात्माअहंकारः ॥ ११ ॥ ननुस्वकर्मद्वाराजीवएवसृष्ट्यादिहेतुरितिमीमांसकामन्यंतेतत्राह एवमविद्वान्अनीशमेवात्मानंईश्वरंस्वतंत्रं
मन्यतेननुपित्रादयःस्रष्टारोदृश्यंतेव्याघ्रादयस्तुहंतारस्तत्राह भूतैरिति स्वयमीश्वरः ॥ १२ ॥ ननुत्वयापराजितस्यममजयादिशंकैवना
स्तिकिमितिमांबलाद्युद्धेप्रवर्तयसितत्राह आयुरिति तत्कालेजयादिकाले विपर्ययाःअकीर्त्यादयः ॥ १३ ॥ यस्मादेवंसर्वमीश्वराधी
नंतस्मात्समःस्याद्धर्षविषादहीनोभवेत् ॥ १४ ॥ समदृष्टावुपायमाह सत्वमिति हर्षादिभिर्नबध्यते ॥ १५ ॥ हर्षविषादनिवृत्त्यैत
वाहमेवगुरुरित्याह पश्येतिवृक्णमायुधंभुजश्चयस्य ॥ १६ ॥ ॥ ॥ ॥

अनियतत्वंद्यूतरूपकेणोपसंहरति प्राणएवग्लहः पणोयस्मिन् इषवएवाक्षायस्य वाहनान्येवेतस्ततश्चाल्यमानानिआसनानिफलकानि यस्मिन् ॥ १७ ॥ गतालीकंनिष्कपटं ॥ १८ ॥ भक्तःसेवितवानासि ॥ १९ ॥ २० ॥ २१ ॥ तस्यतवखातकोदकैर्गर्तादिजलोपमैः स्वर्गादिभिःकिम् ॥ २२ ॥ युद्धानांसंग्रामाणांपतीमुख्यौ ॥ २३ ॥ हेमारिषश्रेष्ठराजन् ॥ २४ ॥ २५ ॥ उत्कृत्तंमूलंययोस्ताभ्यां रक्तस्रवती

प्राणग्लहोऽयंसमरइष्वक्षोवाहनासनः॥अत्रनज्ञायतेऽमुष्यजयोमुष्यपराजयः ॥१७॥ श्रीशुकउवाच इंद्रोवृत्रवचःश्रुत्वागतालीकमपूजयत्॥गृहीतवज्रःप्रहसंस्तमाहगतविस्मयः॥ १८ ॥ अहोदानवसिद्धोऽसि यस्यतेमतिरीदृशी ॥ भक्तःसर्वात्मनात्मानंसुहृदंजगदीश्वरं ॥ १९ ॥ भवानतार्षीन्मायांवैवैष्णवींजनमोहिनीम् ॥ यद्विहायासुरंभावंमहापुरुषतांगतः॥२०॥खल्विदंमहदाश्चर्यंयद्रजःप्रकृतेस्तव ॥ वासुदेवेभगवति सत्त्वात्मनिदृढामतिः ॥२१॥ यस्यभक्तिर्भगवतिहरौनैःश्रेयसेश्वरे ॥ विक्रीडतोऽमृतांभोधौकिंक्षुद्रैःखातकोदकैः॥२२॥ श्रीशुकउवाच इतिब्रुवाणावन्योऽन्यंधर्मजिज्ञासयानृप॥युयुधातेमहावीर्याविंद्रवृत्रौयुधांपती ॥२३॥आविध्यपरिघंवृत्रःकार्ष्णायसमरिंदमः॥इंद्रायप्राहिणोद्घोरंवामहस्तेनमारिष॥२४॥ सतुवृत्रस्य परिघंकरंचकरभोपमं॥ चिच्छेदयुगपद्देवोवज्रेणशतपर्वणा ॥ २५ ॥ दोर्भ्यामुत्कृत्तमूलाभ्यांबभौरक्तस्रवोऽसुरः ॥ छिन्नपक्षोयथागोत्रःखात्भ्रष्टोवज्रिणाहतः ॥२६॥ कृत्वाऽधरांहनुंभूमौदैत्योदिव्युत्तरांहनुं ॥ नभोगंभीरवक्त्रेणलेलिहोल्बणजिव्हया ॥२७॥ दंष्ट्राभिःकालकल्पाभिर्ग्रसन्निवजगत्त्रयं ॥ अतिमात्रमहाकाय आक्षिपंस्तरसागिरीन् ॥२८॥ गिरिराट्पादचारीवपद्भ्यांनिर्जरयन्महीम्॥जग्रासससमासाद्यवज्रिणंसह वाहनं ॥२९॥ महाप्राणोमहावीर्योमहासर्पइवद्विपं ॥ वृत्रग्रस्तंतमालक्ष्यसप्रजापतयःसुराः ॥ ३० ॥

तितथागोत्रःपर्वतः ॥ २६ ॥ कृत्वाऽधरामित्यादेर्जग्रासेतितृतीयेनान्वयः नभोवद्गंभीरेणवक्त्रेणलेलिहःसर्पस्तद्वत् उल्बणयाजिव्हया ॥ ॥ २७ ॥ कालकल्पाभिर्ग्रसन्चालयन् ॥ २८ ॥ निर्जरयन्चूर्णयन् ॥ २९ ॥ महाप्राणोमहाबलः महावीर्योमहाप्रभावः ॥ ३० ॥

महापुरुषेणकवचरूपेणश्रीनारायणेनसन्नद्धोदंशितः योगबलेनमायाबलेनच ॥ ३१ ॥ बलभित् इंद्रः उच्चकर्त चिच्छेद ॥ ३२ ॥ तस्यकंधरंकंधरां आशुवेगःअतिवेगवान् ज्योतिषांसूर्यादीनां अयनेदक्षिणोत्तरगतिरूपेसंवत्सरेयोऽहर्गणःषष्टयुत्तरशतत्रयात्मकस्तावताहर्गणेन वार्त्रहत्येवृत्रहत्यायोग्येकालेन्यपातयत् यद्वा स्वार्थेतद्धितः वृत्रहत्यायांवृत्रहननार्थंपरिवर्तमानइत्यर्थः ॥ ३३ ॥ वार्त्रघ्नलिंगैवृत्रहंतुर्वीर्यप्रकाशकैः वार्त्रहत्यायशवसेपृतनाषाढायचेत्याद्यैस्तमिंद्रमभिष्टुवानाअभिष्टुवंतः वार्त्रहत्यायइंद्रएतत्सर्वमपश्यदितिश्रुतेः प्रथ

हाकष्टमितिनिर्विण्णाश्चुक्रुशुःसमहर्षयः ॥ निगीर्णोऽप्यसुरेंद्रेणनममारोदरंगतः ॥ महापुरुषसन्नद्धोयोगमायाबलेनच ॥ ३१ ॥ भित्वावज्रेणतत्कुक्षिंनिष्क्रम्यबलभिद्विभुः ॥ उच्चकर्तशिरःशत्रोर्गिरिशृंगमिवौजसा ॥३२॥ वज्रस्तुतत्कंधरमाशुवेगःकृंतन्समंतात्परिवर्तमानः ॥ न्यपातयत्तावदहर्गणेनयोज्योतिषामयनेवार्त्रहत्ये ॥ ३३ ॥ तदाचखेदुंदुभयोविनेदुर्गंधर्वसिद्धाःसमहर्षिसंघाः ॥ वार्त्रघ्नलिंगैस्तमभिष्टुवानामंत्रैर्मुदाकुसुमैरभ्यवर्षन् ॥३४॥ वृत्रस्यदेहान्निष्क्रांतमात्मज्योतिररिंदम ॥ पश्यतांसर्वलोकानामलोकंसमपद्यत ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेवृत्रवधोनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीशुकउवाच

वृत्रेहतेत्रयोलोकाविनाशक्रेणभूरिद ॥ सपालाह्यभवन्सद्योविज्वरानिर्वृतेंद्रियाः॥१॥ देवर्षिपितृभूतानिदैत्यादेवानुगाःस्वयं ॥ प्रतिजग्मुःस्वधिष्ण्यानिब्रह्मेशेंद्रादयस्ततः॥ २ ॥ राजोवाच इंद्रस्यानिर्वृतेर्हेतुंश्रोतुमिच्छामिभोमुने ॥ येनासन्सुखिनोदेवाहरेर्दुःखंकुतोऽभवत् ॥ ३ ॥ ॥ ॥

मेगायत्रीत्रिष्टुभौइंद्रोवृत्रहादेवता वार्त्रहत्यायवृत्रोयेनशवसाबलेनहन्यतेतद्वार्त्रहत्यंशवस्तस्मैवार्त्रहत्यायशवसे पृतनाषाढायच पृतनाःसंग्रामाःयेनशवसाअभिभूयंतेतत्पृतनासहंबलंतस्मैपृतनासहाय सहतिरभिभवार्थः हेइंद्रत्वामावर्तयामः सदा ॥ ३४ ॥ अलोकंलोकातीतंभगवंतं ॥ ३५ ॥ इतिषष्ठस्कंधेटीकायांद्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ त्रयोदशेतुवृत्रस्यब्रह्महत्यामहाभयात् ॥ चिरंनष्टोऽवितःशक्रोविष्णुनेतिनिरूप्यते ॥ १ ॥ १ ॥ अनिर्वृतंशक्रमपृष्ट्वास्वयमेवप्रतिजग्मुः ॥ २ ॥ ३ ॥ ॥ ॥

अशांतस्यहरेरिंद्रस्यदुःखहेतुंवक्तुंप्रस्तावकथामाह वृत्रविक्रमेत्यादिनाआर्थयन्प्रार्थयन् बृहद्वधात्ब्राह्मणवधाद्भीतःसन् ॥ ४ ॥ एनः पापं विभक्तंविभज्यगृहीतम् मार्ज्मिशोधयामि ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ वृषाकपिमिंद्रम् ॥ १० ॥ तयादेवादिभिःकारितयास्मे त्यवधारणे इंद्रएवतापमसहत्नान्यः अमुमिंद्रंनिर्वृतिर्नाविशत् ननुधैर्यादिगुणयुक्तस्यकुतोऽनिर्वृतिस्तत्राह ऱ्हीमंतंलज्जावंतम् वाच्यतां

श्रीशुकउवाच वृत्रविक्रमसंविग्नाःसर्वेदेवाःसहर्षिभिः ॥ तद्वधायार्थयन्निंद्रंनैच्छद्भीतोबृहद्वधात् ॥ ४ ॥ इंद्रउवाच स्त्रीभूजलद्रुमैरेनोविश्वरूपवधोद्भवम् ॥ विभक्तमनुगृण्हद्भिर्वृत्रहत्यांक्वमार्ज्म्यहम् ॥५॥ श्रीशुकउवाच ऋषयस्तदुपाकर्ण्यमहेंद्रमिदमब्रुवन् ॥ याजयिष्यामभद्रंतेहयमेधेनमास्मभैः ॥ ६॥ हयमेधेनपुरुषंपरमात्मानमीश्वरम् ॥ इष्ट्वानारायणंदेवंमोक्ष्यसेऽपिजगद्वधात्॥७॥ ब्रह्महापितृहागोघ्नोमातृहाचार्यहाऽघवान् ॥ श्वादःपुल्कसकोवाऽपिशुद्ध्येरन्यस्यकीर्तनात् ॥ ८ ॥ तमश्वमेधेनमहामखेनश्रद्धाऽन्वितोऽस्माभिरनुष्ठितेन ॥ हत्वाऽपिसब्रह्मचराचरंत्वंनलिप्यसेकिंखलनिग्रहेण ॥ ९ ॥ श्रीशुकउवाच एवंसंचोदितोविप्रैर्मरुत्वानहनद्रिपुम् ॥ ब्रह्महत्याहतेतस्मिन्नाससादवृषाकपिम्॥ १० ॥तयेंद्रःस्मासहत्तापंनिर्वृतिर्नामुमाविशत् ॥ ऱ्हीमंतंवाच्यतांप्राप्तंसुखयंत्यपिनोगुणाः ॥ ११ ॥तांददर्शानुधावंतींचांडालीमिवरूपिणीम् ॥ जरयावेपमानांगींयक्ष्मग्रस्तामसृक्पटां ॥ १२ ॥ विकीर्यपलितान्केशांस्तिष्ठतिष्ठेतिभाषिणीं ॥ मीनगंध्यसुगंधेनकुर्वतींमार्गदूषणं ॥ १३ ॥ नभोगतोदिशःसर्वाःसहस्राक्षोविशांपते॥प्रागुदीचींदिशंतूर्णंप्रविष्टोनृपमानसं ॥ १४ ॥ सआवसत्पुष्करनालतंतूनलब्धभोगोयदिहाग्निदूतः ॥ वर्षाणिसाहस्रमलक्षितोंऽतःसचिंतयन्ब्रह्मवधाद्विमोक्षं ॥ १५ ॥ ॥ ॥ ॥

निंद्यताम् ॥ ११ ॥ यक्ष्मग्रस्तांक्षयरोगव्याप्ताम् ॥ १२ ॥ मीनस्येवगंधोयस्यसमीनगंधिःसचासावसुश्चश्वासवायुस्तस्यगंधेन ॥ ॥ १३ ॥ प्रागुदीचींदिशंगतःसंस्तूर्णं मानसंसरः ॥ १४ ॥ सइंद्रः सहस्रवर्षाणिपुष्करनालस्यतंतूनावसत् कथंभूतः नलब्धोभोगोयेनसः कुतः यद्यस्मादिहजलेवसतः अग्निदूतश्चस्वयंअग्नेश्चस्वदूतस्यहविर्भागान्नेतुर्जलेप्रवेशासंभवादलब्धभोगइत्यर्थः अलब्धभागइतिपाठांतरेनलब्धोयज्ञभागोयेनसः ॥ १५ ॥ ॥ ॥ ॥

त्रिणाकं नअकंदुःखंयस्मिन्निति नाकः पुण्यलोकः तृतीयंनाकंस्वर्गं ननुमनुष्यस्यकुतः स्वर्गराज्यंतत्राह विद्यादिभिः अनुभावः स्वर्गपालन सामर्थ्यंयस्यसः तर्हितस्मिन्सतिकथमिंद्रस्यपुनः स्वर्गप्राप्तिस्तत्राह सनहुषः संपदैश्वर्याभ्यांयोमदस्तेनांधाबुद्धिर्यस्यसः इंद्रपत्न्याशच्या तिरश्चांगतिंसर्पयोनिंनीतः उपायेनप्रापितः एवंह्याख्यायते नहुषः किलकदाचिदिंद्राणीमुवाच इंद्रस्तावदहमतस्त्वंमांभजेति तयाचावेदितवृत्तांतोबृहस्पतिस्तामुवाच ब्राह्मणवाह्यशिबिकायामारुह्यागतंत्वांभजिष्यामीतिब्रूहिततोऽसौब्रह्मशापात्पतिष्यतीति तयाचतथोक्तोनहुषोऽगस्त्यादीन्शिबिकांवाहयामास तदाशीघ्रंसर्पसर्पेत्यगस्त्यंपदापस्पर्श तेनकुपितेनसर्पोभवेतिशप्तोमहासर्पोऽजगरोऽभूदिति॥१६॥ततइंद्रः

॥ ३३ ॥

तावंत्रिणाकंनहुषःशशासविद्यातपोयोगबलानुभावः ॥ ससंपदैश्वर्यमदांधबुद्धिर्नीतस्तिरश्चांगतिमिंद्रपत्न्या ॥ १६ ॥ ततोगतोब्रह्मगिरोपहूतऋतंभरध्याननिवारिताघः ॥ पापस्तुदिग्देवतयाहतौजास्तंनाभ्यभूदवितंविष्णुपत्न्या ॥१७॥ तंचब्रह्मर्षयोऽभ्येत्यहयमेधेनभारत ॥ यथावद्दीक्षयांचक्रुःपुरुषाराधनेनह॥ ॥१८॥अथेज्यमानेपुरुषेसर्वदेवमयात्मनि॥ अश्वमेधेमहेंद्रेणवितते ब्रह्मवादिभिः॥१९॥सवैत्वाष्ट्रवधोभूयानपिपापचयोनृप॥ नीतस्तेनैवशून्यायनीहारइवभानुना ॥ २० ॥ सवाजिमेधेनयथोदितेनवितायमानेन मरीचिमिश्रैः॥इष्ट्वाधियज्ञंपुरुषंपुराणमिंद्रोमहानासविधूतपापः ॥ २१ ॥ इदंमहाख्यानमशेषपाप्मनांप्रक्षालनंतीर्थपदानुकीर्तनं ॥भक्त्युच्छ्रयंभक्तजनानुवर्णनंमहेंद्रमोक्षंविजयंमरुत्वतः ॥ २२ ॥ ॥

स्वर्गंगतः प्राप्तः कथंभूतः ब्रह्मगिराब्राह्मणवाक्येनोपहूतः सन् ऋतंभरः सत्यपालकोहरिस्तस्यध्यानेननिवारितमघंयेनप्राक् अपितुपापोब्रह्मवधस्तमिंद्रंनाभ्यभूत् तस्याभिभवंनाकरोत् कुतः दिग्देवतयाप्रागुदीच्यांदिशिस्थितयाश्रीरुद्रेणअवितंरक्षितंसंतम् ॥१७॥पुरुषस्यहरेराराधनंयस्मिंस्तेन ॥१८॥ सर्ववेदमयात्मनीतिपाठः ब्रह्मादिभिर्विततेऽनुष्ठितेअश्वमेधेमहेंद्रेणेज्यमानेपुरुषेसति ॥ १९॥ तेनैवपुरुषेणैव शून्याय नीतः नाशितइत्यर्थः॥२०॥अधिकृतायज्ञायेनतम्॥२१॥पाठादिविधातुमाख्यानंस्तौति इदमितिप्रक्षाल्यतेऽनेनेतिप्रक्षालनम् तीर्थपदस्यानुकीर्तनंयस्मिन् भक्तेरुच्छ्रयोयस्मिन् भक्तजनानामनुवर्णनंयस्मिन् महेंद्रस्यमोक्षोयस्मिन् मरुत्वतोविशेषेणजयोयस्मिन् ॥ २२ ॥

॥ ३३ ॥

इंद्रियंतत्पाटवकरं इंद्रसंबंधीतिवा आयुषमायुष्यं ॥ २३ ॥ इ०भा०म०षष्ठस्कंधेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ चतुर्दशे तुसहसाकृच्छ्रलब्धेसुतेमृते ॥ चित्रकेतोरतिस्नेहादातिशोकोनिरूप्यते ॥ १ ॥ वृत्रस्यज्ञानभक्त्यादिश्रुत्वापृष्टःपरीक्षिता ॥ हेतुमाहचतुर्भिस्तत्प्राग्जन्मचरितोक्तिभिः ॥ २ ॥ रजश्चतमश्चस्वभावोयस्य ॥ १ ॥ २ ॥ भक्तेर्दुर्लभत्वंप्रपंचयतित्रिभिः पार्थिवैरजोभिःपरमाणु

पठेयुराख्यानमिदंसदाबुधाःशृण्वंत्यथोपर्वणिपर्वणींद्रियं ॥ धन्यंयशस्यंनिखिलाघमोचनंरिपुंजयंस्वस्त्ययनंतथाऽऽयुषं ॥ २३ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेइंद्रविजयोनामत्रयोदशोऽध्यायः ॥ १३ ॥ परीक्षिदुवाच रजस्तमःस्वभावस्यब्रह्मन्वृत्रस्यपाप्मनः ॥ नारायणेभगवतिकथमासीद्दृढामतिः ॥१॥ देवानांशुद्धसत्त्वानामृषीणांचामलात्मनां ॥ भक्तिर्मुकुंदचरणेनप्रायेणोपजायते ॥ २ ॥ रजोभिःसमसंख्याताःपार्थिवैरिहजंतवः ॥ तेषांयेकेचनेहंतेश्रेयोवैमनुजादयः ॥ ३ ॥ प्रायोमुमुक्षवस्तेषांकेचनैवद्विजोत्तमाः ॥ मुमुक्षूणांसहस्रेषुकश्चिन्मुच्येतसिद्ध्यति ॥ ४ ॥ मुक्तानामपिसिद्धानांनारायणपरायणः ॥ सुदुर्लभःप्रशांतात्माकोटिष्वपिमहामुने ॥५॥ वृत्रस्तुसकथंपापःसर्वलोकोपतापनः ॥इत्थंदृढमतिःकृष्णआसीत्संग्रामउल्बणे ॥ ६ ॥ अत्रनःसंशयोभूयान्श्रोतुंकौतूहलंप्रभो ॥ यःपौरुषेणसमरेसहस्राक्षमतोषयत् ॥ ७॥ सूत उवाच परीक्षितोऽथसंप्रश्नंभगवान्बादरायणिः ॥ निशम्यश्रद्दधानस्यप्रतिनंद्यवचोऽब्रवीत् ॥ ८ ॥ श्रीशुकउवाच शृणुष्वावहितोराजन्नितिहासमिमंयथा ॥ श्रुतंद्वैपायनमुखान्नारदाद्देवलादपि ॥९॥ आसीद्राजासार्वभौमःशूरसेनेषुवैनृप ॥ चित्रकेतुरितिख्यातोयस्यासीत्कामधुङ्मही ॥ १० ॥ ॥

भिःसमाःसंख्याताः अनंताइत्यर्थः जंतवोजीवाः तेषांमध्येयेकेचनकतिपयेश्रेयोधर्ममीहंतेकुर्वंति ॥ ३ ॥ मुच्यतेगृहादिसंगाद्विमुच्यते सिद्ध्यतितत्त्वंजानाति ॥ ४ ॥ ५ ॥ ६ ॥ नचेंद्रभियाकृष्णंशरणंगतइत्याह यःपौरुषेणेति ॥ ७ ॥ ८ ॥ यथायथावत्शृणु ॥ ९ ॥ १० ॥

भार्यासहस्राणांदशसहस्राणिकोटिरित्यर्थः सांतानिकः स्वयंसंतानार्होऽपिपुत्रोत्पादनसमर्थोऽपितासुसंततिंनलेभे सर्वास्तावंध्याएवदैव योगेनमिलिताइतिभावः ॥ ११ ॥ तदेवाह वंध्यापतेरिति ॥ १२ ॥ १३ ॥ १४ ॥ उपासीदत्तस्यसमीपमुपविवेश समाहितः संयतः ॥ ॥ १५ ॥ १६ ॥ अपिकिं अनामयमारोग्यं स्वस्तिशुभं प्रकृत्यधीनमेवहिराज्यमितिसदृष्टांतमाह यथामहदाद्याभिः सप्तभिःप्रकृतिभिः पुमान् जीवोनित्यंगुप्तोभवतिनतुतद्व्यतिरेकेणक्षणमपितिष्ठतितथाराजाऽपिसप्तप्रकृतिभिः स्वाम्यमात्यौजनपदादुर्गद्रविणसंचयाः ॥ दंडोमित्रंच तस्यैताः सप्तप्रकृतयोमताइत्युक्तलक्षणाभिर्नित्यंगुप्तः सन् ॥ १७ ॥ आत्मानंप्रकृतिषुअद्धासाक्षान्निधायतदनुवर्तिनंकृत्वाश्रेयोराज्यसुखं

तस्यभार्यासहस्राणांसहस्राणिदशाभवन् ॥ सांतानिकश्चापिनृपोनलेभेतासुसंततिम् ॥११॥ रूपौदार्यव योजन्मविद्यैश्वर्यश्रियादिभिः ॥ संपन्नस्यगुणैःसर्वैश्चिंतावंध्यापतेरभूत् ॥१२॥ नतस्यसंपदःसर्वामहिष्यो वामलोचनाः ॥ सार्वभौमस्यभूश्चेयमभवन्प्रीतिहेतवः ॥ १३ ॥ तस्यैकदातुभवनमंगिराभगवानृषिः ॥ लोकाननुचरन्नेतानुपागच्छद्यदृच्छया ॥ १४ ॥ तंपूजयित्वाविधिवत्प्रत्युत्थानार्हणादिभिः ॥ कृतातिथ्यमुपा सीदत्सुखासीनंसमाहितः ॥ १५ ॥ महर्षिस्तमुपासीनंप्रश्रयावनतंक्षितौ ॥ प्रतिपूज्यमहाराजसमाभाष्ये दमब्रवीत् ॥ १६ ॥ अंगिराउवाच अपितेऽनामयंस्वस्तिप्रकृतीनांतथात्मनः ॥ यथाप्रकृतिभिर्गुप्तःपुमान् राजापिसप्तभिः ॥ १७ ॥ आत्मानंप्रकृतिष्वद्धानिधायश्रेयआप्नुयात् ॥ राज्ञातथाप्रकृतयोनरदेवाहिताध यः ॥ १८ ॥ अपिदाराःप्रजामात्याभृत्याःश्रेण्योथमंत्रिणः ॥ पौराजानपदाभूपाआत्मजावशवर्तिनः ॥ ॥ १९ ॥ यस्यात्माऽनुवशश्चेत्स्यात्सर्वेतद्वशगाइमे ॥ लोकाःसपालायच्छंतिसर्वेबलिमतंद्रिताः ॥ २० ॥

प्राप्नुयादित्यर्थः स्वामीगुरुःस्वयंवा मंत्रसहायोमित्रंकर्मसहायोऽमात्यइतिभेदः प्रकृतीनांचसुखंराजाधीनमेवेत्याह हेनरदेवतथाप्रकृतयो ऽपिराज्ञाआहिताधयःनिहितनिक्षेपाधनैःसमृद्धाभवंति पाठांतरे आसमंततोहताधयोनिरस्तमनोदुःखाभवंतीत्यर्थः ॥ १८ ॥ प्रजाश्चअ मात्याश्च श्रेण्यश्चसमयविशेषेणसंघशोवर्तमानावणिक्प्रभृतयः पौराःपुरवासिनः जानपदास्तत्तद्देशाधिकारिणः ॥१९॥ तवमनःस्ववशेवा नवेत्यर्थात्पृच्छति यस्यात्मामनःअनुवशःअनुवर्तीआधीनःस्यात्तस्यवशगाइमेसर्वेभवंति किंच लोकाश्चतस्यबलिंयच्छांति ॥ २० ॥

आत्माभवान् आत्मनोनप्रीयतेनतुष्यति तत्किंपरतोवास्वतोवाअलब्धकामंत्वांलक्षये ॥ २१ ॥ विदुषासर्वज्ञेनापि ॥ २२ ॥ अलब्धकामत्वंकथयन्पुत्रंयाचते भगवन्निितिचतुर्भिः ॥ २३ ॥ २४ ॥ अप्रजमपुत्रं क्षुत्तृड्भ्यामन्नपानकाममपरेस्रक्चंदनादयोयथानसुखयंति ॥ २५ ॥ पूर्वैःपित्रादिभिःसहगतंप्राप्तंतमोनरकंप्रजयायथातरेमतत्तथाविधेहि ॥ २६ ॥ २७ ॥ यज्ञोच्छिष्टंयज्ञशेषं ॥ २८ ॥ जन्मना

आत्मनःप्रीयतेनात्मापरतःस्वतएववा॥लक्षयेलब्धकामंत्वांचिंतयाशबलंमुखं ॥२१॥ एवंविकल्पितोराजन्विदुषामुनिनापिसः॥प्रश्रयावनतोऽभ्याहप्रजाकामस्ततोमुनिं ॥ २२ ॥ चित्रकेतुरुवाच भगवन्किंनविदितंतपोज्ञानसमाधिभिः॥योगिनांध्वस्तपापानांबहिरंतःशरीरिषु॥२३॥ अथापिपृच्छतोब्रूयांब्रह्मन्नात्मनिचिंतितं ॥ भवतोविदुषश्चापिचोदितस्त्वदनुज्ञया॥२४॥लोकपालैरपिप्रार्थ्याःसाम्राज्यैश्वर्यसंपदः॥ननंदयंत्यप्रजंमांक्षुत्तृट्काममिवापरे ॥२५॥ततःपाहिमहाभागपूर्वैःसहगतंतमः ॥ यथातरेमदुस्तारंप्रजयातद्विधेहिनः ॥२६॥ श्रीशुकउवाच इत्यर्थितःसभगवान्कृपालुर्ब्रह्मणःसुतः॥श्रपयित्वाचरुंत्वाष्ट्रंत्वष्टारमयजद्विभुः॥२७॥ज्येष्ठाश्रेष्ठाचयाराज्ञोमहिषीणांचभारत॥नाम्नाकृतद्युतिस्तस्यैयज्ञोच्छिष्टमदाद्द्विजः ॥ २८ ॥ अथाहनृपतिंराजन्भवितैकस्तवात्मजः ॥ हर्षशोकप्रदस्तुभ्यमितिब्रह्मसुतोययौ॥२९॥सापितत्प्राशनादेवचित्रकेतोरधारयत्॥गर्भंकृतद्युतिर्देवीकृत्तिकाऽग्नेरिवात्मजं॥३०॥तस्याअनुदिनंगर्भःशुक्लपक्षइवोडुपः॥ववृधेशूरसेनेशतेजसाशनकैर्नृप ॥ ३१ ॥ अथकालउपावृत्तेकुमारःसमजायत ॥ जनयन्शूरसेनानांशृण्वतांपरमांमुदं॥३२॥हृष्टोराजाकुमारस्यस्नातःशुचिरलंकृतः॥ वाचयित्वाऽऽशिषोविप्रैःकारयामासजातकं ॥ ॥३३॥ तेभ्योहिरण्यंरजतंवासांस्याभरणानिच ॥ ग्रामान्हयान्गजान्प्रादाद्धेनूनामर्बुदानिषट् ॥ ३४ ॥

हर्षमरणेनचशोकंप्रददातीतितथा इत्येवमुक्त्वाययौ ॥ २९ ॥ ३० ॥ शूरसेनानामीशस्यतेजसावीर्येणयोगर्भःसववृधे ॥ ३१ ॥ ३२ ॥ जातकंजातकर्म ॥ ३३ ॥ अर्बुदंदशकोटयः वेदेतुकोटिरेवार्बुदं नियुतंचप्रयुतंचार्बुदंचेतिप्रयुतानंतरंनिर्देशात् ॥ ३४ ॥

धन्यंधनकरं आयुष्यमायुष्करं ॥ ३५ ॥ ३६ ॥ मोहस्यसमुद्भवोयस्मिन् प्रजाकामरूपोज्वरस्तापः ॥ ३७ ॥ दारइत्येकवचनमार्षं ॥
॥ ३८ ॥ आनपत्येनअपुत्रत्वनिमित्तेन ॥ ३९ ॥ नगृहेसंमतांनबहुमतां यद्वा गृहिण्येवगृहंनभार्येतिसंमतामित्यर्थः ॥ ४० ॥ दास्यादा



॥ ३५ ॥

ववर्षकाममन्येषांपर्जन्यइवदेहिनां ॥ धन्यंयशस्यमायुष्यंकुमारस्यमहामनाः ॥ ३५ ॥ कृच्छ्रलब्धेऽथराज
र्षेस्तनयेऽनुदिनंपितुः ॥ यथानिःस्वस्यकृच्छ्राप्तेधनेस्नेहोऽन्ववर्धत॥ ३६॥मातुस्त्वतितरांपुत्रेस्नेहोमोहसमुद्भ
वः ॥ कृतद्युतेःसपत्नीनांप्रजाकामज्वरोऽभवत्॥ ३७॥ चित्रकेतोरतिप्रीतिर्यथादारेप्रजावति ॥ नतथाऽन्ये
षुसंजज्ञेबालंलालयतोऽन्वहं ॥ ३८॥ ताःपर्यतप्यन्नात्मानंगर्हयंत्योऽभ्यसूयया॥आनपत्येनदुःखेनराज्ञोऽ
नादरणेनच ॥ ३९॥ धिगप्रजांस्त्रियंपापांपत्युश्चागृहसंमतां ॥ सुप्रजाभिःसपत्नीभिर्दासीमिवतिरस्कृतां ॥
॥ ४० ॥ दासीनांकोनुसंतापःस्वामिनःपरिचर्यया ॥ अभीक्ष्णंलब्धमानानांदास्यादासीवदुर्भगाः ॥ ४१॥
एवंसंदह्यमानानांसपत्न्याःपुत्रसंपदा॥राज्ञोऽसंमतवृत्तीनांविद्वेषोबलवानभूत् ॥ ४२॥ विद्वेषनष्टमतयस्स्त्रि
योदारुणचेतसः ॥ गरंददुःकुमारायदुर्मर्षानृपतिंप्रति ॥ ४३॥ कृतद्युतिरजानंतीसपत्नीनामघंमहत् ॥ सुप्त
एवेतिसंचिंत्यनिरीक्ष्यव्यचरद्गृहे ॥ ४४ ॥ शयानंसुचिरंबालमुपधार्यमनीषिणी ॥ पुत्रमानयमेभद्रेइतिधा
त्रीमचोदयत् ॥ ४५ ॥ साशयानमुपव्रज्यदृष्ट्वाचोत्तारलोचनं ॥ प्राणेंद्रियात्मभिस्त्यक्तंहताऽस्मीत्यपत
द्भुवि ॥ ४६ ॥ तस्यास्तदाकर्ण्यभृशातुरंस्वरंघ्नंत्याःकराभ्यामुरउच्चकैरपि ॥ प्रविश्यराज्ञीत्वरयात्मजांति
कंददर्शबालंसहसामृतंसुतं ॥ ४७ ॥ पपातभूमौपरिवृद्धयाशुचामुमोहविभ्रष्टशिरोरुहांबरा ॥ ४८ ॥

॥ ३५ ॥

सीयथातथात्वयंदुर्भगाः॥ ४१॥नसंमतावृत्तिर्जीवनंयासां॥ ४२॥ विद्वेषेणनष्टामतिर्यासांताः गरंविषं दुर्मर्षाःअसहमानाः ॥ ४३ ॥ ४४ ॥ धात्रीं
स्तनदायिनीं ॥ ४५ ॥ उद्गतेतारकेकनीनिकेययोस्तेलोचनेयस्यतं ॥ ४६ ॥ ४७ ॥ विभ्रष्टाःशिरोरुहाःअंबरंचयस्याःसा ॥ ४८ ॥

ताश्चसपत्न्योऽपि ॥ ४९ ॥ अलक्षितः अंतकः मृत्युहेतुर्यस्यतं अनुगताः प्रकृतयोऽमात्यादयोयस्यसोऽनुप्रकृतिः ॥ ५० ॥ बाष्पकलाभि रश्रुबिंदुभिरुपरोधतः संवृतत्वेन निरुद्धः कंठोयस्य ॥ ५१ ॥ उरुशुचाऽर्पितंबहुशोकेनव्याप्तं एकमेवसंततिरूपं ॥ ५२ ॥ विगलंत्यः स्रजो येभ्यस्तान् केशान् ॥ ५३ ॥ आत्मसृष्टेरप्रतिरूपमननुरूपंचेष्टसे तदेवाह नुअहोपरेवृद्धेजीवतिअपरस्यबालस्ययामृतिरतत् तदाहिवृद्ध स्यसृष्टिसामर्थ्याभावेबालेचमृतेसातितवसृष्टिर्नष्टास्यादित्यर्थः ननुसांप्रतंस्वसृष्टेर्विपरीतोऽस्मीतिचेत्तत्राह विपर्ययः विपरीतोऽसिचेत्तर्हित्वं

ततोनृपांतःपुरवर्तिनोजनानराश्चनार्यश्चनिशम्यरोदनम् ॥ आगत्यतुल्यव्यसनाःसुदुःखितास्ताश्चव्यलीकंरुरुदुःकृतागसः ॥ ४९ ॥ श्रुत्वामृतंपुत्रमलक्षितांतकंविनष्टदृष्टिःप्रपतन्स्खलन्पथि ॥ स्नेहानुबंधैधितयाशुचाभृशंविमूर्छितोऽनुप्रकृतिर्द्विजैर्वृतः ॥ ५० ॥ पपातबालस्यसपादमूलेमृतस्यविस्रस्तशिरोरुहांबरः ॥ दीर्घंश्वसन्बाष्पकलोपरोधतोनिरुद्धकंठोनशशाकभाषितुं ॥ ५१ ॥ पतिंनिरीक्ष्योरुशुचाऽर्पितंतदामृतंचबालंसुतमेकसंततिं ॥ जनस्यराज्ञीप्रकृतेश्चहृद्रुजंसतीदधानाविललापचित्रधा ॥ ५२ ॥ स्तनद्वयंकुंकुमगंधमंडितंनिषिंचतीसांजनबाष्पबिंदुभिः ॥ विकीर्यकेशान्विगलत्स्रजःसुतंशुशोचचित्रंकुररीवसुस्वरं ॥ ५३ ॥ अहोविधातस्त्वमतीवबालिशोयस्त्वात्मसृष्ट्यप्रतिरूपमीहसे ॥ परेऽनुजीवत्यपरस्ययामृतिर्विपर्ययश्चेत्त्वमसिध्रुवःपरः ॥ ५४ ॥ नहिक्रमश्चेदिहमृत्युजन्मनोःशरीरिणामस्तुतदात्मकर्मभिः ॥ यःस्नेहपाशोनिजसर्गवृद्धयेस्वयंकृतस्तेतमिमंविवृश्चसि ॥ ५५ ॥ ॥

प्राणिनामतिदुःखकारित्वात् ध्रुवः नित्यः परः शत्रुरसि नतुकृपालुरित्यर्थः ॥ ननुजीवकर्मानुसारेणजन्मादिकुर्वतोममकोऽपराधस्तत्राह नहीति पुत्रजीवत्येवपिताम्रियतेपितरिजीवत्येवपुत्रोजायतइतिक्रमोनास्ति कर्माधीनत्वादितिचेत्तर्ह्यात्मकर्मभिरेवतज्जन्मादिकमस्तु किंत्वयाकृत्यं ननुमयाईश्वरेणविनाजडैःकर्मभिरिदंकथंसिध्येत् भवतुनामतथापिनिजसर्गवृद्धयेतेत्वयायःस्नेहपाशःकृतस्तमिमंस्वयमेवविवृश्चसिछिनत्सीत्यादिक्रोशति नह्येवंविधंदुःखंदृष्ट्वाकश्चिदपिपुत्रादिषुस्नेहंकरिष्यतीतिभावः ॥ ५५ ॥ ॥

अप्रजदुस्तरमप्रजानांदुस्तरं अकरुणेनसह ॥ ५६ ॥ अशनयाक्षुधा ॥ ५७ ॥ तनुजहेपुत्रनाहंप्रथमंत्वत्पार्श्वमागतासतीतवमुग्धस्मितं
वक्त्रंदद्दशेदृष्टवत्यस्मि इदानीमपिगिरोनशृणोमि तर्हिकिमपुनरन्वयंपुनरागमनंयथानभविष्यतितथागतोऽसि ॥ ५८ ॥ ५९ ॥ ६० ॥
॥ ६१ ॥ इतिषष्ठस्कंधेटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ततःपंचदशेचित्रकेतोःशोकापनोदनं ॥ कृतंतत्त्वोपदे
शेननारदेनांगिरोयुजा ॥ १ ॥ मृतकोपांतेशवसमीपे ॥ १ ॥ त्वंचास्यबंधूनांकतमः सृष्टौप्रजारूपायां अयंपुत्रःअहंचास्यपितेतिचेत्त

त्वंतातनार्हसिचमांकृपणामनाथांत्यक्तुंविचक्ष्वपितरंतवशोकतप्तम् ॥ अंजस्तरेमभवताऽप्रजदुस्तरंयद्ध्वांतंनयाह्यकरुणेनयमेनदूरम्॥५६॥उत्तिष्ठताततइमेशिशवोवयस्यास्त्वामाह्वयंतिनृपनंदनसंविहर्तुम् ॥ सुप्तश्चिरंह्यशनयाचभवान्परीतोभुंक्ष्वस्तनंपिबशुचोहरनःस्वकानाम् ॥ ५७ ॥ नाहंतनूजदद्दशेहतमंगलातेमुग्धस्मितंमुदितवीक्षणमाननाब्जम् ॥ किंवागतोऽस्यपुनरन्वयमन्यलोकंनीतोऽघृणेननशृणोमिकलागिरस्ते ॥ ५८ ॥ श्रीशुकउवाच विलपंत्यांमृतंपुत्रमितिचित्रविलापनैः ॥ चित्रकेतुर्भृशंतप्तोमुक्तकंठोरुरोदसः ॥ ५९॥तयोर्विलपतोःसर्वेदंपत्योस्तदनुव्रताः॥रुरुदुःस्मनरानार्यःसर्वमासीदचेतनम्॥६०॥एवंकश्मलमापन्नंनष्टसंज्ञमनायकम् ॥ ज्ञात्वांऽगिरानाममुनिराजगामसनारदः ॥६१ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेचतुर्दशोऽध्यायः ॥१४॥ श्रीशुकउवाच ऊचतुर्मृतकोपांतेपतितंमृतकोपमं ॥ शोकाभिभूतंराजानंबोधयंतौसदुक्तिभिः ॥ १ ॥ कोऽयंस्यात्तवराजेंद्रभवान्यमनुशोचति ॥ त्वंचास्यकतमःसृष्टौपुरेदानीमतःपरं ॥ २ ॥ यथाप्रयांतिसंयांतिस्रोतोवेगेनवालुकाः ॥ संयुज्यंतेवियुज्यंतेतथाकालेनदेहिनः ॥३॥ ॥

त्राहतुः पुरेति येपुर्वजन्मनिपित्रादिरूपेणसंयुक्ताआसंस्तएवमरणेनवियुक्ताःसंतोवर्तमानजन्मनिकदाचित्तस्यैवान्यस्यवापुत्रादयोभवंति
तेजन्मांतरेतस्यैवान्यस्यवाकलत्रादयःशत्रुमित्रादयोवाभवंति अतोनायंनियमइतिभावः ॥ २ ॥ तमेवाभिप्रायंप्रकटयाति यथेति स्रोतसः
प्रवाहस्यवेगेनयथाप्रयांतिवियुज्यंते संयांतिसंयुज्यंते तथाकालवेगेनदेहिनोजवाआपि ॥ ३ ॥ ॥

तथाप्येतावंतंकालंममपुत्रोनाभूद्वार्धकेजातोमृतइतिदुःखमितिचेत्तत्राहतुः यथाधानासुबीजेषुधानाःबीजांतराणिभवंति कासुचित्कदा
चिन्नभवंतिनोत्पद्यंतेनश्यंतिचनतुभवंत्येवतिष्ठंत्येवेतिवानियमः एवमेवभूतानिपुत्रादिरूपाणिभूतेषुपित्रादिषु अतोधानानांजन्यजनकत्वे
ऽपियथापितृपुत्रादिभावोनास्ति एवमत्रापीतिनशोकःकार्यइतिभावः ईशमायाप्रेरितानामेवभवनमभवनंनवस्तुतः ॥ ४॥ तस्यचसर्वसा
धारणत्वान्नपुत्रएवशोचनीयइत्याहतुः वयंचेति तुल्यकालावर्तमानकालीनाः जन्मनःप्राक्मृत्योःपश्चाच्चयथानसंतिएवमधुनाऽपिनसं
ति भोराजन् आद्यंतयोरसत्त्वात्स्वप्नवदित्यर्थः ॥ ५ ॥ असत्वेकथंप्रतीतिःकथंवाहमस्यजनकइत्याद्यभिमानस्तत्राहतुः भूतैरिति ईश्व

## यथाधानासुवैधानाभवंतिनभवंतिच ॥ एवंभूतेषुभूतानिचोदितानीशमायया ॥ ४ ॥ वयंचत्वंचयेचेमेतु ल्यकालाश्चराचराः ॥ जन्ममृत्योर्यथापश्चात्प्राङ्नैवमधुनाऽपिभो ॥ ५ ॥ भूतैर्भूतानिभूतेशःसृजत्यवतिहंत्यजः ॥ आत्मसृष्टैरस्वतंत्रैरनपेक्षोऽपिबालवत् ॥ ६ ॥ देहेनदेहिनोराजन्देहाद्देहोऽभिजायते ॥ बीजादेवयथाबीजंदेह्यर्थइवशाश्वतः ॥ ७ ॥ देहदेहिविभागोऽयमविवेककृतःपुरा ॥ जातिव्यक्तिविभागोऽयंयथावस्तुनिकल्पितः ॥ ८ ॥ श्रीशुकउवाच एवमाश्वासितोराजाचित्रकेतुर्द्विजोक्तिभिः ॥ प्रमृज्यपाणिनावक्त्रमाधिम्लानमभाषत ॥ ९ ॥ राजोवाच कौयुवांज्ञानसंपन्नौमहिष्ठौचमहीयसाम् ॥ अवधूतेनवेषेणगूढाविहसमागतौ ॥ १० ॥ ॥ ॥ ॥ ॥

रेणमाययासृष्टत्वात्प्रतीतिनिमित्तमात्रत्वेनैवभूतानामयमभिमानइतिभावः नन्वीश्वरस्यसृष्ट्यादिभिःसाध्यमस्तिचेत्तर्हिअपूर्णकामताप्रा
प्ता नास्तिचेत्कुतःप्रवृत्तिस्तत्राहतुः अनपेक्षोऽपिबालवल्लीलयाकरोतीति ॥ ६ ॥ अयंचजन्मादिव्यवहारोदेहानामेवनत्वात्मनइत्याहतुः
देहिनःपितुर्देहेनदेहिनःपुत्रस्यदेहोमातुर्देहिनोदेहादभिजायते यथाबीजादेवबीजंजायते देहीतुशाश्वतएव अर्थोभूम्यादिर्यथातद्वत्
॥ ७ ॥ ननुनश्वरदेहप्रतियोगित्वाद्देह्यपिनशाश्वतःस्यात्तत्राहतुः देहदेहिनोरयंपरस्परप्रतियोगिविभागःपुराअनादिरविवेककृतःअज्ञानक
ल्पितः जातिःसामान्यं व्यक्तिर्विशेषः तयोर्विभागोयथावस्तुनिसन्मात्रेकल्पितः परस्परापेक्षसिद्धत्वेनानिरूपणात् तद्वदिति ॥ ८ ॥
आधिम्लानंवक्रम् ॥ ९ ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥

उन्मत्तस्येवलिंगंयेषांते ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ममप्रभूरक्षकौ बोधेसमर्थाविति वा अतोवांयुवाभ्यांज्ञानदीपःप्रवर्त्यतां ॥ १६ ॥
॥ १७ ॥ महापुरुषगोचरंहरिभक्तंत्वां ॥ १८ ॥ १९ ॥ तदैव यदापूर्वमागतोऽस्मि ॥ २० ॥ रायःअर्थाः ॥ २१ ॥ यदाचलाःअनित्याः



चरंतिह्यवनौकामंब्राह्मणाभगवत्प्रियाः ॥ मादृशांग्राम्यबुद्धीनांबोधायोन्मत्तलिंगिनः ॥ ११ ॥ कुमारोनार
दऋभुरंगिरादेवलोऽसितः ॥ अपांतरतमोव्यासोमार्कंडेयोथगौतमः ॥ १२ ॥ वसिष्ठोभगवान्रामःकपिलो
बादरायणः ॥ दुर्वासायाज्ञवल्क्यश्चजातूकर्ण्यस्तथाऽऽरुणिः ॥ १३ ॥ रोमशश्च्यवनोदत्तआसुरिःसपतंज
लिः ॥ ऋषिर्वेदशिराबोध्योमुनिःपंचशिरास्तथा ॥ १४ ॥ हिरण्यनाभःकौशल्यःश्रुतदेवऋतध्वजः ॥ एतेपरे
चसिद्धेशाश्चरंतिज्ञानहेतवः ॥ १५ ॥ तस्माद्युवांग्राम्यपशोर्ममूढधियःप्रभू ॥ अंधेतमसिमग्नस्यज्ञानदी
पउदीर्यतां ॥ १६ ॥ अंगिराउवाच अहंतेपुत्रकामस्यपुत्रदोऽस्म्यंगिरानृप ॥ एषब्रह्मसुतःसाक्षान्नारदोभ
गवानृषिः ॥ १७ ॥ इत्थंत्वांपुत्रशोकेनमग्नंतमसिदुस्तरे ॥ अतदर्हमनुस्मृत्यमहापुरुषगोचरं ॥ १८ ॥ अनुग्रहा
यभवतःप्राप्तावावामिहप्रभो ॥ ब्रह्मण्योभगवद्भक्तोनावसीदितुमर्हति ॥ १९ ॥ तदैवतेपरंज्ञानंददामिगृहमा
गतः ॥ ज्ञात्वाऽन्याभिनिवेशंतेपुत्रमेवददावहं ॥ २० ॥ अधुनापुत्रिणांतापोभवतैवानुभूयते ॥ एवंदारागृहा
रायोविविधैश्वर्यसंपदः ॥ २१ ॥ शब्दादयश्चविषयाश्चलाराजविभूतयः ॥ महीराज्यंबलंकोशाभृत्यामात्याःसु
हृज्जनाः ॥ २२ ॥ सर्वेऽपिशूरसेनेमेशोकमोहभयार्तिदाः ॥ गंधर्वनगरप्रख्याःस्वप्नमायामनोरथाः ॥ २३ ॥



किंच महीति ॥ २२ ॥ हेशूरसेन इमेसर्वेऽपिशोकादिप्रदाः किंच आगमापायित्वेनगंधर्वनगरतुल्याः गंधर्वनगरंह्यकस्मादेवक्वचिदायाति
अपयातिचेतिप्रसिद्धं तदेवमनित्यत्वंशोकादिहेतुत्वंचागमापायित्वंचोक्तं मिथ्यात्वमप्याह स्वप्नश्चमायाचमनोरथश्चयथातद्वत् ॥ २३ ॥

एतेमनोभवाः मनोमात्रविजृंभिताः अत्रहेतुः अर्थेनतात्त्विकस्वरूपेणविनैवदृश्यमानाः ततूकुतः यस्मात्क्षणांतरेनदृश्यंते तात्त्विक
त्वेहिक्षणांतरेबाधोनस्यात् अतोमनोमात्रविजृंभितत्वेनस्वप्नादिवन्मिथ्याभूताइत्यर्थः नन्वेतेपुण्यापुण्यकृताइतिमीमांसकाःप्राहुस्तत्कु
तोमनोभवत्वंतत्राह कर्मभिःकर्मवासनाभिरर्थान्ध्यायतःपुंसोमनसएवनिमित्तात्कर्माण्यभवन् पाठांतरेकर्मईप्सिततममभिध्यायत
इत्यर्थः कर्मणोऽपिमनोभवत्वात्तत्साध्याअर्थाअपिमनोभवाएवेतिभावः ॥ २४ ॥ तदेवंममतास्पदानांदुःखादिहेतुत्वमुक्तंतत्रदेहसं
बंधोमूलमित्याह अयंहीति हीत्यवधारणे अयंद्रव्यज्ञानक्रियात्मकःअधिभूताधिदैवाध्यात्मरूपोदेहएवदेहिनोदेहोऽहमितिमन्यमान
स्यदेहिनोजीवस्यविविधान्क्लेशान्संतापांश्चकरोतीतितथा ॥ २५ ॥ स्वच्छेनाव्यग्रेण गतिंतत्त्वं ध्रुवोऽयमर्थइतिविश्रंभंविश्वासंप्रणयं

**दृश्यमानाविनाऽर्थेननदृश्यंतेमनोभवाः ॥ कर्माभिध्यायतोनानाकर्माणिमनसोऽभवन् ॥ २४ ॥ अयंहि
देहिनोदेहोद्रव्यज्ञानक्रियात्मकः ॥ देहिनोविविधक्लेशसंतापकृदुदाहृतः ॥ २५ ॥ तस्मात्स्वच्छेनमनसा
विमृश्यगतिमात्मनः ॥ द्वैतेध्रुवार्थविश्रंभंत्यजोपशममाविश ॥ २६ ॥ नारदउवाच एतांमंत्रोपनि
षदंप्रतीच्छप्रयतोमम ॥ यांधारयन्सप्तरात्राद्द्रष्टासंकर्षणंप्रभुं ॥ २७ ॥ यत्पादमूलमुपसृत्यनरेंद्रपूर्वे
शर्वादयोभ्रममिमंद्वितयंविसृज्य ॥ सद्यस्तदीयमतुलानधिकंमहित्वंप्रापुर्भवानपिपरंनचिरादुपैति॥२८॥
इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेपंचदशोध्यायः ॥ १५ ॥ ॥ ॥ श्रीशुकउवाच अथदेवऋषी
राजन्संपरेतंनृपात्मजं ॥ दर्शयित्वेतिहोवाचज्ञातीनामनुशोचतां ॥ १ ॥ नारदउवाच जीवात्मन्
पश्यभद्रंतेमातरंपितरंचते ॥ सुहृदोबांधवास्तप्तान्शुचात्वत्कृतयाभृशं ॥ २ ॥**

वात्यज ततश्चउपशममाविशआश्रय ॥ २६ ॥ अंगिरसोपदिष्टंतत्त्वंपरमेश्वरप्रसादंविनानप्राप्यतइतितत्प्रसादायमंत्रविद्यांनारदउपदि
शति एतामिति उपनिषदंपरंश्रेयोऽस्यामित्युपनिषत् मंत्रएवोपनिषत्तांप्रतीच्छगृहाण द्रष्टाद्रक्ष्यतिभवान् ॥ २७ ॥ अतुलंचतदन
धिकंचसमानाधिकशून्यं परंमहिमानंप्रापुः उपैतिउपैष्यति ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेपंचदशोऽध्यायः ॥ १५ ॥
षोडशेतत्सुतोक्त्यैवविशोकीकृत्यतंनृपं ॥ आदिदेशमहाविद्यांनारदःशेषतोषणीम् ॥ १ ॥ आदौतावत्तत्पुत्रमुखेनैवपितृपुत्रादिसंबंधो
मिथ्येतिदर्शयितुंयोगबलेनतमेवज्ञातीनांदर्शयित्वाजीवारमन्नित्याद्युवाच ॥ १ ॥ २ ॥ ॥ ॥ ॥

शेषमवशिष्टमायुरस्ति अपमृत्युनामृतत्वादित्यर्थः तदेवकलेवरंप्रविश्योत्थितोजीवउवाच यद्वा अंतरालेप्रेतशरीरेस्थित्वेतिज्ञेयं ॥३॥४॥ मयिमृतेपुत्रदृष्ट्याशोकश्चेत्शत्रुदृष्ट्याहर्षःकिंनक्रियतइत्याशयेनसंबंधस्यानियतत्वमाह बंधवोविवाहादिभिःसंबंधिनः ज्ञातयः सपिंडाः अरयोघातकाः मित्राणिरक्षकाः मध्यस्थाउभयव्यतिरिक्ताः साधारणाः विद्विषोद्रव्यादिनिमित्तेनद्वेषिणः उदासीनास्तद्व्यतिरिक्ताइतिभेदः ॥ ५ ॥ कर्मभिर्भ्राम्यमाणत्वेदृष्टांतः यथापण्यानिक्रयविक्रयाद्यर्हाणि कर्तृषुव्यवहर्तृषुपरिभ्रमंति एवंजीवोऽपियोनिषुजनकेषु ॥ ६ ॥ एकस्मिन्नपिजन्मनिसंबंधस्यानियतत्वंसदृष्टांतमाह द्वाभ्यां नित्यस्यजीवतोऽपिअर्थस्यपश्वादेः अनित्यः अनियतः विक्रयादिनासंबंधनिवृत्तेः ॥ ७ ॥ एवंयोनिगतःपित्रादिसंबंधंप्राप्तोऽपिसजीवोनित्यःदेहजन्मादिनातस्यजन्माद्यभावात् अतएववस्तुतोनिरहंकृतः अ

**कलेवरंस्वमाविश्यशेषमायुःसुहृद्वृतः ॥ भुंक्ष्वभोगान्पितृप्रत्तानधितिष्ठनृपासनं ॥ ३ ॥ जीवउवाच कस्मिन्जन्मन्यमीमह्यंपितरोमातरोऽभवन् ॥ कर्मभिर्भ्राम्यमाणस्यदेवतिर्यङ्नृयोनिषु॥४॥ बंधुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः ॥ सर्वएवहिसर्वेषांभवंतिक्रमशोमिथः ॥ ५ ॥ यथावस्तूनिपण्यानिहेमादीनिततस्ततः ॥ पर्यटंतिनरेष्वेवंजीवोयोनिषुकर्तृषु॥६॥नित्यस्यार्थस्यसंबंधोह्यनित्योदृश्यतेनृषु ॥ यावद्यस्यहिसंबंधोममत्वंतावदेवहि ॥ ७ ॥ एवंयोनिगतोजीवःसनित्योनिरहंकृतः ॥ यावद्यत्रोपलभ्येततावत्स्वत्वंहितस्यतत् ॥ ८ ॥ एषनित्योऽव्ययःसूक्ष्मएषसर्वाश्रयःस्वदृक् ॥ आत्ममायागुणैर्विश्वमात्मानंसृजतेप्रभुः॥९॥**

हमस्यपुत्रइत्यभिमानशून्यः यत्रपित्रादौसंबंधिनियावदुपलभ्येतकर्मवशेनवर्तेततावदेवतस्यापित्रादेस्तत्तस्मिन्स्वत्वंनतुविक्रियादुत्तरकालमपि अथवैवंसंबंधः यदुक्तंकलेवरंसमाविश्येतितत्रतस्मिन्कलेवरेममेदानींस्वत्वंनिवृत्तमितिसदृष्टांतमाह नित्यस्यचिरकालावस्थायिनः सुवर्णादेः योनिगतोदेहंप्रविष्टोयत्रदेहेतस्यजीवस्यतत्तस्मिन्देहेस्वत्वंनतुमरणोत्तरकालमपीत्यर्थः शेषंसमानं ॥ ८ ॥ जीवस्यनित्यत्वंसाधयति एषनित्यः तत्रहेतुः अव्ययःअपक्षयशून्यः तत्कुतः सूक्ष्मःजन्मादिशून्यः तच्चकुतः सर्वाश्रयःजन्मादिमतोदेहादेराश्रयःनतुदेहादिरूपः यतःस्वदृक् स्वप्रकाशः सर्वाश्रयत्वमुपपादयति आत्मनःमायायागुणैरात्मानमेवविश्वंविश्वात्मकंसृजति तदात्मानꣳस्वयमकुरुतेतिश्रुतेः उपादानकारणत्वात्सर्वाश्रयइत्यर्थः जीवस्यवस्तुतोब्रह्मत्वात्ब्रह्मणएवचिच्छक्तिविशिष्टस्येश्वरत्वेनस्रष्टृत्वाज्जीवःसृजतीतिवाचोयुक्तिः यद्वा स्वकर्मद्वारासृष्टिनिमित्तत्वेनस्रष्टृत्वंभोग्यस्यचसर्वभोक्त्राश्रयत्वात्सर्वाश्रयत्वंचोक्तमितिद्रष्टव्यं ॥ ९ ॥ ॥

यदुक्तंसुहृद्दृतइतिसुहृदोबांधवांस्तम्नानितिचतदप्याह नह्यस्येति तत्रहेतुः एकःसुहृदादिसंगरहितः तत्कुतः गुणदोषयोर्हिताहितयोः कर्तॄणांमित्रादीनांयाःसर्वाधियोविचित्राबुद्धयस्तासांद्रष्टासाक्षी॥१०॥यच्चोक्तंभुंक्ष्वभोगानित्यादितत्राप्याह नादत्तइति गुणंसुखं दोषंदुःखं क्रियाफलंचराज्यादिकम् उदासीनत्वेहेतुः परावरदृक्कारणस्यकार्यस्यचसाक्षीनतुभोक्ता यतईश्वरोदेहादिपारतंत्र्यशून्यः अतएवंभूतस्य ममचयुष्माकंचसंबंधाभावाच्छोकंमाकुरुतेतिवाक्यार्थः ॥ ११ ॥ १२ ॥ १३ ॥ द्विजभाषितमंगिरसाप्रोक्तंपुत्रादीनांदुःखहेतुत्वंस्मरंत्यः

नह्यस्यातिप्रियःकश्चिन्नाप्रियःस्वःपरोऽपिवा॥एकःसर्वधियांद्रष्टाकर्तॄणांगुणदोषयोः ॥१०॥नादत्तआत्माहिगुणंनदोषंनक्रियाफलम्॥उदासीनवदासीनःपरावरदृगीश्वरः॥११॥ श्रीशुकउवाच इत्युदीर्यगतोजीवोज्ञातयस्तस्यतेतदा॥विस्मितामुमुचुःशोकंछित्वात्मस्नेहशृंखलाम् ॥ १२ ॥ निर्हृत्यज्ञातयोदेहंतथाकृत्वोचिताःक्रियाः॥तत्यजुर्दुस्त्यजंस्नेहंशोकमोहभयार्तिदं॥१३॥बालघ्न्योव्रीडितास्तत्रबालहत्याहतप्रभाः॥बालहत्याव्रतंचेरुर्ब्राह्मणैर्यन्निरूपितं ॥ यमुनायांमहाराजस्मरंत्योद्विजभाषितं॥१४॥सइत्थंप्रतिबुद्धात्माचित्रकेतुर्द्विजोक्तिभिः ॥ गृहांधकूपान्निष्क्रांतःसरःपंकादिवद्द्विपः ॥ १५॥ कालिंद्यांविधिवत्स्नात्वाकृतपुण्यजलक्रियः॥मौनेनसंयतप्राणोब्रह्मपुत्राववंदत॥१६॥अथतस्मैप्रपन्नायभक्तायप्रयतात्मने॥भगवान्नारदःप्रीतोविद्यामेतामुवाचह॥१७॥ नमस्तुभ्यंभगवतेवासुदेवायधीमहि॥प्रद्युम्नायानिरुद्धायनमःसंकर्षणायच ॥१८॥ नमोविज्ञानमात्रायपरमानंदमूर्तये ॥ आत्मारामायशांतायानिवृत्तद्वैतदृष्टये ॥१९॥आत्मानंदानुभूत्यैवन्यस्तशक्त्यूर्मयेनमः॥ हृषीकेशायमहतेनमस्तेविश्वमूर्तये॥२०॥ ॥

पुत्रकामनाशून्यानिर्मत्सराःसत्यइतिभावः ॥ १४ ॥ निबिडपंकतुल्यंगृहंविहायनिष्क्रमणमतिधीरस्यतस्यैवयोग्यंनान्यस्योति दृष्टांतमाह सरःपंकाद्द्विपोगजइव ॥ १५॥ कृताःपुण्यजलक्रियाःपितृतर्पणाद्यायेन संयतप्राणोनियतेंद्रियः ॥ १६ ॥ १७॥ नमोधीमाहि ध्यायेममनसानमस्यामइत्यर्थः ॥ १८ ॥ निवृत्ताद्वैतदृष्टिर्यस्मात् ॥ १९ ॥ न्यस्तानिरस्ताःशक्त्यूर्मयोमायानिमित्तारागद्वेषादयोयेन ॥ २० ॥

मनसासहवचसिअप्राप्योपरतेसतियएकएवप्रकाशते वचसीतिसर्वेंद्रियोपलक्षणं सोऽस्मानव्यात् सदसत्परःकार्यकारणयोःकारणम्
॥ २१ ॥ तदेवाह यस्मिन्निति इदंकार्यकारणंतिष्ठतिअप्येतिचयतश्चजायते मृन्मयेषुघटादिषुमृज्जातिर्मृन्मात्रमिवसर्वानुस्यूतंयत्तस्मै
॥ २२ ॥ ननुसर्वानुस्यूतंचेन्मृज्जातिवत्प्रतीयेतकथंमनोवचसोरप्राप्तिस्तत्राह यद्ब्रह्मव्योमवद्विततमपिअसवःप्राणाःक्रियाशक्त्यानस्पृशंति
मनआदीनिचज्ञानशक्त्यानविदुः तद्ब्रह्मनतोऽस्मि ॥ २३ ॥ तेषांतदज्ञानेहेतुमाह देहेंद्रियादयोऽमीयदंशविद्धायच्चैतन्यांशेनाविष्टाःसं
तःकर्मसुस्वस्वविषयेषुप्रचरंतिजाग्रत्स्वप्नयोः अन्यदासुषुप्तिमूर्छादौनैवप्रचरंति यथाअप्रतप्तंलोहंनदहति अतोयथालोहमग्निश

वचस्युपरतेप्राप्ययएकोमनसासह ॥अनामरूपश्चिन्मात्रःसोऽव्यान्नःसदसत्परः ॥२१ ॥ यस्मिन्निदंयत
श्चेदंतिष्ठत्यप्येतिजायते ॥ मृन्मयेष्विवमृज्जातिस्तस्मैतेब्रह्मणेनमः ॥ २२ ॥ यंनस्पृशंतिनविदुर्मनोबुद्धीं
द्रियासवः ॥ अंतर्बहिश्चविततंव्योमवत्तंनतोऽस्म्यहम् ॥२३ ॥ देहेंद्रियप्राणमनोधियोऽमीयदंशविद्धाःप्र
चरंतिकर्मसु ॥ नैवान्यदालोहमिवाप्रतप्तंस्थानेषुतद्द्रष्ट्रपदेशमेति॥ २४ ॥औंनमोभगवतेमहापुरुषायम
हानुभावायमहाविभूतिपतयेसकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविंदयुगलपर
मपरमेष्ठिन्नमस्ते ॥२५॥ श्रीशुकउवाच भक्तायैतांप्रपन्नायविद्यामादिश्यनारदः ॥ ययावंगिरसा
साकंधामस्वायंभुवंप्रभो ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

त्यैवदाहकंसदग्निंविनानदहतिएवंब्रह्मगतज्ञानक्रियाशक्तिभ्यांप्रवर्तमानादेहादयस्तन्नस्पृशंतिनविदुश्चेतिभावः जीवस्तर्हिद्रष्टृत्वाज्जाना
तुनेत्याह स्थानेषुजाग्रदादिषुद्रष्ट्रपदेशंद्रष्टृसंज्ञांतदेवैतिप्राप्नोति नान्योजीवोनामास्ति नान्योऽतोऽस्तिद्रष्टेत्यादिश्रुतेः यद्वाद्रष्ट्रपदेशंद्र
ष्टृसंज्ञंजीवमपितदेवएतिजानातिनतुजीवस्तज्जानातीत्यर्थः तदुक्तंहंसगुह्यस्तोत्रे देहोऽसवोऽक्षाइत्यादि ॥ २४ ॥ सकलायेसात्वतप
रिवृढास्तेषांनिकरःसमूहस्तस्यकरकमलानांकुड्मलैर्मुकुलैरुपलालितंचरणारविंदयुगलंयस्यतस्यसंबोधनम् परमउत्कृष्ट परमेष्ठिन्सर्वेश्व
र ॥ २५ ॥ पूर्वंसनारदोंऽगिराआजगामेत्यंगिराःप्रधानमुक्तः चित्रकेतोःपुत्रप्रदत्वेनतस्यपृथगुक्तत्वात् इहतुनारदोंऽगिरसासाकंययावि
तिनारदस्यप्राधान्यनिर्देशः तदुपदेशेनतस्यवैराग्योत्पत्तेः प्रभोहेसमर्थ ॥ २६ ॥ ॥ ॥

यथायथावद्धारयामास ॥ २७ ॥ विद्याधराधिपत्यंचावांतरफलंलेभे अप्रतिहतमस्खलितं ॥ २८ ॥ कतिपयैरहोभिः विद्यया इद्धेनदी
प्तेनमनसागतिर्यस्य ॥ २९ ॥ मृणालवद्गौरं शितिवाससंनीलांबरं स्फुरंतिकिरीटादीनियस्य कटित्रंकटिसूत्रं प्रसन्नानिवक्त्राणियस्यअ
रुणानिलोचनानियस्यतंचतंच ॥ ३० ॥ दृष्ट्वाचतमादिपुरुषमभ्ययाच्छरणंगतः अनमन्ननाम कथंभूतः तस्यदर्शनेनध्वस्तंसमस्तंकि
ल्बिषंयस्य स्वच्छममलंचांतःकरणंयस्य प्रणयेनाश्रुयुक्तेलोचनेयस्य प्रहृष्टानिरोमाणियस्यसः ॥ ३१ ॥ तंप्रसमीडितुंस्तोतुंचिरंनैवाशकत्न

चित्रकेतुस्तुविद्यांतांयथानारदभाषिताम् ॥ धारयामाससप्ताहमब्भक्षःसुसमाहितः ॥ २७ ॥ ततश्चसप्तरात्रां
तेविद्ययाधार्यमाणया ॥ विद्याधराधिपत्यंसलेभेऽप्रतिहतंनृप ॥ २८ ॥ ततःकतिपयाहोभिर्विद्ययेद्धमनोग
तिः ॥ जगामदेवदेवस्यशेषस्यचरणांतिकं ॥ २९ ॥ मृणालगौरंशितिवाससंस्फुरत्किरीटकेयूरकटित्रकंकणं ॥
प्रसन्नवक्त्रारुणलोचनंतंददर्शसिद्धेश्वरमंडलैःप्रभुं ॥ ३० ॥ तद्दर्शनध्वस्तसमस्तकिल्बिषःस्वच्छामलांतः
करणोऽभ्ययान्मुनिः ॥ प्रवृद्धभक्त्याप्रणयाश्रुलोचनःप्रहृष्टरोमाऽनमदादिपूरुषं ॥ ३१ ॥ सउत्तमश्लोकपदा
ब्जविष्टरंप्रेमाश्रुलेशैरुपमेहयन्मुहुः ॥ प्रेमोपरुद्धाखिलवर्णनिर्गमोनैवाशकत्तंप्रसमीडितुंचिरं ॥ ३२ ॥ त
तःसमाधायमनोमनीषयाबभाषएतत्प्रतिलब्धवागसौ ॥ नियम्यसर्वेंद्रियबाह्यवर्तनंजगद्गुरुंसात्वतशास्त्र
विग्रहं ॥ ३३ ॥ चित्रकेतुरुवाच अजितजितःसममतिभिर्भवान्जितात्मभिर्भवता ॥ विजितास्तेऽपि
चभजतामकामात्मनांयआत्मदोऽतिकरुणः ॥ ३४ ॥

शशाक तत्रहेतुः उत्तमश्लोकस्यपादाब्जयोर्विष्टरमासनंउपमेहयन् अभिषिंचन् प्रेम्णाउपरुद्धःअखिलानांवर्णानांनिर्गमउच्चारणंयस्य
सः ॥ ३२ ॥ मनीषयाबुद्ध्या मनःसमाधायैतद्वक्ष्यमाणंबभाषे प्रतिलब्धावाग्येन सात्वतशास्त्रोक्तोविग्रहोयस्यतं ॥ ३३ ॥ अन्योऽन्य
प्रेमजानंदनिभृतान्स्वामिसेवकान् ॥ अभिनंदन्मुदास्तौतिदशभिःपंचभिर्विभुम् ॥ हेअजितअन्यैरजितोऽपिभवान्साधुभिर्भक्तैर्जितः
स्वाधीनएवकृतः यतोभवानतिकरुणः तेपिचनिष्कामाआपिभवताविजिताः योभवान्अकामात्मनामात्मानमेवददाति ॥ ३४ ॥

ननुभक्तैरेवजितइतिकथंस्पर्धमानैरपिसृष्ट्यादिकर्तृभिरन्यैरीश्वरैर्जयसंभवात्तत्राह तवेति जगतउदयादीनितवैवविभवोविभवनंमाहिमाली
लेतियावत् आदिशब्देनप्रवेशनियमनादीनि विश्वसृजस्तुब्रह्मादयोनेश्वराःकिंतुतेतवांशोयःपुरुषस्तस्यांशाः तत्रएवंस्थितेऽपिपृथक्पृथ
गीश्वरावयमित्यभिमानेनवृथैवस्पर्धंते॥ ३५॥त्वमेवसृष्ट्यादिकर्तेत्येतदुपपादयति परमाणुःसूक्ष्ममूलकारणं परममहदंतिमंकार्यं तयोस्त्वमे
वाद्यंतांतरवर्ती आदावंतेचअंतरेमध्येचवर्तितुंशीलंयस्यसः अतएवत्रयविधुरःआद्यंतमध्यशून्योध्रुवः तेचत्रयासृज्यंतेनतुध्रुवाः कुतइत्यत
आह सत्वानांसत्वेनप्रतीतानांकार्याणामादावंतेऽपिअंतरालेऽपिचतदेवध्रुवंसुवर्णादिवत् ॥ ३६॥ ध्रुवंध्रुवत्वेनकालतःपरिच्छेदोनास्तीत्यु
क्तं देशतोऽप्यपरिच्छेदमाह क्षित्यादिभिरिति पूर्वस्मात्पूर्वस्माद्दशगुणमुत्तरोत्तरैरधिकैरावृतः यत्रत्वयिअणुकल्पःपततिपरिभ्रमाति तत्तस्मा

तवविभवःखलुभगवन्जगदुदयस्थितिलयादीनि ॥ विश्वसृजस्तेंऽशांशास्तत्रमृषास्पर्धंतेपृथगभिमत्या
॥ ३५॥ परमाणुपरममहतोस्त्वमाद्यंतांतरवर्तीत्रयविधुरः॥ आदावंतेऽपिचसत्वानांयद्ध्रुवंतदेवांतरालेऽ
पि ॥ ३६ ॥ क्षित्यादिभिरेषकिलावृतःसप्तभिर्दशगुणोत्तरैरांडकोशः ॥ यत्रपतत्यणुकल्पःसहांडकोटि
कोटिभिस्तदनंतः ॥ ३७ ॥ विषयतृषोनरपशवोयउपासतेविभूतीर्नपरंत्वां ॥ तेषामाशिषईशतदनुवि
नश्यंतियथाराजकुलं ॥ ३८ ॥ कामधियस्त्वयिरचितानपरमरोहंतियथाकरंभबीजानि ॥ ज्ञानात्मन्य
गुणमयेगुणगणतोऽस्यद्वंद्वजालानि ॥ ३९ ॥ ॥ ॥ ॥ ॥

दनंतस्त्वम्॥ ३७॥ यस्मादेवंपरमेश्वरस्त्वमेवअन्येदेवास्तवविभूतयःअतस्त्वांविहायविषयकामनयाऽन्योपासकाअतिमंदाइत्याह विषयेषु
तृट्तृष्णायेषांतेनराकाराःपशवः कुतः येविभूतीरिंद्राद्याउपासतेनतुपरंत्वाम् ततःकिंतत्राह तेषामिति तदनुउपास्यनाशानंतरं यथाराजकु
लमनुराजकुलनाशानंतरंयथातत्सेवकानामाशिषोनश्यंतितद्वत् अयंचपरमोऽवधिः मध्येऽपिनश्यंत्येव ॥ ३८॥ विषयकामेनापिकृतात्वत्से
वामोक्षफलैवेत्याह कामधियः विषयकामनाअपि हेपरमत्वयिरचिताःकृताश्चेत्नरोहंतिदेहांतरोत्पत्तयेनभवंति करंभबीजानिभर्जितबीजा
नियथा यतोऽस्यजीवस्यगुणगणादेवद्वंद्वसमूहाभवंतिअतःकामेनापिनिर्गुणस्यतवभजनाच्छनैर्नैर्गुण्यंभवतीत्यर्थः ॥ ३९ ॥ ॥

फलकामनयाऽपित्वदाराधनंयदामोक्षहेतुस्तदाकिंवक्तव्यंभगवद्धर्ममाहात्म्यमितिवकुंतत्संप्रदायप्रवर्तकत्वेनभगवंतंस्तौति जितमिति यदा
भवान्भागवतंधर्ममाहतदाहेभगवन्त्वयाजितंसर्वोत्कर्षेणस्थितम् तत्रहेतुः येनिष्किंचनाःसनत्कुमारादयोमुनयस्तेयंभगवंतमपवर्गायसेवं
तेतेनभवताजितम् यंधर्ममितिवा ॥ ४० ॥ अनवद्यतामेवाह विषममतिर्यत्रयस्मिन्भागवतेधर्मेनास्ति यदन्यत्रयथान्यस्मिन्काम्येधर्मे ननुसो
पिवेदोक्तत्वादनवद्यएवतत्राह विषमाधियाशत्रुमरणादिकामनयारचितोयःसह्यविशुद्धः रागद्वेषादिमत्त्वात् क्षयिष्णुश्च नश्वरफलत्वात् अध
र्मबहुलश्च हिंसादिबाहुल्यात् तदुक्तंशबरस्वामिभिः उभयमिहचोदनायांलक्ष्यतेअर्थोऽनर्थश्चेत्यादि ॥ ४१ ॥ एतत्प्रपंचयति कःक्षेमः कुशलं
नकिंचित् निजपरयोःस्वस्यपरस्यच स्वपरद्रुहास्वस्मैपरस्मैचद्रुह्यतीतिस्वपरध्रुक्तेन यतःस्वद्रोहात् अत्यंतकायक्लेशात्तवकोपःपीडासं

जितमजिततदाभवतायदाहभागवतंधर्ममनवद्यम् ॥ निष्किंचनायेमुनयआत्मारामायमुपासतेऽपवर्गा
य ॥ ४० ॥ विषममतिर्नयत्रनृणांत्वमहमितिममतवेतिचयदन्यत्र ॥ विषमधियारचितोयःसह्यविशुद्धः
क्षयिष्णुरधर्मबहुलः ॥ ४१ ॥ कःक्षेमोनिजपरयोःकियानर्थःस्वपरद्रुहाधर्मेण॥स्वद्रोहात्तवकोपःपरसंपीड
याचतथाऽधर्मः ॥४२॥ नव्यभिचरतितवेक्षाययाह्यभिहितोभागवतोधर्मः॥स्थिरचरसत्त्वकदंबेष्वपृथग्धि
योयमुपासतेत्वार्याः ॥ ४३ ॥ नहिभगवन्नघटितमिदंत्वद्दर्शनान्नृणामखिलपापक्षयः ॥ यन्नामसकृच्छ्रवणा
त्पुल्कसकोऽपिविमुच्यतेसंसारात् ॥ ४४ ॥ अथभगवन्वयमधुनात्वदवलोकपरिमृष्टाशयमलाः ॥ सुरऋ
षिणायदुदितंतावकेनकथमन्यथाभवति ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भवति तदुक्तंगीतासु कर्षयंतःशरीरस्थंभूतग्राममचेतसः ॥ मांचैवांतःशरीरस्थंतान्विद्ध्यासुरनिश्चयानिति तथापरसंपीडयाऽधर्मः चशब्दा
त्तवकोपश्च अतस्त्वयारागांधमपिकथंचिद्वेदमार्गेप्रवर्तयितुंकाम्यधर्मोऽभिहितोनतत्त्वदृष्ट्या ॥ ४२ ॥ भागवतधर्मेणतुनद्रोहइत्याह नेति न
व्यभिचरतिनपरमार्थंजहाति तवईक्षादृष्टिः अव्यभिचारेहेतुः स्थिरेति स्थावरजंगमप्राणिसमूहेषुसमबुद्धयोभागवतायंधर्मंसेवंते ॥ ४३ ॥
एवंभूतस्यभागवतधर्मप्रवर्तकस्यतवदर्शनात्सर्वपापक्षयोभवतीतिकिंचित्रमित्याह नहीति ॥ ४४ ॥ अतोहंकृतार्थोस्मीत्याह अथेति
अतोहेतोः तवावलोकनेनपरिमृष्टानिरस्ताआशयेचित्तेमलायेषांते त्वद्दर्शनंचममनारदोपदेशेनजातमित्याह सुरर्षिणेति ॥ ४५ ॥

यथाचाहंपूर्वंमतिमूढआसंयथाचनारदेनानुगृहीतोऽस्मितत्सर्वांतर्यामिणस्तवमयाकिंप्रकाशनीयमित्याह विदितमिति विशेषेणज्ञाप्यंप्रका
शनीयंकियदिव नकिमपीत्यर्थः सवितुर्यथाखद्योतैःप्रकाशनीयंनास्तितद्वत् ॥ ४६ ॥ उक्तलक्षणंभगवंतंप्रणमति नमइतिद्वाभ्याम् स
कलस्यजगतःस्थित्यादीनामीशायसमर्थाय दुरवसिताअविज्ञाताआत्मगतिर्निजंतत्त्वंयस्यतस्मै केषांकुयोगिनाम् केन भिदाभेददृष्ट्या
॥ ४७ ॥ श्वसंतिचेष्टंते चेकितानंपश्यंतमनु चित्तयःज्ञानेंद्रियाणि उच्चकंतिस्वारूढंपश्यंति ॥ ४८ ॥ ४९ ॥ मेऽनुशासनंमद्विषयउप
देशः तेनतयाचविद्ययाअस्माच्चदर्शनात्संसिद्धोऽसि ॥ ५० ॥ तद्बोधदार्ढ्यायस्वयमप्युपदिशति अहमित्यादिना सर्वभूतान्यहमेवभूता

विदितमनंतसमस्तंतवजगदात्मनोजनैरिहाचरितम् ॥ विज्ञाप्यंपरमगुरोःकियदिवसवितुरिवखद्योतैः ॥
॥ ४६ ॥ नमस्तुभ्यंभगवतेसकलजगत्स्थितिलयोदयेशाय ॥ दुरवसितात्मगतयेकुयोगिनांभिदापरमहंसा
य ॥ ४७ ॥ यंवैश्वसंतमनुविश्वसृजःश्वसंतियंचेकितानमनुचित्तयउच्चकंति ॥ भूमंडलंसर्षपायतियस्यमू
र्ध्नितस्मैनमोभगवतेऽस्तुसहस्रमूर्ध्ने ॥ ४८ ॥ श्रीशुकउवाच संस्तुतोभगवानेवमनंतस्तमभाषत ॥ वि
द्याधरपतिंप्रीतश्चित्रकेतुंकुरूद्वह ॥ ४९ ॥ श्रीभगवानुवाच यन्नारदांगिरोभ्यांतेव्याल्हतंमेऽनुशासनं ॥ सं
सिद्धोसितयाराजन्विद्ययादर्शनाच्चमे ॥५०॥ अहंवैसर्वभूतानिभूतात्माभूतभावनः॥शब्दब्रह्मपरंब्रह्ममम
भेशाश्वतीतनू ॥५१॥ लोकेविततमात्मानंलोकंचात्मनिसंततं॥उभयंचमयाव्याप्तंमयिचैवोभयंकृतं ॥५२ ॥

नामात्माभोक्ताप्यहमेव भोक्तृभोग्यात्मकंविश्वंमद्व्यतिरिक्तंनास्तीत्यर्थः यतोहंभूतभावनःभूतानांप्रकाशकःकारणंच ननुशब्दब्रह्मप्रकाश
कंपरंब्रह्मकारणंचप्रकाशकंच सत्यं तेउभेममैवरूपेइत्याह शब्दब्रह्मेति शाश्वतीशाश्वत्यौ ॥ ५१ ॥ अतस्त्वमेवंपश्येत्याह लोके
भोग्यप्रपंचेभोक्तृत्वेनविततमनुगतमात्मानंलोकंचात्मनिभोग्यत्वेनसंततंव्याप्तम् तदुभयंचमयाकारणात्मनाव्याप्तम् मयिचैवोभयंकृतंप्र
कल्पितंस्मरेदितितृतीयेनान्वयः पश्येदित्यध्याहारोवा ॥ ५२ ॥ ॥ ॥ ॥

ननुजाग्रदाद्यवस्थाभेदेनभोक्तृभोग्यात्मकंविश्वंस्फुटंप्रतीयमानंकथंकल्पितंस्यादित्याशंक्यस्वप्नगतजाग्रदादिदृष्टांतेनसंभावयन्नाह य
थेतिद्वाभ्यां यथास्वप्नेसुप्तोविश्वंगिरिवनादिरूपंदेशांतरस्थमात्मन्येवपश्यति स्वप्नमध्येसुषुप्तिस्वप्रंचपश्यतीत्यर्थः तथास्वप्नएवोत्थितः
सन् आत्मानमेकदेशस्थंशयनदेशेस्थितंमन्यते जाग्रदवस्थामनुभवति ॥ ५३ ॥ एवंप्रसिद्धान्यपिजागरादीनिजीवस्थानानिजीवोपा
धेर्बुद्धेरवस्थाभूतानिआत्मनोमायामात्राणिइत्येवंविज्ञायतेषांद्रष्टारमतएवपरंतदवस्थारहितमात्मानंस्मरेत् ॥ ५४ ॥ ननुतेषांद्रष्टारमितिक
थमुच्यते स्वापेद्वयाभावेनद्रष्टृत्वाभावात्तत्राह येनेति प्रसुप्तःपुरुषोजीवोयेनरूपेणतदास्वापकालेआत्मनःस्वापंनिर्गुणमतींद्रियंसुखंच
वेद तमात्मानंब्रह्ममामवेहि तदास्वापसुखयोरसंवेदनेसुखमहमस्वाप्समितिस्मृतेरसंभवात् ॥ ५५ ॥ ननुस्वापसाक्षिणादृष्टंकथंजाग्रदव
स्थःस्मरेत् नह्यन्येनदृष्टमन्यःस्मरति तत्राह उभयंप्रस्वापंप्रतिबोधंचस्मरतःअनुसंदधतः तयोःप्रस्वापप्रतिबोधयोःप्रकाशकत्वेनयदन्वे

## यथासुषुप्तःपुरुषोविश्वंपश्यतिचात्मनि ॥ आत्मानमेकदेशस्थंमन्यतेस्वप्नउत्थितः ॥५३॥ एवंजागरणादी
## निजीवस्थानानिचात्मनः ॥ मायामात्राणिविज्ञायतद्द्रष्टारंपरंस्मरेत् ॥५४॥ येनप्रसुप्तःपुरुषःस्वापंवेदात्म
## नस्तदा ॥ सुखंचनिर्गुणंब्रह्मतमात्मानमवेहिमां ॥५५॥ उभयंस्मरतःपुंसःप्रस्वापप्रतिबोधयोः ॥ अन्वेति
## व्यतिरिच्येततज्ज्ञानंब्रह्मतत्परं ॥५६॥ यदेतद्विस्मृतंपुंसोमद्भावंभिन्नमात्मनः ॥ ततःसंसारएतस्यदेहाद्देहो
## मृतेर्मृतिः ॥ ५७ ॥ लब्ध्वेहमानुषींयोनिंज्ञानविज्ञानसंभवां ॥ आत्मानंयोनबुध्येतनक्वचिच्छममाप्नुयात्
## ॥ ५८ ॥ स्मृत्वेहायांपरिक्लेशंततःफलविपर्ययं ॥ अभयंचाप्यनीहायांसंकल्पाद्विरमेत्कविः ॥ ५९ ॥

तिताभ्यांव्यतिरिच्येतयत् एकैकापायेऽप्यनपायात् तत्ज्ञानंपरंब्रह्मतदेव नतुभिन्नमित्यर्थः अतोबाल्येदृष्टस्ययौवनेस्मृतिवदवस्थांतरत्वेऽ
पिस्वापानंदयोःस्मरणंघटतइतिभावः तदेवंभूतंब्रह्मात्मानमवेहीत्यनुषंगः ॥ ५६ ॥ विपक्षेदोषमाह यत् यदिएतन्मयिभावंमत्स्वरूपंब्रह्म
विस्मृतंतदात्मनःसकाशाद्भिन्नंभवति ततएतस्यपुंसःसंसारोभवति संसारस्वरूपमाह देहाद्देहोजन्मानंतरंपुनर्जन्ममृतेरनंतरंमृतिश्चेति
॥ ५७ ॥ योन्यंतरेऽपिभोगादिसंपादनंशक्यं ज्ञानार्थत्वन्नैवयतितव्यमित्याह लब्ध्वेति ज्ञानंशास्त्रोक्तं विज्ञानमपरोक्षं तयोःसंभवोय
स्यांतां ॥ ५८ ॥ वैराग्यार्थमाह ईहायांप्रवृत्तिमार्गे ततईहातः अनीहायांनिवृत्तिमार्गेतुअभयंमोक्षोभवतीतिचस्मृत्वाफलसंकल्पाद्विर
मेत् पाठांतरेनोभयंपरिक्लेशःफलविपर्ययश्चनास्तीत्येवंस्मृत्वा ॥ ५९ ॥ ॥ ॥

एतद्विवृणोति सुखायेतित्रिभिः दुःखस्यानिवृत्तिः सुखस्याप्राप्तिः ॥ ६० ॥ विज्ञाउद्यमेप्रवीणावयमित्यभिमानवतां स्थानत्रयविलक्ष
णांतुरीयांबुध्वा ॥ ६१ ॥ दृष्टश्रुताभिर्मात्राभिरैहिकामुष्मिकैर्विषयैः स्वेनतेजसाविवेकबलेन ॥ ६२ ॥ नचातःपरःपुरुषार्थोऽस्तीत्या
ह एतावानिति योगेनैपुणंयस्यां साबुद्धिर्येषाम् परस्यात्मनएकंदर्शनमितियत्एतावानेव ॥ ६३ ॥ ६४ ॥ ६५ ॥ इतिषष्ठेटीकायां
षोडशोऽध्यायः ॥ १६ ॥ ॥ ततःसप्तदशेऽमोघमहर्द्धिंप्राप्यखेचरन् ॥ विहस्यगिरिशंशापादुमायावृत्रतांगतः ॥ १ ॥ यतोयस्या

सुखायदुःखमोक्षायकुर्वतोदंपतीक्रियाः ॥ ततोनिवृत्तिरप्राप्तिर्दुःखस्यचसुखस्यच ॥ ६० ॥ एवंविपर्ययंबु
द्ध्वानृणांविज्ञाभिमानिनां ॥ आत्मनश्चगतिंसूक्ष्मांस्थानत्रयविलक्षणां ॥ ६१ ॥ दृष्टश्रुताभिर्मात्राभिर्निर्मु
क्तःस्वेनतेजसा ॥ ज्ञानविज्ञानसंतुष्टोमद्भक्तःपुरुषोभवेत् ॥ ६२ ॥ एतावानेवमनुजैर्योगनैपुणबुद्धिभिः ॥
स्वार्थःसर्वात्मनाज्ञेयोयत्परात्मैकदर्शनं ॥ ६३ ॥ त्वमेतच्छ्रद्धयाराजन्नप्रमत्तोवचोमम ॥ ज्ञानविज्ञानसं
पन्नोधारयन्नाशुसिद्ध्यसि ॥ ६४ ॥ श्रीशुकउवाच आश्वास्यभगवानित्थंचित्रकेतुंजगद्गुरुः ॥ पश्यत
स्तस्यविश्वात्माततश्चांतर्दधेहरिः ॥ ६५ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेषोडशोऽध्यायः ॥ १६ ॥
श्रीशुकउवाच यतश्चांतर्हितोऽनंतस्तस्यैकृत्वादिशेनमः ॥ विद्याधरश्चित्रकेतुश्चचारगगनेचरः ॥ १ ॥
सलक्षंवर्षलक्षाणामव्याहतबलेंद्रियः ॥ स्तूयमानोमहायोगीमुनिभिःसिद्धचारणैः ॥ २ ॥ कुलाचलेंद्र
द्रोणीषुनानासंकल्पसिद्धिषु ॥ रेमेविद्याधरस्त्रीभिर्गापयन्हरिमीश्वरं ॥ ३ ॥ एकदासविमानेनविष्णुदत्ते
नभास्वता ॥ गिरिशंददृशेगच्छन्परीतंसिद्धचारणैः ॥ ४ ॥ आलिंग्यांकीकृतांदेवींबाहुनामुनिसंसदि ॥ उ
वाचदेव्याःशृण्वंत्याजहासोच्चैस्तदंतिके ॥ ५ ॥ ॥ ॥ ॥ ॥

न् तस्यैदिशेनमःनमनंकृत्वा ॥ १ ॥ सचित्रकेतुः विद्याधरस्त्रीभिर्हरिंगापयन्रेमइतिद्वयोरन्वयः अव्याहतंबलमिंद्रियपाटवंयस्य ॥ २ ॥
नानाविधाःसंकल्पेनैवसिद्धयोयासुतासु ॥ ३ ॥ अकस्मादद्भुतैश्वर्यगर्वात्प्राचीनकर्मतः ॥ आसुरींयोनिमापन्नोभवानीशापतःसतु ॥
तदाह एकदेत्यादिना ॥ ४ ॥ अंकीकृतामुत्संगेनैकीकृत्यदेवींबाहुनाआलिंग्यस्थितंउवाचजहासच तस्यांतिकेस्थितःसन् ॥ ५ ॥

धर्मवक्तावदतिशरीरिणांमध्येमुख्यश्चभार्ययामिथुनीभूयचास्ते ॥ ६ ॥ ७ ॥ ८ ॥ अगाधागंभीराधीर्यस्यसः ॥ ९ ॥ नतस्यवीर्यप्रभा वंविद्वान् अतद्वीर्यविद्वान्तस्मिन् निर्जितात्माभिमानिनेजितेंद्रियोऽहमित्यभिमानवते इतिरुषाक्रोधेनाह ॥ १० ॥ विरुद्धंप्रकर्षेणकरो तीतिविप्रकृत् ॥ ११ ॥ अतिवर्तिनंशास्त्रमतिक्रम्यवर्तमानशीलं येनोनिषेधंतिननिवारयंति ॥ १२ ॥ एषांब्रह्मादीनामनुध्येयंपदाब्जयु

चित्रकेतुरुवाच एषलोकगुरुःसाक्षाद्धर्मवक्ताशरीरिणां ॥ आस्तेमुख्यःसभायांवैमिथुनीभूयभार्यया ॥ ॥६॥ जटाधरस्तीव्रतपाब्रह्मवादीसभापतिः ॥ अंकीकृत्यस्त्रियंचास्तेगतन्हीःप्राकृतोयथा ॥७॥ प्रायशःप्रा कृताश्चापिस्त्रियंरहसिबिभ्रति ॥ अयंमहाव्रतधरोबिभर्तिसदसिस्त्रियं ॥८॥ भगवानपितच्छ्रुत्वाप्रहस्यागा धधीर्नृप ॥ तूष्णींबभूवसदसिसभ्याश्चतदनुव्रता ॥९॥ श्रीशुकउवाच इत्यतद्वीर्यविदुषिब्रुवाणेबह्वशो भनं ॥ रुषाहदेवीधृष्टायनिर्जितात्माभिमानिने ॥ १० ॥ पार्वत्युवाच अयंकिमधुनालोकेशास्तादंडधरः प्रभुः ॥ अस्मद्विधानांदुष्टानांनिर्लज्जानांचविप्रकृत् ॥ ११ ॥ नवेदधर्मंकिलपद्मयोनिर्नब्रह्मपुत्रानतुनारदा द्याः ॥ नवैकुमारःकपिलोमनुश्चयेनोनिषेधंत्यतिवर्तिनंहरं ॥ १२ ॥ एषामनुध्येयपदाब्जयुग्मंजगद्गुरुंमंगल मंगलंस्वयं ॥ यःक्षत्रबंधुःपरिभूयसूरीन्प्रशास्तिधृष्टस्तदयंहिदंडचः ॥ १३ ॥ नायमर्हतिवैकुंठपादमूलोपसर्प णं ॥ संभावितमतिःस्तब्धःसाधुभिःपर्युपासितं ॥ १४ ॥ अतःपापीयसींयोनिमासुरींयाहिदुर्मते ॥ यथेहभू योमहतांनकर्तापुत्रकिल्बिषम् ॥ १५ ॥ श्रीशुकउवाच एवंशप्तश्चित्रकेतुर्विमानादवरुह्यसः ॥ प्रसाद यामाससतींमूर्ध्नानम्रेणभारत ॥ १६ ॥ चित्रकेतुरुवाच प्रतिगृण्हामितेशापमात्मनोऽजलिनांबिके ॥ देवैर्म र्त्याययत्प्रोक्तंपूर्वदिष्टंहितस्यतत् ॥ १७ ॥

ग्मंयस्यतम् मंगलमंगलंपरमधर्ममूर्तिम् सूरीन्परिभूयअज्ञान्कृत्वाजग द्गुरुंयःप्रशास्ति तत्तस्मात् ॥ १३ ॥ ननुहरिभक्तोऽयनंदंडार्हइतिचेत्तत्राह नायंसाधुभिःपरिसेवितवैकुंठस्यपादमूलोपसर्पणमर्हति यतः संभाविताअहमधिकइतिकृतामतिर्येन अतएवस्तब्धोऽनम्रः ॥ १४ ॥ तदेवंस्वयंदंड्यत्वंनिश्चित्यतंप्राह अतइति हेपुत्रयथाभूयोमहतां किल्बिषमपराधंनकर्तामकरिष्यतितथायाहीत्यर्थः ॥ १५ ॥ १६ ॥ पूर्वदिष्टंप्राचीनकर्मप्राप्तमेव ॥ १७ ॥ ॥ ॥ ॥

अयंचसंसारचक्रस्वभावएवनचित्रमित्याह संसारचक्रइति ॥ १८ ॥ अतएवात्रममचतवचनकोऽपिदोषइत्याह नैवेति ॥ १९ ॥ एवं तावत्सुखदुःखादिकमंगीकृत्योक्तमिदानींतदपिवस्तुतोनास्तीत्याह गुणानांमायामयानांप्रवाहेसंसारे ॥ २० ॥ ननुमायागुणानांचेदयंप्रवाहस्तर्हितेषांजडत्वाद्बंधमोक्षाद्यनुभवोनस्यात्तत्राह एकःपरमेश्वरोमाययानिमितभूतयाभूतानिप्राणिनःसृजति एषांबंधादिकंचसृजति निष्कलःस्वयंबंधादिशून्यः ॥ २१ ॥ नन्वेवंभूतविषमसृष्टौतस्यकिंकारणंप्रियादिवैषम्याभावादित्याशंक्ययद्यपिप्रियादयोनसंतितथाऽपि तत्तत्कर्मवशात्सर्वंघटतइत्याह नतस्येतिद्वाभ्यां प्रतीपःअप्रियः नज्ञातिर्बंधुश्चेत्यर्थः सर्वत्रसमस्य तत्कुतः निरंजनस्यनिःसंगस्य अत

संसारचक्रएतस्मिन्जंतुरज्ञानमोहितः ॥ भ्राम्यन्सुखंचदुःखंचभुंक्तेसर्वत्रसर्वदा ॥ १८ ॥ नैवात्मानपरश्चापिकर्तास्यात्सुखदुःखयोः ॥ कर्तारंमन्यतेप्राज्ञआत्मानंपरमेवच ॥ १९ ॥ गुणप्रवाहएतस्मिन्कःशापःकोन्वनुग्रहः ॥ यःस्वर्गोनरकःकोवाकिंसुखंदुःखमेववा ॥२०॥ एकःसृजतिभूतानिभगवानात्ममायया॥ एषांबंधंचमोक्षंचसुखंदुःखंचनिष्कलः॥२१॥नतस्यकश्चिद्दयितःप्रतीपोनज्ञातिर्बंधुर्नपरोनचस्वः॥समस्यसर्वत्रनिरंजनस्यसुखेनरागःकुतएवरोषः ॥ २२ ॥ तथापितच्छक्तिविसर्गएषांसुखायदुःखायहिताहिताय॥ बंधायमोक्षायचमृत्युजन्मनोःशरीरिणांसंसृतयेऽवकल्पते ॥ २३ ॥ अथप्रसादयेनत्वांशापमोक्षायभामिनि ॥ यन्मन्यसेअसाधूक्तंममतत्क्षम्यतांसति ॥ २४ ॥ श्रीशुकउवाच इतिप्रसाद्यगिरिशौचित्रकेतुररिंदम॥जगामस्वविमानेनपश्यतोस्मयतोस्तयोः ॥२५॥ततस्तुभगवान्रुद्रोरुद्राणीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानांपार्षदानांचशृण्वतां ॥ २६ ॥ श्रीरुद्रउवाच दृष्टवत्यसिसुश्रोणिहरेरद्भुतकर्मणः ॥ माहात्म्यंभृत्यभृत्यानांनिस्पृहाणांमहात्मनां ॥ २७ ॥ ॥ ॥ ॥

एवतन्निमित्तेसुखेरागोरागानुबंधोनास्ति रोषःकुतःस्यात् ॥ २२ ॥ यद्यप्येवंतथाऽपितस्यशक्त्यामाययायोविसर्गःपुण्यपापादिलक्षणंकर्म एषांशरीरिणांसुखाद्यर्थमवकल्पतेसमर्थोभवति यथोक्तंगीतासु भूतभावोद्भवकरोविसर्गःकर्मसंज्ञितइति ॥ २३ ॥ अथतस्मात्भामिनि हेकोपने त्वांकेवलंप्रसादयामिनतुशापमोक्षाय तर्हिकिंप्रसादनेनअतआह ममोक्तमुक्तिंसाध्वपिअसाधुवन्मन्यसेतत् त्वयाक्षम्यतां॥२४॥ गिरिशौभवानीशंकरौप्रसाद्य स्मयतोःविस्मयंकुर्वतोःसतोः ॥ २५ ॥ २६ ॥ २७ ॥ ॥ ॥

स्वर्गादावेवतुल्योऽर्थःप्रयोजनमितिद्रष्टुंशीलंयेषांतेतथा ॥ २८ ॥ तत्रतदुक्तमेवहेतुमाह द्वाभ्यां देहिनांसुखंदुःखमित्यादिद्वंद्वानिईश्वर स्यलीलयामाययाभवंति ॥ २९ ॥ तेषुचगुणदोषविकल्पइत्येवेत्यन्वयः इष्टानिष्टभेदइवयःस्फुरतिसआत्मन्यर्थभेदः पुंसःस्वप्नेयथाअ विवेककृतोभवति स्त्रजिवत्सर्पमालादिभिर्यथातथैवकृतइत्यर्थः स्रग्वदितिवक्तव्येस्रजिवदित्यार्षम् पाठांतरेतुसुगमं ॥ ३० ॥ अतोभा गवतानांनिस्पृहत्वमुचितमेवेत्याह वासुदेवइति ज्ञानवैराग्ययोर्वीर्यंबलंयेषांतेषां व्यपाश्रयःविशिष्टबुद्ध्याआश्रयणीयोऽर्थोनास्ति ॥

नारायणपराःसर्वेनकुतश्चनबिभ्यति॥स्वर्गापवर्गनरकेष्वपितुल्यार्थदर्शिनः ॥२८॥ देहिनांदेहसंयोगाद्द्वं द्वानीश्वरलीलया॥ सुखंदुःखंस्मृतिर्जन्मशापोऽनुग्रहएवच ॥२९॥ अविवेककृतःपुंसोह्यर्थभेदइवात्मनि॥ गुणदोषविकल्पश्चभिदेवस्त्रजिवत्कृतः॥ ३०॥ वासुदेवेभगवतिभक्तिमुद्वहतांनृणां॥ ज्ञानवैराग्यवीर्याणां नेहकश्चिद्व्यपाश्रयः॥३१॥ नाहंविरिंचोनकुमारनारदौनब्रह्मपुत्रामुनयःसुरेशाः॥ विदामयस्येहितमंशकां शकानतत्स्वरूपंपृथगीशमानिनः॥ ३२॥ नह्यस्यास्तिप्रियःकश्चिन्नाप्रियःस्वःपरोऽपिवा॥ आत्मत्वात्सर्व भूतानांसर्वभूतप्रियोहरिः॥३३॥ तस्यचायंमहाभागश्चित्रकेतुःप्रियोऽनुगः॥ सर्वत्रसमदृक्शांतोह्यहंचैवा च्युतप्रियः॥ ३४॥ तस्मान्नविस्मयःकार्यःपुरुषेषुमहात्मसु॥ महापुरुषभक्तेषुशांतेषुसमदर्शिषु॥ ३५॥ श्रीशुकउवाच इतिश्रुत्वाभगवतःशिवस्योमाभिभाषितम्॥ बभूवशांतधीराजन्देवीविगतविस्मया॥ ॥ ३६ ॥ इतिभागवतोदेव्याःप्रतिशप्तुमलंतमः॥ मूर्ध्नासंजगृहेशापएतावत्साधुलक्षणं॥ ३७॥ जज्ञे त्वष्टुर्दक्षिणाग्नौदानवींयोनिमाश्रितः॥वृत्रइत्यभिविख्यातोज्ञानविज्ञानसंयुतः॥३८॥एतत्तेसर्वमाख्यातंय न्मांत्वंपरिपृच्छसि॥ वृत्रस्यासुरजातेश्चकारणंभगवन्मतेः॥ ३०॥

॥ ३१ ॥ अस्यचहरिदासत्वेनतत्स्वभावत्वान्नैतच्चित्रमितिवक्तुंहरेर्माहात्म्यमाह नाहमितिद्वाभ्यां ईहितमभिप्रायंलीलांवायदावयंनविद्म स्तदातस्यस्वरूपमंशकांशकाअपिसंतःपृथगीशमानिनोनाविदुरेव ॥ ३२ ॥ अतएवहरिरपिसर्वेषांभूतानांप्रियः ॥ ३३ ॥ अहंचैवाच्यु तस्यप्रियः तस्मान्ममास्मिन्क्रोधोनाभूदितिभावः ॥ ३४ ॥ ३५ ॥ ३६ ॥ प्रतिशापंदातुमलंतमः समर्थतमोऽपि ॥ ३७ ॥ ३८ ॥ असुरजातेःअसुरभावेनोत्पत्तेः भगवतिमतेश्च ॥ ३९ ॥ ॥ ॥

॥ ४० ॥ एतन्नूएतम् ॥ ४१ ॥ इतिषष्ठेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ आदित्यानांचतुर्थस्यत्वष्टुर्वंशप्रसंगतः ॥ प्रोक्तमिं द्ररुतंविश्वरूपवृत्रवधादिकम् ॥ १ ॥ अदितेःपंचमादीनांपुत्राणामन्वयोक्तिभिः ॥ अष्टादशेऽदितेर्गर्भेशक्रेणमरुतांभिदा ॥ २ ॥ त्वष्टुर्वंश मनुक्रम्यसप्रसंगंयथाक्रमम् ॥ आदित्यानामथान्येषांवंशानाहमुनीश्वरः ॥ ३ ॥ दक्षकन्यान्वयानुकथनेआदित्याःद्वादशपुत्राःप्रोक्ताः विवस्वानर्यमापूषात्वष्टाथसविताभगः ॥ धाताविधातावरुणोमित्रःशक्रउरुक्रमइति तत्रअष्टाध्यायांतमारभ्यविश्वरूपवृत्रचित्रकेतूपा ख्यानैस्त्वष्टुर्वंशमनुवर्ण्यइदानींसवितुर्वंशमाह पृश्निस्त्विति सावित्रीमित्यादिषुप्रासूतेत्युत्तरस्यानुषंगः पशुंपशुयागम् महामखान्पंच

इतिहासमिमंपुण्यंचित्रकेतोर्महात्मनः॥माहात्म्यंविष्णुभक्तानांश्रुत्वाबंधाद्विमुच्यते॥४०॥यएतत्प्रातरुत्था यश्रद्धयावाग्यतःपठेत् ॥ इतिहासंहरिंस्मृत्वासयातिपरमांगतिम् ॥ ४१ ॥ इतिश्रीभागवतेमहापुराणेषष्ठ स्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ श्रीशुकउवाच पृश्निस्तुपत्नीसवितुःसावित्रींव्याहृतिंत्र यीम् ॥ अग्निहोत्रंपशुंसोमंचातुर्मास्यंमहामखान् ॥ १ ॥ सिद्धिर्भगस्यभार्याऽंगमहिमानंविभुंप्रभुम् ॥ आ शिषंचवरारोहांकन्यांप्रासूतसुव्रताम् ॥२॥ धातुःकुहूःसिनीवालीराकाचानुमतिस्तथा ॥ सायंदर्शमथप्रातः पूर्णमासमनुक्रमात् ॥ अग्नीन्पुरीष्यानाधत्तक्रियायांसमनंतरः ॥ ३ ॥ चर्षणिर्वरुणस्यासीद्यस्यांजातोभृगुः पुनः ॥ वाल्मीकिश्चमहायोगीवल्मीकादभवत्किल ॥ ४ ॥ अगस्त्यश्चवसिष्ठश्चमित्रावरुणयोर्ऋषी ॥ रेतःसिषिचतुःकुंभेउर्वश्याःसन्निधौद्रुतम् ॥ ५ ॥ रेवत्यांमित्रउत्सर्गमरिष्टंपिप्पलंव्यधात् ॥ ६ ॥

यज्ञान् ॥ १ ॥ २ ॥ धातुर्भार्याकुहूःसायंपुत्रंप्रासूत एवंसिनीवालीदर्शमित्यनुक्रमात् समनंतरोविधाताक्रियायांपुरीष्यानग्नीन्पंच चितान् पुरीष्यासोअग्नयइतिपंचवाएतेऽग्नयोयच्चित्तयइतिश्रुतेः ॥ ३ ॥ चर्षणीवरुणस्यभार्यासीत् पूर्वंब्रह्मणःपुत्रोभृगुर्यस्यांपुनर्जातः वाल्मीकिर्वरुणस्यैवपुत्रोऽभवत् एतौवरुणस्यासाधारणौपुत्रौ ॥ ४ ॥ तथोत्सर्गादयोमित्रस्यासाधारणाः तयोरेवसाधारणौद्वौपुत्रौचाह अगस्त्यश्चवसिष्ठश्चऋषीमित्रावरुणयोरभवताम् यतउभावपिकुंभेरेतःसिषिचतुः सत्रेहजातावेषितानमोभिःकुंभेरेतःसिषिचतुः समान मितिश्रुतेः द्रुतंस्कन्नं ॥ ५ ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ७ ॥ ८ ॥ पश्चादष्टमस्कंधे ॥ ९ ॥ अथेति कश्यपस्यादितेःपुत्राणांद्वादशादित्यानांसंततिमुक्त्वादितेःपुत्रान्कथयामीत्यर्थः ॥ १० ॥
हिरण्यकशिपुर्हिरण्याक्षश्चेतिप्रथमंद्वावेव तौचकीर्तितौतृतीयस्कंधे ॥ ११ ॥ १२ ॥ विप्रचितोदानवाद्भर्तुःसकाशात्राहुंपुत्रमग्रहीत् ॥
॥ १३ ॥ ततःसंन्हादादसूत ॥ १४ ॥ योमेषरूपंवातापिंपेचेतमिल्वलम् यंपेचेतंचवातापिंचासूतेत्यन्वयः ॥ १५॥ १६ ॥ ततोबलेः

पौलोम्यामिंद्रआधत्तत्रीन्पुत्रानितिनःश्रुतम्॥जयंतमृषभंतातततृतीयंमीढुषंप्रभुः॥७॥उरुक्रमस्यदेवस्यमा
यावामनरूपिणः॥कीर्तौपत्न्यांबृहत्श्लोकस्तस्यासन्सौभगादयः॥८॥तत्कर्मगुणवीर्याणिकश्यपस्यमहा
त्मनः ॥ पश्चाद्वक्ष्यामहेऽदित्यांयथैवावततारह ॥९॥ अथकश्यपदायादान्दैतेयान्कीर्तयामिते॥यत्रभाग
वतःश्रीमान्प्रन्हादोबलिरेवच॥१०॥ दितेर्द्वावेवदायादौदैत्यदानववंदितौ॥हिरण्यकशिपुर्नामहिरण्याक्ष
श्चकीर्तितौ ॥ ११ ॥ हिरण्यकशिपोर्भार्याकयाधुर्नामदानवी॥जंभस्यतनयादत्तासुषुवेचतुरःसुतान् ॥१२॥
संन्हादंप्रागनुन्हादंन्हादंप्रन्हादमेवच॥तत्स्वसासिंहिकानामराहुंविप्रचितोऽग्रहीत्॥१३॥शिरोऽहरद्यस्य
हरिश्चक्रेणपिबतोऽमृतम्॥ संन्हादस्यकृतिर्भार्याऽसूतपंचजनंततः॥१४॥ न्हादस्यधमनिर्भार्याऽसूतवाता
पिमिल्वलम्॥ योऽगस्त्यायत्वतिथयेपेचेवातापिमिल्वलम्॥ १५ ॥ अनुन्हादस्यसूर्म्यायांबाष्कलोमहिष
स्तथा॥विरोचनस्तुप्रान्हादिर्देव्यास्तस्याभवद्बलिः॥१६॥बाणज्येष्ठंपुत्रशतमशनायांततोऽभवत् ॥ तस्यानु
भावःसुश्लोक्यःपश्चादेवाभिधास्यते॥१७॥बाणआराध्यगिरिशंलेभेतद्गणमुख्यतां ॥ तत्पार्श्वेभगवानास्ते
ह्यद्यापिपुरपालकः॥१८॥मरुतश्चदितेःपुत्राश्चत्वारिंशन्नवाधिकाः ॥ तआसन्नप्रजाःसर्वेनीताइंद्रेणसात्म
तां॥१९॥राजोवाच कथंतआसुरंभावमपोह्यौत्पत्तिकंगुरो॥इंद्रेणप्रापिताःसात्म्यंकिंतत्साधुकृतंहितैः॥२०

सकाशादभवत् तस्यबलेरनुभावःसुश्लोक्यःपुण्यकीर्त्यर्हः यद्वा अनुभाव्यतेसाक्षिस्तूयतइत्यनुभावः सुश्लोक्यंयशइतिशेषः ॥ १७ ॥
तस्यगणेषुमुख्यतांप्राधान्यम् ॥ १८ ॥ सात्मतांसमानरूपताम् ॥ १९ सात्म्यंदेवत्वंप्रापिताः ॥ २० ॥ ॥ ॥

॥ २१ ॥ आदृतंसादरम् अल्पंमिताक्षरम् अर्थवत्बह्वर्थयुक्तम् सत्रमयनमाश्रयोयस्यहेसत्रायणशौनक ॥ २२ ॥ पार्ष्णिग्राहेणपृष्ठतःस हायेन ॥ २३ ॥ भ्रातृहंतारमिंद्रंमारयित्वासुखिनीस्यामितिचिंतयामासदितिः उल्बणंक्रूरम् अक्लिन्नहृदयंकठिनचित्तम् ॥ २४ ॥ ननु राजास्वदेहरक्षार्थमन्येषांघातंकरोत्येवकिमत्रचित्रंतत्राह कृमीति ईशःप्रभुरित्यभिहितस्यापियस्यपूर्वेषांराज्ञांदेहस्यमरणानंतरंहित्रिदिना वस्थितस्यकृमयइतिश्वादिभिर्भक्षितस्यतुविष्ठेतिदग्धस्यभस्मेतिसंज्ञाआसीत्तत्कृतेतस्यदेहस्यार्थेयोभूतेभ्योद्रुह्यतिसकिंस्वार्थंवेदनवेदैव त

इमेश्रद्दधतेब्रह्मन्नृषयोहिमयासह ॥ परिज्ञानायभगवंस्तन्नोव्याख्यातुमर्हसि ॥ २१ ॥ सूतउवाच त द्विष्णुरातस्यसबादरायणिर्वचोनिशम्यादृतमल्पमर्थवत् ॥ सभाजयन्संनिभृतेनचेतसाजगादसत्रायणस र्वदर्शनः ॥ २२ ॥ श्रीशुकउवाच हतपुत्रादितिःशक्रपार्ष्णिग्राहेणविष्णुना ॥ मन्युनाशोकदीप्तेनज्वलं तीपर्यचिंतयत् ॥२३॥ कदानुभ्रातृहंतारमिंद्रियाराममुल्बणं॥अक्लिन्नहृदयंपापंघातयित्वाशयेसुखं॥२४॥ कृमिविड्भस्मसंज्ञासीद्यस्येशाभिहितस्यच ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः ॥ २५ ॥ आशासान स्यतस्येदंध्रुवमुन्नद्धचेतसः ॥ मदशोषकइंद्रस्यभूयाद्येनसुतोहिमे ॥२६॥ इतिभावेनसाभर्तुराचचारासकृत् प्रियम् ॥ शुश्रूषयाऽनुरागेणप्रश्रयेणदमेनच ॥२७॥ भक्त्यापरमयाराजन्मनोज्ञैर्वल्गुभाषितैः ॥ मनोज्ञ ग्राहभावज्ञासुस्मितापांगवीक्षणैः ॥ २८ ॥ एवंस्त्रियाजडीभूतोविद्वानपिविदग्धया ॥ बाढमित्याहविवशो नतच्चित्रंहियोषिति ॥ २९ ॥ विलोक्यैकांतभूतानिभूतान्यादौप्रजापतिः ॥ स्त्रियंचक्रेस्वदेहार्धंययापुंसांम तिर्हृता ॥ ३० ॥ एवंशुश्रूषितस्तातभगवान्कश्यपःस्त्रिया ॥ प्रहस्यपरमप्रीतोदितिमाहाभिनंद्यच ॥३१॥

त्रहेतुः यतोभूतद्रोहान्निरयोभवति ॥ २५ ॥ इदंदेहादिकंध्रुवंनित्यमाशासानस्यमन्यमानस्यअतउन्नद्धमुच्छृंखलंचेतोयस्यतस्यैंद्रस्ययो मदस्तस्यशोषक.पुत्रोमेयेनहेतुनाभूयात्भवेत् ॥ २६ ॥ भर्तुःप्रियाचरणमेवेतिभावेनसाभर्तुःप्रियमसकृदाचचार ॥ २७ ॥ २८ ॥ विव शःस्त्रीपरतंत्रःसन्बाढंतवमनोरथंपूरयिष्यामीतियदाहतन्नाचित्रम् ॥ २९ ॥ तत्रहेतुमाह विलोक्येति एकांतभूतानिनिःसंगानि मैथुनेन सृष्टिवृद्ध्यर्थंस्वदेहार्धमेवस्त्रियंचक्रे ॥ ३० ॥ एवंस्त्रियाशुश्रूषितःसन् ॥ ३१ ॥ ॥ ॥ ॥

इहचकारात्परत्रच अगमःअप्राप्यः ॥ ३२ ॥ ननुपरमेश्वरेसुप्रीतेसर्वकामप्राप्तिरितिप्रसिद्धंतत्राह पतिरेवेति ॥ ३३ ॥ ननुमनसिस्थि
तःश्रीवासुदेवएवलक्ष्मीपतिःपरंदैवतमितिप्रसिद्धम् सत्यम् सएवस्वाधिकारेणरूपभेदैःपूज्यतइत्याह मानसइतिसार्धेन देवतालिंगैर्मूर्ति
भिरुपलक्षितः तान्येवाह नामइंद्रादि रूपंवज्रहस्तत्वादि ताभ्यांविविधंकल्पितैः ॥ ३४ ॥ ३५ ॥ ३६ ॥ इंद्रहणंइंद्रहंतारम् अमृत्युं मृत्युशू
न्यम् येनइंद्रेणविष्णुनासहायेनघातितौ ॥ ३७ ॥ ३८ ॥ ३९ ॥ स्वभावमनुवर्तमानायायोषितःकोऽतिक्रमोऽपराधः ॥ ४० ॥ स्वभावमेवाह द्वा

कश्यपउवाच वरंवरयवामोरुप्रीतस्तेहमनिंदिते ॥ स्त्रियाभर्तरिसुप्रीतेकःकामइहचागमः ॥ ३२ ॥ पतिरेवहिनारीणांदैवतंपरमंस्मृतम् ॥ मानसःसर्वभूतानांवासुदेवःश्रियःपतिः ॥ ३३ ॥ सएवदेवतालिंगैर्नामरूपविकल्पितैः ॥ इज्यतेभगवान्पुंभिःस्त्रीभिश्चपतिरूपधृक् ॥ ३४ ॥ तस्मात्पतिव्रतानार्यःश्रेयस्कामाःसुमध्यमे ॥ यजंतेऽनन्यभावेनपतिमात्मानमीश्वरं ॥ ३५ ॥ सोहंत्वयाऽर्चितोभद्रेईदृग्भावेनभक्तितः॥ तत्तेसंपादयेकाममसतीनांसुदुर्लभं ॥ ३६ ॥ दितिरुवाच वरदोयदिमेब्रह्मन्पुत्रमिंद्रहणंवृणे ॥ अमृत्युंमृतपुत्राऽहंयेनमेघातितौसुतौ ॥ ३७ ॥ निशम्यतद्वचोविप्रोविमनाःपर्यतप्यत ॥ अहोअधर्मःसुमहानद्यमेसमुपस्थितः ॥ ३८ ॥ अहोअद्येंद्रियारामोयोषिन्मय्येहमायया ॥ गृहीतचेताःकृपणःपतिष्येनरके ध्रुवं ॥ ३९ ॥ कोऽतिक्रमोऽनुवर्तंत्याःस्वभावमिहयोषितः ॥ धिङ्मांबताबुधंस्वार्थेयदहंत्वजितेंद्रियः ॥ ॥ ४० ॥ शरत्पद्मोत्सवंवक्त्रंवचश्चश्रवणामृतं ॥ हृदयंक्षुरधाराभंस्त्रीणांकोवेदचेष्टितं ॥ ४१ ॥ नहिकश्चित्प्रियःस्त्रीणामंजसास्वाशिषात्मनां ॥ पतिंपुत्रंभ्रातरंवाघ्नंत्यर्थेघातयंतिच ॥ ४२ ॥ प्रतिश्रुतंददामीति वचस्तन्नमृषाभवेत् ॥ वधंनार्हतिचेंद्रोऽपितत्रेदमुपकल्पते ॥ ४३ ॥ ॥ ॥

भ्याम् शरत्पद्मस्येवोत्सवोविकाशोयस्मिन् श्रवणेश्रुतीतयोरमृतम् क्षुरधारोपमंचित्तम् ॥ ४१ ॥ स्वाशिषात्मनांस्वार्थकामनयात्मवत्प्रे
ष्ठत्वेनप्रतीयमानानाम् ॥ ४२ ॥ तत्रेदमुपकल्पतेयोग्यंभवति अयंभावः वैष्णवंव्रतंतावदुपदेक्ष्यामितेनैवास्याःशुद्धचित्तायाइंद्रंप्रतिक्रो
धोनिवर्तिष्यते पुत्रस्त्वमर्त्योभविष्यति दीर्घकालत्वेचव्रतस्यकथंचिद्वैगुण्येसतींद्रस्यवधोऽपिनभविष्यतीति ॥ ४३ ॥

॥ ४४ ॥ हेभद्रे अंजः यथावद्यदिधारयिष्यसितर्हींद्रहाभविष्यति वैगुण्येतुदेवबांधवोभविष्यति वैष्णवत्वाद्व्रतस्यकथंचिद्वैगुण्येऽपिसति सर्वथावैकल्याभावात् ॥ ४५ ॥ कार्याण्यावश्यकानिव्रतंयानिनघ्नंति आवश्यकानिनचनिषिद्धानिकिंत्वभ्यनुज्ञातानि तानिसर्वाण्यपि ब्रूहि ॥ ४६ ॥ तत्रैकत्रिंशन्निषेधानाह नहिंस्यादितिपंचभिःनशपेन्नाक्रोशेत् यदमंगलंकपालास्थ्यादिकंतन्नस्पृशेत् ॥ ४७ ॥ नाप्सुप्रविश्यस्नायात् पूर्वंविधृतांस्रजंपुनर्नधारयेत् ॥ ४८ ॥ भोजनेपंचनिषेधानाह नोच्छिष्टमिति चंडिकान्नंभद्रकाल्यैनिवेदितम् पिपीलि

इतिसंचिंत्यभगवान्मारीचःकुरुनंदन ॥ उवाचकिंचित्कुपितआत्मानंचविगर्हयन्॥ ४४॥ कश्यपउवाच पुत्रस्तेभविताभद्रेइंद्रहादेवबांधवः ॥ संवत्सरंव्रतमिदंयद्यंजोधारयिष्यसि ॥४५॥ दितिरुवाच धारयिष्येव्रतंब्रह्मन्ब्रूहिकार्याणियानिमे ॥ यानिचेहनिषिद्धानिनव्रतंघ्नंतियानितु ॥ ४६ ॥ कश्यपउवाच नहिंस्याद्भूतजातानिनशपेन्नानृतंवदेत् ॥ नच्छिंद्यान्नखरोमाणिनस्पृशेद्यदमंगलं ॥४७॥ नाप्सुस्नायान्नकुप्येतनसंभाषेतदुर्जनैः॥नवसीताधौतवासःस्रजंचविधृतांक्वचित् ॥४८॥नोच्छिष्टंचंडिकान्नंचसामिषंवृषलाहृतं ॥ भुंजीतोदक्ययादृष्टंपिबेदंजलिनात्वपः ॥४९॥ नोच्छिष्टाऽस्पृष्टसलिलासंध्यायांमुक्तमूर्धजा॥अनर्चिताऽसंयतवागसंवीताबहिश्चरेत् ॥५०॥ नाधौतपादाप्रयतानार्द्रपान्नोउदक्शिराः॥शयीतनापराङ्नान्यैर्ननग्नानचसंध्ययोः ॥५१॥ धौतवासाःशुचिर्नित्यंसर्वमंगलसंयुता ॥पूजयेत्प्रातराशात्प्राग्गोविप्रान्श्रियमच्युतं ॥ ५२ ॥ स्त्रियोवीरवतीश्चार्चेत्स्रग्गंधबलिमंडनैः॥पतिंचार्च्योपतिष्ठेतध्यायेत्कोष्ठगतंचतं ॥ ५३ ॥ सांवत्सरंपुंसवनंव्रतमेतदविप्लुतं ॥ धारयिष्यासिचेत्तुभ्यंशक्रहाभवितासुतः ॥ ५४ ॥

कादिदूषितंवा अंजलिनात्वपोनपिबेत् ॥ ४९ ॥ गृहाद्बहिर्निर्गमेसप्तनिषेधानाह नोच्छिष्टेति अनर्चितामंडनहीना असंवीताअप्रावृता ॥ ५० ॥ शयनेऽष्टौनिषेधानाह नाधौतपादेति नापराक्पश्चिमशिराः ॥ ५१ ॥ कार्याण्याह धौतवासाइतिद्वाभ्याम् प्रातराशात्प्रथमभोजनात् ॥ ५२ ॥ वीरवतीर्जीवद्भर्तृकाः आर्च्यसंपूज्य कोष्ठगतंकुक्ष्यंतरगतम् ॥ ५३ ॥ पुंसवनंपुत्रोत्पत्तिकरं तुभ्यंतव ॥ ५४ ॥

॥ ५५ ॥ ५६ ॥ ५७ ॥ हरिरिंद्रोवतस्यच्छिद्रंप्रेप्सुःप्राप्तुमिच्छुः जिह्मःकुटिलःसाधुवेषः मृगहालुब्धकोयथामृगवंचनायमृगवेषोभव
ति ॥ ५८ ॥ केनमेशिवंस्यादितिचिंतांप्राप्तः ॥ ५९ ॥ अस्पृष्टवारिश्चासावधौतांघ्रिश्च ॥ ६० ॥ निद्रयाऽपहृतंचेतोयस्याः ॥ ६१ ॥

बाढमित्यभिप्रेत्याथदितीराजन्महामनाः ॥ काश्यपंगर्भमाधत्तव्रतंचांजोदधारसा ॥५५॥ मातृष्वसुरभि
प्रायमिंद्रआज्ञायमानद ॥ शुश्रूषणेनाश्रमस्थांदितिंपर्यचरत्कविः ॥५६॥ नित्यंवनात्सुमनसःफलमूलस
मित्कुशान् ॥ पत्रांकुरमृदोऽपश्चकालेकालउपाहरत् ॥ ५७ ॥ एवंतस्याव्रतस्थायाव्रतच्छिद्रंहरिर्नृप ॥ प्रे
प्सुःपर्यचरज्जिह्मोमृगहेवमृगाकृतिः ॥ ५८ ॥ नाध्यगच्छद्व्रतच्छिद्रंतत्परोऽथमहीपते ॥ चिंतांतीव्रांगतः
शक्रःकेनमेस्याच्छिवंत्विह ॥५९॥ एकदासातुसंध्यायामुच्छिष्टाव्रतकर्शिता ॥ अस्पृष्टवार्यधौतांघ्रिःसुष्वा
पविधिमोहिता ॥ ६० ॥ लब्ध्वातदंतरंशक्रोनिद्राऽपहृतचेतसः ॥ दितेःप्रविष्टउदरंयोगेशोयोगमायया
॥ ६१ ॥ चकर्तसप्तधागर्भंवज्रेणकनकप्रभं ॥ रुदंतंसप्तधैकैकंमारोदीरितितान्पुनः ॥ ६२ ॥ तेतमूचुः
पाट्यमानाःसर्वेप्रांजलयोनृप ॥ नोजिघांससिकिंइंद्रभ्रातरोमरुतस्तव ॥ ६३ ॥ माभैष्टभ्रातरोमह्यंयूय
मित्याहकौशिकः ॥ अनन्यभावान्पार्षदानात्मनोमरुतांगणान् ॥ ६४ ॥ नममारदितेर्गर्भःश्रीनिवासा
नुकंपया ॥ बहुधाकुलिशक्षुण्णोद्रौण्यस्त्रेणयथाभवान् ॥ ६५ ॥ सकृदिष्ट्वादिपुरुषंपुरुषोयातिसाम्यतां ॥
संवत्सरंकिंचिदूनंदित्यायद्धरिरर्चितः ॥ ६६ ॥ सजूरिंद्रेणपंचाशद्देवास्तेमरुतोभवन् ॥ व्यपोह्यमातृदो
षंतेहरिणासोमपाःकृताः ॥ ६७ ॥ दितिरुत्थायददृशेकुमाराननलप्रभान् ॥ इंद्रेणसहितान्देवीपर्यतु
ष्यदनिंदिता ॥६८॥ अथेंद्रमाहताताहमादित्यानांभयावहं॥अपत्यमिच्छंत्यचरंव्रतमेतत्सुदुष्करं ॥ ६९॥

मारोदीरित्युपलालयन्निवतान्पुनःसप्तधाचकर्तचिच्छेद ॥ ६२ ॥ ६३ ॥ कौशिकइंद्रः गणान्सप्त सप्तगणावैमरुतइतिश्रुतेः ॥ ६४ ॥
॥ ६५ ॥ ६६ ॥ सजूःसह ॥ ६७ ॥ ६८ ॥ ६९ ॥ ॥ ॥ ॥

॥ ७० ॥ दित्यानिष्कपटमुक्केसातिइंद्रोऽपिनिष्कपटमेवाह अंबेति लब्धमंतरंयेन अर्थेए बुद्धिर्यस्य ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥
गुणस्पर्शेविषयभोगं बुधःकोवृणाते यद्यस्मान्नरकेऽपिविषयभोगःस्यात् ॥ ७५ ॥ महीयसिमहत्तमे मृतःसमुत्थितः ॥ ७६ ॥ ७७ ॥



एकःसंकल्पितःपुत्रःसप्तसप्ताभवन्कथं ॥ यदितेविदितंपुत्रसत्यंकथयमामृषा ॥७०॥ इंद्रउवाच अंबतेऽ
हंव्यवसितमुपधार्यागतोऽतिकम् ॥ लब्धांतरो च्छिदंगर्भमर्थबुद्धिर्नधर्मवित् ॥ ७१॥ कृत्तोमेसप्तधागर्भ
आसन्सप्तकुमारकाः ॥ तेऽपिचैकैकशोवृक्णाःसप्तधानापिमम्रिरे ॥ ७२ ॥ ततस्तत्परमाश्चर्यंवीक्ष्याध्य
वसितंमया॥महापुरुषपूजायाःसिद्धिःकाप्यानुषंगिणी ॥७३॥ आराधनंभगवतईहमानानिराशिषः॥येतु
नेच्छंत्यपि रंतेस्वार्थकुशलाःस्मृताः ॥ ७४ ॥ आराध्यात्मप्रदंदेवंस्वात्मानंजगदीश्वरं ॥ कोवृणीतेगुण
स्पर्शंबुधःस्यान्नरकेऽपियत् ॥ ७५॥ तदिदंममदौर्जन्यंबालिशस्यमहीयसि ॥ क्षंतुमर्हसिमातस्त्वंदिष्ट्याग
र्भोमृतोत्थितः ॥७६॥ श्रीशुकउवाच इंद्रस्तयाऽभ्यनुज्ञातःशुद्धभावेनतुष्टया ॥ मरुद्भिःसहतांनत्वाजगा
मत्रिदिवंप्रभुः ॥७७॥ एवंतेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि ॥ मंगलंमरुतांजन्मकिंभूयःकथयामिते ॥
॥ ७८ ॥ इतिश्रीभा०म०षष्ठस्कंधेअष्टादशोऽध्यायः ॥ १८ ॥ ॥ राजोवाच व्रतंपुंसवनंब्रह्मन्भवता
यदुदीरितं ॥ तस्यवेदितुमिच्छामियेनविष्णुःप्रसीदति ॥ १ ॥ श्रीशुकउवाच शुक्लेमार्गशिरेपक्षेयोषि
द्भर्तुरनुज्ञया ॥ आरभेतव्रतमिदंसार्वकामिकमादितः ॥ २ ॥ निशम्यमरुतांजन्मब्राह्मणाननुमंत्र्यच ॥
स्नात्वाशुक्लदतीशुक्लेवसीतालंकृतांबरे ॥ पूजयेत्प्रातराशात्प्राग्भगवंतंश्रियासह ॥ ३ ॥ ॥

॥ ७८ ॥ इतिषष्ठस्कंधेटीकायांअष्टादशोऽध्यायः ॥ १८ ॥ ॥ ऊनविंशेतुयत्प्रोक्तंकश्यपेनदितेर्व्रतं ॥ तदेवविवृतंलोकेहितायह
रितोषणं ॥ १ ॥ तस्यप्रकारमितिशेषः ॥ १ ॥ मार्गशिरेमासेशुक्लपक्षे आदितःप्रतिपदि ॥ २ ॥ अनुमंत्र्यपृष्ट्वा शुक्लादंतायस्याः सा
शुक्लदतीधौतदंता अलंकृतासतीपूजयेत् ॥ ३ ॥ ॥ ॥ ॥

आदौतावन्नमस्कारमंत्रानाह त्रिभिः तेतुभ्यमलंपर्याप्तमेवसर्वंनकिंचिदन्यैःकृत्यमस्तिअतःकेवलंतेतुभ्यंनमोऽस्तु पर्याप्तौहेतवः निरपे
क्षाय हेपूर्णकाम महाविभूतिपतयेलक्ष्मीपतये सकलाःसिद्धयोऽणिमाद्यायस्मिंस्तस्मै ॥ ४ ॥ भोईश यथायथावत् त्वंरूपादिभिर्जुष्टः
अन्यैश्चसत्यसंकल्पत्वादिभिःसर्वैर्गुणैः ततस्तस्मात् ॥ ५ ॥ महापुरुषस्यपरमेश्वरस्येवलक्षणानिनिरपेक्षत्वादीनियस्यास्तस्याःसंबोध

अलंतेनिरपेक्षायपूर्णकामनमोस्तुते ॥ महाविभूतिपतयेनमःसकलसिद्धये ॥ ४ ॥ यथालंकृपयाभूयाते
जसामहिनौजसा ॥ जुष्टईशगुणैःसर्वैस्ततोसिभगवान्प्रभुः ॥ ५ ॥ विष्णुपत्निमहामायेमहापुरुषलक्ष
णे ॥ प्रीयतांमेमहाभागेलोकमातर्नमोऽस्तुते ॥ ६ ॥ ॐनमोभगवतेमहापुरुषायमहानुभावायमहावि
भूतिपतयेसहमहाविभूतिभिर्बलिमुपहराणीतिअनेनाहरहर्मंत्रेणविष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नान
वासउपवीतविभूषणगंधपुष्पधूपदीपोपहाराद्युपचारांश्चसमाहिताउपाहरेत् ॥ हविःशेषंतुजुहुयादनले
द्वादशाहुतीः ॥ ७ ॥ ॐनमोभगवतेमहापुरुषायमहाविभूतिपतयेस्वाहेति ॥ श्रियंविष्णुंचवरदावाशि
षांप्रभवावुभौ ॥ भक्त्यासंपूजयेन्नित्यंयदीच्छेत्सर्वसंपदः ॥ ८ ॥ प्रणमेद्दंडवद्भूमौभक्तिप्रह्वेणचेतसा ॥
दशवारंजपेन्मंत्रंततस्तोत्रमुदीरयेत् ॥ ९ ॥ युवांतुविश्वस्यविभूजगतःकारणंपरं ॥ इयंहिप्रकृतिःसूक्ष्मामा
याशक्तिर्दुरत्यया ॥ १० ॥ तस्याअधीश्वरःसाक्षात्त्वमेवपुरुषःपरः ॥ त्वंसर्वयज्ञइज्येयंक्रियेयंफलभुग्भ
वान् ॥ ११ ॥ गुणव्यक्तिरियंदेवीव्यंजकोगुणभुग्भवान् ॥ त्वंहिसर्वशरीर्यात्माश्रीःशरीरेंद्रियाशया ॥
नामरूपेभगवतीप्रत्ययस्त्वमपाश्रयः ॥ १२ ॥ ॥ ॥ ॥ ॥

नम् ॥ ६ ॥ पूजामंत्रमाह ओंनमइति हविःशेषमुपहारावशिष्टम् ॥ ७ ॥ होममंत्रस्योदाहरणंदर्शयति ओमिति प्रकर्षेणभवंत्याभ्या
मितिप्रभवौ ॥ ८ ॥ ९ ॥ १० ॥ इज्यायज्ञाभिनिवर्तकःपुरुषव्यापारोभावनाख्यः क्रियालौकिकी ॥ ११ ॥ प्रत्ययोनामरूपयोःप्रका
शकःअपाश्रयस्तयोराधारः ॥ १२ ॥ ॥ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ १५ ॥ महापुरुषचेतसाईश्वरबुद्ध्याउपनमेत्भजेत् पतिश्चस्वयंप्रेमशीलःसन्पत्न्याःकर्माणिबिभृयात् तदनुकूलोभ
वेदित्यर्थः ॥ १६ ॥ यतोदंपत्योर्मध्येएकतरेणकृतमुभयोरपिभवति ॥ १७ ॥ नविहन्यात्नविच्छिंद्यात् ॥ १८ ॥ १९ ॥ द्वादशमासा





यथायुवांत्रिलोकस्यवरदौपरमेष्ठिनौ ॥ तथामउत्तमश्लोकसंतुसत्यामहाशिषः ॥ १३ ॥ इत्यभिष्टूयवरदंश्री
निवासंश्रियासह ॥ तन्निःसार्यापहरणंदत्वाचमनमर्चयेत् ॥ १४ ॥ ततस्तुवीतस्तोत्रेणभक्तिप्रह्वेणचेतसा ॥
यज्ञोच्छिष्टमवघ्रायपुनरभ्यर्चयेद्धरिम् ॥ १५ ॥ पतिंचपरयाभक्त्यामहापुरुषचेतसा ॥ प्रियैस्तैस्तैरुपनमेत्प्रे
मशीलःस्वयंपतिः ॥ बिभृयात्सर्वकर्माणिपत्न्याउच्चावचानिच ॥ १६ ॥ कृतमेकतरेणापिदंपत्योरुभयोरपि ॥
पत्न्यांकुर्यादनर्हायांपतिरेतत्समाहितः ॥ १७ ॥ विष्णोर्व्रतमिदंबिभ्रन्नविहन्यात्कथंचन ॥ विप्रान्स्त्रियोवी
रवतीःस्रग्गंधबलिमंडनैः ॥ अर्चेदहरहर्भक्त्यादेवंनियममास्थितः ॥ १८ ॥ उद्वास्यदेवंस्वेधाम्नितन्निवेदितम
ग्रतः ॥ अद्यादात्मविशुद्ध्यर्थंसर्वकामर्द्धयेतथा ॥ १९ ॥ एतेनपूजाविधिनामासान्द्वादशहायनम् ॥
नीत्वाऽथोपचरेत्साध्वीकार्तिकेचरमेऽहनि ॥ २० ॥ श्वोभूतेऽपउपस्पृश्यकृष्णमभ्यर्च्यपूर्ववत् ॥ पयःशृतेन
जुहुयाच्चरुणासहसर्पिषा ॥ पाकयज्ञविधानेनद्वादशैवाहुतीःपतिः ॥ २१ ॥ आशिषःशिरसादायद्विजैः
प्रीतैःसमीरिताः ॥ प्रणम्यशिरसाभक्त्याभुंजीततदनुज्ञया ॥ २२ ॥ आचार्यमग्रतःकृत्वावाग्यतःसहबंधु
भिः ॥ दद्यात्पत्न्यैचरोःशेषंसुप्रजास्त्वंसुसौभगम् ॥ २३ ॥ ॥ ॥ ॥

नित्युक्तेकदाचित्तन्मध्येमलमासेसतितेनसहद्वादशसंख्यायांसत्यांशुद्धस्यैकस्यत्यागःस्यात् हायनमित्युक्तेतन्मध्यपतितस्यापिप्रसंगःस्या
त् तदुभयंवारयितुमुभयमुक्तम् उपचरेत्उपवसेत् ॥ २० ॥ श्वोभूतेप्रभातेसति पयसिशृतेनपक्केन पाकयज्ञविधानेनपार्वणस्थालीपा
कविधानेन ॥ २१ ॥ २२ सुप्रजास्त्वंसत्पुत्रकरमित्यर्थः वाग्यतःसन्शेषम् ॥ २३ ॥ ॥ ॥

॥ २४ ॥ अवीराविधवा धनेश्वरीसत्यापियासुदुर्भगासासुभगाभवति ॥ २५ ॥ यआमयावीरोगीसविरुजाविशिष्टयारुजाविमुच्यतेइंद्रि
यैःसहितंकल्पंदेहंचविंदेदितिशेषः पठन्योवर्ततेतस्यापितॄणांदेवतानांचानंतातृप्तिर्भवतीत्यर्थः ॥ २६ ॥ उपसंहरति राजन्निति महत्पु

एतच्चरित्वाविधिवद्व्रतंविभोरभीप्सितार्थंलभतेपुमानिह ॥ स्त्रीत्वेतदास्थायलभेतसौभगंश्रियंप्रजांजीवप
तिंयशोगृहं ॥ २४ ॥ कन्याचविंदेतसमग्रलक्षणंवरंत्ववीराहतकिल्बिषागातिम् ॥ मृतप्रजाजीवसुताधने
श्वरीसुदुर्भगासुभगारूपमग्र्यम् ॥ २५ ॥ विंदेद्विरूपाविरुजाविमुच्यतेयआमयावींद्रियकल्पदेहं ॥ एत
त्पठन्नाभ्युदयेचकर्मण्यनंततृप्तिःपितृदेवतानां ॥ २६ ॥ तुष्टाःप्रयच्छंतिसमस्तकामान्होमावसानेहुतभु
क्श्रीर्हरिश्च ॥ राजन्महन्मरुतांजन्मपुण्यंदितेर्व्रतंचाभिहितंमहत्ते ॥ २७ ॥ इतिश्रीभागवतेमहापुरा
णेषष्ठस्कंधेपुंसवनव्रतकथनंनामएकोनविंशोऽध्यायः ॥ १९ ॥ समाप्तोऽयंषष्ठःस्कंधः ॥

ण्यंजन्ममहद्व्रतंच ॥ २७ ॥ षष्ठस्कंधनिगूढार्थपदभावार्थदीपिका ॥ सद्भिरासेव्यतामेषायतिश्रीधरनिर्मिता ॥ १ ॥ इतिश्रीभागवतेमहा
पुराणेषष्ठस्कंधेश्रीधरस्वामिविरचितायांटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ समाप्तोऽयंषष्ठःस्कंधः ॥ ॥ ॥

श्रीगणेशायनमः ॥ स्वभक्तपक्षपातेनतद्विपक्षविदारणं ॥ नृसिंहमद्भुतंवंदेपरमानंदविग्रहं ॥ १ ॥ ऊतिःपंचदशाध्यायैःसप्तमेवर्ण्यते ऽधुना ॥ ऊतिश्चवासनाप्रोक्तातत्तत्कर्मानुसारिणी ॥ २ ॥ अशुभाचशुभाचेतिद्विधासाहेतुभेदतः ॥ अशुभामहतांकोपाच्छुभामहदनुग्रहा त् ॥ ३ ॥ हरेर्द्वारपयोर्यद्वद्विकुंठेवसतोरपि ॥ चतुःसनरुषाविष्णुद्वेषाद्यशुभवासना ॥ ४ ॥ यथाचदैत्यगर्भेऽपिप्रल्हादस्यसतःस्थिरा ॥ नारदानुग्रहादासाविष्णौसद्भक्तिवासना ॥ ५ ॥ स्वभक्तंचसदाविष्णुर्द्वेषंतमापिरक्षति ॥ तृतीयेऽथभवेद्वास्थावकरोदात्मसात्पुनः ॥ ६ ॥ अतोमनीषिणायत्नःकार्योमहदनुग्रहे ॥ इत्येतदर्थमूतीनामत्रलक्षणमुच्यते ॥ ७ ॥ तत्रादौदशभिर्दैत्यतत्पुत्रमातिभेदतः॥महत्कोपानुकंपो त्थवासनाभेदउच्यते ॥ ८ ॥ सद्वासनाचयुज्येतकर्मभिःशुद्धचेतसः ॥ परैस्तुपंचभिस्तस्मात्क्रियतेधर्मनिर्णयः ॥ ९ ॥ तत्रतुप्रथमेऽध्या

**श्रीगणेशायनमः ॥ राजोवाच समःप्रियःसुहृद्ब्रह्मन्भूतानांभगवान्स्वयं ॥ इंद्रस्यार्थेकथंदैत्यानव धीद्विषमोयथा ॥ १ ॥ नह्यस्यार्थःसुरगणैःसाक्षान्निःश्रेयसात्मनः ॥ नैवासुरेभ्योविद्वेषोनोद्वेगश्चागुण स्यहि ॥ २ ॥ इतिनःसुमहाभागनारायणगुणान्प्रति ॥ संशयःसुमहान्जातस्तद्भवांश्छेत्तुमर्हति ॥ ३ ॥ श्रीशुकउवाच साधुपृष्टंमहाराजहरेश्चरितमद्भुतं ॥ यत्रभागवतमाहात्म्यंभगवद्भक्तिवर्धनं ॥ ४ ॥ गीयतेपरमंपुण्यमृषिभिर्नारदादिभिः ॥ नत्वाकृष्णायमुनयेकथयिष्येहरेःकथां ॥ ५ ॥**

योहिरण्यकशिपोःसुते ॥ विष्णुभक्तेविरोधस्तुविप्रशापजईर्यते ॥ १० ॥ यदुक्तंपूर्वस्कंधांते हतपुत्रादितिःशक्रपार्ष्णिग्राहेणविष्णुना ॥ मन्युनाशोकदीप्तेनज्वलंतीपर्यचिंतयदितितच्छ्रुत्वाविस्मितःपरीक्षित्पृच्छाति समइतित्रिभिः नहिसमस्यसुहृदश्चवैषम्यंनामास्ति नचप्रि यस्यप्रीतिकर्तृषुवैषम्यंयुक्तमित्यर्थः ॥ १ ॥ किंच यस्ययैःप्रयोजनंसिध्यति सतत्पक्षपातीभवति येभ्योबिभेतितान्द्वेषेणहंति नतुतदत्रा स्तीत्याह नहीति निःश्रेयसंपरमानंदएवआत्मास्वरूपंयस्य असुरेभ्यश्चोद्वेगोभयंनास्ति अतोविद्वेषोपिनास्ति तत्रहेतुः अगुणस्येति गु णाधीनौप्रीतिद्वेषावित्यर्थः ॥ २ ॥ श्रीनारायणस्यगुणान्अनुग्रहनिग्रहादीन्प्रतिमेमहान्संशयस्तत्तंसंशयंछेत्तुमर्हति ॥ ३ ॥ यत्रभागव तस्यप्रल्हादस्यमाहात्म्यंगीयतइतिसंबंधः ॥ ४ ॥ कृष्णायव्यासाय कृष्णंमुनिंनत्वेत्यर्थः ॥ ५ ॥ ॥

यस्मात्प्रकृतेःपरः अतोनिर्गुणः अतएवअजः अव्यक्तोरागद्वेषादिनिमित्तभूतदेहेंद्रियादिरहितः सोऽपिस्वमायागुणंसत्त्वादिकमाविश्यअ
धिष्ठायबाध्यान्प्रति यद्वा देवासुराणांप्रतिपरस्परंयाबाध्यबाधकतातांगतःप्राप्तः तत्रहेतुर्ज्ञातइत्यर्थः ॥ ६ ॥ तत्रगुणानांस्वीयत्वेसतिप्रा
कृतपुरुषवद्विषमःस्यात्तत्तुनास्तीत्याह सत्त्वमिति ननुस्वेच्छयागुणाधिष्ठानेनापिपक्षपातवैषम्यंस्यादेव न तस्यकालकृतत्वादित्याहनतेषा
मितिसार्धेन उल्लासोवृद्धिः ॥ ७ ॥ सत्त्वस्यजयकालेदेवादीनृषींश्चाभजत् तत्तद्देहंप्रविश्यवर्धयतीत्यर्थः रजसोजयकालेअसुरान् तम
सोजयकालेयक्षरक्षांसि तस्यकालस्यअनुगुणःसन् ॥ ८ ॥ समस्यापिनिमित्तभेदेनवैषम्येदृष्टांतः ज्योतिरादिरिव ज्योतिर्यथाकाष्ठादिषु
जलंयथापात्रेषु आकाशोयथाघटादिषु अग्निर्यथाकाष्ठसंयोगात्ह्रस्वदीर्घादिरूपःस्यात्तथाभगवान्नानारूपआभाति ननुतर्हितद्देव

निर्गुणोऽपिह्यजोव्यक्तोभगवान्प्रकृतेःपरः ॥ स्वमायागुणमाविश्यबाध्यबाधकतांगतः ॥ ६ ॥ सत्त्वंरज
स्तमइतिप्रकृतेर्नात्मनोगुणाः ॥ नतेषांयुगपद्राजन्ह्रासउल्लासएववा ॥७॥ जयकालेतुसत्त्वस्यदेवर्षीन्
रजसोऽसुरान् ॥ तमसोयक्षरक्षांसितत्कालानुगुणोऽभजत् ॥ ८ ॥ ज्योतिरादिरिवाभातिसंघातान्नवि
विच्यते ॥ विदंत्यात्मानमात्मस्थंमथित्वाकवयोऽततः ॥ ९ ॥ यदासिसृक्षुःपुरआत्मनःपरोरजःसृजत्ये
षपृथक्स्वमायया ॥ सत्त्वंविचित्रासुरिरंसुरीश्वरःशयिष्यमाणस्तमईरयत्यसौ ॥ १० ॥

विवेकेनकिंनप्रतीयतेतत्राह संघातात्सुरादिदेहात्नविविच्यतेनपृथक्प्रतीयते तर्हितान्भजतीतिकुतोज्ञायतेतत्राह विदंतीतिआत्मानं
जीवात्मानंकवयोनिपुणाःमथित्वाकार्यदर्शनलिंगेनविचार्यजानंति अंततःस्वभावकालकर्मादिवादनिषेधेन विंदंतीतिपाठेलाभोपिज्ञान
मेवात्रापिज्योतिरादिरिवेतिद्रष्टव्यं यथासूर्यकांतादौदाहदर्शनात्ज्योतिर्ज्ञायते यथाचगंधदर्शनाद्वायुरित्यादि ॥ ९ ॥ तदेवंमायागुणवशे
नैतद्वैषम्यंनस्वभाविकमित्युक्तं तर्हिगुणपारतंत्र्यादनीश्वरत्वमाशंक्याह यदाआत्मनोजीवस्यभोगायपुरःशरीराणिपरमेश्वरःसिसृक्षुर्भवति
तदासाम्येनास्थितंरजःपृथक्सृजति विचित्रासुतासुपूर्षुरिरंसुःक्रीडितुमिच्छुर्यदातदासत्त्वंपृथक्सृजाति शयिष्यमाणःसंहरिष्यन्यदातदात
मःपृथक्ईरयति आधिक्यंनयतीत्यर्थः ॥ १० ॥ ॥ ॥ ॥

यदासिसृक्षुरित्यादिनिर्देशात्प्रतीतंकालपारतंत्र्यंवारयन्प्रधानपुरुषपारतंत्र्यमपिवारय.ति कालमिति हेनरदेव अजःअजन्मा प्रधानपुंभ्यां निमित्तभूताभ्यांसत्यकृत्अमोघकर्ताईशस्तयोःसहकारित्वेनआश्रयभूतंचरंतंवर्तमानंकालंस्वयमेवसृजति स्वचेष्टारूपत्वात्कालस्यन तत्पारतंत्र्यमित्यर्थः तथाऽपिप्रस्तुतेकिमायातंतत्राह यएषकालःसत्त्वमेधयतिवर्धयतिअतोहेतोःईशिताऽपिसत्त्वप्रधानंसुरानीकंदेवसमूहमेधयतीव तत्प्रत्यनीकानसुरान्सुरप्रतिपक्षान्प्रमिणोतिहिनास्तिचेत्यन्वयः उरुप्रभूतंश्रवःकीर्तिर्यस्यसः कालशक्तिक्षुभितगुणगतंवैषम्यमिहसान्निधिमात्रेणतदधिष्ठातरिस्फुरतीतिप्रकरणार्थः ॥ ११ ॥ तदानींतयोर्नसुरपक्षपातेनवधःकिंतुब्रह्मशापेनआसुरींयोनिंप्राप्तयोरनुग्रहार्थएवेतिव

कालंचरंतंसृजतीशआश्रयंप्रधानपुंभ्यांनरदेवसत्यकृत् ॥ यएषराजन्नपिकालईशितासत्त्वंसुरानीकमिवैधयत्यजः ॥ तत्प्रत्यनीकानसुरान्सुरप्रियोरजस्तमस्कान्प्रमिणोत्युरुश्रवाः ॥ ११ ॥ अत्रैवोदाहृतःपूर्वमितिहासःसुरर्षिणा ॥ प्रीत्यामहाक्रतौराजन्पृच्छतेऽजातशत्रवे ॥ १२ ॥ दृष्ट्वामहाद्भुतंराजाराजसूयेमहाक्रतौ ॥ वासुदेवेभगवतिसायुज्यंचेदिभूभुजः ॥ १३ ॥ तत्रासीनंसुरऋषिंराजापांडुसुतःक्रतौ ॥ पप्रच्छविस्मितमनामुनीनांशृण्वतामिदं ॥ १४ ॥ युधिष्ठिरउवाच अहोअत्यद्भुतंह्येतद्दुर्लभैकांतिनामपि ॥ वासुदेवेपरेतत्त्वेप्राप्तिश्चैद्यस्यविद्विषः ॥ १५ ॥ एतद्वेदितुमिच्छामःसर्वएववयंमुने ॥ भगवन्निंदयावेनोद्विजैस्तमसिपातितः ॥ १६ ॥ दमघोषसुतःपापआरभ्यकलभाषणात् ॥ संप्रत्यमर्षीगोविंदेदंतवक्रश्चदुर्मतिः ॥ १७ ॥ शपतोरसकृद्विष्णुंयद्ब्रह्मपरमव्ययं ॥ श्वित्रोनजातोजिह्वायांनांधंविविशतुस्तमः ॥ १८ ॥ कथंतस्मिन्भगवतिदुरवग्राहधामनि ॥ पश्यतांसर्वलोकानांलयमीयतुरंजसा ॥ १९ ॥

क्तुमितिहासमुपक्षिपति अत्रैवेति अत्रद्वेषादिरहितस्यापिदैत्यवधेनारदेनइतिहासःप्रस्तावितः ॥ १२ ॥ चेदिभूभुजःशिशुपालस्य ॥ १३ ॥ ॥ १४ ॥ एकांतभक्तानामपिदुर्लभाप्राप्तिर्विद्विषोजातेत्येतदद्भुतंहि ॥ १५ ॥ तस्यतुवेनवन्नरकपातएवोचितइत्याह भगवन्निंदयेति तमसिनरके ॥ १६ ॥ दमघोषस्यसुतःशिशुपालः कलभाषणात्कोमलभाषणमारभ्य संप्रतिअधुनाऽपिअमर्षीक्रोधीमत्सरीच ॥ १७ ॥ श्वित्रः श्वेतकुष्ठं ॥ १८ ॥ दुरवग्राहंदुष्प्रापंधामस्वरूपंयस्यतस्मिन्लयंसायुज्यमीयतुर्जग्मतुः अभूतस्यापिदंतवक्रलयस्यतज्जातकप्रामाण्येनसिद्धवन्निर्देशः ॥ १९ ॥ ॥ ॥ ॥

एतदद्भुततमंहि अतएतत्प्रतिमेमनोभ्राम्यति भगवान्सर्वज्ञस्त्वमस्मत्कृपयाब्रूहि ॥ २० ॥ आभाष्यसंबोध्य सीदंतिनिषीदंतिअस्या मितिसत्सभातस्याःसदःशृण्वंत्याःकथाःप्राहेत्यन्वयः ॥ २१ ॥ अहोभगवन्निंदकस्यनरकपातेनभाव्यमितिवदतस्तवकोऽभिप्रायः भग वत्पीडाकरत्वेनवातदभावेऽपिसुरापानादिवन्निषिद्धनिंदाचरणाद्वा तत्रतावद्देहाभिमानकृतानिंदादिनिमित्तत्वात्पीडादीनांभगवतश्चतद भावान्नपीडाशंकाऽस्तीत्याह निंदनइतिसार्द्धैस्त्रिभिः निंदनंदोषकीर्त्तनं न्यक्कारस्तिरस्कारः निंदास्तुत्यादिज्ञानार्थंप्रधानपुरुषयोरविवेकेन कलेवरंकल्पितंरचितं ॥ २२ ॥ तदभिमानेनभूतानांयथाममाहमितिवैषम्यंतत्कृतंहिंसादिकंचभवतितथानयस्येत्युत्तरेणान्वयः दंडस्ता

**एतद्भ्राम्यतिमेबुद्धिर्दीपार्चिरिववायुना॥ ब्रूह्येतदद्भुततमंभगवांस्तत्रकारणं॥ २० ॥ श्रीशुकउवाच राज्ञ स्तद्वचआकर्ण्यनारदोभगवानृषिः ॥ तुष्टःप्राहतमाभाष्यशृण्वंत्यास्तत्सदःकथाः॥ २१ ॥ नारदउवाच निंदनस्तवसत्कारन्यक्कारार्थंकलेवरं॥ प्रधानपरयोराजन्नविवेकेनकल्पितं ॥२२॥ हिंसातदभिमानेनदंड पारुष्ययोर्यथा॥वैषम्यमिहभूतानांममाहमितिपार्थिव ॥ २३॥ यन्निबद्धोऽभिमानोयंतद्वधात्प्राणिनांवधः॥ तथानयस्यकैवल्यादभिमानोऽखिलात्मनः॥ परस्यदमकर्तुर्हिहिंसाकेनास्यकल्प्यते॥२४॥तस्माद्वैरानुबंधे ननिर्वैरेणभयेनवा ॥ स्नेहात्कामेनवायुंज्यात्कथंचिन्नेक्षतेपृथक् ॥ २५ ॥ यथावैरानुबंधेनमर्त्यस्तन्मयता मियात्॥ नतथाभक्तियोगेनइतिमेनिश्चितामतिः ॥ २६ ॥कीटःपेशस्कृतारुद्धःकुड्यायांतमनुस्मरन्॥ संरंभभययोगेनविंदतेतत्स्वरूपतां॥२७॥ ॥ ॥**

डनंपारुष्यंनिंदातयोर्हेतुभूतयोर्हिंसापीडाचभवति ॥ २३ ॥ यस्मिन्निबद्धोऽयमभिमानस्तस्यदेहस्यवधाद्वधश्चयथातथायस्याभिमानोनास्ति अतोऽस्यपरमेश्वरस्यहिंसाकेनहेतुनाकल्प्यतेनकेनापीति अभिमानाभावेहेतुःकैवल्यात्अद्वितीयत्वेनाभिमंतव्याभावात् वैषम्याभावेहेतुः अखिलात्मनःसर्वात्मनइति तर्हिकिमितिहंतिदैत्यांस्तत्राह परस्येति दमकर्तुः हितार्थंदंडंकरोतीत्यर्थः॥२४॥यस्माद्भगवतोनिंदादिकृतंवैष म्यंनास्तितस्माद्येनकेनाप्युपायेनध्यायतस्तेनैवध्यानेननिंदादिकृतपापस्यापिनाशात्सायुज्यंयुक्तमित्याशयेनाह तस्मादितिसप्तभिः निर्वै रेण नास्तिवैरंकेनापियस्मिंस्तेनभक्तियोगेनेत्यर्थः युंज्यान्मनइतिशेषः ॥ २५ ॥ तस्मादेतैरप्युपायैर्भगवान्स्मर्तृणांमोक्षंदिशत्येव तेष्व पिवैरानुबंधःश्रेष्ठइत्याह यथेतिनतथाभक्तियोगेनापि ॥ २६ ॥ अत्रदृष्टांतः कीटःपेशस्कृताभ्रमरेण संरंभोद्वेषोभयंचसएवयोगस्तेन तत्स्वरूपतांतेनैवशरीरेणविंदते ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वैरेणयाअनुचिंताचिंतनंतयैवपूतःपाप्मायेषांतेतंप्रापुरिति ॥ २८ ॥ तानाह कामादिति तदघंकामादिनिमित्तंपापंहित्वा उक्तंच गोप्यः कामाद्भयात्कंसोद्वेशाच्चैद्यादयोनृपाः ॥ संबंधाद्वृष्णयःस्नेहाद्यूयंभक्त्यावयंविभोरिति ॥ २९ ॥ तर्हिवेनःकिमितिनरकेपातितः तीव्रध्याना भावात्पापमेवतस्यफलितमित्याह कतमोऽपीति पुरुषंश्रीहरिंप्रति पुरुषेपुरुषस्यकामासंभवात् द्वेषादिभिश्चितयतांपंचानांमध्येवेनोनैकत मोऽपीत्युक्तं ॥ ३० ॥ तदेवमितिहासप्रस्तावकथामुक्त्वाश्रीकृष्णेशिशुपालस्यवैरानुबंधेकोहेतुरित्यपेक्षायांतमेवेतिहासंवक्तुमाह मातृष्वस्रे यइति पदात्वैकुंठात्च्युतौ ॥ ३१ ॥ हरिदासौअभिमृशतिअभिभवतीतितथा कस्यशापःकीदृशोवा अश्रद्धेयःअनादरणीयइवाभा

एवंकृष्णेभगवतिमायामनुजईश्वरे ॥ वैरेणपूतपाप्मानस्तमीयुरनुचिंतया ॥ २८॥ कामाद्द्वेषाद्भयात्स्नेहाद्यथाभक्त्येश्वरेमनः ॥ आवेश्यतदघंहित्वाबहवस्तद्गतिंगताः ॥२९॥ कतमोऽपिनवेनःस्यात्पंचानांपुरुषंप्रति॥ तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत् ॥ ३० ॥ मातृष्वस्रेयोवश्चैद्योदंतवक्त्रश्चपांडव ॥ पार्षदप्रवरौविष्णोर्विप्रशापात्पदाच्युतौ ॥३१॥ युधिष्ठिरउवाच कीदृशःकस्यवाशापोहरिदासाभिमर्शनः ॥ अश्रद्धेयइवाभातिहरेरेकांतिनांभवः ॥३२॥ देहेंद्रियासुहीनानांवैकुंठपुरवासिनां॥ देहसंबंधसंबद्धमेतदाख्यातुमर्हसि॥३३॥ नारदउवाच एकदाब्रह्मणःपुत्राविष्णोर्लोकंयदृच्छया॥सनंदनादयोजग्मुश्चरंतोभुवनत्रयं॥३४॥ पंचषड्ढायनार्भाभाःपूर्वेषामपिपूर्वजाः॥दिग्वाससःशिशून्मत्वाद्वास्थौतान्प्रत्यषेधतां॥३५॥ अशपन्कुपिताएवंयुवांवासंनचार्हथः॥रजस्तमोभ्यांरहितेपादमूलेमधुद्विषः॥पापिष्ठामासुरींयोनिंबालिशौयातमाश्वतः॥ ॥ ३६ ॥ एवंशप्तौस्वभवनात्पतंतौतैःकृपालुभिः ॥ प्रोक्तौपुनर्जन्मभिर्वांत्रिभिर्लोकायकल्पतां ॥ ३७॥

ति असंभवात् यतोहरेर्भक्तानांतथापिवैकुंठवासिनांभवोजन्मइतियत् ॥ ३२ ॥ असंभवमेवाह जन्महेतुभूतैःप्राकृतैर्देहेंद्रियासुभिर्हीनानां शुद्धसत्त्वमयदेहानामित्यर्थः प्राकृतदेहसंबंधेनसंबद्धं एतदाख्यानमाख्यातुमर्हसि ॥ ३३ ॥ ३४ ॥ कथंभूताः पंचवाषड्वाहायनानिवर्षाणियेषांतेअर्भाबालास्तद्वदाभायेषांते पूर्वेषांमरीच्यादीनामपिपूर्वजास्तेभ्यःप्रथमंजाताः दिग्वाससोदिगंबराः अतःशिशून्मत्वा ॥ ३५ ॥ वासमपिनार्हथः कुतःपुनस्तत्सेवामितिचकारार्थः हेबालिशौ अतोहेतोःआशुयातं ॥ ३६ ॥ वांयुवयोस्त्रिभिर्जन्मभिः लोकायस्वस्थानप्राप्तयेकल्पतांतावताअयंशापःसमाप्यतामितिपुनःप्रोक्तावित्यर्थः ॥ ३७ ॥ ॥ ॥ ॥

॥ ३८ ॥ धरोद्धारेनिमित्ते तत्प्रतिघातींहतः ॥ ३९ ॥ हिरण्यकशिपोर्वधेकारणंसूचयति हिरण्यकशिपुःपुत्रमिति ॥ ४० ॥ सर्वभूता
नामात्मभूतं कुतः सममनुस्यूतंब्रह्मैवपश्यतीतितथातं अतःप्रशांतंद्वेषादिरहितं अतएवभगवत्तेजसास्पृष्टंव्याप्तं उद्यमैःशस्त्रास्त्रप्रहारा
दिभिः ॥ ४१ ॥ विश्रवसःसुतौ ॥ ४२ ॥ न्यहनत् हतवानित्यर्थः तर्हितदेवकथनीयमित्युत्सुकंप्रत्याह रामवीर्यमिति ॥ ४३ ॥ कृ

जज्ञातेतौदितेःपुत्रौदैत्यदानववंदितौ ॥ हिरण्यकशिपुर्ज्येष्ठोहिरण्याक्षोऽनुजस्ततः ॥ ३८ ॥ हतोहिरण्यकशि
पुर्हरिणासिंहरूपिणा ॥ हिरण्याक्षोधरोद्धारेबिभ्रतासौकरंवपुः ॥ ३९ ॥ हिरण्यकशिपुःपुत्रंप्रह्लादंकेशवप्रि
यं ॥ जिघांसुरकरोन्नानायातनामृत्युहेतवे ॥ ४० ॥ सर्वभूतात्मभूतंतंप्रशांतंसमदर्शनं ॥ भगवत्तेजसास्पृ
ष्टंनाशक्नोद्धंतुमुद्यमैः ॥ ४१ ॥ ततस्तौराक्षसौजातौकेशिन्यांविश्रवःसुतौ ॥ रावणःकुंभकर्णश्वसर्वलोकोप
तापनौ ॥ ४२ ॥ तत्रापिराघवोभूत्वान्यहनच्छापमुक्तये ॥ रामवीर्यंश्रोष्यसित्वंमार्कंडेयमुखात्प्रभो ॥ ४३ ॥
तावेवक्षत्रियौजातौमातृष्वस्रात्मजौतव ॥ अधुनाशापनिर्मुक्तौकृष्णचक्रहतांहसौ ॥ ४४ ॥ वैरानुबंधतीव्रे
णध्यानेनाच्युतसात्मतां ॥ नीतौपुनर्हरेःपार्श्वंजग्मतुर्विष्णुपार्षदौ ॥ ४५ ॥ युधिष्ठिरउवाच विद्वेषोदयितेपु
त्रेकथमासीन्महात्मनि ॥ ब्रूहिमेभगवन्येनप्रह्लादस्याच्युतात्मता ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणेसप्तम
स्कंधेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ नारदउवाच भ्रातर्येवंविनिहतेहरिणाक्रोडमूर्तिना ॥ हिरण्यकशिपू
राजन्पर्यतप्यद्रुषाशुचा ॥ १ ॥ आहचेदंरुषाघूर्णःसंदष्टदशनच्छदः ॥ कोपोज्वलद्भ्यांचक्षुर्भ्यांनिरीक्षन्धू
म्रमंबरं ॥ २ ॥ करालदंष्ट्रोग्रदृष्ट्यादुष्प्रेक्ष्यभ्रुकुटीमुखः ॥ शूलमुद्यम्यसदसिदानवानिदमब्रवीत् ॥ ३ ॥

ष्णचक्रेणहतमंहोययोस्तौ तयोःपापमेवहतंनतुताविस्यर्थः ॥ ४४ ॥ ४५ ॥ येनकारणेनप्रह्लादस्याच्युतात्मताअच्युतैकचित्तत्वंतदपि
ब्रूहीतिशेषः ॥ ४६ ॥ इतिसप्तमेटीकायांप्रथमोध्यायः ॥ १ ॥ ॥ द्वितीयेविष्णुरोषेणलोकंविप्लाव्यदानवैः ॥ तद्धतभ्रातृपुत्रादीनि
तिहासैरसांत्वयत् ॥ १ ॥ भगवद्द्वेषएवतद्द्वेषेऽपिकारणमित्याशयेनाह भ्रातरीत्यादिना एवंपक्षपातेनइंद्रस्यहितमिच्छता ॥ १ ॥ कोपे
नउत्अतिशयेनज्वलद्भ्यां कोपाग्निधूमेनैवधूम्रमंबरंनिरीक्षमाणः ॥ २ ॥ करालदंष्ट्राभिर्युक्तयादृष्ट्या दुष्प्रेक्ष्यंभ्रुकुटीयुक्तंमुखंयस्यसः ॥ ३ ॥

॥ ४ ॥ ५ ॥ समेनापिउपधावनैर्भजनैर्निमित्तभूतैः पार्ष्णिग्राहेणसतामेभ्राताहतः ॥ ६ ॥ एवंत्यक्तःस्वभावःसमत्वंयेनतस्य घृणेःशुद्ध
तेजोमयस्यापिमाययावनौकसोवराहरूपस्यसतः अस्थिरात्मनःअव्यवस्थितचित्तस्य कुतः योयोभजतितंतंभजमानस्यअनुसरतः ॥ ७ ॥
तस्यकृष्णस्यरुधिरेणयावत्तर्पयिष्यामितावद्यूयंभुवंयातेतितृतीयेनान्वयः ॥ ८ ॥ ननुदेवैस्तद्वधःकारितोऽतस्तेकिंनहन्यंतेतत्राह तस्मि
न्हरौकूटेकपटे अहितेप्रतिपक्षे कूटमीहितंयस्येतिवा नष्टेअदृष्टेसतिदेवाःस्वयमेवशुष्यंतिनाशंयास्यंति कुतः विष्णुरेवप्राणोयेषांते य
थाकृत्तमूलेवृक्षेशाखाःस्वयंशुष्यंतितद्वत् ॥ ९ ॥ तपोयज्ञादियुक्तान्सूदयध्वंघातयत ॥ १० ॥ ननुतैःकिमपराद्धंतत्राह विष्णुरिति द्वि

भोभोदानवदैतेयाद्विमूर्द्धन्त्र्यक्षशंबर ॥ शतबाहोहयग्रीवनमुचेपाकइल्वल ॥ ४ ॥ विप्रचित्तेममवचःपुलो
मन्शकुनादयः ॥ शृणुतानंतरंसर्वेक्रियतामाशुमाचिरं ॥ ५ ॥ सपत्नैर्घातितःक्षुद्रैर्भ्रातामेदयितःसुहृत् ॥ पा
र्ष्णिग्राहेणहरिणासमेनाप्युपधावनैः ॥ ६ ॥ तस्यत्यक्तस्वभावस्यघृणेर्मायावनौकसः ॥ भजंतंभजमानस्य
बालस्येवास्थिरात्मनः ॥ ७ ॥ मच्छूलभिन्नग्रीवस्यभूरिणारुधिरेणवै ॥ रुधिरप्रियंतर्पयिष्येभ्रातरंमेगतव्य
थः ॥ ८ ॥ तस्मिन्कूटेऽहितेनष्टेकृत्तमूलेवनस्पतौ ॥ विटपाइवशुष्यंतिविष्णुप्राणादिवौकसः ॥ ९ ॥ तावद्यात
भुवंयूयंविप्रक्षत्रसमेधितां ॥ सूदयध्वंतपोयज्ञस्वाध्यायव्रतदानिनः ॥ १० ॥ विष्णुर्द्विजक्रियामूलोयज्ञोध
र्ममयःपुमान् ॥ देवर्षिपितृभूतानांधर्मस्यचपरायणं ॥ ११ ॥ यत्रयत्रद्विजागावोवेदावर्णाश्रमाःक्रियाः ॥
तंतंजनपदंयातसंदीपयतवृश्चत ॥ १२ ॥ इतितेभर्तृनिर्देशमादायशिरसादृताः ॥ तथाप्रजानांकदनंविदधुः
कदनप्रियाः ॥ १३ ॥ पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेटखर्वटघोषांश्चददहुःपत्तनानिच ॥ १४ ॥

जानांक्रियाअनुष्ठानंमूलंयस्यसः यतोऽसौयज्ञःधर्ममयश्च देवादीनांपरायणंपरमआश्रयः अतोयज्ञरूपस्यविष्णोर्मूलत्वान्मामनादृत्य
तदाश्रयणात्रतेवध्याइतिभावः ॥ ११ ॥ तस्मात्परममंत्रंशृणुतेत्याह यत्रयत्रेति संदीपयतदहत वृश्चतछेदंकुरुत यज्ञोपयोगिवृक्षानिति
शेषः ॥ १२ ॥ १३ ॥ पुरंहट्टादिमत् ग्रामस्तद्रहितः व्रजोगवांवासः उद्यानंकृत्रिमंवनं क्षेत्रंव्रीह्यादेः आरामोऽकृत्रिमंवनं आश्रमःऋ
षीणांस्थानं आकरोरत्नादीनां खेटःकृषीवलानांवासः खर्वटोगिरिद्रोण्याश्रयोग्रामः घोषआभीराणांवासः पत्तनंराजधानी ॥ १४ ॥

खनित्रैः खननसाधनैः आजीव्यान् उपजीव्यान् जंब्वाम्रकपित्थादीन् शरणानिगृहान् ॥ १५ ॥ विप्रकृतेउपद्रुते यज्ञभागानामभावाद्दि
वंपरित्यज्यअलक्षिताःसंतोभुविचेरुः ॥ १६ ॥ तदेवंप्रजानांकदनंदानवेषुकुर्वत्सुस्वयंस्वर्गराज्यादिसाधयितुंतपस्तप्तुकामः प्रथमंयत्कृत
वांस्तदाह हिरण्यकशिपुरित्यादिना कटोदकंप्रेतायप्रदेयमुदकं आदिशब्दात्प्रेतश्राद्धादिकं ॥ १७ ॥ १८ ॥ तन्मातरंतेषांशकुनिशं
बरादीनांमातरं रुषा भानुंभानुसंज्ञां ॥ १९ ॥ हेवधूरितिभ्रातुर्भार्यांसंबोधयति ॥२०॥ भवतुनामतस्यश्लाघ्योवधस्तथाऽप्यस्माकंतावद्बंधु
र्गतएवेतिचेत्तत्राह भूतानामिति दैवेनप्राचीनकर्मणाएकत्रनीतानांसंयोजितानांपुनश्चस्वैःस्वैः कर्मभिरुन्नीतानांवियोजितानां ॥ २१ ॥

केचित्खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः ॥ प्रादहञ्छरणा
न्यन्येप्रजानांज्वलितोल्मुकैः ॥ १५ ॥ एवंविप्रकृतेलोकेदैत्येंद्रानुचरैर्मुहुः ॥ दिवंदेवाः परित्यज्यभुविचेरुरलक्षि
ताः ॥ १६ ॥ हिरण्यकशिपुर्भ्रातुः संपरेतस्यदुःखितः ॥ कृत्वाकटोदकादीनिभ्रातृपुत्रानसांत्वयत् ॥ १७ ॥ शकुनिंशं
बरंधृष्टंभूतसंतापनंवृकं ॥ कालनाभंमहानाभंहरिश्मश्रुमथोत्कचं ॥ १८ ॥ तन्मातरंरुषाभानुंदितिंचजननींगि
रा ॥ श्लक्ष्णयादेशकालज्ञइदमाहजनेश्वर ॥ १९ ॥ हिरण्यकशिपुरुवाच अंबांबहेवधूः पुत्रावीरंमार्हथशोचितुं
॥ रिपोरभिमुखेश्लाघ्यः शूराणांवधईप्सितः ॥ २० ॥ भूतानामिहसंवासः प्रपायामिवसुव्रते ॥ दैवेनैकत्रनीता
नामुन्नीतानांस्वकर्मभिः ॥ २१ ॥ नित्यआत्माऽव्ययः शुद्धसर्वगः सर्ववित्परः ॥ धत्तेऽसावात्मनोलिंगंमाययावि
सृजन्गुणान् ॥ २२ ॥ यथांऽभसाप्रचलतातरवोऽपिचलाइव ॥ चक्षुषाभ्राम्यमाणेनदृश्यतेचलतीवभूः ॥ २३ ॥

एवंलौकिकदृष्ट्याशोकंनिवार्यतत्त्वदृष्ट्यावारयति नित्यइति आत्मानित्योमृत्युशून्यः अव्ययःअपक्षयशून्यःशुद्धः निर्मलः सर्वगःसर्ववि
त्सर्वज्ञश्च सर्वत्रहेतुः परोदेहादिव्यतिरिक्तः अतोमृतइतिकृशइतिमलिनइतिवियुक्तइतिअज्ञइतिचमत्वाशोकोनकार्यइत्यर्थः कथंतर्हि
तस्यसंसारस्तत्राह धत्तइति आत्मनोमाययास्वाविद्ययालिंगंमूर्तीर्धत्ते गुणानुच्चावचान्देहान्सुखदुःखादीन्वाधत्ते विशेषेणसृजन्स्वीकुर्वन्
लिंगशरीरोपाधिःसंसारइत्यर्थः ॥ २२ ॥ एतत्सदृष्टांतंप्रपंचयति यथेतिचतुर्भिः तरवःप्रतिबिंबिताः उपाधिधर्माउपहितेभवंतीतिदृष्टांतमु
क्त्वाग्राहकधर्माग्राह्येभवंतीतिदृष्टांतमाह चक्षुषेति ॥ २३ ॥ ॥ ॥ ॥

अविकलःपरिपूर्णएव तत्साम्यतां मनःसमतामित्यर्थः ॥ २४ ॥ लिंगभावनादेहाभिमानः एषआत्मनोविपर्यासःअन्यथाभावःतदेवाह प्रियैर्वियोगःअप्रियैर्योगश्चकर्मचसंसृतिश्चनानागर्भेषुप्रवेशः ॥ २५ ॥ ततश्चसंभवउत्पत्तिः विवेकस्यास्मृतिरननुसंधानं ॥ २६ ॥ अत्रापिशोकहेतुंविनावृथैवायंशोकइत्यस्मिन्नर्थेप्रेतस्यमृतस्यकस्यचिद्येबंधवस्तेषांचसंवादंशृणुत ॥ २७ ॥ उपासत तत्समीपेआवृत्यस्थिताइत्यर्थः ॥ २८ ॥ विशीर्णरत्नमयंकवचंयस्य विभ्रष्टानिआभरणानिस्रजश्चयस्य शरेणनिर्भिन्नंहृदयंयस्य असृजारक्तेनरुधिरेणावि

एवंगुणैर्भ्राम्यमाणेमनस्यविकलःपुमान् ॥ यातितत्साम्यतांभद्रेह्यलिंगोलिंगवानिव ॥२४॥ एषआत्मविपर्यासोह्यलिंगेलिंगभावना ॥ एषप्रियाप्रियैर्योगोवियोगःकर्मसंसृतिः ॥ २५ ॥ संभवश्चविनाशश्चशोकश्चविविधःस्मृतः ॥ अविवेकश्चचिंताचविवेकास्मृतिरेवच ॥ २६ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनं ॥ यमस्यप्रेतबंधूनांसंवादंतंनिबोधत ॥ २७ ॥ उशीनरेष्वभूद्राजासुयज्ञइतिविश्रुतः ॥ सपत्नैर्निहतोयुद्धेज्ञातयस्तमुपासत ॥ २८ ॥ विशीर्णरत्नकवचंविभ्रष्टाभरणस्रजं ॥ शरनिर्भिन्नहृदयंशयानमसृगाविलं ॥२९॥ प्रकीर्णकेशंध्वस्ताक्षंरभसादष्टदच्छदं ॥ रजःकुंठमुखांभोजंछिन्नायुधभुजंमृधे ॥३०॥ उशीनरेंद्रंविधिनातथाकृतंपतिंमहिष्यःप्रसमीक्ष्यदुःखिताः ॥ हताःस्मनाथेतिकरैरुरोभृशंघ्नंत्योमुहुस्तत्पदयोरुपाऽपतन् ॥ ३१ ॥ रुदंत्यउच्चैर्दयितांघ्रिपंकजंसिंचंत्यअस्रैःकुचकुंकुमारुणैः ॥ विस्रस्तकेशाभरणाःशुचंनृणांसृजंत्यआक्रंदनयाविलेपिरे ॥ ३२ ॥ अहोविधात्राऽकरुणेननःप्रभोभवान्प्रणीतोदृगगोचरांदशां ॥ उशीनराणामसिवृत्तिदःपुराकृतोऽधुनायेनशुचांविवर्धनः ॥ ३३ ॥ ॥ ॥

लंलिप्तं ॥ २९ ॥ प्रकीर्णाःकेशायस्य ध्वस्तेअक्षिणीयस्य रभसासंरंभेणदष्टोदच्छदओष्ठोयेन रजसाकुंठमावृतंमुखांभोजंयस्य छिन्नमायुधंभुजश्चयस्य ॥ ३० ॥ तस्यपादयोरुपसमीपे आसमंतात्अपतन् ॥ ३१ ॥ ३२ ॥ विलापमेवाह अहोइतिद्वाभ्यां अकरुणत्वमेवाहुःयेनविधात्रादृशामगोचरांदशांभवान्प्रणीतोगमितस्तेनविधात्रात्वमधुनाशुचांविवर्धनःकृतोऽसीत्यन्वयः ॥ ३३ ॥

हेमहीपतेत्वयासुहृत्तमेनविनावयंकथंस्यामभवेम जीवेमइत्यर्थः अतोहेवीरयत्रत्वंयास्यसितत्रैतअनुयानमनुगमनंतवपादयोःशुश्रूषांकुर्वती
नामस्माकंदिशदेहि आज्ञामितिशेषः ॥ ३४ ॥ निर्हारंदाहार्थनयनमनिच्छंतीनां अस्तमस्ताचलंप्रति ॥ ३५ ॥ परिदेवितंरोदनंस्वपु
र्यामेवास्थितोयमआश्रुत्यश्रुत्वा ॥ ३६ ॥ तत्रस्वयमेवोपागतोयमोबालकोभूत्वातानाह अहोइत्यादिना अहोआश्चर्यं अस्मत्तोवयसाऽधि
कानामपिलोकस्यविधिंजन्ममरणादिप्रकारंविपश्यतामपिविमोहः मोहमेवाह यत्रयस्माद्व्यक्तादागतस्तत्रैवगतमपार्थंशोचंति तदुक्तंगी
तासु अव्यक्तादीनिभूतानिव्यक्तमध्यानिभारत ॥ अव्यक्तनिधनान्येवतत्रकापरिदेवनेति किंच स्वयमपिसधर्माः मृतेनसहसमानोमृत्युलक्ष

त्वयाकृतज्ञेनवयंमहीपतेकथंविनास्यामसुहृत्तमेनते ॥ तत्रानुयानंतववीरपादयोःशुश्रूषतीनांदिशयत्रया
स्यसि ॥ ३४ ॥ एवंविलपतीनांवैपरिगृह्यमृतंपतिं ॥ अनिच्छतीनांनिर्हारमर्कोऽस्तंसंन्यवर्तत ॥ ३५ ॥ तत्र
ह्प्रेतबंधूनामाश्रुत्यपरिदेवितं ॥ आहतान्बालकोभूत्वायमःस्वयमुपागतः ॥ ३६ ॥ यमउवाच अहोअमी
षांवयसाऽधिकानांविपश्यतांलोकविधिंविमोहः ॥ यत्रागतस्तत्रगतंमनुष्यंस्वयंसधर्माअपिशोचंत्यपार्थं ॥
॥ ३७ ॥ अहोवयंधन्यतमायदत्रत्यक्ताःपितृभ्यांनविचिंतयामः ॥ अभक्ष्यमाणाअबलावृकादिभिःसरक्षि
तारक्षतियोहिगर्भे ॥ ३८ ॥ यइच्छयेशःसृजतीदमव्ययोयएवरक्षत्यवलुंपतेचयः ॥ तस्याबलाःक्रीडनमाहुरी
शितुश्चराचरंनिग्रहसंग्रहेप्रभुः ॥ ३९ ॥ पथिच्युतंतिष्ठतिदिष्टरक्षितंगृहेस्थितंतद्विहतंविनश्यति ॥ जीवत्यना
थोऽपितदीक्षितोवनेगृहेपिगुप्तोऽस्यहतोनजीवति ॥ ४० ॥ ॥ ॥

णोधर्मोयेषांतथाभूताअपिशोचंति ॥ ३७ ॥ अहोवयंयुष्मत्तोधन्यतमाः यतः अबलादुर्बलाबालाअपिवृकादिभिरभक्ष्यमाणावयंनविचिं
तयामःतत्रहेतुः योगर्भेरक्षतिसएवसर्वत्ररक्षिता ॥ ३८ ॥ ननुतस्यरक्षणार्थेकिंप्रयोजनंनकिंचिदपिकिंतुक्रीडैवकेवलमित्याह यइति य
ईशःइदंविश्वंलीलयासृजतिअवलुंपतेसंहरतिच भोअबलास्तस्येशितुश्चराचरंक्रीडासाधनमाहुः अतःसएवनिग्रहेसंहारेसंग्रहेपालनेचप्र
भुः ॥ ३९ ॥ प्रभुत्वमेवान्वयव्यतिरेकाभ्यांदर्शयति पथीति दिष्टेनदैवेनईश्वरेणरक्षितंचेत् तेनईश्वरेणविहतमुपेक्षितंचेत् गृहेस्थितं
यत्नतःपाल्यमानमपि अस्यहतःतेनोपेक्षितः ॥ ४० ॥ ॥ ॥

तदेवमात्मनोजन्ममरणादिकमंगीकृत्येश्वराधीनत्वान्नशोकःकार्यइत्युक्तमिदानींतु देहानामेवजन्मादिनत्वात्मनइत्याह भूतानीतित्रिभिः भूतानिदेहानिजयोनिःस्वकारणभूतंलिंगशरीरंतन्निमित्तैःकर्मभिर्भवंतिजायंते नभवंतिनश्यंतिच सर्वशःदेवादिदेहाअपि नत्रहतदाप्रकृतौदेहेस्थितोऽप्यात्मातस्याःप्रकृतेर्गुणैर्देहधर्मैर्जन्माभिर्ननिबध्यतेनयुज्यते यतःअन्यतमोदेहादत्यंतविलक्षणः ॥ ४१ ॥ नन्वहंकृशःस्थूलइत्यादौवैलक्षण्यंनप्रतयितेतत्राह इदमिति इदंशरीरंमोहजमविवेकादात्मत्वेनज्ञातं वस्तुतस्तुपृथगेवयतईयतेदृश्यते भौतिकंचयथागृहमित्यन्वयः अत्रैवंप्रयागेः द्रष्टुरभौतिकत्वाच्चपुरुषात्शरीरंभिन्नं दृश्यत्वात् भौतिकत्वाच्च यथात्यंताविवेकिनआत्मत्वेनाभिततमपिगृहं ततोगृहात्गृहीयथापृथक्तद्वदितिभौतिकत्वानुमानंविवृण्वन्नात्मनोजन्माद्यभावमुपसंहराति यथाऔदकैःपरमाणुभिर्जातोबुद्बुदादिर्यथाच पार्थिवैर्जातोघटादिर्यथाचतैजसैर्जातःकुंडलादिर्विनश्यतितथातैरेवत्रिविधैःपरमाणुभिर्जातोजनोदेहएवविकृतःपरिणतःसन्विनश्यति न

भूतानितैस्तैर्निजयोनिकर्मभिर्भवंतिकालेनभवंतिसर्वशः ॥ नतत्रहात्माप्रकृतावपिस्थितस्तस्यागुणैरन्यतमोनिबद्धयते ॥ ४१ ॥ इदंशरीरंपुरुषस्यमोहजंयथापृथग्भौतिकमीयतेगृहं ॥ यथौदकैःपार्थिवतैजसैर्जनःकालेनजातोविकृतोविनश्यति ॥४२॥ यथानलोदारुषुभिन्नईयतेयथाऽनिलोदेहगतःपृथक्स्थितः ॥ यथा नभःसर्वगतंनसज्जतेतथापुमान्सर्वगुणाश्रयःपरः ॥४३॥ सुयज्ञोनन्वयंशेतेमूढायमनुशोचथ॥यःश्रोतायोऽनुवक्तेहसनदृश्येतकर्हिचित् ॥ ४४ ॥ नश्रोतानानुवक्ताऽयंमुख्योऽप्यत्रमहानसुः ॥ यस्त्विहेंद्रियवानात्मा सचान्यःप्राणदेहयोः॥४५॥ ॥ ॥ ॥

त्वात्मेत्यर्थः ॥ ४२ ॥ पृथगवस्थानाभावेपिभिन्नत्वेदृष्टांतद्वयमाह यथेति यथाऽनलोदारुष्वेवास्थितोऽपिदाहकत्वेनप्रकाशकत्वेनभिन्नएवप्रतीयतेयथाचदेहगतोऽप्यनिलोमुखनासिकादिषुपृथक्स्थितएवप्रतीयतेतथादेहस्थत्वेऽप्यात्मनस्तद्धर्मयोगाभावेदृष्टांतमाह यथानभोनसज्जतेक्वापिसंगंनप्राप्नोतितथापुमानपिसर्वेषांगुणानांदेहेंद्रियादीनामाश्रयस्तेष्वाश्रितोवापरःपृथगेवेत्यर्थः ॥ ४३ ॥ किंचहेमूढाःयमनुशोचथसोऽयंयुष्मद्भर्तासुयज्ञःशेतेकिमितिशोचथनन्वेतावंतंकालमसौशृणोतिअनंतरंप्रतिवक्तिचप्रत्युत्तरंददाति इदानींतस्यादर्शनान्मृतइतिशोचामइतिचेत् सतुशोच्योनभवतिप्रागपितस्यश्रोतुर्वक्तुरदर्शनादित्याह यःश्रोतेति ॥ ४४ ॥ ननुमुखनासिकासंचारीप्राणःश्रोतावक्ताचदृष्टएवेति चेन्नासौश्रोतावक्तावाअचेतनत्वादित्याह नश्रोतेति महान्सर्वेंद्रियचेष्टाहेतुः अतएवमुख्यः प्राणोवैमुख्यइतिश्रुतेःकस्तर्हिश्रोतावक्ताचतत्राह यस्त्विहदेहेंद्रियैस्तत्तदर्थद्रष्टाआत्मासतुप्राणदेहाभ्यामचेतनाभ्यामन्यएवसचेतनः ॥ ४५ ॥

ननुचेतनत्वेअन्यत्वेचतस्याहंकृशःस्थूलःकाणोबधिरइत्यादिदेहधर्मोपलब्धिःकुतस्तत्राह भूतेंद्रियमनोभिर्लिंग्यंतेलक्ष्यंतइतितथातान्दे
हांस्तेभ्योऽन्यएवभजतिअहमितिमन्यते तर्हिकथंमोक्षस्तत्राह तच्चभजनंस्वेनतेजसाविवेकबलेनउत्सृजत्यपि हीत्यनुभवंप्रमाणयति ॥
॥ ४६ ॥ ननुविवेकानंतरमप्याहारादिकर्मसुप्रवृत्तेर्बंधःस्यादेवेत्यतआह यावदिति यावल्लिंगशरीरेणान्वितस्तदभिमानवानात्माभवति
तावदेवतत्कर्मानिबंधनंबंधहेतुर्भवति ततोविपर्ययोदेहधर्मभाक्त्वंततःक्लेशश्चानुवर्ततेनतुलिंगाभिमानेनिवृत्तेऽपि यतोयंमायायोगोविपर्यया
दिः माययायुज्यतइतितथा नपरमार्थइत्यर्थः ॥ ४७ ॥ ननुसुखदुःखादीनांतत्साधनानांचसत्यत्वप्रतीतेःकुतोमायामयत्वं तथाचबहवो
वादिनःसत्यत्वमेववदंतितत्राह वितथेति वितथोमिथ्याभूतोऽयमभिनिवेशः कोऽसौ गुणेषुतत्कार्येषुसुखदुःखादिषुअर्थःपरमार्थइतिदृ

भूतेंद्रियमनोलिंगान्देहानुच्चावचान्विभुः ॥ भजत्युत्सृजतिह्यन्यस्तच्चापिस्वेनतेजसा ॥४६॥ यावल्लिंगान्वि
तोह्यात्मातावत्कर्मनिबंधनं ॥ ततोविपर्ययःक्लेशोमायायोगोनुवर्तते ॥४७ ॥ वितथाऽभिनिवेशोयंयद्गुणे
ष्वर्थदृग्वचः ॥ यथामनोरथःस्वप्नःसर्वमैंद्रियकंमृषा ॥ ४८ ॥ अथनित्यमनित्यंवानेहशोचंतितद्विदः ॥ ना
न्यथाशक्यतेकर्तुंस्वभावःशोचतामिति ॥ ४९ ॥ लुब्धकोविपिनेकश्चित्पक्षिणांनिर्मितोंतकः ॥वितत्यजा
लंविदधेतत्रतत्रप्रलोभयन् ॥ ५० ॥ कुलिंगमिथुनंतत्रव्यचरत्समदृश्यत ॥ तयोःकुलिंगीसहसालुब्धके
नप्रलोभिता ॥ ५१ ॥ साऽसज्जतशिचस्तंत्यांमहिषीकालयंत्रिता ॥ कुलिंगस्तांतथापन्नांनिरीक्ष्यभृशदुः
खितः ॥ स्नेहादकल्पःकृपणःकृपणांपर्यदेवयत् ॥ ५२ ॥ ॥ ॥ ॥

ग्वचश्चेतियत् सकुतइत्यतआह यथेति यथामनोरथःस्वप्नः ॥ ४८ ॥ उपसंहरति अथेति अथतस्मात् नित्यमात्मानमनित्यंदेहंवात
द्विदोनित्यमनित्यंचजानंतोनशोचंति नन्वेवमुपदेष्टारोऽपिशोचंतोदृश्यंतेतत्राह नान्यथेति ज्ञानदार्ढ्याभावात्स्वभावोननिवर्ततइत्यर्थः
॥ ४९ ॥ स्वयंसधर्माअपीतियदुक्तंतत्रेतिहासमाह लुब्धकइत्यादिनापक्षिणामंतकईश्वरेणनिर्मितःसन्यत्रयत्रतेतत्रतत्रतान्कणादिभिः
प्रलोभयन्जालंविस्तार्यविशेषेणधृतवान् पाठांतरे तेषामामिषादिभिःप्रलोभनंकृतवानित्यर्थः ॥ ५० ॥ कुलिंगःकंदभक्षीपक्षिविशेषः
कुलिंगयोर्मिथुनं ॥ ५१ ॥ शिचस्तंत्यांजालस्यसूत्रेऽसज्जतबंधंप्राप तामापन्नामापदंप्राप्तांदृष्ट्वाकुलिंगःपक्षीतांमोचयितुमकल्पःसन्प
र्यदेवयत्वृक्षशाखामाश्रित्यविलापंचकार ॥ ५२ ॥ ॥ ॥ ॥ ॥

आकरुणयासर्वतोऽनुकंप्ययास्त्रियाकिंकरिष्यति ॥ ५३ ॥ आत्मनोदेहस्यार्धेन अनेनविधुरायुषाभार्याशून्यजीवितेनदुःखंयथाभवत्येवं जीविताकिंमेप्रयोजनं अतोमामपिकामंनयत्वित्यन्वयः ॥ ५४ ॥ नजाताःपक्षायेषांतान्बालकान्कथंबिभर्मिपुष्यामि मंदभाग्यामेप्रजाःमातरंप्रतीक्षंते ॥ ५५ ॥ शाकुनिकःपक्षिहंता विलीनःसन् ॥ ५६ ॥ आत्मापायंस्वमृत्युमपश्यंतयः ॥ ५७ ॥ अयथोत्थितंमिथ्यै

अहोअकरुणोदेवःस्त्रियाऽऽकरुणयाविभुः ॥ कृपणंमाऽनुशोचंत्यादीनयाकिंकरिष्यति ॥ ५३ ॥ कामंनयतुमांदेवःकिमर्धेनात्मनोहिमे ॥ दीनेनजीवतादुःखमनेनविधुरायुषा ॥ ५४ ॥ कथंत्वजातपक्षांस्तान्मातृहीनान्बिभर्म्यहं ॥ मंदभाग्याःप्रतीक्षंतेनीडेमेमातरंप्रजाः ॥ ५५ ॥ एवंकुलिंगंविलपंतमारात्प्रियावियोगातुरमश्रुकंठं ॥ सएवतंशाकुनिकःशरेणविव्याधकालप्रहितोविलीनः ॥ ५६ ॥ एवंयूयमपश्यंत्यआत्मापायमबुद्धयः ॥ नैनंप्राप्स्यथशोचंत्यःपतिंवर्षशतैरपि ॥ ५७ ॥ हिरण्यकशिपुरुवाच बालएवंप्रवदतिसर्वेविस्मितचेतसः ॥ ज्ञातयोमेनिरेसर्वमनित्यमयथोत्थितं ॥ ५८ ॥ यमएतदुपाख्यायतत्रैवांतरधीयत ॥ ज्ञातयोऽपिसुयज्ञस्यचक्रुर्यत्सांपरायिकं ॥ ५९ ॥ ततःशोचतमायूयंपरंचात्मानमेवच ॥ कआत्माकःपरोवाऽत्रस्वीयःपारक्यएववा ॥ स्वपराभिनिवेशेनविनाज्ञानेनदेहिनां ॥ ६० ॥ नारदउवाच इतिदैत्यपतेर्वाक्यंदितिराकर्ण्यसस्नुषा ॥ पुत्रशोकंक्षणात्त्यक्त्वातत्त्वेचित्तमधारयत् ॥ ६१ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेदितिशोकापनयनंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ नारदउवाच हिरण्यकशिपूराजन्नजेयमजरामरं ॥ आत्मानमप्रतिद्वंद्वमेकराजंव्यधित्सत ॥ १ ॥ ॥ ॥ ॥

वाविर्भूतं ॥ ५८ ॥ सांपरायिकंपरलोककृत्यं ॥ ५९ ॥ अशोचतइतिपाठेअडागमआर्षः स्वःपरइत्यभिनिवेशएवाज्ञानंतेनविना ॥ ॥ ६० ॥ सस्नुषास्नुषयासहिता ॥ ६१ ॥ इतिसप्तमेटीकायांद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ तृतीयेतस्यतपसातप्तंवीक्ष्यजगद्विधिः ॥ आगत्यविस्मितस्तेनसंस्तुतश्चवरानदात् ॥ १ ॥ तदेवंसाधूनांकदनेदानवानादिश्यबंधूनांशोकंतत्त्वनिरूपणेनापनीययत्कृतवांस्तदाह हिरण्यकशिपुरित्यादिना अप्रतिद्वंद्वंप्रतिपक्षहीनमेकराजमेकमेवराजानंव्यधित्सतकर्तुमैच्छत् ॥ १ ॥ ॥ ॥

ऊर्ध्वौबाहूयस्य नभसिदृष्टिर्यस्य पादांगुष्ठेनाश्रिताअवनिर्येन ॥ २ ॥ जटानांदीधितिभिरंशुभिःरश्मिभिः प्रलयकर्ताअर्कइवरेजे पूर्वये
अलक्षिताःसंतोभुविविचेरुस्तेदेवाःपुनः स्वानिस्थानानिभेजिरे ॥ ३ ॥ विष्वग्गीरितःसर्वतःप्रसृतः संस्त्रिलोकीमतपत्तापयामास ॥
॥ ४ ॥ द्वीपैरद्रिभिश्चसहिताभूश्चचाल ॥ ५ ॥ ६ ॥ तवबलिहाराःकरप्रदाःपूजाकारिणइतिवा अभितोभवतीत्यभिभुः हेअभिभोहेस
र्वाधिपते पाठांतरेभोइतिसंबोधनं अभितोयावन्ननंक्ष्यंतीतिसंबंधः ॥ ७ ॥ ब्रह्मणस्तस्मिन्द्वेषमुत्पादयितुंतत्संकल्पमाहुः तस्येतिचतुर्भिः

सतेपेमंदरद्रोण्यांतपःपरमदारुणं ॥ ऊर्ध्वबाहुर्नभोदृष्टिःपादांगुष्ठाश्रितावनिः ॥ २ ॥ जटादीधितिभीरेजे
संवर्तार्कइवांशुभिः ॥ तस्मिंस्तपस्तप्यमानेदेवाःस्थानानिभेजिरे ॥ ३ ॥ तस्यमूर्ध्नःसमुद्भूतःसधूमोग्निस्त
पोमयः ॥ तिर्यगूर्ध्वमधोलोकानतपद्विष्वगीरितः ॥ ४ ॥ चुक्षुभुर्नद्युदन्वंतःसद्वीपाद्रिश्चचालभूः ॥ निपेतुः
सग्रहास्ताराजज्वलुश्चदिशोदश ॥ ५ ॥ तेनतप्तादिवंत्यक्त्वाब्रह्मलोकंययुःसुराः ॥ धात्रेविज्ञापयामासुर्दे
वदेवजगत्पते ॥ ६ ॥ दैत्येंद्रतपसातप्तादिविस्थातुंनशक्नुमः ॥ तस्यचोपशमंभूमन्विधेहियदिमन्यसे ॥ लो
कानयावन्नंक्ष्यंतिबलिहारास्तवाभिभो ॥ ७ ॥ तस्यायंकिलसंकल्पश्चरतोदुश्चरंतपः ॥ श्रूयतांकिंनविदित
स्तवाथापिनिवेदितं ॥ ८ ॥ सृष्ट्वाचराचरमिदंतपोयोगसमाधिना ॥ अध्यास्तेसर्वधिष्ण्येभ्यःपरमेष्ठीनि
जासनं ॥ ९ ॥ तदहंवर्धमानेनतपोयोगसमाधिना ॥ कालात्मनोश्चनित्यत्वात्साधयिष्येतथात्मनः ॥ १० ॥
अन्यथेदंविधास्येऽहमयथापूर्वमोजसा ॥ किमन्यैःकालनिर्धूतैःकल्पांतेवैष्णवादिभिः ॥ ११ ॥

तथाऽप्यस्माभिर्निवेदितंत्वयाश्रूयताम् ॥ ८ ॥ तपोयोगयोःसमाधिनानिष्ठयासर्वधिष्ण्येभ्यः श्रेष्ठंनिजासनंसत्यलोकंयथाअध्यास्तेअधि
तिष्ठति ॥ ९ ॥ तत्तथैवात्मनःसाधयिष्यामि ननुब्रह्मणाअतिदीर्घायुषातपस्तप्त्वातत्साधितमन्यःकुतस्तत्साधयेत्तत्राहुः कालात्मनोरिति
यद्यप्यायुषोऽल्पत्वेनदेहोवारंवारंम्रियेततथाऽपिकालस्यआत्मनश्चनित्यत्वाद्बहुभिर्जन्मभिस्तपस्तप्त्वातत्साधयिष्याम्येवेति ॥ १० वर्ध
मानेनेतियदुक्तंतदभिप्रायमाह अन्यथेति अन्यथासुरासुरादिव्यत्ययेन अयथापूर्वंपुण्यपापादिव्यत्ययेन इदंजगद्विधास्यामि अन्यैर्वैष्ण
वादिभिर्ध्रुवादिपदैःकिंप्रयोजनमतस्तदेवसाधयिष्यामि ॥ ११ ॥ ॥ ॥

इतित्वत्पदापहरणेतस्यानिर्बंधंशुश्रुम अतएवासौतपःपरममास्थितोवर्तते यदत्रयुक्तंतत् अनंतरमेवविधत्स्व ॥ १२॥ अन्यथातवस्थानभ्रंशे सतिसाधूनामनिष्टंस्यादितिशोचंतआहुः तवपारमेष्ठ्यमिदमासनं द्विजानांगवांचभवायउद्भवाय श्रेयसेसुखाय भूत्यैऐश्वर्यायक्षेमायलब्धपालनाय विजयायउत्कर्षाय ॥ १४ ॥ वल्मीकादिभिःप्रतिच्छन्नंप्रथमंनददर्श पश्चात्कथंचिद्विलक्ष्यतंप्राहेतिद्वयोरन्वयः पिपीलिकादिभिः आचीर्णंसमंताद्भक्षितंमेदश्चत्वक्चमांसंचशोणितंचयस्य ॥ १५ ॥ अभ्रैरापिहितंछन्नंरविमिवविलक्ष्यविस्मितः प्राह ॥ १६ ॥

इतिशुश्रुमनिर्बंधंतपःपरममास्थितः ॥ विधत्स्वानंतरंयुक्तंस्वयंत्रिभुवनेश्वर ॥१२॥ तवासनंद्विजगवांपारमेष्ठ्यंजगत्पते ॥ भवायश्रेयसेभूत्यैक्षेमायविजयायच ॥ १३ ॥ इतिविज्ञापितोदेवैर्भगवानात्मभूर्नृप ॥ परीतोभृगुदक्षाद्यैर्ययौदैत्येश्वराश्रमं ॥ १४ ॥ नददर्शप्रतिच्छन्नंवल्मीकतृणकीचकैः ॥ पिपीलिकाभिराचीर्णंमेदस्त्वङ्मांसशोणितं ॥ १५ ॥ तपंतंतपसालोकान्यथाभ्रापिहितंरविं ॥विलक्ष्यविस्मितःप्राहप्रहसन्हंसवाहनः ॥ १६ ॥ ब्रह्मोवाच उत्तिष्ठोत्तिष्ठभद्रंतेतपःसिद्धोऽसिकाश्यप ॥ वरदोऽहमनुप्राप्तोव्रियतामीप्सितोवरः ॥ १७ ॥ अद्राक्षमहमेतत्तेहृत्सारंमहदद्भुतं ॥ दंशभक्षितदेहस्यप्राणाह्यस्थिषुशेरते ॥ ॥ १८ ॥ नैतत्पूर्वर्षयश्चक्रुर्नकरिष्यंतिचापरे ॥ निरंबुर्धारयेत्प्राणान्कोवैदिव्यसमाःशतं ॥ १९ ॥ व्यवसायेनतेऽनेनदुष्करेणमनस्विनां ॥ तपोनिष्ठेनभवताजितोऽहंदितिनंदन ॥ २० ॥ ततस्तआशिषःसर्वाददाम्यसुरपुंगव ॥ मर्त्यस्यतेअमर्त्यस्यदर्शनंनाफलंमम ॥ २१ ॥ नारदउवाच इत्युक्त्वादिभवोदेवोभक्षितांगंपिपीलिकैः॥कमंडलुजलेनौक्षद्दिव्येनामोघराधसा॥२२॥सतत्कीचकवल्मीकात्सहओजोबलान्वितः॥सर्वावयवसंपन्नोवज्रसंहननोयुवा ॥ उत्थितस्तप्तहेमाभोविभावसुरिवैधसः ॥ २३ ॥

॥ १७ ॥ हृत्सारंधैर्यं दंशैर्मक्षिकादिविशेषैर्भक्षितोदेहोयस्य ॥ १८ ॥ निरंबुःनिषिद्धमंबुयेनसः त्यक्तोदकइत्यर्थः ॥ १९ ॥ तेत्वयाअनेनव्यवसायेनैवतावज्जितोऽहं तपोनिष्ठेनभवतातुसुतरांजितः ॥ २० ॥ मर्त्यस्यतवअमर्त्यस्यममदर्शनमफलंनिष्फलंनभवतिअतोवरंवृणीष्व ॥ २१ ॥ आदौभवतीतिआदिभवोब्रह्मा औक्षत्प्रोक्षितवान् ॥ २२ ॥ वज्रवत्संहननमंगदार्ढ्यंयस्य तप्तस्यहेम्नइवआभादेहकांतिर्यस्यसगिराअगृणादित्युत्तरेणान्वयः ॥ २३ ॥ ॥ ॥ ॥

तस्यदर्शनेनमहानुत्सवोयस्य ॥ २४ ॥ हर्षेणाश्रूणिपुलकोद्भेदश्चयस्यसः ॥ २५ ॥ अंधेननिबिडेन तत्रहेतुः कालसृष्टेनप्रकृतिगुणरू
पेणनतुध्वांतेन तमसावृतमिदंजगत्‌यःअभिव्यनक्‌अभिव्यक्तमकरोत्‌ ॥ २६ ॥ यश्चात्रिगुणेनात्मनाइदंजगत्‌सृजातिअवतिपालयतिलुं
पतिसंहरति चतस्मैरजःसत्वतमसांधाम्नेआश्रयायमहतेपरायपरमेश्वरायनमइतिद्वयोरन्वयः ॥ २७ ॥ अत्रचस्वप्रकाशकत्वंजगत्प्रकाश
कत्वंतत्कारणत्वंतत्सृष्ट्यादिकर्तृत्त्वंमहत्वंपरमेश्वरत्वंचेतिषड्विधत्वमुक्तंतदेवप्रपंचयन्नमस्करोति नमइतिचतुर्भिःबीजायकारणाय तत्रहेतुः
आद्याय ज्ञानंज्ञप्तिर्विज्ञानंविषयाकारंज्ञानंमूर्तिर्यस्यतस्मै अनेनस्वप्रकाशकत्वंजगत्प्रकाशकत्वंचदर्शितं बीजायेतिनिमित्तत्वमुक्तंउपादा
नत्वमाह प्राणादयोयेविकारास्तैरूपैर्व्यक्तिकार्याकारमीयुषेप्राप्तवते ॥ २८ ॥ एवमात्मनात्रिवृताचेत्यनेनोक्तंकारणत्वंद्वेधादर्शितं महत्व

सनिरीक्ष्यांबरेदेवंहंसवाहमवस्थितं ॥ ननामशिरसाभूमौतद्दर्शनमहोत्सवः ॥ २४ ॥ उत्थायप्रांजलिःप्रह्व
ईक्षमाणोदृशाविभुं ॥ हर्षाश्रुपुलकोद्भेदोगिरागद्गदयाऽगृणात्‌ ॥ २५ ॥ हिरण्यकशिपुरुवाच कल्पां
तेकालसृष्टेनयोंऽधेनतमसावृतं ॥ अभिव्यनक्‌जगदिदंस्वयंज्योतिःस्वरोचिषा ॥ २६ ॥ आत्मनात्रिवृता
चेदंसृजत्यवतिलुंपति ॥ रजःसत्त्वतमोधाम्नेपरायमहतेनमः ॥ २७ ॥ नमआद्यायबीजायज्ञानविज्ञानमूर्त
ये ॥ प्राणेंद्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २८ ॥ त्वमीशिषेजगतस्तस्थुषश्चप्राणेनमुख्येनपतिःप्रजा
नां ॥ चित्तस्यचित्तेर्मनइंद्रियाणांपतिर्महान्भूतगुणाशयेशः ॥ २९ ॥ त्वंसप्ततंतून्वितनोषितन्वात्रय्याचातु
र्होत्रकविद्यया च ॥ त्वमेकआत्मात्मवतामनादिरनंतपारःकविरंतरात्मा ॥ ३० ॥ ॥ ॥

मीश्वरत्वंचाह त्वमिति त्वमेवजगतोजंगमस्यतस्थुषः स्थावरस्यचईशिषेनियंताभवासि केन मुख्येनप्राणेनसूत्रात्मरूपेण अतस्त्वंप्रजा
नांपतिः तासांचित्तस्यचित्तेश्चतत्परिणामभूतायाश्चेतनायामनसश्चतन्नियम्यानामिंद्रियाणांचपतिः अतस्त्वमेवमहान्‌ भूतानामाकाशादीनां
तद्गुणानांशब्दादिविषयाणांआशयानांतद्वासनानामीशश्च एतेनैवस्रष्टृत्वंदर्शितं ॥ २९ ॥ इदानींयज्ञप्रवर्तकत्वेनांतर्यामित्वेनजगत्पाल
कत्वमेवाह त्वमेवसप्ततंतून्‌अग्निष्टोमादियज्ञान्‌विस्तारयासि कथं त्रय्यातन्वावेदत्रयरूपेण कथंभूतया चत्वारोहोतारोयत्रतच्चातुर्होत्रकं
कर्मतद्विषययाविद्यया आत्मवतांप्राणिनामात्मभूतस्त्वमेवांतरात्माचअंतर्यामी कुतः यतःकविःसर्वज्ञः तत्कुतः एकःअखंडः तत्रहेतुः
अनादिःअनंतपारश्चेति नास्त्यंतः पारश्चकालतोदेशतोयस्यसः ॥ ३० ॥ ॥ ॥

कालरूपेणसंहर्तृत्वमाह त्वमेवेति लवाद्यैःकालावयवैःक्षिणोषिक्षपयसि तदेवंसृष्ट्यादिकर्तृत्वेऽपिनिर्विकारत्वमेवाह कूटस्थइति तत्र
हेतवः आत्माज्ञानरूपः परमेष्ठीपरमेश्वरः अजःजन्मशून्यः महान्अपरिछिन्नः किंच जीवलोकएवकर्मवशाज्जन्मादिभिर्विक्रियतेत्वं
तुतस्यजीवोजीवनहेतुः यतस्तस्यात्मानियंता ॥ ३१ ॥ तत्कुतस्तत्राह त्वत्तइति त्वत्तोव्यतिरिक्तंयदिकिंचिद्भवेत्तर्हितस्मात्तवजन्मादि
विकारोनियम्यत्वादिकंवाभवेत्तत्तुनास्तीत्याह त्वत्तःपरंकारणमपरंकार्यं तत्रचएजत्जंगममनेजत्स्थावरंचत्वद्व्यतिरिक्तंनास्ति ननुमद्बोध
कशास्त्रंव्यतिरिक्तमस्तीतिचेत् न यतोविद्यावेदोपवेदादिविद्यास्थानानिकलाश्चतदंगानितवैवतनवोनतुत्वद्व्यतिरिक्ताः तत्कुतः यतस्त्वं
बृहत्ब्रह्मैवासि तदपिकुतस्तत्राह हिरण्यरूपंब्रह्मांडंगर्भेयस्यसः त्रिपृष्ठःत्रिगुणात्मकस्यप्रधानस्यपृष्ठेपरतःस्थितः अक्षरात्परतःपरइत्या

**त्वमेवकालोनिमिषोजनानामायुर्लवाद्यावयवैःक्षिणोषि ॥ कूटस्थआत्मापरमेष्ठ्यजोमहांस्त्वंजीवलोकस्यच जीवआत्मा ॥ ३१ ॥ त्वत्तःपरंनापरमप्यनेजदेजच्चकिंचिद्व्यतिरिक्तमस्ति ॥ विद्याकलास्तेतनवश्चसर्वाहिरण्यगर्भोऽसिबृहत्त्रिपृष्ठः ॥ ३२ ॥ व्यक्तंविभोस्थूलमिदंशरीरंयेनेंद्रियप्राणमनोगुणांस्त्वं ॥ भुंक्षेस्थितोधामनिपारमेष्ठ्यअव्यक्तआत्मापुरुषःपुराणः ॥ ३३ ॥ अनंताव्यक्तरूपेणयेनेदमखिलंततं ॥ चिदचिच्छक्तियुक्तायतस्मैभगवतेनमः ॥ ३४ ॥ यदिदास्यस्यभिमतान्वरान्मेवरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्योमृत्युर्माभून्ममप्रभो ॥ ३५ ॥ नांतर्बहिर्दिवानक्तमन्यस्मादपिचायुधैः ॥ नभूमौनांबरेमृत्युर्नरैरपिमृगैरपि ॥ ३६ ॥**

दिश्रुतेः ॥ ३२ ॥ ननुब्रह्मांडशरिरस्यजीवस्यममकुतोब्रह्मत्वंकुतोवाब्रह्मांडगर्भत्वादितत्राह व्यक्तंकार्यमिदंतवशरीरं व्यक्तंसत्यमितिवा
येनशरीरेणत्वमिंद्रियप्राणमनसांगुणान्विषयान्भुंक्षे किंच पारमेष्ठ्येपारमेश्वर्येधामनिस्वस्वरूपेस्थितएवभुंक्षेनत्वस्मदादिवत्स्वरूपतिरो
धानेन अतस्त्वमव्यक्तआत्मानिरुपाधिब्रह्मैवपुराणपुरुषश्चेत्यर्थः ॥ ३३ ॥ ननुब्रह्मत्वंपुराणपुरुषत्वंकथमेकस्यतत्राह अनंतइति हेअनं
तयेनत्वयाअव्यक्तेनमनोवचनागोचरेणरूपेणइदंविश्वंततंव्याप्तंतस्मैतुभ्यंभगवतेअचिंत्यैश्वर्यायनमः भगवत्त्वेहेतुः चिदचिच्छक्तियुक्ताय
चिच्छक्तिर्विद्या अचिच्छक्तिर्माया ताभ्यांयुक्तायेति ॥ ३४ ॥ ३५ ॥ अन्यस्मात्त्वत्सृष्टव्यतिरिक्तादपि हेभगवन्आयुधैर्मृत्युर्माभूत् ॥ ३६ ॥

व्यसुभिरप्राणैः असुमद्भिः सप्राणैः यथाआत्मनस्तवास्तिमहिमातथाअप्रतिद्वंद्वतादिकंदेहीतिशेषः ॥ ३७ ॥ तपसायोगेनचप्रभावोयेषांते
षांयत्आणिमाद्यैश्वर्यंनरिष्यतिननश्यतितत्त्वदेहित्यर्थः ॥ ३८ ॥ इतिसप्तमेटीकायांतृतीयोऽध्यायः ॥ ३ ॥ चतुर्थेतुवराँल्लब्ध्वा विजित्या
खिललोकपान् ॥ विष्णुद्वेषेणतान्सर्वान्दैत्येंद्रःसमपीडयत् ॥ १ ॥ शतधृतिर्ब्रह्मा ॥ १ ॥ मेमत्तःयदपियद्यपीमेदुर्लभाः ॥ २ ॥ अमोघोऽनु

व्यसुभिर्वाऽसुमद्भिर्वासुरासुरमहोरगैः ॥ अप्रतिद्वंद्वतांयुद्धेऐकपत्यंचदेहिनां ॥ ३७ ॥ सर्वेषांलोकपाला
नांमहिमानंयथात्मनः ॥ तपोयोगप्रभावाणांयन्नरिष्यतिकर्हिचित् ॥ ३८ ॥ इतिश्रीभागवतेमहापुरा
णेसप्तमस्कंधेहिरण्यकशिपोर्वरप्रदानंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ नारदउवाच एवंवृतः
शतधृतिर्हिरण्यकशिपोरथ ॥ प्रादात्तत्तपसाप्रीतोवरांस्तस्यसुदुर्लभान् ॥ १ ॥ ब्रह्मोवाच तातेमेदुर्लभाः
पुंसांयान्वृणीषेवरान्मम ॥ तथाऽपिवितराम्यंगवरान्यदपिदुर्लभान् ॥ २ ॥ ततोजगामभगवानमोघानु
ग्रहोविभुः ॥ पूजितोऽसुरवर्येणस्तूयमानःप्रजेश्वरैः ॥ ३ ॥ एवंलब्धवरोदैत्योबिभ्रद्धेममयंवपुः ॥ भगवत्य
करोद्द्वेषंभ्रातुर्वधमनुस्मरन् ॥ ४ ॥ सविजित्यदिशःसर्वालोकांश्चत्रीन्महासुरः ॥ देवासुरमनुष्येंद्रान्गंधर्व
गरुडोरगान् ॥ ५ ॥ सिद्धचारणविद्याध्रान्ऋषीन्पितृपतीन्मनून् ॥ यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनथ ॥ ६ ॥
सर्वसत्वपतीन्जित्वावशमानीयविश्वजित् ॥ जहारलोकपालानांस्थानानिसहतेजसा ॥ ७ ॥ देवोद्यानश्रि
याजुष्टमध्यास्तेस्मत्रिविष्टपं ॥ महेंद्रभवनंसाक्षान्निर्मितंविश्वकर्मणा ॥ त्रैलोक्यलक्ष्म्यायतनमध्युवासा
खिलर्द्धिमत् ॥ ८ ॥ यत्रविद्रुमसोपानामहामारकताभुवः ॥ यत्रस्फाटिककुड्यानिवैदूर्यस्तंभपंक्तयः ॥ ९ ॥

ग्रहोयस्य प्रजेश्वरैर्मरीच्यादिभिः ॥ ३ ॥ यदर्थंतपस्तप्तंतदाह एवमित्यादि ॥ ४ ॥ ५ ॥ ६ ॥ सर्वेषांसत्वानांप्राणिजातानांयेयेपतयस्तान् ॥
॥ ७ ॥ त्रिविष्टपंस्वर्गमध्यास्तेस्मअधिष्ठितवान् महेंद्रभवनमध्युवासअधिवसतिस्म ॥ ८ ॥ अखिलसमृद्धियुक्तत्वमेवाह यत्रेतित्रिभिः ॥ ९ ॥

मुक्तादामानिपरिच्छदाःपरिकरायासाम् ॥ १० ॥ सुदतीःसुदत्यः ॥ ११ ॥ ऊर्जितमधिकंचंडंतीव्रंशासनंयस्य ॥ १२ ॥ अंगहेराजन् उरुगंधिनाउग्रगंधेनमधुनासुरयामत्तं अतएवविवृत्तेविघूर्णितेताम्रेआक्षिणीयस्यतं अशेषधिष्ण्यपाःसर्वलोकपालाःउपायनयुक्तैःपाणिभि रुपासतसेवंते त्रिभिर्ब्रह्मविष्णुरुद्रैर्विना पदमाश्रयभूतं ॥ १३ ॥ उपासनप्रकारमाह जगुरिति ॥ १४ ॥ १५ ॥ १६ ॥ तत्पत्न्योन



यत्रचित्रवितानानिपद्मरागासनानिच ॥ पयःफेननिभाःशय्यामुक्तादामपरिच्छदाः ॥ १० ॥ कूजद्भिर्नूपुरैर्देव्यःशब्दयंत्यइतस्ततः ॥ रत्नस्थलीषुपश्यंतिसुदतीःसुंदरंमुखं ॥११॥ तस्मिन्महेंद्रभवनेमहाबलोमहामनानिर्जितलोकएकराट् ॥ रेमेऽभिवंद्यांघ्रियुगःसुरादिभिःप्रतापितैरूर्जितचंडशासनः ॥ १२ ॥ तमंगमत्तंमधुनोरुगंधिनाविवृत्तताम्राक्षमशेषधिष्ण्यपाः ॥ उपासतोपायनपाणिभिर्विनात्रिभिस्तपोयोगबलौजसांपदं ॥ १३ ॥ जगुर्महेंद्रासनमोजसास्थितंविश्वावसुस्तुंबुरुरस्मदादयः ॥ गंधर्वसिद्धाऋषयोऽस्तुवन्मुहुर्विद्याधराअप्सरसश्चपांडव ॥१४॥ सएववर्णाश्रमिभिःक्रतुभिर्भूरिदक्षिणैः ॥ इज्यमानोहविर्भागानग्रहीत्स्वेनतेजसा ॥ १५ ॥ अकृष्टपच्यातस्यासीत्सप्तद्वीपवतीमही ॥ तथाकामदुघाद्यौस्तुनानाश्चर्यपदंनभः ॥ १६ ॥ रत्नाकराश्चरत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥ शैलाद्रोणीभिराक्रीडंसर्वर्तुषुगुणान्द्रुमाः ॥ दधारलोकपालानामेकएवपृथग्गुणान् ॥ १८ ॥ सइत्थंनिर्जितककुबेकराड्विषयान्प्रियान् ॥ यथोपजोषंभुंजानोनातृप्यदजितेंद्रियः ॥ १९ ॥ एवमैश्वर्यमत्तस्यदृप्तस्योच्छास्त्रवर्त्तिनः ॥ कालोमहान्व्यतीयायब्रह्मशापमुपेयुषः ॥ २० ॥ तस्योग्रदंडसंविग्नाःसर्वेलोकाःसपालकाः ॥ अन्यत्रालब्धशरणाःशरणंययुरच्युतं ॥ २१ ॥ ॥ ॥



द्यः ऊहुःवहंतिस्मघृतदुग्धादीन् रत्नाकरानेवाह क्षारेति ॥ १७ ॥ आक्रीडंक्रीडास्थानं द्रुमाःसर्वेषुऋतुषुगुणान्पुष्पफलादीन् सचलोकपालानांपृथग्विधान्गुणान्वर्षणदहनशोषणादीन्एकएवदधार ॥ १८ ॥ निर्जिताःककुभोयेन यथोपजोषंयथाप्रीति ॥ १९ ॥ महान्कालःएकसप्ततियुगानिकिंचिदधिकानि ॥ २० ॥ २१ ॥ ॥ ॥ ॥ ॥

॥ २२ ॥ २३ ॥ अरूपावक्तृरहिता ॥ २४ ॥ ममदर्शनंस्तवनंश्रवणंसर्वेषांश्रेयसामुपपत्तयेभवति ॥ २५ ॥ २६ ॥ २७॥ ननुदेवादि विद्वेषेऽप्यस्यविनाशोनास्तिब्रह्मवरेणोर्जितत्वात्तत्राह निर्वैरायेति सर्वमहंसहेनमद्भक्तद्रोहामितिभावः ॥ २८ ॥ असुरंचहतंमेनिरेतदानीं तद्वेषेप्रवृत्तत्वादितिभावः ॥ २९ ॥ तमेवद्वेषंवक्तुमादौसुतस्यमहत्त्वमाह तस्येति गुणैर्महानभूत् गुणानेवाह महदुपासकइत्यादिना ॥

तस्यैनमोस्तुकाष्ठायैयत्रात्माहरिरीश्वरः ॥ यद्गत्वाननिवर्तंतेशांताःसंन्यासिनोऽमलाः ॥२२॥ इतितेसंयता त्मानःसमाहितधियोऽमलाः ॥ उपतस्थुर्हृषीकेशंविनिद्रावायुभोजनाः ॥२३॥ तेषामाविरभूद्वाणीअरूपा मेघनिःस्वना ॥ सन्नादयंतीककुभःसाधूनामभयंकरी ॥२४॥ माभैष्टविबुधश्रेष्ठाःसर्वेषांभद्रमस्तुवः ॥ मद्द र्शनंहिभूतानांसर्वश्रेयोपपत्तये ॥२५॥ ज्ञातमेतस्यदौरात्म्यंदैतेयापसदस्यच ॥ तस्यशांतिंकरिष्यामिकालं तावत्प्रतीक्षत ॥ २६ ॥ यदादेवेषुवेदेषुगोषुविप्रेषुसाधुषु ॥ धर्मेमयिचविद्वेषःसवाआशुविनश्यति ॥ २७॥ निर्वैरायप्रशांतायस्वसुतायमहात्मने ॥ प्रऱ्हादाययदाद्रुह्येद्धनिष्येऽपिवरोर्जितं ॥ २८ ॥ ॥ नारदउवाच इत्युक्तालोकगुरुणातंप्रणम्यदिवौकसः ॥ न्यवर्ततगतोद्वेगामेनिरेचासुरंहतं ॥२९॥ तस्यदैत्यपतेःपुत्राश्च त्वारःपरमाद्भुताः ॥ प्रऱ्हादोऽभून्महांस्तेषांगुणैर्महदुपासकः ॥ ३० ॥ ब्रह्मण्यःशीलसंपन्नःसत्यसंधोजितें द्रियः ॥ आत्मवत्सर्वभूतानामेकःप्रियसुहृत्तमः ॥३१॥ दासवत्संनतार्यांघ्रिःपितृवद्दीनवत्सलः॥भ्रातृवत्स दृशेस्निग्धोगुरुष्वीश्वरभावनः ॥ विद्याऽर्थरूपजन्माढ्योमानस्तंभविवर्जितः ॥ ३२॥ नोद्विग्नचित्तोव्यस नेषुनिस्पृहःश्रुतेषुदृष्टेषुगुणेष्ववस्तुदृक्॥दांतेंद्रियप्राणशरीरधीःसदाप्रशांतकामोरहितासुरोऽसुरः॥३३॥

॥ ३० ॥ सत्यासंधाप्रतिज्ञायस्य एकएवप्रियश्चसुहृत्तमश्च ॥ ३१ ॥ दासवत्सम्यक्नताआर्याणांअंघ्रयोयेन गुरुषुईश्वरइतिभावनाय स्य ॥ ३२ ॥ व्यसनेषुप्राप्तेष्वपिनोद्विग्नाचित्तः दृष्टश्रुतेषुगुणेषुविषयेषुइहामुत्रभोगेषुनिस्पृहः यतस्तेषुअवस्तुदृक् दांताइंद्रियादयोयस्य रहितःआसुरोभावोमत्सरादिर्यस्यसः असुरोऽपिसन्प्रशांतकामः ॥ ३३ ॥ ॥ ॥

अधुनाऽपितेगुणानापिधीयंतेतिरोहितानभवंति ॥ ३४ ॥ साधुगाथासदसिदेवासुरमनुष्याणांमध्येकःसाधुरितिप्रसंगवत्यांसभायां यंप्रन्हा
दं प्रतिमानंदृष्टांतं ॥ ३५ ॥ सूच्यतेमयाकेवलंद्योत्यते सुष्ठुकथ्यतइतिवा ॥ ३६ ॥ नैसर्गिकरतेर्लिंगान्याह न्यस्तक्रीडनकइतिषड्भिः
तन्मनस्कतयातदेकचित्तत्वेन ॥ ३७ ॥ एतानिआसनादीनि गोविंदेनपरिरंभितःआत्मनाएकीकृतः ॥ ३८ ॥ रुदतिरोदिति रौति
वैकुंठस्यचिंतयाशबलाभ्यामिश्राक्षुभिताचेतनायस्य तस्यचिंतयाआल्हादोयस्य ॥ ३९ ॥ क्वचिदुत्कंठःमुक्तकंठःसन् अनुचकारतच्चे

यस्मान्महद्गुणाराजन्गृह्यंतेकविभिर्मुहुः॥ नतेऽधुनापिधीयंतेयथाभगवतीश्वरे॥३४॥यंसाधुगाथासदसि
रिपवोऽपिसुरान्नृप ॥ प्रतिमानंप्रकुर्वंतिकिमुतान्येभवादृशाः ॥ ३५ ॥ गुणैरलमसंख्येयैर्माहात्म्यंतस्यसू
च्यते॥वासुदेवेभगवतियस्यनैसर्गिकीरतिः ॥ ३६॥ न्यस्तक्रीडनकोबालोजडवत्तन्मनस्कया ॥ कृष्णग्रह
गृहीतात्मानवेदजगदीदृशं ॥३७॥ आसीनःपर्यटन्नश्नञ्छयानःप्रपिबन्ब्रुवन्॥नानुसंधत्तएतानिगोविंदप
रिरंभितः ॥३८॥ क्वचिद्रुदतिवैकुंठचिंताशबलचेतनः ॥ क्वचिद्धसतितच्चिंताल्हादउद्गायतिक्वचित् ॥ ३९ ॥
नदतिक्वचिदुत्कंठोविलज्जोनृत्यतिक्वचित् ॥क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकारह॥४०॥क्वचिदुत्पुलकस्तू
ष्णीमास्तेसंस्पर्शनिर्वृतः॥अस्पंदप्रणयानंदसलिलामीलितेक्षणः ॥४१॥ सउत्तमश्लोकपदारविंदयोर्निषे
वयाऽकिंचनसंगलब्धया ॥ तन्वन्परांनिर्वृतिमात्मनोमुहुर्दुःसंगदीनान्यमनःशमंव्यधात्॥४२॥ तस्मिन्म
हाभागवतेमहाभागेमहात्मनि ॥ हिरण्यकशिपूराजन्नकरोदघमात्मजे ॥ ४३ ॥ युधिष्ठिरउवाच देवर्ष
एतदिच्छामोवेदितुंतवसुव्रत ॥ यदात्मजायशुद्धायपिताऽदात्साधवेह्यघं ॥ ४४ ॥

ष्टादिकंस्वयंकृतवान् ॥ ४० ॥ संस्पर्शस्तद्भावापत्तिस्तेनानिर्वृतः अस्पंदःस्थिरोयःप्रणयस्तेनयआनंदस्तेनयत्सलिलंतेनयुक्तेआमीलि
तेईषन्निमीलितेईक्षणेयस्यसः ॥ ४१ ॥ आत्मनःपरांनिर्वृतिंतन्वन्दुःसंगेनदीनस्यान्यस्यापिमनःशमंशांतंव्यधात् ॥ ४२ ॥ अघंद्रोह
मकरोत् ॥ ४३ ॥ प्रथमाध्यायांतेपृष्टमेवार्थमतिविस्मयेनपुनःपृच्छति देवर्षइति तवत्वत्तः तववाक्यमितिवा साधवेअघमदात्साधोर्द्रो
हंकृतवानितियत्एतद्वेदितुंज्ञातुमिच्छामः ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥

उपालभंतेआक्षिपंति अघंतुनैवकुर्वंति अपरःशत्रुरिव ॥ ४५ ॥ अनुवशान्अनुकूलान् साधून्अरागरोषान् गुरुःपितैवदेवतायेषांतानु
द्दिश्यअघंनकुर्वंतिइतिकिमुतवक्तव्यमित्यर्थः पुत्रायपुत्रमुद्दिश्यपितुर्द्वेषःपित्राकृतोद्वेषःपुत्रस्यमरणार्थंप्रयोजितःप्रवर्तितइतियत्एतत्कौतूहलं
विधमअपाकुरु यद्वा यद्यस्मात्पुत्राययोद्वेषःसपितुर्मरणायप्रयोजितःअतएतत्कौतूहलंविधमइत्यर्थः ॥ ४६ ॥ इतिसप्तमे टीकायांचतुर्थोऽ
ध्यायः ॥ ४ ॥ ॥ पंचमेगुरुतोऽधीतंत्यक्त्वाविष्णुस्तुतौरतं ॥ घातयन्द्विपसर्पाद्यैःसुतंदैत्योनचाशकत् ॥ १ ॥ भगवद्भक्तिरेवविद्वेषे
कारणमितिवक्तुमाह पौरोहित्यायेत्यादिना काव्यःशुक्रः तस्यसुतौतत्रन्यवसतामितिशेषः पाठ्यान्दंडनीत्यादीन् पाठ्यानसुरबालका

पुत्रान्विप्रप्रतिकूलान्स्वान्पितरःपुत्रवत्सलाः ॥ उपालभंतेशिक्षार्थंनैवाघमपरोयथा ॥ ४५ ॥ किमुतानुव
शान्साधूंस्तादृशान्गुरुदेवतान् ॥ एतत्कौतूहलंब्रह्मन्नस्माकंविधमप्रभो ॥ पितुःपुत्राययद्द्वेषोमरणायप्र
योजितः ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेप्रऱ्हादचरित्रेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥
नारदउवाच पौरोहित्यायभगवान्वृतःकाव्यःकिलासुरैः ॥ शंडामर्कौसुतौतस्यदैत्यराजगृहांतिके ॥ १॥
तौराज्ञाप्रापितंबालंप्रऱ्हादंनयकोविदं ॥ पाठयामासतुःपाठ्यानन्यांश्चासुरबालकान् ॥ २॥ यत्तत्रगुरुणा
प्रोक्तंशुश्रुवेऽनुपपाठच ॥ नसाधुमनसामेनेस्वपरासद्ग्रहाश्रयं ॥ ३॥ एकदाऽसुरराट्पुत्रमंकमारोप्यपांड
व ॥ पप्रच्छकथ्यतांवत्समन्यतेसाधुयद्भवान् ॥ ४ ॥ प्रऱ्हादउवाच तत्साधुमन्येऽसुरवर्यदेहिनांसदास
मुद्विग्नधियामसद्ग्रहात् ॥ हित्वात्मपातंगृहमंधकूपंवनंगतोयद्धरिमाश्रयेत ॥ ५ ॥ नारदउवाच श्रुत्वापु
त्रगिरोदैत्यःपरपक्षसमाहिताः ॥ जहासबुद्धिर्बालानांभिद्यतेपरबुद्धिभिः ॥ ६ ॥

नितिवाऽन्वयः ॥ २ ॥ अनुश्रवणानंतरंतथैवपपाठचकिंतुतत्साधुनमेने तत्रहेतुः स्वःपरइत्यसद्ग्रहोमिथ्याभिनिवेशएवाश्रयोयस्यतत् ॥
॥ ३ ॥ ४ ॥ हेअसुरवर्यअसद्ग्रहात्अहंममेतिमिथ्याऽभिनिवेशाद्धेतोःसम्यगुद्विग्नाविषण्णाधीर्येषांते वनंगतःसन्हरिमाश्रयेतेतियत्तदेवा
हंसाधुमन्ये कथंभूतंगृहं आत्मपातमात्मनःअधःपातनिमित्तं कुतःअंधकूपवन्मोहावहं ॥ ५ ॥ परपक्षेविष्णोसमाहिताःपरिनिष्ठिताः
हासेहेतुः बुद्धिरिति ॥ ६ ॥ ॥ ॥ ॥

विष्णुपक्षैर्भागवतैर्हेतुभूतैः ननुत्वद्गृहेकुतस्तेषांप्रवेशः सत्यं तथापिप्रतिच्छन्नैर्वेषांतरेणच्छन्नैः ॥ ७ ॥ दैत्यैर्गृहमानीतं ॥ ८ ॥ बालान्
सर्वानतिअतिक्रम्य तुभ्यंतव ॥ ९ ॥ १० ॥ अहोमायामोहिताभवंतोमामाक्षिपंतीत्याशयेनतावदाह स्वःपरश्चेतिमिथ्याभिनिवेशोयदी
ययामाययैवकृतोनतुवास्तवःअतएवतदीययामाययाविमोहितबुद्धीनांभवतामेवदृष्टोनतुमम तस्मैअचिंत्यमायेश्वरायनमः ॥ ११ ॥ अहो
किमेतत्प्रलपासि तवबुद्धिभेदोयतोजातस्तंकथयेत्याक्षिप्तःसंस्तत्प्रसादादेवेत्युत्तरमाह सइतित्रिभिः सभगवान् यदाअनुव्रतःअनुकूलो



सम्यग्विधार्यतांबालोगुरुगेहेद्विजातिभिः ॥ विष्णुपक्षैःप्रतिच्छन्नैर्नभिद्येतास्यधीर्यथा ॥ ७ ॥ गृहमानीत
माहूयप्रन्हादंदैत्ययाजकाः॥प्रशस्यश्लक्ष्णयावाचासमपृच्छंतसामभिः ॥८॥ वत्सप्रन्हादभद्रंतेसत्यंकथ
यमामृषा ॥ बालानतिकुतस्तुभ्यमेषबुद्धिविपर्ययः ॥९॥ बुद्धिभेदःपरकृतउताहोतेस्वतोऽभवत् ॥ भण्यतां
श्रोतुकामानांगुरूणांकुलनंदन॥१०॥प्रन्हादउवाच स्वःपरश्चेत्यसद्ग्राहःपुंसांयन्माययाकृतः॥विमोहितधि
यांदृष्टस्तस्मैभगवतेनमः ॥ ११ ॥ सयदाऽनुव्रतःपुंसांपशुबुद्धिर्विभिद्यते ॥ अन्यएषतथाऽन्योहमितिभेद
गतासती॥१२॥सएषआत्मास्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणोनिरूप्यते ॥ मुह्यंतियद्वर्त्मनिवेदवादिनोब्र
ह्मादयोह्येषभिनत्तिमेमतिं ॥१३॥ यथाभ्राम्यत्ययोब्रह्मन्स्वयमाकर्षसन्निधौ॥तथामेभिद्यतेचेतश्चक्रपाणे
र्यदृच्छया॥१४॥एतावद्ब्राह्मणायोक्त्वाविरराममहामतिः॥तंनिर्भर्त्स्याथकुपितःसदीनोराजसेवकः ॥ १५ ॥

भवतितदापशूनामविवेकिनामिवबुद्धिर्भेदगताअसतीमिथ्यासंसारविषयाविभिद्यतेअभिन्नात्मानिष्ठाभवति ॥ १२ ॥ भेदस्यासत्त्वंदर्शय
न्नाह सएषपरमात्मैवस्वःपरइतिचअविवेकिभिर्निरूप्यते युक्तंचैतत् यतःयस्यवर्त्मनिजिज्ञासायांब्रह्मादयोपिमुह्यंति तत्रहेतुःदुरत्ययंदुर्घ
टमनुक्रमणमनुचरितमनुवर्णनंवायस्य ॥ १३ ॥ ननुनिर्विकारस्यकथंमतिभेदकत्वंतत्राह यथेति यथाअयोलोहमाकर्षस्यायस्कांतस्य स
मीपेस्वयमेवभ्रमातितथाचेतश्चक्रपाणेःसान्निधौ तवकुतोजातस्तत्सन्निधिस्तत्राहयदृच्छयेति कस्यतपोदानादेःफलमेतादितिनज्ञायतइ
त्यर्थः ॥ १४ ॥ राजसेवकउवाचेतिशेषः ॥ १५ ॥ ॥ ॥

अरेवेत्रंकशाआनीयतां सामदानभेददंडानांमध्ये चतुर्थोदमोदंडोऽस्यदुर्बुद्धेरुदितउक्तः शास्त्रेषु दुर्बुद्धित्वेहेतुः कुलांगारस्यकुलस्यांगारवन्ना
शहेतोः ॥ १६ ॥ तत्कुतस्तत्राह दैतेयाएवचंदनद्रुमास्तेषांवनेअयंकंटकद्रुमतुल्योजातः तदेवाह यस्यदैतेयचंदनवनस्यमूलोन्मूलनेपरशु
स्थानीयस्यविष्णोरयमर्भकएवनालायितोनाल मिवाचरत् यथापरशोश्छेदकत्वेबब्बूलादिद्रुमानिर्मितोदंडःसहकारी तंविनाछेदनासंभवात्
तथायंविष्णोर्दैत्यमूलोच्छेदेहेतुर्जातइत्यर्थः॥१७॥इतितंप्रऱ्हादंभीषयन् धर्मार्थकामवर्गस्यप्रतिपादकंशास्त्रमध्यापयामास ॥१८॥ज्ञातंज्ञेयमु

आनीयतामरेवेत्रमस्माकमयशस्करः ॥ कुलांगारस्यदुर्बुद्धेश्चतुर्थोऽस्योदितोदमः ॥ १६ ॥ दैतेयचंदनवने
जातोऽयंकंटकद्रुमः ॥ यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥१७॥ इतितंविविधोपायैर्भीषयंस्तर्ज
नादिभिः ॥ प्रऱ्हादंग्राहयामासत्रिवर्गस्योपपादनं ॥ १८ ॥ ततएनंगुरुर्ज्ञात्वाज्ञातज्ञेयचतुष्टयं ॥ दैत्येंद्रंदर्श
यामासमातृमृष्टमलंकृतं ॥ १९ ॥ पादयोःपतितंबालंप्रतिनंद्याशिषाऽसुरः ॥ परिष्वज्याचिरंदोर्भ्यांपरमा
मापनिर्वृतिं ॥ २० ॥ आरोप्यांकमवघ्रायमूर्धन्यश्रुकलांबुभिः ॥ आसिंचन्विकसद्वक्त्रमिदमाहयुधिष्ठिर ॥
॥२१॥ हिरण्यकशिपुरुवाच प्रऱ्हादानूच्यतांतातस्वधीतंकिंचिदुत्तमं ॥ कालेनैतावताऽऽयुष्मन्यदशिक्षद्गु
रोर्भवान् ॥ २२ ॥ प्रऱ्हादउवाच श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनं॥अर्चनंवंदनंदास्यंसख्यमात्मनि
वेदनं ॥ २३ ॥ इतिपुंसार्पिताविष्णौभक्तिश्चेन्नवलक्षणा ॥ क्रियतेभगवत्यद्धातन्मन्येऽधीतमुत्तमं ॥ २४ ॥
निशम्यैतत्सुतवचोहिरण्यकशिपुस्तदा ॥ गुरुपुत्रमुवाचेदंरुषाप्रस्फुरिताधरः ॥ २५ ॥

पायानांचतुष्टयंसामदानादियेनतं दैत्येंद्रंप्रति मात्रामृष्टमुद्वर्त्यस्नापितमलंकृतंभूषणतिलकादिभिः ॥ १९॥२०॥२१॥२२ ॥ पादसेवनंपरिच
र्या अर्चनंपूजा दास्यंकर्मार्पणं सख्यंतद्विश्वासादि आत्मनिवेदनंस्वशरीरसमर्पणं यथाविक्रीतस्यगवाश्वादेर्भरणपालनादिचिंतानाक्रिय
तेतथादेहंतस्मैसमर्प्यतच्चिंतावर्जनमित्यर्थः ॥ २३ ॥ इतिनवलक्षणानियस्याःसा अद्धातेनचेद्भगवतिविष्णौभक्तिःक्रियतेसाचअर्पितैव
सतीयदिक्रियेतनतुकृतासतीपश्चादर्प्यंतेतदुत्तममधीतंमन्ये नत्वस्माद्गुरोरधीतंशिक्षितंवातथाविधंकिंचिदस्तीतिभावः ॥ २४ ॥ २५ ॥

नविद्यतेसारंयत्रतदसारं नविद्यतेसारंयस्मादितिवास्तवोऽर्थः ॥ २६ ॥ मित्रत्वेनप्रवर्त्तमानस्यापितवविरोधाचरणंनासंभावितमित्याह संतिहीति दुष्टंमैत्रंमित्रत्वंयेषांतेदुर्मैत्राः रोगइति ब्रह्महाक्षयरोगीस्यात्सुरापःश्यावदंतकः ॥ स्वर्णहारीतुकुनखीदुश्चर्मागुरुतल्पगइत्यादि स्मृत्युक्तःपातकिनांरोगोयथोदेतितथातेषामघंविद्वेषादिकमुदेतीत्यर्थः ॥ २७ ॥ नमत्प्रणीतंमयापाठितं नोऽस्मभ्यंकतृकुत्सितंदोषंमा स्मअदाः अडागमआर्षः मयिदोषारोपंमाकृथाइत्यर्थः इंद्रशत्रोइति नहिब्राह्मणेषुतवकोपउचितइतिभावः ॥ २८ ॥ गुरुमुखीयंगुरु वाक्यजनिता हेअभद्र ॥ २९ ॥ आस्तामियंवार्ता भवादृशानांविषयासक्तानामत्रानधिकारादित्याशयेनाह मतिरिति परतःगुरोः स्व

ब्रह्मबंधोकिमेतत्तेविपक्षंश्रयतासता ॥ असारंग्राहितोबालोमामनादृत्यदुर्मते ॥ २६ ॥ संतिह्यसाधवो लोकेदुर्मैत्राश्छद्मवेषिणः ॥ तेषामुदेत्यघंकालेरोगःपातकिनामिव ॥ २७ ॥ गुरुपुत्रउवाच नमत्प्रणीतंनपरप्रणीतंसुतोवदत्येषतवेंद्रशत्रो ॥ नैसर्गिकीयंमतिरस्यराजन्नियच्छमन्युंकददाःस्ममानः ॥ २८ ॥ नारदउवाच गुरुणैवंप्रतिप्रोक्तोभूयआहासुरःसुतं ॥ नचेद्गुरुमुखीयंतेकुतोऽभद्राऽसतीमतिः ॥ २९ ॥ प्रह्लादउवाच मतिर्नकृष्णेपरतःस्वतोवामिथोऽभिपद्येतगृहव्रतानां ॥ अदांतगोभिर्विशतांतमिस्रंपुनःपुनश्चर्वितचर्वणानां ॥ ३० ॥ नतेविदुःस्वार्थगतिंहिविष्णुंदुराशयायेबहिरर्थमानिनः ॥ अंधायथांऽधैरुपनीयमानावागीशतंत्यामुरुदाम्निबद्धाः ॥ ३१ ॥ ॥ ॥ ॥ ॥

तोवामिथोवाअन्योऽन्यतोनाभिपद्येतनसंपद्येत केषां गृहव्रतानांगृहएवव्रतंसंकल्पइतिकृत्याचिंतायेषां अतएवादांतैरनुपरतैर्गोभिरिंद्रि यैर्हेतुभूतैः तमिस्रंसंसारंविशतां तत्रचर्वितस्यैवचर्वणंयेषां ॥ ३० ॥ ननुश्रीकृष्णस्यपरमानंदस्वरूपत्वात्तेऽपितन्निष्ठाएवकिंनस्युरितिचे त्तदज्ञानादित्याह नेति येदुराशयाःविषयवासितांतःकरणास्तेहिविष्णुंनविदुः तत्रहेतुः स्वस्मिन्नेवार्थःपुरुषार्थोयेषांतेषांगतिंगम्यं ननुतेऽ पिगुरूपदेशाद्विष्णुंज्ञास्यंतितत्राह बहिर्विषयेष्वर्थोयेषांतेबहिरर्थास्तानेवगुरुत्वेनमंतुंशीलंयेषांते अतःअंधैरुपनीयमानाअंधायथापंथानं नविदुःकिंतुगर्तेपतंतितथातेऽपिईशस्यतंत्यांदीर्घरज्ज्वांवेदलक्षणायांउरूणिदामानिब्राह्मणादिनामानियस्यांतस्यांकाम्यैः कर्मभिर्बद्धाएव भवंतीत्यर्थः तदुक्तं विषयाविष्टचित्तानांविष्ण्वावेशःसुदूरतः ॥ वारुणीदिग्गतंवस्तुव्रजन्नैंद्रींकिमाप्नुयादिति ॥ ३१ ॥ ॥

ननुचएकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मेत्यादिश्रुतिप्रतिपादितंविष्णुंकथंनविदुःकुतोवातेषांतमिस्त्रप्रवेशस्तत्राहनैषामितिनि
ष्किंचनानांनिरस्तविषयाभिमानानांमहत्तमानांपादरजसाअभिषेकंयावन्नवृणीततावत्श्रुतिवाक्यतोजाताप्येषांमतिरुरुक्रमस्यांघ्रिंनस्पृश
तिनप्राप्नोति असंभावनादिभिर्विहन्यतइत्यर्थः अनर्थस्यसंसारस्यापगमोयदर्थोयस्याअंघ्रिस्पर्शिन्यामतेरर्थःप्रयोजनंमहदनुग्रहाभावान्नतत्त्व
निश्चयोनापिमोक्षस्तेषामित्यर्थः ॥ ३२ ॥ निरस्यतचिक्षेप ॥ ३३ ॥ अमर्षोऽसहनंतेनसहितयारुषाआविष्टोव्याप्तः कषायीभूतेआताम्रे

नैषांमतिस्तावदुरुक्रमांघ्रिंस्पृशत्यनर्थापगमोयदर्थः ॥ महीयसांपादरजोभिषेकंनिष्किंचनानांनवृणीत
यावत् ॥ ३२ ॥ इत्युक्त्वोपरतंपुत्रंहिरण्यकशिपूरुषा ॥ अंधिकृतात्मास्वोत्संगान्निरस्यतमहीतले ॥३३॥
आहामर्षरुषाविष्टःकषायीभूतलोचनः ॥ वध्यतामाश्वयंवध्योनिःसारयतनैर्ऋताः ॥ ३४ ॥ अयंमेभ्रातृ
हासोऽयंहित्वास्वान्सुहृदोऽधमः ॥ पितृव्यहंतुर्यःपादौविष्णोर्दासवदर्चति ॥३५॥ विष्णोर्वासाध्वसौकिं
नुकरिष्यत्यसमंजसः ॥ सौहृदंदुस्त्यजंपित्रोरहाद्यःपंचहायनः ॥ ३६ ॥ परोप्यपत्यंहितकृद्यथौषधंस्व
देहजोऽप्यामयवत्सुतोऽहितः ॥ छिंद्यात्तदंगंयदुतात्मनोऽहितंशेषंसुखंजीवतियद्विवर्जनात् ॥ ३७ ॥ स
र्वैरुपायैर्हंतव्यःसंभोजशयनासनैः ॥ सुहृल्लिंगधरःशत्रुर्मुनेर्दुष्टमिवेंद्रियं ॥ ३८ ॥

लोचनेयस्य हेनैर्ऋताःराक्षसाः ॥ ३४ ॥ वध्यत्वेहेतुः यतोयंमेभ्रातृहा कुतः योविष्णोःपादौदासवदर्चति तत्पक्षपातीत्यर्थः अतःसए
वायमित्यन्वयः ॥ ३५ ॥ अहोविष्णुरप्यविश्वसनीयंकिमितिस्वीकृतवानित्याह विष्णोर्वेति अहात्जहौ ॥ ३६ ॥ ननुतवायमपत्यंच
कथंवध्यस्तत्राह परोप्यौषधमिवहितकृच्चेत्तदपत्यमेवज्ञेयः सुतःस्वदेहजोऽप्याहितश्चेदामयइव आस्तांममतास्पदस्यकथाअंगमपिचयत्
करचरणादितदप्यात्मनोऽहितंचेच्छिंद्यादेवेत्यर्थः ॥ ३७ ॥ अतःसर्वैरुपायैर्हंतव्यः संभोजोभोजनं भोजनादिषुविषादिप्रयोगैरित्यर्थः
यथादुष्टमिंद्रियंमुनेःशत्रुः ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तिग्मास्तीक्ष्णादंष्ट्रायेषां करालान्यास्यानिभयंकराणिमुखानियेषांतेचतेच ताम्राणिश्मश्रूणिशिरोरुहाश्चयेषां ॥ ३९ ॥ ४० ॥ परेईश्वरे युक्तःसमाहितआत्मामनोयस्यतस्मिन्प्रल्हादेतेषांनैर्ऋतादीनांप्रहारानिष्फलाआसन्जाताः तत्रहेतवः ब्रह्मणिनिर्विकारेअनिर्देश्येअविषयेभगवतिनिरतिशयैश्वर्येअखिलात्मनिशस्त्रादीनामपिनियंतरिएवंभूतेपरेअपुण्यस्यनिर्दैवस्यसत्क्रियामहोद्यमाइव ॥ ४१ ॥ ४२ ॥ दंदशूकैःसर्पैः अभिचाराःकृत्यादयः अवपातनानिगिरिशृंगादधःपातनानितैः मायाभिःशंबरनिर्मिताभिः अवटादिषुसन्निरोधैश्च ॥ ४३ ॥ पर्वताक्रमणैःपर्वतानांतदुपरिक्षेपैः बहुवचनैरभिचाराद्यावृत्तिंदर्शयति तद्धननंकर्तुंनाभ्यपद्यतनप्राप नाशक्नोदित्यर्थः ॥ ४४ ॥ चिंतामेवाह एषइतित्रिभिः मेमयाअसाधुपरुषंयथाभवतितथोक्तः असद्धर्मैरपकारैःअभिचारैर्वा ॥ ४५ ॥ अविदूरेसमीपेवर्तमानोपिबालोप्ययमजडधीर्निर्भयचित्तोमेऽनार्यमन्याय्यंशत्रुंवानाविस्मरति अजीगर्तस्यमध्यमपुत्रःशुनःशेपोनामापितृभ्यांहरिश्चंद्रायविक्रीतःसन्यथातयोरपकारमविस्मरंस्तद्विपक्षंविश्वामित्रमाश्रित्यगोत्रांतरमापन्नस्तद्वत् यद्वा स्वभावापरित्यागेदृष्टांतःशुनःशेपःपुच्छमिवेति ॥ ४६ ॥ अप्रमेयःअपरिमेयोनुभावोयस्य नकुतश्चिद्भयंयस्य नवाभविता अन्यथामृत्युर्नैवभविष्यतीत्यर्थः ॥ ४७ ॥ ॥

नैर्ऋतास्तेसमादिष्टाभर्त्रावैशूलपाणयः ॥ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥ नदंतोभैरवान्नादांश्छिधिभिंधीतिवादिनः ॥ आसीनंचाहनञ्छूलैःप्रल्हादंसर्वमर्मसु ॥ ४० ॥ परेब्रह्मण्यनिर्देश्येभगवत्यखिलात्मनि ॥ युक्तात्मन्यफलाआसन्नपुण्यस्येवसत्क्रियाः ॥ ४१ ॥ प्रयासेपहतेतस्मिन्दैत्येंद्रःपरिशंकितः ॥ चकारतद्वधोपायान्निर्बंधेनयुधिष्ठिर ॥ ४२ ॥ दिग्गजैर्दंदशूकैश्चअभिचारावपातनैः ॥ मायाभिःसन्निरोधैश्चगरदानैरभोजनैः ॥ ४३ ॥ हिमवाय्वग्निसलिलैःपर्वताक्रमणैरपि ॥ नशशाकयदाहंतुमपापमसुरःसुतं ॥ चिंतांदीर्घतमांप्राप्तस्तत्कर्तुंनाभ्यपद्यत ॥ ४४ ॥ एषमेबह्वसाधूक्तोवधोपायाश्चनिर्मिताः ॥ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तःस्वेनैवतेजसा ॥ ४५ ॥ वर्तमानोऽविदूरेवैबालोप्यजडधीरयं ॥ नविस्मरतिमेऽनार्यंशुनःशेपइवप्रभुः ॥ ४६ ॥ अप्रमेयानुभावोयमकुतश्चिद्भयोमरः ॥ नूनमेतद्विरोधेनमृत्युर्मेभवितानवा ॥ ४७ ॥

औशनसौउशनसः पुत्रौनीतिज्ञौ विविक्तेएकांते ॥ ४८ ॥ भ्रुवोर्विजृंभणेनैवत्रस्ताःसमस्ताधिष्ण्यपालोकपालायस्मिंस्तस्यतवचिंत्यंनच
क्ष्महेनपश्यामः पदमालंबनंनैवास्ति यद्वा शिशूनांवृत्तंगुणदोषयोःपदंविषयोनभवतीत्यर्थः ॥ ४९ ॥ तथापितुबंधनमस्योचितमित्याहतुः
इमंत्विति यावद्गुरुःआगमिष्यतितावद्बध्वानिधेहि ततःकिमतऊचतुः यतःपुंसोबुद्धिश्चवयसातथाआर्यसेवयासमीचीनाभवति ॥ ५० ॥
अनुज्ञायतथेत्यंगीकृत्य ॥ ५१ ॥ ततश्चतौप्रऱ्हादायधर्मादिकमूचतुः प्रश्रितश्चासाववनतश्चतस्मै ॥ ५२ ॥ यथायथावत्त्रिवर्गमुपशिक्षि

इतितंचिंतयाकिंचिन्म्लानश्रियमधोमुखं ॥ शंडामर्कावौशनसौविविक्तइतिहोचतुः ॥४८॥जितंत्वयैकेनज
गत्त्रयंभ्रुवोर्विजृंभणत्रस्तसमस्तधिष्ण्यपं ॥ नतस्यचिंत्यंतवनाथचक्ष्महेनवैशिशूनांगुणदोषयोःपदं॥४९॥
इमंतुपाशैर्वरुणस्यबध्वानिधेहिभीतोनपालयतेयथा ॥ बुद्धिश्चपुंसोवयसार्यसेवयायावद्गुरुर्भार्गवआगमि
ष्यति॥५०॥तथेतिगुरुपुत्रोक्तमनुज्ञायेदमब्रवीत्॥धर्मोह्यस्योपदेष्टव्योराज्ञांयोगृहमेधिनां ॥५१॥धर्ममर्थंच
कामंचनितरांचानुपूर्वशः॥प्रऱ्हादायोचतूराजन्प्रश्रयाऽवनतायच ॥५२॥ यथात्रिवर्गंगुरुभिरात्मनेउपशि
क्षितं॥नसाधुमेनेतच्छिक्षांद्वंद्वारामोपवर्णितां॥५३॥यदाचार्यःपरावृत्तोगृहमेधीयकर्मसु ॥वयस्यैर्बालकैस्त
त्रसोपहूतःकृतक्षणैः॥५४॥अथतान्श्लक्ष्णयावाचाप्रत्याहूयमहाबुधः॥ उवाचविद्वांस्तन्निष्ठांकृपयाप्रहस
न्निव ॥ ५५ ॥ तेतुतद्गौरवात्सर्वेत्यक्तक्रीडापरिच्छदाः ॥ बालानदूषितधियोद्वंद्वारामेरितेहितैः ॥ ५६ ॥

तमपिनसाधुमेने तत्तांशिक्षांच कुतः द्वंद्वैःरागद्वेषादिभिर्विषयेष्वारमणंयेषांतैरुपवर्णितां ॥ ५३ ॥ परावृत्तः अन्यत्रगतः सउपहूतःसं
धिःपादपूरणार्थं क्रीडार्थंकृतक्षणैःकृतोत्सवैः लब्धावसरैरितिवा ॥ ५४ ॥ तन्निष्ठांतेषांनिष्ठांजन्ममरणादिलक्षणांविद्वान् ॥ ५५ ॥
द्वंद्वारामाणामीरितैरीहितैश्चनदूषिताधीर्येषां यतोबालाः ॥ ५६ ॥ ॥ ॥ ॥

तस्मिन्नेवन्यस्तंहृदयमीक्षणंचयैः ॥५७॥ इतिसप्तमेटीकायांपंचमोऽध्यायः ॥५॥ ॥ षष्ठेगुरौगृहव्यग्रेप्रह्लादोदैत्यबालकान् ॥ अनुकंप्यपरंतत्त्वंनारदोक्तमुपादिशत् ॥१॥ निरर्थकक्रियालापैरायुर्व्ययमजानतां ॥ प्रह्लादःसदयंप्राहधर्मंभागवतंकृती ॥ २ ॥ कौमारइत्यादिना इहैवमानुषजन्मनिधर्मानाचरेत् यतःअर्थदमेतत् तत्रचकौमारएव यतःतदप्यध्रुवं नचैवंभूतंजन्मांतरं यतःदुर्लभं तत्रधर्मानेवाचरेत् नसुखार्थंप्रयासान् तत्रभागवतानेवनकाम्यान् ॥१॥ इहभागवतानेवधर्मानाचरेदित्येतदुपपादयति यथाहीतिचतुर्भिः इहपुरुषस्यविष्णोःपादोपसर्पणमेवयथाअ

पर्युपासतराजेंद्रतन्न्यस्तहृदयेक्षणाः ॥ तानाहकरुणोमैत्रोमहाभागवतोऽसुरः ॥ ५७ ॥ इतिश्रीभागवते महापुराणेसप्तमस्कंधेपंचमोऽध्यायः ॥ ५ ॥ प्रह्लादउवाच कौमारआचरेत्प्राज्ञोधर्मान्भागवतानिह ॥ दुर्लभंमानुषंजन्मतदप्यध्रुवमर्थदं ॥ १ ॥ यथाहिपुरुषस्येहविष्णोःपादोपसर्पणं ॥ यदेषसर्वभूतानांप्रियआत्मेश्वरःसुहृत् ॥२॥ सुखमैंद्रियकंदैत्यादेहयोगेनदेहिनां ॥ सर्वत्रलभ्यतेदैवाद्यथादुःखमयत्नतः ॥३॥ तत्प्रयासोनकर्तव्योयतआयुर्व्ययःपरं ॥ नतथाविंदतेक्षेमंमुकुंदचरणांबुजं ॥४॥ ततोयतेतकुशलःक्षेमायभयमाश्रितः ॥ शरीरंपौरुषंयावन्नविपद्येतपुष्कलं ॥ ५ ॥ पुंसोवर्षशतंह्यायुस्तदर्धंचाजितात्मनः ॥ निष्फलंयदसौरात्र्यांशेतेंऽधंप्रापितस्तमः ॥६॥ मुग्धस्यबाल्येकौमारेक्रीडतोयातिविंशतिः ॥ जरयाग्रस्तदेहस्ययात्यकल्पस्यविंशतिः ॥ ७ ॥ दुरापूरेणकामेनमोहेनचबलीयसा ॥ शेषंगृहेषुसक्तस्यप्रमत्तस्यापयातिहि ॥ ८ ॥

नुरूपंयोग्यं यद्यस्मात् एषआत्माआत्मत्वात्सुहृत्प्रियश्च ॥२॥ ननुभोगोद्यमःकथंत्याज्यइतिचेत्तत्राह सुखमिति सर्वत्रपश्वादावपि दैवात्पूर्वादृष्टादेव ॥ ३ ॥ अतस्तदर्थंप्रयासोनकर्तव्यः यतःप्रयासात् परंकेवलमायुषोव्ययएव यतस्तथातेनप्रकारेणक्षेमंनप्राप्नोति ॥ ४ ॥ भयमाश्रितःसंसारंप्राप्तः पुरुषरूपंशरीरंयावत्पुष्कलमस्तिनविपद्येतअक्षमंनभवेत् ननश्येदितिवा तावत्शीघ्रंक्षेमाययतेत ॥ ५ ॥ आयुर्व्ययक्रममाह पुंसइतित्रिभिः यत् यतःशेते ॥ ६ ॥ विंशतिवर्षाणिआयुर्याति ॥ ७ ॥ दुरापूरेणदुःखैःसमंतादापूर्यमाणेन ॥ ८ ॥

ननुयौवनेगृहासक्तोऽपिपश्चाद्विरक्तःसन्क्षेमंयास्यतीत्याशंक्यतदसंभवंदर्शयन्कौमारएवाचरेदित्येतदुपपादयति कोगृहेष्विातिसप्तभिः ॥ ९ ॥ यमर्थमसुभिःक्रीणातिप्राणहानिमंगीकृत्यापिसाधयतितस्करादिः तस्मिन्नर्थेतृष्णांकोनुविसृजेत् ॥ १० ॥ किंच कथमित्यादि प्रियायाःसंगादिकंस्मरन्कथंविरज्येतइतितृतीयेनान्वयः मंत्रान्हितशिक्षालापान् सुहृत्सुचसंगं तेषांस्नेहेनसितोबद्धःकलानिमधुराणि अक्षराणियेषांतेषांचसंगं तेष्वनुरक्तंचित्तंयस्य ॥ ११ ॥ ताःश्वशुरगृहेस्थिताः हृदय्याहृदयंगमाः मनोज्ञाउरवःपरिच्छदायेषुतान्गृहान् वृत्तीर्जीविकाः कुल्याःकुलपरंपरागताः ॥ १२ ॥ कोशस्कृत्कोशस्कारीकीटः सयथाआत्मनःहितंगृहंकुर्वाणोनिर्गमायद्वारमपिनावशे

कोगृहेषुपुमान्सक्तमात्मानमजितेंद्रियः ॥ स्नेहपाशैर्दृढैर्बद्धमुत्सहेतविमोचितुं ॥ ९ ॥ कोन्वर्थतृष्णांविसृजेत्प्राणेभ्योऽपियईप्सितः ॥ यंक्रिणात्यसुभिःप्रेष्ठैस्तस्करःसेवकोवणिक् ॥ १० ॥ कथंप्रियायाअनुकंपितायाःसंगंरहस्यंरुचिरांश्चमंत्रान् ॥ सुहृत्सुचस्नेहसितःशिशूनांकलाक्षराणामनुरक्तचित्तः ॥ ११ ॥ पुत्रान्स्मरंस्तादुहितृर्हृदय्याभ्रातृन्स्वसृर्वापितरौचदीनौ ॥ गृहान्मनोज्ञोरुपरिच्छदांश्चवृत्तीस्तुकुल्याःपशुभृत्यवर्गान् ॥ १२ ॥ त्यजेतकोशस्कृदिवेहमानःकर्माणिलोभादवितृप्तकामः ॥ औपस्थ्यजैह्व्यंबहुमन्यमानःकथंविरज्येतदुरंतमोहः ॥ १३ ॥ कुटुंबपोषायवियन्निजायुर्नबुध्यतेऽर्थंविहतंप्रमत्तः ॥ सर्वत्रतापत्रयदुःखितात्मानिर्विद्यतेनस्वकुटुंबरामः ॥ १४ ॥ वित्तेषुनित्याभिनिविष्टचेताविद्वांश्चदोषंपरवित्तहर्तुः ॥ प्रेत्येहचाथाप्यजितेंद्रियस्तदशांतकामोहरतेकुटुंबी ॥ १५ ॥

षयतितथाकर्माणीहमानः ननुअवितृप्तकामोऽपिदोषदर्शनेनविरक्तःसंस्त्यजेत्तत्राह औपस्थ्यंशैश्न्यंजैह्व्यंचसुखंबहुमन्यमानस्तदेवाधिकंमन्यमानः अतोदुरंतोमोहोयस्यसकथंवीरज्येतविरक्तःस्यात् ॥ १३ ॥ दुरंतमोहत्वंदर्शयन्नाह कुटुंबपोषणायवियत्क्षीयमाणंनिजमायुः पुरुषार्थंचविहतंनबुध्यते अतएवतापत्रयेणदुःखिताचित्तोऽपिननिर्विद्यतेतत्रतापत्रयेदुःखबुद्धिंनकरोति यतःस्वकुटुंबेरामोरतिर्यस्य ॥ १४ ॥ प्रत्युतचौर्यंकरोतीत्याह वित्तेष्विति नित्यमभिनिविष्टंचेतोयस्यसः परवित्तहर्तुःप्रेत्यनरकलक्षणमिहचदंडादिरूपंदोषंयद्यपिविद्वान्जानन्नथाप्यशांताभिलाषस्तत्परवित्तंहरत्येव ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥

तदेवंकोगृहेषुपुमानित्यादिसप्तभिःश्लोकैरुपपादितंगृहादिषुप्रसक्तस्यवैराग्याद्यसंभवमुपसंहरति विद्वानिति स्वलोकायआत्मपरामर्शाय नकल्पतेकिंतुविमूढोयथातथाविद्वानपितमःअभिनिवेशमेवप्रपद्यते तत्रहेतुः यइति स्वीयमिदंपारक्यमिदमितिविभिन्नोभावोभावनायस्य सः ॥ १६ ॥ तस्मात्कौमारएवभागवतान्धर्मानाचरेदितिसहेतुकमुपसंहरति यतइति यतःकश्चिदपिस्वमात्मानंमोचितुंनसमर्थस्ततोना रायणमुपेतशरणंयातेत्युत्तरेणान्वयः असामर्थ्येहेतुः अलंदीनोलंपटः अतःकामोद्दशियासांतासांविहारेक्रीडायांनिमित्तेक्रीडामृगः विहा रमितिपृथक्पाठे तासांविहारसाधनमात्मानंतासांक्रीडामृगःसइत्यन्वयः किंच यत्रयासुनिगडःशृंखलातुल्योविसर्गःपुत्रपौत्रादिरूपोभ वति ॥ १७ ॥ विदूरात्दूरतः संगंपरिहृत्य यद्वा अविदूरात्शीघ्रंनारायणमुपेतेत्यन्वयः यस्मात्सएवापवर्गइषितः इष्टइति ॥ १८ ॥

**विद्वानपीत्थंदनुजाःकुटुंबंपुष्णन्स्वलोकायनकल्पतेवै ॥ यःस्वीयपारक्यविभिन्नभावस्तमःप्रपद्येतयथाविमूढः ॥१६॥ यतोनकश्चित्क्वचकुत्रचिद्वादीनःस्वमात्मानमलंसमर्थः ॥ विमोचितुंकामदृशांविहारक्रीडामृगोयन्निगडोविसर्गः ॥ १७ ॥ ततोविदूरात्परिहृत्यदैत्यादैत्येषुसंगंविषयात्मकेषु ॥ उपेतनारायणमादिदेवंविमुक्तसंगैरिषितोऽपवर्गः ॥ १८ ॥ नह्यच्युतंप्रीणयतोबह्वायासोऽसुरात्मजाः॥आत्मत्वात्सर्वभूतानांसिद्धत्वादिहसर्वतः ॥ १९ ॥ परावरेषुभूतेषुब्रह्मांतस्थावरादिषु ॥ भौतिकेषुविकारेषुभूतेष्वथमहत्सुच ॥ ॥ २० ॥ गुणेषुगुणसाम्येचगुणव्यतिकरेतथा ॥ एकएवपरोह्यात्माभगवानीश्वरोऽव्ययः ॥ २१ ॥ प्रत्यगात्मस्वरूपेणदृश्यरूपेणचस्वयं ॥ व्याप्यव्यापकनिर्देश्योह्यनिर्देश्योऽविकल्पितः ॥ २२ ॥**

बालानामस्माकंतद्भजनमशक्यमितिचेत्तत्राह नहीति बह्वायासःअतिप्रयासः ॥ १९ ॥ आत्मत्वात्सर्वत्रप्रसिद्धत्वादितिचहेतुद्वयमुपपादयति परावरेष्विति चतुर्भिः ब्रह्माअंतोयेषांस्थावरआदिर्येषांतेषुभूतेषुर्जीवेषु भौतिकेषुअजीवेषुघटादिषु महत्सुचभूतेष्वाकाशादिषु ॥ ॥ २० ॥ गुणसाम्येप्रधानेगुणव्यतिकरेमहत्तत्त्वादौच परःब्रह्मस्वरूपः ॥ २१ ॥ कथंतर्हिद्रष्टृदृश्यभोग्यादिभेदःमाययेत्याह प्रत्यगात्मा द्रष्टाभोक्ता तत्स्वरूपेणव्यापकतयानिर्देश्यः दृश्यंभोग्यंदेहादितद्रूपेणचव्याप्यतयानिर्देश्योमाययाईयतइत्युत्तरेणान्वयः वस्तुतस्तुस्वयम विकल्पितोऽनिर्देश्योपिसन् यद्वा अनिर्देश्योपिएवंनिर्देश्यःसन् विकल्पितईयतइत्यन्वयः ॥ २२ ॥ ॥

यतःकेवलोनुभवात्मकआनंदएवस्वरूपंयस्य ननुसएवचेत्सर्वत्रतर्हिसर्वज्ञत्वाद्युपलभ्येततत्राह गुणात्मकःसर्गोयस्याःसागुणसर्गातया माययाअंतर्हितमैश्वर्ययेनसः ॥ २३ ॥ यस्मादेवंतस्मात्सर्वेषुभूतेषुयथोचितंदयांसौहृदंचकुरुत ययादयया उन्मुच्यसंत्यज्य ॥ २४ ॥ ततःकिमतआह तुष्टेचतत्रतस्मिन्किमलभ्यं तथाऽपिगुणपरिणामाद्दैवादेवस्वसिद्धाअयत्नतःसिद्धायेधर्मादयस्तैःकिं अगुणेनचमोक्षेणकांक्षितेनकिं तमुपगायतांनोऽस्माकमकांक्षितस्यापितस्यसिद्धेः यद्वामाभून्मोक्षःतस्यचरणयोः सारंजुषांसुधांसेवमानानांतेनापिकिमित्यर्थः ॥ २५ ॥ ननुचधर्मार्थादेरपुरुषार्थत्वेकिमित्याचार्याभ्यांवेदोक्तत्वेनसत्यएवाभिहितस्तत्राह धर्मोऽर्थःकामश्चेतियस्त्रिवर्गस्तदर्थंचयईक्षा

केवलानुभवानंदस्वरूपःपरमेश्वरः ॥ माययांऽतर्हितैश्वर्यईयतेगुणसर्गया ॥ २३ ॥ तस्मात्सर्वेषुभूतेषुदयांकुरुतसौहृदं ॥ आसुरंभावमुन्मुच्ययया तुष्यत्यधोक्षजः ॥ २४ ॥ तुष्टेचतत्रकिमलभ्यमनंतआद्येकिंतैर्गुणव्यतिकरादिहयेस्वसिद्धाः ॥ धर्मादयःकिमगुणेनचकांक्षितेनसारंजुषांचरणयोरुपगायतांनः॥२५॥ धर्मार्थकामइतियोभिहितस्त्रिवर्गईक्षात्रयीनयदमौविविधाचवार्ता ॥ मन्येतदेतदखिलंनिगमस्यसत्यंस्वात्मार्पणंस्वसुहृदःपरमस्यपुंसः ॥ २६ ॥ ज्ञानंतदेतदमलंदुरवापमाहनारायणोनरसखःकिलनारदाय ॥ एकांतिनांभगवतस्तदकिंचनानांपादरविंदरजसाप्लुतदेहिनांस्यात् ॥ २७ ॥ श्रुतमेतन्मयापूर्वंज्ञानंविज्ञानसंयुतं ॥ धर्मंभागवतंशुद्धंनारदाद्देवदर्शनात् ॥ २८ ॥ ॥ ॥ ॥

द्याअभिहिताः ईक्षाआत्मविद्या त्रयीकर्मविद्या नयदमौतर्कोदंडनीतिश्च विविधाचवार्ताजीविका तदेतत्सर्वंनिगमस्यार्थजातंस्वसुहृदःस्वांतर्यामिणःपरमस्यपुंसःस्वात्मार्पणंतत्साधनंचेत्तर्हिसर्वंसत्यंमन्ये सत्यपरत्वात् अन्यथातदसत्यमेव यद्वा तदेतदखिलंनिगमस्यत्रैगुण्यविषयस्यप्रतिपाद्यंमन्येसत्यंपुनर्निस्त्रैगुण्यलक्षणंपरमस्यपुंसःस्वात्मार्पणमेवेत्यर्थः तदुक्तंभगवता त्रैगुण्यविषयावेदानिस्त्रैगुण्योभवार्जुनेति ॥ २६ ॥ तेषांपुनर्विश्वासार्थंगुरुसंप्रदायमाह ज्ञानमिति ननुयत्रनारदः श्रोतातत्रकुतोमादृशानामधिकारइतिमाशंकिष्ठाइत्याहभगवतएकांतभक्तानांयत्पादरजस्तेनआप्लुतानांस्नातानांदेहिनांसर्वेषामपितज्ज्ञानंस्यान्नतूत्तमानामेवेतिनियमः ॥ २७ ॥ अतएवमयाऽपिपूर्वंनारदाच्छ्रुतं विज्ञानसहितमनुभवपर्यंतंज्ञानंधर्मंचश्रुतं ॥ २८ ॥ ॥ ॥ ॥

तत्रातिविस्मिताःपृच्छंति प्रऱ्हादेति हेप्रऱ्हादत्वंवयमेताभ्यांशंडामर्काभ्यामृतेअन्यंगुरुंनाविद्मः एतदागमनात्पूर्वमेवाहंनारदपार्श्वंगतइ तिचेत्तत्राहुःबालानामपिअतिशिशूनामस्माकमेतावीश्वरौनियंतारौअतस्तवान्यत्रगमनंनसंभवति ॥ २९ ॥ सएवात्रागतइत्यपिनसंभ वतीत्याहुः बालस्येति दुरन्वयोदुर्घटः विश्रंभकारणंविश्वासहेतुः ॥ ३० ॥ इतिसप्तमेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ सप्तमेमातृगर्भ



दैत्यपुत्राऊचुः प्रऱ्हादत्वंवयंचापिनर्तेऽन्यंविद्महेगुरुं ॥ एताभ्यांगुरुपुत्राभ्यांबालानामपिहीश्वरौ ॥ ॥ २९ ॥ बालस्यांतःपुरस्थस्यमहत्संगोदुरन्वयः ॥ छिंधिनःसंशयंसौम्यस्याच्चेद्विश्रंभकारणं ॥ ३० ॥ इ तिश्रीभागवतेमहापुराणेसप्तमस्कंधेप्रऱ्हादानुचरितेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ नारदउवाच एवं दैत्यसुतैःपृष्टोमहाभागवतोऽसुरः ॥ उवाचस्मयमानांस्तान्स्मरन्मदनुभाषितं ॥ १ ॥ प्रऱ्हादउवाच पितरिप्रस्थितेऽस्माकंतपसेमंदराचलं ॥ युद्धोद्यमंपरंचक्रुर्विबुधादानवान्प्रति ॥ २ ॥ पिपीलिकैरहिरिवदि ष्ट्यालोकोपतापनः ॥ पापेनपापोऽभक्षीतिवादिनोवासवादयः ॥ ३ ॥ तेषामतिबलोद्योगंनिशम्यासुरयू थपाः ॥ वध्यमानाःसुरैर्भीताददुद्रुवुःसर्वतोदिशं ॥ ४ ॥ कलत्रपुत्रमित्राप्तान्गृहान्पशुपरिच्छदान् ॥ ना वेक्षमाणास्त्वरिताःसर्वेप्राणपरीप्सवः ॥ ५ ॥ व्यलुंपन्राजशिबिरममराजयकांक्षिणः ॥ इंद्रस्तुराजम हिषींमातरंममचाग्रहीत् ॥ ६ ॥ नीयमानांभयोद्विग्नांरुदतींकुररीमिव ॥ यदृच्छयागतस्तत्रदेवर्षिर्ददृशेपथि ॥ ७ ॥ प्राहमैनांसुरपतेनेतुमर्हस्यनागसं ॥ मुंचमुंचमहाभागसतींपरपरिग्रहं ॥ ८ ॥

स्थेस्वस्मिन्यदनुभाषितं ॥ प्रऱ्हादोवर्णयामासशिष्यप्रत्ययसिद्धये ॥ १ ॥ अश्राविनारदादेतन्मयागर्भइतीरितुं ॥ तत्प्रस्तावकथामाह प द्यैःषोडशभिःसुधीः ॥ २ ॥ १ ॥ अस्माकंपितरिहिरण्यकशिपौ ॥ २ ॥ स्वकृतेनैवपापेनपापोऽसौअभक्षिभक्षितइतिहर्षेणवदंतोयुद्धोद्यमंच क्रुः ॥ ३ ॥ ४ ॥ ५ ॥ राज्ञःशिबिरमावासंव्यलुंपन्सर्वस्वापहारेणनाशितवंतः ॥ ६ ॥ ७ ॥ अनागसंनिरपराधामेनांनेतुंमार्हसीतिप्राह ॥ ८ ॥

अविषह्यंदुःसहमतःअनयाप्रसवपर्यंतमत्रास्यतां ततश्चअर्थस्यपदवींमार्गंगतःप्राप्तःसन् जातंपुत्रंहत्वामोक्ष्यामीत्यर्थः ॥ ९ ॥ साक्षात्स्वगु
णैरेवमहान्नतुपित्रादिसंबंधात् त्वयाहेतुभूतेनसंस्थांमृत्युंनयास्यति तत्रहेतवोनिष्किल्बिषइत्यादयः ॥ १० ॥ अनंतस्यप्रियोयोऽहंसवाप्रि
योयस्यतस्यममभक्त्याएनांप्रदक्षिणीकृत्य ॥ ११ ॥ इहोष्यतामित्याहेतिशेषः ॥ १२ ॥ अंतिसमीपे ॥ १३ ॥ अंतर्वत्नीगर्भिणी इच्छया भर्त्तु
रागमनानंतरंप्रसूतये एवमपिस्वगर्भस्यक्षेमाय ॥ १४ ॥ तस्याःशोकशांत्यैधर्मस्यतत्त्वंभक्तिलक्षणं ज्ञानमात्मानात्मविवेकस्तदुभयंप्रादा

इंद्रउवाच आस्तेऽस्याजठरेवीर्यमविषह्यंसुरद्विषः ॥ आस्यतांयावत्प्रसवंमोक्ष्येऽर्थपदवींगतः ॥ ९ ॥
नारदउवाच अयंनिष्किल्बिषःसाक्षान्महाभागवतोमहान् ॥ त्वयानप्राप्स्यतेसंस्थामनंतानुचरोबली ॥
॥ १० ॥ इत्युक्तस्तांविहायेंद्रोदेवर्षेर्मानयन्वचः ॥ अनंतप्रियभक्त्यैनांपरिक्रम्यदिवंययौ ॥ ११ ॥ ततोनोमा
तरमृषिःसमानीयनिजाश्रमं ॥ आश्वास्येहोष्यतांवत्सेयावत्तेभर्तुरागमः ॥ १२ ॥ तथेत्यवात्सीद्देवर्षेरंतिसा
ऽप्यकुतोभया ॥ यावद्दैत्यपतिर्घोरात्तपसोनन्यवर्तत ॥ १३ ॥ ऋषिंपर्यचरत्तत्रभक्त्यापरमयासती ॥ अंतर्व
त्नीस्वगर्भस्यक्षेमायेच्छाप्रसूतये ॥ १४ ॥ ऋषिःकारुणिकस्तस्याःप्रादादुभयमीश्वरः ॥ धर्मस्यतत्त्वंज्ञानंच
मामप्युद्दिश्यनिर्मलं ॥ १५ ॥ तत्तुकालस्यदीर्घत्वात्स्त्रीत्वान्मातुस्तिरोदधे ॥ ऋषिणाऽनुगृहीतंमांनाधुनाप्य
जहात्स्मृतिः ॥ १६ ॥ भवतामपिभूयान्मेयदिश्रद्दधतेवचः ॥ वैशारदीधीःश्रद्धातःस्त्रीबालानांचमेयथा ॥
॥ १७ ॥ जन्माद्याःषडिमेभावादृष्टादेहस्यनात्मनः ॥ फलानामिववृक्षस्यकालेनेश्वरमूर्तिना ॥ १८ ॥

त् ईश्वरःसमर्थः ॥ १५ ॥ १६ ॥ भूयात् भवेत् वैशारदी स्वार्थेतद्धितः देहाद्यहंकारच्छेदनिपुणेत्यर्थः ॥ १७ ॥ काऽसौवैशारदीधीरि
त्यपेक्षायांनारदोक्तमेवदेहात्मविवेकप्रकारमाह जन्मेतिदशभिः जन्माद्याःजायतेअस्तिवर्धतेविपरिणमतेअपक्षीयतेनश्यतीत्येवंभूताइमे
षड्भावाविकारावृक्षेसत्येवयथाफलानांदृश्यंतेतद्वदात्मनितथैवस्थितेदेहस्यदृष्टाइत्यर्थः ईश्वरीविकारसमर्थामूर्तिर्यस्यतेन ॥ १८ ॥

तदेवंदेहधर्मैस्तद्वैलक्षण्येनात्मनोदेहाद्भेदोदर्शितः इदानीमात्मधर्मैरेवभेदंस्फुटयंस्तदहंकारादिकंत्याजयति आत्मेति आत्मानित्यः अविना
शीवारेऽयमात्मेतिश्रुतेः अव्ययः अपक्षयशून्यः ऋचोअक्षरेपरमेव्योमन्निति श्रुतेः शुद्धः निरवद्यंनिरंजनमितिश्रुतेः एकः एकमेवाद्वितीयमितिश्रुतेः
क्षेत्रज्ञः विज्ञातारमरेकेनविजानीयादितिश्रुतेः आश्रयः यस्मिन्द्यौः पृथिवीचांतरिक्षमितिश्रुतेः अविक्रियः निष्कलंनिष्क्रियंशांतमितिश्रुतेः स्व
दृक् आत्मज्योतिः सम्राडितिहोवाचइतिश्रुतेः हेतुः सइमांल्लोकानसृजतेतिश्रुतेः व्यापकः सत्यंज्ञानमनंतमितिश्रुतेः असंगी असंगोह्ययंपुरुषइ
तिश्रुतेः अनावृतः पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यतइतिश्रुतेः ॥ १९ ॥ एतैर्द्वादशभिरात्मनोलक्षणैः परैः श्रेष्ठैर्विवेकसमर्थैर्देहाद्भेदंविद्वा
न् असद्भावंमिथ्याबुद्धिंत्यजेत् ॥ २० ॥ नन्वेवंविविक्तात्मज्ञानिनोऽप्यपरोक्षानुभवेनब्रह्मताप्राप्तिः कथंस्याद्यतोऽहंकारादिकंत्यजेदित्यपेक्षायां

आत्मानित्योऽव्ययःशुद्धएकःक्षेत्रज्ञआश्रयः ॥ अविक्रियःस्वदृग्घेतुर्व्यापकोऽसंग्यनावृतः ॥१९॥ एतै
र्द्वादशभिर्विद्वानात्मनोलक्षणैःपरैः॥अहंममेत्यसद्भावंदेहादौमोहजंत्यजेत् ॥ २० ॥ स्वर्णंयथाग्रावसुहेम
कारःक्षेत्रेषुयोगैस्तदभिज्ञआप्नुयात् ॥ क्षेत्रेषुदेहेषुतथात्मयोगैरध्यात्मविद्ब्रह्मगतिंलभेत ॥ २१॥ अष्टौ
प्रकृतयःप्रोक्तास्त्रयएवहितद्गुणाः ॥ विकाराःषोडशाचार्यैःपुमानेकःसमन्वयात् ॥ २२ ॥ देहस्तुसर्वसं
घातोजगत्तस्थुरितिद्विधा ॥ अत्रैवमृग्यःपुरुषोनेतिनेतीत्यतत्त्यजन् ॥ २३ ॥ ॥ ॥

तत्प्राप्तिप्रकारंसदृष्टांतमाह स्वर्णाकरक्षेत्रेषुस्फुरत्स्वर्णकणेषुग्रावसुयोगैर्धमनाद्युपायैस्तदभिज्ञउपायाभिज्ञोहेमकारोयथास्वर्णंप्राप्नुयात् आत्म
योगैरात्मप्राप्त्युपायैः ब्रह्मगतिंब्रह्मतां अध्यात्मविदात्माधिकृतकार्यकारणसंघातज्ञाता ॥ २१ ॥ अध्यात्मविवेकमात्मप्राप्त्युपायमाह अष्टा
वितित्रिभिः मूलप्रकृतिर्महदहंकारौपंचतन्मात्राणिचेत्यष्टौ त्रयः सत्वादयस्तेचप्रकृतिगुणाएवनतुभिन्नाः एकादशेंद्रियाणिपंचमहाभूतानि
चेतिषोडश पुमानात्माएकः प्रोक्तः कपिलादिभिराचार्यैः एकत्वेहेतुः एषुसाक्षित्वेनान्वयात् तदुक्तं मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिवि
कृतयःसप्त ॥ षोडशकस्तुविकारोनप्रकृतिर्नविकृतिः पुरुषइति ॥ २२ ॥ जगत् जंगमं तस्थुः स्थावरं अत्रैवसर्वसंघातात्मकेदेहएवपुरुषो
मृग्यः अन्वेष्टव्यः सुशकंचैतदित्याह नेतिनेतीत्यन्यापोहेक्रियमाणेस्वयमेवअतत्त्यजन् अनात्मवर्गात्पृथगुपलभ्यमानइत्यर्थः ॥ २३ ॥

मणिषुसूत्रमिवसर्वत्रानुस्यूतत्वेनान्वयः अतएवमाणिभ्यःसूत्रस्येवैकैकव्यतिरेकश्च तयोर्द्वैक्यं तेनयोविवेकः पूर्वोक्तोवातेनउशताशुद्धेना त्मनामनसा सर्गस्थानसमाम्नायैःसृष्टिस्थितिसंहारैः यतोवाइमानिभूतानिजायंतेइत्यादिश्रुत्युक्तसर्गाद्यनुसंधानेनेत्यर्थः विमृशद्भिर्विचार यद्भिः असत्वरैरव्यग्रैर्मृग्यतइतिपूर्वेणान्वयः ॥ २४ ॥ विमर्शप्रकारमाह बुद्धेरितिद्वाभ्यां अध्यक्षःसाक्षी ॥ २५ ॥ अतएभिर्बुद्धिभेदैः परिणामैःपर्यस्तैःपरितःक्षिप्तैरनात्मधर्मत्वेननिरस्तैः बुद्धिधर्मत्वेहेतुः त्रिवर्णैस्त्रिगुणात्मकैः क्रियोद्भवैःकर्मजन्यैः बुद्धेरेवत्रिगुणात्मकत्वा त्कर्मकर्तृत्वाच्चतस्याएवैताअवस्थाः आत्मातुबुद्ध्यन्वयात्तदवस्थावानिवाभातिनतत्त्वतइतिआत्मनःस्वरूपंबुध्येज्जानीयादित्यर्थः अत्रदृ ष्टांतः कुसुमधर्मैर्गंधैस्तदाश्रयंवायुमिव ॥ २६ ॥ ननुतर्हियथाकुसुमोपाधिकोऽपिवायोर्गंधोविवेकज्ञानेननिवर्ततेएवमात्मनःसंसारोनानि

अन्वयव्यतिरेकेणविवेकेनोशतात्मना ॥ सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥ बुद्धेर्जागरणं स्वप्नःसुषुप्तिरितिवृत्तयः ॥ तायेनैवानुभूयंतेसोऽध्यक्षःपुरुषःपरः ॥ २५ ॥ एभिस्त्रिवर्णैःपर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ॥ स्वरूपमात्मनोबुध्येद्गंधैर्वायुमिवान्वयात् ॥ २६ ॥ एतद्वारोहिसंसारोगुणकर्मनिबंधनः ॥ अ ज्ञानमूलोऽपार्थोऽपिपुंसःस्वप्नइवेष्यते ॥२७॥ तस्माद्भवद्भिःकर्तव्यंकर्मणांत्रिगुणात्मनां ॥ बीजनिर्हरणंयो गःप्रवाहोपरमोधियः ॥ २८ ॥ तत्रोपायसहस्राणामयंभगवतोदितः ॥ यदीश्वरेभगवतियथायैरंजसार तिः ॥२९॥ गुरुशुश्रूषयाभक्त्यासर्वलब्धार्पणेनच ॥ संगेनसाधुभक्तानामीश्वराराधनेनच ॥ ३० ॥

वर्ततइत्याशंक्याह एतद्वारोबुद्धिद्वारकस्तदवस्थाद्वारकोवासंसारोनस्वतः हियस्मात्बुद्धेर्येगुणाःकर्माणिचतैर्निबध्यतइतितथा सचाज्ञा नमूलःअतःअपार्थोमिथ्याभूतोपिस्वप्नइवइष्यते वायोस्तुगंधद्रव्यसंबंधस्यावास्तवत्वाद्विषमोदृष्टांतः ॥ २७ ॥ यस्मादेवंनिवृत्तिर्घटते तस्माद्बीजमज्ञानंतस्यनिर्हरणंदहनं किंतत् योगःकथंभूतः धियःप्रवाहंजाग्रदादिरूपमुपरमयतीतितथा ॥ २८ ॥ तदेवंज्ञानप्रकारमु क्त्वा तत्साधनंधर्मस्यतत्त्वंनारदोक्तमेवाह तत्रेतिपंचाभिः यैर्धर्मैर्यथाऽनुष्ठितैर्वाभगवतिश्रीनारायणेरतिरितियत्अयमुपायोभगवतोक्तः तथा चगीतासूक्तं यत्करोषियदश्नासियज्जुहोषिददासियत् ॥ यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमिति भक्त्यामामभिजानातियावान्यश्चास्मि तत्त्वतइत्यादि ॥ २९ ॥ तत्रैवांतरंगान्धर्मानाह गुरोःशुश्रूषयाभक्त्याप्रेम्णासर्वेषांलब्धानामर्पणेनच ॥ ३० ॥ ॥

तस्यलिंगानांमूर्तीनामीक्षणमर्हणमादिर्येषांवंदनादीनांतैश्च ॥ ३१ ॥ ३२ ॥ निर्जितःषण्णांकामक्रोधलोभमोहमदमत्सराणामिंद्रियाणां वावर्गोयैः ॥३३॥ भगवद्भतोर्लिंगान्याह निशम्येतित्रिभिः गुणान्भक्तवात्सल्यादीन् अतिहर्षेणउद्गताःपुलकाअश्रूणिचतैर्गद्गदंयथाभवत्ये वंप्रोत्कंठोमुक्तकंठोयथाभवतितथाउद्गायतिरौतिनृत्यति ॥ ३४ ॥ ३५ ॥ तस्यभावश्चेष्टादिस्तस्यभावोभावनातेनानुकृतेआशयाकृती मनःशरीरेयस्य निर्दग्धंबीजमज्ञानमनुशयोवासनाचयस्यसः एवंभक्तिप्रयोगेणअधोक्षजंसम्यगेतिप्राप्नोति ॥ ३६ ॥ ततःकिमतआह

श्रद्धयातत्कथायांचकीर्तनैर्गुणकर्मणां ॥ तत्पादांबुरुहध्यानात्तल्लिंगेक्षार्हणादिभिः ॥ ३१ ॥ हरिःसर्वेषु भूतेषुभगवानास्तईश्वरः ॥ इतिभूतानिमनसाकामैस्तैःसाधुमानयेत् ॥ ३२ ॥ एवंनिर्जितषड्वर्गैःक्रियते भक्तिरीश्वरे ॥ वासुदेवेभगवतिययासंलभतेरतिं ॥ ३३ ॥ निशम्यकर्माणिगुणानतुल्यान्वीर्याणिलीलात नुभिःकृतानि ॥ यदाऽतिहर्षोत्पुलकाश्रुगद्गदंप्रोत्कंठउद्गायतिरौतिनृत्यति ॥ ३४ ॥ यदाग्रहग्रस्तइवक्व चिद्धसत्याक्रंदतेध्यायतिवंदतेजनं ॥ मुहुःश्वसन्वक्तिहरेजगत्पतेनारायणेत्यात्मगतिर्गतत्रपः ॥ ३५ ॥ तदापुमान्मुक्तसमस्तबंधनस्तद्भावभावानुकृताशयाकृतिः॥निर्दग्धबीजानुशयोमहीयसाभक्तिप्रयोगेणस मेत्यधोक्षजं ॥ ३६ ॥ अधोक्षजालंभमिहाशुभात्मनःशरीरिणःसंसृतिचक्रशातनं ॥ तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततोभजध्वंहृदयेहृदीश्वरं ॥ ३७ ॥ कोऽतिप्रयासोऽसुरबालकाहरेरुपासनेस्वहृदिछिद्रवत्सतः ॥ स्वस्यात्मनःसख्युरशेषदेहिनांसामान्यतःकिंविषयोपपादनैः ॥ ३८ ॥ ॥ ॥ ॥

अधोक्षजस्यालंभंमनसास्पर्शं पाठांतरेतस्याश्रयणं अशुभात्मनःअशुभोरागादियुक्तआत्मामनोयस्य संसृतिचक्रशातनंतान्निवर्तकंबुधा विदुस्तदेवब्रह्मनिर्वाणंलयोमोक्षस्तदात्मकंसुखंविदुः हृदीश्वरमंतर्यामिणं ॥ ३७ ॥ भक्तिरशक्येतिचनमंतव्यमित्याह कइतिछिद्रव त्आकाशवत्हृदितिष्ठतोविषयाणामुपपादनैरर्जनैः किं तत्रहेतुः सर्वदेहिनां सामान्यतोविषयानिष्ठत्वेसूकरादिसाधारण्यापत्तेरित्यर्थः नचैवमादौपौनरुक्त्यदोषः नारदोक्तानुवादरूपत्वादस्यप्रकरणस्य ॥ ३८ ॥ ॥ ॥

अनर्थकंविषयार्जनमित्याह रायः अर्थाः क्षणभंगुरमायुर्यस्यतस्यएतेकियत्प्रियंकुर्वंति तदुक्तमितिहासेषु धनंहिपुरुषोलोकेपुरुषंधनमेववा॥
अवश्यमेकंत्यजतितस्मात्किंधनतृष्णयेति ॥ ३९ ॥ यन्नदुःखेनसंभिन्नंनचग्रस्तमनंतरं ॥ अभिलाषोपपन्नंचसुखंस्वर्गपदास्पदमित्येवं
भूताःस्वर्गादिभोगाअपिनसेवार्हाइत्याह एवंहीति क्षयिष्णुत्वेहेतुः क्रतुभिःकृताइति तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितो
लोकःक्षीयतइतिश्रुतेः अतएवपुण्यतारतम्येनसातिशयाः नचनिर्मलाः स्पर्धादिमत्त्वात् नविद्यतेदृष्टंश्रुतंचदूषणंयस्मिन् ॥ ४० ॥ किंच
यदध्यर्थ्ययत्संकल्प्य अतःसंकल्पितात्विपर्यासंविपरीतंफलममोघमवश्यंप्राप्नोति ॥ ४१ ॥ तदेवदर्शयति सुखायेति ईहयाइच्छयाक्रि

रायःकलत्रंपशवःसुतादयोगृहामहीकुंजरकोशभूतयः ॥ सर्वेऽर्थकामाःक्षणभंगुरायुषःकुर्वंतिमर्त्यस्यकि
यत्प्रियंचलाः ॥ ३९ ॥ एवंहिलोकाःक्रतुभिःकृताअमीक्षयिष्णवःसातिशयाननिर्मलाः ॥ तस्माददृष्टश्रु
तदूषणंपरंभक्त्यैकयेशंभजतात्मलब्धये ॥ ४० ॥ यदध्यर्थ्येहकर्माणिविद्वन्मान्यसकृन्नरः ॥ करोत्यतो
विपर्यासममोघंविंदतेफलं ॥ ४१ ॥ सुखायदुःखमोक्षायसंकल्पइहकर्मिणः ॥ सदाप्नोतीहयादुःखमनी
हायाःसुखावृतः ॥ ४२ ॥ कामान्कामयतेकाम्यैर्यदर्थमिहपूरुषः ॥ सवैदेहस्तुपारक्योभंगुरोयात्युपैति
च ॥ ४३ ॥ किमुव्यवहितापत्यदारागारधनादयः ॥ राज्यंकोशगजामात्यभृत्याप्तामतास्पदाः ॥
॥ ४४ ॥ किमेतैरात्मनस्तुच्छैःसहदेहेननश्वरैः ॥ अनर्थैरर्थसंकाशैर्नित्यानंदमहोदधेः ॥ ४५ ॥ निरू
प्यतामिहस्वार्थःकियान्देहभृतोऽसुराः ॥ निषेकादिष्ववस्थासुक्लिश्यमानस्यकर्मभिः ॥ ४६ ॥ कर्मा
ण्यारभतेदेहीदेहेनात्मानुवर्तिना ॥ कर्मभिस्तनुतेदेहमुभयंत्वविवेकतः ॥ ४७ ॥ ॥ ॥

ययावा यःपूर्वमनीहायाहेतोःसुखेनावृतोव्याप्तआसीत् सईहयादुःखमाप्नोत्येव ॥ ४२ ॥ किंच कामान्भोगान् काम्यैर्विषयैःकर्मभिर्वा
पारक्यःश्वादिभोग्योनत्वात्मीयोभंगुरश्च ॥ ४३ ॥ किमुदेहात्व्यवहिताःअपत्यादयोममताविषयाःपारक्याइतिवक्तव्यं ॥ ४४ ॥ किंच
स्वयंपुरुषार्थरूपस्यकिमेतैरतितुच्छैरित्याह किमेतैरिति ॥४५॥ भोगावसराभावाच्चएतैःकउपयोगइत्याह निरूप्यतामिति प्राचीनैःकर्म
भिःक्लिश्यमानस्य कर्मभिःकियानर्थइतिवान्वयः ॥ ४६ ॥ ननुकर्मसुसमाप्तेषुभोगावसरःस्यात्तत्राह कर्माणीति नचेदंकर्मतस्यफलंदेहा
दिकंचपरमार्थइत्याह उभयंकर्मचदेहंच अविवेकतःअज्ञानेनैवतनुते ॥ ४७ ॥ ॥ ॥

अर्थादयोयदपाश्रयायदधीनास्तंहरिंभजध्वं ॥ ४८ ॥ भूतानांप्राणिनांजीवसंज्ञितःअंतर्यामी ॥ ४९ ॥ असुराणामस्माकंतद्भजनेअनधिकारइत्यपिनवाच्यमित्याह देवइतिपंचभिः ॥ ५० ॥ ५१ ॥ अमलयानिष्कामया अन्याद्विडंबनंनटनमात्रं ॥ ५२ ॥ ५३ ॥ अच्युततामममृतत्वं ॥ ५४ ॥ अध्यायद्वयोक्तमुपसंहरति एतावानिति तदीक्षणंगोविंददृष्ट्यासमाननं ॥ ५५ ॥ इतिसप्तमेटीकायांसप्तमोऽध्या



तस्मादर्थाश्चकामाश्चधर्माश्चयदपाश्रयाः ॥ भजतानीहयात्मानमनीहंहरिमीश्वरं॥४८॥ सर्वेषामपिभूतानांहरिरात्मेश्वरःप्रियः॥ भूतैर्महद्भिःस्वकृतैःकृतानांजीवसंज्ञितः॥ ४९ ॥ देवोऽसुरोमनुष्योवायक्षोगंधर्वएवच ॥ भजन्मुकुंदचरणंस्वस्तिमान्स्याद्यथावयं ॥५०॥ नालंद्विजत्वंदेवत्वमृषित्वंवाऽसुरात्मजाः ॥ प्रीणनायमुकुंदस्यनवृत्तंनबहुज्ञता ॥ ५१ ॥ नदानंनतपोनेज्यानशौचंनव्रतानिच ॥ प्रीयतेऽमलयाभक्त्याहरिरन्यद्विडंबनं ॥५२॥ ततोहरौभगवतिभक्तिंकुरुतदानवाः ॥ आत्मौपम्येनसर्वत्रसर्वभूतात्मनीश्वरे॥५३॥ दैतेयायक्षरक्षांसिस्त्रियःशूद्राव्रजौकसः ॥ खगामृगाःपापजीवाःसंतिह्यच्युततांगताः ॥ ५४ ॥ एतावानेवलोकेऽस्मिन्पुंसःस्वार्थःपरःस्मृतः ॥ एकांतभक्तिर्गोविंदेयत्सर्वत्रतदीक्षणं ॥ ५५ ॥ इतिश्रीभा०म०सप्तमस्कंधेदैत्यपुत्रानुशासनंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ नारदउवाच अथदैत्यसुताःसर्वेश्रुत्वातदनुवर्णितं ॥ जगृहुर्निरवद्यत्वान्नैवगुर्वनुशिक्षितं ॥ १ ॥ अथाचार्यसुतस्तेषांबुद्धिमेकांतसंस्थितां ॥ आलक्ष्यभीतस्त्वरितोराज्ञआवेदयद्यथा ॥ २ ॥ श्रुत्वातदप्रियंदैत्योदुःसहंतनयानयं ॥ कोपावेशचलद्गात्रःपुत्रंहंतुंमनोदधे ॥ ३ ॥ क्षिप्त्वापरुषयावाचाप्रल्हादमतदर्हणं ॥ आहेक्षमाणःपापेनतिरश्चीनेनचक्षुषा ॥ ४ ॥

यः ॥ ७ ॥ ॥ अष्टमेतिरुषासूनुंनिघ्नन्दैत्योहतःस्वयं ॥ आविर्भूयनृसिंहेनसचब्रह्मादिभिःस्तुतः ॥ १ ॥ अंतःकृपासुधापूर्णोबहिःक्रोधोनृकेसरी ॥ दैत्येंद्रमरिभावेनभजंतंसमभावयत् ॥ २ ॥ १ ॥ एकांतसंस्थितांप्रत्यङ्निष्ठां यथायथावत् ॥ २ ॥ सचहंतुंमनोदधे कथंभूतः कोपस्यावेशोनोद्रेकेणचलद्गात्रंवपुर्यस्यसः ॥ ३ ॥ क्षिप्त्वातिरस्कृत्य पापेनसरोषेण तिरश्चीनेनवक्रेण ॥ ४ ॥

॥ ५ ॥ मंदात्मन् अल्पबुद्धे मदाज्ञाऽतिलंघिनं त्वामद्ययमालयं नेष्यामि ॥ ६ ॥ अभीतवत् किंबलं यस्य सः किंबलः कस्य बलेनेत्यर्थः ॥
॥ ७ ॥ ८ ॥ वशं प्रणीता इत्यत्र हेतुः सईश्वर इति उरवः क्रमाः पादविक्षेपा यस्य बहुपराक्रम इति वा ओजआदिरूपः सत्त्वं धैर्यं बुद्धिर्वा ॥
॥ ९ ॥ ननु मच्छत्रुरसौ कथं ममापि स एव बलं स्यादत आह जहीति आत्मनः स्वस्य स्वभावं त्यज यतः अजितादात्मनो मनसः ऋते विना अन्ये
विद्विषो न संति किंच तद्धितदेवाहि साम्येन मनसो धारणमेव समर्हणमाराधनं ॥ १० ॥ ननु मया दिग्विजये सर्वे रिपवो जिता अतः सांप्रतं वि

प्रश्रयावनतं दांतं बद्धांजलिमवस्थितं ॥ सर्पः पदाहत इव श्वसन्प्रकृतिदारुणः ॥ ५॥ हे दुर्विनीत मंदात्मन्कु
लभेदकराधम ॥ स्तब्धं मच्छासनोद्वृत्तं नेष्ये त्वाऽद्य यमक्षयं ॥ ६ ॥ क्रुद्धस्य यस्य कंपंते त्रयो लोकाः सहेश्वराः
॥ तस्य मेऽभीतवन्मूढ शासनं किंबलोऽत्यगाः ॥ ७॥ प्रन्हाद उवाच न केवलं मे भवतश्च राजन्स वै बलं बलि
नां चापरेषां ॥ परेऽवरेऽमी स्थिरजंगमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ८ ॥ स ईश्वरः काल उरुक्रमोऽसा
वोजः सहः सत्वबलेंद्रियात्मा ॥ स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥ ९ ॥ जह्यासुरं
भावमिमं त्वमात्मनः समं मनो धत्स्व न संति विद्विषः ॥ ऋतेऽजितादात्मन उत्पथस्थितात्तद्धि ह्यनंतस्य महत्समर्
हणं ॥ १० ॥ दस्यून्पुरा षण्ण विजित्य लुंपतो मन्यंत एके स्वजिता दिशो दश ॥ जितात्मनो ज्ञस्य समस्य देहि
नां साधोः स्वमोहप्रभवाः कुतः परे ॥ ११ ॥ हिरण्यकशिपुरुवाच व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थ
से ॥ मुमूर्षूणां हि मंदात्मन्ननु स्युर्विक्लवा गिरः ॥ १२ ॥ यस्त्वया मंदभाग्योक्तो मदन्यो जगदीश्वरः ॥ क्वा
सौ यदि स सर्वत्र कस्मात्स्तंभे न दृश्यते ॥ १३ ॥ ॥ ॥ ॥ ॥

द्विषो न संतीति चेत्सत्यं तत्राह दस्यूनिति हे राजन् एके भवादृशा मंदाः पुरा आदौ लुंपतः सर्वस्वं हरतः षडिंद्रियलक्षणान्छत्रूनविजित्य अजि
त्वा दश दिशः स्वयं जिता मन्यंते साधोस्तु जितचित्तस्य देहिनां समस्य ज्ञस्य विदुषः स्वाज्ञानकल्पिताः परे शत्रवः कुतः स्युः ॥ ११ ॥ व्यक्तं नि
श्चितं विक्लवाः अनन्विता इत्यर्थः ॥ १२ ॥ हे मंदभाग्य मदन्यो जगदीश्वरो यद्यस्ति तर्ह्यसौ क्वास्ति प्रन्हाद आह स सर्वत्रास्ति हिरण्यकशि
पुराह तर्हि कस्मात् स्तंभे नास्ति प्रन्हादस्तु तं स्तंभं निरीक्षमाणो नमस्यन्नाह दृश्यत इति ॥ १३ ॥ ॥ ॥

हिरण्यकशिपुस्तुतत्रतमपश्यन्नाह सोऽहमिति विकत्थमानस्याविपरीतंब्रुवाणस्यतेशिरःकायाद्धरामिपृथक्करोमि ॥ १४ ॥ प्रल्हादेनमूर्ध्निब
द्धांजलिनानिरीक्ष्यमाणंस्तंभंमुष्टिनाताडितवान् ॥ १५ ॥ १६ ॥ तत्पदंध्वनेराश्रयंनददर्श येननादेनदैत्यावितत्रसुः ॥ १७ ॥ भगवां
स्तदास्तंभंविदार्यअदृश्यतदृश्योबभूव किमर्थं निजभृत्येनप्रल्हादेनयद्भाषितंस्तंभेदृश्यतइतितत्सत्यंविधातुंकर्त्तुं तथाअखिलेषुभूतेषुआत्म
नोव्याप्तिंचसत्यांकर्तुंस्तंभेअदृश्यत तत्किमर्थं भौतिकेषुचभावेषुभूतेष्वथमहत्सुचभगवानास्तइतितेनैवभृत्येनभाषितंतत्सत्यंकर्त्तुंतथाअ
दृश्यत अत्यद्भुतंदैत्यघातकमतिघोररूपमुद्वहन्दधत् तत्किमर्थं निजभृत्यैःसनकादिभिः शापानंतरमनुतप्तैर्भाषितंयत् त्रिभिर्जन्मभिः
शापमोक्षोभवत्विति तत्सत्यंकर्तुंभगवांस्तथाअदृश्यत तथाअत्यद्भुतंरूपंब्रह्मसृष्टावदृष्टमश्रुतंचरूपमुद्वहन् तच्चनमृगाकारंनचमनुष्याका

**सोऽहंविकत्थमानस्यशिरःकायाद्धरामिते ॥ गोपायेतहरिस्त्वाद्ययस्तेशरणमीप्सितं ॥ १४ ॥ एवंदुरुक्तै
र्मुहुरर्दयन्रुषासुतंमहाभागवतंमहासुरः ॥ खड्गंप्रगृह्योत्पतितोवरासनात्स्तंभंततांडातिबलःस्वमुष्टिना
॥ १५ ॥ तदैवतस्मिन्निनदोऽतिभीषणोबभूवयेनांडकटाहमस्फुटत् ॥ यंवैस्वधिष्ण्योपगतंत्वजादयःश्रु
त्वास्वधामाप्ययमंगमेनिरे ॥ १६ ॥ सविक्रमन्पुत्रवधेप्सुरोजसानिशम्यनिर्ह्रादमपूर्वमद्भुतं ॥ अंतःस
भायांनददर्शतत्पदंवितत्रसुर्येनसुरारियूथपाः ॥ १७ ॥ सत्यंविधातुंनिजभृत्यभाषितंव्याप्तिंचभूतेष्वखि
लेषुचात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वहन्स्तंभेसभायांनमृगंनमानुषं ॥ १८ ॥**

रमुद्वहन् सभायांमध्येअदृश्यत तत्किमर्थं निजभृत्येनहिरण्यकशिपुनाब्रह्माणंप्रतियद्भाषितं भूतेभ्यस्त्वद्विसृष्टेभ्योमृत्युर्माभून्ममप्रभोइति
तथानांतर्नबहिरितिननरैर्नमृगैरपीति ब्रह्मणाचनिजभृत्येनतथास्त्वितियद्भाषितंतदुभयोर्वाक्यंसत्यंकर्तुं नहितद्ब्रह्मसृष्टंभूतंनचनरोवामृ
गोवानचसभागृहस्यांतःनचप्रांगणवद्बहिः एवंताभ्यांयद्भाषितंतत्सत्यंकर्तुं यच्चहिरण्यकशिपुनाभाषितं नूनमेतद्विरोधेनमृत्युर्मेभवितेति य
च्चनारदेननिजभृत्येनभाषितामिंद्रंप्रति अयंमहांस्त्वयासंस्थांमृत्युंनप्राप्स्यति अनंतानुचरःअकुतश्चिद्भयोऽमरइति अनेनस्वभक्तपक्षपाति
त्वंचयद्भाषितंतच्चसत्यंकर्त्तुंतथाअदृश्यत चकारान्निजभाषितंच किंतत् कौंतेयप्रतिजानीहिनमेभक्तःप्रणश्यतीतितथा तेषामहंसमुद्धर्त्ता
मृत्युसंसारसागरादित्यादि तच्चसत्यंकर्तुमदृश्यतेतिद्रष्टव्यं अलमतिविस्तरेण ॥ १८ ॥ ॥ ॥

सदैत्यएवमद्भुतंध्वनिंश्रुत्वातदाश्रयंसत्वंप्राणिविशेषंसर्वतोविलोकयन्स्तंभमध्यान्निर्गच्छंतंनृमृगेंद्रयोर्मिश्ररूपंदृष्ट्वाअहोकिमेतदितिर्मीमां
सितवानितिशेषः ॥ १९ ॥ तस्यैवमलंभयानकंतन्नृसिंहरूपंमीमांसमानस्याग्रतःसनृसिंहरूपोहरिःसमुत्थितः भयानकत्वमेवदर्शयं
स्तद्रूपमनुवर्णयति त्रिभिः प्रतप्तंचामीकरंसुवर्णंतद्वत्पिंगानि चंडानिलोचनानियस्मिन् सटाजटाःकेसराःकंठरोमाणि स्फुरद्भिःसटाकेसरै
र्जृंभितंसाटोपमाननंयस्मिन् ॥२०॥ करालास्तुंगादंष्ट्रायस्मिन् करवालःखड्गस्तद्वच्चंचलाक्षुरांतवत्तीक्ष्णाचजिह्वायस्मिन् भ्रुकुटीयुक्तेनमु
खेनोल्बणं स्तब्धावनम्रौशंकुवदूर्ध्वौकर्णौयस्मिन् गिरिकंदरवदद्भुतंव्यात्तंप्रसृतमास्यंनासेचयस्मिन् हनूकपोलप्रांतौतयोर्भेदेनविदारणेन
भीषणं कर्णांतमुखविस्तारमित्यर्थः ॥ २१ ॥ दिविस्पृक्कायोयस्मिन् अलुक्समासः अदीर्घान्ह्रस्वापीवराचस्थूलाग्रीवायस्मिन् उरुर्विशा

ससत्वमेनंपरितोविपश्यन्स्तंभस्यमध्यादनुनिर्जिहानं ॥ नायंमृगोनापिनरोविचित्रमहोकिमेतन्नृमृगेंद्ररू
पं ॥ १९ ॥ मीमांसमानस्यसमुत्थितोऽग्रतोनृसिंहरूपस्तदलंभयानकं ॥ प्रतप्तचामीकरचंडलोचनंस्फुरत्स
टाकेसरजृंभिताननं ॥२०॥ करालदंष्ट्रंकरवालचंचलक्षुरांतजिह्वंभ्रुकुटीमुखोल्बणं ॥ स्तब्धोर्ध्वकर्णंगिरिकं
दराद्भुतव्यात्तास्यनासंहनुभेदभीषणं ॥ २१ ॥ दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षस्थलमल्पमध्यं ॥
चंद्रांशुगौरैश्छुरितंतनूरुहैर्विष्वग्भुजानीकशतंनखायुधं ॥२२ ॥ दुरासदंसर्वनिजेतरायुधप्रवेकविद्रावित
दैत्यदानवं ॥ प्रायेणमेऽयंहरिणोरुमायिनावधःस्मृतोऽनेनसमुद्यतेनकिं ॥२३॥ एवंब्रुवंस्त्वभ्यपतद्गदायुधो
नदन्नृसिंहंप्रतिदैत्यकुंजरः ॥ अलक्षितोऽग्नौपतितःपतंगमोयथानृसिंहौजसिसोऽसुरस्तदा ॥ २४ ॥

लंवक्षःस्थलंयस्मिंस्तच्चतच्च अल्पंमध्यमुदरंयस्मिन् चंद्रांशुवद्गौरैस्तनूरुहैर्लोमभिश्छुरितंव्याप्तं विष्वंचःसर्वतःप्रसृताभुजास्तेषामनीका
निस्तोमास्तेषांशतानियस्मिन् नखान्येवायुधानियस्मिन् ॥ २२॥ दुरासदंप्राप्तुमशक्यं सर्वाणिचनिजानिचक्रादीनिइतराणिवज्रादीनितए
वायुधप्रवेकाःशस्त्रोत्तमास्तैर्द्राविताःदैत्यदानवायेनतद्रूपंमीमांसमानस्याग्रतःसमुत्थितइतिपूर्वेणैवान्वयः तदाविर्भावप्रयोजनविमर्शपूर्वकं
तेनसहदैत्यस्ययुद्धमाह सप्तभिः प्रायेणमहामायिनाहरिणामेऽयमेवंभूतोवधोमृत्युहेतुःस्मृतश्चिंतितस्तथाऽप्यनेनसमुद्यतेनकिंनकिंचित्स्या
दित्येवंब्रुवंस्तमभ्यपतादित्यन्वयः ॥ २३ ॥ तदासोऽसुरोनृसिंहस्यौजसिदीप्तौपतितःसन्अलक्षितःअदृष्टोऽभूत् ॥ २४ ॥

सत्वधामनिसत्वप्रकाशेहरौपतितस्यतमोमयस्यादर्शनंतान्हिचित्रंनभवाति तत्रहेतुः योहरिःपुरासृष्ट्यादौप्रलयकालीनंतमःनुअहोअपिबत् ॥ २५ ॥ तास्मिन्विक्रमंतंततस्ततःप्रहरंतं हस्तादुत्कालितोनिःसृतः ॥ २६ ॥ तदाअमरादेवाःसर्वेधिष्ण्यपाअसाध्वमन्यंत हतान्योकांसिस्थानानियेषांतेतद्धियाघनच्छदाः मेघांतरिताःसंतः यस्यहस्तात्स्वयंमुक्तस्तंनृहरिंस्ववीर्याच्छंकितंमन्यमानःखड्गचर्मणीप्रगृह्यपुनस्तमासज्जतअभ्यपद्यतेत्यन्वयः ॥ २७ ॥ श्येनस्येनवेगोयस्यतं शतचंद्रवर्त्मभिःखड्गचर्ममार्गैःआच्छिद्रंयथाभवत्येवमुपर्यधश्चरंतं अट्टहासमेवाह खरंतीव्रं उत्स्वनेनमहाशब्देनोल्बणंभयंकरं तद्भयेनहरेस्तेजसाचानिमीलितेआक्षिणीयस्य ॥ २८ ॥ ग्रहणेदृष्टांतः व्यालोयथा

नतद्विचित्रंखलुसत्वधामनिस्वतेजसायोनुपुरापिबत्तमः ॥ ततोऽभिपद्याभ्यहनन्महासुरोरुषान्नृसिंहंगदयोरुवेगया ॥ २५ ॥ तंविक्रमंतंसगदंगदाधरोमहोरगंतार्क्ष्यसुतोयथाऽग्रहीत् ॥ सतस्यहस्तोत्कलितस्तदाऽसुरोविक्रीडतोयद्वदहिर्गरुत्मतः ॥ २६ ॥ असाध्वमन्यंतहृतौकसोऽमराघनच्छदाभारतसर्वधिष्ण्यपाः ॥ तंमन्यमानोनिजवीर्यशंकितंयद्धस्तमुक्तोन्नृहरिंमहासुरः ॥ पुनस्तमासज्जतखड्गचर्मणीप्रगृह्यवेगेनजितश्रमोमृधे ॥ २७ ॥ तंश्येनवेगंशतचंद्रवर्त्मभिश्चरंतमाच्छिद्रमुपर्यधोहरिः ॥ कृत्वाऽट्टहासंखरमुत्स्वनोल्बणंनिमीलिताक्षंजगृहेमहाजवः ॥ २८ ॥ विष्वक्स्फुरंतंग्रहणातुरंहरिर्व्यालोयथाऽऽखुंकुलिशाक्षतत्वचं ॥ द्वार्यूरआपात्यददारलीलयानखैर्यथाऽहिंगरुडोमहाविषं ॥२९॥ संरंभदुष्प्रेक्ष्यकरालरोचनोव्यात्ताननांतंविलिहन्स्वजिह्वया ॥ असृग्लवाक्तारुणकेसराननोयथांऽत्रमालीद्विपहत्ययाहरिः ॥३०॥ नखांकुरोत्पाटितहृत्सरोरुहंविसृज्यतस्यानुचरानुदायुधान् ॥ अहन्समंतान्नखशस्त्रपार्ष्णिभिर्दोर्दंडयूथोऽनुपथान्सहस्रशः ॥ ३१

आखुंमूषिकं विदारणेदृष्टांतः अहिंगरुडइवोति विष्वक्सर्वतःस्फुरंतंनिःसरंतं ग्रहणेनातुरंविवशं इंद्रेणसहयुद्धेतत्प्रयुक्तेनकुलिशेननक्षतात्वगपियस्य द्वारिसभायांनांतर्नबहिः ऊरेऊरौनिपात्यनभूमौनचांबरे नखैःव्यसुभिःअसुमाद्भिर्वा एवंदिवानक्तपरिहारायसंध्यायामितिद्रष्टव्यं ॥ २९ ॥ दैत्यवधमुत्काततद्भृत्यवधमाह द्वाभ्यां संरंभेणदुष्प्रेक्ष्याणिकरालानिलोचनानियस्य असृजोरक्तस्यलवैर्बिंदुभिरक्ताःसिक्ताःअतएवअरुणाःकेसराआननंचयस्यसः कइवद्विपहत्ययागजवधेनहारिःसिंहोयथा एवंभूतस्तस्यानुचरान्अहान्नित्युत्तरेणान्वयः अंत्राणांमालाकंठेविद्यतेयस्य ॥ ३० ॥ नखांकुरैरुत्पाटितंहृत्सरोरुहंयस्यतं दोर्दंडानांयूथानिसमूहायस्यसःतंदैत्येंद्रमनुपंथायेषांतान् अन्यानपि तत्पक्षपातिनइत्यर्थः ॥ ३१ ॥ ॥ ॥ ॥

दैत्यवधव्यग्रस्यनृहरेराटोपमाह द्वाभ्यां सटाभिरवधूताः प्रकंपिताजलदामेघाःपरापतन्व्यशीर्यंत अनेनयमेघांतरितादेवास्तेस्पष्टंपश्यं
स्त्वित्याज्ञांदत्तवानित्यर्थः तस्यदृष्ट्याविमुष्टंरोचिर्येषांग्रहाणांतेतिरस्कृतप्रभाअभवन्निितिशेषः दिग्भादिग्गजाः ॥ ३२ ॥ तस्यसटाभिरु
त्क्षिप्तानिविमानानितैः संकुलाव्याप्तासतीप्रोत्सर्पतस्थानात्प्रकर्षेणोदसर्पत्चालिता ॥ ३३ ॥ स्वभृत्यैश्वर्यमाश्चर्यमिवमत्वाकौतूहलेनतस्या
सनेउपविष्टंभयात्कोपिनबभाजनासेवत नलक्षितोद्वैरथःप्रतियोद्धायेन ॥ ३४ ॥ लोकत्रयस्यमस्तकज्वरंशिरोव्यथेवदुःसहं प्रहर्ष
स्यवेगेनउत्कलितानिविकासितानिआननानियासांताःसुरस्त्रियःपुष्पवर्षैर्नृहरिंववृषुः ॥ ३५ ॥ नाकिनांदेवानांविमानावलिभिर्नभस्तलं

सटाऽवधूताजलदाःपरापतन्ग्रहाश्चतद्दृष्टिविमुष्टरोचिषः॥अंभोधयःश्वासहताविचुक्षुभुर्निर्ह्रादभीतादि
गिभाविचुक्रुशुः॥३२॥द्यौस्तत्सटोत्क्षिप्तविमानसंकुलाप्रोत्सर्पतक्ष्माचपदाऽतिपीडिता॥शैलाःसमुत्पेतुरमु
ष्यरंहसातत्तेजसाखंककुभोनरेजिरे॥३३॥ ततःसभायामुपविष्टमुत्तमेनृपासनेसंहततेजसंविभुं॥अलक्षित
द्वैरथमत्यमर्षणंप्रचंडवक्रंनबभाजकश्चन ॥३४॥निशम्यलोकत्रयमस्तकज्वरंतमादिदैत्यंहरिणाहतंमृधे॥
प्रहर्षवेगोत्कलिताननामुहुःप्रसूनवर्षैर्ववृषुःसुरस्त्रियः॥३५॥तदाविमानावलिभिर्नभस्तलंदिदृक्षतांसंकुल
मासनाकिनां॥सुरानकादुंदुभयोऽथजघ्निरेगंधर्वमुख्याननृतुर्जगुःस्त्रियः॥३६॥ तत्रोपव्रज्यविबुधाब्रह्मेंद्र
गिरिशादयः॥ऋषयःपितरःसिद्धाविद्याधरमहोरगाः॥३७॥ मनवःप्रजानांपतयोगंधर्वाप्सरचारणाः॥ य
क्षाःकिंपुरुषास्तातवैतालाःसिद्धकिन्नराः॥३८॥ तेविष्णुपार्षदाःसर्वेसुनंदकुमुदादयः॥ मूर्ध्निबद्धांजलिपुटा
आसीनंतीव्रतेजसं॥ ईडिरेनरशार्दूलंनातिदूरचराःपृथक्॥३९॥ ब्रह्मोवाच नतोऽस्म्यनंतायदुरंतशक्त
येविचित्रवीर्यायपवित्रकर्मणे॥ विश्वस्यसर्गस्थितिसंयमान्गुणैःस्वलीलयासंदधतेऽव्ययात्मने॥ ४०॥

संकीर्णमास सुराणामानकाःपटहास्तैर्जघ्निरेवादिताः स्त्रियोऽप्सरसोननृतुर्गंधर्वाजगुः॥३६॥३७॥गंधर्वाप्सरसश्चारणाश्चेत्यर्थः॥३८॥ न
रशार्दूलंपुरुषोत्तमं॥ ३९ ॥ ब्रह्मादयोनृसिंहस्यशंकयाकुलचेतसः ॥ आरादेवास्तुवन्सप्तदशश्लोकैःपृथक्पृथक्॥हेअनंतअनंतंत्वांप्रसाद
यितुमनंतायनतोऽस्मि अनंतत्वेहेतुःदुरंताअनंताःशक्तयोयस्य तत्कुतः विचित्राणिवीर्याणिप्रभावायस्य तत्किमर्थं पवित्राणिश्रवणमा
त्रेणशोधकानिकर्माणियस्य विचित्रवीर्यत्वमेवाह विश्वस्येति संदधतेसम्यक्कुर्वते एवमपिअव्ययात्मनेअप्रच्युतस्वरूपाय ॥ ४० ॥

रुद्रस्तुतत्कोपकालाभिज्ञोनायंकोपावसरइतितंप्रार्थयते कोपइति सहस्रयुगांतस्तवकोपस्यकालः कोपायोग्यश्चायंकालइत्याह अल्पकः अत्यल्पःअसुरोहतः अतःकोपानिवृत्त्याप्रऱ्हादंमाहिंसीरित्याह तत्सुतमिति यद्वा अकालेप्ययंकोपोऽस्यभक्तस्यरक्षणार्थमितिचेत्तर्हीदानींकोपंत्यक्त्वाइमंपाहीत्यर्थः ॥ ४१ ॥ इंद्रस्तुनास्माकंहविर्भागादिलाभःपुरुषार्थःकिंतुत्वत्परिचर्यैव भवतापुनरनेनसंरंभेणस्वकार्यमेव साधितंतस्यचसिद्धत्वादुपसंहरैनंक्रोधमित्याशयेनाह हेपरमनोऽस्मांस्त्रायतारक्षताभवतास्वीयाएवभागादैत्यात्प्रत्याहृताः अंतर्यामिणस्तवैवयज्ञेषुभोक्तृत्वात् अस्मदीयंहृदयकमलंत्वद्गृहमेवएतावत्पर्यंतंभयहेतुत्वेनास्मत्स्मृतिपथेनित्यंस्थितेनदैत्येनाक्रांतंव्याप्तंसत्प्रत्यबोधिभयापाकरणेनविकाशंनीतं ननुतवत्रैलोक्यैश्वर्यसाधनार्थमयमुद्यमइतिचेत्तत्राह कालग्रस्तमिति तेत्वां हेनारसिंहनरस्यसिंहस्यचाकाराभ्यामा

**श्रीरुद्रउवाच** कोपकालोयुगांतस्तेहतोऽयमसुरोऽल्पकः ॥ तत्सुतंपाह्युपसृतंभक्तंतेभक्तवत्सल ॥ ४१॥ **इंद्रउवाच** प्रत्यानीताःपरमभवतात्रायतानःस्वभागादैत्याक्रांतंहृदयकमलंत्वद्गृहंप्रत्यबोधि ॥ कालग्रस्तं कियदिदमहोनाथशुश्रूषतांतेमुक्तिस्तेषांनहिबहुमतानारसिंहापरैःकिं ॥ ४२ ॥ **ऋषयऊचुः** त्वंनस्तपःपरममात्थयदात्मतेजोयेनेदमादिपुरुषात्मगतंससर्ज ॥ तद्विप्रलुप्तममुनाऽद्यशरण्यपालरक्षागृहीतवपुषापुनरन्वमंस्थाः ॥ ४३ ॥ **पितरऊचुः** श्राद्धानिनोऽधिबुभुजेप्रसभंतनूजैर्दत्तानितीर्थसमयेऽपितिलांबुसभ्यः ॥ तस्योदरान्नखविदीर्णवपाद्यआर्च्छत्तस्मैनमोनृहरयेऽखिलधर्मगोप्त्रे ॥ ४४ ॥

विर्भूत अपरैःस्वर्गादिभिःकिं ॥ ४२ ॥ ऋषयस्तुतपःप्रवर्तनेनास्माकंमहाननुग्रहःकृतइत्याहुः त्वंनोयदात्थपरमंध्यानलक्षणंतपः परमत्वेहेतुः आत्मनस्तवतेजः प्रभावरूपं तदेवाहुः येनतपसाआत्मनिलीनमिदंविश्वंससर्जसृष्टवानसितत् अमुनादैत्येनविप्रलुप्तंकुंठितंसत् हेशरण्यपाल अद्यरक्षाऽर्थंगृहीतेनानेनवपुषापुनरपितपःकुरुतेत्यनुज्ञातवानसि तस्मैतेनमइत्युत्तरश्लोकचतुर्थपादस्यानुषंगः ॥ ४३ ॥ पितरस्तुश्राद्धोद्धरणेनपरमोपकारिणंश्रीनृसिंहंप्रणमंति श्राद्धानिश्रद्धायुक्तानिपिंडादीनिनोऽस्मभ्यंपुत्रैर्दत्तानिप्रसभंबलाद्यः स्वयमधिकृत्यबुभुजे किंच तीर्थस्नानसमयेदत्तंतिलोदकमप्यापिबत् तानिपिंडान्युदकानिचतस्योदराद्यआर्च्छत् आहृतवान् कथंभूतात् नखैर्विदीर्णावपायस्यतस्मात् वपाविदारणस्यतद्गतपिंडोद्धरणमेवफलमितिभावः ॥ ४४ ॥ ॥ ॥

योगसिद्धांगतिमणिमादिसिद्धिं नानाअनेकेदर्पायस्यतं तस्मैतुभ्यंनताःस्मोवयं ॥ ४५ ॥ तंत्वामुद्दिश्यविद्यामंतर्धानादिलक्षणामनुराद्धां
संप्राप्तांयोबलवीर्यदृप्तः अस्मान्न्यषेधत् सभवतासंख्येयुद्धेहतस्तंत्वांप्रणताःस्मः ॥ ४६ ॥ रत्नानिफणासुस्थितानितथास्त्रीरत्नानिचउ
त्तमाःस्त्रियः आसांस्त्रीणामस्माकंचदत्तआनंदोयेनतत्संबोधनं ॥ ४७ ॥ नृसिंहेनावलोकिताःसंतोमूर्ध्निबद्धांजलयोमनवःप्रोचुः मनवो
वयंधर्मपालकाः परिभूताःसेतवोवर्णाश्रमधर्ममर्यादायेषांते अनुशाधिअनुशिक्षय ॥ ४८ ॥ प्रजापतयोपितदवलोकिताःप्रोचुः हेपरेश

सिद्धाऊचुः योनोगतिंयोगसिद्धामसाधुरहारषीद्योगतपोबलेन ॥ नानादर्पतन्नखैर्निर्ददारतस्मैतुभ्यंप्र
णताःस्मोनृसिंह ॥ ४५ ॥ विद्याधराऊचुः विद्यांपृथग्धारणयाऽनुराद्धांन्यषेधदज्ञोबलवीर्यदृप्तः ॥ स
येनसंख्येपशुवद्धतस्तंमायानृसिंहंप्रणताःस्मनित्यं ॥ ४६ ॥ नागाऊचुः येनपापेनरत्नानिस्त्रीरत्नानि
हृतानिनः ॥ तद्वक्षःपाटनेनासांदत्तानंदनमोऽस्तुते ॥ ४७ ॥ मनवऊचुः मनवोवयंतवनिदेशकारिणो
दितिजेनदेवपरिभूतसेतवः ॥ भवताखलःसउपसंहृतःप्रभोकरवामतेकिमनुशाधिकिंकरान् ॥ ४८ ॥ प्रजा
पतयऊचुः प्रजेशावयंतेपरेशाभिसृष्टानयेनप्रजावैसृजामोनिषिद्धाः ॥ सएषत्वयाभिन्नवक्षानुशेतेजगन्मं
गलंसत्त्वमूर्तेऽवतारः ॥ ४९ ॥ गंधर्वाऊचुः वयंविभोतेनटनाट्यगायकायेनात्मसाद्वीर्यबलौजसाकृताः ॥
सएषनीतोभवतादशामिमांकिमुत्पथस्थःकुशलायकल्पते ॥ ५० ॥ चारणाऊचुः हरेतवांघ्रिपंकजं
भवापवर्गमाश्रिताः ॥ यदेषसाधुहृच्छयस्त्वयाऽसुरःसमापितः ॥ ५१ ॥

तेत्वयाअभिसृष्टाः प्रजासृष्टौप्रेरितावयंप्रजेशायेनानिषिद्धाःसंतःप्रजानसृजामः सएषभिन्नंवक्षोयस्यनुनिश्चितंशेतेमृतःअतःपरंप्रजाःसृजा
मइतिहृष्यंतःप्राहुः हेसत्त्वमूर्तेतवायमवतारोजगतोमंगलंमंगलार्थं ॥ ४९ ॥ गंधर्वाअपितदवलोकिताःप्रोचुः हेविभोवयंतेत्वदीयानटा
नर्तकाःनाट्येनृत्येगायकाश्चयेनस्वाधीनाःकृताः कथंभूतेन वीर्यंशौर्यं बलंशक्तिः ताभ्यामोजःप्रभावोयस्यतेन सएषभवताइमांदशांमृ
तिंनीतः उचितंचैतदित्याहुः किमिति ॥ ५० ॥ भवापवर्गंसंसारनिवर्तकंतवचरणमाश्रिताः आश्रयणेहेतुः यद्यस्मात्साधूनांहृदिभ
यजनकत्वेनशेतेतिष्ठतीतितथासएषःअसुरस्त्वयासमापितः अंतंनीतः ॥ ५१ ॥ ॥ ॥ ॥

मनोज्ञैः कर्मभिः अनुचरेषुमुख्यास्तेवयंदितिसुतेनशिबिकावाहकत्वंप्रापिताः पंचतांमृत्युं हेपंचविंश चतुर्विंशतितत्त्वानियामक ॥ ५२ ॥
किंपुरुषास्तुत्वांस्तोतुंकेवयंवराकाइत्याहुः वयमिति वयंकिंपुरुषास्तुच्छप्राणिनस्त्वंतुमहान्अद्भुतप्रभाव ः पुरुषः नन्वयंमहान्दैत्योहतइ
तिकिंनवर्ण्यतइत्याशंक्याकियदेतादित्याहुः अयमिति यदासाधुभिर्भगवद्भक्तैस्तिरस्कृतस्तदैवनष्टइति ॥ ५३ ॥ सत्रेषुयज्ञेषुतवअमलंच
रित्रंगीत्वामहतींसपर्यांधनादिसंपत्तिं सत्वयाहतः एतद्द्विष्ट्याभद्रंकृतं ॥ ५४ ॥ अमुनादितिजेनविष्टिंनिर्मूल्यकर्मअनुनिरंतरंकारिताः

यक्षाऊचुः वयमनुचरमुख्याःकर्मभिस्तेमनोज्ञैस्तइहदितिसुतेनप्रापितावाहकत्वं ॥ सतुजनपरितापंतत्कृतंजानतातेनरहरउपनीतःपंचतांपंचविंश ॥ ५२ ॥ किंपुरुषाऊचुः वयंकिंपुरुषास्त्वंतुमहापुरुषईश्वरः ॥ अयंकुपुरुषोनष्टोधिक्कृतःसाधुभिर्यदा ॥ ५३ ॥ वैतालिकाऊचुः सभासुसत्रेषुतवामलंयशोगीत्वासपर्यांमहतींलभामहे ॥ यस्तांव्यनैषीद्भृशमेषदुर्जनोदिष्ट्याहतस्तेभगवन्यथामयः ॥५४॥ किन्नराऊचुः वयमीशकिन्नरगणास्तवानुगादितिजेनविष्टिममुनाऽनुकारिताः ॥ भवताहरेसवृजिनोऽवसादितोनरसिंहनाथविभवायनोभव ॥ ५५ ॥ विष्णुपार्षदाऊचुः अद्यैतद्धरिनररूपमद्भुतंतेदृष्टंनः शरणदसर्वलोकशर्म ॥ सोऽयंतेविधिकरईशविप्रशप्तस्तस्येदंनिधनमनुग्रहायविद्मः ॥ ५६ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेप्रल्हादानुचरितेदैत्यवधेनृसिंहस्तवोनामअष्टमोऽध्यायः ॥८॥ ॥छ॥ नारदउवाच एवंसुरादयःसर्वेब्रह्मरुद्रपुरःसराः ॥ नोपैतुमशकन्मन्युसंरंभंसुदुरासदं ॥ १ ॥

अतःपरंनःविभवायसमृद्धयेभव ॥ ५५ ॥ नोऽस्माकंभक्तानांहेशरणदआश्रयप्रद सर्वेषांलोकानांशर्ममंगलमेतदद्भुतंरूपमद्यैवदृष्टंनतुपूर्वं विधिकरःकिंकरः ॥ ५६ ॥ इतिसप्तमेटीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ नवमेब्रह्मणाभीत्याचोदितोऽसुरबालकः ॥ कोपंप्रशमयन्नस्तौन्नृसिंहमतिभीषणं ॥ १ ॥ उग्रोऽप्यनुग्रएवायंस्वभक्तानांनृकेसरी ॥ केसरीवस्वपोतानामन्येषामुग्रविग्रहइत्याद्यागमाक्ताभक्तानुकंपितामाह एवमितिसप्तभिः एवंदूरतएवस्थित्वास्तुवंतः मन्युनासंरंभआवेशोयस्यतं उपसमीपेगंतुंनाशक्नुवन् ॥ १ ॥ ॥

श्रीर्लक्ष्मीर्देवैः प्रेषिताऽपिमहदद्भुतंदृष्ट्वाशंकितासतीतंनोपजगाम अद्भुतत्वेहेतुः अदृष्टेति ॥ २ ॥ उपेहिउपगच्छ ॥३॥४॥कालएवा
हिस्तस्माद्वित्रस्ताधीर्येषांतेषांकृतमभयंयेनतत्करांबुजं ॥ ५ ॥ तस्यश्रीनृसिंहस्यकरस्पर्शेनधुतंनिरस्तमखिलमशुभंयस्य सपदितत्क्षण
मेवअभिव्यक्तमपरोक्षीभूतंपरात्मदर्शनंब्रह्मज्ञानंयस्य निर्वृतःसन्हृदिदधौ हृष्यंतीरोमांचितातनुर्यस्य क्लिन्नंप्रेमार्द्रंहृत्यस्य अश्रूणिलो
चनयोर्यस्य परमपुरुषार्थतयादधौनसाधनत्वेनेत्यर्थः ॥ ६ ॥सुसमाधिमेवाह तस्मिन्नेवन्यस्तंहृदयमीक्षणंचयेनेति ॥ ७ ॥ स्वस्मिन्निव
समस्तेषुतत्कृपाऽमृतदृष्टये ॥ प्रन्हादःस्तौतिसत्पद्यैर्द्विचत्वारिंशताहरिं ॥ १ ॥ तत्रतावदात्मनोभगवत्स्तुतावनधिकारमिवाशंक्याधिकारं

साक्षाच्छ्रीःप्रेषितादेवैर्दृष्ट्वातन्महदद्भुतं॥अदृष्टाश्रुतपूर्वत्वात्सानोपेयायशंकिता ॥२ ॥ प्रन्हादंप्रेषयामास
ब्रह्माऽवस्थितमंतिके ॥ तातप्रशमयोपेहिस्वपित्रेकुपितंप्रभुं ॥ ३ ॥ तथेतिशनकैराजन्महाभागवतोर्भकः ॥
उपेत्यभुविकायेननामविधृतांजलिः ॥ ४ ॥ स्वपादमूलेपतितंतमर्भकंविलोक्यदेवःकृपयापरिप्लुतः ॥ उ
त्थाप्यतच्छीर्ष्ण्यदधात्करांबुजंकालाहिवित्रस्तधियांकृताभयं ॥५ ॥ सतत्करस्पर्शधुताखिलाशुभःसपद्य
भिव्यक्तपरात्मदर्शनः ॥ तत्पादपद्मंहृदिनिर्वृतोदधौहृष्यत्तनुःक्लिन्नहृदश्रुलोचनः ॥६॥ अस्तौषीद्धरिमेका
ग्रमनसासुसमाहितः ॥ प्रेमगद्गदयावाचातन्न्यस्तहृदयेक्षणः ॥७॥ प्रन्हादउवाच ब्रह्मादयःसुरगणामु
नयोऽथसिद्धाःसत्त्वैकतानमतयोवचसांप्रवाहैः॥ नाराधितुंपुरुगुणैरधुनापिपिप्रुःकिंतोष्टुमर्हतिसमेहरिरुग्र
जातेः॥८॥ मन्येधनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥ नाराधनायहिभवंतिपर
स्यपुंसोभक्त्यातुतोषभगवान्गजयूथपाय ॥ ९ ॥ ॥ ॥

संभावयन्नाह ब्रह्मादयइतिपंचाभिः मुनयोमननशीलाः सिद्धाःज्ञानिनोपि कथंभूताः सत्वएवैकस्मिंस्तानोविस्तारोयस्याःसामतिर्येषां
तथाविधाअपिवचसांप्रवाहैरपितथाबहुभिर्वक्ष्यमाणैर्गुणैरपियमाराधयितुंनपिप्रुर्नपूर्णानशक्ताइत्यर्थः सहरिर्मेममकथंतोषंप्राप्तुमर्हति त
त्रहेतुः उग्रजातेःउग्राघोराआसुरीजातिर्यस्य ॥ ८ ॥ एवंहरितोषणेस्वस्यायोग्यतामाशंक्ययोग्यतांसंभावयति मन्यइतिद्वाभ्यां आभि
जनःसत्कुलेजन्म रूपंसौंदर्यं श्रुतंपांडित्यं ओजःइंद्रियनैपुणं तेजःकांतिःप्रभावःप्रतापः पौरुषमुद्यमः बुद्धिःप्रज्ञा योगोऽष्टांगः एते
धनादयोद्वादशापिगुणाःपरमस्यपुंसः आराधनायनभवंति हियतः केवलयाभक्त्यैवननुगजेंद्रायतुष्टोऽभवत् ॥ ९ ॥

एवंभक्त्यैवकेवलयाधनादिद्वादशगुणवर्जितयाऽपिहरेस्तोषःसंभवतीत्युक्तमिदानींभक्तिंविनानान्यत्किंचित्तत्तोषहेतुरित्याह विप्रादिति पूर्वोक्ताधनादयोद्विषड्द्वादशगुणास्तैर्युक्ताद्विप्रादपिश्वपचंवरिष्ठंमन्ये यद्वासनत्सुजातोक्ताद्वादशज्ञानादयोगुणाद्रष्टव्याः तदुक्तं ज्ञानंचसत्यंचदमःश्रुतंचह्यमात्सर्यंह्रीस्तितिक्षानसूया॥ यज्ञश्चदानंचधृतिःशमश्चमहाव्रताद्वादशब्राह्मणस्येति कथंभूताद्विप्रात् अरविंदनाभस्यपादारविंदाद्विमुखात् कथंभूतंश्वपचं तस्मिन्नरविंदनाभेर्पितामनआदयोयेनतं ईहीतंकर्म वरिष्ठत्वेहेतुः सएवंभूतःश्वपचःसर्वंकुलंपुनाति भूरिमानोगर्वोयस्यसतुविप्रःआत्मानमपिनपुनातिकुतःकुलं यतोभक्तिहीनस्य एतेगुणागर्वायैवभवंतिनतुशुद्धयेअतोहीनइतिभावः ॥१०॥ तर्हिकिंधनाद्यर्पणेनसंमानंप्राकृतइवभगवानपेक्षतेनेत्याह नैवेति अयंप्रभुरीश्वरःअविदुषोऽल्पकाज्जनान्मानंपूजामात्मनोऽर्थेनवृणीतेनेच्छति यतोनिजलाभेनैवपूर्णःतर्हिपूजांनेच्छत्येवतत्राह करुणःकृपालुरतोवृणीतेच तत्रहेतुः यद्यदिति यंयंमानं यद्वा

विप्राद्द्विषड्गुणयुतादरविंदनाभपादारविंदविमुखाच्छ्वपचंवरिष्ठं ॥ मन्येतदर्पितमनोवचनेहितार्थप्राणंपुनातिसकुलंनतुभूरिमानः ॥१०॥ नैवात्मनःप्रभुरयंनिजलाभपूर्णोमानंजनादविदुषःकरुणोवृणीते ॥ यद्यज्जनोभगवतेविदधीतमानंतच्चात्मनेप्रतिमुखस्ययथामुखश्रीः ॥ ११ ॥ तस्मादहंविगतविक्लवईश्वरस्यसर्वात्मनामहिगृणामियथामनीषं ॥ नीचोऽजयागुणविसर्गमनुप्रविष्टःपूयेतयेनहिपुमाननुवर्णितेन ॥ १२ ॥ सर्वेह्यमीविधिकरास्तवसत्त्वधाम्नोब्रह्मादयोवयमिवेशनचोद्विजंतः ॥ क्षेमायभूतयउतात्मसुखायचास्यविक्रीडितंभगवतोरुचिरावतारैः ॥ १३ ॥

य यस्मात् यद्येनधनादिनाभगवतेमानंविदधीततदेवात्मनेभवतिनान्यत् यथामुखेकृतैवतिलकादिश्रीःशोभाप्रतिबिंबस्यभवतिनतुसाक्षात्तस्यैवकर्तुंशक्यतेतद्वत् ॥ ११ ॥ यस्मादेवंभगवान्भक्त्यैवतुष्यतितस्मादहंनीचोपिविगताविक्लवोगतशंकःसन्नीश्वरस्यमहिमहिमानंयथासर्वप्रयत्नेनस्वमनीषानुसारेणानुवर्णयामि अजानतोपिस्तुतिकरणेहेतुमाह येनैवमहिम्नाअनुवर्णितेनअविद्ययासंसारमनुप्रविष्टःपुमान्पूयेतशुध्येत् तत्माहि अन्यस्यतथाशोधकत्वाभावादित्यर्थः॥ १२ ॥ तदेवमात्मनःस्तुतावनधिकारंपरिहृत्येदानींतंस्तुवन्कोपोपसंहारंप्रार्थयते सर्वेहीतिद्वाभ्यां भोईशअमीउद्विजंतोबिभ्यंतःसर्वेब्रह्मादयःसत्वमूर्तेस्तवविधिकरास्त्वन्नियोगकर्तारोभक्ताएवनान्ये नचवयमसुराइववैरभावेनएतेभक्ताःकिंतुश्रद्धयैव तवरुचिरैरवतारैर्विविधंक्रीडनमस्यविश्वस्यक्षेमादिप्रयोजनायनतुभयोत्पादनाय ॥ १३ ॥

तत्तस्मादेषांभयपरिहारायमन्युंयच्छउपसंहर यदर्थमयंमन्युःसचासुरःसाधूनांसंतोषार्थमद्यअधुनैवहतः अतःपरंक्रोधेनकार्याभावात्तंनिय
च्छ नन्वन्येषांवधेनसाधुःकिंमोदेततत्राह वृश्चिकादेःपरोपद्रवकारिणोऽन्यतोजातयाहत्यावधेनतस्यैवतद्वद्द्वंजातमितिसाधुरपिमोदेतैव
तर्हिवहूनांसुखावहत्वादमुंक्रोधंनत्यजामीतिचेत्तत्राह लोकाश्चनिर्वृतिमिताःप्राप्ताःसंतःप्रतियंतिक्रोधोपसंहारंप्रतीक्षंते तर्हिजनानांपुनर्भ
याभावायमन्युंधारयामीतिचेत्तत्राह रूपमिति विभयायभयनिवृत्त्यै एतद्रूपस्मरणादेवभयनिवृत्तेर्नमन्युधारणेनकृत्यमस्तीत्यर्थः ॥ १४ ॥
त्वंचेद्बिभेषितर्हित्यजामीतिचेत्तत्राह नाहमिति भोअजिततेअस्माद्रूपादहंनबिभेमि कथंभूतात् आस्यंचजिह्वाचअर्कसदृशनेत्राणिचभ्रु
कुटीनांरभसआटोपश्चउग्रादंष्ट्राश्चएतानिभयानकानियस्मिंस्तस्मात् अंत्रमय्यःस्रजोयस्मिंस्तदंत्रस्रक्तस्मात्क्षतजाक्ताः केसरायस्मिन्

तद्यच्छमन्युमसुरश्चहतस्त्वयाऽद्यमोदेतसाधुरपिवृश्चिकसर्पहत्या ॥ लोकाश्चनिर्वृतिमिताःप्रतियंति
सर्वेरूपंनृसिंहविभयायजनाःस्मरंति ॥ १४ ॥ नाहंबिभेम्यजिततेऽतिभयानकस्यजिह्वार्कनेत्रभ्रुकुटीरभ
सोग्रदंष्ट्रात् ॥ अंत्रस्रजःक्षतजकेसरशंकुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥ त्रस्तोऽ
स्म्यहंकृपणवत्सलदुःसहोग्रसंसारचक्रकदनाद्ग्रसतांप्रणीतः ॥ बद्धःस्वकर्मभिरुशत्तमतेऽङ्घ्रिमूलंप्रीतोऽप
वर्गशरणंह्वयसेकदानु ॥१६॥ यस्मात्प्रियाप्रियवियोगसयोगजन्मशोकाग्निनासकलयोनिषुदह्यमानः ॥
दुःखौषधंतदपिदुःखमतद्धियाऽहंभूमन्भ्रमामिवदमेतवदास्ययोगं ॥ १७॥ ॥ ॥

शंकुवदुन्नतौस्तब्धौकर्णौयस्मिन् तच्चतच्चतस्मात् निर्ह्रादेनभीतादिगिभायस्मात् अरीन्भिंदंतीत्यरिभिंदितानिनखाग्राणियस्मिन् एवंभू
तादपितेरूपादहंनबिभेमि ॥ १५ ॥ महद्भयंत्वन्यदस्तीत्याह त्रस्तोस्मीति दुःसहंयदुग्रंसंसारचक्रेकदनंदुःखंतस्मादहंत्रस्तोस्मि तत्रचग्र
सतांहिंस्राणांमध्येस्वकर्मभिर्बद्धःसन्प्रणीतोनिक्षिप्तोस्मि हेकृपणवत्सलहेउशत्तमकदानुत्वंप्रीतःसन्नपवर्गभूतंशरणंतवांघ्रिकमलंप्रतिह्वय
सेमामाह्वयसि ॥ १६ ॥ दास्येसतिमत्प्रीतिरितिचेत्तर्हिनानायोनिषुक्लिश्यमानस्यममदास्यज्ञानाभावात्त्वमेवतदुपादिशेतिप्रार्थयते यस्मात्प्रियै
रप्रियैश्चयथासंख्यंवियोगसंयोगाभ्यांजन्मयस्यतेनशोकाग्निनासकलयोनिषुदह्यमानोस्मिदुःखस्यप्रतीकारःकार्यइतिचेत्तत्राह दुःखस्यौषधं
प्रतीकारस्तदपिदुःखमेव एवमपिअतद्धियादेहाद्यभिमानेनमुह्यामि अतःहेभूमन्विभोमेतवदास्यरूपंयोगंनिस्तारोपायंवद ॥ १७ ॥

ननुदास्ययोगेनप्रवृत्तस्यापितदंतरायभूतानांपूर्वोक्तनानादुःखानांकुतःपरिहारस्तत्राह सोहंत्वद्दासःसन्भोनृसिंहतवलीलाकथाअनुगृणन् दुर्गाणिमहादुःखान्यंजसातितर्मितरामि नगणयिष्यामीत्यर्थः तत्रहेतुः गुणैरागादिभिर्विशेषेणप्रमुक्तःसन् तत्कुतः तेपदयुगमेवालयोयेषांभक्तानांतएवहंसाज्ञानिनस्तैःसंगोयस्यममसोहं कथंभूतस्यकथास्तत्राह प्रियस्येत्यादि कुतोज्ञाताः विरंचेनगीतास्तत्संप्रदायप्रवृत्ताः तथाचाथर्वणीश्रुतिः देवाहवैप्रजापतिमब्रुवन्नित्यादि दास्येप्रवृत्तस्यभवदनुग्रहेणसत्संगस्ततोवीतरागतयाभगवद्गुणानुवर्णनंततश्चनदुःखाभिभवःस्यादितिवाक्यार्थः ॥ १८ ॥ ननुदुःखैस्तप्तस्यतत्प्रतीकारोलोकेप्रसिद्धएवकिमन्यद्दास्यादिनातत्राह बालस्येति भोनृसिंहतप्तस्यतत्प्रतिविधिर्दुःखप्रतीकारइहलोकेयोऽजसाइष्टःसत्वयोपेक्षितानांतावदेवक्षणमात्रमेवनत्वात्यंतिकः तदेवाह बालस्यापितरौशरणंरक्षकाविहनभवतःताभ्यांपाल्यमानस्यापितस्यदुःखदर्शनात् क्वचिदजीगर्तादिषुताभ्यामेवतद्वधदर्शनाच्च नचार्तस्यरोगिणःअगदमौषधं

**सोऽहंप्रियस्यसुहृदःपरदेवतायालीलाकथास्तवनृसिंहविरंचगीताः ॥अंजस्तितर्म्यनुगृणन्गुणविप्रमुक्तो दुर्गाणितेपदयुगालयहंससंगः ॥१८॥ बालस्यनेहशरणंपितरौनृसिंहनार्तस्यचागदमुदन्वतिमज्जतोनौः॥तप्तस्यतत्प्रतिविधिर्यइहांजसेष्टस्तावद्विभोतनुभृतांत्वदुपेक्षितानां॥१९॥ यस्मिन्यतोयर्हियेनचयस्ययस्माद्यस्मैयथायदुतयस्त्वपरःपरोवा॥भावःकरोतिविकरोतिपृथक्स्वभावःसंचोदितस्तदखिलंभवतःस्वरूपं॥२०॥**

शरणं कृतेप्यौषधेमृत्युदर्शनात् नचोदन्वतिसमुद्रेमज्जतःपुंसोनौःशरणं तयासहमज्जनदर्शनात् अतस्त्वमेवशरणमित्यर्थः अथचैवंकाक्व्याख्येयं तप्तस्यतत्प्रतिविधिर्यइहतावत्प्रसिद्धः सत्वदुपेक्षितानांकिमंजसेष्टःअपितुनेष्टएव यद्वायस्तावदिहप्रतिविधिरिष्टःसकिमंजसानैवांजसेत्यादियोज्यं बालस्येत्यादिपूर्ववदेव ॥ १९ ॥ ननुकचित्कुतश्चित्केनचित्कदाचित्कश्चिद्रक्षकोपिदृश्यतएवेत्याशंक्यतत्रापितत्तद्रूपेणत्वमेवरक्षकइत्युररीकृत्यतस्यैवसर्वात्मतामाह यस्मिन्निति अपरोऽर्वाचीनःपित्रादिःपरोब्रह्मादिर्वाभावःकर्तातत्तत्कारकैर्यद्यत्करोतितत्सर्वंभवतएवस्वरूपंनतुपृथक् यस्मिन्नधिकरणेयतोनिमित्तात्यस्मिन्कालेयेनकरणेनयेनहेतुकर्त्रासंचोदितश्चयस्यसंबंधियस्मादुपादानात्यस्मैसंप्रदानाययदीप्सिततमंयःकर्तेत्येवंसप्तविभक्त्यर्थाः यथायेनप्रकारेणेतिक्रियाविशेषणभूतानामव्ययानामर्थाःपृथक्स्वभावःसत्वादिप्रकृतिः करोतिउत्पादयतिविकरोतिरूपांतरंनयतीति ॥ २० ॥ ॥ ॥

अतोऽन्यस्यरक्षकस्याभावात्संसारित्वाच्चनित्यमुक्तस्त्वमेवमांशरणागतंरक्षेतिप्रार्थयते मायेतिद्वाभ्यां त्वदंशस्यपुंसोऽनुमतेनईक्षणरूपेणअ
नुग्रहेणमनः मनःप्रधानंलिंगंमायासृजति कथंभूताकालेननोदिताःक्षोभितागुणाःयस्याः कथंभूतंमनःकर्ममयंकुर्वद्रूपं बलीयःदुर्जयंछंदोमयं
वेदोक्तकर्मप्रधानंच अजयाजीवस्याविद्ययातद्भोगार्थमर्पिताःषोडशअराविकारायस्मिन् यदेवंभूतंसंसारचक्रात्मकंमनस्तत्कोऽतितरेत् भो
अजत्वदन्यस्त्वत्तःपृथक्स्थितः त्वामभजन्नित्यर्थः ॥ २१ ॥ ननुममापिमायासंबंधात्कर्तृत्वाद्यविशेषाच्चत्वत्तःकोविशेषइत्याह सइति
स्वधाम्नाचिच्छक्त्यानित्यंविजिताआत्मनोबुद्धेर्गुणायेनसहित्वं यतःकालोमायाप्रेरकः अतएववशीकृताविसृज्यानांकार्याणांविसर्गाणांसा

मायामनःसृजतिकर्ममयंबलीयःकालेननोदितगुणानुमतेनपुंसः ॥ छंदोमयंयदजयाऽर्पितषोडशारंसंसारचक्रमजकोऽतितरेत्त्वदन्यः ॥ २१ ॥ सत्वंनिहत्यविजितात्मगुणःस्वधाम्नाकालोवशीकृतविसृज्यविसर्गशक्तिः ॥ चक्रेविसृष्टमजयेश्वरषोडशारेनिष्पीड्यमानमुपकर्षविभोप्रपन्नं ॥ २२ ॥ दृष्टामयादिविविभोऽखिलधिष्ण्यपानामायुःश्रियोविभवइच्छतियान्जनोऽयं॥येऽस्मत्पितुःकुपितहासविजृंभितभ्रूविस्फूर्जितेनलुलिताःसतुतेनिरस्तः ॥ २३ ॥ तस्मादमूस्तनुभृतामहमाशिषोज्ञआयुःश्रियंविभवमैंद्रियमाविरिंचात् ॥ नेच्छामितेविलुलितानुरुविक्रमेणकालात्मनोपनयमांनिजभृत्यपार्श्वं ॥ २४ ॥

धनानांचशक्त्यायोयेन अतइक्षुदंडवन्निष्पीड्यमानंमामुपकर्षस्वसमीपंनय ॥ २२ ॥ ननुतावल्लोकपालानांभोगान्भुंक्ष्वपित्र्यंवाराज्यमिदं
दास्यामिकिमितिसंसाराद्उद्विजसेतत्राह दृष्टाइतित्रिभिः श्रियःसंपदः विभवउद्भवः आयुरादयोदृष्टाइतिकाक्वातुच्छत्वमुक्तंतदेवाह येअ
स्मत्पितुःकोपहासविकृतभ्रूभंगमात्रेणविध्वस्ताः सचत्वयानिरस्तः ॥ २३ ॥ यस्मादेवंतस्मात्आशिषोभोगान् ज्ञस्तत्परिपाकंविद्वानहं
ऐंद्रियंइंद्रियैर्भोग्यंब्रह्मणोभोगमाभिव्याप्यकिमपिनेच्छामि तेकालात्मनाउरुविक्रमेणविलुलितान्विध्वस्तानाणिमादीनापि ॥ २४ ॥

किंच वर्तमानकालेऽपिनभोगार्हाइत्याह कुत्रेति श्रुतिःश्रवणंतदेवसुखंयासुताःमृगतृष्णिकावन्मिथ्याभूताश्चाशिषःक्क अशेषाणांरुजां रोगाणांविरोहउद्भवस्थानंक्कचेदंकलेवरं एवंचेत्सर्वोपिजनःकिंनविरज्यतेतत्राह यदापियद्यपिइतिएवंविद्वानयंजनस्तथापिनानिर्विद्यते विरक्तोनभवति कुतः कामएवानलस्तं मधुतुल्यैःसुखलवैःदुःसाध्यैरपिशमयन् कामाग्निशमनव्यग्रस्यनिर्वेदावकाशोनास्तीत्यर्थः यद्वाअ चिंत्यमिदंत्वन्मायाचेष्टितमितिभावः ॥ २५ ॥ तर्हित्वंकथंनिर्विण्णोऽसि अनर्हेपिमयिप्रवृत्तयात्वत्कृपयैवेत्याशयेनाह क्वेति रजसैवप्रभ वोजन्मयस्यसः सप्तम्यंतंवाकुलविशेषणं तमोऽधिकंयस्मिंस्तस्मिन्नसुराणांकुलेजातोऽहंक्क क्वचतवानुकंपा तामेवाह ब्रह्मादीनांशिरसि योनैवार्पितःसपद्मवत्सकलसंतापहरःकरःप्रसादःपुरुषार्थरूपोमेशिरसिअर्पितइतियत् यत्त्वयाऽनुकंपयेतिवा ॥ २६ ॥ नचत्वयीदम तिचित्रमित्याह नैषेति एतेब्रह्मादयउत्तमाअयमसुरोनीचइत्येषापरावरमतिर्जंतोःप्राकृतस्ययथातथाभगवतोनैवस्यात् अत्रहेतुः जगत

**कुत्राशिषःश्रुतिसुखामृगतृष्णिरूपाःक्वेदंकलेवरमशेषरुजांविरोहः॥ निर्विद्यतेनतुजनोयदपीतिविद्वान्कामानलंमधुलवैःशमयन्दुरापैः ॥२५॥ क्वाहंरजःप्रभवईशतमोऽधिकेस्मिन्जातःसुरेतरकुलेक्वतवानुकंपा॥ नब्रह्मणोनतुभवस्यनवैरमायायन्मेऽर्पितःशिरसिपद्मकरःप्रसादः ॥२६॥ नैषापरावरमतिर्भवतोननुस्याज्जंतोर्यथात्मसुहृदोजगतस्तथापि ॥ संसेवयासुरतरोरिवतेप्रसादःसेवानुरूपमुदयोनपरावरत्वं ॥ २७॥ एवंजनंनिपतितंप्रभवाहिकूपेकामाभिकाममनुयःप्रपतन्प्रसंगात् ॥कृत्वात्मसात्सुरर्षिणाभगवन्गृहीतःसोऽहंकथंनुविसृजेतवभृत्यसेवां ॥ २८ ॥**

आत्मनःसुहृदश्च तर्हिसर्वत्रमत्प्रसादएवंरूपश्चकिंनस्यात्तत्राह संसेवयातवप्रसादोभवति तत्रचसेवानुरूपंतत्तदिच्छानुसारेणधर्मादीनामु दयोभवति एवंसत्यपिवैषम्याभावेदृष्टांतः सुरतरुर्यथासेवकस्यैवसंकल्पानुसारेणफलंददातिनचविषमस्तद्वत् नपरावरत्वमत्रकारणमि तिशेषः ॥ २७ ॥ एतच्चत्वद्भृत्यकृपयामयाप्राप्तमितित्वद्भृत्यपार्श्वमेवमांनयेत्याशयेनाह एवमिति यथात्वयाऽनुकंपितोऽस्मिएवंनारदे नात्मसात्कृत्वापूर्वमनुगृहीतःसोऽहंकथंनुत्वद्भृत्यसेवांविसृजामि कथंभूतोनुगृहीतोऽस्मि प्रभवएवाहियुक्तः कूपस्तस्मिन्कामानभितः कामयमानंजनंनिपतितमनुतत्प्रसंगात्प्रपतन्योऽहं तदेवंत्वद्भृत्यस्यनारदस्यानुग्रहेणत्वयाअत्यंतमनुकंपितोस्मि अयमेवचममपरमोऽ नुग्रहोनपुनरिदमतितुच्छंमत्प्राणरक्षणादि ॥ २८ ॥ ॥ ॥

नचेदंत्वयामदनुग्रहार्थंकृतंकिंतुअन्यार्थामित्याह भोअनंतयदेतन्मत्प्राणरक्षणंमांहंतुमुद्यतस्यमात्पितुर्वधश्चतदुभयंस्वभृत्यऋषिवाक्यमृतंस
त्यंविधातुमहमितिमन्ये कुतः यद्यस्मात् असत् अयुक्तंविधित्सुःखड्गंप्रगृह्यावोचत् किंमदपरोमद्यतिरिक्तश्चेदीश्वरोऽस्तितर्हित्वामिदानीं
मवतुतवकंशिरोऽहंहरामीति पाठांतरेऽप्ययमेवार्थः यद्यदाअवोचत्तदामत्प्राणरक्षणामितिवाऽन्वयः एतच्चसत्यंविधातुंनिजभृत्यभाषितमि
त्यत्रैवबहुधाव्याख्यातं ॥ २९ ॥ नचेदंपक्षपातेनरक्षणंदैत्यहननंचत्वयिस्वाभाविकंकिंतुमायागुणोपाधिकं सर्वात्मकेत्वयिस्वतस्तदयोगा
दित्याह एकइति एतच्चजगत्त्वमेवैकः यद्यतः अमुष्यआदावंतेचपृथगवस्यासिविरामंकरोषि सन्मात्रतयाकारणत्वेनावधित्वेन चवर्तसइ
त्यर्थः अतोमध्यतश्चत्वमेव कुतस्तर्हिभेदप्रतीतिस्तत्राह निजमाययागुणपरिणामात्मकमिदंजगत्सृष्ट्वातदनुप्रविष्टस्त्वंतैर्गुणैर्हेतुभूतैर्नां

मत्प्राणरक्षणमनंतपितुर्वधश्चमन्येस्वभृत्यऋषिवाक्यमृतंविधातुं॥खड्गंप्रगृह्ययदवोचदसद्विधित्सुस्त्वामी
श्वरोमदपरोऽवतुकंहरामि ॥२९॥ एकस्त्वमेवजगदेतदमुष्ययत्त्वमाद्यंतयोःपृथगवस्यसिमध्यतश्च ॥ सृ
ष्ट्वागुणव्यतिकरंनिजमाययेदंनानेवतैरवसितस्तदनुप्रविष्टः ॥३०॥ त्वंवाइदंसदसदीशभवांस्ततोऽन्यो
मायायदात्मपरबुद्धिरियंह्यपार्था॥यद्यस्यजन्मनिधनंस्थितिरीक्षणंचतद्वैतदेववसुकालवदष्टितर्वोः ॥३१॥

नेवरक्षकइवहंतेवचअवसितःप्रतीतः तदुक्तंस्कंधोपक्रमे निर्गुणोऽपिह्यजोऽव्यक्तोभगवान्प्रकृतेःपरः ॥ स्वमायागुणमाविश्यबाध्यबाधक
तांगतइत्यादिना ॥३०॥ ननुयद्येतज्जगदहमेवतर्हिजगतोवैषम्येणममवैषम्यमपिकिंनस्यादित्यतआह त्वंवैत्वमेवेदं सदसत्कार्यकारणा
त्मकंजगन्नतुत्वत्तःपृथक् भवांस्तुततोऽन्यः आद्यंतयोःपृथगवस्थानात् यत्यस्मादेवमतोऽयमात्मीयःअयंपरइतियाबुद्धिःसाअपार्थामायैव
कार्यकारणाभेदंदृष्टांतेनसाधयति यद्यतःयस्यजन्मईक्षणंप्रकाशश्चयास्मिन्निधनंचास्थितिश्चतद्वैतदेव अष्टिर्बीजंकारणंतरुःकार्यंतयोर्यथा
वसुकालमात्रत्वं अयमर्थः कालशब्देननीलत्वासाधारणयोगात्पृथ्वी वसुशब्देनवसुमात्रंभूतसूक्ष्मं तत्रतरोर्यथापृथ्वीमयबीजमात्रत्वंतस्य
चयथाभूतसूक्ष्ममात्रत्वमेवंसर्वमपिकार्यकारणात्मकंजगत्परमकारणात्मकमेवेति तथाचपारमर्षंसूत्रं तदनन्यत्वमारंभणशब्दादिभ्यइति
श्रुतिश्च वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमिति ॥ ३१ ॥ ॥ ॥

तत्रतावदंतेपृथगवस्थानंदर्शयति न्यस्येदमिति इदंजगदात्मनैवात्मनिनिक्षिप्यस्वसुखमेवानुभवन्निष्क्रियःसन्प्रलयोदकमध्येशयनंकरो
षि तर्हिकिंजीवस्येवममापितमोवृत्तिरूपानिद्रास्ति नहिनहि योगएवतुबहिर्वृत्त्यभावसाम्यान्निद्रोच्यतइत्याह योगेनमीलितेदृशौयेनआ
त्मनास्वरूपप्रकाशेननिपीतानिद्रायेन यतस्तुर्येअवस्थात्रयातिरिक्तेस्वरूपेस्थितस्त्वंनतुसुप्तइवात्मनातमोयुंक्षेनयोजयसिनपश्यसिनजाग्र
त्स्वप्नयोरपिगुणान्विषयांश्चेत्यर्थः॥३२॥इदानींकारणत्वेनादावपिपृथगवस्थानंदर्शयन्मध्यतश्चत्वमेवेत्येतत्प्रपंचयाति चतुर्भिः यस्त्वमंभ
सिशेषेतस्यैवतेइदंजगद्वपुःस्वरूपंनान्यस्य यतस्त्वंमध्यतोऽपितस्य कथंभूतस्य निजयाकालशक्त्यासंचोदिताःप्रकृतेर्धर्माःसत्वादयोयेन

न्यस्येदमात्मनिजगद्विलयांबुमध्येशेषेत्मनानिजसुखानुभवोनिरीहः ॥ योगेनमीलितदृगात्मनिपीतनि
द्रस्तुर्येस्थितोनतुतमोनगुणांश्चयुंक्षे ॥३२॥ तस्यैवतेवपुरिदंनिजकालशक्त्यासंचोदितप्रकृतिधर्मणआत्म
गूढं ॥ अंभस्यनंतशयनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाब्जं ॥ ३३ ॥ तत्संभवःकविरतोऽ
न्यदपश्यमानस्त्वांबीजमात्मनिततंस्वबहिर्विचिंत्य ॥ नाविंददब्दशतमप्सुनिमज्जमानोजातेऽकुरेकथमुहो
पलभेतबीजं ॥ ३४ ॥ सत्वात्मयोनिरतिविस्मितआस्थितोऽब्जंकालेनतीव्रतपसापरिशुद्धभावः ॥ त्वामा
त्मनीशभुविगंधमिवातिसूक्ष्मंभूतेंद्रियाशयमयेविततंददर्श ॥ ३५ ॥ ॥ ॥

स्वरूपत्वेहेतुःअनंतशयनात्शेषपर्यंकात्विरमन्समाधिर्यस्यतस्यतवनाभेः सकाशात् एकार्णवोदकेमहाब्जंलोकपद्ममभूत् कथंभूतं आत्म
नित्वय्येवगूढंसत् स्वकणिकातःसूक्ष्माद्वटबीजान्महावटइव ॥३३॥ तदेवंकारणत्वेनानुगतःसन्मध्यतश्चत्वमेववर्तसइत्युक्तमेतदेवशुद्धस
त्वस्यब्रह्मणोऽनुभवेनस्फुटयितुंतस्यप्राक्तनीमवस्थामाह तस्मिन्नब्जेसंभवोयस्यसः कविर्ब्रह्मा अतःपद्मादन्यदपश्यन्बीजमुपादानकार
णभूतंत्वांस्वस्मिन्व्याप्तंसंतमपिनाविंदत् युक्तंचैतत् उहअहो अंकुरेजातेसतिबीजंतदनुगतंकारणंपृथक्कथंनामपुमान्पश्येत् ॥३४॥ भवदु
पासनयातुस्वस्मिन्नेवदृष्टवानित्याह सत्विति परावृत्त्याब्जमास्थितःसन्तीव्रेणतपसाध्यानेन अनेनसन्मात्ररूपेणोपादानतयादर्शनमुक्तं३५

ईश्वरत्वेन च दृष्ट्वा कृतार्थोऽभवदित्याह एवमनेनप्रकारेणसहस्रमपरिमितानियानिवदनादीनितैराढ्यंसमृद्धं मायामयंमायाप्रधानं सतांप्र
पंचेनोपलक्षितःसन्निवेशःपादादिरचनायस्यसः ॥ ३६ ॥ तदाचभवांस्तस्यानुग्रहंकृतवानित्याह तस्माइति हयग्रीवमूर्तिंबिभ्रत्सन्रज
स्तमोरूपौमधुकैटभाख्यौहत्वातस्मैश्रुतिगणान्समर्पितवान् तत्रहेतुः सत्त्वमिति ॥ ३७ ॥ कस्त्वमेवेत्यादिभिरष्टभिःश्लोकैर्यदुक्तंपक्षपा
तेनरक्षणंतद्विपक्षवधश्चसत्त्वोपाधिकोनतुस्वतइतितदुपसंहरति इत्थमिति विभावयसिपालयसि हंसिघातयसि कलौतुतन्नकरोषि यतस्त्

एवंसहस्रवदनांघ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यं ॥ मायामयंसदुपलक्षितसन्निवेशंदृष्ट्वा
महापुरुषमापमुदंविरिंचः ॥ ३६ ॥ तस्मैभवान्हयशिरस्तनुवंचबिभ्रद्वेदद्रुहावतिबलौमधुकैटभाख्यौ ॥
हत्वाऽनयच्छ्रुतिगणांस्तुरजस्तमश्चसत्वंतवप्रियतमांतनुमामनंति ॥ ३७ ॥ इत्थंनृतिर्यगृषिदेवझषावतारै
र्लोकान्विभावयसिहंसिजगत्प्रतीपान्॥धर्मंमहापुरुषपासियुगानुवृत्तंछन्नःकलौयदभवस्त्रियुगोऽथसत्वं ॥
॥ ३८ ॥ नैतन्मनस्तवकथासुविकुंठनाथसंप्रीयतेदुरितदुष्टमसाधुतीव्रं ॥ कामातुरंहर्षशोकभयैषणार्तंत
स्मिन्कथंतवगतिंविमृशामिदीनः ॥ ३९ ॥ जिह्वैकतोऽच्युतविकर्षतिमाऽवितृप्ताशिश्नोऽन्यतस्त्वगुदरंश्र
वणंकुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक्क्वचकर्मशक्तिर्बह्व्यःसपत्न्यइवगेहपतिंलुनंति ॥ ४० ॥

दात्वंछन्नोऽभवःअतस्त्रिष्वपियुगेष्वाविर्भावात्सएवंभूतस्त्वंत्रियुगइतिप्रसिद्धः ॥ ३८ ॥ तदेवंभगवतस्तत्त्वंनिरूप्यस्वस्यचताद्विचारायो
ग्यतांनिवेदयन्प्रार्थयते नैतदितित्रिभिः असाधुबहिर्मुखं तीव्रंदुर्धरं हर्षशोकभयैरेषणात्रयेणचार्त्तंदुःखितमपित्वत्कथासुनसंप्रीयतेतस्मि
न्नेवंभूतेमनसिसतिकथंतवतत्त्वंविचारयामि ॥ ३९ ॥ किंचजिह्वाअवितृप्तासतीभोअच्युतमामांयतोमधुरादिरसस्ततआकर्षति उदरंतुक्षु
धासंतप्तंसत्सद्यएवयत्किंचिदाहारमात्रंप्रति चपलादृक्चक्षुः कर्मशक्तिःकर्मेंद्रियाणि लुनंतित्रोटयंति ॥ ४० ॥

नकेवलमहमेकएवैवंकष्टांदशामापन्नः किंतुमहाजनोऽप्येवमेवाक्लिश्यत्यतः सर्वंजनंपालयेतिप्रार्थयते एवमिति भवः संसारएववैतरणी यमद्वारनदीतस्यामन्योऽन्यतोयानिजन्मादीनितेभ्योऽतिभीतं स्वेषांपरेषांचविग्रहेणयथायथंवैरंमैत्रंचयस्य एवंमूढंजनंपश्यंस्त्वं हेपारचरतस्याःपारेस्थितनित्यमुक्त हंतेतिअहोकष्टमित्येवमनुकंप्यअद्यापिपृहिवैतरणीमुत्तार्यपालय ॥ ४१ ॥ एकेनमयाकथंसर्वोजनस्तारणीयइति चेत्तत्राह कोन्विति कोनुतेअत्रसर्वजनोत्तारणेप्रयासोनकोऽपि कुतः अस्यविश्वस्यभवसंभवलोपानामुत्पत्तिस्थितिसंहाराणांहेतोः ततोऽपिकिमेतद्दुष्करमितिभावः उचितं चैतदित्याह मूढेष्विति त्वां चत्वदीयांश्चतारयिष्यामींदुराग्रहंमाकृथाइतिचेत्तत्राह तवयेप्रियजनाभक्तास्ताननुसेवमानानांनोऽस्माकंतेनउत्तरणेनकिं कोऽतिप्रयासोसुरबालकाहरेःकोऽन्वत्रतेऽखिलगुरोभगवन्प्रयासः प्रन्हादइत्थमुपमंत्र्यमिथोनराणामीशे

एवंजनंनिपतितंभववैतरण्यामन्योऽन्यजन्ममरणाशनभीतभीतं ॥ पश्यन्जनंस्वपरविग्रहवैरमैत्रंहंतेति पारचरपिपृहिमूढमद्य ॥४१॥ कोन्वत्रतेऽखिलगुरोभगवन्प्रयासउत्तारणेऽस्यभवसंभवलोपहेतोः॥ मूढेषु वैमहदनुग्रहआर्त्तबंधोकिंतेनतेप्रियजनाननुसेवतांनः ॥४२॥ नैवोद्विजेपरदुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः ॥ शोचेततोविमुखचेतसइंद्रियार्थमायासुखायभरमुद्वहतोविमूढान् ॥ ४३ ॥ प्रायेणदेवमुनयःस्वविमुक्तिकामामौनंचरंतिविजनेनपरार्थनिष्ठाः ॥ नैतान्विहायकृपणान्विमुमुक्षएकोनान्यंत्वदस्यशरणंभ्रमतोऽनुपश्ये ॥ ४४ ॥ यन्मैथुनादिगृहमेधिसुखंहितुच्छंकंडूयनेनकरयोरिवदुःखदुःखं ॥ तृप्यंतिनेहकृपणाबहुदुःखभाजःकंडूतिवन्मनसिजंविषहेतधीरः ॥ ४५ ॥

नसख्यमकरोदपनीयमायामिति ॥ ४२ ॥ वत्सप्रन्हादत्वांतावत्तारयिष्यामितावतैवकृतार्थःस्याःकिमनेनानिर्बंधेनेत्यतआह नैवेति हेपरसर्वोत्तमत्वद्वीर्यगायनमेवमहामृतंतास्मिन्मग्नंचित्तंयस्यसोऽहंभववैतरण्याःनैवोद्विजेकिंतुविमूढान्शोचामि तानेवाह ततोमहामृताद्विमुखंचेतोयेषांप्रत्युतइंद्रियार्थनिमित्तंयन्मायासुखंतदर्थंभरंकुटुंबादिभारमुद्वहतः ॥४३॥ त्वंतावन्मुक्तिंगृहाणतांस्तुतत्त्वज्ञामुनयउपदेक्ष्यंतीतिचेत्तत्राह प्रायेणेति नविमुमुक्षेविमुक्तिंनेच्छामि तर्ह्यन्यंकमापिप्रार्थयमामेवकिमितिनिर्बध्नासीतिचेदतआह त्वत्तोऽन्यमस्यजनस्यशरणंनपश्यामि ॥ ॥४४॥ नन्वेतेस्त्रीसंभोगादिनासुखिनएवनकृपणास्तत्राह यदिति करयोःकंडूयनेनसंघर्षणेनेवदुःखंयस्मिन् तर्हिदुःखत्वादेवततोनिर्विद्यमुच्येरंस्तत्राह कृपणाःकामुकाः बहुदुःखभाजोऽपिइहगृहमेधिसुखेनतृप्यंतिअलमितिनमन्यंते कंडूतिवत्कामस्यदुःसहत्वात् ननुकेचित्कंडूतिमापिसहंतेकामंचेत्यत्राह त्वत्प्रसादात्तुकाश्चिद्धीरएवमनसिजंकामांविषहेतनतुसर्वे अत्रापिकंडूतिवदितिदृष्टांतः ॥ ४५ ॥

ननुमौनादिभिर्मोक्षसाधनैःसुलभैवतेषामपिमुक्तिस्तत्राह मौनेति हेपुरुषअंतर्यामिन्येमौनादयोदशआपवर्ग्याःअपवर्गहेतवःप्रसिद्धाःरहः
विविक्तवासः तेतुप्रायशःअजितेंद्रियाणांइंद्रियभोगाद्यर्थंविक्रीणतांवार्ताःजीवनोपायाभवंति दांभिकानांतुवार्त्ताअपिनभवंतित्रानवादंभस्य
अनियतफलत्वात् ॥ ४६ ॥ त्वज्ज्ञानंभक्तिविनासकामैर्मौनादिभिर्नभवत्येवेत्याह रूपेइतित्रिभिः बीजांकुराविवप्रवाहापन्नेइमेसदसती
कार्यकारणेएवतेरूपेउपलक्षणभूतेवेदेनसृष्टेप्रकाशितेनचान्यत् स्वसमवेतंगौरत्वादिकमिवदेवदत्तादेःकुतःअरूपकस्यप्राकृतरूपादिरहि
तस्य अतःयुक्ताःसंयताएवभक्तियोगेनप्रत्यक्षंत्वामुभयत्रकार्येकारणेचानुगतंपश्यंतिमथनेनदारुषुवान्हिमिव नान्यतःस्यात्तज्ज्ञानमितिशेषः
यद्वाएतदुभयमन्यतःप्रधानपरमाण्वादेर्नस्यात् सऐक्षतेत्यादिश्रुतेः अतस्त्वमेवकारणत्वात्सर्वत्रानुस्यूतइति ॥ ४७ ॥ तदेवाह त्वंवायु

**मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधयआपवर्ग्याः ॥ प्रायःपरंपुरुषतेत्वजितेंद्रियाणां वार्ताभवंत्युतनवाऽत्रतुदांभिकानां॥ ४६ ॥ रूपेइमेसदसतीतववेदसृष्टेबीजांकुराविवनचान्यदरूपकस्य ॥ युक्ताःसमक्षमुभयत्रविचिन्वतेत्वांयोगेनवह्निमिवदारुषुनान्यतःस्यात् ॥ ४७ ॥ त्वंवायुरग्निरवनिर्वियदंबुमात्राःप्राणेंद्रियाणिहृदयंचिदनुग्रहश्च ॥ सर्वंत्वमेवसगुणोविगुणश्चभूमन्नान्यत्त्वदस्त्यपिमनोवचसानिरुक्तं ॥ ४८ ॥ नैतेगुणानगुणिनोमहदादयोयेसर्वेमनःप्रभृतयःसहदेवमर्त्याः॥आद्यंतवंतउरुगायविदंतिहित्वामेवंविमृश्यसुधियोविरमंतिशब्दात् ॥ ४९ ॥**

रिति हृदयंमनः चित्चित्तं अनुग्रहःअहंकारोदेवतावर्गोवा सगुणःस्थूलःविगुणः सूक्ष्मः मनश्चवचश्चमनोवचस्तेननिरुक्तंप्रकाशितंकिम
पित्वत्तोऽन्यन्नास्ति ॥ ४८ ॥ अभक्तास्तुस्वस्मिन्ननुगतमपित्वांनजानंतीत्याह नैतइति नैतेगुणाद्यभिमानिनोदेवाआद्यंतवंतोजडोपाधि
त्वादनाद्यंतंनिरुपाधित्वांनविदंति हियस्मात्सुधियोविद्वांसःएवंविचार्यशब्दादध्ययनादिव्यापारादुपरमंति त्वामेवसमाधिनोपासतइत्यर्थः
तथाचश्रुतिः किमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहइति नानुध्यायाद्बहून्शब्दान्वाचोविग्लापनंहितादिति स्मृतिश्च यदातेमोहक
लिलंबुद्धिर्व्यतितरिष्यति ॥ तदागंतासिनिर्वेदंश्रोतव्यस्यश्रुतस्यचेत्यादि ॥ ४९ ॥ ॥ ॥

उपसंहरति तदिति हेअर्हत्तम नमः स्तुतिकर्मपूजाः प्रणिपातस्तुतिसर्वकर्मार्पणानि कर्मचपरिचर्या चरणयोः स्मृतिश्च कथायांश्रवणंचेत्येवं षडंगयासम्यक्सेवयाविना परमहंसानांगतौप्राप्येत्वयिजनः कथंभक्तिंलभेत यस्मादेवंभक्तिंविनानमोक्षोनचभक्तिः संसेवयाविनाअतः प्राक् प्रार्थितंत्वद्दास्ययोगमेवदेहीतिप्रकरणार्थः ॥ ५० ॥ एतावंतोवर्णितागुणायस्य यतमन्युः उपसंहृतकोपः ॥ ५१ ॥ कामान्पूरयतीतितथा यद्वा पुरुषार्थप्रवाहोऽस्मीत्यर्थः ॥ ५२ ॥ अप्रीणतः अप्रीणयतः तप्तुमपूर्णकामत्वेनशोचितुं ॥ ५३ ॥ प्रीणंतितोषयंति ॥ ५४ ॥ एकांतित्वात्नि

तत्तेऽर्हत्तमनमः स्तुतिकर्मपूजाः कर्मस्मृतिश्चरणयोः श्रवणंकथायां ॥ संसेवयात्वयिविनेतिषडंगयाकिंभ क्तिंजनः परमहंसगतौलभेत ॥ ५० ॥ नारदउवाच एतावद्वर्णितगुणोभक्त्याभक्तेननिर्गुणः ॥ प्रऱ्हादंप्र णतंप्रीतोयतमन्युरभाषत ॥ ५१ ॥ श्रीभगवानुवाच प्रऱ्हादभद्रभद्रंतेप्रीतोऽहंतेसुरोत्तम ॥ वरंवृणीष्वा भिमतंकामपूरोऽस्म्यहंनृणां ॥ ५२ ॥ मामप्रीणतआयुष्मन्दर्शनंदुर्लभंहिमे ॥ दृष्ट्वामांनपुनर्जंतुरात्मानं तप्तुमर्हति ॥ ५३ ॥ प्रीणंतिह्यथमांधीराः सर्वभावेनसाधवः ॥ श्रेयस्कामामहाभागाः सर्वासामाशिषांपतिं ॥ ॥ ५४ ॥ एवंप्रलोभ्यमानोऽपिवरैर्लोकप्रलोभनैः ॥ एकांतित्वाद्भगवतिनैच्छत्तानसुरोत्तमः ॥ ५५ ॥ इति श्री भा० म० सप्तमस्कंधेप्रऱ्हादचरितेभगवत्स्तवोनामनवमोऽध्यायः ॥ ९ ॥ ॥ नारदउवाच भक्तियोगस्य तत्सर्वमंतरायतयाऽर्भकः ॥ मन्यमानोहृषीकेशंस्मयमानउवाचह ॥ १ ॥ प्रऱ्हादउवाच मामांप्रलोभयो त्पत्त्यासक्तंकामेषुतैर्वरैः ॥ तत्संगभीतोनिर्विण्णोमुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥ भृत्यलक्षणजिज्ञासुर्भक्तंका मेष्वचादयत् ॥ भवान्संसारबीजेषुहृदयग्रंथिषुप्रभो ॥ नान्यथातेऽखिलगुरोघटेतकरुणात्मनः ॥ ३ ॥

रुपाधिभक्तत्वात् ॥ ५५ ॥ इतिसप्तमेटीकायांनवमोध्यायः ॥ ९ ॥ दशमेत्वनुगृह्यामुंभक्तमंतार्हितेहरौ ॥ प्रसंगाद्धरिणारुद्रेकृतोऽनुग्रहईर्यते ॥ ॥ १ ॥ तत्सर्वंवरजातं ॥ १ ॥ उत्पत्त्यास्वभावेनैवासक्तंमां तेषांकामानांसंगाद्भीतः ॥ २ ॥ ननुकिमहंभक्तंप्रलोभयामि नहि किंतुवरंवृणीष्वे तिवदतस्तवाभिप्रायोऽन्यएवेत्याह भृत्यलक्षणेति हृदयस्यग्रंथिवद्बंधकेषु अन्यथाअनर्थसाधनेप्रवर्त्तनंनघटेतेत्यर्थः ॥ ३ ॥

कथमेवंभृत्यलक्षणज्ञानंस्यात्तत्राह यइति तेत्वत्तःननुकामनयाऽपिसेव्यसेवकयोःस्वामिभृत्यभावःप्रसिद्धः सत्यं सोपाधिकोऽसौनतुता त्त्विकइत्याह स्वामिन्यात्मनःआशिषोऽपेक्षमाणोनैवभृत्यः भृत्यहेतुकमात्मनःस्वाम्यमिच्छन्योभृत्यायददातिसचनैवस्वामी ॥ ४ ॥ आ वयोस्तुतात्त्विकोऽसावित्याह अहंत्विति अनपाश्रयोनिरभिसंधिः अन्यथाकामाद्यनभिसंधिंविनाअर्थःप्रयोजनंनास्ति ॥ ५ ॥ ननुतथा ऽपिपरमोदारस्यममसंतोषार्थंकिमपिवृणीष्वेतिचेदतआह यदीति कामांकुराणामसंरोहमनुत्पत्तिं भवतःसकाशात् ॥ ६ ॥ ननुकामोत्प

यस्तआशिषआशास्तेनसभृत्यःसवैवणिक्॥ आशासानोनवैभृत्यःस्वामिन्याशिषआत्मनः॥नस्वामीभृत्य तःस्वाम्यमिच्छन्योरातिचाशिषः॥४॥अहंत्वकामस्त्वद्भक्तस्त्वंचस्वाम्यनपाश्रयः॥ नान्यथेहावयोरर्थोराज सेवकयोरिव ॥५॥ यदिरासीशमेकामान्वरांस्त्वंवरदर्षभ ॥ कामानांहृद्यसंरोहंभवतस्तुवृणेवरं ॥६॥ इंद्रि याणिमनःप्राणआत्माधर्मोधृतिर्मतिः॥ह्रीःश्रीस्तेजःस्मृतिःसत्यंयस्यनश्यंतिजन्मना ॥७॥विमुंचतियदा कामान्मानवोमनसिस्थितान्॥तर्ह्येवपुंडरीकाक्षभगवत्त्वायकल्पते ॥ ८॥ नमोभगवतेतुभ्यंपुरुषायमहा त्मने॥हरयेद्भुतसिंहायब्रह्मणेपरमात्मने ॥९॥ नृसिंहउवाच नैकांतिनोमेमयिजात्विहाशिषआशासतेऽ मुत्रचयेभवद्विधाः ॥ अथाऽपिमन्वंतरमेतदत्रदैत्येश्वराणामनुभुंक्ष्वभोगान्॥१०॥ कथामदीयाजुषमाणः प्रियास्त्वमावेश्यमामात्मनिसंतमेकं॥ सर्वेषुभूतेष्वधियज्ञमीशंयजस्वयोगेनचकर्महिन्वन् ॥११॥

त्तौसत्यांकोदोषस्तत्राह इंद्रियादीनियस्यजन्मनानश्यंतीति आत्मादेहः ॥ ७ ॥ कामाभावेगुणमाह विमुंचतीति भगवत्त्वायत्वत्समा नैश्वर्याय तथाचश्रुतिःयदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः ॥ अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुतइति ॥ ८ ॥ निर्दोषान्कामान्दातु मिच्छंतंप्रत्याख्यास्यन्नमस्यति नमइति ॥ ९ ॥ सत्यमेकांतभक्तस्त्वंतथापिमदाज्ञाकरणीयेत्याह नेति मेएकांतिनःकदाचिदपिइहामुत्र चमय्याशिषोनवांच्छंत्येवतथाप्येतन्मन्वंतरमात्रंभोगान्भुंक्ष्व ॥ १० ॥ ननुतर्हिबंधःस्यादित्यतआह कथाइतिद्वाभ्यां सर्वेषुभूतेषुसंतमेक मीशंयज्ञाधिष्ठातारंमामात्मन्यावेश्ययजस्व तर्ह्यनेनैवापिकर्मणाबंधःस्यान्नेत्याह योगेनमय्यर्पणेनकर्महिन्वंस्त्यजन्यजस्व ॥ ११ ॥

किंच भोगेनसुखानुभवेनप्रारब्धंपुण्यंहित्वामुक्तबंधःसन्लोकानुग्रहार्थंकीर्तिंचविस्तार्यमांप्राप्स्यसि कुशलेनपुण्याचरणेनपापंहित्वेतिवि
भीषामात्रं अन्यथातस्यराज्येऽप्रवृत्तेः नतुतस्यप्राचीनंपापमस्ति तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशादितिन्यायात् तत्सुकृत
दुष्कृतेविधुनुतइतिश्रुतेश्च नचेदंप्रारब्धपापाभिप्रायंतस्यभोगेनैवक्षयात् कुशलेनाहित्वेतिवचनानुपपत्तेः नचासावविद्यानितिवाच्यंभगवतै
वकृतार्थत्वस्यानंतरंवक्ष्यमाणत्वात् अतएवयोगेनकर्महिन्वन्नितीदमपिलोकसंग्रहार्थंकर्मणिप्रवर्तितस्यानुद्वेगमात्रायेतिसर्वमनवद्यं ॥१२॥
किंचयइति त्वांचमांचइदंमच्चरित्रंचस्मरन्नेतत्स्तोत्रंयःकीर्तयेत्सोऽपिकर्मबंधाद्विमुच्यते कुतस्तवबंधशंकेत्यर्थः ॥ १३ ॥ ईश्वराज्ञाप्राप्त

भोगेनपुण्यंकुशलेनपापंकलेवरंकालजवेनहित्वा ॥ कीर्तिंविशुद्धांसुरलोकगीतांवितायमामेष्यसिमुक्तबंधः ॥१२॥ यएतत्कीर्तयेन्मह्यंत्वयागीतमिदंनरः ॥ त्वांचमांचस्मरन्लोकेकर्मबंधात्प्रमुच्यते ॥१३॥ प्रह्लाद उवाच वरंवरयएतत्तेवरदेशान्महेश्वर ॥ यदनिंदत्पितामेत्वामविद्वांस्तेजऐश्वरं ॥ १४ ॥ विद्धामर्षाशयः साक्षात्सर्वलोकगुरुंप्रभुं ॥भ्रातृहेतिमृषादृष्टिस्त्वद्भक्तेमयिचाघवान् ॥१५॥ तस्मात्पितामेपूयेतदुरंताद्दुस्तरादघात्॥पूतस्तेपांगसंदृष्टस्तदाकृपणवत्सल ॥ १६ ॥ श्रीभगवानुवाच त्रिःसप्तभिःपितापूतःपितृभिः सहतेऽनघ ॥ यत्साधोऽस्यगृहेजातोभवान्वैकुलपावनः ॥ १७ ॥ यत्रयत्रचमद्भक्ताःप्रशांताःसमदर्शिनः ॥ साधवःसमुदाचारास्तेपूयंत्यपिकीकटाः ॥१८॥ सर्वात्मनानहिंसंतिभूतग्रामेषुकिंचन ॥ उच्चावचेषुदैत्येंद्र मद्भावेनगतस्पृहाः ॥ १९ ॥ ॥ ॥ ॥

कर्माधिकारःसन्पितुर्निष्कृतिंप्रार्थयते त्रिभिः वरंवरणीयमेतदपरंवृणे तेत्वत्तः ॥ १४ ॥ विद्धोऽमर्षेणक्रोधेनआशयोयस्य ॥ १५ ॥ तेअपांगेनसंदृष्टःअतःपूतएवतथाऽपिभोकृपणवत्सलकार्पण्येनप्रार्थयइत्यर्थः ॥ १६ ॥ यद्यपिकश्यपोमरीचिर्ब्रह्माचेतिततःपितुस्त्रयएवपूर्वजास्तथाऽपित्रिःसप्तभिःसहेतिप्राक्कल्पगतपित्रभिप्रायेणोक्तंयद्यस्मात् ॥ १७ ॥ सम्यगुत्तमआचारोयेषांतेकीकटाअपिदेशास्तत्तुल्यावंश्याश्चपूयंतेशुद्धाभवंति ॥ १८ ॥ ननुत्वद्भक्तानामयंमहिमेतिनाचित्रं अहंतुतादृशोनभवामीतिचेत्तत्राह सर्वात्मनेतिद्वाभ्यां मद्भावेनमद्भक्त्या विगतास्पृहायेषां ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

त्वामनुगतायेकेचित्पुरुषास्तेप्येवंलक्षणाःसंतोमद्भक्ताभवंतिअतोभवान्मेभक्तानांसर्वेषांप्रतिरूपधृक्उपमानास्पदं श्रेष्ठःखल्वित्यर्थः ॥ २० ॥ मदंगस्पर्शनेनसर्वशःपूतस्यतेपितुःपापशंकैवनास्ति केवलंपुत्रकृत्यानिप्रेतकार्याणिकुरु ॥ २१ ॥ ब्रह्मवादिभिर्वेदवादिभिः

भवंतिपुरुषालोकेमद्भक्तास्त्वामनुव्रताः ॥ भवान्मेखलुभक्तानांसर्वेषांप्रतिरूपधृक् ॥२०॥ कुरुत्वंप्रेतकार्याणिपितुःपूतस्यसर्वशः ॥ मदंगस्पर्शनेनांगलोकान्यास्यतिसुप्रजाः ॥ २१ ॥ पित्र्यंचस्थानमातिष्ठयथोक्तं ब्रह्मवादिभिः ॥ मय्यावेश्यमनस्तातकुरुकर्माणिमत्परः ॥२२॥ श्रीशुकउवाच प्रल्हादोपितथाचक्रेपितुर्यत्सांपरायिकं ॥ यथाहभगवान्राजन्नभिषिक्तोद्विजोत्तमैः ॥ २३ ॥ प्रसादसुमुखंदृष्ट्वाब्रह्मानरहरिंहरिं ॥ स्तुत्वावाग्भिःपवित्राभिःप्राहदेवादिभिर्वृतः ॥ २४ ॥ ब्रह्मोवाच देवदेवाखिलाध्यक्षभूतभावनपूर्वज ॥ दिष्ट्यातेनिहतःपापोलोकसंतापनोऽसुरः ॥ २५ ॥ योसौलब्धवरोमत्तोनवध्योममसृष्टिभिः ॥ तपोयोगबलोन्नद्धःसमस्तनिगमानहन् ॥२६॥ दिष्ट्याऽस्यतनयःसाधुर्महाभागवतोऽर्भकः ॥ त्वयाविमोचितोमृत्योर्दिष्ट्यात्वांसमितोधुना ॥२७॥ एतद्वपुस्तेभगवन्ध्यायतःप्रयतात्मनः ॥ सर्वतोगोपृसंत्रासान्मृत्योरपिजिघांसतः ॥ २८ ॥ नृसिंहउवाच मैवंवरोऽसुराणांतेप्रदेयःपद्मसंभव ॥ वरःक्रूरनिसर्गाणामहीनाममृतंयथा ॥२९॥ नारदउवाच इत्युक्त्वाभगवान्राजंस्तत्रैवांतर्दधेहरिः ॥ अदृश्यःसर्वभूतानांपूजितःपरमेष्ठिना ॥३०॥ ततःसंपूज्यशिरसाववंदेपरमेष्ठिनं ॥ भवंप्रजापतीन्देवान्प्रल्हादोभगवत्कलाः ॥३१॥ ततःकाव्यादिभिःसार्धंमुनिभिःकमलासनः ॥ दैत्यानांदानवानांचप्रल्हादमकरोत्पतिं ॥३२॥ प्रतिनंद्यततोदेवाःप्रयुज्यपरमाशिषः ॥ स्वधामानिययूराजन्ब्रह्माद्याःप्रतिपूजिताः ॥ ३३ ॥ ॥

उत्क्रमनतिक्रम्यमत्परःसन्कर्माणिकुरु ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ममसृष्टिभिर्मयासृष्टैर्भूतैः समस्तान्निगमान्धर्मानित्यर्थः अहन्हतवान् सत्वयाहतः एतद्दिष्ट्याभद्रं ॥ २६ ॥ एतद्दिष्ट्या समितःसम्यक्प्राप्तः ॥ २७ ॥ सर्वतः संत्रासात्गोपृरक्षकं ॥ २८ ॥ एवंवरस्त्वयानप्रदेयः क्रूरोनिसर्गःस्वभावोयेषां अमृतंक्षीरं ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥

शिशुपालदंतवक्रयोर्द्विषतोः श्रीकृष्णसायुज्यंकथमितियत्पृष्टंतदेवतयोः पूर्वजन्मकथनादिभिरुपपादितमुपसंहरति एवमितिसप्तभिः दितेः पुत्रत्वंप्रापितौविप्रशापेनेत्युत्तरस्यानुषंगः ॥ ३४ ॥ ३५ ॥ तच्चित्तौश्रीरामंचिंतयंतौ ॥ ३६ ॥ करूषजोदंतवक्रः हरौसायुज्यंसमीयतुः ॥ ३७ ॥ कृष्णानिंदादिनापूर्वकृतंचयत्एनः पापंतत्ध्यानेनतदात्मानः संतोजहुः तदात्मत्वेदृष्टांतः कीटः पेशस्कृतोध्यानेनयथातदा



एवंतौपार्षदौविष्णोःपुत्रत्वंप्रापितौदितेः ॥ हृदिस्थितेनहरिणावैरभावेनतौहतौ ॥३४॥ पुनश्चविप्रशापेनराक्षसौतौबभूवतुः ॥ कुंभकर्णदशग्रीवौहतौतौरामविक्रमैः ॥ ३५ ॥ शयानौयुधिनिर्भिन्नहृदयौरामसायकैः ॥ तच्चित्तौजहतुर्देहंयथाप्राक्तनजन्मनि ॥३६॥ ताविहाथपुनर्जातौशिशुपालकरूषजौ॥हरौवैरानुबंधेनपश्यतस्तेसमीयतुः ॥३७॥ एनःपूर्वकृतंयत्तद्राजानःकृष्णवैरिणः ॥ जहुस्त्वंतेतदात्मानःकीटःपेशस्कृतोयथा ॥३८॥ यथायथाभगवतोभक्त्यापरमयाभिदा ॥ नृपाश्चैद्यादयःसात्म्यंहरेस्तच्चिंतयाययुः ॥३९॥ आख्यातंसर्वमेतत्तेयन्मांत्वंपरिपृष्टवान्॥दमघोषसुतादीनांहरेःसात्म्यमपिद्विषां॥४०॥ एषाब्रह्मण्यदेवस्यकृष्णस्यचमहात्मनः॥अवतारकथापुण्यावधोयत्रादिदैत्ययोः ॥४१॥ प्रल्हादस्यानुचरितंमहाभागवतस्यच॥भक्तिर्ज्ञानंविरक्तिश्चयाथात्म्यंचास्यवैहरेः ॥४२॥ सर्गस्थित्यप्ययेशस्यगुणकर्मानुवर्णनं ॥ परावरेषांस्थानानांकालेनव्यत्ययोमहान् ॥४३॥ धर्मोभागवतानांचभगवान्येनगम्यते ॥ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥

त्माभवतीति ॥ ३८ ॥ अभिदाभेददर्शनशून्यया हरेःसात्म्यंसारूप्यं ॥ ३९ ॥ ४० ॥ प्रल्हादचरितार्थमुपसंहरति एषेतिचतुर्भिः अवतारःश्रीनृसिंहरूपस्तस्यकथा आख्यातेतिशेषः ॥ ४१ ॥ प्रल्हादस्यानुचरितमित्यादेःसमाम्नातमितितृतीयेनान्वयः अस्येत्यनेनोक्तंसर्गस्थित्यप्ययानामीशस्यहरेर्याथात्म्यंतत्त्वं ॥ ४२ ॥ अनेनकृतंहरेर्गुणकर्मानुवर्णनंचेत्यर्थः परावरेषांदेवदैत्यादीनांयानिस्थानानि व्यत्ययो विपर्यासः ॥ ४३ ॥ आध्यात्मिकमात्मानात्मविवेकादि ॥ ४४ ॥ ॥ ॥

एतच्छ्रवणादिफलमाह यइतिद्वाभ्यां एतच्छ्रुत्वायःकीर्तयेत् ॥ ४५ ॥ एतत्एतांमृगेंद्रस्यलीलां तामेवाह दैत्येंद्रस्ययूथपानांचवधंयःशु
चिःसन्पठेत पुण्यमनुभावंप्रभावंमातिनिश्चयंवा लोकंवैकुंठं ॥ ४६ ॥ अहोप्रल्हादस्यभाग्यंयेनदेवोदृष्टः वयंतुमंदभाग्याइतिविषीदंतंप्रत्या
ह यूयमितित्रिभिः येषांयुष्माकंगृहान्मुनयोऽभियंतिसर्वतःसमायांति तत्कस्यहेतोः येषुगृहेषुनराकारंगूढंसत्श्रीकृष्णाख्यंपरंब्रह्मसाक्षाद्व
सतीति ॥ ४७ ॥ ननुकृष्णोऽस्माकंमातुलेयःकथंब्रह्मेत्युच्यततत्राह सवाइति सोऽयंब्रह्मैव कथंभूतः महद्भिर्विमृग्यंयत्कैवल्यनिर्वाणसु
खंनिरुपाधिःपरमानंदस्तदनुभूतिरूपोवोयुष्माकंखलुप्रियःसुहृदित्यादिरूपोभवति विधिकृत्आज्ञानुवर्ती ॥ ४८ ॥ ननुपरंब्रह्मचेत्क

यएतत्पुण्यमाख्यानंविष्णोर्वीर्योपबृंहितं ॥ कीर्तयेच्छ्रद्धयाश्रुत्वाकर्मपाशाद्विमुच्यते ॥ ४५ ॥ एतद्यआ
दिपुरुषस्यमृगेंद्रलीलांदैत्येंद्रयूथपवधंप्रयतःपठेत ॥ दैत्यात्मजस्यचसतांप्रवरस्यपुण्यंश्रुत्वाऽनुभावमकु
तोभयमेतिलोकं ॥ ४६ ॥ यूयंनृलोकेबतभूरिभागालोकंपुनानामुनयोऽभियंति ॥ येषांगृहानावसतीति
साक्षाद्गूढंपरंब्रह्ममनुष्यलिंगं ॥ ४७ ॥ सवाअयंब्रह्ममहद्विमृग्यंकैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियःसु
हृद्वःखलुमातुलेयआत्माऽर्हणीयोविधिकृद्गुरुश्च ॥ ४८ ॥ नयस्यसाक्षाद्भवपद्मजादिभीरूपंधियावस्तुत
योपवर्णितं ॥ मौनेनभक्त्योपशमेनपूजितःप्रसीदतामेषससात्वतांपतिः ॥ ४९ ॥ सएषभगवान्राजन्
व्यतनोद्विहतंयशः ॥ पुरारुद्रस्यदेवस्यमयेनानंतमायिना ॥ ५० ॥

थंब्रह्मष्टसहस्रस्त्रीपुरतिः कथंवाधर्माद्याचरणंतस्येत्यतआह नयस्यरूपंतत्त्वंभवादिभिरपि धियास्वबुद्ध्यावस्तुतयाइदमित्थमितिसाक्षान्नो
पवर्णितंसयुष्माकंस्वयमेवप्रसन्नः अस्माकंतुमौनादिसाधनैस्तत्प्रसादःप्रार्थनीयएवेत्याह मौनेनेति सएषसात्त्वतांपतिर्नःप्रसीदतु नहि
प्रल्हादस्यगृहेषुपरंब्रह्मवसति नचतद्दर्शनायमुनयस्तद्गृहानाभियंति नचतस्यमातुलेयादिरूपेणवर्तते नचस्वयमेवप्रसन्नः अतोयूयमेवत
तोपिअस्मत्तोपिभूरिभागाइतिभावः ॥ ४९ ॥ नन्वन्यैर्दुष्करंत्रिपुरभेदादिकंश्रीरुद्रःकृतवान्सएवंभूतईश्वरोऽप्यस्यतत्त्वंनजानातीतिक
थमित्यपेक्षायांतस्याप्येतत्साहाय्यादेवासौप्रभावोनकेवलस्येतिवक्तुमाख्यानमुपाक्षिपाति सएषइति ॥ ५० ॥ ॥

राजायुधिष्ठिरउवाच जगदीशितुर्देवस्यकीर्तिः कस्मिन्कर्मणिमयोहतवान् ॥ ५१ ॥ अनेनश्रीकृष्णेनोपबृंहितैःसंवर्द्धितैः ॥५२॥ हैमी चरौप्याचायसीचेतितिस्रःपुरोनिर्मायतेभ्योददाविति शेषः दुर्लक्ष्यौअपायसंयोगौगमनागमनेयासां दुर्वितर्क्याःपरिच्छदायासु ॥ ५३ ॥ सेनान्यःसेनापतयःपूर्ववैरंस्मरंतः ॥ ५४ ॥ ५५ ॥ अस्त्रमभिमंत्रितंशरंपुरेषुव्यमुंचत ॥ ५६ ॥ ततःशरात् सूर्यमंडलात्मयूखसंदोहाः



राजोवाच कस्मिन्कर्मणिदेवस्यमयोऽहन्जगदीशितुः ॥ यथाचोपचिताकीर्तिःकृष्णेनानेनकथ्यतां ॥५१॥ नारदउवाच निर्जिताअसुरादेवैर्युद्ध्यनेनोपबृंहितैः॥ मायिनांपरमाचार्यंमयंशरणमाययुः ॥ ५२ ॥ सनिर्माय पुरस्तिस्त्रोहैमीरौप्यायसीर्विभुः॥दुर्लक्ष्यापायसंयोगादुर्वितर्क्यपरिच्छदाः ॥५३॥ ताभिस्तेसुरसेनान्योलोकांस्त्रीन्सेश्वरान्नृप ॥ स्मरंतोनाशयांचक्रुःपूर्ववैरमलक्षिताः ॥५४॥ ततस्तेसेश्वरालोकाउपासाद्येश्वरंविभो ॥ त्राहिनस्तावकान्देवविनष्टांस्त्रिपुरालयैः ॥५५॥ अथानुगृह्यभगवान्माभैष्टेतिसुरान्विभुः ॥ शरंधनुषिसंधायपुरेष्वस्त्रंव्यमुंचत ॥५६॥ ततोऽग्निवर्णाइषवउत्पेतुःसूर्यमंडलात् ॥ यथामयूखसंदोहानादृश्यंतपुरोयतः ॥५७॥ तैःस्पृष्टाव्यसवःसर्वेनिपेतुःस्मपुरौकसः ॥ तानानीयमहायोगीमयःकूपरसेऽक्षिपत् ॥५८॥ सिद्धामृतरसस्पृष्टावज्रसारामहौजसः ॥ उत्तस्थुर्मेघदलनावैद्युताइववन्हयः ॥५९॥ विलोक्यभग्नसंकल्पंविमनस्कंवृषध्वजं ॥ तदाऽयंभगवान्विष्णुस्तत्रोपायमकल्पयत् ॥६०॥ वत्सआसीत्तदाब्रह्मास्वयंविष्णुरयंहिगौः ॥ प्रविश्यतिपुरंकालेरसकूपामृतंपपौ ॥ तेऽसुराह्यपिपश्यंतोनन्यषेधन्विमोहिताः ॥ ६१॥ तद्विज्ञायमहायोगीरसपालानिदंजगौ ॥ स्वयंविशोकःशोकार्तान्स्मरन्दैवगतिंचतां ॥ ६२ ॥ देवोसुरोनरोऽन्योवानेश्वरोऽस्तीहकश्चन ॥ आत्मनोऽन्यस्यवादिष्टंदैवेनापोहितुंद्वयोः ॥ ६३ ॥

रश्मिसमूहाइव यतःयेभ्यः ॥ ५७ ॥ कूपरसेस्वयंनिर्मितकूपामृते ॥ ५८ ॥ वज्रसाराःवज्रवदृढांगाः महौजसोमहाबलाः मेघदलनाःमेघभेदिनोविद्युद्रूपावन्हयइव ॥ ५९ ॥ ६० ॥ कालेमध्यान्हे ॥ ६१ ॥ ६२ ॥ आत्मनोवाअन्यस्यवाद्वयोरपिवादैवेनदिष्टमुपकल्पितमपोहितुंपरिहर्तुमिहकश्चिदपीश्वरःसमर्थोनास्ति ॥ ६३ ॥ ॥ ॥ ॥

असौश्रीकृष्णः प्रधानंसंग्रामस्तत्साधनं ॥ ६४ ॥ ६५ ॥ अभिजितिमध्याह्ने ॥ ६६ ॥ विमानशतानिसंकुलानिसंकीर्णानियेषांतेदेवादयः ॥ ६७ ॥ ६८ ॥ आदितआरभ्यस्कंधार्थंनिगमयति एवंविधानीति नृलोकंनराकारमात्मनोविडंबमानस्यअनुकुर्वतः ॥ ६९ ॥ इतिसप्तमेटीकायांदशमोऽध्यायः ॥ १० ॥ एकादशेनृणांधर्माःसाधारण्येनवर्णिताः ॥ विशेषेणचवर्णानांमुख्यामुख्याश्चयोषितां ॥ १ ॥ तदेवंदश

अथासौशक्तिभिःस्वाभिःशंभोःप्राधानिकंव्यधात् ॥ धर्मज्ञानविरक्त्यर्द्धितपोविद्याक्रियादिभिः ॥ ६४ ॥ रथंसूतंध्वजंवाहान्धनुर्वर्मशरादियत् ॥ सन्नद्धोरथमास्थायशरंधनुरुपाददे ॥ ६५ ॥ शरंधनुषिसंधायमुहूर्तेभिजितीश्वरः ॥ ददाहतेनदुर्भेद्याहरोथत्रिपुरोनृप ॥ ६६ ॥ दिविदुंदुभयोनेदुर्विमानशतसंकुलाः ॥ देवर्षिपितृसिद्धेशाजयेतिकुसुमोत्करैः ॥ अवाकिरन्जगुर्हृष्टानन्तृतुश्चाप्सरोगणाः ॥ ६७ ॥ एवंदग्ध्वापुरस्तिस्रोभगवान्पुरहान्नृप ॥ ब्रह्मादिभिःस्तूयमानःस्वधामप्रत्यपद्यत ॥ ६८ ॥ एवंविधान्यस्यहरेःस्वमाययाविडंबमानस्यनृलोकमात्मनः ॥ वीर्याणिगीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरंवदामिकिं ॥ ६९ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेयुधिष्ठिरनारदसंवादेत्रिपुरविजयोनामदशमोऽध्यायः ॥ १० ॥ ॥ श्रीशुकउवाच श्रुत्वेहितंसाधुसभासभाजितंमहत्तमाग्रण्यउरुक्रमात्मनः ॥ युधिष्ठिरोदैत्यपतेर्मुदायुतःपप्रच्छभूयस्तनयंस्वयंभुवः ॥ १ ॥ युधिष्ठिरउवाच भगवन्श्रोतुमिच्छामिनृणांधर्मंसनातनं ॥ वर्णाश्रमाचारयुतंयत्पुमान्विंदतेपरं ॥ २ ॥ भवान्प्रजापतेःसाक्षादात्मजःपरमेष्ठिनः ॥ सुतानांसंमतोब्रह्मंस्तपोयोगसमाधिभिः ॥ ३ ॥ नारायणपराविप्राधर्मंगुह्यंपरंविदुः ॥ करुणाःसाधवःशांतास्त्वद्विधानतथाऽपरे ॥ ४ ॥

भिर्ज्ञानभक्तियोगावुदीरितौ ॥ अथपंचभिरध्यायैःकर्मयोगोऽनुवर्ण्यते ॥ २ ॥ दैत्यपतेःप्रल्हादस्य साधूनांसभासुसभाजितंसत्कृतमीहितंचरितंश्रुत्वापुनर्नारदंपप्रच्छ कथंभूतस्येहितं महत्तमानामग्रण्यःमुख्यस्य तत्रहेतुः उरुक्रमेआत्मामनोयस्य ॥ १ ॥ श्रवणेच्छायांहेतुः यत् यतोधर्मात् अनुष्ठितात् परंज्ञानंभक्तिंचविंदति ॥ २ ॥ ३ ॥ ननुस्मृतिकारैर्धर्मउक्तएवतत्राह नारायणपराइति ॥ ४ ॥

अजायश्रीनारायणाय तस्यैवमुखाच्छ्रुतं ॥ ५ ॥ तन्मुखादात्मनःश्रवणंसंभावयन्विशिनष्टि यइति ॥६॥ प्रथमंतावद्धर्मेप्रमाणमाहधर्मेति धर्मस्यमूलंप्रमाणं स्मृतंचस्मृतिः तद्विदांवेदविदां येनचात्मामनःप्रसीदतितुष्यतिच तथाचयाज्ञवल्क्यः श्रुतिःस्मृतिःसदाचारःस्वस्य चप्रियमात्मनः ॥ सम्यक्संकल्पजःकामोधर्ममूलमिदंस्मृतमिति मनुश्च वेदोऽखिलोधर्ममूलंस्मृतिशीलेचतद्विदां ॥ आचारश्चैवसाधूनामात्मनस्तुष्टिरेवचेति ॥ ७ ॥ तत्रतावन्नरमात्रसाधारणधर्ममाह सत्यमितिपंचभिः तपएकादश्युपवासादि ईक्षायुक्तायुक्तविवेकःशमो

नारदउवाच नत्वाभगवतेऽजायलोकानांधर्महेतवे ॥ वक्ष्येसनातनंधर्मंनारायणमुखाच्छ्रुतं ॥ ५ ॥ योऽवतीर्यात्मनोंशेनदाक्षायण्यांतुधर्मतः ॥ लोकानांस्वस्तयेऽध्यास्तेतपोबदरिकाश्रमे ॥६॥ धर्ममूलंहिभगवान्सर्वदेवमयोहरिः ॥ स्मृतंचतद्विदांराजन्येनचात्माप्रसदिति ॥ ७ ॥ सत्यंदयातपःशौचंतितिक्षेक्षाशमोदमः ॥ अहिंसाब्रह्मचर्यंचत्यागःस्वाध्यायआर्जवं ॥ ८ ॥ संतोषःसमदृक्सेवाग्राम्येहोपरमःशनैः ॥ नृणांविपर्ययेहेक्षामौनमात्मविमर्शनं ॥ ९ ॥ अन्नाद्यादेःसंविभागोभूतेभ्यश्चयथाऽर्हतः ॥ तेष्वात्मदेवताबुद्धिःसुतरांनृषुपांडव ॥ १० ॥ श्रवणंकीर्तनंचास्यस्मरणंमहतांगतेः ॥ सेवेज्याऽवनतिर्दास्यंसख्यमात्मसमर्पणं ॥ ॥ ११ ॥ नृणामयंपरोधर्मःसर्वेषांसमुदाहृतः ॥ त्रिंशल्लक्षणवान्राजन्सर्वात्मायेनतुष्यति ॥ १२ ॥

मनसःसंयमः दमोबाह्येंद्रियाणां त्यागोदानं स्वाध्यायोयथोचितजपः ॥ ८ ॥ संतोषोदैवलब्धेनालंबुद्धिः समदृशांमहतांसेवा ग्राम्येहोपरमःप्रवृत्तकर्मभ्योनिवृत्तिः विपर्ययेहेक्षानिष्फलाक्रियाणामीक्षणं मौनंवृथालापनिवृत्तिः आत्मविमर्शनं देहादिव्यतिरिक्तात्मानुसंधानं ॥ ॥ ९ ॥ आत्मेतिदेवतेतिचबुद्धिः ॥ १० ॥ अस्यश्रीकृष्णस्यश्रवणादयोनव इज्याअर्चनं ॥ ११ ॥ एवंत्रिंशल्लक्षणवान् ॥ १२ ॥

इदानींवर्णधर्मान्वक्तुंद्विजानांलक्षणमाह संस्कारामंत्रवंतोगर्भाधानादयोयस्मिन्नविच्छिन्नाःसद्विजः तर्हिशूद्रस्यापिसंस्काराविच्छेदेसति द्विजत्वंस्यात्तत्राह अजोब्रह्मायमेवंभूतसंस्कारयुक्तंजगादसद्विजः शूद्रंतुनमंत्रवत्संस्कारयुक्तंजगादनचोपनयनवंतमतोनासौद्विजः तथा चस्मृतिः विवाहमात्रसंस्कारंशूद्रोऽपिलभतांसदा ॥ नकेनचित्समसृजच्छंदसातंप्रजापतिरिति श्रुतिश्च गायत्र्याब्राह्मणमसृजत्त्रिष्टुभा राजन्यं जगत्यावैश्यं नकेनचिच्छूद्रमिति अतोविवाहव्यतिरिक्तसंस्कारस्यानावश्यकत्वादुपनयनस्यतुसर्वथानिषेधान्नतस्याद्विजत्वमित्य र्थः सद्विजोवैदिकादयइतिपाठे वैदिकादयइतिगर्भाधानादयइत्यर्थः त्रैवर्णिकानामावश्यकान्धर्मानाह इज्येति जन्मनाविशुद्धेनकुलेनक र्मणाचआचारेणअवदातानांशुद्धानांदुष्कुलानांदुराचाराणांचनैतानिविहितानीत्यर्थः ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्चशूद्रस्यतुवर्णधर्मा एव आश्रमभेदकृतविशेषाभावात् ॥ १३ ॥ ब्राह्मणादीनांचतुर्णामपिवृत्तिरूपान्धर्मानाह विप्रस्येतिसार्द्धैस्त्रिभिः विप्रस्यषट्कर्माणिवि

संस्कारायत्राविच्छिन्नाःसद्विजोऽजोजगादयं ॥ इज्याऽध्ययनदानानिविहितानिद्विजन्मनां ॥ जन्मकर्माव दातानांक्रियाश्चाश्रमचोदिताः ॥ १३ ॥ विप्रस्याध्ययनादीनिषडन्यस्याप्रतिग्रहः ॥ राज्ञोवृत्तिःप्रजागोप्तु रविप्राद्वाकरादिभिः ॥ १४॥ वैश्यस्तुवार्तावृत्तिश्चनित्यंब्रह्मकुलानुगः ॥ शूद्रस्यद्विजशुश्रूषावृत्तिश्चस्वामि नोभवेत् ॥ १५ ॥ वार्ताविचित्राशालीनयायावरशिलोंच्छनं ॥ विप्रवृत्तिश्चतुर्द्धेयंश्रेयसीचोत्तरोत्तरा ॥१६॥

हितानीत्यनुषंगः तत्रत्वध्यापनंयाजनंप्रतिग्रहश्चजीविका यथाहमनुः षण्णांतुकर्मणामस्यत्रीणिकर्माणिजीविकायाजनाध्यापनेचैवावि शुद्धाच्चप्रतिग्रहइति अन्यस्यंक्षत्रियस्यअप्रतिग्रहइतिप्रतिग्रहातिरिक्तंयाजनमध्यापनंचापद्यनुजानाति वक्ष्यतिचानंतरमेव ऋतेराजन्यमिति श्रूयतेचअश्वपतिकैकयप्रभृतीनांक्षत्रियाणामुपदेष्टृत्वादि प्रजापालनेऽधिकृतस्यक्षत्रियस्यवृत्त्यंतरमाहराज्ञइति आदिशब्देनदंडशुल्कादि ॥१४॥ वार्ताकृषिवाणिज्यादिलक्षणावृत्तिर्यस्य शूद्रस्याद्विजानांशुश्रूषाविहिता स्वामिनोद्विजस्यतुशुश्रूषावृत्तिश्चभवेत् ॥ १५॥ विप्रस्यमुख्यवृ त्तिः कल्पभेदेनयुगभेदेनवृत्त्यंतराण्याह वार्तेति वार्ताविचित्राकृष्यादिरूपा शालीनंधाष्टर्यंविनैवप्राप्तमयाचितं यायावरंप्रत्यहंधान्ययाच्ञा शि लंशालिक्षेत्रादौस्वामित्यक्तकणिशोपादानं उंच्छनमापणादिपतितकणोपादानंशिलोंच्छनद्वयमेकीकृत्यचतुर्द्धेत्युक्तं श्रेयसीउत्तमा ॥१६॥

वृत्तिष्वेवव्यवस्थांदर्शयन्नापद्वृत्तीराह जघन्योर्नीचः उत्तमामध्यापनादिरूपामृतेराजन्यं क्षत्रियस्तुप्रतिग्रहादन्यांभजेत् ॥ १७ ॥ चतु
र्विधांपूर्वोक्तांविप्रवृत्तिमितरेषामपिदर्शयन्नाह ऋतामृताभ्यामिति ॥ १८ ॥ श्लोकांतरेणश्लोकंव्याचष्टे ऋतमिति ॥ १९ ॥ तयोस्तद्व
र्जनेहेतुमाह सर्ववेदमयइति ॥ २० ॥ वर्णानामभिव्यंजकरूपान्धर्मानाह शमइतिचतुर्भिः अच्युतात्मत्वंश्रीविष्णुपरत्वंसर्वेषां ॥ २१ ॥
शौर्यंयुद्धोत्साहः वीर्यंप्रभावः तेजःप्रागल्भ्यं त्यागोदानं आत्मनोमनसोजयः ॥ २२ ॥ २३ ॥ अमंत्रयज्ञःनमस्कारेणैवपंचयज्ञानुष्ठानं

जघन्योनोत्तमांवृत्तिमनापदिभजेन्नरः ॥ ऋतेराजन्यमापत्सुसर्वेषामपिसर्वशः ॥ १७ ॥ ऋतामृताभ्यां
जीवेतमृतेनप्रमृतेनवा ॥ सत्यानृताभ्यांजीवेतनश्ववृत्त्याकथंचन ॥ १८ ॥ ऋतमुंछशिलंप्रोक्तममृतंय
दयाचितं ॥ मृतंतुनित्ययाच्ञास्यात्प्रमृतंकर्षणंस्मृतं ॥ १९ ॥ सत्यानृतंतुवाणिज्यंश्ववृत्तिर्नीचसेवनं ॥ व
र्जयेत्तांसदाविप्रोराजन्यश्चजुगुप्सितां ॥ सर्ववेदमयोविप्रःसर्वदेवमयोनृपः ॥ २० ॥ शमोदमस्तपःशौ
चंसंतोषःक्षांतिरार्जवं ॥ ज्ञानंदयाऽच्युतात्मत्वंसत्यंचब्रह्मलक्षणं ॥ २१ ॥ शौर्यंवीर्यंधृतिस्तेजस्त्यागआत्म
जयःक्षमा ॥ ब्रह्मण्यताप्रसादश्चरक्षाचक्षत्रलक्षणं ॥ २२ ॥ देवगुर्वच्युतेभक्तिस्त्रिवर्गपरिपोषणं ॥ आस्ति
क्यमुद्यमोनित्यंनैपुणंवैश्यलक्षणं ॥ २३ ॥ शूद्रस्यसंनतिःशौचंसेवास्वामिन्यमायया ॥ अमंत्रयज्ञोह्यस्ते
यंसत्यंगोविप्ररक्षणं ॥ २४ ॥ स्त्रीणांचपतिदेवानांतच्छुश्रूषाऽनुकूलता ॥ तद्बंधुष्वनुवृत्तिश्चनित्यंतद्व्रतधा
रणं ॥ २५ ॥ संमार्जनोपलेपाभ्यांगृहमंडलवर्तनैः ॥ स्वयंचमंडितानित्यंपरिमृष्टपरिच्छदा ॥ २६ ॥

तथाचयाज्ञवल्क्यः नमस्कारेणमंत्रेणपंचयज्ञान्नहापयेत् ॥ आमान्नेनधृतेनैवपक्वान्नंतुविवर्जयेदिति ॥ २४ ॥ स्त्रीधर्मानाह स्त्रीणामिति
पंचभिः पतिरेवदेवोयासां तस्यपत्युरेवशुश्रूषापादसंवाहनादिभिः तदनुकूलताचहिताचरणं तस्ययद्व्रतंनियमस्तस्यधारणमाचरणं एत
च्चतुष्टयंपतिव्रतानांलक्षणंधर्मश्च ॥ २५ ॥ किंचसंमार्जनोपलेपाभ्यामित्यादेःपतिंभजेदित्युत्तरेणान्वयः परिमृष्टाउद्वर्तनादिनानिर्मली
कृताःपरिच्छदागृहोपकरणानियया ॥ २६ ॥ ॥ ॥ ॥ ॥

॥ २७ ॥ किंचसंतुष्टायथालाभेन तावन्मात्रभोगेऽप्यलोलुपा दक्षाअनलसा प्रियासत्याचवाग्यस्याः सर्वत्रापिअप्रमत्ताअवहिता अपतितंमहापातकशून्यं यथाहयाज्ञवल्क्यः आशुद्धेःसंप्रतीक्ष्योहिमहापातकदूषितइति ॥ २८ ॥ तत्परासतीभजेत् श्रीर्हरिमिव हर्यात्मनापत्यासह ॥ २९ ॥ प्रतिलोमजानुलोमजानांवृत्तिमाह वृत्तिरिति तत्तत्कुलकृताकुलपरंपराप्राप्ता परंपराप्राप्तमपिचौर्यहिंसादिकंचप्रतिषेधाति अचौराणामपापानांचेति तत्तत्प्रदर्शनार्थंकांश्चित्प्रतिलोमजविशेषानाह अंत्यजेति रजकश्चर्मकारश्चनटोबुरुडएवच ॥ कैवर्त्तमेदभि

कामैरुच्चावचैःसाध्वीप्रश्रयेणदमेनच ॥ वाक्यैःसत्यैःप्रियैःप्रेम्णाकालेकालेभजेत्पतिं ॥ २७ ॥ संतुष्टाऽलोलुपादक्षाधर्मज्ञाप्रियसत्यवाक् ॥ अप्रमत्ताशुचिःस्निग्धापतिंत्वपतितंभजेत् ॥२८॥ यापतिंहरिभावेनभजेच्छ्रीरिवतत्परा ॥ हर्यात्मनाहरेर्लोकेपत्याश्रीरिवमोदते ॥२९॥ वृत्तिःसंकरजातीनांतत्तत्कुलकृताभवेत् ॥ अचौराणामपापानामंत्यजांतेऽवसायिनां ॥ ३० ॥ प्रायःस्वभावविहितोनृणांधर्मोयुगेयुगे॥ वेददृग्भिःस्मृतोराजन्प्रेत्यचेहचशर्मकृत् ॥३१॥ वृत्त्यास्वभावकृतयावर्तमानःस्वकर्मकृत्॥हित्वास्वभावजंकर्मशनैर्निर्गुणतामियात् ॥३२॥ उप्यमानंबहुक्षेत्रंस्वयंनिर्वीर्यतामियात् ॥ नकल्पतेपुनःसूत्याउप्तंबीजंचनश्यति ॥ ३३ ॥

ल्लाश्चसप्तैतेचांत्यजाःस्मृताः ॥ अंतेवसायिनस्तुचांडालपुल्कसमातंगादयस्तेषांपरंपराप्राप्तैववस्त्रनिर्णेजनादिवृत्तिरित्यर्थः ॥ ३० ॥ श्रेष्ठादपिपरधर्मान्नीचोऽपिस्वधर्मएवश्रेयानित्याह प्रायइति स्वभावेनसत्वादिप्रकृत्याविहितोधर्मःशर्मकृत्सुखहेतुःस्मृतः कैः वेदेएवदृक्चक्षुर्येषांतैः भगवताचोक्तं श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितादिति ॥ ३१ ॥ ननुस्वाभाविकस्यकर्मणोबंधहेतुत्वात्कथंसुखहेतुत्वंतत्राह वृत्त्येति ॥ ३२ ॥ ननुकाम्यानिकर्माणिकुर्वतस्तत्फलभोगपरस्यकथंनैर्गुण्यंस्यात् तदुक्तंप्रल्हादेन औपस्थ्यजैह्व्यंबहुमन्यमानःकथंविरज्येतदुरंतमोहइत्यादि तत्राधिकारिभेदेनव्यवस्थांसदृष्टांतामाह उप्यमानमितिद्वाभ्यां पुनःसूत्यैसस्यप्रसवाय ॥ ३३ ॥

कामाआशेरतेवासनारूपेणयस्मिंस्तत् अयंभावः उत्कटवासनाविष्टस्यसहसैवकामत्यागासंभवाद्वेदोक्तनियमेनबहुशःकामान्भुंजानस्यै
वनित्यनैमित्तिकैर्विशुद्धचेतसस्तद्दोषदर्शनेनययातिसौभरिप्रमुखानामिवशनैर्विरागोभवति यथासवीर्यंक्षेत्रंशनैर्निर्वीर्यंभवति यथाचप्रज्व
लितोऽग्निर्नघृताबिंदुभिःशाम्यतिकिंतुमहतातुघृतपूरेणशाम्यत्येवतद्वत् प्रन्हादकृतस्तुतौ कौमारएवनिवृत्युपदेशोमंदवासनानामधिकारेण
तदुक्तंतत्रैव बालानदूषितधियोद्वंद्वारामेरितेहितैरिति अतः सर्वमनवद्यं ॥ ३४ ॥ शमादिभिरेवब्राह्मणादिव्यवहारोमुख्योनजातिमात्रा
दित्याह यस्येति यत्यदिअन्यत्रवर्णांतरेपिदृश्येतत तद्वर्णांतरंतेनैवलक्षणनिमित्तेनैवविनिर्दिशेत् नतज्जातिनिमित्तेनेत्यर्थः ॥ ३५ ॥ इति

एवंकामाशयंचित्तंकामानामतिसेवया ॥ विरज्येतयथाराजन्नाग्निवत्कामबिंदुभिः ॥ ३४ ॥ यस्ययल्लक्षणं
प्रोक्तंपुंसोवर्णाभिव्यंजकं ॥ यदन्यत्रापिदृश्येततत्तेनैवविनिर्दिशेत् ॥ ३५ ॥ इतिश्रीभा०म०स० युधि
ष्ठिरनारदसंवादेसदाचारनिर्णयोनामैकादशोऽध्यायः ॥ ११ ॥ ॥ नारदउवाच ब्रह्मचारीगुरु
कुलेवसन्दांतोगुरोर्हितं ॥ आचरन्दासवन्नीचोगुरौसुदृढसौहृदः ॥ १ ॥ सायंप्रातरुपासीतगुर्वग्न्यर्कसु
रोत्तमान् ॥ उभेसंध्येचयतवाग्जपन्ब्रह्मसमाहितः ॥ २ ॥ छंदांस्यधीयीतगुरोराहूतश्चेत्सुयंत्रितः ॥ उ
पक्रमेऽवसानेचचरणौशिरसानमेत् ॥ ३ ॥ मेखलाजिनवासांसिजटादंडकमंडलून् ॥ बिभृयादुपवीतं
चदर्भपाणिर्यथोदितं ॥ ४ ॥ सायंप्रातश्चरेद्भैक्षंगुरवेतन्निवेदयेत् ॥ भुंजीतयद्यनुज्ञातोनोचेदुपसेत्क्वचित्
॥ ५ ॥ सुशीलोमितभुग्दक्षःश्रद्दधानोजितेंद्रियः ॥ यावदर्थंव्यवहरेत्स्त्रीषुस्त्रीनिर्जितेषुच ॥ ६ ॥

सप्तमेटीकायामेकादशोऽध्यायः ॥ ११ ॥ ॥ द्वादशेवर्ण्यंतेधर्माब्रह्मचारिवनस्थयोः ॥ चतुर्णामाश्रमाणांचसाधारण्येनकश्चन
॥ १ ॥ वर्णादीनांधर्माउक्ताइदानीमाश्रमधर्माउच्यंते तत्रास्मिन्द्वादशेऽध्यायेब्रह्मचारिवानप्रस्थयोरसाधारणांश्चतुर्णांसाधारणाश्चोच्यंते
त्रयोदशेयतेर्धर्माः चतुर्दशेगृहस्थस्य पंचदशेसर्वधर्मसारसंग्रहः ब्रह्मचारीगुरुकुलेवसन्गुर्वादीनुपासीतेत्युत्तरेणान्वयः ॥ १ ॥ तानाह
सायमिति ब्रह्मगायत्रींजपन्संध्यात्रयमुपासीत उभेसंध्येतुयतवाक् सायंप्रातःसंध्याकालनिमित्तंमौनंकुर्यादित्यर्थः ॥ २ ॥ उपक्रमेआ
दौअवसानेअंतेगुरोश्चरणौनमेत् ॥ ३ ॥ यथोदितमिति पालाशोदंडोब्राह्मणस्येत्यादिनियममनतिक्रम्य जटाधारणंतुकेशप्रसाधनाभाव
मात्रं ॥ ४ ॥ ५ ॥ यावदर्थंयथोपयोगमेवभिक्षाग्रहणपर्यंतं ॥ ६ ॥ ॥ ॥

बृहद्व्रतः ब्रह्मचर्यवान् गृहस्थव्यतिरिक्तः सर्वोऽपिप्रमदागाथांवर्जयेत् तत्रहेतुः इंद्रियाणीति इंद्रियाणिबलवंति संयतस्यापिमनोहरंतीति ॥ ७ ॥ ८ ॥ नकारयेदित्यत्रहेतुः नन्विति रहः एकांते अन्यदाकेशप्रसाधनादिव्यतिरिक्तावसरे अनेकांतावसरेवा यावदर्थंतदुक्तंकुर्यात् ॥ ९ ॥ ननुमिथ्यात्वादतिकश्मलत्वाच्चस्वयंत्यक्तप्रायंस्त्र्यादि जह्यादितिकोऽयमतिनिर्बंधस्तत्राह कल्पयित्वेति आत्मनास्वरूपसाक्षात्कारेणइदंदेहेंद्रियादिआभासमात्रंकल्पयित्वानिश्चित्ययावदसौजीवईश्वरः स्वतंत्रोनभवेत्तावद्द्वैतमयंपुमानियंस्त्रीत्यादिभेदोनविरमेत् ततः किमतआह ततोहिद्वैतात् विपर्ययोगुणाध्यासेनभोग्यताबुद्धिः अतोजह्यादेवेत्यर्थः ॥ १० ॥ एतत्सर्वंसुशीलइत्याद्युक्तंगृहस्थस्यविशे

वर्जयेत्प्रमदागाथामगृहस्थोबृहद्व्रतः॥ इंद्रियाणिप्रमाथीनिहरंतिप्रसभंमनः॥७॥ केशप्रसाधनोन्मर्दस्नपनाभ्यंजनादिकं॥ गुरुस्त्रीभिर्युवतिभिःकारयेन्नात्मनोयुवा ॥८॥ नन्वग्निःप्रमदानामघृतकुंभमयःपुमान् ॥ सुतामपिरहोजह्यादन्यदायावदर्थकृत्॥९॥ कल्पयित्वात्मनायावदाभासमिदमीश्वरः ॥ द्वैतंतावन्नविरमेत्ततोह्यस्यविपर्ययः॥१०॥ एतत्सर्वंगृहस्थस्यसमाम्नातंयतेरपि ॥ गुरुवृत्तिर्विकल्पेनगृहस्थस्यर्तुगामिनः॥ ॥११॥ अंजनाभ्यंजनोन्मर्दस्त्र्यवलेखामिषंमधु ॥ स्रग्गंधलेपालंकारांस्त्यजेयुर्येधृतव्रताः ॥ १२ ॥ उषित्वैवंगुरुकुलेद्विजोऽधीत्यावबुध्यच ॥ त्रयींसांगोपनिषदंयावदर्थंयथाबलं ॥ १३ ॥ दत्वावरमनुज्ञातोगुरोःकामंयदीश्वरः॥ गृहंवनंवाप्रविशेत्प्रव्रजेत्तत्रवावसेत् ॥१४॥ अग्नौगुरावात्मनिचसर्वभूतेष्वधोक्षजं ॥ भूतैःस्वधामभिःपश्येदप्रविष्टंप्रविष्टवत्॥१५॥ एवंविधोब्रह्मचारीवानप्रस्थोयतिर्गृही॥ चरन्विदितविज्ञानःपरंब्रह्माधिगच्छति ॥१६॥

षमाह गुरुवृत्तिरिति ॥ ११ ॥ अंजनादीनामामिषांतानांद्वंद्वैक्यं अंजनंशरीरस्य अभ्यंजनंशिरसः स्त्रियंच अवलेखांचचित्रकर्मस्त्रीणांकुड्यादौलेखनंवातन्निरीक्षणंवा अत्राभ्यंगादिस्वरूपतोनिषिध्यते पूर्वंतुकथंचिदापादिप्राप्तमपिस्त्रीकर्तृकंनिषिद्धमितिभेदः ॥ १२ ॥ अंगैःशिक्षादिभिरुपनिषद्भिश्चसहितांवेदत्रयीमधीत्यअवबुध्यचतदर्थंचविचार्य यावदर्थंस्वाधिकारानुसारेण ॥ १३ ॥ यदीश्वरःशक्तस्तर्हिगुरोःकाममपेक्षितंवरंदत्वायथाऽधिकारंगृहस्थाद्याश्रमंस्वीकुर्यात् प्रव्रजेतवातत्रैववावसेत् नैष्ठिकःस्यादित्यर्थः ॥ १४ ॥ स्वधामभिःस्वाश्रयैर्भूतैर्जीवैःसहतन्नियंतृतया ॥ १५ ॥ चरन् एवमाचरन् विदितंविज्ञानंविज्ञेयंयेनसः ॥ १६ ॥

ऋषिलोकंमहर्लोकं ॥ १७ ॥ अकृष्टमकृष्टपच्यमश्नीयात् अकालतःपाककालात्पूर्वमेवनिष्पन्नमित्यर्थः अर्कपक्वंफलादि अग्निपक्वम
न्नादि आमंवाआहरेत्अश्नीयात् ॥ १८ ॥ वन्यैर्नीवारादिभिश्चरुपुरोडाशान् कालनोदितान्नित्यान् पुराणंपूर्वसंचितं ॥ १९ ॥ हि
मादीन्सहतइतितथा ॥ २० ॥ केशादीन्मलंचाप्रक्षालनेनधारयन् कमंडल्वादींश्चदधत् धारयेदित्यर्थः ॥ २१ ॥ कृच्छ्रतस्तपःक्लेशाद्य
थाबुद्धिर्ननश्येत्तथाचरेत् ॥ २२ ॥ द्वादशाब्दाद्यनंतरमापियादिधर्मानुष्ठानेशक्तस्तर्हिवनएववसेत् यदितुज्ञानाभ्यासेयोग्यस्तर्हिसंन्यसेदि
त्युत्तराध्यायेवक्ष्यति तदुभयरहितस्यतुयत्कृत्यंतदाह यदाअकल्पोऽसमर्थःआन्वीक्षिक्यांज्ञानाभ्यासे ॥ २३ ॥ अनशनादिकरिष्यतः

वानप्रस्थस्यवक्ष्यामिनियमान्मुनिसंमतान् ॥ यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहांजसा ॥ १७ ॥ नकृष्टप
च्यमश्नीयादकृष्टंचाप्यकालतः ॥ अग्निपक्वमथामंवाअर्कपक्वमुताहरेत् ॥ १८ ॥ वन्यैश्चरुपुरोडाशान्निर्व
पेत्कालनोदितान् ॥ लब्धेनवेनवेऽन्नाद्येपुराणंतुपरित्यजेत्॥१९॥ अग्न्यर्थमेवशरणमुटजंवाद्रिकंदरां ॥श्र
येतहिमवाय्वग्निवर्षार्कातपषाट्स्वयं ॥२०॥ केशरोमनखश्मश्रुमलानिजटिलोदधत्॥ कमंडल्वजिनेदंडव
ल्कलाग्निपरिच्छदान् ॥२१॥ चरेद्वनेद्वादशाब्दानष्टौवाचतुरोमुनिः ॥ द्वावेकंवायथाबुद्धिर्नविपद्येतकृच्छ्रतः
॥ २२॥ यदाऽकल्पःस्वक्रियायांव्याधिभिर्जरयाऽथवा॥आन्वीक्षिक्यांवाविद्यायांकुर्यादनशनादिकं॥२३॥
आत्मन्यग्नीन्समारोप्यसंन्यस्याहंममात्मतां ॥ कारणेषुन्यसेत्सम्यक्संघातंतुयथार्हतः ॥ २४ ॥ खेखा
निवायौनिःश्वासांस्तेजस्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानिक्षितौशेषंयथोद्भवं ॥ २५ ॥ वाच
मग्नौसवक्तव्यामिंद्रेशिल्पंकरावपि ॥ पदानिगत्यावयसिरत्योपस्थंप्रजापतौ ॥ २६ ॥ ॥

पूर्वकृत्यमाह आत्मनीत्यादियावत्समाप्ति यथाऽर्हतःयथायोग्यंस्वकारणेष्वाकाशादिषुसंघातंदेहंन्यसेत्प्रविलापयेत् ॥ २४ ॥ तदेव
विभज्यदर्शयति खेआकाशेखानिदेहगताच्छिद्राणि आत्मवान्धीमान् शेषमस्थिमांसादिकाठिनांशं ॥ २५ ॥ एवंस्थूलशरीरस्यलय
मुत्क्वालिंगशरीररूपस्याध्यात्मादित्रयस्यलयमाह वाचमित्यादिना तत्रयद्यपियथोद्भवंलयस्ययुक्तत्वादध्यात्मादीनांस्वस्वकारणेषुराजसा
हंकारादिषुलयोवाच्यः तथापीहतेषांलयभावनेयमद्वितीयात्मप्रतिपत्तिपरेतियथाकथंचिल्लयेभाव्येदेवतानांप्रवर्तकत्वेनप्रधान्यादिंद्रियत
द्विषययोर्देवतासुलयःकथ्यते वक्तव्यसहितांवाचमग्नौन्यसेत् एवंसर्वत्र पदानिपादौ वयसिविष्णौ ॥ २६ ॥ ॥

सनादेनशब्देनसह अध्यात्मनिवायौ अध्यात्मविदितिपाठेवायाविति ज्ञातव्यं ॥ २७ ॥ ज्योतिषिआदित्येरूपाणि रसगंधयोस्त्वंद्रियाद्याकर्ष
कत्वेनप्राधान्यविवक्षयादेवतासहितस्याविषयेलयमाह प्रचेतसासहजिव्हांरसनमप्सुरसरूपासु घ्राणशब्देनाश्विनोरप्युपलक्षणं आश्विभ्यांस
हघ्राणंघ्रेयैर्गंधैरुपलक्षितायांक्षिताविर्त्यथः ॥२८॥ परेकवौब्रह्मणि अध्यात्मनाअहंकारेण अध्यात्मतामितिपाठे कर्माण्यहंकारंचेत्यर्थः कथंभू
तेरुद्रे यद्यस्मादहंममतापूर्विकाक्रियाभवातितस्मिन् सत्वेनचेतनया गुणैर्गुणकार्यैःप्रागवशिष्टैर्देवैःसह यद्वा सत्वादिभिर्गुणैर्हेतुभूतैःवैकारिकं
भोक्तृत्वादिविकारवंतंक्षेत्रज्ञंपरेनिर्विकारेब्रह्मणि॥२९॥ ननुविकारवतःकथंपरेअविकारेलयःस्यात् विकारहेतूनांसर्वोपाधीनांलयद्वारेणेत्याह

मृत्यौपायुंविसर्गंचयथास्थानंविनिर्दिशेत् ॥ दिक्षुश्रोत्रंसनादेनस्पर्शमध्यात्मनित्वचं ॥२७॥ रूपाणिच
क्षुषाराजन्ज्योतिष्यभिनिवेशयेत् ॥ अप्सुप्रचेतसाजिह्वांघ्रेयैर्घ्राणंक्षितौन्यसेत् ॥२८॥ मनोमनोरथैश्चं
द्रेबुद्धिंबोध्यैःकवौपरे॥कर्माण्यध्यात्मनारुद्रेयदहंममताक्रिया॥सत्वेनचित्तंक्षेत्रज्ञेगुणैर्वैकारिकंपरे ॥ २९ ॥
अप्सुक्षितिमपोज्योतिष्यदोवायौनभस्यमुं ॥ कूटस्थेतच्चमहतितदव्यक्तेऽक्षरेचतत्॥३०॥इत्यक्षरतयात्मा
नंचिन्मात्रमवशेषितं ॥ ज्ञात्वाऽद्वयोऽथविरमेद्दग्धयोनिरिवानलः ॥ ३१ ॥ इतिश्रीभा०म०स०द्वादशोऽ
ध्यायः ॥ १२ ॥ ॥ नारदउवाच   कल्पस्त्वेवंपरिव्रज्यदेहमात्रावशेषितः ॥ ग्रामैकरात्रविधिनानिरपेक्ष
श्चरेन्महीं ॥ १ ॥ बिभृयाद्यद्यसौवासःकौपीनाच्छादनंपरं ॥ त्यक्तंनदंडलिंगादेरन्यत्किंचिदनापदि ॥
॥ २ ॥ एकएवचरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छांतोनारायणपरायणः ॥ ३ ॥

अप्स्विति अदोज्योतिः तच्चनभःकूटस्थेअहंतत्त्वे तच्चकूटस्थंमहतिमहत्तत्त्वेप्रधाने तच्चाव्यक्तमक्षरेपरमात्मनि ॥३०॥ इतिसर्वोपाधिलयाद्धे
तोःअवशेषितंचिन्मात्रमात्मानंक्षेत्रज्ञंअक्षरतयाज्ञात्वाअद्वयःसन्विरमेत् दग्धकाष्ठोयथाऽनलः ॥ ३१ ॥ इतिसप्तमेटीकायांद्वादशोऽध्यायः
॥१२॥ ॥ त्रयोदशेयतेर्धर्मःसाधकस्योच्यतेमहान् ॥ अवधूतेतिहासेनसिद्धावस्थाचवर्ण्यते ॥१॥ एवंध्यात्वाअकल्पःअनशनादिकंकुर्या
त् आन्वीक्षिक्यांकल्पस्त्वेवंध्यात्वापरिव्रज्योतिसंबंधः कियदत्रत्याज्यं देहव्यतिरिक्तंसर्वमित्याह देहमात्रेति तस्यधर्मानाह ग्रामैकरात्रेतिनव
भिः ॥ १ ॥ कौपीनंगुह्यमाच्छाद्यतेयावतातावन्मात्रं परंकेवलं अन्यदितिवात्यक्तंप्रेषोच्चारणात्पूर्वमेव ॥ २ ॥ ३ ॥ ॥

सदसतःपरेकार्यकारणव्यतिरिक्ते ॥४॥ नन्वात्मानंपरंब्रह्मेतिकथंसामानाधिकरण्यनिर्देशः नहिबद्धमुक्तयोरैक्यंसंभवतितत्राह सुप्तेति सु
षुप्तौहितमसावृतमात्मतत्त्वंजाग्रत्स्वप्नयोस्तुविक्षिप्तंप्रकाशते संधौतुनतमोनापिविक्षेपः अतस्तदाआत्मदृक्आत्मानंलक्षीकृत्यस्थितःसन्
आत्मनोगतितत्त्वंपश्यन् अतएवबंधंमोक्षंचमायामात्रंपश्यन् आत्मानंपरंब्रह्मसर्वत्रपश्येदित्यन्वयः तदुक्तंयोगग्रंथे निद्रादौजागरस्यां
तेयोभावउपजायते ॥ तंभावंभावयन्नित्यंमुच्यतेनेतरोयतिरिति ॥ ५ ॥ अस्यदेहस्यप्रभवोऽप्ययश्चयस्मात्तंकालं ॥ ६ ॥ असच्छास्त्रे
षुअनात्मपरेषुनाटकादिषु जीविकांनक्षत्रविद्यादिवृत्तिं वादवादान्जल्पवितंडनिष्ठान् कंचकमपिपक्षंनिर्बंधेननसंश्रयेत् ॥ ७ ॥ शि
ष्यान्नानुबध्नीतप्रलोभनादिनाबलान्नापादयेत् आरंभान्मठादिव्यापारान्नकुर्यादिति ॥ ८ ॥ परमहंसस्यविशेषमाह नयतेराश्रमोधर्मार्थः

**पश्येदात्मन्यदोविश्वंपरेसदसतोऽव्यये॥ आत्मानंचपरंब्रह्मसर्वत्रसदसन्मये ॥४॥ सुप्तप्रबोधयोःसंधावा
त्मनोगतिमात्मदृक्॥पश्यन्बंधंचमोक्षंचमायामात्रंनवस्तुतः ॥ ५ ॥ नाभिनंदेद्ध्रुवंमृत्युमध्रुवंवास्यजीवि
तं॥कालंपरंप्रतीक्षेतभूतानांप्रभवाप्ययं ॥ ६॥ नासच्छास्त्रेषुसज्जेतनोपजीवेतजीविकां ॥ वादवादांस्त्यजे
त्तर्कान्पक्षंकंचनसंश्रयेत्॥७॥ नशिष्याननुबध्नीतग्रंथान्नैवाभ्यसेद्बहून्॥नव्याख्यामुपयुंजीतनारंभानारभे
त्कचित्॥८॥नयतेराश्रमःप्रायोधर्महेतुर्महात्मनः॥शांतस्यसमचित्तस्यबिभृयादुतवात्यजेत् ॥ ९ ॥ अव्य
क्तलिंगोव्यक्तार्थोमनीष्युन्मत्तबालवत्॥कविर्मूकवदात्मानंसदृष्ट्यादर्शयेन्नृणां ॥१०॥ अत्राप्युदाहरंतीम
मितिहासंपुरातनं॥प्रऱ्हादस्यचसंवादंमुनेराजगरस्यच ॥११॥**

कथंभूतस्ययतेः महात्मनः तस्यलक्षणं शांतस्येत्यादि प्रायइत्यस्यायंभावःज्ञानोत्पत्तिपर्यंतंबहूदकादिलिंगमाश्रित्यसत्वशुद्ध्यर्थंयमान्नि
यमांश्चाचरन्नेवज्ञानोत्पत्त्यैयतेत उत्पन्नेतुज्ञानेननियमैःकृत्यमास्ति यमाश्चस्वतएवस्युः अतस्तदालिंगादिभिःप्रयोजनाभावाल्लोकसंग्रहा
र्थंधारयेद्वात्यजेद्वेति ॥ ९ ॥ तस्यैवज्ञानदार्ढ्याभावेयोगभ्रंशपरिहारार्थमाह नबहिर्व्यक्तंलिंगंयस्य व्यक्तोऽर्थःप्रयोजनमात्मानुसंधानंय
स्यसः मनीष्यप्युन्मत्तवत्बालवच्चकविरपिमूकवदात्मानंनृणांदृष्ट्यादर्शयेत् तेयथोन्मत्तादिरूपंमन्येरंस्तथावर्त्तेत स्वदृष्ट्येतिपाठेबाह्या
नुसंधानाभावेनेत्यर्थः ॥ १० ॥ परमहंसधर्ममेवेतिहासेनस्फुटयाति अत्रापीतियावदध्यायसमाप्ति अजगरवृत्तस्यमुनेश्च अजगरवृत्तंनाम
एकत्रस्थित्याप्रारब्धकर्मभोगः ॥ ११ ॥ ॥ ॥ ॥

धरोपस्थेभूपृष्ठे सह्याद्रेस्तटे रजोभिर्धूसरैस्तनूदेशैर्देहावयवैर्निगूढममलंतेजोयस्यतं ॥ १२ ॥ १३ ॥ कर्मादिभिर्जनायंनविदुस्तंपादयोः शिरसास्पृशन्नत्वाअप्राक्षीदित्युत्तरेणान्वयः ॥ १४ ॥ १५ ॥ उद्यमसहितइवभोगवानिवपीवानंस्थूलंदेहंधारयसि तत्रहेतुंवदेतितृतीये नान्वयः उद्यमंविनैवममभोगोऽस्तीतिचेत्तत्राह वित्तंचेति ॥ १६ ॥ नुइतिनिश्चये हइतिप्रसिद्धौ तवार्थोनास्तीतिप्रसिद्धमेवेत्यर्थः यतोऽर्थादेव यतोहेतोःपीवा क्षमंयोग्यंचेत् ॥ १७ ॥ किंच वित्तार्जनाद्यसमर्थोप्ययंजनस्तदर्थमुद्यमंकरोतित्वंतुसमर्थोऽपिकिमितिनकरोर्षी

तंशयानंधरोपस्थेकावेर्यांसह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्निगूढामलतेजसं ॥ १२॥ ददर्शलोकान्विचरँल्लोकतत्त्वविवित्सया ॥ वृतोमात्यैःकतिपयैःप्रन्हादोभगवत्प्रियः ॥ १३ ॥ कर्मणाकृतिभिर्वाचालिंगैर्वर्णाश्रमादिभिः ॥ ननिंदंतिजनायंवैसोऽसावितिनवेतिच ॥ १४ ॥ तंनत्वाऽभ्यर्च्यविधिवत्पादयोःशिरसास्पृशन् ॥ विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥ बिभर्षिकायंपीवानंसोद्यमोभोगवान्यथा ॥ वित्तंचैवोद्यमवतांभोगोवित्तवतामिह ॥ भोगिनांखलुदेहोयंपीवाभवतिनान्यथा ॥१६॥ नतेशयानस्यनिरुद्यमस्यब्रह्मन्नुहार्थोयतएवभोगः ॥ अभोगिनोऽयंतवविप्रदेहःपीवायतस्तद्वदनःक्षमंचेत् ॥ १७ ॥ कविःकल्पोनिपुणदृक्चित्रप्रियकथःसमः ॥ लोकस्यकुर्वतःकर्मशेषेतद्वीक्षिताऽपिवा ॥ १८ ॥ नारदउवाच सइत्थंदैत्यपतिनापरिपृष्टोमहामुनिः ॥ स्मयमानस्तमभ्याहतद्वागमृतयंत्रितः ॥ १९ ॥ ब्राह्मणउवाच वेदेदमसुरश्रेष्ठभवान्नन्वार्यसंमतः ॥ ईहोपरमयोर्नृणांपदान्यध्यात्मचक्षुषा ॥ २० ॥ यस्यनारायणोदेवोभगवान्हृद्गतःसदा ॥ भक्त्याकेवलयाऽज्ञानंधुनोतिध्वांतमर्कवत् ॥ २१ ॥

त्याह कविर्विद्वान् कल्पोदक्षः निपुणदृक्चतुरः चित्राःप्रियाःलोकरंजनाःकथायस्य तथाऽपिलोकस्यकर्मकुर्वतःसतः शेषे तद्वीक्षिताऽपितावत्सर्वंपश्यन्नपि पाठांतरेनद्वेक्षितत्कर्मनद्वेक्षिनौषिवानचरस्तौषीत्यर्थः ॥ १८ ॥ तस्यवागेवामृतंतेनयंत्रितोवशीकृतःसन्प्राह ॥ १९ ॥ अध्यात्मचक्षुषाअंतर्दृष्ट्या भवान्वेदैव आर्याणांज्ञानिनांसंमतोननुभवान् इदमितियदुक्तंतदेवाह नृणामीहोपरमयोःप्रवृत्तिनिवृत्त्योःपदानिस्थानानिफलानीत्यर्थः ॥ २० ॥ वेदेत्यत्रहेतुः यस्येति हृदिप्रविष्टःसन्नज्ञानंधुनोति अर्कोयथाबहिर्ध्वांतं ॥ २१ ॥

यथाश्रुतमित्यौद्धत्यपरिहारायोक्तं ॥२२॥ लोकः कर्मसु प्रवर्ततेत्वंतु निवृत्तः सन् किंशेषे इतियदुक्तंतत्राह तृष्णयेति चतुर्भिः भवप्रवाहकारिण्या यथोचितैरपिविषयैः पूरयितुमशक्यया तृष्णया कर्मसु प्रवर्त्यमानोऽहंपूर्वंनानायोनिषुप्रवेशितः ॥ २३ ॥ तयैवतृष्णयाइमंलोकंमनुष्यदेहंयदृच्छयाप्रापितः कथंभूतंलोकं धर्मेणस्वर्गस्यद्वारंसाधनं अधर्मेणातिरश्चांश्वानसूकरादियोनेर्द्वारं मिश्राभ्यांताभ्यांपुण्यापुण्याभ्यांपुनरप्यस्यमनुष्यत्वस्यद्वारं सर्वतोनिवृत्त्या अपवर्गस्यद्वारमित्यर्थः॥२४॥ अत्रापिमनुष्यत्वेपि अन्यापनुत्तयेदुःखनिवृत्त्यैविपर्ययंदृष्ट्वानिवृत्तोऽस्मि ॥२५॥ ननुप्रवृत्त्याकदाचित् सुखंस्यान्निवृत्त्यातुकिंस्यादितिचेत्तत्राह सुखमस्यजीवस्यस्वरूपमेव तर्हिकिंनप्रकाशतेतत्राह सर्वेति तनोतीतितनुः

अथापिब्रूमहेप्रश्नांस्तवराजन्यथाश्रुतं॥संभावनीयोहिभवानात्मनःशुद्धिमिच्छतां ॥२२॥ तृष्णयाभववाहिन्यायोग्यैःकामैरपूरया ॥ कर्माणिकार्यमाणोऽहंनानायोनिषुयोजितः ॥२३॥ यदृच्छयालोकमिमंप्रापितःकर्मभिर्भ्रमन् ॥ स्वर्गापवर्गयोर्द्वारंतिरश्चांपुनरस्यच ॥ २४ ॥ अत्रापिदंपतीनांचसुखायान्यापनुत्तये ॥ कर्माणिकुर्वतांदृष्ट्वानिवृत्तोऽस्मिविपर्ययं ॥२५॥ सुखमस्यात्मनोरूपंसर्वेहोपरतिस्तनुः ॥ मनःसंस्पर्शजान्दृष्ट्वाभोगान्स्वप्स्यामिसंविशन्॥२६॥इत्येतदात्मनःस्वार्थंसंतंविस्मृत्यवैपुमान्॥विचित्रामसतिद्वैतेघोरामाप्नोतिसंसृतिं॥२७॥जलंतदुद्भवैश्छन्नंहित्वाऽज्ञोजलकाम्यया॥मृगतृष्णामुपाधावेद्यथाऽन्यत्रार्थदृक्स्वतः ॥ २८ ॥ देहादिभिर्दैवतंत्रैरात्मनःसुखमीहतः ॥ दुःखात्ययंचानीशस्यक्रियामोघाःकृताःकृताः ॥२९॥

सर्वक्रियानिवृत्तौस्वतएवप्रकाशतइत्यर्थः भोगांश्चमनःसंस्पर्शजान् मनोरथमात्रजान् अशाश्वतान् दृष्ट्वा स्वप्स्यामिनिरुद्यमोऽस्मीत्यर्थः तर्हिकदाचित् कथंभुंक्षेतत्राह संविशन् प्रारब्धभोगान् भुंजानइत्यर्थः ॥ २६ ॥ एवंचेत्कोऽपिसंसारंनप्राप्नुयात्तत्राह इत्येतदात्मनःसुखात्मकंरूपंस्वार्थंस्वस्मिन्नेवसंतंपुरुषार्थंविस्मृत्य असत्यपिद्वैते ॥ २७ ॥ एतदेवदृष्टांतेनस्पष्टयतिजलमिति तदुद्भवैस्तृणशैवालादिभिः जलकाम्ययाजलेच्छया स्वतःआत्मस्वरूपादन्यत्रपुरुषार्थंपश्यन् ॥ २८ ॥ एवंस्वस्यनिरुद्यमत्वेकारणमुक्त्वाविपर्ययंदृष्ट्वेतियदुक्तंतद्विवृणोति देहादिभिरितिपंचभिः ईहतःइच्छतः अनीशस्यनिर्दैवस्य पुनःपुनःप्रारब्धाःक्रियामोघाविफलाएवभवंति ॥ २९ ॥ ॥

क्रियाणांसफलत्वेऽपिफलस्यानुपयोगमाह आध्यात्मिकादिभिरिति मर्त्यस्यमरिष्यतः कृच्छ्रेणदुःखेनोपनतैःप्राप्तैः ॥ ३० ॥ कृच्छ्रंवि नैवप्राप्तेप्यर्थेदुःखंतदवस्थमित्याह पश्यामीति ॥ ३१ ॥ भयंप्रपंचयति राजतइति स्वस्मान्मत्तएवकथंचित्त्यागभोगविस्मरणादिनाना शःस्यादिति ॥ ३२ ॥ प्राणवतामर्थवतांचभयंनित्यमतोऽनर्थहेतुत्वात्प्राणेजीवनेअर्थेचस्पृहानकार्येत्याह शोकेति ॥ ३३ ॥ नन्वेवम नर्थाननुभवंतोऽपिनकेचिद्विरज्यंतेनचयथालाभेनतुष्यंतित्वंतुकथंवैराग्यादिकंप्राप्तोऽसितत्राह मधुकारेति मधुमाक्षिकाऽजगरौ ययोःशिक्ष

अध्यात्मिकादिभिर्दुःखैरविमुक्तस्यकर्हिचित् ॥ मर्त्यस्यकृच्छ्रोपनतैरर्थैःकामैःक्रियेतकिं ॥३०॥ पश्यामिध निनांक्लेशंलुब्धानामजितात्मनां ॥भयादलब्धनिद्राणांसर्वतोऽभिविशंकिनां॥३१॥राजतश्चोरतःशत्रोःस्व जनात्पशुपक्षितः ॥ अर्थिभ्यःकालतःस्वस्मान्नित्यंप्राणार्थवद्भयं ॥ ३२ ॥ शोकमोहभयक्रोधरागक्लैब्यश्र मादयः ॥ यन्मूलाःस्युर्नृणांजह्यात्स्पृहांप्राणार्थयोर्बुधः ॥३३॥ मधुकारमहासर्पौलोकेस्मिन्नोगुरूत्तमौ॥वै राग्यंपरितोषंचप्राप्तायच्छिक्षयावयं ॥ ३४ ॥ विरागःसर्वकामेभ्यःशिक्षितोमेमधुव्रतात् ॥ कृच्छ्राप्तंमधुव द्वित्तंहत्वाऽप्यन्योहरेत्पतिं ॥ ३५ ॥ अनीहःपरितुष्टात्मायदृच्छोपनतादहं ॥ नोचेच्छयेबह्वहानिमहाहिरि वसत्ववान् ॥ ३६॥ क्वचिदल्पंक्वचिद्भूरिभुंजेऽन्नंस्वाद्वस्वादुवा॥क्वचिद्भूरिगुणोपेतंगुणहीनमुतक्वचित् ॥३७॥ श्रद्धयोपाहृतंक्वापिकदाचिन्मानवर्जितं ॥ भुंजेभुक्त्वाऽथकस्मिंश्चिद्दिवानक्तंयदृच्छया ॥ ३८॥ क्षौमंदुकूलम जिनंचीरंवल्कलमेववा ॥ वसेऽन्यदपिसंप्राप्तंदिष्टभुक्तुष्टधीरहं ॥ ३९ ॥ क्वचिच्छयेधरोपस्थेतृणपर्णा श्मभस्मसु ॥ क्वचित्प्रासादपर्यंकेकशिपौवापरेच्छया ॥ ४० ॥ क्वचित्स्नातोऽनुलिप्तांगःसुवासाःस्रग्व्य लंकृतः ॥ रथेभाश्वैश्चरेक्वापिदिग्वासाग्रहवद्विभो ॥ ४१ ॥ ॥ ॥ ॥

यावृत्तपर्यालोचनया ॥ ३४ ॥ मधुकराच्छिक्षितमाह विरागइति वित्तपतिंहत्वाऽन्योवित्तंहरेदित्येवं ॥ ३५ ॥ अजगराच्छिक्षितमाह अनीहइति सत्ववान्धैर्यवान् ॥ ३६ ॥ पीनत्वेहेतुंवदन्यदृच्छयाप्राप्तात्परितोषंप्रपंचयति क्वचिदल्पमितिषड्भिः ॥ ३७ ॥ ३८ ॥ चीरंजीर्णवस्त्रखंडं वसेपरिदधे दिष्टभुक्प्रारब्धकर्मफलभोगी ॥ ३९ ॥ प्रासादमध्येपर्यंके तत्रापिकशिपौतूलिकायां ॥ ४० ॥ चरे विचरामि क्वचिद्ग्रहवद्दिगंबरोविचरामि ॥ ४१ ॥ ॥ ॥ ॥ ॥

नचमानापमानकर्तृषुममवैषम्यमित्याह नाहमिति नाहंनिंदामिनचस्तौमि महात्मनिविष्णौ ॥ ४२ ॥ एवंभूतत्वेनास्थितावुपायमाह वि कल्पमितिद्वाभ्यां चित्तौभेदग्राहकमनोवृत्तौ अर्थरूपोविभ्रमोयस्मिन्मनसितन्मनोवैकारिकेअहंकारे तत्अहंकारमनुअनंतरंमहत्तत्त्व द्वारेणेत्यर्थः ॥ ४३ ॥ सत्यमेवपश्यतीतितथा ॥ ४४ ॥ मंददृष्ट्यालोकशास्त्राभ्यांव्यपेतंनतुतत्त्वदृष्ट्या यतोभवान्भगवत्परः ॥ ४५ ॥ ॥ ४६ ॥ इतिसप्तमेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ चतुर्दशेगृहस्थस्यपरमोधर्मईर्यते ॥ देशकालादिभेदेनपुनःश्रेयोविशे

नाहंनिंदेनचस्तौमिस्वभावविषमंजनं॥एतेषांश्रेयआशासेउतैकात्म्यंमहात्मनि ॥ ४२॥ विकल्पंजुहुयाच्चित्तौतांमनस्यर्थविभ्रमे॥ मनोवैकारिकेहुत्वातन्मायायांजुहोत्यनु ॥४३॥ आत्मानुभूतौतांमायांजुहुयात्सत्यदृङ्मुनिः॥ततोनिरीहोविरमेत्स्वानुभूत्यात्मनिस्थितः॥४४॥स्वात्मवृत्तंमयेत्थंतेसुगुप्तमपिवर्णितं॥व्यपेतंलोकशास्त्राभ्यांभवान्हिभगवत्प्रियः॥४५॥ नारदउवाच धर्मंपारमहंस्यंवैमुनेःश्रुत्वासुरेश्वरः ॥पूजयित्वाततःप्रीतआमंत्र्यप्रययौगृहं ॥४६॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेयुधिष्ठिरनारदसंवादेयतिधर्मेत्रयोदशोऽध्यायः॥१३॥ ॥ ॥ युधिष्ठिरउवाच गृहस्थएतांपदवींविधिनायेनचांजसा॥यातिदेवऋषेब्रूहिमादृशोगृहमूढधीः ॥१॥ नारदउवाच गृहेष्ववस्थितोराजन्क्रियाःकुर्वन्यथोचिताः॥ वासुदेवार्पणंसाक्षादुपासीतमहामुनीन् ॥२॥ शृण्वन्भगवतोऽभीक्ष्णमवतारकथाऽमृतं॥श्रद्दधानोयथाकालमुपशांतजनावृतः ॥ ३ ॥ सत्संगाच्छनकैःसंगमात्मजायात्मजादिषु ॥ विमुच्येन्मुच्यमानेषुस्वयंस्वप्नवदुत्थितः ॥ ४ ॥



षकृत् ॥ १ ॥ गृहस्थमुल्लंघ्यमोक्षंप्रत्यंतरंगत्वेनप्रथमंवनस्थयतिधर्मेष्वभिहितेषु तर्हिगृहस्थस्यमोक्षोनस्यादितिशंकिताचित्तःपृच्छति गृहस्थइति ॥ १ ॥ तस्यमोक्षधर्मानाह गृहेष्वित्यादियावदध्यायसमाप्ति साक्षाद्वासुदेवार्पणंयथाभवत्येवंकुर्वन्नुपासीत ॥ २ ॥ ३ ॥ स्वयमेवमुच्यमानेषुवियुज्यमानेषु यथास्वप्नादुत्थितःपुमान्स्वप्नदृष्टेषुपुत्रादिषुसंगंविमुंचतितद्वत् ॥ ४ ॥ ॥ ॥

नन्वेवंभूतस्यदुर्जनैरभिभूयमानस्यकुतोगृहोचिताःक्रियाःस्युस्तत्राह यावदर्थमिति अंतस्त्वनासक्तोबहिस्त्वासक्तइवनृलोकेजनमध्येन
रतांमनुष्यतांन्यसेत् पुरुषकारमाविष्कुर्यादित्यर्थः ॥ ५ ॥ आग्रहंतुक्कापिनकुर्यादित्याह ज्ञातयइति ॥ ६ ॥ नन्वेवंसर्वानुमोदनेवि
त्तक्षयप्रसंगात्कुतोवाजीवनंकुतोवाकर्मकरणंतत्राह दिव्यंवृष्ट्यादिभिर्जातंधान्यादि भौमंनिधानादि अंतरिक्षमकस्मादेवप्राप्तं एवंस्व
तएवअच्युतानिर्मितंदैवलब्धंयत् एतत्पूर्वोक्तकर्मादि ॥ ७ ॥ दैवाद्भूरिलाभेजातेपितत्राभिमानोनकार्यइत्याह यावदिति भ्रियेतपूर्येत
॥ ८ ॥ अतएवान्यंकिमपिस्वगृहंक्षेत्रंवाप्रविश्यभुंजानंननिवारयेदित्याह मृगेति मर्कोमर्कटः सरीसृप्सर्पः मक्षिकाश्च तैःपुत्रैरेषांमृ
गादीनांकियदंतरं ॥ ९ ॥ अतिकृच्छ्रेणापाद्यनभजेत्किंतुयावद्दैवप्रापितंतावदेवभजेत् ॥ १० ॥ श्वानश्चअघातश्चपतिताःअंतेऽव

यावदर्थमुपासीनोदेहेगेहेचपंडितः ॥ विरक्तोरक्तवत्तत्रनृलोकेनरतांन्यसेत् ॥ ५ ॥ ज्ञातयःपितरौपुत्रा
भ्रातरःसुहृदोऽपरे ॥ यद्वदंतियदिच्छंतिचानुमोदेतनिर्ममः ॥६ ॥ दिव्यंभौमंचांतरिक्षंवित्तमच्युतानिर्मि
तं ॥ तत्सर्वमुपभुंजानएतत्कुर्यात्स्वतोबुधः ॥ ७ ॥ यावद्भ्रियेतजठरंतावत्स्वत्वंहिदेहिनां ॥ अधिकंयोभिम
न्येतसस्तेनोदंडमर्हति ॥८॥ मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः॥आत्मनःपुत्रवत्पश्येत्तैरेषामंतरंकि
यत् ॥ ९ ॥ त्रिवर्गंनातिकृच्छ्रेणभजेतगृहमेध्यपि ॥ यथादेशंयथाकालंयावद्दैवोपपादितं ॥ १० ॥ आश्वा
घांतेवसायिभ्यःकामान्संविभजेद्यथा ॥ अप्येकामात्मनोदारांनृणांस्वत्वग्रहोयतः ॥११॥ जह्याद्यदर्थेस्व
प्राणान्हन्याद्वापितरंगुरुं ॥ तस्यांस्वत्वंस्त्रियांजह्याद्यस्तेनह्यजितोजितः ॥ १२ ॥ कृमिविड्भस्मनिष्ठांतंक्के
दंतुच्छंकलेवरं ॥ क्कतदीयरतिर्भार्याक्कायमात्मानभश्छदिः ॥ १३ ॥

सायिनश्चांडालादयस्तानभिव्याप्ययथाऽर्हंकामान्संविभजेत्स्वभोज्याद्विभज्यदद्यात् यद्यप्येकैवात्मनोदाराभार्यातस्यामतिथिशुश्रूषणेनि
युक्तायांस्वस्यशुश्रूषाहीयेत यस्यांचनृणांस्वत्वग्रहोममैवेयमित्याग्रहस्तामेकामपिसंविभजेत् अतिथिशुश्रूषणेनियुंजीतेत्यर्थः नत्वन्य
थामंतव्यं यथाऽर्हंविभजेदित्युक्तत्वात् ॥ ११ ॥ एवंचेत्तेनेश्वरोवशीकृतःस्यादित्याह जह्यादिति यदर्थेयन्निमित्तं अन्यैरजितोऽपी
श्वरस्तेनजितएव ॥ १२ ॥ ननुकथमेवंतस्यांस्वत्वाभिमानोहातुंशक्यस्तत्त्वविचारेणेत्याह कृमिविट्भस्मसुनिष्ठापर्यवसानमंतेयस्य
तदीयादेहार्थारतिर्यस्यांसा स्वमहिम्नानभोऽपिछादयतीतितथा ॥ १३ ॥ ॥ ॥ ॥ ॥

किंच सिद्धैर्दैवलब्धैर्यज्ञावशिष्टार्थैः पंचयज्ञशेषैरन्नादिभिः महतांनिवृत्तानांपरमहंसानां ॥ १४ ॥ एतद्विवृण्वन्नाह देवादीन्पंचयज्ञदेव
ताःआत्मानंच एवंपृथक्पुरुषमंतर्यामिणमेवयजेत ॥ १५ ॥ १६ ॥ नपुनरतिनिर्बंधोयथार्थंकार्यइत्याह नहीति विप्रमुखेहुतैरन्नादिभि
र्यथाइज्येतपूज्येतनतथाअग्निमुखतोहविषाइज्येत ॥ १७॥ब्राह्मणेषुचदेवेषुपंचयज्ञदेवतासुचमर्त्यादिष्वन्येष्वपिनरेषुपश्वादिषुच क्षेत्रज्ञमंत
र्यामिणं ब्राह्मणाननुमर्त्यादियजनेब्राह्मणयजनानंतरमन्येषुयजस्व पाठांतरेब्राह्मणाआनंतर्यस्यतं ॥ १८ ॥ प्रोष्ठपदेभाद्रपदे ॥ १९ ॥

सिद्धैर्यज्ञावशिष्टार्थैःकल्पयेद्वृत्तिमात्मनः ॥ शेषेस्वत्वंत्यजन्प्राज्ञःपदवींमहतामियात् ॥ १४ ॥ देवान्नृषीन्नृ
भूतानिपितॄनात्मानमन्वहं ॥ स्ववृत्त्यागतवित्तेनयजेतपुरुषंपृथक् ॥ १५ ॥ यर्ह्यात्मनोऽधिकाराद्याःसर्वाः
स्युर्यज्ञसंपदः ॥ वैतानिकेनविधिनाअग्निहोत्रादिनायजेत् ॥ १६ ॥ नह्यग्निमुखतोऽयंवैभगवान्सर्वयज्ञभु
क् ॥ इज्यतेहविषाराजन्यथाविप्रमुखेहुतैः ॥ १७ ॥ तस्माद्ब्राह्मणदेवेषुमर्त्यादिषुयथार्हतः ॥ तैस्तैःकामैर्य
जस्वैनंक्षेत्रज्ञंब्राह्मणाननु ॥ १८ ॥ कुर्यादापरपक्षीयंमासिप्रौष्ठपदेद्विजः ॥ श्राद्धंपित्रोर्यथावित्तंतद्बंधूनां
चवित्तवान् ॥ १९ ॥ अयनेविषुवेकुर्याद्व्यतीपातेदिनक्षये ॥ चंद्रादित्योपरागेचद्वादशीश्रवणेषुच ॥ २० ॥
तृतीयायांशुक्लशुक्लेनवम्यामथकार्तिके ॥ चतसृष्वप्यष्टकासुहेमंतेशिशिरेतथा ॥ २१ ॥ माघेचसितस
प्तम्यांमघाराकासमागमे ॥ राकयाचानुमत्यावामासर्क्षाणियुतान्यपि ॥ २२ ॥ द्वादश्यामनुराधास्याच्छ्रू
वणस्तिस्रउत्तराः ॥ तिसृष्वेकादशीवासुजन्मर्क्षश्रोणयोगयुक् ॥ २३ ॥

॥ २० ॥ शुक्लेमासिवैशाखेशुक्लेपक्षेअक्षय्यतृतीयायामित्यर्थः हेमंतेशिशिरेचमार्गशीर्षादिमासचतुष्टयेऽपियास्तिस्रोअष्टकास्तासु ॥ २१ ॥
संपूर्णचंद्रापौर्णमासी राकान्यूनचंद्रासैवानुमतिः तथामासर्क्षाणितत्तन्मासनामप्रवृत्तिनिमित्तानिनक्षत्राणियुतानियदास्युस्तदा तदुक्तंत्रि
कांडचां पुष्ययुक्तापौर्णमासीपौषीमासेतुयत्रसा ॥ नाम्नासपौषोमाघाद्याश्चैवमेकादशापरइति ॥ २२ ॥ अनुराधाश्रवणउत्तराफाल्गुनी
उत्तराषाढाउत्तराभाद्रपदावाद्वादश्यांयदास्यात् आसुउत्तरासुत्रिषुएकादशीवायदास्यात्तदाच जन्मर्क्षश्रोणयोगयुक्जन्मनक्षत्रस्यश्रवण
स्यवायोगेनयुक्तंदिनंयदातदा योगग्रहणंसंबंधबाहुल्यार्थं ॥ २३ ॥ ॥ ॥ ॥

॥ ४१ ॥

नकेवलंश्राद्धस्यैवैतेकालाःकिंतुधर्ममात्रस्येत्याह तएतइतिद्वाभ्यां तदेवआयुषःअमोघंसाफल्यमित्यर्थः ॥ २४ ॥ २५ ॥ संस्कारकाल इति जायायाःपुंसवनादि अपत्यस्यजातकर्मादि आत्मनोयज्ञदीक्षादि प्रेतस्यसंस्थादहनादि मृताहश्चसांवत्सरिकं यदाअन्यस्मिन्न पिअभ्युदयार्थेकर्मणिश्रेयःकुर्यादित्यनुषंगः ॥ २६ ॥ २७ ॥ यत्रयस्मिन्नेतच्चराचरमास्तितस्यभगवतोबिंबंरूपंसत्पात्रंयत्रलभ्यतेसवैपु ण्यतमोदेशः ॥ २८ ॥ २९ ॥ अर्हैरुत्तमैःआश्रितानि ॥ ३० ॥ ३१ ॥ सीतायारामस्यचाश्रमआदिर्येषां द्वयोःपृथक्ग्रहणंवियोगका

तएतेश्रेयसःकालानृणांश्रेयोविवर्धनाः ॥ कुर्यात्सर्वात्मनैतेषुश्रेयोऽमोघंतदायुषः ॥ २४ ॥ एषुस्नानंजपो होमोव्रतंदेवद्विजार्चनं ॥ पितृभूतनृभूतेभ्योयद्दत्तंतद्ध्यनश्वरं ॥ २५ ॥ संस्कारकालोजायायाअपत्यस्या ॥ त्मनस्तथा ॥ प्रेतसंस्थामृताहश्चकर्मण्यभ्युदयेनृप ॥ २६ ॥ अथदेशान्प्रवक्ष्यामिधर्मादिश्रेयआवहान् सवैपुण्यतमोदेशःसत्पात्रंयत्रलभ्यते ॥ २७ ॥ बिंबंभगवतोयत्रसर्वमेतच्चराचरं ॥ यत्रहब्राह्मणकुलंतपोवि द्यादयान्वितं ॥ २८ ॥ यत्रयत्रहरेरर्चासदेशःश्रेयसांपदं ॥ यत्रगंगादयोनद्यःपुराणेषुचविश्रुताः ॥ २९ ॥ सरांसिपुष्करादीनिक्षेत्राण्यर्हाश्रितान्युत ॥ कुरुक्षेत्रंगयशिरःप्रयागःपुलहाश्रमः ॥ ३० ॥ नैमिषंफाल्गु नंसेतुःप्रभासोऽथकुशस्थली ॥ वाराणसीमधुपुरीपंपाबिंदुसरस्तथा ॥ ३१ ॥ नारायणाश्रमोनंदासीतारा माश्रमादयः ॥ सर्वेकुलाचलाराजन्महेंद्रमलयादयः ॥ ३२ ॥ एतेपुण्यतमादेशाहरेरर्चाश्रिताश्चये ॥ एता न्देशान्निषेवेतश्रेयस्कामोह्यभीक्ष्णशः ॥ धर्मोह्यत्रेहितःपुंसांसहस्राधिफलोदयः ॥ ३३ ॥ हरिरेवैकउ र्वीशयन्मयंवैचराचरं ॥ पात्रंत्वत्रनिरुक्तंवैकविभिःपात्रवित्तमैः ॥ ३४ ॥ देवर्ष्यर्हत्सुवैसत्सुतत्रब्रह्मात्म जादिषु ॥ राजन्यदग्रपूजायांमतःपात्रतयाच्युतः ॥ ३५ ॥

लाभिप्रायेण ॥ ३२ ॥ अर्चाश्रिताश्चस्थिरप्रतिमाश्रिताः पूर्वंतुशालग्रामशिलाद्यर्चनदेशउक्तइत्यपौनरुक्त्यं अत्रएषुदेशेषुईहितःकृतः सहस्रगुणमधिकस्यफलस्यउदयोयस्मात्सतथा ॥ ३३ ॥ अथपात्रमाह हरिरेवपात्रंनिरुक्तंनिर्णीतं ॥ ३४ ॥ तदेवाह देवेषुचऋषिषुच अर्हत्सुचतपोयोगादिसिद्धेषुब्रह्मात्मजादिषुसनकादिष्वपिसत्सुतत्रत्वदीयेराजसूयेयद्यस्मादच्युतएवपात्रतयासंमतः ॥ ३५ ॥ ॥

संमतत्वेहेतुमाह जीवराशिभिर्व्याप्तोब्रह्मांडकोशएवयोंऽघ्रिपः सर्वजीवानामात्मनश्चतर्पणं ॥ ३६ ॥ एतदेवपुरुषमानानिरुक्त्याद्रढयति पुराणीति नृतिर्यगादिरूपाणिपुराणिशरीराणितेष्वंतर्यामिरूपेणप्रत्यगंशेनचयतःशेतेअतःपुरुषइतिप्रसिद्धः ॥ ३७ ॥ तारतम्येनतिर्यगादिभ्यःपुरुषेयस्मादाधिक्येनवर्ततेतस्मात्पुरुषःपात्रं तत्रापियावानात्माज्ञानांशःयथायथाईयतेतपआदियोगेनयत्रयत्रप्रतीयतेतथातथाऽसौपात्रमित्यर्थः तथाचश्रुतिः पुरुषत्वेचाविस्तरामात्मेत्यादि ॥ ३८ ॥ तर्हिप्रतिमादौहरेःकिमितिवापूजांकुर्वंतितत्राह दृष्ट्वेतिद्वाभ्यां मिथोऽवज्ञानमसन्मानस्तस्मिन्नात्माबुद्धिर्येषांतेषांभावंदृष्ट्वा क्रियायैपूजाद्यर्थं ॥ ३९ ॥ हरिमुपासते उपासिताऽपिअर्चापुरुषद्वेषिणा

जीवराशिभिराकीर्णआंडकोशांघ्रिपोमहान् ॥ तन्मूलत्वादच्युतेज्यासर्वजीवात्मतर्पणं ॥ ३६ ॥ पुराण्यनेनसृष्टानिनृतिर्यगृषिदेवताः ॥ शेतेजीवेनरूपेणपुरेषुपुरुषोह्यसौ ॥ ३७ ॥ तेष्वेषुभगवान्राजंस्तारतम्येनवर्तते॥ तस्मात्पात्रंहिपुरुषोयावानात्मायथेयते॥ ३८॥ दृष्ट्वातेषांमिथोनृणामवज्ञानात्मतांनृप ॥ त्रेतादिषुहरेरर्चाक्रियायैकविभिःकृता ॥ ३९ ॥ ततोऽर्चायांहरिंकेचित्संश्रद्धायविपर्यया ॥ उपासतउपास्तानिनार्थदापुरुषद्विषां ॥ ४० ॥ पुरुषेष्वपिराजेंद्रसुपात्रंब्राह्मणंविदुः ॥ तपसाविद्ययातुष्ट्याधत्तेवेदंहरेस्तनुं ॥ ४१ ॥ नन्वस्यब्रह्मणाराजन्कृष्णस्यजगदात्मनः ॥ पुनंतःपादरजसात्रिलोकींदैवतंनहत् ॥ ४२ ॥ इतिश्रीभागवतेम०स०सदाचारनिर्णयेचतुर्दशोऽध्यायः ॥१४॥ ॥ ॥ नारदउवाच कर्मनिष्ठाद्विजाःकेचित्तपोनिष्ठानृपापरे ॥ स्वाध्यायेऽन्येप्रवचनेयेकेचिज्ज्ञानयोगयोः ॥ १ ॥ ज्ञाननिष्ठायदेयानिकव्यान्यानंत्यमिच्छता॥ दैवेचतदभावेस्यादितरेभ्योयथाऽर्हतः ॥ २ ॥

मर्थदानभवति पुरुषेषुद्वेषंहित्वाऽर्चितासतीसापिमंदाधिकारिणांपुरुषार्थप्रदाभवत्येवेत्यर्थः ॥ ४० ॥ पुरुषेष्वेवजात्यातपआदिभिश्चपुनर्विशेषांतरमाह पुरुषेष्वपीति योधत्तेतंसुपात्रंविदुः ॥ ४१ ॥ एतदेवकैमुत्यन्यायेनद्रढयति नन्वस्येति ॥ ४२ ॥ इतिसप्तमेटीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ततःपंचदशेसर्ववर्णाश्रमनिबंधनं ॥ सारतःसंग्रहेणाथवर्ण्यतेमोक्षलक्षणं ॥ १ ॥ सर्वेषामपिमोक्षधर्माणां सारसंग्रहार्थमध्यायप्रारंभः तत्रश्राद्धगतान्विशेषानाह कर्मनिष्ठाइति स्वाध्यायादिषुपरिनिष्ठिताइतिशेषः ॥ १ ॥ कव्यानिपितॄनुद्दिश्यदेयानि दैवेचहव्यान्यपितस्मैदेयानि यथार्हतइतिसर्वत्रज्ञानादितारतम्येन ॥ २ ॥ ॥ ॥

॥ ३ ॥ ननुविस्तरःकुतःप्राप्तोयेननिषिध्यतेतत्राह स्वजनानामर्पणात् जामाताचेन्निमंत्र्यतेतद्भ्रात्रादयःकथंवर्ज्याइत्येवंप्राप्ताद्विस्तरादि त्यर्थः ॥ ४ ॥ मुन्यन्नमारण्यंव्रीह्यादि हरिदैवतंहरयोनिवेदितंसत् ॥ ५ ॥ पुरुषात्मकमीश्वरस्वरूपं ॥ ६ ॥ ७ ॥ दंडस्यन्यासोहिंसाया स्त्यागोयएतादृशोऽन्योनास्ति ॥ ८ ॥ अतएवोत्तमाधिकारिणोबाह्यानिकर्माणित्यजंतीत्याह एकइति अनीहानिष्कामाः ज्ञानदीपितेआ त्मस्फूर्तिमतिआत्मसंयमनेजुह्वति मनोनियम्यतदंतरायतयात्यजंतीत्यर्थः तदुक्तंसर्वज्ञसूक्तैः प्रत्यक्स्फूर्तिरसत्स्फूर्तिस्तनुनिष्ठाविघात कं ॥ संलक्ष्यसंत्यजेत्कर्मत्यजान्विघ्नहतोऽन्यथेति ॥ ९ ॥ मामामेषःध्रुवंहन्यादिति कुतः अकरुणः तत्कुतः असुतृप्प्राणतर्पकः तर्कि

द्वौदैवेपितृकार्येत्रीनेकैकमुभयत्रवा ॥ भोजयेत्सुसमृद्धोऽपिश्राद्धेकुर्यान्नविस्तरं ॥ ३ ॥ देशकालोचिताश्र द्धाद्रव्यपात्रार्हणानिच ॥ सम्यग्भवंतिनैतानिविस्तरात्स्वजनार्पणात् ॥ ४ ॥ देशेकालेचसंप्राप्तेमुन्यन्नंह रिदैवतं ॥ श्रद्धयाविधिवत्पात्रेन्यस्तंकामधुगक्षयं ॥ ५ ॥ देवर्षिपितृभूतेभ्यआत्मनेस्वजनायच ॥ अन्नंसं विभजन्पश्येत्सर्वंतत्पुरुषात्मकं ॥ ६ ॥ नदद्यादामिषंश्राद्धेनचाद्याद्धर्मतत्त्ववित् ॥ मुन्यन्नैःस्यात्पराप्रीति र्यथानपशुहिंसया ॥ ७ ॥ नैतादृशःपरोधर्मोनृणांसद्धर्ममिच्छतां ॥ न्यासोदंडस्यभूतेषुमनोवाक्कायजस्य यः ॥ ८ ॥ एकेकर्ममयान्यज्ञान्ज्ञानिनोयज्ञवित्तमाः ॥ आत्मसंयमनेऽनीहाजुह्वतिज्ञानदीपिते ॥ ९ ॥ द्र व्ययज्ञैर्यक्ष्यमाणंदृष्ट्वाभूतानिबिभ्यति ॥ एषमाकरुणोहन्यादतज्ज्ञोह्यसुतृप्ध्रुवं ॥ १० ॥ तस्माद्दैवोपप न्नेनमुन्यन्नेनापिधर्मवित् ॥ संतुष्टोऽहरहःकुर्यान्नित्यनैमित्तिकीःक्रियाः ॥ ११ ॥ विधर्मःपरधर्मश्चआभा सउपमाच्छलः ॥ अधर्मशाखाःपंचेमाधर्मज्ञोऽधर्मवत्त्यजेत् ॥ १२ ॥ धर्मबाधोविधर्मःस्यात्परधर्मोऽन्यचोदितः ॥ उपधर्मस्तुपाखंडोदंभोवाशब्दभिच्छलः ॥ १३ ॥ ॥ ॥ ॥ ॥

अतज्ज्ञःआत्मतत्त्वानभिज्ञःतथाचश्रुतिः नतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूव नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंती ति ॥ १० ॥ प्रस्तुतमनुवर्तयति तस्मादिति ॥ ११ ॥ अधर्मवत्साक्षान्निषिद्धवत् ॥ १२ ॥ क्रममनादृत्यपंचापिव्याचष्टे धर्मबाधःधर्मबुद्ध्यापियस्मि न्क्रियमाणेस्वधर्मबाधः अन्यस्यचोदितोऽन्यस्यपरधर्मःउपमेतिव्याचष्टेउपधर्मस्त्विति शब्दस्यभित्भेदः अन्यथाव्याख्यानंयस्मिन् यथाद शावरान्भोजयेदित्युक्तेदशभ्योऽवरानिति शब्दभृदितिपाठेधर्मशब्दमात्रंबिभर्तीतितथा यथागांदद्यादित्युक्तेमरिष्यंत्यागोदानं ॥ १३ ॥

स्वधर्मानुष्ठानानंतरंधर्मभूयस्त्वादपिपरधर्मोनानुष्ठेयोऽनुपयोगादित्याह स्वभावविहितइति ॥ १४ ॥ किंच अधनोधर्मार्थधनंनेहेत ना पेक्षेतधनार्थनव्याप्रियेतेतिवा दैवोपपन्नेनैवस्वधर्मसिद्धेरुक्तत्वात् यात्रार्थमपिनेहेतइति एतत्प्रपंचयति अनीहेतिसार्द्धैःषड्भिः ॥ १५ ॥ ॥ १६ ॥ उपानहौपादयोर्यस्यसउपानत्पात्तस्य ॥ १७ ॥ गृहपालःश्वातद्वदाचरति ॥ १८ ॥ १९ ॥ क्षुधातृषाचजनःकामस्यांतंयाति अन्नोदकातिरिक्तकामांतराभावात् क्रोधस्यवांतंयाति एतस्यक्रोधस्ययत्फलंहिंसातस्योदयान्निष्पत्तेः दिशोजित्वाऽपिभुवोभुक्त्वाऽपिलो

यस्त्विच्छयाकृतःपुंभिराभासोह्याश्रमात्पृथक् ॥ स्वभावविहितोधर्मःकस्यनेष्टःप्रशांतये ॥ १४ ॥ धर्मार्थमपिनेहेतयात्राऽर्थंवाऽधनोधनं ॥ अनीहानीहमानस्यमहाहेरिववृत्तिदा ॥ १५ ॥ संतुष्टस्यनिरीहस्यस्वात्मारामस्ययत्सुखं ॥ कुतस्तत्कामलोभेनधावतोऽर्थेहयादिशः ॥ १६ ॥ सदासंतुष्टमनसःसर्वाःसुखमयादिशः ॥ शर्कराकंटकादिभ्योयथोपानत्पदःशिवं ॥ १७ ॥ संतुष्टःकेनवाराजन्नवर्तेतापिवारिणा ॥ औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायतेजनः ॥ १८ ॥ असंतुष्टस्यविप्रस्यतेजोविद्यातपोयशः ॥ स्रवंतींद्रियलौल्येनज्ञानंचैवावकीर्यते ॥ १९ ॥ कामस्यांतंचक्षुत्तृड्भ्यांक्रोधस्यैतत्फलोदयात् ॥ जनोयातिनलोभस्यजित्वाभुक्त्वादिशोभुवः ॥ २० ॥ पंडिताबहवोराजन्बहुज्ञाःसंशयच्छिदः ॥ सदसस्पतयोऽप्येकेअसंतोषात्पतंत्यधः ॥ ॥ २१ ॥ असंकल्पाज्जयेत्कामंक्रोधंलामविवर्जनात् ॥ अर्थानर्थेक्षयालोभंभयंतत्त्वावमर्शनात् ॥ २२ ॥ आन्वीक्षिक्याशोकमोहौदंभंमहदुपासया ॥ योगांतरायान्मौनेनहिंसांकायाद्यनीहया ॥ २३ ॥ कृपयाभूतजंदुःखंदैवंजह्यात्समाधिना ॥ आत्मजंयोगवीर्येणनिद्रांसत्त्वनिषेवया ॥ २४ ॥

भस्यनैवांतंयातीत्यर्थः ॥ २० ॥ २१ ॥ इदानींकामादिजयोपायानाह असंकल्पादितिचतुर्भिः जयेदितियथाऽपेक्षमन्वेति अर्थअनर्थदर्शनेन तत्त्वावमर्शनात् अद्वैतानुसंधानेन ॥ २२ ॥ आन्वीक्षिक्याआत्मानात्मविवेकेन महतांसात्विकानांसेवया योगस्यांतरायान् लोकवार्तादीन् ॥ २३ ॥ येभ्योभूतेभ्योभयंजायेततेष्वेवकृपयाहिताचरणेन दैवंदेवोपसर्गनिमित्तंवृथामनःपीडादि तदुक्तंयाज्ञवल्क्येन विमनाविफलारंभःसंसीदत्यनिमित्ततइति आत्मजंदेहजं योगवीर्येणप्राणायामादिबलेन सत्त्वनिषेवयासात्त्विकाहारादिना ॥ २४ ॥

॥ २५ ॥ ननुकथंगुरौभक्त्यासर्वस्यजयःस्यात्तस्यापिमनुष्यत्वेनतदवस्थत्वात्तत्राह यस्येति मर्त्यासद्धीः मनुष्यइतिदुर्बुद्धिस्तस्यशास्त्रश्रव णंकुंजरस्नानवद्व्यर्थं ॥ २६ ॥ ननुगुरोरपिपुत्रायदस्तंनरमेवमन्यंतेअतआह एषगुरुःसाक्षाद्भगवानेवभवेत् लोकस्यनरोऽसावितिबुद्धिर्भ्रांति रित्यर्थः यद्वानहितत्पुत्रादेर्मनुष्यबुध्याप्रतीयमानोऽपिगुरुर्भगवान्नभवेत् यथैषश्रीकृष्णइत्यर्थः ॥ २७ ॥ एवंसर्वैरुपायैःकामादिवेगंजि त्वानियतेंद्रियोभूत्वाध्यानपरोभवेत् अन्यथातंप्रतिसर्वशास्त्रवैफल्यंस्यादित्याह षड्वर्गेति सर्वाअपिनियमचोदनाइष्टापूर्तादिविषयाः षडिंद्रियवर्गस्ययः संयमस्तस्मिन्नेवैकस्मिन्नंतोयासांतदेकपराइत्यर्थः नचतावतापिचरितार्थाइत्याह तदंताःसत्योऽपियदियोगान्धार

रजस्तमश्चसत्त्वेनसत्त्वंचोपशमेनच ॥ एतत्सर्वंगुरौभक्त्यापुरुषोह्यंजसाजयेत् ॥ २५ ॥ यस्यसाक्षाद्भग वतिज्ञानदीपप्रदेगुरौ ॥ मर्त्यासद्धीःश्रुतंतस्यसर्वंकुंजरशौचवत् ॥ २६ ॥ एषवैभगवान्साक्षात्प्रधानपुरुषे श्वरः ॥ योगेश्वरैर्विमृग्यांघ्रिर्लोकोवैमन्यतेनरं ॥ २७ ॥ षड्वर्गसंयमैकांताःसर्वानियमचोदनाः ॥ तदंता यदिनोयोगानावहेयुःश्रमावहाः ॥ २८ ॥ यथावार्तादयोह्यर्थायोगस्यार्थंनबिभ्रति ॥ अनर्थायभवेयुस्तेपू र्तमिष्टंतथाऽसतः ॥ २९ ॥ यश्चित्तविजयेयत्तःस्यान्निःसंगोऽपरिग्रहः ॥ एकोविविक्तशरणोभिक्षुर्भिक्षा मिताशनः ॥ ३० ॥ देशेशुचौसमेराजन्संस्थाप्यासनमात्मनः ॥ स्थिरंसमंसुखंतस्मिन्नासीतर्ज्वंगओ मिति ॥ ३१ ॥ प्राणापानौसन्निरुंध्यात्पूरकुंभकरेचकैः ॥ यावन्मनस्त्यजेत्कामान्स्वनासाग्रनिरीक्षणः ॥ ३२ ॥ यतोयतोनिःसरतिमनःकामहतंभ्रमत् ॥ ततस्ततउपाहृत्यहृदिरुंध्याच्छनैर्बुधः ॥ ३३ ॥ एवम भ्यसतश्चित्तंकालेनाल्पीयसायतेः ॥ अनिशंतस्यनिर्वाणंयात्यनिंधनवन्हिवत् ॥ ३४ ॥

णाध्यानसमाधीन्नोआवहेयुर्नसाधयेयुस्तर्हिकेवलंश्रमावहाएवेत्यर्थः ॥ २८ ॥ एतदेवदृष्टांतेनाह यथावार्तादयः कृष्यादयःअर्था स्तत्फलानिचयोगस्यार्थंमोक्षंनसाधयंति प्रत्युतअनर्थायसंसारायैव असतोबहिर्मुखस्यइष्टापूर्तादयोपितथा ॥ २९ ॥ एवंयोगंयुंजतोऽ पियस्यकुटुंबादिसंगेनचित्तंविक्षिप्येततस्यकृतमाह यश्चित्तस्यविजयेयत्तउद्युक्तःसभिक्षुःस्यात्संन्यसेत्तथाचस्मृतिः द्वंद्वाहतस्यगार्हस्थ्यं ध्यानभंगादिकारणं ॥ लक्षयित्वागृहीस्पष्टंसंन्यसेदविचारयन्निति भिक्षयाप्राप्तंमितमशनंयस्यसः ॥ ३० ॥ ऋजुसममंगंयस्यसः सुखंय थाभवत्येवमासीत ओमित्युच्चारयन्नितिशेषः ॥ ३१ ॥ ३२ ॥ ३३ ॥ एवमनिशमभ्यसतस्तस्ययतेश्चित्तंनिर्वाणंशांतियाति ॥ ३४ ॥

नचपुनर्विक्षिप्येतेत्याह कामादिभिरक्षुभितंयच्चित्तंतन्नोत्तिष्ठेत् यतः प्रशांताअखिलावृत्तयोयस्य कुतः ब्रह्मसुखेनस्पृष्टं ॥ ३५ ॥ यस्तुप्र
व्रज्यां कृत्वाऽपिभोगमभिलिप्सुःस्यात्तंनिंदति यइति त्रयाणांधर्मादीनांवर्गःआसमंतादुप्यतेयस्मिंस्तस्मात् गृहात् तान्धर्मादीन् वांताशीछ
र्दितभोजीनिर्लज्जश्वसः ॥ ३६ ॥ नचेदमघटितंदृष्टत्वादित्याह यैःपूर्वंस्वदेहोनात्मादिरूपःस्मृतश्चितितस्तएवपुनरेतमात्मेतिमत्वाश्ला
घयंतिस्तावयंतिहि ॥ ३७ ॥ यतिमुपलक्षणीकृत्यान्यानपिस्वधर्मत्यागिनोनिंदति गृहस्थस्येतिद्वाभ्यां ॥ ३८ ॥ ३९ ॥ नन्वात्मतत्त्वज्ञ
स्यभिक्षोरिंद्रियलौल्येपिकोदोषस्तत्राह आत्मानंपरंब्रह्म चेज्जानीयात् ज्ञानेनधुतानिरस्ताआशयावासनायस्य तस्यज्ञानिनोलौल्यमेवनसंभ

कामादिभिरनाविद्धंप्रशांताखिलवृत्तियत् ॥ चित्तंब्रह्मसुखस्पृष्टंनैवोत्तिष्ठेतकर्हिचित ॥ ३५ ॥ यःप्रव्रज्य
गृहात्पूर्वंत्रिवर्गावपनात्पुनः ॥ यदिसेवेततान्भिक्षुःसवैवांताश्यपत्रपः ॥ ३६ ॥ यैःस्वदेहःस्मृतोनात्मा
मर्त्योविट्कृमिभस्मसात् ॥ तएनमात्मसात्कृत्वाश्लाघयंतिह्यसत्तमाः ॥ ३७ ॥ गृहस्थस्यक्रियात्यागो
व्रतत्यागोवटोरपि ॥ तपस्विनोग्रामसेवाभिक्षोरिंद्रियलौल्यता ॥ ३८ ॥ आश्रमापसदाह्येतेखल्वाश्र
मविडंबकाः ॥ देवमायाविमूढांस्तानुपेक्षेतानुकंपया ॥ ३९ ॥ आत्मानंचेद्विजानीयात्परंज्ञानधुताशयः ॥
किमिच्छन्कस्यवाहेतोर्देहंपुष्णातिलंपटः ॥ ४० ॥ आहुःशरीरंरथमिंद्रियाणिहयानभीषून्मनइंद्रियेशं ॥
वर्त्मानिमात्राधिषणांचसूतंसत्त्वंबृहद्बंधुरमीशसृष्टं ॥ ४१ ॥ अक्षंदशप्राणमधर्मधर्मौचक्रेऽभिमानंरथिनं
चजीवं ॥ धनुर्हितस्यप्रणवंपठंतिशरंतुजीवंपरमेवलक्ष्यं ॥ ४२ ॥ ॥

वतीत्यर्थः तथाचश्रुतिः आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः ॥ किमिच्छन्कस्यकामायशरीरमनुसंज्वरेदिति ॥ ४० ॥ अज्ञस्यतुलौल्ये
ननरकपातापत्तेरप्रमत्तेनसदातत्त्वज्ञानेयतितव्यमितीममर्थमात्मानंरथिनंविद्धिशरीरंरथमेवचेत्यादिश्रुत्युक्तरथरूपकद्वारेणाह आहुरितिषड्भिः
इंद्रियेशंमनोऽभीषून्रश्मीनाहुः मात्राःशब्दादीन्वर्त्मानिगंतव्यदेशानाहुः सत्त्वंचित्तंबृहद्देहव्यापिबंधुरंबंधनं चित्तंविनाह्यनिबद्धमिवशरीरं
भवति ईशसृष्टमिति बंधनकर्तात्वीशएवेत्यर्थः ॥ ४१ ॥ प्राणादयःपंच नागःकूर्मश्चकृकलोदेवदत्तोधनंजयइत्येवंदशविधंप्राणमक्षं अभि
मानंसाहंकारंजीवंरथिनं शुद्धंजीवंशरं परंब्रह्मलक्ष्यं यथाधनुषाशरोलक्ष्येनिपात्यतेतथाप्रणवेनजीवोब्रह्मणिनिपात्यतइत्यर्थः ॥ ४२ ॥

रागादयोजेतव्याःशत्रवः ॥४३॥ तत्ररजोऽभिनिवेशः क्वचित्आरूढसमाधेःसत्त्वप्रकृतयोऽपिपरोपकारादिप्रवृत्तयःशत्रवः ॥ ४४ ॥ नृ
कायरूपंरथंआत्मवशःउपकल्पइंद्रियादिपरिकरोयस्मिंस्तथाभूतंयावद्धत्तेतावदेवगरिष्ठानांगुरूणांचरणसेवयानिशितंज्ञानखड्गंबिभ्रत् अ
च्युताश्रयःसन्निरस्तशत्रुरुपशांतःस्वानंदेनतुष्टोभूत्वाइदंरथादिकमुपेक्षेतेत्यर्थः ॥ ४५ ॥ अच्युताश्रयाभावेबाधकमाह नोचेदितिअसं
तोबहिर्मुखायेइंद्रियवाजिनःसूतश्चतेउत्पथंप्रवृत्तिमार्गंनीत्वाविषयाख्येषुदस्युषुनिक्षिपंति हयैःसूतेनचसहवर्तमानं तमोंऽधेतमसाव्याप्ते उ

रागोद्वेषश्चलोभश्चशोकमोहौभयंमदः ॥ मानोऽवमानोसूयाचमायाहिंसाचमत्सरः ॥४३ ॥ रजःप्रमादःक्षु
न्निद्राशत्रवस्त्वेवमादयः॥ रजस्तमःप्रकृतयःसत्त्वप्रकृतयःक्वचित् ॥ ४४ ॥ यावन्नृकायरथमात्मवशोपक
ल्पंधत्तेगरिष्ठचरणार्चनयानिशातं॥ ज्ञानासिमच्युतबलोदधदस्तशत्रुःस्वाराज्यतुष्टउपशांतइदंविजह्यात्॥
॥ ४५ ॥ नोचेत्प्रमत्तमसदिंद्रियवाजिसूतानीत्वोत्पथंविषयदस्युषुहिक्षिपंति ॥ तेदस्यवःसहयसूतममुंतमोंऽ
धेसंसारकूपउरुमृत्युभयेक्षिपंति ॥ ४६ ॥ प्रवृत्तंचनिवृत्तंचद्विविधंकर्मवैदिकं ॥ आवर्तेतप्रवृत्तेननिवृत्ते
नाश्नुतेऽमृतं ॥ ४७ ॥ हिंस्रंद्रव्यमयंकाम्यमग्निहोत्राद्यशांतिदं ॥ दर्शश्चपूर्णमासश्चचातुर्मास्यंपशुःसुतः
॥ ४८ ॥ एतदिष्टंप्रवृत्ताख्यंहुतंप्रहुतमेवच ॥ पूर्तंसुरालयारामकूपाजीव्यादिलक्षणं ॥ ४९ ॥

रुमृत्युभयंयस्मिन्॥४६॥ननुवेदविहितेष्टापूर्तादिकारिणःपुंसःकथमेवमनर्थप्राप्तिःस्यादित्याशंक्यवेदोक्तकर्मणांद्वैविध्यंदर्शयन्फलभेदमाह
प्रवृत्तंचेतिदशभिः॥४७॥हिंस्रंश्येनादिकर्म अशांतिदमत्यासक्तियुक्तं आदिशब्दार्थविवरणं दर्शश्चेति पशुःपशुयागः सुतःसोमयागः॥४८॥
हुतंवैश्वदेवं प्रहुतंबलिहरणम् एतत्सर्वमिष्टमुच्यते एतदेवयदिकाम्यमशांतिदंचतर्हिप्रवृत्ताख्यमपीत्यर्थः आजीव्यंप्रपादि ॥ ४९ ॥

प्रवृत्तेनकर्मणाआरोहावरोहाभ्यामावृत्तिप्रकारमाह द्रव्यस्यचरुपुरोडाशादेःसूक्ष्मोविपाकःपरिणामोदेहांतरारंभकोयेनसंपरिष्वक्तोगच्छति यएवश्रुतौअपशब्देनोक्तः इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीति पाठांतरेद्रव्यशब्देनतेजोमात्राशब्दोक्तानींद्रियाणि सूक्ष्मविपाकशब्देनहृदयाग्रप्रद्योतः तथाचश्रुतिः सइमास्तेजोमात्राःसमभ्याददानोहृदयमेवान्वक्रामतीति तथा तस्यहैतस्यहृदयाग्रंप्रद्योततेतेनैष आत्मानिष्क्रामतीति धूमादिशब्दैस्तत्तदभिमानिन्योदेवताः तत्रापक्षयःकृष्णपक्षः सोमःसोमलोकः तत्रभुक्तभोगस्यावरोहणप्रकारमाह दर्शइत्यादि विपरीतलक्षणयाविशिष्टभोगक्षयशोकाग्निनादेहलयेनादर्शनमुच्यते एतदुक्तंभवति भूतसूक्ष्मयुक्तोधूमाद्यातिवाहिकदेवताभिः सोमलोकंप्रापितस्तद्भोगावसानेविलीनदेहोवृष्टिद्वारेणौषधिवीरुधादिसाम्यापत्तिक्रमेणजायते एवंपुनर्भवहेतुःपितृयाणंप्रवृत्तकर्ममार्गइति

**द्रव्यसूक्ष्मविपाकश्चधूमोरात्रिरपक्षयः ॥ अयनंदक्षिणंसोमोदर्शओषधिवीरुधः ॥ ५० ॥ अन्नंरेतइतिक्ष्मेशपितृयाणंपुनर्भवः ॥ एकैकश्येनानुपूर्वंभूत्वाभूत्वेहजायते ॥ ५१ ॥ निषेकादिश्मशानांतैःसंस्कारैःसंस्कृतोद्विजः ॥ इंद्रियेषुक्रियायज्ञान्ज्ञानदीपेषुजुह्वति ॥ ५२ ॥ इंद्रियाणिमनस्यूर्मौवाचिवैकारिकंमनः ॥ वाचंवर्णसमाम्नायेतमोंकारेस्वरेन्यसेत् ॥ ५३ ॥ ॥ ॥ ॥**

॥ ५० ॥ क्ष्मेशहेभूपते पुनर्भवमेवाह एकैकश्येनप्रत्येकंक्रमेणभूत्वातत्तत्सान्निध्यंप्राप्येहभूमौजायते ॥५१॥ तत्राधिकारिणमाह निषेकादीति अन्यस्त्विवष्टादिकार्यप्येवंजन्मनलभतइत्यर्थः निवृत्तकर्मनिष्ठस्योपासनादिविशेषमुपदिशन्नर्चिरादिमार्गेणब्रह्मलोकप्राप्तिमाह इंद्रियेष्वित्यादिना यद्वा द्रव्ययज्ञेषुहिंसायादुर्निवारत्वादितिमुख्यंनिवृत्तकर्मैवदर्शयन्नाह ज्ञानेनदीप्यंतइतितथातेषु इंद्रियव्यापाराणामिष्टापूर्तादीनामिंद्रियतावन्मात्रतांभावयंतीत्यर्थः एवमुत्तरत्रापि ॥५२॥ ऊर्मौदर्शनादिसंकल्परूपेमनसि वैकारिकंविकारयुक्तंमनोवाचि विध्यादिलक्षणयावाचाहिमनःकर्तृत्वादिविकारंभजाति वर्णानांसमाम्नायेसमुदाये तद्विशेषत्वाद्वाचः स्वरेअकारादिस्वरत्रयात्मके ॥ ५३ ॥

ओंकारंबिंदौ तंचनादे प्राणेसूत्रात्मनि महतिब्रह्मणि अग्निरिति तत्तदभिमानिन्योदेवताःप्राप्नोतीतिपूर्ववत् दिवाहः प्राह्णस्तस्यैवांतः राका शुक्लपक्षस्यांतः यद्वा प्राह्णोराकाइतिचपुराणमतं उत्तरंत्वयनं स्वराट्ब्रह्मा एवंब्रह्मलोकंगतस्यभोगावसानेमोक्षप्रकारमाह विश्वइति विश्वःस्थूलोपाधिः सःस्थूलंसूक्ष्मेविलाप्यसूक्ष्मोपाधिस्तैजसोभवति सूक्ष्मंकारणेविलाप्यकारणोपाधिःप्राज्ञोभवति कारणंचसर्वसाक्षित्वे नान्वयात्साक्षिस्वरूपेविलाप्यतुर्योभवति तेषांचव्यभिचारिणांसाक्ष्याणांलयेशुद्धआत्माभवतिमुच्यतइत्यर्थः ॥ ५४ ॥ यथेतरोभूत्वानि वर्ततेतथाननिवर्ततइत्यर्थः ॥ ५५ ॥ वेदेननिर्मिते तेधूममभिसंभवंतीत्यादिनातेर्अचिरभिसंभवतीत्यादिनाचनिश्चयेनविविच्यज्ञापितेइ त्यर्थः जनस्थोऽपिदेहस्थोऽपिनमुह्यति ॥ ५६ ॥ तत्रहेतुमाह आदाविति जनानांदेहानामादौकारणत्वेन अंतेवाऽवधित्वेन यत्सद्यथा

**ओंकारंबिंदौनादेतंतंतुप्राणेमहत्यमुं ॥ अग्निःसूर्योदिवाप्राण्हःशुक्लोराकोत्तरंस्वराट् ॥ विश्वश्चतैजसःप्रा ज्ञस्तुर्यआत्मासमन्वयात् ॥ ५४ ॥ देवयानमिदंप्राहुर्भूत्वाभूत्वाऽनुपूर्वशः ॥ आत्मयाज्युपशांतात्माह्या त्मस्थोननिवर्तते ॥ ५५ ॥ यएतेपितृदेवानामयनेवेदनिर्मिते ॥ शास्त्रेणचक्षुषावेदजनस्थोऽपिनमुह्यति ॥ ५६ ॥ आदावंतेजनानांसद्बहिरंतःपरावरं ॥ ज्ञानंज्ञेयंवचोवाच्यंतमोज्योतिस्त्वयंस्वयं ॥ ५७ ॥ आ बाधितोऽपिह्याभासोयथावस्तुतयास्मृतः ॥ दुर्घटत्वादैंद्रियकंतद्वदर्थविकल्पितं ॥ ५८ ॥ क्षित्यादीना मिहार्थानांछायानकतमापिहि ॥ नसंघातोविकारोऽपिनपृथङ्नान्वितोमृषा ॥ ५९ ॥**

बहिर्भोग्यमंतर्भोक्तृ परमवरंचउच्चनीचं तमोऽप्रकाशः ज्योतिःप्रकाशः तत्तुसर्वमयंज्ञानीस्वयमेवनतस्माद्व्यतिरिक्तंवस्तुकिंचिदस्तियेनमु ह्येदित्यर्थः ॥ ५७ ॥ ननुतर्हिकथंपृथगर्थस्तस्यापिप्रतीयतेतत्राह आबाधितःतर्कविरोधेनसर्वतोबाधितोऽपिआभासःप्रतिबिंबादिर्वस्तुत यास्मृतस्तद्वदैंद्रियकंसर्वमर्थत्वेनविकल्पितंनतुपरमार्थतः दुर्घटत्वात् ॥ ५८ ॥ तदेवाह क्षित्यादीनांपंचभूतानांछायाऐक्यबुध्यालंबन रूपंदेहादिसंघातारंभपरिणामानांमध्येकतमापिनभवति नतावत्तेषांसंघातोवृक्षाणामिववनं एकदेशाकर्षणेसर्वाकर्षणानुपपत्तेः नह्येक स्मिन्वृक्षआकृष्टेसर्वंवनमाकृष्यते नचविकारआरब्धोअवयवी अपिशब्दान्नपरिणामोपि कुतः सकिंस्वावयवेभ्यःपरिणतेभ्योवापृथक्तद न्वितोवा नतावदत्यंतंपृथक् तथाअप्रतीतेः नचान्वितः सकिंप्रत्यवयवंसर्वोऽप्यन्वेतिअंशेनवा आद्येअंगुलिमात्रेपिदेहबुद्धिःस्यात् द्वि तीयेतस्याप्यंशांगीकारेसत्यनवस्थास्यादतोमृषैवेत्यर्थः ॥ ५९ ॥ ॥ ॥ ॥

एवंदेहादेर्मिथ्यात्वमुक्तातद्धेतूनांक्षित्यादनिामपिमिथ्यात्वमाह धारयंतीतिधातवोमहाभूतानितन्मात्रैः सूक्ष्मैरवयवैर्विनानस्युः अवयवित्वा त्तेषामपि तर्ह्यवयवः सत्यइतिचेत्तत्राह उक्तप्रकारेणावयविन्यसत्यवयवोऽप्यंततोऽसन्नेवस्यात् अवयविप्रतीत्यन्यथानुपपत्तिंविनातत्सद्भा वेप्रमाणाभावादित्यर्थः तदुक्तंपंचमस्कंधे एवंनिरुक्तंक्षितिशब्दवृत्तमित्यादि ॥ ६० ॥ ननुअवयविनोऽभावेआगमापायिषुबाल्यादिषुसोऽ यंदेवदत्तइतिप्रत्यभिज्ञानंनस्यात् तदुक्तंभट्टैः आविर्भावतिरोभावधर्मकेष्वनपायियत् ॥ तद्धर्मीति तत्राह स्यादिति वस्तुनःपरमात्मनोवि कल्पेभेदेअसति यद्वा वस्तुनोऽविकल्पेसतिपूर्वपूर्वारोपसादृश्यात्सएवेतिभ्रमःस्यात् सचतावदेव यावदविद्यानिवृत्तिःननुसर्वंमिथ्यात्वे शास्त्रस्यविधिनिषेधकताकथंतत्राह स्वप्नमध्येजाग्रत्स्वापव्यवस्थायथेति ॥ ६१ ॥ इदानीमुक्तमेवाद्वैतंभावनात्रयोपदेशेनदृढीकरोति

**धातवोवयवित्वाच्चतन्मात्रावयवैर्विना ॥ नस्युर्ह्यसत्यवयविन्यसन्नवयवोंऽततः ॥ ६० ॥ स्यात्सादृश्यभ्रम स्तावद्विकल्पेसतिवस्तुनः ॥ जाग्रत्स्वापौयथास्वप्नेतथाविधिनिषेधता ॥ ६१ ॥ भावाद्वैतंक्रियाद्वैतंद्रव्याद्वैतं तथात्मनः ॥ वर्तयन्स्वानुभूत्येहत्रीन्स्वप्नान्धुनुतेमुनिः ॥ ६२ ॥ कार्यकारणवस्त्वैक्यमर्शनंपटतंतुवत् ॥ अवस्तु त्वाद्विकल्पस्यभावाद्वैतंतदुच्यते ॥ ६३ ॥ यद्ब्रह्मणिपरेसाक्षात्सर्वकर्मसमर्पणं ॥ मनोवाक्तनुभिःपार्थक्रिया द्वैतंतदुच्यते ॥ ६४ ॥ आत्मजायासुतादीनामन्येषांसर्वदेहिनां ॥ यत्स्वार्थकामयोरैक्यंद्रव्याद्वैतंतदुच्य ते ॥ ६५ ॥ यद्यस्यवाऽनिषिद्धंस्याद्येनयत्रयतोनृप ॥ सतेनेहेतकर्माणिनरोनान्यैरनापदि ॥ ६६ ॥**

भावाद्वैतमितिचतुर्भिः वर्तयन्नालोचयन् स्वानुभूत्याआत्मतत्त्वानुभवेन त्रीन्जाग्रदादीन् त्रयआवसथास्त्रयःस्वप्नाइतिश्रुतेः यद्वा वस्तु भेदबुद्धिरेकःस्वप्नः ततस्तत्तदधिकारभेदेनकर्मभेदबुद्धिर्द्वितीयः ततोमत्कर्मसाधितमेतत्फलंममैवभोग्यमितितृतीयः तान्धुनुतेनिवर्तयति ॥ ६२ ॥ कार्यकारणयोर्वस्त्वैक्यस्यमर्शनमालोचनंतंतुस्वेनपटइति ॥ ६३ ॥ मनोवाक्तनुभिःकृतानांकर्मणांसमर्पणंतैःसमर्पणमिति वा उद्देश्यफलभेदोहिक्रियाभेदेहेतुः ईश्वरार्पणेचतदभावात्क्रियाणामद्वैतं ॥ ६४ ॥ आत्मनःस्वस्यजायादीनांचस्वार्थश्चकामश्चतयोः देहादीनांपंचभूतात्मकत्वेनभोक्तुश्चपरमात्मत्वेनाभेदालोचनेनार्थकामयोर्यदैक्यदर्शनमित्यर्थः ॥ ६५ ॥ उक्तानाश्रमधर्मान्संक्षिप्याह यदिति यत्द्रव्यं येनोपायेन यतःसकाशात् ॥ ६६ ॥ ॥ ॥ ॥

प्रस्तुतमुपसंहरति एतैरिति अस्यश्रीकृष्णस्यगतिं तद्भक्तिभाक्तस्यभक्तः ॥ ६७ ॥ एतत्सर्वसाधारणमुक्तं भक्तस्यतुभक्तिरेवसर्वपुरुषार्थ
हेतुरितिपांडवानेवलक्षीकृत्याह यथाहीति हेनृपदेव नृपैर्देवैश्चसहायैर्दुस्त्यजादितिवा आत्मनःश्रीकृष्णादेवप्रभोर्हेतोः अडभावआर्षः
उत्कर्षेणातरतेत्यर्थः यथायथावत् तमेवभजतेतिशेषः यद्वा यथाआपद्गणादुत्तीर्णस्त्वंयथाचक्रतूनहार्षीत्तथाश्रीकृष्णादेवतारकात्संसारा

एतैरन्यैश्चवेदोक्तैर्वर्तमानःस्वकर्मभिः ॥ गृहेऽप्यस्यगतिंयायाद्राजंस्तद्भक्तिभाङ्नरः ॥ ६७ ॥ यथाहियूयं
नृपदेवदुस्त्यजादापद्गणादुत्तरतात्मनःप्रभोः ॥ यत्पादपंकेरुहसेवयाभवानहारषीन्निर्जितदिग्गजःक्रतून्
॥ ६८ ॥ अहंपुराऽभवंकश्चिद्गंधर्वउपबर्हणः ॥ नाम्नाऽतीतेमहाकल्पेगंधर्वाणांसुसंमतः ॥ ६९ ॥ रूपपेशल
माधुर्यसौगंध्यप्रियदर्शनः ॥ स्त्रीणांप्रियतमोनित्यंमत्तस्तुपुरुलंपटः ॥ ७० ॥ एकदादेवसत्रेतुगंधर्वाप्सर
सांगणाः ॥ उपहूताविश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥ अहंचगायंस्तद्विद्वान्स्त्रीभिःपरिवृतोगतः ॥
ज्ञात्वाविश्वसृजस्तन्मेहेलनंशेपुरोजसा ॥ याहित्वंशूद्रतामाशुनष्टश्रीःकृतहेलनः ॥ ७२ ॥ तावद्दास्यामहंज
ज्ञेतत्रापिब्रह्मवादिनां ॥ शुश्रूषयाऽनुषंगेणप्राप्तोऽहंब्रह्मपुत्रतां ॥ ७३ ॥ धर्मस्तेगृहमेधीयोवर्णितःपापना
शनः ॥ गृहस्थोयेनपदवीमंजसान्यासिनामियात् ॥ ७४ ॥ यूयंनृलोकेबतभूरिभागालोकंपुनानामुनयोऽभि
यंति ॥ येषांगृहानावसतीतिसाक्षाद्गूढंपरंब्रह्ममनुष्यलिंगं ॥ ७५ ॥ सवाअयंब्रह्ममहद्विमृग्यंकैवल्यनिर्वा
णसुखानुभूतिः ॥ प्रियःसुहृद्वःखलुमातुलेयआत्मार्हणीयोविधिकृद्गुरुश्च ॥ ७६ ॥ ॥ ॥

दप्युत्तरतेत्यर्थः ॥ ६८ ॥ श्रीकृष्णसेवामहतामवज्ञयाभ्रश्यतितत्कृपयाचासिद्ध्यतीतिदर्शयन्पूर्ववृत्तांतमाह अहमितिसार्द्धैःपंचभिःना
म्नाउपबर्हणः ॥ ६९ ॥ पेशलंसौकुमार्यं रूपादिभिःप्रियंदर्शनंयस्य ॥ ७० ॥ ७१ ॥ तदाव्हानंविद्वानुन्मत्तःसन्गायन्नेवगतः ॥ ७२ ॥
॥ ७३ ॥ ७४ ॥ त्वंतुकृतार्थएवेतिहर्षेणपुनःपूर्वश्लोकानेवपठति यूयमिति शेषंस्पष्टं ॥ ७५ ॥ ७६ ॥ ॥

नयस्यसाक्षाद्भवपद्मजादिभीरूपंधियावस्तुतयोपवर्णितं ॥ मौनेनभक्त्योपशमेनपूजितःप्रसीदतामेषस सात्वतांपतिः ॥ ७७ ॥ श्रीशुकउवाच इतिदेवर्षिणाप्रोक्तंनिशम्यभरतर्षभः ॥ पूजयामाससुप्रीतः कृष्णंचप्रेमविव्हलः ॥ ७८ ॥ कृष्णपार्थावुपामंत्र्यपूजितःप्रययौमुनिः ॥ श्रुत्वाकृष्णंपरंब्रह्मपार्थःपरमवि स्मितः ॥ ७९ ॥ इतिदाक्षायणीनांतेपृथग्वंशाःप्रकीर्तिताः ॥ देवासुरमनुष्याद्यालोकायत्रचराचराः ॥ ॥ ८० ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेप्रन्हादानुचरितेयुधिष्ठिरनारदसंवादेसदाचारनिर्णयोना मपंचदशोऽध्यायः ॥ १५ ॥ ॥ समाप्तोयंसप्तमःस्कंधः ॥ ॥ ॥

वतेमहापुराणेसप्तमस्कंधेश्रीधरस्वामिविरचितायांभागवतभावार्थदीपिकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ समाप्तोयंसप्तमःस्कंधः ॥

॥ श्रीनृसिंहायनमोऽस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ नमःश्रीपरमहंसास्वादितचरणकमलाचिन्मकरंदायभक्तजनमानसनिवासायश्रीरामचंद्राय ॥ अथाष्टमेचतुर्विंशत्य
ध्यायैर्मनुवर्णनं ॥ तत्सुतैर्ऋषिदेवेंद्रैर्मूर्तिभिश्चहरेःसह ॥ १ प्रतिमन्वंतरंचैवमन्वाद्याःषट्पृथक्पृथक् ॥ प्रवर्तयंतिसद्धर्मान्नृपाल यंत्याचरं
तिच ॥ २ ॥ अतोमन्वंतरस्योक्तसद्धर्मइतिलक्षणं ॥ येनवैक्रियमाणेननरोननिरयंव्रजेत् ॥ ३ ॥ तत्रतुप्रथमेस्वायंभुवःस्वारोचिषस्तथा ॥ उत्तम
स्तामसश्चेतिचतुर्मनुनिरूपणं ॥ ४ ॥ स्वायंभुवेंऽतरेऽनंतदुरंतगुणवर्णनात् ॥ मुदितःपरिपप्रच्छसर्वमन्वंतरस्थितिं ॥ ५ ॥ स्वायंभुवस्येतित्रिभिः
यत्रविश्वसृजांमरीच्यादीनांमनुकन्यासुपुत्रपौत्रादिसर्गः ॥ १ ॥ महीयसोहरेः अत्रक्वचिद्बहुपाठांतरमस्तितदुपेक्षितमस्माभिः ॥ २ ॥ यस्मिन्नती

ओंनमोभगवतेवासुदेवाय ॥ राजोवाच स्वायंभुवस्येहगुरोवंशोऽयंविस्तराच्छ्रुतः ॥ यत्रविश्वसृजांसर्गो
मनूनन्यान्वदस्वनः ॥ १ ॥ यत्रयत्रहरेर्जन्मकर्माणिचमहीयसः ॥ गृणंतिकवयोब्रह्मंस्तानिनोवदशृण्वतां
॥ २ ॥ यद्यस्मिन्नंतरेब्रह्मन्भगवान्विश्वभावनः ॥ कृतवान्कुरुतेकर्ताह्यतीतेऽनागतेऽद्यवा ॥ ३ ॥ ऋषि
रुवाच मनवोऽस्मिन्व्यतीताःषट्कल्पेस्वायंभुवादयः ॥ आद्यस्तेकथितोयत्रदेवादीनांचसंभवः ॥ ४ ॥
आकूत्यांदेवहूत्यांचदुहित्रोस्तस्यवैमनोः ॥ धर्मज्ञानोपदेशार्थंभगवान्पुत्रतांगतः ॥ ५ ॥ कृतंपुराभगवतःक
पिलस्यानुवर्णितं ॥ आख्यास्येभगवान्यज्ञोयच्चकारकुरूद्वह ॥ ६ ॥ विरक्तःकामभोगेषुशतरूपापतिः
प्रभुः ॥ विसृज्यराज्यंतपसेसभार्योवनमाविशत् ॥ ७ ॥ सुनंदायांवर्षशतंपदैकेनभुवंस्पृशन् ॥ तप्यमा
नस्तपोघोरमिदमन्वाहभारत ॥ ८ ॥ मनुरुवाच येनचेतयतेविश्वंविश्वंचेतयतेनयं ॥ योजागर्तिशयाने
ऽस्मिन्नायंतंवेदवेदसः ॥ ९ ॥ ॥ ॥ ॥ ॥

तेकृतवान्यस्मिन्ननागतेयत्कर्ताकरिष्यतिअद्यवावर्तमानेयत्कुरुतेतद्वदेत्यन्वयः ॥ ३ ॥ अस्मिन्कल्पेषण्मनवोव्यतीताः ॥ ४ ॥ तस्यमनोर्दुहि
त्रोःकपिलयज्ञमूर्तिभ्यांपुत्रतांगतःप्राप्तः ॥ ५ ॥ ६ ॥ ७ ॥ घोरंदुस्तरंतपस्तप्यमानःसमाधावनुभूतमिदंवक्ष्यमाणंनिद्रितोच्छ्वसितवद्विस्मितइ
वउपदिशन्निवअनुवदन्निवचाष्टाभिःश्लोकैरन्वाह ॥ ८ ॥ येनचिदात्मनाविश्वंचेतयतेचेतनीभवति विश्वंतुयंनचेतयतेनचेतनीकरोति
स्वतएवाचिद्रूपत्वात् तत्रहेतुः अस्मिन्शयानेस्वपतियोजागर्तिसाक्षितयावर्तते अहोचित्रंनायंजनस्तंवेद सतुइमंवेद ॥ ९ ॥

तस्येश्वरत्वंदर्शयन्लोकस्यहितमुपदिशतिआत्मनाईश्वरेणावास्यंसत्ताचैतन्याभ्यांसंव्याप्यंविश्वंसर्वंजगत्यांलोकेयत्किंचिज्जगद्भूतजात
मतस्तेनैवेश्वरेणयत्किंचित्त्यक्तंदत्तंधनंतेनैवभुंजीथाःभोगान्भुंक्ष्व यद्वातेनहेतुनात्यक्तेनईश्वरार्पणेनभुंजीथाःनस्वार्थं कस्यस्वित्कस्याचि
दपिधनंमागृधःमाभिकांक्षीः यद्वा कस्यस्विदितिकस्यान्यस्यधनमस्तियतोधनाकांक्षाक्रियेतेत्यर्थःतथाचश्रुतिःईशावास्यमितियथाश्लोकमे
व ॥ १० ॥ ननुयदिसर्वंव्याप्नोतितर्हिचक्षुरादिभिःकिंनप्रतीयतेअत्राह यंपश्यंतंजनःचक्षुर्वानपश्यति चक्षुराद्यविषयत्वात् नहिप्रमातारंप्रमा
णंविषयीकरोतीतिभावःतथाचश्रुतिः चक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रमित्यादिननुतर्हिघटनाशेदेवदत्तस्यतद्विषयंचाक्षुषंज्ञानामिवेश्वरस्य ।।पिस्व
रूपभूतंतद्विषयंज्ञानंनश्येत्तत्राह यस्यतुपश्यतश्चक्षुर्ज्ञानंनरिष्यातिननश्यति तत्तदाकारेणोत्पन्नायावृत्तेरेवनाशोनस्वतःसिद्धज्ञानस्य नहिस
वितृप्रकाशःप्रकाश्यनाशेनश्यतीतिभावः भूतानिनिलयोयस्यतंसर्वांतर्यामिणंतथापि सुपर्णंशोभनपतनमसंगमुपधावतभजध्वं ॥ ११ ॥

**आत्मावास्यमिदंविश्वंयत्किंचिज्जगत्यांजगत् ॥ तेनत्यक्तेनभुंजीथामागृधःकस्यस्विद्धनं ॥ १० ॥ यंनप
श्यतिपश्यंतंचक्षुर्यस्यनरिष्यति ॥ तंभूतनिलयंदेवंसुपर्णमुपधावत ॥ ११ ॥ नयस्याद्यंतौमध्यंचस्वःपरो
नांतरंबहिः ॥ विश्वस्यामूनियद्यस्माद्विश्वंचतदृतंमहत् ॥ १२ ॥ सविश्वकायःपुरुहूतईशःसत्यःस्वयंज्योति
रजःपुराणः ॥ धत्तेऽस्यजन्माद्यजयात्मशक्त्यातांविद्ययोदस्यनिरीहआस्ते ॥ १३ ॥ अथाग्रेऋषयःकर्मा
णीहंतेकर्महेतवे ॥ ईहमानोहिपुरुषःप्रायोऽनीहांप्रपद्यते ॥ १४ ॥ ईहतेभगवानीशोनहितत्रविषज्जते ॥
आत्मलाभेनपूर्णार्थोनावसीदंतियेऽनुतं ॥ १५ ॥ ॥ ॥ ॥**

तस्यस्वरूपस्यनित्यत्वमेवोपपादयन्नाह नयस्येतिअमूनिआद्यंतादीनिविश्वस्ययस्माद्भवंतिविश्वंचयत् यद्रूपमतएवाव्यभिचारित्वात्तत्
ऋतंसत्यंमहत्परिपूर्णंब्रह्म ॥ १२ ॥ ननुविश्वंचेत्तद्रूपंतर्हितस्यकुतोजन्माद्यभावःस्वप्रकाशत्वंवाकथंवाजगज्जन्मादिकर्तृत्वेनविकारिणः
सत्यत्वंपूर्णत्वंचतत्राह सईशः अजःसत्यश्चस्वप्रकाशश्चपुराणश्च निर्विकारःविश्वंकायोयस्यपुरूणिहूतानिनामानियस्यतथाविधोऽपिय
तोऽस्याविश्वस्यजन्मादिस्वशक्त्यामाययाधत्तेतांचनित्यसिद्धयाविद्ययाउदस्यहित्वानिष्क्रियएवास्ते ॥ १३ ॥ यस्मादेवमीश्वरःकर्मकृत्वा
संत्यज्यनैष्कर्म्येणास्तेअथअस्माद्धेतोःऋषयोऽप्यग्रेआदौकर्माणिकुर्वंति किमर्थमकर्महेतवेमोक्षार्थं पाठांतरेकर्मनाशाय हियस्मात् ॥ १४ ॥
नन्वीहमानःकर्मभिरवगुंठितःकोशइवबध्येतैवतत्राह ईहतइति अतस्तमनुवर्तमानायेतेनावसीदंतिनविषज्जंते ॥ १५ ॥ ॥

तदेवंलोकानुग्रहायविश्वसृष्ट्यादियःकरोतिश्रीरामकृष्णाद्यवतारैश्चवेदोक्तमप्याचरतितंशरणंव्रजामीत्याह तमिति निजंवर्त्मनरावतारानु
रूपोमार्गस्तत्रसम्यक्स्थितंअतईहमानंकर्माचरंतं तथाऽपिजीववैलक्षण्यमाह निरहंकृतंनिराशिषमनन्यचोदितमितिच निरहंकारत्वेहेतुः
बुधं निराशीष्ट्वेहेतुःपूर्णं अनन्यनियुक्तत्वेहेतुः प्रभुं तथाऽपिकर्मानुष्ठानेहेतुः नॄन्स्वाचारेणशिक्षयंतं तत्किमर्थंतत्राह अखिलान्धर्मान्
भावयतिप्रवर्तयतीतितथातं ॥ १६ ॥ समाहितमपिसंतंमंत्रोपनिषदंव्याहरंतंदृष्ट्वासुप्तोच्छ्वासितवद्विवशमिवमन्वानाअसुरायातुधानाश्चक्षुधा



तमीहमानंनिरहंकृतंबुधंनिराशिषंपूर्णमनन्यचोदितं ॥ नॄन्शिक्षयंतंनिजवर्त्मसंस्थितंप्रभुंप्रपद्येऽखिलध
र्मभावनं ॥ १६ ॥ श्रीशुकउवाच इतिमंत्रोपनिषदंव्याहरंतंसमाहितं ॥ दृष्ट्वाऽसुरायातुधानाजग्धुमभ्य
द्रवन्क्षुधा ॥ १७ ॥ तांस्तथाऽवसितान्वीक्ष्ययज्ञःसर्वगतोहरिः ॥ यामैःपरिवृतोदेवैर्हत्वाऽशासत्त्रिविष्टपं ॥
॥१८॥स्वारोचिषोद्वितीयस्तुमनुरग्नेःसुतोऽभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्यचात्मजाः ॥१९॥तत्रें
द्रोरोचनस्त्वासीद्देवाश्चतुषितादयः ॥ ऊर्जस्तंभादयःसप्तऋषयोब्रह्मवादिनः ॥२०॥ ऋषेस्तुवेदशिरसस्तु
षितानामपत्न्यभूत् ॥ तस्यांजज्ञेततोदेवोविभुरित्यभिविश्रुतः ॥ २१॥ अष्टाशीतिसहस्राणिमुनयोयेधृतव्र
ताः॥अन्वशिक्षन्व्रतंतस्यकौमारेब्रह्मचारिणः॥२२॥तृतीयउत्तमोनामप्रियव्रतसुतोमनुः॥ पवनःसृंजयोय
ज्ञहोत्राद्यास्तत्सुतानृप ॥२३॥ वसिष्ठतनयाःसप्तऋषयःप्रमदादयः ॥ सत्यावेदश्रुताभद्रादेवाइंद्रस्तुसत्य
जित् ॥ २४ ॥ धर्मस्यसूनृतायांतुभगवान्पुरुषोत्तमः ॥ सत्यसेनइतिख्यातोजातःसत्यव्रतैःसह ॥ २५ ॥

निमित्तेनजग्धुमत्तुमभ्यद्रवन्अभिदुद्रुवुः ॥ १७ ॥ यामैःस्वपुत्रैःत्रिविष्टपंस्वर्गमपालयत् स्वयमेवेंद्रोबभूवेत्यर्थः तत्रप्रतिमन्वंतरंमन्वादयः
षडन्येऽन्येभवंति तथाहिसूतोद्वादशेवक्ष्यति मन्वंतरंमनुर्देवामनुपुत्राःसुरेश्वरः ॥ ऋषयोंशावतारश्चहरेःषड्विधमुच्यतइति तत्राद्येस्वायं
भुवोमनुः प्रियव्रतोत्तानपादौमनुपुत्रौ यामादयोदेवाः मरीचिप्रमुखाःसप्तऋषयः यज्ञोहरेरवतारः इंद्रश्चसएवेतितन्मन्वंतरंपंचाविधमेव
तच्चतुर्थस्कंधोपक्रमेनिरूपितं ॥१८॥ द्वितीयादिषुत्रिषुमन्वंतरेषुमन्वादिषट्कमाह स्वारोचिषोद्वितीयस्त्वितियावद्गजेंद्रमोक्षप्रश्नं ॥१९॥
॥ २० ॥ २१ ॥ विभोरसाधारणंचरितमाह अष्टाशीतिसहस्राणीति ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥

सत्यजितःइंद्रस्यसखासन् ॥ २६ ॥ उत्तमस्तृतीयोमनुस्तस्यभ्राताताामसश्चतुर्थोमनुरिति ॥ २७ ॥ त्रिशिखईश्वरइंद्रः ॥२८ ॥ अन्यानपिविशिष्टपराक्रमान्देवानाह देवावैधृतयइति ॥ २९ ॥ हरिरित्याहृतोव्याहृतः ग्रहात्ग्राहात् ॥ ३०॥ अमूमुचत्मोचयामास ॥ ३१ ॥ श्रवणेच्छायांहेतुःतत्कथासुतासुकथासु साकथैववासुमहत्पुण्यं पुण्यस्याविशेषणंधन्यमित्यादि ॥ ३२ ॥ ३३ ॥ इत्यष्टमेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ तुर्येमन्वंतरेप्रोक्तंगजेंद्रस्यविमोक्षणं ॥ द्वितीयादित्रिभिस्तत्तुविस्तरेणोपवर्ण्यते ॥ १ ॥ द्वितीयेतुगजेंद्रस्यगजीभिः

सोऽनृतव्रतदुःशीलानसतोयक्षराक्षसान् ॥ भूतद्रुहोभूतगणांस्त्ववधीत्सत्यजित्सखः ॥ २६ ॥ चतुर्थउत्तमभ्रातामनुर्नाम्नाचतामसः ॥ पृथुःख्यातिर्नरःकेतुरित्याद्यादशतत्सुताः ॥ २७ ॥ सत्यकाहरयोवीरादेवास्त्रिशिखईश्वरः ॥ ज्योतिर्धामादयःसप्तऋषयस्तामसेंऽतरे ॥ २८ ॥ देवावैधृतयोनामविधृतेस्तनयान्नृप ॥ नष्टाःकालेनयैर्वेदाविधृताःस्वेनतेजसा ॥ २९ ॥ तत्रापिजज्ञेभगवान्हरिण्यांहरिमेधसः ॥ हरिरित्याहृतोयेनगजेंद्रोमोचितोग्रहात् ॥ ३० ॥ राजोवाच बादरायणएतत्तेश्रोतुमिच्छामहेवयं ॥ हरिर्यथागजपतिंग्राहग्रस्तममूमुचत् ॥ ३१ ॥ तत्कथासुमहत्पुण्यंधन्यंस्वस्त्ययनंशुभं ॥ यत्रयत्रोत्तमश्लोकोभगवान्गीयतेहरिः ॥ ३२ ॥ सूतउवाच परीक्षितैवंसतुबादरायणिः प्रायोपविष्टेनकथासुचोदितः ॥ उवाचविप्राःप्रतिनंद्यपार्थिवंमुदामुनीनांसदसिस्मशृण्वतां ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेमन्वंतरानुचरितेप्रथमोऽध्यायः ॥ १ ॥ ॥ श्रीशुकउवाच आसीद्गिरिवरोराजंस्त्रिकूटइतिविश्रुतः ॥ क्षीरोदेनावृतःश्रीमान्योजनायुतमुच्छ्रितः ॥ १ ॥ तावताविस्तृतःपर्यक्त्रिभिःशृंगैःपयोनिधिं ॥ दिशःखंरोचयन्नास्तेरौप्यायसहिरण्मयैः ॥ २ ॥ अन्यैश्चककुभःसर्वारत्नधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झरांभसां ॥ ३ ॥ ॥

क्रीडतोजले ॥ दैवाद्ग्राहगृहीतस्यहरिस्मृतिरुदीर्यते ॥ २ ॥ आसीत्अस्ति ॥ १ ॥ तावतायोजनायुतेनपर्यक्परितः त्रिकूटसमाख्याबीजमाह त्रिभिःशृंगैःमुख्यैः ॥ २ ॥ अन्यैश्चशृंगैर्निर्झरांभसांनिर्घोषैश्चककुभः सर्वारोचयन्नास्तइतिपूर्वेणैवान्वयः कथंभूतैःशृंगैः रत्नैर्धातुभिश्चविचित्रितैः नानाविधानांद्रुमलतानांगुल्मायिषुतैः ॥ ३ ॥ ॥ ॥ ॥ ॥

 

पयसऊर्मिभिःसमंतादवनिज्यमानाअंघ्रयोमूलप्रांतायस्य हरिद्भिःपलाशवर्णैः ॥ ४ ॥ ५ ॥ किन्नरादीनांसंगीतसन्नादैर्नदंत्योगुहायस्मि न्प्रदेशेतमभिगर्जंति हरयःसिंहाः अमर्षयाअसहनेन ॥ ६ ॥ नानायेआरण्याःपशवस्तेषांव्रातैः संकुलाभिर्द्रोणीभिरलंकृतआस्ते किंच चित्राद्रुमायेषुतेषुसुरोद्यानेषु कलकंठामधुरस्वनाविहंगमायस्मिन् ॥ ७ ॥ किंच स्वच्छोदकैःसरित्सरोभिर्युतः मणयइववालुकायेषुतैःपुलि नैश्चयुतः देवस्त्रीणांमज्जनेनयआमोदस्तेनसौरभयुक्तान्यंबूनिअनिलाश्चतैश्चयुतआस्ते ॥ ८ ॥ तस्यद्रोण्यांवरुणस्योद्यानमास्ते गिरिवना



सचावनिज्यमानांघ्रिःसमंतात्पयऊर्मिभिः ॥ करोतिश्यामलांभूमिंहरिन्मरकताश्मभिः ॥ ४॥ सिद्धचारण गंधर्वविद्याधरमहोरगैः ॥ किन्नरैरप्सरोभिश्चक्रीडद्भिर्जुष्टकंदरः ॥ ५ ॥ यत्रसंगीतसन्नादैर्नदद्गुहममर्ष या ॥ अभिगर्जंतिहरयःश्लाघिनःपरशंकया ॥ ६ ॥ नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः ॥ चित्रद्रुम सुरोद्यानकलकंठविहंगमः ॥ ७ ॥ सरित्सरोभिरच्छोदैःपुलिनैर्मणिवालुकैः ॥ देवस्त्रीमज्जनामोदसौरभां ब्वनिलैर्युतः ॥ ८ ॥ तस्यद्रोण्यांभगवतोवरुणस्यमहात्मनः ॥ उद्यानमृतुमन्नामआक्रीडंसुरयोषितां ॥ सर्वतोऽलंकृतंदिव्यैर्नित्यंपुष्पफलद्रुमैः ॥ ९ ॥ मंदारैःपारिजातैश्चपाटलाशोकचंपकैः ॥ चूतैःप्रियालैःप नसैराम्रैराम्रातकैरपि ॥ १० ॥ क्रमुकैर्नालिकेरैश्चखर्जूरैर्बीजपूरकैः ॥ मधूकैःसालतालैश्चतमालैरसना र्जुनैः ॥ ११ ॥ अरिष्टोदुंबरप्लक्षैर्वटैःकिंशुकचंदनैः ॥ पिचुमंदैःकोविदारैःसरलैःसुरदारुभिः ॥ १२ ॥ द्रा क्षेक्षुरंभाजंबूभिर्बदर्यक्षाभयामलैः ॥ बिल्वैःकपित्थैर्जंबीरैर्वृतोभल्लातकादिभिः ॥ १३ ॥ तस्मिन्सरःसु विपुलंलसत्कांचनपंकजं ॥ कुमुदोत्पलकल्हारशतपत्रश्रियोर्जितं ॥ मत्तषट्पदनिर्घुष्टंशकुंतैश्चकलस्वनैः ॥ ॥ १४ ॥ हंसकारंडवाकीर्णंचक्राह्वैःसारसैरपि ॥ जलकुक्कुटकोयष्टिदात्यूहकुलकूजितं ॥ १५ ॥

दिसर्वंध्येयमितिवक्ष्यति अतोगिरिमुपवर्ण्यवनंवर्णयति सर्वतोऽलंकृतमिति ॥ ९ ॥ पुनर्गिरिंवर्णयति मंदारैरितिचतुर्भिः मंदारादिभिर्वृतइत्य न्वयः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तस्मिन्गिरौसरआस्ते तद्वर्णयति सुविपुलमित्यादिसार्धैःपंचभिः लसंतिकांचनपंकजानियस्मिन् कुमु दादीनांश्रियाऊर्जितं कलःस्वनोयेषांतैःशकुंतैश्चनिर्घुष्टं ॥ १४ ॥ चक्राह्वैःसारसैरप्याकीर्णं जलकुक्कुटादीनांकुलैःकूजितं ॥ १५ ॥

मत्स्यानांकच्छपानांचसंचारेणचलतांपद्मानांरजसायुक्तंपयोयस्मिंस्तत् ॥ १६ ॥१७॥ नित्यमृतवः फलपुष्पादिसंपत्तिहेतवोयेषांतैरलं शोभितं ॥ १८ ॥ तत्रैवंसतिएकदातद्गिरिकाननाश्रयोवारणयूथपः करेणुभिश्चरंस्तृषार्दितेनस्वयूथेनवृतः सरोवरस्याभ्याशंसमीपमगमदि

मत्स्यकच्छपसंचारचलत्पद्मरजःपयः ॥ कदंबवेतसनलनीपवंजुलकैर्वृतं ॥१६॥ कुंदैःकुरबकाशोकैःशिरीषैःकुटजेंगुदैः ॥ कुब्जकैःस्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १७ ॥ मल्लिकाशतपत्रैश्चमाधवीजालकादिभिः ॥ शोभितंतीरजैश्चान्यैर्नित्यर्तुभिरलंद्रुमैः ॥१८॥ तत्रैकदातद्गिरिकाननाश्रयःकरेणुभिर्वारणयूथपश्चरन् ॥ सकंटकान्कीचकवेणुवेत्रवद्विशालगुल्मंप्ररुजन्वनस्पतीन् ॥१९॥ यद्गंधमात्राद्धरयोगजेंद्राव्याघ्रादयोव्यालमृगाश्चखड्गाः ॥ महोरगाश्चापिभयाद्द्रवंतिसगौरकृष्णाःशरभाश्चमर्यः ॥२०॥वृकावराहामहिषर्क्षशल्यागोपुच्छसालावृकमर्कटाश्च॥अन्यत्रक्षुद्राहरिणाःशशादयश्चरंत्यभीतायदनुग्रहेण॥२१॥सघर्मतप्तःकरिभिःकरेणुभिर्वृतोमदच्युत्कलभैरनुद्रुतः ॥ गिरिंगरिम्णापरितःप्रकंपयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥२२॥ सरोऽनिलंपंकजरेणुरूषितंजिघ्रन्विदूरान्मदविव्हलेक्षणः॥वृतःस्वयूथेनतृषार्दितेनतत्सरोवराभ्याशमथागमद्द्रुतं ॥२३॥ विगाह्यतस्मिन्नमृतांबुनिर्मलंहेमारविंदोत्पलरेणुवासितं ॥ पपौनिकामंनिजपुष्करोद्धृतमात्मानमद्भिःस्नपयन्गतक्लमः ॥२४॥ स्वपुष्करेणोद्धृतसीकरांबुभिर्निपाययन्संस्नपयन्यथागृही॥घृणीकरेणूःकलभांश्चदुर्मदोनाचष्टकृच्छ्रंकृपणोऽजमायया॥२५॥तंतत्रकश्चिन्नृपदैवचोदितोग्राहोबलीयांश्चरणेरुषाऽग्रहीत् ॥ यदृच्छयैवंव्यसनंगतोगजोयथाबलंसोऽतिबलोविचक्रमे ॥ २६ ॥

तिपंचमेनान्वयः किंकुर्वन् कीचकवेणुवेत्रबंतंविशालंगुल्मलतादिसंदर्भंवनस्पतींश्चप्ररुजन्प्रभंजन् ॥ १९ ॥ कथंभूतः यस्यगंधमात्राद्धरयःसिंहागजेंद्रादयश्चभयाद्द्रवंतिपलायंते ॥ २० ॥ वृकादयःक्षुद्राःअल्पाःप्राणिनःअन्यत्रतदृष्टिपथंत्यक्त्वाचरंति ॥ २१ ॥ पुनःकीदृशःघर्मतप्तःमदच्युन्मदस्रावी मदमश्नंतीतितथातैः ॥ २२ ॥ २३ ॥ निजेनपुष्करेणकराग्रेणोद्धृतं गतक्लमःसन्निकामंपपौ ॥ २४ ॥ २५ ॥ २६ ॥

दीनधियःकरेणवस्तंकेवलंविचुकुशुः ॥ २७॥२८॥ मनउत्साहशक्तिः बलंशारीरं ओजःऐंद्रियं तेषां सकलंबलादि विपर्ययोविपरीत मधिकं जलौकसःग्राहस्य ॥ २९ ॥ सइत्थंयदाप्राणस्यसंकटमाप यतोदेही ॥ ३० ॥ बुद्धिमेवाह नमामीति अहंनचप्रभवामि यतः ग्राहरूपेणकेवलंविधातुःपाशेनावृतस्तथाऽपितंपरंपरमेश्वरंपरेषांब्रह्मादीनामयनमाश्रयभूतंशरणंयामि ॥ ३१ ॥ कोऽसौयंशरणंयासितत्रा





तथातुरंयूथपतिंकरेणवोविकृष्यमाणंतरसाबलीयसा ॥ विचुकुशुर्दीनधियोऽपरेगजाःपार्ष्णिग्रहास्तारयितुंनचाशकन् ॥ २७ ॥ नियुध्यतोरेवमिभेंद्रनक्रयोर्विकर्षतोरंतरतोबहिर्मिथः ॥ समाःसहस्रंव्यगमन्महीपतेसप्राणयोश्चित्रममंसतामराः॥ २८॥ ततोगजेंद्रस्यमनोबलौजसांकालेनदीर्घेणमहानभूद्व्ययः॥ विकृष्यमाणस्यजलेवसीदतोविपर्ययोऽभूत्सकलंजलौकसः ॥ २९ ॥ इत्थंगजेंद्रःसयदापसंकटंप्राणस्यदेहीविवशोयदृच्छया ॥ अपारयन्नात्मविमोक्षणेचिरंदध्याविमांबुद्धिमथाभ्यपद्यत ॥ ३० ॥ नमामिमे ज्ञातयआतुरंगजाःकुतःकरिण्यःप्रभवंतिमोचितुं ॥ ग्राहेणपाशेनविधातुरावृतोऽप्यहंचतंयामिपरंपरायणं ॥ ३१ ॥ यःकश्चनेशोबलिनोऽतकोरगात्प्रचंडवेगादभिधावतोभृशं ॥ भीतंप्रपन्नंपरिपातियद्भयान्मृत्युःप्रधावत्यरणंतमीमहि ॥ ३२ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेमन्वंतरानुवर्णनेगजेंद्रोपाख्यानेद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ॥ श्रीशुकउवाच एवंव्यवसितोबुद्ध्यासमाधायमनोहृदि ॥ जजापपरमंजाप्यंप्राग्जन्मन्यनुशिक्षितं ॥ १ ॥ ॥ ॥ ॥ ॥



ह यःकश्चनेति अंतकएवोरगस्तस्मात् तंशरणमीमहिव्रजेम यद्भयादित्यत्रश्रुतिः भीषाऽस्माद्वातःपवते भीषोदेतिसूर्यः भीषाऽस्मादग्निश्चेंद्रश्च मृत्युर्धावतिपंचमइति ॥ ३२ ॥ इत्यष्टमस्कंधेटीकायांद्वितीयोऽध्यायः ॥ २ ॥ तृतीयेतुगजेंद्रेणस्तुतोहरिरुपेत्यतं ॥ समुद्धारेभंग्राहात्ग्राहंदेवलशापतः ॥ १ ॥ जाप्यंजप्यंस्तोत्रं प्राग्जन्मानिइंद्रद्युम्नसंज्ञे ॥ १ ॥ ॥ ॥ ॥

तस्मैनमोनमनंअभिधीमहिअभिध्यायेमकेवलं ग्राहगृहीतत्वेनकायप्रणतेरशक्यत्वात् स्वस्यतज्ज्ञानंसंभावयितुंविशिनष्टि यतश्चिद्रूपादे
तद्देहादिचिदात्मकंचेतनंभवति तदुक्तं येनचेतयतेविश्वमिति तत्रहेतुः पुरुषायपूर्षुकारणत्वेनप्रविष्टाय ननुप्रकृतिपुरुषौकारणमितिप्रसि
द्धंतत्राह आदिःप्रकृतिर्बीजंपुरुषस्तद्रूपाय प्रविष्टत्वेऽपिजीववत्पारतंत्र्यंवारयति परेशायेति ॥ २ ॥ परमैश्वर्यंविवृण्वन्नाह यावत्समा
प्ति यस्मिन्नधिष्ठानेयतउपादानात्येनकर्त्रायश्चस्वयमेवेदंविश्वंभवति अस्मात्कार्यात्परस्मात्कारणाच्चयःपरस्तंस्वयंभुवंस्वतःसिद्धंप्रपद्ये
शरणंव्रजामि ॥ ३ ॥ विश्वहेतुत्वंस्वतःसिद्धत्वंचोक्तमिदानींविश्वप्रकाशकत्वंस्वप्रकाशकत्वंचवर्णयन्प्रार्थयते यःस्वात्मनीति विभातम
भिव्यक्तंसत्क्वचित्प्रलयेतिरोहितंलीनंसत् तदुभयंकार्यंकारणंचसाक्षीसन्नीक्षते साक्षित्वेहेतुः अविद्धदृक् अलुप्तदृष्टिः आत्ममूलःस्वयंप्र

गजेंद्रउवाच नमोभगवतेतस्मैयतएतच्चिदात्मकं ॥ पुरुषायादिबीजायपरेशायाभिधीमहि ॥ २ ॥ यस्मि
न्निदंयतश्चेदंयेनेदंयइदंस्वयं ॥ योऽस्मात्परस्माच्चपरस्तंप्रपद्येस्वयंभुवं ॥३ ॥ यःस्वात्मनीदंनिजमायया ऽ
र्पितंक्वचिद्विभातंक्वचतत्तिरोहितं ॥ अविद्धदृक्साक्ष्युभयंतदीक्षतेसआत्ममूलोऽवतुमांपरात्परः ॥४॥ काले
नपंचत्वमितेषुकृत्स्नशोलोकेषुपालेषुचसर्वहेतुषु ॥ तमस्तदासीद्गहनंगभीरंयस्तस्यपारेऽभिविराजतेवि
भुः ॥ ५ ॥ नयस्यदेवाऋषयःपदंविदुर्जंतुःपुनःकोऽर्हतिगंतुमीरितुं ॥ यथानटस्याकृतिभिर्विचेष्टतोदुरत्यया
नुक्रमणःसमावतु ॥ ६ ॥ दिदृक्षवोयस्यपदंसुमंगलंविमुक्तसंगामुनयःसुसाधवः ॥ चरंत्यलोकव्रतमव्रणंव
नेभूतात्मभूताःसुहृदःसमेगतिः ॥ ७ ॥ ॥ ॥ ॥

काशः कुतः परात्प्रकाशकाच्चक्षुरादेरपिपरस्तस्यापिप्रकाशकइत्यर्थः चक्षुषश्चक्षुरित्यादिश्रुतेः ॥ ४ ॥ तिरोहितमीक्षतइत्येतत्प्रपंचपूर्व
कंदुर्ज्ञेयत्वंवदन्प्रार्थयते कालेनेतिद्वाभ्यां पंचत्वमितेषुनाशंप्राप्तेषु गहनंदुरवगाहं गभीरमनंतं तस्यतमसः आदित्यवर्णंतमसःपरस्ता
दितिश्रुतेः ॥ ५ ॥ अतएवदेवादयोयस्यस्वरूपंनविदुः जंतुरर्वाचीनःकोऽपिगंतुंज्ञातुमीरितुंवक्तुंवादुरत्ययंदुर्गममनुक्रमणंचारितंकथनंवा
यस्यसः मामां ॥ ६ ॥ कथंतर्हितमेवविदित्वातिमृत्युमेतीत्यादिश्रुतिरित्याशंक्यतज्ज्ञानोपायंकथयन्नाह दिदृक्षवइति अलोकव्रतंब्रह्म
चर्यादि अव्रणमच्छिद्रं भूतानामात्मभूताःभूतेष्वात्मदृष्टयःसंतः समेगतिरस्तु ॥ ७ ॥ ॥ ॥

दुरत्ययानुक्रमणत्वंप्रपंचयन्प्रणमाति नविद्यतइत्यादिना लोकानामप्ययःप्रलयःसंभवोजन्मतयोर्द्वंद्वैक्यं तदर्थंयस्तानिजन्मादीनिस्वकि
रोतितस्मैनमइत्युत्तरेणान्वयः ॥८॥ ब्रह्मणेअरूपाय अनंतशक्तयेउरुरूपाय अतआश्चर्याणिकर्माणियस्यतस्मैपरेशायनमः ॥९॥ आत्म
प्रदीपायप्रकाशांतरस्याविषयाय कुतःसाक्षिणेप्रकाशाय परमात्मनेजीवनियंत्रे अतएवगिरांविदूरायअप्राप्याय चेतसांचित्तवृत्तीनां तथाच
श्रुतिः यतोवाचोनिवर्ततेअप्राप्यमनसासहेति ॥ १० ॥ एवमपिविपश्चितानिपुणेननैष्कर्म्येणसंन्यासेन सत्वेनशुद्धेन संन्यासयोगाद्यतयः
शुद्धसत्वाइतिश्रुतेः प्रतिलभ्यायप्रत्यक्त्वेनप्राप्याय निर्वाणसुखसंविदेमोक्षानंदानुभूतये ॥ ११ ॥ गुणधर्मिणे सत्वादिधर्मानुकारिणे
ज्ञानघनायचेतिनिर्विशेषत्वेऽपिप्रधानवैलक्षण्यमुक्तं ॥ १२ ॥ साक्षिणइतिसर्वाध्यक्षत्वेऽपिनिर्विकारत्वमुक्तं आत्मनांक्षेत्रज्ञानांमूलाय मू

नविद्यतेयस्यचजन्मकर्मवाननामरूपेगुणदोषएववा ॥ तथाऽपिलोकाप्ययसंभवायय:स्वमाययातान्यनु
कालमृच्छति॥८॥तस्मैनमःपरेशायब्रह्मणेऽनंतशक्तये॥अरूपायोरुरूपायनमआश्चर्यकर्मणे॥९॥नमआ
त्मप्रदीपायसाक्षिणेपरमात्मने॥नमोगिरांविदूरायमनसश्चेतसामपि॥१०॥सत्वेनप्रतिलभ्यायनैष्कर्म्येण
विपश्चिता॥नमःकैवल्यनाथायनिर्वाणसुखसंविदे॥११॥नमःशांतायघोरायमूढायगुणधर्मिणे॥निर्विशेषा
यसाम्यायनमोज्ञानघनायच॥१२॥क्षेत्रज्ञायनमस्तुभ्यंसर्वाध्यक्षायसाक्षिणे॥पुरुषायात्ममूलायमूलप्रकृ
तयेनमः॥१३॥सर्वेंद्रियगुणद्रष्ट्रेसर्वप्रत्ययहेतवे॥असताछाययोक्तायसदाभासायतेनमः॥१४॥नमोनम
स्तेऽखिलकारणायनिष्कारणायाद्भुतकारणाय॥सर्वागमाम्नायमहार्णवायनमोऽपवर्गायपरायणाय॥१५॥

लस्यप्रधानस्यापिप्रकृतयेउद्भवहेतवे तत्रहेतुः पुरुषायपूर्वमेवसते तथाचश्रुतिः पूर्वमेवाहमिहासामितितत्पुरुषस्यपुरुषत्वमितिपूर्णायेति
वा ॥ १३ ॥ सर्वेंद्रियाणांयेगुणाःविषयास्तेषांद्रष्ट्रे सर्वेप्रत्ययाइंद्रियवृत्तयोहेतवोज्ञापकायस्यतस्मै तदेवाह असताअहंकारादिप्रपंचेन
छाययाऽसद्रूपया उक्तायप्रतिबिंबेनबिंबमिवसूचिताय तत्रहेतुः सद्रूपोविषयेषुआभासोयस्यतस्मै तदुक्तंतृतीये यथाजलस्थआभासइत्या
दिना पाठांतरेअसत्यस्यछाययाअध्यासेनअक्ताययुक्तायतदधिष्ठानायेत्यर्थः ॥१४॥अखिलकारणायसर्वकारणरूपायअतएवस्वयंनिष्का
रणाय कारणत्वेपिमृदादिवद्विकारंवारयति अद्भुतकारणायेति एवंभूतत्वेप्रमाणमाह सर्वेआगमाःपंचरात्रादयःआम्नायाश्चवेदास्तेषांमहार्ण
वायस्त्रोतसामिवपर्यवसानस्थानाय अपवर्गायमोक्षरूपाय अतःपरायणायउत्तमानामाश्रयाय ॥ १५ ॥

गुणाएवारणिस्तयाछन्नश्चिदूष्मपोज्ञानाग्निस्तस्मै तेषांगुणानांक्षोभेकार्यैर्विस्फूर्जितंबहिर्वृत्तिकंमानसंयस्य सोऽकामयतबहुस्यामितिश्रुतेः नैष्कर्म्यमात्मतत्त्वंतस्यभावेनभावनयाविवर्जिताआगमाविधिनिषेधलक्षणायैस्तेषुस्वयमेवप्रकाशोयस्यतस्मै ॥ १६ ॥ मादृक्मद्विधश्चा सौप्रपन्नःपशुस्तस्यपाशोऽविद्यातस्यविशेषेणमोक्षणंयेन तत्रयोग्यतामाह मुक्ताय मोचनेहेतुः भूरिःकरुणायस्य अतस्तत्रार्थेअलयायअन लसाय स्वांशेनअंतर्यामिरूपेणसर्वेषांतनुभृतांमनसिप्रतीताप्रख्यातायाप्रत्यक्दृक्तस्मै तथाचश्रुतिः यआत्मनितिष्ठन्नात्मानमंतरोयमयती ति भगवतेसर्वेषांतनुभृतांनियमनेसमर्थाय तेषांमनःस्थितत्वेऽपिबृहतेअपरिच्छिन्नाय ॥ १७ ॥ अंतस्थत्वेऽपिदेहादिष्वासक्तैर्दुष्प्रापणाय

गुणारणिच्छन्नचिदूष्मपायतत्क्षोभविस्फूर्जितमानसाय ॥ नैष्कर्म्यभावेनविवर्जितागमस्वयंप्रकाशायन मस्करोमि ॥ १६ ॥ मादृक्प्रपन्नपशुपाशविमोक्षणायमुक्तायभूरिकरुणायनमोऽलयाय ॥ स्वांशेनसर्व तनुभृन्मनसिप्रतीतप्रत्यग्दृशेभगवतेबृहतेनमस्ते ॥१७॥ आत्मात्मजाप्तगृहवित्तजनेषुसक्तैर्दुष्प्रापणाय गुणसंगविवर्जिताय ॥ मुक्तात्मभिःस्वहृदयेपरिभावितायज्ञानात्मनेभगवतेनमईश्वराय ॥ १८ ॥ यंधर्म कामार्थविमुक्तिकामाभजंतइष्टांगतिमाप्नुवंति ॥ किंत्वाशिषोरात्यपिदेहमव्ययंकरोतुमेऽदभ्रदयोविमोक्षणं ॥ १९ ॥ एकांतिनोयस्यनकंचनार्थंवांछंतियेवैभगवत्प्रपन्नाः ॥ अत्यद्भुतंतच्चरितंसुमंगलंगायंतआनंद समुद्रमग्नाः ॥ २० ॥ तमक्षरंब्रह्मपरंपरेशमव्यक्तमाध्यात्मिकयोगगम्यं ॥ अतींद्रियंसूक्ष्ममिवातिदूरम नंतमाद्यंपरिपूर्णमीडे ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥

आतुमशक्यायतत्रहेतुः गुणसंगेनविवर्जिताय अतएवमुक्तात्मभिर्देहादिष्वनासक्तैर्श्चिंतिताय तैःपरिभावितंरूपमाह ज्ञानात्मनइत्यादि ॥ १८ ॥ इष्टांगतिंकामितधर्मादिफलंप्राप्नुवंत्येवनतुतावदेवकिंतुयास्तैरकामिताअन्याअप्याशिषोराति देहमव्ययंराति एवंयःअदभ्रदयः समेविमोक्षणंकेवलंकरोतुनाधिकंप्रार्थये ॥ १९ ॥ एतावदप्यहंभक्तिसुखानभिज्ञत्वेनवांछामि यस्यएकांतभक्तानकंचिदर्थंवांछंति तंपरमेश्वरमीडेस्तौमीत्युत्तरेणान्वयः तेषांनिष्कामत्वेहेतुः येवैभगवतःसर्वज्ञान्मुक्तान्प्रपन्नाःसेवितवंतः ॥ २० ॥ अत्यद्भुतसुमंगलत्व प्रदर्शनार्थमक्षरत्वादीनिविशेषणानि ॥ २१ ॥ ॥ ॥ ॥ ॥

परिपूर्णत्वंप्रदर्शयन्नाह त्रिभिर्यस्येति फल्ग्व्याचस्वल्पयैवकलयाअंशेनकृताःसजयतादितितृतीयेनान्वयः ॥ २२ ॥ कथंकृताइत्यपेक्षा यांदृष्टांतौ यथार्ऽचिषोऽग्नेरितिप्रवाहेदृष्टांतः सवितुर्गभस्तयइत्यानंत्ये निर्यांतिउद्गच्छंति संयांतिलीयंते गुणसंप्रवाहमेवाह बुद्धिर्मनइति खानिकरणानिशरीरसर्गाःकार्यदेहप्रवाहाश्रयतोभवंतिसः ॥ २३ ॥ अतएवदेवादीनांमध्येकोऽपिनभवति नजंतुःलिंगत्रयशून्यंप्राणि मात्रमपि किंतुसर्वस्यनिषेधेअवधित्वेनअवशिष्यतइतिनिषेधशेषोमाययाअशेषःअशेषात्मकोजयतात् मद्विमोक्षणायाविर्भवतु ॥ २४ ॥ न चग्राहाच्छरीरस्यमोक्षणेनाहंजीवितुमिच्छामि तत्रहेतुःअमुयाअंतर्बहिश्चाविवेकव्याप्तयागजजात्याकिंप्रयोजनं आत्मलोकस्यआत्मप्रका

यस्यब्रह्मादयोदेवावेदालोकाश्चराचराः ॥ नामरूपविभेदेनफल्ग्व्याचकलयाकृताः ॥ २२ ॥ यथार्ऽचिषोऽग्नेःसवितुर्गभस्तयोनिर्यांतिसंयांत्यसकृत्स्वरोचिषः ॥ तथायतोऽयंगुणसंप्रवाहोबुद्धिर्मनःखानिशरीरसर्गाः ॥ २३ ॥ सवैनदेवासुरमर्त्यतिर्यङ्नस्त्रीनषंढोनपुमान्नजंतुः ॥ नायंगुणःकर्मनसन्नचासन्निषेधशेषोजयतादशेषः ॥ २४ ॥ जिजीविषेनाहमिहामुयाकिमंतर्बहिश्चावृतयेभयोन्या ॥ इच्छामिकालेननयस्यविप्लवस्तस्यात्मलोकावरणस्यमोक्षं ॥ २५ ॥ सोऽहंविश्वसृजांविश्वमविश्वंविश्ववेदसं ॥ विश्वात्मानमजंब्रह्मप्रणतोऽस्मिपरंपदं ॥ २६ ॥ योगरंधितकर्माणोहृदियोगविभाविते ॥ योगिनोयंप्रपश्यंतियोगेशंतंनतोऽस्म्यहं ॥ २७ ॥ नमोनमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ॥ प्रपन्नपालायदुरंतशक्तयेकदिंद्रियाणामनवाप्यवर्त्मने ॥ २८ ॥ ॥ ॥ ॥

शस्ययदावरणमज्ञानंतस्यैवतुमोक्षमिच्छामि यस्यमोक्षस्यकालेननाशोनास्ति यद्वा देहस्यबंधोदेहनाशेनश्यदेवकिंतन्मोक्षप्रार्थनेन आत्मलोकावरणस्यतुकालेनविप्लवोनास्ति ज्ञानैकनिवर्त्यत्वात् अतस्तस्यैवमोक्षमिच्छामीत्यर्थः ॥ २५ ॥ सोऽहंमुमुक्षुःविश्वंविश्वरूपं अविश्वंविश्वव्यतिरिक्तंच विश्ववेदोधनमुपकरणंयस्यतं विश्वस्यात्मानंचकेवलंप्रणतोऽस्मिनतुतंजानामि ॥ २६ ॥ योगंविनादुर्ज्ञेयत्वादित्याह योगेनभगवद्धर्मेणरंधितानिदग्धानिकर्माणियेषांतेयंप्रपश्यंति ॥ २७ ॥ तर्हिसर्वेऽपियोगमेवाकिंनास्थितास्तत्राह नमइतिद्वाभ्यां असह्योवेगोरागादिलक्षणोयस्यतथाभूतंशक्तित्रयंयस्यतस्मै बहिश्चअखिलधियांसर्वेंद्रियाणांगुणायशब्दादिरूपेणप्रतीयमानाय अतःकदिंद्रियाणांकुत्सितानींद्रियाणियेषांतेषामनवाप्यंवर्त्मयस्य ॥ २८ ॥ ॥ ॥ ॥

यच्छक्त्यायस्यमाययायाअहंधीस्तयाहतमावृतमयंजनोनवेद दुरत्ययंमाहात्म्यंयस्य तमितःआश्रितोऽस्मि ॥ २९ ॥ उपवर्णितंनिर्विशेषं मूर्तिभेदंविनापरंतत्त्वंयेनतं विविधाचासौलिंगभिदामूर्तिभेदस्तस्यामभिमानोयेषांते अतएतेयदानोपजग्मुः तत्रतदा अखिलामरमयःसर्व देवमयमूर्तिः ॥ ३० ॥ दिविजैर्देवैःसह छंदोमयेनेतिशैघ्यायोक्तं ॥ ३१ ॥ खेदृष्ट्वा उपात्तमुद्यतंचक्रंयेन ॥ ३२॥ गरुडोऽपिमंदगातिरिति ततःसहसाऽवतीर्यअरिणाचक्रेणविपाटितंमुखंयस्य उच्छ्रियाणांदेवानां ॥ ३३ ॥ इत्यष्टमेटीकायांतृतीयोऽध्यायः ॥३॥ ॥ ॥ चतुर्थेतु

नायंवेदस्वमात्मानंयच्छक्त्याऽहंधियाहतं ॥ तंदुरत्ययमाहात्म्यंभगवंतमितोऽस्म्यहं ॥ २९ ॥ श्रीशुकउवाच एवंगजेंद्रमुपवर्णितनिर्विशेषंब्रह्मादयोविविधलिंगभिदाऽभिमानाः ॥ नैतेयदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयोहरिराविरासीत् ॥ ३० ॥ तंतद्वदार्तमुपलभ्यजगन्निवासःस्तोत्रंनिशम्यदिविजैःसहसंस्तुवद्भिः ॥ छंदोमयेनगरुडेनसमुह्यमानश्चक्रायुधोभ्यगमदाशुयतोगजेंद्रः ॥ ३१ ॥ सोंऽतःसरस्युरुबलेनगृहीतआर्तोदृष्ट्वागरुत्मतिहरिंखउपात्तचक्रं॥उत्क्षिप्यसांबुजकरंगिरमाहकृच्छ्रान्नारायणाखिलगुरोभगवन्नमस्ते ॥३२॥ तंवीक्ष्यपीडितमजःसहसावतीर्यसग्राहमाशुसरसःकृपयोज्जहार ॥ ग्राहाद्विपाटितमुखादरिणागजेंद्रंसंपश्यतांहरिरमूमुचदुच्छ्रियाणां ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेगजेंद्रमोक्षणेतृतीयोध्यायः ॥ ३ ॥ श्रीशुकउवाच तदादेवर्षिगंधर्वाब्रह्मेशानपुरोगमाः ॥ मुमुचुःकुसुमासारंशंसंतःकर्मतद्धरेः ॥ १ ॥ नेदुर्दुंदुभयोदिव्यागंधर्वानन्नृतुर्जगुः ॥ ऋषयश्चारणाःसिद्धास्तुष्टुवुःपुरुषोत्तमं ॥ २ ॥ योऽसौग्राहःसवैसद्यःपरमाश्चर्यरूपधृक् ॥ मुक्तोदेवलशापेनहूहूर्गंधर्वसत्तमः ॥ ३ ॥

तयोर्ग्राहःप्रापगंधर्वतांपुनः ॥ गजंस्वपार्षदंकृत्वाहारिर्निन्येनिजंपदं ॥ १ ॥ १ ॥ २ ॥ हूहूसंज्ञोगंधर्वसत्तमःअसौदेवलस्यशापेनग्राहोजातःसवैसतु ततःसद्योमुक्तःसन्नुत्तमश्लोकमगायतेत्यन्वयः एवंहीतिहासोत्तमेकथा सरसिस्त्रीभिःक्रीडन्नसौस्नातुंप्रविष्टंदेवलंपादेप्रगृह्याविचकर्ष सचप्रकुपितोग्राहोभवेतिशशाप तेनचप्रसादितःसन्नुवाच एवमेवगजेंद्रंगृहीष्व ततश्चगजेंद्रमुद्धरन्हरिस्त्वामपिमोचयिष्यतीति ॥ ३ ॥

कथंभूतं यशसोधामआश्रयं अतःकीर्तन्याःकीर्तनीयागुणाःसतीकथाचयस्यतं ॥ ४ ॥ स्वंलोकंगंधर्वलोकं ॥५॥६॥७॥ कुलाचलेमलया द्रावाश्रमोयस्य ॥८॥ तूष्णींरहस्युपासीनंवीक्ष्य ॥ ९॥ शापमेवाह असाधुरित्यादि अकृताअशिक्षिताबुद्धिर्यस्य गजोयथास्तब्धमतिस्तथै वायमतःसएवगजएवभवतुइतिशेषः ॥ १० ॥ दिष्टंदैवप्रापितंतदुपधारयन्नालोचयन् ॥ ११ ॥ कौंजरींयोनिमापन्नः तर्हिपश्चात्कथंस्मृ



प्रणम्यशिरसाधीशमुत्तमश्लोकमव्ययं ॥ अगायतयशोधामकीर्तन्यगुणसत्कथं ॥ ४ ॥ सोऽनुकंपितईशेनपरिक्रम्यप्रणम्यतं ॥ लोकस्यपश्यतोलोकंस्वमगान्मुक्तकिल्बिषः ॥ ५ ॥ गजेंद्रोभगवत्स्पर्शाद्विमुक्तोऽज्ञानबंधनात् ॥ प्राप्तोभगवतोरूपंपीतवासाश्चतुर्भुजः ॥ ६ ॥ सवैपूर्वमभूद्राजापांड्योद्रविडसत्तमः ॥ इंद्रद्युम्नइतिख्यातोविष्णुव्रतपरायणः ॥ ७॥ सएकदाराधनकालआत्मवान्गृहीतमौनव्रतईश्वरं हरिं ॥ जटाधरस्तापसआप्लुतोऽच्युतंसमर्चयामासकुलाचलाश्रमः ॥ ८ ॥ यदृच्छयातत्रमहायशामुनिः समागमच्छिष्यगणैःपरिश्रितः ॥ तंवीक्ष्यतूष्णीमकृतार्हणादिकंरहस्युपासीनमृषिश्चुकोपह ॥ ९ ॥ तस्माइमंशापमदादसाधुरयंदुरात्माऽकृतबुद्धिरद्य ॥ विप्रावमंताविशतांतमोऽधंयथागजःस्तब्धमतिःसएव ॥ १० ॥ श्रीशुकउवाच एवंशप्त्वागतोगस्त्योभगवान्नृपसानुगः ॥ इंद्रद्युम्नोपिराजर्षिर्दिष्टंतदुपधारयन् ॥ ११ ॥ आपन्नःकौंजरींयोनिमात्मस्मृतिविनाशनीं ॥ हर्यर्चनानुभावेनयद्गजत्वेऽप्यनुस्मृतिः ॥ ॥ १२ ॥ एवंविमोक्ष्यगजयूथपमब्जनाभस्तेनापिपार्षदगतिंगमितेनयुक्तः ॥ गंधर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतंस्वभवनंगरुडासनोऽगात् ॥ १३ ॥ एतन्महाराजतवेरितोमयाकृष्णानुभावोगजराजमोक्षणं ॥ स्वर्ग्ययशस्यंकलिकल्मषापहंदुःस्वप्ननाशंकुरुवर्यशृण्वतां ॥ १४ ॥ यथानुकीर्तयंत्येतच्छ्रेयस्कामाद्विजातयः ॥ शुचयःप्रातरुत्थायदुःस्वप्नाद्युपशांतये ॥ १५ ॥ ॥ ॥



तिर्जातातत्राह हरेरर्चनस्यानुभावेनेति ॥ १२ ॥ अद्भुतंस्वभवनमगात् ॥१३॥एतत्गजराजमोक्षणंनामकृष्णानुभावस्तवेरितः कथंभूतं तत्राह स्वर्ग्यमित्यादि दुःस्वप्नंनाशयतीतितथा ॥ १४ ॥ अतःश्रेयस्कामायेएतद्यथावदनुकीर्तयंति ॥ १५ ॥

अनेनश्रेयोभवतीतिकुतोज्ञातंसाक्षाद्भगवद्वचनादेवेत्याह इदमाहेत्यादियावत्समाप्ति॥ १६ ॥प्रसंगादन्यस्यापिस्मरणेफलमुच्यते सर्वेषांहि तयांतानांस्मरंतत्यिष्टमेनान्वयः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ अव्यक्तंमायां अव्ययंधर्मंभक्तिलक्षणं सोमकश्यपयोरपिपत्नीर्दाक्षायणीः ॥२२॥ सितवारणमैरावतं ॥ २३॥ सुसमाहिताएकाग्रचित्ताः ममरूपाणिमाद्विभूतीः ॥ २४ ॥ २५ ॥ जलजोत्तमंशंखवरंप्रध्मायवादयि

इदमाहहरिःप्रीतोगजेंद्रंकुरुसत्तम ॥ शृण्वतांसर्वभूतानांसर्वभूतमयोविभुः ॥ १६ ॥ श्रीभगवानुवाच
येमांत्वांचसरश्चेदंगिरिकंदरकाननं ॥ वेत्रकीचकवेणूनांगुल्मानिसुरपादपान् ॥ १७ ॥ शृंगाणीमानिधिष्ण्यानिब्रह्मणोमेशिवस्यच ॥ क्षीरोदंमेप्रियंधामश्वेतद्वीपंचभास्वरं ॥ १८ ॥ श्रीवत्संकौस्तुभंमालांगदांकौमोदकींमम ॥ सुदर्शनंपांचजन्यंसुपर्णंपतगेश्वरं ॥ १९ ॥ शेषंचमत्कलांसूक्ष्मांश्रियंदेवींममाश्रयां ॥ ब्रह्माणंनारदमृषिंभवंप्रह्रादमेवच ॥ २० ॥ मत्स्यकूर्मवराहाद्यैरवतारैःकृतानिमे ॥ कर्माण्यनंतपुण्यानि सूर्यंसोमंहुताशनं ॥ २१ ॥ प्रणवंसत्यमव्यक्तंगोविप्रान्धर्ममव्ययं ॥ दाक्षायणीर्धर्मपत्नीःसोमकश्यपयोरपि ॥ २२ ॥ गंगांसरस्वतींनंदांकालिंदींसितवारणं ॥ ध्रुवंब्रह्मऋषीन्सप्तपुण्यश्लोकांश्चमानवान् ॥ ॥ २३ ॥ उत्थायापररात्रांतेप्रयताःसुसमाहिताः ॥ स्मरंतिममरूपाणिमुच्यंतेह्येनसोऽखिलात् ॥ २४ ॥ येमांस्तुवंत्यनेनांगप्रतिबुद्धानिशात्यये ॥ तेषांप्राणात्ययेचाहंददामिविमलांमतिं ॥ २५॥ श्रीशुकउवाच इत्यादिश्यहृषीकेशःप्रध्मायजलजोत्तमं ॥ हर्षयन्विबुधानीकमारुरोहखगाधिपं ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेगजेंद्रमोक्षणंनामचतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुकउवाच राजन्नुदितमेतत्तेहरेः कर्माघनाशनं ॥ गजेंद्रमोक्षणंपुण्यंरैवतंत्वंतरंशृणु ॥ १ ॥ पंचमोरैवतोनाममनुस्तामससोदरः ॥ बलिविंध्यादयस्तस्यसुताअर्जुनपूर्वकाः ॥ २ ॥ ॥ ॥ ॥

त्वा ॥२६ ॥ इत्यष्टमेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते ॥ स्वभक्तपक्षपातेनयत्रयोषायितंप्रभोः ॥१॥ पंचमेपंचमंचाथषष्ठंत्राकथयन्मनुं॥विप्रशापाच्चनिःश्रीकैःकृतांदेवैर्हरेस्तुतिं ॥२॥ १ ॥ तामसश्चतुर्थोमनुस्तस्यसोदरोभ्राता ॥ २ ॥

॥३॥४॥५॥ तस्यवैकुंठसंज्ञस्यहरेरनुभावःसनकादिशापेनदैत्यतांप्राप्ताभ्यांस्वपार्षदाभ्यांवाराहादिरूपेणयुद्धादिलक्षणः गुणाश्चब्रह्मण्य तादयः परमोदयाश्चमहर्द्धयः कथितास्तृतीयस्कंधादिषु ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥१०॥ यतोहेतोः अंबुचरात्मनाकूर्मरूपेण ॥ ११ ॥ सुराणां साधितासुधेत्युक्त्यायुद्धाद्यपिसूचितमतःपृच्छति किंचान्यदिति ॥१२॥१३॥१४॥ नोत्तिष्ठेरन्नपुनर्जीवंतिस्मेत्यर्थः ॥ १५॥ दुर्वाससाहिक



विभुरिंद्रःसुरगणाराजन्भूतरयादयः ॥ हिरण्यरोमावेदशिराऊर्ध्वबाह्वादयोद्विजाः ॥ ३ ॥ पत्नीविकुं ठाशुभ्रस्यवैकुंठैःसुरसत्तमैः ॥ तयोःस्वकलयाजज्ञेवैकुंठोभगवान्स्वयं ॥ ४ ॥ वैकुंठःकल्पितोयेनलोको लोकनमस्कृतः ॥ रमयाप्रार्थ्यमानेनदेव्यातत्प्रियकाम्यया ॥ ५ ॥ तस्यानुभावःकथितोगुणाश्चपरमोद याः ॥ भौमान्रेणून्सविममेयोविष्णोर्वर्णयेद्गुणान् ॥ ६ ॥ षष्ठश्चचक्षुषःपुत्रश्चाक्षुषोनामवैमनुः ॥ पुरः पुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥ ७ ॥ इंद्रोमंत्रद्रुमस्तत्रदेवाआप्यादयोगणाः ॥ मुनयस्तत्रवैराज न्हविष्मद्वीरकादयः॥८॥ तत्रापिदेवःसंभूत्यांवैराजस्याभवत्सुतः॥अजितोनामभगवानंशेनजगतःपतिः॥ ॥ ९ ॥ पयोधिंयेननिर्मथ्यसुराणांसाधितासुधा ॥ भ्रममाणोंऽभसिधृतःकूर्मरूपेणमंदरः ॥ १० ॥ राजो वाच यथाभगवताब्रह्मन्मथितःक्षीरसागरः ॥ यदर्थंवायतश्चाद्रिंदधारांबुचरात्मना ॥ ११ ॥ यथाऽमृतं सुरैःप्राप्तंकिंचान्यदभवत्ततः ॥ एतद्भगवतःकर्मवदस्वपरमाद्भुतं ॥ १२ ॥ त्वयासंकथ्यमानेनमहिम्नासा त्वतांपतेः ॥ नातितृप्यतिमेचित्तंसुचिरंतापतापितं ॥ १३ ॥ सूतउवाच संपृष्टोभगवानेवंद्वैपायनसुतो द्विजाः ॥ अभिनंद्यहरेर्वीर्यमभ्याचष्टुंप्रचक्रमे ॥ १४॥ श्रीशुकउवाच यदायुद्धेसुरैर्देवाबाध्यमानाःशि तायुधैः ॥ गतासवोनिपतितानोत्तिष्ठेरन्स्मभूयशः ॥ १५ ॥ यदादुर्वाससःशापात्सेंद्रालोकास्त्रयोनृप ॥ निःश्रीकाश्चाभवंस्तत्रनेशुरिज्यादयःक्रियाः ॥ १६ ॥ ॥ ॥ ॥



दाचिन्मार्गेगच्छंतमिंद्रंदृष्ट्वास्वकंठस्थामालातस्मैदत्तातेनचश्रीमदेनानादृत्यऐरावतस्यकुंभयोर्निक्षिप्तासचगजोमत्तःपद्भ्यांतांमालांचूर्णी चकार ततःकुपितोदुर्वासास्तंशशाप त्रिभिर्लोकैःसहत्वंनिःश्रीकोभवेति तदेतदाह यदादुर्वाससःशापादिति इज्यादयो यागाद्याः ॥ १६ ॥

॥ १७ ॥ १८ ॥ असुरान् अयथादेववैलक्षण्येनबलपुष्ट्यादियुक्तान् विलोक्येत्यर्थः ॥ १९ ॥ हरिंशरणंगताःसंतोयथापूर्वंसर्वंप्राप्स्यामइ
तिहर्षेणोत्फुल्लंविकसितंवदनंयस्य ॥ २० ॥ मनुष्यादयोजरायुजांडजोद्भिज्जस्वेदजाः यस्यावतारःपुरुषःतस्यांशोब्रह्मातस्यकलामरीच्या
दयस्ताभिर्विसर्जिताःपुत्रपौत्रादिद्वाराजनिताः ॥ २१ ॥ ननुतर्हिसर्वेष्वसौसमःस्यात्किंतच्छरणाश्रयेण सत्यं यद्यप्येवंतथाऽप्यस्मत्पक्ष

निशम्यैतत्सुरगणामहेंद्रवरुणादयः ॥ नाध्यगच्छन्स्वयंमंत्रैर्मंत्रयंतोविनिश्चयं ॥१७॥ ततोब्रह्मसभांज
ग्मुर्मेरोर्मूर्द्धनिसर्वशः ॥ सर्वंविज्ञापयांचक्रुःप्रणताःपरमेष्ठिने ॥ १८॥ सविलोक्येंद्रवाय्वादीन्निःसत्त्वा
न्विगतप्रभान् ॥ लोकानमंगलप्रायानसुरानयथाविभुः ॥ १९ ॥ समाहितेनमनसासंस्मरन्पुरुषंपरं ॥
उवाचोत्फुल्लवदनोदेवान्सभगवान्परः ॥ २० ॥ अहंभवोयूयमथोऽसुरादयोमनुष्यतिर्यग्द्रुमघर्मजात
यः॥यस्यावतारांशकलाविसर्जिताव्रजामसर्वेशरणंतमव्ययं ॥२१॥ नयस्यवध्योनचरक्षणीयोनोपेक्षणी
यादरणीयपक्षः ॥ अथापिसर्गस्थितिसंयमार्थंधत्तेरजःसत्त्वतमांसिकाले ॥ २२ ॥अयंचतस्यस्थितिपाल
नक्षणःसत्त्वंजुषाणस्यभवायदेहिनां ॥ तस्माद्व्रजामःशरणंजगद्गुरुंस्वानांसनोधास्यतिशंसुरप्रियः ॥२३॥
श्रीशुकउवाच इत्याभाष्यसुरान्वेधाःसहदेवैररिंदम ॥ अजितस्यपदंसाक्षाज्जगामतमसःपरं ॥ २४ ॥
तत्रादृष्टस्वरूपायश्रुतपूर्वायवैविभो ॥ स्तुतिमब्रूतदैवीभिर्गीर्भिस्त्ववहितेंद्रियः ॥ २५ ॥ ॥

पातीभविष्यतीत्याशयेनाह नयस्येतिद्वाभ्यां स्थितिपालनस्यक्षणःकालःअतःसुरप्रियःसन्स्वीयानांनःशंसुखंकरिष्यति ॥ २२ ॥ २३ ॥
यत्रक्षीराब्धौहरेर्वासस्तदेवतमसःपरंस्थानं यद्वा लोकालोकात्परतोयत्तमस्ततःपरंस्थानंजगाम ॥ २४ ॥ दैवीभिर्लोकेअप्रसिद्धाभिर्वैदि
कीभिर्गीर्भिःस्तुतिमकरोत् ॥ २५ ॥ ॥ ॥ ॥ ॥

देववरंत्वांनमामहे हेदेव वरंत्वांनमामेतिवा वरत्वेहेतुः सत्यं कुतः अविक्रियं तत्कुतः अनंतं आद्यंचअनादिं आद्यंतवंतोहिवृध्यादि विक्रियायुक्ताभवंति किंच गुहाशयंसर्वांतरं कुतः निष्कलंनिरुपाधिकं तत्कुतः अप्रतर्क्यं तत्कुतः मनोऽग्रयानंमनसोपिजविष्ठं मनः प्राप्स्येस्थानेततःप्रागेवविद्यमानत्वात् तथाचश्रुतिः अनेजदेकंमनसोजवीयोनैतद्देवाआप्नुवन्पूर्वमर्शत् तद्धावतोऽन्यानत्येतितिष्ठदिति व चसाअनिरुक्तं अविषयत्वात् यद्वाचाऽनभ्युदितंयेनवागभ्युद्यतइतिश्रुतेः मनोवचसोरगोचरत्वादप्रतर्क्यं यथेष्टंवासर्वेषांहेतुहेतुमद्भावः ॥ ॥ २६ ॥ किंच प्राणादीनांविपश्चितंज्ञातारं आत्माअहंकारोदेहोवा नतुतव्द्यतिरिक्तंज्ञेयमस्तीत्याह अर्थोविषयः इंद्रियाणितद्ग्राहकाणि तदु भयरूपेणाभासतइतितथातं तथाऽप्यनिद्रंस्वप्नद्रष्टृवदज्ञानरहितं कुतः अव्रणंअदेहं अतएवअक्षरंखमिवव्यापिनंच सर्वत्रहेतुः यत्रयस्मि न्गृध्रपक्षौजीवपक्षपातिनौछायातपौअविद्याचतन्निवर्तकाविद्याचनास्तितंत्रियुगेष्वाविर्भवंतंशरणंव्रजाम ॥ २७ ॥ तदेवमविक्रियत्वा दिभिःसर्वज्ञत्वादिभिश्चसत्यत्वंवरेण्यत्वंचोक्तं संसारचक्राधारत्वेनापितदेवदर्शयन्नाह अजस्यजीवस्यचक्रंचक्रवदावर्तमानंदेहादि अज

**ब्रह्मोवाच अविक्रियंसत्यमनंतमाद्यंगुहाशयंनिष्कलमप्रतर्क्यं ॥ मनोऽग्रयानंवचसाऽनिरुक्तंनमामहे देववरंवरेण्यं ॥ २६ ॥ विपश्चितंप्राणमनोधियात्मनामर्थेंद्रियाभासमनिद्रमव्रणं॥छायातपौयत्रनगृध्र पक्षौतमक्षरंखंत्रियुगंव्रजामहे ॥ २७ ॥ अजस्यचक्रंत्वजयेर्यमाणंमनोमयंपंचदशारमाशु ॥ त्रिणाभि विद्युच्चलमष्टनेमियदक्षमाहुस्तमृतंप्रपद्ये ॥ २८ ॥ यएकवर्णंतमसःपरंतदलोकमव्यक्तमनंतपारं ॥ आ सांचकारोपसुपर्णमेनमुपासतेयोगरथेनधीराः ॥ २९ ॥ ॥ ॥ ॥**

॥ १ ॥

यामाययाप्रेर्यमाणं यत् यःअक्षोयस्य यदधिष्ठानमाहुस्तमृतंसत्यंप्रपद्ये कथंभूतंचक्रं मनोमयंमनःप्रधानं दशेंद्रियाणिपंचप्राणाश्चेत्येवंपंचद शअरायस्य आशुशीघ्रगं त्रयोगुणानाभिरिवमध्येयस्य विद्युदिवचलं अष्टौप्रकृतयोनेमयइवावरणानियस्य ॥ २८ ॥ सर्वजीवनियंतृत्वा दिनाचवरिष्ठत्वमाह यइति यउपसुपर्णंजीवसमीपेतन्नियंतृत्वेनआसांचकारआस्तेस्म द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजातइ तिश्रुतेः यद्वा भक्तरक्षार्थंगरुडस्योपरिउपविष्टइत्यर्थः तर्हिदेहस्थत्वात्भक्तरक्षणादिक्रियावेशाज्जीवसाम्यंस्यात्तत्राह एकवर्णंज्ञानैकस्वरू पं तमसःप्रकृतेःपरं अलोकमदृश्यं अव्यक्तंनिर्विकल्पं अनंतपारंकालतोदेशतश्चापरिच्छिन्नं तत् ब्रह्मैवयः अप्रच्युतस्वरूपत्वात् नंजी वसाम्यं तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतीतिविशेषश्रवणादित्यर्थः अतएवयंधीराःयोगेनरथेनप्राप्तिसाधनेनोपासतेभ जंतेतंनमामेत्युत्तरेणान्वयः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १ ॥

मायानियंतृत्वेनापिजीवसाम्यंपरिहरन्वरिष्ठत्वमाह यस्यमायांकश्चित्काश्चिदपिनातितितार्तिनातिक्रामाति कथंभूतां जनोययामुह्यातिअर्थ मात्मस्वरूपंनतुवेद निर्जितआत्माआत्मशक्तिर्मायाचतद्गुणाश्चयेनतं ॥ ३० ॥ अर्थंनवेदेतियदुक्तंतत्प्रपंचयन्नाह इमेवयंदेवाऋषयश्च प्रिययातन्वासत्त्वेनैवसृष्टाअपिबाहिरंतश्चसत्ताप्रकाशाभ्यामाविःप्रकटमपिसूक्ष्मांगतिंनिरुपाधिस्वरूपंनविद्मः इतरप्रधानाःरजस्तमोमयाः कुतोविदुः तंनमामेतिपूर्वेणान्वयः ॥ ३१ ॥ इदानींवैराजरूपेणस्तुवन्प्रार्थयते पादौमहीतिद्वादशभिः यत्रमह्यांजरायुजादिभूतसर्गः

नयस्यकश्चातितितर्तिमायांययाजनोमुह्यतिवेदनार्थं ॥ तंनिर्जितात्मात्मगुणंपरेशंनमामभूतेषुसमंचरंतं॥ ॥ ३० ॥ इमेवयंयत्प्रियमैवतन्वासत्त्वेनसृष्टाबहिरंतराविः ॥ गतिंनसूक्ष्मामृषयश्चविद्महेकुतोऽसुराद्याइ तरप्रधानाः ॥ ३१ ॥ पादौमहीयंस्वकृतैवयस्यचतुर्विधोयत्रहिभूतसर्गः ॥ सवैमहापूरुषआत्मतंत्रःप्रसीद तांब्रह्ममहाविभूतिः ॥ ३२ ॥ अंभस्तुयद्रेतउदारवीर्यंसिद्ध्यंतिजीवंत्युतवर्धमानाः ॥ लोकात्रयोऽथाखिल लोकपालाःप्रसीदतांब्रह्ममहाविभूतिः ॥ ३३ ॥ सोमंमनोयस्यसमामनंतिदिवौकसांवैबलमंधआयुः॥ईशो नगानांप्रजनःप्रजानांप्रसीदतांनःसमहाविभूतिः ॥३४॥ अग्निर्मुखंयस्यतुजातवेदाजातःक्रियाकांडनिमि त्तजन्मा ॥ अंतःसमुद्रेऽनुपचन्स्वधातून्प्रसीदतांनःसमहाविभूतिः॥३५॥ ॥ ॥

सामहीयस्यपादौसनःप्रसीदतु आत्मतंत्रःपादादिमत्वेऽपिनतत्परतंत्रः कुतः ब्रह्मअप्रच्युतरूपः तत्कुतः महतीविभूतिरैश्वर्यंयस्यसः ॥ ३२ ॥ उदारंवीर्यंशक्तिर्यस्यतदंभोयस्यरेतःसनःप्रसीदतु उदारवीर्यतामाह यतोऽभसोलोकादयः सिध्यंतिजायंते ॥ ३३ यःसोमोदे वानामंधःअन्नंअतएवबलमायुश्चनगानांवृक्षाणांप्रकर्षेणजनयतिवर्धयतीतिप्रजनः तंयस्यमनःसमामनंतिसनःप्रसीदतु ॥ ३४ ॥ अग्नि र्यस्यतुमुखंजातः कथंभूतः जातंवेदोधनंयस्मात् क्रियाकांडंतत्प्रतिपाद्यंकर्मतन्निमित्तंजन्मयस्य अंतःसमुद्रेउदरमध्येस्वधातून्पाकार्हानने वान्नादीन्अनुपचन् प्रसिद्धसमुद्रेऽपिवाडवरूपेणउदकान्येवानुपचन्नग्निः ॥ ३५ ॥ ॥ ॥

एषतरणिर्यस्यचक्षुरासीत् कथंभूतः देवयानंअर्चिरादिमार्गदेवता त्रयीमयः सैषात्रय्येवविद्यातपतीतिश्रुतेः ब्रह्मणोधिष्ण्यमुपासनास्था नं यएषोंऽतरादित्योहिरण्मयःपुरुषइतिश्रुतेः मुक्तेर्द्वारंदेवयानत्वात् अमृतंचपुण्यलोकत्वात् मृत्युश्चकालात्मकत्वात् एवंभूतस्तरणिर्यस्य चक्षुःसःप्रसीदतु ॥ ३६ ॥ एवंभूतोवायुश्चराचराणांसहआदिधर्मवान्प्राणःयंप्राणंवयंबुद्ध्याद्यधिष्ठातारोदेवाः संम्राजंभृत्याइवअन्वास्म अनुसृत्यस्थिताः एवंभूतोवायुर्यस्यप्राणादभूत्सः ॥ ३७ ॥ खानिदेहगतानिछिद्राणि प्राणःपंचवृत्तिः इंद्रियाणिच आत्मामनश्च अस

यच्चक्षुरासीत्तरणिर्देवयानंत्रयीमयोब्रह्मणएषधिष्ण्यं॥द्वारंचमुक्तेरमृतंचमृत्युःप्रसीदतांनःसमहाविभूतिः ॥ ३६ ॥ प्राणादभूद्यस्यचराचराणांप्राणःसहोबलमोजश्चवायुः ॥ अन्वास्मसंम्राजमिवानुगावयंप्रसीदतां नःसमहाविभूतिः ॥ ३७ ॥ श्रोत्राद्दिशोयस्यहृदश्चखानिप्रजज्ञिरेखंपुरुषस्यनाभ्याः ॥ प्राणेंद्रियात्मासु शरीरकेतंप्रसीदतांनःसमहाविभूतिः ॥ ३८ ॥ बलान्महेंद्रस्त्रिदशाःप्रसादान्मन्योर्गिरीशोधिषणाद्विरंचः खेभ्यश्चछंदांस्यृषयोमेढ्रतःकःप्रसीदतांनःसमहाविभूतिः ॥ ३९ ॥ श्रीर्वक्षसःपितरश्छाययासन्धर्मस्तनादि तरःपृष्ठतोऽभूत् ॥ द्यौर्यस्यशीर्ष्णोऽप्सरसोविहारात्प्रसीदतांनःसमहाविभूतिः ॥ ४० ॥ विप्रोमुखंब्रह्मचय स्यगुह्यंराजन्यआसीद्भुजयोर्बलंच ॥ ऊर्वोर्विडोजोंऽघ्रिरवेदशूद्रौप्रसीदतांनःसमहाविभूतिः ॥ ४१ ॥ लो भोऽधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तःपशव्यःस्पर्शेनकामः ॥ भ्रुवोर्यमःपक्ष्मभवस्तुकालःप्रसीदतांनःसमहा विभूतिः ॥ ४२ ॥ द्रव्यंवयःकर्मगुणान्विशेषंयद्योगमायाविहितान्वदंति ॥ यद्दुर्विभाव्यंप्रबुधापबाधंप्रसी दतांनःसमहाविभूतिः ॥ ४३ ॥ ॥ ॥ ॥ ॥

वोनागकूर्मादयःशरीरंच तेषांकेतमाश्रयभूतंखंयस्यपुरुषस्यनाभ्याःप्रजज्ञेसः ॥ ३८ ॥ यस्यबलान्महेंद्रोजज्ञे छंदांसिऋषयश्चखेभ्यः कः प्रजापतिः ॥ ३९ ॥ इतरःअधर्मः ॥ ४० ॥ विट्वैश्यः ओजःनैपुणंतस्यवृत्तिः अंघ्रिःअंघ्रिजावित्यर्थः अवेदशूद्रौ अवेदोवेदव्यातिरि क्तशुश्रूषातद्वृत्तिमान्शूद्रश्च पाठांतरंसुगमं ॥ ४१ ॥ उपरिउत्तरोष्ठात् नस्तःनासिकातः द्युतिःकांतिः पशव्यःपशूनांहितःकामःस्पर्शे नाभूत् ॥ ४२ ॥ द्रव्यंभूतानि वयःकालं विशेषंलौकिकप्रपंचं यद्यस्माद्दुर्विभाव्यं कुतः प्रबुधापबाधंविद्वद्भिरपोह्यमानं पाठांतरेप्रबु धानांमायेत्यवबोधोयस्मिन्नित्यर्थः ॥ ४३ ॥ ॥ ॥ ॥

तदेवंसप्रपंचमुपवर्ण्यनिष्प्रपंचमनुवर्णयन्प्रणमति नमोस्त्विति वृत्तिभिर्दर्शनादिभिः नभस्वान्वायुस्तस्येवऊतिर्लीलायस्यतस्मै ॥ ४४ ॥
सस्मितंमुखांबुजंदिदृक्षूणांनोऽस्मच्चक्षुरादिकरणगोचरंयथाभवत्येवंचात्मानंदर्शय ॥४५ ॥ भक्तेच्छानुवर्तित्वंचतवबहुशोदृष्टमेवेत्याहतैस्तै
रिति यन्नोदुर्विषहमशक्यंकर्मतद्भगवान्स्वयमेवकरोतिहि ॥ ४६ ॥ नचवहिर्मुखानामिवत्वद्भक्तानामस्माकंत्वय्यर्पितानिपूर्वपुण्यानिविं
परीतफलानिभवितुमर्हतीत्याह क्लेशोभूरियेषु अल्पंसारंफलंयेषु यद्वा विफलान्येवसकामानांकर्माणितवार्पितंतुनतथेति ॥ ४७ ॥ तत्रा
वैफल्यमुपपादयाति अवमःअल्पोऽपिकर्मकल्पःकर्माभासोऽपिईश्वरार्पितश्चेद्विफलायासायनकल्पते हियस्मात्सएषईश्वरःपुरुषस्यात्मा

नमोऽस्तुतस्माउपशांतशक्तयेस्वाराज्यलाभप्रतिपूरितात्मने ॥ गुणेषुमायारचितेषुवृत्तिभिर्नसज्जमानाय
नभस्वदूतये ॥ ४४ ॥ सत्वंनोदर्शयात्मानमस्मत्करणगोचरं ॥ प्रपन्नानांदिदृक्षूणांसस्मितंतेमुखांबुजं ॥
॥ ४५ ॥ तैस्तैःस्वेच्छाधृतैरूपैःकालेकालेस्वयंविभो ॥ कर्मदुर्विषहंयन्नोभगवांस्तत्करोतिहि ॥ ४६ ॥
क्लेशभूर्यल्पसाराणिकर्माणिविफलानिच ॥ देहिनांविषयार्तानांनतथैवार्पितंत्वयि ॥ ४७ ॥ नावमःकर्म
कल्पोऽपिविफलायेश्वरार्पितः ॥ कल्पतेपुरुषस्यैषसह्यात्मादयितोहितः ॥ ४८ ॥ यथाहिस्कंधशाखानां
तरोर्मूलावसेचनं ॥ एवमाराधनंविष्णोःसर्वेषामात्मनश्चहि ॥ ४९ ॥ नमस्तुभ्यमनंतायदुर्वितर्क्यात्म
कर्मणे ॥ निर्गुणायगुणेशायसत्त्वस्थायचसांप्रतं ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअमृ
तमथनंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ श्रीशुकउवाच एवंस्तुतःसुरगणैर्भगवान्हरिरीश्वरः ॥ तेषा
माविरभूद्राजन्सहस्त्रार्कोदयद्युतिः ॥ १ ॥ ॥ ॥ ॥ ॥

अतएवदयितोहितश्च नह्यात्मनिदयितेचार्पितंनिष्फलंस्यात् ॥ ४८ ॥ अनंतफलत्वमाह यथाहिमूलावसेचनंस्कंधानांशाखानांचभ
वति ॥ ४९ ॥ एवंसत्यपित्वदर्पितकर्मणांत्वद्भक्तानामस्माकंयन्निमित्तमिदंदुःखमितित्वमेववेत्सीत्याशयेनाह नमइति दुर्वितर्क्याण्यात्म
कर्माणिस्वभावचेष्टितानियस्यतस्मै ॥ ५० ॥ इत्यष्टमेटीकायांपंचमोऽध्यायः ॥ ५ ॥ ॥ षष्ठेपुनस्तुतिर्विष्णावाविर्भूतेसुरैःकृता ॥ त
न्मंत्रेणासुरैःसाकममृतार्थमहोद्यमः ॥ १ ॥ सहस्त्रार्काणामुदयेद्युतिरिवद्युतिर्यस्य ॥ १ ॥ ॥ ॥ ॥

महसातेजसाप्रतिहतानीक्षणानिचक्षूंषियेषां ॥२॥ तामाविर्भूतांतनुंविरंचोदृष्ट्वातुष्टावेतिपंचमेनान्वयः कंजगर्भवदरुणेईक्षणेयस्याः ॥३॥ तप्तहेमवदवदातेनपीतेनलसताकौशेयवाससायुक्तां प्रसन्नानिचारूणिसर्वाण्यंगानियस्याः शोभनंमुखंयस्याः सुंदरेभ्रुवौयस्याः ॥४॥ महांतोमणयोयस्मिंस्तेनकिरीटेन कर्णाभरणेकुंडलेताभ्यांनिर्भातौयौकपोलौताभ्यांश्रीमुखांबुजेयस्याः ॥५॥ कौस्तुभःआभरणंकंठेयस्याः लक्ष्मींवक्षसिबिभ्रतीं ॥६॥ देवप्रवरोब्रह्मा सर्वांगैरवनिंगतैः साष्टांगप्रणतैः अनाविराविरासेयंनाभूताऽभूदितिब्रुवन्॥ब्रह्माऽभिप्रैतिनित्यत्वविभुत्वेभगवत्तनोः ॥ ७ ॥ श्रीमूर्तेरयमाविर्भावएवनत्वस्मदादिवज्जन्मादितवास्तीत्याह नजाताजन्मादयोयस्य कुतः अगुणायअतः

तेनैवमहसासर्वेदेवाःप्रतिहतेक्षणाः ॥ नापश्यन्खंदिशःक्षोणीमात्मानंचकुतोविभुं ॥ २ ॥ विरंचोभगवान्दृष्ट्वासहशर्वेणतांतनुं ॥ स्वच्छांमरकतश्यामांकंजगर्भारुणेक्षणां ॥ ३ ॥ तप्तहेमावदातेनलसत्कौशेयवाससा ॥ प्रसन्नचारुसर्वांगींसुमुखींसुंदरभ्रुवं ॥ ४ ॥ महामणिकिरीटेनकेयूराभ्यांचभूषितां ॥ कर्णाभरणनिर्भातकपोलश्रीमुखांबुजां ॥ ५ ॥ कांचीकलापवलयहारनूपुरशोभितां ॥ कौस्तुभाभरणांलक्ष्मींबिभ्रतीं वनमालिनीं ॥ ६ ॥ सुदर्शनादिभिःस्वास्त्रैर्मूर्तिमद्भिरुपासितां ॥ तुष्टावदेवप्रवरःसशर्वःपुरुषंपरं ॥ सर्वामरगणैःसाकंसर्वांगैरवनिंगतैः ॥ ७ ॥ ब्रह्मोवाच अजातजन्मस्थितिसंयमायागुणायनिर्वाणसुखार्णवाय ॥ अणोरणिम्नेऽपरिगण्यधाम्नेमहानुभावायनमोनमस्ते ॥ ८ ॥ रूपंतवैतत्पुरुषर्षभेज्यंश्रेयोर्थिभिर्वैदिकतांत्रिकेण ॥ योगेनधातःसहनस्त्रिलोकान्पश्याम्यमुष्मिन्नुहविश्वमूर्तौ ॥ ९ ॥

निर्वाणसुखस्यार्णवाय अपारमोक्षसुखरूपायेत्यर्थः तथापिअणोरप्यणिम्नेअतिसूक्ष्माय दुर्ज्ञेयत्वात् वस्तुतस्तुअपरिगण्यमियत्तातीतंधाम मूर्तिर्यस्यतस्मै नचैतदसंभावितं यतः महानचिंत्योऽनुभावोयस्यतस्मै ॥ ८ ॥ तन्मूर्तेःसनातनत्वमपरिमेयत्वंचोपपादयति रूपमिति हेपुरुषर्षभ हेधातःएतत्तवरूपंवैदिकेनतांत्रिकेणचयोगेनोपायेनश्रेयोर्थिभिःसदाइज्यंपूज्यमतोनेदमिदानीमपूर्वंजातमितिभावः ननुयूयं देवाःपूज्यत्वेनप्रसिद्धाः सत्यं सर्वेप्यत्रैवांतर्भूताइत्याह उअहो हस्फुटं अमुष्मिंस्त्वयिनोऽस्मांस्त्रीन्लोकांश्चसहपश्यामि तत्रहेतुः विश्वंमूर्तौयस्य अतस्त्वैतद्रूपंपरिच्छिन्नमपिनभवतीत्यर्थः ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥

विश्वमूर्तिस्त्वमेवाह त्वयीति घटस्यमृत्तिकायथाआदिरंतश्चमध्यंचतथात्वमस्यजगतः तत्रहेतुःपरस्मात्प्रधानादपिपरः ॥ १० ॥ मृत्तिका दृष्टांतेनपरिणामंप्राप्तंवारयति त्वमिति स्वयास्वाधीनयाअतएवगुणानांव्यवायेपरिणामेऽप्यगुणमेवत्वांयुक्ताःपश्यंति मनीषिणोविवेकिनः विपश्चितःशास्त्रज्ञाः ॥ ११ ॥ एतदेवसदृष्टांतमाह यथाऽग्निंकाष्ठेमथनेन अमृतमाज्यंगोषुदोहनादिना भुविअन्नंव्रीह्यादिकर्षणादिना अंबुचखननेन उद्यमनेपुरुषकारेवाणिज्यादिनावृत्तिंजीविकां यद्वा अंबुनःउद्यमनेघटीयंत्रादिनोद्धरणेयोगैरुपायैर्मनुष्याअधियंतिप्राप्नुवंति तथाकवयस्त्वांबुद्ध्यागुणेष्वधियांतिवदंतिच ॥ १२ ॥ हेनाथसरोजनाभ अतिचिरादीप्सितमर्थयोगैकप्राप्यंत्वांसम्यगुज्जिहानमाविर्भवंतं

त्वय्यग्रआसीत्त्वयिमध्यआसीत्त्वय्यंतआसीदिदमात्मतंत्रे ॥ त्वमादिरंतोजगतोऽस्यमध्यंघटस्यमृत्स्नेवपुरःपरस्मात् ॥ १० ॥ त्वंमाययात्माश्रययास्वयेदंनिर्मायविश्वंतदनुप्रविष्टः ॥ पश्यंतियुक्तामनसामनीषिणोगुणव्यवायेऽप्यगुणंविपश्चितः ॥ ११ ॥ यथाऽग्निमेधस्यमृतंचगोषुभुव्यन्नमंबूद्यमनेचवृत्तिं ॥ योगैर्मनुष्याअधियंतिहित्वांगुणेषुबुद्ध्याकवयोवदंति ॥१२ ॥ तंत्वांवयंनाथसमुज्जिहानंसरोजनाभातिचिरेप्सितार्थं ॥ दृष्ट्वागतानिर्वृतिमद्यसर्वेगजादवार्ताइवगांगमंभः ॥ १३ ॥ सत्वंविधत्स्वाखिललोकपालावयंयदर्थास्तवपादमूलं ॥ समागतास्तेबहिरंतरात्मन्किंचान्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥ अहंगिरित्रश्चसुरादयोयेदक्षादयोऽग्नेरिवकेतवस्ते ॥ किंवाविदामेशपृथग्विभाताविधत्स्वशंनोद्विजदेवमंत्रं ॥१५ ॥ श्रीशुकउवाच एवंविरिंचादिभिरीडितस्तद्विज्ञायतेषांहृदयंयथैव ॥ जगादजीमूतगभीरयागिरावद्धांजलीन्संवृतसर्वकारकान् ॥ १६ ॥ ॥ ॥ ॥

प्रत्यक्षतोदृष्ट्वाऽद्यवयंनिर्वृतिंगताः दवार्तादावाग्निपीडिताः ॥ १३ ॥ यद्विधेयंतत्कथयेतिचेत्तत्राह हेअंतरात्मन् अशेषसाक्षिणस्तेबहिः किंवाऽन्यैर्विज्ञाप्यमास्ति ॥ १४ ॥ यूयमेवाकिंचित्कुरुतेतिचेत्तत्राह अहमिति अग्नेःकेतवोविस्फुलिंगाइवतेत्वत्तोवयंपृथग्विभाताःसंतआत्मनःशंश्रेयःकिंत्राविद्मः अतस्त्वमेवद्विजानांदेवानांचमंत्रंविधत्स्व इदंकुरुतेत्युपायमुपादिशेत्यर्थः ॥ १५ ॥ हृदयंमंत्रउपदेष्टव्यइत्यभिप्रेतं यथैवतथैवविज्ञायजगाद संवृतानिनियमितानिसर्वाणिकारकाणींद्रियाणियैस्तान् ॥ १६ ॥ ॥

ईश्वरस्यापितथैवाभिप्रेतमित्याह एकएवेश्वरःसमर्थोऽपि ॥ १७ ॥ हेसुराःहेदेवाः अन्येचगंधर्वादयः ॥ १८ ॥ वःआत्मनोयावद्वृद्धि र्भवति ॥ १९ ॥ अर्थस्यप्रयोजनस्यपदवींसिद्धिप्राप्तैः पश्चादहिमूषकवत्वध्यघातकभावेनवर्तितव्यमितिशेषः यद्वा पेटिकायांनिरुद्धोऽहिर्यथानिर्गमद्वारविधानार्थंप्रथमंमूषकेणसंधिंविधत्तेपश्चात्तमेवकदाचित्भक्षयति तथाअर्थमार्गप्रवृत्तैः प्रथमंसंधेयाइत्यर्थः ॥ २० ॥ ततस्तैःसहयत्कार्यंतदाह अमृतोत्पादनइति यस्यअमृतस्यपीतस्यसतःअमरोभवेन्मृत्युग्रस्तोऽपि ॥ २१ ॥ नेत्रंरज्जुं ॥ २२ ॥ अतंद्रि

एकएवेश्वरस्तस्मिन्सुरकार्येसुरेश्वरः ॥ विहर्तुकामस्तानाहसमुद्रोन्मथनादिभिः ॥ १७ ॥ श्रीभगवानुवाच हंतब्रह्मन्नहोशंभोहेदेवाममभाषितं ॥ शृणुतावहिताःसर्वेश्रेयोवःस्याद्यथासुराः ॥ १८॥ यातदानवदैतेयैस्तावत्संधिर्विधीयतां ॥ कालेनानुगृहीतैस्तैर्यावद्वोभवआत्मनः ॥ १९ ॥ अरयोऽपिहिसंधेयाः सतिकार्यार्थगौरवे ॥ अहिमूषकवद्देवाअर्थस्यपदवींगतैः ॥ २० ॥ अमृतोत्पादनेयत्नःक्रियतामविलंबितं ॥ यस्यपीतस्यवैजंतुर्मृत्युग्रस्तोऽमरोभवेत् ॥ २१ ॥ क्षिप्त्वाक्षीरोदधौसर्वावीरुत्तृणलतौषधीः ॥ मंथानंमंदरंकृत्वानेत्रंकृत्वातुवासुकिं ॥ २२ ॥ सहायेनमयादेवानिर्मंथध्वमतंद्रिताः ॥ क्लेशभाजोभविष्यंतिदैत्यायूयंफलग्रहाः ॥ २३ ॥ यूयंतदनुमोदध्वंयदिच्छंत्यसुराःसुराः ॥ नसंरंभेणसिध्यंतिसर्वेऽर्थाःसांत्वया यथा ॥ २४ ॥ नभेतव्यंकालकूटाद्विषाज्जलधिसंभवात् ॥ लोभःकार्योनवोजातुरोषःकामस्तुवस्तुषु ॥ २५॥ श्रीशुकउवाच इतिदेवान्समादिश्यभगवान्पुरुषोत्तमः ॥ तेषामंतर्दधेराजन्स्वच्छंदगतिरीश्वरः ॥ २६ ॥ अथतस्मैभगवतेनमस्कृत्यपितामहः ॥ भवश्चजग्मतुःस्वंस्वंधामोपेयुर्बलिंसुराः ॥ २७ ॥

ताःसंयत्तानिर्मंथध्वमिति ननुतर्हितेऽप्यमृतपानेनामराःस्युस्तत्राह क्लेशभाजइति ॥ २३ ॥ बलिभिःसहकारिभिः साध्याअर्थास्तदनुसरणंविनानसिध्यंतीतिकृत्वासामादिकमुपदिशति यूयमितिद्वाभ्यां हेसुराःसंरंभेणसंभ्रमेणसांत्वयासाममार्गेण यथासिध्यंति ॥ २४ ॥ वस्तुषुमथनादुत्पन्नेषु ॥ २५ ॥ २६ ॥ सुरास्तुबलिमुपेयुःउपजग्मुः ॥ २७ ॥ ॥ ॥ ॥

असंयत्तानपिदृष्ट्वा श्लोक्यःकीर्त्यर्हः ॥ २८ ॥ वैरोचनिंबलिं जितमशेषंत्रैलोक्यंयेनतं ॥ २९ ॥ तत्सर्वममृतोन्मथनादि ॥ ३० ॥
तत्रयेअन्येचासुराधिपाःपौलोमकालेयादयःशंबरादयश्चतेभ्यश्चारोचत ॥ ३१ ॥ संविदंसमयं ॥ ३२ ॥ परिघाइवबाहवोयेषां ॥ ३३ ॥
॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ विसर्जितःप्रस्थापितःसुपर्णेतत्रस्थितेवासुकेरागमनायोगादितिभावः ॥ ३९ ॥ इतिअष्टमस्कं

दृष्ट्वाऽरीनप्यसंयत्तान्जातक्षोभान्स्वनायकान्॥न्यषेधद्दैत्यराट्श्लोक्यःसंधिविग्रहकालवित्॥२८॥ तेवै
रोचनिमासीनंगुप्तंचासुरयूथपैः॥श्रियापरमयाजुष्टंजिताशेषमुपागमन्॥२९॥महेंद्रःश्लक्ष्णयावाचासांत्व
यित्वामहामतिः॥अभ्यभाषततत्सर्वंशिक्षितंपुरुषोत्तमात्॥३०॥ तदरोचतदैत्यस्यतत्रान्येयेऽसुराधिपाः॥
शंबरोऽरिष्टनेमिश्चयेचत्रिपुरवासिनः॥३१॥ततोदेवासुराःकृत्वासंविदंकृतसौहृदाः॥ उद्यमंपरमंचक्रुरमृता
र्थेपरंतप॥३२॥ततस्तेमंदरगिरिमोजसोत्पाटचदुर्मदाः॥नदंतउदधिंनिन्युःशक्ताःपरिघबाहवः॥३३॥ दूर
भारोद्वहश्रांताःशक्रवैरोचनादयः॥अपारयंतस्तंवोढुंविवशाविजहुःपथि॥३४॥निपतन्सगिरिस्तत्रबहूनम
रदानवान्॥चूर्णयामासमहताभारेणकनकाचलः॥३५॥तांस्तथाभग्नमनसोभग्नबाहूरुकंधरान्॥ विज्ञायभ
गवांस्तत्रबभूवगरुडध्वजः॥३६॥गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान्॥ईक्षयाजीवयामासनिर्ज
रान्निर्व्रणान्यथा॥३७॥गिरिंचारोप्यगरुडेहस्तेनैकेनलीलया॥आरुह्यप्रययावब्धिंसुरासुरगणैर्वृतः॥३८
अवरोप्यगिरिंस्कंधात्सुपर्णःपततांवरः ॥ ययौजलांतउत्सृज्यहरिणासविसर्जितः ॥ ३९ ॥ इतिश्रीभा
गवतेमहापुराणेअष्टमस्कंधेअमृतमथनेमंदराचलानयनंनामषष्ठोऽध्यायः ॥ ६ ॥ श्रीशुकउवाच तेना
गराजमामंत्र्यफलभागेनवासुकिं ॥ परिवीयगिरौतस्मिन्नेत्रमब्धिंमुदाऽन्विताः ॥ १ ॥ ॥

धेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ सप्तमेमथनोद्भूतविषभीत्याऽखिलैर्जनैः ॥ स्तुतःसन्कृपयारुद्रःपपौविषमितीर्यते ॥ १ ॥ फलभा
गेनतवाप्यमृतेभागोभविष्यतीतिआमंत्र्यसंमंत्र्यवासुकिंनेत्रंगिरौपरिवीयसंवेष्ट्यअब्धिंमथितुमारेभिरे वासुकेर्मुखंतीव्रंदैत्यान्ग्राहयितुमेवपू
र्वंहरिःपुरस्तान्मुखेजगृहे ततोऽभवन्मुखंजगृहुः ॥ १ ॥ ॥ ॥ ॥

॥२॥३॥४॥ कृतोधारणेस्थानविभागोयैः ॥ ५ ॥ ६॥ दैवेनहेतुनास्वपौरुषेनष्टेसाति ॥ ७ ॥ विघ्नेशस्यविधिंतेनरचितंविघ्नं अवितथःसत्योऽभिसंधिःसंकल्पोयस्य ॥ ८ ॥ लक्षयोजनःप्रस्तारःविस्तारोस्यास्तीतितथातेनपृष्ठेन ॥ ९ ॥ तस्यगिरेरावर्तनंभ्रमणमंगकंडूयनंमेने ॥१०॥ आसुरेण



आरेभिरेसुसंयत्ताअमृतार्थंकुरूद्वह॥हरिःपुरस्ताज्जगृहेपूर्वंदेवास्ततोऽभवन्॥२॥तन्नैच्छन्दैत्यपतयोमहापुरुषचेष्टितं ॥ नगृण्हीमोवयंपुच्छमहेरंगममंगलं ॥३॥ स्वाध्यायश्रुतसंपन्नाःप्रख्याताजन्मकर्मभिः ॥ इतितूष्णींस्थितान्दैत्यान्विलोक्यपुरुषोत्तमः ॥४॥स्मयमानोविसृज्याग्रंपुच्छंजग्राहसामरः ॥ कृतस्थानविभागास्तएवंकश्यपनंदनाः ॥ ५ ॥ ममंथुःपरमायत्ताअमृतार्थंपयोनिधिं ॥ मथ्यमानेऽर्णवेसोद्रिरनाधारोह्यपोऽविशत् ॥ ६ ॥ ध्रियमाणोऽपिबलिभिर्गौरवात्पांडुनंदन ॥ तेसुनिर्विण्णमनसःपरिम्लानमुखश्रियः ॥ आसन्स्वपौरुषेनष्टेदैवेनातिबलीयसा ॥ ७॥ विलोक्यविघ्नेशविधिंतदेश्वरोदुरंतवीर्योऽवितथाभिसंधिः ॥ कृत्वावपुःकाच्छपमद्भुतंमहत्प्रविश्यतोयंगिरिमुज्जहार ॥ ८ ॥ तमुत्थितंवीक्ष्यकुलाचलंपुनःसमुत्थितानिर्मथितुंसुरासुराः ॥ दधारपृष्ठेनसलक्षयोजनप्रस्तारिणाद्वीपइवापरोमहान् ॥९॥ सुरासुरेंद्रैर्भुजवीर्यवेपितंपरिभ्रमंतंगिरिमंगपृष्ठतः ॥ बिभ्रत्तदावर्तनमादिकच्छपोमेनेंऽगकंडूयनमप्रमेयः ॥ १० ॥ तथाऽसुरानाविशदासुरेणरूपेणतेषांबलवीर्यमीरयन् ॥ उद्दीपयन्देवगणांश्चविष्णुर्दैवेननागेंद्रमबोधरूपतः॥११॥उपर्यगेंद्रंगिरिराडिवान्यआक्रम्यहस्तेनसहस्रबाहुः॥ तस्थौदिविब्रह्मभवेंद्रमुख्यैरभिष्टुवद्भिःसुमनोऽभिवृष्टः॥ ॥ १२ ॥ उपर्यधश्चात्मनिगोत्रनेत्रयोःपरेणतेप्राविशतासमेधिताः ॥ ममंथुरब्धिंतरसामदोत्कटामहाद्रिणाक्षोभितनक्रचक्रं ॥ १३ ॥ अहींद्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः॥ पौलोमकालेयबलील्वलादयोदवाग्निदग्धाःसरलाइवाभवन् ॥ १४ ॥



असुराकारेण दैवेनदेवाकारेणरूपेणाविशत्॥ ११ ॥ १२ ॥ आत्मनिदेवदैत्यमध्ये गोत्रेदार्ढ्यरूपेण नेत्रेअभेद्याबोधरूपेण परेणहरिणा क्षोभितंनक्राणांचक्रंसमूहोयस्मिन् ॥१३ ॥ दृशश्चमुखानिचश्वासाश्च अहींद्रस्यसाहस्रमपरिमिताःकठोरायेदृगादयस्तेभ्योनिर्गताभ्यामग्निधूमाभ्यामाहतंवर्चोयेषांते सरलाद्रुमाविशेषाः ॥ १४ ॥

देवांस्तुभगवद्दशाघनाः समभ्यवर्षन् समुद्रोर्मिभिरुपगूढात्रायवश्वशीतलाववुर्वांतिस्म कथंभूतान् तस्याहींद्रस्यश्वासशिखाग्निभिर्हताप्रभायेषां धूम्राण्यंबरादीनियेषां ॥१५॥१६॥ धृतोऽद्रिर्येनसधृताद्रिर्भगवान् परमपुरुषोनंतरमशोभतेत्यन्वयः कथंभूतः कनकपरिधिः पीतवासाः कर्णयोर्विद्योतमानाविद्युत्कंडललक्षणायस्य तथामूर्ध्निभ्राजंतोविलुलिताःकचायस्यसतथा जैत्रैर्जिष्णुभिः दंदशूकंसर्पं प्रतिगिरिःप्रतिद्वंद्वीपर्वतः ॥१७॥ हालहलमित्याह्वानामयस्य संभ्रांतामीनाउद्गतामकरादयश्चयस्मिंस्तस्मात् तिम्यादिभिराकुलाचेति तद्विषमप्रतिअप्रतिरूप्र

देवांश्चतच्छ्वासशिखाहतप्रभान्धूम्रांबरस्रग्वरकंचुकाननान्॥ समभ्यवर्षन्भगवद्वशाघनावबुःसमुद्रोर्म्युपगूढवायवः ॥१५॥ मथ्यमानेतथासिंधौदेवासुरवरूथपैः॥ यदासुधानजायेतनिर्ममंथाजितःस्वयं॥१६॥ मेघश्यामःकनकपरिधिःकर्णविद्योतविद्युन्मूर्ध्निभ्राजद्विलुलितकचःस्रग्धरोरक्तनेत्रः॥जैत्रैर्दोर्भिर्जगदभयदैर्दंदशूकंगृहीत्वामथ्नन्मथ्नाप्रतिगिरिरिवाशोभताथोधृताद्रिः॥१७॥निर्मथ्यमानादुदधेरभूद्विषंमहोल्बणंहालहलाह्वमप्रति॥संभ्रांतमीनोन्मकरादिकच्छपात्तिमिद्विपग्राहतिमिंगिलाकुलात्॥१८॥तदुग्रवेगंदिशिदिश्युपर्यधोविसर्पदुत्सर्पदसह्यमप्रति ॥ भीताःप्रजादुद्रुवुरंगसेश्वराअरक्ष्यमाणाःशरणंसदाशिवं ॥ १९ ॥ विलोक्यतंदेववरंत्रिलोक्याभवायदेव्याऽभिमतंमुनीनां॥आसीनमद्रावपवर्गहेतोस्तपोजुषाणंस्तुतिभिःप्रणेमुः ॥२०॥ प्रजापतयऊचुः देवदेवमहादेवभूतात्मन्भूतभावन ॥ त्राहिनःशरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥ २१ ॥ त्वमेकःसर्वजगतईश्वरोबंधमोक्षयोः॥तंत्वामर्चंतिकुशलाःप्रपन्नार्तिहरंगुरुं ॥ २२ ॥

तिक्रियाशून्यमितिवा ॥१८॥ कुतःउग्रोवेगोयस्य तदेवाह दिशिदिशीति यद्वा उग्रावेगारोमांचस्वेदादयोयस्मात् अतएवासह्यंविलोक्य भीताः अन्येनकेनाप्यरक्ष्यमाणाःसदाशिवंशरणंदुद्रुवुः जग्मुः ॥१९॥ त्रिलोक्याउद्भवायदेव्यासहअद्रौकैलासेआसीनंतथापिमुनीनामाभिमतंतेषामेवापवर्गायतपोजुषाणं॥२०॥२१॥ निर्गुणंसगुणंचैवशिवंहरिपराक्रमैः ॥ स्तुवंतस्तुप्रजेशानानामन्यंतांतरंतयोः ॥ २२ ॥

नन्वेवंभूतोविष्णुरितिप्रसिद्धंतत्राहुः गुणमय्येति अस्यजगतोयदासर्गादीन् धत्सेतदाहेभूमन् स्वदृक् स्वतःसिद्धज्ञानस्त्वंब्रह्मादिसंज्ञांधत्से ॥ २३ ॥ तत्रहेतुः त्वंब्रह्मेति सदसतोभावान् देवतिर्यगादिरूपान् भावयतीतितथा सृज्यंतुत्वव्यतिरिक्तंनास्तीत्याहुः आत्मैवत्वंनानाशक्तिभिर्जगद्रूपेणाभातस्तस्मादीश्वरः ॥२४॥ स्वतःसिद्धज्ञानत्वमुपपादयंतोजगदात्मनाआभानप्रकारमाहुः त्वंशब्दस्यवेदस्ययोनिरतःस्वतःसिद्धज्ञानः त्वंजगदादिर्महत्तत्त्वं आत्माचअहंकारः कथंभूतः प्राणेंद्रियद्रव्याणांकारणभूतागुणायस्य राजसादित्रिविधइत्यर्थःस्वभावादयश्चत्वमेव क्रतुःसंकल्पःसत्यमृतंचेतियोधर्मःसत्वं महदादिस्वरूपत्वेहेतुः त्रिवृत्त्रिगुणात्मकंयदक्षरंप्रधानंत्वयित्वदाश्रयंतदामनंति

गुणमय्यास्वशक्त्याऽस्यसर्गस्थित्यप्ययान्विभो ॥ धत्सेयदास्वदृक्भूमन् ब्रह्मविष्णुशिवाभिधां ॥ २३ ॥ त्वंब्रह्मपरमंगुह्यंसदसद्भावभावनः ॥ नानाशक्तिभिराभातस्त्वमात्माजगदीश्वरः ॥२४॥ त्वंशब्दयोनिर्जगदादिरात्माप्राणेंद्रियद्रव्यगुणस्वभावः ॥ कालःक्रतुःसत्यमृतंचधर्मस्त्वय्यक्षरंयत्त्रिवृदामनंति ॥ २५ ॥ अग्निर्मुखंतेऽखिलदेवतात्माक्षितिंविदुर्लोकभवांघ्रिपंकजं ॥ कालंगतिंतेऽखिलदेवतात्मनोदिशश्चकर्णौरसनेजलेशं ॥ २६॥ नाभिर्नभस्तेश्वसनंनभस्वान्सूर्यश्चचक्षूंषिजलंस्मरेतः॥परावरात्माश्रयणंतवात्मासोमोमनोद्यौर्भगवन्शिरस्ते ॥ २७ ॥ कुक्षिःसमुद्रागिरयोऽस्थिसंघारोमाणिसर्वौषधिवीरुधस्ते ॥ छंदांसिसाक्षात्तवसप्तधातवस्त्रयीमयात्मन्हृदयंसर्वधर्मः ॥ २८ ॥ मुखानिपंचोपनिषदस्तवेशयैस्त्रिंशदष्टोत्तरमंत्रवर्गः ॥ यत्तच्छिवाख्यंपरमार्थतत्त्वंदेवःस्वयंज्योतिरवस्थितिस्ते ॥ २९॥ छायात्वधर्मोर्मिषुयैर्विसर्गोनेत्रत्रयंसत्वरजस्तमांसि ॥ साक्षान्मनुःशास्त्रकृतस्तवेक्षाछंदोमयोदेवऋषिःपुराणः ॥ ३० ॥ ॥

यद्वा एवंभूतेत्वयित्रिवृदक्षरंप्रणवंप्रकाशकमाहुरित्यर्थः॥२५॥अखिलदेवतात्मा अग्निःसर्वादेवताइतिश्रुतेः सोग्निस्तेमुखं हेलोकभव द्वितीयांतेषुविदुरित्यस्यसंबंधः ॥ २६ ॥ परेअवरेचयेआत्मानोजीवास्तेषामाश्रयस्तवात्माऽहंकारः ॥ २७ ॥ त्रयीमयात्मन्वेदत्रयमूर्ते॥२८॥ पंचोपनिषदस्तत्पुरुषाघोरसद्योजातवामदेवेशानरूपामंत्राः यैर्मुखैरष्टोत्तरत्रिंशन्मंत्राणांवर्गःतेषामेवमंत्राणांपदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मकामंत्राइत्यर्थः अवस्थितिःउपरतावस्था ॥ २९ ॥ अधर्मस्योर्मिषु दंभलोभादिषुयैरूर्मिभिर्विसर्गःसंहारः यद्वा यैःसत्वादिभिर्विविधःसर्गस्तानिनेत्रत्रयं हेदेवछंदोमयःसतवेक्षाईक्षणं साक्षान्मनुरितिपाठेमनुरितिवेदः तदेवाह छंदोमयइति ॥ ३० ॥ ॥

हेगिरित्रतेपरंज्योतिरखिलानांलोकपालादीनांगम्यंनभवति कुतःयत्ररजआदिनास्ति किंतज्ज्योतिःयन्निरस्तभेदंब्रह्म ॥ ३१ ॥ कामश्च अध्वरश्चदक्षयज्ञस्त्रिपुरादयश्चयेअनेकभूतद्रुहस्तान्क्षपयतःसंहरतस्तेतत्कर्मस्तुतयेनभवति अत्यल्पमेतादित्यर्थः गरभक्षणस्याप्यवश्यंभावित्वेनसिद्धवन्निर्द्देशः स्तुतयेअलंनभवतीत्यत्रहेतुः यस्तुभवान्स्वनेत्रवह्निविस्फुलिंगस्यशिखया इदंजगद्भसितंभस्मसात्जातंनवेदनालोचयत्यपि ॥ ३२ ॥ तदेवंनित्यंपरानुग्रहव्यग्रंत्वांयेनिंदंतितेऽतिमूर्खाइत्याहुः येतुउमयासहचरंतंतस्यांनितरांरतंकामिनंकत्थंतेप्रलपंति तथाश्मशानेचरंतमुग्रंक्रूरंपरुषंचाहिंस्रंकत्थंते कथंभूतं आत्मारामाश्चतेगुरवोविश्वहितोपदेष्टारस्तैर्हृदिचिंतितमंघ्रिद्वंद्वंयस्य तथाभूतमपि

नतेगिरित्राखिललोकपालविरिंचवैकुंठसुरेंद्रगम्यं ॥ ज्योतिःपरंयत्ररजस्तमश्चसत्त्वंनयद्ब्रह्मनिरस्तभेदं॥ ॥ ३१ ॥ कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहःक्षपयतःस्तुतयेनतत्ते ॥ यस्त्वंतकालइदमात्मकृतंस्वनेत्रवन्हिस्फुलिंगशिखयाभसितंनवेद ॥ ३२ ॥ येत्वात्मरामगुरुभिर्हृदिचिंतितांघ्रिद्वंद्वंचरंतमुमयातपसाभितप्तं ॥ कत्थंतउग्रपरुषंनिरतंश्मशानेतेनूनमूतिमविदंस्तवहातलज्जाः ॥ ३३ ॥ तत्तस्यतेसदसतोःपरतःपरस्यनांजःस्वरूपगमनेप्रभवंतिभून्नः ॥ ब्रह्मादयःकिमुतसंस्तवनेवयंतुतत्सर्गसर्गविषयाअपिशक्तिमात्रं ॥ ३४ ॥ एतत्परंप्रपश्यामोनपरंतेमहेश्वर ॥ मृडनायहिलोकस्यव्यक्तिस्तेऽव्यक्तकर्मणः ॥ ३५ ॥ श्रीशुकउवाच तद्वीक्ष्यव्यसनंतासांकृपयाभृशपीडितः ॥ सर्वभूतसुहृद्देवइदमाहसतींप्रियां ॥ ३६ ॥

तपसाऽभितप्तमपितेनूनंतवोतिमविदन्निातिकाकुः त्वल्लीलांनैवविदुरित्यर्थःअतोहातलज्जास्त्यक्तत्रपाः कथमात्मारामैःसेवितचरणयुगलस्यतेकामित्वंसंभवतिकथंवातपसाअभितप्तस्यशांतस्योग्रत्वंपरुषत्वंवासंभवतीत्यविचार्यैवप्रलपंतीत्यर्थः ॥ ३३ ॥ आस्तांतावन्निंदकानांवार्तामहांतोपितवतत्त्वंनजानंतीत्याहुः तत्तस्मात्तवस्वरूपस्यगमनेज्ञानेब्रह्मादयोपिनसमर्थाः संस्तवनेतुकुतःशक्ताःस्युस्तत्रवयंकथंप्रभवामः यतस्तेषांसर्गेऽत्यंतार्वाचीनाः तथापियदेतत्तवस्तवनमेतदात्मशक्तिपरिमितमात्रमित्यर्थः ॥ ३४ ॥ तदेवाहुः एतत्परमिति नपरंरूपंतथाऽपित्वद्दर्शनादेवकृतार्थावयमित्याहुः मृडनायहीति ॥ ३५ ॥ ३६ ॥ ॥ ॥

मत्प्रभावमविचार्यविषपानेप्रवृत्तंमांकथंचिदियंप्रियावारयेदितिशंकयातामनुज्ञापयन्नाह अहोबतेतिसार्धैश्चतुर्भिः वैशसंदुःखं ॥ ३७ ॥ प्राणपरीप्सूनांप्राणरक्षणेप्सूनां मेमया प्रभोःसमर्थस्य अर्थःकार्यं ॥ ३८ ॥ किंचबद्धवैरेषुभूतेषुपरस्परंजिघांसत्सु ॥ ३९ ॥ कृपयतः कृपांकुर्वतःपुंसः ॥ ४० ॥ मेमत्तःस्वस्तिःशोभनासत्ता सुखेनजीवितमास्त्वित्यर्थः ॥ ४१ ॥ जग्धुमत्तुंकरतलीकृत्यकरतलपारिमितमात्रं

शिवउवाच अहोबतभवान्येतत्प्रजानांपश्यवैशसं ॥ क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितं ॥३७॥ असांप्राणपरीप्सूनांविधेयमभयंहिमे ॥ एतावान्हिप्रभोरर्थोयद्दीनपरिपालनं ॥ ३८॥ प्राणैःस्वैःप्राणिनः पांतिसाधवःक्षणभंगुरैः ॥ बद्धवैरेषुभूतेषुमोहितेष्वात्ममायया ॥ ३९ ॥ पुंसःकृपयतोभद्रेसर्वात्माप्रीयतेहरिः ॥ प्रीतेहरौभगवतिप्रीयेऽहंसचराचरः ॥ ४० ॥ तस्मादिदंगरंभुंजेप्रजानांस्वस्तिरस्तुमे ॥ एवमामंत्र्यभगवान्भवानींविश्वभावनः ॥ ४१ ॥ तद्विषंजग्धुमारेभेप्रभावज्ञाऽन्वमोदत ॥ ततःकरतलीकृत्यव्यापिहालाहलंविषं ॥ ४२ ॥ अभक्षयन्महादेवःकृपयाभूतभावनः ॥ तस्यापिदर्शयामासस्ववीर्यंजलकल्मषः ॥ ४३॥ यच्चकारगलेनीलंतच्चसाधोर्विभूषणं ॥ तप्यंतेलोकतापेनसाधवःप्रायशोजनाः ॥ परमाराधनंतद्धिपुरुषस्याखिलात्मनः ॥ ४४ ॥ निशम्यकर्मतच्छंभोर्देवदेवस्यमीढुषः ॥ प्रजादाक्षायणीब्रह्मावैकुंठश्चशशंसिरे ॥४५॥ प्रस्कन्नंपिबतःपाणेर्यत्किंचिज्जगृहुःस्मतत् ॥ वृश्चिकाहिविषौषध्योदंदशूकाश्चयेपरे ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअमृतमथनेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ श्रीशुकउवाच पीतेगरेवृषांकेणप्रीतास्तेऽमरदानवाः ॥ ममंथुस्तरसासिंधुंहविर्धानीततोऽभवत् ॥ १ ॥



कृत्वा ॥ ४२ ॥ जलकल्मषःजलदोषोविषं ॥ ४३ ॥ यस्मात्तंगलेनीलंचकार ॥ ४४ ॥ ४५ ॥ प्रस्कन्नंगलितं अपरेयेसविषास्तेऽपि जगृहुः अनेनविषस्यतीव्रतोक्ता ॥ ४६ ॥ इत्यष्टमेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ अष्टमेमथ्यमानेऽब्धौलक्ष्म्याविष्णौवृतेऽसुरैः ॥ धन्वंतरेर्हृतेसोमेमोहिन्युद्भवईर्यते ॥ १ ॥ हविर्धानीसुरभिः ॥ १ ॥ ॥ ॥ ॥

देवयानस्यब्रह्मलोकमार्गप्रापकस्ययज्ञस्यसंबंधिनेहविषे ॥ २ ॥ ईश्वरशिक्षयाप्रागेवकृतया ॥ ३ ॥ भगवतोयःश्वेताद्रिःकैलासस्तस्यम
हिंमहिमानं दंतैःशिखरकल्पैर्हरंश्चंद्रवत्पांडुरइत्यनुषंगः॥ ४ ॥ ५ ॥ ६॥ वल्गुभिर्गत्यादिभिः स्वर्गिणांरमण्यःरतिकर्त्र्यः॥ ७॥ सुदामापर्वतः
तत्रैकस्यांदिशिजातासौदामनी स्फटिकादिमयगिरिशृंगेष्वधिकंस्फुरंतीविद्युदिवकांत्यादिशोरंजयंतीश्रीःसंपत्साक्षान्मूर्तिधारिणीसतीसै
वभगवत्परारमाआविरभूदित्यर्थः॥ ८ ॥ तस्यारूपादिमहिम्नाआक्षिप्तंचेतोयेषां ॥ ९ ॥ भगवद्वक्षसिस्थितयाश्रियाविलोकितानांसुराणां

तामग्निहोत्रीमृषयोजगृहुर्ब्रह्मवादिनः ॥ यज्ञस्यदेवयानस्यमेध्यायहविषेनृप ॥ २ ॥ ततउच्चैःश्रवानामह
योऽभूच्चंद्रपांडुरः ॥ तस्मिन्बलिःस्पृहांचक्रेनेंद्रईश्वरशिक्षया ॥ ३ ॥ ततऐरावतोनामवारणेंद्रोविनिर्ग
तः ॥ दंतैश्चतुर्भिःश्वेताद्रेर्हरन्भगवतोमहिं ॥ ४ ॥ कौस्तुभाख्यमभूद्रत्नंपद्मरागोमहोदधेः ॥ तस्मिन्
हरिःस्पृहांचक्रेवक्षोऽलंकरणेमणौ ॥ ५॥ ततोऽभवत्पारिजातःसुरलोकविभूषणं ॥ पूरयत्यर्थिनोयोऽर्थैः
शश्वद्भुवियथाभवान् ॥ ६ ॥ ततश्चाप्सरसोजातानिष्ककंठ्यःसुवाससः ॥ रमण्यःस्वर्गिणांवल्गुगतिली
लावलोकनैः ॥ ७ ॥ ततश्चाविरभूत्साक्षाच्छ्रीरमाभगवत्परा ॥ रंजयंतीदिशःकांत्याविद्युत्सौदामनीय
था ॥ ८ ॥ तस्यांचक्रुःस्पृहांसर्वेससुरासुरमानवाः ॥ रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ९ ॥ त
स्याआसनमानिन्येमहेंद्रोमहदद्भुतं ॥ मूर्तिमत्यःसरिच्छ्रेष्ठहेमकुंभैर्जलंशुचि ॥ १० ॥ आभिषेचनिका
भूमिराहरत्सकलौषधीः ॥ गावःपंचपवित्राणिवसंतोमधुमाधवौ ॥ ११ ॥ ऋषयःकल्पयांचक्रुरभिषेकं
यथाविधि ॥ जगुर्भद्राणिगंधर्वानटच्यश्चननृतुर्जगुः ॥ १२ ॥ ॥ ॥ ॥ ॥

यथापूर्वंसंपत्प्राप्तिमसुराणांचतद्विपर्ययंवक्तुमभिषेकादिमहोत्सवपूर्वकंब्रह्मादिपरिहारेणभगवत्प्राप्तिप्रकारमाह तस्याआसनमित्यादिनाअ
थासीद्वारुणीत्यतःप्राक्तनेनग्रंथेन ॥ १० ॥ आभिषेचनिकाःअभिषेकोचिताः पंचपवित्राणिपंचगव्यानि मधुमाधवौचैत्रवैशाखभवंफल
पुष्पादि पाठांतरेऽपिद्वंद्वैक्येसएवार्थः मधुमासेभवंमध्वितिवा ॥ ११ ॥ अभिषेकमभिषेकोचितंविधिं नटच्यःनटानांस्त्रियः ॥ १२ ॥

शंखवेणुवीणाश्चव्यनादयन् तुमुलोनिःस्वनोयेषांतान्मृदंगादीन् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ पदमाश्रयं ध्रुवंनित्यं अव्यभिचारिणोनित्याःसंतोगुणायस्मिंस्तंनान्वविंदत क्वचित्कस्यचिद्दोषस्यसद्भावात् ॥ १९ ॥ तदेवाह नूनमितित्रिभिः मन्युनिर्जयो नास्तिदुर्वासःप्रभृतिषु गुरुशुक्रादिषुसंगवर्जितंज्ञानंनास्ति महत्त्वेऽपिब्रह्मसोमादौनकामनिर्जयः परतोव्यपाश्रयःपरापेक्षइंद्रादिः सकि



मेघामृदंगपणवमुरजानकगोमुखान् ॥ व्यनादयन्शंखवेणुवीणास्तुमुलनिःस्वनान् ॥ १३ ॥ ततोऽभि षिषिचुर्देवींश्रियंपद्मकरांसतीं ॥ दिग्गिभाःपूर्णकलशैःसूक्तवाक्यैर्द्विजेरितैः ॥ १४ ॥ समुद्रःपीतकौशेयवा ससीसमुपाहरत् ॥ वरुणःस्रजंवैजयंतींमधुनामत्तषट्पदां ॥१५॥ भूषणानिविचित्राणिविश्वकर्माप्रजाप तिः ॥ हारंसरस्वतीपद्ममजोनागाश्चकुंडले ॥ १६ ॥ ततःकृतस्वस्त्ययनोत्पलस्रजंनदद्द्विरेफांपरिगृह्य पाणिना ॥ चचालवक्त्रंसुकपोलकुंडलंसव्रीडहासंदधतीसुशोभनं ॥ १७ ॥ स्तनद्वयंचातिकृशोदरीसमं निरंतरंचंदनकुंकुमोक्षितं ॥ ततस्ततोनूपुरवल्गुसिंजितैर्विसर्पतीहेमलतेवसाबभौ ॥१८॥ विलोकयंतीनि रवद्यमात्मनःपदंध्रुवंचाव्यभिचारिसद्गुणं ॥ गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषुनान्वविंदत ॥ १९॥ नूनंतपोयस्यनमन्युनिर्जयोज्ञानंक्वचित्तच्चनसंगवर्जितं ॥ कश्चिन्महांस्तस्यनकामनिर्जयःसईश्वरःकिंपर तोव्यपाश्रयः ॥ २० ॥ धर्मःक्वचित्तत्रनभूतसौहृदंत्यागःक्वचित्तत्रनमुक्तिकारणं ॥ वीर्यंनपुंसोऽस्त्यजवे गनिष्कृतंनहिद्वितीयोगुणसंगवर्जितः ॥ २१ ॥ ॥ ॥ ॥ ॥



मीश्वरः ॥ २० ॥ नभूतसौहृदंपरशुरामादिषुनमुक्तिकारणंत्यागःशिबिप्रभृतिषु पुंसःकार्तवीर्यादेर्वीर्यमस्ति अजवेगनिष्कृतंकालवेगेन परिहृतंतुनभवति गुणसंगवर्जितःसनकादिर्द्वितीयोममवरोनहि समाधिनिष्ठत्वात् ॥ २१ ॥ ॥ ॥

चिरायुष्यपिमार्कंडेयादौशीलमंगलंनास्ति इंद्रियदमनशीलत्वात् क्वचित्तदप्यस्तिहिरण्यकशिपुप्रभृतौ आयुषःस्थैर्यंनवेद्यंदुर्ज्ञातं भगव
द्द्वेषेणाकस्मादेवमृत्युसंभवात् यत्रकुत्रचश्रीरुद्रे मार्कंडेयादिवदिंद्रियदमनाद्यभावात्शीलमंगलंचायुर्निश्चयश्चेत्युभयमस्ति नचान्यःपूर्वो
क्तःकश्चिद्दोषःतथाऽपिसोऽप्यमंगलःश्मशानवासाद्यमंगलचेष्टितः श्रीमुकुंदंलक्षीकृत्याह कश्चेति कश्चित्सुमंगलोनिरवद्यश्चसतुमांनाहि
कांक्षते आत्मारामत्वात् ॥ २२ ॥ एवंविमृश्यरमानिरपेक्षमपिमुकुंदमेववरंवव्रे तत्किं अव्यभिचारिभिःसद्भिर्धर्मज्ञानादिभिर्गुणैर्निजैका
श्रयतयाचनैरपेक्ष्येणवरंसर्वोत्तमं तत्रहेतुः अगुणाश्रयंप्रकृतिगुणातीतं पाठांतरेप्ययमेवार्थः अतएवस्वस्यईप्सितं किंच सर्वैर्गुणैरणि

**क्वचिच्चिरायुर्नहिशीलमंगलंक्वचित्तदप्यस्तिनवेद्यमायुषः ॥ यत्रोभयंकुत्रचसोऽप्यमंगलःसुमंगलःकश्चन कांक्षतेहिमां ॥ २२ ॥ एवंविमृश्याव्यभिचारिसद्गुणैर्वरंनिजैकाश्रयतयागुणाश्रयं ॥ वव्रेवरंसर्वगुणैरपेक्षितंरमामुकुंदंनिरपेक्षमीप्सितं ॥ २३ ॥ तस्यांसदेशउशतींनवकंजमालांमाद्यन्मधुव्रतवरूथगिरोपघुष्टां ॥ तस्थौनिधायनिकटेतदुरःस्वधामसव्रीडहासविकसन्नयनेनयाता ॥ २४ ॥ तस्याःश्रियस्त्रिजगतोजगतोजनन्यावक्षोनिवासमकरोत्परमंविभूतेः ॥ श्रीःस्वाःप्रजाःसकरुणेननिरीक्षणेनयत्रस्थितैधयतसाधिपतींस्त्रिलोकान् ॥ २५ ॥ शंखतूर्यमृदंगानांवादित्राणांपृथुःस्वनः ॥ देवानुगानांसस्त्रीणांनृत्यतांगायतामभूत् ॥ ॥ २६ ॥ ब्रह्मरुद्रांगिरोमुख्याःसर्वेविश्वसृजोविभुं ॥ ईडिरेऽवितथैर्मंत्रैस्तल्लिंगैःपुष्पवर्षिणः ॥ २७ ॥**

मादिभिरपेक्षितंवृतं अयंभावः यद्यपिस्वयमात्मारामत्वेनान्यनिरपेक्षस्तथाऽप्याश्रिताअणिमादिसिद्धीर्यथानोपेक्षतेतद्वन्मामपिनोपेक्षेत
तावतैवतत्सेवयाऽहंकृतार्थास्यांकिमन्यैःप्राकृतैरितितमेववृतवतीति ॥ २३ ॥ तदेवाह तस्यांसदेशेकमनीयांनवकंजमालांनिधायतदनु
ग्रहंप्रतीक्षमाणातूष्णींतस्यनिकटेतस्थौ कथंभूतांमालां माद्यंतोयेमधुव्रतास्तेषांवरूथस्यगिराउपघुष्टांनादितां कथंभूताश्रीः सव्रीडहासेन
विकसन्नयनंतेनतस्यउरःस्वधामयातासती वक्षःप्रतीक्षमाणातस्थावित्यर्थः ॥ २४ ॥ भगवानपित्रैलोक्याभिवृद्धयेस्ववक्षस्तस्याःस्थानंद
दावित्याह तस्याइति विशिष्टाभूतयोविभवायस्याः तथात्रिजगतोजनन्याःश्रियः परमंसुस्थिरमैधयतअवर्धयत् ॥ २५ ॥ २६ ॥ तल्लिं
गैर्विष्णुप्रतिपादकैः अवितथैर्यथार्थैः ॥ २७ ॥ ॥ ॥ ॥ ॥

॥ २८ ॥ २९ ॥ वारुणीवरुणदैवत्यंयदन्नंतन्मयीसुरा ॥ ३० ॥ ३१ ॥ दीर्घौपीवरौदोर्दंडौयस्य कंबुग्रीवःशंखनाभिरिवत्रिरेखासुवृत्ता ग्रीवायस्य ॥ ३२ ॥ स्निग्धःकुंचितःकेशानामंतोयस्य ॥ ३३ ॥ ३४ ॥ इज्यभाक्यज्ञभागभोक्ता अमृतेनआभृतंपरिपूर्णं ॥३५॥ ३६ ॥ मिथःदैत्यानांपरस्परंकलहोत्पादनेनयोगमायया चमोहिन्यावोऽर्थंसाधयिष्यामिअतोमाखिद्यतेत्याहेतिशेषः ॥ ३७ ॥ तदेवाह मिथइति



श्रियाविलोकितादेवाःसप्रजापतयःप्रजाः॥ शीलादिगुणसंपन्नालेभिरेनिर्वृतिंपरां ॥ २८॥ निःसत्वालोलुपाराजन्निरुद्योगागतत्रपाः ॥ यदाचोपेक्षितालक्ष्म्याबभूवुर्दैत्यदानवाः ॥२९ ॥ अथासीद्वारुणीदेवीकन्याकमललोचना ॥ असुराजगृहुस्तांवैहरेरनुमतेनते॥३०॥अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः॥उदतिष्ठन्महाराजपुरुषःपरमाद्भुतः ॥३१॥ दीर्घपीवरदोर्दंडःकंबुग्रीवोरुणेक्षणः॥श्यामलस्तरुणःस्रग्वीसर्वाभरणभूषितः॥३२॥पीतवासामहोरस्कःसुमृष्टमणिकुंडलः॥स्निग्धकुंचितकेशांतःसुभगःसिंहविक्रमः ॥ ३३ ॥ अमृतापूर्णकलशंबिभ्रद्वलयभूषितः ॥ सवैभगवतःसाक्षाद्विष्णोरंशांशसंभवः ॥३४॥ धन्वंतरिरितिख्यात आयुर्वेददृगिज्यभाक् ॥ तमालोक्यासुराःसर्वेकलशंचामृताभृतं ॥३५॥लिप्संतःसर्ववस्तूनिकलशंतरसाऽहरन् ॥ नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने॥३६॥विषण्णमनसोदेवाहरिंशरणमाययुः॥ इतितद्दैन्यमालोक्यभगवान्भृत्यकामकृत् ॥ माखिद्यतमिथोऽर्थंवःसाधयिष्येस्वमायया॥३७॥ मिथःकलिरभूत्तेषांतदर्थेतर्षचेतसां॥अहंपूर्वमहंपूर्वंनत्वंनत्वमितिप्रभो॥३८॥देवाःस्वंभागमर्हंतियेतुल्यायासहेतवः॥ सत्रयागइवैतस्मिन्नेषधर्मःसनातनः ॥ ३९॥ इतिस्वान्प्रत्यषेधन्वैदैतेयाजातमत्सराः ॥ दुर्बलाःप्रबलान्राजन्गृहीतकलशान्मुहुः ॥४०॥ एतस्मिन्नंतरेविष्णुःसर्वोपायविदीश्वरः ॥ योषिद्रूपमनिर्देश्यंदधारपरमाद्भुतं॥४१॥

तर्षःकामस्तद्युक्तानिचेतांसियेषां इत्येवंसमबलानांकलिरभूत् ॥ ३८ ॥ दुर्बलानांत्वाक्रोशप्रकारमाह देवाइतिद्वाभ्यांयेदेवास्तुल्येनायासेनहेतवःसाधकाः तुल्यायासोहेतुश्चधनादिर्येषामितिवा सत्रयागेयथासर्वेषांसमंफलंतद्वत् तथाचश्रुतिः ऋद्धिकामाःसत्रमासीरान्निति ये यजमानास्तेऋत्विजइतिच ॥ ३९ ॥ ४० ॥ ४१ ॥ ॥ ॥ ॥ ॥

तद्रूपंवर्णयति पंचभिः प्रेक्षणीयमुत्पलमिवश्यामं सर्वेष्ववयवेषुसुंदरं समानयोः कर्णयोराभरणेयस्मिन् सुकपोलंचतदुत्कृष्टनासिकंचआ
ननंयस्मिन् ॥ ४२ ॥ नवयौवननिर्वृत्तयोः स्तनयोर्भारेणचकृशमुदरंयस्मिन् ॥ ४३ ॥ सुष्टुग्रीवायस्मिन्कंठेआभरणंयस्मिंस्तच्चतच्च शोभ
नाग्रीवायेनतत्कंठाभरणंयस्मिन्नितिवा सुभुजयोरंगदाभ्यांभूषितं ॥ ४४ ॥ विरजांबरेणसंवीतोनितंबएवद्वीपोविशालत्वात्तत्रशोभाय
स्यास्तयाकांच्याप्रकर्षेणविलसत्वल्गुयथाभवत्येवंचलतोश्चरणयोर्नूपुरेयस्मिन् ॥ ४५ ॥ सव्रीडेनस्मितेनसहविक्षिप्ताकंपिताया भ्रूस्तस्या
विलासेनसहयान्यवलोकितानितैर्दैत्ययूथपानांचेतस्सुमुहुःकाममुद्दीपयन् ॥ ४६ ॥ इत्यष्टमेटीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमे

प्रेक्षणीयोत्पलश्यामंसर्वावयवसुंदरं॥समानकर्णाभरणंसुकपोलोन्नसाननं॥४२॥नवयौवननिर्वृत्तस्तनभा
रकृशोदरं ॥ मुखामोदानुरक्तालिझंकारोद्विग्नलोचनं ॥ ४३ ॥ बिभ्रत्स्वकेशभारेणमालामुत्फुल्लमल्लिकां ॥ सु
ग्रीवकंठाभरणंसुभुजांगदभूषितं ॥४४॥विरजांबरसंवीतनितंबद्वीपशोभया॥कांच्याप्रविलसद्वल्गुचलच्चर
णनूपुरं॥४५॥सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः॥दैत्ययूथपचेतस्सुकाममुद्दीपयन्मुहुः ॥४६॥ इति
श्रीभागवतेमहापुराणेऽष्टमस्कंधेअष्टमोऽध्यायः ॥८॥ ॥ श्रीशुकउवाच तेऽन्योन्यतोऽसुराःपात्रंहरंत
स्त्यक्तसौहृदाः ॥ क्षिपंतोदस्युधर्माणआयांतींददृशुःस्त्रियं ॥१॥ अहोरूपमहोधामअहोअस्यानवंवयः॥इ
तितेतामभिद्रुत्यपप्रच्छुर्जातहृच्छयाः ॥२॥ कात्वंकंजपलाशाक्षिकुतोवाकिंचिकीर्षसि ॥ कस्यासिवदवामो
रुमथ्नंतीवमनांसिनः ॥३ ॥ नवयंत्वाऽमरैर्दैत्यैःसिद्धगंधर्वचारणैः ॥ नास्पृष्टपूर्वांजानीमोलोकेशैश्चकुतोनृ
भिः ॥ ४ ॥ नूनंत्वंविधिनासुभ्रूःप्रेषिताऽसिशरीरिणां ॥ सर्वेंद्रियमनःप्रीतिंविधातुंसघृणेनकिं ॥ ५ ॥

मोहितैर्दैत्यैरर्पितेऽमृतभाजने ॥ तद्द्वंचनेनदेवेभ्योऽमृतंदत्तंतयेर्यते ॥ १ ॥ १ ॥ अहोरूपंसौंदर्यंधामद्युतिः इतिवदंतःकात्वमित्यादिपप्र
च्छुः ॥ २ ॥ मथ्नंतीवक्षोभयंतीव ॥ ३ ॥ कस्यासीत्ययुक्तमुक्तमस्माभिर्यतस्त्वंनकेनचिद्भुक्तपूर्वेत्याहुः नेतिद्वाभ्यां त्वात्वाममरादिभि
रस्पृष्टपूर्वांनजानीमइतिनअपितुजानीमएव ॥ ४ ॥ आस्तामिदंत्वद्दर्शनंत्वीश्वरेणैवसंपादितमित्याहुः नूनमिति सर्वेंद्रियाणांचमनसश्च
प्रीतिंविधातुंसघृणेनप्रेषिताऽसि किंवायदृच्छयागताासिनैवंनूनंप्रेषितैवेत्यर्थः ॥ ५ ॥ ॥ ॥

॥ ६ ॥ भेदोविग्रहोयथानभवेत्तथा ॥ ७ ॥ ८ ॥ संगताःअनुसृताः ॥ ९ ॥ हेसुरद्विषः ॥ १० ॥ भावेनकेनाप्यभिप्रायेणगंभीरियथा
भवत्येवंजहसुः ॥ ११ ॥ ईषत्स्मितेनशोभायस्याःतयामयाकृतंसाधुवाअसाधुयद्यभ्युपेतअंगीकुरुततर्हिविभजे ॥ १२ ॥ असुरपुंगवाःदै
त्यश्रेष्ठाः प्रमाणमियत्तामजानंतः ॥ १३ ॥ १४ ॥ यथोपजोषंयथाप्रीति अहतस्यलक्षणं अहतंयंत्रनिर्मुक्तमुक्तंवासःस्वयंभुवा ॥शस्तंत



सात्वंनःस्पर्धमानानामेकवस्तुनिमानिनि ॥ ज्ञातीनांबद्धवैराणांशंविधत्स्वसुमध्यमे ॥ ६ ॥ वयंकश्यपदा
यादाभ्रातरःकृतपौरुषाः ॥ विभजस्वयथान्यायंनैवभेदोयथाभवेत् ॥ ७ ॥इत्युपामंत्रितोदैत्यैर्मायायोषिद्व
पुर्हरिः ॥ प्रहस्यरुचिरापांगैर्निरीक्षन्निदमब्रवीत् ॥८॥ श्रीभगवानुवाच कथंकश्यपदायादाःपुंश्चल्यां
मयिसंगताः ॥ विश्वासंपंडितोजातुकामिनीषुनयातिहि ॥ ९ ॥ सालावृकाणांस्त्रीणांचस्वैरिणीनांसुरद्विषः॥
सख्यान्याहुरनित्यानिनूत्नंनूत्नंविचिन्वतां ॥ १० ॥ श्रीशुकउवाच इतितेक्ष्वेलितैस्तस्याआश्वस्तमन
सोऽसुराः ॥ जहसुर्भावगंभीरंददुश्चामृतभाजनं ॥ ११ ॥ ततोगृहीत्वाऽमृतभाजनंहरिर्बभाषईषत्स्मितशो
भयागिरा ॥ यद्यभ्युपेतक्वचसाध्वसाधुवाकृतंमयावोविभजेसुधामिमां ॥१२॥ इत्यभिव्याहृतंतस्याआक
र्ण्यासुरपुंगवाः ॥ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत॥१३॥ अथोपोष्यकृतस्नानाहुत्वाचहविषाऽनलं॥
दत्वागोविप्रभूतेभ्यःकृतस्वस्त्ययनाद्विजैः ॥ १४ ॥ यथोपजोषंवासांसिपरिधायाहतानिते ॥ कुशेषुप्राविश
न्सर्वेप्रागग्रेष्वभिभूषिताः ॥ १५ ॥ प्राङ्मुखेषूपविष्टेषुसुरेषुदितिजेषुच ॥ धूपामोदितशालायांजुष्टायांमा
ल्यदीपकैः ॥ १६ ॥ तस्यांनरेंद्रकरभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविव्हलाक्षी ॥ साकूजतीकनक
नूपुरसिंजितेनकुंभस्तनीकलशपाणिरथाविवेश ॥ १७ ॥ ॥ ॥ ॥ ॥

न्मांगलिकेषुतावन्मात्रेणसर्वदा ॥ प्रागग्रेषुकुशेषुविविशुः ॥ १५ ॥ धूपैरामोदितायांसुरभीकृतायांशालायां ॥ १६ ॥ अथतस्यांशाला
यांहेनरेंद्रसाकलशपाणिराविवेश कथंभूता मणिबंधादाकनिष्ठंकरस्यकरभोबहिःकरभसदृशौसुवृत्तावूरूयस्याःसा उशत्कमनीयंदुकूलं
यस्मिंस्तेनश्रोणीतटेनविशालयाश्रोण्याअलसामंदागतिर्यस्याःपाठांतरेकरभसदृशयोरूर्वोर्लसद्दुकूलंयस्याःसाचासौश्रोणीतटेनअलसग
तिश्च मदेनविव्हलेअक्षिणीयस्याः ॥ १७ ॥ ॥ ॥ ॥ ॥

तांश्रियःसर्वांसंवीक्ष्यदेवासुराःसंमुमुहुः कथंभूतां कनकमयेकुंडलेयस्याःसाचासौचारवःकर्णादयोयस्याःसाचतां विगलितःस्रस्तःस्तन
पट्टिकायाअंतोयस्याः ॥ १८ ॥ एवंतान्मोहयित्वायत्कृतवांस्तदाह त्रिभिः असुराणांसुधादानंसर्पाणांक्षीरदानमिवदुर्नयमन्याऽयंमत्वातां
सुधांतेभ्योनव्यभजत् अयंभावःदैत्यैर्मदीयंसाध्वसाधुवासर्वमनुमतमेवातोमद्भक्तान्देवानेवसुधांपाययिष्यामि किंचतैर्यथान्यायंविभजस्वे
त्युक्तंनचैतेभ्योजात्यैवक्रूरेभ्योदानंन्याय्यमतस्तेभ्यःसुधांनदद्यामिति ॥ १९ ॥ पंक्तीःपृथक्विविक्ताः कल्पयित्वाविधाय तासुपंक्तिषुस्वे

तांश्रीसखींकनककुंडलचारुकर्णनासाकपोलवदनांपरदेवताख्यां ॥ संवीक्ष्यसंमुमुहुरुत्स्मितवीक्षणेनदेवा
सुराविगलितस्तनपट्टिकांतां ॥ १८ ॥ असुराणांसुधादानंसर्पाणामिवदुर्नयं ॥ मत्वाजातिनृशंसानांनतांव्य
भजदच्युतः ॥ १९ ॥ कल्पयित्वापृथक्पंक्तीरुभयेषांजगत्पतिः ॥ तांश्चोपवेशयामासस्वेषुस्वेषुचपंक्तिषु ॥ २० ॥
दैत्यान्गृहीतकलशोवंचयन्नुपसंचरैः ॥ दूरस्थान्पाययामासजरामृत्युहरांसुधां ॥ २१ ॥ तेपालयंतःसमयम
सुराःस्वकृतंनृप ॥ तूष्णीमासन्कृतस्नेहाःस्त्रीविवादजुगुप्सया ॥ २२ ॥ तस्यांकृतातिप्रणयाःप्रणयापायका
तराः ॥ बहुमानेनचाबद्धानोचुःकिंचनविप्रियं ॥ २३ ॥ देवलिंगप्रतिच्छन्नःस्वर्भानुर्देवसंसदि ॥ प्रविष्टःसो
ममपिबच्चंद्रार्काभ्यांचसूचितः ॥ २४ ॥ चक्रेणक्षुरधारेणजहारपिबतःशिरः ॥ हरिस्तस्यकबंधस्तुसुधयाऽ
प्लावितोऽपतत् ॥ २५ ॥ शिरस्त्वमरतांनीतमजोग्रहमचीक्लृपत् ॥ यस्तुपर्वणिचंद्रार्कावभिधावतिवैरधीः ॥
॥ २६ ॥ पीतप्रायेऽमृतेदेवैर्भगवान्लोकभावनः ॥ पश्यतामसुरेंद्राणांस्वरूपंजगृहेहरिः ॥ २७ ॥ ॥

षुस्वेषुतत्सजातीयेषु तांश्चअसुरानपिप्रतारणार्थमेवोपवेशयामास ॥ २० ॥ उपसंचरैःबहुमानाप्रियवाक्यादिनातानतिक्रम्यातिक्रम्यगम
नैर्दूरस्थानपिदेवान् ॥ २१ ॥ तयाकृतःस्नेहोयेषु स्त्रियासहविवादस्यजुगुप्सया ॥ २२ ॥ कृतःआतिप्रणयःस्नेहोयैःप्रणयापायेनकातराः
भीताः एतेतावत्कृपणाःपूर्वंकिंचित्पिबंतुयूयंतुधीराःक्षणंप्रतीक्षध्वमित्यादिबहुमानेनआबद्धाःनियंत्रिताः समयपालनादिभिःषड्भिरेतैःकार
णैःअप्रियंकिंचिदपिनोचुःकिंतुतूष्णीमासन् ॥ २३ ॥ देवपंक्तौचंद्रार्कयोर्मध्येप्रविष्टःसोममममृतमपिबत् ॥ २४ ॥ हरिस्तस्यशिरोजहार
अप्लावितःअसंस्पृष्टः ॥ २५ ॥ ग्रहंसूर्यादिवद्ग्रहत्वाधिकारिणं ॥ २६ ॥ २७ ॥ ॥

हरिभक्तानामेवोद्यमःफलतिनान्येषामित्येवमाख्यानतात्पर्यमाह एवमिति समादेशादयोयेषां हेतुर्मंदराद्रिः अर्थःसमुद्रेक्षिप्तवीरुधादि वि
विधःकल्पःफलंकेषांचिज्जातंकेषांचिन्नेतिवैचित्र्यंयेषांते फलवैषम्यवंतोबभूवुरित्यर्थः तदेवाह तत्रतेषुयस्यपादपंकजरजःश्रयणाद्देवाअ
मृतफलमापुः सएवसेव्यइत्यर्थः यत्तदोर्नित्यसंबंधात् ॥ २८ ॥ एतदेवोपपादयति यदिति असुःप्राणः वसुधनंप्राणादिभिर्देहात्मजा
दिषुनृभिर्यत्युज्यतेप्रयुज्यते देहाद्यर्थंयक्रियतइत्यर्थः तदसत्व्यर्थंभवति कुतः पृथक्त्वात्भेदाश्रयत्वात् शाखानिषेचनवत्तैरेवप्राणादिभि
रीश्वरोद्देशेनयक्रियतेतत्तुसत्महाफलंभवति अपृथक्त्वात् ईश्वरस्यसर्वत्रानुगतत्वात् तत्रदृष्टांतः यत्तरोर्मूलनिषेचनंतद्यथासर्वस्यस्कंधशा

एवंसुरासुरगणाःसमदेशकालहेत्वर्थकर्ममतयोऽपिफलेविकल्पाः ॥ तत्रामृतंसुरगणाःफलमंजसापुर्यत्पाद
पंकजरजःश्रयणान्नदैत्याः ॥ २८ ॥ यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषुनृभिस्तदसत्पृथक्त्वा
त् ॥ तैरेवसद्भवतियक्रियतेऽपृथक्त्वात्सर्वस्यतद्भवतिमूलनिषेचनंयत् ॥ २९ ॥ इतिश्रीभागवतेमहापु
राणेअष्टमस्कंधेअमृतमथनेनवमोध्यायः ॥ ९ ॥ ॥ ॥ श्रीशुकउवाच इतिदानवदैतेयानाविं
दन्नमृतंनृप ॥ युक्ताःकर्मणियत्ताश्चवासुदेवपराङ्मुखाः ॥ १ ॥ साधयित्वाऽमृतंराजन्पाययित्वास्वका
न्सुरान् ॥ पश्यतांसर्वभूतानांययौगरुडवाहनः ॥ २ ॥ सपत्नानांपरामृद्धिंदृष्ट्वातेदितिनंदनाः ॥ अमृ
ष्यमाणाउत्पेतुर्देवान्प्रत्युद्यतायुधाः ॥ ३ ॥ ततःसुरगणाःसर्वेसुधयापीतयैधिताः ॥ प्रतिसंयुयुधुःशस्त्रै
र्नारायणपदाश्रयाः ॥ ४ ॥ तत्रदैवासुरोनामरणःपरमदारुणः ॥ रोधस्युदन्वतोराजंस्तुमुलोरोमहर्ष
णः ॥ ५ ॥ तत्रान्योन्यंसपत्नास्तेसंरब्धमनसोरणे ॥ समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥

खादेरपिभवतीति यद्वाल्यब्लोपेपंचम्यौ पृथक्त्वंपर्यालोच्यभेददृष्ट्यादेहाद्युद्देशेनयक्रियतेतदसत् अपृथक्त्वंपर्यालोच्यईश्वरदृष्ट्यातैरेवते
ष्वेवचयक्रियतेतत्सद्भवतीति शेषंसमानं ॥ २९ ॥ इत्यष्टमेटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ दशमेमत्सराद्दैत्यैरारब्धेतुमृधेसुरैःदैत्य
मायाविषण्णेषुदेवेष्वाविर्बभौहरिः ॥ १ ॥ तदेवममृतावाप्तिर्नाभक्तानामितीरितं ॥ भक्तमत्सरतःप्राणहानिःपुनरुदीर्यते ॥ २ ॥ १ ॥ २ ॥
॥ ३ ॥ ४ ॥ रणःसंग्रामः उदन्वतःसमुद्रस्यरोधसितीरेबभूव ॥ ५ ॥ अन्योन्यंसमासाद्यनिजघ्नुः ॥ ६ ॥ ॥

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥१२॥ चित्रध्वजपटादिभिश्चवीराणांमालाभिश्चराजिभिर्देवदानववीराणांध्वाजिन्यौयादसांमालाभिः
सागराविवरेजतुरितित्रयाणामन्वयः यादोभिरितिवा सितैरमलैरातपत्रैश्च बार्हैश्चामरैश्चव्यजनैः ॥ १३ ॥ वातेनोद्धूतैरुत्तरीयैरुष्णीषैश्चसू

शंखतूर्यमृदंगानांभेरीडमरिणांमहान् ॥ हस्त्यश्वरथपत्तीनांनदतांनिःस्वनोऽभवत् ॥७॥ रथिनोरथिभि
स्तत्रपत्तिभिःसहपत्तयः ॥ हयाहयैरिभाश्चेभैःसमसज्जंतसंयुगे ॥८॥उष्ट्रैःकेचिदिभैःकेचिदपरेयुयुधुःखरैः
केचिद्गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥ ९॥ गृध्रैःकंकैर्बकैरन्येश्येनभासैस्तिमिंगिलैः ॥ शरभैर्महिषैःख
ड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥ शिवाभिराखुभिःकेचित्ककलासैःशशैर्नरैः ॥ बस्तैरेकेकृष्णसारैर्हंसैरन्येच
सूकरैः ॥ ११ ॥ अन्येजलस्थलखगैःसत्वैर्विकृतविग्रहैः ॥ सेनयोरुभयोराजन्विविशुस्तेऽग्रतोऽग्रतः ॥
॥ १२ ॥ चित्रध्वजपटैराजन्नातपत्रैःसितामलैः ॥ महाधनैर्वज्रदंडैर्व्यजनैर्बार्हचामरैः ॥ १३ ॥ वातोद्धूतो
त्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः ॥ स्फुरद्भिर्विशदैःशस्त्रैःसुतरांसूर्यरश्मिभिः ॥ १४ ॥ देवदानववीराणांध्वजि
न्यौपांडुनंदन ॥ रेजतुर्वीरमालाभिर्यादसामिवसागरौ ॥१५॥ वैरोचनोबलिःसंख्येसोऽसुराणांचमूपतिः
॥ यानंवैहायसंनामकामगंमयनिर्मितं ॥ १६ ॥ सर्वसांग्रामिकोपेतंसर्वाश्चर्यमयंप्रभो ॥ अप्रतर्क्यमनिर्दे
श्यंदृश्यमानमदर्शनं ॥ १७ ॥ आस्थितस्तद्विमानाग्र्यंसर्वानीकाधिपैर्वृतः ॥ वालव्यजनछत्राग्र्यैरेजे
चंद्रइवोदये ॥ १८ ॥ तस्यासन्सर्वतोयानैर्यूथानांपतयोऽसुराः ॥ नमुचिःशंबरोबाणोविप्रचित्तिरयोमुखः
॥ १९ ॥ द्विमूर्धाकालनाभोऽथप्रहेतिर्हेतिरिल्वलः ॥ शकुनिर्भूतसंतापोवज्रदंष्ट्रोविरोचनः ॥ २० ॥ हय
ग्रीवःशंकुशिराःकपिलोमेघदुंदुभिः ॥ तारकश्चक्रदृक्शुंभोनिशुंभोजंभउत्कलः ॥ २१ ॥ अरिष्टोऽरिष्ट
नेमिश्चमयश्चत्रिपुराधिपः ॥ अन्येपौलोमकालेयानिवातकवचादयः ॥ २२ ॥ ॥ ॥

र्यरश्मिभिःसुतरांस्फुरद्भिः ॥ १४ ॥ १५ ॥ असुराणांयाचमूस्तस्याः पतिःसबालिर्यानमास्थितः ॥ १६ ॥ १७ ॥ उदयेउदयगिरिशि
खरेस्थितश्चंद्रइवविरेजइतित्रयाणामन्वयः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ॥

॥ २३ ॥ २४ ॥ स्त्रवंतिप्रस्त्रवणानियस्मिन्नितिमदधारासादृश्यं ॥ २५ ॥ नानावाहनादीनियेषांतेदेवाअसुराश्चमिथोयुयुधुः ॥ २६ ॥ २७ ॥
द्वंद्वान्येवाह युयोधेतिसप्तभिः अस्यतआस्यत्अयुध्यतेत्यर्थः ॥ २८ ॥ २९ ॥ सूर्योदेवएकएवशतेनबलिसुतैःबाणोज्येष्ठोयेषांतैः ॥ ३० ॥



अलब्धभागाःसोमस्यकेवलंक्लेशभागिनः ॥ सर्वएतेरणमुखेबहुशोनिर्जितामराः ॥ २३ ॥ सिंहनादान्वि
मुंचंतःशंखान्दध्मुर्महारवान् ॥ दृष्ट्वासपत्नानुत्सिक्तान्बलभित्कुपितोभृशं ॥ २४ ॥ ऐरावतंदिक्करिणमा
रूढःशुशुभेस्वराट् ॥ यथास्त्रवत्प्रस्त्रवणमुदयाद्रिमहर्पतिः ॥ २५ ॥ तस्यासन्सर्वतोदेवानानावाहध्वजा
युधाः ॥ लोकपालाःसहगणैर्वाय्वग्निवरुणादयः ॥ २६ ॥ तेऽन्योऽन्यमभिसंसृत्यक्षिपंतोमर्मभिर्मिथः ॥ आ
व्हयंतोविशंतोऽग्रेयुयुधुर्द्वंद्वयोधिनः ॥ २७ ॥ युयोधबलिरिंद्रेणतारकेणगुहोऽस्यत ॥ वरुणोहेतिनाऽयुध्य
न्मित्रोराजन्प्रहेतिना ॥ २८ ॥ यमस्तुकालनाभेनविश्वकर्मामयेनवै ॥ शंबरोयुयुधेत्वष्ट्रासवित्रातुविरोचनः ॥
॥ २९ ॥ अपराजितेननमुचिरश्विनौवृषपर्वणा ॥ सूर्योबलिसुतैर्देवोबाणज्येष्ठैःशतेनच ॥ ३० ॥ राहुणाच
तथासोमःपुलोम्नायुयुधेऽनिलः ॥ निशुंभशुंभयोर्देवीभद्रकालीतरस्विनी ॥ ३१ ॥ वृषाकपिस्तुजंभेनमहि
षेणविभावसुः ॥ इल्वलःसहवातापिर्ब्रह्मपुत्रैररिंदम ॥ ३२ ॥ कामदेवेनदुर्मर्षउत्कलोमातृभिःसह ॥ बृह
स्पतिश्चोशनसानरकेणशनैश्चरः ॥ ३३ ॥ मरुतोनिवातकवचैःकालेयैर्वसवोऽमराः ॥ विश्वेदेवास्तुपौलोमैरु
द्राःक्रोधवशैःसह ॥ ३४ ॥ तएवमाजावसुराःसुरेंद्राद्वंद्वेनसंहत्यचयुध्यमानाः ॥ अन्योऽन्यमासाद्यनिजघ्नु
रोजसाजिगीषवस्तीक्ष्णशरासितोमरैः ॥ ३५ ॥ भुशुंडिभिश्चक्रगदार्ष्टिपट्टिशैःशक्त्युल्मुकैःप्रासपरश्वधैरपि
॥ निस्त्रिंशभल्लैःपरिघैःसमुद्गरैःसभिंदिपालैश्चशिरांसिचिच्छिदुः ॥ ३६ ॥ ॥



निशुंभशुंभाभ्यांदेवी ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

आरोहंतीत्यारोहास्तैःसहिताअन्येचवाहाः पूर्वंतुकेवलंगजादयउक्ताः कथंभूताः निकृत्ताबाह्वादयोयेषां छिन्नानिध्वजादीनियेषांते ॥३७॥ तेषांदेवादीनांपदाघातैरथांगैश्वचूर्णितादायोधनाद्रणभूमेरुत्थितोरेणुर्दिशःखंद्युमणिचसूर्यंछादयंस्तदैवरवादेर्न्यवर्तत कथंभूतात् असृक् स्रुतिभिःरक्तक्षरणैःपरिस्रुतात् यद्वा परिस्रवनाद्धेतोर्न्यवर्तत भावेक्तः रक्तधाराणांतत्पर्यंतमुच्छलनादित्यर्थः प्रथमांतपाठेरेणोर्विशेषणं ॥ ॥ ३८ ॥ शिरोभिर्महाभुजैश्वकरभसदृशैरूरुभिश्वसारणभूःप्रकर्षेणआस्तृतासतीबभौ कथंभूतैःशिरोभिः उद्धूतानिउत्पतितानिकिरीटा

गजास्तुरंगाःसरथाःपदातयःसारोहवाहाविविधाविखंडिताः॥ निकृत्तबाहूरुशिरोधरांघ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ॥ ३७ ॥ तेषांपदाघातरथांगचूर्णितादायोधनादुल्बणउत्थितस्तदा ॥ रेणुर्दिशःखंद्युमणिंचछादयन्न्यवर्ततासृक्स्रुतिभिःपरिस्रुतात् ॥ ३८ ॥ शिरोभिरुद्धूतकिरीटकुंडलैःसंरंभदृग्भिःपरिदष्टदच्छदैः ॥ महाभुजैःसाभरणैःसहायुधैःसाप्रास्तृताभूःकरभोरुभिर्बभौ ॥ ३९ ॥ कबंधास्तत्रचोत्पेतुःपश्यंतःस्वशिरोऽक्षिभिः ॥ उद्यतायुधदोर्दंडैराधावंतोभटान्मृधे ॥ ४० ॥ बलिर्महेंद्रंदशभिस्त्रिभिरैरावतंशरैः ॥ चतुर्भिश्चतुरोवाहानेकेनारोहमार्छयत् ॥ ४१ ॥ सतानापततःशक्रस्तावद्भिःशीघ्रविक्रमः ॥ चिच्छेदनिशितैर्भल्लैरसंप्राप्तान्हसन्निव ॥ ४२ ॥ तस्यकर्मोत्तमंवीक्ष्यदुर्मर्षःशक्तिमाददे ॥ तांज्वलंतींमहोल्काभांहस्तस्थामच्छिनद्धरिः ॥ ४३ ॥ ततःशूलंततःप्रासंततस्तोमरमृष्टयः॥यद्यच्छस्त्रंसमादद्यात्सर्वंतदच्छिनद्विभुः ॥ ४४ ॥ ससर्जाथासुरींमायामंतर्धानगतोऽसुरः ॥ ततःप्रादुरभूच्छैलःसुरानीकोपरिप्रभो ॥ ॥ ४५ ॥ ततोनिपेतुस्तरवोदह्यमानादवाग्निना ॥ शिलाःसटंकशिखराश्चूर्णयंत्योद्विषद्बलं ॥ ४६ ॥

निकुंडलानिचयेभ्यस्तैः संरंभयुक्तादृशोयेषुतैः परिदष्टादच्छदाओष्ठायेषुतैः ॥ ३९ ॥ पतितानियानिस्वशिरांसितत्रत्यैरक्षिभिस्तैःपश्यंतइत्यर्थः उद्यतान्यायुधानियैस्तैर्दोर्दंडैर्युक्ताः ॥ ४० ॥ वाहान्ऐरावतपादरक्षकान् आरोहंगजयंतारमार्छयत्विव्याध ॥ ४१ ॥ ४२ ॥ दुर्मर्षःअसहनोबलिः ॥ ४३ ॥ ४४ ॥ ४५ ॥ टंकवत्तीक्ष्णाग्रैःशिखरैःसहिताः ॥ ४६ ॥ ॥ ॥

॥ ४७ ॥ ४८ ॥ स्तनयित्नवश्चअंगारान्मुमुचुरित्यनुषंगः ॥ ४९ ॥ अधाक्आर्षः अधाक्षीदित्यर्थः ॥ ५० ॥ उद्धूतैस्तरंगैरावर्तैश्चभी
षणः ॥ ५१ ॥ एवमन्यैश्चदैत्यैः सृज्यमानासु ॥ ५२ ॥ यत्रयदा तत्रतदा तैर्ध्यातःसन् ॥ ५३ ॥ अष्टौआयुधयुक्ताबाहवोयस्य श्रीश्च
कौस्तुभश्चअनर्घ्यंकिरीटंचकुंडलेच उल्लसंतिश्रीकौस्तुभादीनियस्मिन् ॥ ५४ ॥ असुराणांकूटकर्ममंत्रादिप्रयोगस्तस्माज्जाताः महिना

महोरगाःसमुत्पेतुर्दंदशूकाःसवृश्चिकाः ॥ सिंहव्याघ्रवराहाश्चमर्दयंतोमहागजान् ॥४७॥ यातुधान्यश्चश
तशःशूलहस्ताविवाससः ॥ छिंधिभिंधीतिवादिन्यस्तथारक्षोगणाःप्रभो ॥ ४८ ॥ ततोमहाघनाव्योम्निगं
भीरपरुषस्वनाः ॥अंगारान्मुमुचुर्वातैराहताःस्तनयित्नवः॥४९॥सृष्टोदैत्येनसुमहान्वन्हिःश्वसनसारथिः
सांवर्तकइवात्युग्रोविबुधध्वजिनीमधाक् ॥ ५० ॥ ततःसमुद्रउद्वेलःसर्वतःप्रत्यदृश्यत ॥ प्रचंडवातैरुद्धूततरं
गावर्तभीषणः ॥ ५१ ॥ एवंदैत्यैर्महामायैरलक्ष्यगतिभीषणैः ॥सृज्यमानासुमायासुविषेदुःसुरसैनिकाः॥
॥ ५२ ॥ नतत्प्रतिविधिंयत्रविदुरिंद्रादयोनृप ॥ ध्यातःप्रादुरभूत्तत्रभगवान्विश्वभावनः ॥ ५३ ॥ ततःसुप
र्णांसकृतांघ्रिपल्लवःपिशंगवासानवकंजलोचनः ॥ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुं
डलः ॥ ५४ ॥ तस्मिन्प्रविष्टेऽसुरकूटकर्मजामायाविनेशुर्महिनामहीयसः ॥ स्वप्नोयथाहिप्रतिबोधआग
तेहरिस्मृतिःसर्वविपद्विमोक्षणं ॥ ५५ ॥ दृष्ट्वामृधेगरुडवाहमिभारिवाहआविध्यशूलमहिनोदथकालने
मिः ॥ तल्लीलयागरुडमूर्ध्निपतद्गृहीत्वातेनाहनन्नृपसवाहमरिंत्र्यधीशः ॥ ५६ ॥ मालीसुमाल्यतिबलौयुधि
पेततुर्यच्चक्रेणकृत्तशिरसावथमाल्यवांस्तं ॥ आहत्यतिग्मगदयाऽहनदंडजेंद्रंतावच्छिरोऽच्छिनदरेर्नदतो
ऽरिणाद्यः ॥ ५७ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेदशमोऽध्यायः ॥ १० ॥ ॥

महिम्ना हरेःस्मृतिरेवसर्वासांविपदांमोक्षणरूपाकिमुतहरेःप्रवेशइत्यर्थः ॥ ५५ ॥ इभारिवाहःसिंहवाहः अहिनोत्चिक्षेप लीलयैवतद्गृ
हीत्वाअहनत् हेनृप ॥५६॥ यस्यचक्रेणकृत्तशिरसौपेततुस्तंतथाभूतमपिआहत्यसंघटचअंडजेंद्रंगरुडमहनत् तंहंतुंगदामुन्निन्यइत्यर्थः
आद्योहरिः ॥ ५७ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांदशमोऽध्यायः ॥ १० ॥ ॥ ॥ ॥

एकादशेतुदेवेषुदैत्यघातिषुनारदः ॥ देवानवारयच्छुक्रोमृतान्दैत्यानजीवयत् ॥ १ ॥ १ ॥ उदयच्छत्उन्निन्ये॥२॥३॥निबद्धान्यक्षीणि येषांतान्बालान्जित्वानटःकपटवृत्तिर्यथातेषांधनंहरतितथाहेमूढमायेशानस्मान्जेतुमिच्छसि ॥४॥ मत्प्रभावंशृण्वित्याह आरुरुक्षंतिआ रोढुमिच्छंति येचउत्सिसृप्संतिउल्लंघयितुमिच्छंतिमोक्षमिच्छंतीत्यर्थः अधोविधुनोमिपातयामि ॥ ५ ॥६॥७॥ कालरशनंकालयंत्रितं अ

श्रीशुकउवाच अथोसुराःप्रत्युपलब्धचेतसःपरस्यपुंसःपरमानुकंपया ॥ जघ्नुर्भृशंशक्रसमीरणादयस्तां स्तान्रणेयैरभिसंहताःपुरा ॥ १ ॥ वैरोचनायसंरब्धोभगवान्पाकशासनः ॥ उदयच्छद्यदावज्रंप्रजाहाहे तिचुक्रुशुः ॥ २ ॥ वज्रपाणिस्तमाहेदंतिरस्कृत्यपुरःस्थितं ॥ मनस्विनंसुसंपन्नंविचरंतंमहामृधे ॥३॥ नटव न्मूढमायाभिर्मायेशान्नोजिगीषसि ॥ जित्वाबालान्निबद्धाक्षान्नटोहरतितद्धनं ॥ ४ ॥ आरुरुक्षंतिमायाभि रुत्सिसृप्संतियेदिवं ॥ तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्चपदादधः ॥ ५॥ सोऽहंदुर्मायिनस्तेऽद्यवज्रेणशत पर्वणा ॥ शिरोहरिष्येमंदात्मन्घटस्वज्ञातिभिःसह ॥ ६ ॥ बलिरुवाच संग्रामेवर्त्तमानानांकालचोदित कर्मणां ॥ कीर्तिर्जयोऽजयोमृत्युःसर्वेषांस्युरनुक्रमात् ॥ ७ ॥ तमिमंकालरशनंजनाःपश्यंतिसूरयः ॥ नहृ ष्यंतिनशोचंतितत्रयूयमपंडिताः ॥ ८ ॥ नवयंमन्यमानानामात्मानंतत्रसाधनं ॥ गिरोवःसाधुशोच्यानां गृण्हीमोमर्मताडनाः ॥ ९ ॥ श्रीशुकउवाच इत्याक्षिप्यविभुंवीरोनाराचैर्वीरमर्दनः ॥ आकर्णपूर्णैरहन दाक्षेपैराहतंपुनः ॥ १० ॥ एवंनिराकृतोदेवोवैरिणातथ्यवादिना ॥ नामृष्यत्तदधिक्षेपंतोत्राहतइवद्विपः ॥ ११ ॥ प्राहरत्कुलिशंतस्माअमोघंपरमर्दनः ॥ सयानोन्यपतद्भूमौछिन्नपक्षइवाचलः ॥ १२ ॥ सखायंपतितंदृष्ट्वा जंभोबलिसखःसुहृत् ॥ अभ्ययात्सौहृदंसख्युर्हतस्यापिसमाचरन् ॥ १३ ॥

तोनहृष्यंति तत्रएवंविवेकेयूयमपंडिताअनिपुणाः ॥ ८ ॥ तत्रकीर्तिजयादौआत्मानंसाधनंमन्यमानानांवोगिरोनगृह्णीमः मर्मसुताडनं याभिस्ताः ॥ ९ ॥ विभुमिंद्रं वीरोबलिः ॥ १० ॥ तोत्रमंकुशःतेनाहतइव ॥ ११ ॥ सयानः विमानसहितः ॥ १२ ॥ १३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ नमुचिर्बलःपाकश्चेतित्रयआजग्मुः ॥ १९ ॥ २० ॥ त्रयाणांपृथग्विक्रमानाह हरीनितित्रिभिः
हर्यश्वस्यइंद्रस्य तावद्भिर्दशभिःशतैः ॥ २१ ॥ २२ ॥आहत्यइंद्रंविध्वा ॥ २३ ॥ प्रावृट्कालीनंसूर्यं ॥ २४ ॥ वणिक्पथाःवणिजः





ससिंहवाहआसाद्यगदामुद्यम्यरंहसा ॥ जत्रावताडयच्छक्रंगजंचसुमहाबलः ॥१४॥ गदाप्रहारव्यथितो
भृशंविह्वलितोगजः ॥ जानुभ्यांधरणींस्पृष्ट्वाकश्मलंपरमंययौ ॥ १५ ॥ ततोरथोमातलिनाहरिभिर्दशशतै
र्वृतः ॥ आनीतोद्विपमुत्सृज्यरथमारुरुहेविभुः ॥ १६ ॥ तस्यतत्पूजयन्कर्मयंतुर्दानवसत्तमः ॥ शूलेनज्वल
तातंतुस्मयमानोऽहनन्मृधे ॥ १७॥ सेहेरुजंसुदुर्मर्षांसत्त्वमालंब्यमातलिः॥ इंद्रोजंभस्यसंक्रुद्धोवज्रेणापा
हरच्छिरः ॥१८॥ जंभंश्रुत्वाहतंतस्यज्ञातयोनारदादृषेः ॥ नमुचिश्चबलःपाकस्तत्रापेतुस्त्वराऽन्विताः ॥१९
वचोभिःपरुषैरिंद्रमर्दयंतोऽस्यमर्मसु॥ शरैरवाकिरन्मेघाधाराभिरिवपर्वतं ॥ २०॥ हरीन्दशशतान्याजौह
र्यश्वस्यबलःशरैः ॥ तावद्भिरर्दयामासयुगपल्लघुहस्तवान् ॥२१॥ शताभ्यांमातलिंपाकोरथंसावयवंपृथक्॥
सकृत्संधानमोक्षेणतदद्भुतमभूद्रणे॥२२॥ नमुचिःपंचदशभिःस्वर्णपुंखैर्महेषुभिः ॥ आहत्यव्यनदत्संख्येस
तोयइवतोयदः॥ २३ ॥सर्वतःशरकूटेनशक्रंसरथसारथिं ॥ छादयामासुरसुराःप्रावृट्सूर्यमिवांबुदाः ॥२४॥
अलक्षयंतस्तमतीवविह्वलाविचुक्रुशुर्देवगणाःसहानुगाः ॥ अनायकाःशत्रुबलेननिर्जितावणिक्पथाभिन्न
नवोयथाऽर्णवे ॥ २५ ॥ ततस्तुराषाडिषुबद्धपंजराद्विनिर्गतःसाश्वरथध्वजाग्रणीः ॥ बभौदिशःखंपृथिवीं
चरोचयन्स्वतेजसासूर्यइवक्षपात्यये॥२६॥ निरीक्ष्यपृतनांदेवःपरैरभ्यर्दितांरणे॥उदयच्छद्रिपुंहंतुंवज्रंवज्र
धरोरुषा ॥ २७॥ सतेनैवाष्टधारेणशिरसीबलपाकयोः ॥ ज्ञातीनांपश्यतांराजन्जहारजनयन्भयं ॥ २८॥



भिन्नानौर्येषांतेभिन्ननावइत्यर्थः ॥ २५ ॥ तुराषाडिंद्रःअश्वादिसहितोविनिर्गतः अग्रणीःसारथिः ॥ २६ ॥ २७ ॥ २८ ॥ ॥

शोकामर्षाभ्यांयुक्तयारुषाक्रोधेनान्वितइंद्रंहंतुंपरमोद्योगंचकार ॥ २९ ॥ घंटावत् घंटाभिर्युक्तं ॥ ३० ॥ ३१ ॥ अतिवीर्यंवृत्रमाभिनदिति ॥ ३२ ॥ ३३ ॥ तथापतत्रैःपक्षैः ॥ ३४ ॥ सारमयंवीर्याधिकंत्वाष्ट्रंतपएववृत्रःसयेनवज्रेणमयाविपाटितः ॥ ३५ ॥ दंडंलगुडतुल्यंब्र

नमुचिस्तद्वधंदृष्ट्वाशोकामर्षरुषान्वितः ॥ जिघांसुरिंद्रंनृपतेचकारपरमोद्यमं ॥ २९ ॥ अश्मसारमयंशूलंघंटावद्धेमभूषणं ॥ प्रगृह्याभ्यद्रवत्क्रुद्धोहतोऽसीतिवितर्जयन् ॥ प्राहिणोद्देवराजायनिनदन्मृगराडिव ॥ ३० ॥ तदापतद्गगनतलेमहाजवंविचिच्छिदेहरिरिषुभिःसहस्रधा ॥ तमाहनन्नृपकुलिशेनकंधरेरुषाऽन्वितस्त्रिदशपतिःशिरोऽहरत् ॥ ३१ ॥ नतस्यहिलचमपिवज्रऊर्जितोभिभेदयःसुरपतिनौजसेरितः ॥ तदद्भुतंपरमतिवीर्यवृत्रभित्तिरस्कृतोनमुचिशिरोधरत्वचा ॥ ३२ ॥ तस्मादिंद्रोऽबिभेच्छत्रोर्वज्रःप्रतिहतोयतः ॥ किमिदंदैवयोगेनभूतंलोकविमोहनं ॥ ३३ ॥ येनमेपूर्वमद्रीणांपक्षच्छेदःप्रजात्यये ॥ कृतोनिविशतांभारैःपतत्रैःपततांभुवि ॥ ३४ ॥ तपःसारमयंत्वाष्ट्रंवृत्रोयेनविपाटितः ॥ अन्येचापिबलोपेताःसर्वास्त्रैरक्षतत्वचः ॥ ३५ ॥ सोयंप्रतिहतोवज्रोमयामुक्तोऽसुरेऽल्पके ॥ नाहंतदाददेदंडंब्रह्मतेजोऽप्यकारणं ॥ ३६ ॥ इतिशक्रंविषीदंतमाहवागशरीरिणी ॥ नायंशुष्कैरथोनार्द्रैर्वधमर्हतिदानवः ॥ ३७ ॥ मयाऽस्मैयद्वरोदत्तोमृत्युर्नैवार्द्रशुष्कयोः ॥ अतोऽन्यश्चिंतनीयस्तेउपायोमघवन्रिपोः ॥ ३८ ॥ तांदैवींगिरमाकर्ण्यमघवान्सुसमाहितः ॥ ध्यायन्फेनमथापश्यदुपायमुभयात्मकं ॥ ३९ ॥ नशुष्केणनचार्द्रेणजहारनमुचेःशिरः ॥ तंतुष्टुवुर्मुनिगणामाल्यैश्चावाकिरन्विभुं ॥ ४० ॥ गंधर्वमुख्यौजगतुर्विश्वावसुपरावसू ॥ देवदुंदुभयोनेदुर्नर्तक्योननृतुर्मुदा ॥ ४१ ॥ अन्येप्येवंप्रतिद्वंद्वान्वाय्वग्निवरुणादयः ॥ सूदयामासुरस्त्रौघैर्मृगान्केसरिणोयथा ॥ ४२ ॥

ह्मतेजःदधीचेःसामर्थ्यं ॥ ३६ ॥ ३७ ॥ आर्द्रशुष्काभ्यांमृत्युर्नैवेति ॥ ३८ ॥ ३९ ॥ उभयात्मकत्वमेवाह नशुष्केणनचार्द्रेणफेनेन तथाचश्रुतिः अपांफेनेननमुचेःशिरइंद्रोदवर्त्तयदिति ॥ ४० ॥ ४१ ॥ ॥ ४२ ॥ ॥ ॥ ॥

॥ ४३ ॥ ४४ ॥ अनुचरैःअनुगीयमानाइत्यर्थः उपगीयमानैरनुचरैःसहेतिवा ॥ ४५ ॥ ४६ ॥ अविनष्टाअवयवायेषां विद्यमानाःशिरो धरायेषांतान् ॥ ४७ ॥ प्रत्यापन्नानिपुनःप्राप्तानींद्रियाणिस्मृतिश्चयेनसः ॥ ४८ ॥ इत्यष्टमस्कंधेटीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशेमोहिनीरूपविभ्रमालोकनोत्सुकं ॥ भवंसंमोहयामासहरिःपुनरसांत्वयत् ॥ १ ॥ अमुह्यन्नसुराविष्णुमाययानतदद्भुतं ॥ इतिवक्ष्यन्महादेवमोहोयमुपवर्ण्यते ॥ २ ॥ हरिःसोममपाययदितीदंनिशम्यसयत्रास्तेतत्रतद्रूपंद्रष्टुंययावित्युत्तरेणान्वयः ॥ १ ॥ २ ॥ सोमयाउमया

ब्रह्मणाप्रेषितोदेवान्देवर्षिर्नारदोनृप ॥ वारयामासविबुधान्दृष्ट्वादानवसंक्षयं ॥ ४३ ॥ नारदउवाच भवद्भिरमृतंप्राप्तंनारायणभुजाश्रयैः ॥ श्रियासमेधिताःसर्वउपारमतविग्रहात् ॥ ४४ ॥ श्रीशुकउवाच संयम्यमन्युसंरंभंमानयंतोमुनेर्वचः ॥ गीयमानाअनुचरैर्ययुःसर्वेत्रिविष्टपं ॥ ४५ ॥ येऽवशिष्टारणेतस्मिन्नारदानुमतेनते ॥ बलिंविपन्नमादायअस्तंगिरिमुपागमन् ॥ ४६ ॥ तत्राविनष्टावयवान्विद्यमानशिरोधरान् ॥ उशनाजीवयामाससंजीविन्यास्वविद्यया ॥ ४७ ॥ बलिश्चोशनसास्पृष्टःप्रत्यापन्नेंद्रियस्मृतिः ॥ पराजितोऽपिनाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४८ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेदेवासुरसंग्रामेएकादशोध्यायः ॥ ११ ॥ ॥ ॥ श्रीबादरायणिरुवाच वृषध्वजोनिशम्येदंयोषिद्रूपेणदानवान् ॥ मोहयित्वासुरगणान्हरिःसोममपाययत् ॥ १ ॥ वृषमारुह्यगिरिशःसर्वभूतगणैर्वृतः ॥ सहदेव्याययौद्रष्टुंयत्रास्तेमधुसूदनः ॥ २ ॥ सभाजितोभगवतासादरंसोमयाभवः ॥ सूपविष्टउवाचेदंप्रतिपूज्यस्मयन्हरिं ॥ ३ ॥ श्रीमहादेवउवाच देवदेवजगद्व्यापिन्जगदीशजगन्मय ॥ सर्वेषामपिभावानांत्वमात्माहेतुरीश्वरः ॥ ४ ॥

सह ॥ ३ ॥ त्वयिकिंचिन्नचाश्चर्यंवयंत्वाश्चर्यमानसाः ॥ इतिवक्ष्यन्महादेवस्तुष्टावहरिमिष्टभिः॥ त्वयिमहामायाविनिपरमेश्वरेनहिकिंचिदघटितमिव वयंतुपरमकौतूहलेनद्रष्टुमागताइतिबहुधासंबोधयन्स्तौति हेदेवदेव कुतोऽहंदेवानांदेवइत्यतआह हेजगद्व्यापिन् तत्कुतः हेजगन्मय तर्हिकिंप्रधानं न हेजगदीश तच्चकुतस्तत्राह सर्वेषामपित्वंहेतुःअतईश्वरः आत्मत्वाच्चनजडंप्रधानंत्वमित्यर्थः ॥ ४ ॥

ननुजगन्मयत्वोक्त्याजगतउत्पत्यादिनाऽसत्यत्वेनजाड्येनचममापिकिंतथात्वंब्रूषे नहिनहीत्याह आद्यंतौमध्यंचजगतोयतोब्रह्मणोभ
वंति अस्यचअव्ययस्यएतानिआद्यंतमध्यानिनसंति यच्चब्रह्मइदंकारास्पदंद्दश्यमहंकारास्पदंद्रष्टृचबहिर्भोग्यमन्यच्चभोक्तृच चिद्रूपंचब्रह्मै
वभवानतोनतवविकारादिशंकेत्यर्थः ॥ ५ ॥ तवैवंभूतत्वेमुमुक्षूणामाचारःप्रमाणमित्याह तवैवेति उभयतःइहामुत्रचसंगंत्यक्त्वा ॥ ६ ॥
ननुब्रह्मैवचेदहंतर्ह्यसंगोदासीनस्यममचरणांभोजोपासनयाकिंतेषांतत्राह त्वमिति ब्रह्मत्वेऽपित्वंनात्यंतमुदासीनःकिंतुविश्वस्यप्रपंच
स्योदयादीनांहेतुस्तद्रूपाधीनानामात्मनांजीवानामीश्वरस्तत्तत्फलदाता तर्हिकिंराजादिवत्कयाप्यपेक्षयासेवकेभ्यःफलंददामि नहिनहि
अनपेक्षएवत्वं तर्हिकिमीश्वरत्वेनतत्राह तैरात्मभिःतत्फलदानार्थमपेक्ष्यतइतितदपेक्षस्तस्यभावस्तदपेक्षतातया अनपेक्षत्वमेवदर्शयितुंत

आद्यंतावस्ययन्मध्यमिदमन्यदहंबहिः ॥ यतोऽव्ययस्यनैतानितत्सत्यब्रह्मचिद्भवान् ॥ ५ ॥ तवैवचर
णांभोजंश्रेयस्कामानिराशिषः ॥ विसृज्योभयतःसंगंमुनयःसमुपासते ॥ ६ ॥ त्वंब्रह्मपूर्णममृतंविगुणं
विशोकमानंदमात्रमविकारमनन्यदन्यत् ॥ विश्वस्यहेतुरुदयस्थितिसंयमानामात्मेश्वरश्चतदपेक्षतया
ऽनपेक्षः ॥ ७ ॥ एकस्त्वमेवसदसद्द्वयमद्वयंचस्वर्णंकृताकृतमिवेहनवस्तुभेदः ॥ अज्ञानतस्त्वयिजनैर्वि
हितोविकल्पोयस्माद्गुणैर्व्यतिकरोनिरुपाधिकस्य ॥ ८ ॥ ॥ ॥

दीयंब्रह्मत्वंविशिनष्टि पूर्णममृतंचसुखरूपं विषयसुखवैलक्षण्यार्थमाह अविकारंनित्यमानंदमात्रंच कुतःविशोकं तत्कुतः विगुणं किंच
अनन्यत् नविद्यतेअन्यद्यस्मात् ब्रह्मव्यतिरिक्ताभावादपिनिरपेक्षस्त्वमित्यर्थः तर्हिसर्वात्मकत्वेतत्तद्विकारप्रसंगोदुर्वारस्तत्राह अन्यत्सर्वतो
व्यतिरिक्तंच कारणत्वात् नह्येवंभूतसुखात्मकब्रह्मस्वरूपस्यतवान्यापेक्षास्ति अतःकेवलंभक्तानुग्रहार्थमेवतवैश्वर्यंनस्वार्थमित्यर्थः ॥ ७ ॥
अन्यत्वमनन्यत्वंचैकस्यकुतइत्याशंक्यदृष्टांतेनोपपादयतिसदसत्कार्यकारणरूपंद्वयमद्वयंचपरमकारणंत्वमेवैकः कृतंकुंडलादिरूपंद्वय
मकृतंचकेवलमद्वयंस्वर्णंयथैकमेवतद्वदेवेहत्वयिवस्तुभेदोनास्ति कथंतर्हिभेदप्रतीतिस्तत्राह अज्ञानतइति कुतः यस्मान्निरुपाधिकस्यैव
तवायंगुणैर्व्यतिकरोभेदोनस्वतः ॥ ८ ॥ ॥ ॥ ॥ ॥

अतएवत्वांबहुधावर्णयंतितत्त्वतस्तुकेपिनजानंतीत्याह द्वाभ्यां त्वांब्रह्मवेदांतिनोऽवयंतिमन्यंते त्वामेवधर्मंमीमांसकामन्यंते प्रकृतिपुरुष योःपरंपुमांसंसांख्याः विमलोत्कर्षणीज्ञानाक्रियोगाप्रह्वीसत्याईशानाअनुग्रहाचेत्येवंनवशक्तियुतंपरंपांचरात्राः महापुरुषंपातंजलाः ॥ ९ ॥ परायुःब्रह्मा सत्त्वसर्गाःसत्वगुणेनसृष्टाअपियेनत्वयाविरचितंविश्वमपिखलुतत्वतोनजानंतिकिंपुनस्त्वां हेईशअभद्रंराजसंतामसंचवृत्त मुत्पत्तिश्रयेषांतेनजानंतीतिकिमुवक्तव्यं ॥ १० ॥ किंतुत्वंतत्सर्वंजानासीत्याह सत्वंसर्वमवरुंत्सेव्याप्नोषिजानासि किंतत्सर्वंसमीहितंस्व



त्वांब्रह्मकेचिदवयंत्युतधर्ममेकएकेपरंसदसतोःपुरुषंपरेशं ॥ अन्येऽवयंतिनवशक्तियुतंपरंत्वांकेचिन्महा पुरुषमव्ययमात्मतंत्रं ॥ ९ ॥ नाहंपरायुर्ऋषयोनमरीचिमुख्याजानंतियद्विरचितंखलुसत्त्वसर्गाः ॥ य न्माययामुषितचेतसईशदैत्यमर्त्यादयःकिमुतशश्वदभद्रवृत्ताः ॥ १० ॥ सत्वंसमीहितमदःस्थितिजन्म नाशंभूतेहितंचजगतोभवबंधमोक्षौ ॥ वायुर्यथाविशतिखंचचराचराख्यंसर्वंतदात्मकतयाऽवगमोऽवरुं त्से ॥ ११ ॥ अवतारामयादृष्टारममाणस्यतेगुणैः ॥ सोऽहंतद्द्रष्टुमिच्छामियत्तेयोषिद्वपुर्धृतं ॥ १२ ॥ ये नसंमोहितादैत्याःपायिताश्चामृतंसुराः ॥ तद्दिदृक्षवआयाताःपरंकौतूहलंहिनः ॥ १३ ॥ श्रीशुकउ वाच एवमभ्यर्थितोविष्णुर्भगवान्शूलपाणिना ॥ प्रहस्यभावगंभीरंगिरिशंप्रत्यभाषत ॥ १४ ॥ श्री भगवानुवाच कौतूहलायदैत्यानांयोषिद्वेषोमयाकृतः ॥ पश्यतासुरकार्याणिगतेपीयूषभाजने ॥ १५ ॥ तत्तेऽहंदर्शयिष्यामिदिदृक्षोःसुरसत्तम ॥ कामिनांबहुमंतव्यंसंकल्पप्रभवोदयं ॥ १६ ॥ ॥

कृतमदःस्थितिजन्मनाशममुष्यजगतोजन्मादिभूतानामीहितंचजगतोभवबंधमोक्षौच व्याप्तौदृष्टांतः चराचराख्यंदेहजातंखंचयथावायुरा विशतितथा कथमवरुंत्से तदात्मकतयासर्वस्यात्मतयेत्यर्थः आत्मत्वेहेतुः अवगमःज्ञानरूपइति ॥ ११ ॥ एवंस्तुत्वाप्रस्तुतंविज्ञापयति अव ताराइतिद्वाभ्यां ॥ १२ ॥ १३ ॥ १४ ॥ सुरकार्याणियोषिद्वेषेणभविष्यंतीतिपश्यता अयंभावः अवश्यंतावदुन्मत्तान्दैत्यान्वंचयित्वादेवेभ्योऽमृतं देयं नचैवंवैषम्यंरूपांतरेणकर्तुमुचितं अतोवंचनमोहनादिसारंकामिनीरूपंमयाधृतं ॥ १५ ॥ तद्रूपंदर्शयिष्यामिसंकल्पप्रभवःकामस्तस्योद यायस्मात् ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥

॥ १७ ॥ विचित्राणिपुष्पाणिआरुणाः पल्लवाश्चयेषांतेद्रुमायास्मिन् लसद्दुकूलेनपर्यस्तेपरिवृतेनितंबेमेखलायस्यास्तां ॥ १८ ॥ उत्पतत्पत त्कंदुकलीलावशेनयेआवर्तनोद्वर्तनेनमनोन्नमनेताभ्यांकंपितयोः स्तनयोः प्रकष्टहाराणांचोरुभारैः प्रतिपदंमध्येप्रभज्यमानामिव चलत्पदमे वप्रवालवत्कोमलंततस्ततोनयंतीं ॥ १९ ॥ दिक्षुभ्रमतः कंदुकस्यचापलैश्चांचल्यैर्भृशंप्रोद्विग्नतारेआयतेलोलेचंचलेलोचनेयस्याः स्वकर्णा भ्यांविभ्राजितेयेकुंडलेताभ्यामुल्लसंतौकपोलौताभ्यांनीलालकैश्चमंडितमाननंयस्याः ॥ २० ॥ संनह्यंतींबध्नंतीं जगद्विमोहयंतीं ॥ २१ ॥

श्रीशुकउवाच इतिब्रुवाणोभगवांस्तत्रैवांतरधीयत ॥ सर्वतश्चारयंश्चक्षुर्भवआस्तेसहोमया ॥१७॥ ततो ददर्शोपवनेवरस्त्रियंविचित्रपुष्पारुणपल्लवद्रुमे ॥ विक्रीडतींकंदुकलीलयालसद्दुकूलपर्यस्तनितंबमेखलां ॥१८॥आवर्तनोद्वर्तनकंपितस्तनप्रकृष्टहारोरुभरैःपदेपदे॥प्रभज्यमानामिवमध्यतश्चलत्पदप्रवालंनयतीं ततस्ततः॥१९॥दिक्षुभ्रमत्कंदुकचापलैर्भृशंप्रोद्विग्नतारायतलोललोचनां॥स्वकर्णविभ्राजितकुंडलोल्लसत्क पोलनीलालकमंडिताननां ॥२०॥ श्लथद्दुकूलंकबरींचविच्युतांसन्नह्यतींवामकरेणवल्गुना ॥ विनिघ्नतीम न्यकरेणकंदुकंविमोहयंतींजगदात्ममायया ॥ २१ ॥ तांवीक्ष्यदेवइतिकंदुकलीलयेषद्व्रीडास्फुटास्मितवि सृष्टकटाक्षमुष्टः॥ स्त्रीप्रेक्षणप्रतिसमीक्षणविव्हलात्मानात्मानमंतिकउमांस्वगणांश्चवेद ॥२२॥ तस्याःक राग्रात्सतुकंदुकोयदागतोविदूरंतमनुव्रजत्स्त्रियाः ॥वासःससूत्रंलघुमारुतोऽहरद्भवस्यदेवस्यकिलानुपश्य तः ॥ २३ ॥ एवंतांरुचिरापांगींदर्शनीयांमनोरमां ॥ दृष्ट्वातस्यांमनश्चक्रेविषज्जंत्यांभवःकिल ॥ २४ ॥

तांवीक्ष्यदेवः श्रीरुद्रः आत्मानमंतिकेस्थितामुमांस्वगणांश्चनवेद कथंभूतः इतिएवंभूतयाकंदुकलीलयायाईषद्व्रीडातयाअस्फुटंस्मितंतेनसह विसृष्टोयः कटाक्षस्तेनमुष्टोवंचितः अतएवस्वयंयत्स्त्रियाः प्रेक्षणंतयाचप्रतिसमीक्षणंताभ्यांविव्हलः आत्मामनोयस्य ॥ २२ ॥ कंदुकमनुव्र जंत्याः स्त्रियालघुसूक्ष्मंवासः ससूत्रंकांचीसहितं ॥ २३ ॥ विषज्जंत्यांकुंचितकटाक्षैरात्मानंनिरीक्षमाणायां ॥ २४ ॥

॥२५॥

तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः ॥ भवान्याअपिपश्यंत्यागतह्रीस्तत्पदंययौ॥२५॥ सातमायांत
मालोक्यविवस्त्राव्रीडिताभृशं॥निलीयमानावृक्षेषुहसंतीनान्वतिष्ठत॥२६॥ तामन्वगच्छद्भगवान्भवःप्र
मुषितेंद्रियः ॥ कामस्यचवशंनीतःकरेणुमिवयूथपः ॥२७॥ सोऽनुव्रज्यातिवेगेनगृहीत्वाऽनिच्छतींस्त्रियं॥के
शबंधउपानीयबाहुभ्यांपरिषस्वजे ॥२८॥ सोपगूढाभगवताकरिणाकरिणीयथा ॥ इतस्ततःप्रसर्पंतीविप्र
कीर्णशिरोरुहा ॥२९॥ आत्मानंमोचयित्वांगसुरर्षभभुजांतरात् ॥ प्राद्रवत्सापृथुश्रोणीमायादेवविनिर्मि
ता ॥३०॥ तस्यासौपदवींरुद्रोविष्णोरद्भुतकर्मणः ॥ प्रत्यपद्यतकामेनवैरिणेवविनिर्जितः ॥३१॥ तस्यानु
धावतोरेतश्चस्कंदामोघरेतसः॥शुष्मिणोयूथपस्येववासितामनुधावतः॥३२॥यत्रयत्रापतन्मह्यांरेतस्तस्य
महात्मनः॥तानिरूप्यस्यहेम्नश्चक्षेत्राण्यासन्महीपते॥३३॥सरित्सरस्सुशैलेषुवनेषूपवनेषुच ॥यत्रक्वचास
न्नृषयस्तत्रसन्निहितोहरः॥३४॥स्कन्नेरेतसिसोऽपश्यदात्मानंदेवमायया॥जडीकृतंनृपश्रेष्ठसंन्यवर्ततकश्म
लात् ॥ ३५ ॥ अथावगतमाहात्म्यआत्मनोजगदात्मनः ॥ अपरिज्ञेयवीर्यस्यनमेनेतदुहाहृतं ॥ ३६ ॥
तमविक्लवमव्रीडमालक्ष्यमधुसूदनः ॥ उवाचपरमप्रीतोबिभ्रत्स्वांपौरुषींतनुं ॥ ३७ ॥ श्रीभगवानुवाच
दिष्ट्यात्वंविबुधश्रेष्ठस्वांनिष्ठामात्मनास्थितः ॥ यन्मेस्त्रीरूपयास्वैरंमोहितोऽप्यंगमायया ॥ ३८ ॥ कोनु
मेतितरेन्मायांविषक्तस्त्वदृतेपुमान् ॥ तांस्तान्विसृजतींभावान्दुस्तरामकृतात्मभिः ॥ ३९ ॥

॥२५॥

कालेनसृष्ट्यादिनिमित्तेनमया कालरूपेणभागशोरजआद्यंशेन समेतामदधीनासती ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ अष्टाध्या
यार्थनिगमनं इतीति ॥ ४५ ॥ एतत्कीर्त्तनादौफलमाह एतदिति ॥ ४६ ॥ भगवताकृतंभक्तपक्षपातंस्मरन्नमस्करोति असतामविषयं

सेयंगुणमयीमायानत्वामभिभविष्यति ॥ मयासमेताकालेनकालरूपेणभागशः ॥ ४० ॥ श्रीशुकउवाच
एवंभगवताराजन्श्रीवत्सांकेनसत्कृतः ॥ आमंत्र्यतंपरिक्रम्यसगणःस्वालयंययौ ॥४१॥ आत्मांशभूतांतां
मायांभवानींभगवान्भवः ॥शंसतामृषिमुख्यानांप्रीत्याचष्टाथभारत ॥४२॥ अपिव्यपश्यस्त्वमजस्यमायां
परस्यपुंसःपरदेवतायाः ॥ अहंकलानामृषभोविमुह्येययावशोऽन्येकिमुतास्वतंत्राः ॥४३॥ यंमामपृच्छस्त्वमु
पेत्ययोगात्समासहस्रांतउपारतंवै ॥ सएषसाक्षात्पुरुषःपुराणोनयत्रकालोविशतेनवेदः ॥४४॥ श्रीशुकउ
वाच इतितेऽभिहितस्तातविक्रमःशार्ङ्गधन्वनः ॥ सिंधोर्निर्मथनेयेनधृतःपृष्ठेमहाचलः ॥ ४५ ॥ एतन्मुहुः
कीर्त्तयतोऽनुशृण्वतोनरिष्यतेजातुसमुद्यमःक्वचित् ॥ यदुत्तमश्लोकगुणानुवर्णनंसमस्तसंसारपरिश्रमाप
हं ॥ ४६ ॥ असदविषयमंघ्रिंभावगम्यंप्रपन्नानमृतममरवर्यानाशयत्सिंधुमथ्यं ॥ कपटयुवतिवेषो
मोहयन्यःसुरारींस्तमहमुपसृतानांकामपूरंनतोऽस्मि ॥ ४७ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेशं
करमायामोहनंनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीशुकउवाच मनुर्विवस्वतःपुत्रःश्राद्धदेवइतिश्रुतः ॥
सप्तमोवर्तमानोयस्तदपत्यानिमेशृणु ॥१॥ इक्ष्वाकुर्नभगश्चैवधृष्टःशर्यातिरेवच ॥ नरिष्यंतोऽथनाभागः
सप्तमोदिष्टउच्यते ॥ २ ॥ करूषश्चपृषध्रश्चदशमोवसुमान्स्मृतः ॥मनोर्वैवस्वतस्यैतेदशपुत्राःपरंतप ॥ ३॥

भावोभजनंतेनगम्यमंघ्रिंप्रपन्नान्शरणागतान्सिंधुमथ्यं सिंधोर्मथनेनजातममृतंयआशयत्अभोजयत् ॥ ४७ ॥ इत्यष्टमेटीकायांद्वादशो
ऽध्यायः ॥ १२ ॥ ॥ त्रयोदशेतुवर्ण्यंतेसप्तमादीन्यनुक्रमात् ॥ मन्वंतराणिसर्वाणिषड्विधानिपृथक्पृथक् ॥ १ ॥ सप्तमादिमन्वंतराण्याह
मनुरित्यादिनायावदध्यायसमाप्ति ॥ १ ॥ २ ॥ ३ ॥ ॥ ॥ ॥

आदित्यादयोदेवाइत्यन्वयः ॥ ४ ॥ ५ ॥ भगवतोजन्मअवतारः तमेवाह आदित्यानांविस्वानर्यमापूषेत्याद्युक्तानांमध्येंअवरंजन्मय
स्यसः ॥ ६ ॥ शक्त्याअवतारेणान्वितानि ॥ ७ ॥ अष्टमंमनुंवक्तुंकथामाह विवस्वतइतित्रिभिः ॥ ८ ॥ एकेवडवांतृतीयामाहुः ममतु
संज्ञैववडवेतिमतं तदुक्तंषष्ठे सैवभूत्वाऽथवडवानासत्यौसुषुवेभुवीति यमश्चयमीचयमुनाश्राद्धदेवश्चेतित्रयःसुताः ॥ ३ ॥ १० ॥ सावर्णि



आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ अश्विनावृभवोराजन्निंद्रस्तेषांपुरंदरः॥४॥कश्यपोत्रिर्वसिष्ठश्च
विश्वामित्रोऽथगौतमः॥ जगदग्निर्भरद्वाजइतिसप्तर्षयः स्मृताः ॥५॥ अत्रापिभगवज्जन्मकश्यपाददितेरभू
त् ॥ आदित्यानामवरजोविष्णुर्वामनरूपधृक् ॥६॥ संक्षेपतोमयोक्तानिसप्तमन्वंतराणिते॥भविष्याण्यथ
वक्ष्यामिविष्णोःशक्त्यान्वितानिच ॥७॥ विवस्वतश्चद्वेजायेविश्वकर्मसुतेउभे ॥संज्ञाछायाचराजेंद्रयेप्राग
भिहितेतव ॥ ८ ॥ तृतीयांवडवामेकेतासांसंज्ञासुतास्त्रयः ॥ यमोयमीश्राद्धदेवश्छायायाश्चसुतान्शृणु ॥
॥९॥ सावर्णिस्तपतीकन्याभार्यासंवरणस्यया॥शनैश्चरस्तृतीयोऽभूदश्विनौवडवात्मजौ ॥ १०॥ अष्टमेंऽ
तरआयातेसावर्णिर्भवितामनुः ॥ निर्मोकविरजस्काद्याःसावर्णितनयान्नृप ॥ ११ ॥ तत्रदेवाःसुतपसोविर
जाअमृतप्रभाः ॥ तेषांविरोचनसुतोबलिरिंद्रोभविष्यति ॥ १२ ॥ दत्वेमांयाचमानायविष्णवेयःपदत्रयं ॥
राद्धमिंद्रपदंहित्वाततःसिद्धिमवाप्स्यति ॥ १३ ॥ योऽसौभगवताबद्धःप्रीतेनसुतलेपुनः ॥ निवेशितोऽधि
केस्वर्गादधुनास्तेस्वराडिव ॥ १४ ॥ गालवोदीप्तिमान्रामोद्रोणपुत्रःकृपस्तथा ॥ ऋष्यशृंगःपितास्मा
कंभगवान्बादरायणः ॥ १५॥ इमेसप्तर्षयस्तत्रभविष्यंतिस्वयोगतः ॥ इदानीमासतेराजन्स्वेस्वेआश्र
ममंडले ॥ १६ ॥ देवगुह्यात्सरस्वत्यांसार्वभौमइतिप्रभुः ॥ स्थानंपुरंदराद्धृत्वाबलयेदास्यतीश्वरः ॥ १७ ॥



पुत्राः ॥ ११ ॥ १२ ॥ पदत्रयंयाचमानायइमांसर्वांमहींसप्तमेमन्वंतरेदत्वाअष्टमेमन्वंतरेविष्णोःप्रसादेनचराद्धंलब्धमिंद्रपदंहित्वेत्यर्थः
॥ १३ ॥ १४ ॥ रामःपरशुरामः द्रोणपुत्रोऽश्वत्थामा ॥ १५ ॥ इदानींतुस्वयोगतआसते ॥ १६ ॥ १७ ॥ ॥

॥ १८ ॥ अद्भुतइंद्रः ॥ १९ ॥ २० ॥ २१ ॥ हविष्मत्प्रमुखाइत्युक्तानामेवकेषांचिन्नामान्याह हविष्मानिति ॥ २२ ॥ विषूच्यांजातः

नवमोदक्षसावर्णिर्मनुर्वरुणसंभवः॥भूतकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुतान्नृप ॥१८॥ पारामरीचिगर्भाद्यादे
वाइंद्रोद्भुतःस्मृतः ॥ द्युतिमत्प्रमुखास्तत्रभविष्यंत्यृषयस्ततः ॥ १९॥ आयुष्मतोऽबुधारायामृषभोभगव
त्कला ॥ भवितायेनसंराद्धांत्रिलोकींभोक्ष्यतेऽद्भुतः ॥२०॥ दशमोब्रह्मसावर्णिरुपश्लोकसुतोमहान्॥तत्सु
ताभूरिषेणाद्याहविष्मत्प्रमुखाद्विजाः ॥२१॥ हविष्मान्सुकृतःसत्योजयोमूर्तिस्तदाद्विजाः ॥ सुवासनविरु
द्धाद्यादेवाःशंभुःसुरेश्वरः ॥ २२॥ विष्वक्सेनोविषूच्यांतुशंभोःसख्यंकरिष्यति॥जातःस्वांशेनभगवान्गृहे
विश्वसृजोविभुः ॥२३॥ मनुर्वैधर्मसावर्णिरेकादशमआत्मवान् ॥ अनागतास्तत्सुताश्चसत्यधर्मादयोदश
॥२४॥ विहंगमाःकामगमानिर्वाणरुचयःसुराः ॥ इंद्रश्चवैधृतिस्तेषामृषयश्चारुणादयः ॥ २५ ॥ आर्यक
स्यसुतस्तत्रधर्मसेतुरितिस्मृतः ॥ वैधृतायांहरेरंशस्त्रिलोकींधारयिष्यति ॥ २६ ॥ भवितारुद्रसावर्णीराज
न्द्वादशमोमनुः ॥ देववानुपदेवश्चदेवश्रेष्ठदयःसुताः ॥ २७ ॥ ऋतधामाचतत्रेंद्रोदेवाश्चहरितादयः ॥ ऋ
षयश्चतपोमूर्तिस्तपस्व्याग्नीध्रकादयः ॥ २८ ॥ स्वधामाख्योहरेरंशःसाधयिष्यतितन्मनोः ॥ अंतरंस
त्यसहसःसूनृतायाःसुतोविभुः ॥ २९ ॥ मनुस्त्रयोदशोभाव्योदेवसावर्णिरात्मवान् ॥ चित्रसेनविचित्रा
द्यादेवसावर्णिदेहजाः ॥ ३० ॥ देवाःसुकर्मसुत्रामसंज्ञाइंद्रोदिवस्पतिः ॥ निर्मोकतत्त्वदर्शाद्याभविष्यं
त्यृषयस्तदा ॥३१॥ देवहोत्रस्यतनयउपहर्तादिवस्पतेः ॥ योगेश्वरोहरेरंशोबृहत्यांसंभविष्यति॥ ३२ ॥
मनुर्वाइंद्रसावर्णिश्चतुर्दशमएष्यति ॥ उरुगंभीरबुद्ध्याद्याइंद्रसावर्णिवीर्यजाः ॥ ३३ ॥ ॥

सन् ॥ २३ ॥ २४ ॥ एकादशमइत्यादिरार्षः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तस्यमनोरंतरंसाधयिष्यति सत्यसहसःसूनृतायाश्चसुतः
सन् ॥ २९ ॥ ३० ॥ ३१ ॥ दिवस्पतेरिंद्रस्योपहर्तासंपादकःसंभविष्यति ॥ ३२ ॥ ३३ ॥ ॥ ॥

॥ ३४ ॥ क्रियातंतून्कर्मसंततीः वितायिताविस्तारयिष्यति ॥ ३५ ॥ युगसाहस्त्रेणपर्ययःपरिवर्तोयस्य युगसहस्त्रप्रमाणइत्यर्थः ॥ ३६ ॥ इत्यष्टमस्कंधेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ चतुर्दशेतुसर्वेषांमन्वादीनांयथायथं ॥ पृथक्कर्माणिवर्ण्यंतेभगवद्दशवर्तिनां ॥ १ ॥ १ ॥ पुरुषेणेश्वरेणयज्ञाद्यवतारैःशास्यंतेनियुज्यंतेइतितथा ॥ २ ॥ तदेवाह यज्ञादयइति ॥ ३ ॥ ऋष्यादीनांकर्माण्याह चतु



पवित्राश्चाक्षुषादेवाःशुचिरिंद्रोभविष्यति ॥ अग्निर्बाहुःशुचिःशुद्धोमागधाद्यास्तपस्विनः ॥३४॥ सत्राय णस्यतनयोबृहद्भानुस्तदाहरिः ॥ वितानायांमहाराजक्रियातंतून्वितायिता ॥ ३५ ॥ राजंश्चतुर्दशैतानि त्रिकालानुगतानिते ॥ प्रोक्तान्येभिर्मितःकल्पोयुगसाहस्त्रपर्ययः ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेअ ष्टमस्कंधेमन्वंतरानुवर्णनंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ राजोवाच मन्वंतरेषुभगवन्यथामन्वाद यस्त्विमे ॥ यस्मिन्कर्मणियेयेननियुक्तास्तद्वदस्वमे ॥ १ ॥ ऋषिरुवाच मनवोमनुपुत्राश्चमुनयश्चमही पते ॥ इंद्राःसुरगणाश्चैवसर्वेपुरुषशासनाः ॥ २ ॥ यज्ञादयोयाःकथिताःपौरुष्यस्तनवोनृप ॥ मन्वाद योजगद्यात्रांनयंत्याभिःप्रचोदिताः ॥ ३ ॥ चतुर्युगांतेकालेनग्रस्तान्श्रुतिगणान्यथा ॥ तपसाऋषयो ऽपश्यन्यतोधर्मःसनातनः ॥ ४ ॥ ततोधर्मंचतुष्पादंमनवोहरिणोदिताः ॥ युक्ताःसंचारयंत्यद्धास्वेस्वेकाले महींनृपाः ॥ ५ ॥ पालयंतिप्रजापालायावदंतंविभागशः ॥ यज्ञभागभुजोदेवायेचतत्रान्विताश्चतैः ॥ ६ ॥ इंद्रोभगवतादत्तांत्रैलोक्यश्रियमूर्जितां ॥ भुंजानःपातिलोकांस्त्रीन्कामंलोकेप्रवर्षति ॥ ७ ॥ ज्ञानंचानु युगंब्रूतेहरिःसिद्धस्वरूपधृक् ॥ ऋषिरूपधरःकर्मयोगंयोगेशरूपधृक् ॥ ८ ॥ ॥

युगांतइतिचतुर्भिः यतःयेभ्यःश्रुतिगणेभ्यः ॥ ४ ॥ उदिताउक्ताः युक्ताःसंयताःसंतोमहींधर्मंसंचारयंति मह्यांधर्मंप्रवर्तयंतीत्यर्थः ॥ ५ ॥ प्रजापालामनुपुत्रास्तंधर्मंपालयंति यावदंतंयावन्मन्वंतरावसानं विभागशःपुत्रपौत्रादिक्रमेण येचान्येद्यावापृथिव्यादयोयत्रकर्मणिभोक्तृ त्वेनान्वितास्तैश्चसह ॥ ६ ॥ ७ ॥ प्रसंगाद्रूपांतरैरपिजगद्यात्राप्रवर्तनमाह ज्ञानमितिद्वाभ्यां सिद्धाःसनकादयः ऋषयोयाज्ञवल्क्याद यःयोगेशादत्तात्रेयादयः तत्तद्रूपःसन्ज्ञानंकर्मचयोगंचब्रूते ॥ ८ ॥ ॥ ॥ ॥ ॥

प्रजेशामरीच्यादयस्तेनरूपेणसर्गंकरोतिइतिशेषः स्वराड्वपुः राजमूर्तिःसर्वेषामभावायभवति पृथग्विधाः गुणाःशीतोष्णादयोयस्य ॥ ९ ॥ ना
मरूपात्मिकयामाययाविमोहितात्मभिर्जनैर्नानादर्शनैःशास्त्रैः स्तूयमानोनिरूप्यमाणोऽपिनैवदृश्यतइत्यर्थः ॥ १० ॥ प्रासंगिकंनिरूप्यप्रस्तु
तमेवोपसंहरति एतत्कल्पविकल्पस्य अवांतरकल्पस्य ॥ ११ ॥ इत्यष्टमेटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ बलिपंचदशेविश्वजि
ताचार्यअयाजयत् ॥ ततोसौस्वर्गमजयद्भयाद्देवानिलिल्यिरे ॥ १ ॥ अत्रेयंतेनवाध्याय्यावामंवामनचेष्टितं ॥ निग्रहच्छलतोयत्रबलेर्भूयाननुग्र

सर्गंप्रजेशरूपेणदस्यून्हन्यात्स्वराड्वपुः ॥ कालरूपेणसर्वेषामभावायपृथग्गुणः ॥ ९ ॥ स्तूयमानोजनै
रेभिर्माययानामरूपया ॥ विमोहितात्मभिर्नानादर्शनैर्नचदृश्यते ॥ १० ॥ एतत्कल्पविकल्पस्यप्रमाणं
परिकीर्तितं ॥ यत्रमन्वंतराण्याहुश्चतुर्दशपुराविदः ॥ ११ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेचतु
र्दशोऽध्यायः ॥ १४ ॥ ॥ राजोवाच बलेःपदत्रयंभूमेःकस्माद्धरिरयाचत ॥ भूतेश्वरःकृपणवल्लब्धा
र्थोपिबबंधतं ॥ १ ॥ एतद्वेदितुमिच्छामोमहत्कौतूहलंहिनः ॥ यज्ञेश्वरस्यपूर्णस्यबंधनंचाप्यनागसः ॥
॥ २ ॥ श्रीशुकउवाच पराजितश्रीरसुभिश्चहापितोहींद्रेणराजन्भृगुभिःसजीवितः ॥ सर्वात्मनातानभ
जद्भृगून्बलिःशिष्योमहात्माऽर्थनिवेदनेन ॥ ३ ॥ तंब्राह्मणाभृगवःप्रीयमाणाअयाजयन्विश्वजितात्रिणा
कं ॥ जिगीषमाणंविधिनाभिषिच्यमहाभिषेकेणमहानुभावाः ॥ ४ ॥ ततोरथःकांचनपट्टनद्धोहयाश्चहर्य
श्वतुरंगवर्णाः ॥ ध्वजश्चसिंहेनविराजमानोहुताशनादासहविर्भिरिष्टात् ॥ ५ ॥ ॥ ॥

हः ॥ २ ॥ ईश्वरःस्वयंकृपणवत्कस्माद्धेतोरयाचत लब्धार्थोभूत्वापितंकस्माद्बबंध ॥ १ ॥ २ ॥ तत्रतावद्बलेस्त्रिलोकीमपहर्तुंयाञ्चादिच्छल
नंकृतवानितिवक्तुंब्राह्मणाराधनेनबलेरकांडएवस्वर्गविजयक्रममाह पराजितश्रीरित्यादिनायावदध्यायसमाप्ति युद्धेपराजिताश्रीर्येनसः इं
द्रेणअसुभिश्चत्याजितःसन् भृगून्भृगोर्वंश्याञ्छुक्रादीन् महात्माउदारचित्तः अर्थानांनिवेदनेनार्पणेन ॥३॥ त्रिणाकंस्वर्गंजेतुमिच्छंतंविश्व
जितायागेनअयाजयन् महाभिषेकेणऐंद्रेणबह्वृचब्राह्मणप्रसिद्धेन ॥ ४ ॥ हर्यश्वस्यइंद्रस्ययेतुरंगास्तेषामिववर्णोहरितोयेषां ॥ ५ ॥

पुरटंसुवर्णं तूणाविषुधी अरिक्तौअक्षय्यशरौ पितामहःप्रल्हादः जलजंशंखं ॥ ६ ॥ विप्रैरर्चितःसंपादितोयोधनार्थोयुद्धपरिकरोयस्य तैरेवक
ल्पितंस्वस्त्ययनंमंगलवाचनादियस्य आमंत्र्यपृष्ट्वा ॥७॥ अथारुह्यरराजेतिद्वयोरन्वयः सुस्रग्धरःशोभनमालाधरः ॥८॥ हेमांगदाभ्यांलसंतौ
बाहूयस्य धिष्ण्यस्थोभवनेप्रज्वलितः कुंडस्थआहवनीयइवेतिवा ॥ ९ ॥ तुल्यमैश्वर्यंबलंचश्रीश्चयेषांतैर्दैत्ययूथपैर्वृतोययाविति द्वयोरन्वयः
परिधीन्दिशः ॥ १० ॥ स्वृद्धामतिसमृद्धां ॥ ११ ॥ धिक्ग्राम्यसुखंतथाविधांपुरीमकस्मादेवपरित्यज्यइंद्रादयःपलायिताइतिवैराग्यार्थमिंद्रपु

धनुश्चदिव्यंपुरटोपनद्धंतूणावरिक्तौकवचंचदिव्यं ॥ पितामहस्तस्यददौचमालामम्लानपुष्पांजलजंचशु
क्रः ॥६॥ एवंसविप्रार्जितयोधनार्थस्तैःकल्पितस्वस्त्ययनोऽथविप्रान् ॥ प्रदक्षिणीकृत्यकृतप्रणामःप्रल्हा
दमामंत्र्यनमश्चकार ॥ ७ ॥ अथारुह्यरथंदिव्यंभृगुदत्तंमहारथः ॥सुस्रग्धरोऽथसन्नह्यधन्वीखड्गीधृतेषुधिः
॥ ८ ॥ हेमांगदलसद्बाहुःस्फुरन्मकरकुंडलः ॥ रराजरथमारूढोधिष्ण्यस्थइवहव्यवाट् ॥ ९ ॥ तुल्यैश्वर्य
बलश्रीभिःस्वयूथैर्दैत्ययूथपैः ॥ पिबद्भिरिवखंदृग्भिर्दहद्भिःपरिधीनिव ॥१० ॥ वृतोविकर्षन्महतीमासुरीं
ध्वजिनींविभुः ॥ ययाविंद्रपुरींस्वृद्धांकंपयन्निवरोदसी ॥ ११ ॥ रम्यामुपवनोद्यानैःश्रीमद्भिर्नंदनादिभिः
॥ कूजद्विहंगमिथुनैर्गायन्मत्तमधुव्रतैः ॥ १२ ॥ प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ॥ हंससारसचक्रा
ह्वकारंडवकुलाकुलाः ॥ नलिन्योयत्रक्रीडंतिप्रमदाःसुरसेविताः ॥ १३ ॥ आकाशगंगयादेव्यावृतांपरि
खभूतया ॥ प्राकारेणाग्निवर्णेनसाट्टालेनोन्नतेनच ॥ १४ ॥ ॥ ॥ ॥

रीमनुवर्णयति रम्यामितिसार्द्धैरेकादशभिः उपवनानिफलप्रधानानिनिकटानिवा उद्यानानिपुष्पप्रधानानिदूरस्थानिवा तैरम्यां कूजं
तिविहंगमिथुनानियेषु गायंतोमत्तामधुव्रतायेषु ॥ १२ ॥ प्रवालादीनामुरुर्भारोयासुताःशाखायेषांतेअमरद्रुमायेषुतैः यत्रयासुसुरसेविताः
प्रमदाःक्रीडंतिताःहंसादिकुलैराकुलाव्याप्तानलिन्यःसरांसियत्रयेषुसंतितैरुपवनोद्यानैरम्यामितिपूर्वेणैवान्वयः ॥ १३ ॥ किंच परिखा
भूतयाआकाशगंगयावृतां प्राकारेणसौवर्णेनचावृतां अट्टालाःप्राकारोपरिरचितानिउन्नतानियुद्धस्थानानितत्साहितेन ॥ १४ ॥ ॥

रुक्मपट्टानिकपाटानियेषुतेर्द्वारैरवांतरैः स्फटिकमयैर्गोपुरैश्चपुरद्वारैर्जुष्टां विभक्ताःप्रपथाःराजमार्गायस्यां ॥ १५ ॥ सभाउभवेशस्थाना निचत्वराण्यंगनानिरथ्याउपमार्गास्तैराढ्यांसंपन्नां न्यर्बुदंदशकोटयस्तैर्गणनीयैरनंतैर्विमानैर्युतां वज्रविद्रुममय्योवेदयोयेषुतैः शृंगाट कैश्चतुष्पथैर्युतां ॥ १६ ॥ नित्यंवयस्तारुण्यंरूपंचसौकुमार्यंयासांताः रूपवन्नार्यःस्वलंकृताःस्त्रियःयत्रयस्यांभ्राजंते ॥ १७ ॥ सुरस्त्रीणां केशेभ्योविभ्रष्टानांनवसौगंधिकस्रजामामोदं ॥ १८ ॥ हेमगवाक्षेभ्योनिर्गच्छताधूमेन सुरप्रियाअप्सरसः ॥ १९ ॥ मुक्तामयैर्वितानैर्मणिहे

रुक्मपट्टकपाटैश्चद्वारैःस्फटिकगोपुरैः ॥ जुष्टांविभक्तप्रपथांविश्वकर्मविनिर्मितां ॥ १५ ॥ सभाचत्वररथ्या ढ्यांविमानैर्न्यर्बुदैर्युतां ॥ शृंगाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ॥ १६ ॥ यत्रनित्यवयोरूपाःश्यामाविरज वाससः ॥ भ्राजंतेरूपवन्नार्योह्यर्चिर्भिरिववन्हयः ॥ १७॥ सुरस्त्रीकेशविभ्रष्टनवसौगंधिकस्रजां ॥ यत्रा मोदमुपादायमार्गआवातिमारुतः ॥ १८ ॥ हेमजालाक्षनिर्गच्छद्धूमेनागुरुगंधिना ॥ पांडुरेणप्रतिच्छन्न मार्गेयांतिसुरप्रियाः ॥ १९ ॥ मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृतां ॥ शिखंडिपारा वतभृंगनादितांवैमानिकस्त्रीकलगीतमंगलां ॥ २० ॥ मृदंगशंखानकदुंदुभिस्वनैःसतालवीणामुरजर्ष्टिवे णुभिः ॥ नृत्यैःसवाद्यैरुपदेवगीतकैर्मनोरमांस्वप्रभयाजितप्रभां ॥ २१ ॥ यांनव्रजंत्यधर्मिष्ठाःखलाभूत द्रुहःशठाः ॥ मानिनःकामिनोलुब्धाएभिर्हीनाव्रजंतियत् ॥ २२ ॥ तांदेवधानींसवरूथिनीपतिर्बहिःस मंताद्रुरुधेपृतन्यया ॥ आचार्यदत्तंजलजंमहास्वनंदध्मौप्रयुंजन्भयमिंद्रयोषितां ॥ २३ ॥ मघवांस्तद भिप्रेत्यबलेःपरममुद्यमं ॥ सर्वदेवगणोपेतोगुरुमेतदुवाचह ॥ २४ ॥ ॥ ॥

ममयैःकेतुभिश्चध्वजैर्नानापताकायुक्ताभिर्वलभीभिश्चविमानानांपुरोभागैरावृतांव्याप्तां वैमानिकस्त्रीणांकलगीतैर्मंगलां ॥ २० ॥ उपदे वानांगंधर्वादीनांगीतकैश्चमनोरमां जिताप्रभासाक्षात्दीप्त्यधिष्ठात्रीदेवताययातां अन्यैरजितप्रभामितिवा पाठांतरेजिताग्रहाःसूर्यादयो यया ॥ २१ ॥ यत्र्यां ॥ २२ ॥ पृतन्ययासेनया ॥ २३ ॥ २४ ॥ ॥ ॥

केनहेतुनाएवंतेजसाऊर्जितआसीत् ॥ २५ ॥ प्रतिव्योढुमपाकर्तुं ॥ २६ ॥ यतःकारणादेतस्यओजआदि यतःओजआदेःएतस्यसमुद्यमः ॥ २७ ॥ उपभृतंसंचितं ॥ २८ ॥ २९ ॥ तत्रोचितंमंत्रमाह तस्माद्यूयंत्रिविष्टपमुत्सृज्यनिलयमदर्शनंयात यतःकालात् ॥ ३० ॥





भगवन्नुद्यमोभूयान्बलेर्नःपूर्ववैरिणः ॥ अविषह्यमिमंमन्येकेनासीत्तेजसोर्जितः ॥ २५ ॥ नैनंकश्चित्कुतोवापिप्रतिव्योढुमधीश्वरः ॥ पिबन्निवमुखेनेदंलिहन्निवदिशोदश ॥ दहन्निवदिशोदृग्भिःसंवर्ताग्निरिवोत्थितः ॥ २६ ॥ ब्रूहिकारणमेतस्यदुर्धर्षत्वस्यमद्रिपोः ॥ ओजःसहोबलंतेजोयतएतत्समुद्यमः ॥ २७ ॥ गुरुरुवाच जानामिमघवन्शत्रोरुन्नतेरस्यकारणं ॥ शिष्यायोपभृतंतेजोभृगुभिर्ब्रह्मवादिभिः ॥ २८ ॥ भवद्विधोभवान्वाऽपिवर्जयित्वेश्वरंहरिं ॥ नास्यशक्तःपुरःस्थातुंकृतांतस्यतथाजनाः ॥ २९ ॥ तस्मान्निलयमुत्सृज्ययूयंसर्वेत्रिविष्टपं ॥ यातकालंप्रतीक्षंतोयतःशत्रोर्विपर्ययः ॥ ३० ॥ एषविप्रबलोदर्कःसंप्रत्यूर्जितविक्रमः ॥ एषामेवापमानेनसानुबंधोविनंक्ष्यति ॥ ३१ ॥ एवंसुमंत्रितार्थास्तेगुरुणार्थानुदर्शिना ॥ हित्वात्रिविष्टपंजग्मुर्गीर्वाणाःकामरूपिणः ॥३२॥ देवेष्वथनिलीनेषुबलिर्वैरोचनिःपुरीं ॥ देवधानीमधिष्ठायवशंनिन्येजगत्त्रयं ॥ ३३ ॥ तंविश्वजयिनंशिष्यंभृगवःशिष्यवत्सलाः ॥ शतेनहयमेधानामनुव्रतमयाजयन् ॥ ३४ ॥ ततस्तदनुभावेनभुवनत्रयविश्रुतां ॥ कीर्तिंदिक्षुवितन्वानःसरेजेउडुराडिव ॥ ३५ ॥ बुभुजेचश्रियंस्वृद्धांद्विजदेवोपलंभितां ॥ कृतकृत्यमिवात्मानंमन्यमानोमहामनाः ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ ॥ ॥ ॥

केनास्यविपर्ययःस्यादित्यतआह एषइति विप्राणांबलेनउदर्कउत्तरोत्तरमधिकंफलंयस्यसः ॥ ३१ ॥ सुमंत्रितःअर्थःकार्यंयेषांते निलयंजग्मुः ॥ ३२ ॥ ३३ ॥ एवंप्राप्तमिंद्रपदंस्थिरीकर्तुमयाजयन् अनुव्रतमनुवर्तिनं ॥ ३४ ॥ ३५ ॥ द्विजदेवैर्ब्राह्मणैरुपलंभितांप्रापितां ॥ ३६ ॥ इत्यष्टमस्कंधेटीकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ ॥

षोडशेपुत्रनाशेनशोचंत्याअदितेःपतिः ॥ प्रार्थितःकश्यपःप्राहपयोव्रतमितीर्यते ॥ १ ॥ इदानींश्रीवामनावतारप्रसंगमाह एवमित्यादि यावत्समाप्ति नष्टेषुअदृष्टेषुसत्सु ॥ १ ॥ २ ॥ सःकश्यपःपत्नीमिदमाह ॥ ३ ॥ दीनवदनत्वादिकमालक्ष्यबहुधाविकल्पयन्पृच्छति अप्यभद्रमितिसप्तभिः हेभद्रेमृत्योच्छंदमिच्छामनुवर्ततइतितथा मृत्युवशवर्तिनोजनस्येत्यर्थः ॥ ४ ॥ हेगृहमेधिनि अपिवाकिंवागृहेषु धर्मादेःकिंचिदकुशलमितिकाक्वाप्रश्नः यत्रयेषुगृहेषु अयोगिनामापियोगःस्वधर्मादिनायोगफलंभवति ॥ ५ ॥ किंवात्वयाअपूजिताएवाभ्ये

श्रीशुकउवाच एवंपुत्रेषुनष्टेषुदेवमाताऽदितिस्तदा ॥ हृतेत्रिविष्टपेदैत्यैःपर्यतप्यदनाथवत् ॥ १ ॥ एकदाकश्यपस्तस्याआश्रमंभगवानगात् ॥ निरुत्सवंनिरानंदंसमाधेर्विरतश्चिरात् ॥ २ ॥ सपत्नींदीनवदनांकृतासनपरिग्रहः ॥ सभाजितोयथान्यायमिदमाहकुरूद्वह ॥ ३ ॥ अप्यभद्रंनविप्राणांभद्रेलोकेऽधुनागतं ॥ नधर्मस्यनलोकस्यमृत्योश्छंदानुवर्तिनः ॥ ४ ॥ अपिवाऽकुशलंकिंचित्गृहेषुगृहमेधिनि ॥ धर्मस्यार्थस्यकामस्ययत्रयोगोह्ययोगिनां ॥ ५ ॥ अपिवाऽतिथयोऽभ्येत्यकुटुंबासक्तयात्वया ॥ गृहादपूजितायाताःप्रत्युत्थानेनवाक्वचित् ॥ ६ ॥ गृहेषुयेष्वतिथयोनार्चिताःसलिलैरपि ॥ यदिनिर्यांतितेनूनंफेरुराजगृहोपमाः ॥ ७ ॥ अप्यग्नयस्तुवेलायांनहुताहविषासति ॥ त्वयोद्विग्नधियाभद्रेप्रोषितेमयिकर्हिचित् ॥ ८ ॥ यत्पूजयाकामदुघान्यातिलोकान्गृहान्वितः ॥ ब्राह्मणोऽग्निश्चवैविष्णोःसर्वदेवात्मनोमुखं ॥ ॥ ९ ॥ अपिसर्वेकुशलिनस्तवपुत्रामनस्विनि ॥ लक्षयेऽस्वस्थमात्मानंभवत्यालक्षणैरहं ॥ १० ॥ अदितिरुवाच भद्रंद्विजगवांब्रह्मन्धर्मस्यास्यजनस्यच ॥ त्रिवर्गस्यपरंक्षेत्रंगृहमेधिन्गृहाइमे ॥ ११ ॥ अग्नयोऽतिथयोभृत्याभिक्षवोयेचलिप्सवः ॥ सर्वंभगवतोब्रह्मन्ननुध्यानान्नरिष्यति ॥ १२ ॥ ॥

त्यगृहाद्याताः ॥ ६ ॥ नार्चिताःसंतोयदिनिर्गच्छंतितेगृहाःफेरुराजःसृगालराजस्तदीयविवरतुल्याः ॥ ७ ॥ वेलायांहोमकालेकर्हिचिन्नहुताःकिं ॥ ८ ॥ ९ ॥ भवत्याआत्मानंमनःअस्वस्थमप्रकृतिस्थंलक्षणैर्मुखम्लान्यादिभिर्लक्षयामि ॥ १० ॥ अस्वास्थ्यकारणमन्यदस्तीतिवक्तुंत्वत्पृष्टमभद्रादिकंनास्तीत्याह भद्रमितिद्वाभ्यां इमेगृहास्त्रिवर्गस्यपरंक्षेत्रमुद्भवस्थानं त्रिवर्गोऽपियथावद्वर्ततइत्यर्थः ॥ ११ ॥ ॥ भगवतस्तवानुध्यानंयन्मयाक्रियतेतस्मादग्नयोऽतिथयइत्यादिसर्वंनरिष्यतिनहीयते ॥ १२ ॥ ॥

प्रस्तुतंविज्ञापयितुमाह कोन्विति ॥ १३ ॥ संपाद्यंकाममाह तवैवेतिचतुर्भिः ॥ १४ ॥ सपत्नैर्दैत्यैर्हृताश्रीर्येषां हृतंस्थानंयेषामितिपु
त्राभिप्रायेणबहुवचनं ॥ १५ ॥ १६ ॥ १७ ॥ कश्यपः प्रथमंतावत्पुत्रस्नेहंत्याजयितुंविस्मयव्याजेनैवतत्त्वमुपदिशति अहोइतिसार्धेन



कोनुमेभगवन्कामोनसंपद्येतमानसः ॥ यस्याभवान्प्रजाध्यक्षएवंधर्मान्प्रभाषते ॥ १३ ॥ तवैवमारीचम
नःशरीरजाःप्रजाइमाःसत्त्वरजस्तमोजुषः ॥ समोभवांस्तास्वसुरादिषुप्रभोतथापिभक्तंभजतेमहेश्वरः ॥
॥ १४ ॥ तस्मादीशभजंत्यामेश्रेयश्चिंतयसुव्रत ॥ हृतश्रियोहृतस्थानान्सपत्नैःपाहिनःप्रभो ॥ १५ ॥ परै
र्विवासितासाऽहंमग्नाव्यसनसागरे ॥ ऐश्वर्यंश्रीर्यशःस्थानंहृतानिप्रबलैर्मम ॥ १६ ॥ यथातानिपुनःसा
धोप्रपद्येरन्ममात्मजाः ॥ तथाविधेहिकल्याणंधियाकल्याणकृत्तम ॥ १७ ॥ श्रीशुकउवाच एवमभ्यर्थि
तोऽदित्याकस्तामाहस्मयन्निव ॥ अहोमायाबलंविष्णोःस्नेहबद्धमिदंजगत् ॥ १८ ॥ क्वदेहोभौतिकोऽना
त्माक्वचात्माप्रकृतेःपरः ॥ कस्यकेपतिपुत्राद्यामोहएवहिकारणं ॥ १९ ॥ उपतिष्ठस्वपुरुषंभगवंतंजनार्दनं ॥
सर्वभूतगुहावासंवासुदेवंजगद्गुरुं ॥ २० ॥ सविधास्यतितेकामान्हरिर्दीनानुकंपनः ॥ अमोघाभगवद्भक्तिर्नेत
रेतिमतिर्मम ॥ २१ ॥ आदितिरुवाच केनाहंविधिनाब्रह्मन्नुपस्थास्येजगत्पतिं ॥ यथामेसत्यसंकल्पोविद
ध्याच्चमनोरथं ॥ २२ ॥ आदिशत्वंद्विजश्रेष्ठविधिंतदुपधावनं ॥ आशुतुष्यतिमेदेवःसीदंत्याःसहपुत्रकैः ॥
॥ २३ ॥ कश्यपउवाच एतन्मेभगवान्पृष्टःप्रजाकामस्यपद्मजः ॥ यथाहतेप्रवक्ष्यामिव्रतंकेशवतोषणं ॥
॥ २४ ॥ फाल्गुनस्यामलेपक्षेद्वादशाहंपयोव्रतः ॥ अर्चयेदरविंदाक्षंभक्त्यापरमयान्वितः ॥ २५ ॥



॥ १८ ॥ १९ अत्रापरितुष्यंतींप्रत्याह उपतिष्ठस्वेतिद्वाभ्यां ॥ २० ॥ नन्वेवंभूतकामप्राप्तिहेतुर्देवांतरसेवाप्रसिद्धातत्राह अमोघेति ॥
॥ २१ ॥ यथाचमेमनोरथंविदध्यात् ॥ २२ ॥ यथाचमेआशुतुष्यति तथातत्सेवाप्रकारमादिश ॥ २३ ॥ मेमयापृष्टःपद्मजोमेयद्व्रतमाह
एतत्तेतवप्रवक्ष्यामीत्यन्वयः ॥ २४ ॥ अमलेशुक्ले ॥ २५ ॥ ॥ ॥

तत्रादौपूर्वेद्युःकृत्यमाह सिनीवाल्यामित्यादिनाब्रह्मचार्यथतद्वाऽयामित्यंतेनग्रंथेन यदिलभ्येततर्हिक्रोडविदीर्णयावन्यवराहोत्खातया आलिप्य ॥ २६ ॥ तत्रमंत्रः त्वंदेवीति हेदेवि त्वंरसायाःउद्धृतासि ॥ २७ ॥ निर्वर्तितआत्मनियमोनित्यनैमित्तिकोयेन ॥ २८ ॥ तत्रावाहनादौनवमंत्रानाह नमस्तुभ्यमिति पाद्यादौविशेषतस्तुद्वादशाक्षरंवक्ष्यति ॥ २९ ॥ चतुर्विंशतिगुणास्तत्त्वानिजानातीतितथा तस्मैगुणसंख्यानस्यहेतवेसांख्यप्रवर्तकाय ॥ ३० ॥ एवंसामान्यतोनत्वागुणावतारान्प्रणमति त्रिभिः तत्रादौमंत्रोक्तयज्ञरूपेणविष्णोः

सिनीवाल्यांमृदालिप्यस्नायात्क्रोडविदीर्णया ॥ यदिलभ्येतवैस्त्रोतस्येतंमंत्रमुदीरयेत् ॥२६॥ त्वंदेव्यादिव राहेणरसायाःस्थानमिच्छता ॥ उद्धृतासिनमस्तुभ्यंपाप्मानंमेप्रणाशय ॥२७॥ निर्वर्तितात्मनियमोदेवम र्चेत्समाहितः ॥ अर्चायांस्थंडिलेसूर्येजलेवह्नौगुरावपि ॥ २८ ॥ नमस्तुभ्यंभगवतेपुरुषायमहीयसे ॥ सर्वभू तनिवासायवासुदेवायसाक्षिणे ॥ २९ ॥ नमोऽव्यक्तायसूक्ष्मायप्रधानपुरुषायच ॥ चतुर्विंशद्गुणज्ञायगुणसं ख्यानहेतवे ॥३०॥ नमोद्विशीर्ष्णेत्रिपदेचतुःशृंगायतंतवे ॥ सप्तहस्ताययज्ञायत्रयीविद्यात्मनेनमः ॥३१ ॥ नमःशिवायरुद्रायनमःशक्तिधरायच ॥ सर्वविद्याधिपतयेभूतानांपतयेनमः ॥ ३२ ॥ नमोहिरण्यगर्भाय प्राणायजगदात्मने ॥ योगैश्वर्यशरीरायनमस्तेयोगहेतवे ॥३३॥ नमस्तेआदिदेवायसाक्षिभूतायतेनमः ॥ नारायणायऋषयेनरायहरयेनमः ॥ ३४ ॥ नमोमरकतश्यामवपुषेऽधिगतश्रिये ॥ केशवायनमस्तुभ्यं नमस्तेपीतवाससे ॥३५॥ त्वंसर्ववरदःपुंसांवरेण्यवरदर्षभ ॥ अतस्तेश्रेयसेधीराःपादरेणुमुपासते ॥ ३६॥ अन्ववर्ततयंदेवाःश्रीश्चतत्पादपद्मयोः ॥ स्पृहयंतइवामोदंभगवान्मेप्रसीदतां ॥ ३७ ॥

प्रणामोनमइति द्वेशीर्षेयस्य त्रयःपादायस्य तंतवेफलविस्तारकाय त्रय्यांविद्यायामात्मायस्येतित्रिधाबद्धइत्यस्यार्थउक्तः तथाचमंत्रः चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेशेति ॥ ३१ ॥ ३२ ॥ प्राणायसू त्रात्मने योगैश्वर्यंशरीरंयस्य ॥ ३३ ॥ ३४ ॥ अधिगताप्राप्ताश्रीर्यंतस्मै ॥ ३५ ॥ ३६ ॥ तत्पादपद्मयोरामोदंस्पृहयंतइवदेवाश्च श्रीश्चयमन्ववर्तंत समेप्रसीदतु ॥ ३७ ॥ ॥ ॥ ॥ ॥

आवाहनेनपुरस्कृतंसंमानितं ॥ ३८ ॥ ३९ ॥ पयसिशृतंपक्वंपायसं मूलविद्ययाद्वादशाक्षरेणैव ॥ ४० ॥ ४१ ॥ पूर्वोक्ताभिरन्याभिश्च स्तुतिभिः ॥ ४२ ॥ तस्यशेषांनिर्माल्यं द्वौअवरौयेषांतान् असंभवेद्वावपिभोजयेदित्यर्थः ॥ ४३ ॥ सभाजितैस्तैरनुज्ञातःसन्शेषंबंधु





एतैर्मंत्रैर्हृषीकेशमावाहनपुरस्कृतं ॥ अर्चयेच्छ्रद्धयायुक्तःपाद्योपस्पर्शनादिभिः ॥ ३८ ॥ अर्चित्वागंधमाल्याद्यैःपयसास्नपयेद्विभुं॥वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः॥गंधधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥ ३९ ॥ शृतंपयसिनैवेद्यंशाल्यन्नंविभवेसति ॥ ससर्पिःसगुडंदत्वाजुहुयान्मूलविद्यया ॥ ४० ॥ निवेदितंतद्भक्तायदद्याद्भुंजीतवास्वयं ॥ दत्वाचमनमर्चित्वातांबूलंचनिवेदयेत् ॥ ४१ ॥ जपेदष्टोत्तरशतंस्तुवीतस्तुतिभिःप्रभुं ॥ कृत्वाप्रदक्षिणंभूमौप्रणमेद्दंडवन्मुदा ॥ ४२ ॥ कृत्वाशिरसितच्छेषांदेवमुद्वासयेत्ततः ॥ द्व्यवरान्भोजयेद्विप्रान्पायसेनयथोचितं ॥४३॥ भुंजीततैरनुज्ञातःशेषंसेष्टःसभाजितैः ॥ ब्रह्मचार्यथतद्रात्र्यांश्वोभूतेप्रथमेहनि ॥ ४४ ॥ स्नातःशुचिर्यथोक्तेनविधिनासुसमाहितः ॥ पयसास्नापयित्वार्चेद्यावद्व्रतसमापनं ॥ ४५ ॥ पयोभक्षोव्रतमिदंचरेद्विष्ण्वर्चनादृतः ॥ पूर्ववज्जुहुयादग्निंब्राह्मणांश्चापिभोजयेत् ॥ ४६ ॥ एवंत्वहरहःकुर्याद्द्वादशाहंपयोव्रतः ॥हरेराराधनंहोममर्हणंद्विजतर्पणं ॥४७॥ प्रतिपद्दिनमारभ्ययावच्छुक्लत्रयोदशी ॥ ब्रह्मचर्यमधःस्वप्नंस्नानंत्रिषवणंचरेत् ॥ ४८ ॥ वर्जयेदसदालापंभोगानुच्चावचांस्तथा ॥ अहिंस्रःसर्वभूतानांवासुदेवपरायणः ॥ ४९ ॥ त्रयोदश्यामथोविष्णोःस्नपनंपंचकैर्विभोः ॥ कारयेच्छास्त्रदृष्टेनविधिनाविधिकोविदैः ॥ ५० ॥ पूजांचमहतींकुर्याद्वित्तशाठ्यविवर्जितः ॥ चरुंनिरूप्यपयसिशिपिविष्टायविष्णवे ॥ ५१ ॥ शृतेनतेनपुरुषंयजेतसुसमाहितः ॥ नैवेद्यंचातिगुणवद्दद्यात्पुरुषतुष्टिदं ॥ ५२ ॥



भिःसहितस्तस्यांरात्र्यांब्रह्मचारीसन् श्वोभूतेप्रभातेसति ॥ ४४ ॥ ४५ ॥ पयएवभक्षआहारोयस्य ॥ ४६ ॥ ४७ ॥ अधःस्वप्नंशयनं ॥ ४८ ॥ ४९ ॥ पंचकैःपंचामृतैः ॥ ५० ॥ ५१ ॥ ५२ ॥

॥ ॥ ॥

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ मयाचतेसमुदाहृतं ॥ ५८ ॥ ५९ ॥ सर्वयज्ञाख्योऽयंयज्ञः सर्वव्रतमितिचस्मृतमेतद्व्रतं ॥

आचार्यंज्ञानसंपन्नंवस्त्राभरणधेनुभिः ॥ तोषयेदृत्विजश्चैवतद्विद्ध्याराधनंहरेः ॥ ५३ ॥ भोजयेत्तान्गुणवता
सदन्नेनशुचिस्मिते ॥ अन्यांश्चब्राह्मणान्शक्त्यायेचतत्रसमागताः॥ ५४ ॥ दक्षिणांगुरवेदद्यादृत्विग्भ्यश्च
यथाऽर्हतः ॥ अन्नाद्येनाश्वपाकांश्चप्रीणयेत्समुपागतान् ॥ ५५ ॥ भुक्तवत्सुचसर्वेषुदीनांधकृपणेषुच ॥ वि
ष्णोस्तत्प्रीणनंविद्वान्भुंजीतसहबंधुभिः ॥५६॥ नृत्यवादित्रगीतैश्चस्तुतिभिःस्वस्तिवाचकैः॥ कारयेत्तत्क
थाभिश्चपूजांभगवतोऽन्वहं ॥५७॥एतत्पयोव्रतंनामपुरुषाराधनंपरं ॥ पितामहेनाभिहितंमयातेसमुदाहृ
तं ॥ ५८ ॥ त्वंचानेनमहाभागेसम्यक्चीर्णेनकेशवं ॥ आत्मनाशुद्धभावेननियतात्माभजाव्ययं ॥ ५९ ॥
अयंवैसर्वयज्ञाख्यःसर्वव्रतमितिस्मृतं ॥ तपःसारमिदंभद्रेदानंचेश्वरतर्पणं ॥ ६० ॥ तएवनियमाःसाक्षात्त
एवचयमोत्तमाः ॥ तपोदानंव्रतंयज्ञोयेनतुष्यत्यधोक्षजः ॥ ६१ ॥ तस्मादेतद्व्रतंभद्रेप्रयताश्रद्धयाचर ॥ भ
गवान्परितुष्टस्तेवरानाशुविधास्यति ॥ ६२ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअदितिपयोव्रतंना
मषोडशोध्यायः ॥ १६ ॥ ॥ ॥ श्रीशुकउवाच इत्युक्तासाऽदितीराजन्स्वभर्त्राकश्यपेनवै ॥ अन्व
तिष्ठद्व्रतमिदंद्वादशाहमतंद्रिता ॥ १ ॥ चिंतयंत्येकयाबुद्ध्यामहापुरुषमीश्वरं ॥ प्रगृह्येंद्रियदुष्टाश्वान्मन
साबुद्धिसारथिः ॥ २ ॥ मनश्चैकाग्रयाबुद्ध्याभगवत्याखिलात्मनि ॥ वासुदेवेसमाधायचचारहपयोव्रतं ॥
॥ ३ ॥ तस्मात्प्रादुरभूत्ताातभगवानादिपूरुषः ॥ पीतवासाश्चतुर्बाहुःशंखचक्रगदाधरः ॥ ४ ॥ तंनेत्रगो
चरंवीक्ष्यसहसोत्थायसादरं ॥ ननामभुविकायेनदंडवत्प्रीतिविह्वला ॥ ५ ॥ ॥ ॥

॥ ६० ॥ ६१ ॥ ६२ ॥ इत्यष्टमेटीकायांषोडशोध्यायः ॥ १६ ॥ ॥ ॥ ततःसप्तदशेऽदित्याकृतेतस्मिन्व्रतेहरिः ॥ तत्कामपू
रणायादौतत्पुत्रोऽभूदितीर्यते ॥ १ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ॥ ॥

प्रीतिविव्हलत्वादेवसाबद्धांजलिःसतीस्थिताकेवलमीडितुंपुनर्नोत्सेहेनशशाकअपितुतूष्णींबभूव कथंभूताआनंदजलैराकुलेईक्षणेयस्याः पुलकैराकुलाआकृतिर्देहोयस्याः तस्यदर्शनेनयोऽत्युत्सवस्तेनगात्रेवेपथुःकंपोयस्याः ॥ ६ ॥ तुष्टावपिबतीवोद्वीक्षमाणाइतिचक्रिया भेदात्सेत्यस्यशब्दस्याद्विरुक्तिरदोषः ॥ ७ ॥ अयत्नतोविनिर्जित्यदैत्यानत्यूर्जितानपि ॥ भक्तान्रक्षितुमीशस्त्वमित्यस्तौददितिस्त्रिभिः ॥ यज्ञेशेत्यादिदशभिःसंबोधनैस्तत्राशक्यंकिमपिनास्तीतिवदंतीप्रार्थयते हेईशशंनःकृधिकुरु यतोदीनानांनाथोऽसित्वं तीर्थश्रवःकीर्तिर्य

सोत्थायबद्धांजलिरीडितुंस्थितानोत्सेहआनंदजलाकुलेक्षणा ॥ बभूवतूष्णींपुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥ प्रीत्याशनैर्गद्गदयागिराहरिंतुष्टावसादेव्यदितिःकुरूद्वह ॥ उद्वीक्षतीसापिबतीवचक्षुषारमापतिंयज्ञपतिंजगत्पतिं ॥ ७ ॥ अदितिरुवाच यज्ञेशयज्ञपुरुषाच्युततीर्थपादतीर्थश्रवःश्रवणमंगलनामधेय ॥ आपन्नलोकवृजिनोपशमोदयाद्यशंनःकृधीशभगवन्नसिदीननाथः ॥ ८ ॥ विश्वायविश्वभवनस्थितिसंयमायस्वैरंगृहीतपुरुशक्तिगुणायभूम्ने ॥ स्वस्थायशश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसेहरयेनमस्ते ॥ ९ ॥ आयुःपरंवपुरभीष्टमतुल्यलक्ष्मीर्द्योभूरसाःसकलयोगगुणास्त्रिवर्गः ॥ ज्ञानंचकेवलमनंतभवंतितुष्टात्त्वत्तोनृणांकिमुसपत्नयजादिराशीः ॥ १० ॥ ॥ ॥

स्य श्रवणमेवमंगलंयस्यतन्नामधेयंयस्य आपन्नानांशरणागतानांवृजिनोपशमायउदयोयस्य ॥ ८ ॥ भूम्नेमहतेनमः महत्त्वेहेतवः विश्वाय विश्वस्यभवनस्थितिसंयमार्थंस्वैरंगृहीताःपुरुशक्तेर्मायायागुणायेनतस्मै तथाऽपिस्वस्थायअप्रच्युतस्वरूपाय कुतः शश्वदुपबृंहितोनित्योर्जितोयःपूर्णबोधस्तेनव्यापादितंनित्यनिरस्तमात्मनितमोमायालक्षणंयेनतस्मै ॥ ९ ॥ अस्मदीयमनोरथपूरणमीषत्करमेवतवेति कैमुत्यन्यायेनाह आयुःपरंब्रह्मायुः पुनरपिद्यौश्चभूश्चरसातलंचद्योभूरसाः द्यौरितिपृथक्पाठेभूश्चरसाश्चबिलस्वर्गाइतिविग्रहः रसेति पाठेत्रीणिपदानि सकलायोगगुणाअणिमादयः ॥ १० ॥ ॥ ॥ ॥

क्षेत्रज्ञः अंतर्यामी ॥ ११ ॥ सपत्नैर्हृताश्रीर्येषां स्वधामतश्च्यावितानां चपुत्राणांसर्वांधयित्वतद्भवत्याश्चिरमाकांक्षितंमयाविज्ञातं ॥ १२ ॥ कांक्षितमेवाह तानितित्रिभिः प्रतिलब्धोजयश्चश्रीश्चयैस्तैःपुत्रैःसहउपासितुमेकत्रस्थातुमिच्छसि ॥ १३ ॥ १४ ॥ प्रत्याहृतंयशश्चश्री श्चयैस्तान् ॥ १५ ॥ अपारणीयाअनतिक्रमणियाः यद्यस्मात् अनुकूलईश्वरःकालोयेषांतैर्विप्रैर्गुप्तारक्षिताः अनुकूलैरीश्वरैःसमर्थैर्विप्रै

श्रीशुकउवाच अदित्यैवंस्तुतोराजन्भगवान्पुष्करेक्षणः ॥ क्षेत्रज्ञःसर्वभूतानामितिहोवाचभारत ॥ ॥ ११ ॥ श्रीभगवानुवाच देवमातर्भवत्यामेविज्ञातंचिरकांक्षितं ॥ यत्सपत्नैर्हृतश्रीणांच्यावितानांस्व धामतः ॥ १२ ॥ तान्विनिर्जित्यसमरेदुर्मदानसुरर्षभान् ॥ प्रतिलब्धजयश्रीभिःपुत्रैरिच्छस्युपासितुं ॥ ॥ १३ ॥ इंद्रज्येष्ठैःस्वतनयैर्हृतानांयुधिविद्विषां ॥ स्त्रियोरुदंतीरासाद्यद्रष्टुमिच्छसिदुःखिताः ॥ १४ ॥ आ त्मजान्सुसमृद्धांस्त्वंप्रत्याहृतयशःश्रियः ॥ नाकपृष्ठमधिष्ठायक्रीडतोद्रष्टुमिच्छसि ॥ १५ ॥ प्रायोऽधुनाते ऽसुरयूथनाथाअपारणीयाइतिदेविमेमतिः ॥ यत्तेनुकूलेश्वरविप्रगुप्तानविक्रमस्तत्रसुखंददाति ॥ १६ ॥ अथाप्युपायोममदेविचिंत्यःसंतोषितस्यव्रतचर्ययाते ॥ ममार्चनंनार्हतिगंतुमन्यथाश्रद्धानुरूपंफलहेतुक त्वात् ॥ १७ ॥ त्वयाऽर्चितश्चाहमपत्यगुप्तयेपयोव्रतेनानुगुणंसमेधितः ॥ स्वांशेनपुत्रत्वमुपेत्यतेसुतान्गोप्ताऽ स्मिमारीचतपस्यधिष्ठितः ॥ १८ ॥ उपधावपतिंभद्रेप्रजापतिमकल्मषं ॥ मांचभावयतीपत्यावेवंरूपमवस्थि तं ॥ १९ ॥ नैतत्परस्माआख्येयंपृष्टयाऽपिकथंचन ॥ सर्वंसंपद्यतेदेविदेवगुह्यंसुसंवृतं ॥ २० ॥ श्रीशुक उवाच एतावदुक्त्वाभगवांस्तत्रैवांतरधीयत ॥ अदितिर्दुर्लभंलब्ध्वाहरेर्जन्मात्मनिप्रभोः ॥ २१ ॥ उपा धावत्पतिंभक्त्यापरयाकृतकृत्यवत् ॥ सवैसमाधियोगेनकश्यपस्तदबुध्यत ॥ २२ ॥ ॥

र्गुप्ताइतिवा ॥ १६ ॥ ममर्मयाचिंत्यएव तत्रहेतुः संतोषितस्येत्यादिश्रद्धाऽ नुरूपमिच्छानुसारेणफलहेतुत्वात् ॥ १७ ॥ मारीचस्यतप सिअधिष्ठायस्थितःसन्गोप्ताऽस्मिपालयिष्यामि ॥ १८ ॥ अतःपतिमुपधावभजस्व ॥ १९ ॥ देवानांगुह्यंरहस्यंसर्वंसुसंवृतंसुगुप्तंसत्संप द्यतेसिध्यति ॥ २० ॥ प्रभोर्हरेरात्मनिजन्मलब्ध्वा ॥ २१ ॥ २२ ॥ ॥ ॥ ॥

अवितथमीक्षणंदृष्टिर्यस्यसः अनिलोयथासर्वत्रसमोऽपिदारुणिसंघर्षेणचतद्दाहकमग्निमाधत्तेएवंस्वयंपुत्रेषुसमोऽपिदैत्यक्षपणंवीर्यमाधत्तेत्य
र्थः ॥ २३ ॥ धिष्ठितमधिष्ठायस्थितं समीडेतुष्टावेत्यर्थः ॥ २४ ॥ २५ ॥ अदितेरेवपूर्वस्मिन्जन्मनिपृश्निरितिनामतस्यागर्भायअर्भकाय
वेदागर्भेयस्य यद्वा वेदानांगर्भायवेदेषुप्रकाशमानायेत्यर्थः त्रयोलोकानाभौयस्यसत्रिनाभस्तस्मै त्रयाणांलोकानांपृष्ठेउपरिस्थिताय शि
पिशब्देनपशवोजीवास्तेष्वंतर्यामितयाप्रविष्टाय यज्ञोवैविष्णुःपशवःशिपिर्यज्ञएवपशुषुप्रतितिष्ठतीतिश्रुतेः यद्वा शिपयोरश्मयस्तैर्वेष्टिताये
त्यर्थः तथापि विष्णवेव्यापिने ॥ २६ ॥ अंतःपतितंतृणादियथागभीरंस्त्रोतआक्षिपतिआकर्षतितथाकालात्माभवान्विश्वमाक्षिपाति ॥

प्रविष्टमात्मनिहरेरंशंह्यवितथेक्षणः ॥ सोऽदित्यांवीर्यमाधत्ततपसाचिरसंभृतं ॥ समाहितमनाराजन्दा
रुण्यग्निंयथाऽनिलः ॥ २३ ॥ अदितेर्धिष्ठितंगर्भंभगवंतंसनातनं ॥ हिरण्यगर्भोविज्ञायसमीडेगुह्यनामभिः
॥ २४ ॥ ब्रह्मोवाच जयोरुगायभगवन्नुरुक्रमनमोस्तुते ॥ नमोब्रह्मण्यदेवायत्रिगुणायनमोनमः ॥ २५ ॥
नमस्तेपृश्निगर्भायवेदगर्भायवेधसे ॥ त्रिनाभायत्रिपृष्ठायशिपिविष्टायविष्णवे ॥ २६ ॥ त्वमादिरंतोभुवन
स्यमध्यमनंतशक्तिंपुरुषंयमाहुः ॥ कालोभवानाक्षिपतीशविश्वंस्त्रोतोयथांऽतःपतितंगभीरं ॥ २७ ॥ त्वंवैप्रजा
नांस्थिरजंगमानांप्रजापतीनामसिसंभविष्णुः ॥ दिवौकसांदेवदिवश्च्युतानांपरायणंनैरिवमज्जतोऽप्सु ॥
॥ २८ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुकउवाच इत्थंविरिंच
स्तुतकर्मवीर्यःप्रादुर्बभूवामृतभूरदित्यां ॥ चतुर्भुजःशंखगदाब्जचक्रःपिशंगवासानलिनायतेक्षणः ॥ १ ॥

॥ २७ ॥ प्रजापतीनांचत्वमेवसंभविष्णुरुत्पादनशीलोऽसि अयंभावः नह्येवंभूतस्यतवजन्मादिसंभवः किंतुदेवानांप्रजापतीनांप्रजानां
चपरमाश्रयत्वेनतत्कार्यसाधनायावतारोऽयमतस्तान्स्वर्गच्युतान्पुनःस्वर्गेस्थापयेति ॥ २८ ॥ इत्यष्टमस्कंधेटीकायांसप्तदशोऽध्यायः ॥
॥ १७ ॥ ॥ ततस्त्वष्टादशेभूत्वावामनःसत्कृतोऽखिलैः ॥ यज्ञंगतस्ततस्तेनसत्कृत्योक्तोवरान्वृणु ॥ १ ॥ इत्थंविरिंचेनस्तुतंकर्मदे
वकार्यलक्षणंवीर्यंचप्रभावोयस्यसहरिरदित्यांप्रादुर्बभूवेतित्रयाणामन्वयः अमृतभूर्मृत्युजन्मशून्यः शंखगदाब्जचक्राणिअस्यसंतीतितथा
अर्शआदित्वेनमत्वर्थीयोऽच्प्रत्ययः अविसर्गपाठेसचासौपिशंगवासाश्च ॥ १ ॥ ॥ ॥

झषराजोमकरस्तदाकारयोःकुंडलयोस्त्विषाउल्लसंतीश्रीर्वदनांबुजेयस्य श्रीवत्सोवक्षसियस्य वलयैरंगदैश्चसहोल्लसंतिकिरीटादीनियस्य ॥ २॥ श्रीमित्यात्रवनमालयाविराजितः वेश्मगतंतमः ॥ ३ ॥ अग्निजिह्वादेवाः नगाःपर्वताः ॥४॥ तत्प्रादुर्भावसमयमाह श्रोणायामिति भाद्रपदशुक्लद्वादशीश्रवणद्वादशीतिप्रसिद्धातस्यां तत्रापिश्रोणायांश्रवणस्थेचंद्रइत्यर्थः तत्रापिश्रवणस्यप्रथमांशेऽभिजितिनक्षत्रे तच्चश्रुत्या दर्शितं अभिजिन्नामनक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणायाइति एवंविशिष्टेमुहूर्त्तेप्रभुःप्रादुर्बभूवेत्यर्थः किंच नक्षत्राण्यश्विन्यादीनि ता

श्यामावदातोझषराजकुंडलत्विषोल्लसच्छ्रीवदनांबुजःपुमान्॥ श्रीवत्सवक्षावलयांगदोल्लसत्किरीटकांचीगुणचारुनूपुरः ॥ २ ॥ मधुव्रतव्रातविघुष्टयास्वयाविराजितःश्रीवनमालयाहरिः ॥ प्रजापतेर्वेश्मतमःस्वरोचिषाविनाशयन्कंठनिविष्टकौस्तुभः ॥३॥ दिशःप्रसेदुःसलिलाशयास्तदाप्रजाःप्रहृष्टाऋतवोगुणान्विताः ॥ द्यौरंतरिक्षंक्षितिरग्निजिह्वागावोद्विजाःसंजहृषुर्नगाश्च॥४॥ श्रोणायांश्रवणद्वादश्यांमुहूर्तेऽभिजितिप्रभुः ॥ सर्वेनक्षत्रताराद्याश्चक्रुस्तज्जन्मदक्षिणं ॥ ५॥ द्वादश्यांसविताऽतिष्ठन्मध्यंदिनगतोनृप ॥ विजयानामसाप्रोक्तायस्यांजन्मविदुर्हरेः ॥ ६॥ शंखदुंदुभयोनेदुर्मृदंगपणवानकाः ॥ चित्रवादित्रतूर्याणांनिर्घोषस्तुमुलोऽभवत् ॥ ७ ॥ प्रीताश्चाप्सरसोऽनृत्यन्गंधर्वप्रवराजगुः ॥ तुष्टुवुर्मुनयोदेवामनवःपितरोऽग्नयः ॥ ८॥ सिद्धविद्याधरगणाःसकिंपुरुषकिन्नराः ॥ चारणायक्षरक्षांसिसुपर्णाभुजगोत्तमाः ॥ ९ ॥ गायंतोऽतिप्रशंसंतोनृत्यंतोविबुधानुगाः ॥ अदित्याआश्रमपदंकुसुमैःसमवाकिरन् ॥ १० ॥ दृष्ट्वाऽदितिस्तंनिजगर्भसंभवंपरंपुमांसंमुदमापविस्मिता ॥ गृहीतदेहंनिजयोगमाययाप्रजापतिश्चाहजयेतिविस्मितः ॥ ११ ॥

राशब्देनताराग्रहागुरुशुक्रादयस्तेआद्यायेषांतेसूर्यादयोऽपिसर्वेतस्यजन्मदक्षिणमुदारंचक्रुःजन्ममुहूर्तेगुणाबहवोबभूवुरित्यर्थः॥ ५॥विशेषांतरमाह यस्यांद्वादश्यांहरेर्जन्मतत्तस्यामहन्येवविदुः तदाचमध्यंदिनगतःसविताऽतिष्ठत् साचद्वादशीविजयानामप्रोक्तेत्यन्वयः ॥ ६ ॥ शंखादयोयेतेषामन्येषांचचित्रतूर्याणांनिर्घोषोऽभवत् ॥७ ॥ देवामनवइत्यादीनांकुसुमैःसमवाकिरन्नितितृतीयेनान्वयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

विस्मयांतरमाह यत्तदिति यत्तद्वपुर्हरिरधारयत् प्रकटितवांस्तेनवपुषामातापित्रोःसंपश्यतोरेववामनोबटुर्बभूव दिव्यगतिरद्भुतचेष्टितःस्वयंकथंभूतः अव्यक्तचिद्रूपः कथमधारयत् भातिर्दीप्तिर्विभूषणानिचआयुधानिचतैर्व्यक्तंयथाभवतितथा ॥ १२ ॥ कर्माणिजातकर्मादीनि ॥ १३ ॥ ॥ १४ ॥ वनस्पतिर्वनानांपतिःसोमः ॥ १५ ॥ १६ ॥ पात्रिकांभिक्षापात्रीं ॥ १७ ॥ सएवंसंभावितोमारिष ःश्रेष्ठोबटुर्ब्रह्मवर्चसेनब्रह्मर्षिगणसंजु



यत्तद्वपुर्भातिविभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ॥ बभूवतेनैवसवामनोबटुःसंपश्यतोर्दिव्यगतिर्यथानटः ॥ १२ ॥ तंबटुंवामनंदृष्ट्वामोदमानामहर्षयः ॥ कर्माणिकारयामासुःपुरस्कृत्यप्रजापतिं ॥ १३ ॥ तस्योपनीयमानस्यसावित्रींसविताऽब्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रंमेखलांकश्यपोऽददात् ॥ १४ ॥ ददौकृष्णाजिनंभूमिर्दंडंसोमोवनस्पतिः ॥ कौपीनाच्छादनंमाताद्यौश्छत्रंजगतःपतेः ॥ १५ ॥ कमंडलुंवेदगर्भःकुशान्सप्तर्षयोददुः ॥ अक्षमालांमहाराजसरस्वत्यव्ययात्मनः ॥ १६ ॥ तस्माइत्युपनीताययक्षराट्पात्रिकामदात् ॥ भिक्षांभगवतीसाक्षादुमाऽदादंबिकासती ॥ १७ ॥ सब्रह्मवर्चसेनैवंसभांसंभावितोबटुः ॥ ब्रह्मर्षिगणसंजुष्टामत्यरोचतमारिषः ॥ १८ ॥ समिद्धमाहितंवन्हिंकृत्वापरिसमूहनं ॥ परिस्तीर्यसमभ्यर्च्यसमिद्भिरजुहोद्द्विजः ॥ १९ ॥ श्रुत्वाऽश्वमेधैर्यजमानमूर्जितंबलिंभृगूणामुपकल्पितैस्ततः ॥ जगामतत्राखिलसारसंभृतोभारेणगांसन्नमयन्पदेपदे ॥ २० ॥ तंनर्मदायास्तटउत्तरेबलेर्यऋत्विजस्तेभृगुकच्छसंज्ञके ॥ प्रवर्तयंतोभृगवःक्रतूत्तमंव्यचक्षतारादुदितंयथारविं ॥ २१ ॥ तेऋत्विजोयजमानःसदस्याहतत्विषोवामनतेजसानृप ॥ सूर्यःकिलायात्युतवाविभावसुःसनत्कुमारोऽथदिदृक्षयाक्रतोः ॥ २२ ॥



ष्टांतांसभामतिक्रम्यारोचत ॥ १८ ॥ १९ ॥ यदर्थंबटुर्बभूवतदाह श्रुत्वेत्यादियावत्समाप्ति यजमानंयजंतं भृगूणांभृगुभिः उपकल्पितैः प्रवर्त्तितैः अखिलेनसारेणबलेनसंभृतःसंपूर्णः ॥ २० ॥ नर्मदायाउत्तरेतटेभृगुकच्छसंज्ञकेक्षेत्रेक्रतूत्तमंप्रवर्तयंतोबलेःऋत्विजोभृगवस्तेतंव्यचक्षतअपश्यन् आरात्समीपएवोदितंरविमिवेति ऋत्विगादयःसूर्यःकिलेत्येवमादिव्यतर्कयन्निति शेषः ॥ २१ ॥ २२ ॥

हयमेधवाटमश्वमेधमंडपंविवेश ॥ २३ ॥ उपवीताजिनमुपवीतवद्धृतमजिनमेवउत्तरमुत्तरीयंयस्यतं ॥ २४ ॥ संक्षिप्ताअभिभूताःसंतः ॥ २५ ॥ रूपस्यानुरूपाअवयवायस्यतं दृष्ट्वेतिशेषः ॥ २६ ॥ २७ ॥ चंद्रमौलिश्चेत्यन्वयः अप्यर्थेचकारः चंद्रमौलिरपिगंगारूपंय

इत्थंसशिष्येषुभृगुष्वनेकधावितर्क्यमाणोभगवान्सवामनः ॥ सदंडछत्रंसजलंकमंडलुंविवेशाबिभ्रद्धयमेधवाटं ॥ २३ ॥ मौंज्यामेखलयावीतमुपवीताजिनोत्तरं ॥ जटिलंवामनंविप्रंमायामाणवकंहरिं ॥ २४ ॥ प्रविष्टंवीक्ष्यभृगवःसशिष्यास्तेसहाग्निभिः ॥ प्रत्यगृण्हन्समुत्थायसंक्षिप्तास्तस्यतेजसा ॥ २५ ॥ यजमानःप्रमुदितोदर्शनीयंमनोरमं ॥ रूपानुरूपावयवंतस्माआसनमाहरत् ॥ २६ ॥ स्वागतेनाभिनंद्याथपादौभगवतोबलिः ॥ अवनिज्यार्चयामासमुक्तसंगंमनोरमं ॥ २७ ॥ तत्पादशौचंजनकल्मषापहंसधर्मविन्मूर्ध्न्यदधात्सुमंगलं ॥ यद्देवदेवोगिरिशश्चंद्रमौलिर्दधारमूर्ध्नापरयाचभक्त्या ॥ २८ ॥ बलिरुवाच स्वागतंतेनमस्तुभ्यंब्रह्मन्किंकरवामते ॥ ब्रह्मर्षीणांतपःसाक्षान्मन्येत्वार्यवपुर्धरं ॥ २९ ॥ अद्यनःपितरस्तृप्ताअद्यनःपावितंकुलं ॥ अद्यस्विष्टःक्रतुरयंयद्भवानागतोगृहान् ॥ ३० ॥ अद्याग्नयोमेसुहुतायथाविधिद्विजात्मजत्वच्चरणावनेजनैः ॥ हतांहसोवार्भिरियंचभूरहोतथापुनीतातनुभिःपदैस्तव ॥ ३१ ॥ यद्यद्वटोवांछसितत्प्रतीच्छमेत्वामर्थिनंविप्रसुतानुतर्कये ॥ गांकांचनंगुणवद्धाममृष्टंतथान्नपेयमुतवाविप्रकन्यां ॥ ग्रामान्समृद्धांस्तुरगान्गजान्वारथांस्तथाऽर्हत्तमसंप्रतीच्छ ॥ ३२ ॥ इतिश्रीभा०म०अष्टमस्कंधेबलिवामनसंवादेऽष्टादशोध्यायः ॥ १८ ॥

न्मूर्ध्नादधारेत्यर्थः ॥ २८ ॥ हेआर्यत्वात्वां साक्षात्प्रत्यक्षंब्रह्मर्षीणांतपएवमन्ये कथंभूतंतपः वपुर्धरंमूर्तिधारि ॥ २९ ॥ ३० ॥ त्वच्चरणावनेजनैर्वार्भिर्हतमंहोयस्यतस्यमे पुनीतापवित्रीकृता ॥ ३१ ॥ मेमत्तःप्रतीच्छगृहाण हेअर्हत्तमपूज्यतम ॥ ३२ ॥ इतिश्रीभागवते महापुराणेअष्टमस्कंधेटीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ॥

ऊनविंशेतुहरिणायाचितेचपदत्रये ॥ प्रतिश्रुतेचबलिनाजाननूभृगुरवारयत् ॥ १ ॥ दातुःस्तुतिःस्वयंतुष्टिरित्यादिप्रस्तुतोचितं ॥ वक्तव्य मितिभिक्षूंस्तुशिक्षयन्नाहवामनः ॥ २ ॥ १ ॥ वचस्तवैतदितिषोडशभिः हेजनदेवसांपरायेपारलौकिकेधर्मेपितामहश्चप्रऱ्हादःप्रमाणं ॥ ॥ २ ॥ निःसत्वस्यलक्षणंयोद्विजातयेयाचकायप्रत्याख्यातानददामीतिवक्ता कृपणस्यलक्षणंप्रथमंप्रतिश्रुत्ययोवानददातेति ॥ ३ ॥ तीं

श्रीशुकउवाच इतिवैरोचनेर्वाक्यंधर्मयुक्तंससूनृतं ॥ निशम्यभगवान्प्रीतःप्रतिनंद्येदमब्रवीत् ॥१॥ श्रीभगवानुवाच वचस्तवैतज्जनदेवसूनृतंकुलोचितंधर्मयुतंयशस्करं ॥ यस्यप्रमाणंभृगवःसांपरायेपितामहःकुलवृद्धःप्रशांतः ॥ २॥ नह्येतस्मिन्कुलेकश्चिन्निःसत्वःकृपणःपुमान् ॥ प्रत्याख्याताप्रतिश्रुत्ययोवाऽदाताद्विजातये ॥ ३ ॥ नसंतितीर्थेयुधिचार्थिनाऽर्थिताःपराङ्मुखायेत्वमनास्विनोनृपाः ॥ युष्मत्कुलेयद्यशसाऽमलेनप्रऱ्हादउद्भातियथोडुपःखे ॥ ४ ॥ यतोजातोहिरण्याक्षश्चरन्नेकइमांमहीं ॥ प्रतिवीरंदिग्विजयेनाविंदतगदायुधः ॥५॥ यंविनिर्जित्यकृच्छ्रेणविष्णुःक्ष्मोद्धारआगतं ॥ नात्मानंजयिनंमेनेतद्वीर्यंभूर्यनुस्मरन् ॥ ॥ ६ ॥ निशम्यतद्वधंभ्राताहिरण्यकशिपुःपुरा ॥ हंतुंभ्रातृहणंक्रुद्धोजगामनिलयंहरेः ॥ ७ ॥ तमायांतंसमालोक्यशूलपाणिंकृतांतवत् ॥ चिंतयामासकालज्ञोविष्णुर्मायाविनांवरः ॥८॥ यतोयतोहंतत्रासौमृत्युःप्राणभृतामिव ॥ अतोऽहमस्यहृदयंप्रवेक्ष्यामिपराग्दृशः ॥ ९ ॥ एवंसनिश्चित्यरिपोःशरीरमाधावतोनिर्विविशेऽसुरेंद्र ॥ श्वासानिलांतर्हितसूक्ष्मदेहस्तत्प्राणरंध्रेणविविग्नचेताः ॥ १० ॥ सतन्निकेतंपरिमृश्यशून्यमपश्यमानःकुपितोननाद ॥ क्ष्मांद्यांदिशःखंविवरान्समुद्रान्विष्णुंविचिन्वन्नददर्शवीरः ॥ ११ ॥

र्थेदानावसरे यत्र्यस्मिन्युष्मत्कुले ॥ ४ ॥ यतःयस्मिन्जातः ॥ ५ ॥ क्ष्मोद्धारेभूम्याउद्धारेउद्धारणे ॥ ६ ॥ ७ ॥ ८ ॥ पराग्दृशःबहिर्दृष्टेः ॥ ९ ॥ अतोहृदयेस्थितंमांनज्ञास्यतीत्येवंनिश्चित्यश्वासानिलेंऽतर्हितःसूक्ष्मोदेहोयस्य विविग्नमतिकंपितंचेतोयस्य अनुकंपितचित्तइतिवास्तवोऽर्थः ॥ १० ॥ नददर्श अंतःप्रविष्टत्वात् ॥ ११ ॥ ॥ ॥ ॥

पुमान्यतः सकाशान्नावर्ततेतद्वद्वैवनूनंगतोनित्यमुक्तत्वादितिवास्तवोऽर्थः ॥ १२ ॥ कथंनामासौशूरशिरोमणिर्जीवन्नेवकातरवद्वैरमुपेक्षि
तवानित्याशंक्याह वैरानुबंधएतावानामृत्योर्भवति देहिनांदेहेनिगूढाभिमानवतांशूराणांतथाअहंमानेनोपबृंहितोमन्युश्चभवत्येव यतोऽ
ज्ञानप्रभवः अज्ञाननिवृत्तेःप्राक्पौरुषत्यागोमांद्यमेवेत्यर्थः ॥ १३ ॥ तदेवंपूर्वजान्स्तुत्वातत्पितरंस्तौति पितेति द्विजवेषधारिणोमद्वैरि
णोदेवाएतेनतुद्विजाइतिताद्विद्वानपिसयाचितःसन्स्वीयमायुर्देवेभ्योददौ ॥ १४ ॥ १५ ॥ ममपदासंमितानीतित्रिविक्रमपदाभिप्रायेण

अपश्यन्नितिहोवाचमयाऽन्विष्टमिदंजगत् ॥ भ्रातृहामेगतोनूनंयतोनावर्ततेपुमान् ॥१२॥ वैरानुबंधएता
वानामृत्योरिहदेहिनां ॥अज्ञानप्रभवोमन्युरहंमानोपबृंहितः॥१३॥पिताप्रऱ्हादपुत्रस्तेतद्विद्वान्द्विजवत्स
लः॥स्वमायुर्द्विजलिंगेभ्योदेवेभ्योऽदात्सयाचितः॥१४॥ भवानाचरितान्धर्मानास्थितोगृहमेधिभिः॥ ब्राह्म
णैःपूर्वजैःशूरैरन्यैश्चोद्दामकीर्तिभिः॥१५॥ तस्मात्त्वत्तोमहीमीषद्वृणेऽहंवरदर्षभात् ॥पदानित्रीणिदैत्येंद्रसं
मितानिपदामम ॥१६॥ नान्यत्तेकामयेराजन्वदान्याज्जगदीश्वरात् ॥ नैनःप्राप्नोतिवैविद्वान्यावदर्थपरिग्र
हः ॥ १७ ॥ बलिरुवाच अहोब्राह्मणदायादवाचस्तेवृद्धसंमताः ॥ त्वंबालोबालिशमतिःस्वार्थंप्रत्यबुधो
यथा ॥ १८ ॥ मांवचोभिःसमाराध्यलोकानामेकमीश्वरं ॥ पदत्रयंवृणीतेयोऽबुद्धिमान्द्वीपदाशुषं ॥ १९ ॥
नपुमान्मामुपव्रज्यभूयोयाचितुमर्हति ॥ तस्माद्वृत्तिकरींभूमिंबटोकामंप्रतीच्छमे ॥ २० ॥ ॥

नचानृतवादः तत्रापिस्वपदत्वानपगमात् ॥ १६ ॥ यावदर्थमेवपरिग्रहोयस्यसः ॥ १७ ॥ ईश्वरस्यापियाञ्चाप्रकारंचोक्त्वाबलेर्बंध न
प्रश्नोत्तरत्वेनतस्यगर्वातिरेकेणाधिक्षेपप्रकारमाह अहोइतित्रिभिः तेवाचोवृद्धानांसंमतास्त्वंतुबालोबालिशमतिश्च बालिशानामज्ञानामि
वमतिर्यस्य अतएवस्वार्थंप्रतियथावदबुधः वस्तुतस्तुबालइवअबालिशमतिश्चेतिच्छेदः स्वार्थंप्रत्यबुधइतिचभक्तानामेवार्थंबुध्यसेनस्वार्थंप
रिपूर्णस्यतवतद्व्यतिरेकेणस्वार्थाभावादित्यर्थः ॥१८॥ अबुधत्वमेवाह मामिति द्वीपस्यदाशुषंदातारं अबुद्धिमान्वस्तुतस्तुबुद्धिमानित्य
वच्छेदः ॥ १९ ॥ कामंयथेच्छंसम्यक्पादप्रसारणेनेत्यर्थः अतएवतथाकरिष्यतीति ॥ २० ॥ ॥ ॥

पुनरपिनिःस्पृहत्वमेवाविष्कुर्वन्नाह यावंतइतिसप्तभिः ॥ २१ ॥ नववर्षसमेतेनद्वीपेनापि सप्तानांद्वीपवराणामिच्छया ॥ २२ ॥ तृष्णा
याअंतंनगताइत्यस्माभिःश्रुतं ॥ २३ ॥ असंतुष्टस्तुप्राप्तैस्त्रिभिर्लोकैरपिनसुखंवर्तते ॥ २४ ॥ २५ ॥ आशुशुक्षाणिरग्निः ॥ २६ ॥ सि



श्रीभगवानुवाच यावंतोविषयाःप्रेष्ठास्त्रिलोक्यामजितेंद्रियं ॥ नशक्नुवंतितेसर्वेप्रतिपूरयितुंनृप ॥ २१ ॥
त्रिभिःक्रमैरसंतुष्टोद्वीपेनापिनपूर्यते ॥ नववर्षसमेतेनसप्तद्वीपवरेच्छया ॥ २२ ॥ सप्तद्वीपाधिपतयोनृपावै
न्यगयादयः ॥ अर्थकामैर्गतानांतंतृष्णायाइतिनःश्रुतं ॥ २३ ॥ यदृच्छयोपपन्नेनसंतुष्टोवर्ततेसुखं ॥ नासंतु
ष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः ॥ २४ ॥ पुंसोऽयंसंसृतेर्हेतुरसंतोषोऽर्थकामयोः ॥ यदृच्छयोपपन्नेनसं
तोषोमुक्तयेस्मृतः ॥ २५ ॥ यदृच्छालाभतुष्टस्यतेजोविप्रस्यवर्धते ॥ तत्प्रशाम्यत्यसंतोषादंभसेवाशुशुक्ष
णिः ॥ २६ ॥ तस्मात्त्रीणिपदान्येववृणेत्वद्वरदर्षभात् ॥ एतावतैवसिद्धोऽहंवित्तंयावत्प्रयोजनं ॥ २७ ॥ श्री
शुकउवाच इत्युक्तःसहसन्नाहवांछातःप्रतिगृह्यतां ॥ वामनायमहींदातुंजग्राहजलभाजनं ॥ २८ ॥ विष्ण
वेक्ष्मांप्रदास्यंतमुशनाअसुरेश्वरं ॥ जानंश्चिकीर्षितंविष्णोःशिष्यंप्राहविदांवरः ॥ २९ ॥ शुक्राचार्यउवा
च एषवैरोचनेसाक्षाद्भगवान्विष्णुरव्ययः ॥ कश्यपाददितेर्जातोदेवानांकार्यसाधकः ॥ ३० ॥ प्रतिश्रु
तंत्वयैतस्मैयदनर्थमजानता ॥ नसाधुमन्येदैत्यानांमहानुपगतोऽनयः ॥ ३१ ॥ एषतेस्थानमैश्वर्यंश्रियं
तेजोयशःश्रुतं ॥ दास्यत्याच्छिद्यशक्रायमायामाणवकोहरिः ॥ ३२ ॥ त्रिभिःक्रमैरिमाँल्लोकान्विश्वका
यःक्रमिष्यति ॥ सर्वस्वंविष्णवेदत्वामूढवर्तिष्यसेकथं ॥ ३३ ॥ ॥ ॥

द्धोऽहंकृतार्थः एतावतैवसर्वस्वापहारासिद्धेरितिगूढोऽभिप्रायः तदेवाह वित्तंहियावत्प्रयोजनमेव अधिकस्यक्लेशावहत्वादित्यर्थः ॥ २७ ॥
॥ २८ ॥ २९ ॥ ३० ॥ अनयःअन्यायः ॥ ३१ ॥ अन्यायमेवाह एषइति ॥ ३२ ॥ ननुमयापदत्रयमेवप्रतिश्रुतंप्रतिज्ञातंनाधिकं तत्रा
ह त्रिभिरिति क्रमतामितिचेत्तत्राह सर्वस्वमिति ॥ ३३ ॥ ॥ ॥ ॥

तथाऽपिप्रतिश्रुतंसंपादनीयमेवेतिचेत्तत्राह क्रमतइतिद्वाभ्यां एकेनपदापादन्यासेनभूमिंक्रममाणस्येत्यर्थः तार्तीयस्यतृतीयपादन्यासस्य ॥
॥ ३४ ॥ ३५ ॥ तथाऽपिसर्वस्वदानात्कीर्तिस्तावद्भविष्यतीतिचेत्तत्राह नतद्दानमिति तपश्चित्तैकाग्र्यं कर्मपूर्त्तं ॥ ३६ ॥ ३७ ॥ ननु
तर्हिप्रतिश्रुत्यनेतिकथमनृतंवाच्यंतत्राह सार्धैःषड्भिः अत्रापिसत्यानृतव्यवस्थायांबह्वृचश्रुत्याहिप्रथममोमितिसत्यंनेत्यनृतमित्यादिनासत्यानृ
तयोर्लक्षणपूर्वकंस्तुतिनिंदाभ्यांसत्यंविहितमनृतंचनिषिद्धं अनंतरंचपराग्वाएतद्रिक्तमक्षरमित्यादिनासत्येदोषाननृतेचगुणानुक्कातस्मात्का

क्रमतोगांपदैकेनद्वितीयेनदिवंविभोः ॥ खंचकायेनमहतातार्तीयस्यकुतोगतिः ॥ ३४ ॥ निष्ठांतेनरकेमन्ये
ह्यप्रदातुःप्रतिश्रुतं ॥ प्रतिश्रुतस्ययोऽनीशःप्रतिपादयितुंभवान् ॥ ३५ ॥ नतद्दानंप्रशंसंतियेनवृत्तिर्विपद्यते ॥
दानंयज्ञस्तपःकर्मलोकेवृत्तिमतोयतः ॥ ३६ ॥ धर्मायायशसेऽर्थायकामायस्वजनायच ॥ पंचधाविभजन्वि
त्तमिहामुत्रचमोदते ॥ ३७ ॥ अत्रापिबह्वृचैर्गीतंशृणुमेऽसुरसत्तम ॥ सत्यमोमितियत्प्रोक्तंयन्नेत्याहानृतं
हितत् ॥ ३८ ॥ सत्यंपुष्पफलंविद्यादात्मवृक्षस्यगीयते ॥ वृक्षेऽजीवतितन्नस्यादनृतंमूलमात्मनः ॥ ३९ ॥

लेएवदद्यात्कालेनदद्यात्तत्सत्यानृतेमिथुनीकरोतीत्युपसंहारेणवृत्तिसंकटादिष्वनृतमप्यनुज्ञातं तामिमंश्रुत्यर्थंदर्शयन्नाहओमित्यंगीकारेणय
त्प्रोक्तंतत्सत्यं नेतियदाहतदेवानृतं ॥ ३८ ॥ तत्तुसत्यमीषदनृतंविनानसिद्ध्यतीत्याशयेनाह सत्यंपुष्पफलंविद्यात्जानीयात् आत्मवृक्ष
स्यदेहरूपस्यवृक्षस्य गीयतेश्रुत्योच्यतेइत्यर्थः पाठांतरंतुसुगमं यद्यपिश्रुत्यावाचःसत्यंपुष्पफलंचेत्युक्तंतथापिवाचोदेहनिर्वाहाधीनत्वा
दात्मवृक्षस्येतिप्रस्तुतानुसारेणोक्तं भवतुपुष्पफलस्थानीयंसत्यंततःकिमतआह वृक्षेदेहेऽजीवतितत्पुष्पफलंनस्यात् सानस्यादितिपाठे
श्रुत्युक्तायावाचःपरामर्शः देहश्चानृतेनरक्षणीयइत्याह अनृतंत्वात्मनोदेहस्यमूलं ॥ ३९ ॥ ॥ ॥

एतदेवदृष्टांतेनस्पष्टयति तद्यथावृक्षउत्पाटितमूलःशुष्यत्यचिरादेवोद्वर्ततेपततिच एवंनष्टमनृतंयस्यसआत्मादेहःशुष्येत् यद्यपिचश्रुत्या एवमेवानृतंवदन्नात्मानमाविर्मूलंकरोतीत्येवंनिंदयाअनृतंनिषिद्धंतथाप्युपसंहारानुसारेणतत्केवलानृतविषयमित्यभिप्रेत्यएवंव्याख्यातंदये तत्वेतेनेतिचतथैवोक्तेः तथाचश्रुतिः ओमितिसत्यंनेत्यनृतंतदेतत्पुष्पंफलंवाचोयत्सत्यंसहेश्वरोयशस्वीकल्याणकीर्तिर्भवितापुष्पंहिफलं वाचःसत्यंवदत्यथैतन्मूलंवाचोयदनृतंतद्यथावृक्षआविर्मूलःशुष्यतिसउद्वर्ततएवमेवानृतंवदन्नाविर्मूलमात्मानंकरोतिसशुष्यतिसउद्वर्ततेत स्मादनृतंनवदेद्दयेतत्वेतेनेति एतेनअनेनत्वनृतेनदयेतसंकटेष्वात्मानंरक्षेदितिश्रुत्यर्थः ॥ ४० ॥ सर्वथासत्यवचनेदेहोननिर्वहेदितिस्फु टीकर्तुंसत्यस्यदोषाननृतस्यगुणानाह परागितिद्वाभ्यां यदोमित्यक्षरंतत्पराक्दूरेअर्थंगृहीत्वांऽचरतीतिपराक् रिक्तमितिश्रुतिपदस्यव्या ख्यानमपूर्णंवैइति तत्तस्मात्अर्थिनोयत्किंचिदोमितिब्रूयात्तेनरिच्येतन्यूनोभवेत् किंच भिक्षवेसर्वमोंकुर्वन्दास्यामीत्यंगीकुर्वन्नात्मनेका

तद्यथावृक्षउन्मूलःशुष्यत्युद्वर्ततेचिरात् ॥ एवंनष्टानृतःसद्यआत्माशुष्येन्नसंशयः ॥ ४० ॥ पराग्रिक्तम पूर्णंवाअक्षरंयत्तदोमिति ॥ यत्किंचिदोमितिब्रूयात्तेनरिच्येतवैपुमान् ॥ ४१ ॥ भिक्षवेसर्वमोंकुर्वन्नालंका मेनचात्मने ॥ अथैतत्पूर्णमभ्यात्मंयच्चनेत्यनृतंवचः ॥ ४२ ॥ सर्वंनेत्यनृतंब्रूयात्सदुष्कीर्तिःश्वसन्मृतः ॥ स्त्रीषुनर्मविवाहेचवृत्त्यर्थेप्राणसंकटे ॥ गोब्राह्मणार्थेहिंसायांनानृतंस्याज्जुगुप्सितं ॥ ४३ ॥ इतिश्रीभा गवतेमहापुराणेअष्टमस्कंधेवामनप्रादुर्भावेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥

मेननालंपर्याप्तोनभवति तस्यभोगोनसिद्ध्यतीत्यर्थः तथाचश्रुतिः पराग्वाएतद्रिक्तमक्षरंयदेतदोमितितद्यत्किंचोमित्याहात्रैवारमैताद्रिच्य तेसयत्ससर्वमोंकुर्याद्रिच्यादात्मानंसकामेभ्योनालंस्यादिति ॥ ४१ ॥ नेतियदनृतंवच एतत्पूर्णं अर्थव्ययाभावात् अभ्यात्मंचेतिचका रान्वयः आत्मनोभिमुखमन्यस्यार्थमाकर्षतीत्यभ्यात्मं योहिनित्यंममकिंचिदपिनास्तिसीदामीतिब्रूतेसहितेनानृतेनपरेषामर्थानाकर्षतीति प्रसिद्धं ॥ ४२ ॥ ननुतर्हिइदमनृतमेवसर्वदासेव्यंस्यान्नेत्याह सर्वमिति तथाचश्रुतिः अथैतत्पूर्णमभ्यात्मंयन्नेतिसयत्सर्वंनेतिब्रूयात्पापि काऽस्यकीर्तिर्जायेतसैनंतत्रैवहन्यादिति अतोवृत्तिसंकटादिष्वनृतंनदोषायेत्युपसंहरति स्त्रीषुप्रोत्साहनेनवशीकरणे नर्मणिपरिहासे वि वाहेचवरादिस्तुतौ गवांब्राह्मणानांचहितार्थं हिंसायांचकस्यचित्प्राप्तायां तथाचयाज्ञवल्क्यः वर्णिनांहिवधोयत्रतत्रसाक्ष्यनृतंवदेदिति तथाचश्रुतिः तस्मात्कालएवदद्यात्कालेनदद्यात्तत्सत्यानृतेमिथुनीकरोतीति ॥ ४३ ॥ इत्यष्टमेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥

विशेत्वनृतभीतोसौज्ञात्वाऽपिकपटंहरेः ॥ ददावेवततोविष्णुःसहसावर्धताद्भुतं ॥ १ ॥ १ ॥ भगवतात्वयाप्रोक्तंसत्यं किंतत् योऽर्थका मादिकंनबाधेतसहिगृहमेधिनांधर्मइति ॥ २ ॥ कथंप्रत्याचक्षेनिराकरोमि ॥ ३ ॥ ४ ॥ नन्वप्रत्याख्यानेदोषाउक्तास्तत्राह नाहमिति अ धन्यात्दारिद्र्यात्मृत्योरपि ॥ ५ ॥ यद्यद्धनादिकंतत्सर्वंसंपरेतंपुरुषंहास्यातित्यक्ष्यत्येव तर्हिकिमितिर्जीवतैवस्वयंनदेयमितिभावः तथाऽ पितावद्वृत्तिसंकटपरिहारार्थमधंदीयतामितिचेत्तत्राह तस्योति विप्रश्चेत्तेनार्थेनदत्तेनापिनतुष्येत्तर्हितस्यार्थस्यत्यागेदानेकिंनिमित्तंनार्किंचित् याचितादल्पस्यदानेविप्रस्यासंतोषेणदानंव्यर्थमेवस्यादतस्तद्याचितंसर्वंदेयंनार्किंचिदितिभावः ॥ ६ ॥ तर्हिनदेयमेवेतिचेत्तत्राह श्रेयइति

श्रीशुकउवाच बलिरेवंगृहपतिःकुलाचार्येणभाषितः ॥ तूष्णींभूत्वाक्षणंराजन्नुवाचावहितोगुरुं ॥ १ ॥ बलिरुवाच सत्यंभगवताप्रोक्तंधर्मोऽयंगृहमेधिनां ॥ अर्थंकामंयशोवृत्तिंयोनबाधेतकर्हिचित् ॥ २ ॥ सचाहं वित्तलोभेनप्रत्याचक्षेकथंद्विजं ॥ प्रतिश्रुत्यददामीतिप्राह्लादिःकितवोयथा ॥ ३ ॥ नह्यसत्यात्परोऽधर्मइति होवाचभूरियं ॥ सर्वंसोढुमलंमन्येऋतेऽलीकपरंनरं ॥ ४ ॥ नाहंबिभेमिनिरयान्नाधन्यादसुखार्णवात् ॥ नस्थानच्यवनान्मृत्योर्यथाविप्रप्रलंभनात् ॥ ५ ॥ यद्यद्धास्यतिलोकेऽस्मिन्संपरेतंधनादिकं ॥ तस्यत्यागेनिमित्तंकिंविप्रस्तुष्येन्नतेनचेत् ॥ ६ ॥ श्रेयःकुर्वंतिभूतानांसाधवोदुस्त्यजासुभिः ॥ दध्यङ्शिबिप्रभृतयःकोविकल्पोधरादिषु ॥ ७ ॥ यैरियंबुभुजेब्रह्मन्दैत्येंद्रैरनिवर्तिभिः ॥ तेषांकालोऽग्रसील्लोकान्नयशोऽधिगतंभुवि ॥ ८ ॥ सुलभायुधिविप्रर्षेह्यनिवृत्तास्तनुत्यजः ॥ नतथातीर्थआयातेश्रद्धयायेधनत्यजः ॥ ९ ॥ मनस्विनःकारुणिकस्यशोभनंयदर्थिकामोपनयेनदुर्गतिः ॥ कुतःपुनर्ब्रह्मविदांभवादृशांततोबटोरस्यददामिवांछितं ॥ १० ॥

दुस्त्यजैसुरभिरपिकोविकल्पोविचारः ॥ ७ ॥ यैर्दैत्येंद्रैर्युद्धेअनिवर्तिभिरियंभूर्बुभुजेउपभुक्ता तेषामिहलोकान्परलोकांश्चभोगानितिवा कालोऽग्रसीत्संहृतवान्नतुभुवितैराधिगतंप्राप्तंयशोग्रसीत् अतःकीर्तिरेवसाध्यानान्यदितिभावः ॥ ८ ॥ देहत्यागादपिधनत्यागेकीर्तिर्भवतीत्याह सुलभाइतितनुंत्यजंतीतितनुत्यजः तीर्थेपात्रे अतोऽतिदुष्करोधनत्यागएवमयाकार्यइतिभावः ॥ ९ ॥ तर्हिनिर्धनत्वेनदैन्यं स्यादितिचेत्तत्राह मनस्विनइति यादृशतादृशानामप्यर्थिनांकामोपनयेनकामपूरणेनदुर्गतिर्दैन्यमितियत्तच्छोभनंभद्रमेव भवादृशानांतुकामोपनयेनदुर्गतिःशोभनामितिकिंपुनर्वक्तव्यमित्यर्थः ॥ १० ॥ ॥ ॥

ननुनायंबटुःकिंतुविष्णुस्तवशत्रुरित्युक्तंतर्हिसुरामेवदास्यामीत्याह यजंतीति परःशत्रुर्वास्तु ॥ ११ ॥ १२ ॥ यद्यपियशोनजिहासतितर्हि युद्धेऽयंमांहत्वाएनांभूमिंहरेत् शयीतवा सम्यक्ज्ञातःसन्ममचित्तेशयीतेतिवास्तवोर्थः ॥ १३ ॥ अश्रद्धितमजातश्रद्धं ॥ १४ ॥ १५ ॥



यजंतियज्ञक्रतुभिर्यमादृताभवंतआम्नायविधानकोविदाः॥सएवविष्णुर्वरदोऽस्तुवापरोदास्याम्यमुष्मैक्षितिमीप्सितांमुने ॥११॥ यद्यप्यसावधर्मेणमांबध्नीयादनागसं॥तथाप्येनंनहिंसिष्येभीतंब्रह्मतनुंरिपुं॥१२॥ एषवाउत्तमश्लोकोनजिहासतियद्यशः ॥ हत्वामैनांहरेद्युद्धेशयीतनिहतोमया ॥ १३ ॥ ॥ श्रीशुकउवाच एवमश्रद्धितंशिष्यमनादेशकरंगुरुः ॥ शशापदैवप्रहितःसत्यसंधंमनस्विनं ॥ १४ ॥ दृढंपंडितमान्यज्ञःस्तब्धोऽस्यस्मदुपेक्षया ॥ मच्छासनातिगोयस्त्वमचिराद्भ्रश्यसेश्रियः ॥१५॥ एवंशप्तःस्वगुरुणासत्यान्नचलितोमहान् ॥ वामनायददावेनामर्चित्वोदकपूर्वकं ॥ १६ ॥ विंध्यावलिस्तदागत्यपत्नीजालकमालिनी॥आनिन्येकलशंहैममवनेजन्यपांभृतं ॥१७॥ यजमानःस्वयंतस्यश्रीमत्पादयुगंमुदा ॥ अवनिज्यावहन्मूर्ध्नितदपोविश्वपावनीः ॥ १८ ॥ तदाऽसुरेंद्रंदिविदेवतागणागंधर्वविद्याधरसिद्धचारणाः ॥ तत्कर्मसर्वेपिगृणंतआर्जवंप्रसूनवर्षैर्ववृषुर्मुदाऽन्विताः॥१९॥ नेदुर्मुहुर्दुंदुभयःसहस्रशोगंधर्वकिंपूरुषकिन्नराजगुः॥ मनस्विनाऽनेनकृतंसुदुष्करंविद्वानदाद्यद्रिपवेजगत्त्रयं ॥ २० ॥ तद्वामनंरूपमवर्धताद्भुतंहरेरनंतस्यगुणत्रयात्मकं ॥ भूःखंदिशोद्योर्विवराःपयोधयस्तिर्यङ्नृदेवाऋषयोयदासत ॥ २१ ॥ कायेबलिस्तस्यमहाविभूतेःसहर्त्विगाचार्यसदस्यएतत् ॥ ददर्शविश्वंत्रिगुणंगुणात्मकेभूतेंद्रियार्थाशयजीवयुक्तं ॥ २२ ॥ ॥

॥ १६ ॥ जालकंमुक्ताभरणविशेषस्तन्मालावती अवनेजनीनामपांकलशंभृतंपूर्णं ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अवर्धत वांछातःप्रतिगृह्यतामितिबलिनापूर्वमुक्तत्वात् गुणत्रयमात्मानियस्यतत् अतएवभूःखमित्यादयोयद्यस्मिन्आसतस्थितवंतः ॥ २१ ॥ ऋत्विगादिसहितोबलिस्तस्यहरेःकायेएतद्विश्वंददर्श ॥ २२ ॥ ॥ ॥ ॥

तदेवप्रपंचयति रसामितिपादोनैःसप्तभिः मारुतंगणंवायुसंघं इंद्रस्यसेनेवसेनायस्यसः इंद्रपदेस्थितत्वात् अचष्टऐक्षत ॥ २३ ॥ आत्मास्वंबलिर्मुख्योयेषांतान् ऋक्षमालांनक्षत्रपंक्तिं ॥ २४ ॥ अंगहेराजन् समस्तान्रेफान्चशब्दान् ॥ २५ ॥ द्यौश्चद्यांच ॥ २६ ॥ र

रसामचष्टांघ्रितलेऽथपादयोर्महींमहीध्रान्पुरुषस्यजंघयोः ॥ पतत्रिणोजानुनिविश्वमूर्तेरूर्वोर्गणंमारुतमिंद्रसेनः ॥ २३ ॥ संध्यांविभोर्वाससिगुह्यऐक्षत्प्रजापतीन्जघनेआत्ममुख्यान् ॥ नाभ्यांनभःकुक्षिषुसप्तसिंधूनुरुक्रमस्योरसिचर्क्षमालां ॥ २४ ॥ हृद्यंगधर्मंस्तनयोर्मुरारेर्ऋतंचसत्यंचमनस्यथेंदुं ॥ श्रियंचवक्षस्यरविंदहस्तांकंठेचसामानिसमस्तरेफान् ॥ २५ ॥ इंद्रप्रधानानमरान्भुजेषुतत्कर्णयोःककुभोद्यौश्चमूर्ध्नि ॥ केशेषुमेघान्श्वसनंनासिकायामक्ष्णोश्चसूर्यंवदनेचवन्हिं ॥ २६ ॥ वाण्यांचछंदांसिरसेजलेशंभ्रुवोर्निषेधंचविधिंचपक्ष्मसु ॥ अहश्चरात्रिंचपरस्यपुंसोमन्युंललाटेधरएवलोभं ॥ २७ ॥ स्पर्शेचकामंनृपरेतसोंऽभः पृष्ठेत्वधर्मंक्रमणेषुयज्ञं ॥ छायासुमृत्युंहसितेचमायांतनूरुहेष्वोषधिजातयश्च ॥ २८ ॥ नदीश्चनाडीषुशिलानखेषुबुद्धावजंदेवगणानृषींश्च ॥ प्राणेषुगात्रेस्थिरजंगमानिसर्वाणिभूतानिददर्शवीरः ॥ २९ ॥ सर्वात्मनीदंभुवनंनिरीक्ष्यसर्वेऽसुराःकश्मलमापुरंग॥सुदर्शनंचक्रमसह्यतेजोधनुश्चशार्ङ्गंस्तनयित्नुघोषं॥३०॥ कौमोदकीविष्णुगदातरस्विनीविद्याधरोऽसिःशतचंद्रयुक्तः ॥ तूणोत्तमावक्षयसायकौचसुनंदमुख्याउपतस्थुरीशं ॥ ३१ ॥ स्फुरत्किरीटांगदमीनकुंडलःश्रीवत्सरत्नोत्तममेखलांबरैः ॥ मधुव्रतस्त्रग्वनमालयावृतोरराजराजन्भगवानुरुक्रमः ॥ ३२ ॥ ॥ ॥ ॥

सेरसने ॥ २७ ॥ रेतसोरेतासि क्रमणेषुपादन्यासेषुओषधिजातयः ओषधिजातीः ॥ २८ ॥ प्राणेषुइंद्रियेषु ॥ २९ ॥ सर्वात्मनित्यादि वाक्यांतरं सुदर्शनमित्यादीनामीशमुपतस्थुरित्युत्तरेणान्वयः ॥ ३० ॥ विद्याधरसंज्ञोसिः ॥ ३१ ॥ मीनकुंडलेमकरकुंडले स्फुरंतिकिरीटादीनियस्यसः मधुव्रतानांस्त्रजोयस्यांतयावनमालायाश्रीवत्सादिभिश्चावृतोभ्यात्मः ॥ ३२ ॥ ॥

उरुक्रमत्वमेवाह क्षितिमिति द्वितीयंपदंक्रमतोविक्षिपतस्त्रिविष्टपंतदीयंकिंचिन्मात्रंजातं तृतीयायतुनकिंचिदपि तत्रहेतुः उरुक्रमस्यांघ्रिः त्रिविष्टपादुपर्युपरिगच्छन्महर्जनाभ्यांतपसश्चपरंगतःसत्यलोकंगतइति ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेटीकायांविंशोध्यायः ॥ २० ॥ ॥ एकविंशेपदापूर्तिमिषेणबलिबंधनं ॥ विष्णुनाकृतमुत्कर्षंतस्यप्रथयितुंजने ॥ १ ॥ उरुक्रमस्यांघ्रिस्तपसःपरंगतइत्युक्तंततःकिंवृत्तंतदाह सत्यंसत्यलोकंप्राप्तंतमांघ्रिंसमीक्ष्याब्जभवोऽभ्यगात्तथामरीचिमिश्राऋषयश्चेतिद्वयोरन्वयः कथंभूतोब्जभवःहरेरंघ्रेर्न

क्षितिंपदैकेनबलेर्विचक्रमेनभःशरीरेणदिशश्चबाहुभिः ॥ पदंद्वितीयंक्रमतस्त्रिविष्टपंनवैतृतीयायतदीयमण्वपि ॥ उरुक्रमस्यांघ्रिरुपर्युपर्यथोमहर्जनाभ्यांतपसःपरंगतः ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेविश्वरूपदर्शनंनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ श्रीशुकउवाच सत्यंसमीक्ष्याब्जभवोनखेंदुभिर्हतस्वधामद्युतिरावृतोभ्यगात् ॥ मरीचिमिश्राऋषयोबृहद्व्रताःसनंदनाद्यानरदेवयोगिनः ॥१॥ वेदोपवेदानियमान्वितायमास्तर्केतिहासांगपुराणसंहिताः ॥ येचापरेयोगसमीरदीपितज्ञानाग्निनारंधितकर्मकल्मषाः ॥ ववंदिरेयत्स्मरणानुभावतःस्वायंभुवंधामगताअकर्मकं ॥ २ ॥ अथांघ्रयेप्रोन्नमितायविष्णोरुपाहरत्पद्मभवोऽर्हणोदकं ॥ समर्च्यभक्त्याऽभ्यगृणाच्छुचिश्रवायन्नाभिपंकेरुहसंभवःस्वयं ॥ ३ ॥ धातुःकमंडलुजलंतदुरुक्रमस्यपादावनेजनपवित्रतयानरेंद्र ॥ स्वर्धुन्यभून्नभसिसापततीनिमार्ष्टिलोकत्रयंभगवतोविशदेवकीर्तिः ॥ ४ ॥ ॥ ॥ ॥

खाएवेंदवस्तैर्हतास्वधाम्नोद्युतिर्यस्यसः स्वयंचतैरावृतश्छन्नः हेनरदेव बृहद्व्रतायोगिनश्च ॥ १ ॥ अंगानिशिक्षादीनि पुराणानितत्संहिताश्च योगएवसमीरस्तेनदीपितंज्ञानमेवाग्निस्तेनरंधितंदग्धंकर्मकल्मषंकर्ममलंयेषांतेचसर्वेतमांघ्रिंववंदिरे यस्यांघ्रेःस्मरणानुभावतः अकर्मकंकर्मभिरप्राप्यं ॥ २ ॥ विष्णोरंघ्रये स्वयंयस्यनाभिपंकेरुहसंभवस्तस्यविष्णोरंघ्रिंसमर्च्य ॥ ३ ॥ लोकत्रयंनिमार्ष्टिपवित्रयति ॥ ४ ॥

संक्षिप्ताउपसंहृताआत्मविभूतिःस्वविस्तारोयेनतस्मै यथापूर्ववामनरूपेणस्थितायेत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ त्रिपदाविषयायाव्याजयाञ्चा

ब्रह्मादयोलोकनाथाःस्वनाथायसमादृताः ॥ सानुगाबलिमाजन्हुःसंक्षिप्तात्मविभूतये ॥ ५ ॥ तोयैःसमर्ह
णैःस्रग्भिर्दिव्यगंधानुलेपनैः ॥ धूपैर्दीपैःसुरभिभिर्लाजाक्षतफलांकुरैः ॥ ६ ॥ स्तवनैर्जयशब्दैश्वतद्वीर्यम
हिमांकितैः॥ नृत्यवादित्रगीतैश्वशंखदुंदुभिनिःस्वनैः ॥ ७ ॥ जांबवानृक्षराजस्तुभेरशिब्दैर्मनोजवः ॥ विज
यंदिक्षुसर्वासुमहोत्सवमघोषयत् ॥ ८॥ महींसर्वांहृतांदृष्ट्वात्रिपदव्याजयाञ्चया ॥ ऊचुःस्वभर्तुरसुरादीक्षि
तस्यात्यमर्षिताः ॥ ९ ॥ नवाअयंब्रह्मबंधुर्विष्णुर्मायाविनांवरः ॥ द्विजरूपप्रतिच्छन्नोदेवकार्यंचिकीर्षति ॥
॥ १० ॥ अनेनयाचमानेनशत्रुणाबटुरूपिणा ॥ सर्वस्वंनोहृतंभर्तुर्न्यस्तदंडस्यबार्हिषि ॥ ११ ॥ सत्यव्रतस्यस
ततंदीक्षितस्यविशेषतः ॥ नानृतंभाषितंशक्यंब्रह्मण्यस्यदयावतः ॥ १२ ॥ तस्मादस्यवधोधर्मोभर्तुःशुश्रूष
णंचनः ॥ इत्यायुधानिजगृहुर्बलेरनुचराऽसुराः ॥ १३ ॥ तेसर्वेवामनंहंतुंशूलपट्टिशपाणयः ॥ अनिच्छतोब
लेराजन्प्राद्रवन्जातमन्यवः ॥ १४ ॥ तानभिद्रवतोदृष्ट्वादितिजानीकपान्नृप ॥ प्रहस्यानुचराविष्णोः
प्रत्यषेधन्नुदायुधाः ॥ १५ ॥ नंदःसुनंदोऽथजयोविजयःप्रबलोबलः ॥ कुमुदःकुमुदाक्षश्वविष्वक्सेनःपत
त्रिराट् ॥ १६ ॥ जयंतःश्रुतदेवश्वपुष्पदंतोऽथसात्वतः ॥ सर्वेनागायुतप्राणाश्वमूंतेजघ्नुरासुरीं ॥ १७ ॥
हन्यमानान्स्वकान्दृष्ट्वापुरुषानुचरैर्बलिः ॥ वारयामाससंरब्धान्काव्यशापमनुस्मरन् ॥ १८ ॥ हेविप्र
चित्तेहेराहोहेनेमेश्रूयतांवचः ॥ मायुद्ध्यतनिवर्तध्वंननःकालोयमर्थकृत् ॥ १९ ॥ यःप्रभुःसर्वभूतानांसुख
दुःखोपपत्तये ॥ तंनातिवर्तितुंदैत्याःपौरुषैरीश्वरःपुमान् ॥ २० ॥ ॥ ॥ ॥

कपटयाश्वातयास्वभर्तुर्बलेर्महींहृतांदृष्ट्वाअमार्षिताःसंतऊचुः ॥ ९ ॥ किमूचुस्तदाह नवैइतिसार्धैस्त्रिभिः ॥ १० ॥ ११ ॥ १२ ॥ अनुचराश्वते
असुराश्व ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अर्थकृत्अनुकूलः ॥ १९ ॥ पौरुषैस्तंकालमतिवर्तितुंपुमानीश्वरःसमर्थोनभवति ॥ २० ॥

॥ २१ ॥ २२ ॥ हरेरनुचरादेवाः दैवेनऋद्धैःसमृद्धैर्भवद्भिः ॥ २३ ॥ अर्थत्वायआनुकूल्याय ॥ २४ ॥ २५ ॥ विपुपक्षिपुराजतइति विराट् प्रभोश्चिकीर्षितंज्ञात्वा अयमर्थः अस्यसर्वस्वापहारेणममेत्यभिमानंसंत्याज्येदानींदेहस्वीकारेणाहंकारमपित्याजयित्वा परमानुग्रहं कर्तुमिच्छति नचानेनतुल्योऽन्यःकोपिसत्यसंधोधीरोवाऽस्तीतितद्यशःप्रख्यापनार्थंकिंचित्पातयितुमपीच्छतीतिप्रभोरभिप्रायंज्ञात्वातंब





योनोभवायप्रागासीदभवायदिवौकसां ॥ सएवभगवानद्यवर्ततेतद्विपर्ययं ॥ २१ ॥ बलेनसचिवैर्बुद्ध्यादुर्गैर्मंत्रौषधादिभिः ॥ सामादिभिरुपायैश्चकालंनात्येतिवैजनः ॥ २२ ॥ भवद्भिर्निर्जिताह्येतेबहुशोनुचराहरेः ॥ दैवेनर्द्धैस्तएवाद्ययुधिजित्वानदंतिनः ॥ २३ ॥ एतान्वयंविजेष्यामोयदिदैवंप्रसीदति ॥ तस्मात्कालंप्रतीक्षध्वंयोनोऽर्थत्वायकल्पते ॥ २४ ॥ श्रीशुकउवाच पत्युर्निगदितंश्रुत्वादैत्यदानवयूथपाः ॥ रसांनिर्विविशूराजन्विष्णुपार्षदताडिताः ॥ २५ ॥ अथतार्क्ष्यसुतोज्ञात्वाविराट्प्रभुचिकीर्षितं ॥ बबंधवारुणैःपाशैर्बलिंसौत्येऽहनिक्रतौ ॥ २६ ॥ हाहाकारोमहानासीद्रोदस्योःसर्वतोदिशं ॥ गृह्यमाणेऽसुरपतौविष्णुनाप्रभविष्णुना ॥ २७ ॥ तंबद्धंवारुणैःपाशैर्भगवानाहवामनः ॥ नष्टश्रियंस्थिरप्रज्ञमुदारयशसंनृप ॥ २८ ॥ पदानित्रीणिदत्तानिभूमेर्मह्यंत्वयाऽसुर ॥ द्वाभ्यांक्रांतामहीसर्वातृतीयमुपकल्पय ॥ २९ ॥ यावत्तपत्यसौगोभिर्यावदिंदुःसहोडुभिः ॥ यावद्वर्षतिपर्जन्यस्तावतीभूरियंतव ॥ ३० ॥ पदैकेनमयाक्रांतोभूर्लोकःखंदिशस्तनोः ॥ स्वर्लोकस्तुद्वितीयेनपश्यतस्तेस्वमात्मना ॥ ३१ ॥ प्रतिश्रुतमदातुस्तेनिरयेवासइष्यते ॥ विशत्वंनिरयंतस्माद्गुरुणाचानुमोदितः ॥ ३२ ॥ ॥ ॥ ॥



बंधेति सौत्येऽहनिसोमाभिषवादिने ॥ २६ ॥ रोदस्योःद्यावापृथिव्योः ॥ २७ ॥ २८ ॥ २९ ॥ असौसूर्यः ॥ ३० ॥ मयाआत्मनेत्यन्वयः व्यापिनेत्यर्थः खंचदिशश्च तनोःतन्वा तेस्वंत्वदीयंसर्वस्वं ॥ ३१ ॥ गुरुणाशुक्रेणानुमोदितःसन् ॥ ३२ ॥ ॥ ॥

एवमुक्तेपिनिरयपरिहारार्थंस्वर्गाद्भ्रंशपरिहारार्थंचमनोरथंकुर्वंतंप्रत्याह वृथेति यःप्रतिश्रुतस्यअदानेनयाचकंविप्रलंभतेतस्यमनोरथोवृथैव
स्वर्गश्चतस्यदूरएव सचाधःपतत्येव ॥ ३३ ॥ त्वयाचाहंविप्रलब्धस्तस्मादलीकफलंनिरयंभुंक्ष्वेत्यर्थः ॥ ३४ ॥ इत्यष्टमस्कंधेटीकायामेक
विंशोऽध्यायः ॥ २१ ॥ द्वाविंशेतुप्रसन्नःसन्प्रस्थाप्यसुतलंबलिं ॥ दत्वावरान्हरिर्न्यूनंमत्वातद्द्वारपोऽभवत् ॥ १ ॥ समर्पिततनूवित्तानि
र्मलाचलभक्तितः ॥ छलितोबलिनाचित्रंस्वमेवार्पयदच्युतः ॥ २ ॥ विप्रकृतःअपकृतः भिद्यमानःसत्वाच्चाल्यमानः ॥ १ ॥ हेउत्तमश्लोके
तिकटाक्षः ममवचईरितंप्रतिश्रुतंनतावद्व्यलीकं त्वयाकपटेनवामनतयाभिक्षित्वारूपांतरस्याविष्कृतत्वात् एवमपियदिभवान्व्यलीकं

वृथामनोरथस्तस्यदूरेस्वर्गःपतत्यधः ॥ प्रतिश्रुतस्यादानेनयोऽर्थिनंविप्रलंभते ॥३३॥ विप्रलब्धोददा
मीतित्वयाऽहंचाढ्यमानिना ॥ तद्व्यलीकफलंभुंक्ष्वनिरयंकतिचित्समाः ॥ ३४ ॥ इतिश्रीभागवतेमहापुरा
णेअष्टमस्कंधेबलिनिग्रहोनामएकविंशोऽध्यायः ॥२१॥ ॥ ॥ श्रीशुकउवाच एवंविप्रकृतोराजन्बलि
र्भगवताऽसुरः ॥ भिद्यमानोऽप्यभिन्नात्माप्रत्याहाविक्लवंवचः ॥१॥ बलिरुवाच यद्युत्तमश्लोकभवान्म
मेरितंवचोव्यलीकंसुरवर्यमन्यते ॥ करोम्यृतंतन्नभवेत्प्रलंभनंपदंतृतीयंकुरुशीर्ष्णिमेनिजं ॥ २ ॥ बिभेमि
नाहंनिरयात्पदच्युतोनपाशबंधाद्व्यसनाद्दुरत्ययात् ॥ नैवार्थकृच्छ्राद्भवतोविनिग्रहादसाधुवादाद्भृशमुद्विजे
यथा ॥ ३ ॥ पुंसांश्लाघ्यतरंमन्येदंडमर्हत्तमार्पितं ॥ यंनमातापिताभ्रातासुहृदश्चादिशंतिहि ॥ ४ ॥

मन्यतेतथाऽपिकृतमेवाहंकरोमि मदुक्तंविप्रलंभनंनभवतु मेशीर्ष्णिनिजंतृतीयंपदंकुरु नचद्वाभ्यांविश्वंक्रांतवतस्तवमेशिरःपादपर्याप्तंनभ
वतीतिमन्येथाः वित्तेनचेत्पदद्वयंजातंतर्हिदमधिकमेवस्यात् वित्तादपिवित्तवतोऽधिकत्वादितिभावः ॥ २ ॥ ननुच आपदर्थेधनंरक्षेद्दारान्
रक्षेद्धनैरपि ॥ आत्मानंसततंरक्षेद्दारैरपिधनैरपिइत्यादिवचनादात्मभयपरिहारायसर्वस्वंत्यज्यतेत्वंतुकुतोभीतःसन्नात्मानमर्पयसिअतआ
ह बिभेमीति असाधुवादादपकीर्तेर्यथाहंभृशमुद्विजे निरयादिभ्योनतथाबिभेमि ॥३ ॥ ननुमयानिगृहीतत्वात्तवापकीर्तिर्जातैव नैवेत्याह पुं
सामिति अर्हत्तमैरर्पितंयंदंडंमात्रादयोपिनहिआदिशंतिनैवार्पयंति हितैषिणात्वयानिगृहीतोऽहंश्लाघ्यएवास्मीतिभावः ॥ ४ ॥ ॥

नन्वहंदेवानांहितैषिणासुराणांतत्राह त्वंनूनमिति पारोक्ष्यःशत्रुच्छलेनवर्तमानः ॥ ५ ॥ शत्रुत्वंपुनर्भक्तानिवास्माननुग्रहीतुमेवेत्याह य स्मिन्निति उअहो हप्रसिद्धं ॥ ६ ॥ अतोनात्रममलज्जानापिदुःखमित्याह तेनगुरुणाभवता ॥ ७ ॥ किंच योऽयंदंडरूपोममानुग्रहस्त्व यारुतःसतुत्वद्भक्तपौत्रत्वेननत्वहमनुग्रहस्यपात्रमित्याशयेनाह पितामहइति भवदीयानांसंमतः यतआविष्कृतः साधुवादोयस्य त्वमेव परमआश्रयोयस्यसः अतःभवतोपिपक्षेणविद्विषाहिरण्यकशिपुनाविचित्रंवैशसंहिंसांसंप्रापितोपि॥८॥ देहादीनामसारतांनिश्चित्याकुतोभ

त्वंनूनमसुराणांनःपारोक्ष्यःपरमोगुरुः ॥ योनोऽनेकमदांधानांविभ्रंशंचक्षुरादिशत् ॥५॥ यस्मिन्वैरानुबं धेनरूढेनविबुधेतराः ॥ बहवोलेभिरेसिद्धिंयामुहैकांतयोगिनः ॥ ६ ॥ तेनाहंनिगृहीतोऽस्मिभवताभूरि कर्मणा ॥ बद्धश्ववारुणैःपाशैर्नातिव्रीडेनचव्यथे ॥ ७ ॥ पितामहोमेभवदीयसंमतःप्रल्हादआविष्कृतसा धुवादः ॥ भवद्विपक्षेणविचित्रवैशसंसंप्रापितस्त्वत्परमःस्वपित्रा ॥ ८ ॥ किमात्मनाऽनेनजहातियोऽततः किंरिक्थहारैःस्वजनाख्यदस्युभिः ॥ किंजाययासंसृतिहेतुभूतयामर्त्यस्यगेहैःकिमिहायुषोव्ययः ॥ ९ ॥ इत्थंसनिश्चित्यपितामहोमहानगाधबोधोभवतःपादपद्मं ॥ ध्रुवंप्रपेदेह्यकुतोभयंजनाद्भीतःस्वपक्षक्षप णस्यसत्तम ॥ १० ॥ अथाहमप्यात्मरिपोस्तवांतिकंदैवेननीतःप्रसभंत्याजितश्रीः ॥ इदंकृतांतांतिकव र्तिजीवितंययाऽध्रुवंस्तब्धमतिर्नबुध्यते ॥ ११ ॥ श्रीशुकउवाच तस्येत्थंभाषमाणस्यप्रल्हादोभगवत्प्रि यः ॥ आजगामकुरुश्रेष्ठराकापतिरिवोत्थितः ॥ १२ ॥ तमिंद्रसेनःस्वपितामहंश्रियाविराजमानंनलिना यतेक्षणं ॥ प्रांशुंपिशंगांबरमंजनत्विषंप्रलंबबाहुंसुभगंसमैक्षत ॥ १३ ॥ ॥ ॥ ॥

यंध्रुवंचभवतःपादपद्ममेवप्रपेदे अथतस्मादहमपिदैवेनतस्यैवभाग्येनतवांतिकंनीतइतिचतुर्णामन्वयः अंततआयुषोंते रिक्थहारैःपुत्रैः सर्वस्वापहारिभिः इहगेहेषुकेवलमायुषोव्ययएवनतुसुखंकिंचित् ॥ ९ ॥ सप्रसिद्धोमहान् स्वपक्षंदैत्यकुलंक्षपयतीतितथातस्यापि ॥ ॥ १० ॥ प्रसभंबलात्त्याजिताश्रीर्यस्य ययाश्रियास्तब्धमतिःसन्पुमानिदंजीवितमध्रुवंनबुध्यते कथंभूतं कृतांतस्यांतिकवर्तिमृत्योःसन्नि हितं ॥ ११ ॥ राकापतिःपूर्णेंदुः ॥ १२ ॥ अंजनत्विषंश्यामं ॥ १३ ॥ ॥ ॥ ॥ ॥

स्वकृताहंकारादिरूपापराधस्मरणेनसव्रीडंनीचीनमधोमुखंयस्यसः ॥ १४ ॥ शिरसानमन्नेवउपेत्यमूर्ध्नाननाम बलेस्त्वत्कृतमनुग्रहंदृष्ट्वा पुलकैरश्रुभिश्चविह्वलः ॥ १५ ॥ त्वयैवेति नह्यैंद्रंपदमेतदीयंत्वयाऽपहृतंकिंतुस्त्वीयमेवपुनःस्वीकृतंतच्चशोभनमेवकृतं तत्रहेतुः मन्यइतियद्यस्माच्छ्रीरेवयदात्ममोहनंतस्माद्विभ्रंशितः ॥ १६ ॥ मोहनत्वमेवाह यथाश्रियाविद्वानपियतःसंयतोऽपिमुह्यतितत्तस्यांसत्यांकोऽन्यःपुमानात्मनोगतिंतत्त्वंयथावद्विचष्टेपश्यातं तस्मैमहाकारुणिकाय ॥ १७ ॥ तस्यप्रह्लादस्यानुशृण्वतउवाचेति किंचिद्वक्तुंप्रवृत्तइत्य

तस्मैबलिर्वारुणपाशयंत्रितःसमर्हणंनोपजहारपूर्ववत् ॥ ननाममूर्ध्नाऽश्रुविलोललोचनःसव्रीडनीचीनमुखोबभूवह ॥ १४ ॥ सतत्रहासीनमुदीक्ष्यसत्पतिंसुनंदनंदाद्यनुगैरुपासितं ॥ उपेत्यभूमौशिरसामहामनाननाममूर्ध्नापुलकाश्रुविह्वलः ॥ १५ ॥ प्रह्लादउवाच त्वयैवदत्तंपदमैंद्रमूर्जितंहृतंतदेवाद्यतथैवशोभनं ॥ मन्येमहानस्यकृतोह्यनुग्रहोविभ्रंशितोयच्छ्रियआत्ममोहनात् ॥ १६ ॥ ययाहिविद्वानपिमुह्यतेयतस्तत्कोविचष्टेगतिमात्मनोयथा ॥ तस्मैनमस्तेजगदीश्वरायनारायणायाखिललोकसाक्षिणे ॥ १७ ॥ श्रीशुकउवाच तास्यनुशृण्वतोराजन्प्रह्लादस्यकृतांजलेः ॥ हिरण्यगर्भोभगवानुवाचमधुसूदनं ॥ १८ ॥ बद्धंवीक्ष्यपतिंसाध्वीतत्पत्नीभयविह्वला ॥ प्रांजलिःप्रणतोपेंद्रंबभाषेऽवाङ्मुखीनृप ॥ १९ ॥ विंध्यावलिरुवाच क्रीडार्थमात्मनइदंत्रिजगत्कृतंतेस्वाम्यंतुतत्रकुधियोपरईशकुर्युः ॥ कर्तुःप्रभोस्तवकिमस्यतआवहंतित्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ २० ॥ ॥ ॥ ॥ ॥

र्थः ॥ १८ ॥ तदैवविंध्यावलिरपिवक्तुंप्रवृत्ता तांचसंमानयन्हिरण्यगर्भःक्षणंतूष्णींस्थितःअतस्तस्याएववाक्यंप्रथममवतारयाति बद्धंवीक्ष्येति ॥ १९ ॥ त्रिजगतःकर्तुःप्रभोःपालकस्यअस्यतःसंहर्तुश्चईश्वरस्यतवान्येकिमावहंतिकिंसमर्पयंति त्वयाऽवरोपितःकर्तृवादःकर्तारःस्वतंत्रावयमितिवादमात्रमपियेषांते अयंभावः लोकत्रयंमयाऽर्पितंतृतीयपादायदेहंसमर्प्यप्रतिश्रुतमृतंकरोमीतिदेहादिषुस्वाम्याविष्कारेणब्रुवन्नयंकुबुद्धिर्निर्लज्जश्चयतस्त्वमेवसर्वस्यापिस्वामीअतोमंदबुद्धिमेनंकेवलंकृपयाविमुच्यपालयेति ॥ २० ॥ ॥

तदेवंप्रह्लादस्यविंध्यावलेश्चपरमार्थोक्त्याप्रसन्नोहरिः ब्रह्मातुलोकदृष्ट्यैवविज्ञापयति भूतभावनेतित्रिभिः ॥ २१ ॥ निग्रहानर्हत्वेहेतुः कृत्स्ने ति सर्वस्वमेवाह आत्मेति ॥ २२ ॥ तदेवकैमुत्यन्यायेनाह यस्यतवपादयोःसलिलमात्रमपिप्रदायसर्वोऽपिजनउत्तमांगतिंप्राप्नोतितस्मै तुभ्यमसौबलिस्त्रिलोकींदाश्वान्‌दत्तवान्‌सआर्तिंकथंप्राप्नुयात् ॥ २३ ॥ तस्यविशःअर्थान् नन्वर्थापहारःकोयमनुग्रहस्तत्राह यन्मदःयैर र्थैर्मदोयस्यसः अतएवस्तब्धःअनम्रःसन् मदस्तंभहेतूनामर्थानामपहारएवानुग्रहइत्यर्थः ॥ २४ ॥ दुर्लभंपुरुषजन्मकथंचिल्लब्धवतोजी वस्यजन्मादिनिमित्तोगर्वोमहाहानिकरस्तस्यचनाशोमदनुग्रहादेवेत्याह यदेतिद्वाभ्यां अनीशःपरतंत्रःसन्निजैःकर्मभिर्नानायोनिषुकूमिकी

ब्रह्मोवाच भूतभावनभूतेशदेवदेवजगन्मय ॥ मुंचैनंहृतसर्वस्वंनायमर्हतिनिग्रहं ॥ २१ ॥ कृत्स्नातेऽने नदत्ताभूर्लोकाःकर्मार्जिताश्चये ॥ निवेदितंचसर्वस्वमात्माविक्लवयाधिया ॥ २२ ॥ यत्पादयोरशठधीःस लिलंप्रदायदूर्वांकुरैरपिविधायसतींसपर्यां ॥ अप्युत्तमांगतिमसौभजतेत्रिलोकींदाश्वानविक्लवमनाःक थमार्तिमृच्छेत् ॥ २३ ॥ श्रीभगवानुवाच ब्रह्मन्‌यमनुगृण्हामितद्विशोविधुनोम्यहं ॥ यन्मदःपुरुषः स्तब्धोलोकंमांचावमन्यते ॥ २४ ॥ यदाकदाचिज्जीवात्मासंसरन्निजकर्मभिः ॥ नानायोनिष्वनीशोऽ यंपौरुषींगतिमाव्रजेत् ॥ २५ ॥ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ॥ यद्यस्यनभवेत्स्तंभस्तत्रायंमद नुग्रहः ॥ २६ ॥ मानस्तंभनिमित्तानांजन्मादीनांसमंततः ॥ सर्वश्रेयःप्रतीपानांहंतमुह्येन्नमत्परः ॥ २७ ॥ एषदानवदैत्यानामग्रणीःकीर्तिवर्धनः ॥ अजैषीदजयांमायांसीदन्नपिनमुह्यति ॥ २८ ॥ क्षीणरिक्थश्च्यु तःस्थानात्क्षिप्तोबद्धश्चशत्रुभिः ॥ ज्ञातिभिश्चपरित्यक्तोयातनामनुयापितः ॥ २९ ॥

टकादिषुसंसरन् ॥ २५ ॥ तत्रपौरुष्यांगतौजन्मादिभिरपियस्ययदिस्तंभोनभवेत्तर्हिअयंमदनुग्रहएवा ॥ २६ ॥ कथंतर्हिध्रुवादिभ्योऽ र्थंसंपदोददासीतिचेत्तत्राह मानएवस्तंभःअनम्रतातस्यनिमित्तभूतानां समंततःसर्वशःसर्वश्रेयःप्रतिकूलानांजन्मादीनांसत्वेऽपिजन्मा दिभिरितिवा हंतेतिखेदे हेब्रह्मन्‌मत्परोनमुह्येदतोभक्तस्येच्छयासंपदोऽपिददामि अभक्तस्तुमुह्येदितितदपहाररूपमेवतस्यानुग्रहंकरोमी तिभावः ॥ २७ ॥ अस्यचेदानींमत्परत्वादन्यैर्दुष्प्रापमपिदास्यामीतिवक्तुंतस्यमोहाभावमाहएषइतित्रिभिः ॥ २८ ॥ २९ ॥ ॥

नह्येतस्मिन्कुलेकश्चिन्निःसत्वः कृपणःपुमानूइत्यादिनाछलैरेवमयाधर्मउक्तस्तथापितंधर्ममयंनत्यजतिअतःसत्यवाक् ॥ ३० ॥ मेमया अ हमेवाश्रयःपालकोयस्यसः ॥ ३१ ॥ स्थानंप्रापितइतियदुक्तंतदेवस्थानमाह तावत्सावर्णिमन्वंतरपर्यंतंसुतलमध्यास्तामाधिवसत्विरयर्थः यद्यस्मिन्वसतामाध्यादयोममेक्षयानसंभवंति ॥ ३२ ॥ एवंब्रह्माणंप्रत्युक्त्वाकरुणापरवशःसाक्षाद्बलिंप्रत्याह इंद्रसेनेतिचतुर्भिः ॥ ३३ ॥

गुरुणाभर्त्सितःशप्तोजहौसत्यंनसुव्रतः ॥ छलैरुक्तोमयाधर्मोनायंत्यजतिसत्यवाक् ॥ ३० ॥ एषमेप्रापितःस्थानंदुष्प्रापममरैरपि ॥ सावर्णेरंतरस्यायंभवितेंद्रोमदाश्रयः ॥ ३१ ॥ तावत्सुतलमध्यास्तांविश्वकर्मविनिर्मितं ॥ यन्नाधयोव्याधयश्चक्लमस्तंद्रापराभवः ॥ नोपसर्गानिवसतांसंभवंतिममेक्षया ॥ ३२ ॥ इंद्रसेनमहाराजयाहिभोभद्रमस्तुते ॥ सुतलंस्वर्गिभिःप्रार्थ्यंज्ञातिभिःपरिवारितः ॥ ३३ ॥ नत्वामाभिभविष्यंतिलोकेशाःकिमुतापरे ॥ त्वच्छासनातिगान्दैत्यान्चक्रंमेसूदयिष्यति ॥ ३४ ॥ रक्षिष्येसर्वतोऽहंत्वांसानुगंसपरिच्छदं ॥ सदासन्निहितंवीरतत्रमांद्रक्ष्यतेभवान् ॥ ३५ ॥ तत्रदानवदैत्यानांसंगात्तेभावआसुरः ॥ दृष्ट्वामदनुभावंवैसद्यःकुंठोविनंक्ष्यति ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेबालिवामनसंवादोनामद्वाविंशोध्यायः ॥ २२ ॥ ॥ श्रीशुकउवाच इत्युक्तवंतंपुरुषंपुरातनंमहानुभावोऽखिलसाधुसंमतः ॥ बद्धांजलिर्बाष्पकलाकुलेक्षणोभक्त्युद्गलोगद्गदयागिराऽब्रवीत् ॥ १ ॥

त्वच्छासनमतिगच्छंतिअतिवर्ततइतितथातान् ॥ ३४ ॥ तथापिभगवद्वियोगात्तदनिच्छंतंप्रत्याह सदेति ॥ ३५ ॥ संगाद्यआसुरोभावः सविनंक्ष्यति ॥ ३६ ॥ इत्यष्टमेटीकायांद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ त्रयोविंशेबलौयातेसुतलंसपितामहे ॥ उपेंद्रेणदिवंगत्वापूर्ववन्मोदतेहरिः ॥ १ ॥ बाष्पस्यकलाभिर्बिंदुभिराकुलेईक्षणेयस्य भक्त्याउद्गलउत्कंठः ॥ १ ॥

अहोऽत्वत्प्रणाममहिमायदर्थंकृतः समुद्यमएवप्रपन्नानांभक्तानांयोऽर्थस्तस्यविधौअभक्तेऽपितस्यसंपादनेसमाहितः अप्रमत्तः स्थितः कुतःय
तूयेनोद्यमेनलोकपालैरमरैःसत्त्वप्रधानैरपिअलब्धपूर्वस्त्वदनुग्रहःअपसदेनीचेराजसेमयिअर्पितः अयंभावः परमेश्वरायतुभ्यमहंवराकस्त्रि
लोकींदत्तवानित्येतदास्तां प्रणामोपिनसम्यक्कृतःकिंतुतदर्थमुद्यममात्रंकृतंतेनचकर्मतपोदानादिकोटिभिरप्यलभ्यस्त्वदनुग्रहः संपादि
तः अहोत्वत्प्रणामप्रभावाश्चर्यमिति ॥ २ ॥ ३ ॥ अशासदुपेंद्रःसन्पालयामास ॥ ४ ॥ ५ ॥ दुर्गपालोऽसि रक्षिष्येसर्वतोऽहंत्वामित्यु
क्त्वात् ॥ ६ ॥ हेशरणदआश्रयप्रदयेकुसृतयःदुर्वृत्ताः खलयोनयउग्रजातयश्चतेवयंतस्यभवतोदाक्षिण्यदृष्टेः पदवींकस्माद्धेतोःप्रणीताः

बलिरुवाच अहोप्रणामायकृतःसमुद्यमःप्रपन्नभक्तार्थविधौसमाहितः ॥ यल्लोकपालैस्त्वदनुग्रहोऽमरैरल
ब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥ श्रीशुकउवाच इत्युक्त्वाहरिमानम्यब्रह्माणंसभवंततः ॥ विवेशसुत
लंप्रीतोबलिर्मुक्तःसहासुरैः ॥ ३ ॥ एवमिंद्रायभगवान्प्रत्यानीयत्रिविष्टपं ॥ पूरयित्वाऽदितेःकाममशास
त्सकलंजगत् ॥ ४ ॥ लब्धप्रसादंनिर्मुक्तंपुत्रंवंशधरंबलिं ॥ निशाम्यभक्तिप्रवणःप्रल्हादइदमब्रवीत् ॥
॥ ५ ॥ प्रल्हादउवाच नेमंविरिंचोलभतेप्रसादंनश्रीर्नशर्वःकिमुतापरेते ॥ यन्नोसुराणामसिदुर्गपालोवि
श्वाभिवंद्यैरपिवंदितांघ्रिः ॥ ६ ॥ यत्पादपद्ममकरंदनिषेवणेनब्रह्मादयःशरणदाश्नुवतेविभूतीः ॥ कस्माद्व
यंकुसृतयःखलयोनयस्तेदाक्षिण्यदृष्टिपदवींभवतःप्रणीताः ॥ ७ ॥ चित्रंतवेहितमहोऽमितयोगमायालीला
विसृष्टभुवनस्यविशारदस्य ॥ सर्वात्मनःसमदृशोविषमःस्वभावोभक्तप्रियोयदसिकल्पतरुस्वभावः ॥ ८ ॥

बहुमानेनचित्तानुवर्तनंदाक्षिण्यंतेनयाद्दृष्टिस्तद्विषयतांप्रापिताः ॥ ७ ॥ भक्तप्रियत्वादितिचेत्तर्हि एवंतवेहितमहोचित्रं किंतत्सर्वात्मनः
समदृशश्चस्वभावोविषमइतियत्सर्वात्मत्वेचित्रचरितत्वेहेतुः अमिताअचिंत्यायोगमायातस्यायाल्लीलातया विसृष्टानिविरचितानिभुवना
नियेनतस्य अहोइत्यत्रसंधिरार्षः समदृक्त्वेहेतुः विशारदस्यसर्वज्ञस्य अथवाभक्तप्रियत्वेऽपितववैषम्यंनास्त्येव यतःकल्पतरुस्वभावःसन्
भक्तप्रियोऽसि नहिकल्पतरुराश्रितानामेवकामान्पूरयन्नपिविषमोभवतीत्यर्थः ॥ ८ ॥ ॥ ॥

॥९॥ मद्दर्शनेनयोमहाह्लादस्तेनध्वस्तंकर्मबंधनमज्ञानंयस्य ॥ १०॥ ११ ॥ १२ ॥ १३ ॥ कर्मवितन्वतःशिष्यस्ययत्छिद्रमंतरंन्यूनंजातंतत्संत
नुविस्तारयसंधत्स्व यजमानंविनाकथंसंधातव्यमितिनवाच्यमित्याह यत्तदिति ब्रह्मदृष्टंब्राह्मणैर्दृष्टमेवसमंभवेत् किंपुनरनुष्ठितमित्यर्थः ॥
॥१४॥ भवान्यस्यसर्वेणापिभावेनवस्तुमात्रेणपूजितस्तस्यकर्मसुकुतोवैषम्यं कथंभूतः कर्मणामीश्वरःप्रवर्तकः यज्ञेशोयज्ञफलदः यज्ञम

श्रीभगवानुवाच वत्सप्रऱ्हादभद्रंतेप्रयाहिसुतलालयं ॥ मोदमानःस्वपौत्रेणज्ञातीनांसुखमावह ॥ ९ ॥
नित्यंद्रष्टासिमांतत्रगदापाणिमवस्थितं ॥ मद्दर्शनमहाल्हादध्वस्तकर्मनिबंधनः ॥ १० ॥ श्रीशुकउवाच
आज्ञांभगवतोराजन्प्रऱ्हादोबलिनासह ॥ बाढमित्यमलप्रज्ञोमूर्ध्न्याधायकृतांजलिः ॥ ११ ॥ परिक्रम्या
दिपुरुषंसर्वासुरचमूपतिः ॥ प्रणतस्तदनुज्ञातःप्रविवेशमहाबिलं ॥ १२ ॥ अथाहोशनसंराजन्हरिर्नारा
यणोऽतिके ॥ आसीनमृत्विजांमध्येसदसिब्रह्मवादिनां ॥ १३ ॥ ब्रह्मन्संतनुशिष्यस्यकर्मच्छिद्रंवितन्वतः
॥ यत्तत्कर्मसुवैषम्यंब्रह्मदृष्टंसमंभवेत् ॥ १४ ॥ शुकउवाच कुतस्तत्कर्मवैषम्यंयस्यकर्मेश्वरोभवान् ॥
यज्ञेशोयज्ञपुरुषःसर्वभावेनपूजितः ॥ १५ ॥ मंत्रतस्तंत्रतश्छिद्रंदेशकालार्हवस्तुतः ॥ सर्वंकरोतिनिश्छि
द्रमनुसंकीर्तनंतव ॥ १६ ॥ तथाऽपिवदतोभूमन्करिष्याम्यनुशासनं ॥ एतच्छ्रेयःपरंपुंसांयत्तवाज्ञानुपा
लनं ॥ १७ ॥ श्रीशुकउवाच अभिनंद्यहरेराज्ञामुशनाभगवानिति ॥ यज्ञच्छिद्रंसमाधत्तबलेर्विप्रर्षि
भिःसह ॥ १८ ॥ एवंबलेर्महींराजन्भिक्षित्वावामनोहरिः ॥ ददौभ्रात्रेमहेंद्रायत्रिदिवंयत्परैर्हृतं ॥ १९ ॥
प्रजापतिपतिर्ब्रह्मादेवर्षिपितृभूमिपैः ॥ दक्षभृग्वंगिरोमुख्यैःकुमारेणभवेनच ॥ २० ॥ कश्यपस्यादितेः
प्रीत्यैसर्वभूतभवायच ॥ लोकानांलोकपालानामकरोद्वामनंपतिं ॥ २१ ॥ ॥

यज्ञपुरुषः ॥ १५ ॥ आस्तांतावत्पूजा यस्मान्मंत्रतःस्वरादिभ्रंशेन तंत्रतोव्युत्क्रमादिना देशतः कालतश्च अर्हतःपात्रतः वस्तुतश्चद
क्षिणादिना यत्छिद्रंन्यूनंतत्सर्वंतवानुकीर्तनमात्रमेवनिश्छिद्रंकरोतीति ॥ १६ ॥ १७ ॥ हरेराज्ञांप्रतिनंद्यबलेर्यज्ञच्छिद्रंसमाधत्तसंदधे पा
ठांतरेसमाधायतदाज्ञांसंपादितवानितिशेषः ॥ १८ ॥ १९ ॥ देवाश्चऋषयश्चभूमिपाश्चमनवस्तैःसहितः ॥ २० ॥ २१ ॥

ननुलोकादीनांपतिरिंद्रोऽस्त्येव सत्यं तथाऽपिवेदादीनांकल्पंपालनेदक्षं ॥ २२ ॥ वामनमुपेंद्रंकल्पयांचक्रे ॥ २३ ॥ देवयानेनमार्गेण विमानेनेतिवा ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ एतच्चरितमाख्यातमितिविशेषोक्त्याअन्यान्यापिसंतंत्युक्तं ॥ २८ ॥ तानितर्हिनिःशेषाणिवर्णनीयानीत्यपेक्षायामाह पारमिति उरुबहुविक्रमतोविष्णोर्महिम्नःपारंयोगृणानोभवतिसमर्त्यःपार्थिवानिरजांस्यपिविममेगणितवान् यथापार्थिवपरमाणुगणनमशक्यंतथाविष्णोर्गुणगणनमप्यशक्यामित्यर्थः तथाचमंत्रः विष्णोर्नुकंवीर्याणीति एतदेवमंत्रांतरार्थंसूचयन्नाह



वेदानांसर्वदेवानांधर्मस्ययशसःश्रियः ॥ मंगलानांव्रतानांचकल्पंस्वर्गापवर्गयोः ॥ २२ ॥ उपेंद्रंकल्पयांचक्रेपतिंसर्वविभूतये ॥ तदासर्वाणिभूतानिभृशंमुमुदिरेनृप ॥ २३ ॥ ततस्त्विंद्रःपुरस्कृत्यदेवयानेनवामनं ॥ लोकपालैर्दिवंनिन्येब्रह्मणाचानुमोदितः ॥ २४ ॥ प्राप्यत्रिभुवनंचेंद्रउपेंद्रभुजपालितः ॥ श्रियापरमयाजुष्टोमुमुदेगतसाध्वसः ॥ २५ ब्रह्माशर्वःकुमारश्चभृग्वाद्यामुनयोनृप ॥ पितरःसर्वभूतानिसिद्धावैमानिकाश्चये ॥ २६ ॥ सुमहत्कर्मतद्विष्णोर्गायंतःपरमाद्भुतं ॥ धिष्ण्यानिस्वानितेजग्मुरदितिंचशशंसिरे ॥ २७ ॥ सर्वमेतन्मयाख्यातंभवतःकुलनंदन ॥ उरुक्रमस्यचरितंश्रोतॄणामघमोचनं ॥ २८ ॥ पारंमहिम्नउरुविक्रमतोगृणानोयःपार्थिवानिविममेसरजांसिमर्त्यः ॥ किंजायमानउतजातउपैतिमर्त्यइत्याहमंत्रदृगृषिःपुरुषस्ययस्य ॥ २९ ॥ यइदंदेवदेवस्यहरेरद्भुतकर्मणः ॥ अवतारानुचरितंशृण्वन्यातिपरांगतिं ॥ ३० ॥ क्रियमाणेकर्मणीदंदैवेपित्र्येऽथमानुषे ॥ यत्रयत्रानुकीर्त्येततत्तेषांसुकृतंविदुः ॥ ३१ ॥ इति श्रीभागवतेमहापुराणेअष्टमस्कंधेवामनावतारचरितेत्रयोविंशतितमोध्यायः ॥ २३ ॥ ॥

यस्यपुरुषस्यपूर्णमहिम्नःपारंमंत्रदृगृषिर्वसिष्ठइतिएवमाह कथंकिंजायमानोजातोवाउपैतिनकोऽपीतिवदन्ननंतत्वेनैवाहेत्यर्थः तथाचमंत्रः नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमापेति ॥ २९ ॥ यइदंशृण्वन्भवतिसपरांगतिंयाति ॥ ३० ॥ सुकृतंयथावत्कृतंविदुः ॥ ॥ ३१ ॥ इत्यष्टमेटीकायांत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ ॥ ॥

चतुर्विंशेप्रसंगेनमत्स्यरूपस्यशार्ङ्गिणः ॥ लीलोच्यतेयतःसत्यव्रतरक्षामहार्णवे ॥ १ ॥ तनुंतनुंविदइर्यादौनिजैश्वर्यनिदर्शनात् ॥ मत्स्यं पृच्छतिपृथ्वीशोलीलयात्रामनोपमं ॥ २ ॥ माययामत्स्यविडंबनंमत्स्यरूपानुकरणंयस्यांनिरूप्यते ॥ १ ॥ ननुकस्मादकस्मादेवमत्स्यावतारश्रवणेच्छा श्रीवामनसादृश्यादित्याह यदर्थमितिद्वाभ्यां दुर्मर्षंदुःसहं ॥ २ ॥ बलेरनुग्रहायजुगुप्सितमापयाचकरूपंधृतवानितियुक्तमुक्तंयदर्थंतुलोकजुगुप्सितंमात्स्यंरूपमधारयत् एतन्नोयथावद्वक्तुमर्हसीत्यर्थः ॥ ३ ॥ ४ ॥ सामान्येनावतारप्रयोजनमाह गोविप्रेति ॥

राजोवाच भगवन्श्रोतुमिच्छामिहरेरद्भुतकर्मणः ॥ अवतारकथामाद्यांमायामत्स्यविडंबनं ॥ १ ॥ यदर्थमदधाद्रूपंमात्स्यंलोकजुगुप्सितं ॥ तमःप्रकृतिदुर्मर्षंकर्मग्रस्तमिवेश्वरः ॥ २ ॥ एतन्नोभगवन्सर्वंयथावद्वक्तुमर्हसि ॥ उत्तमश्लोकचरितंसर्वलोकसुखावहं ॥ ३ ॥ सूतउवाच इत्युक्तोविष्णुरातेनभगवान्बादरायणिः ॥ उवाचचरितंविष्णोर्मत्स्यरूपेणयत्कृतं ॥ ४ ॥ श्रीशुकउवाच गोविप्रसुरसाधूनांछंदसामपिचेश्वरः ॥ रक्षामिच्छंस्तनूर्धत्तेधर्मस्यार्थस्यचैवहि ॥ ५ ॥ उच्चावचेषुभूतेषुचरन्वायुरिवेश्वरः ॥ नोच्चावचत्वंभजते निर्गुणत्वाद्धियोगुणैः ॥ ६ ॥ आसीदतीतकल्पांतेब्राह्मोनैमित्तिकोलयः ॥ समुद्रोपप्लुतास्तत्रलोकाभूरादयोनृप ॥ ७ ॥ कालेनागतनिद्रस्यधातुःशिशयिषोर्बली ॥ मुखतोनिःसृतान्वेदान्हयग्रीवोऽतिकेऽहरत् ॥ ८ ॥ ज्ञात्वातद्दानवेंद्रस्यहयग्रीवस्यचेष्टितं ॥ दधारशफरीरूपंभगवान्हरिरीश्वरः ॥ ९ ॥ तत्रराजऋषिःकश्चिन्नाम्नासत्यव्रतोमहान् ॥ नारायणपरोऽतप्यत्तपःससलिलाशनः ॥ १० ॥ योऽसावस्मिन्महाकल्पेतनयःसविवस्वतः ॥ श्राद्धदेवइतिख्यातोमनुत्वेहरिणाऽर्पितः ॥ ११ ॥

॥ ५ ॥ जुगुप्सितत्वंपरिहरति धियोगुणैर्यान्युच्चावचानिभूतानितेषुनियंतृत्वेनचरन्नपीश्वरोनोच्चावचत्वंभजते निर्गुणत्वात् कुतःपुनःशुद्धसत्वमयैर्मत्स्याद्याकारैरुच्चावचत्वशंकेतिभावः ॥ ६ ॥ विशेषतोमत्स्यावतारप्रयोजनमाह आसीदितित्रिभिः ब्रह्मणोनिद्रायांभवोब्राह्मस्तेनैवनिमित्तेनजातोनैमित्तिकः समुद्रेउपप्लुतानिमग्नाः ॥ ७ ॥ अंतिकेनिःसृतान् ॥ ८ ॥ शफरीरूपंमात्स्यं ॥ ९ ॥ प्रयोजनांतरं लीलाप्रकारंचाह तत्रराजऋषिरित्यादियावत्समाप्ति ॥ १० ॥ सएवश्राद्धदेवइतिख्यातः ॥ ११ ॥ ॥ ॥

एकदाकृतमालायांकुर्वतोजलतर्पणं ॥ तस्यांजल्युदकेकाचिच्छफर्येकाऽभ्यपद्यत ॥ १२॥ सत्यव्रतोंऽजलि गतांसहतोयेनभारत ॥ उत्ससर्जनदीतोयेशफरींद्रविडेश्वरः॥१३॥तमाहसाऽतिकरुणंमहाकारुणिकंनृपं॥ यादोभ्योज्ञातिघातिभ्योदीनांमांदीनवत्सल ॥ कथंविसृजसेराजन्भीतामस्मिन्सरिज्जले ॥१४॥ तमात्म नोऽनुग्रहार्थंप्रीत्यामत्स्यवपुर्धरं ॥ अजानन्रक्षणार्थायशफर्याःसमनोदधे ॥ १५॥ तस्यादीनतरंवाक्यमा श्रुत्यसमहीपतिः ॥ कलशाप्सुनिधायैनांदयालुर्निन्यआश्रमं ॥१६॥सातुतत्रैकरात्रेणवर्धमानाकमंडलौ॥ अलब्ध्वात्मावकाशंवाइदमाहमहीपतिं ॥ १७ ॥नाहंकमंडलावस्मिन्कृच्छ्रंवस्तुमिहोत्सहे॥कल्पयौकःसु विपुलंयत्राहंनिवसेसुखं ॥१८॥ सएनांततआदायन्यधादौदंचनोदके ॥ तत्रक्षिप्तामुहूर्तेनहस्तत्रयमवर्धत ॥१९॥ नमएतदलंराजन्सुखंवस्तुमुदंचनं॥पृथुदेहिपदंमह्यंयत्त्वाऽहंशरणंगता ॥२०॥ ततआदायसाराज्ञा क्षिप्ताराजन्सरोवरे॥तदावृत्यात्मनातोयंमहामीनोऽन्ववर्धत ॥२१॥ नैतन्मेस्वस्तयेराजन्नुदकंसलिलौक सः॥निधेहिरक्षायोगेनह्रदेमामविदासिनि ॥२२॥ इत्युक्तःसोऽनयन्मत्स्यंतत्रतत्राविदासिनि ॥ जलाशये संमितंतंसमुद्रेप्राक्षिपज्झषं ॥ २३॥ क्षिप्यमाणस्तमाहेदमिहमांमकरादयः॥अदंत्यतिबलावीरमांनेहोत्स्र ष्टुमर्हसि ॥२४॥ एवंविमोहितस्तेनवदतावल्गुभारतीं॥तमाहकोभवानस्मान्मत्स्यरूपेणमोहयन्॥२५॥ नैवंवीर्योजलचरोदृष्टोऽस्माभिःश्रुतोऽपिच ॥ योभवान्योजनशतमह्नाऽभिव्यानशेसरः ॥ २६ ॥



मणिकस्थेजले ॥ १९ ॥ २० ॥ २१ ॥ रक्षायोगेनरक्षायायोगेनउपायेन यथामहान्ह्रदप्राप्तेरर्वाक्जलंविनानशुष्येयंतेनोपायेननिधेहि अविदासिनिअनुपक्षये ॥ २२ ॥ संमितंतत्तज्जलाशयपरिमितं ॥ २३ ॥ २४ ॥ २५ ॥ अभिव्यानशेअभितोव्याप्तवान् ॥ २६ ॥

॥२७॥मुख्यःसत्यआत्माचगतिश्चआश्रयः॥२८॥२९॥हेअरविंदाक्षपृथगात्मनांदेहाद्यभिमानिनांसतामितरेषांपदोपसर्पणंयथामृषाभवेत्तथा सुहृत्प्रियात्मनस्तवपदोपसर्पणंमृषानभवेत् यद्यस्मान्नोभक्तानामद्भुतंवपुरदीदृशोदर्शितवानसि पाठांतरेपृथगात्मनोभेददर्शिनःपुंसःअस तांपरिच्छिन्नानांपदोपसर्पणंयथामृषेत्यर्थः॥३०॥ एकांतजनाभक्ताःप्रियायस्य ॥ ३१ ॥ अप्ययांभोधौप्रलयार्णवे त्रैलोक्यंभूर्भुवआदिक

नूनंत्वंभगवान्साक्षाद्धरिर्नारायणोऽव्ययः ॥ अनुग्रहायभूतानांधत्सेरूपंजलौकसां॥२७॥नमस्तेपुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ॥ भक्तानांनःप्रपन्नानांमुख्योह्यात्मगतिर्विभो ॥२८॥ सर्वेलीलावतारास्तेभूतानांभू तिहेतवः ॥ ज्ञातुमिच्छाम्यदोरूपंयदर्थंभवताधृतं॥२९॥नतेऽरविंदाक्षपदोपसर्पणंमृषाभवेत्सर्वसुहृत्प्रिया त्मनः ॥ यथेतरेषांपृथगात्मनांसतामदीदृशोयद्वपुरद्भुतंहिनः॥३०॥ श्रीशुकउवाच इतिब्रुवाणंनृपतिंजग त्पतिःसत्यव्रतंमत्स्यवपुर्युगक्षये ॥ विहर्तुकामःप्रलयार्णवेऽब्रवीच्चिकीर्षुरेकांतजनप्रियःप्रियं॥३१॥ श्रीभ गवानुवाच सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिंदम ॥ निमंक्ष्यत्यप्ययांभोधौत्रैलोक्यंभूर्भुवादिकं ॥ ३२ ॥ त्रि लोक्यांलीयमानायांसंवर्ताम्भसिवैतदा ॥ उपस्थास्यतिनौःकाचिद्विशालात्वांमयेरिता॥३३॥त्वंतावदोषधीः सर्वाबीजान्युच्चावचानिच ॥ सप्तर्षिभिःपरिवृतःसर्वसत्वोपबृंहितः ॥ ३४ ॥ आरुह्यमहतींनावंविचरिष्यस्य विक्लवः ॥ एकार्णवेनिरालोकेऋषीणामेववर्चसा ॥३५॥ दोधूयमानांतांनावंसमीरेणबलीयसा ॥ उपस्थित स्यमेशृंगेनिबध्नीहिमहाहिना॥३६॥अहंत्वामृषिभिःसाकंसहनावमुदन्वति ॥ विकर्षन्विचरिष्यामियावद्ब्रा ह्मीनिशाप्रभो ॥३७॥ मदीयंमहिमानंचपरंब्रह्मेतिशब्दितं ॥ वेत्स्यस्यनुगृहीतंमेसंप्रश्नैर्विवृतंहृदि ॥ ३८॥

मित्यर्थः॥३२॥संवर्ताम्भसिप्रलयोदकेत्वामुपस्थास्यतिप्राप्स्यति॥३३॥ओषधीः आदायेतिशेषः॥ ३४ ॥ ऋषीणामेवालोकेनाविचरिष्यसि ॥३५॥महाहिनावासुकिना॥३६॥३७॥मेमयाअनुगृहीतंप्रसादीकृतंहृदिअपरोक्षंवेत्स्यसि त्वयाकृतैःसंप्रश्नैर्मेमयाविवृतंप्रकाशितंसंतं॥३८॥

॥३९॥४०॥४१॥४२॥४३॥४४॥ वरत्रेणदोरकरूपेण ॥४५॥ सागरंतारयिष्यंततरिष्यन्नित्रसागरं॥सत्यव्रतोगुरुस्त्वेनतुष्टावहरिमष्ट भिः॥अत्रे दं चिंत्यं किमयंमहाप्रलयोदैनंदिनोवेति तत्रतावत् ब्राह्मोलयइतियोऽसावस्मिन्महाकल्पेइतिचोक्तेर्महाप्रलयइतिप्राप्तंनेतिब्रूमः महाप्रल येपृथिव्यादीनामवशेषासंभवात् यावद्ब्राह्मीनिशेत्याद्युक्तिविरोधाच्च अतोदैनंदिनइतियुक्तं नचैतदपिसंगच्छते सांवर्तकैरनावृष्ट्यादिभिर्वि नाअकस्मादेवसप्तमेहनित्रैलोक्यंनिमंक्ष्यतीतिमत्स्योक्तेरनुपपत्तेः यच्चोक्तंप्रथमस्कंधे रूपंसजगृहेमात्स्यंचाक्षुषोंऽतरसंप्लवे ॥ नाप्यारोप्यम हीमय्यामपाद्वैवस्वतंमनुमिति तदपितदादुर्घटं नहिप्रलयद्वयेऽपिमहीमय्यांनाव्यारोहःसंभवति नचचाक्षुषमन्वंतरेप्रलयोऽस्ति तथाचस तिसप्तमोमनुर्वैवस्वतइत्यपिदुर्घटंस्यात् त्वंतावदोषधीःसर्वाइत्यादिनिर्देशोपिनसंगच्छते नहितदाओषध्यादीनांसत्वानांचावशेषःसंभ

**इत्थमादिश्यराजानंहरिरंतरधीयत॥सोऽन्ववैक्षततंकालंयंहृषीकेशआदिशत्॥३९॥ आस्तीर्यदर्भान्प्राक्कूलान्राजर्षिःप्रागुदङ्मुखः॥निषसादहरेःपादौचिंतयन्मत्स्यरूपिणः॥४०॥ ततःसमुद्रउद्वेलःसर्वतःप्लावयन्महीं ॥ वर्धमानोमहामेघैर्वर्षद्भिःसमदृश्यत ॥ ४१ ॥ ध्यायन्भगवदादेशंददृशेनावमागतां ॥ तामारुरोहविप्रेंद्रैरादायौषधिवीरुधः ॥ ४२ ॥ तमूचुर्मुनयःप्रीताराजन्ध्यायस्वकेशवं ॥ सवैनःसंकटादस्माद्विताशंविधास्यति ॥ ४३ ॥ सोऽनुध्यातस्ततोराज्ञाप्रादुरासीन्महार्णवे ॥ एकशृंगधरोमत्स्योहैमोनियुतयोजनः ॥ ४४ ॥ निबध्यनावंतच्छृंगेयथोक्तोहरिणापुरा ॥ वरत्रेणाहिनातुष्टस्तुष्टावमधुसूदनं ॥ ४५॥ राजोवाच अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥ यदृच्छयेहोपसृतायमाप्नुयुर्विमुक्तिदोनःपरमोगुरुर्भवान् ॥ ४६ ॥ ॥ ॥ ॥ ॥**

वति तस्मादन्यथावर्ण्यते नैवायंवास्तवःकोपिप्रलयःकिंतुसत्यव्रतस्यज्ञानोपदेशायाविर्भूतोभगवान्वैराग्यार्थमकस्मात्प्रलयमित्रदर्शयामा स यथाऽस्मिन्नेवैवस्वतमन्वंतरेमार्कंडेयायदर्शितवान् तदपेक्षयैवमहाकल्पेऽस्मिन्नितिविशेषणंसंगच्छते तथाच ततःसमुद्रउद्वेलःसर्वं तःसमदृश्यतइतितस्यैवतथादर्शनमुक्तमित्येषादिक् प्रस्तुतंस्तोत्रंव्याख्यास्यामः तत्रनानायोनिषुसंसरतःस्वस्यभगवत्कृपयैवतत्प्राप्तिंदृष्ट्वा मुक्तयेतमेवप्रार्थयते अनादिर्याअविद्यातयाउपहताआवृताआत्मनःसंविद्येषांतेअतएवाविद्यामूलैःसंसारपरिश्रमैरातुराइहसंसारेयदृच्छया य दनुग्रहादेवउपसृताआश्रिताःसंतोयमाप्नुयुःप्राप्नुवंतिसभवानेवसाक्षान्नोगुरुःसन्ग्रंथिंभिंद्यादित्युत्तरेणान्वयः ॥ ४६ ॥ ॥

ननुवैराग्यंविनाकुतोमुक्तिस्तर्हितस्यत्वत्सेवैकफलत्वात्सेवामादिशेत्याशयेनाह जनइति अबुधोयंजनःअसुखंयथाभवतितथाकर्मसमीहते तांसुखेच्छां नोहृदयरूपंग्रंथिंसभिंद्यात् यतःसएवनःपरमोगुरुः ॥ ४७ ॥ ननुयज्ञदानादिभिःसत्वशुद्धिंविनाकथंग्रंथिभेदःस्यात्तत्राह यत्सेवयेति यस्यसेवयैवपुमानात्मनोमनसोमलंतमोविजह्यात् एषर्हिनिर्मलोनिजंवर्णंचस्वरूपंभजेत् सईशोनोगुरुर्भूयात् यतःसएवगुरोरपिपरमोगुरुः मलहानेदृष्टांतः रुद्ररोदनंरुद्रस्यरोदनंरजतं यदरोदीत्तद्रुद्रस्यरुद्रत्वंयदवशीर्यततद्रजतंहिरण्यमभवदितिश्रुतेः तद्यथाऽग्नेःसंपर्कान्मलंजहातिस्वंवर्णंभजतेनतुक्षालनादिभिस्तथानयज्ञादिभिर्मलत्यागःकिंतुत्वत्सेवयैव तेषांतुसेवांगत्वमितिभावः ॥ ४८ ॥

**जनोऽबुधोयंनिजकर्मबंधनःसुखेच्छयाकर्मसमीहतेऽसुखं ॥ यत्सेवयातांविधुनोत्यसन्मतिंग्रंथिंसभिंद्याद्धृदयंसनोगुरुः ॥ ४७ ॥ यत्सेवयाऽग्नेरिवरुद्ररोदनंपुमान्विजह्यान्मलमात्मनस्तमः ॥ भजेतवर्णंनिजमेषसोव्ययोभूयात्सईशःपरमोगुरुर्गुरुः ॥ ४८ ॥ नयत्प्रसादायुतभागलेशमन्येचदेवागुरवोजनाःस्वयं ॥ कर्तुंसमेताःप्रभवंतिपुंसस्तमीश्वरंत्वांशरणंप्रपद्ये ॥ ४९ ॥ अचक्षुरंधस्ययथाऽग्रणीःकृतस्तथाजनस्याविदुषोऽबुधोगुरुः ॥ त्वमर्कदृक्सर्वदृशांसमीक्षणोवृतोगुरुर्नःस्वगतिंबुभुत्सतां ॥ ५० ॥ जनोजनस्यादिशतेसतींमतिंययाप्रपद्येतदुरत्ययंतमः ॥ त्वंत्वव्ययंज्ञानममोघमंजसाप्रपद्यतेयेनजनोनिजंपदं ॥ ॥ ५१ ॥ त्वंसर्वलोकस्यसुहृत्प्रियेश्वरोह्यात्मागुरुर्ज्ञानमभीष्टसिद्धिः ॥ तथापिलोकोनभवंतमंधधीर्जानातिसंतंहृदिबद्धकामः ॥ ५२ ॥ ॥ ॥ ॥ ॥**

परमेश्वरत्वंपरमगुरुत्वंचप्रपंचयन्नाह नेति यत्प्रसादस्यायुतभागस्तस्यलेशमात्रमप्यन्येदेवादयःसर्वेसमेताअपिस्वयंतन्निरपेक्षाःसंतःकर्तुंनप्रभवंति ॥ ४९ ॥ तदेवदृष्टांतेनस्पष्टयन्नाह अचक्षुरिति अविदुषोजनस्यअबुधोऽविद्वान्गुरुस्तथैव अर्कप्रकाशवत्स्वतएवदृक्ज्ञानंयस्यसःअर्कदृक् अतःसर्वदृशांसर्वेंद्रियाणांसमीक्षणःप्रकाशकः अतएवस्वगतिंबोद्धुमिच्छद्भिर्नोऽस्माभिर्गुरुर्वृतोसि ॥ ५० ॥ किंच प्राकृतोगुरुरनर्थहेतुरित्याह जनइति आदिशतेउपादिशति असतींमतिमर्थकामादिमार्तिं तमःसंसारं ॥ ५१ ॥ ननुतर्हिसर्वोपिलोकोमामेवकिन्नोपसरति अज्ञानादित्याह त्वमिति प्रियश्चासौईश्वरश्च ॥ ५२ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ गुणायंगुणताऽवाप्यैवृणलेकरुणानिधिं ॥ तमहंशरणंयामिपरमानंदमाधवं ॥ १ ॥ त्रिगुणाष्टभिरध्यायैर्वैवस्वतसुता न्वयः ॥ नवमेकृष्णसत्कीर्तिप्रसंगायवितन्यते ॥ २ ॥ एवमुक्तोऽष्टमस्कंधेसद्धर्मःसत्वशोधकः ॥ कर्तृपालकवक्रादिमन्वादीनांनिरूपणैः ॥ ३ ॥ सद्धर्मशुद्धसत्वानामंतरंगेशसत्कथा ॥ सूर्यसोमान्वयाख्यानैरधुनासंगतोच्यते ॥ ४ ॥ तत्रच त्रयोदशभिरध्यायैःसूर्यवंशोनुवर्ण्य



श्रीगणेशायनमः ॥ राजोवाच मन्वंतराणिसर्वाणित्वयोक्तानिश्रुतानिमे ॥ वीर्याण्यनंतवीर्यस्यहरेस्तत्रकृतानिच ॥ १ ॥ योऽसौसत्यव्रतोनामराजर्षिर्द्रविडेश्वरः ॥ ज्ञानंयोऽतीतकल्पांतेलेभेपुरुषसेवया ॥ २ ॥ सवैविवस्वतःपुत्रोमनुरासीदितिश्रुतं ॥ त्वत्तस्तस्यसुताश्चोक्ताइक्ष्वाकुप्रमुखानृपाः ॥ ३ ॥ तेषांवंशंपृथग्ब्रह्मन्वंश्यानुचरितानिच ॥ कीर्तयस्वमहाभागनित्यंशुश्रूषतांहिनः ॥ ४ ॥ येभूतायेभविष्याश्चभवंत्यद्यतनाश्चये ॥ तेषांनःपुण्यकीर्तीनांसर्वेषांवदविक्रमान् ॥ ५ ॥ सूतउवाच एवंपरीक्षिताराज्ञासदसिब्रह्मवादिनां ॥ पृष्टःप्रोवाचभगवान्शुकःपरमधर्मवित् ॥ ६ ॥ श्रीशुकउवाच श्रूयतांमानवोवंशःप्राचुर्येणपरंतप ॥ नशक्यतेविस्तरतोवक्तुंवर्षशतैरपि ॥ ७ ॥ परावरेषांभूतानामात्मायःपुरुषःपरः ॥ सएवासीदिदंविश्वंकल्पांतेऽन्यन्नकिंचन ॥ ८ ॥ तस्यनाभेःसमभवत्पद्मकोशोहिरण्मयः ॥ तस्मिन्जज्ञेमहाराजस्वयंभूश्चतुराननः ॥ ९ ॥ मरीचिर्मनसस्तस्यजज्ञेतस्यापिकश्यपः ॥ दाक्षायण्यांततोदित्यांविवस्वानभवत्सुतः ॥ १० ॥ ततोमनुःश्राद्धदेवःसंज्ञायामासभारत ॥ श्रद्धायांजनयामासदशपुत्रान्सआत्मवान् ॥ ११ ॥ इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ॥ नरिष्यंतंपृषध्रंचनभगंचकविंविभुः ॥ १२ ॥

ते ॥ एकादशभिरध्यायैःसोमवंशस्ततःपरैः ॥ ५ ॥ तत्रतुप्रथमेध्यायेवैवस्वतसुतान्वये ॥ सोमवंशप्रवेशोक्त्यैसुद्युम्नस्त्रीत्वमुच्यते ॥ ६ ॥ उक्तानुवादपूर्वकंवैवस्वतमनोर्वंशंपृच्छति मन्वंतराणीतिपंचभिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अनुक्तवंशंवक्तुंपूर्वोक्तमेवतावद्वंशप्रवर्त्तकं श्रीआदिनारायणमारभ्यानुस्मारयति परावरेषामितिपंचभिः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ नाभागंचेतिपाठेपिनभगएव नाभागः ॥ १२ ॥

सूर्यपौत्रस्यसुद्युम्नस्यस्त्रीत्वेसतिबुधात्पुरूरवःप्रभृतिसोमवंशसंचारंवक्तुंसप्रस्तावामिलोपाख्यानमाहअप्रजस्यमनोःपूर्वमित्यादिनायावदध्या
यसमाप्ति ॥ १३ ॥ पूर्वमिक्ष्वाकुप्रभृतीनामुत्पत्तेःप्राक्दुहित्रर्थंममकन्यायथाभवेत्तथायजेतिहोतारंसम्यगयाचत पयएवव्रतमाहारोनिय

अप्रजस्यमनोःपूर्वंवसिष्ठोभगवान्किल ॥ मित्रावरुणयोरिष्टिंप्रजार्थमकरोत्प्रभुः ॥ १३ ॥ तत्रश्रद्धाम
नोःपत्नीहोतारंसमयाचत ॥ दुहित्रर्थमुपागम्यप्रणिपत्यपयोव्रता ॥ १४॥ प्रेषितोध्वर्युणाहोतायत्तयासु
समाहितः ॥ हविषिव्यचरत्तेनवषट्कारंगृणन्द्विजः ॥ १५ ॥ होतुस्तद्व्यभिचारेणकन्येलानामसाऽभव
त्॥तांविलोक्यमनुःप्राहनातिहृष्टमनागुरुं॥१६॥ भगवन्किमिदंजातंकर्मवोब्रह्मवादिनां ॥ विपर्ययमहो
कष्टंमैवंस्याद्ब्रह्मविक्रिया ॥ १७ ॥ यूयंमंत्रविदोयुक्तास्तपसादग्धकिल्बिषाः ॥ कुतःसंकल्पवैषम्यमनृ
तंविबुधेष्विव ॥ १८ ॥ तन्निशम्यवचस्तस्यभगवान्प्रपितामहः ॥ होतुर्व्यतिक्रमंज्ञात्वाबभाषेरविनंदनं
॥ १९ ॥ एतत्संकल्पवैषम्यंहोतुस्तेव्यभिचारतः ॥ तथापिसाधयिष्येतेसुप्रजस्त्वंस्वतेजसा ॥ २० ॥ एवं
व्यवसितोराजन्भगवान्सुमहायशाः ॥ अस्तौषीदादिपुरुषमिलायाःपुंस्त्वकाम्यया ॥ २१ ॥ तस्मैकाम
वरंतुष्टोभगवान्हरिरीश्वरः ॥ ददाविलाऽभवत्तेनसुद्युम्नःपुरुषर्षभः ॥ २२ ॥ सएकदामहाराजविचरन्मृ
गयांवने ॥ वृतःकतिपयामात्यैरश्वमारुह्यसैंधवं ॥ २३॥ प्रगृह्यरुचिरंचापंशरांश्चपरमाद्भुतान् ॥ दंशि
तोऽनुमृगंवीरोजगामदिशमुत्तरां ॥ २४ ॥ सकुमारोवनंमेरोरधस्तात्प्रविवेशह ॥ यत्रास्तेभगवान्रुद्रोरम
माणःसहोमया ॥२५॥ तस्मिन्प्रविष्टएवासौसुद्युम्नःपरवीरहा ॥ अपश्यत्स्त्रियमात्मानमश्वंचवडवांनृप
॥ २६ ॥ तथातदनुगाःसर्वेआत्मलिंगविपर्ययं ॥ दृष्ट्वाविमनसोऽभूवन्वीक्षमाणाःपरस्परं ॥ २७ ॥

तोयस्याः ॥ १४ ॥ अध्वर्युणाहोतर्यजेतिप्रेषितोहोतातेनगृहीतेहविषिसातियत्तयाप्रार्थितंतत्ध्यायन्व्यचरत्अयजत् पाठांतरेतत्अ ाध्यायत्
वाचावषट्कारंगृणन्वौषडित्युच्चारयन् ॥ १५ ॥ १६ ॥ ब्रह्मविक्रियामंत्रान्यथात्वं ॥ १७ ॥ १८ ॥ प्रपितामहोवसिष्ठः ॥ १९॥ २०॥
॥२१॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ ॥ ॥ ॥ ॥

॥ २८ ॥ विगतंतिमिरमाभासःप्रकाशश्चान्यस्ययासु तथाभूतादिशःकुर्वतः ॥ २९ ॥ ३० ॥ प्रसंगंरत्यभिनिवेशं स्त्रीप्रसंगदर्शनकलुषितम न
सःसंतस्तत्प्रसंगशून्यंनरनारायणाश्रमंययुः ॥ ३१ ॥ ३२ ॥ प्रासंगिकमुक्काप्रस्तुतमनुवर्णयाति अनुचरीसंयुक्तेतिचवक्तव्येभूतपूर्वगत्यापुंस्त्व

राजोवाच कथमेवंगुणोदेशःकेनवाभगवन्कृतः ॥ प्रश्नमेनंसमाचक्ष्वपरंकौतूहलंहिनः ॥ २८ ॥ श्रीशु
कउवाच एकदागिरिशंद्रष्टुमृषयस्तत्रसुव्रताः ॥ दिशोवितिमिराभासाःकुर्वंतःसमुपागमन् ॥ २९ ॥ ता
न्विलोक्यांबिकादेवीविवासाव्रीडिताभृशं ॥ भर्तुरंकात्समुत्थायनीवीमाश्वथपर्यधात् ॥ ३० ॥ ऋषयोऽपि
तयोर्वीक्ष्यप्रसंगंरममाणयोः ॥ निवृत्ताःप्रययुस्तस्मान्नरनारायणाश्रमं ॥ ३१ ॥ तदिदंभगवानाहप्रिया
याःप्रियकाम्यया ॥ स्थानंयःप्रविशेदेतत्सवैयोषिद्भवेदिति ॥ ३२ ॥ ततऊर्ध्वंवनंतद्वैपुरुषावर्जयंतिहि ॥
साचानुचरसंयुक्ताविचचारवनाद्वनं ॥ ३३ ॥ अथतामाश्रमाभ्याशेचरंतींप्रमदोत्तमां ॥ स्त्रीभिःपरिवृतांवीक्ष्य
चकमेभगवान्बुधः ॥ ३४ ॥ साऽपितंचकमेसुभ्रूःसोमराजसुतंपतिं ॥ सतस्यांजनयामासपुरूरवसमात्म
जं ॥ ३५ ॥ एवंस्त्रीत्वमनुप्राप्तःसुद्युम्नोमानवोनृपः ॥ सस्मारस्वकुलाचार्यंवसिष्ठमितिशुश्रुम ॥ ३६ ॥ सत
स्यतांदशांदृष्ट्वाकृपयाभृशपीडितः ॥ सुद्युम्नस्याशयन्पुंस्त्वमुपाधावतशंकरं ॥ ३७ ॥ तुष्टस्तस्मैसभग
वानृषयेप्रियमावहन् ॥ स्वांचवाचमृतांकुर्वन्निदमाहविशांपते ॥ ३८ ॥ मासंपुमान्सभवितामासंस्त्रीत
वगोत्रजः ॥ इत्थंव्यवस्थयाकामंसुद्युम्नोऽवतुमेदिनीं ॥ ३९ ॥ आचार्यानुग्रहात्कामंलब्ध्वापुंस्त्वंव्यवस्थ
या ॥ पालयामासजगतींनाभ्यनंदन्स्मतंप्रजाः ॥ ४० ॥ तस्योत्कलोगयोराजन्विमलश्चसुतास्त्रयः ॥ दक्षि
णापथराजानोबभूवुर्धर्मवत्सलाः ॥ ४१ ॥ ततःपरिणतेकालेप्रतिष्ठानपतिःप्रभुः ॥ पुरूरवसउत्सृज्यगांपु
त्रायगतोवनं ॥ ४२ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेइलोपाख्यानेप्रथमोऽध्यायः ॥ १ ॥

निर्देशः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ आशयन्इच्छन् ॥ ३७ ॥ ३८ ॥ ३९ ॥ नाभ्यनंदन् स्त्रीत्वेलज्जयामासंमासंनिलयिावस्था
नात् ॥ ४० ॥ ४१ ॥ ४२ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥

द्वितीयेमनुपुत्राणांद्वावपुत्रौविरागतः ॥ करूषकादिपंचानांवंशानाहलघुक्रमात् ॥ १ ॥ वैवस्वतोमनुःश्राद्धदेवः ॥ १ ॥ इक्ष्वाकुःपूर्वजो येषांतान्दशपुत्रान्लेभे॥ २ ॥ तत्रपृषध्रस्यवंशोनाभवदितिसहेतुकमाह पृषध्रस्त्वित्यादिनाकविःकनीयानित्यतःप्राक्तनेनग्रंथेन खड्गपा

श्रीशुकउवाच एवंगतेथसुद्युम्नेमनुर्वैवस्वतःसुते ॥ पुत्रकामस्तपस्तेपेयमुनायांशतंसमाः ॥ १ ॥ ततोऽय जन्मनुर्देवमपत्यार्थंहरिंप्रभुं ॥ इक्ष्वाकुपूर्वजान्पुत्रान्लेभेस्वसदृशान्दश ॥२॥ पृषध्रस्तुमनोःपुत्रोगोपालो गुरुणाकृतः॥ पालयामासगायत्तोरात्र्यांवीरासनव्रतः ॥३॥ एकदाप्राविशद्गोष्ठंशार्दूलोनिशिवर्षति ॥ शया नागावउत्थायभीतास्ताबभ्रमुर्व्रजे ॥ ४ ॥ एकांजग्राहबलवान्साचुक्रोशभयातुरा ॥ तस्यास्तत्क्रंदितंश्रुत्वा पृषध्रोऽभिससारह ॥ ५ ॥ खड्गमादायतरसाप्रलीनोडुगणेनिशि ॥ अजानन्नहनद्बभ्रोःशिरःशार्दूलशंकया ॥ ६ ॥ व्याघ्रोऽपिवृक्णश्रवणोनिस्त्रिंशाग्राहतस्ततः॥निश्चक्रामभृशंभीतोरक्तंपथिसमुत्सृजन् ॥७॥ मन्य मानोहतंव्याघ्रंपृषध्रःपरवीरहा॥अद्राक्षीत्स्वहतांबभ्रुंव्युष्टायांनिशिदुःखितः॥८॥तंशशापकुलाचार्यःकृता गसमकामतः ॥ नक्षत्रबंधुःशूद्रस्त्वंकर्मणाभवितामुना ॥ ९ ॥ एवंशप्तस्तुगुरुणाप्रत्यगृण्हात्कृतांजलिः ॥ अ धारयद्व्रतंवीरऊर्ध्वरेतामुनिप्रियं ॥ १० ॥ वासुदेवेभगवतिसर्वात्मनिपरेमले ॥ एकांतित्वंगतोभक्त्यासर्वभू तसुहृत्समः ॥ ११ ॥ विमुक्तसंगःशांतात्मासंयताक्षोऽपरिग्रहः॥यदृच्छयोपपन्नेनकल्पयन्वृत्तिमात्मनः॥ ॥ १२ ॥ आत्मन्यात्मानमाधायज्ञानतृप्तःसमाहितः ॥ विचचारमहीमेतांजडांधबधिराकृतिः ॥ १३ ॥ ए वंवृत्तोवनंगत्वादृष्ट्वादावाग्निमुत्थितं ॥ तेनोपयुक्तकरणोब्रह्मप्रापपरंमुनिः ॥ १४ ॥ ॥ ॥

णेःसतस्तिष्ठतोजागरणंवीरासनंतदेवव्रतंयस्य यत्तःअवहितःसन्गाःपालयामास ॥ ३ ॥ शार्दूलोव्याघ्रः ॥ ४॥५ ॥ प्रलीनाउडुगणाय स्मिंस्तस्मिन्समये बभ्रोःकपिलायाःगोः ॥ ६ ॥ गांकामतोनजघानेतिख्यापयितुंवृक्णश्रवणइत्याद्युक्तं ॥ ७ ॥ व्युष्टायांप्रभातायां ॥ ८ ॥ क्षत्रबंधुरपित्वंनभविताअपितुशूद्रोभवितेति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ उपयुक्तकरणःदग्धदेहः ॥ १४ ॥ ॥

कवेरपिवंशोनाभवदित्याह कविरिति बंधुभिःसहराज्यंविसृज्य ॥ १५ ॥ १६ ॥ ब्रह्मभूयंब्राह्मणत्वंनृगस्यवंशः पुत्रःसुमतिस्ततोभूतज्यो
तिस्ततोवसुः ॥ १७ ॥ ओघवतःपिता तत्पुत्रोऽप्योघवानेवेत्यर्थः १८ ॥ तदेवंत्रिभिःश्लोकैःकरूषधृष्टनृगाणांवंशाउक्तानरिष्यंतस्यवंश
माह चित्रसेनइतिसार्द्धैस्त्रिभिः ततइत्यादेर्यत्राधिक्यंस्यात्तत्रानंतर्यंततइत्यादिपदंव्याख्येयं यत्रतुन्यूनत्वंतत्रपूर्वस्यपरस्यवानुषंगादितिव्या

कविःकनीयान्विषयेषुनिरुप्टहोविसृज्यराज्यंसहबंधुभिर्वनं ॥ निवेश्यचित्तेपुरुषंस्वरोचिषंविवेशकैशोरव
याःपरंगतः ॥ १५ ॥ करूषान्मानवादासन्कारूषाःक्षत्रजातयः ॥ उत्तरापथगोप्तारोब्रह्मण्याधर्मवत्सलाः
॥ १६ ॥ धृष्टाद्धार्ष्टमभूत्क्षत्रंब्रह्मभूयंगतंक्षितौ ॥ नृगस्यवंशःसुमतिर्भूतज्योतिस्ततोवसुः ॥ १७ ॥ वसोःप्र
तीकस्तत्पुत्रओघवानोघवत्पिता ॥ कन्याचोघवतीनामसुदर्शनउवाहतां ॥ १८ ॥ चित्रसेनोनरिष्यंताद्दक्ष
स्तस्यसुतोभवत् ॥ तस्यमीढ्वांस्ततःकूर्चइंद्रसेनस्तुतत्सुतः ॥ १९ ॥ वीतिहोत्रास्त्विंद्रसेनात्तस्यसत्यश्रवाअ
भूत ॥ उरुश्रवाःसुतस्तस्यदेवदत्तस्ततोऽभवत् ॥ २० ॥ ततोऽग्निवेश्योभगवानग्निःस्वयमभूत्सुतः ॥ कानी
नइतिविख्यातोजातूकर्ण्योमहानृषिः ॥ २१ ॥ ततोब्रह्मकुलंजातमाग्निवेश्यायनंनृप ॥ नरिष्यंतान्वयःप्रो
क्तोदिष्टवंशमतःशृणु ॥ २२ ॥ नाभागोदिष्टपुत्रोऽन्यःकर्मणावैश्यतांगतः ॥ भलंदनःसुतस्तस्यवत्सप्रीति
र्भलंदनात् ॥ २३ ॥ वत्सप्रीतेःसुतःप्रांशुस्तत्सुतंप्रमतिंविदुः ॥ खनित्रःप्रमतेस्तस्माच्चाक्षुषोऽथविविंश
तिः ॥ २४ ॥ विविंशतिसुतोरंभःखनिनेत्रोऽस्यधार्मिकः ॥ करंधमोमहाराजतस्यासीदात्मजोनृपः ॥ २५ ॥
तस्यावीक्षित्सुतोयस्यमरुत्तश्चक्रवर्त्यभूत् ॥ संवर्त्तोयाजयद्यंवैमहायोग्यंगिरःसुतः ॥ २६ ॥ मरुत्तस्ययथा
यज्ञोनतथाऽन्यस्यकश्चन ॥ सर्वंहिरण्मयंत्वासीद्यत्किंचिच्चास्यशोभनं ॥ २७ ॥ ॥ ॥

ख्येयं ॥ १९ ॥ २० ॥ आग्निवेश्यएवकानीनइतिजातूकर्ण्यइतिचविख्यातः ॥ २१ ॥ २२ ॥ दिष्टस्यपुत्रोनाभागोवक्ष्यमाणनाभागाद
न्यइतिभ्रांतिव्युदासार्थमनुवादमात्रं ॥ २३ ॥ २४ ॥ २५ ॥ अंगिरसःसुतोमहायोगीसंवर्त्तोयमयाजयत्समरुत्तः अस्ययत्किंचित्पात्रा
दिकमस्तितत्तुसर्वंहिरण्मयंशोभनमासीत् ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥

अमाद्यत् अतृप्यत् ॥ २८ ॥२९॥३०॥ यतःयस्यां तृणबिंदोः पुत्रा अभवन् ॥ ३१ ॥ ३२ ॥ तानेवाह विशालइति तस्यतृणबिंदोःसुताः
॥ ३३ ॥ सहदेवजःदेवजेनसहितः पाठांतरेनामान्यत्वमात्रमर्थस्तुसएव ॥ ३४ ॥ ३५ ॥ वैशालभूपालाविशालस्यान्वयेजाताः ॥ ३६
इतिश्रीभागवतेमहापुराणेनवमेटीकायांद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ तृतीयेमनुपुत्रस्यशर्यातेःकीर्त्यतेन्वयः ॥ यत्रसौकन्य

अमाद्यदिंद्रःसोमेनदक्षिणाभिर्द्विजातयः ॥ मरुतःपरिवेष्टारोविश्वेदेवाःसभासदः ॥ २८ ॥ मरुत्तस्यदमःपु
त्रस्तस्यासीद्राज्यवर्द्धनः ॥ सुधृतिस्तत्सुतोजज्ञेसौधृतेयोनरःसुतः ॥ २९ ॥ तत्सुतःकेवलस्तस्माद्बंधुमा
न्वेगवांस्ततः ॥ बंधुस्तस्याभवद्यस्यतृणबिंदुर्महीपतिः ॥ ३० ॥ तंभेजेऽलंबुषादेवीभजनीयगुणालयं ॥
वराप्सरायतःपुत्राःकन्याचेडविडाऽभवत् ॥ ३१ ॥ तस्यामुत्पादयामासविश्रवाधनदंसुतं ॥ प्रादायविद्यां
परमामृषिर्योगेश्वरात्पितुः ३२ ॥ विशालःशून्यबंधुश्चधूम्रकेतुश्चतत्सुताः ॥ विशालोवंशकृद्राजावैशालींनि
र्ममेपुरीं ॥ ३३ ॥ हेमचंद्रःसुतस्तस्यधूम्राक्षस्तस्यचात्मजः ॥ तत्पुत्रात्संयमादासीत्कृशाश्वःसहदेवजः ॥ ३४ ॥
कृशाश्वात्सोमदत्तोभूद्योऽश्वमेधैरिडस्पतिं ॥ इष्ट्वापुरुषमापाग्र्यांगतिंयोगेश्वराश्रितः ॥ ३५ ॥ सौमदत्ति
स्तुसुमतिस्तत्सुतोजनमेजयः ॥ एतेवैशालभूपालास्तृणबिंदोर्यशोधराः ॥ ३६ ॥ इतिश्रीभागवतेमहापु
राणेनवमस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ श्रीशुकउवाच शर्यातिर्मानवोराजाब्रह्मिष्ठःसबभूवह ॥ योवा
आंगिरसांसत्रेद्वितीयमहऊचिवान् ॥ १ ॥ सुकन्यानामतस्यासीत्कन्याकमललोचना ॥ तयासार्द्धंवनगतो
ह्यगमच्च्यवनाश्रमं ॥ २ ॥ सासखीभिःपरिवृताविचिन्वंत्यंघ्रिपान्वने ॥ वल्मीकरंध्रेददृशेखद्योतेइवज्योति
षी ॥ ३ ॥ तेदैवचोदिताबालाज्योतिषीकंटकेनवै ॥ अविध्यन्मुग्धभावेनसुस्रावासृक्ततोबहु ॥ ४ ॥ ॥

माख्यानंरैवतंचमहाऽद्भुतं ॥ १ ॥ ब्रह्मिष्ठोवेदार्थतत्त्वज्ञः तदेवाह योवाइति द्वितीयमहः द्वितीयेऽन्हिक्रियमाणंकर्मऊचिवान् उवाच त
स्यवंशमुत्तानबर्हिरानर्त्तइत्यादिनावक्ष्यति ॥ १ ॥ आदौतावत्तत्कन्यावृत्तांतमाह सुकन्यानामेत्यादिना ॥ २ ॥ ३ ॥ ४ ॥ ॥

॥ ५॥ भार्गवस्यच्यवनस्य अभद्रमपराधः ॥ ६॥ ७॥ ८॥ मुग्धेयंममकन्याक्षंतव्यंत्वयेत्युच्यमानेकतिवर्षाण्यस्याविवाहःकृतोनवेत्यादिवा क्यैस्तदभिप्रायंज्ञात्वातस्मैतांदुहितरंप्रादात् ॥९॥१०॥ हेईश्वरौसद्वैद्यौयुवांमह्यंवयस्तारुण्यंदत्तंसंपादयतं ॥ ११॥ असोमपोःसोमपानर हितयोरपिवांयुवयोःसोमस्यग्रहंसोमपूर्णपात्रंग्रहीष्येदास्यामीति युवांसोमेनयक्ष्यइत्यर्थः ऐंद्रंवायवंगृह्णातीत्यादिषुद्रव्यदेवतासंबंधानुप



शकृन्मूत्रनिरोधोऽभूत्सैनिकानांचतत्क्षणात् ॥ राजर्षिस्तमुपालक्ष्यपुरुषान्विस्मितोऽब्रवीत् ॥ ५॥ अप्य भद्रंनयुष्माभिर्भार्गवस्यविचेष्टितं ॥ व्यक्तंकेनापिनस्तस्यकृतमाश्रमदूषणं ॥ ६ ॥ सुकन्याप्राहपितरं भीताकिंचित्कृतंमया ॥ द्वेज्योतिषीअजानंत्यानिर्भिन्नेकंटकेनवै ॥ ७॥ दुहितुस्तद्वचःश्रुत्वाशर्यातिर्जा तसाध्वसः ॥ मुनिंप्रसादयामासवल्मीकांतर्गतंशनैः ॥ ८॥ तदभिप्रायमाज्ञायप्रादाद्दुहितरंमुनेः ॥ कृ च्छ्रान्मुक्तस्तमामंत्र्यपुरंप्रायात्समाहितः ॥ ९ ॥ सुकन्याच्यवनंप्राप्यपतिंपरमकोपनं ॥ प्रीणयामास चित्तज्ञाअप्रमत्तानुवृत्तिभिः ॥ १०॥ कस्यचित्त्वथकालस्यनासत्यावाश्रमागतौ ॥ तौपूजयित्वाप्रोवाचव योमेदत्तमीश्वरौ ॥ ११ ॥ ग्रहंग्रहीष्येसोमस्ययज्ञेवामप्यसोमपोः ॥ क्रियतांमेवयोरूपंप्रमदानांयदी प्सितं ॥ १२ ॥ बाढमित्यूचतुर्विप्रमभिनंद्यभिषक्तमौ ॥ निमज्जतांभवानस्मिन्ह्रदेसिद्धविनिर्मिते॥ ॥ १३ ॥ इत्युक्त्वाजरयाग्रस्तदेहोधमनिसंततः ॥ ह्रदंप्रवेशितोऽश्विभ्यांवलीपलितविप्रियः ॥ १४ ॥ पुरुषास्त्रयउत्तस्थुरपीच्यावनिताप्रियाः ॥ पद्मस्रजःकुंडलिनस्तुल्यरूपाःसुवाससः ॥ १५ ॥ तान्निरी क्ष्यवरारोहासरूपान्सूर्यवर्चसः ॥ अजानतीपतिंसाध्वीअश्विनौशरणंययौ ॥ १६ ॥ दर्शयित्वापतिंत स्यैपातिव्रत्येनतोषितौ ॥ ऋषिमामंत्र्यययतुर्विमानेनत्रिविष्टपं ॥१७॥ यक्ष्यमाणोऽथशर्यातिश्च्यवनस्या श्रमंगतः ॥ ददर्शदुहितुःपार्श्वेपुरुषंसूर्यवर्चसं ॥ १८॥ ॥ ॥ ॥

रत्यागृह्णातेर्यागपर्यवसायित्वात् ॥ १२ ॥ बाढमित्यभिनंद्यभवानस्मिन्निमज्जतामित्यूचतुः ॥ १३ ॥ ह्रदंप्रवेशितः तावपितमपिवृद्धंगृही त्वाप्रविष्टावित्यर्थः ॥ १४ ॥ १५ ॥ अश्विनौशरणंययौ युवांपृथक्स्थित्वामत्पतिंदर्शयतमितिप्रार्थयामासेत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥

॥ १९ ॥ प्रलंभितोवंचितः हेअसति असंमतमनभीष्टं ॥ २० ॥ हेसतांकुलप्रसूतेतवमतिरन्यथातद्विपर्ययेणकथमवगताअवसन्नाअध्य
वसितेतिवा तदेवाह कुलदूषणंत्विदमित्यादि ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सद्यस्तत्क्षणमेवमन्युर्यस्यसइंद्रः ॥ २५ ॥ २६ २७ ॥

राजादुहितरंप्राहकृतपादाभिवंदनां ॥ आशिषश्चाप्रयुंजानोनातिप्रीतमनाइव ॥ १९ ॥ चिकीर्षितंतेकि
मिदंपतिस्त्वयाप्रलंभितोलोकनमस्कृतोमुनिः ॥ त्वंयज्जराग्रस्तमसत्यसंमतंविहायजारंभजसेऽमुमध्वगं
॥ २० ॥ कथंमतिस्तेऽवगताऽन्यथासतांकुलप्रसूतेकुलदूषणंत्विदं ॥ बिभर्षिजारंयदपत्रपाकुलंपितुश्चभ
र्तुश्चनयस्यधस्तमः ॥२१॥ एवंब्रुवाणंपितरंस्मयमानाशुचिस्मिता ॥ उवाचताततजामातातवैषभृगुनंदनः
॥ २२ ॥ शशंसपित्रेतत्सर्वंवयोरूपाभिलंभनं ॥ विस्मितःपरमप्रीतस्तनयांपारिषस्वजे ॥ २३ ॥ सोमेन
याजयन्वीरंग्रहंसोमस्यचाग्रहीत् ॥ असोमपोरप्यश्विनोश्च्यवनःस्वेनतेजसा ॥ २४ ॥ हंतुंतमाददेवज्रं
सद्योमन्युरमर्षितः ॥ सवज्रंस्तंभयामासभुजमिंद्रस्यभार्गवः ॥ २५ ॥ अन्वजानंस्ततःसर्वेग्रहंसोमस्य
चाश्विनोः ॥ भिषजावितियत्पूर्वंसोमाहुत्याबहिष्कृतौ ॥ २६ ॥ उत्तानबर्हिरानर्त्तोभूरिषेणइतित्रयः ॥
शर्यातेरभवन्पुत्राआनर्त्ताद्रेवतोऽभवत् ॥ २७ ॥ सोंतःसमुद्रेनगरींविनिर्मायकुशस्थलीं ॥ आस्थितोऽभुं
क्तविषयानानर्त्तादीनरिंदम ॥ २८ ॥ तस्यपुत्रशतंजज्ञेककुद्मिज्येष्ठमुत्तमं ॥ ककुद्मीरेवतींकन्यांस्वामादाय
विभुंगतः ॥ २९ ॥ कन्यावरंपरिप्रष्टुंब्रह्मलोकमपावृतं ॥ आवर्त्तमानेगांधर्वेस्थितोऽलब्धक्षणःक्षणं
॥ ३० ॥ तदंतआद्यमानम्यस्वाभिप्रायंन्यवेदयत् ॥ तच्छ्रुत्वाभगवान्ब्रह्माप्रहस्यतमुवाचह ॥ ३१ ॥ अ
होराजन्निरुद्धास्तेकालेनहृदियेकृताः ॥ तत्पुत्रपौत्रनप्तृणांगोत्राणिचनशृण्महे ॥ ३२ ॥ ॥ ॥

विषयान्देशान्आनर्त्तादीन्अभुंक्तअपालयत् ॥ २८ ॥ ककुद्मीज्येष्ठोयस्मिन्तत् विभुंब्रह्माणं ॥ २९ ॥ नलब्धःक्षणोऽवसरोयेन ॥
॥ ३० ॥ आद्यंब्रह्माणं ॥ ३१ ॥ तेत्वयाहृदयेयेकृतास्तेसर्वेकालेननिरुद्धाःसंहृताः ३२ ॥ ॥ ॥ ॥

त्रिणवसप्तविंशतिचतुर्युगगणितैःविकल्पितोविभक्तः योदेवस्यांशोऽस्तितस्मैनररत्नायदेहि ॥ ३३ ॥ तदेवाह भुवइति ॥ ३४ ॥ ३५ ॥ पुण्यजनत्रासात्यक्षभयात्पूर्वमेवचिरंपुरंतद्भ्रातृभिस्त्यक्तं ॥ ३६ ॥ इतिनवमेटीकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥ चतुर्थे मनुपुत्रस्यनभगस्यकथोच्यते ॥ तत्सूनोश्चांबरीषस्यरुत्याप्रतिहतायतः ॥ १ ॥ नभगस्यवंशमाह नभगस्यापत्यंनाभागः नाभागादंबरीषोमहाभागवतोऽभूदितिवक्ष्यन् तद्धेतुत्वेनवंशप्रवर्त्तकस्यनाभागस्यनिष्कपटंचरितंतेनतुश्रीरुद्रप्रसादमाह यंततमित्यादिना ब्रह्मचारिणं बहुकालंगुरुकुलेवसंतंनैष्ठिकोऽसाविति मत्वाविभागसमयेतस्मैभागमप्रकल्प्यैवभ्रातरः सर्वंदायंविभज्यगृहीत्वापश्चात्गुरुकुलादागतंयं

कालोभियातस्त्रिणवचतुर्युगविकल्पितः ॥ तद्गच्छदेवदेवांशोबलदेवोमहाबलः ॥ ३३ ॥ कन्यारत्नमिदं राजन्नररत्नायदेहिभो ॥ भुवोभारावतारायभगवान्भूतभावनः ॥ ३४ ॥ अवतीर्णोनिजांशेनपुण्यश्रवणकीर्त्तनः ॥ इत्यादिष्टोऽभिवंद्याजंनृपःस्वपुरमागतः ॥ ३५ ॥ त्यक्तंपुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ॥ सुतांदत्वाऽनवद्यांगींबलायबलशालिने ॥ बदर्याख्यंगतोराजातप्तुंनारायणाश्रमं ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ श्रीशुकउवाच नाभागोनभगापत्यंयंततंभ्रातरःकविं ॥ यविष्ठंव्यभजन्दायंब्रह्मचारिणमागतं ॥ १ ॥ भ्रातरोऽभंक्तकिंमह्यंभजाम पितरंतव ॥ त्वांमआर्यास्तताभांक्षुर्मापुत्रकतदादृथाः ॥ २ ॥ ॥ ॥ ॥

भागार्थिनंकविंविद्वांसंयविष्ठंप्रतिततंतातंपितरंदायंव्यभजन्नित्यर्थः ॥ १ ॥ एतदेवप्रश्नोत्तराभ्यांदर्शयति तत्रनाभागःपृच्छति हेभ्रातरो मह्यंकिमभंक्तव्यभजंत कंभागंमदर्थंयूयंप्रकल्पितवंतः भ्रातरआहुः तदाविस्मृतमस्माभिरिदानींतुतवपितरंविभजाम त्वंपितरंगृहाणेत्यर्थः सचपितरंगत्वाह ततहेतातआर्याःश्रेष्ठाः मेममत्वामभांक्षुर्भागंचक्रुः मदीयोभागस्त्वमित्यर्थः पाठांतरे हेतातकिमिदंममाभांक्षुः भजाम पितरंतवेत्युक्तवंत आर्यास्त्वांमह्यंकिमर्थंददुरित्यर्थःपिताआह हेपुत्रकतत्तैरुक्तंमादृथाः प्रतारणमात्रंतैःकृतंतस्मिन्नादरंमाकार्षीःनह्यहंदाय इवभोगसाधनमित्यर्थः ॥ २ ॥ ॥ ॥ ॥

तथाऽपितैर्भागत्वेनदत्तोऽहंतवजीवनोपायमुपदेक्ष्यामीत्याह इमइतिसपादाभ्यांद्वाभ्यां अभिप्लवःषडहोभवतिपृष्ठ्यःषडहोभवतीतिवि
हितेषुषडहेष्वावर्त्यमानेषुषष्ठंषष्ठमहःकर्मोपेत्यप्राप्यतदनुष्ठानेकर्माणिसुमेधसोऽपितेसूक्तविशेषाज्ञानेनमुह्यंति कवेहेविद्वन् ॥ ३ ॥ तान्महा
त्मनोऽपित्वमिदमित्थारौद्रमितिचयेयज्ञेनदक्षिणयेतिचत्वंवैश्वदेवेद्वेसूक्तेशंसयपाठय ततःकर्मणिसमाप्तेसतितेस्वर्यंतः स्वर्गंगच्छंतःस्वसत्रे
परिशेषितमवशिष्टमात्मनोधनंतेतुभ्यंदास्यंति अथतस्मात्तान्गच्छेति तथेत्यादिशुकवाक्यं यथावत्कृतवान् सत्रपरिशेषितंसत्रावशिष्टंधनं
॥ ४ ॥ ५ ॥ पुरुषःश्रीरुद्रः दृश्यतइतिदर्शनंशरीरं कृष्णंदर्शनंयस्यसः वास्तुकंयज्ञभूमिगतंवसुधनंममेत्युवाच ॥ ६ ॥ तर्हिस्मतदैवममेद

इमेआंगिरसःसत्रमासतेद्यसुमेधसः ॥ षष्ठंषष्ठमुपेत्याहःकवेमुह्यंतिकर्माणि ॥ ३ ॥ तांस्त्वंशंसयसूक्तेद्वेवैश्व
देवेमहात्मनः ॥ तेस्वर्यंतोधनंसत्रपरिशेषितमात्मनः॥४॥दास्यंत्यथततोगच्छतथासकृतवान्यथा॥तस्मैद
त्वाययुःस्वर्गंतेसत्रपरिशेषितं ॥ ५ ॥ तंकश्चित्स्वीकरिष्यंतंपुरुषःकृष्णदर्शनः ॥ उवाचोत्तरतोभ्येत्यममेदं
वास्तुकंवसु ॥ ६ ॥ ममेदमृषिभिर्दत्तमितितर्हिस्ममानवः ॥ स्यान्नौतेपितरिप्रश्नःपृष्टवान्पितरंतथा ॥ ७ ॥
यज्ञवास्तुगतंसर्वमुच्छिष्टमृषयःक्वचित्॥ चक्रुर्विभागंरुद्रायसदेवःसर्वमर्हति॥८॥ नाभागस्तंप्रणम्याहत
वेशकिलवास्तुकं ॥ इत्याहमेपिताब्रह्मन्शिरसात्वांप्रसादये॥९॥ यत्तेपिताऽवदद्धर्मंत्वंतुसत्यंप्रभाषसे॥द
दामितेमंत्रदृशेज्ञानंब्रह्मसनातनं॥१०॥ गृहाणद्रविणंदत्तंमत्सत्रेपरिशेषितं॥ इत्युक्त्वांतर्हितोरुद्रोभगवा
न्सत्यवत्सलः॥११॥ यएतत्संस्मरेत्प्रातःसायंचसुसमाहितः॥कविर्भवतिमंत्रज्ञोगतिंचैवतथात्मनः॥१२॥

मितिमानवोनाभागउवाच पुनश्चरुद्रउवाच नौआवयोरस्मिन्विवादेतेपितरिप्रश्नःस्यादिति पृष्टवानितिशुकोक्तिः ॥ ७ ॥ पृष्टस्यमनोर्वा
क्यंयज्ञवास्तुगतमिति उच्छिष्टमुच्चरितं क्वचिदितिदक्षाध्वरे उच्छेषणभागोवैरुद्रइतिश्रुतेश्च किंच सदेवईश्वरःसर्वमप्यर्हतिकिंपुनर्यज्ञा
वशिष्टमित्यर्थः॥ ८ ॥ ९ ॥ श्रीरुद्रआह यत्तेइति ॥ १० ॥ इदमाख्यानंश्रुतिप्रसिद्धं तथाहिबह्वृचब्राह्मणं नाभानेदिष्ठंवैमानवंब्रह्मचर्यंवसंतं
भ्रातरोनिरभजन्सोऽब्रवीदित्यादि ॥ ११ ॥ अस्याख्यानस्यस्मरणेफलमाह यएतदिति आत्मनोगतिंचप्राप्नोतीतिशेषः ॥ १२ ॥ ॥

क्वचिदपिनप्रतिहतोब्रह्मशापोऽपिब्राह्मणेनदुर्वाससानिर्मितःकृत्यानलोऽपियंनास्पृशात् अतोऽसौमहाभागवतः अतएवकृतीपुण्यवान् ॥ १३ ॥ तस्यश्रोतुमिच्छामि चरितमितिशेषः ब्रह्मदंडःकृत्यानलो नप्राभून्नसमर्थोबभूव॥ १४ ॥ श्रियंसंपदंविभवमैश्वर्यं अतुलंनिरुपमं ॥ १५ ॥ पुंसामतिदुर्लभमपितत्सर्वंस्वप्नवत्संस्तुतंनिरूपितंअनुपादेयंमेने तत्रहेतुः विभवस्यनिर्वाणंनाशंविद्वान् यत्येनविभवेनतन्नाशे नवापुमांस्तमोविशतिमोहेनिमज्जति ॥ १६ ॥ नन्वेवंजानंतोऽपिविभवैषिणोदृश्यंतेतत्राह वासुदेवइति भावंभक्तिप्राप्तः येनभावेनेदंविश्वंलोष्ठवदतितुच्छंस्मृतं ॥ १७ ॥ भक्तिमेवसर्वेंद्रियाणांभगवत्परत्वकथनेनप्रपंचयति सवाइतित्रिभिः श्रुतिंश्रोत्रं अच्युतस्यसत्कथाना

नाभागादंबरीषोभून्महाभागवतःकृती ॥ नास्पृशद्ब्रह्मशापोपियंनप्रतिहतःक्वचित् ॥१३॥ राजोवाच भभगन्श्रोतुमिच्छामिराजर्षेस्तस्यधीमतः ॥ नप्राभूद्यत्रनिर्मुक्तोब्रह्मदंडोदुरत्ययः ॥ १४ ॥ श्रीशुकउवाच अंबरीषोमहाभागःसप्तद्वीपवतींमहीं ॥ अव्ययांचश्रियंलब्ध्वाविभवंचातुलंभुवि ॥ १५ ॥ मेनेऽतिदुर्लभंपुंसांसर्वंतत्स्वप्नसंस्तुतं ॥ विद्वान्विभवनिर्वाणंतमोविशतियत्पुमान् ॥ १६ ॥ वासुदेवेभगवतितद्भक्तेषुचसाधुषु॥ प्राप्तोभावंपरंविश्वंयेनेदंलोष्ठवत्स्मृतं॥ १७ ॥सवैमनःकृष्णपदारविंदयोर्वचांसिवैकुंठगुणानुवर्णने ॥ करौहरेर्मंदिरमार्जनादिषुश्रुतिंचकाराच्युतसत्कथोदये॥ १८ ॥मुकुंदलिंगालयदर्शनेदृशौतद्भृत्यगात्रस्पर्शेंगसंगं॥घ्राणंचतत्पादसरोजसौरभेश्रीमत्तुलस्यारसनांतदर्पिते॥ १९ ॥पादौहरेःक्षेत्रपदानुसर्पणेशिरोहृषीकेशपदाभिवंदने ॥ कामंचदास्येनतुकामकाम्ययायथोत्तमश्लोकजनाश्रयारतिः ॥२०॥ एवंसदाकर्मकलापमात्मनःपरेधियज्ञेभगवत्यधोऽक्षजे॥सर्वात्मभावंविदधन्महीमिमांतन्निष्ठविप्राभिहितःशशासह॥२१॥

मुदयश्रवणेचकारेत्यस्यसर्वत्रान्वयः ॥ १८ ॥ मुकुंदस्यलिंगानामालयानिस्थानानितेषांदर्शनेदृशौनेत्रे श्रीमत्यास्तुलस्यास्तत्पादसरोजेनयत्सौरभंतस्मिन् तदर्पितेतस्मैनिवेदितान्नादौ ॥१९॥ कामंस्रक्चंदनादिसेवां दास्येनिमित्तेतत्प्रसादस्वीकारायनतुकामकाम्ययाविषयेच्छया कथंचकार उत्तमश्लोकजनाश्रयारतिर्यथाभवेत्तथा अनेनतद्भक्तेषुचपरंभावंप्राप्तइत्येतत्स्फुटीकृतं ॥ २० ॥ सर्वत्रात्मेतिभावोभावनायस्मिंस्तंआत्मनःस्वस्यकर्मणांकलापंसमूहंभगवतिविदधत्समर्पयंस्तन्निष्ठैर्भागवतैर्विप्रैःअभिहितःशिक्षितःसन्महींशशासपालयामास अनेनाधिकृतोधर्मोपियथावद्दर्शितः ॥ २१ ॥ ॥ ॥ ॥

किंच यज्ञाधिष्ठातारमीश्वरमश्वमेधैरीजेआराधयामास महाविभूत्याउपचितान्यंगानिदक्षिणाश्चयेषुतैर्वसिष्ठादिभिर्हेतुभूतैस्ततैर्विस्तृतैः ध
न्वनिधन्वदेशेनिरुदकेसरस्वतीमभिस्रोतं तस्याःप्रतिलोममित्यर्थः ॥ २२ ॥ किंच यस्यक्रतुषुसदस्यादयोगीर्वाणैःसहभूषणादिभिस्तुल्य
रूपाव्यदृश्यंतसइत्थमितिचतुर्थेनान्वयः नचदेवानांनिमेषाभावाद्वैलक्षण्यं यतः अनिमिषाश्चव्यदृश्यंत ननिमिषंतीतितथा आश्चर्यदर्श
नौत्सुक्येनतेषांनिमेषोपरमादितिभावः ॥ २३ ॥ यस्ययदीयैर्मनुजैरपिस्वर्गोनप्रार्थितस्तस्यतुकावार्त्ता ॥ २४ ॥ आस्तांस्वर्गप्रार्थनशंका
ऽपि यद्यतःमुकुंदंत्हृदिपश्यतस्तान्जनान्कामाविषयानसमर्द्धयंतिनहर्षयंति कथंभूताः स्वाराज्येनस्वरूपसुखेनपरिभाविताअतिशायिता

ईजेऽश्वमेधैरधियज्ञमीश्वरंमहाविभूत्योपचितांगदक्षिणैः॥ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतम
सौसरस्वतीं ॥२२॥ यस्यक्रतुषुगीर्वाणैःसदस्याऋत्विजोजनाः॥ तुल्यरूपाश्चानिमिषाव्यदृश्यंतसुवाससः
॥ २३ ॥ स्वर्गोनप्रार्थितोयस्यमनुजैरमरप्रियः ॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितं ॥ २४ ॥ समर्द्धयं
तितान्कामाःस्वाराज्यपरिभाविताः ॥ दुर्लभानापिसिद्धानांमुकुंदंहृदिपश्यतः ॥ २५ ॥ सइत्थंभक्तियोगे
नतपोयुक्तेनपार्थिवः ॥ स्वधर्मेणहरिंप्रीणन्संगान्सर्वान्शनैर्जहौ ॥ २६ ॥ गृहेषुदारेषुसुतेषुबंधुषुद्विपो
त्तमस्यंदनवाजिपत्तिषु ॥ अक्षय्यरत्नाभरणायुधादिष्वनंतकोशेष्वकरोदसन्मतिं ॥ २७ ॥ तस्माअ
दाद्धरिश्चक्रंप्रत्यनीकभयावहं ॥ एकांतभक्तिभावेनप्रीतोभृत्याभिरक्षणं ॥ २८ ॥ आरिराधयिषुःकृष्णं
महिष्यातुल्यशीलया ॥ युक्तःसांवत्सरंवीरोदधारद्वादशीव्रतं ॥ २९ ॥ व्रतांतेकार्तिकेमासित्रिरात्रंसमु
पोषितः ॥ स्नातःकदाचित्कालिंद्यांहरिंमधुवनेऽर्चयत् ॥ ३० ॥ महाभिषेकविधिनासर्वोपस्करसंपदा ॥
अभिषिच्यांबराकल्पैर्गंधमाल्यार्हणादिभिः ॥ ३१ ॥ ॥ ॥

अतएवसिद्धानामपिदुर्लभाः यानितिपाठेयान्मनुजान् स्वाराज्येत्यत्रापिद्वितीयांतपाठेमनुजानांविशेषणं यमितिपाठेयमंबरीषं पश्यता
मितिपाठेसिद्धानांविशेषणं ॥ २५ ॥ एवंभगवदाराधनपरस्यकामाद्युपेक्षानैवचित्रमित्युपसंहरति सइत्थमितिद्वाभ्यां ॥ २६ ॥ २७ ॥
नन्वेवंभूतोसौकथंप्रतिपक्षान्जयेत्तत्राह तस्माइति ॥ २८ ॥ तदेवंतस्यवैराग्यादिकंहरिभक्तिंचोक्त्वाब्रह्मदंडोयत्रनप्राभूदितियदुक्तंतदेव
द्वादशीव्रतनिष्ठांकथयन्नाह आरिराधयिषुरित्यादिनायावदध्यायसमाप्ति ॥ २९ ॥ अर्चयत् आडागमाभावआर्षः ॥ ३० ॥ ३१ ॥

ब्राह्मणांश्चपूजयामास सिद्धार्थानाप्तकामान्पूजाऽनपेक्षानपि ॥ ३२ ॥ रूप्यांघ्रीणां पयःशीलादिसंपदोयासांतासां ॥ ३३ ॥ न्यर्बुदा निषट्षष्टिकोटीः ॥ ३४ तर्हितदैवदुर्वासाअतिथिःसाक्षात्प्रत्यक्षोऽभूत् ॥ ३५ ॥ आनर्चअर्चितवान् अभ्यवहारायभोजनाय ॥ ३६ ॥ आवश्यकंनैयमिकंमाध्याह्निकंकर्मकर्तुंगतः बृहत्ब्रह्म ॥ ३७ ॥ ३८ ॥ धर्मसंकटमेवाह यद्यतोब्राह्मणातिक्रमेदोषोऽधर्मःद्वादश्यामपा



तद्गतांतरभावेनपूजयामासकेशवं॥ब्राह्मणांश्चमहाभागान्सिद्धार्थानपिभक्तितः॥ ३२ ॥गवांरुक्मविषाणीनांरूप्यांघ्रीणांसुवाससां॥ पयःशीलवयोरूपवत्सोपस्करसंपदां ॥ ३३ ॥ प्राहिणोत्साधुविप्रेभ्योगृहेषुन्यर्बुदानिषट् ॥ भोजयित्वाद्विजानग्रेस्वाद्वन्नंगुणवत्तमं ॥ ३४ ॥ लब्धकामैरनुज्ञातःपारणायोपचक्रमे ॥ तस्य तर्ह्यतिथिःसाक्षाद्दुर्वासाभगवानभूत् ॥ ३५ ॥ तमानर्चातिथिंभूपःप्रत्युत्थानासनार्हणैः ॥ ययाचेऽभ्यवहारायपादमूलमुपागतः ॥ ३६ ॥ प्रतिनंद्यसतद्याच्ञांकर्तुमावश्यकंगतः ॥ निममज्जबृहद्ध्यायन्कालिंदीसलिलेशुभे॥ ३७॥मुहूर्तार्द्धावशिष्टायांद्वादश्यांपारणंप्रति ॥ चिंतयामासधर्मज्ञोद्विजैस्तद्धर्मसंकटे ॥ ३८ ॥ ब्राह्मणातिक्रमेदोषोद्वादश्यांयदपारणे ॥ यत्कृत्वासाधुमेभूयादधर्मोवानमांस्पृशेत् ॥ ३९॥ अंभसाकेवलेनाथकरिष्येव्रतपारणं ॥ प्राहुरब्भक्षणंविप्राह्यशितंनाशितंचतत् ॥ ४० ॥ इत्यपःप्राश्यराजर्षिश्चिंतयन्मनसाऽच्युतं ॥ प्रत्याचष्टकुरुश्रेष्ठद्विजागमनमेवसः ॥ ४१ ॥ दुर्वासायमुनाकूलात्कृतावश्यकआगतः॥राज्ञाऽभिनंदितस्तस्यबुबुधेचेष्टितंधिया ॥ ४२ ॥ मन्युनाप्रचलद्गात्रोभ्रुकुटीकुटिलाननः ॥ बुभुक्षितश्चसुतरांकृतांजलिमभाषत ॥ ४३ ॥ अहोअस्यनृशंसस्यश्रियोन्मत्तस्यपश्यत ॥ धर्मंव्यतिक्रमंविष्णोरभक्तस्येशमानिनः॥ ॥४४॥योमामतिथिमायातमातिथ्येननिमंत्र्यच ॥ अदत्वाभुक्तवांस्तस्यसद्यस्तेदर्शयेफलं ॥ ४५ ॥



रणेऽपिदोषोव्रतवैगुण्यं यत्कृत्वायस्मिन्कृते ॥ ३९ ॥ एवंद्विजैःसहविचार्यनिश्चिनोति अंभसेति व्रतस्यपारणंसमाप्तिं तत्अशितमाहुः अशितंनेतिचाहुः श्रुतिश्च अपोऽश्नातितन्नैवाशितंनैवानशितमिति ॥ ४० ॥ प्रत्याचष्टप्रत्यैक्षत ॥ ४१ ॥ ४२ ॥ प्रचलत्कंपमानंगात्रंयस्य भ्रुकुटिभ्यांकुटिलमाननंयस्य ॥ ४३ ॥ ४४ ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥

॥ ४६ ॥ ४७ ॥ क्रुद्धमहिंपावकोदावाग्निरिव ॥ ४८ ॥ निष्फलमुद्वीक्ष्य ॥ ४९ ॥ अनुषक्तंपृष्ठतःसंसक्तं मेरोर्गुहांविविक्षुरधावत् ॥ ५० ॥ ५१ ॥ अ रणमेषमाणःशरणमिच्छन् अजिततेजसोहरेश्चक्रात् ॥ ५२ ॥ एतत्सर्वंयस्यभ्रूभंगमात्रेणतिरोभविष्यति कदाक्रीडायाअवसानेतदपिकदा द्वि परार्धसंज्ञेकाले ॥ ५३ ॥ अतोवयंसर्वेयस्यनियममाज्ञांप्रपन्नाःप्राप्ताःसंतोलोकहितंयथाभवतिएवंतंनियमंमूर्ध्न्यार्पितंवहामः अतस्तद्भक्तद्रोहिणं

एवंब्रुवाणउत्कृत्यजटांरोषविदीपितः ॥ तयासनिर्ममेतस्मैकृत्यांकालानलोपमां ॥ ४६ ॥ तामापतंतींज्व लतीमसिहस्तांपदाभुवं ॥ वेपयंतींसमुद्वीक्ष्यनचचालपदान्नृपः ॥ ४७ ॥ प्राग्दिष्टंभृत्यरक्षायांपुरुषेणम हात्मना ॥ ददाहकृत्यांतांचक्रंक्रुद्धाहिमिवपावकः ॥ ४८ ॥ तदभिद्रवदुद्वीक्ष्यस्वप्रयासंचनिष्फलं ॥ दुर्वा सादुद्रुवेभीतोदिक्षुप्राणपरीप्सया ॥ ४९ ॥ तमन्वधावद्भगवद्रथांगंदावाग्निरुद्भूतशिखोयथाऽहिं ॥ त थाऽनुषक्तंसनिरीक्ष्यमाणोगुहांविविक्षुःप्रससारमेरोः ॥ ५० ॥ दिशोनभःक्ष्मांविवरान्समुद्रान्लोकान्स पालांस्त्रिदिवंगतःसः ॥ यतोयतोधावतितत्रतत्रसुदर्शनंदुष्प्रसहंददर्श ॥ ५१ ॥ अलब्धनाथःसयदाकुत श्चित्संत्रस्तचित्तोऽरणमेषमाणः ॥ देवंविरिंचंसमगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसोमां ॥ ५२ ॥ ब्रह्मोवाच स्थानंमदीयंसहविश्वमेतत्क्रीडावसानेद्विपरार्द्धसंज्ञे ॥ भ्रूभंगमात्रेणहिसंदिधक्षोःकालात्मनोयस्यतिरोभ विष्यति ॥ ५३ ॥ अहंभवोदक्षभृगुप्रधानाःप्रजेशभूतेशसुरेशमुख्याः ॥ सर्वेवयंयन्नियमंप्रपन्नामूर्ध्न्य र्पितंलोकहितंवहामः ॥ ५४ ॥ प्रत्याख्यातोविरिंचेनविष्णुचक्रोपतापितः ॥ दुर्वासाःशरणंयातःशर्वंकैला सवासिनं ॥ ५५ ॥ श्रीरुद्रउवाच वयंनतातप्रभवामभूम्नियस्मिन्परेऽन्येऽप्यजजीवकोशाः ॥ भवंति कालेनभवंतिहीदृशाःसहस्रशोयत्रवयंभ्रमामः ॥ ५६ ॥ ॥ ॥

त्वांरक्षितुंनसमर्थोऽहमितिशेषः यत्तदोर्नित्यसंबंधात् ॥ ५४ ॥ ५५ ॥ श्रीरुद्रोऽपिप्रत्याचष्टे वयमितिचतुर्भिःभूम्निमहति महत्त्वमेवाह य स्मिन्परमेश्वरे अजाब्रह्माणस्तएवजीवास्तेषांकोशाउपाधिभूताब्रह्मांडविग्रहाईदृशादृश्यमानब्रह्मांडप्रमाणाअन्येऽपिभवंतिजायंतेनश्यं तिच यत्रयेषुब्रह्मांडेषुलोकेशाभिमानिनोवयंभ्रमामः ॥ ५६ ॥ ॥ ॥ ॥

ननुसर्वज्ञस्यतवभ्रमःकुतस्तत्राह अहमिति ॥ ५७ ॥ पारदर्शनाःसर्वज्ञाअपियस्यमायांनविद्मः ॥ ५८ ॥ ५९ ॥ ६० ॥ हेसतामीप्सि
तमामामवपाहि ॥ ६१ ॥ अपराधंनिवेदयन्प्रार्थयते अजानतेति अघंदुःखं अपचितिंनिष्कृतिंनपश्यामीतिचेत्तत्राह यस्यतवनाम्निकी

अहंसनत्कुमारश्चनारदोभगवानजः ॥ कपिलोऽपांतरतमोदेवलोधर्मआसुरिः ॥ ५७ ॥ मरीचिप्रमुखाश्चा
न्येसिद्धेशाःपारदर्शनाः ॥ विदामनवयंसर्वेयन्मायांमाययावृताः ॥ ५८ ॥ तस्यविश्वेश्वरस्येदंशस्त्रंदुर्विषहं
हिनः ॥ तमेवशरणंयाहिहरिस्तेशंविधास्यति ॥५९॥ ततोनिराशोदुर्वासाःपदंभगवतोययौ ॥ वैकुंठाख्यंय
दध्यास्तेश्रीनिवासःश्रियासह॥६०॥संदह्यमानोऽजितशस्त्रवन्हिनातत्पादमूलेपतितःसवेपथुः॥आहाच्यु
तानंतसदीप्सितप्रभोकृतागसंमाऽवहिविश्वभावन ॥६१॥ अजानतातेपरमानुभावंकृतंमयाऽघंभवतःप्रि
याणां ॥ विधेहितस्यापचितिंविधातर्मुच्येतयन्नाम्न्युदितेनारकोपि ॥६२॥ श्रीभगवानुवाच अहंभक्तपरा
धीनोह्यस्वतंत्रइवद्विज॥साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः॥६३॥नाहमात्मानमाशासेमद्भक्तैःसाधुभि
र्विना॥श्रियंचात्यंतिकींब्रह्मन्येषांगतिरहंपरा॥६४॥येदारागारपुत्राप्तान्प्राणान्वित्तमिमंपरं॥हित्वामांशर
णंयाताःकथंतांस्त्यक्तुमुत्सहे ॥ ६५ ॥ मयिनिर्बद्धहृदयाःसाधवःसमदर्शनाः ॥ वशेकुर्वंतिमांभक्त्यासत्स्त्रि
यःसत्पतिंयथा ॥ ६६ ॥ मत्सेवयाप्रतीतंचसालोक्यादिचतुष्टयं॥नेच्छंतिसेवयापूर्णाःकुतोऽन्यत्कालविद्रुतं
॥ ६७ ॥ साधवोहृदयंमह्यंसाधूनांहृदयंत्वहं॥मदन्यत्तेनजानंतिनाहंतेभ्योमनागपि ॥ ६८ ॥ उपायंकथ
यिष्यामितवविप्रशृणुष्वतत् ॥ अयंह्यात्माभिचारस्तेयतस्तंयातुवैभवान् ॥ ६९ ॥ साधुषुप्रहितंतेजःप्रह
र्तुःकुरुतेऽशिवं ॥ तपोविद्याचविप्राणांनिःश्रेयसकरेउभे ॥ तएवदुर्विनीतस्यकल्पेतेकर्तुरन्यथा ॥ ७० ॥

र्तितेनरकस्थोऽपिमुच्यतेतस्यतवकिमशक्यमितिभावः ॥ ६२ ॥ ६३ ॥ नआशासेनस्पृहयामि ॥ ६४ ॥ इमंपरंचलोकंहित्वा ॥ ६५ ॥
॥ ६६ ॥ प्रतीतंप्राप्तमपि ॥ ६७ ॥ ६८ ॥ आत्मनस्तवैवअभिचारोहिंसायतोभूत्तमेवयातु ॥ ६९ ॥ अशिवमनर्थं तपोविद्यासंपन्न
स्यममकथमनर्थःसमजनीतिमास्मविस्मयंकार्षीरित्याह तपइति ॥ ७० ॥ ॥ ॥ ॥

॥ ७१ ॥ इतिनवमस्कंधेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ पंचमेविष्णुचक्रंतुप्रसाद्यप्राणसंकटात् ॥ दुर्वासारक्षितस्तेनतथातद्वृत्तमी यंते ॥ १ ॥ १ ॥ सउद्यमनमितिच्छेदः सुलोपःपादपूरणार्थः ॥ २ ॥ ज्योतिषांनक्षत्राणांपतिःसोमस्त्वं मात्राणिइंद्रियाणिच त्वच्छ क्त्यैवाग्न्यादयःस्वंस्वंकार्यंकुर्वंतीत्यर्थः ॥ ३ ॥ सहस्रमरायस्यहेसहस्रार स्वस्तिशरणंभूयाः इडस्पतेपृथ्वीप्रते ॥ ४ ॥ ब्राह्मणरक्षणंतववृ त्तमेवेत्याह त्वंधर्मइति नचतवेयमतिस्तुतिरित्याह पौरुषंपुरुषस्येश्वरस्यपरंतेजःसामर्थ्यंत्वं अयंभावः सऐक्षतेत्यादिश्रुतिप्रसिद्धंभगवतः

ब्रह्मंस्तद्गच्छभद्रंतेनाभागतनयंनृपं ॥ क्षमापयमहाभागंततःशांतिर्भविष्यति ॥ ७१ ॥ इतिश्री भागवतेमहापुराणेनवमस्कंधेअंबरीषचरितेचतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुकउवाच एवंभगवतादि ष्टोदुर्वासाश्चक्रतापितः ॥ अंबरीषमुपावृत्यतत्पादौदुःखितोऽग्रहीत् ॥ १ ॥ तस्योद्यमनंवीक्ष्यपा दस्पर्शविलज्जितः ॥ अस्तावीत्तद्धरेरस्त्रंकृपयापीडितोभृशं ॥ २ ॥ अंबरीषउवाच त्वमग्निर्भगवान्सूर्य स्त्वंसोमोज्योतिषांपतिः ॥ त्वमापस्त्वंक्षितिर्व्योमवायुर्मात्रेंद्रियाणिच ॥ ३ ॥ सुदर्शननमस्तुभ्यंसहस्रा राच्युतप्रिय ॥ सर्वास्त्रघातिन्विप्रायस्वस्तिभूयाइडस्पते ॥ ४ ॥ त्वंधर्मस्त्वमृतंसत्यंत्वंयज्ञोऽखिलयज्ञ भुक् ॥ त्वंलोकपालःसर्वात्मात्वंतेजःपौरुषंपरं ॥ ५ ॥ नमःसुनाभाखिलधर्मसेतवेह्यधर्मशीलासुरधूमके तवे ॥ त्रैलोक्यगोपायविशुद्धवर्चसेमनोजवायाद्भुतकर्मणेगृणे ॥ ६ ॥ त्वत्तेजसाधर्ममयेनसंहृतंतमःप्र काशश्चधृतोमहात्मनां ॥ दुरत्ययस्तेमहिमागिरांपतेत्वद्रूपमेतत्सदसत्परावरं ॥ ७ ॥ ॥

शोभनंदर्शनंसुदर्शनंततएवसर्वंजातमतस्त्वमेवसर्वात्मेति ॥ ५ ॥ हेसुनाभअद्भुतकर्माणंत्वांकःस्तोतुंसमर्थःअतस्तुभ्यंकेवलंनमोगृणइत्य न्वयः अद्भुतकर्मत्वमेवाह अखिलानांधर्माणांसेतवेमर्यादारूपाय अतएवाधर्मशीलानामसुराणांधूमकेतवेदाहकाय त्रैलोक्यंगोपायती तितथा विशुद्धमत्युज्ज्वलंवर्चस्तेजोयस्यतस्मै ॥ ६ ॥ तदेवप्रपंचयति त्वत्तेजसेतिद्वाभ्यां सूर्यादीनांप्रकाशश्च त्वयैवरूप्यतेप्रकाश्य तइतित्वद्रूपं ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

हेअजितअनंजनेनश्रीहरिणायदाविसृष्टस्त्वंतदादैत्यदानवानांबलंप्रविष्टःसंस्तेषांबाह्वादीन्भिंदन्विराजसे पाठांतरेऊर्जितादैत्यदानवा यस्मिंस्तद्बलं पूर्वपदेनसंधिरार्षः ॥ ८ ॥ किंच त्वयाभगवन्नियुक्तेनखलानामेवदंडःकार्यःसाधवस्तुरक्षणीयाअतोविप्रस्यरक्षणेनास्मान नुगृहाणेत्याह सत्वमिति हेजगत्त्राण सएवंभूतस्त्वंखलानामेवप्रहारार्थंनिरूपितोनियुक्तः अतोऽस्मत्कुलस्यदैवहेतवेभाग्यलाभायविप्र



यदाविसृष्टस्त्वमनंजनेनवैबलंप्रविष्टोऽजितदैत्यदानवं॥बाहूदरोर्वंघ्रिशिरोधराणिवृक्णन्नजस्रंप्रधनेविरा जसे ॥८॥ सत्वंजगत्त्राणखलप्रहाणयेनिरूपितःसर्वसहोगदाभृता ॥ विप्रस्यचास्मत्कुलदैवहेतवेविधेहिभ द्रंतदनुग्रहोहिनः ॥ ९ ॥ यद्यस्तिदत्तमिष्टंवास्वधर्मोवास्वनुष्ठितः ॥ कुलंनोविप्रदैवंचेद्द्विजोभवतुविज्वरः ॥ ॥ १० ॥ यदिनोभगवान्प्रीतएकःसर्वगुणाश्रयः ॥ सर्वभूतात्मभावेनद्विजोभवतुविज्वरः ॥ ११ ॥ श्रीशु कउवाच इतिसंस्तुवतोराज्ञोविष्णुचक्रंसुदर्शनं ॥ अशाम्यत्सर्वतोविप्रंप्रदहद्राजयाच्ञया ॥ १२ ॥ समु क्तोऽस्त्राग्नितापेनदुर्वासाःस्वस्तिमांस्ततः ॥ प्रशशंसतमुर्वीशंयुंजानःपरमाशिषः ॥ १३ ॥ दुर्वासाउवाच अहोअनंतदासानांमहत्त्वंदृष्टमद्यमे॥कृतागसोऽपियद्राजन्मंगलानिसमीहसे॥१४॥दुष्करःकोनुसाधूनां दुस्त्यजोवामहात्मनां॥यैःसंगृहीतोभगवान्सात्वतामृषभोहरिः॥ १५ ॥ यन्नामश्रुतिमात्रेणपुमान्भवति निर्मलः॥तस्यतीर्थपदःकिंवादासानामवशिष्यते॥१६॥राजन्ननुगृहीतोहंत्वयातिकरुणात्मना॥मदघंपृष्ठ तःकृत्वाप्राणायन्मेऽभिरक्षिताः ॥१७॥ राजातमकृताहारःप्रत्यागमनकांक्षया ॥ चरणावुपसंगृह्यप्रसाद्य समभोजयत् ॥ १८ ॥ सोशित्वादृतमानीतमातिथ्यंसार्वकामिकं ॥ तृप्तात्मान्नृपतिंप्राहभुज्यतामितिसा दरं ॥ प्रीतोऽस्म्यनुगृहीऽतोस्मितवभागवतस्यवै ॥ दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ २० ॥



स्यभद्रंविधेहितदेवनोऽनुग्रहः ॥ ९ ॥ सर्वसुकृतार्पणेनविप्ररक्षांप्रार्थयते यद्यस्तीतिद्वाभ्यां विप्रोदैवंदेवतायस्मिंस्तत् ॥ १० ॥ ११ ॥ राज्ञस्तस्यैवयाच्ञया ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ राजेत्यादिश्लोकद्वयंशुकोक्तिः प्रीतोऽस्मीतिश्लोकद्वयंपुनश्च्यवि प्रोक्तिः ॥ १८ ॥ १९ ॥ आत्मनिमेधायेनतेनातिथ्येन ॥ २० ॥ ॥ ॥ ॥

भूरियंतत्रस्थोजनः कीर्तयिष्यति॥ २१॥ २२॥ तस्यधैर्यातिशयमाह गतोमुनिर्यावतानागतस्तावत्संवत्सरोऽतिक्रांतइति ॥ २३॥ द्विजस्यो पयोगेनभोजनेनअतिपवित्रमाहरत्बुभुजे स्ववीर्यंचधैर्यादिलक्षणंपरानुभावंभगवतःप्रभावंमेने ॥ २४॥ एवंविधाअनेकेगुणायस्यसःआवि रिंचान्विरिंचपदसहितान्भोगान्निरयप्रायानपश्यदित्यर्थः॥ २५॥ २६॥ २७॥ इतिनवमेटीकायांपंचमोऽध्यायः ॥५॥ ॥ षष्ठारंभेऽब

कर्मावदातमेतत्तेगायंतिस्वःस्त्रियोमुहुः॥ कीर्तिंपरमपुण्यांचकीर्त्तयिष्यतिभूरियं ॥ २१ ॥ श्रीशुकउवाच एवंसंकीर्त्यराजानंदुर्वासाःपरितोषितः ॥ ययौविहायसामंत्र्यब्रह्मलोकमहैतुकं ॥ २२ ॥ संवत्सरोऽत्यगा त्तावद्यावतानागतोगतः ॥ मुनिस्तद्दर्शनाकांक्षोराजाब्भक्षोबभूवह ॥ २३ ॥ गतेचदुर्वाससिसोऽबरीषो द्विजोपयोगातिपवित्रमाहरत् ॥ ऋषेर्विमोक्षंव्यसनंचबुद्ध्वामेनेस्ववीर्यंचपरानुभावं ॥ २४ ॥ एवंविधानेक गुणःसराजापरात्मनिब्रह्मणिवासुदेवे ॥ क्रियाकलापैःसमुवाहभक्तिंययाविरिंचान्निरयांश्चकार ॥ २५ ॥ अथांबरीषस्तनयेषुराज्यंसमानशीलेषुविसृज्यधीरः ॥ वनंविवेशात्मनिवासुदेवेमनोदधत्ध्वस्तगुणप्रवा हः॥२६॥ इत्येतत्पुण्यमाख्यानमंबरीषस्यभूपतेः॥ संकीर्त्तयन्ननुध्यायन्भक्तोभगवतोभवेत् ॥ २७॥ इति श्रीभागवतेमहापुराणेनवमस्कंधेअंबरीषचरितंनामपंचमोऽध्यायः॥ ५॥ ॥ ॥ श्रीशुकउवाच वि रूपःकेतुमान्शंभुरंबरीषसुतास्त्रयः ॥ विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तुरथीतरः ॥ १ ॥ रथीतरस्याप्रजस्य भार्यायांतंतवेऽर्थितः ॥ अंगिराजनयामासब्रह्मवर्चस्विनःसुतान् ॥ २ ॥ एतेक्षेत्रेप्रसूतावैपुनस्त्वांगिरसाः स्मृताः ॥ रथीतरणांप्रवराःक्षत्रोपेताद्विजातयः ॥ ३ ॥ ॥ ॥ ॥

रीषस्यवंशमुक्त्वाततःपरं ॥ षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंशउच्यते ॥ १ ॥ तत्रषष्ठेशशादादिर्मांधात्रंतोनिरूप्यते ॥ प्रसंगात्सौभरेराख्यामांधातृत नयापतेः ॥ २ ॥ १ ॥ तंतवेसंतानार्थं ॥ २ ॥ येअंगिरसाजनिताएतेरथीतरस्यक्षेत्रेप्रसूतत्वेनरथीतरगोत्राःसंतःअंगिरसोवीर्येणप्रसूत त्वादांगिरसाश्च पुनरपिरथीतराणामन्येषांजातानांप्रवरामुख्याःस्मृताः यतःक्षत्रोपेताः ब्राह्मणाइत्यर्थः ॥ ३ ॥ ॥ ॥

तदेवंमनोर्दशसुपुत्रेषुपृषध्रश्चकविश्वविरक्तत्वान्नवंशप्रवर्तकौ करूषादीनांचसप्तानांवंशास्तारतम्यक्रमेणोक्ताः इदानीमतिविततमिक्ष्वाकोर्वंशमाह क्षुवतस्त्वित्यादिनायावत्सोमवंशप्रस्तावः क्षुतंकुर्वतोमनोर्घ्राणतोजज्ञे श्रद्धायांजनयामासदशपुत्रानितिपूर्वोक्तंबाहुल्याभिप्रायेणेतिद्रष्टव्यं पुत्राणांशतेज्येष्ठाः ॥ ४ ॥ आर्यावर्तःपुण्यभूमिर्मध्यंविंध्यहिमालयोः तस्मिन्पुरस्तात्समुद्रपर्यंतमंडलविभागेनपंचविंशतिर्नृपाअभवन् हेनृपतथैवपश्चाच्चपंचविंशतिः मध्येतुज्येष्ठास्त्रयः अपरेत्वन्यतोदक्षिणोत्तरादिषु ॥ ५ ॥ विकुक्षिरेवशशादइतिविश्रुतइति

क्षुवतस्तुमनोर्जज्ञेइक्ष्वाकुर्घ्राणतःसुतः ॥ तस्यपुत्रशतज्येष्ठाविकुक्षिनिमिदंडकाः ॥ ४ ॥ तेषांपुरस्तादभवन्नार्यावर्तेनृपान्नृप ॥ पंचविंशतिःपश्चाच्चत्रयोमध्येपरेऽन्यतः ॥ ५ ॥ सएकदाऽष्टकाश्राद्धइक्ष्वाकुःसुतमादिशत् ॥ मांसमानीयतांमेध्यंविकुक्षेगच्छमाचिरं ॥ ६ ॥ तथेतिसवनंगत्वामृगान्हत्वाक्रियार्हणान् ॥ श्रांतोबुभुक्षितोवीरःशशंचाददपस्मृतिः ॥ ७ ॥ शेषंनिवेदयामासपित्रेतेनचतद्गुरुः ॥ चोदितःप्रोक्षणायाहदुष्टमेतदकर्मकं ॥ ८ ॥ ज्ञात्वापुत्रस्यतत्कर्मगुरुणाऽभिहितंनृपः ॥ देशान्निःसारयामाससुतंत्यक्तविधिंरुषा ॥ ९ ॥ सतुविप्रेणसंवादंजापकेनसमाचरन् ॥ त्यक्त्वाकलेवरंयोगीसतेनावापयत्परं ॥ १० ॥ पितर्युपरतेऽभ्येत्यविकुक्षिःपृथिवीमिमां ॥ शासदीजेहरिंयज्ञैःशशादइतिविश्रुतः ॥ ११ ॥ पुरंजयस्तस्यसुतइंद्रवाहइतीरितः ॥ ककुत्स्थइतिचाप्युक्तःशृणुनामानिकर्मभिः ॥ १२ ॥ कृतांतआसीत्समरोदेवानांसहदानवैः ॥ पार्ष्णिग्राहोवृतोवीरोदेवैर्दैत्यपराजितैः ॥ १३ ॥ ॥ ॥ ॥ ॥

वक्ष्यतितत्रहेतुमाह सएकदेतिचतुर्भिः ॥ ६ ॥ क्रियाऽर्हणान्श्राद्धार्हान् आदत्अभक्षयत् ॥ ७ ॥ तद्गुरुर्वसिष्ठःप्रोक्षणायश्राद्धोचितसंस्काराय ॥ ८ ॥ त्यक्तोविधिःसदाचारोयेनतं ॥ ९ ॥ सतुइक्ष्वाकुःजापकेनवसिष्ठेन राज्यभोगेनविरक्तोयोगीसंस्तेनयोगेनकलेवरंत्यक्त्वासयत्परंतत्त्वंतदवाप ॥ १० ॥ शासत्पालयन्हरिमीजे ॥ ११ ॥ दैत्यपुरस्यजयात्पुरंजयः इंद्रोवाहोयस्येतींद्रवाहः ककुदिस्थितत्वात्ककुत्स्थइतिचशशादसुतस्यत्रीणिनामानितत्तत्कर्मनिमित्तानि ॥ १२ ॥ तान्येवव्याचक्षाणआह कृतांतइतिसप्तभिः कृतंविश्वमंतयतीतितथा पार्ष्णिग्राहःसहायः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इंद्रोयदिममवाहनंस्यात्तर्हिंदैत्यान्हनिष्यामीतितेनवाहनत्वेनवृतःसन्निंद्रोलज्जयातदनंगीकुर्वन्विष्णोर्वचनात्तस्यवाहनत्वायमहान्वृषोब
भूवेत्यर्थः ॥१४॥१५॥१६॥ येऽभिमुखंययुस्तान्यमंदर्शयितुंसदेहानेवभल्लैरनयदित्यर्थः ॥ १७॥ तच्चदृष्ट्वाअन्येदुद्रुवुः स्वमालयंपातालं
॥ १८ ॥ इतिएतैःकर्मभिःपुरंजयादिनामभिःआहृतोव्याहृतः पाठांतरे आहूतइत्यर्थः ॥१९॥२० ॥ शाबस्तिःशाबस्तस्यपुत्रः कुवल

वचनाद्देवदेवस्यविष्णोर्विश्वात्मनःप्रभो॥वाहनत्वेवृतस्तस्यबभूवेंद्रोमहावृषः॥१४॥ ससंनद्धोधनुर्दिव्यमा
दायविशिखान्शितान् ॥ स्तूयमानःसमारुह्ययुयुत्सुःककुदिस्थितः ॥१५॥ तेजसाप्यायितोविष्णोःपुरुष
स्यपरात्मनः॥प्रतीच्यांदिशिदैत्यानांन्यरुणत्त्रिदशैःपुरं ॥ १६॥ तैस्तस्यचाभूत्प्रधनंतुमुलंलोमहर्षणं॥यमा
यभल्लैरनयद्दैत्यान्येऽभिययुर्मृधे॥१७॥तस्येषुपाताभिमुखंयुगांताग्निमिवोल्बणं॥विसृज्यदुद्रुवुर्दैत्याहन्य
मानाःस्वमालयं ॥१८॥ जित्वापुरंधनंसर्वंसश्रीकंवज्रपाणये ॥ प्रत्ययच्छत्सराजर्षिरितिनामभिराहृतः॥
॥१९ पुरंजयस्यपुत्रोभूदनेनास्तत्सुतःपृथुः॥विश्वरंधिस्ततश्चंद्रोयुवनाश्वश्चतत्सुतः ॥ २०॥ शाबस्तस्त
त्सुतोयेनशाबस्तीनिर्ममेपुरी॥बृहदश्वस्तुशाबस्तिस्ततःकुवलयाश्वकः ॥२१॥ यःप्रियार्थमुतंकस्यधुंधुना
मासुरंबली॥सुतानामेकविंशत्यासहस्रैरहनद्वृतः ॥२२॥ धुंधुमारइतिख्यातस्तत्सुतास्तेचजज्वलुः॥धुंधो
र्मुखाग्निनासर्वेत्रयएवावशेषिताः॥२३॥ दृढाश्वःकपिलाश्वश्चभद्राश्वइतिभारत ॥ दृढाश्वपुत्रोहर्यश्वोनिकुं
भस्तत्सुतःस्मृतः ॥२४॥ बर्हणाश्वोनिकुंभस्यकृशाश्वोऽथास्यसेनजित्॥युवनाश्वोभवत्तस्यसोनपत्योवनं
गतः ॥२५॥ भार्याशतेननिर्विण्णऋषयोस्यकृपालवः॥इष्टिंस्मवर्त्तयांचक्रुरैंद्रींतेसुसमाहिताः ॥२६ ॥ रा
जातद्यज्ञसदनंप्रविष्टोनिशितार्षितः ॥ दृष्ट्वाशयानान्विप्रांस्तान्पपौमंत्रजलंस्वयं ॥ २७ ॥ ॥

याश्वकएवधुंधुमारइतिख्यातः ॥२१॥ तत्रकारणमाह यइति सुतानामेकविंशत्यासहस्रैर्वृतःसन्हतवान् ॥२२॥ धुंधुमारइतिचेतिचकार
स्यान्वयः ॥२३॥२४॥ अथतस्मान्निकुंभात्कृशाश्वः ॥ २५ ॥ भार्याणांशतेनसहअस्यपुत्रार्थमिंद्रदेवत्यामिष्टिंवर्त्तयामासुः स्मेत्याश्चर्ये ॥
॥ २६ ॥ तदेवाह राजेतिषड्भिः तार्षितस्तृषितःसन्जलार्थंप्रविष्टोमंत्राभिमंत्रितंजलंपत्न्यैदेयंस्वयंपपौ ॥ २७ ॥ ॥ ॥

व्युदकंनिरुदकंपुंसवनंपुत्रोत्पत्तिकारणं॥ २८ ॥अहोदैवबलमेवमुख्यंबलंपुरुषबलंतुनकिंचिदितिवदंतईश्वरायनमस्कारंचक्रुः ॥२९॥३०॥
अयंकंधास्यतिपास्यतीतिदुःखितैर्विप्रैरुक्तेसतितस्यामिष्टयामाराधितइंद्रोमांधातापाताहेवत्समारोदीरितिब्रुवन्देशिनींतर्जनीमदादित्यर्थः
॥ ३१ ॥ तस्यपितायुवनाश्वोभिन्नकुक्षिरपिनममार· किंतुकालांतरेतपसासिद्धिमन्वगात् ॥ ३२ ॥ मांधातुर्महिमानमाह त्रसद्दस्युरितिष
ड्भिः अंगहेराजन् यस्मान्मांधातुर्दस्यवउद्विग्नाःकंपिताःसंतस्त्रसंतिअतइंद्रोयस्यत्रसद्दस्युरितिनामविदधौ समांधाताअवनीमेकःशशासे



उत्थितास्तेनिशाम्याथव्युदकंकलशंप्रभो॥पप्रच्छुःकस्यकर्मेदंपीतंपुंसवनंजलं ॥२८॥ राज्ञापीतंविदित्वा
थईश्वरप्रहितेनते॥ईश्वरायनमश्चक्रुरहोदैवबलंबलं ॥ २९ ॥ ततःकालउपावृत्तेकुक्षिंनिर्भिद्यदक्षिणं॥युव
नाश्वस्यतनयश्चक्रवर्तीजजानह॥३०॥कंधास्यतिकुमारोयंस्तन्यंरोरूयतेभृशं ॥ मांधातावत्समारोदीरितीं
द्रोदेशिनीमदात् ॥३१॥ नममारपितातस्यविप्रदेवप्रसादतः ॥ युवनाश्वोऽथतत्रैवतपसासिद्धिमन्वगात्
॥३२॥ त्रसद्दस्युरितींद्रोऽगविदधेनामतस्यवै ॥ यस्मात्त्रसंतित्युद्विग्नादस्यवोरावणादयः ॥३३॥ यौवना
श्वोऽथमांधाताचक्रवर्त्यवनींप्रभुः ॥ सप्तद्वीपवतीमेकःशशासाच्युततेजसा ॥३४॥ ईजेचयज्ञंक्रतुभिरात्म
विद्भूरिदक्षिणैः ॥ सर्वदेवमयंदेवंसर्वात्मकमतींद्रियं ॥३५॥ द्रव्यंमंत्रोविधिर्यज्ञोयजमानस्तथर्त्विजः॥ध
र्मोदेशश्चकालश्चसर्वमेतद्यदात्मकं ॥३६॥ यावत्सूर्यउदेतिस्मयावच्चप्रतितिष्ठति ॥ सर्वंतद्यौवनाश्वस्यमां
धातुःक्षेत्रमुच्यते ॥ ३७ ॥ शशबिंदोर्दुहितरिबिंदुमत्यामधान्नृपः ॥ पुरुकुत्समंबरीषंमुचुकुंदंचयोगिनं ॥
॥ ३८ ॥ तेषांस्वसारःपंचाशत्सौभरिंवव्रिरेपतिं ॥ यमुनांऽतर्जलेमग्नस्तप्यमानःपरंतपः ॥ ३९ ॥ निर्वृ
तिंमीनराजस्यवीक्ष्यमैथुनधर्मिणः ॥ जातस्पृहोनृपंविप्रःकन्यामेकामयाचत ॥ ४० ॥ ॥

त्युत्तरेणान्वयः ॥ ३३ ॥ अच्युतस्यतेजसा अप्रच्युततेजसेतिवा ॥ ३४ ॥ आत्मविदपिसः यज्ञंविष्णुमीजे तमेवविशिनष्टि सर्वदेवमयमितिसा
र्द्धेन ॥ ३५ ॥ ३६ ॥ प्रतितिष्ठतिअस्तंगच्छति ॥ ३७ ॥ ३८ ॥ प्रसंगात्सौभरेश्चरितमाह तेषामितियावत्समाप्ति तेषांस्वसारःमांधातुःक
न्याःननुमहातापसस्यकुतोविवाहप्रसंगःकथंवाजराजर्जरंतंराजकन्यावव्रिरेतदाह यमुनांतर्जलइतिषड्भिः ॥ ३९ ॥ नृपंमांधातारं ॥ ४० ॥

सोऽपिमांधातास्वयंवरेकामंगृह्यतामित्याह सविप्रः स्त्रीणामप्रियंमांविचिंत्यानेनाहंप्रत्युक्तोऽतआत्मानंतथासाधयिष्यामीतिव्यवसितोनिश्चि
तवानितिद्वयोरन्वयः अप्रियत्वेहेतुः जरठोवृद्धः ॥ ४१ ॥ वलीभिर्युक्तःपलितश्चएजत्कःकंपमानशिराः तापसत्वादिनावाअसंमतोऽह
मितिकृत्वा तथेत्यस्यप्रपंचःसुरस्त्रीणामपीप्सितंकिंपुनर्मनुजेंद्राणांयाःस्त्रियस्तासामिति ॥ ४२ ॥ ततःकिंवृत्तंतदाह मुनिरितिद्वाभ्यांक्षत्त्राप्रती
हारेण पंचाशतापिराजकन्याभिःसएकएववरोवृतः ॥ ४३ ॥ ४४ ॥ तस्यगार्हस्थ्यंवर्णयति सइतिचतुर्भिः बह्वृचइतिमंत्रसामर्थ्यमुक्तं

सोऽप्याहगृह्यतांब्रह्मन्कामंकन्यास्वयंवरे ॥ सविचिंत्याप्रियंस्त्रीणांजरठोऽयमसंमतः ॥४१॥ वलीपलित
एजत्कइत्यहंप्रत्युदाहृतः ॥ साधयिष्येतथात्मानंसुरस्त्रीणामपीप्सितं ॥ किंपुनर्मनुजेंद्राणामितिव्यवसि
तःप्रभुः ॥४२॥ मुनिःप्रवेशितःक्षत्त्राकन्यांऽतःपुरमृद्धिमत् ॥ वृतश्चराजकन्याभिरेकःपंचाशतावरः ॥४३॥
तासांकलिरभूद्भूयांस्तदर्थेऽपोह्यसौहृदं ॥ ममानुरूपोनायंवइतितद्गतचेतसां ॥ ४४ ॥ सबह्वृचस्ताभिरपा
रणीयतपःश्रिया‌ऽनर्घ्यपरिच्छदेषु ॥ गृहेषुनानोपवनामलांभःसरस्सुसौगंधिककाननेषु ॥ ४५ ॥ महा
र्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्वलंकृतस्त्रीपुरुषेषुनित्यदारेमेऽनुगायद्द्विजभृंग
बंदिषु ॥ ४६ ॥ यद्गार्हस्थ्यंतुसंवीक्ष्यसप्तद्वीपवतीपतिः ॥ विस्मितःस्तंभमजहात्सार्वभौमश्रियाऽन्वितः
॥ ४७ ॥ एवंगृहेष्वभिरतोविषयान्विविधैःसुखैः ॥ सेवमानोनचातुष्यदाज्यस्तोकैरिवानलः ॥४८॥ स
कदाचिदुपासीनआत्मापन्हवमात्मनः ॥ ददर्शबह्वृचाचार्योमीनसंगसमुत्थितं ॥ ४९ ॥ ॥

ताभिःसहरेमइत्युत्तरेणान्वयः क्वरेमे अपारणीयंदुरंतंयत्तपस्तस्यश्रियासमृध्याअनर्घ्याःपरिच्छदायेषुतेषुगृहेषु तथानानाविधेषूपवनेषुच अ
मलान्यंभांसियेषांतेषुसरस्सुच कथंभूतेषु सौगंधिकानांकल्हाराणांचकाननानिस्तोमायेषु ॥ ४५ ॥ कथंभूतेषुगृहादिषु स्वलंकृताःस्त्रियः
पुरुषाश्चयेषु अनुगायंतोद्विजाश्चपक्षिणःभृंगाश्चबंदिनश्चयेषु कथंभूतः महार्हशय्यादिभिरुपलक्षितःसन् ॥ ४६ ॥ स्तंभंगर्वं ॥ ४७ ॥
॥ ४८ ॥ आत्मनोपन्हवंतपोहानिंददर्श ॥ ४९ ॥ ॥ ॥ ॥ ॥ ॥

संश्वासौचरितव्रतश्चयोऽहंतस्य ब्रह्मतपः ॥ ५० ॥ मिथुनव्रतिनांदांपत्यधर्मवतां चेत् यदिप्रसंगस्तर्हितद्वृत्तिषुईश्वरार्थधर्मपरेष्वेवकार्यइति शेषः ॥ ५१ ॥ संगाज्जातंदोषंप्रपंचयति एकइति पंचाशताभार्याभिःसंबंधात्पंचाशत् आसमभूवमित्यर्थः ततश्चसुतैःपंचसहस्रसर्गआ सं प्रत्येकंतासुपुत्रशतरूपेणोत्पत्तेः उभयकृत्यानिऐहिकपारात्रिकाणिकर्माणितद्विषयाणांमनोरथानां अर्थभावःपुरुषार्थबुद्धिमान्न्यासोऽ त्रसंगत्यागएव वानप्रस्थधर्मइत्यर्थः ॥ ५२ ॥ ५३ ॥ ५४ ॥ आध्यात्मिकींगतिंब्रह्मणिलयं ॥ ५५ ॥ इतिनवमस्कंधेटीकायांषष्ठोऽ ध्यायः ॥ ६ ॥ ॥ मांधातुरन्वयःप्रोक्तःसप्तमेयत्रगीयते ॥ पुरुकुत्सस्यचाख्यानंहरिश्चंद्रस्यचोत्तमं ॥ १ ॥ पुत्रप्रवरःपुत्रश्रेष्ठःसपिताम

अहोइमंपश्यतमेविनाशंतपस्विनःसच्चरितव्रतस्य ॥ अंतर्जलेवारिचरप्रसंगात्प्रच्यावितंब्रह्मचिरंधृतंयत् ॥५०॥ संगंत्यजेतमिथुनव्रतिनांमुमुक्षुःसर्वात्मनानविसृजेद्बहिरिंद्रियाणि ॥ एकश्चरन्रहसिचित्तमनंतईशेयुंजीततद्व्रतिषुसाधुषुचेत्प्रसंगः ॥५१॥एकस्तपस्व्यहमथांभसिमत्स्यसंगात्पंचाशदासमुतपंचसहस्रसर्गः ॥ नांतंव्रजाम्युभयकृत्यमनोरथानांमायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥५२॥ एवंवसन्गृहेकालंविरक्तोन्यासमास्थितः ॥ वनंजगामानुययुस्तत्पत्न्यःपतिदेवताः ॥५३॥ तत्रतप्त्वातपस्तीक्ष्णमात्मकर्षणमात्मवान् ॥ सहैवाग्निभिरात्मानंयुयोजपरमात्मनि ॥ ५४ ॥ ताःस्वपत्युर्महाराजनिरीक्ष्याध्यात्मिकींगतिं ॥ अन्वीयुस्तत्प्रभावेनअग्निंशांतमिवार्चिषः ॥ ५५॥ इतिश्रीभागवतेम० नवमस्कंधेसौभर्याख्यानेषष्ठोऽध्यायः ॥ ६ ॥ श्रीशुकउवाच मांधातुःपुत्रप्रवरोयोंऽबरीषःप्रकीर्तितः ॥ पितामहेनप्रवृतोयौवनाश्वश्चतत्सुतः ॥ १ ॥ हारीतस्तस्यपुत्रोऽभून्मांधातृप्रवराइमे ॥ नर्मदाभ्रातृभिर्दत्तापुरुकुत्साययोरगैः ॥ २ ॥

हेनयुवनाश्वेनप्रवृतःपुत्रत्वेनस्वीकृतः अतएवतस्यमांधातृप्रवर्ग्यत्वं तत्सुतःअंबरीषस्यसुतः ॥ १ ॥ इमेयौवनाश्वांबरीषहारितामांधातृ गोत्रस्यप्रवराःअवांतरविशेषप्रवर्तकाः यद्वा यौवनाश्वविशेषणं पितामहेनमांधात्रासहआर्षेयवरणेप्रवृतः मांधाताप्रवरोयेषांतेइमेअंबरी षयौवनाश्वहारिताः यथाहाश्वलायनः हरितकुत्सपिंगदर्भभैमगवानामांगिरसांबरीषयौवनाश्वेतिमांधातारंहैकेब्रुवते अतीत्यांगिरसंमां धात्रांबरीषयौवनाश्वेतीति पुरुकुत्सस्यवंशंकथयिष्यन्नादौतावत्तस्यविवाहंप्रभावंचाह उरगैर्भ्रातृभिर्यादत्तानर्मदातया ॥ २ ॥ ॥

वध्यान्वधार्हान् ॥३॥ सचपुरुकुत्सोनागाल्लब्धवरोभूत् वरमाह इदंनर्मदयारसातलानयनादिकंस्मरतांसर्पादभयमिति देहकृत्पिता त्रसद्दस्योः सुतोनरण्यइत्यर्थः ॥४॥ त्रयःशंकवइवदुःस्वहेतवोदोषायस्यासौत्रिशंकुःतदुक्तंहरिवंशे पितुश्चापरितोषेणगुरोर्दोग्ध्रीवधेनच ॥ अप्रोक्षितोपयोगाच्चत्रिविधस्तेव्यतिक्रमइति ॥५॥ परिणीयमानविप्रकन्याऽपहरणात्क्रुद्धस्यगुरोःपितुःशापात् कौशिकस्यविश्वामित्रस्यतेजसाप्रभावेन ॥ ॥६॥ तेनैवकौशिकेन पक्षिणोःआडीबकयोः विश्वामित्रोराजसूयदक्षिणाच्छलेनहारिश्चंद्रसर्वस्वमपहृत्ययातयामासतच्छ्रुत्वाकुपितोवसिष्ठो

तयारसातलंनीतोभुजगेंद्रप्रयुक्तया ॥ गंधर्वानवधीत्तत्रवध्यान्वैविष्णुशक्तिधृक् ॥ ३ ॥ नागाल्लब्धवरःसर्पादभयंस्मरतामिदं ॥ त्रसद्दस्युःपौरुकुत्सोयोनरण्यस्यदेहकृत्॥४॥हर्यश्वस्तत्सुतस्तस्मादरुणोऽथनिबंधनः ॥ तस्यसत्यव्रतःपुत्रस्त्रिशंकुरितिविश्रुतः ॥ ५ ॥ प्राप्तश्चांडालतांशापाद्गुरोःकौशिकतेजसा ॥ सशरीरोगतःस्वर्गमद्यापिदिविदृश्यते॥६॥ पातितोवाक्शिरादेवैस्तेनैवस्तंभितोबलात् ॥ त्रैशंकवोहरिश्चंद्रोविश्वामित्रवसिष्ठयोः॥ यन्निमित्तमभूद्युद्धंपक्षिणोर्बहुवार्षिकं ॥ ७॥ सोऽनपत्योविषण्णात्मानारदस्योपदेशतः ॥ वरुणंशरणंयातःपुत्रोमेजायतांप्रभो ॥ ८॥ यदिवीरोमहाराजतेनैवत्वांयजेइति ॥ तथेतिवरुणेनास्यपुत्रोजातस्तुरोहितः ॥ ९ ॥ जातःसुतोह्यनेनांगमांयजस्वेतिसोऽब्रवीत् ॥ यदापशुर्निर्दशःस्यादथमेध्योभवेदिति ॥ ॥ १० ॥ निर्दशेचसआगत्ययजस्वेत्याहसोऽब्रवीत् ॥ दंताःपशोर्यज्जायेरन्नथमेध्योभवेदिति ॥ ११ ॥ जातादंतायजस्वेतिसप्रत्याहाथसोऽब्रवीत् ॥ यदापतंत्यस्यदंताअथमेध्योभवेदिति ॥ १२ ॥ पशोर्निपतितादंतायजस्वेत्याहसोऽब्रवीत् ॥ यदापशोःपुनर्दंताजायंतेऽथपशुःशुचिः ॥ १३ ॥ ॥

ऽपिविश्वामित्रंत्वमाडीभवेतिशशापसोऽपित्वंबकोभवेतिवसिष्ठंशशाप तयोश्चयुद्धमभूदितिप्रसिद्धं ॥ ७ ॥ हरिश्चंद्रोहवैधसऐक्ष्वाकोराजापुत्रआसेत्यादिश्रुतिप्रसिद्धंहरिश्चंद्रस्यचरितमाह सोऽनपत्यइत्यादियावत्समाप्ति कथंशरणंयातस्तदाह पुत्रोमेजायतां ॥८॥ यदिवीरःपुत्रोमेजायेततर्हितेनैवपुरुषपशुनात्वांयजेयजामीतिभाषयातथेत्युक्तवतावरुणेननिमित्तेनास्यरोहितोनामपुत्रोजातः ॥९॥ जातेपुत्रेसवरुणोजातःसुतोमामनेनयजस्वेत्यब्रवीत् यदापशुर्निर्दशःनिर्गतदशदिवसःस्यादित्यत्रसराजाऽब्रवीदित्यनुषंगः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

राजन्हेवरुणराजन्यःपशुर्यदासान्नाहिकःकवचसंबंधार्हःसंग्रामसमर्थः अथतदाशुचिः ॥ १४ ॥ इत्येवंतंतंकालंवंचयताराज्ञाउक्तःप्रार्थितोदेवोवरुणस्तंतंकालंप्रत्यैक्षतैत्यर्थः ॥ १५ ॥ चिकीर्षितमात्मनापशुनावरुणयजनं ॥ १६ ॥ ततश्चकुपितेनवरुणेनग्रस्तं अतएव जातंमहदुदरंयस्यतंपितरंश्रुत्वा ॥ १७ ॥ समांवर्षं ॥ १८ ॥ द्वितीयेचवर्षेवृत्रहाअभ्येत्याभ्येत्यतथैवतंप्रत्यषेधन्किंचित्किंचिदाह ॥ १९ ॥ २० ॥



पुनर्जातायजस्वेतिसप्रत्याहाथसोऽब्रवीत् ॥ सान्नाहिकोयदाराजन्राजन्योथपशुःशुचिः ॥ १४ ॥ इतिपुत्रानुरागेणस्नेहयंत्रितचेतसा ॥ कालंवंचयतातंतमुक्तोदेवस्तमैक्षत ॥ १५ ॥ रोहितस्तदभिज्ञायपितुःकर्मचिकीर्षितं ॥ प्राणप्रेप्सुर्धनुष्पाणिररण्यंप्रत्यपद्यत ॥ १६ ॥ पितरंवरुणग्रस्तंश्रुत्वाजातमहोदरं ॥ रोहितोग्राममेयायतमिंद्रः प्रत्यषेधत ॥ १७ ॥ भूमेःपर्यटनंपुण्यंतीर्थक्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रःसोऽप्यरण्येवसत्समां ॥ १८ ॥ एवंद्वितीयेतृतीयेचतुर्थेपंचमेतथा ॥ अभ्येत्याभ्येत्यस्थविरोविप्रोभूत्वाहवृत्रहा ॥ १९ ॥ षष्ठंसंवत्सरंतत्रचरित्वारोहितःपुरीं ॥ उपव्रजन्नजीगर्त्तादक्रीणान्मध्यमंसुतं ॥ २० ॥ शुनःशेपंपशुंपित्रेप्रदायसमवंदत ॥ ततःपुरुषमेधेनहरिश्चंद्रोमहयशाः ॥ २१ ॥ मुक्तोदरोऽयजद्देवान्वरुणादीन्महत्कथः ॥ विश्वामित्रोऽभवत्तस्मिन्होताचाध्वर्युरात्मवान् ॥ २२ ॥ जमदग्निरभूद्ब्रह्मावसिष्ठोऽयास्यसामगः ॥ तस्मैतुष्टोददाविंद्रःशातकौंभमयंरथं ॥ २३ ॥ शुनःशेपस्यमाहात्म्यमुपरिष्टात्प्रचक्ष्यते ॥ सत्यसारांधृतिंदृष्ट्वासभार्यस्यचभूपतेः ॥ २४ ॥ विश्वामित्रोभृशंप्रीतोददावविहतांगतिं ॥ मनःपृथिव्यांतामद्भिस्तेजसापोऽनिलेनतत् ॥ २५ ॥

॥ २१ ॥ वरुणेनमुक्तमुदरंयस्य महत्सुकथायस्यसः ॥ २२ ॥ आत्मवान्जमदग्निरध्वर्युरभूत् अयास्योमुनिःसामगउद्गाताअभूदित्यर्थः ॥ ॥ २३ ॥ उपरिष्टात्विश्वामित्रसुताख्यानप्रसंगेन ॥ २४ ॥ अविहतांगतिंज्ञानं तामेवगतिमाह सार्द्धाभ्यां मनःपृथिव्यांधारयन्ज्ञानकलांध्यात्वातयाअज्ञानंविनिर्दहंस्तांचहित्वामुक्त्वामुक्तबंधनस्तस्थावित्यन्वयः मनोमूलोहिसंसारः मनश्चान्नमयं अन्नमयंहिसोम्यमनइतिश्रुतेः अतोऽन्नशब्दवाच्यायांपृथिव्यांमनोधारयन्एकीकुर्वंस्तांपृथिवीमद्भिरेकीकुर्वन्नपस्तेजसातत्तेजोनिलेन ॥ २५ ॥

तंचखेआकाशेतच्चभूतादावहंकारेतंचभूतादिमहंकारंमहात्मनिमहत्तत्वेतस्मिन्विषयाकारंव्यावर्त्यज्ञानकलांज्ञानांशमात्मत्वेनध्यात्वातया
ध्यानवृत्तिरूपयाआत्मावरकमज्ञानंविनिर्दहन् ॥ २६ ॥ निर्वाणसुखसंविदातांचहित्वामुक्तबंधःसन्अनिर्देश्येनाप्रतर्क्येणस्वेनभावेनस्वस्व
रूपेणतस्थौ ॥ २७ ॥ इतिनवमस्कंधेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ अष्टमेरोहितस्योक्तोवंशोयत्राभवन्नृपः ॥ सगरःकापि

खेवायुंधारयंस्तच्चभूतादौतंमहात्मनि ॥ तस्मिन्ज्ञानकलांध्यात्वातयाऽज्ञानंविनिर्दहन् ॥ २६ ॥ हित्वातां
स्वेनभावेननिर्वाणसुखसंविदा ॥ अनिर्देश्याप्रतर्क्येणतस्थौविध्वस्तबंधनः ॥ २७ ॥ इतिश्रीभागवतेम
हापुराणेनवमस्कंधेहरिश्चंद्रोपाख्यानंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ श्रीशुकउवाच हरितोरोहि
तसुतश्चंपस्तस्माद्विनिर्मिता ॥ चंपापुरीसुदेवोतोविजयोयस्यचात्मजः ॥ १ ॥ भरुकस्तत्सुतस्तस्माद्वृकस्त
स्यापिबाहुकः ॥ सोऽरिभिर्हृतभूराजासभार्योवनमाविशत् ॥ २ ॥ वृद्धंतंपंचतांप्राप्तंमहिष्यनुमरिष्यती
॥ और्वेणजानतात्मानंप्रजावंतंनिवारिता ॥ ३ ॥ आज्ञायास्यैसपत्नीभिर्गरोदत्तोऽधसासह ॥ सहतेनै
वसंजातःसगराख्योमहायशाः ॥ ४ ॥ सगरश्चक्रवर्त्यासीत्सागरोयत्सुतैःकृतः ॥ यस्तालजंघान्य
वनान्शकान्हैहयबर्बरान् ॥ ५ ॥ नावधीद्गुरुवाक्येनचक्रेविकृतवेषिणः ॥ मुंडान्श्मश्रुधरान्कांश्चिन्मु
क्तकेशार्द्धमुंडितान् ॥ ६ ॥ अनंतर्वाससःकांश्चिदबहिर्वाससोपरान् ॥ सोऽश्वमेधैरयजतसर्ववेदसुरात्मकं
॥ ७ ॥ और्वोपदिष्टयोगेनहरिमात्मानमीश्वरं ॥ तस्योत्सृष्टंपशुंयज्ञेजहाराश्वंपुरंदरः ॥ ८ ॥ सुमत्यास्तन
यादृप्ताःपितुरादेशकारिणः ॥ हयमन्वेषमाणास्तेसमंतान्न्यखनन्महीं ॥ ९ ॥ ॥

लक्षेपान्निर्दग्धायस्यसूनवः ॥ १ ॥ चंपस्तस्मादभूत्येनचंपापुरीनिर्मिता अतश्चंपात्सुदेवः ॥ १ ॥ हृताभूर्यस्य ॥ २ ॥ और्वेणऋषि
णा आत्मानंदेहं प्रजावंतंसगर्भं ॥ ३ ॥ गरोविषं तेनगरेणसहैवजातः ॥ ४ ॥ ५ ॥ गुरुवाक्येनऔर्ववचनेन कांश्चिदहत्वैवविकृतवेषिणश्च
क्रे तदेवाह मुंडानिति मुक्तकेशान्अर्द्धमुंडितांश्च ॥ ६ ॥ ७ ॥ और्वेणोपदिष्टोयोगउपायस्तेन ॥ ८ ॥ यस्यद्वेभार्येसुमतिःकेशिनीच तत्रसुम
त्याःपुत्राणांप्रभावंमृत्युंचाह सुमत्याइतिषड्भिः ॥ ९ ॥ ॥ ॥ ॥ ॥

॥ १४ ॥

॥ १० ॥ एषवाजिहरइतिब्रुवंतोऽभिययुः षष्टिसहस्राणिपरिच्छेदकतयासांतियेषां उन्मिमेषलोचनोन्मीलनंचकार ॥ ११ ॥ १२ ॥ केचि त्तुकपिलस्यकोपाग्निनादग्धाइतिवर्णयंतितान्निराकरोति नेति कुतइत्यतआह सत्त्वधामनिशुद्धसत्वमूर्त्तौ जगतःपवित्रःशुद्धिकरःआत्मा यस्यतस्मिन्कथंविभाव्यतेसंभाव्यते असंभावनायांदृष्टांतः भुवोरजःखेकथंभाव्यतेइति ॥ १३ ॥ किंच यस्ययेनईरिताप्रवर्तितातस्यविप श्चितःसर्वज्ञस्यकथंपृथङ्मतिररिमित्रादिभेददृष्टिः ॥ १४ ॥ तदेवंसुमत्याःपुत्रेषुमृतेषुकेशिन्याःपौत्रेणाश्वःसमानीतःपितृव्योद्धरणप्रयत्नः

प्रागुदीच्यांदिशिहयंददृशुःकपिलांतिके ॥ एषवाजिहरश्चौरआस्तेमीलितलोचनः ॥ १० ॥ हन्यतांहन्यतांपापइतिषष्टिसहस्रिणः ॥ उदायुधाअभिययुरुन्मिमेषतदामुनिः ॥ ११ ॥ स्वशरीराग्निनातावन्महेंद्रत्द्दतचेतसः ॥ महद्व्यतिक्रमहताभस्मसादभवन्क्षणात् ॥ १२ ॥ नसाधुवादोमुनिकोपभर्जितान्नृपेंद्रपुत्राइतिसत्त्वधामनि ॥ कथंतमोरोषमयंविभाव्यतेजगत्पवित्रात्मनिखेरजोभुवः ॥ १३ ॥ यस्येरितासांख्यमयीदृढेहनौर्ययामुमुक्षुस्तरतेदुरत्ययं ॥ भवार्णवंमृत्युपथंविपश्चितःपरात्मभूतस्यकथंपृथङ्मतिः ॥ १४ ॥ योऽसमंजसइत्युक्तःसकेशिन्यानृपात्मजः ॥ तस्यपुत्रोंऽशुमान्नामपितामहहितेरतः ॥ १५ ॥ असमंजसआत्मानंदर्शयन्नसमंजसं ॥ जातिस्मरःपुरासंगाद्योगीयोगाद्विचालितः ॥ १६ ॥ आचरन्गर्हितंलोकेज्ञातीनांकर्मविप्रियं ॥ सरय्वांक्रीडतोबालान्प्रास्यदुद्वेजयन्जनं ॥ १७ ॥ एवंवृत्तःपरित्यक्तःपित्रास्नेहमपोह्यवै ॥ योगैश्वर्येणबालांस्तान्दर्शयित्वाततोययौ ॥ १८ ॥ अयोध्यावासिनःसर्वेबालकान्पुनरागतान् ॥ दृष्ट्वाविसिस्मिरेराजन्राजाचाप्यन्वतप्यत ॥ १९ ॥ अंशुमांश्चोदितोराज्ञातुरंगान्वेषणेययौ ॥ पितृव्यखातानुपथंभस्मांतिददृशेहयं ॥ २० ॥ ॥ ॥

कृतइतिदर्शयितुमाह योसमंजसइतिउक्तःकेवलमज्ञैर्वस्तुतस्तुसमंजसएवसतुकेशिन्याःसुतः क्षेत्रजत्वमिवप्रतीतंवारयति तस्यैवनृपस्यात्मनोदेहाज्जातः ॥ १५ ॥ तस्यकथामाह चतुर्भिः असमंजसःपुरापूर्वजन्मनियोगीसन्संगाद्धेतोर्योगाद्विचालितः ॥ १६ ॥ अतइदानींजातिस्मरः सन्संगपरिहारायजनमुद्वेजयन्लोकेगर्हितंज्ञातीनांचविप्रियंकर्माचरन्क्रीडतोबालान्सरय्वांप्रास्यत्प्राक्षिपदितिद्वयोरन्वयः ॥ ॥ ७१ ॥ एवंविधंवृत्तंकर्मयस्यसः ॥ १८ ॥ १९ ॥ पितृव्यखातमनुयःपंथास्तंययौ भस्मांतिभस्मसमीपे ॥ २० ॥ ॥

॥ १४ ॥

अजानंतोऽवजानंतोऽप्यनुकंप्यावयंत्विति ॥ तुष्टावषड्भिरीशानमंशुमानेवमाशयः ॥ २१ ॥ अजनःअजोब्रह्माऽपित्वामद्यापिन पश्यति नचबुद्ध्यते कथंभूतं आत्मनःस्वस्मात्परंपरमेश्वरं कैर्हेतुभिःसमाधियुक्तिभिः समाधिनाऽप्यपरोक्षंनपश्यतियुक्तिभिःपरोक्षमपिसम्यङ्बुध्य तेइत्यर्थः अपरेअर्वाचीनास्तुकुतस्त्वांपश्येयुः अर्वाचीनत्वेहेतुः तस्यब्रह्मणोमनश्चशरीरंचधीश्चसत्त्वतमोरजः कार्याणिताभिर्येविविधादेव तिर्यङ्नराणांसर्गास्तेषुसृष्टास्तत्रापिवयमप्रकाशाअज्ञाःकुतःपश्यामेत्यर्थः ॥ २२ ॥ अपरेतर्हिकिंपश्यंतितदाह येदेहभाजस्तेस्वस्मिन्सम्यक् स्थितमपित्वांनविदुःकिंतुगुणानेवविपश्यंति अथवानगुणान्अपितुतमएवपश्यंति यतस्त्रिगुणाबुद्धिरेवप्रधानंयेषामतोबहिरेवप्रकाशोज्ञानंये षां बुद्धिपरतंत्रतयाजाग्रत्स्वप्नयोर्विषयान्पश्यंतिसुषुप्तौतमएवकेवलंनतुनिर्गुणंत्वां सर्वत्रहेतुः यद्यतःतस्यतवमाययोतिवामोहितंचेतोयेषांते ॥ २३ ॥ तथाऽप्यहंविचारेणज्ञास्यामीतिचेत्तत्राह तंत्वामहंविमूढःकथंपरिभावयामिविचारयामि कथंभूतं ज्ञानघनंशुद्धज्ञानमूर्त्तिं स्वतएव

## तत्रासीनंमुनिंवीक्ष्यकपिलाख्यमधोक्षजं॥अस्तौत्समाहितमनाःप्रांजलिःप्रणतोमहान् ॥ २१ ॥ अंशुमानुवाच नपश्यतित्वांपरमात्मनोऽजनोनबुध्यतेऽद्यापिसमाधियुक्तिभिः॥ कुतोऽपरेतस्यमनःशरीरधीविसर्गसृष्टावयमप्रकाशाः ॥ २२ ॥ येदेहभाजस्त्रिगुणप्रधानागुणान्विपश्यंत्युतवातमश्च ॥ यन्मायया मोहितचेतसस्तेविदुःस्वसंस्थंनबहिःप्रकाशाः ॥ २३ ॥ तंत्वामहंज्ञानघनंस्वभावप्रध्वस्तमायागुणभेदमोहैः ॥ सनंदनाद्यैर्मुनिभिर्विभाव्यंकथंहिमूढःपरिभावयामि ॥ २४ ॥ प्रशांतमायागुणकर्मलिंगमनामरूपंसदसद्विमुक्तं ॥ ज्ञानोपदेशायगृहीतदेहंनमामहेत्वांपुरुषंपुराणं ॥ २५ ॥ ॥ ॥ ॥ ॥

प्रध्वस्तौमायागुणनिमित्तौभेदमोहौयेषांतैर्विभाव्यंविचिंत्यं अयंभावः ज्ञानघनत्वान्नतावत्ज्ञानविषयत्वं विचारविषयत्वेऽपिमायागुणैरभि भूतोऽहंनविचारेसमर्थइति ॥ २४ ॥ हेप्रशांततस्मात्त्वांपुरुषंपुराणंकेवलंनमामेत्यन्वयः पुराणपुरुषत्वेहेतुः मायायागुणाःकर्माणिचविश्व सृष्ट्यादीनिलिंगानिचब्रह्मादिरूपाणियस्यतं प्रशांतत्वेहेतुःसदसद्भ्यांकार्यकारणाभ्यांपुण्यपापाभ्यांवाविमुक्तंअतःअनामरूपंतत्तत्कृतना मरूपशून्यं किंतुज्ञानोपदेशायगृहीतःप्रकटितोदेहःशुद्धसत्त्वमूर्तिर्येनतं यद्वा हेप्रशांतमायेतिहेअगुणेतिचसंबोध्यकर्मभिःसृष्ट्यादिकार्यैर्लिंगानियस्येतियोज्यं यद्वाप्रशांतामायागुणादयोयस्मिन्नित्येकमेवपदं ॥ २५ ॥ ॥ ॥ ॥

स्वभाग्यंश्लाघते त्वन्मायेतिद्वाभ्यां कामादिभिर्विभ्रांतानिचेतांसियेषांतेइमेसर्वेगृहादिषुभ्रमंति ॥ २६ ॥ हेसर्वभूतात्मन्नः अस्माकंत्वद्रूपयैवघटितास्त्वद्दर्शनादतिदृढोऽपिमोहमयः पाशश्छिन्नः कथंभूतः कामादीनामाशयआश्रयः त्वत्प्रसादेनकृतार्थोस्मीत्यर्थः ॥ २७ ॥ ॥ २८ ॥ अश्वंलब्ध्वाऽपिसाकांक्षंप्रत्याह इमेचेति ॥ २९ ॥ तंपरिक्रम्येतिशुकोक्तिः ॥ ३० ॥ ३१ ॥ इतिनवमेटीकायामष्टमोऽध्यायः



त्वन्मायारचितेलोकेवस्तुबुध्याग्रहादिषु ॥ भ्रमंतिकामलोभेर्ष्यामोहविभ्रांतचेतसः ॥ २६ ॥ अद्यनःसर्वभूतात्मन्कामकर्मेंद्रियाशयः ॥ मोहपाशोदृढश्छिन्नोभगवंस्तवदर्शनात् ॥ २७ ॥ श्रीशुकउवाच इत्थंगीतानुभावस्तंभगवान्कपिलोमुनिः ॥ अंशुमंतमुवाचेदमनुगृह्यधियान्नृप ॥ २८ ॥ श्रीभगवानुवाच अश्वोऽयंनीयतांवत्सपितामहपशुस्तव ॥ इमेचपितरोदग्धागंगांऽभोर्हंतिनेतरत् ॥ २९ ॥ तंपरिक्रम्यशिरसाप्रसाद्यहयमानयत् ॥ सगरस्तेनपशुनाक्रतुशेषंसमापयत् ॥ ३० ॥ राज्यमंशुमतिन्यस्यनिस्पृहोमुक्तबंधनः ॥ और्वोपदिष्टमार्गेणलेभेगतिमनुत्तमां ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेसगरोपाख्यानेअष्टमोऽध्यायः ॥ ८ ॥ ७१ ॥ श्रीशुकउवाच अंशुमांश्चतपस्तेपेगंगानयनकाम्यया ॥ कालंमहांतंनाशक्नोत्ततःकालेनसंस्थितः ॥ १ ॥ दिलीपस्तत्सुतस्तद्वदशक्तःकालमेयिवान् ॥ भगीरथस्तस्यपुत्रस्तेपेससुमहत्तपः ॥ २ ॥ दर्शयामासतंदेवीप्रसन्नावरदाऽस्मिते ॥ इत्युक्तःस्वमभिप्रायंशशंसावनतोन्नृपः ॥ ३ ॥ कोऽपिधारयितावेगंपतंत्यामेमहीतले ॥ अन्यथाभूतलंभित्वान्नृपयास्येरसातलं ॥ ४ ॥ किंचाहंनभुवंयास्येनरामय्यामृजंत्यघं ॥ मृजामितदघंकुत्रराजंस्तत्रविचिंत्यतां ॥ ५ ॥ ॥ ॥

॥ ९ ॥ नवमेंशुमतोवंशःखट्वांगावधिवर्ण्यते ॥ गंगाभूतलमानिन्येयस्यपौत्रोभगीरथः ॥ १ ॥ यथासगरःपौत्रायराज्यंदत्वातपस्तेपेतथाअंशुमांश्चस्वपुत्रायराज्यंदत्वामहांतंकालंतपस्तेपेइतिचकारस्यार्थः नाशक्नोत् गंगामानेतुमितिशेषः संस्थितोमृतः ॥ १ ॥ कालंमृत्युमेयिवान्प्राप्तः ॥ २ ॥ तंप्रत्यात्मानंदर्शयामास तेवरदास्मीतिगंगयोक्तःसन्स्वमभिप्रायंपूर्वजोद्धरणंशशंसकथयामास ॥ ३ ॥ आहगंगा कोऽपिगगनात्पतंत्यामेवेगंधारयिताधारयिष्यति ॥ ४ ॥ किंच आमृजंतिक्षालयिष्यंतितत्रोपायोविचिंत्यतां ॥ ५ ॥ ॥ ॥

अघंभिनत्तीत्यघभित्‌हरिरास्ते अतःअघंहरंतिहरिष्यंति ॥ ६ ॥ आत्माकथंभूतः यस्मिन्निदंविश्वमोतंग्रथितमूर्ध्वतंतुषुशाटीपटइव प्रोतंचतिर्यक्‌तंतुषुपटइव असौसर्वाधारस्त्वद्वेगंधारयिष्यतीत्यर्थः ॥ ७ ॥ इत्येवंगंगामुक्त्वा तच्छ्रुत्वेतिपाठेश्रावयित्वेत्यर्थः ॥८॥ राज्ञाऽभिहितंतथेत्यंगीकृत्य हरेःपादेनपूतंजलंयस्याः ॥ ९ ॥ १० ॥ ११ ॥ प्रसंगाद्गंगामाहात्म्यमाहचतुर्भिः यत्‌यस्याजलस्पर्शमात्रेण

भगीरथउवाच साधवोन्यासिनःशांताब्रह्मिष्ठालोकपावनाः ॥ हरंत्यघंतेंगसंगात्तेष्वास्तेह्यघभिद्धरिः॥६॥ धारयिष्यतितेवेगंरुद्रस्त्वात्माशरीरिणां ॥ यस्मिन्नोतमिदंप्रोतंविश्वंशाटीवतंतुषु ॥ ७॥ इत्युक्त्वासनृपो देवंतपसाऽतोषयच्छिवं ॥ कालेनाल्पीयसाराजंस्तस्येशःसमतुष्यत ॥ ८ ॥ तथेतिराज्ञाऽभिहितंसर्वलोकहितःशिवः ॥ दधारावहितोगंगांपादपूतजलांहरेः ॥ ९ ॥ भगीरथःसराजर्षिर्निन्येभुवनपावनीं ॥ यत्र स्वपितॄणांदेहाभस्मीभूताःस्मशेरते ॥ १० ॥ रथेनवायुवेगेनप्रयांतमनुधावती ॥ देशान्पुनंतीनिर्दग्धानासिंचत्सगरात्मजान् ॥ ११ ॥ यज्जलस्पर्शमात्रेणब्रह्मदंडहताअपि ॥ सगरात्मजादिवंजग्मुःकेवलंदेहभस्मभिः ॥ १२ ॥ भस्मीभूतांगसंगेनस्वर्याताःसगरात्मजाः ॥ किंपुनःश्रद्धयादेवींयेसेवंतेधृतव्रताः ॥ १३ ॥ नह्येतत्परमाश्चर्यंस्वर्धुन्यायदिहोदितं ॥ अनंतचरणांभोजप्रसूतायाभवच्छिदः ॥ १४ ॥ संनिवेश्यमनोयस्मिन्‌श्रद्धयामुनयोऽमलाः ॥ त्रैगुण्यंदुस्त्यजंहित्वासद्योयातास्तदात्मतां ॥ १५ ॥ श्रुतोभगीरथाज्जज्ञेतस्यनाभोऽपरोऽभवत् ॥ सिंधुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥१६॥ ऋतुपर्णोनलसखो योऽश्वविद्यामयान्नलात् ॥ दत्वाऽक्षहृदयंचास्मैसर्वकामस्तुतत्सुतः ॥ १७ ॥ ततःसुदासस्तत्पुत्रोमदयंतीपतिर्नृपः ॥ आहुर्मित्रसहंयंवैकल्माषांघ्रिमुतक्वचित् ॥ वसिष्ठशापाद्रक्षोऽभूदनपत्यःस्वकर्मणा ॥१८॥

तच्चकेवलंदेहभस्मभिरेवनसाक्षात्‌ ब्रह्मणिस्वकृतेनदंडेनहताअपि ॥ १२ ॥ तांश्रद्धयायेसेवंतइतितत्प्रपंचयति भस्मीभूतेनांगेनयःसंगस्तेन ॥ १३ ॥ १४ ॥ अनंतस्यविशेषणंसंनिवेश्येतित्रैगुण्यंदेहसंबंधं ॥ १५ ॥ १६ ॥ नलस्यसखा अयात्प्राप्तः तत्सुतःऋतुपर्णस्यसुतः ॥ १७ ॥ तत्पुत्रःसौदासः ॥ १८ ॥

नरहः नरहस्यं ॥ १९ ॥ मृगयांचरन्कंचिद्राक्षसंजघानतस्यभ्रातरंमुमोच ॥ २० ॥ सभ्रातापलाय्यगतः अधमनिष्टं सूदःपाचकस्तद्रूपध
रःसन्राज्ञोगृहेवर्त्तमानः ॥२१॥ अभक्ष्यमंजसाविलोक्य एवंनरमांसव्यवहारेण ॥ २२ ॥ वसिष्ठएवतंशापंद्वादशवार्षिकंचक्रे ॥२३॥ रुशतीः
तीक्ष्णाःअपःस्वपादयोर्जहौनान्यत्र तत्रहेतुः दिशइति एवमनेनमित्रसहत्वमपिदर्शितं मित्रस्यकलत्रस्यवाचःसहनात् ॥ २४ ॥ तदेवंराक्ष

राजोवाच किंनिमित्तोगुरोःशापःसौदासस्यमहात्मनः ॥ एतद्वेदितुमिच्छामःकथ्यतांनरहोयदि ॥ १९ ॥
श्रीशुकउवाच सौदासोमृगयांकंचिच्चरन्रक्षोजघानह ॥ मुमोचभ्रातरंसोऽथगतःप्रतिचिकीर्षया ॥ २० ॥
सचिंतयन्नघंराज्ञःसूदरूपधरोगृहे ॥ गुरवेभोक्तुकामायपक्त्वानिन्येनरामिषं ॥ २१ ॥परिवेक्ष्यमाणंभगवा
न्विलोक्याभक्ष्यमंजसा ॥ राजानमशपत्क्रुद्धोरक्षोह्येवंभविष्यसि ॥२२॥ रक्षःकृतंतद्विदित्वाचक्रेद्वादशवा
र्षिकं ॥ सोऽप्यपोंऽजलिनादायगुरुंशप्तुंसमुद्यतः॥२३॥वारितोमदयंत्यापोरुशतीःपादयोर्जहौ ॥ दिशःख
मवनींसर्वंपश्यन्जीवमयंनृपः ॥२४॥ राक्षसंभावमापन्नःपादेकल्माषतांगतः॥ व्यवायकालेददृशेवनौको
दंपतीद्विजौ॥२५॥क्षुधार्त्तोजगृहेविप्रंतत्पत्न्याहाकृतार्थवत्॥नभवान्राक्षसःसाक्षादिक्ष्वाकूणांमहारथः ॥
॥२६ ॥ मदयंत्याःपतिर्वीरनाधर्मंकर्त्तुमर्हसि ॥ देहिमेऽपत्यकामायाअकृतार्थंपतिंद्विजं॥२७॥देहोऽयंमानु
षोराजन्पुरुषस्याखिलार्थदः ॥ तस्मादस्यवधोवीरसर्वार्थवधउच्यते ॥२८॥ एषहिब्राह्मणोविद्वांस्तपःशी
लगुणान्वितः॥आरिराधयिषुर्ब्रह्ममहापुरुषसंज्ञितं॥ सर्वभूतात्मभावेनभूतेष्वंतर्हितंगुणैः ॥२९॥ सोऽयंब्र
ह्मर्षिवर्यस्तेराजर्षिप्रवराद्विभो ॥ कथमर्हतिधर्मज्ञवधंपितुरिवात्मजः ॥ ३० ॥

सत्वेकल्माषांघ्रित्वेचकारणमुक्त्वास्वकर्मणाऽनपत्यइतियदुक्तंतत्प्रपंचयाति व्यवायकालइत्यादिनाकर्मणाअप्रजइत्यंतेन वनमोकोनि
वासोययोस्तौवनौकसौचतौदंपतीच पृथक्पदत्वेसकारलोपआर्षः ॥ २५ ॥ अकृतार्थवत्दीनवत् ॥ २६ ॥ अकृतार्थमसमाप्तरतिं ॥२७॥
॥ २८ ॥ सर्वभूतानामात्मोतिभावनयाआराधयितुमिच्छुः यद्वा सर्वभूतात्मभावेनभूतेषुस्थितमपिगुणैरंतर्हितंब्रह्मेतिसंबंधः पाठांतरे अं
तर्हितःसोयमित्युत्तरेणान्वयः ॥ २९ ॥ ३० ॥

भ्रूणस्यश्रोत्रियस्यगर्भस्यसतइतिवा बभ्रोर्गौः सतांमतोभवान्वधंकथंसाधुमन्यतइत्यर्थः ॥ ३१ ॥ क्षणमपियेनविनानजीविष्यामिसोऽ यंयदिभक्षःक्रियतेतर्हिमृतकंयथामृतप्रायांमांपूर्वंभक्षय ॥ ३२ ॥ ३३ ॥ दिधिषुंगर्भाधानकर्त्तारं ॥ ३४ ॥ आधानान्मैथुनात् हेअकृतप्र ज्ञमृत्युर्मयादर्शितः ॥ ३५ ॥ ३६ ॥ ३७ ॥ तदेवंकर्मणाअप्रजः ॥ ३८ ॥ अबिभ्रत्दधारेत्यर्थः नव्यजायतनप्रासूत अतोवसिष्ठए

तस्यसाधोरपापस्यभ्रूणस्यब्रह्मवादिनः॥कथंवधंयथाबभ्रोर्मन्यतेसन्मतोभवान् ॥ ३१ ॥ यद्ययंक्रियतेभ क्षस्तर्हिमांखादपूर्वतः॥नजीविष्येविनायेनक्षणंचमृतकंयथा॥३२॥एवंकरुणभाषिण्याविलपंत्याअनाथ वत्॥व्याघ्रःपशुमिवाखादत्सौदासःशापमोहितः ॥ ३३ ॥ ब्राह्मणीवीक्ष्यदिधिषुंपुरुषादेनभक्षितं॥शोचं त्यात्मानमुर्वीशमशपत्कुपितासती ॥३४॥ यस्मान्मेभक्षितःपापकामार्त्तायाःपतिस्त्वया ॥ तवापिमृत्युरा धानादकृतप्रज्ञदर्शितः॥३५॥एवंमित्रसहंशप्त्वापतिलोकपरायणा॥तदस्थीनिसमिद्धेऽग्नौप्रास्यभर्तुर्गतिं गता॥३६॥विशापोद्वादशाब्दांतेमैथुनायसमुद्यतः॥विज्ञायब्राह्मणीशापंमहिष्यासनिवारितः॥३७॥तत ऊर्ध्वंसतत्याजस्त्रीसुखंकर्मणाऽप्रजः॥वसिष्ठस्तदनुज्ञातोमदयंत्यांप्रजामधात्॥३८॥सावैसप्तसमागर्भम बिभ्रन्नव्यजायत॥जघ्नेऽश्मनोदरंतस्याःसोऽश्मकस्तेनकथ्यते॥३९॥अश्मकान्मूलकोजज्ञेयःस्त्रीभिःपरि रक्षितः॥नारीकवचइत्युक्तोनिःक्षत्रेमूलकोऽभवत्॥४०॥ततोदशरथस्तस्मात्पुत्रऐडविडस्ततः॥राजावि श्वसहोयस्यखट्वांगश्चक्रवर्त्यभूत्॥४१॥योदेवैरर्थितोदैत्यानवधीद्युधिदुर्जयः॥मुहूर्त्तमायुर्ज्ञात्वैत्यस्वपुरंसं दधेमनः॥४२॥नमेब्रह्मकुलात्प्राणाःकुलदैवान्नचात्मजाः॥नश्रियोनमहीराज्यंनदाराश्चातिवल्लभाः॥४३॥

वतस्याउदरमश्मनाजघान सउत्पन्नःसुतोऽश्मकः ॥ ३९ ॥ स्त्रीभिःसंवेष्ट्यपरशुरामात्परिरक्षितःअतोनारीकवचइत्युक्तः निःक्षत्रेसति क्षत्रवंशस्यमूलमभवदतोमूलकइतिचोक्तः ॥ ४० ॥ ४१ ॥ प्रसन्नैर्देवैर्वरंवृणीष्वेत्युक्तेखट्वांगेनोक्तंप्रथमंतावन्ममायुःकथ्यतामिति देवै श्चोक्तंमुहूर्तमात्रमिति तज्ज्ञात्वादेवैर्दत्तेनविमानेनशीघ्रंस्वपुरमेत्यमनःपरमेश्वरेसंदधे ॥ ४२ ॥ एतदेवस्वसाधुवृत्तानुस्मरणपूर्वकंतत्कृतेन निश्चयेनदर्शयति नेतिसप्तभिः कुलदैवात्ब्रह्मकुलात्सकाशान्मेप्राणादयोनातिवल्लभानातिप्रियाः ॥ ४३ ॥ ॥ ॥ ॥

॥ ४४ ॥ मह्यंमम भूतभावनोहरिस्तस्मिन्नेवभावनायस्यसोहंतंकामंनवृणे ॥ ४५ ॥ तत्रहेतुः यइति विक्षिप्तानींद्रियाणिधीश्चयेषांतेदेवा
अपि ॥ ४६ ॥ अथतस्मात्प्रकृत्यास्वभावेनात्मनिरूढंगुणेषुसंगंविश्वकर्त्तुर्भावेनहित्वात्मेवाहंप्रपद्ये ॥ ४७ ॥ अन्यभावंदेहाद्यभिमान
रूपमज्ञानंहित्वा ॥ ४८ ॥ स्वभावमेवाह यत्तदिति शून्यवत्कल्पितं वागाद्यविषयत्वात् वासुदेवइतियंगृणंति ब्रह्मणएवभक्तानुग्रहार्थं

नबाल्येऽपिमतिर्मह्यमधर्मेरमतेक्कचित् ॥ नपश्याम्युत्तमश्लोकादन्यत्किंचनवस्त्वहं ॥ ४४ ॥ देवैःकामव
रोदत्तोमह्यंत्रिभुवनेश्वरैः ॥ नवृणेतमहंकामंभूतभावनभावनः ॥ ४५ ॥ येविक्षिप्तेंद्रियधियोदेवास्तेस्व
त्हृदिस्थितं ॥ नविंदंतिप्रियंशश्वदात्मानंकिमुतापरे ॥ ४६ ॥ अथेशमायारचितेषुसंगंगुणेषुगंधर्वपुरोप
मेषु ॥ रूढंप्रकृत्यात्मनिविश्वकर्तुर्भावेनहित्वातमहंप्रपद्ये ॥ ४७ ॥ इतिव्यवसितोबुद्ध्यानारायणगृही
तया ॥ हित्वाऽन्यभावमज्ञानंततःस्वंभावमाश्रितः ॥ ४८ ॥ यत्तद्ब्रह्मपरंसूक्ष्ममशून्यंशून्यकल्पितं ॥ भ
गवान्वासुदेवेतियंगृणंतिहिसात्वताः ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेसूर्यवंशानुवर्णनेनव
मोऽध्यायः ॥ ९ ॥ ॥ ६ ॥ श्रीशुकउवाच खट्वांगाद्दीर्घबाहुश्चरघुस्तस्मात्पृथुश्रवाः ॥ अजस्ततोम
हाराजतस्माद्दशरथोऽभवत् ॥ १ ॥ तस्यापिभगवानेषसाक्षाद्ब्रह्ममयोहरिः ॥ अंशांशेनचतुर्द्धाऽगात्पुत्र
त्वंप्रार्थितःसुरैः ॥ २ ॥ रामलक्ष्मणभरतशत्रुघ्नाइतिसंज्ञया ॥ तस्यानुचरितंराजन्नृषिभिस्तत्त्वदर्शि
भिः ॥ श्रुतंहिवर्णितंभूरित्वयासीतापतेर्मुहुः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

माविष्कृततनोर्वासुदेवत्वात् ॥ ४९ ॥ इतिनवमस्कंधेटीकायांनवमोध्यायः ॥ ९ ॥ ॥ दशमेप्राहखट्वांगवंशेश्रीरामसंभवं ॥ तच्चरित्रंचलंके
शंहत्वायोध्यागमावधि ॥ १ ॥ खट्वांगाच्चदीर्घबाहुः ॥ १ ॥ २ ॥ ऋषिभिर्वाल्मीकिमुख्यैर्भूरिवर्णितंत्वयामुहुःश्रुतंतथापिसंक्षेपतःकथ्यमानंशृणु ॥ ३ ॥

ग्रंथकोटिभिराकीर्णमद्भुतंरामविक्रमं ॥ अध्यायद्वयतोवक्ष्यन्नेकश्लोकेसमस्यति ॥ सकोशलेंद्रःश्रीरामोनोऽस्मानवतात्पातु कथंभूतःयोगु
र्वर्थेपितुः सत्यस्यपालनार्थंत्यक्तराज्यःसन् पद्मवदतिसुकुमाराभ्यांपद्भ्यां तदेवाह प्रियायाःपाणिनाऽपिस्पर्शेनास्तिक्षमाययोस्ताभ्यांप्र
तिवनंव्यचरत् हरींद्रोहनुमान्सुग्रीवोवाअनुजोलक्ष्मणस्ताभ्यांमृजिताअपनीतापथरुजामार्गश्रमोयस्य शूर्पणख्यावैरूप्यात्कर्णनासिका
छेदाद्धेतोः तयाप्रलोभितेनरावणेनापहारात्प्रियेणकलत्रेणविरहस्तेनरुट्तयाआरोपितयोर्भ्रुवोर्विजृंभेणैवत्रस्तोऽब्धिर्यस्मात् ततस्तद्विज्ञा
पनेनबद्धःसेतुर्येन ततःखलारावणादयएवदवोवनंतस्यदहनः ॥ ४ ॥ संक्षेपतोवर्णितंरामचरितमादितआरभ्यविस्तरेणाहविश्वामित्राध्व

गुर्वर्थेत्यक्तराज्योव्यचरदनुवनंपद्मपद्भ्यांप्रियायाःपाणिस्पर्शाक्षमाभ्यांमृजितपथरुजोयोहरींद्रानुजा
भ्यां ॥ वैरूप्याच्छूर्पणख्याःप्रियविरहरुषारोपितभ्रूविजृंभत्रस्ताब्धिर्बद्धसेतुःखलदवदहनःकोशलेंद्रो
ऽवतान्नः ॥४॥ विश्वामित्राध्वरेयेनमारीचाद्यानिशाचराः ॥ पश्यतोलक्ष्मणस्यैवहतानैर्ऋतपुंगवाः ॥५॥
योलोकवीरसमितौधनुरैशमुग्रंसीतास्वयंवरगृहेत्रिशतोपनीतं ॥ आदायबालगजलीलइवेक्षुयष्टिंसज्जी
कृतंनृपविकृष्यबभंजमध्ये ॥ ६ ॥ जित्वाऽनुरूपगुणशीलवयोऽगरूपांसीताऽभिधांश्रियमुरस्यभिलब्ध
मानां ॥ मार्गेव्रजन्भृगुपतेर्व्यनयत्प्ररूढंदर्पंमहीमकृतयस्त्रिरराजबीजां ॥ ७ ॥ ॥

रइत्यादिनायावदुत्तराध्यायसमाप्ति पश्यतएवलक्ष्मणस्य तमप्यनपेक्ष्यैवहताइत्यर्थः यच्छब्दानांसकोशलेंद्रोऽवतादित्यनेनैवान्वयः॥
॥ ५ ॥ लोकेयेवीरास्तेषांसमितौसमाजेऐशंत्रैयंबकंधनुरिक्षुयष्टिमिवलीलयैवादायसज्जीकृतमारोपितंविकृष्यमध्येबभंज हेनृप उग्रंकठि
नंगरिष्ठं तदाह वाहकानांत्रिभिःशतैरुपनीतं बालगजस्यलीलेवलीलायस्यसः ॥ ६ ॥ अनुरूपाणिस्वयोग्यानिगुणशीलादीनियस्या
स्तांसीतासंज्ञांपूर्वमुरसिअभिलब्धोमानोययातांश्रियंजित्वाधनुर्भंगमहानादश्रवणक्षुभितस्यभृगुपतेर्दर्पंव्यनयदपनीतवान् कथंभूतस्य त्रिः
सप्तकृत्वोराजबीजशून्यांमहींयोऽकरोत्तस्य ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इदानींगुर्वर्थइतिश्लोकंविवृण्वन्नाह यइति कदाचित्कैकेय्यास्तुष्टेनराज्ञात्वदपेक्षितंदास्यामीतिप्रतिश्रुतं ततः श्रीरामस्ययुवराज्याभिषेक
समयेतयाभरतस्यराज्यंरामस्यचवनेवासःप्रार्थितस्तदासत्यपाशेनपरिवीतस्यपितुर्निदेशमाज्ञांशिरसाजगृहे ततोराज्यादिकंत्यक्त्वासभार्यो
वनंययौ दुस्त्यजस्यापिसहर्षत्यागेदृष्टांतः मुक्तसंगोयोगीअसून्प्राणानिवेति ॥ ८ ॥ रक्षसोरावणस्यस्वसुःशूर्पणखायाअशुद्धबुद्धेः सी
तांजिघृक्षोःकामातुरायाइतिवा रूपंव्यकृताविकारमनयत् तस्याःखरत्रिशिरदूषणमुख्याबंधवोयेषुतांश्चतुर्दशसहस्रंजघान अपारणीयम
लंघ्यमसह्यंकोदंडंपाणौयस्यसः ॥ ९ ॥ सीतायाःकथाश्रवणेनदीपितोहृच्छयोयस्यतेनसीतांहरिष्यतास्वस्माद्भीतेनस्वस्याश्रमादपकर्ष

यःसत्यपाशपरिवीतपितुर्निदेशंस्त्रैणस्यचापिशिरसाजगृहेसभार्य्यः ॥ राज्यंश्रियंप्रणयिनःसुहृदोनिवासं
त्यक्त्वाययौवनमसूनिवमुक्तसंगः ॥८॥ रक्षःस्वसुर्व्यकृतरूपमशुद्धबुद्धेस्तस्याःखरत्रिशिरदूषणमुख्यबंधून्
॥ जघ्नेचतुर्दशसहस्रमपारणीयकोदंडपाणिरटमानउवासकृच्छ्रं ॥ ९ ॥ सीताकथाश्रवणदीपितहृच्छयेन
सृष्टंविलोक्यनृपतेदशकंधरेण॥ जघ्नेऽद्भुतैणवपुषाश्रमतोऽपकृष्टोमारीचमाशुविशिखेनयथाकमुग्रः॥१०॥
रक्षोधमेनवृकवद्विपिनेऽसमक्षंवैदेहराजदुहितर्यपयापितायां ॥ भ्रात्रावनेकृपणवत्प्रिययावियुक्तःस्त्रीसं
गिनांगतिमितिप्रथयंश्चचार ॥ ११ ॥ दग्ध्वात्मकृत्यहतकृत्यमहन्कबंधंसख्यंविधायकपिभिर्दयिताग
तिंतैः ॥ बुद्ध्वाऽथवालिनिहतेप्लवगेंद्रसैन्यैर्वेलामगात्समनुजोऽजभवार्चितांघ्रिः ॥ १२ ॥

णार्थंसृष्टंमारीचंविलोक्यजघान कथंभूतंअद्भुतैणवपुषास्वर्णहरिणदेहेनोपलक्षितंअतएवप्रलोभेनाश्रमतस्तेनापकृष्टःसन् कंदक्षंयथाउ
ग्रःश्रीरुद्रः ॥ १० ॥ ततश्चरक्षोऽधमेनरावणेनअसमक्षमपनीतायां प्रिययावियुक्तोभ्रात्रालक्ष्मणेनसहकृपणवद्वनेचचार किमभिप्रायः
सन् इतिअनेनप्रकारेणस्त्रीसंगिनांदुःखोदर्कांगतिंप्रख्यापयन् ॥ ११ ॥ आत्मार्थेनकृत्येनकर्मणारावणेनसहयुद्धेनहतंकृत्यंशास्त्रीयंदह
नादिकंयस्यतंजटायुषंपुत्रइवदग्ध्वाकबंधंस्वग्रहणायप्रसारितबाहुंराक्षसमहन् अथवालिनिहतेतैःकपिभिर्दयितायागतिंबुद्ध्वाअजभवा
भ्यामर्चितावंघ्रीयस्यसमनुजोवेलांसमुद्रतीरमगात् ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

तत्रत्रिरात्रमुपवासेनप्रतीक्षितोऽपिसिंधुर्यदानोपस्थितस्तदायस्यरोषविभ्रमेणक्रोधलीलयाविवृत्तोयः कटाक्षस्तस्यपातेनसंभ्रांतानक्रामकरा
यस्मिन् भयेनगीर्णोग्रस्तःस्तंभितोघोषोयेनसासिंधुरेतद्वक्ष्यमाणंबभाषे अर्हणमर्घादिकं रूपीमूर्तिमान् ॥ १३ ॥ भाषणमेवाहनत्वामिति
द्वाभ्यां एतावत्पर्यंतंनुनिश्चितंत्वांनविदामनजानीमइत्यर्थः इदानींतुज्ञातोऽसीत्याह यदितिपृथक्पदं यस्येत्यर्थः यद्वशेभ्यः सत्वादिभ्यः
सुरगणादयोभवंतिसभवानिति ॥ १४ ॥ कामंयथेच्छंजलमाक्रम्यप्रयाहि अवमेहंपुरीषप्रायं त्रैलोक्यंरावयतिआक्रंदयतीतितथातंजहि
हेवीरयद्यपितवजलंप्रतिबंधकंनभवतितथापहिसेतुंबधीहि तर्हिकिमर्थं तेयशसोविस्ताराय तदेवाह यंसेतुमुपेत्यदुष्करंकर्मावेक्ष्यत्व

यद्रोषविभ्रमविवृत्तकटाक्षपातसंभ्रांतनक्रमकरोभयगीर्णघोषः ॥ सिंधुःशिरस्यर्हणंपरिगृह्यरूपीपादारविं
दमुपगम्यबभाषएतत् ॥ १३ ॥ नत्वांवयंजडधियोनुविदामभूमन्कूटस्थमादिपुरुषंजगतामधीशं ॥ यत्स
त्वतःसुरगणारजसःप्रजेशामन्योश्चभूतपतयःसभवान्गुणेशः ॥ १४ ॥ कामंप्रयाहिजहिविश्रवसोऽवमेहं
त्रैलोक्यरावणमवाप्नुहिवीरपत्नीं ॥ बध्नीहिसेतुमिहतेयशसोवितत्यैगायंतिदिग्विजयिनोयमुपेत्यभूपाः
॥ १५ ॥ बध्वोदधौरघुपतिर्विविधाद्रिकूटैःसेतुंकपींद्रकरकंपितभूरुहांगैः ॥ सुग्रीवनीलहनुमत्प्रमुखैरनी
कैर्लंकांबिभीषणदृशाविशदग्रदग्धां ॥ १६ ॥ सावानरेंद्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटं
का ॥ निर्भज्यमानधिषणध्वजहेमकुंभशृंगाटकागजकुलैर्ह्रदिनीवघूर्णा ॥ १७ ॥ ॥ ॥

द्यशोगास्यंतिभूपास्तं ॥ १५ ॥ तद्वाक्यमभिनंद्ययत्कृतंतदाह बध्वेति विविधैरद्रीणांकूटैःशृंगैःसेतुंबध्वाअग्रेसीतान्वेषणेहनुमतैवद
ग्धांलंकामाविशत् कथंभूतैःशृंगैः कपींद्राणांकरैःकंपितानिभूरुहाणामंगानिशाखादीनियेषुतैः बिभीषणदृशाबुध्वा कैःसहाविशत् सु
ग्रीवादयःप्रमुखायेषांतैरनीकैः ततश्चसालंकाघूर्णाप्रचलिताबभूव कथंभूता वानरेंद्राणांबलैरुद्धाविहारादयोयस्यां निर्भज्यमानाधिषणा
दयोयस्यांसा तत्रविहारःक्रीडास्थानं कोष्ठंधान्यागारादि श्रीःकोशः द्वारंगृहादीनां गोपुरंपुरद्वारं सदःसभा वलभीप्रासादादिपुरोभाग
च्छादिनी विटंकः कपोतपालिका धिषणंवेदिकादि शृंगाटकंचतुष्पथं ॥ १७ ॥ ॥ ॥ ॥

रक्षःपतीरावणः पुत्रमिंद्रजितंप्रहस्तादींश्चसमहिनोत्प्रायुंक्त ॥ १८ ॥ असिशूलादिभिर्दुर्गमांतांयातुधानपृतनांसुग्रीवादिभिरन्वितःश्री
रामोऽभ्यगात् मरुत्सुतोहनुमान् ऋक्षोजांबवान् ॥ १९ ॥ तेरघुपतेरनीकपाअंगदाद्याःसर्वेरावणस्यइभादिभिर्यद्वरूथंसैन्यंतत्रद्वंद्वंयथा
भवतितथाभिपत्यसंगम्यद्रुमादिभिर्जघ्नुः कान् सीतायाअभिमर्शेनहतंमंगलंयस्यसरावणईशोयेषांतान् ॥ २० ॥ स्वबलस्यनीष्टिनाशमवे
क्ष्यरुष्टः क्रुद्धःसन्यानकंपुष्पकंविमानंरथंवाआरुह्यश्रीराममभिससार अथतंस्वःस्यंदनेस्वर्गस्थेइंद्रस्यरथेमातलिनाइंद्रसारथिनोपनीतेद्यु

रक्षःपतिस्तदवलोक्यनिकुंभकुंभधूम्राक्षदुर्मुखसुरांतनरांतकादीन् ॥ पुत्रंप्रहस्तमतिकायविकंपनादीन्स
र्वानुगान्समहिनोदथकुंभकर्णं ॥१८॥ तांयातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गां ॥
सुग्रीवलक्ष्मणमरुत्सुतगंधमादनीलांगदर्क्षपनसादिभिरन्वितोगात् ॥ १९ ॥ तेऽनीकपारघुपतेरभिपत्य
सर्वेद्वंद्वंवरूथमिभपत्तिरथाश्वयोधैः ॥ जघ्नुर्द्रुमैर्गिरिगदेषुभिरंगदाद्याःसीताऽभिमर्शहतमंगलरावणेशान्
॥२०॥ रक्षःपतिःस्वबलनष्टिमवेक्ष्यरुष्टआरुह्ययानकमथाभिससाररामं ॥ स्वःस्यंदनेद्युमतिमातलिनोप
नीतेविभ्राजमानमहनन्निशितैःक्षुरप्रैः ॥२१॥ रामस्तमाहपुरुषादपुरीषयन्नःकांतासमक्षमसताऽपहृताश्व
वत्ते ॥ त्यक्तत्रपस्यफलमद्यजुगुप्सितस्ययच्छामिकालइवकर्तुरलंघ्यवीर्यः ॥२२॥ एवंक्षिपन्धनुषिसंधितमु
त्ससर्जबाणंसवज्रमिवतद्धृदयंबिभेद ॥ सोसृग्वमन्दशमुखैर्न्यपतद्विमानाद्धाहेतिजल्पतिजनेसुकृतीवरि
क्तः ॥ २३ ॥ ततोनिष्क्रम्यलंकायायातुधान्यःसहस्रशः ॥ मंदोदर्यासमंतस्मिन्प्ररुंदत्यउपाद्रवन् ॥२४
स्वान्स्वान्बंधून्परिष्वज्यलक्ष्मणेषुभिरर्दितान् ॥ रुरुदुःसुस्वरंदीनाघ्नंत्यआत्मानमात्मना ॥ २५ ॥ ॥

मतिदीप्तियुक्तेविभ्राजमानमहनत्अहन् ॥ २१ ॥ हेपुरुषादपुरीषराक्षसपुरीषप्राय यद्यस्मादपहृता श्ववत् इवायथाअसमक्षंगृहंप्रविश्य
किमपिहरतितद्वत् तस्मात्जुगुप्सितस्यकर्मणःकर्तुस्तेऽद्यकालइवालंघ्यवीर्योऽहंफलंयच्छामि अधर्मकर्त्तुः पुंसःकालोयथायच्छतीतिवा
॥ २२ ॥ रिक्तः क्षीणपुण्यःसुकृतीविमानादिव विमानात्पुष्पकान्न्यपतदितिवा ॥२३॥ राक्षसस्त्रीणांविलापमाह ततइतिपंचभिः मंदं
स्वल्पमुदरंयस्यास्तयारावणभार्ययासह ॥ २४ ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥

परैरर्दितापीडिता ॥२६॥२७॥ गृध्राणामन्नंभक्ष्यः नरकहेतवेनरकभोगाय ॥ २८ ॥ सांपरायिकमौर्ध्वदेहिकं ॥ २९ ॥ ३० ॥ आत्म
नःस्वस्यसंदर्शनेनयआल्हादस्तेनविकसन्मुखपंकजंयस्यास्तां ॥ ३१ ॥ यानंपुष्पकं भ्रातृभ्यांलक्ष्मणसुग्रीवाभ्यां ॥ ३२ ॥ आयुश्चद
त्त्वातेनापिसहैवययौ ॥ ३३ ॥ गोमूत्रपक्वयवान्नभोजनं भ्रातरंभरतं ॥ ३४ ॥ ३५ ॥ स्वशिबिरात्रामंविनाऽयोध्यामप्रविशन्स्वस्यवा

हाहताःस्मवयंनाथलोकरावणरावण ॥ कंयायाच्छरणंलंकात्वद्विहीनापरार्दिता ॥ २६ ॥ नैवंवेदमहाभाग
भवान्कामवशंगतः ॥ तेजोऽनुभावंसीतायायेननीतोदशामिमां ॥ २७ ॥ कृतैषाविधवालंकावयंचकुलनं
दन ॥ देहःकृतोन्नंगृध्राणामात्मानरकहेतवे ॥ २८ ॥ श्रीशुकउवाच स्वानांबिभीषणश्चक्रेकोशलेंद्रा
नुमोदितः ॥ पितृमेधविधानेनयदुक्तंसांपरायिकं ॥ २९ ॥ ततोददर्शभगवानशोकवनिकाश्रमे ॥ क्षामां
स्वविरहव्याधिंशिंशपामूलमास्थितां ॥ ३० ॥ रामःप्रियतमांभार्यांदीनांवीक्ष्यान्वकंपत ॥ आत्मसंदर्शना
ल्हादविकसन्मुखपंकजां ॥ ३१ ॥ आरोप्यारुरुहेयानंभ्रातृभ्यांहनुमद्युतः ॥ बिभीषणायभगवान्दत्वारक्षो
गणेशतां ॥ ३२ ॥ लंकामायुश्चकल्पांतंययौचीर्णव्रतःपुरीं ॥ अवकीर्यमाणःकुसुमैर्लोकपालार्पितैःपथि
॥ ३३ ॥ उपगीयमानचरितःशतधृत्यादिभिर्मुदा ॥ गोमूत्रयावकंश्रुत्वाभ्रातरंवल्कलांबरं ॥ ३४ ॥ महा
कारुणिकोऽतप्यज्जटिलंस्थंडिलेशयं ॥ भरतंप्राप्तमाकर्ण्यपौरामात्यपुरोहितैः ॥ पादुकेशिरसिन्यस्यरा
मंप्रत्युद्यतोऽग्रजं ॥ ३५ ॥ नंदिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः ॥ ब्रह्मघोषेणचमुहुःपठद्भिर्ब्रह्मवा
दिभिः ॥ ३६ ॥ स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजैरथैः ॥ सदश्वैरुक्मसन्नाहैर्भटैःपुरटवर्मभिः ॥ ३७ ॥
श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैवपदानुगैः ॥ पारमेष्ठ्यान्युपादायपण्यान्युच्चावचानिच ॥ ३८ ॥ ॥

संयत्रनिर्मितवांस्तस्मात्सकाशात्गीतादिभिर्युक्तोरामंप्रत्युद्यतःअभिमुखंययौ ब्रह्मघोषेणमहताघोषेणपठद्भिः ॥ ३६ ॥ स्वर्णरसाक्ताः
कक्षाःप्रांतायासांताभिःपताकाभिः हैमैरितिचत्वारिरथविशेषणानि ॥ ३७ ॥ पारमेष्ठ्यानि राजार्हाणिछत्रचामरादीनि ॥ ३८ ॥

प्रेम्णाप्रक्लिन्नंहृदयमक्षिणेचनेत्रेयस्य ॥ ३९ ॥ नेत्रजैर्जलैःस्नापयन्नाश्लिष्य येऽर्हसत्तमाःकुलवृद्धाः ॥ ४० ॥ तेभ्योपिनमनंचक्रे ॥४१॥
अयोध्याप्रवेशप्रकारमाह पादुकेइतिसार्द्धैस्त्रिभिः ॥ ४२ ॥ धनुश्चनिषंगौचतान् ॥ ४३ ॥ ४४ ॥ ४५ ॥ गुरुपत्नीःकैकेय्याद्याः वय



पादयोर्न्यपतत्प्रेम्णाप्रक्लिन्नहृदयेक्षणः ॥ पादुकेन्यस्यपुरतःप्रांजलिर्बाष्पलोचनः ॥ ३९ ॥ तमाश्लिष्य
चिरंदोर्भ्यांस्नापयन्नेत्रजैर्जलैः ॥ रामोलक्ष्मणसीताभ्यांविप्रेभ्योयेऽर्हसत्तमाः ॥ ४० ॥ तेभ्यःस्वयंनमश्च
क्रेप्रजाभिश्चनमस्कृतः ॥ धुन्वंतउत्तरासंगान्पतिंवीक्ष्यचिरागतं ॥ ४१ ॥ उत्तराःकोशलामाल्यैःकिरंतो
ननृतुर्मुदा ॥ पादुकेभरतोगृण्हाच्चामरव्यजनोत्तमे ॥ ४२ ॥ बिभीषणःससुग्रीवःश्वेतच्छत्रंमरुत्सुतः ॥ ध
नुर्निषंगाञ्छत्रुघ्नःसीतातीर्थकमंडलुं ॥ ४३ ॥ अबिभ्रदंगदःखड्गंहैमंचर्मर्क्षराण्नृप ॥ पुष्पकस्थोऽन्वितःस्त्री
भिःस्तूयमानश्चबंदिभिः ॥ ४४ ॥ विरेजेभगवान्राजन्ग्रहैश्चंद्रइवोदितः ॥ भ्रातृभिर्नंदितःसोऽपिसो
त्सवांप्राविशत्पुरीं ॥४५ ॥ प्रविश्यराजभवनंगुरुपत्नीःस्वमातरं ॥ गुरून्वयस्यावरजान्पूजितःप्रत्यपूज
यत् ॥ ४६ ॥ वैदेहीलक्ष्मणश्चैवयथावत्समुपेयतुः ॥ पुत्रान्स्वमातरस्तास्तुप्राणांस्तन्वइवोत्थिताः ॥ आ
रोप्यांकेऽभिषिंचंत्योबाष्पौघैर्विजहुःशुचः ॥ ४७ ॥ जटानिर्मुच्यविधिवत्कुलवृद्धैःसमंगुरुः ॥ अभ्यषिंच
द्यथैवेंद्रंचतुःसिंधुजलादिभिः ॥ ४८ ॥ एवंकृतशिरःस्नानःसुवासाःस्रग्व्यलंकृतः ॥ स्वलंकृतैःसुवासोभि
र्भ्रातृभिर्भार्ययाबभौ ॥ ४९ ॥ अग्रहीदासनंभ्रात्राप्रणिपत्यप्रसादितः ॥ प्रजाःस्वधर्मनिरतावर्णाश्रमगु
णान्विताः ॥५०॥ जुगोपपितृवद्रामोमेनिरेपितरंचतं ॥ त्रेतायांवर्त्तमानायांकालःकृतसमोऽभवत् ॥५१॥
रामेराजनिधर्मज्ञेसर्वभूतसुखावहे ॥ वनानिनद्योगिरयोवर्षाणिद्वीपसिंधवः ॥ ५२ ॥ सर्वेकामदुघाआस
न्प्रजानांभरतर्षभ ॥ नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ॥ ५३ ॥ मृत्युश्चानिच्छतांनासीद्रामे
राजन्यधोऽक्षजे ॥ एकपत्नीव्रतधरोराजर्षिचरितःशुचिः ॥ ५४ ॥ ॥ ॥ ॥



स्यानवरजांश्च ॥ ४६ ॥ बाष्पौघैरभिषिंचंत्यःशुचःशोकान्विजहुः शेषंस्पष्टं ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

॥ ५५ ॥ इतिनवमेटीकायांदशमोऽध्यायः ॥ १० ॥ ॥ ततश्चैकादशेऽयोध्यामावसन्ननुजैःसह ॥ यज्ञादियच्चकारेशोरामस्तदनुव र्ण्यते ॥ १ ॥ १ ॥ २ ॥ तदंतरातासांदिशांमध्येयावतभूस्तांब्राह्मणएवार्हतीतिमन्यमानः ॥ ३ ॥ अयंश्रीरामः तत्तदासौमंगल्यमा

स्वधर्मंगृहमेधीयंशिक्षयन्स्वयमाचरन् ॥ प्रेम्णाऽनुवृत्त्याशीलेनप्रश्रयावनतासती ॥ धियाह्रियाचभावज्ञा भर्तुःसीताहरन्मनः ॥ ५५ ॥ इतिश्री भा० म० नवमस्कंधेश्रीरामचरितेदशमोऽध्यायः ॥ १० ॥ ॥ श्री शुउकवाच भगवानात्मनात्मानंरामउत्तमकल्पकैः ॥ सर्वदेवमयंदेवमीजआचार्यवान्मखैः ॥१॥ होत्रेऽ ददाद्दिशंप्राचींब्रह्मणेदक्षिणांप्रभुः ॥ अध्वर्यवेप्रतीचींचउदीचींसामगायसः ॥ २ ॥ आचार्यायददौशेषांया वतीभूस्तदंतरा ॥ मन्यमानइदंकृत्स्नंब्राह्मणोऽर्हतिनिःस्पृहः ॥ ३ ॥ इत्ययंतदलंकारवासोभ्यामवशेषितः तथाराज्ञ्यपिवैदेहीसौमंगल्यावशेषिता ॥४॥ तेतुब्रह्मण्यदेवस्यवात्सल्यंवीक्ष्यसंस्तुतं ॥ प्रीताःक्लिन्नधिय स्तस्मैप्रत्यर्प्येदंबभाषिरे ॥५॥ अप्रत्तंनस्त्वयाकिंनुभगवन्भुवनेश्वर ॥यन्नोऽतर्हृदयंविश्यतमोहंसिस्वरोचि षा ॥ ६ ॥ नमोब्रह्मण्यदेवायरामायाकुंठमेधसे ॥ उत्तमश्लोकधुर्यायन्यस्तदंडार्पितांघ्रये ॥७॥ कदाचिल्लोक जिज्ञासुर्गूढोरात्र्यामलक्षितः ॥ चरन्वाचोऽशृणोद्रामोभार्यामुद्दिश्यकस्यचित् ॥ ८ ॥ नाहंबिभर्मित्वांदुष्टाम सतींपरवेश्मगां ॥ स्त्रीलोभीबिभृयात्सीतांरामोनाहंभजेपुनः ॥९ ॥ इतिलोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥ पत्याभीतेनसात्यक्ताप्राप्ताप्राचेतसाश्रमं ॥१०॥ अंतर्वत्न्यागतेकालेयमौसासुषुवेसुतौ ॥ कुशोलवइति ख्यातौतयोश्चक्रेक्रियामुनिः ॥ ११॥ अंगदश्चित्रकेतुश्चलक्ष्मणस्यात्मजौस्मृतौ ॥ तक्षःपुष्कलइत्यास्तांभ रतस्यमहीपते ॥१२॥ सुबाहुःश्रुतसेनश्चशत्रुघ्नस्यबभूवतुः॥गंधर्वान्कोटिशोजघ्नेभरतोविजयेदिशां ॥ १३ ॥

भरणादिकंतावन्मात्रमवशेषितंयस्याः तद्व्यतिरिक्तंहिरण्यादिसर्वंददावित्यर्थः ॥ ४ ॥ ५ ॥ अप्रत्तंकिमदत्तंसर्वंदत्तमित्यर्थः विश्यप्रविश्य ॥ ६ ॥ न्यस्तदंडैर्मुनिभिःअर्पितौचित्तेन्यस्तावंघ्रीयस्यतस्मैतेष्वर्पितावंघ्रीयेनेतिवा ॥ ७ ॥ ८ ॥ ९ ॥ असंविदःअज्ञात् प्राचेतसोवा ल्मीकिस्तस्याश्रमंप्राप्ता ॥ १० ॥ अंतर्वत्नीगर्भिणी क्रियाःजातकर्माद्याः ॥ ११ ॥ १२ ॥ १३ ॥ ॥ ॥

॥ १४ ॥ १५ ॥१६॥ ईश्वरोऽपिशुचोरोद्धुंनाशक्नोत् नचातिचित्रमेतत् स्त्रीपुंसोःप्रसंगआसक्तिः त्रासमावहतीतितथा विभक्तेरलुगार्षः
सर्वत्रैवभयावहइतिपाठांतरंसुगमं ॥ १७ ॥ किमुतेतिप्रासंगिकोक्तिः अग्निहोत्रमजुहोत् प्रभुःरामः ॥ १८ ॥ आत्मज्योतिर्निजंधाम
॥ १९ ॥ जलधिबंधनमस्त्रपूगैश्चरक्षसांवधइतीदंकविभिराश्चर्यमिववर्णितमापियशःस्तुतिर्नभवति तत्रहेतुः अधिकसाम्याभ्यांविमुक्तंधाम
प्रभावोयस्यतस्य किंकपयःसहायाः अतःसुग्रीवाद्याश्रयणंयथालीलामात्रंतथैवेदमपि युक्तंचैतदित्याह सुराणांयाश्चयाआत्तास्वीकृताली

तदीयंधनमानीयसर्वंराज्ञेन्यवेदयत् ॥ शत्रुघ्नश्चमधोःपुत्रंलवणंनाम्नराक्षसं ॥ १४ ॥ हत्वामधुवनेचक्रेमथु
रांनामवैपुरीं ॥ मुनौनिक्षिप्यतनयौसीताभर्त्राविवासिता ॥ १५ ॥ ध्यायंतीरामचरणौविवरंप्रविवेशह
॥ तच्छ्रुत्वाभगवान्रामोरुंधन्नपिधियाशुचः ॥१६॥ स्मरंस्तस्यागुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥ स्त्री
पुंप्रसंगएतादृक्सर्वत्रत्रासमावहः ॥ १७ ॥ अपीश्वराणांकिमुतग्राम्यस्यगृहचेतसः ॥ ततऊर्ध्वंब्रह्मचर्यं
धारयन्नजुहोत्प्रभुः ॥ त्रयोदशाब्दसाहस्त्रमग्निहोत्रमखंडितं ॥ १८ ॥ स्मरतांहृदिविन्यस्यविद्धंदंडककंटकैः
॥ स्वपादपल्लवंरामआत्मज्योतिरगात्ततः ॥ १९ ॥ नेदंयशोरघुपतेःसुरयाञ्चयात्तलीलातनोरधिकसाम्य
विमुक्तधाम्नः ॥ रक्षोवधोजलधिबंधनमस्त्रपूगैःकिंतस्यशत्रुहननेकपयःसहायाः ॥२०॥ यस्यामलंनृपसद
स्सुयशोऽधुनाऽपिगायंत्यघघ्नमृषयोदिगिभेंद्रपट्टं ॥ तन्नाकपालवसुपालकिरीटजुष्टपादांबुजंरघुपतिंशर
णंप्रपद्ये ॥ २१ ॥ यैःसंस्पृष्टोऽभिदृष्टोवासंविष्टोऽनुगतोऽपिवा ॥ कोशलास्तेययुःस्थानंयत्रगच्छंतियोगि
नः ॥ २२ ॥ पुरुषोरामचरितंश्रवणैरुपधारयन् ॥ आनृशंस्यपरोराजन्कर्मबंधैर्विमुच्यते ॥ २३ ॥



लार्थातनुर्येनतस्य ॥ २० ॥ एवंविधलीलाप्रयोजनंदर्शयन्प्रणमति यस्ययशःनृपाणांयुधिष्ठिरादीनांसदस्सुऋषयोमार्कंडेयादयोगायंति
दिगिभेंद्राणांपट्टवदाभरणरूपं तत्पर्यंतंव्याप्तमित्यर्थः नाकपालादेवाःवसुपालावसुधापालाश्चतेषांकिरीटैर्जुष्टंपादांबुजंयस्यतंरघुपतिं पां
ठांतरेतत्तस्यरघुपतेर्जुष्टंपादांबुजंप्रपद्यइत्यर्थः ॥ २१ ॥ सरामःसंविष्टउपवेशितःअनुगतोवायैस्तेकोशलदेशवासिनःसर्वेऽपियत्रयोगि
नोगच्छंतितत्स्थानंययुः ॥ २२ ॥ आनृशंस्यपरउपशमनिष्ठःसन्विमुच्यते ॥ २३ ॥ ॥ ॥

सरामःस्वयंकथमवर्ततभ्रातॄन्प्रतिवाकथमवर्तत कथंभूतान् आत्मनःआत्मांशभूतान् तस्मिन्वाईश्वरेतेभ्रात्रादयःअनुअनंतरंकथमवर्तंते तिप्रश्नत्रयं ॥ २४ ॥ तत्रश्रीरामस्यभ्रात्रादिषुप्रवृत्तिप्रकारमाह अथेति अनेनैवभ्रातॄणामपितदाज्ञाऽनुसारितयाप्रवृत्तिरुक्ता ॥ २५ ॥ अथसिंहासनस्वीकारानंतरंपुरींवर्णयति त्रिभिः गंधोदकैर्मदबिंदुभिश्चआसिक्तामार्गायस्यां सुतरांमत्तामिवसमृद्धां वाइतिवितर्के पाठांतरेवासितरांकामोन्मत्तांगामिवेत्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ पौराणांतस्मिन्वृत्तिमाह तमुपेयुरिति वराहरूपेणत्वयोद्धृतामिमांपृथ्वींपाहीति ॥ २९ ॥ प्रजानांतस्मिन्वृत्तिमाह ततःप्रजाइति ॥ ३० ॥ स्वयंकथमवर्ततेतितस्योत्तरमाह अथेतियावत्समाप्ति स्वगृहंप्रविष्टः

राजोवाच कथंसभगवान्रामोभ्रातॄन्वास्वयमात्मनः ॥ तस्मिन्वातेऽन्ववर्तंतप्रजाःपौराश्चईश्वरे ॥२४॥ श्रीशुकउवाच अथादिशद्दिग्विजयेभ्रातॄंस्त्रिभुवनेश्वरः ॥ आत्मानंदर्शयन्स्वानांपुरीमैक्षतसानुगः ॥२५॥ आसिक्तमार्गांगंधोदैःकरिणांमदसीकरैः ॥ स्वामिनंप्राप्तमालोक्यमत्तांवासुतरामिव ॥२६॥ प्रासादगोपुरसभाचैत्यदेवगृहादिषु॥विन्यस्तहेमकलशैःपताकाभिश्चमंडितां ॥२७॥ पूगैःसवृंदैरंभाभिःपट्टिकाभिःसुवाससं॥आदर्शैरंशुकैःस्रग्भिःकृतकौतुकतोरणां ॥२८॥ तमुपेयुस्तत्रतत्रपौराअर्हणपाणयः ॥ आशिषोयुयुजुर्देवपाहीमांप्राक्त्वयोद्धृतां ॥ २९ ॥ ततःप्रजावीक्ष्यपतिंचिरागतंदिदृक्षयोत्सृष्टगृहाःस्त्रियोनराः ॥ आरुह्यहर्म्याण्यरविंदलोचनमतृप्तनेत्राःकुसुमैरवाकिरन् ॥ ३० ॥ अथप्रविष्टःस्वगृहंजुष्टंस्वैःपूर्वराजभिः ॥ अनंताखिलकोशाढ्यमनर्घ्योरुपरिच्छदं ॥ ३१ ॥ विद्रुमोदुंबरद्वारैर्वैदूर्यस्तंभपंक्तिभिः ॥ स्थलैर्मारकतैःस्वच्छैर्भ्रातस्फटिकभित्तिभिः ॥ ३२ ॥ चित्रस्रग्भिःपट्टिकाभिर्वासोमणिगणांशुकैः ॥ मुक्ताफलैश्चिदुल्लासैःकांतकामोपपत्तिभिः ॥ ३३ ॥ ॥ ॥ ॥ ॥

संस्तस्मिन्रेमइतिपंचमेनान्वयः गृहंवर्णयति सार्द्धैस्त्रिभिः अनंताःयेऽखिलानांरत्नादीनांकोशास्तैराढ्यं अनर्घ्याउरवःपरिच्छदायस्मिन् ॥ ३१ ॥ विद्रुममयाउदुंबरादेहल्योयेषुतैर्द्वारैः स्वच्छैःस्थलैः तृतीयांतानांमंडितमितितृतीयेनान्वयः ॥ ३२ ॥ वाससांमणीनांचअंशुकैर्दीप्तिभिः चित्चैतन्यंतद्वदुल्लासैःउज्ज्वलैः यद्वाचिदितिक्वचित् वैदूर्यस्तंभादिषुयथाशोभमुज्ज्वलैर्मुक्ताफलैर्मंडितमित्यर्थः कांताः कमनीयाःकामोपपत्तयोभोगसाधनानिताभिः ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥

भूषणानांभूषणभूतैः ॥ ३४ ॥ ३५ ॥ नृणांमध्ये यद्वानृणांनृभिरभिध्यातमंघ्रिपल्लवंयस्येति ॥ ३६ ॥ इतिनवमेटीकायामेकादशोध्यायः ॥ ११ ॥ ॥ द्वादशेरामपुत्रस्यकुशस्यान्वयउच्यते॥ एवमिक्ष्वाकुपुत्रस्यशशादस्येरितोन्वयः ॥ १ ॥ कुशस्यरामपुत्रस्यअतिथिः तत्सुतस्तस्यसुतः ॥ १ ॥ अर्कसंभवःअर्कस्यांशान्संभूतः ॥ २ ॥ ततोविधृतेर्हिरण्यनाभःकथंभूतः जैमिनेःशिष्योयोगाचार्यः ॥ ३ ॥



धूपदीपैःसुरभिभिर्मंडितंपुष्पमंडितैः ॥ स्त्रीपुंभिःसुरसंकाशैर्जुष्टंभूषणभूषणैः ॥ ३४ ॥ तस्मिन्सभगवानूरामःस्निग्धयाप्रिययेष्टया ॥ रेमेस्वारामधीराणामृषभःसीतयाकिल ॥३५॥ बुभुजेचयथाकालंकामान्धर्ममपीडयन् ॥ वर्षपूगान्बहूनृणामभिध्यातांघ्रिपल्लवः ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेश्रीरामोपाख्यानेएकादशोऽध्यायः ॥ ११ ॥ श्रीशुकउवाच कुशस्यचातिथिस्तस्मान्निषधस्तत्सुतोनभः ॥ पुंडरीकोऽथतत्पुत्रःक्षेमधन्वाऽभवत्ततः ॥ १ ॥ देवानीकस्ततोऽनीहःपारियात्रोथतत्सुतः ॥ ततोबलस्थलस्तस्माद्वज्रनाभोऽर्कसंभवः ॥ २ ॥ खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततोहिरण्यनाभोभूद्योगाचार्यस्तुजैमिनेः॥शिष्यःकौशल्यआध्यात्मंयाज्ञल्क्योऽध्यगाद्यतः॥योगंमहोदयमृषिर्हृदयग्रंथिभेदकं॥४॥पुष्योहिरण्यनाभस्यध्रुवसंधिस्ततोऽभवत्॥सुदर्शनोग्निवर्णश्चशीघ्रस्तस्यमरुःसुतः ॥५॥योऽसावास्तेयोगसिद्धःकलापग्राममाश्रितः ॥कलेरंतेसूर्यवंशंनष्टंभावयितापुनः॥६॥तस्मात्प्रसुश्रुतस्तस्यसंधिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाव्होऽन्वजायत ॥ ततःप्रसेनजित्तस्मात्तक्षकोभवितापुनः ॥७॥ ततोबृहद्बलोयस्तुपित्रातेसमरेहतः ॥ एतेहीक्ष्वाकुभूपालाअतीताःशृण्वनागतान् ॥ ८ ॥ बृहद्बलस्यभवितापुत्रोनामबृहद्रणः ॥ उरुक्रियस्ततस्तस्यवत्सवृद्धोभविष्यति ॥ ९ ॥



तदाह यतःसकाशात् कौशल्योयाज्ञवल्क्यऋषिरध्यात्मंयोगमध्यगात् महांतउदयाःसिद्धयोयस्मिन् तंहृदयग्रंथेर्भेदकंच ॥ ४ ॥ ५ ॥ मरुंविशिनष्टि योऽसाविति पुनर्भावयिताभावयिष्यति ॥ ६ ॥ ७ ॥ पित्राअभिमन्युना ॥ ८ ॥ ९ ॥ ॥ ॥

॥१०॥११॥ तत्तस्मादमित्रजित् ॥ १२ ॥ १३ ॥१४ ॥ निष्ठावंशस्यास्थितिस्तस्याअंतः तदेवाह इक्ष्वाकूणामिति ॥ १५ ॥ इतिनव
मेटीकायांद्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ इक्ष्वाकोरेवपुत्रस्यनिमेर्वंशस्त्रयोदशे ॥ वर्ण्यतेजज्ञिरेयत्रब्रह्मज्ञाजनकादयः ॥ १ ॥
निमेरौरसःपुत्रोनाभूदितिदर्शयन्कथामाह निमिरित्येकादशभिः सत्रमारभ्यवसिष्ठमृत्विजमवृतवत्रे ॥ १ ॥ तंशक्रस्यमखंनिर्वर्त्य प्रतिपा

प्रतिव्योमस्ततोभानुर्दिवाकोवाहिनीपतिः॥ सहदेवस्ततोवीरोबृहदश्वोऽथभानुमान् ॥१०॥ प्रतीकाश्वो भानुमतःसुप्रतीकोऽथतत्सुतः ॥ भवितामरुदेवोऽथसुनक्षत्रोऽथपुष्करः ॥ ११ ॥ तस्यांतरिक्षस्तत्पुत्रःसुतपास्तदमित्रजित् ॥ बृहद्राजस्तुतस्यापिबर्हिस्तस्मात्कृतंजयः ॥ १२ ॥ रणंजयस्तस्यसुतःसंजयोभविताततः ॥ तस्माच्छाक्योथशुद्धोदोलांगलस्तत्सुतःस्मृतः ॥ १३ ॥ ततःप्रसेनजित्तस्मात्क्षुद्रकोभविताततः ॥ रणकोभवितातस्मात्सुरथस्तनयस्ततः ॥ १४ ॥ सुमित्रोनामनिष्ठांतएतेबार्हद्बलान्वयाः ॥ इक्ष्वाकूणामयंवंशःसुमित्रांतोभविष्यति ॥ यतस्तंप्राप्यराजानंसंस्थांप्राप्स्यतिवैकलौ ॥ १५ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेश्रीरामचरितवर्णनंनामद्वादशोऽध्यायः ॥ १२ ॥ श्रीशुकउवाच निमिरिक्ष्वाकुतनयोवसिष्ठमवृतर्त्विजं ॥ आरभ्यसत्रंसोऽप्याहशक्रेणप्राग्वृतोऽस्मिभोः ॥ १ ॥ तंनिर्वर्त्यागमिष्यामितावन्मांप्रतिपालय ॥ तूष्णीमासीद्गृहपतिःसोपींद्रस्याकरोन्मखं ॥ २॥ निमिश्चलमिदंविद्वान्सत्रमारभतात्मवान् ॥ ऋत्विग्भिरपरैस्तावन्नागमद्यावतागुरुः ॥ ३ ॥ शिष्यव्यतिक्रमंवीक्ष्यनिर्वर्त्यगुरुरागतः ॥ अशपत्पतताद्देहोनिमेःपंडितमानिनः ॥ ४ ॥ निमिःप्रतिददौशापंगुरवेऽधर्मवर्तिने ॥ तवापिपतताद्देहोलोभाद्धर्ममजानतः ॥ ५ ॥ इत्युत्ससर्जस्वंदेहंनिमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञेउर्वश्यांप्रपितामहः ॥ ६ ॥

लयप्रतीक्षस्वोति गृहपतिर्निमिः ॥ २ ॥ इदंजीवितंचलमस्थिरंविद्वान् ॥ ३ ॥ इंद्रस्यमखंनिर्वर्त्यागतोगुरुःशिष्यस्यव्यतिक्रममन्यायंवीक्ष्यनिमेर्देहःपतत्वित्यशपत् ॥ ४ ॥ ५ ॥ उर्वशीदर्शनात्स्कन्नंरेतस्ताभ्यांकुंभेनिषिक्तंतस्मात्प्रपितामहोवसिष्ठोजज्ञे तदाह मित्रावरुणयोरिति तथाचश्रुतिःकुंभेरेतःसिषिचतुःसमानमिति ॥ ६ ॥ ॥ ॥ ॥

॥ ७ ॥ यदिप्रसन्नाःप्रभवःसमर्थाश्चेत्तर्हिजीवत्वित्यूचुः ॥ ८ ॥ यस्यदेहस्ययोगंनवांच्छंतिअपितुमोक्षायैवभजंति ॥ ९ ॥ १० ॥ निमि विदेहएवसन्नुष्यतांवसतु कामंयथेच्छं एवंसतियुष्माभिःप्रार्थितंजीवितमस्यभविष्यति नचदेहबंधइतिभावः सचअध्यात्मसंस्थितोलोचन



गंधवस्तुषुतद्देहंनिधायमुनिसत्तमाः ॥ समाप्तेसत्रयागेथदेवानूचुःसमागतान् ॥ ७ ॥ राज्ञोजीवतुदेहोयंप्रसन्नाःप्रभवोयदि ॥ तथेत्युक्तेनिमिःप्राहमाभून्मेदेहबंधनं ॥ ८ ॥ यस्ययोगंनवांछंतिवियोगभयकातराः ॥ भजंतिचरणांभोजंमुनयोहरिमेधसः ॥ ९ ॥ देहंनावरुरुत्सेहंदुःखशोकभयावहं ॥ सर्वत्रास्ययतोमृत्युर्मत्स्यानामुदकेयथा ॥ १० ॥ देवाऊचुः विदेहउष्यतांकामंलोचनेषुशरीरिणां ॥ उन्मेषणनिमेषाभ्यांलक्षितोध्यात्मसंस्थितः ॥ ११ ॥ अराजकभयंनृणांमन्यमानामहर्षयः ॥ देहंममंथुःस्मनिमेःकुमारःसमजायत ॥ १२ ॥ जन्मनाजनकःसोभूद्वैदेहस्तुविदेहजः ॥ मिथिलोमथनाज्जातोमिथिलायेननिर्मिता ॥ १३ ॥ तस्मादुदावसुस्तस्यपुत्रोभून्नंदिवर्द्धनः ॥ ततःसुकेतुस्तस्यापिदेवरातोमहीपते ॥ १४ ॥ तस्माद्बृहद्रथस्तस्यमहावीर्यःसुधृत्पिता ॥ सुधृतेर्धृष्टकेतुर्वैहर्यश्वोथमरुस्ततः ॥ १५ ॥ मरोःप्रदीपकस्तस्माज्जातःकृतिरथोयतः ॥ देवमीढस्तस्यसुतोविश्रुतोऽथमहाधृतिः ॥ १६ ॥ कृतिरातस्ततस्तस्मान्महारोमाथतत्सुतः ॥ स्वर्णरोमासुतस्तस्यह्रस्वरोमाव्यजायत ॥ १७ ॥ ततःसीरध्वजोजज्ञेयज्ञार्थंकर्षतोमहीं ॥ सीतासीराग्रतोजाता तस्मात्सीरध्वजःस्मृतः ॥ १८ ॥ कुशध्वजस्तस्यपुत्रस्ततोधर्मध्वजोनृपः ॥ धर्मध्वजस्यद्वौपुत्रौकृतध्वजमितध्वजौ ॥ १९ ॥ कृतध्वजात्केशिध्वजःखांडिक्यस्तुमितध्वजात् ॥ कृतध्वजसुतोराजन्नात्मविद्याविशारदः ॥ २० ॥

योःस्थितःसन्नुन्मेषणनिमेषाभ्यांतत्प्रवर्त्तकत्वेनलक्षितोवर्ततइतिशेषः ॥ ११ ॥ तदेवंमृतादपिनिमेर्देहाद्वंशप्रवृत्तिंदर्शयाति अराजकभयमिति ॥ १२ ॥ तस्यान्वर्थानित्रीणिनामान्याह जन्मनाअसाधारणेनजनएवजनकः यद्वा स्वदेहद्वाराजनकत्वात्सनिमिर्जनकोऽभूदित्यर्थः मिथिलायेननिर्मिताइत्यनेनव्युत्पत्त्यंतरमर्थादुक्तं ॥ १३ ॥ १४ ॥ सुधृत्सुधृतिस्तस्यपिता ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

तस्यकेशिध्वजस्यभानुमान् ॥ २१ ॥ २२ ॥ तस्मात्सुपार्श्वकः ॥ २३ ॥ अग्निसंभवः अग्नेरंशात्संभूतः ॥ २४ ॥ यद्यस्मात्सुभाषणः ॥ २५ ॥ २६ ॥ योगेश्वरायाज्ञवल्क्यादयस्तेषांप्रसादेन ॥ २७ ॥ इतिनवमेटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ ॥ ॥
चतुर्दशादिभिःसोमवंशमाहसमाश्रितः ॥ यस्मिन्नैलादयोभूपाःकीर्त्यंतेपुण्यकीर्तयः ॥ १ ॥ चतुर्दशेगुरोःपत्न्यांतारायांसोमजाद्बुधात् ॥ जातश्चैलःषडुर्वश्यामायुर्मुख्यानजीजनत् ॥ २ ॥ १ ॥ २ ॥ दृग्भ्यःआनंदाश्रुभ्यः अतएवामृतमयः किलेत्याश्चर्ये पाठांतरेदृशःनेत्रात्

खांडिक्यःकर्मतत्त्वज्ञोभीतःकेशिध्वजस्ततः॥भानुमांस्तस्यपुत्रोऽभूच्छतद्युम्नस्तुतत्सुतः॥२१॥ शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत्॥ऊर्ध्वकेतुःसनद्वाजादजोऽथपुरुजित्सुतः॥२२॥अरिष्टनेमिस्तस्यापिश्रुतायुस्तत्सुपार्श्वकः॥ततश्चित्ररथोयस्यक्षेमर्धिर्मिथिलाधिपः॥२३॥तस्मात्समरथस्तस्यसुतःसत्यरथस्ततः आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसंभवः॥२४॥वस्वनंतोऽथतत्पुत्रोयुयुधायत्सुभाषणः॥श्रुतस्ततोजयस्तस्माद्विजयोऽस्मादृतःसुतः॥२५॥शुनकस्तत्सुतोजज्ञेवीतहव्योधृतिस्ततः॥बहुलाश्वोधृतेस्तस्यकृतिरस्यमहावशी ॥ २६ ॥ एतेवैमिथिलाराजन्नात्मविद्याविशारदाः॥ योगेश्वरप्रसादेनद्वंद्वैर्मुक्तागृहेष्वपि ॥ २७ ॥ इ० भा० म० न० निमिवंशानुवर्णनंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ श्रीशुकउवाच अथातःश्रूयतां राजन्वंशःसोमस्यपावनः ॥ यस्मिन्नैलादयोभूपाःकीर्त्यंतेपुण्यकीर्त्तयः ॥ १ ॥ सहस्रशिरसःपुंसोनाभिह्रदसरोरुहात् ॥ जातस्यासीत्सुतोधातुरत्रिःपितृसमोगुणैः ॥ २ ॥ तस्यदृग्भ्योऽभवत्पुत्रःसोमोऽमृतमयः किल ॥ विप्रौषध्युडुगणानांब्रह्मणाकल्पितःपतिः ॥ ३ ॥ सोऽयजद्राजसूयेनविजित्यभुवनत्रयं ॥ पत्नींबृहस्पतेर्दर्पात्तारांनामाहरद्बलात् ॥ ४ ॥ यदासदेवगुरुणायाचितोऽभीक्ष्णशोमदात् ॥ नात्यजत्तत्कृतेजज्ञेसुरदानवविग्रहः ॥ ५ ॥ शुक्रोबृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपं॥हरोगुरुसुतंस्नेहात्सर्वभूतगणावृतः ॥ ६ ॥

वक्ष्यमाणदर्पकारणमाह विप्रेति ॥ ३ ॥ सोमस्यपुत्रोबुधइतिद्वारेणाह पत्नीमितिसार्द्धैर्नवभिः ॥ ४ ॥ तत्कृतेतन्निमित्तं ॥ ५ ॥ सुराणांदानवानांचविग्रहेकारणमाह शुक्रइति असुरैःसहितः उडुपमग्रहीदित्यर्थः संधिरार्षः गुरोःसुतंबृहस्पतिमग्रहीत् अंगिरसःसकाशात्प्राप्तविद्योहरइतिप्रसिद्धिः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ७ ॥ निवेदितोविज्ञापितः विश्वकृत्ब्रह्मा अवैत्अबुध्यत ॥ ८ ॥ बृहस्पतिराह त्यजत्यजेति परैराहितंगर्भं गर्भेत्यक्तेभस्मीकरिष्य
तीतिबिभ्यतींप्रत्याह नाहमिति सांतानिकः संतानार्थी सांतानिकेइतिपाठेसत्पुत्रेइत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ रहःएकांते
॥ १३ ॥ पुरूरवसउर्वश्यामायुःप्रमुखाषट्पुत्राजाताइतिवक्तुंकथामाह तस्येत्यादिनायावत्समाप्ति ॥ १४ ॥ १५ ॥ १६ ॥ ननुदेवांकु

सर्वदेवगणोपेतोमहेंद्रोगुरुमन्वयात् ॥ सुरासुरविनाशोभूत्समरस्तारकामयः ॥ ७ ॥ निवेदितोऽथांगिर
सासोमंनिर्भर्त्स्यविश्वकृत् ॥ तारांस्वभर्त्रेप्रायच्छदंतर्वत्नीमवैत्पतिः ॥ ८ ॥ त्यजत्यजाशुदुष्प्रज्ञेमत्क्षेत्रा
दाहितंपरैः ॥ नाहंत्वांभस्मसात्कुर्यांस्त्रियंसांतानिकःसति ॥ ९ ॥ तत्याजव्रीडिताताराकुमारंकनकप्रभं ॥
स्पृहामांगिरसश्चक्रेकुमारेसोमएवच ॥ १० ॥ ममायंनतवेत्युच्चैस्तस्मिन्विवदमानयोः ॥ पप्रच्छुर्ऋषयोदे
वानैवोचेव्रीडितातुसा ॥ ११ ॥ कुमारोमातरंप्राहकुपितोऽलीकलज्जया ॥ किंनावोचस्यसद्वृत्तेआत्मावद्यं
वदाशुमे ॥ १२ ॥ ब्रह्मातांरहआहूयसमप्राक्षीच्चसांत्वयन् ॥ सोमस्येत्याहशनकैःसोमस्तंतावदग्रहीत्
॥ १३ ॥ तस्यात्मयोनिरकृतबुधइत्यभिधांनृप ॥ बुद्ध्यागंभीरयायेनपुत्रेणापोडुराण्मुदं ॥ १४ ॥ ततःपुरू
रवाजज्ञेइलायांयउदाहृतः ॥ तस्यरूपगुणौदार्यशीलद्रविणविक्रमान् ॥ १५ ॥ श्रुत्वोर्वशींद्रभवनेगीयमा
नान्सुरर्षिणा ॥ तदंतिकमुपेयायदेवीस्मरशरार्दिता ॥ १६ ॥ मित्रावरुणयोःशापादापन्नानरलोकतां ॥
निशम्यपुरुषश्रेष्ठंकंदर्पमिवरूपिणं ॥ १७ ॥ धृतिंविष्टभ्यललनाउपतस्थेतदंतिके ॥ सतांविलोक्यनृपति
र्हर्षेणोत्फुल्ललोचनः ॥ उवाचश्लक्ष्णयावाचादेवींहृष्टतनूरुहः ॥ १८ ॥ राजोवाच स्वागतंतेवरारोहे
आस्यतांकरवामकिं ॥ संरमस्वमयासाकंरतिर्नौशाश्वतीःसमाः ॥ १९ ॥ उर्वश्युवाच कस्यास्त्वयिनस
ज्जेतमनोदृष्टिश्चसुंदर ॥ यदंगांतरमासाद्यच्यवतेहरिरंसया ॥ २० ॥ ॥ ॥

तोमनुष्यस्यांतिकमुपागच्छेत्तत्राह मित्रावरुणयोःशापान्नरलोकतांमनुष्यभावमापन्नासती ॥ १७ ॥ १८ ॥ नौआवयोरास्त्विति ॥ १९ ॥
यस्यतवांगांतरंचक्षुःआसाद्यरिरंसयारंतुमिच्छयाहस्फुटंनच्यवतेनापयाति यद्यस्मादितिवा ॥ २० ॥ ॥ ॥

शापावसानेभाषाभंगमिषेणजिगमिषोस्तस्याभाषाबंधमाह एतावितिद्वाभ्यां उरणकौमेषौनिक्षेपरूपौरक्षस्व श्लाघ्यःसएवस्त्रीणांवरःस्मृ
तः अतोविजातीयत्वंनदोषइतिभावः ॥ २१ ॥ हेवीरघृतंमेभक्ष्यंस्यात् अमृतंवाआज्यमितिश्रुतेः देवानांचामृताशित्वात् मैथुनादन्यत्र
विवाससंत्वांनेक्षिष्येइतिप्रतिपेदेअंगीकृतवान् ॥ २२ ॥ तदेवाह अहोइति ॥ २३ ॥ २४ ॥ पद्मकिंजल्कस्यगंधइवगंधोयस्यास्तस्या

एतावुरणकौराजन्न्यासौरक्षस्वमानद ॥ संरंस्येभवतासाकंश्लाघ्यःस्त्रीणांवरःस्मृतः ॥ २१ ॥ घृतंमेवी
रभक्ष्यंस्यान्नेक्षेत्वाऽन्यत्रमैथुनात् ॥ विवाससंतत्तथेतिप्रतिपेदेमहामनाः ॥ २२ ॥ अहोरूपमहोभावोनर
लोकविमोहनं ॥ कोनसेवेतमनुजोदेवींत्वांस्वयमागतां ॥ २३ ॥ तयासपुरुषश्रेष्ठोरमयंत्यायथाऽर्हतः ॥ रेमे
सुरविहारेषुकामंचैत्ररथादिषु ॥ २४ ॥ रममाणस्तयादेव्यापद्मकिंजल्कगंधया ॥ तन्मुखामोदमुषितोमुमु
देऽहर्गणान्बहून् ॥ २५ ॥ अपश्यन्नुर्वशीमिंद्रोगंधर्वान्समनोदयत् ॥ उर्वशीरहितंमह्यमास्थानंनातिशोभते
॥ २६ ॥ तउपेत्यमहारात्रेतमसिप्रत्युपस्थिते ॥ उर्वश्याउरणौजह्रुर्न्यस्तौराजनिजायया ॥ २७ ॥ निशम्या
क्रंदितंदेवीपुत्रयोर्नीयमानयोः ॥ हतास्म्यहंकुनाथेननपुंसावीरमानिना ॥ २८ ॥ यद्विश्रंभादहंनष्टाहृता
पत्याचदस्युभिः ॥ यःशेतेनिशिसंत्रस्तोयथानारीदिवापुमान् ॥ २९ ॥ इतिवाक्सायकैर्विद्धःप्रतोत्रैरिवकुं
जरः ॥ निशिनिस्त्रिंशमादायविवस्त्रोऽभ्यद्रवद्रुषा ॥ ३० ॥ तेविसृज्योरणौतत्रव्यद्योतंतस्मविद्युतः ॥ आदा
यमेषावायांतंनग्नमैक्षतसापतिं ॥ ३१ ॥ ऐलोऽपिशयनेजायामपश्यन्विमनाइव ॥ तच्चित्तोविह्वलःशोचन्ब
भ्रामोन्मत्तवन्महीं ॥ ३२ ॥ सतांवीक्ष्यकुरुक्षेत्रेसरस्वत्यांचतत्सखीः ॥ पंचप्रहृष्टवदनाःप्राहसूक्तंपुरुरवाः ॥ ३३ ॥

मुखामोदेनमुषितःप्रलोभितःसन् ॥ २५ ॥ २६ ॥ महारात्रेमध्यरात्रे महानिशाद्वेघटिकेरात्रौमध्यमयामयोरितिस्मृतेः ॥ २७ ॥ जिग
मिषोस्तस्याःपरुषोक्तिमाह हताऽस्मीतिसार्द्धेन नपुंसानपुंसकेन ॥ २८ ॥ यथानारीतथासंत्रस्तःशेते ॥ २९ ॥ ३० ॥ विद्युतःविशिष्ट
द्युतिमंतोव्यद्योतंतदीप्तिमकुर्वंत यद्वातदैवतडितः प्रकाशंतइत्यर्थः नग्नमैक्षत अतोभाषाभंगान्निर्जगामेतिज्ञेयं ॥ ३१ ॥ ३२ ॥ तस्याः
सखीश्चपंचवीक्ष्य सूक्तंवचनंशोभनंहयेजायेइत्यादि ॥ ३३ ॥ ॥ ॥ ॥ ॥

तदेवार्थंतआह अहोइतिद्वाभ्यां अनिर्वृत्यमत्कृतांनिर्वृतिमप्राप्य पाठांतरेमांनिर्वृतिंगमयित्वामंत्राननुक्त्वेतिवा वचांसिकृणवावहैगोष्ठीःक
रवावहै ॥ ३४ ॥ सुदेहोऽतिकमनीयोऽयंममदेहः ॥ ३५ ॥ पुरूरवोमामृथाइत्यादितस्याःसूक्तंतदप्यर्थंतआह मामृथाइतिचतुर्भिः माम्रि
यस्त्वंपुरुषोऽसि अतोधैर्यमावहेतिभावः इमेवृकाःप्रसिद्धाइंद्रियाणिवात्वाइतित्वांमास्मअद्युर्भक्षयेयुः इंद्रियवशोमाभवेत्यर्थः ॥ ३६ ॥
प्रियेनिमित्तेसाहसंयासां ॥ ३७ ॥ ३८ ॥ तंसांत्वयति संवत्सरांतइति ॥ ३९ ॥ अपराणीतिवचनादंतर्वत्नीमुपालभ्यज्ञात्वा ॥ ४० ॥

अहोजायेतिष्ठतिष्ठघोरेनत्यक्तुमर्हसि ॥ मांत्वमद्याप्यनिर्वृत्यवचांसिकृणवावहै ॥ ३४ ॥ सुदेहोयंपतत्यत्र देविदूरंहृतस्त्वया ॥ खादंत्येनंवृकागृध्रास्त्वत्प्रसादस्यनास्पदं ॥ ३५ ॥ उर्वश्युवाच मामृथाःपुरुषोसि त्वंमास्मत्वाऽद्युर्वृकाइमे ॥ क्वापिसख्यंनवैस्त्रीणांवृकाणांहृदयंयथा ॥ ३६ ॥ स्त्रियोत्यकरुणाःक्रूरादुर्मर्षाः प्रियसाहसाः ॥ घ्नंत्यल्पार्थेऽपिविश्रब्धंपतिंभ्रातरमप्युत ॥ ३७ ॥ विधायालीकविश्रंभमज्ञेषुत्यक्तसौहृदाः ॥ नवंनवमभीप्संत्यःपुंश्चल्यःस्वैरवृत्तयः ॥ ३८ ॥ संवत्सरांतेहिभवानेकरात्रंमयेश्वर ॥ वत्स्यत्यपत्यानिचतेभविष्यंत्यपराणिभोः ॥ ३९ ॥ अंतर्वत्नीमुपालभ्यदेवींसप्रययौपुरं ॥ पुनस्तत्रगतोब्दांतेउर्वशींवीरमातरं ॥ ४० ॥ उपलभ्यमुदायुक्तःसमुवासतयानिशं ॥ अथैनमुर्वशीप्राहकृपणंविरहातुरं ॥ ४१ ॥ गंधर्वानुपधावेमांस्तुभ्यंदास्यंतिमामिति ॥ तस्यसंस्तुवतस्तुष्टाअग्निस्थालींददुर्नृप ॥ उर्वशींमन्यमानस्तांसोऽबुध्यतचरन्वने ॥ ४२ ॥ स्थालींन्यस्यवनेगत्वागृहानाध्यायतोनिशि ॥ त्रेतायांसंप्रवृत्तायांमनसित्रय्यवर्तत ॥ ४३ ॥ स्थालीस्थानंगतोऽश्वत्थंशमीगर्भंविलक्ष्यसः ॥ तेनद्वेअरणीकृत्वाउर्वशीलोककाम्यया ॥ ४४ ॥

॥ ४१ ॥ अनेनाग्निनाकर्मकृत्वातद्वशादुर्वशींप्राप्स्यतीत्यभिप्रायेणाग्निस्थालींददुः सतुतांस्थालीमेवोर्वशींमन्यमानस्तयासहितोवनेविचरन्नेयमुर्वशीकिंत्वग्निस्थालीत्यबुध्यत ॥ ४२ ॥ ततश्चतांस्थालींवनेस्थापयित्वागृहान्गत्वानिशिनित्यंतामेवाध्यायतस्तस्यमनसित्रेतायांत्रयीअवर्ततकर्मबोधकंवेदत्रयंप्रादुरभूत् ॥ ४३ ॥ ततःस्थालीस्थानंगतः सन्शम्यागर्भेजातमश्वत्थंविलक्ष्यअस्मिन्नसावग्निरस्तीतिविशेषेणलक्षयित्वातेनाश्वत्थेनद्वेअरणीकृत्वाऽग्निममंथेतिशेषः शमीगर्भादग्निममंथेतिश्रुतिः ॥ ४४ ॥

मथनप्रकारमाह अधरारणिमुर्वशींध्यायन्नुत्तरारणिमात्मानंध्यायन्नुभयोर्मध्येयत्काष्ठंतत्प्रजननंपुत्रंध्यायन् तथाचमंत्रः उर्वश्यस्यायुरसि पुरूरवाइति ॥ ४५ ॥ तस्यतेनकृतान्निर्मंथनाद्विभावसुरग्निर्जातः कथंभूतः जातवेदोधनंभोग्यंयस्मात् सचत्रय्याविद्ययाविहितेनाधानसंस्कारेणत्रिवृत् आहवनीयादिरूपःसन्राज्ञापुरूरवसापुत्रत्वेकल्पितः पुण्यलोकप्रापकत्वात् ॥ ४६ ॥ तदाह तेनेति ॥ ४७ ॥ नन्वनादिर्वेदत्रयबोधितोब्राह्मणादीनामिंद्राद्यनेकदेवयजनेनस्वर्गप्राप्तिहेतुःकर्ममार्गःकथंसादिरिववर्ण्यतेतत्राह एकएवेतिद्वाभ्यां पुराकृतयुगेसर्ववाङ्मयःसर्वासांवाचांबीजभूतःप्रणवएकएववेदः देवश्चनारायणएकएव अग्निश्चैकएवलौकिकः वर्णश्चैकएवहंसोनाम ॥ ४८ ॥

उर्वशींमंत्रतोध्यायन्नधरारणिमुत्तरां ॥ आत्मानमुभयोर्मध्येयत्तत्प्रजननंप्रभुः ॥ ४५ ॥ तस्यनिर्मंथनाज्जातोजातवेदाविभावसुः ॥ त्रय्यासविद्ययाराज्ञापुत्रत्वेकल्पितस्त्रिवृत् ॥ ४६ ॥ तेनायजतयज्ञेशंभगवंतमधोऽक्षजं ॥ उर्वशीलोकमन्विच्छन्सर्वदेवमयंहरिं ॥ ४७ ॥ एकएवपुरावेदःप्रणवःसर्ववाङ्मयः ॥ देवोनारायणोनान्यएकोऽग्निर्वर्णएवच ॥ ४८ ॥ पुरूरवसएवासीत्त्रयीत्रेतामुखेनृप ॥ अग्निनाप्रजयाराजालोकंगांधर्वमेयिवान् ॥ ४९ ॥ इ० भा० म० न० ऐलोपाख्यानेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ श्रीशुकउवाच ऐलस्यचोर्वशीगर्भात्षडासन्नात्मजान्नृप ॥ आयुःश्रुतायुःसत्यायूरयोऽथविजयोजयः ॥ १ ॥ श्रुतायोर्वसुमान्पुत्रःसत्यायोश्चश्रुतंजयः ॥ रयस्यसुतएकश्चजयस्यतनयोऽमितः ॥ २ ॥ भीमस्तुविजयस्याथकांचनोहोत्रकस्ततः ॥ तस्यजन्हुःसुतोगंगांगंडूषीकृत्ययोऽपिबत् ॥ जन्होस्तुपूरुस्तत्पुत्रोबलाकश्चात्मजोऽजकः ॥ ३ ॥ ततःकुशःकुशस्यापिकुशांबुर्मूर्त्तयोवसुः ॥ कुशनाभश्चचत्वारोगाधिरासीत्कुशांबुजः ॥ ४ ॥ ॥

वेदत्रयीतुपुरूरवसःसकाशादासीत् एयिवान्प्राप अयंभावः कृतयुगेसत्त्वप्रधानाःप्रायशःसर्वेऽपिध्याननिष्ठाः रजःप्रधानेतुत्रेतायुगेवेदादिविभागेनकर्ममार्गःप्रकटोबभूवेत्यर्थः ॥ ४९ ॥ इतिनवमेटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥ ततःपंचदशेगाधिरैलपुत्रान्वयेजानि ॥ यद्दौहित्रसुतोरामःकार्तवीर्यमहन्रुषा ॥ १ ॥ १ ॥ सुग्रहत्वायाल्पादिक्रमेणश्रुतायुःप्रभृतिषण्णांवंशानाह श्रुतायोरित्यादिना एकसंज्ञः अमितस्तरसंज्ञः ॥ २ ॥ जह्नोःपूरुस्तस्यबलाकस्तस्याजकः ॥ ३ ॥ गाधेःपुत्रोविश्वामित्रोब्रह्मर्षिरभूदित्युत्तराध्यायांतेवक्ष्यतिगाधेरभून्महातेजाइत्यादिना ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

तत्रतावत्तदुपोद्घातत्वेनभृगुवंशसंभवस्यऋचीकस्यचरित्रंप्रसक्तानुप्रसक्तेनचपरशुरामावतारचरितमाह तस्यसत्यवतीमित्यादिना विसदृ शमननुरूपंभार्गवमृचीकं ॥५॥ दक्षिणवामयोरेकतःश्यामःकर्णोयेषां सर्वस्मिन्नंगेचंद्रस्येववर्चोयेषां नचेदमपिपर्याप्तमस्मत्कन्यायाः य तःकुशिकाःकौशिकावयं ॥ ६ ॥ ७ ॥ उभयैः पत्न्यैब्राह्मैर्मंत्रैःश्वश्र्वेतुक्षात्रैरित्यर्थः ॥ ८ ॥ यावत्स्नात्वामुनिर्नागतस्तावद्भार्यायांभ र्तृस्नेहात्पुत्र्याःसत्यवत्याश्चरुंश्रेष्ठंमत्वातयामात्रासत्यवतीयाचितासतीब्राह्ममंत्राभिमंत्रितंस्वचरुंमात्रेअयच्छत्प्रादात् मातुश्चरुंक्षात्रमंत्राभि



तस्यसत्यवतींकन्यामृचीकोऽयाचतद्विजः ॥ वरंविसदृशंमत्वागाधिर्भार्गवमब्रवीत् ॥ ५ ॥ एकतःश्यामक र्णानांहयानांचंद्रवर्चसां ॥ सहस्रंदीयतांशुल्कंकन्यायाःकुशिकावयं ॥ ६ ॥ इत्युक्तस्तन्मतंज्ञात्वागतःसव रुणांतिकं ॥ आनीयदत्वातानश्वानुपयेमेवराननां ॥ ७ ॥ सऋषिःप्रार्थितःपत्न्याश्वश्र्वाचापत्यकाम्यया ॥ श्रपयित्वोभयैर्मंत्रैश्चरुंस्नातुंगतोमुनिः ॥ ८ ॥ तावत्सत्यवतीमात्रास्वचरुंयाचितासती ॥ श्रेष्ठंमत्वातयाय च्छन्मात्रेमातुरदत्स्वयं ॥ ९ ॥ तद्विज्ञायमुनिःप्राहपत्नींकष्टमकारषीः ॥ घोरोदंडधरःपुत्रोभ्रातातेब्रह्मवि त्तमः ॥ १० ॥ प्रसादितःसत्यवत्यामैवंभूदितिभार्गवः ॥ अथतर्हिभवेत्पौत्रोजमदग्निस्ततोऽभवत् ॥ ११ ॥ साचाभूत्सुमहापुण्याकौशिकीलोकपावनी ॥ रेणोःसुतांरेणुकांवैजमदग्निरुवाहयां ॥ १२ ॥ तस्यांवैभार्ग वऋषेःसुतावसुमदादयः ॥ यवीयान्जज्ञएतेषांरामइत्यभिविश्रुतः ॥ १३ ॥ यमाहुर्वासुदेवांशंहैहयानां कुलांतकं ॥ त्रिःसप्तकृत्वोयइमांचक्रेनिःक्षत्रियांमहीं ॥ १४ ॥ दुष्टंक्षत्रंभुवोभारमब्रह्मण्यमनीनशत् ॥ रज स्तमोवृतमहन्फल्गुन्यपिकृतेंऽहसि ॥ १५ ॥ राजोवाच किंतदंहोभगवतोराजन्यैरजितात्मभिः ॥ कृतंयेनकुलंनष्टंक्षत्रियाणामभीक्ष्णशः ॥ १६ ॥ ॥ ॥ ॥

मंत्रितंस्वयमदत्आदत् ॥ ९ ॥ कष्टंजुगुप्सितं तदेवाह तेपुत्रोघोरोभविष्यतिभ्रातातुब्रह्मवित्तमोभविष्यतीति ॥ १० ॥ एवंमाभूदितिप्र सादितोभार्गवआह अथतर्हिपौत्रोघोरोभविष्यति जमदग्निःपुत्रोऽभवदित्यर्थः ॥११॥ साचसत्यवतीकौशिकीनद्यभूत् ॥ १२॥ भार्गवऋ षेर्जमदग्नेःसुताः ॥ १३ ॥ १४ ॥ अनीनशन्नाशयामास तदेवाह रजस्तमोवृतमिति पाठांतरेसुगमं ॥ १५ ॥ १६ ॥ ॥

कार्त्तवीर्यार्जुनेनकृतमपराधंवक्तुंतस्यदर्पहेतुमैश्वर्यादिकमाह हैहयानामितिषड्भिः परिकर्मभिःपरिचर्याभिर्दत्तंदत्तात्रेयमाराध्य ॥ १७ ॥ अव्याहतमिंद्रियादिकंचलेभे ॥ १८ ॥ यत्रयस्मिन्नैश्वर्येअणिमादयोगुणाः ॥ १९ ॥ रेवांभसिनर्मदायां ॥ २० ॥ रावणोदिग्विजयेमाहिष्मत्याः समीपेदेवपूजांकुर्वन्प्रवाहस्यावरोधात्प्रतिस्रोतसःसत्याःसरितोजलैर्विप्लावितंस्वशिबिरमालक्ष्यतस्यतद्वीर्यंनसेहे ॥ २१ ॥ ततश्चकृतकिल्बिषःक्रीडंतमभिभवितुंप्रवृत्तःसन्गृहीतः माहिष्मत्यांस्वपुर्यांकापिरिवसान्निरुद्धश्चपुनश्चावज्ञयायेनमुक्तः ॥ २२ ॥ इदानीं

श्रीशुकउवाच हैहयानामधिपतिरर्जुनःक्षत्रियर्षभः॥दत्तंनारायणस्यांशमाराध्यपरिकर्मभिः॥१७॥ बाहून्दशशतंलेभेदुर्द्धर्षत्वमरातिषु॥ अव्याहतेंद्रियौजःश्रीस्तेजोवीर्ययशोबलं॥ १८॥ योगेश्वरत्वमैश्वर्यंगुणायत्राणिमादयः॥ चचाराव्याहतगतिर्लोकेषुपवनोयथा॥ १९॥ स्त्रीरत्नैरावृतःक्रीडन्रेवांभसिमदोत्कटः॥ वैजयंतींस्रजंबिभ्रद्रुरोधसरितंभुजैः॥ २०॥ विप्लावितंस्वशिबिरंप्रतिस्रोतःसरिज्जलैः॥ नामृष्यत्तस्यतद्वीर्यंवीरमानीदशाननः॥२१॥गृहीतोलीलयास्त्रीणांसमक्षंकृतकिल्बिषः॥ माहिष्मत्यांसन्निरुद्धोमुक्तोयेनकपिर्यथा॥ २२॥ सएकदातुमृगयांविचरन्विपिनेवने॥ यदृच्छयाश्रमपदंजमदग्नेरुपाविशत्॥ २३॥ तस्मैसनरदेवायमुनिरर्हणमाहरत्॥ ससैन्यामात्यवाहायहविष्मत्यातपोधनः॥२४॥ सवीरस्तत्रतद्दृष्ट्वाआत्मैश्वर्यातिशायनं ॥ तन्नाद्रियताग्निहोत्र्यांसाभिलाषःसहैहयः॥ २५॥ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत्॥ तेचमाहिष्मतींनिन्युःसवत्सांक्रंदतींबलात्॥ २६॥ अथराजनिनिर्यातेरामआश्रमआगतः॥ श्रुत्वातत्तस्यदौरात्म्यंचुक्रोधाहिरिवाहतः॥ २७॥ घोरमादायपरशुंसतूणंचर्मकार्मुकं॥ अन्वधावतदुर्द्धर्षोमृगेंद्रइवयूथपं॥ २८॥ ॥ ॥ ॥ ॥ ॥

तत्कृतमपराधंदर्शयन्नाह सएकदेत्यादिना ॥ २३ ॥ अर्हणमातिथ्यादि हविष्मत्याकामधेन्वा ॥ २४ ॥ तदर्हणंनाद्रियततस्मिन्नातुष्यत् यतोऽग्निहोत्र्यांहोमधेनौसाभिलाषः सहैहयःहैहयैःसहवर्त्तमानः ॥ २५ ॥ दर्पाद्धेतोः ऋषेर्हविर्धानीमग्निहोत्रधेनुंहर्त्तुंनरानचोदयत् प्रेरितवान् ॥ २६ ॥ तद्दौरात्म्यंहविष्मत्याहरणं क्रोधयुक्तोअहिरिवचुक्रोध ॥ २७ ॥ सतूणंकार्मुकंचर्मआदाय ॥ २८ ॥

ऐणेयंचर्मकृष्णाजिनमंबरंयस्य ॥ २९ ॥ ३० ॥ प्रहरन्परशुवधोयस्य मनश्चअनिलश्चतयोरिवौजोवीर्यंयस्य परेषांचक्रंसैन्यंसूदयतीति तथा छिन्नाभुजाऊरवःकंधराश्चयेषां हताःसूताःवाहनानिचयेषांतेवीरानिपेतुः ॥ ३१ ॥ विवृक्णाःचर्मादयोयस्य ॥ ३२ ॥ पंचशतेषुधनुःषुसोऽर्जुनोरामायसंदधे एकमेवधनुर्यस्यसः पाठांतरेएकएवबंधःसंधानंयेषांतैरिषुभिः तानिधनूंषिसमंसहतत्क्षणमेवाच्छिनत् ॥

तमापतंतंभृगुवर्यमोजसाधनुर्धरंबाणपरश्वधायुधं ॥ ऐणेयचर्मांबरमर्कधामभिर्युतंजटाभिर्ददृशेपुरींविशन् ॥ २९ ॥ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः॥ अक्षौहिणीःसप्तदशातिभीषणास्तारामएकोभगवानसूदयत् ॥ ३० ॥ यतोयतोऽसौप्रहरत्परश्वधोमनोऽनिलौजाःपरचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकंधरानिपेतुरुर्व्यांहतसूतवाहनाः ॥३१॥ दृष्ट्वास्वसैन्यंरुधिरौघकर्दमेरणाजिरेरामकुठारसायकैः ॥ विवृक्णचर्मध्वजचापविग्रहंनिपातितंहैहयआपतद्रुषा ॥ ३२ ॥ अथार्जुनःपंचशतेषुबाहुभिर्धनुःषुबाणान्युगपत्ससंदधे ॥ रामायरामोऽस्त्रभृतःसमग्रणीस्तान्येकधन्वेषुभिरच्छिनत्समं ॥३३ ॥ पुनःस्वहस्तैरचलान्मृधेऽघ्रिपानुत्क्षिप्यवेगादभिधावतोयुधि ॥ भुजान्कुठारेणकठोरनेमिनाचिच्छेदरामःप्रसभंत्वहेरिव ॥ ३४ ॥ कृत्तबाहोःशिरस्तस्यगिरेःशृंगमिवाहरत् ॥ हतेपितरितत्पुत्रा अयुतंदुद्रुवुर्भयात् ॥ ३५ ॥ अग्निहोत्रीमुपावर्त्यसवत्सांपरवीरहा ॥ समुपेत्याश्रमंपित्रेपरिक्लिष्टांसमर्पयत् ॥ ३६ ॥ स्वकर्मतत्कृतंरामःपित्रेभ्रातृभ्यएवच ॥ वर्णयामासतच्छ्रुत्वाजमदग्निरभाषत ॥ ३७ ॥ रामराममहाबाहोभवान्पापमकारषीत् ॥ अवधीन्नरदेवंयत्सर्वदेवमयंवृथा ॥ ३८ ॥ वयंहिब्राह्मणास्तातक्षमयाऽर्हणतांगताः ॥ ययालोकगुरुर्देवःपारमेष्ठ्यमियात्पदं ॥ ३९ ॥ क्षमयारोचतेलक्ष्मीर्ब्राह्मीसौरीयथाप्रभा ॥ क्षमिणामाशुभगवांस्तुष्यतेहरिरिश्वरः ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥

॥ ३३ ॥ मृधेसाधनभूतानचलानंघ्रिपांश्चोत्क्षिप्य अभिधावतस्तस्यभुजान्चिच्छेद अहेः फणाइवेत्यर्थः ॥ ३४ ॥ ३५ ॥ समर्पयत्समार्पयत् ॥ ३३ ॥ ३७ ॥ ३८ ॥ अर्हणतांपूज्यतां ॥ ३९ ॥ सौरीसूर्यस्यप्रभेव ॥ ४० ॥ ॥ ॥ ॥

तीर्थसंसेवया चकाराद्यमानियमैश्च अच्युतेचेतनाचित्तंयस्यसः ॥ ४१ ॥ इतिनवमेटीकायांपंचदशोऽध्यायः ॥ १५॥ षोडशेऽथार्जुनसुतैर्ज मदग्नौहतेमुहुः रामात्क्षत्रवधःप्रोक्तोविश्वामित्रस्यचान्वयः ॥ १ ॥ १ ॥ २ ॥ किंचिदीषत्चित्ररथेगंधर्वराजेस्पृहायस्याःसा किंचिन्नसस्मा रेतिवा ॥ ३ ॥ कलशंपुरोधायअग्रेनिधाय ॥ ४ ॥ व्यभिचारंमानसंज्ञात्वा ॥ ५॥ आज्ञाऽतिलंघिनांभ्रातॄणांमातुश्चवधेसंचोदितःसन्मुने

राज्ञोमूर्द्धाऽवसिक्तस्यवधोब्रह्मवधाद्गुरुः ॥ तीर्थसंसेवयाचांहोजह्यंगाच्युतचेतनः ॥ ४१ ॥ इतिश्रीभागवते महापुराणेनवमस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ श्रीशुकउवाच पित्रोपशिक्षितोरामस्तथेतिकुरुनंद न ॥ संवत्सरंतीर्थयात्रांचरित्वाश्रममाव्रजत् ॥ १ ॥ कदाचिद्रेणुकायातागंगायांपद्ममालिनम् ॥ गंधर्व राजंक्रीडंतमप्सरोभिरपश्यत ॥ २ ॥ विलोकयंतीक्रीडंतमुदकार्थंनदींगता ॥ होमवेलांनसस्मारकिंचिच्चि त्ररथेस्पृहा ॥ ३ ॥ कालात्ययंतंविलोक्यमुनेःशापविशंकिता ॥ आगत्यकलशंतस्थौपुरोधायकृतांज लिः ॥ ४ ॥ व्यभिचारंमुनिर्ज्ञात्वापत्न्याःप्रकुपितोऽब्रवीत् ॥ घ्नतैनांपुत्रकाःपापामित्युक्तास्तेनचाक्रिरे ॥५॥ रामःसंबोधितःपित्राभ्रातृन्मात्रासहावधीत् ॥ प्रभावज्ञोमुनेःसम्यक्समाधेस्तपसश्चयः ॥६ ॥ वरेणच्छं दयामासप्रीतःसत्यवतीसुतः ॥ वव्रेहतानांरामोऽपिजीवितंचास्मृतिंवधे ॥ ७ ॥ उत्तस्थुस्तेकुशलिनोनि द्रापायइवांजसा ॥ पितुर्विद्वांस्तपोवीर्यंरामश्चक्रेसुहृद्वधम् ॥ ८ ॥ येऽर्जुनस्यसुताराजन्स्मरंतःस्वपि तुर्वधम् ॥ रामवीर्यपराभूतालेभिरेशर्मनक्वचित् ॥ ९ ॥ एकदाश्रमतोरामेसभ्रातरिवनंगते ॥ वैरंसि साधयिषवोलब्धच्छिद्राउपागमन् ॥ १०॥ दृष्ट्वाऽग्न्यगारआसीनमावेशितधियंमुनिम् ॥ भगवत्युत्त मश्लोकेजघ्नुस्तेपापनिश्चयाः ॥ ११ ॥ याच्यमानाःकृपणयाराममात्रातिदारुणाः ॥ प्रसह्यशिरउत्कृत्य निन्युस्तेक्षत्रबंधवः ॥ १२ ॥ ॥ ॥ ॥ ॥

र्यःसमाधिस्तपश्चतयोःप्रभावज्ञः यदिनहन्यांतर्हिमामापिशप्तुंसमर्थः यदितुहन्यांतर्हिमयिसंतुष्टःसंस्तानपिजीवयितुंसमर्थइतिजानन्नित्य र्थः ॥ ६७ ॥ नन्वतिनिंदितंतत्कथंकृतवांस्तत्राह पितुर्विद्वानिति ॥ ८ ॥ पुर्वोक्तएवाभिप्रायःसर्वक्षत्रियवधेकारणंवक्तुमाह येऽर्जुनस्य सुताइत्यादिना ॥ ९ ॥ ॥१० ॥ भगवतिआवेशिताधीर्येनतम् ॥ ११ ॥ १२ ॥ ॥ ॥

॥ १३ ॥ १४ ॥ दुःखादीनांवेगेनविमोहितः ॥ १५ ॥ १६ ॥ ब्रह्मघ्नैर्विहताश्रीर्यस्यास्तां हेराजन्सरामस्तेषांशीर्षभिर्माहिष्मत्यांमध्ये महांतंगिरिंचक्रे ॥ १७ ॥ तेषांरक्तेनअब्रह्मण्यानांभयावहांघोरांनदींचक्रे तथाऽपिसर्वक्षत्रियवधेकिंकारणंतदाह हेतुंकृत्वेतिसार्द्धेन अ मंगलकारिणिअन्यायवर्त्तिनिसाति ॥ १८ ॥ त्रिःसप्तकृत्वोरेणुकयादुःखावेशादुरस्ताडनंकृतंततोरामस्तावत्कृत्वःक्षत्रमुत्सादितवानिति

रेणुकादुःखशोकार्त्तानिघ्नंत्यात्मानमात्मना ॥ रामरामेहिताततेतिविचुक्रोशोच्चकैःसती ॥ १३ ॥ तदुपश्रुत्यदूरस्थोहारामेत्यार्त्तवत्स्वनं ॥ त्वरयाश्रममासाद्यददृशेपितरंहतं ॥ १४ ॥ तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः ॥ हाताततसाधोधर्मिष्ठत्यक्त्वाऽस्मान्स्वर्गतोभवान् ॥ १५ ॥ विलप्यैवंपितुर्देहंनिधायभ्रातृषुस्वयं ॥ प्रगृह्यपरशुंरामःक्षत्रांतायमनोदधे ॥ १६ ॥ गत्वामाहिष्मतींरामोब्रह्मघ्नविहतश्रियं ॥ तेषांसशीर्षभीराजन्मध्येचक्रेमहागिरिं ॥ १७ ॥ तद्रक्तेननदींघोरामब्रह्मण्यभयावहां ॥ हेतुंकृत्वापितृवधंक्षत्रेऽमंगलकारिणि ॥ १८ ॥ त्रिःसप्तकृत्वःपृथिवींकृत्वानिःक्षत्रियांप्रभुः ॥ स्यमंतपंचकेचक्रेशोणितोदान्ह्रदान्नव ॥ ॥ १९ ॥ पितुःकायेनसंधायशिरआदायबर्हिषि ॥ सर्वदेवमयंदेवमात्मानमयजन्मखैः ॥ २० ॥ ददौप्राचींदिशंहोत्रेब्रह्मणेदक्षिणांदिशं ॥ अध्वर्यवेप्रतीचींवैउद्गात्रेउत्तरांदिशं ॥ २१ ॥ अन्येभ्योऽवांतरदिशःकश्यपायचमध्यमां ॥ आर्यावर्त्तमुपद्रष्ट्रेसदस्येभ्यस्ततःपरं ॥ २२ ॥ ततश्चावभृथस्नानविधूताशेषकिल्बिषः ॥ सरस्वत्यांब्रह्मनद्यांरेजेव्यभ्रइवांशुमान् ॥ २३ ॥ स्वदेहंजमदग्निस्तुलब्ध्वासंज्ञानलक्षणं ॥ ऋषीणांमंडलेसोऽभूत्सप्तमोरामपूजितः ॥ २४ ॥ जामदग्न्योऽपिभगवान्रामःकमललोचनः ॥ आगामिन्यंतरेराजन्वर्तयिष्यतिवैबृहत् ॥ २५ ॥ आस्तेऽद्यापिमहेंद्राद्रौन्यस्तदंडःप्रशांतधीः ॥ उपगीयमानचरितःसिद्धगंधर्वचारणैः ॥ २६ ॥ एवंभृगुषुविश्वात्माभगवान्हरिरीश्वरः ॥ अवतीर्यपरंभारंभुवोऽहन्बहुशोनृपान् ॥ २७ ॥



प्रसिद्धिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ संज्ञानंस्मृतिस्तदेवलक्षणंचिन्हंयस्यतंस्वदेहंलब्ध्वासऋषीणांमंडलेसप्तमोऽऋषिरभूत् ॥ २४ ॥ बृहत्ब्रह्मवेदं वेदप्रवर्तकेषुसप्तर्षिष्वेकतमोभविष्यतीत्यर्थः ॥ २५ ॥ २६ ॥ भुवोभारमहन् भारमेवाह नृपानिति ॥ २७ ॥

तदेवंप्रसक्तानुप्रसक्तंसमाप्यप्रस्तुतमाह गाधेरिति महातेजाविश्वामित्रः ॥ २८ ॥ तेसर्वैर्लिंगसमवायन्यायेनप्राणभृतउपदधातीतिवन्म
धुच्छंदसएवोच्यंतेइत्यादि तथाचश्रुतिः तस्यहविश्वामित्रस्यैकशतंपुत्राआसुःपंचाशदेवज्यायांसोमधुच्छंदसःपंचाशत्कनीयांसइत्यादि
तत्रचविश्वामित्रपुत्रेषुभार्गवस्याजीगर्तस्यदेवरातस्यज्येष्ठत्वमवगम्यते तथाआश्वलायनबौधायनादिभिःकौशिकानांदेवरातप्रवरत्वमुक्तं
प्रवरश्चतस्मिन्नेववंशेअवांतरभेदोनतुवंशांतरं तथाचस्मृतिः एकएवऋषिर्यावत्प्रवरेष्वनुवर्तते ॥ तावत्समानगोत्रत्वंविनाभृग्वंगिरोगणा
दिति ॥ २९ ॥ तत्कुतोभृगुवंशभवस्यदेवरातस्यकौशिकप्रवरत्वमित्याशंक्यतदुपपादयन्नाह पुत्रंकृत्वेत्यादियावत्समाप्ति पूर्वमजी

**गाधेरभून्महातेजाःसमिद्धइवपावकः ॥ तपसाक्षात्रमुत्सृज्ययोलेभेब्रह्मवर्चसं ॥ २८ ॥ विश्वामित्रस्यचैवा
सन्पुत्राएकशतंनृप ॥ मध्यमस्तुमधुच्छंदामधुच्छंदसएवते ॥ २९ ॥ पुत्रंकृत्वाशुनःशेपंदेवरातंचभार्गवं ॥
आजीगर्तंसुतानाहज्येष्ठएवप्रकल्प्यतां ॥ ३० ॥ योवैहरिश्चंद्रमखेविक्रीतःपुरुषःपशुः ॥ स्तुत्वादेवान्प्रजेशा
दीन्मुमुचेपाशबंधनात् ॥ ३१ ॥ योरातोदेवयजनेदेवैर्गाधिषुतापसः ॥ देवरातइतिख्यातःशुनःशेपःसभार्गवः
॥ ३२ ॥ येमधुच्छंदसोज्येष्ठाःकुशलंमेनिरेनतत् ॥ अशपत्तान्मुनिःक्रुद्धोम्लेच्छाभवतदुर्जनाः ॥ ३३ ॥ सहो
वाचमधुच्छंदाःसार्द्धंपंचाशताततः ॥ यन्नोभवान्संजानीतेतस्मिंस्तिष्ठामहेवयं ॥ ३४ ॥ ज्येष्ठंमंत्रदृशंचक्रु
स्त्वामन्वंचोवयंस्महि ॥ विश्वामित्रःसुतानाहवीरवंतोभविष्यथ ॥ येमानंमेऽनुगृण्हंतोवीरवंतमकर्तमां ॥ ३५ ॥**

गर्तसुतत्वेनमध्यमत्वेनपितृभ्यांममतांविहायविक्रीतत्वात्तस्यकृपयासुतानाह ज्येष्ठएवकल्प्यतामिति ॥ ३० ॥ एतदेवस्पष्टयितुंविशिन
ष्टि यइतिद्वाभ्यां मुमुचेअमुच्यत ॥ ३१ ॥ भार्गवोऽपिगाधिषुगाधेर्वंशजेषुदेवरातइतिख्यातः ॥ ३२ ॥ तत्तस्यज्येष्ठत्वंकुशलंनमेनिरे मध्यम
स्यानर्थावहत्वंदृष्ट्वानांगीकृतवंतः मुनिर्विश्वामित्रः ॥ ३३ ॥ पंचाशताकनिष्ठैःसाकंसमध्यमोमधुच्छंदाउवाच नोऽस्माकंयज्ज्येष्ठत्वंकनि
ष्ठत्वंवाभवान्पितासंजानीतेमन्यतेतस्मिन्वयंतिष्ठामोति ॥ ३४ ॥ एवमुक्त्वामंत्रदृशंकस्यनूनंकतमस्यामृतानामित्यादिमंत्राणांद्रष्टारंशुनः
शेपंज्येष्ठंचक्रुः तदाह वयंसर्वेत्वामन्वंचःस्महिअनुगंतारः कनिष्ठाःस्मइत्यर्थः ततःप्रसन्नोविश्वामित्रस्तान्सुतानाह वीरवंतःपुत्रवंतोभ
विष्यथ येयूयंमेमानंपूज्यत्वमनुगृण्हंतःअनुवर्तमानाःसंतोमांवीरवंतंपुत्रवंतमकर्तकृतवंतइत्यर्थः ॥ ३५ ॥ ॥ ॥

हे कुशिकाः एष देवरातो वो युष्मदीयः कौशिक एव यतो वीरो मत्पुत्रस्तमेनमन्वित अनुगच्छत अन्ये चाष्टकादयस्तस्य सुता आसन् ॥ ३६ ॥ उपसंहरति एवमिति एके शप्ताः एके ऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं जातं तच्च प्रवरांतरमापन्नं प्राप्तं हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितं ॥ ३७ ॥ इति नवमस्कंधे टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ आयोः सप्तदशे त्वैलज्येष्ठपु



एष वः कुशिका वीरो देवरातस्तमन्वित ॥ अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥ ३६ ॥ एवं कौशिकगोत्रं तु विश्वामित्रैः पृथग्विधं ॥ प्रवरांतरमापन्नं तद्धि चैवं प्रकल्पितं ॥ ३७ ॥ इति श्रीभागवते महापुराणे नवमस्कंधे षोडशोऽध्यायः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ श्रीशुक उवाच यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः ॥ नहुषः क्षत्रवृद्धश्च रजी रंभश्च वीर्यवान् ॥ १ ॥ अनेना इति राजेंद्र शृणु क्षत्रवृधोऽन्वयं ॥ क्षत्रवृद्धसुतस्यासन्सुहोत्रस्यात्मजास्त्रयः ॥ २ ॥ काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥ ३ ॥ काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमःपिता ॥ धन्वंतरिर्दैर्घ्यतम आयुर्वेदप्रवर्तकः ॥ ४ ॥ यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः ॥ तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः ॥ ५ ॥ दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः ॥ स एव शत्रुजिद्वत्सऋतध्वज इतीरितः ॥ तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ६ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ नालर्कादपरो राजन्मेदिनीं बुभुजे युवा ॥ ७ ॥ अलर्कात्संततिस्तस्मात्सुनीथोऽथ सुकेतनः ॥ धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ॥ ८ ॥ ॥ ॥

त्रस्य पंचसु ॥ सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनं ॥ १ ॥ इदं श्रीकृष्णावतारप्रस्तावाय वंशानुक्रमणमैलादिक्रमेण प्रक्रांतामिति यस्य वंशे कृष्णावतारस्तस्य वंशोऽतिविततत्वादंते निरूप्यते अतः पुरूरवसः पुत्राणां पंचानां कनिष्ठानां वंशानुक्त्वेदानीं प्रथमस्य वंशमाह यइति एवं नहुषययातियदुप्रभृतिष्वपि द्रष्टव्यं ॥ १ ॥ क्षत्रवृद्धः क्षत्रवृद्धस्य ॥ २ ॥ ३ ॥ दीर्घतमसः पिता ॥ ४ ॥ स्मृतमात्र एवार्तिं रोगदुःखं नाशयतीति तथा ॥ ५ ॥ ततः प्रतर्दनादिशब्दवाच्याद्द्युमतः सकाशादलर्कादयः ॥ ६ ॥ ७ ॥ अलर्कात्संततिः ॥ ८ ॥

सत्यकेतोर्धृष्टकेतुस्तस्मात्सुकुमारस्तस्माद्वीतिहोत्रस्तस्यभर्गः अतोभर्गात्भार्गभूमिः ॥९॥ काशयःकाशेर्वंश्याः काशेःप्रपितामहस्यक्षत्र
वृद्धस्यान्वयमयंतीतितितथा ॥ १० ॥ ततःअनेनसःशुद्धोजज्ञे ॥ ११ ॥ कृतकृत्यःसः यतआत्मवान्ज्ञानी अतःपुत्रोत्पादनंनकृतवानि
त्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ तेषांमतिभ्रंशायगुरुणाबृहस्पतिनाअभिचारविधानेनाग्नौहूयमानेसति ॥ १५ ॥ सिंहावलोकनेनाह क्षा

धृष्टकेतुःसुतस्तस्मात्सुकुमारःक्षितीश्वरः ॥ वीतिहोत्रस्यभर्गोतोभार्गभूमिरभून्नृपः ॥९ ॥ इतीमेकाशयोभू
पाःक्षत्रवृद्धान्वयायिनः ॥ रंभस्यरभसःपुत्रोगभीरश्चाक्रियस्ततः ॥१०॥ तस्यक्षेत्रेब्रह्मजज्ञेशृणुवंशमनेनसः
शुद्धस्ततःशुचिस्तस्मात्त्रिककुद्धर्मसारथिः ॥११ ॥ ततःशांतरयोजज्ञेकृतकृत्यःसआत्मवान् ॥ रजेःपंचशता
न्यासन्पुत्राणाममितौजसां॥१२॥देवैरभ्यर्थितोदैत्यान्हत्वेंद्रायाददाद्दिवं॥इंद्रस्तस्मैपुनर्दत्वागृहीत्वाचरणौ
रजेः ॥ १३ ॥ आत्मानमर्पयामासप्रह्लादाद्यरिशंकितः ॥ पितर्युपरतेपुत्रायाचमानायनोददुः॥१४॥त्रिविष्ट
पंमहेंद्राययज्ञभागान्समाददुः ॥ गुरुणाहूयमानेऽग्नौबलभित्तनयान्रजेः ॥१५॥ अवधीद्भ्रंशितान्मार्गान्नक
श्चिदवशेषितः॥कुशात्प्रतिःक्षात्रवृद्धात्संजयस्तत्सुतोजयः ॥ १६ ॥ ततःकृतःकृतस्यापिजज्ञेहर्यवनोनृपः ॥
सहदेवस्ततोहीनोजयसेनस्तुतत्सुतः॥१७॥संकृतिस्तस्यचजयःक्षत्रधर्मामहारथः ॥ क्षत्रवृद्धान्वयाभूपाःशृ
णुवंशंचनाहुषात् ॥ १८ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेचंद्रवंशानुवर्णनेसप्तदशोऽध्यायः॥१७॥
श्रीशुकउवाच यतिर्ययातिःसंयातिरायतिर्वियतिःकृतिः ॥ षडिमेनहुषस्यासन्निंद्रियाणीवदेहिनां ॥ १ ॥
राज्यंनैच्छद्यतिःपित्रादत्तंतत्परिणामवित् ॥ यत्रप्रविष्टःपुरुषआत्मानंनावबुध्यते ॥ २ ॥ पितरिभ्रंशिते
स्थानादिंद्राण्याधर्षणाद्द्विजैः ॥ प्रापितेऽजगरत्वंवैययातिरभवन्नृपः ॥ ३ ॥ ॥ ॥ ॥

त्रवृद्धात्क्षत्रवृद्धपौत्रात्कुशात्प्रतिःप्रतेःसंजयः ॥ १६ ॥ १७ ॥ १८ ॥ इतिनवमस्कंधेटीकायांसप्तदशोध्यायः ॥ १७ ॥ अष्टादशे
ययातेस्तुनाहुषस्यकथोच्यते ॥ यस्यपंचसुपुत्रेषुकनीयानग्रहीज्जरां ॥ १ ॥ १ ॥ तस्यराज्यस्यपरिणाममनर्थावहत्वंवेत्तीतितथा तत्रहेतुः
यत्रेति ॥ २ ॥ स्थानात्स्वर्गात् द्विजैरगस्त्यादिभिः ॥ ३ ॥ ॥ ॥ ॥ ॥

यवीयसोभ्रातॄनादिशत् काव्यस्यशुक्रस्यवृषपर्वणश्चकन्याभ्यांकृतदारःसन् ॥ ४ ॥ ५ ॥ नात्रप्रतिलोमतादोषःईश्वरघटनादितिदर्श यन्कथामाह एकदेत्यादिनाप्रतिजग्राहतद्वचइत्यंतेन गुरोःशुक्रस्यदेवयान्यापुत्र्याचव्यचरदितिद्वयोरन्वयः ॥ ६ ॥ कलगीताः अल योयेषुतानिनलिनीपुलिनानियस्मिन्पुरोद्याने अबलाशर्मिष्ठा ॥ ७ ॥ सिंचंत्यः ॥ ८ ॥ ९ अजानतीस्वीयंमत्वागुरुपुत्र्यावासःसमव्यय



चतसृष्वादिशद्दिक्षुभ्रातॄन्भ्रातायवीयसः॥कृतदारोजुगोपोर्वींकाव्यस्यवृषपर्वणः॥४॥ राजोवाच ब्रह्मर्षिर्भ गवान्काव्यःक्षत्रबंधुश्चनाहुषः॥राजन्यविप्रयोःकस्माद्विवाहःप्रतिलोमकः ॥ ५॥ श्रीशुकउवाच एकदादा नवेंद्रस्यशर्मिष्ठानामकन्यका॥सखीसहस्रसंयुक्तागुरुपुत्र्याचभामिनी ॥६॥ देवयान्यापुरोद्यानेपुष्पितद्रुमसं कुले ॥ व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ॥७॥ ताजलाशयमासाद्यकन्याःकमललोचनाः ॥ तीरे न्यस्यदुकूलानिविजन्हुःसिंचतीर्मिथः ॥८॥ वीक्ष्यव्रजंतंगिरिशंसहदेव्यावृषस्थितं॥सरसोत्तीर्यवासांसि पर्यधुर्व्रीडिताःस्त्रियः ॥९॥ शर्मिष्ठाऽजानतीवासोगुरुपुत्र्याःसमव्ययत्॥ स्वीयंमत्वाप्रकुपितादेवयानीद मब्रवीत् ॥१०॥ अहोनिरीक्ष्यतामस्यादास्याःकर्मह्यसांप्रतं॥ अस्मद्धार्यंधृतवतीशुनीवहविरध्वरे ॥११॥ यैरिदंतपसासृष्टंमुखंपुंसःपरस्यये॥धार्यतेयैरिहज्योतिःशिवःपंथाश्चदर्शितः॥१२॥ यान्वदंत्युपतिष्ठंतेलोक नाथाःसुरेश्वराः॥भगवानपिविश्वात्मापावनःश्रीनिकेतनः ॥१३॥वयंतत्रापिभृगवःशिष्योऽस्यानःपिताऽ सुरः॥अस्मद्धार्यंधृतवतीशूद्रोवेदमिवासती॥१४॥एवंशपंतींशर्मिष्ठागुरुपुत्रीमभाषत॥रुषाश्वसंत्युरंगीवध र्षितादष्टदच्छदा॥१५॥आत्मवृत्तमविज्ञायकत्थसेबहुभिक्षुकि॥किंनप्रतीक्षसेऽस्माकंगृहान्बलिभुजोयथा ॥१६॥ एवंविधैःसुपरुषैःक्षिप्त्वाचार्यसुतांसतीं॥शर्मिष्ठाप्राक्षिपत्कूपेवासआदायमन्युना ॥ १७ ॥



त्पर्यधात् ॥ १० ॥ असांप्रतमन्याय्यं ॥ ११ ॥ अन्यायमेवब्राह्मणोत्कर्षवर्णनेनव्यनक्ति यैरितित्रिभिः येब्राह्मणाःपरस्यपुंसोमुखंमुखा दुत्पन्नत्वेनतद्विदातृत्वेनश्रेष्ठाइत्यर्थः ज्योतिर्ब्रह्म पंथावेदमार्गः ॥ १२ ॥ १३ ॥ तदेवंब्राह्मणमात्रमेवतावत्पूज्यंतत्रापिभृगवःअस्या श्चपितानःशिष्यः एवंसत्यप्यस्माभिर्धार्यंवासइयमसतीधृतवती ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ ॥ ॥

॥१८॥१९॥२०॥ निषिद्धोयंप्रतिलोमसंबंधइतिचेत्तत्राहएषइति ॥ २१ ॥ ब्राह्मणमेवत्वंवृणीहिकिमनेनाग्रहेणेतिचेत्तत्राह नब्राह्मणइ
ति बृहस्पतेःसुतःकचःशुक्रान्मृतसंजीवनींविद्यामध्यगात् तदाचदेवयानीतंपतिंचकमे सचगुरुपुत्रीममपूज्येतिनतामुदवहत् ततश्चकु
पितासतीतवेयंविद्यानिष्फलाभवत्वितिशशाप सचतवब्राह्मणःपतिर्नभवेदितितांशशाप तदेतदाह यमहमशपंतस्यशापात् ॥ २२ ॥
अशास्त्रीयत्वादनभिप्रेतमपिदैवेनोपहृतंप्रापितंबुध्वातद्गतंतस्यांसकामंस्वंमनश्चबुध्वानत्वधर्मेमदीयंमनःप्रविशेदितितस्यावचःप्रतिज

तस्यांगतायांस्वगृहंययातिर्मृगयांचरन् ॥ प्राप्तोयदृच्छयाकूपेजलार्थीतांददर्शह ॥ १८ ॥ दत्वास्वमुत्तरं
वासस्तस्यैराजाविवाससे ॥गृहीत्वापाणिनापाणिमुज्जहारदयापरः ॥१९ ॥ तंवीरमाहौशनसीप्रेमनिर्भ
रयागिरा। राजंस्त्वयागृहीतोमेपाणिःपरपुरंजय ॥२०॥ हस्तग्राहोपरोमाभूद्गृहीतायास्त्वयाहिमे ॥ एषई
शकृतोवीरसंबंधोनोनपौरुषः॥२१॥ यदिदंकूपलग्नायाभवतोदर्शनंमम ॥ नब्राह्मणोमेभविताहस्तग्राहोम
हाभुज ॥ कचस्यबार्हस्पत्यस्यशापाद्यमशपंपुरा॥२२॥ययातिरनभिप्रेतंदैवोपहृतमात्मनः॥ मनस्तुतद्गतंबु
द्ध्वाप्रतिजग्राहतद्वचः ॥ २३ ॥ गतेराजनिसावीरेतत्रस्मरुदतीपितुः ॥न्यवेदयत्ततःसर्वमुक्तंशर्मिष्ठयाकृतं
॥२४॥ दुर्मनाभगवान्काव्यःपौरोहित्यंविगर्हयन् ॥ स्तुवन्वृत्तिंचकापोतींदुहित्रासययौपुरात् ॥ २५॥
वृषपर्वातमाज्ञायप्रत्यनीकविवक्षितं ॥ गुरुंप्रसादयन्मूर्ध्नापादयोःपतितःपथि ॥२६॥ क्षणार्धमन्युर्भगवा
न्शिष्यंव्याचष्टभार्गवः॥कामोऽस्याःक्रियतांराजन्नैनांत्यक्तुमिहोत्सहे ॥२७॥ तथेत्यवस्थितेप्राहदेवयानी
नोगतं ॥ पित्रादत्तायतोयास्येसानुगायातुमामनु ॥ २८ ॥ स्वानांतत्संकटंवीक्ष्यतदर्थस्यचगौरवं ॥ देवया
नींपर्यचरत्स्त्रीसहस्त्रेणदासवत् ॥२९॥ ॥ ॥ ॥ ॥ ॥

ग्राहअंगीकृतवान् ॥ २३ ॥ शर्मिष्ठासंबंधोऽपिदैववशादेवाभवदितिदर्शयन्नाह गतेराजनीतिनवभिःउक्तंभिक्षुकीत्यादि कृतंकूपेप्रक्षेपा
दि ॥ २४ ॥ कापोतींमुंछवृत्तिं ॥ २५ ॥ प्रत्यनीकादेवास्तेविवक्षिताजयंप्रापणीयाइत्यभिप्रेतंयस्यतथाभूतंज्ञात्वा प्रत्यनीकानांविवक्षि
तामितिवा ॥ २६ ॥ २७ ॥ सानुगासखीसहिताशर्मिष्ठामामनुयात्विति ॥ २८ ॥ तत्तस्मान्निर्गतात्शुक्रात्संकटंवीक्ष्य तत्तस्मादवस्थि
तादर्थस्यप्रयोजनस्यगौरवंचवीक्ष्य ॥ २९ ॥ ॥ ॥ ॥

तल्पेमाऽधाः नोपगच्छेरित्यर्थः ॥ ३० ॥ ३१ ॥ अपत्यार्थमृतुकालेप्रार्थनात्तस्याः कामपूरणंधर्ममवेक्ष्यशुक्रस्यवचश्चस्मरन्नदिष्टंदैवप्रापि
तमेवतत्संगमभ्यपद्यत नतुकामतइत्यर्थः ॥ ३२ ॥ ३३ ॥ आसुर्याःशर्मिष्ठायाः भर्तुःसकाशात् ॥ ३४ ॥ उपमंत्रयन्प्रसादयन् ॥ ३५ ॥
विकृतंरूपंकरोतीतितथा ॥ ३६ ॥ तेदुहितरिकामैर्घ्याप्यतृप्तोऽस्मि कामानांभोगैरितिवा शुक्रआह तर्हियोऽभिधास्यतिअभितोधारयि

नाहुषायसुतांदत्वासहशर्मिष्ठयोशना ॥ तमाहराजन्शर्मिष्ठांमाऽधास्तल्पेनकर्हिचित् ॥ ३०॥ विलोक्यौश
नसींराजन्शर्मिष्ठासप्रजांक्वचित् ॥ तमेववव्रेरहसिसख्याःपतिमृतौसती॥३१॥राजपुत्र्यार्थितोऽपत्येधर्मं
चावेक्ष्यधर्मवित्॥ स्मरन्शुक्रवचःकालेदिष्टमेवाभ्यपद्यत ॥३२ ॥ यदुंचतुर्वसुंचैवदेवयानीव्यजायत ॥ द्रु
ह्युंचानुंचपूरुंचशर्मिष्ठावार्षपर्वणी ॥३३ ॥ गर्भसंभवमासुर्याभर्तुर्विज्ञायभामिनी ॥ देवयानीपितुर्गेहंययौ
क्रोधविमूर्च्छिता॥३४॥प्रियामनुगतःकामीवचोभिरुपमंत्रयन् ॥ नप्रसादयितुंशेकेपादसंवाहनादिभिः ॥
३५ ॥ शुक्रस्तमाहकुपितःस्त्रीकामानृतपूरुष ॥ त्वांजराविशतांमंदविरूपकरणीनृणां ॥३६॥ ययातिरुवाच
अतृप्तोऽस्म्यद्यकामानांब्रह्मन्दुहितरिस्मते॥व्यत्यस्यतांयथाकामंवयसायोऽभिधास्यति ॥३७॥ इतिलब्ध
व्यवस्थानःपुत्रंज्येष्ठमवोचत ॥ यदोतातप्रतीच्छेमांजरांदेहिनिजंवयः॥३८॥मातामहकृतांवत्सनतृप्तोविष
येष्वहं॥वयसाभवदीयेनरंस्येकतिपयाःसमाः॥३९॥ यदुरुवाच नोत्सहेजरसास्थातुमंतराप्राप्तयातव॥अ
विदित्वासुखंग्राम्यंवैतृष्ण्यंनैतिपूरुषः॥४०॥तुर्वसुश्चोदितःपित्राद्रुह्युश्चानुश्चभारत॥प्रत्याचख्युरधर्मज्ञाह्य
नित्येनित्यबुद्धयः॥४१॥ अपृच्छत्तनयंपूरुंवयसोनंगुणाधिकं॥नत्वमग्रजवद्वत्समांप्रत्याख्यातुमर्हसि॥४२॥

ष्यतितस्यवयसाकामंव्यत्यस्यतांयथेच्छंजराव्यत्यययंयातुव्यत्ययंनीयतामितिवा यद्वा व्यत्यस्येतिच्छेदःतांजरांव्यत्यस्यसंगमयेत्यर्थः॥ ३७॥
इतिलब्धंव्यवस्थानंजरायाव्यवस्थितिर्येनसः ॥ ३८ ॥ ३९ ॥ ४० ॥ यतोनधर्मज्ञाःअनित्येचयौवनेनित्यबुद्धयः ॥ ४१ ॥ त्वंजरांकिं
ग्रहीष्यसीत्यपृच्छत् प्रत्याख्यानंमाकुथाइत्याह नत्वमिति ॥ ४२ ॥ ॥ ॥ ॥ ॥

आत्मकृतः स्वदेहकर्तुः प्रत्युपकारंकर्तुंकोनुक्षमस्तथापिपितुर्यच्चिंतितंतत्कुर्यात्सउत्तमः यस्तुप्रोक्तकारीसमध्यमः यस्त्वश्रद्धयाकुर्यात्सोऽधमः अकर्त्तापितुरुच्चरितंपुरीषप्रायः ॥ ४३ ॥ ४४ ॥ जुजुषेसेवितवान् ॥ ४५ ॥ यथोपजोषंयथाप्रीतिजुजुषे ॥ ४६ ॥ ४७ ॥ ४८ ॥ नानेवभाति यावदिंद्रियप्रवृत्तिः तदुपरमेनाभाति स्वप्नमायाभ्यांसहितोमनोरथएवेत्यर्थः ॥ ४९ ॥ ५० ॥ मनःसुखंकामभोगंकादिंद्रियैःकुत्सितैःपराङ्मुखैरिंद्रियैः ॥ ५१ ॥ इतिनवमेटीकायामष्टादशोध्यायः ॥ १८ ॥ ॥ ॥ ऊनाविंशेययातिःस्वंचेष्टितंनन्वजो

पूरुरुवाच कोनुलोकेमनुष्येंद्रपितुरात्मकृतःपुमान् ॥ प्रतिकर्तुंक्षमोयस्यप्रसादाद्विंदतेपरं ॥ ४३ ॥ उत्तमश्चिंतितंकुर्यात्प्रोक्तकारीतुमध्यमः ॥ अधमोऽश्रद्धयाकुर्यादकर्त्तोच्चरितंपितुः ॥ ४४ ॥ इतिप्रमुदितःपूरुःप्रत्यगृण्हाज्जरांपितुः ॥ सोऽपितद्वयसाकामान्यथावज्जुजुषेनृप ॥ ४५ ॥ सप्तद्वीपपतिःसम्यक्पितृवत्पालयन्प्रजाः ॥ यथोपजोषंविषयान्जुजुषेऽव्याहतेंद्रियः ॥ ४६ ॥ देवयान्यप्यनुदिनंमनोवाग्देहवस्तुभिः ॥ प्रेयसःपरमांप्रीतिमुवाहप्रेयसीरहः ॥ ४७ ॥ अयजद्यज्ञपुरुषंक्रतुभिर्भूरिदक्षिणैः ॥ सर्वदेवमयंदेवंसर्ववेदमयंहरिं ॥ ४८ ॥ यस्मिन्निदंविरचितंव्योम्नीवजलदावलिः ॥ नानेवभातिनाभातिस्वप्नमायामनोरथः ॥ ४९ ॥ तमेवहृदिविन्यस्यवासुदेवंगुहाशयं ॥ नारायणमणीयांसंनिराशीरयजत्प्रभुं ॥ ५० ॥ एवंवर्षसहस्राणिमनःषष्ठैर्मनःसुखं ॥ विदधानोऽपिनातृप्यत्सार्वभौमःकदिंद्रियैः ॥ ५१ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीशुकउवाच सइत्थमाचरन्कामान्स्त्रैणोपन्हवमात्मनः ॥ बुद्ध्वाप्रियायैनिर्विण्णोगाथामेतामगायत ॥ १ ॥ शृणुभार्गव्यमूंगाथांमद्विधाचरितांभुवि ॥ धीरायस्यानुशोचंतिवनेग्रामनिवासिनः ॥

पमं ॥ देवयानींसमाश्राव्यविरक्तोमुक्तिमाप्तवान् ॥ १ ॥ भुक्तभोगामजांहास्यन्नजवद्वृत्तमात्मनः ॥ विडंबयन्प्रियामाहनिर्वेदयितुमात्मवान् ॥ २ ॥ कामानाचरन्नुपभुंजानः गाथामितिहासं ॥ १ ॥ मद्विधेनमत्सदृशेनाचरितामनुष्ठितां ॥ मद्विधस्याचरितंयस्यामितिवा यस्यग्रामनिवासिनः कामिनोमद्विधस्याचरितंवनेस्थिताधीराःशोचंतितस्यगाथांशृणु ॥ २ ॥ ॥ ॥ ॥

आत्मानमनुलक्ष्याह बस्तइति प्रियामनुलक्ष्याह अजामिति वनेसंसारे प्रियंविषयं ॥ ३ ॥ रोधसीतटे विषाणाग्रेणमृदादिकमुद्धृत्यतीर्थंनिर्गमायमार्गंव्यधत्त ॥४॥ बह्व्यइतिशर्मिष्ठाप्रमुखाःकामयामासुः कांतंप्रतिकामिनीःकामवत्यः ॥५॥ पीवानंपुष्टं श्मश्रुलंश्मश्रुबहुलं रतिसमर्थमित्यर्थः मीढ्वांसंरेतःसेक्तारं याभेकोविदमभिज्ञमतएवप्रेष्ठंनाव बुध्यतनान्वबुध्यत ॥६॥७॥ स्वामिनमितिशुक्राभिप्रायेणाह ॥८॥ इड

बस्तएकोवनेकश्चिद्विचिन्वन्प्रियमात्मनः ॥ ददर्शकूपेपतितांस्वकर्मवशगामजां ॥३॥ तस्याउद्धरणोपायंबस्तःकामीविचिंतयन् ॥ व्यधत्ततीर्थमुद्धृत्यविषाणाग्रेणरोधसी ॥४॥ सोत्तीर्यकूपात्सुश्रोणीतमेवचकमेकिल॥ तयावृतंसमुद्वीक्ष्यबह्व्योजाःकांतकामिनीः ॥ ५ ॥ पीवानंश्मश्रुलंप्रेष्ठंमीढ्वांसंयाभकोविदं ॥ सएकोऽजवृषस्तासांबह्वीनांरतिवर्द्धनः ॥ रेमेकामग्रहग्रस्तआत्मानंनावबुध्यत ॥६॥ तमेवप्रेष्ठतमयारममाणमजान्यया ॥ विलोक्यकूपसंलग्नानामृष्यद्बस्तकर्मतत् ॥ ७ ॥ तंदुर्हृदंसुहृद्रूपंकामिनंक्षणसौहृदं ॥ इंद्रियाराममुत्सृज्यस्वामिनंदुःखितायया ॥ ८ ॥ सोऽपिचानुगतःस्त्रैणःकृपणस्तांप्रसादितुं ॥ कुर्वन्निडविडाकारंनाशक्नोत्पथिसंधितुं ॥९॥ तस्यास्तत्रद्विजःकश्चिदजास्वाम्यच्छिनद्रुषा॥लंबंतंवृषणंभूयःसंदधेऽर्थाययोगवित् ॥१०॥ संबद्धवृषणःसोऽपिह्यजयाकूपलब्धया ॥ कालंबहुतिथंभद्रेकामैर्नाद्यापितुष्यति ॥ ११ ॥ तथाहंकृपणःसुभ्रुभवत्याःप्रेमयंत्रितः ॥ आत्मानंनाभिजानामिमोहितस्तवमायया ॥ १२ ॥ यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः ॥ नदुह्यंतिमनःप्रीतिंपुंसःकामहतस्यते ॥ १३ ॥ नजातुकामःकामानामुपभोगेनशाम्यति ॥ हविषाकृष्णवर्त्मेवभूयएवाभिवर्धते ॥ १४ ॥ ॥ ॥

विडाकारंबस्तजातिशब्दं संधितुंप्रसादयितुं ॥९॥ वृषणमच्छिनत् जरयासंभोगासमर्थमकरोत् अर्थायस्वपुत्र्याःकामोपभोगाय योगविदुपायज्ञः जराव्यत्ययेनरातिशक्तिंददावित्यर्थः ॥१०॥ कूपलब्धयासह कामैःसेव्यमानैर्नतुष्यति ॥११॥१२॥ ननुतर्हिपुनरपिबहवोविषयाःसेव्यंतांततोमनसिप्रीतेकामोपशांत्यामोहोनिवर्तेतेतिचेत्तत्राह यदितिद्वाभ्यां नदुह्यंतिनपूरयंति ॥१३॥ हविषाघृतेनकृष्णवर्त्माऽग्निरिव ॥ १४॥

तर्हिकदाकेनोपायेनवामनसःसंपूर्णाप्रीतिःस्यात् ययाकामोपशमःस्यादित्यतआह यदेतिषड्भिः अमंगलंभावंरागद्वेषादिवैषम्यं ॥ १५ ॥ दुःखानिनितरांवहतीतितथातां ॥ १६ ॥ स्त्रीसन्निधानंतुसर्वथात्याज्यमित्याह मात्रेति अविविक्तंसंकीर्णमासनंयस्यसः कर्षतिआकर्षति ॥ १७ ॥ १८ ॥ १९ ॥ ननुतृष्णात्यागस्यातिदुष्करत्वात्कथंब्रह्मणिमनसआधानंस्यात्तत्राह दृष्टमिति योनानुध्यायेत् नसंविशेत् नचो

यदानकुरुतेभावंसर्वभूतेष्वमंगलं ॥ समदृष्टेस्तदापुंसःसर्वाःसुखमयादिशः ॥ १५ ॥ यादुस्त्यजादुर्मतिभिर्जीर्यतोयानजीर्यते ॥ तांतृष्णांदुःखनिवहांशर्मकामोद्रुतंत्यजेत् ॥ १६ ॥ मात्रास्वस्रादुहित्रावानाविविक्तासनोभवेत् ॥ बलवानिंद्रियग्रामोविद्वांसमपिकर्षति ॥ १७ ॥ पूर्णवर्षसहस्रंमेविषयान्सेवतोऽसकृत् ॥ तथाऽपिचानुसवनंतृष्णातेषूपजायते ॥ १८ ॥ तस्मादेतामहंत्यक्त्वाब्रह्मण्याधायमानसं ॥ निर्द्वंद्वोनिरहंकारश्चरिष्यामिमृगैःसह ॥ १९ ॥ दृष्टश्रुतमसद्बुद्ध्वानानुध्यायेन्नसंविशेत् ॥ संसृतिंत्वात्मनाशंचतत्रविद्वान्सआत्मदृक् ॥ २० ॥ इत्युक्त्वानाहुषोजायांतदीयंपूरवेवयः ॥ दत्वास्वांजरसंतस्मादाददेविगतस्पृहः ॥ २१ ॥ दिशिदक्षिणपूर्वस्यांद्रुह्युंदक्षिणतोयदुं ॥ प्रतीच्यांतुर्वसुंचक्रउदीच्यामनुमीश्वरं ॥ २२ ॥ भूमंडलस्यसर्वस्यपूरुमर्हत्तमंविशां ॥ अभिषिच्याग्रजांस्तस्यवशेस्थाप्यवनंययौ ॥ २३ ॥ आसेवितंवर्षपूगान्षड्वर्गंविषयेषुसः ॥ क्षणेनमुमुचेनीडंजातपक्षइवद्विजः ॥ २४ ॥ सतत्रनिर्मुक्तसमस्तसंगआत्मानुभूत्याविधुतत्रिलिंगः ॥ परेऽमलेब्रह्मणिवासुदेवेलेभेगतिंभागवतींप्रतीतः ॥ २५ ॥ श्रुत्वागाथांदेवयानीमेनेप्रस्तोभमात्मनः ॥ स्त्रीपुंसोःस्नेहवैक्लव्यात्परिहासमिवेरितं ॥ २६ ॥ यासन्निवासंसुहृदांप्रपायामिवगच्छतां ॥ विज्ञायेश्वरतंत्राणांमायाविरचितंप्रभोः ॥ २७ ॥ सर्वत्रसंगमुत्सृज्यस्वप्नौपम्येनभार्गवी ॥ कृष्णेमनःसमावेश्यव्यधुनोल्लिंगमात्मनः ॥ २८

पभुंजीत तत्रदृष्टश्रुतयोरनुध्यानादौ सआत्मदृक्भवति ॥ २० ॥ २१ ॥ २२ ॥ तस्यपूरोर्वशेस्थापयित्वा ॥ २३ ॥ विषयेषुशब्दादिषु आसेवितंषड्वर्गंषडिंद्रियसुखंमुमुचेतत्याज यद्वाविषयेषुआसेवितंसेवांकारितंषण्णामिंद्रियाणांवर्गंमुमुचेउपैक्षतेत्यर्थः ॥ २४ ॥ विधुतंनिरस्तंत्रिगुणात्मकंलिंगंयेन प्रतीतःप्रख्यातः ॥ २५ ॥ प्रस्तोभमेवाह परिहासमिवेति यद्वा प्रस्तोभंनिवृत्तिमार्गेप्रोत्साहनंमेने ॥ २६ ॥ २७ ॥ २८ ॥

कथंसमावेश्यतदाह नमइति नमनादिभिःसमावेश्येत्यर्थः शुकोवानमस्करोति ॥ २९ ॥ इतिनवमेटीकायामेकोनविंशोध्यायः ॥ १९॥ विंशेपितृप्रसादाप्तराजासनमहोन्नतेः ॥ पूरोर्वंशेहिदौष्यंतेर्भरतस्येर्यतेयशः ॥१॥१॥२॥ तत्सुतःअहंयातेःसुतः ॥ ३ ॥ धर्मेयुश्चसत्येयुश्च व्रतेयुश्चधर्मसत्यव्रतेयवः ॥ ४॥ वनेयुश्चावमःस्मृतः एवंदशैतेऋतेयुप्रमुखास्तस्यरौद्राश्वस्यघृताच्यामप्सरसिपुत्राजाताः अप्सरसइतिष

नमस्तुभ्यंभगवतेवासुदेवायवेधसे ॥ सर्वभूताधिवासायशांताय बृहतेनमः ॥ २९ ॥ इ०भा०म०न० एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ श्रीशुकउवाच पूरोर्वंशंप्रवक्ष्यामियत्रजातोऽसिभारत ॥ यत्रराजर्षयोवंश्याब्रह्मवंश्याश्चजज्ञिरे ॥ १ ॥ जन्मेजयोह्यभूत्पूरोःप्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोऽथनमस्युर्वैतस्माच्चारुपदोऽभवत् ॥ २ ॥ तस्यसुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ॥संयातिस्तस्याहंयातीरौद्राश्वस्तत्सुतःस्मृतः ॥ ३ ॥ ऋतेयुस्तस्यकुक्षेयुःस्थंडिलेयुःकृतेयुकः ॥ जलेयुःसंततेयुश्चधर्मसत्यव्रतेयवः ॥ ४ ॥ दशैतेप्सरसःपुत्रावनेयुश्चावमःस्मृतः ॥ घृताच्यामिंद्रियाणीवमुख्यस्यजगदात्मनः ॥ ५ ॥ ऋतेयोरंतिभारोभूत्त्रयस्तस्यात्मजान्नृप ॥ सुमतिर्ध्रुवोऽप्रातिरथःकण्वोप्रतिरथात्मजः ॥ ६ ॥ तस्यमेधातिथिस्तस्मात्प्रस्कण्वाद्याद्विजातयः ॥ पुत्रोभूत्सुमतेरैभ्योदुष्यंतस्तत्सुतोमतः ॥ ७ ॥ दुष्यंतोमृगयांयातःकण्वाश्रमपदंगतः ॥ तत्रासीनांस्वप्रभयामंडयंतींरमामिव ॥ विलोक्यसद्योमुमुहेदेवमायामिवस्त्रियं ॥ ८ ॥ बभाषेतांवरारोहांभटैःकतिपयैर्वृतः ॥ तद्दर्शनप्रमुदितःसंनिवृत्तपरिश्रमः ॥ ९ ॥ पप्रच्छकामसंतप्तःप्रहसन्श्लक्ष्णयागिरा ॥ कात्वंकमलपत्राक्षिकस्यासिहृदयंगमे ॥ १० ॥ किंवाचिकीर्षितंत्वत्रभवत्यानिर्जनेवने ॥ व्यक्तंराजन्यतनयांवेद्म्यहंत्वांसुमध्यमे ॥ नहिचेतःपौरवाणामधर्मेरमतेक्वचित् ॥ ११ ॥ ॥

ष्ठीसप्तम्यर्थे वशवर्तित्वेदृष्टांतः जगदात्मनःजगतआत्मभूतस्य मुख्यस्यप्राणस्येंद्रियाणीव॥ ५॥६॥७ ॥दुष्यंतस्यशकुंतलायांभरतःपुत्रोऽभवदितिकथाद्वारेणाह दुष्यंतोमृगयामितिपंचदशभिः तामाश्रममंडयंतींस्त्रियंविलोक्यमुमुहेअमुह्यत्॥८॥तस्यादर्शनेनप्रमुदितोऽतएवसन्निवृत्तःपरिश्रमोयस्य ॥ ९ ॥ १० ॥ पौरवाणांचेतोनह्यधर्मेरमते अतोमच्चेतसस्त्वयिरमणादेवाहंत्वांराजन्यतनयांवेद्मि ॥ ११ ॥

विश्वामित्रस्यात्मजाऽहंमेनकायांजातातयाचस्वर्गंगच्छंत्याऽत्रत्यक्ता अतोराजकन्यैवाहमित्यर्थः ॥ १२ ॥ १३ ॥ किंकरवामेत्यादिवा
क्यात्तदभिप्रायंज्ञात्वाह उपपन्नमिति ॥ १४ ॥ गांधर्वविधिनामिथःसमयपूर्वकेण ॥ १५ ॥ १६ ॥ १७ ॥ दुरत्ययंविक्रांतंविक्रमणंय
स्य ॥ १८ ॥ १९ ॥ भस्त्राचर्मपात्रंतद्वत् माताआधारपात्रं पितुरेवतुपुत्रः तत्रहेतुः येनेति आत्मावैपुत्रनामासीतिश्रुतेः भरस्वपुषाणअने
नभरतनामनिरुक्तं ॥ २० ॥ किंच रेतोधाः रेतःसेक्ता वंशकृत्पुत्रोयमक्षयात्पितरंनयति तथाचश्रुतिः पुन्नाम्नोनरकाद्यस्मात्पितरंत्रायतेसुतः॥

शकुंतलोवाच विश्वामित्रात्मजैवाहंत्यक्तामेनकयावने ॥ वेदैतद्भगवान्कण्वोवीरकिंकरवामते ॥ १२ ॥
आस्यतांह्यरविंदाक्षगृह्यतामर्हणंचनः ॥ भुज्यतांसंतिनीवाराउष्यतांयदिरोचते ॥ १३ ॥ दुष्यंतउवाच उ
पपन्नमिदंसुभ्रुजातायाःकुशिकान्वये ॥ स्वयंहिवृणतेराज्ञांकन्यकाःसदृशंवरं ॥ १४ ॥ ओमित्युक्तेयथा
धर्ममुपयेमेशकुंतलां ॥ गांधर्वविधिनाराजादेशकालविभागवित् ॥ १५ ॥ अमोघवीर्योराजर्षिर्महिष्यां
वीर्यमादधे ॥ श्वोभूतेस्वपुरंयातःकालेनासूतसासुतं ॥ १६ ॥ कण्वःकुमारस्यवनेचक्रेसमुदिताःक्रियाः ॥
बद्ध्वामृगेंद्रांस्तरसाक्रीडतिस्मसबालकः ॥ १७ ॥ तंदुरत्ययविक्रांतमादायप्रमदोत्तमा ॥ हरेरंशांशसं
भूतंभर्तुरंतिकमागमत् ॥ १८ ॥ यदानजगृहेराजाभार्यापुत्रावनिंदितौ ॥ शृण्वतांसर्वभूतानांखेवागाहा
शरीरिणी ॥ १९ ॥ माताभस्त्रापितुःपुत्रोयेनजातःसएवसः ॥ भरस्वपुत्रंदुष्यंतमाऽवमंस्थाःशकुंतलां ॥
॥ २० ॥ रेतोधाःपुत्रोनयतिनरदेवयमक्षयात् ॥ त्वंचास्यधातागर्भस्यसत्यमाहशकुंतला ॥ २१ ॥ पित
र्युपरतेसोऽपिचक्रवर्तीमहायशाः ॥ महिमागीयतेतस्यहरेरंशभुवोभुवि ॥ २२ ॥ चक्रंदक्षिणहस्तेऽस्यपद्म
कोशोऽस्यपादयोः ॥ ईजेमहाभिषेकेणसोऽभिषिक्तोऽधिराड्विभुः ॥२३ ॥ ॥ ॥

तस्मात्पुत्रइतिप्रोक्तः स्वयमेवस्वयंभुवेति पाठांतरे मातापित्रोःपुत्रंप्रतिविवादेयमक्षयात्‌धर्मनिर्णेतुर्यमस्यसभायाःसकाशात्‌रेतोधाः रेतःसे
क्तापितैवधर्मेणविजित्यपुत्रंनयतिनतुमातेत्यर्थः ततश्चभार्यापुत्रौस्वीकृतवानितिज्ञेयं ॥ २१ ॥ चक्रवर्तीबभूवेतिशेषःतस्यमहिमागीयतेत
दप्येतेश्लोकाअभिगीताइत्यादिबह्वृचश्रुत्या हरेरंशभुवःअंशाज्जातस्य ॥ २२ ॥ तत्रलिंगमाह चक्रमिति ॥ २३ ॥ ॥

गंगायामनुलोमंपंचपंचाशतावाजिभिरीजे पुरोधायपुरोहितंकृत्वा यमुनायामनुचयमुनायाश्चानुलोमं ॥ २४ ॥ अष्टाधिकसप्ततिमेध्यान् अश्वान्बबंध किंकुर्वन् वसुधनंप्रकर्षेणददत् साचीगुणेप्रकृष्टगुणवतिदेशेऽग्निश्चितोऽभूत् यस्मिन्नग्निचयनेदेशेवासहस्रंब्राह्मणाः भरतेन भूरिदानेनदत्तागाबद्वशः प्रत्येकंबद्वंविभेजिरेविभज्यजगृहुः चतुरशीत्यधिकैस्त्रयोदशसहस्रैरेकंबद्वंभवति तथाहि हिरण्येनपरीवृतान् कृष्णान् शुक्लदतोमृगान् मष्णारेभरतोददाच्छतंबद्वानिसप्तचेतिश्रुत्युक्तानिसप्ताधिकशतंबद्वानिश्रीशुकेनोत्तरश्लोकेचतुर्दशलक्षत्वेनसंगृहीतानि अदात्कर्मणिमष्णारेनियुतानिचतुर्दशेति एवंचतुर्दशलक्षाणांसप्ताधिकशतभागोबद्वमित्युक्तं इयंचबद्वसंख्याश्लोकेनसंगृह्यतेचतुर्दशानां

पंचपंचाशतामेध्यैर्गंगायामनुवाजिभिः ॥ सामंतेयंपुरोधाययमुनायामनुप्रभुः ॥ २४ ॥ अष्टसप्ततिमेध्याश्वान्बबंधप्रददद्वसु ॥ भरतस्यहिदौष्यंतेरग्निःसाचीगुणेचितः ॥ सहस्रंबद्वशोयस्मिन्ब्राह्मणागाविभेजिरे ॥ २५ ॥त्रयस्त्रिंशच्छतंह्यश्वान्बद्ध्वाविस्मापयन्नृपान् ॥ दौष्यंतिरत्यगान्मायांदेवानांगुरुमाययौ ॥ २६ ॥ मृगान्शुक्लदतःकृष्णान्हिरण्येनपरीवृतान् ॥ अदात्कर्मणिमष्णारेनियुतानिचतुर्दश ॥ २७ ॥ भरतस्य महत्कर्मनपूर्वेनापरेनृपाः ॥ नैवापुर्नैवप्राप्स्यंतिबाहुभ्यांत्रिदिवंयथा ॥ २८ ॥ किरातहूणान्यवनानंध्रान्कंकान्खशाञ्छकान् ॥ अब्रह्मण्यान्नृपांश्चाहन्म्लेच्छान्दिग्विजयेऽखिलान् ॥ २९ ॥ जित्वापुराऽसुरा देवान्येरसौकांसिभेजिरे ॥ देवस्त्रियोरसांनीताःप्राणिभिःपुनराहरत् ॥ ३० ॥ सर्वकामान्दुदुहतुःप्रजानांतस्यरोदसी ॥ समास्त्रिणवसाहस्रीर्दिक्षुचक्रमवर्तयत् ॥ ३१ ॥ ॥ ॥ ॥

लक्षाणांसप्ताधिकशतांशकः ॥ बद्वंचतुरशीत्यग्रसहस्राणित्रयोदश ॥ २५ ॥ देवानामपिमायावैभवमत्यगात् अत्यशेत यतः गुरुंपूज्यंहरिमाययौप्राप्तः तदंशभवत्वात् मायवत्तरइति पाठेऽह्स्वःश्रुत्यनुसारेण मायावतांश्रेष्ठोहरिरेवासावित्यर्थः ॥ २६ ॥ मृगान् श्रेष्ठगजान् भद्रमंद्रमृगादयोगजजातिभेदाः मष्णारेइत्यस्य श्रुतिपदस्यव्याख्यानंकर्मणीति कस्मिंश्चित्कर्मविशेषे केचित्तुमष्णारेतीर्थइतिव्याचक्षते ॥ २७ ॥ २८ ॥ २९ ॥ पुरादेवान् जित्वायेऽसुरारसौकांसिरसातलादिस्थानानिभेजिरेतैः प्राणिभिर्बलिभिर्देवस्त्रियोरसातलंनीताःसतीः पुनराहरत् आनिन्येप्राणिभिरन्यैर्मनुष्यादिभिः सहनीताइतिवा पणिभिरितिपाठेपणयोऽसुरास्तैर्नीताःसतीः यद्वा पणयोदूतास्तैर्दूतान्प्रस्थाप्याहरदित्यर्थः ॥ ३० ॥ त्रिणवसाहस्रीः समाःसप्तविंशतिसहस्रंवत्सरान् चक्रंसेनाआज्ञावा ॥ ३१ ॥ ॥

तस्यवैराग्येणमोक्षप्रकारमाह सइति मृषेतिविचार्येतिशेषः ॥ ३२ ॥ नानुरूपाःमत्सदृशानभवंतीतिभर्त्राइरितेसतित्व्यभिचारशंकयाऽस्मां
स्त्यक्ष्यतीतिभयात्पुत्रान्जघ्नुःपुनःपुत्राणांदर्शनेवैसादृश्यानुसंधानेनत्यजेन्नान्यथेत्याशयेनहतवत्यः ॥ ३३ ॥ वितथेव्यर्थेसातितदर्थंपुत्रा
र्थंमरुत्सोमेनयागेनयजतस्तस्यप्रसन्नाःसंतोमरुतोभरद्वाजंनामपुत्रमुपाददुःसमर्पयामासुः ॥ ३४ ॥ मरुतांभरद्वाजागमप्रकारंप्रदर्शयन्नाह
अंतर्वत्न्यामितिचतुर्भिः अंतर्वत्न्यांगर्भिण्यांभ्रातुरुतथ्यस्यपत्न्यांममतायांचौर्येणमैथुनायकदाचित्प्रवृत्तोबृहस्पतिस्तदाद्वितीयगर्भस्यावका
शाभावादाक्रोशपूर्वकंगर्भस्थेनवारितस्ततःक्रुद्धोबृहस्पतिरंधोभवेतितंगर्भंशप्त्वाबलाद्वीर्यंन्यषिंचत्ततोबृहस्पतेःशापाद्गर्भस्थोदीर्घतमाअं

ससम्राट्लोकपालाख्यमैश्वर्यमधिराट्श्रियं ॥ चक्रंचास्खलितंप्राणान्मृषेत्युपररामह ॥ ३२ ॥ तस्यास
न्नृपवैदर्भ्यःपत्न्यस्तिस्रःसुसंमताः॥जघ्नुस्त्यागभयात्पुत्रान्नानुरूपाइतीरिते ॥ ३३॥ तस्यैवंवितथेवंशेतदर्थं
यजतःसुतं॥ मरुत्सोमेनमरुतोभरद्वाजमुपाददुः ॥ ३४ ॥ अंतर्वत्न्यांभ्रातृपत्न्यांमैथुनायबृहस्पतिः॥ प्र
वृत्तोवारितोगर्भंशप्त्वावीर्यमवासृजत् ॥३५॥ तंत्यक्तुकामांममतांभर्तृत्यागविशंकितां॥नामनिर्वचनंतस्य
श्लोकमेनंसुराजगुः॥३६॥मूढेभरद्वाजमिमंभरद्वाजंबृहस्पते॥यातौयदुक्त्वापितरौभरद्वाजस्ततस्त्वयं॥३७

धोबभूव तेनचतद्वीर्यंपार्ष्णिप्रहारेणयोनेर्बहिर्निःसारितंभूमौपतितंसद्यएवकुमारोऽभवत् ॥ ३५ ॥ तंचपरवीर्यजंभर्तुस्त्यागाद्विशंकितांस
तींत्यक्तुकामांममतांप्रतिसुराएनंबृहस्पतेर्ममतायाश्चविवादरूपंश्लोकंजगुः किमर्थंजगुरतआह तस्यनामनिरुच्यतेयेनतत् तन्नामानिर्वचने
नैवभर्तुस्त्यागशंकामपाकर्तुमित्यर्थः ॥ ३६ ॥ तत्रपुत्रंत्यक्तुकामांतांममतांबृहस्पतिराह हेमूढेइमंपुत्रंभरपुषाण भर्तुर्बिभेमीतिचेत्तत्राह द्वा
जमेकस्यक्षेत्रेअन्यस्यबीजादित्येवंद्वाभ्यांजातमतस्तस्याप्ययंपुत्रइतिनतस्माद्भयशंकेत्यर्थः एवमुक्तासतीतंप्रत्याह हेबृहस्पतेत्वमिमंभरय
तोद्वाजंद्वाभ्यामावाभ्यामन्यायतोजातं अतोनाहमेकाकिनीभरामीत्यर्थः यद्यस्मादेवमुक्त्वापितरौममताबृहस्पतीविवदमानौपुत्रंपरित्यज्य
यातौततोहेतोरयंभरद्वाजइति पाठांतरेयस्यत्यागदुःखात्पितरौयातावित्यर्थः ॥ ३७ ॥ ॥ ॥

वितथंव्यभिचारसंभवात्तमात्मजंवितथंनिरर्थकंमत्वाममताव्यसृजत् तत्याज पाठांतरेआदिजंप्रथमजंभर्तुर्वीर्याज्जातमेवमुख्यमात्मजंम त्वाबृहस्पतेर्जातंतत्याजेत्यर्थः एवंतयात्यक्तंमरुतोऽबिभ्रन् अबिभरुः तदेवंमरुद्भिःप्राप्तोयंभरतस्यान्वयेवितथेसतिदत्तः ॥ ३८ ॥ इति नवमेटीकायांविंशोऽध्यायः॥२०॥ ॥ ॥ ॥ एकविंशेतुदौष्यंतेःसुतस्यान्वयउच्यते ॥ रंतिदेवाजमीढादेर्यत्रकीर्तिःप्रतन्यते ॥ १ ॥ भरतस्यान्वयेवितथेसतिदत्तत्वाद्वितथसंज्ञोभरद्वाजः सचब्राह्मणोऽपिभरतस्यदत्तःपुत्रोजातइतितद्वंशोनुक्रम्यते वितथस्यसुतो मन्युस्तस्माद्बृहत्क्षत्रजयमहावीर्यनरगर्गाःपंचपुत्राबभूवुः ॥ १ ॥ २ ॥ वियद्वित्तस्यवियतोगगनादिवोद्यमंविनादैवादुपस्थितमेववित्तंभो

चोद्यमानासुरैरेवंमत्वावितथमात्मजं ॥ व्यसृजन्मरुतोऽबिभ्रन्दत्तोऽयंवितथेऽन्वये ॥ ३८ ॥ इतिश्रीभाग वतेमहापुराणेनवमस्कंधेविंशोऽध्यायः ॥ २० ॥ ॥ ॥ श्रीशुकउवाच वितथस्यसुतोमन्युर्बृहत्क्ष त्रोजयस्ततः ॥ महावीर्योनरोगर्गःसंकृतिस्तुनरात्मजः ॥ १ ॥ गुरुश्चरंतिदेवश्चसंकृतेःपांडुनंदन ॥ रंति देवस्यहियशइहामुत्रचगीयते ॥ २ ॥ वियद्वित्तस्यददतोलब्धंलब्धंबुभुक्षतः ॥ निष्किंचनस्यधीरस्यसकुटुंब स्यसीदतः॥३॥व्यतीयुरष्टचत्वारिंशदहान्यपिबतःकिल॥घृतपायससंयावंतोयंप्रातरुपस्थितं॥४॥कृच्छ्रप्रा प्तकुटुंबस्यक्षुत्तृड्भ्यांजातवेपथोः ॥ अतिथिर्ब्राह्मणःकालेभोक्तुकामस्यचागमत्॥५॥तस्मैसंव्यभजत्सोऽन्न मादृत्यश्रद्धयान्वितः॥हरिंसर्वत्रसंपश्यन्सभुक्त्वाप्रययौद्विजः॥६॥अथान्योभोक्ष्यमाणस्यविभक्तस्यमही पते॥विभक्तंव्यभजत्तस्मैवृषलायहरिंस्मरन्॥७॥यातेशूद्रेतमन्योगादतिथिःश्वभिरावृतः॥राजन्मेदीयता मन्नंसगणायबुभुक्षते॥सआदृत्यावशिष्टंयद्बहुमानपुरस्कृतं॥८॥तच्चदत्वानमश्चक्रेश्वभ्यःश्वपतयेविभुः॥९॥

ग्यंयस्य यद्वावियव्द्ययंप्राप्नुवद्वित्तंभोग्यंयस्य तदेवाह बुभुक्षतोऽपिसतोलब्धंलब्धंददतः तत्प्रपंचयति निष्किंचनस्येत्यादिसार्धैःपंचद शभिः ॥ ३ ॥ अपिबतोजलपानमप्यकुर्वतः घृतादित्रयाणांद्वंद्वैक्यं तोयंच ॥ ४ ॥ ५ ॥ ६ ॥ अथान्योवृषलोऽतिथिरागमत् विभ क्तस्यकुटुंबार्थमन्नादिकंविभक्तवतः ॥ ७ ॥ सगणायश्वयूथसहिताय ॥ ८ ॥ ९ ॥ ॥ ॥

उच्छेषमुर्वरितं एकमेवतर्पयतीति ॥ १० ॥ ११ ॥ परदुःखासहिष्णुतयासर्वेषांदुःखंस्वयंभोक्तुमाशास्ते नेति अणिमाद्यष्टसमृद्धियुक्तां गतिमपिमोक्षमपिचाहंनकामये तर्हिकिंकामयसेतदाह अखिलदेहभाजामार्तिंदुः खंतत्तद्भोक्तृरूपेणांतःस्थितःसन्नहंप्रपद्येप्राप्नुयामीत्येवं कामये येनतद्दुःखभोक्त्रामयाहेतुभूतेनतेसर्वेअदुःखाभवंति ॥१२॥ ननुदुःखंकिमितिप्रार्थयसे परदुःखनिवृत्त्यैवममसर्वदुःखनिवृत्तिरित्याह क्षुत्तृडिति कृपणस्यजंतोर्जीवनहेतोर्जलस्यार्पणान्मेसर्वेक्षुत्तृडादयोनिवृत्ताः ॥१३॥ इत्येवंसंभाष्य ॥१४॥ त्रिभुवनाधीशाब्रह्मादयःमायाः

पानीयमात्रमुच्छेषंतच्चैकपरितर्पणं ॥ पास्यतःपुल्कसोऽभ्यागादपोदेह्यशुभस्यमे ॥ १० ॥ तस्यतांकरुणां वाचंनिशम्यविपुलश्रमां ॥ कृपयाभृशसंतप्तइदमाहामृतंवचः ॥ ११ ॥ नकामयेऽहंगतिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवंवा ॥ आर्तिंप्रपद्येऽखिलदेहभाजामंतस्थितोयेनभवंत्यदुःखाः ॥ १२ ॥ क्षुत्तृट्श्रमोगात्रपरिश्रमश्चदैन्यंक्लमःशोकविषादमोहाः ॥ सर्वेनिवृत्ताःकृपणस्यजंतोर्जिजीविषोर्जीवजलार्पणान्मे ॥ १३ ॥ इतिसंभाष्यपानीयंम्रियमाणःपिपासया ॥ पुल्कसायाददाद्धीरोनिसर्गकरुणोनृपः ॥ १४ ॥ तस्यत्रिभुवनाधीशाःफलदाःफलमिच्छतां ॥ आत्मानंदर्शयांचक्रुर्मायाविष्णुविनिर्मिताः ॥ १५ ॥ सवैतेभ्योनमस्कृत्यनिःसंगोविगतस्पृहः ॥ वासुदेवेभगवतिभक्त्याचक्रेनमःपरं ॥ १६ ॥ ईश्वरालंबनंचित्तंकुर्वतोनन्यराधसः ॥ मायागुणमयीराजन्स्वप्नवत्प्रत्यलीयत ॥ १७ ॥ तत्प्रसंगानुभावेनरंतिदेवानुवर्तिनः ॥ अभवन्योगिनःसर्वेनारायणपरायणाः ॥ १८ ॥ गर्गाच्छिनिस्ततोगार्ग्यःक्षत्राद्ब्रह्मह्यवर्तत ॥ दुरितक्षयोमहावीर्यात्तस्यत्रय्यारुणिःकविः ॥ १९ ॥ पुष्करारुणिरित्यत्रयेब्राह्मणगतिंगताः ॥ बृहत्क्षत्रस्यपुत्रोऽभूद्धस्तीयद्धास्तिनापुरं ॥ २० ॥

तदीयधैर्यपरीक्षाऽर्थंप्रथमंमायावृषलादिरूपेणप्रतीताःसंतइत्यर्थः ॥ १५ ॥ परंकेवलंवासुदेवेभक्त्यानमश्चक्रेनतुतान्किमपियाचितवान् ॥ १६ ॥ अनन्यराधसःईश्वरातिरिक्तफलांतरानपेक्षस्य प्रत्यलीयतआत्मन्येवलीनाबभूव ॥ १७ ॥ १८ ॥ मन्युसुतस्यवंशमुक्त्वातत्सुतस्यैवगर्गस्यवंशमाह गर्गादिति महावीर्यस्यवंशमाह दुरितक्षयः तस्यत्रय्यारुणिःकविःपुष्करारुणिश्चेतित्रयःपुत्राः ॥ १९ ॥ कथंभूताःयेअत्रक्षत्रवंशेब्राह्मणगतिंब्राह्मणरूपतांगतास्ते मन्युपुत्राणांपंचानांज्येष्ठस्यवंशमाह बृहत्क्षत्रस्येति यद्येनहस्तिनापुरंकृतमित्यर्थः ॥ २० ॥ ॥

अजमीढादयस्त्रयोहस्तिनःपुत्राः ॥ २१ ॥ अजमीढादेवान्यःपुत्रोबृहदिषुर्नामाभवत् ॥ २२ ॥ २३ ॥ पारस्यतनयोनीपः नीपस्यपुत्र
शतं ॥ २४ ॥ सएवकृत्व्यांकृत्वीसंज्ञायांशुककन्यायांब्रह्मदत्तंजनयामास तदुक्तंहरिवंशादिषु पराशरकुलोत्पन्नःशुकोनाममहायशाः ॥
व्यासादरण्यांसंभूतोविधूमोऽग्निरिवोज्वलन् ॥ सतस्यांपितृकन्यायांवीरिण्यांजनयिष्यति ॥ कृष्णंगौरप्रभुंशंभुंतथाभूरिश्रुतंजयं ॥ कन्यांकी
र्तिमतींषष्ठींयोगिनींयोगमातरं ॥ ब्रह्मदत्तस्यजननींमाहिषीमणुहस्यचेति ॥ यद्यपिशुकउत्पत्त्यैवविमुक्तसंगोनिर्गतस्तथापिविरहातुरंव्या

अजमीढोद्विमीढश्चपुरुमीढश्चहस्तिनः ॥ अजमीढस्यवंश्याःस्युःप्रियमेधादयोद्विजाः ॥ २१ ॥ अजमी
ढाद्बृहदिषुस्तस्यपुत्रोबृहद्धनुः ॥ बृहत्कायस्ततस्तस्यपुत्रआसीज्जयद्रथः ॥ २२ ॥ तत्सुतोविशदस्तस्यसेन
जित्समजायत ॥ रुचिराश्वोदृढहनुःकाश्योवत्सश्चतत्सुताः ॥ २३ ॥ रुचिराश्वसुतःपारःपृथुसेनस्तदात्म
जः ॥ पारस्यतनयोनीपस्तस्यपुत्रशतंत्वभूत् ॥ २४ ॥ सकृत्व्यांशुककन्यायांब्रह्मदत्तमजीजनत् ॥ सयोगी
गविभार्यायांविष्वक्सेनमधात्सुतं ॥ २५ ॥ जैगीषव्योपदेशेनयोगतंत्रंचकारह ॥ उदक्स्वनस्ततस्तस्मा
द्भल्लादोबार्हदीषवाः ॥ २६ ॥ यवीनरोद्विमीढस्यकृतिमांस्तत्सुतःस्मृतः ॥ नाम्नासत्यधृतिर्यस्यदृढनेमिःसु
पार्श्वकृत् ॥ २७ ॥ सुपार्श्वात्सुमतिस्तस्यपुत्रःसन्नतिमांस्ततः ॥ कृतीहिरण्यनाभाद्योयोगंप्राप्यजगौस्म
षट् ॥ २८ ॥ संहिताःप्राच्यसाम्नांवैनीपोह्युग्रायुधस्ततः ॥ तस्यक्षेम्यःसुवीरोथसुवीरस्यरिपुंजयः ॥ २९ ॥
ततोबहुरथोनामपुरुमीढोऽप्रजोऽभवत् ॥ नलिन्यामजमीढस्यनीलःशांतिःसुतस्ततः ॥ ३० ॥ शांतेःसुशां
तिस्तत्पुत्रःपुरुजोऽर्कस्ततोऽभवत् ॥ भर्म्याश्वस्तनयस्तस्यपंचासन्मुद्गलादयः ॥ ३१ ॥ ॥

समनुयांतंदृष्ट्वाछायाशुकंनिर्माययगतवांस्तदभिप्रायेणैवगार्हस्थ्यादिव्यवहारइत्यविरोधः सब्रह्मदत्तोयोगी गविवाचिसरस्वत्यां ॥ २५ ॥ स
एवयोगतंत्रंचकार बार्हदीषवाःबृहदिषोर्वंश्याइमे दीर्घत्वमार्षं ॥ २६ ॥ सुपार्श्वकृत्सुपार्श्वस्यपिता ॥ २७ ॥ प्राच्यसाम्नांषट्संहिता
जगौविभज्याध्यापितवान् ॥ २८ ॥ २९ ॥ अजमीढस्यवंश्याःप्रियमेधादयःकेचिद्ब्राह्मणाबभूवुर्बृहदिषुप्रभृतयःक्षत्रियाश्चेतिवंशद्वयमुक्तं
तस्यैववंशांतरमाह नलिन्यामितियावत्समाप्ति ॥ ३० ॥ ३१ ॥ ॥ ॥ ॥ ॥

मुद्गलएकोयवीनरादयश्चत्वारइत्येवंपंच ॥ ३२ ॥ ३३ ॥ भार्म्यात्भर्म्याश्वपुत्रान्मिथुनंचाभूत् तदेवाह दिवोदासःपुमान्अहल्याचकन्य केति ॥ ३४ ॥ ३५ ॥ ३६ ॥ इतिनवमेटीकायामेकविंशतितमोध्यायः ॥ २१ ॥ ॥ द्वाविंशेतुदिवोदासवंशमुक्त्वाऽथवर्णिताः ॥

यवीनरोबृहदिषुःकांपिल्यःसंजयःसुताः ॥ भर्म्याश्वःप्राहपुत्रामेपंचानांरक्षणायहि ॥ ३२ ॥ विषयाणामलमिमेइतिपंचालसंज्ञिताः ॥ मुद्गलाद्ब्रह्मनिर्वृत्तंगोत्रंमौद्गल्यसंज्ञितं ॥ ३३ ॥ मिथुनंमुद्गलाद्भार्म्याद्दिवोदासःपुमानभूत् ॥ अहल्याकन्यकायस्यांशतानंदस्तुगौतमात् ॥ ३४ ॥ तस्यसत्यधृतिःपुत्रोधनुर्वेदविशारदः ॥ शरद्वांस्तत्सुतोयस्मादुर्वशीदर्शनात्किल ॥ ३५ ॥ शरस्तंबेऽपतद्रेतोमिथुनंतदभूच्छुभं ॥ तदृष्ट्वाकृपयाऽगृण्हाच्छांतनुर्मृगयांचरन् ॥ कृपःकुमारःकन्याचद्रोणपत्न्यभवत्कृपी ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेएकविंशोऽध्यायः ॥ २१ ॥ ॥ श्रीशुकउवाच मित्रेयुश्चदिवोदासाच्च्यवनस्तत्सुतोनृप ॥ सुदासःसहदेवोथसोमकोजंतुजन्मकृत् ॥ १ ॥ तस्यपुत्रशतंतेषांयवीयान्पृषतःसुतः ॥ द्रुपदोद्रौपदीतस्यधृष्टद्युम्नादयःसुताः ॥ २ ॥ धृष्टद्युम्नाद्धृष्टकेतर्भार्म्याःपंचालकाइमे ॥ योऽजमीढसुतोह्यन्यऋक्षःसंवरणस्ततः ॥ ३ ॥ तपत्यांसूर्यकन्यायांकुरुक्षेत्रपतिःकुरुः ॥ परीक्षित्सुधनुर्जन्हुर्निषधाश्वःकुरोःसुताः ॥ ४ ॥ सुहोत्रोऽभूत्सुधनुषश्च्यवनोऽथततःकृती ॥ वसुस्तस्योपरिचरोबृहद्रथमुखास्ततः ॥५॥ कुशांबमत्स्यप्रत्यग्रचेदिपाद्याश्चचेदिपाः ॥ बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्यतत्सुतः ॥ ६ ॥ जज्ञेसत्यहितोऽपत्यंपुष्पवांस्तत्सुतोजहुः ॥ अन्यस्यांचापिभार्यायांशकलेद्वेबृहद्रथात् ॥ ७ ॥ ॥ ॥

ऋक्षवंशेजरासंधपार्थदुर्योधनादयः ॥ १ ॥ १ ॥ तस्यसोमकस्यपुत्राणांशतंबभूव तेषांजंतुर्ज्येष्ठोयवीयान्पृषतः॥ २ ॥ अजमीढस्यैववंशांतरमाह यइति ततःसंवरणात्कुरुः ॥ ३ ॥ ४ ॥ तस्यकृतिनः उपरिचरोवसुः ततस्तस्यवसोः बृहद्रथोमुखमादिर्येषां ॥ ५ ॥ तानेवाह कुशांबेति तत्सुतःपुष्पवान्जज्ञे तस्यापत्यंसत्यहितइतियोज्यं ॥ ६ ॥ ७ ॥ ॥ ॥ ॥

जरयाराक्षस्या ॥ ८ ॥ यत्र्यस्मात्सोमापेःश्रुतश्रवाः कुरोःपुत्रःपरीक्षिदनपत्यः जाह्नवःजन्होःपुत्रः ॥ ९ ॥ अतोराधिकाद युतोऽभूदित्य र्थः ॥ १० ॥ ११ ॥ तस्यप्रतीपस्यदेवापिशंतनुबाल्हीकाः ॥ १२ ॥ प्राक्पूर्वजन्मनिमहाभिषइतिसंज्ञायस्यसः ॥ १३ ॥ यदादेवोन ववर्षतदाशंतनुस्तत्रकारणंब्राह्मणान्पप्रच्छ ॥ १४ ॥ ब्राह्मणैश्चैवमुक्तः दाराग्निहोत्रसंयोगंकुरुतेयोऽग्रजेस्थिते ॥ परिवेत्ता सविज्ञेयः परि वित्तिस्तुपूर्वजइतिस्मृतेर्योऽग्रभुक्भुवमग्रतोभुनक्ति अयंत्वादृशोऽपिपरिवेत्तैवभवत्यतस्तद्दोषपरिहारायराज्यमग्रजायदेहिततोवृष्टिर्भविष्य

तेमात्राबाहिरुत्सृष्टेजरयाचाभिसंधिते ॥ जीवजीवेतिक्रीडंत्याजरासंधोऽभवत्सुतः ॥ ८ ॥ ततश्चसहदे वोऽभूत्सोमापिर्यच्छ्रुतश्रवाः ॥ परीक्षिदनपत्योभूत्सुरथोनामजान्हवः ॥ ९ ॥ ततोविदूरथस्तस्मात्सा र्वभौमस्ततोऽभवत् ॥ जयसेनस्तत्तनयोराधिकोऽतोऽयुतोह्यभूत् ॥ १० ॥ ततश्चक्रोधनस्तस्माद्देवाति थिरमुष्यच ॥ ऋष्यस्तस्यदिलीपोभूत्प्रतीपस्तस्यचात्मजः ॥ ११ ॥ देवापिःशंतनुस्तस्यबाल्हीकइतिचा त्मजाः ॥ पितृराज्यंपरित्यज्यदेवापिस्तुवनंगतः ॥ १२ ॥ अभवच्छंतनूराजाप्राङ्महाभिषसंज्ञितः ॥ यंयं कराभ्यांस्पृशतिजीर्णंयौवनमेतिसः ॥ १३ ॥ शांतिमाप्नोतिचैवाग्र्यांकर्मणातेनशंतनुः ॥ समाद्वादशत द्राज्येनववर्षयदाविभुः ॥ १४ ॥ शंतनुर्ब्राह्मणैरुक्तःपरिवेत्तालमग्रभुक् ॥ राज्यंदेह्यग्रजायाशुपुरराष्ट्रवि वृद्धये ॥ १५ ॥ एवमुक्तोद्विजैर्ज्येष्ठंछंदयामाससोऽब्रवीत् ॥ तन्मंत्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितोगिरा ॥ ॥ १६ ॥ वेदवादातिवादान्वैतदादेवोववर्षह ॥ देवापिर्योगमास्थायकलापग्राममाश्रितः ॥ १७ ॥ सो मवंशेकलौनष्टेकृतादौस्थापयिष्यति ॥ बाल्हीकात्सोमदत्तोभूद्भूरिर्भूरिश्रवास्ततः ॥ १८ ॥ शलश्चशंत नोरासीद्गंगायांभीष्मआत्मवान् ॥ सर्वधर्मविदांश्रेष्ठोमहाभागवतःकविः ॥ १९ ॥ ॥ ॥

तीत्येवमुक्तः ॥ १५ ॥ शंतनुर्वनंगत्वाज्येष्ठंछंदयामास राज्ञःप्रजापालनादिःपरोधर्मः अतस्त्वंराज्यंस्वीकुर्वितिप्रार्थितवान् ततःपूर्वमेव तस्यमंत्रिणाअश्मरावसंज्ञेनदेवापिंपाखंडीकृत्यराज्यानर्हंकर्तुंयेप्रहिताविप्रास्तैःपाखंडमताश्रययागिरावेदात्भ्रंशितः सन् ॥ १६ ॥ वेद वादस्यातिवादान्निंदावचनानिसोऽब्रवीत् ततस्तस्यपातित्येनराज्यानर्हत्वेजातेशंतनोर्दोषाभावाद्देवोववर्षेत्यर्थः ॥ १७ ॥ ततःसोमदत्तात् भूरिःभूरिश्रवाः शलश्चेतित्रयः ॥ १८ ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

रामोजामदग्न्यः दाशकन्यायामिति उपरिचरस्यवसोर्वीर्येणमत्स्यगर्भादुत्पन्नादाशैः कैवर्तैः पालिताअतोदाशकन्येतिप्रसिद्धायांसत्यव त्यां ॥२०॥ नाम्नातत्समाननाम्नाचित्रांगदेनगंधर्वेणयुद्धेहतः यस्यांसत्यवत्यांशंतनुपरिग्रहात्पूर्वमेव ॥ २१ ॥ वेदागुप्तायेन यतोऽहंजात इदंभागवतंचाध्यगामधिगतवानस्मि ॥ २२ ॥ २३ ॥ स्वयंवरात्भीष्मेणबलादुपानीते ॥ २४ ॥ मात्रासत्यवत्याउक्तइति निषेधाभाव

वीरयूथाग्रणीर्येनरामोऽपियुधितोषितः ॥ शंतनोर्दाशकन्यायांजज्ञेचित्रांगदः सुतः ॥ २० ॥ विचित्रवीर्यश्चावरजोनाम्नाचित्रांगदोहतः ॥ यस्यांपराशरात्साक्षादवतीर्णोहरेः कला ॥२१॥ वेदगुप्तोमुनिः कृष्णोयतोऽहमिदमध्यगां ॥ हित्वास्वशिष्यान्पैलादीन्भगवान्बादरायणः ॥ २२ ॥ मह्यंपुत्रायशांतायपरंगुह्यमिदंजगौ ॥ विचित्रवीर्योऽथोवाहकाशिराजसुतेबलात् ॥२३॥ स्वयंवरादुपानीतेअंबिकांऽबालिकेउभे ॥ तयोरासक्तहृदयोगृहीतोयक्ष्मणामृतः ॥ २४ ॥ क्षेत्रेऽप्रजस्यवैभ्रातुर्मात्रोक्तोबादरायणः ॥ धृतराष्ट्रंचपांडुंचविदुरंचाप्यजीजनत् ॥ २५॥ गांधार्यांधृतराष्ट्रस्यजज्ञेपुत्रशतंनृप ॥ तत्रदुर्योधनोज्येष्ठोदुःशलाचापिकन्यका ॥ ॥ २६ ॥ शापान्मैथुनरुद्धस्यपांडोः कुंत्यांमहारथाः ॥ जाताधर्मानिलेंद्रेभ्योयुधिष्ठिरमुखास्त्रयः ॥२७॥ नकुलः सहदेवश्चमाद्र्यांनासत्यदस्त्रयोः ॥ द्रौपद्यांपंचपंचभ्यः पुत्रास्तेपितरोऽभवन् ॥ २८ ॥ युधिष्ठिरात्प्रतिविंध्यः श्रुतसेनोवृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तुशतानीकस्तुनाकुलिः ॥ २९ ॥ सहदेवसुतोराजन्श्रुतकर्मातथापरे ॥ युधिष्ठिरात्तुपौरव्यांदेवकोऽथघटोत्कचः ॥३०॥ भीमसेनाद्धिडिंबायांकाल्यांसर्वगतस्ततः ॥ सहदेवात्सुहोत्रंतुविजयासूतपार्वती ॥ ३१ ॥ ॥ ॥ ॥ ॥

माह अपतिरपत्यलिप्सुर्देवराद्गुरुप्रयुक्ताद्दतुमतीयादित्यादिवचनात् ॥ २५ ॥ दुःशलानामकन्याचजज्ञे ॥ २६ ॥ अरण्येमृगशापात्मैथुनेनरुद्धस्यप्रतिबद्धस्य ॥ २७ ॥ नासत्यदस्राभ्यामश्विनीकुमाराभ्यां पंचभ्योयुधिष्ठिरादिभ्यः पंचाभवन् ॥ २८ ॥ २९ ॥ तथाऽपरेभार्यांतरेषु ॥ ३० ॥ कालीचान्याभीमस्यभार्यातस्यांभीमसेनात्सर्वगतोनामपुत्रोऽभवदित्यर्थः ॥ ३१ ॥ ॥ ॥

उलूप्यांनागकन्यायां मणिपूरपतेःसुतायांपुत्रिकाधर्मेणदत्तायांबभ्रुवाहनमसूत अतस्तत्पुत्रःसन्नपिसपुत्रिकासुतः मातामहसुतइत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ तुरसंज्ञंपुरोहितंकृत्वा ॥ ३७ ॥ भविष्यानाह तस्यपुत्रइतियावत्समाप्ति याज्ञवल्क्यात्क्रियाज्ञानंपरंचात्मानंशौनकात्प्राप्स्यति अस्त्रज्ञानंचकृपाचार्यादितिद्रष्टव्यं याज्ञवल्क्यात्त्रयीमधीत्यकृपादस्त्राण्यवाप्येतिवैष्णवोक्तेः क्वचित्तुअ

करेणुमत्यांनकुलोनिरमित्रंतथार्जुनः ॥ इरावंतमुलूप्यांवैसुतायांबभ्रुवाहनं ॥ मणिपूरपतेःसोऽपितत्पुत्रः पुत्रिकासुतः ॥३२॥ तवतातःसुभद्रायामभिमन्युरजायत ॥ सर्वातिरथजिद्वीरउत्तरायांततोभवान् ॥३३॥ परिक्षीणेषुकुरुषुद्रौणेर्ब्रह्मास्त्रतेजसा॥त्वंचकृष्णानुभावेनसजीवोमोचितोऽतकात्॥३४॥तवेमेतनयास्तात जनमेजयपूर्वकाः॥श्रुतसेनोभीमसेनउग्रसेनश्चवीर्यवान् ॥३५॥ जनमेजयस्त्वांविदित्वातक्षकान्निधनंगतं ॥ सर्पान्वैसर्पयागाग्नौसहोष्यतिरुषाऽन्वितः॥३६॥ कावषेयंपुरोधायतुरंतुरगमेधयाट्॥समंतात्पृथिवींस र्वांजित्वायक्ष्यतिचाध्वरैः ॥३७॥ तस्यपुत्रःशतानीकोयाज्ञवल्क्यात्त्रयींपठन्॥अस्त्रज्ञानंक्रियाज्ञानंशौनका त्परमेष्यति ॥३८॥ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधकः॥ असीमकृष्णस्तस्यापिनिमिचक्रस्तुतत्सुतः ॥३९॥ गजाह्वयेहृतेनद्याकौशांब्यांसाधुवत्स्यति॥उक्तस्ततश्चित्ररथस्तस्मात्कविरथःसुतः ॥४०॥ तस्माच्च वृष्टिमांस्तस्यसुषेणोऽथमहीपतिः ॥ सुनीथस्तस्यभवितानृचक्षुर्यत्सुखीनलः ॥४१॥ परिप्लवःसुतस्तस्मा न्मेधावीसुनयात्मजः॥ नृपंजयस्ततोदूर्वस्तिमिस्तस्माज्जनिष्यति॥तिमेर्बृहद्रथस्तस्माच्छतानीकःसुदास जः ॥ ४२ ॥ शतानीकाद्दुर्दमनस्तस्यापत्यंबहीनरः॥ दंडपाणिर्निमिस्तस्यक्षेमकोभवितानृपः ॥ ४३ ॥ ब्रह्मक्षत्रस्यवैप्रोक्तोवंशोदेवर्षिसत्कृतः ॥ क्षेमकंप्राप्यराजानंसंस्थांप्राप्स्यतिवैकलौ ॥ ४४ ॥

स्त्रज्ञानंकृपादित्येवपाठः ॥ ३८ ॥ ३९ ॥ ४० ॥ यद्यस्मात्सुखीनलःपुत्रः ॥ ४१ ॥ तस्मात्परिप्लवात्सुनयस्तस्यात्मजोमेधावीत्यर्थःत स्मात्सुदासस्ततःशतानीकइत्यर्थः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥

बृहद्रथस्यजरासंधस्तस्यसहदेवस्तस्यमार्जारिः यस्मान्मार्जारेःश्रुतश्रवाः ॥ ४५ ॥ ४६ ॥ ४७ ॥ सहस्रसंवत्सरमेतेभाव्याभूपालास्ततः परंभाव्यान्द्वादशस्कंधेवक्ष्यति ॥ इतिनवमेटीकायांद्वाविंशोध्यायः ॥ २२ ॥ ॥ त्रयोविंशेत्वनोर्द्रुह्योस्तुर्वसोश्चान्वयःक्रमात् ॥ यदोश्चवं

अथमागधराजानोभवितारोवदामिते ॥ भवितासहदेवस्यमार्जारिर्यच्छ्रुतश्रवाः ॥ ४५ ॥ ततोयुतायुस्तस्यापिनिरमित्रोऽथतत्सुतः ॥ सुनक्षत्रःसुनक्षत्राद्बृहत्सेनोथकर्मजित् ॥ ४६ ॥ ततःसृतंजयाद्विप्रःशुचिस्तस्यभविष्यति ॥ क्षेमोऽथसुव्रतस्तस्माद्धर्मसूत्रःशमस्ततः ॥ ४७ ॥ द्युमत्सेनोऽथसुमतिःसुबलोजनिताततः ॥ सुनीथःसत्यजिदथविश्वजिद्यद्रिपुंजयः ॥ बार्हद्रथाश्चभूपालाभाव्याःसाहस्रवत्सरं ॥ ४८ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ॥ श्रीशुकउवाच अनोःसभानरश्चक्षुःपरोऽक्षश्चसुतास्त्रयः ॥ सभानरात्कालनरःसृंजयस्तत्सुतस्ततः ॥ १ ॥ जनमेजयस्तस्यपुत्रोमहाशिलोमहामनाः ॥ उशीनरस्तितिक्षुश्चमहामनसआत्मजौ ॥ शिबिर्वनःशमिर्दक्षश्चत्वारोशीनरात्मजाः ॥ २ ॥ वृषादर्भःसुवीरश्चमद्रःकैकेयआत्मजाः ॥ शिबेश्चत्वारएवासंस्तितिक्षोश्चरुशद्रथः ॥ ३ ॥ ततोहेमोऽथसुतपाबलिःसुतपसोऽभवत् ॥ अंगवंगकलिंगाद्याःसुह्मपुंड्रांध्रसंज्ञिताः ॥ ४ ॥ जज्ञिरेदीर्घतमसोबलेःक्षेत्रेमहीक्षितः ॥ चक्रुःस्वनाम्नाविषयान्षडिमान्प्राच्यकांश्चते ॥ ५ ॥ खनपानोंऽगतोजज्ञेतस्माद्दिविरथस्ततः ॥ सुतोधर्मरथोयस्यजज्ञेचित्ररथोऽप्रजः ॥ ६ ॥ रोमपादइतिख्यातस्तस्मैदशरथःसखा ॥ शांतांस्वकन्यांप्रायच्छदृष्यशृंगउवाहतां ॥ ७ ॥ देवेवर्षतियंरामाआनिन्युर्हरिणीसुतं ॥ नाट्यसंगीतवादित्रैर्विभ्रमालिंगनार्हणैः ८

शोऽनुक्रांतोयावज्ज्यामघसंभवः ॥ १ ॥ तदेवंययातेःपुत्राणांपंचमस्यपूरोर्वंशोऽनुक्रांतइदानींचतुर्थस्यवंशमनुक्रामति अनोरितिकर्णस्यजगतीपतेरित्यंतेन ॥ १ ॥ तस्यजनमेजयस्यमहाशीलोमहामनाः चत्वारउशीनरात्मजाः संधिरार्षः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ सदुष्यंतः स्ववंशंपौरववंशं ॥१७॥ १८ ॥ १९ ॥ प्रथमस्यसहस्त्रजित

सतुराज्ञोनपत्यस्यनिरूप्येष्टिंमरुत्वतः ॥ प्रजामदाद्दशरथोयेनलेभेऽप्रजःप्रजा: ॥९॥ चतुरंगोरोमपादात्पृ
थुलाक्षस्तुतत्सुतः ॥ बृहद्रथोबृहत्कर्माबृहद्भानुश्चतत्सुताः ॥१०॥ आद्याद्बृहन्मनास्तस्माज्जयद्रथउदाहृतः
विजयस्तस्यसंभूत्यांततोधृतिरजायत ॥११॥ ततोधृतव्रतस्तस्यसत्कर्माऽधिरथस्ततः ॥ योसौगंगातटेक्री
डन्मंजूषांऽतर्गतंशिशुं ॥१२॥ कुंत्यापविद्धंकानीनमनपत्योऽकरोत्सुतं ॥ वृषसेनःसुतस्तस्यकर्णस्यजगती
पतेः ॥१३॥ द्रुह्योश्चतनयोबभ्रुःसेतुस्तस्यात्मजस्ततः ॥ आरब्धस्तस्यगांधारस्तस्यधर्मसुतोधृतः ॥१४॥
धृतस्यदुर्मनास्तस्मात्प्रचेताःप्राचेतसंशतं ॥ म्लेंच्छाधिपतयोऽभूवन्नुदीचींदिशमाश्रिताः ॥१५॥ तुर्वसो
श्चसुतोवन्हिर्वन्हेर्भर्गोऽथभानुमान् ॥ त्रिभानुस्तत्सुतोऽस्यापिकरंधमउदारधीः ॥१६॥ मरुतस्तत्सुतोऽ
पुत्रःपुत्रंपौरवमन्वभूत् ॥ दुष्यंतःसपुनर्भेजेस्ववंशंराज्यकामुकः ॥१७॥ययातेर्ज्येष्ठपुत्रस्ययदोर्वंशंनरर्षभ॥
वर्णयामिमहापुण्यंसर्वपापहरंनृणां ॥१८॥ यदोर्वंशंनरःश्रुत्वासर्वपापैःप्रमुच्यते ॥ यत्रावतीर्णोभगवान्प
रमात्मानराकृतिः ॥ १९ ॥ यदोःसहस्त्रजित्क्रोष्टानलोरिपुरितिश्रुताः ॥ चत्वारःसूनवस्तत्रशतजित्प्रथमा
त्मजः ॥२०॥ महाहयोवेणुहयोहैहयश्चेतितत्सुताः ॥ धर्मस्तुहैहयसुतोनेत्रःकुंतेःपितातत: ॥२१॥ सोऽहं
जिरभवत्कुंतेर्महिष्मान्भद्रसेनकः ॥ दुर्मदोभद्रसेनस्यधनकःकृतवीर्यसूः ॥ कृताग्निःकृतवर्माचकृतौजाध
नकात्मजाः ॥२२॥ अर्जुनःकृतवीर्यस्यसप्तद्वीपेश्वरोऽभवत् ॥ दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः ॥२३॥
ननूनंकार्तवीर्यस्यगतिंयास्यंतिपार्थिवाः ॥ यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २४ ॥ ॥

आत्मजः ॥ २० ॥ २१ ॥ कुंतेःसोहंजिःसोहंजेर्महिष्मान्माहिष्मतोभद्रसेनकस्तस्यदुर्मदोधनकश्चेतिद्वौपुत्रौ कृतवीर्यस्यजनकःकृतवी
र्यादयश्चत्वारोधनकस्यात्मजाइत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ ॥ ॥ ॥

अनष्टमविनाशंवित्तंयेनतथाविधंस्मरणंयस्यसः अक्षय्यंषड्वसुषडिंद्रियविषयंबुभुजे ॥ २५ ॥ २६ ॥ और्वस्यतेजसासगरेणोपसंहृतमित्यर्थः ॥ २७ ॥ तेषांतालजंघपुत्राणांज्येष्ठः तस्यमधोःपुत्रशतंवृष्णिर्ज्येष्ठोयस्मिन् यतोमधोर्वृष्णेर्यदोश्चहेतोरिदंकुलं ॥ २८ ॥ २९ ॥ ३० ॥ चतुर्दशमहारत्नानितत्तज्जातिश्रेष्ठानियस्यसः तानिचमार्कंडेयपुराणेवर्णितानि गजवाजिरथस्त्रीषुनिधिमाल्यांबरद्रुमाः ॥ शक्तिपाशम

पंचाशीतिसहस्राणिह्यव्याहतबलःसमाः ॥ अनष्टवित्तस्मरणोबुभुजेऽक्षय्यषड्वसु ॥२५॥ तस्यपुत्रसहस्रेषु पंचैवोर्वरितामृधे ॥ जयध्वजःशूरसेनोवृषभोमधुरूर्जितः ॥२६॥ जयध्वजात्तालजंघस्तस्यपुत्रशतंत्वभूत् ॥ क्षत्रंयत्तालजंघाख्यमौर्वतेजोपसंहृतं ॥ २७॥ तेषांज्येष्ठोवीतिहोत्रोवृष्णिःपुत्रोमधोःस्मृतः ॥ तस्यपुत्रशतं त्वासीद्वृष्णिज्येष्ठंयतःकुलं ॥ २८॥ माधवावृष्णयोराजन्यादवाश्चेतिसंज्ञिताः ॥ यदुपुत्रस्यचक्रोष्टोःपुत्रोवृ जिनवांस्ततः ॥२९॥ श्वाहिस्ततोरुशेकुर्वैतस्यचित्ररथस्ततः ॥ शशबिंदुर्महायोगीमहाभोजोमहानभूत् ॥ ॥३०॥ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ तस्यपत्नीसहस्राणांदशानांसुमहायशाः ॥३१॥ दशलक्षस हस्राणिपुत्राणांतास्वजीजनत् ॥ तेषांतुषट्प्रधानानांपृथुश्रवसआत्मजः ॥३२॥ धर्मोनामोशनातस्यहय मेधशतस्ययाट् ॥ तत्सुतोरुचकस्तस्यपंचासन्नात्मजाःशृणु ॥ पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसंज्ञिताः ॥३३॥ज्यामघस्त्वप्रजोऽप्यन्यांभार्यांशैब्यापतिर्भयात् ॥नाविंदच्छत्रुभवनाद्भोज्यांकन्यामहारषीत् ॥३४॥ रथस्थांतांनिरीक्ष्याहशैब्यापतिममर्षिता ॥ केयंकुहकमत्स्थानंरथमारोपितेतिवै ॥३५॥ स्नुषातवेत्यभिहि तंस्मयंतीपतिमब्रवीत् ॥ अहंवंध्याऽसपत्नीचस्नुषामेयुज्यतेकथं ॥ ३६ ॥ ॥ ॥

णिच्छत्रविमानानि चतुर्दशेतिदशानांपत्नीसहस्राणांभार्यायुतस्यप्रत्येकंलक्षंलक्षमित्येवंतासुपुत्राणांदशलक्षसहस्राणिजनयामास पृथुयशा इत्यादयः पृथुश्रवसःषट्प्रधानाः श्रेष्ठायेषांतेषांमध्येपंचआत्मजाआसंस्तान्शृणु तानेवाह पुरुजिदिति ॥३१॥ ३२ ॥ ३३ ॥ भार्याभया देवैकभार्यस्यवंध्यापतेर्ज्यामघस्यापुत्रस्यतद्वयमेवपुत्रप्रदमभवदितिदर्शयन्नाह ज्यामघस्त्विति ॥ ३४ ॥ ३५ ॥ यदिमेसपत्नीस्यात्तर्हि स्नुषेयंयुज्येतापिनत्वेतदस्तीत्याह असपत्नीचेति ॥ ३३ ॥ ॥ ॥ ॥

अतिभयव्याकुलआह जनयिष्यसीति भार्याभयप्रकंपमानास्विन्नसर्वांगस्यराज्ञःप्राणसंकटमालोक्यानुकंपितास्तेनपूर्वंबहुकालमाराधिता श्चविश्वेदेवाः पितरश्चतथेत्यन्वमोदंत ॥३७॥ ततश्चदेवताप्रसादेनजनयिष्यसीतिप्रतिवचनमुहूर्तगुणेनचनिवृत्तरजस्काऽपिशैब्यागर्भम धात् तस्यचमहिमापराशरादिभिरुक्तः यथोक्तं भार्यावश्यास्तुयेकेचिद्भविष्यंत्यथवामृताः ॥ तेषांतुज्यामघःश्रेष्ठःशैब्यापातिरभून्नृपइति ॥



जनयिष्यसियंराज्ञितस्येयमुपयुज्यते ॥ अन्वमोदंततद्विश्वेदेवाःपितरएवच ॥ ३७ ॥ शैब्यागर्भमधात्का लेकुमारंसुपुवेशुभं ॥ सविदर्भइतिप्रोक्तउपयेमेस्नुषांसतीं ॥ ३८॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधे यदुवंशानुवर्णनेत्रयोविंशोऽध्यायः ॥२३॥ ॥छ॥ श्रीशुकउवाच तस्यांविदर्भोजनयत्पुत्रौनाम्नाकु शक्रथौ ॥ तृतीयंरोमपादंचविदर्भकुलनंदनं ॥ १ ॥ रोमपादसुतोबभ्रुर्बभ्रोःकृतिरजायत ॥ उशिकस्तत्सु तस्तस्माच्चेदिश्चैद्यादयोनृप ॥ २ ॥ क्रथस्यकुंतिःपुत्रोभूद्वृष्टिस्तस्याथनिर्वृतिः ॥ ततोदशार्होनाम्ना ऽभूत्त स्यव्योमःसुतस्ततः ॥ ३ ॥ जीमूतोविकृतिस्तस्ययस्यभीमरथःसुतः ॥ ततोनवरथःपुत्रोजातोदशरथस्ततः ॥४॥ करंभिःशकुनेःपुत्रोदेवरातस्तदात्मजः ॥ देवक्षत्रस्ततस्तस्यमधुःकुरुवशादनुः ॥५॥ पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुःसात्वतस्ततः ॥ भजमानोभजिर्दिव्योवृष्णिर्देवावृधोंऽधकः ॥ ६ ॥सात्वतस्यसुताःसप्तमहाभो जश्चमारिष ॥ भजमानस्यनिम्लोचिःकिंकिणोवृष्णिरेवच ॥ ७ ॥ एकस्यामात्मजाःपत्न्यामन्यस्यांच त्रयःसुताः ॥ शताजिच्चसहस्राजिदयुताजिदितिप्रभो ॥ ८ ॥ बभ्रुर्देवावृधसुतस्तयोःश्लोकौपठंत्यमू ॥ य थैवशृणुमोदूरात्संपश्यामस्तथांऽतिकात् ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥



३८ ॥ इतिनवमेटीकायांत्रयोविंशोध्यायः ॥ २३ ॥ चतुर्विंशेविदर्भस्यपुत्रत्रयसमुद्भवाः ॥ वंशानानामुखाःप्रोक्तारामकृष्णोद्भवावधि ॥ ॥ १ ॥ १ ॥ चैद्यादयोदमघोषादयः ॥ २ ॥ ३ ॥ ततोदशरथाच्छकुनिः पुराणांतरादेवमादिविशेषोद्रष्टव्यः ॥ ४ ॥ ततःकुरुवशादनुः अनोःपुत्रःपुरुहोत्रः ॥ ५ ॥ महाभोजश्चेत्येवंसप्त मारिषहेआर्य ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ॥

ततस्तदुपदेशेनयेपंचषष्ट्यादिसंख्याःपुरुषास्तेअमृतत्वंमोक्षंप्राप्ताः ॥ १० ॥ ११ ॥ तस्ययुधाजितःशिनिरनमित्रश्च ॥ १२ ॥ तस्यसत्यकः ॥ १३ ॥ सत्यकस्यपुत्रोयुयुधानस्तस्यजयस्तस्यकुणिस्ततःकुणेर्युगंधरः अनमित्रस्यैवापरोवृष्णिर्नामपुत्रः ॥ १४ ॥ अक्रूरःप्रमुखो येषामित्यतद्गुणसंविज्ञानोबहुव्रीहिः ॥ १५ ॥ अतोऽक्रूरातिरिक्तान्द्वादशदर्शयति आसंगइति ॥ १६ ॥ १७ ॥ पृथुरेकः विदूरथाद्या

बभ्रुःश्रेष्ठोमनुष्याणांदेवैर्देवावृधःसमः ॥ पुरुषाःपंचषष्टिश्चषट्सहस्राणिचाष्टच ॥१०॥ येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ महाभोजोऽपिधर्मात्माभोजाआसंस्तदन्वये ॥११॥ वृष्णेःसुमित्रःपुत्रोऽभूद्युधाजिच्च परंतप॥शिनिस्तस्यानमित्रश्चनिम्नोऽभूदनमित्रतः॥१२॥सत्राजितःप्रसेनश्चनिम्नस्याप्यासतुःसुतौ॥अन मित्रसुतोयोऽन्यःशिनिस्तस्याथसत्यकः ॥१३॥ युयुधानःसात्यकिर्वैजयस्तस्यकुणिस्ततः॥युगंधरोऽनमि त्रस्यवृष्णिःपुत्रोऽपरस्ततः॥१४॥ श्वफल्कश्चित्ररथश्चगांदिन्यांचश्वफल्कतः॥अक्रूरप्रमुखाआसन्पुत्राद्वा दशविश्रुताः॥१५॥आसंगःसारमेयश्चमृदुरोमृदुविद्गिरिः ॥धर्मवृद्धःसुकर्माचक्षेत्रोपेक्षोऽरिमर्दनः॥ १६ ॥ शत्रुघ्नोगंधमादश्चप्रतिबाहुश्चद्वादश॥तेषांस्वसासुचीराख्याद्वावक्रूरसुतावपि ॥१७॥ देववानुपदेवश्चतथा चित्ररथात्मजाः॥पृथुर्विदूरथाद्याश्चबहवोवृष्णिनंदनाः ॥१८॥ कुकुरोभजमानश्चशुचिःकंबलबर्हिषः॥ कु कुरस्यसुतोवन्हिर्विलोमातनयस्ततः॥१९॥कपोतरोमातस्यानुःसखायस्यचतुंबुरुः॥अंधकोदुंदुभिस्तस्मा दरिद्योतःपुनर्वसुः॥२०॥ तस्याहुकश्चाहुकीचकन्याचैवाहुकात्मजौ॥देवकश्चोग्रसेनश्चचत्वारोदेवकात्मजाः ॥ २१ ॥ देववानुपदेवश्चसुदेवोदेववर्धनः ॥ तेषांस्वसारःसप्तासन्धृतदेवादयोनृप ॥ २२ ॥ ॥

अन्येचबहवः विपृथुधामाद्याइतिपाठेआद्यशब्देनविदूरथोऽप्युक्तः ततश्चशूरोविदूरथादासीदितिवक्ष्यमाणनिर्देशोपपत्तिः ॥ १८ ॥ कुकुरादयश्चत्वारोंऽधकस्यसुताइतिज्ञेयं तथाचपराशरः कुकुरोभजमानश्चशुचिःकंबलबर्हिषः तथाअंधकस्यपुत्राइति ॥ १९ ॥ अनोरं धकोंऽधकात्दुंदुभिरित्यपितद्वचनादेवज्ञेयं ॥ २० ॥ २१ ॥ धृतदेवाआदिर्यासांशांतिदेवादीनांषण्णां ॥ २२ ॥ ॥

ताः सप्त ॥ २३ ॥ औग्रसेनयउग्रसेनस्यसुताः ॥ २४ ॥ वसुदेवस्ययेअनुजादेवभागादयस्तेषांस्त्रियोभार्याः अंधकसुतानांचतुर्णांप्रथमस्यकुकुरस्यवंशउक्तः ॥ २५ ॥ द्वितीयस्यभजमानस्यवंशमाह शूरोविदूरथादिति भजमानाच्चविदूरथःपुत्रोऽभूद्विदूरथाच्चशूरइति पराशरादिवचनात् यद्वा पृथुर्विदूरथाद्याश्चेतिपूर्वोक्तचित्ररथात्मजाद्विदूरथात् ॥ २६ ॥ देवमीढस्ययःशूरोनामपुत्रस्तस्य देवमीढोत्हृदीकस्यैवसुतः यथाहपराशरः तस्यापिकृतवर्मशतधनुर्देवमीढुषाद्याःपुत्राबभूवुः देवमीढस्यशूरस्तस्यापिमारिषानामपत्न्यभवत् ॥ २७ ॥ तस्यांचासौदशपुत्रानजनयत् वसुदेवपूर्वानिति ॥ २८ ॥ आनकाश्चनेदुः ॥ २९ ॥ हरेःप्रादुर्भावस्यस्थानं ॥ ३० ॥ पृथायाःकन्यकाव

शांतिदेवोपदेवाचश्रीदेवादेवरक्षिता ॥ सहदेवादेवकीचवसुदेवउवाहताः ॥ २३ ॥ कंसःसुनामान्यग्रोधःकंकःशंकुःसुहूस्तथा ॥ राष्ट्रपालोऽथसृष्टिश्चतुष्टिमानौग्रसेनयः ॥ २४ ॥ कंसाकंसवतीकंकाशूरभूराष्ट्रपालिका ॥ उग्रसेनदुहितरोवसुदेवानुजस्त्रियः ॥ २५ ॥ शूरोविदूरथादासीद्भजमानःसुतस्ततः ॥ शिनिस्तस्मात्स्वयंभोजोहृदीकस्तत्सुतोमतः ॥ २६ ॥ देवबाहुःशतधनुःकृतवर्मेतितत्सुताः ॥ देवमीढस्यशूरस्यमारिषानामपत्न्यभूत् ॥ २७ ॥ तस्यांसजनयामासदशपुत्रानकल्मषान् ॥ वसुदेवंदेवभागंदेवश्रवसमानकं ॥ २८ ॥ सृंजयंश्यामकंकंकंशमीकंवत्सकंवृकं ॥ देवदुंदुभयोनेदुरानकायस्यजन्मनि ॥ २९ ॥ वसुदेवंहरेःस्थानंवदंत्यानकदुंदुभिं ॥ पृथाचश्रुतदेवाचश्रुतकीर्तिःश्रुतश्रवाः ॥ ३० ॥ राजाधिदेवीचैतेषांभगिन्यःपंचकन्यकाः ॥ कुंतेःसख्युःपिताशूरोत्ह्यपुत्रस्यपृथामदात् ॥ ३१ ॥ सापदुर्वाससोविद्यांदेवहूतींप्रतोषितात् ॥ तस्यावीर्यपरीक्षार्थमाजुहावरविंशुचिं ॥ ३२ ॥ तदैवोपागतंदेवंवीक्ष्यविस्मयमानसा ॥ प्रत्ययार्थंप्रयुक्तामेयाहिदेवक्षमस्वमे ॥ ३३ ॥ अमोघंदर्शनंदेविआधत्सेत्वयिचात्मजं ॥ योनिर्यथानदुष्येतकर्ताहंतेसुमध्यमे ॥ ३४ ॥

स्थायांकर्णोत्पत्तिप्रकारमाह कुंतेरितिपंचभिः ॥ ३१ ॥ कदाचिद्गृहमागतंदुर्वाससंपृथापरिचर्यादिनातोषयामास ततश्चसातस्माद्देवहूतींदेवाव्हानहेतुंविद्यामवाप तदाह सापेति ॥ ३२ ॥ देवमुपागतंवीक्ष्यसाप्राह प्रत्ययार्थंपरीक्षार्थंमयाविद्याप्रयुक्तानतुत्वयाकिंचित्कार्यमित्यभिसंधिनाअतोयाहीत्येवमुक्तोरविरुवाच ॥ ३३ ॥ अमोघंदेवदर्शनमिति कन्याहमितिचेत्तत्राह यथायोनिर्नदुष्येततथाऽहंकर्ताकरिष्यामि ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ आवंत्यौविंदानुविंदौ ॥ ३९ ॥ तदेवंवसुदेवस्यभगिनीनांपतीन्पुत्रांश्चोक्त्वातद्भ्रातॄणांनवानांपत्नीःपु

इतितस्यांसआधायगर्भंसूर्योदिवंगतः ॥ सद्यःकुमारःसंजज्ञेद्वितीयइवभास्करः ॥३५॥ तंसाऽत्यजन्नदीतोयेकृच्छ्राल्लोकस्यबिभ्यती ॥ प्रपितामहस्तामुवाहपांडुर्वैसत्यविक्रमः ॥३६ श्रुतदेवांतुकारूषोवृद्धशर्मासमग्रहीत् ॥ यस्यामभूद्दंतवक्त्रऋषिशप्तोदितेःसुतः ॥३७॥ कैकेयोधृष्टकेतुश्चश्रुतकीर्तिमविंदत ॥ संतर्दनादयस्तस्यांपंचासन्कैकयाःसुताः ॥३८॥ राजाधिदेव्यामावंत्यौजयसेनोऽजनिष्टह ॥ दमघोषश्चेदिराजःश्रुतश्रवसमग्रहीत् ॥३९ ॥ शिशुपालःसुतस्तस्याःकथितस्तस्यसंभवः॥देवभागस्यकंसायांचित्रकेतुबृहद्बलौ ॥४०॥ कंसावत्यांदेवश्रवसःसुवीरइषुमांस्तथा ॥ कंकायामानकाज्जातःसत्यजित्पुरुजित्तथा ॥ ४१ ॥ सृंजयोराष्ट्रपाल्यांचवृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौशूरभूम्यांचश्यामकः ॥४२॥ मिश्रकेश्यामप्सरसिवृकादीन्वत्सकस्तथा ॥ तक्षपुष्करशालादीन्दुर्वाक्ष्यांवृकआदधे ॥४३॥ सुमित्रार्जुनपालादीन्शमीकात्तुसुदामिनी ॥ कंकश्चकर्णिकायांवैऋतधामजयावपि ॥४४॥ पौरवीरोहिणीभद्रामदिरारोचनाइला ॥ देवकीप्रमुखाआसन्पत्न्यआनकदुंदुभेः ॥४५॥ बलंगदंसारणंचदुर्मदंविपुलंध्रुवं ॥ वसुदेवस्तुरोहिण्यांकृतादीनुदपादयत् ॥ ४६ ॥ सुभद्रोभद्रवाहश्चदुर्मदोभद्रएवच ॥ पौरव्यास्तनयाह्येतेभूताद्याद्वादशाभवन् ॥ ४७ ॥ नंदोपनंदकृतकशूराद्यामदिरात्मजाः ॥ कौशल्याकेशिनंत्वेकमसूतकुलनंदनं ॥ ४८ ॥ रोचनायामतोजाताहस्तहेमांगदादयः ॥ इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ॥ ४९ ॥ विपृष्ठोधृतदेवायामेकआनकदुंदुभेः ॥ शांतिदेवात्मजाराजन्श्रमप्रतिश्रुतादयः ॥ ५० ॥ ॥ ॥

त्रांश्चाहदेवभागस्येतिनवभिःश्लोकार्धैः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ वसुदेवस्यपत्नीःपुत्रांश्चाह पौरवीत्येकादशभिः ॥४५॥ ॥ ४६ ॥ ४७ ॥ कौशल्याभद्रा ॥ ४८ ॥ ४९ ॥ ५० ॥ ॥ ॥ ॥ ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ अष्टमस्तुस्वयमेवासीन्नतुकर्मादिनाहेतुनाताभ्यांजनितोवा यतोऽसौहरिः॥५५॥ तदेवोपपादयतियदेति त्रिभिः ॥ ५६ ॥ ईशस्यमायानियंतुः परस्यअसंगस्य द्रष्टुःसाक्षिणः आत्मनःसर्वगस्य नह्येवंभूतस्यमायाविनोदंविनाजन्मनः कर्मणोवा हेतुःसंभवतीत्यर्थः ॥५७॥ किंच यस्यमायाचेष्टितंपुंसोजीवस्यानुग्रहस्तस्यजीवानुग्राहकस्यकुतः कर्मादिपारतंत्र्येणजन्मादिसंभवःअनुग्रहमेवाह हियस्मात्तदेवस्थित्यादयेइष्यते प्रलयेलीनोपाधेर्जीवस्यधर्माद्यसंभवादुपाधिसृष्ट्यादिनाधर्मादिसंपादनेनानुग्रहः तथाआत्मला

राजानःकल्पवर्षाद्याउपदेवसुतादश ॥ वसुहंससुवंशाद्याःश्रीदेवायास्तुषट्सुताः ॥ ५१ ॥ देवरक्षितयालब्धानवचात्रगदादयः ॥ वसुदेवःसुतानष्टावादधेसहदेवया ॥५२॥ पुरुविश्रुतमुख्यांस्तुसाक्षाद्धर्मोवसूनिव ॥ वसुदेवस्तुदेवक्यामष्टपुत्रानजीजनत् ॥५३॥ कीर्तिमंतंसुषेणंचभद्रसेनमुदारधीः ॥ ऋजुंसंमर्दनंभद्रंसंकर्षणमहीश्वरं ॥ ५४ ॥ अष्टमस्तुतयोरासीत्स्वयमेवहरिःकिल ॥ सुभद्राचमहाभागातवराजन्पितामही ॥५५॥ यदायदेहधर्मस्यक्षयोवृद्धिश्चपाप्मनः ॥ तदातुभगवानीशआत्मानंसृजतेहरिः ॥५६॥ नह्यस्यजन्मनोहेतुःकर्मणोवामहीपते ॥ आत्ममायांविनेशस्यपरस्यद्रष्टुरात्मनः॥५७॥यन्मायाचेष्टितंपुंसःस्थित्युत्पत्त्यप्ययायहि ॥ अनुग्रहस्तन्निवृत्तेरात्मलाभायचेष्यते ॥५८॥ अक्षौहिणीनांपतिभिरसुरैर्नृपलांछनैः ॥ भुवआक्रम्यमाणायाअभारायकृतोद्यमः॥५९॥कर्माण्यपरिमेयाणिमनसाऽपिसुरेश्वरैः॥सहसंकर्षणश्चक्रे भगवान्मधुसूदनः ॥६०॥ कलौजनिष्यमाणानांदुःखशोकतमोनुदं ॥ अनुग्रहायभक्तानांसुपुण्यंव्यतनोद्यशः ॥६१॥ यस्मिन्सत्कर्णपीयूषेयशस्तीर्थवरेसकृत् ॥ श्रोत्रांजलिरुपस्पृश्यधुनुतेकर्मवासनां ॥६२॥

भायमोक्षायचेष्यते तत्रहेतुःतेनैवश्रूयमाणेनतस्यस्थित्यादेर्निवृत्तेः॥५८॥ तस्यचेष्टितंभूमेरनुग्रहइत्याह अक्षौहिणीनामितिद्वाभ्यांअभारायभारपरिहाराय॥५९॥सुरेश्वरैरपिमनसाअपरिमेयाणिअवितर्क्याणिसंकर्षणसहितश्चक्रे ॥६०॥ संकल्पमात्रेणभूभारहरणसमर्थस्यापिकर्मकरणं यशोविस्तारद्वाराभक्तानुग्रहार्थमित्याह कलाविति द्वाभ्यां दुःखशोकतमांसिनुदतीतितथातद्यशोव्यतनोत् ॥ ६१ ॥ यस्मिन्सतांकर्णपीयूषेयशोरूपेतीर्थवरेश्रोत्रमेवांजलिःपानसाधनंयस्यसपुरुषःसकृदपिउपस्पृश्यआचमनमात्रंकृत्वातत्सौंदर्याकृष्टचित्तःकर्मवासनांधुनुते॥ ६२ ॥

तदेवाहद्वाभ्यां भोजादिभिःश्लाघनीयमीहितंयस्य सर्वैरंगैरम्ययामूर्त्याच ॥ ६३ ॥ ६४ ॥ तत्प्रदर्शनार्थंमुखशोभामाह ॥ यस्याननंदृ
शिभिर्नेत्रैःपिबंत्योनार्योनराश्चनततृपुर्नतृप्ताः निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेःकुपिताश्चबभूवुः कथंभूतमाननं मक
रकुंडलाभ्यांचारूकर्णौभ्राजंतौकपोलौचतैःसुभगं सुविलासोहासोयस्मिन् नित्यमुत्सवोयस्मिन् ॥ ६५ ॥ श्रीकृष्णस्यचरितंसमासतोव
र्णयति जातइतिद्वाभ्यां जातोनिजेनरूपेणपश्चात्पुरुषोमनुष्याकारःसन्व्रजंगतः व्रजवासिनामेधिताअर्थायेन तेषुदारेषुसुतानांशतान्यु

भोजवृष्ण्यंधकमधुशूरसेनदशार्हकैः ॥ श्लाघनीयेहितःशश्वत्कुरुसृंजयपांडुभिः ॥ ६३ ॥ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकंरमयामाससमूर्त्यासर्वांगरम्यया ॥ ६४ ॥ यस्याननंमकरकुंडलचारुकर्णभ्राजत्कपोलसुभगंसुविलासहासं ॥ नित्योत्सवंनततृपुर्दृशिभिःपिबंत्योनार्योनराश्चमुदिताःकुपितानिमेश्च ॥ ६५ ॥ जातोगतःपितृगृहाद्व्रजमेधितार्थोहत्वारिपून्सुतशतानिकृतोरुदारः ॥ उत्पाद्यतेषुपुरुषःक्रतुभिःसमीजेआत्मानमात्मनिगमंप्रथयन्जनेषु ॥ ६६ ॥ पृथ्व्याःसवैगुरुभरंक्षपयन्कुरूणामंतःसमुत्थकलिनायुधिभूपचम्वः ॥ दृष्ट्याविधूयविजयेजयमुद्विघोष्यप्रोच्योद्धवायचपरंसमगात्स्वधाम ॥ ६७ ॥ इतिश्रीभागवते महापुराणेपारमहंस्यांसंहितायामष्टादशसाहस्र्यांनवमस्कंधेश्रीसूर्यसोमवंशानुकीर्तनेयदुवंशानुकीर्तनंनामचतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तश्चायंनवमःस्कंधः ॥ ॥ ॥ ॥

त्पाद्य आत्मनिगमंस्वकीयंवेदमार्गं ॥ ६६ ॥ अंतःसमुत्थेनकलिनानिमित्तेनगुरुभारंक्षपयन्दृष्ट्यैवभूपचमूर्विधूयविजयेजयमर्जुनेनाजि
तमित्येवमुद्घोषंकृत्वापरंतत्त्वमुद्धवायोपदिश्यस्वधामसम्यक्स्वेनैवरूपेणजगामेति ॥ ६७ ॥ इतिश्रीधरस्वामिविरचितायांश्रीभागवत
भावार्थदीपिकायांनवमस्कंधेटीकायांचतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तश्चायंनवमःस्कंधः ॥ ॥ ॥

श्रीगणेशायनमः ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितं॥श्रीकृष्णाख्यंपरंधामजगद्धामनमामतत् ॥१॥ दशमेदशमंलक्ष्यमाश्रिताश्रयविग्रहं ॥ क्रीडद्यदुकुलांभोधौपरानंदमुदीर्यते ॥ २ ॥ दशमेकृष्णसत्कीर्तिवितानायानुवर्ण्यते ॥ धर्मग्लानिनिमित्तस्तुनिरोधोदुष्टभूभुजाम् ॥ ३ ॥ प्राकृतादिश्चतुर्धायोनिरोधःसतुवर्णितः ॥ तत्तत्प्रसंगतःसृष्टिसंहारादिनिरूपणैः ॥ ४ ॥ कृतानवतिरध्ययादशमेकृष्णकीर्त्तये ॥ आदौचतुर्भिरध्यायैर्ब्रह्मप्रार्थनयावनेः ॥ भारंहर्त्तुंहरेर्जन्मसप्रसंगंनिरूप्यते ॥ ५ ॥ गोकुलेमथुरायांचद्वारवत्यांततःक्रमात्॥ कृष्णलीलात्रिधाप्रोक्तातत्तद्भेदैस्त्वनेकधा ॥ ६ ॥ सपंचत्रिंशताध्यायैर्बृहद्वृंदावनादिषु ॥ गोकुलेवसतोलीलावर्ण्यतेसुरदुष्करा ॥ ७ ॥ एकेनयमुनावारिण्यंक्रूरेणकृतास्तुतिः ॥ एकादशभिराख्यातालीलामधुवनेकृता ॥ ८ ॥ शेषैर्द्वारवतीलीलातन्निर्माणादिवर्ण्यते ॥ एवंनवतिरध्यायादशमेविशदार्थकाः ॥ ९ ॥ तत्रतुप्रथमेकंसःस्वमृत्युंदेवकीसुतात् ॥ श्रुत्वाभीतोऽवधीत्तस्याः षड्गर्भानितिवर्ण्यते ॥ १० ॥ कृष्णावतारचरितश्र

नमोभगवतेवासुदेवाय राजोवाच कथितोवंशविस्तारोभवतासोमसूर्ययोः ॥ राज्ञांचोभयवंश्यानांचरितंपरमाद्भुतं ॥ १ ॥ यदोश्चधर्मशीलस्यनितरांमुनिसत्तम ॥ तत्रांशेनावतीर्णस्यविष्णोर्वीर्याणिशंसनः ॥ २ ॥ अवतीर्ययदोर्वंशेभगवान्भूतभावनः॥ कृतवान्यानिविश्वात्मातानिनोवदविस्तरात् ॥ ३ ॥ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् ॥ कउत्तमश्लोकगुणानुवादात्पुमान्विरज्येतविनापशुघ्नात् ॥ ४ ॥ पितामहामेसमरेऽमरंजयैर्देवव्रताद्यातिरथैस्तिमिंगिलैः ॥ दुरत्ययंकौरवसैन्यसागरंकृत्वातरन्वत्सपदंस्मयत्प्लवाः ॥ ५ ॥ ॥ ॥ ॥ ॥

वणामृतनिर्वृतः ॥ उक्तानुवादेनौत्सुक्याद्राजापृच्छतितत्पुनः ॥ ११ ॥ कथितोवंशविस्तारइति ॥१॥ अंशेनेतिप्रतीत्यभिप्रायेणोक्तं ॥ २ ॥ ननूक्तानिजातोगतःपितृगृहाद्व्रजमेधितार्थइत्यादिना सत्यं पुनर्विस्तरेणवदेत्याह अवतीर्येति ॥ ३ ॥ अत्रलोकेत्रिविधाजनामुक्तामुमुक्षवोविषयिणश्चतेषांमध्येअत्रनकस्याप्यलंप्रत्ययइत्याह निवृत्ततर्षैरिति गततृष्णैर्मुक्तैरित्यर्थः मुमुक्षूणामयमेवोपायइत्याह भवौषधादिति विषयिणांपरमोविषयोऽयमेवेत्याह श्रोत्रमनोभिरामादिति अपगताशुक्यस्मात्तमात्मानंहंतीत्यपशुघ्नस्तस्मात् पशुघातिनइतिवा ॥ ४ ॥ किंचास्मत्कुलदैवतंकृष्णोऽतस्तत्कथैवनित्यंश्रोतव्येत्याशयेनाह पितामहाइति अमरान्जयंतियैस्तैर्देवव्रतोभीष्मस्तदाद्यैरतिरथैस्तिमिंगिलतुल्यैर्दुरत्ययंवत्सपदमिवात्यल्पंकृत्वातुच्छीकृत्यातरन्नस्म यःश्रीकृष्णएवप्लवोयषांते तस्यवीर्याणिवदस्वेतितृतीयश्लोकगतेनान्वयः॥ ५ ॥

नकेवलंपांडवानेवारक्षत्‌इदंममशरीरमपियोरक्षितवानित्याह द्रौण्यस्त्रविप्लुष्टमिति द्रौणेरश्वत्थाम्नाब्रह्मास्त्रेणदग्धमिदंमच्छरीरंचकुरूणां
पांडवानांचसंतानस्यानिदानंममभातुःकुक्षौप्रविष्टोधृतचक्रोयोजुगोपेति ॥ ६ ॥ अखिलदेहभाजांसर्वप्राणिनामंतश्चबहिश्चपुरुषरूपेण
कालरूपैश्च अंशाभिप्रायेणबहुवचनं मृत्युंसंसारंउतअपिअमृतमपिप्रयच्छतोवीर्याणिवदस्वब्रूहि अयंभावःअंतर्यामिरूपेणांतर्दृष्टीनांमुक्तिं
बहिर्दृष्टीनांचकालरूपेणमृत्युंददातियतःअतोंतर्दृष्टचातद्वीर्याण्येवश्रोतव्यानीति ॥ ७ ॥ ननुबलंगदंसारणंचदुर्मदंविपुलंध्रुवं ॥ वसुदेव
स्तुरोहिण्यांकृतादीनुदपादयदितिरोहिण्यास्तनयोरामःप्रोक्तः वसुदेवस्तुदेवक्यामष्टपुत्रानजीजनत् ॥ कीर्तिमंतंसुषेणंचभद्रसेनमुदारधीः

द्रौण्यस्त्रविप्लुष्टमिदंमदंगंसंतानबीजंकुरुपांडवानां ॥ जुगोपकुक्षिंगतआत्तचक्रोमातुश्चमेयःशरणंगतायाः
॥ ६ ॥ वीर्याणितस्याखिलदेहभाजामंतर्बहिःपूरुषकालरूपैः ॥ प्रयच्छतोमृत्युमुतामृतंचमायामनुष्यस्य
वदस्वविद्वन् ॥ ७ ॥ रोहिण्यास्तनयःप्रोक्तोरामःसंकर्षणस्त्वया ॥ देवक्यागर्भसंबंधःकुतोदेहांतरंविना
॥ ८ ॥ कस्मान्मुकुंदोभगवान्पितुर्गेहाद्व्रजंगतः ॥ क्ववासंज्ञातिभिःसार्द्धंकृतवान्सात्वतांपतिः ॥ ९ ॥ व्र
जेवसन्किमकरोत्मधुपुर्यांचकेशवः ॥ भ्रातरंचावधीत्कंसंमातुरद्धाऽतदर्हणम् ॥ १० ॥ देहंमानुषमाश्रि
त्यकतिवर्षाणिवृष्णिभिः ॥ यदुपुर्यांसहावात्सीत्पत्न्यःकत्यभवन्प्रभो ॥ ११ ॥ एतदन्यच्चसर्वंमेमुनेकृ
ष्णविचेष्टितम् ॥ वक्तुमर्हसिसर्वज्ञश्रद्दधानायविस्तृतम् ॥ १२ ॥ नैषातिदुःसहाक्षुन्मांत्यक्तोदमपिबाधते
॥ पिबंतंत्वन्मुखांभोजच्युतंहरिकथामृतं ॥ १३ ॥ सूतउवाच एतंनिशम्यभृगुनंदनसाधुवादंवैयासकिः
सभगवानथविष्णुरातं ॥ प्रत्यर्च्यकृष्णचरितंकलिकल्मषघ्नंव्याहर्तुमारभतभागवतप्रधानः ॥ १४ ॥

मृदुंसंतर्दनंभद्रंसंकर्षणमहीश्वरम् ॥ अष्टमस्तुतयोरासीत्स्वयमेवहरिःकिलेतिपुनर्देवक्यागर्भसंबंधस्तस्यैवोक्तःसकुतोघटतइत्याक्षेपः ॥ ८ ॥
कस्मादिति भगवतःकंसभयशंकायाअसंभवादित्यर्थः ॥ ९ ॥ मातुर्भ्रातरंकंसंतस्माद्धधानर्हमद्धासाक्षात्कस्मादवधीत् ॥ १० ॥ ॥ ११ ॥
॥ १२ ॥ ननुक्षुत्तृड्भ्यांपीडितस्यतवकुतःश्रवणावकाशस्तत्राह नैषेति त्यक्तोदकस्यापिममजीवनंहरिकथामृतपाननिमित्तम्तदुपरमेसद्य
एवजीविर्तनस्यादित्यर्थः ॥ १३ ॥ एतंसाधुवादंसमीचीनंप्रश्नम् भागवतप्रधानोभागवतेषुश्रेष्ठः ॥ १४ ॥ ॥

व्यवसिताकृतनिश्चया यत्यतोबुद्धेः ॥ १५ ॥ १६ ॥ तत्रतावत्प्रथमंभगवदवतारकारणमाह भूमिरित्यादिनवभिःश्लोकैःदृप्तनृपव्याजायेदै त्यास्तेषामनीकशतानामयुतैर्योभूरिभारस्तेनाक्रांता ॥ १७ ॥ विभोरंतिकेउपस्थितासती ॥ १८ ॥ १९ ॥ २० ॥ पौरुषींपुरुषस्यभगवत इयंपौरुषीतांगांवाचंमेमत्तःआशुशृणुत माचिरमविलंबितंतथैवविधीयतांचेति ॥ २१ ॥ विज्ञापनात्पुरैवपुंसाईश्वरेणज्वरस्तापःअवधृतोऽ

श्रीशुकउवाच सम्यग्व्यवसिताबुद्धिस्तवराजर्षिसत्तम ॥ वासुदेवकथायांतेयज्जातानैष्ठिकीमतिः ॥ १५ ॥ वासुदेवकथाप्रश्नःपुरुषांस्त्रींन्पुनातिहि ॥ वक्तारंप्रच्छकंश्रोतॄंस्तत्पादसलिलंयथा ॥ १६ ॥ भूमिर्दृप्त नृपव्याजदैत्यानीकशतायुतैः ॥ आक्रांताभूरिभारेणब्रह्माणंशरणंययौ ॥ १७ ॥ गौर्भूत्वाऽश्रुमुखीखिन्ना क्रंदंतीकरुणंविभोः ॥ उपस्थितांऽतिकेतस्मैव्यसनंस्वमवोचत ॥ १८ ॥ ब्रह्मातदुपधार्याथसहदेवैस्तया सह ॥ जगामसत्रिनयनस्तीरंक्षीरपयोनिधेः ॥ १९ ॥ तत्रगत्वाजगन्नाथंदेवदेवंवृषाकपिं ॥ पूरुषंपुरुषसू क्तेनउपतस्थेसमाहितः ॥ २० ॥ गिरंसमाधौगगनेसमीरितांनिशम्यवेधास्त्रिदशानुवाचह ॥ गांपौरुषीं मेशृणुतामराःपुनर्विधीयतामाशुतथैवमाचिरं ॥ २१ ॥ पुरैवपुंसाऽवधृतोधराज्वरोभवद्भिरंशैर्यदुषूपजन्य तां ॥ सयावदुर्व्याभरमीश्वरेश्वरःस्वकालशक्त्याक्षपयंश्चरेद्भुवि ॥ २२ ॥ वसुदेवगृहेसाक्षाद्भगवान्पुरुषः परः ॥ जनिष्यतेतत्प्रियार्थंसंभवंतुसुरस्त्रियः ॥ २३ ॥ वासुदेवकलानंतःसहस्रवदनःस्वराट् ॥ अग्रतोभवि तादेवोहरेःप्रियचिकीर्षया ॥ २४ ॥ विष्णोर्मायाभगवतीययासंमोहितंजगत् ॥ आदिष्टाप्रभुणांशेनकार्या र्थेसंभविष्यति ॥ २५ ॥ श्रीशुकउवाच इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः ॥ आश्वास्यचमहीं गीर्भिःस्वधामपरमंययौ ॥ २६ ॥ शूरसेनोयदुपतिर्मथुरामावसन्पुरीं ॥ माथुराञ्छूरसेनांश्चविषयान्बुभु जेपुरा ॥ २७ ॥ राजधानीततःसाभूत्सर्वयादवभूभुजां ॥ मथुराभगवान्यत्रनित्यंसन्निहितोहरिः ॥ २८ ॥

वधारितः ॥ २२ ॥ २३ ॥ २४ ॥ देवकीगर्भसंकर्षणयशोदामोहनादिकार्यार्थेयशोदायांसंभाविष्यति ॥ २५ ॥ २६ ॥ भोजेंद्रबंधनागारेअ वतारायप्रस्तावकथामाह शूरसेनइत्यादिनायावदध्यायसमाप्ति मथुरामावसन्मथुरायांवसन् विषयान्देशान् ॥ २७ ॥ २८ ॥

सूर्यंयानवोढया प्रयाणेप्रयाणार्थं ॥ २९ ॥ रश्मीन्प्रग्रहान् ॥ ३० ॥ पारिबर्हमुपस्करम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ आभाष्यरेरेकंसेतिसंबो
ध्य हंताहनिष्यति ॥ ३४ ॥ कुलपांसनःकुलदूषणः आरब्धउद्युक्तः कचेकेशबंधे ॥ ३५ ॥ नृशंसंक्रूरं महाभागइति अयंभावः स्वजन्म
निहर्षेणदेवैरानकदुंदुभिघोषणाद्भाविभगवदवतारेणशक्यप्रतीकारतासंभवतीति सांत्वयन्स्तुत्याऽरूपाविषयत्वेनोपपत्तिभिश्चसाममार्गेणसं
बोधयन् किंचसामभेदाभ्यांसंबोधयन् तत्रसामपंचविधं भेदोद्विविधः तदुक्तंसंबंधलाभोपकृतिर्ह्यभेदोगुणकीर्तनं ॥ सामपंचविधंभेदोदृष्टा
दृष्टभयंवचः ॥ तत्रश्लाघनीयगुणइतिगुणकीर्तनं भगिनीमितिसंबंधकथनं पुत्रिकोपमेत्यभेदंवक्ष्यति हन्यादितिस्त्रीवधानिवृत्यायशोलाभं

तस्यांतुकर्हिचिच्छौरिर्वसुदेवःकृतोद्वहः ॥ देवक्यासूर्यंयासार्द्धंप्रयाणेरथमारुहत् ॥ २९ ॥ उग्रसेनसुतःकंसःस्व
सुःप्रियचिकीर्षया ॥ रश्मीन्हयानांजग्राहरौक्मैरथशतैर्वृतः ॥ ३० ॥ चतुःशतंपारिबर्हंगजानांहेममालिनां ॥
अश्वानामयुतंसार्द्धंरथानांचत्रिषट्शतं ॥ ३१ ॥ दासीनांसुकुमारीणांद्वेशतेसमलंकृते ॥ दुहित्रेदेवकःप्रादाद्या
नेदुहितृवत्सलः ॥ ३२ ॥ शंखतूर्यमृदंगाश्चनेदुर्दुंदुभयःसमं ॥ प्रयाणप्रक्रमेतावद्वरवध्वोःसुमंगलं ॥ ३३ ॥ पथि
प्रग्रहिणंकंसमाभाष्याहाशरीरवाक् ॥ अस्यास्त्वामष्टमोगर्भोहंतायांवहसेऽबुध ॥ ३४ ॥ इत्युक्तःसखलःपापो
भोजानांकुलपांसनः ॥ भगिनींहंतुमारब्धःखड्गपाणिःकचेऽग्रहीत् ॥ ३५ ॥ तंजुगुप्सितकर्माणंनृशंसंनिरप
त्रपं ॥ वसुदेवोमहाभागउवाचपरिसांत्वयन् ॥ ३६ ॥ वसुदेवउवाच श्लाघनीयगुणःशूरैर्भवान्भोजयशस्क
रः ॥ सकथंभगिनींहन्यात्स्त्रियमुद्वाहपर्वणि ॥ ३७ ॥ मृत्युर्जन्मवतांवीरदेहेनसहजायते ॥ अद्यवाब्दशतांतेवा
मृत्युर्वैप्राणिनांध्रुवः ॥ ३८ ॥ देहेपंचत्वमापन्नेदेहीकर्मानुगोऽवशः ॥ देहांतरमनुप्राप्यप्राक्तनंत्यजतेवपुः ॥ ३९ ॥

दर्शयति उद्वाहपर्वणीतिसंतानवृद्ध्योपकारंदर्शयति ॥ ३६ ॥ ३७ ॥ मरणभयेनहन्मीतिचेत्तथापिमरणस्यापरिहरणीयत्वाद्देहांतरस्यावश्यं
भावित्वात्तत्रापिचभोगप्रेमास्पदत्वादीनामविशेषात्तद्भयेनपापाचरणमयुक्तमित्यभिप्रेत्याह मृत्युर्जन्मवतामित्यादि देहेनसहेतिविधात्राल
लाटेलिखितत्वादिति तथाऽपिकालविलंबार्थंहन्मीतिचेत्तत्राह अद्यवेति अवश्यंभाविनिमरणेविलंबमात्रायनपापाचरणंयुक्तमितिभावः ॥
॥ ३८ ॥ किंचअस्मिन्देहेगतेयदिदेहांतरंनस्यात्तदायुज्येतपापेनापितत्पालनं नतुतदस्तीत्याह देहेपंचत्वमापन्नइति आपन्नेआपन्नप्राये
कर्मवशादयत्नतएवप्रथमंदेहांतरंप्राप्यपश्चात्पूर्वंवपुस्त्यजति ॥ ३९ ॥ ॥ ॥ ॥

अत्रदृष्टांतः व्रजन्निति एकेनाग्रतोनिहितेनपदातिष्ठन्भुवमवष्टभ्यदेहंबिभ्रत्पश्चादन्येनपूर्वप्रदेशादुत्थाप्यपुरोनिहितेनगच्छतितद्वत् अत्रच स्वीकारपरित्यागौनात्यंतभिन्नविषयाविितिस्पष्टंदृष्टांतांतरमाह यथातृणजलौकेति साहियथातृणांतरमवष्टभ्यपूर्वंतृणंत्यजति एवंकर्मपथेवर्त्तमानोन्योजीवोपि॥४०॥देहविषयावेवस्वीकारपरित्यागौदर्शयितुंदृष्टांतांतरमाह स्वप्नइति दृष्टंराजादिदर्शनं श्रुतामिंद्रादिश्रवणं ताभ्यामाहित संस्कारेणमनसातदेवानुचिंतयन्ईदृशंजाग्रद्दृष्टश्रुतसदृशंदेहंराजादिरूपंकिमपिअनिरुक्तंपश्यति यःक्षणांतरेचतदेवाहमितिप्रपद्यतेमन्यते तत्श्चजाग्रद्देहादपगतस्मृतिर्भवतिपुरुषोयथेति जाग्रत्येवदर्शयितुंदृष्टांतांतरमाह मनोरथेनेति अत्रापिदृष्टश्रुताभ्यामित्यादिसर्वंयोज्यं तथाच वक्ष्यति जंतोर्वैकस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ॥ जन्मत्वात्मतयापुंसःसर्वभावेनभूरिद ॥ विषयस्वीकृतिंप्राहुर्यथास्वप्नमनोरथः ॥ स्वप्नंमनोरथंचेत्थंप्राक्तनंनस्मरत्यसावित्यादि तद्वदत्रापिकर्मवशाद्देहांतरंप्राप्यप्राक्तनंत्यजतीति ॥ ४१ ॥ ननुविचित्रदेहहेतूनांकर्मणांकृतत्वाद्देह

**व्रजंस्तिष्ठन्पदैकेनयथैवैकेनगच्छति ॥ यथातृणजलौकैवंदेहीकर्मगतिंगतः ॥४०॥ स्वप्नेयथापश्यतिदेहमीदृशंमनोरथेनाभिनिविष्टचेतनः॥दृष्टश्रुताभ्यांमनसानुचिंतयन्प्रपद्यतेतत्किमपिह्यपस्मृतिः॥४१॥ यतोयतोधावतिदैवचोदितंमनोविकारात्मकमापपंचसु ॥ गुणेषुमायारचितेषुदेह्यसौप्रपद्यमानःसहतेनजायते॥ ॥४२॥ ज्योतिर्यथैवोदकपार्थिवेष्वदःसमीरवेगानुगतंविभाव्यते ॥ एवंस्वमायारचितेष्वसौपुमान्गुणेषुरागानुगतोविमुह्यति ॥ ४३ ॥ ॥ ॥ ॥**

विशेषप्राप्तौकिंकारणमतआहयतोयतइति देहस्यपंचत्वसमयेपंचसुगुणेषुभूतेषुमायारचितेषुमाययानानादेहरूपेणरचितेषुदैवेनफलाभिमुखेन कर्मणाचोदितंनानाबिकारात्मकंमनोयंयंदेहंदेवतिर्यगादिरूपंप्रतिधावतिधावच्चसद्यंयमापअभिनिवेशेनप्राप्तंतत्रतत्रासौदेहीजायते ननुमनसः कर्तृत्वात्तदेवजायतांनत्वकर्त्तात्मेत्यतआह प्रपद्यमानइति तदेवाहमितिमन्यमानस्तेनसहजायतइति ॥ ४२ ॥ ननुसत्यंभविष्यत्येवकिमपिदेहमात्रंतथाप्यस्यातिप्रियस्यराजदेहस्यरक्षणायाकृत्यमपिक्रियतइतिचेत्तत्राह ज्योतिरिति अदश्चंद्रादिज्योतिःउदकयुक्तेषुपार्थिवेषुघटादिषु यद्वाउदकेषुपार्थिवेषुतैलघृतादिषुचप्रतिबिंबेनस्थितंसमीरस्यवायोर्वेगमनुगतंकंपादियुक्तंप्रतीयतेयथाएवंस्वाविद्यारचितेषुगुणेषुदेहेषुअसौरागेणानुगतःप्रविष्टोमुह्यतिअभिनिवेशंप्राप्नोति अयंभावः आत्मनस्तावद्देहाद्यध्यासाज्जन्मोक्तंसहतेनजायतइति ततश्चान्योन्यधर्माध्यासाद्यथादेहादिधर्माःकार्श्यादयआत्मनिप्रतीयंतेएवमात्मधर्माःप्रेमास्पदत्वादयोपिदेहादिष्वितिराजसूकरदेहयोर्विशेषाभावाद्व्यर्थोमृत्युप्रतीकारइति४३

एवमुक्तंसामोपायमुपसंहरन्भेदमाह तस्मादिति परतइति अभिद्रुह्यमाणात्तत्संबंधिनश्चयमादपिइहामुत्रचभयमितिभेदोदर्शितः ॥ ४४ ॥
पुनःसामैवाह एषेति पुत्तिकोपमादारुमयीवअचेतनप्राया ॥ ४५ ॥ बोध्यमानःउपदिश्यमानः स्वयंदारुणःपुनःपुरुषादान्दैत्याननुव्रतोऽनु
सृतइति ॥ ४६ ॥ आनकदुंदुभिरितिपदंमहाभागइत्यत्रोक्ताभिप्रायं प्रतिव्योढुंप्रतिकर्तुंवंचयितुमित्यर्थः इदंवक्ष्यमाणमपत्यार्पणंअन्व
पद्यतज्ञातवान् ॥ ४७ ॥ ननुखलोऽयमेतन्नमन्येतइत्याशंक्यस्वयमेवविचारयति मृत्युरिति ॥ ४८ ॥ तस्मादुपेक्षादोषपरिहारायैवंकरि
ष्यामीत्याह प्रादायेति मृत्यवेकंसाय नान्विदमापिनैवन्याय्यमित्याशंक्याह सुताइति अस्यांयदिमेसुताजायेरंस्तदायद्भावितद्भवतुजीवितंतुता
वद्भवेदेव तदंतरायद्ययमेवम्रियेततदानकिंचिदन्याय्यं ॥ ४९ ॥ यदिचसुताभविष्यंतिनचायंम्रियेततदामत्पुत्रादेवास्यमरणमितिविपर्ययोवा

तस्मान्नकस्यचिद्रोहमाचरेत्सतथाविधः ॥ आत्मनःक्षेममन्विच्छन्द्रोग्धुर्वैपरतोभयं ॥४४॥ एषातवानुजा
बालाकृपणापुत्तिकोपमा ॥ हंतुंनार्हसिकल्याणीमिमांत्वंदीनवत्सलः ॥ ४५ ॥ श्रीशुकउवाच एवंससामभि
र्भेदैर्बोध्यमानोपिदारुणः ॥ नन्यवर्त्ततकौरव्यपुरुषादाननुव्रतः ॥ ४६ ॥ निर्बंधंतस्यतंज्ञात्वाविचिंत्यानकदुं
दुभिः ॥ प्राप्तंकालंप्रतिव्योढुमिदंतत्रान्वपद्यत ॥ ४७ ॥ मृत्युर्बुद्धिमतापोह्योयावद्बुद्धिबलोदयं ॥ यद्यसौनिव
र्त्ततनापराधोऽस्तिदेहिनः ॥ ४८ ॥ प्रादायमृत्यवेपुत्रान्मोचयेकृपणामिमां ॥ सुतामेयदिजायेरन्मृत्युर्वानाम्रिये
तचेत् ॥ ४९ ॥ विपर्ययोवाकिंनस्याद्गतिर्धातुर्दुरत्यया ॥ उपस्थितोनिवर्तेतनिवृत्तःपुनरापतेत् ॥ ५० ॥ अग्नेर्यथा
दारुवियोगयोगयोरदृष्टतोऽन्यन्ननिमित्तमस्ति ॥ एवंहिजंतोरपिदुर्विभाव्यःशरीरसंयोगवियोगहेतुः ॥ ५१

किंनस्यात् ननुप्रौढस्यकंसस्यतवबालकात्कथंमृत्युःस्यात्तत्राह गतिरिति धातुःअस्यास्त्वामष्टमोगर्भोहंतेत्युक्तवतः अतइदानीमपत्यार्पण
प्रतिज्ञैवमंत्रः तथासतिउपस्थितोमृत्युरयंतावन्निवर्तेत निवृत्तःपुनःकालांतरेआपतेच्चेत्तदानापराधोममेत्यर्थः अथवाऽस्यमत्पुत्रादुपस्थितो
मृत्युरस्यावधार्योनिवर्त्तेतसपुनरनेनसन्मंत्रेणभवेदेवेति यद्वागतिर्धातुर्दुरत्ययाइत्येतस्यप्रपंचः उपस्थितइति ॥ ५० ॥ प्राणिनामदृष्टंचदुर्वि
तर्क्यमितिसदृष्टांतमाह अग्नेरिति वनेवृक्षान्प्रदहन्नग्निःसन्निहितानपिवृक्षान्परित्यज्यकदाचिद्दूरस्थानपिदहतिग्रामेगृहान्वा नह्यस्यप्राण्यदृ
ष्टव्यतिरेकेणकिंचिन्नियामकमस्तियथाएवंजंतोर्जन्ममरणयोरपिहेतुर्दुर्विभाव्यःअचिंत्यः ॥ ५१ ॥ ॥ ॥ ॥

यावदात्मनिदर्शनंस्वप्रज्ञावाधिविचार्य ॥ ५२ ॥ तस्यविश्वासायविकसितमुखांभोजोविहसन्नब्रवीत् ॥ ५३ ॥ यद्यथाअशरीरिणीवागाहतथाहि निश्चितं अस्याःसकाशात्तेभयंनास्ति यतःयेभ्यःपुत्रेभ्यस्तेभयंउत्थितं अष्टमोहंत्वाइत्युक्तेऽन्योन्यापेक्षयासर्वेप्यष्टमाभवेयुरित्युद्भूतंतानस्याःपुत्रान्समर्पयिष्ये ॥५४॥ निववृतेनिवृत्तःतद्वाक्येसारउपपात्तिस्तद्वित् ॥५५॥ प्रसूतिकालेप्राप्तेसर्वःसर्वात्माभगवानेवदेवतायस्याःसातथा सर्वदेवतामयीतिवा भगवदाश्रयत्वात् ॥ ५६ ॥ ५७ ॥ मृत्यवेपुत्रंकथमर्पितवानित्यपेक्षायामाह किंदुःसहमिति साधूनांसत्यसंधानाम् पुत्रलालन

एवंविमृश्यतंपापंयावदात्मनिदर्शनं ॥ पूजयामासवैशौरिर्बहुमानपुरःसरं ॥५२॥ प्रसार्यवदनांभोजंनृशंसंनिरपत्रपं॥मनसादूयमानेनविहसन्निदमब्रवीत्॥५३॥वसुदेवउवाच नह्यस्यास्तेभयंसौम्ययद्वैसाहाशरीरवाक्॥पुत्रान्समर्पयिष्येऽस्यायतस्तेभयमुत्थितं॥५४॥ श्रीशुकउवाच स्वसुर्वधान्निववृतेकंसस्तद्वाक्यसारवित्॥वसुदेवोपितंप्रीतःप्रशस्यप्राविशद्गृहं॥५५॥ अथकालउपावृत्तेदेवकीसर्वदेवता॥पुत्रान्प्रसुषुवेचाष्टौकन्यांचैवानुवत्सरं ॥५६॥ कीर्तिमंतंप्रथमजंकंसायानकदुंदुभिः॥ अर्पयामासकृच्छ्रेणसोऽनृतादतिविह्वलः ॥५७॥ किंदुःसहंनुसाधूनांविदुषांकिमपेक्षितं ॥ किमकार्यंकदर्याणांदुस्त्यजंकिंधृतात्मनां ॥५८॥ दृष्ट्वासमत्वंतच्छौरेःसत्येचैवव्यवस्थितिं ॥ कंसस्तुष्टमनाराजन्प्रहसन्निदमब्रवीत् ॥५९॥ प्रतियातुकुमारोयंनह्यस्मादस्तिमेभयं॥अष्टमाद्युवयोर्गर्भान्मृत्युर्मेविहितःकिल॥६०॥तथेतिसुतमादाययया वाऽनकदुंदुभिः॥नाभ्यनंदततद्वाक्यमसतोऽविजितात्मनः ॥६१॥ नंदाद्यायेव्रजेगोपायाश्चामीषांचयोषितः॥वृष्णयोवसुदेवाद्यादेवक्याद्यायदुस्त्रियः॥६२॥सर्वेवैदेवताप्रायाउभयोरपिभारत॥ज्ञातयोबंधुसुहृदोयेचकंसमनुव्रताः॥६३॥

सुखापेक्षाकथंत्यक्तेत्यतआह विदुषामिति भगवानेवतत्वंनान्यदितिजानतामित्यर्थः ननुस्वयंनीतेसातिकंसोबालंनहन्यादितिमत्वानीतवानितिकिंनस्यादितिनेत्याह किमकार्यमितिननुदेवकीकथंपुत्रंतत्याजेत्यतआह दुस्त्यजमिति चित्तेधृतआत्माहरिर्यैस्तेषाम् ॥५८॥५९॥६०॥६१॥ कंसस्यशांतिर्देवकार्यानुगुणानभवतीतिनारदस्यप्रत्यवस्थानंतदाह नंदाद्याइत्यादित्रयेण ॥ ६२ ॥ उभयोर्वसुदेवनंदकुलयोः ॥ ६३ ॥

वधोद्यमंदेवरुतामितिशेषः ॥ ६४ ॥ ६५ ॥ निगडैःशृंखलैः अजनोविष्णुस्तच्छंकया ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ इतिश्रीभागवतेम
हापुराणेदशमस्कंधेटीकायांप्रथमोध्यायः ॥ १ ॥ ॥ ॥ द्वितीयेकंसघातायदेवक्यागर्भगोहरिः ॥ ब्रह्मादिभिःस्तुतः साचसांत्वितेति
निरूप्यते ॥ १ ॥ यदुभिःसव्यरुध्यतेत्युक्तंतमेवविरोधंप्रपंचयति त्वरयादेवकीगर्भस्यान्यत्रसंचारेणभगवतःप्रवेशंवक्तुमाह प्रलंबेत्यादिसार्ध

एतत्कंसायभगवान्शशंसाभ्येत्यनारदः ॥ भूमेर्भारायमाणानांदैत्यानांचवधोद्यमं ॥ ६४ ॥ ऋषेर्विनिर्गमे
कंसोयदून्मत्वासुरानिति ॥ देवक्यागर्भसंभूतंविष्णुंचस्ववधंप्रति॥६५॥देवकींवसुदेवंचनिगृह्यनिगडैर्गृहे॥
जातंजातमहन्पुत्रंतयोरजनशंकया ॥ ६६ ॥मातरंपितरंभ्रातॄन्सर्वांश्चसुहृदस्तथा॥घ्नंतिह्यसुतृपोलुब्धारा
जानःप्रायशोभुवि ॥६७॥ आत्मानमिहसंजातंजानन्प्राग्विष्णुनाहतं ॥ महासुरंकालनेमिंयदुभिःसव्यरु
ध्यत ॥ ६८ ॥ उग्रसेनंचपितरंयदुभोजांधकाधिपं ॥ स्वयंनिगृह्यबुभुजेशूरसेनान्महाबलः ॥ ६९ ॥ इति
श्रीभागवतेमहापुराणेदशमस्कंधेश्रीकृष्णावतारोपक्रमेप्रथमोऽध्यायः ॥ १ ॥ श्रीशुकउवाच प्रलं
बबकचाणूरतृणावर्तमहाशनैः ॥ मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥१॥ अन्यैश्चासुरभूपालैर्बाणभौमा
दिभिर्युतः ॥ यदूनांकदनंचक्रेबलीमागधसंश्रयः ॥ २ ॥ तेपीडितानिविविशुःकुरुपांचालकैकयान्॥शाल्वा
न्विदर्भान्निषधान्विदेहान्कोसलानपि ॥ ३ ॥ एकेतमनुरुंधानाज्ञातयःपर्युपासत ॥ हतेषुषट्सुबालेषुदेव
क्याऔग्रसेनिना ॥ ४ ॥ सप्तमोवैष्णवंधामयमनंतंप्रचक्षते ॥ गर्भोबभूवदेवक्याहर्षशोकविवर्द्धनः ॥ ५ ॥
भगवानपिविश्वात्माविदित्वाकंसजंभयं ॥ यदूनांनिजनाथानांयोगमायांसमादिशत् ॥६॥ गच्छदेविव्रजंभ
द्रे गोपगोभिरलंकृतं॥रोहिणीवसुदेवस्यभार्यास्तेनंदगोकुले॥अन्याश्चकंससंविग्नाविवरेषुवसंतिहि॥ ७ ॥

श्लोकत्रयेण महाशनोऽघासुरः ॥ १ ॥ २ ॥ ३ ॥ अनुरुंधानाअनुवर्तमानाः ॥ ४ ॥ धामकलातदेवसप्तमोगर्भोबभूव किंतद्धामेत्यतआह
यमनंतमिति हर्षशोकविवर्धनः आनंदरूपस्यावतीर्णत्वाद्धर्षः पूर्वगर्भसाधारणदृष्ट्याशोकइति ॥ ५ ॥ ६ ॥ ननुसागोकुलेकिमित्यास्ते
ऽतआह अन्याश्चेति नकेवलंसैवअन्याअपीति विवरेषुअलक्ष्यस्थानेषु ॥ ७ ॥ ॥ ॥ ॥ ॥

जठरेसंतं ननुगर्भआकृष्यमाणःकथंजीवेदित्यतआह मामकंधामेति तत्ततः ॥ ८ ॥ किमर्थमेवंकार्यमित्यतआह अथेति अनंतरमेवे त्यर्थः अंशभागेनेति अंशैःशक्तिभिर्भजतेअधितिष्ठतिसर्वान्ब्रह्मादिस्तंबपर्यंतानित्यंशभागस्तेनपरिपूर्णनरूपेणेत्यर्थः यद्वा अंशैर्ज्ञानैश्वर्य बलादिभिर्भाजयतियोजयतिस्वीयानितितथातेनेति यद्वा अंशेनपुरुषरूपेणमायायाभागोभजनंयस्यतेन यद्वा अंशेनमाययागुणावतारा दिरूपाभागाभेदायस्यतेन यद्वा अंशाएवमत्स्यकूर्मादिरूपाभजनीयानतुसाक्षात्स्वरूपंयस्यतेन यद्वा अंशैर्ज्ञानबलादिभिर्भजनमनुवर्तनं भक्तेषुयस्यतेन सर्वथापरिपूर्णनरूपेणेतिविवक्षितं कृष्णस्तुभगवान्स्वयमित्युक्तत्वादिति तांप्रोत्साहयति त्वंयशोदायामितिसार्धचतुष्टयेन

देवक्याजठरेगर्भंशेषाख्यंधाममामकं॥तत्संनिकृष्यरोहिण्याउदरेसन्निवेशय ॥८॥ अथाहमंशभागेनदेव क्याःपुत्रतांशुभे ॥ प्राप्स्यामित्वंयशोदायांनंदपत्न्यांभविष्यसि ॥ ९॥ अर्चिष्यंतिमनुष्यास्त्वांसर्वकामवरे श्वरीं॥धूपोपहारबलिभिःसर्वकामवरप्रदां ॥१०॥ नामधेयानिकुर्वंतिस्थानानिचनराभुवि ॥ दुर्गेतिभद्रका लीतिविजयावैष्णवीतिच ॥११॥ कुमुदाचंडिकाकृष्णामाधवीकन्यकेतिच॥मायानारायणीशानीशारदेत्यं बिकेतिच ॥१२॥ गर्भसंकर्षणात्तंवैप्राहुःसंकर्षणंभुवि ॥ रामेतिलोकरमणाद्बलंबलवदुच्छ्रयात्॥१३॥संदि ष्टैवंभगवतातथेत्योमितितद्वचः ॥ प्रतिगृह्यपरिक्रम्यगांगतातत्तथाऽकरोत् ॥ १४ ॥ गर्भेप्रणीतेदेवक्या रोहिणींयोगनिद्रया ॥ अहोविस्रंसितोगर्भइतिपौराविचुक्रुशुः ॥ १५ ॥ भगवानपिविश्वात्माभक्ताना मभयंकरः ॥ आविवेशांशभागेनमनआनकदुंदुभेः ॥१६॥ सबिभ्रत्पौरुषंधामभ्राजमानोयथारविः ॥ दुरासदोतिदुर्धर्षोभूतानांसंबभूवह ॥ १७ ॥ ॥ ॥ ॥

॥ ९ ॥ सर्वान्पुत्रादीन्कामयंतेयेतेषांवरामीश्वरींश्रेष्ठांनियंत्रीं अर्चकानांसर्वान्कामवरान्प्रददातियातां ॥ १० ॥ ११ ॥ १२ ॥ त्वद्वि क्रमेणचतस्यव्यपदेशाभविष्यंतीत्याह गर्भसंकर्षणादित्यादिना रामेतिचसंबोधनंकरिष्यंति त्वयासंकृष्टेनतेनलोकस्यरमणात्रत्युत्पाद नात् ॥ १३ ॥ तथेतिपुनरपिओमित्यादरेणप्रतिगृह्य गांपृथ्वीं ॥ १४ ॥ विस्रंसितोविभ्रष्टोविस्रस्तइत्यर्थः ॥ इतिविचुक्रुशुःनतुतद्विदु रित्यर्थः ॥ १५ ॥ मनआविवेशमनस्याविर्बभूव जीवानामिवनधातुसंबंधइत्यर्थः ॥ १६ ॥ धामश्रीमूर्तिम् ॥ १७ ॥ ॥

जगन्मंगलंजगतोमूर्तिमन्मंगलं अच्युतांशंअच्युताच्युतिरहिताअंशाऐश्वर्यादयोयस्यतं यद्वा अच्युतस्यअंशइवांशः भक्तानामनुग्रहार्थं परिच्छिन्नवपुरित्यर्थः सम्यग्भूतमेवाहितंवैधदीक्षयाआर्पितं देवीद्योतमानाशुद्धसत्त्वेत्यर्थः सर्वात्मकंसर्वस्यात्मानं अतएवात्मभूतंस्वीरम न्नादावेवसंतं मनस्तःमनसैवदधार धारणयाधृतवती अत्रानुरूपंदृष्टांतमाह यथाकाष्ठाप्राचीदिक्आनंदकरंचंद्रमिति ॥ १८ ॥ सर्वजग न्निवासस्यश्रीहरेर्निवासभूतासत्यपिनितरांसर्वजनाल्हादकतयानरेजेकिंतुस्वयमेवानंदमन्वभवत् यतःकंसस्यगृहेरुद्धाऽन्यैर्नदृश्यते घटा दिषुरुद्धाऽग्निशिखादीपकलिकेव तथासतीशोभमानासरस्वतीज्ञानखलेज्ञानवंचकेरुद्धायथाऽन्येषामनुपकारिणीनराजतेतद्वत् ॥ १९ ॥ प्रभयाभवनंविरोचयंतीं अजितःअंतराकुक्षिमध्येयस्यास्तां एषविरोचमानोध्रुवंहरिरेव यद्यस्मात्ईदृशीइयंपुरापूर्वंनासीत् ॥ २० ॥ ननु

ततोजगन्मंगलमच्युतांशंसमाहितंशूरसुतेनदेवी ॥ दधारसर्वात्मकमात्मभूतंकाष्ठायथाऽनंदकरंमनस्तः ॥ ॥ १८॥ सादेवकीसर्वजगन्निवासनिवासभूतानितरांनरेजे॥भोजेंद्रगेहेऽग्निशिखेवरुद्धासरस्वतीज्ञानखले यथासती॥ १९॥ तांवीक्ष्यकंसःप्रभयाजितांतरांविरोचयंतींभवनंशुचिस्मितां॥आहैषमेप्राणहरोहरिर्गुहां ध्रुवंश्रितोयन्नपुरेयमीदृशी॥२०॥किमद्यतस्मिन्करणीयमाशुमेयदर्थतंत्रोनविहंतिविक्रमं॥स्त्रियाःस्वसुर्गुरु मत्यावधोऽयंयशःश्रियंहंत्यनुकालमायुः॥ २१॥ सएवजीवन्खलुसंपरेतोवर्ततयोऽत्यंतनृशंसितेन ॥ देहे मृतेतंमनुजाःशपंतिगंतातमोंऽधंतनुमानिनोध्रुवं ॥२२॥ इतिघोरतमाद्भावात्सन्निवृत्तःस्वयंप्रभुः॥आस्तेप्र तीक्षंस्तज्जन्महरेर्वैरानुबंधकृत्॥२३॥आसीनःसंविशंस्तिष्ठन्भुंजानःपर्यटन्महीं॥चिंतयानोहृषीकेशमपश्य त्तन्मयंजगत्॥२४॥ब्रह्माभवश्चतत्रैत्यमुनिभिर्नारदादिभिः॥देवैःसानुचरैःसाकंगीर्भिर्वृषणमैडयन्॥२५॥

संतिसामादयउपायाःनेतिस्वयमेवाह अयमर्थतंत्रोदेवकार्यप्रधानोविक्रमंनविहंति मद्वधेपराक्रमंकरिष्यत्येवेत्यर्थः यद्वार्तार्हिइदानीमेवेयंह न्यतामितिविचिंत्याह अर्थतंत्रोऽपिपुमान्स्वंविक्रमंनविहंतिननाशयति स्त्रीवधेतन्नाशःस्यादितिभावः तदेवाह स्त्रियाइति गुरुमत्यागुर्वि ण्याः ॥ २१ ॥ किंचसएवजीवन्नपिमृतःस्यात्नृशंसितेनक्रौर्येणयोवर्ततेतंजीवंतमेवमनुजाःशपंतिदुर्वाक्यैर्धिक्कुर्वंति सचदेहेमृतेतनुमानि नःपापिनोनरकंगच्छति अथवाशापप्रकारमेवाह तनुमानिनोऽस्यदेहेमृतेऽयंध्रुवमंधंतमोगमिष्यतीति ॥ २२ ॥ २३ ॥ संविशन्शयानः ॥ २४ ॥ रम्याभिर्गीर्भिर्वृषणंकामवर्षिणमैडयन्तुष्टुवुः ॥ २५ ॥ ॥ ॥ ॥

प्रतिश्रुतंसत्यंकृतमितिहृष्टाःसंतःसत्यत्वेनैवप्रथमंस्तुवंति सत्यव्रतमिति सत्यंव्रतंसंकल्पोयस्यतं सत्यंपरंश्रेष्ठंप्राप्तिसाधनंयस्मिंस्तं त्रिसत्यं त्रिष्वपिकालेषुसृष्टेःपूर्वंप्रलयानंतरंचस्थितिसमयेचसत्यमव्यभिचारेणवर्तमानं तदेवाहुः सत्यस्ययोनिमिति सच्छब्देनपृथिव्यप्तेजांसित्य च्छब्देनवाय्वाकाशौ एवंसच्चत्यच्चसत्यंभूतपंचकं तत्सत्यमित्याचक्षतइतिश्रुतेः तस्ययोनिंकारणं अनेनपूर्वंवर्तमानतोक्ता तथासत्येतस्मिन्ने वनिहितमंतर्यामितयास्थितं अनेनस्थितिसमयेऽपिसत्यत्वमुक्तं तथासत्यस्यसत्यंतस्यैवसत्यस्यसत्यंपारमार्थिकंतन्नाशेप्यवशिष्यमाणरूपं अनेनप्रलयेप्यवधित्वेनसत्यत्वंदर्शितं एवंत्रिसत्यत्वमुपपादितं तथाऋतसत्यनेत्रं ऋतंचसूनृतावाणीसत्यंचसमदर्शनंतथाभगवताव्याख्या स्यमानत्वात् सत्यंचसमदर्शनं ऋतंचसूनृतावाणीकाविभिःपरिकीर्तितेति तयोर्नेत्रंनयनसाधनंनेतारंप्रवर्तकमितियावत् एवंसर्वप्रकारेणस त्यात्मकंत्वांभगवन्वयंशरणंप्रपन्नाःप्राप्ताइति ॥ २६॥ ननुभवंतोऽपिलोकेश्वरामत्तुल्याएवकिमितिमांशरणंप्रपद्यंते नैवंवाच्यंत्वमेवैकः सर्वेश्वरः सर्वसृष्ट्यादिकारणत्वात् वयंत्वदेकशरणाएव लोकादिरूपंद्वैतंचसर्वंत्वव्द्यतिरेकेणनास्तीतिवक्तुंद्वैतप्रपंचंवृक्षरूपकेणनिरूपयं

**सत्यव्रतंसत्यपरंत्रिसत्यंसत्यस्ययोनिंनिहितंचसत्ये ॥ सत्यस्यसत्यंऋतसत्यनेत्रंसत्यात्मकंत्वांशरणं प्रपन्नाः ॥ २६ ॥ एकायनोऽसौद्विफलस्त्रिमूलश्चतूरसःपंचविधःषडात्मा ॥ सप्तत्वगष्टविटपोनवाक्षो दशच्छदीद्विखगोह्यादिवृक्षः ॥ २७॥ त्वमेकएवास्यसतःप्रसूतिस्त्वंसंन्निधानंत्वमनुग्रहश्च ॥ त्वन्मा ययासंवृतचेतसस्त्वांपश्यंतिनानानविपश्चितोये ॥ २८॥ ॥ ॥ ॥**

ति एकायनइति असौप्रपंचआदिवृक्षः वृश्च्यतइतिवृक्षःसमष्टिव्यष्टिदेहरूपः कथंभूतः एकायनःएकाप्रकृतिरयनमाश्रयोयस्यसः द्वेसुखदुःखे फलेयस्यसः त्रयोगुणामूलानियस्यसः चतूरसःधर्मार्थकाममोक्षाश्चत्वारोरसायस्यसः पंचइंद्रियाणिविधाज्ञानप्रकारायस्यसःषट्ऊर्मयःजा यतेअस्तिवर्धतेविपरिणमतेअपक्षीयतेनश्यतीतिषट्कोशावाआत्मानःस्वभावायस्यसः सप्तधातवस्त्वचोयस्य पंचभूतानिमनोबुध्यहंकार श्चेत्यष्टौविटपाःशाखाविस्तारायस्यसः नवद्वाराणिअक्षाण्छिद्राणियस्यसः दशप्राणाःछदाःपत्राणिविद्यंतेयस्यसदशच्छदी दशप्रा णापानव्यानसमानोदाननागकूर्मकृकलदेवदत्तधनंजयाइति द्वौजीवेश्वरौखगौयस्मिन्सद्विखगः ॥ २७ ॥ एवंरूपस्यसंसारवृक्षस्यसतः कार्यस्यत्वमेकएवप्रसूतिःप्रकर्षेणसूतिर्जन्मयस्मात्सत्वंकारणमित्यर्थः त्वमेवसन्निधानंसम्यक्निधीयतेऽस्मिन्नितिलयस्थानंत्वमेवानुग्रह श्चअनुगृण्हातीतिपालकः ननुब्रह्मविष्णुरुद्राएवंभूताःप्रसिद्धाःकथमहमितिचेत्तत्राहुःत्वन्माययेति संवृतंपिहितंचेतोज्ञानंयेषांतेत्वामेव नानापश्यंति येतुविपश्चितोविद्वांसस्तेतथानपश्यंति ॥ २८ ॥ ॥ ॥ ॥ ॥

ननुदेवकीपुत्रंमांकथमेवंवर्णयथेतिचेत्तत्राहुः बिभर्षीति अवबोधैकस्वरूपआत्मात्वमेवरूपाणिमूर्तीर्बिभर्षिधत्से नतुत्वंकस्यापिपुत्रइत्यर्थः क्षेमायपालनाय सतांधर्मवर्तिनांसुखकराणि खलानांअभद्राणिनाशकानि ॥ २९ ॥ नकेवलमेतावद्भक्तानांमोक्षार्थमपीत्याहुः त्वयीति त्वयिसमाधिनाआवेशितचेतसानिमित्तेनत्वत्पादपोतेनाश्रितेनएकेमुख्याविवेकिनःमहद्भिःकृतेनसेव्यतयासंपादितेन यद्वाइदमपिमायाम यमित्यनादरंपरित्यज्येदमेवमहत्सर्वोत्कृष्टमितिमनसिकृतेनबहुमतेनेत्यर्थः भवाब्धितुच्छीकुर्वंति अनायासेनैवभजनानुनिष्पादिनीतेषां मुक्तिरित्यर्थः ॥ ३० ॥ ननुतेनपोतेनपूर्वेचेत्पारंगतास्तर्हीदानींतनानांकागतिस्तत्राहुः स्वयमिति अयमर्थः हेद्युमन्स्वप्रकाशत्वत्पाद पोतसामीप्यमात्रेणभवांबुधौवत्सपदमात्रेजातेअतस्तन्निरपेक्षंस्वयमेवान्येषांभीमंदुस्तरमपिभवार्णवंसमुत्तीर्यभवत्पदांभोरुहरूपांनावमत्रैव

**बिभर्षिरूपाण्यवबोधआत्माक्षेमायलोकस्यचराचरस्य ॥ सत्त्वोपपन्नानिसुखावहानिसतामभद्राणिमुहुः खलानां ॥ २९ ॥ त्वय्यंबुजाक्षाखिलसत्त्वधाम्निसमाधिनावेशितचेतसैके ॥ त्वत्पादपोतेनमहत्कृतेनकुर्वंति गोवत्सपदंभवाब्धिं ॥ ३० ॥ स्वयंसमुत्तीर्यसुदुस्तरंद्युमन्भवार्णवंभीममदभ्रसौहृदाः ॥ भवत्पदांभोरुह नावमत्रतेनिधाययाताःसदनुग्रहोभवान् ॥३१॥ येन्येऽरविंदाक्षविमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्ध यः ॥ आरुह्यकृच्छ्रेणपरंपदंततःपतंत्यधोऽनादृतयुष्मदंघ्रयः ॥ ३२ ॥ तथानतेमाधवतावकाःक्वचिद्भ्रश्यंति मार्गात्त्वयिबद्धसौहृदाः ॥ त्वयाभिगुप्ताविचरंतिनिर्भयाविनायकानीकपमूर्धसुप्रभो ॥ ३३ ॥ ॥**

निधाय भक्तिमार्गसंप्रदायंप्रवर्त्येत्यर्थः पारंयाताः तत्किं यतोऽदभ्रसौहृदाःसर्वभूतेष्वतिप्रीतियुक्ताः अतस्तेऽन्येषांतरणायनिधायेति कथं मत्पादपोतेनतीर्णाअतउक्तं भवान्सदनुग्रहःसतोभक्ताननुगृण्हातीति ॥ ३१ ॥ ननुविवेकिनांकिमद्भजनेनमुक्ताएवहितेतत्राहुः येन्यइ ति विमुक्तमानिनोविमुक्तावयमितिमन्यमानाः त्वयिअस्तोनिरस्तोऽतएवासन्योभावस्तस्मात् भक्तेरभावादित्यर्थः नविशुद्धाबुद्धिर्येषांतेत था यद्वा त्वयिअस्तभाःइतिछेदः अस्तमतयोवादेष्वेवविशुद्धबुद्धयःकृच्छ्रेणबहुजन्मतपसापरंपदंमोक्षसन्निहितंसत्कुलतपःश्रुतादिततः पतंतिविघ्नैरभिभूयंते नआदृतौयुष्मदंघ्रीयैस्ते अधःअर्वाकृतिर्यग्योनौ ॥ ३२ ॥ त्वदीयास्तुनकदाचिदपिपतंतीत्याहुः तथानेति विनाय काविघ्नहेतवस्तेषामनीकानिस्तोमास्तानिपांतियेतेषांमूर्द्धसुविचरंतिविघ्नान्जयंतीत्यर्थः ॥ ३३ ॥

सतांसुखावहानिरूपाणिधारयसीत्युक्तंबिभर्षिरूपाणीति तत्केनप्रकारेणसुखावहत्वमित्यपेक्षायामाहुः सत्वंविशुद्धमिति सत्वंवपुःश्रयत
इत्यन्वयः श्रेयउपायनंकर्मफलदातृ कथं येनवपुषाजनस्तवार्हणंपूजामीहतेकरोति कैः वेदाश्चक्रियायोगाश्चतपश्च समाधिश्चतैश्चतुराश्र
मधर्मैरित्यर्थः वपुषोऽनाश्रयणेऽर्हणासंभवान्नकर्मफलसिद्धिःस्यादिति ॥ ३४ ॥ त्वय्यंबुजाक्षेत्यादिनाश्लोकत्रयेणभगवद्भक्तानामेवमो
क्षोनान्येषामित्युक्तं तत्रकर्मफलंभक्तिंविनामाभूत्मोक्षस्यतुज्ञानैकसाध्यत्वात्किंभक्त्येतिसानुशयान्प्रत्याहुः सत्वंनचेदिति हेधातः इदंस
त्वंनिजंतववपुर्नभवेच्चेत्तर्हिविज्ञानंविशिष्टमपरोक्षंज्ञानंनभवेदित्यनुषंगः कथंभूतं अज्ञानभिदापमार्जनम् अज्ञानंचतत्कृताभिदाचतयो
रपमार्जनंनिवर्तकम् यद्वा अज्ञानंभिनत्तीतिअज्ञानभिद्विज्ञानंमार्जनंनाशमापप्राप्तमेवेति ननुजडानांबुध्यादनांयतःप्रकाशस्तद्ब्रह्मेतिज्ञा
नंभवेदेवेतिचेन्न गुणप्रकाशैर्गुणावच्छिन्नैःप्रकाशैर्भवान्सर्वसाक्षीपरिपूर्णःकेवलमनुमीयतेकल्प्यतेनतुसाक्षात्क्रियतइत्यर्थः अनुमानप्रका

**सत्त्वंविशुद्धंश्रयतेभवान्स्थितौशरीरिणांश्रेयउपायनंवपुः ॥वेदक्रियायोगतपःसमाधिभिस्तवार्हणंयेनज
नःसमीहते ॥ ३४ ॥ सत्त्वंनचेद्धातरिदंनिजंभवेद्विज्ञानमज्ञानभिदापमार्जनं ॥ गुणप्रकाशैरनुमीयतेभवा
न्प्रकाशतेयस्यचयेनवागुणः ॥ ३५ ॥ ननामरूपेगुणजन्मकर्मभिर्निरूपितव्येतवतस्यसाक्षिणः ॥ मनोव
चोभ्यामनुमेयवर्त्मनोदेवक्रियायांप्रतियंत्यथापिहि ॥३६॥ शृण्वन्गृणन्संस्मरयंश्चचिंतयन्नामानिरूपाणि
चमंगलानिते ॥ क्रियासुयस्त्वच्चरणारविंदयोराविष्टचेतानभवायकल्पते ॥ ३७ ॥ ॥ ॥**

रमाहुः प्रकाशतेयस्यचयेनवागुणइति यस्यसंबंधीअयंबुध्यादिगुणःप्रकाशते योगुणसाक्षित्येवंयेनवाबुध्यारूढेनप्रमात्रा बुध्यधिष्ठात्राबाह्यो
गुणःप्रकाशतइत्यनुमीयतइत्यर्थः शुद्धसत्ववपुषित्वयिसेव्यमानेतुतदाकारेऽतःकरणेत्वत्प्रसादेनसाक्षात्कारोभवेदितिभावः ॥३५॥एवंताव
द्भक्तानामभ्युदयापवर्गार्थंरूपाणिबिभर्षीत्युक्तं तान्यपिभजनीयानिकेवलंनतुज्ञातुंशक्यंतेअनंतत्वादतर्क्यत्वाच्चमनोवचसोरगोचरत्वादि
त्याहुः ननामरूपेइति गुणाःजन्मानिकर्माणिचतैर्निरूपितव्योनिरूपणार्होनभवतः कुतः अनुमेयंवर्त्ममार्गोयस्यतवेति तत्रापिहेतुः तस्यसा
क्षिणइति नहिसाक्षिणस्तत्वंमनोवचोगोचरामित्यर्थः हेदेवबहुधाद्योतमानअथापिक्रियायामुपासनादिलक्षणायांत्वांप्रतियंत्युपासकाःसाक्षा
त्पश्यंति हिप्रसिद्धम् ॥ ३६ ॥ तस्माद्भक्त्यैवमोक्षइत्युपसंहरंति शृण्वन्निति अन्यानपिसंस्मारयन् क्रियासुदेवार्चनादिकर्मसु ॥ ३७ ॥

विशेषतःश्रीकृष्णावतारमभिनंदंति दिष्ट्येति दिष्ट्याभद्रंतवपदःपादभूतायाःईश्वरस्यतवजन्ममात्रेणापनीतएव किंचत्वत्पदकैःकोम
लैःपदैःसुशोभनैःवज्रांकुशादिशुभलक्षणैः गांपृथ्वींद्यांस्वर्गंचतवत्वयाऽनुकंपितां ॥ ३८ ॥ तवजन्मनाभारोऽपनीतइत्युक्त्याममापिकिं
जीववत्संसारउक्तोनहिनहीत्याहुः नेति बतहेईशअसंसारिणस्तेजन्मनःकारणंक्रीडांविनानतर्कयामः किंच हेअभयश्रयानभयंसंसारंआश्र
यतइतितथातत्संबोधनंहेनित्यमुक्तेत्यर्थः तवजन्मकारणंनास्तीतिकिंवक्तव्यं यतोजीवात्मन्यपिभवादयःत्वयिविषयेयाअविद्यातयाकृताः
नपरमार्थतःसंतीति ॥ ३९ ॥ प्रस्तुतंप्रार्थयंते मत्स्याश्वेति नोऽस्मांस्त्रिभुवनंचअन्यदायथापासितथाऽधुनापिपाहीतिवंदनंतेइतिचवदं
तःसर्वैशिरोभिःप्रणमंति ॥ ४० ॥ देवकींप्रत्याहुः दिष्ट्येति नोऽस्माकंभवायउद्भवायसाक्षात्परःपुमांस्तेकुक्षिंगतःअतोभयंमाभूदितिअ

दिष्ट्याहरेऽस्याभवतःपदोभुवोभारोऽपनीतस्तवजन्मनेशितुः ॥ दिष्ट्यांऽकितांत्वत्पदकैःसुशोभनैर्द्रक्ष्याम
गांद्यांचतवानुकंपितां ॥ ३८ ॥ नतेऽभवस्येशभवस्यकारणंविनाविनोदंबततर्कयामहे ॥ भवोनिरोधःस्थि
तिरप्यविद्ययाकृतायतस्त्वय्यभयाश्रयात्मनि ॥ ३९ ॥ मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबु
धेषुकृतावतारः ॥ त्वंपासिनस्त्रिभुवनंचयथाऽधुनेशभारंभुवोहरयदूत्तमवंदनंते ॥ ४० ॥ दिष्ट्यांबतेकुक्षिग
तःपरःपुमानंशेनसाक्षाद्भगवान्भवायनः ॥ माभूद्भयंभोजपतेर्मुमूर्षोर्गोप्तायदूनांभवितातवात्मजः ॥४१॥
श्रीशुकउवाच इत्यभिष्टूयपुरुषंयद्रूपमनिदंयथा ॥ ब्रह्मेशानौपुरोधायदेवाःप्रतिययुर्दिवं ॥ ४२ ॥ इ
तिश्रीभागवतेमहापुराणेदशमस्कंधेगर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नामद्वितीयोऽध्यायः ॥ २ ॥ श्रीशु
कउवाच अथसर्वगुणोपेतःकालःपरमशोभनः ॥ यर्ह्येवाजनजन्मर्क्षंशांतर्क्षग्रहतारकं ॥ १ ॥

न्येषामपिकुक्षिंहृदयंगतोहरिर्भवतितेषांभयंनभवतीतिकुतस्तव ॥ ४१ ॥ यस्यरूपमनिदंसर्वप्रत्यग्भूतं यथायथावत् अस्मान्वंचयित्वाए
ताविहस्थास्येतेइतिमन्यमानाब्रह्मेशानौपुरोधायपुरतःकृत्वाययुरिति ॥ ४२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धटीकायांद्विती
योऽध्यायः ॥२॥ तृतीयेनिजरूपेणसंभूतस्तुहरिःस्वयं ॥ पितृभ्यांसंस्तुतोनीतःपित्राभीतेनगोकुलं ॥ १ ॥ अथेतिमंगलार्थं यर्हिसर्वगुणोपेतः
कालोबभूवतदादेवक्यांविष्णुराविरासीदित्यष्टमश्लोकगतेनान्वयः परमशोभनत्वमेवाह यर्हीत्यादिना अजनान्नारायणाज्जन्मयस्यप्रजापते
स्तस्यऋक्षंरोहिणिनक्षत्रं कथंभूतं शांतानिऋक्षाण्यश्विन्यादीनिग्रहाश्चतारकाश्चयस्मिंस्तत् यर्हीतिसर्वत्रानुषज्जते ॥ १ ॥

निर्मलानामुडुगणानामुदयोयस्मिंस्तत्तथा मंगलभूयिष्ठाःपुरादयोयस्यांसा ॥ २ ॥ जलरुहैःश्रीःशोभायेषांते द्विजालिकुलानांसन्नादोयेषु तेस्तबकायासुताः ॥ ३ ॥ समिंधत आडागमोऽत्रद्रष्टव्यःसमैंधतेति सम्यग्दीप्ताबभूवुरित्यर्थः ॥ ४ ॥ असुरद्रुहांकंसादिव्यतिरिक्तानांसर्वप्राणिनांदेवानांचेति स्वर्गेतुविशेषमाह जायमानइति अजनेजायमाने ॥ ५ ॥ तदा आसन्नःप्रसवोयस्मिन्तस्मिन्समये ॥ ६ ॥ ७ ॥ तमसोद्भुतेघनतमसिनिशीथे यथायथावत्ऐश्वरेणैवरूपेण ॥ ८ ॥ तमद्भुतंबालकंवसुदेवऐक्षतेतिद्वितीयश्लोकेनान्वयः अद्भुतत्वेहेतुगर्भा

दिशःप्रसेदुर्गगनंनिर्मलोडुगणोदयं ॥ महीमंगलभूयिष्ठपुरग्रामव्रजाकरा ॥ २ ॥नद्यःप्रसन्नसलिलाह्रदा जलरुहश्रियः ॥ द्विजालिकुलसन्नादस्तबकावनराजयः ॥ ३ ॥ ववौवायुःसुखस्पर्शःपुण्यगंधवहःशुचिः॥ अग्नयश्चद्विजातीनांशांतास्तत्रसमिंधत ॥ ४ ॥ मनांस्यासन्प्रसन्नानिसाधूनामसुरद्रुहां ॥ जायमानेऽजने तस्मिन्नेदुर्दुंदुभयोदिवि ॥ ५ ॥ जगुःकिन्नरगंधर्वास्तुष्टुवुःसिद्धचारणाः ॥ विद्याधर्यश्चननृतुरप्सरोभिःस मंतदा ॥ ६ ॥ मुमुचुर्मुनयोदेवाःसुमनांसिमुदान्विताः ॥ मंदंमंदंजलधराजगर्जुरनुसागरं ॥ ७ ॥ निशीथे तमउद्भूतेजायमानेजनार्दने ॥देवक्यांदेवरूपिण्यांविष्णुःसर्वगुहाशयः॥आविरासीद्यथाप्राच्यांदिशींदुरि वपुष्कलः ॥ ८ ॥ तमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदार्युदायुधं ॥ श्रीवत्सलक्ष्मंगलशोभिकौस्तुभं पीतांबरंसांद्रपयोदसौभगं ॥ ९ ॥ महार्हवैदूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतलं ॥ उद्दामकांच्यंग दकंकणादिभिर्विरोचमानंवसुदेवऐक्षत ॥ १० ॥ सविस्मयोत्फुल्लविलोचनोहरिंसुतंविलोक्यानकदुंदुभि स्तदा ॥ कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदाद्विजेभ्योयुतमाप्लुतोगवां ॥ ११ ॥ अथैनमस्तौदवधार्यपूरु षंपरंनतांगःकृतधीःकृतांजलिः ॥ स्वरोचिषाभारतसूतिकागृहंविरोचयंतंगतभीःप्रभाववित् ॥ १२ ॥

णिविशेषणानिअंबुजेक्षणमित्यादीनि श्रीवत्सलक्ष्मंश्रीवत्सलक्ष्माणं गलेनशोभतइतिगलशोभीसकौस्तुभोयस्मिन् ॥ ९ ॥ परिष्वक्तसहस्रकुंतलंकिरीटकुंडलादीनांत्विषास्फुरदपरिमितकेशमित्यर्थः ॥ १० ॥ विस्मयेनोत्फुल्लेविशिष्टेलोचनेयस्यसः गवामयुतमस्पृशन्मनसा दत्तवान्कंसनिगृहीतस्यदानासंभवात् स्पृष्टैहेतुः कृष्णावतारेति मुदाआप्लुतोव्याप्तःस्नातइतिवा ॥ ११ ॥ कृतधीःशुद्धबुद्धिः ॥ १२ ॥

वसुदेवः प्रथमं पुत्रबुद्ध्यापश्यंस्तां परित्यज्याह विदितोऽसीति कथं विदितोऽसि भवान्प्रकृतेः परः पुरुषइति ननु किमाश्चर्यं पुरुषस्य प्रकृतेरन्यत्वा देवेत्यतआह साक्षादिति प्रत्यक्षतइत्यर्थः नन्वक्षिसन्निकृष्टंप्रत्यक्षत उपलभ्यते किं चित्रमित्यतआह केवलेति केवलश्चासावनुभवश्च आनंदश्च तदेवस्वरूपंयस्यसः किंच सर्वबुद्धिदृक्साक्षी नह्येवंभूतोदृश्योभवतीत्यर्थः ॥ १३ ॥ ननु देवकीजठरे प्रविष्टस्याकिमियमतिस्तुतिः क्रियतेअत आहसएवेति सएवउक्तस्वरूपएवत्वंनदेवकीजठरे प्रविष्टइत्यर्थः ननु विश्वंसृष्ट्वातदनुप्रविष्टस्यकिमेतद्बहुअतआह स्वप्रकृत्येति स्वमायया

वसुदेवउवाच विदितोऽसिभवान्साक्षात्पुरुषःप्रकृतेःपरः ॥ केवलानुभवानंदस्वरूपःसर्वबुद्धिदृक् ॥
॥ १३ ॥ सएवस्वप्रकृत्येदंसृष्ट्वाग्रेत्रिगुणात्मकं ॥ तदनुत्वंह्यप्रविष्टःप्रविष्टइवभाव्यसे ॥ १४ ॥ य
थेमेऽविकृताभावास्तथातेविकृतैःसह ॥ नानावीर्याःपृथग्भूताविराजंजनयंतिहि ॥ १५ ॥ सन्निपत्य
समुत्पाद्यदृश्यंतेऽनुगताइव ॥ प्रागेवविद्यमानत्वान्नतेषामिहसंभवः ॥ १६ ॥ ॥ ॥

सृष्ट्वातदनुत्वमप्रविष्टएवेति ननु तर्हि कथंश्रुत्योच्यते तत्सृष्ट्वातदेवानुप्राविशदित्यतआह प्रविष्टइवेति भाव्यसे निरूप्यसे प्रत्यक्षतोवासद्रूपेण वाप्रविष्टइवलक्ष्यसे॥ १४॥ अत्रदृष्टांतः यथेति इमेऽविकृताभावामहदादयोयथातथेति दृष्टांतंविवृणोति तेविकृतैरिति तेविकृतैःषोडशविकारैः सहसंनिपत्यविराजंजनयंति संनिपतनेहेतुः यतःपृथग्भूताःसंतोनानावीर्याविशिष्टकार्यसमर्थानभवंति॥ १५॥ अतःसंनिपत्येति एवंसमुत्पा द्यअनुगताःप्रविष्टाइवदृश्यंतेनपुनःप्रविष्टाःकुतः उत्पत्तेःप्रागेवकारणतयाविद्यमानत्वान्नतेषामिहसृष्टेकार्यपश्चात्संभवःप्रवेशइति ॥१६॥

दार्ष्टांतिकेअतिदिशति एवंभवानिति ननुयद्यहमप्रच्युतस्वरूपएवकारणतयाकार्येषुवर्त्ते तर्हितेष्विंद्रियैर्गृह्यमाणेषुममग्रहणंकिंनास्तितत्राह बुध्यनुमेयलक्षणैरिति बुध्यारूपादिज्ञानेनानुमेयंलक्षणंस्वरूपंयेषांतैर्गुणैरिंद्रियैर्ग्राह्यैर्गुणैः सहसन्नपिवर्त्तमानोपितद्गुणाग्रहः तैर्गुणैःसह नगृह्यते अयंभावः नहिग्राह्यैःसहभावमात्रंग्रहणेकारणंकिंतुइंद्रियाणांशक्तिः साचकार्यैकसमधिगम्यायथाकार्यमेवकल्प्यते अतोयथाच क्षुषारूपग्रहणेरसादिग्रहणंनास्तितथैवविषयग्रहणेत्वद्ग्रहणमपीति अविषयत्वेनचग्रहणानर्हत्वमुक्तमेवसर्वबुद्धिदृगित्यत्र एवंतावत्प्रागेव विद्यमानत्वात्प्रवेशोनास्तीत्युक्तं किंचपरिच्छिन्नस्यनीडेपक्ष्यादेरिवप्रवेशोभवेत् तवतुअनावृतत्वादपरिच्छिन्नत्वेनबहिरंतर्भेदोनास्तिकुतः प्रवेशइत्याह अनावृतत्वादिति अनावृतत्वेहेतूनाह सर्वस्येति नहिसर्वरूपस्यान्यदावरकमस्ति सर्वात्मनः नह्येकेनावृतोऽन्यस्यात्माभ वेत् आत्मवस्तुनइति आत्मनोवस्तुनश्चेतिहेतुद्वयं अतसातत्यगमनइत्यस्मात् अततिव्याप्नोतीत्यात्मा नहिव्यापकस्यावरणंघटते तथाव स्तुनःपरमार्थवस्तुनः आवरणंनघटतइत्यर्थः तस्मात्त्वांतर्यामितयाप्रवेशोनमुख्योस्तिकुतस्तरांगर्भेप्रवेशः अतःकेवलानुभवानंदरूपएव

**एवंभवान्बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैःसन्नपितद्गुणाग्रहः ॥ अनावृतत्वाद्बहिरंतरंनतेसर्वस्यसर्वात्मनआ त्मवस्तुनः ॥ १७ ॥ यआत्मनोदृश्यगुणेषुसन्निितिव्यवस्यतेस्वव्यतिरेकतोऽबुधः ॥ विनानुवादंनचत न्मनीषितंसम्यग्यतस्त्यक्तमुपाददत्पुमान् ॥१८॥ त्वत्तोऽस्यजन्मस्थितिसंयमान्विभोवदंत्यनीहादगु णादविक्रियात् ॥ त्वयीश्वरेब्रह्मणिनोविरुध्यतेत्वदाश्रयत्वादुपचर्यतेगुणैः ॥ १९ ॥ ॥**

त्वंविदितोऽसीत्याश्चर्यंममभाग्यमित्यर्थः ॥ १७ ॥ नन्वेतद्धेतुचतुष्टयंप्रपंचस्यावस्तुत्वेघटेततत्तुनसंभवतिसत्यत्वेनप्रतीतेरित्याशंक्याह यइति आत्मनोदृश्येषुगुणेषुदेहादिषुस्वव्यतिरेकतःआत्मव्यतिरेकेणपृथक्सन्नयंदेहादिरितिव्यवस्यतेनिश्चिनोतियःपुमान्सोऽबुधःअविद्वान् व्यतिरेकदर्शनात् किंच मनीषितंविचारितंसद्देहादिसर्वंयतोविनाऽनुवादंवाचारंभणमात्रंविनानसम्यग्भवति अतोऽवस्तुत्वेनत्यक्तंबाधित मेववस्तुबुद्ध्याउपाददत्स्वीकुर्वन्नबुधइत्यर्थः ॥ १८ ॥ एवंपरमेश्वरदृश्यस्यतव्द्यतिरेकेणासत्वमुक्तं परमेश्वरोपादानत्वादपितव्द्यतिरेके णासत्वमित्याह त्वत्तोस्येति नचैवंसत्यपिविकारित्वमित्याह अनीहादिति अगुणत्वादनीहत्वंततोविकारित्वामित्यर्थः नन्वनीहत्वेकथंकर्तृ त्वंकर्तृत्वेवाकुतोऽविकारित्वंतत्राह त्वयीश्वरइति ब्रह्मत्वादविकारित्वमीश्वरत्वात्कर्तृत्वमिति नन्वेतदपिविरुद्धमेवनेत्याह त्वदाश्रय त्वादिति गुणैःकुर्वद्भिःत्वयिसृष्ट्यादिकर्तृत्वमुपचर्यतेगुणाश्रयत्वात् यथाभृत्यकृत्यंराजनीति ॥ १९ ॥

एवंभूतस्यैवतवयथाविश्वस्थितिसर्गप्रलयार्थंत्रिवर्णागुणावताराएवमयंभूभारापनयनार्थमितिज्ञातमित्याह सत्वमितिश्लोकद्वयेन ॥ २० ॥
रिरक्षिषुः रक्षितुमिच्छुरवतीर्णोऽसिकृष्णेनवर्णेन अतः साधूनांरक्षणार्थंराजन्यसंज्ञायेऽसुरकोटियूथपास्तैर्निर्व्यूह्यमानाइतस्ततश्चाल्यमाना
श्चमूः सेनानिहनिष्यसेसंहरिष्यसि ॥ २१ ॥ किंतुतथाप्यप्रमत्तेनत्वयाभाव्यमित्याह अयंत्विति असभ्यः खलः समर्पितंकथितं
अभिसरति आगमिष्यति ॥ २२ ॥ उपाधावत्अस्तौत् ॥ २३ ॥ त्वयिभयशंकैवतावन्नास्तीतिश्लोकचतुष्टयेनाह देवकीकिंचि
द्विज्ञापयितुम् रूपमितियत्तत्किमपिरूपंवस्तुप्राहुर्वेदाः किंतद्वस्तुतदाह अव्यक्तं अत्रहेतुः आद्यंकारणं किंपरमाणवः नब्रह्मबृहत्
किंप्रधानं नज्योतिश्चेतनं किंवैशेषिकाणामिवज्ञानगुणं न निर्गुणं किंमीमांसकानामिवज्ञानपरिणामि न निर्विकारं किंपुष्कराक्षा

सत्वंत्रिलोकस्थितयेस्वमाययाबिभर्षिशुक्लंखलुवर्णमात्मनः ॥ सर्गायरक्तंरजसोपबृंहितंकृष्णंचवर्णंतम
साजनात्यये ॥ २० ॥त्वमस्यलोकस्यविभोरिरक्षिषुर्गृहेऽवतीर्णोऽसिममाखिलेश्वर ॥ राजन्यसंज्ञासुरको
टियूथपैर्निर्व्यूह्यमानानिहनिष्यसेचमूः ॥ २१ ॥ अयंत्वसभ्यस्तवजन्मनौगृहेश्रुत्वाऽग्रजांस्तेन्यवधीत्सु
रेश्वर ॥ सतेऽवतारंपुरुषैःसमर्पितंश्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥ २२ ॥ श्रीशुकउवाच अथैनमात्म
जंवीक्ष्यमहापुरुषलक्षणं ॥ देवकीतमुपाधावत्कंसाद्भीताशुचिस्मिता ॥२३॥ देवक्युवाच रूपयंत्तत्प्राहु
रव्यक्तमाद्यंब्रह्मज्योतिर्निर्गुणंनिर्विकारं॥सत्तामात्रंनिर्विशेषंनिरीहंसत्वंसाक्षाद्विष्णुरध्यात्मदीपः ॥२४॥

दीनामिवशक्तिविक्षेपपरिणामि नसत्तामात्रंतर्हिकिंसामान्यं न निर्विशेषं तर्हिकिंकारणत्वात्सक्रियंननिरीहं सन्निधिमात्रेणकारणं एवंभूतं
किमपिकार्यकल्प्यंयद्वस्तुसएवसाक्षात्त्वंविष्णुरिति अपरोक्षश्चेत्याह अध्यात्मदीपइति बुद्ध्यादिकारणसंघातप्रकाशकइत्यर्थः अथवाअ
व्यक्तंनकेनापिप्रकारेणव्यज्यतइत्यव्यक्तं कथं उत्पत्यातावन्नव्यज्यतइत्याह आद्यं सर्वस्यकार्यस्यआद्यं अनादीत्यर्थः तथाब्रह्मज्यो
तिर्निर्गुणंनिर्विकारमितिचतुर्भिः पदैर्देशेनप्रकाशेनचगुणेनचविकारेणचव्याप्तिंनिराकरोति तथासत्तामात्रमितिविशेषेणनिर्विशेषमितिसामा
न्येनानिरीहमितिक्रियायाचव्याप्तिंनिराकरोति अन्यत्समानम् एवंभूतस्यतवनभयशंकेतिभावः॥ २४ ॥ ॥ ॥

किंचमहाप्रलयेऽप्यवशिष्यमाणस्यकुतोभयमित्याहनष्टेलोकेइतिचराचरेलोकेमहाभूतेषुलीनेतेष्वप्यादिभूतंभूतसूक्ष्मंप्रविष्टेषुतास्मिन्नपिव्यक्के ऽव्यक्तंप्रधानंप्राप्ते अशेषात्मकेप्रधानेसंज्ञाप्रज्ञायस्य एवंमयिलीनमिदमस्तिपश्चादेवमुद्बोधनीयमितिसोशेषसंज्ञः शेषसंज्ञइतिवा ॥ २५ ॥ किंचएवंप्रलयहेतुर्योऽयंकालःएनं हेअव्यक्तबंधोप्रकृतिप्रवर्त्तक तस्यप्रलयावधिभूतस्यतेतवचेष्टांलीलां चेष्टतेविपारिवर्त्ततेपुनःपुनर्वत्सरावृत्या महीयान्द्विपरार्धरूपः यस्यचेष्टामाहुस्तंत्वात्वांक्षेमधामअभयस्थानंप्रपद्येशरणंव्रजामि ॥२६॥ क्षेमधामत्वमेवाह मर्त्यइति लोकान्प्रति यदृच्छयाकेनापिभाग्योदयेन हेआद्य ॥ २७ ॥ प्रस्तुतंविज्ञापयाति सत्वमिति भृत्यानांवित्रासंहंतीतिभृत्यवित्रासहा भृत्यविदितिवाछेदःपौरु

नष्टेलोकेद्विपरार्धावसानेमहाभूतेष्वादिभूतंगतेषु॥व्यक्तेऽव्यक्तंकालवेगेनयातेभवानेकःशिष्यतेशेषसंज्ञः २५॥योऽयंकालस्तस्यतेऽव्यक्तबंधोचेष्टामाहुश्चेष्टतेयेनविश्वं॥निमेषादिर्वत्सरांतोमहीयांस्तंत्वेशानंक्षेमधामप्रपद्ये २६ मर्त्योमृत्युव्यालभीतःपलायन्लोकान्सर्वान्निर्भयंनाध्यगच्छत् ॥ त्वत्पादाब्जंप्राप्ययदृच्छयाद्यस्वस्थःशेतेमृत्युरस्मादपैति॥२७॥सत्वंघोरादुग्रसेनात्मजान्नस्त्राहित्रस्तान्भृत्यवित्रासहाऽसि॥रूपंचेदंपौरुषंध्यानधिष्ण्यंमाप्रत्यक्षंमांसदृशांकृषीष्ठाः॥२८जन्मतेमय्यसौपापोमाविद्यान्मधुसूदन॥समुद्विजेभवद्धेतोःकंसादहमधीरधीः॥उपसंहरविश्वात्मन्नदोरूपमलौकिकम्॥शंखचक्रगदापद्मश्रियाजुष्टंचतुर्भुजम् ॥ ३०॥ विश्वंयदेतत्स्वतनौनिशांतेयथाऽवकाशंपुरुषःपरोभवान् ॥ बिभर्तिसोऽयंममगर्भगोऽभूदहोनृलोकस्यविडंबनंहितत् ॥३१॥ श्रीभगवानुवाच त्वमेवपूर्वसर्गेभूःपृश्निःस्वायंभुवेसति॥तदाऽयंसुतपानामप्रजापतिरकल्मषः॥३२॥युवांवैब्रह्मणादिष्टौप्रजासर्गेयदाततः॥सन्नियम्येंद्रियग्रामंतेपाथेपरमंतपः ॥ ३३

षंऐश्वरंध्यानधिष्ण्यंध्यानास्पदंमांसदृशांमांसचक्षुषांप्रत्यक्षंमाकृथाः ॥ २८ ॥ भवतएवहेतोर्निमित्तात्कंसात्समुद्विजोबिभेमि यतोऽधीरचित्ता ॥ २९ ॥ ३० ॥ किमित्युपसंहर्त्तव्यमेवंभूतेनमयापुत्रेणतव महतीश्लाघास्यादितितत्राह विश्वामिति निशांतेप्रलयावसाने यथाऽवकाशमसंकोचतः असंभावितत्वादुपहास्यतैवस्यादित्यर्थः ॥ ३१ ॥ चतुर्भुजेनरूपेणाविर्भावेकारणंतावदाह त्वमेवेत्यादिचतुर्दशभिः पूर्वसर्गेप्रथमजन्मनि अभूः आसीः पृश्निर्नामस्वायंभुवेमन्वंतरेतदाअयंवसुदेवः ॥ ३२ ॥ तेपाथेतपः कृतवंतौ ॥ ३३ ॥ ॥

॥ ३४ ॥ ३५ ॥ तप्यतोराचरतोईयुर्गतानि मदात्मनोःमच्चित्तयोः ॥ ३६ ॥ अमुनावपुषा ॥ ३७ ॥ प्रादुरासंप्रादुर्भूतोऽस्मि वरदराट्व रदेषुश्रेष्ठइत्यर्थः तेनसकृद्वरेणचवारंवारमाविर्भावेकारणमुक्तं कामस्यादित्सयादातुमिच्छया मादृशःमयासदृशः ॥ ३८ ॥ मेमत्तोऽपियुवा मपवर्गंनवव्राथे नवृतवंतौ ॥ ३९ ॥ वरंदत्वामयिगते ॥४०॥४१ अदित्यांकश्यपाद्वामनआसेतियत्तदपि तद्रूपयोर्युवयोरहमेवपु नरास

वर्षवातातपहिमघर्मकालगुणाननु ॥ सहमानौश्वासरोधविनिर्धूतमनोमलौ ॥३४॥ शीर्णपर्णानिलाहारा वुपशांतेनचेतसा ॥ मत्तःकामानभीप्संतौमदाराधनमीहतुः ॥ ३५ ॥ एवंवांतप्यतोस्तीव्रंतपःपरमदुष्करं॥ दिव्यवर्षसहस्राणिद्वादशेयुर्मदात्मनोः ॥ ३६ ॥ तदावांपरितुष्टोऽहममुनावपुषाऽनघे ॥ तपसाश्रद्धयानि त्यंभक्त्याचहृदिभावितः ॥ ३७ ॥ प्रादुरासंवरदराड्युवयोःकामदित्सया ॥ व्रियतांवरइत्युक्तेमादृशोवांवृ तःसुतः ॥ ३८ ॥ अजुष्टग्राम्यविषयावनपत्यौचदंपती ॥ नवव्राथेऽपवर्गंमेमोहितौदेवमायया ॥ ३९ ॥ गते मयियुवांलब्ध्वावरंमत्सदृशंसुतं ॥ ग्राम्यान्भोगानभुंजाथांयुवांप्राप्तमनोरथौ ॥४० ॥ अदृष्ट्वाऽन्यतमंलो केशीलौदार्यगुणैःसमं ॥ अहंसुतोवामभवंपृश्निगर्भइतिश्रुतः ॥ ४१ ॥तयोर्वांपुनरेवाहमदित्यामासकश्य पात् ॥ उपेंद्रइतिविख्यातोवामनत्वाच्चवामनः ॥ ४२ ॥ तृतीयेऽस्मिन्भवेऽहंवैतेनैववपुषाथवां ॥ जातोभू यस्तयोरेवसत्यंमेव्याहृतंसति ॥ ४३ ॥ एतद्वांदर्शितंरूपंप्राग्जन्मस्मरणायमे ॥ नान्यथामद्भवंज्ञानंमर्त्य लिंगेनजायते ॥४४॥ युवांमांपुत्रभावेनब्रह्मभावेनचासकृत् ॥ चिंतयंतौकृतस्नेहौयास्येथेमद्गतिंपरां ॥४५॥ य दिकंसाद्बिभेषित्वंतर्हिमांगोकुलंनय ॥ मन्मायामानयाशुत्वंयशोदागर्भसंभवां ॥ ४६ ॥ श्रीशुकउवाच इत्युक्त्वासीद्धरिस्तूष्णींभगवानात्ममायया ॥ पित्रोःसंपश्यतोःसद्योबभूवप्राकृतःशिशुः ॥ ४७ ॥

मित्यर्थः ॥ ४२ ॥ ४३ ॥ प्राक्प्रथमंतावदेतद्रूपंमेजन्मेतिस्मरणायज्ञानायदर्शितं मद्भवंमद्विषयं अनंतरंत्वदिच्छयाबालोऽपिभविष्या मीतिभावः ॥ ४४॥ ननुत्वयिप्रसन्नेऽपिकथमावयोःपुनःपुनर्जन्मेत्यतःपरंनभविष्यतीत्याह युवामिति ॥ ४५ ॥ ४६ ॥ ४७ ॥

यदिकंसाद्बिभेषितर्हिमांगोकुलंनय यशोदायाश्चतांकन्यांमन्मायामानयेतिप्रथममेवभगवताप्रचोदितोवसुदेवोयदागंतुमैच्छत्तदैवअजाऽपि
यायोगमायासानंदजाययानिमित्तमात्रभूतयाअजानिजाता ॥ ४८ ॥ हृताःप्रत्ययार्थाःसर्वावृत्तयोयेषां अथवा हृताः प्रत्ययाःअन्याश्चसर्वावृत्त
योयेषांजाग्रतामपि तथाभूतेषुद्वारपालेषुसत्सुबृहत्सुकपाटेषुलोहकीलयुक्तशृंखलैर्बृहद्भिःकपाटादिभिःदुरत्ययाइतिवा ॥ ४९ ॥ स्वयमेव व्य
वर्यंतविवृताइत्यर्थः व्यव्रियंतेतिवक्तव्येगुणश्छांदसः रवेर्निमित्तात् ॥ ५० ॥ गंभीरोयस्तोयौघस्तस्यजवेनयेऊर्मयस्तैःफेनिलाफेनव्याप्ता भया

ततश्चशौरिर्भगवत्प्रचोदितःसुतंसमादायससूतिकागृहात् ॥ यदाबहिर्गंतुमियेषतर्ह्यजायायोगमायाऽज
निनंदजायया ॥४८॥ तयाहृतप्रत्ययसर्ववृत्तिषुद्वास्थेषुपौरेष्वपिशायितेष्वथ॥द्वारस्तुसर्वाःपिहितादुरत्य
याबृहत्कपाटायसकीलशृंखलैः ॥४९॥ ताःकृष्णवाहेवसुदेवआगतेस्वयंव्यवर्यंतयथातमोरवेः॥ववर्षपर्ज
न्यउपांशुगर्जितःशेषोऽन्वगाद्वारिनिवारयन्फणैः ॥५०॥ मघोनिवर्षत्यसकृद्यमानुजागंभीरतोयौघजवो
र्मिफेनिला ॥ भयानकावर्त्तशताकुलानदीमार्गंददौसिंधुरिवश्रियःपतेः ॥५१॥ नंदव्रजंशौरिरुपेत्यतत्रतान्
गोपान्प्रसुप्तानुपलभ्यनिद्रया॥ सुतंयशोदाशयनेनिधायतत्सुतामुपादायपुनर्गृहानगात् ॥५२॥देवक्याः
शयनेन्यस्यवसुदेवोऽथदारिकां ॥ प्रतिमुच्यपदोर्लोहमास्तेपूर्ववदावृतः ॥५३॥ यशोदानंदपत्नीचजातंप
रमबुध्यत॥नतल्लिंगंपरिश्रांतानिद्रयापगतस्मृतिः॥५४॥इ०भा०द०पू०कृष्णजन्मनितृतीयोऽध्यायः॥३॥
श्रीशुकउवाच बहिरंतःपुरद्वारःसर्वाःपूर्ववदावृताः॥ततोबालध्वनिंश्रुत्वागृहपालाःसमुत्थिताः ॥१॥ तेतु
तूर्णमुपव्रज्यदेवक्यागर्भजन्मतत् ॥ आचख्युर्भोजराजाययदुद्विग्नःप्रतीक्षते ॥ २ ॥ सतल्पात्तूर्णमुत्थाय
कालोयमितिविह्वलः ॥ सूतीगृहमगात्तूर्णंप्रस्खलन्मुक्तमूर्द्धजः ॥३॥ ॥ ॥ ॥ ॥

नकैरावर्त्तशतैर्व्याप्ताऽपिश्रियःपतेःसीतापतेः ॥५१॥ निद्रयाअजया ॥५२॥ प्रतिमुच्यबध्वा पदोःपादयोःलोहंनिगडमास्तेस्म ॥ ५३ ॥ जातं
किंचिदितिकेवलमबुध्यत ततुताल्लिंगंपुत्रःकन्यावेति योगनिद्रयाचमोहितेति ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेटीकायांतृतीयो
ऽध्यायः॥३॥ ॥चतुर्थेचंडिकावाक्यमाकर्ण्यातिभयाकुलः॥दुर्मंत्रिभिर्हितंमेने कंसोबालादिहिंसनं॥१॥१॥तदष्टमंजन्म॥२॥कालोमृत्युः॥३॥

॥ ४ ॥ ५ ॥ अंगहेभ्रातः ॥ ६ ॥ दीनदीनवत्दीनादपिदीनवत्नतुतथा पुत्रस्यान्यत्रनीतत्वात्साचयोगमायेतिज्ञातत्वात् याचितोऽपि आचिच्छिदेहस्तादाकृष्यजग्राह ॥ ७ ॥ अपोथयद्बलेनचिक्षेप ॥ ८ ॥ सद्यएवदेवीभूत्वा ॥ ९ ॥ १० ॥ ११ ॥ कृपणानिति अन्यान्

तमाहभ्रातरंदेवीकृपणाकरुणंसती ॥ स्नुषेयंतवकल्याणस्त्रियंमाहंतुमर्हसि ॥४॥ बहवोहिंसिताभ्रातःशिशवःपावकोपमाः ॥ त्वयादैवनिसृष्टेनपुत्रिकैकाप्रदीयताम् ॥५॥ नन्वहंतेह्यवरजादीनाहतसुताप्रभो ॥ दातुमर्हसिमंदायाअंगेमांचरमांप्रजाम् ॥ ६ ॥ श्रीशुकउवाच उपगुह्यात्मजामेवंरुदंत्यादीनदीनवत् ॥ याचितस्तांविनिर्भर्त्स्यहस्तादाचिच्छिदेखलः ॥७॥ तांगृहीत्वाचरणयोर्जातमात्रांस्वसुःसुताम् ॥ अपोथयच्छिलापृष्ठेस्वार्थोन्मूलितसौहृदः ॥८॥ सातद्धस्तात्समुत्पत्यसद्योदेव्यंबरंगता ॥ अदृश्यतानुजाविष्णोःसायुधाष्टमहाभुजा ॥९॥ दिव्यस्रगंबरालेपरत्नाभरणभूषिता ॥ धनुःशूलेषुचर्मासिशंखचक्रगदाधरा ॥१०॥ सिद्धचारणगंधर्वैरप्सरःकिन्नरोरगैः ॥उपाहृतोरुबलिभिःस्तूयमानेदमब्रवीत् ॥११॥ किंमयाहतयामंदजातःखलुतवांतकृत् ॥ यत्रक्वपूर्वशत्रुर्माहिंसीःकृपणान्वृथा ॥१२॥ इतिप्रभाष्यतंदेवीमायाभगवतीभुवि ॥ बहुनामनिकेतेषुबहुनामाबभूवह ॥१३॥ तयाऽभिहितमाकर्ण्यकंसःपरमविस्मितः ॥ देवकींवसुदेवंचविमुच्यप्रश्रितोऽब्रवीत् ॥१४॥ अहोभगिन्यहोभाममयावांबतपाप्मना ॥पुरुषादइवापत्यंबहवोहिंसिताःसुताः ॥१५॥ सत्वहंत्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः ॥ कांल्लोकान्वैगमिष्यामिब्रह्महेवमृतःश्वसन् ॥ १६ ॥ दैवमप्यनृतंवक्तिनमर्त्याएवकेवलं ॥ यद्विश्रंभादहंपापःस्वसुर्निहतवान्शिशून् ॥१७॥ ॥ ॥

शिशून्हनिष्यतीतिज्ञात्वावारयति पाठांतरेमामांकृपणांवृथाऽहिंसीःहिंसितवानसीति ॥१२॥ बहुनामनिकेतेषुवाराणस्यादिस्थानेषु ॥१३॥ परमविस्मितःकथंदैवीवागनृताजातेति ॥ १४ ॥ भामहेभगिनिभर्त्तः पुरुषादोराक्षसोयथास्वापत्यमेवहिनस्तितद्वत् ॥ १५ ॥ १६ ॥ १७ ॥

हेमहाभागौ स्वकृतंभुजःस्वारब्धकर्मभोक्तॄन्स्वात्मजान्माशोचतम् किंच जंतवःप्राणिनःसदानासतेकिंतुअल्पकालमेवतदाऽपिएकत्र नासतेकिंतुवियुज्यंते यतोदैवाधीनाः ॥ १८ ॥ सदानासतइत्यनेनयदुक्तंजन्ममरणादिंतदपिदेहानामेवनात्मनइत्याह भुवीतिभूतानिदेहाएव भवंतिनभवंतिचेत्यर्थः यथाभुविभौमानिघटादीनितद्वत् एतेषुभूतेषुजन्मादिभिर्विक्रियमाणेषुअयमपरोक्षतयाप्रत्याभिज्ञायमानोनाविपर्योति विपर्ययंनप्राप्नोति एकरूपएववर्त्ततइत्यर्थः भौमेषुविक्रियमाणेषुयथाभूस्तथेति एवंविचार्यमाणेसतिनशोकाद्यवकाशः॥ १९ ॥ अज्ञानत स्तुननिवर्त्ततइत्याह यथेति यथायथावत् अनेवंविदएवमजानतः आत्मविपर्ययःदेहात्मबुद्धिर्भवतियतोविपर्ययाद्भेदोभवति देहाहंकारेणा हि आत्मानिपरिच्छिन्नेसतिइदंकारास्पदंभिन्नंभवति यतोभेदात्पुत्रादिदेहैर्योगोवियोगश्चततःसंसृतिः सुखदुःखेइतियावदज्ञानंननिवर्त्ततइत्य

माशोचतंमहाभागावात्मजान्स्वकृतंभुजः ॥ जंतवोनसदैकत्रदैवाधीनाःसहासते ॥१८॥ भुविभौमानिभूतानियथायांत्यपयांतिच ॥ नायमात्मातथैतेषुविपर्येतियथैवभूः ॥ १९ ॥ यथाऽनेवंविदोभेदोयतआत्मविपर्ययः ॥ देहयोगवियोगौचसंसृतिर्ननिवर्त्तते ॥२०॥ तस्माद्भद्रेस्वतनयान्मयाव्यापादितानपि॥ माऽनुशोचयतःसर्वःस्वकृतंविंदतेऽवशः ॥२१॥ यावद्धतोऽस्मिहंताऽस्मीत्यात्मानंमन्यतेस्वदृक् ॥ तावत्तदभिमान्यज्ञोबाध्यबाधकतामियात् ॥२२॥ क्षमध्वंममदौरात्म्यंसाधवोदीनवत्सलाः॥ इत्युक्त्वाश्रुमुखःपादौश्यालःस्वस्रोरथाग्रहीत् ॥ २३ ॥ मोचयामासनिगडाद्विश्रब्धःकन्यकागिरा ॥ देवकींवसुदेवंचदर्शयन्नात्मसौहृदं ॥२४॥ भ्रातुःसमनुतप्तस्यक्षांतरोषाचदेवकी ॥ व्यसृजद्वसुदेवश्चप्रहस्यतमुवाचह ॥२५॥ एवमेतन्महाभागयथावदसिदेहिनां ॥ अज्ञानप्रभवाऽहंधीःस्वपरेतिभिदायतः ॥ २६ ॥ ॥ ॥ ॥

र्थः ॥ २० ॥ एवमुक्तप्रकारेणनैतेतवतनयाः अहंतुतावन्नघातितवांस्तथाऽपि अज्ञानदृष्ट्यास्वतनयान्मयाव्यापादितानपिमानुशोचेतिसांत्व यति तस्मादिति अज्ञानाश्रयमेवकर्मवादमाह यतइति ॥ २१ ॥ कथंतर्हिब्राह्मणादिहंतुःतद्वधस्यचप्रायाश्चित्तश्रवणमज्ञानमूलमेवेत्याह याव दिति अस्वदृक् देहाभिमानी तावत्तदभिमानीतस्यदेहस्यहननमात्मानिअभिमन्यमानइत्यर्थः ॥ २२॥ श्यालःकंसःस्वस्रोरितिस्वसृशब्देनद्वि वचनानुपपत्त्यामिथुनगणनद्वारामिथुनीलक्षणयास्वसृतत्पत्योराभिधानांलिंगसमवायेनप्राणभृतउपदधातीतिवद्देवकीवसुदेवयोः प्रत्येकंपा दमग्रहीदित्यर्थःश्यालशब्देनवाकथंचिद्वसुदेवाभिधानं ॥ २३ ॥ आत्मसौहृदंप्रियवादादिदर्शयन् ॥ २४ ॥ २५ ॥ २६ ॥

स्वपरभेददर्शनेकिंभवातितदाह शोकहर्षेति भावैरेवनिमित्तभूतैर्मिथोभावान्घ्नंतंभावमीश्वरंपृथग्दृशस्तेनपश्यंति किंतुअहमेवहंताहत श्चे
तिमन्यंतइत्यर्थः ॥ २७ ॥ विशुद्धंयथाभवति ॥ २८ ॥ २९ ॥ नातिकोविदाः दृष्टमात्रमतयः ॥ ३० ॥ ननिर्गतानिदशादिनानियेषांतान्अ
न्यांश्च ॥ ३१ ॥ ३२ ॥ अस्यतःबाणान्क्षिपतःसतः उत्सृज्यरणंत्यक्त्वा ॥ ३३ ॥ ३४ अन्यासक्तान् विमुखांश्चेतिनहंसिनाहिनास्ति ॥ ३५ ॥
क्षेमेनिर्भयेदेशे शूरैःसंयुगादन्यत्रविकत्थनंप्रौढिवादोयेषांतैः ननुहरेर्बिभेमिशंभोश्चेतिचेत्तत्राहुः रहोजुषेति सर्वस्याप्यंतःप्रविष्टेनक्वाचिदपि

शोकहर्षभयद्वेषलोभमोहमदान्विताः ॥ मिथोघ्नंतंनपश्यंतिभावैर्भावंपृथग्दृशः ॥ २७ ॥ श्रीशुकउवाच
कंसएवंप्रसन्नाभ्यांविशुद्धंप्रतिभाषितः ॥ देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहं ॥ २८ ॥ तस्यांरात्र्यांव्य
तीतायांकंसआहूयमंत्रिणः ॥ तेभ्यआचष्टतत्सर्वंयदुक्तंयोगनिद्रया ॥ २९ ॥ आकर्ण्यभर्तुर्गदितंतमूचुर्देवश
त्रवः ॥ देवान्प्रतिकृतामर्षादैतेयानातिकोविदाः ॥ ३० ॥ एवंचेत्तर्हिभोजेंद्रपुरग्रामव्रजादिषु ॥ अनिर्दशा
न्निर्दशांश्चहनिष्यामोऽद्यवैशिशून् ॥ ३१ ॥ किमुद्यमैःकरिष्यंतिदेवाःसमरभीरवः ॥ नित्यमुद्विग्नमनसोज्या
घोषैर्धनुषस्तव ॥ ३२ ॥ अस्यतस्तेशरव्रातैर्हन्यमानाःसमंततः ॥ जिजीविषवउत्सृज्यपलायनपराययुः ॥ ३३ ॥
केचित्प्रांजलयोदीनान्यस्तशस्त्रादिवौकसः ॥ मुक्तकच्छशिखाःकेचिद्भीताःस्मइतिवादिनः ॥ ३४ ॥ नत्वंवि
स्मृतशस्त्रास्त्रान्विरथान्भयसंवृतान् ॥ हंस्यन्यासक्तविमुखान्भग्नचापानयुध्यतः ॥ ३५ ॥ किंक्षेमशूरैर्विबुधैर
संयुगविकत्थनैः ॥ रहोजुषाकिंहरिणाशंभुनावावनौकसा ॥ ३६ ॥ किमिंद्रेणाल्पवीर्येणब्रह्मणावातपस्यता ॥
तथापिदेवाःसापत्न्यान्नोपेक्ष्याइतिमन्महे ॥ ततस्तन्मूलखननेनियुंक्ष्वास्माननुव्रतान् ॥ ३७ ॥ यथाऽमयोंऽ
गेसमुपेक्षितोनृभिर्नशक्यतेरूढपदश्चिकित्सितुम् ॥ यथेंद्रियग्रामउपेक्षितस्तथारिपुर्महान्बद्धबलोनचाल्य
ते ॥ ३८ ॥ मूलंहिविष्णुर्देवानांयत्रधर्मःसनातनः ॥ तस्यचब्रह्मगोविप्रास्तपोयज्ञाःसदक्षिणाः ॥ ३९ ॥

बहिरदृष्टेनेत्यर्थः पुरुषप्रवृत्तिरहितामिलावृतवनमोकोयस्यतेनशंभुनावा ॥ ३६ ॥ यद्यप्युद्यमैर्देवानकिंचिदपिकर्तुंसमर्थास्तथापिनोतिरनु
सर्त्तव्येत्याहुःतथापीति ॥ ३७ ॥ रूढपदःबद्धमूलः ॥ ३८ ॥ देवानांमूलंविष्णुःसचयत्रधर्मस्तत्रास्ते धर्ममूलंवेदादयइति ॥ ३९ ॥ ४० ॥ ४१ ॥

॥४०॥४१॥ किंचविप्रादयोहरेरेवतनवोयस्मात्तस्मादयमेवोपायइत्याहुः अयमिति ॥ ४२ ॥४३॥४४॥आरात्समीपमागतोमृत्युर्येषांते ॥ ४५ ॥ सतांविद्वेषोनमृत्युमात्रहेतुःकिंतुबव्हनर्थकारीत्याह आयुःश्रियमिति ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ पंचमेजातकंनंदःसूनोःकृत्वामहोत्सवं ॥ गत्वाथमथुरांप्रापवसुदेवागमोत्सवं ॥ १ ॥ महामनाउदारचित्तः॥ १ ॥ २ ॥ नियुतेद्वेलक्षे सप्ततिलपर्वतांश्चप्रादात् कथंभूतान् रत्नौघैःरत्नसमूहैःशातकौंभांबरैःसुवर्णरसाक्तैरंबरैश्चावृतान् ॥ ३ ॥ द्रव्याणांगोहिरण्या

तस्मात्सर्वात्मनाराजन्ब्राह्मणान्ब्रह्मवादिनः॥तपस्विनोयज्ञशीलान्गाश्चहन्मोहविर्दुघाः॥४०॥ विप्रागाव श्चवेदाश्चतपःसत्यंदमःशमः॥ श्रद्धादयातितिक्षाचक्रतवश्चहरेस्तनूः॥४१॥ सहिसर्वसुराध्यक्षोह्यसुरद्विट् गुहाशयः॥ तन्मूलादेवताःसर्वाःसेश्वराःसचतुर्मुखाः॥ अयंवैतद्वधोपायोयदृषीणांविहिंसनं ॥४२॥ श्रीशु कउवाच एवंदुर्मंत्रिभिःकंसःसहसंमंत्र्यदुर्मतिः॥ ब्रह्महिंसांहितंमेनेकालपाशावृतोऽसुरः॥४३॥ संदिश्य साधुलोकस्यकदनेकदनप्रियान्॥ कामरूपधरान्दिक्षुदानवान्गृहमाविशत्॥४४॥ तेवैरजःप्रकृतयस्तम सागूढचेतसः॥ सतांविद्वेषमाचेरुरारादागतमृत्यवः॥ ४५ ॥ आयुःश्रियंयशोधर्मंलोकानाशिषएवच ॥ हंतिश्रेयांसिसर्वाणिपुंसोमहदतिक्रमः॥४६॥ इतिश्रीभागवतेमहापुराणेद०पू०चतुर्थोऽध्यायः॥४॥ छ॥ श्रीशुकउवाच नंदस्त्वात्मजउत्पन्नेजाताल्हादोमहामनाः॥ आहूयविप्रान्दैवज्ञान्स्नातःशुचिरलंकृतः॥१॥ वाचयित्वास्वस्त्ययनंजातकर्मात्मजस्यवै॥ कारयामासविधिवत्पितृदेवार्चनंतथा॥ २ ॥ धेनूनांनियुतेप्रा दाद्विप्रेभ्यःसमलंकृते॥ तिलाद्रीन्सप्तरत्नौघशातकौंभांबरावृतान्॥ ३ ॥ कालेनस्नानशौचाभ्यांसंस्कारै स्तपसेज्यया॥ शुध्यंतिदानैःसंतुष्ट्याद्रव्याण्यात्मात्मविद्यया॥ ४ ॥ ॥ ॥ ॥ ॥

दीनांमध्येकेषांचिद्दानैरेवशुद्धिर्यथातथाऽन्नदानादियुक्तजातकर्मादिसंस्कारैरेवगर्भाणांशुद्धिरिति दर्शयितुंप्रतिनियतानिशोधकानिदृष्टांतेनो दाहरति कालेनेति कालेनभूम्यादि स्नानेनदेहादि शौचेनामेध्यलिप्तादि संस्कारैर्गर्भादि तपसाइंद्रियादि इज्ययाब्राह्मणादि दानैर्द्रव्या णि संतुष्ट्यामनः आत्माआत्मविद्ययाइति ॥ ४ ॥ ॥ ॥ ॥ ॥

सौमंगल्यगिरः स्वस्तिवाचकाविप्रादयोबभूवुः तत्र सूताः पौराणिकाः प्रोक्तामागधावंशशंसकाः ॥ बंदिनस्त्वमलप्रज्ञाःप्रस्तावसदृशोक्तयः ॥ ५ ॥ संमृष्टानिसंसिक्तानिचद्वाराणिअजिराणिअंगणानिगृहांतराणिगृहमध्यानिचयस्मिन्स्तथा चित्रध्वजेषुपताकानांस्रजश्चैलपल्लवतोरणानिचतैर्भूषितः ॥ ६ ॥ हरिद्रातैलैरूषिताःलिप्ताः विचित्रधातवश्चबर्हस्रजश्चवस्त्राणिचकांचनमालाश्चअलंकारतयाविद्यंतेयेषांते तथाभूताःगवादयोबभूवुरित्यर्थः ॥ ७ ॥ ८ ॥ आकल्पाःअलंकाराः ॥९॥ नवकुंकुमकिंजल्कैर्मुखपंकजेषुभूतिःश्रीर्यासांताः ॥१०॥ सु

सौमंगल्यगिरोविप्राःसूतमागधबंदिनः ॥ गायकाश्चजगुर्नेदुर्भेर्योदुंदुभयोमुहुः ॥५॥ व्रजःसंमृष्टसंसिक्तद्वाराजिरगृहांतरः ॥ चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥६॥ गावोवृषावत्सतराहरिद्रातैलरूषिताः विचित्रधातुबर्हस्रग्वस्त्रकांचनमालिनः ॥७॥ महार्हवस्त्राभरणकंचुकोष्णीषभूषिताः ॥ गोपाःसमाययूराजन्नानोपायनपाणयः ॥ ८ ॥ गोप्यश्चाकर्ण्यमुदितायशोदायाःसुतोद्भवं ॥ आत्मानंभूषयांचक्रुर्वस्त्राकल्पांजनादिभिः ॥ ९ ॥ नवकुंकुमकिंजल्कमुखपंकजभूतयः ॥ बलिभिस्त्वरितंजग्मुःपृथुश्रोण्यश्चलत्कुचाः ॥१०॥ गोप्यःसुमृष्टमणिकुंडलनिष्ककंठ्यश्चित्रांबराःपथिशिखाच्युतमाल्यवर्षाः ॥ नंदालयंसवलयाव्रजतीर्विरेजुर्व्यालोलकुंडलपयोधरहारशोभाः ॥११॥ ताआशिषःप्रयुंजानाश्चिरंपाहीतिबालके ॥ हरिद्राचूर्णतैलाद्भिःसिंचंत्योजनमुज्जगुः ॥ १२ ॥ अवाद्यंतविचित्राणिवादित्राणिमहोत्सवे ॥ कृष्णेविश्वेश्वरेऽनंतेनंदस्यव्रजमागते ॥ १३ ॥ गोपाःपरस्परंहृष्टादधिक्षीरघृतांबुभिः ॥ आसिंचंतोविलिंपंतोनवनीतैश्चचिक्षिपुः ॥ १४ ॥ नंदोमहामनास्तेभ्योवासोऽलंकारगोधनं ॥ सूतमागधवंदिभ्योयेऽन्येविद्योपजीविनः ॥ १५ ॥ तैस्तैःकामैरदीनात्मायथोचितमपूजयत् ॥ विष्णोराराधनार्थायस्वपुत्रस्योदयायच ॥ १६ ॥

मृष्टानिउज्ज्वलितानिमणिमयानिकुंडलानियासां निष्कानिपदकानिकंठेषुयासांताश्च शिखाभ्यश्च्युतानिमाल्यवर्षाणियासांताःनंदालयंव्रजतीःव्रजंत्यः पथिविरेजुः सवलयाःकंकणभूषिताः व्यालोलैःकुंडलादिभिःशोभायासांताः ॥ ११ ॥ जनंसिंचंत्यःअजनमुज्जगुरितिवा ॥ १२ ॥ १३ ॥ १४ ॥ तेभ्यःप्रादात् ॥ १५ ॥ यथोचितमन्यानपिअपूजयत् ॥ १६ ॥ ॥ ॥ ॥

॥ १७ ॥ हरेर्निवासेनयेआत्मनिगुणाःसर्वप्रियत्वादयस्तैरमायाआक्रीडंविहारस्थानं ॥ १८ ॥ वार्षिक्यंप्रतिवर्षंदेयं ॥ १९ ॥ भ्रातरंस्वायं तदवमोचनंतस्यत्रसतिस्थानंशकटोत्तारभूमिं ॥२०॥२१॥२२॥२३॥ पुनर्भवःपुनर्जातइव तत्रहेतुगर्भंविशेषणंसंसारचक्रेवर्त्तमानइति ॥ २४ ॥ दुर्लभत्वमेवाह नैकत्रेति प्रियश्चासौसंवासश्चप्रियसंवासः हेप्रियेतिवा स्रोतसओघेननीयमानानां प्लवंतीतिप्लवाः तृणकाष्ठादयस्तेषांयथाएकत्रास्थितिर्नास्तितद्वत् ॥ २५ ॥ कच्चिदिति पशव्यादिरूपेतस्मिन्वनेनिर्दोषगोपयोवृध्यादिप्रभूतगोपिकास्तन्यादि

रोहिणीचमहाभागानंदगोपाभिनंदिता ॥ व्यचरद्दिव्यवासःस्त्रक्कंठाभरणभूषिता ॥१७॥ ततआरभ्यनंदस्यव्रजःसर्वसमृद्धिमान् ॥ हरेर्निवासात्मगुणैरमाक्रीडमभून्नृप ॥१८॥ गोपान्गोकुलरक्षायांनिरूप्यमथुरांगतः॥ नंदःकंसस्यवार्षिक्यंकरंदातुंकुरूद्वह ॥१९॥ वसुदेवउपश्रुत्यभ्रातरंनंदमागतं ॥ ज्ञात्वादत्तकरंराज्ञेययौतदवमोचनं ॥२०॥ तंदृष्ट्वासहसोत्थायदेहःप्राणमिवागतं ॥ प्रीतःप्रियतमंदोर्भ्यांपस्वजेप्रेमविह्वलः॥२१॥ पूजितःसुखमासीनःपृष्ट्वाऽनामयमादृतः॥प्रसक्तधीःस्वात्मजयोरिदमाहविशांपते॥२२॥दिष्ट्याभ्रातःप्रवयसइदानीमप्रजस्यते ॥ प्रजाशायानिवृत्तस्यप्रजायत्समपद्यत ॥ २३ ॥ दिष्ट्यासंसारचक्रेऽस्मिन्वर्तमानःपुनर्भवः ॥ उपलब्धोभवानद्यदुर्लभंप्रियदर्शनं ॥२४॥ नैकत्रप्रियसंवासःसुहृदांचित्रकर्मणां ॥ ओघेनव्यूह्यमानानांप्लवानांस्त्रोतसोयथा ॥ २५ ॥ कच्चित्पशव्यंनिरुजंभूर्यंबुतृणवीरुधं ॥ बृहद्वनंतदधुनायत्रास्सेत्वंसुहृद्वृतः ॥ २६ ॥ भ्रातर्ममसुतःकच्चिन्मात्रासहभवद्व्रजे ॥ तातंभवंतंमन्वानोभवद्भ्यामुपलालितः ॥ २७ ॥ पुंसस्त्रिवर्गोविहितःसुहृदोह्यनुभावितः ॥ नतेषुक्लिश्यमानेषुत्रिवर्गोऽर्थायकल्पते ॥ २८ ॥ नंदउवाच अहोतेदेवकीपुत्राःकंसेनबहवोहताः ॥ एकाऽवशिष्टाऽवरजाकन्यासापिदिवंगता ॥ २९ ॥

नापुत्रक्षेमविवक्षयापृच्छति प्रसक्तधीःस्वात्मजयोरित्युक्तत्वात् ॥२६॥भवद्भ्यामुपलालितःसन्कच्चिद्वर्त्ततइतिशेषः ॥ २७ ॥ पुत्रादर्शनक्लेशानाह पुंसइति सुहृदोबंधून्प्रत्यनुभावितःसंपादितोयस्त्रिवर्गःसहिपुंसोविहितःयुक्तः शास्त्रेणवाप्रोक्तः नस्वमात्रपर्यवसितःअतस्तेषुक्लिश्यमानेषुसुखायनभवतीत्यर्थः ॥ २८ ॥ नंदोवसुदेवंसांत्वयन्नाहअहोइति ॥ २९ ॥ ॥ ॥ ॥

अदृष्टएवनिष्ठासमाप्तिर्यस्यसः यदैवपुत्रादिसुखप्रदमदृष्टंहीयतेतदैवतेपुत्रादयोनभवंतीत्यर्थः अदृष्टपरमः तथाअदृष्टमेवपरमंयस्यसः यद्यपि पुत्रादयोवियुक्तास्तथापितानदृष्टमेवपुनः संगमयतीत्यर्थः एवमदृष्टमात्मनस्तत्वमव्यभिचारिकारणंसुखदुःखयोर्योवेदसनमुह्यतितस्मादिदा नींत्वयानदुःखंभावनीयं मृतानामपिवियुक्तानामपिचकालांतरेदर्शनयोगयोः संभवात् अस्मदादिभिरपिकालांतरेतद्वियोगेसत्यपीतिनंद स्यदैवीवागेषाभाविसूचिका ॥ ३० ॥ तांबुध्वावसुदेवोदुःखंत्यत्क्वानंदमाह करोवैइति वःयुष्माभिः ॥ ३१ ॥ ३२ ॥ इतिश्रीभागवते महापुराणेदशमस्कंधेटीकायांपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ षष्ठेसख्युर्गिरानंदोव्रजंगच्छन्मृतांपथि ॥ दृष्ट्वातुराक्षसींतस्या मृत्युंश्रुत्वाथविस्मितः ॥ १ ॥ १ ॥ २ ॥ कृष्णाविषयेशंकमानंराजानंप्रतिअविषयेप्रवृत्तासैवमरिष्यतीतिसूचयन्नाहनयत्रेति यत्रश्रीकृष्ण

नूनंह्यदृष्टनिष्ठोऽयमदृष्टपरमोजनः ॥ अदृष्टमात्मनस्तत्त्वंयोवेदनसमुह्यति ॥ ३० ॥ वसुदेवउवाच करो वैवार्षिकोदत्तोराज्ञेदृष्टावयंचवः ॥ नेहस्थेयंबहुतिथंसंत्युत्पाताश्चगोकुले ॥ ३१ ॥ श्रीशुकउवाच इ तिनंदादयोगोपाःप्रोक्तास्तेशौरिणाययुः ॥ अनोभिरनडुद्युक्तैस्तमनुज्ञाप्यगोकुलम् ॥३२॥ इ ०भा०द० पू० वसुदेवसंगमोनामपंचमोध्यायः॥ ५॥ ॥ श्रीशुकउवाच नंदःपथिवचःशौरेर्नमृषेतिविचिंतयन्॥ हरिंजगामशरणमुत्पातागमशंकितः ॥ १ ॥ कंसेनप्रहिताघोरापूतनाबालघातिनी ॥ शिशूंश्चचारनिघ्नंती पुरग्रामव्रजादिषु॥ २ ॥नयत्रश्रवणादीनिरक्षोघ्नानिस्वकर्मसु॥कुर्वंतिसात्वतांभर्तुर्यातुधान्यश्चतत्रहि॥३॥ साखेचर्येकदोपेत्यपूतनानंदगोकुलं ॥ योषित्वामाययात्मानंप्राविशत्कामचारिणी ॥ ४ ॥ तांकेशबंधव्यति षक्तमाल्लिकांबृहन्नितंबस्तनकृच्छ्रमध्यमां ॥ सुवाससंकंपितकर्णभूषणत्विषोल्लसत्कुंतलभूषिताननाम् ॥५॥

स्यश्रवणादीनिनसंतितत्रैवतासांशक्तिः साक्षात्तस्मिन्नेवसतिकाशंकेतिभावः ॥ ३ ॥ योषित्वावेषतावरांनारीमिवआत्मानंविधाय ननुनिर्ल ज्जानिर्विशंकाचसतीकथंपरसद्मनिप्रविष्टाअतआह कामचारिणीति नहिकामचारिणीष्विदंचित्रमित्यर्थः ॥ ४ ॥ तांवनितांपतिंद्रष्टुमाग तामातिरूपवतींश्रियामित्रगोप्योऽमंसतेत्युत्तरश्लोकेनान्वयः श्रीसाम्यार्थानिविशेषणानि केशबंधव्यतिषक्तमल्लिकांधम्मिल्लसंसक्तमल्लिका कुसुमाम् बृहतानितंबेनस्तनाभ्यांचउभयतआक्रांतामिवकृच्छ्रंकृशंमध्यममुदरंयस्यास्ताम् सुवाससंशोभनेरमणीयेवाससीयस्यास्ताम् कं पितयोःकर्णभूषणयोस्त्विषाउल्लसद्भिः कुंतलैर्मंडितमाननंयस्यास्ताम् ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वल्गुस्मितापांगविसर्गवीक्षितैः वल्गुरम्यंस्मितंयेषुतेतथाभूताअपांगविसर्गायेषुतैर्वीक्षितैर्व्रजौकसांमनोहरंतीम् अतोगोपात्द्दतमनस्त्वेनतान् निवारितवंतइत्युक्तं गोप्यश्चश्रियमितिमत्वातूष्णीमासन् अतःकेनाप्यनिवारितासतीप्रविवेशेतिभावः ॥ ६ ॥ बालग्रहःपूतनाअसदंतकंबालंददर्श असतामंतकंद्दष्ट्वाकथंनबिभेतितत्राह प्रतिच्छन्ननिजोरुतेजसम् बालनाट्येनप्रतिछन्नंतिरोहितंनिजमुरुतेजोयेनतंकमिव भस्मिभस्मन्याहित मग्निमिवेति ॥७॥ चराचरात्मत्वादेवतांविबुध्यानिमीलितेक्षणआस स्वयमनंतंदुष्टानामंतकंबालंमत्वासाअंकमारोपयत् यथोरगंसुप्तमबुद्धिश्वासौरज्जुधीश्चसः अज्ञानतोरज्जुबुध्यागृह्णातितद्वत् ॥ ८ ॥ ननुयशोदारोहिण्यौतांकथंनन्यवारयेतांतत्राह तामिति

**वल्गुस्मितापांगविसर्गवीक्षितैर्मनोहरंतींवनितांव्रजौकसाम् ॥अमंसतांभोजकरेणरूपिणींगोप्यःश्रियंद्रष्टुमिवागतांपतिम् ॥६॥ बालग्रहस्तत्रविचिन्वतीशिशून्यद्दच्छयानंदगृहेसदंतकं ॥ बालंप्रतिच्छन्ननिजोरुतेजसंददर्शतल्पेऽग्निमिवाहितंभासि ॥७॥ विबुद्ध्यतांबालकमारिकाग्रहंचराचरात्मासनिमीलितेक्षणः॥ अनंतमारोपयदंकमंतकंयथोरगंसुप्तमबुद्धिरज्जुधीः ॥ ८ ॥ तांतीक्ष्णचित्तामतिवामचेष्टितांवीक्ष्यांतराकोशपरिच्छदासिवत् ॥वरस्त्रियंतत्प्रभयाचधर्षितेनिरीक्षमाणेजननीह्यतिष्ठतां॥९॥तस्मिंस्तनंदुर्जरवीर्यमुल्बणंघोरांकमादायशिशोर्ददावथ ॥ गाढंकराभ्यांभगवान्प्रपीड्यतत्प्राणैःसमंरोषसमन्वितोऽपिबत् ॥ १० ॥ सामुंचमुंचालमितिप्रभाषिणीनिष्पीड्यमानाऽखिलजीवमर्मणि ॥ विवृत्यनेत्रेचरणौभुजौमुहुःप्रस्विन्नगात्राक्षिपतीरुरोदह ॥ ११ ॥ तस्याःस्वनेनातिगभीररंहसासाद्रिर्महीद्यौश्चचचालसग्रहा ॥ रसादिशश्चप्रतिनेदिरेजनाःपेतुःक्षितौवज्रनिपातशंकया ॥ १२ ॥ ॥ ॥ ॥**

वामंवल्गुजनन्याइवचेष्टितंयस्यास्तांवरास्त्रियंचसहसैवअंतरागृहमध्येवीक्ष्य अंतस्तैक्ष्ण्येबहिर्मार्दवेचद्दष्टांतःकोशपरिच्छदासिवत् मृदुचित्रचर्ममयःकोशःपरिच्छदःआवरणंयस्यअसेःखड्गस्यतद्वत् तत्प्रभयाचधर्षितेअभिभूतेअहमस्यजननीयवेतिमोहितेचसत्यौजननीजनन्यौनिरीक्षमाणेएवकेवलमतिष्ठतांनतुनिवारितवत्यौ ॥ ९ ॥ तस्मिन्स्थानेदुर्जरंवीर्यंविषंयस्मिंस्तंस्तनंश्रीकृष्णमंकमादायतस्मैशिशवेददौ अथ अनंतरमेवप्रपीड्यकेवलंविषमपथ्यमितिमत्वेवतस्याःप्राणैःसहापिबत् ॥ १० ॥ चरणौभुजौचमुहुर्मुहुःक्षिपती प्रस्विन्नानिस्वेदयुक्तानिगात्राणियस्याःसा ॥ ११ ॥ रसाःरसातलानिच ॥ १२ ॥ ॥ ॥ ॥ ॥

व्यादायमुखंविवृत्य निजरूपमास्थिता मरणसपर्येकपटमयुक्तमितिभावः वृत्रोवज्राहतइव ॥१३ ॥ पतन्नपितस्यादेहःषट्क्रोशमध्यवर्ति
नोद्रुमानूचूर्णीचकार ॥१४॥ ईशामात्रोग्रदंष्ट्रास्यं ईषालांगलदंडस्तत्प्रमाणाउग्रादंष्ट्रायस्मिंस्तत्तथाभूतमास्यंयस्मिंस्तत्तस्याः कलेवरंवीक्ष्यगो
पागोप्यश्चसंतत्रसुः संत्रासहेतुत्वेनपुनरष्टभिःपदैर्विशिनष्टि गिरिकंदरवत्नासिकेयस्मिंस्तत् गिरिश्च्युतौस्थूलोपलौताविवस्तनौयस्मिंस्तत्
रौद्रंघोरं प्रकीर्णाअरुणामूर्द्धजायस्मिंस्तत् ॥१५॥ अंधकूपाविवगभीरेअक्षिणीयस्मिंस्तत् पुलिनवत्आरोहौजघनेताभ्यांभीषणं बद्धाःसेत
वइवभुजौऊरूअंघ्रीचयस्मिंस्तत् शून्यतोयन्हदइवउदरंयस्मिंस्तादिति ॥ १६ ॥ पूर्वमेवतस्याःशब्देनभीताः पुनर्दर्शनेनातितत्रसुरित्याह

निशाचरीत्थंव्यथितस्तनाव्यसुर्व्यादायकेशांश्चरणौभुजावपि ॥ प्रसार्यगोष्ठेनिजरूपमास्थितावज्राहतो
वृत्रइवापतन्नृप ॥ १३ ॥ पतमानोऽपितद्देहस्त्रिगव्यूत्यंतरद्रुमान् ॥ चूर्णयामासराजेंद्रमहदासीत्तद
द्भुतं ॥ १४ ॥ ईषामात्रोऽग्रदंष्ट्रास्यंगिरिकंदरनासिकं ॥ गंडशैलस्तनंरौद्रंप्रकीर्णारुणमूर्द्धजं ॥ १५ ॥ अंध
कूपगभीराक्षंपुलिनारोहभीषणं ॥ बद्धसेतुभुजोर्वंघ्रिशून्यतोयन्हदोदरं ॥ १६ ॥ संतत्रसुःस्मतद्वीक्ष्यगोपा
गोप्यःकलेवरं ॥ पूर्वंतुतन्निःस्वनितभिन्नत्द्धत्कर्णमस्तकाः ॥ १७॥ बालंचतस्याउरसिक्रीडंतमकुतोभयं॥
गोप्यस्तूर्णंसमभ्येत्यजगृहुर्जातसंभ्रमाः ॥१८॥ यशोदारोहिणीभ्यांताःसमंबालस्यसर्वतः ॥ रक्षांविदधि
रेसम्यग्गोपुच्छभ्रमणादिभिः ॥१९॥ गोमूत्रेणस्नापयित्वापुनर्गोरजसाऽर्भकं ॥ रक्षांचक्रुश्चशकृताद्वादशां
गेषुनामभिः ॥ २० ॥ गोप्यःसंस्पृष्टसलिलाअंगेषुकरयोःपृथक् ॥ न्यस्यात्मन्यथबालस्यबीजन्यासम
कुर्वत ॥ २१ ॥ अव्यादजोऽघ्रिमणिमांस्तवजान्वथोरूयज्ञोऽच्युतःकटितटंजठरंहयास्यः ॥ हृत्केशवस्त्व
दुरईशइनस्तुकंठंविष्णुर्भुजंमुखमुरुक्रमईश्वरःकं ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥

पूर्वंत्विति तस्यानिःस्वनितंशब्दस्तेननिर्भिन्नानित्द्धत्कर्णमस्तकानियेषांते ॥१७॥ १८॥ १९॥ द्वादशांगेषुललाटादिषु केशवादिद्वादश
नामभिः ॥२०॥ अनाचांताएवप्रथममतिसंभ्रमेणैवंरक्षांकृत्वाकिंचिल्लब्धश्वासाःपुनस्तात्पर्येणबीजन्यासमकुर्वतेत्याह गोप्यइति संस्पृष्ट
सलिलाःआचांताः आत्मनिप्रथममंगेषु करयोश्चपृथक् अजाद्येकादशबीजानांमध्येकरशुद्धौत्रीणिकरयोःसंधिषुचत्वारि चत्वारितथाअंघ्र्या
दावेकैकस्मिन्नंगेअजाद्येकैकंबीजंन्यस्यबालस्याप्यंगेषुतथैवाकुर्वत ॥२१॥ अंघ्रिअंघ्री जानुजानुनी भुजंभुजौ कंशिरः ॥ २२ ॥ ॥

तथादिक्षुरक्षामकुर्वन्नित्याह चक्र्यग्रतइति चक्रसहितोहरिस्तवाग्रतोऽस्तु सहगदोगदासहितोहरिस्तवपश्चादस्तु त्वत्पार्श्वयोर्धनुर्धरोमधु
हाअसिधरोऽजनश्चैतावास्ताम् शंखधरउरुगायश्चतुष्कोणेषु क्षितौअधस्तात् ॥ २३ ॥ एवंबहीरक्षांकृत्वाअंतरंगामकुर्वन्नित्याह इंद्रियाणी
ति॥२४॥आत्मानंअहंकारं ॥२५॥२६॥२७॥२८॥२९॥ सन्यवेशयत्शाययामास॥३०॥३१॥ विस्मयमेवाह नूनमिति बतविस्मये सांप्रतं



चक्र्यग्रतःसहगदोहरिरस्तुपश्चात्त्वत्पार्श्वयोर्धनुरसीमधुहाऽजनश्च ॥ कोणेषुशंखउरुगायउपर्युपेंद्रस्ता
र्क्ष्यःक्षितौहलधरःपुरुषःसमंतात् ॥२३॥ इंद्रियाणिहृषीकेशःप्राणान्नारायणोऽवतु ॥ श्वेतद्वीपपतिश्चित्तंम
नोयोगेश्वरोवतु ॥२४॥ पृश्निगर्भश्चतेबुद्धिमात्मानंभगवान्परः ॥ क्रीडंतंपातुगोविंदःशयानंपातुमाधवः
॥२५॥ व्रजंतमव्याद्वैकुंठआसीनंत्वांश्रियःपतिः ॥ भुंजानंयज्ञभुक्पातुसर्वग्रहभयंकरः ॥२६॥ डाकिन्यो
यातुधान्यश्चकूष्मांडायेऽर्भकग्रहाः॥भूतप्रेतपिशाचाश्चयक्षरक्षोविनायकाः॥२७॥कोटरारेवतीज्येष्ठापूतना
मातृकादयः ॥ उन्मादायेह्यपस्मारादेहप्राणेंद्रियद्रुहः ॥२८॥ स्वप्नदृष्टामहोत्पातावृद्धबालग्रहाश्चये॥सर्वे
नश्यंतुतेविष्णोर्नामग्रहणभीरवः॥२९॥इतिप्रणयबद्धाभिर्गोपीभिःकृतरक्षणं॥पाययित्वास्तनंमातासंन्य
वेशयदात्मजं ॥ ३० ॥ तावन्नंदादयोगोपामथुरायाव्रजंगताः ॥ विलोक्यपूतनादेहंबभूवुरतिविस्मिताः॥
॥३१॥ नूनंबतर्षिःसंजातोयोगेशोवासमाससः ॥ सएवदृष्टोह्युत्पातोयदाहानकदुंदुभिः ॥३२ ॥ कलेवरं
परशुभिश्छित्वातत्तेव्रजौकसः ॥ दूरेक्षिप्त्वाऽवयवशोन्यदहन्काष्ठवेष्टितं ॥ ३३ ॥ दह्यमानस्यदेहस्य धूम
श्चागुरुसौरभः ॥ उत्थितःकृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥ ३४ ॥ पूतनालोकबालघ्नीराक्षसीरुधिरा
शना ॥ जिघांसयाऽपिहरयेस्तनंदत्वाऽऽपसद्गतिं ॥ ३५ ॥ किंपुनःश्रद्धयाभक्त्याकृष्णायपरमात्मने ॥
यच्छन्प्रियतमंकिंनुरक्तास्तन्मातरोयथा ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सऋषिस्तपःप्रभाववान्योगेशोज्ञानीवासम्यगास यतःसएवदृष्टइति॥ ३२ ॥ ३३ ॥ विस्मयांतरमाह दह्यमानस्येति कृष्णेननिर्भुक्तःअ
तएवसपद्याहतःपाप्मायस्य ॥ ३४ ॥ प्रसंगात्कैमुत्यन्यायेनभक्तिवैभवमाह पूतनेति ॥ ३५ ॥ श्रद्धयाआस्तिक्येन भक्त्याप्रेम्णारक्ताःस्नि
ग्धाः तन्मातरइतिवत्साहरणलीलाभिप्रायेणबहुवचनं गोगोपिकास्तदामातरोऽभवन्निति ॥ ३६ ॥ ॥ ॥

॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ एतदार्भकमर्भकचरितम् किंतत् पूतनामोक्षमिति ॥ ४४ ॥ अत्तुंदैत्यकुलानी
शः पूतनायाः शिशुच्छलात् ॥ स्तन्यापोशनतः प्राणैः प्राणाहुतिमकल्पयत् ॥ १ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेटीकायांषष्ठोध्या
यः ॥ ६ ॥ ॥ उत्क्षिपन्शकटंव्योम्नितृणावर्त्तमधःक्षिपन् ॥ दर्शयन्विश्वमास्येचकृष्णः क्रीडतिसप्तमे ॥ १ ॥ कृष्णार्भकसुधासिंधुसंप्लु
वानंदनिर्भरः ॥ भूयस्तदेवसंप्रष्टुंराजाऽन्यदभिनंदाति ॥ २ ॥ येनयेनेति येनयेनमत्स्याद्यवतारेणापियानिकर्माणिकरोतितानिनः कर्णसु

पद्भ्यांभक्तहृदिस्थाभ्यांवंद्याभ्यांलोकवंदितैः ॥ अंगंयस्याः समाक्रम्यभगवानपिबत्स्तनम् ॥ ३७ ॥ यातुधा
न्यपिसास्वर्गमवापजननीगतिम् ॥ कृष्णभुक्तस्तनक्षीराः किमुगावोनुमातरः ॥ ३८ ॥ पयांसियासामपिबत्पु
त्रस्नेहस्नुतान्यलं ॥ भगवान्देवकीपुत्रः कैवल्याद्यखिलप्रदः ॥ ३९ ॥ तासामविरतंकृष्णेकुर्वतीनांसुतेक्षणम् ॥
नपुनः कल्पतेराजन्संसारोऽज्ञानसंभवः ॥ ४० ॥ कटधूमस्यसौरभ्यमवघ्रायव्रजौकसः ॥ किमिदंकुतएवेति
वदंतोव्रजमाययुः ॥ ४१ ॥ तेतत्रवर्णितंगोपैः पूतनागमनादिकं ॥ श्रुत्वातन्निधनंस्वस्तिशिशोश्चासन्सुवि
स्मिताः ॥ ४२ ॥ नंदः स्वपुत्रमादायप्रेत्यागतमुदारधीः ॥ मूर्ध्न्युपाघ्रायपरमांमुदंलेभेकुरूद्वह ॥ ४३ ॥ यएतत्पूत
नामोक्षंकृष्णस्यार्भकमद्भुतं ॥ शृणुयाच्छ्रद्धयामर्त्योगोविंदेलभतेरतिं ॥ ४४ ॥ इति० भा० म० द० पू० षष्ठोध्या
यः ॥ ६ ॥ ॥ राजोवाच येनयेनावतारेणभगवान्हरिरीश्वरः ॥ करोतिकर्णरम्याणिमनोज्ञानिचनः
प्रभो ॥ १ ॥ यच्छृण्वतोऽपैत्यरतिर्वितृष्णासत्वंचशुद्ध्यत्यचिरेणपुंसः ॥ भक्तिर्हरौतत्पुरुषेचसख्यंतदेवहारं
वदमन्यसेचेत् ॥ २ ॥ अथान्यदपिकृष्णस्यतोकाचरितमद्भुतं ॥ मानुषंलोकमासाद्यतज्जातिमनुरुंधतः ॥ ३ ॥

खावहानिमनःप्रीतिकराणिचभवंत्येव ॥ १ ॥ तथापितच्छृण्वतः पुंसः पुरुषमात्रस्यअरतिर्मनोग्लानिस्तन्मूलभूताविविधातृष्णाचअपगच्छ
ति तथासत्वशुद्धिर्हरिभक्तिर्हरिदाससख्यानिचभवंति तदेवहारंहरेश्वरितंमनोहरंवावदअनुग्रहंयदिकरोषीति ॥ २ ॥ अत्यौत्सुक्येनपुनर्वि
शिनष्टि अथेति अनुरुंधतः अनुकुर्वतः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

उत्थानंशिशोरंगपरिवर्त्तनंतत्रकरणीयेकौतुकाप्लवेउत्सवाभिषेकेतथातस्मिन्नेवदिनेजन्मर्क्षस्यापियोगेअतिमहोत्सवेसमवेतयोषितांमिलित
पुरंध्रीणांमध्येवादित्रादिभिःशोभितमभिषेचनंसतीयशोदाचकार॥४॥अन्नादिभिःसुपूजितैर्विप्रैःकृतमंगलं संजातनिद्रंअक्षिणयिस्यतंअशी
शयत्शायितवती शकटस्याधस्तात्प्रेंखे ॥ ५ ॥ उदक्षिपत्ऊर्ध्वंचालितवान् ॥ ६ ॥ तदधःशयानस्यशिशोरल्पकश्चासौप्रवालवन्मृदुश्च
योंऽघ्रिस्तेनहतमनःशकटंव्यवर्त्ततविपरीतमपतत् कथंविध्वस्तानिनानारसवंतिकुप्यभाजनानिस्वर्णरजतातिरिक्तिकांस्यादिमयानि यथा

श्रीशुकउवाच कदाचिदौत्थानिककौतुकाप्लवेजन्मर्क्षयोगेसमवेतयोषितां ॥ वादित्रगीतद्विजमंत्रवाचकै
श्चकारसूनोरभिषेचनंसती॥ ४॥नंदस्यपत्नीकृतमज्जनादिकंविप्रैःकृतस्वस्त्ययनंसुपूजितैः॥अन्नाद्यवासः
स्रगभीष्टधेनुभिःसंजातनिद्राक्षमशीशयच्छनैः ॥ ५ ॥ औत्थानिकौत्सुक्यमनामनास्विनीसमागतान्पूजय
तीव्रजौकसः॥ नैवाशृणोद्वैरुदितंसुतस्यसारुदंस्तनार्थीचरणावुदक्षिपत् ॥६॥ अधःशयानस्यशिशोरनोल्प
कप्रवालमृद्वंघ्रिहतंव्यवर्त्तत ॥ विध्वस्तनानारसकुप्यभाजनंव्यत्यस्तचक्राक्षविभिन्नकूबरं॥७॥ दृष्ट्वायशो
दाप्रमुखाव्रजस्त्रियऔत्थानिकेकर्मणियाःसमागताः ॥ नंदादयश्चाद्भुतदर्शनाकुलाःकथंस्वयंवैशकटंविप
र्यगात्॥इतिब्रुवंतोऽतिविवादमोहिताजनाःसमंतात्परिवव्रुरार्तवत्॥८॥ऊचुरव्यवसितमतीन्गोपान्गोपी
श्चबालकाः॥रुदताऽनेनपादेनक्षिप्तमेतन्नसंशयः ॥ ९ ॥ नतेश्रद्दधिरेगोपाबालभाषितमित्युत॥ अप्रमेयंब
लंतस्यबालकस्यनतेविदुः॥१०॥ रुदंतंसुतमादाययशोदाग्रहशंकिता॥कृतस्वस्त्ययनंविप्रैःसूक्तैःस्तनमपा
ययत् ॥ ११ ॥ पूर्ववत्स्थापितंगोपैर्बलिभिःसपरिच्छदं ॥ विप्राहुत्वाऽर्चयांचक्रुर्दध्यक्षतकुशांबुभिः ॥ १२॥

भवंतितथा चक्रेचअक्षश्चचक्राक्षाः व्यत्यस्ताश्चक्राक्षायस्मिन् विभिन्नःकूबरोयुगंधरोयस्यतच्चतच्चयथाभवतितथाव्यवर्त्ततइति ॥ ७ ॥
अद्भुतदर्शनेनआकुलाबभूवुः तदेवाह कथमिति विपर्यगात्विपरीतमपतदिति॥८॥९॥नश्रद्दधिरेविश्वासंनजग्मुः उतअपिबालस्यैतन्न
संभवतिएतेचबालाःकिंजानंतीति ॥ १० ॥ रक्षोघ्नैःसूक्तैःकृत्वा ॥११ ॥ भगवत्प्रभावानभिज्ञाविप्रचेष्टितंविडंबयन्नाह पूर्ववदित्यादिना
बलिभिःशक्तैः यद्वाअष्टदिक्षुबलिभिःसहितंसपरिकरंयथापूर्वंस्थापितंविप्राःदध्यादिभिःअर्चयामासुः हुत्वाग्रहादिहोमंविधाय ॥ १२ ॥

असूयागुणेदोषाविष्करणं ईर्ष्याअक्षांतिः तैरसूयादिभिर्विवर्जितास्तेषामाशिषःकृतास्तैःप्रयुक्ताः ॥१३॥ इतिएवमभिप्रेत्यसामर्ग्यजुर्भिःउपाकृतैःसंस्कृतैःपवित्राओषधयोयेषुजलेषुतैःकृत्वाद्विजोत्तमैःकर्तृभिरभिषिच्यअभिषेकंकारयित्वा ॥ १४ ॥ हुत्वाहावयित्वा ॥१५॥ गावःगाश्चप्रादात् अन्वयुंजतआशिषोयुयुजुः ॥१६॥ तास्तथैवबभूवुरित्यर्थः ॥१७॥ उत्क्षिप्यमृदुपादेनशकटंव्योम्निलीलया॥तृणावर्त्तपदापी

येऽसूयानृतदंभेर्ष्याहिंसामानविवर्जिताः ॥ नतेषांसत्यशीलानामाशिषोविफलाःकृताः॥१३॥ इतिबालकमादायसामर्ग्यजुरुपाकृतैः ॥ जलैःपवित्रौषधिभिरभिषिच्यद्विजोत्तमाः ॥१४॥ वाचयित्वास्वस्त्ययनंनंदगोपःसमाहितः ॥ हुत्वाचाग्निंद्विजातिभ्यःप्रादादन्नंमहागुणं ॥ १५ ॥ गावःसर्वगुणोपेतावासःस्त्रग्रुक्ममालिनीः ॥ आत्मजाभ्युदयार्थायप्रादात्तेचान्वयुंजत ॥१६॥ विप्रामंत्रविदोयुक्तास्तैर्याःप्रोक्तास्तथाशिषः ॥ तानिष्फलाभविष्यंतिनकदाचिदपिस्फुटं॥१७॥एकदारोहमारूढंलालयंतीसुतंसती ॥गरिमाणंशिशोर्वोढुंनसेहेगिरिकूटवत् ॥१८॥ भूमौनिधायतंगोपीविस्मिताभारपीडिता ॥ महापुरुषमादध्यौजगतामासकर्मसु ॥१९॥ दैत्योनाम्नातृणावर्त्तःकंसभृत्यःप्रणोदितः ॥ चक्रवातस्वरूपेणजहारासीनमर्भकं ॥२०॥ गोकुलंसर्वमावृण्वन्मुष्णंश्चक्षूंषिरेणुभिः॥ईरयन्सुमहाघोरशब्देनप्रदिशोदिशः॥२१॥ मुहूर्त्तमभवद्गोष्ठंरजसातमसावृतं ॥ सुतंयशोदानापश्यत्स्वयंन्यस्तवतीयतः॥२२॥नापश्यत्कश्चनात्मानंपरंचापिविमोहितः॥ तृणावर्त्तनिसृष्टाभिःशर्कराभिरुपद्रुतः ॥ २३॥ इतिखरपवनचक्रपांसुवर्षेसुतपदवीमबलाऽविलक्ष्यमाता ॥ अतिकरुणमनुस्मरंत्यशोचद्भुविपतितामृतवत्सकायथागौः ॥ २४ ॥ ॥ ॥ ॥ ॥

डच्चभुव्यपातयदर्भकः॥आरोहमुत्संगं तृणावर्त्तात्स्वमृत्युपरिहारायकृष्णेनैवात्मनउत्संगादुत्तारायकृतंभारमजानती ॥१८॥ उत्पातशंकयामहापुरुषमादध्यौ श्रीकृष्णोदरवर्त्तिनांजगतांभारेणपीडिताविस्मितासती यद्वा जगतांमध्ये कर्मसुआसबभूव नतुजगदुदरंतंवेदेत्यर्थः॥१९॥ ॥ २० ॥ ईरयन्निनादयन्नित्यर्थः ॥ २१ ॥ यतःयत्रन्यस्तवतीतस्मिन्स्थानेनापश्यत् ॥२२॥२३॥ खरपवनचक्रात्पांसुवर्षेसति ॥ २४ ॥

उपारतः पांसुवर्षस्यवेगोयस्मिंस्तथाभूतेपवनेसाति तत्रतस्याःरुदितमनुनिशम्यगोप्योरुरुदुः ॥ २५ ॥ वात्याचक्रवातस्तद्रूपधरःकृष्णंहर
न्शांतरयःकथंचिन्नभोगतस्ततःपरंगंतुंनाशक्नोदित्यर्थः ॥ २६ ॥ गुरुमत्तयाऽतिगौरवेणतंतथाअश्मानमश्मवंतंपर्वतप्रायंमन्यमानस्तेनै
वात्मनोगलेगृहीतत्वात्तंत्यक्तुमिच्छन्नपिनाशक्नोदित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ तस्योरसिलंबमानंकृष्णमादायमात्रेप्रातिरद्दत्यसमर्प्यविं

रुदितमनुनिशम्यतत्रगोप्योभृशमनुतप्तधियोऽश्रुपूर्णमुख्यः॥रुरुदुरनुपलभ्यनंदसूनुंपवनउपारतपांसुव
र्षवेगे ॥२५॥ तृणावर्त्तःशांतरयोवात्यारूपधरोहरन्॥कृष्णंनभोगतोगंतुंनाशक्नोद्भूरिभारभृत् ॥२६॥ तम
श्मानंमन्यमानआत्मनोगुरुमत्तया॥गलेगृहीतउत्स्रष्टुंनाशक्नोदद्भुतार्भकम् ॥२७॥ गलग्रहणनिश्चेष्टोदै
त्योनिर्गतलोचनः॥अव्यक्तरावोन्यपतत्सहबालोव्यसुर्व्रजे ॥२८॥ तमंतरिक्षात्पतितंशिलायांविशीर्णस
र्वावयवंकरालम्॥पुरंयथारुद्रशरेणविद्धंस्त्रियोरुदंत्योददृशुःसमेताः ॥२९॥ प्रादायमात्रेप्रतिहृत्यविस्मि
ताःकृष्णंचतस्योरसिलंबमानं॥तंस्वस्तिमंतंपुरुषादनीतंविहायसामृत्युमुखात्प्रमुक्तम् ॥ ३० ॥ गोप्यश्च
गोपाःकिलनंदमुख्यालब्धाशिषःप्रापुरतीवमोदम् ॥ ३१ ॥ अहोबतात्यद्भुतमेषरक्षसाबालोनिवृत्तिंगमि
तोऽभ्यगात्पुनः॥हिंस्रःस्वपापेनविहिंसितःखलःसाधुःसमत्वेनभयाद्विमुच्यते ॥ ३२ ॥ किंनस्तपश्चीर्णम
धोक्षजार्चनंपूर्तेष्टदत्तमुतभूतसौहृदम्॥यत्संपरेतःपुनरेवबालकोदिष्ट्यास्वबंधून्प्रणयन्नुपस्थितः ॥ ३३ ॥
दृष्ट्वाद्भुतानिबहुशोनंदगोपोबृहद्वने ॥ वसुदेववचोभूयोमानयामासविस्मितः ॥३४॥ एकदाऽर्भकमादाय
स्वांकमारोप्यभामिनी ॥ प्रस्नुतंपाययामासस्तनंस्नेहपरिप्लुता ॥ ३५ ॥ ॥ ॥ ॥

स्मिताश्चबभूवुरिति विहायसागगनमार्गेणपुरुषादेननीतंतथापिमृत्युमुखात्प्रमुक्तं ॥ ३० ॥ पुनर्लब्धाशिषःमोदंप्रापुरिति ॥ ३१ ॥ पर
स्परंहर्षकथामाहुः अहोबतेति निवृत्तिंगमितोमृत्युंप्रापितः कोऽत्रविस्मयोयुज्यतएवैतदितितेष्वेवकेचिदाहुः हिंस्रइति ॥ ३२ ॥ नःअ
स्माभिः चीर्णंकृतं पूर्तंवापीकूपादिनिर्माणं इष्टंपंचयज्ञाग्निहोत्रादि दत्तंदानं यद्यस्मात्तपआदेः प्रणयन् हर्षयन् ॥ ३३ ॥ ३४ ॥ ३५॥

तृणावर्त्तांगमेद्दष्टगौरवाशंकिनींप्रसूम् ॥ बोधयन्दर्शयामासजृंभमाणेमुखेजगत् ॥ पीतप्रायस्यपीतप्रायःस्तनोयेनतस्य ॥ ३६ ॥ नगा
न्गिरींस्तद्दुहितॄर्नदीः ॥३७॥३८॥ इतिदशमेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ अष्टमेनामकर्मास्यबालक्रीडाकुतूहले ॥ मृद्भक्षणादि
योगेचविश्वरूपंनिरूप्यते ॥ १ ॥ विश्वरूपादिबालस्यनिशम्याशंकिनःपितुः ॥ नामकृद्गर्गवाक्येननिजंतत्त्वमसूसुचत् ॥ २ ॥ १ ॥
॥ २ ॥ ३ ॥ पूर्णश्चेत्कथंधनिनांगृहमागतस्तत्राह महद्विचलनमिति महतांस्वाश्रमादन्यत्रविचलनंनस्वार्थंकिंतुगृहिणांमंगलाय ननुत
र्हितएवमहद्दर्शनार्थंकिमितिनागच्छंतितत्राह दीनचेतसांकृपणानांक्षणमपिगृहंत्यक्तुमशक्नुवतामित्यर्थः ॥ ४ ॥ त्वयाबालयोर्नामकरणा

पीतप्रायस्यजननीसातस्यरुचिरस्मितं ॥ मुखंलालयतीराजन्जृंभतोददृशेइदम् ॥३६॥ खंरोदसीज्योति
रनीकमाशाःसूर्येंदुवन्हिश्वसनांबुधींश्च ॥ द्वीपान्नगांस्तद्दुहितॄर्वनानिभूतानियानिस्थिरजंगमानि ॥३७॥
सावीक्ष्यविश्वंसहसाराजन्संजातवेपथुः ॥ संमील्यमृगशावाक्षीनेत्रेआसीत्सुविस्मिता ॥ ३८ ॥ इतिश्री
भागवतेमहापुराणेदशमस्कंधेतृणावर्त्तमोक्षोनामसप्तमोध्यायः ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ गर्गः
पुरोहितोराजन्यदूनांसुमहातपाः ॥ व्रजंजगामनंदस्यवसुदेवप्रचोदितः ॥१॥ तंदृष्ट्वापरमप्रीतःप्रत्युत्था
यकृतांजलिः ॥ आनर्चाधोक्षजधियाप्रणिपातपुरःसरं ॥ २ ॥ सूपविष्टंकृतातिथ्यंगिरासूनृतयामुनिं ॥ नं
दयित्वाऽब्रवीद्ब्रह्मन्पूर्णस्यकरवामकिं ॥३॥ महद्विचलनंनृणांगृहिणांदीनचेतसां ॥ निःश्रेयसायभगवन्क
ल्पतेनान्यथाक्वचित् ॥ ४ ॥ ज्योतिषामयनंसाक्षाद्यत्तज्ज्ञानमतींद्रियं॥ प्रणीतंभवतायेनपुमान्वेदपरावरं
॥ ५ ॥ त्वंहिब्रह्मविदांश्रेष्ठःसंस्कारान्कर्तुमर्हसि ॥ बालयोरनयोर्नृणांजन्मनाब्राह्मणोगुरुः ॥ ६ ॥

दिकरणीयमितिवक्तुंतस्यज्ञानातिशयमाह ज्योतिषामयनमिति यदतींद्रियज्ञानसाधनंज्योतिषामयनंतत्प्रतिपादकंज्योतिःशास्त्रमित्यर्थः त
त्साक्षाद्भवताप्रणीतम् येनान्योपिपुमान्परावरंपरंकारणंपूर्वजन्मकृतंकर्मअवरंकार्यंतस्मिन्जन्मनिभाविफलंतद्वेद उक्तंच जातके यदुप
चितमन्यजन्मनिशुभाशुभंतस्यकर्मणःप्राप्तिं ॥ व्यंजयतिशास्त्रमेतत्तमसिद्रव्याणिदीपइवेति ॥ ५ ॥ विवक्षितमाह त्वंहीति दैवज्ञोमंत्र
विच्चत्वमतोनामकरणादिसंस्कारान्कर्तुमर्हसीत्यर्थः नन्वेतद्गुरुणाकरणीयमितिचेत्तत्राह नृणामिति ॥ ६ ॥

अत्युत्साहिनंनंदंप्रतिगुप्तमेतत्कार्यमित्यभिप्रायेणप्रत्याचक्षाणइवाह यदूनामिति भवतुतथापित्वमत्रागतइतिकोविद्यादितिचेदतआह ख्यातश्चेति ततःकिमतआह सुतमिति कंसोमन्यतेमन्येत कल्पयेदित्यर्थः ॥ ७ ॥ ननुयदुकुमारइतिकथंचिज्ज्ञानातुतत्रवसुदेवस्यसुतस्तत्रापिदेवक्यांजातइतिकुतोजानीयात्तत्राह कंसःपापमतिरित्यादि ॥ ८ ॥ किंमयाहतयामंदेत्यादिदेवकीकन्यावचःश्रुत्वादेवक्याअष्टमोगर्भोनस्त्रीभवितुमर्हतीतिनित्यंसंचिंतयन्सामान्येनक्वचिदस्तीतिज्ञात्वायुवयोश्चसख्यंसांचिंतयंस्त्वद्गृहेभवेदितिसंभाव्यमत्संस्कारलिंगेनचआगताशंकःआगताआशंकायस्यसःअपियदिहंताहनिष्यतितर्हितत्तदानोमहान्अनयःस्यादिति ॥ ९ ॥ द्विजातिसंस्कारंद्विजातीनामव

गर्गउवाच यदूनामहमाचार्यःख्यातश्चभुविसर्वदा ॥ सुतंमयासंस्कृतंतेमन्यतेदेवकीसुतं ॥ ७ ॥ कंसःपापमतिःसख्यंतवचानकदुंदुभेः ॥ देवक्याअष्टमोगर्भोनस्त्रीभवितुमर्हति ॥ ८ ॥ इतिसंचिंतयन् श्रुत्वादेवक्यादारिकावचः ॥ अपिहंतागताशंकस्तर्हितन्नोऽनयोभवेत् ॥ ९ ॥ नंदउवाच अलक्षितोऽस्मिन्रहसि मामकैरपिगोव्रजे ॥ कुरुद्विजातिसंस्कारंस्वस्तिवाचनपूर्वकं ॥ १० ॥ श्रीशुकउवाच एवंसंप्रार्थितोविप्रः स्वचिकीर्षितमेवतत् ॥ चकारनामकरणंगूढोरहसिबालयोः ॥ ११ ॥ गर्गउवाच अयंहिरोहिणीपुत्रोरमयन्सुहृदोगुणैः॥आख्यास्यतेरामइतिबलाधिक्याद्बलंविदुः ॥ यदूनामपृथग्भावात्संकर्षणमुशंत्युत ॥ १२ आसन्वर्णास्त्रयोह्यस्यगृण्हतोऽनुयुगंतनूः ॥ शुक्लोरक्तस्तथापीतइदानींकृष्णतांगतः ॥ १३ ॥ प्रागयंवसुदेवस्यक्वचिज्जातस्तवात्मजः ॥ वासुदेवइतिश्रीमानभिज्ञाःसंप्रचक्षते ॥ १४ ॥ बहूनिसंतिनामानिरूपाणिचसुतस्यते॥गुणकर्मानुरूपाणितान्यहंवेदनोजनाः ॥ १५ ॥ ॥

इयंकर्त्तव्यंसंस्कारमात्रंकेवलंस्वस्तिवाचनपूर्वकंकुर्विति ॥ १० ॥ ११ ॥ यदूनामपृथग्भावात्कुतश्चिद्धेतोर्विप्रतिपद्यमानानांयदूनामपृथग्भावात् भावोभावनंतस्मात् अन्योन्यशिक्षयासर्वैकमत्यकरणादित्यर्थः सम्यक्कर्षतिएकीकरोतीतिसंकर्षणमप्युशंतिमन्यंते वक्ष्यंतीत्यर्थः गर्भसंकर्षणंतुनप्रकाशयति ॥ १२ ॥ अस्यतवपुत्रस्य अतःकृष्णइतिएकंनामभविष्यति ॥ १३ ॥ प्रागयमितिसामान्योक्त्याऋषिरयंजन्मांतरगतंनामकथयतीतिनंदोमन्यतेस्म अतएवंवासुदेवइतिसंप्रचक्षतइति ॥ १४ ॥ गुणानुरूपाणिईश्वरःसर्वज्ञइत्यादीनि कर्मानुरूपाणिगोपतिर्गोवर्धनोद्धारणइत्यादीनि तानिसर्वाण्यहमपिनोवेदजनाअपिनविदुरिति ॥ १५ ॥ ॥ ॥ ॥

जातकर्मफलमाह एषइति आधास्यत् आधास्यति अनेनरक्षमाणाःसमेधिताश्चदस्यून्विजिग्युरिति ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ इति
चात्मानंप्रतिसमादिश्य आत्मानंकृष्णंवा आशिषामाशीर्भिः ॥ २० ॥ बालक्रीडाचमत्कारैःकृष्णोरामेणसंयुतः॥परमानंदमाधत्तव्रजेनंद
यशोदयोः ॥ पूर्णत्वमेवदर्शयन्नाह कालेनेति ॥ २१ ॥ अनुकृष्यपुनःपुनराकृष्य सरीसृपंतौअतिशयेनचलंतौ कथं घोषाःकटिपादभू
षणकिंकिण्यस्तेषांप्रघोषेणरुचिरंयथातथा तेषांनादेनत्दृष्टंमनोययोस्तौ लोकंइतस्ततोगच्छंतंजनमुपसृत्यत्रिचतुराणिपदानिअनुगम्यमु

एषवःश्रेयआधास्यद्गोपगोकुलनंदनः॥अनेनसर्वदुर्गाणियूयमंजस्तरिष्यथ॥ १६ ॥ पुराऽनेनव्रजपतेसाध
वोदस्युपीडिताः॥ अराजकेरक्ष्यमाणाजिग्युर्दस्यून्समेधिताः ॥ १७ ॥ यएतस्मिन्महाभागाःप्रीतिंकुर्वंति
मानवाः॥ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः ॥ १८ ॥ तस्मान्नंदात्मजोऽयंतेनारायणसमोगुणैः॥
श्रियाकीर्त्यानुभावेनगोपायस्वसमाहितः ॥ १९ ॥ इत्यात्मानंसमादिश्यगर्गेचस्वगृहंगते॥ नंदःप्रमुदितो
मेनेआत्मानंपूर्णमाशिषां ॥ २० ॥ कालेनव्रजताऽल्पेनगोकुलेरामकेशवौ॥जानुभ्यांसहपाणिभ्यांरिंगमा
णौविजन्हतुः॥ २१ ॥ तावंघ्रियुग्ममनुकृष्यसरीसृपंतौघोषप्रघोषरुचिरंव्रजकर्दमेषु॥तन्नादत्दृष्टमनसावनु
सृत्यलोकंमुग्धप्रभीतवदुपेयतुरंतिमात्रोः॥२२॥ तन्मातरौनिजसुतौघृणयास्नुवंत्यौपंकांगरागरुचिरावुप
गुह्यदोर्भ्यां॥दत्वास्तनंप्रपिबतोःस्ममुखंनिरीक्ष्यमुग्धास्मिताल्पदशनंययतुःप्रमोदं ॥ २३ ॥ यर्ह्यंगनादर्श
नीयकुमारलीलावंतर्व्रजेतदबलाःप्रगृहीतपुच्छैः ॥ वत्सैरितस्ततउभावनुकृष्यमाणौप्रेक्षंत्यउज्झितगृहा
जत्दृषुर्हसंत्यः ॥ २४ ॥ ॥ ॥ ॥ ॥

ग्धवत्प्रभीतवन्मात्रोरंतिसमीपेउपेयतुःउपजग्मतुः ॥ २२ ॥ तदाचतन्मातरौदोर्भ्यामुपगुह्यप्रमोदंययतुः कथंभूते घृणयाकृपयास्नुवंत्यौ
पयःपूरपयोधरेसत्यौ पंकेनांगरागेणचरुचिरौ कथंभूतंमुखंनिरीक्ष्य मुग्धंमंदंस्मितंयस्मिन् अल्पादशनाश्चयस्मिंस्तच्चतच्च ॥ २३ ॥ यर्हिअं
गनानांदर्शनीयाकुमारलीलाययोस्तथाभूतौजातौतदाऽतर्व्रजेव्रजस्यमध्येतदबलाव्रजांगनास्तौप्रेक्षंत्यःप्रेक्षमाणाविस्मृतगृहकृत्याहसंत्योज
त्दृषुःत्दृष्टाबभूवुः कथंभूतौ ताभ्यांप्रगृहीतानिपुच्छानियेषांतैर्वत्सैरितस्ततोऽनुकृष्यमाणौ ॥ २४ ॥ ॥ ॥

अतिचपलौतौशृंग्यादिभ्योनिषेद्धुंगृहोचितानिकर्माणिचकर्त्तुंयत्रयदातज्जनन्यौनशेकातेतदाऽलंमनसोऽनवस्थामापतुरितिगृहसौख्यस्यपरा
काष्ठादर्शिता ॥२५॥२६॥२७॥२८॥ कृष्णचापलचौर्याणिसहैवाखिलसद्मतः॥प्रजल्पत्यंःसमागत्यगोप्योगोप्यैमुदंददुः ॥ असमयेअदो
हकाले क्रोशेसंजातहासः स्तेयंचौर्यार्जितंनतुदत्तं तत्रापिस्वादुनेतरत् दधिचपयश्चअत्ति किंच भोक्ष्यन्मर्कान्मर्कटान्प्रतिविभज्यददाति
तेषांमध्येतृतत्वेनकोपिनात्तिचेत्तर्हिभांडंभिनत्ति क्वचिद्द्रव्यस्यालाभेसतिसःगृहायधक्ष्यामीतिकुपितोयाति यद्वा सगृहागृहिणस्तेभ्यःकुपित
स्तेषांतोकान्पर्यंकादिषुसुप्तान् उपक्रोश्यरोदयित्वायातीति ॥ २९ ॥ कल्पितैःस्तेययोगैरित्युक्तंतत्प्रपंचयति हस्ताग्राह्यइति तुंगशिक्यस्थ

शृंग्यग्निदंष्ट्र्यसिजलद्विजकंटकेभ्यःक्रीडापरावतिचलौस्वसुतौनिषेद्धुं॥गृह्याणिकर्त्तुमपियत्रनतज्जनन्यौ
शेकातआपतुरलंमनसोऽनवस्थां ॥२५॥ कालेनाल्पेनराजर्षेरामःकृष्णश्चगोकुले॥अघृष्टजानुभिःपद्भिर्वि
चक्रमतुरंजसा॥२६॥ततस्तुभगवान्कृष्णोवयस्यैर्व्रजबालकैः॥सहरामोव्रजस्त्रीणांचिक्रीडेजनयन्मुदं॥२७
कृष्णस्यगोप्योरुचिरंवीक्ष्यकौमारचापलं ॥ शृण्वंत्याःकिलतन्मातुरितिहोचुःसमागताः ॥२८॥ वत्सान्मु
चन्क्वचिदसमयेक्रोशसंजातहासःस्तेयंस्वाद्वत्त्यथदधिपयःकल्पितैःस्तेययोगैः॥मर्कान्भोक्ष्यन्विभजति
सचेन्नात्तिभांडंभिनत्तिद्रव्यालाभेसगृहकुपितोयात्युपक्रोश्यतोकान् ॥ २९ ॥ हस्ताग्राह्येरचयतिविधिं
पीठकोलूखलाद्यैश्छिद्रंह्यंतर्निहितवयुनःशिक्यभांडेषुतद्वित् ॥ध्वांतागारेधृतमणिगणंस्वांगमर्थप्रदीपंका
लेगोप्योयर्हिगृहकृत्येषुसुव्यग्रचित्ताः ॥ ३० ॥ एवंधार्ष्ट्यान्युशतिकुरुतेमेहनादीनिवास्तौस्तेयोपायैर्वि
रचितकृतिःसुप्रतीकोयथास्ते ॥ इत्थंस्त्रीभिःसभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्थाप्रहसितमुखी
नत्युपालब्धुमैच्छत् ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भांडेषुअंतर्निहितेदध्यादौवयुनंज्ञानंयस्यसःछिद्रंरचयति तद्वित् छिद्ररचनादिवित् ध्वांतयुक्तेगृहेस्वांगमेवार्थप्रदीपंरचयति विशेषतोधृतम
णिगणं यर्हियस्मिन्काले॥३०॥ रेरेचोरइत्याक्षिप्तःसन् उशतिजल्पति त्वमेवचोरःअहंगृहस्वामीत्यादीनि धार्ष्ट्यानिप्रागल्भ्यानि अथवा उश
तिहेकमनीयेयशोदे यद्वाउशतिवास्तौस्वर्चितेगृहेमेहनादीनिपुरीषोत्सर्गादीनिकुरुते एवंस्तेयोपायैःविरचिताकृतिःकर्मयेनसः त्वत्समीपेसु
प्रतीकःसाधुरिवास्ते सभयेनयनेयस्मिंस्तच्चतत् श्रीयुक्तंमुखंचतदालोकिनीभिर्व्याख्यातार्थाप्रख्यापितकर्मफलाउपालब्धुमाक्षेप्तुंनैच्छत् ॥ ३१

कदाचिदपराधांतरेउपालभततदातुमहदाश्चर्यमभूदितिकथयन्नाह एकदेति ॥ ३२ ॥ उपालभ्यनिर्भर्त्स्य भयेनसंभ्रांतप्रेक्षणेचपलनि
रीक्षणेअक्षिणियस्यतं ॥ ३३ ॥ अदांतात्मन्चपलगात्र रहःएकांते ॥ ३४ ॥ नाहंभक्षितवानिति नहिबाह्यंकिंचिन्मयाभक्ष्यतेमत्कुक्षावा
दावेवसर्वमस्तीतिभावः समक्षंप्रत्यक्षं॥३५॥ व्यादेहिमुखंप्रसारयेति व्यादत्तप्रसारितवान् ॥ ३६ ॥ तत्रतस्मिन्मुखेविश्वंददृशेददर्श त
त्प्रपंचयति जगत्जंगमं स्थास्नुस्थावरं खमंतरिक्षलोकं साद्रिद्वीपाब्धिभूगोलंपर्वतद्वीपसमुद्रसहितंभूगोलंभूर्लोकं वायुःप्रवहः अग्निर्वैद्यु
तः इंदुश्चतारकाश्चतत्सहितं ॥ ३७ ॥ ज्योतिश्चक्रंस्वर्लोकं वैकारिकाणिदेवाः मनइतिवैकारिकशब्देनगृहीतमपिदेववैलक्षण्यात्पुनरुक्तं

एकदाक्रीडमानास्तेरामाद्यागोपदारकाः॥ कृष्णोमृदंभक्षितवानितिमात्रेन्यवेदयन्॥ ३२ ॥ साग्रहीत्वा
करेकृष्णमुपालभ्यहितैषिणी॥ यशोदाभयसंभ्रांतप्रेक्षणाक्षमभाषत॥ ३३ ॥ कस्मान्मृदमदांतात्मन्भवा
न्भक्षितवान्रहः ॥ वदंतितावकाह्येतेकुमारास्तेऽग्रजोऽप्ययं॥ ३४॥ नाहंभक्षितवानंबसर्वेमिथ्याभिशं
सिनः॥ यदिसत्यगिरस्तर्हिसमक्षंपश्यमेमुखं॥ ३५॥ यद्येवंतर्हिव्यादेहीत्युक्तःसभगवान्हरिः ॥ व्याद
त्ताव्याहतैश्वर्यःक्रीडामनुजबालकः ॥३६॥ सातत्रददृशेविश्वंजगत्स्थास्नुचखंदिशः॥साद्रिद्वीपाब्धिभूगो
लंसवाय्वग्नींदुतारकं॥ ३७ ॥ ज्योतिश्चक्रंजलंतेजोनभस्वान्वियदेवच॥ वैकारिकाणींद्रियाणिमनोमा
त्रागुणास्त्रयः ॥ ३८ ॥ एतद्विचित्रंसहजीवकालस्वभावकर्माशयलिंगभेदं॥ सूनोस्तनौवीक्ष्यविदारिता
स्येव्रजंसहात्मानमवापशंकां॥ ३९॥ किंस्वप्नएतदुतदेवमायाकिंवामदीयोबतबुद्धिमोहः ॥ अथोअमुष्यै
वममार्भकस्ययःकश्चनौत्पत्तिकआत्मयोगः॥ ४० ॥ ॥ ॥

इंद्रियाणिचतैजसानि मात्रास्तामसाःशब्दादयः ॥३८॥ एवमेतद्विचित्रंविश्वंसहएकदैववीक्ष्य विचित्रतामाहजीवश्चगुणक्षोभकः कालश्चप
रिणामहेतुःस्वभावश्चजन्महेतुः कर्मचतत्संस्कारः आशयश्च एतैर्लिंगानांचराचरशरीराणांभेदोयस्मिंस्तत्तत्रव्रजंचसहात्मानंस्वसाहितंक्वचि
द्वीक्ष्य सूनोस्तनौअल्पेविदारितेआस्येशंकामवाप ॥ ३९ ॥ तामेवाह किंस्वप्नइति परितोविलोक्याह नायंस्वप्नः तर्हिकिंदेवस्यहरेर्माया त
थाचेदन्येकिंनपश्यंति तर्हिकिंवामदीयएवकश्चिद्बुद्धिमोहःविपर्यासोदर्पणेमुखवत् एवंतर्हिअयंकृष्णोपिकथमंतः प्रतीयतेअंतर्बहिश्चैकरू
पेणचकथंजगत्प्रतीयते तथासतिबिंबप्रतिबिंबयोरिवपरस्परंवैपरीत्येनप्रतीतिःस्यादित्याशंक्यान्यथावितर्कयति अथोइति अथवाममामु
ष्यार्भकस्यापिसतोयःकश्चनाचिंत्यआत्मयोगःस्वीयमैश्वर्यं औत्पत्तिकःस्वाभाविकः ॥४०॥ ॥ ॥

चरमंपक्षमाश्रित्यायमीश्वरइतिनिश्चित्याह अथोइति चेतश्चित्तं चित्तादिभिर्नवितर्कगोचरं जगद्यदाश्रयंयदधिष्ठानं येनकरणाधिष्ठात्रायतो बुद्धिवृत्त्यभिव्यक्तात् नन्विदमवितर्क्यंभवतुतत्पदंकीदृगतआह सुदुर्विभाव्यमिति इदमत्यंतमचिंत्यमित्यर्थः ॥ ४१ ॥ एवंप्रपंचप्रतीत्यो न्नीतंतत्त्वंपुनर्जीवसंसृतिहेतुमायाश्रयत्वेनोन्नयंत्याह अहमिति यशोदानामाहमसौममपतिः अमुष्यव्रजेश्वरस्याखिलवित्तपाऽधिष्ठात्रीअहं सतीजाया एषकृष्णोमेसुतः गोप्यादयश्चमदीयाइतीत्थंकुमतिर्यन्माययासएषमेशरणमिति ॥ ४२ ॥ वैष्णवींस्वीयां ॥ ४३ ॥ प्रवृद्धेनस्ने

अथोयथावन्नवितर्कगोचरंचेतोमनःकर्मवचोभिरंजसा ॥ यदाश्रयंयेनयतःप्रतीयतेसुदुर्विभाव्यंप्रणताऽस्मितत्पदं ॥४१॥ अहंममासौपतिरेषमेसुतोव्रजेश्वरस्याखिलवित्तपासती ॥ गोप्यश्चगोपाःसहगोधनाश्चमेयन्माययेत्थंकुमतिःसमेगतिः ॥४२॥ इत्थंविदिततत्त्वायांगोपिकायांसईश्वरः ॥वैष्णवींव्यतनोन्मायां पुत्रस्नेहमयींविभुः॥४३॥सद्योनष्टस्मृतिर्गोपीसारोप्यारोहमात्मजं ॥ प्रवृद्धस्नेहकलिलहृदयासयथापुरा ॥ ४४ ॥ त्रय्याचोपनिषद्भिश्चसांख्ययोगैश्चसात्वतैः ॥उपगीयमानमाहात्म्यंहरिंसाऽमन्यतात्मजं॥४५॥ राजोवाच नंदःकिमकरोद्ब्रह्मन् श्रेयएवंमहोदयं॥यशोदाचमहाभागापपौयस्याःस्तनंहरिः॥४६॥पितरौनान्वविंदेतांकृष्णोदारार्भकेहितं॥गायंत्यद्यापिकवयोयल्लोकशमलापहं ॥४७॥ श्रीशुकउवाच द्रोणोवसूनांप्रवरोधरयासहभार्यया॥करिष्यमाणआदेशान्ब्रह्मणस्तमुवाचह ॥ ४८ ॥ जातयोनौमहादेवेभुविविश्वेश्वरेहरौ ॥ भक्तिःस्यात्परमालोकेययांऽजोदुर्गतिंतरेत् ॥ ४९ ॥ अस्त्वित्युक्तःसभगवान्व्रजेद्रोणोमहायशाः॥जज्ञेनंदइतिख्यातोयशोदासाधराऽभवत्॥५०॥ ॥ ॥ ॥ ॥ ॥

हेनकलिलंव्याप्तंहृदयंयस्याःसा पुरेवासआसीत् ॥ ४४ ॥ मायाबलोद्रेकमाह त्रय्येति त्रय्याकर्मकांडरूपयाइंद्रादिरूपेण उपनिषद्भिर्ब्रह्मेतिसांख्यैःपुरुषइतियोगैः परमात्मेतिसात्वतैर्भगवानितिउपगीयमानंमाहात्म्यंयस्यतं ॥ ४५ ॥ अतिविस्मयेनपृच्छति नंदइति महोदयंमहानुदयउद्भवोयस्यतत् ॥ ४६ ॥ ययोःप्रसन्नोवतीर्णस्तौपितरावपियंनान्वविंदेतांनप्राप्नुताम् कृष्णस्योदारंमहत्अर्भकेहितंबाललीलांयच्चकवयोगायंति तद्योऽविंदत्सकिंश्रेयोऽकरोदिति ॥ ४७ ॥ ब्रह्मणआदेशान्गोपालादिलक्षणान् ॥ ४८ ॥ ४९ ॥ सएवेहद्रोणोजज्ञे सचनंदइतिख्यातः साचधरायशोदाऽभवत् ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

गोपगोपीनामपिवस्तुस्वभावादस्त्येवभक्तिस्तयोःपुनर्नितरामिति ॥ ५१ ॥ स्वलीलयापुत्रभावानुकारिण्या ॥ ५२ ॥ इति० भा०द०पू०अष्ट
मोऽध्यायः ॥ ८ ॥ नवमेपयउत्सिक्तेमत्वागोप्यथतत्कृतं ॥ विलोक्यभांडभंगादिकृष्णंदाम्नाबबंधतं ॥ १ ॥ तनूदराश्रितंविश्वंदृष्ट्वाविस्मि
तचेतसः ॥ बंधनव्द्यंगुलापूर्त्यापूर्णतामन्वदर्शयत् ॥ २ ॥ स्वयंदधिनिर्ममंथ ॥ १ ॥ तदाचागायतेतिचकारान्वयः ॥ २ ॥ सूत्रनद्धंकां

ततोभक्तिर्भगवतिपुत्रीभूतेजनार्दने ॥ दंपत्योर्नितरामासीद्गोपगोपीषुभारत ॥५१॥ कृष्णोब्रह्मणआदेशंस
त्यंकर्तुंव्रजेविभुः ॥ सहरामोवसंश्चक्रेतेषांप्रीतिंस्वलीलया ॥५२ ॥ इतिश्रीभा०द०पू०विश्वरूपदर्शनेऽष्ट
मोऽध्यायः ॥८॥ श्रीशुकउवाच एकदागृहदासीषुयशोदानंदगेहिनी ॥ कर्मांतरनियुक्तासुनिर्ममंथ
स्वयंदधि ॥१॥ यानियानीहगीतानितद्बालचरितानिच ॥ दधिनिर्मंथनेकालेस्मरंतीतान्यगायत ॥ २॥ क्षौ
मंवासःपृथुकटितटेबिभ्रतीसूत्रनद्धंपुत्रस्नेहस्नुतकुचयुगंजातकंपंचसुभ्रूः ॥ रज्ज्वाकर्षश्रमभुजचलत्कंकणौ
कुंडलेचस्विन्नंवक्त्रंकबरविगलन्मालतीनिर्ममंथ ॥३॥ तांस्तन्यकामआसाद्यमथ्नंतींजननींहरिः ॥ गृहीत्वा
दधिमंथानंन्यषेधत्प्रीतिमावहन् ॥ ४॥ तमंकमारूढमपाययत्स्तनंस्नेहस्नुतंसस्मितमीक्षतीमुखं ॥ अतृप्तमु
त्सृज्यजवेनसाययावुत्सिच्यमानेपयसित्वधिश्रिते ॥ ५॥ संजातकोपःस्फुरितारुणाधरंसंदश्यदद्भिर्दधिमं
थभाजनं ॥ भित्वामृषाऽश्रुर्दृषदश्मनारहोजघासहैयंगवमंतरंगतः ॥ ६॥ उत्तार्यगोपीसुशृतंपयःपुनःप्रवि
श्यसंदृश्यचदध्यमत्रकं ॥ भग्नंविलोक्यस्वसुतस्यकर्मतज्जहासतंचापिनतत्रपश्यती ॥७॥ उलूखलांघ्रेरुपरि
व्यवस्थितंमर्कायकामंददतंशिचिस्थितं ॥ हैयंगवंचौर्यविशंकितेक्षणंनिरीक्ष्यपश्चात्सुतमागमच्छनैः ॥ ८॥

चीबद्धं रज्जोराकर्षेणश्रमोययोस्तयोर्भुजयोश्चलंतौकंकणौच कबराद्विगलंत्योमालत्योयस्याःसा ॥ ३ ॥ ४ ॥ अधिश्रितेचुल्लीमारोपिते
उत्सिच्यमानेअतितापेनोद्रिच्यमाने ॥ ५ ॥ दृषदश्मनाशिलापुत्रेण अंतरंगृहमध्यंगतः रहःएकांतेनवनीतमभक्षयत् ॥ ६ ॥ सुशृतंसु
तप्तं दधिमंथनस्थानंप्रविश्यभिन्नंसंदृश्यदृष्ट्वा ॥ ७ ॥ उलूखलांघ्रेः परिवर्त्तितस्यउलूखलस्योपरि शिचिशिक्ये चौर्येणविशंकितंचंचल
मीक्षणंयस्यतंसुतम् ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तपसाऐकाग्र्येणईरितंतदाकारतांनीतमतएवक्षमंयोग्यंप्रवेष्टुंयोगिनांमनोऽपियंनापतं अथवाअन्वधावत्केवलंनत्वाप यतोयोगिनांमनोऽ पियंप्रवेष्टुंनक्षममिति ॥ ९ ॥ अन्वंचमानाएवंकृष्णमनुगच्छंती बृहत्योश्चलंत्योःश्रोण्योर्भारेणाक्रांतास्तब्धागतिर्यस्याःसा विस्रंसितात्के शबंधात्च्युतैःप्रसूनैरनुगतिरनुगमनंयस्याःसा यद्वा जवेनकंपितात्केशबंधात्पुरः पतितानिप्रसूनानिअनुपश्चाद्गतिर्यस्याःसा परामृशत्धृत वती ॥ १० ॥ अंजन्मषिणीअंजंतीसर्वतःप्रसरंतीमषीययोस्तेअक्षिणीस्वपाणिनाकर्षंतंसंमर्दयंतं भिषयंती ऱ्हस्वश्छांदसः भीषयंतीभय मुत्पादयंतीअवागुरत्अभर्त्सयत् ॥ ११ ॥ इयेषऐच्छत् अतद्वीर्यकोविदातत्प्रभावानभिज्ञा ॥ १२ ॥ अकोविदत्वमाहनचांतरितिपंच

तामात्तयष्टिंप्रसमीक्ष्यसत्वरस्ततोऽवरुह्यापससारभीतवत् ॥ गोप्यन्वधावन्नयमापयोगिनांक्षमंप्रवेष्टुंतप सेरितंमनः ॥ ९॥ अन्वंचमानाजननीबृहच्चलच्छ्रोणीभराक्रांतगतिःसुमध्यमा ॥ जवेनविस्रंसितकेशबंधन च्युतप्रसूनाऽनुगतिःपरामृशत् ॥१०॥ कृतागसंतंप्ररुदंतमक्षिणीकषंतमंजन्मषिणीस्वपाणिना ॥ उद्वीक्ष्य माणंभयविह्वलेक्षणंहस्तेगृहीत्वाभिषयंत्यवागुरत् ॥११॥ त्यक्त्वायष्टिंसुतंभीतंविज्ञायार्भकवत्सला ॥ इयेष किलतंबद्धुंदाम्नाऽतद्वीर्यकोविदा ॥१२॥ नचांतर्नबहिर्यस्यनपूर्वंनापिचापरं ॥ पूर्वापरंबहिश्चांतर्जगतोयो जगच्चयः ॥१३॥ तंमत्वात्मजमव्यक्तंमर्त्यलिंगमधोक्षजं ॥ गोपिकोलूखलेदाम्नाबबंधप्राकृतंयथा ॥ १४ ॥ तद्दामबध्यमानस्यस्वार्भकस्यकृतागसः ॥ द्व्यंगुलोनमभूत्तेनसंदधेऽन्यच्चगोपिका ॥१५॥ यदासीत्तदपिन्यू नंतेनान्यदपिसंदधे ॥ तदपिद्व्यंगुलंन्यूनंयद्यदादत्तबंधनं ॥ १६ ॥ एवंस्वगेहदामानियशोदासंदधत्यपि ॥ गोपीनामुत्स्मयंतीनांस्मयंतीविस्मिताऽभवत् ॥ १७॥ स्वमातुःस्विन्नगात्रायाविस्रस्तकबरस्रजः ॥ दृष्ट्वा परिश्रमंकृष्णःकृपयासीत्स्वबंधने ॥ १८॥ ॥ ॥ ॥ ॥ ॥ ॥

भिः बंधनंहिबहिःपरिवृतेनदाम्नाअंतरावृतस्यभवति तथाचपूर्वापरविभागवतोवस्तुनः पूर्वतोदामधृत्वापरितःपरिवेष्टनेनभवतिनत्वेतदस्ती त्याह नचांतरिति किंचव्यापकेनव्याप्यस्यबंधोभवतितत्त्वविपरीतमित्याह पूर्वापरमिति किंच तद्व्यतिरिक्तस्यचाभावान्नबंधइत्याह जगच्चय इति ॥ १३ ॥ तंमर्त्यलिंगमधोक्षजमात्मजंमत्वाबबंधेति ॥ १४ ॥ द्व्यंगुलोनंद्वाभ्यामंगुलाभ्यामूनंअपूर्णं ॥ १५ ॥ १६ ॥ स्मितंकुर्वं तीनांमध्येस्वायमपिहसंतीविस्मयमाप ॥ १७ ॥ १८ ॥

नचैवंस्वातंत्र्यभंगइत्याह एवंसंदर्शितेति सेश्वरमिदंविश्वंयस्यवशेयदधीनमित्यर्थः॥१९॥भगवत्प्रसादमन्येपिभक्तालभंतेइदंत्वतिचित्रमि तिसरोमांचितमाह नेममिति विरिंचः पुत्रोपि भवः स्वात्मापि श्रीर्जायापि ॥२०॥ फलितमाह नायमिति देहिनांदेहाभिमानिनांतापसा दीनांज्ञानिनांनिवृत्ताभिमानानामपीति ॥ २१ ॥ भक्तैर्बद्धस्याप्यन्यमोचकत्वमाह कृष्णस्त्विति ॥ २२ ॥ २३ ॥ इतिश्रीभागवतेमहा पुराणेदशमस्कंधेपूर्वार्धटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ दशमेऽपातयद्विगन्नंतरायमलार्जुनौ ॥ तत्रत्याभ्यांचदेवाभ्यांकृष्णः स्तुतइतीर्यते

एवंसंदर्शिताह्यंगहरिणाभृत्यवश्यता ॥ स्ववशेनापिकृष्णेनयस्येदंसेश्वरंवशे ॥ १९ ॥ नेमंविरिंचोनभवो नश्रीरप्यंगसंश्रया ॥ प्रसादंलेभिरेगोपीयत्तत्प्रापविमुक्तिदात्॥२०॥नायंसुखापोभगवान्देहिनांगोपिका सुतः॥ज्ञानिनांचात्मभूतानांयथाभक्तिमतामिह ॥२१॥ कृष्णस्तुगृहकृत्येषुव्यग्रायांमातरिप्रभुः॥ अद्राक्षी दर्जुनौपूर्वंगुह्यकौधनदात्मजौ ॥ २२ ॥ पुरानारदशापेनवृक्षतांप्रापितौमदात् ॥ नलकूबरमणिग्रीवावि तिख्यातौश्रियाऽन्वितौ ॥ २३ ॥ इ०भा०द०पू० गोपीप्रसादोनामनवमोऽध्यायः ॥ ९ ॥ राजोवाच कथ्यतांभगवन्नेतत्तयोःशापस्यकारणम् ॥ यत्तद्विगर्हितंकर्मयेनवादेवर्षेस्तमः ॥१॥ श्रीशुकउवाच रुद्र स्यानुचरौभूत्वासुदृप्तौधनदात्मजौ ॥ कैलासोपवनेरम्येमंदाकिन्यांमदोत्कटौ ॥ २ ॥ वारुणींमदिरांपीत्वा मदाघूर्णितलोचनौ ॥ स्त्रीजनैरनुगायद्भिश्चेरतुःपुष्पितेवने ॥३॥ अंतःप्रविश्यगंगायामंभोजवनराजिनि ॥ चिक्रीडतुर्युवतिभिर्गजाविवकरेणुभिः ॥ ४ ॥ यदृच्छयाचदेवर्षिर्भगवांस्तत्रकौरव ॥ अपश्यन्नारदोदेवौ क्षीबाणौसमबुद्यत ॥५॥ तंदृष्ट्वाव्रीडितादेव्योविवस्त्राःशापशंकिताः ॥ वासांसिपर्यधुःशीघ्रंविवस्त्रौनैव गुह्यकौ ॥६॥ तौदृष्ट्वामदिरामत्तौश्रीमदांधौसुरात्मजौ ॥ तयोरनुग्रहार्थायशापंदास्यन्निदंजगौ ॥७॥

॥ १ ॥ यद्विगर्हितंकर्मयेनवादेवर्षेर्भागवतोत्तमस्यापितमःक्रोधस्तदेतत्कथ्यतामिति ॥ १ ॥ २ ॥ ३ ॥ गंगायामंतर्मध्ये कथंभूते अंभो जानांवनानितेषांराजयस्ताविद्यंतेयस्मिंस्तस्मिन् ॥ ४ ॥ अपश्यत् दृष्ट्वाचक्षीबाणौमत्तौसमबुध्यत ॥५॥ कुतइत्यतआह तंदृष्ट्वेति॥६॥ अनुग्रहार्थायअनुग्रहश्चमदनाशःअर्थश्चश्रीकृष्णदर्शनंतदर्थमिदंवक्ष्यमाणंनह्यन्यइत्यादि ॥ ७ ॥ ॥ ॥ ॥

जोष्यान्प्रियान्विषयान्जुषतःसेवमानस्यपुंसःश्रीमदादन्यआभिजात्यादिःसत्कुलविद्यादिजनितोमदः अन्योवारजोगुणोरजःकार्यंहा स्यहर्षादिरूपोनहितथाबुद्धिभ्रंशःबुद्धिभ्रंशयतीतितथाकिंतुश्रीमदएवेति तदाह यत्रेत्यादिचतुर्भिःयत्रश्रीमदे ॥ ८ ॥ इमंनश्वरंदेहंअजरा मृत्युअजरश्चअमृत्युश्चयथातथामन्यमानैः ॥ ९ ॥ नरदेवभूदेवसंज्ञितमपिश्वादिभिर्भक्षितंविट्संज्ञितंदग्धंभस्मसंज्ञितमन्यदाकृमिसंज्ञितंत त्कृतेतदर्थंयोभूतध्रुक्द्रोग्धायतोभूतद्रोहान्निरयोभवतिसाकिंस्वार्थंवेद नैववेदेत्यर्थः ॥ १० ॥ इदानींदेहेअहंभावोपिनघटतइत्याह देहइ ति निषेक्तुःपितुः मातुःपितुर्वामातामहस्यपुत्रिकाकरणे ॥ ११ ॥ अव्यक्तप्रभवाप्ययमव्यक्तात्प्रभवस्तस्मिन्नेवाप्ययोयस्यतमात्मसात्कृत्वा

नारदउवाच नह्यन्योजुषतोजोष्यान्बुद्धिभ्रंशोरजोगुणः ॥ श्रीमदादाभिजात्यादिर्यत्रस्त्रीद्यूतमासवः ॥८॥ हन्यंतेपशवोयत्रनिर्दयैरजितात्मभिः ॥ मन्यमानैरिमंदेहमजरामृत्युनश्वरं ॥९॥ देवसंज्ञितमप्यंतेकृमिविड्भस्मसंज्ञितं ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः ॥१०॥ देहःकिमन्नदातुःस्वंनिषेक्तुर्मातुरेवच ॥ मातुःपितुर्वाबलिनःक्रेतुरग्नेःशुनोऽपिवा ॥११॥ एवंसाधारणंदेहमव्यक्तप्रभवाप्ययं ॥ कोविद्वानात्मसात्कृत्वाहंतिजंतूनृतेऽसतः ॥ १२ ॥ असतःश्रीमदांधस्यदारिद्र्यंपरमांजनं ॥ आत्मौपम्येनभूतानिदरिद्रःपरमीक्षते ॥१३॥ यथाकंटकविद्धांगोजंतोर्नेच्छतितांव्यथां ॥ जीवसाम्यंगतोलिंगैर्नतथाऽविद्धकंटकः ॥१४॥ दरिद्रोनिरहंस्तंभोमुक्तःसर्वमदैरिह ॥ कृच्छ्रंयदृच्छयाऽप्नोतितद्धितस्यपरंतपः ॥१५॥ नित्यंक्षुत्क्षामदेहस्यदरिद्रस्यान्नकांक्षिणः ॥ इंद्रियाण्यनुशुष्यंतिहिंसाऽपिविनिवर्त्तते ॥१६॥ दरिद्रस्यैवयुज्यंतेसाधवःसमदर्शिनः ॥ सद्भिःक्षिणोतितंतर्षंततआराद्विशुध्यति ॥ १७ ॥ साधूनांसमचित्तानांमुकुंदचरणैषिणां ॥ उपेक्ष्यैःकिंधनस्तंभैरसद्भिरसदाश्रयैः ॥ १८ ॥ ॥ ॥ ॥ ॥

आत्मेतिमत्वा असतोमूढाद्दते ॥१२॥ एवंश्रीमदविचेष्टितमुक्तातत्प्रतीकारंनिश्चिनोति असतइति परमंश्रेष्ठंदारिद्र्यमेवकेवलमितिकुतइ त्यतआह आत्मौपम्येनेति ततोनद्रुह्यतीतिभावः ॥१३॥ सदृष्टांतमाह यथेति मुखम्लान्यादिलिंगैःसर्वेषांजीवानांसुखदुःखेसमेइतिज्ञातवानि त्यर्थः ॥१४॥ किंचदारिद्र्यंमोक्षमपिसाधयतीत्याह दरिद्रइतिश्लोकचतुष्टयेन निरहंस्तंभोनिर्गतःअहंकाररूपःस्तंभोयस्मात्सः ॥१५॥१६॥ युज्यंतेस्वतएवसंगच्छंते तर्षंतृष्णां ॥१७॥ ननुसाधूनामपिधनिकःप्रियःस्यान्नदरिद्रइतितत्राह साधूनामिति धनेनस्तंभोगर्वोयेषांतैः ॥१८॥

तमोमदं अज्ञानकृतंमदम् ॥१९॥ तमःप्लुतौतमोव्याप्तौ ॥२०॥ शपति अतोऽर्हतइति अनुगृह्णाति स्यातांनैवमित्यादिना मत्प्रसादेनस्मृतिः
स्यात् ॥२१॥ स्वर्लोकतांदेवत्वंपुनर्लब्ध्वामदनुग्रहाल्लब्धभक्तीभविष्यतइति ॥२२॥ ॥२३॥ प्रस्तुतमाह ऋषेरिति ॥ २४ ॥ किमितिसत्यं
कर्त्तव्यंतत्राहदेवर्षिरितियद्यतःतत्ततः ॥२५॥ यमयोर्यमलयोःसहजातयोःआत्मनःकृष्णस्यतन्मध्यप्रवेशमात्रेण॥ २६ ॥ अनुअंचतीत्यन्वक्
तत्रहेतुः दामोदरेणेति उत्कलितःउत्पाटितःअंघ्रिबंधोमूलबंधोययोस्तौ परमस्यश्रीकृष्णस्यविक्रमितंविक्रमस्तेनातिवेपः कंपोयेषुतेस्कंधप्र

तदहंमत्तयोर्माध्व्यावारुण्याश्रीमदांधयोः ॥ तमोमदंहरिष्यामिस्त्रैणयोरजितात्मनोः ॥१९॥ यदिमौलोक
पालस्यपुत्रौभूत्वातमःप्लुतौ ॥ नविवाससमात्मानंविजानीतःसुदुर्मदौ ॥२०॥ अतोऽर्हतःस्थावरतांस्यातां
नैवंयथापुनः ॥ स्मृतिःस्यान्मत्प्रसादेनतत्रापिमदनुग्रहात् ॥ २१ ॥ वासुदेवस्यसान्निध्यंलब्ध्वादिव्यशर
च्छते ॥ वृत्तेस्वर्लोकतांभूयोलब्धभक्तीभविष्यतः ॥२२॥ श्रीशुकउवाच एवमुक्त्वासदेवर्षिर्गतोनाराय
णाश्रमं ॥ नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ ॥२३॥ ऋषेर्भागवतमुख्यस्यसत्यंकर्तुंवचोहरिः ॥ जगा
मशनकैस्तत्रयत्रास्तांयमलार्जुनौ ॥ २४ ॥ देवर्षिर्मेप्रियतमोयदिमौधनदात्मजौ ॥ तत्तथासाधयिष्यामि
यद्गीतंतन्महात्मना ॥ २५ ॥ इत्यंतरेणार्जुनयोःकृष्णस्तुयमयोर्ययौ ॥ आत्मनिर्वेशमात्रेणतिर्यग्गतमुलूख
लं ॥ २६॥ बालेननिष्कर्षयताऽन्वगुलूखलंतद्दामोदरेणतरसोत्कलितांघ्रिबंधौ ॥ निष्पेततुःपरमविक्रमिता
तिवेपस्कंधप्रवालविटपौकृतचंडशब्दौ ॥ २७ ॥ तत्रश्रियापरमयाककुभःस्फुरंतौसिद्धावुपेत्यकुजयोरिव
जातवेदाः ॥ कृष्णंप्रणम्यशिरसाऽखिललोकनाथंबद्धांजलीविरजसाविदमूचतुःस्म ॥ २८ ॥ कृष्णकृष्णम
हायोगिंस्त्वमाद्यःपुरुषःपरः ॥ व्यक्ताव्यक्तमिदंविश्वंरूपंतेब्राह्मणाविदुः ॥ २९ ॥ ॥ ॥

वालविटपाययोस्तौ ॥२७॥ ककुभःप्रतिसर्वतःस्फुरंतावित्यर्थः यद्वादिशःप्रकाशयंतावितिं कुजयोर्वृक्षयोःस्थितोऽग्निर्यथामूर्तिमानुपैति
तथोपेत्यविरजसौनिर्मदौनिरहंकारिणौनष्टगर्वावितियावत् ॥२८॥गोपालंमांयुवांदेवौकिमितिप्रणतावितिचेत्तत्राहतुः हेकृष्णकृष्णमहायोगि
न् अचिंत्यप्रभावस्त्वंनबालःकिंतुपरःपुरुषःयतःआद्यःकारणभूतः तत्रापिननिमित्तमात्रंकिंतुउपादानमपित्वमेवेत्याशयेनतुष्टुवतुः व्यक्ताव्य
क्तमितिस्थूलसुक्ष्ममिदंरूपंतेतवब्राह्मणाः ब्रह्मविदोविदुरिति ॥ २९ ॥ ॥ ॥

नियंतापित्वमेवेत्यूचतुः त्वमेकइति देहः असवःप्राणाः आत्माहंकारः इंद्रियाणिच तेषामीश्वरः नन्वस्यकालोनिमित्तंप्रकृतिरुपादानं प्रकृतेर्जातोमहान्विश्वात्मतयापरिणमतेपुरुषःकर्त्तानियंताचकिमत्राहमतआहतुः त्वमेवकालइत्यादिनासार्धेन यतोगभवानीश्वरोविष्णु स्त्वमतःकालोनामतवलीला ॥ ३० ॥ प्रकृतिःशक्तिः पुरुषोंऽशः महान्कार्यं अतस्त्वमेवसर्वमित्यर्थः ॥ ३१ ॥ नन्वहमेवचेत्सर्वंतर्हि घटादिज्ञानेमज्ज्ञानंकिंनभवति भवतीतिचेत्सर्वोपिब्रह्मवित्स्यादतआहतुः गृह्यमाणैरिति दृश्यत्वेनवर्तमानैर्बुध्यहंकारेंद्रियादिभिर्द्रष्टा त्वंनगृह्यसइतिभावः ननुतर्हिजीवोजानातुनैवेत्याहतुः कोन्विहेति जीवाद्युत्पत्तेःप्रागेवस्वप्रकाशतयासिद्धंत्वांकोवाजानाति गुणसंवृ

त्वमेकःसर्वभूतानांदेहास्वात्मेंद्रियेश्वरः॥ त्वमेवकालोभगवान्विष्णुरव्ययईश्वरः॥३०॥त्वंमहान्प्रकृतिःसा क्षाद्रजःसत्वतमोमयी ॥ त्वमेवपुरुषोऽध्यक्षःसर्वक्षेत्रविकारवित् ॥ ३१ ॥ गृह्यमाणैस्त्वमग्राह्योविकारैः प्राकृतैर्गुणैः॥कोन्विहार्हतिविज्ञातुंप्राक्सिद्धंगुणसंवृतः ॥३२॥ तस्मैतुभ्यंभगवतेवासुदेवायवेधसे ॥आत्म द्योतगुणैश्छन्नमहिम्नेब्रह्मणेनमः ॥३३॥ यस्यावताराज्ञायंतेशरीरेष्वशरीरिणः ॥ तैस्तैरतुल्यातिशयैर्वी र्यैर्देहिष्वसंगतैः ॥३४॥ सभवान्सर्वलोकस्यभवायविभवायच ॥ अवतीर्णोऽशभागेनसांप्रतंपतिराशिषां ॥३५॥ नमःपरमकल्याणनमःपरममंगल ॥ वासुदेवायशांताययदूनांपतयेनमः ॥ ३६ ॥ अनुजानीहिनौ भूमंस्तवानुचरकिंकरौ ॥ दर्शनंनौभगवतऋषेरासीदनुग्रहात् ॥ ३७॥ वाणीगुणानुकथनेश्रवणौकथायां हस्तौचकर्मसुमनस्तवपादयोर्नः॥स्मृत्यांशिरस्तवनिवासजगत्प्रणामेदृष्टिःसतांदर्शनेऽस्तुभवत्तनूनां॥३८॥

तोदेहाद्यावृतः ॥ ३२ ॥ अतोदुर्ज्ञेयत्वात्केवलंप्रणमतः तस्मैतुभ्यमिति आत्मनःस्वस्मात्द्योतःप्रकाशोयेषांतैर्गुणैश्छन्नोमहिमायस्य अ श्वैरिवरवेः तस्मै ॥ ३३ ॥ अहोऽहमीश्वरइतिकुतोज्ञातंतत्राहतुः यस्येति ॥ ३४ ॥ भवायोद्भवाय विभवायविगतोभवोयस्मिंस्तस्मै कैवल्यायेत्यर्थः ॥ ३५ ॥ ३६ ॥ नौआवांअनुचरःकुबेरोनारदोवातस्यार्किंकरौ भगवतस्तवदर्शनं ॥ ३७ ॥ तत्रगतयोरावयोः पूर्वस्व भावोमाभूत्किंतुवाणीगुणानुकथनइत्यादि नःअस्मदोद्वयोश्चेतिद्विवचनस्थानेबहुवचनं अस्मत्संगिनांसर्वेषामपीतिबहुवचनंवातवनिवा सभूतंयज्जगत्तस्यप्रणामे त्वन्निवासभूतमितिबहुमानेनजगतःप्रणामेशिरोस्त्वित्यर्थः भवत्तनूनांभवतोमूर्तीनां ॥ ३८ ॥ ॥

संकीर्तितःसंतुस्तः ॥ ३९ ॥ वाग्भिर्नह्यन्योजुषतोजोष्यानित्यादिभिः श्रीविभ्रंशरूपोऽनुग्रहःकृतइति ॥ ४० ॥ युक्तमेवैतदित्याह साधूनांस्व धर्मवर्तिनांसमचित्तानामात्मविदांसुतरांमत्कृतात्मनांमय्यर्पितचित्तानांतेषांकृपातिरेकात्सुतरामित्युक्तं सवितुर्दर्शनादक्ष्णोर्यथाबंधोनभवेत्तह त् ॥ ४१ ॥ प्राधान्यादेकस्यसंबोधनं हेनलकूबर युवांतत्तस्मात्सादनंस्वनिकेतंमत्परमौसंतौगच्छतं युवयोरपेक्षितोमयिप्रेमाजातएव अभ वः नभवोयस्मिन्सः ॥ ४२ ॥ बद्धोलूखलंबद्धमुलूखलंयस्मिंस्तं ॥४३॥ इतिश्रीभागवतेमहापुराणे द० पू० टीकायांदशमोऽध्यायः ॥ १० ॥

श्रीशुकउवाच इत्थंसंकीर्तितस्ताभ्यांभगवान्गोकुलेश्वरः॥दाम्नाचोलूखलेबद्धःप्रहसन्नाहगुह्यकौ ॥३९ श्रीभगवानुवाच ज्ञातंममपुरैवैतदृषिणाकरुणात्मना॥ यच्छ्रीमदांधयोर्वाग्भिर्विभ्रंशोऽनुग्रहःकृतः ॥४०॥ साधूनांसमचित्तानांसुतरांमत्कृतात्मनां ॥ दर्शनान्नोभवेद्बंधःपुंसोऽक्ष्णोःसवितुर्यथा ॥ ४१ ॥ तद्गच्छतंमत्प रमौनलकूबरसादनं ॥ संजातोमयिभावोवामीप्सितःपरमोऽभवः ॥४२॥ श्रीशुकउवाच इत्युक्तौतौपरि क्रम्यप्रणम्यचपुनःपुनः ॥ बद्धोलूखलमामंत्र्यजग्मतुर्दिशमुत्तरां ॥ ४३ ॥ इतिश्रीभागवतेमहापुराणेदशम स्कंधेपूर्वार्धेनारदशापोनामदशमोऽध्यायः ॥ १० ॥ ॥ श्रीशुकउवाच गोपानंदादयःश्रुत्वाद्रुमयोः पततोरवं ॥ तत्राजग्मुःकुरुश्रेष्ठनिर्घातभयशंकिताः ॥ १ ॥ भूम्यांनिपतितौतत्रददृशुर्यमलार्जुनौ ॥ बभ्र मुस्तदविज्ञायलक्ष्यंपतनकारणं ॥ २॥ उलूखलंविकर्षंतंदाम्नाबद्धंचबालकं ॥ कस्येदंकुतआश्चर्यमुत्पातइ तिकातराः ॥ ३ ॥ बालाऊचुरनेनेतितिर्यग्गतमुलूखलं ॥ विकर्षतामध्यगेनपुरुषावप्यचक्ष्महि ॥ ४ ॥ नतेतदुक्तंजगृहुर्नघटेतेतितस्यतत् ॥ बालस्योत्पाटनंतर्वोःकेचित्संदिग्धचेतसः ॥ ५ ॥ ॥ ॥ ॥

एकादशेसमागत्यवृंदावनमथार्भकैः ॥ वत्सान्पालयतानेनहतौवत्सबकासुरौ ॥ १ ॥ निर्घातोवज्रपातइतिभयेनशंकिताः ॥ १ ॥ तल्लक्ष्यंप्र त्यक्षतःपुरतोद्वयमपिपतनकारणमाविज्ञायबभ्रमुः ॥ २ ॥ लक्ष्यकारणंदर्शयति उलूखलमितिभ्रमकारणमाह कस्येदंराक्षसादेःकर्मकुतो वाकारणात् अहोआश्चर्यमुत्पातइतिकातराःभीताःसंतोबभ्रमुरित्यर्थः ॥ ३ ॥ मध्यगेनवृक्षयोर्मध्यगतेन नकेवलमेतावत् वृक्षाभ्यांनिर्ग तौदिव्यौपुरुषावप्यचक्ष्महिदृष्टवंतोवयमिति ॥ ४ ॥ केवलंतार्किकानजगृहुरेव अन्येतुसंदेहयुक्तचित्ताबभूवुरिति ॥ ५ ॥ ॥

भगवन्मायाविमोहितस्यनंदस्याचरितमाह उलखलमिति ॥ ६ ॥ ज्ञास्यंतेमामितिशंकमानोऽतीवबाल्यमनुकरोतिस्मतदाह गोपीभिरिति स्तोभितःकरतालादिनाप्रोत्साहितः ॥ ७ ॥ इदमानयेत्याज्ञप्तःआनेतुमसमर्थइवबिभर्तिकेवलंपीठादि बाहुक्षेपंकरचालनंच तद्विदांचे

उलूखलंविकर्षंतंदाम्नाबद्धंस्वमात्मजं ॥ विलोक्यनंदःप्रहसद्वदनोविमुमोचह॥ ६॥ गोपीभिःस्तोभितोऽनृत्यद्भगवान्बालवत्क्वचित्॥ उद्गायतिक्वचिन्मुग्धस्तद्वशोदारुयंत्रवत्॥ ७॥ बिभर्तिक्वचिदाज्ञप्तःपीठकोन्मानपादुकं॥बाहुक्षेपंचकुरुतेस्वानांचप्रीतिमावहन्॥ ८॥दर्शयंस्तद्विदांलोकेआत्मनोभृत्यवश्यतां ॥ व्रजस्योवाहवैहर्षंभगवान्बालचेष्टितैः॥ ९ ॥ गृह्णीहिभोफलानीतिश्रुत्वासत्वरमच्युतः ॥फलार्थीधान्यमादायययौसर्वफलप्रदः॥१०॥फलविक्रयिणीतस्यच्युतधान्यकरद्वयं॥ फलैरपूरयद्रत्नैःफलभांडमपूरिच ॥११॥ सरित्तीरगतंकृष्णंभग्नार्जुनमथाह्वयत्॥जन्मर्क्षमद्यभवतोविप्रेभ्योदेहिगाःशुचिः॥१२॥पश्यपश्यवयस्यांस्तेमातृमृष्टान्स्वलंकृतान्॥त्वंचस्नातःकृताहारोविहरस्वस्वलंकृतः॥१३॥ नोपेयातांयदाहूतौक्रीडासंगेनपुत्रकौ॥ यशोदांप्रेषयामासरोहिणीपुत्रवत्सलां॥ १४ ॥इत्थंयशोदातमशेषशेखरंमत्वासुतंस्नेहनिबद्धधीर्नृप॥हस्तेगृहीत्वासहराममच्युतंनीत्वास्ववाटंकृतवत्यथोदयं ॥ १५ ॥ क्रीडंतंसासुतंबालैरतिवेलंसहाग्रजं ॥ यशोदाऽजोहवीत्कृष्णंपुत्रस्नेहस्नुतस्तनी॥१६॥कृष्णकृष्णारविंदाक्षतातएहिस्तनंपिब॥अलंविहारैःक्षुत्क्षांतःक्रीडाश्रांतोसिपुत्रक ॥१७॥ हेरामागच्छताताशुसानुजःकुलनंदन॥प्रातरेवकृताहारस्तद्भवान्भोक्तुमर्हति॥ ॥ १८ ॥ प्रतीक्षतेत्वांदाशार्हभोक्ष्यमाणोव्रजाधिपः॥ एह्यावयोःप्रियंधेहिस्वगृहान्यातबालकाः ॥१९॥ श्रीशुकउवाच गोपवृद्धामहोत्पातानुभूयबृहद्वने ॥ नंदादयःसमागम्यव्रजकार्यममंत्रयन् ॥ २० ॥

तिचकारान्वयः ॥ ८ ॥ तदैश्वर्यंविदंतियेतेषां एवंव्रजस्यहर्षमुवाहेति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ अशेषादेवाब्रह्मादयस्तेषांशेखरंमुकुटमणिं ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ रंतुंवृंदावनंगंतुमंतःकृष्णेनयंत्रिताः ॥ स्वतंत्राइवनंदाद्यामंत्रमेतममंत्रयन् ॥ व्रजकार्यंगोकुलस्यहितकृत्यं ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २१ ॥ २२ ॥ २३ ॥ विपदंवीनांपक्षिणांस्थानम् वियन्नभः विगतप्रतिष्ठंवा ॥ २४ ॥ अन्यतमोवाकश्चिद्बालः अच्युतेनैवरक्षणमासीत् ॥२५॥ अरिष्टःअनर्थः इतःस्थानात् ॥२६॥ पशव्यंपशुभ्योहितम् नवानिकाननान्यवांतराणिविद्यंतेयस्मिंस्तत् ॥ २७ ॥ २८ ॥

तत्रोपनंदनामाहगोपोज्ञानवयोधिकः॥देशकालार्थतत्त्वज्ञःप्रियकृद्रामकृष्णयोः ॥ २१ ॥ उत्थातव्यमितोऽस्माभिर्गोकुलस्यहितैषिभिः ॥ आयांत्यत्रमहोत्पाताबालानांनाशहेतवः॥२२॥ मुक्तःकथंचिद्राक्षस्याबालघ्न्याबालकोह्यसौ ॥ हरेरनुग्रहान्नूनमनश्चोपरिनापतत् ॥ २३ ॥ चक्रवातेननीतोयंदैत्येनविपदंवियत् शिलायांपतितस्तत्रपरित्रातःसुरेश्वरैः ॥ २४ ॥ यन्नम्रियेतद्रुमयोरंतरंप्राप्यबालकः ॥ असावन्यतमोवाऽपितदप्यच्युतरक्षणं ॥ २५ ॥ यावदौत्पातिकोऽरिष्टोव्रजंनाभिभवेदितः॥तावद्बालानुपादाययास्यामोऽन्यत्रसानुगाः ॥ २६ ॥ वनंवृंदावनंनामपशव्यंनवकाननं ॥ गोपगोपीगवांसेव्यंपुण्याद्रितृणवीरुधं ॥ २७ ॥ तत्तत्राद्यैवयास्यामःशकटान्युंक्ष्वमाचिरं॥गोधनान्यग्रतोयांतुभवतांयदिरोचते ॥ २८ ॥ तच्छ्रुत्वैकधियोगोपाःसाधुसाध्वितिवादिनः॥व्रजान्स्वान्स्वान्समायुज्यययूरूढरिच्छदाः ॥ २९॥ वृद्धान्बालान्स्त्रियोराजन्सर्वोपकरणानिच॥अनस्स्वारोप्यगोपालायत्ताअत्तशरासनाः ॥३०॥ गोधनानिपुरस्कृत्यशृंगाण्यापूर्यसर्वतः॥तूर्यघोषेणमहताययुःसहपुरोहिताः ॥३१॥ गोप्योरूढरथानूत्नकुचकुंकुमकांतयः॥कृष्णलीलाजगुःप्रीतानिष्ककंठ्यःसुवाससः ॥ ३२ ॥ तथायशोदारोहिण्यावेकंशकटमास्थिते॥रेजतुःकृष्णरामाभ्यांतत्कथाश्रवणोन्मुखे ॥ ३३ ॥ वृंदावनंसंप्रविश्यसर्वकालसुखावहम्॥ तत्रचक्रुर्व्रजावासंशकटैरर्धचंद्रवत् ॥ ३४ ॥ वृंदावनंगोवर्धनंयमुनापुलिनानिच ॥ वीक्ष्यासीदुत्तमाप्रीतीरामामाधवयोर्नृप ॥ ३५ ॥

एकधियःविप्रतिपत्तिरहिताः व्रजान्शकटव्यूहान् रूढाःशकटादिष्वारोपिताःपरिच्छदायैस्ते ॥ २९ ॥ यत्ताः कृतप्रयत्नाः ॥३०॥३१॥ नूत्नैःकुचगतैःकुंकुमैःकांतिर्यासांताःनूत्नेषुकुचेषुयत्कुंकुमंतेनकांतिर्यासामितिवा ॥३२॥३३॥ व्रजावासंगोकुल वसतिस्थानम्॥३४॥३५

स्वकालेनतद्योग्यकालेन ॥ ३६ ॥ कौमारलीलांनिरूपयति अविदूरइत्यादिना ॥ ३७ ॥ क्षेपणैःबिल्वामलकादिभिः किंकिणीयुक्तैः पादैःक्षिपतस्ताडयतः वत्सपालाएवद्वित्राःकंबलादिपिहिताःवृषरूपमनुकुर्वंतितैःसह ॥ ३८ ॥ स्वयमपितथैववृषायमाणौनर्दंतौतदनु कारिशद्वान्कुर्वंतौयुयुधातेइत्यर्थः रुतैःशब्दैः जंतून्हंसमयूरादीन् ॥ ३९ ॥ ४० ॥ मुग्धइवअजानन्निवआसदत्समीपमागमत् ॥ ४१



एवंव्रजौकसांप्रीतिंयच्छंतौबालचेष्टितैः ॥ कलवाक्यैःस्वकालेनवत्सपालौबभूवतुः ॥ ३६ ॥ अविदूरेव्रज भुवःसहगोपालदारकैः ॥ चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ॥ ३७ ॥ क्वचिद्वादयतोवेणुंक्षेपणैःक्षि पतःक्वचित् ॥ क्वचित्पादैःकिंकिणीभिःक्वचित्कृत्रिमगोवृषैः ॥ ३८ ॥ वृषायमाणौनर्दंतौयुयुधातेपरस्परं॥ अनुकृत्यरुतैर्जंतूंश्चेरतुःप्राकृतौयथा ॥ ३९ ॥ कदाचिद्यमुनातीरेवत्सांश्चारयतोःस्वकैः ॥ वयस्यैःकृष्णब लयोर्जिघांसुर्दैत्यआगमत् ॥ ४० ॥ तंवत्सरूपिणंवीक्ष्यवत्सयूथगतंहरिः ॥ दर्शयन्बलदेवायशनैर्मुग्धइ वासदत् ॥ ४१ ॥ गृहीत्वाऽपरपादाभ्यांसहलांगूलमच्युतः ॥ भ्रामयित्वाकपित्थाग्रेप्राहिणोद्गतजीवितं ॥ सकपित्थैर्महाकायःपात्यमानैःपपातह ॥४२॥ तंवीक्ष्यविस्मिताबालाःशशंसुःसाधुसाध्विति ॥ देवाश्चप रिसंतुष्टाबभूवुःपुष्पवर्षिणः ॥ ४३ ॥ तौवत्सपालकौभूत्वासर्वलोकैकपालकौ ॥ सप्रातराशौगोवत्सांश्चार यंतौविचेरतुः ॥ ४४ ॥ स्वंस्वंवत्सकुलंसर्वेपाययिष्यंतएकदा ॥ गत्वाजलाशयाभ्याशंपाययित्वापपुर्जलं ॥ ॥ ४५ ॥ तेतत्रददृशुर्बालामहासत्वमवस्थितं ॥ तत्रसुर्वज्रनिर्भिन्नंगिरेःशृंगमिवच्युतं ॥४६॥ सवैबकोना ममहानसुरोबकरूपधृक्॥ आगत्यसहसाकृष्णंतीक्ष्णतुंडोऽग्रसद्बली ॥४७॥ कृष्णंमहाबकग्रस्तंदृष्ट्वारा मादयोऽर्भकाः ॥ बभूवुरिंद्रियाणीवविनाप्राणंविचेतसः ॥ ४८ ॥ तंतालुमूलंप्रदहंतमग्निवद्गोपालसूनुंपि तरंजगद्गुरोः ॥ चच्छर्दसद्योतिरुषाऽक्षतंबकस्तुंडेनहंतुंपुनरभ्यपद्यत ॥ ४९ ॥ ॥ ॥ ॥



अपरपादाभ्यांसलांगुलंयथाभवतितथागृहीत्वा ॥ ४२ ॥ ४३ ॥ सर्वेषांलोकानामेकौमुख्यौपालकौ प्रातराशःप्रातर्भोज्यमन्नंतत्सहितौ ॥ ४४ ॥ अभ्याशंसमीपम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ रामआदिर्येषांतेनतुरामः ॥ ४८ ॥ ४९ ॥ ॥ ॥ ॥ ॥

तुंडयोश्चंच्वोः वीरणवदग्रंथितृणविशेषवत् ॥ ५० ॥ समीडिरेतुष्टुवुः आनकैःशंखैश्चसंस्तवैःसह ॥ ५१ ॥ स्वस्थानमागतंप्राणमिवकृ
ष्णंप्रणीयएकीकृत्य ॥ ५२ ॥ अतिप्रियेणप्रीत्याआदृताः सादराः प्रेत्यागतमिवलोकांतरादागतमिव तृषितान्यतृप्तानिअमृतंपिबंतीवई
क्षणानियेषांते ॥ ५३ ॥ अहोबतेत्यादिश्लोकत्रयस्यइतिनंदादयइत्यनेनान्वयः अपिएवमपितेषामेवानिष्टमासीत् यतस्तैःपूर्वमन्येषांभ
यंकृतम् ॥ ५४ ॥ अथघोरदर्शनाअपिनाभिभवंतिनधर्षयंति ॥ ५५ ॥ गर्गोयदाह तस्मान्नंदात्मजोयंतेनारायणसमोगुणैरित्यादि ॥ व

तमापतंतंसनिगृह्यतुंडयोर्दोर्भ्यांबकंकंससखंसतांपतिः ॥ पश्यत्सुबालेषुददारलीलयामुदावहोवीरणवद्दि
वौकसां ॥५०॥ तदाबकारिंसुरलोकवासिनःसमाकिरन्नंदनमल्लिकादिभिः ॥ समीडिरेचानकशंखसंस्तवै
स्तद्वीक्ष्यगोपालसुताविसिस्मिरे ॥ ५१ ॥ मुक्तंबकास्यादुपलभ्यबालकारामादयःप्राणमिवेंद्रियोगणः ॥
स्थानागतंतंपरिरभ्यनिर्वृताःप्रणीयवत्सान्व्रजमेत्यतज्जगुः ॥५२॥श्रुत्वातद्विस्मितागोपागोप्यश्चातिप्रि
यादृताः॥प्रेत्यागतमिवौत्सुक्यादैक्षंततृषितेक्षणाः ॥५३॥ अहोबतास्यबालस्यबहवोमृत्यवोऽभवन् ॥ अ
प्यासीद्विप्रियंतेषांकृतंपूर्वंयतोभयं ॥ ५४ ॥ अथाप्यभिभवंत्येनंनैवतेघोरदर्शनाः ॥ जिघांसयैनमासाद्य
नश्यंत्यग्नौपतंगवत्॥५५॥अहोब्रह्मविदांवाचोनासत्याःसंतिकर्हिचित् ॥ गर्गोयदाहभगवानन्वभावितथै
वतत् ॥५६॥ इतिनंदादयोगोपाःकृष्णरामकथांमुदा ॥ कुर्वंतोरममाणाश्चनाविंदन्भववेदनां ॥५७॥ एवं
विहारैःकौमारैःकौमारंजहतुर्व्रजे ॥ निलायनैःसेतुबंधैर्मर्कटोत्प्लवनादिभिः॥५८॥इतिश्रीभागवतेमहापुरा
णेदशमस्कंधेपूर्वार्धेवत्सबकवधोनामैकादशोऽध्यायः ॥ ११ ॥ ॥ श्रीशुकउवाच क्वचिद्वनाशायमनो
दधद्व्रजात्प्रातःसमुत्थायवयस्यवत्सपान् ॥ प्रबोधयन्शृंगरवेणचारुणाविनिर्गतोवत्सपुरःसरोहरिः॥ १ ॥

त्सयूथगतंहत्वावत्सदंभासुरंहरिः ॥ मुनियूथगतंचाहन्नग्रण्यंदंभिनांबकम् ॥५६॥५७॥५८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेटीका
यांएकादशोऽध्यायः ॥ ११ ॥ द्वादशेतुमहासर्पवपुर्धरमघासुरम् ॥वत्सपालगिलंकृद्धोगलेऽहन्निितिवर्ण्यते ॥१॥ महाबकगलक्रीडाके
वलस्यनकौतुकम् ॥ इतीवाघासुरमुखेससखःप्राविशद्धरिः ॥ २ ॥ क्वचित्कदाचिद्वनाशायवनेएवप्रथमंभोजनंकर्तुं ॥ १ ॥ ॥

तेनैवशृंगरवेणश्रीकृष्णेनचसह पृथुकाःबालाः स्निग्धाःस्नेहयुक्ताः शिक्शिक्यं रम्याःशिग्वेत्रादयोयेषांते सहस्राधिकसंख्यायुक्तान्वत्सान् ॥ २ ॥ ३ ॥ काचादिभिःपूर्वंमातृभिर्भूषिताअपिफलादिभिरात्मानमभूषयन्नित्यर्थः मुष्णंतश्चोरयंतः ॥ ५ ॥ यदिदूरंगतःकृष्णोभवतितर्हीति ॥ ६॥ ध्मांतःवादयंतः भृंगैःसह ॥७॥ विच्छायाभिःपक्षिच्छायाभिः कलापिभिर्मयूरैः ॥ ८ ॥ कीशवालान्वृक्षशाखासुलंबमानानिवानरलांगूलानिआकर्षंतोलांगूलममुंचंतस्तैःसहद्रुमानारोहंतः विकुर्वंतोदंतदर्शनभ्रूविजृंभादिभिस्तैःसहविकारान्कुर्वंतः पलाशिषुवृक्षेषुप्लवं

तेनैवसाकंपृथुकाःसहस्रशःस्निग्धाःसुशिग्वेत्रविषाणवेणवः॥स्वान्स्वान्सहस्रोपरिसंख्ययान्वितान्वत्सान्पुरस्कृत्यविनिर्ययुर्मुदा॥२॥कृष्णवत्सैरसंख्यातैर्यूथीकृत्यस्ववत्सकान् ॥ चारयंतोर्भलीलाभिर्विजन्हुस्तत्रतत्रह ॥ ३ ॥ फलप्रवालस्तबकसुमनःपिच्छधातुभिः ॥ काचगुंजामणिस्वर्णभूषिताअप्यभूषयन् ॥४॥ मुष्णंतोऽन्योन्यशिक्यादीन्ज्ञातानाराच्चचिक्षिपुः ॥ तत्रत्याश्चपुनर्दूराद्धसंतश्चपुनर्ददुः ॥५॥ यदिदूरंगतःकृष्णोवनशोभेक्षणायतम् ॥ अहंपूर्वमहंपूर्वमितिसंस्पृश्यरेमिरे ॥ ६ ॥ केचिद्वेणून्वादयंतोध्मांतःशृंगाणिकेचन ॥ केचिद्भृंगैःप्रगायंतःकूजंतःकोकिलैःपरे ॥७॥ विच्छायाभिःप्रधावंतोगच्छंतःसाधुहंसकैः ॥ बकैरुपविशंतश्चनृत्यंतश्चकलापिभिः ॥८॥ विकर्षंतःकीशवालानारोहंतश्चतैर्द्रुमान् ॥ विकुर्वंतश्चतैःसाकंप्लवंतश्चपलाशिषु ॥ ९ ॥ साकंभेकैर्विलंघंतःसरित्प्रस्रवसंप्लुताः ॥ विहसंतःप्रतिच्छायाःशपंतश्चप्रतिस्वनान् ॥ १० ॥ इत्थंसतांब्रह्मसुखानुभूत्यादास्यंगतानांपरदैवतेन ॥ मायाश्रितानांनरदारकेणसाकंविजन्हुःकृतपुण्यपुंजाः ॥ ११ ॥ यत्पादपांसुर्बहुजन्मकृच्छ्रतोधृतात्मभिर्योगिभिरप्यगम्यः ॥ सएवयद्दृग्विषयःस्वयंस्थितःकिंवर्ण्यतेदिष्टमतोव्रजौकसां ॥ १२ ॥ ॥ ॥ ॥

तःशाखायाःशाखांतरमुद्गच्छंतः ॥ ९ ॥ प्रतिच्छायाःप्रतिबिंबानि ॥ १० ॥ तानतिविस्मितःश्लोकद्वयेनाभिनंदति इत्थमिति सतांविदुषांब्रह्मचतत्सुखंचानुभूतिश्चतया स्वप्रकाशपरमसुखेनेत्यर्थः भक्तानांपरदैवतेनआत्मप्रदेननाथेनमायाश्रितानांतुनरदारकतयाप्रतीयमानेनसहविजन्हुः कृतानांपुण्यानांपुंजाःराशयोयेषांतेब्रह्मविदांतदनुभवएवभक्तानामतिगौरवेणैवभजनम् एतेतुतेनसहसख्येनविजन्हुःअहोभाग्यमितिभावः ॥ ११ बहुजन्मभिःकृच्छ्रेणधृतआत्मामनोयैस्तैरपि ॥ १२ ॥ ॥ ॥ ॥ ॥

सुखक्रीडनवीक्षणेनाक्षमायस्यसः कथंभूतः यस्यअंतरंछिद्रंपीतामृतैरपिततोमृत्युभीतैरमरैरपिप्रतीक्ष्यतेकथंमरिष्यतिकदावेति यद्वा कथंभूतंसुखक्रीडनं यत्अंतर्हृदयेअमरैःप्रतीक्ष्यतेविचिंत्यते पीतामृतैरपिपुनर्निजजीवितेप्सुभिःअयंभावः नामृतपानमात्रेणजीवनंसफलंभवतिकिंतुभगवल्लीलाऽनुस्मरणेनेतितदेवनित्यमंतश्चिंत्यतइति ॥ १३ ॥ कृष्णप्रमुखानर्भकान्दृष्ट्वासइतिव्यवस्यनिश्चित्याजगरंवपुर्धृत्वातेषांग्रसनाशयापथिव्यशेतेतितृतीयेनान्वयः कंसेनानुशिष्टःप्रहितः बकीपूतना कथंव्यवस्यतदाह अयंत्विति सार्धेनममतयोर्द्वयोःसोदरयोःस्थानेएनंकृष्णंसबलंससैन्यंवत्सतत्पालसहितंहनिष्यामि ॥ १४ ॥ ननुतथापिव्रजस्थास्त्ववशिष्येरन्नेत्याह एतइति तिलापः कृताःति

**अथाघनामाऽभ्यपतन्महासुरस्तेषांसुखक्रीडनवीक्षणाक्षमः॥नित्यंयदंतर्निजजीवितेप्सुभिःपीतामृतैरप्यमरैःप्रतीक्ष्यते ॥१३॥ दृष्ट्वाऽर्भकान्कृष्णमुखानघासुरःकंसानुशिष्टःसबकीबकानुजः॥ अयंतुमेसोदरनाशकृत्तयोर्द्वयोरथैनंसबलंहनिष्ये ॥ १४ ॥ एतेयदामत्सुहृदस्तिलापःकृतास्तदानष्टसमाव्रजौकसः॥प्राणेगतेवर्ष्मसुकानुचिंताप्रजाऽसवःप्राणभृतोहियेते ॥ १५ ॥ इतिव्यवस्याजगरंबृहद्वपुःसयोजनायाममहाद्रिपीवरं ॥ धृत्वाऽद्भुतंव्यात्तगुहाननंतदापथिव्यशेतग्रसनाशयाखलः ॥ १६ ॥ धराधरोष्ठोजलदोत्तरोष्ठोदर्याननांतोगिरिशृंगदंष्ट्रः ॥ ध्वांतांतरास्योविततध्वजिह्वःपरुषानिलश्वासदवेक्षणोष्णः ॥ १७॥ दृष्ट्वातंतादृशंसर्वेमत्वावृंदावनश्रियं ॥ व्यात्ताजगरतुंडेनह्युत्प्रेक्षंतेस्मलीलया ॥ १८ ॥ अहोमित्राणिगदतसत्वकूटंपुरःस्थितं ॥ अस्मत्संग्रसनव्यात्तव्यालतुंडायतेनवा ॥ १९ ॥ ॥ ॥ ॥**

लोदकतयाकल्पिताः वर्ष्मसुदेहेषु प्रजाएवासवोयेषांतेतथा ॥ १५ ॥ सयोजनायामंयोजनप्रमाणेनदैर्घ्येणयुक्तंचतन्महाद्रिपीवरंच व्यात्तंप्रसारितंगुहातुल्यमाननंयस्मिंस्तत् ॥ १६ ॥ अद्भुतमितियदुक्तंतद्दर्शयितुंविशिनष्टि धरायामधरोष्ठोयस्यसः जलदेषूत्तरोष्ठोयस्यसः दर्याविवाननस्यांतौसृक्किणीयस्यसः गिरेःशृंगाणीवदंष्ट्रायस्यसः ध्वांतवदंतरास्यंयस्यसः विततध्ववज्जिह्वायस्यसःपरुषानिलवच्छ्वासोयस्यसः दववदीक्षणयोरुष्णः दावववदृष्टिरित्यर्थः परुषानिलश्वासश्चासौदवेक्षणोष्णश्चतथा ॥१७॥ वस्तुतोऽजगरमेवव्यात्ततुंडंदृष्ट्वावृंदावनस्यश्रीःसंपदेषेतिभ्रांत्यामत्वाविपरीतंव्यात्ताजगरतुंडसादृश्येनोत्प्रेक्षितवंतः ॥ १८ ॥ उत्प्रेक्षामेवप्रश्नोत्तराभ्यामाहुः अहोइति सत्वकूटंसत्वाभासमिदंवानवा तत्राप्यस्मत्संग्रसनायव्यात्तंयव्यालतुंडंतद्वदाचरतिवानवा ॥ १९ ॥ ॥ ॥ ॥

निश्चितंतथैवेत्याह सत्यमिति अर्ककरैरारक्तंघनमुत्तरोष्ठवत्पश्यत तस्यघनस्यप्रतिच्छाययाअरुणंरोधःस्थलंअधरोष्ठवत्पश्यतेतिसर्वत्रान्वेति ॥ २० ॥ सृक्किभ्यामोष्ठप्रांताभ्यांप्रतिस्पर्द्धेतेतुल्यतयावर्त्तेते नगोदरेगिरिदर्य्यौ एतास्तुंगशृंगालयस्तस्यदंष्ट्राभिःस्पर्धमानाः ॥ २१ ॥ आस्तृतायाममार्गःविस्तृतोदैर्घ्यवान्मार्गः प्रतिगर्ज्जतिप्रतिस्पर्धते एषांशृंगाणामंतर्गतंमध्यगतंध्वांतमेतत्अंतराननंआननस्यमध्यंप्रतिगर्ज्जति ॥ २२ ॥ दावेनोष्णःखरोवातोऽयंतेनदावाग्निनादग्धानांसत्वानांयोदुर्गंधःसएवसर्पांतर्गतामिषगंधवद्भाति ॥ २३ ॥ एवंसंतमेवाजगरमन्यथोत्प्रेक्ष्यनिर्भयाययुः किंग्रसिताग्रसिष्यति अनेनश्रीकृष्णेनहंत्रेति बकारेरुशत्कमनीयंमुखं ॥ २४ ॥ अमृषावस्तुतःसर्पवपुरसु

॥ २८ ॥

सत्यमर्ककरारक्तमुत्तराहनुवद्घनं॥अधराहनुवद्रोधस्तत्प्रतिच्छायया ऽरुणं ॥ २०॥ प्रतिस्पर्धेतेसृक्किभ्यांसव्यासव्येनगोदरे ॥ तुंगशृंगालयोऽप्येतास्तद्दंष्ट्राभिश्चपश्यत ॥ २१ ॥ आस्तृतायाममार्गोऽयंरसनांप्रतिगर्जति॥एषामंतर्गतंध्वांतमेतदप्यंतराननं ॥२२॥ दावोष्णखरवातोऽयंश्वासवद्भातिपश्यत॥तद्दग्धसत्त्वदुर्गंधोप्यंतरामिषगंधवत्॥२३॥अस्मान्किमत्रग्रसितानिविष्टानयंतथाचेद्बकवद्विनंक्ष्यति॥ क्षणादनेनेतिबकार्युशन्मुखंवीक्ष्योद्धसंतःकरताडनैर्ययुः ॥ २४ ॥ इत्थंमिथोऽतथ्यमतज्ज्ञभाषितंश्रुत्वाविचिंत्येत्यमृषामृषायते ॥ रक्षोविदित्वाऽखिलभूतहृत्स्थितःस्वानांनिरोद्धुंभगवान्मनोदधे ॥ २५॥ तावत्प्रविष्टास्त्वसुरोदरांतरंपरंनगीर्णाःशिशवःसवत्साः ॥ प्रतीक्षमाणेनबकारिवेशनंहतस्वकांतस्मरणेनरक्षसा ॥२६॥ तान्वीक्ष्यकृष्णःसकलाभयप्रदोह्यनन्यनाथान्स्वकरादवच्युतान् ॥ दीनांश्चमृत्योर्जठराग्निघासान्घृणाऽर्दितोदिष्टकृतेनविस्मितः ॥२७॥ कृत्यंकिमत्रास्यखलस्यजीवनंनवाअमीषांचसतांविहिंसनं ॥ द्वयंकथंस्यादितिसंविचिंत्यतज्ज्ञात्वाऽविशत्तुंडमशेषदृग्घरिः ॥ २८ ॥ ॥ ॥ ॥

रएवमृषायतेस्वानांसर्पसादृश्यगोचरत्वेनप्रतीयतेइति तान्निरोद्धुंवारयितुंयावन्मनोदधेतावत्प्रविष्टाइत्युत्तरेणान्वयः ॥ २५ ॥ तावत्प्रविष्टाएवकेवलंनतुतेनगीर्णागिलिताः जीर्णाइतिपाठेऽपिसएवार्थः कथंभूतेन हतयोःस्वकयोरंतंस्मरतिअनुध्यायतीतितथातेन अतएवबकारेःश्रीकृष्णस्यप्रवेशंप्रतीक्षमाणेन ॥ २६ ॥ स्वकरादवच्युतान्विनिःसृतान् विस्मितःसन्कृत्यंकिमत्रेत्यादिविचिंत्यतत्रोपायंज्ञात्वास्वयमप्यविशदित्यन्वयः ॥ २७ ॥ कथंविचिंत्य अस्यजीवनममीषांचविहिंसनामितिद्वयंवोनिश्चितंकथंनस्यादिति ॥ २८ ॥

॥२८॥

घनच्छदामेघांतरिताः कौणपाःकुणपाशिनोराक्षसाः कोणपोनिर्ऋतिस्तदीयाइतिवा ॥ २९ ॥ चूर्णीकर्तुमिच्छोस्तस्यगलेआदावेवतर
सावववृधेअवर्द्धत ॥ ३० ॥ निरुद्धोमुखादीनांमार्गभूतःकंठोयस्यास्तितस्यउद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्यअंतरंगेदेहमध्येपूर्णःपरिभृतोमू
र्द्धन्मूर्द्धानंब्रह्मरंध्रंनिर्भिद्यबहिर्विनिर्गतइति ॥ ३१ ॥ प्राणेषुइंद्रियेषुस्वयामृतवर्षिण्यादृष्ट्यैव ॥३२॥ अहिदेहेस्थितंशुद्धसत्त्वमयंज्योति
र्निर्गत्यखेऽवस्थितं तस्मिन्ईशेविवेश ॥ ३३ ॥ स्वकृतःस्वकार्यकृतःश्रीकृष्णस्यार्हणमकृतपूजामकुर्वन् सुगाःसुष्टुगायंतीतिगंधर्वादयः
॥ ३४ ॥ किंचतेषांयान्यद्भुतस्तोत्रादीनितेषांनैकोत्सवायेमंगलस्वनास्तान् स्वधाम्नःअंतिसमीपेश्रुत्वाअजोब्रह्माआचिरादागतईशस्यश्री

तदाघनच्छदादेवाभयाद्धाहेतिचुक्रुशुः ॥ जहृषुर्येचकंसाद्याःकौणपास्त्वघबांधवाः ॥ २९ ॥ तच्छ्रुत्वाभग
वान्कृष्णस्त्वव्ययःसार्भवत्सकं ॥ चूर्णीचिकीर्षोरात्मानंतरसावव्रृधेगले ॥ ३० ॥ ततोतिकायस्यनिरुद्ध
मार्गिणोत्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः ॥ पूर्णोऽतरंगेपवनोनिरुद्धोमूर्धन्विनिष्पाट्यविनिर्गतोबहिः॥३१॥
तेनैवसर्वेषुबहिर्गतेषुप्राणेषुवत्सान्सुहृदःपरेतान्॥ दृष्ट्यास्वयोत्थाप्यतदन्वितःपुनर्वक्त्रान्मुकुंदोभगवान्वि
निर्ययौ ॥ ३२ ॥ पीनाहिभोगोत्थितमद्भुतंमहज्ज्योतिःस्वधाम्नाज्वलयद्दिशोदश ॥ प्रतीक्ष्यखेवस्थितमी
शनिर्गमंविवेशतस्मिन्मिषतांदिवौकसां ॥ ३३ ॥ ततोऽतिहृष्टाःस्वकृतोऽकृतार्हणंपुष्पैःसुराअप्सरसश्चन
र्तनैः ॥ गीतैःसुगावाद्यधराश्चवाद्यकैस्तवैश्चविप्राजयनिःस्वनैर्गणाः॥३४॥ तदद्भुतस्तोत्रसुवाद्यगीतिका
जयादिनैकोत्सवमंगलस्वनान् ॥ श्रुत्वास्वधाम्नोऽत्यजआगतोऽचिराद्दृष्ट्वामहीशस्यजगामविस्मयं॥३५॥
राजन्नाजगरंचर्मशुष्कंवृंदावनेऽद्भुतं ॥ व्रजौकसांबहुतिथंबभूवाक्रीडगव्हरं ॥ ३६ ॥ एतत्कौमार जंकर्मह
रेरात्माहिमोक्षणं ॥ मृत्योःपौगंडकेबालादृष्ट्वोचुर्विस्मिताव्रजे ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कृष्णस्यमहिमानंदृष्ट्वाविस्मयंप्रापेति ॥ ३५ ॥ बहुतिथंबहुकालं आक्रीडगव्हरंक्रीडार्थंमहाबिलं ॥ ३६ ॥ अन्यच्चातिचित्रंवृत्तमित्याह
एतदिति कौमारंपंचमाब्दांतंपौगंडंदशमावधि ॥ कैशोरमापंचदशाद्यौवनंतुततःपरं ॥ हरेःकौमारजंपंचमाब्दकृतंकर्मतदैवदृष्ट्वापौगंडके
षष्ठेऽब्देबालाअद्यैतद्वृत्तमित्यूचुः किंतत्कर्म मृत्योःसकाशादात्मनामहेश्चमोक्षणं आत्मनांप्रसिद्धान्मृत्योःअहेस्तुसंसारलक्षणात् अघासुर
स्यज्योतिषःश्रीकृष्णेप्रवेशमपितदादृष्टंकथितवंतइत्यर्थः ॥ ३७ ॥ ॥ ॥ ॥ ॥

नैतद्विचित्रमिति किंतदित्यपेक्षायामाह अघोपीति आत्मसाम्यंस्वसमानरूपतां ॥३८॥ यस्यांगंमूर्तिस्तस्यप्रतिमाप्रतिकृतिःतत्रापिकेवलंम
नोमयीसापिबलादंतराहितासतीभागवतींगतिंददौप्रल्हादादिभ्यः सएवसाक्षात्स्वयमंतर्गतःकिंपुनः नित्याचासावात्मसुखानुभूतिश्चतया
ऽभितोव्युदस्तामायायेनसः ॥ ३९ ॥ येनश्रवणेननिगृहीतंवशीकृतंचेतोयस्यसः ॥ ४० ॥ कालांतरेकौमारेकृतंपौगंडकेकथंज्ञात्वोचुरि
त्यर्थः ॥ ४१ ॥ ४२ ॥ ४३ ॥ तेनयःस्मारितोऽनंतस्तेनत्हृतानिअखिलेंद्रियाणियस्यसः तथाभूतोपिकथंचिल्लब्धबहिर्दृष्टिः हेभागवतो

नैतद्विचित्रंमनुजार्भमायिनःपरावराणांपरमस्यवेधसः॥ अघोऽपियत्स्पर्शनधौतपातकःप्रापात्मसाम्यंत्व
सतांसुदुर्लभं ॥३८॥ सकृद्यदंगप्रतिमांऽतराहितामनोमयींभागवतींददौगतिं॥सएवनित्यात्मसुखानुभू
त्यभिव्युदस्तमायोंऽतर्गतोहिकिंपुनः॥३९॥सूतउवाच इत्थंद्विजायादवदेवदत्तःश्रुत्वास्वरातुश्चरितंविचि
त्रं॥पप्रच्छभूयोऽपितदेवपुण्यंवैयासकिंयन्निगृहीतचेताः ॥ ४० ॥ राजोवाच ब्रह्मन्कालांतरकृतंतत्काली
नंकथंभवेत्॥यत्कौमारेहरिकृतंजगुःपौगंडकेऽर्भकाः॥४१॥ तद्ब्रूहिमेमहायोगिन्परंकौतूहलंगुरो॥ नूनमेत
द्धरेरेवमायाभवतिनान्यथा॥४२॥वयंधन्यतमालोकेगुरोऽपिक्षत्रबंधवः॥ यत्पिबामोमुहुस्त्वत्तःपुण्यंकृष्ण
कथाऽमृतं॥४३॥ सूतउवाच इत्थंस्मपृष्टःसतुबादरायणिस्तत्स्मारितानंतहृताखिलेंद्रियः॥कृच्छ्रात्पुनर्ल
ब्धबहिर्दृशिःशनैःप्रत्याहतंभागवतोत्तमोत्तम॥४४॥इ०भा०द०पू०द्वादशोध्यायः ॥ १२ ॥छ॥ श्रीशुक
उवाच साधुपृष्टंमहाभागत्वयाभागवतोत्तम॥ यन्नूतनयसीशस्यशृण्वन्नपिकथांमुहुः ॥१॥ सतामयंसारभृ
तांनिसर्गोयदर्थवाणीश्रुतिचेतसामपि ॥प्रतिक्षणंनव्यवदच्युतस्ययत्स्त्रियाविटानामिवसाधुवार्ता ॥ २ ॥

त्तमोत्तमहेशौनक ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धटीकायांद्वादशोऽध्यायः ॥१२ ॥ ॥ त्रयोदशेहरद्ब्रह्मा।वत्सान्पा
लांश्चमायया ॥ तदातत्सर्वरूपोब्दंकृष्णःपूर्ववदाचरत् ॥ १ ॥ नूतनयासिनव्यवत्करोषि ॥ १ ॥ तथाहिसारभृतांसारग्राहिणामयंनिसर्गः
स्वभावः कोऽसौअच्युतस्यवार्ताप्रतिक्षणंसाधुनव्यवद्भवतीतियत्सः विटानांस्त्रैणानांस्त्रियाःकामिन्यावार्ताइव कथंभूतानामपिसतां याअ
च्युतवार्तैवअर्थोयेषांतानिवाणीश्रुतिचेतांसियेषांतथाभूतानामपि ॥ २ ॥ ॥ ॥ ॥

॥ ३ ॥ ४ ॥ भोजनविधानायपुलिनंस्तौति अहोइति स्वीयानांकेलीनांसंपदोविद्यंतेयस्मिंस्तत् मृदुलाअच्छावालुकायास्मिंस्तत् किंच स्फुटद्भिकसत्सरः सरोजबाहुल्येनोपचारतःसरएवविकसदित्युक्तं तस्यगंधस्तेनत्हृताआकृष्टाअलयःपत्रिणश्चयेतेषांकेउदकेध्वनयस्तेषांप्र तिध्वानास्तैर्लसंतोद्रुमास्तैराकुलंव्याप्तं ॥ ५ ॥ दिवारूढंवेलातीतेत्यर्थः ॥ ६ ॥ आरुध्यसंरुध्य शाद्वलेहरिततृणेदेशे ॥ ७ ॥ तदाते विरेजुः कृष्णस्यविष्वक्परितःपुरुराजिमंडलैर्बहुभिःपंक्तिमंडलैःसहनैरंतर्येणोपविष्टाः श्रीकृष्णाभिमुखान्याननानियेषांते फुल्लदृशःवि

शृणुष्वावहितोराजन्नपिगुह्यंवदामिते ॥ ब्रूयुःस्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत ॥३॥ तथाऽघवदनान्मृ त्योरक्षित्वावत्सपालकान् ॥ सरित्पुलिनमानीयभगवानिदमब्रवीत् ॥४॥ अहोऽतिरम्यंपुलिनंवयस्याःस्व केलिसंपन्मृदुलाच्छवालुकं ॥ स्फुटत्सरोगंधहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलं ॥ ५ ॥ अत्रभोक्त व्यमस्माभिर्दिवारूढंक्षुधाऽर्दिताः ॥ वत्साःसमीपेऽपःपीत्वाचरंतुशनकैस्तृणं ॥६॥ तथेतिपाययित्वाऽर्भाव त्सानारुध्यशाद्वले ॥ मुक्त्वाशिक्यानिबुभुजुःसमंभगवतामुदा ॥७॥ कृष्णस्यविष्वक्पुरुराजिमंडलैरभ्यान नाःफुल्लदृशोव्रजार्भकाः ॥ सहोपविष्टाविपिनेविरेजुश्छदायथांऽभोरुहकर्णिकायाः ॥८॥ केचित्पुष्पैर्दलैः केचित्पल्लवैरंकुरैःफलैः ॥शिग्भिस्त्वग्भिर्दृषद्भिश्चबुभुजुःकृतभाजनाः ॥९॥ सर्वेमिथोदर्शयंतःस्वस्वभोज्यरु चिंपृथक् ॥ हसंतोहासयंतश्चाभ्यवजह्रुःसहेश्वराः ॥ १०॥ बिभ्रद्वेणुंजठरपटयोःशृंगवेत्रेचकक्षेवामेपाणौ मसृणकवलंतत्फलान्यंगुलीषु ॥ तिष्ठन्मध्येस्वपरिसुहृदोहासयन्नर्मभिःस्वैःस्वर्गेलोकेमिषतिबुभुजेयज्ञभु ग्बालकेलिः ॥११॥ भारतैवंवत्सपेषुभुंजानेष्वच्युतात्मसु॥वत्सास्त्वंतर्वनेदूरंविविशुस्तृणलोभिताः॥१२॥

कसितनयनाः कमलकर्णिकायाःपरितःपत्राणियथेति ८ ॥ पुष्पैस्तद्दलैःअन्यैश्चपत्रैःकृतानिभाजनानियैस्ते ॥ ९ ॥ रुचिंस्वादविशेषं अभ्यवजह्रुःबुभुजिरे सहेश्वराः श्रीकृष्णसहिताः ॥ १० ॥ यज्ञभुगपितेषुबुभुजे बालानामिवकेलिर्यस्यसः तदाह उदरवस्त्रयोर्मध्येवे णुंबिभ्रद्दधदितिसर्वत्रसंबध्यते वामइतिकक्षपाण्योर्विशेषणं मसृणंस्निग्धंदध्योदनकवलं तदुचितानिबिल्वादिफलानिअंगुलिसंधिषु क र्णिकेवसर्वाभिमुखोमध्येतिष्ठन् स्वस्यपरितउपविष्टान्सुहृदः स्वैर्नर्मभिःपरिहासवाक्यैः स्वर्गेलोकेस्वर्गवासिनिजनेमिषति आश्च र्येणपश्यतिसतिलोकेजनानांमध्येबुभुजे ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भीभयंभयहेतुभ्योभयमस्यअपास्य यद्वा अस्यविश्वस्यभियोपिभयंयः श्रीकृष्णः आशाद्भोजनात् अस्मिन्पादेअक्षराधिक्यमार्षन् ॥ १३ ॥ अद्रिषुतद्दरीषुकुंजेषुलतादिपिहितोदरविवरेषुगव्हरेषुसंकटस्थानेषु ॥ १४ ॥ अंभोजन्मनः पद्माज्जनिर्यस्यसः ब्रह्मा तदंतरेतास्मिन्नव सरेगतःआगतः तच्छिद्रंप्राप्तोवा मंजुमनोहरं अन्यदपिमहित्वंमहिमानंद्रष्टुंतस्यवत्सानितःस्थानाद्वत्सपांश्चान्यत्रनीत्वास्वयंतिरोबभूव प्रभवतःश्रीकृष्णस्य ॥ १५ ॥ उभावपिवत्सान्वत्सपांश्चविचिकायअन्वीक्षितवान् ॥ १६ ॥ विधिकृतंब्रह्मणाकृतं ॥ १७॥ उभयायितं वत्सतत्पालरूपेणवर्तमानमित्यर्थः अयंभावः यदितूष्णींमासेतर्हितन्मातॄणांविषाद ःस्यात्यदिचतानेवानयिष्यामितर्हिब्रह्मणोमोहोनस्यादि

तान्दृष्ट्वाभयसंत्रस्तानूचेकृष्णोऽस्यभीभयं ॥ मित्राण्याशान्माविरमतेहानेष्येवत्सकानहं ॥१३॥ इत्युक्त्वाद्रिदरीकुंजगव्हरेष्वात्मवत्सकान् ॥ विचिन्वन्भगवान्कृष्णःसपाणिकवलोययौ॥१४॥ अंभोजन्मजनिस्तदंतरगतोमायार्भकस्येशितुर्द्रष्टुंमंजुमहित्वमन्यदपितद्वत्सानितोवत्सपान्॥ नीत्वाऽन्यत्रकुरूद्वहांतरदधात्खेवस्थितोयःपुराद्दृष्ट्वाऽघासुरमोक्षणंप्रभवतःप्राप्तःपरंविस्मयं॥१५॥ततोवत्सानदृष्ट्वैत्यपुलिनेपिचवत्सपान् ॥ उभावपिवनेकृष्णोविचिकायसमंततः ॥१६॥ क्वाप्यदृष्ट्वांऽतर्विपिनेवत्सान्पालांश्चविश्ववित्॥सर्वंविधिकृतंकृष्णःसहसाऽवजगामह ॥१७॥ ततःकृष्णोमुदंकर्तुंतन्मातॄणांचकस्यच ॥ उभयायितमात्मानंचक्रेविश्वकृदीश्वरः ॥१८॥ यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकंयावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषांबरं॥यावच्छीलगुणाभिधाकृतिवयोयावद्विहारादिकंसर्वंविष्णुमयंगिरोऽगवदजःसर्वस्वरूपोबभौ ॥१९॥ स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः ॥ क्रीडन्नात्मविहारैश्चसर्वात्माप्राविशद्व्रजं ॥२०॥

तितदुभयप्रीतयेतथाचक्रेइति ॥ १८ ॥ तदेवदर्शयति यावदिति वत्सपानांवत्सकानांचाल्पकंवपुःप्रमाणमनतिक्रम्य एवमुपर्यपियोज्यं यद्वायावद्वत्सपादिवपुस्तावत्सर्वंस्वरूपोऽजःकृष्णोबभावित्यर्थःउत्तरत्राप्येवं सर्वंविष्णुमयंजगदितिप्रसिद्धायागीःतस्याअंगवत्सागीरेवार्थ स्वरूपेणप्रत्यक्षायथातथाबभूवेत्यर्थः ॥१९॥ एवंसर्वात्मासन्व्रजंप्राविशत् कथंस्वयमात्मैवप्रयोजकःआत्मरूपान्गोवत्सानितिकर्मापिस्वयमेवेत्युक्तं आत्मरूपैर्वत्सपैःप्रतिवार्यप्रयोज्यकर्तापिस्वयमेवआत्मविहारैःक्रीडन्नितिक्रियापिकारकाण्यपिस्वयमेवेत्यर्थः ॥ २० ॥

तत्तदात्मातत्तद्गोपबालरूपोभवत् ततस्तत्तत्सद्मप्रविष्टः ॥ २१ ॥ गोपिकामोहमाह तन्मातरइति तन्मातरोवेणुरवेणत्वरयाउत्थिताःस त्यःसुतान्मत्वापरंब्रह्मैवदोर्भिरुदुह्यउत्थाप्यस्नेहेनस्नुतंस्तन्यंपयःसुधासवंपयएवसुधावत्स्वादुआसववन्मादकंपाययामासुरित्यर्थः ॥ २२॥ एवंयामयमेनचतत्तत्कालक्रीडानियमेनसायंगतःप्राप्तःस्वाचरितैःस्वस्याचरितैःशोभनैराचरितैर्वामातॄःप्रहर्षयंस्ततस्ताभिरुन्मर्द्दनादिभिरुप लालितइति॥ २३ ॥ गवांमोहनमाह गावइति परिहूताआहूताश्चतेसंगताश्चतान् ॥ २४ ॥ एतावत्तुवैषम्यंकृष्णस्यापिदुर्निवारमासीदित्याह गोगोपीनामितिगवांगोपीनांचास्मिन्कृष्णेमातृताउपलालनादिरूपापुरोवदेवासीत्किंतुस्नेहर्द्धिकांविनास्नेहाधिक्यंत्विदानींविशेषइत्यर्थः

तत्तद्वत्सान्पृथङ्नीत्वातत्तद्गोष्ठेनिवेश्यसः॥ तत्तदात्माऽभवद्राजंस्तत्तत्सद्मप्रविष्टवान् ॥२१॥ तन्मातरोवेणुरवत्वरोत्थिताउदुह्यदोर्भिःपरिरभ्यनिर्भरं॥स्नेहस्नुतस्तन्यपयःसुधासवंमत्वापरंब्रह्मसुतानपाययन् ॥२२ ततोनृपोन्मर्द्दनमज्जलेपनालंकाररक्षातिलकाशनादिभिः॥ संलालितःस्वाचरितैःप्रहर्षयन्सायंगतोयामयमेनमाधवः ॥२३॥ गावस्ततोगोष्ठमुपेत्यसत्वरंहुंकारघोषैःपरिहूतसंगतान् ॥ स्वकान्स्वकान्वत्सतरानपाययन्मुहुर्लिहंत्यःस्रवदौधसंपयः ॥ २४ ॥ गोगोपीनांमातृताऽस्मिन्सर्वास्नेहर्द्धिकांविना॥पुरोवदास्वपिहरेस्तोकतामाययाविना ॥२५॥ व्रजौकसांस्वतोकेषुस्नेहवल्ल्याब्दमन्वहं ॥ शनैर्निःसीमवद्वृधेयथाकृष्णेत्वपूर्ववत् ॥२६॥ इत्थमात्मात्मनात्मानंवत्सपालमिषेणसः ॥ पालयन्वत्सपोवर्षंचिक्रीडेवनगोष्ठयोः ॥२७॥ एकदाचारयन्वत्सान्सरामोवनमाविशत् ॥ पंचषासुत्रियामासुहायनापूरणीष्वजः ॥ २८॥

आसुगोगोपीषुहरेस्तोकताचबालभावनापिपूर्ववदेवासीत्किंतुमाययाविना ममेयंमाताऽहमस्याःपुत्रइतिमोहंविनेत्यर्थः ॥ २५ ॥ स्नेहर्द्धि मेवदर्शयति व्रजौकसामिति यथाकृष्णेयशोदानंदनेस्वपुत्रेभ्योपिस्नेहाधिक्यंपूर्वमासीत् इदानींस्वतोकेष्वपितथैवावर्द्धतेत्यर्थः आऽब्दंया वत्संवत्सरंनिःसीमयथाभवति ॥ २६ ॥ एवमात्माश्रीकृष्णःवत्सपोभूत्वातत्रापिवत्सानांपालानांचमिषेणात्मानमात्मनापालयन्क्रीडित वानित्यर्थः ॥ २७ एतावत्पर्यंतंरामस्यापिमोहएवासीत्संवत्सरांतेतुकथंचिज्ज्ञातवानितिदर्शयन्नाहएकदेति पंचाषासुपंचसुवाषट्सुवारा त्रिषुहायनापूरणीषुपूरकतयाऽवशिष्टास्वित्यर्थः ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥

ततोदूरतरएवगोवर्धनशिखरेचरंत्योगावोव्रजसमीपेचरतोवत्सान्ददृशुः ॥ २९ ॥ तदैवसगोव्रजोगवांकलापोयतस्तत्स्नेहवशस्तेषांवत्सा
नांस्नेहेनाकृष्टःअतएवनस्मृतआत्मायेनसःजवेनउपव्रजमगात् कथंभूतः अत्यात्मपदुर्गमार्गःअतिक्रांतआत्मपान्गोपालान्यःसोत्यात्मपः
तथादुर्गोदुर्गमोमार्गोयस्यसःसचसच तथायुक्ताभ्यांपभ्द्यांधावन्द्विपादिवप्रतीयमानःककुदिआकुंचिताग्रीवायस्यसः उदास्यपुच्छःउन्न
मितान्यास्यानिपुच्छानिचयेनसः आस्रुपयाःसर्वतःस्रवंतिपयांसियस्यसः आस्रुपयाइत्यपिपाठेसएवार्थः गोव्रजइत्यनेनवृषभादयोप्यगु
रित्युक्तं ॥ ३० ॥ तत्रविशेषतोधेनूनांचेष्टितमाह समेत्येति गोवर्धनस्याधः वत्सवत्यःपुनःप्रसूताअपि ॥ ३१ ॥ रामेणदृष्टंवत्सेषुगवांस्ने

ततोविदूराच्चरतोगावोवत्सानुपव्रजं ॥ गोवर्धनाद्रिशिरसिचरंत्योददृशुस्तृणं ॥ २९ ॥ दृष्ट्वाऽथतत्स्नेहव
शोऽस्मृतात्मासगोव्रजोऽत्यात्मपदुर्गमार्गः ॥ द्विपात्ककुद्ग्रीवउदास्यपुच्छोऽगाद्धुंकृतैरास्रुपयाजवेन॥३०॥
समेत्यगावोऽधोवत्सान्वत्सवत्योऽप्यपाययन् ॥ गिलंत्यइवचांगानिलिहंत्यःस्वौधसंपयः ॥३१॥ गोपा
स्तद्रोधनायासमौघ्यलज्जोरुमन्युना ॥ दुर्गाध्वकृच्छ्रतोऽभ्येत्यगोवत्सैर्ददृशुःसुतान् ॥३२॥ तदीक्षणप्रे
मरसाप्लुताशयाजातानुरागागतमन्यवोऽर्भकान् ॥ उदुह्यदोर्भिःपरिरभ्यमूर्द्धनिघ्राणैरवापुःपरमांमुदंते
॥३३॥ ततःप्रवयसोगोपास्तोकाश्लेषसुनिर्वृताः ॥ कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः ॥३४॥ व्रजस्य
रामःप्रेमर्द्धेर्वीक्ष्यौत्कंठ्यमनुक्षणं ॥ मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिंतयत् ॥३५॥ किमेतदद्भुतमिववासु
देवेऽखिलात्मनि ॥ व्रजस्यसात्मनस्तोकेष्वपूर्वंप्रेमवर्द्धते ॥ ३६ ॥ ॥ ॥

हातिशयमुक्तागोपानामपिदर्शयितुमाह गोपाइति तासांगवांरोधनेयआयासस्तस्यमौघ्येनमोघत्वेनलज्जयासहोरुमन्युनादुर्गमार्गजनितक्ले
शेनचाभ्येत्यगोवत्सैःसहसुतान्ददृशुः ॥ ३२ ॥ ततश्चतेषामीक्षणेनोद्गतोयःप्रेमरसस्तस्मिन्नाप्लुतानिमग्नाआशयायेषांते लज्जामन्युकृच्छ्रै
स्तानपिताडयितुमागताःसंतोऽपगतमन्यवःप्रत्युतजातोऽनुरागोयेषांतेमूर्द्धनिघ्राणैरवघ्राणैःपरमांमुदमवापुः ॥ ३३ ॥ कृच्छ्रात्ततोऽपगताः
निवृत्ताः तेषांसुतानामनुस्मृत्योद्गच्छंतिअश्रूणियेषांते ॥ ३४ ॥ प्रेमर्द्धेःऔत्कंठ्यमतिशयंमुक्तस्तनेष्वपत्येषुवीक्ष्यहेतुमजानन्नचिंतयत् ॥
॥ ३५ ॥ चिंतामेवाह किमेतदितिद्वाभ्यां वासुदेवेयथापुराप्रेमतथास्वतोकेष्वपिव्रजस्यप्रेमवर्द्धतेकिमेतदद्भुतमितिकिंचसात्मनःमत्सहि
तस्यव्रजस्य ममतेषुप्रेमकारणंकिमितिभावः ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥

॥३१॥

केयंमायादेवानांवानराणांवाअसुराणांवाकुतोवाकस्मात्प्रयुक्ता तत्रान्यमायानसंभवतियतोममापिमोहोवर्ततेअतः प्रायशोमत्स्वामिनःश्रीकृष्णस्यैवमायेयमस्त्वितिसंभावयति ॥ ३७ ॥ सवयसान्सखीनपिवयुनेनज्ञानमयेनचक्षुषावैकुंठंश्रीकृष्णमेवापश्यत् ॥ ३८ ॥ एवंकृष्णरूपान्सामान्यतोज्ञात्वाकृष्णंदृष्ट्वाकृष्णापदेशेनविशेषतोज्ञातवानित्याह नैतइति अयमर्थः पाल्यमानास्तावद्वत्साऋषीणामंशाः पालाश्च देवानामंशाइतितावदहंवेद्मि इदानींतुनतथा किंतुअस्मिन्भिदाश्रयेपित्वमेवभासि अतस्त्वंसर्वंपृथक्विविच्यकथंवृत्तमितिवदेत्युक्तेनप्रभुणावक्तानिगमात्संक्षेपतएवोक्तंवृत्तंबलोऽवैहिदितवानित्यर्थः ॥ ३९ ॥ ततःकिंवृत्तमित्यपेक्षायामाह तावदिति वर्षेजातेआत्मनोमानेनत्रुटचनेहसात्रुटिमात्रेणकालेनसकलंसानुचरंहरिंददर्श ॥ ४०॥ दृष्ट्वाचन्यतर्कयदित्याह यावंतइतिद्वाभ्यां मेमायाशयेमायातल्पे ॥ ४१ ॥

केयंवाकुतआयातादैवीवानार्य्युतासुरी ॥ प्रायोमायाऽस्तुमेभर्त्तुर्नान्यामेऽपिविमोहिनी ॥३७॥ इतिसंचिंत्यदाशार्होवत्सान्सवयसानपि॥ सर्वानाचष्टवैकुंठंचक्षुषावयुनेनसः ॥ ३८ ॥ नैतेसुरेशाऋषयोनचैतेत्वमेवभासीशभिदाश्रयेऽपि॥सर्वं पृथक्त्वंनिगमात्कथंवदेत्युक्तेनवृत्तंप्रभुणाबलोऽवैत् ॥३९॥ तावदेत्यात्मभूरात्ममानेनत्रुटचनेहसा॥पुरोवदब्दंक्रीडंतंददृशेसकलंहरिं ॥४०॥ यावंतोगोकुलेबालाःसवत्साःसर्वएवहि॥मायाशयेशयानामेनाद्यापिपुनरुत्थिताः॥४१॥इतएतेऽत्रकुत्रत्यामन्मायामोहितेतरे॥तावंतएवतत्राब्दंक्रीडंतोविष्णुनासमं ॥ ४२ ॥ एवमेतेषुभेदेषुचिरंध्यात्वासआत्मनि ॥ सत्याःकेकतरेनेतिज्ञातुंनेष्टेकथंचन ॥ ४३ ॥ एवंसंमोहयन्विष्णुंविमोहंविश्वमोहनं ॥ स्वयैवमायायाऽजोपिस्वयमेवविमोहितः ॥ ४४ ॥ तम्यांतमोवन्नैहारंखद्योतार्चिरिवाहनि ॥ महतीतरमायैश्यंनिहंत्यात्मनियुंजतः ॥ ४५ ॥ ॥ ॥

मन्मायामोहितेभ्यइतरेकुत्रत्याः ॥ ४२ ॥ इतिवितर्कयन्नमुह्यदित्याह एवमितिद्वाभ्यां एवमेतेषुभेदेषुचिरंध्यात्वा सआत्मभूरितिपाठः ॥ ॥ ४३ ॥ ४४ ॥ ननुमायाश्रयस्यतस्यकुतोमोहइत्यतआह तम्यामिति महामायिनिभगवतिअन्यमायायाआवरणविक्षेपकत्वाभावेदृष्टांतद्वयमाह तम्यांतमिस्रायांरात्र्यांनैहारंहिमकणप्रभवंतमइव तद्धितार्थोपसर्जनस्यापितमसोनैहारमितिविशेषणंछांदसं तत्तमोयथापृथगावरणंनकरोतिकिंतुतत्रैवलीयते यथाचखद्योतार्चिरहानिपृथक्प्रकाशंनकरोति एवंमहतिपुरुषेयुंजतःपुंसः इतरानीचामायातथातत्रनाकिंचित् करोति किंतुआत्मनिस्वस्मिन्नेवऐश्यंसामर्थ्यंनिहंतीति ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अन्यदप्याश्चर्यमाह तावदिति वत्सपालाःवत्साःपालाश्च सर्वेयष्टिविषाणादयश्च ॥ ४६ ॥ ४७ ॥ श्रीवत्सप्रभायुक्तान्यंगदानिदोःषुये षां रत्नमयानिकंबुवत्रिधाराणिकंकणानिपाणिषुयेषांतेचतेच ॥ ४८ ॥ तथाभूरिबहुजन्मार्जितंपुण्यंतद्युक्तैर्जनैरर्पितैः ॥ ४९ ॥ चंद्रिका विशदस्मितयुक्तैः सहारुणगुणेनचवर्त्तमानायेऽपांगास्तैर्वीक्षितैः स्वकार्थानांस्वभक्तमनोरथानांरजः सत्वाभ्यांस्रष्टृपालकाइवव्यदृश्यंत स त्ववद्विशदस्मितेनपालकाइवरजोवदरुणगुणेनचस्रष्टारइवतादृक्कटाक्षैर्द्योतमानाइत्यर्थः ॥ ५० ॥ आत्माब्रह्मातदादिस्तंबपर्यंतैरनेकार्है रनेकार्हणैः ॥५१॥ अजाद्याभिर्मायाविद्यादिभिर्विभूतिभिःशक्तिभिः महदादिभिरिति महत्सूत्रयोरपृथक्त्वविवक्षयाचतुर्विंशतितत्वैर्जग

तावत्सर्वेवत्सपालाःपश्यतोऽजस्यतत्क्षणात्॥व्यदृश्यंतघनश्यामाःपीतकौशेयवाससः॥४६॥चतुर्भुजाःशंखचक्रगदाराजीवपाणयः ॥ किरीटिनःकुंडलिनोहारिणोवनमालिनः ॥४७॥ श्रीवत्सांगददोरत्नकंबुकंकणपाणयः॥ नूपुरैःकटकैर्भाताःकटिसूत्रांगुलीयकैः ॥४८॥ अंघ्रिमस्तकमापूर्णास्तुलसीनवदामभिः ॥ कोमलैःसर्वगात्रेषुभूरिपुण्यवदर्पितैः ॥ ४९ ॥ चंद्रिकाविशदस्मेरैःसारुणापांगवीक्षितैः ॥ स्वकार्थानामिवरजःसत्वाभ्यांस्रष्टृपालकाः ॥ ५०॥ आत्मादिस्तंबपर्यंतैर्मूर्त्तिमद्भिश्चराचरैः॥नृत्यगीताद्यनेकार्हैःपृथक्पृथगुपासिताः ॥ ५१ ॥ अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः॥चतुर्विंशतिभिस्तत्त्वैःपरीतामहदादिभिः ॥ ५२ ॥ कालस्वभावसंस्कारकामकर्मगुणादिभिः॥ स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः॥५३॥सत्यज्ञानानंतानंदमात्रैकरसमूर्तयः॥अस्पृष्टभूरिमाहात्म्याअपित्युपनिषद्दृशां॥५४॥ एवंसकृद्ददर्शाजःपरब्रह्मात्मनोऽखिलान् ॥ यस्यभासासर्वमिदंविभातिसचराचरम्॥ ५५॥ ॥ ॥ ॥ ॥

त्कारणैः ॥ ५२ ॥ कालादिभिश्चतत्सहकारिभिः तत्रस्वभावःपरिणामहेतुः संस्कारउद्बोधकः स्वमहिध्वस्तमहिभिः भगवन्महिम्नाति रस्कृतस्वातंत्र्यैःउक्तैःसर्वैरणिमाद्यैः ॥ ५३ ॥ सर्वेषांमूर्त्तिमत्वेऽपिविशेषमाह सत्यज्ञानरूपाश्चअनंताश्चआनंदरूपाश्च तत्रापितदेकमात्रा विजातीयसंभेदरहितास्तत्रापिचैकरसाः सदैकरूपामूर्त्तयोयेषांते यद्वासत्यज्ञानादिमात्रैकरसंयद्ब्रह्म तदेवमूर्तयोयेषामिति अतएवोपनिषत् आत्मज्ञानंसैवदृक्चक्षुर्येषांतेषामपिहिनिश्चितमस्पृष्टभूरिमाहात्म्यानस्पृष्टंस्पर्शयोग्यंभूरिमाहात्म्यंयेषांतेतथाभूताःसंतोव्यदृश्यंतेति ॥ ५४ ॥ एवंसकृत्एकदैवददर्श परब्रह्मणोविशेषणम् यस्येति ॥ ५५ ॥ ॥ ॥ ॥ ॥

अतिकुतुकेनाश्चर्येणउद्वृत्यदृष्टीःपरावृत्यहंसपृष्ठेनिपत्योतिवा कुतुकशब्देतृतीयायाश्छांदसोलुक् यद्वा उद्वृत्यइतिछेदः अतिकुतुकेनउद्वृत्यःविलोड्यःविपर्यस्तःसन्निितियावत् पाठांतरेतुअतिकुतुकेनोद्वृत्तःक्षुभितः तेषांधाम्नातेजसास्तब्धसर्वेंद्रियोब्रह्मातूष्णींनिश्चलोऽभूत् अत्रदृष्टांतः पूर्दैवीव्रजाधिष्ठात्रीकाचिद्देवतातस्याअंतिसमीपेपुत्तिकाचतुर्मुखीकृतकप्रतिमेव ॥ ५६ ॥ एवंमोहमग्नमजमुज्जहारेत्याह इतीतिइरेशइरासरस्वतीतस्याईशेब्रह्मणिकिमिदमितिमुह्यतिसतिपश्चात्तद्द्रष्टुमप्यनीशेसतिपरमोऽजः श्रीकृष्णःसपदिअजाजवनिकांमायारूपांतिरस्कारिणींययाद्भुतंदर्शितंतांचछादातिरोधत्तअपसारितवानित्यर्थःअथवाअयंलोकाभिमानीममैश्वर्यंद्रष्टुमयोग्यइतितस्योपरिमायांप्रसारितवानिति क्व मुह्यतिसति अतर्क्येतर्कागोचरेनिजःअसाधारणोमहिमायस्यतस्मिन्निितिमोहेहेतुरुक्तः दर्शनायोग्यत्वायत्रीणिविशेषणा

ततोऽतिकुतुकोद्वृत्यस्तिमितैकादशेंद्रियः ॥ तद्धाम्नाऽभूदजस्तूष्णींपूर्देव्यंतीवपुत्तिका ॥ ५६ ॥ इतीरेशेऽतर्क्येनिजमहिमानिस्वप्रमितिकेपरत्राजातोऽतन्निरसनमुखब्रह्मकमितौ ॥ अनीशेऽपिद्रष्टुंकिमिदमितिवामुह्यतिसतिचछादाजोज्ञात्वासपदिपरमोऽजाजवनिकां ॥ ५७ ॥ ततोऽर्वाक्प्रतिलब्धाक्षःकःपरेतवदुत्थितः ॥ कृच्छ्रादुन्मील्यवैदृष्टीराचष्टेदंसहात्मना ॥ ५८॥ सपद्येवाभितःपश्यन्दिशोऽपश्यत्पुरस्थितं ॥ वृंदावनंजनाजीव्यद्रुमाकीर्णंसमाप्रियं ॥५९॥ यत्रनैसर्गदुर्वैराःसहासन्नृमृगादयः ॥ मित्राणीवाजितावासद्रुतरुट्तर्षकादिकं ॥६०॥ तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यंब्रह्माद्वयंपरमनंतमगाधबोधं ॥ वत्सान्सखीनिवपुरापरितोविचिन्वदेकंस्वपाणिकवलंपरमेष्ठ्यचष्ट ॥ ६१ ॥ ॥ ॥ ॥

नि स्वप्रमितिकेस्वप्रमितिस्वप्रकाशंचतत्कंसुखंचयस्मिन् अतएवाजातःप्रकृतेःपरत्रपरस्मिन् अतन्निरसनमुखेनब्रह्मकैःश्रुतिशिरोभिर्मितिर्ज्ञानंयस्मिंस्तस्मिन्स्वरूपे ॥ ५७ ॥ अर्वाक्बहिःप्रतिलब्धान्यक्षीणियेनसः परेतवन्मृतोयदिकथंचित्पुनरुत्तिष्ठतितथा दृष्टीःनेत्राणि ॥ ५८ ॥ जनानामाजीव्यैर्द्रुमैराकीर्णं समाप्रियंसंततानिआसमंतात्प्रियाणियस्मिंस्तत् ॥ ५९ ॥ तदाह यत्रेति नैसर्गदुर्वैराःस्वाभाविकाप्रतिकार्यवैरवंतोऽपिनराःसिंहादयश्चमित्राणीवयत्रसहैवासन् अजितस्यावासेनद्रुताःपलायिताःरुट्तर्षादयःक्रोधलोभादयोयस्मात्तथाभूतंवृंदावनमपश्यदिति ॥ ६० ॥ तत्रचपरमेष्ठीब्रह्माइवपुरापूर्ववदेवब्रह्मअचष्टअपश्यत् कथंभूतं पशुपवंशशिशुत्वनाट्यमुद्वहत् नाट्यमिरयत्रहेतुः अद्वयमित्यादि अद्वयंचवत्सान्विचिन्वत् एकंचसखीन् अगाधबोधंचविचिन्वत् अनंतंचपरितोविचिन्वत् परंचशिशुत्व

निजधोरणतःस्ववाहनात्त्वरेणवेगेनावतीर्यदंडवन्नत्वाचतुर्णांमुकुटानामग्रैःअंघ्रियुग्मंस्पृष्ट्वामुदश्रुसुजलैरानंदाश्रुरूपैः सुजलैरभिषेकमक
रोदिति ॥ ६२ ॥ चिरस्यचिरंपादयोःपतन्नास्ते ॥ ६३ ॥ सवेपथुःसकंपः अतएवगद्गदया अनुकरणमेतत् इलयावाचाऐलतअस्तौत्
॥ ६४ ॥ इतिश्रीभागवतेदशमस्कंधेपू० टीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ चतुर्दशेऽद्भुतंदृष्ट्वापूर्वांगंतुकनिश्चयं ॥ अनी
शःकर्तुमस्तौषीत्कृष्णंब्रह्माविमोहितः ॥ १ ॥ स्वकृतापराधेनभियासकंपतयाभगवन्महिमानमनवगाहमानोयथादृष्टस्वरूपमेवकीर्तयन्ना

दृष्ट्वात्वरेणनिजधोरणतोऽवतीर्यपृथ्व्यांवपुःकनकदंडमिवातिपात्य ॥ स्पृष्ट्वाचतुर्मुकुटकोटिभिरंघ्रियुग्मं
नत्वामुदश्रुसुजलैरकृताभिषेकं ॥ ६२ ॥ उत्थायोत्थायकृष्णस्यचिरस्यपादयोःपतन् ॥ आस्तेमहित्वंप्रा
ग्दृष्टंस्मृत्वास्मृत्वापुनःपुनः ॥६३॥ शनैरथोत्थायविमृज्यलोचनेमुकुंदमुद्वीक्ष्यविनम्रकंधरः ॥ कृतांजलिः
प्रश्रयवान्समाहितःसवेपथुर्गद्गदयैलतेलया ॥ ६४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धे
त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ब्रह्मोवाच नौमीड्यतेऽभ्रवपुषेतडिदंबरायगुंजावतंसपरिपिच्छलस
न्मुखाय ॥ वन्यस्रजेकवलवेत्रविषाणवेणुलक्ष्मश्रियेमृदुपदेपशुपांगजाय ॥ १ ॥ ॥ ॥

ह नौमीति हेईड्यस्तुत्यतेतुभ्यंनौमि द्वितीयार्थेचतुर्थी अथवा नौमीत्युक्ताप्रस्तुतस्यभगवतःकर्मत्वेज्ञातेप्रयोजनापेक्षायामेवंभूतोभगवाने
वप्रयोजनमितितादर्थ्येचतुर्थी यद्वातुभ्यंत्वामेवप्रसादयितुंत्वामेवस्तौमीत्यर्थः अभ्रवद्वपुर्यस्यतस्मैतुभ्यं तडिद्वदंबरंयस्यतस्मै गुंजानामव
तंसौकर्णभूषणेपरिपरितःपिच्छंचबर्हापीडंतैर्लसन्मुखंयस्यतस्मै वन्याःस्रजोयस्यतस्मै कवलादिभिर्लक्ष्मभिःश्रीःशोभायस्यतस्मै मृदूपा
दौयस्यतस्मै पशुपस्यांगजाय ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुनौमीतिप्रतिज्ञायकिंस्वरूपानुवादमात्रंक्रियतेअतआह     अस्यापीति भोदेवअस्यापिसुलभत्वेनप्रकाशितस्यापितवत्रपुषोऽवतारस्यमाहि
महिमानमवसितुंज्ञातुंकोपिकः ब्रह्माअहमपिनेशेनशक्नोमि यद्वा कश्चिदपिनेशोनसमर्थ आसीत् सुलभत्वायविशेषणद्वयं मदनुग्रहस्यममानु
ग्रहोयस्मात्तन्मदनुग्रहंतस्य किंच स्वेच्छामयस्यस्वीयानांभक्तानांयथायथेच्छातथातथाभवतः तर्हिकिमितिज्ञातुंनशक्यतेअतआह नतुभूतमय
स्यअचिंत्यशुद्धसत्त्वात्मकस्य यदाऽस्यैवंतदाकथंपुनः साक्षात्तवकेवलस्यात्मसुखानुभूतेरेवस्वसुखानुभवमात्रस्यावतारिणो गुणातीतस्यमाहि
मानंआंतरेणनिरुद्धेनापिमनसाकोवाज्ञातुंसमर्थोभवेत् अथवाभूतमयस्यउक्तलक्षणस्यापिविराड्रूपस्यतवत्वान्नियम्यस्यवपुषोमहिमानमेवाव
सितुंकोपिनेशोतदासाक्षात्तवैवासाधारणस्यनियम्यनियंतृभेदरहितस्यउक्तलक्षणस्यास्यमहिमानमवसितुंकोपिनेशइतिकिमुवक्तव्यमित्यर्थः २ त
र्हिअज्ञाः कथंसंसारंतरेयुरतआह ज्ञानइति हेअजितउदपास्यईषदप्यकृत्वासद्भिर्मुखरितांस्वतएवनित्यंप्रकटितांभवदीयवार्तांस्वस्वस्थानए

अस्यापिदेववपुषोमदनुग्रहस्यस्वेच्छामयस्यनतुभूतमयस्यकोऽपि ॥ नेशेमहिह्यवसितुंमनसांतरेणसाक्षात्त
वैवकिमुतात्मसुखानुभूतेः॥२॥ज्ञानेप्रयासमुदपास्यनमंतएवजीवंतिसन्मुखरितांभवदीयवार्त्ताम्॥स्थानेस्थि
ताः श्रुतिगतांतनुवाङ्मनोभिर्येप्रायशोऽजितजितोऽप्यसितैस्त्रिलोक्याम् ॥३॥ श्रेयःस्रुतिंभक्तिमुदस्यतेविभो
क्लिश्यंतियेकेवलबोधलब्धये॥तेषामसौक्लेशलएवशिष्यतेनान्यद्यथास्थूलतुषावघातिनाम्॥४॥ पुरेहभूमन्ब
हवोऽपियोगिनस्त्वदर्पितेहानिजकर्मलब्धया॥विबुध्यभक्त्यैवकथोपनीतयाप्रपेदिरेंऽजोऽच्युततेगतिंपराम्॥५

वस्थितास्तत्सन्निधिमात्रेणस्वतएवश्रुतिगतांश्रवणंप्राप्तांतनुवाङ्मनोभिर्नमंतः सत्कुर्वंतोयेजीवंतिकेवलंयद्यपिनान्यत्कुर्वंतितैः प्रायशस्त्रिलो
क्यामन्यैरजितोऽपित्वंजितः प्राप्तोऽसीतिकिंज्ञानश्रमेणेत्यर्थः ॥ ३ ॥ भक्तिंविनाज्ञानंतुनैवसिद्ध्येदित्याह श्रेयःस्रुतिमिति श्रेयसामभ्युदयापव
र्गलक्षणानांस्रुतिः स्रवणंयस्याः सरसइवनिर्झराणांतांतेतवभक्तिमुदस्यत्यक्त्वा श्रेयःसृतिमितिपाठेश्रेयसांमार्गभूतामिति तेषांक्लेशलः क्लेशएवा
वशिष्यतेअयंभावः यथाअल्पप्रमाणंधान्यंपरित्यज्यअंतःकणहीनान्स्थूलधान्याभासांस्तुषानेवावघ्नंतितेषांनकिंचित्फलमेवंभाक्तिंतुच्छीकृत्य
येकेवलबोधायप्रयतंतेतेषामपीति॥४॥भक्त्यैवज्ञानंनान्यथेत्यत्रसदाचारंप्रमाणयतिपुरेति हेभूमन्इहलोकेपूर्वंयोगिनोऽपिसंततयोगैर्ज्ञानमप्रा
प्यपश्चात्त्वदर्पितेहास्त्वय्यर्पितालौकिक्यपीहाचेष्टायैस्तेनिजकर्मलब्धयात्वदर्पितैर्निजैः कर्मभिर्लब्धयात्वयिअर्पिताईहानिजानिकर्माणि
चतैर्लब्धयाइत्येकंपदंवा कथोपनीतयाकथयास्वसमीपंप्रापितयाभक्त्यैवविबुध्यआत्मानंज्ञात्वाअंजः सुखेनैवतेपरांगतिंप्राप्ताः ॥ ५ ॥

एवंतावत्सगुणनिर्गुणयोरुभयोरपिज्ञानंदुर्घटमितित्वत्कथाश्रवणादिनैवत्वत्प्राप्तिर्नान्यथेत्युक्तं इदानींयद्यप्युभयोरविशेषेणदुर्ज्ञेयत्वमुक्तंत थाऽपिगुणातीतस्यज्ञानंकथंचिद्भवेन्नतुसगुणस्यतवअचिंत्यानंतगुणत्वादितिश्लोकद्वयेनस्तौति तथाऽपीति हेभूमन्अपरिच्छिन्नअगुणस्य तेमहिमाअमलैरंतरात्मभिःप्रत्याहृतेंद्रियैर्विबोद्धुंबोधगोचरीभवितुमर्हतियोग्योभवति अथवाविबोद्धुंज्ञातुमर्हतिअर्ह्यतेशक्यतइत्यर्थः यद्वा महिमेतिमहिमानंकश्चिद्बोद्धुमर्हतीत्यर्थः कथंस्वानुभवात्आत्माकारांतःकरणसाक्षात्कारात् नन्वंतःकरणमपिसविकारमेवविषयीकरोतीति कथमात्माकारतातस्येत्यतआह अविक्रियादिति विक्रियाविशेषाकारस्तद्रहितात् विशेषपरित्यागएवात्माकारतेत्यर्थः नन्वंतःकरणसाक्षा त्कारविषयत्वेऽनात्मत्वप्रसंगःस्यादतआह अरूपतइति रूपंविषयःअविषयात् वृत्तिविषयत्वमेवात्मनोनफलविषयत्वमतोनायंदोषइति भावःक थंतर्हिस्फूर्तिः अनन्यबोध्यात्मतयास्वप्रकाशत्वेनैवनत्वन्यथाइदंतदितिविषयत्वेनेत्यर्थः बुद्धितत्स्थचिदाभासौद्वावेतौव्याप्नुतोघटं॥ तत्राज्ञानंधियानश्येदाभासेनघटःस्फुरेदितिअनात्मसु आत्मनितु ब्रह्मण्यज्ञाननाशायवृत्तिव्याप्तिरिहेष्यते ॥स्वयंस्फुरणरूपत्वान्नाभासस्तत्र

**तथाऽपिभूमन्महिमाऽगुणस्यतेविबोद्धुमर्हत्यमलांतरात्मभिः ॥ अविक्रियात्स्वानुभवादरूपतोह्यनन्यबो ध्यात्मतयानचान्यथा ॥ ६ ॥ गुणात्मनस्तेऽपिगुणान्विमातुंहितावतीर्णस्यकईशिरेऽस्य ॥ कालेनयैर्वा विमिताःसुकल्पैर्भूपांसवःखेमिहिकाद्युभासः ॥७॥ तत्तेनुकंपांसुसमीक्षमाणोभुंजानएवात्मकृतंविपाकं ॥ हृद्वाग्वपुर्भिर्विदधन्नमस्तेजीवेतयोमुक्तिपदेसदायभाक् ॥ ८॥ ॥ ॥**

युज्यते अथवामासर्वतोंऽतरंगाल्लक्ष्मीरपिअगुणस्यतेमहिमहिमानममलैरंतर्वृत्तिभिरिंद्रियैरपियथायाहृग्वस्तुतःस्वेनरूपेणविबोद्धुंकिमर्हति नार्हत्येवेत्यर्थः कथंतर्ह्यर्हतितदाह स्वानुभवादित्यादिना उक्तार्थमेवैतत् ॥ ६ ॥ गुणात्मनःगुणानामात्मनःगुणाधिष्ठातुस्तेतवपुनर्गुणा न्विमातुमेतावंतइतिगणयितुमपिकेईशिरेसमर्थाबभूवुःदूरतस्तद्विशेषवार्त्ता कथंभूतस्यतव अस्यविश्वस्यहितायपालनायबहुगुणाविष्कारे णावतीर्णस्य ननुकालेननिपुणैःकिमशक्यमतआह कालेनेति वाशब्दोवितर्के सुकल्पैरतिनिपुणैर्बहुजन्मनाकालेनभूपरमाणवोविमिता विशेषेणगणिताभवेयुः तथाखेमिहिकाहिमकणाअपि तथाद्युभासःदिविनक्षत्रादिकिरणपरमाणवोऽपि ॥ ७ ॥ तस्माद्भक्तिरेवसंगच्छत इत्याह तत्तेऽनुकंपामिति सुसमीक्षमाणस्तवकृपाकदाभविष्यतीतिबहुमन्यमानःस्वार्जितंचकर्मफलमनासक्तःसन्भुंजानएवनातिव तप आदिनाक्लिश्यन्नेवंयोजीवेतसमुक्तौदायभाग्भवति भक्तस्यजीवनव्यतिरेकेणदायप्राप्ताविवमुक्तौनान्यदुपयुज्यतइतिभावः ॥ ८ ॥

तदेवंस्तुत्वाभगवंतंक्षमापयितुंस्वापराधंनिवेदयति पश्येति हेईशमेऽनार्यंदौर्जन्यंपश्य यदहंमायिनामपिमायिनिविमोहकेत्वय्यपिस्वमा
यांप्रसार्यआत्मैश्वर्यमीक्षितुमैच्छंअभिलाषितवान् अहोएवंकर्तुंत्वय्यहंकियान्नकिंचित् यथाऽग्नेरुद्भूताज्वालाअग्नौनकिंचित्तद्वदिति॥ ९ ॥
रजोभुवःरजसोजातस्यअतःअजानतःअतएवाजावलेपांधतमोंधचक्षुषः अजोजगत्कर्त्ताऽहमितिमदेनगाढतमोरूपेणांधीभूतेनेत्रेयस्यअत
स्त्वत्तःपृथगीशमानिनःअन्यत्रप्रभुत्वेनवर्त्तमानोपिमयिनाथंसतिनाथवान्मत्कृत्यएवअतएषोऽनुकंप्यइतिमत्वाक्षमस्वेत्यर्थः ॥ १० ॥ ननु
ब्रह्मांडविग्रहस्त्वमापिईश्वरएवोतिचेत्तत्राह क्वाहमिति तमःप्रकृतिर्महान्महत्तत्त्वं अहमहंकारः खमाकाशः चरोवायुः आग्निः वार्ज
लंभूश्च प्रकृत्यादिपृथिव्यंतैरेतैःसंवेष्टितोयोंऽडघटःसएवतस्मिन्वास्वमानेनसप्तवितस्तिःकायोयस्यसोऽहंक्वक्वचतेमहित्वम् कथंभूतस्य ई
दृग्विधानियान्यविगणितानिअंडानितएवपरमाणवस्तेषांचर्यापरिभ्रमणंतदर्थंवाताध्वानोगवाक्षाइवरोमविवराणियस्यतस्यतव अतोऽतितु

पश्येशमेनार्यमनंतआद्येपरात्मनित्वय्यपिमायिमायिनि ॥ मायांवितत्येक्षितुमात्मवैभवंह्यहंकियानैच्छ
मिवार्चिरग्नौ ॥ ९ ॥ अतःक्षमस्वाच्युतमेरजोभुवोह्यजानतस्त्वत्पृथगीशमानिनः ॥ अजाऽवलेपांधतमोंऽ
धचक्षुषएषोऽनुकंप्योमयिनाथवानिति ॥१०॥ क्वाहंतमोमहदहंखचराग्निवार्भूसंवेष्टितांडघटसप्तवितस्ति
कायः ॥ क्वेदृग्विधाविगणितांडपराणुचर्यावाताध्वरोमविवरस्यचतेमहित्वं ॥ ११ ॥ उत्क्षेपणंगर्भगतस्य
पादयोःकिंकल्पतेमातुरधोऽक्षजागसे॥ किमस्तिनास्तिव्यपदेशभूषितंतवास्तिकुक्षेःकियदप्यनंतः॥१२॥
जगत्त्रयांतोदधिसंप्लवोदेनारायणस्योदरनाभिनालात् ॥ विनिर्गतोऽजस्त्वितिवाङ्नवैमृषाकिंत्वीश्वरत्वन्नवि
निर्गतोऽस्मि ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥

च्छत्वात्त्वयाऽनुकंप्योऽहमिति ॥११॥ अपिच गर्भगतस्यशिशोः पादयोरुत्क्षेपणंमातुःकिमपराधायभवतिलोके अस्तिनास्तिव्यपदेशाभ्यां
भावाभावशब्दाभ्यांस्थूलसूक्ष्मकार्यकारणशब्दैर्वाभूषितमभिहितं एतेषांशब्दानांभुविविषयेउषितांस्थितमितिवा सर्वंवस्त्वित्यर्थः हे अधो
क्षजतवकुक्षेःअनंतःबाहिःकियदपिकिंचिन्मात्रंकिमास्तिनकिंचिदस्तीत्यर्थः अतःसर्वस्यतवकुक्षिगतत्वेनममापितथात्वान्मातृवदपराधः
सोढव्यइतिभावः ॥ १२ ॥ किंचविशेषतोपित्वत्तोममजन्मप्रसिद्धमित्याह जगत्त्रयेत्यादि जगत्त्रयस्यांतेप्रलयेउदधीनांसंप्लवःसंश्लेषः
तस्मिन्नुदेउदकेनारायणस्योदरेनाभिस्तस्यनालादजोविनिर्गतइतियावाक्सातावन्मृषानभवति वैनिश्चितं तथापितुहेईश्वरत्वत्तःअहंकिं
नाविनिर्गतःनोत्पन्नोस्मि अपितुत्वत्तएवोत्पन्नइत्यर्थः ॥ १३ ॥ ॥ ॥ ॥ ॥

॥ ३५ ॥

तर्हिनारायणस्यपुत्रस्त्वंममकिमायातंतत्राह नारायणस्त्वमिति नहीतिकाकात्वमेवनारायणइत्यापादयति कुतोऽहंनारायणइतिचेदतआ
ह सर्वदेहिनामात्माऽसीति एवमपिकिंनारायणोनभवासि नारंजीवसमूहःअयनमाश्रयोयस्यसतथेतित्वमेवसर्वदेहिनामात्मानारायणइति
भावः हेअधीशत्वंनारायणोनहीतिपुनःकाकुः अधीशःप्रवर्तकस्ततश्चनारस्यायनंप्रवृत्तिर्यस्मात्सतथेतिपुनस्त्वमेवासाविति किंच त्वम
खिललोकसाक्षीअखिलंलोकंसाक्षात्पश्यासि अतोनारमयसेजानासीतित्वमेवनारायणइत्यर्थः नन्वेवंनारायणपदव्युत्पत्तौभवेदेवंतत्त्वन्य
थाप्रसिद्धमित्याशंक्याह नारायणोंऽगमिति नरादुद्भूताऽयेर्थास्तथानराज्जातंयज्जलंतदयनाद्योनारायणःप्रसिद्धःसोऽपितवैवांगंमूर्त्तिः तथा
चस्मर्यंते नराज्जातानितत्त्वानिनाराणीतिविदुर्बुधाः ॥ तस्यतान्ययनंपूर्वंतेननारायणःस्मृतइति तथाच आपोनाराइतिप्रोक्ताआपोवै
नरसूनवः ॥ अयनंतस्यताःपूर्वंतेननारायणःस्मृतइतिच ननुमन्मूर्तेरपरिच्छिन्नायाःकथंजलाश्रयत्वमतआह तत्रापिसत्यंनेति ॥ १४ ॥
अपरिच्छेदमेवोपपादयति तच्चेदिति जगदाश्रयभूतंतवतद्वपुःजलस्थमित्येवंयदिसत्सत्यंस्यात्तर्हितदैवकमलनालमार्गेणांतःप्रविश्यसं

**नारायणस्त्वंनहिसर्वदेहिनामात्माऽस्यधीशोऽखिललोकसाक्षी ॥ नारायणोंऽगंनरभूजलायनात्तच्चापिस
त्यंनतवैवमाया ॥ १४ ॥ तच्चेज्जलस्थंतवसज्जगद्वपुःकिंमेनदृष्टंभगवंस्तदैव ॥ किंवासुदृष्टंहृदिमेतदैवकि
न्नोसपद्येवपुनर्व्यदर्शि ॥ १५ ॥ अत्रैवमायाधमनावतारेह्यस्यप्रपंचस्यबहिःस्फुटस्य ॥ कृत्स्नस्यचांतर्जठ
रेजनन्यामायात्वमेवप्रकटीकृतंते ॥ १६ ॥ यस्यकुक्षाविदंसर्वंसात्मंभातियथातथा ॥ तत्त्वय्यपीहतत्सर्वं
किमिदंमाययाविना ॥ १७ ॥ ॥ ॥ ॥ ॥**

वत्सरशतंविचिन्वताऽपिमयाहेभगवन्नचिरयैश्वर्यतत्रकिमितिनोव्यदर्शिनदृष्टम् तदैवतपःकरणानंतरंसपद्येवसुदृष्टम् अतोमायैव अत
स्त्वन्मूर्त्तेर्देशविशेषपरिच्छेदःसत्योनभवतीत्यर्थः ॥ १५ ॥ अपिच यदिजलादिप्रपंचःसत्यःस्यात्तर्हितेनतवपरिच्छेदोभवेत् सतुमाया
विलसितइतित्वयैवदर्शितामित्याह श्लोकत्रयेण हेमायाधमनमायोपशमनअत्रैवावतारेबहिःस्फुटस्यापिजठरमध्येजनन्याःप्रदर्शनेन॥ १६॥
ननुबहिःसतएवअंतर्जठरेप्रतिबिंबोऽस्तुकुतःसर्वथामायात्वंतत्राह यस्येति यस्यतवकुक्षौसर्वमिदंयथाभातितत्सर्वमिहापिबहिरपितथैव
भाति किंचसात्मंत्वत्सहितंतदिदंसर्वंमाययाविनाकिंघटते अयंभावः त्वयिप्रतिबिंबश्चेत्बाह्यादिलोमतयाप्रतीयेतनतुतदस्ति तवचाद
र्शस्थानीयस्यत्वयिप्रतीतिर्नस्यात् अतःसर्वथामिथ्यात्वमेवेति ॥ १७ ॥ ॥ ॥ ॥ ॥

॥ ३७ ॥

अपिच नकेवलंजनन्याःममापितथैवदर्शितमित्याह अद्यैवेति त्वद्दतेत्वांविनाअस्यविश्वस्यमायात्वंत्वयाममैवचतदप्यद्यैवकिंनदर्शितंकिंतुदर्शितमेव तथाहि एकोसीत्यादि तत्ततोमयासहाखिलैस्तत्वादिभिरुपासितास्तावंतश्चतुर्भुजाअसि जगंतिब्रह्मांडानीतिप्रागनुक्तमपि दृष्टमितिज्ञातव्यं ॥ १८ ॥ ननुब्रह्मन्तवमयादर्शितंशुद्धमेवचैतन्यंकथंप्रपंचवन्मायेत्युच्यते सत्यं किंतुअद्वितीयेत्वयिनानात्वंगुणावतारमत्स्याद्यवतारेष्विवकार्यवशेनस्वतंत्रमायानिबंधनमित्याहश्लोकद्वयेन अजानतामितित्वत्पदवींतवस्वरूपमजानतांअनात्मनिप्रकृतौस्थितःआत्मैवत्वंआत्मनैवस्वातंत्र्येणमायांवितत्यभासि कथं जगतःसृष्टावहमिवब्रह्मेव विधानेपालनेचएषत्वमिव अंतेत्रिनेत्रइवेति ॥ १९ ॥

अद्यैवत्वदृतेऽस्यकिंममनतेमायात्वमादर्शितमेकोऽसिप्रथमंततोव्रजसुहृद्वत्साःसमस्ताअपि॥तावंतोऽसिचतुर्भुजास्तदखिलैःसाकंमयोपासितास्तावंत्येवजगंत्यभूस्तदमितंब्रह्माद्वयंशिष्यते॥१८॥अजानतांत्वत्पदवीमनात्मन्यात्मात्मनाभासिवितत्यमायां॥ सृष्टाविवाहंजगतोविधानइवत्वमेषोंऽतइवत्रिनेत्रः ॥ १९ ॥ सुरेष्वृषिष्वीशतथैवनृष्वपितिर्यक्षुयादस्स्वपितेऽजनस्य ॥ जन्मासतांदुर्मदनिग्रहायप्रभोविधातःसदनुग्रहाय ॥ २० ॥ कोवेत्तिभूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्यां ॥ क्ववाकथंवाकतिवाकदेतिविस्तारयन्क्रीडसियोगमायां ॥२१॥ तस्मादिदंजगदशेषमसत्स्वरूपंस्वप्नाभमस्तधिषणंपुरुदुःखदुःखं ॥ त्वय्येवनित्यसुखबोधतनावनंतेमायातउद्यदपियत्सदिवावभाति ॥२२॥ ॥ ॥ ॥

सुरेषुउपेंद्रः ऋषिषुपरशुरामः नृष्वपिरामः ॥ २० ॥ ननुचस्वातंत्र्येकथंकुत्सितेषुमत्स्यादिषुजन्मकथंवावामनाद्यवतारेयाञ्चादिकार्पण्यंकथंवाऽस्मिन्नेवकदाचिद्भयपलायनादिअतआह कोवेत्तीति अन्वर्थैः संबोधनैर्दुर्ज्ञेयत्वमेवाह भूमन्नित्यादिभिः भवतऊतीर्लीलास्त्रिलोक्यांकोवेत्तिक्ववाकथंवाकदावाकतिवेति अचिंत्यंतवयोगमायावैभवमितिभावः ॥ २१ ॥ ननुभवत्ववताराणामचिंत्योमहिमाप्रपंचस्यह्यसत्वेकथंसत्वप्रतीतिरितीमामाशंकांसपरिकरमुपसंहरन्परिहरति तस्मादिति अस्तधिषणंनिरस्तप्रतिभासंत्वय्येवउद्यत्उद्भवत्अपियन्नश्यत्सदिवेत्युपलक्षणमेतत् नित्यमिवसुखमिवचेतनमिव अधिष्ठानभूतस्यतवगुणैस्तथातथाभातीत्यर्थः ॥ २२ ॥ ॥ ॥

त्वमेवतुसत्यइत्याह एकस्त्वंसत्यः कुतःआत्मा दृश्यमसत्यंदृष्टंनचात्मादृश्यःअतःसत्यः किंचयद्विकारवत्तदसत्यंनचत्वयिजन्मादयो विकाराःसंतीत्याह आद्यःकारणं अतोनजन्म आद्यत्वेहेतुः पुराणः पुरापिनवःकार्यात्पूर्वमपिवर्त्तमानइत्यर्थःअत्रहेतुः पुरुषइति तथाचश्रुतिः पूर्वमेवाह मिहासमितितत्पुरुषस्यपुरुषत्वमिति जन्मानंतरास्तित्वलक्षणंविकारंवारयति नित्यइति सनातनइत्यर्थः पूर्णःअजस्रसुखःअक्षरःअमृतइतिचतुर्भिःपदैःक्रमेणवृद्धिविपरिणामापक्षयविनाशान्वारयति पूर्णत्वेहेतुः अनंतः अद्वयइतिचदेशकालपरिच्छेदरहितः वस्तुपरिच्छेदरहितोऽपि अमृतत्वोपपादनायचतुर्विधाक्रियाफलत्वंवारयति स्वयंज्योतिर्निरंजनःउपाधितोमुक्तइतिपदत्रयेण अयंभावः तत्रोत्पत्तिराद्यइत्यनेनैवनिराकृता प्राप्तिरपिक्रिययाज्ञानेनवाभवेत् क्रिययाप्राप्तिरात्मपदेनैवनिराकृता ज्ञानतःप्राप्तिंवारयति स्वयंज्योतिरि

एकस्त्वमात्मापुरुषःपुराणःसत्यःस्वयंज्योतिरनंतआद्यः॥नित्योऽक्षरोऽजस्रसुखोनिरंजनःपूर्णोऽद्वयोमुक्त उपाधितोऽमृतः ॥ २३ ॥ एवंविधंत्वांसकलात्मनामपिस्वात्मानमात्मात्मतयाविचक्षते॥गुर्वर्कलब्धोपनिषत्सुचक्षुषायेतेतरंतीवभवान्नृतांबुधिं॥२४॥आत्मानमेवात्मतयाऽविजानतांतेनैवजातंनिखिलंप्रपंचितं ॥ज्ञानेनभूयोऽपिचतत्प्रलीयतेरज्वामहेर्भोगभवाभवौयथा ॥ २५ ॥ ॥ ॥ ॥ ॥

ति विकृतिरपितुषापाकरणेनावघातेनव्रीहीणामिवउपाध्यपाकरणेनभवेत्तत्तुअसंगत्वान्नसंभवतीत्याह मुक्तउपाधितइति संस्कारोपीकिमप्यतिशयाधानेनमलापाकरणेनवा तत्रातिशयाधानंपूर्णत्वेनैवनिराकृतंमलापाकरणंनिवारयति निरंजनइति निर्मलइत्यर्थ. ॥२३॥तस्मादेवंभूतज्ञानान्मुच्यंतइत्याह एवंविधामिति त्वांयेविचक्षतेसम्यक्पश्यंति कथं आत्मात्मतयाआत्माप्रत्यक्तस्यस्वरूपेण नचैतत्पुत्रादिष्विव गौणमित्याह सकलात्मनामपिस्वात्मानं केन गुरुरेवार्कस्तस्माल्लब्धाउपनिषज्ज्ञानंतदेवसुचक्षुस्तेन भवएवानृतांबुधिस्तंतरंतीव ॥२४॥ तत्रचज्ञानेनतरंतीतितच्चतरंतीवेतितच्चात्मात्मतयाज्ञानेनेत्यर्थत्रयंप्रतिज्ञातंक्रमेणोपपाद्यते तत्रात्मानमेवात्मतयेत्यनेनश्लोकेनज्ञानेनतरंतीत्युपपाद्यते अज्ञानसंज्ञावित्यनेनतरंतीवेत्येतत् त्वामित्यादिश्लोकद्वयेनतुआत्मात्मतयेत्येतदुपपाद्यते ननुज्ञानेनकथंभवंतरंतीतितस्याज्ञानमूलत्वादित्याह आत्मानमेवेति तेनैवअज्ञानेनैव प्रपंचितंप्रपंचः रज्वामहेर्भोगभवाभवाविति सर्पशरीरस्याध्यासापवादौयथेति ॥ २५ ॥

ननुज्ञानेनतरंत्येवकिमिदमुच्यतेतरंतीवेतितत्राह अज्ञानसंज्ञाविति अज्ञानेनसंज्ञाययोस्तौभवबंधमोक्षौभवेनबंधस्तन्मोक्षश्चतौद्वौनामप्रसि
द्धौऋतज्ञभावात्ऋतश्चासौज्ञश्चतस्यभावस्तस्मादन्यौनस्तः ननुकथंमहानपलापः क्रियतेपरमार्थविचारादित्याह अजस्रेति अखंडानुभव
रूपेपरेशुद्धेआत्मनिअज्ञानंननचबंधः अतएवनज्ञानंनचमोक्षः तरणौसूर्येरात्र्यहनीइवेति ॥ २६ ॥ ननुपरमार्थज्ञानादज्ञानकृतोबंधोनि
वर्त्ततांआत्मात्मतयैवज्ञानादितिकोऽयमाग्रहइत्याशंक्याह यदध्यासादात्मनःपररूपास्फूर्तिस्तदपवादेनतत्रैवज्ञानंयुक्तमित्यमुमर्थंविस्मये
नाक्रोशन्निवाह त्वामिति त्वामात्मानंपरंदेहादिंमत्वाआत्मनिदेहादिमध्यस्यतथापरंदेहादिमात्मानंमत्वादेहादावात्मानमध्यस्यअत्रनष्टआ
त्माबहिर्मृग्यइतिचित्रं नहिगृहेनष्टंवनेमृग्यतइत्यर्थः ॥ २७ ॥ विवेकिनस्तुप्रत्यक्स्वरूपेएवपरमात्मानंविचिन्वंतीत्याह अंतर्भवइति

**अज्ञानसंज्ञौभवबंधमोक्षौद्वौनामनान्यौस्तऋतज्ञभावात् ॥ अजस्रचिंत्यात्मनिकेवलेपरेविचार्यमाणेतर
णाविवाहनी ॥ २६ ॥ त्वामात्मानंपरंमत्वापरमात्मानमेवच ॥ आत्मापुनर्बहिर्मृग्यअहोऽज्ञजनताऽज्ञता
॥ २७ ॥ अंतर्भवेऽनंतभवंतमेवह्यतत्त्यजंतोमृगयंतिसंतः ॥ असंतमप्यंत्यहिमंतरेणसंतंगुणंतंकिमुयंति
संतः ॥ २८ ॥ अथापितेदेवपदांबुजद्वयप्रसादलेशानुगृहीतएवहि ॥ जानातितत्त्वंभगवन्महिम्नोनचान्य
एकोपिचिरंविचिन्वन् ॥ २९ ॥ तदस्तुमेनाथसभूरिभागोभवेऽत्रवान्यत्रतुवातिरश्चाम् ॥ येनाहमेकोऽ
पिभवज्जनानांभूत्वानिषेवेतवपादपल्लवम् ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥**

भवतीतिभवश्चिज्जडात्मकंशरीरंतन्मध्यएवत्वांमृगयंति अतज्जडंत्यजंतःअपवदंतः ननुसतोज्ञानेनालंकिमसतोऽपवादेनेत्याशंक्याध्यस्ता
पवादंविनाऽधिष्ठानतत्त्वंनज्ञायतइतिसतांव्यवहारेणाह असंतमिति अंतिसमीपेअसंतमपिअहिमंतरेणतन्निषेधंविनेत्यर्थः संतंगुणंरज्जुं
संतःकिमुयंतिजानंति अंतिसंतमपिगुणमितिवानजानंतीत्यर्थः तस्मादात्मतयैवज्ञानान्मुक्तिरितिभावः ॥ २ ॥ नन्वेवंज्ञानैकसाध्येमोक्षे
किमितिभक्तिरुद्बोधिताअतआह अथापीति यद्यपिहस्तप्राप्यमिवज्ञानमुक्तंतथापिहेदेवतवपादांबुजद्वयमध्येएकदेशस्यापियःप्रसादलेशो
पितेनानुगृहीतएवभगवतस्तवमहिम्नस्तत्त्वंजानाति हेभगवन्तेमहिम्नस्तत्त्वमितिवा एकोपिकश्चिदपिचिरमापिविचिन्वन्नपिअतदंशाप
वादेनविचारयन्नपीत्यर्थः ॥ २९ ॥ तत्तस्माद्भूरिभागःमहद्भाग्यं अत्रभवेब्रह्मजन्मनितिरश्चामपिमध्येयज्जन्मतस्मिन्वायेनभाग्येनभवदीया
नांजनानामेकोपियःकश्चिदपिभूत्वानिषेवेअत्यर्थंसेवेयइति ॥ ३० ॥ ॥ ॥ ॥ ॥

देवादिजन्मनोपियत्रकुत्रचित्वन्त्क्किमज्जन्मैवश्रेष्ठमित्यौत्सुक्येनसप्तभिःश्लोकैरभिनंदति अहोतिधन्याइत्यादिभिः व्रजगोरमण्यःव्रजस्थागा
वोरमण्योगोप्यश्चतेत्वयावत्सतरात्मजात्मनावत्सानामात्मजानांचरूपेणयस्यतवतृप्तयेसर्वेऽपियज्ञाअद्यापिनशक्तास्तेनत्वयाप्रतिक्षणंतृप्य
तायासांस्तन्यममृतरूपंपीतमिति ॥ ३१ ॥ ३२ ॥ किंचएतेषांभाग्यस्यतावन्महिमाआस्तांकस्तंवकुंशक्नोति शर्वादयःशर्वोऽहंकाराधिष्ठा
ताआदिर्येषांचंद्रादीनामेकादशानांतेतथावयंच वयमित्यात्मानमेवबहुमन्यमानआह एवंबुध्यहंकारमनश्चक्षुराद्यधिष्ठातारस्त्रयोदशदेवाए
वतावत्बतअहोभूरिभागाः यस्मादेतेषांहृषीकाणींद्रियाण्येवचषकाणिपानपात्राणितैस्तेचतुर्दशस्यचित्ताधिष्ठातुरंघ्रीएवउदजेवारिजेतयोर्म

अहोतिधन्याव्रजगोरमण्यःस्तन्यामृतंपीतमतीवतेमुदा ॥ यासांविभोवत्सतरात्मजात्मनायत्तृप्तयेऽद्या
पिनचालमध्वराः ॥ ३१ ॥ अहोभाग्यमहोभाग्यंनंदगोपव्रजौकसां ॥ यन्मित्रंपरमानंदंपूर्णंब्रह्मसनातनं
॥ ३२ ॥ एषांतुभाग्यमहिमाऽच्युततावदास्तामेकादशैवहिवयंबतभूरिभागाः ॥ एतद्धृषीकचषकैरसकृ
त्पिबामःशर्वादयोंऽघ्र्युदजमध्वमृतासवंते ॥ ३३ ॥ तद्भूरिभाग्यमिहजन्मकिमप्यटव्यांतद्गोकुलेपिकतमां
घ्रिरजोंभिषेकम् ॥ यज्जीवितंतुनिखिलंभगवान्मुकुंदस्त्वद्यापियत्पदरजःश्रुतिमृग्यमेव ॥ ३४ ॥ ॥

धुमकरंदस्तदेवामृतंस्वादुआसवंमादकंपिबामः एतदुक्तंभवति यदाप्रत्येकमिंद्रियाभिमानिनोवयंकीर्तिसौंदर्यसौगंध्याद्येकदेशसेविनोपिकृ
तार्थास्तदासर्वेंद्रियैःसर्वसेविनामेतेषांकिंवर्ण्यंतंभाग्यमिति ॥ ३३ ॥ अतोमयाप्रार्थितंतदस्तुमेनाथसभूरिभागइतियत्तदेतदेवेत्याह तद्भूरि
भाग्यमिति किंतत् इहमनुष्यलोकेयत्किमपिजन्मतत्रापिअटव्यांयत्तत्रापिगोकुलेयत् अहोसत्यलोकंविहायात्रजन्मनिजातेकोलाभःअत
आह अपिकतमांघ्रिरजोऽभिषेकमिति गोकुलवासिनांमध्येअपिकतमस्ययस्यकस्याप्यंघ्रिरजसाऽभिषेकोयस्मिंस्तत् ननुकुतोगोकुलवासि
नएवधन्यास्तत्राह यदिति येषांजीवितंनिखिलंभगवान्मुकुंदः मुकुंदपरमेवजीवनमित्यर्थः दुर्लभतामाह अद्यापीति श्रुतिमृग्यंवेदैरपिमृ
ग्यतएवनतुदृश्यतइत्यर्थः ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अपिच किंवर्ण्यतेकृतार्थत्वमेतेषांयेषांभक्त्याभवानपिऋणीवास्ते ननुकिंदातुमसमर्थोहंयेनऋणीस्यामतआह उतअपिभवानापिएषांकु त्रापि
किंविश्वफलात्सर्वफलात्मकात्त्वत्त्वत्तःपरंफलंरातादास्यतीतिनश्चेतःअयत्सर्वत्रगच्छत्विचारयतमुह्यति ननुमामेवदत्त्वाअनृणःस्यामिति
चेत्नाहिनहि सद्वेषादिवसतांभक्तानांयोवेषस्तदनुकरणमात्रेणपापिष्ठापूतनाऽपित्वामेवापिताप्रापिता तर्हितत्संबंधिनामपिदास्यामीतिचे
त्त्राह सकुलेति वकाघासुरसहिता एषामपितावद्देवचेदपर्याप्तमित्याह यदिति येषांधामादयस्त्वत्कृतेत्वदर्थमेवेत्यर्थः ॥ ३५ ॥ ननुवी
तरागादिदोषाणांसंन्यासिनामपिनमत्तः परंकिंचिदस्तिकथमेषामपर्याप्तमित्यतआह तावदिति हेकृष्णरागादयस्तावद्देवस्तेनाश्चोराभवं
ति तथातावद्गृहमपिकारागृहंबंधनागारम् मोहोपितावद्देवांघ्रिनिगडःपादशृंखला यावत्तेत्वदीयाजनानभवंति त्वदीयानांतुरागादयोपि

एषांघोषनिवासिनामुतभवान्किंदेवरातेतिनश्चेतोविश्वफलात्फलंत्वदपरंकुत्राप्ययन्मुह्यति ॥ सद्वेषादि
वपूतनापिसकुलात्वामेवदेवापितायद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥ ३५ ॥ तावद्रा
गादयःस्तेनास्तावत्कारागृहंगृहं ॥ तावन्मोहोंऽघ्रिनिगडोयावत्कृष्णनतेजनाः ॥ ३६ ॥ प्रपंचंनिष्प्रपं
चोपिविडंबयसिभूतले ॥ प्रपन्नजनतानंदसंदोहंप्रथितुंप्रभो ॥ ३७ ॥ जानंतएवजानंतुकिंबहूक्त्यानमे
प्रभो ॥ मनसोवपुषोवाचोवैभवंतवगोचरः ॥ ३८ ॥ अनुजानीहिमांकृष्णसर्वंत्वंवेत्सिसर्वदृक् ॥ त्वमेव
जगतांनाथोजगदेतत्तवार्पितं ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥

त्वन्निष्ठामोचकाएवेतिनयतिभ्योविशेषोभजनंत्वधिकमितिभावः ॥ ३६ ॥ नन्वतएवाहमेषांपुत्रादिरूपेणवर्तेइतिचेत्त्राह प्रपंचमिति
प्रपन्नायाजनताजनसमूहस्तस्याआनंदानांसंदोहंसमूहंप्रथयितुमिति नहिकपटपुत्रत्वादिनाताहृग्भक्तेरानृण्यसंपद्यतइत्यर्थः ॥ ३७ ॥ त
देवमादितआरभ्याचिंत्यानंतगुणत्वेनस्वयंदुर्ज्ञेयत्वमुक्तम् केचित्तुजानीमइतिस्थितास्तानुपहसन्निवाह जानंतइति नतुमेमनआदीनांतव
वैभवंविषयइति ॥ ३८ ॥ जगदीशत्वाद्यभिमानंपरित्यज्याह अनुजानीहीति हेकृष्णमामनुजानीहिसत्यलोकंगंतुमनुज्ञांदेहि स्वमहिमानमस्म
दादीनांचज्ञानबलादिसर्वंत्वमेववेत्सि यतः सर्वदृक् जगतांनातस्तुत्वमेवेत्येतावज्ज्ञातम् अतोममतास्पदंजगत्शरीरंचतवार्पितम् ॥ ३९ ॥

तदेवंकिंकरंप्रस्थापयेत्यत्यादरेणनमस्करोति श्रीकृष्णेति वृष्णिकुलपद्मस्यप्रीतिदातृत्वेनहेसूर्योपम क्ष्माचअवनिर्निर्जरादेवाश्चद्विजाश्चप
शवश्चतएवउदधयस्तेषांवृद्धिकारित्वेनहेचंद्रोपम उद्धर्मः पाखंडधर्मस्तदेवशार्वरंतमस्तद्धरतीतितथा अनेनद्वयोपम हेक्षितिराक्षसध्रुक्
क्षितौराक्षसाःकंसादयःउद्यन्नेवतेभ्योद्रुह्यतीतिपुनःसूर्योपम सूर्याद्युपमापिन्यूनेतिमत्वाऽह आर्कमर्कमभिव्याप्यसर्वेषामर्हन्पूज्यभगवन्
आकल्पंकल्पपर्यंतंतेतुभ्यंनमइति ॥४०॥ ससखिवत्सकमोक्षणकौतुकद्रुतविलंबितपुत्रमुदेऽद्भुतम् ॥ निखिलरूपमतोदधदच्युतोऽवतु
सवःकलयन्व्रजमंगलम् ॥ १ ॥ पादयोर्नत्वा अभीष्टंसर्वतःपूजितमभिप्रेतंवा ॥ ४१ ॥ अनुज्ञाप्यअनुज्ञांप्रदाप्य पृष्ट्वेत्यर्थः स्वभुवं

श्रीकृष्णवृष्णिकुलपुष्करजोषदायिन्क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन्॥उद्धर्मशार्वरहरक्षितिराक्षसध्रु
गाकल्पमार्कमर्हन्भगवन्नमस्ते॥४०॥ श्रीशुकउवाच इत्यभिष्टूयभूमानंत्रिःपरिक्रम्यपादयोः॥नत्वाभी
ष्टंजगद्धातास्वधामप्रत्यपद्यत॥४१॥ततोऽनुज्ञाप्यभगवान्स्वभुवंप्रागवस्थितान्॥वत्सान्पुलिनमानिन्ये
यथापूर्वसखिस्वकं॥४२॥एकस्मिन्नपियातेऽब्देप्राणेशंचांतरात्मनः॥कृष्णमायाहताराजन्क्षणार्द्धंमेनिरेऽर्भ
काः॥ ४३ ॥ किंकिंनविस्मरंतीहमायामोहितचेतसः॥यन्मोहितंजगत्सर्वमभीक्ष्णंविस्मृतात्मकं॥४४॥ ऊ
चुश्चसुहृदःकृष्णंस्वागतंतेतिरंहसा ॥ नैकोऽप्यभोजिकवलएहीतःसाधुभुज्यतां ॥४५॥ ततोहसन्हृषीके
शोऽभ्यवहृत्यसहार्भकैः ॥ दर्शयंश्चर्माजगरंन्यवर्त्ततवनाद्व्रजं ॥ ४६ ॥ बर्हप्रसूननवधातुविचित्रितांगःप्रो
द्दामवेणुदलशृंगरवोत्सवाढ्यः॥वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिःप्रविवेशगोष्ठं॥४७॥

ब्रह्माणम् यथापूर्वंसखायोयस्मिंस्तत्स्वकंपुलिनम् ॥ ४२ ॥ नन्वेतावंतंकालंकथंतत्रैवोपविष्टाःकथंचक्षुत्पिपासादिविस्मरणमतआहएक
स्मिन्निति श्लोकद्वयेन अब्देऽपियातेप्राणेशंकृष्णमंतराचविनाऽपिप्रियविरहेक्षणोऽपिवर्षाऽधिकोभवतितथापि मायाहताः क्षणार्द्धंमेनिरे
॥ ४३ ॥ यत्ययामाययामोहितंजगदभीक्ष्णंपुनःपुनर्विस्मृतात्मकंविस्मृतःआत्मैवयेनतत्तथा ॥ ४४ ॥ अतएवमूचुश्च तेत्वयाऽतिवेगेन
स्वागतंसम्यगागतम् एकोपिग्रासस्त्वांविनाऽस्माभिर्नाभोजिनभुक्तःइतएहिसाधुअविक्षेपेणभुज्यतामिति ॥ ४५ ॥ अभ्यवहृत्यभुक्त्वा
॥ ४६ ॥ प्रोद्दामोवेण्वादिस्तस्यरवैरुत्सवस्तेनाढ्यःसंपन्नः गृणन्उपलालनैराह्वयन् गोपीदृशामुत्सवरूपादृशिर्दर्शनंयस्यसः ॥ ४७ ॥

यशोदानंदसूनुनेतिबहूनामुक्तिःसहैवदर्शिता यद्वा केचिदाहुः यशोदासूनुनाअपरेनंदसूनुनेति यद्वा यशोदानंदयतीतियशोदानंदःसचासौ सूनुश्चेतितथातेनास्मान्महाव्यालाद्वयंचाविताःरक्षिताः ॥ ४८ ॥ व्रजौकसांस्वतोकेषुस्नेहवल्ल्याऽब्दमन्वहं ॥ शनैर्निःसीमववृधेयथाकृष्णेत्वपूर्ववदित्यादिनास्वतोकेभ्योपिपरपुत्रेकृष्णेप्रेमाधिक्यमुक्तंतत्रपृच्छति ब्रह्मन्निति ॥ ४९ ॥ श्रीकृष्णस्यसाक्षादात्मत्वात्तस्मिन्नात्मीयेभ्यःप्रेमाधिक्यंयुज्यतइतिवक्तुंप्रथमंतावदात्मनःस्वतःप्रेष्ठत्वमन्येषांतुतदुपाधिकमितिदर्शयतिपंचभिः सर्वेषामपीति ॥ ५० ॥ कुतःतथादर्शनादित्याह तदिति तस्मादेवकारणात्स्वस्वकात्मनिअहंकारास्पदेपिदेहेआत्माध्यासतारतम्येनप्रेमतारतम्यंदृश्यमानंतन्निबंधनमेवेति

अद्यानेनमहाव्यालोयशोदानंदसूनुना ॥ हतोऽवितावयंचास्मादितिबालाव्रजेजगुः ॥ ४८ ॥ राजोवाच
ब्रह्मन्परोद्भवेकृष्णेइयान्प्रेमाकथंभवेत् ॥ योऽभूतपूर्वस्तोकेषुस्वोद्भवेष्वपिकथ्यतां ॥ ४९ ॥ श्रीशुकउवाच
सर्वेषामपिभूतानांनृपस्वात्मैकवल्लभः ॥ इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैवहि ॥ ५० ॥ तद्राजेंद्रयथास्नेहः
स्वस्वकात्मनिदेहिनां ॥ नतथाममतालंबिपुत्रवित्तगृहादिषु ॥ ५१ ॥ देहात्मवादिनांपुंसामपिराजन्यसत्तम ॥ यथादेहःप्रियतमस्तथानह्यनुयेचतं ॥ ५२ ॥ देहोऽपिममताभाक्चेत्तर्ह्यसौनात्मवत्प्रियः ॥ यज्जीर्यत्यपिदेहेऽस्मिन्जीविताशाबलीयसी ॥ ५३ ॥ तस्मात्प्रियतमःस्वात्मासर्वेषामपिदेहिनां ॥ तदर्थमेवसकलं जगच्चैतच्चराचरं ॥ ५४ ॥ कृष्णमेनमवेहित्वमात्मानमखिलात्मनां ॥ जगद्धितायसोऽप्यत्रदेहीवाभातिमायया ॥ ५५ ॥ वस्तुतोजानतामत्रकृष्णंस्थास्नुचरिष्णुच ॥ भगवद्रूपमखिलंनान्यद्वस्त्विहकिंचन ॥ ५६ ॥

दर्शयितुंमूढामूढभेदेनविशेषमाह देहात्मवादिनामितिद्वाभ्यां तंदेहमनुभवंतियेपुत्रादयस्तेतुनतथाप्रियतमाइत्यर्थः ॥ ५१॥५२ ॥ यद्यस्माज्जीर्यत्यपिआसन्नमरणेपिजीविताशाभवति अयंभावः नजीविष्यतीतिनिश्चितेपिदेहेयत्प्रेमास्पदत्वंतदात्मगतमेवसंगच्छतइति अथवायद्यस्मिन्देहेजीर्यत्यपिजीविताशाअविवेकदशायामासीत्सापिविवेकिनोयदाममताभाक्भवतितदाआत्मवत्प्रियोनभवतिअतस्तत्रनातीवास्थेति ॥ ५३ ॥ तदर्थमेवसकलंप्रियमित्यर्थः ॥ ५४ ॥ प्रस्तुतमाह कृष्णमेनमिति ॥ ५५ ॥ नकेवलमात्मनामात्माअपितुजडानामपीत्याह वस्तुतइति सर्वजगत्कारणमितिकृष्णंजानतांपुंसांस्थावरंजंगमंचसर्वंभगवद्रूपंभगवानेवस्वरूपंयस्यतत्नान्यत् ॥ ५६ ॥

कुतइतितदाह सर्वेषामिति भावार्थःपरमार्थः भवतिभवत्परिणामंप्राप्नुवत्कारणंतस्मिन् तस्यापिभवतःकारणस्यापिभगवान्कृष्णएव कारणं अतःकिमतत्श्रीकृष्णव्यतिरिक्तंवस्तुरूप्यतां तस्माच्छ्रीकृष्णस्यैवपरमार्थत्वात्तदेकशरणानामयत्नसिद्धोमोक्षइति ॥ ५७ ॥ प्रकरणार्थमुपसंहरति समाश्रिताइति पुण्यंयशोयस्यसपुण्ययशाः सचासौमुरारिश्चतस्यपदपल्लवएवप्लवस्तंयेसम्यगाश्रितामहत्पदंमहतांपदमाश्रयं यद्वा महच्चतत्पदंचेतितथातेषांभवांबुधिर्वत्सपदमात्रंभवति किंच परंपदंश्रीवैकुंठाख्यंपदंस्थानंभवति विपदांयत्पदंविषयः तत्पुनःकदाचिदपितेषांनभवति नततःपुनरावर्तंतइत्यर्थः ॥ ५८ ॥ ५९ ॥ सुहृद्भिश्चरितंमुष्णंतोऽन्योन्यशिक्यादीनित्यादिनाउक्तं अघार्दं

सर्वेषामपिवस्तूनांभावार्थोभवतिस्थितः ॥ तस्यापिभगवान्कृष्णःकिमतद्वस्तुरूप्यतां ॥ ५७ ॥ समाश्रिता येपदपल्लवप्लवंमहत्पदंपुण्ययशोमुरारेः ॥ भवांबुधिर्वत्सपदंपरंपदंपदंपदंयद्विपदांनतेषां ॥ ५८ ॥ एतत्तेसर्वमाख्यातंयत्पृष्टोऽहमिहत्वया ॥ यत्कौमारेहरिकृतंपौगंडेपरिकीर्तितं ॥ ५९ ॥ एतत्सुहृद्भिश्चरितंमुरारेरघार्दनंशाद्वलजेमनंच ॥ व्यक्तेतरद्रूपमजोर्वभिष्टवंशृण्वन्गृणन्नेतिनरोऽखिलार्थान् ॥ ६० ॥ एवंविहारैः कौमारैःकौमारंजहतुर्व्रजे ॥ निलायनैःसेतुबंधैर्मर्कटोत्प्लवनादिभिः ॥ ६१ ॥ इतिश्रीभागवतेमहापुराणे दशमस्कंधेपू०ब्रह्मस्तुतिर्नामचतुर्दशोध्यायः ॥ १४ ॥ ॥ ॥ श्रीशुकउवाच ततश्चपौगंडवयःश्रितौव्रजेबभूवतुस्तौपशुपालसंमतौ ॥ गाश्चारयंतौसखिभिःसमंपदैर्वृंदावनंपुण्यमतीवचक्रतुः ॥ १ ॥

नंचशाद्वलजेमनंभोजनंच व्यक्तेतरत्व्यक्तात्जडप्रपंचादितरत्शुद्धसत्वात्मकंवत्सवत्सपालरूपं यद्वा व्यक्तेतरश्चिद्विलासस्तंरूप्यतइति रूपं अजस्यउरुर्महान्अभिष्टवस्तवस्तंब्रह्मकृतांस्तुतिं एतत्शृण्वन्गृणन्गायन्नरःसर्वपुरुषार्थान्प्राप्नोति ॥ ६० ॥ ६१ ॥ इतिश्रीपरमानंदनृसिंहपदषट्पदः ॥ व्याकरोच्छ्रीधरस्वामीयथामतिविधिस्तुतिं ॥ १ ॥ इतिश्रीदशमेटीकायांपू०चतुर्दशोध्यायः ॥ १४ ॥ ॥ ॥

ततःपंचदशेधेनुपालनंधेनुकार्दनं ॥ कालियक्ष्वेडतोगोपरक्षणंचनिरूप्यते ॥ १ ॥ अहिवक्त्रप्रवेशेनवृथाखिन्नान्सखीनतः ॥ कृष्णःप्रावेशयत्पक्वफलंतालालिकाननं ॥ २ ॥ पशुपालसंमतौपशुपालनेसंमतौ पशुपालानांवासंमतौ ईषद्वयोबलातिरेकमनुकृतवंताविरयर्थः अतीवचक्रतुःसर्वतःप्रसर्पणेन ॥ १ ॥ ॥ ॥ ॥ ॥

स्वयशोगृणद्भिर्गोपैर्वृतस्तद्वनंप्राविशत् ॥२॥ तद्वनंनिरीक्ष्यरंतुंमनोदधे कथंभूतं मंजुघोषायेऽलिमृगद्विजाःभ्रमरमृगपक्षिणस्तैराकुलंव्याप्तं महन्मनःस्वच्छपयःसरस्वतामहतांमनसातुल्यंस्वच्छंपयोयस्मिंस्तत्सरआश्रयत्वेनास्तियस्यतेनवातेनेतिशैत्यमुक्तं शतपत्रगंधिनेतिपरिमलवत्त्वम् जुष्टंवनमितिमांद्यंसूचितं ॥ ३ ॥ अरुणपल्लवश्रियासहस्पृशंत्यःशिखाःशाखाग्राणियेषांतान् ॥४ ॥ तरुजन्मयेनतमसाकृतंतस्यतमसःपापस्यअपहत्यैनाशाय अथवा येनत्वयाईश्वरेणसर्वोपकारकंतरुजन्मकृतंतंत्वांनमंति एवंश्लाघ्येऽपिजन्मनियदज्ञानरूपंतमोऽ

तन्माधवोवेणुमुदीरयन्वृतोगोपैर्गृणद्भिःस्वयशोबलान्वितः ॥ पशून्पुरस्कृत्यपशव्यमाविशद्विहर्तुकामःकुसुमाकरंवनं ॥ २ ॥ तन्मंजुघोषालिमृगद्विजाकुलंमहन्मनःस्वच्छपयःसरस्वता ॥ वातेनजुष्टंशतपत्रगंधिनानिरीक्ष्यरंतुंभगवान्मनोदधे ॥ ३ ॥ सतत्रतत्रारुणपल्लवश्रियाफलप्रसूनोरुभरेणपादयोः ॥ स्पृशच्छिखान्वीक्ष्यवनस्पतीन्मुदास्मयन्निवाहाग्रजमादिपूरुषः ॥ ४ ॥ श्रीभगवानुवाच अहोअमीदेववरामरार्चितंपादांबुजंतेसुमनःफलार्हणं ॥ नमंत्युपादायशिखाभिरात्मनस्तमोपहत्यैतरुजन्मयत्कृतं ॥ ५ ॥ एतेऽलिनस्तवयशोऽखिललोकतीर्थंगायंतआदिपुरुषानुपदंभजंते ॥ प्रायोअमीमुनिगणाभवदीयमुख्यागूढंवनेऽपिनजहत्यनघात्मदैवं ॥ ६ ॥ नृत्यंत्यमीशिखिनईड्यमुदाहरिण्यःकुर्वंतिगोप्यइवतेप्रियमीक्षणेन ॥ सूक्तैश्चकोकिलगणागृहमागतायधन्यावनौकसइयान्हिसतांनिसर्गः ॥ ७ ॥ धन्येयमद्यधरणीतृणवीरुधस्त्वत्पादस्पृशोद्रुमलताःकरजाभिमृष्टाः ॥ नद्योऽद्रयःखगमृगाःसदयावलोकैर्गोप्योंऽतरेणभुजयोरपियत्स्पृहाश्रीः ॥ ८ ॥ श्रीशुकउवाच एवंवृंदावनंश्रीमत्कृष्णःप्रीतमनाःपशून् ॥ रेमेसंचारयन्नद्रेःसरिद्रोधस्सुसानुगः ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥

स्तितस्यापहत्यै ॥ ५ ॥ हेअनघवनेगूढमपित्वांनत्यजंति त्वयिमनुष्यवेषेणनिगूढेसतिमुनयोऽप्यलिवेषेणनिगूढास्त्वांभजंतीत्यर्थः ॥ ६ ॥ इयान्हिसतांनिसर्गइति यदस्तिस्वस्मिंस्तद्गृहमागतायमहतेमहापुरुषायसमर्पयंतीति ॥ ७ ॥ तृणवीरुधश्चतवपादौस्पृशंतीति तथा करजाभिमृष्टाःनखैःस्पृष्टाः सदयैरवलोकनैः श्रीरपियस्मैस्पृहयतिकेवलंतेभुजयोरंतरेणवक्षसागोप्योधन्याइति ॥ ८ ॥ एवंश्रीमद्वृंदावनंप्रतिप्रीतःसन्नद्रेःसमीपवर्तिसरित्तटेषुपशून्संचारयन्सानुगोगोपैःसहवर्त्तमानःप्रीतमनारेमे ॥ ९ ॥ ॥ ॥ ॥

तामेवरतिमाह क्वचिदित्यादिदशभिः ॥ १० ॥ बर्हिणंनृत्यंतमनुअभिनृत्यति बर्हिणमभिमुखोनृत्यतीतिवा सखीन्हासयन् ॥ ११ ॥
॥ १२ ॥ चकोरादीननुकृत्यरौति कदाचिच्चसत्त्वानांमध्येव्याघ्रसिंहयोस्ताभ्यांभीतवद्भवति सत्त्वेषुपलायमानेषुपलायतइत्यर्थः तयोःसत्त्वा
नांबलोद्रेकाणांभीतवद्भवतीतिवा ॥ १३ ॥ आर्यमग्रजंविश्रमयतिविगतश्रमंकरोति ॥ १४ ॥ मिथोनृत्यादीन्कुर्वतोगोपान्प्रशशंसतुः

क्वचिद्गायतिगायत्सुमदांधालिष्वनुव्रतैः ॥ उपगीयमानचरितःस्रग्वीसंकर्षणान्वितः ॥१०॥ क्वचिच्चकल
हंसानामनुकूजतिकूजितं ॥ अभिनृत्यतिनृत्यंतंबर्हिणंहासयन्क्वचित् ॥११॥ मेघगंभीरयावाचानामभि
र्दूरगान्पशून् ॥ क्वचिदाह्वयतिप्रीत्यागोगोपालमनोज्ञया ॥१२॥ चकोरक्रौंचचक्राह्वभारद्वाजांश्चबर्हिणः
अनुरौतिस्मसत्त्वानांभीतवद्व्याघ्रसिंहयोः ॥१३॥ क्वचित्क्रीडापरिश्रांतंगोपोत्संगोपबर्हणं ॥ स्वयंविश्रम
यत्यार्यंपादसंवाहनादिभिः ॥१४॥ नृत्यतोगायतःक्वापिवल्गतोयुध्यतोमिथः ॥ गृहीतहस्तौगोपालान्
हसंतौप्रशशंसतुः ॥१५॥ क्वचित्पल्लवतल्पेषुनियुद्धश्रमकर्शितः ॥ वृक्षमूलाश्रयःशेतेगोपोत्संगोपबर्हणः
॥१६॥ पादसंवाहनंचक्रुःकेचित्तस्यमहात्मनः ॥ अपरेहतपाप्मानोव्यजनैःसमवीजयन् ॥१७॥ अन्येत
दनुरूपाणिमनोज्ञानिमहात्मनः ॥ गायंतिस्ममहाराजस्नेहक्लिन्नधियःशनैः ॥ १८ ॥ एवंनिगूढात्मगतिः
स्वमाययागोपात्मजत्वंचरितैर्विडंबयन् ॥ रेमेरमालालितपादपल्लवोग्राम्यैःसमंग्राम्यवदीशचेष्टितः ॥१९॥
श्रीदामानामगोपालोरामकेशवयोःसखा ॥ सुबलस्तोककृष्णाद्यागोपाःप्रेम्णेदमब्रुवन् ॥२०॥ रामराम
महाबाहोकृष्णदुष्टनिबर्हण ॥ इतोविदूरेसुमहद्वनंतालालिसंकुलं ॥ २१ ॥ फलानितत्रभूरीणिपतितानि
पतंतिच ॥ संतिकिंत्ववरुद्धानिधेनुकेनदुरात्मना ॥ २२ ॥ ॥ ॥ ॥

॥ १५ ॥ १६ ॥ व्यजनैःपल्लवादिनिर्मितैः ॥ १७ ॥ १८ ॥ ईशचेष्टितइति निगूढस्वभावत्वेऽप्यंतरांतराईशस्यैवचेष्टितानिदृश्यंतेऽस्मिन्सः
॥ १९ ॥ २० ॥ ईशचेष्टितत्वमेवदर्शयितुमाह श्रीदामेति स्तोककृष्णःकश्चित् तालालिसंकुलंतालपंक्तिभिर्व्याप्तं ॥ २१ ॥ २२ ॥

॥ २३ ॥ २४ ॥ विषूचीनःसर्वतःप्रसृतः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ सनगंसवृक्षं ॥ २९ ॥ प्रत्यग्द्वाभ्यांपश्चिमाभ्याम् काशब्द भितिगर्दभजातिशब्दानुकरणम् पर्यसरत्परितोऽधावदित्यर्थः ॥ ३० ॥ उपक्रोष्टागर्दभः पराक्प्रतिमुखः अपरौपश्चिमौ बलायबलंहं

सोऽतिवीर्योऽसुरोरामहेकृष्णखररूपधृक् ॥ आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥२३॥ तस्मात्कृतन राहाराद्भीतैर्नृभिरमित्रहन् ॥ नसेव्यतेपशुगणैःपक्षिसंघैर्विवर्जितं ॥ २४ ॥ विद्यंतेऽभुक्तपूर्वाणिफलानिसुरभीणिच ॥ एषवैसुरभिर्गंधोविषूचीनोवगृह्यते ॥ २५ ॥ प्रयच्छतानिनःकृष्णगंधलोभितचेतसां ॥ वांछाऽस्तिमहतीरामगम्यतांयदिरोचते ॥ २६ ॥ एवंसुहृद्वचःश्रुत्वासुहृत्प्रियचिकीर्षया ॥ प्रहस्यजग्मतुर्गोपैर्वृतौतालवनंप्रभू ॥ २७ ॥ बलःप्रविश्यबाहुभ्यांतालान्संपरिकंपयन् ॥ फलानिपातयामासमतंगजइवौजसा ॥ २८ ॥ फलानांपततांशब्दंनिशम्यासुररासभः ॥ अभ्यधावत्क्षितितलंसनगंपरिकंपयन् ॥ ॥ २९ ॥ समेत्यतरसाप्रत्यग्द्वाभ्यांपद्भ्यांबलंबली ॥ निहत्योरसिकाशब्दंमुंचन्पर्यसरत्खलः ॥ ३० ॥ पुनरासाद्यसंरब्धउपक्रोष्टापराक्स्थितः ॥ चरणावपरौराजन्बलायप्राक्षिपद्रुषा ॥३१॥ सतंगृहीत्वाप्रपदोर्भ्रामयित्वैकपाणिना ॥ चिक्षेपतृणराजाग्रेभ्रामणत्यक्तजीवितं ॥ ३२॥ तेनाहतोमहातालोवेपमानोमहाशिराः ॥ पार्श्वस्थंकंपयन्भग्नःसचान्यंसोपिचापरं ॥३३॥ बलस्यलीलयोत्सृष्टखरदेहहताहताः ॥ तालाश्चकंपिरेसर्वेमहावातेरिताइव ॥ ३४ ॥ नैतच्चित्रंभगवतिह्यनंतेजगदीश्वरे ॥ ओतप्रोतमिदंयस्मिंस्तंतुष्वंगयथापटः ॥ ३५ ॥ ततःकृष्णंचरामंचज्ञातयोधेनुकस्यये ॥ क्रोष्टारोऽभ्यद्रवन्सर्वेसंरब्धाहतबांधवाः ॥ ॥ ३६ ॥ तांस्तानापततःकृष्णोरामश्चनृपलीलया ॥ गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु ॥ ३७ ॥ फलप्रकरसंकीर्णंदैत्यदेहैर्गतासुभिः ॥ रराजभूःसतालाग्रैर्घनैरिवनभस्तलं ॥ ३८ ॥ ॥

तुम् ॥ ३१ ॥ तृणराजस्तालः ॥ ३२ ॥ ३३ ॥ उत्सृष्टेनखरदेहेनहतैराहताश्चकंपिरेअकंपंत ॥ ३४ ॥ यस्मिन्निदंविश्वमोतमूर्ध्वंतंतुषुपटइवग्रथितम् प्रोतंतिर्यक्तंतुषुपटवदेवसंग्रथितं सर्वतोऽनुस्यूतंवर्त्ततइत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ घनैर्नभस्तलमिवभूःरराज तत्रफलप्रकरसंकीर्णेतिदैत्यदेहैःफलतालाग्रैश्चसंकीर्णाइत्यरुणश्वेतनीलघनसादृश्यसंपादनम् ॥ ३८ ॥ ॥ ॥

॥३९॥ आदन् अभक्षयन् ॥४०॥४१॥ गोरजोभिश्छुरितेषु कुंतलेषु बद्धं बर्हं वन्यानि प्रसूनानि चयस्य रुचिरमीक्षणं चारुहासश्च यस्य तं चतंच. दिदृक्षितदृशः दिदृक्षिता दर्शनोत्कंठायुक्ता दृशो यासां ताः ॥ ४२ ॥ मुकुंदस्य मुखपद्मगतं सारघं मधु आह्नियो विरहस्तस्माज्जातं तापं सच्चता

तयोस्तत्सुमहत्कर्म निशम्य विबुधादयः ॥ मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥३९॥ अथ तालफलान्यादन्मनुष्या गतसाध्वसाः ॥ तृणं च पशवश्चेरुर्हतधेनुककानने ॥४०॥ कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्त्तनः ॥ स्तूयमानोनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥ तं गोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासं ॥ वेणुं क्वणंतमनुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥४२॥ पीत्वा मुकुंदमुखसारघमक्षिभृंगैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ॥ तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपांगमोक्षं ॥४३॥ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ॥ यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥४४॥ गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः ॥ नीवीं वसित्वा रुचिरां दिव्यस्रग्गंधमंडितौ ॥४५॥ जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ॥ संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥४६॥ एवं स भगवान्कृष्णो वृंदावनचरः क्वचित् ॥ ययौ राममृते राजन्कालिंदीं सखिभिर्वृतः ॥४७॥ अथ गावश्च गोपाश्च निदाघातपपीडिताः ॥ दुष्टं जलं पपुस्तस्यास्तृषार्त्ता विषदूषितं ॥४८॥ विषांभस्तदुपस्पृश्य दैवोपहतचेतसः ॥ निपेतुर्व्यसवः सर्वे सलिलांते कुरूद्वह ॥ ४९ ॥ वीक्ष्य तान्वै तथाभूतान्कृष्णो योगेश्वरेश्वरः ॥ ईक्षयामृतवर्षिण्या स्वनाथान्समजीवयत् ॥ ५० ॥ ते संप्रतीतस्मृतयः समुत्थाय जलांतिकात् ॥ आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परं ॥५१॥

सांसत्कृतिं पूजां कां सत्कृतिं कथं वा कृतां तामाह सव्रीडेति सव्रीडेन सलज्जेन हासेन विनयो यथा भवति तथा यदेतत् किं तत् अपांगमोक्षं कटाक्षदर्शनं तथा तां सत्कृतिं प्राप्येति ॥ ४३ ॥ ४४ ॥ ४५ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५०॥ संप्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते संप्रतीतस्मृतयः यद्वा सम्यक्प्रतीता प्रतिप्राप्ता स्मृतिर्यैस्ते तथा इति ॥ ५१ ॥ ॥ ॥ ॥ ॥

॥ ५२ ॥ इतिदशमेपू॰टीकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ ॥ षोडशेकालियस्योक्तोनिग्रहोयमुनाऱ्हदे ॥ तत्पत्नीभिःस्तुते
नाथकृष्णेनानुग्रहःकृतः ॥ १ ॥ हत्वारासभदैतेयान्जग्ध्वातालफलान्यलं ॥ प्रीतोऽनृत्यत्फणारंगेकालियस्यकलानिधिः ॥ २ ॥
उदवासयत्निःसारितवान् ॥ १ ॥ बहूनियुगानिआवासोयस्यतमहिं सर्वैआहिःअजलचरोपितास्मिन्नंतर्जलेयथायेनप्रकारेणासीत् अ
थत्राबहूनियुगानिआवासोयथाभवतितथातेनप्रकारेणसर्वैतत्रासीदितिकथ्यतामिति ॥ २ ॥ गोपालेनयदुदारमाचरितंतदेवामृतमतःकथ्य

अन्वमंसततद्राजन्गोविंदानुग्रहेक्षितं ॥ पीत्वाविषंपरेतस्यपुनरुत्थानमात्मनः ॥ ५२ ॥ इतिश्रीभाग
वतेमहापुराणेदशमस्कंधेपूर्वार्धेधेनुकवधोनामपंचदशोध्यायः ॥ १५ ॥ श्रीशुकउवाच विलोक्य
दूषितांकृष्णांकृष्णःकृष्णाहिनाविभुः ॥ तस्याविशुद्धिमन्विच्छन्सर्पंतमुदवासयत् ॥ १ ॥ राजोवाच कथ
मंतर्जलेगाधेन्यग्रृण्हाद्भगवानहिं ॥ सर्वैबहुयुगावासंयथाऽसीद्विप्रकथ्यतां ॥ २॥ ब्रह्मन्भगवतस्तस्यभूम्नः
स्वच्छंदवर्तिनः ॥ गोपालोदारचरितंकस्तृप्येतामृतंजुषन् ॥ ३ ॥ श्रीशुकउवाच कालिंद्यांकालियस्यासी
त्ध्रदःकश्चिद्विषाग्निना ॥ श्रप्यमाणपयायस्मिन्पतंत्युपरिगाःखगाः ॥४॥ विप्रुष्मताविषोदोर्मिमारुतेना
भिमर्शिताः॥म्रियंतेतीरगायस्यप्राणिनःस्थिरजंगमाः ॥ ५ ॥ तंचंडवेगविषवीर्यमवेक्ष्यतेनदुष्टांनदींचखल
संयमनावतारः ॥ कृष्णःकदंबमधिरुह्यततोऽतितुंगमास्फोट्यगाढरशनोन्यपतद्विषोदे ॥ ६ ॥ ॥

तामिति ॥ ३ ॥ श्रप्यमाणंपच्यमानंपयोयस्यसः अतउपरिगच्छंतःखगायस्मिन्पतंति ॥ ४ ॥ किंच विप्रुष्मताअंबुकणयुक्तेनविषोदत
रंगस्पार्शिमारुतेनस्पृष्टायस्यतीरगाम्रियंतेसऱ्हदआसीदिति ॥ ५ ॥ तंकालियं चंडोवेगोयस्यतद्विषमेववीर्यंयस्यतं कदंबमितिभाविना
श्रीकृष्णस्यचरणस्पर्शभाग्येनसएकस्तत्तीरेनशुष्कः अथवाऽमृतमाहरतागरुत्मताक्रांतत्वादितिचपुराणांतरं आस्फोट्यबाहुंकरतलेना
हत्य गाढाद्दढावद्धारशनाकटिबंधनवस्त्रंयेनसः ॥ ६ ॥ ॥ ॥ ॥॥ ॥ ॥ ॥ ॥

तदासर्पस्य ऱ्हदः पुरुषश्रेष्ठस्यपतनभारेणसंक्षोभितानामुरगाणांविषैरुन्नतोंऽबुराशिर्यस्यसः विषेणकषायीकृताभयंकराऊर्मयोयस्यसःप र्यक्प्लुतोधनुः शतंप्लुतः प्रसृतः नैतच्चित्रमित्याह अनंतबलस्येति ॥ ७ ॥ ऱ्हदेविहरतोभुजदंडाहतोदकघोषंश्रुत्वाततःस्वसदनाभिभवंनिरी क्ष्यतदसहमानःसर्पःसमसरत्समाजगाम ॥ ८ ॥ प्रेक्षणीयश्चसुकुमारश्चघनवदुज्वलश्चतंश्रीवत्सपीतवसनंश्रीवत्सेनसंयुक्तमुज्वलत्पीतंव स्त्रंयस्यतंभुजयाभोगेनचछादअवेष्टयत् ॥ ९ ॥ सप्रियोयेषांतेतत्प्रियास्तेचतेसखायइति ॥ १० ॥ ११ ॥ भुविभूकंपादयः दिविउल्का

सर्पऱ्हदःपुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसितांबुराशिः ॥ पर्यक्प्लुतोविषकषायविभीषणोर्मि र्धावन्धनुःशतमनंतबलस्यकिंतत्॥७॥तस्यऱ्हदेविहरतोभुजदंडघूर्णवार्घोषमंगवरवारणविक्रमस्य॥आ श्रुत्यतत्स्वसदनाभिभवंनिरीक्ष्यचक्षुःश्रवाःसमसरत्तदमृष्यमाणः ॥८॥ तंप्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनंस्मितसुंदरास्यं ॥ क्रीडंतमप्रतिभयंकमलोदरांघ्रिंसंदश्यमर्मसुरुषाभुजयाचछाद॥ ९॥ तन्नागभोगपरिवीतमदृष्टचेष्टमालोक्यतत्प्रियसखाःपशुपाभृशार्त्ताः॥कृष्णेर्पितात्मसुहृदर्थकलत्रकामादुः खानुशोकभयमूढधियोनिपेतुः ॥ १०॥ गावोवृषावत्सतर्यःक्रंदमानाःसुदुःखिताः ॥ कृष्णेन्यस्तेक्षणाभी तारुदंत्यइवतस्थिरे ॥ ११ ॥ अथव्रजेमहोत्पातास्त्रिविधाह्यतिदारुणाः ॥ उत्पेतुर्भुविदिव्यात्मन्यासन्नभ यशंसिनः ॥ १२ ॥ तानालक्ष्यभयोद्विग्नागोपानंदपुरोगमाः ॥ विनारामेणगाःकृष्णंज्ञात्वाचारयितुंगतं ॥ १३ ॥ तैर्दुर्निमित्तैर्निधनंमत्वाप्राप्तमतद्विदः ॥ तत्प्राणास्तन्मनस्कास्तेदुःखशोकभयातुराः ॥ १४ ॥ आबालवृद्धवनिताःसर्वेगपशुवृत्तयः ॥ निर्जग्मुर्गोकुलाद्दीनाःकृष्णदर्शनलालसाः ॥ १५ ॥ तांस्तथाकात रान्वीक्ष्यभगवान्माधवोबलः ॥ प्रहस्यकिंचिन्नोवाचप्रभावज्ञोऽनुजस्यसः ॥ १६ ॥ तेऽन्वेषमाणादयितं कृष्णंसूचितयापदैः ॥ भगवल्लक्षणैर्जग्मुःपदव्यायमुनातटं ॥१७॥ ॥ ॥ ॥ ॥

पातादयः आत्मनिवामनेत्रस्फुरणादयः आसन्नंभयंशंसितुंशीलंयेषांते ॥ १२ ॥ तानालक्ष्यगोकुलान्निर्जग्मुरितितृतीयेनान्वयः भयोद्विग्नाः भयहेतुभ्योभीताः भयेनकंपमानाइतिवा ॥ १३ ॥ नतंविदंतीतिअतद्विदः ॥ १४ ॥ पशुवृत्तयःअतिवत्सलाः ॥ १५ ॥ कातरान्भीता न् ॥ १६ ॥ भगवंतंलक्षयंतियानिपदानितैःपदैःसूचितयापदव्यामार्गेण ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥

पदैर्मार्गज्ञानप्रकारमाह तइति विश्पतेः श्रीकृष्णस्यान्येषांपदानामंतरांतरेमध्येमध्येतत्तदपोहेनगवांश्रुतीनांमार्गेसत्वराःअप्रमत्ताः योगिनस्तदुपाध्यपवादेनयथापरंतत्त्वंमृगयंतेतद्वदितिभावः ॥ १८ ॥ ततश्चसर्पशरीरवेष्टितंकृष्णंदूरान्निरीक्ष्यगोपांश्चपशूंश्चतथानिरीक्ष्यार्त्ताः परमकश्मलंपरंमोहंप्रापुः ॥ १९ ॥ प्रियेणश्रीकृष्णेनव्यतिरहितांविरहितंत्रैलोक्यंशून्यंददृशुः ॥ २० ॥ २१ ॥ २२ ॥ अनन्यगतिमात्मानमित्थंनिरीक्ष्यातएवात्महेतोःस्वगोकुलमतिदुःखितमाज्ञायउरंगबंधादुदतिष्ठदित्यन्वयः ॥ २३ ॥ तस्यप्रथ्यमानेनवपुषाव्यथितात्मशरी

तेतत्रतत्राब्जयवांकुशाशनिध्वजोपपन्नानिपदानिविश्पतेः ॥ मार्गेगवामन्यपदांतरांतरेनिरीक्षमाणाययुरंगसत्वराः ॥ १८ ॥ अंतर्ह्रदेभुजगभोगपरीतमारात्कृष्णंनिरीहमुपलभ्यजलाशयांते ॥ गोपांश्चमूढधिषणान्परितःपशूंश्चसंक्रंदतःपरमकश्मलमापुरार्त्ताः ॥ १९ ॥ गोप्योऽनुरक्तमनसोभगवत्यनंतेतत्सौहृदस्मितविलोकगिरःस्मरंत्यः ॥ ग्रस्तेऽहिनाप्रियतमेभृशदुःखतप्ताःशून्यांप्रियव्यतिहृतंददृशुस्त्रिलोकम् ॥ २० ॥ ताःकृष्णमातरमपत्यमनुप्रविष्टांतुल्यव्यथाःसमनुगृह्यशुचःस्रवंत्यः ॥ तास्ताःप्रियव्रजकथाःकथयंत्यआसन्कृष्णाननेर्पितदृशोमृतकप्रतीकाः ॥ २१ ॥ कृष्णप्राणान्निर्विशतोनंदादीन्वीक्ष्यतंह्रदं ॥ प्रत्यषेधत्सभगवान्रामःकृष्णानुभाववित् ॥ २२ ॥ इत्थंस्वगोकुलमनन्यगतिंनिरीक्ष्यसस्त्रीकुमारमतिदुःखितमात्महेतोः ॥ आज्ञायमर्त्यपदवीमनुवर्त्तमानःस्थित्वामुहूर्त्तमुदतिष्ठदुरंगबंधात् ॥ २३ ॥ तत्प्रथ्यमानवपुषाव्यथितात्मभोगस्त्यक्त्वोन्नमय्यकुपितःस्वफणान्भुजंगः ॥ तस्थौश्वसन्श्वसनरंध्रविषांबरीषस्तब्धेक्षणोल्मुकमुखोहरिमीक्षमाणः ॥ २४ ॥ तंजिह्वयाद्विशिखयापरिलेलिहानंद्वेसृक्किणीह्यतिकरालविषाग्निदृष्टिम् ॥ क्रीडन्नमुंपरिससारयथाखगेंद्रोबभ्रामसोऽप्यवसरंप्रसमीक्षमाणः ॥ २५ ॥

रेभुजंगःकुंडलीमुन्मुच्यतंत्यक्त्वाकुपितःफणानुन्नमय्यश्वसन्केवलमीक्षमाणस्तस्थौ कथंभूतः श्वसनरंध्रेषुनासाविवरेषुविषंयस्यसतथाअंबरीषोमंडकपाकभाजनंतद्वत्संतप्तानिस्तब्धानिईक्षणानियस्यसतथा उल्मुकानिमुखेषुयस्यसचसच ॥ २४ ॥ हरिश्चक्रीडंस्तममुंसर्पंपरिससारपरितोबभ्राम अतिकरालविषाग्नियुक्तादृष्टिर्यस्यतम् जिव्हया द्विशिखयेतिप्रतिमुखम् ॥ २५ ॥ ॥ ॥

एवंपरिभ्रमेणैवहतमोजोयस्यतम् तस्यमूर्द्धसुयेरत्नानिकरास्तेषांस्पर्शेनात्यरुणंपादांबुजंयस्यसः ननुकथंचंचलेषुशिरस्सुननर्त्ततत्राह अ
खिलकलानामादिगुरुः ॥ २६ ॥ उपसेदुःप्राप्ताः ॥ २७ ॥ शतैकशीर्ष्णःशतमेकानिमुख्यानिशीर्षाणियस्यतस्यक्षीणायुषोऽपिपुनर्भ्रम
तोयद्यच्छिरोननमतेस्तब्धतांनजहाति नृत्यच्छलेनांघ्रिपातैस्तत्तन्ममर्दतदाचास्यतोमुखेभ्योनस्तोनासाविवरेभ्यश्वासृक्वमन् ॥ २८ ॥पु
नरपिरुषाउच्चैर्निःश्वसतोयद्यत्समुन्नमतितत्तत्पदाघातेनानुनमयन् इहअस्मिन्नवसरेत्द्दष्टैर्गंधर्वादिभिःशेषासनः पुराणपुरुषइवयशोदानंद

एवंपरिभ्रमहतौजसमुन्नतांसमानम्यतत्पृथुशिरःस्वधिरूढआद्यः ॥ तन्मूर्द्धरत्ननिकरस्पर्शातिताम्रपादां
बुजोखिलकलादिगुरुर्ननर्त्त ॥२६॥ तंनर्त्तुमुद्यतमवेक्ष्यतदातदीयगंधर्वसिद्धसुरचारणदेववध्वः ॥ प्रीत्या
मृदंगपणवानकवाद्यगीतपुष्पोपहारनुतिभिःसहसोपसेदुः ॥२७॥ यद्यच्छिरोननमतेंऽगशतैकशीर्ष्णस्त
त्तन्ममर्दखलदंडधरोंऽघ्रिपातैः ॥ क्षीणायुषोभ्रमतउल्बणमास्यतोऽसृक्नस्तोवमन्परमकश्मलमापनागः
॥२८॥ तस्याक्षिभिर्गरलमुद्वमतःशिरस्सुयद्यत्समुन्नमतिनिःश्वसतोरुषोच्चैः ॥ नृत्यत्पदाऽनुनमयन्दमयां
बभूवपुष्पैःप्रपूजितइवेहपुमान्पुराणः ॥ २९ ॥ तच्चित्रतांडवविरुग्णफणातपत्रोरक्तंमुखैरुरुवमन्नृपभग्नगा
त्रः ॥ स्मृत्वाचराचरगुरुंपुरुषंपुराणंनारायणंतमरणंमनसाजगाम ॥३०॥ कृष्णस्यगर्भजगतोऽतिभराव
सन्नंपार्ष्णिप्रहारपरिरुग्णफणातपत्रं ॥ द्दष्ट्वाऽहिमाद्यमुपसेदुरमुष्यपत्न्यआर्त्ताःश्लथद्वसनभूषणकेशबं
धाः ॥ ३१ ॥ तास्तंसुविग्नमनसोऽथपुरस्कृतार्भाःकायंनिधायभुविभूतपतिंप्रणेमुः ॥ साध्व्यःकृतांजलिपु
टाःशमलस्यभर्त्तुर्मोक्षेप्सवःशरणदंशरणंप्रपन्नाः ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥

नःपुष्पैःप्रपूजितः यद्वातदागंधर्वादिभिःपुष्पैःप्रपूजितोगोपैःपुराणःपुमानिवद्दष्टइति यद्वापुष्पैःप्रपूजितइवप्रसन्नःसन्दमयांबभूव हितं
कृतवानित्यर्थः ॥ २९ ॥ अरणंशरणम् ॥ ३० ॥ गर्भेजगंतियस्यतस्यातिभारेणावसन्नमाक्रांतम् पार्ष्णिःपादपृष्ठं आद्यंश्रीकृष्णं श्लथं
तोविस्त्रंसमानावसनादयोयासांताः ॥ ३१ ॥ ताःशरणंप्रपन्नाःसत्यःतंप्रणेमुः सुविग्नमनसः अतिविव्हलचित्ताः भुवीति तास्मिन्स्थाने
जलाधस्ताद्वातीरेवा शमलस्यपापात्मनोऽपिभर्त्तुर्मोक्षेप्सवः भर्त्तुर्यत्शमलंतस्यवा भूतपतिंप्राणिमात्रस्यपतिम् शरणदमाश्रयप्रदं ॥ ३२ ॥

प्रथमंतावत्कुपितंभगवंतंदंडानुमोदनेनोपशमयंत्यः स्तुवंति न्याय्योहीति तत्र दंडानुमोदनंषड्भिर्दशभिश्वहरेःस्तुतिः ॥ प्रार्थनंपंचभिःश्लोकै
स्ततःपन्नगयोषितां ॥ नचनिग्रहानुग्रहलक्षणंवैषम्यंतवास्तीत्याहुः धत्सेदममिति अनुशंसन् आलोचयन् ॥ ३३ ॥ निग्रहोऽप्यनुग्रहायेत्यु
क्तमिदानीमनुग्रहएवायंननिग्रहइत्याहुः अनुग्रहइति नःअस्माकं यस्मादमुष्यसर्पत्वंदृश्यतेअतस्तन्मूलपापानिवर्त्तकोदंडोऽनुग्रहएव क्रोधत्वे
नप्रतीयमानोऽपीत्यर्थः ॥ ३४ ॥ महांश्चायमनुग्रहइतितस्यपूर्वपुण्यमभिनंदंति तपइति स्वयंमानरहितेनअन्येभ्योमानदेनच सर्वंजीवयतीति
सर्वजीवः ॥ ३५ ॥ नतपआदिनिमित्तएषभाग्योदयः किंत्वचिंत्यंतवकृपावैभवमित्याहुःश्लोकत्रयेण कस्यानुभावइतितपआदिनाब्रह्मादि

नागपत्न्यऊचुः न्याय्योहिदंडःकृतकिल्बिषेऽस्मिंस्तवावतारःखलनिग्रहाय ॥ रिपोःसुतानामपितुल्यदृष्टे
र्धत्सेदमंफलमेवानुशंसन् ॥३३॥ अनुग्रहोऽयंभवताकृतोहिनोदंडोऽसतांतेखलुकल्मषापहः ॥ यद्दंदशूक
त्वममुष्यदेहिनःक्रोधोऽपितेऽनुग्रहएवसंमतः ॥३४॥ तपःसुतप्तंकिमनेनपूर्वंनिरस्तमानेनचमानदेन ॥ ध
र्मोथवासर्वजनानुकंपयायतोभवांस्तुष्यतिसर्वजीवः ॥ ३५॥ कस्यानुभावोऽस्यनदेवविद्महेतवांघ्रिरेणुस्प
र्शाधिकारः ॥ यद्वांछयाश्रीर्ललनाचरत्तपोविहायकामान्सुचिरंधृतव्रता ॥३६॥ ननाकपृष्ठंनचसार्वभौमं
नपारमेष्ठ्यंनरसाधिपत्यं ॥ नयोगसिद्धीरपुनर्भवंवावांच्छंतियत्पादरजःप्रपन्नाः ॥३६॥ तदेषनाथापदुरा
पमन्यैस्तमोजनिःक्रोधवशोऽप्यहीशः ॥ संसारचक्रेभ्रमतःशरीरिणोयदिच्छतःस्याद्विभवःसमक्षः॥३८॥
नमस्तुभ्यंभगवतेपुरुषायमहात्मने ॥ भूतावासायभूतायपरायपरमात्मने ॥ ३९ ॥ ॥ ॥

योऽपियस्याःश्रियःप्रसादमिच्छंतिसाश्रीर्ललनाउत्तमास्त्रीयस्यत्वदंघ्रिस्पर्शाधिकारस्यवांछयातपआचरत् अस्यसर्पस्य सकिंकृतवानिति
कोवेत्तीत्यर्थः ॥३६ ॥ यत्तवपादरजःप्रपन्नाःप्राप्ताःपारमेष्ठ्याद्यपितुच्छंमन्यंते ॥३७॥ अहोतदेषःअयत्नतएवप्राप अन्यैःश्र्यादिभिरपि कथं
भूतंपादरजः यदिच्छतःसेव्यंमेभवत्वितिप्रार्थयमानस्यैवसमक्षःप्रत्यक्षएवविभवःअपेक्षितासंपद्भवति ॥ ३८॥ नमस्तुभ्यंभगवतेअचिंत्यैश्व
र्यादिगुणाय तदुपपादनायदशभिःश्लोकैर्विशेषणानि पुरुषायपूर्षुअंतर्यामिरूपेणवर्त्तमानाय महात्मनेएवमपिनातिपरिच्छिन्नाय कुतः भूता
वासायआकाशाद्याश्रयाय एतदपिकुतः भूतायपूर्वमपिसते कुतः परायकारणाय किंचपरमात्मनेकारणातीताय ॥ ३९ ॥ ॥

एवंतावद्दंडानुमोदनेननमस्कारैश्चभगवंतंप्रसाद्यइदानींत्वदधीनानांप्राणिनांकोऽपराधइत्याशयवत्यःप्रार्थयंते त्वंहीति अस्यलोकस्यज
न्मादिंत्वमेवअकृतअकरोःततश्चतांस्तान्संस्काररूपेणसतः स्वभावान्घोरत्वादीन्प्रतिबोधयन्नीहसेक्रीडासि यद्वा अस्यजन्मादींस्त्वमी
हसइत्यन्वयः कथंभूतः अकृताअनादिर्याकालशक्तिस्तांधारयतीतितथा अन्यत्समानम् ॥ ४९ ॥ अतस्तस्यतवैवामूस्तनवस्तन्यंतइतित
नवःक्रीडोपस्कारः तथाऽपितवाधुनाशांताःप्रियाःकुतः सतांधर्मपरिपालनेच्छयाईहतःप्रवर्त्तमानस्यातस्तानवितुंस्थातुःस्थितस्य ॥५०॥

त्वंह्यस्यजन्मस्थितिसंयमान्प्रभोगुणैरनीहोऽकृतकालशक्तिधृक् ॥ तत्तत्स्वभावान्प्रतिबोधयन्सतःसमीक्ष
याऽमोघविहारईहसे ॥ ४९ ॥ तस्यैवतेऽमूस्तनवस्त्रिलोक्यांशांताअशांताउतमूढयोनयः ॥ शांताःप्रिया
स्तेह्यधुनाऽवितुंसतांस्थातुश्चतेधर्मपरीप्सयेहतः ॥५०॥ अनुगृह्णीष्वभगवन्प्राणांस्त्यजतिपन्नगः ॥ स्त्री
णांनःसाधुशोच्यानांपतिःप्राणःप्रदीयताम् ॥५१॥ अपराधःसकृद्भर्त्रासोढव्यःस्वप्रजाकृतः ॥ क्षंतुमर्हसि
शांतात्मन्मूढस्यत्वामजानतः ॥५२॥ विधेहितेकिंकरीणामनुष्ठेयंतवाज्ञया ॥यच्छ्रद्धयाऽनुतिष्ठन्वैमुच्यतेस
र्वतोभयात् ॥ ५३ ॥ श्रीशुकउवाच इत्थंसनागपत्नीभिर्भगवान्समभिष्टुतः ॥ मूर्छितंभग्नशिरसंविस
सर्जांघ्रिकुट्टनैः ॥ ५४ ॥ प्रतिलब्धेंद्रियप्राणःकालियःशनकैर्हरिम् ॥ कृच्छ्रात्समुच्छ्वसन्दीनःकृष्णंप्राह
कृतांजलिः ॥ ५५ ॥ वयंखलाःसहोत्पत्त्यातामसादीर्घमन्यवः ॥ स्वभावोदुस्त्यजोनाथलोकानांयदसद्ग्र
हः ॥ ५६ ॥ त्वयासृष्टमिदंविश्वंधातर्गुणविसर्जनं ॥ नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ॥ ५७ ॥
वयंचतत्रभगवन्सर्पाजात्युरुमन्यवः ॥ कथंत्यजामस्त्वन्मायांदुस्त्यजांमोहिताःस्वयं ॥ ५८ ॥ भवान्हि
कारणंतत्रसर्वज्ञोजगदीश्वरः ॥ अनुग्रहंनिग्रहंवामन्यसेतद्विधेहिनः ॥ ५९ ॥ ॥ ॥ ॥

॥ ५१ ॥ एवंत्वाप्रियाचरणाद्यपराधस्तर्हिसोढव्यइति ॥ ५२ ॥ युष्मदनुग्रहेऽन्येषांमृत्युरेवेतिचेत्तन्नेत्याहुः विधेहीति त्वदाज्ञयाप्राणिनो
नाद्यामेतिभावः॥५३॥५४॥५५॥यदसद्ग्रहइति यतःस्वभावोऽसद्ग्रहरूपः यद्वा यतःस्वभावादसतिदेहादौयोग्रहःसदुस्त्यजइति ॥ ५६ ॥
गुणैर्विविधतयासृज्यतइतिगुणविसर्जनं तत्रापिनानास्वभावादयोयस्यतत् ॥ ५७ ॥ जात्याजन्मनैवउरुर्मन्युर्येषांतेवयंकथंत्यजामः
॥ ५८ ॥ हियस्मात्तत्रत्वन्मायात्यागेभवानेवकारणमित्यनुग्रहंविधेहिममाज्ञयाखादंतीति ईश्वरत्वान्निग्रहंवाविधेहीति ॥ ५९ ॥ ॥

॥ ६० ॥ यतोगोभिर्नृभिश्चनदीभुज्यतामिति ॥ ६१ ॥ नयुष्मत्तोभयमाप्नुयात् तस्ययुष्माभिर्भयंनोत्पादनीयमित्याज्ञा इतोऽपित्वयानिर्गं तव्यमित्याह योऽस्मिन्निति त्वयिस्थितेतन्नसंभवतीतिभावः ॥ ६२ ॥ नचतवगरुडभयंभवेदित्याह द्वीपमिति ॥ ६३ ॥ ६४ ॥ ६५ ॥ ॥ ६६ ॥ ६७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू० टीकायांषोडशोऽध्यायः ॥१६॥ ॥ नागंसत्तदद्वीनागालयंतंनिरयापयत् ॥

श्रीशुकउवाच इत्याकर्ण्यवचःप्राहभगवान्कार्यमानुषः ॥ नात्रस्थेयंत्वयासर्पसमुद्रंयाहिमाचिरम् ॥ ॥ ६० ॥ स्वज्ञात्यपत्यदाराढ्योगोनृभिर्भुज्यतांनदी ॥ यएतत्संस्मरेन्मर्त्यस्तुभ्यंमदनुशासनं ॥ ६१ ॥ कीर्तयन्नुभयोःसंध्योर्नयुष्मद्भयमाप्नुयात् ॥ योऽस्मिन्स्नात्वामदाक्रीडेदेवादींस्तर्पयेज्जलैः ॥ ६२ ॥ उपो ष्यमांस्मरन्नर्चेत्सर्वपापैःप्रमुच्यते ॥ द्वीपंरमणकंहित्वाह्रदमेतमुपाश्रितः ॥ यद्भयात्ससुपर्णस्त्वांनाद्यान्म त्पादलांछितं ॥ ६३ ॥ ऋषिरुवाच एवमुक्तोभगवताकृष्णेनाद्भुतकर्मणा ॥ तंपूजयामाससुदानाग पत्न्यश्चसादरं ॥ ६४ ॥ दिव्यांबरस्रङ्मणिभिःपरार्ध्यैरपिभूषणैः ॥ दिव्यगंधानुलेपैश्चमहत्योत्पल मालया ॥६५॥ पूजयित्वाजगन्नाथंप्रसाद्यगरुडध्वजं ॥ ततःप्रीतोभ्यनुज्ञातःपरिक्रम्याभिवाद्यतं ॥६६॥ सकलत्रसुहृत्पुत्रोद्वीपमब्धेर्जगामह ॥ तदैवसाऽमृतजलायमुनानिर्विषाऽभवत् ॥ अनुग्रहाद्भगवतःक्री डामानुषरूपिणः ॥६७॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू०कालियनिर्यापणंनामषोडशोध्यायः ॥ १६॥ राजोवाच नागालयंरमणकंकस्मात्तत्याजकालियः ॥ कृतंकिंवासुपर्णस्यतेनैकेनासमंजसं ॥ १॥ श्रीशुकउवाच उपहार्यैःसर्पजनैर्मासिमासीहयोबलिः॥वानस्पत्योमहाबाहोनागानांप्राङ्निरूपितः॥२॥ स्वंस्वंभागंप्रयच्छंतिनागाःपर्वणिपर्वणि ॥ गोपीथायात्मनःसर्वेसुपर्णायमहात्मने ॥ ३ ॥ ॥

बंधून्स्वदुःखतःश्रांतान्सुमांस्तत्रदवादपात् ॥ १ ॥ असमंजसमप्रियं ॥ १ ॥ उपहार्यैःभक्ष्यैःसर्पजनैःसर्पायत्तैर्जनैः वानस्पत्यःवनस्पते मूलेदेयः नागानांतद्बाधापरिहारायबलिर्निरूपितःउपकल्पितः ॥ २ ॥ तेचनागाःस्वंस्वंभागंजनैर्दत्तंसुपर्णायप्रयच्छंति ततोभीताः गोपीथायरक्षणाय ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विषवीर्याभ्यांयोमदस्तेनाविष्टःकाद्रवेयःकद्रूपुत्रोगुरुडंकदर्थीकृत्यअविगणय्य यद्वा उपहार्यैःसुपर्णभक्ष्यैःसर्पाएवजनास्तैर्नागानांसंबंधी यस्मिन्नेकैकोनागोदीयतेतथाभूतोयोबलिःसुपर्णायनिरूपितस्तत्रस्वंस्वंभागंसर्वेनागाःप्रयच्छंतिकालियस्तुनप्रयच्छातिकिंत्वन्यैर्दत्तमापितं बलिस्वयमेवबुभुजे ॥ ४ ॥ ५ ॥ विषमेवायुधंयस्यसः प्रत्यभ्ययात्योद्धुंप्रतिजगाम उच्छ्रितनैकमस्तकःउन्नमितानेकफणःददायुधोदं

विषवीर्यमदाविष्टःकाद्रवेयस्तुकालियः ॥ कदर्थीकृत्यगरुडंस्वयंतंबुभुजेबलिं ॥ ४ ॥ तच्छ्रुत्वाकुपितोराजन्भगवान्भगवत्प्रियः ॥ विजिघांसुर्महावेगःकालियंसमुपाद्रवत् ॥ ५ ॥ तमापतंतंतरसाविषायुधःप्रत्यभ्ययादुच्छ्रितनैकमस्तकः ॥ दद्भिःसुपर्णंव्यदशद्ददायुधःकरालजिह्वोच्छ्वसितोऽग्रलोचनः ॥६॥ तंतार्क्ष्यपुत्रःसनिरस्यमन्युमान्प्रचंडवेगोमधुसूदनासनः ॥ पक्षेणसव्येनहिरण्यरोचिषाजघानकद्रूसुतमुग्रविक्रमः॥ ॥ ७ ॥ सुपर्णपक्षाभिहतःकालियोऽतीवविह्वलः ॥ ह्रदंविवेशकालिंद्यास्तदगम्यंदुरासदं ॥८॥ तत्रैकदाजलचरंगरुडोभक्ष्यमीप्सितं ॥ निवारितःसौभरिणाप्रसह्यक्षुधितोहरत् ॥९॥ मीनान्सुदुःखितान्दृष्ट्वादीनान्मीनपतौहते ॥ कृपयासौभरिःप्राहतत्रत्यक्षेममाचरन् ॥१०॥ अत्रप्रविश्यगरुडोयदिमत्स्यान्सखादति ॥ सद्यःप्राणैर्वियुज्येतसत्यमेतद्ब्रवीम्यहं ॥११॥ तंकालियःपरंवेदनान्यःकश्चनलेलिहः ॥ अवात्सीद्गरुडाद्भीतःकृष्णेनचविवासितः ॥१२॥ कृष्णंह्रदाद्विनिष्क्रांतंदिव्यस्रग्गंधवाससं ॥ महामणिगणाकीर्णजांबूनदपरिष्कृतं ॥१३॥ उपलभ्योत्थिताःसर्वेलब्धप्राणाइवासवः ॥ प्रमोदनिभृतात्मानोगोपाःप्रीत्याऽभिरेभिरे ॥१४॥ यशोदारोहिणीनंदोगोप्योगोपाश्चकौरव ॥ कृष्णंसमेत्यलब्धेहाआसन्लब्धमनोरथाः ॥ १५ ॥

तायुधः करालजिव्हश्वासावुच्छ्वसितोग्रलोचनश्चउच्छ्वसितानिस्तंभितानिउग्राणिलोचनानियस्यसः ॥ ६ ॥ तार्क्ष्यपुत्रोगरुडःमधुसूदनस्यासनंयस्मिन्सः ॥ ७ ॥ तस्यगरुडस्यअगम्यमगाधतयादुरासदं ॥ ८ ॥ तदगम्यत्वेकारणमाह तत्रेति निवारितोपि ॥ ९ ॥ १० ॥ ११ ॥ लेलिहःसर्पः अतस्तत्रावात्सीत् ॥ १२ ॥ जांबूनदंसुवर्णंतेनालंकृतं ॥ १३ ॥ असवःइंद्रियाणि प्रमोदनिभृतात्मानःआनंदपूर्णमनसः ॥ १४ ॥ लब्धेहाःलब्धचेष्टाः ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥

नगाःवृक्षाअपिपूर्वंशुष्काःसंतःसद्यएवविरूढाइत्यर्थः ॥ १६ ॥ तेविप्राऊचुः ॥ १७ ॥ १८ ॥ नष्टलब्धप्रजानष्टप्रायापुनर्लब्धाप्रजाय
यासा ॥ १९ ॥ श्रमेणचकर्षिताः उपकूलतःकूलप्रांते ॥ २० ॥२१॥२२॥२३॥ कालाग्नेर्मृत्युरूपादग्नेः नमृत्योर्बिभीमःकिंतुत्वच्चरण
वियोगादित्याहुः नशक्नुमइति ॥ २४ ॥ २५ ॥ विमोहानहिदंडेनततःस्वंशरणागतान् ॥ गोपानपादनंतोऽसावनंतवनवन्हितः ॥ १ ॥

रामश्चाच्युतमालिंग्यजहासास्यानुभाववित् ॥ नगागावोवृषावत्सालेभिरेपरमांमुदम् ॥ १६ ॥ नंदंवि
प्राःसमागत्यगुरवःसकलत्रकाः ॥ ऊचुस्तेकालियग्रस्तोदिष्ट्यामुक्तस्तवात्मजः ॥ १७ ॥ देहिदानंद्विजा
तीनांकृष्णनिर्मुक्तिहेतवे ॥ नंदःप्रीतमनाराजन्गाःसुवर्णंतदाऽदिशत् ॥१८॥ यशोदापिमहाभागानष्टल
ब्धप्रजासती ॥ परिष्वज्यांकमारोप्यमुमोचाश्रुकलांमुहुः ॥ १९ ॥ तांरात्रिंतत्रसजेंद्रक्षुत्तृड्भ्यांश्रमकर्षि
ताः ॥ ऊषुर्व्रजौकसोगावःकालिंद्याउपकूलतः ॥ २० ॥ तदाशुचिवनोद्भूतोदावाग्निःसर्वतोव्रजम् ॥ सुप्तं
निशीथआवृत्यप्रदग्धुमुपचक्रमे ॥ २१ ॥ ततउत्थायसंभ्रांतादह्यमानाव्रजौकसः ॥ कृष्णंययुस्तेशरणंमा
यामनुजमीश्वरम् ॥ २२ ॥ कृष्णकृष्णमहाभागहेरामामितविक्रम ॥ एषघोरतमोवह्निस्तावकान्ग्र
सतेहिनः ॥ २३ ॥ सुदुस्तरान्नःस्वान्पाहिकालाग्नेःसुहृदःप्रभो ॥ नशक्नुमस्त्वच्चरणंसंत्यक्तुमकुतोभयं ॥
॥ २४ ॥ इत्थंस्वजनवैक्लव्यंनिरीक्ष्यजगदीश्वरः ॥ तमग्निमपिबत्तीव्रमनंतोनंतशक्तिधृक् ॥ २५ ॥ इति
श्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेकालियदमनोनामसप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुकउवाच
अथकृष्णःपरिवृतोज्ञातिभिर्मुदितात्मभिः ॥ अनुगीयमानोन्यविशद्व्रजंगोकुलमंडितं ॥१॥ व्रजेविक्रीडतो
रेवंगोपालच्छद्ममायया ॥ ग्रीष्मोनामर्तुरभवन्नातिप्रेयान्शरीरिणाम् ॥ २ ॥ ॥

इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू॰टीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ अष्टादशेततोग्रीष्मेवसंतगुणलक्षिते ॥
अघातयद्बलेनालंप्रलंबंलीलयाहरिः ॥ १ ॥ कृत्वानृत्यंफणाग्रेषुकालियस्यसकौतुकम् ॥ बलंप्रलंबतुंगांसमारोह्यदरातिहा ॥ २ ॥ १ ॥
गोपालच्छद्ममाययागोपालनमेवछद्मयस्यांतयामायया ॥ २ ॥ ॥ ॥ ॥ ॥

॥ ३ ॥ वसंतसाम्यमाहचतुर्भिः यत्रग्रीष्मेपिनिर्झराणांनिर्ह्रादेनघोषेणानिवृत्तस्वनाश्छन्नध्वनयोझिल्लिकाःकठोरध्वनिसूक्ष्मकीटायस्मिं स्तथाभूतंवृंदावनंभवति- किंच शश्वत्तेषांनिर्झराणांशिकरैरंबुकणैर्ऋजीषाःस्निग्धायेद्रुमास्तेषांमंडलैर्मंडितम् ॥ ४ ॥ यत्रग्रीष्मेवनेवा नि दाघोग्रीष्मस्तेनतत्कालीनवन्ह्यर्काभ्यांचभवतियोदवस्तापः अतिशाद्वलेअतिहरिततृणाकीर्णे यद्वा अतिक्रांतशाद्वलेऽपिस्थाने ॥ ५ ॥

सचवृंदावनगुणैर्वसंतइवलक्षितः ॥ यत्रास्तेभगवान्साक्षाद्रामेणसहकेशवः ॥३॥ यत्रनिर्झरनिर्ह्रादनिवृ त्तस्वनझिल्लिकम् ॥ शश्वत्तच्छीकरर्जीषद्रुममंडलमंडितम् ॥ ४ ॥ सरित्सरःप्रस्रवणोर्मिवायुनाकल्हारकं जोत्पलरेणुहारिणा ॥ नविद्यतेयत्रवनौकसांदवोनिदाघवन्ह्यर्कभवोतिशाद्वले ॥ ५ ॥ अगाधतोयऱ्हादि नीतटोर्मिभिर्द्रवत्पुरीष्याःपुलिनैःसमंततः ॥ नयत्रचंडांशुकराविषोल्बणाभुवोरसंशाद्वलितंचगृह्णते ॥६॥ वनंकुसुमितंश्रीमन्नदच्चित्रमृगद्विजं ॥ गायन्मयूरभ्रमरंकूजत्कोकिलसारसं ॥ ७ ॥ क्रीडिष्यमाणस्तत्कृ ष्णोभगवान्बलसंयुतः ॥ वेणुंविरणयन्गोपैर्गोधनैःसंवृतोऽविशत् ॥८॥ प्रवालबर्हस्तबकस्रग्धातुकृत भूषणाः ॥ रामकृष्णादयोगोपाननृतुर्युयुधुर्जगुः ॥९॥ कृष्णस्यनृत्यतःकेचिज्जगुःकेचिदवादयन् ॥ वेणुपा णितलैःशृंगैःप्रशशंसुरथापरे ॥१०॥ गोपजातिप्रतिच्छन्नादेवागोपालरूपिणः ॥ ईडिरेकृष्णरामौचनटा इवनटंनृप ॥११॥ भ्रामणैर्लंघनैःक्षेपैरास्फोटनविकर्षणैः ॥ चिक्रीडतुर्नियुद्धेनकाकपक्षधरौक्वचित् ॥१२॥ क्वचिन्नृत्यत्सुचान्येषुगायकौवादकौस्वयम् ॥ शशंसतुर्महाराजसाधुसाध्वितिवादिनौ ॥ १३ ॥ ॥

ननुशाद्वलमेवकुतस्त्यंतत्राह अगाधेति अगाधानितोयानियासांतासांऱ्हादिनीनांतटस्पार्शिभिरूर्मिभिःपुलिनैःसहद्रवत्पुरीष्यंपंकोयस्या स्तस्याभुवःरसंशाद्वलितंशाद्वलरूपतांचविषवदुल्बणाअपिसूर्यरश्मयोनगृण्हतेनहरंति ॥ ६ ॥ तद्वनमविशदित्युत्तरेणान्वयः नदंतश्चित्रामृग द्विजाश्चयस्मिन् गायंतोमयूराभ्रमराश्चयस्मिन् कूजंतःकोकिलाःसारसाश्चयस्मिंस्तदविशत् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ काकपक्षाश्चूडाकरणात्प्राक्तनकेशाः भ्रामणादिप्रकारैर्नियुद्धेनबाहुयुद्धेनचिक्रीडतुः ॥ १२ ॥ १३ ॥ ॥ ॥

कुंभैः कुंभवृक्षफलैः अस्पृश्यत्वंनेत्रबंधश्चतदाद्यैः मृगाणांखगानांचचेष्टया ॥ १४ ॥ दर्दुरप्लावैःमंडूकप्लुतिभिः स्पंदोलिकयादोलालंबने
ननृपाणामिवलीलया ॥ १५ ॥ नद्यःअद्रिद्रोणयःकुंजानिचएतेषु ॥ १६ ॥ चारयतोःसतोः तद्वनेतस्मिन्वने तयोर्जिहीर्षया ॥ १७ ॥
॥ १८ ॥ यथायथंवयोबलाद्यनुरूपंद्वंद्वीभूय ॥ १९ ॥ परिवृढौनायकौ तत्रकेचनकृष्णसंघट्टिनःकृष्णपक्षीयाः ॥ २० ॥ २१ ॥ वाह्यमा

क्वचिद्बिल्वैःक्वचित्कुंभैःक्वचामलकमुष्टिभिः ॥ अस्पृश्यनेत्रबंधाद्यैःक्वचिन्मृगखगेहया ॥१४॥ क्वचिच्चदर्दु
रप्लावैर्विविधैरुपहासकैः ॥ कदाचित्स्पंदोलिकयाकर्हिचिन्नृपचेष्टया ॥१५॥ एवंतौलोकसिद्धाभिःक्रीडाभि
श्चेरतुर्वने ॥ नद्यद्रिद्रोणिकुंजेषुकाननेषुसरस्सुच ॥१६॥ पशूंश्चारयतोर्गोपैस्तद्वनेरामकृष्णयोः ॥ गोप
रूपीप्रलंबोऽगादसुरस्तज्जिहीर्षया ॥१७॥ तंविद्वानपिदाशार्होभगवान्सर्वदर्शनः ॥ अन्वमोदततत्सख्यं
वधंतस्यविचिंतयन् ॥१८॥ तत्रोपहूयगोपालान्कृष्णःप्राहविहारवित् ॥ हेगोपाविहरिष्यामोद्वंद्वीभूयय
थायथं ॥१९॥ तत्रचक्रुःपरिवृढौगोपारामजनार्दनौ ॥ कृष्णसंघट्टिनःकेचिदासन्रामस्यचापरे ॥ २० ॥
आचेरुर्विविधाःक्रीडावाह्यवाहकलक्षणाः ॥ यत्रारोहंतिजेतारोवहंतिचपराजिताः ॥२१॥ वहंतोवाह्यमा
नाश्चचारयंतश्चगोधनं ॥ भांडीरकंवटंनामजग्मुःकृष्णपुरोगमाः ॥२२॥ रामसंघट्टिनोयर्हिश्रीदामवृष
भादयः ॥ क्रीडायांजयिनस्तांस्तानूहुःकृष्णादयोनृप ॥२३॥ उवाहकृष्णोभगवान्श्रीदामानंपराजितः ॥
वृषभंभद्रसेनस्तुप्रलंबोरोहिणिसुतं ॥२४॥ अविषह्यंमन्यमानःकृष्णंदानवपुंगवः ॥ वहन्द्रुततरंप्रागा
दवरोहणतःपरं ॥ २५ ॥ तमुद्वहन्धरणिधरेंद्रगौरवंमहाऽसुरोविगतरयोनिजंवपुः ॥ सआस्थितःपुरट
परिच्छदोबभौतडित्द्युमानुडुपतिवाडिवांबुदः ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

नाःपृष्ठेनोह्यमानाः ॥ २२ ॥ २३ ॥ २४ ॥ कृष्णदृष्टिवंचनायअवरुह्यतेस्मिन्नित्यवरोहणंमर्यादाततःपरंदूरमगात् ॥ २५ ॥ धरणिधरें
द्रवत्गौरवंयस्यतन्निजमासुरंवपुरास्थितः पुरटपरिच्छदःसुवर्णालंकारः तडित्द्युमान्विद्युद्दीप्तिमानित्यलंकारोपमा उडुपतिवाडितिरामोप
मा उडुपतिंवहतीत्युडुपतिवाट् यदियथोचितस्थानेषुस्थिताविद्युतोभवंतिउपरिचउडुपतिस्तदासौऽबुदोयथाभातितद्वद्बभावित्यर्थः॥२६

अलमतिवेगेन प्रदीप्तेदृशौयस्मिन्वपुषितत् भ्रुकुटितटसल्लग्नाउग्रादंष्ट्रायस्मिंस्तत् प्रदीप्तदृक्भ्रुकुटितटंयस्मिन्उग्रादंष्ट्रायस्मिंस्तच्चतच्चे
तिवा ज्वलंत्यःशिखाःकेशायस्मिंस्तत् ॥ २७ ॥ आगतस्मृतिरभयइवआत्मनःसार्थंगोपसमूहंविहायहरंतंरिपुमहनत् यद्वा विहायसाआ
काशमार्गेणात्मनःप्रातमर्थमिवहरंतमिति वज्ररंहसावज्रवेगेनमुष्टिना ॥ २८ ॥ अपस्मृतोगतस्मृतिः महारवंसमीरयन् ॥ २९ ॥ ३० ॥



निरीक्ष्यतद्वपुरलमंबरेचरत्प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकं ॥ज्वलच्छिखंकटककिरीटकुंडलत्विषाऽद्भुतंहलधर
ईषदत्रसत् ॥२७॥ अथागतस्मृतिरभयोरिपुंबलोविहायसाऽर्थमिवहरंतमात्मनः॥ रुषाऽहनच्छिरसिदृढे
नमुष्टिनासुराधिपोगिरिमिववज्ररंहसा ॥२८॥ सआहतःसपदिविशीर्णमस्तकोमुखाद्वमन्रुधिरमपस्मृ
तोऽसुरः ॥ महारवंव्यसुरपतत्समीरयन्गिरिर्यथामघवतआयुधाहतः ॥२९॥ दृष्ट्वाप्रलंबंनिहतंबलेनब
लशालिना ॥ गोपाःसुविस्मिताआसन्साधुसाध्वितिवादिनः ॥३०॥ आशिषोभिगृणंतस्तंप्रशशंसुस्तद
र्हणं ॥ प्रेत्यागतमिवालिंग्यप्रेमविह्वलचेतसः ॥३१॥ पापेप्रलंबेनिहतेदेवाःपरमनिर्वृताः ॥ अभ्यवर्षन्ब
लंमाल्यैःशशंसुःसाधुसाध्विति ॥३२॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू० प्रलंबवधोनामाष्टादशो
ऽध्यायः ॥१८॥ ॥ ॥ श्रीशुकउवाच क्रीडासक्तेषुगोपेषुतद्गावोदूरचारिणीः ॥ स्वैरंचरंत्योविवि
शुस्तृणलोभेनगह्वरं ॥१॥ अजागावोमहिष्यश्चनिर्विशंत्योवनाद्वनं ॥ इषीकाटवींविविशुःक्रंदंत्योदावत
र्षिताः ॥२॥ तेऽपश्यंतःपशून्गोपाःकृष्णरामादयस्तदा ॥ जातानुतापानविदुर्विचिन्वंतोगवांगतिम् ॥३॥
तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरंकितैर्गवां ॥ मार्गमन्वगमन्सर्वेनष्टाजीव्याविचेतसः ॥४॥ ॥ ॥

तदर्हणंप्रशंसाऽर्हं ॥ ३१ ॥ ३२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धटीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ ऊनविंशेनिवि
ष्टंतुगोपगोकुलमच्युतः ॥ मुंजारण्यमरण्याग्नेररक्षतन्निपानतः ॥ १ ॥ दूरचारिणीःदूरचारिण्यः ॥ १ ॥ वनाद्वनांतरंनिर्विशंत्योदावित
र्षितास्तृषिताःक्रंदंत्यःइषीकाटवीमत्युच्छ्रितघनतृणाविशेषारण्यंनिर्विविशुः ॥ २ ॥ कृष्णरामावादीयेषांतेनतुतौ ॥ ३ ॥ तासांगवांखुरैःद
द्भिश्वछिन्नैस्तृणैर्गोष्पदैरंकितैश्चभूप्रदेशैस्तृणैर्वागवांमार्गमन्वगमन् नष्टाजीव्यागतजीविकासाधनाः ॥ ४ ॥ ॥ ॥

मुंजाटव्यपिसेवइषीकाऽटवी ॥ ५ ॥ ६ ॥ गोपानांनाशहेतुर्वनवन्हिः सर्वतःप्रादुरभूत् सारथिनावायुना ॥ ७॥ ८ ॥ ९॥ १० ॥ ११॥
कृच्छ्रात्गव्हरप्रवेशक्षुत्तृट्श्रमादिजनितात् ॥ १२ ॥ क्षणेनैवभांडीरंप्रापिताः ततःअक्षीण्युन्मील्यांविस्मिताः ॥ १३ ॥ १४ ॥ १५ ॥

मुंजाटव्यांभ्रष्टमार्गंक्रंदमानंस्वगोधनं ॥ संप्राप्यतृषिताःश्रांतास्ततस्तेसंन्यवर्तयन् ॥ ५ ॥ ताआहूताभगवतामेघगंभीरयागिरा॥स्वनाम्नांनिनदंश्रुत्वाप्रतिनेदुःप्रहर्षिताः ॥६॥ततःसमंताद्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसां॥समीरितःसारथिनोल्बणोल्मुकैर्विलेलिहानःस्थिरजंगमान्महान्॥७॥तमापतंतंपरितोदवाग्निंगोपाश्चगावःप्रसमीक्ष्यभीताः ॥ ऊचुश्चकृष्णंसबलंप्रपन्नायथाहरिंमृत्युभयार्दिताजनाः ॥८॥ कृष्णकृष्णमहावीर्यहेरामामितविक्रम॥दावाग्निनादह्यमानान्प्रपन्नांस्त्रातुमर्हथ ॥९॥नूनंत्वद्बांधवाःकृष्णनचार्हंत्यवसीदितुं ॥ वयंहिसर्वधर्मज्ञत्वन्नाथास्त्वत्परायणाः ॥ १० ॥ श्रीशुकउवाच वचोनिशम्यकृपणंबंधूनांभगवान्हरिः ॥ निमीलयतमाभैष्टलोचनानीत्यभाषत ॥ ११ ॥ तथेतिमीलिताक्षेषुभगवानग्निमुल्बणं॥ पीत्वामुखेनतान्कृच्छ्राद्योगाधीशोव्यमोचयत् ॥१२॥ ततश्चतेऽक्षीण्युन्मील्यपुनर्भांडीरमापिताः ॥ निशम्यविस्मिताआसन्नात्मानंगाश्चमोचिताः ॥ १३॥ कृष्णस्ययोगवीर्यंतद्योगमायाऽनुभावितं॥ दावाग्नेरात्मनःक्षेमंवीक्ष्यतेमेनिरेऽमरं ॥१४॥ गाःसन्निवर्त्यसायान्हेसहरामोजनार्दनः ॥ वेणुंविरणयन्गोष्ठमगाद्गोपैरभिष्टुतः ॥ १५ ॥ गोपानांपरमानंदआसीद्गोविंददर्शने ॥ क्षणंयुगशतमिवयासांयेनविनाऽभवत् ॥ १६ ॥ इतिश्रीभा०म० दशमस्कंधेपू०दावाग्निपानंनामएकोनविंशोध्यायः ॥ १९ ॥ ॥ श्रीशुकउवाच तयोस्तदद्भुतंकर्मदावाग्नेर्मोक्षमात्मनः ॥ गोपाःस्त्रीभ्यःसमाचख्युःप्रलंबवधमेवच ॥ १ ॥

॥ १६ ॥ श्रीदामादिस्वगोपानांस्वांगमारुह्यत्वदृष्यतां ॥ स्वैश्वर्यमाविरकरोद्वनवन्हिनिपानतः ॥ १ ॥ इति० द० टी० पू० एकोनविंशोऽध्यायः ॥ १९ ॥ विंशेप्रावृट्शरच्छोभावर्णनेनवनोचिताः ॥ प्रावृट्क्रीडानिरूप्यंतेगोपरामयुजोहरेः ॥ १ ॥ हेयादेयोपमानेनप्रावृट्शरदृतुश्रियोः ॥ वर्णनंत्वद्भुतैश्वर्यकृष्णलीलाविवक्षया ॥ २ ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ २ ॥ तत्रप्रावृड्वर्णनंततआदिद्वाविंशत्या सर्वेषांप्राणिनांसमुद्भवउत्पत्तितोजीवनतश्चयस्यांसाप्रावृट् विद्योतमानाःपरिधयःपरिवेषादि शोवायस्यांसा विस्फूर्जितंसंक्षुभितंनभस्तलंयस्यांसा ॥ ३ ॥ सांद्रैर्निबिडैर्नीलांबुदैर्विद्युद्गर्जितसहितैराच्छन्नं सगुणंगुणैराच्छन्नंजीवाख्यं विद्युद्गर्जितांबुदानांसत्वरजस्तमोभिरुपमा ॥ ४ ॥ पर्जन्यःसूर्यः स्वगोभिःरश्मिभिः कालेयथोचितसमये अत्रराजोपमाकरादानतःसमये पुनर्दानतश्चसूचिता ॥ ५ ॥ अस्यविश्वस्यप्रीणनमाप्यायनकरंजीवनमुदकंमुमुचुः कृपालवोयथातप्तंजनंनिरीक्ष्यानुकंपमानास्तदाप्याय नायस्वजीवनमपित्यजंति तद्वन्महांतोमेघास्तडिन्नेत्रैर्विश्वंतप्तंनिरीक्ष्यवायुभिर्वेपिताजीवनंमुमुचुरिति ॥ ६ ॥ तपसाग्रीष्मेणकृशा देवमी

गोपवृद्धाश्चगोप्यश्चतदुपाकर्ण्यविस्मिताः ॥ मेनिरेदेवप्रवरौकृष्णरामौव्रजंगतौ ॥२॥ ततःप्रावर्त्ततप्रावृट्सर्वसत्वसमुद्भवा ॥ विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥३॥ सांद्रनीलांबुदैर्व्योमसविद्युत्स्तनयित्नुभिः ॥ अस्पष्टज्योतिराच्छन्नंब्रह्मेवसगुणंबभौ ॥४॥ अष्टौमासान्निपीतंयद्भूम्याश्चोदमयंवसु ॥ स्वगोभिर्मोक्तुमारेभेपर्जन्यःकालआगते ॥ ५ ॥ तडित्वंतोमहामेघाश्चंडश्वसनवेपिताः ॥ प्राणनंजीवनंह्यस्यमुमुचुःकरुणाइव ॥ ६ ॥ तपःकृशादेवमीढाआसीद्वर्षीयसीमही ॥ यथैवकाम्यतपसस्तनुःसंप्राप्यतत्फलं ॥ ७ ॥ निशामुखेषुखद्योतास्तमसाभांतिनग्रहाः ॥ यथापापेनपाखंडानहिवेदाःकलौयुगे ॥ ८ ॥ श्रुत्वा पर्जन्यनिनदंमंडूकाव्यसृजन्गिरः ॥ तूष्णींशयानाःप्राग्यद्वद्ब्राह्मणानियमात्यये ॥ ९ ॥ आसन्नुत्पथवाहिन्यःक्षुद्रनद्योनुशुष्यतीः ॥ पुंसोयथाऽस्वतंत्रस्यदेहद्रविणसंपदः ॥ १० ॥ हरिताहरिभिःशष्पैरिंद्रगोपैश्चलोहिता ॥ उच्छिलींध्रकृतच्छायानृणांश्रीरिवभूरभूत् ॥ ११ ॥ क्षेत्राणिसस्यसंपद्भिःकर्षकाणांमुदंददुः ॥ धनिनामुपतापंचदैवाधीनमजानतां ॥ १२ ॥ ॥ ॥

ढांपर्जन्यसिक्ता वर्षीयसीउच्छूनापुष्टा काम्यंतपोयस्यतस्यतनुःकामान्संप्राप्ययथेति ॥ ७ ॥ ८ ॥ नित्यकर्मावसानेआचार्यनिनदंश्रुत्वात च्छिष्यायथाधीयतेतद्वदिति ॥ ९ ॥ अनुशुष्यतीःअनुशुष्यंत्यः अस्वतंत्रस्यइंद्रियपरतंत्रस्य स्वतंत्रस्यनिरंकुशस्येतिवा ॥ १० ॥ हरिभि र्नीलैःशष्पैर्बालतृणैर्नीलवर्णा क्वचिदिंद्रगोपैःकीटविशेषैर्लोहिता तत्रतत्रउच्छिलींध्रैश्छत्राकारैरुद्भिदैःकृतच्छायानृणांराज्ञांश्रीःसेनासंप दिव ॥ ११ ॥ क्षेत्राणीति तदाहिवृष्टेरविच्छेदेलसंतःप्रियंग्वादयोमुदंददति।विच्छेदेशुष्यंतोऽनुतापंचेति ॥ १२ ॥ ॥ ॥

अबिभ्रत् अबिभरुः यथाहरिनिषेवयेति हरिसेवायांप्रवृत्ताहिसद्यएवसर्वैरुचिराभवंति तस्याःपरमधर्मत्वात् परमसुखत्वाच्चतद्वदिति ॥ १३॥ कामाक्तंकामवासनायुक्तमितिश्वसनोर्मिसाम्यं गुणैर्विषयैर्युज्यतइतिसरित्संगतिसाम्यं ॥१४॥ अधोक्षजएवचेतोयेषांते ॥१५॥ असंस्कृता अक्षुण्णानाभ्यस्यमानाइत्यसंस्कृतसाम्यं कालेनचाहताइतितृणाच्छादनसाम्यं ॥१६॥ यथाकामिन्यःपुंश्चल्यः ॥ १७ ॥ निर्गुणंज्यारहित मपि गुणिनिगर्जितशब्दवति अभात् अशोभत गुणव्यतिकरात्मकेव्यक्तेप्रपंचेअगुणवान्निर्गुणःपुरुषोयथेति॥१८॥स्वभासाभासितयाअहं

जलस्थलौकसःसर्वेनववारिनिषेवया ॥ अबिभ्रद्रुचिरंरूपंयथाहरिनिषेवया ॥१३॥ सरिद्भिःसंगतःसिंधुश्चुक्षुभेश्वसनोर्मिमान् ॥ अपक्वयोगिनश्चित्तंकामाक्तंगुणयुग्यथा ॥१४॥ गिरयोवर्षधाराभिर्हन्यमानानविव्यथुः ॥ अभिभूयमानाव्यसनैर्यथाऽधोक्षजचेतसः ॥१५॥ मार्गाबभूवुःसंदिग्धास्तृणैश्छन्नाह्यसंस्कृताः ॥ नाभ्यस्यमानाःश्रुतयोद्विजैःकालहताइव ॥१६॥ लोकबंधुषुमेघेषुविद्युतश्चलसौहृदाः ॥ स्थैर्यंनचक्रुःकामिन्यःपुरुषेषुगुणिष्विव ॥१७॥ धनुर्वियतिमाहेंद्रंनिर्गुणंचगुणिन्यभात् ॥ व्यक्तेगुणव्यतिकरेऽगुणवान्पुरुषोयथा ॥१८॥ नरराजोडुपश्छन्नःस्वज्योत्स्नाराजितैर्घनैः ॥ अहंमत्याभासितयास्वभासापुरुषोयथा ॥१९॥ मेघागमोत्सवाहृष्टाःप्रत्यनंदन्शिखंडिनः ॥ गृहेषुतप्तानिर्विण्णायथाऽच्युतजनागमे ॥२०॥ पीत्वाऽपःपादपाःपद्भिरासन्नानात्ममूर्त्तयः ॥ प्राक्क्षामास्तपसाश्रांतायथाकामानुसेवया ॥२१॥ सरस्स्वशांतरोधस्सुन्यूषुरंगापिसारसाः ॥ गृहेष्वशांतकृत्येषुग्राम्याइवदुराशयाः ॥२२॥ जलौघैर्निरभिद्यंतसेतवोवर्षतीश्वरे ॥ पाखंडिनामसद्वादैर्वेदमार्गाःकलौयथा ॥ २३ ॥ ॥ ॥ ॥ ॥

मत्येति स्वचैतन्येनैवप्रकाशितेनाहंकारेणछन्नोजीवोयथा यद्वा अहंविद्वान्दातावेत्ताशूरइतिस्वप्रतीत्यैवारोपितयाइति ॥१९॥ मेघागमेनोत्सवोयेषामतोहृष्टाः ॥२०॥ नानात्ममूर्त्तयःअनेकरूपदेहाः ॥२१॥ अशांतानिपंककंटकादियुक्तानिरोधांसितटानियेषांतेष्वपिन्यूषुर्नितरामत्रसन् सारसाश्चक्रवाकाः अशांतानिघोराणिअनुपरतानिवाकृत्यानियेषुतेष्वपिगृहेषु ॥ २२ ॥ ईश्वरेइंद्रे ॥ २३ ॥ ॥

नुन्नाः प्रेरिताः आशिषः कामान् विश्पतयो राजानः वणिजां पतयो वा द्विजेरिताः पुरोहितैरुक्ताः ॥ २४ ॥ प्रावृषिकृतां क्रीडां वर्णयति एवं वनमितिसप्तभिः वर्षिष्ठं समृद्धं ॥ २५ ॥ २६ ॥ वनौकसः पुलिंदीः प्रमुदिताः भगवान्ददृशे तथा वनराजीर्मधुच्युतो मधुस्रवा ददृशे गिरेः सकाशाज्जलधाराश्च तासां नादान् आसन्नान्तिकटवर्त्तिनीर्गुहाश्च यद्वा वनौकसः प्रमुदिता आसन् तथा वनराजीर्वनराजयो वनपरंपरा मधुच्युत

व्यमुंचन्वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनाः ॥ यथाऽशिषो विश्पतयः काले काले द्विजेरिताः ॥२४॥ एवं वनं तद्वर्षिष्ठं पक्वखर्जूरजंबुमत् ॥ गोगोपालैर्वृतो रंतुं सबलः प्राविशद्धरिः ॥२५॥ धेनवो मंदगामिन्य ऊधोभारेण भूयसा ॥ ययुर्भगवताहूता द्रुतं प्रीत्या स्नुतस्तनीः ॥२६॥ वनौकसः प्रमुदिता वनराजीर्मधुच्युतः ॥ जलधारा गिरेर्नादानासन्ना ददृशे गुहाः ॥२७॥ क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति ॥ निर्विश्य भगवान्रेमे कंदमूलफलाशनः ॥ २८ ॥ दध्योदनं समानीतं शिलायां सलिलांतिके ॥ संभोजनीयैर्बुभुजे गोपैः संकर्षणाऽन्वितः ॥ २९ ॥ शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् ॥ तृप्तान्वृषान्वत्सतरान् गाश्च स्वोधोभरश्रमाः ॥३०॥ प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहां ॥ भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहितां ॥३१॥ एवं निवसतोस्तस्मिन् रामकेशवयोर्व्रजे ॥ शरत्समभवद्व्यभ्रा स्वच्छांब्वपरुषानिला ॥३२॥ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः ॥ भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥

आसन् गिरेर्जलधारा आसन् तानेवंभूतान् ददृशे सर्वतो ददर्श तथा भगवान् धाराणां नादान् गुहाश्चेति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ शरदं वर्णयति एवं निवसतोरित्यष्टादशभिः विगतानि अभ्राणि यस्यां सा स्वच्छानि अंबूनि यस्यां सा अपरुषः शांतोऽनिलो यस्यां सा च सा च ॥ ३२ ॥ नीरजानामुत्पत्तिर्यया तया शरदा कृत्वा नीरजानामुत्पत्त्या वा ॥ ३३ ॥ ॥ ॥ ॥ ॥

व्योम्नोऽब्दामिति व्योमादीनांचतुर्णांचतुरोमलान्शरदहरत् आश्रमिणांचतुर्णांकृष्णेजाताभक्तिर्यथाऽशुभमसुखंहरति तथाहि ब्रह्मचा
रिणोगुर्वर्थोदकाहरणकष्टंयथाभक्तिर्हरति तयापूर्णस्यतेनानुपयोगात् गुरुभिरपिकृतार्थस्यतस्यानियोगात् एवंव्योम्नोऽब्दंशरज्जहारयथाच
गृहिणोऽपत्यादिसांकर्यंभक्तिर्हरति विविक्तवासरुच्युत्पत्तेः तथाभूतानांशाबल्यंसांकर्यंशरत् वर्षासुवृष्टिभियासंकुलानिवसंति यथाचवनस्थ
स्यमलधारणक्लेशंभक्तिर्हरतिएवंभुवःपंकंशरत् यथाचयतीनांकामादिवासनामलंश्रीकृष्णभक्तिर्हरति एवमपांमलंशरदिति ॥ ३४ ॥ त्यक्तै
षणाःत्यक्ताःपुत्रवित्तलोकैषणायैस्ते ॥ ३५ ॥ गिरयइति अयंभावः नत्युपाध्यायाःकर्मविद्यामिवज्ञानिनोज्ञानामृतंसर्वतोवितरंतिअपितुक्व

**व्योम्नोऽब्दंभूतशाबल्यंभुवःपंकमपांमलं ॥ शरज्जहाराश्रमिणांकृष्णेभक्तिर्यथाऽशुभं ॥३४॥ सर्वस्वंजल
दाहित्वाविरेजुःशुभ्रवर्चसः ॥ यथात्यक्तैषणाःशांतामुनयोमुक्तकिल्बिषाः ॥ ३५ ॥ गिरयोमुमुचुस्तोयंक्व
चिन्नमुमुचुःशिवं ॥ यथाज्ञानामृतंकालेज्ञानिनोददतेनवा ॥३६॥ नैवाविदन्क्षीयमाणंजलंगाधजलेचराः॥
यथायुरन्वहंक्षय्यंनरामूढाःकुटुंबिनः ॥३७॥ गाधवारिचरास्तापमविंदन्शरदर्कजं ॥ यथादरिद्रःकृपणः
कुटुंब्यविजितेंद्रियः ॥३८॥ शनैःशनैर्जहुःपंकंस्थलान्यामंचवीरुधः ॥ यथाहंममतांधीराःशरीरादिष्वना
त्मसु ॥ ३९ ॥ निश्चलांबुरभूत्तूष्णींसमुद्रःशरदागमे ॥ आत्मन्युपरतेसम्यङ्मुनिर्व्युपरतागमः ॥ ४० ॥
केदारेभ्यस्त्वपोऽगृण्हन्कर्षकाद्दृढसेतुभिः ॥ यथाप्राणैःस्रवज्ज्ञानंतन्निरोधेनयोगिनः ॥ ४१ ॥ शरदर्कां
शुजांस्तापान्भूतानामुडुपोऽहरत् ॥ देहाभिमानजंबोधोमुकुंदोव्रजयोषितां ॥ ४२ ॥ खमशोभतनिर्मेघं
शरद्विमलतारकं ॥ सत्त्वयुक्तंयथाचित्तंशब्दब्रह्मार्थदर्शनं ॥ ४३ ॥ ॥ ॥ ॥ ॥**

पयाक्वचिदेव एवंगिरयःशिवंनिर्मलंतोयंक्वचिन्मुमुचुःक्वचिन्ननपुनःप्रावृषीवसर्वतइति ॥ ३६ ॥ गाधेक्षुद्रेजलेचरंतीतितथातेमीनादयःअ
विंदन्लेभिरे ॥३७॥३८॥ शनैः शनैरिति तत्रममतामिवपंकमहंतामिवआमतामपक्वतांजहुरिति ॥ ३९ ॥ आत्मन्युपरतेत्यक्तक्रियोमुनि
रिवनिश्चलांबुःसएवव्युपरतागमोनिवृत्तवेदघोषइवतूष्णीमभूदिति ॥ ४० ॥ केदारेभ्योबद्धशालिक्षेत्रेभ्योदृढैःसेतुभिरपोऽगृह्णन् ततःपरंवृ
ष्ट्यभावात् प्राणैरिंद्रियैस्तन्निरोधेनइंद्रियप्रत्याहारेण ॥ ४१ ॥ देहाभिमानजंबोधइवव्रजयोषितांमुकुंदइवचेत्यर्थः ॥ ४२ ॥ शरदाविम
लास्तारकायस्मिंस्तत् शब्दब्रह्मणोवेदस्यार्थान्पूर्वोत्तरमीमांसानिर्णीतान्दर्शयतीतितथातद्वत् ॥ ४३ ॥ ॥ ॥ ॥

॥ ४४ ॥ समः अन्यूनाधिकः शीतश्चोष्णश्चतं नतुगोप्यः कृष्णापहृतचेतस्त्वेनतासांसंतापोदुःसहइति यद्वा नकारउपमार्थः तदाकृष्णहृतचेतसइति चेतसाकृष्णमाश्लिष्ययथेत्यर्थः ॥ ४५ ॥ पुष्पिण्यः गर्भिण्यः अन्वीयमानाः स्ववृषैः स्वपतिभिरनिच्छंत्योऽपिबलादनुगम्यमानाः ईश्वराराधनार्थाः क्रियाः बलात्फलैरनुगम्यमानाः समस्तभोगगर्भायथेति ॥ ४६ ॥ कुमुत्कुमुदं कुत्सितामुत्यस्येतिदस्युसाम्यं ॥ ४७ ॥ आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकैर्यागैरिंद्रियैरिंद्रियार्थैर्लौकिकैश्चमहोत्सवैः कलाभ्यांरामकृष्णाभ्यांदर्शनादिमहोत्सवाभ्यां ॥ ४८ ॥

अखंडमंडलोव्योम्निरराजोडुगणैः शशी ॥ यथायदुपतिः कृष्णोवृष्णिचक्रावृतोभुवि ॥ ४४ ॥ आश्लिष्य समशीतोष्णंप्रसूनवनमारुतं ॥ जनास्तापंजहुर्गोप्योनकृष्णहृतचेतसः ॥ ४५ ॥ गावोमृगाः खगानार्यः पुष्पिण्यः शरदाऽभवन् ॥ अन्वीयमानाः स्ववृषैः फलैरीशक्रियाइव ॥ ४६ ॥ उदहृष्यन्वारिजानिसूर्योत्थानेकुमुद्विना ॥ राज्ञातुनिर्भयालोकायथादस्यून्विनानृप ॥ ४७ ॥ पुरग्रामेष्वाग्रयणैरिंद्रियैश्चमहोत्सवैः ॥ बभौभूः पक्कसस्याढ्याकलाभ्यांनितरांहरेः ॥ ४८ ॥ वणिङ्मुनिनृपस्नातानिर्गम्यार्थान्प्रपेदिरे ॥ वर्षरुद्धायथासिद्धाः स्वपिंडान्कालआगते ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू० शरद्वर्णनंनामविंशतितमोऽध्यायः ॥ २० ॥ श्रीशुकउवाच इत्थंशरत्स्वच्छजलंपद्माकरसुगंधिना ॥ न्यविशद्वायुनावातंसगोगोपालकोऽच्युतः ॥ १ ॥ कुसुमितवनराजिशुष्मिभृंगद्विजकुलघुष्टसरः सरिन्महीध्रम् ॥ मधुपतिरवगाह्यचारयन्गाः सहपशुपालबलश्चुकूजवेणुं ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

वणिजोयतयोनृपाः स्नातकाश्चदृष्टादृष्टाभ्यांवर्षरुद्धाः संतोनिर्गम्यार्थान्वाणिज्यस्वाच्छंद्यदिग्विजयविद्यादीन्प्रपेदिरेप्रापद्यंत यथा मंत्रयोगादिसिद्धाः आयुषारुद्धाः कालेआगतेस्वपिंडान्योगादिप्राप्यान्देवादिदेहानिति ॥ ४९ ॥ इतिदशमस्कंधेपूर्वार्धेटीकायांविंशतितमोऽध्यायः ॥ २० ॥ ॥ एकविंशेशरद्रम्यवृंदावनगतेहरौ ॥ तद्वेणुस्वनमाकर्ण्यगोपीभिर्गीतमीर्यंते ॥ १ ॥ इत्थमेवंभूतंवनं तदेवाह शरदा स्वच्छानिजलानियस्मिंस्तत् वायुनावातमनुगतंव्याप्तमित्यर्थः ॥ १ ॥ ततश्चकुसुमितवनराजिषुशुष्मिणोमत्ताः भृंगाः द्विजाः खगाश्चतेषां कुलानितैर्घुष्टाः सरांसिसरितोमहीध्राश्चयस्मिंस्तद्वनंकृष्णोऽवगाह्यप्रविश्यवेणुमवादयत् ॥ २ ॥ ॥ ॥ ॥

तत्कृष्णवेणुगीतंस्मरस्योदयोयस्मात्तदाश्रुत्यश्रुत्वापरोक्षंयथाभवातितथा ॥ ३ ॥ व्रजेस्थितत्वाद्विक्षिप्तमनसोऽन्याकुलचित्ताः ॥ ४ ॥ याद्द
शंकृष्णस्मरणंतासांमनसःक्षोभकंजातंतदाह बर्हापीडमिति नटवत्वरंवपुर्बिभ्रत् वृंदावनंप्राविशत् कथंभूतंवनम् स्वपदैरंकितैःरमणंर
तिजनकम् गोपवृंदैर्गीतकीर्त्तिः तथाबर्हमयमापीडंशिरोभूषणंबिभ्रत् बर्हमापीडोयस्मिन्नितिवपुषोविशेषणंवा वेणुवादनमुत्प्रेक्षते रंध्रान्वे
णोरिति अतोनूनमधरसुधैवपूर्णाद्वेणोरुच्चलंतीगीतवत्प्रसर्पितुमर्हतीतिभावः ॥ ५ ॥ अभिरेभिरेवर्णयंत्यः पदेपदेपरमानंदमूर्तिंकृष्णंप
रिरब्धवत्यः ॥ ६ ॥ अनुवर्णनमेवाह अक्षण्वतामितित्रयोदशभिः अक्षण्वतांचक्षुष्मतांतावदिदमेवफलंप्रियदर्शनंपरमन्यन्न विदामःनवि

**तद्व्रजस्त्रियआश्रुत्यवेणुगीतंस्मरोदयम् ॥ काश्चित्परोक्षंकृष्णस्यस्वसखीभ्योऽन्ववर्णयन् ॥३॥ तद्वर्णयितु
मारब्धाःस्मरंत्यःकृष्णचेष्टितम् ॥ नाशकन्स्मरवेगेनविक्षिप्तमनसोनृप ॥४॥ बर्हापीडंनटवरवपुःकर्णयोः
कर्णिकारंबिभ्रद्वासःकनककपिशंवैजयंतींचमालाम् ॥ रंध्रान्वेणोरधरसुधयापूरयन्गोपवृंदैर्वृंदारण्यंस्व
पदरमणंप्राविशद्गीतकीर्तिः॥५॥इतिवेणुरवंराजन्सर्वभूतमनोहरम् ॥ श्रुत्वाव्रजःस्त्रियःसर्वावर्णयंत्योऽभि
रेभिरे ॥६॥ गोप्यऊचुः अक्षण्वतांफलमिदंनपरंविदामःसख्यःपशूननुविवेशयतोर्वयस्यैः ॥ वक्त्रंव्र
जेशसुतयोरनुवेणुजुष्टंयैर्वानिपीतमनुरक्तकटाक्षमोक्षम् ॥७॥ चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुपृक्त
परिधानविचित्रवेषौ ॥ मध्येविरेजतुरलंपशुपालगोष्ठ्यांरंगेयथानटवरौक्वचगायमानौ ॥ ८ ॥ ॥**

द्मइत्यर्थः तच्चफलंसखिभिःसहपशून्वनंप्रवेशयतोरामकृष्णयोर्वक्त्रंयैरेवपीतंतैरेवजुष्टंसेवितंनान्यैरित्यर्थः कथंभूतंवक्त्रं अनुवेणुवेणुमनुव
र्त्तमानंतंवादयत् तथा अनुरक्तकटाक्षमोक्षंस्निग्धकटाक्षविसर्गं अथवायैर्निपीतंतयोर्वक्त्रंतैर्जुष्टमिदमेवाक्षण्वतामक्ष्णोःफलमिति ॥ ७ ॥
अन्याआहुः चूतेति चूतप्रवालादीनांचित्राभिर्मालाभिःअनुपृक्तेईषदंतरांतरतःसंयुक्तेपरिधानेनीलपीतांबरेताभ्यांविचित्रौवेषौययोस्तौक्वच
कदाचित्पशुपालगोष्ठ्यांगोपालसभायांमध्येअलमत्यर्थंविरेजतुः अहोगोपानांपुण्यमितिभावः ॥ ८ ॥ ॥ ॥

अन्याऊचुः हेगोप्यःअयंवेणुःकिंस्मपुण्यमाचरत्कृतवान् कथं यद्यस्मात्गोपिकानामेवभोग्यांसतीमपिदामोदराधरसुधांस्वयंस्वातंत्र्येणय थेष्टंभुंक्ते कथम् अवशिष्टरसंकेवलमवशिष्टंरसमात्रंयथाभवति यतोयासांन्हदिनीनांपयसापुष्टस्तामातृतुल्यान्हदिन्योहृष्यत्त्वचोविकसित कमलवनमिषेणरोमांचितालक्ष्यंते येषांवंशेजातस्तेतरवोमधुधारामिषेणआनंदाश्रुमुमुचुः यथाआर्याःकुलवृद्धाःस्ववंशेभगवत्सेवकंदृष्ट्वा हृष्यत्त्वचोऽश्रुमुंचंतितद्वदिति ॥ ९ ॥ काश्चिदाहुः हेसखिवृंदावनंभुवःकीर्तिस्वर्गादपिविशेषेणवितनोति कथंभूतं यद्देवकीसुतपदांबु जाभ्यांलब्धालक्ष्मीःशोभासंपद्येनतत् किंच गोविंदस्यवेणुमनुवेणुनिनादंश्रुत्वाऽनंतरंमंदगर्जितंनीलमेघंतंमत्वामत्तायेमयूरास्तेषांनृत्यंप्रे क्ष्यसंघशस्तत्रतत्रअद्रिसानुषुअपरतानिउपरतक्रियाणिअन्यानिसमस्तानिसत्वानियस्मिंस्तत् नैतदन्येषुलोकेषुविद्यतेअतोभुवःकीर्तिंवित

गोप्यःकिमाचरदयंकुशलंस्मवेणुर्दामोदराधरसुधामपिगोपिकानाम् ॥ भुंक्तेस्वयंयदवशिष्टरसंन्हदिन्यो हृष्यत्त्वचोऽश्रुमुमुचुस्तरवोयथाऽर्याः ॥ ९ ॥ वृंदावनंसखिभुवोवितनोतिकीर्तियद्देवकीसुतपदांबुजलब्ध लक्ष्मि ॥ गोविंदवेणुमनुमत्तमयूरनृत्यंप्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्वम् ॥ १० ॥ धन्याःस्ममूढमत योऽपिहरिण्यएतायानंदनंदनमुपात्तविचित्रवेषम् ॥ आकर्ण्यवेणुरणितंसहकृष्णसाराःपूजांदधुर्विरचितां प्रणयावलोकैः ॥ ११ ॥ कृष्णंनिरीक्ष्यवनितोत्सवरूपवेषंश्रुत्वाचतत्क्वणितवेणुविचित्रगीतम् ॥ देव्योवि मानगतयःस्मरनुन्नसाराभ्रश्यत्प्रसूनकबरामुमुहुर्विनीव्यः ॥ १२ ॥ ॥ ॥ ॥ ॥

नोतीत्यर्थः ॥ १० ॥ अपराआहुः हेसखिमूढमतयस्तिर्यगादयोऽपिएताहरिण्योधन्याःकृतार्थाः यावेणुरणितंवेणुनादमाकर्ण्यनंदनंदनंप्र तिप्रणयसहितैरवलोकनैर्विरचितांपूजांसंमानंदधुःकृतवत्यः किंच कृष्णसारैःस्वपतिभिःसहिताएवदधुः अस्मत्पतयस्तुगोपाःक्षुद्राःसम क्षंतन्नसहंतइतिभावः ॥ ११ ॥ अन्याऊचुः हेगोप्यःआश्चर्यंशृणुत वनितानामुत्सवोयस्मात्तद्रूपंवेषश्चयस्यतंकृष्णंनिरीक्ष्यतेनवादितवेणोर संकीर्णंगीतंचश्रुत्वाविमानैर्गच्छंत्योदेव्योदेवानामंकेषुस्थिता अपिस्मरेणनुन्नसाराःपरिक्षिप्तधैर्यामुमुहुः मोहेलिंगमाहुः भ्रश्यत्प्रसूनाःकब राश्चूडायासांताः विगतानीव्योयासांताः अत्रसर्वत्रवक्तृभेदान्नातीवसंगतिर्वक्तव्या ॥ १२ ॥ ॥ ॥ ॥

॥५२॥

क्षरणशंकयैवोत्तभितैरुन्नमितैःकर्णपुटैःपिबंत्यःसत्यः तथाशावाश्चवत्साश्चस्तनपानेप्रवृत्ताःसमनंतरमेवगीतंश्रुत्वातदेवपीयूषमुत्तभितक र्णपुटैःपिबंतःस्नुतस्तनपयःकवलाःकेवलंस्तनेभ्यःक्षरितक्षीरग्रासाःमुखेषुयेषांतेतस्थुः विस्मृतक्रियाबभूवुरित्यर्थः तत्रहेतुः गोविंदंदृशामा र्गेणआत्मनिमनसिस्पृशंत्यआलिंगंत्यः अतएवअश्रूणांकलालेशाःलोचनयोर्यासांताःगावस्तेचशावाःवत्साः ॥ १३ ॥ भोअंबमातःअ स्मिन्वनेयेविहगाःपक्षिणस्तेप्रायेणमुनयोभवितुमर्हंति कुतः कृष्णेक्षितंकृष्णदर्शनंपुष्पफलाद्यंतरंविनायथाभवतितथारुचिराःप्रवालायेषां तान्द्रुमभुजान्वृक्षाणांशाखाआरुह्यतेनश्रीकृष्णेनउदितंप्रकटितंकलवेणुगीतंकेनापिसुखेननिमीलितदृशस्त्यक्तान्यवाचःसंतोयेशृण्वंती

गावश्चकृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैःपिबंत्यः ॥ शावाःस्नुतस्तनपयःकवलाःस्मतस्थु र्गोविंदमात्मनिदृशाऽश्रुकलाःस्पृशंत्यः ॥ १३ ॥ प्रायोबतांबविहगामुनयोवनेऽस्मिन्कृष्णेक्षितंतदुदितंक लवेणुगीतम् ॥ आरुह्यये द्रुमभुजान्रुचिरप्रवालान्शृण्वंतिमीलितदृशोविगतान्यवाचः ॥ १४ ॥ नद्यस्त दातदुपधार्यमुकुंदगीतमावर्त्तलक्षितमनोभवभग्नवेगाः ॥ आलिंगनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णंतिपादयु गलंकमलोपहाराः ॥१५॥ दृष्ट्वाऽतपेव्रजपशून्सहरामगोपैःसंचारयंतमनुवेणुमुदीरयंतम् ॥ प्रेमप्रवृद्ध उदितःकुसुमावलीभिःसख्युर्व्यधात्स्ववपुषाऽंबुदआतपत्रम् ॥ १६ ॥ ॥ ॥ ॥

ति तथाहि मुनयःश्रीकृष्णदर्शनंयथाभवतितथावेदोक्तकर्मफलपरित्यागेनवेदद्रुमशाखारूढारुचिरप्रवालस्थानीयानिकर्माण्येवोपाददानाः सुखिनःसंतःश्रीकृष्णगीतमेवशृण्वंति अतस्तएवैतेभवितुमर्हंतीतिभावः ॥ १४ ॥ आस्तांचेतनानांकथानद्योऽपिआवर्त्तैःपरिभ्रमैर्लक्षिते नसूचितेनमनोभवेनकामेनभग्नोवेगोयासांताआलिंगनेनस्थगितमाच्छादितंयथाभवतितथाऊर्मयएवभुजास्तैःकमलोपहाराःकमलान्युपह रंत्योमुरारेःपादयुगलंगृह्णंतिधारयंति ॥ १५ ॥ लोकार्तिहरणशीलत्वादिसाम्यात्सख्युःश्रीकृष्णस्यअंबुदस्तदुपरिउदितःपुनःप्रेम्णाप्रवृ द्धःसन्कुसुमावलीभिःपुष्पसमूहैस्तत्तुल्यैस्तुषारैर्वासहस्ववपुषाछत्रंविहितवान् ॥ १६ ॥ ॥ ॥ ॥

साहंकारमाहुः पूर्णाःकृतार्थाः पुलिंद्यःशबरांगनाः कथमित्यतआहुः प्रथमंदयितानांस्तनेषुमंडितेनअनुलिप्तेनपुनश्चरतिसमयेउरुगायस्य
श्रीकृष्णस्यपदाब्जयोःरागेणआरुण्येनश्रीः कांतिर्यस्यतेनकुंकुमेनपुनस्तस्यवनस्थलीषुचंक्रमणेनतृणेषुरूषितेनसछन्नेनतद्दर्शनेनतथाभूतस्य
कुंकुमस्यदर्शनेनस्मरकृतारुक्तापोयासांतास्तेनकुंकुमेनआननेषुकुचेषुचकामतप्तेषुलिंपंत्यस्तदाधिकामव्यथांजहुः अतस्ताःकृतार्थाधिग
न्यामाहद्दयोयाएवंभूतमप्याधिशमनंनलभंतइतिभावः ॥ १७ ॥ हंतेतिहर्षे हेसख्यःअयमद्रिर्गोवर्द्धनोध्रुवंहरिदासेषुश्रेष्ठः कुतइत्यतआहुः
यस्माद्रामकृष्णयोश्चरणस्पर्शेनप्रमोदोयस्यसःतृणाद्युद्गमच्छलेनरोमहर्षदर्शनात् किंचयद्यस्मात्मानंतनोति सहगोभिर्गणेनसखिसमूहेन

पूर्णाःपुलिंद्यउरुगायपदाब्जरागश्रीकुंकुमेनदयितास्तनमंडितेन ॥ तद्दर्शनस्मररुजस्तृणरूषितेनलिंपं
त्यआननकुचेषुजहुस्तदाधिम् ॥१७॥ हंतायमद्रिरबलाहरिदासवर्योयद्रामकृष्णचरणस्पर्शप्रमोदः॥ मा
नंतनोतिसहगोगणयोस्तयोर्यत्पानीयसूयवसकंदरकंदमूलैः॥ १८॥ गागोपकैरनुवनंनयतोरुदारवेणुस्व
नैःकलपदैस्तनुभृत्सुसख्यः॥ आस्पंदनंगतिमतांपुलकस्तरूणांनिर्योगपाशकृतलक्षणयोर्विचित्रं॥ १९॥
एवंविधाभगवतोयावृंदावनचारिणः॥ वर्णयंत्योमिथोगोप्यःक्रीडास्तन्मयतांययुः॥ २०॥ इतिश्रीभाग
वतेमहापुराणेदशमस्कंधेपू०एकविंशतितमोऽध्यायः॥ २१ ॥ ॥ ॥ ॥ श्रीशुकउवाच हेमंतेप्रथमे
मासिनंदव्रजकुमारिकाः॥ चेरुर्हविष्यंभुंजानाःकात्यायन्यर्चनव्रतम्॥ १॥ आप्लुत्यांभसिकालिंद्याजलां
तेचोदितेऽरुणे॥ कृत्वाप्रतिकृतिंदेवीमानर्चुर्नृपसैकतीम्॥ २॥ ॥ ॥ ॥ ॥

चवर्त्तमानयोस्तयोः कैः पानीयैःसूयवसैःशोभनतृणैःकंदरैश्चकंदमूलैश्चयथोचितम् अतोऽयमतिधन्यइत्यर्थः ॥ १८ ॥ हेसख्यःइदंत्वति
चित्रं गोपैःसहवनेवनेगाःसंचारयतोस्तयोरामकृष्णयोःमधुपदैर्महावेणुनादैः शरीरिषुयेगतिमंतस्तेषांस्पंदनंस्थावरधर्मस्तरूणांपुलकोजंगम
धर्मइति निर्युज्यंतेगावःआभिरितिनिर्योगाःपादबंधनरज्जवःअधृष्यगवांकर्षणार्थाःपाशाश्चतैःकृतंलक्षणंचिन्हंययोः शिरसिनिर्योगवेष्टनेन
स्कंधस्थपाशेनचगोपपरिवृढश्रियाविराजमानयोरित्यर्थः ॥ १९ ॥ गोपीनांकामतःकृष्णेनिःसीमप्रेमसंगमः कात्यायन्यर्चनोद्भूततत्प्रसा
दमहोदयः ॥ २० ॥ इतिदशमेटीकायांपू०एकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशेगोपकन्यानांवस्त्राहरणलीलया ॥ वरंदत्वागतः कृष्णो
यज्ञशालामितीर्यते ॥ १ ॥ प्रथममासिमार्गशीर्षे ॥ १ ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३ ॥ महामायेइत्यादिसंबोधनैस्तवनकिंचिदशक्यमितिसूचयंत्यः प्रत्येकंप्रार्थयंते ॥ ४ ॥ ५ ॥ कृष्णचेतस्त्वमाह भूयान्नंदसुतःप तिरिति आनर्चुरिति व्रतस्यपूर्वांगमाह उषसीति गोत्रैर्नामभिः अन्योन्यावद्धबाहवः परस्परंगृहीतपाणयः ॥ ६ ॥ ७ ॥ योगेश्वराणामी श्वरइतिप्रत्येकंतादृक्मनोरथपूरणसामर्थ्यंदर्शयति ॥ ८ ॥ तासांकर्मणःसिद्धयेफलदानायेति नीपंकदंबं ॥ ९ ॥ बालैःसह हेअबलाः

गंधैर्माल्यैःसुरभिभिर्बलिभिर्धूपदीपकैः ॥ उच्चावचैश्चोपहारैःप्रवालफलतंडुलैः ॥ ३ ॥ कात्यायनिमहा मायेमहायोगिन्यधीश्वरि ॥ नंदगोपसुतंदेविपतिंमेकुरुतेनमः ॥ ४ ॥ इतिमंत्रंजपंत्यस्ताःपूजांचक्रुःकुमा रिकाः ॥ एवंमासंव्रतंचेरुःकुमार्यःकृष्णचेतसः ॥ ५ ॥ भद्रकालींसमानर्चुर्भूयान्नंदसुतःपतिः ॥ उषस्युत्था यगोत्रैःस्वैरन्योन्यावद्धवाहवः ॥ ६ ॥ कृष्णमुच्चैर्जगुर्यांत्यःकालिंद्यांस्नातुमन्वहं ॥ नद्यांकदाचिदागत्यती रेनिक्षिप्यपूर्ववत् ॥ ७ ॥ वासांसिकृष्णंगायंत्योविजन्हुःसलिलेमुदा ॥ भगवांस्तदभिप्रेत्यकृष्णोयोगेश्व रेश्वरः ॥ ८ ॥ वयस्यैरागतस्तत्रवृतस्तत्कर्मसिद्धये ॥ तासांवासांस्युपादायनीपमारुह्यसत्वरः ॥ ९ ॥ हस द्भिःप्रहसन्बालैःपरिहासमुवाचह ॥ अत्रागत्याबलाःकामंस्वंस्वंवासःप्रगृह्यतां ॥ १० ॥ सत्यंब्रवाणिनो नर्मयद्यूयंव्रतकर्शिताः ॥ नमयोदितपूर्वंवाअनृतंतदिमेविदुः ॥ ११ ॥ एकैकशःप्रतीच्छध्वंसहैवोतसुमध्य माः ॥ तस्यतत्क्ष्वेलितंदृष्ट्वागोप्यःप्रेमपरिप्लुताः ॥ १२ ॥ व्रीडिताःप्रेक्ष्यचान्योन्यंजातहासाननिर्ययुः ॥ एवंब्रुवतिगोविंदेनर्मणाक्षिप्तचेतसः ॥ आकंठमग्नाःशीतोदेवेपमानास्तमब्रुवन् ॥ १३ ॥ माऽनयंभोःकृथा स्त्वांतुनंदगोपसुतंप्रियं ॥ जानीमोऽगव्रजश्लाघ्यंदेहिवासांसिवेपिताः ॥ १४ ॥ श्यामसुंदरतेदास्यःकर वामतवोदितं ॥ देहिवासांसिधर्मज्ञनोचेद्राज्ञेब्रुवामहे ॥ १५ ॥ ॥ ॥ ॥

॥ १० ॥ नोनर्मनपरिहासः यस्माद्यूयंपरिश्रांताः ॥ ११ ॥ एकैकशोवाआगत्यस्वीकुरुतसहैववा नतत्रास्माकमाग्रहइत्यर्थः क्ष्वेलितमुक्त परिहासः प्रेमपरिप्लुताःप्रेमरसनिमग्नाः ॥ १२ ॥ १३ ॥ तत्रमुग्धाऊचुः अंगभो कृष्णः अनयमन्याय्यंमाकृथाः ॥ १४ ॥ प्रौढाऊचुःनो चेद्राज्ञेनंदायकंसायवाब्रुवामहे हेकृष्णेतिवा ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥

॥ १६ ॥ प्रोत्तेरुःनिर्गताः ॥ १७ ॥ आहताःईषदक्षतयोनीर्वीक्ष्य ॥ १८ ॥ धृतव्रताःसत्योविवस्त्राःअपोव्यगाहतअप्सुस्नाताइतियत्तत् देतत्तुउएवदेवहेलनमपराधएवेत्यर्थः व्रतवैगुण्यभीतानांप्रायश्चित्तमिवाह अस्यांहसः पापस्यनिवृत्तयेमूर्ध्निअंजलिंबध्वाऽधोनमःप्रणामंकृत्वेति ॥१९॥ इतिदोषत्वेनअच्युतेनाभिहितंविवस्त्राप्लवनंव्रतस्यच्युतिहेतुमत्वातस्यव्रतस्यपूर्तिकामास्तदशेषकर्मणांतस्यव्रतस्यअन्येषामशेषकर्मणांचसाक्षात्कृतंफलभूतंतमेवनेमुः सएवावद्यमृक्पापमार्जकः ॥२०॥२१॥ दृढमत्यर्थंप्रलब्धावंचितायूयंविवस्त्राइत्यादिना त्रप

श्रीभगवानुवाच भवत्योयदिमेदास्योमयोक्तंवाकरिष्यथ ॥ अत्रागत्यस्ववासांसिप्रतीच्छंतुशुचिस्मिताः ॥ ॥ १६ ॥ ततोजलाशयात्सर्वादारिकाःशीतवेपिताः ॥ पाणिभ्यांयोनिमाच्छाद्यप्रोत्तेरुःशीतकर्शिताः ॥ १७ ॥ भगवानाहतावीक्ष्यशुद्धभावप्रसादितः ॥ स्कंधेनिधायवासांसिप्रीतःप्रोवाचसस्मितं ॥ १८ ॥ यूयंविवस्त्रायदपोधृतव्रताव्यगाहतैतत्तदुदेवहेलनं ॥ बध्वांजलिंमूर्ध्न्यपनुत्तयेऽहसःकृत्वानमोऽधोवसनंप्रगृह्यताम् ॥ १९ ॥ इत्यच्युतेनाभिहितंव्रजाबलामत्वाविवस्त्राप्लवनंव्रतच्युतिम् ॥ तत्पूर्त्तिकामास्तदशेषकर्मणांसाक्षात्कृतंनेमुरवद्यमृग्यतः ॥ २० ॥ तास्तथाऽवनतादृष्ट्वाभगवान्देवकीसुतः ॥ वासांसिताभ्यः प्रायच्छत्करुणस्तेनतोषितः ॥ २१ ॥ दृढंप्रलब्धास्त्रपयाचहापिताःप्रस्तोभिताःक्रीडनवच्चकारिताः ॥ वस्त्राणिचैवापहृतान्यथाप्यमुंतानाभ्यसूयन्प्रियसंगनिर्वृताः ॥ २२ ॥ परिधायस्ववासांसिप्रेष्ठसंगमसज्जिताः ॥ गृहीतचित्तानोचेलुस्तस्मिन्लज्जायितेक्षणाः ॥ २३ ॥ तासांविज्ञायभगवान्स्वपादस्पर्शकाम्यया ॥ धृतव्रतानांसंकल्पमाहदामोदरोऽबलाः ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

याल्लज्जयाहापितास्त्याजिताअत्रागत्यस्ववासांसीत्याग्रहेण प्रस्तोभिताउपहसिताः सत्यंब्रवाणिनोनर्मेत्यादिना क्रीडनवत्कारिताश्चबध्वांऽजलिमित्यादिप्रायश्चित्तच्छलेन ताःनाभ्यसूयन्दोषदृष्ट्यानापश्यन् ॥२२॥ प्रेष्ठसंगमेनसज्जितावशीकृताअतोगृहीतचित्ताःसत्योनोचेलुः गृहीतचित्तत्वमाह तस्मिन्कृष्णेलज्जायितेक्षणालज्जाविलसितमीक्षणंयासांताइत्यर्थः दामोदरइतिभक्तवात्सल्यंदर्शयति अबलाःप्रति ॥२४॥

भोःसाध्व्यः भवतीनांमदर्चनमेवसंकल्पोमनोरथःस चलज्जयायुष्माभिरकथितोऽपिमयाविदितःसमयाअनुमोदितोऽतः सत्योभवितुमर्हति
अर्हतीतिसंभावनोक्त्याआत्यंतिकोनभविष्यतीतिसूचितम् ॥ २५ ॥ तत्कुतइत्यतआह नमय्येति कामायपुनःकामभोगाय विषयमहि
म्नाकामस्यापिशांतिहेतुत्वादितिभावः कामाप्ररोहेदृष्टांतः भर्जितादग्धाक्कथितापक्काधानायवादिबीजायअंकुरोद्गमाय नप्रायइति स्वेच्छया
पुनःप्ररोहमपिसूचयति ध्रुवादीनांतथादर्शनात् ॥२६ ॥ सिद्धाःपूर्णमनोरथाः तदाह इमाआगामिनीःरात्रीःमयारंस्यथेति आर्याकात्याय

संकल्पोविदितःसाध्व्योभवतीनांमदर्चनम् ॥ मयाऽनुमोदितःसोऽसौसत्योभवितुमर्हति ॥ २५ ॥ नमय्या
वेशितधियांकामःकामायकल्पते ॥ भर्जिताक्कथिताधानाप्रायोबीजायनेष्यते ॥ २६ ॥ यातावलाव्रजंसिद्धा
मयेमारंस्यथक्षपाः ॥ यदुद्दिश्यव्रतमिदंचेरुरार्यार्चनंसतीः ॥ २७ ॥ श्रीशुकउवाच इत्यादिष्टाभगवता
लब्धकामाःकुमारिकाः ॥ ध्यायंत्यस्तत्पदांभोजंकृच्छ्रान्निर्विविशुर्व्रजम् ॥ २८ ॥ अथगोपैःपरिवृतोभगवा
न्देवकीसुतः ॥ वृंदावनाद्गतोदूरंचारयन्गाःसहाग्रजः ॥ २९ ॥ निदाघार्कातपेतिग्मेछायाभिःस्वाभिरात्म
नः ॥ आतपत्रायितान्वीक्ष्यद्रुमानाहव्रजौकसः ॥ ३० ॥ हेस्तोककृष्णहेअंशोश्रीदामन्सुबलार्जुन ॥ वि
शालर्षभतेजस्विन्देवप्रस्थवरूथप ॥ ३१ ॥ पश्यतैतान्महाभागान्परार्थैकांतजीविनः ॥ वातवर्षातपहिमा
न्सहंतोवारयंतिनः ॥ ३२ ॥ अहोएषांवरंजन्मसर्वप्राण्युपजीवनम् ॥ सुजनस्येवयेषांवैविमुखायांतिनार्थि
नः ॥ ३३ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ॥ गंधनिर्यासभस्मास्थितोक्मैःकामान्वितन्वते ॥ ३४ ॥
एतावज्जन्मसाफल्यंदेहिनामिहदेहिषु ॥ प्राणैरर्थैर्धियावाचाश्रेयएवाचरेत्सदा ॥ ३५ ॥

नीसतीःसत्यः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ भक्त्यानुकंप्यकन्यास्तास्तद्विवर्जितयज्वनाम् ॥ पत्न्यनुग्रहतस्तेषामहन्कर्ममहाम
दम् ॥ १ ॥ विप्रभार्यानुग्रहाययज्ञवाटंगच्छन्विप्राणांकाठिन्यमभिप्रेत्यतेभ्योऽपिद्रुमाः श्रेष्ठाइतितानभिनंदति चतुर्भिः पश्यतेति हेस्तो
ककृष्णादयोगोपाःएतान्द्रुमान्पश्यत परार्थमेवएकांतेनजीवनंयेषांतान् तदाह वातवर्षादीन्स्वयंसहंतःसहमानाअस्माकंवारयंति ॥
॥ ३२ ॥ सुजनस्यकृपालोरर्थिनइव ॥ ३३ ॥ निर्यासोघनरसः तोक्माःपल्लवाद्यंकुराः ॥ ३४ ॥ ३५ ॥ ॥

इत्यभिनंदन्प्रवालादिसमूहैर्नतशाखानांतरूणांमध्येनयमुनांप्राप्तः ॥ ३६ ॥ ३७ ॥ कुमारिकाभ्यःपूर्वमेवतन्नर्माकुलतयाअगृहीतभो ज्यानामेवनिर्गमात्क्षुधार्त्ताइत्युक्तम् ॥ ३८ ॥ इतिदशमेपू० टीकायांद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ॥ त्रयोविंशेततोगोपैरन्नयाञ्चाऽपदे शतः ॥ तत्पत्न्यनुग्रहात्कृष्णोदीक्षितानन्वतापयत् ॥१ ॥१ ॥ भक्तायाइत्येकवचनंसद्यःसायुज्याभिप्रायेण ॥ २॥३ ॥ अस्मद्विसर्जिता



इतिप्रवालस्तबकफलपुष्पदलोत्करैः ॥ तरूणांनम्रशाखानांमध्येनयमुनांगतः ॥३६॥ तत्रगाःपाययित्वापः सुमृष्टाःशीतलाःशिवा ॥ ततोनृपस्वयंगोपाःकामंस्वादुपपुर्जलम् ॥ ३७ ॥ तस्याउपवनेकामंचारयंतः पशून्नृप ॥ कृष्णरामावुपागम्यक्षुधार्ताइदमब्रुवन् ॥ ३८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू० द्वा विंशोऽध्यायः ॥ २२ ॥ ॥ ॥ गोपाऊचुः रामराममहावीर्यकृष्णदुष्टनिबर्हण ॥ एषावैबाधतेक्षुन्नस्त च्छांतिंकर्तुमर्हथः ॥ १ ॥ श्रीशुकउवाच इतिविज्ञापितोगोपैर्भगवान्देवकीसुतः ॥ भक्तायाविप्रभार्या याःप्रसीदन्निदमब्रवीत् ॥ २ ॥ प्रयातदेवयजनंब्राह्मणाब्रह्मवादिनः ॥ सत्रमांगिरसंनामह्यासतेस्वर्गका म्यया ॥ ३ ॥ तत्रगत्वौदनंगोपायाचतास्मद्विसर्जिताः ॥ कीर्तयंतोभगवतआर्यस्यममचाभिधाम् ॥ ४ ॥ इत्यादिष्टाभगवतागत्वायाचंततेतथा ॥ कृतांजलिपुटाविप्रान्दंडवत्पतिताभुवि ॥ ५ ॥ हेभूमिदेवाःशृणु तकृष्णस्यादेशकारिणः ॥ प्राप्तान्जानीतभद्रंवोगोपान्नोरामचोदितान् ॥ ६ ॥ गाश्चारयंतावविदूरओद नंरामाच्युतौवोलषतोबुभुक्षितौ ॥ तयोर्द्विजाओदनमर्थिनोर्यदिश्रद्धाचवोयच्छतधर्मवित्तमाः ॥७॥ दीक्षा याःपशुसंस्थायाःसौत्रामण्याश्चसत्तमाः ॥ अन्यत्रदीक्षितस्यापिनान्नमश्नन्हिदुष्यति ॥ ८ ॥ ॥

आवाभ्यांप्रहिताःसंतोयाचध्वं युष्माकंकातत्रलज्जा ननुतथाऽप्यपात्रत्वादस्माकंकिमितिदास्यंतीतिचेत्तत्राह कीर्त्तयंतइति ॥ ४ ॥ ५ ॥ ६ ॥ अविदूरेवर्त्तमानौसंतौवोयदन्नंतल्लषतःअभिलषतःइच्छतः वःओदनंश्रद्धाचयद्यस्तितर्हियच्छतेति ॥ ७ ॥ दीक्षितावयमभोज्यान्नाइतिवदि ष्यंतीतिस्वयमेवाशंक्याहुः दीक्षायाःआरभ्याग्नीषोमीयपश्वालंभनात्पूर्वंदोषः नततोऽन्यत्र तथासौत्रामण्याश्चान्यत्रअन्यदा ॥ ८ ॥

क्षुद्रेस्वर्गादावाशामात्रंयेषांभूरीणिक्लेशाधिकानिकर्माणियेषां अतोज्ञावृथाज्ञानवृद्धाइतिमानवंतः ॥ ९ ॥ ननुकर्मक्रममुल्लंघ्यादेशकालेअ
न्यार्थमन्नमन्यस्मैकथंदेयंतत्राह देशइति पृथक्चरुपुरोडाशादिद्रव्यं तंत्रंप्रयोगः धर्मोऽपूर्वं ॥ १० ॥ मनुष्योऽयमितिदृष्टयामर्त्यात्मानो
ब्राह्मणावयंमहांतइतिमन्यमानाः ॥ ११ ॥ १२ ॥ लौकिकींगतिंनहिकार्यार्थिनोनिर्विद्यंतेकोवायाचकोनपराभूयतइत्यादिलोकेस्थातद
र्शयन् ॥ १३ ॥ केवलंदेहेनगृहेवसंतिधियाचमय्येवोषिताःयतोमयिस्निग्धाःअतोदास्यंतीति ॥ १४ ॥ १५ ॥ ईषिताःप्रेषिताः ॥ १६ ॥

इतितेभगवद्याच्ञांशृण्वंतोऽपिनशुश्रुवुः ॥ क्षुद्राशाभूरिकर्माणोबालिशावृद्धमानिनः ॥ ९ ॥ देशःकालःपृथ
कद्रव्यंमंत्रतंत्रर्त्विजोऽग्नयः ॥ देवतायजमानश्चक्रतुर्धर्मश्चयन्मयः ॥ १० ॥ तंब्रह्मपरमंसाक्षाद्भगवंतमधो
क्षजम् ॥ मनुष्यदृष्ट्यादुष्प्रज्ञामर्त्यात्मानोनमेनिरे ॥ ११ ॥ नतेयदोमितिप्रोचुर्नेनेतिचपरंतप ॥ गोपानिरा
शाःप्रत्येत्यतथोचुःकृष्णरामयोः ॥ १२ ॥ तदुपाकर्ण्यभगवान्प्रहस्यजगदीश्वरः ॥ व्याजहारपुनर्गोपान्द
र्शयन्लौकिकींगतिं ॥ १३ ॥ मांज्ञापयतपत्नीभ्यःससंकर्षणमागतं ॥ दास्यंतिकाममन्नंवःस्निग्धामय्युषिता
धिया ॥ १४ ॥ गत्वाऽथपत्नीशालायांदृष्ट्वासीनाःस्वलंकृताः ॥ नत्वाद्विजसतीर्गोपाःप्रश्रिताइदमब्रु
वन् ॥ १५ ॥ नमोवोविप्रपत्नीभ्योनिबोधतवचांसिनः ॥ इतोविदूरेचरताकृष्णेनेहेषितावयं ॥ १६ ॥ गा
श्चारयन्सगोपालैःसरामोदूरमागतः ॥ बुभुक्षितस्यतस्यान्नंसानुगस्यप्रदीयतां ॥ १७ ॥ श्रुत्वाऽच्युतमु
पायांतंनित्यंतद्दर्शनोत्सुकाः ॥ तत्कथाक्षिप्तमनसोबभूवुर्जातसंभ्रमाः ॥ चतुर्विधंबहुगुणमन्नमादायभाज
नैः ॥ अभिसस्रुःप्रियंसर्वाःसमुद्रमिवनिम्नगाः ॥ १९ ॥ निषिद्ध्यमानाःपतिभिर्भ्रातृभिर्बंधुभिःसुतैः ॥
भगवत्युत्तमश्लोकेदीर्घश्रुतधृताशयाः ॥ २० ॥ ॥ ॥ ॥ ॥

सकृष्णोगोपालैःसह ॥ १७ ॥ तत्कथाक्षिप्तमनस्त्वात्तद्दर्शनोत्सुकाःअतएवतमुपागतंश्रुत्वाजातसंभ्रमाबभूवुः ॥ १८ ॥ भक्ष्यभोज्यलेह्यचो
ष्यभेदैश्चतुर्विधं बहुगुणंसंस्कारविशेषैर्बहवोगुणारससौरभ्यादयोयस्मिंस्तत् भाजनैःअमत्रैः पत्यादिभिर्वार्यमाणाअपिप्रियंश्रीकृष्णमभिस
स्रुःआभिजग्मुः अप्रतिबंधेदृष्टांतः समुद्रंनिम्नगानद्यइवेति ॥ १९ ॥ अत्रहेतुः भगवतीति दीर्घंबहुकालंश्रुतेनश्रवणेनधृतआशयोयाभिस्ताः २०

तथागताः सत्योददृशुः ॥ २१ ॥ हिरण्यवत्परिधिःपरिधानंयस्यतंपीतांबरमित्यर्थः वनमाल्यैर्बर्हैर्धातुभिःप्रवालैश्चनटवद्वेषोयस्यतं अनु
व्रतस्यसख्युःअंसेविन्यस्तोनिहितोहस्तोयेनतं इतरेणहस्तेनलीलयाअब्जंधुनानंभ्रामयंतं कर्णयोरुत्पलेयस्यअलकाःकपोलयोर्यस्यमुखा
ब्जेहासोयस्यतंचतंचतंच ॥ २२ ॥ वृत्तेरपिलयेनसामरस्यमाह प्रायइति बहुशःश्रुतायेप्रियतमस्यउदयाउत्कर्षास्तएवकर्णपूराःकर्णौपूर
यंतिकृतार्थौकुर्वंतीतितथातैःकर्णाभरणैरितिवायस्मिन्कृष्णेनिमग्नमनसआविष्टचेतसस्तंलोचनद्वारैरंतःप्रवेश्यसुचिरमुपगुह्यतापंजहुः अभि
मतयोऽहंवृत्तयःप्राज्ञंसुषुप्तिसाक्षिणंपरिरभ्यतस्मिन्लयंप्राप्ययथेति ॥ २३ ॥ अखिलदृग्द्रष्टासर्वबुद्धिसाक्षी तास्तथाप्राप्ताविज्ञायापि तथे

यमुनोपवनेऽशोकनवपल्लवमंडिते ॥ विचरंतंवृतंगोपैःसाग्रजंददृशुःस्त्रियः ॥२१॥ श्यामंहिरण्यपरिधिंवन
माल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ॥ विन्यस्तहस्तमितरेणधुनानमब्जंकर्णोत्पलालककपोलमुखाब्ज
हासं ॥२२॥ प्रायःश्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरंध्रैः ॥ अंतःप्रवेश्यसुचिरंपरिर
भ्यतापंप्राज्ञंयथाऽभिमतयोविजहुर्नरेंद्र ॥ २३ ॥ तास्तथात्यक्तसर्वाशाःप्राप्ताआत्मदिदृक्षया ॥ विज्ञाया
खिलदृग्द्रष्टाप्राहप्रहसिताननः ॥ २४ ॥ स्वागतंवोमहाभागाआस्यतांकरवामकिं ॥ यन्नोदिदृक्षयाप्राप्ता
उपपन्नमिदंहिवः ॥ २५॥ नन्वद्धामयिकुर्वंतिकुशलाःस्वार्थदर्शनाः॥ अहैतुक्यव्यवहितांभक्तिमात्मप्रियेय
था ॥२६॥ प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ॥ यत्संपर्कात्प्रियाआसंस्ततःकोन्वपरःप्रियः ॥ २७॥

त्येतद्विवृणोति त्यक्तसर्वाशाःत्यक्ताःसर्वाआशायाभिस्ताःकेवलमात्मनःस्वस्यैवदिदृक्षयेति ॥ २४ ॥ हेमहाभागाःवःस्वागतंशुभमागमन
म् तदेवाह यद्यस्मात्प्रतिबंधतिरस्कारेणअस्माकंदिदृक्षयाप्राप्ताइति इदंवःउपपन्नंसंपन्नंयुक्तमितिवा ॥ २५ ॥ युक्तत्वमाह नन्विति आ
त्मप्रियेआत्माचाप्रियश्चतास्मिन्मयिकुशलाःविवेकिनःअतएवस्वस्यात्मनोऽर्थंपुरुषार्थंपश्यंतियेतेयथायथावद्भक्तिंकुर्वंति यथात्व माह अद्धा
साक्षात् अत्रहेतुः अहैतुक्यव्यवहितांफलाभिसंधिरहिताम् अतएवाव्यवहितांनिरंतरां ॥२६॥ आत्मनःसर्वतःप्रेष्ठत्वमुपपादयति प्राणेति
स्वाज्ञातयः आत्मादेहः एतेसर्वेयत्संपर्कात्यस्याध्यासेनउपकरणत्वेनवा ॥ २७ ॥ ॥ ॥ ॥

नचाचलन्तयोर्दर्शनायनजग्मुः ॥ ५२ ॥ इतिदशमस्कंधेपू॰टीकायांत्रयोविंशोध्यायः ॥ २३ ॥ ॥ ॥ चतुर्विंशेमहेंद्रस्यमखंव्यावर्त्य हेतुभिः ॥ कृष्णःप्रवर्त्तयामासगोवर्द्धनमखोत्सवम् ॥ १ ॥ भूसुराणांक्रियावर्गंनिरस्यस्वःसुरेषुच ॥ मघवन्मदभंगायतन्मखंसमवारयत्॥ ॥ २ ॥ ब्राह्मणाःकंसाद्भीताःस्वाश्रमस्थाएवभगवंतमभंजन् भगवानपितत्रैव निवसन्निंद्रयागकृतोद्यमान्गोपानपश्यदितिसंबंधः ॥ १ ॥ ॥ २ ॥ वृथासंभ्रमोनभवतिमखोऽयमितिएवंचेत्किमत्रफलंकादेवताकेनाधिकारिणाकेनवासाधनेनसाध्यते ॥३ ॥ एतद्ब्रूहिमहान्कामो ममश्रवणेवर्त्तते यद्वा तवमहान्कामोदृश्यतइति तूष्णींस्थितंप्रत्याह नेति सर्वात्मनांसर्वत्रात्मदृष्टीनाम् ॥ ४ ॥ अतएवनविद्यतेस्वःपरइतिदृ

इतिस्वाघमनुस्मृत्यकृष्णेतेकृतहेलनाः॥ दिदृक्षवोऽप्यच्युतयोःकंसाद्भीतानचाचलन्॥५२॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेयज्ञपत्न्युद्धरणंनामत्रयोविंशोऽध्यायः ॥ २३ ॥ श्रीभगवानुवाच भगवानपितत्रैवबलदेवेनसंयुतः॥ अपश्यन्निवसन्गोपानिंद्रयागकृतोद्यमान् ॥१॥ तदभिज्ञोऽपिभगवान् सर्वात्मासर्वदर्शनः ॥ प्रश्रयावनतोऽपृच्छत्वृद्धान्नंदपुरोगमान् ॥२॥ कथ्यतांमेपितःकोऽयंसंभ्रमोवउपागतः॥ किंफलंकस्यचोद्देशःकेनवासाध्यतेमखः ॥ ३॥ एतद्ब्रूहिमहान्कामोमह्यंशुश्रूषवेपितः ॥ नहिगोप्यंहिसाधूनांकृत्यंसर्वात्मनामिह॥ ४ ॥अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम् ॥ उदासीनोरिवद्वर्ज्यआत्मवत्सुहृदुच्यते ॥५॥ ज्ञात्वाऽज्ञात्वाचकर्माणिजनोऽयमनुतिष्ठति॥विदुषःकर्मसिद्धिःस्यात्तथानाविदुषोभवेत् ॥ ६ ॥ तत्रतावत्क्रियायोगोभवतांकिंविचारितः ॥ अथवालौकिकस्तन्मेपृच्छतःसाधुभण्यताम् ॥ ७ ॥

ष्टिर्येषामिति स्वपरदृष्टचभावादेवतत्तद्भेदादमित्रादयोऽपितेषांनसंतीत्याह अमित्रेति नमित्रमुदास्तउदासीनोविद्विट्येषांतेषांकृत्यंसर्वंकर्मनगोपनीयंकिंचिदस्तीत्यर्थः सत्यपिभेददर्शनेउदासीनःशत्रुवद्वर्ज्यआत्मतुल्यत्वात्सुहृन्मंत्रेषुनवर्जनीयइत्याह उदासीनइति ॥५॥ किंच सुहृद्भिःसहविचार्यज्ञात्वैवकर्मकर्त्तव्यंनतुगतानुगतिकमात्रेणेत्याह ज्ञात्वेति अज्ञात्वाचतत्रविदुषोयथावत्कर्मफलंस्यात्तथानाविदुषः ॥ ॥ ६ ॥ भवतामयंक्रियायोगःशास्त्रतोपिकिंविचारितःप्रवृत्तोलौकिकाचारप्राप्तोवेतिसाधुसोपपत्तिकंभण्यतांकथ्यतामिति ॥ ७ ॥

आचारप्राप्तएवेतिसहेतुकमाह पर्जन्यइति आत्ममूर्त्तयःप्रियमूर्त्तयः ॥ ८ ॥ ततःकिमित्यतआह तमिति तमिंद्रंवार्मुचांमेघानांपतिंस्वा
मिनं ईश्वरंनियंतारं तद्रेतसातद्दृष्टिपयसा ॥ ९ ॥ उपजीवंतिउपजीविकांकल्पयंति धर्मार्थकामसिद्धये ननुकृष्यादिभिर्जीवंतिकिमिंद्रे
णतत्राह पुंसामिति फलभावनःफलसाधकः पर्जन्यंविनाकृष्यादिवैफल्यादित्यर्थः ॥ १० ॥ ११ ॥ इंद्रायमन्युंजनयन्निति कोपजनन
द्वारागर्वपर्वतादिंद्रमवतारयितुंदेवतानिराकरणंनत्वयमेवाभिप्रायइत्यर्थः ॥ १२ ॥ प्रथमंतावत्कर्मवादेनदेवान्निराकरोति कर्मणेति ॥
॥ १३ ॥ ननुजडात्कर्मणःकेवलात्कथंफलसिद्धिःस्यादितिचेत् अहोअशीलितमीमांसानांस्वमतिविलसितश्रद्धाकर्मणांफलकारणत्वे

नंदउवाच पर्जन्योभगवानिंद्रोमेघास्तस्यात्ममूर्त्तयः ॥ तेऽभिवर्षंतिभूतानांप्राणनंजीवनंपयः॥८॥ तंतात
वयमन्येचवार्मुचांपतिमीश्वरं ॥ द्रव्यैस्तद्रेतसासिद्धैर्यजंतेक्रतुभिर्नराः॥ ९ ॥तच्छेषेणोपजीवंतित्रिवर्गफल
हेतवे ॥ पुंसांपुरुषकाराणांपर्जन्यःफलभावनः ॥ १० ॥ यएवंविसृजेद्धर्मंपारंपर्यागतंनरः ॥ कामाल्लोभाद्भ
याद्द्वेषात्सवैनाप्नोतिशोभनम् ॥ ११ ॥ श्रीशुकउवाच वचोनिशम्यनंदस्यतथाऽन्येषांव्रजौकसाम् ॥ इं
द्रायमन्युंजनयन्पितरंप्राहकेशवः ॥ १२ ॥ श्रीभगवानुवाच कर्मणाजायतेजंतुःकर्मणैवविलीयते ॥ सु
खंदुःखंभयंक्षेमंकर्मणैवाभिपद्यते ॥ १३ ॥ अस्तिचेदीश्वरःकश्चित्फलरूप्यन्यकर्मणाम् ॥ कर्त्तारंभजते
सोऽपिनह्यकर्त्तुःप्रभुर्हिसः ॥ १४ ॥ किमिंद्रेणेहभूतानांस्वस्वकर्मानुवर्तिनाम् ॥ अनीशेनान्यथाकर्तुंस्वभा
वविहितंनृणां ॥ १५ ॥ स्वभावतंत्रोहिजनःस्वभावमनुवर्त्तते ॥ स्वभावस्थमिदंसर्वंसदेवासुरमानुषं ॥ १६ ॥

वचनतोवगतेकिंततोऽनुपपन्नंनाम केचित्पुनरतिसाहसभीताः कर्मतंत्रपरमीश्वरंमन्यंतेतन्मतमनूद्यानिराकरोति अस्तिचेदिति स्वयंकर्म
भिरलिप्तोऽन्येषांजीवानांकर्मणांफलरूपीफलदाताकर्त्तारंभजतेतत्तत्कर्मफलदानेन ॥ १४ ॥ अतः कर्मणएवफलसिद्धेस्तत्पारतंत्र्येण
अजागलस्तनतुल्यत्वान्नदेवतयाकृत्यमित्याह किमिंद्रेणेति ननुकर्मणोऽपिप्रवृत्तिरंतर्याम्यपेक्षैवकथंसर्वथादेवतायाअनुपयोगइत्याशंक्या
ह स्वभावविहितमिति स्वभावेनप्राक्तनसंस्कारेणैवविहितंयत्कर्मतदन्यथाकर्त्तुमनीशेन ॥ १५ ॥ एतद्विवृणोति स्वभावतंत्रइति प्रवृत्तेः
संस्काराधीनत्वात्किमंतर्यामिणेत्यर्थः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्तस्मात्कृतार्थायूयंदेवयजनंयज्ञवाटंयातगच्छत ननुकृतार्थाःकिमितियास्यामइति चेदतआह पतयइति पारयिष्यंतिसमापयिष्यंतिपती
नामनुग्रहायेत्यर्थः ॥ २८ ॥ नृशंसंपरुषं निगमंप्रतिज्ञानमेभक्तःप्रणश्यनीति वेदंवानसपुनरावर्त्ततइति पदावसृष्टमवज्ञयापिदत्तं बहुमा
नेनकेशैर्निवोढुंदासीभवितुं ॥ २९ ॥ किंच नगृह्णंतिनोऽस्मान् हेअरिंदमकामलोभपापादिदमनभवतःप्रपदयोःपादाग्रयोःपतितदेहाना
मन्यास्वर्गादिगतिरपिनभवेन्माभूत्तत्तस्माद्दास्यमेवविधेहीति ॥ ३० ॥ मयाउपेताअनुज्ञाताः प्रत्यक्षंदेवान्प्रदर्श्याह देवाअपीति ॥३१॥

तद्यातदेवयजनंपतयोवोद्विजातयः॥स्वसत्रंपारयिष्यंतियुष्माभिर्गृहमेधिनः॥२८॥ पत्न्यऊचुः मैवंविभो
र्हतिभवान्गदितुंनृशंसंसत्यंकुरुष्वनिगमंतवपादमूलं॥ प्राप्तावयंतुलसिदामपदावसृष्टंकेशैर्निवोढुमतिलं
घ्यसमस्तबंधून् ॥ २९ ॥ गृण्हंतिनोनपतयःपितरौसुतावानभ्रातृबंधुसुहृदःकुतएवचान्ये ॥ तस्माद्भवत्प्रप
दयोःपतितात्मनांनोनान्याभवेद्गतिररिंदमतद्विधेहि ॥ ३० ॥ श्रीभगवानुवाच पतयोनाभ्यसूयेरन्पि
तृभ्रातृसुतादयः ॥ लोकाश्चवोमयोपेतादेवाअप्यनुमन्वते ॥ ३१ ॥ नप्रीतयेऽनुरागायह्यंगसंगोनृणामि
ह ॥ तन्मनोमयियुंजानाअचिरान्मामवाप्स्यथ ॥ ३२ ॥ श्रीशुकउवाच इत्युक्तामुनिपत्न्यस्तायज्ञवा
टंपुनर्गताः ॥ तेचानसूयवःस्वाभिःस्त्रीभिःसत्रमपारयन् ॥ ३३ ॥ तत्रैकाविधृताभर्त्राभगवंतंयथाश्रुतम्॥
हृदोपगुह्यविजहौदेहंकर्मानुबंधनं ॥ ३४ ॥ भगवानपिगोविंदस्तेनैवान्नेनगोपकान् ॥ चतुर्विधेनाशयित्वा
स्वयंचबुभुजेप्रभुः ॥ ३५ ॥ एवंलीलानरवपुर्नृलोकमनुशीलयन्॥ रेमेगोगोपगोपीनांरमयन्रूपवाक्कृतैः॥
॥ ३६ ॥ अथानुस्मृत्यविप्रास्तेअन्वतप्यन्कृतागसः ॥ यद्विश्वेश्वरयोर्याच्ञामहन्मनृविडंबयोः ॥ ३७ ॥

तथाऽपित्वांत्यक्तुंनशक्नुमइतिचेत्तत्राह नेति प्रीतयेसुखाय अनुरागायस्नेहवृद्धये अंगसंगःअंगाभ्यांसंगः ॥ ३२ ॥ अनसूयवःअदोषदृ
ष्टयः ॥ ३३ ॥ देहमिति तदीयंदेहंतत्रविहायचैतन्येनभगवंतंप्राप्तेत्यर्थः ॥ ३४ ॥ ३५ ॥ अनुशीलयन्अनुकुर्वन् गोगोपगोपीनामिति
कर्मणिषष्ठी रूपवाक्कृतैः रूपेणवाचाकृतैश्चरित्रैश्चरमयन् तान्रमयितुंरेमइत्यर्थः ॥ ३६ ॥ अनुस्मृतिप्रकारमाह नरानुकरणवतोर्विश्वेश्व
रयोर्याच्ञांयत्अहन्महतवंतस्तत्कृतागसोवयमित्यनुस्मृत्येत्यर्थः ॥ ३७ ॥ ॥ ॥ ॥ ॥

तदा च भार्यां गुरूनिव मानयंतो भगवद्भक्तिरहितमात्मानं व्यर्निंदन्नित्याहुः दृष्ट्वेति अलौकिकीं लोकातीतां ॥ ३८ ॥ त्रिवृत् शौक्रं सावित्रं दैक्ष्य मिति त्रिगुणितं जन्म व्रतं ब्रह्मचर्यं क्रियाः कर्माणि दाक्ष्यं च क्रियादाक्ष्यमित्येकं वा पदं धिगित्यधिक्षेपे ये वयं त्वधोक्षजे विमुखास्तेषां जन्मादि

दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् ॥ आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥ ३८ ॥ धिग्जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञतां ॥ धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥ ३९ ॥ नूनं भगवतो माया योगिनामपि मोहिनी ॥ यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥ ४० ॥ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ ॥ दुरंतभावं यो विध्यन्मृत्युपाशान्गृहाभिधान् ॥ ४१ ॥ नासां द्विजातिसंस्कारो न निवासो गुरावपि ॥ न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥ ४२ ॥ अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे ॥ भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥ ४३ ॥ ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया ॥ अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥ ४४ ॥ अन्यथा पूर्णकामस्य कैवल्याद्याशिषां पतेः ॥ ईशितव्यैः किमस्माभिरीशस्यैतद्विडंबनं ॥ ४५ ॥ हित्वाऽन्यान्भजते यं श्रीः पादस्पर्शाशयाऽसकृत् ॥ आत्मदोषापवर्गेण तद्याच्ञा जनमोहिनी ॥ ४६ ॥ देशः कालः पृथग्द्रव्यं मंत्रतंत्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ ४७ ॥ स एष भगवान्साक्षाद्विष्णुर्योगेश्वरेश्वरः ॥ जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे ॥ ४८ ॥ अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः ॥ भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ ॥ ४९ ॥ नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे ॥ यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥ ५० ॥ स वै न आद्यः पुरुषः स्वमायामोहितात्मनां ॥ अविज्ञातानुभावानां क्षंतुमर्हत्यतिक्रमं ॥ ५१ ॥ ॥ ॥ ॥ ॥

तत्सर्वं धिगिति व्यगर्हयन्नित्यर्थः ॥ ३९ ॥ ४० ॥ यो विध्यत् आच्छिनत्तं दुरंतं भावं भक्तिं पश्यतेति ॥ ४१ ॥ द्विजातिसंस्कारः उपनयनं क्रियाः संध्योपासनादयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ आत्मदोषापवर्गेण चांचल्यगर्वादित्यागेन ॥ ४६ ॥ ४७ ॥ इति अशृण्म एवं सर्वं श्रुतवंतो वयं हि तथाऽपीति ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तस्मात्स्वभावतोनिष्पन्नस्यकर्मणएवसर्वकारणत्वात्कर्मैवपूज्यमित्याह देहानितिसार्धेन ॥ १७ ॥ संपूजयेत्संमानयेत् ननुदेवतोद्देशे नद्रव्यत्यागात्मकत्वात्कर्मणः कथंदेवतांविनासिद्धिरित्याशंक्यकर्मांगमात्रंदेवतेतिपक्षमुपसंहरन्निवहेतुवादमाश्रित्यान्यामेवशैलगवादि रूपांदेवतांसमर्थयते अंजसेति ॥ १८ ॥ हेतुबलेनैवविपक्षेदोषमाह आजीव्येति उपजीवतिसेवते ॥ १९ ॥ स्ववृत्तिंवक्तुंदृष्टांतत्वेनवर्णा नांवृत्तिभेदमाह वर्त्तेतेति ब्रह्मणावेदाध्ययनादिना ॥ २० ॥ वैश्यवृत्तेश्चातुर्विध्यमाह कृषीति कृषिवाणिज्यसहितागोरक्षाएवंत्रयम् कुसीदंवृद्धिजीवनंचतुर्थं ॥ २१ ॥ ननुगवामपिवृत्तिर्महेंद्राधीनैवेत्याशंक्यनिरीश्वरसांख्यमताश्रयेणनिराकरोति सत्त्वमिति श्लोकद्वयेन

देहानुच्चावचान्जंतुःप्राप्योत्सृजतिकर्मणा ॥ शत्रुर्मित्रमुदासीनःकर्मैवगुरुरीश्वरः ॥ १७ ॥ तस्मात्संपूजयेत्कर्मस्वभावस्थःस्वकर्मकृत् ॥ अंजसायेनवर्त्तेततदेवास्यहिदैवतं ॥ १८ ॥ आजीव्यैकतरंभावंयस्त्वन्यमुपजीवति ॥ नतस्माद्विंदतेक्षेमंजारंनार्यसतीयथा ॥ १९ ॥ वर्तेतब्रह्मणाविप्रोराजन्योरक्षयाभुवः॥ वैश्यस्तुवार्तयाजीवेच्छूद्रस्तुद्विजसेवया ॥ २० ॥ कृषिवाणिज्यगोरक्षाकुसीदंतुर्यमुच्यते ॥ वार्ताचतुर्विधातत्रवयंगोवृत्तयोऽनिशं ॥ २१ ॥ सत्त्वंरजस्तमइतिस्थित्युत्पत्त्यंतहेतवः ॥ रजसोत्पद्यतेविश्वमन्योऽन्यंविविधंजगत् ॥ २२ ॥ रजसाचोदितामेघावर्षंत्यंबूनिसर्वतः ॥ प्रजास्तैरेवसिद्ध्यंतिमहेंद्रःकिंकरिष्यति ॥ २३ ॥ ननःपुरोजनपदानग्रामानगृहावयं ॥ नित्यंवनौकसस्तातवनशैलनिवासिनः ॥ २४ ॥ तस्माद्गवांब्राह्मणानामद्रेश्चारभ्यतांमखः ॥ यइंद्रयागसंभारास्तैरयंसाध्यतांमखः ॥ २५ ॥ पच्यंतांविविधाःपाकाःसूपांताः पायसादयः ॥ संयावापूपशष्कुल्यःसर्वदोहश्चगृह्यतां ॥ २६ ॥ ॥

अन्योऽन्यंस्त्रीपुरुषयोगेन ॥ २२॥ सर्वतइतिसमुद्रशिलोषरादिष्वपिवृष्टिदर्शनान्नप्रेक्षावत्पूर्वकत्वंवृष्टेरितिभावः तैरेवमेघैरेव सिध्यंतिजीवंति ॥२३॥ तथाऽपियोगक्षेमार्थंदेवतापेक्षेतिचेदतआह ननःपुरइतिपुरःपत्तनानि जनपदादेशाः अस्माकंयोगक्षेमहेतुर्वनशैलादयएवेतिभावः ॥२४॥ ब्राह्मणानपिसंगृह्णन्निगमयति तस्मादिति स्वयमुत्प्रेक्षितयागप्रयोगकल्पनामाह यइंद्रयागसंभाराइतिसार्धपंचभिःसंभाराःसाधनानि ॥२५॥ सूपंमौद्गम् पायसंकेवलेपयसिपक्वम् संयावादयोगोधूमादिविक्रियाःक्रमश्चसूपपायसयोःश्रुत्यादोहस्यार्थतोऽन्येषांपाठतः॥२६॥

यागशोभार्थंश्रद्धोत्पादनार्थंचाह हूयंतामिति धेनुदक्षिणाःधेनुसहिताःदक्षिणाः ताएववादक्षिणाः वःयुष्माभिः ॥ २७ ॥ यव संतृणम् ॥ २८ ॥ २९ ॥ सर्वान्शिरःकंपेनानुमोदयन्नाह गोब्राह्मणाद्रीणामिति मह्यंमम ॥ ३० ॥ ३१ ॥ तद्रव्येणतेनमहेंद्रमखद्रव्येण गिरिंद्विजान्प्रतियथायथंबलीनुपत्दृत्यदत्वा आदृताःसादराः ॥ ३२ ॥ ३३ ॥ अनडुद्युक्तानिउत्तमानडुद्भिर्युक्तानिसाद्विजाशिषःद्विजा



हूयंतामग्नयःसम्यक्ब्राह्मणैर्ब्रह्मवादिभिः ॥ अन्नंबहुविधंतेभ्योदेयंवोधेनुदक्षिणाः॥ २७ ॥ अन्येभ्यश्चाश्व चांडालपतितेभ्योयथाऽर्हतः ॥ यवसंचगवांदत्वागिरयेदीयतांबलिः ॥२८॥ स्वलंकृताभुक्तवंतःस्वनुलिप्ताः सुवाससः ॥ प्रदक्षिणंचकुरुतगोविप्रानलपर्वतान् ॥ २९ ॥ एतन्ममंमतंतातक्रियतांयदिरोचते ॥ अयंगो ब्राह्मणाद्रीणांमह्यंचदयितोमखः ॥ ३० ॥ श्रीशुकउवाच कालात्मनाभगवताशक्रदर्प्पंजिघांसता ॥ प्रोक्तंनिशम्यनंदाद्याःसाध्वगृण्हंततद्वचः॥३१॥ तथाचव्यदधुःसर्वंयथाहमधुसूदनः ॥ वाचयित्वास्वस्त्यय नंतद्व्व्येणगिरिद्विजान् ॥३२॥ उपत्दृत्यबलीन्सर्वानादृतायवसंगवां॥ गोधनानिपुरस्कृत्यागिरिंचक्रुःप्रद क्षिणम् ॥३३॥ अनांस्यनडुद्युक्तानितेचारुह्यस्वलंकृताः ॥ गोप्यश्चकृष्णवीर्याणिगायंत्यःसद्विजाशिषः ॥३४॥कृष्णस्त्वन्यतमंरूपंगोपविश्रंभणंगतः ॥ शैलोऽस्मीतिब्रुवन्भूरिबलिमादद्बृहद्वपुः ॥३५॥ तस्मैनमो व्रजजनैःसचक्रेआत्मनात्मने ॥ अहोपश्यतशैलोऽसौरूपीनोऽनुग्रहंव्यधात् ॥३६॥ एषोवजानतोमर्त्यान् कामरूपीवनौकसः ॥ हंतिह्यस्मैनमस्यामःशर्मणेअत्मनोगवां ॥ ३७ ॥ इत्यद्रिगोद्विजमखंवासुदेवप्रणो दिताः ॥ यथाविधायतेगोपाःसहकृष्णाव्रजंययुः ॥ ३८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धे चतुर्विंशतितमोध्यायः ॥ २४ ॥ ॥ ॥ ॥



शीर्भिःसहिताः ॥ ३४ ॥ गोपविश्रंभणंगोपानांविश्वासजनकंरूपंगतःप्राप्तःसन्बलिमुपहारमादत्अभक्षयत् ॥ ३५ ॥ तस्मैआत्मनेआत्मना स्वयंव्रजजनैःसहनमश्चक्रे अहोइतिसार्धश्लोकंपठन्॥ ३६ ॥कामरूपीसर्पादिरूपःअस्मैअद्रये शर्मणेक्षेमाय॥ ३७ ॥कर्मैवालंप्राक्स्वभावोगु णोवाकर्मांगंवातद्दशोवामहेशः वार्ताकर्त्रीदेवतेतीयमुक्तादेवक्षोभेषण्मतीनत्वभीष्टा ॥ ३८ ॥ इति०द० पू० टी० चतुर्विंशोध्यायः ॥२४॥

पंचविंशेरुषाशक्रेव्रजनाशायवर्षति ॥ उद्धृत्यगिरिमासारादरक्षद्गोकुलंप्रभुः ॥ १ ॥ कृष्णोनाथोयेषांतेभ्यः ॥ १ ॥ क्रुद्धःसन्निंद्रःसांवर्त्तकं नामसंवर्त्तःप्रलयस्तत्कर्त्तारंमेघानांप्रसिद्धंगणंप्राचोदयत्प्रेषयामास ननुकृष्णनाथानांघातेकथंप्रवृत्तइत्याशंक्यात्मसंभावनयानिरस्तविवे कत्वादित्याशयेनाह वाक्यंचाहेत्यादिपंचाभिः ईशमानीअहमेवेश्वरइतिगर्ववान् ॥ २ ॥ देवहेलनंदेवस्यममावज्ञाम् ॥ ३ ॥ अदृढैरसमर्थैःक र्ममयैःक्रियानिर्वर्त्यैरतएवनामनौनिभैः नाममात्रेणयानौरिति॒व्यवह्रियतेतत्सदृशैः आन्वीक्षिकीमात्मानुस्मृतिरूपां ॥ ४ ॥ तथावाचालंबहु भाषिणंबालिशंशिशुंपंडितमानिनंपंडितंमन्यमतःस्तब्धमविनीतामितिनिंदायांयोजिताऽपींद्रस्यभारतीकृष्णंस्तौति तथाहि वाचालंशास्त्र

श्रीशुकउवाच इंद्रस्तदात्मनःपूजांविज्ञायविहतांन्नृप ॥ गोपेभ्यःकृष्णनाथेभ्योनंदादिभ्यश्चुकोपसः ॥१ गणंसांवर्त्तकंनाममेघानांचांतकारिणां ॥ इंद्रःप्राचोदयत्क्रुद्धोवाक्यंचाहेशमान्युत ॥२॥ अहोश्रीम दमा हात्म्यंगोपानांकाननौकसां ॥ कृष्णंमर्त्यमुपाश्रित्ययेचक्रुर्देवहेलनं ॥ ३ ॥ यथादृढैःकर्ममयैःक्रतुभिर्ना मनौनिभैः ॥ विद्यामान्वीक्षिकींहित्वातितीर्षंतिभवार्णवं ॥ ४ ॥ वाचालंबालिशंस्तब्धमज्ञंपंडित मानि नं ॥ कृष्णंमर्त्त्यमुपाश्रित्यगोपामेचक्रुरप्रियं ॥ ५ ॥ एषांश्रियाऽवलिप्तानांकृष्णेनाध्मायितात्मनां ॥ धु नुतश्रीमदस्तंभंपशून्नयतसंक्षय ॥ ६ ॥ अहंचैरावतंनागमारुह्यानुव्रजेव्रजं ॥ मरुद्गणैर्महावीर्यैर्नंदगो ष्ठजिघांसया ॥७॥ ऋषिरुवाच इत्थंमघवताज्ञप्तामेघानिर्मुक्तबंधनाः ॥ नंदगोकुलमासारःपीडयामा सुरोजसा ॥ ८ ॥ विद्योतमानाविद्युद्भिस्तनंतःस्तनयित्नुभिः ॥ तीव्रैर्मरुद्गणैर्नुन्नाववृषुर्जलशर्कराः ॥ ९ ॥

योनिम् बालिशमेवमपिशिशुवन्निरभिमानिनं स्तब्धमन्यस्यवंद्यस्याभावदनम्रम् अज्ञंनास्तिज्ञोयस्मात्तंसर्वज्ञमित्यर्थः पंडितमानिनंपंडितै र्विद्वद्भिर्बहुमाननीयं कृष्णंसदानंदरूपंपरंब्रह्म मर्त्यंतथाऽपिभक्तवात्सल्येनमनुष्यतयाप्रतीयमानमिति ॥ ५ ॥ अवलिप्तानांमत्तानांआध्मा यितात्मनांबृंहितदेहानां धुनुतअपनयत श्रीमदेनयःस्तंभोगर्वस्तं ॥ ६ ॥ बिभ्यतस्तान्प्रत्याह अहंचेति अनुव्रजेअनुअनंतरमेवागमिष्यामि मरुद्गणैर्देवगणैःसह ॥ ७ ॥ मघवताइंद्रेणनिर्मुक्तंबंधनंयेषांते प्रलयाभिप्रायेणबद्धाआसन् तदानिर्मुक्तबंधनाःसंतआसारैर्धारासंपातैःपीडया मासुः ॥ ८ ॥ स्तनयित्नुभिरशनिभिः स्तनंतोगर्जंतः मरुद्गणैःआवहप्रवहादिवायुसमूहैर्नुन्नाःप्रेरिताः जलशर्कराजलोपलान् ॥ ९ ॥

स्थूणावत्स्थूलाः अभ्रेषुमुंचत्सुसत्सु नतोन्नतंनतंनिम्नमुन्नतंतद्विपरीतंयथाभवतितथाभूर्नादृश्यत ॥ १० ॥ जातवेपनाःजातकंपाः ॥ ११ ॥ तत्रपशूनांयानंविशिनष्टि शिरइति ॥ १२ ॥ गोपगोपीनांप्रार्थनामाह कृष्णकृष्णेति त्वमेवनाथोयस्यतद्गोकुलंगवांकुलंवंशमस्मांश्चदेवादिंद्रात्त्रातुंरक्षितुमर्हसि ॥ १३ ॥ विज्ञापनात्पूर्वमेवकुपितेनेंद्रेणकृतंतद्वर्षंमेने ॥ १४ ॥ कथंमेनेतदाह अपर्त्विति अपगतऋतुर्यस्यतद्वर्षमतिशयितोवातोयास्मिंस्तदतिवातं शिलामयंशिलाप्रचुरं ॥ १५ ॥ तत्रप्रतिज्ञापूर्वंगोवर्द्धनोद्धरणमाह तत्रेति तत्रप्रतिवि

स्थूणास्थूलावर्षधारामुंचत्स्वभ्रेष्वभीक्ष्णशः ॥ जलौघैःप्लाव्यमानाभूर्नादृश्यतनतोन्नतं ॥ १० ॥ अत्यासारातिवातेनपशवोजातवेपनाः ॥ गोपागोप्यश्चशीतार्त्तागोविंदंशरणंययुः ॥ ११ ॥ शिरःसुतांश्चकायेनप्रच्छाद्यासारपीडिताः ॥ वेपमानाभगवतःपादमूलमुपाययुः ॥ १२ ॥ कृष्णकृष्णमहाभागत्वन्नाथंगोकुलंप्रभो ॥ त्रातुमर्हसिदेवान्नःकुपिताद्भक्तवत्सल ॥ १३ ॥ शिलावर्षनिपातेनहन्यमानमचेतनं ॥ निरीक्ष्यभगवान्मेनेकुपितेंद्रकृतंहरिः ॥ १४ ॥ अपर्त्त्वत्युल्बणंवर्षमतिवातंशिलामयं ॥ स्वयागेनिहतेऽस्माभिरिंद्रोनाशायवर्षति ॥ १५ ॥ तत्रप्रतिविधिंसम्यगात्मयोगेनसाधये ॥ लोकेशमानिनांमौढ्याद्धरिष्येश्रीमदंतमः ॥ १६ ॥ नहितद्भावयुक्तानांसुराणामीशविस्मयः ॥ मत्तोऽसतांमानभंगःप्रशमायोपकल्पते ॥ १७ ॥ तस्मान्मच्छरणंगोष्ठंमन्नाथंमत्परिग्रहं ॥ गोपायेस्वात्मयोगेनसोऽयंमेव्रतआहितः ॥ १८ ॥ इत्युक्त्वैकेनहस्तेनकृत्वागोवर्द्धनाचलं ॥ दधारलीलयाकृष्णश्छत्राकमिवबालकः ॥ १९ ॥ अथाहभगवान्गोपान्हेंऽबतातव्रजौकसः ॥ यथोपजोषंविशतागिरिगर्त्तंसगोधनाः ॥ २० ॥ ॥ ॥ ॥

धिंप्रतीकारंस्वसामर्थ्येनसाधयिष्यामि तेनचमौढ्याल्लोकेशमानिनांश्रीमदलक्षणंतमोहरिष्यामि बहुवचनंतुवरुणादीनभिप्रैति ॥ १६ ॥ ननुदेवाःसात्विकास्त्वद्भक्ताश्चकुतस्तेषांतमस्तत्राह नहीति सद्भावःसत्त्वंमद्भक्तिर्वातद्युक्तानांसुराणामीशावयमितिविस्मयोगर्वोयस्मान्नघटतेअतोऽसंतस्ते किंच तेषांमानभंगोऽनुग्रहएवेत्याह मत्तइति ॥ १७ ॥ गोपायेरक्षिष्यामि किंच सोऽयंमेमयाव्रतोनियमःसंकल्पोवाआहितःधृतइत्यर्थः ॥ १८ ॥ कृत्वाउत्कृत्य छत्राकंशिलींध्रं ॥ १९ ॥ यथोपजोषंयथासुखं ॥ २० ॥ ॥ ॥

॥ २१ ॥ सव्रजाःशकटमंडलसहिताः सोपजीविनःभृत्यपुरोहितादिसहिताः ॥ २२ ॥ पदात्स्थानात् ॥ २३ ॥ २४॥ २५ ॥ व्युदप्रायाःविग
तोदकप्रायाःस्वल्पजलाइत्यर्थः ॥ २६ ॥ शकटोढोपकरणंशकटैरूढमुपकरणंयथाभवातितथा ॥ २७ ॥ २८ ॥ निभृताःपूर्णाःयथोचि

नत्रासइहवःकार्योमद्धस्ताद्रिनिपातने ॥ वातवर्षभयेनालंतत्त्राणंविहितंहिनः ॥ २१ ॥ तथानिर्विविशुर्ग
र्तंकृष्णाश्वासितमानसाः ॥ यथाऽवकाशंसधनाःसव्रजाःसोपजीविनः ॥ २२ ॥ क्षुत्तृड्व्यथांसुखापेक्षांहि
त्वातैर्व्रजवासिभिः ॥ वीक्ष्यमाणोदधावद्रिंसप्ताहंनाचलत्पदात् ॥ २३ ॥ कृष्णयोगानुभावंतंनिशम्येंद्रो
ऽतिविस्मितः ॥ निस्तंभोभ्रष्टसंकल्पःस्वान्मेघान्संन्यवारयत् ॥ २४ ॥ खंव्यभ्रमुदितादित्यंवातवर्षंच
दारुणम् ॥ निशाम्योपरतंगोपान्गोवर्द्धनधरोब्रवीत् ॥२५॥ निर्यातत्यजतत्रासंगोपाःसस्त्रीधनार्भकाः॥
उपारतंवातवर्षंव्युदप्रायाश्चनिम्नगाः ॥ २६ ॥ ततस्तेनिर्ययुर्गोपाःस्वंस्वमादायगोधनं ॥ शकटोढोपक
रणंस्त्रीबालस्थविराःशनैः ॥ २७ ॥ भगवानपितंशैलंस्वस्थानेपूर्ववत्प्रभुः ॥ पश्यतांसर्वभूतानांस्थापया
मासलीलया ॥ २८ ॥ तंप्रेमवेगान्निभृताव्रजौकसोयथासमीयुःपरिरंभणादिभिः ॥ गोप्यश्चसस्नेहमपू
जयन्मुदादध्यक्षताद्भिर्युयुजुःसदाशिषः ॥ २९ ॥ यशोदारोहिणीनंदोरामश्चबलिनांवरः ॥ कृष्णमालिं
ग्ययुयुजुराशिषःस्नेहकातराः ॥ ३० ॥ दिविदेवगणाःसाध्याःसिद्धगंधर्वचारणाः ॥ तुष्टुवुर्मुमुचुस्तुष्टाःपु
ष्पवर्षाणिपार्थिव ॥ ३१ ॥ शंखदुंदुभयोनेदुर्दिविदेवप्रणोदिताः ॥ जगुर्गंधर्वपतयस्तुंबुरुप्रमुखान्नृप ॥
॥ ३२ ॥ ततोऽनुरक्तैःपशुपैःपरिश्रितोराजन्सगोष्ठंसबलोऽव्रजद्धरिः ॥ तथाविधान्यस्यकृतानिगोपिका
गायंत्यईयुर्मुदिताहृदिस्पृशः ॥ ३३ ॥ इतिश्रीभागवतेम०द०पू०पंचविंशोऽध्यायः ॥ २५ ॥

तंपरिरंभणादिभिःसमीयुःउपजग्मुः सदाशिषःश्रेष्ठानाशीर्वादान् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ततोगोवर्द्धनस्थानात् अस्यश्रीकृष्ण
स्यतथाविधानिगोवर्द्धनोद्धरणादिरूपाणिकृतानिगायंत्यईयुर्ययुः कथंभूताः एवंप्रेम्णात्हृदिस्पृशंतीतित्हृदिस्पृशस्ताः यद्वाकथंभूतस्य प्रे
ष्ठत्वेनतासांत्हृदिस्पृशतीतित्हृदिस्पृक्तस्य ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणे०द०पू०टीकायांपंचविंशोऽध्यायः ॥ २५ ॥ ॥

षड्विंशेविस्मितान्गोपान्कृष्णस्याद्भुतकर्मभिः ॥ नंदोगर्गोक्तिमाश्राव्यतदैश्वर्यमवर्णयत् ॥ १ ॥ समभ्येत्यनंदमभिगम्य ॥ १ ॥ यदूचुस्तदा
ह बालकस्येति ॥ यद्यस्माद्द्भुतानिकर्माणितस्मात्ग्राम्येषुगोपालेषुकथंजन्मअर्हति आत्मजुगुप्सितमात्मानर्हम् ॥ २ ॥ अद्भुतानिकर्मा
ण्याहुः यःसप्तहायनइति कथंबिभ्रत्स्थितइति पुष्करंपद्मंगजराट्महागजइव ॥ ३ ॥ महौजसःमहाबलायाःतनोर्वयःआयुःयौवनंवाका
लेनयथापीयतेतद्वत् ॥ ४ ॥ कथमित्यनुवर्त्तते अनसःअधःशयानस्य मास्यस्यमासास्त्रयःपरिच्छेदकायस्य उदक्ऊर्ध्वंचरणौहिन्वतश्चा

श्रीशुकउवाच एवंविधानिकर्माणिगोपाःकृष्णस्यवीक्ष्यते ॥ अतद्वीर्यविदःप्रोचुःसमभ्येत्यसुविस्मिताः ॥
॥ १ ॥ बालकस्ययदेतानिकर्माण्यत्यद्भुतानिवै ॥ कथमर्हत्यसौजन्मग्राम्येष्वात्मजुगुप्सितम् ॥ २ ॥ यः
सप्तहायनोबालःकरेणैकेनलीलया ॥ कथंबिभ्रद्गिरिवरंपुष्करंगजराडिव ॥ ३ ॥ तोकेनामीलिताक्षेणपू
तनायामहौजसः ॥ पीतःस्तनःसहप्राणैःकालेनेववयस्तनोः ॥ ४ ॥ हिन्वतोऽधःशयानस्यमास्यस्यचर
णावुदक् ॥ अनोऽपतद्विपर्यस्तंरुदतःप्रपदाहतं ॥५॥ एकहायनआसीनोह्रियमाणोविहायसा ॥ दैत्येन
यस्तृणावर्त्तमहन्कंठग्रहातुरं ॥ ६ ॥ क्वचिद्धैयंगवस्तैन्येमात्राबद्धउलूखले ॥ गच्छन्नर्जुनयोर्मध्येबाहुभ्यां
तावपातयत् ॥ ७ ॥ वनेसंचारयन्वत्सान्सरामोबालकैर्वृतः ॥ हंतुकामंबकंदोर्भ्यांमुखतोऽरिमपाटयत् ॥
॥ ८ ॥ वत्सेषुवत्सरूपेणप्रविशंतंजिघांसया ॥ हत्वान्यपातयत्तेनकपित्थानिचलीलया ॥ ९ ॥ हत्वारा
सभंदैतेयंतद्बंधूंश्चबलान्वितः ॥ चक्रेतालवनंक्षेमंपरिपक्वफलान्वितम् ॥ १० ॥ प्रलंबंघातयित्वोग्रंबलेन
बलशालिना ॥ अमोचयद्व्रजपशून्गोपांश्चारण्यवह्नितः ॥ ११ ॥ आशीविषतमाहींद्रंदमित्वाविमदंह्र
दात् ॥ प्रसह्योद्वास्ययमुनांचक्रेऽसौनिर्विषोदकाम् ॥ १२ ॥ ॥ ॥ ॥

लयतःप्रपदेनपादाग्रेणहतंविपर्यस्तमनःकथमपतत् ॥ ५ ॥ यःकृष्णोदैत्येनह्रियमाणःसंस्तंतृणावर्त्तंदैत्यंकथमहन्नित्यर्थः ॥ ६ ॥ हैयंग
वस्तैन्येनवनीतचौर्ये बाहुभ्यांगच्छन्रिंगन्नित्यर्थः ॥ ७ ॥ मुखतोहंतुंकामोयस्यतंबकवेषमरिंबाहुभ्यांमुखतःकथमपाटयत् ॥ ८ ॥ ९ ॥
॥ १० ॥ ११ ॥ आशीविषतमःअतिक्रूरविषश्वासावहींद्रश्चतम् ॥ १२ ॥ ॥ ॥ ॥ ॥

औत्पत्तिकःस्वाभाविकः कथमितिकिंसर्वेषामात्माऽयंस्यादितिशंका ॥ १३ ॥ उक्तमपिअतिविस्मयेनवदंति क्वसप्तहायनइति ॥ १४ ॥
प्राक्श्रुतमेवगर्गाचार्यवाक्यंतच्चरितपरिशीलनेननिवृत्तासंभावनस्यनंदस्यकृष्णतत्त्वावबोधकंजातंसइदानींतेनैववाक्येनगोपानुपदिशति

दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषांनोव्रजौकसां ॥ नंदतेतनयेऽस्मासुतस्याप्यौत्पत्तिकोमिथः॥१३॥क्वसप्त
हायनोबालःक्वमहाद्रिविधारणं ॥ ततोनोजायतेशंकाव्रजनाथतवात्मजे ॥ १४ ॥ नंदउवाच श्रूयतां
मेवचोगोपाव्येतुशंकाचवोऽर्भके ॥ एनंकुमारमुद्दिश्यगर्गोमेयदुवाचह ॥१५॥ वर्णास्त्रयःकिलास्यासन्गृ
ह्णतोऽनुयुगंतनूः॥ शुक्लोरक्तस्तथापीतइदानींकृष्णतांगतः ॥१६॥ प्रागयंवसुदेवस्यक्वचिज्जातस्तवात्मजः
वासुदेवइतिश्रीमानभिज्ञाःसंप्रचक्षते॥१७॥बहूनिसंतिनामानिरूपाणिचसुतस्यते ॥ गुणकर्मानुरूपाणि
तान्यहंवेदनोजनाः॥१८॥एषवःश्रेयआधास्यत्गोपगोकुलनंदनः ॥ अनेनसर्वदुर्गाणियूयमंजस्तरिष्यथ
॥१९॥ पुराऽनेनव्रजपतेसाधवोदस्युपीडिताः ॥ अराजकेरक्ष्यमाणाजिग्युर्दस्यून्समेधिताः ॥ २०॥ यए
तस्मिन्महाभागाःप्रीतिंकुर्वंतिमानवाः ॥ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः॥२१॥ तस्मान्नंदात्म
जोयंतेनारायणसमोगुणैः ॥ श्रियाकीर्त्याऽनुभावेनतत्कर्मसुनविस्मयः॥२२॥ इत्यद्धामांसमादिश्यगर्गेच
स्वगृहंगते ॥ मन्येनारायणस्यांशंकृष्णमक्लिष्टकारिणं ॥२३॥ इतिनंदवचःश्रुत्वागर्गगीतंव्रजौकसः॥ दृष्ट
श्रुतानुभावास्तेकृष्णस्यामिततेजसः ॥ मुदितानंदमानर्चुःकृष्णंचगतविस्मयाः ॥ २४ ॥

श्रूयतामिति ॥ १५ ॥ १६ ॥१७॥१८॥१९॥२०॥२१॥ तस्मात्तस्यकर्मसुविस्मयोनास्तीतिनंदस्योक्तिः ॥ २२ ॥ इत्यद्धासाक्षात्मांप्रति
समादिश्यगर्गेचस्वगृहंगतेसतितदानींतथामन्यमानोऽपिइदानींकृष्णंनारायणस्यांशंमन्ये अत्रहेतुः अक्लिष्टकारिणमिति ॥ २३ ॥ २४ ॥

गोवर्द्धनोद्धरणंसपरिकरमनुस्मरन्प्रकटितैश्वर्यस्यश्रीकृष्णस्यप्रीतिंप्रार्थयते देवइति यज्ञविप्लवेनयारुट्तयादेवेइंद्रेवर्षतिसति वर्षाश्मप
रुषानिलैःअशनिजलशर्करातीव्रवायुभिःसीदत्पालपशुस्त्रिआत्मशरणंसीदंतःपालाःपशवःस्त्रियश्चयस्मिंस्तत्तथा आत्मास्वयमेवशरणंय
स्यतद्गोष्ठंदृष्ट्वाअनुकंपीउत्स्मयन्हसन्प्रौढिमाविष्कुर्वन्शैलमुत्पाठ्य अबलोबालोलीलार्थमुच्छिलींध्रंयथातथाएकेनकरेणबिभ्रत्दधत्
गोष्ठमपात्पालितवान् एवंमहेंद्रमदभित् गवामिंद्रइत्युत्तराध्यायार्थंचस्मराति सएवंभूतःश्रीकृष्णोनःप्रीयात्प्रीयतामिति षड्विंशेदशमेव्य
क्तःषड्विंशोदशमोहारिः ॥ व्यनक्तुपंचविंशंमांचतुर्विंशतितःपृथक् ॥ २५ ॥ इतिदशमस्कंधेपू॰टीकायांषड्विंशोध्यायः ॥ २६ ॥ सप्तविं
शेतदालक्ष्यकृष्णस्यप्रभवंपरम् ॥ वर्ण्यतेसुरभींद्राभ्यामभिषेकमहोत्सवः ॥ १ ॥ गोवर्धनेधृतेशैलइतिशक्रस्यभयेनागमनेहेतुः आसारा

देवेवर्षतियज्ञविप्लवरुषावर्षाश्मपर्षानिलैःसीदत्पालपशुस्त्रिआत्मशरणंदृष्ट्वाऽनुकंप्युत्स्मयन् ॥ उत्पा
ट्यैककरेणशैलमबलोलीलोच्छिलींध्रंयथाबिभ्रद्गोष्ठमपान्महेंद्रमदभित्प्रीयान्नइंद्रोगवाम् ॥२५॥ इतिश्री
भागवतेमहापुराणेदशमस्कंधेपूर्वार्धेषड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ श्रीशुकउवाच गोवर्द्धनेधृ
तेशैलेआसाराद्रक्षितेव्रजे ॥ गोलोकादाव्रजत्कृष्णंसुरभिःशक्रएवच ॥ १ ॥ विविक्तउपसंगम्यव्रीडितः
कृतहेलनः ॥ पस्पर्शपादयोरेनंकिरीटेनार्कवर्चसा ॥ २ ॥ दृष्टश्रुतानुभावोस्यकृष्णस्यामिततेजसः ॥
नष्टत्रिलोकेशमदइंद्रआहकृतांजलिः ॥ ३ ॥ इंद्रउवाच विशुद्धसत्वंतवधामशांतंतपोमयंध्वस्तरजस्त
मस्कं ॥ मायामयोऽयंगुणसंप्रवाहोनविद्यतेतेऽग्रहणानुबंधः ॥ ४ ॥ ॥

द्रक्षितेव्रजइतिसुरभेर्हर्षेणागमनं ॥ १ ॥ तत्रेंद्रआगत्यकिंकृतवांस्तदाह विविक्तउपसंगम्येत्यादिनाअथाहसुरभिस्त्वियतःप्राक्तनेनग्रंथेन
विविक्तेएकांते पादयोःपस्पर्शनमश्चकार ॥ २ अस्यश्रीकृष्णस्यश्रुतश्चासावनुभावश्चश्रुतानुभावःदृष्टःश्रुतानुभावोयेनसइंद्रः नष्टस्त्रिलो
केशोऽहमितिमदोयस्यसः ॥३॥ तत्रममापराधंक्षमस्वेतिवक्तुंतवतावदपराधोनास्त्येवत्वयाअनुग्रहएवकृतइत्याहचतुर्भिः विशुद्धसत्वमिति
धामस्वरूपंशांतमेकरूपमतश्चतपोमयंप्रचुरज्ञानंसर्वज्ञमित्यर्थः कुतः ध्वस्तरजस्तमस्कंध्वस्तेअविद्यमानेरजस्तमसीयस्मिन् अतएवाय
मस्मदादिषुदृश्यमानोमायाकार्यरूपोगुणसंप्रवाहःगुणैःसंप्रोह्यतइतितथासंसारइत्यर्थः सःतेतवनविद्यते यतः अग्रहणेनाज्ञानेनानुबध्य
तइतितथासः सर्वज्ञस्यतेनास्तीत्यर्थः अज्ञानसंबंधोवा ॥ ४ ॥ ॥ ॥ ॥ ॥

यदाअज्ञानतत्कृतदेहसंबंधैानस्तस्तदातत्कृतानांलोभादीनांकावार्त्तेत्याह कुतोनुइति तत्कृतादेहसंबंधकृताः तद्धेतवःपुनरन्यस्यदेहस्यहे
तवः ननुज्ञानिनामपितेदृश्यंतेअतआह अबुधलिंगभावाअज्ञानिनांगमकाः यावद्रागादिमत्त्वंतावज्ज्ञानित्वमेवनसिद्धमित्यर्थः लोभाद्य
भावेऽपिमन्मानभंगोदंडार्थमित्याह तथाऽपीति ॥ ५ ॥ ननुत्वद्दंडेचममगोपपुत्रस्यकाशक्तिःकिंवाकारणंकोवादंडोमयाकृतइत्यतआह
पितेति त्वंपिताजगतांजनकः गुरुरुपदेष्टा अधीशोनियंताइतिदंडधारणेहेतुत्रयं कालत्वात्समर्थःतस्मादुपात्तदंडोहितायकल्याणायस्वे
च्छातनुभिर्लीलावतारैःसमीहसे तवसमीहालीलैवजगदीशमानिनामस्माकंमानविधूननमित्यर्थः ॥ ६ ॥ कथमेतदित्यतआह यइतिम
द्विधाश्चतेअज्ञाश्चतेअतोजगदीशमानिनःकालेभयकालेपियथाऽधुनैवातिवृष्टौत्वामभयंभयमगणयंतंवीक्ष्यआशुतन्मदंजगदीशाइतिमदंहि

कुतोनुतद्धेतवईशतत्कृतालोभादयोयेबुधलिंगभावाः॥ तथाऽपिदंडंभगवान्बिभर्त्तिधर्मस्यगुप्त्यैखलनिग्र
हाय ॥ ५ ॥ पितागुरुस्त्वंजगतामधीशोदुरत्ययःकालउपात्तदंडः ॥ हितायस्वेच्छातनुभिःसमीहसेमानं
विधुन्वन्जगदीशमानिनां ॥ ६ ॥ येमद्विधाज्ञाजगदीशमानिनस्त्वांवीक्ष्यकालेऽभयमाशुतन्मदं ॥ हित्वा
र्यमार्गंप्रभजंत्यपस्मयाईहाखलानामपितेऽनुशासनं ॥ ७ ॥ सत्वंममैश्वर्यमदप्लुतस्यकृतागसस्तेऽविदुषः
प्रभावं ॥ क्षंतुंप्रभोऽथार्हसिमूढचेतसोमैवंपुनर्भून्मतिरीशमेऽसती ॥ ८ ॥ तवावतारोऽयमधोक्षजेहस्व
यंभराणामुरुभारजन्मनाम् ॥ चमूपतीनामभवायदेवभवाययुष्मच्चरणानुवर्तिनां ॥ ९ ॥ नमस्तुभ्यंभ
गवतेपुरुषायमहात्मने ॥ वासुदेवायकृष्णायसात्वतांपतयेनमः ॥ १० ॥ ॥ ॥

त्वाविगतगर्वाःसंतआर्यमार्गंत्वद्भक्तिलक्षणंभजंति अतस्तवईहैवखलानामनुशासनंदंडइत्यर्थः ॥७॥ एवंभगवत्स्वरूपमभिप्रायंचानुवर्ण्य
क्षमापयति सत्वमिति एवंभूताअसतीमतिर्मेपुनर्माभूदितिप्रार्थनांतरम् ॥ ८ ॥ महानयमपराधःकथंक्षंतव्यइतिचेदतआह तवेति स्वयंभ
राणांपुनश्चउरुभारजन्मनांबहूनांभाराणांजन्मयेभ्यस्तेषामभवायनाशाययुष्मच्चरणसेविनांतुभवाय अतोममत्वत्सेवकत्वादत्यंतापराधिनो
ऽपिक्षंतव्यमितिभावः ॥ ९ ॥ क्षमापयन्नमस्करोति नमइति तुभ्यंभगवतेकृष्णायनमः पुरुषायसर्वांतर्यामिणे महात्मनेअंतस्थत्वेऽप्यपरि
च्छिन्नाय कुतः वासुदेवायसर्वनिवासाय सात्वतांयादवानांपतये ॥ १० ॥ ॥ ॥ ॥ ॥

तर्हिकिमहंयादवः न स्वच्छंदोपात्तदेहायस्वेषांभक्तानांछंदेनइच्छयास्वीकृतदेहाय तत्रापिविशुद्धंज्ञानमेवमूर्त्तिर्यस्यतस्मै माययासर्वस्मै सर्वरूपाय कुतः सर्वस्यबीजायकारणाय अतएवसर्वभूतात्मनेनमइति ॥ ११ ॥ कृतागसइत्यनेनोक्तमपराधंनिवेदयाति मयेदमिति आसारवायुभिर्गोष्ठनाशायमयेदमकृत्यंचेष्टितंकृतम् ॥ १२ ॥ तथाऽपिभोईशत्वयाऽनुगृहीतोऽस्मि अनुग्रहंदर्शयाति ध्वस्तस्तंभइतिवृथोद्यम इतिच ॥१३॥१४॥ इंद्रेणस्वाभिप्रायेनिवेदितेभगवानपितथैवाह मयेति इंद्रश्रियादेवराज्येन॥१५॥१६॥ वःयुष्माभिः बहुवचनंवरुणाद्य

स्वच्छंदोपात्तदेहायविशुद्धज्ञानमूर्त्तये ॥ सर्वस्मैसर्वबीजायसर्वभूतात्मनेनमः ॥ ११ ॥ मयेदंभगवन्गोष्ठनाशायासारवायुभिः ॥ चेष्टितंविहतेयज्ञेमानिनातीव्रमन्युना ॥ १२ ॥ त्वयेशानुगृहीतोऽस्मिध्वस्तस्तंभोहतोद्यमः ॥ ईश्वरंगुरुमात्मानंत्वामहंशरणंगतः ॥१३॥ श्रीशुकउवाच एवंसंकीर्तितःकृष्णोमघोना भगवानमुम् ॥ मेघगंभीरयावाचाप्रहसन्निदमब्रवीत् ॥१४॥ श्रीभगवानुवाच मयातेऽकारिमघवन्मखभंगोनुऽगृण्हता ॥ मदनुस्मृतयेनित्यंमत्तस्येंद्रश्रियाभृशम् ॥१५॥ मामैश्वर्यश्रीमदांधोदंडपाणिंनपश्यति ॥ तंभ्रंशयामिसंपद्भ्योयस्यचेच्छाम्यनुग्रहम् ॥ १६ ॥ गम्यतांशक्रभद्रंवःक्रियतांमेऽनुशासनम् ॥ स्थीयतांस्वाधिकारेषुयुक्तैर्वःस्तंभवर्जितैः॥१७॥ अथाहसुरभिःकृष्णमभिवाद्यमनस्विनी ॥ स्वसंतानैरुपामंत्र्यगोपरूपिणमीश्वरं ॥१८॥ सुरभिरुवाच कृष्णकृष्णमहायोगिन्विश्वात्मन्विश्वसंभव ॥ भवतालोकनाथेनसनाथावयमच्युत ॥१९॥ त्वंनःपरमकंदैवंत्वंनइंद्रोजगत्पते ॥ भवायभवगोविप्रदेवानांयेचसाधवः ॥२०॥ इंद्रंनस्त्वाभिषेक्ष्यामोब्रह्मणानोदितावयं ॥ अवतीर्णोऽसिविश्वात्मन्भूमेर्भारापनुत्तये ॥२१॥

भिप्रायेण क्वगंतव्यंस्वर्गेपितवैवेश्वरत्वादितिचेत्तत्राह क्रियतामिति मदनुशासनेनयथापूर्वंतत्रस्थीयतामित्यर्थः युक्तैरप्रमत्तैःस्तंभवर्जितैर्निरहंकारैः॥१७॥ स्वसंतानैर्गोभिःसहउपामंत्र्यकृष्णकृष्णेत्यादिसंबोध्य॥१८॥ इंद्रेणहताअपिभवतासनाथावयंकृताःरक्षिताइत्यर्थः॥१९॥ त्वंनःपरमंदैवंदैवतंदेवताअतःहेजगत्पतेगोविप्रदेवानांयेऽन्येचसाधवस्तेषांभवायाभ्युदयायअद्यत्वमेवइंद्रोभव॥ २० ॥ ननुभवतामिंद्रोऽस्तीतिचेदतआह इंद्रमिति अलंपुरंदरस्यैंद्रतयाइत्यर्थः ननुदेवएवइंद्रोभवतिकथमहंभवेयमितिचेदतआह अवतीर्णोऽसीति ॥ २१ ॥

सुरभिरात्मनःपयसाऽभ्यषिंचत्इंद्रश्चाकाशगंगायाजलैरभ्यषिंचत् ॥ २२ ॥ देवमातृभिरदित्यादिभिर्देवैर्मातृभिश्चेतिवा गाःपशूनूगांस्वर्गं वाइंद्रत्वेनविंदतीतिकृत्वागोविंदइत्यभ्यधात् नामकृतवानित्यर्थः ॥ २३ ॥ २४ ॥ देवनिकायेषुकेतवइवदर्शनीयाः मुख्याइत्यर्थःगावः गांपृथ्वींपयोभिर्द्रुतामार्द्रामनयन् अकुर्वन्नित्यर्थः ॥ २५ ॥ नानारसौघाःक्षीरादिवाहिन्यः अकृष्टपच्याःकर्षणंविनैवपक्वाःओषधयोव्रीह्या दयआसन् यद्वा अकृष्टपच्याओषधयोयेषुतेगिरयःउन्मणीन्गर्भगतान्मणीन्उत्उद्गतान्बहिःप्रकटान् अबिभ्रत्अबिभरुः ॥२६॥२७॥

श्रीशुकउवाच एवंकृष्णमुपामंत्र्यसुरभिःपयसात्मनः॥ जलैराकाशगंगायाऐरावतकरोद्धृतैः ॥ २२ ॥ इंद्रःसुरर्षिभिःसाकंनोदितोदेवमातृभिः॥ अभ्यषिंचतदाशार्हंगोविंदइतिचाभ्यधात्॥ २३ ॥ तत्रागतास्तुंबुरुनारदादयोगंधर्वविद्याधरसिद्धचारणाः॥ जगुर्यशोलोकमलापहंहरेःसुरांगनाःसंननृतुर्मुदान्विताः॥ ॥ २४ ॥ तंतुष्टुवुर्देवनिकायकेतवोव्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः॥ लोकाःपरांनिर्वृतिमाप्नुवंस्त्रयोगावस्त दागामनयन्पयोद्रुतां॥ २५ ॥ नानारसौघाःसरितोवृक्षाआसन्मधुस्रवाः॥ अकृष्टपच्यौषधयोगिरयो बिभ्रदुन्मणीन्॥ २६ ॥ कृष्णेऽभिषिक्तएतानिसत्वानिकुरुनंदन॥ निर्वैराण्यभवंस्तातक्रूराण्यपिनिसर्ग तः॥ २७॥ इतिगोगोकुलपतिंगोविंदमभिषिच्यसः॥ अनुज्ञातोययौशक्रोवृतोदेवादिभिर्दिवम्॥ २८॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेइंद्रस्तुतिर्नामसप्तविंशोऽध्यायः॥ २७ ॥ श्रीशुकउवाच एकादश्यांनिराहारःसमभ्यर्च्यजनार्दनम्॥ स्नातुंनंदस्तुकालिंद्याद्वादश्यांजलमाविशत्॥ १ ॥ ॥

॥ २८ ॥ अहमिंद्रोहिदेवानांत्वंगवामिंद्रतांगतः ॥ गोविंदइतिलोकेत्वांगास्यंतिभुविमानवाः ॥ १ ॥ इतिश्रीभागवतेमहापुराणेदशम स्कंधेपू॰टीकायांसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ अष्टाविंशेततोनंदानयनंवरुणालयात् ॥ वैकुंठदर्शनंचाथगोपानामनुवर्ण्यते ॥ १ ॥ गोवर्द्धनंसमुद्धृत्यवशेकृत्वासुरेश्वरम् ॥ नंदानयनतःकृष्णोवरुणंचवशेऽनयत् ॥ २ ॥ १ ॥ ॥ ॥ ॥

कलामात्रायांद्वादश्यांपारणादराभिनिवेशेनासुरींवेलामविज्ञायारुणोदयात्पूर्वमेवशास्त्रबलेननिशिउदकंप्रविष्टंतदनभिज्ञोवरुणस्यभृत्योऽनयदिति तथाचशास्त्रम् कलार्द्धांद्वादशींदृष्ट्वानिशीथादूर्ध्वमेवाहि ॥ आमध्यान्हात्क्रियाःसर्वाःकर्त्तव्याःशंभुशासनादित्यादि वक्ष्यतिचवरुणः अजानतामामकेनेति भगवद्धर्ममजानतेत्यर्थः ॥ २ ॥ स्वानांभगवद्धर्मपराणामभयदोमाभैष्टेत्यभयंददत् ॥ ३ ॥ सपर्ययाअर्हणेन ॥ ४ ॥ अद्यइदानींमेमयादेहोनिभृतःधृतः यदात्वद्दर्शनंजातंतदैवदेहसाफल्यंप्राप्तमित्यर्थः यद्वा निभृतःपूर्णमनोरथइत्यर्थः किंच अद्यैवार्थोऽधिगतः सर्वरत्नाकरपतिनापीतःपूर्वंनैवंविधोऽर्थःप्राप्तइत्यर्थः किंच संसारोऽपिनिवृत्तएवेत्याशयेनाह त्वत्पादभाजइति अध्वनः

तंगृहीत्वाऽनयद्भृत्योवरुणस्यासुरोंऽतिकं॥अविज्ञायासुरींवेलांप्रविष्टमुदकंनिशि ॥२॥ चुक्रुशुस्तमपश्यंतः कृष्णरामेतिगोपकाः॥भगवांस्तदुपश्रुत्यपितरंवरुणाहृतं॥तदंतिकंगतोराजन्स्वानामभयदोविभुः ॥३॥ प्राप्तंवीक्ष्यहृषीकेशंलोकपालःसपर्यया ॥ महत्यापूजयित्वाहतद्दर्शनमहोत्सवः॥४॥ वरुणउवाच अद्यमेनिभृतोदेहअद्यार्थोऽधिगतःप्रभो॥त्वत्पादभाजोभगवन्नवापुःपारमध्वनः॥५॥नमस्तुभ्यंभगवतेब्रह्मणेपरमात्मने ॥ नयत्रश्रूयतेमायालोकसृष्टिविकल्पना ॥ ६ ॥ अजानतामामकेनमूढेनाकार्यवेदिना ॥ आनीतोऽयंतवपितातद्भवान्क्षंतुमर्हति ॥७॥ ममाप्यनुग्रहंकृष्णकर्तुमर्हस्यशेषदृक् ॥ गोविंदनीयतामेषपितातेपितृवत्सल ॥८॥ श्रीशुकउवाच एवंप्रसादितःकृष्णोभगवानीश्वरेश्वरः ॥ आदायागात्स्वपितरंबंधूनांचावहन्मुदं ॥९॥ नंदस्त्वतींद्रियंदृष्ट्वालोकपालमहोदयं ॥ कृष्णेचसन्नतिंतेषांज्ञातिभ्योविस्मितोऽब्रवीत् ॥१०॥ तेत्वौत्सुक्यधियोराजन्मत्वागोपास्तमीश्वरं ॥ अपिनःस्वगतिंसूक्ष्मामुपाधास्यदधीश्वरः ॥ ११ ॥

पारंमोक्षम् ॥ ५ ॥ भगवतेनिरतिशयैश्वर्याय ब्रह्मणेपूर्णाय परमात्मनेसर्वजीवनियंत्रे तत्रहेतुः नयत्रेति लोकसृष्टिविकल्पयतियामायासायत्रनश्रूयते अविद्यमानेवतिष्ठतीत्यर्थः ॥ ६ ॥ अजानतामद्भृत्येनत्वत्पित्राहरणंयत्कृतंतदिति ॥ ७ ॥ नंदंविमुच्यसमर्पयतिगोविंदेति ॥ ८ ॥ ९ ॥अतींद्रियमदृष्टमपूर्वंलोकपालस्यमहोदयमैश्वर्यम् ॥ १० ॥ औत्सुक्ययुक्ताधीर्येषांते अपिकिंस्वगतिंस्वस्थानंसूक्ष्मांब्रह्माख्यांचउपाधास्यत् उपाधास्यति नःअस्मान्प्रापयिष्यतीतिसंकल्पितवंतइत्यर्थः ॥ ११ ॥ ॥ ॥ ॥

इत्येवंभूतंस्वानांतेषांसंकल्पमखिलदृक्सर्वज्ञःस्वयमेवविज्ञायतेषांसंकल्पसिद्धयेकृपयैतद्वक्ष्यमाणमाचिंतयत् ॥ १२ ॥ अविद्यादेहाद्यहं
बुद्धिस्ततःकामस्ततःकर्मतैरुच्चावचासुदेवतिर्यगादिषुभ्रमन्स्वीयांगतिंनवेद ॥ १३ ॥ स्वंब्रह्मस्वरूपंलोकंवैकुंठाख्यं तमसःप्रकृतेःपरं
॥ १४ ॥ देहादिपिहितानांदर्शनमशक्यमितिप्रथमंदेहादिव्यतिरिक्तंब्रह्मस्वरूपंदर्शयामास तदाह सत्यमिति सत्यमबाध्यंज्ञानमजड
मनंतमपरिच्छिन्नंज्योतिःस्वप्रकाशंसनातनंशश्वत्सिद्धंब्रह्मगुणापायेगुणापोहेज्ञानिनोयत्पश्यंतितत्कृपयैवदर्शयामास ॥ १५ ॥ एवंब्रह्म
ह्रदंब्रह्मैवह्रदवत्प्रदः तत्रनिमग्नस्यविशेषविज्ञानाभावात् तंब्रह्मह्रदंतेतुनीताःप्रापितास्तस्मिन्मग्नाश्च तुशब्दोक्तंविशेषमाह पुनःकृष्णे

इतिस्वानांसभगवान्विज्ञायाखिलदृक्स्वयं ॥ संकल्पसिद्धयेतेषांकृपयैतदचिंतयत् ॥ १२ ॥ जनोवैलोकए
तस्मिन्नविद्याकामकर्मभिः ॥ उच्चावचासुगतिषुनवेदस्वांगतिंभ्रमन् ॥ १३ ॥ इतिसंचिंत्यभगवान्महाका
रुणिकोहरिः ॥ दर्शयामासलोकंस्वंगोपानांतमसःपरं ॥ १४ ॥ सत्यंज्ञानमनंतंयद्ब्रह्मज्योतिःसनातनं ॥ यद्धि
पश्यंतिमुनयोगुणापायेसमाहिताः ॥ १५ ॥ तेतुब्रह्मह्रदंनीतामग्नाःकृष्णेनचोद्धृताः ॥ ददृशुर्ब्रह्मणोलोकंय
त्राक्रूरोऽध्यगात्पुरा ॥ १६ ॥ नंदादयस्तुतदृष्ट्वापरमानंदनिर्वृताः ॥ कृष्णंचतत्रच्छंदोभिःस्तूयमानंसुवि
स्मिताः ॥ १७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू० अष्टाविंशतितमोध्यायः ॥ २८ ॥ ॥

नउद्धृताः समाधेरिवोत्थापिताःसंतोब्रह्मणस्तस्यैवलोकंवैकुंठाख्यंददृशुरिति ननुब्रह्मनिमग्नानांपुनर्लोकदर्शनमघटितमेवेत्याशंक्याह
यत्रेति यत्रयस्मिन्कृष्णेनिमित्तेसतिपूर्वमक्रूरोऽध्यगात्दृष्टवान् शुकपरीक्षित्संवादात्प्राक्तनत्वाद्भूतनिर्देशः नह्यतर्क्यैश्वर्येभगवतिकिंचि
दपिअसंभावितमितिभावः अथवा अक्रूरोयत्रदृष्टवांस्तस्ययमुनाह्रदस्यब्रह्मह्रदइतिनाम तंह्रदंनीताःसंतोब्रह्मणोलोकंददृशुःपुनश्च
कृष्णेनोद्धृताःपूर्ववत्तंदृष्ट्वाविस्मिताबभूवुः व्यवहितान्वयोऽप्रसिद्धकल्पनाचसोढव्येति ॥ १६ ॥ १७ ॥ इतिदशमेपू०टीकायामष्टावि
शतितमोध्यायः ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ऊनत्रिंशेतुरासार्थमुक्तिप्रत्युक्तयोहरेः॥ गोपीभीरासरसंरंभेतस्यचांताद्धिंकौतुकं ॥ १ ॥ ब्रह्मादिजयसंरूढमूढकंदर्पदर्पहा ॥ जयतिश्रीपति
गोंपीरासमंडलमंडनः ॥ २ ॥ ननुविपरीतमिदंपरदारविनोदेनकंदर्पविजेतृत्वप्रतीतिः मैवं योगमायामुपाश्रितः आत्मारामोऽप्यरीरम
त् सक्षान्मन्मथमन्मथः आत्मन्यवरुद्धसौरतइत्यादिषुस्वातंत्र्याभिधानात् तस्माद्रासक्रीडाविडंबनंकामविजयख्यापनायेत्येवतत्त्वं किंच
शृंगारकथोपदेशेनविशेषतोनिवृत्तिपरेयंपंचाध्यायीतिव्यक्तीकरिष्यामः तारात्रीः यातावलाव्रजंसिद्धामयेमारंस्यथक्षपाइतिप्रतिश्रुताइत्यर्थः
॥ १ ॥ तदातस्मिन्नेवक्षणेतत्प्रीतयेउडुराजश्चंद्रउदगादुदितः किंकुर्वन् दीर्घकालेनदर्शनंयस्यसःप्रियःस्वप्रियायाःमुखमरुणेनकुंकुमेन
यथाविलिंपतितथाप्राच्याःककुभोदिशःमुखंशंतमैःसुखतमैःकरैरश्मिभिःअरुणेनउदयरागेणविलिंपन्नरुणीकुर्वन्नित्यर्थः सप्रसिद्धःउडुरा

श्रीशुकउवाच भगवानपितारात्रीःशरदोत्फुल्लमल्लिकाः ॥ वीक्ष्यरंतुंमनश्चक्रेयोगमायामुपाश्रितः ॥१॥
तदोडुराजःककुभःकरैर्मुखंप्राच्याविलिंपन्नरुणेनशंतमैः ॥ सचर्षणीनामुदगाच्छुचोमृजन्प्रियःप्रियाया
इवदीर्घदर्शनः ॥ २ ॥ दृष्ट्वाकुमुद्वंतमखंडमंडलंरमाननाभंनवकुंकुमारुणं ॥ वनंचतत्कोमलगोभिरंजितं
जगौकलंवामदृशांमनोहरं ॥३॥ निशम्यगीतंतदनंगवर्द्धनंव्रजस्त्रियःकृष्णगृहीतमानसाः ॥ आजग्मुरन्यो
ऽन्यमलक्षितोद्यमाःसयत्रकांतोजवलोलकुंडलाः ॥४॥ दुहंत्योऽभिययुःकाश्चिद्दोहंहित्वासमुत्सुकाः ॥ प
योऽधिश्रित्यसंयावमनुद्वास्यापरायुः ॥५॥ परिवेषयंत्यस्तद्धित्वापाययंत्यःशिशून्पयः ॥ शुश्रूषंत्यःपती
न्काश्चिदश्नंत्योऽपास्यभोजनं ॥ ६ ॥ ॥ ॥ ॥ ॥

जश्चर्षणीनांजनानांशुचस्तापग्लानीः मृजन्नपनयन् ॥ २ ॥ कुमुत्कुमुदंविकसनीयंविद्यतेयस्यतंकुमुद्वंतं नखंडंमंडलंयस्यतं रमायाआ
ननस्यआभेवआभायस्यतं नवकुंकुममिवअरुणमेवंविधंचंद्रंदृष्ट्वा तथाचवनंतस्यकोमलैर्गोभिःरंजितंदृष्ट्वाकलंमधुरंजगौअगायत कथं
वामदृशांवामाः मनोहराःदृशोयासांतासांमनोहरंयथा ॥ ३ ॥ असापत्न्यार्थमन्योऽन्यमलक्षितोनज्ञापितउद्यमोयाभिस्ताःसकांतोयत्रतत्र
गीतध्वनिमार्गेणजग्मुः जवेनवेगेनलोलानिचंचलानिकुंडलानियासांताः ॥ ४ ॥ श्रीकृष्णसूचकशब्दश्रवणेनतत्प्रवणाचित्तानां
तत्क्षणमेवत्रैवर्गिककर्मनिवृत्तिंद्योतयंत्यइवार्द्धावसितंकर्मविहाययुस्तदाह दुहंत्यइति पयःस्थालीस्थंचुल्ल्यामधिश्रित्यैतत्क्वाथमप्रतीक्ष
माणाःकाश्चिद्ययुःसंयावंगोधूमकणान्नंपक्वमनुद्वास्यअनुत्तार्य ॥ ५ ॥ ६ ॥ ॥ ॥ ॥ ॥

अन्याः प्रमृजंत्यः अंगोद्वर्त्तनादिकुर्वंत्यः काश्चकाश्चित् कृष्णतुष्ट्यर्थंकर्मतदासक्तमनसामन्यथाकृतमपिफलत्येवेतिद्योतयन्नाह व्यत्यस्तेति स्थानतःस्वरूपतश्चोर्ध्वाधोधारणेनविपर्ययंप्राप्तानिवस्त्राभरणानियासांताः ॥ ७ ॥ नचकृष्णाकृष्टमनसांविघ्नाःप्रभवंतीत्याह तावार्यमाणाइति ॥ ८ ॥ नलब्धोनिर्गमोयाभिस्ताः प्रागपितद्भावनायुक्तास्तदानितरांदध्युरित्यर्थः ॥ ९ ॥ किंचतदानीमेवतंपरमात्मानंकृष्णंध्यानतःप्राप्ताःसत्योगुणमयंदेहंजहुरित्याहश्लोकद्वयेन दुःसहेति ननुकथंजहुःपरमात्मेतिज्ञानाभावादित्याशंक्याह जारबुद्ध्याऽपीति नहिवस्तुशक्तिर्बुद्धिमपेक्षते अन्यथामत्वाऽपिपीतामृतवदितिभावः ननुतदपिप्रारब्धकर्मबंधनेसतिकथंजहुस्तत्राह सद्यःप्रक्षीणबंधनाइतिननुकथंभोगमंतरेणप्रारब्धंकर्मक्षीणंभोगेनैवसद्यःक्षीणमित्याह दुःसहेति दुःसहोयःप्रेष्ठविरहस्तेनतीव्रतापस्तेनधुतानिगतानिअशुभानियासां तद

लिंपंत्यःप्रमृजंत्योऽन्याअंजंत्यःकाश्चलोचने ॥ व्यत्यस्तवस्त्राभरणाःकाश्चित्कृष्णांतिकंययुः ॥७॥ तावार्यमाणाःपतिभिःपितृभिर्भ्रातृबंधुभिः ॥ गोविंदापहृतात्मानोनन्यवर्त्तंतमोहिताः ॥ ८ ॥ अंतर्गृहगताःकाश्चिद्गोप्योऽलब्धविनिर्गमाः ॥ कृष्णंतद्भावनायुक्तादध्युर्मीलितलोचनाः ॥ ९ ॥ दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ॥ ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमंगलाः ॥ १० ॥ तमेवपरमात्मानंजारबुद्ध्याऽपिसंगताः ॥ जहुर्गुणमयंदेहंसद्यःप्रक्षीणबंधनाः ॥११॥ राजोवाच कृष्णंविदुःपरंकांतंनतुब्रह्मतयामुने ॥ गुणप्रवाहोपरमस्तासांगुणधियांकथं ॥१२॥ श्रीशुकउवाच उक्तंपुरस्तादेतत्तेचैद्यःसिद्धिंयथागतः ॥ द्विषन्नपिहृषीकेशंकिमुताधोक्षजप्रियाः ॥ १३ ॥ नृणांनिःश्रेयसार्थायव्यक्तिर्भगवतोनृप ॥ अव्ययस्याप्रमेयस्यनिर्गुणस्यगुणात्मनः ॥ १४ ॥ ॥ ॥ ॥

प्राप्तिपरमदुःखभोगेनपापंक्षीणमित्यर्थः तथाध्यानेनप्राप्ताअच्युतस्यआश्लेषेणयानिर्वृतिः परमसुखभोगस्तयाक्षीणंमंगलंपुण्यबंधनंयासांताः अतोध्यानेनपरमात्मप्राप्तेस्तत्कालसुखदुःखाभ्यांनिःशेषकर्मक्षयाद्गुणमयंदेहंजहुरिति ॥ १० ॥ ११॥ ननुयथापतिपुत्रादीनांवस्तुतोब्रह्मत्वेऽपिनतद्भजनान्मोक्षस्तथाबुद्ध्यभावादेवंकृष्णेऽपिब्रह्मबुद्ध्यभावेनतत्संगतिःकथंमोक्षहेतुरितिशंकते कृष्णंविदुरिति परंकेवलंकांतंकमनीयंविदुर्नब्रह्म ॥ १२ ॥ परिहरति उक्तमिति अयंभावः जीवेष्वावृतंब्रह्मत्वंकृष्णस्यतुहृषीकेशत्वादनावृतमतोनतत्रबुद्ध्यपेक्षेति ॥ १३ ॥ ननुदेहीकथमनावृतःस्यादतआह नृणामिति गुणात्मनोगुणानियंतुर्भगवतःएवंरूपाअभिव्यक्तिरतोनदेहिसादृश्यमत्रवक्तुंयुज्यत इतिभावः ॥ १४ ॥

अतोयथाकथंचित्तदासक्तिर्मुक्तिकारणमित्याह काममिति ऐक्यंसंबंधं सौहृदंभक्तिम् ॥ १५ ॥ नचभगवतोऽयमतिभारइत्याह नचैवमिति यतः श्रीकृष्णादेतरस्थावरादिकमपिविमुच्यते ॥ १६ ॥ प्रस्तुतमाह तादृष्ट्वेति वाचःपेशैर्वाग्विलासैः ॥ १७ ॥ सर्वाःससंभ्रममागता विलोक्यसभयमिवाह व्रजस्येति ॥ १८ ॥ लज्जयामंदहसितमालक्ष्याह रजन्येषेति ॥ १९ ॥ किंच मातरइति विचिन्वंतिमृगयंते बंधूनांसाध्वसंरुच्छ्रंमाकृध्वंमाकुरुतेत्यर्थः ॥२०॥ ईषत्प्रणयकोपेनान्यतोविलोकयंतीःप्रत्याह दृष्टमिति राकेशस्यपूर्णचंद्रस्यकरैरंजितम् य

कामंक्रोधंभयंस्नेहमैक्यंसौहृदमेवच ॥ नित्यंहरौविदधतोयांतितन्मयतांहिते ॥१५॥ नचैवंविस्मयःकार्योभवताभगवत्यजे ॥ योगेश्वरेश्वरेकृष्णेयतएतद्विमुच्यते ॥ १६ ॥ तादृष्ट्वांतिकमायाताभगवान्व्रजयोषितः ॥ अवदद्वदतांश्रेष्ठोवाचःपेशैर्विमोहयन् ॥ १७ ॥श्रीभगवानुवाच स्वागतंवोमहाभागाःप्रियंकिंकरवाणिवः ॥ व्रजस्यानामयंकच्चिद्ब्रूतागमनकारणम् ॥ १८ ॥ रजन्येषाघोररूपाघोरसत्वनिषेविता ॥ प्रतियातव्रजंनेहस्थेयंस्त्रीभिःसुमध्यमाः ॥ १९ ॥ मातरःपितरःपुत्राभ्रातरःपतयश्चवः ॥ विचिन्वंतिह्यपश्यंतोमाकृध्वंबंधुसाध्वसम् ॥ २० ॥ दृष्टंवनंकुसुमितंराकेशकररंजितम् ॥ यमुनाऽनिललीलैजत्तरुपल्लवशोभितम् ॥२१ ॥ तद्यातमाचिरंगोष्ठंशुश्रूषध्वंपतीन्सतीः ॥ क्रंदंतिवत्साबालाश्चतान्पाययतदुह्यत॥ २२॥ अथवामदभिस्नेहाद्भवंत्योयंत्रिताशयाः ॥ आगताह्युपपन्नंवःप्रीयंतेमयिजंतवः ॥ २३ ॥ भर्तुःशुश्रूषणंस्त्रीणांपरोधर्मोह्यमायया ॥ तद्बंधूनांचकल्याण्यःप्रजानांचानुपोषणम् ॥ २४ ॥ दुःशीलोदुर्भगोवृद्धोजडोरोग्यधनोऽपिवा ॥ पतिःस्त्रीभिर्नहातव्योलोकेप्सुभिरपातकी ॥ २५ ॥ अस्वर्ग्यमयशस्यंचफल्गुकृच्छ्रंभयावहं ॥ जुगुप्सितंचसर्वत्रऔपपत्यंकुलस्त्रियाः ॥ २६ ॥ ॥ ॥ ॥

मुनास्पर्शिनोऽनिलस्यलीलामंदगतिस्तयाएजंतःकंपमानास्तरूणांपल्लवास्तैःशोभितम् ॥ २१ ॥ सतीःहेसत्यः ॥ २२ ॥ संरंभक्षुभितदृष्टीःप्रत्याह अथवेति यंत्रिताशयाःवशीकृतचित्ताः उपपन्नंयुक्तम् प्रीयंतेप्रीताभवंति ॥ २३ ॥ दृष्टादृष्टभयप्रदर्शनेननिवर्त्तयति भर्तुरित्यादिश्लोकत्रयेण ॥ २४ ॥ २५ ॥ फल्गुतुच्छम् कृच्छ्रंदुःखसंपादकम् औपपत्यंजारसौख्यम् ॥ २६ ॥ ॥ ॥ ॥

किंच श्रवणादिति ॥२७॥२८॥ चिंतांप्राप्तानांस्थितिमाह कृत्वेति शुचः शोकादुद्भवेनश्वसनेनशुष्यंतोबिंबफलसदृशाअधरायेषुमुखेषु ता न्येवअवांचिकृत्वा तथांऽगुष्ठेनमहींलिखंत्यः तथागृहीतकज्जलैरश्रुभिः कुचकुंकुमानिक्षालयंत्यस्तूष्णींस्थिताः यतःउरुदुःखभरोभारोयासां ताः॥ २९॥ किंच प्रेष्ठमिति किंचित्संरंभेणकोपावेशेनगद्गदागिरोयासांताअब्रुवतस्म संरंभेकारणंप्रेष्ठमित्यादि प्रियेतरमिवप्रतिभाषमा णंप्रत्याचक्षाणं॥ ३०॥ नृशंसंक्रूरम् दुरवग्रहहेस्वच्छंदतवपादमूलंभक्ताःसेवितवतीरस्मान्भजस्वमात्यजेति ॥ ३१॥ आपिच यदुक्तंयत्प त्यपत्येत्यादित्वयाधर्मविदेतिसोपहासमेवमेतदुपदेशानांपदेविषयेत्वय्येवास्तु उपदेशपदत्वेहेतुः ईशइति विविदिषावाक्येनसर्वोपदेशा

श्रवणाद्दर्शनाद्ध्यानान्मयिभावोऽनुकीर्त्तनात् ॥ नतथासन्निकर्षेणप्रतियाततत्तोगृहान् ॥ २७॥ श्रीशुकउ वाच इतिविप्रियमाकर्ण्यगोप्योगोविंदभाषितं ॥ विषण्णाभग्नसंकल्पाश्चिंतामापुर्दुरत्ययां ॥ २८॥ कृत्वा मुखान्यवशुचःश्वसनेनशुष्यद्बिंबाधराणिचरणेनभुवंलिखंत्यः ॥ अस्त्रैरुपात्तमषिभिःकुचकुंकुमानितस्थुर्मृ जंत्यउरुदुःखभराःस्मतूष्णीम् ॥ २९ ॥ प्रेष्ठंप्रियेतरमिवप्रतिभाषमाणंकृष्णंतदर्थविनिवर्तितसर्वकामाः॥ नेत्रेविमृज्यरुदितोपहतेस्मकिंचित्संरंभगद्गदगिरोऽब्रुवतानुरक्ताः ॥ ३०॥ गोप्यऊचुः मैवंविभोऽर्ह तिभवान्गदितुंनृशंसंसंत्यज्यसर्वविषयांस्तवपादमूलं ॥ भक्ताभजस्वदुरवग्रहमात्यजास्मान्देवोयथादिपु रुषोभजतेमुमुक्षून् ॥ ३१ ॥ यत्पत्यपत्यसुहृदामनुवृत्तिरंगस्त्रीणांस्वधर्मइतिधर्मविदात्वयोक्तं ॥ अस्त्वेव मेतदुपदेशपदेत्वयीशेप्रेष्ठोभवांस्तनुभृतांकिलबंधुरात्मा ॥ ३२ ॥ ॥ ॥

नामीशपरत्वावगमादितिभावः ईशत्वेहेतुः आत्माकिलभवानिति भोग्यस्यहिसर्वस्यभोक्ताआत्मैवेशइत्यतःप्रेष्ठोबंधुश्चभवानेवेतिसर्वबंधुषु करणीयंत्वय्येवास्त्वित्यर्थःअथवाधर्मोपदेशानांपदेस्थानेधर्मोपदेष्टरित्वयिसतिअस्मासुचधर्मजिज्ञासमानासुसतीषुत्वयाधर्मविदायदुक्तमेव मेयतदस्तु नतुत्वंधर्मोपदेष्टाकिंतुभवानात्मेति अथवा यदुक्तमेतदुपदशपेदतद्गोचरेपुरुषेअस्तुनामत्वयितुईशेस्वामिनिएवं काक्वानैवमित्यर्थः स्तनुभृतांत्वमात्माफलरूपइति यद्वा यदुक्तंपत्यादिशुश्रूषणंधर्मइतिएवमेतत्त्वय्येवास्तु कुतः उपदेशपदेशुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनांपदेअधिष्ठाने कुतः ईशे नहीश्वरमधिष्ठानंविनाकोपिपतिपुत्रादिर्नामेति अन्यत्समानम् अलमतिविस्तरेण ॥ ३२ ॥ ॥

एतत्संदाचारेणद्रढयंत्यः प्रार्थयंते कुर्वंतीति शास्त्रनिपुणाः तथाचशास्त्रं किंप्रजयाकरिष्यामोयेषांनोयमात्मालोकइति ॥ ३३ ॥ किंचप्रतिया
तेतियदुक्तंतदशक्यंत्वयैवचित्तादीनामपहृतत्वादित्याहुः चित्तमिति यदस्माकंचित्तमेतावंतंकालंसुखेनगृहेषुनिर्विशतितत्त्वयाऽपहृतं करा
वपियौगृहकृत्येनिर्विशतस्तावपि सुखात्मनात्वयेतिवा ॥ ३४ ॥ अतः अंगहेकृष्णनः अस्माकंतवाधरामृतपूरकेणतवैवहाससहितेनावलोके
नकलगीतेनचजातोयोत्हृच्छयाग्निः कामाग्निस्तंसिंच नोचेदयंतावदेकोऽग्निस्तथाविरहाज्जनिष्यतेयोऽग्निस्तेनचउपयुक्तदेहादग्धशरीरायो
गिनइवतेपदवीमंतिकंध्यानेनयामप्राप्नुयाम ॥ ३५॥ ननुस्वपतीनेवोपगच्छततएवाग्निंसिंचेयुरितिचेत्तत्राहुः यर्हीति रमायालक्ष्म्याःदत्तक्ष

**कुर्वंतिहित्वयिरतिंकुशलाःस्वआत्मन्नित्यप्रियेपतिसुतादिभिरार्तिदैःकिं ॥ तन्नःप्रसीदपरमेश्वरमास्मछिं द्याआशांभृतांत्वयिचिरादरविंदनेत्र ॥ ३३ ॥ चित्तंसुखेनभवताऽपहृतंगृहेषुयन्निर्विशत्युतकरावपिगृह्यकृ त्ये ॥ पादौपदंनचलतस्तवपादमूलाद्यामःकथंव्रजमथोकरवामकिंवा ॥ ३४ ॥ सिंचांगनस्त्वदधरामृतपू रकेणहासावलोककलगीतजहृच्छयाग्निं ॥ नोचेद्वयंविरहजाग्न्युपयुक्तदेहाध्यानेनयामपदयोःपदवींसखे ते ॥ ३५ ॥ यर्ह्यंबुजाक्षतवपादतलंरमायादत्तक्षणंक्वचिदरण्यजनप्रियस्य ॥ अस्प्राक्ष्मतत्प्रभृतिनान्यस मक्षमंगस्थातुंत्वयाभिरमिताबतपारयामः ॥ ३६ ॥ श्रीर्यत्पदांबुजरजश्चकमेतुलस्यालब्ध्वाऽपिवक्षसि पदंकिलभृत्यजुष्टं ॥ यस्याःस्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयंचतवपादरजःप्रपन्नाः ॥ ३७ ॥ ॥**

णंदत्तोत्सवंदत्तावसरंवा तदपिक्वचिदेवनसर्वदा अरण्यजनाःप्रियायस्यतस्यतव अरण्यजनप्रियत्वादरण्येक्वाचित्यर्हिअस्प्राक्ष्मस्पृष्टवत्योव
यंतत्रचत्वयाऽभिरमिताआनंदिताःसत्यस्तदारभ्यान्यसमक्षंस्थातुमपिनपारयामः तुच्छास्तेनरोचंतइत्यर्थः ॥ ३६ ॥ त्वत्पादसौभाग्यंत्व
तिचित्रमित्याहुः श्रीरिति वक्षसिअसापत्न्यंस्थानंलब्ध्वाऽपितुलस्यासपत्न्यासहतवपदांबुजरजःकामयतेस्म भृत्यैःसर्वैर्जुष्टमितिसौभाग्या
तिरेकोक्तिः यस्याःस्ववीक्षणकृतेश्रीरात्मानंविलोकयतुइत्येतदर्थमन्येषांब्रह्मादीनांतपोभिःप्रयासःसातद्रजः तद्वद्वयमपिप्रपन्नाइति॥ ३७॥

हेवृजिनार्दनदुःखहंतस्त्वदुपासनेत्वद्भजनएवआशायासांतावयंवसतीर्गृहान्विसृज्यहित्वायोगिनइवप्राप्ताः तवसुंदरस्मितविलसितनिरी क्षणेनयस्तीव्रःकामस्तेनतप्तचित्तानां हेपुरुषरत्नदास्यंदेहि ॥ ३८ ॥ ननुगृहस्वाम्यंविहायदास्यंकिमितिप्रार्थ्यतेअतआहुः वीक्ष्येतिअलका वृतमुखंकेशांतरैरावृतमुखं तथाकुंडलयोः श्रीर्ययोस्तेगंडस्थलेयस्मिन् अधरेसुधायस्मिंस्तच्चतच्चतवमुखंवीक्ष्यदत्ताभयंभुजदंडयुग्मंवक्षश्च श्रियाएकमेवरमणंरतिजनकंवीक्ष्यदास्यएवभवामेति ॥ ३९ ॥ ननुजुगुप्सितमौपपत्यंमित्युक्तंतत्राहुः कास्त्रीति अंगहेकृष्णकलानिपदानिय

तन्नःप्रसीदवृजिनार्दनतेऽघ्रिमूलंप्राप्ताविसृज्यवसतीस्त्वदुपासनाशाः ॥ त्वत्सुंदरस्मितनिरीक्षणतीव्रका मतप्तात्मनांपुरुषभूषणदेहिदास्यं ॥ ३८ ॥ वीक्ष्यालकावृतमुखंतवकुंडलश्रीगंडस्थलाधरसुधंहसिताव लोकं ॥ दत्ताभयंचभुजदंडयुगंविलोक्यवक्षःश्रियैकरमणंचभवामदास्यः ॥ ३९ ॥ कास्त्र्यंगतेकलपदाय तमूर्छितेनसंमोहितार्यचरितान्नचलेत्रिलोक्यां ॥ त्रैलोक्यसौभगमिदंचनिरीक्ष्यरूपंयद्गोद्विजद्रुममृगाःपु लकान्यबिभ्रन् ॥ ४० ॥ व्यक्तंभवान्व्रजभयार्तिहरोऽभिजातोदेवोयथादिपुरुषःसुरलोकगोप्ता ॥ तन्नो निधेहिकरपंकजमार्त्तबंधोतप्तस्तनेषुचशिरस्सुचकिंकरीणां ॥ ४१ ॥ श्रीशुकउवाच इतिविक्लवितंतासां श्रुत्वायोगेश्वरेश्वरः ॥ प्रहस्यसदयंगोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥ ताभिःसमेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥ उदारहासद्विजकुंददीधितिर्व्यरोचतैणांकइवोडुभिर्वृतः ॥ ४३ ॥ उप गीयमानउद्गायन्वनिताशतयूथपः ॥ मालांबिभ्रद्वैजयंतींव्यचरन्मंडयन्वनं ॥ ४४ ॥ ॥ ॥

स्मिंस्तत् आयतंदीर्घंमूर्च्छितंस्वरालापभेदस्तेनपाठांतरेकलपदामृतमयंवेणुगीतंतेनसंमोहिताकावास्त्रीआर्यचरितान्निजधर्मान्नचलेत् यन्मो हिताःपुरुषाअपिचलिताः किंच त्रैलोक्यसौभगमिति यत् यतःअबिभ्रन् अबिभरुः त्वद्द्योतकशब्दश्रवणमात्रेणापितावन्निजधर्मत्यागोयुक्तः किंपुनस्त्वदनुभवेनेतिभावः ॥ ४० ॥ व्यक्तंनिश्चितं ॥ ४१ ॥ विक्लवितंपारवश्यप्रलपितं गोपीररीरमत् रमयामास ॥ ४२ ॥ प्रियस्येक्ष णेनउत्फुल्लानिमुखानियासांताभिः उदारहासश्चद्विजाश्चतेषुकुंदकुसुमवत् दीधितिर्यस्यसः एणांकश्चंद्रः ॥ ४३ ॥ ४४ ॥ ॥

॥ ४५ ॥ बाहुप्रसारश्चपरिरंभश्चकरादीनामालभनंस्पर्शश्चनर्मपरिहासश्चनखाग्रपातश्चतैः क्ष्वेल्याक्रीडया अवलोकैश्चहसितैश्च कामंता
सामुद्दीपयंस्ताःरमयामास ॥ ४६ ॥ महात्मनोविमुक्तचित्तात् ॥ ४७ ॥ तत्सौभगमदमस्वाधीनतां मानंगर्वं केशवःकश्चईशश्चतौ वशाय
तीतितथासः अंतर्धानंगतः ॥ ४८ ॥ इतिदशमेपू० टीकायामेकोनत्रिंशोऽध्यायः ॥२९॥ ॥ ॥ त्रिंशेविरहसंतप्तगोपीभिः कृष्णमार्ग
णं॥ उन्मत्तवन्ननियतंभ्रमंतीभिर्वनेवने ॥ १ ॥ अचक्षाणाः अपश्यंत्यः ॥१॥ गत्याचअनुरागस्मिताभ्यांविभ्रमेक्षितानिसविलासनिरीक्ष

नद्याःपुलिनमाविश्यगोपीभिर्हिमवालुकं ॥ रेमेतत्तरलानंदकुमुदामोदवायुना ॥ ४५ ॥ बाहुप्रसारपरि
रंभकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः ॥ क्ष्वेल्याऽवलोकहसितैर्व्रजसुंदरीणामुत्तंभयन्रतिप
तिंरमयांचकार ॥ ४६ ॥ एवंभगवतःकृष्णाल्लब्धमानामहात्मनः ॥ आत्मानंमेनिरेस्त्रीणांमानिनोऽभ्यधि
कंभुवि ॥४७॥ तासांतत्सौभगमदंवीक्ष्यमानंचकेशवः ॥ प्रशमायप्रसादायतत्रैवांतरधीयत ॥४८॥ इति
श्रीभागवतेमहापुराणेदशमस्कंधेपू०भगवतोबालचरित्रवर्णनंनामएकोनत्रिंशोऽध्यायः ॥ २९ ॥ श्रीशु
कउवाच अंतर्हितेभगवतिसहसैवव्रजांगनाः ॥ अतप्यंस्तमचक्षाणाःकरिण्यइवयूथपं ॥१॥ गत्यानुराग
स्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ॥ आक्षिप्तचित्ताःप्रमदारमापतेस्तास्ताविचेष्टाजगृहुस्तदा
त्मिकाः ॥ २ ॥ गतिस्मितप्रेक्षणभाषणादिषुप्रियाःप्रियस्यप्रतिरूढमूर्तयः ॥ असावहंत्वित्यबलास्तदा
त्मिकान्यवेदिषुःकृष्णविहारविभ्रमाः ॥ ३ ॥ गायंत्यउच्चैरमुमेवसंहताविचिक्युरुन्मत्तकवद्वनाद्वनं ॥ पप्र
च्छुराकाशवदंतरंबहिर्भूतेषुसंतंपुरुषंवनस्पतीन् ॥ ४ ॥ ॥ ॥

णानितैश्चमनोरमाआलापाश्चविहाराः क्रीडाश्चविभ्रमाअन्येचविलासास्तेरमापतेर्गत्यादिभिरेतैराक्षिप्तानिआकृष्टानिचित्तानियासांता अत
स्तस्मिन्नेवआत्मायासांतास्तस्यविविधाश्चेष्टाजगृहुस्तदनुकरणेनाक्रीडन् ॥ २ ॥ अपिच गतिस्मितेति प्रियस्यगत्यादिषुप्रतिरूढाआविष्टामू
र्तयोयासांताःअतःकृष्णविहारविभ्रमाःकृष्णस्येवविहारविभ्रमाःक्रीडाविलासायासांताःअहमेवकृष्णइतिपरस्परंनिवेदितवत्यः ॥३॥ किंच
गायंत्यइति वनाद्वनांतरंगच्छंत्योविचिक्युरमृगयन् उन्मत्ततुल्यत्वमाह वनस्पतीन्पप्रच्छुःभूतेषुअंतरंमध्येसंतंपुरुषंबहिश्चसंतामिति ॥ ४ ॥

तत्प्रपंचयति नवभिः तत्र महत्वादेते प्रष्टव्या इत्यश्वत्थादीन्पृच्छंति दृष्टइति प्रेमहासविलसितैरवलोकनैरस्माकं मनो हृत्वा चोरवद्ग
तो वो युष्माभिः किं दृष्ट इति ॥५॥ महांतः स्वपुष्पैर्बहूपकारिणश्चेति कुरवकादीन्पृच्छंति कच्चिदिति हे कुरबकादयः दर्पहरस्मितः तयस्मै इतो ग
तः कच्चिदिति ॥६॥ अलिकुलैः सहत्वां विभ्रत नातिप्रियं सायांकिं दृष्ट इति ॥७॥ गुणातिरेकेऽपि नम्रा इमाः प्रष्टव्या इति पृच्छंति मालतीति
मल्लिके जातियूथिके वः युष्माभिः किमदर्शि दृष्टः करस्पर्शेन वः प्रीतिं जनयन्नयं किं यातः इति अत्र मालतीजात्योरवांतरविशेषो द्रष्टव्यः ॥८॥
फलादिभिः सर्वप्राणिनां संतर्पकाः एते प्रष्टव्या इति पृच्छंति चूतेति चूताम्रयोरवांतरजातिभेदः कदंबनीपयोश्च हे चूतादयः येऽन्ये च परा

दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ॥ नंदसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥५॥ कच्चित्कुरबकाशोक
नागपुन्नागचंपकाः ॥ रामानुजो मानिनीनां गतो दर्पहरस्मितः ॥६॥ कच्चित्तुलसि कल्याणि गोविंदचरणप्रि
ये ॥ सह त्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥७॥ मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके ॥ प्रीतिं
वो जनयन्यातः करस्पर्शेन माधवः ॥८॥ चूतप्रियालपनसासनकोविदारजंब्वर्कबिल्वबकुलाम्रकदंबनी
पाः ॥ येऽन्ये परार्थभवका यमुनोपकूलाः शंसंतु कृष्णपदवीं रहितात्मनां नः ॥९॥ किं ते कृतं क्षिति तपो बत
केशवांघ्रिस्पर्शोत्सवोत्पुलकितांगरुहैर्विभासि ॥ अप्यंघ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः
परिरंभणेन ॥१०॥

र्थभवकाः परार्थमेव भवो जन्म येषां ते यमुनोपकूलास्तस्याः कूलसमीपे वर्तमानाः तीर्थवासिनः सर्वे ते भवंतो रहि
तात्मनां शून्यचेतसां नः कृष्णपदवीं कृष्णस्य मार्गं शंसंतु कथयंतु ॥९॥ हे क्षिति क्षिते त्वया किं तपः कृतं यात्वं केशवांघ्रिस्पर्शो
त्सवोत्के शवांघ्रिस्पर्शेनोत्सवो यस्यास्सा कृतः अंगरुहैः पुलकितैः रोमांचितैर्विभासि शोभसे तत्र विशेषं पृच्छंति अपि किमयमु
त्सवः अंघ्रिसंभवः अधुनातनकेशवांघ्रिस्पर्शसंभूतः यद्वा नैतावत् किं तु उरुक्रमविक्रमात्पूर्वमेव त्रिविक्रमस्य पदा स्पर्शात्क्रम
णात् आहो अथवा नैतावदेव अपि तु ततोऽपि पूर्वं वराहस्य वपुषः परिरंभणेनेति अतस्त्वया नूनं दृष्टस्तद्दर्शयेति ॥१०॥

हरिण्या दृष्टिप्रसादस्य यासा कृष्णदर्शनं संभाव्याह । अपीति हे सखि एणपत्नि अपि किमुपगतः समीपे गतः गात्रैः सुंदरैर्मुखबाहादिभिः प्रियया सहेति यदुक्तं तद्द्योतकं कांतायाः अंगतद्गतकुचकुंकुमेन रंजितायाः कुंदकुसुमस्रजो गंधः कुलपतेः श्रीकृष्णस्य याति आगच्छति ॥ ११ ॥ फलभारेण नतांस्तरून् कृष्णं दृष्ट्वा प्रणता इति मत्वा प्रियया सहितस्य गतिविलाससंभावयंत्यः पृच्छंति बाहुमिति तुलसिकायाः अलिकुलैः रतरसदामोदमदांधैरन्वीयमानो ऽनुगम्यमान इह चरन्निति ॥ १२ ॥ काश्चिदाहुः हे सख्य इमा लताः कृष्णेन संगता नूनमतः इमाः पृच्छत ननु स्वपतिसंगतौ तत्संगतिर्दुर्घटा न वनस्पतेः पत्युर्बाहुमाश्लिष्टा अपि अ

अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः ॥ कांतांगसंगकुचकुंकुमरंजितायाः कुंदस्रजः कुलपतेरिह वाति गंधः ॥ ११ ॥ बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदांधैः ॥ अन्वीयमान इह वस्तरवः प्रणामं किं वाभिनंदति चरन्प्रणयावलोकैः ॥ १२ ॥ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ॥ नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥ इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ॥ लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ १४ ॥ कस्याश्चित्पूतनायंत्याः कृष्णायंत्यपिबत्स्तनं ॥ तोकायित्वा रुदत्यन्या पदाऽहन् शकटायतीम् ॥ १५ ॥ दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ॥ रिंगयामास काप्यंघ्री कर्षंती घोषनिःस्वनैः ॥ १६ ॥ कृष्णरामायिते द्वे तु गोपायंत्यश्च काश्चन ॥ वत्सायतीं हंति चान्या तत्रैका तु बकायतीम् ॥ १७ ॥

तोभाग्यं नूनं तन्नखैः स्पृष्टाः यतः उत्पुलकानि बिभ्रति न हि स्वपतिसंगतावीदृक्पुलकसंभव इति भावः ॥ १३ ॥ उन्मत्तवत्प्रचुरियेतत्प्रपंचितमिदानीं रमापतेस्तास्ताश्चेष्टा जगृहुस्तदात्मिका इति यदुक्तं तत्प्रपंचयति इतीति उन्मत्तवचो गोप्यः उन्मत्तवच सश्च ता गोप्यश्च कृष्णान्वेषणेन कातराः अतिविह्वला अनुचक्रुः अनुसृतवत्यः ॥ १४ ॥ कस्याश्चिदित्यादिभिश्चतुर्भिरनुकरणं प्रपंच्यते ततश्चतुर्भिस्तन्मयत्वं पुनरेकेनानुकरणमिति विवेकः पूतनायंत्याः पूतनावदाचरंत्याः कृष्णवदाचरंती स्तनमपिबत् तोकायित्वा तोकवद्बालो भूत्वा ॥ १५ ॥ दैत्यायित्वा दैत्यवद्भूत्वान्यां हृतवती एका कृष्णार्भभावनां कृष्णस्यार्भबाल्यं भावयति या तामन्या जहार ॥ १६ ॥ १७ ॥

दूरगा दूरे वर्तमाना गाः यद्वत् यथा कृष्णस्तथा आहूय तं कृष्णमनुवर्त्तिनीमनुवर्तमानां अनुकुर्वतीमिति वा पाठः ॥१८॥१९॥ यतं तीप्रयत्नं कुर्वतीमंबरमुत्तरीयं च रज्जुभीर्दध्येऽबध्नतवती ॥२०॥२१॥ अपिदध्वं निमीलयत २२॥ सुदृक् सुनयना आस्यं पिधाय सुदृक्भये राक्षीतिवा भीतिविडंबनं भयानुकरणं ॥२३॥ एवं पुनरपि वृंदावने लतास्तरूंश्च कृष्णं पृच्छं यौ वनोद्देशे वनप्रदेशे व्यचक्षत अपश्यन् ॥२४॥२५॥ सुपृक्तानि संमिश्राणि ॥२६॥ तेन अंसे न्यस्तः प्रकोष्ठो यस्याः करेणोर्हस्तिन्याः ॥२७॥

जे ५

आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीं । वेणुं क्वणंतीं क्रीडंतीमन्याः शंसंति साध्विति ॥१८॥ कस्यांचित्स्वभुजं न्यस्य चलंत्याहापरा ननु । कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥१९॥ माभैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया । इत्युक्त्वैकेन हस्तेन यतंत्युन्निदधेऽम्बरं ॥२०॥ आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप । दुष्टाहे गच्छ जातोऽहं खलानां ननु दंडधृक् ॥२१॥ तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणं । चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममंजसा ॥२२॥ बद्धाऽन्यया स्रजा काचित्तन्वी तत्र उलूखले । भीता सुदृक् पिधायास्यं भेजे भीतिविडंबनं ॥२३॥ एवं कृष्णं पृच्छमाना वृंदावनलतास्तरून् । व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥२४॥ पदानि व्यक्तमेतानि नंदसूनोर्महात्मनः । लक्ष्यंते हि ध्वजांभोजवज्रांकुशयवादिभिः ॥२५॥ तैस्तैः पदैस्तत्पदवीमन्विच्छंत्योऽग्रतोऽबलाः । वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥२६॥ कस्याः पदानि चैतानि याताया नंदसूनुना । अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥२७॥ अनयाराधितो नूनं भगवान्हरिरीश्वरः । यन्नो विहाय गोविंदः प्रीतो यामनयद्रहः ॥२८॥ अन्या अहो अमी आल्यो गोविंदांघ्र्यब्जरेणवः । यान्ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥२९॥

ना

नाद

स

रहः एकांतस्थानं ॥२८॥ हे आल्यः सख्यः अहो अमी धन्या अतिपुण्या गोविंदांघ्र्यब्जरेणवः तत्र हेतुः यानिति अस्माभिरप्येतद्रेणवोऽभिषेकेण तथैव कृष्णः प्राप्तुं शक्य इति भावः ॥२९॥

अ॰

ऽन्या आहुः तस्या इति गोपीनां सर्वस्वं अयंभावः भवेदेवं यदि तस्याः पदानि संएकानि न भवेयुस्तानि तु नो दुःखं कुर्वन्तीति ॥३०॥ तदसंपृक्तानि केवलं कृष्णपादरेणुनैव चिह्नितानि तस्मात्कृष्णपुरस्तात्समतमपन् तदाह श्लोकत्रयेण न लक्ष्यन्त इति खिद्यती सुजाते सुकुमारे अंघ्रितले यस्यास्तां उन्निन्ये स्कंधमारोपितवान् ॥३१॥ प्रपदाभ्यामाक्रमणं श्रोणीमर्दनं योः अत एवासकले पदे पश्यतेति ॥३२॥ कृष्णानां तत्र उपविष्टायाश्चिह्नं दृष्ट्वाहुः केशप्रसाधनमिति कान्तामथ चिह्नयतानि प्रसूनानि चूडयता चूडानुकारेण बध्नता ध्रुवमुपविष्टं ॥३३॥ रेमेत्यादिस्त्रिकोक्तिः आत्मरतः स्वतस्तुष्टः आत्मारामः स्वक्रीडः अखंडितस्त्री

तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ॥ यैकापहृत्य गोपीनां रहो भुंक्तेऽच्युताधरं ॥३०॥ न लक्ष्यंते पदान्यत्र तस्या नूनं तृणांकुरैः ॥ खिद्यत्सुजातांघ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥३१॥ अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ॥ प्रपदाक्रमणे एते पश्यतासकले पदे ॥३२॥ केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतं ॥ तानि चूडयता कांतामुपविष्टमिह ध्रुवं ॥३३॥ रेमे तया चात्मरत आत्मारामोऽप्यखंडितः ॥ कामिनां दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मतां ॥३४॥ इत्येवं दर्शयंत्यस्ताश्चेरुर्गोप्यो विचेतसः ॥ यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने ॥३५॥ सा च मेने तदात्मानं वरिष्ठं सर्वयोषितां ॥ हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥३६॥ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥ न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥३७॥ एवमुक्तः प्रियामाह स्कंध आरुह्यतामिति ॥ ततश्चांतर्दधे कृष्णः सा वधूरन्वतप्यत ॥३८॥ हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥ दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिं ॥३९॥ श्रीशुक उवाच ॥ अन्विच्छंत्यो भगवतो मार्गं गोप्योऽविदूरतः ॥ ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीं ॥४०॥ तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥ अवमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥४१॥



विभ्रमैरनाकृष्टोऽपि तथा चेत्किमिति रेमे अत आह कामिनामिति ॥३४॥ ३५॥ स्त्रीणां दुरात्मतामाह सा चेति द्वाभ्यां कामो यानमागमनसाधनं यासां ता गोपीः हित्वा मां भजत इति हेतोरात्मानं वरिष्ठं मेने इति ॥३६॥ कामिनो दैन्यं दर्शयति एवमुक्त इति अखंडितत्वमाह ततश्चेति तस्याः स्कंधारोहेच्छायामंतर्हित इत्यर्थः ॥३८॥ अनुतापमाह हा नाथेति ॥३९॥ अन्विच्छंत्यो मृगयमाणाः अविदूरतः समीपे ॥४०॥ ४१॥

ततस्तयाऽपिसहिताःकृष्णान्वेषणायवनमविशन् ततोहरेरन्वेषणान्निवृत्ताः ॥ ४२ ॥ एवंतमप्राप्ताअपिस्वगृहान्नैवस्मृतवत्यः तदात्मिकाः
सएवात्मायासांताः तन्मय्यइत्यर्थः ॥ ४३ ॥ किंतुपूर्वंयत्रश्रीकृष्णेनसंगतिरासीत्तदेवकालिंद्याःपुलिनमागत्यकृष्णंभावयंतिध्यायंतीतितथा
ताःकृष्णस्यागमनंकांक्षितंयासांताःमिलिताःसत्यःकृष्णमेवजगुरिति ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धटीकायांत्रिंश
त्तमोऽध्यायः ॥ ३० ॥ एकत्रिंशेनिराशास्ताःपुनःपुलिनमागताः॥कृष्णमेवानुगायंत्यःप्रार्थयंतेतदागमम् ॥ १ ॥ जयतीति हेदयिततेज
न्मनाव्रजःअधिकंयथाभवतितथाजयतिउत्कर्षेणवर्त्तते यस्मात्त्वमत्रजातस्तस्मादिंदिरालक्ष्मीःअत्रहिश्रयतेव्रजमलंकृत्यवर्त्तते एवंव्रजेस
र्वस्मिन्मोदमानेअत्रतावकास्त्वदीयागोपीजनास्त्वयित्वदर्थमेवकथंचिद्धृताअसवोयैस्तेत्वांविचिन्वतेअतस्त्वयादृश्यतांप्रत्यक्षीभूयतामिति

ततोऽविशन्वनंचंद्रज्योत्स्नायावद्विभाव्यते ॥ तमःप्रविष्टमालक्ष्यततोनिववृतुःस्त्रियः ॥ ४२ ॥ तन्मनस्का
स्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेवगायंत्योनात्मागाराणिसस्मरुः ॥ ४३ ॥ पुनःपुलिनमा
गत्यकालिंद्याःकृष्णभावनाः ॥ समवेताजगुःकृष्णंतदागमनकांक्षिताः ॥ ४४ ॥ इतिश्रीभागवतेमहापुरा
णेदशमस्कंधेपू०रासक्रीडायांत्रिंशत्तमोध्यायः ॥ ३० ॥ ॥ ॥ गोप्यऊचुः जयतितेऽधिकंजन्मनाव्र
जःश्रयतइंदिराशश्वदत्रहि ॥ दयितदृश्यतांदिक्षुतावकास्त्वयिधृतासवस्त्वांविचिन्वते ॥ १ ॥ शरदुदाशये
साधुजातसत्सरसिजोदरश्रीमुषादृशा ॥ सुरतनाथतेऽशुल्कदासिकावरदनिघ्नतोनेहकिंवधः ॥ २ ॥

यद्वाअस्माभिर्भवान्दृश्यताम् यद्वा एवंत्वयादृश्यतामेतेविचिन्वतइति ॥ १ ॥ अत्रस्वतंत्राणांबहूनांवक्तृत्वादपराआहुरितिसर्वश्लोके
ष्ववतारणा अथापिसंगतिरुच्यते तत्रविचिन्वंतुममकिमितिचेत्तत्राहुःशरादिति शरदुदाशयेशरत्कालीनेसरसिसाधुजातंसम्यक्जातंयत्स
रसिजंविकसितंपद्मंतस्यउदरेगर्भेयाश्रीस्तांमुष्णातिहरतीतितथातयादृशानेत्रेणहेसुरतनाथसंभोगपते वरदअभीष्टप्रदअशुल्कदासिकाअ
मूल्यदासीः निघ्नतोमारयतस्तेतवत्वयाक्रियमाणइहलोकेऽयंवधोनभवतिकिं शस्त्रेणैववधोवधःकिंदृशावधोनभवतिकिंतुभवत्येव अतस्त
वदृशाऽपहृतप्राणप्रत्यर्पणायत्वयादृश्यतामितियथासंभवंसर्वत्रवाक्यशेषः ॥ २ ॥ ॥ ॥ ॥ ॥

किंच बहुभ्योमृत्युभ्यः कृपयारक्षित्वाकिमितीदानींदृशामन्मथंप्रेष्यघातयसीत्याहुः विषेति हेऋषभश्रेष्ठविषमयाज्जलाद्योऽप्ययोनाशस्त स्मात्तथाव्यालराक्षसात्अघासुरात्वर्षात्मारुतात्वैद्युतानलात्अशनिपातात्वृषोरिष्टस्तस्मान्मयात्मजात्व्योमात्विश्वतःअन्यस्मादपिसर्व तोभयाच्चकालियदमनादिनारक्षिताः किमिदानीमुपेक्षसइतिभावः ॥ ३ ॥ अपिचविश्वपालनायावतीर्णस्यतवभक्तोपेक्षाऽत्यंतमनुचिते त्याशयेनाहुः नखल्विति हेसखेभवान्खलुनिश्चितंयशोदासुतोनभवतिकिंतुसर्वप्राणिनांबुद्धिसाक्षी ननुसकिंदृश्योभवतितत्राहुः विखन साब्रह्मणाविश्वपालनायप्रार्थितःसन्सात्वतांकुलेउदेयिवान्उदितइति ॥ ४ ॥ तस्मात्त्वद्भक्तानामस्माकमेतत्प्रार्थनाचतुष्टयंसंपादयेत्या हुः विरचिताभयमित्यादिचतुर्भिः हेवृष्णिधुर्यसंसृतेर्भयात्तेचरणमीयुषांशरणंप्राप्तानांप्राणिनांविरचितंदत्तमभयंयेनतत्तथाहेकांतकामदंवरदं

विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ॥ वृषमयात्मजाद्विश्वतोभयादृषभतेवयंरक्षितामुहुः ॥ ३ ॥ नखलुगोपिकानंदनोभवानखिलदेहिनामंतरात्मदृक् ॥ विखनसाऽर्थितोविश्वगुप्तयेसखउदेयिवान्सात्वतांकुले ॥ ४ ॥ विरचिताभयंवृष्णिधुर्यतेचरणमीयुषांसंसृतेर्भयात् ॥ करसरोरुहंकांतकामदंशिरसिधेहिनःश्रीकरग्रहं ॥ ५ ॥ व्रजजनार्त्तिहन्वीरयोषितांनिजजनस्मयध्वंसनस्मित ॥ भजसखेभवत्किंकरीःस्मनोजलरुहाननंचारुदर्शय ॥ ६ ॥ प्रणतदेहिनांपापकर्शनंतृणचरानुगंश्रीनिकेतनं ॥ फणिफणार्पितंतेपदांबुजंकृणुकुचेषुनःकृंधिहृच्छयं ॥ ७ ॥ मधुरयागिरावल्गुवाक्ययाबुधमनोज्ञयापुष्करेक्षण ॥ विधिकरीरिमावीरमुह्यतीरधरसीधुनाप्याययस्वनः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

तथाश्रियः करंगृण्हातीतितथातत्भवत्करसरोरुहंनः शिरसिधेहि ॥ ५ ॥ हेव्रजजनार्त्तिहन्हेवीरनिजजनानांयःस्मयोगर्वस्तस्यध्वंसनंनाशकंस्मितंयस्यतथाभूतहेसखेभवत्किंकरीर्नःअस्मान्भजआश्रय स्मेतिनिश्चितम् प्रथमंतावज्जलरुहाननंचारुयोषितांनोदर्शय ॥ ६ ॥ अविशेषेणप्रणतानांदेहिनांपापकर्शनंपापहंतृतृणचरान्पशूनप्यनुगच्छतिकृपयेतितथासौभाग्येनश्रियोनिकेतनंवीर्यातिरेकेणफणिनः फणास्वर्पितंतेपदांबुजंनःकुचेषुकृणुकुरु किमर्थम् हृच्छयंकामंकृंधिछिंधि ॥ ७ ॥ हेपुष्करेक्षणतवैवमधुरयागिरावल्गूनिवाक्यानियस्यांतयाबुधानांमनोज्ञयाहृद्ययागंभीरयेत्यर्थः मुह्यतीःइमाःनोविधिकरीःकिंकरीःअधरसीधुनाआप्याययस्वसंजीवयेति ॥ ८ ॥ ॥ ॥

किंच अस्माकंत्वद्विरहेप्राप्तमेवमरणंकिंतुत्वत्कथाऽमृतंपाययद्भिः सुकृतिभिर्वंचितमित्याहुः तवेति कथैवामृतं अत्रहेतुः तप्तजीवनम् प्र
सिद्धामृतादुत्कर्षमाहुः कविभिर्ब्रह्मविद्भिरपीडितंस्तुतम् देवभोग्यंत्वमृतंतैस्तुच्छीकृतम् किंच कल्मषापहंकामकर्मनिरसनम् तत्त्वमृतं
नैवंभूतम् किंचश्रवणमंगलंश्रवणमात्रेणमंगलप्रदं तत्त्वनुष्ठानापेक्षम् किंच श्रीमत्सुशांतंतत्तुमादकम् एवंभूतंत्वत्कथाऽमृतमाततंयथाभ
वतितथायेभुविगृणंतिनिरूपयंतितेजनाभूरिदाःबहुदातारः जीवितंददतीत्यर्थः यद्वा एवंभूतंत्वत्कथामृतंयेभुविगृणंतितेभूरिदाःपूर्वजन्म
सुबहुदत्तवंतः सुकृतिनइत्यर्थः एतदुक्तंभवति येकेवलंकथाऽमृतंगृणंतितेऽपितावदतिधन्याःकिंपुनर्येत्वांपश्यंतिअतःप्रार्थयामहेत्वयाद्द
श्यतामिति ॥ ९ ॥ ननुमत्कथाश्रवणेनैवनिर्वृताभवत्यस्तत्किंमद्दर्शनेन त्वद्विलासक्षुभितचित्तावयंतत्रापिशांतिंनविदामइत्याहुःप्रहसि

**तवकथामृतंतप्तजीवनंकविभिरीडितंकल्मषापहम् ॥ श्रवणमंगलंश्रीमदाततंभुविगृणंतितेभूरिदाजनाः ॥ ९ ॥ प्रहसितंप्रियप्रेमवीक्षणंविहरणंचतेध्यानमंगलं ॥ रहसिसंविदोयाहृदिस्पृशःकुहकनोमनःक्षोभयंतिहि ॥ १० ॥ चलसियद्व्रजाच्चारयन्पशून्नलिनसुंदरंनाथतेपदं ॥ शिलतृणांकुरैःसीदतीतिनःकलिलतांमनःकांतगच्छति ॥ ११ ॥ दिनपरिक्षयेनीलकुंतलैर्वनरुहाननंबिभ्रदावृतं ॥ घनरजस्वलंदर्शयन्मुहुर्मनसिनःस्मरंवीरयच्छसि ॥ १२ ॥ प्रणतकामदंपद्मजार्चितंधरणिमंडनंध्येयमापदि ॥ चरणपंकजंशंतमंचतेरमणनःस्तनेष्वर्पयाधिहन् ॥ १३ ॥ ॥ ॥ ॥**

तमिति हेप्रिय कुहककपट संविदःसंकेतनर्माणि ॥ १० ॥ किंच त्वयिवयमतिप्रेमार्द्रचित्तास्त्वंपुनरस्मासुकेनहेतुनाकपटमाचरसीत्या
हुःश्लोकद्वयेन चलसीति हेनाथहेकांतयत्त्वंयदाव्रजाच्चलसिपशूंश्चारयंस्तदाततूनालिनसुंदरंकोमलंतेपदंशिलैःकणिशैस्तृणैरंकुरैश्चसीदति
क्लिश्येदितिनोमनःकलिलतामस्वास्थ्यंगच्छतिप्राप्नोति एवंभूतास्त्वद्दुःखशंकितचित्तावयम् ॥ ११॥ त्वंतुदिनपरिक्षयेसायंकालेनीलकुंत
लैरावृतंघनरजस्वलंगोरजश्छुरितंवनरुहाननमलिमालाकुलपरागच्छुरितपद्मतुल्यमाननंबिभ्रत्तच्चमुहुर्मुहुर्दर्शयन्नोमनसिकेवलंस्मरंयच्छ
सिअर्पयसि नतुसंगंददासीतिकपटइतिभावः ॥ १२॥ अतोधुनाकपटंविहायएवंकुर्वितिप्रार्थयंतिश्लोकद्वयेनप्रणतकामदमिति हेआधिहन्
हेरमणपद्मजेनार्चितंआपदिध्येयंध्यानमात्रेणापन्निवर्तकंशंतमंचसेवासमयेऽपिसुखतमंतेचरणपंकजंकामतापशांतयेनःस्तनेष्वर्पयेति १३

अपिच हेवीरतेऽधरामृतंनोवितरदेहि स्वरितेननादितेनवेणुनासुष्ठुचुंबितमिति नादामृतवासितामितिभावः इतररागविस्मारणंनृणामितरेषु सार्वभौमादिसुखेषुरागमिच्छांविस्मारयतिविलापयतीतितथातत् ॥ १४ ॥ किंच क्षणमपित्वददर्शनेदुःखंदर्शनेचसुखंदृष्ट्वासर्वसंगपरित्यागेनयतयइववयंत्वामुपागतास्त्वंतुकथमस्मांस्त्यक्तुमुत्सहसेइतिसकरुणमूचुः अटतीतिद्वयेन यद्यदाभवान्कानननंवृंदावनंप्रतिअटतिगच्छति तदात्वामपश्यतांप्राणिनांत्रुटिःक्षणार्द्धमपियुगवद्भवति एवमदर्शनेदुःखमुक्तम् पुनश्चकथंचिद्दिनांतेतवश्रीमन्मुखमुदुच्चैरीक्षमाणानांतेषांदृशांपक्ष्मकृद्ब्रह्माजडोमंदएव निमेषमात्रमपिअंतरमसह्यमितिदर्शनेसुखमुक्तं ॥ १५ ॥ तस्मात्हेअच्युतपतीन्सुतान्अन्वयांस्तत्संबंधिनोभ्रातॄन्बांधवांश्चातिविलंघ्यतवसमीपमागतावयं कथंभूतस्य गतिविदःअस्मदागमनंजानतः गीतगतीर्वाजानतःगतिविदोवयं

सुरतवर्द्धनंशोकनाशनंस्वरितवेणुनासुष्ठुचुंबितं ॥ इतररागविस्मारणंनृणांवितरवीरनस्तेऽधरामृतं ॥ १४ ॥ अटतियद्भवानह्निकाननंत्रुटिर्युगायतेत्वामपश्यताम् ॥ कुटिलकुंतलंश्रीमुखंचतेजडउदीक्षतांपक्ष्मकृद्दृशाम् ॥ १५ ॥ पतिसुतान्वयभ्रातृबांधवानतिविलंघ्यतेंऽत्यच्युतागताः ॥ गतिविदस्तवोद्गीतमोहिताःकितवयोषितःकस्त्यजेन्निशि ॥ १६ ॥ रहसिसंविदंहृच्छयोदयंप्रहसिताननंप्रेमवीक्षणं ॥ बृहदुरःश्रियोवीक्ष्यधामतेमुहुरतिस्पृहामुह्यतेमनः ॥ १७ ॥ व्रजवनौकसांव्यक्तिरंगतेवृजिनहंत्र्यलंविश्वमंगलं ॥ त्यजमनाक्चनस्त्वत्स्पृहात्मनांस्वजनहृद्रुजांयन्निषूदनं ॥ १८ ॥ ॥

वा तवोद्गीतेनोच्चैर्गीतेनमोहिताः हेकितवशठएवंभूतायोषितोनिशिस्वयमागतास्त्वामृतेकस्त्यजेन्नकोऽपीत्यर्थः ॥ १६ ॥ अतस्त्वयात्यक्तानामस्माकंप्राक्तनत्वद्दर्शननिदानहृद्रोगस्यत्वत्संगत्यैवचिकित्सांकुर्वित्याशयेनाहुर्द्वयेन रहसीति श्रियोधामतेबृहद्विशालमुरश्चवीक्ष्यातिस्पृहाभवति तथाचमुहुर्मुहुर्मनोमुह्यति ॥ १७ ॥ तवचव्यक्तिरभिव्यक्तिर्व्रजवनौकसांसर्वेषामविशेषेणवृजिनहंत्रीदुःखनिरसनीतिविश्वमंगलंसर्वमंगलरूपाचअतस्त्वत्स्पृहारूढमनसांनःमनाक्ईषत्किमपित्यजमुंच कार्पण्यमकुर्वन्देहीत्यर्थः किंतत् स्वजनहृद्रोगाणांयदतिगोप्यंनिषूदनंनिवर्तकमौषधंतत्त्वमेववेत्सीतिगूढाभिप्रायम् ॥ १८ ॥ ॥ ॥ ॥

अतिप्रेमधर्षितारुदंत्यआहुः यदिति हेप्रिययत्तेतवसुकुमारंपदाब्जंकठिनेषुकुचेषुसंमर्द्दनशंकिताःशनैर्दधीमहिधारयेमवयम् त्वंतुतेनाट
वीमटासि नयसीतिपाठेपशून्वाकांचिदन्यांवाआत्मानमेववानयसिप्रापयसि तत्ततःतत्पदांबुजंवाकूर्पादिभिःसूक्ष्मपाषाणादिभिःकिं
स्विन्नव्यथतेकथंनुनामनव्यथेतेति भवानेवायुर्जीवनंयासांतासांनोधीर्भ्रमतिमुह्यतीति ॥ १९ ॥ इतिदशमेपूर्वार्धटीकायामेकत्रिंशोध्या
यः ॥ ३१ ॥ द्वात्रिंशेविरहालापविक्लिन्नहृदयोहरिः ॥ तत्राविर्भूयगोपीस्ताःसांत्वयामाससमानयन् ॥ १ ॥ स्वप्रेमामृतकल्लोलविव्हलीकृत
चेतसः ॥ सदयंनंदयन्गोपीरुद्भूतोनंदनंदनः ॥ २ ॥ इतिगोप्यइति इतिएवंप्रभृतिचित्रधाअनेकधासुस्वरमुच्चैःकृष्णदर्शनेलालसाऽतिस्पृ

यत्तेसुजातचरणांबुरुहंस्तनेषुभीताःशनैःप्रियदधीमहिकर्कशेषु॥तेनाटवीमटसितद्व्यथतेनकिंस्वित्कूर्पादि
भिर्भ्रमतिधीर्भवदायुषांनः॥१९॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेगोपीकृतकृष्णस्तुतिर्नाम
एकत्रिंशोध्यायः॥३१॥ श्रीशुकउवाच इतिगोप्यःप्रगायंत्यःप्रलपंत्यश्चचित्रधा॥ रुरुदुःसुस्वरंराजन्कृ
ष्णदर्शनलालसाः ॥ १ ॥ तासामाविरभूच्छौरिःस्मयमानमुखांबुजः ॥ पीतांबरधरःस्रग्वीसाक्षान्मन्मथ
मन्मथः ॥ २ ॥ तंविलोक्यागतंप्रेष्ठंप्रीत्युत्फुल्लदृशोबलाः ॥ उत्तस्थुर्युगपत्सर्वास्तन्वःप्राणमिवागतं ॥
॥ ३ ॥ काचित्करांबुजंशौरेर्जगृहेंऽजलिनामुदा ॥ काचिद्दधारतद्बाहुमंसेचंदनभूषितं ॥ ४ ॥ काचिदंजलि
नाऽगृह्णात्तन्वीतांबूलचर्वितं ॥ एकातदंघ्रिकमलंसंतप्तास्तनयोरधात् ॥५॥ एकाभ्रुकुटिमाबध्यप्रेमसंरंभ
विह्वला ॥ घ्नंतीवैक्षत्कटाक्षेपैःसंदष्टदशनच्छदा ॥६॥ अपराऽनिमिषद्दृग्भ्यांजुषाणातन्मुखांबुजं ॥ आपी
तमपिनातृप्यत्संतस्तच्चरणंयथा ॥ ७ ॥ तंकाचिन्नेत्ररंध्रेणहृदिकृत्यनिमील्यच ॥ पुलकांग्युपगुह्यास्ते
योगीवानंदसंप्लुता ॥ ८ ॥ ॥ ॥ ॥ ॥

हायासांताः ॥ १ ॥ साक्षान्मन्मथमन्मथःजगन्मोहनस्यकामस्यापिमनस्युद्भूतःकामः साक्षात्तस्यापिमोहकइत्यर्थः ॥ २ ॥ तन्वःकरच
रणादयः ॥ ३ ॥ ४ ॥ अंजलिनासंहतहस्तद्वयेन ॥ ५ ॥ भ्रुकुटींभ्रुवमाबध्यकुटिलीकृत्य प्रेमसंरंभेणप्रणयकोपावेशेनविव्हलावि
वशादष्टाधरोष्ठाकटाःकटाक्षास्तैर्येआक्षेपाःपरिभवास्तैस्ताडयंतीवैक्षत ॥६॥ अनिमिषंतीभ्यामनिमीलंतीभ्यामापीतमपिसम्यक्दृष्टमपिपुनः
पुनर्जुषाणानातृप्यत् ॥ ७ ॥ हृदिकृत्यहृदयंनीत्वेत्यर्थः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

प्राज्ञमीश्वरंप्राप्ययथामुमुक्षवोजनाः यद्वा प्राज्ञंब्रह्मज्ञंप्राप्ययथासंसारिणः यद्वा प्राज्ञंसौषुप्तंप्राप्ययथाविश्वतैजसावस्थाजीवाः ॥ ९ ॥ पुरुषःपरमात्माशक्तिभिःसत्वादिभिर्यथा यद्वा उपासकःपुरुषोज्ञानबलवीर्यादिभिः यद्वा पुरुषोऽनुशायीप्रकृत्याद्युपाधिभिर्वृतोयथाऽधिकंवि रोचतेतद्वत् ॥ १० ॥ विकसत्कुंदमंदारैःसुरभिर्योऽनिलस्तस्मात्षट्पदायस्मिंस्तत् ॥ ११ ॥ शरच्चंद्रांशूनांसंदोहैःसमूहैर्ध्वस्तंदोषातमःरात्रिग तंतमोयस्मिंस्तत् अतःशिवंसुखकरंहस्तरूपैस्तरलैस्तरंगैराचिताआस्तृताकोमलावालुकायस्मिन् एवंभूतंपुलिनंताः समादायनिर्विश्यता भिर्वृतोऽधिकंव्यरोचतेतिपूर्वेणान्वयः ॥ १२ ॥ ताश्चमनोरथानामंतंययुःपूर्णकामाबभूवुःश्रुतयोयथेति अयमर्थः यथाकर्मकांडेश्रुतयःपरमेश्व रमपश्यंत्यस्तत्तत्कामानुबंधैरपूर्णाइवभवंतिज्ञानकांडेतुपरमेश्वरंदृष्ट्वातदाल्हादपूर्णाः कामानुबंधंजहतितद्वदितिआप्तकामाअपिप्रेम्णात

सर्वास्ताःकेशवालोकपरमोत्सवनिर्वृताः ॥ जहुर्विरहजंतापंप्राज्ञंप्राप्ययथाजनाः ॥९॥ ताभिर्विधूतशोका भिर्भगवानच्युतोवृतः ॥ व्यरोचताधिकंतातपुरुषःशक्तिभिर्यथा ॥१०॥ ताःसमादायकालिंद्यानिर्विश्यपु लिनंविभुः ॥ विकसत्कुंदमंदारसुरभ्यनिलषट्पदम् ॥११॥ शरच्चंद्रांशुसंदोहध्वस्तदोषातमःशिवम् ॥ कृ ष्णायाहस्ततरलाचितकोमलवालुकम् ॥ १२ ॥ तद्दर्शनाल्हादविधूतहृद्रुजोमनोरथांतंश्रुतयोयथाययुः ॥ स्वैरुत्तरीयैःकुचकुंकुमांकितैरचीक्लृपन्नासनमात्मबंधवे ॥१३॥ तत्रोपविष्टोभगवान्सईश्वरोयोगेश्वरांतर्हृ दिकल्पितासनः ॥ चकासगोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदंवपुर्दधत् ॥१४॥ सभाजयित्वातमनं गदीपनंसहासलीलेक्षणविभ्रमभ्रुवा ॥ संस्पर्शनेनांककृतांघ्रिहस्तयोःसंस्तुत्यईषत्कुपिताबभाषिरे ॥१५॥ गोप्यऊचुः भजतोऽनुभजंत्येकएकएतद्विपर्ययम् ॥ नोभयांश्चभजंत्येकएतन्नोब्रूहिसाधुभोः ॥ १६॥

मभजन्नित्याह स्वैरिति अचीक्लृपन्रचयामासुः आत्मबंधवेअंतर्यामिणे ॥ १३ ॥ गोपीसभागतस्ताभिःसंमानितःसंश्चकासशुशुभे त्रैलोक्येया लक्ष्मीःशोभातस्याएकमेवपदंस्थानंतद्वपुर्दधत्दर्शयन् ॥ १४ ॥ सहासलीलेक्षणेनविभ्रमोविलासोयस्यांतयाभ्रुवाउपलक्षितःसंस्पर्शनेनसं मर्दनेन ॥ १५ ॥ तत्रभगवतोऽकृतज्ञतांतद्वचनेनैवापादयितुकामागूढाभिप्रायालोकवृत्तांतमिवपृच्छंति भजतइति भजतःप्राणिनःअनुअनं तरंकेचित्तद्भजनानुसारेणभजंति केचिदेतद्विपर्ययंयथाभवतितथा तद्भजनानपेक्षमभजतोपिभजंति अन्येतुनोभयानिति ॥ १६ ॥

विदिताभिप्रायउत्तरमाह मिथइति हेसख्यः उपकारप्रत्युपकारतयायेमिथोभजंतितेअन्यंनभजंतिकिंत्वात्मानमेव कुतः हियस्मात्स्वार्थ
एवैकांततःउद्यमोयेषांते तत्रचनसौहृदंअतोनसुखंनचधर्मोदृष्टोद्देशाद्गोमहिष्यादिभजनवदित्यर्थः ॥ १७ ॥ येत्वभजतोभजंतितेद्विवि
धाः करुणाःस्निग्धाश्च तत्रतुयथाक्रमंधर्मकामौभवतइत्याह भजंत्यभजतइति ॥ १८ ॥ तृतीयप्रश्नोत्तरंभजतोऽपीति अयमर्थः तेतुचतु
र्विधाएकेआत्मारामाःअपराग्दृशः केचिदाप्तकामाःप्रियदर्शनेऽपिपूर्णकामत्वेनभोगेच्छारहिताः अन्येऽकृतज्ञामूढाः अन्येतुगुरुद्रुहःअति
कठिनाः सपितायस्तुपोषकइतिन्यायादुपकर्त्तागुरुतुल्यस्तस्मैद्रुह्यंतीतितथाते ॥ १९ ॥ अत्रचरमकोटिगतमात्मानंमत्वाअक्षिसंकोचैः

**श्रीभगवानुवाच मिथोभजंतियेसख्यःस्वार्थैकांतोद्यमाहिते॥नतत्रसौहृदंधर्मःस्वार्थार्थंतद्धिनान्यथा॥१७**
**भजंत्यभजतोयेवैकरुणाःपितरोयथा॥धर्मोनिरपवादोऽत्रसौहृदंचसुमध्यमाः॥१८॥भजतोऽपिनवैकेचित्**
**भजंत्यभजतःकुतः॥आत्मारामाह्याप्तकामाअकृतज्ञागुरुद्रुहः ॥१९॥ नाहंतुसख्योभजतोऽपिजंतून्भजा**
**म्यमीषामनुवृत्तिवृत्तये॥यथाऽधनोलब्धधनेविनष्टेतच्चिंतयाऽन्यन्निभृतोनवेद॥२०॥एवंमदर्थोज्झितलोक**
**वेदस्वानांहिवोमय्यनुवृत्तयेऽबलाः॥मयापरोक्षंभजतातिरोहितंमाऽसूयितुंमाऽर्हथतत्प्रियंप्रियाः ॥२१॥**

परस्परंगूढस्मितमुखीस्ताद्दृष्ट्वाआह नाहंत्विति हेसख्यःअहंतेषांमध्येनकोऽपिकिंतुपरमकारुणिकःपरमसुहृच्च कथम् अमीषांभजतामनु
वृत्तिवृत्तयेनिरंतरध्यानप्रवृत्त्यर्थंतान्नभजामि एतत्सदृष्टांतमाह यथेति तस्यधनस्यैवचिंतयानिभृतःपूर्णोव्याप्तइतियावत् अन्यत्क्षुत्पिपासा
द्यपिनवेद ॥ २० ॥ एवंमदर्थेउज्झितलोकवेदस्वानांमदर्थेउज्झितोलोकोयुक्तायुक्ताप्रतीक्षणात्वेदश्चधर्माधर्माप्रतीक्षणात्स्वाज्ञातयश्चस्ने
हत्यागात्याभिस्तासांवोयुष्माकंपरोक्षमदर्शनंयथाभवतितथाभजतायुष्मत्प्रेमालापान्शृण्वतैवतिरोहितमंतर्धानेनास्थितम् तत्तस्मात्हेअ
बलाःहेप्रियाःमामामसूयितुंदोषारोपेणद्रष्टुंयूयंमार्हथनयोग्याःस्थ ॥ २१ ॥ ॥ ॥ ॥ ॥

आस्तामिदंपरमार्थंतुशृणुतेत्याह नेति निरवद्यासंयुक्संयोगोयासांतासांवःविबुधानामायुषाऽपिचिरकालेनाऽपिस्वीयंसाधुकृत्यंप्रत्युपका
रंकर्त्तुंनपारयेनशक्नोमि कथंभूतानां याभवंत्योदुर्जराःअजरायागेहशृंखलास्ताःसंवृश्च्यनिःशेषंछित्वामामामभजन्तासाम् मच्चित्तंतुबहुषुप्रे
मयुक्ततयानैवमेकनिष्ठम् तस्माद्वोयुष्माकमेवसाधुनासाधुकृत्येनतद्युष्मत्साधुकृत्यंप्रतियातुप्रतिकृतंभवतु युष्मत्सौशील्येनैवममानृण्यंनतुम
त्कृतप्रत्युपकारेणेत्यर्थः ॥ २३ ॥ इतिदशमेपूर्वार्धेटीकायांद्वात्रिंशोध्यायः ॥ ३२ ॥ ॥ त्रयस्त्रिंशेततोगोपीमंडलीमध्यगोहरिः ॥ प्रि
यास्तारमयामासन्ह्रदिनीवनकेलिभिः ॥ १ ॥ तत्तदाअंगहेराजन् यद्वा तस्यभगवतोऽनेनवपुषाकरचरणाद्यवयवैर्वाउपचिताःसमृद्धा
आशिषोयासांताः ॥ १ ॥ रासक्रीडांरासोनामबहुनर्त्तकीयुक्तोनृत्यविशेषस्तांक्रीडाम् अन्योऽन्यमाबद्धाःसंग्रथिताबाहवोयैस्तैःसह ॥ २॥

नपारयेऽहंनिरवद्यसंयुजांस्वसाधुकृत्यंविबुधायुषापिवः ॥ यामाऽभजन्दुर्जरगेहशृंखलाःसंवृश्च्यतद्वःप्र
तियातुसाधुना ॥ २२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेद्वात्रिंशोध्यायः ॥३२॥ ॥ श्रीशु
कउवाच इत्थंभगवतोगोप्यःश्रुत्वावाचःसुपेशलाः ॥ जहुर्विरहजंतापंतदंगोपचिताशिषः ॥१॥ तत्रारभ
तगोविंदोरासक्रीडामनुव्रतैः ॥ स्त्रीरत्नैरन्वितःप्रीतैरन्योन्याबद्धबाहुभिः ॥ २॥ रासोत्सवःसंप्रवृत्तोगो
पीमंडलमंडितः ॥ योगेश्वरेणकृष्णेनतासांमध्येद्वयोर्द्वयोः ॥ प्रविष्टेनगृहीतानांकंठेस्वनिकटंस्त्रियः॥३॥
यंमन्येरन्नभस्तावद्विमानशतसंकुलम् ॥ दिवौकसांसदाराणामौत्सुक्यापहृतात्मनाम् ॥ ४ ॥ ततोदुंदु
भयोनेदुर्निपेतुःपुष्पवृष्टयः ॥ जगुर्गंधर्वपतयःसस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥ वलयानांनूपुराणांकिंकि
णीनांचयोषितां ॥ सप्रियाणामभूच्छब्दस्तुमुलोरासमंडले ॥ ६ ॥ ॥ ॥ ॥ ॥

तत्साहित्यमभिनयेनदर्शयति रासोत्सवइत्यक्षर चतुष्टयाधिकेनसार्धेन तासांमंडलरूपेणावस्थितानांद्वयोर्द्वयोर्मध्येप्रविष्टेनतेनैवकंठेगृहीता
नामुभयतआलिंगितानाम् कथंभूतेन यंसर्वाःस्त्रियःस्वनिकटंमामेवाश्लिष्टवानितिमन्येरंस्तेन एतदर्थंद्वयोर्द्वयोर्मध्येप्रविष्टेनेत्यर्थः नन्वे
कस्यकथंतथाप्रवेशःसर्वसन्निहितत्वेवाकुतःस्वैकनिकटत्वाभिमानस्तासामित्यतउक्तं योगेश्वरेणेतिअचिंत्यशक्तिनेत्यर्थः ॥ ३ ॥ ताव
त्तत्क्षणमेवऔत्सुक्यव्याप्तमनसांसस्त्रीकाणांदेवानांविमानशतैःसंकुलंसंकीर्णंनभोबभूव ॥ ४ ॥ तत्तस्यभगवतःश्रीकृष्णस्यअमलंनि
र्मलंयशोजगुरिति ॥ ५ ॥ सप्रियाणांकृष्णसहितानां तुमुलःसंकीर्णः ॥ ६ ॥ ॥ ॥ ॥ ॥

महामरकतोनीलमणिरिवहैमानांमणीनांमध्येमध्येताभिः स्वर्णवर्णाभिराश्लिष्टाभिः शुशुभे गोपीदृष्ट्याभिप्रायेणवाविनैवमध्यपदा वृत्तिमेक
वचनम् ॥ ७ ॥ सयथाताभिः शुशुभेतथाताअपितेनविरेजुरित्याह पादन्यासैरिति भुजविधुतिभिः करचालनैर्भज्यमानैश्चलद्भिः कुचैश्च
पटैश्चगंडलोलैर्गंडेषुचंचलैः स्विद्यन्मुख्यः स्विद्यंतिस्वेदमुद्गिरंतिमुखानियासांताः कबरेषुरशनासुचग्रंथयोदृढायासां यद्वा तेषुतासु
चअग्रंथयः शिथिलग्रंथयइत्यर्थः तत्रनानामूर्तिः कृष्णोमेघचक्रमिवतास्तुबहुविधास्तडितइवस्वेदस्तुषारइवगीतंगर्जितमिवेतियथ ।संभव मू
ह्यम् ॥ ८ ॥ नृत्यमानाः नृत्यंत्यः रक्तकंठ्यः नानारागैरनुरंजितकंठ्यः कृष्णस्याभिमर्शेनसंस्पर्शेनमुदिताः इदंविश्वं ॥ ९ ॥ मुकुंदेन

तत्रातिशुशुभेताभिर्भगवान्देवकीसुतः ॥ मध्येमणीनांहैमानांमहामरकतोयथा ॥ ७ ॥ पादन्यासैर्भुजविधु
तिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुंडलैर्गंडलोलैः ॥ स्विद्यन्मुख्य ःकबररशनाग्रंथयः कृष्ण
वध्वोगायंत्यस्तंतडितइवतामेघचक्रेविरेजुः ॥ ८ ॥ उच्चैर्जगुर्नृत्यमानारक्तकंठ्योरतिप्रियाः ॥ कृष्णाभिमर्श
मुदितायद्गीतेनेदमावृतं ॥ ९ ॥ काचित्समंमुकुंदेनस्वरजातीरमिश्रिताः ॥ उन्निन्येपूजितातेनप्रीयतासाधुसा
ध्विति ॥ तदेवध्रुवमुन्निन्येतस्यैमानंचबह्वदात् ॥ १० ॥ काचिद्रासपरिश्रांतापार्श्वस्थस्यगदाभृतः ॥ जग्राह
बाहुनास्कंधंश्लथद्वलयमल्लिका ॥ ११ ॥ तत्रैकांऽसगतंबाहुंकृष्णस्योत्पलसौरभं ॥ चंदनालिप्तमाघ्रायहृ
ष्टरोमाचुचुंबह ॥ १२ ॥ कस्याश्चिन्नाट्यविक्षिप्तकुंडलत्विषमंडितं ॥ गंडंगंडेसंदधत्याआदात्तांबूलचर्वित
म् ॥ १३ ॥ नृत्यंतीगायतीकाऽपिकूजन्नूपुरमेखला ॥ पार्श्वस्थाऽच्युतहस्ताब्जंश्रांताधात्स्तनयोःशिवं ॥
॥ १४ ॥ गोप्योलब्ध्वाऽच्युतंकांतंश्रियएकांतवल्लभम् ॥ गृहीतकंठ्यस्तद्दोर्भ्यांगायंत्यस्तंविजह्रिरे ॥ १५ ॥

सहस्वरजातीः षड्जादिस्वरालापगतीः अमिश्रिताः कृष्णोन्नीताभिरसंकीर्णाः प्रीयमाणेनसंमानितास्तज्जात्युन्नयनमेवध्रुवंध्रुवाख्यंतालावि
शेषंकृत्वाउन्निन्येउन्नीतवती ॥ १० ॥ एवंनृत्यगीतादिनाश्रीकृष्णसंमानितानांतासामतिप्रीतिंविलसितंवृत्तमाह काचिदिति श्लथंतिवल
यानिमल्लिकाश्चयस्याः सा ॥ ११ ॥ उत्पलस्यसौरभमिवसौरभंयस्यतंबाहुम् ॥ १२ ॥ नाट्येननृत्येनविक्षिप्तयोश्चंचलयोः कुंडलयोस्त्वि
षेणत्विषामंडितंगंडंकपोलंतथाभूतेस्वगंडेसंदधत्याः संयोजयंत्याः ॥ १३ ॥ कूजंतौनूपुरेमेखलाचयस्याः सा ॥ १४ ॥ एवमन्याअपिगो
प्योयथायथंनानाविभ्रमैर्विजह्रुरित्याह गोप्यइति ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रवादकेषुगायकेषुचसस्त्रीकेषुगंधर्वकिन्नरादिषुरसावेशेनमुह्यत्सुनृत्यत्सुचान्यामेववाद्यादिसंपत्तिंदर्शयन्रासंसभ्रममाह कर्णोत्पलेतिक र्णोत्पलैश्चअलकविटंकैःअलकालंकृतैःकपोलैश्चघर्मैश्चवक्त्रेषुश्रीःशोभायासांताः घोषाःकिंकिण्यः वलयनूपुरघोषैर्वाद्यैर्वादित्रैःस्वकेशे भ्यःस्रस्ताःस्रजोयासांताःएतेनतालगतिसंतुष्टाःकेशाःसशिरःकंपंपादेषुपुष्पवृष्टिमिवाकुर्वन्नित्युत्प्रेक्षितम्भगवतासहननृतुःकभ्रमराएवगाय कायस्यांरासंसभायाम् ॥ १६ ॥ यथागोप्योनानाविभ्रमैर्भगवतासहविजन्हुरेवंभगवानपिस्वविलासैस्ताभिः सहरेमइत्याह एवमिति त द्विलासानभिभूतस्यैवरतौदृष्टांतः यथाऽर्भकइति स्वप्रतिबिंबैर्विभ्रमःक्रीडायस्यसइव अनेनैतद्दर्शितं स्वीयमेवसर्वकलाकौशलंसौगंध्यला वण्यमाधुर्यादि चतासुसंचार्यताभिःसहरेमेयथाऽर्भकःस्वप्रतिबिंबैरिति ॥ १७ ॥ तास्तुभगवद्विलासैराकुलाबभूवुरित्याह तदंगेति तस्यांग

**कर्णोत्पलालकविटंककपोलघर्मवक्त्रश्रियोवलयनूपुरघोषवाद्यैः ॥ गोप्यःसमंभगवताननृतुःस्वकेशस्रस्त स्रजोभ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥ एवंपरिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ॥ रेमेर मेशोव्रजसुंदरीभिर्यथाऽर्भकःस्वप्रतिबिंबविभ्रमः ॥ १७ ॥ तदंगसंगप्रमुदाकुलेंद्रियाःकेशान्दुकूलंकुचप ट्टिकांवा ॥ नांजःप्रतिव्योढुमलंव्रजस्त्रियोविस्रस्तमालाभरणाःकुरूद्वह ॥ १८ ॥ कृष्णविक्रीडितंवीक्ष्यमु मुहुःखेचरस्त्रियः ॥ कामार्दिताःशशांकश्चसगणोविस्मितोऽभवत् ॥ १९ ॥ कृत्वातावंतमात्मानंयावतीर्गो पयोषितः ॥ रेमेसभगवांस्ताभिरात्मारामोऽपिलीलया ॥ २० ॥ तासामतिविहारेणश्रांतानांवदनानिसः ॥ प्रामृजत्करुणःप्रेम्णाशंतमेनांगपाणिना ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

संगेनप्रकृष्टामुत्प्रीतिस्तयाआकुलानिअवशानींद्रियाणियासांताः विश्लथबंधान्केशादीन्अंजसाप्रतिवोढुंयथापूर्वंधर्त्तुंनालंनसमर्थाबभूवुः विस्रस्तामालाआभरणानिचयासांताः ॥ १८ ॥ नकेवलंताएवाकुलेंद्रियाःकिंतुदेव्योऽपीत्याहकृष्णविक्रीडितमिति किंच शशांकश्चेति अनेनैतत्सूचितं शशांकेनविस्मितेनगतौविस्मृतायांततःप्राक्तनाःसर्वेऽपिग्रहास्तत्रतत्रैवतस्थुःततश्चातिदीर्घासुरात्रिषुयथासुखंविजन्हुरिति ॥ १९ ॥ किंच कृत्वेति अयंभावः कात्यायनिमहामायेमहायोगिन्यधीश्वरि ॥ नंदगोपसुतंदेविपतिंमेकुरुतेनमइतिप्रत्येकंताभिः प्रार्थ नात्भगवताऽपियाताबलाव्रजांसिद्धामयेमारंस्यथक्षपाइतितथैवप्रतिश्रुतत्वात्तावंतमात्मानंकृत्वारेमेइति यावतीःयावत्यः ॥ २० ॥ कृपा ऽतिशयमाह तासामिति ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततोऽतित्द्दष्टानांगोपीनांचरितमाह गोप्यइति स्फुरतांस्वर्णकुंडलानांकुंतलानांचत्विषागंडेषुयाश्रीस्तयासुधितेनामृतायितेनहाससहितेन निरीक्षणेनचऋषभस्यपत्युःकृष्णस्यमानंदधत्यःपूजांकुर्वत्यस्तत्कर्माणिजगुः तस्यकररुहैर्नखैःस्पर्शेनप्रमोदोयासांताः ॥ २२ ॥ अथजल केलिमाह ताभिरिति तासामंगसंगेनघृष्टासंमर्दितायास्रक्तस्याअतएवतासांकुचकुंकुमेनरंजितायाःसंबंधिभिर्गंधर्वपालिभिर्गंधर्वपाः गंधर्व पतयइवगायंतोयेअलयस्तैरनुद्रुतोऽनुगतःसकृष्णोवाःउदकमाविशत् भिन्नसेतुःविदारितवप्रः स्वयंचातिक्रांतलोकवेदमर्यादः ॥२३॥ स्वर तिःआत्मारामोऽपि अत्रगोपीमंडलेअंभासिवा ॥ २४ ॥ स्थलजलक्रीडेदर्शितेवनक्रीडांदर्शयाति ततश्चेति यमुनायाउपवनेजलस्थलप्र

गोप्यःस्फुरत्पुरटकुंडलकुंतलत्विड्गंडश्रियासुधितहासनिरीक्षणेन ॥ मानंदधत्यऋषभस्यजगुःकृतानिपु ण्यानितत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥ ताभिर्युतःश्रममपोहितुमंगसंगघृष्टस्रजःसकुचकुंकुमरंजिता याः ॥ गंधर्वपालिभिरनुद्रुतआविशद्वाःश्रांतोगजीभिरिभराडिवभिन्नसेतुः ॥ २३ ॥ सोंऽभस्यलंयुवति भिःपरिषिच्यमानःप्रेम्णेक्षितःप्रहसतीभिरितस्ततोंऽग ॥ वैमानिकैःकुसुमवर्षिभिरीड्यमानोरेमेस्वयं स्वरतिरत्रगजेंद्रलीलः ॥ २४ ॥ ततश्चकृष्णोपवनेजलस्थलप्रसूनगंधानिलजुष्टदिक्तटे ॥ चचारभृंगप्रम दागणावृतोयथामदच्युद्द्विरदःकरेणुभिः ॥ २५ ॥ एवंशशांकांशुविराजितानिशाःससत्यकामोऽनुरताब लागणः ॥ सिषेवआत्मन्यवरुद्धसौरतःसर्वाःशरत्काव्यकथारसाश्रयाः ॥ २६ ॥ राजोवाच संस्थापनाय धर्मस्यप्रशमायेतरस्यच ॥ अवतीर्णोहिभगवानंशेनजगदीश्वरः ॥ २७ ॥ सकथंधर्मसेतूनांवक्ताकर्त्ताऽभिर क्षिता ॥ प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनं ॥ २८ ॥ ॥ ॥ ॥

सूनानांगंधोयस्मिंस्तेनानिलेनजुष्टानिदिशांतटानिअंतायस्मिन् यद्वा दिशश्चतटंस्थलंचयस्मिन्नुपवने भृंगाणांप्रमदानांचगणैरावृतः॥ ॥२५॥ रासक्रीडांनिगमयति एवमिति सकृष्णःसत्यसंकल्पःअनुरागिस्त्रीकदंबस्थएवंसर्वानिशाःसेवितवान् शरत्काव्यकथारसाश्रयाःशर दिभवाःकाव्येषुकथ्यमानायेरसास्तेषामाश्रयभूतानिशाः यद्वा निशाइतिद्वितियाऽत्यंतसंयोगे शृंगाररसाश्रयाःशरदिप्रसिद्धाःकाव्येषुयाःक थास्ताःसिषेवइति एवमप्यात्मन्येवावरुद्धःसौरतश्चरमधातुर्नतुस्खलितोयस्येतिकामजयोक्तिः ॥ २६ ॥२७॥ प्रतीपंप्रतिकूलमधर्ममित्य र्थः आचरत्कृतवान् नचेदमधर्ममात्रंकलंजभक्षणादिवत्किंतुमहासाहसमित्याह परदाराभिमर्शनमिति ॥ २८ ॥ ॥ ॥

आप्तकामस्यनायमधर्मइति चेद्यद्येवंकामाभावान्निंदितंकेनाभिप्रायेणकृतवानितिपृच्छति आप्तकामइति ॥ २९ ॥ परमेश्वरेकैमुतिकन्या
येनपरिहर्तुंसामान्यतोमहतांवृत्तमाह धर्मव्यतिक्रमइति साहसंचदृष्टंप्रजापतींद्रसोमावि श्वामित्रादीनांतच्चतेषांतेजस्विनांदोषायनभवती
ति ॥ ३० ॥ तर्हियद्यदाचरतिश्रेष्ठइतिन्यायेनान्योऽपिकुर्यादित्याशंक्याह नैतदितिअनीश्वरोदेहादिपरतंत्रः यथारुद्रव्यतिरिक्तोविषमाचर
न्भक्षयन् ॥ ३१ ॥ कथंतर्हिसदाचारस्यप्रामाण्यमतआह ईश्वराणामिति तेषांवचःसत्यमतस्तदुक्तमाचरेदेव आचरितंक्वचित्सत्यमतः
स्ववचोयुक्तंतेषांवचसायद्युक्तमविरुद्धंतत्तदेवाचरेत् ॥ ३२ ॥ ननुतर्हितेऽपिकिमेवंसाहसमाचरंतितत्राह कुशलेति प्रारब्धकर्मक्षपणमा

आप्तकामोयदुपतिःकृतवान्वैजुगुप्सितम् ॥ किमभिप्रायएतंनःसंशयंछिंधिसुव्रत ॥ २९ ॥ श्रीशुकउ
वाच धर्मव्यतिक्रमोदृष्टईश्वराणांचसाहसम् ॥ तेजीयसांनदोषायवन्हेःसर्वभुजोयथा ॥ ३० ॥ नैतत्समा
चरेज्जातुमनसाऽपिह्यनीश्वरः ॥ विनश्यत्याचरन्मौढ्याद्यथारुद्रोऽब्धिजंविषम् ॥ ३१ ॥ ईश्वराणांवचःस
त्यंतथैवाचरितंक्वचित् ॥ तेषांयत्स्ववचोयुक्तंबुद्धिमांस्तत्समाचरेत् ॥ ३२ ॥ कुशलाचरितेनैषामिहस्वार्थो
नविद्यते ॥ विपर्ययेणवाऽनर्थोनिरहंकारिणांप्रभो ॥ ३३ ॥ किमुताखिलसत्वानांतिर्यङ्मर्त्यदिवौकसाम् ॥
ईशितुश्चेशितव्यानांकुशलाकुशलान्वयः ॥ ३४ ॥ यत्पादपंकजपरागनिषेवतृप्तायोगप्रभावविधुताखिल
कर्मबंधाः ॥ स्वैरंचरंतिमुनयोऽपिननह्यमानास्तस्येच्छयात्तवपुषःकुतएवबंधः ॥ ३५ ॥ गोपीनांतत्पती
नांचसर्वेषामेवदेहिनाम् ॥ योंऽतश्चरतिसोऽध्यक्षःक्रीडनेनेहदेहभाक् ॥ ३६ ॥ ॥ ॥

त्रमेवतेषांकृत्यंनान्यदित्यर्थः ॥ ३३ ॥ प्रस्तुतमाह किमुतेति कुशलाकुशलान्वयोनविद्यतइतिकिंपुनर्वक्तव्यमित्यर्थः ॥ ३४ ॥ एतदेव
स्फुटीकरोति यस्यपादपंकजपरागस्यानिषेवणेनतृप्ताः यद्वा यस्यपादपंकजपरागेनिषेवायेषांतेचतेतृप्ताश्चेतिभक्ताइत्यर्थः तथाज्ञानिनश्चनन
ह्यमानाःबंधनमप्राप्तवंतः परदारत्वंगोपीनामंगीकृत्यपरिहृतम् ॥ ३५ ॥ इदानींभगवतःसर्वांतर्यामिणःपरदारसेवानामनकाचिदित्या
ह गोपीनामिति योंऽतश्चरतिअध्यक्षोबुद्ध्यादिसाक्षीसएवक्रीडनेनदेहभाक्नत्वस्मदादितुल्योयेनदोषःस्यादिति ॥ ३६ ॥ ॥ ॥ ॥

नन्वेवंचेदाप्तकामस्यनिंदितेकुतःप्रवृत्तिरित्यतआह अनुग्रहायेति शृंगाररसाकृष्टचेतसोऽतिवाहिर्मुखानपिस्वपरान्कर्तुमितिभावः ॥ ३७ ॥
नन्वन्येऽपिभिन्नाचाराःस्वचेष्टितमेवमेवेतिवदंतितत्राह नासूयन्निति एवंभूतैश्वर्याभावेतथाकुर्वतःपापाज्ञेयाइतिभावः ॥ ३८ ॥ ब्रह्मरात्रे
ब्राह्मेमुहूर्तेउपावृत्तेप्राप्ते ॥ ३९ ॥ भगवतःकामविजयरूपरासक्रीडाश्रवणादेःकामविजयमेवफलमाह विक्रीडितमिति अचिरेणधीरःस
न्हृद्रोगंकाममाशुअपहिनोतिपरिजयतीति ॥ ४० ॥ सेयंश्रीपरमानंदसेविश्रीधरनिर्मिता ॥ श्रीभागवतभावार्थदीपिकादशमाश्रया ॥ १ ॥
इतिदशमेपू०टीकायांत्रयस्त्रिंशोध्यायः ॥ ३३ ॥ ॥ चतुस्त्रिंशेऽहिनाग्रस्तंनंदंहरिरमूमुचत् ॥ विद्याध्रंचांगिरःशापाच्छंखचूडंतथाऽवधी

अनुग्रहायभूतानांमानुषंदेहमास्थितः ॥ भजतेतादृशीःक्रीडायाःश्रुत्वातत्परोभवेत् ॥ ३७ ॥ नासूयन्खलुकृष्णायमोहितास्तस्यमायया ॥ मन्यमानाःस्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ॥ ३८ ॥ ब्रह्मरात्रउपावृत्तेवासुदेवानुमोदिताः ॥ अनिच्छंत्योययुर्गोप्यःस्वगृहान्भगवत्प्रियाः ॥ ३९ ॥ विक्रीडितंव्रजवधूभिरिदंचविष्णोःश्रद्धान्वितोऽनुशृणुयादथवर्णयेद्यः ॥ भक्तिंपरांभगवतिप्रतिलभ्यकामंहृद्रोगमाश्वपहिनोत्यचिरेणधीरः ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेरासक्रीडावर्णनंनामत्रयस्त्रिंशोध्यायः ॥ ३३ ॥ ॥ ॥ श्रीशुकउवाच एकदादेवयात्रायांगोपालाजातकौतुकाः ॥ अनोभिरनडुद्युक्तैःप्रययुस्तेंऽबिकावनम् ॥ १ ॥ तत्रस्नात्वासरस्वत्यांदेवंपशुपतिंविभुम् ॥ आनर्चुरर्हणैर्भक्त्यादेवींचनृपतेंऽबिकां ॥ २ ॥ गावोहिरण्यंवासांसिमधुमध्वन्नमादृताः ॥ ब्राह्मणेभ्योददुःसर्वेदेवोनःप्रीयतामिति ॥ ३ ॥ ऊषुःसरस्वतीतीरेजलंप्राश्यधृतव्रताः ॥ रजनींतांमहाभागानंदसुनंदकादयः ॥ ४ ॥ कश्चिन्महानहिस्तस्मिन्विपिनेऽतिबुभुक्षितः ॥ यदृच्छयागतोनंदंशयानमुरगोऽग्रसीत् ॥ ५ ॥ ॥ ॥ ॥

त् ॥ १ ॥ रासापदेशतःकामंकिंकरीकृत्यकामतः ॥ अनुगृण्हन्वशंनिन्येतथाविद्याधराधिपं ॥ २ ॥ तदेवंकामानुग्रहमुखेनकामजयंप्रतिपाद्यतथैवविद्याधरजयंप्रतिपादयितुंतत्प्रसंगंदर्शयति एकदेति ॥ १ ॥ २ ॥ गावःगाःमधुमधुरंमध्वन्नंमधुनासहितमन्नं ॥ ३ ॥ जलमात्रंप्राश्योपोषितास्तांनिशांतत्रऊषुर्न्यवसन् ॥ ४ ॥ महानाहिरजगरःउरगःउरसागच्छन्नित्यलक्षितत्वमुक्तम् अग्रसीत्जग्रास ॥ ५ ॥

॥ ६ ॥ विव्यधुः ताडयामासुः उल्मुकैर्ज्वलत्काष्ठैः ॥ ७ ॥ अलातैस्तैरेवोल्मुकैर्हन्यमानोऽपितंनंदंयदानामुंचत्तदाभगवान्पदातमस्पृशत् ॥ ८ ॥ भगवतश्चरणस्पर्शमात्रेणैवहताशुभः विद्याधरेष्वर्चितंपूजितं ॥ ९ ॥ गोपेष्वात्मनऐश्वर्यंप्रकाशयितुमाविद्वानिवतमपृच्छत् दीप्यमा



सचुक्रोशाहिनाग्रस्तःकृष्णकृष्णमहानयं ॥ सर्पोमांग्रसतेतातप्रपन्नंपरिमोचय ॥ ६ ॥ तस्यचाक्रंदितंश्रुत्वागोपालाःसहसोत्थिताः ॥ ग्रस्तंचदृष्ट्वाविभ्रांताःसर्पंविव्यधुरुल्मुकैः ॥ ७ ॥ अलातैर्हन्यमानोऽपिनामुंचत्तमुरंगमः ॥ तमस्पृशत्पदाऽभ्येत्यभगवान्सात्वतांपतिः ॥ ८ ॥ सवैभगवतःश्रीमत्पादस्पर्शहताशुभः ॥ भेजेसर्पवपुर्हित्वारूपंविद्याधरार्चितं ॥ ९ ॥ तमपृच्छद्धृषीकेशःप्रणतंसमुपस्थितं ॥ दीप्यमानेनवपुषापुरुषंहेममालिनं ॥ १० ॥ कोभवान्परयालक्ष्म्यारोचतेऽद्भुतदर्शनः ॥ कथंजुगुप्सितामेतांगतिंवाप्रापितोऽवशः ॥ ११ ॥ सर्पउवाच अहंविद्याधरःकश्चित्सुदर्शनइतिश्रुतः ॥ श्रियास्वरूपसंपत्त्याविमानेनाचरन्दिशः ॥ १२ ॥ ऋषीन्विरूपानंगिरसःप्राहसंरूपदर्पितः ॥ तैरिमांप्रापितोयोनिंप्रलब्धैःस्वेनपाप्मना ॥ १३ ॥ शापोमेऽनुग्रहायैवकृतस्तैःकरुणात्मभिः ॥ यदहंलोकगुरुणापदास्पृष्टोहताशुभः ॥ १४ ॥ तंत्वाऽहंभवभीतानांप्रपन्नानांभयापहं ॥ आपृच्छेशापनिर्मुक्तःपादस्पर्शादमीवहन् ॥ १५ ॥ प्रपन्नोऽस्मिमहायोगिन्महापुरुषसत्पते ॥ अनुजानीहिमांदेवसर्वलोकेश्वरेश्वर ॥ १६ ॥ ब्रह्मदंडाद्विमुक्तोऽहंसद्यस्तेच्युतदर्शनात् ॥ यन्नामगृण्हन्नखिलान्श्रोतॄनात्मानमेवच ॥ १७ ॥ सद्यःपुनातिकिंभूयस्तस्यस्पृष्टःपदाहिते ॥ इत्यनुज्ञाप्यदाशार्हंपरिक्रम्याभिवंद्यच ॥ सुदर्शनोदिवंयातःकृच्छ्रान्नंदश्चमोचितः ॥ १८ ॥ निशम्यकृष्णस्यतदात्मवैभवंव्रजौकसोविस्मितचेतसस्ततः ॥ समाप्यतस्मिन्नियमंपुनर्व्रजंनृपाययुस्तत्कथयंतआदृताः ॥ १९ ॥



नेनवपुषासमवस्थितं ॥ १० ॥ यः परयाशोभयाप्रकाशतेसभवान्कइति ॥ ११ ॥ १२ ॥ प्राहसंउपहसितवानस्मिप्रलब्धैरुपहसितैः मदीयेनैवपापेननिमित्तेन ॥ १३ ॥ यत्त्यतःशापात् ॥ १४ ॥ आपृच्छेस्वंलोकंगंतुमनुज्ञांयाचे हेअमीवहन्दुःखनाशन ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

अहिदेहंनिहत्यैवंप्रागुन्मत्तंसुदर्शनम् ॥ तद्वदुन्मादिनंकृष्णःशंखचूडमताडयत् ॥ १ ॥ तत्प्रसंगमाह कदाचिदिति ॥ २० ॥ विरजोंऽ
बराविितिविरजसीनिर्मलेअंबरेययोस्तौ ॥ २१ ॥ किंच निशाप्रवेशंसत्कुर्वंतौ उदितउडुपस्तारकाश्चयस्मिंस्तत् मल्लिकागंधेनमत्ताअल
योयस्मिंस्तत् ॥ २२ ॥ अनिबद्धत्वादन्यैर्युगपत्कल्पयितुमशक्यमपितौस्वरमंडलमूर्च्छितंयुगपत्कल्पयंतौमनःश्रवणयोर्मंगलंयथाभव

कदाचिदथगोविंदोरामश्चाद्भुतविक्रमः ॥ विजन्हतुर्वनेरात्र्यांमध्यगौव्रजयोषिताम् ॥ २० ॥ उपगीयमा
नौललितंस्त्रीजनैर्बद्धसौहृदैः ॥ स्वलंकृतानुलिप्तांगौस्रग्विणौविरजोंऽबरौ ॥ २१ ॥ निशामुखंमानयंतावु
दितोडुपतारकम् ॥ मल्लिकागंधमत्तालिजुष्टंकुमुदवायुना ॥ २२ ॥ जगतुःसर्वभूतानांमनःश्रवणमंगलम् ॥
तौकल्पयंतौयुगपत्स्वरमंडलमूर्च्छितम् ॥ २३ ॥ गोप्यस्तद्गीतमाकर्ण्यमूर्च्छितानाविदन्नृप ॥ स्रंसद्दुकूल
मात्मानंस्रस्तकेशस्रजंततः ॥ २४ ॥ एवंविक्रीडतोःस्वैरंगायतोःसंप्रमत्तवत् ॥ शंखचूडइतिख्यातोधन
दानुचरोऽभ्यगात् ॥ २५ ॥ तयोर्निरीक्षतोराजंस्तन्नाथंप्रमदाजनं ॥ क्रोशंतंकालयामासदिश्युदीच्याम
शंकितः ॥ २६ ॥ क्रोशंतंकृष्णरामेतिविलोक्यस्वपरिग्रहं ॥ यथागादस्युनाग्रस्ताभ्रातरावन्वधावतां ॥
॥ २७ ॥ माभैष्टेत्यभयारावौशालहस्तौतरस्विनौ ॥ आसेदतुस्तंतरसात्वरितंगुह्यकाधमं ॥ २८ ॥ सवी
क्ष्यतावनुप्राप्तौकालमृत्यूइवोद्विजन् ॥ विसृज्यस्त्रीजनंमूढःप्राद्रवज्जीवितेच्छया ॥ २९ ॥ तमन्वधावद्गो
विंदोयत्रयत्रसधावति ॥ जिहीर्षुस्तच्छिरोरत्नंतस्थौरक्षन्स्त्रियोबलः ॥ ३० ॥ अविदूरइवाभ्येत्यशि
रस्तस्यदुरात्मनः ॥ जहारमुष्टिनैवांगसहचूडामणिंविभुः ॥ ३१ ॥ ॥ ॥

लितथाजगतुःअगायतामिति ॥ २३ ॥ मूर्च्छितास्तद्गीतलीनचित्ताः स्रंसत्भ्रश्यद्दुकूलंयस्मात्तमात्मानंदेहम् स्रस्ताःकेशेभ्यःस्रजोयस्य
तंच ततोनाविदन् ॥ २४ ॥ २५ ॥ निरीक्षतोःनिरीक्षमाणयोः तौनाथौयस्यतंप्रमदाजनंकालयामास ॥ ॥ २६ ॥ दस्युनाव्याघ्रेण ॥
॥ २७ ॥ माभैष्टभयंनप्राप्नुतेत्यभयवाचौ ॥ २८ ॥ २९ ॥ ३० ॥ शिरसासहचूडामणिंजहारेत्यर्थः ॥ ३१ ॥ ॥ ॥

॥ ३२ ॥इतिदशमेपू० टीकायांचतुस्त्रिंशोध्यायः ॥ ३४ ॥ पंचत्रिंशेवनंयातेकृष्णेगोकुलयोषितः ॥ युग्मश्लोकानुगीतेनानिन्युर्दुःखेन वासरान् ॥ १ ॥एवंरात्रिषुकृष्णेनस्वैरमभिरमितानांदिवातद्विरहितानामनुगीतेनदिननिस्तारप्रकारमाह गोप्यइति दुःखेनकृच्छ्रेण ॥ १ ॥ वामबाहुकृतवामकपोलइत्यादीनिद्वादशयुगलानि हेगोप्यःवामेबाहौतन्मूलेकृतःअर्पितोवामकपोलोयेनसः वल्गितेनर्त्तितेभ्रुवौयेनसःव ल्गितभ्रुर्मुकुंदःअधरेअर्पितंवेणुंकोमलाभिरंगुलिभिराश्रितामार्गाःसप्तस्वरच्छिद्राणियस्यतंयत्रयदाईरयतिवादयति ॥ २ ॥ तदाव्योमयाना नांसिद्धानांवनिताःसिद्धैःस्वपतिभिःसहवर्त्तमानाअपितद्वेण्वीरितमुपधार्याकर्ण्यप्रथमंविस्मितास्ततःकाममार्गणेभ्यःसमर्पितानिचित्तानि

शंखचूडंनिहत्यैवंमणिमादायभास्वरं ॥ अग्रजायाददत्प्रीत्यापश्यंतीनांचयोषितां ॥ ३२ ॥ इतिश्रीभा गवतेमहापुराणेदशमस्कंधेपूर्वार्धेशंखचूडवधोनामचतुस्त्रिंशत्तमोऽध्यायः॥३४॥ श्रीशुकउवाच गोप्यः कृष्णेवनंयातेतमनुद्रुतचेतसः ॥ कृष्णलीलाःप्रगायंत्योनिन्युर्दुःखेनवासरान् ॥ १ ॥ गोप्यऊचुः वाम बाहुकृतवामकपोलोवल्गितभ्रुरधरार्पितवेणुं ॥ कोमलांगुलिभिराश्रितमार्गंगोप्यईरयतियत्रमुकुंदः ॥ ॥ २ ॥ व्योमयानवनिताःसहसिद्धैर्विस्मितास्तदुपधार्यसलज्जाः ॥ काममार्गणसमर्पितचित्ताःकश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥ हंतचित्रमबलाःशृणुतेदंहारहासउरसिस्थिरविद्युत् ॥ नंदसूनुरयमार्त्तजना नांनर्मदोयर्हिकूजितवेणुः ॥४॥ वृंदशोव्रजवृषामृगगावोवेणुवाद्यहृतचेतसआरात् ॥ दंतदष्टकवलाधृत कर्णानिद्रितालिखितचित्रमिवासन् ॥ ५ ॥ ॥ ॥ ॥

याभिस्तास्तत्परवशाइत्यर्थः सलज्जाःसत्यःकश्मलंमोहंययुः अत्रलिंगम् अपस्मृताविस्मृताःनीव्योयाभिरिति अतएवंभूतस्यकृष्णस्यविर हंकथंसहामइतिसर्वत्रवाक्यशेषः ॥ ३ ॥हंतहेअबलाःइदंचित्रंशृणुत हारहासोहारवद्विशदोहासोयस्यसः यद्वावेणुवादनेनअधोवदनेनहस तोहारेषुस्फुरन्हासोयस्यसः यद्वा हारवद्वक्षसिशोभमानोहासोयस्यसः यद्वा हाराणांहासइवविशदास्फूर्तिर्यस्मिन्नुरसीति उरसिस्थिराविद्यु दिवलक्ष्मीर्यस्यसःयर्हियदाकूजितवेणुर्नादितवेणुर्भवति ॥ ४ ॥ तदाव्रजेवृषामृगाःगावश्चवेणुवाद्येनहृतानिचेतांसियेषांते आरात्दूरादेवदं तैर्दष्टाःकवलाग्रासायैस्ते धृताउत्तंभिताःकर्णायैस्ते निद्रिताइवलिखितचित्रमिवचासन् अविदुषांतिरश्चामिदमतिचित्रमित्यर्थः ॥ ५ ॥

किंच अचेतनासुसारित्सुतदतीवचित्रमित्याहुः हेआलिसखिबर्हिणोमयूरस्तस्यस्तबकामयूरपिच्छाधातवोगैरिकादयश्चपलाशानिपल्लवा श्चतैर्बद्धश्चासौमल्लानांपरिबर्हःपरिकरस्तंविडंबयत्यनुकरोतीतितथासमुकुंदोगोपैःसह ॥ वेणुनेत्युपरितनमत्रापिज्ञातव्यं यत्रयदागाःसम्य गाव्हयति ॥ ६ ॥ तर्हितदातत्ध्वनिश्रवणात् अनिलेनानीतंतस्यपदांबुजरजःस्पृहयंत्यइवभग्नगतयःसरितःवैनिश्चितंवयमिवताअपिअ बहुपुण्यायतोनप्राप्नुवंति केवलंप्रेम्णावेपिताभुजास्तरंगायासांताः स्तिमितानिश्चलाआपोयासांताः गोप्योऽपिलोचनयोस्तिमितजलाभ वंतीति ॥ ७ ॥ स्थावरेष्वप्यतिचित्रंदृश्यतइत्याहुः अनुचरैर्गोपैर्देवादिभिर्वा मुग्धानांवाक्यमादिपुरुषइवेति अचलभूतिर्निश्चलश्रीः वेणुनातत्तन्नाम्नागानेन ॥ ८ ॥ तदाप्रणताभारेणविटपाःशाखायासांतावनगतालताःस्वस्मिन्विष्णुंप्रकाशमानंसूचयंत्यइवमधुधाराव

बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडंबः ॥ कर्हिचित्सबलआलिसगोपैर्गाःसमाव्हयतियत्रमुकुंदः ॥ ६ ॥ तर्हिभग्नगतयःसरितोवैतत्पदांबुजरजोऽनिलनीतम् ॥ स्पृहयतीर्वयमिवाबहुपुण्याःप्रेमवेपितभुजाःस्तिमितापाः ॥ ७ ॥ अनुचरैःसमनुवर्णितवीर्यआदिपूरुषइवाचलभूतिः ॥ वनचरोगिरितटेषुचरंतीर्वेणुनाव्हयतिगाःसयदाहि ॥ ८ ॥ वनलतास्तरवआत्मनिविष्णुंव्यंजयंत्यइवपुष्पफलाढ्याः ॥ प्रणतभारविटपामधुधाराःप्रेमहृष्टतनवःससृजुःस्म ॥९॥ दर्शनीयतिलकोवनमालादिव्यगंधतुलसीमधुमत्तैः॥ अलिकुलैरलघुगीतमभीष्टमाद्रियन्यर्हिसंधितवेणुः ॥ १० ॥ सरसिसारसहंसविहंगाश्चारुगीतहृतचेतसएत्य ॥ हरिमुपासततेयतचित्ताहंतमीलितदृशोधृतमौनाः ॥ ११ ॥ ॥ ॥

वृषुः स्मेतिविस्मये तरवश्चतथा तत्पतीनामपितथैवानंदइतिभावः एतानिविष्णुभक्तिलक्षणानि ॥ ९ ॥ किंच सरसिकमलवनेषुविहर तांपक्षिणामप्याकर्षणंतद्गीतंकिंपुनरन्येषामित्याहुः दर्शनीयतिलकइति दर्शनीयस्तिलकोयस्य दर्शनीयानांसुंदराणांमध्येमुख्यइतिवा वनमालासुयादिव्यगंधातुलसीतस्यामधुनामत्तैरलिकुलैरलघुउच्चैरभीष्टमनुकूलंगीतमाद्रियन्नादरेणगृह्णन् यर्हिअधरेसंधितवेणुर्भवति ॥ ॥ १० ॥ तर्हियेसरसिसारसहंसाःअन्येचविहंगास्तेचारुणागीतेनहृतचेतसएत्यततआगत्यहरिमुपासतअभजंत तत्समीपेउपविविशुर्वा हंतेतिविषादे ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

मेघोऽपिहरिंसेवतइत्याहुः सहबलइति भोव्रजदेव्योगोप्यः सहबलःसरामःकृष्णःस्त्रग्भिर्निर्मिताभ्यामवतंसाभ्यांकर्णभूषणाभ्यांविलासो यस्य यद्वा मुक्ताफलस्त्रगापीडेनविलासोयस्येति क्षितिभृतःसानुषुगिरेस्तटेषुवर्त्तमानःस्वयंजातहर्षोविश्वंहर्षयन्यदावेणुरवेणउपरंभतिनि नादयतिनादेनपूरयतीत्यर्थः ॥ १२ ॥ तदामेघोमहतःकृष्णस्यातिक्रमणेशंकितंचेतोयस्यसःनपुरतोयातिनचोच्चैर्गर्जतिकिंतुतत्रैवस्थितः सन्वेणुरवमनुमंदंमंदंगर्ज्जति किंच सुहृदंविश्वार्त्तिहरणादिसाम्यात्सुहृत्कृष्णस्तंसुमनोभिरभ्यवर्षत् अदृश्यैर्देवैःक्रियमाणंकुसुमवर्षंमेघेक ल्पयित्वोक्तम् तुषारोवाकुसुमतयाकल्पितः सएववादेवतारूपोऽभ्यवर्षदिति प्रतपादातपात्त्रायतइतिप्रतपत्रंछत्रंतच्छाययाकुर्वन्निति ॥ १३ ॥ अपिचमहदेतदाश्चर्यमित्याहुः विविधेति हेसतियशोदेतवसुतोनानागोपक्रीडासुविदग्धोनिपुणोवेणुवाद्येविषयेनिजैवशिक्षाया

**सहबलःस्त्रगवतंसविलासःसानुषुक्षितिभृतोव्रजदेव्यः ॥ हर्षयन्यर्हिवेणुरवेणजातहर्षउपरंभतिविश्वं ॥ १२ ॥ महदतिक्रमणशंकितचेतामंदमंदमनुगर्जतिमेघः ॥ सुहृदमभ्यवर्षत्सुमनोभिश्छाययाचविदध त्प्रतपत्रं ॥ १३ ॥ विविधगोपरसेषुविदग्धोवेणुवाद्यउरुधानिजशिक्षाः ॥ तवसुतःसतियदाऽधरबिंबेद त्तवेणुरनयत्स्वरजातीः ॥ १४ ॥ सवनशस्तदुपधार्यसुरेशाःशक्रशर्वपरमेष्ठिपुरोगाः ॥ कवयआनतकंध रचित्ताःकश्मलंययुरनिश्चिततत्त्वाः ॥ १५ ॥ निजपदाब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः ॥ व्र जभुवःशमयन्खुरतोदंवर्ष्मधुर्यगतिरीडितवेणुः ॥ १६ ॥ व्रजतितेनवयंसविलासवीक्षणार्पितमनोभववे गाः ॥ कुजगतिंगमितानविदामःकश्मलेनकबरंवसनंवा ॥ १७ ॥ ॥ ॥**

सुताः स्वोत्प्रेक्षितानत्वन्यतःश्रुताइत्यर्थः स्वरजातीर्निषादऋषभादिस्वरालापभेदान्अनयदुन्नीतवान् ॥ १४ ॥ ततःताःस्वरजातीः सवनशोमंद्रमध्यमतारभेदेन यतोगीतध्वनिरागस्ततश्चानताकंधराचित्तंचयेषांते उपधार्यसमाकर्ण्य कवयःकोविदाअपिननिश्चितंतत्त्वं तद्भेदोयैस्तेकश्मलंमोहंययुरिति ॥ १५ ॥ अस्माकंतुमोहंकिंब्रूमइत्याहुः निजपदाब्जदलैरिति ध्वजादीनिविचित्राणिललामानिचिन्हा नियेषांतैर्निजानिपदान्येवाब्जदलानितैर्व्रजभुवःखुरतोदंखुराक्रमणव्यथांशमयन्वर्ष्मणादेहेनधुर्योगजःतद्वद्गतिर्यस्यसकृष्णोवादितवेणुःस न् ॥ १६ ॥ यद्व्रजतितेननिमित्तेनसविलासवीक्षणेनार्पितोमनोभववेगोयासुतावयं कुजावृक्षास्तेषांगतिंगमिताःसत्योमोहेननविदामः कबरंवावसनंवेति ॥ १७ ॥ ॥ ॥ ॥

किंच मणिधरः मणीन् ग्रथितान् गोगणनार्थं धरतीति मणिधरः क्वचिद्देशे एतैर्मणिभिर्गाः आसमंताद्गणयन् तथा दयितगंधाया तुलस्यास्तस्याः मालया सह वर्तमानः प्रणयिनः प्रियस्यानुचरस्यांसे भुजं प्रक्षिपन् यत्र यदा कदाचित् अगायत ॥ १८ ॥ तदा क्वणितवेणुरवेण वंचितानि अपहृतानि चित्तानि यासां ताः कृष्णहरिणस्य गृहिण्यो भार्याः गुणगणार्णं गुणगणसमुद्रं कृष्णमनुगत्य प्राप्य ताः कृष्णमेवान्वसत अन्वासत नन्यवर्त्तंतइत्यर्थः कुतो यतो विमुक्तगृहाशाया भिस्ता गोपिका इव ता अपि ह्येवमेवान्वासतेति ॥१९॥ तदेवं वृंदावनप्रदेशेषु क्रीडित्वा सायान्हे गोधनानि परावर्त्य यमुनायां क्रीडा तस्तस्य सौभाग्यमनुवर्णयति कुंदेति कुंददाम्ना कृतकौतुकवेष इति गोपीनामुत्सवाय कुंददामभिः कृतः कौतुके नउत्सवे नवेषोऽलंकारो येन सः हे अनघे यशोदे तव वत्सः पुत्रो नंदसूनुः कृष्णः यद्वा सहैव बह्वृचः कथयंत्यः काश्चित्तव वत्स इति काश्चिन्नंदसूनुरिति चाहुः नर्मदः हर्षदः सन् यदा विजहार क्रीडति स्म ॥ २० ॥ तदा मलयजस्पर्शेन मलयजस्य चंदनस्येव सुरभिः शीतश्च यः संस्पर्शस्तेन तं कृष्णं मानयन् अनुकूलं यथा तथा उपवाति वीजयति यद्वा मलयजो दक्षिणो वायुः यद्वा मलयजस्य कृष्णेन स्वांगेऽनुलिप्तस्य स्पर्शेन मानयन्निति किंच बंदिन इव स्तावकाः संतो गंधर्वादिगणा वाद्यगीतपुष्पवर्षादिभिः परिवव्रुः परित उपासत ॥ २१ ॥ आयांतमालोक्य तद्दृष्ट्यंत्यः परस्परमूचुः वत्सल इति व्रजस्य गवां च यद्वा व्रजे निबद्धानां गवामनुकंप्यानामस्माकमित्यर्थः वत्सलः हितकृत् कुतः यत् यस्मात् अगध्रः अगं धरतीति गोवर्धनोद्धरणः बहुशो रक्षणस्योपलक्षणमेतत् वृद्धैर्ब्रह्मादिभिः सेव्यं पथीति वंद्यमानचरणः सायं शीघ्रमागंतुं नददतीत्यर्थः उपोह्य एकीकृत्य गीतयुक्तो वेणुर्यस्य सः ॥ २२ ॥ ॥ ॥ ॥ ॥

मणिधरः क्वचिदागणयन् गा मालया दयितगंधतुलस्याः ॥ प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥ क्वणितवेणुरववंचितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ॥ गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥ कुंददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ॥ नंदसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥ मंदवायुरनुवात्यनुकूलं मानयन्मलयजस्पर्शेन ॥ बंदिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥ वत्सलो व्रजगवां यदगध्रो वंद्यमानचरणः पथि वृद्धैः ॥ कृत्स्नगोधनमुपोह्य दिनांते गीतवेणुरनुगेडितकीर्तिः ॥ २२ ॥ ॥ ॥ ॥

श्रमयुक्तया ऽपिकांत्यानेत्राणांहर्षमुन्नयन्नुच्चैः प्रापयन् खुररजोभिश्छुरिताव्याप्ताः स्रजोयस्य सुहृदामस्माकमाशिषः मनोरथस्यदित्सया दातु
मिच्छयादेवक्याजठरेभवतीतितथासएवोडुराजश्चंद्रोनिर्वृतिहेतुत्वेनसएषएतीति ॥ २३ ॥ अतिसंभ्रमेणकाश्चित्समपिमायांतंकथयंति
ईषन्मदेनविघूर्णितेविह्वलितेलोचनेयस्यसः बदरपांडुवदनः ईषत्पक्वबदरवत्पांडुरंवदनंयस्यसः अत्रहेतुः कनककुंडलयोर्लक्ष्म्याकां
त्यामृदूकोमलौगंडौयास्मिंस्तद्वदनंमंडयन्निति कोमलगंडस्थलंवाशोभयन्निति ॥ २४ ॥ यदुपतिरितिदेवकीजठरभूरितिचप्रागयंवसुदे
वस्यक्वचिज्जातस्तवात्मजइत्यादिगर्गवाक्यप्रसिद्ध्योक्तम् यद्वा सखउदेयिवान्सात्वतांकुलइतिवत्ज्ञात्वाकाश्चिद्वदंतीति गजेंद्रलीलः
गजेंद्रगतिरितिवा चंद्रइवप्रसन्नवक्त्रः व्रजगवामस्माकमनंतंदिनतापंचशमयन्नुपयातिएषसमीपमायातीति ॥ २५ ॥ एवंविरहदुःखेना

उत्सवंश्रमरुचाऽपिदृशीनामुन्नयन्खुररजश्छुरितस्रक् ॥ दित्सयैतिसुहृदाशिषंएषदेवकीजठरभूरुडुरा
जः ॥ २३ ॥ मदविघूर्णितलोचनईषन्मानदःस्वसुहृदांवनमाली ॥ बदरपांडुवदनोमृदुगंडंमंडयन्कन
ककुंडललक्ष्म्या ॥ २४ ॥ यदुपतिर्द्विरदराजविहारोयामिनीपतिरिवैषदिनांते ॥ मुदितवक्त्रउपयातिदुरंतं
मोचयन्व्रजगवांदिनतापम् ॥ २५ ॥ श्रीशुकउवाच एवंव्रजस्त्रियोराजन्कृष्णलीलानुगायतीः ॥ रेमि
रेऽहस्सुतच्चित्तास्तन्मनस्कामहोदयाः ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेवृंदावनक्रीडा
गोपिकागीतंनामपंचत्रिंशोध्यायः ॥ ३५ ॥ श्रीशुकउवाच अथतर्ह्यागतोगोष्ठमरिष्टोवृषभासुरः ॥ म
हींमहाककुत्कायःकंपयन्खुरविक्षतां ॥ १ ॥ ॥ ॥ ॥ ॥

पिनुअहोकृष्णलीलाएवगायंत्यस्तस्मिंश्चित्तंचेतनाजीवितंयासांतास्तस्मिन्नेवमनः संकल्परूपंयासांताअतोमहानुदयउत्सवोयासांताअहः
स्वपिरेमिरे ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धटीकायांपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ ॥ षट्त्रिंशेतुहतेरिष्टे
नारदोक्त्याबलाच्युतौ ॥ वसुदेवसुतौज्ञात्वाकंसोऽक्रूरंसमादिशत् ॥ १ ॥ गोपीरासांतरायांतंशंखचूडंनिहत्यसः ॥ अहन्गोपीमहानं
दासहंदुष्टमरिष्टकम् ॥ २ ॥ एवंदेवगंधर्वादिगीतवाद्यकुसुमवर्षादिभिःकृष्णंप्राप्तंदृष्ट्वाव्रजस्यपरमोत्सवेवर्त्तमाने तद्विरुद्धार्थांतराधिकारा
र्थमथशब्दः तर्हितदावृषभाकृतिरसुरः तंवर्णयतिसार्द्धत्रयेण महांतौककुत्कायौयस्य खुरैर्विदारितांमहींकंपयन् ॥ १ ॥ ॥ ॥

रंभमाणःवृषभजातिशब्दंकुर्वन् विलिखन्विदारयन् उद्यम्यऊर्ध्वंकृत्वा वप्राणितटानिउत्क्षिपन् ॥ २ ॥ किंचित्किंचित्शकृन्मध्येम
ध्येईषत्ईषत्पुरीषंमुंचन् तथामूत्रयन्मूत्रमुत्सृजन् स्तब्धलोचनःअनिमिषलोचनः ॥ ३ ॥ यस्यध्वनिनागवांनारीणांच तत्र आचतुर्था
द्भवेत्स्रावःपातःपंचमषष्ठयोः ॥ अतऊर्ध्वंप्रसूतिःस्यादितिविभागः ककुदिगलपृष्ठशृंगे ॥ ४ ॥ ५ ॥ कृष्णकृष्णरक्षेति ॥ ६ ॥ ७ ॥ इति
एवंवदन् आस्फोटचकरतलेनबाहुमाहत्य तेनतलशब्देनकोपयन् ॥ ८ ॥ भुजाभोगंभुजाभुजःसएवभोगःसर्पदेहस्तं सर्पदेहाकारंभुज

रंभमाणःखरतरंपदाचविलिखन्महीम् ॥ उद्यम्यपुच्छंवप्राणिविषाणाग्रेणचोद्धरन् ॥ २ ॥ किंचित्किंचि
त्शकृन्मुंचन्मूत्रयन्स्तब्धलोचनः ॥ यस्यनिर्ह्रादितेनांगनिष्ठुरेणगवांनृणाम् ॥ ३ ॥ पतंत्यकालतोगर्भाः
स्रवंतिस्मभयेनवै ॥ निर्विशंतिघनायस्यककुद्यचलशंकया ॥ ४ ॥ तंतीक्ष्णशृंगमुद्वीक्ष्यगोप्योगोपाश्चतत्रसुः ॥
पशवोदुद्रुवुर्भीताराजन्संत्यज्यगोकुलम् ॥ ५ ॥ कृष्णकृष्णेतितेसर्वेगोविंदंशरणंययुः ॥ भगवानपितद्वीक्ष्य
गोकुलंभयविद्रुतम् ॥ ६ ॥ माभैष्टेतिगिराश्वास्यवृषासुरमुपाह्वयत् ॥ गोपालैःपशुभिर्मंदत्रासितैःकिमसत्त
म ॥ ७ ॥ बलदर्पहाहंदुष्टानांत्वद्विधानांदुरात्मनां ॥ इत्यास्फोटयाच्युतोऽरिष्टंतलशब्देनकोपयन् ॥ ८ ॥ स
ख्युरंसेभुजाभोगंप्रसार्यावस्थितोहरिः ॥ सोऽप्येवंकोपितोऽरिष्टःखुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रम
न्मेघःक्रुद्धःकृष्णमुपाद्रवत् ॥ ९ ॥ अग्रन्यस्तविषाणाग्रःस्तब्धासृग्लोचनोऽच्युतं ॥ कटाक्षिप्याद्रवत्तूर्णमिं
द्रमुक्तोशनिर्यथा ॥ १० ॥ गृहीत्वाशृंगयोस्तंचअष्टादशपदानिसः ॥ प्रत्यपोवाहभगवान्गजंप्रतिगजोय
था ॥ ११ ॥ सोपविद्धोभगवतापुनरुत्थायसत्वरः ॥ आपतत्स्विन्नसर्वांगोनिःश्वसन्क्रोधमूर्छितः ॥ १२ ॥

मित्यर्थः स्वयमच्युतःअन्यान्दुष्टान्हरतीतिहरिःउद्यताऊर्ध्वंगच्छता पुच्छेनभ्रमंतोमेघायस्मिन् ॥ ९ ॥ अग्रेन्यस्तेविषाणाग्रेयेनसः स्तब्धे
असृक्तुल्येलोचनेयस्यसःकटाक्षिप्यकटाक्षेणतिर्यङ्निरीक्ष्य ॥ १० ॥ प्रत्यपोवाहप्रतिलोमंन्यनुदत् ॥ ११ ॥ अपविद्धःअपक्षिप्तः आपतत्
आद्रवत्स्विन्नानिस्वेदयुक्तानिसर्वांगानियस्यसः क्रोधमूर्छितःक्रोधेनव्याप्तः ॥ १२ ॥ ॥ ॥

कृत्वाविषाणमुत्पाटचतेनैवजघानसचापतत् ॥ १३ ॥ मूत्रंचशकृच्चमूत्रशकृत् एकवद्भावः तदुभयंसमुत्सृजन्नित्यर्थः पादांश्चक्षिपान्नि
तस्ततश्चालयन् अनवस्थितेक्षणःप्रचलितनेत्रःकृच्छ्रंकष्टंजगाम अथनिर्ऋतेर्मृत्योःक्षयंनिवासंजगाम कृच्छ्रंयथाभवतितथामृतइतिवा ॥
॥ १४ ॥ नयनोत्सवोनयनानांमूर्त्तिमानुत्सवः ॥ १५ ॥ कामंव्रजेवसंतंतंकृष्णंतेनतुविस्मृतम् ॥ नारदःस्मारयामासकंसंदूतगिरैवतु ॥
तदाह अरिष्टइति देवदर्शनःदेवर्षिःयद्वा एवंकथितेएवंभविष्यतीतिसाक्षादेवदेवत्वदर्शनंज्ञानंयस्यसः॥ १६ ॥आतेनैवनारदेनोक्तमाहयशो

तमापतंतंसनिगृह्यशृंगयोःपदासमाक्रम्यनिपात्यभूतले ॥निष्पीडयामासयथार्द्रमंबरंकृत्वाविषाणेनजघा
नसोऽपतत् ॥ १३ ॥ असृग्वमन्मूत्रशकृत्समुत्सृजन्क्षिपंश्चपादाननवस्थितेक्षणः ॥ जगामकृच्छ्रंनिर्ऋते
रथक्षयंपुष्पैःकिरंतोहरिमीडिरेसुराः ॥ १४ ॥ एवंककुद्मिनंहत्वास्तूयमानःस्वजातिभिः ॥ विवेशगोष्ठंसब
लोगोपीनांनयनोत्सवः ॥ १५ ॥ अरिष्टेनिहतेदैत्येकृष्णेनाद्भुतकर्मणा ॥ कंसायाथाहभगवान्नारदोदेव
दर्शनः ॥१६॥ यशोदायाःसुतांकन्यांदेवक्याःकृष्णमेवच॥रामंचरोहिणीपुत्रंवसुदेवेनबिभ्यता ॥ १७॥ न्य
स्तौस्वमित्रेनंदेवैयाभ्यांतेपुरुषाहताः॥निशम्यतद्भोजपतिःकोपात्प्रचलितेंद्रियः ॥१८॥ निशातमसिमाद
त्तवसुदेवजिघांसया॥निवारितोनारदेनतत्सुतौमृत्युमात्मनः॥१९॥ज्ञात्वालोहमयैःपाशैर्बबंधसहभार्यया
प्रतियातेतुदेवर्षौकंसआभाष्यकेशिनम्॥२०॥प्रेषयामासहन्येतांभवतारामकेशवौ॥ततोमुष्टिकचाणूरश
लतोशलकादिकान्॥२१॥अमात्यान्हस्तिपांश्चैवसमाहूयाहभोजराट्॥भोभोनिशम्यतामेतद्वीर चाणूरमु
ष्टिकाः ॥ २२ ॥ नंदव्रजेकिलासातेसुतावानकदुंदुभेः ॥ रामकृष्णौततोमह्यंमृत्युःकिलनिदर्शितः ॥ २३॥

दायाइति देवक्याअष्टमगर्भत्वेनप्रसिद्धांकन्यांयशोदायाः सुतामाह यशोदायाःसुतत्वेनप्रसिद्धंकृष्णंदेवक्याःसुतमाह रोहिणीपुत्रंरामंच
देवक्याःसप्तमंसुतमाह यद्वा नंदसुतत्वेनप्रसिद्धंरामंचवसुदेवभार्यायारोहिण्याःपुत्रमाह तौवसुदेवसुतौचेत्कथंव्रजंगतौत त्राहवसुदेवेनेति
॥ १७ ॥ १८ ॥ निवारितइतिहतेवसुदेवेतौपलायेतमतोमावध्यतामितिमंत्रंवदतानारदेननिवारितइति ॥ १९ ॥ २० ॥ २१ ॥ २२॥
मह्यंममनिदर्शितः विधात्रानारदेनवा ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥

व्रजंगंतुमुद्यतौतावाह भवद्भ्यामिति मंचाउत्तुंगस्तंभादिरचितस्थानानि ॥ २४ ॥ २५ ॥ अहितौशत्रू मीढुषेवरदाय ॥ २६ ॥ अर्थतं त्त्रज्ञः अर्थसिद्धांतमेवजानातीति ॥ २७ ॥ हेदानपतेअक्रूरमैत्रंमित्रकृत्यंत्वयाक्रियताम् त्वत्तोऽन्यआदृतःसादरोहिततम श्चनाविद्यतइति

भवद्भ्यामिहसंप्राप्तौहन्येतांमल्ललीलया॥मंचाःक्रियंतांविविधामल्लरंगपरिश्रिताः॥२४॥पौराजानपदाःस वेंपश्यंतुस्वैरसंयुगम्॥ महामात्रत्वयाभद्ररंगद्वार्युपनीयतां॥२५॥ द्विपःकुवलयापीडोजहितेनममाहितौ॥ आरभ्यतांधनुर्यागश्चतुर्दश्यांयथाविधि॥ विशसंतुपशून्मेध्यान्भूतराजायमीढुषे॥२६॥ इत्याज्ञाप्यार्थतं त्रज्ञआहूययदुपुंगवं॥ गृहीत्वापाणिनापाणिंततोऽक्रूरमुवाचह॥ २७॥ भोभोदानपतेमह्यंक्रियतांमैत्रमा दृतः॥ नान्यस्त्वत्तोहिततमोविद्यतेभोजवृष्णिषु॥२८॥ अतस्त्वामाश्रितःसौम्यकार्यगौरवसाधनं॥ यथेंद्रो विष्णुमाश्रित्यस्वार्थमध्यगमाद्विभुः॥ २९॥ गच्छनंदव्रजंतत्रसुतावानकदुंदुभेः॥ आसातेताविहानेनरथे नानयमाचिरं॥३०॥निसृष्टःकिलमेमृत्युर्देवैर्वैकुंठसंश्रयैः॥ तावानयसमंगोपैर्नंदाद्यैःसाभ्युपायनैः॥३१॥ घातयिष्यइहानीतौकालकल्पेनहस्तिना॥यदिमुक्तौततोमल्लैर्घातयेवैद्युतोपमैः॥३२॥तयोर्निहतयोस्तप्ता न्वसुदेवपुरोगमान्॥ तद्बंधून्निहनिष्यामिवृष्णिभोजदशार्हकान्॥३३॥उग्रसेनंचपितरंस्थविरंराज्यका मुकं॥ तद्भ्रातरंदेवकंचयेचान्येविद्विषोमम॥ ३४॥ ततश्चैषामहीमित्रभवित्रीनिष्टकंटका॥ जरासंधोममगु रुर्द्विविदोदयितःसखा॥३५॥ शंबरोनरकोबाणोमय्येवकृतसौहृदाः॥ तैरहंसुरपक्षीयान्हत्वाभोक्ष्येमहीं नृपान्॥३६॥एतज्ज्ञात्वानयक्षिप्रंरामकृष्णाविहार्भकौ॥धनुर्मखनिरीक्षार्थंद्रष्टुंयदुपुरश्रियम्॥ ३७॥

॥ २८ ॥ २९ ॥ ३० ॥ तौमेमृत्युर्नितरांसृष्टः वैकुंठसंश्रयैर्विष्णुसंश्रयैर्देवैः ॥ ३१ ॥ किंततस्तत्राह घातयिष्यइति कालकल्पेनमृत्यु तुल्येन वैद्युतोपमैरशनितुल्यैः ॥ ३२ ॥ ३३ ॥ ३४ ॥ नष्टकंटकानष्टशत्रुः ननुकतिपयाऽसुहृद्वधेननष्टकंटकाकथंस्यादितितत्राहजरा संधइति ॥ ३५ ॥ ३६ ॥ यदुपुरश्रियंद्रष्टुं चेति ॥ ३७ ॥ ॥ ॥ ॥

तत्रस्वमनीषितंविचारितंसम्यक्स्वावद्यंमरणंतन्मार्जनं तथाऽप्येतावानभिनिवेशोनकार्यइतिभविष्यत्सूचयन्नाह सिद्ध्यसिद्ध्योरिति ॥ ३८॥
पुरुषकारस्यसव्यभिचारतामाह मनोरथानिति ॥ ३९ ॥ ४० ॥ इतिदशमस्कंधेपू॰ टीकायांषट्त्रिंशोध्यायः ॥ ३६ ॥ ॥ सप्तत्रिंशेहतेकेशिन्य
च्युतोभाविकर्मभिः ॥ नारदेनस्तुतः क्रीडन्व्योमासुरमथावधीत् ॥ १ ॥ वृषवेषासुरंयद्वत्केशिनंहयवेषिणम् ॥ कंसप्राणसखंहत्वाकसंव्यसु
मिवाकरोत् ॥ २ ॥ केशीत्विति प्रथमश्लोकेनयएवंभूतः केशीत्यनूद्यतंभगवानुपाव्हयदितिद्वितीयेनान्वयः महाहयः सन्महींनिर्जरयन्श्ल
थयन्विदारयन्नित्यर्थः सटाभिः केसरैरवधूतानिइतस्ततः क्षिप्तानिअभ्राणिविमानानिचतैः संकीर्णंनभः कुर्वन् हेषितैरश्वजातिशब्दैर्भीषित

अक्रूरउवाच राजन्मनीषितंसम्यक्तवस्वावद्यमार्जनम् ॥ सिद्ध्यसिद्ध्योः समंकुर्याद्दैवंहिफलसाधनं ॥
॥ ३८ ॥ मनोरथान्करोत्युच्चैर्जनोदैवहतानपि ॥ युज्यतेहर्षशोकाभ्यांतथाप्याज्ञांकरोमिते ॥ ३९ ॥ ए
वमादिश्यचाक्रूरंमंत्रिणश्चविसृज्यसः ॥ प्रविवेशगृहंकंसस्तथाऽक्रूरः स्वमालयं ॥ ४० ॥ इतिश्रीभागव
तेमहापुराणेदशमस्कंधेपूर्वार्धेअक्रूरसंप्रेषणंनामषट्त्रिंशोध्यायः ॥ ३६ श्रीशुकउवाच केशीतुकंसप्र
हितः खुरैर्महींमहाहयोनिर्जरयन्मनोजवः ॥ सटावधूताभ्रविमानसंकुलंकुर्वन्नभोहेषितभीषिताखिलः
॥ १ ॥ विशालनेत्रोविकटास्यकोटरोबृहद्गलोनीलमहाघनोपमः ॥ दुराशयः कंसहितंचिकीर्षुर्व्रजंसनंदस्य
जगामकंपयन् ॥ २ ॥ तंत्रासयंतंभगवान्स्वगोकुलंतद्धेषितैर्वालविघूर्णितांबुदम् ॥ आत्मानमाजौमृगयं
तमग्रणीरुपाह्वयत्सव्यनदन्मृगेंद्रवत् ॥ ३ ॥ सतंनिशम्याभिमुखोमुखेनखंपिबन्निवाभ्यद्रवदत्यमर्षणः॥
जघानपद्भ्यामरविंदलोचनंदुरासदश्चंडजवोदुरत्ययः ॥ ४ ॥ ॥ ॥ ॥

मखिलंविश्वंयेनसः ॥ १ ॥ २ ॥ तद्धेषितैस्तैरतिनिष्ठुरैर्हेषितैः वालैः पुच्छलोमभिर्विघूर्णिताः परिभ्रामिताअंबुदायेनतम् आजौसंग्रामार्थम्
आत्मानंकृष्णम् अग्रणीः पुरतोनिर्गतः सन्नुपाव्हयत्स्वसमीपमाजुहाव सचकेशीतन्निशम्यमृगेंद्रवन्नादमकरोत् ॥ ३ ॥ ततः केशीतंकृष्णं
दृष्ट्वामुखेनखंपिबन्निवमुखंविवृत्याभिमुखः सन्नभिजगाम किंच अत्यमर्षणः अतिकुपितः अत्यंतमसहमानोवा प्रत्यक्पद्भ्यांजघान दुरास
दः अन्यैरभिभवितुमशक्यः दुरत्ययः उद्यतः सन्दुरतिक्रमः अत्रहेतुः चंडजवः चंडस्तीव्रोजवोवेगोधावनंयस्य ॥ ४ ॥ ॥

तद्धननंवंचयित्वातंचहननायप्रसारितयोःपादयोर्हस्ताभ्यांगृहीत्वापरिवित्ध्यभ्रामयित्वाव्यवस्थितस्तथैवस्थितोबभूव ॥ ५॥ व्यादायमुखं प्रसार्यवेगेनहरिंप्रत्याद्रवत् सोऽपिहरिर्हसन्नुत्तरंसव्यंभुजं निर्भयत्वेदृष्टांतः यथोरगंबिलइति ॥ ६ ॥ ततःकिंतदाह दंताइति चर्वणायभ गवद्भुजंस्पृशंतीतितथाते व्यादानेनयेदंताविवृताः अयोलोहं स्पृशंतीतिस्पृशः यद्वा तप्तमयःअतितप्तंलोहादिस्पृशंतोयथेति आमयःज लोदरम् ॥ ७ ॥ लैंडंपुरीषमुत्सृजन् ॥ ८ ॥ कर्कटिकाफलंहिपक्वंसदत्यंतंविदीर्णंभवतितद्वद्विदीर्णात्तस्यदेहात् व्यसोर्विगतप्राणात् अवि स्मितःगर्वरहितः अयत्नेनहतोऽरिर्येनसः ॥९ कंसायकृष्णमादिश्यतद्रहस्यादिपैशुनैः ॥ कंसघातादिकृष्णस्यकार्यमावेदयन्मुनिः ॥ तदाह देवर्षिरित्यादिना नचायंसूचकःकिंतुसर्वसुहृदित्याह भागवतप्रवरइति ॥१०॥ अस्मद्रहस्यंवैरिणिकंसेसूचितवानितिमाशंकीरित्याह कृष्ण

तद्वंचयित्वातमधोक्षजोरुषाप्रगृह्यदोर्भ्यांपरिवित्ध्यपादयोः ॥ सावज्ञमुत्सृज्यधनुःशतांतरेयथोरगंतार्क्ष्य सुतोव्यवस्थितः ॥ ५ ॥ सलब्धसंज्ञःपुनरुत्थितोरुषाव्यादायकेशीतरसाऽपतद्धरिम् ॥ सोप्यस्यवक्त्रेभु जमुत्तरंस्मयन्प्रवेशयामासयथोरगंबिले ॥ ६ ॥ दंतानिपेतुर्भगवद्भुजस्पृशस्तेकेशिनस्तप्तमयःस्पृशोय था ॥ बाहुश्चतद्देहगतोमहात्मनोयथामयःसंववृधेउपेक्षितः ॥ ७॥ समेधमानेनसकृष्णबाहुनानिरुद्धवा युश्चरणांश्चविक्षिपन् ॥ प्रस्विन्नगात्रःपरिवृत्तलोचनःपपातलैंडंविसृजन्क्षितौव्यसुः ॥८॥ तद्देहतःकर्क टिकाफलोपमाव्यसोरपाकृष्यभुजंमहाभुजः॥अविस्मितोऽयत्नहतारिरुत्स्मयैःप्रसूनवर्षैर्दिविषद्भिरीडि तः ॥ ९ ॥ देवर्षिरुपसंगम्यभागवतप्रवरोनृप ॥ कृष्णमक्लिष्टकर्माणंरहस्येतदभाषत ॥ १० ॥ कृष्णकृ ष्णाप्रमेयात्मन्योगेशजगदीश्वर ॥ वासुदेवाखिलावाससात्वतांप्रवरप्रभो ॥ ११ ॥ त्वमात्मासर्वभूता नामेकोज्योतिरिवैधसां ॥ गूढोगुहाशयःसाक्षीमहापुरुषईश्वरः ॥ १२ ॥ ॥ ॥

कृष्णेत्यादिना अयंभावःत्वमीश्वरोभूभारदैत्यसंहारायावतीर्णोऽसिअतस्तदनुरूपाचरणेनविश्वंपरिपालयेति तत्रत्वयितावत्भयशंकैवना स्तीत्याह अप्रमेयात्मन्नपरिच्छिन्नरूप योगेशअचिंत्यप्रभाव जगदीश्वरविश्वनियंतः वासुदेवसर्वभूतेषुवर्तमान अखिलावाससर्वस्याश्रय संप्रतिसात्वतांप्रवरश्रेष्ठ प्रभोसर्वशक्ते ॥११॥ कथमेवंरूपोऽहमितिचेदतआह त्वमात्मेतिनहित्वंजीववत्परिच्छिन्नःकिंतुसर्वभूतानामांतर एकोऽनुस्यूतआत्मा अंतरनुस्यूतत्वेदृष्टांतः एधसांकाष्ठानामंतर्ज्योतिरिवेति भूतेषुस्थितोऽपितैर्नदृश्यसइत्याह गूढइति अत्रहेतवः गुहा शयोबुद्धेरप्यांतरः किंच साक्षी नहिसाक्षीदृश्यतइत्यर्थः अपिच महापुरुषः अतःपरिच्छिन्नमतिभिर्नज्ञायसइत्यर्थः तर्हिसर्वांतरत्वेकिं प्रमाणमतआह ईश्वरइति नहीश्वरंविनापरतंत्राणांजीवानांप्रवृत्तिर्घटतइत्यर्थः ॥ १२ ॥ ॥ ॥ ॥

अहमीश्वरःअन्यत्सर्वमीशितव्यमित्येतदेवकुतइत्यतआह आत्मनेति साधनांतरनिरपेक्षएवात्माश्रयःस्वतंत्रः माययाशक्त्याभवान्गुणान्ससृजेसृष्टवान् तैःसृष्टैर्गुणैरिदंविश्वंसृजसिअत्सिसंहरसिअवसिपालयसि ननुसृष्ट्यादिक्रियाषट्कारकसाध्यैवदृष्टेत्याह सत्यसंकल्पइति नहिसंकल्पैकसाध्येबहिःसाधनापेक्षेतिभावः अतस्त्वमीश्वरइत्युपसंहारः ॥ १३ ॥ प्रस्तुतमाह सत्वमिति भूधरभूतानांभुवंधरंतीति भूधराराजानस्तद्रूपाणाम् ॥ १४ ॥ १५ ॥ परश्वोऽहनीति अद्यैवाक्रूरएष्यतिश्वोमथुरांगंतासि परश्वश्चाणूरादींश्चत्वयानिहतान्द्रक्ष्यमीतिसिद्धवन्निर्देशोविज्ञापनप्रकारविशेषः ॥ १६ ॥ तस्यानुतदनंतरंशंखादीनां शंखःपंचजनः वधंद्रक्ष्यामीतिशेषः भाविनिर्देशमात्र

आत्मनात्माश्रयःपूर्वंमाययाससृजेगुणान् ॥ तैरिदंसत्यसंकल्पःसृजस्यत्स्यवसीश्वरः ॥ १३ ॥ सत्वंभूधरभूतानांदैत्यप्रमथरक्षसाम् ॥ अवतीर्णोविनाशायसेतूनांरक्षणायच ॥ १४ ॥ दिष्ट्यातेनिहतोदैत्योलीलयाऽयंहयाकृतिः ॥ यस्यहेषितसंत्रस्तास्त्यजंत्यनिमिषादिवम् ॥ १५ ॥ चाणूरंमुष्टिकंचैवमल्लानन्यांश्चहस्तिनं ॥ कंसंचनिहतंद्रक्ष्येपरश्वोऽहनितेविभो ॥ १६ ॥ तस्यानुशंखयवनमुराणांनरकस्यच ॥ पारिजातापहरणमिंद्रस्यचपराजयम् ॥ १७ ॥ उद्वाहंवीरकन्यानांवीर्यशुल्कादिलक्षणं ॥ नृगस्यमोक्षणंपापाद्द्वारकायांजगत्पते ॥ १८ ॥ स्यमंतकस्यचमणेरादानंसहभार्यया ॥ मृतपुत्रप्रदानंचब्राह्मणस्यस्वधामतः ॥ १९ ॥ पौंड्रकस्यवधंपश्चात्काशिपुर्याश्चदीपनं ॥ दंतवक्रस्यनिधनंचैद्यस्यचमहाक्रतौ ॥ २० ॥ यानिचान्यानिवीर्याणिद्वारकामावसन्भवान् ॥ कर्त्ताद्रक्ष्याम्यहंतानिगेयानिकविभिर्भुवि ॥ २१ ॥ अथतेकालरूपस्यक्षपयिष्णोरमुष्यवै ॥ अक्षौहिणीनांनिधनंद्रक्ष्याम्यर्जुनसारथेः ॥ २२ ॥ विशुद्धविज्ञानघनंस्वसंस्थयासमाप्तसर्वार्थममोघवांछितं ॥ स्वतेजसानित्यनिवृत्तमायागुणप्रवाहंभगवंतमीमहि ॥ २३ ॥ ॥

मेतन्नत्वानंतर्यंविवक्षितं ॥ १७ ॥ १८ ॥ भार्ययाजांबवत्यासह स्वधामतःमहाकालपुरात् ॥ १९ ॥ २० ॥ द्वारकायांवसन्कर्त्ताकरिष्यति ॥ २१ ॥ अमुष्यविश्वस्यभूभारस्यवा ॥ २२ ॥ एवंविज्ञाप्यकृताभिनंदनंभगवंतंनमस्यतिद्वयेन विशुद्धविज्ञानघनमिति केवलंज्ञानैकमूर्त्तिम् अतएवस्वसंस्थयास्वरूपसम्यक्स्थित्यैवपरमानंदरूपयासम्यगाप्ताः सर्वेऽर्थायेनतं आप्तकामतोक्तासत्यसंकल्पतामाह अमोघवांछितमिति ननुवांछाचेदस्तितर्हिदुर्निवारासंसृतिरतआह स्वतेजसेति चिच्छक्त्यानित्यनिवृत्तोमायाकार्यरूपोगुणप्रवाहोयस्मात्तं अतोभगवंतंनिरतिशयैश्वर्यमीमहिशरणंव्रजेमेति ॥ २३ ॥ ॥ ॥ ॥

ननुत्रिकालज्ञस्त्वंकथंमत्प्रपंचंनजानासि जानासिचेत्कथमगुणप्रवाहंन्नवीषितत्राह त्वामिति ईश्वरमन्यस्यवशयितारंस्वाश्रयमन्यस्यअ
वशमतआत्ममाययाआत्माधीनयामाययाविनिर्मिताअशेषविशेषामहदाद्यायादवादिरूपावाकल्पनायेनतंधुर्यंश्रेष्ठंनतोऽस्मीति ॥२४॥२५॥
॥ २६ ॥ ननुनारदेनव्योमवधोनदृष्टस्तत्कथंव्योमवधप्रसक्तिरितितत्रोच्यते प्रातरेवकेशिवधानंतरंनारदेनोक्तमंगीकृत्यपुनस्तथैवपशून्पाल
यताव्योमोहतः यद्वा व्योमवधःपूर्वमेववृत्तोऽपिवेषधारिवधप्रसंगादत्रोच्यतइतिद्रष्टव्यम् केचित्पुनःशंखचूडवधात्पूर्वमेवपठंतिच तमाह

त्वामीश्वरंस्वाश्रयमात्ममाययाविनिर्मिताशेषविशेषकल्पनं ॥ क्रीडार्थमद्यात्तमनुष्यविग्रहंनतोऽस्मिधुर्यं यदुवृष्णिसात्वतां ॥ २४ ॥ श्रीशुकउवाच एवंयदुपतिंकृष्णंभागवतप्रवरोमुनिः ॥ प्रणिपत्याभ्यनुज्ञातो ययौतद्दर्शनोत्सवः ॥ २५ ॥ भगवानपिगोविंदोहत्वाकेशिनमाहवे ॥ पशूनपालयत्पालैःप्रीतैर्व्रजसुखावहः ॥२६॥ एकदातेपशून्पालांश्चारयंतोद्रिसानुषु ॥ चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥२७॥ तत्रासन्क तिचिच्चोराःपालाश्चकतिचिन्नृप ॥ मेषायिताश्चतत्रैकेविजन्हुरकुतोभयाः ॥ २८ ॥ मयपुत्रोमहामायोव्यो मोगोपालवेषधृक् ॥ मेषायितानपोवाहप्रायश्चोरायितोबहून् ॥ २९ ॥ गिरिदर्यांविनिक्षिप्यनीतंनीतंमहा सुरः ॥ शिलयापिदधेद्वारंचतुःपंचावशेषिताः ॥३०॥ तस्यतत्कर्मविज्ञायकृष्णःशरणदःसतां ॥ गोपान्नयंतं जग्राहवृकंहरिरिवौजसा ॥ ३१ ॥ सनिजंरूपमास्थायगिरींद्रसदृशंबली ॥ इच्छन्विमोक्तुमात्मानंनाशक्नो द्ग्रहणातुरः ॥३२॥ तंनिगृह्याच्युतोदोर्भ्यांपातयित्वामहीतले॥पश्यतांदिविदेवानांपशुमारममारयत्॥३३ गुहापिधानंनिर्भिद्यगोपान्निःसार्यकृच्छ्रतः ॥ स्तूयमानःसुरैर्गोपैःप्रविवेशस्वगोकुलं ॥ ३४ ॥ इतिश्री भागवतेमहापुराणेदशमस्कंधेपूर्वार्धेव्योमासुरवधोनामसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ॥

एकदेति ॥ २७ ॥ २८ ॥ मेषायितान्मेषवदाचरितान्स्वयंचोरवदाचरितःसन्नपोवाहअपकृष्यानिनाय ॥ २९ ॥ पिदधेछादितवान् ॥
॥ ३० ॥ शरणदआश्रयप्रदः हरिःसिंहइव ॥३१॥३२॥ पशुमारंपशुमारोयथाभवतितथा अनिःश्वासमित्यर्थः ॥ ३३ ॥ भुविगोपैः
स्तूयमानउपरिवैमानिकैर्देवैरिति ॥ ३४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेटीकायांसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥

अष्टत्रिंशेयथाध्यायेत्वक्रूरोगोकुलंगतः ॥ तथैवरामकृष्णाभ्यांगृहंनीत्वासुसत्कृतः ॥ १ ॥ प्रातःकेशिवधेवृत्तेद्वादश्यांनिर्गतेमुनौ ॥ ततो
व्योमेहतेऽक्रूरःसायंगोकुलमागमत् ॥ २ ॥ तदेवंनारदेनकंसवधादिकार्येविज्ञापितेश्रीकृष्णोमथुरांगंतुमुद्यतोवर्ततेतदाऽक्रूरोपिगोकुलमा
गमदित्याह अक्रूरोऽपीति अपिःसंभावनायाम् ॥ १ ॥ २ ॥ अर्हतेयोग्याय ॥ ३ ॥ स्वस्यकृष्णस्यदर्शनेऽसंभवमाशंक्यपुनःसंभावयति
ममैतदितिद्वयेन विषयात्मनोविषयाविष्टचित्तस्य शूद्राज्जन्मयस्यतस्यब्रह्मकीर्तनंवेदोच्चारणंयथेति ॥ ४ ॥ यद्वा मैवंकिंतुअधमस्यनीचस्या
पिममस्यादेव कुतइत्यतआह ह्रियमाणःकालनद्येति अयंभावः यथानद्याह्रियमाणानांतृणादीनांमध्येकिंचित्कदाचित्तरतिकूलंप्राप्नोति
तथाकर्मवशेनकालेनह्रियमाणानांजनानांजीवानामपिमध्येकश्चित्तरेदितिसंभवतीति ॥ ५ ॥ अतोऽनयाप्रवृत्त्यैवममामंगलंध्रुवंनष्टमेवज्ञा

श्रीशुकउवाच अक्रूरोऽपिचतांरात्रिंमधुपुर्यांमहामतिः ॥ उषित्वारथमास्थायप्रययौनंदगोकुलं ॥ १ ॥
गच्छन्पथिमहाभागोभगवत्यंबुजेक्षणे ॥ भक्तिंपरामुपगतएवमेतदचिंतयत् ॥ २ ॥ किंमयाचरितंभद्रंकिं
तप्तंपरमंतपः ॥ किंवाऽथाप्यर्हतेदत्तंयद्द्रक्ष्याम्यद्यकेशवं ॥ ३ ॥ ममैतद्दुर्लभंमन्यउत्तमश्लोकदर्शनं ॥ वि
षयात्मनोयथाब्रह्मकीर्तनंशूद्रजन्मनः ॥ ४ ॥ मैवंममाधमस्यापिस्यादेवाच्युतदर्शनं ॥ ह्रियमाणःकालन
द्याक्वचित्तरतिकश्चन ॥ ५ ॥ ममाद्यामंगलंनष्टंफलवांश्चैवमेभवः ॥ यन्नमस्येभगवतोयोगिध्येयांघ्रिपंक
जं ॥ ६ ॥ कंसोबताऽद्याकृतमेऽत्यनुग्रहंद्रक्ष्येंऽघ्रिपद्मंप्रहितोऽमुनाहरेः ॥ कृतावतारस्यदुरत्ययंतमःपूर्वेऽ
तरन्यन्नखमंडलत्विषा ॥ ७ ॥ यदर्चितंब्रह्मभवादिभिःसुरैःश्रियाचदेव्यामुनिभिःससात्वतैः ॥ गोचार
णायानुचरैश्चरद्वनेयद्गोपिकानांकुचकुंकुमांकितम् ॥ ८ ॥ ॥ ॥ ॥

यते भवोजन्मचसफलंजातमिति यद्यतःनमस्करिष्यामि ॥ ६ ॥ अमंगलनाशेसूचकांतरमाह कंसइति बतेत्याश्चर्ये अतिखलःकंसो
ऽपिममात्यंतमनुग्रहंकृतवान् यतोऽमुनाकंसेनप्रहितोहरेरंघ्रिपद्मंद्रक्ष्येद्रक्ष्यामीति पूर्वेअंबरीषादयस्तमःसंसारमतरंस्तीर्णाः ॥ ७ ॥ अंघ्रिप
द्मंविभावयति यदिति ब्रह्मादिभिरर्चितमितिपरमैश्वर्यमाह श्रियाचेतिसौभाग्यातिशयम् मुनिभिर्भक्तसहितैरितिपरमपुरुषार्थत्वम् गोचा
रणायेतिकृपालुत्वम् यद्गोपिकानामितिप्रेममात्रसुलभत्वम् ॥ ८ ॥ ॥ ॥ ॥ ॥

मनोरथांतरंकरोति द्रक्ष्यामीति शोभमानौकपोलौनासिकाचयस्मिंस्तत् स्मितसहितःअवलोकोयस्मिन्अरुणेकंजवल्लोचनेयस्मिन्तच्चत
च्चमुखंगुडालकावृतंवक्रकेशावृतम् तदानीमेवशुभसूचकंदृष्ट्वाअतिहृष्यन्नाह प्रदक्षिणमिति ॥ ९ ॥ पुनरप्यन्यच्चिंतयति अप्यद्येति ईयु
षःप्राप्तवतः लावण्यस्यधामआश्रयस्तस्यविष्णोः यद्वा विष्णोर्लावण्ययुक्तंयद्धामवपुस्तस्यउपलंभनंदर्शनंभविताभविष्यति अपियद्येवं
स्यात्तर्हिमह्यंममदृशोर्लोचनस्यफलंनस्यादितिनअपितुस्यादेवेत्यर्थः ॥ १० ॥ यईक्षितेत्यादिचतुर्भिःकुलकम् तत्रैवंशंका नन्वस्मदादि
वदेवभोक्तृत्वकर्तृत्वादिधर्मैस्तत्रतत्रप्रतीयमानस्यकथंविष्णुत्वमितीमांशंकांश्लोकत्रयेणापाकुर्वंश्चतुर्थेनतमहंद्रक्ष्यामीतिमनोरथंकरोति तथा
हि यईक्षितेति असत्सतोःकार्यकारणयोः ईक्षितापिईक्षणमात्रेणकर्त्तापिअहंरहितः अहंकारहीनः तथाअपास्ततमोभिदाभ्रमः तमःस्वाज्ञानं

द्रक्ष्यामिनूनंसुकपोलनासिकंस्मितावलोकारुणकंजलोचनं ॥ मुखंमुकुंदस्यगुडालकावृतंप्रदक्षिणंमेप्रचरं
तिवैमृगाः॥९॥ अप्यद्यविष्णोर्मनुजत्वमीयुषोभारावतारायभुवोनिजेच्छया॥लावण्यधाम्नोभवितोपलंभ
नंमह्यंननस्यात्फलमंजसादृशः ॥ १० ॥ यईक्षिताऽहंरहितोऽप्यसत्सतोःस्वतेजसाऽपास्ततमोभिदाभ्र
मः ॥ स्वमाययात्मन्रचितैस्तदीक्षयाप्राणाक्षधीभिःसदनेष्वभीयते ॥ ११ ॥ यस्याखिलामीवहभिःसुमं
गलैर्वाचोविमिश्रागुणकर्मजन्मभिः ॥ प्राणंतिशुंभंतिपुनंतिवैजगद्यास्तद्विरक्ताःशवशोभनामताः ॥ १२॥
सचावतीर्णःकिलसात्वतान्वयेस्वसेतुपालामरवर्यशर्मकृत् ॥ यशोवितन्वन्व्रजआस्तईश्वरोगायंतिदेवा
यदशेषमंगलं ॥ १३ ॥ ॥ ॥ ॥ ॥

ततःअज्ञानात्भिदाभेदः ततोभ्रमःअभिनिवेशादिःअपास्ताअपाकृतास्तमआदयोयस्मिन्सः कुतएतत्तत्राह स्वतेजसाचिच्छक्त्यानित्य
स्वरूपसाक्षात्कारेण तथाऽपिस्वमाययास्वाधीनयामाययातदीक्षयातस्यैवईक्षयाप्राणाक्षधीभिःसहितैः आत्मन्आत्मनिस्वस्मिन्नेवरचितैर्जी
वैःसदनेषुवृंदावनतरुषुगोपीगृहेषुचलीलयाकर्माणिकुर्वन्सक्तवदभीयते आभिमुख्येनप्रतीयते ॥ ११ ॥ ननुसर्वथाहंकारादिरहितस्यात्मा
रामस्यलीलाऽपिकुतइत्याशंक्यपरानुग्रहार्थेत्याशयेनाह यस्येति अखिलानिअखिलस्यवाअमीवानिपापानिघ्नंतीत्यखिलामीवहानितैः त
थासुमंगलैःशोभनानिमंगलानियेभ्यस्तैः गुणाःकरुणादयः कर्माणिजन्मानिचतैर्विमिश्रायुक्तावाचःजगत्प्राणंतिजीवयंतिशुंभंतिशोभयंति
पुनंतिपवित्रयंति व्यतिरेकमाह याइति तैर्विरक्तारहितास्तास्तुस्वलंकृताअपिवस्त्राद्यलंकृतशववच्छोभमानामताः संमताः ॥ १२ ॥ स्वयंर
चितान्सेतून्वर्णाश्रमधर्मान्पालयताममरवर्याणांसुखकर्त्तासन्नवतीर्णःयद्यशः ॥ १३ ॥ ॥ ॥

त्रैलोक्येएकमेवकांतं दृशिर्दृष्टिस्तद्वतांमहानुत्सवोयस्मात् यद्वा महानुत्सवएव अतएवश्रियईप्सितमास्पदम् एवंभूतंरूपंश्रीमूर्त्तिंदधानं
तमीश्वरंद्रक्ष्यामीति अत्रलिंगं उषसःप्रभातसमयाःसुदर्शनाः शुभदर्शनाः सुखंप्रभातारजन्यःशुभसूचकाबभूवुरित्यर्थः ॥१४॥ किंचअ
थदर्शनानंतरंसपदितत्क्षणमेवरथादवतीर्णः सन्प्रधानपुरुषयोरामकृष्णयोश्चरणंयोगिभिरपिआत्मलाभायकेवलंधियैवधृतंसाक्षादहंनमस्या
मिआभ्यांसहअनयोःसखीन्गोपांश्चनमस्यामीति ॥१५॥ किंच अपीति अधास्यत्धास्यति तद्विभावयति दत्ताभयमितिसार्द्धेन ॥१६॥
बलिनातावत्पदत्रयपरिमितभूदानसमयेतस्यहस्तेउदकंनिहितम् कौशिकइंद्रस्तेनापिकदाचित्किंचिन्निहितमितिज्ञातव्यंमुमुक्षूणांसंसार

तंत्वद्यनूनंमहतांगतिंगुरुंत्रैलोक्यकांतंदृशिमन्महोत्सवं ॥ रूपंदधानंश्रियईप्सितास्पदंद्रक्ष्येममासन्नु
षसःसुदर्शनाः ॥ १४ ॥ अथावरूढःसपदीशयोरथात्प्रधानपुंसोश्चरणंस्वलब्धये ॥ धियाधृतंयोगिभि
रप्यहंध्रुवंनमस्यआभ्यांचसखीन्वनौकसः ॥ १५ ॥ अप्यंघ्रिमूलेपतितस्यमेविभुःशिरस्यधास्यन्निजह
स्तपंकजं ॥ दत्ताभयंकालभुजंगरंहसाप्रोद्वेजितानांशरणैषिणांनृणां ॥ १६ ॥ समर्हणंयत्रनिधायकौ
शिकस्तथाबलिश्चापजगत्रयेंद्रतां ॥ यद्वाविहारेव्रजयोषितांश्रमंस्पर्शेनसौगंधिकगंध्यपानुदत् ॥१७॥
नमय्युपैष्यत्यरिबुद्धिमच्युतःकंसस्यदूतःप्रहितोऽपिविश्वदृक् ॥ योंतर्बहिश्चेतसएतदीहितंक्षेत्रज्ञईक्षत्य
मलेनचक्षुषा ॥ १८ ॥ अप्यंघ्रिमूलेऽवहितंकृतांजलिंमामीक्षितासस्मितमार्द्रयादृशा ॥ सपद्यप
ध्वस्तसमस्तकिल्बिषोवोढामुदंवीतविशंकऊर्जिताम् ॥ १९ ॥ ॥ ॥ ॥

भयनिवर्त्तकंसकामानामभ्युदयप्रदंचेत्युक्तं अनुरक्तानांपरमंसुखदंचेत्याह यद्वा वाशब्दोवितर्केविहारेरासक्रीडायांसौगंधिकस्यगंधइवगं
धोयस्यतत्सौगंधिकगंधि ॥ १७ ॥ एवंपरमानुग्रहंसंभाव्यपुनरप्यसंभवमाशंक्यपरिहरति नमयीति यद्यप्यहंकंसेनप्रहितःअतस्तस्यदूत
स्तथापिमयिअरेरयमितिबुद्धिंनउपैष्यतिनकरिष्यतीत्यर्थः यतोविश्वदृक्सर्वज्ञः अतोममचेतसोंऽतश्चबहिश्चयदीहितंचेष्टितमेतत्यःक्षेत्रज्ञः
अंतर्यामीनित्यज्ञानेनेक्षते अयंभावः चेतसोबहिरेवकंसमनुवर्तेअंतस्तुकृष्णमेवतदेतदसौहृदिस्थितोजानातीति यद्वा एतस्यजगतःईहितमि
ति ॥ १८ ॥ अपियदिअंघ्रिमूलेचरणोपांतेअवहितंसंयतंकृपाऽमृतेन आर्द्रयादृशामामीक्षिताद्रक्ष्यतितर्हिसपद्येवविनष्टाखिलकल्मषः परांमुदं
वोढाप्राप्स्यामीति ॥ १९ ॥ ॥ ॥ ॥ ॥

अथमांपरिरप्स्यतेआलिंगिष्यतियदातदैवमेआत्मादेहस्तीर्थीक्रियतेअतिपवित्रीकरिष्यते उच्छ्वसितिश्लथोभविष्यति अतोदेहात् ॥ २० ॥
ततभोस्तातेति तदाजन्मभृतःसफलजन्मानः अन्यथातज्जन्मैवनभवतीत्याह महीयसेति महीयसाश्रीकृष्णेनयोनादृतःअमुष्यतस्यजं
तोस्तज्जन्माधिक् ॥ २१ ॥ ननुसुहृदादिषुपरिष्वंगसंप्रश्नादयोजीवधर्माःकथमीश्वरेसंगच्छंतेऽतआह नतस्येति दयितःप्रियस्तद्विपरीतो
ऽप्रियःसुहृत्तमोहिततमस्तद्विपरीतोद्वेष्यःएतत्सर्वव्यतिरिक्तउपेक्ष्यइति दयितादयोनसंतीतिसत्यंतथाऽपिभक्तान्भजते तत्रयथायेभक्ता
स्तांस्तथाभजते येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहमितिभगवद्वचनात् अविषमत्वेऽपिभक्तेभ्यएवफलंददातीत्यत्रदृष्टांतः यद्वत्सुरद्रुमइ

सुहृत्तमंज्ञातिमनन्यदैवतंदोर्भ्यांबृहद्भ्यांपरिरप्स्यतेऽथमां॥आत्माहितीर्थीक्रियतेतदैवमेबंधश्चकर्मात्मकउ
च्छ्वसित्यतः॥२०॥ लब्धांगसंगंप्रणतंकृतांजलिंमांवक्ष्यतेऽक्रूरततेत्युरुश्रवाः॥तदावयंजन्मभृतोमहीयसा
नैवादृतोयोधिगमुष्यजन्मतत् ॥२१॥ नतस्यकश्चिद्दयितःसुहृत्तमोनचाप्रियोद्वेष्यउपेक्ष्यएववा॥ तथाऽपि
भक्तान्भजतेयथातथासुरद्रुमोयद्वदुपाश्रितोऽर्थदः॥२२॥ किंवाग्रजोमाऽवनतंयदूत्तमःस्मयन्परिष्वज्यगृ
हीतमंजलौ॥गृहंप्रवेश्याप्तसमस्तसत्कृतंसंप्रक्ष्यतेकंसकृतंस्वबंधुषु॥२३॥ श्रीशुकउवाच इतिसंचिंतयन्कृ
ष्णंश्वफल्कतनयोऽध्वनि॥रथेनगोकुलंप्राप्तःसूर्यश्चास्तगिरिंनृप ॥ २४ ॥ पदानितस्याखिललोकपालकि
रीटजुष्टामलपादरेणोः॥ददर्शगोष्ठेक्षितिकौतुकानिविलक्षितान्यब्जयवांकुशाद्यैः॥२५ ॥तद्दर्शनाल्हादवि
वृद्धसंभ्रमःप्रेम्णोर्ध्वरोमाऽश्रुकलाकुलेक्षणः॥रथादवस्कंद्यसतेष्वचेष्टतप्रभोरमून्यंघ्रिरजांस्यहोइति॥२६

ति ॥ २२ ॥ योलयांऽजलिःकरिष्यतेतस्मिन्नेवांजलौगृहीतंमाम् आप्तानिसमस्तानिअर्घादिसत्कृतानियेनतंमाम् ॥ २३ ॥ सतुमार्गम
पिनवेदतयाऽपिरथेनप्राप्तइति ॥ २४ ॥ अखिलैर्लोकपालैःकिरीटेषुजुष्टाअमलाःपादरेणवोयस्यतस्य क्षितिकौतुकानिक्षितेरलंकाररू
पाणि ॥ २५ ॥ तद्दर्शनेनयआल्हादस्तेनविवृद्धःसंभ्रमोयस्यसः प्रेम्णाऊर्ध्वानिरोमाणियस्यसः अश्रूणांकलाभिर्लेशैराकुलेईक्षणेयस्यसः
अवस्कंद्यअवप्लुत्यतेषुपदेषुसोऽक्रूरःअचेष्टतव्यलुठत् अहोइतिदुर्लभतांभावयन् ॥ २६ ॥ ॥ ॥

ननुकिमर्थमेवंव्यलुठत् नास्तिप्रेमसंभ्रमेफलोद्देशइत्याह देहभृतामिति देहभाजामेतावानेवपुरुषार्थः कंसस्यसंदेशादारभ्यहरेर्लिंगदर्शन श्रवणादिभिर्योऽयमक्रूरस्यवर्णितइति संदेशआद्योयस्यार्थस्यसयावानक्रूरस्यजातइतिवा ॥ २७ ॥ ततःकृष्णंरामंचददर्श गावःदुह्यंतेऽस्मि न्नितिगोदोहनंतत्स्थानंगतौप्राप्तौ ॥ २८ ॥ २९ ॥ अनुक्रोशोऽनुकंपातद्विलसितास्मितयुक्तमीक्षणंययोस्तौ ॥ ३० ॥ उदाराश्चरुचिराक्रीडाययो स्तौ स्रग्विणौरत्नस्रग्भिरलंकृतौ ॥ ३१ ॥ प्रधानभूतौपुरुषौप्रकृतिपुरुषात्मकौवा कुतः आद्यौ तदपिकुतः जगद्धेतूजगत्कारणौ अतएव जगत्पती विपरीतोवाचतुर्णांपदानांहेतुहेतुमद्भावः जगत्यर्थेपृथिव्याभारापनयनायस्वांशेनमूर्त्तिभेदेनबलकेशवौसंगतौ ॥ ३२ ॥ स्व

देहभृतामियानर्थोहित्वादंभंभियंशुचम् ॥ संदेशाद्योहरेर्लिंगदर्शनश्रवणादिभिः ॥ २७ ॥ ददर्शकृष्णंरामं चव्रजेगोदोहनंगतौ ॥ पीतनीलांबरधरौशरदंबुरुहेक्षणौ ॥ २८ ॥ किशोरौश्यामलश्वेतौश्रीनिकेतौबृहद्भुजौ ॥ सुमुखौसुंदरवरौबालद्विरदविक्रमौ ॥ २९ ॥ ध्वजवज्रांकुशांभोजैश्चिन्हितैरंघ्रिभिर्व्रजं ॥ शोभयंतौमहा त्मानौसानुक्रोशस्मितेक्षणौ ॥ ३० ॥ उदाररुचिरक्रीडौस्रग्विणौवनमालिनौ ॥ पुण्यगंधानुलिप्तांगौस्नातौ विरजवाससौ ॥ ३१ ॥ प्रधानपुरुषावाद्यौजगद्धेतूजगत्पती ॥ अवतीर्णौजगत्यर्थेस्वांशेनबलकेशवौ ॥ ३२ ॥ दिशोवितिमिराराजन्कुर्वाणौप्रभयास्वया ॥ यथामारकतःशैलोरौप्यश्चकनकाचितौ ॥ ३३ ॥ रथात्तूर्ण मवप्लुत्यसोऽक्रूरःस्नेहविव्हलः ॥ पपातचरणोपांतेदंडवद्रामकृष्णयोः ॥ ३४ ॥ भगवद्दर्शनाल्हादबाष्पप र्याकुलेक्षणः ॥ पुलकाचितांगऔत्कंठ्यात्स्वाख्यानेनाशकन्नृप ॥ ३५ ॥ भगवांस्तमभिप्रेत्यरथांगांकित पाणिना ॥ परिरेभेभ्युपाकृष्यप्रीतःप्रणतवत्सलः ॥ ३६ ॥ संकर्षणश्चप्रणतमुपगुह्यमहामनाः ॥ गृही त्वापाणिनापाणीअनयत्सानुजोगृहम् ॥ ३७ ॥ ॥ ॥ ॥

प्रभयाविगततिमिरादिशःकुर्वाणौ कनकाचितौसुवर्णव्याप्तावितिसालंकारयोःशैलसादृश्यार्थमुक्तम् ॥ ३३ ॥ ३४ ॥ भगवद्दर्शनाल्हादे नयद्बाष्पंतेनपर्याकुलेईक्षणेयस्यसः पुलकैराचितंव्याप्तमंगंयस्यसः स्वाख्यानेअक्रूरोहंनमस्करोमीतिकथनेनाशक्नोत् ॥ ३५ ॥ अभिप्रेत्या क्रूरोऽयमेतदर्थमागतइतिज्ञात्वाकंसहननसामर्थ्यंद्योतयन्निवरथांगेनचक्रेणांकितोयःपाणिस्तेनाभ्युपाकृष्यतमालिंगितवान् ॥ ३६ ॥ पा णीअंजलिरूपेणसंहतावेवगृहीत्वा ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मधुपर्कएवार्हणंतस्मिन्वायदुचितमर्हणमाहरत् आनीयसमर्पितवानित्यर्थः ॥३८॥३९॥४०॥ सत्कृतंसंमानितम् निरनुग्रहेक्रूरेकथंकेनप्रकारे
णस्थजविथेत्यर्थः सौनःपशुघातीसएवपालकोयेषामवीनांमेषाणांतइवतत्तुल्याइत्यर्थः ॥ ४१ ॥ निरनुग्रहतामाह योऽवधीदिति तोकान्
तोकानि असुतृप्असूनेवतर्पयतियः अतःखलःतस्यकंसस्यप्रजानां हेअक्रूरयेषांजीवनमात्रमपिदुर्लभंतेषांवः किंनुकुशलंविचारयामइति
॥ ४२ ॥ मधुरयावाचाइत्थंसत्कृतः तथैववाचापरिपृष्टेनप्रश्नेन अध्वपरिश्रमंसंसारश्रमम् ॥ ४३ ॥ इतिदशमेपूर्वार्धेटीकायांअष्टत्रिंशत्त

पृष्ट्वाऽथस्वागतंतस्मैनिवेद्यचवरासनम् ॥ प्रक्षाल्यविधिवत्पादौमधुपर्कार्हणमाहरत् ॥ ३८ ॥ निवेद्यगां
चातिथयेसंवाह्यश्रांतमादृतः ॥ अन्नंबहुगुणंमेध्यंश्रद्धयोपाहरद्विभुः ॥ ३९ ॥ तस्मैभुक्तवतेप्रीत्यारामःपर
मधर्मवित् ॥ मुखवासैर्गंधमाल्यैःपरांप्रीतिंव्यधात्पुनः ॥ ४० ॥ पप्रच्छसत्कृतंनंदःकथंस्थनिरनुग्रहे ॥ कं
सेजीवतिदाशार्हसौनपालाइवावयः ॥ ४१ ॥ योऽवधीत्स्वस्वसुस्तोकान्क्रोशंत्याअसुतृप्खलः ॥ किंनु
स्वित्तत्प्रजानांवःकुशलंविमृशामहे ॥ ४२ ॥ इत्थंसूनृतयावाचानंदेनसुसभाजितः ॥ अक्रूरःपरिपृष्टेनजहा
वध्वपरिश्रमम् ॥ ४३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेअक्रूरागमनंनामअष्टात्रिंशत्तमोध्या
यः ॥३८॥ ॥ श्रीशुकउवाच सुखोपविष्टःपर्यंकेरामकृष्णोरुमानितः ॥ लेभेमनोरथान्सर्वान्पथियान्स
चकारह ॥ १ ॥ किमलभ्यंभगवतिप्रसन्नेश्रीनिकेतने ॥ तथापितत्पराराजन्नहिवांछंतिकिंचन ॥ २ ॥
सायंतनाशनंकृत्वाभगवान्देवकीसुतः ॥ सुहृत्सुवृत्तंकंसस्यपप्रच्छान्यच्चिकीर्षितम् ॥३॥ श्रीभगवानुवाच
तातसौम्यागतःकच्चित्स्वागतंभद्रमस्तुवः ॥ अपिस्वज्ञातिबंधूनामनमीवमनामयम् ॥ ४ ॥ ॥

मोऽध्यायः ॥३८॥ ॥ नवत्रिंशेपुरींगच्छत्यच्युतेगोपिकोक्तयः॥अक्रूरेणाथकालिंद्यांविष्णुलोकस्यदर्शनं ॥ १ ॥ भक्तानांमनोरथाःसत्याभ
वंतीतिद्योतयन्नाह सुखोपविष्टइति रामकृष्णाभ्यामुरुअधिकंमानितः ॥१॥२॥३॥ हेतातहेसौम्यस्वागतंयथातथाआगतः स्वज्ञातिबंधूनां
स्वेसुहृदः ज्ञातयःसपिंडाः बंधवःअसपिंडाःसंबंधिनः तेषामपिकिमनमीवमपापमदुःखमितियावत् अनामयमारोग्यं ॥ ४ ॥ ॥

एवंप्रश्नोऽपिममनातिसंगतइत्याह किन्विति अंगहेअक्रूर पृच्छेपृच्छामि नःअस्माकंकुलस्यामयरोगेनोमातुलइतिनामयस्यतास्मिन् नः स्वानांज्ञातीनां तस्यप्रजासुच॥ ५॥ अस्मत्अस्मन्निमित्तंवृजिनंदुःखं आर्ययोर्निरपराधयोः यद्धेतोर्यःअहमेवहेतुस्तस्मात् ॥ ६ ॥ हेसौम्यस्वानांवोदर्शनमद्यममसंजातंतत्रादिष्ट्याभद्रं ॥ ७ ॥ माधवःमधोर्वंशजः ॥ ८ ॥ यःधनुर्मखच्छद्मासंदेशोयस्य यदर्थंचाणूरादिभिर्घातनार्थं अस्यकंसस्य स्वजन्मकृष्णजन्म आनकदुंदुभेःसकाशात् ॥ ९ ॥ विजज्ञतुर्विशेषेणज्ञापयामासतुः ॥ १० ॥ सोऽपिनंदोगोपान्समादिशत् तदेवदर्शयति गृह्यतामित्यादिना गोरसःक्षीरादिः उपायनानिवस्तूनि ॥ ११ ॥ रसान्घृतादीन् शब्दच्छलेनेदंसूचयति

किंनुनःकुशलंपृच्छेएधमानेकुलामये ॥ कंसेमातुलनाह्वयंगस्वानांनस्तत्प्रजासुच ॥५॥ अहोअस्मदभूद्भूरिपित्रोर्वृजिनमार्ययोः ॥ यद्धेतोःपुत्रमरणंयद्धेतोर्बंधनंतयोः ॥ ६॥ दिष्ट्याऽद्यदर्शनंस्वानांमह्यंवःसौम्यकांक्षितम् ॥ संजातंवर्ण्यतांतातत्तवागमनकारणम् ॥ ७॥ श्रीशुकउवाच पृष्टोभगवतासर्वंवर्णयामासमाधवः ॥ वैरानुबंधंयदुषुवसुदेववधोद्यमम् ॥ ८॥ यत्संदेशोयदर्थंवादूतःसंप्रेषितःस्वयम् ॥ यदुक्तंनारदेनास्यस्वजन्मानकदुंदुभेः ॥ ९ ॥ श्रुत्वाऽक्रूवचःकृष्णोबलश्चपरवीरहा ॥ प्रहस्यनंदंपितरंराज्ञादिष्टंविजज्ञतुः ॥ ॥१०॥ गोपान्समादिशत्सोऽपिगृह्यतांसर्वगोरसः ॥ उपायनानिगृण्हीध्वंयुज्यंतांशकटानिच ॥ ११॥ यास्यामःश्वोमधुपुरींदास्यामोनृपतेरसान् ॥ द्रक्ष्यामःसुमहत्पर्वयांतिजानपदाःकिल ॥ एवमाघोषयत्क्षत्रानंदगोपःस्वगोकुले ॥ १२ ॥ गोप्यस्तास्तदुपश्रुत्यबभूवुर्व्यथिताभृशम् ॥ रामकृष्णौपुरींनेतुमक्रूरंव्रजमागतम् ॥ १३ ॥ काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः ॥ स्रंसद्दुकूलवलयकेशग्रंथ्यश्चकाश्चन ॥ १४ ॥ अन्याश्चतदनुध्याननिवृत्ताशेषवृत्तयः ॥ नाभ्यजानन्निमंलोकमात्मलोकंगताइव ॥ १५ ॥

अचिकित्स्यस्यरोगस्याचिकित्सार्थंरसान्दास्यामइति क्षत्राव्रजरक्षाऽधिकृतेनआघोषयत्सर्वतोघोषितवान् ॥ १२ ॥ ताःकृष्णैकजीवनागोप्यःतत्तदाअक्रूरमागतमुपश्रुत्येति ॥ १३ ॥ व्यथालिंगान्याहपंचभिः काश्चिदिति तेनश्रवणेनकृतोयोहृत्तापस्तेनयःश्वासस्तेनम्लानामुखश्रीर्यासांताबभूवुरिति दुकूलानिचवलयानिचकेशग्रंथयश्च स्रंसंतोदुकूलादयोयासांतथाभूताःकाश्चनबभूवुरिति ॥ १४ ॥ तस्यश्रीकृष्णस्यानुध्यानेननिवृत्ताअशेषाश्चक्षुरादिवृत्तयोयासांताःइमंलोकंदेहमपिनजानांतिस्ममुक्ताइवेति ॥ १५ ॥ ॥ ॥

अपराःस्त्रियःशौरेर्गिरःस्मरंत्यःसंमुमुहुः कथंभूताः अनुरागेणयत्स्मितंतेनईरिताः हृदिस्पृशंतीतिहृदिस्पृशोमनोज्ञाः चित्राणिपदानिया सुताः ॥१६॥१७॥ विरहेणकातराविह्वलाः अच्युतेआशयश्चित्तंयासांताः ॥ १८ ॥ कृष्णसंगतिंविधायविघट्टयतीतिविधातारंप्रत्येवमा क्रोशंत्यआहुः अहोइति मैत्र्याहिताचरणेन प्रणयेनस्नेहेनच अकृतार्थानप्राप्तभोगानपितान्वियुनंक्षिवियोजयसि तस्मान्नतवदया बालिशोऽपित्वमित्याहुः अपार्थकमिति ॥१९॥ विगर्हितंतवेदंकर्मेत्याहुः यस्त्वमिति शोकमपनुदतीतिशोकापनोदःसचासौस्मितलेश श्चगूढहासस्तेनसुंदरंमुकुंदस्यवक्रंसकृत्प्रदर्श्यपुनस्तस्यपारोक्ष्यमदृश्यतांकरोषिअतस्तवकृतंकर्मअसाधुनिंद्यमित्यर्थः ॥ २० ॥ किंच दत्ता

**स्मरंत्यश्चापराःशौरेरनुरागस्मितेरिताः ॥ हृदिस्पृशश्चित्रपदागिरःसंमुमुहुःस्त्रियः ॥ १६ ॥ गतिंसुल लितांचेष्टांस्निग्धहासावलोकनम् ॥ शोकापहानिनर्माणिप्रोद्दामचरितानिच ॥ १७ ॥ चिंतयंत्योमुकुंद स्यलीलाविरहकातराः ॥ समेताःसंघशःप्रोचुरश्रुमुख्योऽच्युताशयाः ॥ १८ ॥ गोप्यऊचुः अहोवि धातस्तवनक्वचिद्दयासंयोज्यमैत्र्याप्रणयेनदेहिनः ॥तांश्चाकृतार्थान्वियुनंक्ष्यपार्थकंविक्रीडितंतेऽर्भकचेष्टि तंयथा ॥ १९ ॥ यस्त्वंप्रदर्श्यासितकुंतलावृतंमुकुंदवक्रंसुकपोलमुन्नसम् ॥ शोकापनोदस्मितलेशसुं दरंकरोषिपारोक्ष्यमसाधुतेकृतं ॥ २० ॥ क्रूरस्त्वमक्रूरसमाख्ययास्मनश्चक्षुर्हिदत्तंहरसेबताज्ञवत् ॥ ये नैकदेशेऽखिलसर्गसौष्ठवंत्वदीयमद्राक्ष्मवयंमधुद्विषः ॥ २१ ॥ ननंदसूनुःक्षणभंगसौहृदःसमीक्षतेनःस्वकृ तातुराबत ॥ विहायगेहान्स्वजनान्सुतान्पतींस्तद्दास्यमद्धोपगतानवप्रियः ॥ २२ ॥**

पहारित्वेनातिक्रूरस्त्वमित्याहुः क्रूरस्त्वमिति नन्वक्रूरोहरतिनाहमितिचेदतआहुः अक्रूरसमाख्ययेति नह्येवंकर्तुमन्यःप्रभवतिअतोनामां तरेणस्मध्रुवंत्वमेवागतोऽसि कृष्णंहरामिनयुष्मच्चक्षुरितिचेन्न येनत्वद्दत्तेनचक्षुषामधुद्विषः एकदेशेनेत्रवक्रादौत्वदीयंसमग्रसृष्टिनैपुणमद्रा क्ष्मदृष्टवत्योवयंतच्चक्षुः अयंभावः ममसर्वंरहस्यमाभिर्ज्ञातमित्यमर्षेणेवकृष्णंवियोजयन्नस्मानंधीकरोषीतिच ॥ २१ ॥ विधातारंविहाय परस्परमूचुः ननंदसूनुरिति बतेतिखेदे क्षणभंगअस्थिरंसौहृदंयस्यसः गृहादीन्विहायअद्धासाक्षात्तस्यैवदास्यमुपागताः स्वकृतातुराः तत्कृतेनैवस्मितादिनापरवशाअपिनःअस्मान्नसमीक्षते नवंनवंप्रियंयस्यसः अतएनंनिवारयामइतिभावः ॥ २२ ॥

सेर्ष्यमूचुः सुखंप्रभातेति व्रजस्पतेः श्रीकृष्णस्यमुखंपास्यंतिआदरेणद्रक्ष्यंति कथंभूतम् अपांगेननेत्रप्रांतेनउत्कलितमुज्जृंभितांस्मितमेवा
सवोरसोयस्मिंस्तत् यद्वा अपांगोत्कलितस्मितेनासवरूपंयन्मुखम् ततश्चपानंमुख्यमेवसंभावयंति ॥ २३ ॥ ननुद्वित्राणिदिनानितथाभ
वतुनामतथाऽप्यस्मत्स्नेहाकृष्टःपित्रादिभिश्चपरावार्तितआगामिष्यतीत्याशंक्याहुः हेअबलाः तासांमधुवन्मंजुभिर्भाषितैर्वशंकृताचित्तस्त
थातासांसलज्जस्मितैर्विभ्रमैर्भ्रमन्परवान्पित्रादिपरतंत्रोऽपि यद्वा व्रजेपरेअन्येबंधवःसंतियस्य तथामनस्वीधीरोऽपिग्राम्याआविदग्धा
नःकथंप्रतियास्यतेप्रत्येष्यते नकथंचिदित्यर्थः ॥ २४ ॥ किंच अस्मदुत्सवभाजोऽन्यएवाद्यभविष्यंतीत्याहुः अद्येति तत्रपुरेदाशार्हादीनां
दृशःदृष्टेर्महानुत्सवोभाविष्यतेभविष्यति येदेवकीसुतंद्रक्ष्यंति तथायेचाध्वनिगच्छंतंद्रक्ष्यंतितेषामपिदृशोभाविष्यतीति यद्वा दृशइतिद्विती

सुखंप्रभातारजनीयमाशिषःसत्याबभूवुःपुरयोषितांध्रुवं ॥ याःसंप्रविष्टस्यमुखंव्रजस्पतेपास्यंत्यपांगो
त्कलितस्मितासवं ॥ २३ ॥ तासांमुकुंदोमधुमंजुभाषितैर्गृहीतचित्तःपरवान्मनस्व्यपि ॥ कथंपुनर्नःप्र
तियास्यतेऽबलाग्राम्याःसलज्जस्मितविभ्रमैर्भ्रमन् ॥ २४ ॥ अद्यध्रुवंतत्रदृशोभाविष्यतेदाशार्हभोजांध
कवृष्णिसात्वतां ॥ महोत्सवःश्रीरमणंगुणास्पदंद्रक्ष्यंतियेचाध्वनिदेवकीसुतं ॥ २५ ॥ मैतद्विधस्याकरु
णस्यनामभूदक्रूरइत्येतदतीवदारुणः ॥ योसावनाश्वास्यसुदुःखितंजनंप्रियात्प्रियंनेष्यतिपारमध्व
नः ॥ २६ ॥ अनार्द्रधीरेषसमास्थितोरथंतमन्वमीचत्वरयंतिदुर्मदाः ॥ गोपाअनोभिःस्थविरैरुपेक्षितंदै
वंचनोऽद्यप्रतिकूलमीहते ॥ २७ ॥ ॥ ॥ ॥ ॥

या तेषांदृशोनेत्राणिमहोत्सवोभाविष्यतेप्राप्स्यति प्राप्त्यर्थस्यभवतेरात्मनेपादित्वात् ॥ २५ ॥ अक्रूरंशपंत्यआहुः मैतद्विधस्येति एषाविधा
विधानंकर्मयस्य अतएवनिष्कृपस्यअक्रूरइतिशोभनंनाममाभूत् तत्रहेतुः अतीवदारुणइत्यादि प्रियात्प्राणादपिप्रियतरंकृष्णमध्वनःपा
रमस्मद्दृग्गोचरत्वादतिदूरंदेशंनेष्यति ॥२६॥ अहोधिगस्मज्जीवितमित्याहुः अनार्द्रधीरिति अनार्द्राकठिनाधीर्यस्यसःतावदेवकृष्णोरथम
धिरूढः अस्याविनयमालक्ष्यस्थविरैश्चोपेक्षितंतेननिवारितवंतइत्यर्थःकिंच दैवंचेति अयंभावः यदिदैवमस्माकमनुकूलंभवेत्तर्हिविघ्नैः
कश्चिदेषांमध्येप्रतिहन्येतअकस्मात्वज्रपातोभवेत् अन्यद्वाकिंचिदनिष्टंस्यान्नतुतत्किंचिदस्तीति ॥ २७॥ ॥ ॥

तुंगौईषदुन्नतौगुल्फौअरुणनखव्राताश्चतेषांदीधितिभिः तथानवाःकोमलाअंगुल्यः अंगुष्ठौचतान्येवदलानितैश्चविलसच्छोभमानंपादपंक
जंयस्यतम् ॥ ५० ॥ महार्हामणिव्रातायेषुतैःकिरीटादिभिः ॥ ५१ ॥ ५२ ॥ पृथक्पृथक्भावोऽभिप्रायोयेषांतैस्तत्रपार्षदैः स्वामीतिस्तू
यमानं सनकादिभिर्ब्रह्मेति ब्रह्माद्यैर्महेश्वरइति मरीच्यादिभिर्द्विजोत्तमैःपरःप्रजापतिरिति ॥ ५३ ॥ वसुरुपरिचरः प्रल्हादनारदवसवः
प्रमुखामुख्यायेषांतैःपरंदैवतमितिच श्रेष्ठैर्वचोभिःपृथग्भावैर्वचोभिरितिवा ॥ ५४ ॥ विद्याविद्येजीवानांमुक्तिसंसृतिहेतू मायातयोःकार
णं शक्तिर्ल्हादिनीसंविज्ज्ञानमाभिरन्याभिश्चनिषेवितम् ॥ ५५ ॥ विलोक्यसुभृशंप्रीतः अस्मत्कृष्णोऽसावेवंभूतःपरमेश्वरइतिज्ञात्वेति ॥

तुंगगुल्फारुणनखव्रातदीधितिभिर्वृतं ॥ नवांगुल्यंगुष्ठदलैर्विलसत्पादपंकजं ॥ ५० ॥ सुमहार्हमणिव्रात
किरीटकटकांगदैः ॥ कटिसूत्रब्रह्मसूत्रहारनूपुरकुंडलैः ॥ ५१ ॥ भ्राजमानंपद्मकरंशंखचक्रगदाधरं ॥ श्री
वत्सवक्षसंभ्राजत्कौस्तुभंवनमालिनं ॥ ५२ ॥ सुनंदनंदप्रमुखैःपार्षदैःसनकादिभिः ॥ सुरेशैर्ब्रह्मरुद्राद्यै
र्नवभिश्चद्विजोत्तमैः ॥ ५३ ॥ प्रल्हादनारदवसुप्रमुखैर्भागवतोत्तमैः ॥ स्तूयमानंपृथग्भावैर्वचोभिरमला
त्मभिः ॥ ५४ ॥ श्रियापुष्ट्यागिराकांत्याकीर्त्यातुष्ट्येलयोर्ज्जया ॥विद्ययाऽविद्ययाशक्त्यामाययाचनिषेवि
तं ॥ ५५ ॥ विलोक्यसुभृशंप्रीतोभक्त्यापरमयायुतः ॥ हृष्यत्तनूरुहोभावपरिक्लिन्नात्मलोचनः ॥ ५६ ॥ गि
रागद्गदयाऽस्तौषीत्सत्त्वमालंब्यसात्वतः ॥प्रणम्यमूर्ध्नाऽवहितःकृतांजलिपुटःशनैः ॥५७॥ इतिश्रीभाग
वतेमहापुराणेदशमस्कंधेपूर्वार्धेऽक्रूरप्रतियानेएकोनचत्वारिंशोऽध्यायः ॥३९॥ अक्रूरउवाच नतोऽस्म्य
हंत्वाखिलहेतुहेतुंनारायणंपूरुषमाद्यमव्ययं ॥ यन्नाभिजातादरविंदकोशाद्ब्रह्माऽविरासीद्यतएषलोकः ॥१॥

॥ ५६ ॥ ५७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेटीकायामेकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ॥ चत्वारिंशेततोऽक्रूरः
कृष्णंमत्वेश्वरेश्वरम् ॥ प्रणम्यभक्त्यातुष्टावसगुणागुणभेदतः ॥ १ ॥ श्रीकृष्णंप्रणमति नतोऽस्मीति हेकृष्णत्वात्वांनतोऽस्मि त्वमस्म
त्पितृव्यःकुतोमांबालंनतोऽसितत्राह आद्यंपुरुषमव्ययंचानादिनिधनमित्यर्थः कुतएतत् अखिलहेतूनांहेतुम् सतुनारायणोनाहमितिचेत्त
त्राह नारायणंत्वाम् किंनारायणइतिमांस्तौषि काऽत्रस्तुतिः सत्यमेवेत्याह यन्नाभिजातादिति यतोब्रह्मणः ॥ १ ॥ ॥ ॥

अखिलहेतुहेतुत्वंप्रपंचयति भूरिति खस्यादिरहंकारः अजामायातस्याआदिःपुरुषः एतेयेजगतोहेतवस्ते सर्वेतवअंगभूताःअंगात्श्रीमूर्त्तेर्भूताः उपसर्जनभूतावा ॥ २ ॥ नन्वतिस्तुतिःकथंक्रियतेअहमेवान्यतउत्पन्नस्तत्परतंत्रश्चेत्याशंक्यतवैषामायात्वरपारमार्थ्यंतुनकोऽपिवेदेत्याह नैतइति एतेअजाआदिर्येषांते आत्मनस्तेस्वरूपंनविदुः अनात्मतयाजडत्वेनकारणेन जडत्वेहेतुः गृहीताःप्रत्यक्षादिभिर्दृष्टाः नह्यजडोदृग्गोचरइतिभावः ननुजडामांमाजानंतुजीवस्तुज्ञास्यतीत्यतआह अजइति सःअजोब्रह्माऽपिअजायागुणैरनुबद्धआवृतोगुणातीतंतेतवस्वरूपंनवेदअन्यःकुतोज्ञास्यतीति यद्वा प्रकृत्यादयःआत्मनःस्वरूपंतवस्वरूपंचनविदुः जडत्वादेव जीवस्तुतान्आत्मानंचवेत्तिनपुनस्त्वत्स्वरूपमिति यथोक्तंहंसगुह्ये देहोऽसवोऽक्षामनवोभूतमात्रानात्मानमन्यंचविदुःपरंयत् ॥ सर्वंपुमान्वेदगुणांश्चतज्ज्ञोनवेदस

**भूस्तोयमग्निःपवनःखमादिर्महानजादिर्मनइंद्रियाणि ॥ सर्वेंद्रियार्थाविबुधाश्चसर्वेयेहेतवस्तेजगतोऽगभूताः ॥ २ ॥ नैतेस्वरूपंविदुरात्मनस्तेह्यजादयोऽनात्मतयागृहीताः ॥ अजोऽनुबद्धःसगुणैरजायागुणात्परंवेदनतेस्वरूपं ॥ ३ ॥ त्वांयोगिनोयजंत्यद्धामहापुरुषमीश्वरं ॥ साध्यात्मंसाधिभूतंचसाधिदैवंचसाधवः ॥ ४ ॥ त्रय्याचविद्ययाकेचित्त्वांवैवैतानिकाद्विजाः ॥ यजंतेविततैर्यज्ञैर्नानारूपामराख्यया ॥ ५ ॥ एकेत्वाऽखिलकर्माणिसंन्यस्योपशमंगताः ॥ ज्ञानिनोज्ञानयज्ञेनयजंतिज्ञानविग्रहं ॥ ६ ॥ ॥**

र्वज्ञमनंतमीडइति ॥३॥ननुयदिकेऽपिनजानंतिकथंतर्हिसंसारनिवृत्तिर्जीवानामित्याशंक्यसाक्षादगोचरत्वेऽपियेनकेनापिमार्गेणभजतांत्वंगम्योऽसीत्याह त्वांयोगिनइति हैरण्यगर्भादयोऽध्यात्माधिभूताधिदैवसाक्षिणंमहापुरुषंतदंतर्यामीश्वरंनियंतारंचयजंति॥४॥तदेवंसांख्ययोगावेकीकृत्योक्तौत्रयीमार्गंकर्मज्ञानभेदेनदर्शयति त्रय्याचेतिश्लोकद्वयेन वैतानिकाःकर्मयोगिनस्त्वांवैत्वामेवयजंते ननुतेइंद्रवरुणवाय्वादीन्यजंतेनतुमामित्यतआह नानावज्रहस्तादीनिरूपाणियेषांतेयेऽमरास्तेषामाख्ययानाम्नात्वामेवयजंतइति अयंभावः ऐंद्रवारुणादिसूक्तैरिंद्रादयःसर्वैश्वर्येणप्रकाश्यंते नचसर्वेश्वराबहवःसंभवंति अतोनामभेदेनत्वामेवयजंतइति तथाचश्रुतिः सप्रथमःसप्रकृतिर्विश्वकर्मा सप्रथमोमित्रावरुणोऽग्निःसप्रथमोबृहस्पतिश्चिकित्वान्तस्माइंद्रायहविराजुहोतीति ॥ ५ ॥ ज्ञानयज्ञेनसमाधिना ॥ ६ ॥ ॥

॥ ९० ॥

परस्परंसमंत्र्यसाहसमधिरुह्याहुः निवारयामइति अकरिष्यन्करिष्यंति निमिषार्द्धंदुस्त्यजान्मुकुंदसंगाद्विध्वंसितानिवियोजितानिअतए
वदीनानि चेतांसियासामेवंभूतानामस्माकंनमृत्योरपिभयमित्यर्थः ॥ २८ ॥ इतोऽपिकारणादवश्यंसाहसमेवावलंबनीयमित्याहुःहेगोप्यः
यस्यललितंस्मितं चवल्गुमंत्रश्चलीलाऽवलोकश्चपरिरंभणंचानुरागेणैतानियस्यांरासगोष्ठ्यांरासक्रीडासभायांनःअस्माभिः क्षणदारात्र
यःक्षणमिवनीतास्तममुंकृष्णंविनादुरंतंतमोविरहदुःखंकथंनुअतितरेम नकथंचिदित्यर्थः २९ ॥ किंच आस्तांतावत्तमोऽतितरणंजीवनमे
वकथंस्यादित्याहुःयइतिअन्हःक्षयेदिनावसानेखुररजोभिश्छुरिताधूसराअलकाःस्रजश्चयस्यसःव्रजंविशन्स्मितेनयत्कटाक्षनिरीक्षणंतेनन

निवारयामःसमुपेत्यमाधवंकिंनोऽकरिष्यन्कुलवृद्धबांधवाः ॥ मुकुंदसंगान्निमिषार्द्धदुस्त्यजाद्दैवेनविध्वं
सितदीनचेतसां ॥ २८ ॥ यस्यानुरागललितस्मितवल्गुमंत्रलीलाऽवलोकपरिरंभणरासगोष्ठ्यां ॥ नीताः
स्मनःक्षणमिवक्षणदाविनातंगोप्यःकथंन्वतितरेमतमोदुरंतं ॥२९॥ योऽन्हःक्षयेव्रजमनंतसखःपरीतोगो
पैर्विशन्खुररजश्छुरितालकस्रक् ॥ वेणुंक्वणन्स्मितकटाक्षनिरीक्षणेनचित्तंक्षिणोत्यमुमृतेनुकथंभवेम ॥
॥ ३० ॥ श्रीशुकउवाच एवंब्रुवाणाविरहातुराभृशंव्रजस्त्रियःकृष्णविषक्तमानसाः ॥ विसृज्यलज्जांरुरु
दुःस्मसुस्वरंगोविंददामोदरमाधवेति ॥ ३१ ॥ स्त्रीणामेवंरुदंतीनामुदितेसवितर्यथ ॥ अक्रूरश्चोदयामास
कृतमैत्रादिकोरथं ॥ ३२ ॥ गोपास्तमन्वसज्जंतनंदाद्याःशकटैस्ततः ॥ आदायोपायनंभूरिकुंभान्गोरस
संभृतान् ॥३३॥ गोप्यश्चदयितंकृष्णमनुव्रज्यानुरंजिताः ॥ प्रत्यादेशंभगवतःकांक्षंत्यश्चावतस्थिरे ॥३४॥
तास्तथातप्यतीर्वीक्ष्यस्वप्रस्थानेयदूत्तमः ॥ सांत्वयामाससप्रेमैरायास्यइतिदौत्यकैः ॥ ३५ ॥ यावदाल
क्ष्यतेकेतुर्यावद्रेणूरथस्यच ॥ अनुप्रस्थापितात्मानोलेख्यानीवोपलक्षिताः ॥ ३६ ॥

श्चित्तंक्षिणोतिहरति अमुंकृष्णंविनाकथंभवेमजीवेम ॥ ३० ॥ कृष्णेविषक्तानिमानसानियासाम् सुस्वरमुच्चैः ॥ ३१ ॥ क्रूरमक्रूरतःश्रुत्वाकं
संकंसनिषूदनः ॥ गोपीमनोरथारामःसरामःस्वपुरंययौ ॥ स्त्रीणामिति ताअनादृत्यकृतमैत्रादिकोमैत्रंमित्रदैवतंसंध्योपासनंतदादिकर्मकृ
तंयेनसः ॥ ३२ ॥ अन्वसज्जंतअन्वगच्छन् ॥ ३३ ॥ अनुरंजिताःपरावृत्यनिरीक्षणादिभिःकिंचिदानंदिताः प्रत्यादेशंप्रत्याख्यानम् ॥
॥ ३४ ॥ तप्यतीः संतप्यमानाः आयास्येशीघ्रमागमिष्यामीतिदूतवाक्यैः ॥ ३५ ॥ कृष्णमनुप्रस्थापिताआत्मानश्चित्तानियाभिस्ताः
लेख्यमयपुत्तिकाइवनिश्चलाः ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३७ ॥ ३८ ॥ वृक्षाणांखंडंसमूहमुपव्रज्य ॥ ३९ ॥ शत्रुभ्यःशंकितःसन्रथोपरिनिवेश्य ॥ ४० ॥ ब्रह्मवेदंजपन् केमौबालौक्तौमह्ला वितिशंकितचेतसेअक्रूरायजलेरूपमत्याश्चर्यंव्यदर्शयत् ॥ ४१ ॥ ४२ ॥ ४३ ॥ सिद्धादिभिःस्तूयमानम् ॥ ४४ ॥ सहस्रंशिरांसियस्य तम् सहस्रफणेषुमौलयोयस्यसंतीतितथातम् नीलेअंबरेयस्यतम् बिसवत्कमलनालवत्श्वेतं शृंगैःशिखरैःश्वेतंकैलासमिवस्थितम् ॥ ४५ ॥ तस्योत्संगेकुंडलीकृतदेहार्द्धे विलोक्येत्येकादशेनश्लोकेनान्वयः ॥ ४६ ॥ शोभनेभ्रुवौयस्यउन्नतानासिकायस्यतंचतंच शोभ

तानिराशानिवट्टतुर्गोविंदविनिवर्त्तने ॥ विशोकाअहनीनिन्युर्गायंत्यःप्रियचेष्टितं ॥ ३७ ॥ भगवानपिसं प्राप्तोरामाक्रूरयुतोनृप ॥ रथेनवायुवेगेनकालिंदीमघनाशिनीम् ॥ ३८ ॥ तत्रोपस्पृश्यपानीयंपीत्वामृष्टंम णिप्रभम् ॥ वृक्षखंडमुपव्रज्यसरामोरथमाविशत् ॥ ३९ ॥ अक्रूरस्तावुपामंत्र्यनिवेश्यचरथोपरि ॥ का लिंद्याह्रदमागत्यस्नानंविधिवदाचरत् ॥ ४० ॥ निमज्ज्यतस्मिन्सलिलेजपन्ब्रह्मसनातनं ॥ तावेवददृशेऽ क्रूरोरामकृष्णौसमन्वितौ ॥ ४१ ॥ तौरथस्थौकथमिहसुतावानकदुंदुभेः ॥ तर्हिस्वित्स्यंदनेनस्तइत्युन्म ज्ज्यव्यचष्टसः ॥ ४२ ॥ तत्रापिचयथापूर्वमासीनौपुनरेवसः ॥ न्यमज्जद्दर्शनंयन्मेमृषाकिंसलिलेतयोः ॥ ४३ ॥ भूयस्तत्रापिसोऽद्राक्षीत्स्तूयमानमहीशं ॥ सिद्धचारणगंधर्वैरसुरैर्नतकंधरैः ॥ ४४ ॥ सहस्रशिरसंदेवंस हस्रफणमौलिनं ॥ नीलांबरंबिसश्वेतंशृंगैःश्वेतमिवस्थितं ॥ ४५ ॥ तस्योत्संगेघनश्यामंपीतकौशेयवाससं ॥ पुरुषंचतुर्भुजंशांतंपद्मपत्रारुणेक्षणं ॥ ४६ ॥ प्रसन्नचारुवदनंचारुहासनिरीक्षणं ॥ सुभ्रून्नसंचारुकर्णंसुकपो लारुणाधरं ॥ ४७ ॥ प्रलंबपीवरभुजंतुंगांसोरस्थलश्रियं ॥ कंबुकंठंनिम्ननाभिंवलिमत्पल्लवोदरं ॥ ४८ ॥ बृहत्कटितटश्रोणिकरभोरुद्वयान्वितं ॥ चारुजानुयुगंचारुजंघायुगलसंयुतं ॥ ४९ ॥

नौकपोलौयस्यअरुणौअधरौयस्यतंचतंच ॥ ४७ ॥ तुंगौअंसौयस्यउरस्थलेश्रीर्यस्यतंचतंच वलिमत्पल्लवोदरंवलयास्तिर्यङ्निम्नरेखाय स्यसंतितद्वलिमत्तच्चतत्पल्लववदश्वत्थदलसदृशमुदरंयस्यतम् ॥ ४८ ॥ कटितटंचश्रोणिश्चकरभसदृशमूरुद्वयंच बृहच्चतत्कटितट श्रोणिकरभोरुद्वयंचतेनान्वितम् यद्वा बृहद्भ्यांकटितटश्रोणिभ्यांकरभोरुद्वयेनचान्वितम् ॥ ४९ ॥ ॥ ॥ ॥ ॥

सांख्ययोगत्रयीमार्गाउक्तावैष्णवशैवमार्गावाहद्वयेन अन्येचेति संस्कृतात्मानोवैष्णवशैवदीक्षयादीक्षिताः संतस्तेत्वयाभिहितेनपंचरा
त्रविधिनात्वन्मयास्त्वन्मयत्वेनात्मानंचिंतयंतस्त्वदेकप्रधानाइतिवा वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेनबहुमूर्तिंनारायणरूपेणैकमूर्तिकं
चत्वामेवयजंति ॥ ७ ॥ बह्वाचार्यविभेदेनेति नानाभेदपाशुपतादिमार्गेण ॥ ८ ॥ येऽपिक्षुद्रदेवताभक्तास्तेऽपित्वामेवयजंतीत्याह स
र्वएवेति हेसर्वदेवमय नन्वेतेपरस्परदेवताऽधिक्षेपकलहव्याकुलचित्ताः कथमेकमेवयजंतीत्युच्यतेतत्राह यद्यप्यन्यधियइति बुद्धिमात्र
भेदोनवस्तुभेदइत्यर्थः ॥ ९ ॥ तस्मात्सर्वेमार्गास्त्वय्येवपर्यवस्यंतीतिसदृष्टांतमाह यथेति अद्रेःसकाशात्सर्वतःप्रभवंतियानद्यस्ताःपुनः
पर्ज्जन्येनापूरिताबहुस्रोतसःसत्यःसर्वतःसिंधुमेवविशंतियथातद्वदेतागतयोमार्गाअंततस्त्वामेवविशंतीति ॥ १० ॥ अत्रहेतुमाह सत्व

**अन्येचसंस्कृतात्मानोविधिनाऽभिहितेनते ॥ यजंतित्वन्मयास्त्वांवैबहुमूर्त्त्येकमूर्त्तिकम् ॥ ७ ॥ त्वामेवान्ये
शिवोक्तेनमार्गेणशिवरूपिणम् ॥ बह्वाचार्यविभेदेनभगवन्समुपासते ॥ ८ ॥ सर्वएवयजंतित्वांसर्वदेवम
येश्वरम् ॥ येऽप्यन्यदेवताभक्तायद्यप्यन्यधियःप्रभो ॥ ९ ॥ यथाऽद्रिप्रभवानद्यःपर्जन्यापूरिताःप्रभो ॥
विशंतिसर्वतःसिंधुंतद्वत्त्वांगतयोंऽततः ॥ १० ॥ सत्वंरजस्तमइतिभवतःप्रकृतेर्गुणाः ॥ तेषुहिप्राकृताः प्रो
ताआब्रह्मस्थावरादयः ॥ ११ ॥ तुभ्यंनमस्तेऽस्त्वविषक्तदृष्टयेसर्वात्मनेसर्वधियांचसाक्षिणे ॥ गुणप्रवा
होऽयमविद्ययाकृतःप्रवर्त्ततेदेवनृतिर्यगात्मसु ॥ १२ ॥ ॥ ॥ ॥**

मिति भवतःशक्तिर्याप्रकृतिस्तस्याः सत्वादयोगुणाःअतःप्राकृताः प्रकृतिकार्योपाधयोब्रह्मपर्यंताः स्थावरादयोजीवाःस्वोपाधिद्वारातेषुगु
णेषुप्रोताःप्रविष्टास्तेचप्रकृतौसाचत्वयीति ॥ अतःक्रमेणोपाधिलयात्सर्वेऽपित्वामेवविशंतीति यद्वा भवतःप्रकृतेर्गुणेषुप्रोताब्रह्मादयोभ
वद्व्यतिरिक्तानसंत्यतस्त्वमेवसर्वदेवमयइति ॥ ११ ॥ ननुभवतःप्रकृतेरितिवदन्ममापिप्रकृतिसंबंधंब्रवीषिततश्चतेषांममचकोविशेषःस्या
दित्याशंक्याविशेषमाह तुभ्यमिति अविषक्तदृष्टयेअलिप्तबुद्धये कुतः सर्वात्मने स्वव्यतिरिक्ताभावादविषक्तदृष्टित्वमित्यर्थः किंच सर्व
धियांसाक्षिणे सर्वबुद्धिसाक्षित्वान्नक्कापिबुद्धिलेपइत्यर्थः इतरेतुसंसरंतीत्याह गुणप्रवाहइति देवनृतिर्यंचःआत्मानोयेषांतेषुदेवादिशरी
राभिमानिष्वित्यर्थः अविद्याकृतोऽयंगुणप्रवाहः प्रवर्त्तते अतोमहान्विशेषइत्यर्थः ॥ १२ ॥ ॥ ॥

सर्वात्मनइत्यनेनोक्तंसगुणंस्तौति अग्निर्मुखमितिद्वाभ्यां अग्न्यादीननूद्येश्वरावयवताविधीयतेयोऽयमग्निःसतुतवमुखमित्यादिवचनव्यक्त्या
ईक्षणंचक्षुः श्रुतिःश्रवणेंद्रियम् कंमूर्द्धा प्राणश्चबलंचतत् ॥ १३ ॥ अद्रयःपरस्यतेऽस्थिनखानि ॥ १४ ॥ नकेवलमेतावत्‌किंतुस
र्वोऽप्ययंप्रपंचस्त्वदवयवभूतएवेतिवदन्नेवंसत्यपिप्रपंचस्यषड्‌जन्मादयोविकारास्त्वायिनप्रसज्यंतेतस्यत्वयिकल्पितत्वादित्याह त्वयीति
अव्ययात्मनिपुरुषेपूर्णेलोकादयःसंजिहतेप्रचलंति हेअव्ययात्मन्नितिवा कथंभूतेत्वयि मनोमयेमनःप्रधानेमनोवृत्तिव्यंग्ये दृश्यतेत्व

॥ ९१ ॥

अग्निर्मुखंतेऽवनिरंघ्रिरीक्षणंसूर्योनभोनाभिरथोदिशःश्रुतिः॥द्यौःकंसुरेंद्रास्तवबाहवोऽर्णवाःकुक्षिर्मरुत्प्रा
णबलंप्रकल्पितम् ॥ १३ ॥ रोमाणिवृक्षौषधयःशिरोरुहामेघाःपरस्यास्थिनखानितेऽद्रयः ॥ निमेषणंरा
त्र्यहनीप्रजापतिर्मेढ्रस्तुवृष्टिस्तववीर्यमिष्यते ॥ १४ ॥ त्वय्यव्ययात्मन्पुरुषेप्रकल्पितालोकाःसपालाब
हुजीवसंकुलाः ॥ यथाजलेसंजिहतेजलौकसोऽप्युदुंबरेवामशकामनोमये ॥ १५ ॥ यानियानीहरूपाणि
क्रीडनार्थंबिभर्षिहि ॥ तैराम्रष्टशुचोलोकामुदागायंतितेयशः ॥ १६ ॥ नमःकारणमत्स्यायप्रलयाब्धिच
रायच ॥ हयशीर्ष्णेनमस्तुभ्यंमधुकैटभमृत्यवे ॥ १७ ॥ अकूपारायबृहतेनमोमंदरधारिणे ॥ क्षित्युद्धार
विहारायनमःसूकरमूर्त्तये ॥ १८ ॥ नमस्तेऽद्भुतसिंहायसाधुलोकभयापह ॥ वामनायनमस्तुभ्यंक्रांतत्रि
भुवनायच ॥ १९ ॥ नमोभृगूणांपतयेदृप्तक्षत्रवनच्छिदे ॥ नमस्तेरघुवर्यायरावणांतकरायच ॥ २० ॥ न
मस्तेवासुदेवायनमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ॥ २१ ॥ ॥ ॥

य्ययाबुध्यामनसैवानुद्रष्टव्यमित्यादिश्रुतेः जलेयथाजलौकसःसूक्ष्मप्राण्यंडराशयोयथाचउदुंबरांतः केसरेषुमशकाः परस्परवार्त्तानभिज्ञा
एवमनंतानिब्रह्मांडानित्वयिसंचरंतीत्यर्थः ॥ १५ ॥ तस्मादेवंभूतंतवस्वरूपंदुरवगाहमितित्वदवतारकथामृतमेवसंतःसेवंतइत्याह या
नियानीति आमृष्टापरिमार्जिताशुक्येषांते ॥ १६ ॥ अतःस्वयमप्यवतारान्नमस्यति नमइति हयशीर्ष्णेहयग्रीवाय मधुकैटभयोर्मृत्यवेहं
त्रे ॥ १७ ॥ अकूपारायकूर्माय क्षित्युद्धारोविहारोयस्यतस्मै ॥ १८ ॥ १९ ॥ भृगूणांपतयेपरशुरामाय ॥ २० ॥ संकर्षणंरामम् चतुर्व्यू
हरूपेणप्रणमति नमस्तेवासुदेवायेति ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥

॥ ९१ ॥

॥ २२ ॥ एवंस्तुत्वाबंधमोक्षंप्रार्थयितुमाह भगवन्निति असतिदेहादौग्राहः आग्रहोयस्यसः असन्ग्राहोग्रहोयस्येतिवा ॥ २३ ॥ नकेवल
मयंलोकः अहमपितथैवेत्याह अहंचेति ॥ २४ ॥ मूढत्वमेवप्रकटयति विपर्ययमतिरिति अनित्येकर्मफलेनित्यमितिअनात्मनिदेहेआ
त्मेतिदुःखरूपेगृहादौसुखमितिविपरीतमतिरित्यर्थः द्वंद्वेषुसुखदुःखादिषुआरमतेक्रीडतीतितथासः ननुदुःखेकुतोरतिस्तत्राह तमोविष्टः
तमसाव्याप्तआत्मनःप्रियंप्रेमास्पदंत्वांनजानइत्यर्थः ॥ २५ ॥ सदृष्टांतमाह यथेति तस्माज्जलादुद्भवानितृणानितैः तथामायाच्छन्नंत्वा
त्वामहंहित्वापराङ्मुखोदेहाभिमुखोवर्तइति ॥ २६ ॥ नन्वेवंजानतःकुतोविषयाभिमुखतातत्राह नोत्सहइति कृपणावासनायुक्ताधीर्य

नमोबुद्धायशुद्धायदैत्यदानवमोहिने ॥ म्लेच्छप्रायक्षत्रहंत्रेनमस्तेकल्किरूपिणे ॥ २२ ॥ भगवन्जीवलो
कोयंमोहितस्तवमायया ॥ अहंममेत्यसद्ग्राहोभ्राम्यतेकर्मवर्त्मसु ॥ २३ ॥ अहंचात्मात्मजागारदारार्थ
स्वजनादिषु ॥ भ्रमामिस्वप्नकल्पेषुमूढःसत्यधियाविभो ॥ २४ ॥ अनित्यानात्मदुःखेषुविपर्ययमतिर्ह्यहं
॥ द्वंद्वारामस्तमोविष्टोनजानेत्वात्मनःप्रियं ॥ २५ ॥ यथाबुधोजलंहित्वाप्रतिच्छन्नंतदुद्भवैः ॥ अभ्येतिमृग
तृष्णांवैतद्वत्त्वाऽहंपराङ्मुखः ॥ २६ ॥ नोत्सहेऽहंकृपणधीःकामकर्महतंमनः ॥ रोद्धुंप्रमाथिभिश्चाक्षैर्ह्रिय
माणमितस्ततः ॥ २७ ॥ सोऽहंतवांघ्र्युपगतोऽस्म्यसतांदुरापंतच्चाप्यहंभवदनुग्रहईशमन्ये ॥ पुंसोभवे
द्यर्हिसंसरणापवर्गस्त्वय्यब्जनाभसदुपासनयामतिःस्यात् ॥ २८ ॥ ॥ ॥ ॥ ॥

स्यसः अतएवकामकर्मभ्यांहतंक्षुभितमिंद्रियैश्चबलिभिर्विषयसंयुक्तैरितस्ततआकृष्यमाणंमनोरोद्धुंनियमयितुंनशक्नोमीति ॥ २७ ॥ तदेव
मस्वतंत्रोयःसोऽहंतवांघ्रिमुपगतःशरणंप्राप्तः नन्विंद्रियपरतंत्रस्यैतदपिकुतस्तत्राह तच्चापीति हेईशअंतर्यामिन्त्वदंघ्र्युपगमनंचासतांदु
रापमतोभवतोऽनुग्रहएवेत्यहंमन्ये अनुग्रहेसतीतिवाननुसतांसेवयाइदंभवतीतिकिंमदनुग्रहेणेत्यतआह पुंसइति जीवस्यसंसारस्यापव
र्गःसमाप्तिर्यदात्वत्स्वरूपयाभवेत्संभावनास्पदंभवति हेअब्जनाभतदासदुपासनासंपद्यतेतयैवत्वयिमतिर्भवेत् त्वत्स्वरूपांविनानसत्सेवानतरां
त्वन्मतिर्नतमांमुक्तिरित्यर्थः ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पादयोःपतन्प्रार्थयते नमइतिद्वयेन विज्ञानमेवमात्रामूर्तिर्यस्यतस्मै अतएवसर्वप्रत्ययहेतवेसमस्तज्ञानकारणाय किंच पुरुषस्ययेईशाः सुखदुःखादिप्रापकाः कालकर्मस्वभावादयस्तेषांप्रधानायानियंत्रे कुतः ब्रह्मणेपरिपूर्णाय किंच अनंतशक्तयेअनंताःशक्तयोयस्य यद्वा अनंतामायाख्याशक्तिर्यस्यतस्मै अथवाप्रधानंप्रकृतिःपुरुषस्तत्प्रवर्त्तकईशःकालएतत्त्रितयात्मनेब्रह्मणे वक्ष्यतिचभगवान्प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः ॥ सतोऽभिव्यंजकःकालोब्रह्मतात्रितयंत्वहमिति ॥ २९ ॥ सर्वप्रत्ययहेतुत्वमभिव्यंजयंस्तौति नमस्तइति वासुदेवायाधिष्ठात्रे सर्वभूतक्षयायक्षयआश्रयःअहंकारश्चप्राणिनामाश्रयः ततश्चाहंकाराधिष्ठात्रेसंकर्षणायेत्यर्थः हृषीकेशेतिबुद्धिमनसोरधिष्ठात्रोः प्रद्युम्नानिरुद्धयोरेकीकृत्यग्रहणम् शरणागतंमांपाहीतिप्रार्थना ॥ ३० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धटीकायांचत्वारिंशो

नमोविज्ञानमात्रायसर्वप्रत्ययहेतवे ॥ पुरुषेशप्रधानायब्रह्मणेऽनंतशक्तये॥२९॥ नमस्तेवासुदेवायसर्वभूतक्षयायच॥ हृषीकेशनमस्तुभ्यंप्रपन्नंपाहिमांप्रभो॥३०॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेपू०अक्रूरस्तुतिर्नामचत्वारिंशत्तमोध्यायः॥४०॥ ॥श्रीशुकउवाच स्तुवतस्तस्यभगवान्दर्शयित्वाजलेवपुः॥भूयःसमाहरत्कृष्णोनटोनाट्यमिवात्मनः॥१॥सोऽपिचांतर्हितंवीक्ष्यजलादुन्मज्ज्यसत्वरः॥ कृत्वाचावश्यकं सर्वंविस्मितोरथमागमत्॥२॥तमपृच्छद्धृषीकेशःकिंतेदृष्टमिवाद्भुतं॥ भूमौवियतितोयेवातथात्वांलक्षयामहे॥३॥ अक्रूरउवाच अद्भुतानीहयावंतिभूमौवियतिवाजले॥ त्वयिविश्वात्मकेतानिकिंमेऽदृष्टंविपश्यतः॥४॥ यत्राद्भुतानिसर्वाणिभूमौवियतिवाजले ॥ तंत्वाऽनुपश्यतोब्रह्मन्किंमेदृष्टमिवाद्भुत ॥ ५ ॥ ॥ ॥

ऽध्यायः ॥ ४० ॥ एकचत्वारिंशकेऽह्नूरजकंप्रविशन्पुरीम् ॥ ततोवरानदात्तुष्टःसुदाम्नोवायकस्यच ॥ १ ॥ सशंकमक्रूरमनः प्रबोध्य स्वधामसंदर्शनसत्कृपातः ॥ स्वराजधानींमथुरामपश्यदलंकृतानंतमहोत्सवाढ्याम् ॥ २ ॥ १ ॥ २ ॥ ३ ॥ भूमौवियतिजलेवायावंतिअद्भुतानितानित्वय्येवसंतितंचत्वांपश्यतोमेकिमद्भुतमदृष्टम् अपितुसर्वंदृष्टमित्यर्थः ॥ ४ ॥ ननुमत्प्राप्तेःपूर्वमेवत्वंविस्मितमुखोलक्षितोऽसिअतोभूमौवियतिजलेवाकिमप्यद्भुतंदृष्टमेवेतिचेदतआह यत्राद्भुतानीति यत्रत्वयिसर्वाण्यद्भुतानिसंतितंत्वामिहपश्यतोमेअन्यत्रभूम्यादौकिमद्भुतंदृष्टंत्वांविनानतत्रकिंचिदद्भुतमित्यर्थः ब्रह्मन् हेपरमेश्वरेत्यर्थः ब्रह्मेतिवापाठः ॥ ५ ॥ ॥ ॥

गांदिनीसुतोऽक्रूरः ॥६॥ दृष्टिं नाददुः पश्यंत एव स्थिताइत्यर्थः ॥७॥ रामकृष्णागमनं प्रतीक्षमाणाः स्थिताइत्यर्थः ॥८॥ प्रश्रितविनीतं ॥९॥ स्वगृहं यूयमविशतां अथ मच्युतनार्यविश्राम्येयं ॥१०॥ ११॥ साग्रजः सह गोपालैरित्यर्थः ॥१२॥ यच्छौचेन यस्य पादरजसः क्षालनोदकेन गृहांगणस्थितेन ॥१३॥ श्लोक्यः पुण्यकीर्तिर्यस्य हे एकांतभक्तानां या गतिः सा च लेभे ॥१४॥ अपु

प१

इत्युक्तो नोदयामास स्यंदनं गांदिनीसुतः ॥ मथुरामनंद्रामं कृष्णं चैव दिनात्यये ॥६॥ मार्गे ग्रामजना राजंस्तत्र तत्रोपसंगताः ॥ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥७॥ तावद्व्रजौकसस्तत्र नंदगोपादयोऽग्रतः ॥ पुरोपवनमासाद्य प्रतीक्षंतोऽवतस्थिरे ॥८॥ तान्समेत्याह भगवानक्रूरं जगदीश्वरः ॥ गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥९॥ भवान्प्रविशतामग्रे सहयानः पुरीं गृहं ॥ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीं ॥१०॥ अक्रूर उवाच ॥ नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ॥ त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥११॥ आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज ॥ सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तमः ॥१२॥ पुनीहि पादरजसा गृहान्नो गृहमेधिनां ॥ यच्छौचेनानुतृप्यंति पितरः साग्नयः सुराः ॥१३॥ अवनिज्यांघ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ॥ ऐश्वर्यमतुलं लेभे गतिं चैकांतिनां तु या ॥१४॥ आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकान्शुचयोऽपुनन् ॥ शिरसाधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥१५॥ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥१६॥ श्रीभगवानुवाच ॥ आयास्ये भवतो गेहमहमार्यसमन्वितः ॥ यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियं ॥१७॥ एवमुक्तो भगवता सोऽक्रूरो विमना इव ॥ पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥१८॥ अथापराह्णे भगवान्कृष्णः संकर्षणान्वितः ॥ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः ॥१९॥

न नृपविनितवयः याभिरद्भिः स्वः स्वर्गं प्राप्ताः ॥१५॥ आर्यसमानेन नमस्करोति देवदेवेति अतः परमन्यत् श्रेयो नास्तीति मत्वा बद्धा संबोधयति ॥१६॥ आदौ नावत् यदुचक्राय द्रुह्यतीति यदुचक्रध्रुक् तं कंसं हत्वा सुहृदां प्रियं वितरिष्ये दास्यामि ॥१७॥ रामकृ

श्रीकृष्णदृष्टां पुरीमनुवर्णयति चतुर्भिः ददर्श तामिति स्फाटिकानि तुंगानि गोपुराणि गृहद्वाराणि च यस्यां तां दृष्टहंतिहेममयानि कपा
टानि तोरणानि च यस्यां तां तामग्रं च आरः आरकूटश्च तन्मयाः कोष्ठाः धान्यागाराश्च गोलाद्यो यस्यां तां परिखाः परितः खातग
र्ताः ताभिर्दुरासदां दुर्गमां उद्यानानि दूरस्थानि वनानि रम्याणि उपवनानि च निकटानि तैरुपशोभितां ॥२०॥ सौवर्णाः शृंगाटकाः चतु
ष्पथाः हर्म्याणि धनिनां गृहाणि च निष्कुटा गृहोचिता आरामाश्च तैः श्रेणीनामेकरूपशिल्पोपजीविनां सभाभिरुपवेशस्थानै
रन्यैश्च भवनैर्गृहैरुपस्कृतामलंकृतां अमलाः स्फाटिकाः हरितो मारकताः वैदूर्यादिरत्नैर्जुष्टेषु वलभ्यादिषु आविष्टैरुपविष्टैः
पारावतैर्बर्हिभिश्च नादितां तत्र वलभ्यो गृहपुरोभागेषु वक्रदारुरचनाः दन्तानि वेदयो वलभीनामधोदेशे विरचिता अवष्टंभवे
दिकाः ॥२१॥ जालामुखरंध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिबद्धाभूमयस्तत्र स्थिति रथ्या राजमार्ग आपणाः पण्यवीथ

ददर्श तां स्फाटिकतुंगगोपुरद्वारां स्फुटहेमकपाटतोरणां ॥ ताम्रारकोष्ठां परिखादुरासदामुद्यान
रम्योपवनोपशोभितां ॥२०॥ सौवर्णशृंगाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृतां ॥ वैदू
र्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥२१॥ जुष्टेषु जालामुखरंध्रकुट्टिमेष्वाविष्ट
पारावतबर्हिनादितां ॥ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्यांकुरलाजतंडुलां ॥२२॥ आपूर्णकुंभै
र्दधिचंदनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृंतरंभाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां स
पट्टिकैः ॥२३॥ तां संप्रविष्टो वसुदेवनंदनो वृतो वयस्यैर्नरदेववर्त्मना ॥ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रि
यो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥२४॥

यो मार्गा अन्ये च चत्वराणि अंगनानि संसिक्तानि रथ्यादीनि यस्यां तां प्रकीर्णमाल्यादयो यस्यां तां ॥२२॥ तथा स्वलंकृता
नि द्वाराणि येषां तैर्गृहा यस्यां तां कैः आपूर्णैः कुंभैः दध्ना चंदनेन च उक्षितैः सिक्तैः प्रसूनानां दीपानां चावलयो येषु तैः वृंतैः
फलगुच्छैरुपलक्षिता रंभाः क्रमुकाश्च तत्सहितैः सकेतुभिः केतवो ध्वजास्तत्सहितैः पट्टिका वितस्तिविस्तारपट्टवस्त्राणि
तत्सहितैः तत्रेयं रीतिः द्वारेषु प्रयत्नस्थंडिलानामुपरि कुंभास्तत्परितः प्रसूनावलयः कंठे पट्टिका मुखे चूतादिपल्ल
वास्तदुपरि पात्रांतरे दीपावलयस्तत्सन्निधौ रंभाः क्रमुकाः केतवस्तोरणानि चेति ॥२३॥ नरदेवानां वर्त्मना रा
जमार्गेण तां पुरीं संप्रविष्टो इति द्वितीयांतं ॥२४॥

स्त

औत्सुक्यमेवाह द्वयेन काश्चिदिति विपर्ययधृ विपरीतं धृतानि वस्त्राणि भूषणानि च याभिस्ताः युगलेषु धार्येषु कुंडलकंक णादिष्वेकं विस्मृत्य समीयुः कृतमेकमेव पत्रं ययोस्ते श्रवणे यासां एकमेव नूपुरं चरणाभरणं यासां ताश्च ताश्च नांक्त्वा अनंक्त्वा एकस्मिन्नेव लोचनेंऽजनं निधायेत्यर्थः ॥२५॥ तद्भोजनं पक्वा अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यंगाः अकृतोपमज्जना अकृतस्नानाः अर्भं बालकमपोह्य निरस्य ॥२६॥ प्रगल्भाया लीलास्ताभिर्हसितानि निरीक्षणानि च

ज्य २

काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः । कृतैकपत्रश्रवणैकनूपुरा नांक्त्वा द्वितीयं त्वपराश्च लोचनं ॥२५॥ अश्नंत्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः । स्वपंत्य उत्थाय निशम्य निःस्वनं प्रपाययंत्योऽर्भमपोह्य मातरः ॥२६॥ मनांसि तासामरविंदलोचनः प्रगल्भलीलाहसितावलोकैः । जहार मत्तद्विरदेंद्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवं ॥२७॥ दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः । आनंदमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनंतमरिंदमाधिं ॥२८॥ प्रासाद ... ॥२९॥ दध्यक्षतैः सोदपात्रैः स्रग्गंधैरभ्युपायनैः । तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥३०॥ ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् । या ह्येतावनुपश्यंति नरलोकमहोत्सवौ ॥३१॥ रजकं कंचिदायांतं रंगकारं गदाग्रजः । दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥३२॥ देह्यावयोः समुचितान्यंग वासांसि चार्हतोः । भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥३३॥ स याचितो भगवता परिपूर्णेन सर्वतः । साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥३४॥

ता ३

तैः श्रियं रमयतीति श्रीरमणस्तेनात्मना वपुषा तासां दृशामुत्सवं ददन्मनांसि जहार ॥२७॥ मुहुः श्रुतात्तद्रुतचेतसः स्वयं तं दृष्ट्वा तस्य प्रेक्षणं चोत्स्मितं च तदेव सुधा तया उक्षणं सेचनं तेन लब्धो मानो याभिस्ताः दृशा उपगुह्य तेन नेत्रद्वारेणात्मनि मग्नः सिल्लब्धं प्राप्तं परिष्वज्य तदप्राप्तिजनितमनंतमाधिं मानसीं व्यथां जहुः हे अरिंदम निर्जितकामेति संबोधनं शृंगाररसेन निमग्नो मा भूरिति ॥२८॥ सौमनस्यैः शोभनगंधकुसुमसमूहैः शोभनमनोभावैर्वा ॥२९॥३०॥ पौराः पुरस्त्रियः ॥३१॥ रजको वस्त्रनिर्णेजकः स एव वस्त्राणां रंगमपि कुर्वन् रंगकारः ॥३२॥ ३३॥ रुषितः कुपितः ॥३४॥

हे उद्धृताः गिरौ वने चरथ ये नित्यं ते यूयं परिधत्तेति संभावनायां लोट् अभीप्सथ प्रार्थयध्वं ॥३५॥ राजकुलानि राजकीयाः लुम्पन्ति
निःस्वं कुर्वन्ति ॥३६॥३७॥ वासःकोशान् वस्त्रपुटकान् ॥३८॥३९॥ वायकस्तन्तुवायविशेषः चैलमलंकारैश्चैलेयैर्वस्त्रमयैराकल्पै
र्भूषणैः ॥४०॥ पर्वणि उत्सवे ॥४१॥ इह लोके परमां श्रियं च बलं च ऐश्वर्यं च स्मृतिं च इन्द्रियं च तत्पाटवं च प्रादात् ॥४२॥४३॥४४॥४५॥

ईदृग्गान्येव वासांसि नित्यं गिरिवनेचराः। परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥३५॥ याताशु बालिशा मै
वं प्रार्थ्यं यदि जिजीविषा। बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि वै ॥३६॥ एवं विकत्थमानस्य कुपितो देवकीसुतः।
रजकस्य कराग्रेण शिरः कायादपातयत् ॥३७॥ तस्यानुजीविनः सर्वे वासःकोशान्विसृज्य वै। दुद्रुवुः सर्वतो
मार्गं वासांसि जगृहेऽच्युतः ॥३८॥ वसित्वात्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा। शेषाण्यादत्त गोपेभ्यो विसृज्य
भुवि कानिचित् ॥३९॥ ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत्। विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः
॥४०॥ नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः। स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥४१॥ तस्य प्र
सन्नो भगवान्प्रादात्सारूप्यमात्मनः। श्रियं च परमां लोके बलैश्वर्यस्मृतींद्रियं ॥४२॥ ततः सुदाम्नो भवनं
मालाकारस्य जग्मतुः। तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥४३॥ तयोरासनमानीय पाद्यं चार्घ्यार्हणा
दिभिः। पूजां सानुगयोश्चक्रे स्रक्तांबूलानुलेपनैः ॥४४॥ प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो। पितृ
देवर्षयो मह्यं तुष्टा ह्यागमनेन वां ॥४५॥ भवन्तौ किल विश्वस्य जगतः कारणं परं। अवतीर्णाविहांशेन क्षे
माय च भवाय च ॥४६॥ न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः। समयोः सर्वभूतेषु भजंतं भज
तोरपि ॥४७॥ तावाज्ञापयतं भृत्यं किमहं करवाणि वां। पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥४८॥

क्षेमाय अभयाय भवाय उद्भवाय ॥४६॥ रजकवधेन वायकानुग्रहेण च युवयोर्विषमदृष्टितया अनीश्वरता नाशंकनी
येत्याह नहि वामिति अत्र हेतुः समयोरिति अत्रापि हेतुद्वयं सुहृदोरिति जगदात्मनोरिति च ॥४७॥४८॥

इत्यभिप्रेत्यइत्येवंविज्ञापितवान् अभिप्रेत्यतन्मतंज्ञात्वा ॥ ४९ ॥ ५० ॥ ५१ ॥ अन्वयवर्द्धिनींवंशेवृद्धिमतीमित्यर्थः अप्रार्थितंश्रीप्र
भृतिकंचदत्वाततोनिर्जगामेति ॥ ५२ ॥ स्वैरंचरन्मधुपुरेरजकंनिकृत्यकृष्णःप्रदायचवरानथवायकाय ॥ मालाकृतंसमनुकंप्यचकारकु
ब्जामृज्वींधनुश्चसहसानमयन्बभंज ॥ १ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेटीकायांएकचत्वारिंशोऽध्यायः ॥४१॥ द्विच
त्वारिंशकेकुब्जोन्नमनंधनुषोभिदा ॥ वधस्तद्रक्षिणांकंसारिष्टंरंगोत्सवादिच ॥ १ ॥ अंगविलेपाश्चंदनादयः गृहीतान्यंगविलेपानांभाज
नानियया ताम् रसप्रदःसुखप्रदः ॥ १ ॥ हेअंगनेहेवरोरुइतिसोपहासंसंबोध्यापृच्छति त्वंकाएतदनुलेपनंकस्य वाउहइतिनिपातौभ्रूवि

इत्यभिप्रेत्यराजेंद्रसुदामाप्रीतमानसः ॥ शस्तैःसुगंधैःकुसुमैर्मालांविरचितांददौ ॥४९॥ ताभिःस्वलंकृतौ
प्रीतौकृष्णरामौसहानुगौ ॥ प्रणतायप्रपन्नायददतुर्वरदौवरान् ॥५०॥ सोऽपिवव्रेऽचलांभक्तिंतस्मिन्नेवा
खिलात्मनि ॥ तद्भक्तेषुचसौहार्दंभूतेषुचदयांपरां ॥५१॥ इतितस्मैवरंदत्वाश्रियंचान्वयवर्धिनीं ॥ बलमा
युर्यशःकांतिंनिर्जगामसहाग्रजः ॥५२॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेपुरप्रवेशोनामएक
चत्वारिंशोऽध्यायः ॥ ४१ ॥ श्रीशुकउवाच अथव्रजन्राजपथेनमाधवःस्त्रियंगृहीतांगविलेपभाजनां ॥
विलोक्यकुब्जांयुवतींवराननांपप्रच्छयांतींप्रहसन्रसप्रदः ॥ १ ॥ कात्वंवरोर्वेतदुहानुलेपनंकस्यांगनेवाक
थयस्वसाधुनः ॥ देह्यावयोरंगविलेपमुत्तमंश्रेयस्ततस्तेनचिराद्भविष्यति ॥ २ ॥ सैरंध्र्युवाच दास्यस्म्य
हंसुंदरकंससंमतात्रिवक्रनामाह्यनुलेपकर्मणि॥ मद्भावितंभोजपतेरतिप्रियंविनायुवांकोऽन्यतमस्तदर्हति
॥ ३ ॥ रूपपेशलमाधुर्यहसितालापवीक्षितैः ॥ धर्षितात्माददौसांद्रमुभयोरनुलेपनम् ॥ ४ ॥ ततस्ता
वंगरागेणस्ववर्णेतरशोभिना ॥ संप्राप्तपरभागेनशुशुभातेऽनुरंजितौ ॥ ५ ॥ ॥ ॥ ॥

क्षेपयुक्तेवितर्के अस्मत्सेवासद्यःफलत्येवेत्याहनचिरादिति ॥ २ ॥ तिस्रोग्रीवोरःकटचोवक्राइतित्रिवक्रेतिनामयस्याःसा अनुलेपसाधन
क्रियायांकंसस्यबहुमतादास्यस्मि ॥ ३ ॥ रूपंचअंगसौष्ठवंचपेशलंचसौकुमार्यंमाधुर्यंचरासिकताचहसितंचआलापाश्चवीक्षितंचतैर्धर्षिता
त्मामोहितचित्ता सांद्रंघनम् ॥ ४ ॥ स्ववर्णेतरशोभिनारामकृष्णयोर्वर्णाभ्यामितरःपीतादिवर्णस्तेनशोभितुंशीलंयस्यतेन संप्राप्तपरभा
गेनसंप्राप्तःपरोनाभेरुपरितनोभागोयेनसःसंप्राप्तःपरभागःशोभाऽतिशयोयेनेतिवातेनानुरंजितौ ॥ ५ ॥ ॥ ॥

स्वदर्शनेसद्यःफलंदर्शयन् ॥ ६ ॥ तस्याःप्रपदेपादाग्रद्वयंपद्भ्यामापीड्यद्वेअंगुल्यावुत्तानेउन्नतेयस्मिन्पाणौतेनचुबुकेमुखस्याधोभागेधृत्वाअध्यात्मंदेहमुन्नमयामास ॥ ७ ॥ तदैवऋजुसमानमंगंयस्याः बृहत्यौश्रोणीपयोधरौचयस्याःसा मुकुंदस्पर्शनादितिमुख्यंकारणम् ॥ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ आधिविकर्शनंमनःपीडाशमनम् कंसवधेनस्वयंसाधितोऽर्थःसुहृदांप्रयोजनंयेनसः अगृहाणामकृतदाराणां



प्रसन्नोभगवान्कुब्जांत्रिवक्रांरुचिराननाम् ॥ ऋज्वींकर्तुंमनश्चक्रेदर्शयन्दर्शनेफलं ॥ ६ ॥पद्भ्यामाक्रम्य प्रपदेद्व्यंगुल्युत्तानपाणिना ॥ प्रगृह्यचुबुकेऽध्यात्ममुदनीनमदच्युतः ॥७॥ सातदर्जुसमानांगीबृहच्छ्रोणिपयोधरा ॥ मुकुंदस्पर्शनात्सद्योबभूवप्रमदोत्तमा ॥ ८ ॥ ततोरूपगुणौदार्यसंपन्नाप्राहकेशवं ॥ उत्तरीयांतमाकृष्यस्मयंतीजातहृच्छया ॥ ९ ॥एहिवीरगृहंयामोनत्वांत्यक्तुमिहोत्सहे ॥ त्वयोन्मथितचित्तायाःप्रसीद पुरुषर्षभ ॥१०॥ एवंस्त्रियायाच्यमानःकृष्णोरामस्यपश्यतः ॥ मुखंवीक्ष्यानुगोपानांप्रहसंस्तामुवाचह ॥ ॥ ११ ॥ एष्यामितेगृहंसुभ्रूःपुंसामाधिविकर्शनम् ॥ साधितार्थोऽगृहाणांनःपांथानांत्वंपरायणम् ॥ १२॥ विसृज्यमाध्व्यावाण्यातांव्रजमार्गेवणिक्पथैः ॥ नानोपायनतांबूलस्रग्गंधैःसाग्रजोऽर्चितः ॥ १३॥ तद्दर्शनस्मरक्षोभादात्मानंनाविदन्स्त्रियः ॥ विस्रस्तवासःकबरवलयालेख्यमूर्तयः ॥ १४॥ ततःपौरान्पृच्छमानोधनुषःस्थानमच्युतः ॥ तस्मिन्प्रविष्टोददृशेधनुरैंद्रमिवाद्भुतं ॥१५॥ पुरुषैर्बहुभिर्गुप्तमर्चितंपरमर्द्धिमत् वार्यमाणोनृभिःकृष्णःप्रसह्यधनुराददे ॥ १६ ॥ करेणवामेनसलीलमुद्धृतंसज्यंचकृत्वानिमिषेणपश्यतां ॥ नृणांविकृष्यप्रबभंजमध्यतोयथेक्षुदंडंमदकर्युरुक्रमः ॥ १७॥ धनुषोभज्यमानस्यशब्दःखंरोदसीदिशः॥ पूरयामासयंश्रुत्वाकंसस्त्रासमुपागमत् ॥ १८ ॥ ॥ ॥ ॥



पांथानांप्रवासिनांपरमायनमाश्रयस्त्वम् ॥ १२ ॥ मधुरयागिरातांप्रस्थाप्यव्रजन्वणिक्पथैर्वणिग्भिरर्चितः ॥ १३ ॥लेख्याश्चित्रन्यस्ता इवमूर्त्तयोयासांताः ॥ १४ ॥ धनुर्मखशालांपृच्छन् ॥१५॥ प्रसह्यबलात् ॥१६॥ निमिषेणातिशीघ्रम् मदकरिमत्तहस्ती ॥ १७ ॥ १८ ॥

गृह्यतांबध्यतामितिवदंतोजिघृक्षवआवृतवंतः ॥ १९ ॥ नकेवलंक्रुद्धौकिंतुभग्नस्यधनुषःशकलेगृहीत्वाजघ्नतुश्चेति ॥ २० ॥ परतःप्रा
तर्गंतव्यमितिशालामुखादेवपुनर्निष्क्रम्य ॥ २१ ॥ तेजःप्रभावं प्रागल्भ्यंधृष्टतां ॥ २२ ॥ शकटंशकटावमोचनस्थानं ॥ २३ ॥ मुकुंद
स्यविगमेव्रजान्निर्गमनसमयेयाआशिषआशासतसुखंभप्रातारजनीयंअद्यध्रुवंतत्रदृशोभविष्यतइत्यादियदुक्तवत्यस्ताऋताःसत्याबभूवुःपुरु
षभूषणस्यश्रीकृष्णगात्रस्यदेहस्यलक्ष्मींशोभां कथंभूतस्यगात्रस्य नुअहोइतरान्ब्रह्मादीन्हित्वायदयनमाश्रयंश्रीः कामयामासयांगात्रल

तद्रक्षिणःसानुचराःकुपिताआततायिनः ॥ ग्रहीतुकामाआवव्रुर्गृह्यतांबध्यतामिति॥१९॥ अथतान्दुरभि
प्रायान्विलोक्यबलकेशवौ ॥ क्रुद्धौधन्वनआदायशकलेतांश्चजघ्नतुः ॥ २० ॥ बलंचकंसप्रहितंहत्वाशाला
मुखात्ततः ॥ निष्क्रम्यचेरतुर्हृष्टौनिरीक्ष्यपुरसंपदः॥२१॥तयोस्तदद्भुतंवीर्यंनिशम्यपुरवासिनः॥तेजःप्राग
ल्भ्यरूपंचमेनिरेविबुधोत्तमौ॥२२॥तयोर्विचरतोःस्वैरमादित्योऽस्तमुपेयिवान्॥ कृष्णरामौवृतौगोपैःपुरा
च्छकटमीयतुः ॥ २३ ॥ गोप्योमुकुंदविगमेविरहातुरायाआशासताशिषऋतामधुपुर्यभूवन् ॥ संपश्यतांपु
रुषभूषणगात्रलक्ष्मींहित्वेतरान्नुभजतश्चकमेऽयनंश्रीः॥२४॥ अवनिक्तांघ्रियुगलौभुक्त्वाक्षीरोपसेचनम् ॥
ऊषतुस्तांसुखंरात्रिंज्ञात्वाकंसचिकीर्षितं ॥ २५ ॥ कंसस्तुधनुषोभंगंरक्षिणांस्वबलस्यच ॥ वधंनिशम्यगो
विंदरामविक्रीडितंपरं ॥ २६ ॥ दीर्घप्रजागरोभीतोदुर्निमित्तानिदुर्मतिः ॥ बहून्याचष्टोभयथामृत्योर्दौत्य
कराणिच॥२७॥ अदर्शनंस्वशिरसःप्रतिरूपेचसत्यपि ॥ असत्यपिद्वितीयेचद्वैरूप्यंज्योतिषांतथा ॥ २८॥

क्ष्मींमितिवा ॥ २४ ॥ अवनिक्तंक्षालितमंघ्रियुगलंययोस्तौक्षीरमिश्रमन्नंभुक्त्वासुखंन्यवसतां ॥ २५ ॥ परंकेवलंगोविंदरामयोर्विक्रीडि
तंतन्नतुपराक्रमःकश्चित् ॥ २६ ॥ उभयथास्वप्नजागरितभेदेनप्रत्येकंमृत्योर्दौत्यकराणिच तथाचमंत्रः इत्थादुलूकश्चापघ्नन्हिरण्याक्षो
अयोमुखः रक्षसांदूतआगतइत्यादिः तथा यदेतद्भूतान्यन्वाविश्यदैवींवाचंवदसीत्यादिश्च ॥२७॥ तानिदर्शयतिश्लोकद्वयेन जलादौप्र
तिरूपेदृश्यमानेऽपिस्वशिरसस्तत्रादर्शनं असत्यपिद्वितीयेचक्षुषोंऽतर्धानेअंगुल्यादौ ज्योतिषांचंद्रादीनांद्वित्वम् ॥ २८ ॥ ॥

छायायांप्रतिबिंबछिद्रप्रतीतिः पिहितकर्णपुटस्ययोंऽतःश्रूयमाणोध्वनिःसप्राणघोषस्तस्याश्रवणं वृक्षेषुस्वर्णवर्णप्रतीतिः रजःकर्दमादिषु स्वपदानामदर्शनम् एतानिजागरितानिदुर्निमित्तानि ॥ २९ ॥ स्वाप्नान्याह स्वप्नइति प्रेतैर्मृतैःपरिष्वंगः खरमारुह्ययानम् विषभक्षणम् नलदमालीजपाकुसुममालीयायादितियत्तदप्येकंदुर्निमित्तमिति ॥ ३० ॥३१॥ कष्टेनकथांचित्प्रभातायांपुनः सूर्येचाद्भ्यः समुत्थितइति

छिद्रप्रतीतिश्छायायांप्राणघोषानुपश्रुतिः ॥ स्वर्णप्रतीतिर्वृक्षेषुस्वपदानामदर्शनम् ॥ २९ ॥ स्वप्नेप्रेतप रिष्वंगःखरयानंविषादनं ॥ यायान्नलदमाल्येकस्तैलाभ्यक्तोदिगंबरः ॥ ३० ॥ अन्यानिचेत्थंभूतानिस्व प्नजागरितानिच ॥ पश्यन्मरणसंत्रस्तोनिद्रांलेभेनचिंतया ॥ ३१ ॥ व्युष्टायांनिशिकौरव्यसूर्येचाद्भ्यःसमु त्थिते ॥ कारयामासवैकंसोमल्लक्रीडामहोत्सवं ॥ ३२ ॥ आनर्चुःपुरुषारंगंतूर्यभेर्यश्चजघ्निरे ॥ मंचाश्चालं कृताःस्रग्भिःपताकाचैलतोरणैः ॥ ३३ ॥ तेषुपौराजानपदाब्रह्मक्षत्रपुरोगमाः ॥ यथोपजोषंविविशूराजा नश्चकृतासनाः ॥ ३४ ॥ कंसस्तुसंवृतोऽमात्यैराजमंचउपाविशत् ॥ मंडलेश्वरमध्यस्थोहृदयेनविदूयता ॥ ३५ ॥ वाद्यमानेषुतूर्येषुमल्लतालोत्तरेषुच ॥ मल्लाःस्वलंकृतादृप्ताःसोपाध्यायाःसमागताः ॥ ३६ ॥ चा णूरोमुष्टिकःकूटःशलस्तोशलएवच ॥ तआसेदुरुपस्थानंवल्गुवाद्यप्रहर्षिताः ॥ ३७ ॥ नंदगोपादयोगो पाभोजराजसमाहुताः ॥ निवेदितोपायनास्तेएकस्मिन्मंचआविशन् ॥ ३८ ॥ इतिश्रीभागवतेमहापुरा णेदशमस्कंधेपूर्वार्धेमल्लरंगोपवर्णनंनामद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ॥ ॥

तथाचश्रुतिः यउदगान्महतोऽर्णवात् विभ्राजमानःसलिलस्यमध्यात् समामृषभोलोहिताक्षःसूर्योविपश्चिन्मनसापुनात्विति ॥ ३२ ॥ ॥ ३३ ॥ यथोपजोषंयथासुखम् ॥ ३४ ॥ ३५ ॥ मल्लतालउत्तरउपरिउच्चैःश्रूयतेयेषुतेषुतूर्येषु उपाध्यायामल्लाचार्याः ॥ ३६ ॥ उपस्थानंम ल्लरंगम् ॥ ३७ ॥ समाहुताःसमाहूताः निवेदितान्युपायनानियैस्ते ॥ ३८ ॥ इतिदशमेपूर्वार्धटीकायांद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ॥

त्रिचत्वारिंशकेहत्वागजेंद्रंरामकृष्णयोः ॥ रंगप्रवेशसौभाग्यंचाणूरेणचभाषणं ॥ १ ॥ पूर्वेद्युरेवकृतंशौचंशुद्धत्वंनिरपराधत्वंयाभ्यांतौ एतदु
क्तंभवति धनुर्भंगादिनाआवाभ्यांनिजैश्वर्येसूचितेऽपिपितरौनमुंचतिआवांचपुनर्जिघांसत्यतोऽस्यमातुलस्याऽपिवधेनावयोर्दोषइत्येवंकृ
तापराधपरिहाराविति मल्लानांदुंदुभीनांचनिर्घोषंमल्लतालदुंदुभिनिर्घोषंवा ॥ १ ॥ अंबष्ठोहस्तिपस्तेनचोदितं ॥ २ ॥ परिकरंयुद्धोचितपरिधा
नंकृत्वा समुह्यनिबध्य ॥ ३ ॥ ४ ॥ अंतकोमृत्युःकालस्तन्निमित्तंयमस्तन्नियंतातैरुपमायस्यतम् ॥ ५ ॥ विगलितोविच्युतः मुष्टिनानिह
त्यालीयतअदृश्योबभूव ॥ ६ ॥ अचक्षाणःअपश्यन् घ्राणमवघ्राणंतेनदृष्टिर्दर्शनंयस्यसः लोचनागोचरमपिहिपशवोघ्राणेनजानंतीतिप्र

श्रीशुकउवाच अथकृष्णश्चरामश्चकृतशौचौपरंतप ॥ मल्लदुंदुभिनिर्घोषंश्रुत्वाद्रष्टुमुपेयतुः ॥ १ ॥ रंगद्वा
रंसमासाद्यतस्मिन्नागमवस्थितं ॥ अपश्यत्कुवलयापीडंकृष्णोऽबष्ठप्रचोदितं ॥ २ ॥ बध्वापरिकरंशौरिः
समुह्यकुटिलालकान् ॥ उवाचहस्तिपंवाचामेघनादगभीरया ॥ ३ ॥ अंबष्ठांबष्ठमार्गंनौदेह्यपक्रममाचिरम्
नोचेत्सकुंजरंत्वाऽद्यनयामियमसादनम् ॥ ४ ॥ एवंनिर्भर्त्सितोऽबष्ठःकुपितःकोपितंगजम् ॥ चोदयामासकृ
ष्णायकालांतकयमोपमम् ॥ ५ ॥ करींद्रस्तमभिद्रुत्यकरेणतरसाऽग्रहीत् ॥ कराद्विगलितःसोमुंनिहत्यां
घ्रिष्वलीयत ॥ ६ ॥ संक्रुद्धस्तमचक्षाणोघ्राणदृष्टिःसकेशवम् ॥ परामृशत्पुष्करेणसप्रसह्यविनिर्गतः ॥ ७ ॥
पुच्छेप्रगृह्यातिबलंधनुषःपंचविंशतिम् ॥ विचकर्षयथानागंसुपर्णइवलीलया ॥ ८ ॥ सपर्यावर्त्तमानेनस
व्यदक्षिणतोऽच्युतः ॥ बभ्रामभ्राम्यमाणेनगोवत्सेनेवबालकः ॥ ९ ॥ ततोभिमुखमभ्येत्यपाणिनाहत्यवा
रणम् ॥ प्राद्रवन्पातयामासस्पृश्यमानःपदेपदे ॥ १० ॥ ॥ ॥ ॥

सिद्धं परामृशद्धृतवान् पुष्करेणशुंडाग्रेण सःकृष्णः प्रसह्यबलेन ॥ ७ ॥ धनुषःधनुषांपंचविंशतिर्यावत्तावंतंदेशंविचकर्षआकृष्यनीतवा
न् कंकइवविचकर्ष यथानागंसर्पवद्वर्त्तमानंगजंसुपर्णवत्स्वयमिति आविरासीद्यथाप्राच्यांदिशींदुरिवपुष्कलइतिवत् ॥ ८ ॥ सपर्यावर्त्त
मानेनेति पुच्छग्राहिणंश्रीकृष्णंग्रहीतुंयदिदक्षिणतःपरिवर्त्ततेगजस्तर्हिसव्यतोभ्रामयतियदासव्यतःपरिवर्त्ततेतदादक्षिणतोभ्रामयंस्तेनसहब
भ्राम गोवत्सेनभ्राम्यमाणेनबालकःसएवकृष्णोयथाऽन्योबालकइवेति ॥ ९ ॥ वारणंगजंप्राद्रवन्प्रकर्षेणासमंततोधावन्पातयामास
यथापततितथातंवंचयन्प्राद्रवदित्यर्थः ॥ १० ॥ ॥ ॥ ॥

किंच सधावन्निति अहनत् अहन् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ रंगंसमाविशत्तदावीरश्रियाबभौ कथंभूतः अंसेन्यस्तंविषाणंगजदंतोयेन सः असृजोरक्तस्यमदस्यबिंदुभिःपरितोंऽकितः ॥ १५ ॥ विरूढाउद्गताःस्वेदकणिकास्ताभिरुपलक्षितंवदनांबुरुहंयस्यसः नकेवलंसएकः समाविशत् किंतुवृतोगोपैरिति ॥ १६ ॥ तत्रशृंगारादिसर्वरसकदंबमूर्त्तिर्भगवांस्तत्तदभिप्रायानुसारेणबभौनसाकल्येनसर्वेषामित्याह मल्लाना मिति मल्लादीनामज्ञानांद्रष्टॄणामशन्यादिरूपेणदशधाविदितःसन् साग्रजोरंगंगतइत्यन्वयःमल्लादिष्वाभिव्यक्तारसाःक्रमेणश्लोकेननिबध्यं

सधावन्क्रीडयाभूमौपतित्वासहसोत्थितः ॥ तंमत्वापतितंक्रुद्धोदंताभ्यांसोहनत्क्षितिम् ॥ ११ ॥ स्वविक्रमे प्रतिहतेकुंजरेंद्रोऽत्यमर्षितः ॥ चोद्यमानोमहामात्रैःकृष्णमभ्यद्रवद्रुषा ॥ १२ ॥ तमापतंतमासाद्यभगवा न्मधुसूदनः ॥ निगृह्यपाणिनाहस्तंपातयामासभूतले ॥ १३ ॥ पतितस्यपदाक्रम्यमृगेंद्रइवलीलया ॥ दं तमुत्पाट्यतेनेभंहस्तिपांश्चाहनद्धरिः ॥ १४ ॥ मृतकंद्विपमुत्सृज्यदंतपाणिःसमाविशत् ॥ अंसन्यस्तविषा णोऽसृङ्मदबिंदुभिरंकितः ॥ १५ ॥ विरूढस्वेदकणिकावदनांबुरुहोबभौ ॥ वृतोगोपैःकतिपयैर्बलदेवज नार्दनौ ॥ रंगंविविशतूराजन्गजदंतवरायुधौ ॥ १६ ॥ मल्लानामशनिर्नृणांनरवरःस्त्रीणांस्मरोमूर्तिमान्गो पानांस्वजनोऽसतांक्षितिभुजांशास्तास्वपित्रोःशिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषांतत्त्वंपरंयोगिनांवृष्णी नांपरदेवतेतिविदितोरंगंगतःसाग्रजः ॥ १७ ॥ हतंकुवलयापीडंदृष्ट्वातावपिदुर्जयौ ॥ कंसोमनस्व्यपित दाभृशमुद्विविजेनृप ॥ १८ ॥ तौरेजतूरंगगतौमहाभुजौविचित्रवेषाभरणस्रगंबरौ ॥ यथानटावुत्तमवेषधा रिणौमनःक्षिपंतौप्रभयानिरीक्षताम् ॥ १९ ॥ निरीक्ष्यतावुत्तमपूरुषौजनामंचस्थितानागरराष्ट्रकान्नृपाः ॥ प्रहर्षवेगोत्कलितेक्षणाननाःपपुर्नतृप्तानयनैस्तदाननं ॥ २० ॥ ॥ ॥

ते रौद्रोऽद्भुतश्चशृंगारोहास्यंवीरोदयातथा ॥ भयानकश्चबीभत्सःशांतःसप्रेमभक्तिकः ॥ अविदुषांविराट्विकलःअपर्याप्तोराजतइतितथा अ नेनबीभत्सरसउक्तः विकलत्वंचक्वज्रसारसर्वांगावित्यादिनावक्ष्यते ॥ १७ ॥ उद्विविजेभीतोबभूव ॥ १८ ॥ यथानटाविितिनिर्भयत्वं दर्शितं ॥ १९ ॥ प्रहर्षवेगेनउत्कलितानिउज्जृंभितानिईक्षणानिआननानिचयेषांतयोराननंपपुःपरंनतृप्ताः निराकांक्षानबभूवुरित्यर्थः ॥ २० ॥

तदेवाह पिबंतइवेति. श्लिष्यंतःपरिष्वंगंकुर्वंतइवलक्षिताइत्यर्थः ॥ २१ ॥ यथादृष्टंधनुर्भंगादियथाश्रुतंगोवर्द्धनोद्धारणादितत्तदनतिक्रम्य तद नुरूपमित्यर्थः प्रत्यक्षंचतयोरूपंगजदंतादियुक्तम् गुणाःशौर्यादयोमाधुर्यंहसितालापादिप्रागल्भ्यंधाष्टर्यंतैःस्मारिताइवस्मरणंप्रापिताइव ॥ २२ ॥ विस्मितानांवाक्यान्याह अष्टभिरेताविल्यादिभिः ॥ २३ ॥ किलेतिसर्वत्रान्वयः ॥ २४ ॥ गुह्यकःशंखचूडःअन्येचा

पिबंतइवचक्षुर्भ्यांलिहंतइवजिह्वया ॥ जिघ्रंतइवनासाभ्यांश्लिष्यंतइवबाहुभिः ॥ २१ ॥ ऊचुःपरस्परंतेवै यथादृष्टंयथाश्रुतं ॥ तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिताइव ॥२२॥ एतौभगवतःसाक्षाद्धरेर्नारायणस्यहि॥ अवतीर्णाविहांशेनवसुदेवस्यवेश्मनि ॥ २३ ॥ एषवैकिलदेवक्यांजातोनीतश्चगोकुलं ॥ कालमेतंवसन्गूढोववृधेनंदवेश्मनि ॥ २४ ॥ पूतनाऽनेननीतांऽतंचक्रवातश्चदानवः ॥ अर्जुनौगुह्यकःकेशीधेनुकोऽन्येचतद्विधाः ॥२५॥ गावःसपालाएतेनदावाग्नेःपरिमोचिताः ॥ कालियोदमितःसर्पइंद्रश्चविमदःकृतः ॥२६॥ सप्ताहमेकहस्तेनधृतोऽद्रिप्रवरोऽमुना॥वर्षवाताशनिभ्यश्चपरित्रातंचगोकुलं ॥२७॥गोप्योऽस्यनित्यमुदितहसितप्रेक्षणंमुखं ॥ पश्यंत्योविविधांस्तापांस्तरंतिस्माश्रमंमुदा ॥ २८ ॥ वदंत्यनेनवंशोऽयंयदोःसुबहुविश्रुतः ॥ श्रियंयशोमहत्त्वंचलप्स्यतेपरिरक्षितः ॥ २९ ॥अयंचास्याग्रजःश्रीमान्रामःकमललोचनः ॥ प्रलंबोनिहतोयेनवत्सकोयेबकादयः ॥ ३० ॥ जनेष्वेवंब्रुवाणेषुतूर्येषुनिनदत्सुच ॥ कृष्णरामौसमाभाष्यचाणूरोवाक्यमब्रवीत् ॥ ३१ ॥ हेनंदसूनोहेरामभवंतौवीरसंमतौ ॥ नियुद्धकुशलौश्रुत्वाराज्ञाहूतौदिदृक्षुणा ॥ ॥३२॥ प्रियंराज्ञःप्रकुर्वंत्यःश्रेयोविंदंतिवैप्रजाः ॥ मनसाकर्मणावाचाविपरीतमतोन्यथा ॥ ३३ ॥

घासुरादयः ॥ २५ ॥ २६ ॥ २७ ॥ आश्रममर्षिच्छ्रमयुक्तंमुखम् अश्रमंमुखमितिवा यद्वा अश्रमंयथाभवतितथातरंतिरमेति ॥ २८ ॥ अनेनपरिरक्षितोयदोर्वंशःसुबहुविश्रुतःसन्श्रियादिलप्स्यतइतिवदंतीति ॥ २९ ॥ धेनुकबकवत्सासुरेषुविपर्ययोक्तिर्जनवादेष्वनिश्चयात् ॥ ३० ॥ जनेष्वेवंब्रुवाणेषुतदसहमानश्चाणूरोऽब्रवीदिति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ॥ ॥

॥ ३४ ॥ हेकृष्णप्रियंकरवामोति राज्ञिप्रीतेभूतानिचप्रसीदेयुः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ॥ यथोचितंनियुद्धंबाहुयुद्धंभवेत् मल्लसभासदः मल्ल सभाऽधिकृतान्जनानधर्मोमास्पृशेन्नस्पृशेदित्यर्थः हेमल्लेतिवा ॥ ३८ ॥ सहस्राद्विपानांसत्वंबलंबिभर्त्तीतितथा ॥ ३९ ॥ बलिभिर्मादृशैः सह अनयोऽधर्मः विक्रमपराक्रमंकुरु मुष्टिकोविक्रमतादित्यनुषंगः ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेटीकायांत्रिच

नित्यंप्रमुदितागोपावत्सपालायथास्फुटम् ॥ वनेषुमल्लयुद्धेनक्रीडंतश्चारयंतिगाः ॥ ३४ ॥ तस्माद्राज्ञः प्रियं यूयंवयंचकरवामहे ॥ भूतानिनः प्रसीदंतिसर्वभूतमयोनृपः ॥ ३५ ॥ तन्निशम्याब्रवीत्कृष्णोदेशकालोचितं वचः ॥ नियुद्धमात्मनोभीष्टंमन्यमानोभिनंद्यच ॥ ३६ ॥ प्रजाभोजपतेरस्यवयंचापिवनेचराः ॥ करवामप्रि यंनित्यंतन्नः परमनुग्रहः ॥ ३७ ॥ बालावयंतुल्यबलैः क्रीडिष्यामोयथोचितं ॥ भवेन्नियुद्धंमाधर्मः स्पृशेन्म ल्लसभासदः ॥ ३८ ॥ चाणूरउवाच नबालोनकिशोरस्त्वंबलश्चबलिनांवरः ॥ लीलयेभोहतोयेनसहस्रद्वि पसत्वभृत् ॥ ३९ ॥ तस्माद्भवद्भ्यांबलिभिर्योद्धव्यंनानयोऽत्रवै ॥ मयिविक्रमवार्ष्णेयबलेनसहमुष्टिकः ॥ ४० इतिश्रीभागवतेमहापुराणेद० पूर्वार्धेकुवलयापीडवधोनामत्रिचत्वारिंशोध्यायः ॥ ४३ ॥ श्रीशुकउवाच एवंचर्चितसंकल्पोभगवान्मधुसूदनः ॥ आससादाथचाणूरंमुष्टिकंरोहिणीसुतः ॥ १ ॥ हस्ताभ्यांहस्तयो र्बध्वापद्भ्यामेवचपादयोः ॥ विचकर्षतुरन्योऽन्यंप्रसह्यविजिगीषया ॥ २ ॥ अरत्नीद्वेअरत्निभ्यांजानुभ्यां चैवजानुनी ॥ शिरःशीर्ष्णोरसोरस्तावन्योऽन्यमभिजघ्नतुः ॥ ३ ॥ परिभ्रामणविक्षेपपरिरंभावपातनैः ॥ उत्सर्पणापसर्पणैश्चअन्योऽन्यंप्रत्यरुंधतां ॥ ४ ॥ ॥ ॥ ॥ ॥

त्वारिंशोऽध्यायः ॥ ४३ ॥ चतुश्चत्वारिंशकेतुमल्लकंसादिमर्दनम् ॥ कंसयोषित्समाश्वासस्ताभ्यांपित्रोश्चदर्शनम् ॥ १ ॥ चर्चितः निश्चितएवसंकल्पोयस्यसः ॥ १ ॥ २ ॥ बाहुमध्यात्कनिष्ठांगुलिव्यातिरेकेणकृतमुष्टिर्हस्तोरत्निः ॥ ३ ॥ परिभ्रामणंहस्तादिषुगृहीत्वा परितश्चालनं विक्षेपोनोदनं परिरंभोबाहुभ्यांनिष्पीडनंअवपातनमधःक्षेपः उत्सर्पणमुत्सृज्यपुरतोगमनं अपसर्पणंपृष्ठतोगमनं एतैः प्रत्यरुंधतांप्रत्यावृतवंतौ ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उत्थापनंजानुनीपादौचपिंडीकृत्यपतितस्योच्चाटनम् उन्नयनंहस्ताभ्यामुद्धृत्यनयनम् चालनंकंठादिलग्नस्यनिःसारणम् स्थापनंपादा
दिपिंडीकरणम् एवंपरस्परमात्मनोदेहस्यापचक्रतुःअपकारंकृतवंतौ ॥ ५ ॥ तद्युद्धंबलाबलवत्एकतोबलमन्यतोऽबलम् तद्युद्धंविषम
मित्यूचुरित्यर्थः यद्वा तद्बलाबलवतोर्युद्धंदृष्ट्वामहानयमधर्मइत्यूचुरित्यन्वयः ॥ ६ ॥ तदेवदर्शयति महानिति बालयोर्बलवतोश्चयुद्धं
राजा चेत्पश्येत्स्वयंवारणीयः एतेराज्ञःपश्यतः स्वयमन्विच्छंतिअनुमन्यंतइतिमहानधर्मइत्यर्थः ॥७॥ बलाबलवद्युद्धतांप्रपंचयतिपंचभिः
क्वेति वज्रसाराणिवज्रवत्कठिनानिसर्वाण्यंगानिययोस्तौ॥८॥समाजस्यसभायाः॥९॥अपराऊचुः नसभामिति अब्रुवन्ज्ञात्वाऽपितूष्णींतिष्ठ

उत्थापनैरुन्नयनैश्चालनैःस्थापनैरपि ॥ परस्परंजिगीषंतावपचक्रतुरात्मनः॥५॥तद्बलाबलवद्युद्धंसमेताः
सर्वयोषितः ॥ ऊचुःपरस्परंराजन्सानुकंपावरूथशः ॥६॥ महानयंबताधर्मएषांराजसभासदां ॥ येबला
बलवद्युद्धंराज्ञोऽन्विच्छंतिपश्यतः ॥ ७॥ क्ववज्रसारसर्वांगौमल्लौशैलेंद्रसन्निभौ ॥ क्वचातिसुकुमारांगौकि
शोरौनाप्तयौवनौ ॥८॥ धर्मव्यतिक्रमोह्यस्यसमाजस्यध्रुवंभवेत् ॥ यत्राधर्मःसमुत्तिष्ठेन्नस्थेयंतत्रकर्हिचित्
॥९॥ नसभांप्रविशेत्प्राज्ञःसभ्यदोषाननुस्मरन् ॥ अब्रुवन्विब्रुवन्नज्ञोनरःकिल्बिषमश्नुते ॥ १० ॥ वल्गतः
शत्रुमभितःकृष्णस्यवदनांबुजं ॥ वीक्ष्यतांश्रमवार्युप्तंपद्मकोशमिवांबुभिः ॥ ११ ॥ किंनपश्यतरामस्यमुख
माताम्रलोचनं ॥ मुष्टिकंप्रतिसामर्षंहाससंरंभशोभितं ॥१२॥ पुण्यावतव्रजभुवोयदयंनृलिंगगूढःपुराण
पुरुषोवनचित्रमाल्यः ॥ गाःपालयन्सहबलःक्वणयंश्चवेणुंविक्रीडयांऽचतिगिरित्ररमार्चितांघ्रिः ॥ १३ ॥

न् विब्रुवन्विपरीतंब्रुवन् अज्ञःनजानामीतिब्रुवन् अतःप्राज्ञोनसभांप्रविशेदिति ॥ १० ॥ वल्गतःशत्रुमभितइति शत्रोःसर्वतोधावतः
कृष्णस्यश्रमवारिणाउप्तंव्याप्तंमुखांबुजंदृश्यताम् ॥११॥ अन्याऊचुः किंनपश्यतेति सामर्षंसक्रोधं हासेनसंरंभआवेशस्तेनशोभितम् ॥ १२॥
अन्याऊचुः पुण्यावतेति नृलिंगेनमनुष्यदेहेनगूढः वनस्थानिचित्राणिमाल्यानियस्यसः गिरित्रः शिवःरमाचताभ्यामर्चितावंघ्रीयस्यसः
अयंभावः धिगिमांसभांयस्यामयंपराभूयतेतास्तुव्रजभुवोधन्याः यत्रयासुअयंकृष्णोविविधक्रीडयांऽचतिगच्छतीति अहोकष्टमल्पपुण्या
वयंयतोऽस्माभिरनवसरेदृष्टोयं ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

गोप्यस्तुबहुपुण्याइत्याहुस्त्रिभिः गोप्यइति अमुष्यश्रीकृष्णस्यरूपमंगंलावण्येनसारंश्रेष्ठं किंच असमोर्ध्वंनविद्यतेसममूर्ध्वंमाधिकं चयस्य तत् तदपिनअन्येनआभरणादिनासिद्धंकिंतुस्वतएवऐश्वरस्यऐश्वर्यस्यचएकांतधामअव्यभिचारिस्थानम् पाठांतरेअमुष्यईश्वरस्येत्यन्वयः एवंभूतंनित्यंनवीनंरूपंयानेत्रैःपश्यंतीति ॥ १४ ॥ किंच यादोहनादिष्वेनंगायंतितास्त्रजास्त्रियोधन्याः प्रेंखेंखनंदोलांदोलनम् उक्षणं सेचनम् कथंभूताः उरुक्रमेचित्तमुरुक्रमाचित्तंतेनैवयानंसर्वविषयप्राप्तिर्यासांताः पाठांतरेउरुक्रमंचिंतयंत्यइत्यर्थः कुतः अनुरक्ताधियः तत्रलिंगमश्रुकंठचः ॥ १५ ॥ प्रातरिति याअबलाअस्यवेणुंनिशम्यगृहात्तूर्णंनिर्गम्यपथिसस्मितमुखंपश्यंतिताभूरिपुण्याइति ॥ १६ ॥

गोप्यस्तपःकिमचरन्यदमुष्यरूपंलावण्यसारमसमोर्ध्वमनन्यसिद्धम् ॥ दृग्भिःपिबंत्यनुसवाभिनवंदुरापमेकांतधामयशसःश्रियऐश्वरस्य ॥१४॥ यादोहनेऽवहननेमथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ गायंतिचैनमनुरक्तधियोऽश्रुकंठ्योधन्याव्रजस्त्रियउरुक्रमचित्तयानाः ॥१५॥ प्रातर्व्रजाद्व्रजतआविशतश्चसायंगोभिःसमंक्कणयतोऽस्यनिशम्यवेणुम् ॥ निर्गम्यतूर्णमबलाःपथिभूरिपुण्याःपश्यंतिसस्मितमुखंसदयावलोकम् ॥१६॥ एवंप्रभाषमाणासुस्त्रीषुयोगेश्वरोहरिः ॥शत्रुंहंतुंमनश्चक्रेभगवान्भरतर्षभ ॥१७॥ सभायाःस्त्रीगिरःश्रुत्वापुत्रस्नेहशुचातुरौ ॥ पितरावन्वतप्येतांपुत्रयोरबुधौबलं ॥ १८ ॥ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ॥ युयुधातेयथान्यायंतथैवबलमुष्टिकौ ॥१९॥ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ॥ चाणूरोभज्यमानांगोमुहुर्ग्लानिमवापह ॥ २० ॥ सश्येनवेगउत्पत्त्यमुष्टीकृत्यकरावुभौ ॥ भगवंतंवासुदेवंक्रुद्धोवक्षस्यबाधत ॥२१॥नाचलत्तत्प्रहारेणमालाहतइवद्विपः॥बाह्वोर्निगृह्यचाणूरंबहुशोभ्रामयन्हरिः॥२२॥



एवंसभयंब्रुवाणासुस्त्रिषुतासांभयनिवृत्तयेकृष्णःशत्रुंहंतुंमनश्चक्रे ॥ १७ ॥ सभयाःस्त्रीणांगिरःश्रुत्वापुत्रयोःस्नेहेनयाशुक्तयाआतुरौविव्हलौपुत्रयोर्बलमजानंतौपितरावनुतापंप्राप्ताविति ॥ १८ ॥ १९ ॥तदाभगवतोगात्राणामरत्निजान्वादीनांनिष्पातैःप्रहारैः वज्रस्यनिष्पेषस्तीव्रप्रतापस्तद्वन्निष्ठुरैः भज्यमानांगःश्लथद्गात्रइत्यर्थः ॥ २० श्येनस्येववेगोयस्यसः चाणूरःअबाधतअताडयत् ॥ २१ ॥ २२ ॥

भूपृष्टेभुवउपरि पोथयामासआस्फालयत् इंद्रध्वजोवज्रं यद्वा इंद्रध्वजोगौडेषुप्रसिद्धः कस्मिंश्चिदुत्सवेमहान्स्तंभोध्वजपताकाद्यलंकृ
तःपुरुषाकृतिरुच्छ्रीयतेसयथापततितद्वदपतदिति ॥ २३ ॥ २४ ॥ अर्दितःपीडितःउर्व्युपस्थेभूतले ॥२५॥ २६॥ २७॥ २८॥वल्गंतौनृत्या

भूपृष्ठेपोथयामासतरसाक्षीणजोवितं ॥ विस्त्रस्ताकल्पकेशस्त्रगिंद्रध्वजइवापतत् ॥२३॥ तथैवमुष्टिकःपूर्वं
स्वमुष्ट्याभिहतेनवै ॥ बलभद्रेणबलिनातलेनाभिहतोभृशं॥२४॥ प्रवेपितःसरुधिरमुद्वमन्मुखतोऽर्दितः ॥
व्यसुःपपातोर्व्युपस्थेवाताहतइवांघ्रिपः ॥ २५॥ ततःकूटमनुप्राप्तंरामःप्रहरतांवरः ॥ अवधीह्लीलयाराज
न्सावज्ञंवाममुष्टिना ॥ २६ ॥ तर्ह्येवहिशलःकृष्णपदापहतशीर्षकः ॥ द्विधाविदीर्णस्तोशलकउभावपिनिपे
ततुः ॥ २७ ॥ चाणूरेमुष्टिकेकूटेशलेतोशलकेहते ॥ शेषाःप्रदुद्रुवुर्मल्लाःसर्वेप्राणपरीप्सवः ॥२८॥ गोपान्व
यस्यानाकृष्यतैःसंसृज्यविजन्हतुः ॥ वाद्यमानेषुतूर्येषुवल्गंतौधृतनूपुरौ ॥ २९॥जनाःप्रजल्हषुःसर्वेकर्मणा
रामकृष्णयोः॥ऋतेकंसंविप्रमुख्याःसाधवःसाधुसाध्विति ॥३०॥ हतेषुमल्लवर्येषुविद्रुतेषुचभोजराट्॥न्य
वारयत्स्वतूर्याणिवाक्यंचेदमुवाचह ॥ ३१॥ निःसारयतदुर्वृत्तौवसुदेवात्मजौपुरात् ॥धनंहरतगोपानांनं
दंबध्नीतदुर्मतिं ॥३२॥ वसुदेवस्तुदुर्मेधाहन्यतामाश्वसत्तमः ॥ उग्रसेनःपिताचापिसानुगःपरपक्षगः॥३३
एवंविकत्थमानेवैकंसेप्रकुपितोऽव्ययः ॥ लघिम्नोत्पत्यतरसामंचमुत्तुंगमारुहत् ॥३४॥ तमाविशंतमालो
क्यमृत्युमात्मनआसनात् ॥ मनस्वीसहसोत्थायजगृहेसोऽसिचर्मणी ॥ ३५ ॥ तंखड्गपाणिंविचरंतमाशु
श्येनंयथादक्षिणसव्यमंबरे ॥ समग्रहीद्दुर्विषहोग्रतेजायथोरगंताक्ष्र्यसुतःप्रसह्य ॥३६॥ प्रगृह्यकेशेषुच
लत्किरीटंनिपात्यरंगोपरितुंगमंचात् ॥तस्योपरिष्टात्स्वयमब्जनाभःपपातविश्वाश्रयआत्मतंत्रः ॥३७॥

दिकुर्वंतौ ॥२९॥ साधुसाधुइतिवदंतः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ अव्ययःअश्रमः लघिम्नालाघवेन ॥ ३४ ॥ ३५ ॥ दुर्विषहमविषह्यमुग्रंते
जोयस्यसःश्रीकृष्णः ॥३६ ॥ गरिष्ठत्वायाविश्वाश्रयत्वमुक्तम् तत्रहेतुः अब्जनाभः कुतस्तस्योपर्येवपपात यतः आत्मतंत्रःस्वतंत्रः ॥ ३७

॥ ३८ ॥ ३९ ॥ निर्वेशोनिष्कृतिरानृण्यमित्यर्थः तत्कारिणःसंतस्तेअभ्यधावन् ॥ ४० ॥ तथाताद्दक्अतिरभसोवेगोयेषांतान् संयत्तानुद्युक्ता न् ॥४१॥४२॥ ४३ ॥ शोचंत्योविलापंचक्रुःशुचःअश्रूणि ॥ ४४ ॥ धर्मज्ञइत्यादीनिविलापेप्रेमसंबोधनानि तेत्वदीयावयम् ॥ ४५ ॥ त्वयाप



तंसंपरेतंविचकर्षभूमौहरिर्यथेभंजगतोविपश्यतः ॥ हाहेतिशब्दःसुमहांस्तदाऽभूदुदीरितःसर्वजनैर्नरेंद्र॥ ॥ ३८॥ सनित्यदोद्विग्नधियातमीश्वरंपिबन्वदन्वाविचरन्स्वपन्श्वसन् ॥ ददर्शचक्रायुधमग्रतोयतस्तदेव रूपंदुरवापमाप ॥ ३९ ॥ तस्याऽनुजाभ्रातरोऽष्टौकंकन्यग्रोधकादयः ॥ अभ्यधावन्नभिक्रुद्धाभ्रातुर्निर्वेश कारिणः ॥ ४० ॥ तथाऽतिरभसांस्तांस्तुसंयत्तान्रोहिणीसुतः ॥ अहन्परिघमुद्यम्यपशूनिवमृगाधिपः॥ ॥४१॥नेदुर्दुंदुभयोव्योम्निब्रह्मेशाद्याविभूतयः ॥ पुष्पैःकिरंतस्तंप्रीत्याशशंसुर्ननृतुःस्त्रियः ॥४२॥ तेषांस्त्रि योमहाराजसुहृन्मरणदुःखिताः॥तत्राभीयुर्विनिघ्नंत्यःशीर्षाण्यश्रुविलोचनाः ॥ ४३ ॥ शयानान्वीरशय्या यांपतीनालिंग्यशोचतीः ॥ विलेपुःसुस्वरंनार्योविसृजंत्योमुहुःशुचः ॥ ४४ ॥ हानाथप्रियधर्मज्ञकरुणाना थवत्सल ॥ त्वयाहतेननिहतावयंतेसगृहप्रजाः॥ ४५ ॥ त्वयाविरहितापत्यापुरीयंपुरुषर्षभ ॥ नशोभतेवय मिवनिवृत्तोत्सवमंगला ॥ ४६ ॥ अनागसांत्वंभूतानांकृतवान्द्रोहमुल्बणं ॥ तेनेमांभोदशांनीतोभूतध्रुक्कोल भेतशं ॥ ४७॥ सर्वेषामिहभूतानामेषहिप्रभवाप्ययः ॥ गोप्ताचतदवध्यायीनक्वचित्सुखमेधते ॥ ४८ ॥ श्रीशुकउवाच राजयोषितआश्वास्यभगवाँल्लोकभावनः ॥ यामाहुर्लौकिकींसंस्थांहतानांसमकारयत् ॥ ४९ ॥ मातरंपितरंचैवमोचयित्वाऽथबंधनात् ॥ कृष्णरामौववंदातेशिरसास्पृश्यपादयोः ॥ ५० ॥



त्वाविरहितापुरीयंनशोभतइतिस्वदृष्ट्याभिधानम् ॥ ४६ ॥ अनागसामितितुपरमार्थाभिधानं ॥ ४७ ॥ एषकृष्णः प्रभवंत्यस्मादितिप्रभवःअ पियंत्यस्मिन्नित्यप्ययःसचसच तदवध्यानमवज्ञातत्कर्तृशीलंयस्यसः ॥४८ ॥ ४९ ॥ आस्पृश्यईषत्स्पृष्ट्वा ५० ॥ ॥ ॥

पुत्रभ्रांतिंविहायजगदीश्वरावितिज्ञात्वाशंकितौनसस्वजातेनआलिंगितवंतौकिंतुबद्धांजलीतस्थतुरित्यर्थः प्रसह्यहत्वाहस्तींद्रंमल्लेंद्रान्मल्ल लीलया॥बीभत्सचरितंकंसंसबीभत्समममारयत् ॥ ५१ ॥ इ० भा० म० द० पू० टी० चतुश्चत्वारिंशोध्यायः ॥ ४४ ॥ ॥ पंचचत्वारिंशके थपितृनंदादिसांत्वनं ॥ उग्रसेनाभिषेकश्चगुरौवासात्पुरागमः ॥१॥ उपलब्धार्थौविदित्वेति अयमर्थःउपसमपिआवयोःपुत्रबुध्यासांसा रिकपरमसुखभोगात्पूर्वमेवलब्धार्थौआवामीश्वरावितिलब्धः प्राप्तः परमज्ञानरूपोऽर्थोयाभ्यांतौतथाभूतौज्ञात्वामयिप्रसन्नेसतिअनयोर्ज्ञानं नामाकिंदुर्लभंस्यात् दुर्लभंतुमयिपुत्रतयाप्रेम अतइदानीमेवतज्ज्ञानंनाभूदितिनिजांस्वाधीनांमायांतयोःप्रसारितवानिति॥ १ ॥ तदेवदर्शय तिउवाचेत्यादिभिरष्टभिः प्रीणयन्सादरंब्रुवन् ॥ २ ॥ अस्मत्तःअस्मन्निमित्तंनित्यमुत्कंठितयोरपियुवयोःपुत्राभ्यामावाभ्यांकृत्वाबाल्यपौ

देवकीवसुदेवश्चविज्ञायजगदीश्वरौ॥कृतसंवंदनौपुत्रौसस्वजातेनशंकितौ॥५१॥इ०भा०म०द०पू०कंसवधो नामचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ श्रीशुकउवाच पितरावुपलब्धार्थौविदित्वापुरुषोत्तमः॥ माभूदिति निजांमायांततानजनमोहिनीं ॥१॥ उवाचपितरावेत्यसाग्रजःसात्वतर्षभः ॥ प्रश्रयावनतःप्रीणन्नंबतातेति सादरं ॥ २ ॥ नास्मत्तोयुवयोस्तातनित्योत्कंठितयोरपि ॥ बाल्यपौगंडकैशोराःपुत्राभ्यामभवन्क्वचित् ॥ ३ ॥ नलब्धोदैवहतयोर्वासोनौभवदंतिके ॥ यांबालाःपितृगेहस्थाविंदंतेलालितामुदं ॥ ४ ॥ सर्वार्थसंभ वोदेहोजनितःपोषितोयतः ॥ नतयोर्यातिनिर्वेशंपित्रोर्मर्त्यःशतायुषा ॥ ५ ॥ यस्तयोरात्मजःकल्पआत्म नाचधनेनच ॥ वृत्तिंनदद्यात्तंप्रेत्यस्वमांसंखादयंतिहि ॥ ६ ॥ मातरंपितरंवृद्धंभार्यांसाध्वींसुतंशिशुं ॥ गु रुंविप्रंप्रपन्नंचकल्पोऽबिभ्रच्छ्वसन्मृतः॥ ७ ॥ तन्नावकल्पयोःकंसान्नित्यमुद्विग्नचेतसोः॥ मोघमेतेव्यतिक्रां तादिवसावामनर्चतोः ॥८॥ गंडकैशोरास्तत्तदवस्थानुभवसुखानीत्यर्थः नाभवन्निति अस्मत्तःपुत्राभ्यामितिसामानाधिकरण्यंवा ॥ ३ ॥ किंचआवामेवदैवहीनावित्याहनलब्धइति पितृगेहस्थाबालायांमुदंविंदंतेसाचनलब्धेति ॥४॥ एवंतावत्श्लोकद्वयेनयुवयोरावयो श्चकामहानिर्जातेत्युक्तं आवयोःपुनर्युष्मत्परिचर्यालोपेनधर्महानिरपिजातेत्याह सर्वार्थसंभवइति सर्वेषांधर्माद्यर्थानांसंभवोयस्मिन्सदेहोय तयाभ्यांजनितःपोषितश्चतयोःपित्रोर्निर्वेशंनिष्कृतिमा नृण्यंमर्त्यःशतसंवत्सरमात्रेणायुषानप्राप्नोति॥ ५॥ तन्मध्येपितुर्यःपुत्रःकल्पःसमर्थः सन्नपिपित्रोर्वृत्तिंजीविकांनसंपादयेत्तंप्रेत्यलोकांतरेयम दूताःस्वस्यैवमांसंखादयंतीति ॥ ६ ॥ किंचमात्रादिशुश्रूषामकुर्वन्विफलजीवित श्चभवतीत्याह मातरमिति अबिभ्रत् अपुष्णन्श्वसन्नपि मृततुल्यएवेति॥ ७ ॥ ततस्मान्नौआवयोः मोघंव्यर्थमनर्चतोःअपूजयतोः ॥ ८ ॥

दुर्हृदाकंसेनकृत्वा ॥ ९ ॥ १० ॥ ११ ॥ आश्वास्यसांत्वयित्वा ॥ १२ ॥ त्वमेवाज्ञापयेतिमावदेत्याह ययातिशापादिति तवतुयादवत्वेऽपि
मदाज्ञयानदोषइतिभावः ॥ १३ ॥ ममताद्दशीशक्तिर्नास्तीतिचेत्तत्राह मयीति मत्प्रसादेनसर्वंभविष्यतीत्यर्थः ॥ १४ ॥ स्वान्ज्ञातीन्
संबंधांश्चदिग्भ्यआनाय्येति ॥ १५ ॥ १६ ॥ सिद्धाःपूर्णाः कृष्णरामाभ्यांगतोनिवृत्तोज्वरस्तापोयेषांते ॥ १७ ॥ सदयस्मितंवीक्षणंयास्मिंस्तत्

तत्क्षंतुमर्हथस्तातमातर्नौपरतंत्रयोः ॥ अकुर्वतोर्वांशुश्रूषांक्लिष्टयोर्दुर्हृदाभृशम् ॥ ९ ॥ श्रीशुकउवाच
इतिमायामनुष्यस्यहरेर्विश्वात्मनोगिरा ॥ मोहितावंकमारोप्यपरिष्वज्यापतुर्मुदम् ॥ १० ॥ सिंचंतावश्रु
धाराभिःस्नेहपाशेनचावृतौ ॥ नकिंचिदूचतूराजन्बाष्पकंठौविमोहितौ ॥ ११ ॥ एवमाश्वास्यपितरौभग
वान्देवकीसुतः ॥ मातामहंतूग्रसेनंयदूनामकरोन्नृपम् ॥ १२ ॥ आहचास्मान्महाराजप्रजाश्चाज्ञप्तुमर्हसि॥
ययातिशापाद्यदुभिर्नासितव्यंनृपासने ॥ १३ ॥ मयिभृत्यउपासीनेभवतोविबुधादयः ॥ बलिंहरंत्यव
नताःकिमुतान्येनराधिपाः ॥ १४ ॥ सर्वान्स्वज्ञातिसंबंधान्दिग्भ्यःकंसभयाकुलान् ॥ यदुवृष्ण्यंधकम
धुदाशार्हकुकुरादिकान् ॥ १५ ॥ सभाजितान्समाश्वास्यविदेशावासकर्शितान् ॥ न्यवासयत्स्वगेहे
षुवित्तैःसंतर्प्यविश्वकृत् ॥ १६ ॥ कृष्णसंकर्षणभुजैर्गुप्तालब्धमनोरथाः ॥ गृहेषुरेमिरेसिद्धाःकृष्णरामग
तज्वराः ॥ १७ ॥ वीक्षंतोऽहरहःप्रीतामुकुंदवदनांबुजं ॥ नित्यंप्रमुदितंश्रीमत्सदयस्मितवीक्षणं ॥ १८
॥ तत्रप्रवयसोप्यासन्युवानोऽतिबलौजसः ॥ पिबंतोऽक्षैर्मुकुंदस्यमुखांबुजसुधांमुहुः ॥ १९ ॥ अथनंदंस
मासाद्यभगवान्देवकीसुतः ॥ संकर्षणश्चराजेंद्रपरिष्वज्येदमूचतुः ॥ २० ॥ पितर्युवाभ्यांस्निग्धाभ्यांपोषि
तौलालितौभृशम् ॥ पित्रोरभ्यधिकाप्रीतिरात्मजेष्वात्मनोऽपिहि ॥ २१ ॥ सपितासाचजननीयौपुष्णी
तांस्वपुत्रवत् ॥ शिशून्बंधुभिरुत्सृष्टानकल्पैःपोषरक्षणे ॥ २२ ॥ ॥ ॥

॥१८॥ प्रवयसोवृद्धाअपिअतिशयितंबलमोजश्चयेषांते ॥ १९ ॥ २० ॥ भृशमात्मनोऽप्याधिक्येनपोषितौ नचाश्चर्यमेतदित्याह पित्रोरिति
आत्मनोदेहादप्यात्मजेष्वभ्यधिकाहिप्रीतिरिति ॥ २१॥ देवकीवसुदेवयोःपुत्रौयुवांनास्मत्पुत्रावित्यपिनवाच्यमित्याह सपितेति ॥ २२॥

॥ २३ ॥ सव्रजंव्रजवासिभिःसहितम् कुप्यानिस्वर्णरजतादिव्यतिरिक्तकांस्यपात्रादीनितत्प्रभृतिभिः ॥ २४॥२५॥ पुरोधसागर्गाचार्येण द्वि
जसंस्कृतिमुपनयनं ॥ २६ ॥ गावोगाः रुक्मस्यमालाविद्यंतेयासांताः क्षौमवस्त्रमालावतीः ॥ २७॥ याः पूर्वंमनोदत्ताआसंस्ताएवाददात्
ननुताःकंसेनापहृताः सत्यं राजगोष्ठादाच्छिद्यदत्ताइत्याह कंसेनाधर्मतइति ॥ २८ ॥ गायत्रंव्रतंब्रह्मचर्यं ॥ २९ ॥ प्रकर्षेणभवंत्याभ्यामिति
प्रभवौअतएवसर्वज्ञौ स्वतःसिद्धममलंज्ञानंप्रच्छादयंतौ नरचेष्टितैः ॥ ३० ॥ ३१ ॥ यथायथावत् उपसाद्यप्राप्यगुरौवृत्तिमन्यान्ग्राहयंतौ

यातयूयंव्रजंतातवयंचस्नेहदुःखितान् ॥ ज्ञातीन्वोद्रष्टुमेष्यामोविहायसुहृदांसुखं ॥२३॥ एवंसांत्वय्यभग
वान्नंदंसव्रजमच्युतः ॥ वासोलंकारकुप्याद्यैरर्हयामाससादरं ॥ २४ ॥ इत्युक्तस्तौपरिष्वज्यनंदःप्रणयवि
ह्वलः ॥ पूरयन्नश्रुभिर्नेत्रेसहगोपैर्व्रजंययौ॥ ॥ २५ ॥ अथशूरसुतोराजन्पुत्रयोःसमकारयत् ॥ पुरोधसाब्रा
ह्मणैश्चयथावद्विजसंस्कृतिं ॥२६॥ तेभ्योदाद्दक्षिणागावोरुक्ममाल्यःस्वलंकृताः ॥ स्वलंकृतेभ्यःसंपूज्यसव
त्साःक्षौममालिनीः॥ २७॥ याःकृष्णरामजन्मर्क्षेमनोदत्तामहामतिः ॥ ताश्चाददादनुस्मृत्यकंसेनाधर्मतो
हृताः ॥२८॥ ततश्चलब्धसंस्कारौद्विजत्वंप्राप्यसुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद्गायत्रंव्रतमास्थितौ ॥ २९ ॥
प्रभवौसर्वविद्यानांसर्वज्ञौजगदीश्वरौ ॥ नान्यसिद्धामलज्ञानंगूहमानौनरेहितैः॥ ३०॥अथोगुरुकुलेवास
मिच्छंतावुपजग्मतुः॥ काश्यंसांदीपनिंनामह्यवंतिपुरवासिनम् ॥ ३१॥ यथोपसाद्यतौदांतौगुरौवृत्तिमनिं
दिताम् ॥ ग्राहयंतावुपेतौस्मभक्त्यादेवमिवादृतौ ॥ ३२॥ तयोर्द्विजवरस्तुष्टःशुद्धभावानुवृत्तिभिः ॥ प्रोवा
चवेदानखिलान्सांगोपनिषदोगुरुः ॥३३॥ सरहस्यंधनुर्वेदंधर्मान्न्यायपथांस्तथा ॥ तथाचान्वीक्षिकींविद्यां
राजनीतिंचषड्विधाम् ॥३४॥सर्वंनरवरश्रेष्ठौसर्वविद्याप्रवर्त्तकौ ॥ सकृन्निगदमात्रेणतौसंजगृहतुर्नृप ॥३५॥

शिक्षयंतौ गुरुमुपेतौउपगतौ सेवितवंतावित्यर्थः ॥ ३२ ॥ शुद्धोभावोयासुताभिरनुवृत्तिभिः सांगोपनिषदःअंगानिषडंगानिशिक्षादीनितै
रुपनिषद्भिश्चसहितान् ॥ ३३ ॥ सरहस्यंमंत्रदेवताज्ञानसहितं धर्मान्मन्वादिधर्मशास्त्राणि न्यायपथान्मीमांसादीन् आन्वीक्षिकींतर्कविद्यां
षड्विधांसंधिर्विग्रहोयानमासनंद्वैधमाश्रयइतिएवंषड्विधांराजनीतिम् ॥ ३४ ॥ सकृन्निगदमात्रेणएकवारंगुरोरुच्चारणमात्रेण ॥ ३५ ॥

तावतीःचतुःषष्टिकलाः ताश्चशैवतंत्रोक्तालिख्यंते यथा गीतं १ वाद्यं २ नृत्यं ३ नाट्यं ४ आलेख्यं ५ विशेषकच्छेद्यं ६ तंडुलकुसुमबलिप्रकाराः ७ पुष्पास्तरणं ८ दशनवसनांगरागाः ९ मणिभूमिकाकर्म १० शयनरचनं ११ उदकवाद्यं १२ उदकघातः १३ चित्रयोगाः १४ माल्यग्रथनविकल्पाः १५ शेखरापीडयोजनं १६ नेपथ्ययोगाः १७ कर्णपत्रभंगाः १८ सुगंधयुक्तिः १९ भूषणयोजनं २० ऐंद्रजालं २१ कौचुमारयोगाः २२ हस्तलाघवं २३ चित्रशाकापूपभक्षविकारक्रिया २४ पानकरसरागासवयोजनं २५ सूचीकर्म २६ सूत्रक्रीडा २७ प्रहेलिका २८ प्रतिमाला २९ दुर्वचकयोगाः ३० पुस्तकवाचनं ३१ नाटकाख्यायिकादर्शनं ३२ काव्यसमस्यापूरणं ३३ पट्टिकावेत्रबाणविकल्पाः ३४ तर्ककर्माणि ३५ तक्षणं ३६ वास्तुविद्या ३७ रूप्यरत्नपरीक्षा ३८ धातुवादः

अहोरात्रैश्चतुःषष्ट्यासंयत्तौतावतीःकलाः॥गुरुदक्षिणयाचार्यंछंदयामासतुर्नृप ॥३६॥ द्विजस्तयोस्तंमहिमानमद्भुतंसंलक्ष्यराजन्नतिमानुषींमतिं॥संमंत्र्यपत्न्यासमहार्णवेमृतंबालंप्रभासेवरयांबभूवह ॥३७॥तथेत्यथारुह्यमहारथौरथंप्रभासमासाद्यदुरंतविक्रमौ ॥ वेलामुपव्रज्यनिषीदतुःक्षणंसिंधुर्विदित्वाऽर्हणमाहरत्तयोः॥ ३८॥ तमाहभगवानाशुगुरुपुत्रःप्रदीयतां ॥ योऽसाविहत्वयाग्रस्तोबालकोमहतोर्मिणा ॥३९॥ समुद्रउवाच नैवाहार्षमहंदेवदैत्यःपंचजनोमहान् ॥ अंतर्जलचरःकृष्णशंखरूपधरोऽसुरः ॥४०॥ आस्तेतेनाहृतोनूनंतच्छ्रुत्वासत्वरंप्रभुः ॥ जलमाविश्यतंहत्वानापश्यदुदरेऽर्भकं ॥ ४१ ॥ ॥

३९ मणिरागज्ञानं ४० आकरज्ञानं ४१ वृक्षायुर्वेदयोगाः ४२ मेषकुक्कुटलावकयुद्धविधिः ४३ शुकसारिकाप्रलापनं ४४ उत्सादनं ४५ केशमार्जनकौशलं ४६ अक्षरमुष्टिकाकथनं ४७ म्लेच्छितकतर्कविकल्पाः ४८ देशभाषाज्ञानं ४९ पुष्पशकटिकानिर्मितिज्ञानं ५० यंत्रमातृकाधारणमातृका ५१ संवाच्यं ५२ मानसीकाव्यक्रिया ५३ अभिधानकोशः ५४ छंदोज्ञानं ५५ क्रियाविकल्पाः ५६ छलितकयोगाः ५७ वस्त्रगोपनानि ५८ द्यूतविशेषः ५९ आकर्षक्रीडा ६० बालक्रीडनकानि ६१ वैनायिकीनाम् ६२ वैजयिकीनां ६३ वैतालिकीनांचविद्यानांज्ञानम् ६४ इतिचतुःषष्टिकलाःछंदयामासतुःउपलोभितवंतौ ॥ ३६॥ प्रभासेक्षेत्रेमहार्णवेमृतंबालंवरयामास ॥ ३७॥ईश्वराविति विदित्वासमुद्रस्तयोरर्हणमाजहार ॥ ३८॥ ३९॥ पंचजनस्त्वसुरोऽहार्षीत् सचमहान्ममासाध्यइत्यर्थः ॥४०॥४१॥

॥ ४२ ॥ ४३ ॥ सपर्यांपूजाम् सर्वेषांभूतानामाशयाअंतःकरणानितान्यालयोनिवासोयस्यतम् ॥ ४४ ॥ निजंकर्मैवनिबंधनंयस्य तथा
भूतमपिमदाज्ञापुरस्कारेणानयतस्तेनदोषइत्यर्थः ॥ ४५ ॥ ४६ ॥ वत्सेतिप्राधान्येनैकस्यसंबोधनम् गुरोर्निष्क्रयोगुरुदक्षिणा युष्मद्विध
योर्गुरोर्ममकामानांमध्येकोऽनुकामोऽवशिष्यतेनकोपीति ॥ ४७ ॥ हेवीरौस्वगृहंगच्छतम् वांयुवयोः अयातयामानिअगतसाराणि ॥४८ ॥
अनिलवद्रंहोवेगोयस्यतेन पर्जन्योमेघस्तद्वन्निनदोयस्यतेन ॥ ४९ ॥ नष्टमदृष्टंतत्पुनर्लब्धंधनंयाभिस्ताइवेति ॥ ५० ॥ इतिदशमस्कंधेपू

तदंगप्रभवंशंखमादायरथमागमत् ॥ ततःसंयमनींनामयमस्यदयितांपुरीम् ॥ ४२॥ गत्वाजनार्दनःशंखं
प्रदध्मौसहलायुधः ॥ शंखनिर्ह्रादमाकर्ण्यप्रजासंयमनोयमः ॥४३॥ तयोःसपर्यांमहतींचक्रेभक्त्युपबृंहि
ताम् ॥ उवाचावनतःकृष्णंसर्वभूताशयालयम् ॥ ४४॥ लीलामनुष्यहेविष्णोयुवयोःकरवामकिम् ॥ श्रीभ
गवानुवाच गुरुपुत्रमिहानीतंनिजकर्मनिबंधनम् ॥ आनयस्वमहाराजमच्छासनपुरस्कृतः॥४५॥ तथेति
तेनोपानीतंगुरुपुत्रंयदूत्तमौ ॥ दत्वास्वगुरवेभूयोवृणीष्वेतितमूचतुः ॥४६॥सम्यक्संपादितोवत्सभवद्भ्यांगु
रुनिष्क्रयः ॥ कोनुयुष्मद्विधगुरोःकामोनामावशिष्यते ॥४७॥ गच्छतंस्वगृहंवीरौकीर्तिर्वामस्तुपाविनी ॥
छंदांस्ययातयामानिभवंत्विहपरत्रच ॥४८॥ गुरुणैवमनुज्ञातौरथेनानिलरंहसा ॥ आयातौस्वपुरंतातपर्ज
न्यनिनदेनवै॥४९॥समनंदन्प्रजाःसर्वादृष्ट्वारामजनार्दनौ ॥ अपश्यंत्योबह्वहानिनष्टलब्धधनाइव॥५०॥
इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ श्रीशुकउवाच वृष्णी
नांप्रवरोमंत्रीकृष्णस्यदयितःसखा ॥ शिष्योबृहस्पतेःसाक्षादुद्धवोबुद्धिसत्तमः ॥ १ ॥

र्वार्धेटीकायांपंचचत्वारिंशोध्यायः ॥ ४५ ॥ ॥ षट्चत्वारिंशकेघोषमुद्धवंप्रेष्यतद्गिरा ॥ यशोदानंदयोश्चक्रेकृष्णःशोकापनोदनम्॥
॥ १ ॥ कामचारंद्विजातिःसन्परित्यज्यातिसंयतः ॥ गुरोर्ज्ञानमनुप्राप्यसखागोपेष्विपादिशत् ॥ २ ॥ गोपीनांसांत्वनमतिरहस्यंस
न्मंत्रिसाध्यमितितदर्थमुद्धवंविशिनष्टि वृष्णीनामिति बुद्धिसत्तमोबुद्ध्याऽतिश्रेष्ठः ॥ १ ॥

॥ २ ॥ ३ ॥ गोपीनांविशेषतःसंदेशेकारणमाह ताइति मय्येवसंकल्पात्मकंमनोयासांताः अहमेवप्राणोयासांताः मदर्थेत्यक्तादैहिकाः पतिपुत्रादयोयाभिस्ताः ततःकिमतआह येत्यक्तलोकधर्माइति मन्निमित्तंत्यक्तौलोकधर्मौइहामुत्रसुखेतत्साधनानिचयैस्तान्बिभर्मिसं वर्द्धयामिसुखयामीत्यर्थः ॥ ४ ॥ तासांवियोगाधिंदर्शयतिद्वयेन मयिताइति ॥ ५ ॥ विरहेणऔत्कंठ्यंतेनविह्वलाः परवशाः गोकुला न्निर्गमनसमयेशीघ्रमागमिष्यामीतियेप्रत्यागमनसंदेशास्तैः मेमदीयाबल्लव्योगोप्यः मदात्मिकाइति तासामात्मायदिस्वदेहेस्यात्तर्हिविरह तापेनदह्येतैवमयिवर्त्तमानत्वात्कथंचिज्जीवतीतिभावः ॥ ६ ॥ संदेशंभवतीनांवियोगोमेनहिसर्वात्मनाक्वचिदित्यादिकं ॥ ७ ॥ निम्लोच

तमाहभगवान्प्रेष्ठंभक्तमेकांतिनंक्वचित् ॥ गृहीत्वापाणिनापाणिंप्रपन्नार्तिहरोहरिः ॥ २ ॥ गच्छोद्धवव्रजं सौम्यपित्रोर्नौप्रीतिमावह ॥ गोपीनांमद्वियोगाधिंमत्संदेशैर्विमोचय ॥ ३ ॥ तामन्मनस्कामत्प्राणामदर्थे त्यक्तदैहिकाः ॥ येत्यक्तलोकधर्माश्चमदर्थेतान्बिभर्म्यहम् ॥ ४ ॥ मयिताःप्रेयसांप्रेष्ठेदूरस्थेगोकुलस्त्रि यः ॥ स्मरंत्योऽगविमुह्यंतिविरहौत्कंठ्यविह्वलाः ॥ ५॥ धारयंत्यतिकृच्छ्रेणप्रायःप्राणान्कथंचन॥ प्रत्या गमनसंदेशैर्बल्लव्योमेमदात्मिकाः ॥६ ॥ श्रीशुकउवाच इत्युक्तउद्धवोराजन्संदेशंभर्तुराहृतः ॥ आदाय रथमारुह्यप्रययौनंदगोकुलम् ॥७॥ प्राप्तोनंदव्रजंश्रीमान्निम्लोचतिविभावसौ ॥ छन्नयानःप्रविशतांपशू नांखुररेणुभिः ॥ ८॥ वासितार्थेऽभियुध्यद्भिर्नादितंशुष्मिभिर्वृषैः ॥ धावंतीभिश्चवास्राभिरूधोभारैःस्व वत्सकान् ॥ ९ ॥ इतस्ततोविलंघद्भिर्गोवत्सैर्मंडितांसितैः ॥ गोदोहशब्दाभिरवैर्वेणूनांनिःस्वनेनच ॥ १० गायंतीभिश्चकर्माणिशुभानिबलकृष्णयोः ॥ स्वलंकृताभिर्गोपीभिर्गोपैश्चसुविराजितं ॥ ११ ॥

तिअस्तंगच्छतिसति छन्नंयानंयस्येति तदागोपीभिरज्ञातत्वेननंदसंगंलब्धवानितिसूचयति ॥ ८ ॥ व्रजंवर्णयतिपंचभिः वासितार्थइ त्यादिना वासिताःपुष्पवंत्योगावस्तन्निमित्तमभितोयुध्यद्भिःशुष्मिभिर्मत्तैर्वृषैर्नादितं वास्राभिर्धेनुभिः स्ववत्सकान्प्रति ॥ ९ ॥ विलंघद्भि रुत्पतद्भिः गोदोहशब्दैःसहअभितोरवाःमुंचमामुंचनयआनयदेहिगृहाणेत्यादयोयस्मिंस्तं वेणूनांनिःस्वनेनचमंडितं ॥ १० ॥ गायंतीभि र्गोपीभिर्गोपैश्चसुविराजितं ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अग्न्याद्यर्चनान्वितैर्गोपगृहैर्धूपादिभिश्चमनोरमम् ॥ १२ ॥ खंडंसमूहः ॥ १३ ॥ आर्चयत्पूजयामास ॥ १४ ॥ कशिपौशय्यायांसंविष्टम् ॥ ॥ १५ ॥ १६ ॥ साधूनामितिकर्मणिषष्ठी ॥ १७ ॥ गावोगाः गिरिंगोवर्द्धनम् ॥ १८ अप्यायास्यतिआगमिष्यतिकिम् ॥ १९ ॥ श्रीकृष्णोपकारस्मरणादिभिरनुपमानंदेनाभिभूयमानआह दावाग्नेरित्यादिना वाताद्वर्षाते वृषात्सर्पाच्चेति अन्येभ्यश्चदुरतिक्रमेभ्यो

अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः॥धूपदीपैश्चमाल्यैश्चगोपालैर्मनोरमं॥१२॥सर्वतःपुष्पितवनंद्विजालिकुलनादितं॥हंसकारंडवाकीर्णैःपद्मखंडैश्चमंडितं॥१३॥तमागतंसमागम्यकृष्णस्यानुचरंप्रियं॥नंदःप्रीतःपरिष्वज्यवासुदेवधियार्चयत्॥ १४॥ भोजितंपरमान्नेन संविष्टंकशिपौसुखं ॥ गतश्रमंपर्यपृच्छत्पादसंवाहनादिभिः ॥ १५॥ कच्चिदंगमहाभागसखानःशूरनंदनः॥आस्तेकुशल्यपत्याद्यैर्युक्तोमुक्तःसुहृद्वृतः॥१६॥दिष्ट्याकंसोहतःपापःसानुगःस्वेनपाप्मना ॥ साधूनांधर्मशीलानांयदूनांद्वेष्टियःसदा ॥ १७॥ अपिस्मरतिनःकृष्णोमातरंसुहृदःसखीन् ॥ गोपान्व्रजंचात्मनाथंगावोवृंदावनंगिरिम् ॥१९॥ अप्यायास्यतिगोविंदःस्वजनान्सकृदीक्षितुं॥तर्हिद्रक्ष्यामतद्वक्त्रंसुनसंसुस्मितेक्षणं ॥ १८॥ दावाग्नेर्वातवर्षाच्चवृषसर्पाच्चरक्षिताः॥दुरत्ययेभ्योमृत्युभ्यःकृष्णेनसुमहात्मना॥२०॥स्मरतांकृष्णवीर्याणिलीलाऽपांगनिरीक्षितं ॥हसितंभाषितंचांगसर्वानःशिथिलाःक्रियाः ॥ २१ ॥ सरिच्छैलवनोद्देशान्मुकुंदपदभूषितान् ॥ आक्रीडानीक्षमाणानांमनोयातितदात्मतां ॥२२॥ मन्येकृष्णंचरामंचप्राप्ताविहसुरोत्तमौ ॥सुराणांमहदर्थायगर्गस्यवचनंयथा॥२३॥कंसंनागायुतप्राणंमल्लौगजपतिंतथा॥ अवधिष्टांलीलयैवपशूनिवमृगाधिपः ॥ २४ ॥

मृत्युभ्यःश्रीकृष्णेनरक्षिताःस्म ॥ २० ॥ किंच स्मरतामिति लीलयाअपांगेननिरीक्षितम् अंगहेउद्धव ॥ २१ ॥ नकेवलंशिथिलाएव किंतुशनैरुपरमंतीत्याह सरिच्छैलेति सरितश्चशैलाश्चवनोद्देशाश्चतान् आक्रीडान्क्रीडास्थानानि ॥ २२ ॥ सुराणामर्थाय महत् गंभीरं गर्गस्यवचनंयथा ॥ २३ ॥नकेवलंतद्वचनानुसारेणैवव्यवहारसंवादादपीत्याह कंसमिति ॥ २४॥ ॥ ॥

इभराट्यष्टिमिवतालत्रयप्रमाणंधनुर्बभंज ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ अखिलगुरुत्वमेवजनकत्वेनानियंतृत्वेनचाह एताविति रामोमुकुंदश्चेत्येतौविश्वस्यबीजयोनीनिमित्तोपादाने ननुपुरुषप्रधानयोर्बीजयोनित्वंप्रसिद्धमतआह पुरुषःप्रधानमिति पुरुषोंऽशः प्रधानंशक्तिः अतःप्रधानपुरुषावप्येतावेवेत्यर्थः एवंजनकत्वमुक्तम् किंच अन्वीयभूतेषुअनुप्रविश्यभूतानांचतदुपहितस्यविलक्षणस्यनानाभेदस्यज्ञानस्यजीवस्यचईशातेईश्वरौनियंतारौभवतः कुतःपुराणंअनादी अनादित्वात्कारणत्वंततश्चनियंतृत्वमित्यर्थः ॥ ३१ ॥ ननुसृ

तालत्रयंमहासारंधनुर्यष्टिमिवेभराट्॥बभंजैकेनहस्तेनसप्ताहमदधाद्गिरिम्॥२५॥ प्रलंबोधेनुकोऽरिष्टस्तृणावर्त्तबकादयः॥दैत्याःसुरासुरजितोहतायेनेहलीलया॥२६॥ श्रीशुकउवाच इतिसंस्मृत्यसंस्मृत्यनंदःकृष्णानुरक्तधीः ॥अत्युत्कंठोऽभवत्तूष्णींप्रेमप्रसरविह्वलः ॥ २७ ॥ यशोदावर्ण्यमानानिपुत्रस्यचरितानिच॥शृण्वंत्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥२८॥ तयोरित्थंभगवतिकृष्णेनंदयशोदयोः ॥ वीक्ष्यानुरागंपरमंनंदमाहोद्धवोमुदा ॥ २९ ॥ उद्धवउवाच युवांश्लाघ्यतमौनूनंदेहिनामिहमानद॥नारायणेऽखिलगुरौयत्कृतामतिरीदृशी ॥ ३० ॥ एतौहिविश्वस्यचबीजयोनीरामोमुकुंदःपुरुषःप्रधानम्॥अन्वीयभूतेषुविलक्षणस्यज्ञानस्यचेशातइमौपुराणौ ॥ ३१ ॥ यस्मिन्जनःप्राणवियोगकालेक्षणंसमावेश्यमनोविशुद्धम् ॥ निर्हृत्यकर्माशयमाशुयातिपरांगतिंब्रह्ममयोऽर्कवर्णः ॥३२॥ तस्मिन्भवंतावखिलात्महेतौनारायणेकारणमर्त्यमूर्तौ॥भावंविधत्तांनितरांमहात्मन्किंवाऽवशिष्टंयुवयोःसुकृत्यम्॥३३॥आगमिष्यत्यदीर्घेणकालेनव्रजमच्युतः॥प्रियंविधास्यतेपित्रोर्भगवान्सात्वतांपतिः॥३४॥ ॥ ॥ ॥

ष्ट्यादिकर्मावेशान्मनुष्यादिजन्मदर्शनाच्चतस्यान्येभ्यःकोविशेषइत्याशंक्याह यस्मिन्निति द्वाभ्याम् कर्माशयंकर्मवासनांनिर्हृत्यत्यक्त्वाब्रह्ममयःस्वरूपज्ञानवान्अर्कवर्णः शुद्धसत्वमूर्तिःसन्परांगतिंतत्पदंयातीति ॥ ३२ ॥ अखिलस्यात्माचहेतुश्चतस्मिन्कारणेनमनुष्याकृतौमहात्मन्महात्मनिपरिपूर्णंभवंतौभक्तिंकुरुतः अतः कृतकृत्यावित्यर्थः ॥ ३३ ॥ प्रस्तुतमाहआगमिष्यतीति पित्रोर्युवयोः यातयूयंव्रजंतातवयंचस्नेहदुःखितान् ॥ ज्ञातीन्वोद्रष्टुमेष्यामोविधायसुहृदांसुखमितियदाहकृष्णस्तत्सत्यंकरिष्यतीति ॥ ३४ ॥ ॥ ॥

॥ ३५ ॥ कालविलंबनमसहमानौप्रत्याह माखिद्यतामिति हेमहाभागौ अंतिकेइदानीमेवसमीपेवा कुतइत्यतआह अंतर्हदीति तर्हिसर्वैः
किमितिनदृश्यतेतत्राह ज्योतिरिवैधसीति तद्यथामथनंविनानदृश्यतेतथाभक्तिंविनाकृष्णोऽपीतिभावः ॥ ३६ ॥ अहोआस्तामेतत्तस्य
त्विहागमनंस्वस्यातिप्रियान्पित्रादीन्विहायनसंगच्छतइतिमन्येथेतत्राह नह्यस्येति अस्यप्रियादयोनहिसंति तत्रहेतू अमानिनःसमानस्येतिच ॥ ३७ ॥ ३८ ॥ सोऽपिजन्मकर्मादिरहितोऽपिक्रीडाप्रयोजनःसन्साधूनांपरिपालनायसदसन्मिश्रयोनिषुसात्विकराजसतामस
योनिषु यद्वा देवादिमत्स्यादिनृसिंहादियोनिषुकल्पतेआविर्भवतीत्यर्थः ॥ ३९॥ ननुजन्मकर्मादिरहितस्यकुतएतादित्यतआह सत्वमिति

हत्वाकंसंरंगमध्येप्रतीपंसर्वसात्वतां ॥ यदाहवःसमागत्यकृष्णःसत्यंकरोतितत् ॥३५॥ माखिद्यतंमहाभागौद्रक्ष्यथःकृष्णमंतिके ॥ अंतर्हृदिसभूतानामास्तेज्योतिरिवैधसि॥३६॥नह्यस्यास्तिप्रियःकश्चिन्नाप्रियोऽवास्त्यमानिनः ॥ नोत्तमोनाधमोवाऽपिसमानस्यासमोऽपिवा ॥३७॥ नमातानपितातस्यनभार्यानसुतादयः॥नात्मीयोनपरश्चापिनदेहोजन्मएवच॥३८॥नचास्यकर्मवालोकेसदसन्मिश्रयोनिषु॥ क्रीडार्थंसोपिसाधूनांपरित्राणायकल्पते ॥३९॥ सत्वंरजस्तमइतिभजतेनिर्गुणोगुणान्॥ क्रीडन्नतीतोऽत्रगुणैःसृजत्यवतिहंत्यजः॥४०॥यथाभ्रमरिकादृष्ट्याभ्राम्यतीवमहीयते ॥ चित्तेकर्त्तरितत्रात्माकर्त्तेवाहंधियास्मृतः॥४१॥ युवयोरेवनैवायमात्मजोभगवान्हरिः ॥ सर्वेषामात्मजोह्यात्मापितामातासईश्वरः ॥ ४२ ॥ ॥

क्रीडामतीतोऽपिक्रीडन् तथाऽपिमायागुणैर्घटतइत्यर्थः ॥ ४० ॥ अत्राविद्योपाधेर्जीवस्यकर्तृत्वंदृष्टांतीकुर्वंस्तस्याविद्ययैवकर्तृत्वमिति
सदृष्टांतमाह यथेति भ्रमरिकापरिभ्रमणंतयोपलक्षितयादृष्ट्याभूरपिभ्राम्यतीतियथाप्रतीयतेएवंचित्तेकर्त्तरिसतितत्राविक्षिप्तेचित्तेऽहंधिया
आत्माध्यासेनआत्माकर्त्तास्मृतोयथातद्वदिति ॥४१॥ किंच युवयोरेवनायमात्मजःकिंतुसर्वेषामपितत्रापिनात्मजएवकिंतुशत्रुमित्रादिरूपोऽपीतिसर्वात्मत्वनिरूपणेनमोहनिवृत्तयेसंबंधमनैकांतिकंकरोति युवयोरेवेतिद्वाभ्यां ॥ ४२ ॥ ॥ ॥

अच्युताद्विनानितरांतत्त्वतोवाच्यंनिर्वचनार्हंवस्तुनास्तीति ॥४३॥ दीपान्निरूप्यप्रज्वाल्य वास्तून्देहल्यादीन् ॥४४॥ मणिभिःकांच्या दिषुस्थितैरज्जूर्विकर्षत्सुभुजेषुकंकणानांस्रजोयासांताः चलंतोनितंबाःस्तनाहाराश्चयासांताः कुंडलैस्त्विष्यंतःस्फुरंतःकपोलायासांताः अरुणानिकुंकुमानियेषुतानिआननानियासांताः एवंताश्चताश्च ॥४५॥४६॥४७॥ तदाव्रजौकसोगोप्यःसक्रोधमाहुः अक्रूरइति अर्थंसा धितवानित्यर्थसाधकःतदाहुः येननीतइति ॥ ४८ ॥ कंसंघातयित्वापुनःकिमर्थमागतइत्याशंक्यस्वयमेवकारणंसंभावयंति किमिति

दृष्टंश्रुतंभूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकंच ॥ विनाऽच्युताद्वस्तुतरांनवाच्यंसएवसर्वंपरमार्थभू तः ॥४३॥ एवंनिशासाब्रुवतोर्व्यतीतानंदस्यकृष्णानुचरस्यराजन्॥गोप्यःसमुत्थायनिरूप्यदीपान्वास्तू न्समभ्यर्च्यदधीन्यमंथन् ॥४४॥ तादीपदीप्तैर्मणिभिर्विरेजूरज्जूर्विकर्षद्भुजकंकणस्रजः॥चलन्नितंबस्तनहा रकुंडलत्विष्यत्कपोलारुणकुंकुमाननाः ॥४५॥ उद्गायतीनामरविंदलोचनंव्रजांगनानांदिवमस्पृशद्ध्वनिः॥ दध्नश्चनिर्मंथनशब्दमिश्रितोनिरस्यतेयेनदिशाममंगलम् ॥ ४६॥ भगवत्युदितेसूर्येव्रजद्वारिव्रजौकसः॥ दृष्ट्वारथंशातकौंभंकस्यायमितिचाब्रुवन् ॥४७॥ अक्रूरआगतःकिंवायःकंसस्यार्थसाधकः॥येननीतोमधुपु रींकृष्णःकमललोचनः ॥ ४८ ॥ किंसाधयिष्यत्यस्माभिर्भर्तुःप्रीतस्यनिष्कृतिं ॥ इतिस्त्रीणांवदंतीनामुद्ध वोऽगात्कृताह्निकः ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेनंदशोकापनयनंनामषट्चत्वारिं शोऽध्यायः॥ ४६ ॥ ॥ श्रीशुकउवाच तंवीक्ष्यकृष्णानुचरंव्रजस्त्रियःप्रलंबबाहुंनवकंजलोचनं ॥ पी तांबरंपुष्करमालिनंलसन्मुखारविंदंपरिमृष्टकुंडलं ॥ १ ॥ ॥ ॥ ॥

तदासाधितेनकार्येणप्रीतस्यतुष्टस्यभर्त्तुः पाठांतरेप्रेतस्यमृतस्यकंसस्यनिष्कृतिमौर्ध्वदेहिकमस्माभिःकृत्वासाधयिष्यतेकिम् अस्मन्मांसैः पिंडान्कृत्वादास्यतीत्यर्थः इतिएवंवदंतीनांस्त्रीणांततस्तस्मिन्नवसरेकृतान्हिकःकृतस्नानादिनियमउद्धवआगतइति ॥४९॥ इतिदशमस्कं धेपू०टीकायांषट्चत्वारिंशोध्यायः॥ ४६ ॥ सप्तचत्वारिंशकेथकृष्णादेशेनगोपिकाः॥ बोधयित्वोद्धवस्तत्त्वमनुज्ञाप्यागमत्पुरीं ॥ १ ॥ १ ॥

अपीच्यंसुंदरंदर्शनंयस्यसः अच्युतस्येववेषोभूषणानिचयस्यसः कोऽयंकुतोवाकस्यचेतिवदंत्यस्तंपरिवव्रुः ॥ २ ॥ ३ ॥ पार्षदंसेवकम् ॥ ४ ॥ पित्रोःप्रियचिकीर्षयेत्यत्रहेतुःस्नेहानुबंधइति ॥ ५ ॥ अन्यथागोत्रजेतस्येत्यत्रहेतुः अन्येष्विति अर्थकृताकार्यनिमित्ता विडंबनमनु करणमात्रंनतुतात्विकीमैत्री पुंभिरितिदृष्टांतः ॥ ६ ॥ अस्यैवान्यार्थनिदर्शनैःप्रपंचः निःस्वमित्यादिना दत्तादक्षिणायेनतंयाज्यम् ॥ ७ ॥

शुचिस्मिताःकोऽयमपीच्यदर्शनःकुतश्चकस्याच्युतवेषभूषणः ॥ इतिस्मसर्वाःपरिवव्रुरुत्सुकास्तमुत्तमश्लोकपदांबुजाश्रयं ॥ २ ॥ तंप्रश्रयेणावनताःसुसत्कृतंसव्रीडहासेक्षणसूनृतादिभिः ॥ रहस्यपृच्छन्नुपविष्टमासनेविज्ञायसंदेशहरंरमापतेः ॥ ३ ॥ जानीमस्त्वांयदुपतेःपार्षदंसमुपागतं ॥ भर्त्रेहप्रेषितःपित्रोर्भवान्प्रियचिकीर्षया ॥ ४ ॥ अन्यथागोत्रजेतस्यस्मरणीयंनचक्ष्महे ॥ स्नेहानुबंधोबंधूनांमुनेरपिसुदुस्त्यजः ॥ ५ ॥ अन्येष्वर्थकृतामैत्रीयावदर्थविडंबनं ॥ पुंभिःस्त्रीषुकृतायद्वत्सुमनस्स्विवषट्पदैः ॥ ६ ॥ निःस्वंत्यजंतिगणिकाअकल्पंनृपतिंप्रजाः ॥ अधीतविद्याआचार्यमृत्विजोदत्तदक्षिणं ॥ ७ ॥ खगावीतफलंवृक्षंभुक्त्वाचातिथयोगृहं ॥ दग्धंमृगास्तथाऽरण्यंजारोभुक्त्वारतांस्त्रियं ॥ ८ ॥ इतिगोप्योहिगोविंदेगतवाक्कायमानसाः ॥ कृष्णदूतेव्रजंयातेउद्धवेत्यक्तलौकिकाः ॥ ९ ॥ गायंत्यःप्रियकर्माणिरुदंत्यश्चगतह्रियः ॥ तस्यसंस्मृत्यसंस्मृत्ययानिकैशोरबाल्ययोः ॥ १० ॥ काचिन्मधुकरंदृष्ट्वाध्यायंतीकृष्णसंगमम् ॥ प्रियप्रस्थापितंदूतंकल्पयित्वेदमब्रवीत् ॥ ११ ॥ ॥ ॥ ॥

पक्षिणःविगतफलंवृक्षम् रतामनुरक्तामतृप्तामित्यर्थः ॥ ८ ॥ त्यक्तलौकिकास्त्यक्तलोकव्यवहाराः ॥ ९ ॥ प्रियस्यकर्माणिगायंत्यस्तथा तस्यबाल्यकैशोरयोर्यानिकर्माणितानिसंस्मृत्यसंस्मृत्यगतह्रियः सत्योरुदंत्यश्चतमपृच्छन्नितिपूर्वक्रिययैवसंबंधः ॥ १० ॥ प्रियेणश्रीकृष्णेनमांप्रसादयितुंप्रस्थापितोऽयंदूतइतिकल्पयित्वाऽब्रवीत् यद्वा तस्मिन्नप्युद्धवेप्रियप्रस्थापितंदूतमितिदूतदृष्टिंकृत्वामधुकरापदेशेनो द्धवमेवाब्रवीदित्यर्थः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हेमधुपकितवस्यधूर्त्तस्यबंधोनोऽस्माकमंघ्रिंमास्पृश मामांनमस्कारेणप्रार्थयस्वेत्यर्थः तत्किमित्यपेक्षायांकृष्णवर्णस्यतस्यश्मश्रूणांलोहितत्वे कारणमुत्प्रेक्षमाणाऽह सपत्न्याः कुचाभ्यांलुलितासंमर्दितायाकृष्णस्यवनमालाअतएवतस्याः कुंकुमंयेषुतैः श्मश्रुभिरुपलक्षितःकिंतुता सामेवमानिनीनांप्रसादंमधुपतिर्वहतुकिमस्मत्प्रसादनेनतस्य यदुसदसिविडंब्यमुपहासास्पदम् कुतः यस्यदूतस्त्वमीदृक्ईदृशः ॥ १२ ॥ ननुकिमित्येवंतमवजानीथकिंवस्तेनापकृतमतआह सकृदिति भवादृक्त्वादृशोदुर्मनाःसुमनसःकुसुमानियथात्यजतितद्वत् अहोबतअ विज्ञस्यतस्यपादपद्मंश्रीःकथंसेवते विदितंमयेत्याह अपीति बतेतिखेदे उत्तमश्लोकस्यजल्पैर्मिथ्याकथाभिःप्रलापैःप्रायोहृतचेताः वयं तुनलक्ष्मीवदविचक्षणाइतिभावः ॥१३॥ झंकारान्बहुधाकुर्वंतमस्मत्प्रसादलाभायकृष्णंगायतीतिमत्वाऽह किमिहेतिपुराणंपुरातनंबहुशोऽ

गोप्युवाच मधुपकितवबंधोमास्पृशांघ्रिंसपत्न्याःकुचविलुलितमालाकुंकुमश्मश्रुभिर्नः ॥ वहतुमधुपति स्तन्मानिनीनांप्रसादंयदुसदसिविडंब्यंयस्यदूतस्त्वमीदृक् ॥१२॥ सकृदधरसुधांस्वांमोहिनींपाययित्वासु मनसइवसद्यस्तत्यजेऽस्मान्भवादृक् ॥ परिचरतिकथंतत्पादपद्मंतुपद्माह्यपिबतहृतचेताउत्तमश्लोकजल्पैः ॥१३॥ किमिहबहुषडंघ्रेगायसित्वंयदूनामधिपतिमगृहाणामग्रतोनःपुराणं ॥ विजयसखसखीनांगीयतां तत्प्रसंगःक्षपितकुचरुजस्तेकल्पयंतीष्टमिष्टाः ॥१४॥ दिविभुविचरसायांकाःस्त्रियस्तद्दुरापाःकपटरुचिरहा सभ्रूविजृंभस्ययाःस्युः ॥ चरणरजउपास्तेयस्यभूतिर्वयंकाअपिचकृपणपक्षेत्युत्तमश्लोकशब्दः ॥ १५ ॥

नुभूतम् विजयसखस्यश्रीकृष्णस्यसांप्रतंयाःसख्यस्तासामग्रतस्तत्प्रसंगोगीयताम् इष्टाःकृष्णस्यप्रियाः तेनपूजिताइतिवा तेनालिंगितेनक्ष पिताकुचरुक्यासांतास्तवेष्टमपेक्षितंदास्यंतीति ॥१४॥ भोमातमैवंवोचस्त्वामनुस्मृत्यानंगविक्लवस्त्वांप्रसादयितुंमामादिष्टवानित्यतआह दिवीति दिविभुविरसातलेचयाःस्त्रियःस्युस्ताःकानामदुरापानकाश्चन तदित्यव्ययं तस्येत्यर्थः कपटेनरुचिरेणहासेनभ्रूविजृंभोयस्यत स्य हेकपटइतिवा किंच यस्यचरणरजःश्रीःसेवतेतत्रवयंकाः अपिच यद्यप्येवंतथाऽपिकृपणपक्षेकृपणानुकंपिनिपुंसिउत्तमश्लोकश ब्दोभवतीतितथाकथनीयंत्वयेतिभावः ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पादमूलेप्रविशंतंक्षमापयिष्यंतमिवमत्वाऽह शिरसिन्यस्तंपादंविसृज तथाप्यमुंचंतमाह वेद्मीति मुकुंदादभ्येत्यततःशिक्षित्वेत्यर्थः दौत्यैर्दू तकर्मभिश्चाटुकारैःप्रियोक्तिरचनाभिरनुनयविदुषःप्रार्थनाचतुरस्यतेतवसर्वमहंवेद्मि मुकुंदवत्त्वमप्यविश्वसनीयइतिभावः ननुतेनकिमप राद्धंतत्राह स्वकृतइति स्वकृतेकृष्णकृतेतदर्थमेवविसृष्टाअपत्यपत्यन्यलोकाः अपत्यानिपतयश्चेतीहलोकाअन्यलोकाधर्मसाध्याश्चयाभि स्तानःअकृतचेताअसंयतचित्तोयोव्यसृजत्अस्मिन्किंनुसंधातव्यमिति ॥ १६ ॥ किंचकृष्णस्यपूर्वाणिकर्माण्यनुसंदधानाबिभेम्यहमस्मा दित्याह मृगयुरिवेति मृगयुर्लुब्धकइवयःकपींद्रंवालिनंविव्यधेअविध्यत् लुब्धधर्माक्रौर्यवान् अलुब्धधर्मेतिवा लुब्धकोहितन्मांसमत्तुका मोविध्यत्ययंतुनतथाऽतोवृथाकठिनइत्यर्थः तथास्त्रियंशूर्पणखांस्त्रीजितःसीतापरतंत्रःकामएवयानंप्राप्तिसाधनंयस्यास्तांविरूपांछिन्नकर्ण नासिकामकरोद्दाशरथिरूपेण तथाबलिमपितद्दत्तंबलिमत्त्वाभक्षयित्वाध्वांक्षवत्काकवदवेष्टयत्बबंधवामनरूपेणबलिमत्त्वाऽधोऽक्षिपत्वि ष्टपादितिपाठेबलिपूजांगृहीत्वाविष्टपात्स्वर्गादधोऽक्षिपदित्यर्थः तत्तस्मादसितस्यकृष्णस्यसख्यैरलम् एवंचेत्किमितितंनित्यंगायथतत्राह

विसृजशिरसिपादंवेद्म्यहंचाटुकारैरनुनयविदुषस्तेऽभ्येत्यदौत्यैर्मुकुंदात् ॥ स्वकृतइहविसृष्टापत्यपत्यन्यलोकाव्यसृजदकृतचेताःकिंनुसंधेयमस्मिन् ॥ १६ ॥ मृगयुरिवकपींद्रंविव्यधेलुब्धधर्मास्त्रियमकृतविरूपांस्त्रीजितःकामयानां ॥ बलिमपिबलिमत्त्वाऽवेष्टयत्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्माविनष्टाः ॥ सपदिगृहकुटुंबंदीनमुत्सृज्यदीनाबहवइहविहंगाभिक्षुचर्यांचरंति ॥ १८ ॥ ॥ ॥ ॥

दुस्त्यजस्तुतस्यकथारूपोऽर्थइति ॥ १७ ॥ अपिच जानीमएवंतत्कथाऽपित्रिवर्गलतामूलोन्मूलनीतितथाऽपिनत्यक्तुंशक्नुमःकिंकुर्मइत्याह यदनुचरितेति यस्यानुचरितंलीलातदेवकर्णपीयूषंतस्यविप्रुट्कणिकातस्याःसकृददनंसेवनंतेनविधूतानिरस्ताद्वंद्वधर्मारागादयोयेषांतेअत एवविनष्टाअसत्तुल्याःदीनंदुःखितंगृहकुटुंबंविहायदीनाभोगहीनाविहंगाअपिभिक्षुचर्यांप्राणवृत्तिमात्रंचरंति अतस्त्याज्यस्तथाऽपित्यक्तुंन शक्नुमइतिनिंदापरत्वेऽयंतावत्श्रौतोऽर्थः दुस्त्यजत्वेऽपिपारमार्थिकोऽयमर्थः विधूतद्वंद्वधर्माइत्यंतःसमासःपूर्ववत् ततस्तेचतेअविनष्टाश्चे तिसमासः इतरेपुनर्द्वंद्वधर्माणोविनष्टाएव सपदितत्क्षणमेवदीनंतुच्छंगृहसहितंकुटुंबंविहायदीनाइवअकिंचनाः धीराइतिवापाठः बहवो विहंगाहंसाइवसारासारविवेकचतुराभिक्षुचर्यांपारमहंस्यंचरंति तस्मादेवंपरमपुरुषार्थरूपत्वाद्दुस्त्यजएवतत्कथार्थइति ॥ १८ ॥

ननुंकिमेवंब्रूषेपूर्वंत्वयैवसाकंरहसिकिमेवंनावोचदित्यतआह वयमिति हेउपमंत्रिन्दूत आस्तामियंवार्त्ता यतः कुलिकस्यमृगयोः रुतंगीत
मज्ञायथाकृतंसत्यमितिश्रद्दधानाः कृष्णस्यहरिणस्यवध्वोभार्याहरिण्यः शरैःक्षताः सत्योरुजोदद्दशुः एवंजिह्मस्यकुटिलस्यतस्यव्याहृत
मृतमिवश्रद्दधानाःस्पृहयंत्योवयमसकृदेतद्ददृशिम किंतत् तस्यनखैःस्पर्शस्तेनतीव्रःस्मरस्तेनरुजःपीडाः तस्मादन्यावार्त्ताभण्यतांकथ्यता
मिति ॥ १९ ॥ परावृत्त्यगत्वापुनरागतंप्रत्याह प्रियसखेति हेप्रियस्यसखेप्रेयसाकृष्णेनपुनःप्रेषितःकिंत्वमागतोऽसि अंगहेदूतमेमाननीयः
पूज्योऽसि अतोभवान्किमनुरुंधेप्राप्तुमिच्छतीत्यर्थः तद्वरयवृणीष्व संमानितंप्रत्याह नयसीति इहसतीःअस्मान्दुस्त्यजंद्वंद्वंमिथुनीभावो

वयमृतमिवजिह्मव्याहृतंश्रद्दधानाः कुलिकरुतमिवाज्ञाःकृष्णवध्वोहरिण्यः ॥ ददृशुरसकृदेतत्तन्नखस्पर्श
तीव्रस्मररुजउपमंत्रिन्भण्यतामन्यवार्त्ता ॥ १९ ॥ प्रियसखपुनरागाःप्रेयसाप्रेषितःकिंवरयकिमनुरुंधे
माननीयोऽसिमेंऽग ॥ नयसिकथमिहास्मान्दुस्त्यजद्वंद्वपार्श्वंसततमुरसिसौम्यश्रीर्वधूःसाकमास्ते ॥
॥ २० ॥ अपिबतमधुपुर्यामार्यपुत्रोऽधुनास्तेस्मरतिसपितृगेहान्सौम्यबंधूंश्चगोपान् ॥ क्वचिदपिसक
थानःकिंकरीणांगृणीतेभुजमगुरुसुगंधंमूर्ध्न्यधास्यत्कदानु ॥ २१ ॥ श्रीशुकउवाच अथोद्धवोनि
शम्यैवंकृष्णदर्शनलालसाः ॥ सांत्वयन्प्रियसंदेशैर्गोपीरिदमभाषत ॥ २२ ॥ उद्धवउवाच अहोयूयं
स्मपूर्णार्थाभवत्योलोकपूजिताः ॥ वासुदेवेभगवतियासामित्यर्पितंमनः ॥ २३ ॥ दानव्रततपोहोमजप
स्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैःकृष्णेभक्तिर्हिसाध्यते ॥ २४ ॥ भगवत्युत्तमश्लोकेभवतीभिर
नुत्तमा ॥ भक्तिःप्रवर्त्तितादिष्ट्यामुनीनामपिदुर्लभा ॥ २५ ॥

यस्यतस्यपार्श्वंसमीपंकथंनयसिनेष्यसि तथाहि हेसौम्यश्रीर्नामवधूःसाकंसहैवसततमास्ते तत्रापिउरसिवक्षस्येव ॥ २० ॥ तेनसंमंत्रिता
सतीब्रूते अपिबतेति बतहर्षे हेसौम्यगुरुकुलादागत्यआर्यपुत्रःकृष्णःअधुनाकिंमधुपुर्यांवर्त्तते कदाचिदपिनोऽस्माकंवार्त्ताः किंब्रूते अगुरु
वत्सुगंधंभुजंनोमूर्ध्निकदानुधास्यतीति ॥ २१ ॥ श्रीकृष्णदर्शनोत्सुकागोपीः प्रियस्यसंदेशैः सांत्वयन्प्रथमंतावदिदमभाषत ॥ २२ ॥
तदाहषड्भिः अहोइति स्मनूनंयूयंपूर्णार्थाःकृतार्थाः ॥ २३ ॥ श्रेयोभिःश्रेयःसाधनैः ॥ २४ ॥ अनुत्तमाअतिश्रेष्ठा ॥ २५ ॥ ॥

अवृणीतवृतवत्यः ॥२६॥ सर्वात्मभावः एकांतभक्तिः अधिकृतः प्राप्तः भगवत्प्रेमसुखप्रदर्शनेनममैवमहाननुग्रहः कृतइति ॥ २७ ॥ भर्तुःकृष्ण स्यरहस्करोरहस्यकार्यकर्त्ता ॥ २८ ॥ भवतीनांमेमयासहवियोगोनास्ति कुतः सर्वात्मनासर्वस्योपादानकारणेन अतएवसर्वेषुमनआदिका र्येष्वहमनुगतत्वेनस्थितइतिसदृष्टांतमाह यथेति भूतेषुचराचरेषुमहाभूतानि वाय्वग्निः वायुसाहितोऽग्निःवायुश्चाग्निश्चेत्यर्थः ॥ २९ ॥ तथाऽ हंचेति मनआदीनिकार्याणिगुणाःकारणंतेषामाश्रयत्वेनानुगतइत्यर्थः ननुकारणत्वेचसर्वानुगतत्वेचकार्यकारणभेदःस्यादतआह आत्म न्येवेति ननुनित्यसिद्धस्यकुतःसृष्ट्यादिरूपताअतआह भूतेंद्रियगुणात्मना बुद्धींद्रियगुणाश्रयइतिवापाठः तद्रूपेणआश्रयइति ॥ ३० ॥

दिष्ट्यापुत्रान्पतीन्देहान्स्वजनान्भवनानिच ॥ हित्वाऽवृणीतयूयंयत्कृष्णाख्यंपुरुषंपरम् ॥२६॥ सर्वा त्मभावोऽधिकृतोभवतीनामधोक्षजे ॥ विरहेणमहाभागामहान्मेऽनुग्रहःकृतः ॥ २७ ॥ श्रूयतांप्रियसंदे शोभवतीनांसुखावहः ॥ यमादायागतोभद्राअहंभर्तूरहस्करः ॥२८॥ श्रीभगवानुवाच भवतीनांवियो गोमेनहिसर्वात्मनाक्वचित् ॥ यथाभूतानिभूतेषुखंवाय्वग्निर्जलंमही ॥ २९ ॥ तथाहंचमनःप्राणभूतेंद्रियगु णात्मना ॥ आत्मन्येवात्मनात्मानंसृजेहन्म्यनुपालये ॥ ३० ॥ आत्ममायाऽनुभावेनभूतेंद्रियगुणात्मना ॥३१॥आत्माज्ञानमयःशुद्धोव्यतिरिक्तोगुणान्वयः॥ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३२ ॥ येनें द्रियार्थान्ध्यायेतमृषास्वप्नवदुत्थितः ॥ तन्निरुंध्यादिंद्रियाणिविनिद्रःप्रत्यपद्यत ॥ ३३ ॥ ॥

तदेवाह आत्ममायाऽनुभावेनेति ॥ ३१ ॥ नन्वात्मनोभूतादिरूपत्वेतद्दोषप्रसंगःस्यात्तत्राह आत्मेति आत्मातुशुद्धः कुतः अगुणान्वयः नगुणेष्वन्वेतीतितथा तत्कुतः व्यतिरिक्तः तदपिकुतः ज्ञानमयोज्ञानस्वरूपः नन्वहंप्रत्ययेस्वसंवेद्यमेवात्मनोनानावस्थावत्त्वमितिकुतः शुद्धतेतितत्राह सुषुप्तीति मायाकार्यमनोवृत्तिभिर्विश्वतैजसप्राज्ञरूपेणप्रतीयते नस्वतइत्यर्थः॥३२॥कुतःमनोनिरोधेतदभावादितिव्यतिरेकं दर्शयितुंमनोनिरोधंविधत्ते येनेति उत्थितःपुमान्यथामिथ्याभूतमेवस्वप्नंध्यायतिएवंबाधितानपींद्रियार्थान्शब्दादीन्येनमनसाध्यायेतच्चिं तयेत् ध्यायंश्चयेनेंद्रियाणिप्रत्यपद्यतप्राप तन्मनोविनिद्रःअनलसःसन्निरुंध्यान्नियच्छेदिति ॥ ३३ ॥ ॥ ॥

तावताचकृतार्थोभवतीत्याह एतदंतइति एषमनोनिरोधःअंतःसमाप्तिःफलंयस्यसः समाम्नायोवेदःसतत्रपर्यवस्यतीत्यर्थः योगोऽष्टांगः सांख्यमात्मानात्मविवेकः त्यागःसंन्यासः तपःस्वधर्मः दमइंद्रियदमनम्मार्गभेदेऽप्येकत्रपर्यवसानेदृष्टांतः समुद्रांताआपगानद्यइवेति ॥ ॥ ३४ ॥ ननुकिमन्यानिवास्मानात्मविद्ययाप्रलोभयासिवयंतुसर्वसुंदरसकलगुणगणालंकृतेनत्वयाविरहंनैवसहामइतिचेदतआहयत्त्वहमिति दृशांदूरेयद्वर्तेतन्मदनुध्यानार्थं तच्चध्यानंमनसःसन्निकर्षार्थमिति ॥ ३५ ॥ एतदुपपादयतित्रयेण यथादूरचरइति ॥ ३६ ॥ ३७ ॥

एतदंतःसमाम्नायोयोगःसांख्यंमनीषिणाम् ॥ त्यागस्तपोदमःसत्यंसमुद्रांताइवापगाः ॥३४॥ यत्त्वहंभवतीनांवैदूरेवर्त्तेप्रियोदृशां ॥ मनसःसन्निकर्षार्थंमदनुध्यानकाम्यया ॥३५॥ यथादूरचरेप्रेष्ठेमनआविश्यवर्त्तते ॥ स्त्रीणांचनतथाचेतःसन्निकृष्टेऽक्षगोचरे ॥३६॥ मय्यावेश्यमनःकृत्स्नंविमुक्ताशेषवृत्तियत् ॥ अनुस्मरंत्योमांनित्यमचिरान्मामुपैष्यथ ॥३७॥ यामयाक्रीडताराव्यांवनेऽस्मिन्व्रजआस्थिताः ॥ अलब्धरासाः कल्याण्योमापुर्मद्वीर्यचिंतया ॥३८॥ श्रीशुकउवाच एवंप्रियतमादिष्टमाकर्ण्यव्रजयोषितः ॥ ताऊचुरुद्धवंप्रीतास्तत्संदेशागतस्मृतीः ॥ ३९॥ गोप्यऊचुः दिष्ट्याऽहितोहतःकंसोयदूनांसानुगोऽघकृत् ॥ दिष्ट्याप्तैर्लब्धसर्वार्थैःकुशल्यास्तेऽच्युतोऽधुना ॥४०॥ कच्चिद्गदाग्रजःसौम्यकरोतिपुरयोषिताम् ॥ प्रीतिंनःस्निग्धसव्रीडहासोदारेक्षणार्चितः ॥४१॥ कथंरतिविशेषज्ञःप्रियश्चवरयोषिताम् ॥ नानुबध्येततद्वाक्यैर्विभ्रमैश्चानुपूजितः ॥ ४२ ॥ अपिस्मरतिनःसाधोगोविंदःप्रस्तुतेक्वचित् ॥ गोष्ठीमध्येपुरस्त्रीणांग्राम्याःस्वैरकथांतरे ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उपैष्यथेतिमाधुर्यमात्रमितिचेदतआह याइति हेकल्याण्यःस्वभर्तृभिःप्रतिबद्धायावनेक्रीडतामयासहअलब्धक्रीडास्तास्तदैवमामापुःप्रापुः॥ ॥ ३८ ॥ तस्यसंदेशेनआगतास्मृतिर्यासांताः प्रथमार्थेद्वितीया ॥३९॥ यदूनामहितःशत्रुःअघकृत्दुःखदः दिष्ट्येत्यानंदे आप्तैःप्राप्तैःहितैर्वासह ॥ ४० ॥ अन्याऊचुः कच्चिदिति नोऽस्माकंकरणीयांप्रीतिंकच्चित्पुरयोषितांकरोति स्निग्धंचतत्सव्रीडहासेनोदारमीक्षणंतेनार्चितस्ताभिरस्माभिर्वा ॥ ४१ ॥ अन्याऊचुः कथमिति तासांवाक्यैर्विभ्रमैश्चानुपूजितः ॥ ४२ ॥ पुनरन्याऊचुः किमनयाचिंतयाऽस्मान्क्वचित्प्रस्तुतेप्रस्तावेस्मरतिकिम् ग्राम्याअविदग्धाः ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥

अन्याऊचुः ताःकिमिति कुमुदैःकुंदैःशशांकेनचरम्येवृंदावनेक्वणंतिचरणनूपुराणियस्यांतस्यांरासगोष्ठ्यामस्माभिःप्रियाभिरीडितामनोज्ञाःकथायस्यसःतदायासुनिशासुरेमेताःकदाचित्किंनुस्मरतित्रानवेति ॥ ४४ ॥ स्वनिमित्तेनशोकेनतप्ताःनःअस्मान्गात्रैःकरस्पर्शादिभिःसंजीवयन्किंनुइहैष्यतीति॥४५॥अन्याऊचुः कस्मादिति अनन्यगतित्वेनपूर्वमत्रावसत्संप्रतिमहदैश्वर्यंप्राप्तःकस्मादिहागमिष्यतीति ॥४६॥ अन्यास्तुपरमार्थमूचुः किमस्माभिरिति वनचरीभिरस्माभिरन्याभिर्वाराजकन्याभिर्महात्मनोधीरस्य किंच श्रीपतेः तदपि

ताःकिंनिशाःस्मरतियासुतदाप्रियाभिर्वृंदावनेकुमुदकुंदशशांकरम्ये ॥ रेमेक्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथःकदाचित् ॥४४॥ अप्येष्यतीहदाशार्हस्तप्ताःस्वकृतयाशुचा ॥ संजीवयन्नुनोगात्रैर्यथेंद्रोवनमंबुदैः॥४५॥कस्मात्कृष्णइहायातिप्राप्तराज्योहताहितः॥ नरेंद्रकन्याउद्वाह्यप्रीतःसर्वसुहृद्वृतः ॥ ४६ ॥ किमस्माभिर्वनौकोभिरन्याभिर्वामहात्मनः॥ श्रीपतेराप्तकामस्यक्रियेतार्थःकृतात्मनः ॥ ४७॥ परंसौख्यंहिनैराश्यंस्वैरिण्यप्याहपिंगला॥तज्जानतीनांनःकृष्णेतथाऽप्याशादुरत्यया॥४८॥कउत्सहेतसंत्यक्तुमुत्तमश्लोकसंविदं ॥ अनिच्छतोऽपियस्यश्रीरंगान्नच्यवतेक्वचित् ॥ ४९ ॥ सरिच्छैलवनोद्देशागावोवेणुरवाइमे ॥ संकर्षणसहायेनकृष्णेनाचरिताःप्रभो ॥५०॥ पुनःपुनःस्मारयंतिनंदगोपसुतंबत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुंनैवशक्नुमः ॥५१॥ गत्यालतितयोदारहासलीलाऽवलोकनैः ॥ माध्व्यागिराहृतधियःकथंतद्विस्मरामहे॥५२॥हेनाथहेरमानाथव्रजनाथार्त्तिनाशन ॥ मग्नमुद्धरगोविंदगोकुलंवृजिनार्णवे ॥५३॥ श्रीशुकउवाच ततस्ताःकृष्णसंदेशैर्व्यपेतविरहज्वराः ॥ उद्धवंपूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजम् ॥ ५४ ॥

आस्तां स्वतएवाप्तकामस्यातएवकृतात्मनःपूर्णस्यकिंकोऽप्यर्थःक्रियेतनकश्चिदिति ॥४७॥ यतोऽघटमानायाकृष्णस्यसंगतिःसैवास्मान्व्याकुलयति अतोनैराश्यमेवपरमंसुखं तच्चातिदुष्करमित्याहुः परंसौख्यमिति स्वैरिणीकामचारिणी ॥ ४८ ॥ संविदमेकांतवार्त्ताम् ॥ ॥ ४९ ॥ किंच तद्विस्मृतौनतावद्दुःखमस्तिसाऽपिनास्माकंभवतीत्याहुः सरिच्छैलेतित्रिभिः आचरिताःसेविताः ॥ ५० ॥ ५१ ॥ हेउद्धवकथंविस्मरामेति ॥ ५२ ॥ ५३ ॥ श्रीकृष्णमधोक्षजंज्ञात्वातंचस्वात्मानंज्ञात्वा ॥ ५४ ॥ ॥ ॥ ॥

विनुदन्अपनयन् ॥ ५५॥ ५६ ॥ सरिद्वनगिरिदर्यादिषुप्रत्येकंश्रीकृष्णंलीलासंप्रश्नादिभिःसंस्मारयन्रेमे ॥ ५७ ॥ कृष्णावेशेनात्मनो मनसोविक्लवंवैक्लव्यम् ताःगोपीर्निमस्यन्नमस्करिष्यन् उत्तमस्यात्मनोगोपस्त्रीनमस्कृतिरन्याय्यानभवतीतिदर्शयितुंतासांमहत्त्वंपंचाभि र्जगौउवाच ॥ ५८ ॥ एताइति एताःपरंकेवलंतनुभृतःसफलजन्मानः रूढभावाःपरमप्रेमवत्यः यदिति यंरूढंभावंभवभियोमुमुक्षवो मुनयोमुक्ताअपिवांछंतिवयंचभक्ताअपि अतोऽनंतस्यकथासुरसोरागोयस्यतस्यब्रह्मजन्माभिर्विप्रसंबंधिभिः शौक्रसावित्रयाज्ञिकैस्त्रिभिः किंकोऽतिशयः यत्रतत्रजातःसएवसर्वोत्तमइत्यर्थः यद्वा अनंतकथासुरसोयस्यतस्यब्रह्मजन्मभिश्चतुर्मुखजन्माभिरपिकिमित्यर्थः ॥

उवासकतिचिन्मासान्गोपीनांविनुदन्शुचः ॥ कृष्णलिलाकथांगायन्रमयामासगोकुलम् ॥ ५५ ॥ या वंत्यहानिनंदस्यव्रजेऽवात्सीत्सउद्धवः ॥ व्रजौकसांक्षणप्रायाण्यासन्कृष्णस्यवार्त्तया ॥ ५६ ॥ सरिद्वनगि रिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान् ॥ कृष्णंसंस्मारयन्रेमेहरिदासोव्रजौकसाम् ॥५७॥ दृष्ट्वैवमादिगोपी नांकृष्णावेशात्मविक्लवम् ॥ उद्धवःपरमप्रीतस्तानमस्यन्निदंजगौ ॥ ५८ ॥ एताःपरंतनुभृतोभुविगोपव ध्वोगोविंदएवनिखिलात्मनिरूढभावाः ॥ वांछंतियद्भवभियोमुनयोवयंचकिंब्रह्मजन्मभिरनंतकथारसस्य ॥ ५९ ॥ क्वेमाःस्त्रियोवनचरीर्व्यभिचारदुष्टाःकृष्णेक्वचैषपरमात्मनिरूढभावः ॥ नन्वीश्वरोऽनुभजतोऽवि दुषोऽपिसाक्षाच्छ्रेयस्तनोत्यगदराजइवोपयुक्तः ॥ ६० ॥ नायंश्रियोऽगउनितांतरतेःप्रसादःस्वर्योषितां नलिनगंधरुचांकुतोऽन्याः ॥ रासोत्सवेऽस्यभुजदंडगृहीतकंठलब्धाशिषांयउदगाद्व्रजवल्लवीनाम् ॥ ६१॥

॥ ५९ ॥ किंच ईश्वरप्रसादोमहत्त्वेकारणंतस्यचनजातिराचारोज्ञानंवाकारणंकिंतुकेवलंभजनमेवेत्याह क्वेमाइति साक्षाद्भजतःपुंसोननु अहोउपयुक्तःसेवितःअगदराजःअमृतंयथेति ॥ ६० ॥ अत्यंतापूर्वश्चायंगोपीषुभगवतःप्रसादइत्याह नायमिति अंगेवक्षसिउअहोनितां तरतेःएकांतरतिमत्याःश्रियोऽपिनायंप्रसादोऽनुग्रहोऽस्ति नलिनस्येवगंधोरुक्कांतिश्चयासांतासांस्वर्गांगनानामप्सरसामपिनास्तिअन्याःपु नर्दूरतोनिरस्ताः रासोत्सवेकृष्णभुजदंडाभ्यांगृहीतआलिंगितःकंठस्तेनलब्धाआशिषोयाभिस्तासांगोपीनांयउदगात्आ विर्बभूव ॥६१॥

किंच आस्तांतावद्गोपीनांभाग्यंममत्वेतावत्प्रार्थ्यमित्याह आसामितिगोपीनांचरणरेणुभाजांगुल्मादीनांमध्येयत्किमप्यहंस्यामित्याशंसा कथंभूतानां याइत्यादि आर्याणांमार्गंधर्मंचहित्वा ॥ ६२ ॥ पुनस्ताएवविशिनष्टि यावाइति योगेश्वरैरप्यात्मन्येवार्चितंस्तनेषुन्यस्तंपरिरभ्यतापंजहुरिति ॥ ६३ ॥ एवंमहत्त्वंप्रतिपाद्यनमस्करोति वंदइति ॥ ६४ ॥ अनुज्ञाप्यअनुज्ञांयाचित्वा आमंत्र्यपृष्ट्वा ॥ ६५ ॥ ६६ ॥

आसामहोचरणरेणुजुषामहंस्यांवृंदावनेकिमपिगुल्मलतौषधीनां॥यादुस्त्यजंस्वजनमार्यपथंचहित्वाभेजुर्मुकुंदपदवींश्रुतिभिर्विमृग्यां ॥ ६२ ॥ यावैश्रियाऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपियदात्मनिरासगोष्ठ्यां ॥ कृष्णस्यतद्भगवतश्चरणारविंदंन्यस्तंस्तनेषुविजहुःपरिरभ्यतापं ॥ ६३ ॥ वंदेनंदव्रजस्त्रीणांपादरेणुमभीक्ष्णशः ॥ यासांहरिकथोद्गीतंपुनातिभुवनत्रयं ॥ ६४ ॥ श्रीशुकउवाच अथगोपीरनुज्ञाप्ययशोदांनंदमेवच ॥ गोपानामंत्र्यदाशार्होयास्यन्नारुरुहेरथं ॥ ६५ ॥ तंनिर्गतंसमासाद्यनानोपायनपाणयः ॥ नंदादयोऽनुरागेणप्रावोचन्नश्रुलोचनाः ॥ ६६ ॥ मनसोवृत्तयोनःस्युःकृष्णपादांबुजाश्रयाः ॥ वाचोऽभिधायिनीर्नाम्नांकायस्तत्प्रह्वणादिषु ॥ ६७ ॥ कर्मभिर्भ्राम्यमाणानांयत्रक्वापीश्वरेच्छया ॥ मंगलाचरितैर्दानैर्मतिर्नःकृष्णईश्वरे ॥ ६८ ॥ एवंसभाजितोगोपैःकृष्णभक्त्यानराधिप ॥ उद्धवःपुनरागच्छन्मथुरांकृष्णपालितां ॥ ६९ ॥ कृष्णायप्रणिपत्याहभक्त्युद्रेकंव्रजौकसां ॥ वसुदेवायरामायराज्ञेचोपायनान्यदात् ॥ ७० ॥ इ० भा० म० द० पू० उद्धवप्रतियानेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ श्रीशुकउवाच अथविज्ञायभगवान्सर्वात्मासर्वदर्शनः ॥ सैरंध्र्याःकामतप्तायाःप्रियमिच्छन्गृहंययौ ॥ १ ॥

नःअस्माकंमनसोवृत्तयःकृष्णपादांबुजाश्रयाःस्युः अभिधायिनीःअभिधायिन्यः ॥ ६७ ॥ ६८ ॥ ६९ ॥ कृष्णादिभ्योभक्त्युद्रेकमाह उपायनानिचादादिति ॥ ७० ॥ इतिदशमेपू० टीकायांसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ ॥ अष्टचत्वारिंशकेथकृष्णःकुब्जामरीरमत् ॥ अक्रूरस्यगृहंगत्वातंगजाह्वयमादिशत् ॥ १ ॥ सैरंध्रीकाममापूर्यपूरयित्वामनोरथान् ॥ अक्रूरस्यततःकृष्णस्तेनपार्थानसांत्वयत् ॥ २ ॥ १ ॥

महार्हैरनर्घ्यैरुपस्करैर्गृहोपस्करणैरन्वितं कामोपायैस्तदुद्दीपकैः सुरतबंधादिलेख्यैरुपबृंहितं॥२॥यथाययोचितं ॥३॥ ४ ॥ प्रसाधितोयोग्यता मापादितआत्मादेहोययासा सव्रीडंयत्लीलयाउद्गतंस्मितंतत्येषुविभ्रमेषुतद्युक्तैरीक्षितैरुपलक्षिता ॥ ५ ॥ अनुलेपार्पणादन्यत्तस्याःपुण्यं नास्तीतिदर्शयितुंपुण्यलेशयाइत्युक्तंनतुपुण्यस्याल्पत्वविवक्षया ॥ ६ ॥ कुचादीनांरुजोमृजंतीतिजिघ्रंतीविचरणं ॥ ७ ॥ काममेवप्राक्



महार्होपस्करैराढ्यंकामोपायोपबृंहितं ॥ मुक्तादामपताकाभिर्वितानशयनादिभिः ॥ धूपैःसुरभिभिर्दीपैःस्रग्गंधैरपिमंडितं ॥ २ ॥ गृहंतमायांतमवेक्ष्यसासनात्सद्यःसमुत्थायहिजातसंभ्रमा ॥ यथोपसंगम्य सखीभिरच्युतंसभाजयामाससदासनादिभिः ॥ ३ ॥ तथोद्धवःसाधुतयाऽभिपूजितोन्यषीददुर्व्यामभिमृश्यचासनं ॥ कृष्णोऽपितूर्णंशयनंमहाधनंविवेशलोकाचरितान्यनुव्रतः ॥ ४ ॥ सामज्जनालेपदुकूलभूषणस्रग्गंधतांबूलसुधासवादिभिः ॥ प्रसाधितात्मोपससारमाधवंसव्रीडलीलास्मितविभ्रमेक्षितैः ॥ ५ ॥ आहूयकांतांनवसंगमह्रियाविशंकितांकंकणभूषितेकरे ॥ प्रगृह्यशय्यामधिवेश्यरामयारेमेऽनुलेपार्पणपुण्यलेशया ॥ ६ ॥ साऽनंगतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रंत्यनंतचरणेनरुजोमृजंती ॥ दोर्भ्यांस्तनांतरगतंपरिरभ्यकांतमानंदमूर्त्तिमजहादतिदीर्घतापं॥७॥सैवंकैवल्यनाथंतंप्राप्यदुष्प्रापमीश्वरं ॥ अंगरागार्पणेनाहोदुर्भगेदमयाचत ॥८॥ आहोष्यतामिहप्रेष्ठदिनानिकतिचिन्मया॥ रमस्वनोत्सहेत्यक्तुंसंगंतेऽबुरुहेक्षण ॥ ९ ॥ तस्यैकामवरंदत्वामानयित्वाचमानदः ॥ सहोद्धवेनसर्वेशःस्वधामागमदर्च्चितः ॥ १०॥ दुराराध्यंसमाराध्यविष्णुंसर्वेश्वरेश्वरं ॥ योवृणीतेमनोग्राह्यमसत्त्वात्कुमनीष्यसौ ॥११॥ अक्रूरभवनंकृष्णःसहरामोद्धवःप्रभुः ॥ किंचिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया ॥ १२ ॥ सतान्नरवरश्रेष्ठानाराद्वीक्ष्यस्वबांधवान् ॥ प्रत्युत्थायप्रमुदितःपरिष्वज्याभिनंद्यच ॥१३॥ ॥ ॥ ॥

तद्दृष्ट्वाअयाचत नचगोप्यइवसातन्निष्ठेतिदुर्भगेत्युक्तं कृतार्थत्वेतुतस्यानसंदेहः ॥८ ॥ ९ ॥ कामएववरस्तंदत्वा मानयित्वाचालंकारादिदानैः ॥ १० ॥ मनोग्राह्यंविषयसुखं असत्त्वात्तुच्छत्वात् ॥ ११ ॥ किंचिच्चिकीर्षयन् हास्तिनपुरप्रस्थापनंकारायितुमिच्छान्नित्यर्थः अक्रूरप्रियकाम्ययाच ॥ १२ ॥ आराद्दूरादेव ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ १४ ॥ आअपइतिच्छेदः अपआसर्वतोधारयन्नित्यन्वयः ॥१५॥१६॥ वांयुवयोरिदंकुलमुद्धृतंसमेधितंच॥१७॥वामिदंकुलमित्यादिव्य
वहारदृष्ट्योक्तंपरमार्थमाह युवामिति जगन्मयौयुवाम् कुतः जगद्धेतू तदपिकुतः प्रधानपुरुषौतदात्मकौ अतोभवद्भ्यांविनापरंकारणम
परंकार्यंचनास्तीति ॥ १८ ॥ ननुप्रत्यक्षादिसिद्धंकथंनास्तीत्युच्यतेअतआह आत्मसृष्टमिति हेब्रह्मन्परमेश्वर ब्रह्मेतिवापाठः रजआ
दिस्वशक्तिभिरात्मनैवसृष्टमिदंविश्वमन्वाविश्यकारणत्वादननुप्रविष्टोऽप्यनुप्रविश्येवास्थितःश्रुतप्रत्यक्षगोचरंयथाभवतितथाबहुधाभवानेव

ननामकृष्णंरामंचसतैरप्यभिवादितः ॥ पूजयामासविधिवत्कृतासनपरिग्रहान् ॥ १४ ॥ पादावनेज
नीरापोधारयन्शिरसान्नृप ॥ अर्हणेनांबरैर्दिव्यैर्गंधस्रग्भूषणोत्तमैः ॥ १५ ॥ अर्चित्वाशिरसानम्यपा
दावंकगतौमृजन् ॥ प्रश्रयावनतोक्रूरःकृष्णरामावभाषत ॥ १६ ॥ दिष्ट्यापापोहतःकंसःसानुगोवामि
दंकुलं ॥ भवद्भ्यामुद्धृतंकृच्छ्राद्दुरंताच्चसमेधितं ॥ १७ ॥ युवांप्रधानपुरुषौजगद्धेतूजगन्मयौ ॥ भवद्भ्यां
नविनाकिंचित्परमस्तिनचापरं ॥ १८ ॥ आत्मसृष्टमिदंविश्वमन्वाविश्यस्वशक्तिभिः ॥ ईयतेबहुधाब्र
ह्मन्श्रुतप्रत्यक्षगोचरं ॥ १९ ॥ यथाहिभूतेषुचराचरेषुमह्यादयोयोनिषुभांतिनाना ॥ एवंभवान्केवल
आत्मयोनिष्वात्मात्मतंत्रोबहुधाविभाति ॥ २० ॥ सृजस्यथोलुंपसिपासिविश्वंरजस्तमःसत्त्वगुणैःस्वश
क्तिभिः ॥ नबध्यसेतद्गुणकर्मभिर्वाज्ञानात्मनस्तेक्वचबंधहेतुः ॥ २१ ॥ ॥ ॥

प्रतीयते ॥ १९ ॥ एकस्यैवबहुधाप्रतीतिंसदृष्टांतामाहयथाहीति योनिषुस्वस्यैवरूपांतरेणाभिव्यक्तिस्थानेषुचराचरेषुयथामहीप्रमुखानिकारणा
न्येवनानाभांति आत्मयोनिषुस्वकारणेषुभूतभौतिकेषुर्जीवोऽपिनरमृगादिशरीरेषुबालयुवाद्यवस्थासुचतथातथाप्रतीयतइति तद्वचवच्छे
दार्थमात्मतंत्रग्रहणं ॥२०॥ ननुसृष्ट्यादिकर्तृत्वेनचममकिंजीववद्बंधउक्तोनहिनहीत्याह सृजसीति तद्गुणकर्मभिर्वातैर्गुणैःकर्मभिर्वेत्यर्थः
यतःक्वचकदाचिदपिबंधहेतुरविद्यातवनैवास्ति कुतइत्यतआह ज्ञानात्मनइति मायायाआश्रयानावरकत्वादितिभावः ॥ २१॥

किंच आस्तांतावद्बंधशंकायतोविद्योपाधेर्जीवात्मनोऽपिनवस्तुतोबंधोऽस्तीत्याह देहाद्युपाधेरिति भवोजन्मतन्मूलाभिदाचसाक्षात्स्वरूपतोनस्यादिति ननुममबंधाभावंवदतात्वयाकिंमोक्षोंऽगीक्रियते ओमितिचेत्तर्हिबंधाभावेमोक्षासंभवादापन्नोबंधोऽपीत्याशंक्याह अतइति यतोनाविद्याअतोनबंधोमोक्षश्च एवमुभौनस्यातामित्यर्थः ननुउलूखलेमांबद्धंश्रुतवान्यमुनाऱ्हदेमुक्तंदृष्टवानस्यतः कथमुभयंनास्त्यतआह निकामइति स्वाभिप्रायानुरूपस्त्वयिनोऽस्माकमविवेकएवपरमेवंभूतइति यद्वानोऽविवेकएवतवोभौस्यातामिति ॥ २२॥ ननुतर्हिममावताराःस्तच्चरित्राणिचशुक्तिरजतवदविद्याकल्पितान्येवाकिंनहिनाहिइयंतुतवलीलेत्याहद्वयेन त्वयोदितइति ॥ २३ ॥ सुरेतरां

देहाद्युपाधेरनिरूपितत्वाद्भवोनसाक्षान्नभिदात्मनःस्यात् ॥ अतोनबंधस्तवनैवमोक्षःस्यातांनिकामस्त्वयिनोऽविवेकः ॥ २२ ॥ त्वयोदितोऽयंजगतोहिताययदायदावेदपथःपुराणः ॥ बाध्येतपाखंडपथैरसद्भिस्तदाभवान्सत्त्वगुणंबिभर्त्ति ॥ २३ ॥ सत्वंप्रभोद्यवसुदेवगृहेऽवतीर्णःस्वांशेनभारमपनेतुमिहासिभूमेः ॥ अक्षौहिणीशतवधेनसुरेतरांशराज्ञाममुष्यचकुलस्ययशोवितन्वन् ॥ २४ ॥ अद्येशनोवसतयःखलुभूरिभागायःसर्वदेवपितृभूतनृदेवमूर्त्तिः ॥ यत्पादशौचसलिलंत्रिजगत्पुनातिसत्वंजगद्गुरुरधोक्षजयाःप्रविष्टः ॥ ॥ २५ ॥ कःपंडितस्त्वदपरंशरणंसमीयाद्भक्तप्रियादृतगिरःसुहृदःकृतज्ञात् ॥ सर्वान्ददातिसुहृदोभजतोऽभिकामानात्मानमप्युपचयापचयौनयस्य ॥ २६ ॥ दिष्ट्याजनार्दनभवानिहनःप्रतीतोयोगेश्वरैरपिदुरापगतिःसुरेशैः ॥ छिंध्याशुनःसुतकलत्रधनाप्तगेहदेहादिमोहरशनांभवदीयमायां ॥ २७ ॥ इत्यर्चितःसंस्तुतश्चभक्तेनभगवान्हरिः ॥ अक्रूरंसस्मितंप्राहगीर्भिःसंमोहयन्निव ॥ २८ ॥ श्रीभगवानुवाच त्वंनोगुरुःपितृव्यश्चश्लाघ्योबंधुश्चनित्यदा ॥ वयंतुरक्ष्याःपोष्याश्चअनुकंप्याःप्रजाहिवः ॥ २९ ॥ ॥

शायेराजानस्तेषामक्षौहिणीशतानांवधेनभूमेर्भारमपनेतुंस्वांशेनरामेणसहावतीर्णोऽसि ॥ २४ ॥ अतएवंभूतस्यतवागमनेनकृतार्थोऽस्मीत्याहत्रयेण अद्येति हेईशअद्यनोवसतयोगृहास्तपोवनादपिबहुपुण्याः कुतः यावसतीस्त्वंसाक्षात्प्रविष्टः कथंभूतः यस्यतवपादसलिलमेवगंगात्रिजगत्पुनाति यश्चत्वंपंचयज्ञदेवतामूर्त्तिःसत्वंजगद्गुरुरिति ॥२५॥ स्वमनोरथःपरिपूरितइतितुष्यन्नाह कःपंडितइति ऋतगिरःसत्यवाचः त्वत्तोपरंशरणंकःसमीयात् गच्छेत् यतोभवान्भजतःसर्वानभितःकामांश्चददातिआत्मानमर्पीति ॥ २६ ॥ नोऽविवेकिनां तत्रापीहगृहएव ॥ २७ ॥ २८ ॥ वोयुष्माकंप्रजाः पुत्राहिवयमिति ॥ २९ ॥ ॥ ॥ ॥ ॥

ननुनृभिर्देवाःसेव्याइतिप्रसिद्धंतत्राह देवाइति स्वार्थाःस्वकार्यसाधनपराःसाधवस्तुकेवलंपरानुग्रहपराःपरमार्थतस्तुसाधवएवदेवाइति तएवसेव्याइत्यर्थः ॥ ३० ॥ तर्हिमृच्छिलादिमयाःकिंदेवादयोनैवेत्यतआह नहीति अम्मयानितीर्थानिमृन्मयाःशिलामयाश्चदेवानभवं तीतिनअपितुभवंत्येव तथाऽपिसाधूनांतेषांचमहदंतरमित्याह तेपुनंतीति ॥ ३१ ॥ किंचिच्चिकीर्षयन्प्रागादितियदुक्तंतत्कार्यमादिशति स इति नःसुहृदांमध्येभवान्श्रेष्ठःअतःपांडवानांश्रेयश्चिकीर्षयागजाव्हयंगच्छस्वगच्छेति यद्वा स्वेतिपृथक्पदं हेस्व आत्मीयेत्यर्थः ॥ ३२ ॥राज्ञाधृतराष्ट्रेणवसंतेनिवसंति शुश्रुमश्रुतवंतोवयम् ॥ ३३ ॥ दुष्टायेस्वपुत्रादुर्योधनादयस्तद्वशेनगच्छतीतितथा यतःअंधदृक्अं

भवद्विधामहाभागानिषेव्याअर्हसत्तमाः॥श्रेयस्कामैर्नृभिर्नित्यंदेवाःस्वार्थानसाधवः॥३०॥नह्यम्मयानि तीर्थानिनदेवामृच्छिलामयाः॥तेपुनंत्युरुकालेनदर्शनादेवसाधवः॥३१॥सभवान्सुहृदांवैनःश्रेयान्श्रेय श्चिकीर्षया॥जिज्ञासार्थंपांडवानांगच्छस्वत्वंगजाव्हयम्॥३२॥पितर्युपरतेबालाःसहमात्रासुदुःखिताः॥आ नीताःस्वपुरंराज्ञावसंतइतिशुश्रुम॥३३॥तेषुराजांऽबिकापुत्रोभ्रातृपुत्रेषुदीनधीः ॥ समोनवर्त्ततेनूनंदुष्पुत्र वशगोंऽधदृक् ॥ ३४ ॥ गच्छजानीहितद्वृत्तमधुनासाध्वसाधुवा॥विज्ञायतद्विधास्यामोयथाशंसुहृदांभवेत् ॥३५॥इत्यक्रूरंसमादिश्यभगवान्हरिरीश्वरः॥संकर्षणोद्धवाभ्यांवैततःस्वभवनंययौ॥३६॥ इ०भा०म० द०पू०अष्टचत्वारिंशोध्यायः ॥ ४८ ॥ ॥ श्रीशुकउवाच सगत्वाहास्तिनपुरंपौरवेंद्रयशोंऽकितं ॥ ददर्श तत्रांबिकेयंसभीष्मंविदुरंपृथां ॥ १॥॥ सहपुत्रंचबाल्हीकंभारद्वाजंसगौतमं ॥ कर्णंसुयोधनंद्रौणिंपांडवा न्सुव्हृदोपरान् ॥ २ ॥ यथावदुपसंगम्यबंधुभिर्गांदिनीसुतः ॥ संपृष्टस्तैःसुव्हृद्वार्त्तांस्वयंचापृच्छदव्ययम् ॥ ३ ॥उवासकतिचिन्मासान्राज्ञोवृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्यखलच्छंदानुवर्तिनः॥४॥ ॥

धनेत्रोधृतराष्ट्रः ॥ ३४ ॥ ३५ ॥ ३६ ॥इतिश्री भागवतेदशमस्कंधे पू० टी० अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ऊनपंचाशत्त मेतुगत्वाक्रूरोगजाव्हयं ॥ राज्ञःस्वभ्रातृपुत्रेषुबुद्ध्वावैषम्यमागमत् ॥ १ ॥ पौरवेंद्राणांयशोभिस्तत्कृतदेवब्राह्मणायतनादिभिरंकितम् ॥ १ ॥ बाल्हीकपुत्रःसोमदत्तःभारद्वाजोद्रोणः गौतमःकृपः ॥ २ ॥ अव्ययंकुशलम् ॥ ३ ॥ दुष्प्रजस्यअसत्पुत्रस्यअल्पसारस्यमंदधृतेः खलानांकर्णादिनांछंदामिच्छामनुवर्त्तितुंशीलमस्येतितथातस्य ॥ ४ ॥ ॥ ॥ ॥

तेजःप्रभावः ओजःशास्त्रादिनैपुणम् वीर्यंशौर्यम् नसहद्भिःअसहमानैश्चिकीर्षितामितउपारिकर्तुमिष्टम् ॥ ५ ॥ गरस्यविषस्यदानादिअपे
शलमन्याय्यं तेजओजइत्यादिसर्वंकथयामास ॥ ६ ॥ तत्कथनात्पूर्वतरंपृथायावृत्तमाह पृथात्विति अश्रूणांकलाः लेशाययोस्तेईक्ष
णेयस्याःसा ॥ ७ ॥ अपिकिं जामयःकुलस्त्रियः ॥ ८ ॥ पैतृष्वस्रे यान्मत्पुत्रान् ॥ ९ ॥ शोचंतींमांवाक्यैःसांत्वयिष्यतिकिम् ॥ १० ॥
हेमहायोगिन्महान्योगउपायोमायाख्योऽस्यास्तीति हेविश्वात्मन्स र्वांतर्यामिन् हेविश्वभावनाविश्वपालक प्रपन्नांशरणागताम् अवसी

तेजओजोबलंवीर्यंप्रश्रयादींश्चसद्गुणान् ॥ प्रजानुरागंपार्थेषुनसहद्भिश्चिकीर्षितं ॥ ५ ॥ कृतंचधार्त्तराष्ट्रैर्य
द्गरदानाद्यपेशलम् ॥ आचख्यौसर्वमेवास्मैपृथाविदुरएवच ॥ ६ ॥ पृथातुभ्रातरंप्राप्तमक्रूरमुपसृत्यतं॥उ
वाचजन्मनिलयंस्मरंत्यश्रुकलेक्षणा ॥ ७ ॥ अपिस्मरंतिनःसौम्यपितरौभ्रातरश्चमे ॥ भगिन्योभ्रातृपु
त्राश्चजामयःसख्यएवच ॥ ८ ॥ भ्रात्रेयोभगवान्कृष्णःशरण्योभक्तवत्सलः ॥ पैतृष्वस्रेयान्स्मरतिराम
श्चांबुरुहेक्षणः ॥ ९ ॥ सपत्नमध्येशोचंतींवृकाणांहरिणीमिव ॥ सांत्वयिष्यतिमांवाक्यैःपितृहनींश्चबालका
न् ॥ १० ॥ कृष्णकृष्णमहायोगिन्विश्वात्मन्विश्वभावन॥प्रपन्नांपाहिगोविंदशिशुभिश्चावसीदतीं॥११॥
नान्यत्तवपदांभोजात्पश्यामिशरणंनृणां ॥ बिभ्यतांमृत्युसंसारादीश्वरस्यापवर्गिकात् ॥ १२॥ नमःकृष्णा
यशुद्धायब्रह्मणेपरमात्मने ॥ योगेश्वराययोगायत्वामहंशरणंगता ॥ १३ ॥ श्रीशुकउवाच इत्यनुस्मृ
त्यस्वजनंकृष्णंचजगदीश्वरं ॥ प्रारुदद्दुःखिताराजन्भवतांप्रपितामही ॥ १४ ॥ समदुःखसुखोऽक्रूरोवि
दुरश्चमहायशाः ॥ सांत्वयामासतुःकुंतींतत्पुत्रोत्पत्तिहेतुभिः ॥ १५ ॥

दतींक्लिश्यंतीम् ॥ ११ ॥ आपवर्गिकात्मोक्षप्रदात् ॥ १२ ॥ शुद्धायधर्मात्मने ब्रह्मणेअपरिच्छिन्नाय परमात्मनेजीवसखाय योगेश्वरा
यअणिमादियुक्ताय योगायज्ञानात्मने ॥ १३ ॥ प्रपितामहीप्रपितामहःपांडुस्तस्यभार्यारुरोद ॥ १४ ॥ पृथयासहसमंदुःखंसुखंचयस्यसः
तस्याःपुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेंद्रादिभिस्तत्कथनैरित्यर्थः ॥ १५ ॥ ॥ ॥

बंधुभिःरामकृष्णादिभिःसौहृदेनउदितमुक्तंयत्तदवददिति ॥ १६ ॥ भ्रातर्युपरतइति पांडोःपुत्रेषुसत्सुराजासनंत्वमास्थितइतिकटाक्षः ॥ १७ ॥ भवतुतथाऽप्येवंवर्त्तमानःश्रेयोऽवाप्स्यसीत्याह धर्मेणेति ॥ १८ ॥ तमोनरकमिहचमहद्दुःखमितिभावः ॥ १९ ॥ नन्वात्मजानात्मजादिषुकथंसमत्वंस्यात्तत्राह नेहचेति अत्यंतंनित्यंसंवासःसम्यक्स्थितिः ॥ २० ॥ तत्रतावदुत्पत्तिमरणयोःसुखदुःखयोश्चकेनापिसाहित्यंनास्तीत्याह एकइति ॥ २१ ॥ किंच यदाचसहसंवसतिस्तदाऽपिक्लेशोपार्जितवित्तापहारितयापुत्रानामशत्रवएवज्ञेयाइत्याह अ

यास्यन्राजानमभ्येत्यविषमंपुत्रलालसम् ॥ अवदत्सुहृदांमध्येबंधुभिःसौहृदोदितम् ॥ १६ ॥ अक्रूर उवाच भोभोवैचित्रवीर्यत्वंकुरूणांकीर्त्तिवर्द्धन ॥ भ्रातर्युपरतेपांडावधुनासनमास्थितः ॥ १७ ॥ धर्मेण पालयन्नुर्वींप्रजाःशीलेनरंजयन् ॥ वर्त्तमानःसमःस्वेषुश्रेयःकीर्त्तिमवाप्स्यसि ॥ १८ ॥ अन्यथात्वाचरँल्लोकेगर्हितोयास्यसेतमः ॥ तस्मात्समत्वेवर्त्तस्वपांडवेष्वात्मजेषुच ॥ १९ ॥ नेहचात्यंतसंवासःकर्हिचित्केनचित्सह ॥ राजन्स्वेनापिदेहेनकिमुजायात्मजादिभिः ॥ २० ॥ एकःप्रसूयतेजंतुरेकएवप्रलीयते ॥ एकोऽनुभुंक्तेसुकृतमेकएवचदुष्कृतम् ॥ २१ ॥ अधर्मोपचितंवित्तंहरंत्यन्येऽल्पमेधसः ॥ संभोजनीयापदेशैर्जलानीवजलौकसः ॥ २२ ॥ पुष्णातियानधर्मेणस्वबुद्ध्यातमपंडितम् ॥ तेऽकृतार्थंप्रहिण्वंतिप्राणारायःसुतादयः ॥ २३ ॥ स्वयंकिल्बिषमादायतैस्त्यक्तोनार्थकोविदः ॥ असिद्धार्थोविशत्यंधंस्वधर्मविमुखस्तमः ॥ ॥ २४ ॥ तस्माल्लोकमिमंराजन्स्वप्नमायामनोरथम् ॥ वीक्ष्यायम्यात्मनात्मानंसमःशांतोभवप्रभो ॥ २५ ॥

धर्मेति संभोजनीयाःपोष्याःपुत्रादयइतिव्यपदेशैरल्पमेधसोमूढस्यवित्तंहरंति जलौकसोमत्स्यस्यजीवनभूतानिजलानियथातत्पुत्राहरंतितद्वदिति ॥ २२ ॥ किंच यानेवंपुष्णातितेधनमादायमृताजीवंतोऽपिवातंपरित्यजंतीत्याह पुष्णातीति स्वबुद्ध्यास्वीयाइत्यभिमानेन रायोऽर्थाः अकृतार्थमप्राप्तभोगम् ॥ २३ ॥ सपुनःपापैकपाथेयोनरकंविशतीत्याह स्वयमिति असिद्धार्थोऽपूर्णमनोरथः ॥ २४ ॥ स्वप्नश्चमायाचमनोरथश्चतत्तेनतुल्यम् आयम्यनियम्य शांतःसन्समोभवेति ॥ २५ ॥ ॥ ॥ ॥

हेदानपतेअक्रूर नतृप्यामिअलमितिनमन्ये ॥ २६ ॥ सूनृताप्रियावाक्चलेअस्थिरेहृदिनस्थीयतेनतिष्ठतीत्यर्थः सुदामापर्वतस्तत्रभवा विद्युदिव तस्मिन्स्फटिकशिलामयेसहसैवातिस्फुरिताविद्युद्यथालीयतेतद्वदित्यर्थः यद्वा सुदामामालातस्याइयंसौदामनी मालाकारेत्य र्थः ॥ २७ ॥ नन्वेवंजानतोऽपिकथमयंमोहइतिचेदतआह ईश्वरस्येति विधिंविधानंमायामितियावत् ॥ २८ ॥ अतस्तमेवनमस्यति

धृतराष्ट्रउवाच यथावदतिकल्याणींवाचंदानपतेभवान् ॥ तथाऽनयानतृप्यामिमर्त्यःप्राप्ययथाऽमृत म् ॥ २६ ॥ तथाऽपिसूनृतासौम्यहृदिनस्थीयतेचले ॥ पुत्रानुरागविषमेविद्युत्सौदामनीयथा ॥ २७ ॥ ईश्वरस्यविधिंकोऽनुविधुनोत्यन्यथापुमान् ॥ भूमेर्भारावताराययोवतीर्णोयदोःकुले ॥ २८ ॥ योदुर्वि मर्शपथयानिजमाययेदंसृष्ट्वागुणान्विभजतेतदनुप्रविष्टः ॥ तस्मैनमोदुरवबोधविहारतंत्रसंसारचक्रग तयेपरमेश्वराय ॥ २९ ॥ श्रीशुकउवाच इत्यभिप्रेत्यनृपतेरभिप्रायंसयादवः ॥ सुहृद्भिःसमनुज्ञातः पुनर्यदुपुरीमगात् ॥ ३० ॥ शशंसरामकृष्णाभ्यांधृतराष्ट्रविचेष्टितम् ॥ पांडवान्प्रतिकौरव्ययदर्थंप्रेषि तःस्वयम् ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेअष्टादशसाहस्र्यांसंहितायांदशमस्कंधेपूर्वार्धेएकोनपं चाशत्तमोध्यायः ॥ ४९ ॥ श्रीकृष्णार्पणमस्तु पूर्वार्धंसमाप्तिमगमत् ॥छ॥ ॥ ॥

यइति दुर्विमर्शपथयाअवितर्क्यमार्गया गुणान्कर्माणितत्फलानिचविभजतेविविच्यददाति दुरवबोधोयोविहारस्तस्यक्रीडासएवतंत्रंप्रधा नंमुख्यंकारणंयस्यसंसारचक्रस्यअतएवतस्यगतिर्यस्मात्तस्मैनमइति ॥ २९ ॥ अभिप्रेत्यज्ञात्वा ॥ ३० ॥ ३१ ॥ इतिश्रीभागवतेभावा र्थदीपिकायांदशमस्कंधेपूर्वार्धेटीकायामेकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ पूर्वार्धंसमाप्तिमगमत् ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीगणेशायनमः ततःपंचाशत्तमेतुजरासंधभयादिव ॥ कारयित्वांबुधौदुर्गंतंनिनायनिजंजनं ॥ १ ॥ कपटान्कपटैरेवहत्वादैत्यानय
त्नतः ॥ अजयच्चजरासंधंधर्मेणैवतुधार्मिकं ॥ २ ॥ अस्तिप्राप्तिसंज्ञिकेईयतुःजग्मतुः ॥ १ ॥ २ ॥ कंसेशोकःकृष्णेचामर्षस्ताभ्यांयुतः
॥ ३ ॥ न्यरुणत्रुरोध ॥ ४ ॥ तस्यबलंसैन्यमुद्वेलंलंघितमर्यादंसागरमिव तेनतस्यबलेनसंरुद्धं ॥ ५ ॥ किंबलमेवहन्मिनमागधंमागधंवाहत्वा
बलंगृह्णामियद्वासमागधंसर्वंहन्मीतिचिंतयामास ननुप्रथमंकथंजेष्यामीत्येवंचिंतयितुंयुक्तंतत्राह कारणमानुषइति भूभारावतारकारणेनमा

श्रीशुकउवाच अस्तिःप्राप्तिश्चकंसस्यमहिष्यौभरतर्षभ ॥ मृतेभर्त्तरिदुःखार्तेईयतुःस्मपितुर्गृहान् ॥ १ ॥
पित्रेमगधराजायजरासंधायदुःखिते॥वेदयांचक्रतुःसर्वमात्मवैधव्यकारणं॥२॥सतदप्रियमाकर्ण्यशोकाम
र्षयुतोनृप॥अयादवींमहींकर्तुंचक्रेपरममुद्यमं ॥३॥ अक्षौहिणीभिर्विंशत्यातिसृभिश्चापिसंवृतः ॥ यदुराज
धानींमथुरांन्यरुणत्सर्वतोदिशं॥४॥निरीक्ष्यतद्बलंकृष्णउद्वेलमिवसागरं॥स्वपुरंतेनसंरुद्धंस्वजनंचभयाकु
लं॥५॥चिंतयामासभगवान्हारिःकारणमानुषः ॥ तद्देशकालानुगुणंस्वावतारप्रयोजनं ॥ ६ ॥ हनिष्यामिब
लंह्येतद्भुविभारंसमाहितं ॥ मागधेनसमानीतंवश्यानांसर्वभूभुजां ॥ ७ ॥ अक्षौहिणीभिःसंख्यातंभटाश्व
रथकुंजरैः॥मागधस्तुनहंतव्योभूयःकर्ताबलोद्यमं॥८॥ एतदर्थोऽवतारोयंभूभारहरणायमे॥संरक्षणायसा
धूनांकृतोऽन्येषांवधायच ॥ ९ ॥ अन्योऽपिधर्मरक्षायैदेहःसंध्रियतेमया॥ विरामायाप्यधर्मस्यकालेप्रभ
वतःक्वचित् ॥ १० ॥ एवंध्यायतिगोविंदआकाशात्सूर्यवर्चसौ ॥ रथावुपस्थितौसद्यःससूतौसपरिच्छदौ
॥ ११ ॥ आयुधानिचदिव्यानिपुराणानियदृच्छया ॥ दृष्ट्वातानिहृषीकेशःसंकर्षणमथाब्रवीत् ॥ १२॥

नुषोनतुतत्त्वतइति ॥ ६ ॥ एवंत्रिधाविचिंत्यप्रथमंपक्षंनिर्धारितवांस्तदाहचतुर्भिः हनिष्यामीति ॥ ७ ॥ बलोद्यमंकर्ताकरिष्यतीति ॥ ८ ॥ न
न्वतएवहंतव्यस्तत्राह एतदर्थइति एतच्छब्दार्थंस्पष्टयति भूभारहरणायेति ॥ ९ ॥ अयमेतदर्थोऽवतारइत्युपलक्षणमित्याह अन्योऽपीति प्र
भवतःउद्भवतः ॥ १० ॥ ससूतौसारथिसहितौ परिच्छदःपरिकरोध्वजकवचादिस्तत्सहितौ ॥ ११ ॥ १२ ॥ ॥ ॥

त्वमेवअवन्रक्षकोनाथोविद्यतेयेषांतेत्वावंतस्तेषां ॥ १३ ॥ १४ ॥ दंशितौबद्धकवचौ ॥ १५ ॥ स्वायुधाढ्यौशोभनायुधसंपन्नौ ॥१६॥
पुरुषाअधमायस्मादितिवास्तवोऽर्थः हेपुरुषोत्तमोति ॥ १७ ॥ गुप्तेनसर्वांतरत्वाद्दर्शनानर्हेण हेऽमंद बध्नातीतिबंधुरविद्यातांहंतीतितथा हे
अविद्यानिरसनेति ॥ १८ ॥ याहिप्राप्नुहि अच्छेद्यदेहोऽसावितिस्वयमेवमत्वाऽपरितोषात्पक्षांतरमाह यद्वामांजहीति ॥ १९ ॥ यथाश्रु

पश्यार्यव्यसनंप्राप्तंयदूनांत्वावतांप्रभो ॥एषतेरथआयातोदयितान्यायुधानिच ॥१३॥ यानमास्थायजह्येतद्व्यसनात्स्वान्समुद्धर ॥एतदर्थंहिनौजन्मसाधूनामीशशर्मकृत् ॥१४॥ त्रयोविंशत्यनीकाख्यंभूमेर्भारमपाकुरु ॥ एवंसंमंत्र्यदाशार्हौदंशितौरथिनौपुरात् ॥१५॥ निर्जग्मतुःस्वायुधाढ्यौबलेनाल्पीयसावृतौ॥शंखंदध्मौविनिर्गत्यहरिर्दारुकसारथिः ॥१६॥ ततोऽभूत्परसैन्यानांहृदिवित्रासवेपथुः ॥ तावाहमागधोवीक्ष्यहेकृष्णपुरुषाधम॥१७॥ नत्वयायोद्धुमिच्छामिबालेनैकेनलज्जया ॥ गुप्तेनहित्वयामंदनयोत्स्येयाहिबंधुहन्॥ ॥१८॥ तवरामयदिश्रद्धायुत्ध्यस्वधैर्यमुद्वह ॥ हित्वावामच्छरैश्छिन्नंदेहंस्वर्याहिमांजहि ॥१९॥ श्रीभगवानुवाच नवैशूराविकत्थंतेदर्शयंत्येवपौरुषं ॥ नगृण्हीमोवचोराजन्नातुरस्यमुमूर्षतः ॥२०॥ श्रीशुकउवाच जरासुतस्तावभिसृत्यमाधवौमहाबलौघेनबलीयसावृणोत् ॥ ससैन्ययानध्वजवाजिसारथीसूर्यानलौवायुरिवाभ्ररेणुभिः ॥२१॥ सुपर्णतालध्वजचिन्हितौरथावलक्षयंत्योहरिरामयोर्मृधे ॥ स्त्रियःपुराट्टालकहर्म्यगोपुरंसमाश्रिताःसंमुमुहुःशुचार्दिताः ॥ २२ ॥ हरिःपरानीकपयोमुचांमुहुःशिलीमुखात्युल्बणवर्षपीडितं ॥ स्वसैन्यमालोक्यसुरासुरार्चितंव्यस्फूर्जयच्छार्ङ्गशरासनोत्तमं ॥ २३ ॥ ॥

तार्थग्रहणेनभगवतउत्तरं नवैशूराइति विकत्थंतेश्लाघंते ॥ २० ॥ माधवौमधुवंशभवौ महतासैन्यसमूहेनावृतवान् वायुरभ्रैः सूर्यंरेणुभिश्चाग्निंयथेत्यदर्शनमात्रमेवावरणमितिसूचितम् ॥ २१ ॥ २२ ॥ परस्यानीकानिसैन्यानितान्येवपयोमुचोमेघास्तेषांशिलीमुखाबाणास्तेषामत्युल्बणंवर्षंतेनपीडितं व्यस्फूर्जयत् उज्जृंभितवान् ॥ २३ ॥ ॥ ॥ ॥ ॥

तदाह गृह्णन्निति निषंगादिषुधेः शरान्गृह्णन् अथतान्गुणेसंदधत् गुणमाकृष्यनिशितबाणसमूहान्मुंचन् निघ्नन्प्रहरन् पत्तिः पदातिः निरंतरमितिग्रहणादिक्रियाविशेषणं ज्वलत्काष्ठभ्रमणेयथाचक्रवद्भवातितद्वत्व्यस्फूर्जयादिति ॥ २४ ॥ हताअश्वाध्वजाः सूतानायकारथिनश्चयेषुते ॥ २५ ॥ संछिद्यमानाद्विपदाइभावाजिनश्चतेषामंगेभ्यःप्रसूताअसृगापगारुधिरनद्यः परस्परंप्रवर्तिताइतितृतीयेनान्वयःप्रसिद्धनदीरूपकमाह भुजाएवअहयोयासुताः पुरुषाणांशीर्षाण्येवकच्छपायासुताः हताद्विपाएवद्वीपाअंतर्वर्तितटानिहयाएवग्रहाग्राहास्तैश्चाकुलाव्याप्ताः ॥ २६ ॥ कराउरवश्चमीनायासुताः नराणांकेशाएवशैवलंयासुताः धनूंष्येवतरंगाआयुधान्येवगुल्मास्तैश्चतैश्चसंकु

गृण्हन्निषंगादथसंदधच्छरान्विकृष्यमुंचन्शितबाणपूगान् ॥ निघ्नन्रथान्कुंजरवाजिपत्तीन्निरंतरंयद्वदलातचक्रं ॥ २४ ॥ निर्भिन्नकुंभाःकरिणोनिपेतुरनेकशोऽश्वाःशरवृक्णकंधराः ॥ रथाहताश्वध्वजसूतनायकाःपदातयश्छिन्नभुजोरुकंधराः ॥ २५ ॥ संछिद्यमानद्विपदेभवाजिनामंगप्रसूताःशतशोऽसृगापगाः ॥ भुजाऽहयःपूरुषशीर्षकच्छपाहतद्विपद्वीपहयग्रहाकुलाः ॥ २६ ॥ करोरुमीनानरकेशशैवलाधनुस्तरंगायुधगुल्मसंकुलाः ॥ अच्छूरिकावर्तभयानकामहामणिप्रवेकाभरणाश्मशर्कराः ॥ २७ ॥ प्रवर्तिताभीरुभयावहामृधेमनस्विनांहर्षकरीःपरस्परं ॥ विनिघ्नताऽरीन्मुसलेनदुर्मदान्संकर्षणेनापरिमेयतेजसा ॥ २८ ॥ बलंतदंगार्णवदुर्गभैरवंदुरंतपारंमगधेंद्रपालितं ॥ क्षयंप्रणीतंवसुदेवपुत्रयोर्विक्रीडितंतज्जगदीशयोःपरं ॥ २९ ॥

लाः अच्छूरिकाश्चर्माणिचक्राणिवातान्येवावर्तास्तैर्भयानकाः महामणीनांप्रवेकाउत्तमाआभरणानिचयथायथमश्मानःशर्कराश्चयासुताः ॥ ॥ २७ ॥ भीरूणांभयावहाः मनस्विनांधीराणांहर्षकर्यः ॥ २८ ॥ संकर्षणेनापितद्बलंक्षयंप्रणीतम् अंगहेराजन् अर्णववत्दुर्गंदुर्गमंभैरवंभयंकरंच यतोदुरंतपारं अंतोऽत्रतलं पारमवधिः दुःशब्दोनिषेधे विक्रमेणागाधंदेशतश्चनिरवधिकामित्यर्थः किंचमगधेंद्रेणचपालितं बलम् यदेवंभूतंरामकृष्णयोःकर्मोक्तंतत्परंकेवलंतयोर्विक्रीडितंनतुपराक्रमः ॥ २९ ॥ ॥ ॥ ॥

नचैतदाश्चर्यमित्याह स्थित्युद्भवांतामिति तर्हिकिमित्याश्चर्यमिववर्णितंतत्राह तथाऽपीति मर्त्याननुविधत्तेअनुकरोतीतिमर्त्यानुविधस्तस्य ॥ ३० ॥ किंच जग्राहेति हतान्यनीकानियस्यअवशिष्टाअसवएववयस्यतंचतंच ॥ ३१ ॥ हताबहुशःअरातयोयेन तथाभूतमपिजरासंधंबद्ध्यमानंवारयामासेति ॥ ३२ ॥ ३३ ॥ पवित्रार्थानिधर्मोपदेशपराणिपदानियेषुतैर्वाक्यैः नयनैर्नीतिभिः प्राकृतैर्लौकिकैःतत्रलौकिकन्यायमाहुः स्वकर्मेति यदुभिरल्पकैःकृत्वातेमहतःपराभवःकेवलंकर्मबंधेनप्राप्तःअतस्त्वयानलज्जितव्यमिति ॥ ३४ ॥ बार्हद्रथोज

स्थित्युद्भवांतंभुवनत्रयस्ययःसमीहतेऽनंतगुणःस्वलीलया ॥ नतस्यचित्रंपरपक्षनिग्रहस्तथाऽपिमर्त्यानुविधस्यवर्ण्यते ॥ ३० ॥ जग्राहविरथंरामोजरासंधंमहाबलं ॥ हतानीकावशिष्टासुंसिंहःसिंहमिवौजसा ॥ ॥ ३१ ॥ बद्ध्यमानंहतारातिंपाशैर्वारुणमानुषैः ॥ वारयामासगोविंदस्तेनकार्यचिकीर्षया ॥ ३२॥ समुक्तोलोकनाथाभ्यांव्रीडितोवीरसंमतः ॥ तपसेकृतसंकल्पोवारितःपथिराजभिः ॥ ३३ ॥ वाक्यैःपवित्रार्थपदैर्नयनैःप्राकृतैरपि ॥ स्वकर्मबंधप्राप्तोऽयंयदुभिस्तेपराभवः ॥ ३४ ॥ हतेषुसर्वानीकेषुनृपोबार्हद्रथस्तदा ॥ उपेक्षितोभगवतामगधान्दुर्मनाययौ ॥ ३५ ॥ मुकुंदोऽप्यक्षतबलोनिस्तीर्णारिबलार्णवः ॥ विकीर्यमाणःकुसुमैस्त्रिदशैरनुमोदितः ॥ ३६ ॥ माथुरैरुपसंगम्यविज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयःसूतमागधबंदिभिः ॥ ३७ ॥ शंखदुंदुभयोनेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदंगानिपुरंप्रविशतिप्रभौ ॥ ३८ ॥ सिक्तमार्गांहृष्टजनांपताकाभिरलंकृतां ॥ निर्घुष्टांब्रह्मघोषेणकौतुकाबद्धतोरणां ॥ ३९ ॥ निचीयमानोनारीभिर्माल्यदध्यक्षतांकुरैः ॥ निरीक्ष्यमाणःसस्नेहंप्रीत्युत्कलितलोचनैः ॥ ४० ॥ ॥

रासंधः ॥ ३५ ॥ मुकुंदोऽपिययावित्यनुषंगः नक्षतंबलंयस्यसः तस्यैवामृतवृष्ट्याक्षतप्रतिसंधानादितिभावः निस्तीर्णःअनायासेनैवतीर्णोऽरिबलार्णवोयेन साधुसाधुइत्यनुमोदितश्च ॥ ३६ ॥ प्रत्युद्यतैर्मथुरावासिभिर्जनैरभिसंगम्यमिलित्वा ॥ ३७ ॥ तदाप्रभौपुरंप्रविशतिसतिशंखादयोनेदुः ॥ ३८ ॥ कथंभूतांपुरंतदाह सिक्तमार्गामिति ब्रह्मघोषेणवेदघोषेणनिर्घुष्टांनिनादितां कौतुकेनउत्सवेनआसर्वतोबद्धानितोरणानियस्यांतां ॥ ३९ ॥ निचीयमानोविकीर्यमाणः प्रविवेशेतिविपरिणताऽनुषंगः ॥ ४० ॥ ॥ ॥

आयोधनंरणभूमिस्तत्रस्थंवित्तंवीराणांभूषणं ॥ ४१ ॥ तावतीतिछेदः तावतिपराजयेवर्तमानेऽप्यक्षौहिण्योबलंयस्यसः सप्तदशकृत्वः सप्तदशवारान्युयुधे ॥ ४२ ॥ अक्षिण्वन्क्षयंनिन्युः ॥ ४३ ॥ अष्टादशमेअष्टादशेसंग्रामेभाव्येतन्मध्येऽकस्मात्कालयवनःप्राप्तः ॥ ४४ ॥ आत्मसंमितान्स्वतुल्यान् ॥ ४५ ॥ वृजिनंदुःखं उभयतोयवनाज्जरासंधाच्च ॥ ४६ ॥ तदाहद्वयेन निरुंधेनिरुणद्धि ॥ ४७ ॥ अस्य अनेन ॥४८॥४९॥ समुद्रमध्येदुर्गंतन्मध्येनगरं कृत्स्नाद्भुतंसर्वाश्चर्यमयं अचीकरत्कारयामास॥५०॥त्वष्टाविश्वकर्मातदीयंशिल्पनैपुणंच

आयोधनगतंवित्तमनंतंवीरभूषणं ॥ यदुराजायतत्सर्वमाहृतंप्रादिशत्प्रभुः ॥ ४१ ॥ एवंसप्तदशकृत्वस्ताव त्यक्षौहिणीबलः ॥ युयुधेमागधोराजायदुभिःकृष्णपालितैः ॥ ४२ ॥ अक्षिण्वंस्तद्बलंसर्ववृष्णयःकृष्णतेज सा ॥ हतेषुस्वेष्वनीकेषुत्यक्तोऽयादरिभिर्नृपः॥४३॥अष्टादशमेसंग्रामआगामिनितदंतरा ॥ नारदप्रेषितो वीरोयवनःप्रत्यदृश्यत ॥ ४४ ॥ रुरोधमथुरामेत्यातिसृभिर्म्लेच्छकोटिभिः ॥ नृलोकेचाप्रतिद्वंद्वोवृष्णीन्श्रु त्वात्मसंमितान् ॥४५॥ तंदृष्ट्वाऽचिंतयत्कृष्णःसंकर्षणसहायवान्॥अहोयदूनांवृजिनंप्राप्तंह्युभयतोमहत् ॥४६॥ यवनोऽयंनिरुंधेऽस्मानद्यतावन्महाबलः॥मागधोऽप्यद्यवाश्वोवापरश्वोवागमिष्यति॥४७॥आवयो र्युध्यतोरस्ययद्यागंताजरासुतः॥बंधून्वधिष्यत्यथवानेष्यतेस्वपुरंबली॥४८॥तस्मादद्यविधास्यामोदुर्गंद्विप ददुर्गमं ॥ तत्रज्ञातीन्समाधाययवनंघातयामहे ॥४९॥ इतिसंमंत्र्यभगवान्दुर्गंद्वादशयोजनं॥ अंतःसमुद्रे नगरंकृत्स्नाऽद्भुतमचीकरत्॥५०॥ दृश्यतेयत्रहित्वाष्ट्रंविज्ञानंशिल्पनैपुणं॥रथ्याचत्वरवीथीभिर्यथावास्तुवि निर्मितं ॥५१॥ सुरद्रुमलतोद्यानविचित्रोपवनान्वितं ॥ हेमशृंगैर्दिविस्पृग्भिःस्फाटिकाट्टालगोपुरैः ॥५२॥

क्रियाकौशलं तदाहसार्द्धैस्त्रिभिः रथ्येति रथ्याराजमार्गाःपुरतः वीथ्यःउपमार्गाःपश्चिमतः उभयतोऽपिचत्वराण्यंगनानितन्मध्येकोष्ठा स्ततोऽप्यंतःसुवर्णभवनानितदुपरिस्फाटिकाट्टालिकास्तदुपरिहेमकुंभाइतिबहुभूमिकं यथावास्तुवास्तुगृहादिनिर्माणस्थानंतदनतिक्रम्य विनिर्मितं ॥ ५१ ॥ सुराणांद्रुमालताश्चयेषुतान्युद्यानानिविचित्रोपवनानिचतैरन्वितं हेममयानिशृंगाणियेषुतैः दिविस्पृग्भिःअत्युच्चैः स्फाटिकाअट्टालाउपरिभूमिकागोपुराणिचद्वाराणितैर्निर्मितामित्युत्तरेणान्वयः ॥ ५२ ॥ ॥ ॥

राजतारकूटैः रजतंचआरकूटंचपीतलोहंताभ्यांनिर्मितैःकोष्ठैरश्वशालान्नशालादिभिः कथंभूतैः हेमकुंभैरलंकृतैः तथारत्नकूटैःपद्मरागादिशिखरैः हैमैःसौवर्णैः महामरकतमयानिस्थलानियेषुतैर्गृहैश्च ॥ ५३ ॥ किंच नगरद्वारादौवास्तोष्पतीनांदेवानांचगृहैर्वलभीभिश्चंद्रशालिकाभिश्चनिर्मितं यदुदेवगृहैराजगृहैरुल्लसत्शोभमानं॥५४॥पारिजातंचप्राहिणोत्प्रस्थापयामासेतिशुकपरीक्षित्संवादात्पूर्वभावित्वाद्भूतनिर्देशः मर्त्यधर्मैःक्षुत्पिपासादिषड्रूर्मिभिः ॥ ५५ ॥ निधिपतिःकुबेरः अष्टौकोशान्निधीन् पद्मश्चैवमहापद्मोमत्स्यकूर्मौतथौदकः ॥ नीलोमुकंदःशंखश्चनिधयोऽष्टौप्रकीर्तिताइतिप्रसिद्धान् निजोदयान्निजविभूतीः ॥ ५६ ॥ अन्येचसिद्धादयोभगवतास्वाधिकारसि

राजतारकूटैःकोष्ठैर्हेमकुंभैरलंकृतैः ॥ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः॥ ५३॥ वास्तोष्पतीनांचगृहैर्वलभीभिश्चनिर्मितं ॥ चातुर्वर्ण्यजनाकीर्णंयदुदेवगृहोल्लसत् ॥ ५४ ॥ सुधर्मांपारिजातंचमहेंद्रःप्राहिणोद्धरेः ॥ यत्रचावस्थितोमर्त्योमर्त्यधर्मैर्नयुज्यते ॥ ५५ ॥ श्यामैककर्णान्वरुणोहयाञ्छुक्लान्मनोजवान् ॥ अष्टौनिधिपतिःकोशान्लोकपालोनिजोदयान् ॥ ५६ ॥ यद्यद्भगवतादत्तमाधिपत्यंस्वसिद्धये ॥ सर्वंप्रत्यर्पयामासुर्हरौभूमिगतेनृप ॥ ५७ ॥ तत्रयोगप्रभावेननीत्वासर्वजनंहरिः ॥ प्रजापालेनरामेणकृष्णःसमनुमंत्रितः ॥ निर्जगामपुरद्वारात्पद्ममालीनिरायुधः ॥ ५८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेदुर्गनिवेशनंनामपंचाशत्तमोध्यायः ॥ ५० ॥ ॥ श्रीशुकउवाच तंविलोक्यविनिष्क्रांतमुज्जिहानमिवोडुपं ॥ दर्शनीयतमंश्यामंपीतकौशेयवाससं ॥ १ ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभामुक्तकंधरं ॥ पृथुदीर्घचतुर्बाहुंनवकंजारुणेक्षणं ॥ २ ॥ ॥ ॥ ॥

द्धयेयद्यदाधिपत्यंदत्तमासीत्तत्सर्वंप्रत्यर्पयामासुरिति ॥ ५७ ॥ यथाकालयवनोनवेत्तिनचासौजनस्तथायोगप्रभावेननीत्वात्वमत्रास्थित्वाप्रजाःपालयअहंपलायिष्यइतिसमनुमंत्रितःकृतानुमंत्रइत्यर्थः ॥ ५८ ॥ इ०भा०द०उ० पंचाशत्तमोध्यायः ॥ ५० ॥ एकपंचाशत्तमेहन्मुचुकुंददृशाहरिः ॥ यवनंमुचुकुंदेनस्तुतःसन्नन्वकंपत ॥ १ ॥ यवनेंद्रसुतात्कालयवनाद्यदुभीषणात् ॥ हरिर्हरगिरःस्वैरंपालनायापलायत ॥ २ ॥ यदागार्ग्यःश्यालेनषंढइत्युक्तस्तदायादवैरुपहसितेक्रुद्धोऽसौश्रीमहेशंप्रसाद्ययदुभीषणंपुत्रंवरंलब्धवान् ततश्चयवनेंद्रेणापुत्रेणस्वक्षेत्रेपुत्रोत्पादनायप्रार्थितोगार्ग्यःकालयवनमजीजनदितिपुराणसिद्धं पुरद्वारान्निष्क्रांतं उज्जिहानमुद्गच्छंतं ॥ १ ॥ २ ॥

नित्यप्रमुदितमित्यादिमुखारविंदविशेषणं ॥ ३ ॥ ४ ॥ नारदोक्तैरेतैर्लक्षणैरयंपुमान्वासुदेवएवनान्योभवितुमर्हति अयंचनिरायुधः अतोऽने नपद्भ्यामेवचलन्निरायुधोऽहंयोत्स्यामीतिनिश्चित्यतंपराङ्मुखंप्राद्रवंतमन्वधावदित्यन्वयः ॥ ५ ॥ ६ ॥ आत्मानंहस्तप्राप्तमिवदर्शयता दूरंनीतइत्यन्वयः ॥ ७ ॥ अहताशुभःअक्षीणकर्मा ॥ ८ ॥ ९ ॥ तंशयानमच्युतंमत्वाअताडयदिति ॥ १० ॥ ११ ॥ तस्यक्रुद्धस्यदृष्टिपा



नित्यप्रमुदितंश्रीमत्सुकपोलंशुचिस्मितं ॥ मुखारविंदंबिभ्राणंस्फुरन्मकरकुंडलं ॥ ३ ॥ वासुदेवोह्ययमिति पुमान्श्रीवत्सलांछनः ॥ चतुर्भुजोऽरविंदाक्षोवनमाल्यतिसुंदरः ॥ ४ ॥ लक्षणैर्नारदप्रोक्तैर्नान्योभवितुम र्हति ॥ निरायुधश्चलन्पद्भ्यांयोत्स्येऽनेननिरायुधः ॥५॥ इतिनिश्चित्ययवनःप्राद्रवंतंपराङ्मुखं ॥ अन्वधाव ज्जिघृक्षुस्तंदुरापमपियोगिनां ॥६॥ हस्तप्राप्तमिवात्मानंहरिणासपदेपदे ॥ नीतोदर्शयतादूरंयवनेशोऽद्रि कंदरं ॥ ७ ॥ पलायनंयदुकुलेजातस्यतवनोचितं ॥ इतिक्षिपन्ननुगतोनैनंप्रापाहताशुभः ॥ ८ ॥ एवंक्षिप्तो ऽपिभगवान्प्राविशद्गिरिकंदरं ॥ सोऽपिप्रविष्टस्तत्रान्यंशयानंददृशेनरं ॥ ९ ॥ नन्वसौदूरमानीयशेतेमामि हसाधुवत् ॥ इतिमत्वाऽच्युतंमूढस्तंपदासमताडयत् ॥ १० ॥ सउत्थायचिरंसुप्तःशनैरुन्मील्यलोचने ॥ दिशोविलोकयन्पार्श्वेतमद्राक्षीदवस्थितं ॥११॥ सतावत्तस्यरुष्टस्यदृष्टिपातेनभारत ॥ देहजेनाग्निनादग्धो भस्मसादभवत्क्षणात् ॥ १२ ॥ राजोवाच कोनामसपुमान्ब्रह्मन्कस्यकिंवीर्यएवच ॥ कस्माद्गुहांगतःशिश्ये किंतेजोयवनार्दनः ॥ १३ ॥ श्रीशुकउवाच सइक्ष्वाकुकुलेजातोमांधातृतनयोमहान् ॥ मुचुकुंदइतिख्यातो ब्रह्मण्यःसत्यसंगरः ॥१४॥ सयाचितःसुरगणैरिंद्राद्यैरात्मरक्षणे ॥ असुरेभ्यःपरित्रस्तैस्तद्रक्षांसोऽकरोच्चि रं ॥ १५ ॥ लब्ध्वागुहंतेस्वःपालंमुचुकुंदमथाब्रुवन् ॥ राजन्विरमतांकृच्छ्राद्भवान्नःपरिपालनात् ॥ १६ ॥



तेनसंदीप्तोयःस्वदेहजोऽग्निस्तेन ॥ १२ ॥ यवनमर्दयतिहिनस्तीतितथासकस्यवंश्यः किंवीर्यः कीदृक्प्रभाववान् किंतेजःकस्यवीर्यंपुत्रइत्य र्थः शिश्येअशयिष्ट ॥ १३ ॥ सत्यःसंगरोयुद्धंप्रतिज्ञावायस्यसः ॥ १४ ॥ १५ ॥ गुहंकार्तिकेयं स्वःपालंस्वर्गपालकंसेनान्यं ॥ १६ ॥

उज्झितास्त्यक्तागताइत्यर्थः ॥ १७ ॥ किंच सुताइति तुल्यकालीयास्त्वत्समानकालीनाः कालिताःविचालिताः ॥ १८ ॥ मत्प्रजाःको ऽन्यःकालयेदितिचेदतआहुः कालइति कालयतेइतस्ततश्चालयति ॥ १९ ॥ तस्यकैवल्यस्य ॥ २० ॥ २१ ॥ गुहायांप्रविष्टःशेतेस्म ॥ २२ ॥

नरलोकेपरित्यज्यराज्यंनिहतकंटकं ॥ अस्मान्पालयतोवीरकामास्तेसर्वउज्झिताः॥१७॥सुतामहिष्योभ वतोज्ञातयोऽमात्यमंत्रिणः ॥ प्रजाश्चतुल्यकालीयानाऽधुनासंतिकालिताः ॥ १८ ॥ कालोबलीयान्बलि नांभगवानीश्वरोऽव्ययः ॥ प्रजाःकालयतेक्रीडन्पशुपालोयथापशून् ॥ १९ ॥ वरंवृणीष्वभद्रंतेऋतेकैव ल्यमद्यनः ॥ एकएवेश्वरस्तस्यभगवान्विष्णुरव्ययः ॥२०॥ एवमुक्तःसवैदेवानभिवंद्यमहायशाः ॥ निद्रा मेवततोवव्रेसराजाश्रमकर्षितः ॥ २१ ॥ यःकश्चिन्ममनिद्रायाभंगंकुर्यात्सुरोत्तमाः ॥ सहिभस्मीभवेदा शुतथोक्तश्चसुरैस्तदा ॥ अशयिष्टगुहाविष्टोनिद्रयादेवदत्तया ॥ २२ ॥ स्वापंयातंयस्तुमध्येबोधयेत्त्वाम चेतनः ॥ सत्वयादृष्टमात्रस्तुभस्मीभवतुतत्क्षणात् ॥ २३ ॥ यवनेभस्मसान्नीतेभगवान्सात्वतर्षभः ॥ आ त्मानंदर्शयामासमुचुकुंदायधीमते ॥ २४ ॥ तमालोक्यघनश्यामंपीतकौशेयवाससं ॥ श्रीवत्सवक्षसंभ्रा जत्कौस्तुभेनविराजितं ॥ २५ ॥ चतुर्भुजंरोचमानंवैजयंत्याचमालया ॥ चारुप्रसन्नवदनंस्फुरन्मकरकुंडलं ॥ २६ ॥ प्रेक्षणीयंनृलोकस्यसानुरागस्मितेक्षणं ॥ अपीच्यवयसंमत्तमृगेंद्रोदारविक्रमं ॥ २७ ॥ पर्यपृ च्छन्महाबुद्धिस्तेजसातस्यधर्षितः ॥ शंकितःशनकैराजादुर्धर्षमिवतेजसा ॥ २८ ॥ मुचुकुंदउवाच कोभ निहसंप्राप्तोविपिनेगिरिगह्वरे ॥ पद्भ्यांपद्मपलाशाभ्यांविचरस्युरुकंटके ॥ २९ ॥ किंस्वित्तेजस्विनांतेजो भगवान्वाविभावसुः ॥ सूर्यःसोमोमहेंद्रोवालोकपालोपरोपिवा ॥ ३० ॥ मन्येत्वांदेवदेवानांत्रयाणांपुरुषर्ष भं ॥ यद्बाधसेगुहाध्वांतंप्रदीपःप्रभयायथा ॥ ३१ ॥ ॥ ॥ ॥

२३ ॥ २४॥ २५॥ २६ ॥ २७ ॥ धर्षितःआभिभूतः दुर्धर्षमप्रधृष्यं ॥ २८ ॥ विपिनेअरण्येतत्रापिगिरेर्गव्हरेदुष्प्रवेशस्थानेतत्रापिउरुकंटकेपद्म पलाशसदृशाभ्यांपद्भ्यांविचरसीति ॥ २९ ॥ तेजःमूर्तिःप्रभावोदीप्तिर्वा ॥ ३० ॥ सर्वत्रापरितोषादाह मन्यइति पुरुषर्षभंश्रीविष्णुं गुहाध्वांतमंतस्तमः ॥ ३१ ॥ ॥ ॥ ॥

॥३२॥वयंत्विति वंश्याभिप्रायेणबहुवचनं तेष्वहंमुचुकुंदइति प्रोक्तइति युवनाश्वोमांधातुः पिताअतोमांधातायौवनाश्वः॥३३॥३४॥३५॥
॥ ३६ ॥ ३७ ॥ ३८ ॥ क्वचित्कदाचित्कश्चित्तु्यद्यपिरजांस्यपिविममेगणितवांस्तथापिजन्मानिकर्माणिनविमिमीते ॥ ३९ ॥ ४० ॥



शुश्रूषतामव्यलीकमस्माकंनरपुंगव ॥ स्वजन्मकर्मगोत्रंवाकथ्यतांयदिरोचते ॥ ३२ ॥ वयंतुपुरुषव्याघ्र
ऐक्ष्वाकाःक्षत्रबंधवः ॥ मुचुकुंदइतिप्रोक्तोयौवनाश्वात्मजःप्रभो ॥ ३३ ॥ चिरप्रजागरश्रांतोनिद्रयापहतें
द्रियः ॥ शयेऽस्मिन्विजनेकामंकेनाप्युत्थापितोऽधुना ॥ ३४ ॥ सोऽपिभस्मीकृतोनूनमात्मीयेनैवपाप्मना
अनंतरंभवान्श्रीमाँल्लक्षितोऽमित्रशातनः ॥ ३५ ॥ तेजसातेऽविषह्येणभूरिद्रष्टुंनशक्नुमः ॥ हतौजसोम
हाभागमाननीयोऽसिदेहिनां ॥३६॥ एवंसंभाषितोराज्ञाभगवान्भूतभावनः ॥ प्रत्याहप्रहसन्वाण्यामेघ
नादगभीरया ॥ ३७ ॥ श्रीभगवानुवाच जन्मकर्माभिधानानिसंतिमेंऽगसहस्रशः ॥ नशक्यंतेऽनुस
ख्यातुमनंतत्वान्मयाऽपिहि ॥३८॥ क्वचिद्रजांसिविममेपार्थिवान्युरुजन्मभिः ॥ गुणकर्माभिधानानिनमेज
न्मानिकर्हिचित् ॥ ३९ ॥ कालत्रयोपपन्नानिजन्मकर्माणिमेनृप ॥ अनुक्रमंतोनैवांतंगच्छंतिपरमर्षयः॥
॥४०॥ तथाप्यद्यतनान्यंगशृणुष्वगदतोमम ॥ विज्ञापितोविरिंचेनपुराऽहंधर्मगुप्तये ॥ भूमेर्भारायमाणा
नामसुराणांक्षयायच ॥४१॥ अवतीर्णोयदुकुलेगृहआनकदुंदुभेः॥वदंतिवासुदेवेतिवसुदेवसुतंहिमां॥४२॥
कालनेमिर्हतःकंसःप्रलंबाद्याश्चसद्द्विषः ॥ अयंचयवनोदग्धोराजंस्तेतिग्मचक्षुषा ॥ ४३ ॥ सोऽहंतवानुग्र
हार्थंगुहामेतामुपागतः ॥ प्रार्थितःप्रचुरंपूर्वंत्वयाहंभक्तवत्सलः ॥ ४४ ॥ वरान्वृणीष्वराजर्षेसर्वान्कामा
न्ददामिते ॥ मांप्रपन्नोजनःकश्चिन्नभूयोऽर्हतिशोचितुं ॥ ४५ ॥ ॥ ॥ ॥



॥ ४१ ॥ ४२ ॥ तेतिग्मचक्षुषानिमित्तेनमयैवदग्धः ॥ ४३ ॥ ४४ ॥ अपूर्णोऽहमितिशोचितुं यद्दा अन्यैर्दत्तेषुवरेषुक्षीयमाणेषुयथाशो
चतिनैवंमांप्रपन्नः मद्दत्तवराणामक्षय्यत्वादितिभावः ॥ ४५ ॥ ॥ ॥ ॥ ॥

अष्टाविंशतिमेयुगेभगवानवतरिष्यतीतिवृद्धगर्गवाक्यमनुस्मरन्नित्यर्थः ॥४६॥ त्वद्भक्तिरेवकेवलंदुर्लभाकामास्तुतुच्छानवरणयोग्याइत्याश
येनाभक्तानांसंसारमष्टभिः प्रपंचयन्स्तौति विमोहितइति हेईशयोषित्पुरुषश्चेतिद्विविधोऽप्ययंजनस्त्वदीययामाययाविमोहितोऽतोऽनर्थ
दृक्अनर्थेसंसारेदृक्दृष्टिर्यस्यासौ यद्वा अर्थंपरमार्थस्वरूपंत्वांनपश्यतीतितथा अतस्त्वांनभजतिकिंतुपरस्परंवंचितःसन्सुखेच्छयादुः
खानामेवप्रभवोयेषुतेषुगृहेष्वेवसज्जतइति ॥४७॥ किंच कामसुखंसूकरादिष्वपिसंभवतिभगवद्भजनंतुनमानुषजन्मव्यतिरेकेणेतिमानुष
त्वंप्राप्यत्वामभजन्नतिमूढइत्याह लब्ध्वेति अत्रकर्मभूमौदुर्लभमुद्यमकोटिभिरपिदुष्प्रापं अव्यंगमविकलांगं किंच असतिविषयसुखेम
तिर्यस्यसः गृहमेवांधकूपस्तस्मिन्निपतितः यथापशुस्तृणलुब्धोंऽधकूपेपततीति ॥४८॥नकेवलमस्यजनस्येयंगतिः किंतुममापितथैवेत्याह

श्रीशुकउवाच इत्युक्तस्तंप्रणम्याहमुचुकुंदोमुदान्वितः ॥ ज्ञात्वानारायणंदेवंगर्गवाक्यमनुस्मरन् ॥४६॥
मुचुकुंदउवाच विमोहितोऽयंजनईशमाययात्वदीययात्वांनभजत्यनर्थदृक् ॥सुखायदुःखप्रभवेषुसज्जतेगृ
हेषुयोषित्पुरुषश्चवंचितः ॥४७॥लब्ध्वाजनोदुर्लभमत्रमानुषंकथंचिदव्यंगमयत्नतोऽनघ ॥पादारविंदंनभ
जत्यसन्मतिर्गृहांधकूपेपतितोयथापशुः ॥ ४८ ॥ ममैषकालोऽजितनिष्फलोगतोराज्यश्रियोन्नद्धमदस्यभू
पतेः ॥ मर्त्यात्मबुद्धेःसुतदारकोशभूष्वासज्जमानस्यदुरंतचिंतया ॥ ४९ ॥ कलेवरेऽस्मिन्घटकुड्यसंनिभे
निरूढमानोनरदेवइत्यहं ॥ वृतोरथेभाश्वपदात्यनीकपैर्गांपर्यटंस्त्वाऽगणयन्सुदुर्मदः ॥५० ॥ प्रमत्तमुच्चैरि
तिकृत्यचिंतयाप्रवृद्धलोभंविषयेषुलालसं ॥ त्वमप्रमत्तःसहसाभिपद्यसेक्षुल्लेलिहानोऽहिरिवाखुमंतकः ॥५१

ममैषइति मर्त्येशरीरेआत्मबुद्धिर्यस्यतस्यममअतएवसुतादिषुआसज्जमानस्य ॥४९॥ उन्नद्धमदत्वंप्रपंचयति कलेवरइति घटकुड्यादिसदृ
शेदृश्येअनात्मनियतएवंसुदुर्मदोऽभवमतोममैषकालोनिष्फलोगतइति ॥५०॥ त्वामगणयंतंत्वमाक्रमसीत्याह प्रमत्तमिति प्रमत्तमनवहितं
त्वामंतकमविगणय्यदेहादिष्वासक्तमितियावत् कुतः प्रमत्तं इतिकृत्यचिंतयाएवमेवंकरणीयमितिमनोरथपरंपरया मनोरथेभग्नेऽपिविष
येषुलालसमुत्सुकंप्राप्तेऽपिपुनः प्रवृद्धोलोभस्तृष्णायस्यतंअंतकस्त्वमभिपद्यसेअभिभवसीत्यर्थः क्षुधासृक्किणींलेलिहानोऽहिराखुंमूषक
मिवेति ॥ ५१ ॥ ॥ ॥ ॥ ॥ ॥

किंच कालात्मनात्वयाऽभिपन्नोदेहएवंभवतीत्याह पुरेति इवसृगालादिभिर्भक्षितोविट्संज्ञितस्तैरभक्षितःकृमिसंज्ञितोदग्धोभस्मसंज्ञितोभवतीतिबुध्याविचार्यैवंभूतशरीरेममतांकुर्वतोजनाहरिंनाराधयंतितेआत्मनिशत्रुभूताज्ञेयाः सततंयतः योनेःसहस्राणिबहूनिगत्वादुःखनलब्ध्वापिचमानुषत्वं सुखावहंयेनभजंतिविष्णुंतेवैमनुष्यात्मनिशत्रुभूताइति ॥ ५२ ॥ किंच अंतकप्राप्तेःप्रागपिदिग्विजयिनोराज्ञोऽपि पारतंत्र्यदुःखंतदवस्थमेवेत्याह निर्जित्येति अभूतविग्रहःअविद्यमानसंग्रामःपूर्वंयेसमानाराजानस्तैराजभिर्वंदितोऽपिमिथुनीभावःसुरतमेवपरंयेषुतेषुयोषितांगृहेषुक्रीडामृगइवइतस्ततोनीयते ॥ ५३ ॥ किंच अतितृष्णाकुलस्यनभोगक्षणःकश्चिदस्तीत्याह करोतीति तपसि अधःशयनब्रह्मचर्यादौसुनिष्ठितःपुनश्चस्वराडिंद्रःस्यामिति यद्वा जन्मांतरेष्वेवमेवचक्रवर्तीस्यामिति ॥ ५४ ॥ तदेवमष्टभिःश्लोकैरीश

पुरारथैर्हेमपरिष्कृतैश्चरन्मतंगजैर्वानरदेवसंज्ञितः ॥ सएवकालेनदुरत्ययेनतेकलेवरोविट्कृमिभस्मसंज्ञितः ॥ ५२ ॥ निर्जित्यदिक्चक्रमभूतविग्रहोवरासनस्थःसमराजवंदितः ॥ गृहेषुमैथुन्यसुखेषुयोषितांक्रीडामृगःपूरुषईशनीयते ॥ ५३ ॥ करोतिकर्माणितपःसुनिष्ठितोनिवृत्तभोगस्तदपेक्षयाददत् ॥ पुनश्चभूयेयमहंस्वराडितिप्रवृद्धतर्षोनसुखायकल्पते ॥ ५४ ॥ भवापवर्गोभ्रमतोयदाभवेज्जनस्यतर्ह्यच्युतसत्समागमः ॥ सत्संगमोयर्हितदैवसद्गतौपरावरेशेत्वयिजायतेमतिः ॥ ५५ ॥ मन्येममानुग्रहईशतेकृतोराज्यानुबंधापगमोयदृच्छया ॥ यःप्रार्थ्यतेसाधुभिरेकचर्ययावनंविविक्षद्भिरखंडभूमिपैः ॥ ५६ ॥ नकामयेऽन्यंतवपादसेवनादकिंचनप्रार्थ्यतमाद्वरंविभो ॥ आराध्यकस्त्वांह्यपवर्गदंहरेवृणीतआर्योवरमात्मबंधनं ॥ ५७ ॥

बहिर्मुखानांसंसारंप्रपंच्यभक्त्यातन्निवृत्तिक्रममाह भवापवर्गइति भोअच्युतभ्रमतः संसरतोजनस्ययदात्वदनुग्रहेणभवस्यबंधस्यअपवर्गःअंतोभवेत्प्राप्तकालःस्यात्तदासतांसंगमोभवेत् यदाचसत्संगमोभवेत्तदासर्वसंगनिवृत्त्याकार्यकारणनियंतरित्वयिभक्तिर्भवतिततोमुच्यत इत्यर्थः ॥ ५५ ॥ ममतुसत्संगमात्पूर्वमेवयोराज्यादिसंगविच्छेदोजातःसोऽयंत्वयामहाननुग्रहःकृतइत्याह मन्यइति तेत्वयासाधुभिर्विवेकिभिस्तपसेवनंप्रवेष्टुमिच्छद्भिःस्वयंत्यक्तुमलभमानैःप्रार्थ्यतइति ॥ ५६ ॥ तदेवंविषयसेवामार्गंभगवत्सेवामार्गंचविविच्यवरान्वृणीष्वेतियदुक्तंतत्रोत्तरमाह नकामयइति अकिंचनानिवृत्ताभिमानाः आर्योविवेकी ॥ ५७ ॥ ॥ ॥ ॥

रजस्तमःसत्वगुणैरनुबध्यंतइतितथाताःआशिषःऐश्वर्यादिशत्रुमरणादिधर्मादिरूपाःविसृज्यपरंपुरुषमीश्वरंज्ञप्तिमात्रंज्ञानघनं कुतः निरं
जनं तत्कुतःनिर्गुणं तदपिकुतः अद्वयं अतएवअक्षरंत्वांशरणंव्रजामीति ॥ ५८ ॥ भुंक्ष्वतावत्भोगान्कैवल्यंतुकरस्थमेवेतिपुनर्वरैः प्रलोभ यं
तंश्रीकृष्णंपादोपग्रहणेनप्रार्थयते चिरमितिवृजिनैःकर्मफलैरार्तःपुनस्तद्वासनाभिस्तप्यमानस्तथापिअवितृषषडमित्रःतृडेवतृषातृष्णा नावि
गततृषाःषडमित्राःशत्रवःइंद्रियलक्षणायस्यसःअतएवालब्धशांतिः कथंचिद्दैववशेनलब्धशांतिरितिवा शरणंस्वज्ञानंतद्ददातीतितथाहेशर

तस्माद्विसृज्याशिषईशसर्वतोरजस्तमःसत्वगुणानुबंधनाः ॥ निरंजनंनिर्गुणमद्वयंपरंत्वांज्ञप्तिमात्रंपुरुषंव्र
जाम्यहं ॥ ५८ ॥ चिरमिहवृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोऽलब्धशांतिःकथंचित् ॥ शरण
दसमुपेतस्त्वत्पदाब्जंपरात्मन्नभयमृतमशोकंपाहिमापन्नमीश ॥५९॥ श्रीभगवानुवाच सार्वभौममहारा
जमतिस्तेविमलोर्जिता ॥ वरैःप्रलोभितस्यापिनकामैर्विहतायतः ॥ ६० ॥ प्रलोभितोवरैर्यत्त्वमप्रमादाय
विद्धितत् ॥ नधीर्मय्येकभक्तानामाशीर्भिर्भिद्यतेक्वचित् ॥ ६१ ॥ युंजानानामभक्तानांप्राणायामादिभिर्म
नः ॥ अक्षीणवासनंराजन्दृश्यतेपुनरुत्थितं ॥ ६२ ॥ विचरस्वमहींकामंमय्यावेशितमानसः ॥ अस्त्वेवनि
त्यदातुभ्यंभक्तिर्मय्यनपायिनी ॥ ६३ ॥ क्षात्रधर्मेस्थितोजंतून्न्यवधीर्मृगयादिभिः ॥ समाहितस्तत्तपसा
जह्यघंमदुपाश्रितः ॥ ६४ ॥ जन्मन्यनंतरेराजन्सर्वभूतसुहृत्तमः ॥ भूत्वाद्विजवरस्त्वंवैमामुपैष्यासिकेवलं
॥ ६५ ॥ इतिश्रीभा०म०द०उ०मुचुकुंदस्तुतिर्नामैकपंचाशत्तमोध्यायः ॥ ५१ ॥ ॥ ॥ श्रीशुकउवाच
इत्थंसोऽनुगृहीतोंगकृष्णेनेक्ष्वाकुनंदनः ॥ तंपरिक्रम्यसंनम्यनिश्चक्रामगुहामुखात् ॥

णद समुपेतःप्राप्तोऽहं अशोकत्वेहेतुः अभयं तत्रापिहेतुः ऋतंसत्यंआपन्नमापदाव्याप्तंपाहीति ॥ ५९ ॥ ६० ॥ अप्रमादायप्रमादायनभवति
एवंकुतइत्यतआह नधीरिति एकांतभक्तानांधीराशीर्भिःप्राप्ताभिरपिनाभिद्यतेनासज्जतइत्यर्थः ॥ ६१ ॥ व्यतिरेकमाह युंजानानामिति उत्थि
तंविषयाभिमुखं ॥ ६२ ॥ तुभ्यंतव ॥ ६३ ॥ युक्त्याभासेनभीषयंस्तपसिलोकसंग्रहेप्रवर्तयति क्षात्रधर्मेइति ॥ ६४ ॥ ६५ ॥ इ०भा०द०उ०
टी०एकपंचाशत्तमोध्यायः ॥५१॥ ॥ द्विपंचाशत्तमेधावन्भयादिवगतःपुरीं ॥ अन्वमोदतसंदेशंरुक्मिण्याद्विजवर्णितं ॥ १ ॥ १ ॥

क्षुल्लकान् अल्पप्रमाणान् ॥२॥ तपसिश्रद्धायुतः ॥३॥ तत्रचबदर्याश्रमं ॥४॥ निन्येनयन्मार्गेचलतिस्म ॥५॥६॥ रभसंवेगोद्रेकं ॥७॥ भीरुभीतवत् भीरोरपिभीतवत् अतिभीतवदित्यर्थः चेलतुःपलायेतां बहुयोजनंदेशं ॥ ८ ॥ अप्रमाणवित् प्रमाणमियत्तातन्नवेत्तीतितथा ॥ ९ ॥ तुंगमेकादशयोजनोन्नतं प्रकर्षेणवर्षत्यस्मिन्निति प्रवर्षणइत्याख्यायस्यतं तदाह भगवानिति भगवानिंद्रः ॥ १० ॥ तत्रविचि



सवीक्ष्यक्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन् ॥ मत्वाकलियुगंप्राप्तंजगामदिशमुत्तरां ॥ २ ॥ तपःश्रद्धायुतोधीरोनिःसंगोमुक्तसंशयः ॥ समाधायमनःकृष्णेप्राविशद्गंधमादनं ॥ ३ ॥ बदर्याश्रममासाद्यनरनारायणालयं ॥ सर्वद्वंद्वसहःशांतस्तपसाराधयद्धरिं ॥ ४ ॥ भगवान्पुनराव्रज्यपुरींयवनवेष्टितां ॥ हत्वाम्लेच्छबलंनिन्येतदीयंद्वारकांधनं ॥ ५ ॥ नीयमानेधनेगोभिर्नृभिश्चाच्युतचोदितैः ॥ आजगामजरासंधस्त्रयोविंशत्यनीकपः ॥ ६ ॥ विलोक्यवेगरभसंरिपुसैन्यस्यमाधवौ ॥ मनुष्यचेष्टामापन्नौराजन्दुद्रुवतुर्द्रुतं ॥ ७ ॥ विहायवित्तंप्रचुरमभीतौभीरुभीतवत् ॥ पद्भ्यांपद्मपलाशाभ्यांचेलतुर्बहुयोजनं ॥ ८ ॥ पलायमानौतौदृष्ट्वामागधःप्रहसन्बली ॥ अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ॥ ९ ॥ प्रद्रुत्यदूरंसंश्रांतौतुंगमारुहतांगिरिं ॥ प्रवर्षणाख्यंभगवान्नित्यदायत्रवर्षति ॥ १० ॥ गिरौनिलीनावाज्ञायनाधिगम्यपदंनृपः ॥ ददाहगिरिमेधोभिःसमंतादग्निमुत्सृजन् ॥ ११ ॥ ततउत्पत्त्यतरसादह्यमानतटादुभौ ॥ दशैकयोजनोत्तुंगान्निपेततुरधोभुवि ॥ १२ ॥ अलक्ष्यमाणौरिपुणासानुगेनयदूत्तमौ ॥ स्वपुरंपुनरायातौसमुद्रपरिखांनृप ॥ १३ ॥ सोऽपिदग्धावितिमृषामन्वानोबलकेशवौ ॥ बलमाकृष्यसुमहन्मगधान्मागधोययौ ॥ १४ ॥ आनर्ताधिपतिःश्रीमान्रैवतोरेवतींसुतां ॥ ब्रह्मणाचोदितःप्रादाद्बलायेतिपुरोदितं ॥ १५ ॥ भगवानपिगोविंदउपयेमेकुरूद्वह ॥ वैदर्भींभीष्मकसुतांश्रियोमात्रांस्वयंवरे ॥ १६ ॥ ॥ ॥ ॥



न्वन्नपितयोःपदंनिलयस्थानमनधिगम्य ॥ ११ ॥ ततोगिरेः दशचैकंचयोजनानितावदुत्तुंगान्मागधसंरोधदेशमतिक्रम्यपरतोऽधोनिपेततुः ॥१२॥१३॥१४॥ श्रीकृष्णस्यविवाहंनिरूपयितुंबलदेवविवाहंनवमस्कंधोक्तमनुस्मारयाति आनर्तेति ॥ १५ ॥ मात्रांकलां ॥ १६ ॥

गरुडोयथादेवान्प्रमथ्यसुधामहरत्तथेति ॥ १७ ॥ राक्षसोयुद्धहरणादितिस्मृतेःराज्ञःप्रमथ्येतिचत्वदुक्त्याराक्षसेनविधानेनोपयेमेपरिणी तवानितिश्रुतं पूर्वमेववासामान्यतएवश्रुतं ॥१८॥ विशेषंतुश्रोतुमिच्छामः॥१९॥श्रवणौत्सुक्यमाविष्करोति ब्रह्मन्निति पुण्याःमहाफलाः माध्वीःश्रुतिसुखाःलोकस्यमलापहाश्वशृण्वानःशृण्वन्नित्यर्थः श्रुतज्ञःश्रुतसारवित् नित्यनूतनाःप्रतिक्षणमाश्चर्यवत्प्रतयिमानाः ॥ २० ॥

प्रमथ्यतरसाराज्ञःशाल्वादींश्चैद्यपक्षगान् ॥ पश्यतांसर्वलोकानांताक्ष्र्यपुत्रःसुधामिव ॥१७॥ राजोवाच भगवान्भीष्मकसुतांरुक्मिणींरुचिराननां ॥ राक्षसेनविधानेनउपयेमइतिश्रुतं ॥ १८ ॥ भगवन्श्रोतु मिच्छामःकृष्णस्यामिततेजसः ॥ यथामागधशाल्वादीन्जित्वाकन्यामुपाहरत् ॥ १९ ॥ ब्रह्मन्कृष्णक थाःपुण्यामाध्वीर्लोकमलापहाः ॥ कोऽनुतृप्येतशृण्वानःश्रुतज्ञोनित्यनूतनाः ॥ २० ॥ श्रीशुकउवाच राजासीद्भीष्मकोनामविदर्भाधिपतिर्महान् ॥ तस्यपंचाभवन्पुत्राःकन्यैकाचवरानना ॥ २१ ॥ रुक्म्यग्र जोरुक्मरथोरुक्मबाहुरनंतरः ॥ रुक्मकेशोरुक्ममालीरुक्मिण्येषांस्वसासती ॥ २२ ॥ सोपश्रुत्यमुकुंद स्यरूपवीर्यगुणश्रियः ॥ गृहागतैर्गीयमानास्तंमेनेसदृशंपतिं ॥ २३ ॥ तांबुद्धिलक्षणौदार्यरूपशीलगु णाश्रयां ॥ कृष्णश्चसदृशींभार्यांसमुद्वोढुंमनोदधे ॥ २४ ॥ बंधूनामिच्छतांदातुंकृष्णायभगिनींनृप ॥ त तोनिवार्यकृष्णद्विड्रुक्मीचैद्यममन्यत ॥ २५ ॥ तदवेत्यासितापांगीवैदर्भीदुर्मनाभृशं ॥ विचिंत्याप्तंद्वि जंकंचित्कृष्णायप्राहिणोद्द्रुतं ॥ २६ ॥ द्वारकांससमभ्येत्यप्रतीहारैःप्रवेशितः ॥ अपश्यदाद्यंपुरुषमा सीनंकांचनासने ॥ २७ ॥ दृष्ट्वाब्रह्मण्यदेवस्तमवरुह्यनिजासनात् ॥ उपवेश्यार्हयांचक्रेयथात्मानंदिवौ कसः ॥ २८ ॥ तंभुक्तवंतंविश्रांतमुपगम्यसतांगतिः ॥ पाणिनाऽभिमृशन्पादावव्यग्रस्तमपृच्छत ॥ २९ ॥ कच्चिद्द्विजवरश्रेष्ठधर्मस्तेवृद्धसंमतः ॥ वर्ततेनातिकृच्छ्रेणसंतुष्टमनसःसदा ॥ ३० ॥ ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ चैद्यममन्यततस्यावरमित्यर्थः ॥ २५ ॥ अवेत्यज्ञात्वा असितापांगीसुनीलकटाक्षा कृष्णायकृष्णमा नेतुंप्रेषयामास ॥ २६ ॥ प्रतीहारैर्द्वारपालैः ॥ २७ ॥ आत्मानंश्रीकृष्णं ॥ २८ ॥ अभिमृशन्शनैःसंमर्दयन् ॥ २९ ॥ ३० ॥

सधर्मोऽस्यब्राह्मणस्याखिलकामदोग्धाभवति यद्वा सब्राह्मणोऽस्यविश्वस्याखिलकामधुक्इति ॥ ३१ ॥ लोकानाप्नोतिलोकाल्लोकांतरं पर्यटतिनैकत्रनिर्वृतास्तिष्ठतीत्यर्थः नाप्नोतीतिपाठेसुरेश्वरोऽपिभूत्वालोकान्नाप्नोत्युत्तमलोकान्प्राप्तोऽप्यप्राप्तइवक्लिश्यतीत्यर्थः शेतेसुखमास्तेइत्यर्थः तदेवाह सर्वेष्वंगेषुवाक्पाण्यादिषुविज्वरस्तापरहितः ॥ ३२ ॥ स्वलाभःस्वतएवप्राप्तोलाभःआत्मलाभोवातेनसंतुष्टान्पूर्णान्साधून्स्वधर्मनिष्ठान् ॥ ३३ ॥ यस्यराज्ञोविषयेदेशे ॥ ३४ ॥ यतःस्थानात् यदिच्छयायत्कार्येच्छया दुर्गंसमुद्रं ॥ ३५ ॥ संपृष्टःसं

संतुष्टोयर्हिवर्तेतब्राह्मणोयेनकेनचित् ॥ अहीयमानःस्वाद्धर्मात्सह्यस्याखिलकामधुक् ॥ ३१ ॥ असंतुष्टोऽसकृल्लोकानाप्नोत्यपिसुरेश्वरः ॥ अकिंचनोऽपिसंतुष्टःशेतेसर्वांगविज्वरः ॥३२॥ विप्रान्स्वलाभसंतुष्टान्साधूनूभूतसुहत्तमान् ॥ निरहंकारिणःशांतान्नमस्येशिरसाऽसकृत् ॥ ३३ ॥ कच्चिद्वःकुशलंब्रह्मन्राजतोयस्यहिप्रजाः ॥ सुखंवसंतिविषयेपाल्यमानाःसमेप्रियः ॥३४॥ यतस्त्वमागतोदुर्गंनिस्तीर्येहयदिच्छया ॥ सर्वंनोब्रूह्यगुह्यंचेत्किंकार्यंकरवामते ॥३५॥ एवंसंपृष्टसंप्रश्नोब्राह्मणःपरमेष्ठिना ॥ लीलागृहीतदेहेनतस्मैसर्वमवर्णयत् ॥ ३६ ॥ रुक्मिण्युवाच श्रुत्वागुणान्भुवनसुंदरशृण्वतांतेनिर्विश्यकर्णविवरैर्हरतोऽगतापं ॥ रूपंदृशांदृशिमतामखिलार्थलाभंत्वय्यच्युताविशतिचित्तमपत्रपंमे ॥ ३७ ॥

प्रश्नःप्रष्टव्योऽर्थोयस्यसः परमेष्ठिनापरमेश्वरेण बंधूनामनभिप्रेतंरुक्मिणश्चेष्टितमित्यादिसर्वं ॥३६॥ रुक्मिण्यास्वयमेकांतेलिखित्वादत्तपात्रिकां॥मुद्रामुन्मुच्यकृष्णायप्रेमचिन्हामदर्शयत्॥ब्राह्मणःश्रीकृष्णानुज्ञयावाचयति श्रुत्वेति अयमर्थः हेअच्युतहेभुवनसुंदरेतिऔत्सुक्यंद्योतयति क्वतवमहिमाक्वचाहंरूपकुलशीलादियुक्तापितथाऽपिअपगतात्रपायस्मात्तन्मेचित्तंत्वयिआविशतिआसज्जते तत्कुतस्तत्राहशृण्वतांकर्णविवरैरंतःप्रविश्य अंगतापं अंगेतिपृथक्संबोधनंवा हरतस्तवगुणान्श्रुत्वातथादृशिमतांचक्षुष्मतांदृशामखिलार्थलाभात्मकंरूपंच श्रुत्वेति ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥

अहोकुलकन्यानामिदमतिधार्ष्ट्यमितिमाशंकस्वेत्याह कात्वेति हेमुकुंदनृसिंहनरश्रेष्ठकानामकन्याकुलवतीतथामहतीपुरुगुणोदारातथा धीराधृतिमतीत्वात्वांपार्तिंनवृणीत मय्येवकेयंदोषशंकेतिभावः कथंभूतं गुणशीलादिभिरात्मनैवतुल्यंनिरुपममित्यर्थः द्रविणंद्रव्यसंपत् धामप्रभावः तथानरलोकस्यमनसामभिरामोऽभिरमणंयस्मात्तं किंच कालेविवाहावसरे ॥ ३८॥ हेविभोतत्तस्मान्मेमयाभवान्खलुपतिर्वृ तःआत्माचभवतोऽर्पितः अतस्त्वमत्रागत्यमांभवतोजायांविधेहि विपक्षेबाधकंद्योतयंत्याह मावीरभागमिति वीरस्यतवभागमाराच्छीघ्र मेत्यागत्यचैद्योमाभिमर्शतुमास्पृशतु मृगपतेर्बलिंगोमायुवत्गोमायुःसृगालइवेति ॥ ३९ ॥ अनेकजन्मकृतैःसुकृतैरिदमेवभूयादिति

कात्वामुकुंदमहतीकुलशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यं ॥ धीरापतिंकुलवतीनवृणीतकन्याका लेनृसिंहनरलोकमनोभिरामं ॥ ३८ ॥ तन्मेभवान्खलुवृतःपतिरंगजायामात्मार्पितश्चभवतोऽत्रविभोवि धेहि ॥ मावीरभागमभिमर्शतुचैद्यआराद्गोमायुवन्मृगपतेर्बलिमंबुजाक्ष ॥ ३९ ॥ पूर्तेष्टदत्तनियमव्रतदेववि प्रगुर्वर्चनादिभिरलंभगवान्परेशः॥आराधितोयदिगदाग्रजएत्यपाणिंगृण्हातुमेनदमघोषसुतादयोऽन्ये ॥ ॥ ४० ॥ श्वोभाविनित्वमजितोद्वहनेविदर्भान्गुप्तःसमेत्यपृतनापतिभिःपरीतः ॥ निर्मथ्यचैद्यमगधेंद्रबलं प्रसह्यमांराक्षसेनविधिनोद्वहवीर्यशुल्कां ॥ ४१ ॥ अंतःपुरांतरचरीमनिहत्यबंधूंस्त्वामुद्वहेकथमितिप्रव दाम्युपायं ॥ पूर्वेद्युरस्तिमहतीकुलदेवियात्रायस्यांबहिर्नववधूर्गिरिजामुपेयात् ॥ ४२ ॥

प्रार्थयते पूर्तेति पूर्तंकूपादि इष्टमग्निहोत्रादि दत्तंहिरण्यादि नियमस्तीर्थाटनादिः व्रतंकृच्छ्रादि ॥ ४० ॥ चैद्यायबंधुभिरर्पितायांत्व यिकिमधुनाकरणीयमित्यपेक्षायामाह श्वोभाविनीति हेअजितश्वोभाविनिउद्वहनेविवाहेप्रथमंगुप्तः अलक्षितएवागत्यपश्चात्पृतनाप तिभिःपरिवृतःसंश्चैद्यादिबलंनिर्मथ्यप्रसह्यबलाद्वीर्यप्रभावदर्शनमेवशुल्कंवैवाहिकंदेयंयस्यास्तांमां अनेनराक्षसविधिनोद्वहेत्युपदेशरहस्यं ॥ ४१ ॥ ननुभवतुशिशुपालादिबलप्रमथनमंतःपुरमध्यगतायास्तवहरणेत्वद्बंधुवधोऽपिप्रसज्येतेत्यतआह अंतःपुरेति पुराद्बहिर्वर्त मानांगिरिजामंबिकां अंबिकागृहादेवममहरणंसुकरमितिभावः॥४२॥ ॥ ॥ ॥ ॥

ननुकिमनेनानर्थकारिणानिर्बंधेनचैद्योऽपितावत्प्रख्यातगुणकर्मायोग्यएववरइतितत्राह यस्येति हेअंबुजाक्षयस्यभवतोंऽघ्रिपंकजरजोभिः स्नपनमात्मनस्तमसोऽपहत्यैउमापतिरिवमहांतोवांछंतितस्यभवतःप्रसादंयर्ह्यहंनलभेयनप्राप्नुयांतर्हिव्रतैरुपवासादिभिः कृशानसूनप्राणान् जह्यांत्यजेयं ततःकिमित्यतआह शतजन्मभिरिति एवमेववारंवारंजह्यांयावच्छतजन्मभिरपितवप्रसादःस्यादिति ॥ ४३ ॥ अत्रयत्कर्तुंक रणीयंतद्विमृश्यक्रियतांतत्रानंतरमेवक्रियतामिति ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेटीकायांउत्तरार्धेद्विपंचाशत्तमोऽध्यायः ॥

यस्यांघ्रिपंकजरजःस्नपनंमहांतोवांछंत्युमापतिरिवात्मतमोऽपहत्यै ॥ यर्ह्यंबुजाक्षनलभेयभवत्प्रसादंज ह्यामसून्व्रतकृशान्शतजन्मभिःस्यात् ॥ ४३ ॥ ब्राह्मणउवाच इत्येतेगुह्यसंदेशायदुदेवमयाहृताः ॥ वि मृश्यकर्तुंयच्चात्रक्रियतांतदनंतरं ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेरुक्मिण्युद्वाहे द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ श्रीशुकउवाच वैदर्भ्याःसतुसंदेशंनिशम्ययदुनंदनः ॥ प्रगृह्यपाणि नापाणिंप्रहसन्निदमब्रवीत् ॥ १ ॥ श्रीभगवानुवाच तथाहमपितच्चित्तोनिद्रांचनलभेनिशि ॥ वेदाहंरु क्मिणाद्वेषान्ममोद्वाहोनिवारितः ॥ २ ॥ तामानयिष्यउन्मथ्यराजन्यापसदान्मृधे ॥ मत्परामनवद्यां गीमेधसोऽग्निशिखामिव ॥ ३ ॥ श्रीशुकउवाच उद्वाहर्क्षंचविज्ञायरुक्मिण्यामधुसूदनः ॥ रथःसंयुज्य तामाशुदारुकेत्याहसारथिं ॥ ४ ॥ सचाश्वैःशैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ युक्तंरथमुपानीयतस्थौप्रां जलिरग्रतः ॥५॥ आरुह्यस्यंदनंशौरिर्द्विजमारोप्यतूर्णगैः ॥ आनर्तादेकरात्रेणविदर्भानगमद्धयैः ॥ ६ ॥ राजासकुंडिनपतिःपुत्रस्नेहवशंगतः ॥ शिशुपालायस्वांकन्यांदास्यन्कर्माण्यकारयत् ॥ ७ ॥ ॥

॥५२॥ ॥ त्रिपंचाशत्तमेगत्वाविदर्भानद्भुतेहितः ॥ रुक्मिणीमहरत्कृष्णोमिषतांद्विषतांबलात् ॥१॥१॥ निद्रायाअलाभेकारणांतरं वेदेति तयाअकथितमप्यहंजानामीति ॥२॥ आनयिष्येआनेष्यामि राजन्यापसदान्राजसुहीनान् उन्मथ्यानयनेदृष्टांतः एधसइति ॥३॥ उद्वा हर्क्षमिति परश्वोरात्रौविवाहनक्षत्रमितिविज्ञायतस्यांराज्यांप्रस्थायप्रातर्विदर्भदेशानगमत् श्वोभाविनित्वमजितोद्वहनेविदर्भान्गुप्तःसमेत्ये तिरुक्मिणीसंदेशात् ॥ ४ ॥ शैब्यइत्यादीनिचत्वार्यश्वनामानि ॥ ५ ॥ ६ ॥ पुत्रस्यरुक्मिणःस्नेहेनतद्वशमनुगच्छतीतितथा अनेनाशि शुपालेऽनभिरुचिंद्योतयति कर्माणिपुरालंकारपितृदेवार्चनादीनि ॥ ७ ॥ ॥ ॥ ॥ ॥

तान्येवाह पुरमित्यादिचतुर्भिः संमृष्टाःसंसिक्ताश्चमार्गादयोयस्मिंस्तत् चित्राध्वजेषुपताकास्ताभिःसमलंकृतमकारयत् ॥ ८ ॥ स्रग्गंध माल्याभरणैरित्यत्रमत्त्वर्थोद्रष्टव्यः यद्वा स्रग्गंधमाल्यानिआबिभ्रतीतितथातैः तथाविरजोंऽबरैर्भूषितैश्चस्त्रीपुरुषैर्जुष्टं तथाश्रीमद्भिर्गृहैश्च जुष्टं ॥ ९ ॥ यथान्यायमन्यांश्च कन्यांप्रतिमंगलंवाचयामास ॥ १० ॥ कृतंकौतुकेनविवाहसूत्रेणमंगलंयस्यास्तां अहतंनवीनं भूषणो

पुरंसंमृष्टसंसिक्तमार्गरथ्याचतुष्पथं ॥ चित्रध्वजपताकाभिस्तोरणैःसमलंकृतं ॥ ८ ॥ स्रग्गंधमाल्याभर णैर्विरजोंऽबरभूषितैः ॥ जुष्टंस्त्रीपुरुषैःश्रीमद्गृहैरगुरुधूपितैः ॥ ९ ॥ पितॄन्देवान्समभ्यर्च्यविप्रांश्चविधिव न्नृप ॥ भोजयित्वायथान्यायंवाचयामाससमंगलं ॥ १० ॥ सुस्नातांसुदतींकन्यांकृतकौतुकमंगलां ॥ अहतां शुकयुग्मेनभूषितांभूषणोत्तमैः ॥ ११ ॥ चक्रुःसामर्ग्यजुर्मंत्रैर्वध्वारक्षांद्विजोत्तमाः ॥ पुरोहितोऽथर्वविद्वैजु हावग्रहशांतये ॥ १२ ॥ हिरण्यरूप्यवासांसितिलांश्चगुडमिश्रितान् ॥ प्रादाद्धेनूश्चविप्रेभ्योराजाविधि विदांवरः ॥ १३ ॥ एवंचेदिपतीराजादमघोषःसुतायवै ॥ कारयामाससमंत्रज्ञैःसर्वमभ्युदयोचितं ॥ १४ ॥ म दच्युद्भिर्गजानीकैःस्यंदनैर्हेममालिभिः ॥ पत्त्यश्वसंकुलैःसैन्यैःपरीतःकुंडिनंययौ ॥ १५ ॥ तंवैविदर्भाधिप तिःसमभ्येत्याभिपूज्यच ॥ निवेशयामाससमुदाकल्पितान्यनिवेशने ॥ १६ ॥ तत्रशाल्वोजरासंधोदंतवक्रोविदू रथः ॥ आजग्मुश्चैद्यपक्षीयाःपौंड्रकाद्याःसहस्रशः ॥ १७ ॥ कृष्णरामद्विषोयत्ताःकन्यांचैद्यायसाधितुं ॥ यद्या गत्यहरेत्कृष्णोरामाद्यैर्यदुभिर्वृतः ॥ १८ ॥ योत्स्यामःसंहतास्तेनइतिनिश्चितमानसाः ॥ आजग्मुर्भूभुजः सर्वेसमग्रबलवाहनाः ॥ १९ ॥ श्रुत्वैतद्भगवान्रामोविपक्षीयन्नृपोद्यमं ॥ कृष्णंचैकंगतंहर्तुंकन्यांकलहशंकि तः ॥ २० ॥ बलेनमहतासार्धंभ्रातृस्नेहपरिप्लुतः ॥ त्वरितःकुंडिनंप्रागाद्गजाश्वरथपत्तिभिः ॥ २१ ॥ ॥

त्तमैश्चभूषितां ॥ ११ ॥ वध्वास्तस्याःकन्यायाः अथर्वविदथर्वणमंत्रवित् ॥ १२ ॥ १३ ॥ अभ्युदयेउचितं ॥ १४ ॥ ततश्चतुरंगसैन्यैः परीतःपरिवृतःकुंडिनंभीष्मकस्यपुरंययौ मदंच्यवंतेइतिमदच्युतस्तैः स्यंदनैःरथैः हेमरचितामालाविद्यंतेयेषुतैः ॥ १५ ॥ कल्पितंनिर्मि तंयदन्यनिवेशनंतस्मिन् ॥ १६ ॥ १७ ॥ यदिश्रीकृष्णोहरेदितिशंकिताः कन्यांसाधयितुमित्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥

सूर्योदयात्पूर्वमेवौत्सुक्येनरुक्मिण्यचिंतयदित्याह भीष्मकन्येति प्रत्यापत्तिंप्रत्यागमनं ॥ २२ ॥ त्रियामारात्रिस्तावन्मात्रेणांतरितः अल्पराधसोमंदभाग्यायाः ॥ २३ ॥ जुगुप्सितंधाष्टर्यादि अपीतिशंकयां नायातिहिकृतोद्यमइति अयमर्थः आदौकृतोद्यमत्वात्तंनप्रस्थापितवान् प्रस्थानावसरेचकिंचिन्मयिजुगुप्सितंमत्वाप्रत्याचष्टे अतःसोऽपिद्विजोनूनंनायातीति ॥ २४ ॥ यद्वा ततोनिर्गतोऽपिश्रीकृष्णोमद्दैववैमुख्यात्क्वचित्प्रतिबद्धोभवेदित्याह दुर्भगायाइति ॥ २५ ॥ कालज्ञानाधुनापिगोविंदागमनकालइतिमन्वाना।किंचिदाइवरतचित्तासतीाचेंतास्तब्धेलोचनेनिमीलितवतीत्यर्थः ॥ २६ ॥ प्रियभाषिणःप्रियसूचकाः ॥ २७ ॥ पुरोपवनंप्राप्तेनश्रीकृष्णेनविनिर्दिष्टःप्राप्तंमांकथयेत्यादिष्टः ॥ २८ ॥

भीष्मकन्यावरारोहाकांक्षंत्यागमनंहरेः ॥ प्रत्यापत्तिमपश्यंतीद्विजस्याचिंतयत्तदा ॥ २२ ॥ अहोत्रियामांतरितउद्वाहोमेऽल्पराधसः ॥ नागच्छत्यरविंदाक्षोनाहंवेद्म्यत्रकारणं ॥ २३ ॥ सोऽपिनावर्ततेऽद्यापिमत्संदेशहरोद्विजः ॥ अपिमय्यनवद्यात्माद्दष्ट्वाकिंचिज्जुगुप्सितं ॥ मत्पाणिग्रहणेनूनंनायातिहिकृतोद्यमः ॥ २४ ॥ दुर्भगायानमेधातानानुकूलोमहेश्वरः ॥ देवीवाविमुखागौरीरुद्राणीगिरिजासती ॥ २५ ॥ एवंचिंतयतीबालागोविंदहृतमानसा ॥ न्यमीलयतकालज्ञानेत्रेचाश्रुकलाकुले ॥ २६ ॥ एवंवध्वाःप्रतीक्षंत्यागोविंदागमनंनृप ॥ वामऊरुर्भुजोनेत्रमस्फुरन्प्रियभाषिणः ॥ २७ ॥ अथकृष्णविनिर्दिष्टःसएवद्विजसत्तमः ॥ अंतःपुरचरींदेवींराजपुत्रींददर्शह ॥ २८ ॥ सातंप्रहृष्टवदनमव्यग्रात्मगतिंसती ॥ आलक्ष्यलक्षणाभिज्ञासमपृच्छच्छुचिस्मिता ॥ २९ ॥ तस्याआवेदयत्प्राप्तंशशंसयदुनंदनं॥उक्तंचसत्यवचनमात्मोपनयनंप्रति॥३०॥ तमागतंसमाज्ञायवैदर्भीहृष्टमानसा ॥ नपश्यंतीब्राह्मणायप्रियमन्यन्ननामसा॥३१॥ ॥ ॥

नव्यग्राआत्मनोदेहस्यगतिर्यस्यतं लक्षणाभिज्ञादूतस्यलक्षणंतत्तत्कार्यसूचकमभिजानातीतितथा ॥२९॥ तस्यैप्राप्तंयदुनंदनंआवेदितवान् तच्चशशंस आत्मोपनयनंप्रतिआत्मनःस्वयंश्रीकृष्णस्यानयनंप्रति तेनद्विजेनसत्यवचनंप्रोक्तमिति आत्मनः प्राणेश्वरस्येतिवा यद्वा आत्मनस्तस्याउपनयनंप्रतिश्रीकृष्णेनयदुक्तंसत्यवचनंतामानयिष्यइत्यादितच्चशशंसअवर्णयादित्यर्थः ॥ ३० ॥ तंश्रीकृष्णं अस्मिन्कार्येसर्वस्वार्पणमपिअपर्याप्तमितितदुचितंप्रियमपश्यंतीतदा।केवलंननाम पश्चाद्बहुददावित्यर्थः यद्वा मांश्रियंयेनमंतितेतावत्सर्वसंपदामास्पदंभवंतिकिंपुनर्मयिप्रणतायामितिततोऽधिकमन्यत्प्रियमपश्यंतीननामेति ॥ ३१ ॥ ॥ ॥

॥ ३२ ॥ ३३ ॥ महामतिरित्यनेनश्रीकृष्णोबाढंकन्यामुद्वोढुमेवागतःस्यादितिवरोचितेनविधिनासमपूजयदितिसूचितं ॥ ३४ ॥ यथाय थावत् समेतानांराज्ञांमध्येवीर्याद्यनतिक्रम्यतंतंसमर्हितवानित्यर्थः ॥ ३५ ॥ श्रीकृष्णेभाविकर्मसूचकंजनानुरागंदर्शयाति कृष्णमागत मितित्रिभिः॥ ३६ ॥ अस्यैवरुक्मिण्येवार्हत्येवअसावेवभैष्म्याएवसमुचितएवेतिषडवधारणानि तत्रैकस्मिन्व्यातिरेकप्रदर्शनमुपलक्षणा

प्राप्तौश्रुत्वास्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ॥ अभ्ययात्तूर्यघोषेणरामकृष्णौसमर्हणैः ॥ ३२ ॥ मधुपर्कमुपा नीयवासांसिविरजांसिच ॥ उपायनान्यभीष्टानिविधिवत्समपूजयत् ॥३३॥ तयोर्निवेशनंश्रीमदुपकल्प्य महामतिः ॥ ससैन्ययोःसानुगयोरातिथ्यंविदधेयथा ॥ ३४ ॥ एवंराज्ञांसमेतानांयथावीर्यंयथावयः ॥ य थाबलंयथावित्तंसर्वैःकामैःसमर्हयत् ॥ ३५ ॥ कृष्णमागतमाकर्ण्यविदर्भपुरवासिनः ॥ आगत्यनेत्रांजलि भिःपपुस्तन्मुखपंकजं ॥ ३६ ॥ अस्यैवभार्याभवितुंरुक्मिण्यर्हतिनापरा ॥ असावप्यनवद्यात्माभैष्म्याः समुचितःपतिः ॥ ३७ ॥ किंचित्सुचरितंयन्नस्तेनतुष्टस्त्रिलोककृत् ॥ अनुगृण्हातुगृण्हातुवैदर्भ्याःपाणिम च्युतः ॥ ३८ ॥ एवंप्रेमकलाबद्धावदंतिस्मपुरौकसः ॥ कन्याचांतःपुरात्प्रागाद्भटैर्गुप्तांऽबिकालयं ॥ ३९ ॥ पद्भ्यांविनिर्ययौद्रष्टुंभवान्याःपादपल्लवं ॥ साचानुध्यायतीसम्यङ्मुकुंदचरणांबुजं ॥४०॥ यतवाङ्मातृभिः सार्धंसखीभिःपरिवारिता ॥ गुप्ताराजभटैःशूरैःसन्नद्धैरुद्यतायुधैः ॥ मृदंगशंखपणवास्तूर्यभेर्यश्चजघ्निरे ॥ ॥ ४१ ॥ नानोपहारबलिभिर्वारमुख्याःसहस्रशः ॥ स्रग्गंधवस्त्राभरणैर्द्विजपत्न्यःस्वलंकृताः ॥ ४२ ॥ गायंतश्चस्तुवंतश्चगायकावाद्यवादकाः ॥ परिवार्यवधूंजग्मुःसूतमागधवंदिनः ॥ ४३ ॥

र्थं नापरेति नचवाक्यभेददोषः अनूद्यविधेयभेदेनविभिन्नानामेववाक्यानांसहप्रयोगात् ग्रहंसंमार्ष्टीत्यादिवदिति॥३७॥अयमेवानुग्रहइ तिनिर्दिशंति गृह्णात्विति ॥३८॥ प्रेम्णःकलालेशस्तेनबद्धावदंतिस्म संपूर्णप्रेमतेषांहृद्येवाऽवर्ततइत्यर्थः ॥ ३९ ॥ तस्याआगमनंविशिनष्टि द्वयेन पद्भ्यामिति ॥ ४० ॥ अपिच मृदंगेत्यादि जघ्निरेआहताः वादिताइत्यर्थः ॥ ४१ ॥ वारमुख्याःगणिकोत्तमाः ॥ ४२ ॥ ४३ ॥

उपस्पृश्यआचम्य ॥ ४४ ॥ प्रवयसोवृद्धाः भवान्वितामितिभवस्योपसर्जनत्वंस्त्रीकर्मोचितमुक्तं॥४५॥नमस्यइति रुक्मिण्यातदैवदृष्टोऽयं मंत्रःस्वसंतानयुतांगणेशादिसहितां आत्मारामोसौकथंत्वत्पतिर्भवेदितिचेदतआह तदनुमोदतामिति भवतीश्रीकृष्णएववा ॥ ४६ ॥ वासःस्रग्गंधादिभिरंबिकांसमपूजयत् ॥ ४७ ॥ तथाविप्रस्त्रियोऽपितैर्द्रव्यैर्लवणादिभिश्चसमपूजयान्निति ॥ ४८ ॥ शेषांनिर्माल्यं॥४९॥



आसाद्यदेवीसदनंधौतपादकरांबुजा ॥ उपस्पृश्यशुचिःशांताप्रविवेशांबिकांऽतिकं ॥ ४४ ॥ तांवैप्रवयसो बालांविधिज्ञाविप्रयोषितः ॥ भवानींवंदयांचक्रुर्भवपत्नींभवान्वितां ॥ ४५ ॥ नमस्येत्वांबिकेऽभीक्ष्णंस्वसं तानयुतांशिवां ॥ भूयात्पतिर्मेभगवान्कृष्णस्तदनुमोदतां ॥ ४६ ॥ अद्भिर्गंधाक्षतैर्धूपैर्वासःस्रङ्माल्यभू षणैः ॥ नानोपहारबलिभिःप्रदीपावलिभिःपृथक् ॥ ४७॥ विप्रस्त्रियःपतिमतीस्तथातैःसमपूजयन्॥लव णापूपतांबूलकंठसूत्रफलेक्षुभिः ॥ ४८ ॥ तस्यैस्त्रियस्ताःप्रददुःशेषांयुयुजुराशिषः ॥ ताभ्योदेव्यैनमश्चक्रे शेषांचजगृहेवधूः ॥ ४९ ॥ मुनिव्रतमथत्यक्त्वानिश्चक्रामांबिकागृहात् ॥ प्रगृह्यपाणिनाभृत्यांरत्नमुद्रो पशोभिना ॥ ५० ॥ तांदेवमायामिववीरमोहिनींसुमध्यमांकुंडलमंडिताननां ॥ श्यामांनितंबार्पितरत्नमे खलांव्यंजत्स्तनींकुंतलशंकितेक्षणां ॥ ५१ ॥ शुचिस्मितांबिंबफलाधरद्युतिशोणायमानद्विजकुंदकुड्मलां॥ पदाचलंतींकलहंसगामिनींसिंजत्कलानूपुरधामशोभिना ॥ ५२ ॥ विलोक्यवीरामुमुहुःसमागतायशस्वि नस्तत्कृतहृच्छयार्दिताः ॥ ५३ ॥ यांवीक्ष्यतेनृपतयस्तदुदारहासव्रीडावलोकहृतचेतसउज्झितास्त्राः ॥ पेतुःक्षितौगजरथाश्वगताविमूढायात्राछलेनहरयेऽर्पयतींस्वशोभां ॥ ५४ ॥ ॥ ॥ ॥

मुनिव्रतंमौनादि भृत्यांसखीं॥५०॥तांविलोक्यवीरामुमुहुरितितृतीयेनान्वयः श्यामामजातरजस्कां कुंतलेभ्यःशंकितेइवचपलेईक्षणेयस्या स्तां ॥५१॥ द्विजाएवकुंदानांकुड्मलानिमुकुलानिबिंबफलवद्योऽधरस्तस्यद्युतिभिःशोणायमानानियस्यास्तां कलाशोभातद्युक्तंनूपुरंसिंज च्चतत्कलानूपुरंचतस्यधामदीप्तिस्तेनशोभितुंशीलमस्यतेनपदाचलंतीं ॥ ५२ ॥ ५३ ॥ नकेवलंमुमुहुःपेतुश्चेत्याह यामिति यात्रामिषेणह रयेस्वलावण्यंसमर्पयंतींयांवीक्ष्यक्षितौपेतुःसातान्ह्रियाऐक्षत तदैवाच्युतंचददर्शेत्युत्तरेणान्वयः ॥ ५४ ॥ ॥ ॥

चलत्पद्मकोशतुल्यौचरणौचालयंती ॥ ५५ ॥ सुपर्णलक्षणंगरुडध्वजं हरिःसिंहः ॥ ५६ ॥ असहमानानांतेषामाक्रोशमाह अहोधि
गस्मान् यतोऽस्माकंयशोगोपैर्हृतमिति ॥ ५७ ॥ इ०भा०द०उ०टी०त्रिपंचाशत्तमोऽध्यायः ॥५३॥ ॥ चतुःपंचाशत्तमेतुजित्वाराज्ञो
ऽरिपक्षगान् ॥ रुक्मिणंचविरूप्याथभैष्म्याःपाणिपुरेग्रहीत् ॥१॥इतीति अहोधिगस्मानित्येवंवदंतःसुसंरब्धाःक्रोधाविष्टादंशिताः कृतस

सैवंशनैश्चलयतीचलपद्मकोशौप्राप्तिंतदाभगवतःप्रसमीक्षमाणा ॥ उत्सार्यवामकरजैरलकानपांगैःप्राप्ता
न्ह्रियैक्षतनृपान्ददृशेऽच्युतंसा ॥५५॥ तांराजकन्यांरथमारुरुक्षतींजहारकृष्णोद्विषतांसमीक्षतां ॥ रथंस
मारोप्यसुपर्णलक्षणंराजन्यचक्रंपरिभूयमाधवः ॥ ततोययौरामपुरोगमैःशनैःसृगालमध्यादिवभागहृद्ध
रिः॥५६॥तंमानिनःस्वाभिभवंयशःक्षयंपरेजरासंधवशानसेहिरे ॥ अहोधिगस्मान्यशआत्तधन्विनांगोपै
र्हृतंकेसरिणांमृगैरिव॥५७॥इ०भा०म०द०उ०रुक्मिणीहरणंनामत्रिपंचाशत्तमोध्यायः ॥५३॥ ॥ श्रीशु
कउवाच इतिसर्वेसुसंरब्धावाहानारुह्यदंशिताः॥स्वैःस्वैर्बलैःपरिक्रांताअन्वीयुर्धृतकार्मुकाः॥१॥तानापत
तआलोक्ययादवानीकयूथपाः॥तस्थुस्तत्संमुखाराजन्विस्फूर्ज्यस्वधनूंषिते ॥२॥ अश्वपृष्ठेगजस्कंधेरथो
पस्थेचकोविदाः ॥ मुमुचुःशरवर्षाणिमेघाअद्रिष्वपोयथा ॥३॥ पत्युर्बलंशरासारैश्छन्नंवीक्ष्यसुमध्यमा ॥स
व्रीडमैक्षत्तद्वक्त्रंभयविव्हललोचना ॥४॥ प्रहस्यभगवानाहमास्मभैर्वामलोचने॥विनंक्ष्यत्यधुनैवैतत्तावकैः
शात्रवंबलं ॥५॥ तेषांतद्विक्रमंवीरागदसंकर्षणादयः ॥अमृष्यमाणानाराचैर्जघ्नुर्हयगजान्रथान् ॥६॥ पे
तुःशिरांसिरथिनामश्विनांगाजिनांभुवि॥सकुंडलकिरीटानिसोष्णीषाणिचकोटिशः ॥७॥ हस्ताःसासिगदे
ष्वासाःकरभाऊरवोंऽघ्रयः ॥ अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसिच ॥ ८ ॥ हन्यमानबलानीकावृष्णि
भिर्जयकांक्षिभिः ॥ राजानोविमुखाजग्मुर्जरासंधपुरःसराः ॥ ९ ॥ ॥ ॥

न्नाहाःपरिक्रांताःपरिवृताअन्वीयुरन्वधावन् ॥ १ ॥ विस्फूर्ज्यटंकारयित्वा ॥ २ ॥ परेषांशराणांबाहुल्येयादवानामचलत्वेदृष्टांतः मेघा
इति ॥ ३ ॥ ऐक्षत्ऐक्षत ॥ ४ ॥ मास्मभैःमाभयंकुरु हेवामलोचनेवराक्षि तावकैस्त्वदीयैःकृत्वा ॥ ५ ॥ सचासौविक्रमश्चतं ॥ ६ ॥
उष्णीषाणिशिरोऽवतंसवस्त्राणितत्सहितानिशिरांसि ॥ ७ ॥ करभाःप्रकोष्ठाविस्तृतकराः ऊरुविशेषणंवा ॥ ८ ॥ ९ ॥ ॥

अप्राप्तदारमेवतंहृतदारमिवातुरं ॥ १० ॥ निष्ठास्थैर्यं ॥ ११ ॥ कुहकोनर्तयिता तस्येच्छया दुःखेऽपिहिमानस्वेनपारवश्यंव्यक्तंदर्शितं ॥ ॥ १२ ॥ अत्रचाहमेवदृष्टांतइत्याहजरासंधः शौरेरिति कृष्णात्सकाशात् परंसंयुगंपरंकेवलमंतिमंवा जिग्येजितवानहं ॥ १३ ॥ दैवमदृष्टं तद्युक्तेन ॥ १४ ॥ फल्गुतंत्रैःस्वल्पसैन्यैः ॥ १५ ॥ प्रदक्षिणःअनुकूलःस्यात् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ गोपालस्यवेदपालकस्येतिवास्त

॥ १२ ॥

शिशुपालंसमभ्येत्यहृतदारमिवातुरं ॥ नष्टत्विषंगतोत्साहंशुष्यद्वदनमब्रुवन् ॥ १० ॥ भोभोःपुरुषशार्दूलदौर्मनस्यमिदंत्यज ॥ नप्रियाप्रिययोराजन्निष्ठादेहिषुदृश्यते ॥ ११ ॥ यथादारुमयीयोषिन्नृत्यतेकुहकेच्छया ॥ एवमीश्वरतंत्रोयमीहतेसुखदुःखयोः ॥ १२ ॥ शौरेःसप्तदशाहंवैसंयुगानिपराजितः ॥ त्रयोविंशतिभिःसैन्यैर्जिग्यएकमहंपरं ॥ १३ ॥ तथाऽप्यहंनशोचामिनप्रहृष्यामिकर्हिचित् ॥ कालेनदैवयुक्तेन जानन्विद्रावितंजगत् ॥ १४ ॥ अधुनापिवयंसर्वेवीरयूथपयूथपाः ॥ पराजिताःफल्गुतंत्रैर्यदुभिःकृष्णपालितैः ॥ १५ ॥ रिपवोजिग्युरधुनाकालआत्मानुसारिणि ॥ तदावयंविजेष्यामोयदाकालःप्रदक्षिणः ॥ ॥ १६ ॥ एवंप्रबोधितोमित्रैश्चैद्योगात्सानुगःपुरं ॥ हतशेषाःपुनस्तेऽपिययुःस्वंस्वंपुरंनृपाः ॥ १७ ॥ रुक्मीतुराक्षसोद्वाहंकृष्णद्विडसहन्स्वसुः ॥ पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्यावृतोबली ॥ १८ ॥ रुक्म्यमर्षीसुसंरब्धःशृण्वतांसर्वभूभुजां ॥ प्रतिजज्ञेमहाबाहुर्दंशितःसशरासनः ॥ १९ ॥ अहत्वासमरेकृष्णमप्रत्यूह्यचरुक्मिणीम् ॥ कुंडिनंनप्रवेक्ष्यामिसत्यमेतद्ब्रवीमिवः ॥ २० ॥ इत्युक्त्वारथमारुह्यसारथिंप्राहसत्वरः ॥ नोदयाश्वान्यतःकृष्णस्तस्यमेसंयुगंभवेत् ॥ २१ ॥ अद्याहंनिशितैर्बाणैर्गोपालस्यसुदुर्मतेः ॥ नेष्येवीर्यमदंयेनस्वसामेप्रसभंहृता ॥ २२ ॥ विकत्थमानःकुमतिरीश्वरस्याप्रमाणवित् ॥ रथेनैकेनगोविंदंतिष्ठतिष्ठेत्यथाह्वयत् ॥ २३ ॥ धनुर्विकृष्यसुदृढंजघ्नेकृष्णंत्रिभिःशरैः ॥ आहचात्रक्षणंतिष्ठयदूनांकुलपांसन ॥ २४ ॥

॥ १२ ॥

वोऽर्थःतथा सुदुर्मतेरिति शोभनाअनुग्रहवतीदुष्टेष्वपिमतिर्यस्यतस्येति ॥ २२ ॥ २३ ॥ यदूनांकुलपांसनकुलदूषण वस्तुतस्तुयदूनांकुलस्यपते हेअंसनस्वयंचरिपुहननचतुर अंससमाघातइत्यस्माद्धातोःकर्तरिल्युट्प्रत्ययोनंद्यादिविहितः ॥ २४ ॥ ॥ ॥

ध्वांक्षःकाकःसयथाहविर्मुष्णातितद्वत् वस्तुतस्तुअध्वांक्षवदितिच्छेदः सहस्राक्षवदित्यर्थः हेमंदस्थिरेत्यर्थः ॥२५॥२६॥२७॥२८॥२९॥
३०॥३१॥३२॥३३॥ परित्रासेनविकंपितानिअंगानियस्यास्तया शुचाशोकेनावशुष्यन्मुखंयस्याःरुद्धःकंठोयस्याःसाचसाच तथाकातर्ये

कुत्रयासिस्वसारंमेमुषित्वाध्वांक्षवद्धविः ॥ हरिष्येऽद्यमदंमंदमायिनःकूटयोधिनः ॥ २५ ॥ यावन्नमेहतोबाणैःशयीथामुंचदारिकां ॥ स्मयन्कृष्णोधनुश्छित्वाषड्भिर्विव्याधरुक्मिणं॥२६॥ अष्टभिश्चतुरोवाहान्द्वाभ्यांसूतंध्वजंत्रिभिः ॥ सचान्यद्धनुरादायकृष्णंविव्याधपंचभिः ॥ २७॥ तैस्ताडितःशरौघैस्तुचिच्छेदधनुरच्युतः ॥ पुनरन्यदुपादत्ततदप्यच्छिनदव्ययः ॥२८॥ परिघंपट्टिशंशूलंचर्मासीशक्तितोमरौ॥यद्यदायुधमादत्ततत्सर्वंसोऽच्छिनद्धरिः ॥ २९ ॥ ततोरथादवप्लुत्यखड्गपाणिर्जिघांसया ॥ कृष्णमभ्यद्रवत्क्रुद्धःपतंगइवपावकं ॥ ३० ॥ तस्यचापततःखड्गंतिलशश्चर्मचेषुभिः ॥ छित्वासिमाददेतिग्मंरुक्मिणंहंतुमुद्यतः ॥ ३१ ॥ दृष्ट्वाभ्रातृवधोद्योगंरुक्मिणीभयविह्वला ॥ पतित्वापादयोर्भर्तुरुवाचकरुणंसती ॥ ३२ ॥ योगेश्वराप्रमेयात्मन्देवदेवजगत्पते ॥ हंतुंनार्हसिकल्याणभ्रातरंमेमहाभुज ॥३३॥ ॥ श्रीशुकउवाच तयापरित्रासविकंपितांगयाशुचावशुष्यन्मुखरुद्धकंठया ॥ कातर्यविस्रंसितहेममालयागृहीतपादःकरुणोन्यवर्तत ॥ ३४ ॥ चैलेनबध्वातमसाधुकारिणंसश्मश्रुकेशंप्रवपन्व्यरूपयत् ॥ तावन्ममर्दुःपरसैन्यमद्भुतंयदुप्रवीरानलिनींयथागजाः ॥ ३५ ॥ कृष्णांतिकमुपव्रज्यददृशुस्तत्ररुक्मिणं ॥ तथाभूतंहतप्रायंदृष्ट्वासंकर्षणोविभुः ॥ विमुच्यबद्धंकरुणोभगवान्कृष्णमब्रवीत् ॥ ३६ ॥ असाध्विदंत्वयाकृष्णकृतमस्मज्जुगुप्सितं ॥ वपनंश्मश्रुकेशानांवैरूप्यंसुहृदोवधः ॥ ३७ ॥ ॥ ॥ ॥

णवैक्लव्येनविस्रंसिताहेममयीमालायस्यास्तयागृहीतौपादौयस्यसः ॥ ३४ ॥ सश्मश्रुकेशंकेशसहितानिस्थानेस्थानेअवशिष्टानिश्मश्रूणिकेशाश्चयथाभवंतितथा तेनैवासिनाप्रवपन्मुंडयन्व्यरूपयत्विरूपमकरोत् ॥३५॥ तथाभूतंहतप्रायमित्युत्तरवाक्येऽप्यनुषंगः ॥३६॥३७॥

रुक्मिणींसांत्वयति मैवास्मानिति ॥ ३८ ॥ पुनःकृष्णमाक्षिपति बंधुरिति ॥ ३९ ॥ पुनर्देवींप्रत्याह क्षत्रियाणामिति येनधर्मेणभ्राताऽपिभ्रातरंहन्यात्ततस्तस्माद्घोरतरःअतिदारुणःधर्मश्च अतःकोऽस्माकमपराधइतिभावः ॥ ४० ॥ पुनःश्रीकृष्णंप्रत्याह राज्यस्येति तथाऽप्यस्माकमेतदनुचितमितिभावः ॥ ४१ ॥ पुनर्देवींप्रत्याह तवेयमिति सर्वभूतेषुदुर्हृदामहितानांभ्रातॄणामज्ञवद्यद्भद्रंमन्यसेइच्छसिइयं तवविषमाअसमीचीनाबुद्धिः कुतः यतस्तदेवसुहृदामभद्रमिति यद्वा सर्वभूतेषुदुर्हृदामपिस्वसुहृदांभद्रमेवदंडरूपंमुंडनमभद्रंयन्मन्यसे

मैवास्मान्साध्व्यसूयेथाभ्रातुर्वैरूप्यचिंतया ॥ सुखदुःखदोनचान्योऽस्तियतःस्वकृतभुक्पुमान् ॥ ३८ ॥ बंधुर्वधार्हदोषोऽपिनबंधोर्वधमर्हति ॥ त्याज्यःस्वेनैवदोषेणहतःकिंहन्यतेपुनः ॥ ३९ ॥ क्षत्रियाणामयंधर्मःप्रजापतिविनिर्मितः ॥ भ्राताऽपिभ्रातरंहन्याद्येनघोरतमस्ततः ॥ ४० ॥ राज्यस्यभूमेर्वित्तस्यस्त्रियोमानस्यतेजसः ॥ मानिनोऽन्यस्यवाहेतोःश्रीमदांधाःक्षिपंतिहि ॥ ४१ ॥ तवेयंविषमाबुद्धिःसर्वभूतेषुदुर्हृदां ॥ यन्मन्यसेसदाभद्रंसुहृदांभद्रमज्ञवत् ॥ ४२ ॥ आत्ममोहोनृणामेषकल्पतेदेवमायया ॥ सुहृद्दुर्हृदुदासीनइतिदेहात्ममानिनां ॥ ४३ ॥ एकएवपरोह्यात्मासर्वेषामपिदेहिनां ॥ नानेवगृह्यतेमूढैर्यथाज्योतिर्यथानभः ॥ ४४ ॥ देहआद्यंतवानेषद्रव्यप्राणगुणात्मकः ॥ आत्मन्यविद्ययाक्लृप्तःसंसारयतिदेहिनं ॥ ४५ ॥

तवेयंविषमाबुद्धिरिति अथवा सर्वभूतेषुमध्येदुर्हृदांशिशुपालादीनामभद्रंसुहृदांभद्रंचयन्मन्यसेतवेयंविषमाबुद्धिःसमानभवति अज्ञवत् अज्ञानामिव ॥ ४२ ॥ कुतइत्यतआह आत्ममोहइति ॥ ४३ ॥ परमार्थमाह एकएवेति परःशुद्धः ज्योतिश्चंद्रादिर्यथोदकेषु नभोयथा घटादिष्विति ॥ ४४ ॥ कुतस्तर्हिनचंद्रादिवदात्मानमेकंशुद्धंप्रतीमस्तत्राह देहइति द्रव्यमाधिभूतं प्राणाइंद्रियाण्यध्यात्मं गुणशब्देनाधिदैवं तत्त्रितयात्मकः देहोपाधिनाशुद्धोनप्रतीयतइत्यर्थः ॥ ४५ ॥ ॥ ॥

ननुदेहसंबंधेनाऽपिसंसारेसतिशुद्धत्वंगतमेवतत्राह नात्मनइति हेसतिअन्येनअधिभूतादिनाआत्मनःसंयोगवियोगौनस्तः कुतः असतः
असत्त्वादन्यस्येत्यर्थः कुतोऽसत्त्वंतत्राह तद्धेतुत्वादिति तस्यान्यस्यभूतेंद्रियादेःप्रसिद्धेःप्रकाशस्यतद्धेतुत्वादात्महेतुत्वात् ननुदेवैराधिष्ठि
तेभ्यइंद्रियेभ्योभूतानांप्रतीतिः प्रसिद्धाभूतप्रतीत्याचतत्प्रसिद्धिर्नात्मनइत्यतआह दृग्रूपाभ्यांयथारवेः यथाप्रकाश्यप्रकाशकत्वेनवर्तमा
नयोरपिचक्षूरूपयोःरवेःसकाशात्प्रसिद्धिःद्वयोरपितैजसत्वात्तदभेदश्च तथाभूतेंद्रियादीनांपरस्परंसिद्धानामपिचैतन्याधीनएवप्रकाशस्त
त्कार्यत्वात्तव्द्यतिरेकेणासत्त्वंचेत्यर्थः तथाचद्वादशेवक्ष्यति दीपश्चक्षुश्चरूपंचज्योतिषोनपृथक्भवेत् ॥ एवंधीःखानिमात्राश्चनस्युरन्य
तमादृतादिति यद्वारवेःप्रसिद्धाभ्यामेवदृग्रूपाभ्यांपरस्परंप्रसिद्धिर्यथाभवतितद्वदिति ॥ ४६ ॥ देहसंबंधाभावादेवनात्मनोजन्मादयोऽपीति

**नात्मनोऽन्येनसंयोगोवियोगश्चसतःसति ॥ तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यांयथारवेः ॥ ४६ ॥ जन्मादयस्तु
देहस्यविक्रियानात्मनःक्वचित् ॥ कलानामिवनैवेंदोर्मृतिर्ह्यस्यकुहूरिव ॥ ४७ ॥ यथाशयानआत्मानंवि
षयान्फलमेवच ॥ अनुभुंक्तेऽप्यसत्यर्थेतथाप्नोत्यबुधोभवं ॥ ४८ ॥ तस्मादज्ञानजंशोकमात्मशोषविमो
हनं ॥ तत्त्वज्ञानेननिर्हृत्यस्वस्थाभवशुचिस्मिते ॥ ४९ ॥ श्रीशुकउवाच एवंभगवतातन्वीरामेणप्रतिबो
धिता ॥ वैमनस्यंपरित्यज्यमनोबुध्यासमादधे ॥ ५० ॥ प्राणावशेषउत्सृष्टोद्विड्भिर्हतबलप्रभः ॥ स्मरन्
विरूपकरणंवितथात्ममनोरथः ॥ ५१ ॥ ॥ ॥ ॥ ॥ ॥**

वक्तुंजन्मादीनांदेहधर्मत्वमाह जन्मादयस्त्विति कथंतर्हिजातोऽहंबालोहंवृद्धोऽहमित्यात्मनिजन्मादिप्रतीतिः देहजन्मादिनैवेतिसदृष्टां
तमाह कलानामिवेति इंदोः कलानामेवजन्मादयोनैवेंदोर्यथातद्वत् यथाचकलानाशादेवकुहूरमावास्याइंदुक्षयउच्यतेतद्वदस्यआत्म
नोदेहनाशादेवमृतिव्यवहारइत्यर्थः ॥ ४७ ॥ नन्वात्मनोदेहादिसंबंधाभावेकथंभोक्तृभोग्यभोगप्रतीतिरित्याशंक्यस्वप्नदृष्टांतेनसमर्थयति
यथाशयानइति आत्मानंभोक्तारंविषयान्भोग्यान्फलंभोगंअसत्यप्यर्थेअनुभुंक्तेतथाऽबुधःसंसारंप्राप्नोति ॥ ४८ ॥ आत्मानंशोषयतिवि
मोहयतिचेतितथातं निर्हृत्यअपाकृत्य ॥ ४९ ॥ समादधेसमाहितमकरोत् ॥ ५० ॥ रुक्मिणस्त्वेवंश्रुतवतोनाज्ञानंनिवृत्तमितिदर्श
यन्नाह प्राणावशेषइति ॥ ५१ ॥ ॥ ॥ ॥ ॥

अहत्वाअज्ञात्वादुर्मतिमितिचसत्योऽर्थः अप्रत्यूह्यअनावृत्य अप्रतिबुध्येतितुसत्यं यवीयसींस्वसारं यत्रविरूपितस्तत्रैवावसत् तत्रभोजकटंनामपुरमभवत् ॥ ५२ ॥ ५३ ॥ ५४ वरयोःवरवध्वोः पारिबर्हंदेयमुपस्करं ॥५५॥ उत्तभितैरिंद्रकेतुभिर्ध्वजविशेषैः उपकॢप्तानिमंगलानिलाजांकुरपुष्पप्रकरादीनितैः ॥ ५६ ॥ आहूताःप्रेष्ठाःभूभुजस्तेषांगजैः परामृष्टाउच्छ्रिताःरंभाश्चपूगाश्चतैरुपशोभिता यद्वा तैरेवगजैःपरामृष्टाःसंस्पृष्टाःरंभाश्चपूगाश्चतैरुपशोभिता ॥ ५७ ॥ संभ्रमादौत्सुक्यात्परिधावतांबंधूनांमध्येमिथःसमेत्यमुदंप्रापुः॥ ५८ ॥५९ ॥

अहत्वादुर्मतिंकृष्णमप्रत्यूह्ययवीयसीं ॥ कुंडिनंनप्रवेक्ष्यामीत्युक्त्वातत्रावसद्रुषा॥ ५२ ॥भगवान्भीष्मकसुतामेवंनिर्जित्यभूमिपान् ॥ पुरमानीयविधिवदुपयेमेकुरूद्वह ॥५३॥तदामहोत्सवोनॄणांयदुपुर्यांगृहेगृहे॥ अभूदनन्यभावानांकृष्णेयदुपतौनृप ॥ ५४ ॥ नरानार्यश्चमुदिताःप्रमृष्टमणिकुंडलाः॥पारिबर्हमुपाजन्हुर्वरयोश्चित्रवाससोः ॥ ५५ ॥ सावृष्णिपुर्युत्तभितेंद्रकेतुभिर्विचित्रमाल्यांबररत्नतोरणैः ॥ बभौप्रतिद्वार्युपकॢप्तमंगलैरापूर्णकुंभागुरुधूपदीपकैः ॥ ५६ ॥ सिक्तमार्गामदच्युद्भिराहूतप्रेष्ठभूभुजां ॥ गजैर्द्वास्सुपरामृष्टरंभापूगोपशोभिता ॥ ५७ ॥ कुरुसृंजयकैकेयविदर्भयदुकुंतयः ॥ मिथोमुमुदिरेतस्मिन्संभ्रमात्परिधावतां ॥ ५८ ॥ रुक्मिण्याहरणंश्रुत्वागीयमानंततस्ततः ॥ राजानोराजकन्याश्चबभूवुर्भृशविस्मिताः ॥ ५९ ॥ द्वारकायामभूद्राजन्महामोदःपुरौकसां ॥ रुक्मिण्यारमयोपेतंदृष्ट्वाकृष्णंश्रियःपतिं ॥ ६० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेरुक्मिण्युद्वाहोत्सवेचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ श्रीशुकउवाच कामस्तुवासुदेवांशोदग्धःप्राग्रुद्रमन्युना ॥ देहोपपत्तयेभूयस्तमेवप्रत्यपद्यत ॥ १ ॥ ॥

॥ ६० ॥इतिदशमेउ०टीकायांचतुः पंचाशत्तमोध्यायः ॥ ५४ ॥ ॥पंचपंचाशत्तमेतुप्रद्युम्नोऽजनिकृष्णतः ॥ शंबरेणहृतःसोऽथहत्वातंकांतयाऽगमत् ॥ १ ॥ प्रद्युम्नहानिलाभाद्यैःशंबराहरणादिना ॥ कुटुंबिनामपत्यादिसुखदुःखमसूसुचत् ॥ २ ॥ जांबवत्यादिविवाहेभ्यःप्रागेवप्रद्युम्नजन्मततोविवाहास्ततःशंबरागारात्प्रद्युम्नप्रत्यागमनं अतःपुत्रकथनप्रस्तावेऽपिप्रद्युम्नस्यजातमात्रस्यशंबरेणहरणंनिरूप्यते प्रत्यागमनंतुउत्तरकालीनमपिकथापर्यवसानायात्रोक्तमिति वासुदेवाधिष्ठितचित्तप्रभवत्वाद्वासुदेवांशः सृष्टिहेतुत्वाच्च देहोपपत्तयेदेहप्राप्तये ॥ १ ॥

अनवमः अन्यूनः ॥ २ ॥ सः प्रसिद्धः कामशत्रुः शंबरस्तमात्मनः शत्रुंविदित्वात्हृत्वासमुद्रेप्रास्यप्रक्षिप्यगृहमगादिति ॥ ३ ॥ निर्जगारगिलि
तवान् ॥४॥ स्वधितिनाशस्त्रिकया अवद्यन् अवाद्यन् खंडितवंतः ॥ ५ ॥ तत्त्वंकामोयंतवभर्तेति उत्पत्तिंश्रीकृष्णाद्रुक्मिण्यामुत्पन्नइति
॥ ६ ॥ यशस्विनीपतिव्रता भर्तृदेहप्राप्तिंप्रतीक्षमाणा ॥ ७ ॥ तंशिशुंकामदेवंबुध्वाविज्ञाय ॥ ८ ॥ विभ्रमंसंमोहं ॥ ९ ॥ अंगहेराजन् सौ

सएवजातोवैदर्भ्यांकृष्णवीर्यसमुद्भवः ॥ प्रद्युम्नइतिविख्यातः सर्वतोऽनवमः पितुः ॥ २ ॥ तंशंबरः कामरूपी
हृत्वातोकमनिर्दशं ॥ सविदित्वात्मनः शत्रुंप्रास्योदन्वत्यगाद्गृहं ॥ ३ ॥ तंनिर्जगारबलवान्मीनः सोऽप्यपरैः
सह ॥ वृतोजालेनमहताग्रहीतोमत्स्यजीविभिः ॥ ४ ॥ तंशंबरायकैवर्ताउपाजन्हुरुपायनं ॥ सूदामहानसं
नीत्वाऽवद्यन्स्वधितिनाऽद्भुतं ॥ ५ ॥ दृष्ट्वातदुदरेबालंमायावत्यैन्यवेदयन् ॥ नारदोऽकथयत्सर्वंतस्याः शं
कितचेतसः ॥ बालस्यतत्त्वमुत्पत्तिंमत्स्योदरनिवेशनं ॥ ६ ॥ साचकामस्यवैपत्नीरतिर्नामयशस्विनी ॥ प
त्युर्निर्दग्धदेहस्यदेहोत्पत्तिंप्रतीक्षती ॥ ७ ॥ निरूपिताशंबरेणसासूपौदनसाधने ॥ कामदेवंशिशुंबुध्वाचक्रे
स्नेहंतदाऽर्भके ॥ ८ ॥ नातिदीर्घेणकालेनसकार्ष्णीरूढयौवनः ॥ जनयामासनारीणांवीक्षंतीनांचविभ्रमं
॥ ९ ॥ सातंपतिंपद्मदलायतेक्षणंप्रलंबबाहुंनरलोकसुंदरं ॥ सव्रीडहासोत्तभितभ्रुवेक्षतीप्रीत्योपतस्थेरतिरं
गसौरतैः ॥ १० ॥ तामाहभगवान्कार्ष्णिर्मातस्तेमतिरन्यथा ॥ मातृभावमतिक्रम्यवर्तसेकामिनीयथा ॥
॥ ११ ॥ रतिरुवाच भवान्नारायणसुतः शंबरेणाहृतोगृहात् ॥ अहंतेधिकृतापत्नीरतिः कामोभवान्प्रभो ॥ १२ ॥
एषत्वानिर्दशंसिंधावक्षिपच्छंबरोऽसुरः ॥ मत्स्योऽग्रसीत्तदुदरादिहप्राप्तोभवान्प्रभो ॥ १३ ॥ तमिमंजहि
दुर्धर्षंदुर्जयंशत्रुमात्मनः ॥ मायाशतविदंत्वंचमायाभिर्मोहनादिभिः ॥ १४ ॥ परिशोचतितेमाताकुररीवगत
प्रजा ॥ पुत्रस्नेहाकुलादीनाविवत्सागौरिवातुरा ॥ १५ ॥ ॥ ॥ ॥

रतैर्भावैः उपतस्थेअभजत् ॥ १० ॥ ११ ॥ अधिकृतापत्नीत्यत्रहेतुः रतिरहंभवान्कामइति ॥ १२ ॥ १३ ॥ दुर्जयत्वेहेतुः मायाशतविदमि
ति कथंतर्हिहंतव्यस्तत्राह मायाभिरिति ॥ १४ ॥ नचात्रविलंबः कार्यइत्याह परिशोचतिरोदितीत्यर्थः ॥ १५ ॥ ॥

॥ १६ ॥ १७ ॥ १८ ॥ वज्रस्यनिष्पेषेनिर्घातेयथानिष्ठुरस्तीव्रोनादोभवतितथाभूतंनादंव्यनदत् सामान्यविशेष्यतयाव्याप्यव्यापकत्वमोद नंपाकंपचतीतिवत् अतिनिष्ठुरंनादमकरोदित्यर्थः ॥ १९ ॥ २० ॥ वैहायसःआकाशेस्थितः ॥ २१ ॥ सत्वात्मिकांसत्वगुणमयींप्रायुंक्तेत्यु त्तरस्यानुषंगः ॥ २२ ॥ ताःमायाः व्यधमयत्व्यनाशयत् ॥ २३ ॥ ताम्राणिश्मश्रूणियस्मिंस्तत् ओजसातेजसाबलेनेतिवा ॥२४ ॥ ॥ २५॥



प्रभाष्यैवंददौविद्यांप्रद्युम्नायमहात्मने ॥ मायावतीमहामायांसर्वमायाविनाशिनीं ॥१६॥ सचशंबरमभ्ये त्यसंयुगायसमाह्वयत् ॥ अविषह्यैस्तमाक्षेपैःक्षिपन्संजनयन्कलिं ॥ १७ ॥ सोऽधिक्षिप्तोदुर्वचोभिःपदा हतइवोरगः ॥ निश्चक्रामगदापाणिरमर्षात्ताम्रलोचनः ॥ १८ ॥ गदामाविध्यतरसाप्रद्युम्नायमहात्मने ॥ प्रक्षिप्यव्यनदन्नादंवज्रनिष्पेषनिष्ठुरं ॥ १९ ॥ तामापतंतींभगवान्प्रद्युम्नोगदयागदां ॥ अपास्यशत्रवेक्रु द्धःप्राहिणोत्स्वगदांनृप ॥ २० ॥ सचमायांसमाश्रित्यदैतेयींमयदर्शितां ॥ मुमुचेऽस्त्रमयंवर्षंकार्ष्णौवैहाय सोऽसुरः ॥ २१ ॥ बाध्यमानोऽस्त्रवर्षेणरौक्मिणेयोमहारथः ॥ सत्त्वात्मिकांमहाविद्यांसर्वमायोपमर्दिनीं ॥२२॥ततोगौह्यकगांधर्वपैशाचोरगराक्षसीः ॥ प्रायुंक्तशतशोदैत्यःकार्ष्णिर्व्यधमयत्सताः॥२३॥निशातम सिमुद्यम्यसकिरीटंसकुंडलं॥शंबरस्यशिरःकायात्ताम्रश्मश्र्वोजसाऽहरत्॥२४॥आकीर्यमाणोदिविजैःस्तु वद्भिःकुसुमोत्करैः॥ भार्ययांबरचारिण्यापुरींनीतोविहायसा॥ २५॥ अंतःपुरवरंराजन्ललनाशतसंकुलं॥ विवेशपत्न्यागगनाद्विद्युतेवबलाहकः ॥२६॥तंदृष्ट्वाजलदश्यामंपीतकौशेयवाससं ॥ प्रलंबबाहुंताम्राक्षंसु स्मितंरुचिराननं ॥२७॥स्वलंकृतमुखांभोजंनीलवक्रालकालिभिः ॥ कृष्णंमत्वास्त्रियोह्रीतानिलिल्युस्तत्र तत्रह॥२८॥अवधार्यशनैरीषद्वैलक्षण्येनयोषितः ॥ उपजग्मुःप्रमुदिताःसस्त्रीरत्नंसुविस्मिताः॥ २९ ॥अथ तत्रासितापांगीवैदर्भीवल्गुभाषिणी ॥ अस्मरत्स्वसुतंनष्टंस्नेहस्नुतपयोधरा॥३०॥ ॥ ॥



विद्युतासहबलाहकोमेघइव ॥ २६ ॥ २७ ॥ नीलाश्चवक्राश्चयेअलकास्तएवालयस्तैः ह्रीतालज्जिताः ॥ २८ ॥ श्रीकृष्णोनभवती त्यवधार्य स्त्रीरत्नंश्रेष्ठारतिस्तत्सहितं ॥ २९ ॥ ३० ॥ ॥ ॥ ॥

सुतंस्मरंत्याह कोऽन्वयमिति नरवैदूर्यः पुरुषश्रेष्ठः ॥ ३१ ॥ एतेनतुल्यंवयोरूपंचयस्यसभवेदिति ॥ ३२ ॥ तस्यस्वपुत्रत्वंसंभावयंत्याहकथंत्विति ॥ ३३ ॥ तदेवाधिकंसंभावयति सएवेति ॥ ३४ ॥ देवक्यानकदुंदुभ्यांदेवक्यानकदुंदुभिभ्यामित्यर्थः ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ अतिसौंदर्येणप्रद्युम्नंवर्णयति यमिति पिताश्रीकृष्णस्तत्सरूपेतत्सदृशेप्रद्युम्नेनिजआत्मीयईशः भर्त्तेतिभावोभाव

कोऽन्वयंनरवैदूर्यः कस्यवाकमलेक्षणः ॥ धृतः कयावाजठरेकेयंलब्धात्वनेनवा ॥ ३१ ॥ ममचाप्यात्मजो नष्टोनीतोयः सूतिकागृहात् ॥ एतत्तुल्यवयोरूपोयदिजीवतिकुत्रचित् ॥ ३२ ॥ कथंत्वनेनसंप्राप्तंसारूप्यं शार्ङ्गधन्वनः ॥ आकृत्याऽवयवैर्गत्यास्वरहासावलोकनैः ॥ ३३ ॥ सएववाभवेन्नूनंयोमेगर्भेधृतोऽर्भकः ॥ अमुष्मिन्प्रीतिरधिकावामः स्फुरतिमेभुजः ॥ ३४ ॥ एवंमीमांसमानायांवैदर्भ्यांदेवकीसुतः ॥ देवक्यानकदुंदुभ्यामुत्तमश्लोकआगमत् ॥ ३५ ॥ विज्ञातार्थोऽपिभगवांस्तूष्णीमासजनार्दनः ॥ नारदोऽकथयत्सर्वंशंबराहरणादिकं ॥ ३६ ॥ तच्छ्रुत्वामहदाश्चर्यंकृष्णांतः पुरयोषितः ॥ अभ्यनंदन्बहूनब्दान्नष्टंमृतमिवागतं ॥ ३७ ॥ देवकीवसुदेवश्चकृष्णरामौतथास्त्रियः ॥ दंपतीतौपरिष्वज्यरुक्मिणीचययुर्मुदं ॥ ३८ ॥ नष्टंप्रद्युम्नमायातमाकर्ण्यद्वारकौकसः ॥ अहोमृतइवायातोबालोदिष्ट्येतिहाब्रुवन् ॥ ३९ ॥ यंवैमुहुः पितृसरूपनिजेशभावास्तन्मातरोयदभजन्रहरूढभावाः ॥ चित्रंनतत्खलुरमास्पदबिंबबिंबेकामेस्मरेऽक्षिविषये किमुतान्यनार्यः ॥ ४० ॥ इतिश्रीभागवतेम० दशमस्कंधेउ० पंचपंचाशत्तमोध्यायः ॥ ५५ ॥

नार्यास्तांतास्तन्मातरः कृष्णपत्न्योऽपिरहसिनिरूढभावाः सत्योयमभजन्नितियत्तन्नखलुचित्रं कथंसति स्मरेस्मर्यमाणत्वेनैवक्षोभकेकामे अक्षिविषयेसति किंच रमास्पदंश्रीकृष्णस्तस्यबिंबंश्रीमूर्तिस्तस्यबिंबेपुत्रे तदाकिंनुवक्तव्यमन्यनार्योभेजुरिति ॥ ४० ॥ इतिदशमेउ० टीकायांपंचपंचाशत्तमोध्यायः ॥ ५५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

षट्पंचाशत्तमेमिथ्याऽभियोगेमणिमाहरत् ॥ कन्यांजांबवतःप्रापकृष्णःसत्राजितस्ततः ॥ १ ॥ पुत्रादिकामसौख्यस्यनिष्ठामुक्त्वाऽतिचंचलां ॥ अर्थस्यानर्थतामाहस्यमंतहरणादिना ॥ २ ॥ सत्यभामाजांबवत्योर्विवाहप्रस्तावायस्यमंतकाख्यानमाह सत्राजितइत्यकारांतः क्वचित्तकारांतोऽप्यन्वयानुसारेणद्रष्टव्यः कृतापराधस्तच्छांतयेस्वयमेवोद्यमंकृत्वामणिनासहप्रादादिति ॥ १ ॥ २ ॥ भक्तस्यसत्राजितः सूर्यःस्वाम्यपिसखेवासीदित्यर्थः सचतुष्टस्तस्मैस्यमंतकंनाममणिंप्रादात् प्रीतःस्निग्धः ॥ ३ ॥ नोपलक्षितःसत्राजितोऽसावित्यविज्ञातः ॥



श्रीशुकउवाच सत्राजितःस्वतनयांकृष्णायकृतकिल्बिषः ॥ स्यमंतकेनमणिनास्वयमुद्यम्यदत्तवान् ॥ १ ॥ राजोवाच सत्राजितःकिमकरोद्ब्रह्मन्कृष्णस्यकिल्बिषं ॥ स्यमंतकःकुतस्तस्यकस्माद्दत्तासुताहरेः ॥ २ ॥ श्रीशुकउवाच आसीत्सत्राजितःसूर्योभक्तस्यपरमःसखा ॥ प्रीतस्तस्मैमणिंप्रादात्सूर्यस्तुष्टःस्यमंतकं॥३॥ सतंबिभ्रन्मणिंकंठेभ्राजमानोयथारविः ॥ प्रविष्टोद्वारकांराजंस्तेजसानोपलक्षितः ॥ ४ ॥ तंविलोक्यजनादूरात्तेजसामुष्टदृष्टयः ॥ दीव्यतेऽक्षैर्भगवतेशशंसुःसूर्यशंकिताः ॥ ५ ॥ नारायणनमस्तेस्तुशंखचक्रगदाधर ॥ दामोदरारविंदाक्षगोविंदयदुनंदन॥६॥एषआयातिसविताबांदिदृक्षुर्जगत्पते॥मुष्णन्गभस्तिचक्रेण नृणांचक्षूंषितिग्मगुः॥७॥ नन्वन्विच्छंतितेमार्गंत्रिलोक्यांविबुधर्षभाः॥ ज्ञात्वाऽद्यगूढंयदुषुद्रष्टुंत्वांयात्यजः प्रभो ॥ ८ ॥ श्रीशुकउवाच निशम्यबालवचनंप्रहस्यांबुजलोचनः ॥ प्राहनासौरविर्देवःसत्राजिन्मणिना ज्वलन् ॥ ९ ॥ सत्राजित्स्वगृहंश्रीमत्कृतकौतुकमंगलं ॥ प्रविश्यदेवसदनेमणिंविप्रैर्न्यवेशयत् ॥ १० ॥

॥ ४ ॥ दीव्यतेक्रीडते सूर्योऽयमितिशंकिताःसंतःकथयामासुरिति ॥ ५ ॥ सूर्यंनमस्कारार्थमागतंकल्पयित्वोद्रिक्तभक्तीनांसंबोधनानि नारायणेत्यादीनि ॥ ६ ॥ गभस्तिचक्रेणरश्मिजालेनमुष्णन्प्रतिघ्नन् तिग्मास्तीक्ष्णागावोरश्मयोयस्यसः ॥ ७ ॥ नचेदमघटमानमित्याहुः नन्वितिअन्विच्छंतिमृगयंते अजःसूर्यः ॥ ८ ॥ बालानामज्ञानांवचनं ज्वलन्विद्योतमानः ॥ ९ ॥ कृतानिकौतुकेनोत्सवेनमंगलानियस्मिंस्तत्विप्रैःकृत्वा ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥

भारप्रमाणंच चतुर्भिर्व्रीहिभिर्गुंजंगुंजान्पंचपणंपणान् ॥ अष्टौधरणमष्टौचकर्षंतांश्चतुरःपलं ॥ तुलांपलशतंप्राहुर्भारःस्याद्विंशातिस्तुलाइति मारीनामअकालमृत्युः अरिष्टमभद्रं अशुभाःदुःखहेतवः ॥ ११ ॥ क्वापिकदाचित् अनेनभगवत्यसमर्प्यस्वयमग्रभोजिनःसर्वानिष्टनिवर्तक

दिनेदिनेस्वर्णभारानष्टौससृजतिप्रभो ॥ दुर्भिक्षमार्य्यरिष्टानिसर्पाधिव्याधयोऽशुभाः ॥ ११ ॥ नसंतिमायिनस्तत्रयत्रास्तेऽभ्यर्चितोमाणिः ॥ सयाचितोमणिंक्वापियदुराजायशौरिणा ॥ नैवार्थकामुकःप्रादाद्याच्ञाभंगमतर्कयत् ॥ १२ ॥ तमेकदामणिंकंठेप्रतिमुच्यमहाप्रभं ॥ प्रसेनोहयमारुह्यमृगयांव्यचरद्वने ॥ १३॥ प्रसेनंसहयंहत्वामणिमाच्छिद्यकेसरी॥गिरिंविशन्जांबवतानिहतोमणिमिच्छता ॥ १४ ॥ सोपिचक्रेकुमारस्यमणिंक्रीडनकंबिले ॥ अपश्यन्भ्रातरंभ्रातासत्राजित्पर्यतप्यत ॥१५॥ प्रायःकृष्णेननिहतोमणिग्रीवोवनंगतः ॥ भ्रातामममेतितच्छ्रुत्वाकर्णेकर्णेऽजपन्जनाः ॥१६॥ भगवांस्तदुपश्रुत्यदुर्यशोलिप्तमात्मनि ॥ मार्ष्टुंप्रसेनपदवीमन्वपद्यतनागरैः ॥१७॥ हतंप्रसेनमश्वंचवीक्ष्यकेसरिणावने ॥ तंचाद्रिपृष्ठेनिहतमृक्षेणदद‍ृशुर्जनाः ॥१८॥ ऋक्षराजबिलंभीममंधेनतमसावृतं ॥ एकोविवेशभगवानवस्थाप्यबहिःप्रजाः॥१९॥ तत्रदृष्ट्वामणिश्रेष्ठंबालक्रीडनकंकृतं॥ हर्तुंकृतमतिस्तस्मिन्नवतस्थेऽर्भकांतिके ॥२०॥ तमपूर्वंनरंदृष्ट्वाधात्रीचुक्रोशभीतवत् ॥ तच्छ्रुत्वाऽभ्यद्रवत्क्रुद्धोजांबवान्बलिनांवरः ॥२१॥ सवैभगवतातेनयुयुधेस्वामिनात्मनः ॥ पुरुषंप्राकृतंमत्वाकुपितोनानुभाववित् ॥२२॥ द्वंद्वयुद्धंसुतुमुलमुभयोर्विजिगीषतोः॥आयुधाश्मद्रुमैर्दोर्भिःक्रव्यार्थेश्येनयोरिव॥२३॥आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः॥वज्रनिष्पेषपरुषैरविश्रममहर्निशं॥२४॥

मप्यनिष्टहेतुरेवभवतीतिसूचितं ॥ १२ ॥ तदेवदर्शयितुमाह तमेकदेति प्रतिमुच्यबद्ध्वा प्रसेनःसत्राजिद्भ्राता ॥ १३ ॥ आच्छिद्यआकृष्यगृहीत्वा ॥ १४ ॥ १५ ॥ अजपन्उपांशुअवोचन् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ क्रव्यार्थेआमिषार्थे ॥ २३ ॥ अष्टाविंशाहंअष्टचविंशतिश्चअहानिदिनानियस्मिंस्तदष्टाविंशाहं विंशतिशब्देतिलोपआर्षः वज्रस्यनिष्पेषोनिर्घातस्तद्वत्परुषैर्निष्ठुरैः ॥ २४ ॥

श्रीकृष्णस्यमुष्टीनांविनिष्पातैराघातैर्विनिष्पिष्टानिश्लथानिअंगानामुरूणिबंधनानिसंधिस्थानानियस्यसः ॥ २५ ॥ लोकेकोवाऽयंमत्तोबली यानितिविस्मितःसन्विमृश्याह जानेइति सर्वभूतानांयःप्राणस्तत्रयदोजःसहोबलंचइंद्रियहृदयदेहबलानितत्सर्वंत्वमित्यहंजानेकथंतथा त्वमतआह विष्णुमित्यादि ॥ २६ ॥ पुराणत्वेहेतुः त्वंहीति स्त्रष्टानिमित्तं यच्चसत्उपादानं अतःपुराणं प्रभविष्णुत्वेहेतुः कालइतिअधीश्वर स्त्वमप्यतएवेत्याह ईशःपरइति नचतदवस्थइत्याह आत्मनामात्मेति ॥ २७ ॥ यतएवंभूतःअतोममेष्टदैवंरघुनाथएवत्वमित्याह यस्येति ई

**कृष्णमुष्टिविनिष्पातनिष्पिष्टांगोरुबंधनः ॥ क्षीणसत्वःस्विन्नगात्रस्तमाहातीवविस्मितः ॥ २५ ॥ जानेत्वां सर्वभूतानांप्राणओजःसहोबलं ॥ विष्णुंपुराणपुरुषंप्रभविष्णुमधीश्वरं ॥ २६ ॥ त्वंहिविश्वसृजांस्त्रष्टासृज्यानामपियच्चसत् ॥ कालःकलयतामीशःपरआत्मातथात्मनां ॥ २७ ॥ यस्येषदुत्कालितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिंगिलोऽब्धिः ॥ सेतुःकृतःस्वयशउज्ज्वलिताचलंकारक्षःशिरांसिभुविपेतुरिषुक्षतानि ॥ २८ ॥ इतिविज्ञातविज्ञानमृक्षराजानमच्युतः ॥ व्याजहारमहाराजभगवान्देवकीसुतः ॥ २९ ॥ अभिमृश्यारविंदाक्षःपाणिनाशंकरेणतं ॥ कृपयापरयाभक्तंप्रेमगंभीरयागिरा ॥ ३० ॥ मणिहेतोरिहप्राप्तावयमृक्षपतेबिलं ॥ मिथ्याऽभिशापंप्रमृजन्नात्मनोमणिनाऽमुना ॥ ३१ ॥ इत्युक्तःस्वांदुहितरंकन्यांजांबवतींमुदा ॥ अर्हणार्थंसमणिनाकृष्णायोपजहारह ॥ ३२ ॥ अदृष्ट्वानिर्गमंशौरेःप्रविष्टस्यबिलंजनाः ॥ प्रतीक्ष्यद्वादशाहानिदुःखिताःस्वपुरंययुः ॥ ३३ ॥ ॥**

षदुत्कलितउद्दीपितोयोरोषस्तेनकटाक्षमोक्षास्तैःक्षुभितानक्रग्राहास्तिमिंगिलामहामत्स्याश्चयस्मिन्सोऽब्धिर्वर्त्ममार्गमादिशत्दत्तवान्तथाऽपितस्मिन्येनत्वयास्वयशएवसेतुःकृतः उज्ज्वलिताचदग्धा यस्येषुभिःक्षतानिछिन्नानिरक्षसोदशग्रीवस्यशिरांसिभुविपेतुः सएवत्वमिति जाने ॥ २८ ॥ इतिविज्ञापितंविज्ञानंयेनतं विज्ञानशब्दःकरणसाधनःकार्यसाधनोवा ऋक्षराजंप्रतिउक्तवान् ॥ २९ ॥ ३० ॥ वयंत्विहबहवोबिलद्वारंप्राप्तास्तत्रमिथ्याभिशापममुनामणिनाप्रमृजन्प्रमार्ष्टुमहमंतर्बिलमिहप्राप्तइत्यर्थः ॥ ३१ ॥ सहमणिनासमर्पयामास ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ श्रीकृष्णप्राप्तयेचंद्रभागांनामदुर्गामभजन् ॥ ३५ ॥ सचकृष्णस्तेषांप्रादुर्बभूव आसवइतिपाठे असवइंद्रियाणितेषांप्रेष्ठइ त्यर्थः कदादेव्याउपस्थानात् तयातान्प्रतिआदिष्टादत्तायाआशीःकृष्णंद्रक्ष्यथेतितयासहैव ॥ ३६ ॥ यदिलोकेजनाःकथंचिन्मृतंबंधुंपुनरागतमुपलभंतेतद्वदुपलभ्यसर्वेजातमहोत्सवाआसन्निति ॥ ३७ ॥ ३८ ॥ पाप्मनाअपराधेनानुतप्यमानः ॥ ३९ ॥ अघंदोषंआत्मनोरजःमलमपराधमिति ॥ ४० ॥ किंकृत्वाकस्मिन्कृतेइत्यर्थः साधुभद्रं अदीर्घदर्शनमविचारकंमांक्षुद्रंकृपणंमूढंमंदमिति ॥

निशम्यदेवकीदेवीरुक्मिण्यानकदुंदुभिः ॥ सुहृदोज्ञातयोशोचन्बिलात्कृष्णमनिर्गतं ॥ ३४ ॥ सत्राजितंशपंतस्तेदुःखिताद्वारकौकसः ॥ उपतस्थुर्महामायांदुर्गांकृष्णोपलब्धये ॥ ३५ ॥ तेषांतुदेव्युपस्थानात्प्रत्यादिष्टाशिषासच ॥ प्रादुर्बभूवसिद्धार्थःसदारोहर्षयन्हरिः ॥ ३६ ॥ उपलभ्यहृषीकेशंमृतंपुनरिवागतं ॥ सहपत्न्यामणिग्रीवंसर्वेजातमहोत्सवाः ॥ ३७ ॥ सत्राजितंसमाहूयसभायांराजसन्निधौ ॥ प्राप्तिंचाख्यायभगवान्मणिंतस्मैन्यवेदयत् ॥ ३८ ॥ सचातिव्रीडितोरत्नंगृहीत्वावाङ्मुखस्ततः ॥ अनुतप्यमानोभवनमगमत्स्वेनपाप्मना ॥ ३९ ॥ सोऽनुध्यायंस्तदेवाघंबलवद्विग्रहाकुलः ॥ कथंमृजाम्यात्मरजःप्रसीदेद्वाऽच्युतःकथं ॥ ॥ ४० ॥ किंकृत्वासाधुमह्यंस्यान्नशपेद्वाजनोयथा ॥ अदीर्घदर्शनंक्षुद्रंमूढंद्रविणलोलुपं ॥ ४१ ॥ दास्येदुहितरंतस्मैस्त्रीरत्नंरत्नमेवच ॥ उपायोऽयंसमीचीनस्तस्यशांतिर्नचान्यथा ॥ ४२ ॥ एवंव्यवसितोबुद्ध्यासत्राजित्स्वसुतांशुभां ॥ मणिंचस्वयमुद्यम्यकृष्णायोपजहारह ॥ ४३ ॥ तांसत्यभामांभगवानुपयेमेयथाविधि ॥ बहुभिर्याचितांशीलरूपौदार्यगुणान्वितां ॥ ४४ ॥ भगवानाहनमणिंप्रतीच्छामोवयंनृप ॥ तवास्तांदेवभक्तस्यवयंचफलभागिनः ॥ ४५ ॥ इ० भा० म० दशमस्कंधेउ० षट्पंचाशत्तमोध्यायः ॥ ५६ ॥ ॥

॥ ४१ ॥ एवंध्यायन्नुपायंनिश्चिनोति दास्यइति स्त्रीरत्नंदुहितरंतावद्दास्यामितदनंतरंपारिबर्हत्वेनरत्नमपीति ॥ ४२ ॥ ४३ ॥ बहुभिःकृतवर्मादिभिः ॥ ४४ ॥ मणिंनप्रतीच्छामोनस्वीकुर्मः देवःसूर्यस्तद्भक्तस्येतिकटाक्षः फलभागिनइति तवापुत्रत्वात्त्वदीयंधनमस्माकमेवेतिगूढोऽभिप्रायः ॥ ४५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेटीकायांषट्पंचाशत्तमोऽध्यायः ॥ ४६ ॥

सप्तपंचाशत्तमेतुपुनःशतधनोर्वधे ॥ प्राप्तंस्मदुर्यशोमार्ष्टिकृष्णोऽक्रूराद्धृतान्मणेः ॥१॥ अक्रूरमुररीकृत्यमणेःपात्रमथाच्युतः ॥ उपामंत्र्यत मेकांतेसरामोऽगाद्गजाव्हयं ॥ २ ॥ सत्राजितःश्रीकृष्णाज्ञाभंगफलंव्यक्तीकर्तुमाह विज्ञातार्थोपीति पांडवाबिलद्वारेणजतुगृहान्निर्गताइ त्येवंविज्ञातोऽर्थोयेनसः कुंतींचदग्धामाकर्ण्य कुल्यकरणेकुलोचितसंव्यवहारार्थं ॥ १ ॥ अन्येषांतद्दाहदुःखाभावाद्भीष्मादीन्संगम्येत्यु

श्रीशुकउवाच विज्ञातार्थोऽपिगोविंदोदग्धानाकर्ण्यपांडवान् ॥ कुंतींचकुल्यकरणेसहरामोययौकुरून् ॥ १ ॥ भीष्मंकृपंसविदुरंगांधारींद्रोणमेवच॥तुल्यदुःखौचसंगम्यहाकष्टमितिहोचतुः ॥२॥ लब्ध्वैतदंत रंराजन्शतधन्वानमूचतुः ॥ अक्रूरकृतवर्माणौमणिःकस्मान्नगृह्यते ॥ ३ ॥ योऽस्मभ्यंसंप्रतिश्रुत्यकन्या रत्नंविगर्ह्यनः ॥ कृष्णायादान्नसत्राजित्कस्माद्भ्रातरमन्वियात् ॥ ४ ॥ एवंभिन्नमतिस्ताभ्यांसत्राजितम सत्तमः ॥ शयानमवधील्लोभात्सपापःक्षीणजीवितः ॥ ५ ॥ स्त्रीणांविक्रोशमानानांक्रंदंतीनामनाथवत् ॥ हत्वापशून्सौनिकवन्मणिमादायजग्मिवान् ॥ ६ ॥ सत्यभामाचपितरंहतंवीक्ष्यशुचार्पिता ॥ व्यलप त्ताततातेतिहाहतास्मीतिमुह्यती ॥ ७ ॥ तैलद्रोण्यांमृतंप्रास्यजगामगजसाव्हयं ॥ कृष्णायविदितार्था यतप्ताचख्यौपितुर्वधं ॥ ८ ॥ तदाकर्ण्येश्वरौराजन्ननुसृत्यनृलोकतां ॥ अहोनःपरमंकष्टमित्यस्राक्षौवि लेपतुः ॥ ९ ॥ आगत्यभगवांस्तस्मात्सभार्यःसाग्रजःपुरं ॥ शतधन्वानमारेभेहंतुंहर्तुंमणिंततः ॥ १० ॥ सोपिकृष्णोद्यमंज्ञात्वाभीतःप्राणपरीप्सया ॥ साहाय्येकृतवर्माणमयाचतसचाब्रवीत् ॥ ११ ॥ नाहमी श्वरयोःकुर्यांहेलनंरामकृष्णयोः ॥ कोनुक्षेमायकल्पेततयोर्वृजिनमाचरन् ॥ १२ ॥ कंसःसहानुगोपीतोय द्द्वेषात्त्याजितःश्रिया ॥ जरासंधःसप्तदशसंयुगान्विरथोगतः ॥ १३ ॥ ॥ ॥

क्त ॥ २ ॥ ३ ॥ ननुजीवन्सत्राजित्कथंमणिंदास्यतितत्रोचतुः योऽस्मभ्यमिति भ्रातरंप्रसेनंमृतंकस्मान्नान्वियान्नानुगच्छेत् म्रियतामि त्यर्थः ॥ ४ ॥ एवंभिन्नमतिरिति अतएवअसत्तमःनीचः ॥ ५ ॥ जग्मिवान्जगाम ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ हेलनंप्र तिकूलं वृजिनमपराधं ॥ १२ ॥ अपीतोमृतः सप्तदशसंख्याकान्संयुगान् ॥ १३ ॥ ॥ ॥ ॥

॥ १४ ॥ तौरामकृष्णावेकमेवतत्त्वमित्यभिप्रेत्याह यइदमिति अजयामायया मोहिताऽजयेतिसंधिरार्षः ॥ १५ ॥ १६ ॥ १७ ॥ अंत र्यामिकृष्णनियुक्तस्तस्मिन्नक्रूरेमणिंन्यस्ययौअपलायत ॥ १८ ॥ गुरुःश्वशुरस्तद्धंतारं ॥ १९ ॥ शतयोजनमात्रगामित्वात्ततःपरंगंतुम शक्तस्तत्रपतितः तंहयंविसृज्य ॥ २० ॥ व्यचिनोन्मृगयामास अक्रूरेमणिरस्तीतिसर्वज्ञतयाविदितार्थोऽपिरामवंचनायतथाकृतवानिति

प्रत्याख्यातःसचाक्रूरंपार्ष्णिग्राहमयाचत ॥ सोप्याहकोविरुद्ध्येतविद्वानीश्वरयोर्बलं ॥ १४ ॥ यइदंलील याविश्वंसृजत्यवतिहंतिच ॥ चेष्टांविश्वसृजोयस्यनविदुर्मोहिताजया ॥ १५ ॥ यःसप्तहायनःशैलमुत्पाट्यै केनपाणिना ॥ दधारलीलयाबालउच्छिलींध्रमिवार्भकः ॥ १६ ॥ नमस्तस्मैभगवतेकृष्णायाद्भुतकर्मणे ॥ अनंतायादिभूतायकूटस्थायात्मनेनमः ॥ १७ ॥ प्रत्याख्यातःसतेनापिशतधन्वामहामणिं ॥ तस्मिन्न्य स्याश्वमारुह्यशतयोजनगंययौ ॥ १८ ॥ गरुडध्वजमारुह्यरथंरामजनार्दनौ ॥ अन्वयातांमहावेगैरश्वैरा जन्गुरुद्रुहं ॥ १९ ॥ मिथिलायामुपवनेविसृज्यपतितंहयं ॥ पद्भ्यामधावत्संत्रस्तःकृष्णोऽप्यन्वद्रवद्रुषा॥ ॥ २० ॥ पदातेर्भगवांस्तस्यपदातिस्तिग्मनेमिना ॥ चक्रेणशिरउत्कृत्यवाससोर्व्यचिनोन्मणिं ॥ २१ ॥ अलब्धमणिरागत्यकृष्णआहाग्रजांतिकं ॥ वृथाहतःशतधनुर्मणिस्तत्रनविद्यते ॥ २२ ॥ ततआहबलो नूनंसमणिःशतधन्वना ॥ कस्मिंश्चित्पुरुषेन्यस्तस्तमन्वेषपुरंव्रज ॥ २३ ॥ अहंविदेहमिच्छामिद्रष्टुंप्रिय तमंमम ॥ इत्युक्त्वामिथिलांराजन्विवेशयदुनंदनः ॥ २४ ॥ तंदृष्ट्वासहसोत्थायमैथिलःप्रीतमानसः ॥ अ र्हयामासविधिवदर्हणीयंसमर्हणैः ॥ उवासतस्यांकतिचिन्मिथिलायांसमाविभुः ॥ २५ ॥ ततोऽशिक्षद्ग दांकालेधार्त्तराष्ट्रःसुयोधनः ॥ मानितःप्रीतियुक्तेनजनकेनमहात्मना ॥ २६ ॥ केशवोद्वारकामेत्यनिधनं शतधन्वनः ॥ अप्राप्तिंचमणेःप्राहप्रियायाःप्रियकृद्विभुः ॥ २७ ॥ ॥ ॥

भावः ॥ २१ ॥ २२ ॥ अन्वेषअन्विच्छ ॥ २३ ॥ सर्वज्ञस्यैवंविचेष्टितंमद्वंचनायेतिमत्वागूढमन्युराह अहमिति ॥ २४ ॥ कतिचित्स माःसंवत्सरान् ॥ २५ ॥ प्रासंगिकमाह ॥ ततइति ॥ २६ ॥ सत्यभामामप्यवंचयदितिसूचयन्नाह केशवइति ॥ २७ ॥ ॥

बंधोःसत्राजितःसांपरायिकाःपारलौकिकाः ॥ २८ ॥ व्यूषतुःद्वारकायाःसकाशात्क्वापिपलायितौ प्रयोजकौमणिहरणेशतधन्वनःप्रवर्तकौ तत्राक्रूरःकृष्णानुमतेनैवगतः कृतवर्मातुभक्तपक्षपातप्राकटचभयादिवोपेक्षितइतिगम्यते कथमन्यथासर्वज्ञेश्वरवंचनंतयोःसंभवतीति ॥ २९ ॥ तदेवंवाराणस्यांदानपतिसमाख्ययामणिहस्तेअक्रूरेरुक्मवेदिकैर्महाध्वरैर्यजमानेनिवसतिपुनःश्रीकृष्णेनैवप्रस्थापितोऽक्रूरइतिकर्णेकर्णेजपतिजनेसत्यभामारामादीनामप्यविश्वासेजनसंग्रहायाक्रूरंसमाहूयसाक्षेपंश्रीकृष्णःप्राह इदंचभगवन्मतंसंगोप्यकेचनऋषयोऽन्यत्कारणमक्रूरानयनेवर्णयंतितद्यथाश्रुतंदूषयितुमनुवदति अक्रूरेप्रोषितइति ॥ ३० ॥ दूषयति इतीति अंगहेराजन् श्रीकृष्णमाहात्म्यं

ततःसकारयामासक्रियाबंधोर्हतस्यवै ॥ साकंसुहृद्भिर्भगवान्यायाःस्युःसांपरायिकाः ॥ २८ ॥ अक्रूरःकृतवर्माचश्रुत्वाशतधनोर्वधं ॥ व्यूषतुर्भयवित्रस्तौद्वारकायाःप्रयोजकौ ॥ २९ ॥ अक्रूरेप्रोषितेऽरिष्टान्यासन्वैद्वारकौकसां ॥ शारीरामानसास्तापामुहुर्दैविकभौतिकाः ॥३०॥ इत्यंगोपदिशंत्येकेविस्मृत्यप्रागुदाहृतं॥ मुनिवासनिवासेकिंघटेतारिष्टदर्शनं ॥ ३१ ॥ देवेऽवर्षतिकाशीशःश्वफल्कायागतायवै ॥ स्वसुतांगांदिनींप्रादात्ततोऽवर्षत्स्मकाशिषु ॥३२॥ तत्सुतस्तत्प्रभावोऽसावक्रूरोयत्रयत्रह ॥ देवोऽभिवर्षतेतत्रनोपतापानमारिकाः ॥ ३३ ॥ इतिवृद्धवचःश्रुत्वानैतावदिहकारणं ॥ इतिमत्वासमानाय्यप्राहाक्रूरंजनार्दनः ॥३४॥ पूजयित्वाऽभिभाष्यैनंकथयित्वाप्रियाःकथाः ॥ विज्ञाताखिलचित्तज्ञःस्मयमानउवाचह ॥ ३५ ॥ ननुदानपतेन्यस्तस्त्वय्यास्तेशतधन्वना ॥ स्यमंतकोमणिःश्रीमान्विदितःपूर्वमेवनः ॥ ३६ ॥

विस्मृत्येति तदेवाह मुनिवासनिवासइति मुनीनांवासोयस्मिन्सःश्रीकृष्णस्तस्यनिवासेसत्यक्रूरापगममात्रेणारिष्टदर्शनंकिंघटेत तदिच्छांविनानघटेतेत्यर्थः ॥ ३१ ॥ पुनस्तन्मतमेवानुवर्णयति देवइति काशिषुदेशेषुदेवेमघवतिअवर्षतिसति ॥ ३२ ॥ ३३ ॥ इत्येवंभूतमक्रूरमहिमप्रतिपादनपरंवृद्धानांवाक्यंश्रुत्वासत्यमेवंतथाप्येतावदेवकारणंनभवतिकिंतुमणेरप्यपगमइतिमत्वेत्येतदंतंपरमतं ॥ ॥ ३४ ॥ विज्ञातमखिलंयेनसचासौअतएवचित्तज्ञश्च अयंभावः महाभागवतस्यास्यमयादत्तेऽपिमणावपेक्षानास्त्येव यस्मादाहूतोमणिनासहैवागतइतिज्ञात्वेति ॥ ३५ ॥ ३६ ॥ ॥ ॥ ॥ ॥

ततः किमतआह सत्राजितइति अपः पिंडांश्चनिनीयदत्वाऋणंचाविमुच्यापाकृत्यशेषितमवशिष्टंदायंदुहितुःसत्यभामायाः सुतागृह्णीयुरिति
शास्त्रं तथाचस्मरंति पत्नीदुहितरश्चैवपितरौभ्रातरस्तथा ॥ तत्सुतागोत्रजाबंधुशिष्यसब्रह्मचारिणइति ॥ ३७ ॥ अग्रजोऽपिनप्रत्येति
नविश्वसितीति ॥ ३८ ॥ नास्तीतिनवक्तव्यं यतः अव्युछिन्नाः संततामखावर्तंतइति ॥ ३९ ॥ आलब्धउक्तः हृदिस्पृष्टइतिवा ॥ ४० ॥
रजः मिथ्याभिशापंसंमृज्य अन्यैर्दुर्धरइत्यादिमिषेणप्रीत्याभूयस्तस्मैप्रत्यर्पितवानिति ॥ ४१ ॥ दुष्कीर्तिंतन्मूलंदुरितंचेति ॥ ४२ ॥ इतिश्री

सत्राजितोऽनपत्यत्वाद्गृण्हीयुर्दुहितुःसुताः ॥ दायंनिनीयापः पिंडान्विमुच्यर्णंचशेषितं ॥ ३७ ॥ तथापिदुर्ध
रस्त्वन्यैस्त्वय्यास्तांसुव्रतेमणिः ॥ किंतुमामग्रजः सम्यङ्नप्रत्येतिमणिंप्रति ॥ ३८ ॥ दर्शयस्वमहाभागबंधूनां
शांतिमावह ॥ अव्युच्छिन्नामखास्तेऽद्यवर्तंतेरुक्मवेदयः ॥ ३९ ॥ एवंसामभिरालब्धः श्वफल्कतनयोम
णिं ॥ आदायवाससाछन्नंददौसूर्यसमप्रभं ॥ ४० ॥ स्यमंतकंदर्शयित्वाज्ञातिभ्योरजआत्मनः ॥ विमृज्य
मणिनाभूयस्तस्मैप्रत्यर्पयत्प्रभुः ॥ ४१ ॥ यस्त्वेतद्भगवतईश्वरस्यविष्णोर्वीर्याढ्यंवृजिनहरंसुमंगलंच ॥ आ
ख्यानंपठतिशृणोत्यनुस्मरेद्वादुष्कीर्तिंदुरितमपोह्ययातिशांतिं ॥ ४२ ॥ इति० भा० म० द० उ० स्यमंत
कोपाख्यानेसप्तपंचाशत्तमोध्यायः ॥ ५७ ॥ श्रीशुकउवाच एकदापांडवान्द्रष्टुंप्रतीतान्पुरुषोत्तमः ॥
इंद्रप्रस्थंगतः श्रीमान्युयुधानादिभिर्वृतः ॥ १ ॥ दृष्ट्वातमागतंपार्थामुकुंदमखिलेश्वरं ॥ उत्तस्थुर्युगपद्वीराः
प्राणामुख्यमिवागतं ॥ २ ॥ परिष्वज्याच्युतंवीराअंगसंगहतैनसः ॥ सानुरागस्मितंवक्रंवीक्ष्यतस्यमुदं
ययुः ॥ ३ ॥ युधिष्ठिरस्यभीमस्यकृत्वापादाभिवंदनं ॥ फाल्गुनंपरिरभ्याथयमाभ्यांचाभिवंदितः ॥ ४ ॥
परमासनआसीनंकृष्णाकृष्णमनिंदिता ॥ नवोढाव्रीडिताकिंचिच्छनैरेत्याभ्यवंदत ॥ ५ ॥ ॥

भा० म० द० उ० टी० सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ अष्टपंचाशत्तमेतुकृष्णः पंचकरेऽग्रहीत् ॥ कालिंदींमित्रविंदांचसत्यांभद्रांच
लक्ष्मणां ॥ १ ॥ कालिंदींनिजलाभायतपः परमुपेयुषीं ॥ परिणेष्यन्प्रियावासमिंद्रप्रस्थमथागमत् ॥ २ ॥ प्रतीतान्नष्टानपिलाक्षागारेद्रुप
दगृहेपुनः सर्वैर्दृष्टान् युयुधानः सात्यकिः ॥ १ ॥ प्राणाइंद्रियाणिमुख्यंपंचवृत्तिप्राणमिव ॥ २ ॥ ३ ॥ ज्येष्ठयोः प्रणामंकृत्वासमेनालिं
गितः कनिष्ठाभ्यामभिवंदितोबभूव ॥ ४ ॥ कृष्णाद्रौपदीबहुभार्यासत्यापिनिंदारहिता पार्थैर्नवमाचिरमूढापरिणीता ॥ ५ ॥

॥ ६ ॥ अतिहार्देनस्नेहेनआर्द्रेसजलेदृशौयस्यास्तयापरिष्वक्तः तयापरिपृष्टाबांधवायस्यसः ॥ ७ ॥ प्रेम्णावैक्लव्यंतेनरुद्धःकंठोयस्याः क्लेशापायेआत्मनिदर्शनंयस्यतं भजतांक्लेशापायेआत्मानंदर्शयतीतिवा ॥ ८ ॥ ज्ञातीन्बंधूंश्चनःअस्मान्यदाभ्राताअक्रूरःप्रेषितः ॥ ९ ॥ ज्ञातीनितिवचनात्प्राप्तंमोहंवारयंतीस्तौति नतेऽस्तीति तत्रहेतुः विश्वस्येति सुहृच्चआत्माचतस्य हंसिनाशयसि ॥ १० ॥ कुमेधसांविष



तथैवसात्यकिःपार्थैःपूजितश्चाभिवंदितः ॥ निषसादासनेऽन्येचपूजिताःपर्युपासिताः॥६॥पृथांसमागत्य कृताभिवादनस्तयातिहार्दार्द्रदृशाऽभिरंभितः॥आपृष्टवांस्तांकुशलंसहस्नुषांपितृष्वसारंपरिपृष्टबांधवः॥ ॥ ७ ॥ तमाहप्रेमवैक्लव्यरुद्धकंठाश्रुलोचना॥ स्मरंतीतान्बहून्क्लेशान्क्लेशापायात्मदर्शनं ॥ ८ ॥ तदैवकुश लंनोभूत्सनाथास्तेकृतावयं॥ज्ञातीन्नःस्मरताकृष्णभ्रातामेप्रेषितस्त्वया॥ ९ ॥नतेऽस्तिस्वपरभ्रांतिर्विश्वस्य सुहृदात्मनः॥ तथाऽपिस्मरतांशश्वत्क्लेशान्हंसिहृदिस्थितः ॥ १० ॥ युधिष्ठिरउवाच किंनआचरितंश्रे योनवेदाहमधीश्वर॥योगेश्वराणांदुर्दर्शोयन्नोदृष्टःकुमेधसां॥ ११॥ इतिवैवार्षिकान्मासान्राज्ञासोऽभ्यर्थि तःसुखं ॥ जनयन्नयनानंदमिंद्रप्रस्थौकसांविभुः ॥ १२ ॥ एकदारथमारुह्यविजयोवानरध्वजं ॥ गांडीवंध नुरादायतूणौचाक्षयसायकौ ॥ १३ ॥ साकंकृष्णेनसन्नद्धोविहर्त्तुंगहनंवनं ॥ बहुव्यालमृगाकीर्णंप्राविशत्प रवीरहा ॥ १४ ॥ तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून् ॥ शरभान्गवयान्खड्गान्हरिणान्शशश ल्लकान् ॥ १५॥तान्निन्युःकिंकराराज्ञेमेध्यान्पर्वण्युपागते॥तृट्परीतःपरिश्रांतोबीभत्सुर्यमुनामगात्॥१६॥ तत्रोपस्पृश्यविशदंपीत्वावारिमहारथौ ॥ कृष्णौददर्शतुःकन्यांचरंतींचारुदर्शनां ॥ १७॥ तामासाद्यवरा रोहांसुद्विजांरुचिराननां ॥ पप्रच्छप्रेषितःसख्याफाल्गुनःप्रमदोत्तमां ॥ १८ ॥ ॥ ॥



यासक्तचित्तानांदृष्टोऽसि ॥ ११ ॥ सुखमवसदितिशेषः सुखमभ्यार्थितइतिवाक्रियासमाप्तिः ॥ १२ ॥ कालिंदीदर्शनप्रसंगमाह एकदे ति अक्षयाःसायकाययोस्तौतूणौइषुधी ॥ १३ ॥ १४ ॥ १५ ॥ राज्ञेयुधिष्ठिराय मेध्यान्कर्मार्हान् बीभत्सुरर्जुनः ॥ १६ ॥ १७ ॥ सख्याश्रीकृष्णेन ॥ १८ ॥ ॥ ॥ ॥ ॥

॥ १९ ॥ २० ॥ अयंमांकामयेदित्याशंकायामाह नान्यामिति ॥ २१ ॥ २२ ॥ आदावेवतद्विद्वान् ॥ २३ ॥ प्रसंगात्तत्कालीनंचरित्रांतरमाह यदै वेतिपार्थैर्यदैवसंदिष्टोविज्ञापितः श्रीकृष्णस्तदैवतेषांविश्वकर्मणादेवशिल्पिनानगरंकारयामास ॥ २४ ॥ किंच भगवान्निरतिशयैश्वर्यगुण वानपिअर्जुनस्यधनुरादिलाभायसारथिरास खांडवंनामेंद्रस्यवनं॥ २५॥ अक्षयौअक्षयसायकौ॥ २६॥खांडवदाहकवन्हेः सख्येअर्जुनाय य

कात्वंकस्यासिसुश्रोणिकुतोऽसिकिंचिकीर्षसि ॥ मन्येत्वांपतिमिच्छंतींसर्वंकथयशोभने ॥ १९ ॥ कालिंद्यु वाच अहंदेवस्यसवितुर्दुहितापतिमिच्छती ॥ विष्णुंवरेण्यंवरदंतपःपरममास्थिता ॥ २० ॥ नान्यंपतिंवृणे वीरतमृतेश्रीनिकेतनं ॥ तुष्यतांमेसभगवान्मुकुंदोऽनाथसंश्रयः ॥२१॥ कालिंदीतिसमाख्यातावसामिय मुनाजले ॥ निर्मितेभवनेपित्रायावदच्युतदर्शनं ॥ २२ ॥ तथाऽवदद्गुडाकेशोवासुदेवायसोऽपितां ॥ रथमा रोप्यतद्विद्वान्धर्मराजमुपागमत् ॥२३॥ यदैवकृष्णःसंदिष्टःपार्थानांपरमाद्भुतं॥कारयामासनगरंविचित्रंवि श्वकर्मणा ॥२४॥ भगवांस्तत्रनिवसन्स्वानांप्रियचिकीर्षया॥अग्नयेखांडवंदातुमर्जुनस्याससारथिः॥ २५॥ सोऽग्निस्तुष्टोधनुरदाद्धयान्श्वेतान्रथंनृप॥अर्जुनायाक्षयौतूणौवर्मचाभेद्यमस्त्रिभिः ॥२६॥मयश्चमोचितो वन्हेःसभांसख्यउपाहरत्॥यस्मिन्दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः॥२७॥ सतेनसमनुज्ञातःसुहृद्भिश्चा नुमोदितः॥आययौद्वारकांभूयःसात्यकिप्रमुखैर्वृतः॥ २८॥ अथोपयेमेकालिंदींसुपुण्यर्त्वृक्षऊर्जिते॥ वितन्व न्परमानंदंस्वानांपरममंगलं ॥ २९ ॥ विंदानुविंदावावंत्यौदुर्योधनवशानुगौ ॥ स्वयंवरेस्वभगिनींकृष्णे सक्तांन्यषेधतां ॥३०॥ राजाधिदेव्यास्तनयांमित्रविंदांपितृष्वसुः ॥ प्रसह्यहृतवान्कृष्णोराजन्राज्ञांप्रप श्यतां॥३१॥नग्नजिन्नामकौसल्यआसीद्राजाऽतिधार्मिकः॥तस्यसत्याऽभवत्कन्यादेवीनाग्नजितीनृप॥३२

स्मिन्निति सामान्यतोनिर्देशः जलस्थलयोर्दृशोर्भ्रमः यद्वाजलेस्थलवत्दृक्दृष्टिर्यस्मिंस्तत् जलस्थलदृक्तस्मिन्भ्रमआसीदिति ॥ २७ ॥ ॥२८॥ सुपुण्यऋतुःऋक्षंचयस्मिन्॥२९॥पंचमंमित्रविंदाविवाहमाह विंदानुविंदावितिद्वाभ्यां आवंत्यौअवंत्याराजानौ ॥३०॥३१॥ षष्ठमा ह नग्नजिदिति कौसल्यःअयोध्यापतिस्तस्यसत्यानामकन्याभवत्आसीत् देवीकांतिमती नाग्नजितीतिपितृनाम्नाप्रसिद्धेत्यर्थः ॥ ३२ ॥

वीरस्यगंधमपिनसहंतइतितथाताम्खलान्दुर्वृत्तान्॥३३॥वृषान्जयतियस्तेनलभ्यां ॥३४॥ प्रतिनंदितस्तंप्रतिनंदितवान् श्रीकृष्णेनवासप्र
तिनंदितः ॥३५॥३६॥३७॥३८॥३९॥हेनरेंद्र राजन्यबंधोःक्षत्रियस्य शुल्कदाःद्रव्यादिप्रदाः ॥४०॥ गुणानामेकमेवधामस्थानंतथाभूतस्य



नतांशेकुर्नृपावोढुमजित्वासप्तगोवृषान् ॥ तीक्ष्णशृंगान्सुदुर्धर्षान्वीरगंधासहान्खलान् ॥३३॥ तांश्रुत्वा
वृषजिल्लभ्यांभगवान्सात्वतांपतिः ॥ जगामकौसल्यपुरंसैन्येनमहतावृतः॥३४॥सकोसलपतिःप्रीतःप्रत्यु
त्थानासनादिभिः ॥ अर्हणेनापिगुरुणाऽपूजयत्प्रतिनंदितः ॥ ३५ ॥ वरंविलोक्याभिमतंसमागतंनरेंद्रक
न्याचकमेरमापतिं ॥भूयादयंमेपतिराशिषोऽमलाःकरोतुसत्यायदिमेधृतोव्रतैः॥३६॥यत्पादपंकजरजःशि
रसाबिभर्तिश्रीरब्जजःसगिरिशःसहलोकपालैः॥लीलातनूःस्वकृतसेतुपरीप्सयेशःकालेदधत्सभगवान्म
मकेनतुष्येत् ॥३७॥ अर्चितंपुनरित्याहनारायणजगत्पते ॥ आत्मानंदेनपूर्णस्यकरवाणिकिमल्पकः॥३८॥
श्रीशुकउवाच तमाहभगवान्हृष्टःकृतासनपरिग्रहः॥मेघगंभीरयावाचासस्मितंकुरुनंदन॥३९॥श्रीभग
वानुवाच नरेंद्रयाञ्चाकविभिर्विगर्हिताराजन्यबंधोर्निजधर्मवर्तिनः॥तथाऽपियाचेतवसौहृदेच्छयाकन्यां
त्वदीयांनहिशुल्कदावयं ॥४०॥राजोवाच कोन्यस्तेऽभ्यधिकोनाथकन्यावरइहेप्सितः॥गुणैकधाम्नोयस्यां
गेश्रीर्वसत्यनपायिनी ॥४१॥ किमस्माभिःकृतःपूर्वंसमयःसात्वतर्षभ॥पुंसांवीर्यपरीक्षार्थंकन्यावरपरीप्स
या ॥ ४२ ॥ सप्तैतेगोवृषावीरदुर्दांतादुरवग्रहाः ॥ एतैर्भग्नाःसुबहवोभिन्नगात्रान्नृपात्मजाः ॥ ४३ ॥ यदी
मेनिगृहीताःस्युस्त्वयैवयदुनंदन ॥ वरोभवानभिमतोदुहितुर्मेश्रियःपते ॥ ४४ ॥ एवंसमयमाकर्ण्यबध्वा
परिकरंप्रभुः॥ आत्मानंसप्तधाकृत्वान्यगृण्हाल्लीलयैवतान् ॥४५॥ बध्वातान्दामभिःशौरिर्हतदर्पान्हतौज
सः॥व्यकर्षल्लीलयाबद्धान्बालोदारुमयान्यथा॥४६॥ यस्यतवांगे ॥ ४१ ॥ ४२ ॥ दुर्दांताःअशिक्षिताः दुरवग्रहाःअपराय



त्ताः कुतस्तदाह एतैरिति भग्नाःभंगंप्राप्ताः ॥४३॥ एतान्योनिगृह्णातितस्यकन्येतिसमयःकृतः यदीमेगोवृषानिगृहीतादमितामथिताइति
यावत्॥४४॥सप्तधाकृत्वेति बह्वीनांयोषितांसंपूर्णएवाहंसंभोगयोग्यःस्यामितिसत्यांप्रत्यसापत्न्यदर्शनार्थंआत्मनःसप्तधाकरणं॥४५॥४६॥

॥ ४७ ॥ ४८ ॥ ४९ ॥ निष्कग्रीवाश्वताःसुवाससश्चतासांयुवतीनांचदासीनांत्रिसाहस्रमदादिति ॥ ५० ॥ नागात्नागेभ्यःशतगुणा
न्नवलक्षाणि रथात्रथेभ्यःशतगुणान्नवकोटीःअश्वात्अश्वेभ्यःशतगुणान्नवपद्मानि ॥ ५१ ॥ ५२ ॥ यदुभिर्गोवृषैश्चभग्नवीर्याअपिसुदुर्म
र्षाःअसहनशीलाःरुरुधुः ॥ ५३ ॥ अस्यतःक्षिपतःप्रयुंजानानितियावत् ॥ ५४ ॥ ५५ ॥ सप्तमंविवाहमाह श्रुतकीर्तेरिति श्रुतकीर्ति

ततःप्रीतःसुतांराजाददौकृष्णायविस्मितः ॥ तांप्रत्यगृण्हाद्भगवान्विधिवत्सदृशींप्रभुः ॥ ४७ ॥ राजपत्न्य
श्चदुहितुःकृष्णंलब्ध्वाप्रियंपतिं ॥ लेभिरेपरमानंदंजातश्चपरमोत्सवः ॥ ४८ ॥ शंखभेर्यानकानेदुर्गीत
वाद्यद्विजाशिषः ॥ नरानार्यःप्रमुदिताःसुवासःस्रगलंकृताः ॥ ४९ ॥ दशधेनुसहस्राणिपारिबर्हमदाद्वि
भुः ॥ युवतीनांत्रिसाहस्रंनिष्कग्रीवसुवाससां ॥ ५० ॥ नवनागसहस्राणिनागाच्छतगुणान्रथान् ॥ रथाच्छ
तगुणानश्वानश्वाच्छतगुणान्नरान् ॥ ५१ ॥ दंपतीरथमारोप्यमहत्यासेनयावृतौ ॥ स्नेहप्रक्लिन्नहृदयोयाप
यामासकोसलः ॥ ५२ ॥ श्रुत्वैतद्रुरुधुर्भूपानयंतंपथिकन्यकां ॥ भग्नवीर्याःसुदुर्मर्षायदुभिर्गोवृषैःपुरा ॥
॥ ५३ ॥ तानस्यतःशरव्रातान्बंधुप्रियकृदर्जुनः ॥ गांडीवीकालयामाससिंहःक्षुद्रमृगानिव ॥ ५४ ॥ पारि
बर्हमुपागृह्यद्वारकामेत्यसत्यया ॥ रेमेयदूनामृषभोभगवान्देवकीसुतः ॥ ५५ ॥ श्रुतकीर्तेःसुतांभद्रामुप
येमेपितृष्वसुः ॥ कैकेकींभ्रातृभिर्दत्तांकृष्णःसंतर्दनादिभिः ॥ ५६ ॥ सुतांचमद्राधिपतेर्लक्ष्मणांलक्षणैर्युतां ॥
स्वयंवरेजहारैकःससुपर्णःसुधामिव ॥ ५७ ॥ अन्याश्चैवंविधाभार्याःकृष्णस्यासन्सहस्रशः ॥ भौमंहत्वात
न्निरोधादाहृताश्चारुदर्शनाः ॥ ५८ ॥ इति ० भा ० म ० द ० उ ० अष्टमहिष्युद्वाहोनामाष्टपंचाशत्तमोऽध्यायः ५८

र्नामयापितृष्वसातस्याःसुतांभद्रांनाम कैकेयींतद्देशजां ॥ ५६ ॥ अष्टमविवाहमाह सुतांचेति एकएवसः श्रीकृष्णोलक्ष्मणांजहार ॥
॥ ५७ ॥ तस्यनिरोधांतःपुरंतस्मात् ॥ ५८ ॥ भैष्मीजांबवतीभामासत्याभद्राचलक्ष्मणा ॥ कालिंदीमित्रविंदाचेत्यष्टौपट्टमहास्त्रियः ॥
॥ १ ॥ इतिदशमेउ ० टीकायामष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ॥ ॥

ऊनषष्टितमेभौमंहत्वातेनाहृताहरिः ॥ कन्याःसहस्रशःप्रापपारिजातंदिवोऽहरत् ॥ १ ॥ परिणीयततस्ताभिस्तन्मनोरथपूरणैः ॥ आत्मा
रामोऽप्यसौरेमेतद्गृहेषुगृहस्थवत् ॥ २ ॥ येनतास्त्रियोनिरुद्धाःसभौमः चकारायेनकारणेनहतस्तदाचक्ष्वेति ॥ १ ॥ इंद्रेणभौमविचेष्टितं
ज्ञापितःसन्प्राग्ज्योतिषपुरंभौमनगरंययावित्यन्वयः किंभूतेन हृतंछत्रंयस्यतेन लोकपालप्रधानत्वादिंद्रस्यवरुणच्छत्रहरणेऽपिमानभंग
इतितथोक्तं हृतेकुंडलेयस्याःसाअदितिर्बंधुर्मातायस्यतेन हृतममराद्रौस्थानंमणिपर्वतलक्षणंयस्यतेन सत्यभामायागृहेभगवंतमिंद्रआगत्य
विज्ञापितवांस्तदातस्याःकौतुकायतयाभार्ययासहययाविति यद्वा त्वदनुज्ञयैवत्वत्पुत्रंहनिष्यामीतिइतिहासोक्तंभूम्यैवरंदत्तंसत्यंकर्तुंसत्यभा

राजोवाच यथाहतोभगवताभौमोयेनचताःस्त्रियः॥ निरुद्धाएतदाचक्ष्वविक्रमंशार्ङ्गधन्वनः ॥ १ ॥ श्रीशु
कउवाच इंद्रेणहृतछत्रेणहृतकुंडलबंधुना ॥ हृतामराद्रिस्थानेनज्ञापितोभौमचेष्टितं ॥ सभार्योगरुडारूढः
प्राग्ज्योतिषपुरंययौ ॥ २ ॥ गिरिदुर्गैःशस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमं ॥ मुरपाशायुतैर्घोरैर्दृढैःसर्वतआवृतं ॥
॥ ३ ॥ गदयानिर्बिभेदाद्रीन्शस्त्रदुर्गाणिसायकैः ॥ चक्रेणाग्निंजलंवायुंमुरपाशांस्तथाऽसिना ॥४॥ शंखना
देनयंत्राणित्हृदयानिमनस्विनां ॥ प्राकारंगदयागुर्व्यानिर्बिभेदगदाधरः ॥ ५ ॥ पांचजन्यध्वनिंश्रुत्वायुगां
ताशनिभीषणं ॥ मुरःशयानउत्तस्थौदैत्यःपंचशिराजलात् ॥ ६ ॥ त्रिशूलमुद्यम्यसुदुर्निरीक्षणोयुगांतसूर्या
नलरोचिरुल्बणः॥ ग्रसंस्त्रिलोकीमिवपंचभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतंयथोरगः ॥७॥ आविध्यशूलंतरसागरु
त्मतेनिरस्यवक्त्रैर्व्यनदत्सपंचभिः ॥ सरोदसीसर्वदिशोंऽबरंमहानापूरयन्नंडकटाहमावृणोत् ॥८॥ तदापत
द्वैत्रिशिखंगरुत्मतेहरिःशराभ्यामभिनत्त्रिधौजसा । मुखेषुतंचापिशरैरताडयत्तस्मैगदांसोऽपिरुषाव्यमुंचत
॥ ९ ॥ तामापतंतींगदयागदांमृधेगदाग्रजोनिर्बिभिदेसहस्रधा ॥ उद्यम्यबाहूनभिधावतोऽजितःशिरां
सिचक्रेणजहारलीलया ॥ १० ॥ ॥ ॥ ॥

मायाभूम्यंशत्वात्तयासहययौ यद्वा नारदानीतपारिजातैककुसुमेरुक्मिण्यैदत्तेसतिकुपितांसत्यभामांसांत्वयतातुभ्यंपारिजातमेवदास्यामी
तिश्रीकृष्णेनप्रतिश्रुतमितिहरिवंशेप्रसिद्धंतदर्थंतांनीतवानिति ॥ २ ॥ गरुडेनयानेकारणं गिरिदुर्गैरित्यादि तैरुपलक्षितंजलाग्न्यनिलैश्च
सर्वतोवर्तमानैर्दुर्गमं ॥ ३ ॥ ४ ॥ ५ ॥ युगांताशनेर्ध्वनिवद्भीषणं परिखायाजलात् ॥ ६ ॥ ७ ॥ आविध्यआतोल्य समहान्नाद
इत्यन्वयः ॥ ८ ॥ तस्मैश्रीकृष्णायगदांव्यमुंचतव्यक्षिपत् ॥ ९ ॥ १० ॥ ॥ ॥ ॥ ॥

इंद्रतेजसावज्रेण प्रतिक्रिययाहेतुभूतयाअमर्षजुषः ॥ ११ ॥ पीठंपीठनामानं निरगन्निरगमन् ॥ १२ ॥ कृत्तानिशीर्षादीनियेषांतान्
॥ १३ ॥ १४ ॥ शतघ्नींशक्तिविशेषं ॥ १५ ॥ विचित्रावाजाःपत्राणियेषांतैर्बाणैर्निकृत्ताबाहवऊरवःशिरोध्राःकंधराविग्रहादेहाश्वयस्मिं

व्यसुःपपातांभसिकृत्तशीर्षोनिकृत्तशृंगोद्रिरिवेंद्रतेजसा ॥ तस्यात्मजाःसप्तपितुर्वधातुराःप्रतिक्रियामर्षजु
षःसमुद्यताः ॥११॥ ताम्रोंतरिक्षःश्रवणोविभावसुर्वसुर्नभस्वानरुणश्चसप्तमः ॥ पीठंपुरस्कृत्यचमूपतिंमृधे
भौमप्रयुक्तानिरगन्धृतायुधाः ॥१२॥ प्रायुंजतासाद्यशरानसीन्गदाःशक्त्यृष्टिशूलान्यजितेरुषोल्बणाः ॥
तच्छस्त्रकूटंभगवान्स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्तह ॥१३॥ तान्पीठमुख्याननयद्यमालयंनिकृत्तशीर्षो
रुभुजांघ्रिवर्मणः ॥ स्वानीकपानच्युतचक्रसायकैस्तथानिरस्तान्नरकोधरासुतः ॥१४॥ निरीक्ष्यदुर्मर्षणआ
स्रवन्मदैर्गजैःपयोधिप्रभवैर्निराक्रमत् ॥ दृष्ट्वासभार्यंगरुडोपरिस्थितंसूर्योपरिष्टात्सतडिद्घनंयथा ॥ कृष्णं
सतस्मैव्यसृजच्छतघ्नींयोधाश्चसर्वेयुगपत्स्मविव्यधुः ॥१५॥ तद्भौमसैन्यंभगवान्गदाग्रजोविचित्रवाजै
र्निशितैःशिलीमुखैः ॥ निकृत्तबाहूरुशिरोध्रविग्रहंचकारतर्ह्येवहताश्वकुंजरं ॥१६॥ यानियोधैःप्रयुक्तानि
शस्त्रास्त्राणिकुरूद्वह ॥ हरिस्तान्यच्छिनत्तीक्ष्णैःशरैरेकैकशस्त्रिभिः ॥१७॥ उह्यमानःसुपर्णेनपक्षाभ्यांनिघ्न
तागजान् ॥ गरुत्मताहन्यमानास्तुंडपक्षनखैर्गजाः ॥१८॥ पुरमेवाविशन्नार्त्तानरकोयुध्ययुध्यत ॥ दृ
ष्ट्वाविद्रावितंसैन्यंगरुडेनार्दितंस्वकं ॥१९॥ तंभौमःप्राहरच्छक्त्यावज्रःप्रतिहतोयतः ॥ नाकंपतततया
विद्धोमालाहतइवद्विपः ॥२०॥ ॥ ॥ ॥ ॥

स्तत्र् तर्ह्येवतंयदाविव्यधुस्तस्मिन्नेवक्षणे ॥ १६ ॥ अत्याश्चर्येकुरूद्वहेतिसंबोधनं तथाहि तैर्यानिप्रयुक्तानिशस्त्रास्त्राणितत्प्राप्तेःपूर्वमेवत
त्सर्वंसैन्यंहत्वापश्चात्तानिशस्त्राण्यस्त्राणिचचिच्छेद तत्राप्येकैकंशस्त्रमस्त्रंचत्रिभिःशरैरित्याश्चर्यं ॥ १७ ॥ किंच गरुत्मतेति ॥ १८ ॥
॥ १९ ॥ यतःययाशक्त्यावज्रःप्रतिहतःअसौगरुडस्तुनाकंपत ॥ २० ॥

गरुडेवितथोद्यमःसन्शूलंत्रिशूलंआददेधृतवान् ॥ २१ ॥ २२ ॥ प्रतप्तेजांबूनदेयानिरत्नानितैर्भास्वरे मेवैशभूतंमंदरशिखरंमहामणिंचार्पय दिति ॥ २३ ॥ २४ ॥ ऐश्वर्यंज्ञात्वाभूमिःस्तौतिनमस्तइति परमात्मन्देवाद्यंतर्यामिन् ॥ २५ ॥ येनमंत्रेणकुंत्याःप्रसन्नःपूर्वमासीत्तेनमंत्रेण नमस्यति नमइति पंकजंनाभौयस्यतस्मैजगत्कारणायेत्यर्थः अतएवसत्कीर्तिमयीपंकजमालाविद्यतेयस्यतस्मै एवंभूतंध्यायतांपंकज वत्सुप्रसन्नेतापोपशमनेनेत्रेयस्यतस्मै कंजवत्सुसेव्यौपंकजांकितौवांऽघ्रीयस्यतस्मैनमइति ॥ २६ ॥ किंच भगवतेनिरतिशयैश्वर्याय वासुदेवायसर्वभूताश्रयायातएवविष्णवेव्यापिने नहिसर्वभूताश्रयत्वंपरिच्छिन्नस्यसंभवतीतिकुतःसर्वाश्रयत्वंतत्राहपुरुषायसर्वस्मात्कार्या

शूलंभौमोऽच्युतंहंतुमाददेवितथोद्यमः ॥ तद्विसर्गात्पूर्वमेवनरकस्यशिरोहरिः ॥ अपाहरद्गजस्थस्यचक्रेण क्षुरनेमिना ॥ २१ ॥ सकुंडलंचारुकिरीटभूषणंबभौपृथिव्यांपतितंसमुज्ज्वलत् ॥ हाहेतिसाध्वित्यृषयःसुरे श्वरामाल्यैर्मुकुंदंविकिरंतईडिरे ॥ २२ ॥ ततश्चभूःकृष्णमुपेत्यकुंडलेप्रतप्तजांबूनदरत्नभास्वरे ॥ सवैजयंत्या वनमालयाऽर्पयत्प्राचेतसंछत्रमथोमहामणिं ॥ २३ ॥ अस्तौषीदथविश्वेशंदेवीदेववरार्चितं ॥ प्रांजलिःप्र णताराजन्भक्तिप्रवणयाधिया ॥ २४ ॥ भूमिरुवाच नमस्तेदेवदेवेशशंखचक्रगदाधर ॥ भक्तेच्छोपात्त रूपायपरमात्मन्नमोऽस्तुते ॥ २५ ॥ नमःपंकजनाभायनमःपंकजमालिने ॥ नमःपंकजनेत्रायनमस्तेपंक जांघ्रये ॥ २६ ॥ नमोभगवतेतुभ्यंवासुदेवायविष्णवे ॥ पुरुषायादिबीजायपूर्णबोधायतेनमः ॥ २७ ॥ अजायजनयित्रेऽस्यब्रह्मणेऽनंतशक्तये ॥ परावरात्मन्भूतात्मन्परमात्मन्नमोऽस्तुते ॥ २८ ॥ ॥

त्पूर्वमेवसतेपूर्वमेवाहामिहासामितितत्पुरुषस्यपुरुषत्वामितिश्रुतेःएतदपिकुतःआदिबीजायआदेर्जगत्कारणस्यापिकारणायएवमापिनमृदादि वज्जाड्यमित्याह पूर्णबोधायेति ॥ २७ ॥ नन्वेवमपिस्वकारणात्पूर्वंसत्वंनस्यादतआह अजायेतिस्वयमजायअस्यचजगतःजनयित्रे उ भयात्रपिक्रमेणहेतुद्वयं ब्रह्मणेबृहतेअनंतशक्तयइतिच बृहत्त्वादजत्वमनंतशक्तित्वात्तज्जनयितृत्वमित्यर्थः ननुपित्रादयःपुत्रादीनांजन कास्तेषांचतत्पूर्वंतेषांचभूतानितेषांचस्वकर्मद्वारेणजीवाःकिमत्राहंतत्राह परावरात्मन्नित्यादि पित्राद्यात्मकत्वात्त्वमेवजनकइत्यर्थः ॥ २८ ॥

ननुगुणाविश्वोत्पत्त्यादिहेतवस्तेचप्रधानस्यैवतस्यचपुरुषः क्षोभकस्तत्रचकालोनिमित्तमितिप्रसिद्धंकिमत्राहंतत्राह त्वंवाइति तमसोधा
रणेऽप्यसंवृतएव स्थानायपालनाय जगतःसृष्ट्याद्यर्थमुत्कटंरजआदित्वमेवबिभर्षिसृजसीत्यर्थः कालप्रधानपुरुषाश्चत्वव्यतिरिक्तानसंति
त्वंतुपरःसर्वव्यतिरिक्तः अतस्त्वमेवजनयितेत्यर्थः ॥ २९ ॥ कार्यकारणप्रपंचस्यतदव्यतिरेकंतस्यचसर्वव्यतिरेकमुपपादयति अहमिति
अहंभूमिः मात्राणीतिदेवामनइंद्रियाणीतिचत्रिविधाहंकारकार्याणि कर्ताऽहंकारः ॥ ३० ॥ एवंस्तुत्वाप्रार्थयते तस्येति हेप्रपन्नार्तिहरस्त

त्वंवैसिसृक्षूरजउत्कटंप्रभोतमोनिरोधायबिभर्ष्यसंवृतः ॥ स्थानायसत्त्वंजगतोजगत्पतेकालःप्रधानंपुरु
षोभवान्परः ॥ २९ ॥ अहंपयोज्योतिरथानिलोनभोमात्राणिदेवामनइंद्रियाणि ॥ कर्तामहानित्यखि
लंचराचरंत्वय्यद्वितीयेभगवन्नयंभ्रमः ॥ ३० ॥ तस्यात्मजोऽयंतवपादपंकजंभीतःप्रपन्नार्तिहरोपसादितः
॥ तत्पालयैनंकुरुहस्तपंकजंशिरस्यमुष्याखिलकल्मषापहं ॥ ३१ ॥ श्रीशुकउवाच इतिभूम्यार्थितोवा
ग्भिर्भगवान्भक्तिनम्रया ॥ दत्वाभयंभौमगृहंप्राविशत्सकलर्द्धिमत् ॥३२॥ तत्रराजन्यकन्यानांषट्सह
स्राधिकायुतं॥भौमाहृतानांविक्रम्यराजभ्योददृशेहरिः ॥३३॥ तंप्रविष्टंस्त्रियोवीक्ष्यनरवीरंविमोहिताः ॥
मनसावव्रिरेऽभीष्टंपतिंदैवोपसादितं॥३४॥भूयात्पतिरयंमह्यंधातातदनुमोदतां॥इतिसर्वाःपृथक्कृष्णेभा
वेनहृदयंदधुः ॥ ३५ ॥ ताःप्राहिणोद्द्वारवतींसुमृष्टविरजोंबराः ॥ नरयानैर्महाकोशान्रथाश्वान्द्रविणंम
हत् ॥ ३६ ॥ ऐरावतकुलेभांश्चचतुर्दंतांस्तरस्विनः ॥ पांडुरांश्चचतुःषष्टिंप्रेषयामासकेशवः ॥ ३७ ॥ ॥

स्यनरकस्य अयंभगदत्तोनाम भीतःअतएवमयातवपादपंकजमुपसादितः ॥ ३१ ॥ अभयंदत्वा ॥ ३२ ॥ शताधिकमित्यपिज्ञातव्यं य
थाहश्रीपराशरः कन्यापुरेसकन्यानांषोडशातुलविक्रमः ॥ शताधिकानिददृशेसहस्राणिमहामतइति राजभ्यइत्युपलक्षणंसिद्धादीनामपि
तथाचतेनैवोक्तं देवसिद्धासुरादीनांनृपाणांचजनार्दन ॥ हृत्वाहिसोऽसुरःकन्यारुरोधनिजमंदिरइति ॥ ३३ ॥ ३४ ॥ ३५ ॥ प्राहिणोत्प्र
स्थापयामास सुमृष्टाःकमनीयाश्चताविरजोंऽबराश्चताः नरयानैःशिबिकादिभिः अपिच महाकोशानिति ॥ ३६ ॥ ३७ ॥ ॥

सप्रियःसत्यभामासहितः ॥ ३८ ॥ ३९ ॥ गृहोद्यानंनिष्कुटंतदुपशोभयतियः ॥ ४० ॥ सेंद्रान्विबुधान्निर्जित्येतींद्रकृष्णयोःसंग्रामउ
क्तः तत्रननुकथंप्रसाधितस्वमनोरथेनश्रीकृष्णेनमहेंद्रस्यसंग्रामइत्याह ययाचइति अच्युतमर्थसाधनमितिचकर्मद्वयंयाचतिधातोःविगृह्य
तेविग्रहंकरोतिमहानपि तमःक्रोधः आढ्यतांधनिकतांधिगिति ॥ ४१ ॥ यथायथावत् अनेनदेवक्यादिबंधुजनसमागमोऽपिप्रतिगृहंयौ
गपद्येनसूचितः अव्ययःसर्वत्रापिसंपूर्णएव ॥ ४२ ॥ अहोभाग्यंनारीणामित्याहत्रिभिः गृहेष्विति अतर्क्याणिकर्माणिकरोतितथासः नि

गत्वासुरेंद्रभवनंदत्वाऽदित्यैचकुंडले ॥ पूजितस्त्रिदशेंद्रेणसहेंद्राण्याचसप्रियः ॥३८॥ नोदितोभार्ययोत्पा
ट्यपारिजातंगरुत्मति ॥ आरोप्यसेंद्रान्विबुधान्निर्जित्योपानयत्पुरं ॥३९॥ स्थापितःसत्यभामायागृहो
द्यानोपशोभनः ॥ अन्वगुर्भ्रमराःस्वर्गात्तद्गंधासवलंपटाः ॥ ४० ॥ ययाचआनम्यकिरीटकोटिभिःपादौ
स्पृशन्नच्युतमर्थसाधनं ॥ सिद्धार्थएतेनविगृह्यतेमहानहोसुराणांचतमोधिगाढ्यतां ॥ ४१॥ अथोमुहूर्त्त
एकस्मिन्नानागारेषुताःस्त्रियः ॥ यथोपयेमेभगवांस्तावद्रूपधरोऽव्ययः ॥ ४२ ॥ गृहेषुतासामनपाय्यत
र्क्यकृन्निरस्तसाम्यातिशयेष्ववस्थितः ॥ रेमेरमाभिर्निजकामसंप्लुतोयथेतरोगार्हकमेधिकांश्चरन् ॥४३॥
इत्थंरमापतिमवाप्यपतिंस्त्रियस्ताब्रह्मादयोऽपिनविदुःपदवींयदीयां ॥ भेजुर्मुदाऽविरतमेधितयाऽनुराग
हासावलोकनवसंगमजल्पलज्जाः ॥ ४४ ॥ प्रत्युद्गमासनवरार्हणपादशौचतांबूलविश्रमणवीजनगंधमा
ल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशताअपिविभोर्विदधुःस्मदास्यं ॥ ४५ ॥ इतिश्रीभागवतेम
हापुराणेदशमस्कंधेउत्तरार्धेपारिजातहरणनरकवधोनामएकोनषष्टितमोध्यायः ॥ ५९ ॥ ॥

रस्तंसाम्यमतिशयश्चयैरन्येषांतेषुगृहेषुअनपायीअवस्थितः रमाभिःलक्ष्म्याअंशभूताभिः निजकामसंप्लुतःस्वानंदपरिपूर्णः गार्हकमेधिकान्
गृहस्थधर्मान् ॥ ४३ ॥ अनुरागहाससहितमवलोकंचतत्पूर्वकंनवसंगमंचतद्गतंजल्पंचतास्मिन्लज्जांचभेजुः ॥ ४४ ॥ विश्रमणंपादसं
वाहनं केशप्रसारःकेशप्रसाधनं दासीनांशतानिविद्यंतेयासांतथाभूताअपिस्वयंविभोर्दास्यंविदधुः ॥ ४५ ॥ इतिदशमेउ॰टीकायांएको
नषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ॥ ॥ ॥ ॥

अथषष्टितमेकृष्णः परिहासेनरुक्मिणीं ॥ कोपयित्वाततः प्रेमकलहेतामसांत्वयत् ॥ १ ॥ रामारामजनानंदमहोदयविडंबनैः ॥ रुक्मिण्या प्रेमकलहच्छद्मनैश्वर्यमीर्यते ॥ २ ॥ स्वतल्पस्थंस्वपर्यंकस्थं ॥ १ ॥ वक्ष्यमाणंरुक्मिण्याः श्रीकृष्णेपरमंप्रेमसंभावयितुंतस्योक्तमेवतत्त्व मनुस्मारयति यस्त्विति ॥ २ ॥ आदौतावत्त्रिभिःश्लोकैर्मंदिरमनुवर्णयति तस्मिन्निति तच्छब्देनातिप्रसिद्धमाह भ्राजंतिमुक्तादामानितेषांविलंबाःसंतियस्मिंस्तेनवितानेनविराजिते तृतीयांतानांविराजितपदेनान्वयः ॥ ३ ॥ सुगंधितयाद्विरेफकुलैर्नादिते प्रविशद्भिश्चंद्ररश्मिभिः ॥ ४ ॥ निर्गच्छद्भिरगुरुसंभवैर्धूपैश्चातिमनोहरत्वंदर्शितं ॥ ५ ॥ पयसःक्षीरस्यफेनइवमृदुनिपर्यंकस्थेकशिपूत्तमेहंसतूलिकायामुपत

श्रीशुकउवाच कर्हिचित्सुखमासीनंस्वतल्पस्थंजगद्गुरुं ॥ पतिंपर्यचरद्भैष्मीव्यजनेनसखीजनैः ॥१॥ यस्त्वेतल्लीलयाविश्वंसृजत्यत्त्यवतीश्वरः ॥ सहिजातःस्वसेतूनांगोपीथाययदुष्वजः ॥२॥ तस्मिन्नंतर्गृहेभ्राजन्मुक्तादामविलंबिना ॥ विराजितेवितानेनदीपैर्मणिमयैरपि ॥ ३ ॥ मल्लिकादामभिःपुष्पैर्द्विरेफकुलनादिते ॥ जालरंध्रप्रविष्टैश्चगोभिश्चंद्रमसोऽमलैः ॥ ४ ॥ पारिजातवनामोदवायुनोद्यानशालिना ॥ धूपैरगुरुजैराजन्जालरंध्रविनिर्गतैः ॥ ५ ॥ पयःफेननिभेशुभ्रेपर्यंकेकशिपूत्तमे ॥ उपतस्थेसुखासीनंजगतामीश्वरंपतिं ॥ ६ ॥ वालव्यजनमादायरत्नदंडंसखीकरात् ॥ तेनवीजयतीदेवीउपासांचक्रईश्वरं ॥ ॥ ७॥ सोपाच्युतंक्कणयतीमणिनूपुराभ्यांरेजेंऽगुलीयवलयव्यजनाग्रहस्ता ॥ वस्त्रांतगूढकुचकुंकुमशोणहारभासानितंबधृतयाचपरार्ध्यकांच्या ॥ ८ ॥ तांरूपिणींश्रियमनन्यगतिंनिरीक्ष्ययालीलयाधृततनोरनुरूपरूपा ॥ प्रीतःस्मयन्नलककुंडलनिष्ककंठवक्त्रोल्लसत्स्मितसुधांहरिराबभाषे ॥ ९ ॥ ॥

स्थेअसेवत ॥ ६ ॥ तदेवाभिनयति वालव्यजनमिति ॥ ७ ॥ उपाच्युतमच्युतस्यसमीपेसामणिनूपुराभ्यांरेजे क्कणयतीमणिमयौनूपुरौ कूजयंतीतथा अंगुलीयवलयव्यजनान्यग्रहस्तेहस्ताग्रेयस्याःसा वस्त्रांतेनगूढौस्थगितौकुचौतयोः कुंकुमंतेनशोणोहारस्तस्यभासा तथानितंबेधृतायापरार्ध्याअमूल्याकांचीतयारेजे ॥ ८ ॥ तांनिरीक्ष्यप्रीतःसन्स्मयमानोहरिराबभाषे कथंभूतां यालीलयाधृतनरतनोस्तस्यअनुरूपरूपाअनुरूपंरूपंयस्यास्तां यथोक्तंश्रीपराशरेण देवत्वेदेवदेहेयंमनुष्यत्वेचमानुषी ॥ विष्णोर्देहानुरूपांवैकरोत्येषात्मनस्तनुमिति किंचालकैःकुंडलाभ्यांनिष्केणपदकेनचालंकृतकंठेनचतुर्दिक्षुशोभितेवक्त्रेउल्लसंतीस्मितसुधायस्यास्तां ॥ ९ ॥ ॥ ॥

सर्वगुणयुक्ताऽपितवबुद्धिर्मंदेत्याशयेनाह राजपुत्रीत्याद्येकादशभिः हेराजपुत्रिलोकपालानामिवविभूतिरैश्वर्यंयेषांतैस्तथामहानुभावैर्महा
प्रभावैःश्रीमद्भिराढ्यैरूपादिभिरूर्जितैश्चपूर्वमीप्सितासि ॥ १० ॥ तान्हित्वानोऽस्मानसमानान्कस्माद्दवृषेवृतवतीत्वं ॥ ११ ॥ किंच
प्रायशोराजभ्योजरासंधादिभ्योबिभ्यतोभयंप्राप्नुवतस्त्यक्तनृपासनान् ॥ १२ ॥ अस्पष्टवर्त्मनामविज्ञाताचाराणां अलोकपथमस्त्रीपारतंत्र्यं
पदवींमार्गं आस्थिताअनुसृताः ॥ १३ ॥ किंच निष्किंचनाइति ॥ १४ ॥ आत्मसमंपरस्परमनुरूपं जन्मैश्वर्याभ्यांसहिताआकृतिःरूपं

श्रीभगवानुवाच राजपुत्रीप्सिताभूपैर्लोकपालविभूतिभिः ॥ महानुभावैःश्रीमद्भीरूपौदार्यबलोर्जितैः ॥
॥१०॥ तान्प्राप्तानर्थिनोहित्वाचैद्यादीन्स्मरदुर्मदान्॥दत्ताभ्रात्रास्वपित्राचकस्मान्नोववृषेऽसमान्॥११॥
राजभ्योबिभ्यतःसुभ्रूःसमुद्रंशरणंगतान् ॥ बलवद्भिःकृतद्वेषान्प्रायस्त्यक्तनृपासनान् ॥ १२॥ अस्पष्टव
र्त्मनांपुंसामलोकपथमीयुषां॥आस्थिताःपदवींसुभ्रूःप्रायःसीदंतियोषितः ॥ १३ ॥ निष्किंचनावयंशश्व
न्निष्किंचनजनप्रियाः ॥ तस्मात्प्रायेणनह्याढ्यामांभजंतिसुमध्यमे ॥१४॥ ययोरात्मसमंवित्तंजन्मैश्वर्या
कृतिर्भवः ॥ तयोर्विवाहोमैत्रीचनोत्तमाधमयोःक्वचित्॥१५॥वैदर्भ्येतदविज्ञायत्वयाऽदीर्घसमीक्षया ॥वृता
वयंगुणैर्हीनाभिक्षुभिःश्लाघितामुधा ॥ १६ ॥ अथात्मनोऽनुरूपंवैभजस्वक्षत्रियर्षभं॥येनत्वमाशिषःस
त्याइहामुत्रचलप्स्यसे ॥१७॥ चैद्यशाल्वजरासंधदंतवक्रादयोनृपाःममद्विषंतिवामोरुरुक्मीचापितवाग्र
जः ॥ १८ ॥ तेषांवीर्यमदांधानांदृप्तानांस्मयनुत्तये ॥ आनीतासिमयाभद्रेतेजोऽपहरताऽसतां ॥१९॥ उदा
सीनावयंनूनंनस्त्र्यपत्यार्थकामुकाः ॥ आत्मलब्ध्यास्महेपूर्णागेहयोर्ज्योतिरक्रियाः॥ २० ॥ ॥

जातिर्वासमा भवःआयतिः ॥ १५ ॥ नदीर्घासमीक्षाविचारोयस्यास्तया ॥ १६ ॥ अथइदानीमपि ॥ १७ ॥ तर्हिकिमित्यानीताहमितिचेत्त
त्राह चैद्यशाल्वजरासंधेति मममांद्विषंति ॥ १८ ॥ स्मयनुत्तयेगर्वापनयनाय ॥ १९ ॥ स्त्रीणामतिदुःसहमौदासीन्यमकामत्वंचाह उदासीना
इति गेहयोर्देहगेहयोरुदासीनाअतएवज्योतिरक्रियाःज्योतिःप्रदीपादितद्वत्साक्षिमात्रतयाक्रियारहिताआस्महेवर्तामहइति ॥ २० ॥

अविश्लेषाद्धेतोः आत्मानमेववल्लभामित्येवार्थेइवशब्दः ॥ २१ ॥ २२ ॥ चिंतालक्षणमाह पदेति नखैररुणाश्रीः कांतिर्यस्यतेनसुजाते नसुकोमलेनपदा ॥ २३ ॥ सुदुःखंआप्रियश्रवणात् भयंत्यागशंकया शोकःअनुतापः तैर्विनष्टाबुद्धिर्यस्यास्तस्याः श्लथांतिपतंतिवलयानियस्माद्धस्तात् देहश्चपपात विक्लवाअवशाधीर्यस्यास्तस्याः ॥२४॥ हास्यस्यप्रौढिंगांभीर्यं ॥ २५ ॥ चतुर्भुजइति उत्थापनाश्लेषण

श्रीशुकउवाच एतावदुक्त्वाभगवानात्मानंवल्लभामिव॥मन्यमानामविश्लेषात्तद्दर्पघ्नउपारमत् ॥२१॥ इतित्रिलोकेशपतेस्तदात्मनःप्रियस्यदेव्यश्रुतपूर्वमप्रियं॥ आश्रुत्यभीताहृदिजातवेपथुश्चिंतांदुरंतांरुदती जगामह॥२२॥ पदासुजातेननखारुणश्रियाभुवंलिखंत्यश्रुभिरंजनासितैः॥ आसिंचतीकुंकुमरूषितौस्तनौतस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २३॥ तस्याःसुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतोव्यजनंपपात॥ देहश्चविक्लवधियःसहसैवमुत्यन्रंभेववायुविहताप्रविकीर्यकेशान् ॥ २४॥ तद्दृष्ट्वाभगवान्कृष्णःप्रियायाःप्रेमबंधनं॥ हास्यप्रौढिमजानंत्याःकरुणःसोऽन्वकंपत ॥२५॥ पर्यंकादवरुत्याशुतामुत्थाप्यचतुर्भुजः॥ केशान्समुत्यतद्वक्त्रंप्रामृजत्पद्मपाणिना ॥२६॥ प्रमृज्याश्रुकलेनेत्रेस्तनौचोपहतौशुचा॥आश्लिष्यबाहुनाराजन्ननन्यविषयांसतीं॥ २७॥ सांत्वयामाससांत्वज्ञःकृपयाकृपणांप्रभुः॥ हास्यप्रौढिभ्रमच्चित्तामतदर्हांसतांगतिः॥२८॥ श्रीभगवानुवाच मामावैदर्भ्यसूयेथाजानेत्वांमत्परायणां॥त्वद्वचःश्रोतुकामेनक्ष्वेल्याचरितमंगने ॥२९॥ मुखंचप्रेमसंरंभस्फुरिताधरमीक्षितुं॥ कटाक्षेपारुणापांगसुंदरभ्रुकुटीतटं ॥३०॥

वक्त्रपरिमार्जनाद्यर्थमाविष्कृतचतुर्भुजइत्यर्थःसमुह्यानिरुध्य ॥ २६ ॥ अश्रुकलेअश्रुभिः शोभिते शुचाशोकाश्रुभिः ॥ २७ ॥ सांत्वयामासअनुनीतवान् ॥ २८ ॥ मामां त्वद्वचःकिंनुवदिष्यसीतिश्रोतुकामेनश्रोतुमिच्छताक्ष्वेल्यानर्मणाएवमाचरितमुक्तंनतत्त्वतः हेअंगनेसुंदरि ॥ २९ ॥ प्रेमसंरंभेणप्रणयकोपेनस्फुरितःकंपितोऽधरोयस्मिंस्तत् कटशब्देनकटाक्षास्तैराक्षेपैररुणावपांगौयस्मिंस्तत् अतएव सुंदरंकुटिलंभ्रुकुटीतटंयस्मिंस्तत् ॥ ३० ॥ ॥ ॥ ॥

ननुकलहेकिंकौतुकंसुखंवाअतआह अयंहीतिनर्मैर्नर्मभिर्हास्यवचनैःयामःकालः ॥ ३१ ॥ ३२ ॥ भगवतस्तस्यऐश्वर्ययुक्तंमुखंसव्रीडहा सेनरुचिरेणास्निग्धेनापांगेनवीक्षमाणा ॥ ३३ ॥ असमत्वंभयंदुर्गाश्रयणंप्रबलैःकलिः ॥ अराजत्वमाविज्ञातालौकिकेहाऽवसादनं ॥ निष्किंचनत्वंतत्प्रीतिराढ्यानादरणीयता ॥ अनौचित्यंनिर्गुणत्वंवृथाश्लाघाचभिक्षुभिः ॥ औदासीन्यमकामत्वंस्वदोषान्षोडशासतः ॥ अज्ञात्वादीर्घदर्शित्वेभैम्याराज्ञांबहून्गुणान् ॥ कृष्णनर्मोदितान्भैष्मीन्यषेधत्तद्गुणस्तवैः ॥ भगवतास्वनिंदापराणिवियांनिवचनान्युक्तानितानिसर्वोत्कर्षपरतयाव्याचक्षाणाप्रतिभाषते तत्रयदुक्तंकस्मान्नोववृषेऽसमानितितत्रासाम्यंसत्यमेवेत्याह नन्वेवमिति हेअरविंदलोचनत्र्यधीशस्त्रयाणांब्रह्मादीनामप्यधीशोनियंतात्वंक्वक्वचाहंगुणप्रकृतिस्त्रिगुणस्वभावाप्राकृतागुणमयीप्रकृतिर्वा ननुत्वमेवाधीश्वरीश्रीःसर्वैरुपास्यत्वादिति

अयंहिपरमोलाभोगृहेषुगृहमेधिनां ॥ यन्नर्मैर्नीयतेयामःप्रिययाभीरुभामिनि ॥ ३१ ॥ श्रीशुकउवाच सैवंभगवताराजन्वैदर्भीपरिसांत्विता ॥ ज्ञात्वातत्परिहासोक्तिंप्रियत्यागभयंजहौ ॥ ३२ ॥ बभाषेऋषभंपुंसांवीक्षंतीभगवन्मुखं ॥ सव्रीडहासरुचिरस्निग्धापांगेनभारत ॥ ३३ ॥ रुक्मिण्युवाच नन्वेवमेतदरविंदविलोचनाहयद्वैभवान्भगवतोसदृशीविभूम्नः ॥ क्वस्वेमहिम्न्यभिरतोभगवांस्त्र्यधीशःक्वाहंगुणप्रकृतिरज्ञगृहीतपादा ॥ ३४ ॥ सत्यंभयादिवगुणेभ्यउरुक्रमांतःशेतेसमुद्रउपलंभनमात्रआत्मा ॥ नित्यंकदिंद्रियगणैःकृतविग्रहस्त्वंत्वत्सेवकैर्नृपपदंविधुतंतमोऽधं ॥ ३५ ॥ ॥

चेदतआह अज्ञैःसकामैर्गृहीतौपादौयस्याःसा ॥ ३४ ॥ यदुक्तंराजभ्योबिभ्यतःसुभ्रूःसमुद्रंशरणंगतानितितत्राह सत्यमितिहेउरुक्रमेति भयाभावंदर्शयति गुणाःशब्दादयएवराजंतइतिराजानस्तेभ्योभयादिवेति अंतःहृदयेसमुद्रेतद्वदगाधेविषयाकारैरपरिच्छिन्नइत्यर्थः शेतेनिश्चलतयाप्रकाशते उपलंभनमात्रश्चैतन्यघनःआत्माभवानिति बलवद्भिःकृतद्वेषानितियदुक्तंतदपिसत्यमित्याह नित्यमिति कदिंद्रियगणैःकुत्सितैर्बहिर्मुखैरिंद्रियगणैः वृत्त्यभिप्रायेणबहुवचनं कुत्सितइंद्रियगणोयेषामितिवा तैस्त्वंनित्यंकृतविग्रहः तेषुतवाप्रतीतेः यदुक्तंत्यक्तनृपासनानितितदपियुक्तमेवेत्याह त्वत्सेवकैरिति नृपाणांपदमासनमंधंगाढंतमएवतत् अविवेकबहुलत्वात् त्वत्सेवकैरेवतत्त्यक्तंकिंपुनर्वक्तव्यंत्वयात्यक्तमिति ॥ ३५ ॥ ॥ ॥ ॥ ॥

अस्पष्टवर्त्मनांपुंसामलोकपथमीयुषामितियदुक्तंतदपितथैवेत्याह त्वत्पादेति नृपशुभिर्नराकारैःपशुभिःकिंपुनर्वक्तव्यंतववर्त्मास्फुटमिति
किंचयस्माद्येभवंतमनुवर्तंतेतेषामपीहितमलौकिकमिव अथोअतः किमुवक्तव्यंतवेश्वरस्येहितमलौकिकमित्यर्थः आस्थिताःपदवींसुभ्रूः
प्रायःसीदंतियोषितइत्यस्यपरिहारंवक्ष्याति यद्वांछयेतिपंचमश्लोके ॥ ३६ ॥ निष्किंचनावयंशश्वन्निष्किंचनजनप्रियाः ॥ तस्मात्प्रायेण
नह्याढ्यामांभजंतिसुमध्यमेइत्येतच्छ्लोकोक्तंदोषत्रयंपरिहरति निष्किंचनइति दरिद्रतालक्षणंनिष्किंचनत्वंतुतवनघटतइत्याह यस्माइति
अन्यतोबलिभुजः पूज्याअपिब्रह्मादयोयस्मैभगवतेबलिंहरंतितस्यसर्वेश्वरस्यभवतोदरिद्रतानघटतइत्यर्थः निष्किंचनजनप्रियाइत्यत्रत

त्वत्पादपद्ममकरंदजुषांमुनीनांवर्त्मस्फुटंनृपशुभिर्ननुदुर्विभाव्यं ॥ यस्मादलौकिकमिवेहितमीश्वरस्यभू
मंस्तवेहितमथोअनुयेभवंतं ॥ ३६ ॥ निष्किंचनोननुभवान्नयतोऽस्तिकिंचिद्यस्मैबलिंबलिभुजोऽपिह
रंत्यजाद्याः ॥ नत्वाविदंत्यसुतृपोऽतकमाढ्यतांधाः प्रेष्ठोभवान्बलिभुजामपितेऽपितुभ्यं ॥ ३७ ॥ त्वंवै
समस्तपुरुषार्थमयःफलात्मायद्वांछयासुमतयोविसृजंतिकृत्स्नं ॥ तेषांविभोसमुचितोभवतःसमाजःपुंसः
स्त्रियाश्चरतयोःसुखदुःखिनोर्न ॥ ३८ ॥ ॥ ॥ ॥ ॥

त्पुरुषेणबहुव्रीहिणावानिंदास्यादितिस्वयमप्युभयथास्तौति प्रेष्ठोभवानिति बलिभुजांब्रह्मादीनांलोकेश्वराणांत्वंप्रेष्ठस्तेऽपितुभ्यंतवेति
तस्मात्प्रायेणनह्याढ्यामांभजंतीतितस्योत्तरं नत्वाविदंतीति आढ्यतयांऽधास्त्वात्वामंतकंनविदंति अतस्तेअसुतृपः असूनेवतर्पयंतिन
त्वांभजंतीत्यर्थः ॥ ३७ ॥ बलिभुजामपिभवान्प्रेष्ठइत्यत्रहेतुंवदंतीययोरेवसमंवित्तमित्यनेनोक्तमनौचित्यंपरिहराति त्वंवाइति फलात्मा
परमानंदरूपः एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः समाजःसेव्यसेवकलक्षणसंबंधः नतुपुंसःस्त्रियाश्चमिथोरतयोः अ
तएवतत्कृतसुखदुःखिनोःतदाकुलयोरित्यर्थः ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥

भिक्षुभिः श्लाघितामुधेत्यस्यपरिहारः त्वमिति भिक्षुपदव्याख्यानं न्यस्तदंडैर्मुनिभिरिति मुधेत्यस्यपरिहारः आत्मेति यदर्थंसर्वंप्रियंत स्यजगतामात्मनस्तववरणंनवृथेत्यर्थः किंच आत्मदइति वैदर्भ्यैतदविज्ञायत्वयादीर्घसमीक्षयेतिस्वास्मिन्नुक्तंदोषद्वयंपरिहरति इतोति इतिज्ञात्वैवमेमयावृतोऽसीत्यज्ञानपरिहारः हित्वेत्यदीर्घसमीक्षापरिहारः भवतोभ्रुवः सकाशादुदीरितोयः कालस्तस्यवेगस्तेनध्वस्ताआ शिषोयेषांतान्ब्रह्मादीनापिविहाय कुतोऽन्येवराकाइत्यर्थः ॥ ३९ ॥ स्वाज्ञानंपरिहृत्यपुरुषांतरगुणवर्णनप्रदीप्तकोपसंरंभेणतास्मिन्नेवा ज्ञानमापादयति जाड्यमिति सिंहोयथापशून्विद्राव्यस्वबलिंहरतितथाशार्ङ्गधनुर्निनादेनैवजरासंधादीन्विद्राव्यमांस्वभागंश्रियंयस्त्वंहृत वानसितस्यतवराजभ्योभयादुदधिंप्रपन्नइतियद्वचोभाषणंतज्जाड्यंमांद्यं नघटतइत्यर्थः॥४०॥यच्चान्यदस्पष्टवर्त्मनामित्यादिनाअर्थात्त्वां

त्वंन्यस्तदंडमुनिभिर्गदितानुभावआत्मात्मदश्चजगतामितिमेवृतोऽसि ॥ हित्वाभवद्भ्रुवउदीरितकालवे गध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये ॥ ३९ ॥ जाड्यंवचस्तवगदाग्रजयस्तुभूपान्विद्राव्यशार्ङ्गनि नदेनजहर्थमांत्वं ॥ सिंहोयथास्वबलिमीशपशून्स्वभागंतेभ्योभयाद्यदुदधिंशरणंप्रपन्नः ॥ ४० ॥ यद्वां छयान्नृपशिखामणयोऽगवैन्यजायंतनाहुषगयादयऐकपत्यं ॥ राज्यंविसृज्यविविशुर्वनमंबुजाक्षसीदंति तेनुपदवींतइहास्थिताःकिं ॥ ४१ ॥ काऽन्यंश्रयेततवपादसरोजगंधमाघ्रायसन्मुखरितंजनताऽपवर्गं लक्ष्म्यालयंत्वविगणय्यगुणालयस्यमर्त्यासदोरुभयमर्थविविक्तदृष्टिः ॥ ४२ ॥ ॥

भजंतः सीदंतीत्यवसादनंश्रमावहत्वमुक्तंतदपिमंदमेवेत्याह यद्वांछयेति यस्यतवभजनवांछयानृपोत्तमाः अंगोवेनस्यपितावैन्यः पृथुः जायं तोभरतः नाहुषोययातिः गयश्चादिर्येषांते यएतेतवपदवींमार्गमाश्रितास्तेकिंसीदंतिनसीदंत्येव अपितुत्वत्पदंप्राप्ताइत्यर्थः एवंकोपावेशेना वसादनस्यपरिहारादस्पष्टवर्त्मनामित्येतदानंतर्यंविहायअत्रोत्कर्षः ॥४१॥ यच्चोक्तमथात्मनोऽनुरूपमितितत्राह कान्यमितिश्लोकद्वयेनगुणा नामाढ्यस्यतवपादसरोजगंधंजनतायाअपवर्गमोक्षरूपंलक्ष्म्याआलयंतत्सेव्यंसद्भिर्मुखरितं,वर्णितमाघ्रायतमविगणय्यमर्त्यामरणधर्मिका सदाउरुभयंयस्यतमन्यंकास्त्रीश्रयेतसेवेत अर्थेविविक्तादृष्टिर्यस्याःसा गुणालयस्येत्यनेनगुणैर्हीनाइतियदुक्तंतदपास्तं ॥ ४२ ॥ ॥

अतस्त्वामेवाहमभजामित्याह तंत्वेति किंचप्रार्थ्यते स्यादिति अरणंशरणं सृतिभिर्देवतिर्यगादिभिर्जन्मभिः पाठांतरेत्वर्थवादबहुलक र्मश्रवणैरित्यर्थः कथंभूतस्यतव यस्त्वमनृतस्यसंसारस्यअपवर्गोनाशोयस्मात्सः भजंतमुपयातिआत्मसात्करोति तस्यतवांघ्रिरिति भीत स्यहिशरणमेवानुरूपंभजनयोग्यमतस्त्वामहमभजमित्यर्थः ॥ ४३ ॥ येचोक्ताराज्ञांबहवोगुणाराजपुत्रीप्सिताभूपैर्लोकपालविभूतिभिरि त्यादिना तत्रसेर्ष्यंसशापंसांगुलिभंगंचाहद्वाभ्यां तस्याःस्युरिति खराइवकेवलंभारवाहाःगावोबलीवर्दाइवनिरर्थंव्यापाराक्लिष्टाःश्वानइ वावमताःबिडालाइवकृपणाःहिंस्राश्चभृत्याइवकिंकराःनृपास्तस्यादुर्भगायाःपतयःस्युः यस्याःकर्णपथंत्वत्कथानप्राप्नुयादिति ॥ ४४ ॥ तथाहि तेपदाब्जमकरंदमाजिघ्रतीसतीयास्त्रीविमूढासाकांतोऽयमितिमतिर्यस्याःसाकांतमतिर्जीवच्छवंभजति त्वगादिभिर्बहिःपिनद्धंछ

तंत्वाऽनुरूपमभजंजगतामधीशमात्मानमत्रचपरत्रचकामपूरं ॥ स्यान्मेतवांघ्रिररणंसृतिभिर्भ्रमंत्यायोवै भजंतमुपयात्यनृतापवर्गः ॥ ४३ ॥ तस्याःस्युरच्युतनृपाभवतोपदिष्टाःस्त्रीणांगृहेषुखरगोश्वबिडालभृ त्याः ॥ यत्कर्णमूलमरिकर्षणनोपयायाद्युष्मत्कथामृडविरिंचसभासुगीता ॥ ४४ ॥ त्वक्श्मश्रुरोमनख केशपिनद्धमंतर्मांसास्थिरक्तकृमिविट्कफपित्तवातं ॥ जीवच्छवंभजतिकांतमतिर्विमूढायातेपदाब्जमकरंद मजिघ्रतीस्त्री ॥ ४५ ॥ अस्त्वंबुजाक्षममतेचरणानुरागआत्मन्रतस्यमयिचानतिरिक्तदृष्टेः ॥ यर्ह्यस्यवृद्ध यउपात्तरजोऽतिमात्रोमामीक्षसेतदुहनःपरमाऽनुकंपा ॥ ४६ ॥ नैवालीकमहंमन्येवचस्तेमधुसूदन ॥ अंबायाइवहिप्रायःकन्यायाःस्याद्रतिःक्वचित् ॥ ४७ ॥ ॥ ॥ ॥

न्नमंतर्मांसादिमयमिति ॥ ४५ ॥ यदुक्तमुदासीनावयमित्यादिनातत्राह अस्त्विति यद्यपित्वंनिरपेक्षस्तथाऽपिममतेचरणानुरागोऽस्तु मयि चमय्यपिनअतिरिक्ताअतिशयवतीदृष्टिर्यस्यतस्यते आत्मन्आत्मन्येवरतस्य तर्हितवतेनकोलाभः त्वच्चरणानुरागएवमहान्लाभः किंच यर्हिअस्यविश्वस्यवृद्धयउपात्तारजसोऽतिमात्राऔत्कंठ्यंयेनसःतथाभूतःसन्मामीक्षसे उएवार्थे हहर्षे तदेवनःपरमानुकंपाअत्यनुग्रहइ ति ॥ ४६ ॥ तदेवंसर्वंतदुक्तंप्रतिव्याख्यायप्रसन्नचित्तामंत्रमुपादिशंत्याहद्वाभ्यां नैवेति अथात्मनोऽनुरूपमित्यादितेवचःअलीकंमिथ्येति नैवमन्ये यतोलोकेकन्यायाएवक्वाचिद्रतिर्भवति यथा काशिराजकन्यानामंबाऽबालिकाऽबिकानांतिसृणांमध्येअंबायाः कन्यायाएव शाल्वेरतिर्जातातद्वत् ममरतिस्तुत्वय्येवपर्यवस्यतीत्यभिप्रायः ॥ ४७ ॥ ॥ ॥

व्यूढायाःपरिणीतायाअपीति उभयस्मादिहपरलोकद्वयाच्च्युतोभ्रष्टइति ॥४८॥ प्रलंभिताउपहासिता अन्वात्थअन्वाख्यातवती ॥ ४९ ॥ मयिएकांतभक्तायास्तेकामाः संत्येव अकामायकामनिवृत्तयेमोक्षपर्यवसायिनइत्यर्थः ॥ ५० ॥ अनुवादेनवरान्दत्वातामभिनंदति उपलब्धमिति यद्यस्मान्मयिवर्तमानाधीर्नापकर्षितानान्यविषयाजाता ॥ ५१ ॥ एकांतभक्तिमभिनंद्यतामेवदृढीकर्तुंसकामान्भक्तान्निंदति येमामिति दांपत्येदंपत्युपभोगसुखार्थं ॥ ५२ ॥ मायामोहितत्वमेवोपपादयति मांप्राप्येति अपवर्गेणसहसंपदोयस्मिंस्तंमांप्राप्य

व्यूढायाश्चापिपुंश्चल्यामनोऽभ्येतिनवंनवं॥बुधोऽसतींनबिभृयात्तांबिभ्रदुभयच्युतः ॥४८॥ श्रीभगवानुवाच साध्व्येतच्छ्रोतुकामैस्त्वंराजपुत्रिप्रलंभिता ॥ मयोदितंयदन्वात्थसर्वंतत्सत्यमेवहि ॥४९॥याऽन्यान्कामयसेकामान्मय्यकामायभामिनि॥संतिह्येकांतभक्तायास्तवकल्याणिनित्यदा ॥५०॥ उपलब्धंपतिप्रेमपातिव्रत्यंचतेऽनघे॥यद्वाक्यैश्चाल्यमानायानधीर्मय्यपकर्षिता ॥५१॥ येमांभजंतिदांपत्येतपसाव्रतचर्यया॥कामात्मानोऽपवर्गेशंमोहितामममायया ॥५२॥ मांप्राप्यमानिन्यपवर्गसंपदंवांछंतियेसंपदएवतत्पतिं॥तेमंदभाग्यानिरयेऽपियेनृणांमात्रात्मकत्वान्निरयःसुसंगमः॥५३॥दिष्ट्यागृहेश्वर्यसकृन्मयित्वयाकृताऽनुवृत्तिर्भवमोचनीखलैः ॥ सुदुष्कराऽसौसुतरांदुराशिषोह्यसुंभरायानिकृतिंजुषःस्त्रियाः ॥ ५४ ॥ नत्वादृशींप्रणयिनींगृहिणींगृहेषुपश्यामिमानिनिययास्वविवाहकाले ॥ प्राप्तान्नृपानवगणय्यरहोहरोमेप्रस्थापितोद्विजउपश्रुतसत्कथस्य ॥ ५५ ॥ ॥ ॥ ॥

प्रसाद्ययेकेवलंसंपदएवविषयान्वांछंतिनतुमांतत्पतिंतासांसंपदामपियोहमेवपतिस्तं तथायेविषयानिरयेऽपिअतिनिकृष्टयोनावपिस्युस्तान् किंच तेषांपुंसांमात्रात्मकत्वाद्विषयात्मकत्वान्निरयःसुसंगमःशोभनसंगमएवस्यादतोमंदभाग्याएवतेइत्यर्थः ॥ ५३ ॥ तस्माद्गृहेश्वरित्वयामयिभवमोचनीनिष्कामाऽनुवृत्तिःकृताएतद्दिष्ट्याभद्रं कथंभूता खलैःसुदुष्करा दुराशिषोदुरभिप्रायायाःअतएवअसुंभरायाःप्राणतर्पणपरायाःनिकृतिंजुषोवंचनपरायाःस्त्रियाःसुतरामसावनुवृत्तिर्दुष्करेति ॥ ५४ ॥ किंचसंतिनिष्कामाःप्रेम्णैवमय्यनुवर्तमानाबह्व्यः किंतुत्वयासदृशींकापिनपश्यामीतितस्याभक्तिबहुमानेनाभिनंदति नत्वादृशीमितित्रिभिः उपश्रुताःसत्यःकथायस्यमे ॥ ५५ ॥

प्रोद्वाहपर्वणिअत्रानिरुद्धविवाहे अक्षगोष्ठ्यांद्यूतसभायां तस्यभ्रातुर्वधं तस्मिन्कालेकालांतरेतदनुस्मरणतःपुनःपुनःसमुत्थंदुःखमस्मा
भिरयोगोवियोगस्तद्भीत्याअसहःसोढवत्यसि अनेनैवानिरुद्धविवाहानंतर्यमस्यज्ञातव्यं ॥ ५६ ॥ अपिच दूतइति आत्मलभनेमत्प्राप्त्य
र्थं मयिचिरायतिश्वोभाविनिविवाहेआगंतव्यमितिकृतेसमयेकथंचिदप्राप्तवतिसाति एतद्विश्वंशून्यंमत्वाइदमनन्ययोग्यंअंगंजिहासेत्यक्तु
मिच्छामित्यक्ष्यामीत्येवंदूतःप्रस्थापितः तथात्युक्तंत्वया यर्ह्यंबुजाक्षनलभेयभवत्प्रसादंजह्यामसून्व्रतकृशान्शतजन्मभिःस्यादिति यद्वा
अजिहासइतिच्छेदः त्यक्तुमैच्छइत्यर्थः तत्तवकर्मत्वय्येवतिष्ठेत् नतत्प्रतिकर्तुंशक्यमित्यर्थः किंतुकेवलंत्वांप्रतिनंदयामोहर्षयामइति ॥
॥ ५७ ॥ सौरतसंलापैःसुरतनर्मगोष्ठीभिः ॥ ५८ ॥ ५९ ॥ इतिदशमेटी०उ०षष्टितमोध्यायः ॥ ६० ॥ एकषष्टितमेशौरेःपुत्रपौत्रादिसंत

भ्रातुर्विरूपकरणंयुधिनिर्जितस्य प्रोद्वाहपर्वणिचतद्वधमक्षगोष्ठ्यां ॥ दुःखंसमुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीःकिमपितेनवयंजितास्ते ॥ ५६ ॥ दूतस्त्वयात्मलभनेसुविविक्तमंत्रःप्रस्थापितोमयिचिरायतिशून्यमेतत् ॥ मत्वाजिहासइदमंगमनन्ययोग्यंतिष्ठेततत्त्वयिवयंप्रतिनंदयामः ॥ ५७ ॥ श्रीशुकउवाच एवंसौरतसंलापैर्भगवान्जगदीश्वरः ॥ स्वरतोरमयारेमेनरलोकंविडंबयन् ॥ ५८ ॥ तथाऽन्यासामपिविभुर्गृहेषुगृहवानिव ॥ आस्थितोगृहमेधीयान्धर्माँल्लोकगुरुर्हरिः ॥ ५९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ० कृष्णरुक्मिणीसंवादोनामषष्टितमोऽध्यायः ॥ ६० ॥ ॥ ॥ श्रीशुकउवाच एकैकशस्ताःकृष्णस्यपुत्रान्दशदशाबलाः ॥ अजीजनन्ननवमान्पितुःसर्वात्मसंपदा ॥ १ ॥ गृहादनपगंवीक्ष्यराजपुत्र्योऽच्युतंस्थितं ॥ प्रेष्ठंन्यमंसतस्वंस्वंनतत्तत्त्वविदःस्त्रियः ॥ २ ॥ चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ॥ संमोहिताभगवतोनमनोविजेतुंस्वैर्विभ्रमैःसमशकन्वनिताविभून्नः ॥ ३ ॥ ॥

तिः ॥ अनिरुद्धविवाहेचरुक्मिणोरामतोवधः ॥ १ ॥ अष्टाधिकशतद्व्यष्टसहस्रस्त्रीसमुद्भवान् ॥ कोटिशःपुत्रपौत्रादीन्हरिर्दारैरयोज
यत् ॥ २ ॥ तदेतद्वक्तुमाह एकैकशइति कृष्णस्यअबलाभार्याः सर्वायाआत्मनिसंपत्तयापितुःसकाशादनवमान्अन्यूनान् ॥ १ ॥ प्रे
ष्ठंन्यमंसतअच्युतस्यप्रियतमंप्रत्येकंस्वंस्वंमेनिरे नैतस्यतत्त्वमात्मारामत्वंविदंतिताः ॥ २ ॥ आत्मारामत्वंव्यनक्तिद्वयेन चार्विति चार्वब्ज
कोशवद्वदनंचआयतानिबाहुनेत्राणिचसप्रेम्णाहासरसेनवीक्षितानिचवल्गुजल्पाश्चभगवतः एतैःसंमोहितावनिताःस्वैःस्वैरनेकैर्विभ्रमैरस्त
रयश्रीकृष्णस्यमनोविजेतुंहर्तुंनसमशकन्नशक्ताबभूवुः विभून्नःपरिपूर्णस्य ॥ ३ ॥ ॥ ॥

तासांविभ्रमान्वर्णयन्नेताद्विवृणोति स्मायेति स्मायोगूढहसितंतद्युक्तः अवलोकलवः कटाक्षस्तेनदर्शितः सूचितोभावोऽभिप्रायस्तेनहारिमनो हरणशीलंयत्भ्रूमंडलंतेनप्रहिताःप्रस्थापितायेसौरतामंत्रास्तेषुशौंडैः प्रगल्भैः अनंगस्यबाणैः शरैरन्यैश्चकरणैः कामशास्त्रप्रसिद्धैर्यस्योंद्रियंमनोविमथितुंक्षोभयितुंषोडशसहस्रमपिपत्न्योनशेकुरिति ॥४॥ अनुरागेणहासोऽवलोकश्चनवसंगमेलालसंऔत्सुक्यंचतेआद्यायस्यविभ्रमकदंबस्यतंभेजुः अनुरागहासावलोकनवसंगमलालसात्र्यंभेजुरितिवा तस्यमनोविजेतुंनशेकुरितिच॥५॥किंतुप्रत्युद्गमादिभिर्विभोस्तस्यदास्यं

स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तुषोडशसहस्रमनंगबाणैर्यस्यें द्रियंविमथितुंकरणैर्नशेकुः॥४॥इत्थंरमापतिमवाप्यपतिंस्त्रियस्ताब्रह्मादयोऽपिनविदुःपदवींयदीयां॥भेजु र्मुदाऽविरतमेधितयानुरागहासावलोकनवसंगमलालसाद्यं ॥५॥ प्रत्युद्गमासनवरार्हणपादशौचतांबूलवि श्रमणवीजनगंधमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासशिताअपिविभोर्विदधुःस्मदास्यं ॥ ६ ॥ ता सांयादशपुत्राणांकृष्णस्त्रीणांपुरोदिताः॥ अष्टौमहिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामिते ॥७॥ चारुदेष्णःसु देष्णश्चचारुदेहश्चवीर्यवान्॥सुचारुश्चारुगुप्तश्चभद्रचारुस्तथापरः ॥८॥ चारुचंद्रोविचारुश्चचारुश्चदशमो हरेः॥प्रद्युम्नप्रमुखाजातारुक्मिण्यांनावमाःपितुः ॥९॥ भानुःसुभानुःस्वर्भानुःप्रभानुर्भानुमांस्तथा॥चंद्रभा नुर्बृहद्भानुरतिभानुस्तथाऽष्टमः ॥ १० ॥ श्रीभानुःप्रतिभानुश्चसत्यभामात्मजादश ॥ सांबःसुमित्रःपुरुजि च्छतजिच्चसहस्रजित् ॥ ११ ॥ विजयश्चित्रकेतुश्चवसुमान्द्रविडःक्रतुः ॥ जांबवत्याःसुताह्येतेसांबाद्याःपि तृसंमताः ॥ १२ ॥ वीरश्चंद्रोऽश्वसेनश्चचित्रगुर्वेगवान्वृषः ॥ आमःशंकुर्वसुःश्रीमान्कुंतिर्नाग्नजितेःसुताः ॥ १३ ॥ श्रुतःकविर्वृषोवीरःसुबाहुर्भद्रएकलः ॥ शांतिर्दर्शःपूर्णमासःकालिंद्याःसोमकोऽवरः ॥ १४ ॥

नित्यंविदधुरिति प्रौढभावेऽपिनवसंगमाद्यभिधानमगतसारत्वेनौत्सुक्येनचतथाप्रतीतेः तेषामेवश्लोकानांप्रस्तावांतरेपुनःपुनरावृत्तिःसौंदर्यात् ॥ ६ ॥प्रासंगिकमुक्त्वाप्रस्तुतमाह तासामिति दशदशपुत्रायासांतासांमध्येअष्टौमहिष्योयाःप्रागुक्तास्तत्पुत्रानिति ॥ ७ ॥८ ॥९ ॥ १० ॥ ॥ ११ ॥ १२ ॥ श्रीमानितिवसोःकुंतेर्वाविशेषणं ॥ १३ ॥भद्रोनामएकलःएकःसोमकःअवरःकनीयान् एतेकालिंद्याःसुताइति ॥ १४ ॥

माद्रयाःलक्ष्मणायाः ॥ १५ ॥ क्षुधिश्चदशमः एतेमित्रविंदात्मजाः ॥ १६ ॥ संग्रामजित्प्रमुखाःसत्यकांताभद्रायाःसुताः शैब्यानामा पिसैव ॥ १७ ॥ रोहिण्याःसुतानामुक्तिरन्यासामुपलक्षणार्थं ॥ १८ ॥ एतेषामिति अन्येषामपिश्रीकृष्णपुत्राणांशतसंख्यस्त्रीषुपुत्राःपौ त्राश्चकोटिशोबभूवुः तत्रहेतुत्वेनश्रीकृष्णपत्नीनांबाहुल्यमनुस्मारयति मातरःकृष्णजातानामिति चशब्देनाधिकाश्चेत्युक्तं ॥ १९ ॥ यः कृष्णंहंतुंरंध्रंप्रतीक्षतेसकथंप्रादादिति वैवाहिकंविवाहनिमित्तं ॥ २० ॥ रुक्मिणोऽभिप्रायंकथंजानीमइतिचेदतआह अनागतमिति अ

प्रघोषोगात्रवान्सिंहोबलःप्रबलऊर्ध्वगः ॥ माद्र्याःपुत्रामहाशक्तिःसहओजोऽपराजितः ॥ १५ ॥ वृकोहर्षोऽनिलोगृध्रोवर्धनोन्नादएवच ॥ महाशःपावनोवन्हिर्मित्रविंदात्मजाःक्षुधिः ॥ १६ ॥ संग्रामजिद्बृहत्सेनःशूरःप्रहरणोऽरिजित् ॥ जयःसुभद्रोभद्रायावामआयुश्चसत्यकः ॥ १७ ॥ दीप्तिमांस्ताम्रतप्ताद्यारोहिण्यास्तनयाहरेः ॥ प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यांमहाबलः ॥ १८ ॥ पुत्र्यांतुरुक्मिणोराजन्नाम्नाभोजकटेपुरे ॥ एतेषांपुत्रपौत्राश्चबभूवुःकोटिशोनृप ॥ मातरःकृष्णजातानांसहस्राणिचषोडश ॥ १९ ॥ राजोवाच कथंरुक्म्यरिपुत्रायप्रादाद्दुहितरंयुधि ॥ कृष्णेनपरिभूतस्तंहंतुंरंध्रंप्रतीक्षते ॥ एतदाख्याहिमेविद्वन्द्विषोर्वैवाहिकंमिथः ॥ २० ॥ अनागतमतीतंचवर्तमानमतींद्रियं ॥ विप्रकृष्टंव्यवहितंसम्यक्पश्यंतियोगिनः ॥ २१ ॥ श्रीशुक उवाच वृतःस्वयंवरेसाक्षादनंगोंऽगयुतस्तया ॥ राज्ञःसमेतान्निर्जित्यजहारैकरथोयुधि ॥ २२ ॥ यद्यप्यनुस्मरन्वैरंरुक्मीकृष्णावमानितः ॥ व्यतरद्भागिनेयायसुतांकुर्वन्स्वसुःप्रियं ॥ २३ ॥ रुक्मिण्यास्तनयांराजन्कृतवर्मसुतोबली ॥ उपयेमेविशालाक्षींकन्यांचारुमतींकिल ॥ २४ ॥ दौहित्रायानिरुद्धायपौत्रींरुक्म्यददाद्धरेः ॥ रोचनांबद्धवैरोऽपिस्वसुःप्रियचिकीर्षया ॥ जानन्नधर्मंतद्यौनंस्नेहपाशानुबंधनः ॥ २५ ॥

तींद्रियमस्मदादींद्रियागोचरं विप्रकृष्टंदूरस्थं व्यवहितंकुड्याद्यंतरितं ॥ २१ ॥ तत्रोत्तरं स्वयंवरेरुक्मवत्यावृतःसन्राज्ञोनिर्जित्यजहारेति ॥ २२ ॥ यद्यपिश्रीकृष्णावमानितस्तथाऽपिवैरमनुस्मरन्नपिव्यतरत्प्रादात् अन्वमोदतेत्यर्थः ॥ २३ ॥ सर्वासामपिएकैकाकन्यातत्सर्वविवाहोपलक्षणार्थंज्येष्ठकन्याविवाहमाह रुक्मिण्याइति ॥ २४ ॥ यौनंविवाहः तद्यौनमधर्मंजानन्निति द्विषदन्नंनभोक्तव्यंद्विषंतंनैवभोजयेदितिलोकविरोधात् अस्वर्ग्यंलोकविद्विष्टंधर्ममप्याचरेन्नत्वितिनिषेधाच्चेत्यर्थः ॥ २५ ॥ ॥ ॥

॥ २६ ॥ लोकाविरुद्धाचरणफलंवक्तुमाह तस्मिन्निति ॥ २७ ॥ अदीव्यतक्रीडितवान् ॥ २८ ॥ २९ ॥ निष्काणांलक्षंग्लहंपणंकृतवान्
कैतवंकपटं ॥ ३० ॥ न्यर्बुदंदशकोटीर्ग्लहंक्षुभितोरामआददे ॥ ३१ ॥ छलमाश्रितोरुक्मीमयाजितमित्याह ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥





तस्मिन्नभ्युदयेराजन्रुक्मिणीरामकेशवौ ॥ पुरंभोजकटंजग्मुःसांबप्रद्युम्नकादयः ॥ २६ ॥ तस्मिन्निवृत्त
उद्वाहेकालिंगप्रमुखान्नृपाः ॥ दृप्तास्तेरुक्मिणंप्रोचुर्बलमक्षैर्विनिर्जय ॥ २७ ॥ अनक्षज्ञोह्ययंराजन्नपितद्य
सनंमहत् ॥ इत्युक्तोबलमाहूयतेनाक्षैरुक्म्यदीव्यत ॥२८॥ शतंसहस्रमयुतंरामस्तत्राददेपणं॥तंतुरुक्म्य
जयत्तत्रकालिंगःप्राहसद्बलं ॥ दंतान्संदर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ॥२९॥ततोलक्षंरुक्म्यगृण्हात्ग्लहंत
त्राजयद्बलः॥ जितवानहमित्याहरुक्मीकैतवमाश्रितः ॥ ३० ॥ मन्युनाक्षुभितःश्रीमान्समुद्रइवपर्वणि ॥
जात्यारुणाक्षोऽतिरुषान्यर्बुदंग्लहमाददे ॥३१॥ तंचापिजितवान्रामोधर्मेणच्छलमाश्रितः ॥रुक्मीजितं
मयात्रेमेवदंतुप्राश्निकाइति ॥ ३२ ॥ तदाऽब्रवीन्नभोवाणीबलेनैवजितोग्लहः ॥ धर्मतोवचनेनैवरुक्मीव
दतिवैमृषा ॥ ३३ ॥ तामनादृत्यवैदर्भोदुष्टराजन्यचोदितः ॥ संकर्षणंपरिहसन्बभाषेकालनोदितः ॥३४॥
नैवाक्षकोविदायूयंगोपालावनगोचराः ॥ अक्षैर्दीव्यंतिराजानोबाणैश्चनभवादृशाः ॥ ३५ ॥ रुक्मिणैवम
धिक्षिप्तोराजभिश्चोपहासितः॥क्रुद्धःपरिघमुद्यम्यजघ्नेतंनृम्णसंसदि ॥३६॥कलिंगराजंतरसागृहीत्वादश
मेपदे ॥ दंतानपातयत्क्रुद्धोयोऽहसद्विवृतैर्द्विजैः ॥ ३७ ॥ अन्येनिर्भिन्नबाहूरुशिरसोरुधिरोक्षिताः ॥ राजा
नोदुद्रुवुर्भीताबलेनपरिघार्दिताः ॥ ३८ ॥ निहतेरुक्मिणिश्यालेनाब्रवीत्साध्वसाधुवा ॥ रुक्मिणीबलयो
राजन्स्नेहभंगभयाद्धरिः ॥ ३९ ॥ ततोऽनिरुद्धंसहसूर्ययावरंरथंसमारोप्पययुःकुशस्थलीं ॥रामादयोभोज
कटाद्दशार्हाःसिद्धाखिलार्थामधुसूदनाश्रयाः ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ०अनिरुद्ध
विवाहेरुक्मिवधोनामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥



नृम्णसंसदिमंगलसभायां ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥
सूर्यया नवोढया सिद्धाअखिलाअर्थाअभ्युदयशत्रुवधादयोयेषांते ॥ ४० ॥ इतिदशमेउ०टीकायामेकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥

द्वियुक्षष्टितमेप्रोक्तमनिरुद्धस्यरोधनं ॥ कन्ययारममाणस्यबाणेनबहुबाहुना ॥ १ ॥ अनिरुद्धोद्वहेऽन्यस्मिन्बाणयादवसंयुगे ॥ श्रीकृष्णःश्री
हरांजित्वाबाणबाहूनथाच्छिनत् ॥ २ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ पुराधिपंपुरपालकं ॥ ५ ॥ ६ ॥ कामान्पूरयतीतिकामपूरःसचासावमरांघ्रिपः
कल्पतरुस्तंत्वां ॥ ७ ॥ ८ ॥ हेआद्य निभृतैर्भरितैर्दोर्भिरद्रींश्चूर्णयन् अयामगच्छं ॥ ९ ॥ १० ॥ स्ववीर्यस्यनशनंनाशनंकेतुभंगंप्र

राजोवाच बाणस्यतनयामूषामुपयेमेयदूत्तमः ॥ तत्रयुद्धमभूद्घोरंहरिशंकरयोर्महत् ॥ एतत्सर्वंमहायोगि
न्समाख्यातुंत्वमर्हसि ॥ १ ॥ श्रीशुकउवाच बाणःपुत्रशतज्येष्ठोबलेरासीन्महात्मनः ॥ येनवामनरूपाय
हरयेऽदायिमेदिनी ॥ २ ॥ तस्यौरसःसुतोबाणःशिवभक्तिरतःसदा ॥ मान्योवदान्योधीमांश्चसत्यसंधोदृ
ढव्रतः ॥ ३ ॥ शोणिताख्येपुरेरम्येसराज्यमकरोत्पुरा ॥ तस्यशंभोःप्रसादेनकिंकराइवतेऽमराः ॥ सहस्र
बाहुर्वाद्येनतांडवेतोषयन्मृडं ॥ ४ ॥ भगवान्सर्वभूतेशःशरण्योभक्तवत्सलः ॥ वरेणच्छंदयामाससतंवव्रे
पुराधिपं ॥ ५ ॥ सएकदाहगिरिशंपार्श्वस्थंवीर्यदुर्मदः ॥ किरीटेनार्कवर्णेनसंस्पृशंस्तत्पदांबुजं ॥ ६ ॥ न
मस्येत्वांमहादेवलोकानांगुरुमीश्वरं ॥ पुंसामपूर्णकामानांकामपूरामरांघ्रिपं ॥ ७ ॥ दोःसहस्रंत्वयादत्तंप
रंभारायमेऽभवत् ॥ त्रिलोक्यांप्रतियोद्धारंनलभेत्वदृतेसमं ॥ ८ ॥ कंडूत्यानिभृतैर्दोर्भिर्युयुत्सुर्दिग्गजान
हं ॥ आद्यायांचूर्णयन्नद्रीन्भीतास्तेऽपिप्रदुद्रुवुः ॥ ९ ॥ तच्छ्रुत्वाभगवान्क्रुद्धःकेतुस्तेभज्यतेयदा ॥ त्वद्दर्प
घ्नंभवेन्मूढसंयुगंमत्समेनते ॥ १० ॥ इत्युक्तःकुमतिर्हृष्टःस्वगृहंप्राविशन्नृप ॥ प्रतीक्षन्गिरिशादेशंस्ववी
र्यनशनंकुधीः ॥ ११ ॥ तस्योषानामदुहितास्वप्नेप्राद्युम्निनारतिं ॥ कन्याऽलभतकांतेनप्रागदृष्टश्रुतेनच
॥ १२ ॥ सातत्रतमपश्यंतीक्वासिकांतेतिवादिनी ॥ सखीनांमध्यउत्तस्थौविह्वलाव्रीडिताभृशं ॥ १३ ॥ बा
णस्यमंत्रीकुंभांडश्चित्रलेखाचतत्सुता ॥ सख्यपृच्छत्सखीमूषांकौतूहलसमन्विता ॥ १४ ॥ ॥

तीक्षमाणः ॥ ११ ॥ श्रीमहेशादिष्टसंग्रामस्यप्रसंगमाह तस्योषेति प्राद्युम्निनानिरुद्धेन तत्रापिस्वप्ने ॥ १२ ॥ तंकांतमपश्यंतीसाउत्त
स्थौ ॥ १३ ॥ ततःकिंवृत्तंतदाह बाणस्येति १४ ॥ ॥ ॥ ॥ ॥ ॥

हस्तग्राहंभर्त्तारं ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ त्वयादृष्टएषांमध्येकोवाभवेदितिदेवादीन्यथावत्पटेआलिखत् ॥ १९ ॥ प्रद्युम्नंलि
खितंवीक्ष्यश्वशुरोऽयमितिलज्जिता ॥ २० ॥ २१ ॥ २२ ॥ शोणितपुरंनीत्वा ॥ २३ ॥ पुंभिर्दुष्प्रेक्षेप्रेक्षितुमशक्ये ॥ २४ ॥ सचपरा





कंत्वंमृगयसेसुभ्रूःकीदृशस्तेमनोरथः ॥ हस्तग्राहंनतेऽद्यापिराजपुत्र्युपलक्षये ॥ १५ ॥ ऊषोवाच दृष्टः
कश्चिन्नरःस्वप्नेश्यामःकमललोचनः ॥ पीतवासाबृहद्बाहुर्योषितांहृदयंगमः ॥१६॥ तमहंमृगयेकांतंपाय
यित्वाऽधरंमधु ॥ क्वापियातःस्पृहयतींक्षिप्त्वामांवृजिनार्णवे ॥१७॥ चित्रलेखोवाच व्यसनंतेऽपकर्षामि
त्रिलोक्यांयदिभाव्यते ॥ तमानेष्येनरंयस्तेमनोहर्तातमादिश॥१८॥इत्युक्त्वादेवगंधर्वसिद्धचारणपन्नगा
न् ॥ दैत्यविद्याधरान्यक्षान्मनुजांश्चयथाऽलिखत् ॥ १९ ॥ मनुजेषुचसावृष्णीन्शूरमानकदुंदुभिं ॥ व्य
लिखद्रामकृष्णौचप्रद्युम्नंवीक्ष्यलज्जिता ॥२०॥ अनिरुद्धंविलिखितंवीक्ष्योषावाङ्मुखीन्हिया ॥ सोऽसाव
सावितिप्राहस्मयमानामहीपते ॥ २१ ॥ चित्रलेखातमाज्ञायपौत्रंकृष्णस्ययोगिनी ॥ ययौविहायसाराज
न्द्वारकांकृष्णपालितां ॥ २२ ॥ तत्रसुप्तंसुपर्यंकेप्राद्युम्निंयोगमास्थिता ॥ गृहीत्वाशोणितपुरंसख्यैप्रियम
दर्शयत् ॥ २३ ॥ साचतंसुंदरवरंविलोक्यमुदितानना ॥ दुष्प्रेक्षेस्वगृहेपुंभीरेमेप्राद्युम्निनासमं ॥ २४॥
परार्ध्यवासःस्रग्गंधधूपदीपासनादिभिः ॥ पानभोजनभक्ष्यैश्चवाक्यैःशुश्रूषयाऽर्चितः ॥ २५ ॥ गूढः
कन्यापुरेशश्वत्प्रवृद्धस्नेहयातया ॥ नाहर्गणान्सबुबुधेऊषयापहृतेंद्रियः ॥ २६ ॥ तांतथायदुवीरेणभुज्य
मानांहतव्रतां ॥ हेतुभिर्लक्षयांचक्रुराप्रीतांदुरवच्छदैः ॥ २७ ॥ भटाआवेदयांचक्रूराजंस्तेदुहितुर्वयं ॥
विचेष्टितंलक्षयामःकन्यायाःकुलदूषणं ॥ २८ ॥ ॥ ॥



ध्यैरमूल्यैर्वासःस्रगादिभिःशुश्रूषणपूर्वकमर्चितःसन् ॥ २५ ॥ तयाऽपहृतेंद्रियोऽहर्गणान्दिनसमूहान्नबुबुधे ॥ २६ ॥ आप्रीतामतिहृष्टांदु
रवच्छदैःछादयितुमशक्यैः ॥ २७ ॥ विचेष्टितंविरुद्धाचरणं ॥ २८ ॥ ॥ ॥ ॥ ॥

अनपायिभिः अपायः अपसर्पणं प्रमादो वा तद्रहितैः पाठांतरे दुष्टाप्रेष्या सखी यस्यास्तस्याः पुंभिर्दूषणं कुतो वेति न जानीम इत्यर्थः ॥ २९ ॥ ॥ ३० ॥ कामस्यात्मनो देहाज्जातं ॥ ३१ ॥ अभिनृम्णया सर्वमंगलया तस्या अंगसंगे न स्तनकुंकुमं यस्यां स्रजि तां बाह्वोर्मध्ये वक्षसि दधानं मधुमल्लिकाः वसंतभवा मल्लिकास्तदाश्रितां तस्याग्र इत्यार्षः संधिः तस्या अग्र इत्यर्थः ॥ ३२ ॥ आततायिभिरुद्यतशस्त्रैः माधवोऽनिरु

अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो॥ कन्याया दूषणं पुंभिर्दुष्प्रेक्षाया न विद्महे ॥२९॥ ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ॥ त्वरितः कन्यकाऽगारं प्राप्तोऽद्राक्षीद्यदूद्वहं॥३०॥ कामात्मजं तं भुवनैकसुंदरं श्यामं पिशंगांबरमंबुजेक्षणं ॥ बृहद्भुजं कुंडलकुंतलत्विषा स्मितावलोकेन च मंडिताननं ॥ ३१ ॥ दीव्यंतमक्षैः प्रियया ऽभिनृम्णया तदंगसंगस्तनकुंकुमस्रजं ॥ बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥ ॥३२॥ स तं प्रविष्टं वृतमाततायिभिर्भटैरनीकैरवलोक्य माधवः ॥ उद्यम्य मौर्वं परिघं व्यवस्थितो यथाऽतको दंडधरो जिघांसया ॥३३॥ जिघृक्षया तान्परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ॥ ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥३४॥ तं नागपाशैर्बलिनंदनो बली घ्नंतं स्वसैन्यं कुपितो बबंध ह ॥ ऊषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् ॥ ३५ ॥ इति श्रीभा० म० द० उ० अनिरुद्धबंधो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ श्रीशुक उवाच अपश्यतां चानिरुद्धं तद्बंधूनां च भारत ॥ चत्वारो वार्षिका मासा व्यतीयुरनुशोचतां ॥ १ ॥ नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ॥ प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ २॥ प्रद्युम्नो युयुधानश्च गदः सांबोऽथ सारणः ॥ नंदोपनंदो भद्राद्या रामकृष्णानुवर्तिनः॥ ३॥

द्धः मौर्वं मुरुर्लोहविशेषस्तन्निर्मितं ॥ ३३ ॥ ३४ ॥ शोकविषादाभ्यां विव्हला अवशा अश्रूणां कला विंदवो ययोस्ते अक्षिणी यस्याः सा ॥ ३५ ॥ इति दशमे उ० टीकायां द्विषष्टितमोध्यायः ॥ ६२ ॥ ॥ ॥ त्रियुक्षष्टितमे चाथ बाणयादवसंगरे ॥ स्तुतिर्ज्वरेण रुद्रेण त्राण बाहुभिदो हरेः ॥ १ ॥ १ ॥ कर्म च युद्धादिकं ॥ २ ॥ रामकृष्णानुवर्तिन इति तौ पुरतो निर्गतावित्यर्थः ॥ ३ ॥

अक्षौहिणीभिर्द्वादशभिःसमेताःसर्वतोदिशं ॥ रुरुधुर्बाणनगरंसमंतात्सात्वतर्षभाः ॥ ४ ॥ भज्यमान पुरोद्यानप्राकाराट्टालगोपुरं ॥ प्रेक्षमाणोरुषाविष्टस्तुल्यसैन्योऽभिनिर्ययौ ॥ ५ ॥ बाणार्थेभगवान्रुद्रः ससुतैःप्रमथैर्वृतः ॥ आरुह्यनंदिवृषभंयुयुधेरामकृष्णयोः ॥ ६ ॥ आसीत्सुतुमुलंयुद्धमद्भुतंरोमहर्षणं ॥ कृष्णशंकरयोराजन्प्रद्युम्नगुहयोरपि ॥ ७ ॥ कुंभांडकूपकर्णाभ्यांबलेनसहसंयुगः ॥ सांबस्यबाणपुत्रेणबाणेनसहसात्यकेः ॥ ८ ॥ ब्रह्मादयःसुराधीशामुनयःसिद्धचारणाः ॥ गंधर्वाप्सरसोयक्षाविमानैर्द्रष्टुमागमन् ॥ ९ ॥ शंकरानुचरान्शौरिर्भूतप्रमथगुह्यकान् ॥ डाकिनीर्यातुधानांश्चवेतालान्सविनायकान् ॥ १० ॥ प्रेतमातृपिशाचांश्चकूष्मांडान्ब्रह्मराक्षसान् ॥ द्रावयामासतीक्ष्णाग्रैःशरैःशार्ङ्गधनुश्च्युतैः ॥ ११ ॥ पृथग्विधानिप्रायुक्तपिनाक्यस्त्राणिशार्ङ्गिणे ॥ प्रत्यस्त्रैःशमयामासशार्ङ्गपाणिरविस्मितः ॥ १२ ॥ ब्रह्मास्त्रस्यचब्रह्मास्त्रंवायव्यस्यचपार्वतं ॥ आग्नेयस्यचपार्जन्यंनैजंपाशुपतस्यच ॥ १३ ॥ मोहयित्वातुगिरिशंजृंभणास्त्रेणजृंभितं ॥ बाणस्यपृतनांशौरिर्जघानासिगदेषुभिः ॥ १४ ॥ स्कंदःप्रद्युम्नबाणौघैरर्द्यमानःसमंततः ॥ असृग्विमुंचन्गात्रेभ्यःशिखिनाऽपाक्रमद्रणात् ॥ १५ ॥ कुंभांडःकूपकर्णश्चपेततुर्मुसलार्दितौ ॥ दुद्रुवुस्तदनीकानिहतनाथानिसर्वतः ॥ १६ ॥ विशीर्यमाणंस्वबलंदृष्ट्वाबाणोऽत्यमर्षणः ॥ कृष्णमभ्यद्रवत्संख्येरथीहित्वैवसात्यकिं ॥ १७ ॥ धनूंष्याकृष्ययुगपद्बाणःपंचशतानिवै ॥ एकैकस्मिन्शरौद्वौद्वौसंदधेरणदुर्मदः ॥ १८ ॥ तानिचिच्छेदभगवान्धनूंषियुगपद्धरिः ॥ सारथिंरथमश्वांश्चहत्वाशंखमपूरयत् ॥ १९ ॥ तन्माताकोटरानामनग्नामुक्तशिरोरुहा ॥ पुरोऽवतस्थेकृष्णस्यपुत्रप्राणरिरक्षया ॥ २० ॥

यौबाणः ॥ ५ ॥ सुतःस्कंदस्तत्सहितैःप्रमथगणैःरामकृष्णाभ्यांयुयुधे ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ प्रत्यस्त्राण्येवाह ब्रह्मास्त्रस्येति नैजं नारायणास्त्रं ॥ १३ ॥ १४ ॥ शिखिनामयूरेणवाहनेन ॥ १५ ॥ तयोरनीकानि हतौनाथौयेषांतानि ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

अनिरीक्षमाणस्तिर्यङ्मुखोबभूवेति ॥२१॥ ज्वरस्तुयोद्धुमभ्यधावदिति ॥ २२ ॥ श्रीनारायणःशीतज्वरमसृजत् माहेश्वरः समाक्रंदन्युयुधे ॥ २३ ॥ २४॥ आत्मानंपरमशक्तिमंतंमन्यमानःश्रीकृष्णंतापयितुंप्रवृत्तः स्वयमेवतप्तःसंस्तंपरमेश्वरंज्ञात्वास्तुवन्नमस्करोतिनमामीतित्वात्वा मनंतशक्तिंनमामि कुतः परेषांब्रह्मादीनामीशं तत्रहेतुः सर्वात्मानंचेतयितारं तत्कुतःकेवलंशुद्धं ज्ञप्तिमात्रंचैतन्यघनं तदेवंसर्वचेतयितृत्वे नपरमेश्वरत्वमुक्तं किंच विश्वसृष्ट्यादिहेतुत्वादपीत्याह विश्वोत्पत्तीति नन्वेवंभूतंब्रह्मप्रसिद्धंनाहमितितत्राह यत्तद्ब्रह्मेतियद्ब्रह्मतदेवत्व मित्यर्थःकिंतद्ब्रह्मेत्यतआह ब्रह्मलिंगंब्रह्मणावेदेनलिंग्यतेद्योत्यतइति तत्कुतः प्रशांतं सर्वविक्रियारहितत्वान्नसाक्षाद्वाच्यमितिभावः

ततस्तिर्यङ्मुखोनग्नामनिरीक्षन्गदाग्रजः ॥ बाणश्चतावद्विरथश्छिन्नधन्वाऽविशत्पुरं ॥२१॥ विद्राविते भूतगणेज्वरस्तुत्रिशिरास्त्रिपात् ॥ अभ्यधावतदाशार्हंदहन्निवदिशोदश ॥ २२ ॥ अथनारायणोदेवस्तंदृष्ट्वाव्यसृजज्ज्वरं ॥ माहेश्वरोवैष्णवश्चयुयुधातेज्वरावुभौ ॥ २३ ॥ माहेश्वरःसमाक्रंदन्वैष्णवेनबलार्दितः ॥ अलब्ध्वाऽभयमन्यत्रभीतोमाहेश्वरोज्वरः ॥ शरणार्थीहृषीकेशंतुष्टावप्रयतांजलिः ॥ २४ ॥ ज्वरउवाच नमामित्वाऽनंतशक्तिंपरेशंसर्वात्मानंकेवलंज्ञप्तिमात्रं ॥ विश्वोत्पत्तिस्थानसंरोधहेतुंयत्तद्ब्रह्मब्रह्मलिंगंप्रशांतं ॥ २५ ॥ कालोदैवंकर्मजीवःस्वभावोद्रव्यंक्षेत्रंप्राणआत्माविकारः ॥ तत्संघातोबीजरोहप्रवाहस्त्वन्मायैषातन्निषेधंप्रपद्ये ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

॥ २५ ॥ किंचयावत्सविशेषंवस्तुतत्रवयंप्रभवामस्त्वायितुसर्वविशेषातीतेनकस्यापिप्रभुत्वंकिंतुत्वमेवसर्वप्रभुरितिज्ञप्तिमात्रत्वंविवृण्वन्स्तौति कालइति कालःक्षोभकःकर्मनिमित्तं तदेवफलाभिमुखमभिव्यक्तंदैवं स्वभावस्तत्संस्कारः जीवस्तद्वान् द्रव्यंभूत सूक्ष्माणि क्षेत्रंशरीरं प्राणःसूत्रं आत्माअहंकारः विकारएकादशेंद्रियाणिमहाभूतानिचेतिषोडशकः तत्संघातोलिंगदेहःएतस्यचबीजरोहवत्प्रवाहः रोहोंऽकुरःदेहाद्बीजरूपंकर्मततोंऽकुररूपोदेहस्ततःपुनरेवमितिप्रवाहःएषात्वन्माया तस्यानिषेधःअपोहोयस्मिंस्तंत्वांनिषेधावधिभूतंप्रपद्येभजइति ॥२६॥

ननुदेवकीतनयस्यमेकथमेवंभूतत्वंतत्राह नानाभावैरिति सर्वोपाधिविनिर्मुक्तएवत्वंयथालीलयास्वीकृतैर्मत्स्याद्यवतारैर्देवान्बिभर्षिपालयसि तदर्थंलोकसेतून्वर्णाश्रमधर्मान् तदर्थंतदनुष्ठातॄन्साधून् तदंगत्वेनउन्मार्गान्दैत्यादीन्हंसिसंहरासि एवमेतदपितवजन्मभूमेर्भारहरणाय लीलावतारोऽयंनकस्यापित्वंतनयइत्यर्थः ॥ २७ ॥ अतोऽज्ञानतस्त्वदभिभवेप्रवृत्तंमांतत्संरक्षेत्याशयेनाह तप्तोऽहमिति तेतेजसात्वत्सृष्टेनज्वरेणशांतोग्रेणशीतज्वरेण परसंतापकस्ययुक्तएवतापइतिचेदतआह तावदिति सेवायांप्रवृत्तानामनुचितइतिभावः ॥ २८ ॥

नानाभावैर्लीलयैवोपपन्नैर्देवान्साधून्लोकसेतून्बिभर्षि ॥ हंस्युन्मार्गान्हिंसयावर्तमानान्जन्मैतत्तेभारहारायभूमेः ॥ २७ ॥ तप्तोऽहंतेतेजसादुःसहेनशांतोग्रेणात्युल्बणेनज्वरेण ॥ तावत्तापोदेहिनांतेंऽघ्रिमूलंनोसेवेरन्यावदाशानुबद्धाः ॥ २८ ॥ श्रीभगवानुवाच त्रिशिरस्तेप्रसन्नोऽस्मिव्येतुतेमज्ज्वराद्भयं ॥ योनौस्मरतिसंवादंतस्यत्वन्नभवेद्भयं ॥ २९ ॥ इत्युक्तोऽच्युतमानम्यगतोमाहेश्वरोज्वरः ॥ बाणस्तुरथमारूढःप्रागाद्योत्स्यन्जनार्दनं ॥ ३० ॥ ततोबाहुसहस्रेणनानायुधधरोऽसुरः ॥ मुमोचपरमक्रुद्धोबाणांश्चक्रायुधेनृप ॥ ३१ ॥ तस्यास्यतोऽस्त्राण्यसकृच्चक्रेणक्षुरनेमिना ॥ चिच्छेदभगवान्बाहून्शाखाइववनस्पतेः ॥ ३२ ॥ बाहुषुच्छिद्यमानेषुबाणस्यभगवान्भवः ॥ भक्तानुकंप्युपव्रज्यचक्रायुधमभाषत ॥ ३३ ॥ श्रीरुद्रउवाच त्वंहिब्रह्मपरंज्योतिर्गूढंब्रह्मणिवाङ्मये ॥ यंपश्यंत्यमलात्मानआकाशमिवकेवलं ॥ ३४ ॥ ॥

हेत्रिशिरः व्येतुअपयातु मदाज्ञापालकःसन्सुखंविचर काऽसावाज्ञातामाह यइति नौआवयोरिमंसंवादंयःस्मरेत्तस्यत्वत्त्वत्तोनभयंभवेत् त्वयाभयंनोत्पादनीयमित्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ भक्तरक्षणार्थंश्रीरुद्रोभगवंतंस्तौति त्वंहीति अयमर्थः त्वामज्ञात्वाअयंयुत्ध्यतइतिनचित्रं यतस्त्वंवाङ्मयेब्रह्मण्यपिगूढंब्रह्मआभिधाविषयत्वात् कुतः परंज्योतिः ज्योतिषामपिप्रकाशकत्वादविषयइत्यर्थः कथंतर्हिप्रतीतिरतआह यमिति अमलात्मनांस्वतःप्रकाशसइत्यर्थः ॥ ३४ ॥ ॥

आस्तांतावन्निर्गुणस्यतवज्ञानंलीलयाऽधिष्ठितस्त्वयायोविराड्विग्रहः सोऽपिनज्ञायतेउदुंबरफलांतर्वर्तिमशकैरिवोदुंबरफलमित्याशयेनावि
राड्रूपेणस्तौतिद्वाभ्यां नाभिरिति यस्यनभआदयोनाभ्याद्यवयवाःसभवान्लोककल्पः पुरुषइत्युत्तरेणान्वयः नभोयस्यनाभिः अग्निर्मु
खं अंबुरेतः द्यौःशीर्षं आशादिशः श्रुतिःश्रवणेंद्रियं उर्वीअंघ्रिः चंद्रोमनः अर्कोदृक् अहंश्रीशिवआत्माअहंकारः समुद्रोजठरंइंद्रोभु
जाबाहुः इंद्रादयोलोकपालाबाहवइत्यर्थः ॥ ३५ ॥ ओषधयोरोमाणि यच्छब्दावृत्तिःस्पष्टतार्था अंबुवाहाःकेशाः विरिंचोधिषणाबुद्धिः
प्रजापतिर्विसर्गोमेढ्रं धर्मोहृदयं लोकैःकल्प्यतेअवकल्प्यतइतिलोककल्पः ॥ ३६ ॥ ननुतत्त्वतःप्रादेशिकशरीरस्यकथंनभोनाभित्वा
दीत्यतआह तवेति हेअकुंठधामन्अप्रच्युतस्वरूप भवायाभ्युदयाय नकेवलमेतावत्किंतुअस्मदनुग्रहार्थमपीत्याह वयंचेति सर्वेलोक

नाभिर्नभोऽग्निर्मुखमंबुरेतोद्यौःशीर्षमाशाःश्रुतिरंघ्रिरुर्वी ॥ चंद्रोमनोयस्यदृगर्कआत्माअहंसमुद्रोजठरंभु
जेंद्रः ॥ ३५ ॥ रोमाणियस्यौषधयोंऽबुवाहाःकेशाविरिंचोधिषणाविसर्गः ॥ प्रजापतिर्हृदयंयस्यधर्मः
सवैभवान्पुरुषोलोककल्पः ॥ ३६ ॥ तवावतारोऽयमकुंठधामन्धर्मस्यगुप्त्यैजगतोभवाय ॥ वयंचस
र्वेभवतानुभाविताविभावयामोभुवनानिसप्त ॥ ३७ ॥ त्वमेकआद्यःपुरुषोद्वितीयस्तुर्यःस्वदृग्घेतुरहेतुरी
शः ॥ प्रतीयसेऽथापियथाविकारंस्वमाययासर्वगुणप्रसिद्ध्यै ॥ ३८ ॥ ॥ ॥

पालास्त्वयापालिताःसप्तापिभुवनानिपालयामइति ॥ ३७ ॥ ननुयदिविभावयितारोयूयंविभाव्यानिचभुवनानिसंतितर्हिकथमुक्तंत्वंहिब्र
ह्मेति नहिब्रह्मत्वेममसजातीयविजातीयभेदःसंभवतीत्यतआह त्वमिति एकःसजातीयभेदरहितः कुतः आद्यःपुरुषः पुरुषाणामवस्थात्रय
वतामाद्यःप्रकृतिभूतःपुरुषःकुतःतुरीयःशुद्धइत्यर्थःतदपिकुतःस्वदृक्स्वप्रकाशज्ञानरूपःशुद्धादेवत्द्युपाधियोगात्जीवाजायंते यथाऽग्नेःक्षु
द्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वएवआत्मानोव्युच्चरंतीतिश्रुतेःअतःसजातीयरहितःकिंचअद्वितीयःविजातीयरहितोऽपिकुतः
हेतुःसर्वस्यतथास्वयंहेतुरहितश्चेति कथंतर्हिप्रतिशरीरंजीवभेदःप्रतीयतेऽतआह प्रतीयसइति सर्वगुणप्रसिद्ध्यैसर्वविषयप्रकाशनाय ॥ ३८ ॥

तर्हिकिमहमेवंसंसारीत्युच्यतेनहिनहीतिसदृष्टांतमाह यथैवेति हेभूमन्स्वयाछाययामेघलक्षणयापरदृष्ट्यापिहितश्छादितोऽपिसूर्यश्छा यांमेघंचरूपाणिचमेघांतरितान्घटादीनपिसंचकास्तिप्रकाशयति एवंगुणेनाहंकारेणस्वकार्येणजीवावरकेणतदृष्ट्यापिहितोऽपिगुणान् सत्वादीनुपाधीन्गुणिनश्चउपहितान्जीवानपिचकास्ति आत्मप्रदीपः स्वप्रकाशःअतःसर्वसाक्षिणस्तवनसंसारइत्यर्थः ॥ ३९ ॥ किंच मायाश्रयस्यान्यान्मोहयतस्तवकुतःसंसृतिरित्याशयेनाह यन्मायेति पुत्रादिषुप्रसक्ताः वृजिनार्णवेदुःखसागरे उन्मज्जंतिदेवादियोनिषु निमज्जंतिस्थावरादिषु तदुक्तंवायवीये विपर्ययश्चभवतिब्रह्मत्वस्थावरत्वयोरिति ॥ ४० ॥ एवंजीवेश्वरव्यवस्थांनिरूप्येदानींभजंतंनिंद

यथैवसूर्यःपिहितःस्वछाययाछायांचरूपाणिचसंचकास्ति ॥ एवंगुणेनापिहितोगुणांस्त्वमात्मप्रदीपोगुणिनश्चभूमन् ॥ ३९ ॥ यन्मायामोहितधियःपुत्रदारगृहादिषु॥उन्मज्जंतिनिमज्जंतिप्रसक्तावृजिनार्णवे॥४०॥ देवदत्तमिमंलब्ध्वानृलोकमजितेंद्रियः ॥ योनाद्रियेतत्वत्पादौसशोच्योह्यात्मवंचकः ॥ ४१ ॥ यस्त्वांविसृजतेमर्त्यआत्मानंप्रियमीश्वरं॥विपर्ययेंद्रियार्थार्थंविषमत्त्यमृतंत्यजन् ॥ ४२ ॥ अहंब्रह्माऽथविबुधामुनयश्चामलाशयाः ॥ सर्वात्मनाप्रपन्नास्त्वामात्मानंप्रेष्ठमीश्वरं ॥ ४३ ॥ तंत्वाजगत्स्थित्युदयांतहेतुंसमंप्रशांतंसुहृदात्मदैवं ॥ अनन्यमेकंजगदात्मकेतंभवापवर्गायभजामदेवं ॥४४॥ अयंममेष्टोदयितोऽनुवर्तीमयाऽभयंदत्तममुष्यदेव ॥ संपाद्यतांतद्भवतःप्रसादोयथाहितेदैत्यपतौप्रसादः ॥४५॥ श्रीभगवानुवाच यदात्थभगवंस्त्वन्नःकरवामप्रियंतव ॥ भवतोयद्व्यवसितंतन्मेसाध्वनुमोदितं ॥ ४६ ॥ ॥ ॥

तिद्वाभ्यां देवेति देवेनत्वयाकर्माध्यक्षेणदत्तंनृदेहमिमंलब्ध्वाऽपीति ॥ ४१ ॥ शोच्यत्वेहेतुः यस्त्वामिति विपर्यया विपरीताअनात्माप्रियाऽनीश्वरायेइंद्रियार्थाःपुत्रादयस्तदर्थं ॥ ४२ ॥ अहमन्येचशुद्धमनसस्त्वामेवभक्ताइत्याह अहमिति ॥ ४३ ॥ भगवतोभजनीयत्वेहेतून्वदंस्तद्भक्तिंप्रार्थयते तंत्वेति समत्वेहेतुः प्रशांतमिति सुसेव्यत्वमाह सुहृदात्मदैवंसुहृद्बुद्धिप्रवर्तकत्वात् आत्माचसर्वात्मकत्वात् एवंभूतंदैवमीश्वरंत्वां नचान्योभजनीयोऽस्तीत्याह अनन्यमेकंसमानासमानजातीयरहितं तत्कुतः जगतामात्मनांचकेतमधिष्ठानं ॥ ४४ ॥ स्वयंभक्तिमाशास्यस्वभक्तस्याभीष्टमाशास्ते अयमिति दैत्यपतौप्रल्हादे ॥ ४५ ॥ ४६ ॥ ॥ ॥ ॥

वैरोचनिर्बलिर्मद्भक्तस्तत्सुतत्वादवध्यस्तावत् किंच प्रल्हादायेति अन्वयोवंशः ॥ ४७ ॥ तर्हिकिमित्येवंकृतंतत्राह दर्पोपशमनायेति ॥
॥ ४८ ॥ अनुगृह्णाति चत्वारइति ॥ ४९ ॥ सहवध्वाऊषया ॥ ५० ॥ रुद्रानुमोदितइति तदभिप्रेतस्यैवबाणभुजभंगस्यकृतत्वात् ॥ ५१ ॥
पौरादिभिरभ्युद्यतःअभिमुखमागत्यसत्कृतः ॥ ५२ ॥ ५३ ॥ इतिदशमेउ० टीकायांत्रिषष्टितमोध्यायः ॥ ६३ ॥ ॥ चतुःषष्टितमेकृष्णोनृ

अवध्योऽयंममाप्येषवैरोचनिसुतोऽसुरः॥प्रल्हादायवरोदत्तोनवध्योमेतवान्वयः॥४७॥दर्पोपशमनायास्य
प्रवृक्णाबाहवोमया॥ सूदितंचबलंभूरियच्चभारायितंभुवः ॥४८॥ चत्वारोऽस्यभुजाःशिष्टाभविष्यंत्यजरा
मराः॥पार्षदमुख्योभवतोनकुतश्चिद्भयोऽसुरः॥४९॥इतिलब्ध्वाऽभयंकृष्णंप्रणम्यशिरसाऽसुरः॥प्राद्युम्निं
रथमारोप्यसवध्वासमुपानयत् ॥५०॥ अक्षौहिण्यापरिवृतंसुवासःसमलंकृतं ॥सपत्नीकंपुरस्कृत्यययौरु
द्रानुमोदितः ॥ ५१ ॥ स्वराजधानींसमलंकृतांध्वजैःसतोरणैरुक्षितमार्गचत्वरां ॥ विवेशशंखानकदुंदुभि
स्वनैरभ्युद्यतःपौरसुहृद्द्विजातिभिः ॥ ५२ ॥ यएवंकृष्णविजयंशंकरेणचसंयुगं ॥ संस्मरेत्प्रातरुत्थायनत
स्यस्यात्पराजयः ॥ ५३ ॥ इतिश्रीभा० म० द० उ० त्रिषष्टितमोध्यायः ॥ ६३ ॥ ॥ ॐ ॥ श्रीशुक
उवाच एकदोपवनंराजन्जग्मुर्यदुकुमारकाः ॥ विहर्तुंसांबप्रद्युम्नचारुभानुगदादयः ॥ १ ॥ क्रीडित्वा
सुचिरंतत्रविचिन्वंतःपिपासिताः ॥ जलंनिरुदकेकूपेददृशुःसत्वमद्भुतं ॥ २ ॥ कृकलासंगिरिनिभंवीक्ष्य
विस्मितमानसाः ॥ तस्यचोद्धरणेयत्नंचक्रुस्तेकृपयान्विताः ॥ ३ ॥ चर्मजैस्तांतवैःपाशैर्बध्वापतितमर्भ
काः ॥ नाशक्नुवन्समुद्धर्तुंकृष्णायाचख्युरुत्सुकाः ॥ ४ ॥ तत्रागत्यारविंदाक्षोभगवान्विश्वभावनः ॥ वी
क्ष्योज्जहारवामेनतंकरेणसलीलया ॥ ५ ॥ सउत्तमश्लोककराभिमृष्टोविहायसद्यःकृकलासरूपं ॥ सं
तप्तचामीकरचारुवर्णःस्वर्ग्यद्भुतालंकरणांबरस्रक् ॥ ६ ॥ ॥ ॥

गंशापादमोचयत् ॥ ब्रह्मस्वहारिदोषोक्त्याराज्ञोदृप्तानशिक्षयत् ॥ १ ॥ विभूतिभाग्यभोगादिमदोन्नद्धमनोरथान् ॥ अन्वशासद्यदून्कृष्णो
नृगोद्धारप्रसंगतः ॥ २ ॥ १ ॥ पिपासितास्तृषिताजलंविचिन्वंतः सत्त्वंजीवं ॥ २ ॥ तंचकृकलासंवीक्ष्य ॥ ३ ॥ चर्मजैश्चर्ममयैःपाशै
स्तांतवैस्तंतुमयैश्च ॥ ४ ॥ ५ ॥ संतप्तचामीकरंसुवर्णंतद्वद्वर्णोयस्यसः अद्भुताअलंकारांबरस्रजोयस्यसः स्वर्गीदेवोबभूवेति ॥ ६ ॥

॥ ७ ॥ यत्नयदिक्षमंयोग्यं ॥ ८ ॥ ९ ॥ यदितेकर्णमस्पृशमिति असंदेहेसंदेहवचनंयदिवेदाःप्रमाणंस्युरितिवत् कर्णपथंनूनंप्राप्तःस्या मित्यर्थः ॥ १० ॥ किंच किन्विति सर्वेषांभूतानामात्मनोबुद्धेः साक्षिणस्तेअविदितंकिन्नुनकिंचित् ॥ ११ ॥ १२ ॥ १३ ॥ ऋतव्रतेभ्यः अदंभाचारेभ्यः तपसाश्रुताःप्रख्याताश्चतेब्रह्मणिवदान्याअत्युदाराअध्यापनशीलाश्चतेसंतश्चतेभ्यः ॥ १४ ॥ पूर्तंवापीकूपादिचरितं ॥

पप्रच्छविद्वानपितन्निदानंजनेषुविख्यापयितुंमुकुंदः ॥ कस्त्वंमहाभागवरेण्यरूपोदेवोत्तमंत्वांगणयामिनूनं ॥७॥ दशामिमांवाकतमेनकर्मणासंप्रापितोऽस्यतदर्हःसुभद्र ॥ आत्मानमाख्याहिविवित्सतांनोयन्मन्य सेनःक्षममत्रवक्तुं ॥८॥ श्रीशुकउवाच इतिस्मराजासंपृष्टःकृष्णेनानंतमूर्तिना ॥ माधवंप्रणिपत्याहकि रीटेनार्कवर्चसा ॥ ९ ॥ नृगउवाच नृगोनामनरेंद्रोऽहमिक्ष्वाकुतनयःप्रभो ॥ दानिष्वाख्यायमानेषुयदि तेकर्णमस्पृशं ॥ १० ॥ किंनुतेविदितंनाथसर्वभूतात्मसाक्षिणः ॥ कालेनाव्याहतदृशोवक्ष्येऽथापितवाज्ञ या ॥ ११ ॥ यावंत्यःसिकताभूमेर्यावंत्योदिवितारकाः ॥ यावंत्योवर्षधाराश्चतावतीरददंस्मगाः ॥ १२ ॥ प यस्विनीस्तरुणीःशीलरूपगुणोपपन्नाःकपिलाहेमशृंगीः॥ न्यायार्जिताररूप्यखुराःसवत्सादुकूलमालाभर णाददावहं ॥१३॥ स्वलंकृतेभ्योगुणशीलवद्भ्यःसीदत्कुटुंबेभ्यऋतव्रतेभ्यः ॥ तपःश्रुतब्रह्मवदान्यसद्भ्यःप्रा दांयुवभ्योद्विजपुंगवेभ्यः॥१४॥ गोभूहिरण्यायतनाश्वहस्तिनःकन्याःसदासीस्तिलरूप्यशय्याः॥वासांसि रत्नानिपरिच्छदान्रथानिष्टंचयज्ञैश्चरितंचपूर्तं॥१५॥कस्यचिद्द्विजमुख्यस्यभ्रष्टागौर्ममगोधने॥संपृक्ताऽवि दुषासाचमयादत्ताद्विजातये॥१६॥तांनीयमानांतत्स्वामीदृष्ट्वोवाचममेतितं॥ममेतिप्रतिग्राह्याहनृगोमेदत्त वानिति॥१७॥ विप्रौविवदमानौमामूचतुःस्वार्थसाधकौ॥भवान्दाताऽपहर्तेतितच्छ्रुत्वामेऽभवद्भ्रमः ॥१८॥

॥ १५ ॥ एवंवर्तमानस्यममसंकटंकिंचिदापन्नंशृण्वित्याह कस्यचिदिति द्विजमुख्यस्यप्रतिग्रहानिवृत्तस्य संपृक्तामिलिता अविदुषाब्राह्मण स्येयमित्यजानता ॥ १६ ॥ १७ ॥ प्रतिग्राहिणोक्तंदातेतिस्वामिनोक्तमपहर्तेतिअभवद्भ्रमः व्याकुलोऽभवमित्यर्थः ॥ १८ ॥

तदाउभावपिप्रत्येकमनुनीतौप्रार्थितौ कथंतदाह गवामितिसार्धेन ॥ १९ ॥ २० ॥ अपरःप्रतिग्राही दुराग्रहोयल्लक्षंत्वयोक्तमन्यदपिगवाम
युतंयादितदपिमांविहायनेच्छामीत्युक्तागांत्यक्तायया विरयर्थः ॥ २१ ॥ एतस्मिन्नंतरइति इतःपूर्वपापाभावान्नेतुमसमर्थइतिभावः ॥ २२ ॥
उताहोइत्येकंपदं अथवापूर्वंशुभमिति नांतमितियमस्यस्वस्यवावाक्यं पश्येपश्यामि ॥ २३ ॥ हेदेवयमपूर्वमशुभंभुंजइतिमयोक्तेसयमःप
तेतिप्राह ॥ २४ ॥ २५ ॥ दुर्घटेनश्रीकृष्णदर्शनेनाविस्मितःसन्नात्मनोभाग्यमभिनंदति सत्वमिति हेविभोसत्वंममआक्षिपथःलोचनगोचरः

अनुनीतावुभौविप्रौधर्मकृच्छ्रगतेनवै॥गवांलक्षंप्रकृष्टानांदास्याम्येषाप्रदीयतां ॥१९॥ भवंतावनुगृण्हीतां
किंकरस्याविजानतः॥समुद्धरतमांकृच्छ्रात्पतंतंनिरयेऽशुचौ ॥२०॥ नाहंप्रतीच्छेवैराजन्नित्युक्त्वास्वाम्यपा
क्रमत् ॥ नान्यद्गवामप्ययुतमिच्छामीत्यपरोययौ ॥२१॥ एतस्मिन्नंतरेयाम्यैर्दूतैर्नीतोयमक्षयं ॥ यमेनपृष्ट
स्तत्राहंदेवदेवजगत्पते ॥ २२ ॥ पूर्वंत्वमशुभंभुंक्षेउताहोनृपतेशुभं ॥ नांतंदानस्यधर्मस्यपश्येलोकस्यभा
स्वतः ॥२३॥ पूर्वंदेवाशुभंभुंजइतिप्राहपतेतिसः॥तावदद्राक्षमात्मानंकृकलासंपतन्प्रभो॥२४॥ब्रह्मण्यस्य
वदान्यस्यतवदासस्यकेशव ॥ स्मृतिर्नाद्यापिविध्वस्ताभवत्संदर्शनार्थिनः ॥२५॥ सत्वंकथंममविभोऽक्षि
पथःपरात्मायोगेश्वरैःश्रुतिदृशामलहृद्विभाव्यः॥ साक्षादधोक्षजउरुव्यसनांधबुद्धेःस्यान्मेऽनुदृश्यइहयस्य
भवाऽपवर्गः ॥ २६ ॥ देवदेवजगन्नाथगोविंदपुरुषोत्तम ॥ नारायणहृषीकेशपुण्यश्लोकाच्युताव्यय ॥
॥ २७ ॥ अनुजानीहिमांकृष्णयांतंदेवगतिंप्रभो ॥ यत्रक्वापिसतश्चेतोभूयान्मेत्वत्पदास्पदं ॥ २८ ॥

सन्कथंसाक्षात्प्रत्यक्षोऽसीत्यर्थः किमत्राश्चर्यंतदाह परःआत्मा अतएवयोगेश्वरैरपिश्रुतिदृशाउपनिषच्चक्षुषाअमलेहृदिविभाव्यश्चिंत्यः
यतोऽधोक्षजः अक्षजमैंद्रियकंज्ञानंतदधःअर्वागेवयस्मात्सः यस्येहभवापवर्गोभवेत्तस्यभवाननुदृश्यःस्यात् उरुव्यसनेनकृकलासभवदुः
खेनांधबुद्धेस्तुममैतच्चित्रमित्यर्थः ॥ २६ ॥ उद्रिक्तभक्तिर्बहुधासंबोधयन्नाह देवदेवेति ॥ २७ ॥ अनुज्ञापयति अनुजानीहीतिदेवलोके
ऽपिसतोवर्तमानस्यात्मनोमनसःसन्निधिंप्रार्थयते यत्रक्वापीति त्वत्पदमास्पदंविषयोयस्यतथाभूतंभूयादिति ॥ २८ ॥ ॥

यास्यन्नमस्यति नमइति सर्वभावायसर्वस्यभावोजन्मयेनतस्मैब्रह्मणेकर्तृत्वेऽप्यविकाराय कुतः अनंतशक्तये अनंतामायाख्याशक्तिर्यस्य तस्मै वासुदेवायसर्वभूताश्रयायेत्युपादानत्वमुक्तं श्रीकृष्णायसदानंदरूपायेतिपुरुषार्थत्वमुक्तं कृषिर्भूवाचकःशब्दोणश्चनिर्वृतिवाचकः ॥ तयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयतइतिस्मृतेः किंच योगानामिष्टापूर्तादिकर्मणांपतयेफलदात्रे अयंभावः एवंभूतंत्वांविहायगंतुमनिच्छुरपिगमिष्यामित्वद्दत्तकर्मफलभोगायेति ॥ २९ ॥ ३० ॥ ३१ ॥ मनागीषदपिभुक्तंसदग्नेरग्निसदृशस्यतेजीयसोऽतितेजस्विनोऽपि

नमस्तेसर्वभावायब्रह्मणेऽनंतशक्तये ॥ कृष्णायवासुदेवाययोगानांपतयेनमः ॥ २९ ॥ इत्युक्त्वातंपरिक्रम्यपादौस्पृष्ट्वास्वमौलिना॥अनुज्ञातोविमानाग्र्यमारुहत्पश्यतांनृणां ॥३०॥ कृष्णःपरिजनंप्राहभगवान्देवकीसुतः ॥ ब्रह्मण्यदेवोधर्मात्माराजन्याननुशिक्षयन् ॥ ३१ ॥ दुर्जरंबतब्रह्मस्वंभुक्तमग्नेर्मनागपि ॥तेजीयसोऽपिकिमुतराज्ञामीश्वरमानिनां ॥ ३२ ॥ नाहंहालाहलंमन्येविषंयस्यप्रतिक्रिया ॥ ब्रह्मस्वंहिविषंप्रोक्तंनास्यप्रतिविधिर्भुवि ॥ ३३ ॥ हिनस्तिविषमत्तारंवह्निरद्भिःप्रशाम्यति ॥ कुलंसमूलंदहतिब्रह्मस्वारणिपावकः ॥ ३४ ॥ ब्रह्मस्वंदुरनुज्ञातंभुक्तंहंतित्रिपूरुषं ॥ प्रसह्यतुबलाद्भुक्तंदशपूर्वान्दशापरान् ॥ ३५ ॥ राजानोराजलक्ष्म्यांऽधानात्मपातंविचक्षते निरयंयेऽभिमन्यंतेब्रह्मस्वंसाधुबालिशाः ॥ ॥३६॥ गृण्हंतियावतःपांसून्क्रंदतामश्रुबिंदवः ॥ विप्राणांहृतवृत्तीनांवदान्यानांकुटुंबिनां ॥ ३७ ॥ राजानोराजकुल्याश्चतावतोऽब्दान्निरंकुशाः ॥ कुंभीपाकेषुपच्यंतेब्रह्मदायापहारिणः ॥ ३८ ॥ स्वदत्तांपरदत्तांवाब्रह्मवृत्तिंहरेच्चयः ॥ षष्टिवर्षसहस्राणिविष्ठायांजायतेकृमिः ॥ ३९ ॥ ॥ ॥

दुर्जरं ॥ ३२ ॥ ३३ ॥ किंचविषादपिघोरमित्याह हिनस्तीति संसर्गेणमारकत्वादग्नितुल्यतास्यात्तदपिनेत्याह वन्हिरिति अपिचसमूलमिति वन्हिर्मूलान्यवशेषयति ब्रह्मस्वलक्षणारणिजःपापपावकस्तुकुलंतदपिसमूलमिति ॥ ३४ ॥ दुरनुज्ञातंयथावदननुज्ञातंत्रिपुरुषं कुलंयत्स्वयंपुत्रंपौत्रंच प्रसह्यहठात् बलात्राजाद्याश्रयात् ॥ ३५ ॥ राजाद्याश्रयतोयेब्रह्मस्वमभिमन्यंतेइच्छंतितेतेनिरयमेवाभिमन्यंते अतोबालिशाःअज्ञाआत्मपातंनविचक्षतइति ॥ ३६ ॥ अपिच गृण्हंतीति ॥ ३७ ॥ ३८ ॥ ३९ ॥ ॥ ॥

गृध्वाअभिकांक्ष्य ॥ ४० ॥ ४१ ॥ प्रणमेनमामि ॥ ४२ ॥ नकेवलमर्थवादविभीषिकेयंकिंतुप्रत्यक्षमित्याह ब्राह्मणार्थइति ॥ ४३ ॥ ४४ ॥
इतिदशमेउ०टीकायांचतुःषष्टितमोध्यायः ॥ ६४ ॥ पंचषष्टितमेरामश्चक्रेगोकुलमागतः ॥ रममाणस्तुगोपीभिःकालिंद्याःकर्षणंमदा
त् ॥ १ ॥ रामस्यचरितंचित्रंकालिंद्याकर्षणादियत् ॥ पौंड्रकांतादिकृष्णस्यपृथगुक्तमतःपरं ॥ २ ॥ १ ॥ आशीर्भिरभिनंदितोबभूव ॥

नमेब्रह्मधनंभूयाद्यद्गृत्ध्वाऽल्पायुषोनृपाः ॥ पराजिताश्च्युताराज्याद्भवंत्युद्वेजिनोऽहयः ॥४०॥ विप्रंकृताग
समपिनैवद्रुह्यतमामकाः ॥ घ्नंतंबहुशपंतंवानमस्कुरुतनित्यशः ॥ ४१ ॥ यथाहंप्रणमेविप्राननुकालंसमा
हितः ॥ तथानमतयूयंचयोऽन्यथामेसदंडभाक् ॥ ४२ ॥ ब्राह्मणार्थोह्यपहृतोहर्तारंपातयत्यधः॥अजानंत
मपिह्येनंनृगंब्राह्मणगौरिव ॥ ४३ ॥ एवंविश्राव्यभगवान्मुकुंदोद्वारकौकसः ॥ पावनःसर्वलोकानांविवेश
निजमंदिरं ॥ ४४ ॥ इतिश्रीभा०म०द०उ०नृगोपाख्याननामचतुःषष्टितमोध्यायः ॥ ६४ ॥ ॥ ॥
श्रीशुकउवाच बलभद्रःकुरुश्रेष्ठभगवान्रथमास्थितः ॥ सुहृद्दिदृक्षुरुत्कंठःप्रययौनंदगोकुलं ॥ १ ॥ परि
ष्वक्तश्चिरोत्कंठैर्गोपैर्गोपीभिरेवच ॥ रामोऽभिवाद्यपितरावाशीर्भिरभिनंदितः ॥ २ ॥ चिरंनःपाहिदाशा
र्हसानुजोजगदीश्वरः ॥ इत्यारोप्यांकमालिंग्यनेत्रैःसिषिचतुर्जलैः ॥३ ॥ गोपवृद्धांश्चविधिवद्यविष्ठैरभिवं
दितः ॥ यथावयोयथासख्यंयथासंबंधमात्मनः ॥ ४ ॥ समुपेत्याथगोपालान्हास्यहस्तग्रहादिभिः ॥ वि
श्रांतंसुखमासीनंपप्रच्छुःपर्युपागताः ॥५॥ पृष्टाश्चानामयंस्वेषुप्रेमगद्गदयागिरा ॥ कृष्णेकमलपत्राक्षेसंन्य
स्ताखिलराधसः ॥ ६ ॥ कच्चिन्नोबांधवारामसर्वेकुशलमासते ॥ कच्चित्स्मरथनोरामयूयंदारसुतान्विताः ॥
॥ ७ ॥ दिष्ट्याकंसोहतःपापोदिष्ट्यामुक्ताःसुहृज्जनाः ॥ निहत्यनिर्जित्यरिपून्दिष्ट्यादुर्गंसमाश्रिताः ॥ ८ ॥

॥ २ ॥ तदाह चिरमिति ॥ ३ ॥ गोपवृद्धांश्चविधिवदभिवंद्ययविष्ठैराभिवंदितोबभूवेत्यर्थः अपिच यथावयइति ॥ ४ ॥ तेसर्वेस्वेषुयादवेषु
तंरामममनामयमारोग्यंपप्रच्छुः ॥ ५ ॥ तेचतेनपृष्टाइति कृष्णेकृष्णप्राप्त्यर्थंसंन्यस्ताखिलराधसःत्यक्तसर्वविषयाः ॥ ६ ॥ ७ ॥ ८ ॥

रामस्यसंदर्शनेनआंदृताःसादराः ॥ ९ ॥ १० ॥ ११ ॥ तर्हितद्गमनेयुष्माभिःप्रतिबंधःकिंनकृतस्तद्वाक्यविश्वासात्इतिचेन्ननुविश्वा
सःकिमितिकृतस्तत्राहुःकथंन्विति वक्तृबहुत्वान्नानाविधानिवाक्यानि ॥ १२ ॥ तत्रान्याऊचुः कथंनुगृण्हंतीति अन्याऊचुः गृण्हंति
वाइति चित्रकथस्यचित्रकथाकथनकोविदस्य किंच सुंदरंस्मितंयस्मिंस्तेनावलोकनेनोच्छ्वसितःक्षुभितोयःस्मरस्तेनातुराः ॥ १३ ॥ अ



गोप्योहसंत्यःपप्रच्छूरामसंदर्शनादृताः ॥ कच्चिदास्तेसुखंकृष्णःपुरस्त्रीजनवल्लभः ॥ ९ ॥ कच्चित्स्मरति
वाबंधून्पितरंमातरंचसः ॥ अप्यसौमातरंद्रष्टुंसकृदप्यागमिष्यति ॥ अपिवास्मरतेऽस्माकमनुसेवांमहा
भुजः ॥ १० ॥ मातरंपितरंभ्रातॄन्पतन्पुित्रान्स्वसॄरपि ॥ यदर्थेजहिमदाशार्हदुस्त्यजान्स्वजनान्प्रभो ॥
॥ ११ ॥ तानःसद्यःपरित्यज्यगतःसंछिन्नसौव्हृदः ॥ कथंनुतादृशंस्त्रीभिर्नश्रद्धीयेतभाषितं ॥ १२ ॥ कथं
नुगृण्हंत्यनवस्थितात्मनोवचःकृतघ्नस्यबुधाःपुरस्त्रियः ॥ गृण्हंतिवैचित्रकथस्यसुंदरस्मितावलोकोच्छ्वसि
तस्मरातुराः ॥ १३ ॥ किंनस्तत्कथयागोप्यःकथाःकथयतापराः ॥ यात्यस्माभिर्विनाकालोयादितस्यत
थैवनः ॥ १४ ॥ इतिप्रहसितंशौरेर्जल्पितंचारुवीक्षितं ॥ गतिंप्रेमपरिष्वंगंस्मरंत्योरुरुदुःस्त्रियः ॥ १५ ॥
संकर्षणस्ताःकृष्णस्यसंदेशैर्ह्रदयंगमैः ॥ सांत्वयामासभगवान्नाना ऽनुनयकोविदः ॥ १६ ॥ द्वौमासौत
त्रचावात्सीन्मधुंमाधवमेवच ॥ रामःक्षपासुभगवान्गोपीनांरतिमावहन् ॥ १७ ॥ पूर्णचंद्रकलामृष्टेकौ
मुदीगंधवायुना ॥ यमुनोपवनेरेमेसेवितेस्त्रीगणैर्वृतः ॥ १८ ॥ ॥ ॥

न्याऊचुः किंनइति कालस्तावत्तस्यचास्माकंचयात्येवकिंतुतस्यसुखेनअस्माकंतुदुःखेनेत्येतावानेवविशेषइतिध्वनितं ॥ १४ ॥ १५ ॥
नानाविधेष्वनुनयेषुकोविदः ॥ १६ ॥ मधुंचैत्रं माधवंवैशाखं गोपीनांरतिमिति श्रीकृष्णक्रीडासमयेऽनुत्पन्नानामतिबालानामन्यासा
मित्यभियुक्तप्रसिद्धिः ॥ १७ ॥ पूर्णचंद्रस्यकलाभिर्मरीचिभिरामृष्टेउज्ज्वले कौमुदीगंधवायुनाकुमुद्वतीनांगंधवातेनसेविते यद्वाकौमुदी
शब्देनतद्विकासितानिकुमुदानिलक्ष्यंते कुमुदगंधवातेनेत्यर्थः ॥ १८ ॥ ॥ ॥

वारुणीसुधयासहोत्पन्नामादिरा ॥ १९ ॥ २० ॥ क्षीबोमत्तः ॥ २१ ॥ स्वेदएवप्रालेयंहिमंतेनभूषितं ॥ २२ ॥ मत्तोऽयमित्यनादृत्याना गतामापगांनदीं ॥ २३ ॥ आहुताआहूतायद्यस्मान्नागच्छसितस्मान्नेष्येगमयिष्यामि ॥ २४ ॥ चकिताकंपिता ॥ २५ एकांशेनशेषा ख्येन ॥ २६॥२७॥ विजगाहअवगाहनंकृतवान् ॥२८॥ उत्तीर्णायनिर्गतायआसितांबरादीनिकांतिर्ददौ कांतिर्लक्ष्मीः यथोक्तंवैष्णवेवरु

वरुणप्रेषितादेवीवारुणीवृक्षकोटरात् ॥ पतंतीतद्वनंसर्वंस्वगंधेनाध्यवासयत् ॥ १९ ॥ तंगंधंमधुधाराया वायुनोपहृतंबलः ॥ आघ्रायोपगतस्तत्रललनाभिःसमंपपौ ॥ २० ॥ उपगीयमानचरितोवनिताभिर्हला युधः ॥ वनेषुव्यचरत्क्षीबोमदविह्वललोचनः ॥ २१ ॥ स्रग्व्येककुंडलोमत्तोवैजयंत्याचमालया ॥ बिभ्रत्स्मि तमुखांभोजंस्वेदप्रालेयभूषितं ॥ २२ ॥ सआजुहावयमुनांजलक्रीडार्थमीश्वरः ॥ निजंवाक्यमनादृत्यमत्त इत्यापगांबलः ॥ अनागतांहलाग्रेणकुपितोविचकर्षह ॥ २३ ॥ पापेत्वंमामवज्ञाययन्नायासिमयाहुता ॥ ने ष्येत्वांलांगलाग्रेणशतधाकामचारिणीं ॥ २४ ॥ एवंनिर्भर्त्सिताभीतायमुनायदुनंदनं ॥ उवाचचकितावा चंपतितापादयोर्नृप ॥ २५ ॥ रामराममहाबाहोनजानेतवविक्रमं ॥ यस्यैकांशेनविधृताजगतीजगतःप ते ॥ २६ ॥ परंभावंभगवतोभगवान्मामजानतीं ॥ मोक्तुमर्हसिविश्वात्मन्प्रपन्नांभक्तवत्सल ॥ २७ ॥ ततोव्यमुंचद्यमुनांयाचितोभगवान्बलः ॥ विजगाहजलंस्त्रीभिःकरेणुभिरिवेभराट् ॥ २८ ॥ कामंविहृत्य सलिलादुत्तीर्णायासितांबरे ॥ भूषणानिमहार्हाणिददौकांतिःशुभांस्रजं ॥ २९ ॥ वसित्वावाससीनी लेमालामामुच्यकांचनीं ॥ रेजेस्वलंकृतोलिप्तोमाहेंद्रइववारणः ॥ ३० ॥ अद्यापिदृश्यतेराजन्यमुना कृष्टवर्त्मना ॥ बलस्यानंतवीर्यस्यवीर्यंसूचयतीवहि ॥ ३१ ॥ ॥ ॥ ॥

णप्रहिताचास्मैमालामम्लानपंकजां ॥ समुद्राभेतथावस्त्रेनीलेलक्ष्मीरयच्छतेति हरिवंशेचबलंप्रतिलक्ष्मीवाक्यं जातरूपमयंचैकंकुंडलं वज्रभूषणं ॥ आदिपद्मंचपद्माख्यंदिव्यश्रवणभूषणं ॥ देवेमांप्रतिगृण्हीष्वपौराणींभूषणक्रियामित्यादि ॥ २९ ॥ वसित्वापरिधाय आमुच्यकं ठे ॥ कंस्यव ॥ [illegible] यिरिभिरालिप्तः ॥ ३० ॥ ३१ ॥ ॥ ॥ ॥

एके[illegible]था माधुर्यैर्विलासैः ॥ ३२ ॥ इतिदशमेउ०टीकायांपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ षड्युक्षष्टितमेकाशींग त्वाऽहनूपौंड्रकंहरिः ॥ तन्मित्रंचततोवृत्तंसुदाक्षिणवधादिकं ॥ १ ॥ १ ॥ प्रस्तोभितःप्रोत्साहितःस्तुत्या बालैरज्ञैः ॥ २ ॥ बालकृतोनृ



एवंसर्वानिशायाताएकेवरमतोव्रजे॥रामस्याक्षिप्तचित्तस्यमाधुर्यैर्व्रजयोषितां ॥ ३२ ॥ इति०भा०म०द० उ०बलदेवविजयेयमुनाकर्षणंनामपंचषष्टितमोध्यायः ॥ ६५ ॥ ॥ ॥ श्रीशुकउवाच नंदव्रजंगतेरामेक रूषाधिपतिर्नृप॥वासुदेवोऽहमित्यज्ञोदूतंकृष्णायप्राहिणोत् ॥१॥ त्वंवासुदेवोभगवानवतीर्णोजगत्पतिः॥ इतिप्रस्तोभितोबालैर्मेनआत्मानमच्युतं ॥२॥ दूतंचप्राहिणोन्मंदःकृष्णायाव्यक्तवर्त्मने॥द्वारकायांयथाबा लोनृपोबालकृतोबुधः ॥३ ॥ दूतस्तुद्वारकामेत्यसभायामास्थितंप्रभुं ॥ कृष्णंकमलपत्राक्षंराजसंदेशमब्रवी त् ॥ ४ ॥ वासुदेवोऽवतीर्णोहमेकएवनचापरः ॥ भूतानामनुकंपार्थंत्वंतुमिथ्याऽभिधांत्यज ॥ ५ ॥ यानित्वम स्मच्चिन्हानिमौढ्याद्बिभर्षिसात्वत ॥ त्यक्त्वैहिमांत्वंशरणंनोचेद्देहिममाहवं ॥ ६ ॥ श्रीशुकउवाच कत्थनंत दुपाकर्ण्यपौंड्रकस्याल्पमेधसः ॥ उग्रसेनादयःसभ्याउच्चकैर्जहसुस्तदा ॥७॥ उवाचदूतंभगवान्परिहासक थामनु ॥ उत्स्रक्ष्येमूढचिन्हानियैस्त्वमेवंविकत्थसे ॥ ८ ॥ मुखंतदपिधायाज्ञकंकगृध्रवटैर्वृतः ॥ शयिष्यसेह तस्तत्रभविताशरणंशुनां ॥९॥ इतिदूतस्तदाक्षेपंस्वामिनेसर्वमाहरत् ॥कृष्णोऽपिरथमास्थायकाशीमुपज गामह ॥ १० ॥ पौंड्रकोऽपितदुद्योगमुपलभ्यमहारथः ॥ अक्षौहिणीभ्यांसंयुक्तोनिश्चक्रामपुराद्द्रुतं॥११॥ तस्यकाशीपतिर्मित्रंपार्ष्णिग्राहोऽन्वयान्नृप ॥ अक्षौहिणीभिस्तिसृभिरपश्यत्पौंड्रकंहरिः ॥ १२ ॥



पः बालैर्नृपत्वेनक्रीडायांपारिकल्पितः॥३॥४॥५॥६॥७॥ हेमूढउत्स्रक्ष्येत्वयिप्रक्षेप्स्यामि यैःसहत्वमेवंविकत्थसेतेष्वपीत्यर्थः यद्वा यैःकृत्रि मैःसुदर्शनादिभिस्त्वमेवंश्लाघसेतान्युत्स्रक्ष्येत्याजयिष्यामीत्यर्थः ॥८॥ मांशरणमेहीत्यस्योत्तरं मुखमिति वटाःकंकादिवत्पक्षिविशेषाः तत्रतदाशुनांशरणमाश्रयोभवितासि॥९॥काशीमिति पौंड्रकस्यापितदामित्रपुरेऽवस्थानात् ॥ १० ॥ ११ ॥ पार्ष्णिग्राहःपृष्ठतोरक्षकः ॥ १२ ॥

॥ १३ ॥ गरुडः कृत्रिमोध्वजेयस्यतं अमूल्योऽनर्घ्योमौलिराभरणंचयस्यतं ॥ १४ ॥ १५ ॥ १६ ॥ गजस्यंदनादिचतुरंगबलमार्दितवा
न् पृथक्प्रजाश्चचतुर्विधंभूतग्रामंयथायुगांताग्निरिति ॥ १७ ॥ आयोधनंरणस्थानं अरिणाचक्रेणाचितमाकीर्णं आक्रीडनमिवकल्पांतरु

शंखार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितं ॥ बिभ्राणंकौस्तुभमणिंवनमालाविभूषितं ॥ १३॥ कौशेयवास
सीपीतेवसानंगरुडध्वजं ॥ अमूल्यमौल्याभरणंस्फुरन्मकरकुंडलं ॥१४॥ दृष्ट्वातमात्मनस्तुल्यवेषंकृत्रि
ममास्थितं ॥ यथानटंरंगगतंविजहासभृशंहरिः॥१५॥ शूलैर्गदाभिःपरिघैःशक्त्यृष्टिप्रासतोमरैः॥ असि
भिःपट्टिशैर्बाणैःप्राहरन्नरयोहरिं ॥ १६ ॥ कृष्णस्तुतत्पौंड्रककाशिराजयोर्बलंगजस्यंदनवाजिपत्तिमत्॥
गदासिचक्रेषुभिरार्दयद्भृशंयथायुगांतेहुतभुक्पृथक्प्रजाः ॥१७॥ आयोधनंतद्रथवाजिकुंजरद्विपत्खरोष्ट्रै
ररिणावखंडितैः ॥ बभौचितंमोदवहंमनस्विनामाक्रीडनंभूतपतेरिवोल्बणं ॥१८॥ अथाहपौंड्रकंशौरिर्भो
भोपौंड्रकयद्भवान् ॥ दूतवाक्येनमामाहतान्यस्त्राण्युत्सृजामिते ॥ १९॥ त्याजयिष्येभिधानंमेयत्त्वयाज्ञमृ
षाधृतं ॥ व्रजामिशरणंतेद्ययदिनेच्छामिसंयुगं ॥ २० ॥ इतिक्षिप्त्वाशितैर्बाणैर्विरथीकृत्यपौंड्रकं॥शिरोऽवृ
श्चद्रथांगेनवज्रेणेंद्रोयथागिरेः ॥२१ ॥ तथाकाशिपतेःकायाच्छिरउत्कृत्यपत्रिभिः ॥ न्यपातयत्काशिपुर्यां
पद्मकोशमिवानिलः ॥ २२ ॥ एवंमत्सरिणंहत्वापौंड्रकंससखंहरिः ॥ द्वारकामाविशत्सिद्धैर्गीयमानक
थामृतः ॥ २३ ॥ सनित्यंभगवद्ध्यानप्रध्वस्ताखिलबंधनः ॥ बिभ्राणश्चहरेराजन्सरूपंतन्मयोऽभवत्
॥ २४ ॥ शिरःपतितमालोक्यराजद्वारेसकुंडलं ॥ किमिदंकस्यवावक्त्रमितिसंशयिरेजनाः ॥ २५ ॥ रा
ज्ञःकाशिपतेर्ज्ञात्वामहिष्यःपुत्रबांधवाः ॥ पौराश्चहाहताराजन्नाथनाथेतिप्रारुदन् ॥ २६ ॥ ॥

द्रस्यक्रीडास्थानमिव ॥ १८ ॥ १९ ॥ २० ॥ गिरेःशृंगंयथेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ प्रथमंकिमिदमितिपश्चाद्वक्त्रमितिवि
भाव्यकस्यवेतिसंशयिरेसंशयंकृतवंतइति ॥ २५ ॥ २६ ॥ ॥ ॥ ॥

संस्थाविधिमुत्तरक्रियाम् अपचितिंनिष्कृतिं ॥ २७ ॥ आत्मनाऽभिसंधायबुध्याव्यवस्य सुदक्षिणःअत्युदारः ॥ २८ ॥ वरमदात् वृणीष्वेत्युक्तवानित्यर्थः ॥ २९ ॥ ऋत्विजमृत्विजमिवस्वनियोगकारिणं यज्ञस्यदेवमृत्विजमितिश्रुतेः ॥ ३० ॥ अब्रह्मण्येप्रयोजितइतिकृष्णेप्रयोजितोविपरीतोभविष्यतीतिसूचितं अभिचरन्नभिचारंकुर्वन् व्रतीगृहीतनियमः ॥ ३१ ॥ तप्तंताम्रमिवशिखाइमश्रूणिचयस्यसःअंगा



सुदक्षिणस्तस्यसुतःकृत्वासंस्थाविधिंपितुः ॥ निहत्यपितृहंतारंयास्याम्यपचितिंपितुः ॥२७॥ इत्यात्मनाऽभिसंधायसोपाध्यायोमहेश्वरं ॥ सुदक्षिणोऽर्चयामासपरमेणसमाधिना ॥ २८ ॥ प्रीतोऽविमुक्तेभगवांस्तस्मैवरमदाद्भवः ॥ पितृहंतृवधोपायंसवव्रेवरमीप्सितं ॥२९॥ दक्षिणाग्निंपरिचरब्राह्मणैःसममृत्विजं॥ अभिचारविधानेनसचाग्निःप्रमथैर्वृतः ॥३०॥ साधयिष्यतिसंकल्पमब्रह्मण्येप्रयोजितः ॥ इत्यादिष्टस्तथाचक्रेकृष्णायाभिचरन्व्रती ॥ ३१॥ ततोऽग्निरुत्थितःकुंडान्मूर्तिमानतिभीषणः ॥ तप्तताम्रशिखश्मश्रुरंगारोद्गारिलोचनः ॥ ३२ ॥ दंष्ट्रोग्रभ्रुकुटीदंडकठोरास्यःस्वजिह्वया ॥आलिहन्सृक्किणीनग्नोविधुन्वंस्त्रिशिखंज्वलत् ॥ ३३ ॥ पद्भ्यांतालप्रमाणाभ्यांकंपयन्नवनीतलं ॥ सोऽभ्यधावद्वृतोभूतैर्द्वारकांप्रदहन्दिशः॥ ॥ ३४ ॥ तमाभिचारदहनमायांतंद्वारकौकसः ॥ विलोक्यतत्रसुःसर्वेवनदाहेमृगायथा ॥ ३५॥ अक्षैःसभायांक्रीडंतंभगवंतंभयातुराः ॥ त्राहित्राहित्रिलोकेशवन्हेःप्रदहतःपुरं ॥ ३६ ॥ श्रुत्वातज्जनवैक्लव्यंदृष्ट्वास्वानांचसाध्वसं ॥ शरण्यःसंप्रहस्याहमाभैष्टेत्यवितास्म्यहं ॥३७॥ सर्वस्यांतर्बहिःसाक्षीकृत्यांमाहेश्वरींविभुः ॥ विज्ञायतद्विघातार्थंपार्श्वस्थंचक्रमादिशत् ॥ ३८॥ तत्सूर्यकोटिप्रतिमंसुदर्शनंजाज्वल्यमानंप्रलयानलप्रभं ॥ स्वतेजसाखंककुभोऽथरोदसीचक्रंमुकुंदास्त्रमथाग्निमार्दयत् ॥ ३९ ॥



रोद्गारीणिलोचनानियस्यसः ॥ ३२ ॥ दंष्ट्राभिश्चउग्रैर्भ्रुकुटीदंडैश्चकठोरंक्रूरमास्यंयस्यसः त्रिशिखंत्रिशूलं ॥ ३३ ॥ दिशःप्रदहन् ॥ ॥ ३४ ॥ ३५ ॥ त्राहित्राहीत्याहुरितिशेषः ॥ ३६ ॥ अहमवितास्मिरक्षिष्यामीति ॥ ३७ ॥ ३८ ॥ रोदसीचप्रकाशयदितिशेषः यद्वा स्वतेजसाखादीन्प्रतिजाज्वल्यमानमत्यर्थंप्रकाशमानमित्यर्थः आर्दयत्अपीडयत् ॥ ३९ ॥ ॥ ॥

अर्दितोऽग्निर्यत्कृतवांस्तदाह कृत्याऽनलइति सहर्त्विग्भिर्जनैश्चवर्तमानं अभिचर्यतेमार्यतेऽनेनेत्याभिचारःकृत्यानलः ॥ ४० ॥ अद्दा
दिसहितां अद्दामंचाः ॥ ४१ ॥ ४२ ॥ ४३ ॥ इतिद०उ०टी० षट्षष्टितमोध्यायः ॥ ६६ ॥ ॥ सप्तषष्टितमेरामोगिरैरैवतकेमदा
त् ॥ स्वैरंयुवतिभिःक्रीडन्नवधीद्विविदंखलं ॥ १ ॥ कालिंदीविदारणानंतरंरामचरितंद्विविदवधादिसंगतमप्यनुक्तातत्पूर्वभावित्वेनपौंड्र
कवधादिनिरूप्येदानींतदेवप्रस्तौति भूयोऽहमित्यादिना रामचरितश्रवणेच्छायामद्भुतकर्मत्वंहेतुस्तत्रचानंतत्वंतत्राप्यप्रमेयत्वामिति ॥ १ ॥

कृत्यानलःप्रतिहतःसरथांगपाणेरस्त्रौजसासनृपभग्नमुखोनिवृत्तः ॥ वाराणसींपरिसमेत्यसुदक्षिणंतंसर्त्वि
कूजनंसमदहत्स्वकृतोऽभिचारः ॥ ४० ॥ चक्रंचविष्णोस्तदनुप्रविष्टंवाराणसींसाट्टसभालयापणां ॥ सगो
पुराट्टालककोष्ठसंकुलांसकोशहस्त्यश्वरथान्नशालां ॥ ४१ ॥ दग्ध्वावाराणसींसर्वांविष्णोश्चक्रंसुदर्शनं ॥ भू
यःपार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः ॥ ४२ ॥ यएनंश्रावयेन्मर्त्यउत्तमश्लोकविक्रमं ॥ समाहितोवाशृणु
यात्सर्वपापैःप्रमुच्यते ॥ ४३ ॥ इतिश्रीभा०म०दश०उ०पौंड्रकादिवधोनामषट्षष्टितमोऽध्यायः ॥ ६६ ॥ श्री
राजोवाच भूयोऽहंश्रोतुमिच्छामिरामस्याद्भुतकर्मणः ॥ अनंतस्याप्रमेयस्ययदन्यत्कृतवान्प्रभुः ॥ १ ॥ श्री
शुकउवाच नरकस्यसखाकश्चिद्द्विविदोनामवानरः ॥ सुग्रीवसचिवःसोऽथभ्रातामैंदस्यवीर्यवान् ॥ २ ॥
सख्युःसोऽपचितिंकुर्वन्वानरोराष्ट्रविप्लवं ॥ पुरग्रामाकरान्घोषानदहद्वन्हिमुत्सृजन् ॥ ३ ॥ क्वचित्सशै
लानुत्पाट्यतैर्देशान्समचूर्णयत् ॥ आनर्तान्सुतरामेवयत्रास्तेऽमित्रहाहरिः ॥ ४ ॥ क्वचित्समुद्रमध्यस्थो
दोर्भ्यामुत्क्षिप्यतज्जलं ॥ देशान्नागायुतप्राणोवेलाकूलानमज्जयत् ॥ ५ ॥ ॥ ॥ ॥

नरकस्यसखेतिहरिणावैरेकारणं सुग्रीवसाचिवइतितस्यमंत्रबलं मैंदस्यभ्रातेतिरामायणेतिप्रसिद्धत्वेनवीर्याधिक्यमुक्तमिति ॥ २ ॥ सख्युर्नरक
स्यापचितिमानृण्यं राष्ट्रस्यविप्लवोनाशोयथाभवतितथापुरादीनदहदिति ॥ ३ ॥ किंच क्वचिदिति कदाचित्सद्विविदः मित्रहासखिहंता
॥ ४ ॥ तस्यसमुद्रस्यजलंबाहुभ्यामुत्क्षिप्यवेलायाःकूलेवर्तमानान्देशान्प्लावयामासेति ॥ ५ ॥ ॥ ॥

आश्रमस्थान्वनस्पतीन्भंक्त्वा आहवनीयाद्यग्निषु मूत्रादि कृतवान् ॥ ६ ॥ अप्यधात् पिदधे पेशस्कारी भ्रमरः ॥ ७ ॥ ८ ॥ ९ ॥ प्रभिन्नं मत्तं ॥ १० ॥ ११ ॥ जात्या स्वभावेनैव चापलं यासां ताः ॥ १२ ॥ हेलयामास अवजज्ञे निरीक्षतो निरीक्षमाणस्य तमनादृत्येत्यर्थः ॥ १३ ॥



आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ॥ अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान् खलः ॥६॥ पुरुषान्योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ॥ निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकं ॥७॥ एवं देशान्विप्रकुर्वन्दूषयंश्च कुलस्त्रियः ॥ श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥ ८ ॥ तत्रापश्यद्यदुपतिं रामं पुष्करमालिनं ॥ सुदर्शनीयसर्वांगं ललनायूथमध्यगं ॥ ९ ॥ गायंतं वारुणीं पीत्वा मदविह्वललोचनं ॥ विभ्राजमानं वपुषा प्रभिन्नमिव वारणं ॥ १० ॥ दुष्टः शाखामृगः शाखामारूढः कंपयन्द्रुमान् ॥ चक्रे किलकिलाशब्दमात्मानं संप्रदर्शयन् ॥ ११ ॥ तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः ॥ हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥ १२ ॥ ता हेलयामास कपिर्भ्रूक्षेपैः संमुखादिभिः ॥ दर्शयन्स्वगुदं तासां रामस्य च निरीक्षतः ॥ १३ ॥ तं ग्राव्णा प्राहरत्क्रुद्धो बलः प्रहरतां वरः ॥ स वंचयित्वा ग्रावाणं मदिराकलशं कपिः ॥ १४ ॥ गृहीत्वा हेलयामास धूर्तस्तं कोपयन्हसन् ॥ निर्भिद्य कलशं धृष्टो वासांस्यास्फालयद्बलं ॥ कदर्थीकृत्य बलवान्विप्रचक्रे मदोद्धतः ॥ १५ ॥ तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ क्रुद्धो मुसलमादत्त हलं चारिजिघांसया ॥ १६ ॥ द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना ॥ अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ॥ १७ ॥ तं तु संकर्षणो मूर्ध्नि पतंतमचलो यथा ॥ प्रतिजग्राह बलवान्सुनंदेनाहनच्च तं ॥ १८ ॥ मुसलाहतमस्तिष्को विरेजे रक्तधारया ॥ गिरिर्यथा गैरिकया प्रहारं नानुचिंतयन् ॥ १९ ॥ पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा ॥ तेनाहनत्सुसंक्रुद्धस्तं बलः शतधाऽच्छिनत् ॥ २० ॥



॥ १४ ॥ आस्फालयत् योषितां वासांस्याकृष्य पाटितवान् विप्रचक्रे एवमपकृतवान् ॥ १५ ॥ १६ ॥ शालं वृक्षं ॥ १७ ॥ सुनंदेन मुसलेनाहनत् अहन्नित्यर्थः तं वानरं ॥ १८ ॥ मस्तिष्कं मस्तकावयवविशेषः गैरिकया लोहितधातुना नानुचिंतयन् अगणयन् ॥ १९ ॥ २० ॥

॥२१॥२२॥ अरूरुजत् ताडयामास ॥ २३ ॥ यादवेंद्रः संकर्षणः क्रुद्धः सन् जत्रौ कंठबाहुमूले ॥ २४ ॥ टंकाः सतोयविवराणि तत्सहितः ॥२५॥२६॥ जगतां व्यतिकरं नाशमावहतीति तथा तं ॥२७॥ इ० भा० द० उ० टी० सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ अष्टषष्टितमे सांबे निरुद्धे कौरवैर्युधि ॥ तद्विमोक्षाय रामेण गजाह्वयविकर्षणं ॥ १ ॥ रामचरित्रांतरं निरूपयितुमाह दुर्योधनसुतामिति समितिंजयः संग्रामजित् ॥ १ ॥

ततोऽन्येन रुषा जघ्ने तं चापि शतधाऽच्छिनत् ॥ एवं युध्यन् भगवता भग्ने भग्ने पुनः पुनः ॥ २१ ॥ आकृष्य सर्वतो वृक्षान्निर्वृक्षमकरोद्वनं ॥ ततोऽमुंचच्छिलावर्षं बलस्योपर्यमर्षितः ॥ तत्सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २२ ॥ स बाहू तालसंकाशौ मुष्टीकृत्य कपीश्वरः ॥ आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् ॥ २३ ॥ यादवेंद्रोपि तं दोर्भ्यां त्यक्त्वा मुसललांगले ॥ जत्रावभ्यर्दयत्क्रुद्धः सोऽपतद्रुधिरं वमन् ॥ २४ ॥ चकंपे तेन पतता सटंकः सवनस्पतिः ॥ पर्वतः कुरुशार्दूल वायुना नौरिवांभसि ॥ २५ ॥ जयशब्दो नमःशब्दः साधु साध्विति चांबरे ॥ सुरसिद्धमुनींद्राणामासीत्कुसुमवर्षिणां ॥ २६ ॥ एवं निहत्य द्विविदं जगद्व्यतिकरावहं ॥ संस्तूयमानो भगवान्जनैः स्वपुरमाविशत् ॥ इति श्रीभा० म० द० उ० द्विविदवधो नाम सप्तषष्टितमोध्यायः ॥ ६७ ॥ ॥ श्रीशुक उवाच दुर्योधनसुतां राजँल्लक्ष्मणां समितिंजयः ॥ स्वयंवरस्थामहरत्सांबो जांबवतीसुतः ॥ १ ॥ कौरवाः कुपिता ऊचुर्दुर्विनीतोयमर्भकः ॥ कदर्थीकृत्य नः कन्यामकामामहरद्बलात् ॥ २ ॥ बध्नीतेमं दुर्विनीतं किं करिष्यंति वृष्णयः ॥ येऽस्मत्प्रसादोपचितां दत्तां नो भुंजते महीं ॥ ३ ॥ निगृहीतं सुतं श्रुत्वा यद्येष्यंतीह वृष्णयः ॥ भग्नदर्पाः शमं यांति प्राणा इव सुसंयताः ॥ ४ ॥ इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः ॥ सांबमारेभिरे बद्धुं कुरुवृद्धानुमोदिताः ॥ ५ ॥ दृष्ट्वानुधावतः सांबो धार्तराष्ट्रान्महारथः ॥ प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ६ ॥ तं ते जिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः ॥ आसाद्य धन्विनो बाणैः कर्णाग्रण्यः समाकिरन् ॥ ७ ॥

॥ २ ॥ नोऽस्माकं महीं अस्माभिर्दत्तां न ते भूपतय इति भावः ॥ ३ ॥ यांति यास्यंति प्राणा इंद्रियाणीव सुसंयताः प्राणायामादिभिर्दमिताः ॥ ४ ॥ कुरुवृद्धो भीष्मस्तेनानुमोदितास्तत्सहिताः षडेते इत्यर्थः ॥ ५ ॥ ६ ॥ कर्णोऽग्रणीर्येषां ते ॥ ७ ॥ ॥ ॥

नअमृष्यत् अचिंत्यस्यभगवतोऽर्भोऽर्भकः आचिंत्यश्चासावर्भश्चेतिवा ॥ ८ ॥ ९ ॥ तत्प्रपंचयति चतुर्भिश्चतुरइत्यत्रवीप्साऽनुसंधेया त
त्कर्मतेसंमानितवंतः ॥ १० ॥ ११ ॥ स्वस्यदुर्योधनस्यकन्यांचनीत्वेतिशेषः ॥ १२ ॥ १३ ॥ यतः कलिंनैच्छत् अतःसांत्वयित्वाज



सोऽपविद्धःकुरुश्रेष्ठकुरुभिर्यदुनंदनः ॥ नामृष्यत्तदचिंत्यार्भःसिंहःक्षुद्रमृगैरिव ॥ ८ ॥ विस्फूर्ज्यरुचिरं
चापंसर्वान्विव्याधसायकैः ॥ कर्णादीन्षड्रथान्वीरतावद्भिर्युगपत्पृथक् ॥ ९ ॥ चतुर्भिश्चतुरोवाहानेकैके
नचसारथीन् ॥ रथिनश्चमहेष्वासांस्तस्यतत्तेऽभ्यपूजयन् ॥ १० ॥ तंतुतेविरथंचक्रुश्चत्वारश्चतुरोहयान्
एकस्तुसारथिंजघ्नेचिच्छेदान्यःशरासनं ॥ ११ ॥ तंबध्वाविरथीकृत्यकृच्छ्रेणकुरवोयुधि ॥ कुमारंस्वस्यक
न्यांचस्वपुरंजयिनोऽविशन् ॥ १२ तच्छ्रुत्वानारदोक्तेनराजन्संजातमन्यवः ॥ कुरून्प्रत्युद्यमंचक्रुरुग्रसे
नप्रचोदिताः ॥ १३ ॥ सांत्वयित्वातुतान्रामःसन्नद्धान्वृष्णिपुंगवान् ॥ नैच्छत्कुरूणांवृष्णीनांकलिंकलि
मलापहः ॥ १४ ॥ जगामहास्तिनपुरंरथेनादित्यवर्चसा ॥ ब्राह्मणैःकुलवृद्धैश्चवृतश्चंद्रइवग्रहैः ॥ १५ ॥
गत्वागजाह्वयंरामोबाह्योपवनमास्थितः ॥ उद्धवंप्रेषयामासधृतराष्ट्रंबुभुत्सया ॥ १६ ॥ सोभिवंद्यांबिका
पुत्रंभीष्मंद्रोणंचबाल्हिकं ॥ दुर्योधनंचविधिवद्राममागतमब्रवीत् ॥ १७ ॥ तेऽतिप्रीतास्तमाकर्ण्यप्राप्तं
रामंसुहृत्तमं ॥ तमर्चयित्वाभिययुःसर्वेमंगलपाणयः ॥ १८ ॥ तंसंगम्ययथान्यायंगामर्घ्यंचन्यवेदयन् ॥ ते
षांयेतत्प्रभावज्ञाःप्रणेमुःशिरसाबलं ॥ १९ ॥ बंधून्कुशलिनःश्रुत्वापृष्ट्वाशिवमनामयं ॥ परस्परमथोरामोब
भाषेऽविक्लवंवचः ॥ २० ॥ उग्रसेनःक्षितीशेशोयद्वआज्ञापयत्प्रभुः ॥ तदव्यग्रधियःश्रुत्वाकुरुध्वंमाविलंबितं
॥ २१ ॥ यद्यूयंबहवस्त्वेकंजित्वाऽधर्मेणधार्मिकं ॥ अबध्नीताथतन्मृष्येबंधूनामैक्यकाम्यया ॥ २२ ॥



गामेति ॥ १४ ॥ १५ ॥ धृतराष्ट्रंप्रतिबुभुत्सयेति अभिप्रायजिज्ञासयेत्यर्थः ॥ १६ ॥ विधिवदभिवंद्य ॥ १७ ॥ तमुद्धवमर्चयित्वासत्कृत्य मंगलपाणय
उपायनहस्ताः ॥ १८ ॥ वृद्धाअपिप्रणेमुः ॥ १९ ॥ २० ॥ २१ ॥ यद्यूयमित्युग्रसेनवाक्यं मृष्येसहे अथाशुतमानीयसमर्पयतेतिशेषः ॥ २२ ॥

वीर्यंप्रभावः शौर्यमुत्साहोबलंसत्वंतैरुन्नद्धमुच्छृंखलं कथमात्मनःशक्तेःसममनुरूपं ॥ २३ ॥ उपानत्पादरक्षाशिरआरोढुमिच्छतीतिहीना अस्मानाज्ञापयंतीत्यर्थः ॥ २४ ॥ अस्यैवप्रपंचः एतइतिचतुर्भिः यौनेनपृथायाविवाहेन ॥ २५ ॥ किंच चामरव्यजनेइति भुंजंतिउपभुंजत इत्यर्थः अस्मदुपेक्षयाअस्माकमनाग्रहेण ॥ २६ ॥ अलमिति अतःपरंतानिअपहरिष्यामइत्यर्थः ॥ २७ ॥ अवरुंधीतस्वीकुर्यात् उरणःमेषः

वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमंवचः ॥ कुरवोबलदेवस्यनिशम्योचुःप्रकोपिताः ॥ २३ ॥ अहोमहच्चित्रमिदंकालगत्यादुरत्यया ॥ आरुरुक्षत्युपानद्वैशिरोमुकुटसेवितं ॥ २४ ॥ एतेयौनेनसंबद्धाःसहशय्यासनाशनाः ॥ वृष्णयस्तुल्यतांनीताअस्मद्दत्तनृपासनाः ॥ २५ ॥ चामरव्यजनेशंखमातपत्रंचपांडुरं ॥ किरीटमासनंशय्यांभुंजंत्यस्मदुपेक्षया ॥ २६ ॥ अलंयदूनांनरदेवलांछनैर्दातुःप्रतीपैःफणिनामिवामृतं ॥ येऽस्मत्प्रसादोपचिताहियादवाआज्ञापयंत्यद्यगतत्रपाबत ॥ २७ ॥ कथमिंद्रोऽपिकुरुभिर्भीष्मद्रोणार्जुनादिभिः ॥ अदत्तमवरुंधीतसिंहग्रस्तमिवोरणः ॥ २८ ॥ श्रीशुकउवाच जन्मबंधुश्रियोन्नद्धमदास्तेभरतर्षभ ॥ आश्राव्यरामंदुर्वाच्यमसभ्याःपुरमाविशन् ॥ २९ ॥ दृष्ट्वाकुरूणांदौःशील्यंश्रुत्वाऽवाच्यानिचाच्युतः ॥ अवोचत्कोपसंरब्धोदुष्प्रेक्ष्यःप्रहसन्मुहुः ॥ ३० ॥ नूनंनानामदोन्नद्धाःशांतिंनेच्छंत्यसाधवः ॥ तेषांहिप्रशमोदंडःपशूनांलगुडोयथा ॥ ३१ ॥ अहोयदून्सुसंरब्धान्कृष्णंचकुपितंशनैः ॥ सांत्वयित्वाहमेतेषांशममिच्छन्निहागतः ॥ ३२ ॥ तइमेमंदमतयःकलहाभिरताःखलाः ॥ तंमामवज्ञायमुहुर्दुर्भाषान्मानिनोऽब्रुवन् ॥ ३३ ॥ नोग्रसेनःकिलविभुर्भोजवृष्ण्यंधकेश्वरः ॥ शक्रादयोलोकपालायस्यादेशानुवर्तिनः ॥ ३४ ॥ सुधर्माक्रम्यतेयेनपारिजातोमरांघ्रिपः ॥ आनीयभुज्यतेसोसौनकिलाध्यासनार्हणः ॥ ३५ ॥ ॥

॥ २८ ॥ जन्मनाबंधुभिश्श्रोपलक्षितयाश्रियाउन्नद्धउत्कटोमदोयेषांते दुर्वाच्यंपरुषंवाक्यं असभ्यादुर्जनाः ॥ २९ ॥ ३० ॥ नानाधनाभिजनादिमदैरुन्नद्धास्तेषांदंडएवप्रशमःप्रकर्षेणशमयतीतितथा यथालगुडोदंडः ॥ ३१ ॥ ३२ ॥ दुर्भाषानवाच्यशब्दान् ॥ ३३ ॥ दुर्भाषणमनुस्मरतिषड्भिः नोग्रसेनइति विभुःआज्ञापयितुंसमर्थः ॥ ३४ ॥ अहोधृष्टाःश्रीकृष्णमप्यधिक्षिपंतीतिकुपितआह सुधर्मेत्यादिभिस्त्रिभिः ॥ ३५ ॥

॥ ३६ ॥ मौल्युत्तमैर्मौलियुक्तैरुत्तमांगैः उत्तमैर्मौलिभिरितिवा उपासितानितीर्थानियैर्योगिभिस्तेषामपितीर्थं यद्वा उपासितंसर्वैःसेवितंतीर्थंगंगातस्यास्तीर्थंतीर्थत्वनिमित्तं किंचब्रह्माभवःश्रीश्चाहमपिउद्वहेम कथंभूतावयं यस्यकलायाअंशस्यकलाअंशाः ॥ ३७ ॥ ३८ ॥मत्तानामिवमद्यादिना रूक्षाःपरुषाः अनुशासितास्वयंदंडधरःसन् ॥ ३९ ॥ ४० ॥ लांगलाग्रेणदक्षिणतःप्राकारमूलेनिखातेन उद्विदार्यउ



यस्यपादयुगंसाक्षाच्छ्रीरुपास्तेऽखिलेश्वरी॥सनार्हतिकिलश्रीशोनरदेवपरिच्छदान् ॥३६॥ यस्यांघ्रिपंकजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थं॥ब्रह्माभवोऽहमपियस्यकलाःकलायाःश्रीश्चोद्वहेमचिरमस्यनृपासनंक्व ॥ ३७ ॥ भुंजतेकुरुभिर्दत्तंभूखंडंवृष्णयःकिल॥उपानहःकिलवयंस्वयंतुकुरवःशिरः ॥ ३८॥ अहोऐश्वर्यमत्तानांमत्तानामिवमानिनां ॥ असंबद्धागिरोरूक्षाःकःसहेतानुशासिता ॥ ३९ ॥ अद्यनिष्कौरवींपृथ्वींकरिष्यामीत्यमर्षितः ॥ गृहीत्वाहलमुत्तस्थौदहन्निवजगत्त्रयं ॥ ४० ॥ लांगलाग्रेणनगरमुद्विदार्यगजाह्वयं ॥ विचकर्षसगंगायांप्रहरिष्यन्नमर्षितः ॥ ४१ ॥ जलयानमिवाघूर्णंगंगायांनगरंपतत् ॥ आकृष्यमाणमालोक्यकौरवाजातसंभ्रमाः ॥ ४२ ॥ तमेवशरणंजग्मुःसकुटुंबाजिजीविषवः ॥ सलक्ष्मणंपुरस्कृत्यसांबंप्रांजलयःप्रभुं ॥ ४३ ॥ रामरामाखिलाधारप्रभावंनविदामते ॥ मूढानांनःकुबुद्धीनांक्षंतुमर्हस्यतिक्रमं ॥४४॥ स्थित्युत्पत्त्यप्ययानांत्वमेकोहेतुर्निराश्रयः॥लोकान्क्रीडनकानीशक्रीडतस्तेवदंतिहि ॥ ४५ ॥ त्वमेवमूर्ध्नीदमनंतलीलयाभूमंडलंबिभर्षिसहस्रमूर्धन् ॥ अंतेचयःस्वात्मनिरुद्धविश्वःशेषेद्वितीयःपरिशिष्यमाणः ॥ ४६ ॥ कोपस्तेखिलशिक्षार्थंनद्वेषान्नचमत्सरात् ॥ बिभ्रतोभगवन्सत्वंस्थितिपालनतत्परः ॥ ४७ ॥ नमस्तेसर्वभूतात्मन्सर्वशक्तिधराव्यय ॥ विश्वकर्मन्नमस्तेस्तुत्वांवयंशरणंगताः ॥ ४८ ॥

त्पाटच ॥ ४१ ॥ ४२ ॥ जिजीविषवइत्यक्षराधिक्यंसोढव्यं ॥ ४३ ॥ मूढानांप्रभावानभिज्ञानां अतिक्रममपराधं ॥ ४४ ॥ ४५ ॥ शेषेशयनंकरोषि शेषपर्यंकेपरिशिष्यमाणोयःसचत्वमेवेतिवा ॥ ४६ ॥ अस्मासुकोपश्चतवानुचितएवेत्याहुः कोपस्तइति स्थितिपालनेतत्परस्तात्पर्यवान्कोपः पाठांतरेसंबोधनं ॥ ४७ ॥ विश्वंकर्मकृत्यंयस्यसत्वमितिसंबोधनं॥ ४८ ॥ ॥ ॥ ॥

वेपमानमयनंपुरंयेषांतैः ॥४९॥ तुरंगमांश्चद्वादशायुतानि ॥५०॥५१॥ सुहृद्भिःकौरवैः ॥ ५२॥ मध्येसभायांसभामध्ये॥५३॥५४॥
इतिदशमेउ०टीकायामष्टषष्टितमोध्यायः ॥ ६८ ॥ ॥ एकोनसप्ततितमेगार्हस्थ्यंप्रतिमंदिरं ॥ कृष्णस्यनारदोदृष्ट्वाविस्मितोऽगात्ततः
स्तुवन् ॥१॥१॥ दिदृक्षामभिनयेनाह चित्रमिति व्यष्टसहस्रंस्त्रियःउदावहत्परिणीतवान् ॥ २ ॥ तांद्वारवतीमनुवर्णयति पुष्पितेतिसा

श्रीशुकउवाच एवंप्रपन्नैःसंविग्नैर्वेपमानायनैर्बलः ॥ प्रसादितःसुप्रसन्नोमाभैष्टेत्यभयंददौ ॥ ४९ ॥ दुर्योधनःपारिबर्हंकुंजरान्षष्टिहायनान्॥ददौचद्वादशशतान्ययुतानितुरंगमान् ॥ ५० ॥ रथानांषट्सहस्राणिरौक्माणांसूर्यवर्चसां ॥ दासीनांनिष्ककंठीनांसहस्रंदुहितृवत्सलः॥५१॥प्रतिगृह्यतुतत्सर्वंभगवान्सात्वतर्षभः ॥ससुतःसस्नुषःप्रायात्सुहृद्भिरभिनंदितः ॥५२॥ ततःप्रविष्टःस्वपुरंहलायुधःसमेत्यबंधूननुरक्तचेतसः ॥ शशंससर्वंयदुपुंगवानांमध्येसभायांकुरुषुस्वचेष्टितं ॥ ५३ ॥ अद्यापिचपुरंह्येतत्सूचयद्रामविक्रमं ॥ समुन्नतंदक्षिणतोगंगायामनुदृश्यते ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेदशम०उ०हास्तिनपुरकर्षणसंकर्षणविजयोनामाष्टषष्टितमोध्यायः ॥ ६८ ॥ ॥ श्रीशुकउवाच नरकंनिहतंश्रुत्वातथोद्वाहंचयोषितां ॥ कृष्णेनैकेनबह्वीनांतद्दिदृक्षुःस्मनारदः ॥ १ ॥ चित्रंबतैतदेकेनवपुषायुगपत्पृथक् ॥ गृहेषुद्व्यष्टसाहस्रंस्त्रियएकउदावहत्॥२॥इत्युत्सुकोद्वारवतींदेवर्षिर्द्रष्टुमागमत् ॥ पुष्पितोपवनारामद्विजालिकुलनादितां॥३॥उत्फुल्लेंदीवरांभोजकल्हारकुमुदोत्पलैः॥छुरितेषुसरस्सूच्चैःकूजितांहंससारसैः ॥४॥ प्रासादलक्षैर्नवभिर्जुष्टांस्फाटिकराजतैः ॥ महामरकतप्रख्यैःस्वर्णरत्नपरिच्छदैः ॥५॥ विभक्तरथ्यापथचत्वरापणैःशालासभाभीरुचिरांसुरालयैः ॥ संसिक्तमार्गांगणवीथिदेहलींपतत्पताकाध्वजवारितातपां ॥ ६ ॥

द्वंद्वत्रयेण पुष्पितेषूपवनेषुआरामेषुउद्यानेषुचद्विजानामलीनांचकुलानितैर्नादितां ॥ ३ ॥ छुरितेषुव्याप्तेषु ॥ ४ ॥ महामरकतैःप्रख्यायंते प्रकाशंतइतितथातैः स्वर्णरत्नमयाःपरिच्छदाःपरिकरायेषुतैः ॥ ५ ॥ पतंत्यःप्रचलंत्यःपताकायेषुतैर्ध्वजैर्वारितःआतपोयस्यांतां ॥ ६ ॥

तस्यांद्वारकायांसर्वैर्धिष्ण्यपैर्लोकपालैरर्चितं ॥ ७ ॥ षोडशभिः सद्मसहस्रैः समलंकृतंहरेरंतःपुरंविवेश तत्रचतस्यशौरेःपत्नीनांभवनेषुए
कतमंविवेशेत्यन्वयः यत्रचकौशलंत्वष्ट्रादर्शितमित्यंतःपुरभवनयोर्विशेषणं ॥ ८ ॥ तदनुवर्णयतिचतुर्भिः विष्टब्धमिति विद्रुमस्तंभैर्वि
ष्टब्धंधृतं वैदूर्यमयानिफलकोत्तमानिस्तंभाश्रयणानिछादनानितैरिंद्रनीलमयैःकुड्यादिभिश्चोपलक्षितं जगत्याभूमिकयाचइंद्रनीलमय्या

तस्यामंतःपुरंश्रीमदर्चितंसर्वधिष्ण्यपैः ॥ हरेःस्वकौशलंयत्रत्वष्ट्राकार्त्स्न्येनदर्शितं ॥ ७ ॥ तत्रषोडशभिः
सद्मसहस्रैःसमलंकृतं ॥ विवेशैकतमंशौरेःपत्नीनांभवनंमहत् ॥ ८ ॥ विष्टब्धंविद्रुमस्तंभैर्वैदूर्यफलको
त्तमैः ॥ इंद्रनीलमयैःकुड्यैर्जगत्याचाहतत्विषा ॥ ९ ॥ वितानैर्निर्मितैस्त्वष्ट्रामुक्तादामविलंबिभिः ॥ दां
तैरासनपर्यंकैर्मण्युत्तमपरिष्कृतैः ॥ १० ॥ दासीभिर्निष्ककंठीभिःसुवासोभिरलंकृतं ॥ पुंभिःसकंचुको
ष्णीषसुवस्त्रमणिकुंडलैः ॥ ११ ॥ रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वांतंविचित्रवलभीषुशिखंडिनोऽग ॥
नृत्यंतियत्रविहितागुरुधूपमक्षैर्निर्यातमीक्ष्यघनबुद्धयउन्नदंतः ॥ १२ ॥ तस्मिन्समानगुणरूपवयःसु
वेषदासीसहस्रयुतयाऽनुसवंगृहिण्या ॥ विप्रोददर्शचमरव्यजनेनरुक्मदंडेनसात्वतपतिंपरिवीजयंत्या ॥
॥ १३ ॥ तंसन्निरीक्ष्यभगवान्सहसोत्थितःश्रीपर्यंकतःसकलधर्मभृतांवरिष्ठः ॥ आनम्यपादयुगलंशिर
साकिरीटजुष्टेनसांजलिरवीविशदासनेस्वे ॥ १४ ॥ ॥ ॥ ॥

नहतात्विट्यस्यास्तया ॥ ९ ॥ मुक्तादाम्नांविलंबाःविविधानिलंबनानिविद्यंतेयेषुतैः मण्युत्तमैःपरिष्कृतैर्भूषितैः ॥ १० ॥ ११ ॥ इंक्ष्यस
मीक्ष्य घनोमेघोऽयमितिबुद्धिर्येषांते ॥ १२ ॥ अनुसवंसर्वकालं आत्मनासमानानिगुणरूपवयांसिसुवेषोऽलंकारश्चयस्यतेनदासीसहस्रे
णयुतयागृहिण्यासह ॥ १३ ॥ श्रियोरुक्मिण्याःपर्यंकतः अवीविशत् उपवेशयामास ॥ १४ ॥ ॥ ॥

अबिभ्रत् अबिभ्रः दधारेत्यर्थः बिभ्रदिति शत्रंतं वा तदा संपूज्याभिभाष्य च प्राहेत्युत्तरेणान्वयः कथंभूतः यस्य चरणशौचं गंगा अशेषतीर्थं सः अतएव जगद्गुरुतरोऽपि सतां धर्मभृतां पतित्वादेवमकरोदित्यर्थः सतांपतित्वेहेतुः ब्रह्मण्यदेवइति यत् गुणकृतं नाम तस्यैव यतोयुक्तं समंजस मतस्तद्धर्मप्रवर्तनायैवमाचरणामित्यर्थः ॥ १५ ॥ अभिभाष्यादिष्ट्याऽत्रत्वदागमनमित्यादिप्रियमुक्का ॥ १६ ॥ भगवतास्वस्य अर्हणमनर्हम मन्यमानस्तत्संभावयन्नाह नैवेति सर्वमित्रत्वादेवमर्हणं नतु मम गौरवात् तर्हि कथं कंसादिष्वमैत्रीतत्राह खलानां दमश्च नैवाद्भुतामिति कुतः

तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोपि सतां पतिर्हि ॥ ब्रह्मण्यदेवइति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थं ॥ १५ ॥ संपूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ॥ वाण्याभिभाष्य मितयामृतमिष्टया तं प्राह प्रभो भगवते करवाम हे किं ॥ १६ ॥ नारद उवाच नैवाऽद्भुतं तव विभोऽखिललोकनाथ मैत्री जनेषु सकलेषु दमः खलानां ॥ निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥ दृष्टं तवांघ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ १८ ॥ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः ॥ योगेश्वरेश्वरस्यांग योगमायाविवित्सया ॥ १९ ॥ दीव्यंतमक्षैस्तत्रापि प्रियया चोद्धवेन च ॥ पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २० ॥ पृष्टश्चाविदुषेवासौ कदायातो भवानिति ॥ क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २१ ॥ अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु ॥ स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहं ॥ २२

जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह तस्य निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु सम्यग्विद्मः अतः खलदमः साधुसंमाननं च युक्तमिति भावः ॥ १७ ॥ यदुक्तं प्रभो किं करवामेति तत्राह दृष्टमिति भक्तजनताया अपवर्गरूपं किंच अतिदुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिंत्यं किंच संसारकूपे पतितानामुत्तरणायावलंबमाश्रयं एवंभूतं तवांघ्रियुगलं मया दृष्टं अतः कृतकृत्योऽस्मि तथापि त्वत्स्मृतिर्यथा स्यात्तथाऽनुगृहाण ततस्तद्ध्यायन्नेव नित्यं चरामीति ॥ १८ ॥ १९ ॥ अक्षैर्दीव्यंतमित्यादौ ददर्शेति ज्ञातव्यं ॥ २० ॥ २१ ॥ २२ ॥

॥ २३ ॥ वितानाग्नीनाहवनीयादीनग्निहोत्रेण पंचभिर्मखैर्महायज्ञैर्यजंतं ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ कालेत
त्तत्समयेविधिनाउपयापनंप्रापणंविवाहमित्यर्थः कल्पयंतंघटयंतं विभूतिभिर्विभवैः ॥ ३२ ॥ प्रस्थापनंदुहितृजामात्रादीनांस्वगृहात्तद्गृहं





तत्राप्यचष्टगोविंदंलालयंतंसुतान्शिशून् ॥ ततोऽन्यस्मिन्गृहेऽपश्यन्मज्जनायकृतोद्यमं ॥ २३ ॥ जुह्वं
तंचवितानाग्नीन्यजंतंपंचभिर्मखैः ॥ भोजयंतंद्विजान्क्वापिभुंजानमवशेषितं ॥ २४ ॥ क्वापिसंध्यामुपासी
नंजपंतंब्रह्मवाग्यतं ॥ एकत्रचासिचर्मभ्यांचरंतमसिवर्त्मसु ॥ २५ ॥ अश्वैर्गजैरथैःक्वापिविचरंतंगदाग्रजं॥
क्वचिच्छयानंपर्यंकेस्तूयमानंचबंदिभिः ॥ २६ ॥ मंत्रयंतंचकस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिः ॥ जलक्रीडार
तंक्वापिवारमुख्याऽबलावृतं ॥ २७ ॥ कुत्रचिद्द्विजमुख्येभ्योददतंगाःस्वलंकृताः॥इतिहासपुराणानिशृण्वं
तंमंगलानिच ॥ २८ ॥ हसंतंहास्यकथयाकदाचित्प्रिययागृहे ॥ क्वापिधर्मंसेवमानमर्थकामौचकुत्रचित् ॥
॥ २९ ॥ ध्यायंतमेकमासीनंपुरुषंप्रकृतेःपरं ॥ शुश्रूषंतंगुरून्क्वापिकामैर्भोगैःसपर्यया ॥३०॥ कुर्वंतंविग्र
हंकैश्चित्संधिंचान्यत्रकेशवं ॥ कुत्रापिसहरामेणचिंतयंतंसतांशिवं ॥३१॥ पुत्राणांदुहितॄणांचकालेविध्यु
पयापनं॥दारैर्वरैस्तत्सदृशैःकल्पयंतंविभूतिभिः॥ ३२ ॥प्रस्थापनोपानयनैरपत्यानांमहोत्सवान् ॥ वीक्ष्य
योगेश्वरेशस्ययेषांलोकाविसिस्मिरे ॥ ३३ ॥ यजंतंसकलान्देवान्क्वापिक्रतुभिरूर्जितैः ॥ पूर्तयंतंक्वचिद्धर्मं
कूपाराममठादिभिः॥३४॥ चरंतंमृगयांक्वापिहयमारुह्यसैंधवं॥घ्नंतंततःपशून्मेध्यान्परीतंयदुपुंगवैः॥३५॥
अव्यक्तलिंगंप्रकृतिष्वंतःपुरगृहादिषु॥क्वचिच्चरंतंयोगेशंतत्तद्भावबुभुत्सया ॥ ३६ ॥ ॥ ॥



प्रतिनयनं उपानयनंतद्गृहात्पुनरानयनं तैर्महोत्सवान्कल्पयंतं योगेश्वरेशस्यतेषामपत्यानांमहोत्सवान्वीक्ष्यलोकाःसर्वेविसिस्मिरेविस्म
यंचक्रुः तथाभूतान्कल्पयंतं ॥ ३३ ॥ ३४ ॥ ३५ ॥ अव्यक्तलिंगंवेषांतरेणच्छन्नं ॥ ३६ ॥ ॥ ॥

॥ ३७ ॥ हेयोगेश्वरआत्मन्आत्मनिमनसितवस्वरूपेवानिर्भाताः प्रतीतास्तवयोगमायाः केवलंविदामवि[illegible]ः नतुत्वत्परमार्थमितिभावः ॥ ३८ ॥ त्वन्मानुष्यनाटयेनमुह्याम्यतोमांप्रस्थापयेत्याह अनुजानीहीति ॥ ३९ ॥ ततस्माल्लोकंशिक्षयन्निमंधर्ममास्थितोनतुतत्त्वतःहेपुत्रमाखिदमोहंमाप्राप्नुहिइति ॥ ४० ॥ इत्येवमनुगृहीतस्तमेकमेवसंतंददर्शेति ॥ ४१ ॥ [illegible]मुहुर्मुहुर्दृष्ट्वाजातकौतुकोमुनिर्विस्मितोऽभूदिति

अथोवाचहृषीकेशंनारदःप्रहसन्निव ॥ योगमायोदयंवीक्ष्यमानुषीमीयुषोगतिं ॥३७॥ विदामयोगमायास्तेदुर्दर्शाअपिमायिनां॥योगेश्वरात्मन्निर्भाताभवत्पादनिषेवया ॥३८॥ अनुजानीहिमांदेवलोकांस्तेयशसाप्लुतान्॥पर्यटामितवोद्गायन्लीलांभुवनपावनीं ॥ ३९ ॥ श्रीभगवानुवाच ब्रह्मन्धर्मस्यवक्ताऽहंकर्तातदनुमोदिता ॥ तच्छिक्षयँल्लोकमिममास्थितःपुत्रमाखिद ॥४० ॥ श्रीशुकउवाच इत्याचरंतंसद्धर्मान्पावनान्गृहमेधिनां ॥ तमेवसर्वगेहेषुसंतमेकंददर्शह ॥ ४१ ॥ कृष्णस्यानंतवीर्यस्ययोगमायामहोदयं ॥ मुहुर्दृष्ट्वाऋषिरभूद्विस्मितोजातकौतुकः॥४२॥ इत्यर्थकामधर्मेषुकृष्णेनश्रद्धितात्मना॥सम्यक्सभाजितःप्रीतस्तमेवानुस्मरन्ययौ ॥ ४३ ॥ एवंमनुष्यपदवीमनुवर्तमानोनारायणोऽखिलभवायगृहीतशक्तिः॥रेमेंऽगषोडशसहस्रवरांगनानांसव्रीडसौहृदनिरीक्षणहासजुष्टः ॥४४ ॥ यानीहविश्वविलयोद्भववृत्तिहेतुःकर्माण्यनन्यविषयाणिहरिश्चकार ॥ यस्त्वंगगायतिशृणोत्यनुमोदतेवाभक्तिर्भवेद्भगवतिह्यपवर्गमार्गे॥४५॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेकृष्णगार्हस्थ्यदर्शनंनामएकोनसप्ततितमोध्यायः ॥ ६९ ॥

॥ ४२ ॥ श्रद्धितःश्रद्धयायुक्तआत्मायस्यतेन ॥ ४३ ॥ नारददृष्टांश्रीकृष्णलीलांनिगमयति एवमिति अखिलस्यभवायउद्भवायगृहीताःशक्तयोनानामूर्त्तयोयेनसः सव्रीडंचतत्सौहृदंचतेननिरीक्षणंहासश्चताभ्यांजुष्टः ॥ ४४ ॥ अनन्यविषयाणिअसाधारणानि अपवर्गमार्गेमोक्षप्रदे ॥ ४५ ॥ इतिदशमेउत्तरार्धेटीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ ॥ ॥

ततस्तुसप्ततितमेकृष्णस्याह्निककर्माणि ॥ दूतनारदयोःकार्येकार्यमंत्रविचारणं ॥ १ ॥ जगन्मंगलचारित्रमाह्निकंजगदीशितुः ॥ नारदेन क्वचित्किंचिद्दृष्टमाहयथाक्रमं ॥ २ ॥ अथेति इत्यर्थकामधर्मेषुश्रीकृष्णेनश्रद्धितात्मनेतिप्रस्तुतस्यश्रीकृष्णस्याह्निकस्याधिकारेऽथशब्दः उपवृत्तायामासन्नायां पतिभिःश्रीकृष्णैः माधव्योमाधवस्यभार्याः ॥ १ ॥ बंदिनइवश्रीकृष्णंबोधयंतिसंतिवयांसिपक्षिणोअरूरुवन्नतिशयेनाकूजन् मंदारवनवायुभिर्गायत्स्वलिष्वनिद्राणिनिद्रारहितानिवयांसि ॥ २ ॥ वैदर्भीत्युपलक्षणं परिरंभणविश्लेषात्तंपर्यालोच्य ॥ ३ ॥

श्रीशुकउवाच अथोषस्युपवृत्तायांकुक्कुटान्कूजतोऽशपन् ॥ गृहीतकंठ्यःपतिभिर्माधव्योविरहातुराः ॥ १ ॥ वयांस्यरूरुवन्कृष्णंबोधयंतीवबंदिनः ॥ गायत्स्वलिष्वनिद्राणिमंदारवनवायुभिः ॥ २ ॥ मुहूर्ततंतुवैदर्भीनामृष्यदतिशोभनं ॥ परिरंभणविश्लेषात्प्रियबाह्वंतरंगता ॥ ३ ॥ ब्राह्मेमुहूर्तउत्थायवार्युपस्पृश्यमाधवः ॥ दध्यौप्रसन्नकरणआत्मानंतमसःपरं ॥ ४ ॥ एकंस्वयंज्योतिरनन्यमव्ययंस्वसंस्थयानित्यनिरस्तकल्मषं ॥ ब्रह्माख्यमस्योद्भवनाशहेतुभिःस्वशक्तिभिर्लक्षितभावनिर्वृतिं ॥ ५ ॥ अथाप्लुतोंऽभस्यमलेयथाविधिक्रियाकलापंपरिधायवाससी ॥ चकारसंध्योपगमादिसत्तमोहुतानलोब्रह्मजजापवाग्यतः ॥ ६ ॥ उपस्थायार्कमुद्यंतंतर्पयित्वात्मनःकलाः ॥ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्यचात्मवान् ॥ ७ ॥ धेनूनांरुक्मशृंगीणांसाध्वीनांमौक्तिकस्रजां ॥ पयस्विनीनांगृष्टीनांसवत्सानांसुवाससां ॥ ८ ॥ ॥ ॥

॥ ४ ॥ एकमखंडं तत्रहेतुः अनन्यंनिरुपाधि अतएवअव्ययंनित्यं स्वयंज्योतिष्ट्वेहेतुः नित्यनिरस्तंनित्यनिवृत्तंकल्मषमविद्यायस्मात्तं उपलक्षणमाह अस्येति अस्यविश्वस्यलक्षितभावश्चासौनिर्वृतिश्च भावःसत्ता निर्वृतिरानंदः तथाहि गुणक्षोभात्पूर्वंसत्तामात्रंयःसदेवसौम्येदमग्रआसीदित्यादिश्रुतेः सएवानंदश्च विज्ञानमानंदमित्यादिश्रुतेः तंसदानंदमित्यर्थः ॥ ५ ॥ आप्लुतःस्नातः संध्यायाउपगमउपासनमादिर्यथाभवतितथाक्रियाकलापंचकार काण्वत्वादुदयात्पूर्वमेवहुतानलः ब्रह्मगायत्रींजजाप ॥ ६ ॥ कलाःअंशान् ऋषीन्पितॄंश्च तर्पयित्वा ॥ ७ ॥ गृष्टीनांप्रथमप्रसूतानां ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

बद्दमिति हिरण्येनपरिवृतान्कृष्णान्शुक्लदतोमृगान् ॥ मष्णारेभरतीऽददाच्छतंबद्धानिसप्तचेतिश्रुत्युक्तानिसप्तोत्तरशतंबद्धान्येकीकृत्यपुरा
णेचतुर्दशलक्षत्वेनगणितानि यथोक्तंभरतमेवाधिकृत्यनवमस्कंधेमृगान्शुक्लदतःकृष्णान्सुवर्णेनपरिष्कृतान् ॥ अदात्कर्माणिमष्णारेनियुता
निचतुर्दशेति ततश्चेयंबद्दसंख्याश्लोकेनसंगृह्यते चतुर्दशानांलक्षाणांसप्ताधिकशतांशकः॥बद्धंचतुरशीत्यग्रसहस्राणित्रयोदशेति दिनेदिने

ददौरूप्यखुराग्राणांक्षौमाजिनतिलैःसह ॥ अलंकृतेभ्योविप्रेभ्योबद्धंबद्धंदिनेदिने ॥ ९ ॥ गोविप्रदेवतावृ
द्धगुरून्भूतानिसर्वशः ॥ नमस्कृत्यात्मसंभूतीर्मंगलानिसमस्पृशत् ॥ १० ॥ आत्मानंभूषयामासनरलो
कविभूषणं ॥ वासोभिर्भूषणैःस्वीयैर्दिव्यस्त्रगनुलेपनैः ॥ ११ ॥ अवेक्ष्याज्यंतथादर्शंगोवृषद्विजदेवताः
॥ कामांश्चसर्ववर्णानांपौरांतःपुरचारिणां ॥ प्रदाप्यप्रकृतीःकामैःप्रतोष्यप्रत्यनंदत ॥ १२ ॥ संविभ
ज्याग्रतोविप्रान्स्त्रक्तांबूलानुलेपनैः ॥ सुहृदःप्रकृतीर्दारानुपायुंक्ततःस्वयं ॥ १३ ॥ तावत्सूतउपानी
यस्यंदनंपरमाद्भुतं ॥ सुग्रीवाद्यैर्हयैर्युक्तंप्रणम्यावस्थितोग्रतः ॥ १४ ॥ गृहीत्वापाणिनापाणीसारथेस्त
मथारुहत् ॥ सात्यक्युद्धवसंयुक्तःपूर्वाद्रिमिवभास्करः ॥ १५ ॥ ईक्षितोऽतःपुरस्त्रीणांसव्रीडप्रेमवीक्षितैः
॥ कृच्छ्राद्विसृष्टोनिरगाज्जातहासोहरन्मनः ॥ १६ ॥ सुधर्माख्यांसभांसर्वैर्वृष्णिभिःपरिवारितः ॥ प्रा
विशद्यन्निविष्टानांनसंत्यंगषडूर्मयः ॥ १७ ॥ तत्रोपविष्टःपरमासनेविभुर्बभौस्वभासाककुभोवभासयन् ॥
वृतोनृसिंहैर्यदुभिर्यदूत्तमोयथोडुराजोदिवितारकागणैः ॥ १८ ॥ ॥ ॥

चप्रतिगृहंचेति ॥ ९ ॥ आत्मसंभूतीःस्वविभूतीः मंगलानिकपिलादीनि ॥ १० ॥ नरलोकस्यविभूषणरूपमात्मानं स्वीयैःपीतांबरकौ
स्तुभादिभिः ॥ ११ ॥ कामानभिलषितानर्थान् ॥ १२ ॥ विप्रादीन्स्त्रगादिभिःसंविभज्य तेभ्यस्तानिदत्वेत्यर्थः उपयुंक्तभोगार्थमग्रही
त् ॥ १३ ॥ १४ ॥ पाणिकृतेंऽजलौगृहीत्वा ॥ १५ ॥ सव्रीडप्रेमवीक्षितैः कृच्छ्राद्विसृष्टोनिरगादिति ॥ १६ ॥ एवंसर्वगृहेभ्यःपृथक्पृ
थङ्निर्गत्यअनंतरमेकएवसन्सुधर्मांप्राविशत् यन्निविष्टानांयत्रप्रविष्टानां ॥ १७ ॥ नृसिंहैःनृपश्रेष्ठैः ॥ १८ ॥ ॥

उपमंत्रिणःपरिहासकाःपृथक्पृक्स्वस्वसमुदायैः ॥ १९ ॥ मृदंगादयःप्रसिद्धाः दरःशंखः सूतादयस्तुष्टुवुः ॥ २० ॥ ब्राह्मणाब्रह्मवेदमाहुर्मंत्रान्वाचक्षतेत्यर्थः वादिनोवादनचतुराः ॥ २१ ॥ २२ ॥ २३ ॥ गिरिव्रजेतत्संज्ञकेदुर्गेरुद्धाआसन् तेषांचदुःखमावेदयदित्यन्वयः ॥ २४ ॥ कृष्णकृष्णेतिषट्श्लोकैराज्ञांविज्ञप्तिस्तत्रप्रथमेनशरणाश्रयणंत्रिभिर्भयानुवादोद्वाभ्यांप्रार्थनमिति पृथग्धियःपृथग्दर्शिनः॥ ॥ २५ ॥ पृथग्दर्शिनोलोकस्यभवभयंविवृण्वंतोनमंति लोकइति विकर्मनिषिद्धंकाम्यंचतस्मिन्नितरांरतः स्वेकुशलेधर्मे भवतोऽर्चनेत्वयाउदितेपंचरात्रे सामान्यतश्चगीतासुयत्करोषियदश्नासियज्जुहोषिददासियत् ॥ यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमिति प्रमत्तोऽनव

तत्रोपमंत्रिणोराजन्नानाहास्यरसैर्विभुं॥उपतस्थुर्नटाचार्यानर्तक्यस्तांडवैःपृथक् ॥१९॥ मृदंगवीणामुरजवेणुतालदरस्वनैः ॥ ननृतुर्जगुस्तुष्टुवुश्चसूतमागधवंदिनः ॥ २० ॥ तत्राहुर्ब्राह्मणाःकेचिदासीनाब्रह्मवादिनः ॥ पूर्वेषांपुण्ययशसांराज्ञांचाकथयन्कथाः ॥ २१ ॥ तत्रैकःपुरुषोराजन्नागतोऽपूर्वदर्शनः ॥ विज्ञापितोभगवतेप्रतीहारैःप्रवेशितः ॥ २२ ॥ सनमस्कृत्यकृष्णायपरेशायकृतांजलिः ॥ राज्ञामावेदयद्दुःखंजरासंधनिरोधजं ॥ २३ ॥ येचदिग्विजयेतस्यसंनतिंनययुर्नृपाः ॥ प्रसह्यरुद्धास्तेनासन्नयुतेद्वेगिरिव्रजे ॥ २४ ॥ कृष्णकृष्णाप्रमेयात्मन्प्रपन्नभयभंजन ॥ वयंत्वांशरणंयामोभवभीताःपृथग्धियः ॥ २५ ॥ लोकोविकर्मनिरतःकुशलेप्रमत्तःकर्मण्ययंत्वदुदितेभवदर्चनेस्वे ॥ यस्तावदस्यबलवानिहजीविताशांसद्यश्छिनत्त्यनिमिषायनमोऽस्तुतस्मै ॥ २६ ॥ लोकेभवान्जगदिनःकलयाऽवतीर्णःसद्रक्षणायखलनिग्रहणायचान्यः ॥ कश्चित्त्वदीयमतियातिनिदेशमीशकिंवाजनःस्वकृतमृच्छतितन्नविद्मः ॥ २७ ॥

हितोयावदयंलोकस्तावदेवास्यलोकस्ययःसद्योजीविताशांछिनत्तितस्मैतुभ्यमनिमिषायकालात्मनेनमइति ॥ २६ ॥ सेयंलोकस्यगतिर्वयंतुत्वद्भक्ताअतोऽस्माकंकुतएतद्दुःखमापन्नमित्याश्चर्येणाहुः लोकइति भोईश जगतइनईश्वरः त्वयिसद्रक्षणार्थमवतीर्णेऽपिचेदस्माकंदुःखंस्यात्तर्हिकिमन्यःकश्चिज्जरासंधादिस्त्वदाज्ञामपिलंघयाति किंचत्वयारक्ष्यमाणोऽपिजनःस्वकर्मजंदुःखंप्राप्नोत्येवेतिनविद्मः नचैतदुभयमपियुक्तमितिभावः ॥ २७ ॥ ॥ ॥ ॥

किंदुःखंतदाहुः स्वप्नायितमिति स्वप्नवज्जातंनृपसुखंनृपोचितंसुखं यतःपरतंत्रंविषयसाध्यं किंचसंप्रतिशश्वद्भयंयस्मिंस्तेनमृतकतुल्ये
नशरीरेणधुरंपुत्रदारादिचिंतांकेवलंवहामः अहोकष्टंनोयेवयमितःपूर्वमेवनिष्कामाःसंतस्त्वांनाश्रिताइत्याहुः हित्वेति त्वत्त्वत्तोयदनी
हैर्निष्कामैर्लभ्यमात्मनिस्वतःसिद्धंसुखंतद्धित्वाक्लिश्यामइति ॥ २८ ॥ त्वन्मायाकृतंकर्मबंधंत्वमेवनिवर्तयेतिप्रार्थयंते तन्नइति वियुंक्ष्वमो
चय मगधोजरासंधस्तत्संज्ञकात्कर्मपाशात् भवद्भिरेवविक्रम्यततोनिर्गम्यतामितिचेदतआहुः यइति एकएवायुतमतंगजानांवीर्यंबिभ्रत्स

स्वप्नायितंनृपसुखंपरतंत्रमीशशश्वद्भयेनमृतकेनधुरंवहामः ॥ हित्वातदात्मनिसुखंत्वदनीहलभ्यंक्लिश्याम
हेऽतिकृपणास्तवमाययेह ॥ २८ ॥ तन्नोभवान्प्रणतशोकहरांघ्रियुग्मोबद्धान्वियुंक्ष्वमगधाह्वयकर्मपाशा
त् ॥ योभूभुजोऽयुतमतंगजवीर्यमेकोबिभ्रद्रुरोधभवनेमृगराडिवावीः ॥ २९ ॥ योवैत्वयाद्विनवकृत्वउदा
त्तचक्रभग्नोमृधेखलुभवंतमनंतवीर्यं ॥ जित्वानृलोकनिरतंसकृदूढदर्पोयुष्मत्प्रजारुजतिनोऽजिततद्विधेहि
॥ ३० ॥ दूतउवाच इतिमागधसंरुद्धाभवद्दर्शनकांक्षिणः ॥ प्रपन्नाःपादमूलंतेदीनानांशंविधीयतां ॥ ३१ ॥
श्रीशुकउवाच राजदूतेब्रुवत्येवंदेवर्षिःपरमद्युतिः ॥ बिभ्रत्पिंगजटाभारंप्रादुरासीद्यथारविः ॥ ३२ ॥
तंदृष्ट्वाभगवान्कृष्णःसर्वलोकेश्वरेश्वरः ॥ ववंदउत्थितःशीर्ष्णासंसभ्यःसानुगोमुदा ॥ ३३ ॥ सभाजयि
त्वाविधिवत्कृतासनपरिग्रहं ॥ बभाषेसूनृतैर्वाक्यैःश्रद्धयातर्पयन्मुनिं ॥ ३४ ॥ अपिस्विदद्यलोकानांत्र
याणामकुतोभयं ॥ ननुभूयान्भगवतोलोकान्पर्यटतोगुणः ॥ ३५ ॥ ॥ ॥ ॥

न्स्वभवनेभूभुजोऽस्मान्रुरोधसिंहोमेषीरिव ॥ २९ ॥ किंचयुष्मदीयावयमित्यस्मानधिकंबाधतइत्याहुः योवाइति हेउदात्तचक्रउद्यत
सुदर्शन योवैद्विनवकृत्वःअष्टादशवारांस्त्वयासहमृधेवर्तमानेतत्रसप्तदशकृत्वस्त्वयाखलुभग्नःपराजितःपश्चादनंतवीर्यमपिनृलोकेनिरतंन
रशरीरविनोदंभवंतंसकृज्जित्वाऊढदर्पःप्राप्तगर्वोयुष्मत्प्रजानःरुजतिपीडयति तत्तत्रयद्युक्तंतद्विधेहीत्यर्थः ॥ ३० ॥ दूतआह इतीति ॥
॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ भूयान्महान्गुणोलाभोऽयमस्माकंसर्वलोकवृत्तांतज्ञानमिति ॥ ३५ ॥ ॥

ईश्वरःकर्तायेषांतेषु ॥ ३६ ॥ एवमविदुषेवसर्वज्ञेनजरासंधवधार्थमेवपांडवचिकीर्षितंपृष्टोनारदोमायेयमितिज्ञात्वाह दृष्टाइतित्रिभिः विश्वसृजश्चब्रह्मणोऽपिमायिनोमोहकस्यतेस्वशक्तिभिर्विद्यादिभिर्भूतेष्वंतर्यामितयाचरतोवर्तमानस्य यद्यहंभूतेषुवर्तेतर्हिभूतानिमांकिंनपश्यंतितत्राह वन्हेरिवच्छन्नरुचइति स्वशक्तिभिरेवच्छन्नारुक्प्रकाशोयस्यतस्य अतस्तवेदंप्रश्नादिनमेऽद्भुतं ॥ ३७ ॥ इदंजगत्कथंभूतंअसदेवयत्तवमाययाविद्यमानात्मतयाऽवभासतेतज्जगत्सृजतः किंतुकेवलंतुभ्यंनमनमेवशक्यमित्याह तस्मैनमइति कुतःस्वेनरूपेणसर्वतोविलक्षणात्मनेआचिंत्यायेत्यर्थः ॥ ३८ ॥ नन्वेवंभूतस्यकिंमायाचेष्टितैरित्यतआह जीवस्येति अविद्यातमसावृतत्वेनअनर्थप्रापकात्

नहितेऽविदितंकिंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथपृच्छामहेयुष्मान्पांडवानांचिकीर्षितं ॥३६॥ श्रीनारदउवाच दृष्टामयातेबहुशोदुरत्ययामायाविभोविश्वसृजश्चमायिनः ॥ भूतेषुभूमंश्चरतःस्वशक्तिभिर्वन्हेरिवच्छन्नरुचोनमेऽद्भुतं ॥ ३७॥ तवेहितंकोऽर्हतिसाधुवेदितुंस्वमाययेदंसृजतोनियच्छतः ॥ यद्विद्यमानात्मतयाऽवसीयतेतस्मैनमस्तेस्वविलक्षणात्मने ॥ ३८॥ जीवस्ययःसंसरतोविमोक्षणंनजानतोऽनर्थवहाच्छरीरतः ॥ लीलावतारैःस्वयशःप्रदीपकंप्राज्वालयत्त्वातमहंप्रपद्ये ॥३९॥ अथाप्याश्रावयेब्रह्मनरलोकविडंबनं ॥ राज्ञःपैतृष्वस्रेयस्यभक्तस्यचचिकीर्षितं ॥ ४०॥ यक्ष्यतित्वांमखेंद्रेणराजसूयेनपांडवः ॥ पारमेष्ठ्यकामोनृपतिस्तद्भवाननुमोदतां॥ ४१ ॥ तस्मिन्देवक्रतुवरेभवंतंवैसुरादयः ॥ दिदृक्षवःसमेष्यंतिराजानश्चयशस्विनः ॥ ४२ ॥ श्रवणात्कीर्तनाद्ध्यानात्पूयंतेऽतेवसायिनः ॥ तवब्रह्ममयस्येशकिमुतेक्षाऽभिमर्शिनः ॥ ४३ ॥

शरीरात्संसरतः तेनैवतमसातस्माच्छरीरात्विमोक्षोपायमजानतः प्राज्वालयत्प्रदीपितवान् तंत्वात्वां यशःश्रवणादिभिर्जीवस्यमोक्षार्थमित्यर्थः ॥ ३९ ॥ आश्रावयेश्रावयिष्यामि नरलोकविडंबनंब्रह्मत्वां ब्रह्मन्नितिपाठेऽपिहेब्रह्मन्नरलोकानुकारिणंत्वांश्रावयिष्यामीति ॥ ॥ ४० ॥ ४१ ॥ नचात्रैवानुमोदनंकार्यंकिंतुतत्रागंतव्यमित्याशयेनाह तस्मिन्निति ॥ ४२ ॥ तत्रागताश्चसर्वेत्वद्दर्शनादिनापूताभविष्यंतीत्याह श्रवणादिति अंतेवसायिनःश्वपचाअपि ब्रह्ममयस्यब्रह्मघनमूर्तेः ईक्षाचअभिमर्शःस्पर्शनंचतौविद्येतेयेषां ॥ ४३ ॥ ॥

कैमुत्यमतिशयेनाह यस्येति हेभुवनानांमंगलरूपदिविपातालेभूमौचप्रथितंयस्ययशोविश्वंपुनाति कथं प्रथितंदिग्वितानांदिग्भवनानां वितानवदलंकरणं तथाचरणांबुचप्रथितंपुनाति कथंतत्प्रथितं दिविमंदाकिनीतिअधश्चभोगवतीतिइहचभूमौगंगेति तस्यतवागमनात्सर्वंमंगलंपवित्रंचभविष्यतीतिभावः ॥४४॥ तत्रैवंनारदोक्तंतेषुवर्तमानेष्वात्मीयपक्षेषुयादवेषुजरासंधस्यविजिगीषयाअगृण्हत्सुअमन्यमानेषु वाचःपेशैःपेशलवाग्भिरित्यर्थः ॥ ४५ ॥ चक्षुष्ट्वेहेतुः मंत्रार्थानांमंत्रसाध्यानांतत्त्वविदितिपरिपाकविदिति ॥ ४६ ॥ ४७ ॥ इतिदशमे

यस्यामलंदिवियशःप्रथितंरसायांभूमौचतेभुवनमंगलदिग्वितानं ॥ मंदाकिनीतिदिविभोगवतीतिचाधोगंगेतिचेहचरणांबुपुनातिविश्वं ॥ ४४ ॥ श्रीशुकउवाच तत्रतेष्वात्मपक्षेष्वगृण्हत्सुविजिगीषया ॥ वाचःपेशैःस्मयन्भृत्यमुद्धवंप्राहकेशवः ॥ ४५ ॥ श्रीभगवानुवाच त्वंहिंनःपरमंचक्षुःसुहृन्मंत्रार्थतत्त्ववित् ॥ तथाऽत्रब्रूह्यनुष्ठेयंश्रद्दध्मःकरवामतत् ॥ ४६ ॥ इत्युपामंत्रितोभर्त्रासर्वज्ञेनापिमुग्धवत् ॥ निदेशंशिरसाधायउद्धवःत्प्रत्यभाषत ॥ ४७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ०भगवद्यानेसप्ततितमोऽध्यायः ॥ ७० ॥ श्रीशुकउवाच इत्युदीरितमाकर्ण्यदेवर्षेरुद्धवोऽब्रवीत् ॥ सभ्यानांमतमाज्ञायकृष्णस्यचमहामतिः ॥ १ ॥ उद्धवउवाच यदुक्तमृषिणादेवसाचिव्यंयक्ष्यतस्त्वया ॥ कार्यंपैतृष्वस्रेयस्यरक्षाचशरणैषिणां ॥ २ ॥ यष्टव्यंराजसूयेनदिक्चक्रजयिनाविभो ॥ अतोजरासुतजयउभयार्थोमतोमम ॥ ३ ॥ अस्माकंचमहानर्थोह्येतेनैवभविष्यति ॥ यशश्चतवगोविंदराज्ञोबद्धान्विमुंचतः ॥ ४ ॥

उ०टीकायांसप्ततितमोध्यायः ॥ ७० ॥ अथैकसप्ततितमउद्धवस्यतुमंत्रतः ॥ इंद्रप्रस्थंगतेकृष्णेपार्थानांपरमोत्सवः ॥ १ ॥ राजसूयमिषंकृत्वाभीमदुर्योधनादिषु ॥ कलिमुत्पाद्यतद्द्वाराभूभारमहरत्प्रभुः ॥ २ ॥ देवर्षेर्मतंराजसूयगमनं सभ्यानांमतंराजरक्षा कृष्णस्यतूभयं ॥ १ ॥ यक्ष्यतःयागंकरिष्यतःपैतृष्वस्रेयस्यपितृष्वसुःपुत्रस्यसाचिव्यंसाहाय्यंतत्त्वकार्यं तथाशरणार्थिनांराज्ञांरक्षाचकार्या ॥ २ ॥ तत्रप्रथमंराजसूयार्थंगंतव्यंततोराजरक्षाकर्तव्येत्याह यष्टव्यमित्यष्टभिः अतःदिग्विजयहेतोः उभयार्थोराजसूयार्थःशरणागतरक्षार्थश्च ॥ ३ ॥ ४ ॥

अत्युत्सुकतयासद्यएवजरासंधंहंतुमिच्छतोयादवानालक्ष्याह सवाइति अन्येषांततोबलिनामपियद्यपिसमबलएवभीमस्तथा।पितांविना भीमादेवतस्यमृत्युर्विहितइतिभावः ॥ ५ ॥ ननुस्वबलसाम्येपिसेनाबलंतस्याधिकमितिचेदतआह द्वैरथइति द्वंद्वयुद्धेशतेनाक्षौहिणीभिर्युतोमागधोमा नजेतव्यइत्यर्थः नन्वसौस्वसैन्यमेवयुद्धायनियुंजीतकुतस्तेनद्वैरथमितितत्राह ब्रह्मण्यइति नप्रत्याख्यातिननिराकरोति ॥ ॥ ६ ॥ भिक्षेतद्वंद्वयुद्धंयाचतां तथाऽपिसमबलत्वात्साम्यमेवस्यादतआह तवसन्निधाविति ॥ ७ ॥ ननुअकिंचित्कुर्वतोममसन्निधानात्किंस्यादतआह निमित्तमिति अयमर्थः यथातवारूपस्यकालात्मनोविश्वसर्गेनिमित्तंकेवलंहिरण्यगर्भस्तथाशर्वश्चतन्निरोधेतथाऽत्रत्वमेवसन्निधिमात्रेणहंताभीमोनिमित्तमात्रमिति ॥ ८ ॥ अतोऽनेनोपायेनत्वयासशीघ्रंहंतव्यइत्याशयेनाह गायंतीति जरासंधधृतानांराज्ञांदे

**सवैदुर्विषहोराजानागायुतसमोबले ॥ बलिनामपिचान्येषांभीमंसमबलंविना ॥ ५ ॥ द्वैरथेसतुजेतव्योमाशताक्षौहिणीयुतः ॥ ब्रह्मण्योऽभ्यर्थितोविप्रैर्नप्रत्याख्यातिकर्हिचित् ॥ ६ ॥ ब्रह्मवेषधरोगत्वातंभिक्षेतवृकोदरः ॥ हनिष्यतिनसंदेहोद्वैरथेतवसन्निधौ ॥ ७ ॥ निमित्तंपरमीशस्यविश्वसर्गनिरोधयोः ॥ हिरण्यगर्भःशर्वश्चकालस्यारूपिणस्तव ॥ ८ ॥ गायंतितेविशदकर्मगृहेषुदेव्योराज्ञांस्वशत्रुवधमात्मविमोक्षणंच ॥ गोप्यश्चकुंजरपतेर्जनकात्मजायाःपित्रोश्चलब्धशरणामुनयोवयंच ॥ ९ ॥ जरासंधवधःकृष्णभूर्यर्थायोपकल्प्यते ॥ प्रायःपाकविपाकेनतवचाभिमतःक्रतुः ॥ १० ॥ ॥ ॥ ॥**

व्यः पत्न्यस्तेविशदंकर्मस्वगृहेषुबालकलालनादौगायंति किंतत्कर्म स्वशत्रोर्जरासंधस्यवधमात्मनांपतीनांविमोक्षणंच वत्समारोदीःकरुणार्णवःश्रीकृष्णएवंकरिष्यतीति अत्रदृष्टांताः गोप्यश्चेत्यादयः यथागोप्यःशंखचूडवधंस्वमोक्षंचगायंति अवतारांतरगतंकुंजरपतेर्नक्रात् जनकात्मजायाश्चरावणात् पित्रोश्चकंसगृहान्मोक्षं अतएवंभूतानांतासांकृपयात्वयातथैवकर्तव्यामितिभावः ॥ ९ ॥ किंच जरासंधवधइति भूर्यर्थायेति ततःशिशुपालवधादयोऽपिसुखसाध्याभविष्यंतीतिभावः एतच्चसर्वंभविष्यत्येवेतिसंभावयन्नाह प्रायइति पच्यतइतिपाकःकर्मतस्यविपाकःफलंतेनराज्ञांपुण्यविपाकेनजरासंधादीनांपापविपाकेनेति पाठांतरेतस्यजरासंधस्यपापविपाकेनेति तेनायंक्रतुस्तवाभिप्रेतस्तत्रगतेत्वयिसर्वंभविष्यतीत्यर्थः ॥ १० ॥ ॥ ॥ ॥

अच्युतमुपपस्यावृद्धं यदुवृद्धाइतिवदन्ननिरुद्धादयस्तथानापूजयन्निति सूचितं ॥११॥ अनुज्ञाप्यअनुज्ञांप्रार्थ्य गुरून्वसुदेवादीन् ॥१२॥ अवरोधान्स्वान्दारान् निर्गमय्यप्रयाणंकारयित्वा ॥ १३ ॥ भटाःपदातयः सादिनोऽश्वारोहाः रथादिनायकैःकरालयातीव्रयाआत्मसेनयापरिवृतोनिराक्रमान्निरगात् कुतःसकाशात् मृदंगादिभिर्वाद्यैःप्रघोषेणघोषितायाःककुभः ॥ १४ ॥ नृवाजीति नृवाजिभिर्नरयानैर

श्रीशुकउवाच इत्युद्धववचोराजन्सर्वतोभद्रमच्युतं ॥ देवर्षिर्यदुवृद्धाश्चकृष्णश्चप्रत्यपूजयन् ॥ ११ ॥ अथादिशत्प्रयाणायभगवान्देवकीसुतः ॥ भृत्यान्दारुकजैत्रादीननुज्ञाप्यगुरून्विभुः ॥ १२ ॥ निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छदान् ॥ संकर्षणमनुज्ञाप्ययदुराजंचशत्रुहन् ॥ सूतोपनीतंस्वरथमारुहद्गरुडध्वजं ॥ १३ ॥ ततोरथद्विपभटसादिनायकैःकरालयापरिवृतआत्मसेनया ॥ मृदंगभेर्यानकशंखगोमुखैःप्रघोषघोषितककुभोनिराक्रमत् ॥ १४ ॥ नृवाजिकांचनशिबिकाभिरच्युतंसहात्मजाःपतिमनुसुव्रताययुः ॥ वरांबराभरणविलेपनस्रजःसुसंवृतान्नृभिरसिचर्मपाणिभिः ॥१५॥ नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिःपरिजनवारयोषितः ॥ स्वलंकृताःकटकुटिकंबलांबराद्युपस्कराययुरधियुज्यसर्वतः ॥ ॥ १६ ॥ बलंबृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ॥ दिवांऽशुभिस्तुमुलरवंबभौरवेर्यथाऽर्णवःक्षुभिततिमिंगिलोर्मिभिः ॥ १७ ॥ अथोमुनिर्यदुपतिनासभाजितःप्रणम्यतंहृदिविदधद्विहायसा ॥ निशम्यतद्व्यवसितमाहृताऽर्हणोमुकुंदसंदर्शननिर्वृतेंद्रियः ॥ १८ ॥ ॥

श्वैश्चकांचनशिबिकाभिश्चअच्युतंपतिमनुययुः सुव्रताःपतिव्रताः वराण्यंबरादीनियासांताः ॥ १५ ॥ नरोष्ट्रादिभिर्यानैः अश्वतरीगर्दभ्यामश्वाज्जाता अनःशकटं करेणुर्गजी परिजनयोषितोवारयोषितश्च कटकुटयःउशीरादितृणनिर्मितगृहाःकंबलांबरादयश्चोपस्कराः कुड्यादिरूपायासांताः अधियुज्यबलीवर्दादिषुतानुपस्करान्दृढंसन्नह्य ॥ १६ ॥ रवेरंशुभिश्चतद्बलंदिवाबभौकथंभूतं तुमुलरवमाकुलस्वनं क्षुभितैस्तिमिंगिलैःऊर्मिभिश्च ॥ १७ ॥ मुनिर्नारदोविहायसाययाविति शेषः ॥ १८ ॥ ॥

माभैष्टेतिबहुत्वंराजाभिप्रायेण ॥ १९ ॥ प्रत्यैक्षन्प्रत्यैक्षंत यत्र्यस्मान्मुमुक्षवः ॥ २० ॥ आनर्तादयोमार्गस्थदेशास्तांस्तीर्त्वाअतिक्रम्याविनशनंकुरुक्षेत्रंअतीयायअतिक्रम्यययौ ॥ २१ ॥ शक्रप्रस्थमिंद्रप्रस्थं ॥ २२ ॥ २३ ॥ प्राणाइंद्रियाणिप्राणंमुख्यंप्राणामिव ॥ २४ ॥ सस्वजेपरिरेभे ॥





राजदूतमुवाचेदंभगवान्प्रीणयन्गिरा ॥ माभैष्टदूतभद्रंवोघातयिष्यामिमागधं ॥ १९ ॥ इत्युक्तःप्रस्थितोदूतोयथावदवदन्नृपान् ॥ तेऽपिसंदर्शनंशौरेःप्रत्यैक्षंश्चमुमुक्षवः ॥ २० ॥ आनर्तसौवीरमरूंस्तीर्त्वाविनशनंहरिः ॥ गिरीन्नदीरतीयायपुरग्रामव्रजाकरान् ॥ २१ ॥ ततोदृषद्वतींतीर्त्वामुकुंदोऽथसरस्वतीं ॥ पंचालानथमत्स्यांश्चशक्रप्रस्थमथागमत् ॥ तमुपागतमाकर्ण्यप्रीतोदुर्दर्शनंनृणां ॥ २२ ॥ अजातशत्रुर्निरगात्सोपाध्यायःसुहृद्वृतः ॥ २३ ॥ गीतवादित्रघोषेणब्रह्मघोषेणभूयसा ॥ अभ्ययात्सहृषीकेशंप्राणाःप्राणमिवादृतः ॥ ॥ २४ ॥ दृष्ट्वाविक्लिन्नहृदयःकृष्णंस्नेहेनपांडवः ॥ चिराद्दृष्टंप्रियतमंसस्वजेथपुनःपुनः ॥ २५ ॥ दोर्भ्यांपरिष्वज्यरमामलालयंमुकुंदगात्रंनृपतिर्हताशुभः ॥ लेभेपरांनिर्वृतिमश्रुलोचनोहृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ ॥ २६ ॥ तंमातुलेयंपरिरभ्यनिर्वृतोभीमःस्मयन्प्रेमजवाकुलेंद्रियः ॥ यमौकिरीटीचसुहृत्तमंमुदाप्रवृद्धबाष्पाःपरिरेभिरेऽच्युतं ॥ २७ ॥ अर्जुनेनपरिष्वक्तोयमाभ्यामभिवादितः ॥ ब्राह्मणेभ्योनमस्कृत्यवृद्धेभ्यश्चयथाऽर्हतः ॥ २८ ॥ मानितोमानयामासकुरुसृंजयकैकयान् ॥ सूतमागधगंधर्वान्बंदिनश्चोपमंत्रिणः ॥ २९ ॥ मृदंगशंखपटहवीणापणवगोमुखैः ॥ ब्राह्मणाश्चारविंदाक्षंतुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥ एवंसुहृद्भिःपर्यस्तःपुण्यश्लोकशिखामणिः ॥ संस्तूयमानोभगवान्विवेशालंकृतंपुरं ॥ ३१ ॥ संसिक्तवर्त्मकरिणांमदगंधतोयैश्चित्रध्वजैःकनकतोरणपूर्णकुंभैः ॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गंधैर्नृभिर्युवतिभिश्चविराजमानं ॥ ३२ ॥



॥ २५ ॥ रमायाअमलंनिर्दोषमालयं विस्मृतोलोकव्यवहारोयेनसः ॥ २६ ॥ २७ ॥ अर्जुनेनसमत्वात्परिष्वक्तएवकेवलं पादौनमस्कुर्वन्नर्जुनःकृष्णेनभुजाभ्यांधृतइतिभावः यमाभ्यांत्वभिवादितश्चेति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ चित्रध्वजादिभिर्विराजमानं ॥ ३२ ॥

प्रतिसद्मउद्दीप्तैर्दीपैर्बलिभिःपुष्पादिप्रकरैश्चजुष्टं जालेभ्योगवाक्षेभ्योनिर्गतैर्धूपैरुचिरं विलसंत्यःपताकायस्मिंस्तत् मूर्धन्यामूर्ध्निभवाहे
मकलशायेषांतैःरजतमयानिरूप्यमयानिउरूणिस्थूलानिशृंगाणिकलशाधस्तनभूमिकायेषांतैर्भवनैर्जुष्टंकुरुराजस्यधामपुरंददर्श ॥ ३३ ॥
नराणांलोचनानितेषांपानस्यसादरवीक्षणस्यपात्रंविषयं किंपुनर्नारीणामित्यर्थः ॥ ३४ ॥ सुष्ठुस्वागतंतत्प्रश्नादिकंप्रियमुत्स्मयवीक्षितेनै

उद्दीप्तदीपबलिभिःप्रतिसद्मजालनिर्यातधूपरुचिरंविलसत्पताकं ॥ मूर्धन्यहेमकलशैरजतोरुशृंगैर्जुष्टंदद
र्शभवनैःकुरुराजधाम ॥ ३३ ॥ प्राप्तंनिशम्यनरलोचनपानपात्रमौत्सुक्याविश्लथितकेशदुकूलबंधाः ॥
सद्योविसृज्यगृहकर्मपतींश्चतल्पेद्रष्टुंययुर्युवतयःस्मनरेंद्रमार्गे ॥ ३४ ॥ तस्मिन्सुसंकुलइभाश्वरथद्विप
द्भिःकृष्णंसभार्यमुपलभ्यगृहाधिरूढाः ॥ नार्योविकीर्यकुसुमैर्मनसोपगुह्यसुस्वागतंविदधुरुत्स्मयवीक्षिते
न ॥ ३५ ॥ ऊचुःस्त्रियःपथिनिरीक्ष्यमुकुंदपत्नीस्तारायथोडुपसहाःकिमकार्यमूभिः ॥ यच्चक्षुषांपुरुषमौ
लिरुदारहासलीलाऽवलोककलयोत्सवमातनोति ॥ ३६ ॥ तत्रतत्रोपसंगम्यपौरामंगलपाणयः ॥ चक्रुः
सपर्यांकृष्णायश्रेणीमुख्याहतैनसः ॥ ३७ ॥ अंतःपुरजनैःप्रीत्यामुकुंदःफुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतः
प्राविशद्राजमंदिरं ॥ ३८ ॥ पृथाविलोक्यभ्रात्रेयंकृष्णंत्रिभुवनेश्वरं ॥ प्रीतात्मोत्थायपर्यंकात्सस्नुषाप
रिषस्वजे ॥ ३९ ॥ गोविंदंगृहमानीयदेवदेवेशमादृतः ॥ पूजायांनाविदत्कृत्यंप्रमोदोपहतोनृपः ॥ ४० ॥
पितृष्वसुर्गुरुस्त्रीणांकृष्णश्चक्रेऽभिवादनं ॥ स्वयंचकृष्णयाराजन्भगिन्याचाभिवंदितः ॥ ४१ ॥ श्वश्वा
संचोदिताकृष्णाकृष्णपत्नीश्चसर्वशः ॥ आनर्चरुक्मिणींसत्यांभद्रांजांबवतींतथा ॥ ४२ ॥ ॥

वविदधुः ॥ ३५ ॥ उडुपसहाः चंद्रसहचराइत्यर्थः अमूभिःकिंपुण्यमकारि ॥ ३६ ॥ श्रेण्यःएकशिल्पोपजीविनांसंघास्तेषुमुख्या श्च
॥ ३७ ॥ अभ्युपेतःअभिगमनेनसत्कृतः ॥ ३८ ॥ सस्नुषाद्रौपदीसहिता ॥ ३९ ॥ कृत्यंप्रकारविशेषं प्रमोदेनोपहतोऽभिभूतः ॥
॥ ४० ॥ गुरुस्त्रीणांच कृष्णयाद्रौपद्या भगिन्यासुभद्रया ॥ ४१ ॥ आनर्चअर्चितवती ॥ ४२ ॥ ॥ ॥

अन्याश्चयाःकृष्णपत्न्योऽभ्यागतास्ता अपि ॥४३॥ प्रत्यहंनवंनवंयथाभवतितथासुखंनिवासयामास ॥ ४४ ॥ कथंभूतं यःप्रेम्णानित्यंफाल्गुने
नसंयुतःअतएवतस्यसहायेनसतायेनखांडवेनवन्हितर्पयित्वातत्रचमयंमोचयित्वामयंप्रयुज्ययुधिष्ठिरायदिव्यासभाकृतातंजनार्दनं अनेनरा
ज्ञःकृष्णोपकारानुस्मरणंदिव्यत्वात्सभायायथामनोरथंसर्वावकाशसंपादनंचदर्शितं ॥ ४५ ॥ ४६ ॥ इतिदशमेउ०टीकायामेकसप्ततितमो
ऽध्यायः ॥ ७१ ॥ ॥ ततोद्विसप्ततितमेराज्ञाकार्येनिवेदिते ॥ दुर्जयंमागधंबुध्वाभीमेनाघातयद्धरिः ॥ १ ॥ आस्थितः आसनमितिशे

कालिंदींमित्रविंदांचशैब्यांनाग्नजितींसतीं ॥ अन्याश्चाभ्यागतायास्तुवासःस्त्रग्मंडनादिभिः ॥ ४३॥ सु
खंनिवासयामासधर्मराजोजनार्दनं ॥ ससैन्यंसानुगामात्यंसभार्यंचनवंनवं ॥ ४४ ॥ तर्पयित्वाखांडवेनव
न्हिंफाल्गुनसंयुतः ॥ मोचयित्वामयंयेनराज्ञेदिव्यासभाकृता ॥ ४५ ॥ उवासकतिचिन्मासान्राज्ञःप्रिय
चिकीर्षया ॥ विहरन्रथमारुह्यफाल्गुनेनभटैर्वृतः ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ०कृ
ष्णस्येंद्रप्रस्थगमनेएकसप्ततितमोध्यायः ॥ ७१ ॥ श्रीशुकउवाच एकदातुसभामध्यआस्थितोमुनिभि
र्वृतः ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैर्भ्रातृभिश्चयुधिष्ठिरः ॥ १ ॥ आचार्यैःकुलवृद्धैश्चज्ञातिसंबंधिबांधवैः ॥ शृण्व
तामेवचैतेषामाभाष्येदमुवाचह ॥ २ ॥ युधिष्ठिरउवाच क्रतुराजेनगोविंदराजसूयेनपावनीः ॥ यक्ष्येवि
भूतीर्भवतस्तत्संपादयनःप्रभोः ॥ ३ ॥ त्वत्पादुकेअविरतंपरियेचरंतिध्यायंत्यभद्रनशनेशुचयोगृणंति ॥
विंदंतितेकमलनाभभवापवर्गमाशासतेयदितआशिषईशनान्ये ॥ ४ ॥ ॥ ॥

षः ॥ १ ॥ शृण्वतामेवेति यत्प्रसन्नःकृष्णःकरोतिनतदन्यःकश्चिदपिकर्तुंसमर्थइतिनिश्चित्यसर्वानेवताननादृत्यकृष्णमुवाचेत्यर्थः आ
भाष्यभोभोकृष्णभक्तवत्सलेत्येवंसंबोध्य ॥ २ ॥ विभूतीःअंशान् ॥ ३ ॥ एषचक्रवर्तिनांमनोरथःकथंत्वयाक्रियतइतिचेदतआह त्वत्पा
दुकेइति परियेचरंतीतियच्छब्दव्यवधानमार्षं येपरिचरंतिदेहेन ध्यायंतिमनसा अभद्रस्यनशनेनाशके गृणंतिवाचा तेभवस्यापवर्गंमो
क्षंविंदंति यदिआशासतेतर्हिआशिषोऽपितएवविंदंतिनान्येचक्रवर्तिनोऽपि ॥ ४ ॥ ॥ ॥ ॥

भगवतोभक्तपक्षपातमाविष्कारयन्नाह तद्देवदेवेति तत्तस्मात्पश्यतुसाक्षात् एवंनिश्चितेपियेकर्मादिप्रधानाःकेचित्कुरुसृंजयाभगवद्भक्तिंनब
हुमन्यंतेतेषांमोहनिवृत्तयेयेत्वांभजंतियदिवानभजंतितेषामुभयेषांनिष्ठांस्थितिंप्रदर्शय॥ ५॥ ननुरागादिरहितेमयिकथमिदंवैषम्यंस्यात्तत्राह
नेति स्वःपरइतिभेदमतिस्तवनस्यादेव कुतः ब्रह्मणःनिरुपाधेः किंचसर्वस्यात्मनःअतःसमदृशः किंचस्वसुखानुभूतेः अतोरागाद्यभावा
दितिभावः तथाऽपिसंसेवमानानामेवत्वत्प्रसादोनान्येषां तत्राऽपिसेवाऽनुरूपमुदयःफलंनत्वत्रविपर्ययोन्यथाभावः यथाकल्पद्रुमस्यरागा
दिराहित्येऽपिसेवकेष्वेवफलजनकत्वंनान्येषु॥ ६॥ सत्यंमद्भक्तानामेवकैवल्यादिनान्येषामित्यनुमोदमानआह सम्यगिति शत्रुकर्शनेतिसं

तद्देवदेवभवतश्चरणारविंदसेवानुभावमिहपश्यतुलोकएषः॥ येत्वांभजंतिनभजंत्युतवोभयेषांनिष्ठांप्रदर्श
यविभोकुरुसृंजयानां॥५॥नब्रह्मणःस्वपरभेदमतिस्तवस्यात्सर्वात्मनःसमदृशःस्वसुखानुभूतेः॥संसेवतांसु
रतरोरिवतेप्रसादःसेवाऽनुरूपमुदयोनविपर्ययोऽत्र॥६॥ श्रीभगवानुवाच सम्यग्व्यवसितंराजन्भवता
शत्रुकर्शन॥कल्याणीयेनतेकीर्तिर्लोकाननुभविष्यति॥७॥ऋषीणांपितृदेवानांसुहृदामपिनःप्रभो॥ सर्वेषा
मपिभूतानामीप्सितःक्रतुराडयं॥८॥विजित्यनृपतीन्सर्वान्कृत्वाचजगतींवशे॥संभृत्यसर्वसंभारानाहरस्व
महाक्रतुं॥एतेतेभ्रातरोराजन्लोकपालांशसंभवाः॥ जितोस्म्यात्मवतातेऽहंदुर्जेयोयोऽकृतात्मभिः॥ १०॥
नकश्चिन्मत्परंलोकेतेजसायशसाश्रिया॥ विभूतिभिर्वाऽभिभवेद्देवोऽपिकिमुपार्थिवः॥ ११॥ श्रीशुकउ
वाच निशम्यभगवद्गीतंप्रीतःफुल्लमुखांबुजः॥ भ्रातॄन्दिग्विजयेऽयुंक्तविष्णुतेजोपबृंहितान्॥ १२॥ ॥

बोधयन्सर्वराजविजयशक्तिंसंचारयति अनुभविष्यति सर्वलोकव्याप्ताभविष्यतीत्यर्थः॥७॥८॥ किमत्रमयाऽन्येनवासंपादनीयंतवतुसुकरएव
राजसूयइत्याह विजित्येति जगतींसर्वांपृथ्वीं संभारान्यज्ञोपस्करान्संभृत्यसंपाद्यआहरस्वअनुतिष्ठेत्यर्थः॥ ९ ॥ ननुनृपतिविजयादिकथं
शक्यंस्यादतआह एतइति किंच आत्मवताजितेंद्रियेणतेत्वयाअहंचजितोस्मिवशीकृतोस्मिअकृतात्मभिरजितेंद्रियैः॥ १० ॥ आस्तां
तावदेवंभूतस्यतवपरैरभिभवशंकाअकिंचनमापिमत्परंकोऽपिनाभिभवितुंप्रभवतीत्याहनकश्चिदिति तेजसाप्रभावेण विभूतिभिःसैन्यादि
सामग्रीभिः॥ ११ ॥ अयुंक्तनियुक्तवान् विष्णोस्तेजसाउपबृंहितान्संवर्द्धितान् तेजोपबृंहितानितिसंधिरार्षः॥१२॥ ॥

नकुलादीनांमत्स्यादिभिःसहायैर्यथासंख्येनसंबंधः सहदेवंसृंजयैःसहभीमंमत्स्यैर्नकुलंकैकयैःसव्यसाचिनंमद्रकैरिति ॥ १३ ॥ कथंभूताय यक्ष्यतेयागंकरिष्यते ॥ १४ ॥ आद्योहरिःश्रीकृष्णः ॥ १५ ॥ ब्रह्मलिंगधराब्राह्मणलिंगधारिणः यतःयत्रबृहद्रथसुतोजरासंधः ॥ १६ ॥ गृहेषुवर्तमानंसमयाचेरन् सम्यक्अयाचंतेत्यर्थः ॥ १७ ॥ १८ ॥ नन्विदंकामयामहइतिविशेषोनिर्दिश्यतांअन्यथायस्यपुत्रादेर्वियोगोदुःसहःसकथंदेयः तथाराजमंडनंकिरीटाद्यदेयंयत्तत्भिक्षुभ्यःकथंदेयं तथातिरम्यंरत्नाभरणादिपुत्रादियोग्यंकथंपरस्मैदेयमिति चेदतआहुः किंदुर्मर्षमित्यादि अथदृष्टांतत्वेनार्थांतरमाहुः किमकार्यमिति यथाऽसाधूनामकार्यंनास्ति तथातितिक्षूणांदुर्मर्षंदुःसहंनास्ति वदान्यानामत्युदाराणामदेयंनास्ति समदर्शिनांपरश्चनास्ति अतःकिंविशेषनिर्देशेनेत्यर्थः ॥ १९ ॥ किंच अर्थिनेधीरेणमुद्गलादिवत्

सहदेवंदक्षिणस्यामादिशत्सहसृंजयैः ॥ दिशिप्रतीच्यांनकुलमुदीच्यांसव्यसाचिनं ॥ प्राच्यांवृकोदरंमत्स्यैःकैकयैःसहमद्रकैः॥१३॥तेविजित्यनृपान्वीराआजह्रुर्दिग्भ्यओजसा॥अजातशत्रवेभूरिद्रविणंनृपयक्ष्यते॥१४॥श्रुत्वाऽजितंजरासंधंनृपतेर्ध्यायतोहरिः॥अहोपायंतमेवाद्यउद्धवोयमुवाचह॥१५॥भीमसेनोऽर्जुनःकृष्णोब्रह्मलिंगधरास्त्रयः॥ जग्मुर्गिरिव्रजंतातबृहद्रथसुतोयतः॥१६॥ तेगत्वातिथ्यवेलायांगृहेषुगृहमेधिनं॥ ब्रह्मण्यंसमयाचेरन्राजन्याब्रह्मलिंगिनः॥१७॥ राजन्विद्ध्यतिथीन्प्राप्तानर्थिनोदूरमागतान्॥ तन्नःप्रयच्छभद्रंतेयद्वयंकामयामहे ॥ १८ ॥ किंदुर्मर्षंतितिक्षूणांकिमकार्यमसाधुभिः ॥ किंनदेयंवदान्यानांकःपरःसमदर्शिनां ॥ १९ ॥ योऽनित्येनशरीरेणसतांगेयंयशोध्रुवं ॥ नाचिनोतिस्वयंकल्पःसवाच्यःशोच्यएवसः॥२०॥हरिश्चंद्रोरंतिदेवउंछवृत्तिःशिबिर्बलिः॥व्याधःकपोतोबहवोह्यध्रुवेणध्रुवंगताः॥२१॥

प्राणाअपिनवंचनीयाइत्याशयेनाहुः योऽनित्येनेति नाचिनोतिनसंपादयति सवाच्यःसनिंद्यः ॥ २० ॥ विश्वामित्रार्थानृण्यायहरिश्चंद्रोभार्यात्मजादिसर्वंविक्रीयस्वयंचांडालतांप्राप्तोप्यनिर्विण्णःसहायोध्यावासिभिर्जनैःस्वर्गंगतः रंतिदेवःसकुटुंबोऽष्टचत्वारिंशदहान्यलब्धोदकोऽपिकथंचिल्लब्धान्नोदकार्थिभ्योदत्वाब्रह्मलोकंगतः उंछवृत्तिर्मुद्गलःषण्मासंसीदत्कुटुंबोऽप्यातिथ्यदानेनब्रह्मलोकंगतः शिबिःशरणागतकपोतरक्षणायस्वमांसंश्येनायदत्वादिवंगतः बलिःसर्वस्वंब्राह्मणवेषधारिणेहरयेदत्वातमेवात्मसाच्चकार कपोतश्चातिथयेव्याधायकपोत्यासहआत्ममांसंदत्वाविमानेनदिवंगतः व्याधस्तयोःसत्त्वंवीक्ष्यस्वयमतिनिर्विण्णोमहाप्रस्थानेवनाग्निदग्धदेहोनिष्कल्मषोदिवमारुरोह एवमन्येचबहवोऽध्रुवेणशरीरेणध्रुवंगताइति ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥

ज्याहतैर्ज्याघातकिणांकितैर्भुजैः दृष्टपूर्वान्द्रौपदीस्वयंवरादिषु ॥ २२ ॥ २३ ॥ इंद्रस्यश्रियंजिहीर्षताविप्रव्याजेनविष्णुनाभ्रंशितस्यापिब
लेः नुअहो नेतिपाठेनश्रूयतेकिं अपितुश्रूयतइति ॥ २४ ॥ तंश्लाघते विष्णवइति शुक्रेणवार्यमाणोऽपिअतएवविष्णुरितिजानन्नपि ॥२५॥
पतमानेनपतताक्षत्रबंधुनादेहेनब्राह्मणार्थायविपुलंयशोनेहतानेहमानेनअसंपादयताकोन्वर्थः नकोऽपीत्यर्थः ॥ २६ ॥ एवंनिश्चित्याह

श्रीशुकउवाच स्वैरैराकृतिभिस्तांस्तुप्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबंधून्विज्ञायदृष्टपूर्वानचिंतयत् ॥ २२॥
राजन्यबंधवोह्येतेब्रह्मलिंगानिबिभ्रति ॥ ददामिभिक्षितंतेभ्यआत्मानमपिदुस्त्यजं ॥२३॥ बलेर्नुश्रूयते
कीर्तिर्विततादिक्ष्वकल्मषा ॥ ऐश्वर्याद्भ्रंशितस्यापिविप्रव्याजेनविष्णुना ॥ २४॥ श्रियंजिहीर्षतेंद्रस्यविष्ण
वेद्विजरूपिणे ॥ जानन्नपिमहींप्रादाद्वार्यमाणोपिदैत्यराट् ॥ २५ ॥ जीवताब्राह्मणार्थायकोऽन्वर्थःक्षत्रबं
धुना ॥ देहेनपतमानेननेहताविपुलंयशः ॥ २६ ॥ इत्युदारमतिःप्राहकृष्णार्जुनवृकोदरान् ॥ हेविप्रावि
यतांकामोददाम्यात्मशिरोऽपिवः ॥ २७॥ श्रीभगवानुवाच युद्धंनोदेहिराजेंद्रद्वंद्वशोयदिमन्यसे ॥ यु
द्धार्थिनोवयंप्राप्ताराजन्यानान्नकांक्षिणः ॥ २८ ॥ असौवृकोदरःपार्थस्तस्यभ्राताऽर्जुनोह्ययं ॥ अनयोर्मा
तुलेयंमांकृष्णंजानीहितेरिपुं ॥ २९ ॥ एवमावेदितोराजाजहासोच्चैःस्ममागधः ॥ आहचामर्षितोमंदायुद्धंत
र्हिददामिवः ॥३०॥ नत्वयाभीरुणायोत्स्येयुधिविक्लवचेतसा ॥ मथुरांस्वपुरींत्यक्त्वासमुद्रंशरणंगतः॥३१॥
अयंतुवयसातुल्योनातिसत्त्वोनमेसमः ॥ अर्जुनोनभवेद्योद्धाभीमस्तुल्यबलोमम॥३२॥इत्युक्त्वाभीमसेना
यप्रादायमहतींगदां ॥ द्वितीयांस्वयमादायनिर्जगामपुराद्बहिः ॥ ३३ ॥ ततःसमेखलेवीरौसंयुक्तावितरेत
रौ ॥ जघ्नतुर्वज्रकल्पाभ्यांगदाभ्यांरणदुर्मदौ ॥ ३४ ॥ मंडलानिविचित्राणिसव्यंदक्षिणमेवच ॥ चरतोःशु
शुभेयुद्धंनटयोरिवरंगिणोः ॥ ३५ ॥

हेविप्राइति ॥ २७ ॥ २८ ॥ राजन्यतामेवप्रपंचयति असाविति ॥ २९ ॥ ३० ॥ यतोमद्भियासमुद्रंशरणंगतः ॥ ३१ ॥ वयसाप्यतुल्योनातिस
त्वोनातिबलश्चनचदेहेनमयासमःअतोर्जुनोयोद्धानभवेत् भीमस्तुभवेत् यतोममतुल्यबलः ॥ ३२ ॥ प्रादायदत्त्वेत्यर्थः ॥ ३३ ॥ समेखले
युद्धांगणे ॥ ३४ ॥ मंडलानिगदायुद्धगतिभेदान् सव्यंदक्षिणंचयथाभवतितथा रंगिणोःरंगगतयोर्नटयोरिवेतिनिर्भयत्वेनोपमा ॥ ३५ ॥

चटचटेतिगदयोःपरस्पराघातशब्दानुकरणं वज्रस्यनिष्पेषःपातस्तत्सदृशः युध्यतोर्दंतिनोर्दंताघातशब्दइवशुशुभे ॥ ३६ ॥ अंसकट्याादीनुपेत्य दीप्तोमन्युर्ययोःतयोर्द्विरदयोर्गजयोरर्कशाखाभ्यांसमंयुध्यतोस्तेयथाचूर्णीभवतस्तद्वत् ॥ ३७ ॥ अपिष्टांचूर्णीचक्रतुः ॥ ॥ ३८ ॥ शिक्षाअभ्यासःबलंसत्वमोजःप्रभावःसमानितानिययोस्तयोः ॥ ३९ ॥ ४० ॥ ४१ ॥ जन्मशकलरूपंमृतिःपुनःशकलीभा



ततश्चटचटाशब्दोवज्रनिष्पेषसन्निभः ॥ गदयोःक्षिप्तयोराजन्दंतयोरिवदंतिनोः ॥३६॥ तेवैगदेभुजजवेन निपात्यमानेअन्योऽन्यतोंऽसकटिपादकरोरुजत्रून् ॥ चूर्णीबभूवतुरुपेत्ययथार्कशाखेसंयुद्ध्यतोर्द्विरदयोरिव दीप्तमन्व्योः ॥३७॥इत्थंतयोःप्रहतयोर्गदयोर्नृवीरौक्रुद्धौस्वमुष्टिभिरयःस्पर्शैरपिष्टां ॥ शब्दस्तयोःप्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥३८॥ तयोरेवंप्रहरतोःसमशिक्षाबलौजसोः ॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥ एवंतयोर्महाराजयुद्ध्यतोःसप्तविंशतिः ॥ दिनानिनिरगंस्तत्रसुहृद्वन्निशितिष्ठतोः ॥४०॥ एकदामातुलेयंवैप्राहराजन्वृकोदरः ॥ नशक्तोऽहंजरासंधंनिर्जेतुंयुधिमाधव ॥ ४१ ॥ शत्रोर्जन्ममृतीविद्वान्जीवितंचजराकृतं ॥ पार्थमाप्याययत्स्वेनतेजसाचिंतयद्धरिः ॥४२॥ संचिंत्यारिवधोपायंभीमस्यामोघदर्शनः ॥ दर्शयामासविटपंपाटयन्निवसंज्ञया॥४३॥ तद्विज्ञायमहासत्वोभीमःप्रहरतांवरः॥ गृहीत्वापादयोःशत्रुंपातयामासभूतले ॥ ४४ ॥ एकंपादंपदाक्रम्यदोर्भ्यामन्यंप्रगृह्यसः ॥ गुदतःपाटयामासशाखामिवमहागजः ॥ ४५ ॥ एकपादोरुवृषणकटिपृष्ठस्तनांसके ॥ एकबाह्वक्षिभ्रूकर्णेशकलेददृशुःप्रजाः ॥ ४६ ॥ हाहाकारोमहानासीन्निहतेमगधेश्वरे ॥ पूजयामासतुर्भीमंपरिरभ्यजयाच्युतौ ॥ ४७ ॥

वस्तेविद्वान्जानन् जरानामराक्षसीतत्कृतं अचिंतयत्कथमसौशकलभिवेदिति ॥ ४२ ॥ विटपंशाखां करेणविटपंगृहीत्वाहरिर्भीमस्ययथाऽहंविटपंपाटयामितथात्वमेनंविपाटयेतिसंज्ञयासंकेतेनअरिवधोपायंदर्शयामासेत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ एकैकःपादादिर्ययोस्तेशकले ॥ ४६ ॥ ४७ ॥ ॥ ॥ ॥ ॥

दुर्वृत्तत्वादसौहृतोनतुराज्याभिलाषेणेतिदर्शयन्नाह सहदेवमिति ॥ ४८ ॥ इतिदशमे० उ० टी० द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥
ततस्त्रिसप्ततितमेमोचयित्वानृपान्हरिः ॥ राजार्हभोगैःस्वान्देशान्प्रस्थाप्यपुनरागमत् ॥ १ ॥ अत्युन्नद्धजरासंधवधात्तद्बद्धभूपतीन्॥ वि
मोक्ष्यकृपयाकृष्णोनिजरूपमदर्शयत् ॥ २ ॥ येनिर्जिताजरासंधेनानिरुद्धाश्चगिरिद्रोण्यांतेततोनिर्गताःसंतोघनश्यामंददृशुरित्युत्तरेणान्व
यः ॥ १ ॥ क्षुधाक्षामाःकृशाः संरोधेनपरिकर्शिताःक्लेशिताः ॥ २ ॥ ३ ॥ ४ ॥ भ्राजन्भ्राजमानोवरमणिःकौस्तुभोययासाग्रीवायस्य

सहदेवंतत्तनयंभगवान्भूतभावनः॥ अभ्यषिंचदमेयात्मामगधानांपतिंप्रभुः ॥ मोचयामासराजन्यान्सं
रुद्धामागधेनये ॥ ४८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेजरासंधवधोनामद्विसप्ततितमो
ऽध्यायः ॥ ७२ ॥ ॥ श्रीशुकउवाच अयुतेद्वेशतान्यष्टौलीलयायुधिनिर्जिताः ॥ तेनिर्गतागिरिद्रोण्यां
मलिनामलवाससः ॥ १ ॥ क्षुत्क्षामाःशुष्कवदनाःसंरोधपरिकर्शिताः ॥ ददृशुस्तेघनश्यामंपीतकौशेय
वाससं ॥ २ ॥ श्रीवत्सांकंचतुर्बाहुंपद्मगर्भारुणेक्षणं ॥ चारुप्रसन्नवदनंस्फुरन्मकरकुंडलं ॥ ३ ॥ पद्मह
स्तंगदाशंखरथांगैरुपलक्षितं ॥ किरीटहारकटककटिसूत्रांगदाचितं ॥ ४॥ भ्राजद्वरमणिग्रीवंनिवीतंवन
मालया ॥ पिबंतइवचक्षुर्भ्यांलिहंतइवजिह्वया ॥५॥ जिघ्रंतइवनासाभ्यांरंभंतइवबाहुभिः ॥प्रणेमुर्हतपा
प्मानोमूर्धभिःपादयोर्हरेः ॥६॥ कृष्णसंदर्शनाल्हादध्वस्तसंरोधनक्लमाः ॥ प्रशशंसुर्हृषीकेशंगीर्भिःप्रां
जलयोनृपाः ॥ ७ ॥ राजानऊचुः नमस्तेदेवदेवेशप्रपन्नार्तिहराव्यय ॥ प्रपन्नान्पाहिनःकृष्णनिर्विण्णा
न्घोरसंसृतेः॥८॥नैनंनाथानुसूयामोमागधंमधुसूदन ॥ अनुग्रहोयद्भवतोराज्ञांराज्यच्युतिर्विभो ॥ ९ ॥

तं निवीतंकंठलंबितयाव्याप्तं पिबंतइवेत्यादीनांहरेःपादयोःप्रणेमुरित्युत्तरेणान्वयः रंभंतःपरिरंभमाणाइव ॥ ६ ॥ कृष्णदर्शनाल्हादेन
ध्वस्तःसंरोधनक्लमोयेषांते ॥ ७ ॥ संरोधाद्रक्षितानस्मान्घोरायाःसंसृतेरपिपाहिमोचय ॥ ८ ॥ ननुभवंतोजरासंधासूयाविष्टाइहामुत्र
भोगासक्ताश्चकथंसंसृतेर्मोचनीयाइत्याशंक्यसंप्रतिनवयंतथाभूताइत्याहुः नैनमित्यष्टभिः हेनाथवयमेनंनानुसूयामः अद्यतुदोषदृष्ट्या
नपश्यामःकुतइत्यतआहुः अनुग्रहइति यद्यस्मात् ॥ ९ ॥ ॥ ॥ ॥ ॥

एतदेवव्यतिरेकेणोपपादयंति राज्यैश्वर्येति राज्यैश्वर्याभ्यांमदस्तेनोन्नद्धउच्छृंखलोनित्याअचलाश्चसंपदोमन्यते यद्वा आनित्याःसत्यः अचलाःशाश्वतीर्मन्यते ॥ १० ॥ किंच अवस्तुसद्वस्तुतयापश्यंतीत्याहुः मृगतृष्णामिति वैकारिकींसृष्ट्यादिविकारापन्नां अयुक्ताअविवेकिनः ॥ ११ ॥ राज्यस्ययोगवियोगयोरनर्थावहत्वमस्मास्वेवदृष्टमित्याहुः वयमितिद्वाभ्यां श्रीमदेननष्टादृष्टिर्येषांते अस्याःपृथिव्याः इतरेतरस्पृधःपरस्परंस्पर्धमानाः पुरःपुरतः त्वांमृत्युमविगणय्य पुरायेदुर्मदावयं ॥ १२ ॥ हेकृष्णतएववयमद्यविनष्टदर्पास्तेचरणौस्मरामः स्मर्तुमाशास्महे कथंभूताः भवतस्तन्वामूर्त्याकालेनश्रियोविचालिताविभ्रंशिताः अतोराज्यच्युतिर्भवदनुग्रहएवेत्यर्थः ॥ १३ ॥ अतएवअ

राज्यैश्वर्यमदोन्नद्धोनश्रेयोविंदतेनृपः ॥ त्वन्मायामोहितोनित्यामन्यतेसंपदोऽचलाः ॥ १० ॥ मृगतृष्णांयथाबालामन्यंतउदकाशयं ॥ एवंवैकारिकींमायामयुक्तावस्तुचक्षते ॥ ११ ॥ वयंपुराश्रीमदनष्टदृष्टयोजिगीषयास्याइतरेतरस्पृधः ॥ घ्नंतःप्रजाःस्वाअतिनिर्घृणाःप्रभोमृत्युंपुरस्त्वाविगणय्यदुर्मदाः ॥ १२ ॥ तएवकृष्णाद्यगभीररंहसादुरंतवीर्येणविचालिताःश्रियः ॥ कालेनतन्वाभवतोनुकंपयाविनष्टदर्पाश्चरणौस्मरामते ॥ ॥ १३ ॥ अथोनराज्यंमृगतृष्णिरूपितंदेहेनशश्वत्पततारुजांभुवा ॥ उपासितव्यंस्पृहयामहेविभोक्रियाफलंप्रेत्यचकर्णरोचनं ॥ १४ ॥ तंनःसमादिशोपायंयेनतेचरणाब्जयोः ॥ स्मृतिर्यथानविरमेदपिसंसरतामिह ॥ १५ ॥ कृष्णायवासुदेवायहरयेपरमात्मने ॥ प्रणतक्लेशनाशायगोविंदायनमोनमः ॥ १६ ॥ श्रीशुकउवाच संस्तूयमानोभगवान्राजभिर्मुक्तबंधनैः ॥ तानाहकरुणस्तातशरण्यःश्लक्ष्णयागिरा ॥ १७ ॥

थोअनंतरंमृगतृष्णिसदृशंराज्यंशश्वत्पतताप्रतिक्षणंक्षीयमाणेनतथारुजांरोगाणांभुवाजन्मक्षेत्रेणदेहेनउपासितव्यंसेव्यंनस्पृहयामहेप्रेत्यपरलोकेचक्रियाफलंस्वर्गादिभोगमुपासितव्यंनस्पृहयामहे कथंभूतं कर्णयोःरोचनंरुचिजनकमात्रं तत्रगतस्यस्पर्धाद्यनपगमेनसुखाभावादित्यर्थः ॥ १४ ॥ यद्येवंभूतायूयंतर्हिममचरणौस्मरततोऽनायासेनमुक्तिर्भविष्यतीतिकिंमदपेक्षयेतिचेदतआहुःतंनइति त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः ॥ १५ ॥ १६ ॥ श्लक्ष्णयामंजुलया ॥ १७ ॥ ॥ ॥ ॥

यथाभवद्भिराशांसितंबाढंनिश्चितं वोमयिभक्तिर्जायतेजायतामित्यर्थः ॥ १८ ॥ हेभूपाःमज्जनमेवकर्तव्यमितिभवद्भिर्व्यवसितंसंकाल्पि
तंदिष्टयाभद्रं भवद्भिरुक्तंचसत्यमेवेत्याह भवंतइति श्रीश्चऐश्वर्यंचताभ्यांमदस्तेनोन्नाहमुद्बंधनंस्वैराचारमित्यर्थः पश्येपश्यामि ॥ १९ ॥
तदेवाह हैहयइति हैहयःकार्तवीर्यश्चक्रवर्तीनरेश्वरःपितुःकामधेनुहरणात्परशुरामेणसपुत्रोहतः नहुषोदेवेंद्रतांप्राप्तउन्मत्तःशचीसंगायब्रा
ह्मणान्शिबिकांवाहयंस्तैरेवततोभ्रंशितोऽजगरत्वमवाप वेनोप्युन्मत्तोब्राह्मणानधिक्षिपंस्तैरेवहुंकृतैर्हतः रावणोराक्षसेश्वरःसीतामभिल

श्रीभगवानुवाच अद्यप्रभृतिवोभूपामय्यात्मन्यखिलेश्वरे ॥ सुदृढाजायतेभक्तिर्बाढमाशंसितंतथा ॥ १८
दिष्ट्याव्यवसितंभूपाभवंतऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहंपश्यउन्मादकंनृणां ॥ १९ हैहयोनहुषो
वेनोरावणोनरकोपरे ॥ श्रीमदाद्भ्रंशिताःस्थानाद्देवदैत्यनरेश्वराः ॥ २० ॥ भवंतएतद्विज्ञायदेहाद्युत्पाद्य
मंतवत् ॥ मांयजंतोऽध्वरैर्युक्ताःप्रजाधर्मेणरक्षथ ॥ २१ ॥ संतन्वंतःप्रजातंतून्सुखंदुःखंभवाभवौ ॥ प्रा
प्तंप्राप्तंचसेवंतोमच्चित्ताविचरिष्यथ ॥ २२ ॥ उदासीनाश्चदेहादावात्मारामाधृतव्रताः ॥ मय्यावेश्यमनः
सम्यङ्मामंतेब्रह्मयास्यथ ॥ २३ ॥ श्रीशुकउवाच इत्यादिश्यनृपान्कृष्णोभगवान्भुवनेश्वरः ॥ तेषां
न्ययुंक्तपुरुषान्स्त्रियोमज्जनकर्मणि ॥ २४ ॥ सपर्यांकारयामाससहदेवेनभारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः
स्रग्विलेपनैः ॥ २५ ॥ भोजयित्वावरान्नेनसुस्नातान्समलंकृतान् ॥ भोगैश्चविविधैर्युक्तांस्तांबूलाद्यैर्नृपो
चितैः ॥ २६ ॥ तेपूजितामुकुंदेनराजानोमृष्टकुंडलाः ॥ विरेजुर्मोचिताःक्लेशात्प्रावृडंतेयथाग्रहाः ॥ २७ ॥

षन्राघवेणहतः नरकोदैत्येश्वरोदितिकुंडलाद्याहरणान्मयैवहतः अपरेऽपिश्रीमदात्स्थानाद्भ्रंशिताः ॥ २० ॥ यदुत्पाद्यंदेहादितदंतवत्
एवंविज्ञाययुक्ताअप्रमत्तारक्षथरक्षतेत्यर्थः ॥ २१ ॥ प्रजातंतून्पुत्रादिसंततीः प्राप्तंप्राप्तंसमत्वेनसेवमानाः ॥ २२ ॥ मांब्रह्मयास्यथ ॥
॥ २३ ॥ स्त्रियश्चतेषांमज्जनकर्मणिअभ्यंगस्नानादौन्ययुंक्त ॥ २४ ॥ २५ ॥ सुस्नातान्सम्यगलंकृतान्भोगैश्चयुक्तान्वरेणान्नेनभोजयित्वापु
नस्तेषांसपर्यांसहदेवेनकारयामास ॥ २६ ॥ ग्रहाश्चंद्रादयोयथा ॥ २७ ॥ ॥ ॥

प्रीणय्यनंदयित्वा ॥ २८ ॥ २९ ॥ जगदुःऊचुः ॥ ३० ॥ ३१ ॥ खांडवप्रस्थमिंद्रप्रस्थं दुर्हृदांदुर्योधनादीनां ॥ ३२ ॥ ज्ञांतंमृतं आप्तमनोरथोबभूव ॥ ३३ ॥ ३४ ॥ ३५ ॥ इतिदशमे उ० टीकायांत्रिसप्ततितमोध्यायः ॥ ७३ ॥ ॥ चतुर्युक्सप्ततितमेराजसूयक्रियाद्विजैः ॥ अग्रपूजाप्रसंगेनचैद्यघातादिवर्ण्यते ॥ १ ॥ राजसूयमुखेहत्वाजरासंधंतदंतरे ॥ चैद्यंतदंतेकुर्वंतंबीजंकलिमिवावपत् ॥ २॥



रथान्सदश्वानारोप्यमणिकांचनभूषितान् ॥ प्रीणय्यसूनृतैर्वाक्यैःस्वदेशान्प्रत्ययापयत् ॥ २८ ॥ तएवंमोचिताःकृच्छ्रात्कृष्णेनसुमहात्मना ॥ ययुस्तमेवध्यायंतःकृतानिचजगत्पतेः ॥ २९ ॥ जगदुःप्रकृतिभ्यस्तेमहापुरुषचेष्टितं ॥ यथाऽन्वशासद्भगवांस्तथाचक्रुरतंद्रिताः ॥ ३० ॥ जरासंधंघातयित्वाभीमसेनेनकेशवः ॥ पार्थाभ्यांसंयुतःप्रायात्सहदेवेनपूजितः ॥ ३१ ॥ गत्वातेखांडवप्रस्थंशंखान्दध्मुर्जितारयः ॥ हर्षयंतःस्वसुहृदोदुर्हृदांचासुखावहाः ॥ ३२ ॥ तच्छ्रुत्वाप्रीतमनसइंद्रप्रस्थनिवासिनः ॥ मेनिरेमागधंशांतंराजाचाप्तमनोरथः ॥ ३३ ॥ अभिवंद्याथराजानंभीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयांचक्रुरात्मनायदनुष्ठितं ॥ ३४ ॥ निशम्यधर्मराजस्तत्केशवेनानुकंपितं ॥ आनंदाश्रुकलांमुंचन्प्रेम्णानोवाचकिंचन ॥ ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधे उ० कृष्णाद्यागमनेत्रिसप्ततितमोध्यायः ॥ ७३ ॥ श्रीशुकउवाच एवंयुधिष्ठिरोराजाजरासंधवधंविभोः ॥ कृष्णस्यचानुभावंतंश्रुत्वाप्रीतस्तमब्रवीत् ॥ १ ॥ युधिष्ठिरउवाच येस्युस्त्रैलोक्यगुरवःसर्वेलोकमहेश्वराः ॥ वहंतिदुर्लभंलब्ध्वाशिरसैवानुशासनं ॥ २ ॥ सभवानरविंदाक्षोदीनानामीशमानिनां ॥ धत्तेऽनुशासनंभूमंस्तदत्यंतविडंबनं ॥ ३ ॥ ॥

कृष्णस्यचानुभावमितिचकारात्तस्यस्वाज्ञाऽनुविधायित्वंचालक्ष्येत्यर्थः ॥ १ ॥ तदाह येस्युरिति येत्रैलोक्यस्यापिगुरवःस्युःसनकादयःसर्वेचलोकालोकपालाश्चतेशिरसैवतवानुशासनंवहंति दुर्लभंलब्ध्वेति भाग्येनैतल्लब्धमितिबहुमानेनेत्यर्थः ॥ २ ॥ सभवान्परमेश्वरोऽस्माकमनुशासनंधत्तेतदत्यंतविडंबनंअननुरूपमनुकरणं स्वतेजोहानिप्रसंगादित्यर्थः ॥ ३॥ ॥

अथवातत्रपरिपूर्णस्याज्ञापनाज्ञाधारणाभ्यांनतेजसोहानिवृद्धीअतःकृपयासर्वसंगच्छतइत्याह नह्येकस्याद्वितीयस्येति समानासमानरहि
तस्यब्रह्मणस्तवोभयंमाया परमात्मनइतिसर्वजीवनियंतुस्तवनियम्यत्वंसुतरांनवास्तवं अतःपरानुग्रहार्थैरेतैःकर्मभिस्तवतेजोनवर्द्धतेनच
न्हसति रवेरिवोदयास्तमयादिकर्मभिरित्यर्थः तथाचश्रुतिः नकर्मणावर्धतेनोकनीयानिति ॥ ४ ॥ नन्वेवमप्यहंपरमेश्वरोममेदंनोचेंक
र्मायोग्यमितिमनसिकथंनभवेदतआह नवैतइति हेअजिततवभक्तानामेतावदियंनानाधीर्भेदमतिर्नास्ति यथापशूनामज्ञानांवैकृताशरीर

नह्येकस्याद्वितीयस्यब्रह्मणःपरमात्मनः ॥ कर्मभिर्वर्धतेतेजोन्हसतेचयथारवेः ॥ ४ ॥ नवैतेऽजितभक्तानां
ममाहमितिमाधव ॥ त्वंतवेतिचनानाधीःपशूनामिववैकृता ॥ ५ ॥ श्रीशुकउवाच इत्युक्त्वायाज्ञियेका
लेवव्रेयुक्तान्सऋत्विजः ॥ कृष्णानुमोदितःपार्थोब्राह्मणान्ब्रह्मवादिनः॥६॥ द्वैपायनोभरद्वाजःसुमंतुर्गौतमो
सितः ॥ वसिष्ठश्च्यवनःकण्वोमैत्रेयःकवषस्त्रितः ॥ ७ ॥ विश्वामित्रोवामदेवःसुमतिर्जैमिनिःक्रतुः ॥ पैलःप
राशरोगर्गोवैशंपायनएवच ॥ ८ ॥ अथर्वाकश्यपोधौम्योरामोभार्गवआसुरिः ॥ वीतिहोत्रोमधुछंदावीरसे
नोऽकृतव्रणः ॥ ९ ॥ उपहूतास्तथाचान्येद्रोणभीष्मकृपादयः ॥ धृतराष्ट्रःसहसुतोविदुरश्चमहामतिः ॥
॥ १० ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्रायज्ञदिदृक्षवः ॥ तत्रेयुःसर्वराजानोराज्ञांप्रकृतयोनृप ॥ ११ ॥ त
तस्तेदेवयजनंब्राह्मणाःस्वर्णलांगलैः ॥ कृष्ट्वातत्रयथाम्नायंदीक्षयांचक्रिरेनृपं ॥ १२ ॥ हैमाःकिलोपकर
णावरुणस्ययथापुरा ॥ इंद्रादयोलोकपालाविरिंचभवसंयुताः ॥ १३ ॥ ॥ ॥

विषया तवतुनास्तीतिकिंपुनर्वक्तव्यमित्यर्थः ॥ ५ ॥ याज्ञियेयज्ञोचितेवसंतादिकाले युक्तान्अभियुक्तान्सयुधिष्ठिरःऋत्विजोहोतृप्रमुखा
न्ववेवृतवान् ॥ ६ ॥ तानाह द्वैपायनइतित्रिभिः ॥ ७ ॥ ८ ॥ अकृतव्रणंतानेतानृत्विगुपद्रष्ट्रादिभेदेनवव्रे ॥ ९ ॥ अन्येचोपहूताय
ज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः ॥ १० ॥ ११ ॥ देवयजनंयज्ञभूमिं कृष्ट्वाकर्षणादिभिःसंशोध्य दीक्षयांचक्रिरेदीक्षासंस्कारयुक्तमकुर्वन् ॥
॥ १२ ॥ उपकरणाउपस्कराः वरुणस्यराजसूयेयथाआसन्नितिशेषः किंचइंद्रादयोदेवगणाः ॥ १३ ॥ ॥ ॥

॥ १४ ॥ येचराजादयःसमाहूतास्तत्रसमीयुःस्म ॥ १५ ॥ तेसर्वेकृष्णभक्तस्यपांडुसुतस्यराज्ञोयुधिष्ठिरस्यराजसूयमविस्मिताःसंतःसूपपन्नंसुसंपन्नंमेनिरेइत्यन्वयः याजकाऋत्विजः ॥ १६ ॥ सौत्येहानिसोमाभिषवदिने ॥ १७ ॥ अग्र्यार्हणमग्रपूजातस्यार्हेयोग्यं अनैकांत्यात्योग्यानांबहुत्वेनैकस्यानिश्चयात् ॥ १८ ॥ १९ ॥ सांख्यंज्ञानं योगउपासना ॥ २० ॥ ननुसांख्यंकेवलपरंयोगःसविशेषणपरःकथमुभयोरेकपरत्वंतत्राह एकएवाद्वितीयोऽसौअतःसांख्यस्यैतत्परत्वंयुक्तं विशेषणभूतस्यसर्वप्रपंचस्यतन्मयत्वात्सविशेषणविषयस्ययोगस्या



सगणाःसिद्धगंधर्वाविद्याधरमहोरगाः ॥ मनुयोयक्षरक्षांसिखगकिन्नरचारणाः ॥ १४ ॥ राजानश्चसमाहूताराजपत्न्यश्चसर्वशः ॥ राजसूयंसमीयुःस्मराज्ञःपांडुसुतस्यवै ॥ १५ ॥ मेनिरेकृष्णभक्तस्यसूपपन्नमविस्मिताः ॥ अयाजयन्महाराजंयाजकादेववर्चसः ॥ राजसूयेनविधिवत्प्राचेतसमिवामराः ॥१६ ॥ सौत्येहन्यवनीपालोयाजकान्सदसस्पतीन् ॥ अपूजयन्महाभागान्यथावत्सुसमाहितः ॥१७॥ सदस्याग्र्यार्हणार्हंवैविमृशंतःसभासदः ॥ नाध्यगच्छन्ननैकांत्यात्सहदेवस्तदाब्रवीत् ॥ १८ ॥ अर्हतिह्यच्युतःश्रैष्ठ्यंभगवान्सात्वतांपतिः॥ एषवैदेवताःसर्वादेशकालधनादयः॥१९॥यदात्मकमिदंविश्वंक्रतवश्चयदात्मकाः॥ अग्निराहुतयोमंत्राःसांख्यंयोगश्चयत्परः ॥२०॥ एकएवाद्वितीयोऽसावैतदात्म्यमिदंजगत् ॥ आत्मनात्माश्रयःसभ्याःसृजत्यवतिहंत्यजः ॥२१॥ विविधानीहकर्माणिजनयन्यदवेक्षया॥ईहतेयदयंसर्वःश्रेयोधर्मादिलक्षणं ॥२२॥ तस्मात्कृष्णायमहतेदीयतांपरमार्हणं ॥ एवंचेत्सर्वभूतानामात्मनश्चार्हणंभवेत् ॥ २३ ॥

पियुक्तमद्वितीयपरत्वमित्याह ऐतदात्म्यमिति एषःश्रीकृष्णःआत्मायस्यतत्एतदात्मतस्यभावऐतदात्म्यं भवितव्येचभावानिर्देशः ऐतदात्म्यमिदंसर्वमितिश्रुतेः अत्रहेतुः आत्मनेति हेसभ्याःआत्माश्रयःअन्यनिरपेक्षःस्वयमजइदंजगत्सृजतिअवतिहंतिचेति ॥ २१ ॥ किंच विविधानीति यस्यावेक्षयाअनुग्रहेणविविधानिनानाप्रकाराणिकर्माणिततोयोगादीनिजनयन्कुर्वन् यत्यस्मादयंसर्वोऽपिजनोधर्मादिलक्षणंश्रेयईहतेसाधयति कर्माणितत्फलानिचयदधीनानीत्यर्थः ॥ २२ ॥ २३ ॥ ॥ ॥ ॥

नन्त्रात्मनाक्रियमाणमर्हणमात्मनः कथंस्यात्तत्राह सर्वभूतानामात्मभूताय अनन्यदर्शिनेनिरस्तभेदमतये ॥ २४ ॥ श्रीकृष्णानुभाववित् सहदेवइत्युक्त्वातूष्णीमभूत् ॥ २५ ॥ द्विजेरितंसाधुसाध्वितिघोषंश्रुत्वा हार्दमभिप्रायं ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ हेसदसस्पतयःसर्वेबालस्यभाषितंमामन्यध्वंमाजानीतमागृण्हीत किंतत् यत् यतःकृष्णोऽर्हणेअग्रपूजायांसंमतस्तत् ॥ ३२ ॥ ३३ ॥ अ

सर्वभूतात्मभूतायकृष्णायानन्यदर्शिने ॥ देयंशांतायपूर्णायदत्तस्यानंत्यमिच्छता ॥ २४॥ इत्युक्त्वासहदेवोऽभूत्तूष्णींकृष्णानुभाववित् ॥ तच्छ्रुत्वातुष्टुवुःसर्वेसाधुसाध्वितिसत्तमाः ॥ २५ ॥ श्रुत्वाद्विजेरितंराजाज्ञात्वा हार्दंसभासदां ॥ समर्हयद्धृषीकेशंप्रीतःप्रणयविह्वलः ॥ २६ ॥ तत्पादाववनिज्यापःशिरसालोकपावनीः॥ सभार्यःसानुजामात्यःसकुटुंबोवहन्मुदा ॥२७॥ वासोभिःपीतकौशेयैर्भूषणैश्चमहाधनैः ॥ अर्हयित्वाऽश्रुपूर्णाक्षोनाशकत्समवेक्षितुं ॥२८॥ इत्थंसभाजितंवीक्ष्यसर्वेप्रांजलयोजनाः ॥ नमोजयेतिनेमुस्तंनिपेतुःपुष्पवृष्टयः ॥२९॥ इत्थंनिशम्यदमघोषसुतःस्वपीठादुत्थायकृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्यबाहुमिदमाहसदस्यमर्षीसंश्रावयन्भगवतेपरुषाण्यभीतः ॥३०॥ ईशोदुरत्ययःकालइतिसत्यवतीश्रुतिः ॥ वृद्धानामपियद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥३१॥ यूयंपात्रविदांश्रेष्ठामामन्यध्वंबालभाषितं ॥ सदसस्पतयःसर्वेकृष्णोयत्संमतोऽर्हणे॥३२॥ तपोविद्याव्रतधरान्ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन्ब्रह्मनिष्ठान्लोकपालैश्चपूजितान् ॥ ३३ ॥ सदस्पतीनतिक्रम्यगोपालःकुलपांसनः ॥ यथाकाकःपुरोडाशंसपर्यांकथमर्हति ॥ ३४ ॥

स्यैत्रवास्तवोऽर्थःपूर्ववदुन्नेयः गोपालइति वेदपृथिव्यादिपालकइत्यर्थः कुत्सितंवेदविपरीतंलपंतीतिकुलपाःपाखंडास्तान्अंसतेसमाघातयतीतितथासः अकाकःकंचअकंचकाकेसुखदुःखेतेनविद्येतेयस्यसःअकाकः आप्तकामइत्यर्थः सयथाआप्तकामोदेवयोग्यंकेवलंपुरोडाशमात्रंनार्हतिआपितुसर्वस्वमापितथाऽयंश्रीकृष्णोऽपिब्रह्मर्षियोग्यंसपर्यामात्रंकथमर्हतिकिंत्वात्मसमर्पणमप्यर्हतीत्यर्थः ॥ ३४ ॥

वर्णाश्रमकुलेभ्योऽपेतोब्रह्मत्वात् अनामगोत्रमितिश्रुतेः अतएवानधिकारित्वात्सर्वैर्धर्मैःबहिष्कृतः स्वैरवर्तीपरमेश्वरत्वात् अतएवनिर्गुणस्तमआदिरहितः एवंभूतोजीवानांयोग्यंतुच्छंसपर्यामात्रंकथमर्हतीत्यर्थः ॥ ३५ ॥ अपिचकथंवर्णनीयोमाहृशैरेषांयदूनांमहिमायस्मादेषांकुलंययातिनाशप्तमपिकिंसद्भिर्बहिष्कृतमपितुशिरसाधृतं किंचअस्मदादिकुलवत्किंवृथापानरतमपित्वतिनियताचारमित्यर्थः अहोयदूनामेवतावदीदृशंमाहात्म्यं यदुकुलवृद्धस्ययययातेःशापोनप्राभूदित्यादि अयंतुसाक्षादीश्वरःअतःसपर्यामात्रंकथमर्हतीत्यर्थः ॥ ३६ ॥ किंच येराजानोदुष्टानुच्चाटयंतितदर्थंकीकटादिदेशानप्याश्रयंति एतेतुब्रह्मर्षिसेवितानेवदेशानाश्रित्याब्रह्मवर्चसंसमुद्रंदुर्गमपिहित्वा हा

वर्णाश्रमकुलापेतःसर्वधर्मबहिष्कृतः ॥ स्वैरवर्तीगुणैर्हीनःसपर्यांकथमर्हति ॥ ३५ ॥ ययातिनैषांहिकुलंशप्तंसद्भिर्बहिष्कृतं ॥ वृथापानरतंशश्वत्सपर्यांकथमर्हति ॥३६॥ ब्रह्मर्षिसेवितान्देशान्हित्वैतेब्रह्मवर्चसं ॥ समुद्रंदुर्गमाश्रित्यबाधंतेदस्यवःप्रजाः ॥ ३७ ॥ एवमादीन्यभद्राणिबभाषेनष्टमंगलः ॥ नोवाचकिंचिद्भगवान्यथासिंहःशिवारुतं ॥ ३८ ॥ भगवन्निंदनंश्रुत्वादुःसहंतत्सभासदः ॥ कर्णौपिधायनिर्जग्मुःशपंतश्चेदिपंरुषा ॥ ३९ ॥ निंदांभगवतःशृण्वंस्तत्परस्यजनस्यवा॥ ततोनापैतियःसोऽपियात्यधःसुकृताच्च्युतः॥४०॥ ततःपांडुसुताःक्रुद्धामत्स्यकैकयसृंजयाः ॥ उदायुधाःसमुत्तस्थुःशिशुपालजिघांसवः ॥ ४१ ॥ ततश्चैद्यस्त्वसंभ्रांतोजगृहेखड्गचर्मणी ॥ भर्त्सयन्कृष्णपक्षीयान्राज्ञःसदसिभारत ॥ ४२ ॥ तावदुत्थायभगवान्स्वान्निवार्यस्वयंरुषा ॥ शिरःक्षुरांतचक्रेणजहारापततोरिपोः ॥ ४३ ॥

पयित्वेत्यर्थःबाधंतेतथायाःदस्यवःप्रजास्ताश्च अयमर्थः वेदतदर्थाभियोगोब्रह्मवर्चसंतद्विरुद्धमब्रह्मवर्चसंसमुद्रंमुद्रात्रलिंगंतत्साहितंसमुद्रंवेदविरुद्धलिंगधारिणंपाखंडमित्यर्थः तल्लिंगंत्याजयित्वाबाधंतेदंडयंति कथंभूतंदुर्गं धर्मवत्प्रतीतेरधर्मतयादुर्ज्ञेयमित्यर्थः तथादस्यवःदस्यूनपिप्रजावेषेणवर्तमानान्दंडयंति अतोयदुभ्योऽन्यःकोनामधार्मिकोऽस्तीति पारुष्यंतुउक्तार्थमेव ॥ ३७ ॥ शिवाफेरुस्तस्यारुतंश्रुत्वायथासिंहोनकिंचिद्ब्रूतेतद्वत् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥४२॥ तावदुत्थायेत्यस्यायमभिप्रायः एषमत्पार्षदोमत्तुल्यबलःसर्वानेतान्हन्यादतोमयैवशीघ्रंहंतव्यइतितत्क्षणमेवोत्थायशिरोजहारेति ॥ ४३ ॥ ॥ ॥ ॥

॥ ४४ ॥ ४५ ॥ नन्वेवंनिंदकस्यकथंवासुदेवेप्रवेशस्तत्राह जन्मत्रयेति जन्मत्रयेअनुगुणितमनुवर्णितंयद्वैरंतेनसंरब्धयाआविष्टया तन्मयतांतत्स्वरूपतांयातःपुनःपार्षदोबभूवेत्यर्थः अत्रहेतुः भावोहीति भावोभावनाअनुध्यानंभवस्यध्येयाकारजन्मनःकारणं पेशस्कारिध्यानेनकीटादौतथादृष्टत्वादित्यर्थः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सुरामानवाःखेचराःप्रमथाश्च ॥ ५२ ॥ पापंधर्मंद्विषं

शब्दःकोलाहलोऽप्यासीच्छिशुपालेहतेमहान् ॥ तस्यानुयायिनोभूपादुद्रुवुर्जीवितैषिणः ॥ ४४ ॥ चैद्यदेहोत्थितंज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतांसर्वभूतानामुल्केवभुविखाच्च्युता ॥ ४५ ॥ जन्मत्रयानुगुणितवैरसंरब्धयाधिया ॥ ध्यायंस्तन्मयतांयातोभावोहिभवकारणं ॥ ४६ ॥ ऋत्विग्भ्यःससदस्येभ्योदक्षिणांविपुलामदात् ॥ सर्वान्संपूज्यविधिवच्चक्रेऽवभृथमेकराट् ॥ ४७ ॥ साधयित्वाक्रतुंराज्ञःकृष्णोयोगेश्वरेश्वरः ॥ उवासकतिचिन्मासान्सुहृद्भिरभियाचितः ॥ ४८ ॥ ततोऽनुज्ञाप्यराजानमनिच्छंतमपीश्वरः ॥ ययौसभार्यःसामात्यःस्वपुरंदेवकीसुतः ॥ ४९ ॥ वर्णितंतदुपाख्यानंमयातेबहुविस्तरं ॥ वैकुंठवासिनोर्जन्मविप्रशापात्पुनःपुनः ॥ ५० ॥ राजसूयावभृथ्येनस्नातोराजायुधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्येशुशुभेसुरराडिव ॥ ५१ ॥ राज्ञासभाजिताःसर्वेसुरमानवखेचराः ॥ कृष्णंक्रतुंचशंसंतःस्वधामानिययुर्मुदा ॥ ५२ ॥ दुर्योधनमृतेपापंकलिंकुरुकुलामयं ॥ योनसेहेश्रियंस्फीतांदृष्ट्वापांडुसुतस्यतां ॥ ५३ ॥ यइदंकीर्तयेद्विष्णोःकर्मचैद्यवधादिकं ॥ राजमोक्षंवितानंचसर्वपापैःप्रमुच्यते ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेशिशुपालवधोनामचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ राजोवाच अजातशत्रोस्तंदृष्ट्वाराजसूयमहोदयं ॥ सर्वेमुमुदिरेब्रह्मन्नृदेवायेसमागताः ॥ १ ॥ ॥ ॥

अत्रहेतुःकलिंकलेरंशं अतएवकुलस्यामयंव्याधिवन्नाशकं ॥ ५३ ॥ वितानंयज्ञंच ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेचतुःसप्ततितमोध्यायः ॥ ७४ ॥ पंचयुक्सप्ततितमेयज्ञावभृथसंभ्रमः ॥ सुयोधनस्यचाक्षांत्यामानभंगोद्वाशिभ्रमात् ॥ १ ॥ दुर्योधनस्यैकस्यैवदुःखेकारणंप्रष्टुमुक्तमनुवदति अजातशत्रोरिति ॥ १ ॥ ॥ ॥ ॥ ॥

इतिश्रुतं त्वन्मुखादेवेत्यर्थः ॥ २ ॥ दुर्योधनस्यासहनकारणत्वेनयागमहोत्सवमेवपुनःसिंहावलोकनेननिरूपयति पितामहस्येत्यादिना एकदांऽतःपुरेतस्येत्यतःप्राक्तनेनग्रंथेन प्रेमबंधनाःप्रेमयंत्रिताः ॥ ३ ॥ पूजायांसंमानने द्रव्यसाधनेनानावस्तुसंपादने ॥ ४ ॥ गुरुशुश्रूषणे चंदनालेपनादौ ॥ ५ ॥ ६ ॥ निरूपितानियुक्ताःसंतोनानाकर्मसुप्रवर्तंतेस्म ॥ ७ ॥ ऋत्विजश्चसदस्याश्चसभासदःबहुविदश्चतेषुस्विष्टेषु



दुर्योधनंवर्जयित्वाराजानःसर्षयःसुराः ॥ इतिश्रुतंनोभगवंस्तत्रकारणमुच्यतां ॥२॥ ऋषिरुवाच पितामहस्यतेयज्ञेराजसूयेमहात्मनः ॥ बांधवाःपरिचर्यायांतस्यासन्प्रेमबंधनाः ॥ ३ ॥ भीमोमहानसाध्यक्षोधनाध्यक्षःसुयोधनः ॥ सहदेवस्तुपूजायांनकुलोद्रव्यसाधने ॥ ४ ॥ गुरुशुश्रूषणेजिष्णुःकृष्णःपादावनेजने ॥ परिवेषणेद्रुपदजाकर्णोदानेमहामनाः ॥ ५ ॥ युयुधानोविकर्णश्चहार्दिक्योविदुरादयः ॥ बाल्हीकपुत्राभूर्याद्यायेचसंतर्दनादयः ॥६॥ निरूपितामहायज्ञेनानाकर्मसुतेतदा ॥ प्रवर्तंतेस्मराजेंद्रराज्ञःप्रियचिकीर्षवः ॥ ७ ॥ ऋत्विक्सदस्यबहुवित्सुसुहृत्तमेषुस्विष्टेषुसूनृतसमर्हणदक्षिणाभिः ॥ चैद्येचसात्वतपतेश्चरणंप्रविष्टेचक्रुस्ततस्त्ववभृथस्नपनंद्युनद्यां ॥८॥मृदंगशंखपणवधुंधुर्यानकगोमुखाः ॥ वादित्राणिविचित्राणिनेदुरावभृथोत्सवे ॥९॥ नर्तक्योननृतुर्हृष्टागायकायूथशोजगुः ॥वीणावेणुतलोन्नादस्तेषांसदिवमस्पृशत् ॥ १० ॥ चित्रध्वजपताकाग्रैरिभेंद्रस्यंदनार्वभिः ॥ स्वलंकृतैर्भटैर्भूपानिर्ययूरुक्ममालिनः ॥११॥ यदुसृंजयकांबोजकुरुकैकयकोसलाः ॥ कंपयंतोभुवंसैन्यैर्यजमानपुरःसराः ॥ १२ ॥ सदस्यर्त्विक्द्विजश्रेष्ठाब्रह्मघोषेणभूयसा ॥ वेवर्षिपितृगंधर्वास्तुष्टुवुःपुष्पवर्षिणः ॥ १३ ॥ स्वलंकृतानरानार्योगंधस्त्रग्भूषणांबरैः॥विलिंपंत्योऽभिषिंचंत्योविजन्हुर्विविधैरसैः ॥ १४ ॥ ॥ ॥ ॥ ॥



सम्यक्पूजितेषु सूनृतंप्रियवाक्समर्हणमलंकारादिदक्षिणाश्चप्रसिद्धास्ताभिः द्युनद्यांगंगायां ॥ ८ ॥ ९ ॥ १० ॥ चित्राणिध्वजपताकाग्राणि येषुतैरिभेंद्रैःस्यंदनैःअर्वभिरश्वैर्भटैश्च एवंचतुरंगैःसैन्यैर्निर्ययुः ॥ ११ ॥ यजमानोयुधिष्ठिरःपुरःसरोयेषांते ॥ १२ ॥ सदस्याऋत्विजोन्येचद्विजश्रेष्ठानिर्ययुः ॥ १३ ॥ किंचगंधादिभिःस्वलंकृताःनरानार्यश्चमिथोविजन्हुः॥ १४ ॥ ॥ ॥

रसानेवाह तैलेति किंचसांद्रकुंकुमादिभिः पुंभिर्लिप्तास्तान्प्रलिंपंत्योवारयोषितश्चविजन्हुः ॥ १५ ॥ नृभिर्गुप्तारथादियानैर्नृदेव्योराजपत्न्यो निरगमन्निरगुः एतदुपलब्धुंविमानवरैर्देव्योयथातद्वत् मातुलेयैःसखिभिश्चपरितःसिच्यमानाः सव्रीडेनहासेनविकसंतिवदनानियासांताः ॥ ॥ १६ ॥ देवरान्पतिभ्रातॄनुउतसखीन्सर्वानपिदृतीभिरुदकनोदनचर्मयंत्रैःसेचनपात्रैश्च मलधियांकामिनां ॥ १७ ॥ क्रियाभिरंगक्रि

तैलगोरसगंधोदहरिद्रासांद्रकुंकुमैः ॥ पुंभिर्लिप्ताःप्रलिंपंत्योविजन्हुर्वारयोषितः ॥ १५ ॥ गुप्तान्नृभिर्निरगमन्नुपलब्धुमेतद्देव्योयथादिविविमानवरैर्नृदेव्यः ॥ तामातुलेयसखिभिःपरिषिच्यमानाःसव्रीडहासविकसद्वदनाविरेजुः ॥ १६ ॥ तादेवरानुतसखीन्सिषिचुर्दृतीभिःक्लिन्नांबराविवृतगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकबराच्च्यवमानमाल्याःक्षोभंदधुर्मलधियांरुचिरैर्विहारैः ॥ १७ ॥ ससम्राड्रथमारूढःसदश्वंरुक्ममालिनं ॥ व्यरोचतस्वपत्नीभिःक्रियाभिःक्रतुराडिव ॥ १८ ॥ पत्नीसंयाजावभृथ्यैश्चरित्वातेतमृत्विजः ॥ आचांतंस्नापयांचक्रुर्गंगायांसहकृष्णया ॥ १९ ॥ देवदुंदुभयोनेदुर्नरदुंदुभिभिःसमं ॥ मुमुचुःपुष्पवर्षाणिदेवर्षिपितृमानवाः ॥ २० ॥ सस्नुस्तत्रततःसर्वेवर्णाश्रमयुतानराः ॥ महापातक्यपियतःसद्योमुच्येतकिल्बिषात् ॥ २१ ॥ अथराजाऽहतेक्षौमेपरिधायस्वलंकृतः ॥ ऋत्विक्सदस्यविप्रादीनानर्चाभरणांबरैः ॥ २२ ॥ बंधुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्चसर्वशः ॥ अभीक्ष्णंपूजयामासनारायणपरोनृपः ॥ २३ ॥ सर्वेजनाःसुररुचोमणिकुंडलस्त्रगुष्णीषकंचुकदुकूलमहार्घ्यहाराः ॥ नार्यश्चकुंडलयुगालकवृंदजुष्टवक्त्रश्रियःकनकमेखलयाविरेजुः ॥ २४ ॥ अथर्त्विजोमहाशीलाःसदस्याब्रह्मवादिनः ॥ ब्रह्मक्षत्रियविट्शूद्राराजानोयेसमागताः ॥ २५ ॥ देवर्षिपितृभूतानिलोकपालाःसहानुगाः ॥ पूजितास्तमनुज्ञाप्यस्वधामानिययुर्नृप ॥ २६ ॥ हरिदासस्यराजर्षेराजसूयमहोदयं ॥ नैवातृप्यन्प्रशंसंतःपिबन्मर्त्योऽमृतंयथा ॥ २७ ॥ याभिःक्रतुराट्सशरीरोराजसूयइव ॥ १८ ॥ पत्नीसंयाजोयागविशेषः अवभृथसंबंधिआवभृथ्यंच तैश्चरित्वातानुनुष्ठायेत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ अहतेनूतने आनर्चअर्चितवान् ॥ २२ ॥ २३ ॥ सुराणामिवरुक्कांतिर्येषांमणिकुंडलैःसहिताःस्रगुष्णीषादयोयेषांते कुंडलयुगेनालकवृंदेनचजुष्टावक्त्रश्रीर्यासांताः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

॥ २८ ॥ २९ ॥ गतज्वरोनिश्चितआसीत् ॥ ३० ॥ अच्युतेआत्मायस्यतस्य ॥ ३१ ॥ नरेंद्रादीनांलक्ष्मीर्लक्ष्म्यः विभूतयोविश्वसृजामयेनउपक्लृप्ताविरचिताः ताभिःसह कुरुराट्दुर्योधनोतप्यत् ॥ ३२ ॥ महिषीसहस्रमितिबहुत्वोपलक्षणं क्वणद्भिरंघ्रिभिःशोभायस्य मध्येसुचारुसुचारुमध्यमित्यर्थः कुचकुंकुमैःशोणाहारायस्यतत् श्रीमंतिमुखानियस्यतत् चलैःकुंडलैःकुंतलैश्चआढ्यंसंपन्नमशोभतेतिशेषः॥३३॥

ततोयुधिष्ठिरोराजासुहृत्संबंधिबांधवान् ॥ प्रेम्णानिवासयामासकृष्णंचत्यागकातरः ॥ २८ ॥ भगवानपितत्रांगन्यवात्सीत्तत्प्रियंकरः ॥ प्रस्थाप्ययदुवीरांश्चसांबादींश्चकुशस्थलीं ॥ २९ ॥ इत्थंराजाधर्मसुतोमनोरथमहार्णवं ॥ सुदुस्तरंसमुत्तीर्यकृष्णेनासीद्गतज्वरः ॥ ३० ॥ एकदांऽतःपुरेतस्यवीक्ष्यदुर्योधनःश्रियं ॥ अतप्यद्राजसूयस्यमहित्वंचाच्युतात्मनः ॥ ३१ ॥ यस्मिन्नरेंद्रदितिजेंद्रसुरेंद्रलक्ष्मीर्नानाविभांतिकिलविश्वसृजोपक्लृप्ताः ॥ ताभिःपतीन्द्रुपदराजसुतोपतस्थेयस्यांविषक्तहृदयःकुरुराडतप्यत् ॥ ३२ ॥ यस्मिंस्तदामधुपतेर्महिषीसहस्रंश्रोणीभरेणशनकैःक्वणदंघ्रिशोभं ॥ मध्येसुचारुकुचकुंकुमशोणहारंश्रीमन्मुखंप्रचलकुंडलकुंतलाढ्यं ॥ ३३ ॥ सभायांमयक्लृप्तायांक्वापिधर्मसुतोधिराट् ॥ वृतोऽनुजैर्बंधुभिश्चकृष्णेनापिस्वचक्षुषा ॥ ३४ ॥ आसीनःकांचनेसाक्षादासनेमघवानिव ॥ पारमेष्ठ्यश्रियाजुष्टःस्तूयमानश्चबंदिभिः ॥ ३५ ॥ तत्रदुर्योधनोमानीपरीतोभ्रातृभिर्नृप ॥ किरीटमालीन्यविशदसिहस्तःक्षिपन्रुषा ॥ ३६ ॥ स्थलेऽभ्यगृण्हाद्वस्त्रांतंजलंमत्वास्थलेपतत् ॥ जलेचस्थलवद्भ्रांत्यामयमायाविमोहितः ॥ ३७ ॥ जहासभीमस्तंदृष्ट्वास्त्रियोनृपतयोऽपरे ॥ निवार्यमाणाअप्यंगराज्ञाकृष्णानुमोदिताः ॥ ३८ ॥

क्वापिकदाचित्सविरेजइतिशेषः स्वस्यचक्षुषाहिताहितज्ञापकेन ॥ ३४ ॥ ३५ ॥ मानीसाहंकारः किरीटंचमालाचविद्येतेयस्यसःन्यविशत्विवेश क्षिपन्द्वास्थादीनधिक्षिपन् ॥ ३६ ॥ तत्रस्थलेवस्त्रांतमभ्यगृण्हात्आकुंचितवान् कुतः तस्मिन्स्थलेएवभ्रांत्याजलंमत्वा जलेचअपतत् कुतः स्थलवद्भ्रांत्या ॥ ३७ ॥ ३८ ॥ ॥ ॥ ॥ ॥

भुवोभरंभारंजिहीर्षुरिति अद्यसंपादितेनकलहबीजेनकुरूणांसंहारंकरिष्यामीतिमत्वेति किंच यस्यद्दशाद्दष्टिमात्रेणदुर्योधनोभ्रमतिस्मत्रां
तिंप्राप मयमायातुनिमित्तमात्रं सःभूभारहरणबीजंदुर्योधनस्यभ्रमंभीमादिहास्येनचतस्यपराभवंविधायतूष्णीमासीदित्यर्थः ॥ ३९ ॥४०॥
इतिदश०उ०टी०पंचसप्ततितमोध्यायः॥७५॥ ॥ ततःषट्सप्ततितमेवृष्णिशाल्वमहामृधे ॥ द्युमद्गदाप्रहारेणरणात्प्रद्युम्ननिर्गमः ॥ १ ॥ सं
पाद्यधर्मराजस्यराजसूयमहोदयं ॥ निहत्यसौभराजार्दानथोपारमदच्युतः ॥ २ ॥ १ ॥ २ ॥ ३ ॥ प्रत्यहंसकृत्पांसुमुष्टिमेकांग्रसन्भक्षयन् ॥

सव्रीडितोऽवाग्वदनोरुषाज्वलन्निष्क्रम्यतूष्णींप्रययौगजाह्वयं॥हाहेतिशब्दःसुमहानभूत्सतामजातशत्रु
र्विमनाइवाभवत्॥बभूवतूष्णींभगवान्भुवोभरंसमुज्जिहीर्षुर्भ्रमातिस्मयद्दृशा॥३९॥एतत्तेऽभिहितंराजन्य
त्पृष्टोऽहमिहत्वया॥सुयोधनस्यदौरात्म्यंराजसूयेमहाक्रतौ ॥४०॥ इतिश्रीभा०म०द०उ०दुर्योधनमानभं
गोनामपंचसप्ततितमोध्यायः ॥ ७५॥ श्रीशुकउवाच अथान्यदपिकृष्णस्यशृणुकर्माद्भुतंनृप॥क्रीडानरश
रीरस्ययथासौभपतिर्हतः ॥ १॥ शिशुपालसखःशाल्वोरुक्मिण्युद्वाहआगतः॥यदुभिर्निर्जितःसंख्येजरासं
धादयस्तथा ॥ २ ॥ शाल्वःप्रतिज्ञामकरोच्छृण्वतांसर्वभूभुजां ॥ अयादवींक्ष्मांकरिष्येपौरुषंममपश्यत॥
॥३॥इतिमूढःप्रतिज्ञायदेवंपशुपतिंप्रभुं ॥ आराधयामासनृपपांसुमुष्टिंसकृद्ग्रसन्॥४॥संवत्सरांतेभगवाना
शुतोषउमापतिः॥वरेणच्छंदयामासशाल्वंशरणमागतं॥ ॥५॥ देवासुरमनुष्याणांगंधर्वोरगरक्षसां ॥ अ
भेद्यंकामगंवव्रेसयानंवृष्णिभीषणं ॥ ६ ॥तथेतिगिरिशादिष्टोमयःपरपुरंजयः ॥ पुरंनिर्मायशाल्वायप्रादा
त्सौभमयस्मयं ॥ ७॥ सलब्ध्वाकामगंयानंतमोधामदुरासदं ॥ ययौद्वारवतींशाल्वोवैरंवृष्णिकृतंस्मरन्॥
॥ ८ ॥ निरुध्यसेनयाशाल्वोमहत्याभरतर्षभ ॥ पुरींबभंजोपवनान्युद्यानानिचसर्वशः ॥ ९ ॥ ॥

॥ ४ ॥ संवत्सरांतइति आशुतोषोऽपिभगवानुमापतिःश्रीकृष्णविद्विषिशाल्वेवरस्यवैफल्यंमन्यमानोनशीघ्रंप्रादुरभूत् तस्यातिनिर्बंधमा
लक्ष्यसंवत्सरांतेचवरेणछंदयामासइच्छांकारितवान्वरंवृणीष्वेत्युवाचेत्यर्थः ॥ ५ ॥ ६ ॥ तथेतिप्रतिज्ञायागिरिशेनादिष्टःअयस्मयंलोहमयंपुरं
सौभसंज्ञंनिर्मायरचयित्वाप्रादात् ॥ ७ ॥ तमसांऽधकारस्यधामआश्रयं अल्पैर्दुरासदंदुष्प्रापं ॥ ८ ॥ ९ ॥ ॥ ॥

प्रासादागृहाअट्टालास्तदुपरिगृहास्तोलिकास्तत्पर्यंतकुड्यानिताः विहारान्क्रीडास्थानानिचसंबभंज किंच विमानाग्र्यात्तस्माच्छस्त्रवृष्ट्यादयःपेतुः ॥ १० ॥ आसारशर्कराधारासंपातवज्जलोपलाः ॥ ११ ॥ शंसुखंनाभ्यपद्यत ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तुमुलंव्याकुलंलोमहर्षणंरौद्रं ॥ १६ ॥ नैशंनिशिभवंतमउष्णगुःसूर्यइव ॥ १७ ॥ किंच विव्याधेति स्वर्णमयानिपुंखानिपृष्ठप्रांतायेषांतैः अयो



सगोपुराणिद्वाराणिप्रासादाट्टालतोलिकाः ॥ विहारान्सविमानाग्र्यान्निपेतुःशस्त्रवृष्टयः ॥ १० ॥ शिलाद्रुमाश्चाशनयःसर्पाआसारशर्कराः ॥ प्रचंडश्चक्रवातोभूद्रजसाच्छादितादिशः ॥ ११ ॥ इत्यर्द्यमानासौभेनकृष्णस्यनगरीभृशं ॥ नाभ्यपद्यतशंराजंस्त्रिपुरेणयथामही ॥ १२ ॥ प्रद्युम्नोभगवान्वीक्ष्यबाध्यमानानिजाःप्रजाः ॥ माभैष्टेत्यभ्यधाद्वीरोरथारूढोमहायशाः ॥ १३ ॥ सात्यकिश्चारुदेष्णश्चसांबोऽक्रूरःसहानुजः ॥ हार्दिक्योभानुविंदश्चगदश्चशुकसारणौ ॥ १४ ॥ अपरेचमहेष्वासारथयूथपयूथपाः ॥ निर्ययुर्दंशितागुप्तारथेभाश्वपदातिभिः ॥ १५ ॥ ततःप्रववृतेयुद्धंशाल्वानांयदुभिःसह ॥ यथासुराणांविबुधैस्तुमुलंलोमहर्षणं ॥ १६ ॥ ताश्चसौभपतेर्मायादिव्यास्त्रैरुक्मिणीसुतः ॥ क्षणेननाशयामासनैशंतमइवोष्णगुः ॥ १७ ॥ विव्याधपंचविंशत्यास्वर्णपुंखैरयोमुखैः ॥ शाल्वस्यध्वजिनीपालंशरैःसन्नतपर्वभिः ॥ १८ ॥ शतेनाताडयच्छाल्वमेकैकेनास्यसैनिकान् ॥ दशभिर्दशभिर्नेतॄन्वाहनानित्रिभिस्त्रिभिः ॥ १९ ॥ तदद्भुतंमहत्कर्मप्रद्युम्नस्यमहात्मनः ॥ दृष्ट्वातंपूजयामासुःसर्वेस्वपरसैनिकाः ॥ २० ॥ बहुरूपैकरूपंतदृश्यतेनचदृश्यते ॥ मायामयंमयकृतंदुर्विभाव्यंपरैरभूत् ॥ २१ ॥ क्वचिद्भूमौक्वचिद्व्योम्निगिरिमूर्ध्निजलेक्वचित् ॥ अलातचक्रवद्भ्राम्यत्सौभंतद्दुरवस्थितं ॥ २२ ॥ यत्रयत्रोपलक्ष्येतससौभःसहसैनिकः ॥ शाल्वस्ततस्ततोमुंचन्शरान्सात्वतयूथपाः ॥ २३ ॥

लोहंतन्मयानिमुखान्यग्राणियेषांतैः ध्वजिनीपालंसेनान्यं सन्नतानिनिम्नानिपर्वाणिग्रंथयोयेषांतैः ॥ १८ ॥ सैनिकान्भटान् नेतॄन्सारथीन् ॥ १९ ॥ स्वपरसेनयोर्वर्तमानाःसर्वेपूजयामासुःसंमानितवंतः २० ॥ कदाचिद्बहुरूपंकदाचिदेकरूपंक्वचिद्दृश्यतेक्वचिन्नदृश्यते एवंदुर्विभाव्यंदुर्वितर्क्यमभूत् ॥ २१ ॥ किंच क्वचिदिति एवंतद्दुरवस्थितमनवस्थितंचाभूत् ॥ २२ ॥ २३ ॥ ॥

अग्निवद्दाहकः अर्कवद्युगपत्सर्वतःसंस्पर्शोयेषांतैः आशीविषवदेकदेशस्पर्शमात्रेणमारकत्वात्दुरासदैर्दुःसहैः पीड्यमानंपुरमनीकानिचयस्यसः परैर्यदुभिरीरितैर्मुक्तैः ॥ २४ ॥ भृशार्दिताअपिस्वंस्वंरणंस्वांस्वांयुद्धभूमिं ॥ २५ ॥ मौर्व्याकार्ष्णायसमय्या व्याहत्यप्रहृत्य ॥ २६ ॥ अपोवाहअन्यतोनिनाय ॥ २७ ॥ २८ ॥ मत्मत्तोविना क्लीबंचित्तंयस्यतेन त्वयासूतेन ॥२९॥ पितरौरामकृष्णावभिसंगम्यतत्पार्श्वंगत्वा ताभ्यांपृष्टःस्वयोग्यंकिंनुवक्ष्यामीति ॥ ३० ॥ भ्रातृजामयोभ्रातृभार्याःव्यक्तंनिश्चितंमत्क्लैब्यंकथयिष्यंति तत्कथनमनुकरोति कथंकथमिति

शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ॥ पीड्यमानपुरानीकःशाल्वोमुह्यत्परेरितैः ॥२४॥ शाल्वानीकपशस्त्रौघैर्वृष्णिवीराभृशार्दिताः ॥ नतत्यजूरणंस्वंस्वंलोकद्वयजिगीषवः ॥२५॥ शाल्वामात्योद्युमान्नामप्रद्युम्नंप्राक्प्रपीडितः ॥ आसाद्यगदयामौर्व्याव्याहत्यव्यनदद्बली ॥२६॥ प्रद्युम्नंगदयाशीर्णवक्षस्थलमरिंदमं ॥ अपोवाहरणात्सूतोधर्मविद्दारुकात्मजः ॥२७॥ लब्धसंज्ञोमुहूर्तेनकार्ष्णिःसारथिमब्रवीत् ॥ अहोअसाध्विदंसूतयद्रणान्मेऽपसर्पणं ॥ २८ ॥ नयदूनांकुलेजातःश्रूयतेरणविच्युतः ॥ विनामत्क्लीबचित्तेनसूतेनप्राप्तकिल्बिषात् ॥२९॥ किंनुवक्ष्येऽभिसंगम्यपितरौरामकेशवौ ॥ युद्धात्सम्यगपक्रांतःपृष्टस्तत्रात्मनःक्षमं ॥३०॥ व्यक्तंमेकथयिष्यंतिहसंत्योभ्रातृजामयः ॥ क्लैब्यंकथंकथंवीरतवान्यैःकथ्यतांमृधे ॥ ३१ ॥ सारथिरुवाच धर्मंविजानतायुष्मन्कृतमेतन्मयाविभो ॥ सूतःकृच्छ्रगतंरक्षेद्रथिनंसारथिंरथी ॥३२॥ एतद्विदित्वातुभवान्मयापोवाहितोरणात् ॥ उपसृष्टःपरेणेतिमूर्च्छितोगदयाहतः ॥ ३३ ॥ इ० भा० म० द० उ० षट्सप्ततितमोऽध्यायः ॥७६॥ ॥ ॥ श्रीशुकउवाच सउपस्पृश्यसलिलंदंशितोधृतकार्मुकः ॥ नयमांद्युमतःपार्श्वंवीरस्येत्याहसारथिं ॥१॥ विधमंतंस्वसैन्यानिद्युमंतंरुक्मिणीसुतः ॥ प्रतिहत्यप्रत्यविध्यन्नाराचैरष्टभिःस्वयं ॥ २ ॥

॥ ३१ ॥ विभोहेसमर्थ एतत्अपसर्पणं धर्ममाह सूतइति ॥ ३२ ॥ अपोवाहितःअपनीतः उपसृष्टउपसर्गंपीडांप्राप्तइतिकृत्वा यतः परेणशत्रुणागदयाहतःसन्मूर्छितोनिःसंज्ञतांगतोभवानिति ॥३३॥ इति द० टी० षट्सप्ततितमोऽध्यायः ॥७६॥ ॥ ॥ सप्तयुक्सप्ततितमे नानामायाविचक्षणः ॥ कृष्णेनागत्यशाल्वस्तुहतःसौभंचचूर्णितं ॥१॥ दंशितःसन्नद्धः ॥१॥ विधमंतंक्षपयंतं प्रतिहत्यप्रतिरुध्य ॥ २ ॥

अष्टानांत्रिनियोगमाह चतुर्भिरिति ॥ ३ ॥ सौभेयाःसौभस्थाः ॥ ४ ॥ नवानांरात्रीणांसमाहारोनवरात्रं त्रयाणांनवरात्राणांसमाहारस्त्रि
णवरात्रं सप्तविंशतिमहोरात्रानित्यर्थः तुमुलमाकुलं उल्वणंघोरं ॥ ५ ॥ परमतमुपन्यस्यति इंद्रप्रस्थंगतइत्यादिना ॥ ६ ॥ ७ ॥ आ
हचेतिस्वगतमेत्रपर्थिचिंताविजृंभितभाषणं आर्यमिश्राभिसंगतोबलभद्रसाहितः ॥ ८ ॥ दुर्निमित्तदर्शनाकुलचित्तएवंचिंतयन्द्वारकामा
गत्यस्वानांकदनंवीक्ष्यसौभं चशाल्वराजंचवीक्ष्यरामंपुररक्षणंप्रतिनिरूप्यनियुज्यदारुकंप्राहेत्यन्वयः ॥ ९ ॥ तेत्वया ॥ १० ॥ आस्थाय

चतुर्भिश्चतुरोवाहान्सूतमेकेनचाहनत् ॥ द्वाभ्यांधनुश्चकेतुंचशरेणान्येनवैशिरः ॥३॥ गदसात्यकिसांबाद्या
जघ्नुःसौभपतेर्बलं ॥ पेतुःसमुद्रेसौभेयाःसर्वेसंछिन्नकंधराः ॥ ४ ॥ एवंयदूनांशाल्वानांनिघ्नतामितरेतरं ॥ यु
द्धंत्रिणवरात्रंतदभूत्तुमुलमुल्बणं ॥ ५ ॥ इंद्रप्रस्थंगतःकृष्णआहूतोधर्मसूनुना ॥ राजसूयेथनिर्वृत्तेशिशुपा
लेचसंस्थिते ॥ ६ ॥ कुरुवृद्धाननुज्ञाप्यमुनींश्चससुतांपृथां ॥ निमित्तान्यतिघोराणिपश्यन्द्वारवतींययौ ॥
॥७॥ आहचाहमिहायातआर्यमिश्राभिसंगतः ॥ राजन्याश्चैद्यपक्षीयानूनंहन्युःपुरींमम ॥८॥ वीक्ष्यतत्कद
नंस्वानांनिरूप्यपुररक्षणं ॥ सौभंचशाल्वराजंचदारुकंप्राहकेशवः ॥ ९ ॥ रथंप्रापयमेसूतशाल्वस्यांतिक
माशुवै ॥ संभ्रमस्तेनकर्तव्योमायावीसौभराडयं ॥ १० ॥ इत्युक्तश्चोदयामासरथमास्थायदारुकः ॥ विशं
तंददृशुःसर्वेस्वेपरेचारुणानुजं ॥ ११ ॥ शाल्वश्चकृष्णमालोक्यहतप्रायबलेश्वरः ॥ प्राहरत्कृष्णसूतायश
क्तिंभीमरवांमृधे ॥ १२ ॥ तामापतंतींनभसिमहोल्कामिवरंहसा ॥ भासयंतींदिशःशौरिःसायकैःशतधा
च्छिनत् ॥१३॥ तंचषोडशभिर्विद्ध्वाबाणैःसौभंचखेभ्रमत् ॥ अविद्यच्छरसंदोहैःखंसूर्यइवरश्मिभिः ॥१४॥
शाल्वःशौरेस्तुदोःसव्यंसशार्ङ्गंशार्ङ्गधन्वनः ॥ बिभेदन्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतं ॥१५॥ हाहाकारो
महानासीद्भूतानांतत्रपश्यतां ॥ विनद्यसौभराडुच्चैरिदमाहजनार्दनं ॥ १६ ॥

सम्यगधिष्ठाय अरुणानुजंध्वजेवर्त्तमानंगरुडं ॥ ११ ॥ हतप्रायस्यबलस्यसैन्यस्येश्वरः ॥ १२ ॥ १३ ॥ तंचशाल्वं शरसंदोहैः शरजा
लैः खंसूर्यइवरश्मिभिरितिसुनीलत्वविपुलत्वादिभिराकाशोपमासौभस्य अचिंत्यवेगबाहुल्यादिभिःशराणांरश्मिसादृश्यं अयत्नेनैवरश्मि
वत्शरजालप्रसारणात्सूर्यतुल्यःश्रीकृष्णइति ॥ १४ ॥ दोर्बाहुं ॥ १५ ॥ ॥ १६ ॥ ॥ ॥

सख्युःशिशुपालस्य ईक्षतामस्माकं प्रमत्तःअनवहितः व्यापादितोनिहतः ॥ १७ ॥ अपराजितोऽहमितिपरैरजितइतिमानिनंमानवंतं
अपुनरावृत्तिंमृत्युं तिष्ठेःस्थास्यसि ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ घृणीदयावान् ॥ २३ ॥ २४ ॥ २५ ॥ जनिताजनयिता ई

यत्त्वयामूढनःसख्युर्भ्रातुर्भार्याहृतेक्षतां ॥ प्रमत्तःससभामध्येत्वयाव्यापादितःसखा ॥ १७ ॥ तंत्वाद्यनि
शितैर्बाणैरपराजितमानिनं ॥ नयाम्यपुनरावृत्तिंयदितिष्ठेर्ममाग्रतः ॥ १८ ॥ श्रीभगवानुवाच वृथात्वं
कत्थसेमंदनपश्यस्यंतिकेंऽतकं ॥ पौरुषंदर्शयंतिस्मशूरानबहुभाषिणः ॥ १९ ॥ इत्युक्त्वाभगवान्शाल्वंग
दयाभीमवेगया ॥ तताडजत्रौसंरब्धःसचकंपेवमन्नसृक् ॥ २० ॥ गदायांसन्निवृत्तायांशाल्वस्त्वंतरधीय
त ॥ ततोमुहूर्तमागत्यपुरुषःशिरसाऽच्युतं ॥ देवक्याप्रहितोऽस्मीतिनत्वाप्राहवचोरुदन् ॥ २१ ॥ कृष्ण
कृष्णमहाबाहोपितातेपितृवत्सल ॥ बद्ध्वाऽपनीतःशाल्वेनसौनिकेनयथापशुः ॥ २२ ॥ निशम्यविप्रि
यंकृष्णोमानुषींप्रकृतिंगतः ॥ विमनस्कोघृणीस्नेहाद्बभाषेप्राकृतोयथा ॥ २३ ॥ कथंराममसंभ्रांतंजित्वा
ऽजेयंसुरासुरैः ॥ शाल्वेनाल्पीयसानीतःपितामेबलवान्विधिः ॥ २४ ॥ इतिब्रुवाणेगोविंदेसौभराट्प्र
त्युपस्थितः ॥ वसुदेवमिवानीयकृष्णंचेदमुवाचसः ॥ २५ ॥ एषतेजनितातातोयदर्थमिहजीवसि ॥ व
धिष्येवीक्षतस्तेऽमुमीशश्चेत्पाहिबालिश ॥ २६ ॥ एवंनिर्भर्त्स्यमायावीखड्गेनानकदुंदुभेः ॥ उत्कृत्यशि
रआदायखस्थंसौभंसमाविशत् ॥ २७ ॥ ततोमुहूर्तंप्रकृतावुपप्लुतःस्वबोधआस्तेस्वजनानुसंगतः ॥ महा
नुभावस्तदबुध्यदासुरींमायांसशाल्वप्रसृतांमयोदितां ॥ २८ ॥ नतत्रदूतंनपितुःकलेवरंप्रबुद्धआजौसम
पश्यदच्युतः ॥ स्वाप्नंयथाचांबरचारिणंरिपुंसौभस्थमालोक्यनिहंतुमुद्यतः ॥ २९ ॥

शश्चेत्शक्तश्चेत् ॥ २६ ॥ २७ ॥ स्वबोधःस्वतःसिद्धज्ञानवानपिस्वजनस्नेहतः प्रकृतौमनुष्यस्वभावेउपप्लुतोनिमग्नआस्तेअतिष्ठत् तत
स्तत्सर्वंमासुरींमायामबुध्यत्मायेयमितिज्ञातवान् ॥ २८ ॥ स्वाप्नंस्वप्नप्रपंचंयथा ॥ २९ ॥ ॥ ॥ ॥

एवंपरमतमुपन्यस्तंनिराकरोति एवमिति केचकेचन नान्विताअनान्विताः पूर्वापरानुसंधानरहिताः तदाह यत्स्ववाचइति तन्नानुस्मरंती त्यर्थः अयमभिप्रायः नतावद्राजसूयार्थंरामेणसहगतःश्रीकृष्णः संकर्षणमनुज्ञाप्येतिपूर्वमुक्तत्वात् ॥ ३० ॥ असंभावितंचेत्याह क्वशोक मोहाविति भयंवादुर्निमित्तदर्शनकृतंनूनंहन्युः पुरींममेतियदुक्तंयच्चहस्तात्शार्ङ्गंन्यपतदितिउक्तंतन्नयंवाक्वेति अज्ञेषुसंभवोयेषांतेअखंडिता निविज्ञानज्ञानैश्वर्याणियस्यसः तत्रविज्ञानंस्वरूपविषयं ज्ञानंबाह्यविषयं ॥ ३१ ॥ किंचयस्यपादसेवयाऊर्जितापुष्कलायाआत्मविद्या

एवंवदंतिराजर्षेऋषयःकेचनान्विताः ॥ यत्स्ववाचोविरुध्येतनूनंतन्नस्मरंत्युत ॥ ३० ॥ क्वशोकमोहौस्नेहो वाभयंवायेऽज्ञसंभवाः ॥ क्वचाखंडितविज्ञानज्ञानैश्वर्यस्त्वखंडितः ॥ ३१ ॥ यत्पादसेवोर्जितयात्मविद्यया हिन्वंत्यनाद्यात्मविपर्ययग्रहं ॥ लभंतआत्मानमनंतमैश्वरंकुतोनुमोहःपरमस्यसद्गतेः ॥ ३२ ॥ तंशस्त्रपूगैःप्रह रंतमोजसाशाल्वंशरैःशौरिरमोघविक्रमः ॥ विध्वाऽच्छिनद्वर्मधनुःशिरोमणिंसौभंचशत्रोर्गदयारुरोजह ॥ ॥ ३३ ॥ तत्कृष्णहस्तेरितयाविचूर्णितंपपाततोयेगदयासहस्रधा ॥ विसृज्यतद्भूतलमास्थितोगदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतं ॥ ३४ ॥ आधावतःसगदंतस्यबाहुंभल्लेनछित्वाऽथरथांगमद्भुतं ॥ वधायशाल्वस्य लयार्कसन्निभंबिभ्रद्बभौसार्कइवोदयाचलः ॥ ३५ ॥ जहारतेनैवशिरःसकुंडलंकिरीटयुक्तंपुरुमायिनोहरिः ॥ वज्रेणवृत्रस्ययथापुरंदरोबभूवहाहेतिवचस्तदानृणां ॥ ३६ ॥ तस्मिन्निपतितेपापेसौभेचगदयाहते ॥ नेदु र्दुंदुभयोराजन्दिविदेवगणेरिताः ॥ सखीनामपचितिंकुर्वन्दंतवक्रोरुषाऽभ्ययात् ॥ ३७ ॥ इतिश्रीभा गवतेमहापुराणेदशमस्कंधेउत्तरार्धेसौभवधोनामसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ॥

तयाअनादिश्वासावात्मविपर्ययग्रहश्चअहंकृशः सुखीदुःखीत्यादिलक्षणस्तंहिन्वंतिनाशयंतिसंतः ऐश्वरंपदंच तस्यसतांगतेःकुतोनुमोह इति अतोनैतद्वचनंसत्यमित्यर्थः ॥ ३२ ॥ किंतर्हिसत्यंतदाह तंशस्त्रपूगैरिति वर्मकवचं रुरोजबभंज ॥ ३३ ॥ ३४ ॥ लयार्कसन्निभं प्रलयकालीनसूर्यसदृशं ॥ ३५ ॥ ३६ ॥ देवगणैरीरिताःवादिताः किंचसखीनामिति ॥ ३७ ॥ इ०द०उ०टी० सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

ततोऽष्टसप्ततितमेदंतवक्त्रविदूरथौ ॥ हत्वाहरिःपुरेरेमेरामःसूतंततोवधीत् ॥ १ ॥ सर्वानामपचितिंकुर्वन्नित्युक्तंतदेवाह शिशुपालस्येति
पारोक्ष्यसौहृदंपरोक्षेकरणीयंसुहृत्कृत्यं ॥ १ ॥ २ ॥ प्रत्यधात्प्रतिरुरोध ॥ ३ ॥ मुकुंदंप्राहदुर्मदइत्यादेराधिक्षेपपरतास्फुटैव परमार्थस्तु
दुर्मदःगतमदःप्राहमुकुंदंतृतीयेजन्मनिमुक्तिदानार्थमागतं जन्मत्रयेऽन्विष्यमाणोऽद्यब्रह्मशापावसानेभवान्ममस्वामीदृष्टिपथंगतःप्रातःए
तद्दिष्ट्यादिष्ट्याभद्रंभद्रं अतिहर्षेवीप्सा ॥ ४ ॥ किंचहेकृष्णत्वमस्माकंमातुलेयोबंधुः एवमपिमित्रध्रुक्मित्राणिघातितवान्मांचजिघांस
सि तस्मादस्माकंत्वत्तोमृत्युःसनकाद्यनुग्रहप्राप्तोनूनंदुर्वारःअतस्त्वामेतावन्मात्रमहंयाचे किंतदाह अमंदसर्वसहनसमर्थ क्षात्रधर्मेणसेवि

श्रीशुकउवाच शिशुपालस्यशाल्वस्यपौंड्रकस्यापिदुर्मतिः ॥ परलोकगतानांचकुर्वन्पारोक्ष्यसौहृदं ॥१॥
एकःपदातिःसंक्रुद्धोगदापाणिःप्रकंपयन् ॥ पद्भ्यामिमांमहाराजमहासत्वोव्यदृश्यत ॥ २ ॥ तंतथायांतमा
लोक्यगदामादायसत्वरः ॥ अवप्लुत्यरथात्कृष्णःसिंधुंवेलेवप्रत्यधात् ॥ ३ ॥ गदामुद्यम्यकारूषोमुकुंदंप्रा
हदुर्मदः ॥ दिष्ट्यादिष्ट्याभवानद्यममदृष्टिपथंगतः ॥ ४॥ त्वंमातुलेयोनःकृष्णमित्रध्रुङ्मांजिघांससि ॥ अत
स्त्वांगदयामंदहनिष्येवज्रकल्पया ॥ ५ ॥ तर्ह्यानृण्यमुपैम्यज्ञमित्राणांमित्रवत्सलः ॥ बंधुरूपमरिंहत्वा
व्याधिंदेहचरंयथा ॥ ६ ॥ एवंरूक्षैस्तुदन्वाक्यैःकृष्णंतोत्रैरिवद्विपं ॥ गदयाऽताडयन्मूर्ध्निसिंहवद्व्यनदच्च
सः ॥ ७ ॥ गदयाऽभिहतोऽप्याजौनचचालयदूद्वहः ॥ कृष्णोऽपितमहन्गुर्व्याकौमोदक्यास्तनांतरे ॥८॥

तुंगदयात्वांहनिष्येप्रहरिष्यामितामेकवारंसहस्वेति ननुवज्रतुल्यांत्वद्गदांकोवासहेतनैवमित्याह अवज्रकल्पयाउत्पलमालावदतिकोमल
येत्यर्थः ॥ ५ ॥ नन्वेवंहननेकस्तवपुरुषार्थस्तमाह तर्हीति अज्ञनविद्यतेज्ञोयस्मात् हेसर्वज्ञेत्यर्थः परमार्थतःस्वामिनं एतद्देहसंबंधेनबंधु
रूपमरिंब्रह्मशापेनशत्रुत्वेनप्रतीतंत्वांहत्वामित्राणामानृण्यमुपैमिउपैष्यामि विशेषेणआधीयतेमनसिचिंत्यतइतिव्याधिःदेहेअंतर्यामितया
चरतीतितथातमीश्वरंहत्वाक्षात्रधर्मेणाराध्य हंतेर्गत्यर्थस्यज्ञानार्थत्वात्ज्ञात्वेतिवा तेनयथापित्रादीनामानृण्यमुपयांतितद्वदिति ॥ ६ ॥
रूक्षैरित्यादिप्रतीत्याभिप्रायेण तोत्रैरंकुशादिभिः ॥ ७ ॥ ८ ॥ ॥ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ एवंश्रीकृष्णोमहाबलानपिलीलयाजयत्येवेतिकृत्वासकदाचिज्जरासंधादिभिर्निर्जितइतिपशु
दृष्टीनामीयते नित्यजयेहेतवः योगेश्वरःभगवान्जगदीश्वरइति ॥ १६ ॥ विदूरथांतमामथ्यपूतनादिदनोःकुलं ॥ कृष्णस्तूपारमन्नाराद्रामोऽह





गदानिर्भिन्नहृदयउद्वमन्रुधिरंमुखात् ॥ प्रसार्यकेशबाङ्घ्रीन्धरण्यांन्यपतद्व्यसुः ॥ ९ ॥ ततःसूक्ष्मतरं
ज्योतिःकृष्णमाविशदद्भुतं ॥ पश्यतांसर्वभूतानांयथाचैद्यवधेनृप ॥ १० ॥ विदूरथस्तुतद्भ्राताभ्रातृशोक
परिप्लुतः ॥ आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥ ११ ॥ तस्यचापततःकृष्णश्चक्रेणक्षुरनेमिना ॥
शिरोजहारराजेंद्रसकिरीटंसकुंडलं ॥ १२ ॥ एवंसौभंचशाल्वंचदंतवक्रंसहानुजं ॥ हत्वादुर्विषहानन्यै
रीडितःसुरमानवैः ॥ १३ ॥ मुनिभिःसिद्धगंधर्वैर्विद्याधरमहोरगैः ॥ अप्सरोभिःपितृगणैर्यक्षैःकिन्नर
चारणैः ॥ १४ ॥ उपगीयमानविजयःकुसुमैरभिवर्षितः ॥ वृतश्चवृष्णिप्रवरैर्विवेशालंकृतांपुरीं ॥ १५ ॥
एवंयोगेश्वरःकृष्णोभगवान्जगदीश्वरः ॥ ईयतेपशुदृष्टीनांनिर्जितोजयतीतिसः ॥ १६ ॥ श्रुत्वायुद्धोद्य
मंरामःकुरूणांसहपांडवैः ॥ तीर्थाभिषेकव्याजेनमध्यस्थःप्रययौकिल ॥ १७ ॥ स्नात्वाप्रभासेसंतर्प्य
देवर्षिपितृमानवान् ॥ सरस्वतींप्रतिस्रोतंययौब्राह्मणसंवृतः ॥ १८ ॥ पृथूदकंबिंदुसरस्त्रितकूपंसुदर्श
नं ॥ विशालंब्रह्मतीर्थंचचक्रंप्राचींसरस्वतीं ॥ १९ ॥ यमुनामनुयान्येवगंगामनुचभारत ॥ जगामनैमि
षंयत्रऋषयःसत्रमासते ॥ २० ॥ तमागतमभिप्रेत्यमुनयोदीर्घसत्रिणः ॥ अभिवंद्ययथान्यायंप्रणम्यो
त्थायचार्चयन्॥ २१ ॥ सोऽर्चितःसपरीवारःकृतासनपरिग्रहः ॥ रोमहर्षणमासीनंमहर्षेःशिष्यमैक्षत ॥ २२ ॥



न्सूतबल्वलौ तत्प्रसंगमाह श्रुत्वेति ॥ १७ ॥ प्रतिस्रोतंप्रतिलोमंसंमुखमित्यर्थः ॥ १८ ॥ सुदर्शनंतीर्थं चक्रंचक्रतीर्थं ॥ १९ ॥ यमुनामनु
यानितीर्थानिगंगामनुचयानितानिसर्वाणिगत्वानैमिषमरण्यंजगाम ॥ २० ॥ अभिप्रेत्यश्रीरामइतिज्ञात्वा ॥ २१ ॥ महर्षेर्व्यासस्य ॥ २२ ॥

सूतंप्रतिलोमजंब्राह्मण्यांक्षत्रियाज्जातं नकृतंप्रह्वणंअंजलिश्चयेनतंअध्यासीनंचतान् तेभ्योऽप्युच्चैरासीनमित्यर्थः ॥ २३ ॥ २४ ॥ अजा
नन्नध्यास्तइतिचेन्नैवमित्याह ऋषेरिति ॥ २५ ॥ ननुबहुज्ञःकथमेवंकुर्यात्तत्राह अदांतस्येति गुणाययथोचितानुष्ठानाय ॥ २६ ॥ विप्रा
नध्यास्तामन्यद्वाकिंचित्करोतुकिंतवेतिचेत्तत्राह एतदर्थमिति धर्मध्वजिनउत्तमलिंगधारिणः ॥ २७ ॥ भावित्वादिति नहिभवितव्यंकेना
पिपरिहर्तुंशक्यतइत्यर्थः अहनत् अहन् ॥ २८ ॥ तेत्वया ॥ २९ ॥ अधार्मिकप्रतिलोमजवधःकोयमधर्मइतिचेत्तत्राहुः अस्येति पुराण

अप्रत्युत्थायिनंसूतमकृतप्रह्वणांजलिं ॥ अध्यासीनंचतान्विप्रांश्चुकोपोद्वीक्ष्यमाधवः ॥ २३ ॥ कस्मादसा
विमान्विप्रानध्यास्तेप्रतिलोमजः ॥ धर्मपालांस्तथैवास्मान्वधमर्हतिदुर्मतिः ॥ २४ ॥ ऋषेर्भगवतोभूत्वा
शिष्योऽधीत्यबहूनिच ॥ सेतिहासपुराणानिधर्मशास्त्राणिसर्वशः ॥ २५ ॥ अदांतस्याविनीतस्यवृथापंडि
तमानिनः ॥ नगुणायभवंतिस्मनटस्येवाजितात्मनः ॥ २६ ॥ एतदर्थोहिलोकेस्मिन्नवतारोमयाकृतः ॥ व
ध्यामेधर्मध्वजिनस्तेहिपातकिनोऽधिकाः ॥ २७ ॥ एतावदुक्त्वाभगवान्निवृत्तोऽसद्वधादपि ॥ भावित्वात्तं
कुशाग्रेणकरस्थेनाहनत्प्रभुः ॥ २८ ॥ हाहेतिवादिनःसर्वेमुनयःखिन्नमानसाः ॥ ऊचुःसंकर्षणंदेवमधर्म
स्तेकृतःप्रभो ॥ २९ ॥ अस्यब्रह्मासनंदत्तमस्माभिर्यदुनंदन ॥ आयुश्चात्माक्लमंतावद्यावत्सत्रंसमाप्यते ॥
अजानतैवाचरितस्त्वयाब्रह्मवधोयथा ॥ ३० ॥ योगेश्वरस्यभवतोनाम्नायोपिनियामकः ॥ यद्येतद्ब्रह्महत्या
याःपावनंलोकपावन ॥ चरिष्यतिभवान्लोकसंग्रहोऽनन्यचोदितः ॥ ३१ ॥ श्रीभगवानुवाच करिष्ये
वधनिर्वेशंलोकानुग्रहकाम्यया ॥ नियमःप्रथमेकल्पेयावान्सतुविधीयतां ॥ ३२ ॥ ॥

प्रवचनायआत्मनःशरीरस्यनास्तिक्लमोयस्मिंस्तदायुश्चदत्तमिति ॥ ३० ॥ ब्रह्मवधेपिकिंममेश्वरस्येतिचेत्सत्यमेवतथापिप्रायश्चित्तंकर्तव्य
मित्याशयेनाहुः योगेश्वरस्येतिसार्धेन आम्नायोब्राह्मणोनहंतव्यइत्यादिलक्षणः तथाप्येतस्याब्रह्महत्यायाःपावनंप्रायश्चित्तंहेलोकपावन
अनन्यचोदितःस्वयमेवभवान्यदिकरिष्यतितर्हिलोकसंग्रहोभविष्यतिनान्यथेति ॥ ३१ ॥ वधस्यनिर्वेशंप्रायश्चित्तं प्रथमेकल्पेमुख्यकल्पे
विधीयतामुपदिश्यतां ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥

किंच बतहेमुनयः एतस्यदीर्घमायुःसत्त्वंबलमिंद्रियंतत्पाटवंच अन्यच्चयद्भवद्भिराशासितमपेक्षितंतद्ब्रूतसर्वं ॥ ३३ ॥ अस्त्रादीनांयथास त्यताभवेत् अस्माकंचवचःसत्यंयथाभवेत्तथाविधीयतामित्यर्थः ॥ ३४ ॥ तथासंपादयन्नाह आत्मावाइति अंगादंगात्संभवसिहृदयादभि जायसे ॥ आत्मावैपुत्रनामासिसजीवशरदः शतमित्यादिवेदानुशासनंवेदवचनं तस्मादस्यरोमहर्षणस्यपुत्रउग्रश्रवाःभवतांपुराणप्रवक्ता भवेत्सचायुरादिमांश्चभवेत् अतःसाक्षादजीवनादस्त्रस्यमृत्योश्चसत्यतापुत्ररूपेणचायुरादिसिद्धेर्युष्मद्वचनस्यापिसत्यतास्यादितिभावः ॥ ३५ ॥ प्रथमंतावदपेक्षितंकथयततदहंकरिष्यामीत्याह किंवःकामइति किंविषयोवःकामोवर्ततेतद्ब्रूतेति अथानंतरंब्रह्मदंडंगृहीत्वाअ

दीर्घमायुर्बतैतस्यसत्त्वमिंद्रियमेवच ॥ आशासितंयत्तद्ब्रूतसाधयेयोगमायया ॥ ३३ ॥ ऋषयऊचुः अस्त्र स्यतववीर्यस्यमृत्योरस्माकमेवच ॥ यथाभवेद्वचःसत्यंतथारामविधीयतां ॥ ३४ ॥ श्रीभगवानुवाच आ त्मावैपुत्रउत्पन्नइतिवेदानुशासनं ॥ तस्मादस्यभवेद्वक्ताआयुरिंद्रियसत्त्ववान् ॥ ३५ ॥ किंवःकामोमुनि श्रेष्ठाब्रूताहंकरवाण्यथ ॥ अजानतस्त्वपचितिंयथामेचिंत्यतांबुधाः ॥ ३६ ॥ ऋषयऊचुः इल्वलस्यसु तोघोरोबल्वलोनामदानवः ॥ सदूषयतिनःसत्रमेत्यपर्वणिपर्वणि ॥ ३७ ॥ तंपापंजहिदाशार्हतन्नःशु श्रूषणंपरं ॥ पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणं ॥ ३८ ॥ ततश्चभारतंवर्षंपरीत्यसुसमाहितः ॥ च रित्वाद्वादशमासांस्तीर्थस्नायीविशुध्यसे ॥ ३९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ०बलदेवचरि त्रेबल्वलवधोपक्रमोनामाष्टसप्ततितमोध्यायः ॥७८॥ ॥ श्रीशुकउवाच ततःपर्वण्युपावृत्तेप्रचंडःपांसुव र्षणः ॥ भीमोवायुरभूद्राजन्पूयगंधस्तुसर्वशः ॥ १ ॥ ॥ ॥ ॥

पचितिंनिष्कृतिमजानतोमेहेबुधाःयथावच्चिंत्यतामपचितिरिति ॥ ३६ ॥ प्रथमंतावदपेक्षितंकर्तव्यंकथयंति इल्वलस्येतिद्वाभ्यां ॥ ३७ ॥ ॥ ३८ ॥ प्रायश्चित्तमाहुः ततश्चेति परीत्यप्रदक्षिणीकृत्य सुसमाधानादिगुणविशेषादेकाब्दमात्रमुक्तमित्यविरोधःसुसमाहितः कामक्रोधा दिरहितः चरित्वाकृच्छ्राणि ॥ ३९ ॥ इतिदशमेउ०टीकायामष्टसप्ततितमोध्यायः ॥ ७८ ॥ ॥ ऊनाशीतितमेरामोबल्वलंद्विजतुष्टये ॥ निहत्यतीर्थस्नानाद्यैःसूतहत्यामपानुदत् ॥ १ ॥ उपावृत्तेप्राप्ते ॥ १ ॥ ॥ ॥

॥ २ ॥ भिन्नोविदीर्णोऽजनचयःउपमायस्यतमतिकृष्णामित्यर्थः तप्तताम्रवत्शिखाश्मश्रूणिचयस्यतं दंष्ट्राभिरुग्रंभ्रुकुटीयुतंमुखंयस्य तं ॥ ३ ॥ ४ ॥ ५ ॥ अरुणोरुधिरेणदैत्यः शैलोधातुभिर्यथेति ॥ ६ ॥ ७ ॥ श्रियोधामानिअम्लानानिपंकजानियस्यांतां ॥ ८ ॥ किं

ततोऽमेध्यमयंवर्षंबल्वलेनविनिर्मितं ॥ अभवद्यज्ञशालायांसोऽन्वदृश्यतशूलधृक् ॥ २ ॥ तंविलोक्यबृहत्कायंभिन्नांजनचयोपमं ॥ तप्तताम्रशिखाश्मश्रुंदंष्ट्रोग्रभ्रुकुटीमुखं ॥ ३ ॥ सस्मारमुसलंरामःपरसैन्यविदारणं ॥ हलंचदैत्यदमनंतेतूर्णमुपतस्थतुः ॥ ४ ॥ तमाकृष्यहलाग्रेणबल्वलंगगनेचरं ॥ मुसलेनाहनत्क्रुद्धोमूर्ध्निब्रह्मद्रुहंबलः ॥५॥ सोऽपतद्भुविनिर्भिन्नललाटोऽसृक्समुत्सृजन् ॥ मुंचन्नार्तस्वरंशैलोयथावज्रहतोऽरुणः ॥ ६ ॥ संस्तुत्यमुनयोरामंप्रयुज्याविताशिषः ॥ अभ्यषिंचन्महाभागावृत्रघ्नंविबुधायथा ॥७॥ वैजयंतींददुर्मालांश्रीधामाम्लानपंकजां ॥ रामायवाससीदिव्येदिव्यान्याभरणानिच ॥ ८ ॥ अथतैरभ्यनुज्ञातःकौशिकीमेत्यब्राह्मणैः ॥ स्नात्वासरोवरमगाद्यतःसरयुरास्त्रवत् ॥ ९ ॥ अनुस्रोतेनसरयुंप्रयागमुपगम्यसः ॥ स्नात्वासंतर्प्यदेवादीन्जगामपुलहाश्रमं ॥ १० ॥ गोमतींगंडकींस्नात्वाविपाशांशोणआप्लुतः ॥ गयांगत्वापितृनिष्ट्वागंगासागरसंगमे ॥ ११ ॥ उपस्पृश्यमहेंद्राद्रौरामंदृष्ट्वाभिवाद्यच ॥ सप्तगोदावरींवेणांपंपांभीमरथींततः ॥ १२ ॥ स्कंदंदृष्ट्वाययौरामःश्रीशैलंगिरिशालयं ॥ द्रविडेषुमहापुण्यंदृष्ट्वाद्रिंवेंकटंप्रभुः ॥ १३ ॥ कामकोष्णींपुरींकांचींकावेरींचसरिद्वरां ॥ श्रीरंगाख्यंमहापुण्यंयत्रसन्निहितोहरिः ॥ १४ ॥ ऋषभाद्रिंहरेःक्षेत्रंदक्षिणांमथुरांतथा ॥ सामुद्रंसेतुमगमन्महापातकनाशनं ॥ १५ ॥ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्योहलायुधः ॥ कृतमालांताम्रपर्णींमलयंचकुलाचलं ॥ १६ ॥

तत्सरःयतइति आस्रवत्उदगात् ॥ ९ ॥ अनुस्रोतेनअनुलोमतः पुलहाश्रमंहरिक्षेत्रं ॥ १० ॥ गोमत्यांगंडक्यांविपाशायांचस्नात्वा शोणेचआप्लुतः इष्ट्वासंपूज्य ॥ ११ ॥ १२ ॥ श्रीशैलंश्रीपर्वतं ॥ १३ ॥ कांचींपुरीं ॥ १४ ॥ १५ ॥ १६ ॥ ॥

दक्षिणमर्णवं ॥ १७ ॥ फाल्गुनमनंतपुरं पंचाप्सरसंसरः अस्पर्शत् अस्पृशत् ॥१८॥ केरलादीन् देशान् ॥ १९ ॥ द्वीपमयनंयस्यास्तां ॥ २० ॥ २१ ॥ २२ ॥ विनशनंकुरुक्षेत्रं ॥ २३ ॥ विवक्षुर्वक्तुमिच्छुः किंवदिष्यतीतिभियातूष्णीमासान्निति ॥ २४ ॥ २५ ॥ २६ ॥





तत्रागस्त्यंसमासीनंनमस्कृत्याभिवाद्यच ॥ योजितस्तेनचाशीर्भिरनुज्ञातोगतोऽर्णवं ॥ दाक्षिणंतत्रकन्याख्यांदुर्गांदेवींददर्शसः ॥ १७ ॥ ततःफाल्गुनमासाद्यपंचाप्सरसमुत्तमं ॥ विष्णुःसन्निहितोयत्रस्नात्वाऽस्पर्शद्दवायुतं ॥ १८ ॥ ततोऽभिव्रज्यभगवान्केरलांस्तुत्रिगर्तकान् ॥ गोकर्णाख्यंशिवक्षेत्रंसान्निध्यंयत्रधूर्जटेः ॥ १९ ॥ आर्यांद्वैपायनींदृष्ट्वाशूर्पारकमगाद्बलः ॥ तापींपयोष्णींनिर्विंध्यामुपस्पृश्याथदंडकं ॥ २० ॥ प्रविश्यरेवामगमद्यत्रमाहिष्मतीपुरी ॥ मनुतीर्थमुपस्पृश्यप्रभासंपुनरागमत् ॥ २१ ॥ श्रुत्वाद्विजैःकथ्यमानंकुरुपांडवसंयुगे ॥ सर्वराजन्यनिधनंभारंमेनेहृतंभुवः ॥ २२ ॥ सभीमदुर्योधनयोर्गदाभ्यांयुध्यतोर्मृधे ॥ वारयिष्यान्विनशनंजगामयदुनंदनः ॥ २३ ॥ युधिष्ठिरस्तुतंदृष्ट्वायमौकृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णींकिंविवक्षुरिहागतः ॥ २४ ॥ गदापाणीउभौदृष्ट्वासंरब्धौविजयैषिणौ ॥ मंडलानिविचित्राणिचरंताविदमब्रवीत् ॥ २५ ॥ युवांतुल्यबलौवीरौहेराजन्हेवृकोदर ॥ एकंप्राणाधिकंमन्येउतैकंशिक्षयाधिकं ॥ २६ ॥ तस्मादेकतरस्येहयुवयोःसमवीर्ययोः ॥ नलक्ष्यतेजयोऽन्योवाविरमत्वफलोरणः ॥ २७ ॥ नतद्वाक्यंजगृहतुर्बद्धवैरौनृपार्थवत् ॥ अनुस्मरंतावन्योऽन्यंदुरुक्तंदुष्कृतानिच ॥ २८ ॥ दिष्टंतदनुमन्वानोरामोद्वारवतींययौ ॥ उग्रसेनादिभिःप्रीतैर्ज्ञातिभिःसमुपागतः ॥ २९ ॥ तंपुनर्नैमिषंप्राप्तमृषयोऽयाजयन्मुदा ॥ क्रत्वंगंक्रतुभिःसर्वैर्निवृत्ताखिलविग्रहं ॥ ३० ॥ ॥



अन्यःपराजयोवा रणःसंग्रामः ॥ २७ ॥ अर्थवद्वाक्यं ॥ २८ ॥ दिष्टंप्राचीनंकर्म समुपागतःसंगतः ॥ २९ ॥ क्रत्वंगंयज्ञमूर्तिं ॥ ३ ॥

आत्मनिअधिष्ठानेविश्वगंसर्वानुस्यूतंयेनैवविदुः पश्यंतितादृशुद्धंविज्ञानंव्यतरत्अदात् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ इतिदशमेउ० टीकायामेकोनाशीतितमोध्यायः ॥ ७९ ॥ अथाशीतितमेकृष्णः श्रीदामानंगृहागतं॥संपूज्यापृच्छदर्थेप्सुंगुरुवासकथांमुदा ॥ १ ॥ सुरारिमारकोहरिःपुराचकारशंसतां ॥ अतःपरंविनैवतन्निजोपकारमाचरत् ॥ २ ॥ रामचरितानिश्रुत्वापुनर्मुकुंदवीर्याणिपृच्छति हेभगवन्श्रोतुमिच्छामेत्यन्वयः ॥ १ ॥ उत्तमश्लोकस्यश्रीकृष्णस्यसत्योमनोहराविषयवैतृष्ण्यजनिकाःकथाः विशेषज्ञःसारवित् विषण्णोविषादंप्राप्तः॥

तेभ्योविशुद्धविज्ञानंभगवान्व्यतरद्विभुः ॥ येनैवात्मन्यदोविश्वमात्मानंविश्वगंविदुः ॥ ३१ ॥ स्वपत्न्याऽवभृथस्नातोज्ञातिबंधुसुहृद्वृतः ॥ रेजेस्वज्योत्स्नयेवेंदुःसुवासाःसुष्ठलंकृतः ॥ ३२ ॥ ईदृग्विधान्यसंख्यानिबलस्यबलशालिनः ॥ अनंतस्याप्रमेयस्यमायामर्त्यस्यसंतिहि ॥ ३३ ॥ योऽनुस्मरेतरामस्यकर्माण्यद्भुतकर्मणः ॥ सायंप्रातरनंतस्यविष्णोःसदयितोभवेत् ॥ ३४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेएकोनाशीतितमोध्यायः॥ ७९ ॥ ॥ राजोवाच भगवन्यानिचान्यानिमुकुंदस्यमहात्मनः॥ वीर्याण्यनंतवीर्यस्यश्रोतुमिच्छामहेप्रभो ॥ १ ॥ कोनुश्रुत्वासकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ॥ विरमेतविशेषज्ञोविषण्णःकाममार्गणैः ॥ २ ॥ सावाग्ययातस्यगुणान्गृणीतेकरौचतत्कर्मकरौमनश्च ॥ स्मरेद्वसंतंस्थिरजंगमेषुशृणोतितत्पुण्यकथाःसकर्णः ॥ ३ ॥ शिरस्तुतस्योभयलिंगमानमेत्तदेवयत्पश्यतितद्धिचक्षुः ॥ अंगानिविष्णोरथतज्जनानांपादोदकंयानिभजंतिनित्यं ॥४॥ सूतउवाच विष्णुरातेनसंपृष्टोभगवान्बादरायणिः॥वासुदेवेभगवतिनिमग्नहृदयोऽब्रवीत्॥५॥ श्रीशुकउवाच कृष्णस्यासीत्सखाकश्चिद्ब्राह्मणोब्रह्मवित्तमः ॥ विरक्तइंद्रियार्थेषुप्रशांतात्माजितेंद्रियः ॥ ६ ॥ ॥ ॥ ॥

॥ २ ॥ कथाश्रवणंस्तुवन्दृष्टांततयाऽन्यार्थानाह सावागिति तावेवकरौयौतत्कर्मकरौ तदेवमनःयत्स्थिरजंगमेषुवसंतंस्मरेत् यस्तस्यपुण्याःकथाःशृणोतिसएवकर्णः ॥ ३ ॥ उभयलिंगंस्थिरंजंगमंचतस्यैवलिंगमितिमत्वाआनमेत्तदेवाशिरः तदेवतस्यलिंगंमूर्तिमित्येवयत्पश्यतितदेवचक्षुः तान्येवांगानियानिविष्णोःपादोदकंभजंतीति ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ॥

तथाविधाकुचैलाजीर्णवस्त्रा किंच क्षुत्क्षामायत्किंचित्संपन्नमन्नंतस्मैपरिविष्यस्वयंक्षुधाजीर्णा ॥ ७ ॥ पतिव्रतासतीम्लायताशुष्यताव दनेनसीदमानाभर्तुर्भोगसंपादनाशक्त्याऽवसीदंतीवेपमानाभयेनकंपमानाअभिगम्यपतिंप्राहेति ॥ ८ ॥ ९ ॥ १० ॥ भोजवृष्ण्यंधकेश्व रइति तत्स्वीकारमात्रेणसर्वैतेदास्यंतीतिभावः ॥ ११ ॥ नात्यभीष्टान्परिपाकविरसत्वात् ॥ १२ ॥ अप्यस्तिकिमस्तीतिप्रश्नः ॥ १३ ॥



यदृच्छयोपपन्नेनवर्तमानोगृहाश्रमी ॥ तस्यभार्याकुचैलस्यक्षुत्क्षामाचतथाविधा ॥ ७ ॥ पतिव्रतापतिंप्राहम्लायतावदनेनसा ॥ दरिद्रासीदमानासावेपमानाऽभिगम्यच ॥८॥ ननुब्रह्मन्भगवतःसखासाक्षाच्छ्रियःपतिः॥ब्रह्मण्यश्चशरण्यश्चभगवान्सात्वतर्षभः ॥ ९ ॥ तमुपैहिमहाभागसाधूनांचपरायणं ॥ दास्यतिद्रविणंभूरिसीदतेतेकुटुंबिने ॥ १० ॥ आस्तेऽधुनाद्वारवत्यांभोजवृष्ण्यंधकेश्वरः॥स्मरतःपादकमलमात्मानमपियच्छति ॥ ११ ॥ किंत्वर्थकामान्भजतेनात्यभीष्टान्जगद्गुरुः ॥ सएवंभार्ययाविप्रोबहुशःप्रार्थितोमृदु ॥ अयंहिपरमोलाभउत्तमश्लोकदर्शनं ॥ १२ ॥ इतिसंचिंत्यमनसागमनायमतिंदधे ॥ अप्यस्त्युपायनंकिंचिद्गृहेकल्याणिदीयतां ॥ १३ ॥ याचित्वाचतुरोमुष्टीन्विप्रान्पृथुकतंडुलान् ॥ चैलखंडेनतान्बध्वाभर्त्रेप्रादादुपायनं ॥१४॥ सतानादायविप्राग्र्यःप्रययौद्वारकांकिल ॥ कृष्णसंदर्शनंमह्यंकथंस्यादितिचिंतयन् ॥ १५ ॥ त्रीणिगुल्मान्यतीयायतिस्रःकक्षाश्चसद्विजः॥विप्रोगम्यांधकवृष्णीनांगृहेष्वच्युतधर्मिणां॥१६॥ गृहंद्व्यष्टसहस्राणांमहिषीणांहरेर्द्विजः॥विवेशैकतमंश्रीमद्ब्रह्मानंदंगतोयथा॥१७॥ तंविलोक्याच्युतोदूरात्प्रियापर्यंकमास्थितः ॥ सहसोत्थायचाभ्येत्यदोर्भ्यांपर्यग्रहीन्मुदा ॥ १८ ॥ सख्युःप्रियस्यविप्रर्षेरंगसंगातिनिर्वृतः ॥ प्रीतोव्यमुंचदब्बिंदून्नेत्राभ्यांपुष्करेक्षणः॥१९॥ ॥ ॥



॥ १४ ॥ मह्यंमम ॥ १५ ॥ गुल्मानिरक्षार्थसैन्यस्थानानिकक्षाःप्रतोलीःअतीयायअतिक्रम्यजगाम सद्विजःद्विजैःसहितः ततश्च अगम्यादुर्गमायेंधकावृष्णयश्चतेषांगृहेषु ॥ १६ ॥ तथाहरेर्द्व्यष्टसहस्राणांमहिषीणांचयेगृहास्तेषुमध्येश्रीमत्एकतमंगृहंविवेश तदाचसद्विजो ब्रह्मानंदंगतोयथातथाबभूवेतिशेषः ॥ १७ ॥ पर्यग्रहीत्पर्यरंभत ॥ १८ ॥ अब्बिंदून्आनंदाश्रूणि ॥ १९ ॥ ॥

समर्हणमुपायनमुपहृत्यसमर्प्य पादावनेजनीरपः ॥ २० ॥ २१ ॥ २२ ॥ धमनिभिःशिराभिःसंततंव्याप्तं ॥ २३ ॥ अवधूतंमलिनं ॥ २४ ॥ विस्मयमाह किमनेनेतिद्वाभ्यां ॥ २५ ॥ संभृतःसंमानितः ॥ २६ ॥ सतोःवसतोः गृह्यगृहीत्वा ॥ २७॥ भार्याऊढापरिणीतानवेति गृहस्थलिंगदर्शनात्भोगादर्शनाच्चसंशयादिवप्रश्नः ॥ २८ ॥ अप्रतिषेधादुद्वाहमनुमतंमत्वाह प्रायइति तर्हितेचित्तंनूनमकाम

अथोपवेश्यपर्यंकेस्वयंसख्युःसमर्हणं॥ उपहृत्यावनिज्यास्यपादौपादावनेजनीः॥२०॥ अग्रहीच्छिरसा राजन्भगवाँल्लोकपावनः॥ व्यलिंपद्दिव्यगंधेनचंदनागुरुकुंकुमैः ॥२१॥ धूपैःसुरभिभिर्मित्रंप्रदीपावलिभिर्मुदा॥ अर्चित्वावेद्यतांबूलंगांचस्वागतमब्रवीत्॥ २२॥ कुचैलंमलिनंक्षामंद्विजंधमनिसंततं ॥ देवीपर्यचरच्छैब्याचामरव्यजनेनवै ॥ २३ ॥ अंतःपुरजनोदृष्ट्वाकृष्णेनामलकीर्तिना॥ विस्मितोऽभूदतिप्रीत्याअवधूतंसभाजितं ॥ २४॥ किमनेनकृतंपुण्यमवधूतेनभिक्षुणा ॥ श्रियाहीनेनलोकेस्मिन्गर्हितेनाधमेनच ॥ ॥ २५॥ योऽसौत्रिलोकगुरुणाश्रीनिवासेनसंभृतः॥ पर्यंकस्थांश्रियंहित्वापरिष्वक्तोऽग्रजोयथा॥ २६ ॥ कथयांचक्रतुर्गाथाःपूर्वागुरुकुलेसतोः॥ आत्मनोललिताराजन्करौगृह्यपरस्परं ॥२७॥ श्रीभगवानुवाच अपिब्रह्मन्गुरुकुलाद्भवतालब्धदक्षिणात् ॥ समावृत्तेनधर्मज्ञभार्योढासदृशीनवा ॥ २८॥ प्रायोगृहेषुतेचित्तमकामविहतंतथा ॥ नैवातिप्रीयसेविद्वन्धनेषुविदितंहिमे ॥ २९ ॥ केचित्कुर्वंतिकर्माणिकामैरहतचेतसः ॥ त्यजंतःप्रकृतीर्दैवीर्यथाहंलोकसंग्रहं ॥ ३० ॥ कच्चिद्गुरुकुलेवासंब्रह्मन्स्मरसिनौयतः॥ द्विजोविज्ञायविज्ञेयंतमसःपारमश्नुते ॥ ३१ ॥ ॥ ॥

विहतंकामैर्विहतंनभवतीतिमेविदितं तथाहि धनेषुवस्त्रादिषुनैवातिप्रीयसे हेविद्वन्निति विदुषस्तवैतद्युक्तमितिभावः॥ २९ ॥ कामहतत्वाभावेकिंगृहधर्मक्लेशेनेत्याशंक्याह केचिदिति दैवीःईश्वरमायारचिताःप्रकृतीर्विषयवासनास्त्यजंतः कामैरनाकृष्टचेतसामपिकरणेदृष्टांतः यथाहमिति लोकसंग्रहंलोकस्यसंग्रहोग्रहणंयथाभवतितथाऽहमीश्वरोऽपिकर्माणियथाकरोमितद्वत् ॥ ३० ॥ नौआवयोः यतोगुरोः विज्ञेयं परमात्मतत्त्वं तमसःसंसारस्य ॥ ३१ ॥ ॥ ॥ ॥

तत्रात्मज्ञानप्रदस्यगुरोरत्यंतंपूज्यत्वंवक्तुंपुरुषस्यत्रीन्गुरूनाह सवाइति इहसंसारेयत्रसंभवोजन्ममात्रंसपितातावदाद्यःप्रथमोगुरुःपूज्यःकर्म
विद्याप्रदंगुरुमाह द्विजातेःसतःपुंसःसत्कर्मणांयत्रसंभवः उपनीयवेदाध्यापकइत्यर्थः सद्वितीयोगुरुः यथाहमीश्वरस्तथाप्रथमादपिपूज्य
इत्यर्थः ब्रह्मविद्याप्रदंगुरुमाह आश्रमिणांसर्वेषामपिज्ञानदोयःसतुसाक्षादहमेवेति ॥ ३२ ॥ अतोज्ञानप्रदंगुरुरूपंमामाश्रित्ययेसंसारंतरंति
तेबुद्धिमंतइत्याह नन्विति हेब्रह्मन्तेननुवर्णाश्रमवतांमध्येअर्थकोविदाः इहमनुष्यजन्मनितत्रापिवर्णाश्रमवत्त्वेसतियेमयागुरुणागुरुरूपे
णवक्त्रावाचाउपदेशमात्रेणांजःसुखेनैवभवार्णवंतरंतीति ज्ञानप्रदाद्गुरोरधिकःसेव्योनास्तीत्युक्तं ॥ ३३ ॥ अतएवतद्भजनादधिकोधर्मश्चना

सवैसत्कर्मणांसाक्षाद्द्विजातेरिहसंभवः ॥ आद्योंऽगयत्राश्रमिणांयथाऽहंज्ञानदोगुरुः ॥ ३२ ॥ नन्वर्थकोविदाब्रह्मन्वर्णाश्रमवतामिह ॥ येमयागुरुणावाचातरंत्यंजोभवार्णवं ॥ ३३ ॥ नाहमिज्याप्रजातिभ्यांतपसोपशमेनच ॥ तुष्येयंसर्वभूतात्मागुरुशुश्रूषयायथा ॥ ३४ ॥ अपिनःस्मर्यतेब्रह्मन्वृत्तंनिवसतांगुरौ ॥ गुरुदारैश्चोदितानामिंधनानयनेक्वचित् ॥ ३५ ॥ प्रविष्टानांमहारण्यमपर्तौसुमहद्द्विज ॥ वातवर्षमभूत्तीव्रंनिष्ठुराःस्तनयित्नवः ॥ ३६ ॥ सूर्यश्चास्तंगतस्तावत्तमसाचावृतादिशः ॥ निम्नंकूलंजलमयंनप्राज्ञायतकिंचन ॥ ३७ ॥ वयंभृशंतत्रमहानिलांबुभिर्निहन्यमानामुहुरंबुसंप्लवे ॥ दिशोविदंतोथपरस्परंवनेगृहीतहस्ताःपरिबभ्रिमातुराः ॥ ३८ ॥ एतद्विदित्वाउदितेरवौसांदीपनिर्गुरुः ॥ अन्वेषमाणोनःशिष्यानाचार्योपश्यदातुरान् ॥ ३९ ॥

स्तीत्याह नाहमिति इज्यागृहस्थधर्मः प्रजातिःप्रकृष्टंजन्मउपनयनंतेनब्रह्मचारिधर्मउपलक्ष्यतेताभ्यांतथातपसावनस्थधर्मेणउपशमेनय
तिधर्मेणवाअहंपरमेश्वरस्तथानतुष्येयं यथासर्वभूतात्मापिगुरुशुश्रूषयेति ॥ ३४ ॥ किंचअस्माकंगुरुशुश्रूषणंकिमपिदैवादेवसंपन्नंतात्किंत्व
यास्मर्यतइतिपृच्छाति अपिनइति गुरौनिवसतामस्माकंयत्किमपिवृत्तंतत्क्वचित्कदाचित् ॥ ३५ ॥ अपर्तौअपगतेऋतौअकालइत्यर्थः वा
तश्चवर्षंचतयोः समाहारः स्तनयित्नवोगर्जितानिचाभवन् ॥ ३६ ॥ निम्नंकूलंनतमुन्नतंचस्थानं ॥ ३७ ॥ अंबूनांसंप्लवोव्यामिश्रणंयस्मिन्नेको
दकेतस्मिन्वनइत्यर्थःपरिबभ्रिम भृभरणेइतिधातोरूपं परिपरितःबभ्रिम इडागमश्छांदसः भारान्धृतवंतइत्यर्थः ॥ ३८ ॥ ३९ ॥

उवाचकृपयाश्लोकत्रयीं यथावयंकृतार्थाइत्याह अहोइति आत्मादेहः ॥ ४० ॥ गुरोर्निष्कृतंप्रत्युपकारः सर्वेअर्थायस्मात्सआत्मादेह
स्तस्यार्पणंविनियोगः ॥ ४१ ॥ अयातयामानियातोयामोयस्यपक्वस्यान्नस्यतत्गतसारंभवतितद्वदन्यदपिगतसारंगौण्यावृत्त्यायातयाम
मित्युच्यते अगतसाराणिछंदांसिमत्तोधीयमानानिभवंत्वित्यर्थः ॥ ४२ ॥ इत्थंविधानिएवंप्रकाराणिअनेकानिवृत्तानिकिंत्वयास्मर्यंतइ
तिशेषः फलितमुपसंहरति गुरोरिति ॥ ४३ ॥ अस्माभिः किमानिर्वृत्तमसंपन्नंयेषामस्माकंभवतासहवासोऽभूत् ॥ ४४ ॥ भवतस्तुसर्व

अहोहेपुत्रकायूयमस्मदर्थेतिदुःखिताः ॥ आत्मावैप्राणिनांप्रेष्ठस्तमनादृत्यमत्पराः ॥ ४० ॥ एतदेवहिस
च्छिष्यैःकर्तव्यंगुरुनिष्कृतं ॥ यद्वैविशुद्धभावेनसर्वार्थात्मार्पणंगुरौ ॥ ४१ ॥ तुष्टोऽहंभोद्विजश्रेष्ठाःसत्याः
संतुमनोरथाः ॥ छंदांस्ययातयामानिभवंत्विहपरत्रच ॥ ४२ ॥ इत्थंविधान्यनेकानिवसतांगुरुवेश्मसु ॥
गुरोरनुग्रहेणैवपुमान्पूर्णःप्रशांतये ॥ ४३ ॥ ब्राह्मणउवाच किमस्माभिरनिर्वृत्तंदेवदेवजगद्गुरो ॥ भव
तासत्यकामेनयेषांवासोगुरावभूत् ॥ ४४ ॥ यस्यच्छंदोमयंब्रह्मदेहआवपनंविभो ॥ श्रेयसांतस्यगुरुषुवा
सोऽत्यंतविडंबनं ॥ ४५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ०श्रीदामचरितेअशीतितमोऽध्यायः
॥ ८० ॥ ॥ श्रीशुकउवाच सइत्थंद्विजमुख्येनसहसंकथयन्हरिः ॥ सर्वभूतमनोऽभिज्ञःस्मयमानउ
वाचतं ॥ १ ॥ ब्रह्मण्योब्राह्मणंकृष्णोभगवान्प्रहसन्प्रियं ॥ प्रेम्णानिरीक्षणेनैवप्रेक्षन्खलुसतांगतिः ॥
॥ २ ॥ श्रीभगवानुवाच किमुपायनमानीतंब्रह्मन्मेभवतागृहात् ॥ अण्वप्युपाहृतंभक्तैःप्रेम्णाभूर्येवमे
भवेत् ॥ भूर्यप्यभक्तोपहृतंनमेतोषायकल्पते ॥ ३ ॥ ॥ ॥ ॥

मेतद्विडंबनमात्रमित्याह यस्येति छंदोमयंवेदाख्यंब्रह्म तथाश्रेयसामावपनंतदुद्भवस्थानंदेहोमूर्तिर्यस्यतस्यतव ॥ ४५ ॥ इतिदशमेउ०
टीकायामशीतितमोध्यायः ॥ ८० ॥ ॥ एकाशीतितमेसख्युर्जग्ध्वापृथुकतंडुलान् ॥ श्रियंनिर्मितवानिंद्रदुर्लभांतुतदाश्रमे ॥ १ ॥
संकथयन्सुखगोष्ठीःकुर्वन्सर्वभूतानांमनसोऽभिज्ञः मदर्थंपृथुकानानीयदातुंलज्जितइतिजानन्नित्यर्थः ॥ १ ॥ प्रहसन्क्ष्वेलींकुर्वन् ॥ २ ॥
लज्जयात्वकथयतस्तामपनुदन्नाह अण्वपीतिद्वाभ्यां ॥ ३ ॥ ॥ ॥ ॥

॥ ४ ॥ ५ ॥ सर्वभूतानामात्मदृक्अंतःकरणसाक्षी ॥ ६ ॥ अमर्त्यानांदेवानामपिदुर्लभाः ॥ ७ ॥ अतिजीर्णत्वाद्वसनस्यतन्मध्येची
रेणबद्धान् ॥ ८ ॥ अंगहेसखे मांविश्वंविश्वात्मानंमां ॥ ९ ॥ इतिवदन्नेकांमुष्टिंजग्ध्वा तत्परेति अयंभावः एतावतापुंसइहामुत्रचम
त्कटाक्षविलासभूतानांसर्वसंपदांसमृद्धयेअलं अतःपरंद्वितीयमुष्टयदनेनमामामेतदधीनांकुर्वीति ॥ १० ॥ त्वत्तोषस्यकारणंतवतोषस्य

पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति॥तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः॥४॥इत्युक्तोऽपिद्विजस्तस्मै
व्रीडितःपतयेश्रियः ॥ पृथुकप्रसृतिंराजन्नप्रायच्छदवाङ्मुखः ॥ ५ ॥ सर्वभूतात्मदृक्साक्षात्तस्यागमनकार
णं ॥ विज्ञायाचिंतयन्नायंश्रीकामोमाऽभजत्पुरा ॥ ६ ॥ पत्न्याःपतिव्रतायास्तुसखाप्रियचिकीर्षया ॥ प्राप्तो
मामस्यदास्यामिसंपदोमर्त्यदुर्लभाः ॥ ७ ॥ इत्थंविचिंत्यवसनाच्चीरबद्धान्द्विजन्मनः ॥ स्वयंजहारकिमिद
मितिपृथुकतंडुलान् ॥ ८ ॥ नन्वेतदुपनीतंमेपरमप्रीणनंसखे ॥ तर्पयंत्यंगमांविश्वमेतेपृथुकतंडुलाः ॥ ९ ॥
इतिमुष्टिंसकृज्जग्ध्वाद्वितीयांजग्धुमाददे ॥ तावच्छ्रीर्जगृहेहस्तंतत्परापरमेष्ठिनः ॥१०॥ एतावताऽलंविश्वा
त्मन्सर्वसंपत्समृद्धये ॥ अस्मिँल्लोकेऽथवाऽमुष्मिन्पुंसस्त्वत्तोषकारणं ॥ ११ ॥ ब्राह्मणस्तांतुरजनीमुषित्वाऽ
च्युतमंदिरे ॥ भुक्त्वापीत्वासुखंमेनेआत्मानंस्वर्गतंयथा ॥ १२ ॥ श्वोभूतेविश्वभावेनस्वसुखेनाभिवंदितः ॥
जगामस्वालयंतातपथ्यनुव्रज्यनंदितः ॥ १३ ॥ सचालब्ध्वाधनंकृष्णान्नतुयाचितवान्स्वयं ॥स्वगृहान्व्रीडि
तोऽगच्छन्महद्दर्शननिर्वृतः ॥१४ ॥ अहोब्रह्मण्यदेवस्यदृष्टाब्रह्मण्यतामया ॥ यद्दरिद्रतमोलक्ष्मीमाश्लिष्टो
बिभ्रतोरसि ॥१५॥ क्वाहंदरिद्रःपापीयान्क्वकृष्णःश्रीनिकेतनः ॥ ब्रह्मबंधुरितिस्माहंबाहुभ्यांपरिरंभितः ॥
॥ १६ ॥ निवासितःप्रियाजुष्टेपर्यंकेभ्रातरोयथा ॥ महिष्यावीजितःश्रांतोवालव्यजनहस्तया ॥ १७ ॥

कारणंयथाभवेत्तथासर्वसंपत्समृद्धये यांभक्तस्यसमृद्धिंदृष्ट्वात्वंतुष्येरित्यर्थः ॥ ११ ॥ स्वर्गतंस्वर्गवासिनं ॥ १२ ॥ श्वोभूतेउदितेरवौवि
श्वंभावयतीतिविश्वभावनस्तेनेतिपुरतोभाविनमिंद्रदुर्लभंविभवंसूचयति स्वसुखेनस्वानंदपूर्णेनेतिदानेदीनतांदर्शयति नंदितोविनयोक्ति
भिः ॥ १३ ॥ व्रीडितःस्वचित्तकार्पण्येनलज्जितः महतःश्रीकृष्णस्यदर्शनेनानिर्वृतःसुखंप्राप्तः ॥ १४ ॥ निर्वृतिमेवाह अहोइतिचतुर्भिः
यद्यतःलक्ष्मीमुरसिबिभ्रताआश्लिष्टोहं ॥ १५ ॥ पापीयान्नीचः ॥ १६ ॥ ॥ १७ ॥ ॥ ॥ ॥

पूजितश्चंदनलेपनादिभिः ॥ १८ ॥ एवंसंपूज्यापिधनस्यादानेकारणंकल्पयति स्वर्गापवर्गयोरितिद्वाभ्यां ॥ १९ ॥ स्वर्गादीनांयद्यपि
तस्यचरणार्चनमेवकारणंतथापिकारुणिकत्वादभूर्यपिस्वल्पमपिधनंमह्यंनाददात् ॥ २० ॥ इत्येवंचिंतयन्निजगृहस्यांतिकंतत्प्रांतं तस्य
विशेषणंसूर्येति ॥ २१ ॥ विचित्रोपवनादिभिर्वृतं कथंभूतैः कूजद्भिर्द्विजकुलैः पक्षिसमूहैराकुलैर्व्याप्तैः तथाप्रोत्फुल्लानिकुमुदादीनिये
षुतानिवारीणियेषुतानितथातैः ॥ २२ ॥ किंच जुष्टमिति हरिणीनामिवाक्षीणियासांताभिः तदैश्वर्यंदृष्ट्वावितर्कितवांस्तदाह किमिदमि

शुश्रूषयापरमयापादसंवाहनादिभिः॥पूजितोदेवदेवेनविप्रदेवेनदेववत्॥१८॥स्वर्गापवर्गयोःपुंसांरसायां
भुविसंपदां॥सर्वासामपिसिद्धीनांमूलंतच्चरणार्चनं॥१९॥अधनोऽयंधनंप्राप्यमाद्यन्नुच्चैर्नमांस्मरेत्॥इतिका
रुणिकोनूनंधनंमेभूरिनाददात्॥२०॥इतितच्चिंतयन्नंतःप्राप्तोनिजगृहांतिकं॥सूर्यानलेंदुसंकाशैर्विमानैःस
र्वतोवृतं॥२१॥विचित्रोपवनोद्यानैःकूजद्द्विजकुलाकुलैः॥प्रोत्फुल्लकुमुदांभोजकल्हारोत्पलवारिभिः ॥२२॥
जुष्टंस्वलंकृतैःपुंभिःस्त्रीभिश्चहरिणाक्षिभिः ॥ किमिदंकस्यवास्थानंकथंतदिदमित्यभूत् ॥२३॥ एवंमीमांस
मानंतंनरानार्योऽमरप्रभाः॥प्रत्यगृण्हन्महाभागंगीतवाद्येनभूयसा ॥२४॥पतिमागतमाकर्ण्यपत्न्युद्धर्षाऽ
तिसंभ्रमा॥निश्चक्रामगृहात्तूर्णंरूपिणीश्रीरिवालयात्॥२५॥पतिव्रतापतिंदृष्ट्वाप्रेमोत्कंठाऽश्रुलोचना॥मी
लिताक्ष्यनमद्बुद्ध्यामनसापरिषस्वजे॥२६॥पत्नींवीक्ष्यविस्फुरंतींदेवींवैमानिकीमिव॥दासीनांनिष्ककंठीनां
मध्येभांतींसविस्मितः ॥ २७ ॥ प्रीतःस्वयंतयायुक्तःप्रविष्टोनिजमंदिरं ॥ मणिस्तंभशतोपेतंमहेंद्रभवनंय
था ॥ २८ ॥ पयःफेननिभाःशय्यादांतारुक्मपरिच्छदाः ॥ पर्यंकाहेमदंडानिचामरव्यजनानिच ॥ २९ ॥

ति प्रथमंतेजःपुंजंदृष्ट्वाकिमिदमितिपश्चाद्विमानानिदृष्ट्वाकस्यचेतिस्थानंस्वीयमितिज्ञात्वाकथंतदिदंस्थानमित्येवंरूपमभूदिति ॥ २३॥
अमरप्रभास्तत्तुल्यकांतयः प्रत्यगृह्णन् उपायनादिभिराहृतवंतः ॥ २४ ॥ उद्भूतोहर्षोयस्याःसा अतिसंभ्रमआदरोयस्याःसा आलयात्क
मलवनाद्रूपधारिणीश्रीरिव स्वर्गस्यतत्रभगवताआनीतत्वात्स्वर्गिणामिवतयोरूपंचबभूवेतिभावः ॥ २५ ॥ बुद्ध्याअयमेववंद्यइतिनिश्च
येनैमनसासंकल्पेन ॥ २६ ॥ २७ ॥ २८ ॥ यत्रमंदिरेपयःफेननिभाःशय्याआस्तरणानीत्यादिसंपदः तत्रसर्वसंपदांसमृद्धीर्विलोक्यत
र्कयामासेतिचतुर्थेनान्वयः यत्रचदांताःगजदंतमयाःपर्यंकाः ॥ २९ ॥ ॥ ॥ ॥ ॥

यत्रआसनानिचमृदून्युपस्तरणानितूलादिमयानियेषुतानि यत्रमुक्तादामविलंबवंतिद्युमंतिचवितानानि ॥ ३० ॥ ३१ ॥ सब्राह्मणोनिर्व्यग्रःसंस्थिरःसन्अहैतुकींआकस्मिकींस्वस्यसमृद्धिंतर्कयामास कुतएषासमृद्धिरागतेति ॥ ३२ ॥ निश्चिनोति नूनमिति एतन्ममेति एष चासावहंचतस्य समृद्धिसत्वेहेतुर्महाविभूतेर्यदूत्तमस्यावलोकतोऽन्योनैवोपपद्येत ॥ ३३ ॥ ननुसचेदवलोकनमात्रेणमहदैश्वर्यंदत्तवांस्तर्हींदंतुभ्यंमयादत्तमितिकिंनावोचदतआह नन्विति ननुमेसखासमक्षमब्रुवाणएवयाचिष्णवेयाचकायभूरिबह्वपिदिशतेददाति अत्रहेतुःभूरिभोजःस्वयंतद्देयंपर्जन्यवदीक्षमाणइति अयमर्थः स्वयंतावद्भूरिभोजोबहुभोजआप्तकामत्वात्लक्ष्मीपतित्वाच्चअतोयथापारावारपरिपूरकोऽतिवदान्यःपर्जन्यःकदाचिद्बह्वपिवर्षमल्पमेवचमन्यमानोलज्जयेवसमक्षमवर्षन्रात्रौनिद्राणेकर्षकेतत्क्षेत्रमाप्लावयतिएवंश्रीकृष्णोऽपि

**आसनानिचहैमानिमृदूपस्तरणानिच ॥ मुक्तादामविलंबीनिवितानानिद्युमंतिच ॥ ३० ॥ स्वच्छस्फटिककुड्येषुमहामारकतेषुच ॥ रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान् ॥ ३१ ॥ विलोक्यब्राह्मणस्तत्रसमृद्धीःसर्वसंपदां ॥ तर्कयामासनिर्व्यग्रःस्वसमृद्धिमहैतुकीं ॥ ३२ ॥ नूनंबतैतन्ममदुर्भगस्यशश्वद्दरिद्रस्यसमृद्धिहेतुः ॥ महाविभूतेरवलोकतोऽन्योनैवोपपद्येतयदूत्तमस्य ॥ ३३ ॥ नन्वब्रुवाणोदिशतेसमक्षंयाचिष्णवेभूर्यपिभूरिभोजः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणोदाशार्हकाणामृषभःसखामे ॥ ३४ ॥ किंचित्करोत्युर्वपियत्स्वदत्तंसुहृत्कृतंफल्ग्वपिभूरिकारी ॥ मयोपनीतांपृथुकैकमुष्टिंप्रत्यग्रहीत्प्रीतियुतोमहात्मा ॥ ३५ ॥ तस्यैवमेसौहृदसख्यमैत्रीदास्यंपुनर्जन्मनिजन्मनिस्यात् ॥ महानुभावेनगुणालयेनविषज्जतस्तत्पुरुषप्रसंगः ॥ ३६ ॥**

स्वभोगापेक्षयातद्देयमिंद्रादिपदमप्यतितुच्छंमन्वानस्तस्यचभजनंबहुमन्यमानःसमक्षमब्रुवाणएवददातीति ॥ ३४ ॥ तदेवाह किंचिदिति उरुबह्वपिस्वदत्तंयत्किंचित्करोतिअल्पंमन्यते सुहृत्कृतंफल्गुअतितुच्छमपिभूरिकारीबहुमन्यतइत्यर्थः अतएवमयाउपनीतांप्रीतियुतःस्वयमेवप्रतिगृहीतवान् ॥ ३५ ॥ श्रीकृष्णस्यभक्तवात्सल्यंदृष्ट्वातद्भक्तिंप्रार्थयते तस्येति सौहृदंप्रेम सख्यंहिताशंसनंच मैत्रीउपकारकत्वंच दास्यंसेवकत्वं तत्समाहारैकवचनं तस्यतत्संबंधिनोमेममस्यान्नतुविभूतिः किंचमहानुभावेनतेनैवविषज्जतोविशेषेणसंगंप्राप्नुवतस्तद्भक्तेषुप्रकृष्टसंगःस्यादिति ॥ ३६ ॥ ॥ ॥ ॥ ॥

ननुभक्तेः फलंसंपदंप्राप्यपुनर्भक्तिंकिमितिप्रार्थयसेअतआह भक्तायेति संपदःकोशादीन्राज्यमैश्वर्यंविभूतीःकलत्रपुत्रादीन्नसमर्द्धयातिनद दातिआपितुदृढांभक्तिमेव कुतःअदीर्घबोधायअविवेकिने ममतुभक्त्यभावादेवंजातमतस्तद्भक्तिरेवस्यादितिभावः ॥ ३७ ॥ त्यक्षन्शनैः शनैस्त्यागमभ्यस्यन् जाययासहबुभुजे ॥ ३८ ॥ श्रीकृष्णस्यैवंब्रह्मण्यतानातिचित्रमित्याह तस्येति ॥ ३९ ॥ अन्यैरजितमपिस्वभृत्यैः पराजितंदृष्ट्वातस्यध्यानंतस्यवेगस्तेनोद्ग्रथितमात्मबंधनमहंकारोयस्यसः गतिमित्याविष्टालिंगंधामाविशेषणं सतांब्रह्मविदांप्राप्यमित्यर्थः ॥ ४० ॥ एतत्पृथुकोपाख्यानंश्रुत्वातत्रब्रह्मण्यतांविशेषतःश्रुत्वेति ॥ ४१ ॥ इतिदशमेउ०टी०एकाशीतितमोध्यायः ॥ ८१ ॥ ॥त्र्यशीति

भक्तायचित्राभगवान्हिसंपदोराज्यंविभूतीर्नसमर्द्धयत्यजः ॥ अदीर्घबोधायविचक्षणःस्वयंपश्यन्निपातं धनिनांमदोद्भवं ॥ ३७ ॥ इत्थंव्यवसितोबुद्ध्याभक्तोऽतीवजनार्दने ॥ विषयान्जाययात्यक्षन्बुभुजेनातिलंपटः ॥ ३८ ॥ तस्यवैदेवदेवस्यहरेर्यज्ञपतेःप्रभोः ॥ ब्राह्मणाःप्रभवोदैवंनतेभ्योविद्यतेपरं ॥ ३९ ॥ एवंसविप्रोभगवत्सुहृत्तदादृष्ट्वास्वभृत्यैरजितंपराजितं ॥ तद्ध्यानवेगोद्ग्रथितात्मबंधनस्तद्धामलेभेऽचिरतःसतांगतिं ॥ ४० ॥ एतद्ब्रह्मण्यदेवस्यश्रुत्वाब्रह्मण्यतांनरः ॥ लब्धभावोभगवतिकर्मबंधाद्विमुच्यते ॥ ४१ ॥ इति०भा०म०द०उ०एकाशीतितमोध्यायः ॥ ८१ ॥ ॥छ॥ श्रीशुकउवाच अथैकदाद्वारवत्यांवसतोरामकृष्णयोः ॥ सूर्योपरागःसुमहानासीत्कल्पक्षयेयथा ॥ १ ॥ तंज्ञात्वामनुजाराजन्पुरस्तादेवसर्वतः ॥ स्यमंतपंचकंक्षेत्रंययुःश्रेयोविधित्सया ॥ २ ॥ निःक्षत्रियांमहींकुर्वन्रामःशस्त्रभृतांवरः ॥ नृपाणांरुधिरौघेणयत्रचक्रेमहाह्रदान् ॥ ३ ॥ ईजेचभगवान्रामोयत्रास्पृष्टोऽपिकर्मणा ॥ लोकस्यग्राहयन्नीशोयथाऽन्योघापनुत्तये ॥ ४ ॥ महत्यांतीर्थयात्रायांतत्रागन्भारतीःप्रजाः ॥ वृष्णयश्चतथाऽक्रूरवसुदेवाहुकादयः ॥ ५ ॥ ॥

तमआगत्यकुरुक्षेत्रंरविग्रहे ॥ वृष्णीन्दृष्ट्वामुदाभूपाश्चक्रुःकृष्णकथामिथः ॥ १ ॥ श्रीदामसुहृदेकृष्णःप्रकल्प्यैंद्रंपदंभुवि ॥ नंदादिसुहृदानंदीकुरुक्षेत्रंजगामसः ॥ २ ॥ कल्पक्षयेयथासर्वग्रासइत्यर्थः ॥ १ ॥ ज्योतिर्विद्भिःकथ्यमानमादावेवज्ञात्वा स्यमंतपंचकंकुरुक्षेत्रं ॥ २ ॥ अब्रह्मण्यक्षत्रियवधस्थानत्वेनपरशुरामस्याघापनुत्तिस्थानत्वेनचक्षेत्रस्यपापानिरासकत्वमाह निःक्षत्रियामितिद्वाभ्यां ॥ ३ ॥ अन्योविद्वान्यथा ॥ ४ ॥ आगन्आजग्मुः भारतीःभारत्यः ॥ ५ ॥ ॥ ॥ ॥

सुचंद्रशुकसारणैः सहानिरुद्धो द्वारकायां रक्षार्थमास्ते तथा कृतवर्मा च यूथपतिः सेनानीः ॥ ६ ॥ देवधिष्ण्याभैर्विमानसंकाशैः तरलास्तरंगास्तद्वत्प्लवो गतिर्येषां तैः विद्याधरद्युभिर्विद्याधराणामिव द्युतिर्येषां तैः ॥ ७ ॥ महातेजाः महातेजसः दिव्या अत्युत्तमाः स्रग्वस्त्रसन्नाहा येषां ॥ ८ ॥ ९ ॥ पुनः अन्येद्युः आप्लुत्य यद्वा तस्मिन्नेवाहनि मुक्तिस्नानं कृत्वा ॥ १० ॥ स्निग्धा शीतला छाया येषामंघ्रिपानां तेषामंघ्रिषु मूलेषु ॥ ११ ॥ १२ ॥

ययुर्भारतवत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ गदप्रद्युम्नसांबाद्याः सुचंद्रशुकसारणैः ॥ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥ ६ ॥ ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥ गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ ७ ॥ व्यरोचंत महातेजाः पथि कांचनमालिनः ॥ दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ॥ ८ ॥ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ ब्राह्मणेभ्यो ददुर्धेनूर्वासःस्रग्रुक्ममालिनीः ॥ ९ ॥ रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ॥ १० ॥ स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ भुक्त्वोपविविशुः कामं स्निग्धच्छायांघ्रिपांघ्रिषु ॥ ११ ॥ तत्रागतांस्ते ददृशुः सुहृत्संबंधिनो नृपान् ॥ मत्स्योशीनरकौसल्यविदर्भकुरुसृंजयान् ॥ १२ ॥ कांबोजकैकयान्मद्रान्कुंतीनानर्तकेरलान् ॥ अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो नृप ॥ नंदादीन्सुहृदो गोपान्गोपीश्चोत्कंठिताश्चिरं ॥ १३ ॥ अन्योन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदं ॥ १४ ॥ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापांगदृशोऽभिरेभिरे ॥ स्तनैः स्तनान्कुंकुमपंकरूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १५ ॥ ततोऽभिवाद्य ते वृद्धान्यविष्ठैरभिवादिताः ॥ स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथां मिथः ॥ १६ ॥ पृथा भ्रातॄन्स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि ॥ भ्रातृपत्नीर्मुकुंदं च जहौ संकथया शुचः ॥ १७ ॥ कुंत्युवाच आर्य भ्रातरहं मन्ये आत्मानमकृताशिषं ॥ यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ १८ ॥

॥ १३ ॥ प्रोत्फुल्लैर्हृद्वक्त्रसरोरुहैः श्रीः शोभा येषां ते ॥ १४ ॥ अतिसौहृदेन यत्स्मितं तेन अमलापांगा दृशो दृष्टयो यासां ताः मिथः परस्परं संवीक्ष्य दोर्भिः अभिरेभिरे आलिंगनं कृतवत्यः ॥ १५ ॥ ॥ १६ ॥ संकथया मिथः सप्रेमगोष्ठ्या ॥ १७ ॥ तामेव वसुदेवपृथयोः संकथामाह आर्येत्यादिचतुर्भिः अकृताशिषं अपूर्णमनोरथं ॥ १८ ॥

यस्यदैवमदक्षिणमननुकूलंतंस्वजनमपिसंतंसुहृदादयोनानुस्मरंति अतोममदैवंप्रतिकूलंयुष्माकंकोपराधइतिभावः ॥ १९ ॥ २० ॥ ई
शवशत्वमेवाह कंसप्रतापिताइति हेस्वसः एतर्ह्येवसंप्रत्येव ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ युधिष्ठिरंयेऽनुव्रतास्तेराजसूयेजित
त्वात् ॥ २६ ॥ २७ ॥जन्मभाजोनृणांमध्येसफलजन्मानः ॥ २८ ॥ किंचनकेवलंतस्यदर्शनमेवअपित्वत्यंतदुर्लभंबहुयुष्माकंस्वतः

सुहृदोज्ञातयःपुत्राभ्रातरःपितरावपि ॥ नानुस्मरंतिस्वजनंयस्यदैवमदक्षिणं ॥ १९ ॥ वसुदेवउवाच अंब
मास्मानसूयेथादैवक्रीडनकान्नरान् ॥ ईशस्यहिवशेलोकःकुरुतेकार्यतेऽथवा ॥ २० ॥ कंसप्रतापिताःसर्वे
वयंयातादिशोदिशः ॥ एतर्ह्येवपुनःस्थानंदैवेनासादिताःस्वसः ॥२१॥ श्रीशुकउवाच वसुदेवोग्रसेनाद्यै
र्यदुभिस्तेऽर्चितान्नृपाः ॥ आसन्नच्युतसंदर्शपरमानंदनिर्वृताः ॥ २२ ॥ भीष्मोद्रोणोऽबिकापुत्रोगांधा
रीससुतातथा ॥ सदाराःपांडवाःकुंतीसृंजयोविदुरःकृपः ॥२३॥ कुंतिभोजोविराटश्चभीष्मकोनग्नजिन्म
हान् ॥ पुरुजिद्द्रुपदःशल्योधृष्टकेतुःसकाशिराट् ॥ २४ ॥ दमघोषोविशालाक्षोमैथिलोमद्रकैकयौ ॥ यु
धामन्युःसुशर्माचससुताबाल्हिकादयः ॥ २५ ॥ राजानोयेचराजेंद्रयुधिष्ठिरमनुव्रताः ॥ श्रीनिकेतंवपुः
शौरेःसस्त्रीकंवीक्ष्यविस्मिताः ॥२६॥ अथतेरामकृष्णाभ्यांसम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदायुक्ताव्
ष्णीन्कृष्णपरिग्रहान् ॥ २७ ॥ अहोभोजपतेयूयंजन्मभाजोनृणामिह ॥ यत्पश्यथासकृत्कृष्णंदुर्दर्श
मपियोगिनां ॥२८॥यद्विश्रुतिश्रुतिनुतेदमलंपुनातिपादावनेजनपयश्चवचश्चशास्त्रं॥भूःकालभर्जितभगाऽ
पियदंघ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षतिनोऽखिलार्थान् ॥ २९ ॥ ॥ ॥ ॥

संपन्नमित्याहुः यद्विश्रुतिरितिद्वाभ्यां यदितिपृथक्पदं यस्येत्यर्थः विश्रुतिःकीर्तिःश्रुतिभिर्नुतावेदैःस्तुताइदंविश्वमलमत्यर्थंपुनाति यद्वि
श्रुतिः श्रुतिरमविमलमितिपाठेश्रुतिःश्रवणमर्मविंपापमिति यस्यपादावनेजनपयोगंगाचयस्यवचोवाक्यरूपंशास्त्रंचवेदाख्यांविश्वंपुना
ति किंच कालेनभर्जितंदग्धंभगंमाहात्म्यंयस्याःसातथाविधाऽपिभूर्यस्यांघ्रिपद्मस्पर्शेनोत्थाआविर्भूताशक्तिर्यस्याःसानोऽस्माकमखिलान
र्थानभितोवर्षति ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥

दर्शनंचस्पर्शनंचअनुपथःअनुगतिश्चप्रजल्पोगोष्ठीचशय्याशयनंचआसनंचअशनंभोजनंचयौनबंधोविवाहसंबंधःसापिंडबंधोदैहिकसंबंध स्तेनसहवर्तमानःश्रीकृष्णेनसहदर्शनाद्युपलक्षितःसयौनःसपिंडबंधोयेषांवोऽस्ति किंचयेषांवोगृहेविष्णुःस्वयमासआविरभूत् निरयवर्त्म निप्रवृत्तिमार्गेवर्तमानानांस्वर्गापवर्गाभ्यांविरमयतिवितृष्णान्करोतीतितथासःतेयूयंजन्मभाजइति यद्वा तदितिसामान्यनिर्देशःसइत्यर्थः सविष्णुःस्वयंयेषांवोनिरयवर्त्मनिसंसारकारणेगृहेवर्त्तमानानामपिबध्यतेसंबध्यतइतिबंधोदर्शनादिभिःसंबद्धःसन्स्वर्गापवर्गविरमआसपर

तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिंडबंधः ॥ येषांगृहेनिरयवर्त्मनिवर्ततांवःस्वर्गापवर्ग विरमःस्वयमासविष्णुः ॥ ३० ॥ श्रीशुकउवाच नंदस्तत्रयदून्प्राप्तान्ज्ञात्वाकृष्णपुरोगमान् ॥ तत्रा गमद्वृतोगोपैरनस्थार्थैर्दिदृक्षया ॥ ३१ ॥ तंदृष्ट्वावृष्णयोहृष्टास्तन्वःप्राणमिवोत्थिताः ॥ परिषस्वजिरे गाढंचिरदर्शनकातराः ॥३२॥ वसुदेवःपरिष्वज्यसंप्रीतःप्रेमविह्वलः ॥ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं चगोकुले ॥ ३३ ॥ कृष्णरामौपरिष्वज्यपितरावभिवाद्यच ॥ नकिंचनोचतुःप्रेम्णासाश्रुकंठौकुरूद्वह ॥ ॥ ३४ ॥ तावात्मासनमारोप्यबाहुभ्यांपरिरभ्यच ॥ यशोदाचमहाभागासुतौविजहतुःशुचः ॥ ३५ ॥ रोहिणीदेवकीचाथपरिष्वज्यव्रजेश्वरीम् ॥ स्मरंत्यौतत्कृतांमैत्रींबाष्पकंठ्यौसमूचतुः ॥ ३६ ॥ काविस्म रेतवांमैत्रीमनिवृत्तांव्रजेश्वरि ॥ अवाप्याप्यैंद्रमैश्वर्यंयस्यानेहप्रतिक्रिया ॥ ३७ ॥ ॥ ॥

मसुखप्रदोबभूवेत्यर्थः ॥ ३० ॥ अनस्थार्थैरिति तत्रैववासचिकीर्षयाशकटेषुस्थापितैरर्थैःसहागतइत्यर्थः ॥ ३१ ॥ ३२ ॥ वसुदेवस्तं परिष्वज्यप्रेमविह्वलोबभूवेतिशेषः ॥ ३३ ॥ ३४ ॥ तौसुतौपरिरभ्यनंदोयशोदाचविरहशोकान्विजहतुःतत्यजतुः यद्वाशुचःअश्रूणिवि जहतुःमुमुचतुरित्यर्थः ॥ ३५ ॥ व्रजेश्वरींयशोदां ॥ ३६ ॥ अनिवृत्तांनिवृत्तिकारणेसत्यपिअनुवर्तमानां ऐंद्रमैश्वर्यंप्राप्यापियस्याः प्र तिक्रियाकर्तुंनशक्यतइत्यर्थः॥ ३७॥ ॥ ॥ ॥ ॥

तत्कृतांमैत्रीमाहतुः एताविति नदृष्टौपितरौयाभ्यांतौ वस्तुतस्तु अजन्मत्वादेवादृष्टपितरौ हेभवतियुवयोःपित्रोर्न्यस्तावेतौसंप्रीणनादीनि
प्राप्यअकुत्रचभयौकाचिदपिभयरहितौभूत्वाऊषतुर्वासंचक्रतुः कथंभूतयोः अक्ष्णोर्नेत्रयोःरक्षकंपक्ष्मयद्वत्तथारक्षकयोः युक्तंयुवयोरेतत् यतः
सतांसत्पुरुषाणांपरःस्वइतिनास्तिवैषम्यं ॥ ३८ ॥ अभीष्टत्वेलिंगं यत्यस्यश्रीकृष्णस्यप्रेक्षणेदृशिषुनेत्रेषुन्यवधायकंपक्ष्मकृतांविधातारंशपं
ति दृग्भिर्नेत्रद्वारैर्हृदिकृतंतद्धृदयेप्रवेशितंपरिरभ्यतद्भावंतदात्मतांप्रापुः अपिनित्ययुजामारूढयोगिनामपिसमाधिनिष्ठानामितियावत् दु

एतावदृष्टपितरौयुवयोःस्मपित्रोःसंप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवतिपक्ष्महयद्वदक्ष्णो
र्न्यस्तावकुत्रचभयौनसतांपरःस्वः ॥ ३८ ॥ श्रीशुकउवाच गोप्यश्चकृष्णमुपलभ्यचिरादभीष्टंयत्प्रे
क्षणेदृशिषुपक्ष्मकृतंशपंति ॥ दृग्भिर्हृदिकृतमलंपरिरभ्यसर्वास्तद्भावमापुरपिनित्ययुजांदुरापं ॥ ३९ ॥
भगवांस्तास्तथाभूताविविक्तउपसंगतः ॥ आश्लिष्यानामयंपृष्ट्वाप्रहसन्निदमब्रवीत् ॥ ४० ॥ अपि
स्मरथनःसख्यःस्वानामर्थचिकीर्षया ॥ गतांश्चिरायितान्शत्रुपक्षक्षपणचेतसः ॥ ४१ ॥ अप्यवध्याय
थास्मान्स्विदकृतज्ञाविशंकया ॥ नूनंभूतानिभगवान्युनक्तिवियुनक्तिच ॥४२ ॥ वायुर्यथाघनानीकंतृणं
तूलंरजांसिच ॥ संयोज्याक्षिपतेभूयस्तथाभूतानिभूतकृत् ॥ ४३ ॥ मयिभक्तिर्हिभूतानाममृतत्वायकल्प
ते ॥ दिष्ट्यायदासीन्मत्स्नेहोभवतीनांमदापनः ॥ ४४ ॥ ॥ ॥ ॥ ॥

रापंदुष्प्रापं ॥ ३९ ॥ ४० ॥ चिरायितान्विलंबितान् अत्रहेतुः शत्रूणांपक्षस्यक्षपणेचेतोयेषांतान् ॥ ४१ ॥ अपिस्वित्अस्मानवध्यायथअ
वजानीथ अकृतज्ञाएतइत्याविशंकयाईषच्छंकया नशंकामात्रंनिश्चितमेवैतत्परित्यज्यगतत्वादित्यतआह नूनमिति ॥४२॥एतत्सदृष्टांत
माह वायुरिति आक्षिपतेपृथक्करोतीत्यर्थः ॥ ४३ ॥ अपिच अतिभद्रमिदंयदुतभवतीनांमद्वियोगेनमत्प्रेमातिशयोजातइत्याह मयीति
मयिभक्तिमात्रमेवतावदमृतत्वायकल्पतइति यदुतभवतीनांमत्स्नेहआसीत्तद्दिष्ट्याअतिभद्रं कुतःमदापनःमत्प्रापणइति ॥ ४४ ॥

कीदृशस्त्वंयंवयंस्नेहेनप्राप्स्यामइत्यपेक्षायामात्मस्वरूपमाह अहंहीति हेअंगनाः भौतिकादीनांशरावसैंधवादीनांयथाकाशादीनिपंचभूता
न्याद्यंतादिरूपाणिएवंसर्वभूतानांजरायुजादीनामहं अतोव्यापकंमांभवत्यःप्राप्ताएवेति ॥ ४५ ॥ ननुचतुर्विधभूतग्रामाणांतद्वोक्ताआ
त्मैवाद्यंतादिरूपस्तस्मिंश्वसर्वव्यापकेसर्वभूतानिवर्ततइतिकुतस्त्वत्प्राप्तिरस्माकामित्यतआह एवंहीति अयमर्थः शरावादीनांयथाभौति
कानांमहाभूतान्याद्यंतादिरूपाणिएवमेवैतानिचतुर्विधानिभूतान्यपिभौतिकत्वाविशेषात्स्वकारणेषुभूतेष्वेववर्ततेनतुभोक्तर्यात्मनिआत्मातु
तेषुभूतेषुआत्मनाभोक्तृरूपेणततोव्याप्तोनकारणत्वेन अथैतदुभयंभूतभौतिकरूपंभोग्यंचभोक्तारंचात्मानंमय्यक्षरेपरिपूर्णेआभातंपश्यतेति

अहंहिसर्वभूतानामादिरंतोऽतरंबहिः ॥ भौतिकानांयथाखंवार्भूर्वायुर्ज्योतिरंगनाः ॥ ४५ ॥ एवंह्येतानिभू
तानिभूतेष्वात्मात्मनाततः ॥ उभयंमय्यथपरेपश्यताभातमक्षरे ॥ ४६ ॥ श्रीशुकउवाच अध्यात्म
शिक्षयागोप्यएवंकृष्णेनशिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ ४७ ॥ आहुश्चतेनलिन
नाभपदारविंदंयोगेश्वरैर्हृदिविचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबंगेहंजुषामपिमनस्युदिया
त्सदानः ॥ ४८ ॥ इतिश्रीभा०म०दश०उ०वृष्णिगोपसंगमोनामद्व्यशीतितमोध्यायः ॥ ८२ ॥ ॥ ॥
श्रीशुकउवाच तथानुगृह्यभगवान्गोपीनांसगुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्चसुहृदोऽव्ययं ॥ १ ॥
तएवंलोकनाथेनपरिपृष्टाःसुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥ ॥

॥ ४६ ॥ अध्यात्मशिक्षयास्वरूपोपदेशेनशिक्षिताबोधितास्तस्यानुस्मरणेनध्वस्तोजीवकोशोलिंगंयासांतास्तमेवाध्यगन्प्रापुः ॥ ४७ ॥
एवंप्राप्तोऽपिकृष्णःपुनर्गृहव्यासंगेनमाऽपयात्वितितच्चरणस्मरणंप्रार्थयामासुरित्याह आहुश्चेति हेनलिननाभतेपदारविंदंगेहंजुषांगृहसे
विनीनामपिनोमनसिसदाउदियात्आविर्भवेत् ॥ ४८ ॥ इतिदशमेउ०टीकायांद्व्यशीतितमोध्यायः ॥ ८२ ॥ ॥ त्र्यशीतितमएवंच
स्त्रीणांकृष्णकथोत्सवे ॥ द्रौपद्यैकृष्णभार्याभिरुक्ताःस्वस्वकरग्रहाः ॥ १ ॥ अव्ययंकुशलं ॥ १ ॥ तत्पादेक्षयाहतमंहोयेषांते ॥ २ ॥

महतांमनस्तःसकाशात्मुखद्वारतोनिःसृतंकाचित्कदाचिद्देहंभृतांदेहधारिणांदेहकृच्चासौअस्मृतिश्चअविद्यातांछिनत्तीतितथातं देहकृदीश्व
रस्तद्विषयाज्ञानाछिदंवा ॥ ३ ॥ हित्वेतिपदद्वयं त्वात्वांहिएवत्वामेवनताःस्मेत्यर्थः कथंभूतं आत्मधाम्नास्वरूपप्रकाशेनविधुतानिरस्ता
आत्मकृताबुद्धिनिमित्तास्तिस्रोऽवस्थायस्मिंस्तं अतएवानंदसंप्लवंसर्वानंदकदंबरूपंअखंडंचअपारिच्छिन्नंयतःनकुंठःकुंठितःबोधश्चिच्छ
क्तिर्यस्यतं नन्वेवंरूपताश्रीकृष्णस्यकुतःअस्मदादिवत्प्रतीतेरतआहुः कालोपसृष्टेति कालेनउपसृष्टाविप्लुताश्चतेनिगमाश्चतेषामवनेरक्षा
र्थमात्ताउपात्तायोगमाययाआकृतिर्नराकारमूर्तिर्येनतंपरमहंसानांगतिंत्वां अतस्तवैवंरूपत्वादस्माकंचत्वन्माययाएतत्सर्वंवैपरीत्यात्त्वामे

कुतोऽशिवंत्वच्चरणांबुजासवंमहन्मनस्तोमुखनिःसृतंक्वचित् ॥ पिबंतियेकर्णपुटैरलंप्रभोदेहंभृतांदेहकृद
स्मृतिच्छिदं ॥ ३ ॥ हित्वात्मधामविधुतात्मकृतत्र्यवस्थमानंदसंप्लवमखंडमकुंठबोधं ॥ कालोपसृष्टनिग
मावनआत्तयोगमायाकृतिंपरमहंसगतिंनताःस्म ॥ ४ ॥ ऋषिरुवाच इत्युत्तमश्लोकशिखामणिंजनेष्व
भिष्टुवत्स्वंधककौरवस्त्रियः ॥ समेत्यगोविंदकथामिथोऽगृणंस्त्रिलोकगीताःशृणुवर्णयामिते ॥ ५ ॥ द्रौप
द्युवाच हेवैदर्भ्यच्युतोभद्रेहेजांबवतिकौसले ॥ हेसत्यभामेकालिंदिशैब्येरोहिणिलक्ष्मणे ॥ ६ ॥ हेकृ
ष्णपत्न्यएतन्नोब्रूतवोभगवान्स्वयं ॥ उपयेमेयथालोकमनुकुर्वन्स्वमायया ॥ ७ ॥ रुक्मिण्युवाच चै
द्यायमार्पयितुमुद्यतकार्मुकेषुराजस्वजेयभटशेखरितांघ्रिरेणुः ॥ निन्येमृगेंद्रइवभागमजावियूथात्तच्छ्रीनि
केतचरणोऽस्तुममार्चनाय ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

वनताःस्मेति यद्वात्वामितिप्रकरणात्ज्ञातव्यं त्वांनताःस्म किंकृत्वा हित्वा किं आत्मधामआत्माशरीरंधामगृहंचतत्त्वतच्च देहदैहिकसंगं
परित्यज्येत्यर्थः समानमन्यत् ॥ ४ ॥ त्रिषुलोकेषुगीताः ॥ ५ ॥ कौसलेहेसत्ये शैब्येहेमित्रविंदे रोहिणीनामकाचित्पट्टमहिषीतुल्या
॥ ६ ॥ हेअन्याःश्रीकृष्णस्यपत्न्यः ॥ ७ ॥ मामामर्पयितुंसंपादयितुंराजसुजरासंधादिषुउद्यतकार्मुकेषुसत्सुअजेयायेभटास्तेषांशेखरि
तामुकुटवत्कृताअंघ्रिरेणवोयेन तेषांमूर्ध्निपदंदधदित्यर्थः तस्यश्रीनिकेतस्यचरणोममार्चनायास्तु ॥ ८ ॥ ॥

सनाभेर्भ्रातुर्वधेनसिंहकृतेनतत्संबंधस्यतेनमेततेनतातेन लिप्तमभिशापंदुर्यशः अपमार्ष्टुंपरिहर्तुमृक्षराजंजित्वारत्नंस्यमंतकमुपाजहारआनीतवान् अथानंतरंमत्पित्रेरत्नमदात् तेनस्वापराधेनभीतःसमेपिताप्रभवेश्रीकृष्णायमामादिशतददौ दत्तामक्रूरादिभ्यःप्रतिश्रुतामपीत्यर्थः ॥ ९ ॥ देहकृत्पिताअमुंश्रीकृष्णंनिजनाथंस्वामिनंदेवमीश्वरंसीतापतिंप्राज्ञायअविज्ञायत्रिणवहानित्रिनवाहानि स्हस्वइछंदोऽनुरोधेन सप्तविंशतिदिनान्यमुनाऽयुत्ध्यत् परीक्षितःसंजातापरीक्षायस्यसपरीक्षितस्तंसाक्षात्सीतापतिरेवासावितिज्ञात्वापादौप्रगृह्यमणिनासहमामर्हणमुपाहरत्अर्हणतयासमार्पितवान् अहोतर्हित्वमतिश्रेष्ठासिनेत्याह अमुष्याहंदासीति ॥ १० ॥ सख्याअर्जुनेन तस्यगृहमार्जनीगृहसं

सत्यभामोवाच योमेसनाभिवधतप्तहृदाततेनालिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथरत्नमदात्सतेनभीतःपिताऽदिशतमांप्रभवेऽपिदत्तां ॥ ९ ॥ जांबवत्युवाच प्राज्ञायदेहकृदमुंनिजनाथदैवंसीतापतिंत्रिणवहान्यमुनाऽभ्ययुध्यत् ॥ ज्ञात्वापरीक्षितउपाहरदर्हणंमांपादौप्रगृह्यमणिनाहममुष्यदासी॥ ॥ १० ॥ कालिंद्युवाच तपश्चरंतीमाज्ञायस्वपादस्पर्शनाशया॥सख्योपेत्याग्रहीत्पाणिंयोऽहंतद्गृहमार्जनी ॥ ११ ॥ मित्रविंदोवाच योमांस्वयंवरउपेत्यविजित्यभूपान्निन्येश्वयूथगमिवात्मबलिंद्विपारिः॥ भ्रातृंश्चमेऽपकुरुतःस्वपुरंश्रियौकस्तस्यास्तुमेऽनुभवमंघ्र्यवनेजनत्वं ॥ १२ ॥ सत्योवाच सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृंगान्पित्राकृतान्क्षितिपवीर्यपरीक्षणाय ॥ तान्वीरदुर्मदहनस्तरसानिगृह्यक्रीडन्बबंधहयथाशिशवोऽजतोकान् ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥

मार्जनकर्त्री ॥ ११ ॥ शुनांयूथगतंस्वबलिंद्विपारिःसिंहइवेति मेभ्रातृंश्चापकुरुतःअपकारंकुर्वतोविजित्य श्रियौकःलक्ष्मीनिवासःतस्यांघ्र्यवनेजनत्वंचरणक्षालनकर्तृत्वमनुभवंप्रतिजन्ममेऽस्तु ॥ १२ ॥ सप्तउक्षणः वृषभान् बलंचवीर्यंचतीक्ष्णशृंगाणिचअतिशयितानियेषां तान्मेपित्राकृतान्संपादितान्बलीयसेमांदातुंक्षितिपानांवीर्यस्यबलस्यपरीक्षणायतानतिप्रसिद्धान्वीराणांदुर्मदंघ्नंतियेतांस्तरसाशीघ्रमेवनिगृह्यदमयित्वाक्रीडन्ननायासेनैवबबंध अजतोकान्अजापत्यानि ॥ १३ ॥ ॥ ॥

वीर्यमेवशुल्कंदेयंयस्यास्तां दासीभिःसहचतुरंगिणींगजाश्वादिसेनायुक्तां पुरंनिन्ये ॥ १४ ॥ हेकृष्णेहेद्रौपदि तस्मिन्नेवचित्तंयस्यास्तां
मां अक्षौहिण्यासेनयासह सखीजनैश्चसह ॥ १५ ॥ येनपादसंस्पर्शेनआत्मनोमेतत्कैवल्याख्यंश्रेयोभवेत्सः यद्वा येनकारणेनआत्मनो
जीवस्यतत्श्रेयःसएवपुरुषार्थइति ॥ १६ ॥ राज्ञिहेद्रौपदियथामित्रविंदायास्तथैवममापिचित्तंमुकुंदविषयमासीत् सुसंमृश्यसुविचार्यप
द्महस्तयाश्रियावृतःकिलअतोऽपिममचित्तंश्रीमुकुंदेआसेति हइतिहर्षे ॥ १७ ॥ तत्रश्रीकृष्णप्राप्तावुपायमचीकरत्कारयामास ॥ १८ ॥
यथाराज्ञितवस्वयंवरेपार्थस्येप्सयाआप्तुमिच्छयाकृतस्तथामत्स्यंकारितवान् पाठांतरेपार्थस्येषुणाऽपाकृतः तर्हीदमपिअर्जुनएवकिन्नावि

यइत्थंवीर्यशुल्कांमांदासीभिश्चतुरंगिणीम् ॥ पथिनिर्जित्यराजन्यान्निन्येतद्दास्यमस्तुमे ॥१४॥ भद्रोवाच
पितामेमातुलेयायस्वयमाहूयदत्तवान् ॥ कृष्णेकृष्णायतच्चित्तामक्षौहिण्यासखीजनैः ॥१५॥ अस्यमेपादसंस्प
र्शोभवेज्जन्मनिजन्मनि ॥ कर्मभिर्भ्राम्यमाणायायेनतच्छ्रेयआत्मनः ॥१६॥ लक्ष्मणोवाच ममापिराज्ञ्यच्यु
तजन्मकर्मश्रुत्वामुहुर्नारदगीतमासह ॥ चित्तंमुकुंदेकिलपद्महस्तयावृतःसुसंमृश्यविहायलोकपान् ॥ १७ ॥
ज्ञात्वाममसतंसाध्विपितादुहितृवत्सलः ॥ बृहत्सेनइतिख्यातस्तत्रोपायमचीकरत् ॥१८॥ यथास्वयंवरेरा
ज्ञिमत्स्यःपार्थेप्सयाकृतः ॥ अयंतुबहिराच्छन्नोदृश्यतेसजलेपरं ॥१९॥ श्रुत्वैतत्सर्वतोभूपाआययुर्मत्पितुःपुरं
॥ सर्वास्त्रशस्त्रतत्वज्ञाःसोपाध्यायाःसहस्रशः ॥२०॥ पित्रासंपूजिताःसर्वेयथावीर्यंयथावयः ॥ आददुःसशरं
चापंवेद्धुंपर्षदिमद्धियः ॥२१॥ आदायव्यसृजन्केचित्सज्यंकर्तुमनीश्वराः ॥ आकोष्ठंज्यांसमुत्कृष्यपेतुरेकेऽमु
नाहताः ॥२२॥ सज्यंकृत्वापरेवीरामागधांबष्ठचेदिपाः ॥ भीमोदुर्योधनःकर्णोनाविंदंस्तदवस्थितिं ॥ २३ ॥

ध्यत्तत्राह अयंत्विति समत्स्योबहिरेवाच्छन्नोनांतःअतःस्तंभलग्नयोर्ध्वदृष्ट्यासंलक्ष्यतेअयंतुनतथाकिंतुस्तंभमूलेनिहितकलशजलेकेवलंदृ
श्यतेअतोदृष्टिरधस्तात्उपरिचलक्ष्यमितिश्रीकृष्णव्यतिरेकेणनकस्यापिभेद्यइतिभावः १९ ॥ २० ॥ मत्स्यंवेद्धुं पर्षदिसंसदि मद्धियःम
य्येवधीर्येषामिति अन्यचित्तानवेद्धुंशक्ताइतिभावः ॥ २१ ॥ तदेवाह आदायेति अमुनाचापेन ॥ २२ ॥ नाविंदंस्तदवस्थितिमितिमा
गधादीनांक्रियाशक्तिरेवनतुलक्ष्याभिज्ञतेत्यर्थः ॥ २३ ॥ ॥ ॥ ॥

यत्तोयत्नवान् असृजत् मुमोच सबाणोमत्स्यंना।च्छिनत् परंकेवलंपरपर्श ज्ञानवानप्यर्जुनोबलेनापूर्णइत्यर्थः ॥ २४ ॥ २५ ॥ अभिजिति सर्वार्थसाधकेमुहूर्ते ॥ २६ ॥ २७ ॥ भगवत्प्राप्तिहर्षनिर्भरेणात्मानमेवानुवर्णयंत्याहद्वाभ्यां तद्रंगमिति तत्तदाकलौकलस्वनौनूपुरौययोस्ताभ्यांपद्भ्यांरंगंप्राविशं कनकेनोज्ज्वलांरत्नमालां निवीयप्रावृत्यपरिधायचनीवीबंधेनच कौशिकाग्र्येउत्तमकौशेयवस्त्रे सव्रीडोहासोयस्मिंस्तद्वदनंयस्याःसा कबर्यांधृताःस्रजोययासा ॥ २८ ॥ उरवःकुंतलायस्मिन् कुंडलयोस्त्विषोययोस्तेगंडस्थलेयस्मिंस्तच्चतच्च शिशिरः

मत्स्याभासंजलेवीक्ष्यज्ञात्वाचतदवस्थितिं ॥ पार्थोयत्तोऽसृजद्बाणंनाच्छिनत्परस्पृशेपरं ॥ २४ ॥ राजन्येषु निवृत्तेषुभग्नमानेषुमानिषु ॥ भगवान्धनुरादायसज्यंकृत्वाऽथलीलया ॥ २५ ॥ तस्मिन्संधायविशिखंमत्स्यंवीक्ष्यसकृज्जले ॥ छित्वेषुणापातयत्तंसूर्येचाभिजितिस्थिते ॥ २६ ॥ दिविदुंदुभयोनेदुर्जयशब्दयुताभुवि ॥ देवाश्चकुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥ २७ ॥ तद्रंगमाविशमहंकलनूपुराभ्यांपद्भ्यांप्रगृह्यकनकोज्ज्वलरत्नमालां ॥ नूत्नेनिवीयपरिधायचकौशिकाग्र्येसव्रीडहासवदनाकबरीधृतस्रक् ॥ २८ ॥ उन्नीयवक्त्रमुरुकुंतलकुंडलत्विड्गंडस्थलंशिशिरहासकटाक्षमोक्षैः ॥ राज्ञोनिरीक्ष्यपरितःशनकैर्मुरारेरंसेऽनुरक्तहृदयानिदधेस्वमालां ॥ २९ ॥ तावन्मृदंगपटहाःशंखभेर्यानकादयः ॥ निनेदुर्नटनर्तक्योननृतुर्गायकाजगुः ॥ ३० ॥ एवंवृतेभगवतिमयेशेनृपयूथपाः ॥ नसेहिरेयाज्ञसेनिस्पर्धंतोहृच्छयातुराः ॥ ३१ ॥ मांतावद्रथमारोप्यहयरत्नचतुष्टयं ॥ शार्ङ्गमुद्यम्यसन्नद्धस्तस्थावाजौचतुर्भुजः ॥ ३२ ॥



संतापहरोहासोयेषुतैःकटाक्षमोक्षैरपांगमोक्षणविलासैरनुरक्तंहृदयंयस्याःसाहं ॥ २९ ॥ ३० ॥ याज्ञसेनिहेद्रौपदिईशेश्रीकृष्णेमयावृते सतिस्पर्धंतःस्पर्धमानाः नन्वेवंपरमैश्वर्यंदृष्टवतांकुतःस्पर्धाऽवसरस्तत्राह हृच्छयातुराइति हृच्छयेनकामेनातुराविवशाः कामाविजृंभितास्पर्धेतिभावः ॥ ३१ ॥ हयरत्नानांचतुष्टयंयस्मिंस्तंरथं द्वाभ्यांमामालिंग्यद्वाभ्यांधनुर्बाणौगृहीत्वाचतुर्भुजस्तस्थौ ॥ ३२ ॥ ॥

मृगाणांमिषतांमृगराडिवतदाहरिर्जगामेतिशेषोज्ञातव्यः दारुकस्यैववामृगराजोपमा ॥ ३३ ॥ अन्वसज्जंतपृष्ठतःसक्ताबभूवुः निषेद्धुंप्र
तिबंधकर्त्तुंकेचनपुरतोगत्वापथिसंयत्ताबभूवुरित्यर्थः उद्धृतेष्वासाऊर्ध्वकृतचापाः ग्रामसिंहाःश्वानोहरिंसिंहंयथेति ॥ ३४ ॥ ३५ ॥ रविं
छादयंतितेरविच्छदाध्वजेषुपटायस्यां चित्राणितोरणानियस्यांसाचसाच तांकुशस्थलींपुरींयदुपतिःसमाविशत् स्वकेतनंमंडलमस्ताच
लंवा ॥ ३६ ॥ महार्हवासःप्रभृतिभिःसुहृदादीन्पूजयामास ॥ ३७ ॥ दास्यादिभिःसहआयुधानिपूर्णस्यपूर्णायापिददौ ॥ ३८ ॥ इ
माअष्टौवयंसर्वसंगनिवृत्त्यातपसास्वधर्मेणअद्धासाक्षात्तस्यगृहदासिकाबभूविम ॥ ३९ ॥ क्षितिजयेदिग्विजयेजितानांराज्ञांकन्यानःअ

दारुकश्चोदयामासकांचनोपस्करंरथं ॥ मिषतांभूभुजांराज्ञिमृगाणांमृगराडिव ॥ ३३ ॥ तेऽन्वसज्जंतराज
न्यानिषेद्धुंपथिकेचन ॥ संयत्ताउद्धृतेष्वासाग्रामसिंहायथाहरिं ॥ ३४ ॥ तेशार्ङ्गच्युतबाणौघैःकृत्तबाह्वंघ्रिकं
धराः ॥ निपेतुःप्रधनेकेचिदेकेसंत्यज्यदुद्रुवुः ॥ ३५ ॥ ततःपुरींयदुपतिरत्यलंकृतांरविच्छदध्वजपटचित्र
तोरणां ॥ कुशस्थलींदिविभुविचाभिसंस्तुतांसमाविशत्तरणिरिवस्वकेतनं ॥ ३६ ॥ पितामेपूजयामाससुहृ
त्संबंधिबांधवान् ॥ महार्हवासोलंकारैःशय्यासनपरिच्छदैः ॥ ३७ ॥ दासीभिःसर्वसंपद्भिर्भटेभरथवाजि
भिः ॥ आयुधानिमहार्हाणिददौपूर्णस्यभक्तितः ॥ ३८ ॥ आत्मारामस्यतस्येमावयंवैगृहदासिकाः ॥ सर्वसं
गनिवृत्त्याऽद्धातपसाचबभूविम ॥ ३९ ॥ महिष्यऊचुः भौमंनिहत्यसगणंयुधितेनरुद्धाज्ञात्वाऽथनःक्षिति
जयेजितराजकन्याः ॥ निर्मुच्यसंसृतिविमोक्षमनुस्मरंतीःपादांबुजंपरिणिनायय आप्तकामः ॥ ४० ॥ नव
यंसाध्विसाम्राज्यंस्वाराज्यंभौज्यमप्युत ॥ वैराज्यंपारमेष्ठ्यंचआनंत्यंवाहरेःपदं ॥ ४१ ॥

स्मांस्तेनरुद्धाज्ञात्वाततोनिर्मुच्यसंसृतेर्विमोक्षोयस्मात्तत्पादांबुजमनुस्मरतीर्नःपरिणिनायउदवहत् आप्तकामोऽपियः ॥ ४० ॥ नवयमि
तिसाम्राज्यादिनकामयामहेकिंतुएतस्यश्रीमत्पादरजोमूर्ध्नावोढुंकामयामहइति ननुतस्यगृहिण्योयूयंसर्वसंपद्भाजःकिमेवंकामयध्वमतआ
हुः हेसाध्वि साम्राज्यंसार्वभौमपदं स्वाराज्यमैंद्रंपदंभौज्यंतदुभयभोगभाक्कं विविधंराजतइतिविराट्तस्यभावोवैराज्यमणिमादिसिद्धि
भाक्कमित्यर्थः पारमेष्ठ्यंब्रह्मपदं आनंत्यंमोक्षं हरेःपदंतत्सालोक्यादि नतुकामयामहइति यद्वा बह्वृचब्राह्मणोक्तक्रमेणप्रागादिदिक्
चतुष्टयाधिपत्यानिसाम्राज्यभौज्यस्वाराज्यवैराज्यानिव्याख्येयानि ॥ ४१ ॥ ॥ ॥ ॥

तत्किंतत्पादरजएवकाम्यतेअतआहुः श्रियःकुचकुंकुमगंधाढ्यमिति ब्रह्मादिसेव्ययालक्ष्म्यापिसेवितत्वादितिभावः ॥ ४२ ॥ ननुतर्हि
तिदुर्लभत्वात्किंतद्वांछयाअतआहुः व्रजस्त्रियइति यद्यथागावःगाः महात्मनोऽपिगाश्चारयतःपादस्पर्शंचगोपायथावांछंतितद्वत् तत्प
राणांसुलभइतिभावः ॥ ४३ ॥ इतिदशमेउ॰टीकायांत्र्यशीतितमोध्यायः ॥ ८३ ॥ ॥ चतुर्भिरधिकाशीतितमेमुनिसमागमे ॥ वसु

कामयामहएतस्यश्रीमत्पादरजःश्रियः ॥ कुचकुंकुमगंधाढ्यंमूर्ध्नावोढुंगदाभृतः ॥ ४२ ॥ व्रजस्त्रियोयद्वांछं
तिपुलिंद्यस्तृणवीरुधः ॥ गावश्चारयतोगोपाःपादस्पर्शंमहात्मनः ॥४३॥ इतिश्रीभागवतेमहापुराणेदश
मस्कंधेउत्तरार्धेत्र्यशीतितमोध्यायः ॥ ८३॥ ॥ श्रीशुकउवाच श्रुत्वापृथासुबलपुत्र्यथयाज्ञसेनीमाधव्यथ
क्षितिपपत्न्यउतस्वगोप्यः॥कृष्णेखिलात्मनिहरौप्रणयानुबंधंसर्वाविसिस्म्युरलमश्रुकलाकुलाक्ष्यः॥१॥
इतिसंभाष्यमाणासुस्त्रीभिःस्त्रीषुनृभिर्नृषु ॥ आययुर्मुनयस्तत्रकृष्णरामदिदृक्षया ॥२॥ द्वैपायनोनारदश्च
च्यवनोदेवलोऽसितः ॥ विश्वामित्रःशतानंदोभरद्वाजोऽथगौतमः ॥ ३ ॥ रामःसशिष्योभगवान्वसिष्ठोगा
लवोभृगुः ॥ पुलस्त्यःकश्यपोऽत्रिश्चमार्कंडेयोबृहस्पतिः॥४॥द्वितस्त्रितश्चैकतश्चब्रह्मपुत्रस्तथांऽगिराः॥अ
गस्त्योयाज्ञवल्क्यश्चवामदेवादयोऽपरे॥५॥ तान्दृष्ट्वासहसोत्थायप्रागासीनानृपादयः॥पांडवाःकृष्णरा
मौचप्रणेमुर्विश्ववंदितान्॥६॥तानानर्चुर्यथासर्वेसहरामोऽच्युतोऽर्चयत्॥स्वागतासनपाद्यार्घ्यमाल्यधूपानु
लेपनैः॥७॥ उवाचसुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदसस्तस्यमहतोयतवाचोऽनुशृण्वतः ॥ ८॥ श्री
भगवानुवाच अहोवयंजन्मभृतोलब्धंकात्स्न्र्येनतत्फलं ॥ देवानामपिदुष्प्रापंयद्योगेश्वरदर्शनं ॥ ९ ॥

देवमखोत्साहबंधुप्रस्थापनादिकं ॥ १ ॥ सुबलपुत्रीगांधारी माधवीसुभद्रा क्षितिपानांराज्ञांपत्न्यः स्वगोप्यःकृष्णभक्तागोप्यः विसि
स्म्युःविस्मयंचक्रुः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ आनर्चुःअर्चितवंतः ॥ ७ ॥ धर्मगोप्त्रीतनुर्यस्यसधर्मगुप्तनुः यतानियतावाग्य
स्यतस्यसदसः ॥ ८ ॥ जन्मभृतःसफलजन्मानः तत्फलंजन्मफलं किंतत् यद्योगेश्वरदर्शनं ॥ ९ ॥ ॥

किंच युष्माकंदर्शनमेवतावद्देवानामपिदुष्प्रापमस्माकंतुस्पर्शनादिकमपिकथंनुघटितमितिविस्मयेनाह किमिति स्वल्पतपसांतीर्थस्नाना
दिमात्रेतपोबुद्धिर्येषांतथार्चायांप्रतिमायांदेवइतिचक्षुर्दृष्टिर्येषांतेषांयोगेश्वरदर्शनादिकमिदंकिमसंभावितमित्यर्थः ॥ १० ॥ एतत्प्रपंचयति
नह्यम्मयानीतित्रिभिः ॥ ११ ॥ वाङ्मनसयोरप्युपासनाविषयत्वं योवाचंब्रह्मेत्युपास्तेमनोब्रह्मेत्युपास्तइतिश्रुतेः अघंहरंतितन्मूलमज्ञा
नंनहरंति अत्रहेतुः भेदकृतोभेदकर्तारः यद्वा भेदबुद्धिंकुर्वतःपुंसः विपश्चितोनिरस्तभेदाः तेतुमुहूर्तमात्रसेवयैवाघंघ्नंतीति ॥ १२ ॥ अतः
साधून्विहायान्यत्रात्मादिबुद्ध्यासज्जमानोऽतिमंदइत्याह आत्मबुद्धिरहमितिबुद्धिः त्रयोधातवोवातपित्तश्लेष्माणःप्रकृतयोयस्यतस्मिन्कु

**किंस्वल्पतपसांनृणामर्चायांदेवचक्षुषां ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकं ॥१०॥ नह्यम्मयानितीर्था
निनदेवामृच्छिलामयाः ॥ तेपुनंत्युरुकालेनदर्शनादेवसाधवः ॥ ११ ॥ नाग्निर्नसूर्योनचचंद्रतारकानभूर्ज
लंखंश्वसनोऽथवाङ्मनः ॥ उपासिताभेदकृतोहरंत्यघंविपश्चितोघ्नंतिमुहूर्तसेवया ॥१२॥ यस्यात्मबुद्धिः
कुणपेत्रिधातुकेस्वधीःकलत्रादिषुभौमइज्यधीः ॥ यत्तीर्थबुद्धिःसलिलेनकर्हिचिज्जनेष्वभिज्ञेषुसएवगोख
रः ॥ १३ ॥ श्रीशुकउवाच निशम्येत्थंभगवतःकृष्णस्याकुंठमेधसः ॥ वचोदुरन्वयंविप्रास्तूष्णीमासन्
भ्रमद्धियः ॥ १४ ॥ चिरंविमृश्यमुनयईश्वरस्येशितव्यतां ॥ जनसंग्रहइत्यूचुःस्मयंतस्तंजगद्गुरुं ॥ १५ ॥
यन्माययातत्त्वविदुत्तमावयंविमोहिताविश्वसृजामधीश्वराः॥ यदीशितव्यायतिगूढईहयाअहोविचित्रंभ
गवद्विचेष्टितं ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥**

णपेशरीरेस्वधीःस्वीयाइतिबुद्धिः भौमेभूविकारेइज्यधीर्देवताबुद्धिः यद्यस्यतीर्थबुद्धिःतीर्थमितिबुद्धिः अभिज्ञेषुतत्त्ववित्सुयस्यताबुद्ध्यो
नसंतिसएवगोष्वपिखरोदारुणःअत्यविवेकी यद्वा गवांतृणादिभारवाहःखरोगर्दभइति ॥ १३ ॥ दुरन्वयमननुरूपं भ्रमंतीअनवस्थिता
बुद्धिर्येषांते ॥ १४ ॥ ईशितव्यतामनीश्वराणांकर्माधिकारितांजनसंग्रहमात्रमेतदित्यूचुः स्मयंतोहसंतः ॥ १५॥ अनन्वयंविवृण्वंतआहु
र्द्वाभ्यां यन्माययेति तत्त्ववित्सुउत्तमाअपिवयं कासौमायाययाविमोहिताइतितामाहुः यदिति यद्यस्मादीहयानरचेष्टितेनगूढःसन्ईशित
व्यायतिअनीश्वरवदाचरतिभवान् नन्वहमीश्वरश्चेत्किमित्येवमाचरेयंतत्राहुः अहोइति भगवतस्तवविचेष्टितंविचित्रमतर्क्यं ॥ १६ ॥

भगवत्त्वमेवाहुः अनीहइति अनीहःअक्रियएव आत्मनास्वरूपमात्रेणबहुधेत्यत्रदृष्टांतः भौमैरिति भौमैर्घटादिविकारैरुपलक्षिता वा
चारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिश्रुतेः ननुकथमहंजगत्सृष्ट्यादिकर्तावसुदेवपुत्रत्वादिततत्राहुः अहोइति विभूम्नःपरिपूर्णस्य
तवइदंजन्मादिचरितंविडंबनमनुकरणमात्रंनतुतत्त्वमिति ॥ १७ ॥ जनसंग्रहमाहुःअथापीतित्रिभिः सत्त्वंशुद्धसत्त्वात्मकंरूपंबिभर्षिस्व
लीलयाआचारेणवेदपथंचबिभर्षि ॥ १८ ॥ अतएवब्राह्मणेषुबहुमानमपिकरोषीतिसहेतुकमाहुः ब्रह्मेति ब्रह्मवेदाख्यंशुक्लंशुद्धंतेहृदयमं
तरंगंरूपं कुतइत्यतआहुः यत्रेति यत्रब्रह्मणिव्यक्तंकार्यमव्यक्तंकारणंततः परंसन्मात्रंब्रह्मचतपआदिभिरुपलब्धंतद्ब्रह्मइति ॥ १९ ॥ त

**अनीहएतद्बहुधैकआत्मनासृजत्यवत्यत्तिनबध्यतेयथा ॥ भौमैर्हिभूमिर्बहुनामरूपिणीअहोविभूम्नश्चरितं विडंबनं ॥ १७ ॥ अथापिकालेस्वजनाभिगुप्तयेबिभर्षिसत्त्वंखलनिग्रहाय ॥ स्वलीलयावेदपथंसनात नंवर्णाश्रमात्मापुरुषःपरोभवान् ॥ १८ ॥ ब्रह्मतेहृदयंशुक्लंतपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धंसद्व्यक्तम व्यक्तंचततःपरं ॥ १९ ॥ तस्माद्ब्रह्मकुलंब्रह्मन्शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसिसद्धामतद्ब्रह्मण्याग्र णीर्भवान् ॥ २० ॥ अद्यनोजन्मसाफल्यंविद्यायास्तपसोदृशः ॥ त्वयासंगम्यसद्गत्यायदंतःश्रेयसांप रः ॥ २१ ॥ नमस्तस्मैभगवतेकृष्णायाकुंठमेधसे ॥ स्वयोगमाययाच्छन्नमहिम्नेपरमात्मने ॥ २२ ॥ न यंविदंत्यमीभूपाएकारामाश्चवृष्णयः ॥ मायाजवनिकाच्छन्नमात्मानंकालमीश्वरं ॥ २३ ॥ यथाशयानः पुरुषआत्मानंगुणतत्त्वदृक् ॥ नाममात्रेंद्रियाभातंनवेदरहितंपरं ॥ २४ ॥ ॥**

स्माद्वेदहृदयत्वाद्वेदप्रवर्तकंब्राह्मणकुलंशास्त्रयोनेर्वेदप्रमाणकस्यतवसद्धामश्रेष्ठमुपलब्धिस्थानंसभाजयसिसंपूजयसिततस्मादेवकारणा
त्त्वंब्रह्मण्यानामग्रणीर्मुख्यस्तत्प्रवर्तकःसन्कर्माचरसीत्यर्थः ॥ २० ॥ तस्मादीश्वरस्यतवेदंजनसंग्रहमात्रंवयंतुतवसंगत्याकृतार्थाइत्याहुः
अद्येतिषड्भिः सतांगत्यात्वयासंगम्यसंगंप्राप्य यत् यस्मात्त्वंश्रेयसांपरोऽवधिः ॥ २१ ॥ २२ ॥ एकस्मिन्नेवस्थानेआरामोयेषांतेपि कालं
सृष्ट्यादिकारणम् ईश्वरंनियंतारम् ॥ २३ ॥ एतत्सदृष्टांतमाहुः यथेति शयानः स्वप्नान्पश्यन् गुणतत्त्वदृक्स्वप्नविषयेषुतत्त्वदृष्टिः
नाममात्रमिंद्रियेणमनसाआभातंसिंहव्याघ्रादिरूपमात्मानंवेदतद्रहितंदेवदत्तादिरूपमात्मानंनवेदयथा ॥ २४ ॥ ॥ ॥

एवंत्वात्वांनाममात्रेषुस्वप्नादितुल्येषुविषयेषुइंद्रियैर्याईहाप्रवृत्तिःसैवमायातयाविभ्रमच्चित्तोनवेद स्मृतेर्विवेकस्यउपप्लवात्नाशात् ॥ २५ ॥ अघौघस्यमर्षंनाशंकरोतियद्गंगाख्यंतीर्थंतस्यास्पदमाश्रयंतेऽंघ्रिंसुविपक्वयोगैरपिहृदिकृतंकेवलंनतुदृष्टंतस्यतेंऽघ्रिंददृशिमदृष्टवंतोवयंबहुभिः पुण्यैरतोऽस्मान्भक्ताननुगृहाणभक्तान्कृत्वाऽनुग्रहंकुर्वित्यर्थः ननुकिंभक्त्यायथापूर्वंतपएवतप्यतामितिनेत्याहुःउत्सिक्ताउद्रिक्तायाभक्तिस्तया उपहतआशयलक्षणोजीवकोशोयेषांतएवपूर्वेभगवद्गतिमापुर्नान्यइति ॥ २६ ॥ २७ ॥ उपसंगृह्य चरणौपाणिभ्यांधृत्वा बभाषेइदमिति संधिरार्षः ॥ २८ ॥ सर्वेदेवायेषुतेभ्यः यावतीर्वैदेवतास्ताःसर्वाविदविदिब्राह्मणेवसंतीतिश्रुतेः येनकर्मणायथाकृतेनवा कर्मणांनिर्हारोनि

**एवंत्वानाममात्रेषुविषयेष्विंद्रियेहया ॥ माययाविभ्रमच्चित्तोनवेदस्मृत्युपप्लवात् ॥ २५ ॥ तस्याद्यतेददृशिमांघ्रिमघौघमर्षतीर्थास्पदंहृदिकृतंसुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहताशयजीवकोशाआपुर्भवद्गतिमथोऽनुगृहाणभक्तान् ॥ २६ ॥ श्रीशुकउवाच इत्यनुज्ञाप्यदाशार्हंधृतराष्ट्रंयुधिष्ठिरं ॥ राजर्षेस्वाश्रमान्गंतुंमुनयोदधिरेमनः ॥ २७ ॥ तद्वीक्ष्यतानुपव्रज्यवसुदेवोमहायशाः ॥ प्रणम्यचोपसंगृह्यबभाषेदंसुयंत्रितः ॥ २८ ॥ वसुदेवउवाच नमोवःसर्वदेवेभ्यऋषयःश्रोतुमर्हथ ॥ कर्मणाकर्मनिर्हारोयथास्यान्नस्तदुच्यतां ॥ २९ ॥ श्रीनारदउवाच नातिचित्रमिदंविप्रावसुदेवोबुभुत्सया ॥ कृष्णंमत्वाऽर्भकंयन्नःपृच्छतिश्रेयआत्मनः ॥ ३० ॥ सन्निकर्षोऽत्रमर्त्यानामनादरणकारणं ॥ गांगंहित्वायथाऽन्यांभस्तत्रत्योयातिशुद्धये ॥ ॥ ३१ ॥ यस्यानुभूतिःकालेनलयोत्पत्त्यादिनाऽस्यवै ॥ स्वतोऽन्यस्माच्चगुणतोनकुतश्चनरिष्यति ॥ ३२ ॥**

रासोभवतितदुच्यतां ॥ २९ ॥ श्रीकृष्णंहित्वाअस्मान्पृच्छतीतिविस्मितान्प्रत्याह नातीति बुभुत्सयाबोद्धुमिच्छया ॥ ३० ॥ तत्रत्योगंगातीरवासी ॥ ३१ ॥ श्रीकृष्णेऽर्भकत्वमानोऽविद्याविजृंभितइत्याह यस्येतिद्वाभ्यां अनुभूतिर्ज्ञानंकुतश्चिदपिनरिष्यतिननश्यति तदेवाह कालेनकर्कटिकाफलवत् अस्यविश्वस्यलयोत्पत्त्यादिनाऽपि स्वतश्चाविद्युदादिवत् अन्यस्माच्चमुद्गरादेर्घटादिवत् गुणतोरूपाद्यंतरोत्पत्तेः पूर्वरूपादिनादेहादिवत् ॥ ३२ ॥ ॥ ॥ ॥ ॥

तमेवकुतश्चिदप्यव्याहतानुभवमतएवईश्वरं किंच अद्वितीयंकृष्णमन्यः प्राकृतउपगूढमाच्छन्नंमनुष्यंमन्येत कैः क्लेशकर्मादिभिः तत्रक्ले
शारागादयश्चतत्पूर्वकाणिकर्माणि चतत्परिपाकेसुखदुःखेचसत्वादीनांगुणानांपुनः प्रवाहश्चतैः प्राणादिभिश्चस्वैर्विभवैः स्वकार्यैः अत्रदृष्टां
तः मेघहिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ चित्तस्योपशमः उपशमहेतुः योगोमोक्षोपायश्च शनैरा
त्ममुदमावहतीतितथा सुगमः प्रवृत्याश्रयत्वात् स्वधर्मश्चआवश्यकः अन्यथाविहिताकरणेनमालिन्यप्रसंगात् ॥ ३६ ॥ ननुनकर्मणानप्रजया
धनेनत्यागेनैकेअमृतत्वमानशुरित्यादिनात्यागस्यैवविहितत्वात्कथंकर्ममोक्षोपायइत्याशंक्यआदावेवत्यागस्याशक्यत्वादित्याशयेनाहुः अ

तंक्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयं ॥ प्राणादिभिः स्वविभवैरुपगूढमन्योमन्येत
सूर्यमिवमेघहिमोपरागैः ॥ ३३ ॥ अथोचुर्मुनयोराजन्नाभाष्यानकदुंदुभिं ॥ सर्वेषांशृण्वतांराज्ञांतथैवा
च्युतरामयोः ॥ ३४ ॥ कर्मणाकर्मनिर्हारएषसाधुनिरूपितः ॥ यच्छ्रद्धयायजेद्विष्णुंसर्वयज्ञेश्वरंमखैः ॥ ३५ ॥
चित्तस्योपशमोऽयंवैकविभिः शास्त्रचक्षुषा ॥ दर्शितः सुगमोयोगोधर्मश्चात्ममुदावहः ॥ ३६ ॥ अयंस्वस्त्य
यनः पंथाद्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाप्तवित्तेनशुक्लेनेज्येतपूरुषः ॥ ३७ ॥ वित्तैषणांयज्ञदानैर्गृहैर्दारसुतै
षणां ॥ आत्मलोकैषणांदेवकालेनविसृजेद्बुधः ॥ ३८ ॥ ग्रामेत्यक्तैषणाः सर्वेययुर्धीरास्तपोवनं ॥ ऋणैस्त्रि
भिर्द्विजोजातोदेवर्षिपितॄणांप्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्यत्यजन्पतेत् ॥ ३९ ॥ त्वंत्वद्यमुक्तोद्वाभ्यां
वैऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्यनिर्ऋणोशरणोभव ॥ ४० ॥ ॥ ॥

यमितिसार्धचतुर्भिः स्वस्त्ययनः स्वास्तिक्षेमंईयतेऽनेनेतितथा श्रद्धयानिष्कामतयाशुक्लेनशुद्धेनआप्तेनावित्तेनपुरुषः ईश्वरः इज्येतेतियत् एष
पंथाः ॥ ३७ ॥ स्वस्त्ययनमाहुः वित्तैषणामिति वित्तफलभूतैर्यज्ञैर्दानैश्चवित्तैषणांवित्तेच्छांविसृजेत् गृहैर्गृहोचितैर्भोगैर्दारसुतैषणांविसृजे
त् तदनुभवेनैवतदौत्सुक्यनिवृत्तेः देहेमृतेआत्मनः स्वर्गादिलोकैषणांकालेनक्षयानुसंधानेनाविसृजेत् देवहेवसुदेव यद्वा देवकालेनदेवा
नामपिमृत्युना मृत्युहेतुभूतेनेत्यर्थः ॥ ३८ ॥ अत्राचारंप्रमाणयति ग्रामइति किंच ऋणैरिति तथाचश्रुतिः जायमानोवैब्राह्मणस्त्रिभिर्ऋ
णवान्जायतेब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यः प्रजयापितृभ्यइत्यादि तान्यनिस्तीर्यतेषामृणान्यनपाकृत्य तथाचमनुः ऋणानित्रीण्यपाकृत्य
मनोमोक्षेनिवेशयेत् ॥ अनपाकृत्यमोक्षंतुसेवमानोव्रजत्यधइति ॥ ३९ ॥ निर्ऋणः निर्मुक्तऋणः अशरणोभवगृहात्प्रव्रज ॥ ४० ॥

किंचअविशुद्धचित्तानामयंक्रमस्त्वंतुकृतार्थएवेत्याहु: वसुदेवेति भवान्नूनंनिश्चितंपरमयाप्रेमलक्षणयाभक्त्याहरिंप्रार्चः अर्चितवान् यत्र्य स्माद्वांपुवयोः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ आलिप्ताःकुंकुमादिभिः वस्तुपाणयःगृहीतार्हणहस्ताः ॥ ४५ ॥ ४६ ॥ अक्तंनेत्रयोरंजनेन अभ्य क्तंसर्वांगेषुनवनीतेन ॥ ४७ ॥ ताभिःपत्नीभिःसहितोदीक्षितोविरेजे ॥ ४८ ॥ ४९ ॥ जीवेशौसर्वजीवानामीशौ ॥ ५० ॥ अनुयज्ञंप्रतियज्ञं

वसुदेवभवान्नूनंभक्त्यापरमयाहरिं ॥ जगतामीश्वरंप्रार्चःसयद्वांपुत्रतांगतः ॥ ४१ ॥ श्रीशुकउवाच इ तितद्वचनंश्रुत्वावसुदेवोमहामनाः ॥ तानृषीनृत्विजोवव्रेमूर्ध्नानम्यप्रसाद्यच ॥ ४२ ॥ तएनमृषयोराजन्वृता धर्मेणधार्मिकं ॥ तस्मिन्नयाजयन्क्षेत्रेमखैरुत्तमकल्पकैः ॥ ४३ ॥ तद्दीक्षायांप्रवृत्तायांवृष्णयःपुष्करस्रजः ॥ स्नाताःसुवाससोराजन्राजानःसुष्ठ्वलंकृताः ॥ ४४ ॥ तन्महिष्यश्चमुदितानिष्ककंठ्यःसुवाससः ॥ दीक्षाशा लामुपाजग्मुरालिप्तावस्तुपाणयः ॥ ४५ ॥ नेदुर्मृदंगपटहशंखभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुःसूत मागधाः ॥ जगुःसुकंठ्योगंधर्व्यःसंगीतंसहभर्तृकाः ॥ ४६ ॥ तमभ्यषिंचन्विधिवदक्तमभ्यक्तमृत्विजः ॥ प त्नीभिरष्टादशभिःसोमराजमिवोडुभिः ॥ ४७ ॥ ताभिर्दुकूलवलयैर्हारनूपुरकुंडलैः ॥ स्वलंकृताभिर्विबभौदी क्षितोऽजिनसंवृतः ॥ ४८ ॥ तस्यर्त्विजोमहाराजरत्नकौशेयवाससः ॥ ससदस्याविरेजुस्तेयथावृत्रहणोऽध्व रे ॥ ४९ ॥ तदारामश्चकृष्णश्चस्वैःस्वैर्बंधुभिरन्वितौ ॥ रेजतुःस्वसुतैर्दारैर्जीवेशौस्वविभूतिभिः ॥ ५० ॥ ईजेनुयज्ञंविधिनाअग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरं ॥ ५१ ॥ अथर्त्विग्भ्योददा त्कालेयथाम्नातंसदक्षिणाः ॥ स्वलंकृतेभ्योविप्रेभ्योगोभूकन्यामहाधनाः ॥ ५२ ॥ पत्नीसंयाजावभृथ्यैश्च रित्वातेमहर्षयः ॥ सस्नूरामन्हदेविप्रायजमानपुरःसराः ॥ ५३ ॥ स्नातोऽलंकारवासांसिबंदिभ्योऽदात्तथा स्त्रियः ॥ ततःस्वलंकृतोवर्णानाश्वभ्योऽन्नेनपूजयत् ॥ ५४ ॥ ॥ ॥ ॥

आम्नातसर्वांगाःप्राकृताज्योतिष्टोमदर्शपूर्णमासादयस्तेभ्यश्चोदनालिंगादिभिरतिदेशप्राप्तांगावैकृताःसौरसत्रादयस्तैःसर्वैः द्रव्यंपुरोडाशा दिज्ञानंमंत्रः क्रियाकर्म तेषामीश्वरं ॥ ५१ ॥ ५२ ॥ सस्नुःस्नानंचक्रुः ॥ ५३ ॥ आश्वभ्यःशुनोऽभिव्याप्य अन्नेनपूजयत्अपूजयत् ॥ ५४ ॥

बंध्वादिचारणांतान्पारिबर्हेणप्रीतिदानेनचापूजयत् तेचसर्वेप्रययुः ॥ ५५ ॥ ५६ ॥ प्रयाणेकेषांचिद्विशेषमाह धृतराष्ट्रइतिद्वाभ्यां अनुजोविदुरः पार्थायुधिष्ठिरभीमार्जुनाः यमौनकुलसहदेवौ ॥ ५७ ॥ सौहृदेनाक्लिन्नानिचेतांसियेषांते ॥ ५८ ॥ ५९ ॥ मनोरथोयज्ञविषयः तमेवमहार्णवं ॥ ६० ॥ शूराणांबलेनयोगिनांज्ञानेनापीत्यर्थः ॥ ६१ ॥ तत्कुतस्तत्राह अस्मास्विति कृताऽज्ञेषुकृतमुपकारमजा



बंधून्सदारान्ससुतान्पारिबर्हेणभूयसा॥विदर्भकोसलकुरून्काशिकैकयसृंजयान्॥ ५५ ॥सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् ॥ श्रीनिकेतमनुज्ञाप्यशंसंतःप्रययुःक्रतुं ॥ ५६ ॥ धृतराष्ट्रोऽनुजःपार्थाभीष्मोद्रोणःपृथायमौ॥नारदोभगवान्व्यासःसुहृत्संबंधिबांधवाः ॥ ५७ ॥ बंधून्परिष्वज्ययदून्सौहृदाक्लिन्नचेतसः ॥ ययुर्विरहकृच्छ्रेणस्वदेशांश्चापरेजनाः ॥५८॥ नंदस्तुसहगोपालैर्बृहत्यापूजयाऽर्चितः॥कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बंधुवत्सलः ॥ ५९ ॥ वसुदेवोंऽजसोत्तीर्यमनोरथमहार्णवं ॥ सुहृद्वृतःप्रीतमनानंदमाहकरेस्पृशन् ॥ ॥६०॥ वसुदेवउवाच भ्रातरीशकृतःपाशोनृणांयःस्नेहसंज्ञितः ॥ तंदुस्त्यजमहंमन्येशूराणामपियोगिनां ॥ ६१ ॥ अस्मास्वप्रतिकल्पेयंयत्कृताज्ञेषुसत्तमैः ॥ मैत्र्यर्पिताऽफलावापिननिवर्तेतकर्हिचित् ॥ ६२ ॥ प्रागकल्पाच्चकुशलंभ्रातर्वोनाचरामहि॥अधुनाश्रीमदांधाक्षानपश्यामपुरःसतः ॥६३॥ माराज्यश्रीरभूत्पुंसःश्रेयस्कामस्यमानद ॥ स्वगतानुतबंधून्वानपश्यतिययांऽधदृक् ॥ ६४ ॥ श्रीशुकउवाच एवंसौहृदशैथिल्यचित्तआनकदुंदुभिः ॥ रुरोदतत्कृतांमैत्रींस्मरन्नश्रुविलोचनः ॥ ६५ ॥ नंदस्तुसख्युःप्रियकृत्प्रेम्णागोविंदरामयोः ॥ अद्यश्वइतिमासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥ ६६ ॥ ततःकामैःपूर्यमाणःसव्रजःसहबांधवः ॥ परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥६७॥ ॥ ॥ ॥

नत्सुसत्तमैर्भवद्भिरप्रतिकल्पाअनुपमामैत्रीयमार्पिताअफलाऽपिप्रत्युपकारशून्याऽपिकर्हिचित्यद्यस्मान्ननिवर्तेत तस्मादीश्वरकृतःपाशोऽयंभवतामितिगम्यतइत्यर्थः ॥ ६२ ॥ अफलत्वमेवाह प्रागिति हेभ्रातःअकल्पात्असामर्थ्याद्वः कुशलंप्रियंनाहिआचरामनकृतवंतोवयंश्रीमदेनांधान्यक्षीणियेषांते ॥ ६३ राज्यश्रीर्माभूत् छांदसोऽडागमः ॥ ६४ ॥ ६५ ॥ अद्यश्वइति प्रातर्निर्गमेऽद्यैवापराह्णेगम्यतामितिअपराह्णनिर्गमेश्वोगम्यतामितिपुनःपुनरेवंमानितः ॥ ६६ ॥ ६७ ॥ ॥ ॥

यापितः महासैन्येनप्रस्थापितः ॥ ६८ ॥ ६९ ॥ ७० ॥ यदुदेवस्यवसुदेवस्यमहोत्सवंयज्ञादिलक्षणंसुहृत्संदर्शनादिकंचेति ॥ ७१ ॥
इति०द०उ०टीकायांचतुरशीतितमोध्यायः ॥ ८४ ॥ ॥ पंचाशीतितमेरामकृष्णौसंप्रार्थितौसुतौ ॥ पित्रेज्ञानमथोमात्रेमृतान्पुत्रानयच्छ
तां ॥१॥ नंदयित्वाकुरुक्षेत्रयात्रायांसुहृदोबहून् ॥ तत्त्वज्ञानंततःपित्रोरादिशन्मृतसूनुभिः ॥२॥१॥ धामप्रभावस्तत्सूचकं जातविश्रंभउ
त्पन्नविश्वासः परिभाष्यसंबोध्य ॥ २ ॥ अस्यविश्वस्ययत्साक्षात्स्वरूपभूतंकारणंप्रधानपुरुषौनामपरौतयोरपिकारणत्वेनेश्वरौचसाक्षा
द्वांयुवामितिजाने ॥३॥ नन्विदंविश्वमनेकैःकारकैर्जायमानंकुतःप्रधानपुरुषात्मकंकुतस्तरामावयोस्तत्कारणत्वेनेश्वरत्वंतत्राह यत्रेति
यत्राधिकरणे येनकर्त्राकरणेनच यतउपादानात् यस्यसंबंधेन षष्ठ्यर्थस्याकारकत्वेऽपिनिमित्ततोक्ता यस्मैसंप्रदानाय यद्यदितिप्रयोज्यक

वसुदेवोग्रसेनाभ्यांकृष्णोद्धवबलादिभिः॥दत्तमादायपारिबर्हैर्यापितोयदुभिर्ययौ ॥६८॥ नंदोगोपाश्चगो
प्यश्चगोविंदचरणांबुजे॥ मनःक्षिप्तंपुनर्हर्तुमनीशामथुरांययुः॥ ६९ ॥ बंधुषुप्रतियातेषुवृष्णयःकृष्णदेव
ताः॥ वीक्ष्यप्रावृषमासन्नांययुर्द्वारवतींपुनः॥७०॥जनेभ्यःकथयांचक्रुर्यदुदेवमहोत्सवं॥यदासीत्तीर्थयात्रा
यांसुहृत्संदर्शनादिकं॥ ७१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेतीर्थयात्रानुवर्णनंनामचतुर
शीतितमोध्यायः॥८४॥ ॥ ॥ श्रीबादरायणिरुवाच अथैकदात्मजौप्राप्तौकृतपादाभिवंदनौ॥ वसुदे
वोभिनंद्याहप्रीत्यासंकर्षणाच्युतौ॥ १॥ मुनीनांसवचःश्रुत्वापुत्रयोर्धामसूचकं॥ तद्वीर्यैर्जातविश्रंभःपरिभा
ष्याभ्यभाषत॥ २ ॥ कृष्णकृष्णमहायोगिन्संकर्षणसनातन ॥ जानेवामस्ययत्साक्षात्प्रधानपुरुषौपरौ॥
॥ ३॥ यत्रयेनयतोयस्ययस्मैयद्यद्यथायदा॥ स्यादिदंभगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ ४ ॥

र्तृकर्मकारकेदर्शिते ननुतयोर्नास्तिभेदः यथोक्तं करोतिक्रियमाणेननकश्चित्कर्मणाविना ॥ भवत्यर्थस्यकर्ताचकरोतेःकर्मजायते तथा क
रोत्यर्थस्ययःकर्ताभवितुःसप्रयोजकः ॥ भवितातमपेक्ष्याथप्रयोज्यत्वंप्रपद्यतइतिच सत्यं तथाप्यवस्थाभेदेनभेदोविवक्षितः दृश्यतेचाव
स्थाभेदः तंडुलानोदनंपचति मृदंघटंकरोतीति तदेवंसप्तविभक्त्यर्थादर्शिताः यथेतियदेतिचक्रियाविशेषणभूतानामन्येषांचाव्ययानाम
र्थाः स्यादितिक्रियापदार्थोपलक्षणं एवंसर्वंप्रपंचमनूद्यतत्कारणस्यभगवद्रूपतांविधत्ते इदंसाक्षादिति प्रधानंभोग्यं पुरुषोभोक्तातयोरी
श्वरोभगवांस्त्वमेवसाक्षादिति तयोरैक्यमभिप्रेत्यैकवचनं ॥ ४ ॥ ॥ ॥ ॥

किंच धारणपोषणकर्ताऽपित्वमेवेत्याह एतदिति हेआत्मन्प्राणःक्रियाशक्तिर्जीवोज्ञानशक्तिश्चसंस्त्वमेवबिभर्षि ॥ ५ ॥ ननुप्राणादीनांवि चित्रशक्तीनांकारणत्वावगमात्कथंपरमेश्वरस्यैवकारणत्वेनसर्वात्मकत्वमुच्यतइत्याशंक्यप्राणादिशक्तयोऽपितस्यैवेत्याह प्राणादीनामि ति प्राणःसूत्रंतदादीनांविश्वसृजांविश्वकारणानांयाःशक्तयस्ताःपरस्यपरमकारणस्येश्वरस्यैव कुतः पारतंत्र्यात् यथावेधशक्तिर्नबाणस्य अपितुपुरुषस्यतद्वदित्यर्थः ननुभगवतःप्राणादिवर्गस्यचस्वातंत्र्यमेवकिंनस्यादतआह वैसादृश्याद्वयोरिति चेतनाचेतनत्वेनविसदृशत्वा त्किंपुनर्बहूनांतस्मादेकेनसर्वज्ञेनसर्वशक्तिनाऽधिष्ठितानामेवविशिष्टकार्यारंभकत्वंयुक्तंनस्वतंत्राणामिति तथाचोक्तं यदैतेसंहताभावाभूतें द्रियमनोगुणाः ॥यदायतननिर्माणेनशेकुर्ब्रह्मवित्तम ॥ तदासंहत्यचान्योऽन्यंभगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादायचोभयंससृजुर्ह्यद इति तथा नानात्वात्स्वक्रियाऽनीशाःप्रोचुःप्रांजलयोविभुमित्यादि ननुप्राणादीनांक्रियाकारित्वंशक्त्यभावेकुतःस्यादतआह चेष्टैवचेष्ट

**एतन्नानाविधंविश्वमात्मसृष्टमधोऽक्षज ॥ आत्मनानुप्रविश्यात्मन्प्राणोजीवोबिभर्ष्यज: ॥ ५ ॥ प्राणा दीनांविश्वसृजांशक्तयोयाःपरस्यताः ॥ पारतंत्र्याद्वैसादृश्याद्द्वयोश्चेष्टैवचेष्टतां ॥ ६ ॥ कांतिस्तेजःप्रभा सत्ताचंद्राग्न्यर्कर्क्षविद्युतां ॥ यत्स्थैर्यंभूभृतांभूमेर्वृत्तिर्गंधोऽर्थतोभवान् ॥ ७ ॥ तर्पणंप्राणनमपांदेवत्वंताश्च तद्रसः ॥ ओजःसहोबलंचेष्टागतिर्वायोस्तवेश्वर ॥ ८ ॥ दिशांत्वमवकाशोऽसिदिशःखंस्फोटआश्रयः ॥ नादोवर्णस्त्वमोंकारआकृतीनांपृथक्कृतिः ॥ ९ ॥ ॥ ॥ ॥ ॥**

तामिति चेष्टमानानामेषांचेष्टैवनतुशक्तिःयथावायोःशक्त्यातृणादीनांचलनं यथापुरुषस्यशक्त्याशराणांवेगइति ॥ ६ ॥ पारतंत्र्यमेवप्रपंच यति कांतिरितिपंचभिः चंद्रस्यकांतिः अग्नेस्तेजः अर्कस्यप्रभा ऋक्षविद्युतांसत्तास्फुरणमात्रेणसत्त्वं अर्थतोवस्तुतोभवान् तथाचश्रुतिः नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभातीति स्मृतिश्च यदादित्यगतं तेजोजगद्भासयतेऽखिलं ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमिति भूमेर्वृत्तिःप्राणिनामाधारत्वेनवर्त्तनंगंधश्चभवान् तवैवशक्तिरित्यर्थः ॥ ७ ॥ किंच हेदेवअपांतर्पणंतृप्तिजनकत्वंजीवनहेतुत्वंताआपश्चतासांरसश्चत्वमेव किंच वायोरोजःसहआदितवैवशक्तिः ॥ ८ ॥ दि शामुपाधिकृताकाशप्रदेशानामवकाशःदिशश्चत्वं खंसामान्याकाशस्तदाश्रयःस्फोटश्चशब्दतन्मात्रंपरावस्थावागित्यर्थः नादःपश्यंती ओंकारोमध्यमावर्णश्चआकृतीनांपदार्थानांपृथक्कृतिःपृथक्करणमभिधानंयस्मात्तत्पदंवर्णपदाद्यात्मिकावैखरीचत्वमित्यर्थः ॥ ९ ॥

इंद्रियाणामिंद्रियंविषयप्रकाशनशक्तिर्देवाश्चेंद्रियाधिष्ठातारस्तदनुग्रहस्तेषामधिष्ठानशक्तिश्चत्वं अवबोधोऽध्यवसायशक्तिः अनुस्मृतिःप्रति
संधानशक्तिः ॥ १० ॥ भूतानांकारणंभूतादिस्तामसोऽहंकार स्त्वमसि इंद्रियाणांकारणंतैजसोराजसोऽहंकारस्त्वं विविधमाधिदैवाध्यात्मा
धिभूतभेदेनविकल्प्यंतइतिविकल्पादेवास्तेषांकारणंवैकारिकःसात्विकोऽहंकारश्चत्वं अनुशायिनांजीवानांसंसारकारणंप्रधानंत्वं ॥ ११
अपिच नश्वरेषुनाशशीलेषुइहैतेषुभावेषुयदनश्वरमवशिष्यमाणंरूपंतत्त्वमसि द्रव्यविकारेषुमृत्सुवर्णादिकार्येषुघटकुंडलादिषुनश्वरेषुच
द्रव्यमात्रंमृत्सुवर्णादिमात्रमनश्वरंयथातद्वत् ॥ १२ ॥ ननुत्रिगुणात्मककार्यरूपोऽपित्वमित्युक्तत्वात्कथमनश्वरत्वंतत्राह सत्वमिति तद्वृ
त्तयस्तत्परिणामाश्चमहदादयःअद्धासाक्षात्त्वयिपरेब्रह्मणिकल्पिताः ॥ १३ ॥ तस्मान्नसंतीति नन्वसतांकथंप्रतीतिरतआह यर्हीति य

**इंद्रियंत्विंद्रियाणांत्वंदेवाश्चतदनुग्रहः ॥ अवबोधोभवान्बुद्धेर्जीवस्यानुस्मृतिःसती ॥ १० ॥ भूतानामसिभूता**
**दिरिंद्रियाणांचतैजसः ॥ वैकारिकोविकल्पानांप्रधानमनुशायिनां ॥ ११ ॥ नश्वरेष्विहभावेषुतदसित्वमन**
**श्वरं ॥ यथाद्रव्यविकारेषुद्रव्यमात्रंनिरूपितं ॥ १२ ॥ सत्त्वंरजस्तमइतिगुणास्तद्वृत्तयश्चयाः ॥ त्वय्यद्धाब्र**
**ह्मणिपरेकल्पितायोगमायया ॥ १३ ॥ तस्मान्नसंत्यमीभावायर्हित्वयिविकल्पिताः ॥ त्वंचामीषुविकारेषुह्य**
**न्यदाऽव्यावहारिकः ॥ १४ ॥ गुणप्रवाहएतस्मिन्नबुधास्त्वखिलात्मनः ॥ गतिंसूक्ष्मामबोधेनसंसरंतीहकर्म**
**भिः ॥ १५ ॥ यदृच्छयानृतांप्राप्यसुकल्पामिहदुर्लभां ॥ स्वार्थेप्रमत्तस्यवयोगतंत्वन्माययेश्वर ॥ १६ ॥**
**असावहंममैवैतेदेहेचास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नातिभवान्सर्वमिदंजगत् ॥ १७ ॥ युवांननःसुतौसा**
**क्षात्प्रधानपुरुषेश्वरौ ॥ भूभारक्षत्रक्षपणअवतीर्णौतथात्थह ॥ १८ ॥ ॥ ॥**

दाविकल्पितास्तदैवप्रतीतिमात्रेणत्वयिसंतित्वंचामीषुतदैवकारणतयाअनुगतः अन्यदातुअव्यावहारिकोविकल्पकस्त्वमेवावशिष्यसइ
त्यर्थः ॥ १४ ॥ एवंरूपत्वादज्ञानानिबंधनश्चसंसारइत्याह गुणप्रवाहइति सूक्ष्मांनिष्प्रपंचांगतिमबुधाअविद्वांसः अबुद्धेतिवापाठः अ
तःअबोधेनदेहाभिमानेनकृतैःकर्मभिःसंसरंतीति ॥ १५ ॥ एवंतयोस्तत्वंनिरूप्यतदप्राप्त्याशोचतियदृच्छयेति नृतांमनुष्यतां सुकल्पांपटुत
रेंद्रियां ॥ १६ ॥ अहोकिमितिप्रमत्तोऽसित्वयाबहुभिःपाशैर्निबद्धत्वादित्याह असावहमिति देहेअस्यदेहस्यान्वयादिषुपुत्रादिषुचममैवैतइ
ति ॥ १७ ॥ अहोत्वत्पुत्रयोरावयोःकिमिदमारोप्यतेअतआह युवामिति भूभारक्षत्रक्षपणार्थमवतीर्णौतथाहनिश्चितमात्थकथयसि ॥ १८ ॥

तत्तस्मादरणंशरणमापन्नानांसंसृतिभयमपहंतीतितथातत् ननुत्वमतिसुखंवृथाकिंनिर्विद्यसेअतआह एतावतेति इंद्रियलालसेनइंद्रियार्थतृष्णया यद्येनेंद्रियलालसेनमर्त्येशरीरेआत्मदृक्आत्मबुद्धिरहंत्वयि चपरेपरमेश्वरेअपत्यबुद्धिरस्मितेनालमलंपर्याप्तमिति ॥ १९ ॥ ननुकुतएतत्अहंपरमेश्वरइतितत्राह सूतीगृहेइति नौआवयोः अनुयुगंप्रतियुग्मं यदासुतपाःपृश्निरितियुग्मं यदाकश्यपोदितिश्चेतियुग्मं अधुनावसुदेवोदेवकीतियुग्मं एवंहिप्रतियुग्ममजएवाहंसंजज्ञेअवतीर्णइतिभवान्नूनंजगाद ननुअन्योसौचतुर्भुजोदेवइतितत्राह नानातनूरिति गगनवदसंगएवत्वं भूम्नःसर्वगतस्यविभूतिरूपांमायांकोवेदेति ॥२०॥ २१ ॥ उपमन्महेउपमन्यामहे समुद्दिश्यविषयीकृत्यतत्वग्रा

तत्तेगतोऽस्म्यरणमद्यपदारविंदमापन्नसंसृतिभयापहमार्त्तबंधो ॥ एतावताऽलमलमिंद्रियलालसेनमर्त्यात्मदृक्त्वयिपरेयदपत्यबुद्धिः ॥ १९ ॥ सूतीगृहेननुजगादभवानजोनौसंजज्ञइत्यनुयुगंनिजधर्मगुप्त्यै ॥ नानातनूर्गगनवद्विदधज्जहासिकोवेदभूम्नउरुगायविभूतिमायां ॥ २० ॥ श्रीशुकउवाच आकर्ण्येत्थंपितुर्वाक्यंभगवान्सात्वतर्षभः ॥ प्रत्याहप्रश्रयानम्रःप्रहसन्श्लक्ष्णयागिरा॥२१॥ श्रीभगवानुवाच वचोवःसमवेतार्थंतातैतदुपमन्महे ॥ यन्नःपुत्रान्समुद्दिश्यतत्त्वग्रामउदाहृतः ॥ २२ ॥ अहंयूयमसावार्यइमेचद्वारकौकसः॥सर्वेऽप्येवंयदुश्रेष्ठविमृश्याःसचराचरं॥२३॥आत्माह्येकःस्वयंज्योतिर्नित्योन्योनिर्गुणोगुणैः आत्मसृष्टैस्तत्कृतेषुभूतेषुबहुधेयते ॥ २४ ॥ खंवायुर्ज्योतिरापोभूस्तत्कृतेषुयथाशयं ॥ आविस्तिरोऽल्पभूर्येकोनानात्वंयात्यसावपि ॥ २५ ॥ श्रीशुकउवाच एवंभगवताराजन्वसुदेवउदाहृतः ॥ श्रुत्वाविनष्टनानाधीस्तूष्णींप्रीतमनाअभूत् ॥ २६ ॥ ॥ ॥

मस्तत्वसमूहःउदाहृतःसम्यङ्निरूपितः ॥ २२ ॥ इमामेवदृष्टिंसर्वत्रविधत्स्वेत्याह अहमिति एवंविमृश्याब्रह्मत्वेनैवान्वेषणीयाः किंच सचराचरंजगदपि ॥ २३ ॥ ननुविकारवतांकुतोब्रह्मत्वमितिचेन्न ब्रह्मणएवोपाधिधर्मैर्बहुधाप्रतीतेरितिसदृष्टांतमाहद्वाभ्यां आत्माहीति यथा खादिभूतानितत्कृतेषुघटादिष्वाविस्तिरोभावादियांतिएवमसावात्माऽपिआत्मसृष्टैर्गुणैः कृत्वातत्कृतेषुदेहेषुबहुधाईयतेपुनश्चयथाशयंयथोपाधिआविर्भावतिरोभावादिरूपेणप्रतीयतेनवस्तुतःकुतःएकोबहुधास्वयंज्योतिर्दृश्यत्वेननित्योऽनित्यत्वेनअनन्योन्यत्वेननिर्गुणःसगुणत्वेनेत्यादिबहुधात्वंप्रपंचनीयं ॥ २४ ॥ २५ ॥ २६ ॥ ॥ ॥

सुविस्मितासती ॥ २७ ॥ समाश्राव्यसंबोध्य ॥ २८ ॥ २९ ॥ भूमेर्भारायमाणानांराज्ञामर्थेतेषांनिधनार्थंमेमयिकिलावतीर्णौ ॥ ३० ॥
हेआद्ययस्यांशःपुरुषस्तस्यांशोमायातस्याअंशागुणास्तेषांभागेनपरमाणुमात्रलेशेनविश्वोत्पत्त्यादयोभवंति तंत्वात्वांगतिंशरणंगतास्मि॥
३१॥ आनिन्यथुःआनीतवंतौ पितृस्थानात्‌यमसदनात्‌ ॥ ३२ ॥ ३३ ॥ ३४॥ दैत्यराट्बलिःकथंभूतौ विश्वस्यात्मभूतंदैवं सान्वयःसप

अथतत्रकुरुश्रेष्ठदेवकीसर्वदेवता ॥ श्रुत्वानीतंगुरोःपुत्रमात्मजाभ्यांसुविस्मिता ॥ २७ ॥ कृष्णरामौसमा
श्राव्यपुत्रान्कंसविहिंसितान्‌ ॥ स्मरंतीकृपणंप्राहवैक्लव्यादश्रुलोचना ॥ २८ ॥ देवक्युवाच रामरामाप्र
मेयात्मन्कृष्णयोगेश्वरेश्वर ॥ वेदाहंवांविश्वसृजामीश्वरावादिपूरुषौ ॥ २९ ॥ कालविध्वस्तसत्त्वानांरा
ज्ञामुच्छास्त्रवर्तिनां ॥ भूमेर्भारायमाणानामवतीर्णौकिलाद्यमे ॥ ३०॥ यस्यांशांशांशभागेनविश्वोत्पत्तिल
योदयाः ॥ भवंतिकिलविश्वात्मंस्तंत्वाऽद्याहंगतिंगता ॥ ३१ ॥ चिरान्मृतसुतादानेगुरुणाकालचोदितौ ॥
आनिन्यथुःपितृस्थानाद्गुरवेगुरुदक्षिणां ॥ ३२ ॥ तथामेकुरुतंकामंयुवांयोगेश्वरेश्वरौ ॥ भोजराजहता
न्पुत्रान्कामयेद्रष्टुमाहृतान्‌ ॥ ३३ ॥ ऋषिरुवाच एवंसंचोदितौमात्रारामःकृष्णश्चभारत ॥ सुतलंसंवि
विशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥ तस्मिन्प्रविष्टावुपलभ्यदैत्यराड्विश्वात्मदैवंसुतरांतथात्मनः ॥ तद्द
र्शनाल्हादपरिप्लुताशयःसद्यःसमुत्थायननामसान्वयः ॥ ३५ ॥ तयोःसमानीयवरासनंमुदानिविष्टयोस्त
त्रमहात्मनोस्तयोः ॥ दधारपादाववनिज्यतज्जलंसवृंदआब्रह्मपुनद्यदंबुह ॥३६ ॥ समर्हयामाससतौविभू
तिभिर्महार्हवस्त्राभरणानुलेपनैः॥तांबूलदीपामृतभक्षणादिभिःस्वगोत्रवित्तात्मसमर्पणेनच॥३७॥सइंद्रसे
नोभगवत्पदांबुजंबिभ्रन्मुहुःप्रेमविभिन्नयाधिया॥उवाचहानंदजलाकुलेक्षणःप्रहृष्टरोमानृपगद्गदाक्षरं॥३८॥

रिवारः ॥ ३५ ॥ सवृंदःसपरिजनः कथंभूतौपादाववनिज्य यदंबुययोरवनेजनोदकमाब्रह्म ब्रह्माणमभिव्याप्यजगत्पुनत्पवित्रयत्‌वर्तते
तौ ॥ ३६ ॥ ३७ ॥ इंद्रसेनोबलिः प्रेमाविभिन्नयाप्रेमार्द्रयाधिया बिभ्रत्‌धारयन्‌ ॥ ३८ ॥ ॥ ॥ ॥

अनंतायशेषाय बृहतेफणैकदेशेविश्वधारणाद्बृहत्तस्मै कृष्णायच वेधसेजगद्विधात्रे सांख्ययोगवितानायेत्यादिपदत्रयमैक्यविवक्षया ॥
॥ ३९ ॥ योगेश्वराणामपिदुर्दर्शौयुवामस्माभिर्दृष्टावित्येतन्नातिचित्रमित्याह दर्शनमिति दुष्प्रापमपियुष्मत्कृपयाकेषांचिद्दुर्लभंसुलभ
मपिभवतितदाह रजस्तमःस्वभावानामिति नोदर्शनंप्राप्तौ ॥ ४० ॥ अहोविद्विषोवयंसात्विकभक्तेभ्योऽपिसभाग्याइत्याह दैत्येत्यादि
त्रिभिः ॥ ४१ ॥ ४२ ॥ उद्बद्धवैरेणयाभक्तिस्तया केचनेतिचैद्यादयःकामतोभक्त्यागोप्यादयोयथासन्निकृष्टास्त्वदात्मतांप्राप्ताः तथाच
सत्त्वसंरब्धाः सत्वाविष्टाअपिसुरादयोनसन्निकृष्टाइति ॥ ४३ ॥ ननुसात्विकेभ्योऽपिराजसादयः सन्निकृष्टाइतिचित्रंतदाह इदमित्थमि

बलिरुवाच नमोऽनंतायबृहतेनमःकृष्णायवेधसे ॥ सांख्ययोगवितानायब्रह्मणेपरमात्मने ॥ ३९ ॥ दर्शनंवांहिभूतानांदुष्प्रापंचाप्यदुर्लभं ॥ रजस्तमःस्वभावानांयन्नःप्राप्तौयदृच्छया ॥ ४० ॥ दैत्यदानवगंधर्वाःसिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्चभूतप्रमथनायकाः ॥ ४१ ॥ विशुद्धसत्त्वधाम्न्यद्धात्वयिशास्त्रशरीरिणि ॥ नित्यंनिबद्धवैरास्तेवयंचान्येचतादृशाः ॥ ४२ ॥ केचनोद्बद्धवैरेणभक्त्याकेचनकामतः ॥ नतथासत्त्वसंरब्धाःसन्निकृष्टाःसुरादयः ॥ ४३ ॥ इदमित्थमितिप्रायस्तवयोगेश्वरेश्वर ॥ नविदंत्यपियोगेशायोगमायांकुतोवयं ॥ ४४ ॥ तन्नःप्रसीदनिरपेक्षविमृग्ययुष्मत्पादारविंदधिषणान्यगृहांधकूपात् ॥ निष्क्रम्यविश्वशरणांघ्र्युपलब्धवृत्तिःशांतोयथैकउतसर्वसखैश्चरामि ॥ ४५ ॥ शाध्यस्मानीशितव्येशनिष्पापान्कुरुनःप्रभो ॥ पुमान्यच्छ्रद्धयातिष्ठंश्चोदनायाविमुच्यते ॥ ४६ ॥ ॥ ॥

तिइदमितिस्वरूपतः इत्थमितिविशेषतश्च ॥ ४४ ॥ तदेवंयद्यपिवैरभावेनत्वत्प्राप्तिर्भवेत्तथाऽपिमांसात्विकंकुर्वितिप्रार्थयते तत्तथानः
प्रसीद यथानिरपेक्षैराप्तकामैरपिविमृग्यंयुष्मत्पादारविंदंतदेवधिषणमाश्रयस्तस्मादन्यद्गृहंतदेवांधकूपस्तस्मान्निष्क्रम्यनिर्गत्यविश्वस्यश
रणं रक्षितारोवृक्षास्तेषामंघ्रिमूलेषुस्वतएवगलितैःफलादिभिरुपलब्धाप्राप्तावृत्तिर्जीविकायेनसोऽहंशांतःसन्नेकएवचरामि उतअथवासर्वे
षांसखायोमहांतस्तैःसहयथाचरामीति ॥ ४५ ॥ कथमल्पपुण्यानामेवंभावःसंभवतीतिचेत्तर्हियथैतद्भवेत्तथाऽस्माननुशिक्षयेत्याह शाधी
ति हेप्रभोईशितव्याःसर्वेजीवास्तेषामीशयत्तवानुशासनमातिष्ठन्आश्रयंश्चोदनायाविधिनिषेधलक्षणायाःसकाशाद्विमुच्यते नखलुत्वद्भ
क्तोविधिकिंकरःस्यादितिभावः ॥ ४६ ॥ ॥ ॥ ॥

तदुक्तंसर्वमनुमोद्यस्वागमनकारणंसप्रपंचंकथयति आसन्निति पंचभिः ऊर्णायांभार्यायां प्रथमेंऽतरेस्वायंभुवमन्वंतरे तेदेवाःसुतांवाचंय भितुंयब्धुंमैथुनेनरमयितुमुद्यतमुद्युक्तंकंप्रजापातिंजहसुःउपहसितवंतः ॥ ४७ ॥ तेनावद्यकर्मणापापेनआसुरींयोनिमगन्नगमन् अधुनातत्क्ष णमेव हिरण्यकशिपोर्जाताइत्यर्थः ॥ ४८ ॥ तेचयोगमाययाततोनीताःसंतोदेवक्याउदरेजाताः हेराजन्बलेतेचकंसेनविहिंसिताः सा तानात्मजान्मत्वाशोचति तेचेमेतवांतिकेऽध्यासते ॥ ४९ ॥ लोकंदेवलोकं ॥ ५० ॥ स्मरोद्गीथःस्मरसहितउद्गीथः सद्गतिंमोक्षं स्मरस्यै

श्रीभगवानुवाच आसन्मरीचेःषट्पुत्राऊर्णायांप्रथमेंऽतरे ॥ देवाःकंजहसुर्वीक्ष्यसुतांयभितुमुद्यतं ॥४७॥ तेनासुरीमगन्योनिमधुनाऽवद्यकर्मणा ॥ हिरण्यकशिपोर्जातानीतास्तेयोगमायया ॥ ४८ ॥ देवक्याउदरे जाताराजन्कंसविहिंसिताः ॥ सातान्शोचत्यात्मजान्स्वांस्तइमेध्यासतेंऽतिके ॥४९॥ इतएतान्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततःशापाद्विनिर्मुक्तालोकंयास्यंतिविज्वराः ॥ ५० ॥ स्मरोद्गीथःपरिष्वंगःपतंगःक्षुद्र भृद्घृणी ॥ षडिमेमत्प्रसादेनपुनर्यास्यंतिसद्गतिं ॥५१॥ इत्युक्त्वातान्समादायइंद्रसेनेनपूजितौ ॥ पुनर्द्वारव तीमेत्यमातुःपुत्रानयच्छतां ॥ ५२ ॥ तान्दृष्ट्वाबालकान्देवीपुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्यांकमारोप्यमू र्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥ अपाययत्स्तनंप्रीतासुतस्पर्शपरिप्लुता ॥ मोहितामाययाविष्णोर्यंयासृष्टिः प्रवर्तते ॥ ५४ ॥ पीत्वामृतंपयस्तस्याःपीतशेषंगदाभृतः ॥ नारायणांगसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ॥ ५५ ॥ तेनमस्कृत्यगोविंदंदेवकींपितरंबलं ॥ मिषतांसर्वभूतानांययुर्धामदिवौकसां ॥ ५६ ॥ तद्दृष्ट्वादे वकीदेवीमृतागमननिर्गमं ॥ मेनेसुविस्मितामायांकृष्णस्यरचितांनृप ॥ ५७॥

वपूर्वंकीर्तिमानितिनाम अतःकीर्तिमंतंप्रथमजंकंसायानकदुंदुभिः ॥ समर्पयामासेत्युक्तं ॥ ५१ ॥ अयच्छतामर्पयामासतुः ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥ अमृतत्वेहेतुः गदाभृतःपीतशेषमिति नारायणांगसंस्पर्शेनप्रतिलब्धंदेवावयमित्यात्मदर्शनंयैस्ते ॥ ५५ ॥ धामदेवलोकं ॥ ५३ ॥ मृतानामागमनंनिर्गमनंचश्रीकृष्णस्यमायांमेने तेनैवापत्यादिरूपेणरचितां ॥ ५७ ॥ ॥ ॥

॥ ५८ ॥ अमृतंकीर्तिर्यस्यतस्य व्यासपुत्रैरितिबहुवचनंपूजार्थं जगतामघंभिनत्तीतितथातत् अलंनिःशेषंयथाभवतितथानकृच्छ्रादिवदि ति तदेवंमोक्षहेतुत्वंपापक्षयहेतुत्वंचोक्तं तद्भक्तानांतुसत्कर्णपूरंपरमसुखावहंकर्णाभरणमितिस्वयंसुखरूपतामाह किंच भगवतिकृतमा वेशितंचित्तंयेनसतथाभूत्वातस्यक्षेमधामकालादिभयरहितंलोकंयातीति ॥ ५९ ॥ इतिदशमेउ०टीकायांपंचाशीतितमोध्यायः ॥ ८५ ॥ षडशीतितमेदंभ्रात्सुभद्रामर्जुनोऽहरत् ॥ गत्वाचमिथिलांकृष्णोनृपाविप्रावनंदयत् ॥ १ ॥ पित्रोःस्वज्ञानमादिश्यसुभद्रांफाल्गुनायच ॥



एवंविधान्यद्भुतानिकृष्णस्यपरमात्मनः ॥ वीर्याण्यनंतवीर्यस्यसंत्यनंतानिभारत ॥ ५८ ॥ सूतउवाच यइदमनुशृणोतिश्रावयेद्वामुरारेश्चरितममृतकीर्तेर्वर्णितंव्यासपुत्रैः ॥ जगदघभिदलंतद्भक्तसत्कर्णपूरंभ गवतिकृतचित्तोयातितत्क्षेमधाम ॥ ५९ ॥ इतिश्रीभागवतेम०द०उ०मृताग्रजानयनंनामपंचाशीतितमो ध्यायः ॥८५॥ ॥ राजोवाच ब्रह्मन्वेदितुमिच्छामःस्वसारंरामकृष्णयोः ॥ यथोपयेमेविजयोयाम मासीत्पितामही ॥ १ ॥ श्रीशुकउवाच अर्जुनस्तीर्थयात्रायांपर्यटन्नवनींप्रभुः ॥ गतःप्रभासमशृणो न्मातुलेयींसआत्मनः ॥ २ ॥ दुर्योधनायरामस्तांदास्यतीतिनचापरे ॥ तल्लिप्सुःसयतिर्भूत्वात्रिदंडीद्वार कामगात् ॥ ३ ॥ तत्रवैवार्षिकान्मासानवात्सीत्स्वार्थसाधकः ॥ पौरैःसभाजितोभीक्ष्णंरामेणाजानता चसः ॥ ४ ॥ एकदागृहमानीयआतिथ्येननिमंत्र्यतं ॥ श्रद्धयोपाहृतंभैक्ष्यंबलेनबुभुजेकिल ॥ ५ ॥ सोऽ पश्यत्तत्रमहतींकन्यांवीरमनोहरां ॥ प्रीत्युत्फुल्लेक्षणस्तस्यांभावक्षुब्धंमनोदधे ॥ ६ ॥

जगाममिथिलांकृष्णःस्वभक्तप्रियकृत्ततः ॥ २ ॥ देवक्यामृतपुत्रलाभवदर्जुनस्यसुभद्रालाभोऽपिरामप्रातिकूल्याद्दुर्घटइतिमन्यमानःप्रसं गात्पृच्छति ब्रह्मन्निति ॥ १ ॥ कथमशृणोत् दुर्योधनायेति अपरेवसुदेवादयोनदास्यंतीति ॥ २ ॥ तल्लिप्सुस्तस्यामातुलेय्यालिप्सुः रामं वंचयितुंपूज्यतमंत्रिदंडिवेषंविधायगतइत्याह सयतिरिति ॥ ३ ॥ स्वार्थसाधकःकन्यांप्रेप्सुः ॥ ४ ॥ तमातिथ्येननिमंत्र्यगृहमानीयबलेन यच्छ्रद्धयोपाहृतंपारिविष्टंतद्भैक्ष्यंकिलार्जुनोबुभुजेत्यन्वयः ॥ ५ ॥ भावेनरत्यभिप्रायेण क्षुभितंमनोदधे ॥ ६ ॥ ॥

व्रीडितापांगीसव्रीडकटाक्षा तस्मिन्नेवन्यस्तंहृदयमीक्षणंचययासा ॥ ७ ॥ अंतरंहर्त्तुमवसरंप्रेप्सुःप्राप्तुमिच्छुः कामेनभ्रमच्चित्तंयस्यसः शंरा
मादिसन्माननिमित्तंसुखं ॥ ८ ॥ ९ ॥ आसमंताद्रुंधतःआवरणंकुर्वतः ॥ १० ॥ ११ ॥ पारिबर्हाणिवरवध्वोःप्रीतिदेयानि ॥ १२ ॥ १३ ॥
अनीहयाअनुद्यमेनैवागतंयदाहार्यंभोज्यंतेननिर्वर्तितानिजाःक्रियायेनसः ॥ १४ ॥ यात्रामात्रंशरीरादिनिर्वाहमात्रंभोज्यमुपनमतितंप्रत्याग

साऽपितंचकमेवीक्ष्यनारीणांहृदयंगमं ॥ हसंतीव्रीडितापांगीतन्न्यस्तहृदयेक्षणा ॥ ७ ॥ तांपरंसमनुध्या
यन्नंतरंप्रेप्सुरर्जुनः ॥ नलेभेशंभ्रमच्चित्तःकामेनातिबलीयसा ॥ ८ ॥ महत्यांदेवयात्रायांरथस्थांदुर्गनिर्ग
तां ॥ जहारानुमतःपित्रोःकृष्णस्यचमहारथः ॥ ९ ॥ रथस्थोधनुरादायशूरांश्चारुंधतोभटान् ॥ विद्राव्य
क्रोशतांस्वानांस्वभागंमृगराडिव ॥ १० ॥ तच्छ्रुत्वाक्षुभितोरामःपर्वणीवमहार्णवः ॥ गृहीतपादःकृष्णेन
सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥ प्राहिणोत्पारिबर्हाणिवरवध्वोर्मुदाबलः ॥ महाधनोपस्करेभरथाश्वनरयो
षितः ॥ १२ ॥ श्रीशुकउवाच कृष्णस्यासीद्द्विजश्रेष्ठःश्रुतदेवइतिश्रुतः ॥ कृष्णैकभक्त्यापूर्णार्थःशांतः
कविरलंपटः ॥ १३ ॥ सउवासविदेहेषुमिथिलायांगृहाश्रमी ॥ अनीहयागताहार्यनिर्वर्तितनिजक्रियः ॥
॥ १४ ॥ यात्रामात्रंत्वहरहर्दैवादुपनमत्युत ॥ नाधिकंतावतातुष्टःक्रियाश्चक्रेयथोचिताः ॥ १५ ॥ तथात
द्राष्ट्रपालोऽगबहुलाश्वइतिश्रुतः ॥ मैथिलोनिरहंमानउभावप्यच्युतप्रियौ ॥ १६ ॥ तयोःप्रसन्नोभगवा
न्दारुकेणाहृतंरथं ॥ आरुह्यसाकंमुनिभिर्विदेहान्प्रययौप्रभुः ॥ १७ ॥ नारदोवामदेवोऽत्रिःकृष्णोरामोऽ
सितोऽरुणिः ॥ अहंबृहस्पतिःकण्वोमैत्रेयश्च्यवनादयः ॥ १८ ॥ तत्रतत्रतमायांतंपौराजानपदान्नृप ॥ उ
पतस्थुःसार्घहस्ताग्रहैःसूर्यमिवोदितं ॥ १९ ॥ आनर्त्तधन्वकुरुजांगलकंकमत्स्यपांचालकुंतिमधुकेकयको
सलार्णाः ॥ अन्येचतन्मुखसरोजमुदारहासस्निग्धेक्षणंनृपपपुर्दृशिभिर्नृनार्यः ॥ २० ॥ ॥

च्छति ॥ १५ ॥ मिथिलस्यजनकस्यवंशयोमैथिलः ॥ १६ ॥ प्रभुरेवस्वयंविदेहान्देशान्प्रययौ ॥ १७ ॥ कृष्णोव्यासः रामोभार्गवः अ
हंशुकः एवमादिभिःसह ॥ १८ ॥ १९ ॥ आनर्त्ताद्यर्णांतास्तद्देशवर्तिनोनृनार्यः उदारहासंस्निग्धमीक्षणंयस्मिंस्तत् दृशिभिर्नेत्रैः ॥ २० ॥

स्ववीक्षणेनैवविनष्टातामिस्त्राहग्येषांतेभ्यः क्षेममभयंअर्थंहशंतत्त्वज्ञानंच ॥२१॥ अभीयुःप्रत्युज्जग्मुः ॥ २२॥ प्रीत्याउत्फुल्लानिआननानि आशयाःअंतःकरणानिचयेषांते कैःशिरोभिः ॥२३॥ २४ ॥२५॥ तदभिप्रेत्यअंगीकृत्यतत्तदाउभाभ्यामपिताभ्यांमद्गृहादन्यस्यगेहंयातीत्यलक्षितःअविदितः यद्वाउभाभ्यांरूपाभ्यांतदलक्षितस्ताभ्यामलक्षितइति ॥२६॥ २७॥ ऊर्द्धर्षमुद्गतहर्षंहृदयंयस्य अस्रैराविलेक्लिन्नेईक्ष



तेभ्यःस्ववीक्षणविनष्टतमिस्त्रदृग्भ्यःक्षेमंत्रिलोकगुरुरर्थदृशंचयच्छन् ॥ शृण्वन्दिगंतधवलंस्वयशोऽशुभघ्नंगीतंसुरैर्नृभिरगाच्छनकैर्विदेहान् ॥ २१ ॥ तेऽच्युतंप्राप्तमाकर्ण्यपौराजानपदान्नृप ॥ अभीयुर्मुदितास्तस्मैगृहीतार्हणपाणयः ॥ २२ ॥ दृष्ट्वातउत्तमश्लोकंप्रीत्युत्फुल्लाननाशयाः ॥ कैर्धृतांजलिभिर्नेमुःश्रुतपूर्वांस्तथामुनीन् ॥ २३ ॥ स्वानुग्रहायसंप्राप्तंमन्वानौतंजगद्गुरुं ॥ मैथिलःश्रुतदेवश्चपादयोःपेततुःप्रभोः ॥ २४ ॥ न्यमंत्रयेतांदाशार्हमातिथ्येनसहद्विजैः ॥ मैथिलःश्रुतदेवश्चयुगपत्संहतांजली ॥२५॥ भगवांस्तदभिप्रेत्यद्वयोःप्रियचिकीर्षया ॥उभयोराविशद्गेहमुभाभ्यांतदलक्षितः॥२६॥श्रोतुमप्यसतांदूराज्जनकःस्वगृहागतान् ॥ आनीतेष्वासनाग्र्येषुसुखासीनान्महामनाः ॥ २७ ॥ प्रवृद्धभक्त्याउद्धर्षहृदयास्राविलेक्षणः ॥ नत्वातदंघ्रीन्प्रक्षाल्यतदपोलोकपावनीः ॥ २८ ॥ सकुटुंबोवहन्मूर्ध्नापूजयांचक्रईश्वरान् ॥ गंधमाल्यांबराकल्पधूपदीपार्घगोवृषैः ॥ २९ ॥ वाचामधुरयाप्रीणन्निदमाहान्नतर्पितान् ॥ पादावंकगतौविष्णोःसंस्पृशन्शनकैर्मुदा ॥ ३० ॥ राजोवाच भवान्हिसर्वभूतानामात्मासाक्षीस्वदृग्विभो ॥ अथनस्त्वत्पदांभोजंस्मरतांदर्शनंगतः ॥ ३१ ॥ स्ववचस्तदृतंकर्तुमस्मद्दृग्गोचरोभवान् ॥ यदात्थैकांतभक्तान्मेनानंतःश्रीरजःप्रियः ॥ ॥ ३२ ॥ कोनुत्वच्चरणांभोजमेवंविद्विसृजेत्पुमान् ॥ निष्किंचनानांशांतानांमुनीनांयस्त्वमात्मदः ॥ ३३ ॥ योवतीर्ययदोर्वंशेनृणांसंसरतामिह ॥ यशोवितेनेतच्छांत्यैत्रैलोक्यवृजिनापहं ॥ ३४ ॥



णेयस्यसःसचसच ॥२८॥ ईश्वरान् ईश्वरंतत्तुल्यांश्चेत्यर्थः ॥२९॥प्रीणन्प्रीणयन् संस्पृशन्संमर्दयन् ॥३०॥ अत्माचेतयिता साक्षीप्रकाशकः स्वदृक्स्वप्रकाशः अथअतःकारणात् ॥ ३१ ॥अनंतोबंधुरपिश्रीर्भार्याऽपिअजःपुत्रोऽपि ॥ ३२ ॥ ३३ ॥ तच्छांत्यैसंसारोपशमाय ॥ ३४ ॥

॥ ३५ ॥ गृहान् गृहेष्वित्यर्थः ॥ ३६ ॥ ३७ ॥ धुन्वन् परिभ्रामयन् ॥ ३८ ॥ अवानिजे अवनिनिजे प्रक्षालितवान् ॥ ३९ ॥ ४० ॥
फलैरामलकादिभिः अर्हणेन उशीरैस्तृणविशेषमूलैः सुवासितैः शिवैरमृतवत्स्वादुभिरंबुभिः सुरभ्या मृदा कस्तूरीप्रमुखया सपर्यया पूजया य
थोपपन्नया अनायासेन संपन्नया भूतानुपद्रवलब्धत्वात् सत्त्वविवर्धनं यद्ंधः अन्नं तेन च ॥ ४१ ॥ अस्य श्रीकृष्णस्यात्ममूर्तिस्तस्य निके
तैः स्थानविशेषैर्भूसुरैश्च सर्वतीर्थास्पदपादरेणुभिः कृष्णादिभिर्यः संगमः सममकुतोभूदिति अनु इति विस्मये यद्वा आङ् इति वितर्के नु इति वि

नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे ॥ नारायणायऋषये सुशांतं तप ईयुषे ॥ ३५ ॥ दिनानि कतिचिद्भूमन्गृ
हान्नो निवसद्विजैः ॥ समेतः पादरजसा पुनीहीदं निमेः कुलं ॥ ३६ ॥ इत्युपामंत्रितो राज्ञा भगवाँल्लोकभावनः ॥
उवास कुर्वन्कल्याणं मिथिलानरयोषितां ॥ ३७ ॥ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहान्जनको यथा ॥ नत्वा मुनीन्सुसं
हृष्टो धुन्वन्वासो ननर्त ह ॥ ३८ ॥ तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ॥ स्वागतेनाभिनंद्यांघ्रीन्सभार्योऽवनि
जेमुदा ॥ ३९ ॥ तदंभसा महाभाग आत्मानं सगृहान्वयं ॥ स्नापयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥ फलार्ह
णोशीरशिवामृतांभसा मृदा सुरभ्या तुलसीकुशांबुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनां
धसा ॥ ४१ ॥ सतर्कयामास कुतो ममान्वभूद्गृहांधकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन
चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥ सूपविष्टान्कृतातिथ्यान् श्रुतदेव उपस्थितः ॥ सभार्यस्वजनापत्य उवाचांघ्र्य
भिमर्शनः ॥ ४३ ॥ श्रुतदेव उवाच नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्म
सत्तया ॥ ४४ ॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४५ ॥

स्मये ॥ ४२ ॥ उपस्थितः समीप उपविष्टः भार्या भर्तव्याः स्वजना अपत्यानि च तैः सहितः श्रीकृष्णस्यांघ्रिमभिमृशति संमर्दयतीत्यंघ्र्यभिम
र्शनः ॥ ४३ ॥ यर्हीदं प्रविष्टस्तदैव दर्शनं प्राप्त इति स एव सन्मात्रो नाद्यतनोऽभूतस्त्वमित्यर्थः यद्वा नः अस्मान् अद्यैव प्राप्त इति न किंतु तदैव प्रा
प्तो यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः सृष्ट्वा स्वसत्तयाऽनुप्रविष्टस्त्वं त्वद्दर्शनं तु परं केवलमद्यैव प्राप्तं ॥ ४४ ॥ मायासृष्टिप्रवेशयोरविद्यासृ
ष्टिप्रवेशौ दृष्टांततयाह यथेति आत्ममायया स्वाविद्यया यद्वा आत्मनस्तव माययेति ॥ ४५ ॥

किंच शृण्वतामिति नित्यंश्रवणकीर्तनादिपराणाममलात्मनामपिहृद्येवत्वंभासिममतुलोचनगोचरस्त्वमहोभाग्यमितिभावः ॥४६॥ ननु सर्वेषांहृदिस्थितःकथंकेषांचिदेवहृदिभासि मेघैः सूर्यवज्जीवोपाधिभिरावृतत्वादितियद्युच्यतेतर्हिनकस्यापिमायेत्यतआह हृदिस्थोऽपीति कर्मभिर्विक्षिप्तंचेतोयेषांतेषामात्मशक्तिभिरहंकारादिभिरग्राह्योऽव्यवहितोपिउपेतगुणःप्राप्तश्रवणकीर्तनादिसंस्कारआत्माअंतःकरणंयेषांतेषामंतिसमीपे अव्यवहितस्त्वमित्यर्थः ॥ ४७ ॥ एतदेवप्रपंचयन्नमस्यति नमोस्त्विति तेतुभ्यंनमोऽस्तु अध्यात्मविदांनिवृत्तदेहाद्यहंकाराणां परमात्मनेपरमात्मत्वेनप्रकाशमानाय मोक्षप्रदायेत्यर्थः अनात्मनेदेहाद्यभिमानिनेजीवाय परत्वेनाप्रकाशमानत्वात् स्वात्मनःसकाशाद्विभक्तःसमर्पितोमृत्युःसंसारोयेनतस्मै कुतएतत्तत्राह सकारणंमहदादिकार्यमकारणंप्रकृतिस्तदुभयलिंगमुपाधिनियम्यतयाईयुषेप्रा

शृण्वतांगदतांशश्वदर्चतांत्वाभिवंदतां ॥ नृणांसंदधतामंतर्हृदिभास्यमलात्मनां ॥ ४६ ॥ हृदिस्थोऽप्यतिदूरस्थःकर्मविक्षिप्तचेतसां॥आत्मशक्तिभिरग्राह्योऽप्यंत्युपेतगुणात्मनां॥४७॥नमोस्तुतेऽध्यात्मविदांपरात्मनेअनात्मनेस्वात्मविभक्तमृत्यवे॥सकारणाकारणलिंगमीयुषेस्वमाययासंवृतरुद्धदृष्टये ॥४८॥ सत्वंशाधिस्वभृत्यान्नःकिंदेवकरवामहे॥एतदंतोनृणांक्लेशोयद्भवानक्षगोचरः॥४९॥ श्रीशुकउवाच तदुक्तमित्युपाकर्ण्यभगवान्प्रणतार्तिहा॥गृहीत्वापाणिनापाणिंप्रहसंस्तमुवाचह॥५०॥ श्रीभगवानुवाच ब्रह्मंस्तेऽनुग्रहार्थायसंप्राप्तान्विद्ध्यमून्मुनीन्॥संचरंतिमयालोकान्पुनंतःपादरेणुभिः॥५१॥देवाःक्षेत्राणितीर्थानिदर्शनस्पर्शनार्चनैः॥शनैःपुनंतिकालेनतदप्यर्हत्तमेक्षया॥५२॥ ब्राह्मणोजन्मनाश्रेयान्सर्वेषांप्राणिनामिह ॥तपसाविद्ययातुष्ट्याकिमुमत्कलयायुतः॥ ५३॥

प्तवते अतःउभयनियंतुःस्वस्मात्सकाशात्तदुभयवश्यायजीवायविभक्तमृत्यवइत्यर्थः नियंतृनियम्यत्वेकारणंवदन्नाह स्वमाययासंवृतेति अतोऽलुप्तैश्वर्यत्वान्नियंत्रेतुभ्यंनमः किंच रुद्धदृष्टयेमायावित्वादेव अन्येषांरुद्धाआवृतादृष्टिर्येनतस्मै यद्वा स्वमाययास्वस्यासंवृताअन्येषांरुद्धादृष्टिर्येनतस्मैइत्येकंपदं ॥ ४८ ॥ सएवंभूतःपरमेश्वरस्त्वं नोऽस्मान्स्वभृत्यान्शाधिअनुशिक्षय ॥ ४९ ॥ ५० ॥स्वस्मिन्नादरमत्यधिकंब्राह्मणेषुमंदमिवालक्ष्यलोकसंग्रहपरोभगवान्मत्तोऽपिब्राह्मणेषुश्रद्धातिरेकंकुर्वित्येवंतमनुशास्ति ब्रह्मन्नितिसप्तभिः मयाहृदिस्थितेन ॥५१॥ देवादिभ्योऽपिब्राह्मणःश्रेष्ठइत्याह देवाइति तेशनैःपुनंतिएतेतुसद्यः किंचदेवादीनियत्पुनंतितदप्यर्हत्तमानामीक्षया ॥ ५२ ॥ ममकलापरिकलनमुपास्तिस्तयायुतः ॥ ५३ ॥

किंच ब्राह्मणाराधनमेत्रममप्रेष्ठमित्याह नेति हेतुमाह सर्ववेदमयोविप्रइति प्रमाणाधीनत्वात्प्रमेयस्यत्रेदमयोविप्रोदेवमयादस्माद्रूपात्प्रे ष्ठइत्यर्थः ॥ ५४ ॥ असूयवोदोषदृष्टयः अर्चादौइज्यदृष्टयःपूज्यबुद्धयः ॥ ५५ ॥ अस्यविश्वस्यहेतवोमहदादयः मदीक्षयाममैवसर्वत्रे क्षया ॥ ५६ ॥ ५७ ॥ ५८ ॥ सतांवेदानांत्रिकांडविषयाणांनिवृत्तिप्रकारमादिश्य ॥ ५९॥ इतिदशमेउ० टीकायांषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ सप्ताशीतितमेनारायणनारदवादतः ॥ वेदैःस्तुतिर्गुणालंबानिर्गुणावधिवर्ण्यते ॥ १ ॥ वागीशायस्यवदनेलक्ष्मीर्यस्य चवक्षसि ॥ यस्यास्तेहृदयेसंवित्तंनृसिंहमहंभजे ॥ २ ॥ संप्रदायविशुद्ध्यर्थंस्वीयनिबंधयंत्रितः ॥ श्रुतिस्तुतिमितव्याख्यांकरिष्यामियथा मति ॥ ३ ॥ श्रीमद्भागवतंपूर्वैःसारतःसन्निषेवितम् ॥ मयातुतदुपस्पृष्टमुच्छिष्टमुपचीयते ॥४॥ पूर्वाध्यायांतेएवंस्वभक्तयोराजन्भगवान्

नब्राह्मणान्मेदयितंरूपमेतच्चतुर्भुजं ॥ सर्ववेदमयोविप्रःसर्वदेवमयोह्यहं ॥ ५४ ॥ दुष्प्रज्ञाअविदित्वैवमव जानंत्यसूयवः ॥गुरुंमांविप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५५ ॥ चराचरमिदंविश्वंभावायेचास्यहेतवः ॥ मद्रूपाणीतिचेतस्याधत्तेविप्रोमदीक्षया ॥ ५६ ॥ तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ॥ एवंचेदर्चितो ऽस्म्यद्धानान्यथाभूरिभूतिभिः ॥ ५७ ॥ श्रीशुकउवाच सइत्थंप्रभुणादिष्टःसहकृष्णान्द्विजोत्तमान् ॥ आराध्यैकात्मभावेनमैथिलश्चापसद्गतिं ॥ ५८॥ एवंस्वभक्तयोराजन्भगवान्भक्तभक्तिमान् ॥ उषित्वादिश्य सन्मार्गंपुनर्द्वारवतीमगात् ॥५९॥ इति०भा०म०द०उ०श्रुतदेवानुग्रहोनामषडशीतितमोध्यायः ॥ ८६ ॥

परीक्षिदुवाच ब्रह्मन्ब्रह्मण्यनिर्देश्येनिर्गुणेगुणवृत्तयः ॥ कथंचरंतिश्रुतयःसाक्षात्सदसतःपरे ॥ १ ॥

भक्तभक्तिमान् ॥ उषित्वादिश्यसन्मार्गंपुनर्द्वारवतीमगादित्यत्रसन्मार्गंसतांस्वतःप्रमाणभूतानामप्रामाण्यकारणरहितानांवेदानांमार्गंब्रह्म परत्वमुपादिश्यभगवानगादित्युक्तंतत्रवेदानांब्रह्मपरत्वमघटमानंमन्वानःपृच्छति ब्रह्मन्निति तत्रतावन्मुख्यालक्षणागौणीचेतिगुणभेदेन त्रिधाशब्दप्रवृत्तिः मुख्याऽपिरूढियोगभेदेनाद्विधा रूढिश्चस्वरूपेणजात्यागुणेनवानिर्देशार्हेवस्तुनिसंज्ञासंज्ञिसंकेतेनप्रवर्तते यथाडित्थः गौःशुक्लइति लक्षणाचतेनैवसंकेतेनाभिहितार्थसंबंधिनि यथागंगायांघोषइति गौणीचाभिहितार्थलक्षितगुणयुक्तेतत्सदृशे यथासिंहोदेव दत्तइति यथाहुः अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते ॥ लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टातुगौणतेति योगवृत्तिस्तु एतत्रिविधवृत्तिप्रतिपादि तपदार्थयोःप्रकृतिप्रत्ययार्थयोर्वायोगेन यथापंकजमौपगवःपाचकइत्यादि तत्रतावद्ब्रह्मणिरूढिवृत्तिर्नसंभवतीत्याह साक्षात्कथं

चरंतीति तत्रहेतुः अनिर्देश्ये अनिर्देश्यत्वेऽपिहेतुंवदन्गुणवृत्तिंनिराकरोति निर्गुणेगुणवृत्तयइति गुणैर्वर्तमानाअपिनिर्गुणेकथंचरंतीत्यर्थः
निर्गुणत्वेचहेतुंवदन्लक्षणांयोगंचनिराकरोति सदसतःपरइति कार्यकारणाभ्यांपरास्मिन्नसंगे केनचिदपिसंबंधाभावान्नलक्षणायोगवृत्ती
संभवतइत्यर्थः एवंपदार्थत्वायोगादपदार्थस्यचवाक्यार्थत्वायोगान्नश्रुतिगोचरत्वंब्रह्मणइत्याभिप्रायः ॥ १ ॥ उत्तरमाह बुद्धींद्रियेति बु
द्ध्यादीनुपाधीन्जनानामनुशायिनांमात्राद्यर्थंप्रभुरीश्वरोऽसृजत् मीयंतइतिमात्राविषयास्तदर्थं भवार्थंभवोजन्मलक्षणंकर्मतत्प्रभृतिकर्मक
रणार्थमित्यर्थः आत्मनेलोकांतरगामिने आत्मनस्तत्तल्लोकभोगायेत्यर्थः अकल्पनायकल्पनानिवृत्तयेमुक्तयइत्यर्थःअर्थधर्मकाममोक्षार्थामि
तिक्रमेणपदचतुष्टयस्यार्थः जनानामितिवदन्जीवार्थमीश्वरस्यसृष्ट्यादिषुप्रवृत्तिरितिदर्शयति प्रभुरितिईश्वरस्योपाधिवश्यताभावेननित्य
मुक्ततांदर्शयति अयमभिप्रायः सगुणमेवगुणैरनभिभूतंसर्वज्ञंसर्वशक्तिंसर्वेश्वरंसर्वनियंतारंसर्वोपास्यंसर्वकर्मफलप्रदातारंसमस्तकल्याण
गुणनिलयंसच्चिदानंदंभगवंतंश्रुतयःप्रतिपादयंति यःसर्वज्ञःससर्ववित् यस्यज्ञानमयंतपः सर्वस्यवशीसर्वस्येशानःयःपृथिव्यांतिष्ठन्पृथि
व्याआंतरःसोऽकामयतबहुस्याम् सऐक्षततत्तेजोऽसृजत सत्यंज्ञानमनंतंब्रह्मेत्याद्याः तथाभूतेश्वरतांतावत्संसारिणोजीवस्यतन्निवृत्तयेतत्त्व

**श्रीशुकउवाच बुद्धींद्रियमनःप्राणान्जनानामसृजत्प्रभुः॥ मात्राऽर्थंचभवार्थंचआत्मनेकल्पनायच ॥२॥**

मसीत्यादिवाक्यानिबोधयंति तत्रचतत्त्वंपदयोःसामानाधिकरण्यंप्रतीयते तच्चप्रकारांतरेणाघटमानंब्रह्मणिपर्यवसानंगमयति तथाहि
नतावद्देवदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेनसामानाधिकरण्यम् यथोक्तम् आमिक्षांदेवतायुक्तांवदत्येवैषतद्धितः ॥ आमिक्षापदसान्नि
ध्यात्तस्यैवविषयार्पणमिति कुतः भिन्नार्थत्वात् नचाजहत्स्वार्थयानिरूढलक्षणयाविशेषणविशेष्यभावेननीलमुत्पलमितिवत् यथोक्तम्
स्वबुद्ध्यारज्यतेयेनविशेष्यंतद्विशेषणमित्यादि कुतः विरुद्धार्थत्वेनतदयोगात् नचजहत्स्वार्थत्वेनसंबंधिलक्षणयाकुसुमितद्रुमागंगेतिवत्
कुतः एकार्थत्वस्यविवक्षितत्वात् अतोजहदजहत्स्वार्थलक्षणयासोऽयंदेवदत्तइतिवद्विरुद्धांशत्यागेनानुगताचिदंशेनैकार्थेनसामानाधिक
रण्येननिर्गुणेपर्यवसानम् अस्थूलादिवाक्यानांतुसाक्षादुपाधिनिषेधेनतत्पदार्थशोधनउपयोगान्निर्गुणएवपर्यवसानम् तथाचात्रैवोपक्रमेस्व
सृष्टमिदमापीयेत्यादिनाविशिष्टमालंबनंवक्ष्यति अंतेचश्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निधनाइत्युपसंहरिष्यंति उपासनादिवाक्या
नांत्वन्यार्थप्रवृत्तसृष्ट्याद्यवलंबनेनज्ञानसाधनविधानेनतत्परत्वमित्येषादिक् ॥ २ ॥ ॥ ॥

अत्रचानादिशिष्टपरंपरागत्वान्नसंदेहोयुक्तइत्याह सैषेति सैषायथोक्तालंबनाब्राह्मीब्रह्मपरा श्रद्धयाआदरेणवैतंडिकतर्कानभिनिवेशे नयःश्रवणादिनाधारयेत्सःअकिंचनःनिरस्तदेहाद्युपाधिःसन्परंपदंप्राप्नुयादिति ॥ ३ ॥ एतदेवसर्वश्रुत्यर्थनिरूपणेनप्रपंचयितुमितिहा समवतारयति अत्रेति नारायणान्वितांनारायणःप्रवक्तृत्वेनान्वितोयस्यांतां गाथामितिहासं ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ब्रह्मसत्रामि ति यथायजमानाएवसमानाऋत्विगादिरूपेणयत्रकर्मकुर्वंतितत्कर्मसत्रंप्रसिद्धं यथायत्रसमानाएववक्तृश्रोतृभावेनब्रह्ममीमांसंतेतत्ब्रह्मस त्रं ॥ ९ ॥ अहोतर्हिमयाकथंतन्नज्ञातमित्यतआह श्वेतद्वीपमिति तदीश्वरंतत्रस्थंमामेवानिरुद्धमूर्तिम् ॥ १० ॥ ननुसर्वज्ञास्तेकस्तत्रव

सैषात्द्युपनिषद्ब्राह्मीपूर्वेषांपूर्वजैर्धृता ॥ श्रद्धयाधारयेद्यस्तांक्षेमंगच्छेदकिंचनः॥ ३ ॥ अत्रतेवर्णयिष्यामि गाथांनारायणान्वितां ॥ नारदस्यचसंवादमृषेर्नारायणस्यच॥४॥एकदानारदोलोकान्पर्यटन्भगवत्प्रियः ॥ सनातनमृषिंद्रष्टुंययौनारायणाश्रमं ॥ ५॥ योवैभारतवर्षेऽस्मिन्क्षेमायस्वस्तयेनृणां ॥ धर्मज्ञानशमोपेतमा कल्पादास्थितस्तपः ॥६॥ तत्रोपविष्टमृषिभिःकलापग्रामवासिभिः॥ परीतंप्रणतोऽपृच्छदिदमेवकुरूद्वह ॥ ॥ ७ ॥ तस्मैह्यवोचद्भगवानृषीणांशृण्वतामिदं ॥ योब्रह्मवादःपूर्वेषांजनलोकनिवासिनां ॥ ८ ॥ श्रीभग वानुवाच स्वायंभुवंब्रह्मसत्रंजनलोकेऽभवत्पुरा ॥ तत्रस्थानांमानसानांमुनीनामूर्ध्वरेतसां ॥ ९ ॥ श्वेतद्वी पंगतवतित्वयिद्रष्टुंतदीश्वरं ॥ ब्रह्मवादःसुसंवृत्तःश्रुतयोयत्रशेरते ॥ तत्रहायमभूत्प्रश्नस्त्वंमांयमनुपृच्छसि॥ ॥ १० ॥ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ अपिचक्रुःप्रवचनमेकंशुश्रूषवोऽपरे ॥ ११ ॥ सनं दनउवाच स्वसृष्टमिदमापीयशयानंसहशक्तिभिः ॥ तदंतेबोधयांचक्रुस्तल्लिंगैःश्रुतयःपरं ॥ १२ ॥ य थाशयानंसम्राजंबंदिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्यसुश्लोकैर्बोधयंत्यनुजीविनः ॥ १३ ॥

क्तप्रष्टावातत्राह तुल्यश्रुतेति श्रुतादिभिरविशेषाअरिमित्रोदासीनहीनत्वेननिरुपमकरुणाअतः सर्वेप्रवचनयोग्याअपिकौतुकेनैकंप्रवक्तारं कृत्वाऽन्येपप्रच्छुरित्यर्थः ॥ ११ ॥ स्वसृष्टमिति स्वयंनिर्मितमिदंविश्वंप्रलयसमयेआपीयसंहृत्यशयानंयोगेननिद्राणमिववर्तमानंतदंते प्रलयांतेतल्लिंगैस्तत्प्रतिपादकैर्वाक्यैःपरमीश्वरंसृष्टिसमयेप्रथमनिःश्वासभूताःश्रुतयःप्रबोधयामासुः ॥ १२॥ सुश्लोकैःशोभनाःश्लोकाः कीर्तयोयेषुतैःपराक्रमैः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ८५ ॥

जयजयेति भोअजितजयजयउत्कर्षमाविष्कुरु आदरेवीप्सा केनव्यापारेण अगजगदोकसांअगानिस्थावराणिजगंतिजंगमानिओकां सिशरीराणियेषांजीवानांतेषामजामाविद्यांजहिनाशय किमितिगुणवतीहंतव्येत्यतआह दोषगृभीतगुणांदोषायानंदाद्यावरणायगृहीतागुणा ययातां हृग्रहोर्भश्छंदसीतिभकारः इयंहिस्वैरिणीवपरप्रतारणायगुणान्गृण्हात्यतोहंतव्येति तर्हिमय्यपिदोषमावहेदितिममापितत्रकाश क्तिःस्यादतआह त्वमिति यद्यस्मात्त्वमात्मनास्वरूपेणैवसमवरुद्धसमस्तभगःसंप्राप्तसमस्तैश्वर्योसि वशीकृतमायत्वादितिभावः ननुस्वय मेवतेज्ञानवैराग्यादिनाकिंनहन्युरित्यतआह अखिलशक्त्यवबोधकेति तेषांत्वमेवांतर्यामीसर्वशक्त्युद्बोधकः अतोनतेज्ञानादौस्वतंत्राइति भावः अहमकुंठज्ञानैश्वर्यादिगुणोजीवानांकर्मज्ञानादिशक्त्यवबोधनेनाविद्याहंतेत्यत्रकिंप्रमाणमितिचेदहमेवप्रमाणमित्याह निगमोवेदः नन्वेवंभूतेमायिकथंश्रुतीनांप्रवृत्तिस्तत्राह क्वचिदिति कदाचित्सृष्ट्यादिसमयेअजयामाययाचरतःक्रीडतोनित्यंचालुप्तभगतयासत्यज्ञानानं

श्रुतयऊचुः जयजयजह्यजामजितदोषगृभीतगुणांत्वमसियदात्मनासमवरुद्धसमस्तभगः॥
अगजगदोकसामखिलशक्त्यवबोधकतेक्वचिदजयात्मनाचचरतोऽनुचरेन्निगमः ॥ १४ ॥
बृहदुपलब्धमेतदवयंत्यवशेषतयायतउदयास्तमयौविकृतेर्मृदिवाविकृतात् ॥ अतऋषयोदधु
स्त्वयिमनोवचनाचरितंकथमयथाभवंतिभुविदत्तपदानिनृणां ॥ १५ ॥

तानंदैकरसेनात्मनाचचरतोवर्तमानस्यनिगमोऽनुचरेत्प्रतिपादयेत् कर्मणिषष्ठ्यौ यतोवाइमानिभूतानिजायंते योब्रह्माणंविदधातिपूर्वंयो वैवेदांश्चप्रहिणोतितस्मै तंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये यआत्मानितिष्ठन् सत्यंज्ञानमनंतंब्रह्म यःसर्वज्ञःससर्वविदित्यादिनि गमकदंबस्त्वामेवंभूतंप्रतिपादयतीत्यर्थः॥जयजयाजितजह्यगजंगमावृतिमजामुपनीतमृषागुणां॥नहिभवंतमृतेप्रभवंत्यमीनिगमगीतगुणा र्णवतातव ॥१॥१४॥ ननुकथंमामेवंप्रतिपादयंति यतइंद्रोयातोऽवसितस्यराजेत्यादिभिरिंद्रोयातोजंगमस्यअवसितस्यस्थावरस्यचराजेतिप्र तिपाद्यतेतथाग्निर्मूर्धादिवइत्यादिभिश्चैवंभूतत्वेनाग्न्यादयःप्रतिपाद्यंतेतत्राह बृहदुपलब्धमेतदिति अयमर्थः एतदुपलब्धमिंद्रादिसर्वंबृहत्ब्र ह्मत्वमित्येवावयंतिजानंति कथं बृहतएवावशेषतयाऽवशिष्यमाणत्वेन कुतः यतोबृहतःसर्वस्योदयास्तमयौउत्पत्तिलयौ सर्वोपादानत्वात् तर्हिकिंविकारित्वंबृहतः न अविकृतात् विवर्ताधिष्ठानत्वेनाविकारादित्यर्थः वाशब्दउपमार्थः यथाघटादेर्विकृतेर्मृदिउदयास्तमयौतद्वत्

॥ ८५ ॥

वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं सर्वंखल्विदंब्रह्मेत्यादिभिस्तथाप्रतिपादनादित्यर्थः अतःकारणादृष्योमंत्रास्तद्रष्टारोवात्वय्ये वमनोवचनाचरितंदधुःमनसाआचरितंतात्पर्यंवचनाचरितमभिधानंचधृतवंतः नपृथग्विकारेष्वित्यर्थः अत्रनिदर्शनं कथमयथेति नृणां भूचराणांयत्रकुत्रापिदत्तानिनिक्षिप्तानिपदानिभुविकथमयथाभवंतिअदत्तानिभवंति अतोयथामृत्पाषाणेष्टकादिषुदत्तानिपदानिभुवंनव्य भिचरंतितथायत्किमपिविकारजातंवदंतोवेदास्त्वामेवसर्वकारणंपरमार्थभूतंप्रतिपादयंतीत्यर्थः ॥ द्रुहिणवन्हिरवींद्रमुखामराजगदिदंन भवेत्पृथगुत्थितं ॥ बहुमुखैरपिमंत्रगणैरजस्त्वमुरुमूर्तिरतोविनिगद्यसे ॥ २ ॥ १५ ॥ त्वमेवसर्वनिगमगोचरइतिसतांप्रवृत्त्याद्रढयतिइ तितवेति त्वमेवसर्वकारणत्वेनपरमार्थइतिकृत्वाभोत्र्यधिपतेत्रिगुणमायामृगीनर्तकसूरयोविवेकिनस्तवअखिललोकमलक्षपणकथामृता ब्धिसकलजनवृजिननिरसनहेतुंकीर्तिसुधासिंधुमवगाह्यनिषेव्यतपांसितपंतीतितिपांसिपापानिदुःखानिवाजहुस्त्यक्तवंतः त्वदीयकथामा

**इतितवसूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथाऽमृताब्धिमवगाह्यतपांसिजहुः ॥**
**किमुतपुनःस्वधामविधुताशयकालगुणाःपरमभजंतियेपदमजस्रसुखानुभवं ॥१६॥**

त्रेणयदापापत्यागस्तदाकिमुवक्तव्यंयेपुनःस्वधामविधुताशयकालगुणाःस्वधाम्नास्वरूपस्फुरणेनैवविधुतास्त्यक्ताआशयगुणाअंतःकरणध र्मारागादयः कालगुणाजरादयश्चयैस्तेतथाहेपरमतवाजस्रसुखानुभवमखंडानंदानुभवंपदंस्वरूपंभजंतिसेवंतेतथाभूतादुःखानित्यजंतीं ति तद्यथा पुष्करपलाशमापोनश्लिष्यंतेएवमेवैनंविदित्वापापंकर्मनश्लिष्यते नकर्मणालिप्यतेपापकेन तरसुकृतदुष्कृतेविधुनुतेएवंहवावन तपतिकिमहंसाधुनाकरवंकिमहंपापमकरवमित्यादिश्रुतेरित्यर्थः॥ सकलवेदगणेरितसद्गुणस्त्वमितिसर्वमनीषिजनारताः ॥ त्वयिसुभद्रगु णश्रवणादिभिस्तवपदस्मरणेनगतक्लमाः ॥ ३ ॥१६॥ असुर्यानामतेलोकाअंधेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोज नाः तथानचेदवेदीन्महतीविनष्टिः येतद्विदुरमृतास्तेभवंत्यथेतरेदुःखमेवोपयंतीत्याद्याः श्रुतयःपूर्वश्लोकोक्ताभयविधभजनहीनान्निंदंति

दृतयइवेति असुभृतोनरायदितेअनुविधाअनुविदधतीत्यनुविधाअनुवर्तिनोभक्ताइतियावत् तर्हिश्वसंतिजीवंतिसफलजीवनाभवंति इत
रथादृतयइवभस्त्राइव वृथाश्वासाइत्यर्थः नन्वभक्तानामपिकामादिफलमस्त्येव न कार्यकारणानुग्राहकत्वेनजीवनहेतोस्तवाभजनेकृतघ्ना
नांतदपिनसिध्येदित्याशयेनाह महदहमादयइति महानहंकारश्चआदिर्येषांतेयदनुग्रहतोयस्यानुप्रवेशेनलब्धसामर्थ्याः संतः अंडंदेहंसम
ष्टिव्यष्टिरूपंसृष्टवंतः तत्रचपंचापिकोशानन्नमयादीनाविश्यतत्तदाकारः सन्यश्चेतयतेसत्वंतदाह पुरुषविधइति पुरुषस्यान्नमयादेर्विधेव
विधाआकारोयस्यसतथा ननुचिदेकरसस्यकथंतत्तदाकारताअतआह अन्वयोऽत्रेति अत्रएष्वन्नमयादिष्वन्वेतीत्यन्वयः अतस्तत्तदाकार
तेति एवंतर्हिसत्यत्वमसंगत्वंचकथंतत्राह चरमोऽन्नमयादिषुयइति अन्नमयादिषुउपदिश्यमानेषुयश्चरमोब्रह्मपुच्छंप्रतिष्ठेतिपुच्छत्वेनोक्तः स
त्वमितिसंबंधः ननुतथाऽप्यन्नमयादिष्वन्वितत्वेऽसंगत्वव्याहतिरेवतत्राह सदसतः परंत्वमथयदेष्ववशेषमृतमिति सदसतः स्थूलसूक्ष्मा
दन्नमयादेः परंव्यतिरिक्तंतत्साक्षिभूतं अवशेषमवशिष्यतइत्यवशेषमबाध्यं अथअतएवऋतंसत्यं तर्हिकिमर्थंतेष्वन्वयउक्तः शाखाचंद्रवच्छु

**दृतयइवश्वसंत्यसुभृतोयदितेऽनुविधामहदहमादयोंऽडमसृजन्यदनुग्रहतः ॥ पुरुषविधोऽन्वयोऽत्रचर
मोऽन्नमयादिषुयः सदसतः परंत्वमथयदेष्ववशेषमृतं ॥ १७ ॥ उदरमुपासतेयऋषिवर्त्मसुकूर्पदृशः परिस
रपद्धतिंहृदयमारुणयोदहरं ॥ ततउदगादनंततवधामशिरः परमंपुनरिहयत्समेत्यनपतंतिकृतांतमुखे ॥ १८ ॥**

द्धस्वरूपलक्षणार्थं तथाहि सवाएषपुरुषोऽन्नरसमयस्तस्येदमेवशिरइत्यादिनास्थूलसूक्ष्मक्रमेणपंचकोशानुपदिश्यतस्यपुरुषविधतामन्वयं
पुरुषविधइतिपुनः पुनस्तदन्वितत्वेनालक्ष्यब्रह्मपुच्छंप्रतिष्ठेतिसर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यं ॥ नरवपुः प्रतिपद्ययदित्वयिश्रवण
वर्णनसंस्मरणादिभिः ॥ नरहरेनभजंतिनृणामिदंदृतिवदुच्छ्वसितंविफलंततः ॥ ४ ॥ १७ ॥ एवंतावत्सर्वात्मकेपरमेश्वरेसर्वश्रुतिसम
न्वयेनसद्भजनीयत्वमुक्ताअभक्तनिंदयाचतदेवदृढीकृत्येदानीमनवगाह्यमहिमनिप्रथमंतावदुपाध्यालंबनमुपासनमुदरंब्रह्मेतिशार्कराक्षाउ
पासतेहृदयंब्रह्मेत्यारुणयोब्रह्महैवैताइतऊर्ध्वंत्वेवोदसर्पत्तच्छिरोऽश्रयतइत्याद्याः श्रुतयोविदधतीत्याह उदरमुपासतइति ऋषिवर्त्मसुऋ
षीणांसंप्रदायमार्गेषुयेकूर्पदृशस्तेउदरालंबनंमणिपूरकस्थंब्रह्मोपासतेध्यायंति शार्कराक्षाइतिश्रुतिपदस्यप्रतिपदंकूर्पदृशइति कूर्पंशर्करा
रजोविद्यतेदृक्षुअक्षिषुयेषांतेतथारजः पिहितदृष्टयः स्थूलदृष्टयइतियावत् उदरस्यहृदयापेक्षयास्थूलत्वात् ॥ ॥ ॥

यद्वा कूर्पंसूक्ष्मं सूक्ष्मदृशइत्यर्थः तदाहृदयस्थंसूक्ष्ममेवालक्ष्यतत्प्रवेशायप्रथममुदरमुपासतइतिभावः आरुणयस्तुसाक्षात्हृदयस्थंदहरं सूक्ष्ममेवोपासते हृदयविशेषणं परिसरपद्धतिमिति परितःसरंतिप्रसर्पंतीतिपरिसरानाड्यस्तासांपद्धतिंमार्गंप्रसरणस्थानमित्यर्थः विशेषणस्यफलमाह ततइति ततोहृदयात्भोअनंततवधामउपलब्धिस्थानंसुषुम्नाख्यंपरमंश्रेष्ठंज्योतिर्मयंशिरोमूर्धानंप्रतिउदगात्उदसर्पत् मूलाधारादारभ्यहृदयमध्यात्ब्रह्मरंध्रंप्रत्युद्गतामित्यर्थः कथंभूतंधाम यत्समेत्यप्राप्यपुनरिहकृतांतमुखेमृत्युमुखेसंसारेनपतंति तथाचश्रुतिः शतंचैकाहृदयस्यनाड्यस्तासांमूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंतीति ॥ उदरादिषुयःपुंसांचिंतितोमुनिवर्त्मभिः ॥ हंतिमृत्युभयंदेवोहृद्गतंतमुपास्महे ॥ ५ ॥ १८ ॥ नन्वीश्वरस्यापितर्हिजीववदुदरादिसंबंधेतदनुप्रविष्टस्यचतारतम्येसतिकेनविशेषेणोपास्यत्वमितीमामाशंकांपरिहरंत्यएकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा कर्माध्यक्षःसर्वभूताधिवासःसा

स्वकृतविचित्रयोनिषुविशन्निवहेतुतयातरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः॥ अथवितथास्वमूष्ववितथंतवधामसमंविरजधियोऽन्वयंत्यभिविपण्यवएकरसं ॥१९॥

क्षीचेताकेवलोनिर्गुणश्चेत्याद्याःश्रुतयःस्तुवंतीत्याह स्वकृतविचित्रयोनिष्विति स्वयंकृतासुउच्चनीचमध्यमासुयोनिषुअभिव्यक्तिस्थानेषुकार्येषुदेहादिषुहेतुतयाउपादानतयाप्रागेवविद्यमानत्वेनमुख्यप्रवेशासंभवाद्विशन्निववर्तमानस्तरतमतोन्यूनाधिकभावेनचकास्सिअवभाससे स्वकृतायोनीरनुकरोतीतिस्वकृतानुकृतिरनलवत् अग्निर्यथास्वतस्तारतम्यहीनोऽपिकाष्ठानुसारेणतथातथाप्रकाशतेतद्वत् अथअतोवितथासुमिथ्याभूतास्वमूषुयोनिषुअवितथंसत्यं यतः सममविशेषमतःसत्यंतवधामस्वरूपंविरजाधियोनिर्मलमतयःअन्वयंतिजानंतिनुइतिपृथक्पदंवा अत्रहेतुः अभिविपण्यवइति अभितोविगतव्यवहाराः पणव्यवहारइत्यस्यरूपंपण्युरिति ऐहिकामुष्मिककर्मफलरहिताइत्यर्थः अविशेषत्वादेवैकरसंसन्मात्रं अतस्तवोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमितिभावः ॥ स्वनिर्मितेषुकार्येषुतारतम्यविवर्जितं ॥ सर्वानुस्यूतसन्मात्रंभगवंतंभजामहे ॥ ६ ॥ १९ ॥ ॥ ॥ ॥

अपिचकुतोन्वियमाशंकास्यात्भगवतोदेहाद्युपाधिकृतदोषप्रसंगइतियतोऽविद्याकामकर्मभिः संसरतोजीवस्यापिभगवद्भावंलक्षणयाबोधयंत्यस्तंदोषंनिषेधयंति सयश्चायंपुरुषे यश्चासावादित्ये सएकः तत्त्वमसीत्याद्याःश्रुतयः ननुकृत्वर्थस्यात्मनःस्तुतिरियमीश्वरत्वेनाक्रियते नतुतस्येश्वरत्वंबोध्यते नैतद्युज्यते यतस्तत्रयस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइत्याद्याःश्रुतयःकृतावतारस्यभगवतश्चरणभजनमुपायंवदंतत्याह स्वकृतपुरेष्विति स्वकर्मोपार्जितेषुपुरेषुदेहेषुअमीषुनरादिषुभोकृत्वेनवर्तमानंपुरुषमखिलशक्तिधृतःसर्वशक्त्याश्रयस्यपूर्णस्यतवांशकृतंवदंति अंशइवांशःकृतइवकृतः त्वद्रूपंवदंतीत्यर्थः ननुकार्यकारणसंवृतस्यकुतएवंभूतत्वंतत्राह अबहिरंतरसंवरणमिति बहिःकार्यमंतरंकारणं वस्तुतस्तदावरणशून्यं तयोरसत्त्वादित्यर्थः एवंनृगतिंनुर्जीवस्यगतिंतत्त्वंविविच्यविशोध्यकवयःअन्यथेदंनप्राप्यतइतिजानंतोनिगमावपनंनिगमोक्तकर्मणामावपनमासमंतादुप्यतेऽस्मिन्नित्यावपनंक्षेत्रंसर्वकर्मार्पणविषयमित्यर्थः यत्रार्पितानिकर्माणिमुक्तिफलंफलंतितंभवतोंऽघ्रिमभवंभवनिवर्तकंविश्वसिताःकृतविश्वासाउपासतेअर्चनवंदनादिभिःसेवंते भु

स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणंतवपुरुषंवदंत्यखिलशक्तिधृतोंऽशकृतं॥इतिनृगतिंविविच्यकवयोनिगमावपनंभवतउपासतेंऽघ्रिमभवंभुविविश्वसिताः॥२०॥ दुरवगमात्मतत्त्वनिगमायतवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः॥ नपरिलषंतिकेचिदपवर्गमपीश्वरतेचरणसरोजहंसकुलसंगविसृष्टगृहाः॥ २१ ॥

वीतिमर्त्यलोकेइदमेवोचितमितिदर्शयंति ॥ त्वदंशस्यममेशानत्वन्मायाकृतबंधनं ॥ त्वदंघ्रिसेवामादिश्यपरानंदनिवर्तय ॥ ७ ॥ २० ॥ भक्तिरल्पसाधनमितिवचनमनुचितमिवमन्वानोभक्तिंगुरूकरोति दुरवगमेति भोईश्वरदुरवगमंदुर्बोधंयदात्मतत्त्वंतस्यनिगमायज्ञापनाय तवात्ततनोराविष्कृतमूर्तेश्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाःचरितमेवमहामृताब्धिस्तस्मिन्परिवर्तोविगाहस्तेनपरिश्रमणाः परिर्वर्जनार्थः श्रमणंश्रमः गतश्रमाइत्यर्थः अपवर्गमपिकेचिन्नपरिलषंतिनेच्छंतिकुतोऽन्यदिंद्रपदादि केचिदित्येवंभूताभक्तिरसिकाविरलाइतिदर्शयंति नकेवलमन्यन्नेच्छंतिकिंतुतेनैवसुखेनपूर्णाःसंतःपूर्वसिद्धंगृहादिसुखमप्युपेक्षंतइत्याह तवचरणसरोजहंसकुलसंगविसृष्टगृहाइति तवचरणसरोजेहंसाइवरममाणायेभक्तास्तेषांकुलंतेनसंगस्तेनविसृष्टागृहायैस्तेतथा अनेनश्रवणकीर्तनेदर्शितेश्रुतिश्चमुक्तेरप्याधिक्यंभक्तेर्दर्शयति यथाह यंसर्वेदेवानमंतिमुमुक्षवोब्रह्मवादिनश्चेति व्याख्यातंचसर्वज्ञैर्भाष्यकृद्भिः मुक्ताअपिलीलयाविग्रहंकृत्वाभजंतइति ॥ त्वत्कथामृतपाथोधौविहरंतोमहामुदः ॥ कुर्वंतिकृतिनःकेचिच्चतुर्वर्गंतृणोपमं ॥ ८ ॥ २१ ॥ ॥ ॥

आराममस्यपश्यंतिनतंपश्यतिकश्चन नतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूव नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरं तीत्याद्याःश्रुतयोऽनुक्रोशंत्योजगदात्मनीश्वरेरतिमुपदिशंतीत्याह त्वदनुपथमिति त्वदनुवर्त्तित्वात्त्वत्सेवौपयिकमिदंकुलायंकौपृथिव्यां लीयतइतिकुलायंशरीरंआत्मसुहृत्प्रियवत्आत्माचसुहृच्चप्रियश्चतद्वच्चरति स्वाधीनतयावर्ततइत्यर्थः तथाऽपित्वयिउन्मुखेहितेप्रियेआ त्मनिच अप्यर्थेचकारः एवंभूतेसुसेव्येऽपित्वयिबतअहोकष्टंनरमंतिनसख्यादिनाभजंति असदुपासनयादेहाद्युपलालनेनआत्महनः प्रमादिनः कुतः यदनुशयाःयस्यामसदुपासनायामनुशयोवासनायेषांतेकुशरीरभृतःसंतःउरुभयेसंसारेभ्रमंतिपरिवर्तंते अतआत्महनइ तिभावः ॥ त्वय्यात्मनिजगन्नाथेमन्मनोरमतामिह ॥ कदाममेदृशंजन्ममानुषंसंभविष्यति ॥ ९ ॥ २२ ॥ इदानीमात्मावारेद्रष्टव्यःश्रो

त्वदनुपथंकुलायमिदमात्मसुहृत्प्रियवच्चरतितथोन्मुखेत्वयिहितेप्रियआत्मनिच ॥ नवतरमंत्यहोअसदु पासनयात्महनोयदनुशयाभ्रमंत्युरुभयेकुशरीरभृतः ॥ २२ ॥ निभृतमरुन्मनोऽक्षदृढयोगयुजोहृदिय न्मुनयउपासतेतदरयोऽपियपुःस्मरणात् ॥ स्त्रियउरगेंद्रभोगभुजदंडविषक्तधियोवयमपितेसमाःसमदृ शोंऽघ्रिसरोजसुधाः ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥

तव्योमंतव्योनिदिध्यासितव्यइत्याद्याःश्रुतयोध्यानमंगलत्वेनोपदिशंतीत्याह निभृतमरुन्मनोऽक्षदृढयोगयुजइति मरुत्प्राणोमनश्चअ क्षाणींद्रियाणिचनिभृतानिसंयमितानियैस्तेचतेदृढंयोगंयुंजंतितेदृढयोगयुजस्तेतथाभूतामुनयोहृदियत्तत्त्वमुपासतेतदेवारयोपितवस्मरणा द्ययुःप्रापुः स्त्रियोऽपिकामतःउरगेंद्रभोगभुजदंडविषक्तधियःअहींद्रदेहसदृशयोर्भुजदंडयोर्विषक्ताधीर्यासांताःपरिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नंत्वांपश्यंत्योवयंश्रुत्यभिमानिन्योदेवताअपितेसमाएवरूपाविषयतयाअंघ्रिसरोजंसुष्ठुधारयंत्यः अयंभावः इत्थंभूतस्तवस्म रणानुभावोयेयोगिनस्त्वांहृद्यालंबनमुपासते याश्चवयंत्वांसमंपश्यामोयाश्चास्त्रियःकामतःपरिच्छिन्नंध्यायंतियेचद्वेषेण सर्वानपितांस्त्वामेव प्रापयतीति ॥ चरणस्मरणंप्रेम्णातवदेवसुदुर्लभम् ॥ यथाकथंचिन्नृहरेममभूयादहर्निशम् ॥ १० ॥ २३ ॥

यतोवाचोनिवर्तंतेअप्राप्यमनसासह कोअद्धावेदकइहप्रवोचत् कुतआजाताकुतइयंविसृष्टिः अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयत आबभूव अनेजदेकंमनसोजवीयोनैतद्देवाआप्नुवन्पूर्वमर्शन् तद्धावतोऽन्यानत्येतितिष्ठत्यस्मिन्नपोमातरिश्वादधातीत्याद्याः श्रुतयोभगव त्तत्त्वंदुर्ज्ञेयंवदंत्योभक्तिमेवोररीकृत्यस्तुवंतीत्याह कइहनुवेदेति बतअहोभगवन्इहजगतिअग्रसरंपूर्वसिद्धंत्वांअवरजन्मलयःअर्वाचीनो त्पत्तिनाशवान्कोनुपुमान्वेदजानाति ईश्वरस्यपूर्वसिद्धावन्यस्यचार्वाचीनत्वेप्रमाणंवदन्ज्ञानकारणाभावमाह यतउदगादिति यतस्त्व त्तःऋषिर्ब्रह्माउत्पन्नोयंब्रह्माणमनुउभयेआध्यात्मिकाधिदैविकादेवगणाउत्पन्नास्ततोऽप्यर्वाचीनाःसर्वे यदातुभवान्सर्वमवकृष्यउपसं हृत्यशयीततर्हितदाअनुशायिनांजिवानांसाधनंनास्ति यतस्तदानसत्स्थूलमाकाशादि नचासत्सूक्ष्मंमहदादि नचउभयंसदसद्भ्यामा रब्धंशरीरं नचकालजवस्तन्निमित्तभूतंकालवैषम्यं एवंसतितत्रतदानकिमपिइंद्रियप्राणाद्यपि नचज्ञापकंशास्त्रमपि अयमभिप्रायःअर्वाग्द ष्टिगतानांदेहाद्युपाधिकृतांतराणांकालवशेनचमलिनसत्वानांनतावद्भगवज्ज्ञानसामर्थ्यं तथाचश्रुतिः नतंविदाथयइमाजजानान्यद्युष्मा

**कइहनुवेदबतावरजन्मलयोऽग्रसरंयतउदगादृषिर्यमनुदेवगणाउभये॥तर्हिनसन्नचासदुभयंनचकालजवः किमपिनतत्रशास्त्रमवकृष्यशयीतयदा ॥ २४ ॥ जनिमसतःसतोमृतिमुतात्मनियेचभिदांविपणमृतंस्मरंत्यु पदिशंतितआरुपितैः ॥ त्रिगुणमयःपुमानितिभिदायदबोधकृतात्वयिनततःपरत्रसभवेदवबोधरसे ॥ २५ ॥**

कमंतरंबभूवइत्याद्याः यदातुप्रलयसमयेनबह्वंतरमस्तितदापिसाधनाभावान्नभगवज्ज्ञानसामर्थ्यं अतस्त्वदेकशरणतयाश्रवणकीर्तनादि भक्तिरेवसुकरेति ॥ क्वाहंबुध्यादिसंरुद्धःकचभूमन्महस्तव ॥ दीनबंधोदयासिंधोभक्तिंमेनृहरेदिश ॥ ११ ॥ २४ ॥ इतोऽपिज्ञानंनसुशकंउपादि शतामपिश्रमबाहुल्यादित्याहुः जनिमसतइति असतोजगतोजनिमुत्पत्तिंयेवैशेषिकादयोवदंतिअसतएवब्रह्मत्वस्योत्पत्तिंयेचपातंजला दयः सतएवैकविंशतिप्रकारस्यदुःखस्यनाशंमोक्षंवदंतियेनैयायिकाः उतअपियेचसांख्यादयःआत्मनिभिदांभेदंच येमीमांसकाविपणं कर्मफलव्यवहारमृतंसत्यंस्मरंतिवदंतितेसर्वेआरुपितैरारोपितैर्भ्रमैरेवोपदिशंतिनतत्त्वदृष्ट्या सदेवसोम्येदमग्रआसीत् ब्रह्मैवसन्ब्रह्माप्ये तिअनीशयाशोचतिमुह्यमानः अविद्यायामंतरेवर्तमानाःस्वयंधीराःपंडितंमन्यमानाः जंघन्यमानाअपियंतिमूढाअंधेनैवनीयमानायथांऽधाः एकमेवाद्वितीयंब्रह्म एकएवहिभूतात्माभूतेभूतेव्यवस्थितः एकधाबहुधाचैवदृश्यतेजलचंद्रवदित्यादिश्रुतिविरोधात् किंच वस्तुतः

पुरुषस्यत्रिगुणमयत्वेसर्वमिदंसंगच्छेतनतुतदस्तीत्याह त्रिगुणमयःपुमानितिभिदायदबोधकृतात्वयीति त्रिगुणमयःपुमानित्यनेनहेतुनाया भिदा उपलक्षणमेतत् भिदादिसायस्मात्त्वयिविषयेअबोधकृतात्वद्विषयाज्ञानविजृंभिता तर्हिकिमज्ञानमस्ति वस्तुतःपुंसिनैवेत्याहततः अबोधात्परत्रपरेअसंगेऽवबोधरसेज्ञानघनेसःअबोधोनभवेन्नसंभवतीत्यर्थः ॥ मिथ्यातर्कसुकर्कशेरितमहावादांधकारांतरभ्राम्यन्मंदमतेर मंदमहिमंस्त्वज्ज्ञानवर्त्मास्फुटं ॥ श्रीमन्माधववामनत्रिनयनश्रीशंकरश्रीपतेगोविंदेतिमुदावदन्मधुपतेमुक्तःकदास्यामहं ॥१२॥ २५ ॥ ननुयद्यसन्नोत्पद्यतेयदिचत्रिगुणमयःपुरुषोनभवतितर्हीदंप्रपंचजातंपुरुषश्चपृथङ्नास्तीत्युक्तंस्यात् कथंतर्हितयोःसत्त्वेनप्रतीतिरतआहस दिवमनइति मनःमनोमात्रविलसितमिदंत्रिवृत्त्रिगुणात्मकंप्रपंचजातमसदेवसदिवविभाति कथमितिचेत्तत्राह त्वयीति त्वय्यधिष्ठानेअ धिष्ठानसत्तयासद्वत्प्रतीयतइत्यर्थः नकेवलमिदंकारास्पदंकिंतुआमनुजात् मनुजःपुरुषः अभिविधावाकारः पुरुषमभिव्याप्येति पुरुष

सदिवमनस्त्रिवृत्त्वयिविभात्यसदामनुजात्सदभिमृशंत्यशेषमिदमात्मतयात्मविदः ॥
नहिविकृतिंत्यजंतिकनकस्यतदात्मतयास्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितं ॥ २६ ॥

स्यापिपृथक्सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः तथाचश्रुतिः असतोऽधिमनोसृजत मनःप्रजापतिमसृजत प्रजापतिःप्रजाअसृजत तद्वाइदंमनस्येवपरमंप्रतिष्ठितंयदिदंकिंचेति नन्वात्मविदामापिविश्वंसदेवस्फुरतिअतःकथमसत्स्यादतआह सदभिमृशंतीति आत्मवि दस्त्वशेषमिदंभोक्तृभोग्यात्मकंविश्वमात्मतयैवसदभिमृशंतिसदितिजानांति आत्मकार्यत्वान्नपृथगित्यर्थःतथाहि यदुपादानकंयत्कार्यंभव तितत्तेनैवरूपेणप्रतीयतेउपादीयतेचेतिलोकाचारेणदर्शयति नहिविकृतिमिति कनकस्यविकृतिंकुंडलादिकंकनकार्थिनोनत्यजांति अत्रहेतुः तदात्मतया कनकरूपत्वेनेत्यर्थःअतः स्वकृतमिदंविश्वमनुप्रविष्टंचपुरुषरूपमात्मतयैवावसितंनिश्चितं ॥ यत्सत्त्वतःसदाभातिजगदेतदस त्स्वतः ॥ सदाभासमसत्यस्मिन्भगवंतंभजामतं ॥ १३ ॥ २६ ॥ ॥ ॥ ॥

ननुसत्यंज्ञानमनंतंब्रह्म नेहनानास्तिकिंचन मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति इत्यादिश्रुतिभिरेवंभूतस्यभगवतःप्रतिपादनात्तज्ज्ञा नंसुकरमेवेतिकृतंभक्त्याअतआह तवपरियेचरंतीति तवेतिकर्मणिषष्ठी त्वांयेपरिचरंति छंदसिव्यवहिताश्चेतियच्छब्देनव्यवधानमदोषः केनरूपेण अखिलसत्वनिकेततयाअखिलानिसत्वानिनिकेतोयस्यसतथातस्यभावस्तत्तातया सर्वभूतावासतयेत्यर्थः उतएवअविगणय्य तिरस्कृत्यतएवनिर्ऋतेर्मृत्योःशिरःमूर्धानंपदापादेनआक्रमंतिमृत्योर्मूर्ध्निपदंदधातितेतरंतिमुच्यंतइत्यर्थः येपुनर्विमुखाअभक्तास्तान्गिरावा चापशूनिवविबुधान्विदुषोऽपिपरिवयसेबध्नासिकुतः त्वयिकृतसौहृदाःत्वयिकृतंसौहृदंप्रेमयैस्तेखलुनिश्चितंपुनंतिपवित्रयंति आत्मानम न्यानपीतिशेषः नेतरे तथाचश्रुतिः तस्यवाक्तंतिर्नामानिदामानि तदस्येदंवाचातंत्यानामाभिर्दामभिःसर्वंसितमिति अयमभिप्रायः स त्यमेवंभूतमात्मानंश्रुतयःप्रतिपादयंतितत्रचयद्यपिवस्तुनोपरोक्षत्वादपरोक्षमेवज्ञानमुत्पद्यतेतथाऽप्यसंभावनाविपरीतभावनातिरस्कृतत्वा न्मलिनचित्तेषुपरोक्षमिवभवतीतिनापरोक्षसंसारभ्रमनिवृत्तिसमर्थं भगवत्परिचर्ययातुसम्यगमलचित्तानांतत्प्रसादेनलब्धापरोक्षज्ञानाना

**तवपरियेचरंत्यखिलसत्वनिकेततयातउतपदाक्रमंत्यविगणय्यशिरोनिर्ऋतेः ॥ परिवयसेपशूनिवगिरा विबुधानपितांस्त्वयिकृतसौहृदाःखलुपुनंतिनयेविमुखाः ॥ २७ ॥ त्वमकरणःस्वराडखिलकारकशक्तिध रस्तवबलिमुद्वहंतिसमदंत्यजयाऽनिमिषाः ॥ वर्षभुजोऽखिलक्षितिपतेरिवविश्वसृजोविदधातियत्रयेत्वधि कृताभवतश्चकिताः ॥ २८ ॥ ॥ ॥ ॥**

मयत्नतएवकरकलितोमोक्षइति तथाचश्रुतयः देहांतेदेवः परंब्रह्मतारकंव्याचष्टे यमेवैषवृणुतेतेनलभ्यः यस्यदेवेपराभक्तिरित्या दयः ॥ तपंतुतापैःप्रपतंतुपर्वतादटंतुतीर्थानिपठंतुचागमान् ॥ यजंतुयागैर्विवदंतुवादैर्हरिंविनानैवमृतिंतरंति ॥ १४ ॥ २७ ॥ ननुयद्यखिलसत्वनिकेतत्वेनभवतः सेव्यत्वमुच्यतेतर्हितत्करणसंबंधात्कर्तृत्वभोक्तृत्वेप्रसज्येयातां नवस्तुतस्तथात्वमितिचेत्तर्हिजीवाना मपितत्तुल्यत्वमितिकेनविशेषेणपुनः सेव्यसेवकत्वमितीमामाशंकांपरिहरंत्यः अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःसशृणोत्यकर्णः॥ सवेत्तिवेद्यंनचतस्यवेत्तातमाहुरग्र्यंपुरुषंपुराणमित्याद्याः श्रुतयः स्तुवंतीत्याह त्वमकरणइति करणसंबंधरहितएवअखिलकारकश क्तिधरः अखिलानांप्राणिनांयानिकारकाणिकारणानिइंद्रियाणितेषांशक्तीर्धारयतिप्रवर्तयतीतितथा कुतः स्वराट् यतः स्वेनैवराज तेदीप्यते नहिस्वतः सिद्धज्ञानशक्तेरिंद्रियापेक्षेत्यर्थः अतस्तवबलिमुद्वहंतिपूजांकुर्वंतीति अजया

अविद्ययासाहितास्तयावृताइत्यर्थः अनिमिषादेवाइंद्रादयस्तत्पूज्याविश्वसृजोब्रह्मादयोऽपियथासम्राज्ञीकाएवाकिंकराः स्वामिनंसेवंतेतथाऽ
विद्यायुक्तादेवादयस्त्वामितिलोकोक्तिः समदंतिचमनुष्यैर्दत्तंहव्यकव्यादिलक्षणंबालिंभक्षयंति अत्रदृष्टांतःवर्षभुजोऽखिलक्षितिपतेरिवेति
यथावर्षभुजःखंडमंडलपतयोऽखिलक्षितिपतेर्महामंडलेश्वरस्यस्वप्रजादत्तबलिभुजोबलिमुद्वहंतितद्वदिति कथंबलिंवहंतितदाह विदध
तियत्रयेत्वधिकृताभवतश्चाकिताइति त्वत्तोभीताःसंतोयस्मिन्कर्मणिनियुक्तास्तेतत्कुर्वंतीति त्वदाज्ञापालनमेवबल्युद्वहनमित्यर्थः तथा
चश्रुतिःभीषास्माद्वातःपवतेभीषोदेतिसूर्यःभीषास्मादग्निश्चेंद्रश्च मृत्युर्धावतिपंचमइति ॥ अनिंद्रियोऽपियोदेवःसर्वकारकशक्तिधृक् ॥सर्वज्ञः
सर्वकर्ताचसर्वसेव्यंनमामितं ॥ १५ ॥ २८ ॥ तदेवंकरणप्रवर्तकमीश्वरंकरणपरतंत्रानराभजंतीत्युक्तं नकेवलमियदेवकारणंततउत्पन्न
त्वेनापितत्परतंत्रत्वादितिवदंति यथाऽग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाःसर्वेलोकाःसर्वेदेवाःसर्वाणिभूतानिसर्वए

स्थिरचरजातयःस्युरजयोत्थनिमित्तयुजोविहरउदीक्षयायदिपरस्यविमुक्तततः ॥
नहिपरमस्यकश्चिदपरोनपरश्चभवेद्वियतइवापदस्यतवशून्यतुलांदधतः॥ २९ ॥

तआत्मानोव्युच्चरंतीत्याद्याःश्रुतयइत्याह स्थिरचरजातयइति हेविमुक्तनित्यमुक्त यदितवअजयामाययाविहरःविहारःक्रीडाभवतितदास्थि
रचरजातयःस्थिराश्चचराश्चजातयो जात्यालिंगितादेहायेषांतेजीवाःस्युःभवेयुः कथंभूतस्य ततःअजातःपरस्यदूरेवर्तमानस्यासंगस्येत्य
र्थः कथंविहारः उदीक्षयाईक्षणलेशेन ननुमयिलीनानांजीवानांकथंजन्मस्यात्तत्राह उत्थनिमित्तयुजइतिईक्षयैवउत्थितानिआविर्भूतानि
निमित्तानिकर्माणितद्युक्तानिलिंगशरीराणिवातैर्युज्यंतइतितथा ननुकिंनिमित्तोत्थानेनमदिच्छयैवभवंतु न त्वयिवैषम्याभावाद्विषमसृष्टे
रयोगादित्याह परमस्योति तवपरमस्यउत्तमस्यपरमकारुणिकस्यावियतइवाकाशसदृशस्य समस्येत्यर्थः कश्चिदपरःस्वीयःपरोऽस्वीयश्चन
भवेत् नसंभवतीत्यर्थः असद्वाइदमग्रआसीत् ततोवैसदजायतेत्यादिश्रुत्याशून्यपूर्वकत्वमिवप्रतीयतेतदर्थंपुनर्विशिनष्टि शून्यतुलांदध
तःशून्यसाम्यंभजतः तदेवदर्शयितुंपुनर्विशिनष्टि अपदस्येति नपद्यतइत्यपदस्तस्यावाङ्मनसयोरगोचरस्येत्यर्थः ॥ त्वदीक्षणवशक्षोभ
मायाबोधितकर्मभिः ॥ जातान्संसरतःखिन्नान्नृहरेपाहिनःपितः ॥ १६ ॥ २९ ॥ ॥ ॥ ॥

एवंतावत्परमात्मनःसकाशादविद्याकृतकार्योपाधयस्तदंशाएवजीवाजाताःसंसरंतोभजंतीत्युक्तं तत्रयद्येकाऽविद्यातदाजीवस्याप्येकत्वा
देकमुक्तौसर्वमुक्तिप्रसंगः अथनानाविद्यास्तर्हितस्यैवांशांतरेणसंसारानपगमादनिर्मोक्षइत्यादितर्कबलेनवस्तुतएवनानात्मानस्तत्रचतेषाम
णुत्वेदेहव्यापिचैतन्यंनस्यात् देहपरिमाणत्वेचमध्यमपरिमाणानांसावयवत्वेनानित्यत्वंस्यात् अतःसर्वगतानित्याश्चेतिकेचनमन्यंते तत्र
नतावदुक्तदोषप्रसंगः अविद्याभेदेनतच्छक्तिभेदेनवाबद्धमुक्तव्यवस्थासंभवात् ईश्वरस्यतुनकेनाप्यंशेनसंसारशंकेत्युक्तमेव प्रसिद्धंचात्मैक्यं
सर्वश्रुतिषु किंच इमंपक्षमंतर्यामिब्राह्मणमपिनसहतइत्याह अपरिमिताइति वस्तुतएवानंताध्रुवास्तेनैवरूपेणानित्याःसर्वगताश्चतनुभृतो
जीवायदिस्युस्तर्हितेषांसमत्वात्शास्यतानघटतइतिकृत्वाहेध्रुवनियमोनियमनंत्वयानस्यादितरथातुघटेत कथं यन्मयमुपाधितोयाद्विकार

अपरिमिताध्रुवास्तनुभृतोयदिसर्वगतास्तर्हिनशास्यतेतिनियमोध्रुवनेतरथा ॥
अजनिचयन्मयंतदविमुच्यनियंतृभवेत्सममनुजानतांयदमतंमतदुष्टतया ॥ ३० ॥

प्रायंयज्जीवाख्यमजनिजातंतत्तस्यस्वविकारस्यनियंतृनियामकंभवेत् अविमुच्यकारणतयाअपरित्यज्य किंतत् सममनुस्यूतं ननुकिंयत्तच्छ
ब्दैर्ज्ञायतेचेदुच्यतामिदंतदितिअतआह अनुजानतांयदमतमिति जानीमइतिवदतांयदमतमविज्ञातप्रायंअविषयत्वात् तथाचश्रुतिः य
स्यामतंतस्यमतंमतंयस्यनवेदसः अविज्ञातंविजानतांविज्ञातमविजानतां अवचनेनैवप्रोवाच सहतूष्णींबभूवेत्यादिः किंच मतस्यज्ञात
स्यदुष्टतयादोषश्रवणात् तथाचश्रुतिः यदिमन्यसेसुवेदेतिदहरमेवापिनूनंत्वंवेत्थब्रह्मणोरूपंयदस्यत्वंयदस्यदेवेषुइत्यादि तस्माद्यत्तच्छ
ब्दावद्योत्यमतर्क्यंकिमपिसर्वानुस्यूतत्वेनसमंनियंतृभवेदित्यर्थः ॥ अंतर्यंतासर्वलोकस्यगीतःश्रुत्यायुक्त्याचैवमेवावसेयः ॥ यःसर्वज्ञः
सर्वशक्तिर्नृसिंहःश्रीमंतंतंचेतसैवावलंबे ॥ १७ ॥ ३० ॥ ॥ ॥

ननुयदिचपरमात्मनोर्जीवाजायंतइति नियंतृनियम्यभावउच्यतेतथासतिजीवानामनित्यत्वप्रसंगेनप्रतिदिनंकृतनाशाकृताभ्यागमप्रसंगः
स्यात् किंच तदामोक्षोनामजीवस्यस्वरूपहानिरेवस्यात् नचैतद्युक्तं स्वप्रकाशानंदात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्यमोक्षत्वाभ्युपगमा
दित्याशंक्योपाधिजन्मनैवजीवानांजन्मोच्यतेनस्वतःअघटनादित्याह नघटतइति तत्रकिंप्रकृतेर्जीवरूपेणोद्भवःस्यात्पुरुषस्यवाउ
भयोर्वा आद्येजीवानांजडत्वापत्तिः द्वितीयेपुरुषस्यविकारित्वप्रसंगः अतएवनतृतीयइत्याशयेनोक्तंप्रकृतिपूरुषयोरुद्भवोनघटतइति श्रु
त्याऽजत्वप्रतिपादनादपीत्याह अजयोरिति तथाचश्रुतिः अजामेकांलोहितशुक्लकृष्णांबह्वींप्रजांजनयंतींसरूपांअजोह्येकोजुषमाणोऽ
नुशेतेजहात्येनांभुक्तभोगामजोऽन्यइति उभययुजातुभवंति उभयंचतद्युज्यतइतियुक्संबद्धंपरस्पराध्यस्तमितियावत् तेनअसुभृतःप्रा
णाद्युपाधयोजीवाजायंतइत्यर्थः जलबुद्बुदवदिति यथाकेवलेनजलेनानिलेनवाजलबुद्बुदानभवंतिकिंतुमिलिताभ्यांतद्वत् तत्रयथाऽ
निलोनिमित्तंजलमुपादानमेवमत्रापिप्रकृतिर्निमित्तंपुरुषउपादानं तस्माद्वाएतस्मादात्मनआकाशःसंभूतः सोऽकामयतबहुस्यांप्रजायेये
ति यथाऽग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाःसर्वेलोकाःसर्वेदेवाःसर्वाणिभूतानिसर्वएवात्मानोव्युच्चरंतीत्यादिश्रुति

नघटतउद्भवःप्रकृतिपूरुषयोरजयोरुभययुजाभवंत्यसुभृतोजलबुद्बुदवत् ॥
त्वयितइमेततोविविधनामगुणैःपरमेसरितइवार्णवेमधुनिलिल्युरशेषरसाः ॥ ३१ ॥

षुचेतनाचेतनप्रपंचस्यपरमात्मोपादानत्वश्रवणात् नचविकारित्वं परिणामानंगीकारात् केचित्पुनःपरिणाममंगीकृत्यआत्मनोविकाराभि
याविपरीतंनिमित्तोपादानभावमिच्छंति सर्वथातावत्प्रकृतिपुरुषैक्याद्भवतीतिसिद्धं तदेकमेवाद्वितीयंब्रह्मअजामेकामविनाशीवारेऽयमात्मे
त्यादिश्रुतिबलादुत्पत्तिश्रवणाच्चजीवानामौपाधिकमेवजन्मनस्वतइत्युक्तं उपाधिलयेनपरमात्मनिपुनर्लयश्रवणादपिनवास्तवंजन्मेत्याह
त्वयितइति त्वयिकारणात्मनितइमेजीवाः ततइति यतोनवास्तवंजन्मतस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिःसहनिलिल्युःली
नावभूवुःतत्रसुषुप्तिप्रलययोर्मधुन्यशेषरसाइवलीयंते यथामधुनिसकलकुसुमरसाविशेषतोनुपलक्ष्यमाणाअपिसामान्येनोपलक्ष्यंतेएवंस्वा
पादौविशेषमात्रलयात्कारणस्यविद्यमानत्वात्सामान्यतोवर्तंते मुक्तौतुकारणस्यापिलयात्त्वयिपरमेनिरुपाधौसरितइवार्णवेलीयंतइतिवि
वेकः तथाचश्रुतयः यथासौम्यमधुकृतोमधुनिस्तिष्ठंतिनानाऽत्ययानांवृक्षाणांरसान्समवहारमेकतांसंगमयंति तेयथानतत्रविवेकंलभंतेअमु
ष्याहंवृक्षस्यरसोस्म्यमुष्याहंवृक्षस्यरसोऽस्मीत्येवमेवखलुसौम्येमाःप्रजाःसतिसंपद्यनविदुःसतिसंपद्यामहइति यथानद्यःस्पंदमानाःसमुद्रेऽ
स्तंगच्छंतिनामरूपेविहायतथाविद्वान्नामरूपाद्विमुक्तःपरात्परंपुरुषमुपैतिदिव्यमित्याद्याः ॥ ॥ ॥

यस्मिन्नुयद्विलयमपियद्भातिविश्वंलयादौजीवोपेतंगुरुकरुणयाकेवलात्मावबोधे ॥ अत्यंतांतंव्रजतिसहसासिंधुवत्सिंधुमध्येमध्येचित्रंत्रिभुवनगुरुंभावयेतंनृसिंहं ॥ १८ ॥ ३१ ॥ नन्वेवंतावत्परमेश्वराज्जीवाजायंतेतद्दशेनचकर्माणिकुर्वंतिपुनस्तत्रलीयंतइतिसंसारचक्रेपरिभ्रमणमुक्तमिदानींतन्निवृत्तये परीत्यभूतानिपरीत्यलोकान्परीत्यसर्वाःप्रदिशोदिशश्च उपस्थायप्रथमजामृतस्यात्मनात्मानमभिसंविवेशेत्याद्याभगवदनुवृत्तिंविदधतीत्याह नृपुतवमाययेति नृषुजीवेषुअमीषुतवमाययाभ्रममुक्तलक्षणमवगत्यज्ञात्वासुधियोभृशंत्वयिअभवेभवनिवर्त्तकेभावंस्वभावमनुवृत्तिंदधतिकुर्वंति कीदृशंभ्रमं अनुप्रभवंअन्वनुप्रभवोयस्मिंस्तंभ्रमं ततःकिमतआह कथमिति अनुवर्ततामनुवर्तमानानांत्वामेवशरणंभजतांभवभयंसंसारभयंकथंभवेत् नकथंचिदपीत्यर्थः कुतः यद्यस्मात्तवभ्रुकुटिर्भ्रूभंगरूपस्त्रिणेमिरितस्त्रोनेमयइवावच्छेदाःशीतोष्णवर्षाकालायस्यसंवत्सरात्मकस्यकालस्यसः अभवच्छरणेषुनभवान्शरणंरक्षितायेषांतेष्वेवभयंजन्ममरणादिलक्षणंसृजतिकरोति अतएवंभूतंसंसारमाकलय्यतन्निवृत्तयेसुधियस्त्वयिभावंदधतीति ॥ संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभवतापतप्तं ॥ कथंचिदापन्नमिहप्रपन्नंत्वमुद्धरश्रीनृहरेनृलोकं ॥ १९ ॥ ३२ ॥

नृपुतवमाययाभ्रमममीष्ववगत्यभृशंत्वयिसुधियोऽभवेदधतिभावमनुप्रभवं ॥ कथमनुवर्ततां
भवभयंतवयद्भ्रुकुटिःसृजतिमुहुस्त्रिणेमिरभवच्छरणेषुभयं ॥ ३२ ॥ विजितहृषीकवायुभि
रदांतमनस्तुरगंयइहयतंतियंतुमतिलोलमुपायखिदः ॥ व्यसनशतान्विताःसमवहायगुरोश्च
रणंवणिजइवाजसंत्यकृतकर्णधराजलधौ ॥ ३३ ॥ ॥ ॥ ॥

सचभगवतिभावोमनोनियमेसतिभवतिसोऽपिगुरूपसदनादितिगुरूपसदनंविदधतितद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठं आचार्यवान्पुरुषोवेद नैषातर्केणमतिरापनेयाप्रोक्ताऽन्येनैव सुज्ञानायप्रेष्ठेत्याद्याःश्रुतयइत्याह विजितहृषीकवायुभिरिति विजितानिहृषीकाणींद्रियाणिवायुश्चप्राणोयैस्तैरपिअदांतमनस्तुरगमदांतमदमितंमनएवतुरगोदुर्दमत्वसाम्यात्तंयेयंतुंनियंतुंयतंतिप्रयतंते अतिलोलमतिचंचलं गुरोश्चरणंसमवहायअनाश्रित्यतेउपायेषुखिद्यंतेक्लिश्यंतीत्युपायखिदःसंतोव्यसनशतान्विताबहुव्यसनाकुलाइहसंसारसमुद्रेसंतितिष्ठंति दुःखमेवप्राप्नुवंतीत्यर्थः हेअजअकृतकर्णधराअस्वीकृतनाविकावणिजोयथातद्वत् गुरुणोपदर्शितभगवद्भजनसुखानुभूतौतुस्वतएवमनोनिश्चलंभवतिनान्यथेतिभावः ॥ यदापरानंदगुरोभवत्पदेपदंमनोमेभगवँल्लभेत ॥ तदानिरस्ताखिलसाधनश्रमःश्रयेयसौख्यंभवतःकृपातः ॥ २० ॥ ३३ ॥ ॥

परीत्यलोकान्कर्मचितान् ब्राह्मणोनिर्वेदमायात् नास्त्यकृतःकृतेन तथा यदासर्वेप्रमुच्यंतेकामायेऽस्यहृदिश्रिताः अथमर्त्योऽमृतोभवत्य त्रब्रह्मसमश्नुतइत्याद्यावैराग्यमंगंविदधतीत्याह स्वजनसुतेति आत्मादेहः धामगृहं असुःप्राणः स्वजनादिभिःकिं सर्वरसेसर्वेरसाःसुखा निविद्यंतेयस्मिंस्तस्मिंस्त्वयिपरमानंदे एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः श्रयतस्त्वांसेवमानस्यपुंसःआत्मनिसति नृणांतुच्छैरेतैःकिंकउपयोगइतिसत्सत्यंपरमार्थसुखमजानतामतएवमिथुनतःस्त्रियामिथुनीभूयरतयेमायासुखायचरतांप्रवर्तमानानांकर्माणि षष्ठ्यौ अजानतश्चरतःपुरुषान्कोनुअर्थःसुखयतिआनंदयति नकोऽपीत्यर्थः इहसंसारे कथंभूते स्वविहतेस्वतएवनश्वरे स्वनिर स्तभगेस्वतएवगतसारे पाठांतरेतुकोन्वित्यस्यैतद्विशेषणद्वयं अतस्त्वद्भजनमेवोचितमित्यर्थः ॥ भजतोहिभवान्साक्षात्परमानंदचिद्घ नः ॥ आत्मैवकिमतःकृत्यंतुच्छदारसुतादिभिः ॥ २१ ॥ ३४ ॥ एवंगुरूपदेशेनतत्त्वमवगम्यसारासारविवेकेनचसर्वतोनिर्विद्यतदेवम हत्संगेनोपपत्तिभिःसम्यगवधारयितुंतीर्थसदनानिमुनयःपर्यटंतीतिश्रोतव्योमंतव्यइत्यादिश्रुत्यर्थमाह भुविपुरुपुण्यतीर्थसदनानीति तेउ

स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयिसतिकिंनृणांश्रयतआत्मनिसर्वरसे॥ इतिसदजान
तांमिथुनतोरतयेचरतांसुखयतिकोन्विहस्वविहतेस्वनिरस्तभगे ॥ ३४ ॥ भुविपुरुपुण्यतीर्थ
सदनान्यृषयोविमदास्तउतभवत्पदांबुजहृदोऽघभिदंघ्रिजलाः ॥ दधतिसकृन्मनस्त्वयियआ
त्मनिनित्यसुखेनपुनरुपासतेपुरुषसारहरावसथान् ॥ ३५ ॥ ॥ ॥ ॥

कलक्षणाऋषयोविमदानिरहंकारायतोभवत्पदांबुजहृदः भवतःपदांबुजंहृदियेषांतेअतःस्वयमेवअघभिदंघ्रिजलंयेषांतेउतआपितथाविधा अपिपुरूणिबहूनिपुण्यानितीर्थानिसदनानि चक्षेत्राणितान्येवोपासतेसेवंतेप्रायस्तत्रैवमहत्संगोभवतीति अथवापुरुअधिकंभगवद्भजनल क्षणंपुण्यंयेषांतानिचतानितीर्थानिच गुरवोमहांतइत्यर्थः तेषांसदनानिआश्रमान् यथाहामरसिंहः निपानागमयोस्तीर्थमृषिजुष्टेजले गुराविति नपुनःपुरुषसारहरावसथान्उपासते पुरुषाणांसारंविवेकस्थैर्यधैर्यक्षांतिप्रमुखंहरंतीतितथातेचतेआवसथागृहास्तान् नचते षांगृहादिभवकुत्सितसुखापेक्षेत्यतआह दधतिसकृन्मनस्त्वयियआत्मनिनित्यसुखइति सकृदपित्वयियेमनोदधतीतितेऽपिगृहाद्यासक्ता नभवंतिकिंपुनरेवंभूताइत्यर्थः ॥ मुंचन्नंगतदंगसंगमनिशंत्वामेवसंचिंतयन्संतःसंतियतोयतोगतमदास्तानाश्रमानावसन् ॥ नित्यंतन्मुख पंकजाद्विगलितत्वत्पुण्यगाथामृतस्रोतःसंप्लवसंप्लुतोनरहरेनस्यामहंदेहभृत् ॥ २२ ॥ ३५ ॥ ॥ ॥

नन्व।म्न।यस्यक्रियाऽर्थत्वादानर्थक्यमतदर्थानांतद्भूतानांक्रियार्थेनसमन्वयइतितत्रतत्रजैमिनिनावेदस्यक्रियापरत्वाभिधानादुपनिषदामपि तदेवयुक्तं यथोक्तंतत्रवार्तिककृता एतेनकत्रर्थकर्तृप्रतिपादनेनोपनिषदांनैराकांक्ष्यंव्याख्यातमिति न एकमेवाद्वितीयंब्रह्म विज्ञान मानंदंब्रह्म अचक्षुरश्रोत्रमित्येवंतद्विपरीतात्मप्रतिपादनात् नह्यद्वितियपरमानंदरूपस्यकर्मांगत्वंयुज्यते अननुमतंचैतद्वार्तिककृतः क थं सर्वत्रैवहिविज्ञानंसंस्कारत्वेनगम्यते ॥ परांगंचात्मविज्ञानादन्यत्रेत्यवधार्यतामितितेनैवोक्तत्वात् एतदर्थमेवमननायमुनयःपर्यटंतीत्यु क्तं तत्रतावद्द्वैतस्यसत्यत्वेभवेदप्येवंतदेवतुनसंभवतीतिप्रश्नोत्तराभ्यांमननेनतत्वावधारणप्रकारमाह सतइदमुत्थितंसदितिचेदिति इदंवि श्वंधर्मि सदितिसाध्योधर्मः सतउत्पन्नत्वाद्धेतुः यद्यतउत्पन्नंतत्तदात्मकमेवदृष्टं यथाकनकादुत्पन्नंकुंडलादितदात्मकंतद्वदिति तत्रय दिसदभेदःसाध्यतेतदाअपादानत्वानिर्देशेनैवभेदप्रतीतेर्विरुद्धोहेतुरित्याह ननुतर्कहतमिति ननुनाभेदंसाधयामःकिंतुतदुत्पन्नत्वेनकुंड लादिवद्भेदंप्रतिषेधयामः तत्रअभेदएवस्यादित्याशंक्यानैकांतिकत्वेनदूषयति व्यभिचरतिकचेति पितृपुत्रादिषुमुद्गरघटप्रध्वंसादिषुच

सतइदमुत्थितंसदितिचेन्ननुतर्कहतंव्यभिचरतिकचक्कचमृषानतथोभययुक् ॥ व्यव हृतयेविकल्पइषितोंऽधपरंपरयाभ्रमयतिभारतीतउरुवृत्तिभिरुक्थजडान् ॥ ३६ ॥

तथाऽदर्शनादितिभावः ननुतदुत्पन्नत्वंनामतदुपादानत्वंनतुतन्निमित्तत्वमतोनानैकांतिकत्वमित्याशंक्यदूषयति क्वचमृषेति गुणोपादान स्यापिफणिनोनगुणत्वंकिंतुमिथ्यात्वं अन्यथाकुंडलादिवदबाधप्रसंगात् अतःपुनरप्यनैकांतिकत्वमेवेतिभावः ननुनतत्रकेवलंगुणमात्रं फणिनउपादानंकिंत्वविद्यायुक्तं तथाभूतस्यावस्तुत्वाद्युक्तंफणिनोमिथ्यात्वमित्याशंक्यतत्तुल्यमत्रापीतिदूषयति नतथोभययुगिति अयम र्थः अत्राप्यविद्यायुक्तस्यैवसतउपादानत्वं एवंभूतस्यचनवस्तुत्वं अतःसदुपादानत्वमसिद्धमितिनवस्तुसत्त्वंप्रपंचस्येति ननुमाभूदनेनहेतु नाप्रपंचस्यसत्त्वंहेत्वंतरेणतुसाधयामःतथाहि सदिदमर्थक्रियाकारित्वात् नयदेवंनतदेवंयथाशुक्तिरजतमितितत्राह व्यवहृतयेविकल्पइषितइ ति व्यवहारायअर्थक्रियार्थंविकल्पोभ्रमइषितइष्टएव कूटकार्षापणादिनाऽपिकाचिद्व्यवहारदर्शनात् नन्वेकत्रसतोऽन्यत्रारोपोभ्रमः प्र सिद्धः अत्यंतासत्त्वेकथंप्रपंचोभ्रमः स्यात् सत्त्वेवानाद्वैतासिद्धिः उक्तंचभट्टैः अध्यस्यतेखपुष्पत्वमसत्कथमवस्तुनि ॥ प्रज्ञातगुणसत्ता कमध्यारोप्यतेवानवेति नेत्याह अंधपरंपरयेति अंधपरंपरयायोविकल्पइत्यन्वयः अयंभावः संस्कारजन्योभ्रमः संस्कारसिद्धयेपूर्वंप्रती

तिमात्रमपेक्षतेनवस्तुसत्त्वं प्रतीतौसत्यांवस्तुसत्त्वाभावेनब्रह्मव्यतिरेकादर्शनात् अतोनादित्वात्पूर्वंपूर्वंभ्रमदृष्टस्योत्तरोत्तरआरोपोभविष्य
ति अंधपरंपरान्यायेनव्यवहारःसेत्स्यतीत्यप्रयोजकोहेतुरिति नन्वक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवति अपामसोमममृताअभूमेत्यादि
भिःकर्मफलस्यनित्यत्वप्रतिपादनादसत्त्वंनघटतेनहिनित्यंवस्तुअसद्भवति तस्माद्वेदप्रतिपादितत्वाद्द्वैतंसदेवेत्याशंक्याह भ्रमयतीतिहेभ
गवंस्तेभारतीवेदलक्षणाउरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थजडान्कर्मश्रद्धाभराक्रांतमंदमतीन्भ्रमयतिमोहयति अयंभावः
नहिवेदःकर्मफलंनित्यमभिप्रैतिकिंतुलक्षणयाप्राशस्त्यमात्रं विध्येकवाक्यत्वात् अन्यथावाक्यभेदप्रसंगात् तद्यथेहकर्मचितोलोकः
क्षीयतेएवमेवामुत्रपुण्यचितोलोकःक्षीयतइतिन्यायोपबृंहितश्रुत्यंतरविरोधाच्च अतःकर्मजडानामिदंभ्रममात्रमिति एतेनैवतस्माद्वाएतस्मा
दात्मनआकशःसंभूतइत्यादीनामप्यन्यपरत्वंदर्शितंभवति ॥ उद्भूतंभवतःसतोऽपिभुवनंसन्नैवसर्पस्स्रजःकुर्वन्कार्यमपीहकूटकनकंवे
दोपिनैवंपरः ॥ अद्वैतंतवसत्परंतुपरमानंदंपदंतन्मुदावंदेसुंदरमिंदिरानुतहरेमामुंचमामानतं ॥ २३ ॥ ३६ ॥ तदेवंप्रपंचस्यसत्त्वेसाधकं
नास्तीत्युक्तं इदानीमसत्त्वेसृष्टिप्रलयश्रुतयोयतोवाइमानिभूतानिजायंतइत्याद्यास्तन्मूलंचानुमानंप्रमाणमित्याह नयदिदमितियद्यस्मादि

**नयदिदमग्रआसनभविष्यदतोनिधनादनुमितमंतरात्वयिविभातिमृषैकरसे ॥ अत**
**उपमीयतेद्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयंत्यबुधाः ॥ ३७ ॥**

दंविश्वमग्रेसृष्टेःपूर्वंनआसनआसीत् सदेवसौम्येदमग्रआसीत् आत्मावाइदमेकएवाग्रआसीदित्यादिश्रुतेः नचनिधनात्प्रलयादनुअनंत
रंभविष्यद्भविष्यति नासदासीन्नोसदासीत्तदानीमित्यादिश्रुतेः अतःकारणादंतरामध्येपिएकरसेकेवलेत्वयिमृषामिथ्यारूपमेवविभा
तीतिमितंनिश्चितं यतएवमतःश्रुत्याद्रविणजातिविकल्पपथैःद्रविणजातीनांद्रव्यमात्राणांमृल्लोहकार्ष्णायसरूपाणांविकल्पाभेदाघटकुं
डलादयस्तेषांपंथानोमार्गाःप्रकारास्तैरुपमीयतेसदृशतयानिरूप्यते यथातत्रकार्याकाराणांनामधेयमात्रताकारणंमृदाद्येवतुसत्यं तथाऽत्रा
प्याकाशादीनांनाममात्रताब्रह्मैवसत्यं तथाचश्रुतिः यथासौम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंभवति वाचारंभणंविकारोनामधेयंमृत्तिके
त्येवसत्यं यथाएकेनलोहमणिनासर्वंलोहमयंविज्ञातंस्यात् यथाएकेननखनिकृंतनेनसर्वंकार्ष्णायसमित्यादिः तस्मादस्यसत्त्वेप्रमाणाभावा
दसत्त्वेप्रमाणस्यविद्यमानत्वात्वितथमनोविलासमृतंसत्यमितियेअवयंतिजानंतितेअबुधाः अज्ञाइत्यर्थः अत्रैवंप्रयोगः विवादाध्यासितंन
सत् आद्यंतयोरविद्यमानत्वात्विकारित्वाद्दृश्यत्वाच्चशुक्तिरजतादिवत् इत्यन्वयेदृष्टांतः आत्मवच्चेतिव्यतिरेकेदृष्टांतः ॥ मुकुटकुंडलकं
कणकिंकिणीपरिणतंकनकंपरमार्थतः ॥ महदहंकृतिखप्रमुखंतथानरहरेनपरंपरमार्थतः ॥ २४ ॥ ३७ ॥

ननुयादिप्रपंचोनामनास्त्येवतदाऽसतातेननचैतन्यस्यसंबंधगंधोऽपितर्हिकिमपराद्धंजीवेनयतोऽयंसंसरतिकिंवाबहुपुण्यमीश्वरस्ययतोनित्य
मुक्तःकिंविषयंचतदाकर्मकांडमित्यपेक्षायांजीवेश्वरविशेषंद्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजातेतयोरन्यःपिप्पलंस्वाद्वत्त्यनश्न
न्नन्योअभिचाकशीति अजामेकांलोहितशुक्लकृष्णामित्याद्यावदंतीत्याह सयदजयेति सतुजीवोयद्यस्मादजयामाययाअजामाविद्यामनु
शयीतआलिंगेत्ततोगुणांश्चदेहेंद्रियादीन्जुषन्सेवमानआत्मतयाअध्यासंस्तदनुतदनंतरंसरूपतांतद्धर्मयोगंचजुषन्नपेतभगः पिहितानंदा
दिगुणःसन्मृत्युंसंसारंभजतिप्राप्नोति तद्विषयमेवचकर्मकांडमितिभावः त्वमुतत्वंतुजहासितामजांमायां ननुसामय्येवास्तिकथंत्यागस्तत्रा
ह अहिरिवत्वचमिति अयंभावः यथाभुजंगःस्वगतमपिकंचुकंगुणबुध्यानाभिमन्यतेतथात्वमजांनहिनिरंतराल्हादिसंवित्कामधेनुवृंदपतेर
जयाकृत्यमितितामुपेक्षसइति कुतएतत्तदाह आत्तभगःनित्यप्राप्तैश्वर्यःमहसिपरमैश्वर्येअष्टगुणितेअणिमाद्यष्टविभूतिमतिमहीयसेविराजसे

सयदजयात्वजामनुशयीतगुणांश्चजुषन्भजतिसरूपतांतदनुमृत्युमपेतभगः ॥ त्वमुतजहासितामहिरिव
त्वचमात्तभगोमहसिमहीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥ यदिनसमुद्धरंतियतयोहृदिकामजटादुर
धिगमोऽसतांहृदिगतोऽस्मृतकंठमणिः॥ असुतृपयोगिनामुभयतोऽप्यसुखंभगवन्ननपगतांतकादनाधिरू
ढपदाद्भवतः ॥ ३९ ॥ ॥ ॥ ॥ ॥

कथंभूतःअपरिमेयभगः अपरिमितैश्वर्यः नह्यन्येषामिवदेशकालादिपरिच्छिन्नंतवाष्टगुणितमैश्वर्यमपितुपरिपूर्णस्वरूपानुबंधित्वादपरि
मितमित्यर्थः नृत्यंतीतववीक्षणांगणगताकालस्वभावादिभिर्भावान्सत्त्वरजस्तमोगुणमयानुन्मीलयंतीबहून् ॥ मामाक्रम्यपदाशिरस्यतिभरं
संमर्दयंत्यातुरंमायातेशरणंगतोऽस्मिन्हरेत्वामेवतांवारय ॥ २५॥ ३८॥ एवंतावदुक्तसाधनकदंबेनयेभगवंतंभजंतितेमृत्युंतरंतिइतरेसंसरं
तीत्युक्तं इदानींयेबहिःसंगंपरित्यज्यभगवन्मार्गेप्रवृत्ताअपिकथंचिदंतर्वांताशिनःकामान्नमुंचंतितेनभगवंतंप्राप्नुवंतिनचेहसुखंलभंतेकेव
लंकुयोनीरेवप्राप्नुवंतितान्शोचन्कामान्यःकामयतेमन्यमानःसकर्मभिर्जायतेतत्रतत्रेत्यादिश्रुत्यर्थमाह यदिनसमुद्धरंतीति हेभगवन्ये
यतयोहृदिस्थिताःकामजटाःकामस्यमूलानिवासनायदिनसमुद्धरंतिनोत्पाटयंतितेषामसतांभवान्हृदिगतोऽपिदुरधिगमोदुष्प्रापः कथम्

अस्मृतकंठमणिर्विस्मृतोयःकंठमणिस्तत्तुल्यः सयथाकंठेवर्तमानोऽप्यस्मृतश्चेदप्राप्तइवभवातितद्वदिति नकेवलमेतावत्त्किंतुअसुतृप
योगिनामिंद्रियतर्पणपराणांयोगच्छद्मनामुभयतोऽप्यसुखमिहामुत्रचदुःखमेव तदाह अनपगतांतकादनिवृत्तान्मृत्योः लोकाराधनार्ज
नादिक्लेशात्भोगवैभवप्राकटचभयाच्चेहतावद्दुःखं भवतईश्वरादपिदुःखं कथंभूतात् अनधिरूढपदात् अनधिरूढंपदंस्वरूपंयस्यतस्मा
त्त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेनप्राप्तनिजधर्मातिक्रमनिबंधनत्वद्दंडरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः ॥ दंभन्यासमिषेणवांचि
तजनंभोगैकचिंतातुरंसंमुह्यंतमहर्निशंविरचितोद्योगक्लमैराकुलं ॥ आज्ञालंघिनमज्ञमज्ञजनतासंमाननासन्मदंदीनानाथदयानिधानपरमा
नंदप्रभोपाहिमां ॥ २६ ॥ ३९ ॥ ननुयतेर्नकिमपिकृत्यमस्तिप्रारब्धमेवसुखोपभोगेनापक्षप्यते अतःकिमितिवृथाशप्यतेउभयतोऽ
प्यसुखमिति श्रूयतेचएषनित्योमहिमाब्राह्मणस्यनकर्मणावर्द्धतेनोकनीयानित्यादि तत्राह त्वदवगमीति हेसगुणषड्गुणैश्वर्ययुक्तत्वद

त्वदवगमीनवेत्तिभवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हिदेहभृतांचगिरः ॥
अनुयुगमन्वहंसगुणगीतपरंपरयाश्रवणभृतोयतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥

वगमीत्वज्ज्ञानवान्भवदुत्थशुभाशुभयोःभवतःकर्मफलदातुरीश्वराद्धेतोरुत्थयोराविर्भूतयोःशुभाशुभयोःप्राचीनपुण्यापुण्यकर्मणोःफलभू
तान्गुणविगुणान्वयान्सुखदुःखसंबंधान्नवेत्तिनानुसंधत्तेतर्हितदानींचदेहभृतांदेहाभिमानिनांप्रवृत्तिनिवृत्तिकरीर्गिरोविधिनिषेधलक्षणा
नवेत्ति विगतदेहाभिमानतयाकार्याकार्यबोधाभावान्ननियुज्यतइत्यर्थः युक्तंचैतत् यतःकारणान्मनुजैरन्वहंश्रवणभृतःअनुदिनंश्रवणे
नचेतसिधृतस्त्वंतेषामपवर्गगतिरपवर्गरूपागतिर्भवसि कथंश्रवणभृतः अनुयुगंप्रतियुगंयागीतपरंपराउपदेशसंततिस्तयासत्संप्रदाया
नुसारेणेत्यर्थः एतदुक्तंभवति येतावत्तत्त्वज्ञानिनोनतेषांकर्माधिकारशंकाऽपि येचानवरतंत्वत्कथाश्रवणादिनिष्ठास्तेषामप्यासन्नभवत्प
दानांविधिनिषेधबाधः इतरेषांतुयोगच्छद्मनेंद्रियलालसानामुभयतोऽप्यसुखमिति ॥ अवगमंतवमेदिशमाधवस्फुरतियन्नसुखासुखसंग
मः ॥ श्रवणवर्णनभावमथापिवानहिभवामियथाविधिकिंकरः ॥ २७ ॥ ४० ॥ ॥

त्वदवगमीनवेत्तिसुखदुःखेनचविधिनिषेधावित्युक्तंतत्रननुकथमवगंतुंशक्यतेदुराधिगमत्वस्योक्तत्वादित्येवमाशंक्यसत्यमेवमन वगाह्यमाहि म्नोवाङ्मनसागोचरत्वादविषयत्वेनैवज्ञानमितिदर्शयन् यदूर्ध्वंगार्गिदिवोयदर्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंभवच्चभविष्यच्चेत्यादि श्रुतिप्रतिपादितमपरिमितमहिमानमाह द्युपतयएवेति हेभगवंस्तेअंतंद्युपतयःस्वर्गादिलोकपतयोब्रह्मादयोनययुर्नप्रापुः तत्कुतः यदं तवद्वस्तुतत्किमपित्वंनभवसि आस्तांद्युपतयोनययुरिति यद्यस्मात्त्वमपिआत्मनोंतंनयासि कुतस्तर्हिसर्वज्ञतासर्वशक्तितावाअतआह अनंततयाअनंताभावेन नहिशशविषाणाज्ञानंसार्वज्ञ्यंतदप्राप्तिर्वाशक्तिवैभवंविहंति अनंतत्वमेवाह यदंतरेति यस्यतवअंतरामध्येननुअ होसावरणाउत्तरोत्तरंदशगुणसप्तावरणयुक्ताअंडानिचयाब्रह्मांडसमूहावांतिपरिभ्रमंति वयसाकालचक्रेणखेरजांसीवसहएकदैवनतुपर्या

**द्युपतयएवतेनययुरंतमनंततयात्वमपियदंतरांऽडनिचयाननुसावरणाः ॥ खइ वरजांसिवांतिवयसासहयच्छ्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निधनाः ॥ ४१ ॥**

येण हियस्मादेवमतःश्रुतयस्त्वयिफलंतितात्पर्यवृत्त्यापर्यवस्यंति नतुसाक्षाद्दंत्ययमेतावानिति सगुणस्यगुणानंत्यान्निर्गुणस्यचागो चरत्वात् कथंतर्ह्यपदार्थेतात्पर्यमिति तत्रविधिमुखवाक्येभवेदयंनियमःपदार्थस्यैववाक्यार्थत्वमिति निषेधमुखेतुनायंनियमइत्याह अतन्निरसनेनेति अन्यदेवतद्विदितादथोअविदितादपि अन्यत्रधर्मात् अन्यत्राधर्मात् अन्यत्रास्मात्कृताकृतात् अस्थूलमनण्वित्यादिप्रकारेण लक्षणयाचतत्त्वमसीत्यादयःपर्यवस्यंति नचवाच्यंनिषेधैःशून्यमेवज्ञाप्यतइति यतोभवन्निधनाः भवतित्वयिनिधनंसमाप्तिर्यासांता स्तथा नहिनिरवधिर्निषेधःसंभवत्यतोऽवधिभूतेत्वयिफलंतीत्यर्थः ॥ द्युपतयोविदुरंतमनंततेनचभवान्नगिरःश्रुतिमौलयः ॥ त्वयि फलंतियतोनमइत्यतोजयजयेतिभजेतवतत्पदं ॥ २८ ॥ ॥ ४१ ॥ ॥

॥४२ इत्यशेषसमाम्नायपुराणोपनिषद्रसइति सर्वश्रुतिपुराणरहस्यतात्पर्यमित्यर्थः ॥ ४३ ॥ ब्रह्मदायादेति ब्रह्मैवदायमिवअयत्नप्राप्यमत्ति सेवतइतितथा ब्रह्मपुत्रेतिवा ॥ ४४ ॥ पूर्णः कृतकृत्यः श्रुतधरः श्रुतमर्थंमनसिधारयन् वीरव्रतोनैष्ठिकः ॥ ४५ ॥ नमइति श्रीकृष्णावतार तयानारायणंनमस्यति उक्तंहि एतेचांशकलाः पुंसःकृष्णस्तुभगवान्स्वयमिति ॥ ४६ ॥ साक्षात्पितुरिति योनिव्यवधानंविनाजनकस्य अग्निमथनावसरेकथंचिद्रणरेतःपतितंमममंथव्यासस्तदैवततउत्पन्नःशुकइतिहिवदंति ॥ ४७ ॥ ४८ ॥ ४९ ॥ समस्तवेदस्तुत्यर्थंसंगृह्यानुस्मा रयतियोऽस्योत्प्रेक्षकइति यःअस्यविश्वस्यउत्प्रेक्षकः एवमनुशायिनांसमस्तपुरुषार्थसिद्धयेसृष्टिस्थितिप्रलयादिप्रापणीयमित्यालोचकइ

श्रीभगवानुवाच इत्येतद्ब्रह्मणःपुत्राआश्रुत्यात्मानुशासनं ॥ सनंदनमथानर्चुःसिद्धाज्ञात्वात्मनोगतिं ॥ ॥ ४२ ॥ इत्यशेषसमाम्नायपुराणोपनिषद्रसः ॥ समुद्धृतःपूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४३ ॥ त्वंचै तद्ब्रह्मदायादश्रद्धयात्मानुशासनं ॥ धारयंश्चरगांकामंकामानांभर्जनंनृणां ॥ ४४ ॥ श्रीशुकउवाच ए वंसऋषिणादिष्टंगृहीत्वाश्रद्धयात्मवान् ॥ पूर्णःश्रुतधरोराजन्नाहवीरव्रतोमुनिः ॥ ४५ ॥ नारदउवाच नमस्तस्मैभगवतेकृष्णायामलकीर्त्तये ॥ योधत्तेसर्वभूतानामभवायोशतीःकलाः ॥ ४६ ॥ इत्याद्यमृषि मानम्यतच्छिष्यांश्चमहात्मनः ॥ ततोऽगादाश्रमंसाक्षात्पितुर्द्वैपायनस्यमे ॥ ४७ ॥ सभाजितोभगवता कृतासनपरिग्रहः ॥ तस्मैतद्वर्णयामासनारायणमुखाच्छ्रुतं ॥ ४८ ॥ इत्येतद्वर्णितंराजन्यन्नःप्रश्नःकृत स्त्वया ॥ यथाब्रह्मण्यनिर्देश्येनिर्गुणेपिश्रुतिश्चरेत् ॥ ४९ ॥ योऽस्योत्प्रेक्षकआदिमध्यनिधनेयोऽव्यक्त जीवेश्वरोयःसृष्ट्वेदमनुप्रविश्यऋषिणाचक्रेपुरःशास्तिताः ॥

त्यर्थः अनेननिमित्तत्वमुक्तं एवमालोच्यअस्यादिमध्यनिधने आदिर्जन्ममध्यःपालनंनिधनमंतःएतेषुकर्मसुयोवर्तते अनेनोपादानत्वमु क्तं ननुप्रकृतिपुरुषयोरुपादाननिमित्तत्वेप्रसिद्धे सत्यं तयोरपिततएवोद्भूतत्वान्मूलकारणंसएवेत्याह योऽव्यक्तजीवेश्वरइति प्रवेशनियम नेदर्शयति यइति पूर्वोक्तप्रकारेणेदंसृष्ट्वायदर्थमेतत्सृष्टंतेनऋषिणासृष्टेकार्येअहमितिदर्शनात्ऋषिर्जीवस्तेनसहानुप्रविष्टःपुरःशरीराणित स्यभोगायतनानिचक्रेताःपुरःशास्तितस्यभोगंददत्परिपालयति उपासकस्यचकैवल्यरूपोभवतीत्याह यंसंपद्येति यंसंपद्यप्राप्यानुशयी

अन्वनुदंडवत्प्रणामैश्चरणमूलेशेतेइतितथासजीवः अजांकार्यकारणरूपामविद्यांत्यजाति ननुब्रह्मसंपन्नस्यापिजीवस्यतत्संबंधोदृश्यतेअत
आह सुप्तः कुलायंयथेति अयंभावःयथासुप्तंशरीरवंतमन्येपश्यंतिसतुनात्मानंतथापश्यतिएवंजीवन्मुक्तमप्यन्येदेहवंतंपश्यंतिसतुनकिंचित्प
श्यतीति तंहरिमजस्रमनवरतंध्यायेत् किमित्यतआह अभयंनभयंयस्माद्भयनिवर्तकमित्यर्थः कुतएत् कैवल्यनिरस्तयोनिंकैवल्येनअप्रच्यु
तस्वरूपावस्थानेननिरस्तातिरस्कृतायोनिर्मूलकारणंमायायेनतं ॥ सर्वश्रुतिशिरोरत्ननीराजितपदांबुजं ॥ भोगयोगप्रदंवंदेमाधवंकर्मिन
म्रयोः ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ० टीकायांसप्ताशीतितमोध्यायः ॥ ८७ ॥ ॥अष्टाशीतितमेविष्णुभक्तःकैव

यंसंपद्यजहात्यजामनुशयीसुप्तःकुलायंयथातंकैवल्यनिरस्तयोनिमभयंध्यायेदजस्रंहरिं ॥ ५० ॥ इति
श्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेनारदनारायणसंवादेवेदस्तुतिर्नामसप्ताशीतितमोध्यायः ॥
॥ ८७ ॥ ॥ राजोवाच देवासुरमनुष्येषुयेभजंत्यशिवंशिवं ॥ प्रायस्तेधनिनोभोजानतुलक्ष्म्याःप
तिंहरिं ॥ १ ॥ एतद्वेदितुमिच्छामःसंदेहोऽत्रमहान्हिनः ॥ विरुद्धशीलयोःप्रभ्वोर्विरुद्धाभजतांगतिः ॥
॥ २ ॥ श्रीशुकउवाच शिवःशक्तियुतःशश्वत्त्रिलिंगोगुणसंवृतः ॥ वैकारिकस्तैजसश्चतामसश्चेत्यहं
त्रिधा ॥ ३ ॥ ततोविकाराअभवन्षोडशामीषुकिंचन ॥ उपाधावन्विभूतीनांसर्वासामश्नुतेगतिं ॥ ४ ॥

ल्यमश्नुते ॥ ततोऽर्वाग्देवभक्तस्तुविभूतिमितिवर्ण्यते ॥ १ ॥ हरिर्भजतांभक्तिद इत्युक्तंअभयंध्यायेदजस्रंहरिमितिशंकते देवासुरेति अ
शिवमवधीरितभोगं भोजाःभोगिनः लक्ष्म्याःपतिंसर्वभोगयुक्तं ॥ १ ॥ २ ॥ अन्योन्योपमर्दनतमसत्त्वैवित्थ्यात्त्रिलिंगः त्रिलिंगत्वमाह
वैकारिकइति अहमहंकारइति ॥ ३ ॥ विकारामनइंद्रियभूतरूपाःषोडशइतिइंद्रियदेवानामभेदविवक्षया किंचनयत्किंचिद्विकारोपाधि
कंभजन्नुपास्यनुरूपाणांविभूतीनांस्वरूपंप्राप्नोतीति ॥ ४ ॥ ॥ ॥ ॥

उपद्रष्टासाक्षीसन्यतःसर्वदृक्सर्वपश्यनिअतःप्रकृतेःपरइति अत्रेदंतत्त्वं वस्तुनोगुणसंबंधेरूपद्वयमिहेष्यते ॥ तद्धर्मायोगयोगाभ्यांबिंबव
त्प्रतिबिंबवत् ॥ गुणाःसत्वादयःशांतघोरमूढाःस्वभावतः ॥ विष्णुब्रह्मशिवानांचगुणयंतृस्वरूपिणां ॥ नातिभेदोभवेद्भेदोगुणधर्मैरिहांश
तः ॥ सत्वस्यशांत्यानोजातुविष्णोर्विक्षेपमूढते ॥ रजस्तमोगुणाभ्यांतुभवेतांब्रह्मरुद्रयोः गुणोपमर्दतोभूयस्तदंशानांचभिन्नता ॥ अतःस
मग्रसत्वस्यविष्णोर्मोक्षकरीमतिः ॥ अंशतोभूतिहेतुश्चतथानंदमयीस्वतः ॥ अंशतस्तारतम्येनब्रह्मरुद्रादिसेविनां ॥ विभूतयोभवंत्येवश
नैर्मोक्षोप्यनंशतः ॥ इदमेवाभिप्रेत्यतत्रतत्रोच्यतेश्रेयांसितत्रखलुसत्त्वतनोर्नृणांस्युरिति तथासत्वंयस्यप्रियामूर्तिरिति तथासत्त्वंतत्तीर्थंसाध
नमिति तथात्रयाणामेकभावानांयोनपश्यतिवैभिदांमिति तथानतेमय्यच्युतेऽजेचभिदामण्वपिचक्षतेइत्यादि एवंचसातिनकिंचिदसमंजसं

हरिर्हिनिर्गुणःसाक्षात्पुरुषःप्रकृतेःपरः॥ससर्वदृगुपद्रष्टातंभजन्निर्गुणोभवेत्॥५॥ निवृत्तेष्वश्वमेधेषुराजा
युष्मत्पितामहः॥शृण्वन्भगवतोधर्मानपृच्छादिदमच्युतं॥६॥ सआहभगवांस्तस्मैप्रीतःशुश्रूषवेप्रभुः ॥ नृ
णांनिःश्रेयसार्थाययोऽवतीर्णोयदोःकुले ॥ ७॥ श्रीभगवानुवाच यस्याहमनुगृण्हामिहरिष्येतद्धनंशनैः॥
ततोऽधनंत्यजंत्यस्यस्वजनादुःखदुखितं ॥८॥ सयदावितथोद्योगोनिर्विण्णःस्याद्धनेहया ॥ मत्परैःकृतमैत्र
स्यकरिष्येमदनुग्रहं॥ ९ ॥तद्ब्रह्मपरमंसूक्ष्मंचिन्मात्रंसदनंतकं॥अतोमांसुदुराराध्यंहित्वाऽन्यान्भजतेजनः॥
॥ १०॥ ततस्तआशुतोषेभ्योलब्धराज्याश्रियोद्धताः॥मत्ताःप्रमत्तावरदान्विस्मरंत्यवजानते ॥ ११॥ श्रीशु
कउवाच शापप्रसादयोरीशाब्रह्मविष्णुशिवादयः ॥ सद्यःशापप्रसादोऽगशिवोब्रह्मानचाच्युतः ॥ १२ ॥

तत्तद्भक्तानांतुकलहोद्रोहमात्रमिति ॥ ५ ॥ ६ ॥ ७ ॥ यस्याहमनुगृण्हामीति अयमर्थः योविषयान्परिजिहीर्षुरपिकथंचिद्विद्यमानेषुविष
येषुसज्जतेक्लिश्यतिचतस्याविषयापहारएवानुग्रहइति यथाश्रुतत्वेनध्रुवादीनामैश्वर्येविरोधात् अथवाप्रथमांविभूतीःकामानुरूपादत्वाशनैर्वि
षयभोगात्रसानेतस्यानिर्वेदमुत्पाद्यहरिष्यामिपरमानुग्रहंकर्तुमिति तदुक्तंभगवता नमय्यावेशितधियांकामःकामायकल्पतइति दुःखदुःखित
मिति दुःखादनुपुनर्दुःखितमिवप्रतीयमानमित्यर्थः ॥ ८ ॥ सपुनर्बंधूनामाग्रहेणधनेहयाप्रवृत्तोऽपिमदनुग्रहेणयदानिष्फलोद्यमोनिर्विण्णः
स्यात्तदामदनुग्रहमितिममासाधारणमनुग्रहमिति ॥ ९ ॥ तमेवाह तद्ब्रह्मेति जनःपश्चादपिमोक्षमरोचयन् अत्यासक्तोजनइत्यर्थः ॥१०॥
॥ ११ ॥ एतदेवेतिहासेनस्फुटयितुमाह शापप्रसादयोरितिब्रह्माचेत्यन्वयः ॥ १२ ॥ ॥

॥१३॥ शकुनेःपुत्रः ॥१४॥१५॥ सुसंकटमापकैलासोत्पाटनंपुरपालनंच ॥ १६ ॥ स्वगात्रतउपाधावत् कथम् आत्मक्रव्येणस्वमांसेनजुव्हानइति ॥ १७ ॥ अवृश्चत् छेत्तुमुद्यतः ॥ १८ ॥ मूर्तिमानग्निरिवदेदीप्यमानः वयमधुनातनायथाकिंचिद्दुःखेनमर्त्तुकामंवारयाम स्तद्वदिति सचउपस्कृताकृतिःपरिपूर्णदेहोभवत्तंन्यवारयत् ॥ १९ ॥ एवमाहच तोयेनापिभजतांप्रीतःस्यां सत्वयातुदेहोवृथापीडच





अत्रचोदाहरंतीममितिहासंपुरातनं ॥ वृकासुरायगिरिशोवरंदत्वापसंकटं ॥ १३ ॥ वृकोनामासुरःपुत्रःशकुनेःपथिनारदं ॥ दृष्ट्वाशुतोषंपप्रच्छदेवेषुत्रिषुदुर्मतिः ॥१४॥ सआहदेवंगिरिशमुपाधावाशुसिद्ध्यति ॥ योऽल्पाभ्यांगुणदोषाभ्यामाशुतुष्यतिकुप्यति ॥ १५ ॥ दशास्यबाणयोस्तुष्टःस्तुवतोर्बंदिनोरिव ॥ ऐश्वर्यमतुलंदत्वाततआपसुसंकटं ॥१६॥ इत्यादिष्टस्तमसुरउपाधावत्स्वगात्रतः ॥ केदारआत्मक्रव्येणजुव्हानोऽग्निमुखंहरं ॥१७॥ देवोपलब्धिमप्राप्यनिर्वेदात्सप्तमेऽहनि ॥ शिरोऽवृश्चत्स्वधितिनातत्तीर्थक्लिन्नमूर्धजं ॥१८॥ तदामहाकारुणिकःसधूर्जटिर्यथावयंचाग्निरिवोत्थितोऽनलात् ॥ निगृह्यदोर्भ्यांभुजयोर्न्यवारयत्तत्स्पर्शनाद्भूयउपस्कृताकृतिः ॥ १९ ॥ तमाहचांगालमलंवृणीष्वमेयथाऽभिकामंवितरामितेवरं ॥ प्रीयेयतोयेननृणांप्रपद्यतामहोत्वयात्माभृशमर्द्यतेवृथा ॥ २० ॥ देवंसवव्रेपापीयान्वरंभूतभयावहं ॥ यस्ययस्यकरंशीर्ष्णिधास्येसम्रियतामिति ॥२१॥ तच्छ्रुत्वाभगवान्रुद्रोदुर्मनाइवभारत ॥ ओमितिप्रहसंस्तस्मैददेऽहेरमृतंयथा ॥ ॥२२॥ इत्युक्तःसोऽसुरोनूनंगौरीहरणलालसः ॥ सतद्वरपरीक्षार्थंशंभोर्मूर्ध्निकिलासुरः ॥ २३ ॥ स्वहस्तंधातुमारेभेसोऽबिभ्यत्स्वकृताच्छिवः ॥ तेनोपसृष्टःसंत्रस्तःपराधावन्सवेपथुः ॥ यावदंतंदिवोभूमेःकाष्ठानामुदगादुदक् ॥ २४ ॥ अजानंतःप्रतिविधिंतूष्णीमासन्सुरेश्वराः ॥ ततोवैकुंठमगमद्भास्वरंतमसःपरं ॥ २५ ॥ यत्रनारायणःसाक्षान्न्यासिनांपरमागतिः ॥ शांतानांन्यस्तदंडानांयतोनावर्ततेगतः ॥ २६ ॥ ॥



तइति ॥ २० ॥ २१ ॥ दातुमनर्हमपिदत्तवान् सर्पायक्षीरमिव ॥ २२ ॥ २३ ॥ उपसृष्टःअनुगतःसन् उदगात्अधावत् उदक्उत्तरतः ॥ २४ ॥ वैकुंठंश्वेतद्वीपम् ॥ २५ ॥ २६ ॥ ॥ ॥ ॥

तंवृकासुरं तथाव्यसनंताहग्व्यसनंयस्यतं वृजिनार्दनोदुःखहंता दूरतएवदृष्ट्वामेखलादिभिरुपलक्षितःप्रत्युदियात्संमुखमागतः ॥ २७॥
॥ २८ ॥ व्यक्तंनिश्चितं किंकिमर्थं आत्मादेहःसर्वपुरुषार्थत्वेहेतुः अतोमापीडयेति ॥ २९ ॥ प्रायशःपुंभिर्धृतैर्भगवान्स्वार्थान्समीहते

तंतथाव्यसनंदृष्ट्वाभगवान्वृजिनार्दनः ॥ दूरात्प्रत्युदियाद्भूत्वाबटुकोयोगमायया ॥ २७॥ मेखलाजिनदं
डाक्षैस्तेजसाऽग्निरिवज्वलन् ॥ अभिवादयामासचतंकुशपाणिर्विनीतवत् ॥ २८ ॥ श्रीभगवानुवाच शा
कुनेयभवान्व्यक्तंश्रांतःकिंदूरमागतः ॥ क्षणंविश्रम्यतांपुंसआत्माऽयंसर्वकामधुक् ॥ २९॥ यदिनःश्रवणा
यालंयुष्मद्व्यवसितंविभो ॥ भण्यतांप्रायशःपुंभिर्धृतैःस्वार्थान्समीहते ॥ ३० ॥ श्रीशुकउवाच एवंभगव
ताप्टष्टोवचसाऽमृतवर्षिणा ॥ गतक्लमोऽब्रवीत्तस्मैयथापूर्वमनुष्ठितं ॥ ३१ ॥ श्रीभगवानुवाच एवंचेत्तर्हितद्
द्वाक्यंनवयंश्रद्दधीमहि ॥ योदक्षशापात्पैशाच्यंप्राप्तःप्रेतपिशाचराट् ॥ ३२ ॥ यदिवस्तत्रविश्रंभोदानवें
द्रजगद्गुरौ ॥ तर्ह्यंगाशुस्वशिरसिहस्तंन्यस्यप्रतीयतां ॥ ३३ ॥ यद्यसत्यंवचःशंभोःकथंचिद्दानवर्षभ॥ तदै
नंजह्यसद्वाचंनयद्वक्ताऽनृतंपुनः ॥ ३४ ॥ इत्थंभगवतश्चित्रैर्वचोभिःससुपेशलैः ॥भिन्नधीर्विस्मृतःशीर्ष्णि
स्वहस्तंकुमतिर्व्यधात् ॥ ३५ ॥ अथापतद्भिन्नशिरावज्राहतइवक्षणात् ॥ जयशब्दोनमःशब्दःसाधुशब्दो
ऽभवद्दिवि ॥ ३६ ॥ मुमुचुःपुष्पवर्षाणिहतेपापेवृकासुरे ॥ देवर्षिपितृगंधर्वामोचितःसंकटाच्छिवः॥३७॥
मुक्तंगिरिशमभ्याहभगवान्पुरुषोत्तमः ॥ अहोदेवमहादेवपापोयंस्वेनपाप्मना ॥ ३८ ॥ हतःकोनुमहत्स्वी
शजंतुर्वैकृतकिल्बिषः ॥ क्षेमीस्यात्किमुविश्वेशेकृतागस्कोजगद्गुरौ ॥ ३९ ॥ ॥ ॥

साधयितुमिच्छति अथवाजनःपुंभिःसहायैःस्वकार्याणिसाधयतिअतोनःकथ्यतामिति ॥ ३० ॥ ३१ ॥ पैशाच्यंपिशाचानामिववृत्तिम्
॥ ३२ ॥ ३३ ॥ यद्यथावक्ताvादिष्यति ॥ ३४ ॥ चित्रैर्भ्रामकैःसुपेशलैरतिरम्यैःभिन्नधीर्भ्रंशितमतिः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥
किमुवक्तव्यंविश्वेशेत्वयिकृतागस्कःकृतापराधइति ॥ ३९ ॥ ॥ ॥ ॥ ॥

अव्याकृतशक्त्युदन्वतोवाङ्मनसागोचरशक्तिसमुद्रस्य गिरित्रमोक्षंशिवमोचनरूपंचरितं संसृतिभिर्नानायोनिसंचारैः ॥ ४० ॥ भक्तसंकट मालोक्यकृपापूर्णहृदंबुजः ॥ गिरित्रंचित्रवाक्यात्तुमोक्षयामासकेशवः ॥ इतिदशमेउ०टीकायामष्टाशीतितमोध्यायः ॥ ८८ ॥ नवाशी



यएवमव्याकृतशक्त्युदन्वतःपरस्यसाक्षात्परमात्मनोहरेः ॥ गिरित्रमोक्षंकथयेच्छृणोतिवाविमुच्यतेसंसृतिभिस्तथाऽरिभिः ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेरुद्रमोक्षणंनामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ श्रीशुकउवाच सरस्वत्यास्तटेराजन्नृषयःसत्रमासत ॥ वितर्कःसमभूत्तेषांत्रिष्वधीशेषुकोमहान् ॥ १ ॥ तस्यजिज्ञासयातेवैभृगुंब्रह्मसुतंनृप ॥ तज्ज्ञप्त्यैप्रेषयामासुःसोऽभ्यगाद्ब्रह्मणःसभां ॥ २ ॥ नतस्मैप्रह्वणंस्तोत्रंचक्रेसत्त्वपरीक्षया ॥ तस्मैचुक्रोधभगवान्प्रज्वलन्स्वेनतेजसा ॥ ३ ॥ सआत्मन्युत्थितंमन्युमात्मजायात्मनाप्रभुः ॥ अशीशमद्यथावह्निंस्वयोन्यावारिणात्मनः ॥४॥ ततःकैलासमगमत्सतंदेवोमहेश्वरः ॥परिरब्धुंसमारेभउत्थायभ्रातरंमुदा॥५॥नैच्छत्त्वमस्युत्पथगइतिदेवश्चुकोपह॥शूलमुद्यम्यतंहंतुमारेभेतिग्मलोचनः ॥६॥ पतित्वापादयोर्देवीसांत्वयामासतंगिरा॥अथोजगामवैकुंठंयत्रदेवोजनार्दनः॥७॥शयानंश्रियउत्संगेपदावक्षस्यताडयत्॥ततउत्थायभगवान्सहलक्ष्म्यासतांगतिः॥८॥स्वतल्पादवरुह्याथननामशिरसामुनिं ॥ आहतेस्वागतंब्रह्मन्निषीदात्रासनेक्षणं ॥ अजानतामागतान्वःक्षंतुमर्हथनः प्रभो ॥ ९॥ अतीवकोमलौतातचरणौतेमहामुने ॥ इत्युक्त्वाविप्रचरणौमर्दयन्स्वेनपाणिना ॥ १० ॥ पुनीहिसहलोकंमांलोकपालांश्चमद्गतान् ॥ पादोदकेनभवतस्तीर्थानांतीर्थकारिणा ॥ ११ ॥ ॥

तितमेदेवःकोमहानितिसंशये ॥ परीक्ष्यविष्णोरुत्कर्षंमुनिभ्योऽवर्णयद्भृगुः ॥ १ ॥ इतिहासांतरमाह सरस्वत्याइति ॥ १ ॥ २ ॥ ३ ॥ स्वयोन्यास्वस्यैवरूपांतरेणाभिव्यक्तिस्थानेनस्वकार्येणेत्यर्थः तेनयथाकश्चिद्वह्निंशमयतितथास्वकार्येणपुत्रेणनिमित्तेनक्रोधंशमयामासेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ तीर्थकारिणातीर्थत्वनिमित्तेन ॥ ११ ॥ ॥ ॥

॥ १२ ॥ तस्यमंद्रयागंभीरयागिरानिर्वृतस्तूष्णींबभूवेतिशेषः ॥ १३ ॥ १४ ॥ विस्मिताअपराधातिरेकेऽपिनिर्विकारित्वेनभूयांसंश्रद्दधुः महत्तमंनिश्रितवंतः यतःयस्मिन् ॥ १५ ॥ वैराग्यंचचतुर्विधमितिपाठेतच्चातुर्विध्यमेवंद्रष्टव्यं विषयांस्त्यक्तुमशक्नुवतोऽपिसंमानेच्छात्यागआद्यंवैराग्यं विषयाणांमध्येलवणादिव्यतिरेकेणापिवृत्तिर्द्वितीयं तथावृत्तावपिमनसिरागशैथिल्येनबाह्येंद्रियैरेवविषयसेवनंतृतीयं तत्राप्यौदासीन्यंचतुर्थं यथाहुः वैराग्यमाद्यंयतमानसंज्ञंकचिद्विरागोव्यतिरेकसंज्ञः ॥ एकेंद्रियाख्यंहृदिरागसौक्ष्म्यंतस्याप्यभावस्तुवशीकृताख्य

अद्याहंभगवन्लक्ष्म्याआसमेकांतभाजनं ॥ वत्स्यत्युरसिमेभूतिर्भवत्पादहतांहसः ॥ १२ ॥ श्रीशुकउवाच एवंब्रुवाणेवैकुंठेभृगुस्तन्मंद्रयागिरा ॥ निर्वृतस्तर्पितस्तूष्णींभक्त्युत्कंठोऽश्रुलोचनः ॥ १३ ॥ पुनश्च सत्रमाव्रज्यमुनीनांब्रह्मवादिनां ॥ स्वानुभूतमशेषेणराजन्भृगुरवर्णयत् ॥ १४ ॥ तन्निशम्याथमुनयोविस्मितामुक्तसंशयाः ॥ भूयांसंश्रद्दधुर्विष्णुंयतःशांतिर्यतोऽभयं ॥ १५ ॥ धर्मःसाक्षाद्यतोज्ञानंवैराग्यंचतदन्वितं ॥ ऐश्वर्यंचाष्टधायस्माद्यशश्चात्ममलापहं ॥ १६ ॥ मुनीनांन्यस्तदंडानांशांतानांसमचेतसां ॥ अकिंचनानांसाधूनांयमाहुःपरमांगतिं ॥ १७ ॥ सत्त्वंयस्यप्रियामूर्तिर्ब्राह्मणास्त्विष्टदेवताः ॥ भजंत्यनाशिषःशांतायंवानिपुणबुद्धयः ॥ १८ ॥ त्रिविधाकृतयस्तस्यराक्षसाअसुराःसुराः ॥ गुणिन्यामाययासृष्टाःसत्त्वंतत्तीर्थसाधनं ॥ १९ ॥ श्रीशुकउवाच एवंसारस्वताविप्रानृणांसंशयनुत्तये ॥ पुरुषस्यपदांभोजसेवयातद्गतिंगताः ॥ २० ॥ सूतउवाच इत्येतन्मुनितनयास्यपद्मगंधपीयूषंभवभयभित्परस्यपुंसः ॥ सुश्लोक्यंश्रवणपुटैःपिबत्यभीक्ष्णंपांथोऽध्वभ्रमणपरिश्रमंजहाति ॥ २१ ॥ ॥ ॥ ॥

मिति ॥ १६ ॥ १७ ॥ १८ ॥ तस्यभगवतएवयद्यपित्रिविधाआकृतयः तत्रासुसत्त्वमेवतीर्थसाधनंपुरुषार्थहेतुः ॥ १९ ॥ इत्थंनिश्चित्य सरस्वतीतीरवासिनोविप्राहारिसेवयामुक्तिंप्रापुरिति ॥ २० ॥ व्यासनंदनस्यमुखपंकजात् उद्गतंगंधयुक्तपीयूषतुल्यंहरेः प्रशस्तंयशोयःसंसारीसेवतेसमुक्तोभवतीति ॥ २१ ॥ ॥ ॥ ॥

सचोक्तलक्षणोभगवान्कृष्णएवेतिदर्शयितुमाख्यानांतरमाह एकदेति ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ब्रह्मद्विषइत्यादिकांतांगाथांवा
क्यं मयिनकश्चिद्दोषः अतोराजदोषेणैवमत्पुत्राम्रियंतइतिवारंवारंचुक्रोशेत्यर्थः ॥ २६ ॥ २७ ॥ ब्रह्मन्किंस्विदिति किमर्थंवृथारोदिषि
यतस्त्वन्निवासेधनुर्धरमात्रोऽपिराजन्यबंधुरपिनास्तिब्रह्मण्यस्यतुकावार्ता एतेतुसत्रेयागइवब्राह्मणामिलिताभवितुमर्हंतीत्यर्थः ॥ २८ ॥ त

श्रीशुकउवाच एकदाद्वारवत्यांतुविप्रपत्न्याःकुमारकः॥जातमात्रोभुवंस्पृष्ट्वाममारकिलभारत ॥२२॥ वि
प्रोगृहीत्वामृतंकंराजद्वार्युपधायसः॥इदंप्रोवाचविलपन्नातुरोदीनमानसः ॥२३॥ ब्रह्मद्विषःशठधियोलुब्ध
स्यविषयात्मनः ॥ क्षत्रबंधोःकर्मदोषात्पंचत्वंमेगतोऽर्भकः ॥२४॥ हिंसाविहारंनृपतिंदुःशीलमजितेंद्रियं ॥
प्रजाभजंत्यःसीदंतिदरिद्रानित्यदुःखिताः ॥२५॥ एवंद्वितीयंविप्रर्षिस्तृतीयंत्वेवमेवच ॥ विसृज्यसनृपद्वा
रितांगाथांसमगायत ॥ २६ ॥ तामर्जुनउपश्रुत्यकर्हिचित्केशवांतिके ॥ परेतेनवमेबालेब्राह्मणंसमभाषत
॥२७॥किंस्विद्ब्रह्मंस्त्वन्निवासेइहनास्तिधनुर्धरः ॥ राजन्यबंधुरेतेवैब्राह्मणाःसत्रमासते ॥ २८॥ धनदारा
त्मजापृक्तायत्रशोचंतिब्राह्मणाः ॥ तेवैराजन्यवेषेणनटाजीवंत्यसुंभराः ॥ २९ ॥ अहंप्रजांवांभगवन्रक्षि
ष्येदीनयोरिह॥अनिस्तीर्णप्रतिज्ञोऽग्निंप्रवेक्ष्येहतकल्मषः॥३०॥ब्राह्मणउवाच संकर्षणोवासुदेवःप्रद्युम्नो
धन्विनांवरः॥अनिरुद्धोऽप्रतिरथोनत्रातुंशक्नुवंतियत्॥३१॥तत्कथंनुभवान्कर्मदुष्करंजगदीश्वरैः ॥चिकीर्ष
सित्वंबालिश्यात्तन्नश्रद्दध्महेवयं ॥३२॥ अर्जुनउवाच नाहंसंकर्षणोब्रह्मन्नकृष्णःकार्ष्णिरेवच॥अहंवाअर्जु
नोनामगांडीवंयस्यवैधनुः ॥३३॥ मावमंस्थाममब्रह्मन्वीर्यंत्र्यंबकतोषणं॥मृत्युंविजित्यप्रधनेआनेष्येतेप्र
जांप्रभो ॥३४॥ एवंविश्रंभितोविप्रःफाल्गुनेनपरंतप॥जगामस्वगृहंप्रीतःपार्थवीर्यंनिशामयन् ॥ ३५ ॥

देवाह धनदारात्मजापृक्तायत्रेति धनादिभिर्वियुक्ताःसंतोयत्रयेषुजीवत्सुराजन्येषुशोचंतितेजीवंतिकेवलंजीविकांसंपादयंति ॥ २९ ॥ ह
तकल्मषइति अग्निप्रवेशेन ब्राह्मणविलापश्रवणपातकात्पूतोभवेयमित्यर्थः अहतकल्मषइतिवा ॥ ३० ॥ ३१ ॥ नश्रद्दध्महेनसंप्रती
मः ॥ ३२ ॥ ३३ ॥ ३४ ॥ एवंप्रौढिवादैर्विश्रंभितोविश्वासंप्रापितः निशामयन्शृण्वन् ॥ ३५ ॥ ॥

॥ ३६ ॥ ब्राह्मणोपेक्षकत्वेनकृष्णावज्ञयामहेश्वरंनमस्कृत्य ॥ ३७ ॥ न्यरुणत् आवृतवान् तदेवाह तिर्यगूर्ध्वमिति ॥ ३८ ॥ अदर्शन मापेदे देहोपिनावशिष्टइत्यर्थः ॥ ३९ ॥ ४० ॥ यस्यप्रजाः तत्तत्र ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ प्रत्युक्तोवारितः उपपत्तिभिःप्र

प्रसूतिकालआसन्नेभार्यायाद्विजसत्तमः ॥ पाहिपाहिप्रजांमृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥ सउपस्पृ श्यशुच्यंभोनमस्कृत्यमहेश्वरं ॥ दिव्यान्यस्त्राणिसंस्मृत्यसज्यंगांडीवमाददे ॥ ३७ ॥ न्यरुणत्सूतिका ऽगारंशरैर्नानाऽस्त्रयोजितैः ॥ तिर्यगूर्ध्वमधःपार्थश्चकारशरपंजरं ॥ ३८ ॥ ततःकुमारःसंजातोविप्रप त्न्यारुदन्मुहुः ॥ सद्योऽदर्शनमापेदेसशरीरोविहायसा ॥ ३९ ॥ तदाहविप्रोविजयंविनिंदन्कृष्णसन्नि धौ ॥ मौढ्यंपश्यतमेयोऽहंश्रद्दधेक्लीबकत्थनं ॥ ४० ॥ नप्रद्युम्नोनानिरुद्धोनरामोनचकेशवः ॥ यस्यशे कुःपरित्रातुंकोन्यस्तदवितेश्वरः ॥ ४१ ॥ धिगर्जुनंमृषावादंधिगात्मश्लाघिनोधनुः ॥ दैवोपसृष्टंयोमौ ढ्यादानिनीषतिदुर्मतिः ॥ ४२ ॥ एवंशपतिविप्रर्षौविद्यामास्थायफाल्गुनः ॥ ययौसंयमनीमाशुयत्रा स्तेभगवान्यमः ॥ ४३ ॥ विप्रापत्यमचक्षाणस्ततऐंद्रीमगात्पुरीं ॥ आग्नेयींनैर्ऋतींसौम्यांवायव्यांवारु णीमथ ॥ रसातलंनाकपृष्ठंधिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥ ततोऽलब्धद्विजसुतोह्यनिस्तीर्णप्रतिश्रुतः ॥ अग्निंविविक्षुःकृष्णेनप्रत्युक्तःप्रतिषेधता ॥ ४५ ॥ दर्शयेद्विजसूनूंस्तेमाऽवज्ञात्मानमात्मना ॥ येतेहि कीर्तिंविमलांमनुष्याःस्थापयिष्यंति ॥ ४६ ॥ इतिसंभाष्यभगवानर्जुनेनसहेश्वरः ॥ दिव्यंस्वरथमास्था यप्रतीचींदिशमाविशत् ॥ ४७ ॥ सप्तद्वीपान्सप्तसिंधून्सप्तसप्तगिरीनथ ॥ लोकालोकंतथाऽतीत्यविवे शसुमहत्तमः ॥ ४८ ॥ तत्राश्वाःशैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ तमसिभ्रष्टगतयोबभूवुर्भरतर्षभ ॥ ॥ ४९ ॥ तान्दृष्ट्वाभगवान्कृष्णोमहायोगेश्वरेश्वरः ॥ सहस्रादित्यसंकाशंस्वचक्रंप्राहिणोत्पुरः ॥ ५० ॥

तिषेधंकुर्वता ॥ ४५ ॥ मावज्ञमाऽवजानीहि येनिंदंति तएवमनुष्याःकीर्तिंस्थापयिष्यंति निश्चलांकरिष्यंति एतेनेतिपाठांतरंतुच्छंदोभं गभयादागंतुकामिति ॥ ४६ ॥ ४७ ॥ सप्तसप्तसंख्यागिरयोयेषुद्वीपेषुतान् ॥ ४८ ॥ ४९ ॥ ५० ॥ ॥

कृतमितिप्रकृतिपरिणामरूपंनालोकाभावमात्रं ॥ ५१ ॥ चक्रानुपथेनचक्रमनुगतेनद्वारेण तत्तमःपरंतस्मात्तमसःपरंदूरेवर्तमानंपरंश्रेष्ठं भागवतंज्योतिःसमश्नुवानंव्याप्नुवत्प्रसमीक्ष्यप्रताडिताक्षोनेत्रेन्यमीलयदिति ॥ ५२ ॥ एजंतउच्चलंतोबृहंतोमहांतऊर्मयोभूषणंयस्यतत् तत्र सलिलेभवनंमहाकालपुरं द्युमत्तमंद्युतिमत्सुश्रेष्ठं ॥ ५३ ॥ सहस्रंमूर्ध्निभवाःफणास्तासुमणयस्तेषांद्युतिभिः द्विसहस्रनेत्रैरूर्जितंस्फटिकगिरि

तमःसुघोरंगहनंकृतंमहद्विदारयद्भूरितरेणरोचिषा ॥ मनोजवंनिर्विविशेसुदर्शनंगुणच्युतोरामशरोयथाचमूः ॥ ५१ ॥ द्वारेणचक्रानुपथेनतत्तमःपरंपरंज्योतिरनंतपारं ॥ समश्नुवानंप्रसमीक्ष्यफाल्गुनःप्रताडिताक्षोपिदधेऽक्षिणीउभे ॥ ५२ ॥ ततःप्रविष्टःसलिलंनभस्वताबलीयसैजद्बृहदूर्मिभूषणं ॥ तत्राद्भुतंवैभवनंद्युमत्तमंभ्राजन्मणिस्तंभसहस्रशोभितं ॥ ५३ ॥ तस्मिन्महाभीममनंतमद्भुतंसहस्रमूर्धन्यफणामणिद्युभिः ॥ विभ्राजमानंद्विगुणोल्बणेक्षणंसिताचलाभंशितिकंठजिह्वं ॥ ५४ ॥ ददर्शतद्भोगसुखासनंविभुंमहानुभावंपुरुषोत्तमोत्तमं ॥ सांद्रांबुदाभंसुपिशंगवाससंप्रसन्नवक्रंरुचिरायतेक्षणं ॥५५॥ महामणिव्रातकिरीटकुंडलप्रभापरिक्षिप्तसहस्रकुंतलं ॥ प्रलंबचार्वष्टभुजंसकौस्तुभंश्रीवत्सलक्ष्म्यावनमालयावृतं ॥ ५६ ॥ सुनंदनंदप्रमुखैःस्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ॥ पुष्ट्याश्रियाकीर्त्यजयाऽखिलर्द्धिभिर्निषेव्यमाणंपरमेष्ठिनांपतिं ॥ ५७ ॥ ववंदआत्मानमनंतमच्युतोजिष्णुश्चतद्दर्शनजातसाध्वसः ॥ तावाहभूमापरमेष्ठिनांप्रभुर्बद्धांजलीसस्मितमूर्जयागिरा ॥ ५८ ॥ ॥ ॥ ॥ ॥

संकाशंशितिकंठजिह्वंकंठाश्चजिह्वाश्चकंठजिह्वाः शितयोनीलाःकंठजिह्वायस्यतं ॥ ५४ ॥ तद्भोगसुखासनंतस्यअनंतस्यभोगोदेहः सुखकरमासनंयस्यतं ॥५५॥ महांतोमणिव्रातायेषुतेषांकिरीटकुंडलानांप्रभातयापरिक्षिप्ताःसर्वतःस्फुरंतःसहस्रमपरिमिताःकुंतलायस्यतं ॥ ५६ ॥ कीर्त्यजयाकीर्तिसहितयाअजया अखिलर्द्धिभिरणिमादिविभूतिभिर्मूर्तिधराभिः ॥ ५७ ॥ ऊर्जयाऊर्जितयागिरा ॥ ५८ ॥

हेकलावतीर्णावितिसंबोधनं शीघ्रंमेअंतिसकाशमितमागच्छतं ॥ ५९ ॥ आचरतामाचरतंइदंभारतयुद्धात्पूर्वमेवकृतमपिश्रैठचकथनप्र स्तावेनात्रोक्तं ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ इतिदशमेउ०टीकायामेकोननवतितमोध्यायः ॥ ८९ ॥ चरमे

द्विजात्मजामेयुवयोर्दिदृक्षुणामयोपनीताभुविधर्मगुप्तये ॥ कलाऽवतीर्णाववनेर्भरासुरान्हत्वेहभूयस्त्वरये तमंतिमे ॥ ५९ ॥ पूर्णकामावपियुवांनरनारायणावृषी ॥ धर्ममाचरतांस्थित्यैऋषभौलोकसंग्रहं ॥६०॥ इत्यादिष्टौभगवतातौकृष्णौपरमेष्ठिना ॥ ओमित्यानम्यभूमानमादायद्विजदारकान् ॥ ६१ ॥ न्यवर्ततां स्वकंधामसंप्रहृष्टौयथागतं ॥ विप्रायददतुःपुत्रान्यथारूपंयथावयः ॥ ६२ ॥ निशम्यवैष्णवंधामपार्थः परमविस्मितः ॥ यत्किंचित्पौरुषंपुंसांमेनेकृष्णानुकंपितं ॥ ६३ ॥ इतीदृशान्यनेकानिवीर्याणिहप्रदर्श यन् ॥ बुभुजेविषयान्ग्राम्यानीजेचात्यूर्जितैर्मखैः ॥ ६४ ॥ प्रववर्षाखिलान्कामान्प्रजासुब्राह्मणादिषु ॥ यथाकालंयथैवेंद्रोभगवान्श्रैष्ठ्यमास्थितः ॥ ६५ ॥ हत्वानृपानधर्मिष्ठान्घातयित्वार्जुनादिभिः ॥ अंज सावर्तयामासधर्मंधर्मसुतादिभिः ॥ ६६ ॥ इतिश्रीभा०म०दशमस्कंधेउ०द्विजकुमारानयनंनामएकोन नवतितमोध्यायः ॥ ८९ ॥ ॥छ॥ श्रीशुकउवाच सुखंस्वपुर्यांनिवसन्द्वारकायांश्रियःपतिः ॥ सर्वसं पत्समृद्धायांजुष्टायांवृष्णिपुंगवैः ॥ १ ॥ स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकांतिभिः ॥ कंदुकादिभिर्हर्म्येषु क्रीडंतीभिस्तडिद्द्युभिः ॥ २ ॥ नित्यंसंकुलमार्गायांमदच्युद्भिर्मतंगजैः ॥ स्वलंकृतैर्भटैरश्वैरथैश्चकनको ज्ज्वलैः ॥ ३ ॥ उद्यानोपवनाढ्यायांपुष्पितद्रुमराजिषु ॥ निर्विशद्भृंगविहगैर्नादितायांसमंततः ॥ ४ ॥ रेमेषोडशसाहस्रपत्नीनामेकवल्लभः ॥ तावद्विचित्ररूपोऽसौतद्गेहेषुमहर्द्धिषु ॥ ५ ॥ ॥

तुपुनःप्रोक्ताकृष्णलीलसमासतः ॥ यदुवंशप्रसूतानामानंत्यंचसकारणं ॥१॥ श्रीकृष्णविभूतिंसमासेनदर्शयति सुखंस्वपुर्यामिति सर्वसंप दादिविशिष्टायां ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ श्रियःपतिःषोडशसहस्रपत्नीनामेकवल्लभःसंस्तासांगेहेषुरेमेइत्यन्वयः ॥ ५ ॥

गेहविशेषणंप्रोत्फुल्लेत्यादिश्लोकेन तथाऽऽह्रदिनीषुचअंभोविगाह्यविजहार महानुदयोवैभवंयस्यसः योषितांकुचकुंकुमैर्लिप्तांगः यत स्ताभिःपरिरब्धः ॥ ६ ॥ ७ ॥ सूतमागधबंदिभिश्चोपगीयमानः ॥ ८ ॥ ९ ॥ ताःक्लिन्नवस्त्राःअतएवविवृतोरुकुचप्रदेशाःउद्धृतानिवि स्रस्तानिबृहत्कबरेभ्यःप्रसूनानियासांताः जातेनस्मरेणयउत्सवस्तेनलसंतिवदनानियासांताः ॥ १० ॥ तासांस्तनेभ्योविषज्जितकुंकुमा स्रग्यस्य क्रीडायाअभिषंगेणअभिनिवेशेनधुतःकंपितःकुंतलवृंदबंधोयस्यसः ॥ ११ ॥ १२ ॥ १३ ॥ मुकुंदैकधियःसमाहिताइवक्षणमगिरःसत्यः



प्रोत्फुल्लोत्पलकह्लारकुमुदांभोजरेणुभिः ॥ वासितामलतोयेषुकूजद्द्विजकुलेषुच ॥ ६ ॥ विजहारविगाह्यांभोऽऽह्रदिनीषुमहोदयः ॥ कुचकुंकुमलिप्तांगःपरिरब्धश्चयोषितां ॥ ७ ॥ उपगीयमानोगंधर्वैर्मृदंगपणवानकान् ॥ वादयद्भिर्मुदावीणांसूतमागधबंदिभिः ॥ ८ ॥ सिच्यमानोऽच्युतस्ताभिर्हसंतीभिःस्मरेचकैः ॥ प्रतिसिंचन्विचिक्रीडेयक्षीभिर्यक्षराडिव ॥ ९ ॥ ताःक्लिन्नवस्त्रविवृतोरुकुचप्रदेशाःसिंचंत्यउद्धृतबृहत्कबरप्रसूनाः ॥ कांतंस्मरेचकजिहीरिषयोपगुह्यजातस्मरोत्सवलसद्वदनाविरेजुः ॥ १० ॥ कृष्णस्तुतत्स्तनविषज्जितकुंकुमस्रक्क्रीडाऽभिषंगधुतकुंतलवृंदबंधः॥सिंचन्मुहुर्युवतिभिःप्रतिषिच्यमानोरेमेकरेणुभिरिवेभपतिःपरीतः ॥ ११ ॥ नटानांनर्तकीनांचगीतवाद्योपजीविनां ॥ क्रिडालंकारवासांसिकृष्णोऽदात्तस्यचस्त्रियः ॥ १२ ॥ कृष्णस्यैवंविहरतोगत्यालापेक्षितस्मितैः ॥ नर्मक्ष्वेलिपरिष्वंगैःस्त्रीणांकिलहताधियः ॥ १३ ॥ ऊचुर्मुकुंदैकधियोगिरउन्मत्तवज्जडं ॥ चिंतयंत्योऽरविंदाक्षंतानिमेगदतःशृणु ॥ १४ ॥ महिष्यऊचुः कुररिविलपसित्वंवीतनिद्रानशेषेस्वपितिजगतिराञ्यामीश्वरोगुप्तबोधः ॥ वयमिवसखिकच्चिद्गाढनिर्भिन्नचेतानलिननयनहासोदारलीलेक्षितेन ॥ १५ ॥ ॥ ॥ ॥ ॥

पुनस्तमेवेशंचिंतयंत्योजडंयथाभवतितथायानिवाक्यानिऊचुस्तानिमेमत्तोगदतःशृण्वित्यर्थः ॥ १४ ॥ ईश्वरःश्रीकृष्णःस्वपिति त्वंतुनिद्राभंगंकुर्वतीविलपासिनशेषेनस्वपिषितदनुचितमित्यर्थः अथवानापराधस्तवापीत्याशयेनाहुः नलिननयनस्यभगवतोहासेनसहितमुदारंयल्लीलेक्षितंतेनकाच्चिद्गाढंनिर्विद्धचेतास्त्वमिति ॥ १५ ॥ ॥ ॥ ॥

नक्तंरात्रावदृष्टबंधुःसतीरोरवीषि किंवानैतावत् अपितुवयमिवस्पृहयसे ॥ १६ ॥ अलब्धनिद्रःसदानिष्टनसेक्रोशसि किंवाअस्माभिः प्राप्तांदशांत्वमपिगतोऽसि अहोकष्टंयथावयंसंभोगेनमुकुंदापहृतकुंचकुंकुमादिलांछनास्तथात्वमपियतोऽपहृतश्रीकौस्तुभादिलांछनोल क्ष्यसे ॥ १७ ॥ मुकुंदगदितानिरहस्यानिविस्मृत्यतदेकचिंतयाकच्चित्तमोनत्वंक्षिणोषि वयमिवस्थगितगीःस्तब्धवाक् हेइंदोनस्तथैवोप लक्ष्यसे ॥ १८ ॥ अप्रियाचरणंविनास्मरोदीरिणेनन्यथाजननंमलयानिलतवानुचितमित्यर्थः ॥ १९ ॥ मेघेति आतपार्तिहरणादिसाम्या

नेत्रेनिमीलयसिनक्तमदृष्टबंधुस्त्वंरोरवीषिकरुणंबतचक्रवाकि ॥ दास्यंगतावयमिवाच्युतपादजुष्टांकिंवा स्रजंस्पृहयसेकबरेणवोढुं ॥ १६ ॥ भोभोःसदानिष्टनसेउदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ॥ किंवामु कुंदापहृतात्मलांछनःप्राप्तांदशांत्वंचगतोदुरत्ययां ॥ १७ ॥ त्वंयक्ष्मणाबलवताऽसिगृहीतइंदोक्षीणस्तमो ननिजदीधितिभिःक्षिणोषि ॥कच्चिन्मुकुंदगदितानियथावयंत्वंविस्मृत्यभोस्थगितगीरुपलक्ष्यसेनः॥१८॥ किंत्वाचरितमस्माभिर्मलयानिलतेप्रियं ॥ गोविंदापांगनिर्भिन्नेहृदीरयसिनःस्मरं ॥ १९ ॥ मेघश्रीमंस्त्व मसिदयितोयादवेंद्रस्यनूनंश्रीवत्सांकंवयमिवभवान्ध्यायतिप्रेमबद्धः ॥अत्युत्कंठःशबलहृदयोऽस्मद्विधो बाष्पधाराःश्रुत्वाश्रुत्वाविसृजसिमुहुर्दुःखदस्तत्प्रसंगः ॥ २० ॥ प्रियरावपदानिभाषसेऽमृतसंजीविकया ऽनयागिरा ॥ करवाणिकिमद्यतेप्रियंवदमेवल्गितकंठकोकिल ॥ २१ ॥ ॥

द्यादवेंद्रस्यनूनंदयितःसखासिअतोभवांस्तंध्यायति ध्यानेलिंगान्याहुःअत्युत्कंठइत्यादि अहोकिमितित्वयातेनसख्यंकृतंयतोदुःखदस्त त्प्रसंगइति ॥ २० ॥ हेकोकिलमेप्रियरावस्यप्रियंवदस्यश्रीकृष्णस्यपदानीवपदानिशब्दांस्त्वंभाषसे मृतान्संजीवयतीतितथातयाऽनया कोमलयागिरावल्गितकंठरमणीयकंठमेकथयकिंतवप्रियंकरवाणीति ॥ २१ ॥ ॥ ॥ ॥ ॥

हेक्षितिधरत्वंनवदसिनचलसि अतोनूनंमहांतमर्थंचिंतयसे बततर्हिअपिकिंयथास्तनैर्विधर्तुंवयंकामयामहेतथात्वंस्तनतुल्यैःशृंगैर्वोढुंकाम यसे ओमितिचेत्तर्हितवाप्यस्मदवस्थाभविष्यतीतिभावः ॥ २२ ॥ भोःसिंधुपत्न्योनद्यःसंप्रतिग्रीष्मेसिंधुर्मेघद्वाराअमृतवृष्ट्यायुष्मान्नानं दयति बतअहोकष्टं अतःशुष्यंतोऽन्हदायासांताःअपगतकमलशोभाःकृशाश्चवयंयथाप्रियतमस्यभर्तुर्मधुपतेः स्मप्रसिद्धं ॥ २३ ॥ तदैव दैवादागतंहंसंदूतंकल्पयित्वाहुः हंसेति नःअस्मान्प्रतिपुराहसिउक्तंकिंवाचलसौहृदःस्मरति स्मृत्वैवमांप्रस्थापितवानितिचेदतआहुःहे क्षौद्रक्षुद्रस्यदूतकस्मात्तंवयंभजामः कामार्थमाह्वयतियुष्मदाज्ञेतिचेदतआहुःअहोतर्हितमालापयआकारय ओमितिगच्छंतमिवतंपुनराहुः

नचलसिनवदस्युदारबुद्धेक्षितिधरचिंतयसेमहांतमर्थं ॥ अपिबतवसुदेवनंदनांघ्रिंवयमिवकामयसेस्तनै र्विधर्तुं ॥२२॥ शुष्यद्ध्रदाःकरशिताबतसिंधुपत्न्यःसंप्रत्यपास्तकमलश्रियइष्टभर्तुः॥यद्वद्वयंयदुपतेःप्रण यावलोकमप्राप्यमुष्टहृदयाःपुरुकर्शिताःस्म॥ २३ ॥हंसस्वागतमास्यतांपिबपयोब्रूह्यंगशौरेःकथांदूतंत्वां नुविदामकच्चिदजितस्वस्त्यास्तउक्तंपुरा॥किंवानश्चलसौहृदःस्मरतितंकस्माद्भजामोवयंक्षौद्रालापयका मदंश्रियमृतेसैवैकनिष्ठास्त्रियां॥२४॥इतीदृशेनभावेनकृष्णेयोगेश्वरेश्वरे॥क्रियमाणेनमाधव्योलेभिरेप रमांगतिं॥२५॥श्रुतमात्रोऽपियःस्त्रीणांप्रसह्याकर्षतेमनः॥उरुगायोरुगीतोवापश्यंतीनांकुतःपुनः॥२६॥

याऽस्मान्वंचयित्वाएकाकिनीसेवतेतांश्रियमृतेतमेवालापय सातदेकनिष्ठाकथंपरिहर्तुंशक्यतइतिचेदतआहुःस्त्रियां जातावेकवचनं अ स्मासुस्त्रीषुमध्येकिंसैवैकनिष्ठानतुवयमित्यर्थः पाठांतरेतुक्षौद्रंमधुतद्वन्मधुरालापमात्रंयस्यतमकामदमरतिप्रदंश्रियमृतेवयंकस्माद्भजामःकिं तुअनादृतापिसतीपुनःपुनःसैवभजतुयतोऽस्मादृशयोमानिन्यःस्त्रियएकानिष्ठाएकत्रैवस्वसंमानसिद्धौनिष्ठायासामिति ॥२४॥२५॥तासांकृष्णे एवंभूतोभावोनातिचित्रमित्याह श्रुतमात्रोऽपीति उरुभिर्गायैर्गीतैःउरुधागीतोवायैःकैश्चिदपिगीतैःकथाभिःकथंचिदपिगीतोवेत्यर्थः॥२६

॥ २७ ॥ पदंस्थानं ॥ २८ ॥ २९ ॥ यारुक्मिणीप्रमुखाअष्टावुदाहृताःप्राक् ॥ ३० ॥ एवमष्टोत्तरशताधिकषोडशसहस्रमहिषीणांपुत्राल क्षमेकमशीत्युत्तरैकषष्टिसहस्राणि चभवंति ॥ ३२ ॥ ३३ ॥ अनिरुद्धश्चेति अतःपुत्राणांमध्येसप्तदशैवमहारथाज्ञेयाः अथवाअनिरुद्धनामापि

याःसंपर्यचरन्प्रेम्णापादसंवाहनादिभिः ॥ जगद्गुरुंभर्तृबुद्ध्यातासांकिंवर्ण्यतेतपः ॥ २७ ॥ एवंवेदोदितंधर्म मनुतिष्ठन्सतांगतिः ॥ गृहंधर्मार्थकामानांमुहुश्चादर्शयत्पदं ॥ २८ ॥ आस्थितस्यपरंधर्मंकृष्णस्यगृहमेधि नां ॥ आसन्षोडशसाहस्रंमहिष्यश्चशताधिकं ॥ २९ ॥ तासांस्त्रीरत्नभूतानामष्टौयाःप्रागुदाहृताः ॥ रुक्मि णीप्रमुखाराजंस्तत्पुत्राश्चानुपूर्वशः ॥ ३० ॥ एकैकस्यांदशदशकृष्णोऽजीजनदात्मजान् ॥ यावत्यआत्मनो भार्याअमोघगतिरीश्वरः ॥ ३१ ॥ तेषामुद्दामवीर्याणामष्टादशमहारथाः ॥ आसन्नुदारयशसस्तेषांनामा निमेशृणु ॥ ३२ ॥ प्रद्युम्नश्चानिरुद्धश्चदीप्तिमान्भानुरेवच ॥ सांबोमधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥ ॥ ३३ ॥ पुष्करोवेदबाहुश्चश्रुतदेवःसुनंदनः ॥ चित्रबाहुर्विरूपश्चकविर्न्यग्रोधएवच ॥ ३४ ॥ एतेषामपि राजेंद्रतनुजानांमधुद्विषः ॥ प्रद्युम्नआसीत्प्रथमःपितृवद्रुक्मिणीसुतः ॥ ३५ ॥ सरुक्मिणोदुहितरमुपयेमे महारथः ॥ तस्मात्सुतोऽनिरुद्धोभून्नागायुतबलान्वितः ॥ ३६ ॥ सचापिरुक्मिणःपौत्रींदौहित्रोजगृहेततः ॥ व ज्रस्तस्याभवद्यस्तुमौसलादवशेषितः ॥ ३७ ॥ प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्यचात्मजः ॥ सुबाहोःशांतसेनो ऽभूच्छतसेनस्तुतत्सुतः ॥ ३८ ॥ नह्येतस्मिन्कुलेजाताअधनाअबहुप्रजाः ॥ अल्पायुषोऽल्पवीर्याश्चअब्रह्म ण्याश्चजज्ञिरे ॥ ३९ ॥ यदुवंशप्रसूतानांपुंसांविख्यातकर्मणां ॥ संख्यानशक्यतेकर्तुमपिवर्षायुतैर्नृप ॥ ४० ॥ तिस्रःकोटयःसहस्राणामष्टाशीतिशतानिच ॥ आसन्यदुकुलाचार्याःकुमाराणामितिश्रुतं ॥ ४१ ॥

कश्चित्पुत्रएवेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ सहस्राणामपरिमितानांकुमाराणामित्यन्वयः ॥ ४१ ॥

यदाप्रत्येकंबहूनध्यापयतामाचार्याणामियंसंख्यातदपिश्रुतमात्रंनतुसम्यक्ज्ञायतेतदाकुमाराणामेवंसंख्यानंकर्तुंनशक्यतेकुतःपुनःसर्वयाद
वानामिति ॥ ४२ ॥ तेचोत्पन्नाइति प्रत्येकंबहुभीरूपैरितिज्ञेयं ॥ ४३ ॥ एवमेवयदुकुलेऽपिदेवाइति तथाचोक्तं सहस्रशःसमुद्भूतादे
वायदुकुलेपृथगिति ॥ ४४ ॥ ४५ ॥ ४६ ॥ तस्मात्कृष्णकीर्तेःसर्वतीर्थोत्तमत्वंकृष्णस्यचसर्वदेवोत्तमत्वंनचित्रमित्याह तीर्थंचक्रइति
इतःपूर्वंस्वःसरिदेवसर्वतोऽधिकंतीर्थमित्यासीत् इदानींतुयदुषुयदजनिजातंतीर्थंश्रीकृष्णकीर्तिरूपंएतत्स्वःसरिद्रूपंपादशौचंतीर्थमूनम
ल्पंचक्रेस्वयमेवसर्वतीर्थोपरिविराजतइत्यर्थः श्रीकृष्णस्यविद्विषःस्निग्धाश्चतत्सारूप्यंययुरित्यपिनातिचित्रं तस्यपरमकारुणिकत्वात् तथे

संख्यानंयादवानांकःकरिष्यतिमहात्मनां ॥ यत्रायुतानामयुतलक्षेणास्तेसआहुकः ॥ ४२ ॥ देवासुराह
वहतादैतेयायेसुदारुणाः ॥ तेचोत्पन्नामनुष्येषुप्रजादृप्ताबबाधिरे ॥ ४३ ॥ तन्निग्रहायहरिणाप्रोक्तादेवा
यदोःकुले ॥ अवतीर्णाःकुलशतंतेषामेकाधिकंनृप ॥४४॥ तेषांप्रमाणंभगवान्प्रभुत्वेनाभवद्धरिः॥ येचानुव
र्तिनस्तस्यववृधुःसर्वयादवाः ॥ ४५ ॥ शय्यासनाटनालापक्रीडास्नानादिकर्मसु ॥ नविदुःसंतमात्मानंवृ
ष्णयःकृष्णचेतसः ॥ ४६ ॥ तीर्थंचक्रेनृपोनंयदजनियदुषुस्वःसरित्पादशौचंविद्विट्स्निग्धाःस्वरूपंययुर
जितपराश्रीर्यदर्थेऽन्ययत्नः ॥ यन्नामामंगलघ्नंश्रुतमथगदितंयत्कृतोगोत्रधर्मःकृष्णस्यैतन्नचित्रंक्षितिभर
हरणंकालचक्रायुधस्य ॥ ४७॥ ॥ ॥ ॥

दंचनचित्रं किंतत् अजितपराअजिताकैश्चिदप्यप्राप्तापरासर्वतःपरिपूर्णाश्रीःकृष्णस्यैवनान्यस्येति तदेवाह यदर्थेअन्येषांब्रह्मादीनांय
त्नइति ननुनिरपेक्षंतमेवलक्ष्मीःश्रयतइतिचित्रमेवेतिचेन्नहिपरममंगलनामधेयत्वात्तस्येत्याह यन्नामेति तदपिनार्थस्मरणापेक्षमित्याह श्रु
तमथगदितमिति सर्वधर्माश्रयत्वादपीत्याह यत्कृतोगोत्रधर्मइति गोत्रेषुतत्तदृषिवंशेषुधर्मोयत्कृतोयेनप्रवर्तितः तस्यक्षितिभरहरणंनैवचि
त्रमित्याह कृष्णस्यैतदिति कालचक्रायुधस्येति सर्वसंहारककालमूर्तेर्विशेषतोदुरंतप्रभावचक्रायुधस्याकियदेतदित्यर्थः ॥ ४७ ॥

यतएवंभूतःश्रीकृष्णस्ततःसएवसर्वोत्तमइत्याह जयतीति जनानांजीवानांयोनिवासआश्रयस्तेषुवानिवसतिअंतर्यामितयातथासकृष्णोज
यति देवक्यांजन्मेतिवादमात्रंयस्यसः वस्तुतःअजन्मा यदुवराःपर्षत्सभासेवकरूपायस्य इच्छामात्रेणनिरसनसमर्थोपिक्रीडार्थंदोर्भिरध
र्ममस्यन्क्षिपन् स्थिरचरवृजिनघ्नःअधिकारिविशेषानपेक्षमेववृंदावनगततरुतृणलतादीनांसंसारदुःखहंता तथाविलासवैदग्ध्यानपेक्षंव्रज
वनितानांपुरवनितानांचसुस्मितेनशोभनहास्ययुतेनश्रीमतामुखेनैवकामदेवंवर्धयन् कामश्चासौदीव्यतिविजिगीषतिसंसारमितिदेवस्तं
भोगद्वारामोक्षप्रदमित्यर्थः ॥ ४८ ॥ तत्तत्कार्यविशेषैःस्वीकृतमत्स्यकूर्मादिनानामूर्तेर्विशेषतोयदूत्तमस्यसतः परस्यतदनुरूपानुकारीणि

जयतिजननिवासोदेवकीजन्मवादोयदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मं॥ स्थिरचरवृजिनघ्नःसुस्मितश्रीमुखे
नव्रजपुरवनितानांवर्धयन्कामदेवं ॥ ४८ ॥ इत्थंपरस्यनिजवर्त्मरिरक्षयात्तलीलातनोस्तदनुरूपविडंबना
नि ॥ कर्माणिकर्मकषणानियदूत्तमस्यश्रूयादमुष्यपदयोरनुवृत्तिमिच्छन् ॥ ४९ ॥ मर्त्यस्तयाऽनुसवमे
धितयामुकुंदश्रीमत्कथाश्रवणकीर्तनचिंतयैति ॥ तद्धामदुस्तरकृतांतजवापवर्गंग्रामाद्वनंक्षितिभुजोऽपि
ययुर्यदर्थाः ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेऽष्टादशसाहस्र्यांसंहितायांवैयासि
क्यांश्रीकृष्णचरितानुवर्णनंनामनवतितमोध्यायः ॥ ९० ॥ ॥ श्रीकृष्णार्पणमस्तु समाप्तोयंदशमस्कंधः

कर्मकषणानिकर्माणिचरितानिश्रूयात् शृणुयादित्यर्थः ॥ ४९ ॥ अनुवृत्तेःफलमाह मर्त्यइति श्रीमत्याःकथायाःश्रवणकीर्तनयुक्तयाचिं
तयासंवर्धितयाऽनुवृत्त्यातयातन्निष्ठत्वेनतस्यधामलोकमेति लोकत्वेऽपिकालानाकलितत्वमित्याह दुस्तरेति दुर्लभपुरुषार्थतामाह ग्रामा
दिति ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेअष्टादशसाहस्र्यांसंहितायांवैयासिक्यांश्रीधरस्वामिविरचितायांश्रीमद्भाग
वतभावार्थदीपिकायांनवतितमोध्यायः ॥ ९० ॥ समाप्तोयंदशमस्कंधः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीगणेशायनमः श्रीकृष्णायनमः ॐनमःश्रीपरमहंसास्वादितचरणकमलचिन्मकरंदायभक्तजनमानसनिवासायश्रीरामचंद्राय विजयंतेपरानंदकृष्णपादरजःस्रजः ॥ याधृतामूर्ध्निजायंतेमहेंद्रादिमहःस्रजः ॥ १ ॥ उक्तैकत्रिंशताऽध्यायैर्मुक्तिरेकादशेततः ॥ जायंतेयोतिहासाद्यैःसमासव्याससरूपतः ॥ २ ॥ नारदोवसुदेवायसमासेनन्यवर्णयत् ॥ भगवानुद्धवायाथविस्तरेणोपपत्तिभिः ॥ ३ ॥ तत्रतुप्रथमेध्यायेयदुवंशस्यसंक्षयः ॥ उपक्षिप्तोविरागायमौसलस्यापदेशतः ॥ ४ ॥ प्रवृत्तितःपरानंदकृष्णक्रीडानुवर्णिता ॥ तन्निवृत्त्यापरानंदपदारोहोनुवर्ण्यते ॥ ५ ॥ एवंतावद्दशमस्कंधेभूभारावतारणायनिजविभूतिविभूषितयदुवंशस्ययदुवंशावतारितसकलसुरांशस्यभगवतः श्रीकृष्णस्यतदुचितप्रवृत्तिविडंबनेनतच्छ्रवणादिपराणांपरेषामानंदकारणंक्रीडानिरूपिता अथेदानीमपरिमितयोगमायावैभवस्यभक्तानामात्मतत्त्वोपदेशपूर्वकंक्रीडार्थंभूतलेअवतारितानांचाधिकारिणांसुरांशानांमौसलापदेशेनतत्तदधिकारपदप्रापणपूर्वकंचब्रह्माद्यनुग्रहायनिजपदारोहोनिरूप्यते तत्रकुरुक्षेत्रयात्रायामविरक्तस्यवसुदेवस्यकर्मणाकर्मनिर्हारोयथास्यान्नस्तदुच्यतामित्येवंकर्मयोगंपृष्टवतोनारदादिभिःक

श्रीबादरायणिरुवाच ॥ कृत्वादैत्यवधंकृष्णःसरामोयदुभिर्वृतः ॥ भुवोऽवतारयद्भारंजविष्ठंजनयन्कलिं ॥ १ ॥

र्मयोगोनिरूपितःकर्मणाकर्मनिर्हारएषसाधुनिरूपितः ॥ यच्छ्रद्धयाप्तवित्तेनशुक्लेनेज्येतपूरुषइत्यादिना तेनचविशुद्धसत्त्वस्यश्रीकृष्णरामौपरमेश्वरत्वेनज्ञातवतःषड्गर्भानयनाध्यायेश्रीकृष्णेनात्मतत्त्वमुपदिष्टंवचोवःसमवेतार्थंतातैतदुपमन्महे ॥ यन्नःपुत्रान्समुद्दिश्यतत्त्वग्राम उदाहृतइत्यादिना तच्चविषयभोगातिशयेनतिरोहितमासीत्तदेवेदानींनारदमुखेनप्रथमंपंचाध्याय्यानिरूप्यते तत्रप्रथमेऽध्यायेवैराग्योत्पादनाययदुकुलस्यब्रह्मशापापदेशेनात्युन्नतविषयसुखानामप्यनित्यताप्रतिपाद्यते ततश्चतुर्भिर्निमिजायंतेयसंवादेनसपरिकरंपरमतत्त्वनिरूपणम् ततःषष्ठेभगवदुद्धवसंवादप्रस्तावः ततस्त्रयोविंशत्याउद्धवंप्रतिभगवत्तत्त्वानिरूपणं ततोद्वाभ्यांमौसलक्रीडेत्येवमेकत्रिंशताऽध्यायैरेकादशस्कंधप्रवृत्तिः तस्यचयथामतिव्याख्यानमारभ्यते तत्रमौसलप्रसंगार्थंपूर्वस्कंधार्थमनुवदतिश्लोकद्वयेन कृत्वेति अवतारयत् अवातारयदित्यडागमोद्रष्टव्यः जविष्ठंवेगवत्तरमतिशीघ्रं हिंसापर्यवसायिनामित्यर्थः कलिंकलहं ॥ १ ॥ ॥

एतद्विवृणोति येकोपिताइति सपत्नैर्दुर्योधनादिभिःकोपिताःकोपंकारिताः सुबहुयथाभवतितथाबहुवारानित्यर्थः तदेवाह दुर्द्यूतहेलन
कचग्रहणादिभिरिति दुर्द्यूतंकपटद्यूतं हेलनमवज्ञा कचग्रहणंदुःशासनेनद्रौपद्याःकेशाकर्षणं एतानिआदिर्योषांगरदानजतुगृहदाहा
दीनांतैःकृत्वायेकोपितास्तान्पांडुसुतान्निमित्तंकृत्वाइतरेतरतउभयोःपक्षयोःसमेतान्मिलितान्नृपान्हत्वाक्षितेर्भारंनिरहरत्जहार यद्वाये
कोपितायैश्चकोपितास्तानितरेतरतःपरस्परंनिमित्तंकृत्वेत्यन्वयः येतावत्प्रकटदैत्याःपूतनादयस्तान्स्वयमेवहतवान्येतुदैत्याबांधवच्छद्म
नास्थितास्तान्परस्परंनिमित्तंविधायहत्वाभूभारमपाकृतवानित्यर्थः ॥ २ ॥ अपिच भूभारेत्यादि अन्याश्चभुवोभारभूताराजन्यपृतनाराज्ञांपृ
तनाःसेनाः राजानस्तेषांपृतनाश्चेतिवा स्वबाहुभिर्गुप्तैःपरिरक्षितैर्यदुभिर्विवाहादिच्छलेननिरस्यहत्वा बाहुभिरितिबहुवचनंवस्तुतश्चतुर्भु

## येकोपिताःसुबहुपांडुसुताःसपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान्॥ कृत्वानिमित्तमितरेतरतःसमेतान्ह त्वानृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥ भूभारराजपृतनायदुभिर्निरस्यगुप्तैःस्वबाहुभिरचिंतयदप्रमेयः मन्येऽवनेर्ननुगतोऽप्यगतंहिभारंयद्यादवंकुलमहोह्यविषह्यमास्ते ॥३॥ नैवान्यतःपरिभवोऽस्यभवेत्क थंचिन्मत्संश्रयस्यविभवोन्नहनस्यनित्यं॥ अंतःकलिंयदुकुलस्यविधायवेणुस्तंबस्यवन्हिमिवशांतिमुपैमि धाम ॥४॥ एवंव्यवसितोराजन्सत्यसंकल्पईश्वरः॥शापव्याजेनविप्राणांसंजन्हेस्वकुलंविभुः॥ ५॥

जाभिप्रायेण नन्वेवंकृष्णश्चिकीर्षतीतिज्ञात्वाकथंतस्मैयादवानद्रुह्यंतिस्मतत्राह अप्रमेयःप्रमातुमशक्यःचिंतामाह मन्यइति नन्विितिवि
तर्के अवनेर्भूमेर्भारोयद्यपिलोकप्रतीत्यागतस्तथाऽप्यहमगतमेवमन्ये हिनिश्चितं यद्यस्मात्अविषह्यंसोढुमशक्यंयादवंकुलमित्यनेनैवस्व
वंशत्वात्स्वयंहननमनुचितमितिसूचितं ॥ ३ ॥ तर्हिइदमप्यन्यैर्घात्यतांतत्राह नैवेति अन्यतोदेवादिभ्योपियादवकुलस्यपरिभवस्तिरस्का
रोनभवेत् कुतः मत्संश्रयस्यमांसंश्रयतइतिमत्संश्रयंकुलंतस्य किंच नित्यंविभवोन्नहनस्यविभवैर्गजतुरगादिभिरुच्छृंखलस्ययद्वातर्हिदांकि
मितिसंहर्तव्यंतत्राह विभवोन्नहनस्येति तस्मादेवंकरिष्यामीत्याह अंतःकलिमिति शांतिमुपशमं उपैमि वर्तमानसामीप्येवर्तमानवद्वा
उपैष्यामि तदनंतरंधामचवैकुंठाख्यमुपैष्यामीत्यर्थः ॥ ४ ॥ व्यवसितःकृतनिश्चयः संजन्हेउपसंहृतवान् ॥ ५ ॥ ॥

तदेवमवतारप्रयोजनंसर्वंसंपाद्यस्वंलोकंजगामेत्याहश्लोकद्वयेन स्वमूर्त्येति लोकानांलावण्यस्यनिर्मुक्तिरस्यागोयया यामपेक्ष्यलोकेषुला वण्यंनास्तीत्यर्थः यद्वालोकेभ्योलावण्यस्यनिर्मुक्तिर्दानंयतः यत्संपर्केणलोकालावण्यवंतोभवंतीत्यर्थः तयास्वमूर्त्यानृणांलोचनमाच्छि द्य ततोऽन्यस्यावलोकनेलोचनस्याप्रवृत्तेः तथास्वगीर्भिस्तागिरःस्मरतांचित्तंचाच्छिद्य तथापदैस्तत्रतत्रांकितैस्तानिपदानीक्षतामीक्षमा णानामन्यतोगमनादिकाःक्रियाश्चाच्छिद्य तदानींतनानांसर्वेषांचक्षुरादिप्रवृत्तीःस्वैकनिष्ठाःकृत्वेत्यर्थः ॥ ६ ॥ किंच इतउपरिजानिष्य माणानांसंसारतरणायकौपृथिव्यांशोभनाःश्लोकाःसुश्लोकाःकवीनांयस्यांतांस्वकीर्तिंवितत्यविस्तार्यअनयाकीर्त्याअंजसासुखेनैवनुनिश्चि तंतमस्तरिष्यंतीत्यभिप्रेत्यईश्वरःस्वंपदंस्थानमगादिति ॥ ७ ॥ अब्रह्मण्येभ्योऽदातृभ्योवाऽसेवकेभ्योवाविप्राःकुप्यंतिवृष्णयस्तुनतथेत्या

स्वमूर्त्यालोकलावण्यनिर्मुक्त्यालोचनंनृणाम् ॥ गीर्भिस्ताःस्मरतांचित्तंपदैस्तानीक्षतांक्रियाः ॥ ६ ॥ आ च्छिद्यकीर्तिंसुश्लोकांवितत्यह्यंजसानुकौ ॥ तमोऽनयातरिष्यंतीत्यगात्स्वंपदमीश्वरः ॥ ७ ॥ राजोवाच ब्रह्मण्यानांवदान्यानांनित्यंवृद्धोपसेविनां ॥ विप्रशापःकथमभूद्वृष्णीनांकृष्णचेतसां ॥ ८ ॥ यन्निमित्तःसवै शापोयादृशोद्विजसत्तम ॥ कथमेकात्मनांभेदएतत्सर्वंवदस्वमे ॥ ९ ॥ श्रीशुकउवाच बिभ्रद्वपुःसकल सुंदरसन्निवेशंकर्माचरन्भुविसुमंगलमाप्तकामः ॥ आस्थायधामरममाणउदारकीर्तिःसंहर्तुमैच्छतकुलं स्थितकृत्यशेषः ॥ १० ॥ ॥ ॥ ॥ ॥

ह ब्रह्मण्यानामित्यादिना किंचकोपेजातेऽपिकृष्णचेतसांकथमभूत्कथंप्रादुरभूदित्यर्थः ॥ ८ ॥ अतःस्पष्टस्यनिमित्तस्याभावान्निमित्तांतरंपृ च्छति यन्निमित्तइति एकात्मनामेकचित्तानांकथंभेदःकलहः ॥ ९ ॥ ईश्वरेच्छैवात्रनिमित्तमितिपरिहरति बिभ्रदिति सकलानांसुंदरवस्तू नांसन्निवेशोविन्यासविशेषोयस्मिंस्तत्वपुर्बिभ्रत् तर्हिकिमितिसौंदर्यादिविषयपरः न सुमंगलंकर्माचरन् तत्किंकयापिकामनया न आप्त कामः तर्हिकिमितिकर्माचरति धामद्वारवत्याख्यंगृहमास्थायरममाणोगृहेरममाणान्कर्मग्राहयितुमित्यर्थः ननुकिमाप्तकामस्यगृहरत्याकर्माभि र्वातत्राह उदारकीर्तिःबहुफलप्रदाकीर्तिर्यस्यसः कीर्तिवितानार्थमित्यर्थः एवंपरमैश्वर्येणवर्तमानंकुलंसंहर्तुमैच्छत् तत्कस्यहेतोः स्थितः कृत्येभूभारहरणेशेषोयस्यसः ॥ १० ॥ ॥ ॥ ॥

ईश्वरेच्छयोत्थितंब्रह्मशापनिमित्तंवक्तुमाह कर्माणीति कर्मार्थमाहूताःकर्माणिकृत्वाविसृष्टामुनयःपिंडारकंसमगमान्नित्यन्वयःविसृष्टाः प्रस्थापिताः पूर्वोक्तामुदारकीर्तितांविवृण्वन्कर्माणिविशिनष्टि पुण्यनिवहानीत्यादित्रिभिःपदैः कानिचिदश्वमेधादिकर्माणिपुण्यमेवजनयंति पुत्रोपलालनादीनितुतत्कालेसुखमेवकुर्वंति प्रायश्चित्तादीनितुपापमेवहरंति एतानितुसर्वतोमुखानीत्याह पुण्यनिवहानिकीर्तनादिनापुण्यानिनिवहंतिप्रापयंतीतितथासुमंगलानिअतिसुखात्मकानिगायताजगतःकलिमलापहराणिकृत्वा मुनिप्रस्थापनेहेतुः कालात्मनासंहारकरूपेण यदुदेवगेहेवसुदेवगृहेनिवसतास्वकुलंसंजिहीर्षतेत्यर्थः पिंडारकंततोनातिदूरंतीर्थविशेषम् ॥ ११ ॥ १२ ॥

कर्माणिपुण्यनिवहानिसुमंगलानिगायज्जगत्कलिमलापहराणिकृत्वा ॥ कालात्मनानिवसतायदुदेवगेहेपिंडारकंसमगमन्मुनयोविसृष्टाः ॥ ११ ॥ विश्वामित्रोऽसितःकण्वोदुर्वासाभृगुरंगिराः ॥ कश्यपोवामदेवोऽत्रिर्वसिष्ठोनारदादयः ॥१२ ॥ क्रीडंतस्तानुपव्रज्यकुमारायदुनंदनाः ॥ उपसंगृह्यपप्रच्छुरविनीताविनीतवत् ॥ १३ ॥ तेवेषयित्वास्त्रीवेषैःसांबंजांबवतीसुतम् ॥ एषापृच्छतिवोविप्राअंतर्वत्न्यसितेक्षणा ॥१४॥ प्रष्टुंविलज्जतीसाक्षात्प्रब्रूतामोघदर्शनाः ॥ प्रसोष्यंतीपुत्रकामाकिंस्वित्संजनयिष्यति ॥ १५॥एवंप्रलब्धामुनयस्तानूचुःकुपितान्नृप ॥ जनयिष्यतिवोमंदामुसलंकुलनाशनम् ॥ १६ ॥ तच्छ्रुत्वातेतिसंत्रस्ताविमुच्यसहसोदरम्॥सांबस्यददृशुस्तस्मिन्मुसलंखल्वयस्मयं॥१७॥किंकृतंमंदभाग्यैर्नःकिंवदिष्यंतिनोजनाः ॥इतिविह्वलितागेहानादायमुसलंययुः ॥१८॥ तच्चोपनीयसदसिपरिम्लानमुखश्रियः ॥ राज्ञआवेदयांचक्रुःसर्वयादवसन्निधौ ॥ १९ ॥ ॥ ॥ ॥

उपसंगृह्यपादग्रहणंकृत्वा ॥ १३ ॥ प्रश्नप्रकारमाह तेवेषयित्वेतिद्वयेन हेअमोघदर्शनाविप्राः एषाअंतर्वत्नीगर्भिणी ॥ १४ ॥ वोयुष्मान्साक्षात्प्रष्टुंविलज्जतीलज्जमानाअस्मन्मुखेनपृच्छति प्रसोष्यंतीआसन्नप्रसवाकिंस्वित्संजनयिष्यतिकन्यांवापुत्रंवातद्ब्रूत ॥ १५ ॥ प्रलब्धावंचिताः ॥ १६ ॥ तस्मिन्नुदरे अयस्मयंलोहमयम् ॥ १७ ॥ मंदभाग्यैरस्माभिःकिमेतत्कृतम् नःअस्मान्किंवदिष्यंतीतिविह्वलिताःसंतोमुसलमादायगेहान्ययुः ॥ १८ ॥ राज्ञेउग्रसेनायनतुश्रीकृष्णाय ॥ १९ ॥ ॥ ॥

॥ २० ॥ आहुकउग्रसेनः सोऽपिश्रीकृष्णमपृष्ट्वैवप्रास्यत्प्रक्षिप्तवान् अस्यमुसलस्यचूर्णीक्रियमाणस्यावशेषितंलोहंचप्रास्यत् ॥ २१ ॥ तरलैस्तरंगैः ॥ २२ ॥ अन्यैर्मत्स्यैःसह शल्येशराग्रे ॥ २३ ॥ ज्ञाताःसर्वेर्थायेनसः ईश्वरोऽपिसमर्थोऽपिसन्नन्यथाकर्तुंनैच्छत्किंत्व न्वमोदत यतःकालरूपी ॥ २४ ॥ इत्येकादशेटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ द्वितीयेनिमिजायंतसंवादेनाहनारदः ॥ ध र्मान्भागवतान्भक्त्यावसुदेवायपृच्छते ॥ १ ॥ अभीक्ष्णंप्रस्थापितोऽपिपुनःपुनरवात्सीदित्यर्थः ननुनारदस्यदक्षादिशापान्नैकत्रवासः



श्रुत्वाऽमोघंविप्रशापंदृष्ट्वाचमुसलंनृप ॥ विस्मिताभयसंत्रस्ताबभूवुर्द्वारकौकसः ॥२०॥ तच्चूर्णयित्वामु सलंयदुराजःसआहुकः ॥ समुद्रसलिलेप्रास्यल्लोहंचास्यावशेषितं ॥२१॥ कश्चिन्मत्स्योऽग्रसील्लोहंचूर्णा नितरलैस्ततः ॥ उह्यमानानिवेलायांलग्नान्यासन्किलैरकाः॥२२॥मत्स्योगृहीतोमत्स्यघ्नैर्जालेनान्यैःस हार्णवे॥ तस्योदरगतंलोहंसशल्येलुब्धकोऽकरोत् ॥ २३॥ भगवान्ज्ञातसर्वार्थईश्वरोऽपितदन्यथा ॥कर्तुं नैच्छद्विप्रशापंकालरूप्यन्वमोदत ॥ २४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविप्रशापोनामप्रथ मोध्यायः ॥ १ ॥ ॥ ॥ ॥ श्रीशुकउवाच गोविंदभुजगुप्तायांद्वारवत्यांकुरूद्वह ॥ अवात्सी न्नारदोभीक्ष्णंकृष्णोपासनलालसः ॥१॥ कोनुराजन्निंद्रियवान्मुकुंदचरणांबुजं॥ नभजेत्सर्वतोमृत्युरुपास्य ममरोत्तमैः ॥ २ ॥ तमेकदातुदेवर्षिंवसुदेवोगृहागतं ॥ अर्चितंसुखमासीनमभिवाद्येदमब्रवीत् ॥ ३ ॥ वसु देवउवाच भगवन्भवतोयात्रास्वस्तयेसर्वदेहिनां ॥ कृपणानांयथापित्रोरुत्तमश्लोकवर्त्मनां ॥ ४ ॥

संभवतीत्याशंक्याह गोविंदभुजगुप्तायामिति नतस्यांशापादेःप्रभावइत्यर्थः कृष्णोपासनेलालसाऔत्कंठ्यंयस्यसः ॥ १ ॥ यद्भजने मुक्तानामपीदृशमौत्सुक्यंतंकोनामनभजेदित्याह कोन्विति इंद्रियवानिति इंद्रियवत्त्वमात्रमेवयत्राधिकारिविशेषणमित्यर्थः सर्वतःसर्वे ष्वपिलोकेषुमृत्युर्यस्यसः ॥ २ ॥ ३ ॥ यथापित्रोर्यात्राआगमनमपत्यानांस्वस्तयेमंगलाय यथाचउत्तमश्लोकस्यवर्त्मभूतानांमहतांयात्रा कृपणानांस्वस्तये तथाभगवद्रूपस्यभवतोयात्रासर्वदेहिनांस्वस्त्यइति ॥ ४ ॥ ॥ ॥ ॥

देवैरपिमहतामुपमानमनुचितमित्याह भूतानामिति देवानांचरितमतिवृष्ट्यादिनाभूतानांदुःखायापिभवति त्वादृशांत्वयासदृशानामच्युतआत्मायेषांतेषां ॥ ५ ॥ किंचसुखंकुर्वंतोपिदेवाभजनानुसारेणकुर्वंतिनतथासाधवइत्याह भजंतीति छायेवयथापुरुषोयावत्करोति तावदेवतस्यछायापितथा कर्मसचिवाःकर्मसहायाः ॥ ६ ॥ तदेवंयद्यपिभगवतआगमनमात्रेणैववयंकृतार्थास्तथाऽपिपृच्छामः तवेति तवयैर्धर्मैःप्रसन्नोभगवांस्तानित्यर्थः ॥ ७ ॥ ननुत्वत्तोपिकिमन्योभगवत्प्रसादपात्रमस्तितत्राह अहंकिलेति भुविप्रजार्थोऽपूजयंपुत्रलाभप्रयोजनः सन्पूजितवान् किलेतिसूतीगृहेभगवदुक्तमनुस्मरति ॥ ८ ॥ अतोयथामुच्येमहितथानोऽस्मान्शाधिशिक्षय विचित्राणिव्यस

भूतानांदेवचरितंदुःखायचसुखायच ॥ सुखायैवहिसाधूनांत्वादृशामच्युतात्मनां ॥ ५ ॥ भजंतियेयथादेवान्देवाअपितथैवतान् ॥ छायेवकर्मसचिवाःसाधवोदीनवत्सलाः ॥६॥ ब्रह्मंस्तथाऽपिपृच्छामोधर्मान्भागवतांस्तव ॥ यान्श्रुत्वाश्रद्धयामर्त्योमुच्यतेसर्वतोभयात् ॥७॥ अहंकिलपुराऽनंतंप्रजाऽर्थोभुविमुक्तिदम् ॥ अपूजयंनमोक्षायमोहितोदेवमायया ॥८॥ यथाविचित्रव्यसनाद्भवद्भिर्विश्वतोभयात् ॥ मुच्येमह्यंजसैवाद्धातथानःशाधिसुव्रत ॥ ९ ॥ श्रीशुकउवाच राजन्नेवंकृतप्रश्नोवसुदेवेनधीमता ॥ प्रीतस्तमाहदेवर्षिर्हरेःसंस्मारितोगुणैः ॥ १० ॥ नारदउवाच सम्यगेतद्व्यवसितंभवतासात्वतर्षभ ॥ यत्पृच्छसेभागवतान्धर्मांस्त्वंविश्वभावनान् ॥ ११ ॥ श्रुतोऽनुपठितोध्यातआदृतोवानुमोदितः ॥ सद्यःपुनातिसद्धर्मोदेवविश्वद्रुहोऽपिहि ॥ १२ ॥ त्वयापरमकल्याणःपुण्यश्रवणकीर्तनः ॥ स्मारितोभगवानद्यदेवोनारायणोमम ॥ १३ ॥

नानियस्मिन्संसारेतस्मात्संसारात् तथाविश्वतःसर्वतोभयंयस्मिंस्तस्मात् भवद्भिर्हेतुभूतैः अंजसाअनायासेन अद्धासाक्षात् ॥ ९ हरेर्गुणैर्वर्णनीयत्वेनप्रस्तुतैर्हरिः संस्मारितइत्यर्थः ॥ १० ॥ प्रीतिमाविष्करोति सम्यगितित्रिभिः पृच्छसेपृच्छसि विश्वभावनान्सर्वशोधकान् ॥ ११ ॥ आदृतआस्तिक्येनगृहीतः अनुमोदितः परैःक्रियमाणः संस्तुतः सद्धर्मोभागवतोधर्मःदेव हेवसुदेवेत्यर्थः यद्वादेवेभ्योविश्वस्मैवद्रुह्यंतियेतानपि ॥ १२ ॥ किंचत्वयामहानुपकारःकृतइत्याह त्वयेति पुण्येश्रवणकीर्तनेयस्यसः ॥ १३ ॥

अत्रापिभगवद्धर्मनिर्णयेऽपि विदेहस्यजनकस्य ॥१४॥ आर्षभाणामुत्पत्तिंसान्वयांविविच्यकथयति प्रियव्रतइतिसप्तभिः ॥ १५ ॥ मोक्षध र्मंविवक्षयामोक्षधर्माणांप्रवर्तनेच्छयाअवतीर्णंवासुदेवांशमाहुः तस्यचवेदपारगंसुतशतमासीत् ॥ १६ ॥ तेषामृषभसुतानांमध्येनव योगीश्वराणांचरितंवक्तुमितरेषांचरितंततोविविच्याह तेषामिति एतदजनाभंनामवर्षंयस्यनाम्नाभारतमित्यद्भुतंविख्यातमासीत् एतेनतस्य धर्मातिरेकोनिरूपितः ॥ १७ ॥ इमांपृथ्वीं गृहान्निर्गतः हरिमुपासीनःसेवमानः सन् ॥ १८ ॥ नवसुताः नवद्वीपपतयोनवानांब्र

अत्राप्युदाहरंतीममितिहासंपुरातनम्॥ आर्षभाणांचसंवादंविदेहस्यमहात्मनः॥१४॥ प्रियव्रतोनामसुतो मनोःस्वायंभुवस्ययः ॥ तस्याग्नीध्रस्ततोनाभिर्ऋषभस्तत्सुतःस्मृतः॥१५॥ तमाहुर्वासुदेवांशंमोक्षधर्मवि वक्षया॥ अवतीर्णंसुतशतंतस्यासीद्वेदपारगम् ॥ १६ ॥ तेषांवैभरतोज्येष्ठोनारायणपरायणः ॥ विख्यातं वर्षमेतद्यन्नाम्नाभारतमद्भुतं ॥१७॥ सभुक्तभोगांत्यक्त्वेमांनिर्गतस्तपसाहरिम् ॥उपासीनस्तत्पदवींलेभेवै जन्मभिस्त्रिभिः ॥१८॥ तेषांनवनवद्वीपपतयोऽस्यसमंततः ॥ कर्मतंत्रप्रणेतारएकाशीतिर्द्विजातयः ॥१९॥ नवाभवन्महाभागामुनयोह्यर्थशंसिनः ॥ श्रमणावातरशनाआत्मविद्याविशारदाः ॥ २० ॥ कविर्हरिरंत रिक्षःप्रबुद्धःपिप्पलायनः ॥ आविर्होत्रोऽथद्रुमिलश्चमसःकरभाजनः ॥ २१ ॥ एतेवैभगवद्रूपंविश्वंसद सदात्मकं ॥ आत्मनोऽव्यतिरेकेणपश्यंतोव्यचरन्महीं ॥ २२ ॥ अव्याहतेष्टगतयःसुरसिद्धसाध्यगंधर्व यक्षनरकिन्नरनागलोकान् ॥ मुक्ताश्चरंतिमुनिचारणभूतनाथविद्याधरद्विजगवांभुवनानिकामं ॥ २३ ॥ तएकदानिमेःसत्रमुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरजनाभेमहात्मनः ॥ २४ ॥

ह्मावर्तादिभूखंडानांपतयः अस्यभारतस्यवर्षस्य एकाशीतिःसुताः कर्ममार्गप्रवर्तकाब्राह्मणाअभूवन् ॥ १९ ॥ अर्थशंसिनःपरमार्थनि रूपकाः श्रमणाःश्रमवंतःआत्माभ्यासेकृतश्रमाइत्यर्थः वातरशनाःदिगंबराः आत्मविद्यायांविशारदानिष्णाताः ॥ २० ॥ २१ ॥ तेषां पारमहंस्यचरितमाह एतइतिद्वाभ्यां भगवद्रूपंविश्वंपश्यंतः सदसदात्मकंस्थूलसूक्ष्मरूपं तच्चस्वाव्यतिरेकेणपश्यंतः ॥२२॥ अव्याहता अप्रतिहताइष्टाअभिप्रेतागतिर्येषांते मुक्ताअनासक्ताः ॥ २३ ॥ महात्मनोनिमेः वितायमानमनुष्ठीयमानं अजनाभेभारतवर्षे ॥ २४ ॥

यजमानोनिमिः अग्नयआहवनीयादयः विप्राऋत्विगादयः ॥ २५ ॥ अभिप्रेत्यज्ञात्वा ॥ २६ ॥ स्वरुचैवरोचमानान्नत्वाभरणादिप्र काशैः ब्रह्मपुत्रोपमान्सनत्कुमारादिसदृशान् ॥ २७ ॥ परमप्रीत्यातद्दर्शनमभिनंदतिद्वाभ्यां मन्यइति ननुभगवतः पार्षदानांकथम त्रोपलब्धिस्तत्राह विष्णोरिति विष्णुभक्तालोकपावनार्थंसर्वत्रपर्यटंतीत्यर्थः ॥ २८ ॥ मयादुर्लभंलब्धमहोभाग्यमित्याह दुर्लभमिति बहवोदेहाभवंतियेषांतेदेहिनोजीवास्तेषांक्षणभंगुरोपिमानुषोदेहोदुर्लभः परमपुरुषार्थसाधनत्वात् वैकुंठः प्रियोयेषांवैकुंठस्यवाप्रिया स्तेषांदर्शनं ॥ २९ ॥ हेअनघाः निरवद्याः भवतोयुष्मान्आत्यंतिकंक्षेमंपृच्छामः यतः क्षणार्धकालभवोपिसत्संगः शेवधिर्निधिः नि

तान्दृष्ट्वासूर्यसंकाशान्महाभागवतान्नृप॥यजमानोऽग्नयोविप्राःसर्वएवोपतस्थिरे ॥२५॥ विदेहस्तान भिप्रेत्यनारायणपरायणान् ॥ प्रीतःसंपूजयांचक्रआसनस्थान्यथाऽर्हतः ॥२६॥ तान्रोचमानान्स्व रुचाब्रह्मपुत्रोपमान्नव ॥ पप्रच्छपरमप्रीतःप्रश्रयावनतोन्नृपः ॥ २७ ॥ विदेहउवाच मन्येभगवतः साक्षात्पार्षदान्वोमधुद्विषः ॥ विष्णोर्भूतानिलोकानांपावनायचरंतिहि ॥ २८ ॥ दुर्लभोमानुषोदेहोदे हिनांक्षणभंगुरः ॥ तत्रापिदुर्लभंमन्येवैकुंठप्रियदर्शनं ॥ २९ ॥ अतआत्यंतिकंक्षेमंपृच्छामोभवतोऽ नघाः ॥ संसारेऽस्मिन्क्षणार्धोऽपिसत्संगःशेवधिर्नृणां ॥ ३० ॥ धर्मान्भागवतान्ब्रूतयदिनःश्रुतयेक्षमं ॥ यैःप्रसन्नःप्रपन्नायदास्यत्यात्मानमप्यजः ॥ ३१ ॥ नारदउवाच एवंतेनिमिनापृष्टावसुदेवमह त्तमाः ॥ प्रतिपूज्याब्रुवन्प्रीत्याससदस्यर्त्विजंनृपं ॥ ३२ ॥ ॥ ॥

धिलाभेयथानंदोभवतितथाऽत्रपरमानंदइत्यर्थः ॥ ३० ॥ तदर्थंचभागवतान्धर्मान्ब्रूत यदिनोऽस्माकंश्रुतयेश्रवणायक्षमंयोग्यंभवति क थंभूतान् यैर्धर्मैः प्रपन्नायभक्तायअजोहरिरात्मानमपिदास्यतितान् ॥ ३१ ॥ सहसदस्यैः ऋत्विग्भिश्चवर्तमानं तेपिभगवद्धर्मश्रवणप राबभूवुरित्यर्थः भगवद्धर्मतत्क्रमायातत्तरणानिच ॥ ब्रह्मकर्मावतारेहाभक्तप्राप्ययुगक्रमात् ॥ १ ॥ ज्ञातुंक्रमेणकृतवान्नवप्रश्नान्निमिर्न व ॥ एकैकस्योत्तरंप्रोचुः कविमुख्यामुनीश्वराः ॥ ३२ ॥ ॥ ॥ ॥

प्रथममात्यंतिकंक्षेमंकथयति मन्यइति नकुतश्चिद्भयंयस्मात्तदकुतश्चिद्भयं अत्रसंसारेअसदात्मभावात्असदितिदेहादावात्मभावात्ततः नित्यं सर्वदाउद्विग्नबुद्धेः विश्वात्मनासर्वथानिःशेषंयत्रपादांबुजोपासनेभीर्निवर्ततेतत् ॥ ३३ ॥ भागवतधर्मलक्षणमाह येवैइति मन्वादिमुखेनवर्णाश्रमादिधर्मानुक्तातिरहस्यत्वात्स्वमुखेनैवभगवताऽविदुषामपिपुंसामंजःसुखेनैवात्मलब्धयेयेवैउपायाः प्रोक्तास्तान्भागवतान्धर्मान्विद्धि ॥ ३४ ॥ अंजःपदेनोक्तंसुकरत्वंविवृणोति यानिति यानास्थायआश्रित्ययोगादिष्विवनप्रमाद्येतविघ्नैर्नविहन्येत किंच निमील्यनेत्रेधावन्नपिइहएषुभागवतधर्मेषुनस्खलेत् निमीलनंनामाज्ञानं यथाहुः श्रुतिस्मृतीउभेनेत्रेविप्राणांपरिकीर्तिते ॥ एकेनविकलःकाणोद्वाभ्यामंधःप्रकीर्तितइति अज्ञात्वापीत्यर्थः यथापदन्यासस्थानमतिक्रम्यशीघ्रंपरतःपदन्यासेनगतिर्धावनंतद्वदत्रापि किंचित्किंचि

**कविरुवाच मन्येऽकुतश्चिद्भयमच्युतस्यपादांबुजोपासनमत्रनित्यं ॥ उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मनायत्रनिवर्ततेभीः ॥ ३३ ॥ येवैभगवताप्रोक्ताउपायाह्यात्मलब्धये ॥ अंजःपुंसामविदुषांविद्धिभागवतान्हितान् ॥ ३४ ॥ यानास्थायनरोराजन्नप्रमाद्येतकर्हिचित् ॥ धावन्निमील्यवानेत्रेनस्खलेन्नपतेदिह ॥ ३५ ॥ कायेनवाचामनसेंद्रियैर्वाबुद्ध्यात्मनावानुसृतस्वभावात् ॥ करोतियद्यत्सकलंपरस्मैनारायणायेतिसमर्पयेत्तत् ॥ ३६ ॥ ॥ ॥**

दतिक्रम्यातिक्रम्यातिशीघ्रानुष्ठानंधावनं तथाऽनुतिष्ठन्नपिनस्खलेत्नप्रत्यवायीस्यात्तथानपतेत्फलान्नभ्रश्येत् ब्राह्मणादीनामुक्तानपिधर्मान्कश्चिदकुर्वाणोभागवतान्धर्मान्श्रवणकीर्तनादीन्कुर्वाणस्तत्फलंप्राप्नुयादित्यर्थः ॥ ३५ ॥ ननुकेतेभागवताधर्माः ईश्वरार्पितसर्वकर्माण्यपीत्याह कायेनेति आत्मनाचित्तेनअहंकारेणवा अनुसृतोयःस्वभावस्तस्मात् अयमर्थःनकेवलंविधितःकृतमेवेतिनियमःस्वभावानुसारिलौकिकमपीति तथाचभगवद्गीतासु यत्करोषियदश्नासियज्जुहोषिददासियत् ॥ यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमिति यद्वा ननुकायादीनामेवकर्मनात्मनइत्याशंक्याह अध्यासेनानुसृताद्ब्राह्मणत्वादिस्वभावाद्यद्यत्करोतीत्यर्थः तत्सकलंपरस्मैपरमेश्वरायनारायणायेतिसमर्पयेत् तथासतिसकलमपिकर्मभागवतोधर्मोभवतीतिभावः ॥ ३६ ॥ ॥ ॥

ननुकिमेवंपरमेश्वरभजनेनअज्ञानकल्पितभयस्यज्ञानैकानिवर्त्यत्वादित्याशंक्याह भयमिति यतोभयंतन्मायया भवेदतोबुधोबुद्धिमांस्त मेवाभजेत् ननुभयंदेहाद्यभिनिवेशतोभवतिसचदेहोहंकारतःसतुस्वरूपास्मरणान्नु किमत्रतस्यमायाकरोत्यतआह ईशादपेतस्येति ईश विमुखस्यतन्माययाऽस्मृतिर्भगवतःस्वरूपास्फूर्तिस्ततोविपर्ययोदेहोस्मीतिततोद्वितीयाभिनिवेशाद्भयंभवति एवंहिप्रसिद्धंलौकिकीष्वपि मायासु उक्तंचभगवता दैवीह्येषागुणमयीमममायादुरत्यया ॥ मामेवयेप्रपद्यंतेमायामेतांतरंतितइति एकयाअव्यभिचारिण्याभक्त्याभजे त् किंच गुरुदेवतात्मागुरुरेवदेवताईश्वरःआत्माप्रेष्ठश्चयस्य तथादृष्टिःसन्नित्यर्थः ॥ ३७ ॥ ननुविषयविक्षिप्तचित्तस्यकुतोऽव्यभिचारि णीभक्तिःसंभवतिकुतस्तरामभयं तत्रनतावद्विषयोनामवास्तवोस्तिकिंतुमनोविलासमात्रमतोमनोनियमनेनभजनादभयंस्यादित्याह अवि

**भयंद्वितीयाभिनिवेशतःस्यादीशादपेतस्यविपर्ययोऽस्मृतिः ॥ तन्माययाऽतोबुधआभजेत्तंभक्त्यैकयेशंगु रुदेवतात्मा ॥ ३७ ॥ अविद्यमानोऽप्यवभातिहिद्वयोध्यातुर्धियास्वप्नमनोरथौयथा ॥ तत्कर्मसंकल्पवि कल्पकंमनोबुधोनिरुंध्यादभयंततःस्यात् ॥ ३८ ॥ शृण्वन्सुभद्राणिरथांगपाणेर्जन्मानिकर्माणिचयानि लोके ॥ गीतानिनामानितदर्थकानिगायन्विलज्जोविचरेदसंगः ॥ ३९ ॥ एवंव्रतःस्वप्रियनामकीर्त्याजा तानुरागोद्रुतचित्तउच्चैः ॥ हसत्यथोरोदितिरौतिगायत्युन्मादवन्नृत्यतिलोकबाह्यः ॥ ४० ॥**

द्यमानोपीति द्वयःद्वैतप्रपंचः ध्यातुःपुंसोधियामनसा स्वप्नश्चमनोरथश्चयथेत्यर्थः तत्तस्मात्कर्माणिसंकल्पयतिविकल्पयतिचयन्मनस्त न्निरुंध्यान्नियच्छेत् ततश्चैकयाभक्त्याभजनादभयंस्यादित्यर्थः ॥ ३८ ॥ एतदत्यंताशक्यमित्याशंक्यसुगमंमार्गमाह शृण्वन्निति तदर्थ कानितान्येवजन्मानिकर्माणिचअर्थोयेषांतानि एतान्यपिसाकल्येनज्ञातुमशक्यानीत्याशंक्याह यानिलोकेप्रसिद्धानितानिशृण्वन्गायं श्चविचरेत् असंगोनिस्पृहः ॥ ३९ ॥ एवंभजतःसंप्राप्तप्रेमलक्षणभक्तियोगस्यसंसारधर्मातीतांगतिमाह एवमिति एवंव्रतंवृत्तंयस्यसः स्व प्रियस्यहरेर्नामकीर्त्याजातोऽनुरागःप्रेमयस्यसः अतएवद्रुतचित्तःश्लथहृदयः कदाचिद्भक्तपराजितंभगवंतमाकलय्योच्चैर्हसति एतावंतं कालमुपेक्षितोऽस्मीतिरोदिति अत्यौत्सुक्याद्रौतिक्रोशति अतिहर्षेणगायति जितंजितमितिनृत्यति किंदांभिकवत्परान्प्रतिप्रकाशयितु म् न उन्मादवत्ग्रहगृहीतवत् लोकबाह्योविवशः ॥ ४० ॥ ॥ ॥ ॥

किंच खमिति सत्त्वानिभूतानिआकाशादियत्किंचिद्भूतमात्रंहरेःशरीरमितिमत्वाप्रणमेत् संभावनायांलिङ् ॥ ४१ ॥ नन्वियमारूढयोगानामपिबहुभिर्जन्मभिर्दुर्लभागातिःकथंनामकीर्तनमात्रेणैकस्मिन्नेवजन्मनिभवेदित्याशंक्यसदृष्टांतमाह भक्तिरिति प्रपद्यमानस्यहरिंभजतःपुंसोभक्तिःप्रेमलक्षणा परेशानुभवःप्रेमास्पदभगवद्रूपस्फूर्तिः तयानिर्वृतस्यततोऽन्यत्रगृहादिषुविरक्तिरित्येषत्रिकएककालोभजनसमकालएवस्यात् यथाऽश्नतोभुंजानस्यतुष्टिःसुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्चप्रतिग्रासंस्युः उपलक्षणमेतत् प्रतिसिक्थमपियथास्युस्तद्वत् एवमेकैकस्मिन्भजनेकिंचित्प्रेमादित्रिकेजायमानेनुवृत्त्याभजतःपरमप्रेमादिजायते बहुग्रासभोजिनइवपरमतुष्ट्यादि ॥ ४२ ॥ तत

खंवायुमग्निंसलिलंमहींचज्योतींषिसत्त्वानिदिशोद्रुमादीन् ॥ सरित्समुद्रांश्चहरेःशरीरंयत्किंचभूतंप्रणमेदनन्यः ॥ ४१ ॥ भक्तिःपरेशानुभवोविरक्तिरन्यत्रचैषत्रिकएककालः ॥ प्रपद्यमानस्ययथाऽश्नतःस्युस्तुष्टिःपुष्टिःक्षुदपायोऽनुघासम् ॥ ४२ ॥ इत्यच्युतांघ्रिंभजतोऽनुवृत्त्याभक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवंतिवैभागवतस्यराजंस्ततःपरांशांतिमुपैतिसाक्षात् ॥ ४३ ॥ राजोवाच अथभागवतंब्रूतयद्धर्मोयादृशोनृणाम् ॥ यथाचरतियद्ब्रूतेयैर्लिंगैर्भगवत्प्रियः ॥ ४४ ॥ हरिरुवाच सर्वभूतेषुयःपश्येद्भगवद्भावमात्मनः ॥ भूतानिभगवत्यात्मन्येषभागवतोत्तमः ॥ ४५ ॥ ॥ ॥

श्चभगवत्प्रसादेनकृतार्थोभवतीत्याह इत्यच्युतांघ्रिमिति भागवतस्यभवंतीत्युक्तेतस्यलक्षणंपृच्छति॥४३॥अथेति यद्धर्मःयस्मिन्धर्मेपरिनिष्ठितः यादृशःयत्स्वभावः यथाचरतिवर्ततेब्रूतेवा यैश्चलिंगैर्भगवतःप्रियोभवति ॥ ४४ ॥ यद्धर्मइत्यस्योत्तरमाहत्रयेण सर्वभूतेष्विति आत्मनःस्वस्यसर्वभूतेषुब्रह्मभावेनसमन्वयंपश्येत् तथाब्रह्मरूपेआत्मन्यधिष्ठानेभूतानिचयःपश्येत् यद्वा आततत्वात्प्रमातृत्वादात्माहिपरमोहरिरितितंत्रोक्तेरात्मनोहरेःसर्वभूतेषुमशकादिष्वापिनियंतृत्वेनवर्तमानस्यभगवद्भावंनिरतिशयैश्वर्यमेवयःपश्येन्नतुतस्यतारतम्यं तथात्मनिहराववभूतानिचपश्येत् कथंभूतेभगवति अप्रच्युतैश्वर्यादिरूपेनपुनर्जडमलिनभूताश्रयत्वेनजाड्यादिप्रसक्त्याऐश्वर्यादिप्रच्युतिंपश्येत् ससर्वत्रपरिपूर्णभगवत्तत्त्वंपश्यन्भागवतोत्तमइत्यर्थः ॥ ४५ ॥ ॥ ॥ ॥

प्रेमचमैत्रींचकृपाचउपेक्षाचताःईश्वरादिषुचतुर्षुयःकरोतिसमध्यमोभागवतः एवंभूतस्यभेदस्यदर्शनात् ॥ ४६ ॥ अर्चायांप्रतिमायांपू
जामीहतेकरोतिनतद्भक्तेषुअन्येषुचसुतरांनकरोतिसप्राकृतः प्रकृतिःप्रारंभः अधुनैवप्रारब्धभक्तिःशनैरुत्तमोभविष्यतीत्यर्थः ॥ ४७ ॥ पु
नरष्टभिःश्लोकैरभ्यर्हितत्वादुत्तमभागवतस्यैवलक्षणान्याह गृहीत्वापीति श्रीवासुदेवाविष्टचेतानगृह्णातिताविंद्रियैरर्थान् गृहीत्वाऽपी
त्यपिशब्दार्थः इदंविश्वं ॥ ४८ ॥ किंच देहादीनांसंसारधर्मैर्जन्माप्ययादिभिर्योहरेःस्मृत्याऽविमुह्यमानःसभागवतप्रधानः तत्रदेहस्यज
न्माप्ययौ प्राणस्यक्षुत्पिपासे मनसोभयं बुद्धेस्तर्षस्तृष्णा इंद्रियाणांकृच्छ्रंश्रमस्तैः ॥ ४९ ॥ कामश्चकर्माणिचबीजानिचवासनास्तेषां
वासुदेवएवएकोनिलयआश्रयोयस्यसः एतेनगृहीत्वापीत्यादिश्लोकत्रयेणद्वेषहर्षमोहकामादिरहितश्चरतीतियथाचरतीत्येतस्योत्तरमुक्तं ॥

ईश्वरेतदधीनेषुबालिशेषुद्विषत्सुच ॥ प्रेममैत्रीकृपोपेक्षायःकरोतिसमध्यमः ॥४६॥ अर्चायामेवहरयेपूजां
यःश्रद्धयेहते ॥ नतद्भक्तेषुचान्येषुसभक्तःप्राकृतःस्मृतः ॥४७॥ गृहीत्वापींद्रियैरर्थान्योनद्वेष्टिनहृष्यति॥वि
ष्णोर्मायामिदंपश्यन्सवैभागवतोत्तमः ॥४८॥ देहेंद्रियप्राणमनोधियांयोजन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ॥ सं
सारधर्मैरविमुह्यमानःस्मृत्याहरेर्भागवतप्रधानः ॥ ४९ ॥ नकामकर्मबीजानांयस्यचेतसिसंभवः ॥ वासुदे
वैकनिलयःसवैभागवतोत्तमः ॥ ५० ॥ नयस्यजन्मकर्मभ्यांनवर्णाश्रमजातिभिः ॥ सज्जतेऽस्मिन्नहंभावो
देहेवैसहरेःप्रियः ॥ ५१ ॥नयस्यस्वःपरइतिवित्तेष्वात्मनिवाभिदा ॥सर्वभूतसमःशांतःसवैभागवतोत्तमः॥
॥ ५२ ॥ त्रिभुवनविभवहेतवेऽप्यकुंठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ॥नचलतिभगवत्पदारविंदाल्ल
वनिमिषार्धमपियःसवैष्णवाग्र्यः ॥ ५३ ॥ ॥ ५० ॥ यैर्लिंगैर्भगवत्प्रियइत्यस्योत्तरमाह नयस्येति जन्मसत्कु
लेकर्मतपआदि जातयोऽनुलोमप्रतिलोमजामूर्द्धावसिक्तादयः अस्मिन्देहेअहंकाररहितैःसत्कुलेकर्मादिलिंगैर्हरेःप्रियोभवतीत्यर्थः ॥
॥ ५१ ॥ वित्तेषुस्वीयंपरकीयमितिआत्मनिस्वःपरइति ॥ ५२ ॥ किंचत्रिभुवनविभवहेतवेपित्रैलोक्यराज्यार्थमपिलवार्द्धमपिनिमिषार्धं
मपिभगवत्पदारविंदभजनाद्योनचलतिसवैष्णवाग्र्यः ननुलवार्द्धमात्रभजनापरमेचेत्तावौंल्लाभोभवेत्तत्कुतोनचलेत्तत्राह अकुंठस्मृतिःभ
गवत्पदतोऽन्यत्सारंनास्तीत्येवंरूपाऽकुंठाअनपगतास्मृतिर्यस्यसः भगवत्पदारविंदादन्यत्सारंनास्तीतिकुतःअतआह अजितेहरावेवआ
त्मायेषांतथाभूतैःसुरादिभिरपिदुर्लभात् किंतु केवलंविमृग्यात् तदपेक्षयासर्वस्यतुच्छत्वंस्मरन्योनचलतीत्यर्थः ॥ ५३ ॥ ॥

अपिचविषयाभिसंधिनाचलनंकामेनातिसंतापेसतिभवेत्सतुभगवत्सेवानिवृत्तौनसंभवतीत्याह भगवतइति उरुविक्रमौचतौअंघ्रीचतयोः शाखाअंगुलयस्तासुनखानिचतान्येवमणयस्तेषांचंद्रिकाशीतलादीप्तिस्तयानिरस्तः कामादितापोयस्मिंस्तस्मिन्नुपसीदतांभजतांहृदिक थंपुनःसंतापःप्रभवति चंद्रेउदितेसतिअर्कस्यतापइव नयस्यस्वःपरइत्यादिनाश्लोकत्रयेणयादृशाइत्यस्योत्तरमुक्तंवेदितव्यं यद्भूतेइत्यस्य चहरिनामानीतिज्ञातव्यं ॥ ५४ ॥ उक्तसमस्तलक्षणसारमाह विसृजतीति हरिरेवस्वयंसाक्षाद्यस्यहृदयंनविसृजतिनमुंचाति कथंभूतः अ वशेनाप्यभिहितमात्रोप्यघौघंनाशयतियःसः तर्हिकिंनविसृजति यतःप्रणयरशनयाधृतंहृदयेनिबद्धमंघ्रिपद्मंयस्यसः भागवतप्रधानउक्तोभ वति ॥ ५५ ॥ इत्येका॰टी॰ द्वितीयोऽध्यायः ॥ २ ॥ मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये ॥ तृतीयेतूत्तरंदत्तमार्षभैर्मुनिभिःपृथक् ॥ १ ॥ विष्णो

भगवतउरुविक्रमांघ्रिशाखानखमणिचंद्रिकयानिरस्ततापे ॥ हृदिकथमुपसीदतांपुनःसप्रभवतिचंद्रइवो दितेऽर्कतापः ॥५४॥ विसृजतिहृदयंनयस्यसाक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ॥ प्रणयरशनयाधृतां घ्रिपद्मःसभवतिभागवतप्रधानउक्तः ॥५५॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेनारदवसुदेवसंवा देद्वितीयोऽध्यायः ॥ २ ॥ राजोवाच परस्यविष्णोरीशस्यमायिनामपिमोहिनीं ॥ मायांवेदितुमिच्छामो भगवंतोब्रुवंतुनः ॥१॥ नानुतृप्येजुषन्युष्मद्वचोहरिकथामृतं ॥ संसारतापनिस्तप्तोमर्त्यस्तत्तापभेषजं ॥२॥ अंतरिक्षउवाच एभिर्भूतानिभूतात्मामहाभूतैर्महाभुज ॥ ससर्जोच्चावचान्याद्यःस्वमात्रात्मप्रसिद्धये ॥३॥

मायामिदंपश्यन्नित्युक्तमतोमायांपृच्छति परस्येति हेभगवंतः ॥ १ ॥ ननूक्तलक्षणैर्भागवतोभूत्वाकृतार्थःस्याःकिंबहुप्रश्नैरतआह नानुतृ प्यइति संसारतापैर्नितरांतप्तोहंतस्यतापस्यभेषजंहरिकथामृतरूपंयुष्मद्वचोजुषमाणोनानुतृप्यामि ॥ २ ॥ मायायाःस्वरूपतोनिरूपणा संभवात्सृष्ट्यादिकार्यद्वारेणनिरूपयितुमाह एभिरिति आद्यःपुरुषोययाशक्त्याभूतानामात्माकारणभूतःएभिःसृष्टैर्महाभूतैरुच्चावचानिभूता निससर्ज एषामायाभगवतइतिचरमश्लोकपादस्यप्रतिश्लोकमनुषंगः किमर्थंससर्ज स्वमात्रात्मप्रसिद्धये स्वंमिमीतेप्रमिमीतउपास्तेयः सःस्वमातातस्यात्मनोजीवस्यप्रकृष्टायैसिद्धये यद्वा स्वांशभूतानांजीवानांमात्राप्रसिद्धयेविषयभोगायआत्मप्रसिद्धयेमोक्षायचेत्यर्थःतदुक्तंवे दस्तुरतौ बुद्धींद्रियमनःप्राणान्जनानामसृजत्प्रभुः ॥ मात्राऽर्थंचभवार्थंचआत्मनेकल्पनायचेति ॥ ३ ॥ ॥

एवंजीवोपकारार्थंपंचधातुभिर्महाभूतैः सृष्टानिभूतान्यंतर्यामिरूपेणप्रविष्टएकधामनसादशधाबाह्येंद्रियरूपेणआत्मानंविभजन्गुणांस्तत्त
द्विषयान्जुषतेजोषयतीत्यर्थः यद्वा तमात्मानंप्रतिगुणान्विभजन्जुषतेप्रीयतइत्यर्थः ॥ ४ ॥ सचजीवआत्मनाअंतर्यामिणाप्रद्योतितैर्गुणै
रिंद्रियैर्गुणान्विषयान्भुंजानइदंसृष्टंशरीरमात्मानंमन्यमानइहशरीरादौसज्जते ॥ ५ ॥ कर्मभिःकर्मेंद्रियैश्चसानिमित्तानिसवासनानिकर्माणि
कुर्वंस्तत्तत्पूर्वंकर्मफलंचगृह्णन्नयंदेहभृत्भ्रमतीहसंसारेनतुमुच्यते कथंभूतंकर्मफलं सुखेतरंसुखदुःखात्मकं ॥ ६ ॥ कियंतंकालंभ्रमतितदाह
इत्थमिति बहून्यभद्राणिवहंतीतितथाताः सर्गप्रलयौउत्पत्तिमरणे ॥ ७ ॥ एवंमायामयींसृष्टिमुक्त्वाप्रलयंदर्शयितुमारभते धातूनांम
हाभूतानामुपप्लवेनाशहेतावासन्नेऽव्यक्तंकार्यंद्रव्यंस्थूलंगुणः सूक्ष्मंतदात्मकंअव्यक्तायअव्यक्तंप्रतिनेतुमाकर्षति ॥ ८ ॥ नाशहेतूनाह शतव

एवंसृष्टानिभूतानिप्रविष्टःपंचधातुभिः ॥ एकधादशधात्मानंविभजन्जुषतेगुणान् ॥ ४ ॥ गुणैर्गुणान्स
भुंजानआत्मप्रद्योतितैःप्रभुः ॥ मन्यमानइदंसृष्टमात्मानमिहसज्जते ॥ ५ ॥ कर्माणिकर्मभिःकुर्वन्सानिमि
त्तानिदेहभृत् ॥ तत्तत्कर्मफलंगृण्हन्भ्रमतीहसुखेतरं ॥ ६ ॥ इत्थंकर्मगतीर्गच्छन्बह्वभद्रवहाःपुमान् ॥ आ
भूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ॥ ७ ॥ धातूपप्लवआसन्नेव्यक्तंद्रव्यगुणात्मकं ॥ अनादिनिधनःकालो
ह्यव्यक्तायापकर्षति ॥ ८ ॥ शतवर्षाह्यनावृष्टिर्भविष्यत्युल्बणाभुवि ॥ तत्कालोपचितोष्णार्कोलोकांस्त्रीन्प्र
तपिष्यति ॥ ९ ॥ पातालतलमारभ्यसंकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखोविष्वग्वर्धतेवायुनेरितः ॥ १० ॥ सां
वर्तकोमेघगणोवर्षतिस्मशतंसमाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयतेसलिलेविराट् ॥ ११ ॥ ततोविराजमु
त्सृज्यवैराजःपुरुषोनृप ॥ अव्यक्तंविशतेसूक्ष्मंनिरिंधनइवानलः ॥ १२ ॥ ॥ ॥

र्षंति तस्मिन्कालेउपचितश्चासौउष्णश्चासावर्कश्च यद्वा तेनकालेनोपचितमुष्णत्वंयस्यसः ॥ ९ ॥ ऊर्ध्वशिखऊर्ध्वज्वालः विष्वक्स
र्वतः ॥ १० ॥ सांवर्तकःप्रलयकर्ता धाराभिर्नतुबिंदुभिः हस्तिहस्ताभिस्तत्प्रमाणाभिः ॥ ११ ॥ ततउपाधिलयाद्वैराजःपुरुषोऽव्यक्तंका
रणंप्रविशति ननुब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदमितिस्मृतेर्यावदधिकारमवस्थितिरधिकारिणा
मितिन्यायाच्चवैराजशब्दाभिधेयस्यचब्रह्मणःपरमभागवतत्वान्मोक्षएवसंगच्छतेनान्येषामिवकारणमात्रप्रवेशः सत्यं अश्वमेधादिनासत्य
लोकंगतानामप्यभक्तानामावृत्तिश्रवणादभक्तत्वेचब्रह्मणोऽपिप्रकृतौलयःपुनरुत्पत्तिश्चेतिमोक्षदौर्लभ्यसूचनायैवमुक्तमित्यविरोधः यद्वा
केनापिप्रमाणेननव्यज्यतइत्यव्यक्तंब्रह्मैवतत्प्रवेशेनचमोक्षएवोक्तइतिद्रष्टव्यं ॥ १२ ॥ ॥ ॥ ॥

एवंविराजोलयमुक्त्वातत्कारणानांमहदादिपृथिव्यंतानांप्रातिलोम्येनलयमाह वायुनेति वायोर्हिगंधरसहारित्वंप्रसिद्धं सांवर्तकेनवायुना हृतगंधाअतएवगंधस्यव्यावर्तकस्यगतत्वात्सलिलत्वायकल्पतेसलिलेलीयतइत्यर्थः तद्धृतरसंतेनवायुनैवहृतोरसोयस्यतत् ॥ १३ ॥ तमसश्चरूपतिरस्कारित्वंप्रसिद्धं सांवर्तकेनतमसा अवकाशेनआकाशेनस्वकारणेन ॥ १४ ॥ कालात्मना शब्दस्यहिकालतएवनाशः प्रसिद्धः तद्रूपेणात्मनाइश्वरेणआत्मानितामसाहंकारं इंद्रियाणिबुद्धिश्चराजसाहंकारं मनोवैकारिकैर्देवैःसहसात्विकाहंकारे एवंत्रिविधैः स्वगुणैःस्वकार्यैःसहितःअहमहंकारआत्मनिमहतिसचप्रकृताविति द्रष्टव्यं ॥ १५ ॥ त्रिवर्णात्रिगुणामायाश्रवणभीतंराजानंतन्निवृत्त्युपाय

वायुनाहृतगंधाभूःसलिलत्वायकल्पते ॥ सलिलंतद्धृतरसंज्योतिष्ट्वायोपकल्पते ॥ १३ ॥ हृतरूपंतुतमसा वायौज्योतिःप्रलीयते ॥ हृतस्पर्शोऽवकाशेनवायुर्नभसिलीयते ॥ १४ ॥ कालात्मनाहृतगुणंनभआत्मनिलीयते ॥ इंद्रियाणिमनोबुद्धिःसहवैकारिकैर्नृप ॥ प्रविशंतिह्यहंकारंस्वगुणैरहमात्मनि ॥ १५ ॥ एषामायाभगवतःसर्गस्थित्यंतकारिणी ॥ त्रिवर्णावर्णितास्माभिःकिंभूयःश्रोतुमिच्छसि ॥ १६ ॥ राजोवाच यथैतामैश्वरींमायांदुस्तरामकृतात्मभिः ॥ तरंत्यंजःस्थूलधियोमहर्षइदमुच्यतां ॥ १७ ॥ प्रबुद्धउवाच कर्माण्यारभमाणानांदुःखहत्यैसुखायच ॥ पश्येत्पाकविपर्यासंमिथुनीचारिणांनृणां ॥ १८ ॥ नित्यार्तिदेनवित्तेनदुर्लभेनात्ममृत्युना ॥ गृहापत्याप्तपशुभिःकाप्रीतिःसाधितैश्चलैः ॥ १९ ॥

श्रवणेछंदयति किंभूयइति ॥ १६ ॥ एवमनुकंपितस्तन्निवृत्त्युपायमेवपृच्छति यथैतामिति यद्यपितन्मायया ऽतोबुधआभजेत्तामितिभक्तिस्तत्तारकत्वेनोक्तैवतथाऽपिकिंभक्तिरेवअन्योपिवातत्रोपायोस्तीतिज्ञातुंपुनःप्रश्नः अकृतात्मभिरवशीकृतांतःकरणैः स्थूलधियः स्थूलेशरीरेअहंधीर्येषांते ॥ १७ ॥ भक्तिव्यतिरेकेणनास्त्यन्यउपायइत्यभिप्रेत्यभक्तिमेवससाधनांनिरूपयति तत्रप्रथमंवैराग्यद्वारागुरूपसत्तिमाहचतुर्भिः कर्माणीति दुःखहत्यैदुःखप्रतीकारायपाकविपर्यासंफलवैपरीत्यं मिथुनीचारिणांमिथुनीभूयप्रवर्तमानानां ॥ १८ ॥ कर्मभिः साधिताअपिवित्तादयोनसुखहेतवइतिचपश्येदित्याह नित्यार्त्तिदेनेति आत्मनःस्वस्यमृत्युरूपेण चलैरनित्यैरपायिभिश्च ॥ १९ ॥

एवंलोकंपरमिति कर्मनिर्मितत्वान्नश्वरं तथाचश्रुतिः तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयतइति किंच वर्त मानसमयेपिदुःखयुक्तंपश्येदित्याह सतुल्यातिशयध्वंसं सहतुल्येनअतिशयेनध्वंसेनचवर्तमानम् अतस्तुल्येस्पर्द्धाअतिशयेअसूयाध्वंसा लोचनैर्भयादिकंचापरिहार्यमित्यर्थः यथाखंडमंडलपतीनांमिथःस्पर्द्धादितद्वत् ॥ २० ॥ उत्तमंश्रेयोज्ञातुमिच्छुःशाब्देब्रह्मणिवेदाख्येन्या यतोनिष्णातंतत्त्वज्ञं अन्यथासंशयनिरासकत्वायोगात् परेचब्रह्मणिअपरोक्षानुभवेननिष्णातमन्यथाबोधसंचारायोगात् परब्रह्मनिष्णा तत्वद्योतकमाह उपशमाश्रयमिति ॥ २१ ॥ गुरुरेवात्मादैवतंचयस्यसः अनुवृत्यासेवया यैर्धर्मैः वस्तुतआत्माआत्मप्रदश्चोपासकानां यथाबालिप्रभृतीनां ॥ २२ ॥ यथोचितमिति हीनेषुदयांसमेषुमैत्रीमुत्तमेषुप्रश्रयंचशिक्षेदित्यर्थः ॥ २३ ॥ शौचंबाह्यंमृज्जलादिभिः आ

**एवंलोकंपरंविद्यान्नश्वरंकर्मनिर्मितं ॥ सतुल्यातिशयध्वंसंयथामंडलवर्तिनां ॥ २० ॥ तस्माद्गुरुंप्रपद्येतजि ज्ञासुःश्रेयउत्तमं ॥ शाब्देपरेचनिष्णातंब्रह्मण्युपशमाश्रयं ॥२१॥ तत्रभागवतान्धर्मान्शिक्षेद्गुर्वात्मदैवतः॥ अमाययानुवृत्त्यायैस्तुष्येदात्मात्मदोहरिः ॥२२॥ सर्वतोमनसोसंगमादौसंगंचसाधुषु ॥ दयांमैत्रींप्रश्रयं चभूतेष्वद्धायथोचितं ॥ २३ ॥ शौचंतपस्तितिक्षांचमौनंस्वाध्यायमार्जवं ॥ ब्रह्मचर्यमहिंसांचसमत्वंद्वंद्वसं ज्ञयोः ॥ २४ ॥ सर्वत्रात्मेश्वरान्वीक्षांकैवल्यमनिकेततां ॥ विविक्तचीरवसनंसंतोषोयेनकेनचित् ॥ २५ ॥ श्रद्धांभागवतेशास्त्रेऽनिंदामन्यत्रचापिहि ॥ मनोवाक्कर्मदंडंचसत्यंशमदमावपि ॥२६॥ श्रवणंकीर्तनंध्या नंहरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानांचतदर्थेऽखिलचेष्टितं ॥ २७ ॥**

भ्यंतरंचादंभामानादिशिक्षेत् तपःस्वधर्माचरणं तितिक्षांक्षमां मौनंवृथावाचामनुच्चारणं स्वाध्यायमधिकारानुरूपंवेदपाठादिकंआर्ज वंस्वच्छतां ब्रह्मचर्यंयस्ययादृगुचितमृतुकालेस्वदारनियमादिअहिंसांभूतेष्वद्रोहं द्वंद्वसंज्ञयोःशीतोष्णसुखदुः खादिरूपयोः हर्षविषाद राहित्यं ॥ २४ ॥ आत्मेश्वरान्वीक्षांसाक्षिद्रूपेणात्मेक्षां नियंतृरूपेणेश्वरान्वीक्षां कैवल्यमेकांतशीलत्वं अनिकेततांगृहाद्यभिमानराहि त्यं विविक्तचीरवसनं विजनपतितानांवस्त्रखंडानांशुद्धानांवावल्कलानांपरिधानं ॥ २५ ॥ भागवतेभगवत्प्रतिपादके अन्यत्रशास्त्रादौ याअनिंदातां मनसःप्राणायामैर्वाचोमौनेनकर्मणोऽनीहयादंडं सत्यंयथार्थभाषणं शमदमौअंतःकरणबाह्येंद्रियनिग्रहौ ॥ २६ ॥ हरेर्ज न्मकर्मगुणानांश्रवणादि तदर्थेहर्युद्देशेनसर्वंकर्मविशेषतश्चयजनादियत्तत्तदर्थेशिक्षेत् ॥ २७ ॥

इष्टंदत्तमित्यादयोभावेनिष्ठाः वृत्तंसदाचारः आत्मनःप्रियंगंधपुष्पादि दारादीनप्याल्लक्ष्यपरस्मैनिवेदनंतत्सेवकतयासमर्पणंयत्तच्छिक्षेत् ॥ २८ ॥ कृष्णएवात्मानाथश्चयेषां कृष्णश्चात्मनोजीवस्यनाथोयेषामितिवा तेषुउभयत्रस्थावरेजंगमेचयापरिचर्यातां विशेषतोनृषु तत्रापिसाधुषुस्वधर्मशीलेषु ततोपिमहत्सुश्रीभागवतेषु ॥ २९ ॥ तैश्चसहसंगम्ययत्पावनंभगवद्यशस्तस्यपरस्परानुकथनंशिक्षेत् यद्वायशःप्रतितत्रसंस्पर्धादिपरित्यागेनमिथोयारतिःरमणंयाचतुष्टिःसुखंयाचनिवृत्तिःसमस्तदुःखनिवृत्तिस्तांचशिक्षेत् ॥ ३० ॥ एवंवर्तमानानांपरमानंदप्राप्तिमाह स्मरंतइतिद्वयेन भक्त्यासाधनभक्त्यासंजातयाप्रेमलक्षणयाभक्त्या ॥ ३१ ॥ अजंहरिमनुशीलयंतितल्लीलामभिनयंति एवंपरमेत्यप्राप्यनिर्वृताःसंतस्तूष्णींभवंति ॥ ३२ ॥ उपसंहरति इतीति भागवतधर्मोत्पन्नयाभक्त्या ॥ ३३ ॥ नारायणपरोमायांतरती

**इष्टंदत्तंतपोजप्तंवृत्तंयच्चात्मनःप्रियं ॥ दारान्सुतान्गृहान्प्राणान्यत्परस्मैनिवेदनं ॥ २८ ॥ एवंकृष्णात्मनाथेषुमनुष्येषुचसौहृदं ॥ परिचर्यांचोभयत्रमहत्सुनृषुसाधुषु ॥ २९ ॥ परस्परानुकथनंपावनंभगवद्यशः ॥ मिथोरतिर्मिथस्तुष्टिर्निवृत्तिर्मिथआत्मनः ॥ ३० ॥ स्मरंतःस्मारयंतश्चमिथोऽघौघहरंहरिं ॥ भक्त्यासंजातयाभक्त्याबिभ्रत्युत्पुलकांतनुं ॥ ३१ ॥ क्वचिद्रुदंत्यच्युतचिंतयाक्वचिद्धसंतिनंदंतिवदंत्यलौकिकाः ॥ नृत्यंतिगायंत्यनुशीलयंत्यजंभवंतितूष्णींपरमेत्यनिर्वृताः ॥ ३२ ॥ इतिभागवतान्धर्मान्शिक्षन्भक्त्यातदुत्थया ॥ नारायणपरोमायामंजस्तरतिदुस्तरां ॥ ३३ ॥ राजोवाच नारायणाभिधानस्यब्रह्मणःपरमात्मनः ॥ निष्ठामर्हथनोवक्तुंयूयंहिब्रह्मवित्तमाः ॥ ३४ ॥ पिप्पलायनउवाच स्थित्युद्भवप्रलयहेतुरहेतुरस्ययत्स्वप्नजागरसुषुप्तिषुसद्बहिश्च ॥ देहेंद्रियासुहृदयानिचरंतियेनसंजीवितानितदवेहिपरंनरेंद्र ॥ ३५ ॥**

त्युक्तेपृच्छति नारायणाभिधानस्येति निष्ठांस्वरूपं अयंभावः ब्रह्मैवतावन्नारायणइतिभगवानितिपरमात्मेतिचोच्यते तदुक्तंवदंतितत्तत्त्वविदस्तत्त्वंयज्ज्ञानमद्वयं ॥ ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यतइति तथा नारायणेभगवतितदिदंविश्वमाहितं ॥ गृहीतमायोरुगुणःस्वतइत्यादिषु तत्रकिमेभिः शब्दैर्निर्विशेषंतदेववस्तूच्यतेअस्तिवाकोपिविशेषांशइति ॥ ३४ ॥ अत्रोत्तरं स्थित्युद्भवेति अयमर्थः अस्यविश्वस्यस्थित्युद्भवप्रलयानांहेतुःस्वयंचअहेतुःहेतुरहितःसनारायणइतिपरमेवतत्त्वमवेहि स्वप्नजागरसुषुप्तिषुसत्अनुवर्तमानंयत्वक्ष्यतिचतुरीयंत्रिषुसंततमिति बहिश्चसमाध्यादौयत्सत्तद्ब्रह्मेतिपरमेवतत्त्वमवेहि देहेंद्रियप्राणमनांसियेनजीवितानिसंतिचरंतिप्रवर्तंतेतत्परमात्मेतिपरमेवतत्त्वमवेहि एवंलक्षणभेदैर्नारायणादिनामभिरुच्यमानमपिपरमेकमेवतत्त्वंजानीहि ॥ ३५ ॥

अवेहीत्यनेनविषयत्वंप्राप्तंनिषेधति नैतदिति एतत्परंतत्त्वंमनोनविशतिनविषयीकरोति वागुतवागपिचक्षुश्चआत्माबुद्धिश्चप्राणश्चक्रिया
शक्त्यानप्राप्नोतिअन्यानिचेंद्रियाणि यथाऽनलंस्वाःस्वांशभूताअर्चिषोविस्फुलिंगादयोनप्रकाशयंतिनदहंतिचतथाजडासुमनआदिवृत्ति
ष्वाभिव्यज्यमानस्यात्मप्रकाशस्यचतत्तद्वृत्तिप्रकाशकस्यनतत्प्रकाशविषयत्वं प्राणस्यप्राणमुतचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रमन्नस्यान्नंमनसो
येमनोविदुरिति तथा यतोवाचोनिवर्त्ततेअप्राप्यमनसासहेत्यादिश्रुतेः ननुतंत्वौपनिषदंपुरुषंपृच्छामीतिश्रुतेःशब्दगोचरत्वंप्रतीयतेतत्राह
शब्दोपीति शब्दोपिआत्ममूलमात्मानिप्रमाणंसत् अर्थोक्तमर्थादुक्तंयथाभवतितथाआहनसाक्षात् कुतः बोधकनिषेधतयास्वस्यैवबोधकनि
षेधरूपत्वात् यतोवाचोनिवर्त्ततेअप्राप्यमनसासह यद्वाचाऽनभ्युदितंयेनवागभ्युद्यतेतदेवब्रह्मत्वंविद्धि यन्मनोनमनुते नचक्षुषापश्यति
कश्चनैनमित्यादिश्रुतेः ननुतर्हिनैवाहश्रुतिःकिमिदमुच्यतेअर्थोक्तमाहेतितत्राह यदृतइति अथातआदेशोनेतिनेति अस्थूलमनणु यतो

**नैतन्मनोविशतिवागुतचक्षुरात्माप्राणेंद्रियाणिचयथाऽनलमर्चिषःस्वाः ॥ शब्दोऽपिबोधकनिषेधतयात्म मूलमर्थोक्तमाहयदृतेननिषेधसिद्धिः ॥ ३६ ॥ सत्वंरजस्तमइतित्रिवृदेकमादौसूत्रंमहानहमितिप्रवदंति जीवं ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्तिब्रह्मैवभातिसदसच्चतयोःपरंयत् ॥ ३७ ॥**

वाचोनिवर्त्तते यद्वाचानभ्युदितमित्यादिनिषेधस्ययदवधिभूतंब्रह्मऋतेविनासिद्धिर्नास्ति सर्वस्यनिषेधस्यसावधित्वात् ॥ ३६ ॥ ननुत
र्हिप्रमाणाविषयत्वान्नास्तिब्रह्मेतिप्रसज्येतातआह सत्त्वमिति सत् स्थूलंकार्यंअसत् सूक्ष्मंकारणंतत्सर्वंब्रह्मैवभाति कुतः यत् यस्मात् तयोः
सदसतोःपरंकारणं ननुकथमेकंबहुविधस्यकारणंतत्राह उरुशक्तिअनेकशक्तिमत् उरुर्महतीमायालक्षणाशक्तिर्यस्यतदितिवा बहुधाभा
नमेवदर्शयति आदौयदेकंब्रह्मतदेवसत्वंरजस्तमइतित्रिवृत्प्रधानंप्रवदंति ततःक्रियाशक्त्यासूत्रंज्ञानशक्त्यामहानितितदेवप्रवदंति ततः
अहमितिजीवंजीवोपाधिमहंकारंचतदेवप्रवदंति ततश्चज्ञानंक्रियाऽर्थफलरूपतयाज्ञानशब्देनदेवताःक्रियाःइंद्रियाणिअर्थाविषयाःफलं
तत्प्रकाशःसुखादिवातद्रूपतयाब्रह्मैवभाति नहिसर्वस्वरूपेणस्वतोभासमानस्यब्रह्मणःस्वसिद्धौप्रमाणापेक्षेतिभावः ॥ ३७ ॥ ॥

ननुसर्वात्मकंचेद्ब्रह्मतर्हिसर्वस्यकार्यस्यजन्मादिविकारवत्त्वाद्ब्रह्मणोऽपितत्प्रसंगःस्यादतआह नात्मेति आत्माब्रह्मनजजाननजातः
जन्माभावादेवतदनंतरास्तितालक्षणोपिविकारोनास्ति नैधतेनवर्धते वृध्यभावादेवविपरिणामोपिनिरस्तः कुतः हियस्मात्व्यभिचारि
णामागमापायिनांबाल्युवादिदेहानांसवनवित्तत्तत्कालद्रष्टा नह्यवस्थावतांद्रष्टातदवस्थोभवतीत्यर्थः ननुनिरवस्थःकोसावात्माअत
आह उपलब्धिमात्रमिति नन्वायातंतर्हिक्षणिकत्वंनेत्याह सर्वत्रेति सर्वत्रदेशेशश्वत्सर्वदाअनपायिअनुवर्तमानं ननुनीलज्ञानंजातंपी
तज्ञानंनष्टमितिप्रतीतेर्नज्ञानस्यानपायित्वमतआह इंद्रियबलेनेति सदेवज्ञानमिंद्रियबळेनविविधंकल्पितंनीलाद्याकारावृत्तयएवजायं
तेनश्यंतिचनज्ञानमितिभावः व्यभिचारिष्वव्यभिचारेदृष्टांतः प्राणोयथेति ॥ ३८ ॥ दृष्टांतंविवृण्वन्निंद्रियादिलयेननिर्विकारात्मोपल
ब्धिंदर्शयति अंडेष्विति पेशिषुजरायुजेषुतरुषुउद्भिज्जेषुअविनिश्चितेषुस्वेदजेषुउपधावतिअनुवर्तते एवंदृष्टांतेनिर्विकारत्वंप्रदर्श्यदा
र्ष्टांतिकेपिदर्शयति कथं तदैवात्मासविकारइवप्रतीयते यद्यदाजागरेइंद्रियगणोयदाचस्वप्नेतत्संस्कारवानहंकारोयदातुप्रसुप्तंतदातस्मिन्प्र

नात्माजजाननमरिष्यतिनैधतेऽसौनक्षीयतेसवनविद्व्यभिचारिणांहि ॥ सर्वत्रशश्वदनपाय्युपलब्धिमात्रंप्रा
णोयथेंद्रियबलेनविकल्पितंसत् ॥३८॥ अंडेषुपेशिषुतरुष्वविनिश्चितेषुप्राणोहिजीवमुपधावतितत्रतत्र॥स
न्नेयदिंद्रियगणेहमिचप्रसुप्तेकूटस्थआशयमृतेतदनुस्मृतिर्नः ॥३९॥ यर्ह्यब्जनाभचरणैषणयोरुभक्त्याचेतो
मलानिविधमेद्गुणकर्मजानि॥तस्मिन्विशुद्धउपलभ्यतआत्मतत्त्वंसाक्षाद्यथाऽमलदृशोःसवितृप्रकाशः४०

सुप्तेइंद्रियगणेसन्नेलीनेअहमि अहंकारेचसन्नेकूटस्थोनिर्विकारएवात्मा कुतः आशयमृतेलिंगशरीरमुपाधिंविना विकारहेतोरुपाधेर
भावादित्यर्थः नन्वहंकारपर्यंतस्यसर्वस्यलयेशून्यमेवावशिष्येततत्कथंतदाकूटस्थआत्माअतआह तदनुस्मृतिर्नः तस्यविशेषज्ञानशून्य
स्यसुखात्मनःसुषुप्तिसाक्षिणःस्मृतिर्नोऽस्माकंभवतिएतावंतंकालंसुखमहंसुप्तोनकिंचिदवेदिषमिति अतोऽननुभूतस्यास्मरणादस्त्येवसुषु
प्तावात्मानुभवोविषयसंबंधाभावात्तुनस्पष्टइतिभावः तथाचश्रुतिः यद्वैतन्नपश्यतिपश्यन्वैतद्द्रष्टव्यंनपश्यति नहिद्रष्टुर्दृष्टेर्विपरिलोपोवि
द्यतइति ॥ ३९ ॥ ननुयदिसुषुप्तौकूटस्थात्मानुभवोभवेत्कथंपुनरपिसंसारःस्यात् अविद्यातत्संस्काराणांविद्यमानत्वादितिचेत्कदात
र्हितन्निवर्तकोऽनुभवोभवेदतआह यर्हीति वित्तैषणादिविहायकेवलमब्जनाभस्यैवचरणेच्छयायाउरुभक्तिस्तयापुमान्चेतसोमलानिवि
धमेत्नाशयेत् चेतएववाकर्तृ स्वगतानिमलानितयाभक्त्याक्षाळयेत् तदातस्मिन्विशुद्धेचेतसिसतिसाक्षादव्यवधानेनआत्मतत्त्वमुपल
भ्यतेअमलयोर्दृशोःसत्योर्यथापूर्वमेवसिद्धःसवितृप्रकाशइति ॥ ४० ॥ ॥ ॥ ॥

भक्तेःकर्मयोगाधीनत्वात्तंपृच्छति कर्मयोगमिति नैष्कर्म्यंकर्मनिवृत्तिसाध्यंज्ञानं ॥ ४१ ॥ प्रश्नांतरमाह एवमिति प्रश्नंप्रष्टव्यमर्थं पितुः इक्ष्वाकोः ब्रह्मणःपुत्राःसनकादयःसर्वज्ञाअपिनाब्रुवन् ॥ ४२ ॥ गहनत्वद्योतनायप्रथमंद्वितीयप्रश्नस्योत्तरमाह कर्मेति कर्मविहितं अकर्मतद्विपरीतंनिषिद्धं विकर्मविगतंकर्मविहिताकरणम् एतत्त्रयंवेदवादोवेदैकगम्यंनलौकिकं ईश्वरात्मत्वात्ईश्वरादुद्भूतत्वात् अपौरुषेयत्वादित्यर्थः पुंवाक्येहिवक्तुरभिप्रायतोऽर्थज्ञानंशक्यंअपौरुषेयेतुकेवलंवाक्यपौर्वापर्येणैवतात्पर्यावधारणंतच्चदुष्करमितितत्रकर्मादौ विद्वांसोऽपिमुह्यंतिकिमुतान्येअतस्तवतदाबालत्वान्नैवाब्रुवन्निति ॥ ४३ ॥ दुर्ज्ञेयंवेदतात्पर्यमाह परोक्षवादइति यत्रान्यथास्थितोऽर्थः संगोपयितुमन्यथारूत्वोच्यतेसपरोक्षवादः तथाचश्रुतिः तंवाएतंचतुर्हूतꣳसंतं चतुर्होतेत्याचक्षतेपरोक्षेण परोक्षप्रियाइवाहिदेवाइतिपरो

राजोवाच कर्मयोगंवदतनःपुरुषोयेनसंस्कृतः ॥ विधूयेहाशुकर्माणिनैष्कर्म्यंविंदतेपरम् ॥४१॥ एवं प्रश्नमृषीन्पूर्वमपृच्छंपितुरंतिके ॥ नाब्रुवन्ब्रह्मणःपुत्रास्तत्रकारणमुच्यतां ॥ ४२ ॥ आविर्होत्रउवाच कर्माकर्मविकर्मेतिवेदवादोनलौकिकः ॥ वेदस्यचेश्वरात्मत्वात्तत्रमुह्यंतिसूरयः ॥ ४३ ॥ परोक्षवादोवेदोऽयंबालानामनुशासनं ॥ कर्ममोक्षायकर्माणिविधत्तेह्यगदंयथा ॥ ४४ ॥ नाचरेद्यस्तुवेदोक्तंस्वयमज्ञोजितेंद्रियः ॥ विकर्मणाह्यधर्मेणमृत्योर्मृत्युमुपैतिसः ॥ ४५ ॥

क्षवादत्वमेवाह कर्ममोक्षायेति ननुस्वर्गाद्यर्थंकर्माणिविधत्तेनकर्ममोक्षार्थंतत्राह बालानामनुशासनंयथाभवतितथा अत्रदृष्टांतः अगदमौषधंयथा पिताबालमगदंपाययन्खंडलड्डुकादिभिः प्रलोभयन्पाययतिददातिचतानि नैतावताऽगदपानस्यतल्लाभःप्रयोजनमपित्वारोग्यं तथावेदोऽप्यवांतरफलैः प्रलोभयन्कर्ममोक्षायैवकर्माणिविधत्ते ॥ ४४ ॥ ननुकर्ममोक्षश्चेत्पुरुषार्थस्तर्हिप्रथममेवकर्मत्यज्यतामतआह नाचरेदिति अजितेंद्रियत्वादज्ञःस्वयंयदिनाचरेत्तर्हिविकर्मणाकर्मानाचरणलक्षणेनाधर्मेणमृत्योरनंतरंमृत्युमेवप्राप्नोतितथाचश्रुतिःमृत्वापुनर्मृत्युमापद्यंतेअद्यमानाःस्वकर्मभिरिति ॥ ४५ ॥ ॥ ॥ ॥ ॥

तस्माद्वेदोक्तमेवकुर्वाणोनतुनिषिद्धं ननुकर्मणिक्रियमाणेतस्मिन्नासक्तिस्तत्फलंचस्यान्नतुनैष्कर्म्यरूपासिद्धिरतआह निःसंगः अनाभि निवेशवान् ईश्वरेऽर्पितंनतुफलोद्देशेन ननुफलस्यश्रुतत्वात्कर्मणिकृतेफलंभवेदेव न रोचनार्थेति कर्मणिरुच्युत्पादनार्थमगदपानेखंडल ड्डुकादिवत् ततश्चकर्माभिरुच्यावेदार्थंसम्यग्विचारयति तदाचयोवाएतदक्षरमविदित्वागार्ग्यस्माल्लोकात्प्रैतिसकृपणइत्यनात्मज्ञस्यैव कृपणतां तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतिब्रह्मचर्येणतपसाश्रद्धयायज्ञेनानाशकेनेतियज्ञादीनांज्ञानशेषतांचावधार्यनिष्कामेषुकर्म सुप्रवर्तते ततश्चस्वर्गकामोयजेतेत्यादिभिःकामितस्यैवस्वर्गादेःफलत्वेनावगमादकामितोऽसौनभवतीतिनैष्कर्म्यसिद्धिर्भवतीतिभावः ॥ ४६ ॥ वैदिकंकर्मयोगमुक्त्वातांत्रिकमाह यआश्विति परात्मनः परस्यैवसतआत्मनोजीवस्यहृदयग्रंथिमहंकारबंधंनिर्हर्तुमिच्छुःसंस्तं

वेदोक्तमेवकुर्वाणोनिःसंगोऽर्पितमीश्वरे॥नैष्कर्म्यांलभतेसिद्धिंरोचनार्थाफलश्रुतिः ॥४६॥ यआशुहृदयग्रं थिंनिर्जिहीर्षुःपरात्मनः॥विधिनोपचरेद्देवंतंत्रोक्तेनचकेशवं॥४७॥लब्धानुग्रहआचार्यात्तेनसंदर्शितागमः॥ महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयात्मनः॥४८॥शुचिःसंमुखमासीनःप्राणसंयमनादिभिः॥पिंडंविशोध्यसं न्यासकृतरक्षोर्चयेद्धरिम्॥४९॥अर्चादौहृदयेचापियथालब्धोपचारकैः ॥ द्रव्यक्षित्यात्मलिंगानिनिष्पाद्य प्रोक्ष्यचासनं॥५०॥पाद्यादीनुपकल्प्याथसन्निधाप्यसमाहितः॥हृदादिभिःकृतन्यासोमूलमंत्रेणचार्चयेत्॥ ॥ ५१ ॥ सांगोपांगांसपार्षदांतांतांमूर्तिंस्वमंत्रतः ॥ पाद्यार्घ्याचमनीयाद्यैःस्नानवासोविभूषणैः ॥ ५२ ॥

त्रोक्तेनचविधिनाप्रकारेणभजेत् तंत्रमागमः चकाराद्वैदिकेनसहसमुच्चयमाह ॥ ४७ ॥ तमेवविधिमाह लब्धानुग्रहइत्यादिना तेनाचार्ये णसंदर्शितआगमःअर्चनप्रकारोयस्यसः ॥ ४८ ॥ मूर्तेःसंमुखमासीनः आदिशब्देनभूतशुद्ध्यादिभिःपिंडंदेहंविशोध्यसंन्यासैःसान्नि न्यासैःकृतारक्षायेनसः ॥ ४९ ॥ आदावेवद्रव्याणिपुष्पादीनिजंत्वादिशोधनेनक्षितिंसंमार्जनादिनाआत्मानमव्यग्रतयालिंगंमूर्तिमनुलेप क्षालनादिनानिष्पाद्ययोग्यानिकृत्वा ॥ ५० ॥ पाद्यादिपात्राण्युपकल्प्यसन्निधाप्यहृदिसंपूजितंश्रीमूर्तौध्यात्वाहृदादिभिःहृदयशिरःशि खाकवचनेत्रास्त्रमंत्रैर्मूलमंत्रेणचदेवेकृतन्यासोमूलमंत्रेणार्चयेत् ॥ ५१ ॥ अंगानिहृदयादीनि उपांगानिसुदर्शनादीनितत्सहितां सपा र्षदांसपरिवारां कैरुपचारैरर्चयेत्तदाह पाद्येति आदिशब्देनमधुपर्कमाचमनंच ॥ ५२ ॥ ॥

अक्षतास्तिलकालंकारेनतुपूजायां नाक्षतैरर्चयेद्विष्णुंनकेतक्यामहेश्वरमिति।निषेधात् उपहारोनैवेद्यं ॥ ५३ ॥ शेषांनिर्माल्यं स्वधाम्नि
स्वस्थाने देवंहृदिमूर्तिकरंडकेउद्वास्यस्थापयित्वापूजाविधिंसमापयेदितिशेषः ॥ ५४ ॥ तांत्रिकंकर्मयोगमुपसंहरति एवमिति ॥ ५५ ॥
इतिश्रीभा०म०एका०टी०तृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ चतुर्थेत्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ॥ जयंतीनंदनोनाम्ना द्रुमिलोनवसत्तमः
॥ १ ॥ मूर्त्याभिमतयात्मनइत्यनेनात्मनःप्रियमवतारंपूजयेदित्युक्तेऽवतारज्ञानमपेक्षितंतथास्तवैःस्तुत्वानमेद्धरिमित्युक्तेगुणकर्मज्ञानंचा
पेक्षितमतःपृच्छति यानियानीति कर्ताकरिष्यति ॥ १ ॥ त्वयापृष्टानिकालत्रयसंबंधिसकलावतारगुणकर्माणिकथयितुमशक्यानि सं
क्षेपतस्तुकानिचित्कथयिष्यामीत्याह योवाइत्यादिना अनुक्रमिष्यन्गणयितुमिच्छातियःसतुबालानामिवबुद्धिर्यस्यसमंदमतिःकाले

गंधमाल्याक्षतस्त्रग्भिर्धूपदीपोपहारकैः ॥ सांगंसंपूज्यविधिवत्स्तवैःस्तुत्वानमेद्धरिं ॥ ५३ ॥ आत्मानंत
न्मयंध्यायन्मूर्तिंसंपूजयेद्धरेः ॥ शेषामाधायशिरसिस्वधाम्न्युद्वास्यसत्कृतं ॥ ५४ ॥ एवमग्न्यर्कतोयादावतिथौ
हृदयेचयः ॥ यजतीश्वरमात्मानमचिरान्मुच्यतेहिसः ॥ ५५ ॥ इतिश्रीभा०म०एकादशस्कंधेतृतीयोध्या
यः ॥ ३ ॥ ॥ ॥ राजोवाच यानियानीहकर्माणियैर्यैःस्वच्छंदजन्मभिः ॥ चक्रेकरोतिकर्तावाहरिस्तानि
ब्रुवंतुनः ॥ १ ॥ द्रुमिलउवाच योवाअनंतस्यगुणाननंताननुक्रमिष्यन्सतुबालबुद्धिः ॥ रजांसिभूमेर्गणये
त्कथंचित्कालेननैवाखिलशक्तिधाम्नः ॥ २ ॥ भूतैर्यदापंचभिरात्मसृष्टैःपुरंविराजंविरचय्यतस्मिन् ॥ स्वांशे
नविष्टःपुरुषाभिधानमवापनारायणआदिदेवः ॥ ३ ॥ यत्कायएषभुवनत्रयसन्निवेशोयस्येंद्रियैस्तनुभृता
मुभयेंद्रियाणि ॥ ज्ञानंस्वतःश्वसनतोबलमोजईहासत्वादिभिःस्थितिलयोद्भवआदिकर्ता ॥ ४ ॥

नमहताकोपिमहामतिःरजांसिगणयेदपिअखिलशक्तिधाम्नःसर्वशक्त्याश्रयस्यभगवतोगुणांस्तुनैवगणयेत् तथाचश्रुतिः विष्णोर्नुकंवी
र्याणिप्रवोचंयःपार्थिवानिविममेरजांसीत्यादि ॥ २ ॥ तत्रादौपुरुषावतारमाह भूतैरिति यदास्वसृष्टैर्भूतैर्विराजंब्रह्मांडंपुरंनिर्माय तस्मि
न्लीलयाप्रविष्टोनतुभोक्तृत्वेन प्रभूतपुण्यस्यजीवस्यतत्रभोक्तृत्वात् ॥ ३ ॥ अस्यगुणकर्माण्याहद्वयेन यत्कायइति यस्याधिष्ठेयःकाय
एषः कायइतिसप्तमीवा तनुभृतांसमष्टिव्यष्टिजीवानांज्ञानकर्मेंद्रियाणि यस्यस्वतःस्वरूपभूतात्सत्त्वात्तनुभृतांज्ञानंयस्यस्वतःसिद्धंज्ञान
मितिवा यस्यश्वसनतःप्राणाद्बलंदेहशक्तिः ओजःइंद्रियशक्तिः ईहाक्रिया यश्चसत्वादिभिर्विश्वस्यस्थितिलयोद्भवेआदिकर्ता ॥ ४ ॥

आदिकर्तेत्यनेनतत्पूर्वकंकर्त्रंतरमपिसूचितंतद्दर्शयितुंगुणावतारद्वाराचराचरसृष्ट्यादिकर्तृत्वमाह आदाविति यस्येत्यनुषंगः यस्यरजसाज
गतःसर्गेकार्येशतधृतिर्ब्रह्माभूत् स्थितौचविष्णुर्यस्यसत्वेनेतिशेषः क्रतुपतिस्तत्फलदाता द्विजातीनांतद्धर्माणांचसेतुःपालकइत्यर्थः य
स्यतमसाअस्याप्ययायरुद्रोऽभूत् इत्येतैर्ब्रह्मादिभिर्निमित्तभूतैःप्रजासुउद्भवादयोयतोभवंतिसआद्यःपुरुषइत्यन्वयः ॥ ५ ॥ नरनारा
यणावतारमाह धर्मस्यभार्यायांदक्षदुहितरिमूर्तिसंज्ञायांनारायणोनरइतिमूर्तिद्वयेनाजानिष्टजातः तच्चरितमाह नैष्कर्म्यमात्मस्वरूपंलक्ष्य
तेयेनतत्कर्मकर्मनिर्हाररूपंवाउवाचनारदादिभ्यःस्वयंचचारच योद्यापिकर्माचरन्नास्ते ऋषिवर्यैर्निषेवितौअंघ्रीयस्यसः ॥ ६ ॥ भ
गवदवतारस्वद्योतकंपरमोपशमंदर्शयितुमितिहासमाह इंद्रइतिदशभिः धामस्थानं तपसाग्रहीतुमिच्छतीतिविशंक्यतपोनाशायकामं

आदावभूच्छतधृतीरजसाऽस्यसर्गेविष्णुःस्थितौक्रतुपतिर्द्विजधर्मसेतुः॥रुद्रोऽप्ययायतमसापुरुषःसआद्य
इत्युद्भवस्थितिलयाःसततंप्रजासु॥ ५॥ धर्मस्यदक्षदुहितर्यजनिष्टमूर्त्यांनारायणोनरऋषिप्रवरःप्रशांतः॥
नैष्कर्म्यलक्षणमुवाचचचारकर्मयोऽद्यापिचास्तऋषिवर्यनिषेवितांघ्रिः ॥ ६ ॥ इंद्रोविशंक्यममधामजि
घृक्षतीतिकामंन्ययुंक्तसगणंसबदर्युपाख्यं॥ गत्वाऽप्सरोगणवसंतसुमंदवातैःस्त्रीप्रेक्षणेषुभिरविध्यदतन्म
हिज्ञः ॥ ७ ॥ विज्ञायशक्रकृतमक्रममादिदेवःप्राहप्रहस्यगतविस्मयएजमानान् ॥ माभैष्टभोमदनमा
रुतदेववध्वोगृण्हीतनोबलिमशून्यमिमंकुरुध्वं ॥ ८ ॥ इत्थंब्रुवत्यभयदेनरदेवदेवाःसव्रीडनम्रशिरसःस
घृणंतमूचुः ॥ नैतद्विभोत्वयिपरेविकृतेविचित्रंस्वाराममधीरनिकरानतपादपद्मे ॥ ९ ॥

सपरिवारंप्रेषयामास सकामोबदरीभिरुपाख्यायतेयस्तंतस्याश्रममप्सरोगणादिभिःसहगत्वा स्त्रीणांप्रेक्षणान्येवइषवोबाणास्तैः नतस्य
महिमहिमानंजानातीत्यतन्महिज्ञः ॥ ७ ॥ अक्रममपराधं अहोअहंधीरइतिविस्मयोगर्वस्तद्रहितः एजमानान्शापभियाकंपमानान्
भोविभोसमर्थ हेदेववध्वःमाभैष्ट बलिमातिथ्यं तान्प्रार्थयते इममस्माकमाश्रमं आतिथ्याभावेशून्यप्रायःस्यादित्यर्थः ॥ ८ ॥ हेनर
देवअभयदेश्रीनारायणेइत्थंब्रुवतिसतिदेवाःकामादयःसव्रीडानिनम्राणिशिरांसियेषांते लज्जाभरेणैवावनतशिरसइत्यर्थः सघृणंयथाभ
वतितथाकृपांजनयंतइत्यर्थः कृपायुक्तंतमितिवा मायातःपरेअतोऽविकृते स्वारामाश्चतेधीराश्चतेषांनिकरैरानतंपादपद्मंयस्यतस्मिन् त्व
य्येतदक्षोभानुकंपादिनविचित्रम् ॥ ९ ॥ ॥ ॥ ॥ ॥

अस्माकंचापराधाचरणंस्वभावस्वान्नचित्रमित्याहुः त्वामिति त्वांसेवतांसेवमानानांसुरैरिंद्रादिभिः कृताअंतरायाविघ्नाभवंति कस्मादित्यत आहुः स्वौकइति स्वस्थानंस्वर्गमतिक्रम्यपरमंतवस्थानंव्रजतां नान्यस्यत्वामसेवमानस्य कुतः बर्हिषियज्ञेस्वभागान्पुरोडाशादीन्बलीन् करान्कृषिकइवराज्ञेइंद्रादिभ्योददतःप्रयच्छतः तर्हिकिंमद्भक्तोविघ्नैर्भ्रंश्यतिनेत्याहुः धत्तेइति यदीतिनिश्चये यतस्त्वंसर्वसुराधीश्वरोऽविता रक्षकःअतोसौविघ्नानांमूर्ध्निपदमंघ्रिंधत्ते कुतःपुनस्त्वयिविघ्नशंकेतिभावः ॥१०॥ त्वद्भक्तानांतुकेवलंतपश्चरतांद्वयीगतिः अस्माकंवावशंयां तिक्रोधस्यवा तत्रास्मद्वशाःकामोपभोगमपितावदनुभवंति क्रोधस्यवशाःपुनरतिमंदाइत्याहुः क्षुत्तृडिति क्षुच्चतृट्चत्रिकालगुणाश्चशीतोष्ण वर्षाणिचमारुतश्चप्राणोबाह्योवाजैह्व्यंचाजिह्वाभोगाश्चशैश्न्यागुह्योपभोगाश्चएतानस्मान्अपारजलधिरूपानातितीर्यविलंघ्यगोष्पदेमज्जंति

त्वांसेवतांसुरकृताबहवोंऽतरायाःस्वौकोविलंघ्यपरमंव्रजतांपदंते॥नान्यस्यबर्हिषिबलीन्ददतःस्वभागान् धत्तेपदंत्वमवितायदिविघ्नमूर्ध्नि ॥ १०॥ क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य केचित् ॥क्रोधस्ययांतिविफलस्यवशंपदेगोर्मज्जंतिदुश्चरतपश्चवृथोत्सृजंति॥११॥ इतिप्रगृणतांतेषांस्त्रियो त्यद्भुतदर्शनाः॥दर्शयामासशुश्रूषांस्वर्चिताःकुर्वतीर्विभुः ॥१२॥ तेदेवानुचराद्दृष्ट्वास्त्रियःश्रीरिवरूपिणी ॥ गंधेनमुमुहुस्तासांरूपौदार्यहतश्रियः॥१३॥तानाहदेवदेवेशःप्रणतान्प्रहसन्निव ॥ आसामेकतमांवृङ्ध्वं सवर्णांस्वर्गभूषणां॥ १४ ॥ ओमित्यादेशमादायनत्वातंसुरबंदिनः ॥ उर्वशीमप्सरःश्रेष्ठांपुरस्कृत्यदिवंय युः ॥ १५॥ इंद्रायानम्यसदसिशृण्वतांत्रिदिवौकसां ॥ ऊचुर्नारायणबलंशक्रस्तत्रासविस्मितः ॥ १६ ॥

कुतः यतःक्रोधस्यविफलस्यवशंयांतिगच्छंति किंच जलेमज्जंतोयथाविवशाःसंतोमस्तकारोपितंभारमुत्सृजंतितथावृथैवनमोक्षायनचभो गायशापादिनादुश्चरंतपउत्सृजंति ॥ ११ ॥ स्त्रियःयोगनिर्मिताःस्त्रीःशुश्रूषांकुर्वतीःस्वर्चिताःसुष्ठुअलंकृतास्तेषांस्वलावण्यादिदर्पोपशमा यदर्शयामास ॥ १२ ॥ रूपिणीमूर्तिमतीश्रीरिवताःस्त्रीर्दृष्ट्वा तासांतुरूपस्यौदार्येणमहत्त्वेनहताश्रीःकांतिर्येषांते ॥ १३ ॥ वृङ्ध्वंवृणीध्व म् कवयंवराकाःक्वचेमाइतिचेत्तत्राह सवर्णांसमानरूपाम् नैकाऽप्यस्मदनुरूपेतिचेन्माभवतुतथाऽपिस्वर्गस्यभूषणरूपाम् ॥ १४ ॥ सुर बंदिनःदेवभृत्याः ॥ १५ ॥ इंद्रायइंद्रंप्रतिनारायणबलमूचुः शक्रस्तत्रासत्रासंप्राप्तः विस्मितश्च तत्रविस्मितआसेतिवा ॥ १६ ॥

अन्यानप्यवतारांस्तच्चरितानि चाह हंसरूपीति दत्तः दत्तात्रेयः कुमारः सनकादिः नः पिता ऋषभश्च विष्णुरेव कलयाऽवतीर्णः सन्नात्मयो
गमवदत् तेन विष्णुना हयास्ये हयग्रीवावतारे मधुभिदा सता श्रुतय आहृताः ॥ १७ ॥ इला पृथ्वी ओषधयश्च गुप्ताः क्रौडे च वाराहावतारे ग्रा
हात् गजेंद्रमसुंचत् मोचयामास एवमादौ यत्रावतारनामनास्ति तत्र विष्णुः शिवाय जगतां कलयावतीर्ण इत्यनुवर्तनीयम् ॥ १८ ॥ संस्तुन्व
तः स्तुतिं कुर्वाणान् ऋषीन् वालखिल्यान् कश्यपार्थं समिदाहरणे गोष्पदे निमग्नान् इंद्रेणोपहसितान् उद्धृत्यापदोऽमोचयत् तमसि ब्रह्महत्यायां प्र

हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः ॥ विष्णुः शिवाय जगतां कलयाऽवती
र्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥ गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धर
ताऽम्भसः क्ष्मां ॥ कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुंचदार्तं ॥ १८ ॥ संस्तुन्वतोऽ
ब्धिपतितान्छ्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टं ॥ देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरें
द्रमभयाय सतां नृसिंहे ॥ १९ ॥ देवासुरे युधि च दैत्यपतीन् सुरार्थे हत्वांऽतरेषु भुवनान्यदधात्कलाभिः ॥ भू
त्वाऽथ वामन इमामहरद्बलेः क्ष्मां याञ्चाछलेन समदाददितेः सुतेभ्यः ॥ २० ॥ निःक्षत्रियामकृत गां च त्रिःसप्त
कृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ॥ सोऽब्धिं बबंध दशवक्त्रमहन्सलंकं सीतापतिर्जयति लोकमलघ्नकी
र्तिः ॥ २१ ॥ भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ॥ वादैर्विमोहयति यज्ञ
कृतेऽतदर्हान् शूद्रान्कलौ क्षितिभुजो न्यहनिष्यदंते ॥ २२ ॥

विष्टं मोचयामास असुरगृहे पिहिता निरुद्धा या देवस्त्रियस्ताश्चामुंचत् अनेकावतारैः ॥ १९ ॥ अंतरेषु सर्वमन्वंतरेषु कलाभिर्मूर्तिभिर्भुवनानि अ
दधात् अपालयत् इमां क्ष्मां समदात् ददौ ॥ २० ॥ हैहयानां कुलस्याप्ययाय भार्गवरूपोऽग्निः स रामो दाशरथिः सन् सलंकं लंकायां स्थितं
स च जयति वर्तमानकालीनोवतार इत्यर्थः ॥ २१ ॥ भाविनं रामकृष्णावतारमाह भूमेरिति बुद्धावतारमाह वादैरिति अतदर्हान् यज्ञान
र्हान् दैत्यान् विमोहयिष्यति कल्क्यवतारमाह शूद्रानिति न्यहनिष्यत् निहनिष्यति ॥ २२ ॥ ॥ ॥

॥२३॥ इत्येकादशेटीकायांचतुर्थोध्यायः ॥४॥ ॥ पंचमेभक्तिहीनानांकानिष्ठाकोयुगेयुगे ॥ पूजाविधिरितिप्रश्नद्वयस्योत्तरमुच्यते ॥१॥ त्वांसेवतांसुरकृताबहवोंऽतरायाइत्यनेनश्रीहरिभक्ताविघ्नमूर्ध्निपदंदत्वापरांगातिंयांतिअभक्तानांतुविघ्नाभवंतीत्युक्तेतर्हितेषांकागतिर्भवतीतिपृच्छति भगवंतमिति हेआत्मवित्तमाः अविजितात्मनामतएवाशांतकामानांकानिष्ठाकिंप्राप्यमित्यर्थः ॥१॥ स्वजनकस्यगुरोर्भगवतोऽनादरागुरुद्रोहेणदुर्गतिंयांतीतिवक्तुंभगवतःसकाशाद्वर्णाश्रमाणामुत्पत्तिमाह मुखेति गुणैः सत्त्वेनविप्रः सत्त्वरजोभ्यांक्षत्रियः रजस्तमोभ्यांवैश्यः तमसाशूद्रइति ॥२॥ एषांमध्येयेऽज्ञात्वातंनभजंतियेचज्ञात्वाऽप्यवजानंति आत्मनःप्रभवोजन्मयस्मात्तंतदभजनेकृतघ्नतामप्याह ईश्वरमिति

एवंविधानिकर्माणिजन्मानिचजगत्पतेः ॥ भूरिणिभूरियशसोवर्णितानिमहाभुज ॥ २३॥ इतिश्रीभागवते महापुराणेएकादशस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ राजोवाच भगवंतंहरिंप्रायोनभजंत्यात्मवित्तमाः ॥ तेषामशांतकामानांकानिष्ठाऽविजितात्मनां ॥१॥ चमसउवाच मुखबाहूरुपादेभ्यःपुरुषस्याश्रमैःसह ॥ चत्वारोजज्ञिरेवर्णागुणैर्विप्रादयःपृथक् ॥ २ ॥ यएषांपुरुषंसाक्षादात्मप्रभवमीश्वरं ॥ नभजंत्यवजानंति स्थानाद्भ्रष्टाःपतंत्यधः ॥३॥ दूरेहरिकथाःकेचिद्दूरेचाच्युतकीर्तनाः ॥ स्त्रियःशूद्रादयश्चैवतेनुकंप्याभवादृशां ॥४॥ विप्रोराजन्यवैश्यौचहरेःप्राप्ताःपदांतिकं ॥ श्रौतेनजन्मनाथापिमुह्यंत्याम्नायवादिनः ॥ ५ ॥

स्थानाद्वर्णाश्रमाद्भ्रष्टाः ॥ ३ ॥ तत्रयेऽज्ञास्तेभवद्विधानामनुग्राह्याइत्याह दूरइति दूरेहरिकथाश्रवणंयेषांते अतएवदूरेचअच्युतकीर्तनंयेषांते दूरेअच्युतकीर्तनाश्चेतिवा ॥ ४ ॥ ज्ञानलवदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्याइत्याशयेनाह विप्रइति श्रौतेनउपनयनाख्येन उपलक्षणमेतत् अध्ययनादिनापिहरेःपदांतिकं तद्भजनोत्तमाधिकारंप्राप्ताअपिमुह्यंतिकर्मफलेषुसज्जंते कुतः आम्नायेषुयेवादाअर्थवादास्तेमोहकतयाविद्यंतेयेषांते तदुक्तंगीतासुयामिमांपुष्पितांवाचंप्रवदंत्यविपश्चितः ॥ वेदवादरताःपार्थनान्यदस्तीतिवादिनइत्यादिना ॥ ५ ॥

भक्तिमार्गेदाढर्चायतेषांमोहंप्रपंचयन्निंदति कर्मणीत्यादिना अकोविदायथाबंधकंनभवतितथाकर्तुमज्ञानचाभिज्ञान्पृच्छंति यतःस्तब्धा अनम्राः स्तब्धत्वेहेतुः यतःमूर्खाअपिपंडितावयमितिमानवंतः अतः अपामसोमममृताअभूम अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवति यत्रनोष्णंनशीतंस्यान्नग्लानिर्नाप्यरातयइत्यादिकयाययामाध्व्यागिरोत्सुकाःसंतोमूढास्तयाचाटुकान्अप्सरोभिःसहविहरिष्यामइत्यादिप्रियान्शब्दान्वदंति ॥ ६ ॥ किंच तेषांकर्माभिनिवेशात्कामक्रोधदंभादयोवर्धंतइत्याहत्रयेण रजसेति घोरःअभिचारादिःसंकल्पो येषांते अहिवन्मन्युर्येषांते ॥ ७ ॥ कामुकत्वंप्रपंचयाति वदंतीति उपासिताःस्त्रियोयैर्नतुवृद्धाः तेमैथुन्यंमैथुनसुखमेवपरंनत्वातिथ्यादि येषुगृहेषुतेषुआशिषोवदंति इदमद्यमयालब्धमिमंप्राप्स्येमनोरथं ॥ इदमस्तीदमपिमेभविष्यतिपुनर्धनमित्याकाराः दांभिकतांप्रपंचयति

**कर्मण्यकोविदाःस्तब्धामूर्खाःपंडितमानिनः ॥ वदंतिचाटुकान्मूढाययामाध्व्यागिरोत्सुकाः ॥ ६ ॥ रजसाघोरसंकल्पाःकामुकाअहिमन्यवः ॥ दांभिकामानिनःपापाविहसंत्यच्युतप्रियान् ॥ ७ ॥ वदंतितेऽन्योऽन्यमुपासितस्त्रियोगृहेषुमैथुन्यसुखेषुचाशिषः ॥ यजंत्यसृष्टान्नविधानदक्षिणंवृत्त्यैपरंघ्नंतिपशूनतद्विदः ॥ ८ ॥ श्रियाविभूत्याभिजनेनविद्ययात्यागेनरूपेणबलेनकर्मणा ॥ जातस्मयेनांधधियःसहेश्वरान् सतोऽवमन्यंतिहरिप्रियान्खलाः ॥ ९ ॥ सर्वेषुशश्वत्तनुभृत्स्ववस्थितंयथाखमात्मानमभीष्टमीश्वरं ॥ वेदोपगीतंचनशृण्वतेबुधामनोरथानांप्रवदंतिवार्तया ॥ १० ॥ ॥ ॥**

यजंतीति असृष्टान्नविधानदक्षिणंनसृष्टानसंपादिताअन्नविधानदक्षिणायथातथायजंति तदाचवृत्त्यैजीविकार्थपरंकेवलंपशून्घ्नंति अतद्विदोहिंसादोषानभिज्ञाः ॥ ८ ॥ मानितांप्रपंचयति श्रियेति श्रियाधनादिसंपदा विभूत्याऐश्वर्येण श्र्यादिनाजातोयःस्मयोगर्वस्तेनअंधाधीर्येषांतेईश्वरसहितान्सतःअवमन्यंते ॥ ९ ॥ किंच एवंवर्तमानास्तेवेदतत्त्वार्थंस्फुटमपिनजानंतीत्याह सर्वेष्विति केनरूपेणावस्थितंतदाह आत्मानमीश्वरंआत्मतयाईश्वरतयाचावस्थितं एवमप्यसंगतामाह यथाखं पुरुषार्थतामाह अभीष्टं स्फुटत्वमाह वेदोपगीतंचेति तत्कुतः यतोमनोरथानांव्यवायामिषमद्यसेवाविषयाणांवार्तयाप्रवदंति निवृत्तिपरंसंतंवेदंप्रवृत्तिपरंवर्णयंतीत्यर्थः ॥ १० ॥ ॥

ननुव्यवायादीनामपिऋतौभार्यामुपेयात्हुतशेषंभक्षयेदित्यादिनाविहितत्वात्किमेवंनिंद्यतेअतआह लोकइति व्यवायःस्त्रीसंगः नित्यारा
गतएवनित्यप्राप्ताः जंतोःप्राणिमात्रस्य अतस्तत्रतासुचोदनाविधिर्नास्ति ननुऋतावुपेयादित्यादिनाविधिर्दर्शितः सत्यं नत्वयमपूर्ववि
धिः रागतःप्राप्तत्वात् किंतुनियमविधिरूपेणरागिणामभ्यनुज्ञानमात्रंक्रियतेतदाहव्यवस्थितिरिति तेषुव्यवायादिषु कैःविवाहयज्ञसुराग्र
हैः विवाहविषयएवव्यवायःकार्यः यज्ञएवामिषसेवा सौत्रामण्यांसुराग्रहान्गृण्हातीतिश्रुतेस्तत्रैवमद्यसेवेतिनियमःक्रियते ननुचानियमप
क्षेऽप्यावश्यकत्वान्ननिंदायुक्ताअतआह आसुनिवृत्तिरिति अयंभावः नायंनियमविधिरपिनित्यप्राप्तत्वात् अतोनिवृत्तिःपरिसंख्यैवआसु
व्यवायामिषमद्यसेवासुनिवृत्तिरिष्टा कथंतर्हिव्यवस्थितिरित्युक्तमुच्यते नतावत्परिसंख्याविधिनाश्रुत्यानिवृत्तिरुच्यते तथासतिस्वार्थत्यागः
परार्थकल्पनाप्राप्तबाधश्चेतिदोषत्रयंस्यात् अतःक्वचित्प्राप्स्यतोऽप्यर्थस्यप्रापणमनर्थकमित्यपूर्वविधिद्वारान्यनिवृत्तिःफलतोभवति तद्य
था इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्तइत्यत्ररशनालिंगतोगर्दभाश्वाभिधानरशनाद्वयेप्राप्स्यतोमंत्रस्यापूर्वविधिद्वारापरिसं

लोकेव्यवायामिषमद्यसेवानित्यास्तुजंतोर्नहितत्रचोदना ॥ व्यवस्थितिस्तेषुविवाहयज्ञसुराग्रहैरासुनि
वृत्तिरिष्टा ॥ ११ ॥ धनंचधर्मैकफलंयतोवैज्ञानंसविज्ञानमनुप्रशांति ॥ गृहेषुयुंजंतिकलेवरस्यमृत्युंनप
श्यंतिदुरंतवीर्यम् ॥ १२ ॥ ॥ ॥ ॥

ख्योच्यते यथोक्तंतंत्रवार्तिके अप्राप्तविधिरेवायमतोमंत्रस्यानिश्चितः ॥ परिसंख्याफलेनोक्तानाविशेषःपुनःश्रुतेरितिक्वचित्तुरागतोनित्यप्रा
प्तस्याप्राप्तांशपूरणलक्षणस्यानियमफलस्याप्यभावान्नियमविधिद्वाराफलतःपरिसंख्याभवति यथापंचपंचनखाभक्ष्याइति तथारागतोनित्य
वत्प्राप्तस्यव्यवायादेर्विवाहादिनियमेनाभ्यनुज्ञाद्वारापरिसंख्यैवेति ननुयद्यभ्यनुज्ञामात्रमेतद्भवेत्तर्हि ऋतुस्नातांतुयोभार्यांसन्निधौनोपगच्छति
॥ घोरायांभ्रूणहत्यायांपच्यतेनात्रसंशयइत्यादिदोषश्रवणंनस्यात् नैषदोषः मनसिकामेसत्यपितस्यामरुच्याद्वेषादिनावातामनुपगच्छतोदो
षश्रवणोपपत्तेरितिसर्वमनवद्यं ॥ ११ ॥ तदेवंव्यवायादिमनोरथाकुलितत्वादभीष्टमात्मानंनशृण्वंतीत्युक्तं इदानींधनस्यापिधर्मद्वारापरमात्म
प्रापकस्यदृष्टोपभोगार्थंविनियोगान्नात्मज्ञानगंधोपीत्याह धनंचेति धर्मएवैकंफलंयस्यतत् कुतःयतःयस्माद्धर्मोधर्मात्सविज्ञानंपरोक्षज्ञान
सहितंदृढंपरोक्षज्ञानंभवति कथंभूतं अनुप्रशांति अनुअनंतरमेवप्रकृष्टाशांतिर्निर्वाणलक्षणायस्मात्तत् एवंभूतंधनंगृहेषुदेहाद्यर्थंयुंजंति॥ १२

किंच व्यवस्थयापिव्यवायाद्यभ्यनुज्ञानंनयथेष्टमपित्वन्यथैवेत्याह यदिति यद्यस्मात्सुरायाघ्राणभक्षःअवघ्राणंसएवविहितोनपानं तथाप शोरप्यालभनमेवविहितंनतुहिंसा अयमर्थःदेवतोद्देशेनयत्पशुहननंतदालभनंवायव्यंश्वेतमालभेतेत्यादिश्रुतेर्नतुहिंसा यावेदविहिताहिं सानसाहिंसेतिकीर्त्यतइतिवचनात् भक्षणोद्देशेनतुक्रियमाणंहननंलौकिकवद्धिंसैव अत्रह्यालभनमेवविहितंनतुहिंसाअतोनयथेष्टभक्षणा भ्यनुज्ञेत्यर्थः व्यवायोपिप्रजयानिमित्तभूतयानतुरत्यै अतोमनोरथवादिनइमंविशुद्धंस्वधर्मंनविदुरिति ॥ १३ ॥ एवंभगवत्पराङ्मुखानांब हुदोषतांप्रपंच्यतन्निष्ठांप्रपंचयति येत्वितिपंचभिः अनेवंविदःनएवंधर्मंविदंतियेते विस्रब्धानिःशंकाः अनेनमनोरथोभविष्यतीतिविश्व स्तावा तदानींतनपोषणेनवातैःपशुभिर्विश्वस्ताः तेचपशवःप्रेत्यअमुत्रतान्खादंति मांसभक्षयिताऽमुत्रयस्यमांसमिहाद्म्यहं ॥ एतन्मांस

यद्घ्राणभक्षोविहितःसुरायास्तथापशोरालभनंनहिंसा ॥ एवंव्यवायःप्रजयानरत्याइमंविशुद्धंनविदुः स्वधर्मम् ॥ १३ ॥ येत्वनेवंविदोऽसंतःस्तब्धाःसदभिमानिनः ॥ पशून्द्रुह्यंतिविस्रब्धाःप्रेत्यखादंतितेच तान् ॥ १४ ॥ द्विषंतःपरकायेषुस्वात्मानंहरिमीश्वरम् ॥ मृतकेसानुबंधेऽस्मिन्बद्धस्नेहाःपतंत्यधः ॥ ॥ १५ ॥ येकैवल्यमसंप्राप्तायेचातीताश्चमूढताम् ॥ त्रैवर्गिकाह्यक्षणिकाआत्मानंघातयंतिते ॥ १६ ॥ एतआत्महनोशांताअज्ञानेज्ञानमानिनः ॥ सीदंत्यकृतकृत्यावैकालध्वस्तमनोरथाः ॥ १७ ॥ हित्वात्मा यासरचितागृहापत्यसुहृच्छ्रियः ॥ तमोविशंत्यनिच्छंतोवासुदेवपराङ्मुखाः ॥ १८ ॥ राजोवाच कस्मिन्का लेसभगवान्किंवर्णःकीदृशोनृभिः ॥ नाम्नावाकेनविधिनापूज्यतेतदिहोच्यताम् ॥ १९ ॥ ॥

स्यमांसत्वंप्रवदंतिमनीषिणइतिवचनात् ॥ १४ ॥ अभिचारादिनाद्विषंतःमृतकेदेहे सानुबंधेपुत्रादिसाहिते ॥ १५ ॥ अज्ञास्तत्त्वज्ञैरनुकं पितास्तरंतितत्वज्ञास्तुस्वतः येतुनात्यंतमज्ञानचतत्वज्ञास्तेंऽतरालवर्त्तिनःपतंतीत्याह यइति कैवल्यंतत्वज्ञानमसंप्राप्ताःअत्रहेतुः त्रिवर्गप्र धानाःअक्षणिकाःउपशांतिक्षणरहितादेहादिस्थैर्यबुद्धयोवास्वयमेवात्मानंघातयंति ॥ १६ ॥ तदाह एतइति आत्महनःआत्मापन्हवक र्तारः अज्ञानेकर्मणि तथाचश्रुतिः असुर्यानामतेलोकाअंधेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाइति ॥ १७ ॥ यागृहापत्यसुहृच्छ्रियस्ताहित्वा ॥ १८ ॥ तदेवंभगवद्भक्तिरेवकर्तव्येतिस्थितेतत्रविशेषंपृच्छति कस्मिन्कालइतिकिंवर्णःकीदृग्वर्णवान् कीदृशःकीदृगाकारः केनवानाम्ना केनवाविधिना ॥ १९ ॥ ॥ ॥

एषुकृतादिकालेषु नानाप्रकारावर्णाभिधाकारायस्यसः नानैवविधिनाविविधेनैवमार्गेण ॥ २० ॥ तदेववर्णादिचतुष्टयमाह कृतइत्यादिना कृष्णाजिनादीन्बिभ्रदितिब्रह्मचारिवेषोदर्शितः ॥ २१ ॥ तपसाध्यानेन ॥ २२ ॥ २३ ॥ त्रिगुणादीक्षांगभूतामेखलायस्यसः यज्ञमूर्तिः हिरण्यकेशः पिशंगकेशः ॥ २४ ॥ त्रय्याविद्ययावेदत्रयोक्तकर्मभिः ॥ २५ ॥ पृश्निगर्भः पृश्निःसुतपसःप्रजापतेःपत्नीतस्याःपुत्रःवृषाकपिःस्मृतः सन्वर्षतिकामान्आकंपयतिक्लेशानितितथा जयत्येवसर्वदाजयंतः ॥ २६ ॥ श्यामःअतसीपुष्पसंकाशः निजानिचक्रादीन्यायुधानियस्य

करभाजनउवाच कृतंत्रेताद्वापरंचकलिरित्येषुकेशवः ॥ नानावर्णाभिधाकारोनानैवविधिनेज्यते ॥ २० ॥ कृतेशुक्लश्चतुर्बाहुर्जटिलोवल्कलांबरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दंडकमंडलू ॥२१॥ मनुष्यास्तुतदाशांतानिर्वैराःसुहृदःसमाः ॥ यजंतितपसादेवंशमेनचदमेनच ॥ २२ ॥ हंसःसुपर्णोवैकुंठोधर्मोयोगेश्वरोमनुः ॥ ईश्वरःपुरुषोऽव्यक्तःपरमात्मेतिगीयते ॥२३॥ त्रेतायांरक्तवर्णोसौचतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मास्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥ तंतदामनुजादेवंसर्वदेवमयंहरिं ॥ यजंतिविद्ययात्रय्याधर्मिष्ठाब्रह्मवादिनः ॥ २५ ॥ विष्णुर्यज्ञःपृश्निगर्भःसर्वदेवउरुक्रमः ॥ वृषाकपिर्जयंतश्चउरुगायइतीर्यते ॥ २६ ॥ द्वापरेभगवान्श्यामःपीतवासानिजायुधः ॥ श्रीवत्सादिभिरंकैश्चलक्षणैरुपलक्षितः ॥२७॥ तंतदापुरुषंमर्त्यामहाराजोपलक्षणं ॥ यजंतिवेदतंत्राभ्यांपरंजिज्ञासवोनृप ॥ २८ ॥ नमस्तेवासुदेवायनमःसंकर्षणायच ॥ प्रद्युम्नायानिरुद्धायतुभ्यंभगवतेनमः ॥२९॥ नारायणायऋषयेपुरुषायमहात्मने ॥ विश्वेश्वरायविश्वायसर्वभूतात्मनेनमः ॥ ३० ॥ इतिद्वापरउर्वीशस्तुवंतिजगदीश्वरं ॥ नानातंत्रविधानेनकलावपियथाशृणु ॥ ३१ ॥

सः श्रीवत्सोनामवक्षसोदक्षिणभागेरोम्णांप्रदक्षिणावर्त्तःसआदिर्येषांकरचरणादिगतपद्मादीनांतैः अंकैरंकितैश्चिन्हैर्लक्षणैर्बाह्यैःकौस्तुभादिभिः ॥ २७ ॥ महाराजोपलक्षणंछत्रचामरादियुक्तम् वेदतंत्राभ्यांवैदिकेनागमिकेनचमार्गेणयजंतिपूजयंतिपरमीश्वरंज्ञातुमिच्छवः ॥ ॥ २८ ॥ नामान्याह नमस्तइति ॥ २९ ॥ ३० ॥ नानातंत्रविधानेतिकलौतंत्रमार्गस्यप्राधान्यंदर्शयाति ॥ ३१ ॥

रूक्षतांव्यावर्तयति त्विषाकांत्याऽकृष्णमिंद्रनीलमणिवदुज्वलं यद्वा त्विषाकृष्णंकृष्णावतारम् अनेनकलौकृष्णावतारस्यप्राधान्यंदर्शयति
अंगानिहृदयादीनि उपांगानिकौस्तुभादीनि अस्त्राणिसुदर्शनादीनि पार्षदाःसुनंदादयः तत्सहितम् यज्ञैरर्चनैः संकीर्तनंनामोच्चारणं
स्तुतिश्चतत्प्रधानैः सुमेधसोविवेकिनः ॥ ३२ ॥ स्तुतिमाह ध्येयमिति हेप्रणतपालहेमहापुरुषतेचरणारविंदंवंदे कथंभूतं ध्येयंध्यातुंयो
ग्यं सदेतिसर्वत्रसंबध्यते ध्येयत्वेहेतवः इंद्रियकुटुंबादिभिर्यःपरिभवस्तिरस्कारस्तंहंतीतितथातं किंच अभीष्टदोहंमनोरथपूरकं किंच
तीर्थास्पदंगंगाद्याश्रयत्वेनपरमपावकम् शिवविरिंचिभ्यांनुतंस्तुतंमहत्तमं ननुतौकृतार्थौविवकिमर्थंताभ्यांनुतंतत्राह शरण्यमाश्रययोग्यंसु
खात्मकमित्यर्थः तर्हिब्रह्मादिस्तुत्यंप्राकृतस्यकथंगोचरंस्यात् न भृत्यार्तिहंयस्यकस्यापिभृत्यमात्रस्यार्तिहंतृ नकेवलमागंतुकार्तिमात्रंहं

कृष्णवर्णंत्विषाऽकृष्णंसांगोपांगास्त्रपार्षदं ॥ यज्ञैःसंकीर्तनप्रायैर्यजंतिहिसुमेधसः ॥ ३२ ॥ ध्येयंसदा
परिभवघ्नमभीष्टदोहंतीर्थास्पदंशिवविरिंचिनुतंशरण्यं ॥ भृत्यार्तिहंप्रणतपालभवाब्धिपोतंवंदेमहापुरु
षतेचरणारविंदं ॥ ३३ ॥ त्यक्त्वासुदुस्त्यजसुरेप्सितराज्यलक्ष्मींधर्मिष्ठआर्यवचसायदगादरण्यम् ॥ मा
यामृगंदयितयेप्सितमन्वधावद्वंदेमहापुरुषतेचरणारविंदम् ॥३४॥ एवंयुगानुरूपाभ्यांभगवान्युगवर्तिभिः
॥ मनुजैरिज्यतेराजंश्छ्रेयसामीश्वरोहरिः ॥ ३५ ॥ ॥ ॥ ॥

तिकिंतुभवाब्धिपोतंसंसारार्णवतारकंच ॥ ३३ ॥ इदानींस्वयमाप्तकामत्वान्नैरपेक्ष्यंभक्तार्थंचसापेक्षतांदर्शयन्श्रीरामचंद्रंस्तौति त्यक्त्वेति
अन्यैःसुदुस्त्यजायासुरेप्सितराज्यलक्ष्मीस्तांत्यक्त्वा यदिति यइत्यर्थः यःअरण्यमगात् किंराज्यवैकल्यदर्शनेन न धर्मिष्ठःकुतः आर्यस्यगु
रोर्दशरथस्यवचसा किंच एवंराज्यंत्यक्त्वाऽपिभक्तवात्सल्येनदयितयासीतयाईप्सितंमायामृगंस्वर्णाकारंयोऽन्वधावत्तस्यभगवतश्चरणार
विंदंवंदे हेधर्मिष्ठेतिसंबोधनंवा तथाऽप्यविवक्षितत्वादार्यपदेनसंधिर्नभवति तथायदगादितिचरणारविंद्मेवोच्यतेयत्मायामृगमन्वधाव
त्तत्तेचरणारविंदंवंदइत्यन्वयः अन्यत्समानम् ॥ ३४ ॥ युगानुरूपाभ्यांनामरूपाभ्याम् ॥ ३५ ॥ ॥

एतेषुचतुर्युगेषुकलिरेवश्रेष्ठइत्याह कलिमिति गुणज्ञाःकलेर्गुणंजानंतियेते ननुदोषाणांबहुत्वात्कथंसभाजयंतितत्राह सारभागिनोगुणांशग्राहिणः कोसौगुणस्तमाह यत्रेति तदुक्तम् ध्यायन्कृतेयजन्यज्ञैस्त्रेतायांद्वापरेर्चयन् ॥ यदाप्नोतितदाप्नोतिकलौसंकीर्त्यकेशवमिति ॥ ॥ ३६ ॥ तस्मात्कलौअतःअस्मात्संकीर्तनात्परमोलाभोनास्ति यतःसंकीर्तनात् ॥ ३७ ॥ किंच कृतादिष्विति ॥ ३८ ॥ ३९ ॥ अमलाशयाःसंतःप्रायःप्रायशोभगवतिभक्ताभविष्यंति ॥ ४० ॥ भक्तस्यविधिनिषेधनिवृत्तेःकृतकृत्यतामाह देवर्षीति आप्ताःपोष्याःकुटुंबिनः इतरेदेवादयःपंचयज्ञदेवताः एतेषांयथाऽभक्तःऋणीअतएवतेषांकिंकरस्तदर्थंनित्यंपंचयज्ञादिकर्ता तथाचस्मृतिः हीनजातिपरिक्षीण

कलिंसभाजयंत्यार्यागुणज्ञाःसारभागिनः॥ यत्रसंकीर्तनेनैवसर्वःस्वार्थोऽभिलभ्यते ॥३६॥ नह्यतःपरमोलाभोदेहिनांभ्राम्यतामिह॥ यतोविंदेतपरमांशांतिंनश्यतिसंसृतिः॥३७॥कृतादिषुप्रजाराजन्कलाविच्छंतिसंभवम्॥ कलौखलुभविष्यंतिनारायणपरायणाः ॥३८॥ क्वचित्क्वचिन्महाराजद्रविडेषुचभूरिशः॥ ताम्रपर्णीनदीयत्रकृतमालापयस्विनी ॥ ३९ ॥ कावेरीचमहापुण्याप्रतीचीचमहानदी॥ येपिबंतिजलंतासांमनुजामनुजेश्वर॥ प्रायोभक्ताभविष्यंतिवासुदेवेऽमलाशयाः ॥ ४० ॥ देवर्षिभूताप्तनृणांपितॄणांनकिंकरोनायमृणीचराजन्॥ सर्वात्मनायःशरणंशरण्यंगतोमुकुंदंपरिहृत्यकर्तं ॥ ४१ ॥ स्वपादमूलंभजतःप्रियस्यत्यक्तान्यभावस्यहरिःपरेशः॥ विकर्मयच्चोत्पतितंकथंचिद्धुनोतिसर्वंहृदिसन्निविष्टः॥ ४२॥ नारदउवाच धर्मान्भागवतानित्थंश्रुत्वाथमिथिलेश्वरः॥ जायंतेयान्मुनीन्प्रीतःसोपाध्यायोह्यपूजयत् ॥ ४३ ॥ ततोऽतर्दधिरेसिद्धाःसर्वलोकस्यपश्यतः ॥ राजाधर्मानुपातिष्ठन्नवापपरमांगतिं ॥ ४४ ॥

मृणार्थकर्मकारयेदिति अयंतुनतथा कोऽसौयःसर्वभावेनश्रीमुकुंदंशरणंगतःकर्तंकृत्यंपरिहृत्यपरित्यज्य यद्वाकर्तंभेदंपरिहृत्यकृतीछेदन इत्यस्मात् वासुदेवःसर्वमितिबुद्ध्येत्यर्थः ॥ ४१ ॥ विहितकर्मनिवृत्तिमुक्त्वानिषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह स्वपादमूलमिति त्यक्तःअन्यस्मिन्देहादौदेवतांतरेवाभावोयेन अतएवतस्यविकर्मणिप्रवृत्तिर्नसंभवति यच्चकथंचित्प्रमादादिनाउत्पतितंभवेत्तदपिहरिर्धुनोति ननुयमस्तन्नमन्येतेतत्राह परेशः ननुश्रुतिस्मृतीममैवाज्ञेइतिभगवद्वचनात्स्वाज्ञाभंगंकथंसहेतेतत्राह हृदिसन्निविष्टः नहिवस्तुशक्तिरर्थितामपेक्षतइत्यर्थः ॥ ४२ ॥ जायंतेयान्जयंत्याःपुत्रान् ॥ ४३ ॥ उपातिष्ठन्अनुतिष्ठन् ॥ ४४ ॥ ॥ ॥ ॥

निःसंगोभूत्वा ॥ ४५ ॥ शास्त्रप्रक्रियेयमुक्तायुवांतुसंगतएवकृतार्थावित्याह युवयोरिति वांयुवयोः ॥ ४६ ॥ नचसर्वकर्मार्पणादिभाग
वतधर्मैरन्येषामिवयुवयोःसत्त्वशुद्धिरापादनीया पुत्रोपलालनेनैवभागवतधर्मसर्वस्वनिष्पत्तेरित्याह दर्शनेति कृष्णेपुत्रइतिस्नेहंप्रकुर्वतो
वांतस्यदर्शनादिभिरात्मापावितःशोधितः ॥ ४७ ॥ एतदेवकैमुत्यन्यायेनस्फुटयति वैरेणेति यंशयनासनादौवैरेणापिध्यायंतस्तस्य
गतिविलासाद्यैःआकृतधियःतत्तदाकाराधीर्येषांतेतत्सारूप्यमापुःकिंपुनर्वक्तव्यमनुरक्तधियांतत्साम्यंभवतीति ॥ ४८ ॥ ननुपुत्रस्नेहश्चेन्मो
क्षहेतुस्तर्हिसर्वेमुच्येरंस्तत्राह माऽपत्यबुद्धिमिति अपत्यमितिबुद्धिंमाकृथाः अडागमश्छांदसः ॥ ४९ ॥ ननुकथमीश्वरोमानुषःस्यात्क

त्वमप्येतान्महाभागधर्मान्भागवताञ्छ्रुतान् ॥ आस्थितःश्रद्धयायुक्तोनिःसंगोयास्यसेपरं ॥४५॥ युवयोः
खलुदंपत्योर्यशसापूरितंजगत् ॥ पुत्रतामगमद्यद्वांभगवानीश्वरोहरिः ॥ ४६ ॥ दर्शनालिंगनालापैःशयना
सनभोजनैः ॥ आत्मावांपावितःकृष्णेपुत्रस्नेहंप्रकुर्वतोः ॥४७॥ वैरेणयंनृपतयःशिशुपालपौंड्रशाल्वादयोग
तिविलासविलोकनाद्यैः ॥ ध्यायंतआकृतधियःशयनासनादौतत्साम्यमापुरनुरक्तधियांपुनःकिम् ॥ ४८ ॥
माऽपत्यबुद्धिमकृथाःकृष्णेसर्वात्मनीश्वरे ॥ मायामनुष्यभावेनगुढैश्वर्येपरेऽव्यये ॥४९॥ भूभारासुरराजन्यहं
तवेगुप्तयेसतां ॥ अवतीर्णस्यनिर्वृत्त्यैयशोलोकेवितन्यते ॥ ५० ॥ श्रीशुकउवाच एतच्छ्रुत्वामहाभा
गोवसुदेवोऽतिविस्मितः ॥ देवकीचमहाभागाजहतुर्मोहमात्मनः ॥ ५१ ॥ इतिहासमिमंपुण्यंधारयेद्यः
समाहितः ॥ सविधूयेहशमलंब्रह्मभूयायकल्पते ॥ ५२ ॥ इतिश्रीभा०म०पु०ए०पंचमोऽध्यायः ॥ ५ ॥ ॥
श्रीशुकउवाच अथब्रह्मात्मजैर्देवैःप्रजेशैरावृतोभ्यगात् ॥ भवश्चभूतभव्येशोययौभूतगणैर्वृतः ॥ १ ॥

थंवातस्यविश्वसृष्ट्यादिकर्तुः पूतनाशोषणादिकर्माश्चर्यमिवनिरूप्यतेतत्राह भूभाररूपाअसुराएवराजन्यास्तेषांहंतवेतान्हंतुं सतांनि
र्वृत्यैमोक्षाय ॥ ५० ॥ ५१ ॥ इहअस्मिन्नेवदेहेशमलंमोहंविधूयब्रह्मत्वायकल्पते ॥ ५२ ॥ इतिएकादशेटीकायांपंचमोऽध्यायः ॥
॥ ५ ॥ ॥ षष्ठेब्रह्मादिभिःस्तुत्वागंतुंविज्ञापितंहरिं ॥ उद्धवःप्रार्थयामासस्वधामनयमामिति ॥ १ ॥ अतःपरमतिविस्तरेणात्मविद्यां
निरूपयितुंतत्प्रस्तावमाह अथेति आत्मजैःसनकादिभिःअभ्यगात् द्वारकामितिचतुर्थेनान्वयः ॥ १ ॥ ॥ ॥

॥ २ ॥ ३ ॥ ननुतेषामुपेंद्रादिरूपंभगवंतंनित्यंपश्यतांकेयमतिदिदृक्षाअतआह वपुषेति येनवपुषानरलोकमनोरमःसन्सर्वलोकेषुयशो वितेनेतदतिसुंदरंवपुर्दिदृक्षवः ॥ ४ ॥ व्यचक्षतअपश्यन् ॥ ५ ॥ स्वर्गोद्यानस्थैर्माल्यैःचित्राणिशृंखलाबंधप्रायाणिपदानिअर्थाश्चयासु ताभिर्गीर्भिः ॥ ६ ॥ बुद्धींद्रियादिभिर्दर्शनादिनाप्राणेनचबलहेतुनादंडवत्प्रणिपातेननतावयंनमस्कृतवंतः स्मेतिविस्मये यथाहुः दो र्भ्यांपदाभ्यांजानुभ्यामुरसाशिरसादृशा मनसावचसाचेतिप्रणामोऽष्टांगईरितइति स्मशब्दोक्तविस्मयायविशेषणं कर्ममयादुरुपाशान्मुमु क्षुभिर्भावयुक्तैरपियत्केवलमंतर्हृदिचिंत्यतेनतुदृश्यते तद्वयंनताःअहोभाग्यमित्यर्थः ॥ ७ ॥ ननुममापिदृष्टादृष्टकर्मकरणात्कुतोमत्पदार

इंद्रोमरुद्भिर्भगवानादित्यावसवोऽश्विनौ ॥ ऋभवोंऽगिरसोरुद्राविश्वेसाध्याश्चदेवताः ॥ २ ॥ गंधर्वाप्स रसोनागाःसिद्धचारणगुह्यकाः ॥ ऋषयःपितरश्चैवसविद्याधकिन्नराः ॥ ३ ॥ द्वारकामुपसंजग्मुःस र्वेकृष्णदिदृक्षवः ॥ वपुषायेनभगवान्नरलोकमनोरमः ॥ यशोवितेनेलोकेषुसर्वलोकमलापहं ॥ ४ ॥तस्यां विभ्राजमानायांसमृद्धायांमहार्द्धिभिः ॥ व्यचक्षतावितृप्ताक्षाःकृष्णमद्भुतदर्शनं ॥ ५ ॥ स्वर्गोद्यानोपगै र्माल्यैश्छादयंतोयदूत्तमं ॥ गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरं ॥ ६ ॥ देवाऊचुः नताःस्मते नाथपदारविंदंबुद्धींद्रियप्राणमनोवचोभिः ॥ यच्चिंत्यतेंऽतर्हृदिभावयुक्तैर्मुमुक्षुभिःकर्ममयोरुपाशात् ॥७॥ त्वंमाययात्रिगुणयात्मनिदुर्विभाव्यंव्यक्तंसृजस्यवसिलुंपसितद्गुणस्थः ॥ नैतैर्भवानजितकर्मभिरज्यतेवै यत्स्वेसुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥ ८ ॥ ॥ ॥ ॥ ॥

विंदंचितनंकर्मपाशान्मुमुक्षुभिःक्रियतेतत्राहुः त्वमिति हेअजितआस्तामिदानींतनमिदमत्यल्पंकर्मत्वंव्यक्तंमहदादिप्रपंचंसृजसिपालय सिसंहरासिच तदप्यात्मन्येवनपृथक् दुर्विभाव्यंमनसाप्यवितर्क्यं तद्गुणस्थस्तस्यामायायागुणेषुनियंतृत्वेनास्थितःअतएवतैःकर्मभिर्भवा न्नाज्यतेनालिप्यते कुतः योभवान्अनवद्यःरागादिरहितःयतःस्वेआत्मरूपेसुखेअव्यवहितेअनावृतेअभिरतः अतस्त्वंकर्मकुर्वन्नप्या त्मारामःपरमेश्वरइतिमुमुक्षुभिश्चिंत्यसइतिभावः ॥ ८ ॥ ॥ ॥

नन्वात्मारामस्यकिंकर्मकरणेनातआहुः शुद्धिरिति हेईड्यहेऋषभदुराशयानांरागिणां विद्याउपासना विद्यादिभिस्तथाशुद्धिर्नभवतिस
त्त्वात्मनांसतांतेयशसिश्रवणेनसंभृतयापरिपुष्टयाअभिवृद्धयासच्छ्रद्धयायथास्यात् परमपावनस्ययशसोवितानायतवकर्माचरणमितिभावः
॥ ९ ॥ तदेवंत्वद्यशःश्रद्धैवशुद्धिहेतुरस्माभिस्तुतवांघ्रिर्दृष्टः अतस्तवांघ्रिर्नोऽस्माकमशुभाशयानांविषयवासनानांधूमकेतुस्तद्दाहकःस्यात्
कथंभूतःयःक्षेमायमोक्षायमुनिभिर्मुमुक्षुभिःप्रेमार्द्रहृदाऊह्यमानश्चिंत्यमानः यश्चसात्वतैर्भक्तैःसमविभूतयेसमानैश्वर्यायवासुदेवादिव्यूहेऽर्चि
तः तेषुचकैश्चिदात्मवद्भिर्धीरैःस्वरतिक्रमायस्वर्गमतिक्रम्यवैकुंठप्राप्तयेसवनशस्त्रिकालमर्चितः ॥ १० ॥ किंच प्रयतपाणिभिःसंयतह

शुद्धिर्नृणांनतुतथेड्यदुराशयानांविद्याश्रुताध्ययनदानतपःक्रियाभिः ॥ सत्वात्मनामृषभतेयशसिप्रवृद्ध
सच्छ्रद्धयाश्रवणसंभृतयायथास्यात् ॥ ९ ॥ स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुःक्षेमाययोमुनिभिरार्द्रहृदो
ह्यमानः ॥ यःसात्वतैःसमविभूतयआत्मवद्भिर्व्यूहेऽर्चितःसवनशःस्वरतिक्रमाय ॥ १० ॥ यश्चिंत्यतेप्रय
तपाणिभिरध्वराग्नौत्रय्यानिरुक्तविधिनेशहविर्गृहीत्वा ॥ अध्यात्मयोगउतयोगिभिरात्ममायांजिज्ञासु
भिःपरमभागवतैःपरीष्टः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

स्तैर्हविर्गृहीत्वाअध्वराग्नौआहवनीयादौयाज्ञिकैर्यश्चिंत्यते ननुयस्यैदेवतायैहविर्गृहीतंस्यात्तांध्यायेद्वषट्करिष्यन्निितिवचनात्तत्तद्देवताश्चिंत्यंते
अतआहुःत्रय्यानिरुक्तेनविधिनाइंद्रादिरूपेणैवयज्ञपुरुषश्चिंत्यतइत्यर्थःउतकिंच अध्यात्मयोगेआत्माधिकारेयोगेयोगिभिरपिआत्मनस्तव
मायाअणिमादिस्तांजिज्ञासुभिस्तत्तत्कामैर्यश्चिंत्यते परमभागवतैस्तुमुक्तैर्यः परीष्टः सर्वतः पूजितः सतवांघ्रिर्नोऽशुभाशयधूमकेतुः
स्यादितिपूर्वेणान्वयः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एतेषांचमुनिसात्वतादीनांषण्णांसेवकानांमध्येपरमभागवतेषुलक्ष्म्याअपितवप्रीतिराधिकेतिसंस्तुवंति पर्युष्टयेति इडभावश्छांदसः अहं यत्रवसामितत्रैववक्षसिपर्युषितापीयंवसतीतिप्रतिपत्निवत्सपत्नीवत्श्रीःसंस्पर्धमानाभवतितथापिस्पर्धमानांश्रियमनादृत्ययोभवान्पर्यु षितयापिअमुयावनमालयाभक्तैरर्पितेयमितिप्रीत्यासुप्रणीतंसुष्ठुसंपादितंयथाभवतितथाऽर्हणंपूजामाददत्स्वीकृतवान् सुप्रणीतमित्यर्हणविशेषणंवा तस्यतवांघ्रिर्नोऽशुभाशयधूमकेतुर्भूयात् यद्वा योंऽघ्रिरमुयासुप्रणीतमर्हणमाददत्सनोऽशुभाशयधूमकेतुर्भूयादित्यन्वयःअ थवैवंसंबंधः एतेभ्योध्यानार्चनादिनिष्ठेभ्योपित्वद्यशासिप्रवृद्धसच्छ्रद्धावंतएवकृतार्थाभगवतोयशःप्रियत्वादित्याहुः पर्युष्टया वशकांता वित्यस्मात्परितः सर्वांगेउष्टयाकांतयाशोभितयावनमालयावक्षसिएकदेशेवर्तमानाश्रीः संस्पर्धमानाभवतितथाऽप्याम्नायमधुव्रतैर्बहुधाव र्णितयाकीर्तिमय्यावैजयंत्यावनमालयैवयोभवान्सुप्रणीतमर्हणमाददादित्यादिपूर्ववत् ॥ १२ ॥ त्वच्चरणस्यभक्तपक्षपातःप्रसिद्धएवेतिस्तु वंतःप्रार्थयंते केतुरिति बलिबंधनेत्रिभिर्विक्रमैर्युतः तत्रद्वितीयविक्रमेसत्यलोकंगतस्तवपादःकेतुरत्युच्छ्रितोविजयध्वजइवतत्संपादयंति

पर्युष्टयातवविभोवनमालयेयंसंस्पर्धिनीभगवतीप्रतिपत्निवच्छ्रीः ॥ यःसुप्रणीतममुयाऽर्हणमाददन्नोभू यात्सदांघ्रिरशुभाशयधूमकेतुः॥१२॥केतुस्त्रिविक्रमयुतस्त्रिपतत्पताकोयस्तेभयाभयकरोऽसुरदेवचम्वोः॥ स्वर्गायसाधुषुखलेष्वितरायभूमन्पादःपुनातुभगवन्भजतामघंनः ॥१३॥ नस्योतगावइवयस्यवशेभवंति ब्रह्मादयस्तनुभृतोमिथुरर्द्यमानाः॥ कालस्यतेप्रकृतिपूरुषयोःपरस्यशंनस्तनोतुचरणःपुरुषोत्तमस्य ॥१४॥

त्रिपतत्पताकःत्रिधापतंतीत्रिषुलोकेषुवापतंतीगंगापताकायस्य तथाअसुरदेवचम्वोस्तत्सेनयोरुभयोर्भयाभयकरः साधुषुसुरेषुस्वर्गाय खलेषुअसुरेषुइतरायइतरस्मैअधोगमनाय यएवंकेतुरूपस्तेपादःसभजतांनःअघंपुनातुशोधयतु अघादितिपाठेभजतांनःइतिकर्मणिष ष्ठ्यौ अघाद्भजतोऽस्मान्पुनात्विति तथाचश्रुतिः चरणंपवित्रंविततंपुराणंयेनपूतस्तरतिदुष्कृतानि तेनपवित्रेणशुद्धेनपूताआतिपाप्मानम रातिंतरेम लोकस्यद्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानंमहस्वत् अमृतस्यधाराबहुधादोहमानं चरणंनोलोकेसुधितांदधात्विति ॥१३॥ ननुयुद्धेदेवासुरादयःपरस्परंजयंतिजीयंतेचकिमहंतत्रेत्यतआहुः नस्योति मिथुःमिथःअर्द्यमानायुद्धादिभिःपीड्यमानाब्रह्मादयोऽपिय स्यतववशेभवंतिनतुजयेपराजयेवास्वतंत्राः केइवनसिनासिकायामोतानासिकामाविरध्यबद्धागावोबलीवर्दाइव कुतः कालस्यकलयि तुःप्रवर्तकस्य तदेवकुतः प्रकृतिपुरुषयोरपिपरस्यतस्यतेपुरुषोत्तमस्यपादोनःशंतनोतु ॥ १४ ॥ ॥ ॥

प्रकृतिपुरुषाभ्यांपरत्वमुपपादयंतःकालत्वेनपुरुषोत्तमत्वमाहुः अस्येति अस्यजगतउदयादीनांहेतुरसि कुतः अव्यक्तंप्रकृतिःजीवःपुरुषः
महान्महत्तत्त्वंतेषांकालंनियंतारंत्वामाहुः अक्षरात्परतःपरः महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरि
त्याद्याःश्रुतयः किंच अयंसंवत्सरात्मकोयःकालस्त्रिणाभिस्त्रीणिचातुर्मास्यानिनाभयोयस्यसोऽपित्वमेव अतस्त्वमुत्तमःपुरुषइति तथाचगी
तासु यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः ॥ ततोऽस्मिँलोकेवेदेचप्रथितःपुरुषोत्तमइति ॥ १५ ॥ त्वमेवप्रकृत्यादिद्वाराजगत्सृष्ट्यादि
हेतुरित्युक्तंतत्केनप्रकारेणतदाहुः त्वत्तइति त्वत्तःपुरुषोवीर्यंशक्तिंसमधिगम्यप्राप्ययामाययासहमहांतंधत्ते कमिव अस्यविश्वस्यगर्भममि
व सोऽयंमहांस्तयैवमाययाऽनुगतःसन्नात्मनःसकाशादांडकोशंससर्ज त्वयानुगतइतिपाठेऽपिययामाययात्वयाऽधिष्ठितःसन्निति ॥ १६ ॥

अस्यासिहेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपिकालमाहुः ॥ सोऽयंत्रिणाभिरखिलापचयेप्रवृ
त्तःकालोगभीररयउत्तमपूरुषस्त्वं ॥ १५ ॥ त्वत्तःपुमान्समधिगम्यययाऽस्यवीर्यंधत्तेमहांतमिवगर्भममो
घवीर्यः ॥ सोऽयंतयाऽनुगतआत्मनआंडकोशंहैमंससर्जबहिरावरणैरुपेतं ॥ १६ ॥ तत्तस्थुषश्चजगतश्च
भवानधीशोयन्माययोत्थगुणविक्रिययोपनीतान् ॥ अर्थान्जुषन्नपिहृषीकपतेनलिप्तोयेऽन्येस्वतःपरिहृ
तादपिबिभ्यतिस्म ॥ १७ ॥ स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्य
स्तुषोडशसहस्रमनंगबाणैर्यस्येंद्रियंविमथितुंकरणैर्नविभ्व्यः ॥ १८ ॥ ॥

नन्वेवंभूतमीश्वरत्वंममकुतोऽवगतंतदाहुः तदिति तत्तस्मात्तस्थुषःस्थावरस्यजगतोजंगमस्यचभवानधीशःयद्यस्मान्माययाउत्थाउज्जृंभि
तायागुणविक्रियाइंद्रियवृत्तिस्तयोपनीतान्अर्थान्विषयान्जुषन्जुषमाणोपिहेहृषीकपतेनलिप्तस्त्वंयेत्वन्येजीवायोगिनोवास्वतः परिहृता
दपिअविद्यमानात्त्यक्ताद्वाविषयजोषणाद्बिभ्यति वासनामात्रेणबध्यंतइत्यर्थः ॥ १७ ॥ अलिप्तत्वमाहुः स्मायेति स्मायावलोकोमंद
स्मितविलसितोऽवलोकस्तस्यलवःकटाक्षस्तेनदर्शितोयोभावोभिप्रायस्तेनमनोहारियत्भ्रूमंडलंतेनप्रहितायेसौरतामंत्रास्तैःशौंडैःप्रगल्भैः
अनंगबाणैः कामस्यबाणैः संमोहनैः करणैः कामकलादिभिः षोडशसहस्रंपत्न्योयस्येंद्रियंमनोविमथितुंक्षोभयितुंनविभ्व्योनसमर्थाः
सभवान्नलिप्तइतिपूर्वेणान्वयः ॥ १८ ॥ ॥ ॥ ॥ ॥

तस्मात्तवअमृतरूपायाकथातदेवउदकंवहंतीतितथाकीर्तिनद्यः तथापादावनेजसरितोगंगायाश्चत्रिलोक्याःशमलानिहंतुंविभ्व्यः केन प्रकारेण आनुश्रवंगुरोरुच्चारणमनुश्रूयतइत्यनुश्रवोवेदस्तत्रभवंकीर्तिरूपंतीर्थंश्रुतिभिःश्रवणेंद्रियैरंघ्रिजंचांगसंगैरेवंशुचिषदःस्वाश्रमधर्म स्थितास्तवतीर्थद्वयमुपस्पृशंतिसेवंतइति ॥ १९ ॥ विबुधैःसह ॥ २० ॥ २१ ॥ विक्षिप्ताविस्तारिता ॥ २२ ॥ उद्दामानिवृत्तानि

विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याःपादावनेजसरितःशमलानिहंतुं॥आनुश्रवंश्रुतिभिरंघ्रिजमंगसंगै स्तीर्थद्वयंशुचिषदस्तउपस्पृशंति ॥ १९ ॥ बादरायणिरुवाच इत्यभिष्टूयविबुधैःसेशःशतधृतिर्हरिं ॥ अ भ्यभाषतगोविंदंप्रणम्यांबरमाश्रितः ॥ २० ॥ ब्रह्मोवाच भूमेर्भारावतारायपुराविज्ञापितःप्रभो ॥ त्वम स्माभिरशेषात्मंस्तत्तथैवोपपादितं ॥२१॥धर्मश्चस्थापितःसत्सुसत्यसंधेषुवैत्वया ॥ कीर्तिश्चदिक्षुविक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥ अवतीर्ययदोर्वंशेबिभ्रद्रूपमनुत्तमं ॥ कर्माण्युद्दामवृत्तानिहितायजगतोऽकृथाः ॥ २३ ॥ यानितेचरितानीशमनुष्याःसाधवःकलौ ॥ शृण्वंतःकीर्तयंतश्चतरिष्यंत्यंजसातमः ॥ २४ ॥ यदुवं शेऽवतीर्णस्यभवतःपुरुषोत्तम ॥ शरच्छतंव्यतीयायपंचविंशाधिकंप्रभो ॥ २५ ॥ नाधुनातेऽखिलाधारदेव कार्यावशेषितं ॥ कुलंचविप्रशापेननष्टप्रायमभूदिदं ॥ २६ ॥ ततःस्वधामपरमंविशस्वयदिमन्यसे ॥ सलो कॉंल्लोकपालान्नःपाहिवैकुंठकिंकरान् ॥ २७ ॥ श्रीभगवानुवाच अवधारितमेतन्मेयदात्थविबुधेश्वर ॥ कृतंवःकार्यमखिलंभूमेर्भारोवतारितः ॥ २८ ॥ तदिदंयादवकुलंवीर्यशौर्यश्रियोद्धतं ॥ लोकंजिघृक्षद्रुद्धं मेवेलयेवमहार्णवः ॥ २९ ॥ यद्यसंहृत्यदृप्तानांयदूनांविपुलंकुलं ॥ गंतास्म्यनेनलोकोयमुद्वेलेनविनंक्ष्यति ॥ ३० ॥ इदानींनाशआरब्धःकुलस्यद्विजशापजः ॥ यास्यामिभवनंब्रह्मन्नेतदंतेतवानघ ॥ ३१ ॥

विक्रमायेषुतानिकर्माणि ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ वीर्यशौर्ययुक्तयाश्रिया ॥ २९ ॥ उद्वेलेनलंघितमर्यादेन ॥ ३० ॥ वैकुंठंयास्यंस्तवभवनंयास्यामि ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ प्रभासंयास्यामइतिवदतोऽयमभिप्रायः एतेदेवांशाःस्वाधिकारानेवार्हतिनतुसद्योमोक्षं द्वारवत्यांमृतामुच्येरंस्त स्मादभ्युदयफलंप्रभासंनेष्यामीति ॥ ३५ ॥ दक्षशापात्यक्ष्मणागृहीतउडुराट्चंद्रोयत्रस्नानमात्रंकृत्वाकिल्बिषात्तस्माद्रोगदुःखात्सद्यो



श्रीशुकउवाच इत्युक्तोलोकनाथेनस्वयंभूःप्रणिपत्यतं ॥ सहदेवगणैर्देवःस्वधामसमपद्यत ॥ ३२ ॥ अथ तस्यांमहोत्पातान्द्वारवत्यांसमुत्थितान् ॥ विलोक्यभगवानाहयदुवृद्धान्समागतान् ॥३३॥ श्रीभगवानुवाच एतेवैसुमहोत्पाताव्युत्तिष्ठंतीहसर्वतः ॥ शापश्चनःकुलस्यासीद्ब्राह्मणेभ्योदुरत्ययः ॥ ३४ ॥ नवस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ॥ प्रभासंसुमहत्पुण्यंयास्यामोऽद्यैवमाचिरं ॥ ३५ ॥ यत्रस्नात्वादक्षशापाद्गृहीतोयक्ष्मणोडुराट् ॥ विमुक्तःकिल्बिषात्सद्योभेजेभूयःकलोदयं ॥ ३६ ॥ वयंचतस्मिन्नाप्लुत्य तर्पयित्वापितॄन्सुरान् ॥ भोजयित्वोशिजोविप्रान्नानागुणवतांऽधसा ॥ ३७ ॥ तेषुदानानिपात्रेषुश्रद्धयोप्त्वामहांतिवै ॥ वृजिनानितरिष्यामोदानैर्नौभिरिवार्णवं ॥ ३८ ॥ श्रीशुकउवाच एवंभगवतादिष्टायादवाःकुलनंदन ॥ गंतुंकृतधियस्तीर्थंस्यंदनान्समयूयुजन् ॥ ३९ ॥ तन्निरीक्ष्योद्धवोराजञ्छ्रुत्वाभगवतोदितं ॥ दृष्ट्वाऽरिष्टानिघोराणिनित्यंकृष्णमनुव्रतः ॥ ४० ॥ विविक्तउपसंगम्यजगतामीश्वरेश्वरं ॥ प्रणम्यशिरसापादौप्रांजलिस्तमभाषत ॥ ४१ ॥ उद्धवउवाच देवदेवेशयोगेशपुण्यश्रवणकीर्तन ॥ संहृत्यैतत्कुलंनूनंलोकंसंत्यक्ष्यतेभवान् ॥ विप्रशापंसमर्थोऽपिप्रत्यहन्नयदीश्वरः ॥४२ ॥ नाहंतवांघ्रिकमलंक्षणार्द्धमपिकेशव ॥ त्यक्तुंसमुत्सहेनाथस्वधामनयमामपि ॥ ४३ ॥ ॥ ॥ ॥



विमुक्तःसन्भूयःकलावृद्धिंभेजे ॥ ३६ ॥ उशिजःकमनीयान् अंधसाअन्नेन ॥ ३७ ॥ उप्त्वेति यथासुक्षेत्रेबीजमुप्तंबहुफलंभवतितथा दानंसत्पात्रेइतिद्योतयाति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ लोकंमर्त्यलोकं नप्रत्यहन्नप्रतिहतवान् ॥ ४२ ॥ ४३ ॥ ॥

॥ ४४ ॥ शय्यादिषुत्वांभक्तानित्यंसेवितवंतोवयंकथंत्यजेम ॥ ४५ ॥ त्यक्तुमशक्नुवन्प्रार्थयतेनमायाभयादित्याह त्वयेति चर्चिताअलंकृताः हिनिश्चितंजयेम ॥ ४६ ॥ संन्यासिनोहिब्रह्मचर्यादिक्लेशैःकथंचित्तरंतिवयंत्वनायासेनैवतरिष्यामइत्याह वाताशनाइति ऊर्ध्वमंथिनःऊर्ध्वरेतसः ॥ ४७ ॥ तावकैर्भक्तैःसहत्वद्वार्तयादुस्तरंतमःसंसारं ॥ ४८ ॥ क्ष्वेलीपरिहासः द्वंद्वैकत्वं ॥ ४९ ॥ एकांतिनमित्या

तवविक्रीडितंकृष्णनृणांपरममंगलं ॥ कर्णपीयूषमास्वाद्यत्यजत्यन्यस्पृहांजनः ॥ ४४ ॥ शय्यासनाटनस्थानस्नानक्रीडाऽशनादिषु ॥ कथंत्वांप्रियमात्मानंवयंभक्तास्त्यजेमहि ॥ ४५ ॥ त्वयोपभुक्तस्रग्गंधवासोऽलंकारचर्चिताः ॥ उच्छिष्टभोजिनोदासास्तवमायांजयेमहि ॥ ४६ ॥ वाताशनायऋषयःश्रमणाऊर्ध्वमंथिनः ॥ ब्रह्माख्यंधामतेयांतिशांताःसंन्यासिनोऽमलाः ॥ ४७ ॥ वयंत्विहमहायोगिन्भ्रमंतःकर्मवर्त्मसु ॥ त्वद्वार्तयातरिष्यामस्तावकैर्दुस्तरंतमः ॥ ४८ ॥ स्मरंतःकीर्तयंतस्तेकृतानिगदितानिच ॥ गत्युत्स्मितेक्षणक्ष्वेलियन्नृलोकविडंबनं ॥ ४९ ॥ श्रीशुकउवाच एवंविज्ञापितोराजन्भगवान्देवकीसुतः ॥ एकांतिनंप्रियंभृत्यमुद्धवंसमभाषत ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥
श्रीभगवानुवाच यदात्थमांमहाभागतच्चिकीर्षितमेवमे ॥ ब्रह्माभवोलोकपालाःस्वर्वासंमेऽभिकांक्षिणः ॥ १ ॥ मयानिष्पादितंह्यत्रदेवकार्यमशेषतः ॥ तदर्थमवतीर्णोऽहमंशेनब्रह्मणाऽर्थितः ॥ २ ॥ कुलंवैशापनिर्दग्धंनंक्ष्यत्यन्योऽन्यविग्रहात् ॥ समुद्रःसप्तमेह्न्येतांपुरींचप्लावयिष्यति ॥ ३ ॥ यर्ह्येवायंमयात्यक्तोलोकोऽयंनष्टमंगलः ॥ भविष्यत्यचिरात्साधोकलिनापिनिराकृतः ॥ ४ ॥

दिस्वाभिप्रायवचनेहेतुः ॥ ५० ॥ इत्येकादशेटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ सप्तमेतूद्धवस्यात्मज्ञानासित्ध्यैहरिःस्वयं ॥ अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥ १ ॥ यदात्थसंहृत्यैतत्कुलमिति स्वर्वासंवैकुंठवासंप्रति ॥ १ ॥ २ ॥ त्वंचसर्वत्यागेनात्मनिष्ठोभवेतिवक्तुमाह कुलमितित्रयेण ॥ ३ ॥ तदैवायंनष्टमंगलोभविष्यति निराकृतोनितरामाक्रांतः ॥ ४ ॥ ॥ ॥

नवस्तव्यमेवत्वत्या ॥ ५ ॥ ६ ॥ ननुगुणदोषाभ्यांविषमेलोकेकुतःसमदृष्टिःस्यामतआह यदिदमिति मनआदिभिर्गृह्यमाणंमनोमयत्वा न्मायेतिविद्धि तदपिनस्थिरंकिंतुनश्वरंविद्धि ॥ ७ ॥ मनोमयत्वेहेतुः पुंसइति अयुक्तस्याविक्षिप्तमनसः नानार्थोभेदविषयोभ्रमः सभ्र मएवगुणदोषभाक् ननुवेदेनैवविधिनिषेधाभ्यांभेदस्यसत्यतोक्ता न भ्रमविजृंभितगुणदोषबुद्धेःपुंसःकर्मविहितं अकर्मतल्लोपः विकर्म निषिद्धमितिभेदः अविद्यावद्विषयएववेदइत्यर्थः ॥ ८ ॥ कथमात्मानिपरिच्छिन्नेविततंजगदीक्षणीयंतत्राह आत्मानमिति मयिब्रह्मणि तद्रूपेणेक्षस्व ॥ ९ ॥ नन्वेवंयुक्तचित्तत्वेनकर्माकरणेदेवादयोविघ्नान्करिष्यंतितत्राह ज्ञानेति ज्ञानंवेदतात्पर्यनिश्चयः विज्ञानंतदर्थानु

**नवस्तव्यंत्वयैवेहमयात्यक्तेमहीतले ॥ जनोऽधर्मरुचिर्भद्रभविष्यतिकलौयुगे ॥ ५॥ त्वंतुसर्वंपरित्यज्यस्नेहंस्वजनबंधुषु ॥ मय्यावेश्यमनःसम्यक्समदृग्विचरस्वगां ॥ ६ ॥ यदिदंमनसावाचाचक्षुर्भ्यांश्रवणादिभिः ॥ नश्वरंगृह्यमाणंचविद्धिमायामनोमयं ॥ ७ ॥ पुंसोऽयुक्तस्यनानाऽर्थोभ्रमःसगुणदोषभाक् ॥ कर्माकर्मविकर्मेतिगुणदोषधियोभिदा ॥ ८ ॥ तस्माद्युक्तेंद्रियग्रामोयुक्तचित्तइदंजगत् ॥ आत्मनीक्षस्वविततमात्मानंमय्यधीश्वरे ॥ ९ ॥ ज्ञानविज्ञानसंयुक्तआत्मभूतःशरीरिणां ॥ आत्मानुभवतुष्टात्मानांतरायैर्विहन्यसे ॥ १० ॥ दोषबुद्ध्योभयातीतोनिषेधान्ननिवर्तते ॥ गुणबुद्ध्याचविहितंनकरोतियथाऽर्भकः ॥ ११ ॥ सर्वभूतसुहृच्छांतोज्ञानविज्ञाननिश्चयः ॥ पश्यन्मदात्मकंविश्वंनविपद्येतवैपुनः ॥ १२ ॥ श्रीशुकउवाच इत्यादिष्टोभगवतामहाभागवतोनृप ॥ उद्धवःप्रणिपत्याहतत्त्वजिज्ञासुरच्युतं ॥ १३ ॥**

भवःताभ्यांसम्यग्युक्तः ततआत्मानुभवेनैवतुष्टचित्तः अतःशरीरिणांदेवादीनामात्मभूतः अंतरायैर्नप्रतिहन्यसे अयंभावः यावदनुभवंय थाश्रमंकर्माणिकुर्यादेव तदनंतरंसर्वेषामात्मभूतत्वान्नकोपिविघ्नानाचरति तथाचश्रुतिः तस्यहनदेवाश्चनाभूत्याईशिरे आत्माह्येषांसभव तीति ॥ १० ॥ नचोत्पन्नज्ञानस्यापियथेष्टाचरणप्रसंगइत्याह दोषबुद्ध्येति गुणदोषबुद्ध्यातीतोपिप्राक्तनसंस्कारान्निषेधान्निवर्ततएव किंतुनदोषबुद्ध्या विहितंचप्रायशःकरोतिनगुणबुद्ध्या यथाऽर्भकःसंकल्पविकल्परहितःकिंचित्करोतिकुतश्चिन्निवर्ततेतद्वत् ॥ ११ ॥ एवंभूतस्यनपुनःसंसारइत्याह सर्वभूतेति नविपद्येतनपुनःसंसरेत् ॥ १२ ॥ १३ ॥ ॥ ॥

त्वंतुसर्वंपरित्यज्येत्याद्युपदेशमात्मनोऽयोग्यंमन्वानःपृच्छति योगेशेति योगफलदायिन् योगविदांन्यासोनामातिगोप्योनिक्षेपविशेषः यद्वा योगोविन्यस्यतेक्रियतेयस्मिन् योगात्मन्योगे आत्माप्रकटोभवतियस्य योगस्वरूपेतिवा योगस्यसंभवोयस्मात् चतुर्भिरेतैःसंबोधनैःस्वमहिम्नाकेवलंत्वयोपदिष्टंनतुमदधिकारंपर्यालोच्येतिद्योतितं तदाह निःश्रेयसायेति नचारोग्याद्यर्थंसर्वस्वदानादिवदर्थत्यागः किंतुसंन्यासलक्षणःअप्रत्यापत्तिरूपः ॥ १४ ॥ १५ ॥ यंप्रतित्यागाद्युपादिष्टंसोऽहंमूढमतिः कुतः ममेतिअहमितिचसानुबंधेपुत्रादिसहितेत्वन्माययाविरचितेआत्मानिदेहेविगाढोनिमग्नः अतस्तत्तुभगवतानिगदितंयथाहमंजसासंसाधयामितथाभृत्यंमामनुशाधिशनैःशिक्षय ॥ १६ ॥ मयासंक्षेपतउक्तंविस्तरतस्त्वन्यान्पृच्छेतिचेदतआह सत्यस्येति स्वदृशःस्वप्रकाशस्यसत्यस्यात्मनःआत्मनोमांप्रतिवक्तारंते

**उद्धवउवाच योगेशयोगविन्यासयोगात्मन्योगसंभव॥निःश्रेयसायमेप्रोक्तस्त्यागःसंन्यासलक्षणः॥१४॥ त्यागोऽयंदुष्करोभूमन्कामानांविषयात्मभिः॥सुतरांत्वयिसर्वात्मन्नभक्तैरितिमेमतिः॥१५॥ सोऽहंममाहमितिमूढमतिर्विगाढस्त्वन्माययाविरचितात्मनिसानुबंधे॥तत्त्वंजसानिगदितंभवतायथाहंसंसाधयामिभगवन्ननुशाधिभृत्यं ॥ १६ ॥ सत्यस्यतेस्वदृशआत्मनआत्मनोऽन्यंवक्तारमीशविबुधेष्वपिनानुचक्षे ॥ सर्वेविमोहितधियस्तवमाययेमेब्रह्मादयस्तनुभृतोबहिरर्थभावाः॥ १७॥ तस्माद्भवंतमनवद्यमनंतपारंसर्वज्ञमीश्वरमकुंठविकुंठधिष्ण्यं ॥ निर्विण्णधीरहमुहवृजिनाभितप्तोनारायणंनरसखंशरणंप्रपद्ये ॥ १८ ॥**

त्वत्तोऽन्यंनानुचक्षेनपश्यामि स्वदृशःस्वतःसिद्धज्ञानात्त्वत्तोऽन्यमितिवा कुतइत्यतआह सर्वइति बहिरर्थभावाविषयेष्वर्थबुद्धयः ॥ १७ ॥ केचिद्दुःशीलाभवंति केचित्सेविताःफलकालेविनश्यंतिकेचिदज्ञाः केचिद्रक्षणेऽसमर्थाःकेचित्तुस्थानाद्भ्रष्टास्तद्व्यावृत्त्यर्थमनवद्यमित्यादीनिपंचविशेषणानि नअंतःकालतःपारंदेशतश्चयस्यतम् कालादिभिरकुंठोलोकोधिष्ण्यंस्थानंयस्यतं उहेभगवन् हरस्फुटम् निर्वेदेहेतुः वृजिनैर्दुःखैरभितप्तः हकारगौरवायवृकारोयुक्तइवपठनीयः नन्वनवद्यत्वादीनिकुतोममतदाह नारायणमिति अनुकंपितामाह नरसखंनीयतेविक्षिप्यतेदुःखैरितिनरोजीवस्तस्यसखायंभवंतंशरणंप्रपद्ये ॥ १८ ॥ ॥ ॥

तदेवमसंभावनाविपरीतभावनाभ्यामुपादिष्टंतत्त्वमनवगाहमानप्रंतितान्निवृत्तयेगुरूपदेशंविना ऽपिस्वान्वयव्यतिरेकाभ्यामेवतत्त्वप्रतिपत्ति र्भवतीतिदर्शयितुमाह प्रायेणेति लोकतत्त्वस्यविचक्षणाःपरीक्षकाः अशुभाशयाद्विषयवासनातः ॥ १९ ॥ तदुपपादयति आत्मनःप श्वादिशरीरेऽप्यात्मैवहिताहितज्ञानेगुरुः ॥ २० ॥ तत्रप्रत्यक्षंदर्शयति पुरुषत्वेचेति तथाचश्रुतिः पुरुषत्वेचाविस्तरामात्मासहिप्रज्ञाने नसंपन्नतमोविज्ञातंवदतिविज्ञातंपश्यतिवेदश्वस्तनंवेदलोकालोकौमर्त्येनामृतमप्सित्यवेसंपन्ना ऽथेतरेषांपशूनामशनापिपासेएवाभिवि ज्ञानमिति ॥ २१ ॥ अतःपुरुषंस्तौति एकइति ॥ २२ ॥ अनुमानमाह अत्रपौरुष्यांपुरि युक्ताअप्रमत्ताअग्राह्यंग्राह्येभ्योव्यतिरिक्तंमाम

श्रीभगवानुवाच प्रायेणमनुजालोकेलोकतत्त्वविचक्षणाः ॥ समुद्धरंतिह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥ आत्मनोगुरुरात्मैवपुरुषस्यविशेषतः ॥ यत्प्रत्यक्षानुमानाभ्यांश्रेयोऽसावनुविंदते ॥ २० ॥ पुरुषत्वेचमांधीराःसांख्ययोगविशारदाः ॥ आविस्तरांप्रपश्यंतिसर्वशक्त्युपबृंहितम् ॥ २१ ॥ एकद्वित्रिचतुष्पादोबहुपादस्तथाऽपदः ॥ बह्व्यःसंतिपुरःसृष्टास्तासांमेपौरुषीप्रिया ॥ २२ ॥ अत्रमांमार्गयंत्यद्धा युक्ताहेतुभिरीश्वरम् ॥ गृह्यमाणैर्गुणैर्लिंगैरग्राह्यमनुमानतः ॥२३॥ अत्राप्युदाहरंतीममितिहासंपुरातनं ॥ अवधूतस्यसंवादंयदोरमिततेजसः ॥ २४ ॥ अवधूतंद्विजंकंचिच्चरंतमकुतोभयं ॥ कविंनिरीक्ष्यतरुणंय दुःपप्रच्छधर्मवित् ॥ २५ ॥ यदुरुवाच कुतोबुद्धिरियंब्रह्मन्नकर्तुःसुविशारदा ॥ यामासाद्यभवाँल्लोकंविद्वांश्चरतिबालवत् ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

द्धासाक्षान्मृगयंति मार्गणेप्रकारद्वयमाह गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः जडानांप्रकाशःस्वप्रकाशमेकंविनानघटतइतिअनुपपत्तिमु खेनलक्षकैः तथातैरेवलिंगैर्व्याप्तिमुखेनानुमानतईश्वरंप्रवर्तकंमृगयंते बुद्ध्यादिकरणानिकर्तृप्रयोज्यानिकरणत्वाद्वास्यादिवदिति तदु क्तम् भगवान्सर्वभूतेषुलक्षितःस्वात्मनाहरिः ॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टालक्षणैरनुमापकैरिति नचैतावताआनुमानिकआत्मेतिमंतव्यम् दे हादिव्यतिरिक्तत्वंपदार्थशुद्धिमात्रस्यैवानुमानेनाविवक्षितत्वात् ॥ २३ ॥ भूयोन्वयव्यतिरेकाभ्यामसंभावनादिनिवृत्तावितिहासमाह अत्रा पीति ॥ २४ ॥ २५ ॥ सुविशारदाअतिनिपुणासर्वलोकाविलक्षणा ॥ २६ ॥ ॥ ॥ ॥

सर्वलोकवैलक्षण्यमेवाह प्रायइति धर्मादिषुविवित्सायामात्मविचारेचमानवाःसमीहंतेप्रवर्तंते तत्रापिआयुरादेर्हेतुनाकामनयैव ॥ २७ ॥ त्वंतुनकस्यचित्कर्मणःकर्ताभवसिनकिंचिदीहसेइच्छसि नन्वशक्त्याअज्ञानेनवाअनैपुण्येनवाविरूपत्वेनवाअवाग्मितयावाऔदासीन्यं घटतएवनेत्याह कल्पइत्यादिना ॥ २८ ॥ महानानंदश्चतवकुतइतिपृच्छाति जनेष्विति ॥ २९ ॥ स्पर्शविहीनस्यविषयभोगरहि

प्रायोधर्मार्थकामेषुविवित्सायांचमानवाः ॥ हेतुनैवसमीहंतेआयुषोयशसःश्रियः ॥ २७ ॥ त्वंतुकल्पःकविर्दक्षःसुभगोऽमृतभाषणः ॥ नकर्तानेहसेकिंचिज्जडोन्मत्तपिशाचवत् ॥ २८ ॥ जनेषुदह्यमानेषुकामलोभदवाग्निना ॥ नतप्यसेऽग्निनामुक्तोगंगांभस्तइवद्विपः ॥ २९ ॥ त्वंहिनःपृच्छतांब्रह्मन्नात्मन्यानंदकारणं ॥ ब्रूहिस्पर्शविहीनस्यभवतःकेवलात्मनः ॥ ३० ॥ श्रीभगवानुवाच यदुनैवंमहाभागोब्रह्मण्येनसुमेधसा ॥ पृष्टःसभाजितःप्राहप्रश्रयावनतंनृपं ॥ ३१ ॥ ब्राह्मणउवाच संतिमेगुरवोराजन्बहवोबुद्ध्युपाश्रिताः ॥ यतोबुद्धिमुपादायमुक्तोऽटामीहतान्शृणु ॥ ३२ ॥ पृथिवीवायुराकाशमापोऽग्निश्चंद्रमारविः ॥ कपोतोऽजगरःसिंधुःपतंगोमधुकृद्गजः ॥ ३३ ॥ मधुहाहरिणोमीनःपिंगलाकुररोऽर्भकः ॥ कुमारीशरकृत्सर्पऊर्णनाभिःसुपेशकृत् ॥ ३४ ॥ एतेमेगुरवोराजंश्चतुर्विंशतिराश्रिताः ॥ शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ ३५ ॥ यतोयदनुशिक्षामियथावानाहुषात्मज ॥ तत्तथापुरुषव्याघ्रनिबोधकथयामिते ॥ ॥ ३६ ॥ भूतैराक्रम्यमाणोपिधीरोदैववशानुगैः ॥ तद्विद्वान्नचलेन्मार्गादन्वशिक्षंक्षितेर्व्रतं ॥ ३७ ॥

तस्यअत्रहेतुः केवलात्मनःकलत्रादिशून्यस्य ॥ ३० ॥ ३१ ॥ बुद्ध्यैवोपाश्रिताःस्वीकृतानतूपदेशेन अटामिपर्यटामि ॥ ३२ ॥ गुरूनाहपृथिवीति ॥ ३३ ॥ शोभनंरूपंकीटस्यकरोतीतिसुपेशकृत् ॥ ३४ ॥ मेमयाश्रिताः तदाह एतेषांवृत्तिभिरात्मनःशिक्षाःशिक्षणीयानर्थान्हेयोपादेयादीन्अन्वशिक्षंअनुशिक्षितवानस्मि ॥ ३५ ॥ नाहुषोययातिः ॥ ३६ ॥ क्षितेःक्षमांशिक्षितवानित्याह भूतैरिति आक्रम्यमाणःपीड्यमानः तद्विद्वान्भूतानांदैववशवर्तित्वंविद्वान् व्रतंनियमं ॥ ३७ ॥ ॥ ॥

पर्वतरूपावृक्षरूपाचयापृथिवीतस्याःशिक्षितमाह शश्वदिति सर्वदापरार्थाःपरोपकारार्थाःसर्वाईहायस्यसः परार्थएवएकांततःसंभवोयस्य सः भूभृत्तःपर्वतात् तस्यहिवृक्षतृणनिर्झरप्रसवाक्रियाःपरार्थाएवयथातद्वत्तथानगशिष्योवृक्षशिष्यःसन्परात्मतांपराधीनात्मताम् वृक्षोयथा पैरैरवखंडचोत्पाटचवानयनमप्यनुमन्यतेतद्वत् ॥३८॥ वायुरपिद्विविधःप्राणोबाह्यश्चतत्रप्राणस्यगुरुत्वमाह प्राणवृत्त्येति प्राणोह्याहारादि मात्रेणप्रवर्ततेरूपरसादींनिंद्रियविषयांस्तुनापेक्षतेतथामुनिरपिभवेदित्यर्थः प्राणवृत्तेरकरणेमनोवैकल्येनज्ञाननाशःस्यादतोदेहनिर्वाहःक र्तव्यःगुणलिप्सायांतुवाक्मनश्चविक्षिप्येतअतोनाधिकंलिप्सेदित्याहज्ञानमितिज्ञानंयथाननश्येतमनोवाग्यथानावकीर्येतनविक्षिप्येत॥३९ विषयान्सेवमानोऽपितेष्वनासक्तिंबाह्याद्वायोःशिक्षेदित्याह विषयेष्विति नानाधर्मेषुशीतोष्णादिधर्मकेषु नहिवायुर्वनेदहनेवासज्जतेतद्वत्

शश्वत्परार्थसर्वेहःपरार्थैकांतसंभवः ॥ साधुःशिक्षेतभूभृत्तोनगशिष्यःपरात्मतां ॥ ३८ ॥ प्राणवृत्त्यैवसं तुष्येन्मुनिर्नैवेंद्रियप्रियैः ॥ ज्ञानंयथाननश्येतनावकीर्येतवाङ्मनः ॥ ३९ ॥ विषयेष्वाविशन्योगीनाना धर्मेषुसर्वतः ॥ गुणदोषव्यपेतात्मानविषज्जेतवायुवत् ॥ ४० ॥ पार्थिवेष्विहदेहेषुप्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्नयुज्यतेयोगीगंधैर्वायुरिवात्मदृक् ॥ ४१ ॥ अंतर्हितश्चस्थिरजंगमेषुब्रह्मात्मभावेनसमन्वयेन ॥ व्याप्त्याऽव्यवच्छेदमसंगमात्मनोमुनिर्नभस्त्वंविततस्यभावयेत् ॥ ४२ ॥ तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायु नेरितैः ॥ नस्पृश्यतेनभस्तद्वत्कालसृष्टैर्गुणैःपुमान् ॥ ४३ ॥ ॥ ॥ ॥

॥४०॥ यथावायुर्गंधादिधर्मयोगेनप्रतीयमानोऽपिवस्तुतोनतद्योगीएवंदेहादिधर्मयोगेनाहंप्रत्ययेनप्रतीयमानोप्यात्मा नतद्धर्मवानितिसंभा वितमितिवायोरेवशिक्षितमित्याह पार्थिवेष्विति ॥ ४१ ॥ आकाशाच्छिक्षितंसंभावनाद्वयमाह अंतर्हितश्चेतिद्वयेन अंतर्हितश्चदेहांतर्गतो पिमुनिरात्मनोदेहाद्यसंगमतएवाव्यवच्छेदंचभावयेत् कुतः स्थिरजंगमेषुसमन्वयेनयाव्याप्तिस्तया किंमणिषुसूत्रस्येवव्याप्तिः न वितत स्यसर्वगतस्य तत्कुतः ब्रह्मात्मभावेनब्रह्मस्वरूपभावनया तत्त्वमसीतिश्रुतेःनन्वेतत्सर्वंकथंसंभवतितत्राह नभस्त्वंतत्तुल्यत्वंसंभावयेत् यथानभसःसर्वगतस्यनघटादिभिःसंगःपरिच्छेदोवाएवमात्मनोपिसंभवतीति ॥४२॥ किंच कूटस्थस्यात्मनोनागमापायिदेहादिसंबंध इत्याह तेजोबन्नमयैःतेजश्चआपश्चअन्नंपृथिवीचतन्मयैःकालसृष्टैर्गुणैर्देहादिभिःपुमान्नस्पृश्यतइतिनभोवत्संभवतीति ॥ ४३ ॥

स्वच्छत्वादिभिर्गुणैरुदकंजगत्पुनातीतितद्गुणामयाशिक्षिताइत्याह स्वच्छःनिर्मलः प्रकृतितःस्वभावतः स्निग्धःजनेष्वनुरागवान् माधु
र्योमधुरालापी तीर्थभूःतीर्थस्थानं अपांमित्रमुदकतुल्यः अघादितिपाठेसखायंपापात्पुनाति स्वच्छत्वादिगुणैरर्थादुदकसादृश्यंज्ञातव्यं
॥ ४४ ॥ अग्नेःशिक्षितमाह तेजस्वीति ज्ञानातिशयात् विशेषतस्तपसादीप्तः दुर्धर्षःअक्षोभ्यःसचासावुदरभाजनश्चअपरिग्रहः युक्ता
त्मामुनिः ॥ ४५ ॥ अग्नेरेवशिक्षांतरमाह क्वचिदिति यथाऽग्निःपरेच्छयैवहविर्गृह्णातितथामुनिरित्याह दातॄणामिति प्रागुत्तराशुभंभूतंभ
विष्यच्चपापं ॥ ४६ ॥ आत्मनोदेहोपाधिकमेवोच्चनीचत्वादिनस्वाभाविकमित्यप्यग्निदृष्टांतेनसंभावितमित्याह स्वमाययास्वाविद्ययासृष्टं
सदसल्लक्षणंदेवतिर्यगादिरूपंविप्रशूद्रादिरूपंवा ॥ ४७ ॥ आत्मनोजन्मादिषड्विकाराभावश्चंद्रदृष्टांतेनसंभावितइत्याह विसर्गाद्याइति
विसर्गोजन्म श्मशानंनाशः तत्रेयंज्योतिःशास्त्रप्रक्रिया आप्यमंडलंचंद्रः तेजोमयमंडलमादित्यः तयोरेकनक्षत्रावस्थानेचंद्रोनदृश्यते

**स्वच्छःप्रकृतितःस्निग्धोमाधुर्यस्तीर्थभूर्नृणां ॥ मुनिःपुनात्यपांमित्रमीक्षोपस्पर्शकीर्तनैः ॥ ४४ ॥ तेज
स्वीतपसादीप्तोदुर्धर्षोदरभाजनः ॥ सर्वभक्षोऽपियुक्तात्मानादत्तेमलमग्निवत् ॥ ४५ ॥ क्वचिच्छन्नःक्वचि
त्स्पष्टउपास्यःश्रेयइच्छतां ॥ भुंक्तेसर्वत्रदातॄणांदहन्प्रागुत्तराशुभं ॥ ४६ ॥ स्वमाययासृष्टमिदंसदसल्ल
क्षणंविभुः ॥ प्रविष्टईयतेतत्तत्स्वरूपोऽग्निरिवैधसि ॥ ४७ ॥ विसर्गाद्याःश्मशानांताभावादेहस्यनात्म
नः ॥ कलानामिवचंद्रस्यकालेनाव्यक्तवर्त्मना ॥ ४८ ॥ कालेनह्योघवेगेनभूतानांप्रभवाप्ययौ ॥ नित्या
वपिनदृश्येतेआत्मनोऽग्नेर्यथाऽर्चिषां ॥ ४९ ॥ ॥ ॥ ॥**

चक्षुषआदित्यमंडलेनसमदेशस्थितेनव्यवधानात् साअमावास्या अथषष्टिघटिकाभिश्चंद्रोनक्षत्रांतरंगच्छति आदित्यस्तुत्रयोदशभिरहो
रात्रैः अतःप्रतिपदमारभ्यविषमास्थितस्यआदित्यमंडलस्यपंचदशःपंचदशोभागआप्यमंडलेप्रतिबिंबितोदृश्यतेसाकलेत्युच्यते एवंपं
चदशेऽन्हित्रयोदशभिर्नक्षत्रैरंतरमितिराशिचक्रस्यसप्तविंशतिनक्षत्रात्मकस्यमध्येसंमुखौचंद्रादित्यौतिष्ठतस्तदासंपूर्णप्रतिबिंबंभूछायालां
छितंदृश्यतेसापौर्णिमा तस्याममावास्याप्रतिबिंबेनसहषोडशकलश्चंद्रउपचर्यते ततःपुनःप्रतिपदमारभ्यमंडलयोर्वैषमभिावात्कलान्हा
सः तत्रयथाकलानामेवोत्पत्त्यादयोनाप्यमंडलस्यतथात्मनोऽपीत्याह कलानामिवेति ॥ ४८ ॥ सिंहावलोकनेनाग्निदृष्टांतेनैवदेहानांक्ष
णभंगुरतयावैराग्यंशिक्षितामित्याह कालेनेति ओघवद्वेगोयस्यतेनआत्मनःसंबंधिनांभूतानां देहानामित्यर्थः अर्चिषांज्वालानां ॥ ४९ ॥

आदित्याच्छिक्षितमाहद्वयेन गुणैरिंद्रियैर्गुणान्विषयान् उपादत्तेयथाकालमर्थिन्यागतेसातिविमुंचतिच नतेषुयुज्यतेलब्धमितिदत्तमितिवा ऽभिनिवेशंनकरोति गोभिः रश्मिभिः गाःजलानिगोपतिःसूर्योयथा ॥ ५० ॥ स्वतोभेदशून्यस्याप्यात्मनोभेदप्रतीतिरुपाधिवशादित्यादि त्यदृष्टांतेनैवसंभावितमित्याह बुद्ध्यतइति स्वेस्वरूपेऽवस्थितआत्माभेदेननबुद्ध्यते अभिव्यनक्तीतिव्यक्तिरुपाधिः व्यक्तिस्थउपाधौप्रति बिंबितस्तुतद्गतइवउपाधिप्रविष्टइवभेदेनस्थूलमतिभिर्लक्ष्यते अर्कवदित्यन्वयः ॥ ५१ ॥ कपोताच्छिक्षितमाह नातिस्नेहइति स्नेहः प्रीतिः प्रसंगउपलालनायासक्तिः ॥ ५२ ॥ दृष्टांतंप्रपंचयति कपोतःकश्चनेति ॥ ५३ ॥ उभयोर्मिथःस्नेहप्रसंगौदर्शयति कपोतावि

गुणैर्गुणानुपादत्तेयथाकालंविमुंचति ॥ नतेषुयुज्यतेयोगीगोभिर्गाइवगोपतिः ॥ ५० ॥ बुद्ध्यतेस्वेनभेदेन व्यक्तिस्थइवतद्गतः ॥ लक्ष्यतेस्थूलमतिभिरात्माचावस्थितोऽर्कवत् ॥ ५१ ॥ नातिस्नेहःप्रसंगोवाकर्तव्यः क्वापिकेनचित् ॥ कुर्वन्विंदेतसंतापंकपोतइवदीनधीः ॥ ५२ ॥ कपोतःकश्चनारण्येकृतनीडोवनस्पतौ ॥ कपोत्याभार्ययासार्द्धमुवासकतिचित्समाः ॥ ५३ ॥ कपोतौस्नेहगुणितहृदयौगृहधर्मिणौ ॥ दृष्टिंदृष्ट्याऽ गमंगेनबुद्धिंबुद्ध्याबबंधतुः ॥५४॥ शय्यासनाटनस्थानवार्ताक्रीडाशनादिकं ॥ मिथुनीभूयविस्रब्धौचेरतु र्वनराजिषु ॥ ५५ ॥ यंयंवांछतिसाराजंस्तर्पयंत्यनुकंपिता ॥ तंतंसमनयत्कामंकृच्छ्रेणाप्यजितेंद्रियः ॥ ॥ ५६ ॥ कपोतीप्रथमंगर्भंगृण्हतीकालआगते ॥ अंडानिसुषुवेनीडेस्वपत्युःसन्निधौसती ॥ ५७ ॥ ते षुकालेव्यजायंतरचितावयवाहरेः ॥ शक्तिभिर्दुर्विभाव्याभिःकोमलांगतनूरुहाः ॥ ५८ ॥ प्रजाःपुपुषतुः प्रीतौदंपतीपुत्रवत्सलौ ॥ शृण्वंतौकूजितंतासांनिर्वृतौकलभाषितैः ॥ ५९ ॥ तासांपतत्रैःसुस्पर्शैःकूजितै र्मुग्धचेष्टितैः ॥ प्रत्युद्गमैरदीनानांपितरौमुदमापतुः ॥ ६० ॥ ॥ ॥

तित्रयेण स्नेहेनगुणितंबद्धंहृदयंययोस्तौ ॥ ५४ ॥ विस्रब्धौनिःशंकौ ॥५५॥ साकपोतीतिपर्यंतंसहासवीक्षितालापादिभिःप्रीणयंतीअ तएवतेनानुकंपितासतीयंयंवांछतितंतंकामंसमनयत्संपादयामास राजन्निितिवंयथेतिसूचितं ॥ ५६ ॥ ५७ ॥ तेषुजलभरितेष्वंडेषुहरेः स्वभावकर्मादिशक्तिभिःरचितावयवाःपक्षिणः कोमलान्यंगानितनूरुहाश्चयेषांते ॥५८॥५९॥ पतत्रैःपक्षैः अदीनानांहृष्टानां ॥ ६०॥

शिशून्बालान्प्रजाःपुत्रान् ॥ ६१ ॥ ६२ ॥ स्वालयांतिकेचरतः क्रीडतः तान्कपोतपुत्रान् आतत्यप्रसार्य ॥ ६३ ॥ उत्सुकत्वादेवत त्पोषणार्थंगतौसंतौ पोषणंभक्ष्यं ॥ ६४ ॥ ६५ ॥ शिचाजालेन ॥ ६६ ॥ आत्मानुरूपांभार्यांविललापशुशोच ॥ ६७ ॥ विलाप

स्नेहानुबद्धहृदयावन्योऽन्यंविष्णुमायया ॥ विमोहितौदीनधियौशिशून्पुपुषतुःप्रजाः ॥ ६१ ॥ एकदाज ग्मतुस्तासामन्नार्थौतौकुटुंबिनौ ॥ परितःकाननेतस्मिन्नर्थिनौचेरतुश्चिरं ॥ ६२ ॥ दृष्ट्वातांल्लुब्धकःकश्चि द्यदृच्छातोवनेचरः ॥ जगृहेजालमातत्यचरतःस्वालयांतिके ॥६३॥ कपोतश्चकपोतीचप्रजापोषेसदोत्सु कौ ॥ गतौपोषणमादायस्वनीडमुपजग्मतुः ॥ ६४ ॥ कपोतीस्वात्मजान्वीक्ष्यबालकान्जालसंवृतान् ॥ तानभ्यधावत्क्रोशंतीक्रोशतोभृशदुःखिता ॥६५॥ साऽसकृत्स्नेहगुणितादीनचित्ताऽजमायया ॥ स्वयंचाब ध्यतशिचाबद्धान्पश्यंत्यपस्मृतिः ॥६६॥ कपोतश्चात्मजान्बद्धानात्मनोऽप्यधिकान्प्रियान् ॥ भार्यांचात्म समांदीनोविललापातिदुःखितः ॥६७॥ अहोमेपश्यतापायमल्पपुण्यस्यदुर्मतेः ॥ अतृप्तस्याकृतार्थस्यगृ हस्त्रैवर्गिकोहतः ॥ ६८ ॥ अनुरूपाऽनुकूलाचयस्यमेपतिदेवता ॥ शून्येगृहेमांसंत्यज्यपुत्रैःस्वर्यातिसा धुभिः ॥६९॥ सोऽहंशून्येगृहेदीनोमृतदारोमृतप्रजः ॥ जिजीविषेकिमर्थंवाविधुरोदुःखजीवितः ॥७०॥ तांस्तथैवावृतान्शिग्भिर्मृत्युग्रस्तान्विचेष्टतः ॥ स्वयंचकृपणःशिक्षुपश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥ तंल ब्ध्वालुब्धकःक्रूरःकपोतंगृहमेधिनं ॥ कपोतकान्कपोतींचसिद्धार्थःप्रययौगृहं ॥ ७२ ॥ एवंकुटुंब्यशांता त्माद्वंद्वारामःपतत्रिवत् ॥ पुष्णन्कुटुंबंकृपणःसानुबंधोऽवसीदति ॥ ७३ ॥ ॥ ॥

माहत्रयेण अहोइति अतृप्तस्यदृष्टसुखेअकृतार्थस्यअदृष्टमसंपादितवतः ॥ ६८ ॥ ६९ ॥ ७० ॥ तानावृतान्पश्यन्नपि शिक्षुजालेषु ॥ ॥ ७१ ॥ ७२ ॥ दार्ष्टांतिकेयोजयाते एवमिति ॥ ७३ ॥ ॥ ॥ ॥

गृहासक्तिंरितरश्चामप्यनर्थहेतुर्मनुष्यस्यत्वतिनिंदितेत्याह यःप्राप्येति ॥ ७४ ॥ इत्येकादशेटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ अष्टमेऽजगरादिभ्योनवभ्यःशिक्षितंहरिः ॥ अवधूतगिराप्राहविवेकायोद्धवंप्रति ॥ १ ॥ प्रारब्धकर्मभोगस्यावश्यंभावित्वात्तदर्थोद्यमैर्नायुर्व्ययोवृथाकर्तव्यइत्यजगराच्छिक्षितमित्याह सुखमित्यादिना यदैंद्रियकंसुखंतत्स्वर्गेनरकेचभवत्येव यथादुःखं तस्माद्बुधस्तन्नेच्छेत् ॥ ॥ १ ॥ शरीरनिर्वाहमात्रंतुयथालब्धेनकर्तव्यमित्याह ग्रासमिति आजगरः अजगरवृत्तिः अक्रियउदासीनः ॥ २ ॥ यदानापततितदाकिंकर्तव्यंतत्राह शयीतेति अनुपक्रमोनिरुद्यमः दिष्टभुक्दैवमेवप्रापकमितिधैर्यवान् ॥ ३ ॥ ननुसमर्थोपिशयीतैवकिम् ओमित्या



यःप्राप्यमानुषंलोकंमुक्तिद्वारमपावृतं ॥ गृहेषुखगवत्सक्तस्तमारूढच्युतंविदुः ॥ ७४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ब्राह्मणउवाच सुखमैंद्रियकंराजन्स्वर्गेनरकएवच ॥ देहिनांयद्यथादुःखंतस्मान्नेच्छेततद्बुधः ॥ १ ॥ ग्रासंसुमृष्टंविरसंमहांतंस्तोकमेववा ॥ यदृच्छयैवापतितंग्रसेदाजगरोऽक्रियः ॥ शयीताहानिभूरीणिनिराहारोऽनुपक्रमः ॥ यदिनोपनमेद्ग्रासोमहाहिरिवादिष्टभुक् ॥ ३ ॥ ओजःसहोबलयुतंबिभ्रद्देहमकर्मकं ॥ शयानोवीतनिद्रश्चनेहेतेंद्रियवानपि ॥ ४ ॥ मुनिःप्रसन्नगंभीरोदुर्विगाह्योदुरत्ययः ॥ अनंतपारोह्यक्षोभ्यःस्तिमितोदइवार्णवः ॥ ५ ॥ समृद्धकामोहीनोवानारायणपरोमुनिः ॥ नोत्सर्पेतनशुष्येतसरिद्भिरिवसागरः ॥ ६ ॥ ॥ ॥

ह ओजइति ओजःइंद्रियबलंसहोमनोबलं बलंशारीरमेव तद्युक्तमपिदेहमकर्मकमेवबिभ्रत्शयानएवभवेत् वीतनिद्रःस्वार्थेदत्तदृष्टिश्चभवेन्नपुनरीहेत इंद्रियवानपीतिदर्शनादिव्यापारमपिनिवारयति ॥ ४ ॥ समुद्राच्छिक्षितमाह मुनिरिति बहिःप्रसन्नश्चासावंतर्गंभीरश्चदुर्विगाह्यःएवंभूतइतिपरिकलयितुमशक्यः अलक्ष्याभिप्रायत्वात् दुरत्ययःअनतिक्रमणीयः तेजस्वित्वात् अनंतपारःकालतोदेशतश्चापरिच्छेद्यः स्वरूपाविर्भावात् अक्षोभ्यःअविकार्यः रागाद्यभावात् स्तिमितोदःनिश्चलोदकोऽर्णवोयथातद्वदेवगुणैर्भवेदित्यर्थः ॥ ५ ॥ किंच वर्षासुसरिद्भिःसमृद्धोपिसागरोयथानोत्सर्पेत ग्रीष्मेताद्भिर्हीनोपिनशुष्येत तथासमृद्धकामस्ताद्भिर्हीनोवानहृष्येन्नशोचेदित्यर्थः अत्रहेतुः नारायणपरोनतुविषयपरइति ॥ ६ ॥ ॥ ॥ ॥

रूपगंधस्पर्शशब्दरसैः पंचभिर्विषयैर्मोहिताः पतंगमधुकरगजहरिणमीनाहताअतस्तेष्वनासक्तौपंचैतेगुरवः तदुक्तम् पतंगमातंगकुरंगभृंग मीनाहताःपंचभिरेवपंच ॥ एकःप्रमादीसकथंनहन्यतेयःसेवतेपंचभिरेवपंचेति तत्ररूपविलासमोहितोनश्यतीतिपतंगाच्छिक्षितमाह दृष्ट्वेति तस्याभावैःप्रलोभितः ॥ ७ ॥ स्त्रियमुपलक्षणीकृत्यैतत्प्रपंचयाति योषिदिति ॥ ८ ॥ मधुकराच्छिक्षितमाह स्तोकमिति गृहा न्गृहस्थान्अहिंसन्अपीडयन् अयंभावः यथामधुकरोविशिष्टगंधलोभेनैकस्मिन्नेवपद्मेवसन्नस्तमयसमयेमुकुलितेतास्मिन्बध्यतएवंमुनिर पिगुणलोभेनैकमेवगृहमाश्रितस्तन्मोहेनबध्यतइति ॥ ९ ॥ किंच अणुभ्यश्चेति ॥ १० ॥ द्विविधोमधुकृत् मधुकृंततिपुष्पादाच्छिद्यगृ

दृष्ट्वास्त्रियंदेवमायांतद्भावैरजितेंद्रियः ॥ प्रलोभितःपतत्यंधेतमस्यग्नौपतंगवत् ॥७॥ योषिद्धिरण्याभरणांबरादिद्रव्येषुमायारचितेषुमूढः ॥ प्रलोभितात्माह्युपभोगबुद्ध्यापतंगवन्नश्यतिनष्टदृष्टिः ॥८॥ स्तोकंस्तोकंग्रसेद्ग्रासंदेहोवर्ततयावता ॥ गृहानहिंसन्नातिष्ठेद्वृत्तिंमाधुकरींमुनिः ॥९॥ अणुभ्यश्चमहद्भ्यश्चशास्त्रेभ्यःकुशलोनरः ॥ सर्वतःसारमादद्यात्पुष्पेभ्यइवषट्पदः ॥१०॥ सायंतनंश्वस्तनंवानसंगृण्हीतभिक्षितम् ॥ पाणिपात्रोदरामत्रोमक्षिकेवनसंग्रही ॥११॥ सायंतनंश्वस्तनंवानसंगृण्हीताभिक्षुकः ॥ मक्षिकाइवसंगृण्हन्सहतेनविनश्यति ॥ १२ ॥ तदापियुवतींभिक्षुर्नस्पृशेद्दारवीमपि ॥ स्पृशन्करीवबध्येतकरिण्याअंगसंगतः ॥ ॥ १३ ॥ नाधिगच्छेत्स्त्रियंप्राज्ञःकर्हिचिन्मृत्युमात्मनः ॥ बलाधिकैःसहन्येतगजैरन्यैर्गजोयथा ॥१४॥

ण्हातीतिमधुकृद्भ्रमरः मधुकरोतिआहारत्वेनस्वरूपेणचेतिमधुमक्षिकाच तत्रप्रथमाच्छिक्षितमुक्तंद्वितीयाच्छिक्षितमाह सायमिदंभोक्ष्यामि श्वइदंभोक्ष्यामीतिभिक्षितमन्नादिनसंगृण्हीतकिंतुपाणिपात्रस्तन्मात्रग्राही यद्वा उदरमेवामत्रंपात्रंयस्यसः एकभिक्षायामुदरमात्रग्राहीभ वेत् संग्रहीतुमक्षिकेवनभवति नजीवतीत्यर्थः ॥ ११ ॥ एतद्विवृणोतिपुनः सायंतनमिति ॥ १२ ॥ स्पर्शासक्तिर्नाशहेतुरितिगजाच्छि क्षितमित्याह पदाऽपीति पादेनापिदारवींदारुमयींमपि गजोहिकरिणींप्रदर्श्यनिखातपिहितगर्तेनिपात्यबध्यते ॥ १३ ॥ किंच नाधि गच्छेदिति नोपगच्छेत् ॥ १४ ॥ ॥ ॥ ॥

त्यागभोगविहीनोधनसंचयःपरगामीत्यत्रमधुहागुरुरित्याह नदेयमिति तदन्योबलवान्भुंक्तेतदप्यन्यस्तच्चान्यः मधुहामाक्षिकाभिःसंचितं मधुयथाभुंक्तेतद्वत् ननुसुगुप्तंधनंकथमन्योज्ञास्यतिहारिष्यतिचेतितत्राह अर्थविल्लिंगैरर्थंतदुपायंचवेत्तीत्यर्थवित् यथामधुहातरुकोटरादिगतंमधुवेत्तिहरतिच ॥ १५ ॥ स्त्रोयमंविनाऽपिभोगःसंभवतीत्यत्रापिसएवगुरुरित्याह सुदुःखेति आशासानानामितिवक्तव्येवर्णलोपआर्षः यतिश्चब्रह्मचारीचपक्वान्नस्वामिनावुभौ ॥ तयोरन्नमदत्वातुभुक्त्वाचांद्रायणंचरेदेतिगृहिणामावश्यकत्वेदानाविधानात् ॥ १६ ॥ हरिणाच्छिक्षितमाह ग्राम्येति भगवद्गीतंतुशृणुयादेव मृगयोर्लुब्धकस्य ॥ १७ ॥ हरिणशब्दादेवहरिणीसुतऋष्यशृंगोपिगुरुर्ज्ञातव्यइत्याह

**नदेयंनोपभोग्यंचलुब्धैर्यद्दुःखसंचितम् ॥ भुंक्तेतदपितच्चान्योमधुहेवार्थविन्मधु ॥ १५ ॥ सुदुःखोपार्जितैर्वित्तैराशासानांगृहाशिषः ॥ मधुहेवाग्रतोभुंक्तेयतिर्वैगृहमेधिनाम् ॥ १६ ॥ ग्राम्यगीतंनशृणुयाद्यतिर्वनचरःक्वचित् ॥ शिक्षेतहरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥ १७ ॥ नृत्यवादित्रगीतानिजुषन्ग्राम्याणियोषिताम् ॥ आसांक्रीडनकोवश्यऋष्यशृंगोमृगीसुतः ॥ १८ ॥ जिव्हयातिप्रमाथिन्याजनोरसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तुबडिशैर्यथा ॥ १९ ॥ इंद्रियाणिजयंत्याशुनिराहारामनीषिणः ॥ वर्जयित्वातुरसनंतन्निरन्नस्यवर्धते ॥ २० ॥ तावज्जितेंद्रियोनस्याद्विजितान्येंद्रियःपुमान् ॥ नजयेद्रसनंयावज्जितंसर्वंजितेरसे ॥ २१ ॥ पिंगलानामवेश्यासीद्विदेहनगरेपुरा ॥ तस्यामेशिक्षितंकिंचिन्निबोधनृपनंदन ॥ २२ ॥ सास्वैरिण्येकदाकांतंसंकेतउपनेष्यती ॥ अभूत्कालेबहिर्द्वारिबिभ्रतीरूपमुत्तमम् ॥ २३ ॥**

नृत्येतिवश्योबभूवेतिशेषः ॥ १८ ॥ रसासक्तिर्नाशहेतुरितिमीनाच्छिक्षितामित्याह जिव्हयेति अतिप्रमाथिन्याअतिक्षोभिकयादुर्जयया ऋच्छतिप्राप्नोति बडिशैरामिषलिप्तैर्लोहकंटकैः ॥ १९ ॥ दुर्जयत्वमुपपादयति इंद्रियाणीतिद्वाभ्याम् अयंभावःयद्याहारस्त्यज्यतेतर्ह्यन्येंद्रियजयःकेवलंभवतिरसनेंद्रियंवर्धते यदितुभुज्यतेतर्हिपुनश्चरसासक्त्यासर्वेंद्रियक्षोभःस्यात् अतोरसासक्तिंपरित्यज्यौषधवद्भुंजीतेति प्राणवृत्त्यैवसंतुष्येदित्यत्रोक्तमपिरसनस्यातिदुर्जयत्वज्ञापनायोच्यतइतिविशेषः ॥ २० ॥ २१ ॥ पिंगलायानैराश्यंशिक्षितमितिवक्तुंतदाख्यानमाह पिंगलेत्यादिना मेययाशिक्षितं ॥ २२ ॥ स्वैरिणीकामचारिणीसंकेतेरतिस्थाने ॥ २३ ॥ ॥

तान्वित्तवतःसधनानतएवशुल्कदान्मूल्यदान् कांतान्सुरताहान् ॥ २४ ॥ अपिःसंभावनार्थां अन्योऽपिमामुपैष्यत्येवंदुराशयेत्युत्तरे णान्वयः ॥ २५ ॥ द्वार्यवलंबमानापुनःप्रविशतीपुनर्निर्गच्छंती एवंकुर्वती निशीथमर्द्धंरात्रं ॥ २६ ॥ निर्वेदोऽलंबुद्धिःचित्ता चिंतैवहेतुर्य स्यसः ॥ २७ ॥ यथायथावत् ममत्तःशृणु ननुकिंनिर्विण्णायागीतश्रवणेनतत्राह हियस्मात्पुरुषस्यआशापाशानांनिर्वेदोऽसिर्यथात थाछेत्ता तत्रहेतुः नहीति अंगहेराजन् ॥ २८ ॥ अविजितात्मत्वेहेतुः याऽहंबालिशाविवेकशून्यातस्याः कुतः येनकारणेनअसतस्तु च्छान्नरात्कामंकामये ॥ २९ ॥ बालिशत्वंप्रपंचयति संतमितिचतुर्भिः समीपेसंतमंतर्यामित्वात् इममपरोक्षमीश्वरं ॥ ३० ॥ अति

मार्गआगच्छतोवीक्ष्यपुरुषान्पुरुषर्षभ॥तान्शुल्कदान्वित्तवतःकांतान्मेनेऽर्थकामुका ॥ २४॥ आगतेष्वप यातेषुसासंकेतोपजीविनी ॥ अप्यन्योवित्तवान्कोऽपिमामुपैष्यतिभूरिदः ॥ २५॥ एवंदुराशयाध्वस्तनिद्रा द्वार्यवलंबती ॥ निर्गच्छंतीप्रविशतीनिशीथंसमपद्यत ॥ २६ ॥ तस्यावित्ताशयाशुष्यद्वक्त्रायादीनचेतसः ॥ निर्वेदःपरमोजज्ञेचिंताहेतुःसुखावहः ॥ २७ ॥ तस्यानिर्विण्णचित्तायागीतंशृणुयथामम ॥ निर्वेदआशापा शानांपुरुषस्ययथाह्यसिः ॥ नह्यंगाजातनिर्वेदोदेहबंधंजिहासति॥२८॥ पिंगलोवाच अहोमेमोहवितर्तिं पश्यताविजितात्मनः॥ याकांतादसतःकामंकामयेयेनबालिशा ॥ २९॥ संतंसमीपेरमणंरतिप्रदंवित्तप्रदंनि त्यमिमंविहाय॥अकामदंदुःखभयादिशोकमोहप्रदंतुच्छमहंभजेज्ञा ॥३०॥ अहोमयात्मापरितापितोवृथा सांकेत्यवृत्त्यातिविगर्ह्यवार्तया॥स्त्रैणान्नरादर्थतृषोऽनुशोच्यात्क्रीतेनवित्तंरतिमात्मनेच्छती ॥३१॥ यदस्थि भिर्निर्मितवंशवंश्यस्थूणंत्वचारोमनखैःपिनद्धं ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णमदुपैतिकाऽन्या ॥ ३२ ॥

विगर्ह्यातिनिंद्यायावार्त्ताजीविकातया कुतः सांकेत्येनयावृत्तिस्तया बहुव्रीहिणास्वविशेषणंवा परितापंप्रपंचयति स्त्रैणादिति स्त्रीलंपटात्अ थ वअर्थतृषःलुब्धात् अतएवानुशोच्यान्नरात् याऽहंवित्तंरतिंचेच्छती मयावृथात्मापरितापितःकेनवित्तमिच्छती तेननरेणक्रीतेनस्वयंविक्रीते नात्मनादेहेन ॥३१॥ अहोधिङ्मांयाऽहमतिबीभत्सितंभजामीत्याह यदिति वंशोनामस्थूणासुनिहितस्तिर्यग्वेणुः वंश्यास्तस्मिन्नुभयतोनि हितात्रेणवः अस्थिभिरेवानिर्मितावंशादयोयस्मिंस्तत् तत्रपृष्ठेदीर्घमस्थियत्सवंशः पार्श्वस्थानिवंश्यानिस्थूणाहस्तपादास्थीनितथारोमभिर्न खैश्चपिनद्धंछादितं तथापिक्षरंतिनवद्वाराणियस्मिंस्तत् एवंभूतागाररूपंनृशरीरमेतत्मत्मत्तोऽन्याकावाकांतबुद्ध्याउपैतिसेवते ॥ ३२ ॥

सत्संगतौसत्यामप्यहोममेमोहइत्याह विदेहानामिति याऽहमसतीअच्युतादन्यंकामंभोगमिच्छंतीसा ॥ ३३ ॥ एवंनिर्विण्णासतीअतः परमेवंकरिष्यामीत्याह सुहृदिति अयमीश्वरः आत्मनैवआत्मानंमेनिवेद्यतंविक्रीयविशेषेणक्रीत्वाअनेनैवसहरमे रमालक्ष्मीर्यथा ॥ ३४ ॥ अन्यस्यासेव्यत्वंदर्शयति कियदिति आद्यंतवंतोयेकामाविषयाःकामदानरावादेवावाकालकलिताभार्यायाःकियत्प्रियंकृतवंतोनकिंचित् अतोनेहामुत्रचतद्व्यतिरिक्तःकोऽपिसेव्योस्तीत्यर्थः ॥ ३५ ॥ एवंनिश्चित्यस्वभाग्यमभिनंदति नूनमिति दुष्टाआशायस्यास्तस्यामे ॥ ३६ ॥ ननुधनाप्राप्त्याक्लिष्टासिकथंविष्णुःप्रीतस्तत्राह मैवमिति मंदभाग्याचेदहंस्यांतर्ह्येवंनिर्वेदहेतवःक्लेशानस्युरित्यर्थः येननिर्वेदेनअनुबंधंगृहा

विदेहानांपुरेह्यस्मिन्नहमेकैवमूढधीः ॥ याऽन्यमिच्छंत्यसत्यस्मादात्मदात्काममच्युतात् ॥ ३३ ॥ सुहृत्प्रेष्ठतमोनाथआत्माचायंशरीरिणां ॥ तंविक्रीयात्मनैवाहंरमेऽनेनयथारमा ॥ ३४ ॥ कियत्प्रियंतेव्यभजन्कामायेकामदानराः ॥ आद्यंतवंतोभार्यायादेवावाकालविद्रुताः ॥ ३५ ॥ नूनंमेभगवान्प्रीतोविष्णुःकेनापिकर्मणा ॥ निर्वेदोऽयंदुराशायायन्मेजातःसुखावहः ॥ ३६ ॥ मैवंस्युर्मंदभाग्यायाःक्लेशानिर्वेदहेतवः ॥ येनानुबंधंनिर्हृत्यपुरुषःशममृच्छति ॥ ३७ ॥ तेनोपकृतमादायशिरसाग्राम्यसंगताः ॥ त्यक्त्वादुराशाःशरणंव्रजामितमधीश्वरं ॥ ३८ ॥ संतुष्टाश्रद्दधत्येतद्यथालाभेनजीवती ॥ विहराम्यमुनैवाहमात्मनारमणेनवै ॥ ॥ ३९ ॥ संसारकूपेपतितंविषयैर्मुषितेक्षणं ॥ ग्रस्तंकालाहिनात्मानंकोऽन्यस्त्रातुमधीश्वरः ॥ ४० ॥ आत्मैवह्यात्मनोगोप्तानिर्विद्येतयदाऽखिलात् ॥ अप्रमत्तइदंपश्येद्ग्रस्तंकालाहिनाजगत् ॥ ४१ ॥ ब्राह्मणउवाच एवंव्यवसितमतिर्दुराशांकांततर्षजां ॥ छित्वोपशममास्थायशय्यामुपविवेशसा ॥ ४२ ॥

दिकंनिर्हृत्यपरित्यज्य ॥ ३७ ॥ अतस्तेनश्रीविष्णुनाउपकृतंकृतमुपकारंनिर्वेदलक्षणं ग्राम्येषुनरेषुविषयेषुवासंगताः ॥ ३८ ॥ कथंव्रजसितदाह संतुष्टेति ॥ ३९ ॥ ननुब्रह्मादीन्हित्वाअमुनैवेतिकोऽयंनियमस्तत्राह संसारेति मुषितेक्षणमपहृतविवेकं ॥ ४० ॥ तर्हिकिमात्मत्राणोपाधिनातंभजिष्यसि न तत्रसर्वतोनिर्विद्यभगवद्भजनेप्रवृत्तस्यात्मनएवसमर्थत्वादित्याह आत्मैवेतियदाएवंजगत्पश्येत्ततश्चाप्रमत्तःसन्निखिलादिहामुत्रचभोगान्निर्विद्येततदाहिआत्मनैवात्मनोगोप्तेत्यन्वयः अतःकेवलंप्रेम्णैवभजामीतिभावः ॥ ४१ ॥ कांतस्यतर्षोऽभिलाषस्ततोजातां ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

फलितमाह आशाहीति ॥ ४३ ॥ इत्येकादशेटीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ नवमेकुररादिभ्योदेहतश्चोपशिक्षितं ॥ श्रुत्वा यदुःकृतार्थोऽभूदितिकृष्णेनवर्णितं ॥ १ ॥ कुरराच्छिक्षितमाह परिग्रहोहीति यद्यत्प्रियतमंतस्यतस्यपरिग्रहः तद्विद्वान्परिग्रहोदुःख मितिविद्वान्सन् यस्त्वकिंचनस्त्यक्तपरिग्रहोनतुदरिद्रः ॥ १ ॥ तदाह सामिषमिति ॥ २ ॥ अर्भकशिक्षामाह नेति गेहपुत्रिणांतद्वतां याभवतिचिंतासाचमेनास्ति आत्मनैवक्रीडायस्य आत्मनिरतिःप्रीतिर्यस्यसः ॥ ३ ॥ नन्वज्ञसर्वज्ञयोःकिंसादृश्यंनैश्चिंत्यंपरमसुखमित्या

आशाहिपरमंदुःखंनैराश्यंपरमंसुखं ॥ यथासंछिद्यकांताशांसुखंसुष्वापपिंगला ॥४३॥ इतिश्रीभागवते महापुराणेएकादशस्कंधेपिंगलोपाख्यानेअष्टमोऽध्यायः॥८॥॥ छ॥ ब्राह्मणउवाच परिग्रहोहिदुःखायययत्प्रियतमंनृणां ॥ अनंतंसुखमाप्नोतितद्विद्वान्यस्त्वकिंचनः ॥ १ ॥ सामिषंकुररंजघ्नुर्बलिनोयेनिरामिषाः॥ तदामिषंपरित्यज्यससुखंसमविंदत ॥ २ ॥ नमेमानावमानौस्तोनचिंतागेहपुत्रिणां॥आत्मक्रीड आत्मरतिर्विचरामीहबालवत् ॥ ३ ॥ द्वावेवचिंतयामुक्तौपरमानंदआप्लुतौ ॥ योविमुग्धोजडोबालोयोगुणेभ्यःपरंगतः ॥ ४ ॥ क्वचित्कुमारीत्वात्मानंवृणानान्गृहमागतान् ॥ स्वयंतानर्हयामासक्वापियातेषुबंधुषु ॥ ५ ॥ तेषामभ्यवहारार्थंशालीन्रहसिपार्थिव ॥ अवघ्नंत्याःप्रकोष्ठस्थाश्चक्रुःशंखाःस्वनंमहत् ॥ ६॥ सातज्जुगुप्सितंमत्वामहतीव्रीडिताततः ॥ बभंजैकैकशःशंखान्द्वौद्वौपाण्योरशेषयत् ॥ ७ ॥ उभयोरप्यभूद्घोषोह्यवघ्नंत्याःस्मशंखयोः ॥ तत्राप्येकंनिरभिददेकस्मान्नाभवत्ध्वनिः ॥ ८ ॥ अन्वशिक्षमिमंतस्याउपदेशमरिंदम ॥ लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥ ९ ॥

ह द्वाविति विमुग्धःअज्ञः जडोऽनुद्यमः एवंभूतोयोबालोयश्चप्रकृतेःपरमीश्वरंप्राप्तस्तौद्वौ ॥ ४ ॥ कुमार्याःशिक्षितंवक्तुमाख्यायिकामाह क्वचिदित्यादिना वृणानान्स्ववरणायागतान् बंधुषुपित्रादिषु क्वापिक्षेत्रादौ ॥ ५ ॥ शंखाःशंखवलयाःमहद्यथाभवतितथास्वनंचक्रुः ॥ ॥ ६ ॥ सामहतीबुद्धिमती तत्स्वयंशाल्यवहननं जुगुप्सितंचदरिद्रताद्योतकं एकैकशःक्रमेणैकमेकंबभंजकरादपसारितवती ॥ ७ ॥ निरभिदत्पृथक्कृतवती ॥ ८ ॥ ननुकुमार्यास्तवचकथंसंगतिस्तत्राह लोकानिति ॥ ९ ॥ ॥ ॥ ॥

वासइतिप्रथमांतपाठेकलहहेतुर्वार्तागोष्ठीहेतुर्भवेदित्यर्थः ॥ १० ॥ चित्तैकाग्रताद्वैतास्फूर्तिलक्षणसमाधिहेतुरितिशरकाराच्छिक्षितामित्या
ह मनइति तत्रोपायमाह जितेति आसनजयेश्वासजयस्तस्यचजयेश्वासाधीनंमनोनिश्चलंभवति ननुक्षणंनिश्चलंसदपिमनोविषयवास
नायादिविक्षिप्येतसुषुप्तादिवसर्वथालीयेतवातदाकिंतत्राह वैराग्येति वैराग्येणाविक्षिप्यमानमभ्यासयोगेनलक्ष्येध्रियमाणंस्थिरीक्रियमा
णं ॥ ११ ॥ एकत्रेतिकुत्रतदाह यस्मिन्निति यच्छयविक्षेपात्मकंमनएतद्यस्मिन्परमानंदरूपेभगवतिलब्धास्पदंसत्कर्मरेणून्कर्मवास
नामुंचतितस्मिन् ननुकर्मवासनात्यागेऽपिसुषुप्तिवच्छयोदुर्वारः न सत्त्वेनेति वृद्धेनउपशमात्मकेन रजस्तमसोरभावेविक्षेपलयाभावा
न्निर्वाणमवृत्तिकंध्येयाकारेणावस्थानमुपैति कुतः अनिंधनं इंधनंगुणास्तत्कार्यंचतद्रहितं तदुक्तंयोगशास्त्रे मनसोवृत्तिशून्यस्यब्रह्माका

वासेबहूनांकलहोभवेद्वार्ताद्वयोरपि ॥ एकएवचरेत्तस्मात्कुमार्याइवकंकणः ॥ १० ॥ मनएकत्रसंयुज्या
जितश्वासोजितासनः ॥ वैराग्याभ्यासयोगेनध्रियमाणमतंद्रितः ॥ ११ ॥ यस्मिन्मनोलब्धपदंयदेत
च्छनैःशनैर्मुंचतिकर्मरेणून् ॥ सत्वेनवृद्धेनरजस्तमश्चविधूयनिर्वाणमुपैत्यनिंधनं ॥ १२ ॥ तदैवमात्मन्य
वरुद्धचित्तोनवेदकिंचिद्बहिरंतरंवा ॥ यथेषुकारोनृपतिंव्रजंतमिषौगतात्मानददर्शपार्श्वे ॥ १३ ॥ एकचा
र्यनिकेतःस्यादप्रमत्तोगुहाशयः ॥ अलक्ष्यमाणआचारैर्मुनिरेकोल्पभाषणः ॥ १४ ॥ गृहारंभोतिदुःखा
यविफलश्चाध्रुवात्मनः ॥ सर्पःपरकृतंवेश्मप्रविश्यसुखमेधते ॥ १५ ॥ एकोनारायणोदेवःपूर्वसृष्टंस्वमाय
या ॥ संहृत्यकालकलयाकल्पांतइदमीश्वरः ॥ १६ ॥ ॥ ॥ ॥

रतयास्थितिः ॥ यासंप्रज्ञातनामासौसमाधिरभिधीयतइति ॥ १२ ॥ ततश्चनद्वैतस्फूर्तिरित्याह तदेति बहिर्दर्शनादिना अंतरंस्मृत्या इ
षौगतात्मातस्यऋजूकरणेदत्तचित्तोभेरीघोषैरंतिकेव्रजंतंनृपतिमापिनवेदतद्वत् ॥ १३ ॥ सर्पाच्छिक्षितमाह एकचारीति योगसंमर्दस्या
पित्यागेकुमारीगुरुः जनसंगत्यागेसर्पः सयथाजनाच्छंकमानएकाकीविचरतिनियतनिकेतरहितश्चसदाऽप्रमत्तश्चएकांतवासीच आचा
रैर्गतिभिःसविषोनिर्विषोवेतिनलक्ष्यतेच असहायश्चमितभाषीचतद्वत्मुनिर्वर्तेतेत्यर्थः ॥ १४ ॥ किंच गृहारंभइति अध्रुवात्मनोनश्वर
देहस्यसुखंयथाभवातितथावर्धंते ॥ १५ ॥ कारकसामग्रीनिरपेक्षात्केवलादीश्वरादिश्वसृष्टिसंहारावूर्णनाभिदृष्टांतेनमयासंभावितावितिवि
वक्तुंप्रथमंसंहारप्रकारमाह एकइतिसार्धत्रयेण एकःकारकनिरपेक्षः पूर्वसृष्टमिदंजगत्कालकलयाकालशक्त्यासंहृत्य ॥ १६ ॥

एकएवाद्वितीयःसजातीयविजातीयभेदशून्योऽभूत् कारणभूतासुसत्वादिषुशक्तिष्वपिसाम्यंनीतासुसतीषु साम्यंगुणसाम्यं प्रधानंतदुपाधिः पुरुषश्चतयोरीश्वरः ॥ १७ ॥ परावराणांपरेब्रह्मादयःअवरेऽन्येचमुक्ताजीवास्तेषांपरमः प्राप्यआस्ते कुतः कैवल्यसंज्ञितोमोक्षशब्दाभिधेयः तत्रहेतुः केवलेति निर्विषयःस्वप्रकाशआनंदानांसंदोहःसमूहः परमानंदइत्यर्थः कुतः निरुपाधिकः ॥ १८ ॥ अतःकेवलादेवसृष्टिंदर्शयति केवलेनात्मानुभावेनकालेनसूत्रंक्रियाशक्तिप्रधानंमहत्तत्त्वंसृजाति जीवसंसारहेतुभूतेसूत्रेसृष्टेपित्वंमाभैरितिसंबोधयति अरिंदम अरीन्रागादीन्दमयितुंसमर्थ ॥ १९ ॥ सूत्रस्यैवव्यक्तिशब्देनोच्यमानस्यतामितिस्त्रीलिंगेनपरामर्शः त्रिगुणव्यक्तिंगुणत्रयकार्यं अतएवविश्वतोमुखंनानाविधंत्रिगुणात्मकंविश्वमहंकारद्वारेणसृजंतीं त्रिगुणकार्यस्यसूत्रसंज्ञायांकारणमाह यस्मिन्निति कारणभूतेसमष्टिरूपे

**एकएवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ॥ कालेनात्मानुभावेनसाम्यंनीतासुशक्तिषु ॥ सत्वादिष्वादिपुरुषःप्रधानपुरुषेश्वरः ॥ १७ ॥ परावराणांपरमआस्तेकैवल्यसंज्ञितः॥ केवलानुभवानंदसंदोहोनिरुपाधिकः ॥ १८ ॥ केवलात्मानुभावेनस्वमायांत्रिगुणात्मिकाम् ॥ संक्षोभयन्सृजत्यादौतयासूत्रमरिंदम ॥१९॥ तामाहुस्त्रिगुणव्यक्तिंसृजंतींविश्वतोमुखम् ॥ यस्मिन्प्रोतमिदंविश्वंयेनसंसरतेपुमान् ॥२०॥ यथोर्णनाभिर्हृदयादूर्णांसंतत्यवक्त्रतः॥तयाविहृत्यभूयस्तांग्रसत्येवंमहेश्वरः ॥२१॥यत्रयत्रमनोदेहीधारयेत्सकलंधिया॥स्नेहाद्द्वेषाद्भयाद्वापियातितत्तत्सरूपताम्॥२२॥कीटःपेशस्कृतंध्यायन्कुड्यांतेनप्रवेशितः ॥यातितत्साम्यतांराजन्पूर्वरूपमसंत्यजन् ॥ २३ ॥ एवंगुरुभ्यएतेभ्यएषामेशिक्षितामतिः ॥ स्वात्मोपशिक्षितांबुद्धिंशृणुमेवदतःप्रभो ॥ २४ ॥ ॥ ॥ ॥ ॥**

यस्मिन्निदंविश्वंप्रोतंग्रथितं वायुर्वैगौतमतत्सूत्रंवायुनावैगौतमसूत्रेणायंचलोकःपरश्चलोकःसर्वाणिचभूतानिसंदृब्धानीतिश्रुतेः येनवाय्वात्मप्राणरूपेणजीवःसंसरति ॥ २० ॥ तदेवंशिक्षितमर्थमुक्त्वादृष्टांतमाह यथेति हृदयादुद्गतां वक्त्रतःवक्त्रेणसंतत्यप्रसार्य विहृत्यक्रीडित्वा ॥ २१ ॥ भगवत्ध्यानपराणांतत्सारूप्यंनचित्रमितिपेशस्कृतोभ्रमरविशेषाज्ज्ञातमित्याह यत्रयत्रेति सकलमेकाग्रम् ॥ २२ ॥ कुड्यांप्रवेशितोनिरुद्धोभयेनध्यायन्सात्मतांतत्सारूप्यं साम्यतामितिपाठेत्वार्षता पूर्वरूपमसंत्यजन्नित्यस्यायमभिप्रायः यदातेनैवदेहेनान्यसारूप्यंदृश्यतेतदाकिंवक्तव्यंदेहांतरेणसारूप्यंघटतइति ॥ २३ ॥ स्वदेहादेवशिक्षितमाह स्वात्मेति स्वात्मनोदेहाच्छिक्षितम् ॥ २४ ॥

गुरुत्वेहेतुः विरक्तिविवेकयोर्हेतुः विरक्तिहेतुत्वमाह सत्त्वनिधनमुत्पत्तिविनाशौबिभ्रत्स्म किंचसततंसंततमार्त्युदर्कंदुःखमेवोत्तरफलंबि
भ्रत् यद्वासततार्तिरेवउदर्कउत्तरफलंयस्यतत्सत्त्वानिधनांबिभ्रत् विवेकहेतुत्वमाह तत्त्वानीति यथायथावत् एवमत्युपकारित्वेऽपिदेहे
नैवास्थाकर्तव्येत्याह तथापीति पारक्यंसृगालादिभक्ष्यमितिविनिश्चितवान् ॥ २५ ॥ सततार्त्युदर्कतांप्रपंचयति जायेतिद्वाभ्यांय
स्यदेहस्यप्रियचिकीर्षयाभोगसंपादनेच्छयाजायादिवर्गान्वितन्वन्पुष्णाति पुरुषःकथंभूतः सकृत्ङ्गंयथाभवतितथाऽवरुद्धानिसंचिता
निधनानियेनसः देहविशेषणंवा सदेहःस्वांतेस्वस्यायुषोंऽतेअवसीदतिनश्यति किंच देहनाशेऽपिनदुःखसमाप्तिरित्याह अस्यपुरुष
स्यदेहांतरबीजंकर्मसृष्ट्वेति वृक्षस्येवधर्मोयस्यसः ॥ २६ ॥ किंच जिव्हेति अमुंदेहंतदभिमानिनंपुरुषंवाएकतःरसंप्रतिजिव्हाअपक
र्षतिआच्छिनत्ति कर्हिकदाचित्तर्षापिपासाजलंप्रति शिश्नोव्यवायंप्रति त्वक्स्पर्शंप्रति उदरमन्नमात्रंप्रति श्रवणंशब्दंप्रति घ्राणोगंधं

**देहोगुरुर्ममविरक्तिविवेकहेतुर्बिभ्रत्स्मसत्त्वनिधनंसततार्त्युदर्कं ॥ तत्त्वान्यनेनविमृशामियथातथापिपार
क्यमित्यवसितोविचराम्यसंगः ॥ २५ ॥ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णातियत्प्रियचिकीरषया
वितन्वन् ॥ स्वांतेसकृच्छमवरुद्धधनःसदेहःसृष्ट्वाऽस्यबीजमवसीदतिवृक्षधर्मः ॥ २६ ॥ जिह्वैकतोऽमुम
पकर्षतिकर्हितर्षाशिश्नोन्यतस्त्वगुदरंश्रवणंकुतश्चित् ॥ घ्राणोन्यतश्चपलदृक्क्वचकर्मशक्तिर्बह्व्यःसपत्न्य
इवगेहपतिंलुनंति ॥ २७ ॥ सृष्ट्वापुराणिविविधान्यजयात्मशक्त्यावृक्षान्सरीसृपपशून्खगदंशमत्स्या
न् ॥ तैस्तैरतुष्टहृदयःपुरुषंविधायब्रह्मावलोकधिषणंमुदमापदेवः ॥ २८ ॥**

प्रति चपलदृक्रूपंप्रति क्वचक्वचित्स्वस्वविषयंप्रतिकर्मशक्तिःअन्यदपिकर्मेंद्रियं लुनंतित्रोटयंति ॥ २७ ॥ तदेवंदेहोगुरुरित्यादित्रि
भिर्विरक्तिविवेकहेतुत्वमुपपाद्येदानीमस्यदेहस्यातिदुर्लभत्वंदर्शयन्नीश्वरनिष्ठांविधत्ते सृष्ट्वेतिद्वाभ्यां पुराणिशरीराणिपुरुषंपुरुषदेहंब्रह्म
णोवलोकायआपरोक्ष्यायधिषणाबुद्धिर्यस्मिन्तम् तदुक्तं तासांमेपौरुषीप्रियेति श्रुतिश्चपुरुषत्वेचाविस्तरामात्मेत्यादिःईश्वरोहिकरणाधि
ष्ठात्रीरग्न्यादिदेवतावागादिभिःसहसृष्टवान् ताश्चतंप्रतिभोगार्थंशरीरमयाचंतसचताभ्योगोशरीरमश्वशरीरंपुरुषशरीरंयथाक्रममानतिवा
न्ततस्तादेवताःसोऽब्रवीद्यथायतनंचक्षुरादिस्थानमस्मिन्देहेप्रविशतेति तदाह ताभ्यइत्यादि तथाताभ्योगामानयत्ताअब्रुवन्नवैनोऽयम
लमितिताभ्योऽश्वमानयत्ताअब्रुवन्नवैनोऽयमलमितिताभ्यःपुरुषमानयत्ताअब्रुवन्सुकृतंबतेतिच ॥ २८ ॥ ॥ ॥

तस्माद्बहूनांसंभवानांजन्मनामंतेमानुष्यमनित्यमप्यर्थदंपुरुषार्थप्रापकंदैवाल्लब्ध्वाइदमनुमृत्युअन्वनुनिरंतरंमृत्युत्रायेस्यतत्यावन्न वपतेत्ता वदेवतूर्णंशीघ्रंनिःश्रेयसाययतेत विषयःपुनःसर्वतःपश्वादियोनिष्वपिस्यादेव ॥ १९ ॥ तदेवंहेयोपादेयविवेकंबहुधानिरूप्येदानींय दुक्तंत्वंतुकल्पःकविर्दक्षइत्यादितत्रोत्तरमाह एवमिति एवंबहुभ्योगुरुभ्यःशिक्षितेनविशिष्टज्ञानमेत्रआलोकःप्रदीपोयस्यसः सप्तम्यंतंवा आत्मविशेषणं आत्मनिस्थितएवमहींविचरामि ॥ ३० ॥ ननुकिंबहुभिर्गुरुभिर्नहिश्वेतकेतुभृगुप्रमुखैर्बहवोगुरवआश्रितास्तत्राहनह्ये कस्मादिति बहुधासप्रपंचनिष्प्रपंचभेदादिभिः अयंभावः नैतेपरमार्थोपदेशगुरवःकिंत्वन्वयव्यतिरेकाभ्यामात्मन्यसंभावनादिमात्रनि वर्तकास्तेषांबहुत्वंयुक्तमेवेतिज्ञानप्रदंगुरुमेकमेववक्ष्यति मदभिज्ञंशांतमुपासीतेति उक्तंच तस्माद्गुरुंप्रपद्येतजिज्ञासुःश्रेयउत्तममिति

लब्ध्वासुदुर्लभमिदंबहुसंभवांतेमानुष्यमर्थदमनित्यमपीहधीरः ॥ तूर्णंयतेतनपतेदनुमृत्युयावन्निःश्रेय सायविषयःखलुसर्वतःस्यात् ॥ २९ ॥ एवंसंजातवैराग्योविज्ञानालोकआत्मनि ॥ विचरामिमहीमेतांमु क्तसंगोनहंकृतिः ॥ ३०॥ नह्येकस्माद्गुरोर्ज्ञानंसुस्थिरंस्यात्सुपुष्कलं ॥ ब्रह्मैतदद्वितीयंवैगीयतेबहुधर्षिभिः ॥ ३१ ॥ श्रीभगवानुवाच इत्युक्त्वासयदुंविप्रस्तमामंत्र्यगभीरधीः ॥ वंदितोऽभ्यर्थितोराज्ञाययौप्रीतो यथागतं ॥ ३२ ॥ अवधूतवचःश्रुत्वापूर्वेषांनःसपूर्वजः ॥ सर्वसंगविनिर्मुक्तःसमचित्तोबभूवह ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेनवमोध्यायः ॥९॥ ॥ श्रीभगवानुवाच मयोदितेष्ववहितःस्वधर्मेषुमदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मासमाचरेत् ॥ १ ॥ ॥

॥ ३१ ॥ विप्रोदत्तात्रेयः योगर्द्धिमापुरुभययिंदुहैहयाद्याइत्युक्तत्वात् यथागतंतथैव यदृच्छयाययावित्यर्थः ॥ ३२ ॥ भगवान्स्वीयंब्र ह्मवित्कुलमितिश्लाघते नःपूर्वेषांपूर्वजइति अत्रसंग्रहश्लोकाः कपोतमीनहरिणकुमारीगजपन्नगाः ॥ पतंगःकुररश्चाष्टौहेयार्थेगुरवोम ताः ॥ १ ॥ मधुकृन्मधुहर्ताचपिंगलाचद्वयोस्त्रयः ॥ उपादेयार्थविज्ञानेशेषाःपृथ्व्यादयोमताः ॥ २ ॥ तदवांतरभेदश्चतत्रतत्रस्फुटीकृ तः ॥ अध्यायत्रितयेचाष्टनवाष्टावीरिताःक्रमात् ॥ ३ ॥ ३३ ॥ इत्येकादशेटीकायांनवमोध्यायः ॥ ९ ॥ ॥ चतुर्विंशतिगुर्वाख्या लब्धसंभावनाभुवः ॥ उद्धवस्यात्मतत्त्वाप्त्यैसाधनान्यकिरतःपरैः ॥ १ ॥ दशमेदेहसंबंधात्संसृतिर्नात्मनःस्वतः ॥ इत्येतद्वर्णयामासमतां तरनिरासतः ॥ २ ॥ तदेवमन्वयव्यतिरेकाभ्यामुत्पन्नविवेकज्ञानस्यतत्त्वज्ञानायादितआरभ्यसाधनान्युपादिशतिभगवान् मयेति पंच रात्राद्युक्तवैष्णवधर्मेष्ववहितःअप्रमत्तःसंस्तदविरोधेनवर्णाद्याचारमनुतिष्ठेत् ॥ १ ॥ ॥ ॥

कथमकामात्मतासंभवतितत्राह अन्वीक्षेतेति स्वधर्मैर्विशुद्धचित्तःसन्देहिनांविषयेषुसत्यत्वाभिनिवेशेनयेसर्वेआरंभास्तेषांफलवैपरीत्यं पश्येत् एवंफलवैपरीत्यादकामःस्यात् ॥ २॥ किंचकाम्यविषयाणांमिथ्यात्वादपीत्याह सुप्तस्येति विफलःअर्थशून्यः अत्रैवंप्रयोगः इंद्रियैर्याबहिर्नानाबुद्धिःसाविफला नानात्मकत्वात् ऐंद्रियकत्वात् मनोजन्यस्वप्नमनोरथवदिति ॥ ३ ॥ मोक्षार्थीनप्रवर्तेततत्रकाम्यनिषिद्धयोः ॥ नित्यनैमित्तिकेकुर्यात्प्रत्यवायजिहासयेतिस्मृतिरतःप्रवृत्तंकाम्यंकर्मत्यजेन्निवृत्तंनित्यनैमित्तिकमेवकुर्यात् आत्मविचारेतुसम्यक्प्रवृत्तोनिवृत्तकर्मचोदनामपिनाद्रियेत ॥ ४ ॥ किंच यमानहिंसादीन्अभीक्ष्णमादरेणसेवेत शौचादींस्तुनियमान्क्वचिद्यदाशक्तिस्तदाआत्मज्ञानाविरोधेन यमान्द्वादशनियमांश्चैकोनविंशेऽध्यायेवक्ष्यति किंचयमेष्वप्यादरंपरित्यज्यगुरुमुपासीतेत्याह मदभिज्ञमिति

अन्वीक्षेतविशुद्धात्मादेहिनांविषयात्मनां ॥ गुणेषुतत्त्वध्यानेनसर्वारंभविपर्ययं ॥ २ ॥ सुप्तस्यविषयालोकोध्यायतोवामनोरथः ॥ नानात्मकत्वाद्विफलस्तथाभेदात्मधीर्गुणैः ॥ ३ ॥ निवृत्तंकर्मसेवेतप्रवृत्तंमत्परस्त्यजेत् ॥ जिज्ञासायांसंप्रवृत्तोनाद्रियेत्कर्मचोदनां ॥ ४ ॥ यमानभीक्ष्णंसेवेतनियमान्मत्परःक्वचित् ॥ मदभिज्ञंगुरुंशांतमुपासीतमदात्मकं ॥ ५ ॥ अमान्यमत्सरोदक्षोनिर्ममोदृढसौहृदः ॥ असत्वरोर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनःसमंपश्यन्सर्वेष्वर्थमिवात्मनः ॥ ॥ ७ ॥ विलक्षणःस्थूलसूक्ष्माद्देहादात्मेक्षितास्वदृक् ॥ यथाऽग्निर्दारुणोदाह्याद्दाहकोऽन्यःप्रकाशकः ॥ ८ ॥

मदात्मकंमद्रूपं ॥ ५ ॥ गुरुसेवकस्यधर्मानाह अमानीति दक्षःअनलसः निर्ममोजायादिषुममताशून्यः गुरौतुदृढसौहृदःअसत्वरःअव्यग्रः अमोघवाक्व्यर्थालापरहितः एतान्येवशिष्यस्यलक्षणानिज्ञेयानि ॥ ६ ॥ ननुस्वजायादिषुकथंनिर्ममःस्यात्तत्राहजायेतिऔदासीन्यहेतुंविवेकंदर्शयति आत्मनोऽर्थंप्रयोजनंसर्वत्रसममिवपश्यन्निति अयंभावः सर्वदेहेष्वात्मनएकत्वाज्जायादिदेहेऽस्मिंश्चदेहेआत्मनोऽर्थःसुखादिःसमएव केनविशेषेणैतेष्वेवममत्वाभिनिवेशइत्येवमुदासीनःसन् गुरुंप्रपद्येतेति ॥ ७ ॥ अहोकोऽसौदेहादिव्यतिरिक्तआत्मायस्यैक्यादर्थःसर्वेषुसमःस्यात्तमाह विलक्षणइति स्थूलसूक्ष्मदेहद्वयादात्माऽन्यःयतोविलक्षणःद्वेधावैलक्षण्यंदर्शयतिईक्षितास्वदृगिति द्रष्टाहिदृश्याद्विलक्षणः स्वप्रकाशश्चजडाद्विलक्षणः तयोरन्यत्वेदृष्टांतः यथाग्निर्दाहकःप्रकाशकश्चदाह्यात्प्रकाश्याच्चदारुणःकाष्ठादन्यस्तद्वदिति ॥ ८ ॥ ॥ ॥ ॥

अनेनैवदृष्टांतेनानित्यत्वानादित्वविमुक्तत्वैकत्वादयोऽपिसिध्यंतीत्याह निरोधेति यथादारुष्वंतःप्रविष्टोऽग्निस्तत्कृतान्नाशादीन्प्राप्नोतिन तुस्वतोनाशादिमान् एवंदेहगुणाननित्यत्वादीन्देहात्परोनित्यादिस्वरूपोऽप्यात्माऽनुभवति ततश्चनित्यत्वादिभिरपिवैलक्षण्यादन्यत्व मितिभावः ॥ ९ ॥ नन्वग्नेर्दारुसंयोगात्तद्धर्मभाक्त्वंघटते आत्मनस्त्वसंगत्वात्कथंदेहेनतद्धर्मैर्वासंबंधःसंबंधेवाकुतस्तान्निवृत्तिस्तत्राह यो सावितिपुरुषस्येश्वरस्याधीनैर्मायागुणैर्योसौसूक्ष्मःअयंचस्थूलोदेहोविरचितःपुंसोजीवस्यायंसंसारस्तन्निबंधनस्तदध्यासकृतः हियस्मादेवं तस्मादात्मविद्यातन्निवर्त्तिकेत्याह आत्मनोविद्याविज्ञानंतस्यछित्छेत्री आच्छिदितिवापदच्छेदः ॥ १० ॥ यस्मादेवंतस्माज्जिज्ञासयावि चारेणआत्मस्थमात्मनिकार्यकारणसंघातएवास्थितंसम्यक्ज्ञात्वाएतत्एतस्मिन्देहादौवस्तुबुद्धिंस्थूलसूक्ष्मक्रमेणनिरसेत्त्यजेत् ॥ ११ ॥

**निरोधोत्पत्त्यणुबृहन्नानात्वंतत्कृतान्गुणान् ॥ अंतःप्रविष्टआधत्तएवंदेहगुणान्परः ॥ ९ ॥ योऽसौगुणै र्विरचितोदेहोऽयंपुरुषस्यहि ॥ संसारस्तन्निबंधोऽयंपुंसोविद्याछिदात्मनः ॥ १० ॥ तस्माज्जिज्ञासयात्मा नमात्मस्थंकेवलंपरम् ॥ संगम्यनिरसेदेतद्वस्तुबुद्धिंयथाक्रमं ॥ ११ ॥ आचार्योऽरणिराद्यःस्यादंतेवास्यु त्तराऽरणिः ॥ तत्संधानंप्रवचनंविद्यासंधिःसुखावहः ॥ १२ ॥ वैशारदीसाऽतिविशुद्धबुद्धिर्धुनोतिमायां गुणसंप्रसूतां ॥ गुणांश्चसंदह्यदात्ममेतत्स्वयंचशाम्यत्यसमिद्यथाऽग्निः ॥ १३ ॥**

गुरोर्लब्धाविद्याअविद्यातत्कार्यनिरसनक्षमेतिस्फुटीकर्तुंविद्योत्पत्तिमग्न्युत्पत्तिरूपकेणनिरूपयति आचार्यइति आद्यःअधरःतत्संधानंत योर्मध्यमंमंथनकाष्ठम् प्रवचनमुपदेशःविद्यातुसंधिःसंधौभवन्नग्निरिव तथाचश्रुतिः आचार्यःपूर्वरूपम् अंतेवास्युत्तररूपम् विद्यासंधिःप्र वचनश्संधानमिति ॥ १२ ॥ अग्निसादृश्यमेवाह वैशारदीति विशारदोऽतिनिपुणस्तेनशिष्येणप्राप्तातेनगुरुणोपदिष्टावाअतिविशुद्धाबु द्धिर्गुणकार्यरूपांमायांनिवर्तयाति यदात्मकमेतद्विश्वंजीवस्यसंसृतिनिमित्तंतान्गुणांश्चदग्ध्वा असमित्निरिंधनःतस्मात्कार्येणकारणेनवि द्ययाचव्यवधानाभावात्साक्षात्परमानंदरूपोभवतीति ॥ १३ ॥ ॥ ॥ ॥

एवंतावत्स्वप्रकाशज्ञानस्वरूपोनित्यएकएवात्माकर्तृत्वादयश्चधर्मास्तस्यदेहोपाधिकास्तद्व्यातिरिक्तंसर्वमानित्यंमायामयंचअतः सर्वतोविर
कःसन्नात्मज्ञानेनमुच्यतइत्युक्तंविलक्षणःस्थूलसूक्ष्मादित्यादिना तदेवश्रुतिसमन्वयेननिर्णीतेऽप्यर्थेमतांतरविरोधेनसंदेहोमाभूदिततन्म
तंनिराकर्तुमुद्भावयति अथमन्यसेएषांजीवात्मनांकर्मकर्तृणांसुखदुःखयोर्भोक्तृणांचनानात्वमिति एवंहिजैमिनीयामन्यंते अहंप्रत्ययविज्ञे
यएवात्माप्रतिशरीरंभिन्नःकर्तृभोक्तृरूपश्च नतुतत्स्वरूपभूतोनिर्विकारएकःपरमात्माऽस्तीति यथाहुः अहंप्रत्ययविज्ञेयोज्ञातव्यः सर्वदैव
हीति तथावैराग्यंचनसंभवति तथाहि भोगस्थानानामनित्यत्वाद्वावैराग्यंभवेत्भोगकालस्यवातदुपायकर्मबोधकागमस्यत्वाभोक्तुरात्मनो
वानत्वेतदस्तीत्याह अथनित्यत्वंलोककालागमात्मनांमन्यसइति ॥ १४ ॥ नचभोग्यानांविच्छेदान्मायामयत्वाद्वावैराग्यंस्यादित्याह
सर्वभावानांस्रक्चंदनादीनांसंस्थास्थितिःऔत्पत्तिकीप्रवाहरूपेणनित्या तथाचवदंति नकदाचिदनीदृशंजगदिति अतस्तत्कर्ताकश्चि

अथैषांकर्मकर्तृणांभोक्तृणांसुखदुःखयोः ॥ नानात्वमथनित्यत्वंलोककालागमात्मनां ॥१४॥ मन्यसेसर्वभा
वानांसंस्थाह्यौत्पत्तिकीयथा॥तत्तदाकृतिभेदेनजायतेभिद्यतेचधीः ॥ १५ ॥ एवमप्यंगसर्वेषांदेहिनांदेहयो
गतः॥कालावयवतःसंतिभावाजन्मादयोऽसकृत् ॥१६॥अत्रापिकर्मणांकर्तुरस्वातंत्र्यंचलक्ष्यते ॥ भोक्तुश्च
दुःखसुखयोःकोन्वर्थोविवशंभजेत्॥१७॥नदेहिनांसुखंकिंचिद्विद्यतेविदुषामपि ॥ तथाचदुःखंमूढानांवृथा
ऽहंकरणंपरं॥१८॥यदिप्राप्तिंविघातंचजानंतिसुखदुःखयोः॥तेऽप्यद्धानविदुर्योगंमृत्युर्नप्रभवेद्यथा॥१९॥

दीश्वरोनास्तीतिभावः किंच यथायथावत् ननुमायामयीत्यर्थःनचात्मस्वरूपभूतंनित्यमेकंज्ञानमस्तीत्याह तत्तदिति घटपटाद्याकारभेदे
नधीर्जायतेअतोऽनित्याभिद्यतेच अयंगूढोऽभिप्रायः नहिनित्यज्ञानरूपआत्माअपितुज्ञानपरिणामवान् नचविकारित्वेनानित्यत्वप्रसंगः
यथाहुः विक्रियाज्ञानरूपाऽस्यननित्यत्वंविरोत्स्यतइति अतोमुक्ताविंद्रियादिरहितस्यपरिणामासंभवाज्जडत्वेनतत्प्राप्तेरपुरुषार्थत्वात्प्रवृत्ति
रेवश्रेयसीननिवृत्तिरिति ॥ १५ ॥ तत्रतावदुक्तमंगीकृत्यवैराग्योपपादनायप्रवृत्तिमार्गस्यानर्थहेतुत्वंप्रपंचयति एवमपीत्यादिनालोकानां
लोकपालानामित्यतःप्राक्तनेनग्रंथेन अंगहेउद्धव कालावयवतःसंवत्सरादिरूपात् ॥ १६ ॥ अत्रापीति स्वातंत्र्यपक्षेदुष्कर्मणोदुःखभो
गस्यवाऽसंभवादित्यर्थः ॥ १७ ॥ ननुयेसम्यक्कर्मकर्तुंजानंतितेसुखिनएव येतुनजानंतितएवदुःखिनइतिचेत्तत्राह नेतिविदुषामपिक्व
चित्सुखंनविद्यते तथामूढानामपिदुःखंनविद्यतेअतोवयंकर्मकुशलत्वात्सुखिनइति तेषांकेवलंवृथैवाहंकारइत्यर्थः ॥ १८ ॥ अंगीकृत्या
ह यदीति तंयोगमुपायंनविदुर्यथासाक्षान्मृत्युर्नप्रभवेत् ॥ १९ ॥

॥ ॥

तथाऽपियावज्जीवंसुखंभविष्यतीतिचेन्नेत्याह कोन्विति यतः अंतिकेवर्तमानोमृत्युर्नतुष्टिदः नतुष्टिंददाति आघातंवधस्थानंप्रतिनीयमान
स्यवध्यस्यस्रक्चंदनादिसुखंनभवेत् ॥ २० ॥ एवमस्मिँल्लोकेसुखंनास्तीत्युक्त्वालोकांतरेऽपितथैवेत्याह श्रुतमिति श्रुतंस्वर्गादितदपिदुष्ट
मस्पर्धापरसुखासहनं असूयापरगुणेदोषाविष्करणं अत्ययोनाशः व्ययोऽपक्षयः तैर्दुष्टं यद्वाऽव्ययोनाशःअत्ययोऽन्यस्यातिशयः तंदृष्ट्वा
तदप्राप्त्यादुःखमित्यर्थः किंच बहवोंऽतरायावैगुण्यादिरूपाविघ्नायस्मिन्कामेसुखेतस्यभावस्तत्वंतस्मात् कृषिर्यथाबहुविघ्नातद्वत् बहुसु
खत्वेनश्रुतमपिनिष्फलं ॥ २१ ॥ विघ्नवैगुण्याद्यभावमंगीकृत्यापिनाशदुःखंदुष्परिहरमित्याह अंतरायैरितिपंचभिःनिर्जितंसाधितमुपार्जि

कोन्वर्थःसुखयत्येनंकामोवामृत्युरंतिके ॥ आघातंनीयमानस्यवध्यस्येवनतुष्टिदः ॥ २० ॥ श्रुतंचदृष्टवद्दुष्टं स्पर्द्धाऽसूयाऽत्ययव्ययैः ॥ बह्वंतरायकामत्वात्कृषिवच्चापिनिष्फलं ॥ २१ ॥ अंतरायैरविहतोयदिधर्मः स्वनुष्ठितः ॥ तेनापिनिर्जितंस्थानंयथागच्छतितच्छृणु ॥ २२ ॥ इष्ट्वेहदेवतायज्ञैःस्वर्लोकंयातियाज्ञिकः ॥ भुंजीतदेववत्तत्रभोगान्दिव्यान्निजार्जितान् ॥ २३ ॥ स्वपुण्योपचितेशुभ्रेविमानउपगीयते ॥ गंधर्वैर्विहर न्मध्येदेवीनांहृद्यवेषधृक् ॥ २४ ॥ स्त्रीभिःकामगयानेनकिंकिणीजालमालिना ॥ क्रीडन्नवेदात्मपातंसुरा क्रीडेषुनिर्वृतः ॥ २५ ॥ तावत्प्रमोदतेस्वर्गेयावत्पुण्यंसमाप्यते ॥ क्षीणपुण्यःपतत्यर्वागनिच्छन्कालचा लितः ॥ २६ ॥ यद्यधर्मरतःसंगादसतांवाजितेंद्रियः ॥ कामात्माकृपणोलुब्धःस्त्रैणोभूतविहिंसकः ॥ २७ ॥ पशूनविधिनालभ्यप्रेतभूतगणान्यजन् ॥ नरकानवशोजंतुर्गत्वायात्युल्बणंतमः ॥ २८ ॥

तमित्यर्थः ॥ २२ ॥ यज्ञैर्देवताइंद्रादिरूपाइष्ट्वा ॥ २३ ॥ स्वपुण्यैरुपचितेसर्वभोगसंपन्नेदेवीनांमध्येविहरन्गंधर्वैरुपगीयते ॥ २४ ॥
कामगेनइच्छयागच्छताविमानेन किंकिणीजालमालिनाक्षुद्रघंटिकासमूहशोभिना सहस्त्रीभिःसुराक्रीडेषुनंदनादिषुक्रीडन्नात्मपातं
नवेद ॥ २५ ॥ कालेनचालितःपातितः ॥ २६ ॥ प्रवृत्तिर्द्विविधा विध्यनुसारेणकाम्येकर्माणिवातल्लंघनेनाधर्मेवा तत्रकाम्यप्रवृत्तेर्गतिरुक्ता
अधर्मप्रवृत्तेर्गतिमाहयदीति यदिचेत्यन्वयः अजितेंद्रियत्वात्कामात्माअतःकृपणःअतोलुब्धोभोगतृष्णाकुलःअतःस्त्रैणःस्त्रीलंपटस्तदर्थं
भूतविहिंसकः ॥ २७ ॥ किंच दुष्टजनप्रलोभितोधनाद्यर्थंपशूनविधिनाहत्वाउल्बणंदुःखंनरकंयाति तदनुतमःस्थावरतांयाति ॥ २८ ॥

एवंकर्मसुप्रवृत्तस्यनसुखंनचनिवृत्तिरित्युपसंहरति कर्माणीति ॥ २९ ॥ तथाऽपिलोकानांनित्यत्वादमर्त्यधर्मत्वाच्चलोकपालानांसुखम
स्तीतिचेत्तत्राह लोकानामिति द्वौपरार्धौपरमायुर्यस्यतस्यब्रह्मणोऽपि तथाचश्रुतिः भीषास्माद्वातःपवते भीषोदेतिसूर्यः भीषास्मादग्निश्चें
द्रश्च मृत्युर्धावतिपंचमइति अतःप्रवृत्तिमार्गस्यैवमनर्थहेतुत्वाद्विरक्त्याततोनिवृत्तिरेवयुक्तेतितात्पर्यार्थः ॥ ३० ॥ एतेनैवस्वयमीश्वरत्वा
विष्कारेणेश्वराभावांगीकारःपरित्यक्तः अन्यदपिप्रौढ्यापूर्वमंगीकृतंनिराकरोतिचतुर्भिः तत्रयदुक्तंकर्तृभोक्तृरूपएवात्मेतितन्निराकरोति
गुणाइति गुणाइंद्रियाणिकर्माणिसृजंतिनत्वात्मा आत्मैवेंद्रियाणिप्रवर्तयन्कर्माणिकरोतीतिचेन्नेत्याह गुणइति गुणःसत्वादिर्गुणानिंद्रि
याणिअनुसृजतेप्रवर्तयतिनत्वात्मा अतःआत्मनःकर्तृत्वंतावन्नास्ति भोक्तृत्वमप्यौपाधिकमित्याह जीवस्त्विति गुणसंयुक्तइंद्रियादिसंयु

## कर्माणिदुःखोदर्काणिकुर्वन्देहेनतैःपुनः ॥ देहमाभजतेतत्रकिंसुखंमर्त्यधर्मिणः ॥ २९ ॥ लोकानांलो कपालानांयद्भयंकल्पजीविनां ॥ ब्रह्मणोऽपिभयंमत्तोद्विपरार्द्धपरायुषः ॥ ३० ॥ गुणाःसृजंतिकर्माणिगु णोऽनुसृजतेगुणान् ॥ जीवस्तुगुणसंयुक्तोभुंक्तेकर्मफलान्यसौ ॥ ३१ ॥ यावत्स्याद्गुणवैषम्यंतावन्नानात्व मात्मनः ॥ नानात्वमात्मनोयावत्पारतंत्र्यंतदेवहि ॥ ३२ ॥ यावदस्यास्वतंत्रत्वंतावदीश्वरतोभयं ॥ य एतत्समुपासीरंस्तेमुह्यंतिशुचाऽर्पिताः ॥ ३३ ॥ कालआत्मागमोलोकःस्वभावोधर्मएवच ॥ इतिमांबहु धाप्राहुर्गुणव्यतिकरेसति ॥ ३४ ॥ ॥ ॥ ॥

क्तः कुतइत्यतआह असौतेषुअहंकारवानित्यर्थः ॥ ३१ ॥ यच्चोक्तमात्मनोनानात्वंतदप्यौपाधिकमित्याह यावत्स्यादितिगुणानांवैषम्यम
हंकारादिकार्यरूपम् नन्वात्मनएकत्वेकथंपारतंत्र्यमुक्तंकथंवालोकपालादीनामापितद्भयमित्युक्तंतत्राह नानात्वमिति ॥ ३२ ॥ यच्चगूढ
मभिप्रेतंप्रवृत्तिरेवश्रेयसीतितत्राह यएतदिति एतद्गुणवैषम्यंतत्कृतंभोगंकर्मचेत्यर्थः उपासीरन्सेवेरन् तेलोकादीनामनित्यत्वाच्छुचाऽ
र्पिताःप्रोताःसंतोमुह्यंति ॥ ३३ ॥ नकेवलमनित्यतामात्रंकिंतुमायामयत्वमपीत्याह कालइति स्वभावोदेवत्वादिपरिणामहेतुः धर्मस्त
द्भोगकारणम् गुणव्यतिकरेमायाक्षोभेसतिमामेवप्राहुः नतुमद्व्यतिरिक्ताःसंति ॥ ३४ ॥ ॥ ॥ ॥

ततोनिवृत्तिरेवमुक्तिहेतुत्वाच्छ्रेयसीतिसिद्धं एवंतावदेकएवात्मातस्यचगुणकार्यदेहसंबंधकृतः संसारआत्मज्ञानाच्चमुक्तिरित्युक्तंविलक्षणः स्थूलसूक्ष्मादित्यादिना तदेवचमतांतरनिरासेनदृढीकृतंअथैषामित्यादिना तत्रपृच्छति गुणेष्विति अयमर्थः गुणेषुअसत्सुमुक्तिःसत्स्वेव वा आद्येज्ञानसाधनाभावान्नमुक्तिः द्वितीयेचगुणेषुवर्तमानोऽपितत्कार्यदेहजेषुकर्मसुसुखादिषुचकथंनबध्येत तथाऽपितैराकाशवदना वृतत्वान्नबध्यतइतिचेत्तर्हिबंधोनसंभवतीत्याह अनपावृतःकथंबध्यतइति ॥ ३५ ॥ यदितुसत्स्वेवतदहंकारेणबध्यतेतन्निवृत्त्याचमुच्यत इतिमतंतर्हिकथंज्ञातव्यमितिपृच्छति बद्धोमुक्तोवाकथंवर्त्ततेत्यादि किंभुंजीत कथंभुंजीतेत्यर्थः ॥ ३६ ॥ एतत्एतद्विषयंप्रश्नं किंच एकएवात्माअनादिगुणसंबंधान्नित्यबद्धः मुक्तेर्जन्यत्वेअनित्यत्वप्रसंगान्नित्यमुक्तइत्यप्यंगीकार्यंस्यात् तत्रमेभ्रमोभवतीत्याह नित्यबद्ध

उद्धवउवाच गुणेषुवर्तमानोऽपिदेहजेष्वनपावृतः ॥ गुणैर्नबध्यतेदेहीबध्यतेवाकथंविभो ॥३५॥ कथंवर्तेतविहरेत्कैर्वाज्ञायेतलक्षणैः ॥ किंभुंजीतोतविसृजेच्छयीतासीतयातिवा ॥ ३६ ॥ एतदच्युतमेब्रूहिप्रश्नंप्रश्नविदांवर ॥ नित्यमुक्तोनित्यबद्धएकएवेतिमेभ्रमः ॥ ३७॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेदशमोऽध्यायः ॥१०॥ ॥ ॥ श्रीभगवानुवाच बद्धोमुक्तइतिव्याख्यागुणतोमेनवस्तुतः ॥ गुणस्यमायामूलत्वान्नमेमोक्षोनबंधनं ॥ १ ॥ ॥ ॥ ॥

इति ॥ ३७ ॥ इत्येकादशेटीकायांदशमोध्यायः ॥ १० ॥ ॥ ॥ एकादशेतुबद्धानांमुक्तानांचाथलक्षणं ॥ साधूनांचतथाभक्तेर्लक्षणंहरिणेरितं ॥ १ ॥ नित्यमुक्तोनित्यबद्धएकएवेतिमेभ्रमइतियदुक्तंतत्किंवस्तुतोविरोधःप्रतीतितोवा नाद्यः बंधमोक्षयोर्वास्तवत्वाभावादित्याह बद्धोमुक्तइतिद्वाभ्यां आत्माबद्धोमुक्तश्चमेगुणतोमदधीनसत्वादिगुणोपाधितोनतुवस्तुतः नन्वौपाधिकत्वेऽपितंडुलपाकादिवद्वास्तवत्वंकिंनस्यात्तत्राह गुणस्यमायामूलत्वाद्बंधनंनास्ति अतएवमोक्षश्चनास्ति ननुकथंसर्वशास्त्रविरुद्धमुच्यतेतत्राह इतिमेव्याख्येति एवंमत्कृतोनिर्णयः अलमतिकुतर्कैरित्यर्थः अथवैवमन्वयः आत्माबद्धोमुक्तइतियाव्याख्याउक्तिःसामेगुणतोमद्गुणपारतंत्र्यात् अत्रहेतुत्वेनगुणनियंतरिस्वस्मिंस्तद्व्यतिरेकमाह अतएवनमेबंधनंमोक्षोवेति अन्यत्समानं ॥ १ ॥

एवंकारणभूतगुणानांमायामयत्वात्तत्कार्यसंसृतिर्मायेतिप्रपंचयाति शोकमोहाविति यथास्वप्नआत्मनोबुद्धेरेवख्यातिर्विवर्त्तस्तद्वत् ॥ २ ॥
अतोवस्तुविरोधस्तावन्नास्तिप्रतीतिस्त्वौपाधिकीघटतइत्याह विद्याऽविद्येइति तन्येतेमोक्षबंधावाभ्यामितितनूशक्ती कुतः मेमाययावि
निर्मिते मायावृत्तिरूपत्वात् मोक्षबंधकरीत्येकवचनंद्विवचनार्थं ननुतत्कार्यत्वेबंधमोक्षयोरनादित्वनित्यत्वेनस्यातां न आद्येअनादी
अतोयावदविद्यांप्रवर्त्तयामितावद्बंधः यदाविद्यांददामितदामोक्षःस्फुरतीत्यर्थः तथाचस्कंदपुराणे बंधकोभवपाशेनभवपाशाच्चमोचकः ॥
कैवल्यदःपरंब्रह्मविष्णुरेवसनातनइति ॥ ३ ॥ तत्रशरीरिणामितिबहुवचननिर्देशाद्विषयभेदेनाविरोधउक्तइतिभ्रांतिंव्यावर्तयन्बंधमो
क्षव्यवस्थामुपपादयाति एकस्यैवेति तर्हिकिमात्मभेदात्तथापिबंधोनहीत्याह अस्यजीवस्यैवेति नन्वात्माभेदेजीवोनामकोन्योऽस्तिपृथक्

**शोकमोहौसुखंदुःखंदेहोत्पत्तिश्चमायया ॥ स्वप्नोयथात्मनःख्यातिःसंसृतिर्नतुवास्तवी ॥ २ ॥ विद्याऽविद्ये ममतनूविद्ध्युद्धवशरीरिणां ॥ मोक्षबंधकरीआद्येमाययामेविनिर्मिते ॥ ३ ॥ एकस्यैवममांशस्यजीवस्यै वमहामते ॥ बंधोऽस्याविद्ययानादिर्विद्ययाचतथेतरः ॥ ४ ॥ अथबद्धस्यमुक्तस्यवैलक्षण्यंवदामिते ॥ विरु द्धधर्मिणोस्तातस्थितयोरेकधर्मिणि ॥ ५ ॥ ॥ ॥ ॥**

कथंचबंधमोक्षसुखदुःखादिव्यवस्थातत्राह ममांशस्येति अयंभावः यथैकस्यापिचंद्रादेर्जलाद्युपाधिनाबिंबप्रतिबिंबरूपोभेदस्तथाचज
लकृताःकंपादयःप्रतिबिंबस्यैव तथाचप्रतिबिंबानामप्युपाधिभेदेनभेदादेकस्मिन्नुदकुंभेभग्नेतद्गतप्रतिबिंबस्यैवबिंबैक्यंनान्यगतस्यतथाऽ
विद्यायांप्रतिबिंबस्यमदंशस्यजीवस्यैतत्कृतोबंधस्तस्यचोपाधितोभेदान्नान्यव्यवस्थेति तथाचाहुः यथैकस्मिन्घटाकाशेरजोधूमादिभिर्युते ॥
नसर्वेसंप्रयुज्यंतेतथाजीवाःसुखादिभिरिति एतच्चातिरहस्यंस्वबुध्यानिश्चेतव्यमितिसंबोधयति हेमहामते इतरोमोक्षः ॥ ४ ॥ तदेवंव्यव
स्थामुपपाद्यकथंवर्तेतेत्यादिवैलक्षण्यप्रश्नस्योत्तरमाह अथेति तच्चवैलक्षण्यंद्विविधं जीवेश्वरयोरेकंजीवानांचैकंतत्रजीवेश्वरयोर्वैलक्षण्य
माह विरुद्धधर्मिणोरितिसार्द्धद्वयेन शोकानंदधर्मवतोरेकस्मिन्धर्मिणिशरीरेनियम्यानियंतृत्वेनस्थितयोः ॥ ५ ॥

सुपर्णौवृक्षात्पक्षिणाविवदेहात्पृथग्भूतौ सदृशौचिद्रूपत्वात् सखायौअवियोगादैकमत्याच्च यदृच्छयाअनिरुक्तयामायया वृक्ष्यतइतिवृक्षो
देहः ऊर्ध्वमूलमवाक्शाखंवृक्षंयोवेदसंप्रतीतिश्रुतेः ऊर्ध्वमूलमधःशाखमश्वत्थंप्राहुरव्ययम् ॥ छंदांसियस्यपर्णानियस्तंवेदसवेदविदिति
स्मृतेश्च तस्मिन्कृतंनीडंनिकेतनंहृदयरूपंयाभ्यांतौ तयोर्मध्येएकोजीवःपिप्पलान्नंपिप्पलोऽश्वत्थस्तास्मिन्नदनीयंकर्मफलमित्यर्थः स्वाद
तिभक्षयति अन्यईश्वरोनिरन्नःअभोक्ताऽपिनिजानंदतृप्तोबलेनज्ञानादिशक्त्याभूयान्आधिकः श्रुतिश्च द्वासुपर्णासयुजासखायासमानं
वृक्षंपरिषस्वजाते तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति ॥ ६ ॥ बलाधिक्यमेवाह आत्मानमिति अतोयोऽविद्ययायुक्तःयु
क्तःसतुनित्यबद्धःअनादिबद्धः यस्तुविद्याप्रधानःसतुनित्यमुक्तः मायायाअनावरकत्वात्आश्रयाव्यामोहकत्वाच्च ॥ ७ ॥ इदानींबद्धमु
क्तजीवानामेवमिथोवैलक्षण्यमाह देहस्थोऽपीतिदशभिः विद्वान्मुक्तःसंस्कारवशेनदेहस्थोऽपिदेहस्थोनभवतियथास्वप्नादुत्थितःस्मर्यमा

**सुपर्णावेतौसदृशौसखायौयदृच्छयैतौकृतनीडौचवृक्षे ॥ एकस्तयोःखादतिपिप्पलान्नमन्योऽनिरन्नोऽपिब
लेनभूयान् ॥ ६ ॥ आत्मानमन्यंचसवेदविद्वानपिप्पलादोनतुपिप्पलादः ॥ योऽविद्ययायुक्सतुनित्यब
द्धोविद्यामयोयःसतुनित्यमुक्तः ॥ ७॥ देहस्थोऽपिनदेहस्थोविद्वान्स्वप्नाद्यथोत्थितः ॥ अदेहस्थोऽपि
देहस्थःकुमतिःस्वप्नदृग्यथा ॥ ८॥ इंद्रियैरिंद्रियार्थेषुगुणैरपिगुणेषुच ॥ गृह्यमाणेष्वहंकुर्यान्नविद्वान्यस्त्व
विक्रियः ॥ ९ ॥ दैवाधीनेशरीरेऽस्मिन्गुणभाव्येनकर्मणा ॥ वर्तमानोबुधस्तत्रकर्ताऽस्मीतिनिबध्य
ते ॥ १० ॥ एवंविरक्तःशयनआसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥**

णेस्वप्नदेहेस्थितोऽपितत्रस्थोनभवाति तद्गतसुखदुःखाद्यभावात् तद्वत् तथाचवस्तुतःअदेहस्थोऽपिकुमतिःआविद्वान्देहस्थस्तान्निमित्तसु
खदुःखभाक् यथास्वप्नदेहगतइति ॥ ८ ॥ अत्रहेतुत्वेनवैलक्षण्यांतरमाहद्वाभ्यां इंद्रियैरिंद्रियार्थेषुगृह्यमाणेष्वपियस्तुविद्वान्सनाहंकुर्या
दहंगृण्हामीतिमतिंनकुर्यादित्यर्थः कुतः गुणैर्गुणेषुगृह्यमाणेषु अतएवअविक्रियोरागादिशून्यः तदुक्तंगीतासु तत्त्ववित्तुमहाबाहो गुण
कर्मविभागयोः ॥ गुणागुणेषुवर्त्ततइतिमत्वानसज्जतइति ॥ ९ ॥ अबुधस्तुपूर्वकर्माधीनेऽस्मिन्शरीरेवर्तमानोगुणैरिंद्रियैर्भाव्येनकर्मणातत्र
देहादौनिबध्यते कुतः कर्ताऽस्मीत्यहंकारेण तदुक्तंतत्रैव प्रकृतेः क्रियमाणानिगुणैःकर्माणिसर्वशः ॥ अहंकारविमूढात्माकर्ताहमितिम
न्यतेइति एतैस्त्रिभिः श्लोकैः कथंवर्ततेत्यस्यप्रश्नस्यसुखदुःखशून्योनिरभिमानश्चदेहेवर्ततइत्युत्तरमुक्तंभवति ॥ १० ॥ वैलक्षण्यांतरंव
दन्किंभुंजीतेत्यादिप्रश्नोत्तरमाह एवमितित्रिभिः अन्यगतमेवकर्ममांबध्नातीत्येवंविरक्तोविद्वान् ॥ ११ ॥ ॥

तथाऽपिअविद्दानिवशयनासनादिषुनबध्यते कुतः तत्रतत्रविषयेषुगुणानूइंद्रियाणिआदयनूभोजयंस्तत्साक्षित्वेनवर्तमानोनतुस्वयमदनू एतदेवकुतस्तत्राह प्रकृतिस्थोऽपीतिसार्द्धेन यथाखंसर्वत्रस्थितमपिनसज्जते यथासविताजलेप्रतिबिंबितोऽपि यथाऽनिलःसर्वत्रसंचरन्न पितद्वत् ॥ १२ ॥ असंगेनवैराग्येणशितयातीक्ष्णयाच्छिन्नाःसंशयाअसंभावनादयोयस्यसः नानात्वात्देहादिप्रपंचात् ॥ १३ ॥ कथं विहरेदित्यस्योत्तरत्वेनवैलक्षण्यांतरमाह यस्यस्युरिति तद्गुणैर्देहगुणैः संकल्पशून्याभिःप्राणादिवृत्तिभिर्विहरन्मुक्तइत्यर्थः ॥ १४ ॥ एवं तावद्बद्धमुक्तयोःस्वसंवेद्यमेववैलक्षण्यमुक्तमिदानींकैर्वाज्ञायेतलक्षणैरित्यस्योत्तरतयापरैरपिसुज्ञेयवैलक्षण्यमाह यस्यात्मेतित्रिभिःहिंस्रैर्दुर्ज नैरन्यैर्वाप्राणिभिर्यस्यात्मादेहःपीड्यते यदृच्छयायेनकेनापिक्वाचित्किंचित्अर्च्यतेवा सबुधश्चेत्तत्रनव्यातिक्रियते नातिविक्रियतइत्यर्थः त

**नतथाबध्यतेविद्वांस्तत्रतत्रादयनूगुणान् ॥ प्रकृतिस्थोऽप्यसंसक्तोयथाखंसविताऽनिलः ॥ १२ ॥ वैशार द्येक्षयाऽसंगाशितयाछिन्नसंशयः ॥ प्रतिबुद्धइवस्वप्नान्नानात्वाद्विनिवर्तते ॥ १३ ॥ यस्यस्युर्वीतसंकल्पाः प्राणेंद्रियमनोधियाम् ॥ वृत्तयःसविनिर्मुक्तोदेहस्थोऽपिहितद्गुणैः ॥ १४ ॥ यस्यात्माहिंस्यतेहिंस्रैर्येनाकिं चिद्यदृच्छया ॥ अर्च्यतेवाक्वचित्तत्रनव्यतिक्रियतेबुधः ॥ १५ ॥ नस्तुवीतननिंदेतकुर्वतःसाध्वसाधुवा ॥ वदतोगुणदोषाभ्यांवर्जितःसमदृङ्मुनिः ॥ १६ ॥ नकुर्यान्नवदेत्किंचिन्नध्यायेत्साध्वसाधुवा ॥ आत्मारा मोनयावृत्त्याविचरेज्जडवन्मुनिः ॥ १७ ॥ शब्दब्रह्मणिनिष्णातोनानिष्णायात्परेयदि ॥ श्रमस्तस्यश्रम फलोह्यधेनुमिवरक्षतः ॥ १८ ॥ ॥ ॥ ॥**

दुक्तंयाज्ञवल्क्येन यःकंटकैर्वितुदतिचंदनैर्यश्चालिंपाति ॥ अक्रुद्धोऽपरितुष्टश्चसमस्तस्यचतस्यचेति ॥ १५ ॥ किंचसाध्वसाधुवाकुर्वतो वदतोवाजनान्नस्तुवीतनचनिंदेत योलौकिकव्यवहारेविमुखःसमुक्तइत्यर्थः ॥ १६ ॥ अपिच नकुर्यादिति योदैहिकेऽपिकर्मण्युदासीनः समुक्तःइतरोबद्धइत्यर्थः एतान्येवसर्वाणिमुमुक्षोःसाधनानिज्ञातव्यानि ॥ १७ ॥ यस्तुकेवलंशब्दब्रह्मण्यभिज्ञःपांडित्यमात्रश्लाघीनतु कैःसाधनैस्तदर्थनिष्ठोभवेत्तंनिंदति शब्दब्रह्मणिनिष्णातःअर्थतःपारंगतोऽपिपरेब्रह्मणिननिष्णायात्ध्यानाद्यभियोगंनकुर्यात्तस्यशास्त्रश्र मः श्रमैकफलः नतुपुरुषार्थपर्यवसायी अधेनुंचिरप्रसूताम् ॥ १८ ॥ ॥ ॥

एतदेवान्यार्थनिदर्शनैःप्रपंचयति गामिति दुह्यतइतिदोहःपयः दुग्धोदोहोनोत्तरत्रदोह्योरितयस्यास्तामर्थशून्यांअसतींभार्यांकामशून्यां देहंपराधीनंप्रतिक्षणंदुःखहेतुं असत्प्रजांदृष्टादृष्टसाधनशून्यंपुत्रं अतीर्थीकृतमागतेपात्रेऽदत्तवित्तंदुष्कीर्तिदुरितापादकं अंगहेउद्धवदुः खानंतरंदुःखमेवयस्यसःरक्षति ॥ १९ ॥ मयाहीनांवाचमित्युक्तंविवृणोति यस्यांवाचिमेजगतःशोधकंचरित्रंनस्यात् किंतत् अस्यविश्वस्य स्थित्यादिरूपं तद्धेतुरित्यर्थः लीलावतारेषुईप्सितंजगतःप्रेमास्पदंश्रीरामकृष्णादिजन्मवानस्यात् तांनिष्फलांगिरंधीरोधीमान्नधारयेत् ॥ २० ॥ उक्तंज्ञानमार्गमुपसंहरति एवंनिश्चित्यविचारेणात्मनिनानात्वभ्रमंदेहाद्यध्यासंनिरस्यनिर्मलंमनोमयिसर्वगेपरिपूर्णेसमर्प्यसंधार्य

गांदुग्धदोहामसतींचभार्यांदेहंपराधीनमसत्प्रजांच ॥ वित्तंत्वतीर्थीकृतमंगवाचंहीनांमयारक्षतिदुःखदुःखी ॥ १९ ॥ यस्यांनमेपावनमंगकर्मस्थित्युद्भवप्राणनिरोधमस्य ॥ लीलाऽवतारेप्सितजन्मवास्याद्वंध्यांगिरंतांबिभृयान्नधीरः ॥ २० ॥ एवंजिज्ञासयाऽपोह्यनानात्वभ्रममात्मनि ॥ उपारमेतविरजंमनोमय्यर्प्यसर्वगे ॥ २१ ॥ यद्यनीशोधारयितुंमनोब्रह्मणिनिश्चलं ॥ मयिसर्वाणिकर्माणिनिरपेक्षःसमाचर ॥ २२ ॥ श्रद्धालुर्मेकथाःशृण्वन्सुभद्रालोकपावनीः ॥ गायन्ननुस्मरन्कर्मजन्मचाभिनयन्मुहुः ॥ २३ ॥ मदर्थेधर्मकामार्थानाचरन्मदपाश्रयः ॥ लभतेनिश्चलांभक्तिंमय्युद्धवसनातने ॥ २४ ॥ सत्संगलब्धयाभक्त्यामयिमांसउपासिता ॥ सवैमेदर्शितंसद्भिरंजसाविंदतेपदं ॥ २५ ॥ उद्धवउवाच साधुस्तवोत्तमश्लोकमतःकीदृक्विधःप्रभो ॥ भक्तिस्त्वय्युपयुज्येतकीदृशीसद्भिरादृता ॥ २६ ॥ ॥ ॥

उपारमेत नशास्त्रपांडित्यमात्रेणेत्यर्थः ॥ २१ ॥ यद्यनीशःअशक्तस्तर्हिआस्तामिदंमद्भक्त्यैवकृतार्थोभविष्यसीत्याह मयीति ॥ २२ ॥ मदर्पणेनकर्मभिर्विशुद्धसत्वस्यांतरंगांभक्तिमाह श्रद्धालुरितिद्वाभ्यां अभिनयन् स्वयमनुकुर्वन् ॥ २३ ॥ आचरन् सेवमानः ॥ २४ ॥ ततश्चानेनप्रकारेणमयिसत्संगेनलब्धयाभक्त्यासभक्तःमामुपासिताध्याताभवति सचध्यानशीलःसद्भिर्दर्शितंवैनिश्चितंसुखेनैवमेपदंस्वरूपं प्राप्नोति ॥ २५ ॥ सत्संगलब्धयाभक्त्येत्युक्तंतत्रसतांभक्तेश्चविशेषंपृच्छति साधुरिति साधवःस्वस्वमतिकल्पिताःसंतिबहवस्तदतुकीदृशः संमतःभक्तिरपिबहुविधालोकेकीदृशीपुनस्त्वय्युपयुज्येत सद्भिश्चनारदादिभिरादृता एतच्चकथ्यतां ॥ २६ ॥

इदंचातिगुह्यंत्त्वयैववक्तव्यमित्यैश्वर्यमाविष्करोति हेपुरुषाध्यक्षेत्यादिना ब्रह्मादिनियंतः ॥ २७ ॥ अत्रहेतुः त्वमिति व्योमवदसंगः यतःप्रकृतेःपरः स्वेषांभक्तानामिच्छयाउपात्तंपृथकपारिमितंवपुर्येनसः ॥ २८ ॥ तत्रत्रिंशल्लक्षणैःसाधुंनिरूपयति कृपालुरितिपंचभिः कृपालुःपरदुःखासहिष्णुः सर्वदेहिनांकेषांचिदपिअकृतद्रोहः तितिक्षुःक्षमावान्सत्यंसारःस्थिरंबलंवायस्यसः अनवद्यात्माअसूयादिरहितः सुखदुःखयोःसमोहर्षविषादरहितः यथाशक्तिसर्वेषामुपकारकः ॥ २९ ॥ कामैर्विषयैरक्षुभिताचित्तः दांतःसंयतबाह्येंद्रियः मृदुःअकठिनचित्तःशुचिःसदाचारः अकिंचनःअपरिग्रहः अनीहःदृष्टक्रियाशून्यः मितभुक्लब्धाहारः शांतःनियतांतःकरणःस्थिरःस्वधर्मे मच्छरणःमदेकाश्रयः मुनिःमननशीलः ॥ ३० ॥ अप्रमत्तःसावधानः गभीरात्मानिर्विकारःधृतिमान्विपद्यप्यकृपणः जितषट्गुणःक्षुत्पिपासे

एतन्मेपुरुषाध्यक्षलोकाध्यक्षजगत्प्रभो ॥ प्रणतायानुरक्तायप्रपन्नायचकथ्यतां ॥ २७॥ त्वंब्रह्मपरमंव्योमपुरुषःप्रकृतेःपरः ॥ अवतीर्णोऽसिभगवन्स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥ श्रीभगवानुवाच कृपालुरकृतद्रोहस्तितिक्षुःसर्वदेहिनां ॥ सत्यसारोऽनवद्यात्मासमःसर्वोपकारकः ॥ २९ ॥ कामैरहतधीर्दांतोमृदुःशुचिरकिंचनः ॥ अनीहोमितभुक्शांतःस्थिरोमच्छरणोमुनिः ॥ ३० ॥ अप्रमत्तोगभीरात्माधृतिमान्जितषड्गुणः ॥ अमानीमानदःकल्पोमैत्रःकारुणिकःकविः ॥ ३१ ॥ आज्ञायैवंगुणान्दोषान्मयादिष्टानपिस्वकान् ॥ धर्मान्संत्यज्ययःसर्वान्मांभजेतससत्तमः ॥ ३२ ॥ ज्ञात्वाऽज्ञात्वाथयेवैमांयावान्यश्चास्मियादृशः ॥ भजंत्यनन्यभावेनतेमेभक्ततमामताः ॥ ३३ ॥ ॥ ॥ ॥

शोकमोहौजरामृत्यूषड्रूमर्यःएतेजितायेनसः आमानीनमानाकांक्षी अन्येभ्योमानदः कल्पःपरबोधनेदक्षः मैत्रःअवंचकःकारुणिकःकरुणयैवप्रवर्तमानोनदृष्टलोभेन कविःसम्यक्ज्ञानी ॥ ३१ ॥ किंच मयावेदरूपेणादिष्टानपिस्वधर्मान्संत्यज्ययोमांभजेतसोऽपिएवंपूर्वोक्तवत्सत्तमः किमज्ञानान्नास्तिक्याद्वा न धर्माचरणेसत्वशुध्यादीन्गुणान्विपक्षेदोषांश्चआज्ञायज्ञात्वापि मत्ध्यानविक्षेपकतयामद्भक्त्यैवसर्वंभविष्यंतीतिदृढनिश्चयेनैवधर्मान्संत्यज्य यद्वाभक्तिदार्ढ्येननिवृत्ताधिकारतयासंत्यज्य अथवाविद्धैकादश्युपवासकृष्णैकादश्यनुपवासानिवेद्यश्राद्धादयोयेभक्तिविरुद्धाधर्मास्तान्संत्यज्येत्यर्थः ॥ ३२॥ किंच यावान्देशकालापरिच्छिन्नःयश्चसर्वात्मा यादृशःसच्चिदानंदादिरूपःतंमांज्ञात्वाऽपि यद्वाविशेषतःपुनःपुनर्ज्ञात्वाएकांतभावेनयेभजंतीति ॥ ३३ ॥ ॥

साधुलक्षणमुक्तंभक्तेर्लक्षणमाह मल्लिंगेत्यष्टभिः लिंगानिप्रतिमादीनि ॥ ३४ ॥ सर्वलाभोपहरणंसर्वस्यलब्धस्यसमर्पणं ॥ ३५ ॥ प
र्वाणिजन्माष्टम्यादीनितदनुमोदनं ॥ ३६ ॥ बलिविधानंपुष्पोपहारादिसमर्पणं सर्ववार्षिकपर्वसु चातुर्मास्यैकादश्यादिषुविशेषतः ॥ ३७ ॥
उद्यानादिकरणेसामर्थ्येसतिस्वतः असतिचान्यैःसंभूयोद्यमः उद्यानंपुष्पप्रधानं उपवनंफलप्रधानंवनं आक्रीडंक्रीडास्थानम् ॥ ३८ ॥
संमार्जनंरजसोपाकरणं उपलेपोगोमयादिभिरालेपनं सेकस्तैरेवप्रोक्षणं मंडलवर्तनंसर्वतोभद्रादिकरणं मह्यंमम ॥ ३९ ॥ कृतस्यधर्म
स्यापरिकीर्तनं स्वयमन्येनवानिवेदितंनस्वीकुर्यात् एतच्चसाधारणस्थावरविषयंरागप्राप्तविषयंवा भक्त्यातुग्राह्यमेव षड्भिर्मासोपवासैस्तु

मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनम् ॥ परिचर्यास्तुतिःप्रव्हगुणकर्मानुकीर्तनम् ॥ ३४ ॥ मत्कथाश्रवणे
श्रद्धामदनुध्यानमुद्धव ॥ सर्वलाभोपहरणंदास्येनात्मनिवेदनम् ॥ ३५ ॥ मज्जन्मकर्मकथनंममपर्वानु
मोदनं ॥ गीततांडववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥ यात्राबलिविधानंचसर्ववार्षिकपर्वसु ॥ वैदि
कीतांत्रिकीदीक्षामदीयव्रतधारणम् ॥ ३७ ॥ ममार्चास्थापनेश्रद्धास्वतःसंहत्यचोद्यमः ॥ उद्यानोपवना
क्रीडपुरमंदिरकर्माणि ॥ ३८ ॥ संमार्जनोपलेपाभ्यांसेकमंडलवर्तनैः ॥ गृहशुश्रूषणंमह्यंदासवद्यदमाय
या ॥ ३९ ॥ अमानित्वमदंभित्वंकृतस्यापरिकीर्तनम् ॥ अपिदीपावलोकंमेनोपयुंज्यान्निवेदितम् ॥ ४० ॥
यद्यदिष्टतमंलोकेयच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यंतदानंत्यायकल्पते ॥ ४१ ॥ सूर्योऽग्निर्ब्राह्मणो
गावोवैष्णवःखंमरुज्जलम् ॥ भूरात्मासर्वभूतानिभद्रपूजापदानिमे ॥ ४२ ॥ सूर्येतुविद्ययात्रय्याहविषा
ऽग्नौयजेतमाम् ॥ आतिथ्येनतुविप्राग्र्येगोष्वंगयवसादिना ॥ ४३ ॥

यत्फलंपरिकीर्तितं ॥ विष्णोर्नैवेद्यसिक्थेनपुण्यंतद्भुंजतांकलौ ॥ हृदिरूपंमुखेनामनैवेद्यमुदरेहरेः ॥ पादोदकंचनिर्माल्यंमस्तकेयस्य
सोऽच्युतइत्यादिवचनेभ्यः यद्वाअन्यस्मैनिवेदितंमेनोपयुंज्यात् मह्यंनानिवेदयेदित्यर्थः विष्णोर्निवेदितान्नेनयष्टव्यंदेवतांतरं ॥ पितृभ्य
श्चैवतद्देयंतदानंत्यायकल्पते ॥ पितृशेषंतुयोदद्याद्धरयेपरमात्मने ॥ रेतोदाःपितरस्तस्यभवंतिक्लेशभागिनइत्यादिवचनेभ्यः ॥ ४० ॥
॥ ४१ ॥ इदानीमेकादशपूजाधिष्ठानान्याह सूर्यइति हेभद्र ॥ ४२॥ अधिष्ठानभेदेनपूजासाधनान्याह सूर्यइतित्रिभिः त्रय्याविद्ययासू
क्तैरुपस्थानादिना अंगहेउद्धव यवसादिनातृणादिना ॥ ४३ ॥ ॥ ॥ ॥

बंधुसत्कृत्याबंधुवत्संमानेन हृदिखेहृदयाकाशे मुख्यधियाप्राणदृष्ट्या तोयेतोयादिभिर्द्रव्यैस्तर्पणादिना ॥ ४४ ॥ स्थंडिलेभुवि मंत्रहृदयैःरह स्यमंत्रन्यासैः ॥ ४५ ॥ सर्वाधिष्ठानेषुध्येयमाह धिष्ण्येष्विति इतिअनेनमंत्रप्रकारेण एषुधिष्ण्येषु ॥ ४६ ॥ उक्तायाभक्तेःफलमाह इष्टापूर्तेने ति सद्भक्तिंदृढांभक्तिम् अस्याभक्तेरंतरंगसाधनमाह इत्थंमत्स्मृतिःसाधुसेवयाभवति यद्वा स्मृतिर्ज्ञानं ततश्चदृढभक्तिमतःपुंसःसाधुसेवयाम ज्ज्ञानंभवतीत्यर्थः ॥ ४७ ॥ ज्ञानभक्तिमार्गौउक्तौ तत्रज्ञानमार्गादपिभक्तिमार्गःश्रेष्ठइत्याह प्रायेणेति सत्संगेनयोभक्तियोगस्तेनविनोपायः संसारतरणेनविद्यते सत्संगेनेत्यत्रहेतुमाह हियस्मात्सतामहंप्रायणंप्रकृष्टमयनमाश्रयःअतःसत्संगोमय्यंतरंगइत्यर्थः ॥ ४८ ॥ इदानींसांख्य

वैष्णवेबंधुसत्कृत्याहृदिखेध्याननिष्ठया ॥ वायौमुख्यधियातोयेद्रव्यैस्तोयपुरस्कृतैः ॥ ४४॥ स्थंडिलेमंत्र हृदयैर्भोगैरात्मानमात्मनि ॥ क्षेत्रज्ञंसर्वभूतेषुसमत्वेनयजेतमाम् ॥ ४५ ॥ धिष्ण्येष्वेष्वितिमद्रूपंशंखच क्रगदांबुजैः ॥ युक्तंचतुर्भुजंशांतंध्यायन्नर्चेत्समाहितः ॥ ४६ ॥ इष्टापूर्तेनमामेवंयोयजेतसमाहितः॥लभ तेमयिसद्भक्तिंमत्स्मृतिःसाधुसेवया ॥ ४७॥ प्रायेणभक्तियोगेनसत्संगेनविनोद्धव ॥ नोपायोविद्यतेसध्र्य ङ्प्रायणंहिसतामहं ॥ ४८ ॥ अथैतत्परमंगुह्यंशृण्वतोयदुनंदन ॥ सुगोप्यमपिवक्ष्यामित्वंमेभृत्यःसुहृ त्सखा ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेएकादशोऽध्यायः ॥ ११ ॥

श्रीभगवानुवाच नरोधयतिमांयोगोनसांख्यंधर्मएवच ॥ नस्वाध्यायस्तपस्त्यागोनेष्टापूर्तंनदक्षिणा ॥ १ ॥ व्रतानियज्ञश्छंदांसितीर्थानिनियमायमाः ॥ यथाऽवरुंधेसत्संगःसर्वसंगापहोहिमां ॥ २ ॥

योगादीनिसाधनांतरसापेक्षाणिसव्यभिचाराणिचसत्संगस्तुस्वतंत्रएवसमर्थःफलाव्यभिचारीचेतिवर्णयितुमाह अथेति एतद्वक्ष्यमाणंपरमं गुह्यमतःशृण्वित्यर्थः ॥ ४९॥ इत्येकादशेटीकायामेकादशोऽध्यायः ॥ ११ ॥ ॥ द्वादशेसाधुसंगस्यमाहिमावर्णितःपुरा ॥ कर्मानुष्ठानतस्या गव्यवस्थाचततःपरं ॥ १ ॥ नरोधयतिनवशीकरोति योगःआसनप्राणायामादिः सांख्यंतत्वानांविवेकः धर्मःसामान्यतोऽहिंसादिः स्वाध्या योवेदजपः तपःकृच्छ्रादि त्यागःसंन्यासः इष्टापूर्तमिष्टंचपूर्तंच तत्रेष्टमग्निहोत्रादि पूर्तंकूपारामादिनिर्माणं दक्षिणाशब्देनसामान्यतोदानं लक्ष्यते ॥ १ ॥ व्रतानिएकादश्युपवासादीनि यज्ञोदेवपूजा छंदांसिरहस्यमंत्राः अवरुंधेवशीकरोति ॥ २ ॥

यातुधानाराक्षसाः ॥ ३ ॥ ४ ॥ त्वाष्ट्रोवृत्रः कायाधवःप्रल्हादः ॥ ५ ॥ ऋक्षोजांबवान् गृध्रोजटायुः वणिक्पथस्तुलाधारः व्याधोधर्मव्याधः यज्ञपत्न्योदीक्षितनार्यः ॥ ६ ॥ तेषांसत्संगव्यतिरिक्तसाधनांतराभावमाह तइति नअधीताःश्रुतिगणायैः तदर्थंचनउपासितामहत्तमायै स्तेतथा किंच अव्रतातप्ततपसः नव्रतानियेषांनतप्तानितपांसियैस्तेचतेचतथा सत्संगादिति सद्भिःसंगोनाममयैवसंगइत्यभिप्रेत्योक्तं यद्वा स्वसंगस्यापिसत्संगत्वंविवक्ष्यते स्वस्यापिसत्त्वात् यद्वा मदीयसंगादित्यर्थः ॥ ७ ॥ तत्रवृत्रादीनांभवतुनामकथंचित्साधनांतरंगोप्यप्रभृतीनांतुनान्यदस्तीत्याह केवलेनेति सत्संगलब्धेनकेवलेनैवभावेनप्रीत्या नगायमलार्जुनादयः नागाः कालियादयः यद्वा तदानींतनानांस

सत्संगेनहिदैतेयायातुधानामृगाःखगाः ॥ गंधर्वाप्सरसोनागाःसिद्धाश्चारणगुह्यकाः ॥ ३ ॥ विद्याधरामनुष्येषुवैश्याःशूद्राःस्त्रियोऽत्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेनघ ॥ ४ ॥ बहवोमत्पदंप्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वाबलिर्बाणोमयश्चाथबिभीषणः ॥ ५ ॥ सुग्रीवोहनुमानृक्षोगजोगृध्रोवणिक्पथः ॥ व्याधःकुब्जाव्रजेगोप्योयज्ञपत्न्यस्तथापरे ॥ ६ ॥ तेनाधीतश्रुतिगणानोपासितमहत्तमाः ॥ अव्रतातप्ततपसःसत्संगान्मामुपागताः ॥ ७ ॥ केवलेनहिभावेनगोप्योगावोनगामृगाः ॥ येऽन्येमूढधियोनागाःसिद्धामामीयुरंजसा ॥ ८ ॥ यंनयोगेनसांख्येनदानव्रततपोऽध्वरैः ॥ व्याख्यास्वाध्यायसंन्यासैःप्राप्नुयाद्यत्नवानपि ॥ ९ ॥ रामेणसार्धंमथुरांप्रणीतेश्वाफल्किनामय्यनुरक्तचित्ताः ॥ विगाढभावेननमेवियोगतीव्राधयोऽन्यंददृशुःसुखाय ॥ १० ॥ ॥ ॥ ॥

वंतरुगुल्मादीनामपिभगवतिभावोस्तीतिगम्यते तदुक्तंभगवतैव अहोअमीदेववरामरार्चितंपादांबुजंतेसुमनःफलार्हणं ॥ नमंत्युपादायशिखाभिरात्मनस्तमोऽपहत्यैतरुजन्मयत्कृतमित्यादि सिद्धाःकृतार्थाःसंतईयुःप्रापुः ॥ ८ ॥ स्वप्राप्तेर्दुर्लभतामाह यमिति योगादिभिःकृतप्रयत्नोऽपियंनप्राप्नुयात्तंमामीयुरितिपूर्वेणान्वयः अत्रचप्रथमंयागोप्यःपश्वादयोवाश्रीकृष्णेनसहसंगतास्तेसंतस्तत्संगोऽन्येषांसत्संगस्तेनचतेषांभक्तिरितिज्ञातव्यं ॥ ९ ॥ गोपीनांभावंप्रपंचयति रामेणेतिचतुर्भिः श्वाफल्किनाअक्रूरेणमयिप्रणीतेसतिमेमत्तोऽन्यंसुखायनददृशुः कुतः वियोगेनतीव्रोदुःसहआधिर्यासांताः अत्रहेतुः मयिविगाढेनअतिदृढेनभावेनप्रेम्णाअनुरक्तानिसंसक्तानिचित्तानियासांताः ॥ १० ॥

तीव्राधित्वंव्यनक्ति तास्ताइति मयासहयाए वक्षपारात्रयःक्षणार्द्धवन्नीता स्ताएवपुनर्मयाहीनास्तासांकल्पसमाबभूवुः कथंभूताः तास्ताः वाचामगोचराइत्यर्थः ॥ ११ ॥ किंच एवंतीव्राधयस्तामोहमिषेणसमाधिंप्राप्ताइत्याह ताइति मयिअनुषंगेणआसक्त्याबद्धाधियोयाभिस्ताःस्वात्मानंस्वदेहमदःदूरस्थमिदंसन्निहितंचनाविदन् यद्वा स्वपतिपुत्रादिममतास्पदं आत्मानमहंकारास्पदंदेहं अदःपरंलोकंचनाविदन्निति यथामुनयःसमाधौनामरूपेनविदुस्तद्वत् किंतुअब्धितोयेनद्यइवमयिप्रविष्टाइत्यन्वयः ॥१२॥ एवंताअबलाःकेवलंमत्कामाअस्व



तास्ताःक्षपाःप्रेष्ठतमेननीतामयैववृंदावनगोचरेण ॥ क्षणार्द्धवत्ताःपुनरंगतासांहिनामयाकल्पसमाबभूवुः ॥ ११ ॥ तानाविदन्मय्यनुषंगबद्धधियःस्वमात्मानमदस्तथेदं ॥ यथासमाधौमुनयोऽब्धितोयेनद्यःप्रविष्टाइवनामरूपे ॥ १२ ॥ मत्कामारमणंजारमस्वरूपविदोऽबलाः ॥ ब्रह्ममांपरमंप्रापुःसंगाच्छतसहस्रशः ॥ १३ ॥ तस्मात्त्वमुद्धवोत्सृज्यचोदनांप्रतिचोदनां ॥ प्रवृत्तंचनिवृत्तंचश्रोतव्यंश्रुतमेवच ॥ १४ ॥ मामेकमेवशरणमात्मानंसर्वदेहिनां ॥ याहिसर्वात्मभावेनमयास्याह्यकुतोभयः ॥ १५ ॥ उद्धवउवाच संशयःशृण्वतोवाचंतवयोगेश्वरेश्वर ॥ ननिवर्ततआत्मस्थोयेनभ्राम्यतिमेमनः ॥ १६ ॥

रूपविदःस्वरूपंतुनजानंतितथाऽपिसत्संगात्जारंब्रह्मजा रबुद्धिवेद्यमपिब्रह्मस्वरूपमेवमांपरमंप्रापुरित्यर्थः ॥१३॥ यस्मादेवंभूतोमद्भजनप्रभावस्तस्मात्त्वंचोदनांश्रुतिंप्रतिचोदनांश्रुतिंच यद्वाविधिंचनिषेधंचउत्सृज्यमांशरणंयाहि॥ १४ ॥मयैवाकुतोभयःस्याःभव॥ १५ ॥पूर्वंतावन्मयोदितेष्ववहितः स्वधर्मेष्वित्यादिनाकर्मकर्तव्यमिति युक्तंइदानींतुसर्वंत्यक्त्वामांशरणंयाहीत्युच्यतेतत्राकिमात्मनः कर्तृत्वाद्यस्तिनास्तिवेत्यात्मविषयःसंशयोननिवर्तते यद्वा कर्मकार्यंत्याज्यंवेत्यात्मस्थोहृदिस्थःसंशयोनानिवर्ततइतिपृच्छति संशयइति येनसंशयेन ॥ १६ ॥

उत्तरंसएषइत्यष्टभिः अयंभावः ईश्वरस्तावत्स्वमायावशात्प्रपंचात्मनाभातितत्प्रपंचाध्यासाच्चर्जीवानामनाद्यविद्ययाकर्तृत्वादिततोविधि प्रतिषेधाधिकारस्तदानींसत्त्वशुध्ध्यर्थंकर्माणिकुर्वित्युक्तं सत्त्वेचशुद्धेपुनःकर्मजाड्यपरिहारायभक्तिविक्षेपककर्मादरंपरित्यज्यदृढविश्वासे नभजेत्युक्तं जातायांतुविद्यायांनकिंचित्कर्तव्यमस्तीति तत्रतावदीश्वराद्भागादींद्रियद्वाराजीवसंसृतिकारणभूतंप्रपंचोद्गममाह सार्धैश्चतु र्भिः सएषःअपरोक्षःजीवयतीतिजीवःपरमेश्वरः अपरोक्षत्वेहेतुः विवरेषुआधारादिचक्रेषुप्रसूतिरभिव्यक्तिर्यस्यसः तामेवाभिव्य क्तिमाहघोषेणेति घोषेणपराख्येननादवताप्राणेनसहगुहामाधारचक्रंप्रविष्टःसन्मनोमयंसूक्ष्मंरूपंपश्यंत्याख्यंमध्यमाख्यंचमणिपूरचक्रेविशु द्धिचक्रेचउपेत्यप्राप्यवक्रेमात्रान्ह्स्वादिःस्वरउदात्तादिर्वर्णःअकारादिरित्येवंवैखर्याख्यः स्थविष्ठःअतिस्थूलोनानावेदशाखात्मकोभवति तथाचश्रुतिः चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः गुहात्रीणिनिहितानेंगयंतितुरीयंवाचोमनुष्यावदंतीति श्रुतेरर्थः वाक्परिमितानिवाचःपरिमितानिशास्त्राणितानिचत्वारिपदानिस्थानानिपरापश्यंतीमध्यमावैखरीति तानिचयेब्राह्मणामनीषिणोऽध्यात्म

**श्रीभगवानुवाच सएषजीवोविवरप्रसूतिःप्राणेनघोषेणगुहांप्रविष्टः ॥**
**मनोमयंसूक्ष्ममुपेत्यरूपंमात्रास्वरोवर्णइतिस्थविष्ठः ॥ १७ ॥**

कुशलास्तेविदुः तेषांमध्येआदौत्रीणिपदानिशरीरेआधारनाभिहृदयेषुनिहितानेंगयंतिनजानंति तुरीयंचतुर्थंवैखर्याख्यंमनुष्यावदंति मनु ष्याणांवदनेवर्तमानोर्थबोधकःशब्दोभवतीत्यर्थः अभियुक्तश्लोकश्च यासामित्रावरुणसदनादुच्चरंतीत्रिषष्टिंवर्णानंतःप्रकटकरणैःप्राणसं गात्प्रसूते ॥ तांपश्यंतींप्रथममुदितांमध्यमांबुद्धिसंस्थांवाचंवक्रेकरणविशदांवैखरींचप्रपद्ये ॥ श्लोकार्थश्च तांत्रिविधांभारतींप्रपद्ये यासामित्रावरुणसदनादग्निसोमस्थानादुच्चरंतीउद्भवंती मित्रोऽग्निर्वरुणःसोमस्तयोःसदनमावासस्थानंपरमात्मायतःश्वासश्चशीतोष्णत्वं तस्मादुच्चरंतीत्रिषष्टिंवर्णान्जनयतिवायुसंगजान् प्रकटकरणैर्बुद्धिगतैःप्रत्यक्षरूपैरिंद्रियैरंतःपश्यतिनतूच्चारयतिसापश्यंत्याख्यातांप्रथम मुदितामुत्पन्नांबुद्धिसंस्थामुच्चारयामीतिविचारयुक्तांमध्यमांमुखेवास्थितांकरणविशदांस्थानप्रयत्ननिर्मलांवैखरींचप्रपद्ये त्रिषष्टिंवर्णानिति ह्स्वदीर्घप्लुतभेदेन स्वराएकविंशतिः ऋलोरप्लुतत्वात् संधिस्वराणामन्ह्स्वत्वाच्च व्यंजनानित्रयस्त्रिंशत् अनुनासिकाऊननवमाःपं च विसर्गानुस्वारौअःकःपौचेति ॥ १७ ॥ ॥ ॥ ॥ ॥

अव्यक्तस्यसतःसूक्ष्ममध्यमक्रमेणाभिव्यक्तौदृष्टांतः यथेति यथाऽग्निःखेऊष्माअव्यक्तोष्मरूपोदारुणिअधिकंमथ्यमानःअनिलसहायःसन्
अणुःसूक्ष्मविस्फुलिंगादिरूपोभवति पुनःप्रकृष्टोजातोहविषासंवर्धते तथैवेयंवाणीममाभिव्यक्तिः ॥ १८ ॥ उक्तांवाग्वृत्तिमुपसंहरन्नितरें
द्रियवृत्तिष्वतिदिशति एवंगादिर्गदनंभाषणंमेव्यक्तिरित्युपसंहारः कर्महस्तयोर्वृत्तिर्गतिःपादयोर्विसर्गःपायूपस्थयोरितिकर्मेंद्रियाणाम् घ्रा
णःअवघ्राणंरसोरसनंदृक्दर्शनंस्पर्शःस्पर्शनंश्रुतिःश्रवणमितिज्ञानेंद्रियाणां संकल्पोमनसोविज्ञानंबुद्धिचित्तयोरभिमानोऽहंकारस्यसूत्रंप्र
धानस्य सत्त्वरजस्तमसांविकारोऽधिदैवादिस्त्रिविधःप्रपंचोमेव्यक्तिरितिपूर्वेणान्वयः ॥ १९ ॥ तस्मादीश्वरादिव्यक्तिरूपःप्रपंचोनेश्वरा
द्भिन्नोऽस्तीत्याह अयमिति अयंजीवःईश्वरआदावव्यक्तएकएववयसाकालेनविश्लिष्टाविभक्तावागादींद्रियरूपाःशक्तयोयस्ययद्वा विशे

यथाऽनलःखेऽनिलबंधुरूष्मावलेनदारुण्यधिमथ्यमानः ॥ अणुःप्रजातोहविषासमिध्यतेतथैवमेव्यक्ति
रियंहिवाणी ॥ १८ ॥ एवंगदिःकर्मगतिर्विसर्गोघ्राणोरसोदृक्स्पर्शःश्रुतिश्च ॥ संकल्पविज्ञानमथाभि
मानःसूत्रंरजःसत्वतमोविकारः ॥ १९ ॥ अयंहिजीवस्त्रिवृदब्जयोनिरव्यक्तएकोवयसासआद्यः ॥ विश्लि
ष्टशक्तिर्बहुधेवभातिबीजानियोनिंप्रतिपद्ययद्वत् ॥ २० ॥ यस्मिन्निदंप्रोतमशेषमोतंपटोयथातंतुवितान
संस्थः ॥ यएषसंसारतरुःपुराणःकर्मात्मकःपुष्पफलेप्रसूते ॥ २१ ॥ ॥ ॥

षेणश्लिष्टाआलिंगितामायाशक्तिर्येनसःबहुप्रकारइवाभातियःसएवआद्यस्त्रिवृत्त्रिगुणाश्रयः अब्जयोनिर्लोकपद्मस्यकारणभूतः एक
स्यबहुधाभानेदृष्टांतः योनिंक्षेत्रंप्रतिपद्यप्राप्यबीजानियद्वदिति ॥ २० ॥ तस्मात्तन्मायाविलसितत्वात्तदाश्रयमिदंजगन्नततःपृथगिति
सदृष्टांतमाह यस्मिन्निति तंतुवितानेसंस्थास्थितिर्यस्यसःपटोयथातथायस्मिन्निदंविश्वमोतंदीर्घतंतुषुपटइवप्रोतंतिर्यक्तंतुष्विव एवंभू
तंसमष्टिव्यष्ट्यात्मकंविश्वमविद्ययाऽत्मन्यध्यस्तंवृक्षरूपंजीवस्यकर्तृत्वादिसंसारहेतुः अतस्तद्विवेकज्ञानेनकर्मादिसर्वंत्याज्यमित्युक्तमि
त्याशयेनाह यएषइतिसार्धैस्त्रिभिः पुराणःअनादिः कर्मात्मकःप्रवृत्तिस्वभावः पुष्पफलेभोगापवर्गौ कर्मतत्फलेवा प्रसूतेजनयति ॥ २१ ॥

वृक्षरूपकंप्रपंचयति द्वेइति द्वेपुण्यपापेअस्यबीजे सचशतमूलःशतमपरिमिताःवासनाः मूलानियस्य त्रयोगुणाःनालानिप्रकांडायस्यपंच भूतानिस्कंधायस्य पंचरसाःशब्दादिविषयास्तेषांप्रसूतिर्यस्मात् दशचएकाचशाखाइंद्रियाणियस्य द्वयोःसुपर्णयोर्जीवपरमात्मनोर्नीडंय स्मिन् त्रीणिवल्कलानित्वचोवातपित्तश्लेष्माणोयस्य द्वेसुखदुःखेफलेयस्यसः अर्कंप्रविष्टःसूर्यमंडलपर्यंतंव्याप्तः तन्निर्भिद्यगतस्यसंसारा भावात् ॥२२॥ तत्फलभोक्तॄनाह गृध्यंतीतिगृध्राःकामिनोग्रामेचरागृहस्थाअस्यवृक्षस्यैकंफलंदुःखमदंति परिणामतःस्वर्गादेरपिदुःखस्व रूपत्वात् हंसाविवेकिनः अरण्यवासाःसंन्यासिनः एकंफलंसुखमदंति एकंपरमात्मानंमायामयमेवबहुरूपामिज्यैर्गुरुभिःकृत्वायोवेदसवेदं वेदतत्त्वार्थवेद ॥२३॥ स्वंचैवंज्ञात्वाकृतकृत्यःसर्वसाधनंत्यजेत्याह एवमिति एकांतभक्त्याशितेनतीक्ष्णेनज्ञानकुठारेण स्वतंत्रतावाद्यो

द्वेअस्यबीजेशतमूलस्त्रिनालःपंचस्कंधःपंचरसप्रसूतिः ॥ दशैकशाखोद्विसुपर्णनीडस्त्रिवल्कलोद्विफलोर्कं प्रविष्टः ॥ २२ ॥ अदंतिचैकंफलमस्यगृध्राग्रामेचराएकमरण्यवासाः ॥ हंसायएकंबहुरूपमिज्यैर्माया मयंवेदसवेदवेदम् ॥ २३ ॥ एवंगुरूपासनयैवभक्त्याविद्याकुठारेणशितेनधीरः ॥ विवृश्च्यजीवाशयम प्रमत्तःसंपद्यचात्मानमथत्यजास्त्रं ॥ २४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवा देद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ श्रीभगवानुवाच सत्त्वंरजस्तमइतिगुणाबुद्धेर्नचात्मनः ॥ स त्त्वेनान्यतमौहन्यात्सत्त्वंसत्त्वेनचैवहि ॥ १ ॥ ॥ ॥ ॥ ॥

ज्ञानभक्त्योः जीवोपाधित्रिगुणात्मकंलिंगशरीरंविवृश्च्यछित्वापरमात्मानंचसंपद्यप्राप्यअथास्त्रंसाधनंत्यजेति ॥ २४ ॥ इत्येकादशेटीका यांद्वादशोध्यायः ॥१२॥ त्रयोदशेऽथसत्त्वस्यवृद्ध्याविद्योदयक्रमः ॥ हंसेतिहासतश्चित्तगुणाविश्लेषवर्णनं ॥ १ ॥ विद्याकुठारेणजीवाशयंवि वृश्च्यसाधनंत्यजेत्युक्तं ननुतत्रतमआदिगुणत्रयवृत्तिप्रतिबंधेसतिकथंविद्योत्पत्तिरित्याशंक्यतन्निवृत्त्याविद्योत्पत्तिप्रकारमाह सत्त्वमितिसप्त भिः तत्रयद्यानंदादिवदात्मधर्मागुणाः स्युस्तर्हितत्स्वरूपत्वात्तेषांनिवृत्त्याविद्योत्पत्तिर्नस्यान्नत्वेतदस्तीत्याहबुद्धेः प्रकृतेरेतेगुणानत्वात्मनइ ति अतःसत्त्वेनसत्त्ववृद्ध्याऽन्यतमौहन्यात् रजस्तमोवृत्तीर्जयेदित्यर्थः सत्त्वंचसत्यदयादिवृत्तिरूपमुपशमात्मकेनसत्त्वेनैवहन्यात् ॥ १ ॥

ननुगुणत्रयवृत्तीनांपरस्परोवमर्दनरूपत्वात्कथंसत्त्ववृद्ध्यैवेतरवृत्तयोनियमेनहंतव्यास्तत्राह सत्त्वादिति मद्भक्तिलक्षयतियोधर्मःसमद्भ
क्तिरूपएववा सत्त्वमेवकथंवर्धेतत्राह सात्त्विकानांपदार्थानामुपासयासेवयासत्त्वंवृद्धंभवतीत्यर्थः ॥ २ ॥ सचधर्मोरजस्तमश्चहन्यात्
कुतः नविद्यतेउत्तमोयस्मात्सःसर्वोत्तमः यतःसत्त्ववृद्धिःसत्वस्यवृद्धिर्यस्मिन्कारणेसः अतएवतत्कार्योऽधर्मप्रतिबंधोऽपिनास्तीत्याह त
स्मिन्नुभयस्मिन्हतेतन्मूलःतेरजस्तमसीरागद्वेषादिनाप्रमादालस्यादिनाचमूलंयस्यसः ॥ ३ ॥ सात्विकोपासयासत्त्वंवर्धतइत्युक्तंतानेव
सत्त्ववृद्धिहेतून्दर्शयितुंसामान्यतोगुणत्रयवृद्धिहेतूनाह आगमःशास्त्रं अपःआपः क्वचिदागमोऽर्थइतिपाठः प्रजापुत्रः देशोवाराणस्या
दिः कालोवसंतादिः कर्मवदोक्तं जन्मध्यानंचदेवादीनां मंत्रोद्वादशाक्षरादिःसंस्कारोजातकर्मादिः एतेदशत्रिगुणोत्पत्तिहेतवः ॥ ४ ॥
एषांसात्विकादिनिर्णयमाह एषामेवमध्येयद्वृद्धाःशास्त्रज्ञाःप्रचक्षतेप्रशंसंतितत्सात्विकं यच्चनिंदंतितत्तामसं यत्तुतैर्वृद्धैरुपेक्षितंनस्तुतंनच

सत्त्वाद्धर्मोभवेद्वृद्धात्पुंसोमद्भक्तिलक्षणः ॥ सात्विकोपासयासत्त्वंततोधर्मःप्रवर्तते ॥ २ ॥ धर्मोरजस्तमोह
न्यात्सत्त्ववृद्धिरनुत्तमः ॥ आशुनश्यतितन्मूलोह्यधर्मउभयेहते ॥ ३ ॥ आगमोऽपःप्रजादेशःकालःकर्मचज
न्मच ॥ ध्यानंमंत्रोऽथसंस्कारोदशैतेगुणहेतवः ॥ ४ ॥ तत्तत्सात्विकमेवैषांयद्यद्वृद्धाःप्रचक्षते ॥ निंदंतिताम
संयत्तद्राजसंतदुपेक्षितम् ॥५॥ सात्त्विकान्येवसेवेतपुमान्सत्त्वविवृद्धये ॥ ततोधर्मस्ततोज्ञानंयावत्स्मृतिर
पोहनम् ॥ ६ ॥ वेणुसंघर्षजोवन्हिर्दग्ध्वाशाम्यतितद्वनं ॥ एवंगुणव्यत्ययजोदेहःशाम्यतितत्क्रियः ॥ ७ ॥

निंदितंतद्राजसंस्मृतं॥५॥सात्विकान्येवेति निवृत्तानिशास्त्राण्येवसेवेतनप्रवृत्तिपाखंडशास्त्राणि तीर्थापएवनगंधोदकसुराद्याःप्रजाःजनाः
निवृत्तान्जनान्नप्रवृत्तदुराचारान् विविक्तदेशंनरथ्याद्यूतदेशान् कालंब्राह्ममुहूर्तादिकंध्यानादौनप्रदोषनिशीथादीन् कर्मचनित्यंनकाम्या
भिचारादीनि जन्मचवैष्णवशैवदीक्षालक्षणं नशाक्तक्षुद्रदीक्षारूपं ध्यानंश्रीविष्णोर्नकामिनीविद्विषां मंत्रंप्रणवादिकंनकाम्यक्षुद्रादीन्
संस्कारमात्मनःशोधकंनतुकेवलंदेहगृहादीनां ननुज्ञानमहावाक्यश्रवणादेवोत्पद्यतेकितत्रसत्त्ववृध्याधर्मेणवाअतआहयावत्स्मृतःआ
त्मापारोक्ष्यं यावच्चदेहद्वयतत्कारणभूतगुणापोहस्तावत्पर्यंतंज्ञानंभवतीत्यर्थः ॥६ ॥ ननुगुणव्यतिकराज्जातोदेहःकथंस्वाश्रयभूतान्गुणा
न्स्वतएवोत्पन्नयाविद्ययाऽपोह्यस्वयमप्युपरमेत्तत्राह वेणूनांसंघर्षाज्जातोऽग्निर्यथास्वतएवोत्पन्नाभिर्ज्वालाभिस्तद्वनंसर्वंदग्ध्वापश्चात्स्व
यंशाम्यति एवंदेहोऽपितत्क्रियःतस्याग्नेरिवक्रियाव्यापारोयस्यसः ॥ ७ ॥ ॥ ॥

ननुनियतेंद्रियतयासात्विकसेवायामियानेवपुरुषार्थस्तथापिराजसादीन्विषयान्दुःखमितिजानंतोपिकथंसेवंतइतिपृच्छति विदंतीतिपदं स्थानं इवानेयथाभर्त्स्यमानाआपि खरायथापद्भ्यांताड्यमानाअपिखरीमनुधावंतः अजायथानिर्लज्जाहंतुमानीताअपि तद्वत् ॥ ८ ॥ मिथ्याऽभिनिवेशेनभुंजतइतिसहेतुकमाह अहमितित्रिभिः प्रमत्तस्यविवेकशून्यस्य देहादावहमितिमिथ्याबुद्धिर्हृदियथोत्सर्पतितततोऽहं बुद्धेश्चवैकारिकंसत्वप्रधानमपिमनःप्रतिघोरंदुःखात्मकंरजउत्सर्पति मनोव्याप्नोतीत्यर्थः ॥ ९ ॥ इदमेवमिदमेवंभोग्यमितिसविकल्पः संकल्पःस्यात् ततश्चअहोरूपमहोभावइतिगुणाभिध्यानाद्दुर्धरःकामःस्यात् ॥ १० ॥ ततोविषयान्भोक्तुंकर्माणिकरोति ॥ ११ ॥ एवं

उद्धवउवाच विदंतिमर्त्याःप्रायेणविषयान्पदमापदां ॥ तथाऽपिभुंजतेकृष्णतत्कथंश्वखराजवत् ॥ ८॥ श्रीभगवानुवाच अहमित्यन्यथाबुद्धिःप्रमत्तस्ययथाहृदि ॥ उत्सर्पतिरजोघोरंततोवैकारिकंमनः ॥ ९॥ रजोयुक्तस्यमनसःसंकल्पःसविकल्पकः ॥ ततःकामोगुणध्यानाद्दुःसहःस्याद्धिदुर्मतेः ॥ १० ॥ करोति कामवशगःकर्माण्यविजितेंद्रियः ॥ दुःखोदर्काणिसंपश्यन्रजोवेगविमोहितः ॥ ११ ॥ रजस्तमोभ्यां यदपिविद्वान्विक्षिप्तधीःपुनः ॥ अतंद्रितोमनोयुंजन्दोषदृष्टिर्नसज्जते ॥ १२ ॥ अप्रमत्तोनुयुंजीतमनो मय्यर्पयन्शनैः ॥ अनिर्विण्णोयथाकालंजितश्वासोजितासनः ॥ १३ ॥ एतावान्योगआदिष्टोमच्छिष्यैःसन कादिभिः ॥ सर्वतोमनआकृष्यमय्यद्धावेश्यतेयथा ॥ १४ ॥ उद्धवउवाच यदात्वंसनकादिभ्योयेनरू पेणकेशव ॥ योगमादिष्टवानेतद्रूपमिच्छामिवेदितुम् ॥ १५ ॥ ॥ ॥

चेन्नकस्यापिदुःखानिवृत्तिःस्यादित्याशंक्याह यदपियद्यपिरजस्तमोभ्यांविक्षिप्तधीर्मूढधीश्चतथापिविद्वान्विवेकीपुनर्मनोनिरुंधन्नसज्जते ॥ १२ ॥ विषयदोषदृष्ट्याऽपिमनोनिरोधाशक्तौसुखंतन्निरोधोपायमाह अप्रमत्तइति अनिर्विण्णःअनलसः यथाकालंत्रिषवणम्मयि परमानंदरूपअर्पयन्समादध्यात् ॥ १३ ॥ विषयैःसंग्रथितस्यमनसस्तद्वियोगेनेश्वरनिष्ठत्वमसंभावितंमन्यमानंप्रतितन्निरूपणायेतिहास मुपक्षिपति एतावानिति यथायथावन्मय्यावेश्यतेएतावानित्यर्थः ॥ १४ ॥ मच्छिष्यैरित्युक्तेतेषामतिज्यायसामनेनरूपेणानिरूपणासंभवा त्पृच्छति यदेति तंकालंतदेतद्रूपंचवेदितुमिच्छामितत्कथयेति ॥ १५ ॥ ॥ ॥ ॥

मानसाः पुत्राः सूक्ष्मां दुर्ज्ञेयाम् एकांतिकीं गतिं परां काष्ठां ॥ १६ ॥ तदेवाह गुणेष्विति विषयेषु स्वभावतो रागादिवशाच्चेतः प्रविशति तेच अनुभूता विषयवासनारूपेण चेतसि प्रविशंति अतितितीर्षोः विषयानतिक्रमितुमिच्छोः ॥ १७ ॥ एवमिति महान्देवोऽपि स्वयंभूरपि भूतानां स्रष्टाऽपि ध्यायमानो विचारयन्नपि प्रश्नस्य बीजं यदज्ञानादयं प्रश्नस्तन्नाविंदत् यतः कर्मविक्षिप्तधीः ॥ १८ ॥ प्रश्नस्य पारमुत्तरमभिप्रायो वा तस्यातितीर्षया जिज्ञासया हंसरूपेणेति यथा हंसो नीरं क्षीरं च पृथक्कर्तुं शक्त एवमहं गुणांश्चेतश्चेति द्योतयितुं हंसरूपेण गतोऽस्मीति ॥ १९ ॥ २० ॥ इत्यहं मुनिभिः पृष्ठ इति पृथग्वाक्यं यदवोचमिति च पृथक् अतोऽस्मच्छब्दावृत्तिरदोषः तेभ्यो यदवोचं तन्मे वचनं निबोध ॥ २१ ॥ देहादि वि

**श्रीभगवानुवाच** पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ॥ पप्रच्छुः पितरं सूक्ष्मां योगस्यैकांतिकीं गतिम् ॥ १६ ॥ **सनकादय ऊचुः** गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ॥ कथमन्योऽन्यसंत्यागो मुमुक्षोरतितितीर्षोः ॥ १७ ॥ **श्रीभगवानुवाच** एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ॥ ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥ स मामचिंतयद्देवः प्रश्नपारतितीर्षया ॥ तस्याहं हंसरूपेण सकाशमगमं तदा ॥ १९ ॥ दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवंदनम् ॥ ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥ इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥ २१ ॥ वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ॥ कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः ॥ २२ ॥ पंचात्मकेषु भूतेषु समानेषु च वस्तुतः ॥ को भवानिति वः प्रश्नो वाचारंभो ह्यनर्थकः ॥ २३ ॥　॥　॥

विकारमज्ञाने सति तन्निष्ठस्य रागाद्यसंभवात्स्वयमेव विषयचेतसोर्विश्लेषो भवतीति वक्तुं प्रश्नखंडनमिषेणैव तावदात्मानात्मविवेकमाह वस्तुन इति त्रिभिः किमात्मनोऽयं प्रश्नस्तदुपाधेर्भूतसंघस्य वा यद्यात्मविषयस्तर्हि तस्य वस्तुनः परमार्थरूपस्य अनानात्वे सति हे विप्राः वः युष्माभिः कृतः प्रश्नः ईदृशः बहुषु निर्धारणरूपः कथं घटेत वक्तुरुत्तरदातुर्वा मे मम क आश्रयः अविशेषे आत्मनि कं जातिगुणादिविशेषमाश्रित्योत्तरं वक्ष्यामीत्यर्थः ॥ २२ ॥ भूतसंघविषयत्वेऽप्ययं वः प्रश्नो वाचारंभः वाङ्मात्रेणारब्धः यतोऽनर्थकः कुतः भूतेषु देवमनुष्यादिदेहेषु पंचभूतात्मकेषु अतः समानेषु अभिन्नेषु पुनश्च वस्तुतः परमकारणात्मना अभिन्नेषु वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः ॥ २३ ॥

तत्रप्रपंचात्मकत्वंप्रत्यक्षादिसिद्धमेवेतिपरमकारणाभेदमेवोपपादयतिमनसेति मनआदिभिर्यद्गृह्यतेतत्तदहमेवेत्यर्थः अंजसातत्त्वविचारेण एतेनैवसर्वात्मकोऽहमित्यंजसाप्युत्तरमुक्तंभवति ॥ २४ ॥ एवंप्रश्नखंडनमिषेणैवात्मस्वरूपंसामान्यतोनिरूप्यब्रह्मणोऽपिदुष्परिहरंयत्पृष्टं तत्रोत्तरमाह गुणेष्वित्यादिनायावदध्यायसमाप्ति अयमभिप्रायः यदिकर्तृत्वभोक्तृत्वादिरूपतयाविषयैःसंग्रथितंचित्तंबुध्यादिशब्दवाच्य मेवजीवस्यस्वरूपंभवेत्ततोवियोगोनघटेत तस्यस्वरूपमहंब्रह्मैव चित्ताध्यासेनतुतत्स्वभावतयाविषयैःसंग्रथितम् अतःस्वस्यब्रह्मत्वभाव नयाविषयाणांचामिथ्यात्वानुसंधानेनसर्वतोनिर्विघ्नभगवंतंभजतोभवत्येवपरिपूर्णस्वरूपावस्थानामिति हेप्रजाःपुत्रकाःसत्यंगुणेषुचेतआ विशतिगुणाश्चचेतसि एवंगुणाश्चेतश्चोभयंग्रथितंमदात्मनोब्रह्मरूपस्यजीवस्यदेहःअध्यस्तउपाधिर्नतुस्वरूपं ॥ २५ ॥ तस्मात्अभी क्ष्णंपुनःपुनर्गुणसेवयातत्संस्कारेणगुणेष्वाविशच्चित्तं तेचपुनर्वासनारूपेणचित्तेप्रकर्षेणभवंतीतितथातेगुणाश्च एवंयदुभयंतन्मद्रूपःसन्

**मनसावचसादृष्ट्यागृह्यतेऽन्यैरपींद्रियैः ॥ अहमेवनमत्तोऽन्यदितिबुध्यध्वमंजसा ॥ २४ ॥ गुणेष्वाविश तेचेतोगुणाश्चेतासिचप्रजाः ॥ जीवस्यदेहउभयंगुणाश्चेतोमदात्मनः ॥ २५ ॥ गुणेषुचाविशच्चित्तमभीक्ष्णं गुणसेवया ॥ गुणाश्चचित्तप्रभवामद्रूपउभयंत्यजेत् ॥ २६ ॥ जाग्रत्स्वप्नःसुषुप्तंचगुणतोबुद्धिवृत्तयः ॥ तासांविलक्षणोजीवःसाक्षित्वेनविनिश्चितः ॥ २७ ॥ यर्हिसंसृतिबंधोऽयमात्मनोगुणवृत्तिदः ॥ मयितु र्येस्थितोजह्यात्त्यागस्तद्गुणचेतसाम् ॥ २८ ॥ अहंकारकृतंबंधमात्मनोर्थविपर्ययम् ॥ विद्वान्निर्विद्यसंसा रचिंतांतुर्येस्थितस्त्यजेत् ॥ २९ ॥ ॥ ॥ ॥**

त्यजेत् ॥ २६ ॥ ननुजाग्रदाद्यवस्थावतःकुतःकूटस्थस्वरूपतातत्राह जाग्रत्जागरःस्वप्नःसुषुप्तंचेतिबुद्धेरेतावृत्तयस्ताश्चनस्वाभाविक्यः किंतु सत्त्वाज्जागरणंविद्याद्रजसास्वप्नमादिशेत् प्रस्वापंतमसाजंतोस्तुरीयंत्रिषुसंततमितिवक्ष्यमाणक्रमेणगुणतएवजीवस्तुविलक्षणस्तद वस्थारहितएवविनिश्चितः कुतः तासांसाक्षित्वेन ॥ २७ ॥ ननुतर्हिकथमहंजागर्मीत्यादिप्रतीतिस्तत्राह यर्हियस्मात्सम्यक्सृतिःसरण मनयेतिसंसृतिर्बुद्धिस्तयाबंधोऽयमात्मनोगुणवृत्तीर्ददाति तस्मान्मयितुर्येस्थितःसन्निमंसंसृतिबंधंजह्यात् तत्तदागुणचेतसांगुणानांचेतसश्चा न्योऽन्यंत्यागोभवति ॥२८॥ कथंसंसृत्याबंधःकथंचतंजह्यात्तदाह अहंकारेणकृतंबंधमात्मनःअर्थविपर्ययमानंदाद्यावरणेनानर्थहेतुंविद्वान् जानन्सन्निर्विद्यदुःखमेतदितिज्ञात्वातुर्येस्थितोभूत्वासंसारचिंतांसंसारोऽबुद्धिस्तस्मिन्चिंतामाभिमानंतत्कर्ताभोगाचिंतांत्यजेदिति॥२९॥

यावदेवनत्यजेत्तावत्तस्यकर्मज्ञानादिसर्वंव्यर्थमित्याह यावदिति यद्यपिजागर्तिकर्मादिषुतथाऽपिस्वपन्स्वप्नान्पश्यन्निवभवति यतोऽज्ञः असम्यक्दर्शी अज्ञजागरस्यस्वप्नत्वेदृष्टांतः स्वप्नइति ॥ ३० ॥ ननुकथंवेदप्रमितवर्णाश्रमकर्मादिनानाधीर्निवर्तेततत्राह असत्त्वादिति भावानांदेहादीनांतत्कृताभिदावर्णाश्रमादिरूपा गतयःस्वर्गादिफलानि हेतवःकर्माणिचास्यात्मनोमृषा अविद्यावाद्विषयोवेदइतिभावः ॥ ३१ ॥ युक्तिभिरित्युक्तंताएवयुक्तीराह यइति अर्थान्स्थूलान्देहादीन्समस्तकरणैश्चक्षुरादिभिर्भुंक्ते कथंभूतान् अनुक्षणधर्मिणःक्षणिक बाल्यतारुण्यादिधर्मवतःयश्चस्वप्नेहृदिजागरदृष्टसदृशान्वासनामयान्भुंक्ते यश्चसुषुप्तेतान्सर्वानुपसंहरति सएकः कुतः त्रिगुणवृत्तिदृक् अवस्थात्रयद्रष्टा ननुजाग्रदवस्थांसर्वेंद्रियाणिपश्यंतिस्वप्नंमनःसुषुप्तिंतत्संस्कारशेषाबुद्धिःकथमात्मातद्द्रष्टातत्राह इंद्रियेशः ननुइंद्रियेशा अपिविश्वतैजसप्राज्ञाभिन्नाःन कुतः स्मृत्याप्रतिसंधानेनसर्वावस्थास्वन्वयात् यःस्वप्नानद्राक्षंयश्चतदनंतरंनकिंचिदवेदिषंसएवैतर्हिजा

यावन्नानार्थधीःपुंसोननिवर्त्तेतयुक्तिभिः ॥ जागर्त्यपिस्वपन्नज्ञःस्वप्नेजागरणंयथा ॥ ३० ॥ असत्त्वादात्मनोऽन्येषांभावानांतत्कृताभिदा ॥ गतयोहेतवश्चास्यमृषास्वप्नदृशोयथा ॥ ३१ ॥ योजागरेबहिरनुक्षणधर्मिणोऽर्थान्भुंक्तेसमस्तकरणैर्हृदितत्सदृक्षान् ॥ स्वप्नेसुषुप्तउपसंहरतेसएकःस्मृत्यन्वयात्त्रिगुणवृत्तिदृगिंद्रियेशः ॥ ३२ ॥ एवंविमृश्यगुणतोमनसस्त्र्यवस्थामन्माययामयिकृताइतिनिश्चितार्थाः ॥ संछिद्यहार्दमनुमानसदुक्तितीक्ष्णज्ञानासिनाभजतमाऽखिलसंशयाधिं ॥ ३३ ॥ ईक्षेतविभ्रममिदंमनसोविलासंदृष्टंविनष्टमतिलोलमलातचक्रं ॥ विज्ञानमेकमुरुधेवविभातिमायास्वप्नस्त्रिधागुणविसर्गकृतोविकल्पः ॥ ३४ ॥

गर्मीत्युपाधिभेदेनविश्वादिव्यवहारइतिभावः एतेनबालयुवाद्यवस्थास्वपिप्रतिसंधानेनात्मैक्यंद्रष्टव्यम् ॥ ३२ ॥ ततःकिमतआह एवमिति गुणतोयाएतामनसस्त्र्यवस्थास्तामदविद्ययामयिकृतानतत्त्वतःसंतीतिनिश्चितआत्मरूपोर्थोयैस्तेयूयमखिलसंशयानामाधिंआधीयंतेऽस्मिन्नित्याधिरहंकारस्तंसंछिद्यहार्दंहृदिस्थितंमांभजत केनछित्वातदाह अनुमानैःसदुक्तिभिःसतामुपदेशैःश्रुतिभिश्च तीक्ष्णेनज्ञानखड्गेन ॥ ३३ ॥ अनुमानानिदर्शयति ईक्षेतेति इदंजगद्विभ्रममीक्षेत तत्रहेतवः मनोविजृंभितत्वात्दृष्टत्वाद्विनाशित्वाच्च स्वप्नवत् अतिचंचलत्वाच्चअलातचक्रवत् ननुभ्रमोपिनिर्विषयःकथंस्यात्तत्राह विज्ञानमितिनिगमनम् तस्मात्त्रिधायोऽयंगुणपरिणामकृतोविकल्पोभेदःसमायेति ॥ ३४ ॥

तस्मात्ततोदृश्याद्दृष्टिंप्रतिनिवर्त्यनिजसुखानुभवोभवेत् तन्नैश्चल्यार्थंचनिवृत्ततृष्णस्तूष्णींनिरीहश्चभवेत् मनोवाक्कायव्यापाररहितइत्यर्थः ॥ ननुदेहवतःसर्वथाद्वैतदृष्टिप्रतिनिवर्तनायोगात्पुनःसंसारःस्यादेवतत्राह संदृश्यतइति क्वचिदावश्यकाहारादिषुयद्यपीदंसंदृश्यतेतथाऽप्य वस्तुबुध्यायत्त्यक्तंतत्पुनर्मोहायनभवेदेवकिंतुदेहपातपर्यंतंस्मृतिःसंस्कारमात्रेणावभासोभवेदित्यर्थः ॥ ३५ ॥ एतदेवोपपादयति देहमि ति आसनादुत्थितमुत्थायतत्रैवस्थितंततःक्वचिदपेतंनिर्गतंपुनस्तत्रैवोपेतंवादेहमपिनानुसंधत्तेकुतोऽन्यत् यतः येनदेहेनस्वरूपमध्यगम त्तज्ज्ञातवान्तंदेहं यतःकारणादितिवा परिकृतंपरिहितंवासोगतंस्थितंवायथानवेत्तितद्वत् ॥ ३६ ॥ ननुचयःपरिपाल्यमानोऽपिमुमूर्षति तंचेन्नपश्यतितर्हिपतेदेवनेत्याह देहोपीति देहोदैववशेनगच्छन्स्वारंभकंकर्मयावदस्तितावत्पर्यंतंप्रतिसमीक्षतएवजीवत्येव सासुःप्राणैं

दृष्टिंततःप्रतिनिवर्त्यनिवृत्ततृष्णस्तूर्णींभवेन्निजसुखानुभवोनिरीहः ॥ संदृश्यतेक्वचयदीदमवस्तुबुद्ध्यात्य क्तंभ्रमायनभवेत्स्मृतिरानिपातात् ॥ ३५ ॥ देहंचनश्वरमवस्थितमुत्थितंवासिद्धोनपश्यतियतोऽध्यगम त्स्वरूपं ॥ दैवादपेतमुतदैववशादुपेतंवासोयथापरिकृतंमदिरामदांधः ॥ ३६ ॥ देहोऽपिदैववशगःखलु कर्मयावत्स्वारंभकंप्रतिसमीक्षतएवसासुः ॥ तंसप्रपंचमधिरूढसमाधियोगःस्वाप्नंपुनर्नभजतेप्रतिबुद्धव स्तुः ॥ ३७ ॥ मयैतदुक्तंवोविप्रागुह्यंयत्सांख्ययोगयोः ॥ जानीतमागतंयज्ञंयुष्मद्धर्मविवक्षया ॥ ३८ ॥ अहंयोगस्यसांख्यस्यसत्यस्यर्तस्यतेजसः ॥ परायणंद्विजश्रेष्ठाःश्रियःकीर्तेर्दमस्यच ॥ ३९ ॥ मांभजंति गुणाःसर्वेनिर्गुणंनिरपेक्षकं ॥ सुहृदंप्रियमात्मानंसाम्यासंगादयोगुणाः ॥ ४० ॥

न्द्रियसहितः ननुतर्हितस्मिन्कदाचिदासज्जेतापिनेत्याह तमिति स्वाप्नंस्वप्नतुल्यं अधिरूढःप्राप्तःसमाधिपर्यंतोयोगोयेनअतएवप्रतिबुद्धंज्ञा तंपरमार्थवस्तुयेनसः तथाचश्रुतिः तस्यतावदेवचिरंयावन्नविमोक्ष्येअथसंपत्स्यइति ॥३७॥ उक्तार्थेतेषांविश्वासार्थंस्वस्वरूपमाह मयेति सांख्यमात्मानात्मविवेकःयोगोऽष्टांगस्तयोर्गुह्यंरहस्यं यज्ञंविष्णुं यज्ञोवैविष्णुरितिश्रुतेः युष्मद्धर्मविवक्षयेत्यनेनधर्माअप्युपदिष्टाइतिज्ञेयं ॥ ॥ ३८ ॥ अतएवयत्तेनहंसरूपेणब्रह्मणेऽभ्यात्थमाधवेत्यनुवादोभविष्यति ऋतंप्रमीयमानोधर्मः सत्यमनुष्ठीयमानोधर्मः तेजःप्रभावः एतेषां परायणंपरमयनं ॥ ३९ ॥ किंच मामिति कथंभूताः अगुणाःगुणपरिणामरूपानभवंति किंतुनित्याइत्यर्थः ॥ ४० ॥

मेमया अगृणतमांतुष्टुवुः ॥ ४१ ॥ प्रत्येयायप्रत्यागतोऽस्मि ॥ ४२ ॥ इत्येकादशेटीकायांत्रयोदशोध्यायः ॥ १३ ॥ ॥ चतुर्दशेप
रंश्रेयोभक्तिरेवनचेतरत् ॥ इत्येतद्वर्ण्यतेध्यानयोगश्चसहसाधनैः ॥ १ ॥ एवंतावद्भगवतोभक्त्यामोक्षइत्युक्तंअन्येचान्यानिसाधनानिवदं
तितत्रविशेषनिर्धारणायपृच्छति वदंतीति श्रेयांसिश्रेयःसाधनानि किंविकल्पेनप्राधान्यमुताहोकिंवाएकस्यैवमुख्यता ॥ १ ॥ एकमुख्य
तापक्षोत्थानेकारणं भवतेति अनपेक्षितःनअपेक्षितमपेक्षायस्मिन्सःअहैतुकः अयमर्थः भवतायोभक्तियोगउक्तःअन्येचयानिश्रेयःसाध
नानिवदंतितेषांकिंसाक्षात्फलसाधनत्वेनप्राधान्यमेवसर्वेषामुतांगांगित्वं प्राधान्येऽपिकिंविकल्पेनसर्वेषांतुल्यफलत्वंयद्वाकश्चिदस्तिवि

इतिमेछिन्नसंदेहामुनयःसनकादयः ॥ सभाजयित्वापरयाभक्त्याऽगृणतसंस्तवैः ॥ ४१ ॥ तैरहंपूजितः सम्यक्संस्तुतःपरमर्षिभिः ॥ प्रत्येयायस्वकंधामपश्यतःपरमेष्ठिनः ॥ ४२ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेत्रयोदशोध्यायः ॥ १३ ॥ ॥ उद्धवउवाच वदंतिकृष्णश्रेयांसिबहूनिब्रह्मवादिनः ॥ तेषांविकल्पप्राधान्यमुताहोएकमुख्यता ॥ १ ॥ भवतोदाहृतःस्वामिन्भक्तियोगोऽनपेक्षितः ॥ निरस्यसर्वतःसंगंयेनत्वय्याविशेन्मनः ॥ २ ॥ श्रीभगवानुवाच कालेननष्टाप्रलयेवाणीयंवेदसंज्ञिता ॥ मयादौब्रह्मणेप्रोक्ताधर्मोयस्यांमदात्मकः ॥ ३ ॥ तेनप्रोक्ताचपुत्रायमनवेपूर्वजायसा ॥ ततोभृग्वादयोऽगृण्हन्सप्तब्रह्ममहर्षयः ॥ ४ ॥ तेभ्यःपितृभ्यस्तत्पुत्रादेवदानवगुह्यकाः ॥ मनुष्याःसिद्धगंधर्वाःसविद्याधरचारणाः ॥ ५ ॥ किंदेवाःकिन्नरानागारक्षःकिंपुरुषादयः ॥ बह्व्यस्तेषांप्रकृतयोरजःसत्त्वतमोभुवः ॥ ६ ॥

शेषइति ॥ २ ॥ तत्रभक्तिरेवमहाफलत्वेनमुख्याअन्यानितुस्वस्वप्रकृत्यनुसारेणपुष्पस्थानीयस्वर्गादिफलबुद्धिभिःप्राणिभिः प्राधान्येनप
रिकल्पितानिक्षुल्लकफलानीतिविवेक्तुंप्रकृत्यनुसारेणबहुधावेदार्थप्रतिपत्तिमाह कालेनेतिसप्तभिः मदात्मकःमय्येवात्माचित्तंयेनसः ॥ ३ ॥
भृग्वादयः भृगुश्च मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुरित्येतेसप्तब्रह्माणःप्रजापतयस्तेचतेब्रह्मर्षयश्च ॥ ४ ॥ ५ ॥ किंदेवाःक्लमस्वेद
दौर्गंध्यादिराहित्येनकिंदेवामनुष्यावेतिसंदेहास्पदभूताद्वीपांतरमनुष्याः एवंकिन्नराःकिंचिन्नराइवमुखतःशरीरतोवा किंपुरुषाःकिंचित्पु
रुषाइववानरादयः प्रकृतयोवासनावह्व्यः कुतः रजःसत्त्वतमांसिभुवःजन्मस्थानानियासांताः ॥ ६ ॥ ॥ ॥

भूतानिदेवासुरमनुष्यादीनि चित्रावाचोवेदार्थव्याख्यानविषयाः ॥ ७ ॥ एवमित्युक्तोपसंहारः केषांचिदध्ययनादिशून्यानामप्युपदेश पारंपर्येण अपरेपाखंडमतयोवेदविरुद्धार्थमतयः ॥ ८ ॥ तत्प्रकृतीनांमायागुणमूलत्वान्मन्मायामोहितधियः अनेकांतंनानाविधं ॥ ९ ॥ तदेवाह धर्ममितिसार्धेन धर्मंकर्ममीमांसकाः यदुक्तं मोक्षार्थीनप्रवर्तेततत्रकाम्यनिषिद्धयोः ॥ नित्यनैमित्तिकेकुर्यात्प्रत्यवायजिहासये त्यादि यशःकाव्यालंकारकृतः यथाहुः यावत्कीर्तिर्मनुष्यस्यपुण्यालोकेषुगीयते ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयतइति कामंवात्स्या यनादयः सत्यंदमंशमंचयोगशास्त्रकृतः अन्येदृष्टार्थवादिनोदंडनीतिकृतःवैप्रसिद्धंऐश्वर्यमेवस्वार्थंपुरुषार्थंवदंतिअतःसामाद्युपायाएवश्रे

याभिर्भूतानिभिद्यंतेभूतानांमतयस्तथा ॥ यथाप्रकृतिसर्वेषांचित्रावाचःस्रवंतिहि ॥ ७ ॥ एवंप्रकृतिवैचि त्र्याद्भिद्यंतेमतयोनृणां ॥ पारंपर्येणकेषांचित्पाखंडमतयोपरे ॥ ८ ॥ मन्मायामोहितधियःपुरुषाःपुरुष र्षभ ॥ श्रेयोवदंत्यनेकांतंयथाकर्मयथारुचि ॥ ९ ॥ धर्ममेकेयशश्चान्येकामंसत्यंदमंशमं ॥ अन्येवदंति स्वार्थंवाऐश्वर्यंत्यागभोजनम् ॥ केचिद्यज्ञतपोदानंव्रतानिनियमान्यमान् ॥ १० ॥ आद्यंतवंतएवैषांलो काःकर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाःक्षुद्रानंदाःशुचाऽर्पिताः ॥ ११ ॥ मय्यर्पितात्मनःसभ्यनिर पेक्षस्यसर्वतः ॥ मयात्मनासुखंयत्तत्कुतःस्याद्विषयात्मनाम् ॥ १२ ॥ अकिंचनस्यदांतस्यशांतस्यसमचेत सः ॥ मयासंतुष्टमनसःसर्वाःसुखमयादिशः ॥ १३ ॥ नपारमेष्ठ्यंनमहेंद्रधिष्ण्यंनसार्वभौमंनरसाधिप त्यम् ॥ नयोगसिद्धीरपुनर्भवंवामय्यर्पितात्मेच्छतिमद्विनाऽन्यत् ॥ १४ ॥ ॥

यःसाधनमितितेषांमतं तथैवत्यागंभोजनंचलोकायतिकाः यज्ञतपोदानंयज्ञोदेवतानांपूजनंतपश्चदानंच ॥ १० ॥ तेषांतुच्छफलत्वमा ह आद्यंतवंतइति एषांलोकाः एतैःसाध्यानिफलानि तमोनिष्ठामोहावसानाः भोगकालेऽप्यसूयादिभिःशुचार्पिताःव्याप्ताः ॥ ११ ॥ भ क्तेर्मुख्यत्वमाह मयीतियावत्समाप्ति हेसभ्य मयापरमानंदरूपेणआत्मनान्यरूपत्वेनरफुरता ॥ १२ ॥ किंच अन्येषांतत्सल्लोकादिपरि च्छिन्नंसुखंभक्तस्यतुपरिपूर्णमित्याह अकिंचनस्येति ॥ १३ ॥ परिपूर्णतामेवाह नपारमेष्ठ्यमिति रसाधिपत्यंपातालादिस्वाम्यं अपुन र्भवंमोक्षमपि मद्विनामांहित्वाअन्यन्नेच्छति अहमेवतस्यप्रेष्ठइत्यर्थः ॥ १४ ॥ ॥ ॥

ममापिसएवप्रेष्ठइत्याह नतथेतिद्वाभ्यां आत्मयोनिर्ब्रह्मापुत्रोऽपि शंकरोमत्स्वरूपभूतोपि संकर्षणोभ्राताऽपि श्रीर्भार्याऽपि आत्मामूर्तिरपि यथाभक्तइतिवक्तव्येऽतिहर्षेणाह भवानिति ॥ १५ ॥ पूयेयमदंतर्वर्तिब्रह्मांडानिपवित्रीकुर्यामितिभावेनेत्यर्थः ॥ १६ ॥ किंच मद्भक्तानांसुखमेतावदेवंभूतामितिवाकोवक्तुंसमर्थः यतस्तत्स्वसंवेद्यंनिरुपमामित्याह निष्किंचनाइति महांतोनिराभिमानाः अनालब्धधियः अस्पृष्टचित्ताः निष्किंचनत्वादीनांयथेष्टंहेतुहेतुमद्भावः एवंभूताममदीयायत्सुखंजुषंतिसेवंतेतत्सुखंतएवविदुर्लभंतेनान्ये कुतःनैरपेक्ष्यं नास्तिअपेक्षणीयंयेषांतेनिरपेक्षयास्तैरेवलभ्यम् नतुमोक्षापेक्षैरपीत्यर्थः यद्वा एवंभूताःसंतोयेममामित्यर्थः जुषंतेप्रीणंतेतएवयन्नैरपेक्ष्यंसु

नतथामेप्रियतमआत्मयोनिर्नशंकरः ॥ नचसंकर्षणोनश्रीर्नैवात्माचयथाभवान् ॥ १५ ॥ निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शनम् ॥ अनुव्रजाम्यहंनित्यंपूयेयेत्यंघ्रिरेणुभिः ॥ १६ ॥ निष्किंचनामय्यनुरक्तचेतसःशांतामहांतोऽखिलजीववत्सलाः ॥ कामैरनालब्धधियोजुषंतियत्तन्नैरपेक्ष्यंनविदुःसुखंमम ॥ १७ ॥ बाध्यमानोऽपिमद्भक्तोविषयैरजितेंद्रियः ॥ प्रायःप्रगल्भयाभक्त्याविषयैर्नाभिभूयते ॥ १८ ॥ यथाऽग्निःसुसमृद्धार्चिःकरोत्येधांसिभस्मसात् ॥ तथामद्विषयाभक्तिरुद्धवैनांसिकृत्स्नशः ॥ १९ ॥ नसाधयतिमांयोगोनसांख्यंधर्मउद्धव ॥ नस्वाध्यायस्तपस्त्यागोयथाभक्तिर्ममोर्जिता ॥ २० ॥ भक्त्याहमेकयाग्राह्यःश्रद्धयात्माप्रियःसतां ॥ भक्तिःपुनातिमन्निष्ठाश्वपाकानपिसंभवात् ॥ २१ ॥ धर्मःसत्यदयोपेतोविद्यावातपसान्विता ॥ मद्भक्त्यापेतमात्मानंनसम्यक्प्रपुनातिहि ॥ २२ ॥ कथंविनारोमहर्षंद्रवताचेतसाविना ॥ विनानंदाश्रुकलयाशुध्येद्भक्त्याविनाशयः ॥ २३ ॥ ॥ ॥

खंतद्विदुर्नान्यइत्यर्थः ॥ १७ ॥ अपिचआस्तांतावदुत्तमभक्तकथायतःप्राकृतोऽपिभक्तःकृतार्थएवेत्याह बाध्यमानइतिद्वाभ्याम् विषयैराकृष्यमाणोऽपि प्रगल्भयासमर्थया ॥ १८ ॥ पाकाद्यर्थंप्रज्वालितोग्निर्यथाकाष्ठानिभस्मीकरोतितथारागादिनाऽपिकथंचिन्मद्विषयासतीभक्तिःसमस्तपापानीति भगवानपिस्वभक्तिमहिमाश्चर्येणसंबोधयति अहोउद्धवविस्मयंशृण्विति ॥ १९ ॥ अतएवंभूतंश्रेयोनान्यदस्तीत्याह नसाधयतीतिद्वाभ्यां ॥ २० ॥ श्रद्धयायाभक्तिस्तया संभवात्जातिदोषादपीत्यर्थः ॥ २१ ॥ भक्त्यभावेऽन्यत्साधनंव्यर्थमित्याह द्वाभ्यां धर्मइति ॥ २२ ॥ रोमहर्षादिकंविनाकथंभक्तिर्गम्यते भक्त्याविनाचकथमाशयःशुध्येदिति ॥ २३ ॥ ॥

किंचभक्तिःस्वाश्रयंशोधयतीतिकिंवक्तव्यंयतोगद्गदवागादिलक्षणोमद्भक्तियुक्तोलोकंसर्वंपुनातीत्याह वागिति ॥ २४ ॥ अपिच भक्त्यैवा
त्मशुद्धिर्नान्यतइतिसदृष्टांतमाह यथेति यथाऽग्निनाध्मातंतापितमेवहेमसुवर्णमंतर्मलंजहातिनक्षालनादिभिः स्वंनिजंरूपंचभजते कर्मा
नुशयंकर्मवासनां मांभजतेमद्रूपतामापद्यते ॥ २५ ॥ ननुब्रह्मविदाप्नोतिपरंतमेवविदित्वाऽतिमृत्युमेतीत्यादिश्रुतिभ्योज्ञानादेवाविद्या
निवृत्त्यात्वत्प्राप्तिरवगम्यतेकुतोभक्तियोगेनेत्युच्यतेतत्राह यथायथेति आत्माचित्तंपरिमृज्यतेशोध्यतेमत्पुण्यकथानांश्रवणैरभिधानैश्च भक्तेरे
वावांतरव्यापारोज्ञानंनपृथगित्यर्थः ॥ २६ ॥ किंच ज्ञानंनामचित्तस्यमदाकारपरिणामःसचमांभजतःस्वभावतएवभवतिनचयत्नांतरम
पेक्षतइतिसदृष्टांतमाह विषयानिति ॥ २७ ॥ यस्मादन्यसाधनंतत्फलंचस्वप्नमनोरथवदसदभिध्यानमात्रंतस्मात्तद्विहायमय्येवमनःस

वाग्गद्गदाद्रवतेयस्यचित्तंरुदत्यभीक्ष्णंहसतिक्वचिच्च ॥ विलज्जउद्गायतिनृत्यतेचमद्भक्तियुक्तोभुवनंपुनाति
॥ २४ ॥ यथाऽग्निनाहेममलंजहातिध्मातंपुनःस्वंभजतेस्वरूपम् ॥ आत्माचकर्मानुशयंविधूयमद्भक्तियोगे
नभजत्यथोमाम् ॥ २५ ॥ यथायथात्मापरिमृज्यतेऽसौमत्पुण्यगाथाश्रवणाभिधानैः ॥ तथातथापश्यति
वस्तुसूक्ष्मंचक्षुर्यथैवांजनसंप्रयुक्तं ॥ २६ ॥ विषयान्ध्यायतश्चित्तंविषयेषुविषज्जते ॥ मामनुस्मरतश्चित्तंम
य्येवप्रविलीयते ॥ २७ ॥ तस्मादसदभिध्यानंयथास्वप्नमनोरथं ॥ हित्वामयिसमाधत्स्वमनोमद्भावभावि
तं ॥ २८ ॥ स्त्रीणांस्त्रीसंगिनांसंगंत्यक्त्वादूरतआत्मवान् ॥ क्षेमेविविक्तआसीनश्चिंतयेन्मामतंद्रितः ॥ २९ ॥
नतथाऽस्यभवेत्क्लेशोबंधश्चान्यप्रसंगतः ॥ योषित्संगाद्यथापुंसोयथातत्संगिसंगतः ॥ ३० ॥ उद्धवउवाच
यथात्वामरविंदाक्षयादृशंवायदात्मकं ॥ ध्यायेन्मुमुक्षुरेतन्मेध्यानंमेवक्तुमर्हसि ॥ ३१ ॥

माहितंकुर्वितिप्रकरणार्थमुपसंहरति तस्मादिति मद्भावभावितंमद्भावेनभजनेनैवशोधितं ॥ २८ ॥ विशेषतोवात्स्यायनाद्युक्तकाममा
र्गाःपरित्याज्याइत्याह स्त्रीणामिति आत्मवान्धीरःसन् क्षेमेनिर्भयेदेशे विविक्तेविजने ॥ २९ ॥ एतदुपपादयति नतथेति अस्यपुं
सोयथातत्संगतःक्लेशोभवेत् यथाचबंधोयोषित्संगतस्तथाऽन्यप्रसंगतोनभवेदिति ॥ ३० ॥ मांचिंतयेदित्युक्तंतत्प्रकारंपृच्छति यथेति
ध्यानांगप्रश्नः यादृशमिति ध्येयविशेषणप्रश्नः यदात्मकमिति यस्यतानिविशेषणानितत्स्वरूपप्रश्नः एतन्मेध्यानंमेवक्तुमर्हसीतिपाठः
तत्रायमर्थः मुमुक्षुस्त्वांयथाध्यायेत्तन्मेवक्तुमर्हसीतिजिज्ञासोःकथनायमेपुनरेतत्त्वद्दास्यमेवपुरुषार्थोनतुध्यानेनकृत्यमस्तीति तदुक्तं त्वयो
पभुक्तस्रग्गंधेत्यादि त्वंवक्तुमर्हसीतिपाठःसुगमः ॥ ३१ ॥ ॥ ॥

तत्रध्यानांगत्वेनासनप्राणायामप्रकारमाह समइतिचतुर्भिः समेनात्युच्छ्रितेना।तिनीचेआसनेकंबलादौसमकायःसन्यथासुखमासीनइ
तिनास्तिस्त्रास्तिकादिनियमइत्युक्तं नासाग्रनिरीक्षणंचाक्षिस्थैर्याय अंतर्लक्ष्योवहिर्दृष्टिःस्थिरचित्तःसुसंयतइतियोगशास्त्रोक्तेः ॥ ३२ ॥
विपर्ययेणरेचकपूरककुंभकक्रमेणापि यद्वा वामनाड्यापूरितंदक्षिणयात्यजेत्तयावापूरितंवामयेत्येवंविपर्ययेण यथोक्तंयोगे इडयापूरयेद्वा
युंत्यजेत्पिंगलयाततइति निर्जितेंद्रियइतिप्रत्याहारउक्तः ॥ ३३ ॥ प्राणायामोद्विविधः सगर्भोऽगर्भश्चेति तत्रश्रेष्ठत्वात्प्रणवगर्भमाह हृदी
तिद्वाभ्यां मूलाधारादारभ्यअविच्छिन्नंसंततंघंटानादतुल्यमोंकारंहृदिसंतंप्राणेनउदीर्यऊर्ध्वंद्वादशांतपर्यंतंनीत्वाकथं बिसोर्णवत् कमलना

श्रीभगवानुवाच समआसनआसीनःसमकायोयथासुखं ॥ हस्तावुत्संगआधायस्वनासाऽग्रकृतेक्षणः
॥ ३२ ॥ प्राणस्यशोधयेन्मार्गंपूरकुंभकरेचकैः ॥ विपर्ययेणापिशनैरभ्यसेन्निर्जितेंद्रियः ॥ ३३ ॥ हृद्य
विच्छिन्नमोंकारंघंटानादंबिसोर्णवत् ॥ प्राणेनोदीर्यतत्राथपुनःसंवेशयेत्स्वरं ॥ ३४ ॥ एवंप्रणवसंयुक्तं
प्राणमेवसमभ्यसेत् ॥ दशकृत्वस्त्रिषवणंमासादर्वाग्जितानिलः ॥ ३५ ॥ हृत्पुंडरीकमंतस्थमूर्ध्वनालम
धोमुखं ॥ ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रंसकर्णिकं ॥ ३६ ॥ कर्णिकायांन्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरं ॥ व
न्हिमध्येस्मरेद्रूपंममैतद्ध्यानमंगलं ॥ ३७ ॥ समंप्रशांतंसुमुखंदीर्घचारुचतुर्भुजं ॥ सुचारुसुंदरग्रीवंसुक
पोलंशुचिस्मितं ॥ ३८ ॥ ॥ ॥ ॥

लतंतुवत् तत्रमात्राऽतीतेस्वरंपंचदशंबिंदुंसंवेशयेत् अथपुनरित्यस्यतंचबिंदुशिरस्कंकुर्यादित्यर्थः यद्वा मूलाधारादारभ्यमूर्धांतपर्यंतंबिसतं
तुवत्सूक्ष्ममविच्छिन्नंसंतंहृदिमनसिप्राणेनोदीर्याभिव्यज्यअथपुनस्तत्रोंकारेघंटानादतुल्यस्वरमुदात्तंनादंस्थिरीकुर्यादिति॥३४॥मासादर्वाक्
जितानिलोभवति ॥ ३५॥ एवंध्यानांगमुक्त्वा यादृशमित्यस्योत्तरंवक्तुंध्येयपीठमाह हृत्पुंडरीकमितिसार्धेन अंतस्थंदेहांतर्वर्ति ऊर्ध्वनालमधो
मुखं मुकुलितंचकदलीपुष्पसंकाशंयदस्तितद्विपरीतंध्यात्वेत्यर्थः ॥ ३६ ॥ न्यसेत्चिंतयेत् सविशेषणंध्यानमाह वन्हिमध्यइतिषड्भिः ध्या
नमंगलंध्यानस्यशुभंविषयं ॥ ३७ ॥ सममनुरूपावयवं दीर्घाश्चारवश्चत्वारोभुजायस्मिंस्तत् सुचारुअतिरम्यं ॥ ३८ ॥

समानयोः कर्णयोर्विन्यस्ते स्फुरती मकराकारे कुंडले यस्मिंस्तत् श्रीवत्सश्रियोर्निकेतनं वक्षसि दक्षिणवामतस्ताभ्यां युक्तमित्यर्थः ॥ ३९ ॥ ४० ॥ द्युमद्भिः किरीटादिभिः आसमंताद्युतमलंकृतं प्रसादेन शोभनं मुखमीक्षणं च यस्मिंस्तत् ॥ ४१ ॥ सुकुमारमतिकोमलं सविशेषणं ध्यानमुपसंहरति इंद्रियाणीति प्रकर्षेण नयेत् सर्वतः सर्वांगयुक्ते ॥ ४२ ॥ यादृशमित्यस्योत्तरत्वेन सविशेषणमुक्ता यदात्मकमित्यस्योत्तरतया शनैर्विशेषणत्यागेन ध्यानमेव समाधिपर्यंतमाह तदिति त्रिभिः एकत्रांगे अन्यान्यंगानि न चिंतयेत् एकत्रेति यदुक्तं तदेवांगं दर्शयति सुस्मितमिति ॥ ४३ ॥ व्योम्नि सर्वकारणरूपे तच्च कारणत्वमपि त्यक्त्वा मदारोहो मयि शुद्धे ब्रह्मण्यारूढः सन् किंचित् ध्यातृध्येयविभागमपि न चिंतयेत् ॥ ४४ ॥

समानकर्णविन्यस्तस्फुरन्मकरकुंडलं ॥ हेमांबरं घनश्यामं श्रीवत्सश्रीनिकेतनम् ॥ ३९ ॥ शंखचक्रगदापद्मवनमालाविभूषितं ॥ नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतं ॥ ४० ॥ द्युमत्किरीटकटककटिसूत्रांगदायुतं ॥ सर्वांगसुंदरं हृद्यं प्रसादसुमुखेक्षणं ॥ ४१ ॥ सुकुमारमभिध्यायेत्सर्वांगेषु मनो दधत् ॥ इंद्रियाणींद्रियार्थेभ्यो मनसाकृष्य तन्मनः ॥ बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ॥ ४२ ॥ तत्सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ॥ नान्यानि चिंतयेद्भूयः सुस्मितं भावयेन्मुखं ॥ ४३ ॥ तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ॥ तच्च त्यक्त्वा मदारोहो न किंचिदपि चिंतयेत् ॥ ४४ ॥ एवं समाहितमतिर्मामेवात्मानमात्मनि ॥ विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥ ध्यानेनेत्थं सुतीव्रेण युंजतो योगिनो मनः ॥ संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥ इति श्रीभागवते महापुराणे एकादशस्कंधे भगवदुद्धवसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥

॥ ४४ ॥ मामेवात्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे ज्योतिर्ज्योतिषि संयुक्तमिवेत्यन्वयः ॥ ४५ ॥ एवंभूतसमाधिपर्यंतध्यानस्य फलमाह ध्यानेनेति मनो युंजतः समादधतः द्रव्यज्ञानक्रियाभ्रमः अधिभूताधिदैवाध्यात्मरूपो दृश्यद्रष्टृदर्शनरूपो वा भ्रमो निर्वाणं शांतिं सम्यक् यास्यतीति ॥ ४६ ॥ इति श्रीभागवते महापुराणे एकादशे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

ततःपंचदशेप्रोक्ताःसिद्धयोधारणानुगाः श्रीविष्णुपदसंप्राप्तावंतरायतयामताः ॥ १ ॥ एवंमनोयुंजतोयोगिनोंतराविर्भवंत्यःसिद्धयोप्यंत
रायप्रायाएवअतस्ताःपरिहृत्यपरमेश्वरपरएवभवेदितिवक्तुंसिद्धीराह जितेंद्रियस्येति युक्तस्यस्थिरचित्तस्य ॥ १ ॥ स्विदितिवितर्के का
स्वित्किंनामाकथंस्वित्कीदृशीवा धारणाश्चकतीतिप्रश्नांतरेवाशब्दः त्वमेवैतज्जानासिनान्यइत्याशयेनाह योगिनामिति ॥ २ ॥ धारणा
श्चअष्टादशेत्यनुषंगः योगपारगैरिति त्रिकालज्ञत्वादिक्षुद्रसिद्धीरन्येऽपिजानंतीतिभावः अहमेवप्रधानंमुख्यःस्वभावतआश्रयोयासांताः
मत्सारूप्यंप्राप्तेषुकिंचिन्न्यूनाभवंतीतिभावः गुणहेतवःसत्वोत्कर्षहेतुकाः ॥ ३ ॥ ताःस्वरूपेणोपदिशति अणिमेतिसार्द्धैःपंचभिःअणि

श्रीभगवानुवाच　जितेंद्रियस्ययुक्तस्यजितश्वासस्ययोगिनः ॥ मयिधारयतश्चेतउपतिष्ठंतिसिद्धयः ॥ १ ॥
उद्धवउवाच　कयाधारणयाकास्वित्कथंवासिद्धिरच्युत ॥ कतिवासिद्धयोब्रूहियोगिनांसिद्धिदोभवान्
॥ २ ॥ श्रीभगवानुवाच　सिद्धयोऽष्टादशप्रोक्ताधारणायोगपारगैः ॥ तासामष्टौमत्प्रधानादशैवगुणहे
तवः ॥ ३ ॥ अणिमामहिमामूर्तेर्लघिमाप्राप्तिरिंद्रियैः ॥ प्राकाश्यंश्रुतदृष्टेषुशक्तिप्रेरणमीशिता ॥ ४ ॥
गुणेष्वसंगोवशितायत्कामस्तदवस्यति ॥ एतामेसिद्धयःसौम्यअष्टावौत्पत्तिकामताः ॥ ५ ॥ अनूर्मिम
त्त्वंदेहेऽस्मिन्दूरश्रवणदर्शनं ॥ मनोजवःकामरूपंपरकायप्रवेशनं ॥ ६ ॥ स्वच्छंदमृत्युर्देवानांसहक्रीडा
नुदर्शनं ॥ यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ॥ ७ ॥　　॥

मामहिमालघिमाचमूर्तेर्देहस्यतिस्त्रःसिद्धयः प्राप्तिर्नामसिद्धिःसर्वप्राणिनामिंद्रियैःसहतत्तदधिष्ठातृदेवतारूपेणसंबंधइत्यर्थः श्रुतेषुपारलौ
किकेषुदृष्टेषुदर्शनयोग्येष्वपिसर्वेषुभूविवरादिपिहितेष्वपिप्राकाश्यंभोगदर्शनसामर्थ्यंसिद्धिः शक्तीनांमायातदंशभूतानांप्रेरणम् तत्रेश्वरेमा
यायाअन्येषुतदंशानांप्रेरणमीशितानामासिद्धिः ॥ ४ ॥ विषयभोगेष्वसंगोवशितासिद्धिः यत्कामःयद्यत्सुखंकामयतेतत्तदवस्यतितस्यत
स्यसीमानंप्राप्नोतीतिसिद्धिः औत्पत्तिकाःस्वाभाविक्योनिरतिशयाश्चेत्यर्थः ॥ ५ ॥ गुणहेतुसिद्धीराह अनूर्मिमत्त्वंक्षुत्पिपासादिराहित्यम्
दूरेश्रवणंदर्शनंचेतिद्वेसिद्धी मनोवेगेनदेहस्यगतिः कामितरूपप्राप्तिःपरकायप्रवेशः ॥ ६ ॥ स्वेच्छामृत्युः अप्सरोभिःसहदेवानांयाः
क्रीडास्तासामनुदर्शनंप्राप्तिःसंकल्पानुरूपप्राप्तिः अप्रतिहताआसमंतात्गतिर्यस्याःसाआज्ञा चेत्येतादश ॥ ७ ॥

क्षुद्रसिद्धीश्चपंचाह त्रिकालज्ञत्वमिति अद्वंद्वंशीतोष्णाद्यनभिभवः अग्न्यादीनांसंस्तंभनं ॥ ८ ॥ तत्तद्धारणाभिःसहविशेषतोनिरूपय
ति ययेतियावत्समाप्ति॥९॥भूतसूक्ष्मोपाधौमयितन्मात्रंभूतसूक्ष्माकारं सःतन्मात्रोपासकः ममभदीयमणिमानं॥१०॥ज्ञानशक्तिमहत्तत्वोपाधौ
मयि यथासंस्थंमहत्तत्वाकारं भूतानांचेति आकाशादिभूतोपाधौचमयिमनोधारयंस्तत्तद्भूतमहिमानंप्राप्नोतीत्यर्थः ॥११॥ वाय्वादिभूतानांये
परमाणवस्तन्मयेतदुपाधौचित्तंमयिरंजयन्योगीकालसूक्ष्मार्थतांकालपरमाणुपाधिरूपतामितिलघुत्वविवरणं तदुक्तंसकालःपरमाणुर्वैयो
भुंक्तेपरमाणुतामिति ॥१२॥ वैकारिकाहंकारोपाधौमयि अखिलमेकाग्रं आत्मत्वमधिष्ठातृत्वं तत्रहेतुः मन्मनाः मयिमनोधारणप्रभावादे

त्रिकालज्ञत्वमद्वंद्वंपरचित्ताद्यभिज्ञता ॥ अग्न्यर्कांबुविषादीनांप्रतिष्टंभोऽपराजयः ॥ ८ ॥ एताश्चोद्देशतःप्रो
क्तायोगधारणसिद्धयः ॥ ययाधारणयायास्याद्यथावास्यान्निबोधमे ॥ ९ ॥ भूतसूक्ष्मात्मनिमयितन्मात्रं
धारयेन्मनः ॥ अणिमानमवाप्नोतितन्मात्रोपासकोमम॥ १०॥ महत्यात्मन्मयिपरेयथासंस्थंमनोदधत् ॥
महिमानमवाप्नोतिभूतानांचपृथक्पृथक् ॥ ११ ॥ परमाणुमयेचित्तंभूतानांमयिरंजयन् ॥ कालसूक्ष्मार्थ
तांयोगीलघिमानमवाप्नुयात् ॥ १२॥ धारयन्मय्यहंतत्त्वेमनोवैकारिकेऽखिलम् ॥ सर्वेंद्रियाणामात्मत्वंप्रा
प्तिंप्राप्नोतिमन्मनाः ॥१३॥ महत्यात्मनियःसूत्रेधारयेन्मयिमानसम् ॥ प्राकाश्यंपारमेष्ठ्यंमेविंदतेऽव्यक्तज
न्मनः ॥ १४ ॥ विष्णौत्र्यधीश्वरेचित्तंधारयेत्कालविग्रहे ॥ सईशित्वमवाप्नोतिक्षेत्रक्षेत्रज्ञचोदनाम् ॥ १५ ॥
नारायणेतुरीयाख्येभगवच्छब्दशब्दिते ॥ मनोमय्यादधद्योगीमद्धर्मावशितामियात् ॥ १६ ॥

वंभवतिनात्रातीवहेतुरनुसंधेयइतिभावः एवंमद्धारणाऽनुभावेनमद्योगबलमाश्रयइत्यादिषुद्रष्टव्यं ॥१३॥ क्रियाशक्तिप्रधानंमहत्तत्त्वमेवसू
त्रंतदुपाधौमयि समेपारमेष्ठ्यंसर्वोत्कृष्टंप्राकाश्यंविंदते कथंभूतस्य अव्यक्ताज्जन्मयस्यतस्यसूत्रस्यतदुपाधेर्ममेत्यर्थः ॥१४॥त्र्यधीश्वरेत्रिगुणमा
यानियंतरि अतएवकालविग्रहेकलयितृरूपेअंतर्यामिणि ईशित्वंविशिनष्टि क्षेत्रज्ञानांजीवानांक्षेत्राणांतदुपाधीनांचचोदनांप्रेरणंनतुविश्व
सृष्ट्यादिकर्तृत्वलक्षणमित्यर्थः ॥ १५ ॥ तुरीयाख्ये विराड्हिरण्यगर्भश्चकारणंचेत्युपाधयः ॥ ईशस्ययत्रिभिर्हीनंतुरीयंतत्पदंविदु
रित्येवंलक्षणे ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः ॥ ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणात्तद्वतिभगवच्छब्दशब्दिते ॥१६॥

यत्रपरमानंदरूपेसर्वोपिकामस्तदंशभूतोऽवसीयतेसमाप्यतेतं ॥ १७ ॥ अतःपरंगुणहेतुकाःसिद्धीराह शुद्धेसत्त्वात्मके श्वेततांशुद्धरूपतां ॥ १८ ॥ आकाशात्मायःप्राणःसमष्टिरूपस्तद्रूपेमयिमनसाघोषंनादंचिंतयन्नसौहंसोजीवस्तत्रआकाशेउपलब्धाज्ञातासंस्तत्रस्था विचित्रावाचःशृणोति यद्वा तत्राकाशेउपलब्धाअभिव्यक्तायावाचस्तादूरतःशृणोतीति ॥ १९ ॥ त्वष्टाआदित्यस्तस्मिन्नपरिच्छिन्नेचक्षुः संयोज्यतंचचक्षुषिसंयोज्यतत्रोभयसंयोगेमांध्यायन्विश्वंदूरतःपश्यति ॥ २० ॥ मनोदेहंचतदनुवर्तिनावायुनासहमयिसुसंयोज्ययामद्धारणाक्रियतेतस्याःप्रभावेनयत्रमनोयातितत्रात्मादेहोयातीत्यर्थः यद्वा मनःकर्तृआत्मानंवायुनासहदेहंचमयिसुसंयोज्ययत्रयातितदनुत त्रदेहोयातीति ॥ २१ ॥ मनःउपादायउपादानकारणंकृत्वायद्यद्देवादिरूपंभवितुमिच्छतितत्तन्मनोरूपंमनसोऽभीष्टरूपंयोगीभवेत् कुतः यतोमद्योगबलं योहमचिंत्यशक्तिर्नानाकारस्तस्मिन्मयिमनसोयोगोधारणातस्यबलंप्रभावःसएवाश्रयःकारणं ॥ २२ ॥ यत्रप्रविविक्षतितत्रात्मानंचिंतयेत् ततःपिंडंस्वदेहंहित्वाप्राणःप्राणप्रधानलिंगशरीरोपाधिर्वायुभूतःप्रविष्टस्तेनमार्गेणेत्यर्थः षडंघ्रिवत् भृंगोयथापुष्पात्पुष्पांतरमनायासेनप्रविशतितद्वत् ॥ २३ ॥ पिंडंहित्वेत्युक्तंतत्प्रकारंकथयन्स्वच्छंदमृत्युमाह पार्ष्ण्यांपार्ष्णिनागुदंनिरुध्यप्राणंप्राणोपाधिमात्मानंब्रह्मरंध्रेणमूर्धद्वारेण ब्रह्मेत्युपलक्षणं ब्रह्मवाअन्यद्वाअपेक्षितंस्थानंमनसानीत्वा ॥ २४ ॥ मत्स्थंमन्मूर्तिरूपंशुद्धंसत्त्वंचिंतयेत् तदासत्त्ववृत्तयःसत्त्वांशभूताः ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥

**निर्गुणेब्रह्मणिमयिधारयन्विशदंमनः ॥ परमानंदमाप्नोतियत्रकामोवसीयते ॥ १७ ॥ श्वेतद्वीपपतौचित्तंशुद्धेधर्ममयेमयि ॥ धारयन्श्वेततांयातिषडूर्मिरहितोनरः ॥ १८ ॥ मय्याकाशात्मनिप्राणेमनसाघोषमुद्वहन् ॥ तत्रोपलब्धाभूतानांहंसोवाचःशृणोत्यसौ ॥ १९ ॥ चक्षुस्त्वष्टरिसंयोज्यत्वष्टारमपिचक्षुषि ॥ मांतत्रमनसाध्यायन्विश्वंपश्यतिसूक्ष्मदृक् ॥ २० ॥ मनोमयिसुसंयोज्यदेहंतदनुवायुना ॥ मद्धारणाऽनुभावेनतत्रात्मायत्रवैमनः ॥ २१ ॥ यदामनउपादाययद्यद्रूपंबुभूषति ॥ तत्तद्भवेन्मनोरूपंमद्योगबलमाश्रयः ॥ ॥ २२ ॥ परकायंविशन्सिद्धआत्मानंतत्रभावयेत् ॥ पिंडंहित्वाविशेत्प्राणोवायुभूतःषडंघ्रिवत् ॥ २३ ॥ पार्ष्ण्यापीड्यगुदंप्राणंहृदुरःकंठमूर्धसु ॥ आरोप्यब्रह्मरंध्रेणब्रह्मनीत्वोत्सृजेत्तनुं ॥ २४ ॥ विहरिष्यन्सुराक्रीडेमत्स्थंसत्त्वंविभावयेत् ॥ विमानेनोपतिष्ठंतिसत्त्ववृत्तीःसुरस्त्रियः ॥ २५ ॥ ॥**

यदावाअकालेपि यथावेतिपाठे यथावायेनकेनापिप्रकारेणबुध्यासंकल्पयेत्तत्तथायथावत्प्राप्नोतीत्यर्थः यद्वायथासंकल्पयेत् यथावामत्परो
मयिविश्वासवान् भवतितथातदनुरूपंसर्वमाप्नोतीत्यर्थः किंकुर्वन् सत्येसत्यसंकल्पेमयिमनोयुंजन् ॥ २६ ॥ मदितिपृथक्पदं ममेत्यर्थः
ईशितुःसर्वनियंतुर्वशितुःस्वतंत्रस्यममभावंस्वभावंप्राप्तः एतागुणहेतवः ॥ २७ ॥ अतःपरंक्षुद्राः धारणाविदइतित्रिकालज्ञेश्वरधारणासू
चिता त्रैकालिकीत्रिकालवस्तुविषया स्वजन्ममृत्युभ्यामुपबृंहितातत्सहिता अनयैवपरचित्ताद्यभिज्ञतापिव्याख्याता ॥ २८ ॥ अग्न्यादि
सर्वोपघातशून्योभगवानित्येवंभूतयोगमयंतैर्नाभिभूयेत अत्रहेतुः मद्योगेति यादसामुदकंयथाभिघातकंनभवतितथातस्यवपुषोऽग्न्याद

यथासंकल्पयेत्बुद्ध्यायदावामत्परःपुमान् ॥ मयिसत्येमनोयुंजंस्तथातत्समुपाश्नुते ॥ २६ ॥ योवैमद्भाव
मापन्नईशितुर्वशितुःपुमान् ॥ कुतश्चिन्नविहन्येततस्यचाज्ञायथामम ॥ २७ ॥ मद्भक्त्याशुद्धसत्त्वस्ययो
गिनोधारणाविदः ॥ तस्यत्रैकालिकीबुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥ अग्न्यादिभिर्नहन्येतमुनेर्योग
मयंवपुः ॥ मद्योगश्रांतचित्तस्ययादसामुदकंयथा ॥ २९ ॥ मद्विभूतीरभिध्यायञ्छ्रीवत्सास्त्रविभूषिताः ॥
ध्वजातपत्रव्यजनैःसभवेदपराजितः ॥ ३० ॥ उपासकस्यमामेवंयोगधारणयामुनेः ॥ सिद्धयःपूर्वकथिता
उपतिष्ठंत्यशेषतः ॥ ३१ ॥ जितेंद्रियस्यदांतस्यजितश्वासात्मनोमुनेः ॥ मद्धारणांधारयतःकासासिद्धिःसु
दुर्लभा ॥ ३२ ॥ अंतरायान्वदंत्येतायुंजतोयोगमुत्तमं ॥ मयासंपद्यमानस्यकालक्षपणहेतवः ॥ ३३ ॥ ज
न्मौषधितपोमंत्रैर्यावतीरिहसिद्धयः ॥ योगेनाप्नोतिताःसर्वानान्यैर्योगगतिंव्रजेत् ॥ ३४ ॥ ॥

यइत्यर्थः अनयैवाद्वंद्वताऽभिव्याख्याताः ॥ २९ ॥ मद्विभूतीर्ममावतारान् ध्वजादिभिःसह ॥ ३० ॥ उपसंहरति उपासकस्येतिएवं
पृथक्धारणादिभिः ॥ ३१ ॥ यद्वाकिंनानाधारणाप्रयासेनएकयैवसर्वाःसिद्धयोभवंतीत्याह जितेंद्रियस्येति मद्धारणांनारायणेतुरीयाख्यइ
त्यत्रोक्तां सुदुर्लभास्यात्का नकाचिदित्यर्थः ॥ ३२ ॥ यद्यप्येवंतथाऽपिनप्रार्थ्याइत्याह अंतरायानिति ॥ ३३ ॥ तस्मादहैतुकीयमेवधा
रणाकार्यानान्याःकाम्याइत्याह जन्मनेति जन्मनैवकाश्चित्सिद्धयोभवंति यथादेवानांयथाचयादसामुदकस्तंभःपक्ष्यादीनांखेचरत्वादि
तदुक्तंपातंजले जन्मौषधितपोमंत्रयोगजाःसिद्धयइति योगेनमद्धारणामित्युक्तेन योगगतिंमत्सालोक्यादिरूपां ॥ ३४ ॥

कुतइत्यतआह सर्वासामित्यर्द्धेन प्रभुत्वोपपादनंहेतुःकारणंपतिःपालयिताचेति किंच नकेवलंसिद्धीनामेवप्रभुरपितुमोक्षादीनामपीत्याह अहमिति योगोमोक्षः सांख्यंतत्साधनज्ञानं धर्मस्यतदुपदेष्टॄणांब्रह्मवादिनांच ॥ ३५ ॥ कुतस्तत्राह अहमिति सर्वदेहिनांजीवानामात्मा यतःआंतरःअंतर्यामी एषतआत्मांऽतर्याम्यमृतइतिश्रुतेः तर्हिकिमंतर्वर्तित्वात्परिच्छिन्नः न बाह्यश्चव्यापकइत्यर्थः तत्रहेतुःअनावृतः एतत्सदृष्टांतमाह भूतेषुचतुर्विधेषुमहाभूतानियथाबहिश्चांतश्चभवंतिस्वयमहमपितथेत्यर्थः ॥ ३६ ॥ इत्येकादशेटीकायांपंचदशोध्यायः ॥ १५ ॥ ॥ षोडशेतुहरेराविर्भावयुक्ताविभूतयः ॥ ज्ञानवीर्यप्रभावादिविशेषेणोपवर्णिताः ॥ १ ॥ अंताश्चित्तेनयत्ध्यानमशक्यमकृतात्मनां ॥ अतस्तद्योग्यतापत्त्यैविभूत्यादिनिरूपणं ॥ २ ॥ एवंतावन्नवाध्याय्यामष्टप्रश्नानिरूपिताः ॥ ब्रह्मत्वसंभवेतावत्सप्तमादिचतुष्टये ॥ ३ ॥ बंधमुक्त्योस्तुनिर्धारेसद्भक्त्योश्चततःपरे ॥ द्वादशेनंतरंकर्मकृतित्यागव्यवस्थितौ ॥ ४ ॥ हंसेतिहासतोयोगनिष्ठायांचत्र

**सर्वासामपिसिद्धीनांहेतुःपतिरहंप्रभुः ॥ अहंयोगस्यसांख्यस्यधर्मस्यब्रह्मवादिनां ॥ ३५ ॥ अहमात्मांतरोबाह्योऽनावृतःसर्वदेहिनां ॥ यथाभूतानिभूतेषुबहिरंतःस्वयंतथा ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेपंचदशोध्यायः ॥ १५ ॥ ॥ ॥ ॥ ॥ उद्धवउवाच त्वंब्रह्मपरमंसाक्षादनाद्यंतमपावृतं ॥ सर्वेषामपिभावानांत्राणस्थित्यप्ययोद्भवः ॥ १ ॥ ॥**

योदशे ॥ श्रेयःसाधननिर्धारेध्यानेचैवचतुर्दशे ॥ ५ ॥ धारणासिद्धिभेदेचप्रसंगेनानिरंतरे ॥ उद्धवप्रश्नतोदत्तमुत्तरंहरिणोचितं ॥ ६ ॥ षोडशेभूतिविस्तारेद्वयोर्वर्णाश्रमव्रते ॥ ज्ञानादिनिर्णयेचातोयमादीनांचनिर्णये ॥ ७ ॥ योगत्रयाधिकारेतुविंशेचतदनंतरे ॥ तत्त्वसंख्याविवादेचपुंप्रकृत्योर्विवेचने ॥ ८ ॥ जन्ममृत्युप्रकारेचद्वाविंशेदत्तमुत्तरं ॥ परापराधसहनेचतुर्भिस्तदनंतरैः ॥ ९ ॥ सप्तविंशेक्रियायोगप्रश्नेतदुपवर्णनं ॥ अष्टाविंशेततःप्रोक्ताज्ञानयोगोपसंहृतिः ॥ १० ॥ संसारासंभवप्रश्नेतन्मध्येदत्तमुत्तरं ॥ तदशक्त्यापुनःप्रश्नेभक्तियोगोपसंहृतिः ॥ ११ ॥ एवंप्रश्नोत्तराण्यत्रक्रमेणैतानिविंशतिः ॥ अहमात्मांतरोबाह्योऽनावृतःसर्वदेहिनां ॥ १२ ॥ यथाभूतानिभूतेषुबहिरंतःस्वयंतथेत्युक्तं तत्रभूतानियथाक्वचित्केनचिद्गुणविशेषेणोद्रिक्तानिवर्तंतेक्वचित्सामान्यरूपेणैवतथात्वमपिक्वकथंवर्तसइतिविभूतीःप्रष्टुंप्रथमंतावदुक्तमेवसर्वात्मकत्वमनुवदति त्वं ब्रह्मेति अपावृतंनिरावरणंस्वतंत्रंवा अतएवसर्वेषामपित्राणंरक्षणंस्थितिर्जीवनं त्राणस्थितिसहितौअप्ययोद्भवौयस्मात् सत्वमुपादानकारणमित्यर्थः ॥ १ ॥ ॥ ॥ ॥

अत्रसदाचारंप्रमाणमाह याथातथ्येनयथार्थत्वेन सर्वभूतकारणंत्वां ब्राह्मणावेदतात्पर्यविदः ॥ २ ॥ एवंकारणत्वेनसर्वात्मत्वमनूद्यावि
भूतीःपृच्छति येष्विति उपासीनाःसेवमानाःसंतः ॥ ३ ॥ दुर्ज्ञेयत्वमेवाह गूढःअस्फुटः भूतानांप्राणिनांमध्ये अत्रहेतुः भूतानामात्माअं
तर्यामी अत्रापिहेतुः हेभूतभावनेति तेत्वया ॥ ४ ॥ ताएवसाकल्येनपृच्छति हेमहाविभूते याःकाश्चिद्भूम्यादिषुतेविभूतयः रसायांरसा
तलेअनुभाविताास्त्वयैवकेनाचिच्छक्तिविशेषेणसंयोजिताः तीर्थानांपदंचतदंघ्रिपद्मंच ॥ ५ ॥ नरावतारभूतार्जुनप्रश्नसंवादित्वात्तवायंप्र
श्नःसाधीयानितितावदनुमोदते एवमितित्रिभिः प्रश्नंप्रष्टव्यं सपत्नैर्योद्धुमिच्छता बिनशनेकुरुक्षेत्रे ॥ ६ ॥ युयुत्सोर्विभूतिप्रश्नेकःप्रसं

**उच्चावचेषुभूतेषुदुर्ज्ञेयमकृतात्मभिः ॥ उपासतेत्वांभगवन्याथातथ्येनब्राह्मणाः ॥ २ ॥ येषुयेषुचभावेषुभ
क्त्यात्वांपरमर्षयः ॥ उपासीनाःप्रपद्यंतेसंसिद्धिंतद्वदस्वमे ॥ ३ ॥ गूढश्चरसिभूतात्माभूतानांभूतभावन ॥
नत्वांपश्यंतिभूतानिपश्यंतंमोहितानिते ॥ ४ ॥ याःकाश्चभूमौदिविवैरसायांविभूतयोदिक्षुमहाविभूते ॥
तामह्यमाख्याह्यनुभावितास्तेनमामितेतीर्थपदांघ्रिपद्मं ॥ ५॥ श्रीभगवानुवाच एवमेतदहंपृष्टःप्रश्नंप्र
श्नविदांवर ॥ युयुत्सुनाविनशनेसपत्नैरर्जुनेनवै ॥ ६ ॥ ज्ञात्वाज्ञातिवधंगर्ह्यमधर्मंराज्यहेतुकं ॥ ततोनिवृ
त्तोहंताहंहतोऽयमितिलौकिकः ॥ ७ ॥ सतदापुरुषव्याघ्रोयुक्त्यामेप्रतिबोधितः ॥ अभ्यभाषतमामेवंयथा
त्वंरणमूर्धनि ॥ ८ ॥ अहमात्मोद्धवामीषांभूतानांसुहृदीश्वरः ॥ अहंसर्वाणिभूतानितेषांस्थित्युद्भवाप्ययः ॥
॥ ९ ॥ अहंगतिर्गतिमतांकालःकलयतामहं ॥ गुणानांचाप्यहंसाम्यंगुणिन्यौत्पत्तिकोगुणः ॥ १० ॥**

गस्तत्राह ज्ञात्वेति लौकिकःप्राकृतमातिःसन् ॥ ७ ॥ सचयदाततोज्ञातिवधान्निवृत्तस्तदामयाप्रतिबोधितःसन्यथात्वमभिभाषसेएवंसं
ग्राममुखेमामभ्यभाषत तद्वदेवतवापिकथयिष्यामीतिभाव ः॥ ८ ॥ ताविभूतीःकथयाति अहमिति अस्मच्छब्दसमानाधिकरणाःप्रथमांता
द्वितीयांताश्चसर्वाविभूतयस्तास्ताश्चोपासनार्थंकथ्यंते षष्ठीचक्कचिन्निर्धारणेसंबंधेचक्वचिद्यथायोग्यंद्रष्टव्या ततश्चामीषांभूतनामात्मेतिसु
हृदितिईश्वरइतिचसामान्येनाहमुपास्यइत्यर्थः एवंसर्वत्रतेषांस्थित्युद्भवाप्ययःतत्तद्धेतुरित्यर्थः ॥ ९ ॥ विशेषतोविभूतीराह कलयतां
वशीकुर्वतां गुणानांसत्त्वादीनांमध्येसाम्यमव्याकृतं गुणिनिधर्मिणिऔत्पात्तिकः स्वाभाविकोयोगुणःसोऽहम् ॥ १० ॥

सूत्रंप्रथमकार्यं महान्महत्तत्त्वम् सूक्ष्मोपाधित्वाद्दुर्ज्ञेयत्वाच्चजीवस्यसूक्ष्मत्वं बुद्धेर्गुणेनचैववालाग्रमात्रोह्यवरोऽपिदृष्टइतिश्रुतेः ॥ ११ ॥
वेदानांसंबंधीतेषामध्यापकः पदानित्रिपदागायत्रीत्यर्थः ॥ १२ ॥ १३ ॥ हविर्धानीकामधेनुः ॥ १४ ॥ १५ ॥ नक्षत्रौषधीनांप्रभुंसोमम् यक्षरक्षसांप्रभुम् ॥ १६ ॥ यादसांप्रभुम् तपतांतापयतां द्युमतांदीप्तिमतांचमध्ये ॥ १७ ॥ संयमतांदंडयतामित्यर्थः ॥ १८ ॥ शृं



गुणिनामप्यहंसूत्रंमहतांचमहानहं ॥ सूक्ष्माणामप्यहंजीवोदुर्जयानामहंमनः ॥ ११ ॥ हिरण्यगर्भोवेदानांमंत्राणांप्रणवस्त्रिवृत् ॥ अक्षराणामकारोऽस्मिपदानिच्छंदसामहम् ॥ १२ ॥ इंद्रोऽहंसर्वदेवानांवसूनामस्मिहव्यवाट् ॥ आदित्यानामहंविष्णूरुद्राणांनीललोहितः ॥ १३ ॥ ब्रह्मर्षीणांभृगुरहंराजर्षीणामहंमनुः ॥ देवर्षीणांनारदोऽहंहविर्धान्यस्मिधेनुषु ॥ १४ ॥ सिद्धेश्वराणांकपिलःसुपर्णोऽहंपतत्रिणाम् ॥ प्रजापतीनांदक्षोऽहंपितॄणामहमर्यमा ॥ १५ ॥ मांविद्ध्युद्धवदैत्यानांप्रह्लादमसुरेश्वरम् ॥ सोमंनक्षत्रौषधीनांधनेशंयक्षरक्षसां ॥ १६ ॥ ऐरावतंगजेंद्राणांयादसांवरुणंप्रभुं ॥ तपतांद्युमतांसूर्यंमनुष्याणांचभूपतिं ॥ १७ ॥ उच्चैःश्रवास्तुरंगाणांधातूनामस्मिकांचनं ॥ यमःसंयमतांचाहंसर्पाणामास्मिवासुकिः ॥ ॥ १८ ॥ नागेंद्राणामनंतोऽहंमृगेंद्रःशृंगिदंष्ट्रिणां ॥ आश्रमाणामहंतुर्योवर्णानांप्रथमोऽनघ ॥ १९ ॥ तीर्थानांस्त्रोतसांगंगासमुद्रःसरसामहं ॥ आयुधानांधनुरहंत्रिपुरघ्नोधनुष्मतां ॥ २० ॥ धिष्ण्यानामस्म्यहंमेरुर्गहनानांहिमालयः ॥ वनस्पतीनामश्वत्थओषधीनामहंयवः ॥ २१ ॥ पुरोधसांवसिष्ठोऽहंब्रह्मिष्ठानांबृहस्पतिः ॥ स्कंदोऽहंसर्वसेनान्यामग्रण्यांभगवानजः ॥ २२ ॥ यज्ञानांब्रह्मयज्ञोऽहंव्रतानामविहिंसनम् ॥ वाय्वग्न्यर्कांबुवागात्माशुचिनामप्यहंशुचिः ॥ २३ ॥ ॥ ॥ ॥



गिणांदंष्ट्रिणांचमध्येतेषांप्रभुर्वा तुर्यःसंन्यासः प्रथमोब्राह्मणः ॥ १९ ॥ स्त्रोतसांप्रवाहाणांच सरसांस्थिरोदकाशयानां ॥ २० ॥ धिष्ण्यानांनिवासस्थानानां गहनानांदुर्गमानाम् ॥ २१ ॥ ब्रह्मिष्ठानांवेदार्थनिष्ठानाम् सेनान्यांचमूपतीनांअग्रण्यांसन्मार्गप्रवर्तकानां अजःब्रह्मा ॥ २२ ॥ शुचीनांशोधकानामापिमार्जनतक्षणघर्षणादीनांमध्येवाय्वादिरूपःशोधकोऽहम् ॥ २३ ॥ ॥

योगानांयोगांगानामष्टानांमध्येआत्मसंरोधःसमाधिरहं मंत्रोनीतिः कौशलानांविवेकादिनैपुणानांमध्येआन्वीक्षिकीआत्मानात्मविवेकावि
द्या आख्यात्यन्यथाख्यातिशून्यख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिवादिनामेवमिदमेवंवेतियोदुरंतोविकल्पःसोऽहं ॥ २४ ॥ कुमारःसनत्कु
मारः ॥ २५ ॥ संन्यासोभूताभयदानं क्षेमाणामभयस्थानानांमध्येअबहिर्मतिरंतर्निष्ठा सूनृतंप्रियवचनंमौनंच नहिप्रियभाषणेमौनेचपुरु
षस्याभिप्राज्ञोज्ञायते अजःप्रजापतिः यस्यदेहार्धाभ्यांमिथुनमभूत्सएवमुख्यंमिथुनम् अर्धोहवाएषआत्मनोयत्पत्नीतिश्रुतेः ॥ २६ ॥
अनिमिषामनिमिषाणामप्रमत्तानाम् मधुमाधवौवसंतइत्यर्थः अभिजिदुत्तराषाढाचतुर्थपादः श्रवणप्रथमपादश्च तथाचश्रुतिः अभिजिन्ना

## योगानामात्मसंरोधोमंत्रोऽस्मिविजिगीषतां ॥ आन्वीक्षिकीकौशलानांविकल्पःख्यातिवादिनां ॥ २४ ॥
## स्त्रीणांतुशतरूपाऽहंपुंसांस्वायंभुवोमनुः ॥ नारायणोमुनीनांचकुमारोब्रह्मचारिणां ॥ २५ ॥ धर्माणामस्मि
## संन्यासःक्षेमाणामबहिर्मतिः ॥ गुह्यानांसूनृतंमौनंमिथुनानामजस्त्वहं ॥ २६ ॥ संवत्सरोऽस्म्यनिमिषामृतू
## नांमधुमाधवौ ॥ मासानांमार्गशीर्षोऽहंनक्षत्राणांतथाऽभिजित् ॥ २७ ॥ अहंयुगानांचकृतंधीराणांदेवलोसि
## तः ॥ द्वैपायनोऽस्मिव्यासानांकवीनांकाव्यआत्मवान् ॥ २८ ॥ वासुदेवोभगवतांत्वंतुभागवतेष्वहं ॥ किंपू
## रुषाणांहनुमान्विद्याध्राणांसुदर्शनः ॥ २९ ॥ रत्नानांपद्मरागोऽस्मिपद्मकोशःसुपेशसां ॥ कुशोस्मिदर्भजाती
## नांगव्यमाज्यंहविःष्वहं ॥ ३० ॥ व्यवसायिनामहंलक्ष्मीःकितवानांछलग्रहः ॥ तितिक्षास्मितितिक्षूणांसत्त्वंस
## त्त्ववतामहं ॥ ३१ ॥ ओजःसहोबलवतांकर्माहंविद्धिसात्त्वतां ॥ सात्त्वतांनवमूर्तीनामादिमूर्तिरहंपरः ॥ ३२ ॥

मनक्षत्रमुपरिष्टादषाढानामवस्ताच्छ्रोणायाइत्यादि ॥ २७ ॥ कृतंकृतयुग देवलःअसितश्च व्यासानांवेदविभागकर्तॄणां कवीनांविदुषां
काव्यःशुक्रः ॥ २८ ॥ भगवताम् उत्पत्तिंप्रलयंचैवभूतानामागतिंगतिम् ॥ वेत्तिविद्यामविद्यांचसवाच्योभगवानित्येवंलक्षणानाम् ॥
॥ २९ ॥ सुपेशसांसुंदराणाम् दर्भजातीनांकाशदूर्वादीनां हविष्षुचरुपुरोडाशादिषुघृतेषुवा ॥ ३० ॥ लक्ष्मीर्धनादिसंपत् ॥ ३१ ॥
बलवतामोजश्चसहश्च सात्त्वतांभागवतानांभक्त्याकृतंकर्माहमित्यर्थः तेषामेवनवव्यूहार्चनेवासुदेवसंकर्षणप्रद्युम्नानिरुद्धनारायणहयग्री
ववराहनृसिंहब्रह्माणइतियानवमूर्तयस्तासांमध्येवासुदेवाख्या ॥ ३२ ॥ ॥ ॥

गंधर्वाणांविश्वावसुः अप्सरसांपूर्वचित्तिः गंधमात्रमविकृतम् ॥ ३३॥ परमोमधुरः परःपराख्यःशब्दः ॥ ३४ ॥ अर्जुनःपार्थःभूतानांप्रा
णिनांप्रतिसंक्रमःप्रलयः ॥ ३५ ॥ गत्यादयःपंचकर्मेंद्रियव्यापाराः स्पर्शादयोज्ञानेंद्रियव्यापाराः तत्रलक्षणंदर्शनं सर्वेंद्रियाणामिंद्रि
यंतत्तदर्थग्रहणशक्तिरप्यहम् ॥ ३६ ॥ तदेवंतत्रतत्रनिर्धारणेनतत्रसंबंधेनचविशेषतोविभूतीर्निरूप्येदानींसामान्यतःसर्वाअपिनिरूपयति
पृथ्वीतिसार्धद्वयेन पृथिव्यादिशब्दैस्तन्मात्राणिविवक्षितानि अहमहंकारः महान्महत्तत्त्वम् एताःसप्तप्रकृतिविकृतयः विकारःपंच
महाभूतानिएकादशेंद्रियाणिचेत्येवंषोडशसंख्याकः पुरुषोजीवः अव्यक्तंप्रकृतिः एवंपंचविंशतितत्त्वानि तदुक्तम् मूलप्रकृतिरविकृतिर्म
हदाद्याःप्रकृतिविकृतयःसप्त ॥ षोडशकश्चविकारोनप्रकृतिर्नाविकृतिःपुरुषइति किंच रजःसत्वंतमइतिप्रकृतेर्गुणाश्चपरंब्रह्म च तदेवंतत्स

विश्वावसुःपूर्वचित्तिर्गंधर्वाप्सरसामहं ॥ भूधराणामहंस्थैर्यंगंधमात्रमहंभुवः ॥ ३३॥ अपांरसश्चपरमस्ते
जिष्ठानांविभावसुः ॥ प्रभासूर्येंदुताराणांशब्दोऽहंनभसःपरः ॥ ३४॥ ब्रह्मण्यानांबलिरहंवीराणामहम
र्जुनः ॥ भूतानांस्थितिरुत्पत्तिरहंवैप्रतिसंक्रमः॥३५॥ गत्युक्त्युत्सर्गोपादानमानंदरूपर्शलक्षणं ॥ आस्वा
दश्रुत्यवघ्राणमहंसर्वेंद्रियेंद्रियं ॥ ३६ ॥ पृथिवीवायुराकाशआपोज्योतिरहंमहान् ॥ विकारःपुरुषोऽ
व्यक्तंरजःसत्त्वंतमःपरं ॥ ३७ ॥ अहमेतत्प्रसंख्यानंज्ञानंतत्त्वविनिश्चयः ॥ मयेश्वरेणजीवेनगुणेनगुणि
नाविना ॥ सर्वात्मनापिसर्वेणनभावोविद्यतेक्वचित् ॥ ३८ ॥ संख्यानंपरमाणूनांकालेनक्रियतेमया ॥
नतथामेविभूतीनांसृजतोऽडानिकोटिशः ॥ ३९ ॥ ॥ ॥ ॥

र्वमहमेव ॥३७॥ किंच एतत्प्रसंख्यानमेतेषांपरिगणनमेतेषांलक्षणतोज्ञानंचतत्फलंतत्त्वनिश्चयश्चाहमेव एतदेवसंक्षिप्याह मयेति जीवे
श्वररूपोद्विविधोयोभावोयश्चगुणिगुणरूपोयश्चक्षेत्रक्षेत्रज्ञरूपः ससर्वोऽपिमयाविनामद्व्यतिरेकेणनास्ति अहमेवसर्वमित्यर्थः ॥ ३८ ॥
ननुसामान्यतः किमेवंसंक्षिप्यकथयसिपूर्ववन्निर्धारणसंबंधाभ्यांविशेषतःसर्वाः कथयेतिचेत्तत्राह संख्यानंपृथिव्यादिपरमाणूनांकालेन
महतातदपिमयैवक्रियतेकृत्वाचवक्तुंशक्यतेतथामेविभूतीनांसंख्यानंकर्तुंनशक्यते कुतइत्यतआह सृजतोऽडानीति यदामयासृज्यमाना
नांब्रह्मांडानामेवतावत्संख्यानास्तितदाकुनस्तद्गतानांविभूतीनांसंख्येत्यर्थः ॥ ३९ ॥

तथाऽपिविशेषतएवसर्वाअपिसंक्षेपतःकथयामीत्याह तेजःप्रभावः श्रीःसंपत् सौभगंमनोनयनाल्हादकत्वं भगोभाग्यं वीर्यंबलं अंश कोविभूतिः ॥ ४० ॥ उपसंहरति एताइति एतेचविभूतिभेदामयिचित्तावतारायकल्पिताअतोनात्रातीवाभिनिवेशः कर्तव्यइत्याह म नोविकाराएवनतुपरमार्थाः यथाकिंचिन्नखपुष्पादिवाङ्मात्रेणाभिधीयतेतत्तुल्याः ॥ ४१ ॥ तस्माद्वागादीन्नियच्छ आत्मानंबुद्धिमात्मना सत्त्वसंपन्नयातयैवनियच्छ अध्वनेसंसारमार्गाय ॥ ४२ ॥ असंयमनेदोषमाह यइति असंयच्छन्नसंयच्छाति ॥ ४३ ॥ परिसमाप्यते कृतकृत्योभवतीत्यर्थः ॥ ४४ ॥ इत्येकादशेटीकायांषोडशोऽध्यायः ॥ १६ ॥ ॥ ततःसप्तदशेपृष्टेस्वधर्मेभक्तिलक्षणे ॥ हंसोक्तं

तेजःश्रीःकीर्तिरैश्वर्यंह्रीस्त्यागःसौभगंभगः ॥ वीर्यंतितिक्षाविज्ञानंयत्रयत्रसमेंऽशकः ॥ ४० ॥ एतास्तेकीर्तिताःसर्वाःसंक्षेपेणविभूतयः ॥ मनोविकाराएवैतेयथावाचाभिधीयते ॥ ४१ ॥ वाचंयच्छमनोयच्छप्राणान्यच्छेंद्रियाणिच ॥ आत्मानमात्मनायच्छनभूयःकल्पसेऽध्वने ॥ ४२ ॥ योवैवाङ्मनसीसम्यगसंयच्छन्धियायतिः ॥ तस्यव्रतंतपोज्ञानंस्त्रवत्यामघटांबुवत् ॥ ४३ ॥ तस्मान्मनोवचःप्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तयाबुद्ध्याततःपरिसमाप्यते ॥४४॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेषोडशोध्यायः ॥ १६ ॥ ॥ छ ॥ उद्धवउवाच यस्त्वयाऽभिहितःपूर्वंधर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्रमाचारवतांसर्वेषांद्विपदामपि ॥ १ ॥ यथाऽनुष्ठीयमानेनत्वयिभक्तिर्नृणांभवेत् ॥ स्वधर्मेणारविंदाक्षतत्समाख्यातुमर्हसि॥ २ ॥ पुराकिलमहाबाहोधर्मंपरमकंप्रभो ॥ यत्तेनहंसरूपेणब्रह्मणेऽभ्यात्थमाधव ॥ ३ ॥

धर्मंमन्वाहब्रह्मचारिगृहस्थयोः ॥ १ ॥ कर्माहंविद्धिसात्त्वतामित्यत्रभक्त्याकृतंकर्मंमोक्षसाधनंमद्विभूतिरित्युक्तं भक्तिसाधनत्वंचकर्मणां मयोदितेष्ववहितः स्वधर्मेष्वित्यादिनातत्रतत्रोक्तं नचकर्मानुष्ठातॄणांनियमेनभक्तिर्दृश्यते अतःपृच्छति यस्त्वयेतिसप्तभिः पूर्वंकल्पादौ त्वद्भक्तिलक्षणस्तज्ज्ञापकस्त्तत्साधनमित्यर्थः वर्णाश्रमहीनानामपिद्विपदांनराणां ॥ १ ॥ यथायेनप्रकारेणानुष्ठीयमानेनस्वधर्मेण ॥ ॥ २ ॥ ननुसंप्रदायादेवज्ञास्यतेकिंपुनर्वर्णनेनतत्राह पुरेति परमकंपरमश्वासौकंसुखरूपश्चतं यत्त्वं हंसरूपेणधर्मोऽप्युक्तएवनतुयोगमात्रं जानीतमागतंयज्ञंयुष्मद्धर्मंविवक्षयेत्युक्तत्वात् ॥ ३ ॥ ॥ ॥

प्रागनुशासितोऽपिनभवितानभविष्यति ॥ ४ ॥ अत्रहेतुमाह वक्केतिद्वाभ्यां तेत्वत्तोऽन्यः कलावेदाद्याः ॥ ५ ॥ ६ ॥ तत्तस्मान्नःअ
स्माकंमनुष्याणांमध्येयस्ययथाविधीयते ॥ ७ ॥ धर्म्योधर्मादनपेतः कुतोनैःश्रेयसकरोभक्तिजनकः अतोमेमत्तस्तंधर्मंनिबोध ॥ ८ ॥
तत्रादौमदुपासनालक्षणएवमुख्योधर्मआसीत् आचारलक्षणस्तुपश्चात्प्रवृत्तः सचैवमनुष्ठितोभक्तिहेतुरितिवर्णयितुमाह आदाविति कल्पा
दौयत्कृतयुगंतस्मिन् तेचतदामामुपासतएवकेवलंनान्यत्कुर्वंतीतिवकुंकृतयुगनामनिरुक्तिमाह कृतकृत्याइति जात्याजन्मनैव ॥ ९ ॥

सइदानींसुमहताकालेनामित्रकर्शन ॥ नप्रायोभवितामर्त्यलोकेप्रागनुशासितः ॥ ४ ॥ वक्ताकर्त्ताविताना
न्योधर्मस्याच्युततेभुवि ॥ सभायामपिवैरिंच्यांयत्रमूर्तिधराःकलाः ॥ ५ ॥ कर्त्राऽवित्राप्रवक्त्राचभवताम
धुसूदन ॥ त्यक्तेमहीतलेदेवविनष्टंकःप्रवक्ष्यति ॥ ६ ॥ तत्त्वंनःसर्वधर्मज्ञधर्मस्त्वद्भक्तिलक्षणः ॥ यथायस्य
विधीयेततथावर्णयमेप्रभो ॥ ७ ॥ श्रीभगवानुवाच धर्म्यएषतवप्रश्नोनैःश्रेयसकरोनृणाम् ॥ वर्णा
श्रमाचारवतांतमुद्धवनिबोधमे ॥ ८ ॥ आदौकृतयुगेवर्णोनृणांहंसइतिस्मृतः ॥ कृतकृत्याःप्रजाजात्यात
स्मात्कृतयुगंविदुः ॥ ९ ॥ वेदःप्रणवएवाग्रेधर्मोऽहंवृषरूपधृक् ॥ उपासतेतपोनिष्ठाहंसंमांमुक्तकिल्बिषाः
॥ १० ॥ त्रेतामुखेमहाभागप्राणान्मेहृदयात्त्रयी ॥ विद्याप्रादुरभूत्तस्याअहमासंत्रिवृन्मुखः ॥ ११ ॥ वि
प्रक्षत्रियविट्शूद्रामुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाताआत्माचारलक्षणाः ॥ १२ ॥ गृहाश्रमो
जघनतोब्रह्मचर्यंहृदोमम ॥ वक्षःस्थानाद्वनेवासोन्यासःशीर्षणिसंस्थितः ॥ १३ ॥

किंच विधायकाभावादपितदानींनान्यत्कर्मास्तीत्याह वेदइति धर्मश्चमनोविषयोऽहमेववृषरूपधृक्चतुष्पात् नक्रियाविशेषोयज्ञादिः अ
तस्तपोनिष्ठाः मनसश्चेंद्रियाणांचऐकाग्र्यंपरमंतपइतिवचनादेकाग्रतयाहंसंशुद्धंमांध्यायंतीत्यर्थः ॥ १० ॥ पश्चात्त्रेतायुगप्रवेशेमेवैराजरूप
स्यप्राणान्निमित्तात्हृदयात्सकाशात्तस्यास्त्रय्याःसकाशात्हौत्राध्वर्यवौद्गात्रैस्त्रिवृत्त्रिरूपः यज्ञोवैविष्णुरितिश्रुतेः ॥ ११ ॥ वर्णानामाश्र
माणांचधर्मान्वकुंतेषामुत्पत्तिमाह विप्रेतिद्वाभ्यां आत्माचारःस्वधर्मएवलक्षणंज्ञापकोयेषांते ॥ १२ ॥ ममवैराजरूपस्यहृदोवक्षसोऽध
स्ताद्ब्रह्मचर्यमितिनैष्ठिकाभिप्रायं ॥ १३ ॥ ॥ ॥ ॥ ॥

तेषामधिकारिविशेषेणस्वभावानाह वर्णानामितिपंचभिः जन्मस्थानानुसारिण्यः नीचैरित्यव्ययं अतोऽयमर्थः मंदाभिर्जन्मभूमिभिर्मंदाः उत्तमाभिरुत्तमाश्चेति ॥ १४ ॥ तपःआलोचनं ॥१५॥ तेजःप्रतापः एतैरेवाश्रमस्वभावाअपिज्ञेयाः ॥ १६॥१७॥१८॥ तद्वद्धानांस्व भावानाह अशौचमिति शुष्कविग्रहःनिर्मूलकलहः तर्षस्तृष्णा ॥१९॥ तत्रतावत्सर्वसाधारणंधर्ममाह अहिंसेति वर्णग्रहणमुपलक्षणार्थं वर्णधर्मान्गृहस्थप्रकरणेवक्ष्यति ॥ २० ॥ प्रथमंतावदाश्रमेषुब्रह्मचारिणोधर्मावर्ण्यंते सचाद्विविधः उपकुर्वाणकोनैष्ठिकश्च तत्रउपकुर्वा

**वर्णानामाश्रमाणांचजन्मभूम्यनुसारिणीः ॥ आसन्प्रकृतयोनॄणांनीचैर्नीचोत्तमोत्तमैः ॥ १४ ॥ शमोदम स्तपःशौचंसंतोषःक्षांतिरार्जवं ॥ मद्भक्तिश्चदयासत्यंब्रह्मप्रकृतयस्त्विमाः ॥ १५ ॥ तेजोबलंधृतिःशौर्यंति तिक्षौदार्यमुद्यमः ॥ स्थैर्यंब्रह्मण्यतैश्वर्यंक्षत्रप्रकृतयस्त्विमाः ॥ १६ ॥ आस्तिक्यंदाननिष्ठाचअदंभोब्रह्मसे वनं ॥ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥ १७ ॥ शुश्रूषणंद्विजगवांदेवानांचाप्यमायया ॥ तत्रलब्धेन संतोषःशूद्रप्रकृतयस्त्विमाः ॥१८॥ अशौचमनृतंस्तेयंनास्तिक्यंशुष्कविग्रहः ॥ कामःक्रोधश्च तर्षश्चस्वभा वोंऽतेवसायिनां ॥ १९ ॥ अहिंसासत्यमस्तेयमकामक्रोधलोभता ॥ भूतप्रियहितेहाचधर्मोऽयंसार्ववर्णि कः ॥ २० ॥ द्वितीयंप्राप्यानुपूर्व्याज्जन्मोपनयनंद्विजः ॥ वसन्गुरुकुलेदांतोब्रह्माधीयीतचाहुतः ॥ २१ ॥ मेखलाऽजिनदंडाक्षब्रह्मसूत्रकमंडलून् ॥ जटिलोऽधौतदद्वासोरक्तपीठःकुशान्दधत् ॥ २२ ॥ स्नानभोज नहोमेषुजपोच्चारेचवाग्यतः ॥ नच्छिंद्यान्नखरोमाणिकक्षोपस्थगतान्यपि ॥ २३ ॥ ॥**

णकस्यधर्मानाह द्वितीयमितिनवभिः द्विजस्त्रैवर्णिकः आनुपूर्व्याद्गर्भाधानादिसंस्कारमात्रेण द्वितीयमुपनयनाख्यंजन्मप्राप्याचार्येणाहूतो ब्रह्मवेदमधीयीत चकारात्तदर्थंचविचारयेत् ॥ २१ ॥ किंच मेखलादीन्कुशांश्चदधत् तत्राक्षशब्देनाक्षमाला कथंभूतः जटिलःअनभ्यं गादिनाजातजटः तथाअधौतदद्वासोऽरक्तपीठः दंताश्चवासश्चदद्वासांसि नधौतानितानियस्यसःअधौतदद्वासाःसचासावरक्तपीठश्चनतु कौतुकादिनारक्तंपीठमासनंयस्यसः ॥ २२ ॥ जपश्चउच्चारोमूत्रपुरीषोत्सर्गोजपोच्चारंतस्मिन्वाग्यतोमौनीभवेत् ॥ २३ ॥

रेतोबुद्धिपूर्वंनावाकिरेन्नोत्सृजेत् ब्रह्मव्रतधरःअगृहस्थः स्वयमेवकथंचिदवकीर्णेअवगाह्यस्नात्वायतासुः कृतप्राणायामस्त्रिपदींगायत्रींज
पेत् ॥ २४ ॥ संध्येचद्वेयतवाक्जपन्नुपासीत मध्याह्नेसंध्यानिमित्तंमौनंनास्तीतिद्विवचनं ॥ २५ ॥ २६ ॥ अन्यदपियत्संप्राप्तंतच्च
निवेदयेत् तेनानुज्ञातंतुसंयतःसन्नुपयुंजीतेत्यर्थः ॥ २७ ॥ यानशय्यासनस्थानैः यांतंपृष्ठतोयानेन निद्रितमप्रमत्ततयासमीपशयनेनवि
श्रांतंपादसंवाहनादिभिःसमीपासनेन आसीनंकृतांजलिर्नियोगप्रतीक्षयानातिदूरेऽवस्थानेनेत्यर्थः ॥ २८ ॥ एवंभूतंवृत्तंयस्यसः ॥ २९ ॥
एवमुपकुर्वाणकस्यधर्मानुक्त्वानैष्ठिकस्याविशेषधर्मानाह यदीतिषड्भिः असौब्रह्मचारीयदिच्छंदसांलोकंमहर्लोकंततोब्रह्मलोकंचारोक्षन्

**रेतोनावकिरेज्जातुब्रह्मव्रतधरःस्वयम् ॥ अवकीर्णेऽवगाह्याप्सुयतासुस्त्रिपदींजपेत् ॥ २४ ॥ अग्न्यर्कांचा
र्येगोविप्रगुरुवृद्धसुरान्शुचिः ॥ समाहितउपासीतसंध्येचयतवाग्जपन् ॥ २५ ॥ आचार्यमांविजानी
यान्नावमन्येतकर्हिचित् ॥ नमर्त्यबुद्ध्याऽसूयेतसर्वदेवमयोगुरुः ॥ २६ ॥ सायंप्रातरुपानीयभैक्ष्यंतस्मैनि
वेदयेत् ॥ यच्चान्यदप्यनुज्ञातमुपयुंजीतसंयतः ॥ २७ ॥ शुश्रूषमाणआचार्यंसदोपासीतनीचवत् ॥ यानश
य्यासनस्थानैर्नातिदूरेकृतांजलिः ॥ २८ ॥ एवंवृत्तोगुरुकुलेवसेद्भोगविवर्जितः ॥ विद्यासमाप्यतेयावद्बिभ्रद्व्र
तमखंडितं ॥ २९ ॥ यद्यसौछंदसांलोकमारोक्षन्ब्रह्मविष्टपम् ॥ गुरवेविन्यसेद्देहंस्वाध्यायार्थंबृहद्व्रतः ॥
॥ ३० ॥ अग्नौगुरावात्मनिचसर्वभूतेषुमांपरम् ॥ अपृथग्धीरुपासीतब्रह्मवर्चस्व्यकल्मषः ॥ ३१ ॥ स्त्री
णांनिरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ॥ प्राणिनोमिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥ ३२ ॥ शौचमा
चमनंस्नानंसंध्योपासनमार्जवं ॥ तीर्थसेवाजपोःस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥ ३३ ॥ ॥**

आरोढुमिच्छतीत्यर्थः यद्वा छंदसांलोकमितिब्रह्मलोकविशेषणं यत्रमूर्तिधराःकलाइत्युक्तत्वात् तर्हिबृहद्व्रतःसन्बृहन्नैष्ठिकंव्रतंयस्यसः
विन्यसेत्समर्पयेत् अधिकस्वाध्यायार्थमधीतनिष्क्रयार्थंच ॥ ३० ॥ ब्रह्मवर्चोवेदाभ्यासजंतेजस्तद्वान् ॥ ३१ ॥ तस्येववनस्थयतिसा
धारणधर्मानाह स्त्रीणामिति निरीक्षणंभावगर्भं क्ष्वेलनंपरिहासः एवमादिकंत्यजेत् मिथुनीभूतानग्रतस्त्यजेत् नपश्येदित्यर्थः ॥ ३२ ॥
तस्यैवसर्वाश्रमसाधारणंधर्ममाह शौचमितिद्वाभ्यां ॥ ३३ ॥ ॥ ॥ ॥

॥ ३४ ॥ निष्कामनैष्ठिकस्यतुमोक्षफलमाह एवमिति अमलोनिष्कामश्चेत् दग्धःकर्माशयोंऽतःकरणंयस्यतथाभूतःसन् मद्भक्तोभवति
॥ ३५ ॥ उपकुर्वाणस्यसमावर्तनप्रक्रममाह अथेति अनंतरंद्वितीयाश्रममावेक्षन् प्रवेष्टुमिच्छन् यथायथावद्विचारितवेदार्थःस्नायात् अभ्यं
गादिकंकृत्वासमावर्तेतेत्यर्थः ॥ ३६ ॥ तस्याधिकारानुरूपमाश्रमविकल्पसमुच्चयावाह गृहमिति सकामश्चेद्गृहमंतःकरणशुध्यादिकाम
श्चेद्वनंप्रविशेत् शुद्धांतःकरणःसचाद्विजोत्तमःब्राह्मणश्चेत्प्रव्रजेदित्यर्थः यद्वा आश्रमादाश्रमांतरंगच्छेत् अन्यथाअनाश्रमीप्रतिलोमंचना
चरेदित्यर्थः अमत्परइतिवाछेदः स्वभक्तस्याश्रमनियमाभावस्यवक्ष्यमाणत्वात् ॥ ३७ ॥ विवाहनियमपूर्वकंवर्णधर्मैःसहगृहस्थधर्मानाह

**सर्वाश्रमप्रयुक्तोऽयंनियमःकुलनंदन ॥ मद्भावःसर्वभूतेषुमनोवाक्कायसंयमः ॥ ३४ ॥ एवंबृहद्व्रतधरोब्राह्म
णोऽग्निरिवज्वलन् ॥ मद्भक्तस्तीव्रतपसादग्धकर्माशयोऽमलः ॥ ३५ ॥ अथानंतरमावेक्षन्यथाजिज्ञासिता
गमः ॥ गुरवेदक्षिणांदत्वास्नायाद्गुर्वनुमोदितः ॥ ३६ ॥ गृहंवनंवोपविशेत्प्रव्रजेद्वाद्विजोत्तमः ॥ आश्रमादाश्र
मंगच्छेन्नान्यथामत्परश्चरेत् ॥ ३७ ॥ गृहार्थीसदृशींभार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसींतुवयसायांस
वर्णामनुक्रमात् ॥ ३८ ॥ इज्याध्ययनदानानिसर्वेषांचद्विजन्मनाम् ॥ प्रतिग्रहोऽध्यापनंचब्राह्मणस्यैवयाज
नम् ॥ ३९ ॥ प्रतिग्रहंमन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यामेवजीवेताशिलैर्वादोषदृक्तयोः ॥ ४० ॥
ब्राह्मणस्यहिदेहोऽयंक्षुद्रकामायनेष्यते ॥ कृच्छ्रायतपसेचेहप्रेत्यानंतसुखायच ॥ ४१ ॥ शिलोंच्छवृत्त्याप
रितुष्टचित्तोधर्मंमहांतंविरजंजुषाणः ॥ मय्यर्पितात्मागृहएवतिष्ठन्नातिप्रसक्तःसमुपैतिशांतिं ॥ ४२ ॥**

गृहार्थीति सदृशींसवर्णां अजुगुप्सितांकुलतोलक्षणतश्चानिंदितां कामतस्तुयामन्यामुद्वहेत् तांसवर्णामनुतस्याअनंतरं तत्रापिवर्णक्रमेणो
द्वहेदित्यर्थः तिस्रोवर्णानुपूर्व्येणद्वेतथैकायथाक्रमं ॥ ब्राह्मणक्षत्रियविशांभार्याःस्वाःशूद्रजन्मनइतिस्मृतेः ॥ ३८ ॥ इज्यादयस्त्रैवर्णिका
नामावश्यकाधर्माः ॥ ३९ ॥ प्रतिग्रहादित्रयंतुवृत्तिः साचब्राह्मणस्यैव तत्रापिमुख्यांमुख्यतमांचान्यांचवृत्तिमाह प्रतिग्रहमिति तयो
र्याजनाध्यापनयोरपिकार्पण्यादिदोषंपश्यन् शिलैःस्वामित्यक्तैःक्षेत्रपतितैःकाणिशैः ॥ ४० ॥ एवंचवृत्तिकार्श्यंब्राह्मणेनसोढव्यमित्याह
ब्राह्मणस्येति ॥ ४१ ॥ उंच्छवृत्तिर्नामाविपणादिपतितकणोपादानंतांशिलवृत्त्यैकीकृत्यतयातुष्टचित्तस्यमोक्षफलमाह शिलोंच्छेति
महांतमातिथ्यादिलक्षणं ॥ ४२ ॥ ॥ ॥ ॥

एवमधनस्यमहत्फलमुक्त्वासधनानामप्याहत्रिभिः समुद्धरंतिदारिद्र्याादुत्तारयंति विप्रमित्युपलक्षणं मत्परायणंयंकमपि ॥ ४३ ॥ राज्ञ
स्त्वावश्यकमेतदित्याह सर्वाइति ॥ ४४ ॥ ४५ ॥ सर्वेषामापद्वृत्तिराह सीदन्निितित्रिभिः पण्यैर्विक्रयार्हैर्नतुसुरालवणाद्यैः तत्राप्याप
दाक्रांतश्चेत्खड्गेनक्षत्रियवृत्त्यावा यद्यपिगौतमोनंतरांपापीयसींवृत्तिमातिष्ठेदितिस्मरन्खड्गधारणंपण्यविक्रयाच्छ्रेष्ठंमन्यतेतथाऽपिहिंसातोव
णिग्वृत्तिरेवश्रेष्ठेतिभगवतोमतम् नतुश्ववृत्त्यानीचसेवया ॥ ४६ ॥ तत्राप्यापदिमृगयया विप्ररूपेणवाअध्यापनादिना ॥ ४७ ॥ कार
वःप्रतिलोमजविशेषाबुरुडादयस्तेषांवृत्तिंकटादिक्रियाम् आपदुत्तीर्णस्तुनानुकल्पेनवर्तेतेत्याह कृच्छ्रादिति ॥ ४८ ॥ तदेवंवृत्तिव्यव
स्थामुक्त्वापुनर्गृहस्थस्यावश्यकान्पंचयज्ञानाह वेदाध्ययनंब्रह्मयज्ञस्तेनऋषीन्स्वधाकारेणपितॄन्स्वाहाकारेणदेवान्बलिहरणेनभूतानिअन्ना

समुद्धरंतियेविप्रसीदंतंमत्परायणं ॥ तानुद्धरिष्येनचिरादापद्भ्योनौरिवार्णवात् ॥४३॥ सर्वाःसमुद्धरेद्राजा
पितेवव्यसनात्प्रजाः ॥ आत्मानमात्मनाधीरोयथागजपतिर्गजान् ॥ ४४ ॥ एवंविधोनरपतिर्विमानेनार्क
वर्चसा ॥ विधूयेहाशुभंकृत्स्नमिंद्रेणसहमोदते ॥ ४५ ॥ सीदन्विप्रोवणिग्वृत्त्यापण्यैरेवापदंतरेत् ॥ खड्गे
नवापदाक्रांतोनश्ववृत्त्याकथंचन ॥ ४६ ॥ वैश्यवृत्त्यातुराजन्योजीवेन्मृगययापदि ॥ चरेद्वाविप्ररूपेणन
श्ववृत्त्याकथंचन ॥४७॥ शूद्रवृत्तिंभजेद्वैश्यःशूद्रःकारुकटक्रियां ॥ कृच्छ्रान्मुक्तोनगर्ह्येणवृत्तिंलिप्सेतकर्म
णा ॥ ४८ ॥ वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयं ॥ देवर्षिपितृभूतानिमद्रूपाण्यन्वहंयजेत् ॥ ४९ ॥
यदृच्छयोपपन्नेनशुक्लेनोपार्जितेनवा ॥ धनेनापीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ॥ ५० ॥ कुटुंबेषुनसज्जेत
नप्रमाद्येत्कुटुंब्यपि ॥ विपश्चिन्नश्वरंपश्येददृष्टमपिदृष्टवत् ॥ ५१ ॥ पुत्रदाराप्तबंधूनांसंगमःपांथसंगमः
अनुदेहंवियंत्येतेस्वप्नोनिद्रानुगोयथा ॥ ५२ ॥ ॥ ॥ ॥ ॥

द्यैरन्नोदकादिभिर्मनुष्यानितिज्ञातव्यं यथोदयंविभवानुसारतः तेष्वीश्वरदृष्टिंविधत्ते मद्रूपाणीति ॥ ४९ ॥ आवश्यकंधर्ममुक्त्वाशक्त्यनु
सारंधर्ममाह यदृच्छयाउद्यमंविनाउपार्जितेनवाशुक्लेनस्ववृत्त्यालब्धेशुद्धेनेनवाधनेन भृत्यान्पोष्यान् ॥५०॥ गृहस्थस्यापिनिवृत्तिनिष्ठामेवाह
कुटुंबेष्वितित्रिभिः नप्रमाद्येत्ईश्वरनिष्ठायांप्रमत्तोनभवेत् ननुदृष्टादृष्टार्थकर्माशक्तस्यकथमप्रमादःविचारेणेत्याह विपश्चिदिति ॥ ५१ ॥
तत्रापिदृष्टेष्वासक्तेरधिकत्वात्तेषांनश्वरतांप्रपंचयति पुत्रादीनामेकत्रसंगमःपांथानांप्रपायांसंगमइव तत्रहेतुः अनुदेहंप्रतिदेहमेतेवियंतिन
श्यंति निद्रानुवर्तीस्वप्नोनिद्रापायेयथेति ॥ ५२ ॥ ॥ ॥ ॥ ॥

अतिथिवत् उदासीनः ॥ ५३ ॥ अस्याप्याश्रमविकल्पमाह कर्मभिरिति गृहाश्रमएवतिष्ठेत् यदिप्रजावांस्तर्हिप्रव्रजेद्वा ॥ ५४ ॥ गृहा
द्यासंगेदोषमाह यस्त्वितित्रिभिः ॥ ५५ ॥ बंधमेवाभिनयेनदर्शयति अहोइति बालाआत्मजायस्याःसा आत्मजाश्चमांविनाअनाथाः
संतःकथंजीविष्यंतीति ॥ ५६ ॥ गृहेयआशयोवासनातेनआसर्वतःक्षिप्तंहृदयंयस्यसः अंधंतमःअतितामसींयोनिम् ॥ ५७ ॥ इत्येका
दशेटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ अष्टादशेऽत्रदद्वमैंवनस्थयतिगोचरम् ॥ अधिकारविशेषेणविशेषंचापितद्व्रतम् ॥ १ ॥

इत्थंपरिमृशन्मुक्तोगृहेष्वतिथिवद्वसन् ॥ नगृहैरनुबध्येतनिर्ममोनिरहंकृतः ॥ ५३ ॥ कर्मभिर्गृहमेधीयैरि
ष्ट्वामामेवभक्तिमान् ॥ तिष्ठेद्वनंवोपविशेत्प्रजावान्वापरिव्रजेत् ॥ ५४ ॥ यस्त्वासक्तमतिर्गेहेपुत्रवित्तेषणा
तुरः ॥ स्त्रैणःकृपणधीर्मूढोममाहमितिबध्यते ॥ ५५ ॥ अहोमेपितरौवृद्धौभार्याबालात्मजात्मजाः ॥ अ
नाथामामृतेदीनाःकथंजीवंतिदुःखिताः ॥ ५६ ॥ एवंगृहाशयाक्षिप्तहृदयोमूढधीरयम् ॥ अतृप्तस्तान
नुध्यायन्मृतोऽधंविशतेतमः ॥५७॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥
श्रीभगवानुवाच वनंविविक्षुःपुत्रेषुभार्यांन्यस्यसहैववा ॥ वनएववसेच्छांतस्तृतीयंभागमायुषः ॥ १ ॥
कंदमूलफलैर्वन्यैर्मेध्यैर्वृत्तिंप्रकल्पयेत् ॥ वसीतवल्कलंवासस्तृणपर्णाजिनानिच ॥ २ ॥ केशरोमनख
श्मश्रुमलानिबिभृयाद्दतः ॥ नधावेदप्सुमज्जेतत्रिकालंस्थंडिलेशयः ॥ ३ ॥ ग्रीष्मेतप्येतपंचाग्नीन्वर्षा
स्वासारषाड्जले ॥ आकंठमग्नःशिशिरएवंवृत्तस्तपश्चरेत् ॥ ४ ॥ अग्निपक्वंसमश्नीयात्कालपक्वमथापि
वा ॥ उलूखलाश्मकुट्टोवादंतोलूखलएववा ॥ ५ ॥ ॥ ॥ ॥

क्रमप्राप्तान्वनस्थधर्मानाह वनमिति आयुषस्तृतीयंभागंपंचसप्ततिवर्षपर्यंतम् ततःपरंक्षीणेंद्रियस्येषद्विरागेऽपिसंन्यासाधिकारःस्यादिति
भावः ॥ १ ॥ वसीतपरिदधीत ॥ २ ॥ दतःदंतान्नधावेतनशोधयेत् त्रिकालमप्सुमज्जेतमुसलवत्स्नायात् स्थंडिलेशयोभूमिशायी ॥ ३ ॥
तप्येतपंचाग्नीन् सूर्येणसहचतुर्दिशमग्नीन्निधायात्मानंतापयेदित्यर्थः आसारषाट्आसारंधारासंपातंसहतइतितथाअभ्रावकाशंनामव्रतंच
रेत् जलेआकंठमग्नःउदकवासंनामव्रतंचरेत् ॥ ४ ॥ उलूखलेनवाऽश्मनावाकुट्टयतिकंडयतीतितथा दंताएवोलूखलंयस्यसतथा ॥ ५ ॥

संचिनुयात् आहरेत् अन्यदाकालांतरेआहृतंकालांतरेनाददीत लब्धेनवेनवेऽन्नाद्येपुराणंतुपरित्यजेदितिनारदोक्तेः ॥ ६ ॥ कालनोदि
तान् आग्रयणादीन् ॥ ७ ॥ किं चाग्निहोत्रमिति मुनेश्च नैगमैर्वेदवादिभिः ॥ ८ ॥ अस्यनिष्कामस्यफलमाह एवमिति धमनीभिःशिरा
भिःसंततोव्याप्तः यावज्जीवंकृतेनतपसाशुष्कमांसइत्यर्थः ऋषिलोकात् महर्लोकादिक्रमेण अयंभावः अंतःकरणशुद्धिभक्तिद्वाराऽत्रैवता
वन्मूच्येत प्रतिबंधकबाहुल्येत्वनेनक्रमेणमुच्यतइति ॥ ९ ॥ तंसकामंनिंदति यस्त्विति निःश्रेयसंमोक्षफलं अल्पीयसेआविरिंच्याद्त्य
ल्पएवतस्मै ॥ १० ॥ एवंयावज्जीवंवर्तमानस्यमोक्षः तृतीयभागावसानेतुमंदविरागेपिसंन्यासाधिकारः यदितुततोर्वागेवस्वधर्माशक्तोभ

स्वयंसंचिनुयात्सर्वमात्मनोवृत्तिकारणम् ॥ देशकालबलाभिज्ञोनाददीतान्यदाहृतम् ॥ ६ ॥ वन्यैश्चरुपुरो
डाशैर्निर्वपेत्कालनोदितान् ॥ नतुश्रौतेन पशुनामांयजेतवनाश्रमी ॥ ७ ॥ अग्निहोत्रंचदर्शश्चपूर्णमासश्चपूर्वव
त् ॥ चातुर्मास्यानिचमुनेराम्नातानिचनैगमैः ॥ ८ ॥ एवंचीर्णेनतपसामुनिर्धमनिसंततः ॥ मांतपोमयमाराध्य
ऋषिलोकादुपैतिमाम् ॥ ९ ॥ यस्त्वेतत्कृच्छ्रतश्चीर्णंतपोनिःश्रेयसंमहत् ॥ कामायाल्पीयसेयुंज्याद्बालि
शःकोऽपरस्ततः ॥ १० ॥ यदाऽसौनियमेऽकल्पोजरयाजातवेपथुः ॥ आत्मन्यग्नीन्समारोप्यमच्चित्तोऽग्निं
समाविशेत् ॥ ११ ॥ यदाकर्मविपाकेषुलोकेषुनिरयात्मसु ॥ विरागोजायतेसम्यङ्न्यस्ताग्निःप्रव्रजेत्ततः
॥ १२ ॥ इष्ट्वायथोपदेशंमांदत्वासर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राणआवेश्यनिरपेक्षःपरिव्रजेत् ॥ १३ ॥ विप्र
स्यवैसंन्यसतोदेवादारादिरूपिणः ॥ विघ्नान्कुर्वंत्ययंह्यस्मानाक्रम्यसमियात्परं ॥ १४ ॥ बिभृयाच्चेन्मुनि
र्वासःकौपीनाच्छादनंपरं ॥ त्यक्तंनदंडपात्राभ्यामन्यत्किंचिदनापदि ॥ १५ ॥

वेत् तदापिसम्यगविरक्तोविरक्तोवा तत्राविरक्तस्यकृत्यमाह यदेति जातोवेपथुःकंपोदेहेयस्यसः ॥ ११ ॥ विरक्तंप्रत्याह यदेति ॥ १२ ॥ तत्रा
दौकृत्यमाह इष्ट्वेति यथोपदेशंश्राद्धाष्टकपूर्वकंप्राजापत्येष्ट्यामामिष्ट्वा स्वेप्राणेआत्मनि ॥ १३ ॥ संन्यासेविघ्नाभवंतितानविगणय्यसं
न्यसेदेवेत्याशयेनाह विप्रस्येति केनाभिप्रायेणकुर्वंतितमाह अयमिति परंपरंब्रह्म ॥ १४ ॥ एवंप्रव्रजितस्यधर्मानाह बिभृयाच्चेदिति परं
कौपीनादन्यद्वासोयदिधारयितुमिच्छतितर्हिकौपीनमाच्छाद्यतेयावतातावन्मात्रंधारयेदित्यर्थः त्यक्तंप्रेषोच्चारात्पूर्वमेव अतोऽन्यत्किंचि
दपिनबिभृयात् दंडपात्राभ्यामित्यावश्यकजलपात्रादेरुपलक्षणं ॥ १५ ॥ ॥ ॥

मनःपूतंमनसासम्यग्विचार्ययच्छुद्धंतदाचरेत् ॥ १६ ॥ मौनंवाचोदंडः अनीहाकाम्यकर्मत्यागोदेहस्य प्राणायामश्चेतसः एतेअंतस्त्रयो
दंडायस्यनसंति अंगहेउद्धव अंगेधृतैर्वेणुभिरितिवा ॥ १७ ॥ चतुर्ष्विति ब्राह्मणेष्वेववृत्तिभेदेनचतुर्विधेषु पूर्वपूर्वासंभवेचविगर्ह्यान्अभि
शस्तपतितान् असंक्लृप्तान्अत्रायंलाभोभविष्यतीतिपूर्वमनुद्दिष्टान् ॥ १८ ॥ बहिर्ग्रामात् पावितंप्रोक्षणादिभिःशोधितं विभज्यविष्णुब्र
ह्मार्कभूतेभ्यः अशेषमित्यधिकाहरणंनिरस्तं याचितमितिपाठेमाधुकरेणयाचितमन्नंचेत्तर्हिविभज्यभुंजीतनत्वयाचितादिभैक्ष्यचतुष्टयमि

दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंपिबेज्जलम् ॥ सत्यपूतांवदेद्वाचंमनःपूतंसमाचरेत् ॥ १६ ॥ मौनानीहानिलाया
मादंडावाग्देहचेतसाम् ॥ नह्येतेयस्यसंत्यंगवेणुभिर्नभवेद्यतिः ॥ १७ ॥ भिक्षांचतुर्षुवर्णेषुविगर्ह्यान्विवर्ज
यंश्चरेत् ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेनतावता ॥ १८ ॥ बहिर्जलाशयंगत्वातत्रोपस्पृश्यवाग्यतः ॥
विभज्यपावितंशेषंभुंजीताशेषमाहृतम् ॥ १९ ॥ एकश्चरेन्महीमेतांनिःसंगःसंयतेंद्रियः ॥ आत्मक्रीडआ
त्मरतआत्मवान्समदर्शनः ॥ २० ॥ विविक्तक्षेमशरणोमद्भावविमलाशयः ॥ आत्मानंचिंतयेदेकमभेदेनम
यामुनिः ॥ २१ ॥ अन्वीक्षेतात्मनोबंधंमोक्षंचज्ञाननिष्ठया ॥ बंधइंद्रियविक्षेपोमोक्षएषांचसंयमः ॥ २२ ॥
तस्मान्नियम्यषड्वर्गंमद्भावेनचरेन्मुनिः ॥ विरक्तःक्षुल्लकामेभ्योलब्ध्वात्मनिसुखंमहत् ॥ २३ ॥ पुरग्रामव्र
जान्सार्थान्भिक्षार्थंप्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्रमवतींमहीम् ॥ २४ ॥ वानप्रस्थाश्रमपदे
ष्वभीक्ष्णंभैक्ष्यमाचरेत् ॥ संसिध्यत्याश्वसंमोहःशुद्धसत्वःशिलांधसा ॥ २५ ॥

त्यर्थः माधुकरेतुनैवेद्यंभैक्ष्येनान्येषुविद्यते ॥ नैवेद्यकंक्षिपेदप्सुत्रितयंभौतिकंबहिरितिस्मृतेः यद्वातदानींकेनापियाचितंचेत्तन्मध्येतस्मै
किंचिद्विभज्यदत्वेत्यर्थः ॥ १९ ॥ किंच एकश्चरेदिति आत्मन्येवक्रीडाकौतुकंयस्यसः आत्मन्येवचरतस्तुष्टः आत्मवान् धीरः ॥ २० ॥
विविक्तंविजनंक्षेमंनिर्भयंशरणंस्थानंयस्यसः मयिभावेनविमलआशयोयस्यसः ॥ २१ ॥ बंधंमोक्षंच केनबंधःकेनवामोक्षइतितावाह बंध
इति ॥ २२ ॥ २३ ॥ पुराणिहट्टादिमंति ग्रामास्तद्रहिताः व्रजागोष्ठानितान् सार्थान्यात्रिकजनसमूहान् ॥ २४ ॥ यतःशिलवृत्त्याप्रा
प्तेनतदीयेनांधसाअन्नेनशुद्धत्त्वःसन्निवृत्तमोहःसंसिध्यतिमुच्यते ॥ २५ ॥ ॥ ॥

ननुमिष्टान्नंविहायकथंशिलान्नेप्रवृत्तिःस्यादतआह नैतदिति एतत्दृश्यमानंमिष्टान्नादिवस्तुतयानपश्येत् यतोविनश्यति अतइहामुत्रचलो
केअसक्तचित्तःसंश्चिकीर्षितात्तदर्थंकृत्याद्विरमेत् ॥ २६ ॥ ननुतथापियावद्विनाशंसुखहेतुत्वात्ताश्चिंतावतःकुतोविरागःस्यात्तत्राह यदेत
दिति एतज्जगत्ममतास्पदंमनोवाक्प्राणैः संहतंसहितमहंकारास्पदंशरीरंचसर्वंतज्जन्यंसुखंचआत्मानिमायामात्रमितितर्केणस्वप्नादिदृष्टांते
नत्यक्त्वास्वस्थआत्मनिष्ठःसंस्तत्नस्मरेन्नाचिंतयेत् ॥ २७ ॥ एवंबहूदकादिधर्मानुक्त्वापरमहंसधर्मानाह ज्ञाननिष्ठइतिसार्द्धैर्दशभिःबहिर्वि
रक्तोमुमुक्षुः सन्ज्ञाननिष्ठोवामोक्षेऽप्यनपेक्षोमद्भक्तोवासलिंगांस्त्रिदंडादिसहितानाश्रमांस्तद्धर्मांस्त्यक्त्वातदासक्तिंत्यक्त्वायथोचितंधर्मंचरेदि

**नैतद्वस्तुतयापश्येद्दृश्यमानंविनश्यति ॥ असक्तचित्तोविरमेदिहामुत्रचिकीर्षितात् ॥ २६ ॥ यदेतदात्म निजगन्मनोवाक्प्राणसंहतं ॥ सर्वंमयेतितर्केणस्वस्थस्त्यक्त्वानतत्स्मरेत् ॥ २७ ॥ ज्ञाननिष्ठोविरक्तोऽवा मद्भक्तोवाऽनपेक्षकः ॥ सलिंगानाश्रमांस्त्यक्त्वाचरेदविधिगोचरः ॥ २८ ॥ बुधोबालकवत्क्रीडेत्कुशलो जडवच्चरेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यांनैगमश्चरेत् ॥ २९ ॥ वेदवादरतोनस्यान्नपाखंडीनहैतुकः ॥ शुष्कवादविवादेनकंचित्पक्षंसमाश्रयेत् ॥ ३० ॥ नोद्विजेतजनाद्धीरोजनंचोद्वेजयेन्नतु ॥ अतिवादांस्ति तिक्षेतनावमन्येतकंचन ॥ देहमुद्दिश्यपशुवद्वैरंकुर्यान्नकेनचित् ॥ ३१ ॥ एकएवपरोह्यात्माभूतेष्वात्मन्य वस्थितः ॥ यथेंदुरुदपात्रेषुभूतान्येकात्मकानिच ॥ ३२ ॥ ॥ ॥ ॥**

त्यर्थःनपुनरत्यंतत्यागएवविवक्षितः पुनर्धर्मविधानात् अक्रियस्योत्तराध्यायेवक्ष्यमाणत्वाच्च तर्हिपूर्वस्मात्कोविशेषस्तमाह अविधिगोचरः
विधिकिंकरोनस्यादिति एतदेवस्फुटीकरिष्यति शौचमाचमनंस्नानंनतुचोदनयाचरेदित्यादिना ॥ २८ ॥ कथंचरेत्तदाह बुधःविवेकवा
नपिबालकवत्मानावमानाविवेकशून्यः कुशलोनिपुणोऽपिजडवत्फलानुसंधानाभावेन विद्वान्पंडितोऽप्युन्मत्तवल्लोकरंजनाभावेन नै
गमोवेदार्थनिष्ठोऽपिगोचर्यामनियताचारमिव ॥ २९ ॥ वेदवादरतःकर्मकांडव्याख्यानादिनिष्ठः पाखंडीश्रुतिस्मृतिविरुद्धधर्मानुष्ठान
वान् हैतुकःकेवलतर्कनिष्ठः शुष्कवादेनिष्प्रयोजनगोष्ठ्यांयोविवादस्तस्मिन् ॥ ३० ॥ अतिवादान्दुरुक्तानि ॥ ३१ ॥ आत्मदृष्ट्याता
वद्वैरकारणंनास्तीत्युक्तमेकएवेति देहदृष्ट्याऽपिनास्तीत्याह भूतानिचदेहाअपिकारणरूपेणैकात्मकानि ॥ ३२ ॥

दैवतंत्रितंदैवाधीनंयतः ॥ ३३ ॥ अलंतर्हिभिक्षाप्रयत्नेनापितत्राह आहारमात्रार्थंसमीहेतैव यतः तस्यप्राणधारणंयुक्तंसम्यक् कथंतेनप्रा
णधारणेनतत्त्वंविचार्यते किंतेनापितदाह तद्विज्ञायेति ॥ ३४ ॥ तर्हिकिंमिष्टान्नादिकमग्राह्यमेवनैवमुक्तमित्याह यदृच्छयेति ॥ ३५ ॥
यथाऽहमीश्वरोलीलयाचरामितथाज्ञानीज्ञाननिष्ठः अनासक्तःकुर्यात्नतुविधिकिंकरत्वेन तस्यज्ञाननिष्ठाविरोधादित्यर्थः ॥ ३६ ॥ कुतो
विधिकिंकरत्वाभावस्तस्यतत्राह नहितस्यविकल्पाख्याभेदप्रतीतिः नन्वस्तिसा सत्यं याचासीत्साऽपिमद्दीक्षयाज्ञानेनहतानतुनहतापुन
र्दृश्यमानत्वात्तत्राह आदेहांतात्क्वचित्कदाचित्बाधितैवख्यातिर्भवति ॥ ३७ ॥ तदेवंविरक्तस्यपरोक्षज्ञानवतःसंन्यासंतद्धर्मांश्चोक्त्वा

अलब्ध्वानविषीदेतकालेकालेऽशनंक्वचित् ॥ लब्ध्वानहृष्येद्धृतिमानुभयंदैवतंत्रितम् ॥ ३३ ॥ आहारार्थं
समीहेतयुक्तंतत्प्राणधारणं ॥ तत्त्वंविमृष्यतेतेनतद्विज्ञायविमुच्यते ॥ ३४ ॥ यदृच्छयोपपन्नान्नमद्याच्छ्रे
ष्ठमुतापरं ॥ तथावासस्तथाशय्यांप्राप्तंप्राप्तंभजेन्मुनिः ॥ ३५ ॥ शौचमाचमनंस्नानंनतुचोदनयाचरेत् ॥
अन्यांश्चनियमान्ज्ञानीयथाऽहंलीलयेश्वरः ॥ ३६ ॥ नहितस्यविकल्पाख्यायाचमद्वीक्षयाहता ॥ आदेहां
तात्क्वचित्ख्यातिस्ततःसंपद्यतेमया ॥ ३७ ॥ दुःखोदर्केषुकामेषुजातनिर्वेदआत्मवान् ॥ अजिज्ञासितम
द्धर्मोगुरुंमुनिमुपाव्रजेत् ॥ ३८ ॥ तावत्परिचरेद्भक्तःश्रद्धावाननसूयकः ॥ यावद्ब्रह्मविजानीयान्मामेवगुरु
मादृतः ॥ ३९ ॥ यस्त्वसंयतषड्वर्गःप्रचंडेंद्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदंडमुपजीवति ॥ ४० ॥ सु
रानात्मानमात्मस्थंनिन्हुतेमांचधर्महा ॥ अविपक्वकषायोऽस्मादमुष्माच्चविहीयते ॥ ४१ ॥ भिक्षोर्धर्मःश
मोऽहिंसातपइज्यावनौकसः ॥ गृहिणोभूतरक्षेज्याद्विजस्याचार्यसेवनं ॥ ४२ ॥ ॥ ॥

केवलंवैराग्यवंतंविविदिषुंप्रत्याह दुःखोदर्केष्विति नजिज्ञासितोमद्धर्मोमत्प्राप्तिसाधनंयेनसः ॥ ३८ ॥ मामेवमद्दृष्ट्यैवगुरुंपरि
चरेत् ततःपरमेकश्चरेदित्यादिधर्मैर्वर्ततेतइतिभावः ॥ ३९ ॥ अनधिकारिणःसंन्यासंनिंदतिद्वाभ्यां यस्त्विति प्रचंडोऽत्यासक्तइंद्रियसार
थिर्बुद्धिर्यस्यसः ॥ ४० ॥ सुरान्यष्टव्यान्देवान्आत्मानंचस्वात्मानमात्मस्थंमांचनिन्हुतेप्रतारयतिनिन्हवफलमाह अस्मादिति ॥ ४१ ॥
चतुर्णांप्रधानधर्मानाह भिक्षोरिति ॥ ४२ ॥ ॥ ॥ ॥ ॥

अन्यधर्मान्कांश्चिद्गृहस्थस्याप्यतिदिशति ब्रह्मचर्यमिति शौचंरागादिराहित्यंच तस्यब्रह्मचर्यप्रकारमाह ऋतौगंतुरिति ॥ ४३ ॥ एवंभूत वर्णाश्रमधर्मफलमाह इतिमामिति दृढांमद्भक्तिंविंदते ॥ ४४ ॥ ततःकिमतआह भक्त्येति महेश्वरत्वेहेतुःसर्वोत्पत्त्यप्ययंसर्वस्योत्पत्त्यप्य यौयस्मात् अतएवतत्कारणंमामांब्रह्मरूपंवैकुंठनिवासिनं यद्वाब्रह्मणोवेदस्यकारणंमामुपयातिसामीप्येनप्राप्नोति ॥ ४५॥ ततश्चासौमुक्त एवेत्याह इतिएवंभूतेनस्वधर्मेणनिर्णिक्तंशुद्धंसत्त्वंयस्यसः अतएवनिर्ज्ञाताममगतिरैश्वर्यंयेन ॥४६ ॥ उक्तमर्थंसंक्षिप्याह यएषआचारलक्षणः पितृलोकप्राप्तिफलःसएवमद्भक्तियुतःमदर्पणेनकृतः ॥ ४७ ॥ प्रकरणार्थमुपसंहरति एतच्चतेऽभिहितं यथाभक्तोभूत्वामांपरंसंप्राप्नुयादिति

ब्रह्मचर्यंतपःशौचंसंतोषोभूतसौहृदं ॥ गृहस्थस्याप्यृतौगंतुःसर्वेषांमदुपासनं ॥ ४३ ॥ इतिमांयःस्वधर्मेण भजन्नित्यमनन्यभाक् ॥ सर्वभूतेषुमद्भावोमद्भक्तिंविंदतेऽचिरात् ॥ ४४ ॥ भक्त्योद्धवानपायिन्यासर्वलोक महेश्वरं ॥ सर्वोत्पत्त्यप्ययंब्रह्मकारणंमोपयातिसः ॥ ४५ ॥ इतिस्वधर्मनिर्णिक्तसत्त्वोनिर्ज्ञातमद्गतिः ॥ ज्ञा नविज्ञानसंपन्नोनचिरात्समुपैतिमां ॥ ४६ ॥ वर्णाश्रमवतांधर्मएषआचारलक्षणः ॥ सएवमद्भक्तियुतोनिः श्रेयसकरःपरः ॥ ४७ ॥ एतत्तेऽभिहितंसाधोभवान्पृच्छतियच्चमाम् ॥ यथास्वधर्मसंयुक्तोभक्तोमांसमि यात्परं ॥ ४८ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेअष्टादशोध्यायः ॥ १८ ॥ ॥ ॥ श्रीभग वानुवाच योविद्याश्रुतसंपन्नआत्मवान्नानुमानिकः ॥ मायामात्रमिदंज्ञात्वाज्ञानंचमयिसंन्यसेत् ॥ १ ॥

॥ ४८ ॥ इत्येकादशेटीकायामष्टादशोध्यायः ॥ १८ ॥ ॥ ज्ञानादेर्निर्णयःपूर्वंकृतोह्याश्रमधर्मतः ॥ अत्रोनविंशतितमेज्ञानादेस्त्याग उच्यते ॥ १ ॥ तदेवंतर्कतोबाधितोऽपिदेहादिप्रपंचोयावदपरोक्षानुभवेनदिङ्मोहादिरिवनलीयतेतावत्ज्ञानाभ्यासस्ततोभुक्तिरित्युक्तमादे हांतात्क्वचित्ख्यातिस्ततःसंपद्यतेमयेत्यादिना यस्यत्वपरोक्षानुभवेनप्रपंचोलीनप्रायस्तस्यनकिंचित्कृत्यमस्तीत्याह यइति विद्याअनुभ वस्तत्पर्यंतेनश्रुतेनसंपन्नः अतएवात्मवान्प्राप्तात्मतत्त्वःनानुमानिकःकेवलपरोक्षज्ञानवान्नभवति अनकारपाठेप्राक्श्रुत्यनुकूलतर्कतोनि र्णीतार्थइत्यर्थः सएतद्द्वैतंतन्निवृत्तिसाधनंचमयिमायामात्रमितिज्ञात्वाज्ञानंचतत्साधनंसंन्यसेत् अयमेवविद्वत्संन्यासोनाम ॥ १ ॥

अत्रहेतुमाह ज्ञानिनस्त्विति यस्मादहमेवतस्येष्टःअपेक्षितः स्वार्थःफलं हेतुस्तत्साधनंच संमतःस्वर्गोऽभ्युदयश्च अपवर्गःसंसारनिवृत्ति
श्च अतस्तस्यनप्राप्यंकृत्यंवाकिंचिदस्तीत्यर्थः ॥ २ ॥ अत्रविद्वदनुभवंप्रमाणयति ज्ञानेति यथोक्तंज्ञानिनमभिनंदति ज्ञानीति यतोऽसौ
ज्ञानेनमांधारयति ॥ ३ ॥ तस्यज्ञानंस्तौति तपइति अलमत्यर्थं ज्ञानस्यकलयालेशेन ॥ ४ ॥ ज्ञानेनसहितंतत्पर्यंतंयथाभवतितथाज्ञा
त्वातत्संपन्नःसन्मामेवभज अन्यत्सर्वंत्यजेत्यर्थः ॥ ५ ॥ तस्यप्रत्ययार्थंपूर्वेषांवृत्तमाह ज्ञानेति मामेवसंसिद्धिंप्राप्ताः ॥ ६ ॥ तदेवज्ञानं
संक्षेपतउपदिशति त्वयीति त्रिविधआध्यात्मिकादिर्विकारोदेहादिःसमायानतुपरमार्थः यद्यस्मात्अंतरामध्यएवापतति रज्जौसर्पमालाद्
ज्ञानिनस्त्वहमेवेष्टःस्वार्थोहेतुश्चसंमतः॥स्वर्गश्चैवापवर्गश्चनान्योऽर्थोमदृतेप्रियः ॥ २ ॥ नानविज्ञानसंसि
द्धाःपदंश्रेष्ठंविदुर्मम ॥ ज्ञानीप्रियतमोऽतोमेज्ञानेनासौबिभर्तिमां ॥ ३ ॥ तपस्तीर्थंजपोदानंपवित्राणीतरा
णिच ॥ नालंकुर्वंतितांसिद्धिंयाज्ञानकलयाकृता ॥ ४ ॥ तस्माज्ज्ञानेनसहितंज्ञात्वास्वात्मानमुद्धव ॥ ज्ञान
विज्ञानसंपन्नोभजमांभक्तिभावतः ॥ ५ ॥ ज्ञानविज्ञानयज्ञेनमामिष्ट्वात्मानमात्मनि ॥ सर्वयज्ञपतिंमावै
संसिद्धिंमुनयोऽगमन् ॥ ६ ॥ त्वय्युद्धवाश्रयतियस्त्रिविधोविकारोमायांऽतरापततिनाद्यपवर्गयोर्यत् ॥ ज
न्मादयोऽस्ययदमीतवतस्यकिंस्युराद्यंतयोर्यदसतोस्तितदेवमध्ये ॥ ७ ॥ उद्धवउवाच ज्ञानंविशुद्धंविपु
लंयथैतद्वैराग्यविज्ञानयुतंपुराणं ॥ आख्याहिविश्वेश्वरविश्वमूर्तेत्वद्भक्तियोगंचमहद्विमृग्यं ॥ ८ ॥ तापत्रयेणा
भिहतस्यघोरेसंतप्यमानस्यभवाध्वनीश ॥ पश्यामिनान्यच्छरणंतवांघ्रिद्वंद्वातपत्रादमृताभिवर्षात् ॥ ९ ॥
वत्नाद्यपवर्गयोर्नत्वादावंतेचास्ति अतःयत्यदाअस्यविकारस्यामीजन्मादयःस्युस्तदातस्यतवाधिष्ठानभूतस्यकिंनकिंचिदित्यर्थः ननुत
स्यापिवस्तुतोनसंतितस्यासत्त्वादित्याह आद्यंतयोरिति असतःसर्पादेःआद्यंतयोर्यदस्तिरज्ज्वादितदेवमध्येऽपिनतुसर्पादितद्वदयंविकारो
नास्तीत्यर्थःयद्वा आद्यंतयोर्यदस्तितन्मध्येऽप्यस्त्येव नतस्यजन्मादयःसंतिअतस्त्वंनिर्विकारंब्रह्मेति ॥ ७ ॥ ज्ञानादेर्विशेषंजिज्ञासुःपृच्छति
ज्ञानमिति विशुद्धमेतत्ज्ञानंविपुलंयथाभवतितथाकथयेति महद्भिर्ब्रह्मादिभिर्मृग्यं ॥ ८ ॥ महद्विमृग्यत्वमभिनयेनाह तापत्रयेणेतितापत्रयेण
आध्यात्मादिनाअभिहतस्यअतःसंतप्यमानस्यअंघ्रिद्वंद्वमेवातपत्रंतस्मात् नकेवलमातपात्त्रातुःकिंतुअमृतमप्यभितोवर्षतियत्तस्मात् ॥ ९ ॥

अतिरूपामुत्पादयन्नाह दष्टमिति अस्मिन्बिलेसंसारकूपेपतितंतत्रचकालाहिनादष्टमेवमपिक्षुद्रसुखेष्वेवउरुस्तर्षस्तृष्णायस्यतम् दह्यमा
नःकथंसमुद्धरणीयइतिचेत्तत्राह आपवर्ग्यैरपवर्गबोधकैर्वागमृतैरासिंचेति ॥ १० ॥ तद्दिश्रुत्वासार्थंविहत्सभायांनिर्णीतमहंवक्ष्यामीत्याशये
नाह इत्थमिति ॥ ११ ॥ १२ ॥ ज्ञानादिभिरुपबृंहितान्तत्सहितानित्यर्थः ॥ १३ ॥ तत्रज्ञानंकथयति नवेति प्रकृतिपुरुषमहदहंकारपं
चतन्मात्राणिएकादशेंद्रियाणिपंचमहाभूतानित्रयोगुणाः एतान्भावानष्टाविंशतितत्त्वानिभूतेषुब्रह्मादिस्थावरांतेषुकार्येषुअनुगतानियेन
ज्ञानेनेक्षेत अथएष्वपिभावेषुएकंपरमात्मतत्त्वमनुगतंयेनेक्षेत कार्यकारणात्मकंजगत्परमकारणात्मकमेवैतत्नतुततःपृथगितियेनपश्य

दष्टंजनंसंपतितंबिलेस्मिन्कालाहिनाक्षुद्रसुखोरुतर्षं ॥ समुद्धरैनंकृपयापवर्ग्यैर्वचोभिरासिंचमहानुभाव ॥
॥ १० ॥ श्रीभगवानुवाच इत्थमेतत्पुराराजाभीष्मंधर्मभृतांवरम् ॥ अजातशत्रुःपप्रच्छसर्वेषांनोनुशृ
ण्वताम् ॥ ११ ॥ निवृत्तेभारतेयुद्धेसुहृन्निधनविह्वलः ॥ श्रुत्वाधर्मान्बहून्पश्चान्मोक्षधर्मानपृच्छत ॥१२॥
तानहंतेऽभिधास्यामिदेवव्रतमुखाच्छ्रुतान् ॥ ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥ १३ ॥ नवै
कादशपंचत्रीन्भावान्भूतेषुयेनवै ॥ ईक्षेताथैकमप्येषुतज्ज्ञानंममनिश्चितम् ॥ १४ ॥ एतदेवहिवि
ज्ञानंनतथैकेनयेनयत् ॥ स्थित्युत्पत्त्यप्ययान्पश्येद्भावानांत्रिगुणात्मनां ॥ १५ ॥ ॥

तितज्ज्ञानमित्यर्थः ॥ १४ ॥ विज्ञानमाह एतदेवेतिश्लोकार्धेन यत्र्यदायेनैकेनानुगतानेकात्मकान्भावान्पूर्वमैक्षततांस्तथापूर्ववन्नेक्षेत
किंतुतदेकंपरमकारणंब्रह्मैव तदाएतदेवविज्ञानमुच्यते एतदुक्तंभवति परोक्षज्ञानेनापरोक्षभ्रमस्यदिङ्मोहादिष्विवनिवृत्त्यभावात्तदात्मकं
जगत्पश्यंस्तथात्मनःपृथक्सदितिमन्यतेअपरोक्षज्ञानेतुबाधितमेवजीवन्मुक्तःसंस्कारशेषंपश्यतिअतःपरोक्षापरोक्षज्ञानेज्ञानविज्ञानशब्दा
भ्यामुच्येतेइति एकेसर्वकार्याणामनुगतिकार्याणांपृथगसत्त्वंचोपपादयतिसार्द्धेन तत्रयदिनकदाचिदनीदृशंजगदित्यादिमतेनैतेषांभावा
नामुत्पत्त्यादयोनस्युस्तर्हिकारणस्यैकस्याभावादेकात्मतामिथ्यात्वंचनस्यात्अतस्तेषामुत्पत्त्यादीन्साधयति स्थितीति त्रिगुणात्मनांसाव
यवानामित्यर्थः विमताभावाउत्पत्त्यादिमंतःसावयवत्वात् घटादिवदितिपश्येत् ॥ १५ ॥ ॥ ॥

ततआदौउत्पत्तौअंतेपरिणामांतरापत्तौ चकारणत्वेनमध्येचाश्रयत्वेनसृज्यात्सृज्यंकार्यात्कार्यांतरंप्रतियदन्वियादनुगच्छेत्तत्प्रातिसंक्रामेते
षांप्रलयेचयदवशिष्येततदेवसदितिपश्येदित्यर्थः ॥ १६ ॥ वैराग्यमाह श्रुतिरितिद्वाभ्यां श्रुतिर्नेहनानास्तिकिंचनेत्यादिः प्रत्यक्षंपटा
दिकार्यंतंत्वादिव्यतिरेकेणनदृश्यते चैतन्यव्यतिरेकेणचनकिंचिद्दृश्यतइति ऐतिह्यंमहाजनप्रसिद्धिः अनुमानंविमतंमिथ्यादृश्यत्वात् शु
क्तिरजतादिवदित्यादि एवंप्रमाणचतुष्टयं एतेष्वनवस्थानात् एतैर्बाधितत्वात् सएवंसर्वानुगतंसत्यमात्मतत्त्वंपश्यन् विकल्पस्यचमिथ्यात्वा
त्ततोविरज्यतेविरक्तोभवतीत्यर्थः ॥ १७ ॥ ननुवेदोक्तस्वर्गादिसुखाशयानविरज्येतेत्याह कर्मणामिति आविरिंचात् ब्रह्मलोकपर्यंतमदृष्ट

आदावंतेचमध्येचसृज्यात्सृज्यंयदन्वियात् ॥ पुनस्तत्प्रतिसंक्रामेयच्छिष्येततदेवसत् ॥ १६ ॥ श्रुतिः
प्रत्यक्षमैतिह्यमनुमानंचतुष्टयं ॥ प्रमाणेष्वनवस्थानाद्विकल्पात्सविरज्यते ॥ १७ ॥ कर्मणांपरिणामि
त्वादाविरिंचादमंगलं ॥ विपश्चिन्नश्वरंपश्येददृष्टमपिदृष्टवत् ॥ १८ ॥ भक्तियोगःपुरैवोक्तःप्रीयमाणाय
तेऽनघ ॥ पुनश्चकथयिष्यामिमद्भक्तेःकारणंपरम् ॥ १९ ॥ श्रद्धाऽमृतकथायांमेशश्वन्मदनुकीर्तनं ॥ परि
निष्ठाचपूजायांस्तुतिभिःस्तवनंमम ॥ २० ॥ आदरःपरिचर्यायांसर्वांगैरभिवंदनं ॥ मद्भक्तपूजाभ्यधिकास
र्वभूतेषुमन्मतिः ॥ २१ ॥ मदर्थेष्वंगचेष्टाचवचसामद्गुणेरणं ॥ मय्यर्पणंचमनसःसर्वकामविवर्जनं ॥ २२ ॥
मदर्थेऽर्थपरित्यागोभोगस्यचसुखस्यच ॥ इष्टंदत्तंहुतंजप्तंमदर्थंयद्व्रतंतपः ॥ २३ ॥ एवंधर्मैर्मनुष्याणामुद्ध
वात्मनिवेदिनां ॥ मयिसंजायतेभक्तिःकोन्योर्थोस्यावशिष्यते ॥ २४ ॥ ॥ ॥ ॥

मपिसुखममंगलंदुःखरूपंनश्वरंपश्येत् ॥ १८ ॥ भक्तियोगंसकारणमाह भक्तियोगःपूर्वमुक्तएवतथाऽपितस्मिन्प्रीतिंप्राप्नुवतेतुभ्यंपुनश्च
कथयिष्यामि ॥ १९ ॥ श्रद्धाश्रवणादरः शश्वदितिसर्वत्रानुषज्जते मदनुकीर्तनंश्रवणानंतरंमत्कथान्याख्यानमित्यर्थः ॥ २० ॥ २१ ॥
अंगचेष्टालौकिकीक्रिया वचसालौकिकेनापिमद्गुणानामीरणंकथनं ॥ २२ ॥ मदर्थेमद्भजनार्थं तद्विरोधिनोऽर्थस्यपरित्यागः भोगस्य
तत्साधनस्यचंदनादेः सुखस्यपुत्रोपलालनादेः इष्टादिवैदिकंयत्कर्मतदपिमदर्थंकृतंभक्तेःकारणमित्यर्थः २३ ॥ भक्तिःप्रेमलक्षणासंजा
यते अस्यभक्तस्यअन्यःकोऽर्थःसाधनरूपःसाध्यरूपोवाऽवशिष्यते सर्वोऽपिस्वतएवभवतीत्यर्थः ॥ २४ ॥ ॥

तदेवाह किंबहुनाचित्तमेवांतर्बहिर्निष्ठमर्थानर्थयोःकारणमित्याह यदात्मनीतिद्वाभ्यां यदाआत्मानिमयिईश्वरेचित्तमार्पितंतदापुमान्ध र्मा दीन्प्राप्नोत्येव ॥ २५ ॥ एतदेवव्यतिरेकेणद्रढयति यत्नयदाताच्चित्तंविकल्पेदेहगृहादावर्पितंसत्परिधावातितदाधिकंरजस्वलमसान्निष्ठंचभ वतितत्श्वविपर्ययमधर्मादिकंविद्धि ॥ २६ ॥ स्वाभिप्रेतान्धर्मादीन्व्याचष्टे धर्मोमद्भक्तिकृत् ततएवप्रोक्तःप्रकृष्टउक्तःशास्त्रेषु ॥ २७ ॥ धर्मादीनांमहाजनप्रसिद्धानामन्यथाव्याख्यातत्वाद्यमादिष्वपिसंख्यातःस्वरूपतोवाकिंचिद्वैलक्षण्यंस्यादित्येवंसंभावनयाताद्विशेषंजिज्ञासुः

यदात्मन्यर्पितंचित्तंशांतंसत्त्वोपबृंहितम् ॥ धर्मंज्ञानंसवैराग्यमैश्वर्यंचाभिपद्यते ॥ २५ ॥ यदर्पितंतद्विकल्पे इंद्रियैःपरिधावति ॥ रजस्वलंचासन्निष्ठंचित्तंविद्धिविपर्ययम् ॥ २६ ॥ धर्मोमद्भक्तिकृत्प्रोक्तोज्ञानंचैकात्म्यद र्शनम् ॥ गुणेष्वसंगोवैराग्यमैश्वर्यंचाणिमादयः ॥ २७ ॥ उद्धवउवाच यमःकतिविधःप्रोक्तोनियमोवाऽ रिकर्शन ॥ कःशमःकोदमःकृष्णकातितिक्षाधृतिःप्रभो ॥ २८ ॥ किंदानंकिंतपःशौर्यंकिंसत्यमृतमुच्यते ॥ क स्त्यागःकिंधनंचेष्टंकोयज्ञःकाचदक्षिणा ॥ २९ ॥ पुंसःकिंस्विद्बलंश्रीमन्भगोलाभश्चकेशव ॥ काविद्याह्रीः पराकाश्रीःकिंसुखंदुःखमेवच ॥ ३० ॥ कःपंडितःकश्चमूर्खःकःपंथाउत्पथश्चकः ॥ कःस्वर्गोनरकःकःस्वित्को बंधुरुतकिंगृहम् ॥ ३१ ॥ कआढ्यःकोदरिद्रोवाकृपणःकःकईश्वरः ॥ एतान्प्रश्नान्ममब्रूहिविपरीतांश्चस त्पते ॥ ३२ ॥ श्रीभगवानुवाच अहिंसासत्यमस्तेयमसंगोह्रीरसंचयः ॥ आस्तिक्यंब्रह्मचर्यंचमौनंस्थैर्यंक्ष माभयम् ॥ ३३ ॥ शौचंजपस्तपोहोमःश्रद्धातिथ्यंमदर्चनं ॥ तीर्थाटनंपरार्थेहातुष्टिराचार्यसेवनं ॥ ३४ ॥

पृच्छति यमइतिपंचभिः ॥ २८ ॥ इष्टमभ्यर्हितंधनंचकिं ॥ २९ ॥ परेतिविद्यादीनांविशेषणं श्रीर्मंडनं ॥ ३० ॥ ३१ ॥ प्रश्नान्पृष्टा नर्थान् विपरीतान्अशमादीन् ॥ ३२ ॥ यमनियमानाह अहिंसेतित्रिभिः अस्तेयंमनसाऽपिपरस्वाग्रहणं आस्तिक्यंधर्मेविश्वासः ॥ ॥ ३३ ॥ शौचंबाह्यमाभ्यंतरंचेतिद्वयं अतोद्वादशानियमाः श्रद्धाधर्मादरः ॥ ३४ ॥ ॥ ॥

उभयोःश्लोकयोर्येस्मृतास्तेयमानियमाश्च यद्वा उभयोःप्रवृत्तनिवृत्तयोः मुमुक्षोर्यमामुख्याःसकामस्यनियमामुख्याःस्मृताइत्यर्थः अत्र हेतु
माह हियस्मात् उपासिताःसेविताःसंतःपुंसांप्रवृत्तानांनिवृत्तानांचयथाकामंकामानुसारेणमोक्षमभ्युदयंचदुहंतीति ॥ ३५ ॥ मुमुक्षोरुपादे
यान्शमादीन्हेयांश्चदुःखादीन्महाजनप्रसिद्धेभ्योविलक्षणानाह शमइत्यादिनायावत्समाप्ति एतेनैवतद्विपरीताअशमादयोऽप्युन्नेयाः
शमोमन्निष्ठताबुद्धेर्नतुशांतिमात्रं दमइंद्रियसंयमोनचौरादिदमनं तितिक्षाविहितदुःखस्यसंमर्षःसहनंनभारादेः जिव्होपस्थयोर्जयोवेगधा
रणंधृतिर्नत्वनुद्वेगमात्रं ॥ ३६ ॥ दंडोभूतद्रोहस्तस्यत्यागोदानंनधनार्पणं कामत्यागोभोगोपेक्षातपोनकृच्छ्रादि स्वभावोवासनातस्यज
यःप्रतिबंधःशौर्यंनविक्रांतिः समंब्रह्मतस्यदर्शनमालोचनंसत्यविषयत्वात्सत्यंनयथार्थभाषणमात्रं ॥ ३७ ॥ अन्यच्चऋतंसूनृतासत्याप्रि

एतेयमाःसनियमाउभयोर्द्वादशस्मृताः ॥ पुंसामुपासितास्तातयथाकामंदुहंतिहि ॥३५॥ शमोमन्निष्ठताबु
द्धेर्दमइंद्रियसंयमः ॥ तितिक्षादुःखसंमर्षोजिव्होपस्थजयोधृतिः ॥ ३६॥ दंडन्यासःपरंदानंकामत्यागस्तपः
स्मृतं ॥ स्वभावविजयःशौर्यंसत्यंचसमदर्शनं ॥ ३७॥ ऋतंचसूनृतावाणीकविभिःपरिकीर्तिता ॥ कर्मस्वसं
गमःशौचंत्यागःसंन्यासउच्यते ॥३८॥ धर्मइष्टंधनंनृणांयज्ञोऽहंभगवत्तमः ॥ दक्षिणाज्ञानसंदेशःप्राणाया
मःपरंबलं ॥ ३९ ॥ भगोमऐश्वरोभावोलाभोमद्भक्तिरुत्तमः ॥ विद्यात्मनिभिदाबाधोजुगुप्साह्रीरकर्मसु
॥ ४० ॥ श्रीर्गुणानैरपेक्ष्याद्याःसुखंदुःखसुखात्ययः ॥ दुःखंकामसुखापेक्षापंडितोबंधमोक्षवित् ॥ ४१ ॥

याचवाक् एवंचऋतसत्ययोःस्फुटएवाविवेकः क्रमप्राप्तंत्यागंव्याख्यातुमादौततोऽर्थभेदेनशौचंव्याचष्टे तस्यापिमलत्यागरूपत्वेत्यागाभे
दप्रतीतेः कर्मसुअसंगमःअनासक्तिःशौचं त्यागस्तुसंन्यासइतितयोर्भेदइत्यर्थः ॥ ३८ ॥ नृणामिष्टंधनंधर्मःनपश्वादिसाधारणं भगवत्तमःप
रमेश्वरोऽहमेवयज्ञः मद्बुद्ध्यायज्ञोऽनुष्ठेयोनक्रियाबुद्ध्येत्यर्थः यज्ञार्थंदानंदक्षिणासाचज्ञानोपदेशोनहिरण्यादिदानं तेनहियज्ञरूपोविष्णुः
प्राप्यते दुर्दमदमनंबलंतच्चमनोदमनरूपत्वात् प्राणायामइति ॥ ३९ ॥ लाभंव्याचिख्यासुःप्रथमंभगंततोभेदेनव्याचष्टे लोकेतयोरभेदप्रसि
द्धेः भगोभाग्यंतच्चमेऐश्वरोभावोमदीयमैश्वर्यादिषाड्गुण्यमित्यर्थः उत्तमोलाभस्तुमद्भक्तिर्नपुत्रादिः विद्याचात्मनिप्रतीतस्यभेदस्यबाधोन
ज्ञानमात्रं अकर्मसुजुगुप्साहेयत्वदर्शनंह्रीर्नलज्जामात्रं ॥ ४० ॥ गुणाएवश्रीर्मंडनंनकिरीटादि दुःखसुखयोरत्ययोऽतिक्रमःअननुसंधानं
सुखंनभोगः विषयभोगापेक्षैवदुःखंनाग्निदाहादि बंधंमोक्षंद्वयंचयोवेत्तिसपंडितोनविद्वन्मात्रं ॥ ४१ ॥ ॥

अहंबुद्धिरित्युपलक्षणं देहगेहादिष्वहंममेत्यभिमानवामूर्खइत्यर्थः मन्निगमःमांनितरांगमयतिप्रापयतियोनिवृत्तिमार्गःसतुपंथाःसन्मार्गो नकंटकादिशून्यः चित्तविक्षेपःप्रवृत्तिमार्गःसउत्पथःकुमार्गोनतुचौराद्याकुलः सत्त्वगुणस्योदयउद्रेकःस्वर्गोनेंद्रादिलोकः ॥ ४२ ॥ तम सउन्नाहउद्रेकःसनरकोनतामिस्रादिः गुरुरेवबंधुर्नभ्रात्रादिः सचाहमेवयथाऽहंजगद्गुरुः एकएवपरोबंधुर्विषमेसमुपास्थिते ॥ गुरुःसकल धर्मात्मायत्राकिंचनगोहरिरिति ससाधनंभोगायतनंगृहंतच्चमानुष्यंमानुषरूपंशरीरमेवनहर्म्यादि गुणैःसंपन्नअढ्यउच्यतेनधनी ॥ ४३ ॥ असंतुष्टोयःसदरिद्रोननिःस्वः योऽजितेंद्रियःसकृपणःशोच्योनदीनः विषयेष्वनासक्तधीर्यःसईशःस्वतंत्रोनराजादिः गुणसंगःगुणेषुसंगो यस्यसविपर्ययः अनीशःएतच्चशमादिविपर्ययोपलक्षणार्थं ॥ ४४ ॥ उपसंहरति एतइति साधुमोक्षोपयोगितया एतच्चसर्वंगुणदोषयो र्विवेकायोद्धवेनपृष्टमितितयोःसंक्षेपतोलक्षणमाह किंबहुनावर्णितेनगुणदोषयोर्लक्षणमेतावदेवतदाह गुणदोषयोर्दृशिर्दर्शनंदोषःगुणस्तुत

**मूर्खोदेहाद्यहंबुद्धिःपंथामन्निगमःस्मृतः ॥ उत्पथश्चित्तविक्षेपःस्वर्गःसत्त्वगुणोदयः ॥ ४२ ॥ नरकस्तमउन्ना होबंधुर्गुरुरहंसखे॥ गृहंशरीरंमानुष्यंगुणाढ्योह्याढ्यउच्यते॥ ४३ ॥ दरिद्रोयस्त्वसंतुष्टःकृपणोयोजितेंद्रियः ॥ गुणेष्वसक्तधीरीशोगुणसंगोविपर्ययः ॥ ४४ ॥ एतउद्धवतेप्रश्नाःसर्वेसाधुनिरूपिताः ॥ किंवर्णितेनबहुना लक्षणंगुणदोषयोः॥ गुणदोषदृशिर्दोषोगुणस्तूभयवर्जितः॥ ४५ ॥ इ०भा०महा०एकाद० भगवदुद्धवसंवा देएकोनविंशोध्यायः ॥ १९ ॥ उद्धवउवाच विधिश्चप्रतिषेधश्चनिगमोहीश्वरस्यते॥ अवेक्षतेऽरविंदाक्षगु णदोषंचकर्मणां॥ १ ॥ वर्णाश्रमविकल्पंचप्रतिलोमानुलोमजम्॥ द्रव्यदेशवयःकालान्स्वर्गंनरकमेवच ॥ २ ॥**

दुभयदर्शनविवर्जितस्वभावइति ॥ ४५ ॥ इत्येकादशेटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशेयोगत्रयंप्रोक्तंभक्तिज्ञानाक्रिया त्मकं ॥ गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥ १ ॥ गुणदोषदृशिर्दोषोगुणस्तूभयवर्जितइत्युक्तंतदाक्षिपति विधिश्चेतिपंचभिः विधिश्चप्रतिषेधश्चेश्वरस्यतवनिगमआज्ञारूपोवेदः सचविधेयानांप्रतिषेध्यानांचकर्मणांगुणदोषंपुण्यपापफलरूपमवेक्षते ॥ १ ॥ उ त्तमाधमभावेनतदधिकारिणांवर्णानामाश्रमाणांविकल्पंभेदंचगुणदोषरूपमवेक्षते प्रतिलोमानुलोमजंचगुणदोषंचतथैवावेक्षते प्रतिलोम जाःउत्तमवर्णासुस्त्रीषुहीनवर्णेभ्यःपुरुषेभ्योजाताःसूतवैदेहकादयः अनुलोमजास्तुउत्तमवर्णेभ्यःपुरुषेभ्योहीनवर्णासुस्त्रीषुजातामूर्धावसि क्तांबष्ठादयस्तेषांच असत्संतस्तुविज्ञेयाःप्रतिलोमानुलोमजाइतिगुणदोषौ द्रव्यादीन्कर्मार्हतानर्हताभ्याम् स्वर्गंनरकंचतत्फलतयागुण दोषरूपमेवावेक्षते एतच्चोत्तराध्यायेप्रपंचयिष्यते ॥ २ ॥ ॥ ॥ ॥

तथापिप्रस्तुतेकिमायातमतआह गुणदोषेति गुणदोषदृशिर्दोषइतिनिराकृतत्वात्गुणदोषभिदादृष्टिमंतरेणतांविनानिषेधविधिलक्षणंतववचःकथं तच्चवचोंऽतरेणनृणांनिःश्रेयसंकथंस्यात्तत्रापिश्रोतव्योमंतव्यइतिसाधनाविधेर्नानुध्यायेद्बहून्शब्दान्वाचोविग्लापनंहितदित्यादिनिषेधस्यचावश्यकत्वादितिभावः यद्वा गुणदोषभिदादृष्टिमंतरेणनिषेधविधिलक्षणंतववचोविनेतिसामानाधिकरण्यमेवास्तु यद्वा गुणदोषभिदादृष्टिमंतरेणनिषेधविधिलक्षणमपिवचःकथंनुतत्त्वमस्यादिवाक्यवन्निःश्रेयसपरंस्यात् सर्वस्यवेदस्यतत्परत्वांगीकारादित्यर्थः॥
॥ ३ ॥ ननुपितरोदेवाश्चसर्वज्ञाःप्रत्यक्षतोदृष्ट्वामनुष्येभ्यःकथयिष्यंतिनेत्याह पित्रादीनांसर्वेषांतवत्वद्वाक्यरूपोवेदएवतुश्रेयःश्रेष्ठंचक्षुःप्रमापकम् कअनुपलब्धेऽर्थेमोक्षेस्वर्गादौच तथासाध्यसाधनयोःइदमस्यसाध्यमिदमस्यसाधनमित्यत्रापि तदेवंगुणदोषदृष्ट्यभावेनिः

गुणदोषभिदादृष्टिमंतरेणवचस्तव ॥ निःश्रेयसंकथंनृणांनिषेधविधिलक्षणम् ॥ ३ ॥ पितृदेवमनुष्याणांवेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेऽर्थेसाध्यसाधनयोरपि ॥ ४ ॥ गुणदोषभिदादृष्टिर्निगमात्तेनहिस्वतः॥ निगमेनापवादश्चभिदायाइतिहभ्रमः ॥ ५ ॥ श्रीभगवानुवाच योगास्त्रयोमयाप्रोक्तानृणांश्रेयोविधित्सया ॥ ज्ञानंकर्मचभक्तिश्चनोपायोऽन्योस्तिकुत्रचित् ॥ ६ ॥ निर्विण्णानांज्ञानयोगोन्यासिनामिहकर्मसु ॥ तेष्वनिर्विण्णचित्तानांकर्मयोगस्तुकामिनां ॥ ७ ॥ ॥ ॥

श्रेयसंनघटेत ॥ ४ ॥ किंच शास्त्रेणैवविहितांभेददृष्टिंतस्मिन्नेवविषयेशास्त्रंकथंनिवर्तयेदित्याह तेनिगमात्त्वदाज्ञारूपाद्वेदादेवनहिस्वतः यस्मादर्थप्राप्तत्वेननिवर्त्तेत हस्फुटं भ्रमोभवतितांनिवर्तयेतिशेषः ॥ ५ ॥ विषयाभेदेप्यधिकारिभेदेनाविरोधंवक्तुंप्रथमंयोगत्रयमाह योगाइति योगाउपायाःब्रह्मकर्मदेवताकांडैःप्रोक्ताः कर्मचानिष्कामम् श्रेयोविधित्सयामोक्षसाधनेच्छया अन्यउपायोनास्तीतिकाम्यकर्मादिकंव्यावर्तयति तथाचोत्तराध्यायेस्फुटीकरिष्यति यएतानित्यादिना ॥ ६ ॥ तेष्वधिकारिभेदमाह निर्विण्णानामितिद्वाभ्यां इहएषांमध्येकर्मसुनिर्विण्णानांदुःखबुद्ध्यातत्फलेषुविरक्तानामतएवसाधनभूतकर्मन्यासिनांज्ञानयोगःसिद्धिदइत्युत्तरेणान्वयः अनिर्विण्णचित्तानांदुःखबुद्धिशून्यानां अतःकामिनांतत्फलेष्वविरक्तानामित्यर्थः ॥ ७ ॥ ॥ ॥

यदृच्छयाकेनापिभाग्योदयेन तत्रकाम्यकर्मसुप्रवर्तमानस्यसर्वात्मनाविधिप्रातिषेधाधिकारइत्युत्तराध्यायेवक्ष्यति निष्कामकर्मयोगाधिक
रिणस्तुयथाशक्ति सचज्ञानभक्तियोगाधिकारात्प्रागेव तदधिकृतयोस्तुस्वल्पःतासांसिद्धीनांतुनकिंचिदिति ॥ ८ ॥ सावधिकर्मयोगमाह
तावदितिनवभिः कर्माणिनित्यनैमित्तिकानि यावतायावत् ॥ ९ ॥ कर्मयोगिनोज्ञानभक्तिभूमिकारोहप्रकारमाह स्वधर्मस्थइतिअनाशीः
कामःअफलकामः अन्यत्निषिद्धं नरकयानंहिद्वेधैव विहितातिक्रमाद्वानिषिद्धाचरणाद्वा अतःस्वधर्मस्थत्वान्निषिद्धवर्जनाच्चनरकंनया
ति अफलकामत्वान्नस्वर्गमपीत्यर्थः ॥ १८ ॥ किंतु अस्मिँल्लोकेअस्मिन्नेवदेहे अनघःनिषिद्धत्यागी अतःशुचिःनिवृत्तरागादिमलः

यदृच्छयामत्कथादौजातश्रद्धस्तुयःपुमान् ॥ ननिर्विण्णोनातिसक्तोभक्तियोगोऽस्यसिद्धिदः ॥ ८ ॥ ताव
त्कर्माणिकुर्वीतननिर्विद्येतयावता ॥ मत्कथाश्रवणादौवाश्रद्धायावन्नजायते ॥ ९ ॥ स्वधर्मस्थोयजन्यज्ञैर
नाशीःकामउद्धव ॥ नयातिस्वर्गनरकौयद्यन्यन्नसमाचरेत् ॥ १० ॥ अस्मिँल्लोकेवर्त्तमानःस्वधर्मस्थोऽनघः
शुचिः ॥ ज्ञानंविशुद्धमाप्नोतिमद्भक्तिंवायदृच्छया ॥ ११ ॥ स्वर्गिणोऽप्येतमिच्छंतिलोकंनिरयिणस्तथा ॥
साधकंज्ञानभक्तिभ्यामुभयंतदसाधकम् ॥ १२ ॥ ननरःस्वर्गतिंकांक्षेन्नारकींवाविचक्षणः ॥ नेमंलोकंचकां
क्षेतदेहावेशात्प्रमाद्यति ॥ १३ ॥ एतद्विद्वान्पुरामृत्योरभवायघटेतसः ॥ अप्रमत्तइदंज्ञात्वामर्त्यमप्यर्थसि
द्धिदम् ॥ १४ ॥ छिद्यमानंयमैरेतैःकृतनीडंवनस्पतिम् ॥ खगःस्वकेतमुत्सृज्यक्षेमंयातिह्यलंपटः ॥ १५ ॥
अहोरात्रैश्छिद्यमानंबुद्ध्वायुर्भयवेपथुः ॥ मुक्तसंगःपरंबुद्ध्वानिरीहउपशाम्यति ॥ १६ ॥

यदृच्छयेति केवलज्ञानादपिभक्तेर्दुर्लभतांद्योतयति ॥ ११ ॥ अनेनप्रकारेणज्ञानभक्तिसाधनत्वान्नरदेहंस्तौति स्वर्गिणोपीति निरयिणइ
तिदृष्टांतत्वेनोक्तं ज्ञानभक्तिभ्यांज्ञानभक्त्योः तदुभयंस्वर्गिनारकिशरीरं ॥ १२ ॥ अतोनरःस्वर्गतिंनकांक्षेत् नारकीमितिदृष्टांतः यद्वा
स्वर्गनरकसाधनकर्माणिनकुर्यादित्यर्थः अस्यातिश्रेष्ठत्वात्पुनरपिमनुष्योभवेयमित्यपिनकांक्षेत् यतोदेहावेशात्देहासक्त्यास्वार्थेप्रमाद्य
तिअवधानशून्योभवति ॥ १३ ॥ अपितु एतद्देहसाधकमितिविद्वान्तच्चार्थसिद्धिदमपिमर्त्यंज्ञात्वाअप्रमत्तःअनलसःसन्मृत्योःपूर्वमेवमो
क्षायघटेतप्रयत्नंकुर्यात् ॥ १४ ॥ अप्रमत्तोमुक्तसंगःसुखंप्राप्नोतीत्यत्रदृष्टांतः छिद्यमानमिति यमैःयमवन्निर्दयैःपुरुषैःकृतंनीडंयस्मिंस्तंस्वके
तंस्वस्याश्रयं अलंपटःअनासक्तः ॥ १५ ॥ दार्ष्टांतिकमाह अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा भयेनवेपथुःकंपोयस्यसः ॥ १६ ॥ ॥

एवमप्रयतमानंप्रमत्तंनिंदाति नृदेहंप्लवंनावंप्राप्येत्यध्याहारः योभवाब्धिंनतरेत्सआत्महा तत्रहेतवः आद्यंसर्वफलानांमूलं एतदुपार्जित कर्मभिःसर्वप्राप्तेः किंच सुदुर्लभमुद्यमकोटिभिरपिप्राप्तुमशक्यम् तथाऽपितुसुलभं यदृच्छयालब्धत्वात् तंचसुकल्पंपटुतरं किंच गुरुः संश्रितमात्रएवकर्णधारोनेतायस्यतं मयाचस्मृतमात्रेणानुकूलमारुतेनप्रेरितं ॥ १७ ॥ एवंतावदविरक्तस्यवैराग्यद्वाराज्ञानभक्तिसाधकंकर्म योगमुक्केदानींसम्यग्विरक्तस्यज्ञानयोगंतस्यचज्ञानप्राप्तेःपूर्वंकिंचित्कृत्यंवर्जनीयंचाह सार्धैर्नवभिः यदातुआरंभेषुकर्मसुनिर्विण्णोदुःखद र्शनेनोद्विग्नस्तत्फलेषुविरक्तश्चतदासंयतेंद्रियःसन्आत्मनोऽभ्यासेनआत्मविषयवृत्तिसंतत्याअचलंयथाभवतितथामनोधारयेत् ॥ १८ ॥ तत्रप्रथममेवात्यंतधारणासंभवात्तत्स्वभावानुसारेणवशीकरणमाह यर्हिआशुभ्राम्यत्परिभ्रमदनवस्थितंभवतितदाअनुरोधेनकिंचिदपेक्षा पूरणद्वारेण ॥ १९ ॥ ननुतर्हियथापूर्वमेवस्यात्तत्राह मनोगतिंतुनविसृजेत्नोपेक्षेताकिंतुअप्रमत्तःसन्लक्षयेदित्यर्थः ॥ २० ॥ अनुरोध

नृदेहमाद्यंसुलभंसुदुर्लभंप्लवंसुकल्पंगुरुकर्णधारं ॥ मयाऽनुकूलेननभस्वतेरितंपुमान्भवाब्धिंनतरेत्सआ त्महा ॥ १७ ॥ यदारंभेषुनिर्विण्णोविरक्तःसंयतेंद्रियः ॥ अभ्यासेनात्मनोयोगीधारयेदचलंमनः ॥ १८ ॥ धार्यमाणंमनोयर्हिभ्राम्यदाश्वनवस्थितं ॥ अतंद्रितोऽनुरोधेनमार्गेणात्मवशंनयेत् ॥ १९ ॥ मनोगतिं नविसृजेज्जितप्राणोजितेंद्रियः ॥ सत्त्वसंपन्नयाबुद्ध्यामनआत्मवशंनयेत् ॥ २० ॥ एषवैपरमोयोगोमन सःसंग्रहःस्मृतः ॥ हृदयज्ञत्वमन्विच्छन्दम्यस्येवार्वतोमुहुः ॥ २१ ॥ सांख्येनसर्वभावानांप्रतिलोमानुलो मतः ॥ भवाप्ययावनुध्यायेन्मनोयावत्प्रसीदति ॥ २२ ॥ निर्विण्णस्यविरक्तस्यपुरुषस्योक्तवेदिनः ॥ म नस्त्यजतिदौरात्म्यंचिंतितस्यानुचिंतया ॥ २३ ॥ ॥ ॥

मार्गंसदृष्टांतंस्तौति एषःअनुवृत्तिमार्गेणमनसःसंग्रहःपरमोयोगः तत्साधनत्वादुपचारेणस्तुतिः यथाअदांतस्यदमनीयस्यअर्वतःअश्वस्य हृदयज्ञत्वंस्वाभिप्रायेणगतिमान्विच्छन्अपेक्षमाणःअश्ववधारकःप्रथमंकिंचित्तद्गतिमनुवर्तते तदाचरश्मिनातंधृत्वैवगच्छतिनतूपेक्षतेतद्वदि त्यर्थः ॥ २१ एवमीषद्वशीकृतस्यमनसोऽत्यंतनैश्चल्योपायानाह सांख्येनेतित्रिभिः सांख्येनतत्त्वविवेकेनसर्वभावानांमहदादिदेहांतानाम नुलोमतःप्रकृत्यादिक्रमेणभवंप्रातिलोमतःपृथिव्यादिक्रमेणाप्ययंचअन्वनुध्यायेत् प्रसीदतिनिश्चलंभवति ॥ २२ ॥ ततश्चागमापायिषुते ष्वधिभूतात्मदर्शनात्तदविवेकापन्नसंसारेनिर्विण्णस्यअतोविरक्तस्यततश्चउक्तवेदिनःगुरूपदिष्टार्थालोचकस्यततोगुरूपदिष्टस्यैवचिंतितस्य पुनःपुनरनुचिंतयादौरात्म्यंदेहाद्यभिमानंत्यजाति ॥ २३ ॥ ॥ ॥

किंच यमादिभिर्योगमार्गैः आन्वीक्षिक्यापदार्थद्वयशोधनेनममार्चनध्यानादिभिर्वा वाशब्देनास्यपक्षस्यस्वातंत्र्यंदर्शयति एतैरुपायैर्योग्यं परमात्मानंमनःस्मरेत् नान्यैः अतोऽन्यन्नकुर्यादित्यर्थः ॥ २४ ॥ ननुपापापत्तौप्रायश्चित्तंकार्यमेवतत्राह यदीति योगेनज्ञानाभ्यासेनैव एत च्चभक्तस्यापिनामकीर्तनाद्युपलक्षणार्थं नान्यत्कृच्छ्रादि ॥ २५ ॥ ननुनित्यनैमित्तिकंकर्मसत्त्वशोधकत्वाद्गुणःहिंसादिकंत्वशुद्धिहेतुत्वा द्दोषः तत्रचतन्निवर्तकत्वात्कृच्छ्रादिप्रायश्चितंगुणइतिविधिप्रतिषेधाभ्यामुक्तत्वात्प्रायश्चित्तंविनायोगेनैवकथंपापंदहेत्तत्राह स्वेस्वइतिसा र्धेनं सएवगुणोनेतरः तदुपपादयति यस्माद्विधिप्रतिषेधाभ्यामनेनगुणदोषविधानेनकर्मणांनियमःसंकोचःकृतः कुतइत्यतआहजात्याउ त्पत्त्यैवाशुद्धानांसचप्राप्तानांसंगानांत्याजनेच्छया अयंभावः पुरुषस्याशुद्धिर्नामनप्रवृत्तेरन्याऽस्ति स्वाभाविकप्रवृत्त्यैवतस्यमलिनत्वात्

**यमादिभिर्योगपथैरान्वीक्षिक्याचविद्यया ॥ मामार्चोपासनाभिर्वानान्यैर्योग्यंस्मरेन्मनः ॥ २४ ॥ यदि कुर्यात्प्रमादेनयोगीकर्मविगर्हितम् ॥ योगेनैवदहेदंहोनान्यत्तत्रकदाचन ॥ २५ ॥ स्वेस्वेऽधिकारेयानिष्ठा सगुणःपरिकीर्तितः ॥ कर्मणांजात्यशुद्धानामनेननियमःकृतः ॥ गुणदोषविधानेनसंगानांत्याजनेच्छया ॥ ॥ २६ ॥ जातश्रद्धोमत्कथासुनिर्विण्णःसर्वकर्मसु ॥ वेददुःखात्मकान्कामान्परित्यागेऽप्यनीश्वरः ॥ २७ ॥ ततोभजेतमांप्रीतःश्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्चतान्कामान्दुःखोदर्कांश्चगर्हयन् ॥ २८ ॥ प्रोक्तेनभ क्तियोगेनभजतोमाऽसकृन्मुने ॥ कामाहृदय्यानश्यंतिसर्वेमयिहृदिस्थिते ॥ २९ ॥ ॥**

नचसहसासर्वतोनिवृत्तिः कर्तुंशक्यतेअतइदंनकर्तव्यमिदमेवकर्तव्यमित्येवंस्वाभाविकप्रवृत्तिसंकोचद्वारेणनिवृत्तिरेवक्रियतेयथाचनप्रवृत्ति परोवेदस्तथोत्तराध्यायेवक्ष्यामः उत्पत्त्यैवहिकामेष्वित्यादिना अतोयोगिनःस्वाभाविकप्रवृत्त्यभावान्नप्रायश्चित्तादिविधिगोचरतेति ॥ २६ ॥ भक्त्याधिकारिणोभक्तियोगमाह जातश्रद्धइतिनवभिः मत्कथासुजातश्रद्धःअतएवान्येषुकर्मसुउद्विग्नःनतुतत्फलेषुविरक्तःतदाह वेदेति यद्यपिवेदतथाऽपितत्परित्यागेअनीश्वरःअशक्तः ॥ २७ ॥ एवंभूतोयःश्रद्धालुःसन्भक्त्यैवसर्वंभविष्यतीतिदृढनिश्चयःसंस्ततस्तदनंतरंमां प्रीत्याभजेत विषयांस्तुसेवमानोऽपितेषुप्रीतिंनकुर्यादित्याह गर्हयन्निति ॥ २८ ॥ कथंभजेत्किंवाततोभवतितदाहप्रोक्तेनेतिद्वाभ्यां श्रद्धा मृतकथायांमेशश्वन्मदनुकीर्तनमित्यादिनातत्रतत्रोक्तेनमामसकृन्नित्यंभजतो हृदय्याःहृद्गताःकामानश्यंति ॥ २९ ॥ ॥

हृदयमेवग्रंथिरहंकारस्तत्पूर्वकाश्चसर्वेसंशयाअसंभावनादयः कर्माण्यनारब्धफलानिसंसारहेतुभूतानि ॥ ३० ॥ तदेवंव्यवस्थयाऽधिका
रत्रयमुक्तं तत्रचभक्तेरन्यनिरपेक्षत्वादन्यस्यचतत्सापेक्षत्वात्भक्तियोगएवश्रेष्ठइत्युपसंहरति तस्मादितित्रिभिः मदात्मनःमयिआत्माचि
त्तंयस्यतस्यश्रेयःश्रेयःसाधनं ॥ ३१ ॥ तत्रहेतुः यत्कर्मभिरित्यादि इतरैरपितीर्थयात्रादिभिःसाधनैर्यद्भाव्यंसत्त्वशुद्ध्यादितत्सर्वमंजसा
अनायासेनैव ॥ ३२ ॥ स्वर्गमपवर्गमद्धामवैकुंठंलभतएव वांछातुनास्तीत्युक्तंयदिवांछतीति ॥ ३३ ॥ तत्रहेतुमाह नकिंचिदितिधी
राधीमंतोयतोममएकांतिनोमय्येवप्रीतियुक्ताअतोमयादत्तमपिनगृण्हंति किंवक्तव्यंनवांछंतीत्यर्थः अपुनर्भवमात्यंतिकमपिकैवल्यं ॥ ३४ ॥

भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणिमयिदृष्टेऽखिलात्मनि ॥ ३० ॥ तस्मान्मद्भ
क्तियुक्तस्ययोगिनोवैमदात्मनः ॥ नज्ञानंनचवैराग्यंप्रायःश्रेयोभवेदिह ॥ ३१ ॥ यत्कर्मभिर्यत्तपसाज्ञा
नवैराग्यतश्चयत् ॥ योगेनदानधर्मेणश्रेयोभिरितरैरपि ॥ ३२ ॥ सर्वंमद्भक्तियोगेनमद्भक्तोलभतेऽजसा
॥ स्वर्गापवर्गंमद्धामकथंचिद्यदिवांछति ॥ ३३ ॥ नकिंचित्साधवोधीराभक्ताह्येकांतिनोमम ॥ वांछंत्यपि
मयादत्तंकैवल्यमपुनर्भवम् ॥ ३४ ॥ नैरपेक्ष्यंपरंप्राहुर्निःश्रेयसमनल्पकं ॥ तस्मान्निराशिषोभक्तिर्नि
रपेक्षस्यमेभवेत् ॥ ३५ ॥ नमय्येकांतभक्तानांगुणदोषोद्भवागुणाः ॥ साधूनांसमचित्तानांबुद्धेःपरमुपेयुषा
म् ॥ ३६ ॥ एवमेतान्मयादिष्टाननुतिष्ठंतिमेपथः ॥ क्षेमंविंदंतिमत्स्थानंयद्ब्रह्मपरमंविदुः ॥ ३७ ॥ इ
तिश्रीभागवतेमहापुराणेएकादशस्कंधेविंशतितमोऽध्यायः ॥ २० ॥ ॥

तदुपपादयति नैरपेक्ष्यमेवपरमुत्कृष्टमनल्पकंमहत् निःश्रेयसंफलंतत्साधनंचप्राहुः मेभक्तिर्निराशिषः प्रार्थनाशून्यस्यनिरपेक्षस्यप्रार्थना
कारणभूतापेक्षारहितस्यपुंसोभवेत् यद्वा मेनिरपेक्षस्ययाभक्तिः सानिराशिषोभवेदित्यर्थः ॥ ३५ ॥ अनेनप्रकारेणसिद्धानांनगुणदोषा
इतिविरोधपरिहारमुपसंहरति नमयीति गुणदोषैर्विहितप्रतिषिद्धैरुद्भवोयेषांतेगुणाःपुण्यपापादयः साधूनांनिरस्तरागादीनामतः समाचित्ता
नामतएवबुद्धेः परमीश्वरंप्राप्तानां ॥ ३६ ॥ काम्यकर्मनिष्ठांनिंदिष्यन्नेतान्मुक्तिमार्गानुपसंहरति एवमिति मेपथःमत्प्राप्त्युपायान्येअनुति
ष्ठंतितेक्षेमंकालमायादिरहितंममलोकंविंदंति यत्परमंब्रह्मतत्त्वविदुः ॥ ३७ ॥ इत्येकादशेटीकायांविंशतितमोऽध्यायः ॥ २० ॥

जयतिस्वपरानंदःपरानंदनृकेसरी ॥ यत्कृपालवलेशेनश्रीधरःसत्कृतिःकृती ॥ १ ॥ ईक्षंतामिच्छयासंतःक्षमंतांममसाहसं ॥ मयाहिस्वी
यबोधायकृतमेतन्नसर्वतः ॥ २ ॥ एकविंशेक्रियाज्ञानभक्तिष्वनधिकारिणां ॥ कामिनांद्रव्यदेशादिगुणदोषाःप्रपंचिताः ॥ ३ ॥ तदेवं
गुणदोषव्यवस्थार्थंयोगत्रयमुक्तंतत्रज्ञानभक्तिसिद्धानांनकिंचिद्गुणदोषौ साधकानांतुप्रथमतोनिवृत्तिकर्मनिष्ठानांयथाशक्तिनित्यनैमित्तिकंक
र्मसत्वशोधकत्वाद्गुणः तदकरणंनिषिद्धकरणंचतन्मलीमसकरत्वाद्दोषः तन्निवर्तकत्वाच्चप्रायश्चित्तंगुणः विशुद्धसत्वानांतुज्ञाननिष्ठानांज्ञाना
भ्यासएवसिद्धिहेतुत्वाद्गुणः भक्तिनिष्ठानांपुनःश्रवणकीर्तनादिभक्तिरेवगुणः तद्विरुद्धंसर्वमुभयेषामित्युक्तं इदानींयेतुनसिद्धानापिसाधकाः
किंतुकेवलंकाम्यकर्मप्रधानास्तेषांसकलगुणदोषान्प्रपंचयिष्यन्नादौतानातिबाहिर्मुखान्निंदति यएतानिति मत्पथःमदुक्तमार्गान् क्षुद्रान्तु
च्छान् चलैरस्थिरैःप्राणैर्देहवायुभिरिंद्रियैर्वाजुषंतःसेवमानाभवंतितेसंसरंति निखिलगुणदोषभाक्त्वेननानायोनीःप्राप्नुवंतीत्यर्थः ॥ १ ॥ न

श्रीभगवानुवाच यएतान्मत्पथोहित्वाभक्तिज्ञानक्रियात्मकान् ॥ क्षुद्रान्कामांश्चलैःप्राणैर्जुषंतःसंसरं
तिते ॥ १ ॥ स्वेस्वेऽधिकारेयानिष्ठासगुणःपरिकीर्तितः ॥ विपर्ययस्तुदोषःस्यादुभयोरेषनिश्चयः ॥ २ ॥
शुद्ध्यशुद्धीविधीयेतेसमानेष्वपिवस्तुषु ॥ द्रव्यस्यविचिकित्सार्थंगुणदोषौशुभाशुभौ ॥ ३ ॥ धर्मार्थंव्यव
हारार्थंयात्रार्थमितिचानघ ॥ दर्शितोऽयंमयाचारोधर्ममुद्वहतांधुरं ॥ ४ ॥ भूम्यंब्वग्न्यनिलाकाशाभूता
नांपंचधातवः ॥ आब्रह्मस्थावरादीनांशारीराआत्मसंयुताः ॥ ५ ॥ ॥

नुतैरेवकर्मभिःकेचिद्गुणदोषभाजःकेचिन्नेतिकुतोवैषम्यं नह्यग्निनाकेचित्तप्यंतेकेचिन्नेतिसंभवातितत्राह स्वेस्वइति अधिकारभेदेनकल्पि
तौगुणदोषौनवस्तुनिष्ठावितिभावः ॥ २ ॥ तदाह शुद्ध्यशुद्धीइति विचिकित्सार्थंयोग्यमयोग्यंवेतिसंदेहद्वारास्वाभाविकप्रवृत्तिप्रतिबंधार्थ
मित्यर्थः तत्रशुद्ध्यशुद्धीयोग्यत्वायोग्यत्वे गुणदोषौतन्निमित्तोपादेयत्वानुपादेयत्वे शुभाशुभौतन्निमित्तावर्थानर्थौ ॥ ३ ॥ तत्रशुद्ध्य
शुद्धीधर्मार्थंशुद्धेनधर्मःअशुद्धेनाधर्मइतिगुणदोषौ व्यवहारार्थंअशुद्धावपिराजादीनांव्यवहारदर्शनाद्युपादेयंनान्यादितिशुभाशुभौ यात्रार्थंदो
षत्वेऽप्यापत्सुशरीरनिर्वाहमात्रोपादानेनपापमधिकोपादानेतुपापमिति मयामन्वादिरूपेण धर्मरूपांधुरंभारं कर्मजडानामित्यर्थः ॥
॥ ४ ॥ शुद्ध्यशुद्धीप्रपंचयिष्यन्वेदोक्तत्वेनतदभिनिवेशोमाभूदितिसमानेष्वपिवस्तुष्वितियदुक्तंतत्प्रपंचयति भूमीतित्रिभिः भूतानांप्रा
णिनाम् धारयंतीतिधातवःकारणानि शारीराःशरीरारंभकाः देहतःसाम्यमुक्तंजीवतोप्याह आत्मसंयुताइति ॥ ५ ॥ ॥

धातुषुदेहेषुनामरूपाणिवर्णाश्रमादीनि कल्पनायाःप्रयोजनमाह एतेषांप्राणिनांस्वार्थसिद्धयेप्रवृत्तिनियमद्वाराधर्मादिपुरुषार्थसिद्धये ॥
॥ ६ ॥ नकेवलंदेहेष्वेवअपितुदेशकालादिभावानामपि आदिशब्देनानुपादेयानांफलनिमित्ताधिकारिणांग्रहणं वस्तूनामुपादेयानांव्री
ह्यादीनामपि ममया नियमार्थसंकोचार्थमित्यर्थः ॥ ७ ॥ एवंगुणदोषविषयंपरिशोध्यतयोःशुत्ध्यशुद्धिमूलत्वाच्छुत्ध्यशुद्धीप्रपंचयति
अकृष्णसारइत्यष्टभिः देशानांमध्येकृष्णहारिणरहितोऽशुचिः तत्रापिअब्रह्मण्यः ब्राह्मणभक्तिशून्यःअत्यंतमशुचिः कृष्णसारोपिकृष्णेन
मृगेणसारःश्रेष्ठोयःसोपिअसौवीरकीकटः सुवीराःसत्पुरुषास्तद्वान्सौवीरःकीकटोपिशुचिः तदुक्तं सर्वैपुण्यतमोदेशःसत्पात्रंयत्रलभ्य त
इतितद्वर्जितोयःकीकटःअंगवंगकलिंगादिः असंस्कृतःसंमार्जनादिशून्यः म्लेंछबहुलोवा ईरिणमूषरं एकत्रद्भावः तत्अशुचितदन्य:

वेदेननामरूपाणिविषमानिसमेष्वपि ॥ धातुषूद्धवकल्प्यंतएतेषांस्वार्थसिद्धये ॥ ६ ॥ देशकालादिभा
वानांवस्तूनांममसत्तम ॥ गुणदोषौविधीयेतेनियमार्थंहिकर्मणाम् ॥ ७ ॥ अकृष्णसारोदेशानामब्रह्म
ण्योऽशुचिर्भवेत् ॥ कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम् ॥ ८ ॥ कर्मण्योगुणवान्कालोद्रव्यतः
स्वतएववा ॥ यतोनिवर्ततेकर्मसदोषोऽकर्मकःस्मृतः ॥ ९ ॥ द्रव्यस्यशुद्ध्यशुद्धीचद्रव्येणवचनेनच ॥ सं
स्कारेणाथकालेनमहत्त्वाल्पतयाऽथवा ॥ १० ॥ ॥ ॥ ॥

शुचिरित्यर्थादुक्तंभवति ॥ ८ ॥ कालस्यशुत्ध्यशुद्धीदर्शयति कर्मण्यइति द्रव्यतोद्रव्यसंपत्त्यास्वतोवापूर्वाह्णादिर्यःकर्मण्यःकर्मार्हःस
कालस्तस्मिन्कर्मणिगुणवान् यतः यस्मिन्द्रव्यालाभेनवाराष्ट्रविप्लवादिनावाकर्मानिवर्तते यश्चसूतकादौदशाहादिलक्षणोऽकर्मकःकर्मा
नर्हःस्मृतःसकालोदोषः अशुद्धइत्यर्थः ॥ ९ ॥ वस्तुशब्दोपात्तानांद्रव्याणांशुत्ध्यशुद्धीदर्शयतिद्रव्यस्येतिचतुर्भिः द्रव्येणतोयादिनाशु
द्धिर्मूत्रादिनात्वशुद्धिः वचनेनशुद्धमशुद्धंवेतिसंदेहेशुद्धमित्येवंरूपेणब्राह्मणवचनेनशुद्धिर्विपरीतेनाशुद्धिः संस्कारेणप्रोक्षणादिनापुष्पा
देःशुद्धिरवघ्राणादिनात्वशुद्धिः कालेनदशाहादिनानवोदकादेःशुद्धिः कालेमेघोदकंग्राह्यंवर्ज्यंतुत्र्यहमेवाहि ॥ अकालेदशरात्रंस्यात्ततः
शुद्धिर्विधीयते पर्युषितान्नादेरशुद्धिः अंत्यजाद्युपहतानांतडागाद्युदकानांमहत्त्वाल्पत्वाभ्यांशुत्ध्यशुद्धी ॥ १० ॥ ॥

शक्त्याऽशक्त्यासूर्योपरागादिसूतकान्नादेःशक्तान्प्रतिअशुद्धिरशक्तान्प्रतिशुद्धिः बुध्यापुत्रजननादौदशाहाद्बहिर्ज्ञानेनशुद्धिरंतर्ज्ञानेनाशु
द्धिः समृध्याजीर्णमलवद्वस्त्रादेःसमृद्धंप्रत्यशुद्धिर्दरिद्रंप्रतिशुद्धिः तत्रापिविशेषमाह यदीति एतेचद्रव्यवचनादयोद्रव्याशुद्धिद्वाराआत्म
नेयदघंकुर्वंतितद्देशावस्थानुसारतएवयथायथावत्कुर्वंतिनसर्वतः तथाहि निर्भयएवदेशेकुर्वंतिनतुचौराद्याकुले तथारोगादिव्यतिरिक्तयु
वाद्यवस्थायामेवकुर्वंतिनबाल्यरोगाद्यवस्थायामिति तथाचस्मृतिः देशंकालंतथात्मानंद्रव्यंद्रव्यप्रयोजनं ॥ उपपत्तिमवस्थांचज्ञात्वाशौ
चंप्रकल्पयेदिति ॥ ११ ॥ द्रव्यादिभिर्द्रव्यस्यशुद्धिरित्युक्तंतत्रवचनादिशुद्धिरेकरूपैव द्रव्यतस्तुशुद्धिर्बहुरूपेतितांप्रपंचयति धान्येति
दारुलौकिकंग्रहचमसादिच धान्यानांवायुना दारूणांयज्ञपात्रादीनांग्रहचमसानांचतोयाग्न्युष्णोदकैः अस्थ्नांगजदंतानांकालेनतंतूनां
तोयेन रसास्तैलघृतादयस्तैजसाःसुवर्णादयस्तेषांअग्निनाशुद्धिः पार्थिवानांचरथ्याकर्दमघटेष्टकादीनांयथायथंकालादिभिःशुद्धिःतत्रा

शक्त्याऽशक्त्याऽथवाबुद्ध्यासमृद्ध्याचयदात्मने ॥ अघंकुर्वंतिहियथादेशावस्थानुसारतः ॥ ११ ॥ धान्य
दार्वस्थितंतूनांरसतैजसचर्मणाम् ॥ कालवाय्वग्निमृत्तोयैःपार्थिवानांयुतायुतैः ॥ १२ ॥ अमेध्यलिप्तंय
द्येनगंधंलेपंव्यपोहति ॥ भजतेप्रकृतिंतस्यतच्छौचंतावदिष्यते ॥ १३ ॥ स्नानदानतपोवस्थावीर्यसंस्का
रकर्मभिः ॥ मत्स्मृत्याचात्मनःशौचंशुद्धःकर्माचरेद्द्विजः ॥ १४ ॥ मंत्रस्यचपरिज्ञानंकर्मशुद्धिर्मदर्पणम् ॥
धर्मःसंपद्यतेषड्भिरधर्मस्तुविपर्ययः ॥ १५ ॥ ॥ ॥ ॥

पिकाकांत्यजाद्युपघाततारतम्येनदेशकालावस्थाद्यनुसारेणैव एतैरन्यैश्चयुतायुतैर्मिलितैःकेवलैश्च कालस्यपुनर्ग्रहणंयुतत्वप्रदर्शनार्थं ॥
॥ १२ ॥ अस्पृश्यस्पर्शेशुद्धिमुक्त्वालेपविषयेऽप्याह यत्पीठपात्रवस्त्रादियेनतक्षणक्षाराम्लोदकादिनागंधंलेपंचव्यपोहतित्यजतिस्वगतं
चमलंत्यक्त्वाप्रकृतिंस्वमेवरूपंभजतेतस्यतच्छौचंशोधकं यावताचतक्षणादिनाव्यपोहतितावत्प्रमाणंस्वरूपतआवृत्तितोवातत्कर्तव्यामिष्य
ते ॥ १३ ॥ एवंतावद्द्रव्यशुद्धिरुक्ताइदानींकर्तृशुद्धिमाह स्नानेति अवस्थाकौमारादिःवीर्यंशक्तिः संस्कारउपनयनादिः कर्मसंध्योपा
सनदीक्षादिलक्षणं आत्मनःसाहंकारस्यकर्तुरेतैःस्नानादिभिर्यथायथंतत्कार्यानुसारिणीशुद्धिः इयंचशुद्धिर्नव्यवहारार्थाकिंतुविहितकर्मार्थे
त्याह शुद्धइति द्विजइत्युपलक्षणंशूद्रादेरपि ॥ १४ ॥ मंत्रशुद्धिमाह सद्गुरुमुखाद्यथावत्सांगोपांगविनियोगसहितंपरिज्ञानंमंत्रस्यशुद्धिः
कर्मशुद्धिमाह ईश्वरार्पणंकर्मणःशुद्धिः धर्माद्यर्थंशुद्ध्यशुद्धीप्रपंचतःप्रदर्श्योपसंहरति धर्मइति देशकालद्रव्यकर्तृमंत्रकर्मभिःषड्भिःशुद्धै
र्धर्मःसंपद्यते एतेषांयोविपर्ययःसोऽधर्मस्तद्धेतुरित्यर्थः ॥ १५ ॥ ॥ ॥ ॥

अयंचगुणदोषविभागोनवास्तवइत्याह क्वचिदिति आपदिप्रतिग्रहोगुणोप्यनापदिनिषिद्धत्वाद्दोषः परधर्मश्चपरस्यगुणोपिअस्यदोषःदो
षोपिकुटुंबत्यागादिर्विरक्तादेर्नदोषःअपितुविधिबलेनगुणः एवंयोयंगुणदोषयोरेकस्मिन्नर्थेनियमोगुणदोषार्थंवायोनियमोनियामकंशास्त्रंस
तयोर्भेदमेवबाधते ॥ १६ ॥दोषस्यक्वचिद्दोषत्वाभावेगुणत्वेचोदाहरणंदर्शयति समानस्यतस्यैवकर्मणःसुरापानादेराचरणमपतितानांपत
नहेतुरपिजात्याकर्मणावापतितानांपुनःपातकमधिकारभ्रंशकंनभवतिपूर्वमेवपतितत्वात् अतोऽत्रदोषस्यापिदोषतानास्तीत्यर्थः तयासंगो
पियोयतेर्दोषःसगृहस्थस्यौत्पत्तिकःपूर्वस्वीकृतोनदोषःअपितुगुणः ऋतौभार्यामुपेयादित्यादिविधानात् उभयत्रदृष्टांतःपूर्वमेवाधःशयानोय

क्वचिद्गुणोपिदोषः स्याद्दोषोऽपिविधिनागुणः ॥ गुणदोषार्थनियमस्तद्भिदामेवबाधते ॥ १६ ॥ समानक
र्माचरणंपतितानांनपातकं ॥ औत्पत्तिकोगुणःसंगोनशयानःपतत्यधः ॥ १७ ॥ यतोयतोनिवर्तेतविमु
च्येतततस्ततः ॥ एषधर्मोनृणांक्षेमःशोकमोहभयापहः ॥ १८ ॥ विषयेषुगुणाध्यासात्पुंसःसंगस्ततोभवे
त् ॥ संगात्तत्रभवेत्कामःकामादेवकलिर्नृणां ॥ १९ ॥ कलेर्दुर्विषहःक्रोधस्तमस्तमनुवर्तते ॥ तमसाग्रस्य
तेपुंसश्चेतनाव्यापिनीद्रुतम् ॥ २० ॥ तयाविरहितःसाधोजंतुःशून्यायकल्पते ॥ ततोऽस्यस्वार्थविभ्रंशो
मूर्छितस्यमृतस्यच ॥ २१ ॥ विषयाभिनिवेशेननात्मानंवेदनापरं ॥ वृक्षजीविकयाजीवन्व्यर्थंभस्त्रेव
यःश्वसन् ॥ २२ ॥ ॥ ॥ ॥ ॥

थानपततीति ॥ १७ ॥ अतोगुणदोषनियमविधीनांप्रवृत्तिसंकोचद्वारानिवृत्तावेवतात्पर्यमित्यभिप्रेत्याह यतोयतइति ॥ १८ ॥ यथाश्रुतप्रवृ
त्तिपरतांवेदस्यनिराकर्तुंप्रवृत्तिमार्गस्यानर्थहेतुतांदर्शयति विषयेष्विति चतुर्भिः संगआसक्तिः तत्रतेषुविषयेषु येनप्रतिहन्यतेकामस्तेनसह
कामादेवकलिःकलहोभवति॥१९॥दुर्विषहस्तीव्रः तमःसंमोहः तंक्रोधं चेतनाकार्याकार्यस्मृतिःद्रुतंशीघ्रं ॥ २० ॥हेसाधोतयाकार्याकार्यस्मृ
त्यारहितोजंतुःशून्यायकल्पतेअसत्तुल्योभवतीत्यर्थः स्वार्थविभ्रंशःपुरुषार्थहानिः मूर्छितस्यमृततुल्यस्य ॥ २१ ॥ तत्तुल्यत्वंप्रपंचयति विष
येति व्यर्थंवृक्षजीविकयैवयोजीवन्वर्ततेसमूर्छिततुल्यः अतएवयोभस्त्रेवश्वसन्वर्ततेसमृततुल्यः अतःस्वार्थनाशइत्यर्थः ॥ २२ ॥

ननुप्रवृत्तस्यस्वर्गादिफलश्रवणात्कुतःस्वार्थविभ्रंशस्तत्राह फलश्रुतिरिति इयंफलश्रुतिर्नश्रेयः परमपुरुषार्थपरानभवतीत्यर्थःकिंतुबहि र्मुखानांनृणांमोक्षविवक्षया अवांतरफलैःकर्मसुरुच्युत्पादनमात्रम् यथाभैषज्येऔषधेरोचनंरुच्युत्पादनम् तथाहि पिबनिंबंप्रदास्या मिखलुतेखंडलड्डुकान् ॥ पित्रैवमुक्तःपिबतिनफलंतावदेवतु ॥ तथामातृवाक्यंच शिखातेवर्धतेवत्सगुडूचींश्रद्धयापिबेति नफलं तावदेवतुकिंत्वारोग्यम् ॥ २३ ॥ ननुकर्मकांडेमोक्षस्यनामापिनश्रूयतेकुतएवंव्याख्यायतेयथाश्रुतस्याघटनादित्याह उत्पत्त्येतिद्वाभ्याम् उत्पत्त्यास्वभावतएवकामेषुपश्वादिषु प्राणेषुआयुरिंद्रियबलवीर्यादिषुस्वजनेषुपुत्रादिषु अनर्थहेतुषुपरिपाकतोदुःखहेतुषु ॥ २४ ॥ अ तस्तान्स्वार्थंपरमसुखमविदुषः अतोनतान्प्रव्हीभूतान् वेदोयद्बोधयिष्यतितदेवश्रेयइतिविश्वसितानित्यर्थः तानेवंभूतान्वृजिनाध्वनि

**फलश्रुतिरियंनृणांनश्रेयोरोचनंपरम् ॥ श्रेयोविवक्षयाप्रोक्तंयथाभैषज्यरोचनम् ॥ २३ ॥ उत्पत्त्यैवहिका मेषुप्राणेषुस्वजनेषुच ॥ असक्तमनसोमर्त्याआत्मनोनर्थहेतुषु ॥ २४ ॥ नतानविदुषःस्वार्थंभ्राम्यतोवृजि नाध्वनि ॥ कथंयुंज्यात्पुनस्तेषुतांस्तमोविशतोबुधः ॥ २५ ॥ एवंव्यवसितंकेचिदविज्ञायकुबुद्धयः ॥ फ लश्रुतिंकुसुमितांनवेदज्ञावदंतिहि ॥ २६ ॥ कामिनःकृपणालुब्धाःपुष्पेषुफलबुद्धयः ॥ अग्निमुग्धाधूमतां ऽताःस्वंलोकंनविदंतिते ॥ २७ ॥ ॥ ॥ ॥**

कामवर्त्मनिदेवादियोनिषुभ्राम्यतःततःपुनस्तमोवृक्षादियोनिंविशतः पशुकामइतिआयुरिंद्रियादिकामइतिचपुत्रादिकामइतिचकथंपुनस्ते ष्वेवकामेषुस्वयंबुधोवेदोयुंज्यात्प्रवर्तयेत् तथासत्यनाप्तःस्यादितिभावः ॥ २५ ॥ कथंतर्हिकर्ममीमांसकाःफलपरतांवदंतितत्राह एवमि ति व्यवसितंवेदस्याभिप्रायं सुकुमितामवांतरफलप्ररोचनयारमणीयांपरमफलश्रुतिंवदंति कुतस्तेकुबुद्धयस्तदाह हियस्माद्वेदज्ञाव्यासाद यस्तथानवदंतीति ॥ २६ ॥ कुबुद्धितांप्रपंचयति कामिनइत्यष्टाभिः कामित्वात्कृपणास्ततोलुब्धास्तृष्णाकुलाअतःपुष्पेषुअवांतरफलेषुप रमफलबुद्धयः अतएवअग्निमुग्धाःअग्निसाध्यकर्माभिनिवेशेनलुप्तविवेकास्ततश्चधूमतांताःधूमताधूममार्गांऽतेयेषांते स्वंलोकमात्मतत्वं तथा चश्रुतिः कश्चिद्वाअस्माल्लोकात्प्रेत्यआत्मानंवेदअयमहमस्मीति कश्चित्स्वंल्लोकंनप्रतिजानाति अग्निमुग्धोहैवधूमतांऽतइति ॥ २७ ॥

कोऽसौस्वलोकस्तमाह हृदिस्थमात्मानंमांस्वलोकम् ननुहृदिस्थमहंकारास्पदंजानंत्येव सत्यम् परमात्मानंतुनजानंतीत्याह यइदंयद्व्यति
रिक्तंजगन्नास्ति कुतः यतइदंजगज्जातंतंकुतोनजानंति हियस्मात् उक्थंकर्मैवशस्त्रंशंस्यंकथनीयंपशुहिंसासाधनंवायेषांतेअतःकेवलम
सुतृपःप्राणतर्पणपराः नीहारंतमःतेनव्याप्तानिचक्षूंषियेषांतेयथासन्निहितमपिनजानंतितद्वत् तथाचश्रुतिः नतंविदाथयइमाजजानाऽ
न्यद्युष्माकमंतरंबभूव नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंतीति ॥ २८ ॥ वेदतात्पर्याज्ञानाच्चान्यान्यजंतीत्याह तेपरोक्षम
स्फुटंमेमतमविज्ञायदेवादीन्यजंतइत्युत्तरेणान्वयः स्वमतमेवाह हिंसायांमांसभक्षणार्थंतत्फलार्थंचयदिरागःस्यात्तर्हियज्ञएवेत्यभ्यनुज्ञा
द्वारापरिसंख्येयं नहिंस्यात्सर्वभूतानिअग्नीषोमीयंपशुमालभेतइति नत्वावश्यकत्वेनचोदनेत्येवंरूपं यद्यपिनित्यनैमित्तिकयोःकामवि
शेषानुबंधोनास्तितथाऽपिकर्मणापितृलोकइतिश्रुतेःसामान्यतःपितृलोककामनाऽस्त्येव अंतःकरणशुद्धिकामनाचेतिभावः तदुक्तं नाका

नतेमामंगजानंतिहृदिस्थंयइदंयतः ॥ उक्थशस्त्राह्यसुतृपोयथानीहारचक्षुषः ॥ २८ ॥ तेमेमतमविज्ञा
यपरोऽक्षंविषयात्मकाः ॥ हिंसायांयदिरागःस्याद्यज्ञएवनचोदना ॥ २९ ॥ हिंसाविहाराह्यालब्धैःपशु
भिःस्वसुखेच्छया ॥ यजंतेदेवतायज्ञैःपितृभूतपतीन्खलाः ॥ ३० ॥ स्वप्नोपमममुंलोकमसंतंश्रवणप्रि
यं ॥ आशिषोहृदिसंकल्प्यत्यजंत्यर्थान्यथावणिक् ॥ ३१ ॥ रजःसत्त्वतमोनिष्ठारजःसत्त्वतमोजुषः ॥ उ
पासतेइंद्रमुख्यान्देवादीन्नतथैवमां ॥ ३२ ॥ इष्ट्वेहदेवतायज्ञैर्गत्वारंस्यामहेदिवि ॥ तस्यांतइहभूया
स्ममहाशालामहाकुलाः ॥ ३३ ॥ एवंपुष्पितयावाचाव्याक्षिप्तमनसान्नृणां ॥ मानिनांचातिस्तब्धानांम
द्वार्ताऽपिनरोचते ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥

मस्यक्रियाकाचिद्दृश्यतेचेहकर्हिचित् ॥ यद्यद्धिकुरुतेजंतुस्तत्तत्कामस्यचेष्टितमिति ॥ २९ ॥ अज्ञत्वादेवहिंसयाविहारःक्रीडायेषांते
॥ ३० ॥ किंचतेऽतिमंदबुद्धयइत्याह स्वप्नोपममिति अमुंपरलोकम् आशिषश्चास्मिन्लोकेसंकल्प्यनतुनिश्चित्यविघ्नबाहुल्यात्त्यजंतिक
र्मसुविनियोजयंति यथाकश्चिद्वणिग्दुस्तरसमुद्रादिलंघनेनबहुधनार्जनेच्छयासिद्धंधनंत्यजन्नुभयभ्रष्टोभवतितद्वदित्यर्थः ॥ ३१ ॥ अतो
रजःसत्त्वतमोजुषःस्वानुरूपानिंद्रादीनेवोपासतेनतुमांगुणातीतम् यद्यपिइंद्रादीनामपिमदंशत्वान्मदुपासनमेवतत्तथाऽपियथावन्नोपास
ते भेददर्शित्वादित्यर्थः ॥ ३२ ॥ हृदिसंकल्प्येत्युक्तंतमेवसंकल्पंदर्शयति इष्ट्वेति तस्यभोगस्यअंते महाशालामहागृहस्थाः ततःकिम
तआह ॥ ३३ ॥ एवमिति अतोमत्प्रवणत्वाभावान्नित्यंसंसारिणोभवंतीतिभावः ॥ ३४ ॥ ॥ ॥

तदेवंवेदानांप्रवृत्तिपरत्वंनिराकृत्यप्रकृतंनिवृत्तिपरत्वमेवोपसंहरति वेदाइति कर्मब्रह्मदेवताकांडविषयाइमेवेदाः ब्रह्मात्मविषयाःब्रह्मैवा
त्मानसंसारीत्येतत्पराः तत्परत्वाप्रतीतौच फलश्रुतिरियंनृणांनश्रेयोरोचनंपरं ॥ श्रेयोविवक्षयाप्रोक्तंयथाभैषज्यरोचनमित्युक्तमेवकारण
मनुस्मारयति परोक्षेति ऋषयोमंत्रास्तद्द्रष्टारोवा तत्किमिति यतःपरोक्षमेवममचप्रियं अयंभावः शुद्धांतःकरणैरेवावबोद्धव्यंनान्यैरनधि
कारिभिः वृथाकर्मत्यागेनभ्रंशप्रसंगादिति ॥ ३५ ॥ ननुवेदज्ञाअपिजैमिन्यादयःकिमितितथावेदस्यब्रह्मपरत्वंनवर्णयंति मांविनातत्त्वतो
वेदंतदर्थंवानकोऽपिवेदेत्याशयेनाह शब्दब्रह्मेतियावत्समाप्ति स्वरूपतोऽर्थतश्चदुर्विज्ञेयं तच्चसूक्ष्मस्थूलंचेतिद्विविधम् तत्रसूक्ष्मंतावत्स्वरूप
तोऽपिदुर्ज्ञेयमित्याह प्राणेंद्रियमनोमयम् प्रथमंप्राणमयंपराख्यंततोमनोमयंपश्यंत्याख्यंततइंद्रियमयंमध्यमाख्यंतस्यवाग्व्यंजकत्वेनवागिं
द्रियप्रधानत्वात् किंच अनंतपारं समष्टिप्राणादिमयस्यनिर्विशेषस्यचतस्यकालतोदेशतश्चापरिच्छेदात् अर्थतोऽपिदुर्ज्ञेयत्वमाह गंभी
रंनिगूढार्थम् अतोदुर्विगाह्यंमतिप्रवेशानर्हम् तथाचश्रुतिः चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः गुहात्रीणिनिहिता

**वेदाब्रह्मात्मविषयास्त्रिकांडविषयाइमे ॥ परोऽक्षवादाऋषयःपरोऽक्षंममचप्रियं ॥ ३५ ॥ शब्दब्रह्मसुदु र्बोधंप्राणेंद्रियमनोमयम् ॥ अनंतपारंगंभीरंदुर्विगाह्यंसमुद्रवत् ॥ ३६ ॥ मयोपबृंहितंभूम्नाब्रह्मणाऽ नंतशक्तिना ॥ भूतेषुघोषरूपेणबिसेषूर्णेवलक्ष्यते ॥ ३७ ॥ यथोर्णनाभिर्हृदयादूर्णामुद्वमतेमुखात् ॥ ॥ आकाशाद्घोषवान्प्राणोमनसास्पर्शरूपिणा ॥ ३८ ॥ ॥ ॥**

नेंगयंतितुरीयंवाचोमनुष्यावदंति अयमर्थः वाचःशब्दब्रह्मणःपरिमितानिगणितानिपद्यतेज्ञायतेपरंतत्त्वमेभिरितिपदानिरूपाणिचत्वारि
चत्वार्यपियेमनीषिणोऽतर्दृष्टयस्तएवविदुर्नान्ये यतःगुहायांदेहमध्येत्रीणिनिहितानिनेंगयंतिस्वरूपंनप्रकाशयंतिअतःकेवलंवाचस्तुरीयंच
तुर्थंभागंवैखरीरूपंमनुष्यावदंतितदपिवदंत्येवनतत्त्वतोजानांति ॥ ३६ ॥ तत्रमनीषिभिरेवज्ञेयंसूक्ष्मंतत्स्वरूपंदर्शयति मयेति मयांऽतर्यामि
णोपबृंहितमधिष्ठितम् अंतस्थत्वेऽप्यपरिच्छेदमाह भूम्नेति अधिष्ठातृत्वेऽप्यविकारित्वमाह ब्रह्मणेति अविकृतस्यापिनियंतृत्वघंटया ति अ
नंतशक्तिनेति भूतेषुसर्वप्राणिषुघोषरूपेणनादरूपेणलक्ष्यतेमनीषिभिः अंतःसूक्ष्मत्वेनदर्शनेदृष्टांतः बिसेषुऊर्णांततुरिवेति ॥ ३७ ॥ ततो
वैखर्याख्यायाबृहत्यावाचउत्पत्तिप्रकारंसदृष्टांतमाह यथेतित्रिभिः हृदयात्सकाशात्मुखात्द्वारात्उद्वमतेबहिःप्रकटयति दार्ष्टांतिकेयो
जयति आकाशादिति प्राणस्तदुपाधिर्हिरण्यगर्भरूपः प्रभुर्भगवान् तेनरूपेण ॥ ३८ ॥ ॥ ॥ ॥

छंदोमयोवेदमूर्तिः स्वतस्त्वमृतमयः घोषवान्नादोपादानवान् मनसानिमित्तभूतेन निमित्ततामेवदर्शयति स्पर्शादीन्वर्णान्रूपयतिसं
कल्पयतीतिस्पर्शरूपितेन स्पर्शग्रहणमुपलक्षणं हृदयाकाशाद्बृहतींवेदलक्षणांवाणींसृजतीतितृतीयश्लोकेनान्वयः बृहतीशब्दार्थव्याख्या
नायविशेषणानि सहस्रपदवींबहुमार्गी अनेकपुरुषार्थसाधनवर्ती तदेवाह ओंकारादुरःकंठादिसंगेनव्यंजितैःस्पर्शादिभिर्भूषितां ओंका
रश्चात्रहृद्गतःसूक्ष्मोऽभिप्रेतोनत्वकारादिवर्णरूपः तस्यव्यंग्यकोटित्वात् तत्रस्पर्शाःकादिपंचवर्गाःस्वराअकारादयःषोडश ऊष्माणःश
षसहाः अंतस्थायरलवाः तैरुपलक्षितां ॥ ३९ ॥ एवंविचित्राभिर्वैदिकलौकिकभाषाभिर्विततां यथोत्तरंचत्वारिचत्वार्यक्षराणिउत्तराणिअ

छंदोमयोमृतमयःसहस्रपदवींप्रभुः ॥ ओंकाराद्व्यंजितस्पर्शस्वरोष्मांतस्थभूषितां ॥ ३९ ॥ विचित्रभा
षावितताांछंदोभिश्चतुरुत्तरैः ॥ अनंतपारांबृहतींसृजत्याक्षिपतेस्वयं ॥ ४० ॥ गायत्र्युष्णिगनुष्टुप्चबृ
हतीपंक्तिरेवच ॥ त्रिष्टुप्जगत्यतिछंदोह्यत्यष्ट्यतिजगद्विराट् ॥ ४१ ॥ किंविधत्तेकिमाचष्टेकिमनूद्यवि
कल्पयेत् ॥ इत्यस्याहृदयंलोकेनान्योमद्वेदकश्चन ॥ ४२ ॥ ॥ ॥

धिकानियेषांतैश्छंदोभिरुपलक्षितां एवमनंतपारांसृजतिस्वयमेवाक्षिपतेउपसंहरति ॥ ४० ॥ तेषुकतिचिच्छंदांसिदर्शयति गायत्रीति
तत्रचतुर्विंशत्यक्षरागायत्री ततश्चतुरक्षरवृद्ध्योष्णिगादिछंदांसि अष्टाविंशत्यक्षराउष्णिक् द्वात्रिंशत्यक्षरानुष्टुप् एवंसर्वाणिचतुरुत्तराणिछं
दांसि अत्यष्टिःअतिजगतीअतिविराडित्यर्थः एतैश्छंदोभिरुपलक्षितामितिपूर्वेणान्वयः अतोबृहत्यपिसाकल्येनस्वरूपतोदुर्ज्ञेयाइत्युक्तं
॥ ४१ ॥ अर्थतोऽपिदुर्ज्ञेयत्वमाह किमिति कर्मकांडेविधिवाक्यैःकिंविधत्ते देवताकांडेमंत्रवाक्यैःकिमाचष्टेप्रकाशयति ज्ञानकांडेकि
मनूद्यविकल्पयेत् निषेधार्थमित्येवमस्याहृदयंतात्पर्यंमत्तोऽन्यःकश्चिदपिनवेद ॥ ४२ ॥ ॥

ननुतर्हित्वंमत्कृपयाकथय ओमितिकथयति मामेवयज्ञरूपंविधत्ते मामेवतत्तद्देवतारूपमभिधत्तेनमत्तःपृथक् यच्चाकाशादिप्रपंचजातंत स्माद्वाएतस्मादात्मनआकाशः संभूतइत्यादिनाविकल्प्यापोह्यतेनिराक्रियतेतदप्यहमेवनमत्तःपृथगस्ति कुतइत्यपेक्षायांसर्ववेदार्थसंक्षेप तःकथयति एतावानेवसर्वेषांवेदानामर्थः तमेवाह शब्दोवेदोमांपरमार्थरूपमाश्रित्यभिदांमायामात्रमित्यनूद्यनेहनानास्तिकिंचनेतिप्रतिषि ध्यप्रसीदतिनिवृत्तव्यापारोभवति अयंभावः यथाह्यंकुरेयोरसःसएवतद्विस्तारभूतनानाकांडशाखास्वपितथैवप्रणवस्ययोऽर्थःपरमेश्वरः सएवतद्विस्तारभूतानांसर्ववेदकांडशाखानामपिसंगच्छतेनान्यइति नित्यमुक्तःस्वतःसर्ववेदकृत्सर्ववेदवित् ॥ स्वपरज्ञानदातायस्तंवंदे गुरुमीश्वरं ॥ ४३ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेटीकायांएकविंशोध्यायः ॥ २१ ॥ ॥ द्वाविंशेतत्वसंख्यानामाविरोध

**मांविधत्तेऽभिधत्तेमांविकल्प्यापोह्यतेत्वहं॥एतावान्सर्ववेदार्थःशब्दआस्थायमांभिदां ॥ मायामात्रमनूद्यां तेप्रतिषिद्ध्यप्रसीदति ॥४३॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेएकविंशोध्यायः ॥ २१ ॥ ॥ ॥ उ द्धवउवाच कतितत्त्वानिविश्वेशसंख्यातान्यृषिभिःप्रभो ॥ नवैकादशपंचत्रीण्यात्थत्वमिहशुश्रुम ॥ १ ॥ केचित्षड्विंशतिंप्राहुरपरेपंचविंशतिं ॥ सप्तैकेनवषट्केचिच्चत्वार्येकादशापरे ॥ २ ॥ केचित्सप्तदशप्राहुःषो डशैकेत्रयोदश ॥ एतावत्त्वंहिसंख्यानामृषयोयद्विवक्षया ॥ गायंतिपृथगायुष्मन्निदंनोवक्तुमर्हसि॥३॥ श्री भगवानुवाच युक्तयःसंतिसर्वत्रभाषंतेब्राह्मणायथा ॥ मायांमदीयामुद्गृह्यवदतांकिंनुदुर्घटं ॥ ४ ॥**

विधोच्यते ॥ पुंप्रकृत्योर्विवेकश्चजन्ममृत्युविधादिच ॥ १ ॥ तदेवंवेदादीनांप्रवृत्तिपरत्वंनिराकृत्यमोक्षपरत्वंनिर्णीतं सतिचमोक्षपरत्वेऽ पितदवांतरविवादाः तथाहि केचित्तत्वसंख्यासुविवदंते तत्राऽपिबाह्यार्थसदसत्वेआत्मत्वेऽप्येकत्वनानात्वादिषुतत्रकिंसत्यमितिजिज्ञा सयापृच्छति कतीतिऋषिभिःआगमेषुबहुधासंख्यातानितेषुकतियुक्तानीत्यर्थः भगवन्मतानुवादपूर्वकंबहुधासंख्यानंप्रपंचयति नवेतित्रि भिः त्वंतावदष्टाविंशतितत्वान्यात्थ तानिचवयंशुश्रुमःश्रुतवंतः ॥ १ ॥ २ ॥ एतावतीनांभावएतावत्त्वंनानात्वमित्यर्थः यद्विवक्षयायत्प्र योजनमभिप्रेत्यचगायंति आयुष्मन्नित्यमूर्ते ॥ ३ ॥ विवक्षाभेदेनसर्वंयुक्तमेव माययाचकिंनामनयुक्तमित्याह युक्तयइति यथाब्राह्मणाभा षंतेतद्युक्तंनचवस्तुतः यस्मात्संतिसर्वत्रांतर्भूतानिसर्वाणितत्वानि किंच मायामिति असत्वेऽपिमायाश्रयत्वात्घटतएवेत्यर्थः उद्गृह्यस्वी कृत्य नहिमरीचिजलपरिमाणादिविचारेकिंचिदघटितमिवभवति ॥ ४ ॥ ॥ ॥

ननुयदिसर्वमपियुक्तंतर्हिकुतोविवादः यदिचमायैवालंबनंतर्हिकुतोहेतुंप्रतिविवादस्तत्राह नैतदेवमिति हेतुंप्रतिविवदमानानांमदीयादुर
तिक्रमाःशक्तयःअंतःकरणवृत्तिविशेषरूपेणपरिणताःसत्वाद्याएवहेतुरित्यर्थः ॥ ५ ॥ तासांविवादहेतुत्वमुपपादयति यासामिति यासां
व्यतिकरान्नक्षोभाद्वदतांपदंविषयोविकल्पोभेदआसीदंतःकरणवृत्तिविकल्पोवातन्मूलभूतः एतदेवव्यतिरेकेणद्रढयति एतेषांवाक्यानां
आलंबनभूतःसःविकल्पः शमदमयोर्हैक्यं तस्मिन्प्राप्तेविकल्पोऽप्येतिलीयते तंचविकल्पनाशमनुवादःशाम्यतीति ॥ ६ ॥ संतिस
र्वत्रेतियदुक्तंतत्प्रपंचयति परस्परेतिद्वाभ्यां अन्योऽन्यस्मिन्ननुप्रवेशाद्वक्तुर्यथाविवक्षितंतथापूर्वंकारणमपरंकार्यंकार्यकारणभावेनप्रसंख्यानं
भवति यद्वा पूर्वाअल्पसंख्याऽपराधिकसंख्यातयोर्भावःपौर्वापर्यंतेनप्रसंख्यानंगणनमिति ॥७॥ अनुप्रवेशंदर्शयति एकस्मिन्नपीति पूर्वस्मि

नैतदेवंयथात्थत्वंयदहंवच्मितत्तथा ॥ एवंविवदतांहेतुंशक्तयोमेदुरत्ययाः ॥ ५ ॥ यासांव्यतिकरादासीद्विक
ल्पोवदतांपदम् ॥ प्राप्तेशमदमेऽप्येतिवादस्तमनुशाम्यति ॥ ६ ॥ परस्परानुप्रवेशात्तत्त्वानांपुरुषर्षभ ॥ पौ
र्वापर्यप्रसंख्यानंयथावक्तुर्विवक्षितं ॥ ७ ॥ एकस्मिन्नपिदृश्यंतेप्रविष्टानीतराणिच ॥ पूर्वस्मिन्वापरस्मिन्वा
तत्त्वेतत्त्वानिसर्वशः ॥ ८ ॥ पौर्वापर्यमतोमीषांप्रसंख्यानमभीप्सतां ॥ यथाविविक्तंयद्वक्त्रंगृण्हीमोयुक्तिसं
भवात् ॥ ९ ॥ अनाद्यविद्यायुक्तस्यपुरुषस्यात्मवेदनं ॥ स्वतोनसंभवादन्यस्तत्त्वज्ञोज्ञानदोभवेत् ॥ १० ॥
पुरुषेश्वरयोरत्रनवैलक्षण्यमण्वपि ॥ तदन्यकल्पनापार्थाज्ञानंचप्रकृतेर्गुणः ॥ ११ ॥ ॥ ॥

न्कारणभूतेतत्त्वेकार्यतत्वानिसूक्ष्मरूपेणप्रविष्टानिमृदिघटवत् अपरस्मिन्कार्यतत्वेकारणतत्वान्यनुगतत्वेनप्रविष्टानिघटेमृद्वत् ॥ ८ ॥
अविरोधमुपसंहरति अतोऽमीषांतत्वानांपौर्वापर्यंतत्कारणकार्यत्वंप्रसंख्यानंचन्यूनाधिकमभीप्सतांवादिनांमध्येयथाविवक्षयायद्वक्त्रंयस्य
मुखंप्रवर्ततेतत्सर्वंविविक्तंनिश्चितंवयंगृण्हीमः उक्तन्यायेनसर्वत्रमुक्तेःसंभवात् ॥ ९ ॥ ननुकार्यकारणतत्वानांपृथक्त्वापृथक्त्वविवक्षयाभव
तुनामसंख्याभेदः जीवेश्वरयोस्तुकथंभेदाभेदविवक्षयाषड्विंशतिपंचविंशतिपक्षौप्रवृत्तावतआह अनादीति स्वतोनसंभवति अन्यत
स्तुसंभवात् स्वतःसर्वज्ञःपरमेश्वरोऽन्योभवितव्यइतिषड्विंशतिपक्षाभिप्रायइत्यर्थः ॥ १० ॥ कथंतर्हिपंचविंशतिपक्षस्तत्राह पुरुषेति वै
लक्षण्यंविसदृशत्वंनास्ति द्वयोरपिचिद्रूपत्वादतस्तयोरत्यंतमन्यत्वकल्पनाअपार्थाव्यर्था एवंपंचविंशतिपक्षःप्रवृत्तइत्यर्थः नन्वेवमपी
श्वरप्रसादलभ्यज्ञानस्यपृथक्त्वात्पक्षद्वयमपिनघटतेअतआह ज्ञानंचेति सत्वगुणवृत्तित्वात्तदंतर्भूतामित्यर्थः ॥ ११ ॥

ननुज्ञानंजीवधर्मः कथंप्रकृतेर्गुणः स्यादतआह प्रकृतिरिति गुणसाम्यंहिप्रकृतिरतस्तद्विशेषरूपागुणास्तस्याएवनत्वात्मनोजीवस्याकर्तृत्वा त्तस्यास्थित्यादिहेतुभूतगुणाश्रयत्वमुपपद्यते ॥ १२ ॥ अतः सत्त्वंसत्त्वमयंज्ञानंप्रकृतेर्गुणइतिपूर्वेणैवान्वयः ननुतन्निवर्त्यंकर्माज्ञानंचत त्त्वांतरंस्यात् न रजःकर्मरजसोवृत्तिः अज्ञानंचतमसः अतः कर्माज्ञानयोःरजस्तमोद्वाराप्रकृतावेवांतर्भावइतिभावः तथापिकालस्वभाव योस्तत्त्वांतरतास्यात् न गुणव्यतिकरइति गुणानांव्यतिकरोयस्मात्सईश्वरएवकालोनाम स्वभावोनामसूत्रंमहत्तत्त्वमेवतस्यसर्वशक्तिम त्त्वात् तदेवंज्ञानादीनांयथायथमंतर्भावान्नपक्षद्वयेऽपितत्त्ववृद्धिरेतच्चपक्षांतरेष्वपिज्ञेयं पक्षांतरमुद्भावयति केतेगुणाः किंप्रयोजनाः किंस्व रूपाः एतत्सर्वंदर्शयन्नर्थान्नवैकादशपंचत्रीणीतिस्वमतत्वप्रतिपादनश्लोकेत्रीणीतिपदंव्याचष्टे सत्त्वंरजस्तमइति मतांतरेकालः सूत्रंपुरुष

प्रकृतेर्गुणसाम्यंवैप्रकृतेर्नात्मनोगुणाः सत्त्वंरजस्तमइतिस्थित्युत्पत्त्यंतहेतवः ॥ १२ ॥ सत्त्वंज्ञानंरजःक र्मतमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरःकालःस्वभावःसूत्रमेवच ॥ १३ ॥ पुरुषःप्रकृतिर्व्यक्तमहंकारो नभोऽनिलः ॥ ज्योतिरापःक्षितिरितितत्त्वान्युक्तानिमेनव ॥ १४ ॥ श्रोत्रंत्वग्दर्शनंघ्राणोजिह्वेतिज्ञानश क्तयः ॥ वाक्पाण्युपस्थपाय्वंघ्रिःकर्माण्यंगोभयंमनः ॥ १५ ॥ शब्दःस्पर्शोरसोगंधोरूपंचेत्यर्थजात यः ॥ गत्युक्त्युत्सर्गशिल्पानिकर्मायतनसिद्धयः ॥ १६ ॥ ॥ ॥ ॥

इति स्वमतेतुगुणानामागमापायित्वात्प्रकृतेर्भेदोविवक्षितः अतोगुणास्त्रीणितत्त्वानिअपराणिपंचविंशतितत्त्वानिपूर्वोक्तपक्षद्वयसाधारणा नि ॥ १३ ॥ तत्रनवदर्शयति पुरुषइतिसार्धद्वाभ्यां व्यक्तंमहत्तत्त्वं नभआदीनिपंचतन्मात्राणि मेमया ॥ १४ ॥ एकादशदर्शयति श्रो त्रमिति दर्शनंचक्षुः ज्ञानशक्तयोज्ञानेंद्रियाणि पंचवागादिपाय्वंतानि द्वंद्वैक्येनोक्तानिचत्वारिअंघ्रिश्चेतिकर्माणिकर्मेंद्रियाणिपंच उभया त्मकंमनः उभयेंद्रियसाधारणमित्यर्थः अंगहेउद्धव एवमेतान्येकादश ॥ १५ ॥ पंचदर्शयति शब्दइति शब्दादीनिविषयतयापरिणता निपंचभूतानि ननुगत्यादिभिस्तत्त्वाधिक्यंपक्षत्रयेऽपिस्यान्नेत्याह गतीति गतिश्चउक्तिश्चउत्सर्गश्चशिल्पंचत्तानिकर्मायतनानांकर्मेंद्रिया णांसिद्धयःफलानि नतत्त्वांतराणीत्यर्थः ॥ १६ ॥ ॥ ॥ ॥

तदेवंमतत्रयेपितत्त्वसंख्याभेदंनिरूप्ययद्विवक्षयागायंतीतियत्पृष्टंतत्रान्यत्तात्पर्यंदर्शयाति सर्गादाविति कार्याणिषोडशविकाराःकारणानि
महदादीनिसप्ततद्रूपिणीसतीप्रकृतिरस्यविश्वस्यसर्गादौगुणैःसृज्याद्यवस्थांधत्ते उपादानकारणत्वात् पुरुषस्तुअव्यक्तोऽपरिणामीनिमित्त
भूतःकेवलमीक्षते अतःपरिणामिन्याःप्रकृतेःपुरुषोभिन्नइति ॥ १७ ॥ तत्वैरारब्धकार्यस्यतदंतर्भावमभिप्रेत्याह व्यक्तादयइति व्यक्ताद
योमहदादयःप्रकृतेरुत्पन्नायेधातवस्तेविकुर्वाणाःपुरुषेक्षणेनलब्धवीर्याःसंहताअंडंसृजंति प्रकृतेर्बलात्तामाश्रित्येत्यर्थः ॥ १८ ॥ एवंस्वम
तमुपसंहृत्यमतांतरेष्वपिसामान्यतोनिरूपितांघटनांविशेषतःसतात्पर्यांदर्शयाति सप्तैवेति ज्ञानंजानातीतिद्रष्टाजीवः उभयोर्द्रष्टृदृश्ययो
राधारःआत्माचेतिसप्त तत्रप्रकृतीनांकारणत्वेनखादिष्वंतर्भावः उत्तरेषामंतर्भावार्थमाह ततस्तेभ्यःसप्तभ्योदेहेंद्रियासवःसर्वकार्याणिजा

**सर्गादौप्रकृतिर्ह्यस्यकार्यकारणरूपिणी ॥ सत्त्वादिभिर्गुणैर्धत्तेपुरुषोऽव्यक्तईक्षते ॥ १७ ॥ व्यक्तादयोवि
कुर्वाणाधातवःपुरुषेक्षया ॥ लब्धवीर्याःसृजंत्यंडंसंहताःप्रकृतेर्बलात् ॥ १८ ॥ सप्तैवधातवइतितत्रार्थाः
पंचखादयः ॥ ज्ञानमात्मोभयाधारस्ततोदेहेंद्रियासवः ॥ १९ ॥ षडित्यत्रापिभूतानिपंचषष्ठःपरःपुमान् ॥
तैर्युक्तआत्मसंभूतैःसृष्ट्वेदंसमुपाविशत् ॥ २० ॥ चत्वार्येवेतितत्रापितेजआपोऽन्नमात्मनः ॥ जातानितै
रिदंजातंजन्मावयविनःखलु ॥ २१ ॥ संख्यानेसप्तदशकेभूतमात्रेंद्रियाणिच ॥ पंचपंचैकमनसाआत्मास
प्तदशःस्मृतः ॥ २२ ॥ तद्वत्षोडशसंख्यानेआत्मैवमनउच्यते ॥ भूतेंद्रियाणिपंचैवमनआत्मात्रयोदश ॥
॥ २३ ॥ एकादशत्वमात्मासौमहाभूतेंद्रियाणिच ॥ अष्टौप्रकृतयश्चैवपुरुषश्चनवेत्यथ ॥ २४ ॥**

यंते ॥ १९ ॥ षडितिमतेऽपिभौतिकस्यभूतांतर्भावंजीवस्यचपरमात्मांतर्भावमाह तैर्युक्तइति सचपरःपुमांस्तैरात्मसंभूतैःपंचभूतैर्युतइदं
देहादिकंसृष्ट्वातत्स्वयंसमुपाविशत् पूर्वस्मिन्कारणेपंचभूतात्मकेभौतिकेंद्रियादीनामंतर्भावउक्तःपूर्वोक्त्याज्ञातव्यः ॥ २० चत्वारिपक्षेते
जःआपःअन्नंपृथ्वी आत्मनोजातानि आत्मनासह चत्वारितत्वानि अंतर्भावार्थमाह तैरिति तैस्तत्वैरिदंजगज्जातंअवयविनःकार्यस्य ॥ २१ ॥
भूतानिचमात्राणिचइंद्रियाणिचपंचपंचएकेनमनसासहआत्मासप्तदशः ॥ २२ ॥ आत्मैवसंकल्पयन्मनउच्यतेत्रयोदशपक्षेभूतानित
न्मात्रैरेकीकृतानिपंचैव इंद्रियाणितत्प्रकाशकानिपंचैव मनश्चैकमिंद्रियाधिष्ठाताआत्माचद्विविधः एवंत्रयोदश ॥ २३ ॥ एकादशपक्षे
पंचभूतानिपंचेंद्रियाणि जीवमनसोश्चांतर्भावेनैतान्येवएकादश नवपक्षेअष्टौप्रकृतयःपुरुषश्च प्राणःजिह्वात्वक्चक्षुःश्रोत्रंमनोहस्त
स्त्वगितिविकाराणामंतर्भावः ॥ २४ ॥ ॥ ॥ ॥

उपसंहरति इतीति एभिःप्रकारैस्तत्त्वानांगणनमृषिभिःकृतं प्रकृतिपुरुषभेदज्ञापनायेत्यर्थः ननुएतेषांकतमःपक्षस्त्याज्यइतिचेत्तत्राह सर्वमिति ॥ २५ ॥ ननुगुणसाम्यंप्रकृतिस्तस्याःसत्वादयोगुणानत्वात्मनइतितयोर्भेदाप्रतीतेःकथंज्ञातुंशक्यतइत्युद्धवःपृच्छति प्रकृतिरिति आत्मनाजडाजडस्वभावेनविलक्षणौ अन्योन्यापाश्रयात् परस्परपरिहारेणाप्रतीतेरित्यर्थः ॥ २६ ॥ अन्योन्यापाश्रयत्वमेवाह प्रकृताविति प्रकृतौतत्कार्येदेहेप्रकृतिश्चात्मनितेनविनातस्याअप्रतीतेर्नदेहात्मनोर्भेदोलक्ष्यतइत्यर्थः हृदिवर्त्तमानंसंशयं नयेनयुक्त्यानैपुणंप्रावीण्यंयेषांतैः ॥ २७ ॥ अर्हसीत्युक्तंतत्राह त्वत्तइति हियस्मात्त्वत्तःत्वत्प्रसादादेव अत्रज्ञानंप्रमोषोभ्रंशश्चतेशक्तितोमायातः ननु

इतिनानाप्रसंख्यानंतत्त्वानामृषिभिःकृतम् ॥ सर्वंन्याय्यंयुक्तिमत्त्वाद्विदुषांकिमशोभनम् ॥ २५ ॥ उद्धवउवाच प्रकृतिःपुरुषश्चोभौयद्यप्यात्मविलक्षणौ ॥ अन्योऽन्यापाश्रयात्कृष्णदृश्यतेनभिदातयोः ॥ २६ ॥ प्रकृतौलक्ष्यतेह्यात्माप्रकृतिश्चतथात्मनि ॥ एवंमेपुंडरीकाक्षमहांतंसंशयंहृदि ॥ छेत्तुमर्हसि सर्वज्ञवचोभिर्नयनैपुणैः ॥ २७ ॥ त्वत्तोज्ञानंहिजीवानांप्रमोषस्तेऽत्रशक्तितः ॥ त्वमेवह्यात्ममायायागतिंवेत्थनचापरः ॥ २८ ॥ श्रीभगवानुवाच प्रकृतिःपुरुषश्चेतिविकल्पःपुरुषर्षभ ॥ एषवैकारिकःसर्गोगुणव्यतिकरात्मकः ॥ २९ ॥ ममांगमायागुणमय्यनेकधाविकल्पबुद्धीश्चगुणैर्विधत्ते ॥ वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ३० ॥ ॥ ॥

स्वप्रकाशस्यात्मनःकथंप्रमोषःज्ञानदानेतत्प्रमोषेवाममकिंप्रयोजनंतत्राह त्वमेवेति ॥ २८ ॥ विकाराविकाराभ्यांनानात्वैकत्वाभ्यांसापेक्षनिरपेक्षप्रकाशाभ्यांचात्यंतंभेदंवक्तुमाह प्रकृतिःपुरुषश्चेति हेपुरुषर्षभयन्महदादिरूपेणपरिणमतिसाप्रकृतिःयदपरिणामिसपुरुषइतिविकल्पोऽत्यंतभेदएव कुतइत्यपेक्षायांप्रकृतिशब्दोक्तदेहादिसंघातकस्याविकारित्वंतावद्दर्शयति एषइतिद्वाभ्यां एषसर्गःसृज्यतइतिसर्गोदेहादिसंघातोवैकारिकोविकारवान् अत्रहेतुः गुणव्यतिकरात्मकोगुणक्षोभकृतः ॥ २९ ॥ नानात्वमाह ममेति विकल्पंभेदंतद्बुद्धीश्च अनेकत्वंप्रपंचयति वैकारिकःअनेकविकारवानपिस्थूलेनमार्गेणतावत्त्रिधा त्रैविध्यमाह अध्यात्ममिति एकंरूपं ॥ ३० ॥ ॥

तानिरूपाणिदर्शयति दृक्अध्यात्मं रूपमधिभूतम् अत्ररंध्रेचक्षुर्गोलकेप्रविष्टमार्कवपुरंशोऽधिदैवमिति सापेक्षप्रकाशतामाह परस्परमिति चक्षुषारूपंज्ञायते तदन्यथाऽनुपपत्याचक्षुःतत्प्रवृत्यन्यथाऽनुपपत्यातदधिष्ठात्रीदेवताततश्चचक्षुषःप्रवृत्तिस्ततोरूपज्ञानमित्येवमेतत्त्रयंपरस्परंसित्ध्यति अत्ररंध्रइतिविशेषणव्यावर्त्यमाहदृष्टांतोपयोगितया यस्तुखेआकाशेअर्कोवर्त्ततेमंडलात्मासतुस्वतःसिध्यति चक्षुर्विषयत्वेऽपिप्रतियोग्यपेक्षाभावमात्रेणस्वतइत्युक्तं इदानीमात्मनोविकारित्वाद्यभावेनभेदमाह यद्यस्मात्आत्माएषामध्यात्मादीनामाद्यःकारणमतएकरूपोभिन्नश्च तस्मादेतेभ्योऽपरोभिन्नः स्वप्रकाशत्वादपीत्याह स्वयानुभूत्यास्वतःसिद्धप्रकाशेनाखिलानांसिद्धानांपरस्परप्रकाशकानामपिप्रकाशकः सर्वेषामपिसामान्यतश्चित्प्रकाशविषयत्वादतएवस्वप्रकाशत्वंसिद्धं चक्षुषिदर्शितंत्रैविध्यमिंद्रियांतरेष्वतिदिशति एवमिति यथाचक्षुरेवंत्वगाद्यपीइत्यर्थःत्वक्स्पर्शोवायुरिति श्रवणंशब्दोदिशइति जिह्वारसोवरुणइति नासागंधोऽश्विनाविति चित्तेन युक्तमंतःकरणांतरमपि तत्रचित्तंचेतयितव्यंवासुदेवइति मनोमंतव्यंचंद्रइति बुद्धिर्बोद्धव्यंब्रह्मेति अहंकारोऽहंकर्तव्यंरुद्रइत्येवंत्रिविध

दृग्रूपमार्कंवपुरत्ररंध्रेपरस्परंसिद्ध्यतियःस्वतःखे ॥ आत्मायदेषामपरोयआद्यःस्वयाऽनूभूत्याऽखिलसिद्धसिद्धिः॥ एवंत्वगादिःश्रवणादिचक्षुर्जिह्वादिनासादिचचित्तयुक्तं ॥ ३१ ॥ योऽसौगुणक्षोभकृतोविकारःप्रधानमूलान्महतःप्रसूतः॥ अहंत्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामसऐंद्रियश्च॥३२॥ आत्मापरिज्ञानमयोविवादोह्यस्तीतिनास्तीतिभिदाऽर्थनिष्ठः ॥ व्यर्थोऽपिनैवोपरमेतपुंसांमत्तःपरावृत्तधियांस्वलोकात् ॥ ३३ ॥

मित्यर्थः ॥ ३१ ॥ ननुपुनरपिवैलक्षण्यमात्रमेवोक्तं त्रिविधप्रपंचव्यतिरिक्तात्मप्राप्तिस्तुकुतःस्यात् अहंकारनिवृत्त्या तत्कुतः त्रिविधाविकल्पानिवृत्त्यैवेत्याशयेनाह योऽसावहमहंकारः तमेवाह गुणक्षोभंकरोतीतितथा ततःपरमेश्वरात्कालनिमित्तात्प्रधानंमूलमुपादानंयस्य तस्मान्महतःप्रसूतोविकारःसत्रिवृत्त्रिविधःमोहमयस्यविकल्पस्यहेतुःत्रिवृत्त्वमेवाह वैकारिकइति ॥ ३२ ॥ सकुतोनिवर्तते आत्माज्ञानविलसितत्वात्तज्ज्ञानेनेत्याशयेनाह आत्मापरिज्ञानमयइति ननुकथंमोहमयत्वंविकल्पस्याहंकारस्यवाकैश्चित्सत्यत्वांगीकारात्तत्राह त्रिवादइति अयंभिदाअर्थनिष्ठोविवादोऽपिआत्मापरिज्ञानमयइत्यन्वयः यद्वा विवादःसर्वोऽपिभिदाऽर्थनिष्ठएवनतुवस्तुमात्रनिष्ठः अतः परस्परंयुक्तिभिरेवभेदस्यनिराकृतत्वान्मोहमयत्वंसिद्धमिति ननुयद्यहंकारोविकल्पश्चनास्तिअलंतर्हितन्निवृत्तिप्रयासेनतत्राह व्यर्थोऽपिअर्थरहितोऽपिस्वरूपभूतान्मत्तोबहिर्मुखानांनैवोपरमेत् प्रत्युततत्कृतैःकर्मभिरुच्चनीचदेहेषुतेसंसरंतीति ॥ ३३ ॥ ॥

तत्रपृच्छति त्वत्तइति व्यापकस्यात्मनोदेहाद्देहांतरगमनंअकर्तुःकर्माणिनित्यस्यचजन्ममरणादीनिकथमितिभावः ॥ ३४ ॥ एतद्विद्वांसो नसंति हियस्मान्माययावंचितामोहिताः ॥ ३५ ॥ लिंगशरीराध्यासेनसर्वंघटतइत्युत्तरमाह मनइति प्रधानत्वेनपंचभिरितिनिर्देशोऽन्ये षामप्युपलक्षणार्थं देहाद्देहांतरंप्रतियाति ततोऽन्यएवात्मातन्मनोऽनुवर्ततेअहंकारेणानुगच्छति ॥ ३६ ॥ ननुमनसोऽपिपूर्वदेहवियोगो देहांतरयोगश्चकथंभवतीतिचेत्स्मृतिवियोगयोगाभ्यामितिवक्तुंतयोःकारणमाह ध्यायन्निति कर्मतंत्रत्वात्कर्मोपस्थापितान्दृष्टान्वाअनु श्रुतान्वेदोक्तान्विषयाननुध्यायन्अथानंतरंध्यायमानेषुउद्यदाविर्भवत्पूर्वविषयेषुचसीदत्लीयमानंभवति तदनंतरंतस्यस्मृतिःपूर्वापरानु

उद्धवउवाच त्वत्तःपरावृत्तधियःस्वकृतैःकर्मभिःप्रभो ॥ उच्चावचान्यथादेहान्गृण्हंतिविसृजंतिच ॥ ३४ ॥ तन्ममाख्याहिगोविंददुर्विभाव्यमनात्मभिः ॥ नह्येतत्प्रायशोलोकेविद्वांसःसंतिवंचिताः ॥ ३५ ॥ ॥ श्रीभगवानुवाच मनःकर्ममयंनृणामिंद्रियैःपंचभिर्युतं ॥ लोकाल्लोकंप्रयात्यन्यआत्मातदनुवर्तते ॥ ॥ ३६ ॥ ध्यायन्मनोऽनुविषयान्दृष्टान्वाऽनुश्रुतानथ ॥ उद्यत्सीदत्कर्मतंत्रंस्मृतिस्तदनुशाम्यति ॥ ३७ ॥ विषयाभिनिवेशेननात्मानंयत्स्मरेत्पुनः ॥ जंतोर्वैकस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ॥ ३८ ॥ जन्मत्वात्म तयापुंसःसर्वभावेनभूरिद ॥ विषयस्वीकृतिंप्राहुर्यथास्वप्नमनोरथः ॥ ३९ ॥ स्वप्नंमनोरथंचेत्थंप्राक्तनंन स्मरत्यसौ ॥ तत्रपूर्वमिवात्मानमपूर्वंचानुपश्यति ॥ ४० ॥ ॥

संधानंनश्यति ॥ ३७ ॥ ततःकिमतआह विषयेति कर्मोपस्थापितदेवादिदेहात्यंताभिनिवेशेनात्मानंपूर्वदेहंपुनर्नस्मरेतइतियत् तस्यै वयातनादेहाभिनिवेशेनभयशोकादेर्देवादिदेहाभिनिवेशेनवाहर्षतर्षादेर्हेतोःपूर्वदेहेऽत्यंतविस्मृतिःअहंकारनिवृत्तिस्तदभिमानिनोजंतोर्जी वस्यमृत्युरुच्यतेनतुदेहवन्नाशः ॥ ३८ ॥ जन्मतुविषयस्यदेहस्यआत्मतयास्वीकृतिमभिमानंप्राहुर्नतुदेहवदुत्पत्तिः नचपुत्रादिदेहवत्प्री त्यतिशयमात्रेणकिंतुसर्वभावेनाभेदेनाभिमानमात्रेण उत्पत्तिमरणेदृष्टांतद्वयम् यथास्वप्नश्चमनोरथश्चेत्यर्थः ॥ ३९ ॥ दृष्टांतौविवृणोति स्वप्नमिति तत्रवर्तमानेस्वप्नादौ पूर्वंचेतिअपूर्वमेवेतिवान्वयः पूर्वसिद्धमप्यात्मानमपूर्वमिवाद्यजातमिवपश्यतीत्यर्थः ॥

उपसंहरति इंद्रियाणामयनंमनस्तस्यदेहांतराभिनिवेशेनयासृष्टिरुत्पत्तिस्तयावस्तुनिआत्मनितदभिमानेनेदंत्रैविध्यमुत्तममध्यमनीचत्वम सदेवभातीत्यन्वयः एवंभूतआत्मावाह्याभ्यंतरभेदहेतुश्चभवति बाह्यविषयानांतरान्सुखादींश्चपश्यतीत्यर्थः यथाजनोजीवःस्वप्नेबहूनस तोजनान्देहान्कुर्वन्पश्यन्बहुरूपोभातितद्वत् यद्वा इदंत्रैविध्यमध्यात्मादिरूपंभाति असज्जनकृत्दुष्टपुत्रोत्पादकोजनः पितास्वयंस मोऽपिपुत्राभिमानतस्तदरिमित्रादिषुयथाभेदहेतुर्भवतिनित्यदातद्वदिति अन्यत्समानं ॥ ४१ ॥ तदेवंलोकप्रसिद्धौजन्ममृत्यूनिरूप्यसू क्ष्मावपृष्ठावपितौवैराग्यायनिरूपयति नित्यदाप्रतिक्षणंभूतानिशरीराणिउत्पद्यंतेनश्यंतिच. कालस्यातिसूक्ष्मत्वात्तत्कृतंभवनमभवनंवाऽ विवेकिभिर्नलक्ष्यते ॥ ४२ ॥ सतोर्जन्ममरणयोरज्ञानेकारणमेतद्भवेत् सत्वमेवतयोःकुतइत्याशंक्यानुमानेनसाधयति यथेति अर्चिषां परिणामादिभिःस्रोतसांगत्यादिभिःफलानांरूपादिभिर्यथाऽवस्थाविशेषाःकृताः कालेनेतिपूर्वस्यानुषंगः आदिशब्देनतेजोबलकामकौ

**इंद्रियायनसृष्ठेदंत्रैविध्यंभातिवस्तुनि ॥ बहिरंतर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥ नित्यदाह्यंगभू तानिभवंतिनभवंतिच ॥ कालेनालक्ष्यवेगेनसूक्ष्मत्वात्तन्नदृश्यते ॥ ४२ ॥ यथाऽर्चिषांस्रोतसांचफलानां वावनस्पतेः ॥ तथैवसर्वभूतानांवयोऽवस्थादयःकृताः ॥ ४३ ॥ सोऽयंदीपोऽर्चिषांयद्वत्स्रोतसांतदिदंज लं ॥ सोऽयंपुमानितिनृणांमृषागीर्धीर्मृषायुषां ॥ ४४ ॥ मास्वस्यकर्मबीजेनजायतेसोऽप्ययंपुमान् ॥ म्रियतेवामरोभ्रांत्यायथाऽग्निर्दारुसंयुतः ॥ ४५ ॥ ॥ ॥ ॥ ॥**

शलादीनामुपादानं विमतंप्रतिक्षणोत्पत्तिविनाशवत् अवस्थाभेदवत्वाद्दीपज्वालादिवदित्यनुमानम् ॥ ४३ ॥ कथंतर्हिप्रत्यभिज्ञातद्द देवसादृश्यावलंबिनीत्याह सोयमिति सादृश्यादर्चिषामेवयथासोयंदीपइतिप्रत्यभिज्ञा यथाचस्रोतसांप्रवाहजलानामेवतदिदंजलमिति तथासोऽयंपुमानितिधीर्गीश्चमृषानृणांबहूनांशरीरिणांमृषाव्यर्थमायुर्येषामविवेकिनांतेषांभवति ॥ ४४ ॥ ननुकथंदेहाध्यासवतःपुंसःकर्म जन्ममरणानिसंतिनान्यस्येतिव्यवस्थानहिघटतेघटस्यपुरुषभेदेनसत्वमसत्वंचेतिन अज्ञस्यापिवस्तुतस्तदभावादित्याह मास्वस्यनैवात्म नःकर्मणाबीजभूतेनसोपिपुमान्जायतेम्रियतेवा किंतु अयंभ्रांत्याऽजन्मापिजायतइवअमरोपिम्रियतइव यथामहाभूततेजोरूपोऽग्निराक ल्पांतमवस्थितोपिदारुयोगवियोगाभ्यांजन्मनाशौप्राप्नोतितद्वत् ॥ ४५ ॥ ॥ ॥

सिद्धवत्कृत्योक्तावयोवस्थाःप्रपंचयति निषेकोजठरेप्रवेशः गर्भस्तन्मध्येवृद्धिः बाल्यंशिशुत्वमापंचमाब्दात् कौमारमाषोडशाद्वर्षात् ततो यौवनमापंचाशत् ततोवयोमध्यमाषष्टिवर्षात् ॥ ४६ ॥ देहसंबंधाज्जन्ममरणादीत्युपपादितमर्थमुपसंहरति एताइति हिस्फुटम् अन्यस्यदेहस्यतनूःअवस्थाःगुणसंगात्प्रकृत्यविवेकात् कश्चित्परमेश्वरानुग्रहतःक्वचित्कथंचिज्जहाति अवस्थावतोदेहस्यद्रष्टानासाववस्थावानितिविवेकज्ञानेन ॥ ४७ ॥ ननुतदानींमूर्छितत्वेनजन्ममरणवान्देहोनदृश्यतेतत्राह आत्मनइति पितृदेहस्यौर्ध्वदेहिकंकुर्वतोऽप्ययदर्शनात्पुत्रदेहस्यचजातकर्मणिजन्मदर्शनादात्मनःस्वस्यदेहस्यापिभवाप्ययावनुमेयौ एवंचदृश्यत्वेसतिभवाप्ययवतांवस्तूनांदेहानामभिन्नोद्रष्टाऽद्वयलक्षणोभवाप्ययधर्मकोनभवति ॥ ४८ ॥ एतदेवदृष्टांतेनस्पष्टयति तरोरिति तरुशब्दोनउद्भिज्जमात्रस्योपलक्षणंकिंतु

निषेकगर्भजन्मानिबाल्यकौमारयौवनं ॥ वयोमध्यंजरामृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥ एतामनोरथमयीह्यन्यस्योच्चावचास्तनूः ॥ गुणसंगादुपादत्तेक्वचित्कश्चिज्जहातिच ॥४७॥ आत्मनःपितृपुत्राभ्यामनुमेयौभवाप्ययौ ॥ नभवाप्ययवस्तूनामभिज्ञोद्वयलक्षणः ॥ ४८ ॥ तरोर्बीजविपाकाभ्यांयोविद्वान्जन्मसंयमौ ॥ तरोर्विलक्षणोद्रष्टाएवंद्रष्टातनोःपृथक् ॥४९॥ प्रकृतेरेवमात्मानमविविच्याबुधःपुमान् ॥ तत्त्वेनस्पर्शसंमूढः संसारंप्रतिपद्यते ॥ ५० ॥ सत्त्वसंगादृषीन्देवान्रजसासुरमानुषान् ॥ तमसाभूततिर्यक्त्वंभ्रामितोयातिकर्मभिः ॥ ५१ ॥ नृत्यतोगायतःपश्यन्यथैवानुकरोतितान् ॥ एवंबुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते॥५२॥ यथांऽभसाप्रचलतातरवोपिचलाइव ॥ चक्षुषाभ्राम्यमाणेनदृश्यतेभ्रमतीवभूः ॥ ५३ ॥ ॥

फलपाकांतस्यव्रीह्यादेरित्यर्थः यद्वातरोर्योंऽत्यःपरिणामोविपाकः बीजाज्जन्मविपाकात्संयमंनाशंचाविद्वान् ॥ ४९ ॥ अविवेकिनःसंसारंप्रपंचयाति प्रकृतेरितिपंचभिः तत्त्वेनतत्त्वतोविविच्यतत्त्वमदृष्ट्वास्पर्शेषुविषयेषुसंमूढइतिवा ॥ ५० ॥ गुणभेदेनत्रिविधंतत्रापिचतारतम्येनैकैकत्राद्विविधंसंसारमाह सत्वेति ॥ ५१ ॥ ननुअकर्तुरात्मनःकुतःकर्मभिर्भ्रमणंतत्राह नृत्यतोगायतोजनान्पश्यन्ननुकरोति तद्गतस्वरतालादिगतिशृंगारकरुणादिरसंचमनस्यनुवर्तयतीत्यर्थः एवमनुकार्यतेगुणैर्बलादित्यर्थः अनेनदृष्टांतेनदृश्यधर्मोद्रष्टरिस्फुरतीतिदर्शितम् ॥ ५२ ॥ उपाधिधर्माश्चोपाहितेऽवभासंतेइत्यत्रदृष्टांतमाह यथांभसेति तटस्थास्तरवोधावंतइवेतिदृश्यंते जलेप्रतिबिंबितावाचंचलाइवेति विषयग्राहकेणमनसापरिकल्पिताएवतेषुलावण्यादयोगुणानवस्तुतःसंति अतोमनोनिबंधनएवसंसारइत्यभिप्रेत्यग्राहकगुणाग्राह्येऽवभासंतइत्यत्रदृष्टांतमाह चक्षुषेति ॥ ५३ ॥ ॥ ॥ ॥

भोगस्यापिमिथ्यात्वेदृष्टांतद्वयमाह यथेति यथाएताःप्रसिद्धामनोरथधियःस्वप्नदृष्टाश्चधियोमृषाएवमात्मनोविषयानुभवःसंसारोमृषा ॥५४॥ ननुयदिमृषातर्हिकिंतन्निवृत्तिश्रमेणअतआह अर्थेहीति अस्यात्मनः ॥ ५५ ॥ अतोभोगोद्यमोनकर्तव्यइत्याह तस्मादिति ॥ ५६ ॥ दुःखप्रतीकारोद्यममपिपरित्यज्यपरमेश्वरनिष्ठेनैवभाव्यमित्याह क्षिप्तइतिद्वाभ्यां क्षिप्तःआक्षिप्तःनुन्नइतिवा प्रलब्धउपहसितः ॥ ५७ ॥ निष्ठितःनिष्ठीवनविषयीकृतः मूत्रितोमूत्रेणार्द्रीकृतः प्रकंपितःपरमेश्वरनिष्ठातःप्रच्यावितोपि कृच्छ्रगतःकृच्छ्रंप्राप्तोपि ॥ ५८ ॥ एवंत्वदुक्तंयथाचअनुबुध्येयंतथानःअस्मान्प्रतिवद ॥ ५९ ॥ त्वद्धर्मनिरतान्ऋतेविदुषामपिअसद्भिःकृतमतिक्रममपराधंसुदुःसहंमन्यइत्यन्वयः प्रकृतिःस्वभावः

यथामनोरथधियोविषयानुभवोमृषा ॥ स्वप्नदृष्टाश्चदाशार्हतथासंसारआत्मनः ॥ ५४ ॥ अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयानस्यस्वप्नेऽनर्थागमोयथा॥५५॥ तस्मादुद्धवमाभुंक्ष्वविषयानसदिंद्रियैः ॥ आत्माग्रहणनिर्भातंपश्यवैकल्पिकंभ्रमम् ॥५६॥ क्षिप्तोऽवमानितोसद्भिःप्रलब्धोऽसूयितोऽथवा ॥ताडितःसन्निबद्धोवावृत्त्यावापरिहापितः ॥५७॥ निष्ठितोमूत्रितोवाऽज्ञैर्बहुधैवंप्रकंपितः ॥ श्रेयस्कामःकृच्छ्रगतआत्मनात्मानमुद्धरेत् ॥५८॥ उद्धवउवाच यथैवमनुबुध्येयंवदनोवदतांवर ॥ सुदुःसहमिमंमन्येआत्मन्यसदतिक्रमं ॥ ५९ ॥ विदुषामपिविश्वात्मन्प्रकृतिर्हिबलीयसी ॥ ऋतेत्वद्धर्मनिरतांञ्छांतांस्तेचरणालयान् ॥६०॥ इ०भा०म०ए०भगवदुद्धवसंवादेद्वाविंशोध्यायः ॥२२॥ ॥छ॥ बादरायणिरुवाच सएवमाशंसितउद्धवेनभागवतमुख्येनदाशार्हमुख्यः ॥ सभाजयन्भृत्यवचोमुकुंदस्तमाबभाषेश्रवणीयवीर्यः ॥ १ ॥

निरस्यसर्वसंदेहमेकीकृत्यसुदर्शनं ॥ प्रकाशितरहस्यंतंभजस्वगुरुमीश्वरं ॥ ६० ॥ इत्येकादशेटीकायांद्वाविंशोध्यायः ॥ २२ ॥ त्रयोविंशेतिरस्कारसहनोपायईर्यते॥भिक्षुगीतप्रकारेणमनसःसंयमोधिया॥१॥दुर्जनोपद्रवोनूनंदुःसहोहिमहीयसां॥अतश्चतुर्भिरध्यायैःसहनोपायवर्णनं॥२॥ तत्रतावदस्मिन्नध्यायेभिक्षुगीतयामनोविजयः उत्तरस्मिन्प्रकृतिपुरुषविवेकः तदुत्तरस्मिन्गुणवृत्तिविजयः ततःपरस्मिन्नैलगीतया विषयसंगत्यागेनसत्संगः इतिक्रमेणोपायाभगवतावर्ण्यंते आशंसितःप्रार्थितोभृत्यस्यवचःसत्कुर्वंस्तंभृत्यंप्रतिआबभाषे ॥ १ ॥

तत्रतावदंगीकुर्वंस्तद्वचःसंपूजयातिद्वाभ्यां हेबार्हस्पत्यबृहस्पतेःशिष्य अत्रलोकेससाधुर्नास्ति योदुर्जनोक्तैर्भिन्नंक्षुभितंमनःशमयितुमीश्वरःस्यात् ॥ २ ॥ कुतइत्यतआह नेति यथामर्मस्थाःमर्मस्वेवानित्यंस्थिताःपरुषोक्तिरूपाइषवस्तुदंतिव्यथयंतितथाइतरेबाणानतुदंतिअतस्तैस्तथानतप्यतइत्यर्थः ॥ ३ ॥ तथापिमयावक्ष्यमाणैरुपायैःसर्वंसोढुंशक्यमित्यभिप्रायेणेतिहासंप्रस्तौति महद्यथाभवतितथापुण्यमितिहासंगाथांकथयंति ॥ ४ ॥ ५ ॥ सभिक्षुःपूर्वंधनाढ्यःकृच्छ्रार्जितस्यधनस्यनाशेनसंतप्यमानोनिर्विण्णःसन्प्रव्रज्यभिक्षामटन्दुर्जनैरुपद्रुतःप्रस्तुतोपयोगिनींगाथामगायतइतिवक्तुंतस्यचरितमाह अवंतिष्वित्यादिना अवंतिषुमालवेषु वार्ताकृषिवाणिज्यादिरूपावृत्तिर्य



श्रीभगवानुवाच बार्हस्पत्यसवैनात्रसाधुर्वैदुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानंयःसमाधातुमीश्वरः ॥ २ ॥ नतथातप्यतेबिद्धःपुमान्बाणैःसुमर्मगैः ॥ यथातुदंतिमर्मस्थाह्यसतांपरुषेषवः ॥ ३ ॥ कथयंतिमहत्पुण्यमितिहासमिहोद्धव ॥ तमहंवर्णयिष्यामिनिबोधसुसमाहितः ॥ ४ ॥ केनचिद्भिक्षुणागीतंपरिभूतेनदुर्जनैः ॥ स्मरताधृतियुक्तेनविपाकंनिजकर्मणां ॥ ५ ॥ अवंतिषुद्विजःकश्चिदासीदाढ्यतमःश्रिया ॥ वार्तावृत्तिःकदर्यस्तुकामीलुब्धोऽतिकोपनः ॥ ६ ॥ ज्ञातयोऽतिथयस्तस्यवाङ्मात्रेणापिनार्चिताः ॥ शून्यावसथआत्मापिकालेकामैरनार्चितः ॥ ७ ॥ दुःशीलस्यकदर्यस्यद्रुह्यंतेपुत्रबांधवाः ॥ दारादुहितरोभृत्याविषण्णानाचरन्प्रियं ॥ ८ ॥ तस्यैवंयक्षवित्तस्यच्युतस्योभयलोकतः ॥ धर्मकामविहीनस्यचुक्रुधुःपंचभागिनः ॥ ९ ॥ तदवध्यानविस्रस्तपुण्यस्कंधस्यभूरिद ॥ अर्थोऽप्यगच्छन्निधनंबह्वायासपरिश्रमः ॥ १० ॥ ज्ञातयोजगृहुःकिंचित्किंचिद्दस्यवउद्धव ॥ दैवतःकालतःकिंचित्ब्रह्मबंधोर्नृपार्थिवात् ॥ ११ ॥

स्य कदर्यश्च कदर्यस्तुस्मृतावुक्तः आत्मानंधर्मकृत्यंचपुत्रदारांश्चपीडयन् ॥ देवताऽतिथिभृत्यांश्चसकदर्यइतिस्मृतइति ॥ ६ ॥ तस्ययेज्ञातयोबांधवाअतिथयोऽध्वनीनाश्चतेननार्चिताइत्यर्थः शून्यावसथेधर्महीनेगृहेदेहेवा ॥ ७ ॥ ८ ॥ यक्षाणांवित्तमिवकेवलंरक्षणीयंवित्तंयस्य पंचभागिनःपंचयज्ञदेवताः ॥ ९ ॥ तेषामवध्यानमनादरस्तेनविस्रस्तोविशीर्णःपुण्यस्यस्कंधःअर्थलाभमात्रहेतुरंशोयस्य बह्वायासैःकृष्यादिभिःकेवलंश्रमोयस्मिन्सः ॥ १० ॥ दैवतःगृहदाहादिना कालतःनिखातधान्यादिना नृणांपार्थिवानांचद्वंद्वैक्यं तस्मात् ॥ ११ ॥

उपसंहरति इंद्रियाणामयनंमनस्तस्यदेहांतराभिनिवेशेनयासृष्टिरुत्पत्तिस्तयावस्तुनिआत्मनितदभिमानेनेदंत्रैविध्यमुत्तममध्यमनीचत्वम
सदेवभातीत्यन्वयः एवंभूतआत्माबाह्याभ्यंतरभेदहेतुश्चभवति बाह्यविषयानांतरान्सुखादींश्चपश्यतीत्यर्थः यथाजनोजीवःस्वप्नेबहूनस
तोजनान्देहान्कुर्वन्पश्यन्बहुरूपोभातितद्वत् यद्वा इदंत्रैविध्यमध्यात्मादिरूपंभाति असज्जनकृत्दुष्टपुत्रोत्पादकोजनः पितास्वयंस
मोऽपिपुत्राभिमानतस्तदरिमित्रादिषुयथाभेदहेतुर्भवतिनित्यदातद्वदिति अन्यत्समानं ॥ ४१ ॥ तदेवंलोकप्रसिद्धौजन्ममृत्यूनिरूप्यसू
क्ष्मावपृष्टावपितौवैराग्यायानिरूपयति नित्यदाप्रतिक्षणंभूतानिशरीराणिउत्पद्यंतेनश्यंतिच कालस्यातिसूक्ष्मत्वात्तत्कृतंभवनमभवनंवाऽ
विवेकिभिर्नलक्ष्यते ॥ ४२ ॥ सतोर्जन्ममरणयोरज्ञानेकारणमेतद्भवेत् सत्वमेवतयोःकुतइत्याशंक्यानुमानेनसाधयति यथेति अर्चिषां
परिणामादिभिःस्रोतसांगत्यादिभिःफलानांरूपादिभिर्यथाऽवस्थाविशेषाःकृताः कालेनेतिपूर्वस्यानुषंगः आदिशब्देनतेजोबलकामकौ

**इंद्रियायनसृष्ट्येदंत्रैविध्यंभातिवस्तुनि ॥ बहिरंतर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥ नित्यदाह्यंगभू**
**तानिभवंतिनभवंतिच ॥ कालेनालक्ष्यवेगेनसूक्ष्मत्वात्तन्नदृश्यते ॥ ४२ ॥ यथाऽर्चिषांस्रोतसांचफलानां**
**वावनस्पतेः ॥ तथैवसर्वभूतानांवयोऽवस्थादयःकृताः ॥ ४३ ॥ सोऽयंदीपोऽर्चिषांयद्वत्स्रोतसांतदिदंज**
**लं ॥ सोऽयंपुमानितिनृणांमृषागीर्धीर्मृषायुषां ॥ ४४ ॥ मास्वस्यकर्मबीजेनजायतेसोऽप्ययंपुमान् ॥**
**म्रियतेवामरोभ्रांत्यायथाऽग्निर्दारुसंयुतः ॥ ४५ ॥ ॥ ॥ ॥ ॥**

शलादीनामुपादानं विमतंप्रतिक्षणोत्पत्तिविनाशवत् अवस्थाभेदवत्वाद्दीपज्वालादिवदित्यनुमानम् ॥ ४३ ॥ कथंतर्हिप्रत्यभिज्ञातद्द
देवसादृश्यावलंबिनीत्याह सोयमिति सादृश्यादर्चिषामेवयथासोयंदीपइतिप्रत्यभिज्ञा यथाचस्रोतसांप्रवाहजलानामेवतदिदंजलमिति
तथासोऽयंपुमानितिधीर्गीश्चमृषानृणांबहूनांशरीरिणांमृषाव्यर्थंमायुर्येषामविवेकिनांतेषांभवति ॥ ४४ ॥ ननुकथंदेहाध्यासवतःपुंसःकर्म
जन्ममरणानिसंतितनान्यस्येतिव्यवस्थानहिघटतेघटस्यपुरुषभेदेनसत्वमसत्वंचेतिन अज्ञस्यापिवस्तुतस्तदभावादित्याह मास्वस्यनैवात्म
नःकर्मणाबीजभूतेनसोपिपुमान्जायतेम्रियतेवा किंतु अयंभ्रांत्याऽजन्मापिजायतइवअमरोपिम्रियतइव यथामहाभूततेजोरूपोऽग्निराक
ल्पांतमवस्थितोपिदारुयोगवियोगाभ्यांजन्मनाशौप्राप्नोतितद्वत् ॥ ४५ ॥ ॥ ॥

सिद्धवत्कृत्योक्तावयोवस्थाःप्रपंचयति निषेकोजठरेप्रवेशः गर्भस्तन्मध्येवृद्धिः बाल्यंशिशुत्वमापंचमाब्दात् कौमारमाषोडशाद्वर्षात् ततो यौवनमापंचाशत् ततोवयोमध्यमाषष्टिवर्षात् ॥ ४६ ॥ देहसंबंधाज्जन्ममरणादीत्युपपादितमर्थमुपसंहरति एताइति हिस्फुटम् अन्य स्यदेहस्यतनूः अवस्थाःगुणसंगात्प्रकृत्यविवेकात् कश्चित्परमेश्वरानुग्रहतः क्वचित्कथंचिज्जहाति अवस्थावतोदेहस्यद्रष्टानासाववस्थावा निितिविवेकज्ञानेन ॥ ४७ ॥ ननुतदानींमूर्छितत्वेनजन्ममरणवान्देहोनदृश्यतेतत्राह आत्मनइति पितृदेहस्यौर्ध्वदेहिकंकुर्वतोऽप्यय दर्शनात्पुत्रदेहस्यचजातकर्मणिजन्मदर्शनादात्मनःस्वस्यदेहस्यापिभवाप्ययावनुमेयौ एवंचदृश्यत्वेसतिभवाप्ययवतांवस्तूनांदेहानाम भिन्नोद्रष्टाऽद्वयलक्षणोभवाप्ययधर्मकोनभवति ॥ ४८ ॥ एतदेवदृष्टांतेनस्पष्टयति तरोरिति तरुशब्दोनउद्भिज्जमात्रस्योपलक्षणंकिंतु

निषेकगर्भजन्मानिबाल्यकौमारयौवनं ॥ वयोमध्यंजरामृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥ एतामनोरथम यीह्यन्यस्योच्चावचास्तनूः ॥ गुणसंगादुपादत्तेक्वचित्काश्चिज्जहातिच ॥४७॥ आत्मनःपितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ नभवाप्ययवस्तूनामभिज्ञोद्वयलक्षणः ॥४८॥ तरोर्बीजविपाकाभ्यांयोविद्वान्जन्मसंयमौ ॥ तरोर्विलक्षणोद्रष्टाएवंद्रष्टातनोःपृथक् ॥४९॥ प्रकृतेरेवमात्मानमविविच्याबुधःपुमान् ॥ तत्त्वेनस्पर्शसंमूढः संसारंप्रतिपद्यते ॥ ५० ॥ सत्त्वसंगादृषीन्देवान्रजसासुरमानुषान् ॥ तमसाभूततिर्यक्त्वंभ्रामितोयातिक र्मभिः ॥ ५१॥ नृत्यतोगायतःपश्यन्यथैवानुकरोतितान् ॥ एवंबुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते॥५२॥ यथांऽभसाप्रचलतातरवोपिचलाइव ॥ चक्षुषाभ्राम्यमाणेनदृश्यतेभ्रमतीवभूः ॥ ५३ ॥ ॥

फलपाकांतस्यव्रीह्यादेरित्यर्थः यद्वातरोर्योऽत्यःपरिणामोविपाकः बीजाज्जन्मविपाकात्संयमंनाशंचाविद्वान् ॥ ४९ ॥ अविवेकिनःसं सारंप्रपंचयति प्रकृतेरितिपंचभिः तत्त्वेनतत्वतोविविच्यतत्स्वमहङ्कारस्पर्शेषुविषयेषुसंमूढइतिवा ॥ ५० ॥ गुणभेदेनत्रिविधंतत्रापिचता रतम्येनैकैकत्रद्विविधंसंसारमाह सत्वेति ॥ ५१ ॥ ननुअकर्तुरात्मनःकुतःकर्मभिर्भ्रमणंतत्राह नृत्यतोगायतोजनान्पश्यन्ननुकरोति तद्ग तस्वरतालादिगतिंशृंगारकरुणादिरसंचमनस्यनुवर्तयतीत्यर्थः एवमनुकार्यतेगुणैर्बलादित्यर्थः अनेनदृष्टांतेनदृश्यधर्मोद्रष्टरिस्फुरतीतिद र्शितम् ॥ ५२ ॥ उपाधिधर्माश्चोपाहितेऽवभासंतेइत्यत्रदृष्टांतमाह यथांभसेति तटस्थास्तरवोधावंतइवेतिदृश्यंते जलेप्रतिबिंबितावाचं चलाइवेति विषयग्राहकेणमनसापरिकल्पिताएवतेषुलावण्यादयोगुणानवस्तुतःसंति अतोमनोनिबंधनएवसंसारइत्यभिप्रेत्यग्राहकगु णाग्राह्येऽवभासंतइत्यत्रदृष्टांतमाह चक्षुषेति ॥ ५३ ॥ ॥ ॥ ॥

भोगस्यापिमिथ्यात्वेदृष्टांतद्वयमाह यथेति यथाएताःप्रसिद्धामनोरथधियःस्वप्नदृष्टाश्चधियोमृषाएवमात्मनोविषयानुभवःसंसारोमृषा ॥५४॥
ननुयदिमृषातर्हिकिंतन्निवृत्तिश्रमेणअतआह अर्थेहीति अस्यात्मनः ॥ ५५ ॥ अतोभोगोद्यमोनकर्तव्यइत्याह तस्मादिति ॥ ५६ ॥ दुःखप्रती
कारोद्यममपिपरित्यज्यपरमेश्वरनिष्ठैवभाव्यमित्याह क्षिप्तइतिद्वाभ्यां क्षिप्तःआक्षिप्तःनुन्नइतिवा प्रलब्धउपहसितः ॥ ५७ ॥ निष्ठितःनिष्ठी
वनविषयीकृतः मूत्रितोमूत्रेणार्द्रीकृतः प्रकंपितःपरमेश्वरनिष्ठातःप्रच्यावितोपि कृच्छ्रगतःकृच्छ्रंप्राप्तोपि ॥ ५८ ॥ एवंत्वदुक्तंयथाचअनुबु
ध्येयंतथानःअस्मान्प्रतिवद ॥ ५९ ॥ त्वद्धर्मनिरतान्ऋतेविदुषामपिअसद्भिःकृतमतिक्रममपराधंसुदुःसहंमन्यइत्यन्वयः प्रकृतिःस्वभावः

यथामनोरथधियोविषयानुभवोमृषा ॥ स्वप्नदृष्टाश्चदाशार्हतथासंसारआत्मनः ॥ ५४ ॥ अर्थेह्यविद्यमाने
पिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयानस्यस्वप्नेऽनर्थागमोयथा॥५५॥ तस्मादुद्धवमाभुंक्ष्वविषयानसदिंद्रि
यैः ॥ आत्माग्रहणनिर्भातंपश्यवैकल्पिकंभ्रमम् ॥५६॥ क्षिप्तोऽवमानितोसद्भिःप्रलब्धोऽसूयितोऽथवा ॥ता
डितःसन्निबद्धोवावृत्त्यावापरिहापितः ॥५७॥ निष्ठितोमूत्रितोवाऽज्ञैर्बहुधैवंप्रकंपितः ॥ श्रेयस्कामःकृच्छ्रग
तआत्मनात्मानमुद्धरेत् ॥५८॥ उद्धवउवाच यथैवमनुबुध्येयंवदनोवदतांवर ॥ सुदुःसहमिमंमन्येआत्मन्य
सदतिक्रमं ॥ ५९ ॥ विदुषामपिविश्वात्मन्प्रकृतिर्हिबलीयसी ॥ ऋतेत्वद्धर्मनिरतांञ्छांतांस्तेचरणालयान्
॥६०॥ इ०भा०म०ए०भगवदुद्धवसंवादेद्वाविंशोध्यायः ॥ २२॥ ॥छ॥ बादरायणिरुवाच सएवमाशं
सितउद्धवेनभागवतमुख्येनदाशार्हमुख्यः ॥ सभाजयन्भृत्यवचोमुकुंदस्तमाबभाषेश्रवणीयवीर्यः ॥ १ ॥

निरस्यसर्वंसंदेहमेकीकृत्यसुदर्शनं ॥ प्रकाशितरहस्यंतंभजस्वगुरुमीश्वरं ॥ ६० ॥ इत्येकादशेटीकायांद्वाविंशोध्यायः ॥ २२ ॥ त्रयोविंशे
तिरस्कारसहनोपायईर्यते॥भिक्षुगीतप्रकारेणमनसःसंयमोधिया॥१॥दुर्जनोपद्रवोनूनंदुःसहोहिमहीयसां॥अतश्चतुर्भिरध्यायैःसहनोपायवर्ण
नं ॥२॥ तत्रतावदस्मिन्नध्यायेभिक्षुगीतयामनोविजयः उत्तरस्मिन्प्रकृतिपुरुषविवेकः तदुत्तरस्मिन्गुणवृत्तिविजयः ततःपरस्मिन्नैलगीतया
विषयसंगत्यागेनसत्संगः इतिक्रमेणोपायाभगवतावर्ण्यंते आशंसितःप्रार्थितोभृत्यस्यवचःसत्कुर्वंस्तंभृत्यंप्रतिआबभाषे ॥ १ ॥

तत्रतावदंगीकुर्वंस्तद्वचःसंपूजयतिद्वाभ्यां हेबार्हस्पत्यबृहस्पतेःशिष्य अत्रलोकेससाधुर्नास्ति योदुर्जनोक्तैर्भिन्नंक्षुभितंमनःशामयितुमीश्व
रःस्यात् ॥ २ ॥ कुतइत्यतआह नेति यथामर्मस्थाःमर्मस्वेवनित्यंस्थिताःपरुषोक्तिरूपाइषवस्तुदंतिव्यथयंतितथाइतरेबाणानतुदंतिअत
स्तैस्तथानतप्यतइत्यर्थः ॥ ३ ॥ तथापिमयावक्ष्यमाणैरुपायैःसर्वंसोढुंशक्यमित्यभिप्रायेणेतिहासंप्रस्तौति महद्यथाभवतितथापुण्यामि
तिहासंगाथांकथयंति ॥ ४ ॥ ५ ॥ सभिक्षुःपूर्वंधनाढ्यःकृच्छ्रार्जितस्यधनस्यनाशेनसंतप्यमानोनिर्विण्णःसन्प्रव्रज्यभिक्षामटन्दुर्जनै
रुपद्रुतःप्रस्तुतोपयोगिनींगाथामगायतइतिवक्तुंतस्यचरितमाह अवंतिष्वित्यादिना अवंतिषुमालवेषु वार्त्ताकृषिवाणिज्यादिरूपावृत्तिर्यं

श्रीभगवानुवाच बार्हस्पत्यसवैनात्रसाधुर्वैदुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानंयःसमाधातुमीश्वरः ॥ २ ॥
नतथातप्यतेबिद्धःपुमान्बाणैःसुमर्मगैः ॥ यथातुदंतिमर्मस्थाह्यसतांपरुषेषवः ॥ ३ ॥ कथयंतिमहत्पुण्यमि
तिहासमिहोद्धव ॥ तमहंवर्णयिष्यामिनिबोधसुसमाहितः ॥ ४ ॥ केनचिद्भिक्षुणागीतंपरिभूतेनदुर्जनैः॥स्म
रताधृतियुक्तेनविपाकंनिजकर्मणां ॥ ५ ॥ अवंतिषुद्विजःकश्चिदासीदाढ्यतमःश्रिया ॥ वार्त्तावृत्तिःकदर्य
स्तुकामीलुब्धोऽतिकोपनः ॥ ६ ॥ ज्ञातयोऽतिथयस्तस्यवाङ्मात्रेणापिनार्चिताः ॥ शून्यावसथआत्मापि
कालेकामैरनार्चितः ॥७॥ दुःशीलस्यकदर्यस्यद्रुह्यंतेपुत्रबांधवाः ॥ दारादुहितरोभृत्याविषण्णानाचरन्प्रि
यं ॥ ८ ॥ तस्यैवंयक्षवित्तस्यच्युतस्योभयलोकतः ॥ धर्मकामविहीनस्यचुक्रुधुःपंचभागिनः ॥९॥ तदव
ध्यानविस्रस्तपुण्यस्कंधस्यभूरिद ॥ अर्थोऽप्यगच्छन्निधनंबह्वायासपरिश्रमः ॥ १० ॥ ज्ञातयोजगृहुः
किंचित्किंचिद्दस्यवउद्धव ॥ दैवतःकालतःकिंचित्ब्रह्मबंधोर्नृपार्थिवात् ॥ ११ ॥

स्य कदर्यश्च कदर्यस्तुस्मृतावुक्तः आत्मानंधर्मकृत्यंचपुत्रदारांश्चपीडयन् ॥ देवताऽतिथिभृत्यांश्चसकदर्यइतिस्मृतइति ॥ ६ ॥ तस्ययेज्ञा
तयोबांधवाअतिथयोऽध्वनीनाश्चतेननार्चिताइत्यर्थः शून्यावसथेधर्महीनेगृहेदेहेवा ॥ ७ ॥ ८ ॥ यक्षाणांवित्तमिवकेवलंरक्षणीयंवित्तंयस्य
पंचभागिनःपंचयज्ञदेवताः ॥ ९ ॥ तेषामवध्यानमनादरस्तेनविस्रस्तोविशीर्णःपुण्यस्यस्कंधःअर्थलाभमात्रहेतुरंशोयस्य बह्वायासैःकृ
च्छ्रादिभिःकेवलंश्रमोयस्मिन्सः ॥ १० ॥ दैवतःगृहदाहादिना कालतःनिखातधान्यादिना नृणांपार्थिवानांचद्वंद्वैक्यं तस्मात् ॥ ११ ॥

॥ १२ ॥ नष्टरायःनष्टोराअर्थोयस्यतस्यतपस्विनःसंतप्तस्य ॥ १३ ॥ मेमया आत्मादेहः वृथाचात्मानुतापंप्रपंचयतिनधर्मायेत्यादिना । यस्यईदृशोऽर्थायासस्तेनमया ॥ १४ ॥ नरकायसत्यप्यर्थेधर्माननुष्ठानात् ॥ १५ ॥ श्वित्रः श्वेतकुष्ठं ॥ १६ ॥ सिद्धेऽप्यर्थेतस्यउत्कर्षेसंवर्धने नाशोपभोगयोर्द्वैक्यं नाशेउपभोगेचेत्यर्थःसाधनोत्कर्षयोरायासस्ततस्त्रासश्चिंताचनाशेभ्रमइति ॥ १७ ॥ किंच अर्थप्राप्त्यर्थाःस्तेयादयः षट् प्राप्तेऽर्थेस्मयादयोव्यसनैः सहनव व्यसनानिस्त्रीद्यूतमद्यविषयाणि ॥ १८ ॥ १९ ॥ भेदवैरस्पर्धाःप्रपंचयतिद्वाभ्यां भिद्यंतेस्नेहं

सएवंद्रविणेनष्टेधर्मकामविवर्जितः ॥ उपेक्षितश्चस्वजनैश्चिंतामापदुरत्ययाम् ॥ १२ ॥ तस्यैवंध्यायतोदीर्घंनष्टरायस्तपस्विनः ॥ खिद्यतोबाष्पकंठस्यनिर्वेदःसुमहानभूत् ॥ १३ ॥ सचाहेदमिदंकष्टंवृथात्मामेऽनुतापितः ॥ नधर्मायनकामाययस्यार्थायासईदृशः ॥ १४ ॥ प्रायेणार्थाःकदर्याणांनसुखायकदाचन ॥ इहचात्मोपतापायमृतस्यनरकायच ॥ १५ ॥ यशोयशस्विनांशुद्धंश्लाघ्यायेगुणिनांगुणाः ॥ लोभःस्वल्पोपितान्हंतिश्वित्रोरूपमिवेप्सितम् ॥ १६ ॥ अर्थस्यसाधनेसिद्धउत्कर्षेरक्षणेव्यये ॥ नाशोपभोगआयासस्त्रासश्चिंताभ्रमोनृणाम् ॥ १७ ॥ स्तेयंहिंसाऽनृतंदंभःकामःक्रोधःस्मयोमदः ॥ भेदोवैरमविश्वासःसंस्पर्धाव्यसनानिच ॥ १८ ॥ एतेपंचदशानर्थाह्यर्थमूलामतानृणाम् ॥ तस्मादनर्थमर्थाख्यंश्रेयोऽर्थीदूरतस्त्यजेत् ॥ १९ ॥ भिद्यंतेभ्रातरोदाराःपितरःसुहृदस्तथा ॥ एकास्निग्धाःकाकिणिनासद्यःसर्वेऽरयःकृताः ॥ ॥ २० ॥ अर्थेनाल्पीयसाह्येतेसंरब्धादीप्तमन्यवः ॥ त्यजंत्याशुस्पृधोघ्नंतिसहसोत्सृज्यसौहृदम् ॥ २१ ॥ लब्ध्वाजन्मामरप्रार्थ्यंमानुष्यंतद्द्विजाग्र्यताम् ॥ तदनादृत्ययेस्वार्थंघ्नंतियांत्यशुभांगतिम् ॥ २२ ॥

त्यजंति कथंभूताः एकास्निग्धाःएकेएकप्राणास्तेचतेआस्निग्धाःअतिप्रियाश्चेत्यर्थः कुतः काकिणिना पुंस्त्वमार्षं विंशतिवराटिकाकाकिणीतया ॥ २० ॥ संरब्धाःक्षुभिताः स्पृधःस्पर्धमानाः ॥ २१ ॥ इहतावदर्थनिष्ठानामेतेऽनर्थाः परलोकेऽप्यनर्थाएवतेषामित्याह लब्ध्वेतित्रिभिः मानुष्यंजन्मतत्रापिद्विजाग्र्यतांब्राह्मण्यं स्वार्थंघ्नंतिआत्महितंनकुर्वंतियेतेयांति ॥ २२ ॥ ॥ ॥

अमरप्रार्थ्यतांदर्शयन्नाह स्वर्गेति लोकंदेहं अनुषज्जेतआसक्तिंकुर्यात् ॥ २३ ॥ ऋषयोमनुष्ययज्ञब्रह्मयज्ञयोर्देवताः देवपितृभूतानिइत
रेज्ञातयःसगोत्राःबंधवोविवाहादिनासंबद्धास्तान् अन्यांश्चभागिनोभागार्हान् आत्मानंचासंविभज्यअन्नादिभिरसंतर्प्य ॥ २४ ॥ एवं
विमृश्यअनुतप्यमानआह व्यर्थयाऽर्थेहयाप्रमत्तस्यममवित्तादिगतामितिशेषःयेनवित्तादिनाकुशलाविवेकिनःसिध्यंतिमुच्यंते जरठोवृद्धः॥
॥ २५ ॥ अन्यमपिस्वसदृशंशोचति कस्मादेवमनर्थंविद्वानपिसंक्लिश्यतइति कारणंसंभावयति कस्यचिदिति ॥ २६ ॥ ननुनायंमोहि
तःक्लिश्यतिकिंतुधनादिभिर्भोगादिविधित्सयाअतआह किंधनैरिति उतपुनरपि ॥ २७ ॥ इदानींसंपन्नविवेकःसंहृष्यन्नाह नूनमितित्रि

स्वर्गापवर्गयोर्द्वारंप्राप्यलोकमिमंपुमान् ॥ द्रविणेकोनुषज्जेतमर्त्योऽनर्थस्यधामनि ॥ २३ ॥ देवर्षिपितृभू
तानिज्ञातीन्बंधूंश्चभागिनः ॥ असंविभज्यचात्मानंयक्षवित्तःपतत्यधः ॥ २४ ॥ व्यर्थयाऽर्थेहयावित्तंप्रमत्त
स्यवयोबलं ॥ कुशलायेनसिध्यंतिजरठःकिंनुसाधये ॥ २५ ॥ कस्मात्संक्लिश्यतेविद्वान्व्यर्थयाऽर्थेहयाऽसकृ
त् ॥ कस्यचिन्माययानूनंलोकोयंसुविमोहितः ॥ २६ ॥ किंधनैर्धनदैर्वाकिंकामैर्वाकामदैरुत ॥ मृत्युनाग्रस्य
मानस्यकर्मभिर्वोतजन्मदैः ॥२७॥ नूनंमेभगवांस्तुष्टःसर्वदेवमयोहरिः ॥ येननीतोदशामेतांनिर्वेदश्चात्म
नःप्लवः ॥ २८ ॥ सोहंकालावशेषेणशोषयिष्येऽगमात्मनः ॥ अप्रमत्तोऽखिलस्वार्थेयदिस्यात्सिद्धआत्म
नि ॥२९॥ तत्रमामनुमोदेरन्देवास्त्रिभुवनेश्वराः ॥ मुहूर्तेनब्रह्मलोकंखट्वांगःसमसाधयत् ॥ ३० ॥ श्री
भगवानुवाच इत्यभिप्रेत्यमनसाह्यावंत्योद्विजसत्तमः ॥ उन्मुच्यहृदयग्रंथीन्शांतोभिक्षुरभून्मुनिः ॥
॥ ३१ ॥ सचचारमहीमेतांसंयतात्मेंद्रियानिलः ॥ भिक्षाऽर्थंनगरग्रामानसंगोऽलक्षितोऽविशत् ॥ ३२ ॥

भिः येनप्रीतेनात्मनःप्लवरूपोनिर्वेदश्चभवतिसहारिर्मेनूनंप्रीतइति ॥ २८ ॥ अंगंशोषयिष्येतपसा यद्वा विद्यालयंनेष्यामि यदिस्यात्का
लावशेषस्तर्ह्यात्मन्येवसिद्धस्तुष्टःसन् अखिलेस्वार्थेधर्मादिसाधनेऽप्रमत्तःसन् ॥ २९ ॥ अनुमोदेरन्अनुगृह्णंतु ननुदेवैरनुमोदितोऽपिजर
ठःस्वल्पेनकालेनकिंसाधयिष्यसितत्राह मुहूर्तेनेति ॥ ३० ॥ अभिप्रेत्यनिश्चित्य आवंत्यःअवंतिदेशभवः हृदयग्रंथीन्अहंकारमहंका
रान् ॥ ३१ ॥ असंगःआसक्तिशून्यः अलक्षितःश्रैष्ठ्यमद्योतयन् ॥ ३२ ॥ ॥ ॥

प्रवयसंवृद्धम् अवधूतंमलिनं पर्यभवन्अवमेनिरे हेभद्र परिभूतिभिस्तिरस्कारैः ॥ ३३ ॥ परिभवानेवदर्शयति केचिदितिसप्तभिः भो भगवन्गृहाणेतिदर्शितानिसंतिप्रदायपुनश्चाददुः ॥ ३४ ॥ अन्नेमूत्रयंति मूर्धनिचष्ठीवंतिफूत्कारेणश्लेष्माणंप्रक्षिपंति ॥ ३५ ॥ ३६ ॥ क्षिपंतिनिंदंति निंदामेवाह एषधर्मध्वजःत्रिदंडलिंगोपजीवी शठोलोकवंचकः ॥ ३७ ॥ तदेवाह क्षीणवित्तइति महासारःअतिबली ॥ ३८ ॥ दुर्वातयंतितदुपरिअधोवायुंमुंचंति ॥ ३९ ॥ बबंधुःशृंखलैः निरुरुधुःकारागृहादिषु द्विजंशुकसारिकादियथा भौतिकंदुर्जना

तंवैप्रवयसंभिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वापर्यभवन्भद्रबह्वीभिःपरिभूतिभिः ॥ ३३ ॥ केचित्त्रिवेणुंजगृहुरेकेपात्रंकमंडलुम् ॥ पीठंचैकेऽक्षसूत्रंचकंथांचीराणिकेचन ॥ प्रदायचपुनस्तानिदर्शितान्यददुर्मुनेः ॥ ॥ ३४ ॥ अन्नंचभैक्ष्यसंपन्नंभुंजानस्यसरित्तटे ॥ मूत्रयंतिचपापिष्ठाःष्ठीवंत्यस्यचमूर्धनि ॥ ३५ ॥ यतवाचंवाचयंतिताडयंतिनवक्तिचेत् ॥ तर्जयंत्यपरेवाग्भिःस्तेनोऽयमितिवादिनः ॥ ३६ ॥ बध्नंतिरज्ज्वातंकेचिद्बध्यतांबध्यतामिति ॥ क्षिपंत्येकेऽवजानंतएषधर्मध्वजःशठः ॥ ३७ ॥ क्षीणवित्तइमांवृत्तिमग्रहीत्स्वजनोज्झितः ॥ अहोएषमहासारोधृतिमान्गिरिराडिव ॥ ३८ ॥ मौनेनसाधयत्यर्थंबकवद्दृढनिश्चयः ॥ इत्येकेविहसंत्येनमेकेदुर्वातयंतिच ॥ ३९ ॥ तंबबंधुर्निरुरुधुर्यथाक्रीडनकंद्विजम् ॥ एवंसभौतिकंदुःखंदैविकंदैहिकंचयत् ॥ ४० ॥ भोक्तव्यमात्मनोदिष्टंप्राप्तंप्राप्तमबुध्यत ॥ परिभूतइमांगाथामगायतनराधमैः ॥ पातयद्भिःस्वधर्मस्थोधृतिमास्थायसात्विकीम् ॥ ४१ ॥ द्विजउवाच नायंजनोमेसुखदुःखहेतुर्नदेवतात्माग्रहकर्मकालाः ॥ मनःपरंकारणमामनंतिसंसारचक्रंपरिवर्तयेद्यत् ॥ ४२ ॥

दिकृतं दैहिकंज्वरादिनिमित्तम् दैविकंशीतोष्णादिप्रभवम् ॥ ४० ॥ दिष्टंदैवप्राप्तम् धर्मात्पातयद्भिःपरिभूतोऽपिसात्विकींधृतिमास्थायस्वधर्मएवस्थितइमांवक्ष्यमाणांगाथामगायत सात्विकीधृतिश्च तदुक्तंभगवता धृत्यायययाधारयतेमनःप्राणेंद्रियक्रियाः ॥ योगेनाव्यभिचारिण्याधृतिःसापार्थसात्विकीतिस्मृतेः ॥ ४१ ॥ तामेवाष्टादशश्लोकींगाथामाह नायमिति नचात्मानापिग्रहादयः मनःपरंकेवलंसुखदुःखयोःकारणंवदंतिमनसाह्येवपश्यतिमनसाशृणोतीत्यादिश्रुतयः ॥ ४२ ॥ ॥ ॥

परिवर्त्तनप्रकारमाह मनइत्यादि गुणानूगुणवृत्तीः सृजति ततश्चतेभ्योगुणेभ्यः शुक्लानिसात्विकानिकृष्णानितामसानिलोहितानिराजसा
निसवर्णास्तत्तत्कर्मानुरूपाः सृतयोदेवतिर्यङ्नरादयस्तज्जातयः ॥ ४३ ॥ तर्हिमनसएवसंसारः स्यान्नात्मनइत्याशंक्याह अनीहइति अय
मर्थः अविद्ययाऽध्यासेनेयमात्मनः संसृतिर्नतुस्वतः यतस्तद्रहितस्येश्वरस्यसानास्तिकिंतुतद्वतोजीवस्यैवेति तदेवाह मनसासमीहमाने
नसहनियंतृत्वेनवर्तमानोऽपिपरमात्माअनीहस्तत्क्रियासंगरहितः यतोहिरण्मयः विद्याशक्तिप्रधानः यतोमत्सखः ममजीवस्यसखानि
यंता अतः उत्उच्चैः विचष्टे अतिरोहितज्ञानेनकेवलंपश्यतीत्यर्थः असौपुनरहंजीवः स्वलिंगंस्वस्मिन्नात्मनिलिंगयतिद्योतयतिसंसारामि
तितथातन्मनः परिगृह्यआत्मत्त्वेनस्वीकृत्यमनसोगुणैः कर्मभिः संगतः गुणसंगाद्वाकामानूजुषन्निबद्धइति ॥ ४४ ॥ अतोमनोनिग्रहेकृते

**मनोगुणान्वैसृजतेबलीयस्ततश्चकर्माणिविलक्षणानि ॥ शुक्लानिकृष्णान्यथलोहितानितेभ्यः सवर्णाः सृत
योभवंति ॥ ४३ ॥ अनीहआत्मामनसासमीहताहिरण्मयोमत्सखउद्विचष्टे ॥ मनः स्वलिंगंपरिगृह्यकामा
नूजुषन्निबद्धोगुणसंगतोऽसौ ॥ ४४ ॥ दानंस्वधर्मोनियमोयमश्चश्रुतानिकर्माणिचसद्व्रतानि ॥ सर्वेमनो
निग्रहलक्षणांताः परोहियोगोमनसः समाधिः ॥ ४५ ॥ समाहितंयस्यमनः प्रशांतंदानादिभिः किंवदतस्य
कृत्यम् ॥ असंयतंयस्यमनोविनश्येद्दानादिभिश्चेदपरंकिमेभिः ॥ ४६ ॥ मनोवशेऽन्येह्यभवंस्मदेवामन
श्चनान्यस्यवशंसमेति ॥ भीष्मोहिदेवः सहसः सहीयानूयुंज्याद्वशेतंसहिदेवदेवः ॥ ४७ ॥**

सर्वंकृतंस्यात्तंविनातुसर्वंव्यर्थमित्याह दानमितिद्वाभ्याम् स्वधर्मोनित्यनैमित्तिकः सद्व्रतान्येकादश्युपवासादीनि अन्यानिचयावंतिक
र्माणि एतेसर्वेउपायाः मनोनिग्रहलक्षणः अंतोनिष्ठाफलंयेषांतेतथा ननुज्ञानांगत्वंतेषांप्रसिद्धंतत्राह मनसः समाधिर्निग्रहएवपरोयोगो
ज्ञानम् ॥ ४५ ॥ अतोयस्यमनः समाहितंभवतितस्यकिंकृत्यमस्तिवदेत्यपरंप्रत्युपदेशः किमपरंप्रयोजनंस्यात् नाकिंचिदित्यर्थः ॥ ४६ ॥
नन्वितरेंद्रियजयः प्रयोजनंस्यान्नेत्याह मनोवशइति देवाः इंद्रियाणितदधिष्ठातारोवा भीष्मोयोगिनामपिभयंकरोमनोलक्षणोदेवः कु
तः सहसोबलादपिबालिनोऽपिवासहीयान् अतस्तंयोवशवर्तिनंकुर्यात्सएवदेवदेवः सर्वेंद्रियजेताभवितानान्यैः तथाचश्रुतिः मनसोव
शेसर्वमिदंबभूवनचान्यस्यमनोवशमन्वियाय भीष्मोहिदेवः सहसः सहीयानिति ॥ ४७ ॥ ॥ ॥

अतोऽसह्यारागादयोवेगायस्यतं अतएवारुंतुदं अरुर्मर्मतत्तुदतिव्यथयतीत्यरुंतुदस्तं ततूनोतिच्छेदः तंनविजित्याजित्वाततूततोयेकेचि
न्मर्त्यैःकैश्चिदसद्विग्रहंकुर्वंति तत्रचानुकूलादीनन्यान्मित्रादीन्कुर्वंतितेमूढाइत्यर्थः ॥ ४८ ॥ ततश्चानेनप्रकारेणसंसारेभ्रमंतीत्याह देह
मिति मनोमात्रपरिकल्पितामिमंस्वदेहमहमितिपुत्रादिदेहंचममेतिस्वीकृत्य तमसिसंसारे ॥ ४९ ॥ तदेवंमनसएवदुःखकारणत्वमुपपा
द्येदानींजनादीनांषण्णामकारणत्वंप्रपंचयति जनस्त्वितिषड्भिःअत्रचअस्मिन्नापिपक्षेआत्मन ःकिंनकिंचित् सुखदुःखकर्मत्वंतत्कर्तृत्वंचे
त्यर्थः कुतइत्यतआह हिनिश्चितंभौमयोर्विकारयोर्देहयोस्तन्नत्वात्मनः अमूर्तस्याक्रियस्यचहननादिषुकर्मत्वकर्तृत्वानुपपत्तेः तथापिदुः
खमात्मपर्यवसाय्येवेतिचेदेवमपिपरमात्मनउभयत्राप्येकत्वान्नकोपविषयोऽस्तीतिस्वदृष्टांतेनदर्शयति जिव्हामिति ॥ ५० ॥ यदिदे

तंदुर्जयंशत्रुमसह्यवेगमरुंतुदंतन्नविजित्यकेचित् ॥ कुर्वंत्यसद्विग्रहमत्रमर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः
॥ ४८ ॥ देहंमनोमात्रमिमंगृहीत्वाममाहमित्यंधधियोमनुष्याः ॥ एषोऽहमन्योऽयमितिभ्रमेणदुरंतपारेत
मसिभ्रमंति ॥ ४९ ॥ जनस्तुहेतुःसुखदुःखयोश्चेत्किमात्मनश्चात्रहिभौमयोस्तत् ॥ जिह्वांक्वचित्संदशति
स्वदद्भिस्तद्वेदनायांकतमायकुप्येत् ॥ ५० ॥ दुःखस्यहेतुर्यदिदेवतास्तुकिमात्मनस्तत्रविकारयोस्तत् ॥
यदंगमंगेननिहन्यतेक्वचित्क्रुध्येतकस्मैपुरुषःस्वदेहे ॥ ५१ ॥ आत्मायदिस्यात्सुखदुःखहेतुःकिमन्यतस्त
त्रनिजस्वभावः ॥ नह्यात्मनोऽन्यद्यदितन्मृषास्यात्क्रुध्येतकस्मान्नसुखंनदुःखम् ॥ ५२ ॥

वताअस्तुनामतत्रापिपक्षेआत्मनःकिं यतोविकारयोर्विक्रियमाणयोर्देवयोस्तद्धस्तेनमुखेभिहतेतेनवाहस्तेदष्टेतदभिमानिनोर्वन्हींद्रयोरेव
तन्नत्वविक्रियस्यानहंकारस्यचात्मनः देवतानांचसर्वदेहेष्वभेदान्नकोपविषयोऽस्तीतिस्वदेहदृष्टांतमाह यद्यदाअंगंदेवताधिष्ठानंहरत
मुखादि अतएवपूर्वत्रदेवताऽनाधिष्ठानरूपभूविकारदंतोदाहरणं ॥ ५१ ॥ आत्मनःसुखदुःखाद्याकारपरिणामःअतःसएवयदिहेतुः
स्यात्तत्रतस्मिन्पक्षेअन्यतःकिंनकिंचिदन्यतोभवति यस्मैकुप्येदित्यर्थः यतोनिजएवस्वभावः नन्वात्मनस्तथापरिणामोऽन्यनिमित्तोभ
वति अतोऽस्तिकोपविषयइतिचेत्तत्राह नहीति आत्मव्यतिरिक्तंनास्त्येव यदिस्यादस्तीतिप्रतीयेततर्हितन्मृषैवातःकस्माद्धेतोः क्रुध्येत
यतोनास्तिनिमित्तंनचसुखंदुःखंचेत्यर्थः ॥ ५२ ॥ ॥ ॥ ॥ ॥

ग्रहपक्षेप्यजस्यात्मनःकिंयतोजन्यतइतिजनोदेहस्तस्यैवजन्मलग्नापेक्षयाद्वादशाष्टमादिराशिस्थास्तेसुखदुःखयोर्निमित्तंभवंति किंचअंत
रिक्षस्थैर्ग्रहैस्तत्रस्थस्यग्रहस्यैवपादार्धादिदृष्ट्यादिभेदैःपीडांवदंतिदैवज्ञानतुग्रहकोणादि षुस्थितस्यतदृष्ट्यगोचरस्य ग्रहगतैवतुपीडातल्लग्नो
त्पन्नेदेहेतस्याभिमानाद्भवति अतःपुरुषस्ततोग्रहाद्देहाच्चान्यःकस्मैकुध्येत॥५३॥ कर्महेतुश्चेदस्त्वित्यसूयोपगमःकर्मैवनास्तिकुतस्तस्यहेतु
त्वमितितदाहहियस्मात्कर्मएकस्यजडाजडत्वेसतिस्यात् जडत्वाद्विकारित्वोपपत्तेःअजडत्वाच्चाहितानुसंधानतःप्रवृत्तिसंभवात् अचिज्जडोदे
हः अतस्तस्यप्रवृत्तिर्नसंभवति पुरुषस्तुसुपर्णःशुद्धज्ञानस्वरूपः अतःकस्मैकुध्येतयतःसुखदुःखयोर्मूलभूतंकर्मैवनास्तीति॥ ५४ ॥ तत्रप
क्षेकालपक्षेऽपितदात्मकएवब्रह्मांशत्वात् स्वांशस्यस्वतःपीडानास्तीत्यत्रदृष्टांतः नाग्नेर्हेतोस्तदंशस्यज्वालादेस्तापोदाहतोनाशोस्ति त

ग्रहानिमित्तंसुखदुःखयोश्चेत्किमात्मनोऽजस्यजनस्यतेवै ॥ ग्रहैर्ग्रहस्यैववदंतिपीडांक्रुध्येतकस्मैपुरुषस्ततो
ऽन्यः ॥ ५३ ॥ कर्मास्तुहेतुःसुखदुःखयोर्वैकिमात्मनस्तद्धिजडाजडत्वे ॥ देहस्त्वचित्पुरुषोऽयंसुपर्णःक्रुध्येत
कस्मैनहिकर्ममूलम् ॥ ५४ ॥ कालस्तुहेतुःसुखदुःखयोश्चेत्किमात्मनस्तत्रतदात्मकोऽसौ ॥ नाग्नेर्हितापो
नहिमस्यतत्स्यात्क्रुध्येतकस्मैनपरस्यद्वंद्वम् ॥ ५५ ॥ नकेनचित्क्वापिकथंचनास्यद्वंद्वोपरागःपरतःपरस्य ॥
यथाहमःसंसृतिरूपिणःस्यादेवंप्रबुद्धोनबिभेतिभूतैः ॥ ५६ ॥ एतांसमास्थायपरात्मनिष्ठामध्यासितांपूर्व
तमैर्महर्षिभिः ॥ अहंतरिष्यामिदुरंतपारंतमोमुकुंदांघ्रिनिषेवयैव ॥ ५७ ॥ ॥

त्रोपाधिभूतकाष्ठांशदाहान्नस्यादितिदृष्टांतांतरमाह हिमस्यतच्छैत्यंतदंशस्यतुषारकणस्यनाशकंनस्यादित्यर्थः किंचआस्तामंशकत्वंवस्तु
तःपरएवायंनचपरस्यद्वंद्वंसुखदुःखादिकमस्तीति॥५५॥तदेवंषडेतेहेतवःप्रसिद्धानिरस्ताः यदिकश्चिद्धेत्वंतरमुद्भावयेत्तदपिवस्तुमहिमापे
क्षायांनसंभवतीत्याह नकेनचिदिति नन्वपरोऽक्षःकथमपन्हूयतेतत्राह यथेति संसृतिर्माविद्यमानामेवरूपयतिप्रकाशयतीतितथातस्यअह
मःअहंकारस्ययथास्यान्नतथापरतःप्रकृतेःपरस्यात्मनोद्वंद्वसंबंधः अहंकारनिमित्तोऽसौ नवास्तवइत्यर्थः एवंप्रबुद्धोयःसभूतैःकृत्वानबिभेति॥
॥ ५६ ॥ अतोहमपितथैवपरमात्मनिष्ठतयातरिष्यामीत्याह एतामिति सोऽहमित्यन्वयः नन्वियंनिष्ठैवकथंभवेत्तदाह मुकुंदेति ॥ ५७ ॥

प्रस्तावेनसहगाथाऽर्थंसंक्षेपतोदर्शयतिद्वाभ्यां इत्थंनष्टद्रविणोनिर्विद्यगतक्लमःप्रव्रज्यगांपर्यटन्नसाद्भिर्निराकृतोऽपिस्वधर्मादकंपितःसन्मु
निरमूंगाथामगायतेत्यन्वयः॥ ५८ ॥ मित्रोदासीनरिपवःसर्वोऽपिसंसारस्तमसःअज्ञानतआत्मनोमनसोविभ्रममात्रकृतोनतात्त्विकइत्यर्थः
॥ ५९ ॥ उक्तंद्वंद्वोपायमुपसंहरति तस्मादिति ॥ ६० ॥ मनोनिग्रहाशक्तोऽप्येतच्छ्रवणादिनिष्ठस्तत्फलंप्राप्नोतीत्याह यइति द्वंद्वैःसुख
दुःखादिभिः ॥ ६१ ॥ भिक्षुगीतामिषंकृत्वाभक्तावित्तग तंहरिः ॥ मोहंनिघ्नन्निवाभातिपरमानंदरूपतः ॥ इत्येकादशस्कंधेटीकायांत्रयोवि
शोध्यायः ॥ २३ ॥ चतुर्विंशेतुसांख्येनमनोमोहोनिवार्यते ॥ आत्मनःसर्वभावानामागमापायचिंतया ॥ १ ॥ स्वपदद्वंद्वभक्तानामद्वंद्वत्वायसं

श्रीभगवानुवाच निर्विद्यनष्टद्रविणोगतक्लमःप्रव्रज्यगांपर्यटमानइत्थम् ॥ निराकृतोऽसद्भिरपिस्वधर्मा
दकंपितोऽमूंमुनिराहगाथां ॥ ५८ ॥ सुखदुःखप्रदोनान्यःपुरुषस्यात्मविभ्रमः ॥ मित्रोदासीनरिपवःसंसार
स्तमसःकृतः ॥ ५९ ॥ तस्मात्सर्वात्मनाताततनिग्रहाणमनोधिया ॥ मय्यावेशितयायुक्तएतावान्योगसंग्रहः
॥ ६० ॥ यएतांभिक्षुणागीतांब्रह्मनिष्ठांसमाहितः ॥ धारयञ्छ्रावयञ्छृण्वन्द्वंद्वैर्नैवाभिभूयते ॥ ६१ ॥ इति
श्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेभिक्षुगीतानामत्रयोविंशोध्यायः ॥ २३ ॥ ॥ ॥
श्रीभगवानुवाच अथतेसंप्रवक्ष्यामिसांख्यंपूर्वविनिश्चितं ॥ यद्विज्ञायपुमान्सद्योजह्याद्वैकल्पिकंभ्रमम्
॥ १ ॥ आसीज्ज्ञानमथोह्यर्थएकमेवाविकल्पितम् ॥ यदाविवेकनिपुणाआदौकृतयुगेऽयुगे ॥ २ ॥

यमः ॥ चित्तस्योक्तःपुनःकृष्णःसांख्यमत्राहतत्कृते ॥ २ ॥ अद्वितीयात्परमात्मनोमाययाप्रकृतिपुरुषद्वारासर्वंद्वैतमुदेतिपुनस्तत्रैवलीयतइत्यनु
संदधानस्यद्वंद्वभ्रमोनिवर्ततइतिवक्तुंसांख्यंप्रस्तौति अथेति पूर्वैःकपिलादिभिर्निश्चितंवैकल्पिकंभेदनिमित्तभ्रमंसुखदुःखादिरूपं ॥ १ ॥
अथोशब्दःकार्त्स्न्ये ज्ञानंद्रष्टातेनदृश्यःकृत्स्नोऽप्यर्थश्चअविकल्पितंविकल्पशून्यमेकमेव ब्रह्मण्येवलीनमासीदित्यर्थः कदेत्यपेक्षायामा
ह अयुगेयुगेभ्यःपूर्वं प्रलयइत्यर्थः तथाआदौयत्कृतयुगंतस्मिंश्चान्यदापियदाविवेकनिपुणाजनाभवंतितदापितेषांभेदास्फूर्तेः ॥ २ ॥

तद्ब्रह्मवाङ्मनोगोचरंयथाभवतितथामायाद्दश्यंफलंतत्प्रकाशस्तद्रूपेणवाद्विधाभूत् ॥ ३ ॥ तयोर्द्विधाभूतयोरंशयोर्मध्येउभयात्मिकाकार्यकारणरूपिणी ॥ ४ ॥ अभवन्अभिव्यक्ताबभूवुः मयापरमेश्वरेणपुरुषानुमतेन तवपुरुषस्यकःसंबंधः जीवादृष्टप्रयुक्तत्वात्सृष्टेःपुरुषानुमतत्वंयद्वा स्वस्यैवप्रतीक्षणरूपायापुरुषावस्थातदनुमतेनतद्द्वारेणेत्यर्थः ॥ ५ ॥ सूत्रंक्रियाशक्तिमान्प्रथमोविकारः ततोमहान्ज्ञानशक्तिः नन्वयंमहानेवप्रथमोविकारःप्रसिद्धस्तत्राह सचज्ञानक्रियागर्भत्वात्सूत्रेणसंयुतोनपृथक् एकमेवतत्त्वंक्रियाज्ञानशक्तिभ्यांद्विधोच्यतइत्यर्थःविमोहनोजीवस्यभ्रमहेतुःसंजातः ॥ ६ ॥ यतस्तन्मात्रादीनांकारणं मनःशब्देनदेवानामप्युपलक्षणं चिदचिन्मयः चिदाभासव्याप्तत्वादुभयग्रंथिरूपइतिजीवोपाधित्वंदर्शितं यद्यपितस्माद्वाएतस्मादात्मनआकाशःसंभूतइत्यादिश्रुतेः अन्नमयंहिसौम्यमनइत्यादिश्रुतेश्चप्रथमं

**तन्मायाफलरूपेणकेवलंनिर्विकल्पितं ॥ वाङ्मनोगोचरंसत्यंद्विधासमभवद्बृहत् ॥३॥ तयोरेकतरोह्यर्थःप्रकृतिःसोभयात्मिका ॥ ज्ञानंत्वन्यतमोभावःपुरुषःसोऽभिधीयते॥४॥ तमोरजःसत्त्वमितिप्रकृतेरभवन्गुणाः॥ मयाप्रक्षोभ्यमाणायाःपुरुषानुमतेनच॥५॥ तेभ्यःसमभवत्सूत्रंमहान्सूत्रेणसंयुतः॥ ततोविकुर्वतोजातोऽहंकारोयोविमोहनः॥६॥ वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिवृत् ॥ तन्मात्रेंद्रियमनसांकारणंचिदचिन्मयः ॥ ७ ॥ अर्थस्तन्मात्रिकाज्जज्ञेतामसादिंद्रियाणिच ॥ तैजसाद्देवताआसन्नेकादशचवैकृतात् ॥ ८ ॥**

भूतानिजायंतेतेभ्यश्चापंचीकृतेभ्यःप्राणादिक्रमेणसमष्ट्यात्मकंलिंगशरीरंपंचीकृतेभ्यश्चब्रह्मांडं एतस्मिन्वैराजस्तदंतर्यामीलीलाविग्रहःक्षीराब्धिशायीश्रीनारायणस्तन्नाभिपद्मेचवैराजस्यभोगविग्रहश्चतुराननस्ततोयथाऽवसरमन्येषांजीवानामाविर्भावइतिप्रक्रियातथाऽपिचित्ताभिव्यक्तिपूर्वकोऽहंकारस्ततोभूतेंद्रियादिव्यवहारइत्येतावतामहदादिक्रमेणसृष्टिरुच्यते तथाचोक्तं मृल्लोहविस्फुलिंगाद्यैःसृष्टिर्याचोदिताऽन्यथा ॥ उपायःसोऽवतारायनास्तिभेदःकथंचनेति ॥ ७ ॥ तस्मात्रिविधात्त्रिविधप्रपंचोत्पत्तिंदर्शयति तन्मात्रिकात्शब्दादितन्मात्रकारणात्तामसात्त्वराअर्थोमहाभूतरूपोजज्ञेबभूव भूतानामावरणस्वभावत्वात् इंद्रियाणिदशतैजसात् तेषांप्रवृत्तिस्वभावत्वात् वैकृतात्सात्विकाद्देवताः दिग्वातार्कप्रचेतोऽश्विवन्हींद्रोपेंद्रमित्रकाः ॥ चंद्रश्चेत्येकादश चशब्दान्मनश्च तेषांप्रकाशस्वभावत्वात् ॥ ८ ॥

ममवैराजांतर्यामिणः ॥ ९ ॥ सलिलेसंस्थितिर्यस्यतत्सलिलसंस्थितितस्मिन्सलिलसंस्थितौअंडेश्रीनारायणरूपोलीलाविग्रहेणसम
भवं स्थितइत्यर्थः विश्वाख्यंलोककारणभूतं तत्रचात्मभूः चतुराननरूपभोगविग्रहेणपुनर्वैराजएवतस्मिन्नाविर्भूतइत्यर्थः ॥ १० ॥ रज
सायुक्तोमदनुग्रहात्तपसाऽसृजत् भूःअतलादिसहिता भुवःअंतरिक्षलोकः स्वःस्वर्लोकः महर्लोकादेरप्युपलक्षणम् ॥ ११ ॥ लोकसृष्टि
प्रयोजनमाह देवानामितिसार्धेन ओकोनिवासः पदंस्थानम् त्रितयात्परंमहर्लोकादि भूमेरधःअतलादि ॥ १२ ॥ एवंव्यवस्थायांकारण
माहसार्धेन त्रिलोक्यांपातालादिसहितायाम् ॥ १३ ॥ योगादितारतम्येनयथोत्तरंमहर्लोकादयः मद्गतिर्वैकुंठलोकः तत्रतुमद्गतिव्यतिरे

मयासंचोदिताभावाःसर्वेसंहत्यकारिणः ॥ अंडमुत्पादयामासुर्ममायतनमुत्तमम् ॥९॥ तस्मिन्नहंसमभवमं
डेसलिलसंस्थितौ ॥ ममनाभ्यामभूत्पद्मंविश्वाख्यंतत्रचात्मभूः ॥१०॥ सोऽसृजत्तपसायुक्तोरजसामद
नुग्रहात् ॥ लोकान्सपालान्विश्वात्माभूर्भुवःस्वरितित्रिधा ॥११॥ देवानामोकआसीत्स्वर्भूतानांचभुवःप
दं ॥ मर्त्यादीनांचभूर्लोकःसिद्धानांत्रितयात्परं॥अधोऽसुराणांनागानांभूमेरोकोऽसृजत्प्रभुः ॥१२॥ त्रिलो
क्यांगतयःसर्वाःकर्मणांत्रिगुणात्मनां ॥योगस्यतपसश्चैवन्यासस्यगतयोऽमलाः ॥१३॥ महर्जनस्तपःस
त्यंभक्तियोगस्यमद्गतिः ॥ मयाकालात्मनाधात्राकर्मयुक्तमिदंजगत् ॥ गुणप्रवाहएतस्मिन्नुन्मज्जतिनिम
ज्जति ॥१४॥ अणुर्बृहत्कृशःस्थूलोयोयोभावःप्रसिद्ध्यति ॥ सर्वोऽप्युभयसंयुक्तःप्रकृत्यापुरुषेणच ॥ १५ ॥
यस्तुयस्यादिरंतश्चसवैमध्यंचतस्यसत् ॥ विकारोव्यवहारार्थोयथातैजसपार्थिवाः ॥ १६ ॥

केणेतरागतयश्चंचलाइत्याह वैराग्यार्थंमयाकालशक्तिनाधात्रापरमेश्वरेणकर्मफलप्रदेनहेतुभूतेनगुणप्रवाहेसंसारेउन्मज्जतिआसत्यलोक
मुत्तमागतीःप्राप्नोति पुनर्निमज्जतिआस्थावरंनीचागतीःप्राप्नोति ॥ १४ ॥ सृष्टिनिरूपणस्याद्वितीयात्मप्रतिपत्त्यर्थत्वात्तत्प्रतिपादनायकार
णेनकार्यस्यव्याप्तिमाह अणुरिति उभयेनसंयुक्तोव्याप्तः तदेवाह प्रकृत्येति ॥ १५ ॥ इदानींकार्यस्यकारणात्मतांदर्शयति यस्यकार्यस्य
आदिःकारणमंतोलयस्थानंचतस्यमध्यंमध्यावस्थाऽपिसएव वैप्रसिद्धंमृत्सुवर्णादिषु अतएवाव्यभिचारित्वात्सएवसन्नेतरः अलंतर्हिमि
थ्याभूतकार्यसृष्ट्यातत्राह विकारइति तैजसाःकटककुंडलादयःपार्थिवाघटशरावादयश्चयथेति ॥ १६ ॥ ॥

नन्वेवंतर्हिस्वकार्यंप्रतिमहदादीनामप्याद्यंतरूपत्वात्सत्यत्वंस्यात्तत्राह यदिति यद्रूपमुपादायउपादानकारणतयास्वीकृत्यपूर्वः कारणरूपोमहदादिर्भावःअपरमहंकारादिकंभावंविकुरुतेसृजति यथापिंडोमृदमुपादायस्वयंनिमित्तभूतोघटंसृजातितद्वत् सएवसान्वितिपूर्वस्यानुषंगः कथंतर्हिमृत्तिकेत्येवसत्यमित्यादिश्रुतिस्तत्राह आदिरिति यद्यदायस्यआदिरंतश्चविवक्ष्यतेतदातत्सत्यमित्यभिधीयतेश्रुत्या परमकारणात्मनःसत्यत्वविवक्षयेत्यर्थः ॥ १७ ॥ ननुतथाऽपिप्रकृतिपुरुषकालानामकार्यभूतानांनिमित्तत्वात्कथमद्वितीयतातत्राह प्रकृतिरिति अस्यसतःकार्यस्योपादानंयाप्रकृतिःप्रसिद्धायश्चतस्याआधारः आधिष्ठातापरःपुरुषश्चगुणक्षोभेणाभिव्यंजकःकालस्तात्रितयंब्रह्मरूपोऽहमेव नतुपृथक् प्रकृतेःशक्तित्वात्पुरुषकालयोरवस्थारूपत्वात् ॥ १८ ॥ एवंतावत्कालत्रयेऽप्यव्यभिचारित्वात्ब्रह्मैवसत्यमितिवक्तुंतस्यसृष्टिकारणत्वेनादौसत्यत्वमुक्तामध्येऽपितस्यैवसत्त्वमुपपाद्यअंतेऽप्यवधित्वेनसत्त्वंदर्शयिष्यन्सर्गप्रवाहरूपायाःस्थितेरवधिमाह सर्गइति महान्बहुलः पौर्वापर्येणापितृपुत्रादिरूपेण नित्यशःअविच्छेदेन किमर्थंप्रवर्ततेतदाह गुणेषुदेहेषुविविधतयासृज्यतइतिगुणविसर्गोजीवस्त

यदुपादायपूर्वस्तुभावोविकुरुतेपरम्॥आदिरंतोयदायस्यतत्सत्यमभिधीयते॥१७॥प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः॥ सतोऽभिव्यंजकःकालोब्रह्मतत्त्रितयंत्वहं ॥ १८ ॥ सर्गःप्रवर्ततेतावत्पौर्वापर्येणनित्यशः ॥ महान्गुणविसर्गार्थःस्थित्यंतोयावदीक्षणं ॥ १९ ॥ विराण्मयासाद्यमानोलोककल्पविकल्पकः ॥ पंचत्वायविशेषायकल्पतेभुवनैःसह ॥ २० ॥ अन्नेप्रलीयतेमर्त्यमन्नंधानासुलीयते ॥ धानाभूमौप्रलीयंतेभूमिर्गंधेप्रलीयते ॥ २१ ॥ ॥ ॥

दर्थस्तद्भोगप्रयोजनः किंपर्यंतंप्रवर्तते यावत्स्थितेरंतः सोऽपिकिमत्राधिस्तत्राह यावदीक्षणंपरमेश्वरस्यतावत् ॥ १९ ॥ प्रलयंनिरूपयति विराट्ब्रह्मांडंमयाकालात्मनाआसाद्यमानोव्याप्यमानोलोकानामहरहःकल्पाःसृष्टिप्रलयाविविधाःकल्पंतेयस्मिंस्तान्वास्वस्मिन्विकल्पयतीतिसतथाभूतोपिपंचत्वरूपायविशेषायविभागायकल्पतेयोग्योभवति पंचानांभूतानामैक्यरूपस्तेषांपृथग्भात्रापत्त्यानश्यतीत्यर्थः ॥ २० ॥ तत्रतस्माद्वाएतस्मादात्मनआकाशःसंभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यःपृथिवी पृथिव्याओषधयः ओषधीभ्योऽन्नं अन्नात्पुरुषइतिश्रुत्युक्तसृष्टिकृतप्रातिलोम्येनलयमाह अन्नइति मर्त्यंशरीरंयेनोपचितंतास्मिन्नन्नेशतवर्षायामनावृष्टौक्षीणेसातितत्रैवलीयतइत्यन्नंधानासु बीजमात्रावशेषंभवतीत्यर्थः धानाभूमौ उप्तानप्ररोहंतीत्यर्थः भूमिर्गंधेसंवर्तकादित्यशोषितासंकर्षणमुखाग्निनादग्धाचसतीभूतसूक्ष्मरूपगंधमात्रावशेषाभवति ॥ २१ ॥ ॥ ॥

अप्सुगंधः शतवार्षिक्यावृष्ट्याप्लाव्यमानोऽप्सुलीयते एवमेवापोज्योतिषाशोष्यमाणारसमात्रावशेषाभवंति ततोरसोपितस्मिन्लीयतेज्यो
तिश्ववायुनाभिभूयमानंरूपमात्रंसत्तस्मिन्लीयते ॥ २२ ॥ वायुश्चकालप्रेरितेनांबरेणग्रस्तःस्पर्शमात्रःसंस्तस्मिन् अंबरंचभूतादिनाऽहं
कारेणग्रस्यमानंशब्दतन्मात्रे तदेवंतामसाहंकारकार्यस्यशब्दपर्यंतंलयमुक्त्वाराजसाहंकारकार्यस्याप्याह इंद्रियाणिस्वयोनिष्विति स्वप्रव
र्तकदेवतासु तेषांप्रवृत्तिस्वभावत्वात्प्रवृत्तेश्चदेवताधीनत्वात्तासुलयइतिवाचोयुक्तिः वस्तुतस्तुस्वकारणेराजसाहंकारेलयोऽभिप्रेतः ॥
॥ २३ ॥ योनिरित्युद्देश्यगतत्वादेकत्वंनविवक्षितं योनयोदेवतास्तुमनासि कुतः ईश्वरोनियंतरि मनोवशेऽन्येह्यभवंस्मदेवाइत्युक्तत्वात् इं
द्रियलयोक्तएवात्राप्यभिप्रायः मनश्चदेवताभिःसहवैकारिकेहंकारइत्यर्थः तामसाहंकारकार्यावशेषितस्यशब्दस्यलयमाह शब्दोभूतादिं
तामसाहंकारमप्येतितस्मिन्लीयतइत्यर्थः भूतादिरित्युपलक्षणं त्रिविधोऽप्यहंकारोमहतिजडांशंविहायज्ञानाक्रियाशक्तिमात्ररूपोभवति

**अप्सुप्रलीयतेगंधआपश्चस्वगुणेरसे ॥ लीयतेज्योतिषिरसोज्योतीरूपेप्रलीयते ॥ २२ ॥ रूपंवायौस
चस्पर्शेलीयतेसोपिचांबरे ॥ अंबरंशब्दतन्मात्रइंद्रियाणिस्वयोनिषु ॥ २३ ॥ योनिर्वैकारिकेसौम्यली
यतेमनसीश्वरे ॥ शब्दोभूतादिमप्येतिभूतादिर्महतिप्रभुः ॥ २४ ॥ सलीयतेमहान्स्वेषुगुणेषुगुणसत्त
मः ॥ तेऽव्यक्तेसंप्रलीयंतेतत्कालेलीयतेऽव्यये ॥ २५ ॥ कालोमायामयेजीवेजीवआत्मनिमय्यजे ॥
आत्माकेवलआत्मस्थोविकल्पापायलक्षणः ॥ २६ ॥ ॥ ॥ ॥**

कथंभूतः प्रभुःसमर्थः सर्वजगन्मोहकत्वात् ॥ २४ ॥ सचमहान्स्वकारणेषुगुणेषुज्ञानाक्रियाशक्तिमत्त्वात्गुणवत्तमस्तादृग्भावंविहायगुण
मात्ररूपोभवति तेऽव्यक्तेप्रकृतौ साम्यावस्थांगच्छंतीत्यर्थः तदव्यक्तंकालेकालाधीनत्वात्तेनैकीभूयावतिष्ठते अव्ययेउपरतवृत्तौ ॥ २५ ॥
मायामयेमायाप्रवर्तकेज्ञानमयेवा अतएवजीवयतीतिजीवस्तस्मिन्महापुरुषे अयंभावः विश्वस्रष्टुर्महापुरुषस्योपकरणरूपःकालोवृत्त्यंशेन
सृज्यश्चातस्तदात्मनावतिष्ठतइति तदुक्तंसप्तमे कालंचरंतंसृजतीशआश्रयंप्रधानपुंभ्यांनरदेवसत्यकृदिति दशमेच योऽयंकालस्तस्यतेऽ
व्यक्तबंधोचेष्टामाहुश्चेष्टतेयेनविश्वं ॥ निमेषादिर्वत्सरांतोमहीयांस्तंत्वेशानंक्षेमधामप्रपद्यइति जीवआत्मनिप्रकृतिलीनत्वेनप्रतियोग्यभा
वात्परिपूर्णत्वेनसद्रूपेणावतिष्ठते आत्माचात्मस्थएवनान्यत्रलीयते यतःकेवलोनिरुपाधिः तत्रहेतुः विकल्पापायाभ्यांविश्वोत्पत्तिप्रलया
भ्यांलक्ष्यतेअधिष्ठानत्वेनावधित्वेनवेतितथासः ॥ २६ ॥ ॥ ॥

अस्यकथनस्यप्रस्तुतोपयोगमाह एवमिति मनसःकथंभेदनिमित्तोभ्रमःस्यात् जातोवाकथंहृदिंतिष्ठेत् ॥ २७ ॥ उपसंहरति एषइति प्र
त्यक्षमिवयेनेदंदर्शितंतत्त्वमात्मनः ॥ सांख्यप्रख्यानतस्तस्मैहरयेगुरवेनमः ॥ २८ ॥ इत्येकादशेटीकायांचतुर्विंशोध्यायः ॥ २४ ॥ ॥
पंचविंशेस्वनैर्गुण्यप्रतिपत्त्यैनिरूप्यते ॥ चित्तप्रभवसत्वादिगुणवृत्तिरनेकधा ॥ १ ॥ प्रकृतिपुरुषविवेकज्ञानवतोपियावत्प्रयत्नाविशेषेण
गुणत्रयवृत्तिजयोनस्यान्नतावत्द्वंद्वोपरमः अतस्तज्जयोपायगुणवृत्तिनिरूपणार्थमाह गुणानामिति सहमिश्रीभूयवर्तमानाःसमिश्राःनसमि
श्राःअसमिश्रास्तेषांविभक्तानांगुणानांमध्येयेनगुणेनयथायादृशोभवेत्तादिदंकथयतोमत्तोनिबोधेत्यर्थः ॥ १ ॥ तत्रसत्ववृत्तिराह शमइति
ईक्षाविवेकः तपःस्वधर्मवर्तित्वं स्मृतिःपूर्वापरानुसंधानं तुष्टिर्यथालाभसंतोषः त्यागोव्ययशीलता अस्पृहाविषयेषुवैराग्यं श्रद्धाआस्ति

**एवमन्वीक्षमाणस्यकथंवैकल्पिकोभ्रमः ॥ मनसोहृदितिष्ठेतव्योम्नीवार्कोदयेतमः ॥२७॥एषसांख्यविधिः प्रोक्तःसंशयग्रंथिभेदनः ॥प्रतिलोमानुलोमाभ्यांपरावरदृशामया ॥२८॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्विंशोध्यायः ॥२४॥ ॥ श्रीभगवानुवाच गुणानामसमिश्राणांपुमान्येनयथाभवेत् ॥ तन्मेपुरुषवर्येदमुपधारयशंसतः ॥१॥ शमोदमस्तितिक्षेक्षातपःसत्यंदयास्मृतिः॥तुष्टिस्त्यागोऽस्पृहाश्रद्धाह्रीर्दयादिःस्वनिर्वृतिः ॥२॥ कामईहामदस्तृष्णास्तंभआशीर्भिदासुखं ॥मदोत्साहोयशःप्रीतिर्हास्यंवीर्यंबलोद्यमः ॥३॥ क्रोधोलोभोऽनृतंहिंसायाच्ञादंभःक्लमःकलिः॥शोकमोहौविषादार्तीनिद्राशाभीरनुद्यमः॥४॥**

क्यंगुर्वादिषु ह्रीःअनुचितेकर्मणिलज्जातेषामनवलोकनं दयादानं दयदानगतिरक्षणेष्विति स्मरणात् आदिशब्देनार्जवविनयादि स्व
निर्वृतिःआत्मरतिः ॥ २ ॥ रजसोवृत्तीराह कामोभिलाषःस्वर्गादि ईहाव्यापारोयज्ञादिः मदोदर्पः तृष्णालाभेसत्यप्यसंतोषः स्तंभोग
र्वः आशीःधनाद्यभिलाषेणदेवतादिप्रार्थनं भिदाअहमन्यइतिभेदबुद्धिः सुखंविषयभोगः मदोत्साहोमदेनयुद्धाद्यभिनिवेशः यशःप्रीतिः
स्तुतिप्रियता हास्यमुपहासः वीर्यंप्रभावाविष्कारः बलेनोद्यमःन्यायेनोद्यमःसात्विकएव ॥ ३ ॥ तमोवृत्तीराह क्रोधइति क्रोधःअसहि
ष्णुतालोभोव्ययपराङ्मुखता क्लमःश्रमः कलिःकलहः शोकमोहौअनुशोचनंभ्रमश्च विषादार्त्तीदुःखंदैन्यंच निद्रातंद्रा आशामेइदंभावि
ष्यतीत्यन्वीक्षा भीर्भयं अनुद्यमोजाड्यं ॥ ४ ॥ ॥ ॥ ॥

अनुपूर्वशः क्रमेणैताः श्लोकत्रयोक्तावर्णितप्रायाअन्याअप्यूह्याइतिभावः ॥ ५ ॥ विभक्तानांगुणानांवृत्तयोवर्णितांःमिश्राणामाहसन्निपातइ
तित्रिभिः अहंममेतिममतानुषक्तसर्ववृत्तिसामानाधिकरण्यदर्शनात्सन्निपातजत्वम् अहंशांतःकामीक्रोधीत्यादि तथाममशांतिरस्तिकामः
क्रोधइत्यादिद्रष्टव्यम् तत्पूर्वकःसर्वोव्यवहारश्चसन्निपातकार्यमित्याह व्यवहारइति अत्रहेतुः मनश्चमात्राणिचइंद्रियाणिचअसवश्चतैः म
नआदीनांसात्विकतामसराजसत्वात्तैर्व्यवहारः सन्निपातजइतिभावः ॥ ६ ॥ असौपुरुषोयदाधर्मादिषुपरिनिष्ठितोभवतितदायंत्रिषुनिष्ठा
रूपःसन्निकर्षःसन्निपातकार्यम् धर्मादीनांसत्वतमोरजःकार्यत्वाद्विषयतःसन्निपातजत्वमुक्तं फलतश्चतथात्वमाह श्रद्धारतिधनानिसत्त्व

सत्त्वस्यरजसश्चैतास्तमसश्चानुपूर्वशः ॥ वृत्तयोवर्णितप्रायाःसन्निपातमथोशृणु ॥ ५ ॥ सन्निपातस्त्व
हमितिममेत्युद्धवयामतिः ॥ व्यवहारःसन्निपातोमनोमात्रेंद्रियासुभिः ॥ ६ ॥ धर्मेचार्थेचकामेचयदा
ऽसौपरिनिष्ठितः ॥ गुणानांसन्निकर्षोऽयंश्रद्धारतिधनावहः ॥ ७ ॥ प्रवृत्तिलक्षणेनिष्ठापुमान्यर्हिगृहा
श्रमे ॥ स्वधर्मेचानुतिष्ठेतगुणानांसमितिर्हिसा ॥ ८ ॥ पुरुषंसत्वसंयुक्तमनुमीयाच्छमादिभिः ॥ कामा
दिभीरजोयुक्तंक्रोधाद्यैस्तमसायुतं ॥ ९ ॥ यदाभजतिमांभक्त्यानिरपेक्षःस्वकर्मभिः ॥ तंसत्त्वप्रकृतिं
विद्यात्पुरुषंस्त्रियमेवच ॥ १० ॥ यदाआशिषआशास्यमांभजेतस्वकर्मभिः ॥ तंरजःप्रकृतिंविद्याद्धिंसा
माशास्यतामसं ॥ ११ ॥ ॥ ॥ ॥

रजस्तमोमयान्यावहतीतितथा ॥ ७ ॥ धर्मनिष्ठायामेवसन्निपातंदर्शयति प्रवृत्तिलक्षणेकाम्यधर्मेयदापुंसोनिष्ठाभवति तथापुमान्यदागृ
हाश्रमएवासक्तस्तिष्ठेत् अनुपश्चात्स्वधर्मेचनित्यनैमित्तिकेतिष्ठेत्साऽपिसमितिःसन्निपातः हियस्मात्काम्यधर्मगृहासक्तिस्वधर्मारजस्तमः
सत्वमयाइत्यर्थः ॥ ८ ॥ तदेवंमिश्रामिश्रगुणवृत्तीःप्रदर्श्येदानींपुमान्येनयथाभवेदितियदुक्तंतद्दर्शयति पुरुषमितित्रिभिः ॥ ९ ॥ १० ॥
हिंसांशत्रुमरणादिकमाशास्ययोयथाभजेत्तंतामसंविद्यात् एतैर्गुणैरेवंभूतोभवतीतितात्पर्यार्थः ॥ ११ ॥ ॥ ॥

ननुतवापिगुणवशेनकर्तृत्वाविशेषात्केनविशेषेणत्वंसेव्योजीवस्तुसेवकइतिनियमोयतोमांभजेतेतिवारंवारमुच्यतेतत्राह सत्वमिति जीवस्यैवनमे कुतः यतश्चित्तजाजीवोपाधौचित्तेऽभिव्यज्यंतेअतोयैःसएवबध्यते कीदृशः भूतानांदेहरूपाणामन्येषांचमध्येसज्जमानः अहंत्वसज्जमानोगुणनियंतृत्वेनसृष्ट्यादिकर्ताऽपिनित्यमुक्तःअतोमहान्विशेषइतिभावः यद्वा भूतानामपंचीकृतानांयत्कार्यंभूतंचित्तम्अन्नमयंहिसौम्यमनइतिश्रुतेः तत्प्रभवाः अतोभूतोपाहितस्यैवेति अन्यत्समानम् ॥१२॥ तदेवंमिश्रामिश्रगुणकार्याणिप्रदर्श्यइदानीमेकैकगुणोद्रेककार्याणिदर्शयति यदेतिसप्तभिः यदेतरौगुणौजयेत्अभिभवेत् भास्वरंप्रकाशकं विशदंस्वच्छं शिवंशांतम् शिवत्वविशदत्वभास्वरत्वानांयथाक्रमंसुखधर्मज्ञानहेतुत्वात्तदातैर्युज्येत आदिशब्दाच्छमदमादिभिश्च ॥ १३ ॥ तमःसत्वंचकर्मभूतं रजःकर्तृ संगंसंगहेतुः भि

सत्त्वंरजस्तमइतिगुणाजीवस्यनैवमे ॥ चित्तजायैस्तुभूतानांसज्जमानोनिबध्यते ॥ १२ ॥ यदेतरौजयेत्सत्त्वंभास्वरंविशदंशिवं ॥ तदासुखेनयुज्येतधर्मज्ञानादिभिःपुमान् ॥ १३ ॥ यदाजयेत्तमःसत्वंरजःसंगंभिदाबलं ॥ तदादुःखेनयुज्येतकर्मणायशसाश्रिया ॥ १४ ॥ यदाजयेद्रजःसत्त्वंतमोमूढंलयंजडं ॥ युज्येतशोकमोहाभ्यांनिद्रयाहिंसयाशया ॥१५॥ यदाचित्तंप्रसीदेतइंद्रियाणांचनिर्वृतिः ॥ देहेऽभयंमनोसंगंतत्सत्वंविद्धि मत्पदं ॥ १६ ॥विकुर्वन्क्रिययाचाधीरनिर्वृत्तिश्चचेतसां ॥ गात्रास्वास्थ्यंमनोभ्रांतंरजएतैर्निशामय ॥ १७ ॥

दाभेदहेतुः बलंप्रवृत्तिस्वभावम् अतःसंगहेतुत्वात्यशसाश्रियायुज्येत तत्कामःपुमान्भवतीत्यर्थः भिदाहेतुत्वाद्दुःखेनयुज्येत द्वितीयाद्वैभयंभवतीतिश्रुतेः बलहेतुत्वात्कर्मणायुज्येत ॥ १४ ॥ यदारजःसत्वंचकर्मभूतंतमःकर्तृजयेत् मूढंविवेकभ्रंशकम् लयमावरणात्मकम् जडमनुद्यमात्मकम् अतोमूढत्वाच्छोकमोहहिंसाभिर्लयत्वान्निद्रयाजडत्वादुद्यमाभावेनकेवलमाशयायुज्येतेतिद्रष्टव्यम् जनइतिपाठे लयात्मकमेवनिद्राशयोर्हेतुः ॥ १५ ॥ किंच यदाचित्तंप्रसीदेतस्वच्छंभवेत् निर्वृतिरुपरातिः तत्तदामत्पदंमदुपलब्धिस्थानंसत्वमुद्रिक्तं विद्धि ॥ १६ ॥ यदापुनःक्रिययाविकुर्वन्विकारंप्राप्नुवन्आधीर्भवतिआसमंतात्विक्षिप्ताधीर्यस्यसः चेतसांबुद्धींद्रियाणामनिर्वृत्तिःअनुपरतिः गात्राणिकर्मेंद्रियाणितेषामस्वास्थ्यंविकाराधिक्यंमनोभ्रांतंचंचलमस्थिरंतदारजउत्कटंनिशामयजानीहीति ॥ १७ ॥ ॥

यदासीदत्तिरोभवत् चेतसोग्रहणेचिदाकारपरिणामेअक्षमंसच्चित्तंविलीयेत मनोऽपिसंकल्पात्मकंनष्टंलीनम् तमोऽज्ञानंग्लानिर्विषादश्च भवति तत्तदातमःउत्कटमुपधारयविद्धि ॥ १८ ॥ किंच एधमानइति इंद्रियाण्येवनिवृत्तिप्रवृत्तिमोहस्वभावानिदेवासुररक्षांसीतिज्ञेयम् यद्वा प्रसंगादाधिदैविकानांगुणानामुत्कर्षकार्याणिउक्तानीतिज्ञेयम् ॥ १९ ॥ गुणोत्कर्षतोऽवस्थाभेदंदर्शयति सत्वादिति प्रसंगान्निर्गुणावस्थामाह तुरीयंचतुर्थमवस्थांतरंनामत्रिषुजागरणादिषुसंततमेकरूपमात्मतत्वमेवेत्यर्थः ॥ २० ॥ गुणोत्कर्षद्वारेणतत्तत्कर्मफलनिष्ठां दर्शयति उपर्युपरीति ब्राह्मणावेदानुष्ठानयुक्ताः आब्रह्मणइतिपाठेब्रह्मलोकमभिव्याप्य आमुख्यात्स्थावरानभिव्याप्यअंतरचारिणोम नुष्याएवभवंति ॥ २१ ॥ देहादुत्क्रांतकालीनगुणोत्कर्षफलमाह सत्वेवृद्धेसतिप्रलीनामृताः रजोलयाःरजसिप्रवृद्धेसतिलयोयेषांते ए

सीदच्चित्तंविलीयेतचेतसोग्रहणेऽक्षमम् ॥ मनोनष्टंतमोग्लानिस्तमस्तदुपधारय ॥ १८ ॥ एधमानेगुणे सत्त्वेदेवानांबलमेधते ॥ असुराणांचरजसितमस्युद्धवरक्षसां ॥ १९ ॥ सत्त्वाज्जागरणंविद्याद्रजसास्वप्न मादिशेत् ॥ प्रस्वापंतमसाजंतोस्तुरीयंत्रिषुसंततं ॥ २० ॥ उपर्युपरिगच्छंतिसत्त्वेनब्राह्मणाजनाः ॥ त मसाधोऽधआमुख्याद्रजसांऽतरचारिणः ॥ २१ ॥ सत्वेप्रलीनाःस्वर्यांतिनरलोकंरजोलयाः ॥ तमोलया स्तुनिरयंयांतिमामेवनिर्गुणाः ॥ २२ ॥ मदर्पणंनिष्फलंवासात्विकंनिजकर्मतत् ॥ राजसंफलसंकल्पंहिं साप्रायादितामसं ॥ २३ ॥ कैवल्यंसात्विकंज्ञानंरजोवैकल्पिकंचयत् ॥ प्राकृतंतामसंज्ञानंमन्निष्ठंनिर्गुणं स्मृतं ॥ २४ ॥ वनंतुसात्विकोवासोग्रामोराजसउच्यते ॥ तामसंद्यूतसदनंमन्निकेतंतुनिर्गुणं ॥ २५ ॥

वंतमोलयाइत्यपि निर्गुणाइत्यत्रतुलयशब्दानुपादानाज्जीवंतोपिनिर्गुणाश्चेन्मामेवयांतीत्यर्थः ॥ २२ ॥ इदानींगुणोत्कर्षकृतमेवतत्तत्फल साधनकर्मत्रैविध्यमाह मदर्पणंमत्प्रीत्युद्देशेनकृतंनिष्फलंकेवलंदासभावेनैवकर्तव्यंनिजकर्मइत्यादितत्सात्विकं फलंसंकल्प्यतेअस्मिन्स्तत् हिंसाप्रायंहिंसोद्देशेनकृतंहिंसाबहुलंच आदिशब्दाद्दंभमात्सर्यादिकृतं ॥ २३ ॥ इदानींसगुणनिर्गुणभेदेनज्ञानादीनांचातुर्विध्यमाह कैवल्यंदेहादिव्यतिरिक्तात्मविषयं वैकल्पिकंदेहाद्यव्यतिरिक्तात्मविषयंयत्तद्रजःराजसंप्राकृतंबालमूकादिज्ञानतुल्यम् मन्निष्ठंपरमेश्वरविषयम् ॥ २४ ॥ वनंविविक्तत्वात्सात्विकोवासः भगवन्निकेतनंतुसाक्षात्तदाविर्भावान्निर्गुणंस्थानम् ॥ २५ ॥

कारकःकर्ता असंगीअनासक्तः रागांधःअत्यभिनिवेशवान् स्मृतिविभ्रष्टःअनुसंधानशून्यः मदपाश्रयःमदेकशरणः सहिनिरहंकारत्वा
न्निर्गुणः ॥ २६ ॥ अधर्मेधर्मइतियाश्रद्धा ॥ २७ पथ्यंहितं पूतंशुद्धं अनायस्तमनायासतःप्राप्तं आहार्यंभक्ष्यभोज्यादि इंद्रियाणांप्रेष्ठं
कट्वम्ललवणादि आर्तिदाशुचिदैन्यकरमशुद्धंच चशब्दान्मान्निवेदितंनिर्गुणमित्यभिप्रेतम् ॥ २८ ॥ आत्मोत्थंसुखंमदपाश्रयमित्यपित्वं
तत्पदार्थविषयत्वेनज्ञानवदेवद्रष्टव्यम् ॥ २९ ॥ उक्तंसंसारहेतुभूतंत्रैगुण्यमुपसंहरतिद्वाभ्याम् द्रव्यंपथ्यपूतादि देशोवनग्रामादिः फलं
सात्विकंसुखमित्यादि कालोयदाभजेतमांभक्त्यायदेतरौजयेदित्यादिनायोऽर्थादुक्तः ज्ञानंकैवल्यंसात्विकंज्ञानमित्यादि कर्ममदर्पणमित्या

सात्त्विकःकारकोऽसंगीरागांधोराजसःस्मृतः ॥ तामसःस्मृतिविभ्रष्टोनिर्गुणोमदपाश्रयः ॥ २६ ॥ सा
त्त्विक्याध्यात्मिकीश्रद्धाकर्मश्रद्धातुराजसी ॥ तामस्यधर्मेयाश्रद्धामत्सेवायांतुनिर्गुणा ॥ २७ ॥ पथ्यंपू
तमनायस्तमाहार्यंसात्त्विकंस्मृतम् ॥ राजसंचेंद्रियप्रेष्ठंतामसंचार्तिदाशुचि ॥ २८ ॥ सात्त्विकंसुखमात्मो
त्थंविषयोत्थंतुराजसं ॥ तामसंमोहदैन्योत्थंनिर्गुणंमदपाश्रयं ॥ २९ ॥ द्रव्यंदेशःफलंकालोज्ञानंकर्मच
कारकः ॥ श्रद्धाऽवस्थाकृतिर्निष्ठात्रैगुण्यःसर्वएवहि ॥ ३० ॥ सर्वेगुणमयाभावाःपुरुषाव्यक्तधिष्ठिताः ॥
दृष्टंश्रुतमनुध्यातंबुद्ध्यावापुरुषर्षभ ॥ ३१ ॥ एताःसंसृतयःपुंसोगुणकर्मनिबंधनाः ॥ येनेमेनिर्जिताःसौ
म्यगुणाजीवेनचित्तजाः ॥ भक्तियोगेनमन्निष्ठोमद्भावायप्रपद्यते ॥ ३२ ॥ तस्माद्देहमिमंलब्ध्वाज्ञानवि
ज्ञानसंभवं ॥ गुणसंगंविनिर्धूयमांभजंतुविचक्षणाः ॥ ३३ ॥ ॥

दि कारकःसात्त्विकःकारकोऽसंगीत्यादि श्रद्धासात्त्विक्याध्यात्मिकीत्यादि अवस्थासत्त्वाज्जागरणमित्यादि आकृतिरुपर्युपरिगच्छंती
त्यादिनोक्तादेवत्वादिरूपा निष्ठासत्त्वेप्रलीनाःस्वर्यांतीत्यादिनोक्तःस्वर्गादिः एवंसर्वोप्ययंभावस्त्रैगुण्यस्त्रिगुणात्मकः ॥ ३० ॥ नकेव
लमेपएवकिंतुयावंतःपुरुषाव्यक्तधिष्ठितास्तेसर्वेभावागुणमयाएव तत्प्रपंचःदृष्टमिति ॥ ३१ ॥ इदानीमुक्तंत्रैगुण्यस्यसंसारहेतुत्वमनुवदंस्त
न्निर्जयान्मोक्षइत्याह एताइतिसार्धेन येननिर्जिताःसपश्चादविक्षिप्तेनभक्तियोगेनमन्निष्ठःसन्मद्भावायमोक्षाय प्रपद्यतेयोग्योभवति ॥ ३२ ॥
तस्माद्विवेकिनामिदमेवयुक्तमित्याह तस्मादिति ज्ञानविज्ञानयोःसंभवोयस्मिंस्तमिमंनरदेहम् ॥ ३३ ॥

भजनप्रकारमाह निःसंगइतिसार्धेन सत्त्वसंसेवयासात्त्विकान्येवसेवेतपुमान्सत्त्वाविवृद्धयेइतिप्रागुक्तया नैरपेक्ष्येणउपशमात्मकेनसत्त्वेनैव ॥ ३४ ॥ एवंचसतिमांप्राप्नोतीत्याह संपद्यतइति जीवंजीवत्वकारणंलिंगशरीरं मांप्राप्तस्यनपुनःसंसारइत्याह जीवइति नबहिर्विषयभोगेन नांतरस्तत्स्मरणेन गुणकृतामनुसंसरणप्रधामजितपुण्यकथाकथनादिभिः ॥ श्रुनुतभक्तिरसेनविवेकिनोनहिपुनःसुलभंजनुरीदृशं ॥ ३५ ॥ इत्येकादशेटीकायांपंचविंशोध्यायः ॥ २५ ॥ ॥ षड्विंशेयोगनिष्ठायाविघातोदुष्टसंगतः ॥ साधुसंगेनतन्निष्ठापराकाष्ठेतिवर्ण्यते ॥ १ ॥ योगिनोयोगविभ्रंशःसंगतःसंभवेदिति ॥ सर्वथातन्निवृत्त्यर्थमैलगीतंवितन्यते ॥ २ ॥ निःसंगोमांभजेद्विद्वानप्र

निःसंगोमांभजेद्विद्वानप्रमत्तोजितेंद्रियः ॥ रजस्तमश्चाभिजयेत्सत्त्वसंसेवयामुनिः ॥ सत्त्वंचाभिजयेद्युक्तो नैरपेक्ष्येणशांतधीः ॥ ३४ ॥ संपद्यतेगुणैर्मुक्तोजीवोजीवंविहायमां ॥ जीवोजीवविनिर्मुक्तोगुणैश्चाशयसंभवैः ॥ मयैवब्रह्मणापूर्णोनबहिर्नांतरश्चरेत् ॥ ३५॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेपंचविंशोध्यायः॥ २५ ॥ ॥ ॥श्रीभगवानुवाच मल्लक्षणमिमंकायंलब्ध्वामद्धर्मआस्थितः ॥ आनंदंपरमात्मानमात्मस्थंसमुपैतिमाम् ॥ १ ॥ गुणमय्याजीवयोन्याविमुक्तोज्ञाननिष्ठया ॥ गुणेषुमायामात्रेषुदृश्यमानेष्ववस्तुतः ॥ वर्तमानोपिनपुमान्युज्यतेवस्तुभिर्गुणैः ॥ २ ॥ संगंनकुर्यादसतांशिश्नोदरतृपांक्वचित् ॥ तस्यानुगस्तमस्यंधेपतत्यंधानुगोऽधवत् ॥ ३ ॥ ॥ ॥ ॥

मत्तोजितेंद्रियइत्युक्तंतत्रविपक्षेअनर्थंकथयिष्यन्जीवन्मुक्तस्यापितर्हिसंगेदुर्वारइत्यनर्थः स्यादित्याशंक्योक्तानुवादपूर्वकंपरिहरतिसार्द्धाभ्यां मल्लक्षणं मत्स्वरूपंलक्ष्यतेयेनतमिमंनरदेहंलब्ध्वामद्धर्मेभक्तिलक्षणेआस्थितः सन्आत्मस्थमात्मन्येवनिरंतरत्वेनस्थितंपरमानंदरूपमात्मानंमामुपैतिसम्यक्प्राप्नोति ॥ १ ॥ नचैवंभूतस्यविषयसंगोनामास्तीत्याह गुणमय्येति गुणमय्याजीवयोनिर्जीवोपाधिस्तयाविमुक्तोगुणेषुवर्तमानोपितैर्नयुज्यतेसंगंनप्राप्नोति अत्रहेतुः अवस्तुभिः नन्ववस्तुभिरप्यन्येयुज्यमानादृश्यंतेतत्राह अवस्तुत्वेनदृश्यमानेषु ॥ २ ॥ तथापिसंगंवर्जयेदित्याह संगमिति असतांलक्षणमाह शिश्नोदरेतर्पयंतीतिशिश्नोदरतृपस्तेषांक्वचित्कदाचिदपि आस्तांतावद्बहूनांसंगः किंतुतस्यैकस्यापिअनुगःअनुवर्तीअंधमनुगच्छतियोऽधस्तद्वत् ॥ ३ ॥ ॥ ॥

अत्रेतिहासमाह ऐलः पुरूरवाः सम्राट् चक्रवर्ती बृहच्छ्रवः कीर्तिर्यस्यसः उर्वशीविरहात्प्रथमंमुह्यन्पश्चात्कुरुक्षेत्रेतांसमागम्यगंधर्वदत्ते
नाग्निनादेवानिष्ट्वापुनरुर्वशीलोकंप्राप्यशोकसंयमेशोकापगमेसातिततोनिर्विण्णः सन्निमांगाथामगायतेतिनवमस्कंधानुसारेणद्रष्टव्यं ॥
॥ ४ ॥ प्राक्तनींमोहावस्थामाह त्यक्त्वेति आत्मानंराजानंत्यक्त्वा घोरेतिष्ठेति हयेजायेमनसातिष्ठघोरेवचांसिमिश्राकृणवावहैनु ननौमंत्रा
अनुदितासएतेमयस्करन्परतरेचनाहन्नित्येवंमंत्रैर्विलपन् ॥ ५ ॥ वैक्लव्येकारणमाह कामानिति वर्षाणांयामिनीरात्रीर्यांतीः अपयांतीः
आयांतीः आगामिनीः उर्वश्याआकृष्टाचेतनायस्यसः ॥ ६ ॥ तस्यगंधर्वलोकेप्राप्तस्यवहुकालमुर्वशीसंभोगानंतरंनिर्विण्णस्यगाथामाह

ऐलः सम्राडिमांगाथामगायतबृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥ त्यक्त्वात्मानंव्र
जंतींतांनग्नउन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जायेघोरेतिष्ठेतिविक्लवः ॥ ५ ॥ कामानतृप्तोऽनुजुषन्क्षुल्लकान्वर्षया
मिनीः ॥ नवेदयांतीर्नायांतीरुर्वश्याकृष्टचेतनः ॥ ६ ॥ ऐलउवाच अहोमेमोहविस्तारः कामकश्मलचेतसः ॥
देव्यागृहीतकंठस्यनायुःखंडाइमेस्मृताः ॥ ७ ॥ नाहंवेदाभिनिर्मुक्तः सूर्योवाऽभ्युदितोऽमुया ॥ मुषितोवर्षपू
गानांबताहानिगतान्युत ॥ ८ ॥ अहोमेआत्मसंमोहोयेनात्मायोषितांकृतः ॥ क्रीडामृगश्चक्रवर्तीनरदेवशि
खामणिः ॥ ९ ॥ सपरिच्छदमात्मानंहित्वातृणमिवेश्वरम् ॥ यांतींस्त्रियंचान्वगमंनग्नउन्मत्तवद्रुदन् ॥ १० ॥
कुतस्तस्यानुभावः स्यात्तेजईशत्वमेववा ॥ योन्वगच्छंस्त्रियंयांतींखरवत्पादताडितः ॥ ११ ॥ किंविद्ययाकिंत
पसाकिंत्यागेनश्रुतेनवा ॥ किंविविक्तेनमौनेनस्त्रीभिर्यस्यमनोहृतम् ॥ १२ ॥ ॥ ॥

अष्टादशभिः तत्राष्टभिरनुतापः प्रपंच्यते अहोइति यतोमयाइमेअहोरात्ररूपाआयुःखंडानस्मृताः ॥ ७ ॥ तदेवाह नाहमितिअभिनि
र्मुक्तः मयिरममाणेअस्तंगतः अभ्युदितोवासूर्यइति अमुयाउर्वश्यावंचितः बतखेदे उताषि वर्षपूगानामिति गतान्यहानिनवेदेति ॥ ८ ॥
येनसंमोहेनात्मादेहः क्रीडामृगवदधीनः ॥ ९ ॥ ननुप्रणयकुपितायाअनुनयार्थमधीनतायुक्तैव सत्यं नत्वत्रतदस्तीत्याह सपरिच्छदंरा
ज्यादिसहितमीश्वरंचक्रवर्तिनंतृणमिवत्यक्त्वायांतीमपिअन्वगममनुगतोऽस्मि ॥ १० ॥ किंच ममप्रभावाद्यभिमानोवृथैवेत्याह कुतस्त
स्यमेतेजोबलं खरोयथापादताडितोपिखरीमनुगच्छतितद्वत् ॥ ११ ॥ एवंभूतस्यसर्वंसाधनंव्यर्थमित्याह किमिति त्यागेनसंन्यासेन
विविक्तेनएकांतसेवया मौनेनवाङ्नियमेन ॥ १२ ॥ ॥ ॥ ॥

अनुतप्तःसन्नात्मानंनिंदतिद्वाभ्याम् स्वार्थस्येति अकोविदमज्ञातारम् गोखरवत् गौरिवखरइवेति ॥ १३ ॥ अधरासवंसेवमानस्यआत्मभूर्मनसिजःपुनःपुनरुद्भवन् ॥ १४ ॥ एवमष्टभिर्निर्वेदोनिरूपितइदानींतस्यविवेकमाहदशभिः पुंश्चल्येति अयंभावः कर्मभिर्देवानिष्ट्वा दुःखमेवप्राप्तोऽस्मि अतःपरमेश्वरमेवभजेयमिति ॥ १५ ॥ परमेश्वरप्रसादंविनादेवैरुपदिष्टादपिवेदवाक्यान्मोहोनानिवर्ततइत्याह बोधितस्यापीति देव्याउर्वश्यासूक्तवाक्येनयथार्थवचनेन पुरूरवोमामृथामाप्रपतोमात्वावृकासोआशिवासउक्षन् नवैस्त्रैणानिसख्यानिसंतिसालावृकाणांहृदयान्येताइत्यनेन ॥ १६ ॥ पूर्वंपुंश्चल्यापहृतंचित्तमित्यादिनातस्याअपकारोऽनुस्मृतइदानींममैवायमपराधइत्याह किमे

स्वार्थस्याकोविदंधिङ्मांमूर्खंपंडितमानिनं ॥ योहमीश्वरतांप्राप्यस्त्रीभिर्गोखरवाज्जितः ॥ १३ ॥ सेवतोवर्षपूगान्मेउर्वश्याअधरासवं ॥ नतृप्यत्यात्मभूःकामोवन्हिराहुतिभिर्यथा ॥ १४ ॥ पुंश्चल्याऽपहृतंचित्तंकोऽन्वन्योमोचितुंप्रभुः ॥ आत्मारामेश्वरमृतेभगवंतमधोक्षजं ॥ १५ ॥ बोधितस्यापिदेव्यामेसूक्तवाक्येनदुर्मतेः ॥ मनोगतोमहामोहोनापयात्यजितात्मनः ॥ १६ ॥ किमेतयानोऽपकृतंरज्ज्वावासर्पचेतसः ॥ रज्जुस्वरूपाविदुषोयोऽहंयदजितेंद्रियः ॥ १७ ॥ क्वायंमलीमसःकायोदौर्गंध्याद्यात्मकोऽशुचिः ॥ क्वगुणाःसौमनस्याद्याह्यध्यासोविद्ययाकृतः ॥ १८ ॥ पित्रोःकिंस्वंनुभार्यायाःस्वामिनोऽग्नेःश्वगृध्रयोः ॥ किमात्मनःकिंसुहृदामितियोनावसीयते ॥ १९ ॥ ॥ ॥ ॥

तयेति नोऽस्माकंकामिनामेतयाकिमपकृतंनकिंचिदपि यथारज्जुस्वरूपाविदुषोरज्जुद्रष्टुःपुंसस्तस्यांसर्पकल्पनयाखिद्यतोऽपिरज्ज्वाकिमपिनापकृतंतद्वत् यद्यस्माद्योऽहमेवंभूतःसएवाजितेंद्रियत्वादपराधीत्यर्थः ॥ १७ ॥ ननुतथाऽपिसैवसौगंध्यप्रेमादिगुणैःसंमोहमूलमित्याशंक्यतेऽपिस्वमतिपरिकल्पिताएवेत्याहचतुर्भिः क्वायमिति मलीमसोऽति मलिनः सुमनसांकुसुमानामिवगंधसौकुमार्यादि सौमनस्यंशोभनमनोभावोवा ॥ १८ ॥ ममत्वमपितस्मिन्परिकल्पितमेवेत्याह पित्रोःकिंस्वंकायःजनकत्वात् नुवितर्के भार्यायावाभोगप्रदत्वात् अत्रानुपयुक्तमप्येतद्भ्यायतुल्यत्वादुक्तम् स्वामिनोवाऽधीनत्वात् अग्नेर्वाअंतेद्यांतदाहुतित्वात् श्वगृध्रयोर्वाभक्ष्यत्वात् किंवात्मनःतत्कृतशुभाशुभभागित्वात् सुहृदांवाउपकारित्वात् एवंयोननिश्चीयते ॥ १९ ॥ ॥

तुच्छाकृमिविट्भस्मलक्षणानिष्ठाअंतोयस्यतस्मिन्कायेकलेवरेप्रियत्वेनगृहीते विषंगमेवाह अहोइति सुनसंशोभननासिकम् ॥ २० ॥ अतोगुणारोपेणरममाणामादृशाःकृमितुल्याइत्याह त्वगादिसंहतौतत्संघातेदेहे विण्मूत्रादिसंहतौरमतांकृमीणांवा ॥ २१ ॥ यद्यप्येवंबीभत्सिताःस्त्रियःअथाऽपिनोपसज्जेतअवलोकनादिनापिसंगंनकुर्यात् अर्थवित्अविवेकी अत्रहेतुः विषयेति ॥ २२ ॥ ननुकचिन्निर्मीलितनयनादेरपिमनःक्षोभोदृश्यते सत्यं सोपिपूर्वदर्शनादिकंविनानभवतीत्याह अदृष्टादिति भावाःपदार्थास्तद्भावोमनःक्षोभः अतःप्राणानिंद्रि

तस्मिन्कलेवरेऽमेध्येतुच्छनिष्ठेविषज्जते ॥ अहोसुभद्रंसुनसंसुस्मितंचमुखंस्त्रियः ॥ २० ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ ॥ विण्मूत्रपूयेरमतांकृमीणांकियदंतरम् ॥ २१ ॥ अथाऽपिनोपसज्जेतस्त्रीषुस्त्रैणेषुचार्थवित् ॥ विषयेंद्रियसंयोगान्मनःक्षुभ्यतिनान्यथा ॥ २२ ॥ अदृष्टादश्रुताद्भावान्नभावउपजायते ॥ असंप्रयुंजतःप्राणान्शाम्यतिस्तिमितंमनः ॥ २३ ॥ तस्मात्संगोनकर्तव्यःस्त्रीषुस्त्रैणेषुचेंद्रियैः ॥ विदुषांचाप्यविश्रब्धःषड्वर्गःकिमुमादृशाम् ॥ २४ ॥ श्रीभगवानुवाच एवंप्रगायन्नरदेवदेवःसउर्वशीलोकमथोविहाय ॥ आत्मानमात्मन्यवगम्यमांवैउपारमज्ज्ञानविधूतमोहः ॥ २५ ॥ ततोदुःसंगमुत्सृज्यसत्सुसज्जेतबुद्धिमान् ॥ संतएतस्यछिंदंतिमनोव्यासंगमुक्तिभिः ॥ २६ ॥ संतोऽनपेक्षामच्चित्ताःप्रणताःसमदर्शनाः ॥ निर्ममानिरहंकारानिर्द्वंद्वानिष्परिग्रहाः ॥ २७ ॥ तेषुनित्यंमहाभागमहाभागेषुमत्कथाः ॥ संभवंतिहितानृणांजुषतांप्रपुनंत्यघम् ॥ २८ ॥ तायेशृण्वंतिगायंतिह्यनुमोदंतिचादृताः ॥ मत्पराःश्रद्दधानाश्चभक्तिंविंदंतितेमयि ॥ २९ ॥ ॥ ॥ ॥ ॥

याणिअसंप्रयुंजतोनियच्छतः स्तिमितंनिश्चलंसत् ॥ २३ ॥ इंद्रियैःकृत्वा अविश्रब्धःअविश्वसनीयः मादृशामविवेकिनाम् ॥ २४ ॥ फलितमाहद्वाभ्याम् एवमिति नरेषुदेवेषुचदीव्यतीतितथा ॥ २५ ॥ उक्तिभिर्हितोपदेशैरितितीर्थदेवादिसंगादपिसत्संगःश्रेयानितिदर्शयति ॥ २६ ॥ सतांलक्षणमाह संतइति विशेषणाष्टकस्ययथेष्टंहेतुहेतुमद्भावः ॥ २७ ॥ नचतेषुउपदेशापेक्षाअपितुकेवलंतत्सान्निधिरेवतारयतीत्याह तेष्विति सप्तभिः ॥ २८ ॥ श्रवणादिभिरेवमत्पराःश्रद्दधानाश्चसंतोभक्तिंविंदंति ॥ २९ ॥ ॥

॥ ३० ॥ विभावसुमग्निंसेवमानस्य अप्येतिनश्यति तथाकर्मजाड्यमागामिसंसारभयंतन्मूलमज्ञानंचनश्यतीत्यर्थः ॥ ३१ ॥ निमज्ज्यो
न्मज्जतामुच्चावचयोनीर्गच्छतांपरमायनमाश्रयः ॥ ३२ ॥ किंच यथाऽन्नमेवप्राणोजीवनम् अहमेवयथाशरणम् धर्मएवयथाप्रेत्यपरलो
केवित्तम् तथासंतएवार्वाक्संसारपातात्बिभ्यतःपुंसःअरणंशरणम् ॥ ३३ ॥ किंच संतश्चक्षूंषिसगुणनिर्गुणज्ञानानि अर्कःपुनःसम्यगु
त्थितोऽपिबहिस्तदप्येकमेवचक्षुरित्यर्थः ॥ ३४ ॥ अध्यायार्थमुपसंहरति वैतसेनइति सुद्युम्नभावेनउमावनंप्रविष्टस्यवीतासेनास्त्रीभावं
प्राप्तायस्यतस्यस्त्रीभावंप्राप्तस्यपुत्रोवैतसेनःपुरूरवाः एवमुक्तप्रकारेणउर्वश्यालोकात्स्थानादवलोकनाद्वानिस्पृहस्ततोऽपिसत्संगादपिहे

भक्तिंलब्धवतःसाधोःकिमन्यदवशिष्यते ॥ मय्यनंतगुणेब्रह्मण्यानंदानुभवात्मनि ॥३०॥ यथोपश्रयमाण
स्यभगवंतंविभावसुम् ॥ शीतंभयंतमोऽप्येतिसाधून्संसेवतस्तथा ॥ ३१ ॥ निमज्ज्योन्मज्जतांघोरेभवाब्धौ
परमायनं ॥ संतोब्रह्मविदःशांतानौर्दृढेवाप्सुमज्जताम् ॥ ३२ ॥ अन्नंहिप्राणिनांप्राणआर्तानांशरणंत्वहं ॥
धर्मोवित्तंनृणांप्रेत्यसंतोऽर्वाक्बिभ्यतोरणं ॥ ३३ ॥ संतोदिशंतिचक्षूंषिबहिरर्कःसमुत्थितः ॥ देवताबांधवाः
संतःसंतआत्माऽहमेवच ॥ ३४॥ वैतसेनस्ततोऽप्येवमुर्वश्यालोकनिस्पृहः ॥ मुक्तसंगोमहीमेतामात्माराम
श्चचारह ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेऐलगीतंनामषड्विंशोऽध्यायः ॥ २६ ॥ ॥

उद्धवउवाच क्रियायोगंसमाचक्ष्वभवदाराधनंप्रभो ॥ यस्मात्त्वांयेयथार्चंतिसात्वताःसात्वतर्षभ ॥
॥ १ ॥ एतद्वदंतिमुनयोमुहुर्निःश्रेयसंनृणाम् ॥ नारदोभगवान्व्यासआचार्योऽगिरसःसुतः ॥ २ ॥ निः
सृतंतेमुखांभोजाद्यदाहभगवानजः ॥ पुत्रेभ्योभृगुमुख्येभ्योदेव्यैचभगवान्भवः ॥ ३ ॥

तोर्मुक्तसंगःसन्नात्मारामोभूत्वायथेष्टंचचारेति ॥ ३५ ॥ इत्येकादशेटीकायांषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ॥ सप्तविंशेक्रियायोगः
सद्यश्चित्तप्रसादकः ॥ सर्वकामाप्तिहेतुश्चसांगःप्रोक्तःसमासतः ॥ १ ॥ रागाद्याकुलचित्तानांकुतोसंगादिसंभवः ॥ इतिकृष्णार्चनंभद्रम
नुस्मृत्यानुपृच्छति ॥ २ ॥ क्रियायोगमिति भवदाराधनरूपं यस्मादितिकारणाधिष्ठानादिप्रश्नः सर्वकारकाणांनिमित्तत्वस्यावशिष्टत्वात्
यथेति एकस्मिन्नधिष्ठानादौकेनप्रकारेणेतिप्रश्नः येअधिकारिणःसात्वताःभक्ताः ॥ १ ॥ अस्यपुनर्विशेषतःप्रश्नेकारणमाहचतुर्भिः एत
त्त्वदर्चनंनिःश्रेयसकरंवदंति अंगिरसःसुतोबृहस्पतिः ॥ २ ॥ निःसृतंत्वयोपदिष्टमित्यर्थः देव्यैपार्वत्यै ॥ ३ ॥ ॥

सर्ववर्णानांत्रैवर्णिकानाम् ॥ ४ ॥ विश्वेश्वरायेतेषामीश्वरः ॥ ५ ॥ कर्मकांडस्यपूजाविधानस्य नास्त्यंतोग्रंथतःपारंवाऽनुष्ठानतोयस्य तस्य ॥ ६ ॥ वैदिकएवमंत्रोवैदिकान्येवांगानि चयस्मिन्पुरुषसूक्तादौसवैदिकः एवंतांत्रिकोऽपि मिश्रोऽष्टाक्षरादिः मखःपूजा ॥ ७ ॥ यदात्रैवर्णिकोयजेततदाविशेषमाह यदागर्भाष्टमैकादशद्वादशाब्दादिकालेस्वानिगमनेस्वाधिकारप्रवृत्तेनवेदेनोक्तंद्विजत्वमुपनयनम् ॥ ॥ ८ ॥ अर्चायांप्रतिमादौ ॥ ९ ॥ स्नानेविशेषमाह उभयैर्वैदिकैस्तांत्रिकैश्चमंत्रैः ॥ १० ॥ किंचसंध्योपासनादीनिकर्माणि चोदितानि साकल्येनविहितानियस्ययानितैःसहमेपूजांकुर्यात् नतुतानिपरित्यजेदित्यर्थः सम्यक्परमेश्वरविषयएवसंकल्पोयस्यतथाभूतःसन् कर्म

एतद्वैसर्ववर्णानामाश्रमाणांचसंमतं ॥ श्रेयसामुत्तमंमन्येस्त्रीशूद्राणांचमानद ॥ ४ ॥ एतत्कमलपत्राक्षकर्मबंधविमोचनं ॥ भक्तायचानुरक्तायब्रूहिविश्वेश्वरेश्वर ॥ ५ ॥ श्रीभगवानुवाच नह्यंतोऽनंतपारस्यकर्मकांडस्यचोद्धव ॥ संक्षिप्तंवर्णयिष्यामियथावदनुपूर्वशः ॥६॥ वैदिकस्तांत्रिकोमिश्रइतिमेत्रिविधोमखः ॥ त्रयाणामीप्सितेनैवविधिनामांसमर्चयेत् ॥ ७ ॥ यदास्वनिगमेनोक्तंद्विजत्वंप्राप्यपूरुषः ॥ यथायजेतमांभक्त्याश्रद्धयातन्निबोधमे ॥ ८ ॥ अर्चायांस्थंडिलेऽग्नौवासूर्येवाऽप्सुहृदिद्विजे ॥ द्रव्येणभक्तियुक्तोऽर्चेत्स्वगुरुंमाममायया ॥ ९ ॥ पूर्वंस्नानंप्रकुर्वीतधौतदंतोऽगशुद्धये ॥ उभयैरपिचस्नानंमंत्रैर्मृद्ग्रहणादिभिः ॥ ॥ १० ॥ संध्योपास्त्यादिकर्माणिवेदेनाचोदितानिमे ॥ पूजांतैःकल्पयेत्सम्यक्संकल्पःकर्मपावनीं ॥ ॥ ११ ॥ शैलादारुमयीलौहीलेप्यालेख्याचसैकती ॥ मनोमयीमणिमयीप्रतिमाऽष्टविधास्मृता ॥ १२ ॥ चलाचलेतिद्विविधाप्रतिष्ठाजीवमंदिरम् ॥ उद्वासावाहनेनस्तःस्थिरायामुद्धवार्चने ॥ १३ ॥ अस्थिरायांविकल्पःस्यात्स्थंडिलेतुभवेद्द्वयम् ॥ स्नपनंत्वविलेप्यायामन्यत्रपरिमार्जनम् ॥ १४ ॥

पावनींकर्मनिर्हारिणीम् ॥ ११ ॥ अर्चाभेदानाहसार्धेन शैलाशिलामयी लौहीसुवर्णादिमयी लेख्यामृच्चंदनादिमयी हृदिपूजायांमनोमयी ॥ १२ ॥ प्रकर्षेणतिष्ठत्यस्यामितिप्रतिष्ठाप्रतिमैवजीवस्यभगवतोमंदिरम् यद्वा प्रतिष्ठयाकलान्यासेनभगवन्मंदिरंभवतीति प्रतिमाभेदेनविशेषमाहसार्धेन उद्वासोविसर्जनम् ॥ १३ ॥ अस्थिरायामर्चनेविकल्पः शालग्रामेनकुर्यात् सैकत्यांकुर्यादन्यत्रकुर्याद्वानवेति अविलेप्यायांमृन्मयलेख्यव्यतिरिक्तायामन्यत्राविलेप्यायांलेख्यायांचपारिमार्जनमेव ॥ १४ ॥ ॥ ॥

इदानींसकामनिष्कामभेदेनविशेषमाह द्रव्यैरिति प्रकर्षेणसिद्धैःसुशोभनैः अमायिनोनिष्कामस्यभक्तस्ययथालब्धैः यत्रचंदनादिसर्वथा नलभ्यतेतत्रहृदिभावेनभावनया यद्वाहृदिचेन्मद्यागस्तदाभावेनमनोमयैर्द्रव्यैरित्यर्थः ॥ १५॥ अधिष्ठानभेदेनप्रधानोपचारमाहसार्धेनस्नानेति तत्त्वविन्यासोयथास्थानमंगप्रधानदेवतानांतत्तन्मंत्रैःस्थापनं ॥ १६ ॥ अभ्यर्हणमुपस्थानार्घादि सलिलादिभिस्तर्पणादिनायजनं सर्वसाधारणमाह श्रद्धयेति ॥ १७ ॥ १८ एवमधिकारादिव्यवस्थामुक्त्वाइदानींपूजाप्रकारमाह शुचिरिति संभृताःसंभाराःपूजासाधनानियेनसः प्रागग्रैर्दर्भैः यद्वा प्रागेवसंभृतसंभारःसन्नासीनः नत्वासीनःसन्पश्चात्तत्संभारार्थंवारंवारमुत्तिष्ठेदित्यर्थः प्राङ्मुखउदङ्मुखोवा

**द्रव्यैःप्रसिद्धैर्मद्यागःप्रतिमादिष्वमायिनः ॥ भक्तस्यचयथालब्धैर्हृदिभावेनचैवहि ॥ १५ ॥ स्नानालंकरणंप्रेष्ठमर्चायामेवतूद्धव ॥ स्थंडिलेतत्त्वविन्यासोवह्नावाज्यप्लुतंहविः ॥ १६ ॥ सूर्येचाभ्यर्हणंप्रेष्ठंसलिलेसलिलादिभिः ॥ श्रद्धयोपाहृतंप्रेष्ठंभक्तेनममवार्यपि ॥ १७ ॥ भूर्यप्यभक्तोपहृतंनमेतोषायकल्पते ॥ गंधोधूपःसुमनसोदीपोऽन्नाद्यंचकिंपुनः ॥ १८ ॥ शुचिःसंभृतसंभारःप्राग्दर्भैःकल्पितासनः ॥ आसीनःप्रागुदग्वार्चेदर्चायामथसंमुखः ॥ १९ ॥ कृतन्यासःकृतन्यासांमदर्चांपाणिनामृजेत् ॥ कलशंप्रोक्षणीयंचयथावदुपसाधयेत् ॥ २० ॥ तदद्भिर्देवयजनंद्रव्याण्यात्मानमेवच ॥ प्रोक्ष्यपात्राणित्रीण्यद्भिस्तैस्तैर्द्रव्यैश्चसाधयेत् ॥ २१ ॥ पाद्यार्घाचमनीयार्थंत्रीणिपात्राणिदैशिकः ॥ हृदाशीर्ष्णाऽथशिखयागायत्र्याचाभिमंत्रयेत् ॥ २२ ॥**

आसीनः अर्चायांतुस्थिरायांसंमुखःअर्चाभिमुखउपविष्टःसन् ॥ १९ ॥ अनंतरंगुर्वादिनमस्कारपूर्वकंयथोपदेशंस्वस्मिन्कृतन्यासःकृतोमूलमंत्रन्यासोयस्यांतांममार्चांमामृजेत् निर्माल्यापकर्षणादिनाशोधयेत् कलशंपूर्णकुंभं प्रोक्षणीयंप्रोक्षणार्थोदकपात्रमुपसाधयेत् चंदनपुष्पादिभिःसंस्कुर्यात् ॥ २० ॥ तदद्भिःप्रोक्षणीयाद्भिर्देवयजनंदेवपूजास्थानं पाद्याद्यर्थंत्रीणिपात्राणिकलशोदकैःपूरितानितैस्तैर्द्रव्यैःसाधयेत् ॥ २१ ॥ तत्रपाद्यादिद्रव्याणि पाद्येश्यामाकदूर्वाऽब्जविष्णुक्रांतादिरिष्यते ॥ गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥ दुर्वाचेतिक्रमादर्घ्यद्रव्याष्टकमुदीरितं ॥ जातीलवंगकंकोलैर्मतमाचमनीयकमिति तानिचत्रीणियथाक्रमंहृदयादिमंत्रैर्गायत्र्याचसर्वाण्यभिमंत्रयेत् ॥ २२ ॥

तदनंतरंपिंडेदेहे वाय्वग्निसंशुद्धइति कोष्ठगतेनवायुनाशोषितेआधारगतेनाग्निनादग्धेपुनर्ललाटस्थचंद्रमंडलामृतप्लावनेनामृतमयेजाते तस्मिन्हृत्पद्मस्थांपरांश्रेष्ठांजीवकलांश्रीनारायणमूर्तिंध्यायेत् कथंभूतां नादांतेसिद्धैर्भाविताां प्रणवस्याकारोकारमकारबिंदुनादाःपंचांशास्तत्रनादांतेसिद्धैर्ध्याताां तथाचश्रुतिः योवेदादौस्वरःप्रोक्तोवेदांतेचप्रतिष्ठितः ॥ तस्यप्रकृतिलीनस्ययःपरःसमहेश्वरइति ॥ २३ ॥ तयात्मभूतयास्वेनैवभावेनाचिंतितयाअमृतमयेपिंडेदीपेनप्रभयागृहमिवव्याप्तेसति तस्मिन्नेवादौमानसैरुपचारैःसंपूज्य तन्मयःसन्नर्चादिष्वावाहनस्थापनमुद्रयास्थापयित्वा ॥२४॥ कथंपूजयेत्तत्राह पाद्येतिद्वाभ्यां धर्मादिभिर्ममासनं तत्रपद्मंचकल्पयित्वेत्युभाभ्यांवेदतंत्राभ्यामुभयसिद्धयेमह्यंपाद्यादीनुपचारान्प्रकल्पयेदित्यन्वयः उपस्पर्शआचमनमर्हणमर्घ्यं ॥ २५ ॥ उभयसिद्धयेवेदतंत्रोक्तभुक्तिमुक्तिप्राप्तये अयमर्थः

**पिंडेवाय्वग्निसंशुद्धेहृत्पद्मस्थांपरांमम ॥ अण्वींजीवकलांध्यायेन्नादांतेसिद्धभाविताां ॥ २३ ॥ तयात्मभूतयापिंडेव्याप्तेसंपूज्यतन्मयः ॥ आवाह्यार्चादिषुस्थाप्यन्यस्तांगंमांप्रपूजयेत् ॥ २४ ॥ पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् ॥ धर्मादिभिश्चनवभिःकल्पयित्वासनंमम ॥ २५ ॥ पद्ममष्टदलंतत्रकर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यांवेदतंत्राभ्यांमह्यंतूभयसिद्धये ॥ २६ ॥ सुदर्शनंपांचजन्यंगदासीषुधनुर्हलान् ॥ मुसलंकौस्तुभंमालांश्रीवत्संचानुपूजयेत् ॥ २७ ॥ नंदंसुनंदंगरुडंप्रचंडंचंडमेवच ॥ महाबलंबलंचैवकुमुदंकुमुदेक्षणम् ॥ २८ ॥ दुर्गांविनायकंव्यासंविष्वक्सेनंगुरून्सुरान् ॥ स्वेस्वेस्थानेत्वभिमुखान्पूजयेत्प्रोक्षणादिभिः ॥ २९ ॥ चंदनोशीरकर्पूरकुंकुमागुरुवासितैः ॥ सलिलैःस्नापयेन्मंत्रैर्नित्यदाविभवेसति ॥ ३० ॥**

धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यंकस्याग्नेयादिचतुष्कोणेषुपादाःअधर्मादीनिपूर्वादिदिक्षुगात्राणित्रयोगुणाः पट्टिकास्तत्रपूर्वादिक्रमेण मध्येचविमलोत्कर्षिणीज्ञानाक्रियायोगाप्रह्वीसत्येशानाऽनुग्रहेतिनवशक्तयः एवंयथोपदेशंधर्मादिभिर्नवभिःशक्तिभिश्चासनंकल्पयित्वेति कर्णिकयाकेसरैस्तत्रस्थसूर्यादिमंडलैश्चोज्ज्वलमित्यर्थः ॥ २६ ॥ आयुधादिपूजामाह सुदर्शनमितित्रिभिः तत्रन्यस्तांगमित्यावरणपूजासूचिता आसनेनैवशक्त्यावरणमित्युक्तं ततःसुदर्शनादिमुसलांतान्यायुधानिअष्टदिक्षु कौस्तुभमालाश्रीवत्सानुरसि ॥ २७ ॥ नंदादीन्पार्षदानष्टदिक्षु गरुडंपुरतः ॥ २८ ॥ दुर्गादीनिकोणेषु गुरून्वामतः सुरानिंद्रादिलोकपालान्पूर्वादिदिक्षु एवमेतान्देवस्याभिमुखान्प्रोक्षणादिभिःअर्घादिभिःपूजयेदित्यर्थः ॥ २९ ॥ पाद्यादीनुपचारान्प्रकल्पयेदित्युक्तंतानेवगुणविधिभिःप्रपंचयति चंदनेतिषड्भिः ॥ ३० ॥

मंत्रानाह स्वर्णघर्मानुवाकः सुवर्णघर्मंपरिवेदवेनमित्यादि महापुरुषविद्यया जितंतेपुंडरीकाक्षनमस्तेविश्वभावन सुब्रह्मण्यनमस्तेस्तुमहापु रुषपूर्वजेति पौरुषंपुरुषसूक्तंसहस्रशीर्षेत्यादि राजनादीनिसामानिइंद्रंनरोनेमधिताहवंतइत्यस्यामृचिगीतानि आदिशब्देनरौहिणादीनि॥ ॥ ३१ ॥ वस्त्राद्युपचारेष्वलंकारलक्षणंगुणंविधत्ते वस्त्रेति पत्राणिकपोलवक्षस्थलादिषुलिखिताःपत्रभंग्यः मद्भक्तश्चेत्सप्रेमयथाभवतितथा ॥ ३२ ॥ यथोचितमलंकुर्वीतेत्युक्तार्थंसर्वसाधारणंश्रद्धालक्षणंगुणंविधत्ते पाद्यमिति ॥ ३३ ॥ नैवेद्येवैभवलक्षणंगुणंविधत्तेगुडपायसेति श ष्कुल्यस्तैलपक्वविशेषाः अपूपाःअपूपानांमंडकादीनांसमूहाः सूपाःव्यंजनानि सतिविभवइतिशेषः ॥ ३४ ॥ कालभेदेनगुणंविधत्ते अभ्यं

स्वर्णघर्मानुवाकेनमहापुरुषविद्यया ॥ पौरुषेणापिसूक्तेनसामभीराजनादिभिः ॥ ३१ ॥ वस्त्रोपवीताभर णपत्रस्रग्गंधलेपनैः ॥ अलंकुर्वीतसप्रेममद्भक्तोमांयथोचितम् ॥ ३२॥ पाद्यमाचमनीयंचगंधंसुमनसोऽक्ष तान् ॥ धूपदीपोपहार्याणिदद्यान्मेश्रद्धयाऽर्चकः ॥ ३३ ॥ गुडपायससर्पींषिशष्कुल्यापूपमोदकान् ॥ सं यावदधिसूपांश्चनैवेद्यंसतिकल्पयेत् ॥ ३४ ॥ अभ्यंगोन्मर्दनादर्शदंतधावाभिषेचनम् ॥ अन्नाद्यंगीतनृ त्यादिपर्वणिस्युरुतान्वहम् ॥ ३५ ॥ विधिनाविहितेकुंडेमेखलागर्तवेदिभिः ॥ अग्निमाधायपरितःसमूहे त्पाणिनोदितं ॥ ३६ ॥ परिस्तीर्याथपर्युक्षेदन्वाधाययथाविधि ॥ प्रोक्षण्यासाद्यद्रव्याणिप्रोक्ष्याग्नौभाव येतमां ॥ ३७ ॥ तप्तजांबूनदप्रख्यंशंखचक्रगदांबुजैः ॥ सलच्चतुर्भुजंशांतंपद्मकिंजल्कवाससं ॥३८॥ स्फुर त्किरीटकटककटिसूत्रवरांगदं ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभंवनमालिनं ॥ ३९ ॥

गेत अभिषेचनंपंचामृतादिस्नपनं अन्नाद्येति अन्नंभोज्यमाद्यंभक्ष्यं पर्वण्येकादश्यादौ अन्वहंप्रत्यहंवाविभवेसति ॥ ३५ ॥ फलभूयस्त्वार्थि नोऽग्नावपिपूजाप्रकारमाह विधिनास्वगृह्योक्तप्रकारेण मेखलादिभिरुपलक्षितेनिर्मिते तदुक्तं विस्तारोच्छ्रायतस्तिस्रोमेखलाश्चतुरंगुलाः ॥ हस्तमात्रोभवेद्गर्तःसयोनिर्वेदिकातथेत्यादि उदितंप्रज्वलितमग्निंपरितःसमूहेत्एकत्रमेलयत् ॥ ३६ ॥ दर्भैःपरिस्तीर्यपरितःप्रोक्षयेत् अन्वा धायअन्वाधानसंज्ञकंव्याहृतिभिः समित्प्रक्षेपादिरूपंकर्मकृत्वाअग्नेरुत्तरतोद्रव्याणिहोमोपयोगीन्यासाद्यनिधायप्रोक्षण्याप्रोक्षणीपात्रोदके नप्रोक्ष्याग्नौमांध्यायेत् ॥ ३७ ॥ शंखादिभिरुल्लसंतःशोभमानाश्चत्वारोभुजायस्यतं ॥ ३८ ॥ स्फुरंतिकिरीटादीनियस्यतं ॥ ३९ ॥

हविषाघृतेनअभिघृतानिसंसिक्तानिदारूणिशुष्कसमिधः प्रास्यप्रक्षिप्यआघारौतत्संज्ञकौयागौ एवमाज्यभागौचदत्वातदर्थांहुतीर्हुत्वेत्यर्थः
तत्राघारौप्रजापतयेस्वाहेंद्रायस्वाहेतिचोत्तरदक्षिणपरिधिसंधिमारभ्यआग्निमध्यादापरिध्यंतंघृतक्षरणरूपौ अग्नयेस्वाहासोमायस्वाहेत्येवंहोम
रूपौ॥४०॥मूलमंत्रेणाष्टाक्षरेणतथाषोडशऋचोयस्मिंस्तेनपुरुषसूक्तेनचावदानतः प्रत्यृचमाहुतिग्रहणेनेत्यर्थः पुरुषसूक्तेनाराधनपक्षेसएवमू
लमंत्रः तेनैवप्रत्यृचमवदानतोहोमइतिमंत्रैःस्वाहांतैर्यथान्यायंपूजाक्रमेणैव अग्नयेस्विष्टकृतेस्वाहेत्येवंस्विष्टकृतंहुत्वा॥४१॥ततोवन्हिस्थंभ
गवंतमंतर्यामिणमभ्यर्च्यपुष्पधूपादिभिः अथनमस्कृत्यपार्षदेभ्योनंदादिभ्योऽष्टदिक्षुबलिंहरेत् ततः पूजास्थानमागत्यदेवस्याग्रेरु मुपविश्यय
थाशक्तिमूलमंत्रंजपेत् ॥ ४२ ॥ तत्रउभयत्रभगवतोभोजनसमाप्तिंध्यात्वाआचमनंदत्वाउच्छेषंविष्वक्सेनायकल्पयित्वातदनुज्ञयाप

ध्यायन्नभ्यर्च्यदारूणिहविषाभिघृतानिच॥ प्रास्याज्यभागावाघारौदत्वाचाज्यप्लुतंहविः॥४०॥ जुहुयान्मू
लमंत्रेणषोडशर्चाऽवदानतः॥ धर्मादिभ्योयथान्यायंमंत्रैःस्विष्टकृतंबुधः॥४१॥ अभ्यर्च्याथनमस्कृत्यपार्ष
देभ्योबलिंहरेत्॥मूलमंत्रंजपेद्ब्रह्मस्मरन्नारायणात्मकं॥४२॥ दत्वाचमनमुच्छेषंविष्वक्सेनायकल्पयेत्॥
मुखवासंसुरभिमत्तांबूलाद्यमथार्हयेत्॥४३॥ उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम॥ मत्कथाःश्रावय
न्शृण्वन्मुहूर्तंक्षणिकोभवेत्॥४४॥ स्तवैरुच्चावचैःस्तोत्रैःपौराणैःप्राकृतैरपि॥ स्तुत्वाप्रसीदभगवन्निति
वंदेतदंडवत्॥४५॥ शिरोमत्पादयोःकृत्वाबाहुभ्यांचपरस्परं॥ प्रपन्नंपाहिमामीशभीतंमृत्युग्रहार्णवात्॥
॥४६॥ इतिशेषांमयादत्तांशिरस्याधायसादरं॥ उद्वासयेच्चेदुद्वास्यंज्योतिर्ज्योतिषितत्पुनः॥४७॥

श्चात्स्वयंभुंजीत ततःसुरभिमत्सुगंधवत्तांबूलाद्यंमुखवासंदत्वाऽथपुनरप्यर्हयेत्पुष्पांजलिनापूजयेत् ॥ ४३ ॥ अभिनयन्स्वस्मिन्नाविष्कु
र्वन् क्षणिकःवैयग्र्यंपरित्यज्यलब्धावसरोभवेत् ॥ ४४ ॥ स्तवस्तोत्राणांभेदंदर्शयति पौराणैःप्राकृतैरपीति ॥ ४५ ॥ कथंप्रणमेदित्यपे
क्षायामाह शिरइति बाहुभ्यांदक्षिणोत्तराभ्यांपरस्परंममदक्षिणोत्तरौपादौगृहीत्वा यद्वा पृष्ठतःपरस्परंनिबद्धाभ्यांकृतापराधइवप्रपन्नोमित्या
दिविज्ञप्त्याचप्रणमेत्॥४६॥ ततःशेषाग्रहणपूर्वकंवैकल्पिकोद्वासनप्रकारमाह इतीति अनयैवप्रार्थनयाशेषांनिर्माल्यंमयादत्तांध्यात्वाशिर
स्याधायधृत्वायद्युद्वासयेत्तर्हिप्रतिमायांयन्न्यस्तंज्योतिस्तत्पुनरपिहृत्पद्मस्थज्योतिष्येवोद्वास्यमुद्वासनीयं ॥ ४७ ॥

एतेष्वधिष्ठानेषुकिंमुख्यतमामित्यपेक्षायामाह अर्चादिष्विति यदायत्रश्रद्धातदातत्रनत्वधिष्ठानेमुख्यामुख्यत्वम् कुतः यतःसर्वभूतेष्वात्मनि वसर्वात्माऽहमवस्थितइति ॥ ४८ ॥ उभयतः इहामुत्रच ॥ ४९ ॥ समर्थप्रत्याह मदर्चामितित्रिभिः पुष्पोद्यानानिचकारयेत् पूजायात्रोत्सवाश्रितान् पूजाप्रत्यहं यात्राविशिष्टपर्वणिबहुजनसमागमः उत्सवोवसंतादिमहोत्सवः तदाश्रितान्क्षेत्रादीन्दत्वा ॥ ५० ॥ पूजायात्रोत्सवाश्रितानित्यस्यविवरणम् पूजादीनामिति प्रवाहार्थसंततानुवृत्त्यर्थम् मत्सार्ष्टितांमत्समानैश्वर्यम् ॥ ५१ ॥ प्रतिष्ठादीनांव्यस्तसमस्तानांफलमाह प्रतिष्ठयेति मत्साम्यतांमयासाम्यमित्यर्थः ॥ ५२ ॥ सकामंप्रत्युक्तमहैतुकभक्तंप्रत्याह मामेवेति अहैतुकोभक्तियोगएव

अर्चादिषुयदायत्रश्रद्धामांतत्रचार्चयेत् ॥ सर्वभूतेष्वात्मनिचसर्वात्माऽहमवस्थितः ॥ ४८ ॥ एवंक्रियायोगपथैःपुमान्वैदिकतांत्रिकैः ॥ अर्चन्नुभयतःसिद्धिंमत्तोविंदत्यभीप्सिताम् ॥ ४९ ॥ मदर्चांसंप्रतिष्ठाप्यमंदिरंकारयेद्दृढं ॥ पुष्पोद्यानानिरम्याणिपूजायात्रोत्सवाश्रितान् ॥ ५० ॥ पूजादीनांप्रवाहार्थंमहापर्वस्वथान्वहं ॥ क्षेत्रापणपुरग्रामान्दत्वामत्सार्ष्टितामियात् ॥ ५१ ॥ प्रतिष्ठयासार्वभौमंदानेनभुवनत्रयं ॥ पूजादिनाब्रह्मलोकंत्रिभिर्मत्साम्यतामियात् ॥ ५२ ॥ मामेवनैरपेक्ष्येणभक्तियोगेनविंदति ॥ भक्तियोगंसलभतेएवंयःपूजयेतमां ॥ ५३ ॥ यःस्वदत्तांपरैर्दत्तांहरेतसुरविप्रयोः ॥ वृत्तिंसजायतेविड्भुग्वर्षाणामयुतायुतं ॥ ५४ ॥ कर्तुश्चसारथेर्हेतोरनुमोदितुरेवच ॥ कर्मणांभागिनःप्रेत्यभूयोभूयसितत्फलं ॥ ५५ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥

कथंभवतितत्राह भक्तियोगमिति ॥ ५३ ॥ दातुःफलमुक्तमपहर्तारंनिंदाति यइति विड्भुक्विष्ठाभोजीकृमिः ॥ ५४ ॥ कर्तुर्यत्फलंतदेवान्येषामर्पयत्याह कर्तुरिति सारथेःसहकारिणोहेतोःप्रयोजकस्यअनुमोदितुश्चप्रेत्यैतत्फलमित्यन्वयः कुतः यतःकर्मणामेतेभागिनोभागार्हाः तत्रापिविशेषमाह भूयसिकर्मणिसारथ्यादौचभूयोऽधिकंफलमिति पयःपत्रादिमात्रेणपूजितोयःपरंपदं ॥ प्रागेवदिशतिप्रीतःसकृष्णःशरणंमम ॥ ५५ ॥ इत्येकादशेटीकायांसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ ॥

अष्टाविंशेतुयःपूर्वंविस्तरेणोपवर्णितः॥ ज्ञानयोगःपुनश्चासौसमाहृत्यनिरूप्यते ॥ १ ॥ इदानीमतिविस्तरेणोक्तंज्ञानयोगंसंक्षेपेणवक्तुमाह परेषांस्वभावान्शांतघोरादीन्कर्माणिच तत्रहेतुःविश्वमिति ॥ १ ॥ विपक्षेदोषमाह परेति स्वार्थात्ज्ञाननिष्ठालक्षणात् असतिमिथ्याभूतेद्वैतेऽभिनिवेशात् ॥ २ ॥ भ्रंशमेवदृष्टांततोदर्शयति तैजसेराजसाहंकारकार्येइंद्रियगणेनिद्रयाआपन्नेअभिभूतेसातिपिंडस्थोजीवः केवलंमनोमात्रेणमायांस्वप्नरूपांप्राप्नोतिततोमनसिलीनेसातिनष्टचेतनः सन्मृत्युंवामृत्युतुल्यांसुषुप्तिंवाप्राप्नोतितथातद्वदेवनानार्थदृक्द्वैताभिनिवेशीविक्षेपंलयंचप्राप्नोति यथाप्राज्ञसंपर्कात्विश्वस्यभोगक्षयलक्षणोभ्रंशःएवमनात्मसंपर्कादात्मनोऽपिस्वरूपभ्रंशइतिभावः॥३॥ द्वैतासत्यतयास्तुतिनिंदयोर्निर्विषयत्वंप्रपंचयतिसार्धैःषड्भिः किंभद्रमिति अवस्तुनोद्वैतस्यमध्येकिंभद्रंकिंवाऽभद्रंकियद्भद्रंकियद्वाऽभद्रमि

श्रीभगवानुवाच परस्वभावकर्माणिनप्रशंसेन्नगर्हयेत् ॥ विश्वमेकात्मकंपश्यन्प्रकृत्यापुरुषेणच ॥ १॥ परस्वभावकर्माणियःप्रशंसतिनिंदति ॥ सआशुभ्रश्यतेस्वार्थादसत्यभिनिवेशतः ॥ २ ॥ तैजसेनिद्रयापन्नेपिंडस्थोनष्टचेतनः ॥ मायांप्राप्नोतिमृत्युंवातद्वन्नानार्थदृक्पुमान् ॥ ३ ॥ किंभद्रंकिमभद्रंवाद्वैतस्यावस्तुनःकियत् ॥ वाचोदितंतदनृतंमनसाध्यातमेवच ॥ ४ ॥ छायाप्रत्याह्वयाभासाह्यसंतोऽप्यर्थकारिणः ॥ एवंदेहादयोभावायच्छंत्यामृत्युतोभयं ॥ ५ ॥ आत्मैवतदिदंविश्वंसृज्यतेसृजतिप्रभुः ॥ त्रायतेत्रातिविश्वात्माह्रियतेहरतीश्वरः ॥ ६ ॥ तस्मान्नह्यात्मनोऽन्यस्मादन्योभावोनिरूपितः॥ निरूपितेऽयंत्रिविधानिर्मूलाभातिरात्मनि ॥ इदंगुणमयंविद्धित्रिविधंमाययाकृतं ॥ ७ ॥ ॥ ॥

त्यर्थः अवस्तुत्वमेवाह वाचेतिबाह्येंद्रियोपलक्षणं वाचाउदितमुक्तंचक्षुरादिभिश्चयद्दृश्यंतदनृतमिति॥ ४ ॥ नन्वेवंसतिदेहादिभावानामप्यसत्त्वात्कथंभयहेतुत्वंतत्रदृष्टांतमाह छायाप्रतिबिंबः प्रत्याह्वयःप्रतिध्वनिः आभासःशुक्तिरजतादिः एतेयथाऽसंतोऽप्यर्थकारिणोभवंति आमृत्युतःमृत्युमभिव्याप्य यद्वा मृत्युर्लयःयावन्नैवलीयंतेतावत्पर्यंतमित्यर्थः ॥ ५ ॥ ननुसृष्ट्यादिश्रुतिभिरेवद्वैतंनिरूपितंकथमसत्यंस्यात्तत्राह आत्मैवेतिसार्धद्वाभ्यां त्रातिपालयति॥ ६ ॥ अन्यस्मात्सृज्यादिव्यतिरिक्तात् त्रिविधाआध्यात्मिकादिरूपा भातिःप्रतीतिः ननुकथंनिर्मूलंप्रतीयतेतत्राह इदमिति॥ ७॥ ॥ ॥ ॥

ज्ञानविज्ञानयोर्नैपुणंनिष्ठां सूर्यवत्समोभूत्वा ॥ ८ ॥ एतन्निष्ठाप्राप्त्युपायमाह प्रत्यक्षेणेति यदाद्यंतवत्द्वैतंतदसदितिज्ञात्वानिःसंगोविच रेत् आद्यंतवत्त्वेप्रमाणानि प्रत्यक्षेणघटादि अनुमानेनसावयवत्वेनदृश्यंपृथिव्यादि निगमेनाप्रत्यक्षमाकाशादि आत्मसंविदास्वानुभवेन सर्वंदृश्यमाद्यंतवदसच्चेतिज्ञात्वा निःसंगस्तदासक्तिशून्यः ॥ ९ ॥ ननुयद्यात्मसंविदासर्वंदृश्यमसदित्युच्यतेतर्ह्यात्मास्वप्रकाशोदेहादिद्वैं तंचजडमित्युक्तंस्यात्तथाचसंसारेप्रतिभासोनघटेतइतिचोदयति अनात्मसदृशोःजडाजडयोः अत्रहेतुः द्रष्टृदृश्ययोः माभूत्द्वयोरपित त्राह उपलभ्यतइति ॥ १० ॥ एतत्प्रपंचयति आत्मेति अव्ययत्वादिपंचविशेषणैर्नाशादिरागादिपुण्यापुण्याज्ञानपरिच्छेदानामसंभवं दर्शयति हेतुहेतुमत्त्वंतुयथेष्टं अचिज्जडः अयंभावः यथैवाग्निदारुणोर्भेदेनानुपलंभेपिदारुप्रकाश्यमेवाग्निश्चप्रकाशकः तथादेहात्मनोरपि

एतद्विद्वान्मदुदितंज्ञानविज्ञाननैपुणं ॥ नद्विष्टिनचस्तौतिलोकेचरतिसूर्यवत् ॥८॥ प्रत्यक्षेणानुमानेननिगमे नात्मसंविदा ॥ आद्यंतवदसज्ज्ञात्वानिःसंगोविचरेदिह ॥ ९ ॥ उद्धवउवाच नैवात्मनोनदेहस्यसंसृ तिर्द्रष्टृदृश्ययोः ॥ अनात्मसदृशोरीशकस्यस्यादुपलभ्यते ॥ १० ॥ आत्माऽव्ययोगुणःशुद्धःस्वयंज्योति रनावृतः ॥ अग्निवद्दारुवदचिद्देहःकस्येहसंसृतिः ॥ ११ ॥ श्रीभगवानुवाच यावद्देहेंद्रियप्राणैरात्म नःसंनिकर्षणं ॥ संसारःफलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १२ ॥ अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्त ते ॥ ध्यायतोविषयानस्यस्वप्नेनर्थागमोयथा ॥ १३ ॥ यथाह्यप्रतिबुद्धस्यप्रस्वापोबह्वनर्थभृत् ॥ सएवप्रति बुद्धस्यनवैमोहायकल्पते ॥ १४ ॥ ॥ ॥

नसंसृतिस्तयोरन्यतरस्यापिघटतइति ॥ ११ ॥ सत्यंतथाऽप्युभयोरेवमाविवेकएवसंसारालंबनमित्याहपंचभिः यावदिति संनिकर्षणंसं बंधःनन्वसंगस्यकुतःसंबंधस्तत्राह अविवेकिनः अज्ञानकृतइत्यर्थः ननुस्वप्रकाशस्यकथमज्ञानतःसंसारस्तत्राह अपार्थोपिकेवलंफलत्वा न्फलंस्फूर्तिर्नतुतत्त्वतोऽस्तीत्यर्थः ॥ १२ ॥ नन्वसतोदेहादेःकुतःसंसारस्फूर्तिहेतुत्वमापितत्राह अर्थेहीति अस्यात्मनः ॥ १३ ॥ ननुकथंचिज्ज्ञा नतोविषयस्फूर्तिर्जीवन्मुक्तस्यापिदुर्वारेत्यनिर्मोक्षप्रसंगःस्यात्तत्राह यथाहीति प्रस्वापःस्वप्नः बहूननर्थान्बिभर्तिपुष्णातीतितथा ॥ १४ ॥

अहंकारलक्षणोदेहादिसंनिकर्षएवसंसारालंबनमित्यन्वयव्यतिरेकाभ्यांदर्शयति शोकेति सुषुप्त्यादौतेषामदर्शनात् अहंसुखीतिवच्चैतन्यं
सुखीतिप्रतीत्यभावाच्चदृश्यत्वाच्चसुखादीनांकृशत्वादिवद्द्रष्टृधर्मत्वानुपपत्तेरितिभावः ॥ १५ ॥ ननुयद्यहंकारस्यसंसारस्तर्हिमुक्तिरपितस्यै
वेतिमुक्तावहंकारावशेषःप्रसज्येतततत्राह देहेंति देहादिष्वभिमानोयस्यसः आत्मैवतेषामंतर्हितोजीवः अतएवगुणकर्ममयमूर्तिर्यस्यसः
एवंचसूक्ष्मोपाधिभिर्बहुधेवसूत्रादिशब्दैर्गीतःसंसारेपरमेश्वराधीनःसर्वतोधावतिअतोनायंदोषइतिभावः ॥ १६ ॥ तदेवमहंकारकृतंबंधमुप
पाद्येदानींज्ञानेनतन्निवृत्तौमुक्तिरित्याह अमूलमिति वस्तुतोमूलशून्यमज्ञानतस्तुबहुभीरूपैर्देवादिशरीरैरूपितंप्रकाशितमैंद्रजालिकतुल्य
मितिवा किंतत्तदाह मनइति मनआदीनांद्वंद्वः यद्वा मनआदिषुक्रियतइतिकर्मअहंकरणंगुरोरुपासनयानिशितेनतीक्ष्णेनज्ञानखड्गेन

**शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्यदृश्यंतेजन्ममृत्युश्चनात्मनः ॥ १५ ॥ देहेंद्रियप्राण
मनोभिमानोजीवोंऽतरात्मागुणकर्ममूर्तिः ॥ सूत्रंमहानित्युरुधेवगीतःसंसारआधावतिकालतंत्रः ॥ १६ ॥
अमूलमेतद्बहुरूपरूपितंमनोवचःप्राणशरीरकर्म ॥ ज्ञानासिनोपासनयाशितेनच्छित्वापुनर्गांविचरत्यतृ
ष्णः ॥ १७ ॥ ज्ञानंविवेकोनिगमस्तपश्चप्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यंतयोरस्ययदेवकेवलंकाल
श्चहेतुश्चतदेवमध्ये ॥ १८ ॥ यथाहिरण्यंसुकृतंपुरस्तात्पश्चाच्चसर्वस्यहिरण्मयस्य ॥ तदेवमध्येऽव्यवहा
र्यमाणंनानापदेशैरहमस्यतद्वत् ॥ १९ ॥ ॥ ॥ ॥ ॥**

छित्वा ॥ १७ ॥ तदेवज्ञानंस्वरूपसाधनफलैर्निरूपयति ज्ञानमिति विवेकोज्ञानं साधनान्याह निगमोवेदः तपःस्वधर्मः प्रत्यक्षंस्वा
नुभवः ऐतिह्यमुपदेशः अनुमानंतर्कः फलमाह आद्यंतयोर्यदस्यजगतःमध्येपितदेवकेवलंनतुजगदिति किंतत्कालःकलयतिप्रकाशय
तियः तथाहेतुःकारणंचयत् तदेव एतदुक्तंभवति यदस्यविश्वस्यकारणंप्रकाशकंचब्रह्मतदात्मकमेवैतन्नततःपृथगित्येवंनिश्चायकत्वेनिग
मादिसाधनैर्जायतेयोविवेकस्तज्ज्ञानमिति ॥ १८ ॥ तत्रनानाभेदव्यवहारालंबनस्यापिविश्वस्यकारणमात्रात्मकत्वंसदृष्टांतमाह यथेति सुकृ
तंसुष्ठुकुंडलादिरूपेणाविरचितंयद्धिरण्यम् कीदृशम् हिरण्मयस्यकुंडलादेउत्पत्तेःपुरस्तान्नाशाच्चपश्चाद्यदस्ति कटककुंडलमित्यादिना
नाव्यपदेशैर्व्यवहारंप्राप्यमाणमपितदेवयथा तद्वदस्यविश्वस्यकारणभूतोहमेवनानाव्यवहारालंबनंनतुमत्तःपृथग्विश्वमिति ॥ १९ ॥

तदेवंकार्यस्यकारणमात्रात्मकतामुक्त्वाप्रकाश्यस्यप्रकाशकात्मकतामाह विज्ञानमिति त्रियवस्थं यकारस्यपृथक्पाठश्छंदोऽनुरोधेन जाग्र
दादित्र्यवस्थंयद्विज्ञानंमनस्तदवस्थाकारणरूपंचयद्गुणत्रयं यच्चकारणकार्यकर्तृ कारणमध्मात्मंकार्यमधिभूतंकर्तृअधिदैवं एवंगुणत्रयकार्य
भूतंत्रिविधंजगत् एतद्येनतुर्येणसामान्यज्ञानमात्रेणसमन्वयेनभवति येनानुगतंप्रकाशतइत्यर्थः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंवि
भातीति तथाचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रंमनसोयेमनोविदुरित्यादिश्रुतेश्च ननुविशेषविज्ञानव्यतिरेकेणनतुर्यंनामोपलभामहेतत्राहव्यतिरेकत
श्चसमाध्यादौयदस्तितदेवसत्यमिति॥२०॥एवंकालत्रयेऽप्यव्यभिचारिणःसत्यत्वमुक्त्वंव्यभिचारिणस्त्वसत्यतामाहनयदितियद्भूतंकार्यंपुरस्त
दुत्पत्तेर्नभवति यच्चपश्चान्नाशाच्चन मध्येचपृथङ्नास्ति किंतुव्यपदेशमात्रंकुतःयतःयद्यत्परेणअन्येनभूतंजातंप्रसिद्धंप्रकाशितंचतत्तदेवका
णप्रकाशकंतावन्मात्रंस्यान्नपृथगितिमेमनीषाबुद्धिः वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम् सर्वंखल्विदंब्रह्मेत्यादिश्रुतेः कारणप्र

विज्ञानमेतत्त्रियवस्थमंगगुणत्रयंकारणकार्यकर्तृ ॥ समन्वयेनव्यतिरेकतश्चयेनैवतुर्येणतदेवसत्यम् ॥
॥ २० ॥ नयत्पुरस्तादुतयन्नपश्चान्मध्येचतत्तद्व्यपदेशमात्रं ॥ भूतंप्रसिद्धंचपरेणयद्यत्तदेवतत्स्यादितिमे
मनीषा ॥ २१ ॥ अविद्यमानोऽप्यवभासतेयोवैकारिकोराजससर्गएषः ॥ ब्रह्मस्वयंज्योतिरतोविभाति
ब्रह्मेंद्रियार्थात्मविकारचित्रं ॥ २२ ॥ एवंस्फुटंब्रह्मविवेकहेतुभिःपरापवादेनविशारदेन ॥ छित्वात्मसंदे
हमुपारमेतस्वानंदतुष्टोऽखिलकामुकेभ्यः ॥ २३ ॥ ॥ ॥

काशकव्यतिरेकेणकार्यस्यप्रकाश्यस्यचानुपलंभादितिभावः ॥ २१ ॥ एवंसामान्यतःकार्यप्रकाश्ययोः कारणप्रकाशकाभ्यामभेदमुपपाद्य
प्रस्तुतेतदुभयविवेकपूर्वकंप्रपंचस्यब्रह्माभेदमाह अविद्यमानइति योऽयंवैकारिकः विकारसमूहः सएवप्रागविद्यमानोराजससर्गः रजोद्वा
रेणब्रह्मकार्यभूतइत्यर्थः अवभासतेऽपिब्रह्मप्रकाशश्चेत्यर्थः ब्रह्मतुस्वयंस्वतःसिद्धंनतुकार्यमित्यर्थः ज्योतिश्चप्रकाशकमित्यर्थः अतःका
रणात् इंद्रियाणिचअर्थास्तन्मात्राणिचआत्मामनश्च देवानामप्युपलक्षणम् विकाराःपंचभूतानिएवंचित्रंब्रह्मैवभातीति ॥२२॥उपसंहरति
एवंनिगमतपःप्रत्यक्षैतिह्यानुमानैःस्फुटंयथाभवतितथाब्रह्मविवेकहेतुभिःतथापरस्यदेहादेरपवादेनात्मनिरासेनच कीदृशेन विशारदेन
निपुणेन गुरुणानिमित्तभूतेनेतिवा आत्मविषयंसंदेहंछित्वास्वानंदतुष्टःसन्नाखिलेभ्यःकामुकेभ्यइंद्रियादिभ्यउपारमेतनिःसंगोभवेत् ॥२३॥

परापवादंप्रपंचयति वपुरात्मानभवतिपार्थिवत्वात्घटवत् तथाइंद्रियाणितदधिष्ठातारोत्रादेवाअसुःप्राणोधिषणाबुद्धिःसत्वंचित्तमहंकृतिरि त्येतेआत्मानभवंति कुतः अन्नमात्रं अन्नोपष्टभ्यत्वात् शरीरवत् वायुर्जलंचहुताशस्तेजःखंक्षितिरितिपंचभूतानिअर्थाःशब्दादयःसाम्यं प्रकृतिर्नात्मा जडत्वात् घटवदिति यद्वा हिशब्देनानुमानांतराणिसूचितानि तद्यथा इंद्रियाण्यात्मानभवंति करणत्वान्मनोवत् प्राण त्वात्वायुत्वाद्वाबाह्यवायुवदित्यादि ॥ २४ ॥ एवंविवेकज्ञानवतोमुक्तस्यनेंद्रियादिकृतगुणदोषसंबंधइत्याह समाहितैरिति मत्सुविविक्त धाम्नः ममसुष्टुविविक्तंधामस्वरूपंयेनतस्य प्रकाशकस्यप्रकाश्यगुणदोषानभवंतीतिरविदृष्टांतेनोक्तं ॥ २५ ॥ असंगब्रह्मत्वेनावस्थि तस्यनकेपिगुणदोषाइत्याकाशदृष्टांतेनाह यथेति वाय्वादीनांशोषणदहनक्लेदनरजोधूसरत्वादिभिर्गतागतैरागमापायिभिर्ऋतुगुणैः

नात्मावपुःपार्थिवमिंद्रियाणिदेवाह्यसुर्वायुजलंहुताशः ॥ मनोऽन्नमात्रंधिषणाचसत्त्वमहंकृतिःखंक्षितिरर्थसाम्यं ॥ २४ ॥ समाहितैःकःकरणैर्गुणात्मभिर्गुणोभवेन्मत्सुविविक्तधाम्नः ॥ विक्षिप्यमाणैरुतकिंनुदूषणंघनैरुपेतैर्विगतैरवेःकिं ॥ २५॥ यथानभोवाय्वनलांबुभूगुणैर्गतागतैर्वर्त्तुगुणैर्नसज्जते ॥ तथाऽक्षरंसत्वरजस्तमोमलैरहंमतेःसंसृतिहेतुभिःपरम् ॥२६ ॥तथापिसंगःपरिवर्ज्जनीयोगुणेषुमायारचितेषुतावत्॥ मद्भक्तियोगेनदृढेनयावद्रजोनिरस्येतमनःकषायः ॥ २७ ॥ यथाऽमयोऽसाधुचिकित्सितोनृणांपुनःपुनःसंतुदतिप्ररोहान् ॥ एवंमनोऽपक्वकषायकर्मकुयोगिनंविध्यतिसर्वसंगं ॥२८॥ कुयोगिनोयेविहितांतरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥ तेप्राक्तनाभ्यासबलेनभूयोयुंजंतियोगंनतुकर्मतंत्रं ॥ २९ ॥

शीतोष्णादिभिर्वा अहंमतेरहंकारात्परमक्षरंसंसृतिहेतुभिर्नयुज्यते यद्वा अहंकारस्यसंसृतिहेतुभिरिति ॥ २६ ॥ मुक्तवदसम्यक्ज्ञानीनिय थेष्टमाचरेदित्याहद्वाभ्यां तथापीति गुणेषुविषयेषुरजोरागः मनसःकषायइतिदुर्निरासतामाह ॥ २७ ॥ तदेवदृष्टांतेनोपपादयति यथे ति नृणामामयोरोगः असाध्वसम्यक्यथाभवतितथा अपक्वकषायकर्म अदग्धाःकषायारागादयस्तन्मूलानिकर्माणियस्मिंस्तत् अतएव सर्वसंगंसर्वेषुपुत्रादिषुसज्जमानंमनःकुयोगिनमसम्यक्ज्ञानिनंविध्यतिभ्रंशयति ॥ २८ ॥ ननुकथंचिद्विषयसंगेयदियोगभ्रंशःस्यादलंत र्हिसोपायेनयोगमार्गेणतत्राह कुयोगिनइति मनुष्यभूतैर्बंधुशिष्यादिरूपैस्त्रिदशैरुपसृष्टैः तथाचश्रुतिः यस्मात्तदेषांनाप्रियंयदेतन्मनुष्याविद्युरिति भूयोजन्मांतरे नतुकर्मतंत्रंकर्माविस्तारं ॥ २९ ॥ ॥ ॥ ॥

ननुविदुषामपिसर्वथाकर्मदुष्परिहरमितिपुनःसंसारःस्यादतआह करोतीति विदुषोन्योऽसौजंतुर्देहएवभोजनादिकर्मकरोतिक्रियतेविक्रिय
तेच तेनकर्मणापुष्टयाद्यपिप्राप्नोतीत्यर्थः केनापिसंस्कारादिनाचोदितआनिपातान्मरणपर्यंतंकरोति विद्वांस्तुप्रकृतौस्थितोपिकर्मणिनविक्रि
यते निरहंकारित्वात् हर्षविषादादिभिःसंसारंनप्राप्नोति ॥ ३० ॥ किंच आस्तांतावद्दैहिककर्मभिर्विकारशंकायतोदेहमप्यसौनपश्यती
त्याह तिष्ठंतमिति उक्षंतंमूत्रयंतं स्वभावप्राप्तमन्यदपिदर्शनस्पर्शनादिईहमानंकुर्वंतमात्मानंदेहं ॥ ३१ ॥ नन्विंद्रियवतः सर्वथाकथम
दर्शनंसंभवतितत्राह यदिस्मेति यद्यपिअसतांबहिर्मुखानामिंद्रियाणामर्थंपश्यतितथापिनानात्वान्मिथ्यास्वप्नवदित्यनुमानेनविरुद्धंबाधि
तंसदन्यदात्मव्यतिरिक्तंमनीषीवस्तुतयानमन्यते स्वप्नादुत्थायप्रबुद्ध्यसंस्कारमात्रेणस्वाप्नंविषयंस्फुरंतमतएवस्वयमेवतिरोभवंतंयथातद्वत् ॥

करोतिकर्मक्रियतेचजंतुःकेनाप्यसौचोदितआनिपातात् ॥ नतत्रविद्वान्प्रकृतौस्थितोपिनिवृत्ततृष्णःस्वसु
खानुभूत्या ॥ ३० ॥ तिष्ठंतमासीनमुतव्रजंतंशयानमुक्षंतमदंतमन्नं ॥ स्वभावमन्यत्किमपीहमानमात्मान
मात्मस्थमतिर्नवेद ॥ ३१ ॥ यदिस्मपश्यत्यसदिंद्रियार्थंनानाऽनुमानेनविरुद्धमन्यत् ॥ नमन्यतेवस्तुत
यामनीषीस्वाप्नंयथोत्थायतिरोदधानं ॥ ३२ ॥ पूर्वंगृहीतंगुणकर्मचित्रमज्ञानमात्मन्यविविक्तमंग ॥ नि
वर्ततेतत्पुनरीक्षयैवनगृह्यतेनापिविसृज्यआत्मा ॥ ३३ ॥ यथाहिभानोरुदयोनृचक्षुषांतमोनिहन्यान्नतुस
द्विधत्ते ॥ एवंसमीक्षानिपुणासतीमेहन्यात्तमिस्रंपुरुषस्यबुद्धेः ॥ ३४ ॥ ॥ ॥

॥ ३२ ॥ तदेवमात्मानविक्रियतइत्युक्तं नन्वेतदनुपपन्नंबद्धावस्थयात्यज्यमानत्वात् मुक्तावस्थयाचगृह्यमाणत्वात् नह्यवहियोवघातेनव्री
हिभावत्यागतस्तंडुलीभावेनगृह्यमाणानविक्रियंतेतत्राह पूर्वमिति बद्धावस्थायांगुणैःकर्मभिश्चचित्रमज्ञानकार्यंदेहेंद्रियादिलक्षणंआत्मन्य
ध्यासेनाविविक्तगृहीतमासीत्तदेवपुनर्ज्ञानेननिवर्तते आत्मातुनकेनापिरूपेणगृह्यतेनापित्यज्यते अयंभावः मुक्तेःक्रियाफलत्वेतावदात्मनो
विकारः तस्यारोपिताज्ञानमात्रनिवृत्तिरूपत्वात् नात्मसंस्पर्शित्वंबंधमोक्षयोः अतोनविकारइति ॥ ३३ ॥ एतदेवदृष्टांतेनस्पष्टयति य
थेति नतुपूर्वमेवसत्घटादिपुनर्विधत्तेकरोति समीक्षाआत्मविद्या ॥ ३४ ॥ ॥ ॥ ॥ ॥

आत्मनोनिर्विकारतांप्रपंचयति एषइत्यनेनापरोक्षतयानित्यप्राप्तस्यात्मनःप्राप्तिंवारयति स्वयंज्योतिरित्यनेनाज्ञानमलापाकरणलक्षणांवि
कृतिंवारयति अजइत्युत्पत्तिंवारयति अप्रमेयइतिज्ञानलक्षणातिशयाधानेनसंस्कारं महानुभूतिरितिदेशकालपरिच्छेदाभावेनास्तित्ववृद्धि
विपरिणामापक्षयनाशान् स्वयंज्योतिष्ट्वादौहेतुः सकलानुभूतिरिति एकोऽद्वितीयइतिविकारहेतोरन्यस्याभावान्नकोपिविकारइतिदर्शयति
ननुश्रुतिविषयस्यकथंस्वयंज्योतिष्ट्वादितत्राह वचसांविरामेऽगोचरत्वेननिवृत्तौसत्यां तथाचश्रुतिःयतोवाचोनिवर्ततेअप्राप्यमनसासहेति
तत्रहेतुः येनेषिताःप्रेषिताः तथाचश्रुतिः केनेषितंपततिप्रेषितंमनःकेनप्राणः प्रथमःप्रैतियुक्तः केनेषितांवाचमिमांवदंतिचक्षुःश्रोत्रंकउ
देवोयुनक्ति श्रोत्रस्यश्रोत्रंयन्मनसोमनोयद्वाचोहवाचंप्राणस्यप्राणमुतचक्षुषश्चक्षुरिति॥३५॥अद्वितीयत्वमुपपादयितुंभेदस्यावास्तवत्वमाह
एतावानिति केवलेऽभिन्नेआत्मन्आत्मनिविकल्पइतियत्एतावान्सर्वोऽप्यात्मनोमनसःसंमोहोभ्रमः यतःस्वमात्मानमृतेविनायस्यविकल्प

एषस्वयंज्योतिरजोऽप्रमेयोमहानुभूतिःसकलानुभूतिः ॥ एकोऽद्वितीयोवचसांविरामेयेनेषितावागसव
श्चरंति ॥ ३५ ॥ एतावानात्मसंमोहोयद्विकल्पस्तुकेवले ॥ आत्मन्नृतेस्वमात्मानमवलंबोनयस्यहि ॥
॥ ३६ ॥ यन्नामाकृतिभिर्ग्राह्यंपंचवर्णमबाधितं ॥ व्यर्थेनाप्यर्थवादोऽयंद्वयंपंडितमानिनां ॥ ३७ ॥ यो
गिनोऽपक्वयोगस्ययुंजतःकायउत्थितैः ॥ उपसर्गैर्विहन्येततत्रायंविहितोविधिः ॥ ३८ ॥

स्यावलंबआश्रयोनास्ति रजतभ्रमस्येवशुक्तिंविना नेहनानाऽस्तिकिंचन इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेत्येवमित्या
दिश्रुतेरित्यर्थः॥३६॥केचित्पुनःप्रत्यक्षादिप्रतीतस्यप्रपंचस्यबाधायोगाद्वेदांतार्थानांचकृत्वर्थकर्तृप्रतिपादनपरत्वेनार्थवादत्वाद्वैतंसत्यमि
तिमन्यंतेतन्मतमनूद्यदूषयति यदिति नामाकृतिभिर्ग्राह्यंनामरूपोपलक्षितंपंचवर्णंपंचभूतात्मकंद्वयंद्वैतंयत्तदबाधितमितिपंडितमानिना
मत्रवयमेवपंडिताइत्यभिमानवतांवेदांतेष्वयमर्थवादइतिप्रतीतिर्नतत्त्वविदां यतःव्यर्थेनापिविनाऽप्यर्थेनसाप्रतीतिः तथाहि नतावद्विध्ये
कवाक्यत्वंतेषामस्ति यतोर्थवादत्वंस्यात् नवाकर्तृभोक्तृपरमानंदरूपात्मप्रतिपादनंकर्मविधिशेषतांभजते नचाबाधितत्वंद्वैतस्य नामरूपात्म
कत्वात्पंचवर्णात्मकत्वात्ग्राह्यत्वात्स्वप्नवदित्याद्यनुमानैर्वाचारंभणादिश्रुतिभिश्चबाधितत्वादिति॥३७॥तदेवंज्ञानयोगंसपरिकरंनिरूप्ये
दानींतन्निष्ठस्यविघ्नप्रतीकारमाह योगिनइतित्रिभिः योगंयुंजतःकायोयद्यंतरेवोत्पन्नैरुपसर्गैरोगाद्युपद्रवैरभिभूयते विधिःप्रतीकारः ॥३८॥

योगधारणयासोमसूर्यादिधारणयासंतापशैत्यादीन् आसनैर्वायुधारणाऽन्वितैर्वातादिरोगान् तपोमंत्रौषधैः पापग्रहसर्पादिकृतान् ॥ ३९ ॥ ममानुध्यानादिभिः कामदीन् योगेश्वरानुवृत्त्यादंभमानादीन्हन्यात् ॥ ४० ॥ अन्येतुदेहसिद्ध्यर्थमेवैतत्सर्वंकुर्वंतितद्दूषयति केचित्पुनरेतैरन्यैश्चोपायैर्देहमेवसुकल्पंजरारोगादिरहितंवयसितारुण्येस्थिरंचकृत्वाअद्दंद्दपरकायप्रवेशादिसिद्ध्येतत्तद्धारणारूपंयोगंयुंजंतिनतुज्ञाननिष्ठारूपम् ॥ ४१ ॥ कुशलैः प्राज्ञैः आदरणीयंनभवति वनस्पतिवदात्मैवस्थायीशरीरंतुफलवन्नश्वरमित्यर्थः ॥ ४२ ॥ ननुकचित्समाध्यंगत्वेनापिप्राणायामादियोगेक्रियमाणेजरारोगाद्यभावोदृश्यते सत्यं तथाऽपिसमाधिमुत्सृज्यनतत्रसज्जेतेत्याह योगमिति तत्तांदेहासि

योगधारणयाकांश्चिदासनैर्धारणान्वितैः ॥ तपोमंत्रौषधैःकांश्चिदुपसर्गान्विनिर्दहेत् ॥ ३९ ॥ कांश्चिन्ममानुध्यानेननामसंकीर्तनादिभिः ॥ योगेश्वरानुवृत्त्यावाहन्यादशुभदान्शनैः ॥ ४० ॥ केचिद्देहमिमंधीराःसुकल्पंवयसिस्थिरम् ॥ विधायविविधोपायैरथयुंजंतिसिद्धये ॥ ४१ ॥ नहितत्कुशलादृत्यंतदायासोह्यपार्थकः ॥ अंतवत्त्वाच्छरीरस्यफलस्येववनस्पतेः ॥ ४२ ॥ योगंनिषेवतोनित्यंकायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्नमतिमान्योगमुत्सृज्यमत्परः ॥ ४३ ॥ योगचर्यामिमांयोगीविचरन्मद्व्यपाश्रयः ॥ नांतरायैर्विहन्येतनिःस्पृहःस्वसुखानुभूः ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेऽष्टाविंशोध्यायः ॥ २८ ॥ उद्धव उवाच सुदुस्तरामिमांमन्येयोगचर्यामनात्मनः ॥ यथांऽजसापुमान्सिद्ध्येत्तन्मेब्रूह्यंजसाऽच्युत ॥ १ ॥

द्धिनश्रद्दध्यात्नविश्वसेत् ॥ ४३ ॥ तदेवंविघ्नप्रतीकारैर्योगंकुर्यादित्युक्तंमच्छरणस्यतुनविघ्नशंकाऽपीत्याह योगचर्यामिति विचरन्स्वसुखेअनुभूरनुभूतिर्यस्यसः स्पृहामूलाहिविघ्नाःसाचमदपाश्रयस्यनिवर्ततेऽतोंऽतरायैरविहतःस्वानंदपूर्णोभवतीति समाहृत्यस्वयोगंतुसमस्तोपनिषद्रसम् सख्येमुख्यतमांभक्तिमुक्तौपुनरुपादिशत् ॥ ४४ ॥ इत्येकादशेटीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ऊनत्रिंशेतुयः पूर्वंविस्तरेणनिरूपितः भक्तियोगस्तमेवाहस्वभक्तायसमासतः ॥ १ ॥ अतिक्लेशमिवालक्ष्ययोगेसंगैकसंपदि सुखोपायंपुनःकृष्णमुद्धवः परिपृच्छति ॥ २ ॥ अनात्मनःअवशीकृतमनसः अंजसाअप्रयासतोयथासिद्ध्येत्तत्तथा यद्वा अंजसासुबोधंयथातथामेब्रूहि ॥ १ ॥

सुदुष्करतांप्रपंचयति प्रायशइति मनोयुंजंतोनिगृण्हंतोवशीकुर्वंतोविषीदंतिक्लिश्यंति कुतः असमाधानादनिग्रहात् कथंचिन्मनसोनिग्र
हेकर्शिताःश्रांताःसंतः ॥ २ ॥ यस्मादेवंकेचनविषीदंतिअथातःअतएवयेहंसाःसारासारविवेकचतुरास्तेतुआनंददुघंसमस्तानंदपरिपूरकं
तवपदांबुजमेवसुखंयथाभवातितथानुनिश्चितंश्रयेरन्सेवंते अमीतुत्वन्माययाविहताः के येयोगकर्मभिर्मानिनःसंतोनश्रयंते यद्वा अमी
त्वद्भक्तास्त्वन्माययानविहताःअतएवयोगकर्मभिःकृत्वामानिनोनभवंति अन्येतुत्वन्माययामोहिताःसंतोवयंयोगज्ञावयंकर्मकुशलाइतिकेव
लंगर्विताभवंतिनतुमुच्यंतइत्यर्थः ॥ ३ ॥ त्वद्भक्तास्तुत्वत्प्रसादेनकृतार्थाभवंतीतिनातिचित्रमित्याह किमिति अनन्यशरणेषुदासेषुतवा
त्मसात्त्वंत्वदधीनत्वंयत् यथानंदगोपीबलिप्रभृतिषुएतत् किंचित्रंनाश्चर्यमित्यर्थः यतोयोभवान्श्रीरामरूपेणमृगैर्वानरैःसहसाहित्यंसख्यमि
तियावत् अरोचयत्प्रीत्याकृतवान् कथंभूतः ईश्वराणांब्रह्मादीनांयानिश्रीमंतिकिरीटादीनितेषांतटान्यग्राणितैःपीडितंविलुठितंपाद

**प्रायशःपुंडरीकाक्षयुंजंतोयोगिनोमनः ॥ विषीदंत्यसमाधानान्मनोनिग्रहकर्शिताः ॥ २ ॥ अथातआनंद
दुघंपदांबुजंहंसाःश्रयेरन्नरविंदलोचन ॥ सुखंनुविश्वेश्वरयोगकर्मभिस्त्वन्माययाऽमीविहतानमानिनः ॥
॥ ३ ॥ किंचित्रमच्युततवैतदशेषबंधोदासेष्वनन्यशरणेषुयदात्मसात्त्वं ॥ योरोचयन्सहमृगैःस्वयमीश्वरा
णांश्रीमत्किरीटतटपीडितपादपीठः ॥ ४ ॥ तंत्वाऽखिलात्मदयितेश्वरमाश्रितानांसर्वार्थदंस्वकृतविद्विसृ
जेतकोनु ॥ कोवाभजेत्किमपिविस्मृतयेऽनुभूत्यैकिंवाभवेन्नतवपादरजोजुषांनः ॥ ५ ॥**

पीठंयस्य स्वयंतथाभूतोऽपिसन् ॥ ४ ॥ अतस्त्वांपरित्यज्यकोनामान्यत्संश्रयेदित्याह तंत्वेति तमेवंभूतंत्वांकोनुविसृजेत् नभजेत्
कथंभूतः स्वकृतवित् बलिप्रल्हादादिषुत्वयाकृतमनुग्रहंजानन् यद्वा स्वस्मिन्नेवांतर्यामितयाकृतमुपकारंविद्वान् तदेवाह अखिलात्मद
यितेश्वरम् अखिलस्यजगतःआत्मानंचेतयितारमात्मत्वादेवदयितंप्रेष्ठंसेव्यमीश्वरत्वादवश्यंभजनीयं किंच आश्रितानांसर्वार्थदम् त
र्हिकिंफलोद्देशेनाहंसेव्यः नहिनहि किमपिअनिरुक्तंत्वद्व्यतिरिक्तंस्वर्गादित्वयादत्तमपिकोवाभजेत्सेवेत कथंभूतंतत् यत्केवलंभूत्यैइंद्रिय
भोगाय अनुअनंतरमेवत्वद्विस्मृतयेभवति यद्वात्वद्व्यतिरिक्तंकिमपिदेवतांतरंधर्मज्ञानादिसाधनंवाभूत्याऐश्वर्यायसंसारस्यविस्मृतयेमोक्षा
यकोवाभजेन्नकोऽपि ननुतत्साधनंविनाभोगमोक्षादिफलंकथंस्यात्तत्राह किंवेति तदुक्तम् यावैसाधनसंपत्तिःपुरुषार्थचतुष्टये ॥ तया
विनातदाप्नोतिनरोनारायणाश्रयः ॥ ५ ॥ ॥ ॥ ॥

आस्तामन्यभजनवार्तात्वत्कृतोपकारस्यत्वय्यात्मनिवेदनेनैवनिष्कृतिर्नान्यथेत्याह नैवेति अपचितिंप्रत्युपकारमानृण्यमितियावत् कव योब्रह्मविदोऽपिनैवप्राप्नुवंति यतः तत्कृतमुपकारंस्मरंतः ऋद्धमुदउपाचितपरमानंदाः उपकारमेवाह योभवान्बहिराचार्यवपुषापुरुषरूपेणअंतश्चचैत्यवपुषांतर्यामिरूपेणअशुभंविषयवासनांविधुन्वन्निरस्यन्स्वगतिंनिजंरूपंप्रकटयातितस्यतव ॥ ६ ॥ ईश्वरस्त्वेहेतुःजगक्रिडनकंक्रीडोपकरणंयस्यसः ननुजगत्सृष्ट्यादिनाब्रह्मेशादयःक्रीडंतितत्राह स्वशक्तिभिःसत्वादिभिर्गृहीतंमूर्तित्रयंयेनसः सप्रेमप्रेमसहितंमनोहरंस्मितंयस्यसः सप्रेमयथातथाजगादेतिवा ॥ ७ ॥ हंतेतिसहर्षसंबोधनं सुमंगलान्सुखरूपान् मृत्युंसंसारम् दुर्जयमन्यैरुपा

नैवोपयंत्यपचितिंकवयस्तवेशब्रह्मायुषापिकृतमृद्धमुदःस्मरंतः ॥ योंतर्बहिस्तनुभृतामशुभंविधुन्वन्नाचार्यचैत्यवपुषास्वगतिंव्यनक्ति॥६॥श्रीशुकउवाच इत्युद्धवेनात्यनुरक्तचेतसापृष्टोजगत्क्रीडनकःस्वशक्तिभिः॥ गृहीतशक्तित्रयईश्वरेश्वरोजगादसप्रेममनोहरस्मितः॥७॥ श्रीभगवानुवाच हंततेकथयिष्यामिममधर्मान्सुमंगलान् ॥ यान्श्रद्धयाचरन्मर्त्योमृत्युंजयतिदुर्जयं ॥८॥ कुर्यात्सर्वाणिकर्माणिमदर्थंशनकैःस्मरन् ॥ मय्यर्पितमनश्चित्तोमद्धर्मात्ममनोरतिः ॥ ९ ॥ देशान्पुण्यान्संश्रयेतमद्भक्तैःसाधुभिःश्रितान् ॥ देवासुरमनुष्येषुमद्भक्ताचरितानिच ॥ १० ॥ पृथक्सत्रेणवामह्यंपर्वयात्रामहोत्सवान् ॥ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥ ११ ॥ मामेवसर्वभूतेषुबहिरंतरपावृतं ॥ ईक्षेतात्मनिचात्मानंयथाखममलाशयः ॥ ॥ १२ ॥ इतिसर्वाणिभूतानिमद्भावेनमहाद्युते ॥ सभाजयन्मन्यमानोज्ञानंकेवलमाश्रितः ॥ १३ ॥

यैः ॥ ८ ॥ धर्मानेवाह कुर्यादितित्रयोदशभिः मांस्मरन्शनकैरसंरंभतःकुर्यात्तदाह मय्यर्पितेमनश्चित्ते संकल्पविकल्पानुसंधानात्मकेयेन अतएवमद्धर्मेष्वेवात्ममनसोरतिर्यस्यसः ॥ ९ ॥ पुण्यदेशलक्षणं मद्भक्तैरिति देवादिषुयेमद्भक्तास्तेषामाचरितानिकर्माणिचाश्रयेत ॥ ॥ १० ॥ सत्रेणसंभूयच ॥ ११ ॥ अंतरंगांभक्तिमाह मामितित्रिभिः सर्वभूतेष्वात्मनिचात्मानमीश्वरंस्थितंमामेवेक्षेत ननुकथमेकस्यसर्वेषुवृत्तिस्तत्राहबहिरंतरिति बहिरंतःपूर्णमित्यर्थःतत्कुतः अपावृतमनावरणं तदपिकुतः यथाखमसंगत्वादित्यर्थः ॥ १२ ॥ हेमहाद्युतेअतिप्राज्ञइतिअनेनप्रकारेणकेवलंज्ञानरूपांदृष्टिमाश्रितःसन्सर्वाणिभूतानिमद्भावेनमन्यमानः सभाजयन्पंडितोमतइत्युत्तरेणान्वयः ॥ १३ ॥

ननुउत्तमाधममध्यमेष्वेकरूपेणसभाजनमपांडित्यमेवस्यात्पूज्यपूजादिव्यतिक्रमादित्याशंक्यतामेवज्ञानदृष्टिंप्रपंचयति ब्राह्मणइति वि
षमेष्वपिसमदृक्समंमामेवपश्यन् वैषम्यमेवचतुर्द्धादर्शयति ब्राह्मणेपुल्कसेइतिजातितोवैषम्यंपुल्कसोंऽत्यजजातिविशेषः स्तेनेब्रह्मस्व
हारिणि ब्रह्मण्येब्राह्मणेभ्योदातरिइतिकर्मतः अर्केविस्फुलिंगइतिगुणतः अक्रूरेशांतेक्रूरेचेतिस्वभावतः ॥ १४ ॥ नरेष्वीश्वरदृष्टिंकुर्वतः स
द्यःफलविशेषमाह नरेष्विति समोत्तमहीनेषुस्पर्द्धादयः स्वस्मिन्नहंकारश्च हिनिश्चितं वियंतिनश्यंति ॥ १५ ॥ अतोंऽतर्यामिदृष्ट्याचास
र्वान्प्रणमेदित्याह विसृज्येति स्मयमानान्हसतःस्वान्सखीन्तथादैहिकींदृशमहमुत्तमःसतुनीचइतिदृष्टिंतयादृशाव्रीडालज्जातांचाविसृज्य
श्वचांडालादीनभिव्याप्यप्रणमेत् ॥ १६ ॥ एवंपंचाभिःश्लोकैरुक्तायाःसमदृष्टेरवधिमाहद्वाभ्यां यावदिति ॥ १७ ॥ तस्यएवंकुर्वतःपुंसः

ब्राह्मणेपुल्कसेस्तेनेब्रह्मण्येऽर्केस्फुलिंगके ॥ अक्रूरेक्रूरकेचैवसमदृक्पंडितोमतः ॥१४॥ नरेष्वभीक्ष्णंमद्भा
वंपुंसोभावयतोऽचिरात् ॥ स्पर्धाऽसूयातिरस्काराःसाहंकाराविंयंतिहि॥१५॥विसृज्यस्मयमानान्स्वान्दृ
शंव्रीडांचदैहिकीम् ॥ प्रणमेद्दंडवद्भूमावाश्वचांडालगोखरम् ॥१६ ॥ यावत्सर्वेषुभूतेषुमद्भावोनोपजायते ॥
तावदेवमुपासीतवाङ्मनःकायवृत्तिभिः ॥ १७ ॥ सर्वंब्रह्मात्मकंतस्यविद्ययात्ममनीषया ॥ परिपश्यन्नुपर
मेत्सर्वतोमुक्तसंशयः ॥ १८ ॥ अयंहिसर्वकल्पानांसध्रीचीनोमतोमम ॥ मद्भावःसर्वभूतेषुमनोवाक्कायवृत्ति
भिः ॥ १९ ॥ नह्यंगोपक्रमेध्वंसोमद्धर्मस्योद्धवाण्वपि ॥ मयाव्यवसितःसम्यङ्निर्गुणत्वादनाशिषः ॥२०॥
योयोमयिपरेधर्मःकल्पतेनिष्फलायचेत् ॥ तदायासोनिरर्थःस्याद्भयादेरिवसत्तम ॥ २१ ॥

सर्वंब्रह्मात्मकमेवभवति कुतः आत्ममनीषयासर्वत्रेश्वरदृष्ट्यायाविद्यातया अतःपरितोब्रह्मैवपश्यन्सर्वतःक्रियामात्रादुपरमेत् ॥ १८ ॥
किमयमेवोपायोऽस्तिवाऽन्योपीत्यपेक्षायांसंतिबहवःसमीचीनस्त्वयमेवेत्याह अयंहीति ॥ १९ ॥ भगवद्धर्मलक्षणोपायस्यसमीचीनत्वमे
वोपपादयतिद्वाभ्यां नहीति अंगहेउद्धव अनाशिषोनिष्कामस्यमद्धर्मस्यउपक्रमेसतिअण्वपिईषदपिवैगुण्यादिभिर्नाशोनास्त्येवयतोम
यैवनिर्गुणत्वादयंधर्मःसम्यग्व्यवसितोनिश्चितोनतुमन्वादिमुखेनकथंचित् ॥ २० ॥ किंच योयइति अयमर्थः किंवक्तव्यंमद्धर्मस्यन
ध्वंसइति यतोलौकिकोपियोयोनिरर्थोव्यर्थआयासःसोपिमयिपरेनिष्फलायचेत्कल्पतेनिष्कामतयार्पितश्चेत्तर्हिधर्मएवस्यात् निरर्थायासेदृ
ष्टांतः यथाभयशोकादेर्हेतोःपलायनाक्रंदनादिक्लेशस्तद्वत् ॥ २१ ॥ ॥ ॥ ॥ ॥

अतोमद्भजनमेवबुद्धेर्विवेकस्यमनीषायाश्चातुर्यस्यचफलमित्याह एषाइति तामेवदर्शयति सत्यमममृतंचमामनृतेनासत्येनमर्त्येनविनाशिनामनुष्यदेहेनइहअस्मिन्नेवजन्मनिप्राप्नोतीतियत्सैवबुद्धिर्मनीषाचेति बुद्धिर्विवेकः मनीषाचातुर्यम् ॥ २२ ॥ महाप्रकरणार्थमुपसंहरतिद्वाभ्यां एषइति ॥ २३ ॥ २४ ॥ आस्तांतावज्ज्ञानमेतदनुसंधानकथनपठनश्रवणपराणामप्येतदेवफलंभवतीत्याहचतुर्भिः सुविविक्तमिति मयासुविविक्तंदत्तोत्तरमेतदाख्यानमपियोधारयेदनुसंदध्यात्सब्रह्मगुह्यंवेदेऽपिरहस्यं ॥ २५ ॥ सुपुष्कलंयथाभवतितथाब्रह्मदा

एषाबुद्धिमतांबुद्धिर्मनीषाचमनीषिणाम् ॥ यत्सत्यमनृतेनेहमर्त्येनाप्नोतिमामृतं ॥ २२ ॥ एषतेऽभिहितः कृत्स्नोब्रह्मवादस्यसंग्रहः ॥ समासव्यासविधिनादेवानामपिदुर्गमः ॥ २३ ॥ अभीक्ष्णशस्तेगदितंज्ञानंविस्पष्टयुक्तिमत् ॥ एतद्विज्ञायमुच्येतपुरुषोनष्टसंशयः ॥ २४ ॥ सुविविक्तंतवप्रश्नंमयैतदपिधारयेत् ॥ सनातनंब्रह्मगुह्यंपरंब्रह्माधिगच्छति ॥ २५ ॥ यएतन्ममभक्तेषुसंप्रदद्यात्सुपुष्कलं ॥ तस्याहंब्रह्मदायस्यददाम्यात्मानमात्मना ॥ २६ ॥ यएतत्समधीयीतपवित्रंपरमंशुचि ॥ सपूयेताहरहर्मांज्ञानदीपेनदर्शयन् ॥ २७ ॥ यएतच्छ्रद्धयानित्यमव्यग्रःशृणुयान्नरः ॥ मयिभक्तिंपरांकुर्वन्कर्मभिर्नसबध्यते ॥ २८ ॥ अप्युद्धवलयाब्रह्मसखेसमवधारितं ॥ अपितेविगतोमोहःशोकश्चासौमनोभवः ॥ २९ ॥ नैतत्त्वयादांभिकायनास्तिकायशठायच ॥ अशुश्रूषोरभक्तायदुर्विनीतायदीयतां ॥ ३० ॥ एतैर्दोषैर्विहीनायब्रह्मण्यायप्रियायच ॥ साधवेशुचयेब्रूयाद्भक्तिःस्याच्छूद्रयोषितां ॥ ३१ ॥ ॥ ॥

यस्यब्रह्मददातीतितथातस्यज्ञानोपदेष्टुः ॥ २६ ॥ समधीयीतउच्चैःपठेत् परमंशुचिअन्येषामपिशोधकं पूयेतशुध्येत् ॥ २७ ॥ २८ ॥ सम्यक्ज्ञानानुत्पत्तौपुनरुपदेक्ष्यामीत्याशयेनपृच्छति अपीति अपिकिम् ॥ २९ ॥ उपधारितमाकलय्याह नैतदिति शठायवंचकाय ॥ ॥ ३० ॥ शूद्राणांयोषितांचयदिभक्तिःस्यात्तर्हिब्रूयात् ॥ ३१ ॥ ॥ ॥ ॥

एतज्ज्ञानेनपुमान्कृतार्थोभवतीत्याह नैतदिति अत्रदृष्टांतमाह पीत्वेति पीयूषंस्वादु ॥ ३२ ॥ ननुसंतिबहूनिज्ञेयानितत्तत्फलसाधना
निसंत्यभक्तानांभक्तस्यतुसर्वमहमेवातोमदेकशरणोभवेत्याह ज्ञानइति ज्ञानादौयावान्धर्मादिलक्षणश्चतुर्विधोऽर्थस्तावान्सर्वोपितेऽहमेव
तत्रज्ञानेमोक्षकर्मणिविहितेधर्मः कर्मण्येवस्वाभाविकेतुकामः योगेत्वणिमादिसिद्धयः वार्तायांकृष्यादावर्थः दंडनीतावैश्वर्यमिति सित्ध्यै
श्वर्ययोरपिकामांतर्गतत्वाच्चातुर्विध्यम् ॥ ३३ ॥ कुतइत्यतआह मर्त्यइति यदात्यक्तसमस्तकर्मासन्मेनिवेदितात्माभवतितदाऽसौमेवि
चिकीर्षितोविशेषेणकर्तुमिष्टोभवतिततश्चामृतत्वंमोक्षंप्रतिपद्यमानोमयात्मभूयायमदैक्यायमत्समानैश्वर्यायेतियावत् कल्पतेयोग्योभवति

नैतद्विज्ञायजिज्ञासोर्ज्ञातव्यमवशिष्यते ॥ पीत्वापीयूषममृतंपातव्यंनावशिष्यते ॥३२॥ ज्ञानेकर्मणियोगे
चवार्तायांदंडधारणे ॥ यावानर्थोनृणांताततावांस्तेऽहंचतुर्विधः ॥३३॥ मर्त्योयदात्यक्तसमस्तकर्मानिवेदि
तात्माविचिकीर्षितोमे ॥ तदाऽमृतत्वंप्रतिपद्यमानोमयात्मभूयायचकल्पतेवै ॥ ३४ ॥ श्रीशुकउवाच
सएवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचोनिशम्य ॥ बद्धांजलिःप्रत्युपरुद्धकंठोनकिंचिदूचेऽश्रुपरिप्लुता
क्षः ॥ ३५ ॥ विष्टभ्यचित्तंप्रणयावघूर्णंधैर्येणराजन्बहुमन्यमानः ॥ कृतांजलिःप्राहयदुप्रवीरंशीर्ष्णास्पृ
शंस्तच्चरणारविंदं ॥ ३६ ॥ उद्धवउवाच विद्रावितोमोहमहांधकारोयआश्रितोमेतवसन्निधानात् ॥
विभावसोःकिंनुसमीपगस्यशीतंतमोभीःप्रभवंत्यजाद्य ॥ ३७ ॥ प्रत्यर्पितोमेभवताऽनुकंपिनाभृत्याय
विज्ञानमयःप्रदीपः ॥ हित्वाकृतज्ञस्तवपादमूलंकोऽन्यत्समीयाच्छरणंत्वदीयं ॥ ३८ ॥

वैधुवन् ॥ ३४ ॥ आदर्शितोयोगमार्गोयस्मैसः ॥ ३५ ॥ प्रणयेनावघूर्णंक्षुभितंचित्तंधैर्येणविष्टभ्यबहुमन्यमानः आत्मानंकृतार्थंमन्य
मानः ॥ ३६ ॥ मेमयायआश्रितआसीत्सतवसान्निधानेनैवविद्रावितः प्रभवंतिकिंनुबाधायसमर्थाभवंति अजाद्यब्रह्मणोपिजनक ॥३७॥
किंचयद्यपितवसान्निधानादेवगतस्तथाऽप्यनुकंपिनाभवताविज्ञानमयःप्रदीपश्चप्रत्यर्पितःस्वमाययाऽपहृतःपुनःसमर्पितः अतस्तवकृतज्ञः
यस्त्वयाकृतमनुग्रहंजानातिसःकोनामत्वदीयंपादमूलंहित्वाऽन्यच्छरणंसमीयात्आश्रयेत् ॥ ३८ ॥ ॥

किंच दाशार्हादिषु त्वयायः स्वमायया स्नेहपाशः प्रसारितः स त्वयैवात्मतत्त्वज्ञानशस्त्रेण वृक्णश्छिन्नः ॥ ३९ ॥ एवं यद्यपि त्वया बहु कृतं तथाऽप्येतावत्प्रार्थय इत्याह नमोऽस्त्विति अनुशाधि अनुशिक्षय अनुशासनीयमाह यथेति मुक्तावप्यनपायिनी ॥ ४० ॥ तदुक्तमोमित्यंगीकृत्य तथाऽपि मयादिष्टो लोकसंग्रहार्थमेतावत्कुर्वित्याह गच्छेति आदिष्टो नियुक्तः ॥ ४१ ॥ स्नानादेः पूर्वमेव मत्पादतीर्थोदकभूताया अलकनंदाया गंगाया ईक्षया वसानः परिदधानः ॥ ४२ ॥ द्वंद्वमात्राणां शीतोष्णादिविषयाणां सुशीलः आर्जवादिस्वभावः ॥ ४३ ॥ ते त्वया विविक्तं सुविचारितम् तिसृस्त्रिगुणात्मिका गतीरतिक्रम्य ॥ ४४ ॥ हरिमेधसा संसारं हरति मेधा यस्य तेन श्रीकृष्णेन अद्वंद्वपरोऽपि सुखदुःखविनिर्मुक्तोऽपि अपक्रमे निर्गमनसमये ॥ ४५ ॥ किंच सुदुस्त्यजः स्नेहो यस्मिंस्तेन वियोगात्कातरो भीतः अतएव तं परिहातुमशक्नुवन्नातुरो विह्वलः सन्कृच्छ्रं कष्टं ययौ प्राप ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रत् अतिनिर्बंधरूपया तदाज्ञया तं पुनःपुनर्नमस्कृत्य ययौ अत्र च पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षम इत्यादि तृतीयस्कंधोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन् भगवतः प्रभासयात्रामुपश्रुत्य शनैः पृष्ठतो गतः सन्नुपसंहृत निजकुलं भगवंतमेकांते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं तत्त्वमाकलय्य तदाज्ञातो ययाविति द्रष्टव्यं ॥ ४६ ॥

वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यंधकसात्वतेषु ॥ प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥ नमोस्तु ते महायोगिन्प्रपन्नमनुशाधि माम् ॥ यथा त्वच्चरणांभोजे रतिः स्यादनपायिनी ॥ ॥ ४० ॥ श्रीभगवानुवाच गच्छोद्धव मयादिष्टो बदर्याख्यं ममाश्रमम् ॥ तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥ ईक्षयाऽलकनंदाया विधूताशेषकल्मषः ॥ वसानो वल्कलान्यंग वन्यभुक्सुखनिस्पृहः ॥ ४२ ॥ तितिक्षुर्द्वंद्वमात्राणां सुशीलः संयतेंद्रियः ॥ शांतः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ॥ ४३ ॥ मत्तोनुशिक्षितं यत्ते विविक्तमनुधावयन् ॥ मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ॥ अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४४ ॥ श्रीशुक उवाच स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ॥ शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिंचदद्वंद्वपरोऽप्यपक्रमे ॥ ४५ ॥ सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ॥ कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनःपुनः ॥ ४६ ॥

विशालांबदरिकाश्रमंगतःसन्हरेर्गतिमगात् कथंभूतां तेनैवजगदेकबंधुनायथोपदिष्टां तदामृतत्वंप्रतिपद्यमानोमयात्मभूतायचकल्पतेवै अतित्रज्यगतीरितस्त्रोमामेष्यासिततःपरामित्येवमुक्तप्रकारां ॥ ४७ ॥ आनंदसमुद्रोभगवद्भक्तिमार्गस्तस्मिन्संभृतमेकीकृतमतेयःसच्छ्रद्धयाआसेव्यईषदपिसेवित्वावर्ततेसविमुच्यतेइति।किंवक्तव्यं तत्संगाज्जगदपिविमुच्यतइत्यर्थः ॥ ४८ ॥ एवंकृतोपदेशंजगद्गुरुंप्रणमाति भवभयमिति भवःसंसारोभयंचजरारोगादिनिमित्तंतदुभयनिवृत्तानांप्रवृत्तानांचभृत्यवर्गाणांयथायोग्यमपहंतुंयोमृतद्वयमुपजन्हेउद्धृतवान् तदेवाह वेदसारमेकम् किंतत् ज्ञानविज्ञानरूपंचतत्सारंश्रेष्ठंचभृंगवत्भृंगोयथापुष्पमकोपयन्नेवामृतमुपहरातितथास्वयंकृतवेदानुसारेणैवो

ततस्तमंतर्हृदिसंनिवेश्यगतोमहाभागवतोविशालाम् ॥यथोपदिष्टांजगदेकबंधुनाततःसमास्थायहरेरगाद्गतिम् ॥ ४७ ॥ यएतदानंदसमुद्रसंभृतंज्ञानामृतंभागवतायभाषितं ॥ कृष्णेनयोगेश्वरसेवितांघ्रिणासच्छ्रद्धयासेव्यजगद्विमुच्यते ॥ ४८ ॥ भवभयमपहंतुंज्ञानविज्ञानसारंनिगमकृदुपजन्हेभृंगवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद्भृत्यवर्गान्पुरुषमृषभमाद्यंकृष्णसंज्ञंनतोस्मि ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेएकोनात्रिंशोऽध्यायः ॥ २९ ॥ ॥ ॥ राजोवाच ततोमहाभागवतेउद्धवेनिर्गतेवनं ॥ द्वारवत्यांकिमकरोद्भगवान्भूतभावनः ॥ १ ॥ ब्रह्मशापोपसंसृष्टेस्वकुलेयादवर्षभः ॥ प्रेयसींसर्वनेत्राणांतनुंसकथमत्यजत् ॥ २ ॥ ॥ ॥ ॥ ॥

दधितश्चैकंतच्चोभयंयथायथंभृत्यवर्गानपाययत्तंनतोऽस्मीति ॥ ४९ ॥ येनानुकंपितंविश्वमुद्धवप्रश्ननिर्णयैः ॥ तंवंदेपरमानंदंनंदनंदनरूपिणं ॥ १ ॥ इत्येकादशेटीकायामेकोनत्रिंशोध्यायः ॥ २९ ॥ ॥ त्रिंशेतुप्रागुपक्षिप्तमौसलच्छलतोहरिः ॥ स्वधामगंतुमिच्छन्संजहारनिजंकुलं ॥ १ ॥ विरागायपुराघोरमुपक्षिप्तंहिमौसलं ॥ कथावसानेतत्रैवविशेषंपरिपृच्छति ॥ २ ॥ ततइतित्रिभिः॥ ॥ १ ॥ ब्रह्मशापोपसंसृष्टेकुलेसति अयंभावः भगवतिनाहिशापःप्रभवति यादवत्वानुकरणाच्चसोपिकथंचिन्मान्यःअतःकिमकरोदिति तदेतत्कथमत्यजदिति सर्वनेत्राणामितिसर्वेंद्रियोपलक्षणं॥ २ ॥ ॥ ॥ ॥

तत्प्रपंचयाति प्रत्याक्रष्टुमिति यस्मिन्रूपेलग्नंनयनंप्रत्याक्रष्टुंपरावर्तयितुमबलानशेकुः यच्चकर्णाविष्टंकर्णरंध्रेणप्राविष्टम् यत्सतामात्मनिल ग्नंलिखितमिवातिष्ठतिततोनसरतिनानिर्गच्छति यस्यश्रीःशोभासंकीर्त्यमानाकवीनांवाचांरतिमुल्लासविशेषंजनयति तेषांमानजगत्पूज्यतां जनयतीतिकिंनुवक्तव्यं यच्चविष्णोरूपंजिष्णोरर्जुनस्यरथेस्थितंदृष्ट्वायुधिमृतास्तत्साम्यंसारूप्यमयुः प्राप्ताःतत्केनरूपेणात्यजादित्यन्वयः ॥ ३ ॥ दिविसूर्यपरिवेषादीन्भुविभूकंपादीनंतरिक्षेदिग्दाहादीन्महोत्पातान्स्वयमेवोत्पादितत्वादन्यैर्दुष्प्रतिकारान् ॥ ४ ॥ यमकेतवोध्व

प्रत्याक्रष्टुंनयनमबलायत्रलग्नंनशेकुःकर्णाविष्टंनसरतिततोयत्सतामात्मलग्नम् ॥ यच्छ्रीर्वाचांजनयतिर तिंकिंनुमानंकवीनांदृष्ट्वाजिष्णोर्युधिरथगतंयच्चतत्साम्यमीयुः ॥ ३ ॥ ऋषिरुवाच दिविभुव्यंतरिक्षेच महोत्पातान्समुत्थितान् ॥ दृष्ट्वासीनान्सुधर्मायांकृष्णःप्राहयदूनिदम् ॥ ४ ॥ श्रीभगवानुवाच एते घोरामहोत्पाताद्वार्वत्यांयमकेतवः ॥ मुहूर्तमपिनस्थेयमत्रनोयदुपुंगवाः ॥ ५ ॥ स्त्रियोबालाश्ववृद्धाश्वशं खोद्धारंव्रजंत्वितः ॥ वयंप्रभासंयास्यामोयत्रप्रत्यक्सरस्वती ॥ ६ ॥ तत्राभिषिच्यशुचयउपोष्यसुसमाहि ताः ॥ देवताःपूजयिष्यामःस्नपनालेपनार्हणैः ॥ ७ ॥ ब्राह्मणांस्तुमहाभागान्कृतस्वस्त्ययनावयम् ॥ गो भूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥ विधिरेषह्यरिष्टघ्नोमंगलायनमुत्तमम् ॥ देवद्विजगवांपूजा भूतेषुपरमोभवः ॥ ९ ॥ इतिसर्वेसमाकर्ण्ययदुवृद्धामधुद्विषः ॥ तथेतिनौभिरुत्तीर्यप्रभासंप्रययूरथैः ॥ ॥ १० ॥ तस्मिन्भगवतादिष्टंयदुदेवेनयादवाः ॥ चक्रुःपरमयाभक्त्यासर्वश्रेयोपबृंहितम् ॥ ११ ॥ ततस्त स्मिन्महापानंपपुर्मैरेयकंमधु ॥ दिष्टविभ्रंशितधियोयद्द्रवैर्भ्रश्यतेमतिः ॥ १२ ॥ ॥ ॥

जाइवमृत्युसूचकाइत्यर्थः नोऽस्माभिः ॥ ५ ॥ प्रत्यक्पश्चिमवाहिनी ॥ ६ ॥ अभिषिच्यस्नात्वा ॥ ७ ॥ ब्राह्मणांश्वतैःकृतशांतिकाःसंतोगवादि भिःपूजयिष्यामः ॥ ८ ॥ विधिःप्रकारःमंगलायनंच किंच देवद्विजगवांपूजाभवउद्भवहेतुःदेवलोकेपरमउद्भवोभविष्यतीतिभावः ॥ ९ ॥ मधुद्वि षोवाक्यमाकर्ण्यतथेत्यभिनंद्य उत्तीर्यसमुद्रं ॥ १० ॥ सर्वश्रेयोपबृंहितमित्यत्रसंधिरार्षः भगवतानुक्तैरपिसर्वैःश्रेयोभिःसहितंचक्रुः ॥ ११ ॥ पी यतइतिपानंमैरेयकंमदिराविशेषंमधुररसं दिष्टेनदैवेनविभ्रंशितधियः नह्यन्यथातस्मिन्स्थानेतदुचितामितिभावः यद्द्रवैःयस्यद्रवैरसैः ॥ १२ ॥

कृष्णमायाविमूढानामितिमुख्योहेतुः संघर्षःकलहः ततोयुयुधुश्च ॥ १३ ॥ १४ ॥ पतंत्यइतस्ततश्चलंत्यःपताकायेषुतैरथादिभिर्मिथःसमेत्य न्यहन्न्यघ्नन्नित्यर्थः दद्भिर्दंतैरिव ॥ १५ ॥ मिथःसमेत्येत्यस्यप्रपंचः प्रद्युम्नेत्यादि चतुर्भिः गदौश्रीकृष्णस्यभ्राताएकःपुत्रश्चापरस्तौ सुमित्रासुरथावितिदैर्घ्यमार्षम् असुरथनामावाकश्चित् ॥ १६ ॥ मदांधेनमदतमसाबलात्कारिताः ॥ १७ ॥ दाशार्हादयोनवतत्तद्वंश्याः अर्बुदामाथुराः

महापानाभिमत्तानांवीराणांदृप्तचेतसां ॥ कृष्णमायाविमूढानांसंघर्षःसुमहानभूत् ॥ १३ ॥ युयुधुःक्रोधसंरब्धावेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥ १४ ॥ पतत्पताकैरथकुंजरादिभिःखरोष्ट्रगोभिर्महिषैर्नरैरपि ॥ मिथःसमेत्याश्वतरैःसुदुर्मदान्यहन्शरैर्दद्भिरिवद्विपावने ॥ १५ ॥ प्रद्युम्नसांबौयुधिरूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ॥ सुभद्रसंग्रामजितौसुदारुणौगदौसुमित्रासुरथौसमीयतुः ॥ १६ ॥ अन्येचयेवैनिशठोल्मुकादयःसहस्रजिच्छतजिद्भानुमुख्याः ॥ अन्योऽन्यमासाद्यमदांधकारिताजघ्नुर्मुकुंदेनविमोहिताभृशं ॥ १७ ॥ दाशार्हवृष्ण्यंधकभोजसात्वतामध्वर्बुदामाथुरशूरसेनाः ॥ विसर्जनाःकुकुराःकुंतयश्चमिथस्ततस्तेऽथविसृज्यसौहृदम् ॥ १८ ॥ पुत्राअयुध्यन्पितृभिर्भ्रातृभिश्चस्वस्त्रीयदौहित्रपितृव्यमातुलैः ॥ मित्राणिमित्रैःसुहृदःसुहृद्भिर्ज्ञातींस्त्वहन्ज्ञातयएवमूढाः ॥ १९ ॥ शरेषुक्षीयमाणेषुभज्यमानेषुधन्वसु ॥ शस्त्रेषुक्षीयमाणेषुमुष्टिभिर्जह्रुरेरकाः ॥ २० ॥ तावज्रकल्पाह्यभवन्परिघामुष्टिनाभृताः ॥ जघ्नुर्द्विषस्तैःकृष्णेनवार्यमाणास्तुतंचते ॥ २१ ॥ प्रत्यनीकंमन्यमानाबलभद्रंचमोहिताः ॥ हंतुंकृतधियोराजन्नापन्नाआततायिनः ॥ २२ ॥ ॥ ॥ ॥



शूरसेनाश्चतत्तद्देशीयाः ॥ १८ ॥ भ्रातृभिश्चेतिभ्रात्रादिशब्दानांसप्रतियोगिवाचित्वात्भ्रातरोमातुलाइत्यादिज्ञेयं मित्रैश्चमित्राणिचअहन् हतवंतः ॥ १९ ॥ धन्वसुधनुःषुजह्रुःजगृहुः ॥ २० ॥ परिघालोहदंडाःभृताःधृताः ॥ २१ ॥ तंचश्रीकृष्णमपि प्रत्यनीकंप्रतिपक्षम् ॥ २२ ॥

एरकामुष्टिरूपौपरिघावुद्यम्य ॥ २३ ॥ स्पर्धानिमित्तःक्रोधःकुलंक्षयंनिन्ये ॥ २४ ॥ २५ ॥ पौरुषंयोगंपरमपुरुषध्यानलक्षणम् तमेवाह संयोज्येति मानुष्यंलोकंभूर्लोकंमनुष्यरूपतांवा ॥ २६ ॥ धरोपस्थेभूतले ॥ २७ ॥ भ्राजिष्णुरूपंबिभ्रदिति ॥ २८ ॥ तदेवानुवर्णयति श्रीवत्सांकमितिचतुर्भिः ॥ २९ ॥ सुंदरस्मितंवक्त्राब्जंयस्मिंस्तत् पुंडरीकवदभिरामेसुंदरेअक्षिणीयस्मिंस्तत् ॥ ३० ॥ ३१ ॥ वनमा

अथतावपिसंक्रुद्धावुद्यम्यकुरुनंदन ॥ एरकामुष्टिपरिघौचरंतौजघ्नतुर्युधि ॥ २३ ॥ ब्रह्मशापोपसृष्टानांकृष्णमायावृतात्मनाम् ॥ स्पर्द्धाक्रोधःक्षयंनिन्येवैणवोऽग्निर्यथावनम् ॥ २४ ॥ एवंनष्टेषुसर्वेषुलोकेषुस्वेषुकेशवः ॥ अवतारितोभुवोभारइतिमेनेऽवशेषितः ॥ २५ ॥ रामःसमुद्रवेलायांयोगमास्थायपौरुषं ॥ तत्याजलोकंमानुष्यंसंयोज्यात्मानमात्मनि ॥ २६ ॥ रामनिर्याणमालोक्यभगवान्देवकीसुतः ॥ निषसादधरोपस्थेतुष्णीमासाद्यपिप्पलं ॥ २७ ॥ बिभ्रच्चतुर्भुजंरूपंभ्राजिष्णुप्रभयास्वया ॥ दिशोवितिमिराःकुर्वन्विधूमइवपावकः ॥ २८ ॥ श्रीवत्सांकंघनश्यामंतप्तहाटकवर्चसं ॥ कौशेयांबरयुग्मेनपरिवीतंसुमंगलं ॥ २९ ॥ सुंदरस्मितवक्त्राब्जंनीलकुंतलमंडितं ॥ पुंडरीकाभिरामाक्षंस्फुरन्मकरकुंडलं ॥ ३० ॥ कटिसूत्रब्रह्मसूत्रकिरीटकटकांगदैः ॥ हारनूपुरमुद्राभिःकौस्तुभेनविराजितं ॥ ३१ ॥ वनमालापरीतांगंमूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौदक्षिणेपादमासीनंपंकजारुणं ॥ ३२ ॥ मुसलावशेषायःखंडकृतेषुर्लुब्धकोजरा ॥ मृगास्याकारंतच्चरणंविव्याधमृगशंकया ॥ ३३ ॥ चतुर्भुजंतंपुरुषंदृष्ट्वासकृतकिल्बिषः ॥ भीतःपपातशिरसापादयोरसुरद्विषः ॥ ३४ ॥ अजानताकृतमिदंपापेनमधुसूदन ॥ क्षंतुमर्हसिपापस्यउत्तमश्लोकमेनघ ॥ ३५ ॥ यस्यानुस्मरणंनृणामज्ञानध्वांतनाशनं ॥ वदंतितस्यतेविष्णोमयाऽसाधुकृतंप्रभो ॥ ३६ ॥

लापरीतान्यंगानियस्मिंस्तत् निजायुधैश्चपरीतांगम् पंकजारुणंवामंपादंदक्षिणऊरौकृत्वाआनंदरूपंबिभ्रदितिपूर्वेणान्वयः ॥ ३२ ॥ जरानामकश्चिल्लुब्धकोमृगयुः मृगास्यमिवाकारोयस्यतच्चरणं ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥

॥ ३७ ॥ ब्रह्मशापकृतेतत्तवनापराधइतिचेदतआह यस्यत्वात्मयोगरचितंस्वाधीनमाययाराचितंविरिंचः अस्यतनयारुद्रादयश्चयेचान्ये गिरांपतयोवेदद्रष्टारस्तेपिनविदुस्तस्यतेअचिंत्यमायस्यएतद्ब्रह्मशापादिअंजसाअसद्गतयः पापयोनयोवयंकिंगृणीमिःकथंवर्णयामः अ तस्तदास्तामाशुमांजहीतिभावः ॥ ३८ ॥ ३९ ॥ इच्छाशरीरिणेत्यस्यायंभावः शुद्धसत्त्वमयींनिजांमूर्तिमंतर्धायतत्प्रतिकृत्यैवंविडंबन

तमाशुजहिवैकुंठपाप्मानंमृगलुब्धकं ॥ यथापुनरहंत्वेवंनकुर्यांसदतिक्रमं ॥ ३७ ॥ यस्यात्मयोगरचितं नविदुर्विरिंचोरुद्रादयोऽस्यतनयाःपतयोगिरांये ॥ त्वन्माययापिहितदृष्टयएतदंजःकिंतस्यतेवयमसद्गत योगृणीमः ॥ ३८ ॥ श्रीभगवानुवाच माभैर्जरेत्वमुत्तिष्ठकामएषकृतोहिमे ॥ याहित्वंमदनुज्ञातःस्वर्गं सुकृतिनांपदं ॥ ३९ ॥ इत्यादिष्टोभगवताकृष्णेनेच्छाशरीरिणा ॥ त्रिःपरिक्रम्यतंनत्वाविमानेनदिवंय यौ ॥ ४० ॥ दारुकःकृष्णपदवीमन्विच्छन्नधिगम्यतां ॥ वायुंतुलसिकामोदमाघ्रायाभिमुखंययौ ॥ ४१ ॥ तंतत्रतिग्मद्युभिरायुधैर्वृतंह्यश्वत्थमूलेकृतकेतनंपतिं ॥ स्नेहाप्लुतात्मानिपपातपादयोरथादवप्लुत्यसबाष्प लोचनः ॥ ४२ ॥ अपश्यतस्त्वच्चरणांबुजंप्रभोदृष्टिःप्रनष्टातमसिप्रविष्टा ॥ दिशोनजानेनलभेचशांतिंय थानिशायामुडुपेप्रनष्टे ॥ ४३ ॥ इतिब्रुवतिसूतेवैरथोगरुडलांछनः ॥ समुत्पपातराजेंद्रसाश्वध्वजउदी क्षतः ॥ ४४ ॥ तमन्वगच्छन्दिव्यानिविष्णुप्रहरणानिच ॥ तेनातिविस्मितात्मानंसूतमाहजनार्दनः ॥४५॥ गच्छद्वारवतींसूतज्ञातीनांनिधनंमिथः ॥ संकर्षणस्यनिर्याणंबंधुभ्योब्रूहिमद्दशां ॥ ४६ ॥ द्वारकायांचन स्थेयंभवद्भिःस्वस्वबंधुभिः ॥ मयात्यक्तांयदुपुरींसमुद्रःप्लावयिष्यति ॥ ४७ ॥ स्वंस्वंपरिग्रहंसर्वेआदाय पितरौचनः ॥ अर्जुनेनाविताःसर्वइंद्रप्रस्थंगमिष्यथ ॥ ४८ ॥ ॥ ॥

मात्रमिति एतदेवस्फुटीकरिष्यति देवादयोब्रह्ममुख्याइत्यादिना ॥ ४० ॥ ४१ ॥ तंपतिंतत्रदृष्ट्वातस्यपादयोर्निपपात ॥ ४२ ॥ ॥ ४३ ॥ उदीक्षतःउदीक्षमाणस्यसूतस्यसतः ॥ ४४ ॥ ४५ ॥ निर्याणंयोगमार्गेण मद्दशामितीच्छाशरीराभिप्रायेण ॥ ४६ ॥ ४७ ॥ अवितारक्ष्यमाणाइंद्रप्रस्थंगमिष्यथेतिब्रूहीतिपूर्वेणान्वयः ॥ ४८ ॥ ॥ ॥ ॥

एरकामुष्टिरूपौपरिघावुद्यम्य ॥ २३ ॥ स्पर्धानिमित्तःक्रोधःकुलंक्षयंनिन्ये ॥ २४ ॥ २५ ॥ पौरुषंयोगंपरमपुरुषध्यानलक्षणम् तमेवाह संयोज्येति मानुष्यंलोकंभूर्लोकंमनुष्यरूपतांवा ॥ २६ ॥ धरोपस्थेभूतले ॥ २७ ॥ भ्राजिष्णुरूपंबिभ्रदिति ॥ २८ ॥ तदेवानुवर्णयति श्रीवत्सांकमितिचतुर्भिः ॥ २९ ॥ सुंदरस्मितंवक्त्राब्जंयस्मिंस्तत् पुंडरीकवदभिरामेसुंदरेअक्षिणीयस्मिंस्तत् ॥ ३० ॥ ३१ ॥ वनमा

अथतावपिसंक्रुद्धावुद्यम्यकुरुनंदन ॥ एरकामुष्टिपरिघौचरंतौजघ्नतुर्युधि ॥ २३ ॥ ब्रह्मशापोपसृष्टानांकृष्णमायावृतात्मनाम् ॥ स्पर्द्धाक्रोधःक्षयंनिन्येवैणवोऽग्निर्यथावनम् ॥ २४ ॥ एवंनष्टेषुसर्वेषुलोकेषुस्वेषुकेशवः ॥ अवतारितोभुवोभारइतिमेनेऽवशेषितः ॥ २५ ॥ रामःसमुद्रवेलायांयोगमास्थायपौरुषं ॥ तत्याजलोकंमानुष्यंसंयोज्यात्मानमात्मनि ॥ २६ ॥ रामनिर्याणमालोक्यभगवान्देवकीसुतः ॥ निषसादधरोपस्थेतुष्णीमासाद्यपिप्पलं ॥ २७ ॥ बिभ्रच्चतुर्भुजंरूपंभ्राजिष्णुप्रभयास्वया ॥ दिशोवितिमिराःकुर्वन्विधूमइवपावकः ॥ २८ ॥ श्रीवत्सांकंघनश्यामंतप्तहाटकवर्चसं ॥ कौशेयांबरयुग्मेनपरिवीतंसुमंगलं ॥ २९ ॥ सुंदरस्मितवक्त्राब्जंनीलकुंतलमंडितं ॥ पुंडरीकाभिरामाक्षंस्फुरन्मकरकुंडलं ॥ ३० ॥ कटिसूत्रब्रह्मसूत्रकिरीटकटकांगदैः ॥ हारनूपुरमुद्राभिःकौस्तुभेनविराजितं ॥ ३१ ॥ वनमालापरीतांगंमूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौदक्षिणेपादमासीनंपंकजारुणं ॥ ३२ ॥ मुसलावशेषायःखंडकृतेषुर्लुब्धकोजरा ॥ मृगास्याकारंतच्चरणंविव्याधमृगशंकया ॥ ३३ ॥ चतुर्भुजंतंपुरुषंदृष्ट्वासकृतकिल्बिषः ॥ भीतःपपातशिरसापादयोरसुरद्विषः ॥ ३४ ॥ अजानताकृतमिदंपापेनमधुसूदन ॥ क्षंतुमर्हसिपापस्यउत्तमश्लोकमेनघ ॥ ३५ ॥ यस्यानुस्मरणंनृणामज्ञानध्वांतनाशनं ॥ वदंतितस्यतेविष्णोमयाऽसाधुकृतंप्रभो ॥ ३६ ॥

लापरीतान्यंगानियस्मिंस्तत् निजायुधैश्चपरीतांगम् पंकजारुणंवामंपादंदक्षिणऊरौकृत्वाआनंदरूपंबिभ्रदितिपूर्वेणान्वयः ॥ ३२ ॥ जरानामकश्चिल्लुब्धकोमृगयुः मृगास्यमिवाकारोयस्यतच्चरणं ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥

॥ ३७ ॥ ब्रह्मशापकृतेतत्त्वनापराधइतिचेदतआह यस्यत्वात्मयोगरचितंस्वाधीनमाययारचितंविरिंचः अस्यतनयारुद्रादयश्चयेचान्ये गिरांपतयोवेदद्रष्टारस्तेपिनविदुस्तस्यतेअचिंत्यमायस्यएतद्ब्रह्मशापादिअंजसाअसद्गतयः पापयोनयोवयंकिंगृणीमिःकथंवर्णयामः अ तस्तदास्तामाशुमांजहीतिभावः ॥ ३८ ॥ ३९ ॥ इच्छाशरीरिणेत्यस्यायंभावः शुद्धसत्त्वमयींनिजांमूर्तिमंतर्धायतत्प्रतिकृत्यैवंविडंबन



तमाशुजहिवैकुंठपाप्मानंमृगलुब्धकं ॥ यथापुनरहंत्वेवंनकुर्यांसदतिक्रमं ॥ ३७ ॥ यस्यात्मयोगरचितं नविदुर्विरिंचोरुद्रादयोऽस्यतनयाःपतयोगिरांये ॥ त्वन्माययापिहितदृष्टयएतदंजःकिंतस्यतेवयमसद्गत योगृणीमः ॥ ३८ ॥ श्रीभगवानुवाच माभैर्जरेत्वमुत्तिष्ठकामएषकृतोहिमे ॥ याहित्वंमदनुज्ञातःस्वर्गं सुकृतिनांपदं ॥ ३९ ॥ इत्यादिष्टोभगवताकृष्णेनेच्छाशरीरिणा ॥ त्रिःपरिक्रम्यतंनत्वाविमानेनदिवंय यौ ॥ ४० ॥ दारुकःकृष्णपदवीमन्विच्छन्नधिगम्यतां ॥ वायुंतुलसिकामोदमाघ्रायाभिमुखंययौ ॥ ४१ ॥ तंतत्रतिग्मद्युभिरायुधैर्वृतंह्यश्वत्थमूलेकृतकेतनंपतिं ॥ स्नेहाप्लुतात्मानिपपातपादयोरथादवप्लुत्यसबाष्प लोचनः ॥ ४२ ॥ अपश्यतस्त्वच्चरणांबुजंप्रभोदृष्टिःप्रनष्टातमसिप्रविष्टा ॥ दिशोनजानेनलभेचशांतिंय थानिशायामुडुपेप्रनष्टे ॥ ४३ ॥ इतिब्रुवतिसूतेवैरथोगरुडलांछनः ॥ समुत्पपातराजेंद्रसाश्वध्वजउदी क्षतः ॥ ४४ ॥ तमन्वगच्छन्दिव्यानिविष्णुप्रहरणानिच ॥ तेनातिविस्मितात्मानंसूतमाहजनार्दनः ॥ ४५ ॥ गच्छद्वारवतींसूतज्ञातीनांनिधनंमिथः ॥ संकर्षणस्यनिर्याणंबंधुभ्योब्रूहिमद्दशां ॥ ४६ ॥ द्वारकायांचन स्थेयंभवद्भिःस्वस्वबंधुभिः ॥ मयात्यक्तांयदुपुरींसमुद्रःप्लावयिष्यति ॥ ४७ ॥ स्वंस्वंपरिग्रहंसर्वेआदाय पितरौचनः ॥ अर्जुनेनाविताःसर्वइंद्रप्रस्थंगमिष्यथ ॥ ४८ ॥ ॥ ॥

मात्रमिति एतदेवस्फुटीकरिष्यति देवादयोब्रह्ममुख्याइत्यादिना ॥ ४० ॥ ४१ ॥ तंपतिंतत्रदृष्ट्वातस्यपादयोर्निपपात ॥ ४२ ॥ ॥ ४३ ॥ उदीक्षतःउदीक्षमाणस्यसूतस्यसतः ॥ ४४ ॥ ४५ ॥ निर्याणंयोगमार्गेण मद्दशामितीच्छाशरीराभिप्रायेण ॥ ४६ ॥ ४७ ॥ अविताःरक्ष्यमाणाइंद्रप्रस्थंगमिष्यथेतिब्रूहीतिपूर्वेणान्वयः ॥ ४८ ॥ ॥ ॥ ॥

मन्मायारचनामेतांविज्ञायेतिनिजमूर्तेरंतर्हितत्वाद्वृथाशोकंमाकुर्वित्यर्थः ॥ ४९ ॥ कुलस्यविनष्टत्वाद्दुर्मनाः ॥ ५० ॥ इत्येकादशेटीकायांत्रिंशोऽध्यायः ॥ ३० ॥ ॥ एकत्रिंशेस्वकंधामजगामभगवानितः ॥ तमेवानुययुःप्रीत्यावसुदेवादयस्ततः ॥ १ ॥ देवान्यदून्विधायादौभूयोदेवान्विधायच ॥ श्रीकृष्णःस्वेच्छयाधामस्वतश्चैवसमाविशत् ॥ २ ॥ मुनयःसनकादयःप्रजेश्वरामरीच्यादयः ॥ १ ॥ गरुडलोकनिवासिनः

त्वंतुमद्धर्ममास्थायज्ञाननिष्ठउपेक्षकः ॥ मन्मायारचनामेतांविज्ञायोपशमंव्रज ॥ ४९ ॥ इत्युक्तस्तंपरिक्रम्यनमस्कृत्यपुनःपुनः ॥ तत्पादौशीर्ष्ण्युपाधायदुर्मनाःप्रययौपुरीं ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेयदुकुलसंक्षयोनामत्रिंशोऽध्यायः ॥ ३० ॥ ॥ छ ॥ श्रीशुकउवाच अथतत्रागमद्ब्रह्माभवान्याचसमंभवः ॥ महेंद्रप्रमुखादेवामुनयःसप्रजेश्वराः ॥ १ ॥ पितरःसिद्धगंधर्वाविद्याधरमहोरगाः ॥ चारणायक्षरक्षांसिकिन्नराप्सरसोद्विजाः ॥ २ ॥ द्रष्टुकामाभगवतोनिर्याणंपरमोत्सुकाः ॥ गायंतश्चगृणंतश्चशौरेःकर्माणिजन्मच ॥ ३ ॥ ववृषुःपुष्पवर्षाणिविमानावलिभिर्नभः ॥ कुर्वंतःसंकुलंराजन्भक्त्यापरमयायुताः ॥ ४ ॥ भगवान्पितामहंवीक्ष्यविभूतीरात्मनोविभुः ॥ संयोज्यात्मनिचात्मानंपद्मनेत्रेन्यमीलयत् ॥ ५ ॥

पक्षिणः मैत्रेयादयोवा ॥ २ ॥ भगवतोनिर्याणंद्रष्टुकामाःसंतःपरमोत्सुकास्तत्रागमन् तेषामौत्सुक्यकृतंमहोत्सवमाहसार्द्धेन गायंतश्चेति ॥ ३ ॥ ४ ॥ विभूतीःइंद्रादींश्च पद्मनेत्रेन्यमीलयदित्यत्रायंभावः पूर्वंब्रह्मादिभिःसलोकान्लोकपालान्नःपाहिवैकुंठकिंकरानितिप्रार्थितत्वादिदानींचस्वंस्वंलोकंप्रतिनेतुमागतत्वाद्बहुषुचतेषुदाक्षिण्यात्तान्वंचयितुंसमाधिमिवकुर्वन्नेत्रेन्यमीलयदिति ॥ ५ ॥

योगिनामिवस्वच्छंदमृत्युत्वमंत्रारयति लोकाभिरामामिति अयमर्थः योगिनोहिस्वच्छंदमृत्यवःस्वांतनुमाग्नेय्यायोगधारणयादग्ध्वालो कांतरंप्रतिविशंति भगवांस्तुनतथाकिंतुअदग्ध्वैवस्वतनुसहितएवस्वकंधामवैकुंठाख्यमाविशत् तत्रहेतुः लोकाभिरामाम् लोकानाम भिरामःअभितोरमणंस्थितिर्यस्यांताम् जगदाश्रयत्वेनजगतोऽपिदाहप्रसंगादित्यर्थः किंच धारणायाध्यानस्यमंगलंशोभनांविषयामितर थातयोर्निर्विषयत्वंस्यात् दृश्यतेतदुपासकानांतथैवतद्रूपसाक्षात्कारःफलप्राप्तिश्चेतिभावः इच्छाशरीराभिप्रायेणवायथाश्रुतमेवास्तुतत्रापि तुलोकाभिरामामित्यादीनांविशेषणानामानर्थक्यप्रसंगात्तदप्यदग्ध्वातिरोधायनिर्गतइत्येवसांप्रतम् ॥ ६ ॥ तदास्वंस्वमेवलोकमागमिष्य तीतिसंभ्रमेणदेवादिकृतःसर्वतोदुंदुभिनादपुष्पवृष्ट्यादिमहोत्सवोभवदित्याह दिवीति भूमेःसकाशात्श्रीकृष्णमनुययुः ॥ ७ ॥ तदाश्री

**लोकाभिरामांस्वतनुंधारणाध्यानमंगलम् ॥ योगधारणयाऽग्नेय्यादग्ध्वाधामाविशत्स्वकम् ॥ ६ ॥ दिवि दुंदुभयोनेदुःपेतुःसुमनसश्चखात् ॥ सत्यंधर्मोधृतिर्भूमेःकीर्तिःश्रीश्चानुतंययुः ॥ ७ ॥ देवादयोब्रह्ममुख्यानविशंतंस्वधामनि ॥ अविज्ञातगतिंकृष्णंददृशुश्चातिविस्मिताः ॥ ८ ॥ सौदामन्यायथाकाशेयांत्याहित्वाऽभ्रमंडलं ॥ गतिर्नलक्ष्यतेमर्त्यैस्तथाकृष्णस्यदैवतैः ॥ ९ ॥ ब्रह्मरुद्रादयस्तेतुदृष्ट्वायोगगतिंहरेः ॥ विस्मितास्तांप्रशंसंतःस्वंस्वंलोकंययुस्तदा ॥ १० ॥ राजन्परस्यतनुभृज्जननाप्ययेहामायाविडंबनमवेहियथानटस्य ॥ सृष्ट्वात्मनेदमनुविश्यविहृत्यचांतेसंहृत्यचात्ममहिनोपरतःसआस्ते ॥ ११ ॥**

कृष्णेऽतर्हितेसतिकुतोगतइतिवितर्कयंतोऽपिब्रह्ममुख्यादेवादयःस्वधामानिविशंतंश्रीकृष्णंनददृशुः तत्रहेतुः अविज्ञातगतिमिति क्वचि त्कांचिद्ददृशुश्चततोऽतिविस्मिताबभूवुरित्यर्थः ॥ ८ ॥ अविज्ञातगतित्वंदृष्टांतेनस्पष्टयति सौदामन्यागतिर्यथामर्त्यैर्नलक्ष्यतेदेवैस्तुलक्ष्यतेत थाभूमंडलंहित्वागच्छतःश्रीकृष्णस्यगतिर्देवैरपिनलक्ष्यतेकिंतुतत्पार्षदैरेवेत्यर्थः ॥ ९ ॥ १० ॥ अभिप्रायापरिज्ञानात्प्रथमंपरिक्लिष्टंततश्च हृष्टंदृष्ट्वापुनस्तमेवार्थंप्रपंचयति राजन्निति त्रिभिः परस्यसर्वकारणस्यतनुभृत्सुयादवादिषुजननाप्ययेहाआविर्भावतिरोभावरूपाचेष्टाइयं माययाअनुकारणमात्रमवेहि नटोयथाऽविकृतएवजन्मादीन्विडंबयतितद्वत् आस्तांतावद्यादवादिषुजन्मादिशंका यद्विसर्गनिरोधादिष्व प्यसावविकृतएवास्तइत्याह सृष्ट्वेति आत्मनास्वयमेवेदंजगत्सृष्ट्वांऽतर्यामित्वेनानुविश्यआत्ममहिनास्वमहिम्नाउपरतआस्ते ॥ ११ ॥

मन्मायारचनामेतांविज्ञायेतिनिजमूर्तेरंतर्हितत्वाद्वृथाशोकंमाकुर्वित्यर्थः ॥ ४९ ॥ कुलस्यविनष्टत्वाद्दुर्मनाः ॥ ५० ॥ इत्येकादशेटीकायांत्रिंशोऽध्यायः ॥ ३० ॥ ॥ एकत्रिंशेस्वकंधामजगामभगवानितः ॥ तमेवानुययुःप्रीत्यावसुदेवादयस्ततः ॥ १ ॥ देवान्यदून्विधायादौभूयोदेवान्विधायच ॥ श्रीकृष्णःस्वेच्छयाधामस्वतश्चैवसमाविशत् ॥ २ ॥ मुनयःसनकादयःप्रजेश्वरामरीच्यादयः ॥ १ ॥ गरुडलोकनिवासिनः

त्वंतुमद्धर्ममास्थायज्ञाननिष्ठउपेक्षकः॥ मन्मायारचनामेतांविज्ञायोपशमंव्रज॥ ४९॥ इत्युक्तस्तंपरिक्रम्य नमस्कृत्यपुनःपुनः ॥ तत्पादौशीर्ष्ण्युपाधायदुर्मनाःप्रययौपुरीं ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेयदुकुलसंक्षयोनामत्रिंशोऽध्यायः ॥ ३० ॥ ॥ छ॥ श्रीशुकउवाच अथतत्रागमद्ब्रह्माभवान्याचसमंभवः ॥ महेंद्रप्रमुखादेवामुनयःसप्रजेश्वराः ॥ १ ॥ पितरःसिद्धगंधर्वाविद्याधरमहोरगाः ॥ चारणायक्षरक्षांसिकिन्नराप्सरसोद्विजाः ॥ २॥ द्रष्टुकामाभगवतोनिर्याणंपरमोत्सुकाः ॥ गायंतश्चगृणंतश्चशौरेःकर्माणिजन्मच॥ ३॥ ववृषुःपुष्पवर्षाणिविमानावलिभिर्नभः ॥कुर्वंतःसंकुलंराजन्भक्त्यापरमयायुताः॥४॥ भगवान्पितामहंवीक्ष्यविभूतीरात्मनोविभुः॥ संयोज्यात्मनिचात्मानंपद्मनेत्रेन्यमीलयत् ॥५॥

पक्षिणः मैत्रेयादयोवा ॥ २ ॥ भगवतोनिर्याणंद्रष्टुकामाःसंतःपरमोत्सुकास्तत्रागमन् तेषामौत्सुक्यकृतंमहोत्सवमाहसार्द्धेन गायंतश्चेति ॥ ३ ॥ ४ ॥ विभूतीःइंद्रादींश्च पद्मनेत्रेन्यमीलयदित्यत्रायंभावः पूर्वंब्रह्मादिभिःसलोकान्लोकपालान्नःपाहिवैकुंठकिंकरानितिप्रार्थितत्वादिदानींचस्वंस्वंलोकंप्रतिनेतुमागतत्वाद्बहुषुचतेषुदाक्षिण्यात्तान्वंचयितुंसमाधिमिवकुर्वन्नेत्रेन्यमीलयदिति ॥ ५ ॥

योगिनामिवस्वच्छंदमृत्युश्रमंत्रारयाति लोकाभिरामामिति अयमर्थः योगिनोहिस्वच्छंदमृत्यवःस्वांतनुमाग्नेय्यायोगधारणयादग्ध्वालो कांतरंप्रतिविशंति भगवांस्तुनतथाकिंतुअदग्ध्वैवस्वतनुसहितएवस्वकंधामवैकुंठाख्यमाविशत् तत्रहेतुः लोकाभिरामाम् लोकानाम भिरामःअभितोरमणंस्थितिर्यस्यांताम् जगदाश्रयत्वेनजगतोऽपिदाहप्रसंगादित्यर्थः किंच धारणायाध्यानस्यमंगलंशोभनांविषयामितर थातयोर्निर्विषयत्वंस्यात् दृश्यतेतदुपासकानांतथैवतद्रूपसाक्षात्कारःफलप्राप्तिश्चेतिभावः इच्छाशरीराभिप्रायेणवायथाश्रुतमेवास्तुतत्रापि तुलोकाभिरामामित्यादीनांविशेषणानामानर्थक्यप्रसंगात्तदप्यदग्ध्वातिरोधायनिर्गतइत्येवसांप्रतम् ॥ ६ ॥ तदास्वंस्वमेवलोकमागमिष्य तीतिसंभ्रमेणदेवादिकृतःसर्वतोदुंदुभिनादपुष्पवृष्ट्यादिमहोत्सवोभवदित्याह दिवीति भूमेःसकाशात्श्रीकृष्णमनुययुः ॥ ७ ॥ तदाश्री

**लोकाभिरामांस्वतनुंधारणाध्यानमंगलम् ॥ योगधारणयाऽग्नेय्यादग्ध्वाधामाविशत्स्वकम् ॥ ६ ॥ दिविदुंदुभयोनेदुःपेतुःसुमनसश्चखात् ॥ सत्यंधर्मोधृतिर्भूमेःकीर्तिःश्रीश्चानुतंययुः ॥ ७ ॥ देवादयोब्रह्ममुख्यानविशंतंस्वधामनि ॥ अविज्ञातगतिंकृष्णंददृशुश्चातिविस्मिताः ॥ ८ ॥ सौदामन्यायथाकाशेयांत्याहित्वाऽभ्रमंडलं ॥ गतिर्नलक्ष्यतेमर्त्यैस्तथाकृष्णस्यदैवतैः ॥ ९ ॥ ब्रह्मरुद्रादयस्तेतुदृष्ट्वायोगगतिंहरेः ॥ विस्मितास्तांप्रशशंसंतःस्वंस्वंलोकंययुस्तदा ॥ १० ॥ राजन्परस्यतनुभृज्जननाप्ययेहामायाविडंबनमवेहियथानटस्य ॥ सृष्ट्वात्मनेदमनुविश्यविहृत्यचांतेसंहृत्यचात्ममहिनोपरतःसआस्ते ॥ ११ ॥**

कृष्णेऽतर्हितेसतिकुतोगतइतिवितर्कयंतोऽपिब्रह्ममुख्यादेवादयःस्वधामानिविशंतंश्रीकृष्णंनददृशुः तत्रहेतुः अविज्ञातगतिमिति क्वचि त्कांचिद्ददृशुश्चततोऽतिविस्मिताबभूवुरित्यर्थः ॥ ८ ॥ अविज्ञातगतित्वंदृष्टांतेनस्पष्टयति सौदामन्यागतिर्यथामर्त्यैर्नलक्ष्यतेदेवैस्तुलक्ष्यतेत थाभूमंडलंहित्वागच्छतःश्रीकृष्णस्यगतिर्देवैरपिनलक्ष्यतेकिंतुतत्पार्षदैरेवेत्यर्थः ॥ ९ ॥ १० ॥ अभिप्रायापरिज्ञानात्प्रथमंपरिक्लिष्टंततश्च हृष्टंदृष्ट्वापुनस्तमेवार्थंप्रपंचयति राजन्निति त्रिभिः परस्यसर्वकारणस्यतनुभृत्सुयादवादिषुजननाप्ययेहाआविर्भावतिरोभावरूपाचेष्टाइयं माययाअनुकारणमात्रमवेहि नटोयथाऽविकृतएवजन्मादीन्विडंबयतितद्वत् आस्तांतावद्यादवादिषुजन्मादिशंका यद्विसर्गनिरोधादिष्व प्यसावविकृतएवास्तइत्याह सृष्ट्वेति आत्मनास्वयमेवेदंजगत्सृष्ट्वांऽतर्यामित्वेनानुविश्यआत्ममहिनास्वमहिम्नाउपरतआस्ते ॥ ११ ॥

नपुनरन्यथामंतव्यंयतोऽस्मिन्नेवावतारेतत्प्रभावोनिरतिशयोदृष्टइत्याह मर्त्येनेति यमेनस्वलोकंप्रतिनीतंगुरुसुतंमर्त्येनतेनैवशरीरेणयआन
यत्आनीतवान् शरणदःशरणागतरक्षकस्त्वांचब्रह्मास्त्रदग्धंयोरक्षितवान् यश्चांतकानामंतकमपिईशंश्रीरुद्रंबाणसंग्रामेजितवान् मृग
युंलुब्धकंसदेहंस्वःस्वर्गमनयत्निन्ये असौस्वावनेस्वरक्षणेअनीशःअसमर्थःकिम् ॥ १२ ॥ ननुयदिसमर्थस्तर्हिकिंचित्कालमत्रैवतेनैवव
पुषाकिंनातिष्ठत्तत्राह तथाऽपीति यद्यपिउक्तप्रकारेणअशेषस्यजगतश्चराचरस्यस्थित्यादिषुअनन्यहेतुर्निरपेक्षएवकारणंस्वयंयद्यस्मादशे

मर्त्येनयोगुरुसुतंयमलोकनीतंत्वांचानयच्छरणदःपरमास्त्रदग्धं ॥ जिग्येंऽतकांतकमपीशमसावनीशःकिं
स्वावनेस्वरनयन्मृगयुंसदेहं ॥१२॥ तथाप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक्॥नैच्छत्प्र
णेतुंवपुरत्रशेषितंमर्त्येननकिंस्वस्थगतिंप्रदर्शयन् ॥ १३ ॥ यएतांप्रातरुत्थायकृष्णस्यपदवींपरां॥प्रयतःकी
र्तयेद्भक्त्यातामेवाप्नोत्यनुत्तमां ॥१४॥ दारुकोद्वारकामेत्यवसुदेवोग्रसेनयोः ॥ पतित्वाचरणावस्त्रैर्न्यषिंच
त्कृष्णविच्युतः ॥ १५ ॥ कथयामासनिधनंवृष्णीनांकृत्स्नशोनृप ॥ तच्छ्रुत्वोद्विग्नहृदयाजनाःशोकविमूर्छि
ताः ॥१६॥ तत्रस्मत्वरिताजग्मुःकृष्णविश्लेषविह्वलाः ॥ व्यसवःशेरतेयत्रज्ञातयोघ्नंतआननं ॥१७॥ देव
कीरोहिणीचैववसुदेवस्तथासुतौ ॥कृष्णरामावपश्यंतःशोकार्ताविजहुःस्मृतिं ॥१८॥ प्राणांश्चविजहुस्तत्र
भगवद्विरहातुराः॥उपगुह्यपतींस्तातचितामारुरुहुःस्त्रियः॥१९॥रामपत्न्यश्चतद्देहमुपगुह्याग्निमाविशन् ॥
वसुदेवपत्न्यस्तद्गात्रंप्रद्युम्नादीन्हरेःस्नुषाः ॥ कृष्णपत्न्योऽविशन्नग्निंरुक्मिण्याद्यास्तदात्मिकाः ॥२०॥

षशक्तिधृक्तथाऽपियादवत्वात्स्वंनिजंवपुरत्रशेषितमवशेषितंप्रणेतुंकर्तुंनैच्छत्किंतुस्वमेवलोकमनयत् तत्रहेतुः मर्त्येनदेहेनाकिंनाकिंचि
त्कार्यमितिस्वस्थानामात्मनिष्ठानांदिव्यांगतिमेवप्रकृष्टांदर्शयन् अन्यथातेपिदिव्यांगतिमनादृत्ययोगबलेनदेहसिद्धिंविधायअत्रैवरंतुंयतेरं
स्तन्माभूदित्येतदर्थमितिभावः ॥ १३ ॥ यएतामुक्तप्रकारांपदवींगतिं ॥ १४ ॥ तदैवभगवतास्वलोकंगच्छतावसुदेवादीनामपितत्प्रात
येउपायश्चिंतितआसीत्तमाह दारुकइत्यादिना ॥ १५ ॥ १६ ॥ १७ ॥ कृष्णरामौसुतावपश्यंतः ॥ १८ ॥ १९ ॥ २० ॥

सदुक्तिभिः सत्योऽवितथाउक्तयोयेषुतैः नाहंप्रकाशः सर्वस्ययोगमायासमावृतः ॥ मूढोऽयंनाभिजानातिलोकोमामजमव्ययमित्यादिभिः ॥
॥ २१ ॥ नष्टगोत्राणांनष्टसंततीनां सांपरायिकंपिंडोदकादि ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ आदितआरभ्यश्रीकृष्णचरित
कीर्तनस्यफलमाह यएतदितिद्वाभ्यां ॥ २७ ॥ शंतमानिपरममंगलानि परमहंसगतौश्रीकृष्णे ॥ २८ ॥ एवमेकादशस्कंधभावार्थस्यप्र

अर्जुनःप्रेयसःसख्युःकृष्णस्यविरहातुरः ॥ आत्मानंसांत्वयामासकृष्णगीतैःसदुक्तिभिः ॥२१॥ बंधूनांनष्ट
गोत्राणामर्जुनःसांपरायिकम् ॥ हतानांकारयामासयथावदनुपूर्वशः ॥२२॥द्वारकांहरिणात्यक्तांसमुद्रोऽप्ला
वयत्क्षणात्॥वर्जयित्वामहाराजश्रीमद्भगवदालयम्॥२३॥नित्यंसन्निहितस्तत्रभगवान्मधुसूदनः॥स्मृत्या
ऽशेषाशुभहरंसर्वमंगलमंगलं ॥२४॥ स्त्रीबालवृद्धानादायहतशेषान्धनंजयः ॥इंद्रप्रस्थंसमावेश्यवज्रंत
त्राभ्यषेचयत् ॥ २५ ॥ श्रुत्वासुहृद्वधंराजन्नर्जुनात्तेपितामहाः ॥ त्वांतुवंशधरंकृत्वाजग्मुःसर्वेमहापथं ॥
॥ २६ ॥ यएतद्देवदेवस्यविष्णोःकर्माणिजन्मच॥कीर्तयेच्छ्रद्धयामर्त्यःसर्वपापैःप्रमुच्यते ॥२७॥ इत्थंहरे
र्भगवतोरुचिरावतारवीर्याणिबालचरितानिचशंतमानि ॥ अन्यत्रचेहचश्रुतानिगृणन्मनुष्योभक्तिंपरांप
रमहंसगतौलभेत ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेएकत्रिंशत्तमोऽध्यायः ॥३१॥ ॥

दीपिका ॥ स्वाज्ञानध्वांतभीतेनश्रीधरेणप्रकाशिता ॥ १ ॥ इतिश्रीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांवैयासिक्यामेकादशेश्री
धरस्वामिविरचितायांश्रीभावार्थदीपिकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥ समाप्तोयमेकादशःस्कंधः ॥ ॥ ॥ ॥

श्रीगुरुगणेशांबिकाभ्योनमः जयंतिश्रीपरानंदरूपाऽपांगलसद्दृशः ॥ यानित्यमनुवर्ततेसंपदोविगताद्दशः ॥ १ ॥ उक्तस्त्रयोदशाध
शेत्वाश्रयःसतः ॥ अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरःसतः ॥ २ ॥ उक्तोलयावधित्वेनप्राकृतात्यंतिकेलये ॥ अधिष्ठानतयाचोक्तोभ
रुषवर्णने ॥ ३ ॥ तत्रादौषड्भिरध्यायैःशुकःप्राहपरिक्षिते ॥ शेषैस्तत्राखिलान्याहसूतःपृष्टोऽथसात्रिभिः ॥४॥स्वाश्रयश्रवणेकार्योनविलंब
मनीषिणा ॥ इत्येतत्कालवैषम्यं चतुर्भिस्तावदुच्यते ॥५॥ तत्रतुप्रथमेभाविमागधान्वयभूमिपान् ॥ कलिप्रभावतःप्राहसंस्कारादिमलीमसान्
॥ ६ ॥ एवंभूतेसोमवंशेमुकुंदस्वैरक्रीडावार्णिताव्यासपुत्रैः ॥ वंशोभावीवर्ण्यतेकृष्णभक्तिमुक्त्वामुक्त्यैवर्त्मनास्तीतिवक्तुं ॥ ७ ॥ तदेवंवैवस्व

श्रीकृष्णायनमः राजोवाच स्वधामानुगतेकृष्णेयदुवंशविभूषणे ॥ कस्यवंशोऽभवत्पृथ्व्यामेतदा
चक्ष्वमेमुने ॥ १ ॥ श्रीशुकउवाच योंऽत्यःपुरंजयोनामभविष्योबार्हद्रथः ॥ तस्यामात्यस्तुशुनकोह
त्वास्वामिनमात्मजं ॥ प्रद्योतसंज्ञंराजानंकर्तायत्पालकःसुतः ॥२॥ विशाखयूपस्तत्पुत्रोभवितराजकस्त
तः ॥ नंदिवर्धनस्तत्पुत्रःपंचप्रद्योतनाइमे ॥ ३ ॥ अष्टत्रिंशोत्तरशतंभोक्ष्यंतिपृथिवींनृपाः ॥ शिशुना
गस्ततोभाव्यःकाकवर्णस्तुतत्सुतः ॥ क्षेमधर्मातस्यसुतःक्षेत्रज्ञःक्षेमधर्मजः ॥ ४ ॥ विधिसारःसुतस्त
स्याजातशत्रुर्भविष्यति ॥ दर्भकस्तत्सुतोभावीदर्भकस्याजयःस्मृतः ॥ ५ ॥ नंदिवर्धनआजेयोमहानं
दिःसुतस्ततः ॥ शिशुनागादशैवैतेषष्ट्युत्तरशतत्रयं ॥ ६ ॥ समाभोक्ष्यंतिपृथिवींकुरुश्रेष्ठकलौनृपाः ॥
महानंदिसुतोराजन्शूद्रीगर्भोद्भवोबली ॥ ७ ॥ ॥ ॥ ॥

तमनुवंशेसोमवंशप्रस्तावेनश्रीकृष्णावतारचरितानिसप्रपंचमनुवर्णितानि अथइदानींभाविसोमवंशःकलौविजातीयसंकरादिमलीमसोवै
राग्यद्वाराश्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते तत्रतुसोमवंशशाखासुचिरकालानुवर्तितयामागधवंशोऽनुक्रम्यते तत्रपूरोर्वंशेउपरिचरोवसु
स्तस्यबृहद्रथस्तस्यजरासंधस्तस्यसहदेवःपुत्रोऽभूदित्युक्तंनवमस्कंधे तत्रैवसहदेवान्मार्जारिस्ततःश्रुतश्रवाइत्यादयोरिपुंजयांताविंशतिर्भा
विनोराजानोनिरूपितास्तत्रराजापृच्छति स्वधामेति ॥ १ ॥ इदानींतदुपरितनंवंशंसंकरादिदोषैःप्रपंचयति योंऽत्यइति रिपुंजयएवपुरंजयः
स्वामिनंपुरंजयंहत्वास्वपुत्रंप्रद्योतसंज्ञंराजानंकरिष्यति यस्यपालकोनामसुतोभविष्यति ॥२॥ प्रद्योतनाःप्रद्योतसंज्ञाः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

नंदोनामकश्चिन्महापद्मसंख्यायाःसेनायाधनस्यवापतिर्भविष्यति अतएवमहापद्मइत्यपितस्यनाम ॥ ८ ॥ एकमेवछत्रंयस्यांतांपृथिवीं शासिष्यतिपालयिष्यति क्षत्रोत्सादनेदृष्टांतः भार्गवःपरशुरामइव ॥ ९ ॥समाःसंवत्सरान्॥१०॥ नवनंदान्नंदंचतत्पुत्रांश्चेत्येवंनवप्रप न्नान्शरणागतान्विश्वस्तान्विख्यातान्वाद्विजःकौटिल्यवात्स्यायनादिपर्यायश्चाणक्यउद्धरिष्यतिउन्मूलयिष्यति मौर्याःमौर्यसंज्ञाः ॥११॥ कथंभोक्ष्यंतितदाह सएवेति चंद्रगुप्तंमौर्यप्रथमं ॥ १२ ॥ १३ ॥ तेषांप्रथमोदशरथःपराशरादिभिरुक्तोऽत्राप्यनुसंधेयः तेनसहमौर्यादश

महापद्मपतिःकश्चिन्नंदःक्षत्रविनाशकृत् ॥ ततोनृपाभविष्यंतिशूद्रप्रायास्त्वधार्मिकाः ॥ ८ ॥ सएकछत्रां पृथिवीमनुल्लंघितशासनः ॥ शासिष्यतिमहापद्मोद्वितीयइवभार्गवः ॥ ९ ॥ तस्यचाष्टौभविष्यंतिसुमाल्य प्रमुखाःसुताः ॥ यइमांभोक्ष्यंतिमहींराजानःस्मशतंसमाः ॥ १० ॥ नवनंदान्द्विजःकश्चित्प्रपन्नानुद्धरिष्य ति ॥ तेषामभावेजगतींमौर्याभोक्ष्यंतिवैकलौ ॥ ११॥ सएवचंद्रगुप्तंवैद्विजोराज्येऽभिषेक्ष्यति ॥ तत्पुत्रोवा रिसारस्तुततश्चाशोकवर्धनः ॥१२॥ सुयशाभवितातस्यसंगतःसुयशःसुतः ॥ शालिशूकस्ततस्तस्यसोमश र्माभविष्यति ॥ १३ ॥ शतधन्वाततस्तस्यभवितातद्बृहद्रथः ॥ मौर्याह्येतेदशनृपाःसप्तत्रिंशच्छतोत्तरं ॥ स माभोक्ष्यंतिपृथिवींकलौकुरुकुलोद्वह ॥ १४ ॥ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठोऽथभविष्यति ॥ वसुमित्रो भद्रकश्चपुलिंदोभवितासुतः॥१५॥ ततोघोषःसुतस्तस्माद्वज्रमित्रोभविष्यति ॥ ततोभागवतस्तस्माद्देवभू तिरितिश्रुतः॥ १६ ॥शुंगादशैतेभोक्ष्यंतिभूमिंवर्षशताधिकं ॥ ततःकाण्वानियंभूमिर्यास्यत्यल्पगुणान्नृप ॥ ॥ १७ ॥ शुंगंहत्वादेवभूतिंकण्वोऽमात्यस्तुकामिनं ॥ स्वयंकरिष्यतेराज्यंवसुदेवोमहामतिः ॥ १८ ॥

सप्तत्रिंशच्छतोत्तरंसप्तत्रिंशदुत्तरंशतंसमाः ॥ १४ ॥ १५ ॥ १६ ॥ बृहद्रथस्यसेनापतिःपुष्पमित्रोनामस्वामिनंहत्वाराज्यंकरिष्यति सच शुंगानांप्रथमः ततोऽग्निमित्रादयोनवेत्येवंशुंगादशवर्षशताधिकंद्वादशाधिकंवर्षशतं ॥ १७ ॥ कथंकाण्वान्यास्यतितदाह शुंगमिति पर स्त्रीकामिनंदेवभूतिनामानंशुंगंहत्वातदमात्योवसुदेवनामाकाण्वोराज्यंकरिष्यति ॥ १८ ॥ ॥ ॥ ॥

काण्वानांचतुर्थः सुशर्मा इमेवसुदेवादयः काण्वायनावर्षाणांत्रीणिशतानिपंचचत्वारिंशद्वर्षाणिचभूमिंभोक्ष्यंति ॥ १९ ॥ काण्वानामंतिमंसुशर्माणंहत्वाबलीनामातद्भृत्योगांभोक्ष्यति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ यत्रयेषुबहुसंज्ञेषुअष्टसुनवमःशिवस्वातिनामाभविता ॥ २४ ॥ २५ ॥ ॥ २६ ॥ अवभृत्याः अवभृतिर्नगरीतद्राजानः ॥ २७ ॥ २८ ॥ एतेआभीरादयोमौनव्यतिरिक्ताःपंचषष्टिनृपाएकोनशताधिकंवर्षसहस्रंपृथिवीं

तस्यपुत्रस्तुभूमित्रस्तस्यनारायणःसुतः ॥ काण्वायनाइमेभूमिंचत्वारिंशच्चपंचच ॥ शतानित्रीणिभोक्ष्यंति वर्षाणांचकलौयुगे ॥ १९ ॥ हत्वाकाण्वंसुशर्माणंतद्भृत्योवृषलोबली ॥ गांभोक्ष्यत्यंध्रजातीयःकंचित्कालमसत्तमः ॥ २० ॥ कृष्णनामाऽथतद्भ्राताभवितापृथिवीपतिः ॥ श्रीशांतकर्णस्तत्पुत्रःपौर्णमासस्तुतत्सुतः ॥ २१ ॥ लंबोदरस्तुतत्पुत्रस्तस्माद्विविकलोनृपः ॥ मेघस्वातिश्चविकलादटमानस्तुतस्यच ॥ २२ ॥ अनिष्टकर्माहालेयस्तलकस्तस्यचात्मजः ॥ पुरीषभीरुस्तत्पुत्रस्ततोराजासुनंदनः ॥ २३ ॥ चकोरोनवमोयत्रशिवस्वातिररिंदम ॥ तस्यापिगोमतीपुत्रःपुरीमान्भवितातताः ॥ २४ ॥ मेदशिराःशिवस्कंदोयज्ञश्रीस्तत्सुतस्ततः ॥ विजयस्तत्सुतोभाव्यश्चंद्रविज्ञःसलोमधिः ॥ २५ ॥ एतेत्रिंशन्नृपतयश्चत्वार्यब्दशतानिच ॥ षट्पंचाशच्चपृथिवींभोक्ष्यंतिकुरुनंदन ॥ २६ ॥ सप्ताभीराआवभृत्यादशगार्दभिनोनृपाः ॥ कंकाःषोडशभूपालाभविष्यंतिचलोलुपाः ॥ २७ ॥ ततोष्टौयवनाभाव्याश्चतुर्दशचपुष्कसाः ॥ भूयोदशगुरुंडाश्चमौनाएकादशैवतु ॥ २८ ॥ एतेभोक्ष्यंतिपृथिवींदशवर्षशतानिच ॥ नवाधिकांचनवतिंमौनाएकादशक्षितिं ॥ २९ ॥ भोक्ष्यंत्यब्दशतान्यंगत्रीणितैःसंस्थितेततः ॥ किलिकिलायांन्नृपतयोभूतनंदोऽथवंगिरिः ॥ ३० ॥ शिशुनंदिश्चतद्भ्रातायशोनंदिःप्रवीरकः ॥ इत्येतेवैवर्षशतंभविष्यंत्यधिकानिषट् ॥ ३१ ॥ तेषांत्रयोदशसुताभवितारश्चबाल्हिकाः ॥ पुष्पमित्रोऽथराजन्योदुर्मित्रोऽस्यतथैवच ॥ ३२ ॥

भोक्ष्यंति ततःपूर्वोक्ताएवैकादशमौनाः ॥ २९ ॥ त्रीण्यब्दशतानिक्षितिंभोक्ष्यंति तैःसंस्थिते तेषुमौनेषुमृतेषुकिलिकिलायांपुर्यांनृपतयोभाविष्यंतीत्युत्तरेणान्वयः ॥ ३० ॥ अधिकानिचषड्वर्षाणि ॥ ३१ ॥ तेषांभूतनंदादीनांयथायथंबाल्हिकनामानस्त्रयोदशसुताभविष्यंति अथपुष्पमित्रोनामान्योराजन्यः अस्यचदुर्मित्रोनामपुत्रः ॥ ३२ ॥

तथाआंध्राःकौशलावैदूरपतयोनिषधाश्चएतेचतत्तद्देशनामभिःप्रख्यातास्तुल्यकालाःखंडमंडलेषुभूपास्ततएतेभ्योबाल्हिकेभ्यएवभाव्याभ
विष्यंति ॥ ३३ ॥ ततश्चमागधानांतुराजाविश्वस्फूर्जिर्नामभविता सचपूर्वोक्तात्पुरंजयात्परः पुरंजयादतिप्रसिद्धःसन्वर्णान्ब्राह्मणा
दीन्पुलिंदयदुमद्रकसंज्ञान्म्लेच्छप्रायान्करिष्यति अपरानितिपाठेअन्यान्पुलिंदादिसंज्ञान्वर्णान्करिष्यतीत्यर्थः ॥ ३४ ॥ सचएवंकृ
त्वाअब्रह्मभूयिष्ठाअत्रैवर्ण्यप्रचुराःसतीःप्रजाःस्थापयिष्यतिपालयिष्यति सचपद्मवत्यांपुरिअनुगंगांगंगाद्वारमारभ्यप्रयागपर्यंतंगुप्ताःएत

एककालाइमेभूपाःसप्तांध्राःसप्तकौशलाः ॥ वैदूरपतयोभाव्यानैषधास्ततएवहि ॥३३॥ मागधानांतुभवि
ताविश्वस्फूर्जिःपुरंजयः॥ करिष्यत्यपरोवर्णान्पुलिंदयदुमद्रकान् ॥३४॥प्रजाश्चाब्रह्मभूयिष्ठाःस्थापयिष्य
तिदुर्मतिः ॥ वीर्यवान्क्षत्रमुत्साद्यपद्मवत्यांसवैपुरि ॥ अनुगंगामाप्रयागंगुप्तांभोक्ष्यंतिमेदिनीं ॥३५॥ सौ
राष्ट्रावंत्याभीराश्चशूद्राअर्बुदमालवाः ॥ व्रात्याद्विजाभविष्यंतिशूद्रप्रायाजनाधिपाः ॥३६॥ सिंधोस्तटंचं
द्रभागांकौंतींकाश्मीरमंडलं ॥ भोक्ष्यंतिशूद्रव्रात्याद्याम्लेच्छाश्चाब्रह्मवर्चसः॥३७॥ तुल्यकालाइमेराजन्
म्लेच्छप्रायाश्चभूभृतः ॥ एतेऽधर्मानृतपराःफल्गुदास्तीव्रमन्यवः ॥३८॥स्त्रीबालगोद्विजघ्नाश्चपरदारधना
दृताः ॥ उदितास्तमितप्रायाअल्पसत्वाल्पकायुषः ॥३९॥ असंस्कृताःक्रियाहीनारजसातमसावृताः ॥ प्र
जास्तेभक्षयिष्यंतिम्लेच्छाराजन्यरूपिणः ॥४०॥ तन्नाथास्तेजनपदास्तच्छीलाचारवादिनः ॥ अन्योन्य
तोराजभिश्चक्षयंयास्यंतिपीडिताः ॥ ४१ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेप्रथमोऽध्यायः ॥ १ ॥

त्संज्ञकाराजानोमेदिनींभोक्ष्यंति ॥ ३५ ॥ तदनंतरंचसौराष्ट्रादिदेशवर्तिनोद्विजाव्रात्याउपनयनरहिताभविष्यंति ॥ ३६ ॥ अब्रह्मवर्च
सः वेदाचारशून्याः ॥ ३७ ॥ इमेचम्लेच्छप्रायाभूभृतस्तुल्यकालाभविष्यंति किंच एतेसर्वेअधर्मानृतपराः अधर्मेअनृतेचपरिनिष्ठिताः
फल्गुदाअल्पदातारः ॥ ३८ ॥ उदितास्तमितप्रायाःहर्षशोकादिबहुलाः ॥ ३९ ॥ असंस्कृतागर्भाधानादिसंस्काररहिताः प्रजाःभक्ष
यिष्यंतिधनाद्यपहारादिनापीडयिष्यंति ॥ ४० ॥ किंचतन्नाथाःतेनाथायेषांतेजनपदादेशवर्तिनोमनुष्याःतच्छीलाचारवादिनःतेषामिव
शीलमाचारोवादश्चतद्वंतः ॥ ४१ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेटीकायांप्रथमोऽध्यायः ॥ १ ॥

द्वितीयेतुकलेर्दोषवृद्धौकल्क्यवतारतः ॥ अधर्मिष्ठेजनेनष्टेपुनःकृतयुगागमः ॥ १ ॥ कलिधर्मान्प्रपंचयाति ततश्चेत्यादिना ॥ १ ॥ धर्म न्याययोर्व्यवस्थायांबलमेव ॥ २ ॥ दांपत्येभार्यापतिभावेअभिरुचिरेवहेतुर्नकुलगोत्रादिः व्यावहारिकेक्रयविक्रयादौ स्त्रीत्वेपुंस्त्वेचत योःश्रैष्ठ्येरतिकौशलमेवहेतुर्नकुलमाचारोवा ॥ ३ ॥ आश्रमाणांख्यातौज्ञानेलिंगमेवदंडाजिनादिकंहेतुर्नत्वाचारविशेषः अन्योन्या पत्तिकारणंचआश्रमादाश्रमांतरप्राप्तौचकारणं यद्वाबहूदकहंसादिनामन्योऽन्यापत्तौनमस्कारादिव्यवहारेकारणं अवृत्त्यांमुद्रार्पणादिदाना

श्रीशुकउवाच ततश्चानुदिनंधर्मःसत्यंशौचंक्षमादया ॥ कालेनबलिनाराजन्नंक्ष्यंत्यायुर्बलंस्मृतिः ॥ १ ॥ वित्तमेवकलौनृणांजन्माचारगुणोदयः ॥ धर्मन्यायव्यवस्थायांकारणंबलमेवहि ॥२॥ दांपत्येऽभिरुचिर्हेतु र्मायैवव्यावहारिके ॥ स्त्रीत्वेपुंस्त्वेचहिरतिर्विप्रत्वेसूत्रमेवहि ॥३॥ लिंगमेवाश्रमख्यातावन्योऽन्यापत्तिकार णं ॥ अवृत्त्यांन्यायदौर्बल्यंपांडित्येचापलंवचः ॥४ ॥ अनाढ्यतैवासाधुत्वेसाधुत्वेदंभएवतु ॥ स्वीकारएवचो द्वाहेस्नानमेवप्रसाधनं॥५॥दूरेवार्ययनंतीर्थंलावण्येकेशधारणं ॥उदरंभरतास्वार्थःसत्यत्वेधार्ष्ट्यमेवहि॥६॥ दाक्ष्यंकुटुंबभरणंयशोर्थेधर्मसेवनं ॥ एवंप्रजाभिर्दुष्टाभिराकीर्णेक्षितिमंडले ॥७॥ ब्रह्मविट्क्षत्रशूद्राणांयो बलीभवितानृपः ॥ प्रजाहिलुब्धैराजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥८॥ आच्छिन्नदारद्रविणायास्यंतिगिरिकान नं ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥ ९ ॥ अनावृष्ट्याविनंक्ष्यंतिदुर्भिक्षकरपीडिताः ॥ शीतवा तातपप्रावृड्हिमैरन्योन्यतःप्रजाः ॥ १० ॥ क्षुत्तृड्भ्यांव्याधिभिश्चैवसंतापेनचचिंतया ॥ त्रिंशद्विंशतिव र्षाणिपरमायुःकलौनृणां ॥ ११ ॥ क्षीयमाणेषुदेहेषुदेहिनांकलिदोषतः ॥ वर्णाश्रमवतांधर्मेनष्टेवेदपथेनृ णां ॥ १२ ॥ पाखंडप्रचुरेधर्मेदस्युप्रायेषुराजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषुवैनृषु ॥ १३ ॥

सामर्थ्येतन्न्यायदौर्बल्यंपराजयः चापलंवचोबहुभाषणं ॥ ४ ॥ असाधुत्वेचौर्याद्यभियोगे प्रसाधनमलंकारः ॥ ५ ॥ दूरेवर्तमानंवार्य यनंजलाशयस्तीर्थंनतुगुर्वादि स्वार्थःपुरुषार्थः ॥ ६ ॥ ७ ॥ ८ ॥ आच्छिन्नाअपहृतादाराद्रविणानिचयासांताः अष्टिर्बीजं ॥ ९ ॥ ॥ १० ॥ ११ ॥ क्षीयमाणेष्वित्यादीनामित्थंकलौगतप्रायइतिपंचमेनान्वयः क्षीयमाणेषुअल्पप्रायेषु ॥ १२ ॥ दस्युप्रायेषुचौरतुल्येषु चौर्यानृतवृथाहिंसाद्यानानावृत्तयोयेषांतेषु ॥ १३ ॥ ॥ ॥ ॥ ॥

छागप्रायासुप्रमाणतःक्षीरतश्चअजातुल्यासु ॥ १४ ॥ स्थास्नुषुवृक्षेषु विद्युत्प्रायेषुतडिद्वहुलेषु शून्यप्रायेषुधर्मादिरहितेषु सद्मसुगृहेषु ॥
॥ १५ ॥ जनेषुखरधर्मिणिदुःसहचेष्टितेकलौगतप्रायेसमाप्तप्राये ॥ १६ ॥ एतत्प्रपंचयतिचतुर्भिः चराचरगुरोःईश्वरस्यैवधर्मत्राणेहेतु
र्गुरुत्वेश्वरत्वयोरुपादानं अखिलस्यविश्वस्यात्मनःकारणस्येति एवंभूतस्यविष्णोर्जन्मसाधूनांधर्मत्राणाय धर्मत्राणप्रयोजनमाह कर्मापि
नुत्तयेमोक्षाय ॥ १७ ॥ शंभलग्रामेमुख्यस्यप्रधानस्यनाम्नाविष्णुयशसोब्राह्मणस्यभवनेगृहे ॥ १८ ॥ धर्मत्राणप्रकारमाह अश्वमिति अ
साधवोदस्यंतेयेनतमश्वमारुह्यअसिनादस्यून्कोटिशोनिहनिष्यतीत्युत्तरेणान्वयः असाधुदमनइतिपाठेकल्किविशेषणं ॥ १९ ॥ तत्प्रपं

शूद्रप्रायेषुवर्णेषुछागप्रायासुधेनुषु ॥ गृहप्रायेष्वाश्रमेषुयौनप्रायेषुबंधुषु ॥ १४ ॥ अणुप्रायास्वोषधीषुश
मीप्रायेषुस्थास्नुषु ॥ विद्युत्प्रायेषुमेघेषुशून्यप्रायेषुसद्मसु ॥ १५ ॥ इत्थंकलौगतप्रायेजनेषुखरधर्मिणि ॥ धर्म
त्राणायसत्त्वेनभगवानवतरिष्यति ॥ १६ ॥ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणायसाधूनां
जन्मकर्मापनुत्तये ॥ १७ ॥ शंभलग्राममुख्यस्यब्राह्मणस्यमहात्मनः ॥ भवनेविष्णुयशसःकल्किःप्रादुर्भविष्य
ति ॥ १८ ॥ अश्वमाशुगमारुह्यदेवदत्तंजगत्पतिः ॥ असिनासाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥ विचरन्ना
शुनाक्षोण्यांहयेनाप्रतिमद्युतिः ॥ नृपलिंगच्छदोदस्यून्कोटिशोनिहनिष्यति ॥ २० ॥ अथतेषांभविष्यंतिम
नांसिविशदानिवै ॥ वासुदेवांगरागातिपुण्यगंधानिलस्पृशां ॥ पौरजानपदानांवैहतेष्वखिलदस्युषु ॥ २१ ॥
तेषांप्रजाविसर्गश्चस्थविष्ठःसंभविष्यति ॥ वासुदेवेभगवतिसत्वमूर्तौह्रदिस्थिते ॥ २२ यदावतीर्णोभग
वान्कल्किर्धर्मपतिर्हरिः ॥ कृतंभविष्यतितदाप्रजासूतिश्चसात्विकी ॥ २३ ॥

चः आशुनाशीघ्रगामिनातेनहयेनअश्वेनक्षोण्यांपृथिव्यांविचरन् आणिमाद्यष्टैश्वर्याणिगुणाश्चसत्यसंकल्पादयस्तैरन्वितः नृपलिंगच्छदः
राजवेषच्छन्नान् ॥ २० ॥ ततश्चपुनःकृतयुगप्रवृत्तिंवक्तुमाह अथेतिसार्द्धाभ्यां तेषांपौरजानपदानांमनांसिविशदानिभविष्यंति तत्रहेतुः
वासुदेवस्यांगरागेणचंदनादिनातिपुण्यगंधोऽनिलस्तंस्पृशंतीतितथातेषां ॥ २१ ॥ स्थविष्ठःस्थूलः ॥ २२ ॥ कृतयुगप्रवृत्तिमाह यदाव
तीर्णइति प्रजानांसूतिःप्रसूतिः ॥ २३ ॥

तदवतारकालोपलक्षणमाह यदाचंद्रश्चेति तिष्यःपुष्यः अयमर्थः चंद्रसूर्यबृहस्पतीनांयदापुष्यनक्षत्रेयोगस्तदातत्कृतयुगंभाविष्यति यद्य पिचप्रतिद्वादशाब्दंकर्कराशौबृहस्पतौवर्तमानेद्वित्रासुअमावास्यासुतेषांत्रयाणामपिपुष्ययोगःसंभवतितथाऽपितेषांसहप्रवेशोऽत्रविवक्षितः समेष्यंतीतिवचनात् अतोनातिप्रसंगः ॥२४॥ एवंनवमस्कंधमारभ्यानुक्रांतंवैवस्वतमनोर्वंशद्वयंनिगमयति येऽतीताइति उद्देशतःसंक्षेपतः ॥२५॥कलियुगावांतरविशेषंवक्तुमाह आरभ्येत्यादिना वर्षसहस्रंपंचदशोत्तरंशतंचेतिकयापिविवक्षयाऽवांतरसंख्येयं परीक्षिन्नंदयोरंतरं द्वाभ्यांन्यूनंवर्षाणांसार्धसहस्रंभवति परीक्षित्समकालंमागधंमार्जारिमारभ्यरिपुंजयांताविंशतिराजानःसहस्रसंवत्सरंभोक्ष्यंतीत्युक्तंनवमस्कं धे येबार्हद्रथभूपालाभाव्याःसाहस्रवत्सरमिति ततःपरंपंचप्रद्योतनाअष्टत्रिंशोत्तरंशतं शिशुनागाश्चषष्ट्युत्तरशतत्रयंभोक्ष्यंतिपृथिवीमित्य त्रैवोक्तत्वात्॥२६॥कलेःप्रवृत्तिंवृद्धिंचनिरूपयितुंकालज्ञानोपलक्षणमाह सप्तर्षीणांत्विति अयमर्थः प्रागग्रशकटाकारंतारासप्तकंसप्तर्षि

**यदाचंद्रश्चसूर्यश्चतथातिष्यबृहस्पती ॥ एकराशौसमेष्यंतितदाभवतितत्कृतं ॥ २४॥ येऽतीतावर्तमानाये भविष्यंतिचपार्थिवाः ॥ तेतउद्देशतःप्रोक्तावंशीयाःसोमसूर्ययोः ॥ २५ ॥ आरभ्यभवतोजन्मयावन्नंदाभि षेचनं ॥एतद्वर्षसहस्रंतुशतंपंचदशोत्तरं ॥ २६ ॥ सप्तर्षीणांतुयौपूर्वौदृश्येतेउदितेदिवि॥ तयोस्तुमध्येनक्षत्रं दृश्यतेयत्समंनिशि ॥ २७ ॥ तेनैवऋषयोयुक्तास्तिष्ठंत्यब्दशतानिच ॥ तेत्वदीयेद्विजाःकालेअधुनाचाश्रि तामघाः॥ २८॥ विष्णोर्भगवतोभानुःकृष्णाख्योऽसौदिवंगतः ॥ तदाऽविशत्कलिर्लोकंपापेयद्रमतेजनः ॥ ॥ २९ ॥ यावत्सपादपद्माभ्यांस्पृशन्नास्तेरमापतिः ॥ तावत्कलिर्वैपृथिवींपराक्रांतुंनचाशकत् ॥ ३० ॥**

मंडलं तत्रकिंचिदुन्नतेषाऽग्रस्थानीयोमरीचिः ततः पश्चादानम्रयुगकंधराकारोवसिष्ठःसभार्यः ततःपश्चादीषदुन्नतेषामूलस्थानीयोंऽगिराः ततःपश्चाच्चतुरस्रताराचतुष्केईशानेऽत्रिः ततोदक्षिणतःपुलस्त्यः पुलस्त्यात्पश्चिमतःपुलहः ततउत्तरतःक्रतुः एवंस्थितेतेषांमध्येयौपूर्वौउ दयसमयेप्रथममुदितौपुलहक्रतुसंज्ञौतयोस्तुमध्येतयोस्तुपूर्वयोस्तुमध्येयत्समंदक्षिणतोवामदेशावस्थितमश्विन्यादिषुयदन्यतमंनक्षत्रंदृश्यते ॥ २७ ॥ तेनतथैवयुक्तानृणामब्दशतंतिष्ठंतितेचाद्विजास्त्वदीयेकालेऽधुनामघाःआश्रितावर्तंते ॥२८॥ यदाविष्णोर्भानुःभातीतिभानुःशुद्ध सत्वात्मकोदेहोदिवंवैकुंठंगतस्तदाकलियुगमविशत् यद्यस्मिन्युगेजनःपापेरमतइतिकलियुगस्यलक्षणं ॥ २९ ॥ ननुश्रीकृष्णेपृथिव्यांव र्तमानेऽपिसंध्यारूपेणकलिःप्रविष्टएवासीत् सत्यं तथापितावत्तस्यपराक्रमोनाभवदित्याह यावदिति पराक्रांतुमभिभवितुं ॥ ३० ॥

॥ ४ ॥

अतोयथोक्तएवकलिप्रवेशकालइत्याह यदादेवर्षयइति द्वादशाब्दशतात्मकइति दिव्येनमानेनसंध्यांशाभ्यांसहयोद्वादशाब्दशतात्मकः सकलिःतदासंध्यामतिक्रम्यप्रविष्टइत्यर्थः ॥ ३१ ॥ कलेःप्रवेशकालमुक्त्वातस्यवृद्धिकालमाह यदेति तदाप्रद्योतनात्प्रभृतिवृद्धिंगच्छन्नंदात्प्रभृत्यतिवृद्धिंगमिष्यतीत्यर्थः ॥ ३२ ॥ ननुयदाकलेर्लिंगमुपलब्धंतदैवप्रविष्टइतियुक्तं ततःपूर्वमेवप्रवेशस्ततःपरंवृद्धिरित्यत्रकिंप्रमाणंतत्राह यस्मिन्निति प्रतिपन्नंप्रविष्टमितिज्ञातं पुराविदःपूर्वज्ञातारः ॥ ३३ ॥ कलेरनंतरंकृतयुगप्रवेशमाह दिव्याब्दानामिति चतुर्थेकलौप्रवेशोनाब्दपरिमितेनांशेनापिसहातीतेसतीत्यर्थः कृतयुगप्रवेशचिन्हमाह यदानृणांमनआत्मप्रकाशकंभविष्यतितदेति ॥ ३४ ॥ राजवंशोक्तां

यदादेवर्षयःसप्तमघासुविचरंतिहि ॥ तदाप्रवृत्तस्तुकलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥ यदामघाभ्यो यास्यंतिपूर्वाषाढांमहर्षयः ॥ तदानंदात्प्रभृत्येषकलिर्वृद्धिंगमिष्यति ॥ ३२ ॥ यस्मिन्कृष्णोदिवंयातस्तस्मिन्नेवतदाऽहनि ॥ प्रतिपन्नंकलियुगमितिप्राहुःपुराविदः ॥ ३३ ॥ दिव्याब्दानांसहस्रांतेचतुर्थेतुपुनः कृतं ॥ भविष्यतियदानृणांमनआत्मप्रकाशकं ॥ ३४ ॥ इत्येषमानवोवंशोयथासंख्यायतेभुवि ॥ तथा विट्शूद्रविप्राणांतास्ताज्ञेयायुगेयुगे ॥ ३५ ॥ एतेषांनामलिंगानांपुरुषाणांमहात्मनां ॥ कथामात्रावशिष्टानांकीर्तिरेवस्थिताभुवि ॥ ३६ ॥ देवापिःशंतनोर्भ्रातामरुश्चेक्ष्वाकुवंशजः ॥ कलापग्रामआसाते महायोगबलान्वितौ ॥ ३७ ॥ ताविहैत्यकलेरंतेवासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतंधर्मंपूर्ववत्प्रथयिष्यतः ॥ ३८ ॥ कृतंत्रेताद्वापरंचकलिश्चेतिचतुर्युगं ॥ अनेनक्रमयोगेनभुविप्राणिषुवर्तते ॥ ३९ ॥ राजन्नेतेमयाप्रोक्तानरदेवास्तथाऽपरे ॥ भूमौममत्वंकृत्वांऽतेहित्वेमांनिधनंगताः ॥ ४० ॥

स्थितिंब्राह्मणादिवंशेष्वप्यतिदिशति इत्येषइति यथायाभिरुच्चनीचावस्थाभिः तास्ताअवस्थाः वंशाइतिवापाठः ॥ ३५ ॥ एतत्कीर्तनस्य वैराग्योपयोगितामाह एतेषामिति नामैवलिंगंज्ञापकंयेषांतेषांकथामात्रेणैवावशिष्टानांकीर्तिरेवस्थितानतुराज्यंपुत्रादयोवा ॥ ३६ ॥ कलावुत्सन्नानांराजवंशादीनांपुनःप्रवृत्तिप्रकारमाह देवापिःसोमवंशजः मरुस्तुसूर्यवंशजः कलापग्रामोनामयोगिनामावासःप्रसिद्धः ॥ ३७ ॥ ॥ ३८ ॥ इममेवप्रकारंप्रतिचतुर्युगंदर्शयति कृतमिति ॥ ३९ ॥ एतेषांनामलिंगानामित्यादियदुक्तंतत्प्रपंचयति राजन्नितिपंचभिः ॥ ४० ॥

ममत्वंकृत्वेत्यनेनसूचितांभूतद्रोहप्रवृत्तिंनिंदति कृमीति राजनाम्नःराजेतिनामयस्यतस्यापिदेहस्यांतेकृमयोविष्ठाभस्मेतिवा संज्ञाभविष्यति
तत्कृतेतदर्थंयोभूतध्रुक्भूतेभ्योद्रुह्यतिसकिंस्वार्थंवेद कुतइत्यपेक्षायांहेतुत्वेनभूतद्रोहंविशिनष्टि यतोभूतद्रोहान्निरयोभवति ॥ ४१ ॥ मम
त्वप्रकारंप्रपंचयति कथमिति सेयमखंडाभूर्मेपूर्वजैर्धृतासतीइदानींमत्पूर्वाचसतीमत्पुत्रादेःकथंस्यादित्येवं ॥ ४२ ॥ उभौमहींकायंच
अदर्शनंमृत्युं ॥ ४३ ॥ उपसंहरति येयेइति तेसर्वेचकथासुक्रियमाणासु कथामात्राःकालेनकृताः ॥ ४४ ॥ इ० भा० द्वा० टी० द्वितीयोध्या
यः ॥ २ ॥ ॥ तृतीयेभूमिगीतैश्वराज्यदोषादिवर्ण्यते ॥ कलौचदोषभूयिष्ठेदोषहंत्रीहरेर्नतिः ॥ १ ॥ देहेऽहंतांभूमौचममतांकुर्वंतिअतोऽ

कृमिविट्भस्मसंज्ञांऽतेराजनाम्नोपियस्यच ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः ॥ ४१ ॥ कथंसेयम
खंडाभूःपूर्वैर्मेपुरुषैर्धृता ॥ मत्पुत्रस्यचपौत्रस्यमत्पूर्वावंशजस्यच ॥ ४२ ॥ तेजोऽबन्नमयंकायंगृहीत्वाऽऽ
त्मतयाऽबुधाः ॥ महींममतयाचोभौहित्वांऽतेदर्शनंगताः ॥ ४३ ॥ येयेभूपतयोराजन्भुंजंतिवसुमोजसा
॥ कालेनतेकृताःसर्वेकथामात्राःकथासुच ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेद्वितीयोध्यायः
॥ २ ॥ ॥ श्रीशुकउवाच दृष्ट्वात्मनिजयेव्यग्रान्नृपान्हसतिभूरियं ॥ अहोमांविजिगीषंतिमृत्योःक्रीड
नकान्नृपाः ॥ १ ॥ कामएषनरेंद्राणांमोघःस्याद्विदुषामपि ॥ येनफेनोपमेपिंडेयेऽतिविश्रंभितान्नृपाः ॥ २ ॥
पूर्वंनिर्जित्यषड्वर्गंजेष्यामोराजमंत्रिणः ॥ ततःसचिवपौराप्तकरींद्रानस्यकंटकान् ॥ ३ ॥ एवंक्रमेणजे
ष्यामःपृथ्वींसागरमेखलां ॥ इत्याशाबद्धहृदयानपश्यंत्यंतिकेंऽतकं ॥ ४ ॥ समुद्रावरणांजित्वामांविशंत्य
ब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजयेफलं ॥ ५ ॥ ॥ ॥

ऽबुधाइत्युक्तंतदेवभूमिगीतैःप्रपंचयति दृष्ट्वेत्यादिना आत्मनिपृथिव्यांजयेव्यग्रानुद्युक्तान् हासप्रकारमेवाह अहोइति ॥ १ ॥ येनकामे
नफेनोपमेपिंडेदेहेविश्रंभिताविश्वासंनीतायेतेषांनरेंद्राणामेषकामोमोघएवस्यात् ॥ २ ॥ काममेवदर्शयतिद्वाभ्यां पूर्वमिति इंद्रियार्थलंपटस्य
नराज्यप्राप्तिःस्यादितिप्रथममिंद्रियषड्वर्गंनिर्जित्यराजमंत्रिणोजेष्यामःवशीकरिष्यामः सचिवाअमात्याःकरींद्राहस्तिपास्तांश्चजेष्यामः कं
टकान्प्रतिपक्षान् अस्यअपास्य अथकंटकानितिवापाठः ॥ ३ ॥ इतिएवंकेचित्आशाबद्धहृदयाः ॥ ४ ॥ एवंकेचिन्मांपुनर्जित्वाऽ
प्यतितृष्णयाअब्धिविशंति तदेवमिंद्रियजयेनयेराज्यंसाधयितुमिच्छंतितेऽतिमंदाइत्याह कियदिति ॥ ५ ॥ ॥ ॥

अतःअंतकंनपश्यंतीत्युक्तंतदेवाह यामिति कुरूद्वहेतिभूमिगीतंकथयन्शुकःसंबोधयाति कुलोद्वहेतितुपाठःसुगमः ॥ ६ ॥ अबुद्धयइत्यु
क्तंतत्प्रपंचयति मत्कृतइति ॥ ७ ॥ ८ ॥ रामोनामकश्चित् यद्वा लोकदृष्टयादाशरथिरेवानिर्दिष्टः ॥ ९ ॥ १० ॥ लोकंरावयतिरोदय
तीतिलोकरावणः ॥ ११ ॥ १२ ॥ मयिउच्चैर्ममतांकृत्वायेअवर्ततंतेकालेनकथावशेषाः कृताः विभोइतिसंबोधनंकुरुद्वहेतिवत् ॥ १३ ॥
राजवंशानुकथनस्यतात्पर्यमाह कथाइमाइति विज्ञानंविषयासारताज्ञानंततोवैराग्यंतयोर्विवक्षयापरेयुषांमृतानांवचोविभूतीर्वाग्विलास

**यांविसृज्यैवमनवस्तत्सुताश्चकुरूद्वह ॥ गतायथागतंयुद्धेतांमांजेष्यंत्यबुद्धयः ॥ ६ ॥ मत्कृतेपितृपुत्राणांभ्रा
तृणांचापिविग्रहः ॥ जायतेह्यसतांराज्येममताबद्धचेतसां ॥ ७ ॥ ममैवेयंमहीकृत्स्नानतेमूढेतिवादिनः ॥ स्प
र्द्धमानामिथोघ्नंतिम्रियंतेमत्कृतेनृपाः ॥ ८ ॥ पृथुःपुरूरवागाधिर्नहुषोभरतोऽर्जुनः ॥ मांधातासगरोरामःख
ट्वांगोधुंधुहारघुः ॥ ९ ॥ तृणबिंदुर्ययातिश्चशर्यातिःशंतनुर्गयः ॥ भगीरथःकुवलयाश्वःककुत्स्थोनैषधोनृगः
॥ १० ॥ हिरण्यकशिपुर्वृत्रोरावणोलोकरावणः ॥ नमुचिःशंबरोभौमोहिरण्याक्षोऽथतारकः ॥ ११ ॥ अन्येचब
हवोदैत्याराजानोयेमहेश्वराः ॥ सर्वेसर्वविदःशूराःसर्वेसर्वजितोऽजिताः ॥ १२ ॥ ममतांमय्यवर्ततकृत्वोच्चैर्म
र्त्यधर्मिणः ॥ कथावशेषाःकालेनह्यकृतार्थाःकृताविभो ॥ १३ ॥ कथाइमास्तेकथितामहीयसांवितायलोके
षुयशःपरेयुषां ॥ विज्ञानवैराग्यविवक्षयाविभोवचोविभूतीर्नतुपारमार्थ्यं ॥ १४ ॥ यस्तूत्तमश्लोकगुणानु
वादःसंगीयतेऽभीक्ष्णममंगलघ्नः ॥ तमेवनित्यंशृणुयादभीक्ष्णंकृष्णेऽमलांभक्तिमभीप्समानः ॥ १५ ॥
राजोवाच केनोपायेनभगवन्कलेर्दोषान्कलौजनाः ॥ विधमिष्यंत्युपचितांस्तन्मेब्रूहियथामुने ॥ १६ ॥
युगानियुगधर्मांश्चमानंप्रलयकल्पयोः ॥ कालस्येश्वररूपस्यगतिंविष्णोर्महात्मनः ॥ १७ ॥**

मात्ररूपानतुपारमार्थ्यं परमार्थयुक्तंकथनंनभवतीत्यर्थः ॥ १४ ॥ कस्तर्हिपुरुषाणामुपादेयःपरमार्थस्तमाह यस्त्विति नित्यंप्रत्यहं तत्रा
प्यभीक्ष्णं ॥ १५ ॥ कलिदोषोपचयेसतिभक्तेरसंभवंमन्यमानःपृच्छति केनोपायेनेति विधमिष्यंतिनाशयिष्यंति यथायथावत् ॥ १६ ॥
कलियुगेकःपरोधर्मइतिबुभुत्सयापृच्छति युगानीति ब्रूहीत्यनुषंगःआत्यंतिकाजिज्ञासयापुनःपृच्छति प्रलयकल्पयोःसंहारस्थितिकालयोः
नचायंबहिर्मुखःप्रश्नइत्याह कालस्येति ॥ १७ ॥ ॥ ॥ ॥

तत्रयुगधर्मांस्तावदाह कृतइति तज्जनैस्तत्कालीनैर्जनैः दानमरागद्वेषतयाअभयदानं तदेवप्रथमस्कंधेशौचशब्देनोक्तं विभोःसंपूर्णस्य धर्मस्य ॥ १८ ॥ तदानींतनजनानाह संतुष्टाइति मैत्राभूतमैत्रीयुक्ताः श्रमणाआत्माभ्यासवंतः ॥ १९ ॥ २० ॥ ब्रह्मोत्तराब्राह्मणाधिकाः ॥ २१ ॥ अनृतेनसत्यंहिंसयादयाअसंतोषेणतपःविग्रहेणदानमितियथासंख्यंयोज्यं हिंसाऽतुष्टचनृतद्वेषैरित्ययंक्रमोनाविवक्षितःधर्म



श्रीशुकउवाच कृतेप्रवर्ततेधर्मश्चतुष्पात्तज्जनैर्धृतः ॥ सत्यंदयातपोदानमितिपादाविभोर्नृप ॥ १८ ॥ संतुष्टाःकरुणामैत्राःशांतादांतास्तितिक्षवः ॥ आत्मारामाःसमदृशःप्रायशःश्रमणाजनाः ॥ १९ ॥ त्रेतायांधर्मपादानांतुर्यांशोहीयतेशनैः ॥ अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः ॥ २० ॥ तदाक्रियातपोनिष्ठानातिहिंस्रानलंपटाः ॥ त्रैवर्गिकास्त्रयीवृद्धावर्णाब्रह्मोत्तरानृप ॥ २१ ॥ तपःसत्यदयादानेष्वर्द्धंह्रसतिद्वापरे ॥ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥ यशस्विनोमहाशालाःस्वाध्यायाध्ययनेरताः ॥ आढ्याःकुटुंबिनोहृष्टावर्णाःक्षत्रद्विजोत्तमाः ॥ २३ ॥ कलौतुधर्महेतूनांतुर्यांशोऽधर्महेतुभिः ॥ एधमानैःक्षीयमाणोह्यंतेसोपिविनंक्ष्यति ॥ २४ ॥ तस्मिन्लुब्धादुराचारानिर्दयाःशुष्कवैरिणः ॥ दुर्भगाभूरितर्षाश्चशूद्रदासोत्तराःप्रजाः ॥ २५ ॥ सत्वंरजस्तमइतिदृश्यंतेपुरुषेगुणाः ॥ कालसंचोदितास्तेवैपरिवर्तंतआत्मनि ॥ २६ ॥ प्रभवंतियदासत्वेमनोबुद्धींद्रियाणिच ॥ तदाकृतयुगंविद्याज्ज्ञानेतपसियद्रुचिः ॥ २७ ॥ यदाकर्मसुकाम्येषुभक्तिर्भवतिदेहिनां ॥ तदात्रेतारजोवृत्तिरितिजानीहिबुद्धिमन् ॥ २८ ॥ यदालोभस्त्वसंतोषोमानोदंभोऽथमत्सरः ॥ कर्मणांचापिकाम्यानांद्वापरंतद्रजस्तमः ॥ २९ ॥ यदामायाऽनृतंतंद्रानिद्राहिंसाविषादनं ॥ शोकोमोहोभयंदैन्यंसकलिस्तामसःस्मृतः ॥ ३० ॥

स्यार्द्धंह्रसतिक्षीयतेअधर्मस्यक्षलणैश्चिन्हैः पादैरित्यर्थः ॥ २२ ॥ यशस्विनःकीर्तिप्रियाःक्षत्रद्विजोत्तमाःक्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलौधर्मपादानांतुर्यांशश्चतुर्थांशोवशिष्यते ॥ २४ ॥ शूद्रदासोत्तराःशूद्रकैवर्तादिप्रधानाः ॥ २५ ॥ युगानामेवंभूतवैषम्येकारणमाह सत्त्वमिति पंचभिः ॥ २६ ॥ मनश्चबुद्धिश्चेंद्रियाणिचसत्त्वेयदाप्रभवंतिअतिशयेनवर्तंते ॥ २७ ॥ यदाकर्मादिषुभक्तिःप्रीतिस्तदारजोवृत्तिप्रधानंत्रेतायुगमितिजानीहि ॥ २८ ॥ ॥ काम्यानांकर्मणांविषयेयदाप्रीतिस्तदारजस्तमःप्रधानंद्वापरंजानीहि ॥ २९ ॥ विषादनंदुःखं ॥ ३० ॥

कलिदोषान्प्रपंचयति यस्मादित्यादिना यस्मात्कलेर्हेतोः क्षुद्रदृशोमंदमतयः क्षुद्रभाग्याअल्पभाग्याः महाशनाबह्वाहाराः वित्तहीना अपिकामिनश्च स्वैरिण्यःपुंश्चल्यः असतीःअसत्यः ॥ ३१ ॥ दस्यवउत्कृष्टाःप्रचुरायेषुते ॥ ३२ ॥ अव्रताविहिताचारशून्याअशौचाः शौचशून्याश्चबटवोब्रह्मचारिणोभविष्यंति कुटुंबिनश्चगृहस्थाःस्वयंभिक्षाटनपराभविष्यंतिनतुभिक्षांदास्यंति तपस्विनोवनस्थावनंहित्वाग्रामवासाभविष्यंति न्यासिनोयतयःअतिधनादिलोलुपाभविष्यंति ॥३३॥ पुनरपिस्त्रीणांस्वभावमाह ऱ्हस्वकायाइति कटुकभाषिण्यः

यस्मात्क्षुद्रदृशोमर्त्याःक्षुद्रभाग्यामहाशनाः ॥ कामिनोवित्तहीनाश्चस्वैरिण्यश्चस्त्रियोऽसतीः ॥३१॥ दस्यूत्कृष्टाजनपदावेदाःपाखंडदूषिताः ॥ राजानश्चप्रजाभक्षाःशिश्नोदरपराद्विजाः ॥ ३२ ॥ अव्रताबटवोऽशौचाभिक्षवश्चकुटुंबिनः ॥ तपस्विनोग्रामवासान्यासिनोह्यर्थलोलुपाः॥३३॥ऱ्हस्वकायामहाहाराभूर्यपत्यागतन्हियः॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥३४॥ पणयिष्यंतिवैक्षुद्राःकिरिटाःकूटकारिणः॥ अनापद्यपिमंस्यंतेवार्तासाधुजुगुप्सितां ॥३५॥ पतिंत्यक्ष्यंतिनिर्द्रव्यंभृत्याअप्यखिलोत्तमं ॥ भृत्यंविपन्नंपतयःकौलंगाश्चापयस्विनीः ॥ ३६ ॥ पितृभ्रातृसुहृज्ज्ञातीन्हित्वासौरतसौहृदाः ॥ ननांदृस्यालसंवादादीनाःस्त्रैणाःकलौनराः ॥ ३७ ॥ शूद्राःप्रतिग्रहीष्यंतितपोवेषोपजीविनः ॥ धर्मंवक्ष्यंत्यधर्मज्ञाअधिरुह्योत्तमासनं ॥ ३८ ॥ नित्यमुद्विग्नमनसोदुर्भिक्षकरपीडिताः ॥ निरन्नेभूतलेराजन्ननावृष्टिभयातुराः ॥ ३९ ॥ वासोन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाःपिशाचसंदर्शाभविष्यंतिकलौप्रजाः ॥ ४० ॥

अप्रियवादिन्यः चौर्यंचमायाकपटमुरुचसाहसंयासांताः ॥ ३४ ॥ किंच किरीटावणिजःपणयिष्यंतिक्रयविक्रयादिव्यवहारंप्रवर्तयिष्यंति किंच सर्वेजनाअनापद्यपिजुगुप्सितांनिंदितांवार्तांवृत्तिंसाधुमंस्यंते ॥ ३५ ॥ सर्वोत्तममपिपातिंद्रव्यहीनंभृत्यास्त्यक्ष्यंति पतयश्चविपन्नंरोगादिभिर्व्यापाराक्षमंकौलंकुलपरंपरायातंत्यक्ष्यंति अपयस्विनीरदुग्धदोहाः ॥३६॥ सौरतंसुरतनिमित्तंसौहृदंयेषांते अतएवननांदरोऽत्रभार्याभगिन्यःस्यालाःभार्याभ्रातरस्तैःसंवादोत्रालोचनंयेषांते ननंदुरितिवापाठः ॥३७॥३८॥३९॥ पिशाचसंदर्शाःपिशाचसदृशाः ॥ ४० ॥

काकिणिकेविंशतिवराटकमात्रेप्यर्थेविषयभूतेविगृह्यवैरंकृत्वा ॥ ४१ ॥ ४२ ॥ महांतमनर्थमाहद्वाभ्यां कलाविति त्रिलोकनाथैरवनतं नमस्कृतंपादपद्मंयस्यतं नयक्ष्यंतिनपूजयिष्यंति पाखंडैर्विभिन्नमन्यथाकृतंचेतोयेषांते ॥ ४३ ॥ विवशोगृणन्सन् विमुक्ताःकर्मरूपाअर्गलाःप्रतिबंधायस्यसः ॥ ४४ ॥ तदेवंकलिदोषान्प्रपंच्यप्रस्तुतंतन्निस्तारोपायमाह पुंसामितिषड्भिः द्रव्यदेशात्मभिःसंभवोयेषांतान् चित्तस्थःचित्तेस्फुरितः ॥ ४५ ॥ ४६ ॥अथमेवोपायोनान्यइतिसदृष्टांतमाह यथेति धातुजंताम्रादिसंश्लेषजातंहेम्नोदुर्वर्णंमालिन्यंतत्रस्थि

कलौकाकिणिकेऽप्यर्थेविगृह्यत्यक्तसौहृदाः ॥ त्यक्ष्यंतिचप्रियान्प्राणान्हानिष्यंतिस्वकानपि॥४१॥नरक्षिष्यंतिमनुजाःस्थविरौपितरावपि ॥ पुत्रान्सर्वार्थकुशलान्क्षुद्राःशिश्नोदरंभराः ॥४२॥ कलौनराजन्जगतांपरंगुरुंत्रैलोक्यनाथानतपादपंकजं ॥ प्रायेणमर्त्याभगवंतमच्युतंयक्ष्यंतिपाखंडविभिन्नचेतसः ॥४३॥ यन्नामधेयंम्रियमाणआतुरःपतन्स्खलन्वाविवशोगृणन्पुमान् ॥ विमुक्तकर्मार्गलउत्तमांगतिंप्राप्नोतियक्ष्यंतिनतंकलौजनाः ॥४४॥ पुंसांकलिकृतान्दोषान्द्रव्यदेशात्मसंभवान् ॥ सर्वान्हरतिचित्तस्थोभगवान्पुरुषोत्तमः ॥४५॥ श्रुतःसंकीर्तितोध्यातःपूजितश्चादृतोपिवा ॥ नृणांधुनोतिभगवान्हृत्स्थोजन्मायुताशुभं ॥ ॥४६॥ यथाहेम्निस्थितोवन्हिर्दुर्वर्णंहंतिधातुजं ॥ एवमात्मगतोविष्णुर्योगिनामशुभाशयं ॥४७॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ॥ नात्यंतशुद्धिंलभतेंऽतरात्मायथाहृदिस्थेभगवत्यनंते ॥ ॥४८॥ तस्मात्सर्वात्मनाराजन्हृदिस्थंकुरुकेशवं ॥ म्रियमाणोह्यवहितस्ततोयासिपरांगतिं ॥ ४९ ॥ म्रियमाणैरभिध्येयोभगवान्परमेश्वरः ॥ आत्मभावंनयत्यंगसर्वात्मासर्वसंश्रयः ॥ ५० ॥ कलेर्दोषनिधेराजन्नस्तिह्येकोमहान्गुणः ॥ कीर्तनादेवकृष्णस्यमुक्तसंगःपरंव्रजेत् ॥ ५१ ॥ कृतेयद्ध्यायतोविष्णुंत्रेतायांयजतोमखैः ॥ द्वापरेपरिचर्यायांकलौतद्धरिकीर्तनात् ॥ ५२ ॥ इ० भा० द्वा० तृतीयोऽध्यायः ॥ ३ ॥

तोवन्हिरेवहरतिनतुतोयादिएवंयोगिनामपिविष्णुरेवनतुयोगादिकमित्यर्थः ॥ ४७ ॥ एतदेवविवृणोति विद्येति विद्यादेवतोपासना ॥ ४८ ॥ ॥ ४९ ॥ आत्मभावंस्वस्वरूपं ॥ ५० ॥ इदानींकलिंस्तौतिद्वाभ्यां कलेर्दोषनिधेराजन्निति तत्सर्वंहरिकीर्तनादेवकलौभवति ॥ ५१ ॥ ॥ ५२ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥

चतुर्थेतुचतुर्धोक्तालयानैमित्तिकादयः ॥ यत्रसंसारनिस्तारोहरिकीर्त्यैवंवर्ण्यते ॥ १ ॥ कलिदोषनिवर्तकंहरिनामसंकीर्तनादिकंसएवचक
लौपरमोधर्मइतिप्रश्नद्वयस्योत्तरमुक्तं यच्चान्यत्पृष्टंप्रलयकल्पयोर्मानंब्रूहीतितदिदानींतृतीयस्कंधोक्तकालानुवादपूर्वकंनिरूपयाति काल
इति सकालःपरमाणुर्वैयोभुंक्तेपरमाणुतामित्यादिनाकालःकथितः चत्वारित्रीणिद्वेचैकंकृतादिषुयथाक्रमं ॥ संख्यातानिसहस्राणिद्विगु
णानिशतानिचेतियुगमानंकथितं ॥ १॥ तत्रकल्पमानमाह चतुर्युगेति यत्रचतुर्दशमनवःक्रमेणभवंति ॥ २ ॥ प्रलयस्तुचतुर्विधः नैमित्ति
कःप्राकृतआत्यंतिकोनित्यश्चेति तत्रनैमित्तिकंप्रलयंमानसहितमाह तदंतइतिद्वाभ्यां तावान्चतुर्युगसहस्रप्रमाणः सैवब्राह्मीरात्रिः ॥ ३ ॥
नैमित्तिकत्वंदर्शयति यत्रयदाविश्वसृक्श्रीनारायणोविश्वमात्मसात्कृत्यस्वस्मिन्नुपसंहृत्यशेते आत्मभूर्ब्रह्माचतस्मिन्शेते तयोरभेदवि

श्रीशुकउवाच कालस्तेपरमाण्वादिर्द्विपरार्धावधिर्नृप ॥ कथितोयुगमानंचशृणुकल्पलयावपि ॥१॥ चतुर्यु
गसहस्रंचब्रह्मणोदिनमुच्यते ॥ सकल्पोयत्रमनवश्चतुर्दशविशांपते ॥२॥ तदंतेप्रलयस्तावान्ब्राह्मीरात्रिरु
दाहृता ॥ त्रयोलोकाइमेतत्रकल्पंतेप्रलयायहि ॥३॥ एषनैमित्तिकःप्रोक्तःप्रलयोयत्रविश्वसृक् ॥ शेतेऽनंता
सनोविश्वमात्मसात्कृत्यचात्मभूः ॥ ४ ॥ द्विपरार्धेत्वतिक्रांतेब्रह्मणःपरमेष्ठिनः ॥ तदाप्रकृतयःसप्तकल्पंतेप्र
लयायवै ॥५॥ एषप्राकृतिकोराजन्प्रलयोयत्रलीयते ॥ आंडकोशस्तुसंघातोविघातउपसादिते ॥६॥ पर्ज
न्यःशतवर्षाणिभूमौराजन्नवर्षति ॥ तदानिरन्नेह्यन्योऽन्यंभक्षमाणाःक्षुधार्दिताः ॥ क्षयंयास्यंतिशनकैःका
लेनोपद्रुताःप्रजाः ॥ ७ ॥ सामुद्रंदैहिकंभौमंरसंसांवर्तकोरविः ॥ रश्मिभिःपिबतेघोरैःसर्वंनैवविमुंच
ति ॥ ८ ॥ ततःसंवर्तकोवन्हिःसंकर्षणमुखोत्थितः ॥ दहत्यनिलवेगोत्थःशून्यान्भूविवरानथ ॥ ९ ॥

वक्षयावाब्रह्मणएवानंतासनत्वमुक्तं ब्रह्मणोनिद्रांनिमित्तीकृत्यप्रवर्तमानोलोकत्रयप्रलयोनैमित्तिकइत्यर्थः ॥ ४ ॥ प्राकृतिकंप्रलयमाह
द्वाभ्यां द्विपरार्द्धेतुब्रह्मणआयुषिसप्तप्रकृतयोमहदहंकारपंचतन्मात्राणि ॥ ५ ॥ संघातोमहदादिकार्यभूतः प्रकृतीनांतत्कार्यब्रह्मांडस्यच
प्रलयात्प्राकृतिकइत्यर्थः विघातकारणेउपसादितेसति ॥६॥ तदेवाह पर्जन्यइत्यादिनाबुद्धींद्रियार्थरूपेणेत्यतःप्राक्तनेनग्रंथेन ॥७॥ सा
मुद्रादिकंसर्वंरविःपिबतेआकर्षति ॥८॥ अनिलवेगोत्थःवायुवेगोद्भूतः अनिलवेगोवाइतिपाठेअनिलेनवेगोयस्यसः वाःरविणारश्मिभिः
पीतमुदकंचदहतीत्यर्थः अनिलवेगोवैइतितुपाठःसुगमः भूविवरान्पातालादीन् शून्यान्रविणादैहिकरसाकर्षणात्प्राणरहितान् ॥ ९ ॥

शिखाभिर्ज्वालाभिः ॥ १० ॥ किंचिदधिकंवर्षाणांशतं सांवर्तकःप्रलयहेतुःपरोवायुर्वातितदारजसावृतंखंधूम्रंभवति ॥ ११ ॥ रभस स्वनैस्तीव्रगर्जितैः ब्रह्मांडविवरमध्यगतंविश्वमेकोदकमेकार्णवोदकव्याप्तंभवति ॥ १२ ॥ उदप्लवेउदकेनाप्लावितेसति प्रलयत्वायअ भावाय ॥ १३ ॥ १४ ॥ १५ ॥ भूतादिस्तामसोऽहंकारः गुणैर्वृत्तिभिःसह ॥ १६ ॥ अव्याकृतंप्रधानं ॥ १७ ॥ तस्यतुलयोनास्ती त्याहनतस्येति कालावयवैरहोरात्रादिभिः गुणाभावाविकाराः परिणामोविपरिणामः अव्यक्तमस्तित्वाविकारशून्यं नित्यंसर्वदैकरूपंवृद्धिर

उपर्यधःसमंताच्चशिखाभिर्वह्निसूर्ययोः ॥ दह्यमानंविभात्यंडंदग्धगोमयपिंडवत् ॥१०॥ ततःप्रचंडपवनो वर्षाणामधिकंशतं ॥ परःसांवर्तकोवातिधूम्रंखंरजसावृतं ॥११॥ ततोमेघकुलान्यंगचित्रवर्णान्यनेकशः ॥ शतंवर्षाणिवर्षंतिनदंतिरभसस्वनैः ॥ ततएकोदकंविश्वंब्रह्मांडविवरांतरं ॥ १२ ॥ तदाभूमेर्गंधगुणंग्रसंत्या पउदप्लवे ॥ ग्रस्तगंधातुपृथिवीप्रलयत्वायकल्पते ॥१३॥ अपांरसमथोतेजस्ताल्लीयंतेऽथनीरसाः ॥ ग्रसते तेजसोरूपंवायुस्तद्रहितंतदा ॥१४॥ लीयतेचानिलेतेजोवायोःखंग्रसतेगुणं ॥ सवैविशतिखंराजंस्ततश्चन भसोगुणं ॥१५॥ शब्दंग्रसतिभूतादिर्नभस्तमनुलीयते ॥ तैजसश्चेंद्रियाण्यंगदेवान्वैकारिकोगुणैः ॥ १६ ॥ महान्ग्रसत्यहंकारंगुणाःसत्वादयश्चतं ॥ ग्रसतेऽव्याकृतंराजन्गुणान्कालेननोदितं ॥ १७ ॥ नतस्यका लावयवैःपरिणामादयोगुणाः ॥ अनाद्यनंतमव्यक्तंनित्यंकारणमव्ययं ॥ १८ ॥ नयत्रवाचोनमनोनसत्वं तमोरजोवामहदादयोऽमी ॥ नप्राणबुद्धींद्रियदेवतावानसन्निवेशःखलुलोककल्पः ॥ १९ ॥ नस्वप्नजाग्र न्नचतत्सुषुप्तंनखंजलंभूरनिलोऽग्निरर्कः ॥ संसुप्तवच्छून्यवदप्रतर्क्यंतन्मूलभूतंपदमामनंति ॥ २० ॥ ल यःप्राकृतिकोह्येषपुरुषाव्यक्तयोर्यदा ॥ शक्तयःसंप्रलीयंतेविवशाःकालविद्रुताः ॥ २१ ॥

हितमित्यर्थः अव्ययमपक्षयशून्यं सर्वत्रहेतुः कारणमिति ॥ १८ ॥ किंच वागादिगोचरस्यसविशेषस्यविकाराभवंतिइदंतुनतथेत्याह नयत्रेतिद्वाभ्यां लोककल्पःलोकरूपःसन्निवेशोरचनाविशेषः ॥ १९ ॥ स्वप्नजाग्रत्स्वप्नजागरावस्थायुक्तं संसुप्तवत्इंद्रियाभावात् शून्यसादृश्येहेतुः अप्रतर्क्यं नपुनःशून्यमेवेत्याह तदिति ॥ २० ॥ उपसंहरति लयइति शक्तयःसत्वादयः ॥ २१ ॥

आत्यंतिकंलयमाह बुद्धींद्रियेतिद्वादशभिः आत्यंतिकलयोमोक्षःसचब्रह्मज्ञानेनसर्वप्रपंचलयात्मकः नचप्रपंचस्यात्मवत्सत्यत्वेलयःसं
भवतीतिज्ञानरूपाद्ब्रह्मणःपृथक्भूतस्यतस्यासत्त्वमुपपादयति बुद्धिश्चेंद्रियाणिचअर्थाश्चेत्येवंग्राहककरणग्राह्यरूपेणतेषामाश्रयंज्ञानमे
वभातिनपृथक् तत्रहेतुमाह दृश्यत्वाव्यतिरेकाभ्यामिति अतोयदाद्यंतवत्तदवस्तु अत्रैवंप्रयोगः विमतंसम्भवति दृश्यत्वात्कारणाव्यतिरेका
त्आद्यंतवत्त्वाच्चरज्जुसर्पादिवदिति ॥ २२ ॥ तत्राव्यतिरेकंदृष्टांतेनप्रपंचयति दीपइति दीपचक्षूरूपाणांतेजोविशेषाणांतेजसोयथानव्य
तिरेकस्तथाधीःकर्त्रीखानिकरणानिमात्राविषयाःऋताद्ब्रह्मणःपृथङ्नस्युःब्रह्मकार्यत्वात् नन्वेवंकार्यकारणयोरभेदेकार्यासत्त्वेकारणस्या
प्यसत्त्वंप्रसज्येतत्राह अन्यतमादिति कार्यादत्यंतव्यतिरेकाद्ब्रह्मणःप्रपंचाद्ब्रह्मणोऽस्तिव्यतिरेकः प्रपंचस्यतुततोनास्तिव्यतिरेकइत्यर्थः ॥

बुद्धींद्रियार्थरूपेणज्ञानंभातितदाश्रयं॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यंतवदवस्तुयत् ॥२२॥ दीपश्चक्षुश्चरूपं
चज्योतिषोनपृथग्भवेत्॥एवंधीःखानिमात्राश्चनस्युरन्यतमादृतात् ॥ २३ ॥ बुद्धेर्जागरणंस्वप्नःषुसुप्तिरि
तिचोच्यते ॥ मायामात्रमिदंराजन्नानात्वंप्रत्यगात्मनि ॥ २४ ॥ यथाजलधराव्योम्निभवंतिनभवंतिच ॥
ब्रह्मणीदंतथाविश्वमवयव्युदयाप्ययात् ॥ २५ ॥ सत्यंह्यवयवःप्रोक्तःसर्वावयविनामिह ॥ विनार्थेनप्र
तीयेरन्पटस्येवांगतंतवः ॥ २६ ॥ ॥ ॥ ॥ ॥

॥ २३ ॥ यदातुबुद्धेरसत्त्वंतदातदवस्थानांसुतरामसत्त्वमित्याशयेनाह बुद्धेरिति ननुविश्वतैजसप्राज्ञानामेताअवस्थानबुद्धेरित्याशंक्याह
मायामात्रमिति इदंविश्वतैजसप्राज्ञरूपं ॥ २४ ॥ आद्यंतवत्त्वादित्यस्यहेतोरसिद्धिमाशंक्यसावयवत्वेनसाधयति यथेति अवयवीति
यत्सावयवंतदाद्यंतवत्घटादिवदित्यर्थः अतउदयाप्ययादाद्यंतवत्त्वाद्विश्वंसन्नभवतीत्यर्थः यद्वापृथगेवागमापायित्वाद्विश्वंमिथ्या ब्रह्मतु
तदवधित्वात्सत्यमित्यनेनसाध्यते दृष्टांतस्तुपूर्वोक्तएवरज्जुसर्पवदिति यथाजलधराव्योम्नीतिदृष्टांतस्त्वागमापायितदवधित्वमात्रेनतुमिथ्या
त्वे ॥ २५ ॥ अन्यतमादृतादितिप्रतिज्ञातंकारणस्यसत्यत्वमुपपादयति सत्यमिति अवयवःकारणंप्रोक्तः वाचारंभणंविकारोनामधेयंमृ
त्तिकेत्येवसत्यमित्यादिश्रुतिभिः अत्रयुक्तिमपिदर्शयति विनेति अंगहेराजन्हियस्मात्अर्थेनावयविनाविनापृथगेवावयवाःप्रतीयेरन् यथा
पटस्यावयवास्तंतवःपटात्पृथक्प्रतीयंतेतद्वदिति ॥ २६ ॥ ॥ ॥

ननुकार्याभावेकारणत्वंब्रह्मणःकुतोघटेत सत्यं तदपिनातीवसत्यमित्याह यदिति सामान्यंकारणंविशेषःकार्यंतद्रूपेणान्योऽन्यापाश्रया
त् परस्परापेक्षत्वेननिरूपणासहत्वादित्यर्थः अतःकारणत्वमवधित्वंव्यापकत्वमित्यादिकमपियत्परोक्षत्वादाद्यंतवत्तत्सर्वमवस्त्वित्यर्थः
यद्वा तत्रैवहेत्वंतरमेतत् यदुपलभ्येतसभ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत् अन्योऽन्यापाश्रयादितीदमपिहेत्वंतरंगुणगुणीतिविशेषण
विशेष्यव्याप्यव्यापकत्वादिरूपेणपरस्पराधीनसिद्धत्वात्तथाभूतस्वप्नवदितिनिगमनं अतोयदाद्यंतवत्तत्सर्वमवस्त्वित्यर्थः ॥ २७ ॥ तदेवम
नेकैर्हेतुभिःप्रपंचस्यासत्त्वंप्रसाधितं तत्रशंका ननुप्रपंचस्यापिप्रकाशमानत्वादात्मवत्सत्त्वंकिंनस्यादितितत्राह विकारइतिख्यायमानः
प्रकाशमानोऽपिविकारःप्रपंचःप्रत्यगात्मप्रकाशंविनाअणुमात्रोऽपिननिरूप्योऽस्ति तंविनानिरूप्यःस्याच्चेत्तर्हिसोऽपिचित्समः स्यात्
चिद्रूपेणात्मनासमःस्वप्रकाशोभवेत् तथाचसतिसोप्यात्मवत्स्यात् एकरूपःस्यादित्यर्थः ॥ २८ ॥ कुतइत्यतआह नहीति ननुसत्यस्याप्या

यत्सामान्यविशेषाभ्यामुपलभ्येतसभ्रमः॥अन्योन्यापाश्रयात्सर्वमाद्यंतवदवस्तुयत्॥२७॥विकारःख्याय
मानोऽपिप्रत्यगात्मानमंतरा ॥ ननिरूप्योऽस्त्यणुरपिस्याच्चेच्चित्समआत्मवत् ॥ २८॥नहिसत्यस्यनानात्व
मविद्वान्यदिमन्यते॥नानात्वंछिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥ २९॥ यथाहिरण्यंबहुधासमीयतेनृभिःक्रि
याभिर्व्यवहारवर्त्मसु॥एवंवचोभिर्भगवानधोक्षजोव्याख्यायतेलौकिकवैदिकैर्जनैः॥३०॥यथाघनोऽर्कप्रभ
वोर्कदर्शितोह्यर्कांशभूतस्यचचक्षुषस्तमः॥एवंत्वहंब्रह्मगुणस्तदीक्षितोब्रह्मांशकस्यात्मनआत्मवस्तुनः॥३१॥

त्मनोजीवब्रह्मरूपंनानात्वमस्त्येवतत्राह यद्येवंनानात्वंमन्यतेतर्हिअविद्वान् कथंतर्हितयोर्भेदव्यवहारः उपाधिकृतइत्याह नानात्वमिति
तत्रछिद्रयोर्घटाकाशमहाकाशयोरिवेतिपरिच्छेदापरिच्छेदेदृष्टांतः ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेतिउपाधिकृतविकारसदस
द्भावेवातयोर्बाह्यशरीरस्थवाय्वोरिवेतिक्रियाभेदे ॥ २९ ॥ ब्रह्मणएवप्रपंचव्यवहारालंबनत्वंदृष्टांतेनस्पष्टयति यथेति क्रियाभिस्तत्तद्रचनाभे
दैर्बहुधाकटककुंडलादिरूपेणलौकिकवैदिकैर्वचोभिर्जनैरहंकारोपहितैः ॥३०॥ नन्वहंकारस्यकथंब्रह्मस्वरूपावरणेनभेदव्यवहारहेतुत्वं
तस्यस्वकारणभूतब्रह्मावरकत्वासंभवादावरणेवास्वस्यापिप्रकाशासंभवादित्याशंक्यसदृष्टांतमाह यथेति अर्करश्मयएवमेघरूपेणपरिण
तावर्षंति अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइत्यादिवचनात्तस्मादर्कप्रभवःअर्केणैवदर्शितःप्र
काशितश्च तमःस्वरूपभूतार्कदर्शनप्रतिबंधकोभवति अहमहंकारोब्रह्मगुणोब्रह्मकार्यभूतस्तदीक्षितस्तेनैवप्रकाशितश्च आत्मनोजीवस्या
त्मबंधनः ब्रह्मस्वरूपदर्शनप्रतिबंधकोभवति ॥ ३१ ॥ ॥ ॥ ॥

अतएवाहंकारनाशेस्वरूपदर्शनंभवतीतितेनैवदृष्टांतेनाह घनइति आत्मनःउपाधिः जिज्ञासयाविचारेण तर्हितदा अनुस्मरेत्ब्रह्माह
मितिपश्यतीत्यर्थः ॥३२॥ सोऽयमात्यंतिकःप्रलयइत्युपसंहरति यदैवमिति विवेकहेतिनाज्ञानशस्त्रेण अहंकारमेवात्मबंधनं अच्युतंपरिपू
र्णमात्मानमनुभवतीत्यर्थः ॥३३॥ नित्यप्रलयमाह नित्यदेति ॥३४॥ कुतइत्यतआह कालेति परिणामिनांनदीप्रवाहप्रदीपज्वालादीनां
याउच्चनीचावस्थास्ताःकालरूपस्रोतसोवेगेनाशुह्रियमाणस्यदेहादेर्दृश्यमानास्तद्वदेवनित्यदाजन्मप्रलयहेतवोभवंति ॥३५॥ ननुदेहः प्र
तिक्षणंप्रध्वंसीप्रतिक्षणमवस्थाभेदस्यविद्यमानत्वात्प्रदीपादिवदित्यनुमानं यदिप्रतिक्षणमवस्थाभवंतितर्हिकिंनदृश्यंतेअतोहेतुरसिद्धइत्या

घनोयदाऽर्कप्रभवोविदीर्यतेचक्षुःस्वरूपंरविमीक्षतेतदा ॥यदाह्यहंकारउपाधिरात्मनोजिज्ञासयानश्यति
तर्ह्यनुस्मरेत् ॥३२॥यदैवमेतेनविवेकहेतिनामायामयाहंकरणात्मबंधनं ॥ छित्वाऽच्युतात्मानुभवोऽवतिष्ठ
तेतमाहुरात्यंतिकमंगसंप्लवं॥३३॥नित्यदासर्वभूतानांब्रह्मादीनांपरंतप ॥ उत्पत्तिप्रलयावेकेसूक्ष्मज्ञाःसंप्र
चक्षते॥३४॥कालस्रोतोजवेनाशुह्रियमाणस्यनित्यदा॥परिणामिनामवस्थास्ताजन्मप्रलयहेतवः ॥३५॥
अनाद्यंतवताऽनेनकालेनेश्वरमूर्तिना ॥ अवस्थानैवदृश्यंतेवियतिज्योतिषामिव ॥३६॥ नित्योनैमित्तिकश्चै
वतथाप्राकृतिकोलयः ॥ आत्यंतिकश्चकथितःकालस्यगतिरीदृशी ॥३७॥ एताःकुरुश्रेष्ठजगद्विधातुर्नाराय
णस्याखिलसत्वधाम्नः ॥ लीलाकथास्तेकथिताःसमासतःकार्त्स्न्येननाजोप्यभिधातुमीशः ॥३८॥ संसार
सिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यःप्लवोभगवतःपुरुषोत्तमस्य ॥लीलाकथारसनिषेवणमंतरेणपुंसोभवेद्विवि
धदुःखदवार्दितस्य ॥ ३९ ॥

शंक्याह अनाद्यंतवताकालेनजायमानाअवस्थानैवलक्ष्यंते आ
काशेगच्छतांज्योतिषांचंद्रादीनांगमनावस्थाविशेषायथानैवलक्ष्यंतेतद्वत् अतोयथातेषांप्रदेशांतरप्राप्त्याप्रतिक्षणंगत्यवस्थाःकल्प्यंतेतद्वत्
अत्रापितारुण्यादिदर्शनेनमध्यवर्तिन्योऽवस्थाःकल्प्यंतइतिनहेतुरसिद्धइत्यर्थः ॥ ३६ ॥ उपसंहरति नित्यइति ॥ ३७ ॥ पुराणार्थमुप
संहरति एताइति लीलाविषयाःकथाअजोब्रह्माऽपिकार्त्स्न्येनाभिधातुंनेशः ॥ ३८ ॥ ननुयदिसाकल्येनाभिधातुंनशक्यंतेतर्हिकिंतद
भिधानेनतत्राह संसारेति विविधंदुःखमेवदवोदावानलस्तेनार्दितस्यपीडितस्यातउत्तितीर्षोःपुंसःभगवतोयालीलास्तासांकथास्तासांरस
स्तन्निषेवणमंतरेणान्यःप्लवस्तरणसाधनंनभवेत् उपायांतरासंभवात्तत्कथाश्रवणमेवयथाशक्तिनिषेव्यमित्यर्थः ॥ ३९ ॥ ॥

श्रोतुरादरदार्ढ्यायसंप्रदायप्रवृत्तिमाह पुराणसंहितामितितिर्त्रिभिः ॥ ४० ॥ सवैबादरायणःप्रीतःसन्मह्यमिमांसंहितांप्राहेतिपूर्वेणान्वयः॥४१॥ असौसूतइतिपुरतःस्थितमंगुल्यानिर्दिश्याह नैमिषालयेनैमिषारण्यस्थाने ॥ ४२ ॥ इतिद्वादशेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ पंचमेतु समासेनपरब्रह्मोपदेशतः ॥ राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणं ॥ १ ॥ एतत्पुराणंशृण्वन्नभयंप्राप्नोतीत्यभिप्रेत्यपुराणार्थमनुस्मारय ति अत्रेति अयंभावः जगतःकर्ताब्रह्माऽपियस्यप्रसादजःप्रसादोऽत्ररजोवृत्तिर्हर्षः ततोजातत्वात्परतंत्रः सर्वसंहर्तारुद्रश्चयस्यक्रोधसंभवो नतुस्वतंत्रः सविश्वस्यात्मानियंताभगवानत्रानुवर्ण्यते अतएवंभूतंभगवंतंशृण्वतःकुतोऽन्यस्माद्भयशंकेति॥१॥त्वंपुनःकृतार्थएवेत्यनुस्मार यति त्वंत्विति पशुबुद्धिमविवेकं यस्मान्ननंक्ष्यसि कुतइत्यतआह नजातइति यथादेहःप्रागभूतएवाद्यजातोनंक्ष्यति नचैवंत्वंपूर्वनाभूनं

पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ॥ नारदायपुराप्राहकृष्णद्वैपायनायसः ॥ ४० ॥ सवैमह्यंमहा राजभगवान्बादरायणः ॥ इमांभागवतींप्रीतःसंहितांवेदसंमितां ॥४१॥ एतांवक्ष्यत्यसौसूतऋषिभ्यो नैमिषालये ॥ दीर्घसत्रेकुरुश्रेष्ठसंपृष्टःशौनकादिभिः ॥४२॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेचतु र्थोऽध्यायः ॥ ४ ॥ श्रीशुकउवाच अत्रानुवर्ण्यतेऽभीक्ष्णंविश्वात्माभगवान्हरिः ॥ यस्यप्रसादजोब्र ह्मारुद्रःक्रोधसमुद्भवः ॥१॥ त्वंतुराजन्मरिष्येतिपशुबुद्धिमिमांजहि ॥ नजातःप्रागभूतोऽद्यदेहवत्त्वंननं क्ष्यसि ॥ २ ॥ नभविष्यसिभूत्वात्वंपुत्रपौत्रादिरूपवान् ॥ बीजांकुरवद्देहादेर्व्यतिरिक्तोयथाऽनलः ॥ ३ ॥ स्वप्नेयथाशिरश्छेदंपंचत्वाद्यात्मनःस्वयं ॥ यस्मात्पश्यतिदेहस्यततआत्माह्यजोऽमरः ॥ ४ ॥

चाद्यजातोऽसि अतोननंक्ष्यसि ॥ २ ॥ ननुबीजांकुरवत्स्वस्मात्पुत्ररूपेणस्वयमेवभवाति यथाहश्रुतिःअंगादंगात्संभवसिहृदयादभिजायसे आत्मावैपुत्रनामाऽसिसजीवशरदःशतमिति ततःपुनरंकुरात्बीजमिवपौत्रादिरूपेणापिस्वयमेवभवाति पितापुत्रेणपितृमान्योनियोनावितिश्रुतेः अतस्त्वेपुनश्यत्सुकथंननंक्ष्यामीतिचेत्तत्राह नभविष्यसीति भूत्वापुत्रपौत्रादिरूपवान्बीजांकुरवन्नभविष्यसि यस्माद्देहादेर्व्यतिरिक्त स्त्वं यथाऽनलःकाष्ठात् देहाद्देहोजायतेनात्मेतिभावः ॥ ३ ॥ जन्मादीनांदेहधर्मत्वंदृष्टांतेनप्रपंचयति स्वप्नेयथात्मनःशिरश्छेदंस्वयंपश्य ति एवंजागरणेऽपियथायस्माद्देहस्यपंचत्वादिकंपश्यति ततस्तद्देवात्मनइदंभ्रममात्रं वस्तुतश्चात्माजोऽमरश्चेत्यर्थः तदुक्तं आत्मनःपितृपु त्राभ्यामनुमेयौभवाप्ययौ ॥ नभवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षणइत्यादि ॥ ४ ॥ ॥ ॥

यस्माद्देहोपाधिकोऽयमात्मनोजन्मादिसंसारभ्रमस्तस्मादुपाधिनिवृत्तौमुच्यतइतिसदृष्टांतमाह घटइति यथापुराघटोपाधेःपूर्वमित्रपुनर्घटे भिन्नेतदंतर्वर्त्यवकाशःआकाशएवस्याद्यथा एवंदेहेमृतेतत्त्वज्ञानेनलीनेसति ॥ ५ ॥ ज्ञानेनलयंभावयितुंमायाकृतमात्मनोदेहाद्युपाधिसं बंधप्रकारमाह मनइति मनआत्मनोदेहादीन्सृजति तच्चमनोमायांसृजति ततोमायाद्युपाधिसमुदायाज्जीवस्यसंसृतिर्नवस्तुतः ॥ ६ ॥ ए तदेवसदृष्टांतमाहसार्धेन स्नेहेति दीपस्यज्योतिषोदीपत्वंज्वालारूपःपरिणामः तत्रतैलस्थानीयंकर्म तदधिष्ठानीयंमनः वर्तिस्थानीयोदे हः अग्निसंयोगस्थानीयश्चैतन्याध्यासः दीपस्थानीयःसंसारइतियोज्यं देहकृतोदेहनिबंधनः यद्वा देहकृतोमनसोनचात्मनः ॥७॥ अतो दीपवत्संसारएवनश्यतिनत्वात्माज्योतिर्वदित्याह नेति ननुतत्रप्रतीयमानआत्माकुतइत्यतआह यइति व्यक्ताव्यक्तयोःस्थूलसूक्ष्मदेहयोः

**घटेभिन्नेयथाकाशआकाशःस्याद्यथापुरा ॥ एवंदेहेमृतेजीवोब्रह्मसंपद्यतेपुनः ॥ ५ ॥ मनःसृजतिवैदेहा न्गुणान्कर्माणिचात्मनः ॥ तन्मनःसृजतेमायांततोजीवस्यसंसृतिः ॥ ६ ॥ स्नेहाधिष्ठानवर्त्यग्निसंयोगोया वदीयते ॥ ततोदीपस्यदीपत्वमेवंदेहकृतोभवः ॥ रजःसत्वतमोवृत्त्याजायतेऽथविनश्यति ॥७॥ नतत्रात्मा स्वयंज्योतिर्योव्यक्ताव्यक्तयोःपरः ॥ आकाशइवचाधारोध्रुवोऽनंतोपमस्ततः ॥ ८ ॥ एवमात्मानमात्म स्थमात्मनैवामृशप्रभो ॥ बुद्ध्याऽनुमानगर्भिण्यावासुदेवानुचिंतया ॥ ९ ॥ चोदितोविप्रवाक्येननत्वांध क्ष्यतितक्षकः ॥ मृत्यवोनोपधक्ष्यंतिमृत्यूनांमृत्युमीश्वरं ॥ १० ॥ अहंब्रह्मपरंधामब्रह्माहंपरमंपदं ॥ ए वंसमीक्षन्नात्मानमात्मन्याधायनिष्कले ॥ ११ ॥ ॥ ॥ ॥**

परःअन्यः अतःस्वयंज्योतिः परत्वंप्रपंचयति आकाशइवेति आधारोदेहादेःप्रपंचस्य ध्रुवोनिर्विकारः नास्त्यंतउपमाचयस्यसोऽनंतोप मः ततोविभुः ॥ ८ ॥ अतस्त्वमेवंचिंतयेत्याह एवमिति आत्मस्थंदेहाद्युपाधिस्थितं आमृशविचारय अनुमानगर्भिण्याद्रष्टृदृश्यान्वयव्य तिरेकयुक्तया ॥ ९ ॥ एवंचसतित्वांतक्षकोनदहेदित्याह चोदितइति तत्रहेतवः मृत्यवइति मृत्युहेतवः ॥ १० ॥ विमर्शप्रकारंदर्शयंस्त क्षकादर्शनंदर्शयतिद्वाभ्यां योऽहंसब्रह्मैवयद्ब्रह्मतदहमेवेतिसमीक्षन् तत्राहंब्रह्मेतिभावनयाजीवस्यशोकादिनिवृत्तिः ब्रह्माहमितिभावन याचब्रह्मणःपारोक्ष्यनिवृत्तिर्भवतीतिव्यतिहारोदर्शितः निष्कलेनिरुपाधौ आत्मनिब्रह्मणि ॥ ११ ॥ ॥

विषयुक्तैराननैर्दशंतंग्रसंतंतक्षकं लेलिहानंसर्पं यद्वालेलिहानंजिह्वाभिरोष्ठप्रांतंसानिष्पेषमास्वादयंतं आत्मनःपृथक् ॥१२॥ हरेश्श्रेष्ठंआत्मा त्वंयत्पृष्टवांस्तदेतत्तेकथितं शिष्यस्यकृतार्थतापरीक्षणायपृच्छतिकिमिति ॥ १३ ॥ इतिद्वादशेटीकायांपंचमोऽध्यायः॥ ५ ॥षष्ठेपरीक्षितोमोक्षःसर्पहोमादितत्सुतात् ॥ वेदशास्त्रविभागोक्तौत्रिवेदिव्यासवर्णनं॥१॥ एतत्पुराणंनिशम्यानिखिलात्माहरिस्तंपश्यतिनिखिलंचात्मानिपश्यतीतितथातेन अतःसमेन नतेनअत्रनतेनमूर्ध्नातत्पादतलमुपसृत्य तत्पादौशिरसिनिधायेत्यर्थः ॥ १ ॥ सिद्धःकृतार्थोऽस्मि यतःअनुगृही

दशंतंतक्षकंपादेलेलिहानंविषाननैः ॥ नद्रक्ष्यसिशरीरंचविश्वंचपृथगात्मनः ॥ १२ ॥ एतत्तेकथितंतात यथात्मापृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टांकिंभूयःश्रोतुमिच्छसि ॥ १३ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेप्रमाणलक्षणंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ सूतउवाच एतन्निशम्यमुनिनाऽभिहितंपरीक्षिद्व्यासात्मजेननिखिलात्मदृशासमेन ॥ तत्पादपद्ममुपसृत्यनतेनमूर्ध्नाबद्धांजलिस्तमिदमाहसविष्णुरातः ॥ १ ॥ राजोवाच सिद्धोस्म्यनुगृहीतोऽस्मिभवताकरुणात्मना ॥ श्रावितोयच्चमेसाक्षादनादिनिधनोहरिः ॥ २ ॥ नात्यद्भुतमहंमन्येमहतामच्युतात्मनां ॥ अज्ञेषुतापतप्तेषुभूतेषुयदनुग्रहः ॥ ॥ ३ ॥ पुराणसंहितामेतामश्रौष्मभवतोवयं ॥ यस्यांखलूत्तमश्लोकोभगवाननुवर्ण्यते ॥ ४ ॥ भगवंस्तक्षकादिभ्योमृत्युभ्योनबिभेम्यहं ॥ प्रविष्टोब्रह्मनिर्वाणमभयंदर्शितंत्वया ॥ ५ ॥ अनुजानीहिमांब्रह्मन्वाचंयच्छाम्यधोक्षजे ॥ मुक्तकामाशयंचेतःप्रवेश्यविसृजाम्यसून् ॥ ६ ॥ ॥

तोऽस्मि अनुग्रहमेवाह यद्यस्मात् श्रावितः चशब्दात्प्राप्तिसाधनंच ॥२॥ करुणात्मतामभिनंदतिद्वाभ्यां नात्यद्भुतामिति ॥ ३ ॥ अश्रौष्मश्रुतवंतः भवतःसकाशात् ॥४॥ सिद्धोऽस्मीत्युक्तंतदेवाविष्करोति भगवन्निति यतस्त्वयादर्शितंब्रह्मप्रविष्टः कथंभूतं अभयं यतोनिर्वाणंकैवल्यरूपं ॥ ५ ॥ किंभूयःश्रोतुमिच्छसीतियदुक्तंतत्रासिद्धोऽहंनकिंचिच्छ्रोतुमिच्छामिकेवलमनुज्ञांदेहीत्याह अनुजानीहीति वाचमित्युपलक्षणंसर्वेंद्रियाणां वाचंनियम्यकिंकरिष्यसितदाह मुक्ताःकामाशयास्तद्वासनायेनतच्चेतःअधोक्षजेप्रवेश्यअसून्विसृजामि ॥ ६ ॥

ननुकिंप्राणत्यागेनकिंचित्कालंज्ञाननिष्ठोभवेतिचेत्तत्राह अज्ञानंचेति चकारात्तत्संस्कारश्च तच्चत्वत्कृपयैवेत्याह भवतेति ॥ ७ ॥ ८ ॥
आत्मनाबुद्ध्याआत्मानंमनःआत्मनिप्रत्यक्प्रकाशेसमाधायपरमात्मानंदध्यौ अस्पंदासुर्लीनप्राणः यथातरुःस्थाणुः ॥ ९ ॥ तमेवविशि
नष्टि प्राक्कूलेप्रागग्रे बर्हिषिदर्भे ॥ १० ॥ तदेवंब्रह्मभूतेतस्मिंस्तक्षकागमनादिकंपिष्टपेषणमिवाभवदितिदर्शयति तक्षकइतित्रिभिः हे
विप्राः ॥ ११ ॥ तंविषचिकित्सयापरीक्षिद्रक्षणेनद्रव्यार्जनायागच्छंतं तत्रस्थालीढवटवृक्षस्यभस्मीभूतस्यपुनरंकुरादिक्रमेणोत्थापनाद्वि

अज्ञानंचनिरस्तंमेज्ञानविज्ञाननिष्ठया ॥ भवतादर्शितंक्षेमंपरंभगवतःपदं ॥८॥ सूतउवाच इत्युक्तस्तम
नुज्ञाप्यभगवान्बादरायणिः॥जगामभिक्षुभिःसाकंनरदेवेनपूजितः ॥८॥ परीक्षिदपिराजर्षिरात्मन्यात्मा
नमात्मना ॥ समाधायपरंदध्यावस्पंदासुर्यथातरुः ॥९॥ प्राक्कूलेबर्हिष्यासीनोगंगाकूलउदङ्मुखः॥ब्रह्मभू
तोमहायोगीनिःसंगश्छिन्नसंशयः ॥ १० ॥ तक्षकःप्रहितोविप्राःक्रुद्धेनद्विजसूनुना ॥ हंतुकामोनृपंगच्छन्द
दर्शपथिकश्यपं॥११॥तंतर्पयित्वाद्रविणैर्निवर्त्यविषहारिणं॥द्विजरूपप्रतिच्छन्नःकामरूपोऽदशन्नृपं ॥ १२॥
ब्रह्मभूतस्यराजर्षेर्देहोहिगरलाग्निना ॥ बभूवभस्मसात्सद्यःपश्यतांसर्वदेहिनां॥१३॥हाहाकारोमहानासी
द्भुविखेदिक्षुसर्वतः ॥ विस्मिताह्यभवन्सर्वेदेवासुरनरादयः ॥ १४ ॥ देवदुंदुभयोनेदुर्गंधर्वाप्सरसोजगुः ॥
ववृषुःपुष्पवर्षाणिविबुधाःसाधुवादिनः ॥ १५ ॥ जनमेजयःस्वपितरंश्रुत्वातक्षकभक्षितं ॥ तथाजुहावसं
क्रुद्धोनागान्सत्रेसहद्विजैः ॥ १६ ॥ सर्पसत्रेसमिद्धाग्नौदह्यमानान्महोरगान् ॥ दृष्ट्वेंद्रंभयसंविग्नस्तक्षकः
शरणंययौ ॥ १७ ॥ अपश्यंस्तक्षकंतत्रराजापारीक्षितोद्विजान् ॥ उवाचतक्षकःकस्मान्नदह्येतोरगाधमः
॥ १८ ॥ तंगोपायतिराजेंद्रशक्रःशरणमागतं ॥ तेनसंस्तंभितःसर्पस्तस्मान्नाग्नौपतत्यसौ ॥ १९ ॥

षहारिणं तदपेक्षितद्रविणैःसंतर्प्यततोनिवर्त्यद्विजरूपेणतिरोहितःसन्नदशत् ॥ १२ ॥ तच्चपुत्रकृत्यमित्रजातामित्याह ब्रह्मभूतस्येति ॥
॥ १३ ॥ तत्रक्षणंसर्वेषांदुःखंचततःपरमुत्सवंचाहद्वाभ्यां हाहाकारइति ॥ १४ ॥ १५ ॥ प्रासंगिकमाह जनमेजयइत्यादि सर्पाभिचा
रसत्रेद्विजैःसहवर्तमानोयथावदाजुहावजुहावेतिवा सर्वसर्पावाहनेकारणमाह संक्रुद्धइति ॥ १६ ॥ १७ ॥ १८ ॥ कस्मात्तक्षकोनदह्ये
तेत्युक्ताःसंतोद्विजाऊचुः तमिति तेनइंद्रेण असौसर्पः ॥ १९ ॥ ॥ ॥ ॥

ऋत्विजःप्रत्याह सहेंद्रःइंद्रसहितःकिमितिनपात्यते ॥२०॥ तद्राज्ञोवचःश्रुत्वाआजुहुवुः साक्षेपमाह्वानंदर्शयाति तक्षकेति इहाग्नौआ शुपत मरुत्त्वतामरुद्गणवताइंद्रेणसह ॥२१॥ ब्राह्मणैरुक्तैराक्षेपैःपरुषवाक्यैः सतक्षकःतक्षकेणसह ॥२२॥ अंगिरसःपुत्रोबृहस्पतिः प्राह ॥२३॥ २४ ॥ भवतुनामाजरामरस्तथाऽपिपितृमारकंधक्ष्यामीतिचेत्तत्राह जीवितमिति गतिःपरलोकः अतोदुर्मरणनिमित्तापितु दुर्गतिरनेनकृतेत्यपिनशंकनीयामित्यर्थः ॥ २५ ॥ कथमन्यःसुखदुःखप्रदातानास्तिसर्पादीनामुपलभ्यमानत्वादितिचेत्तत्राह सर्पादिना जंतुःपंचत्वंमृत्युमृच्छतिप्राप्नोतीतियत्तदारब्धंकर्मैवभुंक्ते स्वकर्मप्रयुक्ताएवसर्पादयोनस्वतंत्राइतिभावः ॥ २६ ॥ संस्थीयेतसमाप्यतां अ

पारीक्षितइतिश्रुत्वाप्राहर्त्विजउदारधीः ॥ सहेंद्रस्तक्षकोविप्रानाग्नौकिमितिपात्यते ॥ २० ॥ तच्छ्रुत्वाजुहुवुर्विप्राःसहेंद्रंतक्षकंमखे ॥ तक्षकाशुपतस्वेहसहेंद्रेणमरुत्त्वता ॥ २१ ॥ इतिब्रह्मोदिताक्षेपैःस्थानादिंद्रःप्रचालितः ॥ बभूवसंभ्रांतमतिःसविमानःसतक्षकः ॥ २२ ॥ तंपतंतंविमानेनसहतक्षकमंबरात् ॥ विलोक्यांगिरसःप्राहराजानंतंबृहस्पतिः ॥ २३ ॥ नैषत्वयामनुष्येंद्रवधमर्हतिसर्पराट् ॥ अनेनपीतमम्र्तमथवाअजरामरः ॥ २४ ॥ जीवितंमरणंजंतोर्गतिःस्वेनैवकर्मणा ॥ राजंस्ततोऽन्योनान्यस्यप्रदातासुखदुःखयोः ॥ २५ ॥ सर्पचौराग्निविद्युद्भ्यःक्षुत्तृड्व्याध्यादिभिर्नृप ॥ पंचत्वमृच्छतेजंतुर्भुंक्तआरब्धकर्मतत् ॥ २६ ॥ तस्मात्सत्रमिदंराजन्संस्थीयेताभिचारकं ॥ सर्पाअनागसोदग्धाजनैर्दिष्टंहिभुज्यते ॥ २७ ॥ इत्युक्तःसतथेत्याहमहर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतःपूजयामासवाक्पतिं ॥ २८ ॥ सैषाविष्णोर्महामायाऽबाधयाऽलक्षणायया ॥ मुह्यंत्यस्यैवात्मभूताभूतेषुगुणवृत्तिभिः ॥ २९ ॥

भिचारकंहिंसाफलं दिष्टंप्राचीनंकर्म अतःसर्पाद्दष्टप्रयुक्तस्यतवाप्ययंनापराधइतिभावः ॥ २७ ॥ वाक्पतिंबृहस्पतिं ॥ २८ ॥ ननुकथंविदुषामप्येवंसंमोहोयतोब्रह्मकोपात्परीक्षितोमृत्युर्जनमेजयकोपात्सर्पाणामित्यादितत्राह सैषेति तस्यामहत्त्वंदर्शयाति अलक्षणानलक्ष्यतइत्यलक्षणा अप्रतर्क्येत्यर्थः कासावित्यतआह ययाऽस्यविष्णोरेवात्मभूताआत्मांशभूताः प्राणिनोगुणवृत्तिभिःक्रोधादिभिःसहभूतेषुदेहेषुमुह्यंतिबाध्यबाधकतांव्रजंतीत्यर्थः ननुश्रवणादिनाबाधितयातयाकुतोमोहःस्यात्तत्राह अबाधयाबाधितुमशक्यया ॥ २९ ॥

कथंतर्हिमायातत्कार्यनिवृत्तिरित्याशंक्यश्रीविष्णुस्वरूपनिरूपणपूर्वकंतद्भजनात्सर्वानर्थनिवृत्तिरितिशास्त्रार्थमुपसंहरति नयत्रेतिपंचभिः दंभीति माया कपटवानयंपुमानित्येवंभूतायांबुद्धावसकृदुल्लिख्यमानायासेत्यर्थः साआत्मवादेक्रियमाणेआत्मवादिभिर्यत्राभयानविराजि तानप्रकाशिताकिंतुभीतेवस्वकार्यमोहादिकमकुर्वतीकथंचिद्वर्ततइतिप्रतिपादितेत्यर्थः तदुक्तं तस्मैनमोभगवतेवासुदेवायधीमहि ॥ यन्मा ययादुर्जययामांब्रुवंतिजगद्गुरुं ॥ विलज्जमानयायस्यस्थातुमीक्षापथेमुया ॥ विमोहिताविकत्थंतेममाहमितिदुर्धियइति किंच यद्यस्मिंस्तदा श्रयोमायाश्रयोविविधोवादोऽपिनास्ति विशेषविषयत्वाद्विवादानांतस्यविशेषातीतत्वादितिभावः संकल्पविकल्पावृत्तयोयस्यतन्मनोपिय त्रनास्ति संकल्पविकल्पानामपिविशेषविषयत्वात् ॥ ३० ॥ किंच सृज्यंकर्मसृजताकारकवर्गेणसहउभयोःसृज्यस्रष्ट्रोःपरंसाध्यंश्रेयःफ

नयत्रदंभीत्यभयाविराजितामायात्मवादेऽसकृदात्मवादिभिः ॥ नयद्विवादोविविधस्तदाश्रयोमनश्चसंक ल्पविकल्पवृत्तियत्॥३०॥नयत्रसृज्यंसृजतोभयोःपरंश्रेयश्चजीवस्त्रिभिरन्वितस्त्वहं॥तदेतदुत्सादितबाध्य बाधकंनिषिध्यचोर्मीन्विरमेत्स्वयंमुनिः॥३१॥ परंपदंवैष्णवमामनंतितद्यन्नेतिनेतीत्यतदुत्सिसृक्षवः ॥ वि सृज्यदौरात्म्यमनन्यसौहृदाहृदोपगुह्यावसितंसमाहितैः॥ ३२॥ तएतदधिगच्छंतिविष्णोर्यत्परमंपदं॥ अहंममेतिदौर्जन्यंनयेषांदेहगेहजं ॥ ३३ ॥ अतिवादांस्तितिक्षेतनावमन्येतकंचन ॥ नचेमंदेहमा श्रित्यवैरंकुर्वीतकेनचित् ॥ ३४ ॥ ॥ ॥ ॥ ॥

लमपि अतस्त्रिभिःसृज्यस्रष्टृफलैरन्वितोजीवश्चअहंकारात्मकोयत्रनास्ति अतएवोत्सादितौनिरस्तौबाध्यबाधकौयस्मिंस्तदेतत्स्वयमात्म स्वरूपमित्यर्थः तत्तस्मिन्नूर्मीनहंकारादीन्निषिध्यविरमेत् विशेषेणक्रीडेदित्यर्थः॥३१॥यतस्तद्वैष्णवंपदमामनंतीत्याह परमिति यदेतत्तदेवप रंवैष्णवंपदंस्वरूपमामनंति के अतत्आत्मव्यतिरिक्तमुत्सिसृक्षवस्त्यक्तुमिच्छवः यतःअनन्यसौहृदाःनास्तिअन्यस्मिन्सौहृदंयेषांते कुतः दौ रात्म्यंदेहाद्यहंभावंविसृज्य देहेअहंकाराभावादन्यत्रसौहृदंनास्त्यतस्त्यक्तुमिच्छवइत्यर्थः कथं नेतिनेतीत्येवं अत्रविद्वदनुभवमपिप्रमाण यति हृदोपगुह्यध्यानादिनाततःसमाहितैरवसितंनिश्चितं यद्वा अवसितमवबद्धमात्मतयागृहीतमित्यर्थः ॥ ३२ ॥ एवंप्राप्तावधिकारिणो दर्शयति तएतदिति देहजमहमिति गेहजंममेति ॥ ३३ ॥ तत्प्राप्त्युपायमाह अतिवादानिति ॥ ३४ ॥ ॥ ॥

शास्त्रसमाप्तौगुरुंप्रणमति नमइति कृष्णायव्यासाय अध्यगामधिगतवानास्मि ॥ ३५ ॥ इमांसंहितामध्यगामित्युक्तंतत्रपुराणसंहिताविभागंविशेषतोबुभुत्सुर्वेदाविभागमपिप्रसंगात्पृथक्पृच्छाति पैलादिभिरिति हेसौम्य ॥ ३६ ॥ तत्रप्रथमंवेदाविर्भावप्रकारमाह समाहितात्मनइत्यष्टभिः ब्रह्मणोहृदयआकाशस्तस्मान्नादोऽभूत् यःकर्णपुटपिधानेश्रोत्रनिरोधादस्मदादिष्वपिविभाव्यतेवितर्क्यते ॥ ३७ ॥ प्रसंगान्नादोपासकानांमोक्षफलमाह यस्यनादस्योपासनयाआत्मनोमलंधूत्वाअपोह्य कथंभूतंमलंतमाह द्रव्यमधिभूतं क्रियाअध्यात्मं कारकमधिदैवं एवंत्रिधाभूताआख्यायस्येतितथातं ॥ ३८ ॥ त्रिवृत्त्रिमात्रः कंठोष्ठादिभिरुच्चार्यमाणस्योकारस्याक्षरसमाम्नायांतर्भावात्सूक्ष्मतयातंविशिनष्टि अव्यक्तःप्रभवोयस्यसः तदेवाह स्वराट्स्वतएवहृदिप्रकाशमानः तमेवकार्येणलक्षयति यत्तदिति नपुंसकत्वंलिंगशब्द

नमोभगवतेतस्मैकृष्णायाकुंठमेधसे ॥ यत्पादांबुरुहध्यानात्संहितामध्यगामिमां ॥३५॥ शौनकउवाच पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः॥वेदाश्चकतिधाव्यस्ताएतत्सौम्याभिधेहिनः ॥३६॥ सूतउवाच समाहितात्मनोब्रह्मन्ब्रह्मणःपरमेष्ठिनः॥ हृदाकाशादभून्नादोवृत्तिरोधाद्विभाव्यते ॥३७॥ यदुपासनयाब्रह्मन्योगिनोमलमात्मनः ॥ द्रव्यक्रियाकारकाख्यंधूत्वायांत्यपुनर्भवं ॥३८॥ ततोऽभूत्त्रिवृदोंकारोयोऽव्यक्तप्रभवःस्वराट् ॥ यत्तल्लिंगंभगवतोब्रह्मणःपरमात्मनः ॥३९॥ शृणोतियइमंस्फोटंसुप्तश्रोत्रेचशून्यदृक् ॥ येनवाग्व्यज्यतेयस्यव्यक्तिराकाशआत्मनः ॥४०॥ स्वधाम्नोब्रह्मणःसाक्षाद्वाचकःपरमात्मनः ॥ ससर्वमंत्रोपनिषद्वेदबीजंसनातनं ॥ ४१ ॥ ॥ ॥ ॥ ॥

विशेषणत्वात् लिंगंगमकं ॥ ३९ ॥ कोसौपरमात्मातमाह शृणोतीति इमंस्फोटंअव्यक्तमोंकारं ननुजीवएवतंशृणोतुनेत्याह सुप्तश्रोत्रे कर्णपिधानादिनाअवृत्तिकेपिश्रोत्रेसतिजीवस्तुकरणाधीनत्वान्नतदाश्रोता तदुपलब्धिस्तुतस्यपरमात्मद्वारिकैवेतिभावः ईश्वरस्तुनैवं यतः शून्यदृक् शून्येपींद्रियवर्गेदृक्ज्ञानंयस्य तथाहि सुप्तोयदाशब्दंश्रुत्वाप्रबुध्यतेनतदाजीवःश्रोता लीनेंद्रियत्वात् अतोयस्तदाशब्दंश्रुत्वाजीवंप्रबोधयति सयथापरमात्मैवतद्वत् कोऽसावोंकारस्तंविशिनष्टिसार्धेन येनवाक्बृहतीव्यज्यते यस्यचहृदयाकाशेआत्मनःसकाशाद्व्यक्तिः अभिव्यक्तिः ॥ १० ॥ किंच स्वधाम्नःस्वस्याश्रयःकारणंयत्ब्रह्मतस्य किंच परमात्मांशभूतसमस्तदेवतावाचकोपीत्याशयेनाह सइति सर्वमंत्राणामुपनिषद्रहस्यं सूक्ष्मरूपमित्यर्थः तत्रहेतुः वेदानांबीजंकारणं बीजत्वेप्यविकारितामाह सनातनंसदैकरूपं तस्यब्रह्मरूपत्वात् ॥४१॥

इदानींततःसर्वप्रपंचोत्पत्तिप्रकारमाह तस्यहीति त्रयस्त्रिसंख्यायुक्ताभावायैरकारोकारमकारैर्धार्यंते तत्कारणत्वात्तानेवाह गुणाःसत्वादयः
नामानिऋग्यजुःसामानि अर्थाभूर्भुवःस्वर्लोकाःवृत्तयोजाग्रदाद्याः ॥ ४२ ॥ ततस्तेभ्योवर्णेभ्यः अक्षराणांसमाम्नायंसमाहारंतमेवाह अं
तस्थायरलवाः ऊष्माणःशषसहाः स्वराअकाराद्याः स्पर्शाःकादयः ऱ्हस्वदीर्घाश्च आदिशब्दाज्जिव्हामूलीयादयः तएवलक्षणंस्वरूपं
यस्यतं ॥ ४३ ॥ विभुश्चतुर्मुखस्वरूपोभगवान् असृजदितिपूर्वस्यैवानुषंगः चातुर्होत्रविवक्षयाचत्वारोहोत्रोपलक्षिताऋत्विजश्चतुर्होता
रस्तैरनुष्ठेयंहौत्राध्वर्यवादिकंकर्मचातुर्होत्रंतद्विवक्षया ॥ ४४ ॥ पुत्रान्मरीच्यादीन् तान्वेदान् ब्रह्मकोविदान् वेदोच्चारणादिनिपुणान् ॥

तस्यह्यासंस्त्रयोवर्णाअकाराद्याभृगूद्वह ॥ धार्यंतेयैस्त्रयोभावागुणानामर्थवृत्तयः ॥४२ ॥ ततोऽक्षरसमा
म्नायमसृजद्भगवानजः ॥ अंतस्थोष्मस्वरस्पर्शऱ्हस्वदीर्घादिलक्षणं ॥४३ ॥ तेनासौचतुरोवेदांश्चतुर्भिर्व
दनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ॥४४॥ पुत्रानध्यापयत्तांस्तुब्रह्मर्षीन्ब्रह्मकोविदा
न् ॥ तेतुधर्मोपदेष्टारःस्वपुत्रेभ्यःसमादिशन् ॥ ४५ ॥ तेपरंपरयाप्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्यु
गेष्वथव्यस्ताद्वापरादौमहर्षिभिः ॥४६ ॥ क्षीणायुषःक्षीणसत्वान्दुर्मेधान्वीक्ष्यकालतः ॥ वेदान्ब्रह्मर्षयो
व्यस्यन्हृदिस्थाच्युतनोदिताः ॥ ४७ ॥ अस्मिन्नप्यंतरेब्रह्मन्भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालै
र्याचितोधर्मगुप्तये ॥ ४८ ॥ पराशरात्सत्यवत्यामंशांशकलयाविभुः ॥ अवतीर्णोमहाभागवेदंचक्रेचतुर्वि
धं ॥ ४९ ॥ ऋगथर्वयजुःसाम्नांराशीनुद्धृत्यवर्गशः ॥ चतस्रःसंहिताश्चक्रेमंत्रैर्मणिगणाइव ॥ ५० ॥ ता
सांसचतुरःशिष्यानुपाहूयमहामतिः ॥ एकैकांसंहितांब्रह्मन्नेकैकस्मैददौविभुः ॥ ५१ ॥ ॥

॥ ४५ ॥ एवंचतुर्युगेषुप्राप्ताःद्वापरादौद्वापरमादिर्यस्यतदंत्यांशलक्षणस्यकालस्यतस्मिन्द्वापरांतेवेदविभागप्रसिद्धेः शंतनुसमकालंव्या
सावतारप्रसिद्धेश्च व्यस्ताविभक्ताः ॥ ४६ ॥ तत्रहेतुः क्षीणायुषोजनान् तर्हिपुरुषबुद्धिप्रभवत्वादनादरणीयंस्यादित्याशंक्याह हृदिस्थे
ति ॥ ४७ ॥ एवंसामान्यतोवेदविभागक्रममुक्त्वावैवस्वतमन्वंतरेविशेषतोनिरूपयितुमाह अस्मिन्नपीति ॥ ४८ ॥ अंशोमायातस्यांशःसत्वंत
स्यकलयाअंशेनअवतीर्णःसन् ॥ ४९ ॥ चातुर्विध्यमेवाह ऋगिति ऋगादिमंत्राणांराशीन्वर्गशस्तत्तत्प्रकरणभेदैरुद्धृत्ययथाऽनेकविधमणि
राशेर्मणिगणाःपद्मरागादयोविविच्योद्धियंतेतद्वदुद्धृत्यतैर्मंत्रैश्चतस्रःऋगादिसंहिताश्चक्रे ॥ ५० ॥ तासांसंहितानांमध्येएकैकां ॥ ५१ ॥

ऋक्समुदायरूपत्वात् बह्वृचाख्यां नितरांप्रश्लेषेणगद्यमानत्वान्निगदाख्यं ॥ ५२ ॥ छंदःसुगीयमानत्वाच्छंदोगाख्यांसंहितां ॥ ५३ ॥ तत्रऋ
ग्वेदशाखाविभागमाह पैलइति स्वसंहितांद्विधाविभज्यइंद्रप्रमितयेबाष्कलायऊचे ॥ ५४ ॥ सबाष्कलोपिस्वसंहितांचतुर्धाव्यस्यबोध्या
दिभ्यःशिष्येभ्यआह हेभार्गव ॥५५॥ इंद्रप्रमितिरपिस्वांसंहितांस्वसुतंमांडूकेयमध्यापयामास तस्यमांडूकेयस्यशिष्योदेवमित्रः ॥५६॥
तत्सुतःमांडूकेयसुतःशाकल्योवात्स्यादिषुपंचस्वधात् तानध्यापयामासेत्यर्थः ॥ ५७ ॥ तच्छिष्यःशाकल्यशिष्यःस्वसंहितांत्रेधाविभज्य



पैलायसंहितामाद्यांबह्वृचाख्यामुवाचह ॥ वैशंपायनसंज्ञायनिगदाख्यंयजुर्गणं ॥५२॥ साम्नांजैमिनयेप्रा
हतथाछंदोगसंहितां॥अथर्वांगिरसींनामस्वशिष्यायसुमंतवे ॥५३॥ पैलःस्वांसंहितामूचइंद्रप्रमितयेमुनिः
॥ बाष्कलायचसोप्याहशिष्येभ्यःसंहितांस्वकां ॥ ५४ ॥चतुर्धाव्यस्यबोध्याययाज्ञवल्क्यायभार्गव॥पराश
रायाग्निमित्रेइंद्रप्रमितिरात्मवान् ॥ ५५ ॥ अध्यापयत्संहितांस्वांमांडूकेयमृषिंकविं॥तस्यशिष्योदेवमित्रः
सौभर्यादिभ्यऊचिवान् ॥५६॥ शाकल्यस्तत्सुतस्तांतुपंचधाव्यस्यसंहितां॥वात्स्यमुद्गलशालीयगोखल्य
शिशिरेष्वधात्॥ ५७ ॥जातूकर्ण्यश्चतच्छिष्यःसनिरुक्तांस्वसंहितां॥बलाकपैजवैतालविरजेभ्योददौमुनिः
॥५८॥ बाष्कलिःप्रतिशाखाभ्योवालखिल्याख्यसंहितां ॥ चक्रेबालायनिर्भज्यकासारश्चैवतांदधुः ॥५९॥
बह्वृचाःसंहिताह्येताएभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छंदसांव्यासंसर्वपापैःप्रमुच्यते ॥ ६० ॥ वैशंपायनशि
ष्यावैचरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांऽहःक्षपणंस्वगुरोर्व्रतं ॥६१॥ याज्ञवल्क्यश्चतच्छिष्यआहाहो
भगवन्कियत् ॥ चरितेनाल्पसाराणांचरिष्येऽहंसुदुश्चरं॥६२॥ चतुर्थंवैदिकपदार्थव्याख्यानरूपंनिरुक्तंचकृत्वाबलाका
दिभ्यश्चतुर्भ्योददौ ॥ ५८ ॥ बाष्कलिःपूर्वोक्तस्यबाष्कलस्यपुत्रःप्रतिशाखाभ्यःउक्तसर्वशाखाभ्यः बालायन्यादयस्तामादधुःअधीतवंतः
॥ ५९ ॥ ऋक्शाखोपसंहारपूर्वकंतच्छ्रवणफलमाह बह्वृचाइतिएतच्छंदसामेतेषांछंदसां ॥ ६० ॥ यजुर्वेदेतैत्तिरीयशाखोत्पत्तिप्रस्ता
वमाह वैशंपायनशिष्याइत्यादिना चरकनामानिरुक्तमाह यच्चेरुरितियद्यस्मात् ब्रह्महत्यारूपमंहःक्षपयतीतितथाततूस्वगुरोरनुष्ठेयंव्रतं तच्च
रणाच्चरकाइत्यर्थः ॥ ६१ ॥ तच्छिष्योवैशंपायनशिष्यः अल्पसाराणामेतेषांचरितेनाकियत् सुदुश्चरमहंचरिष्यामीति ॥ ६२ ॥

त्रिप्राणामत्रमंत्राअत्रज्ञाकर्त्रा मत्तोऽधीतमाशुत्यजेति ॥ ६३ ॥ देवरातसुतोयाज्ञवल्क्यः ॥ ६४ ॥ छर्दितस्यादानंविप्ररूपेणानुचितमि
तितित्तिराःपक्षिविशेषाभूत्वाआददुः ततश्चतैत्तिरीयाइतिप्रसिद्धाः सुपेशलाअतिरम्याः बहुवचनमवांतरभेदविवक्षया ॥ ६५ ॥ काण्व
माध्यंदिनादिशाखाप्रसंगमाह याज्ञवल्क्यइत्यादिना गुरोर्वैशंपायनस्यव्यासेनविभज्यानुक्तत्वादविद्यमानानिअधिकानिगवेषयन्मृगयन्सू
पतस्थेसम्यक्तुष्टाव ईश्वरमृगादिवेदानां तथाचश्रुतिः ऋग्भिःपूर्वाह्णेदिविदेवईयते यजुर्वेदेनातिष्ठतिमध्येअन्हः सामवेदेनास्तमयेमही
यते वेदैरशून्यस्त्रिभिरेतिसूर्यइति ॥ ६६ ॥ नमोभगवतेतुभ्यमादित्याय योभगवानेकएवेमांलोकयात्रामनुवहतीत्यन्वयः तदेवदर्शय

इत्युक्तोगुरुरप्याहकुपितोयाह्यलंत्वया ॥ विप्रावमंत्राशिष्येणमदधीतंत्यजाश्विति ॥६३॥ देवरातसुतःसो
पिछर्दित्वायजुषांगणं ॥ ततोगतोऽथमुनयोददृशुस्तान्यजुर्गणान् ॥ ६४ ॥ यजूंषितित्तिराभूत्वातल्लोलुपत
याददुः ॥ तैत्तिरीयाइतियजुःशाखाआसन्सुपेशलाः ॥६५॥ याज्ञवल्क्यस्ततोब्रह्मन्छंदांस्यधिगवेषयन् ॥ गु
रोरविद्यमानानिसूपतस्थेऽर्कमीश्वरं ॥ ६६ ॥ याज्ञवल्क्यउवाच ओंनमोभगवतेआदित्यायाखिलज
गतामात्मस्वरूपेणकालस्वरूपेणचतुर्विधभूतनिकायानांब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषुबहिरपिचाका
शइवोपाधिनाऽव्यवधीयमानोभवानेकएवक्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गा
भ्यामिमांलोकयात्रामनुवहति ॥ ६७ ॥ यदुहवावविबुधर्षभसावितरदस्तपत्यनुसवनमहरहराम्नायवि
धिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनभगवतःसमभिधीमहितपनमंडलं ॥ ६८ ॥

ति अखिलजगतामात्मस्वरूपेणांतर्हृदयेषुकालस्वरूपेणचबहिरपिवर्तमानइति अखिलजगतामित्यस्यप्रपंचः चतुर्विधेति हृदयांतर्व
र्तित्वेऽपिजीववत्तेनोपाधिनाऽव्यवधीयमानोऽनाच्छाद्यमानः कालस्वरूपेणचेत्यस्यप्रपंचः क्षणेति क्षणलवादयोयेऽवयवास्तैरुपचिताः
संवत्सरास्तेषांगणेनप्रत्यब्दमपामादानंशोषणंविसर्गोवृष्टिस्ताभ्यां अनेनगायत्रीप्रथमपादोक्तवरेण्यतानुवर्णिता ॥ ६७ ॥ द्वितीयपादा
र्थानुवर्णनेनस्तौति यदुहेति हेविबुधर्षभहेसवितःयदप्यदोभगवतस्तवमंडलंतपतितरसमाभिधीमहीतिसम्यगाभिमुख्येनध्यायेम पुनरत
स्यैवसंबोधनंप्रत्यहंत्रिषवणंवैदिककर्ममार्गेणस्तुवतांभक्तानांयान्यखिलानिदुरितानितत्फलानिचवृजिनानिदुःखानितेषांबीजमज्ञानंचते
षामवभर्जनविनाशकहेतपनेति ॥ ६८ ॥ ॥ ॥ ॥ ॥

तृतियपादेनस्तौति यइहेति योभवान्स्थावरजंगमसमूहानांस्वाश्रयाणांजीवानांमनइंद्रियप्राणगणान्अनात्मनोजडान्स्वयमात्मैवांत र्यामीप्रचोदयतिप्रवर्तयति ॥ ६९ ॥ तृतियपादमेवमंडलस्थपरतयाव्याचक्षाणःस्तौति यएवेति यएकएवभगवान्अतिकरालवदनोयोंऽधकारसंज्ञोऽजगरग्रहस्तेनागिलितमतएवमृतकमिवविचेतनंस्वधर्माख्यंयदात्मावस्थानंप्रत्यक्प्रवणत्वंतदेवश्रेयस्तस्मिन्प्रवर्तयति किंच यो भवानवनिपतिरिवाटतिगच्छति ॥ ७० ॥ आशापालैरिंद्रादिभिःकमलकोशयुक्तैरतत्तुल्यैर्वांऽजलिभिरुपहृताहंणःदत्तार्घः ॥ ७१ ॥

यइहवावस्थिरचरनिकराणांनिजानिकेतनानांमनइंद्रियासुगणाननात्मनःस्वयमात्मांतर्यामीप्रचोदयति ॥ ॥ ६९ ॥ यएवेमंलोकमतिकरालवदनांधकारसंज्ञाजगरग्रहगिलितंमृतकमिवाविचेतनमवलोक्यानुकंपयापरमकारुणिकईक्षयैवोत्थाप्याहरहरनुसवनंश्रेयसिस्वधर्माख्यात्मावस्थानेप्रवर्तयत्यवनिपतिरिवासाधूनांभयमुदीरयन्नटति ॥ ७० ॥ परितआशापालैस्तत्रतत्रकमलकोशांजलिभिरुपहृतार्हणः ॥ ७१ ॥ अथहभगवंस्तवचरणनलिनयुगलंत्रिभुवनगुरुभिर्वंदितमहमयातयामयजुःकामउपसरामीति ॥ ७२ ॥ सूतउवाच एवंस्तुतःसभगवान्वाजिरूपधरोहरिः ॥ यजूंष्ययातयामानिमुनयेऽदात्प्रसादितः ॥ ७३ ॥ यजुर्भिरकरोच्छाखादशपंचशतैर्विभुः ॥ जगृहुर्वाजसन्यस्ताःकाण्वमध्यंदिनादयः ॥ ७४ ॥ जैमिनेःसामगस्यासीत्सुमंतुस्तनयोमुनिः ॥ सुन्वांस्तुतत्सुतस्ताभ्यामेकैकांप्राहसंहितां ॥ ७५ ॥ सुकर्माचापि तच्छिष्यःसामवेदतरोर्महान् ॥ सहस्रंसंहिताभेदंचक्रेसाम्नांततोद्विजः ॥ ७६ ॥

यतएवंभूतस्त्वमथातःहरफुटंअयातयामानिअन्यैर्यथावदविज्ञातानियजूंषितत्कामोहमुपसरामिभजामि ॥ ७२ ॥ एवंस्तुतःप्रसादितश्च ॥ ॥ ७३ ॥ पंचदशशाखाःयाःशतैरपरिमितैर्यजुर्भिरकरोत् सतैरितिपाठेसएषयाज्ञवल्क्यस्तैर्यजुर्भिरकरोदिति जगृहुःअधीतवंतः रविणा इत्ररूपेणवाजेभ्यःकेसरेभ्योवाजेनवेगेनवासंन्यस्तास्त्यक्ताःशाखावाजसनीसंज्ञास्ताःशाखाइतिवा ॥ ७४ ॥ सामशाखाविभागमाह जैमिनेरिति तत्सुतःसुमंतुसुतस्ताभ्यांपुत्रपौत्राभ्यांक्रमेणैकैकांप्राह ॥ ७५ ॥ तच्छिष्यःजैमिनेःशिष्यःमहान्अतिमेधावीसहस्रंसांहितारूपंभेदंचक्रे साम्नांतंसंहिताभेदं ततःतदनंतरं ॥ ७६ ॥ ॥ ॥ ॥

सुकर्मणःशिष्यएकःकौशल्योहिरण्यनाभः पौष्यंजिर्नामैकरतौजगृहतुः आवंत्यश्चान्यस्तस्यैवशिष्यःसोऽपिजग्राह ॥ ७७ ॥ पौष्यंज्यावंत्ययोरपिचकाराद्धिरण्यनाभस्यापिपंचशतानिशिष्याआसन् तेतावतीःशाखायथायथंजगृहुः तानुदीच्यान्सतःकालतःकांश्चित्प्राच्यांश्चप्रचक्षतइत्यर्थः यथैवोक्तंवैष्णवे उदीच्याःसामगाःशिष्यास्तस्यपंचशतंस्मृताः ॥ हिरण्यनाभात्तावत्यःसंहितायैर्द्विजोत्तमैः ॥ गृहीतास्तेऽपिचोच्यंतेपंडितैःप्राच्यसामगाइति ॥७८॥ पुनरप्येतेषांत्रयाणांसुकर्मणःशिष्याणांशिष्यांतरैःशाखाबाहुल्यंदर्शयति लौगाक्षिरितिद्वाभ्यां ॥७९॥ कृतोनामहिरण्यनाभस्यशिष्यःस्वशिष्येभ्यऊचे शेषाअन्याअपियाःप्रसिद्धाःशाखास्ताआवंत्यःस्वशिष्येभ्यऊचइति ॥ ८० ॥ इतिद्वादशे

हिरण्यनाभःकौशल्यःपौष्यंजिश्चसुकर्मणः ॥ शिष्यौजगृहतुश्चान्यआवंत्योब्रह्मवित्तमः ॥ ७७ ॥ उदीच्याःसामगाःशिष्याआसन्पंचशतानिवै ॥ पौष्यंज्यावंत्ययोश्चापितांश्चप्राच्यान्प्रचक्षते ॥७८॥ लौगाक्षिर्मांगलिःकुल्यःकुशीदःकुक्षिरेवच ॥ पौष्यंजिशिष्याजगृहुःसंहितास्तेशतंशतं ॥७९॥ कृतोहिरण्यनाभस्य चतुर्विंशतिसंहिताः ॥ शिष्यऊचेस्वशिष्येभ्यःशेषाआवंत्यआत्मवान् ॥ ८० ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेवेदशाखाप्रणयनंनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ सूतउवाच अथर्ववित्सुमंतुश्चशिष्यमध्यापयत्स्वकां ॥ संहितांसोऽपिपथ्यायवेददर्शायचोक्तवान् ॥ १ ॥ शौल्कायनिर्ब्रह्मबलिर्मोदोषःपिप्पलायनिः ॥ वेददर्शस्यशिष्यास्तेपथ्यशिष्यानथोशृणु ॥ कुमुदःशुनकोब्रह्मन्जाजलिश्चाप्यथर्ववित् ॥ २ ॥ बभ्रुःशिष्योऽथांगिरसःसैंधवायनएवच ॥ अधीयेतांसंहितेद्वेसावर्ण्याद्यास्तथाऽपरे ॥ ३ ॥

टीकायांषष्ठोध्यायः ॥ ६ ॥ ॥ सप्तमेऽथर्वविस्तारःपुराणव्यसनंततः ॥ पुराणलक्षणादीनिफलंभागवतश्रुतेः ॥ १ ॥ क्रमप्राप्तमथर्ववेदविभागमाह शिष्यंकबंधनामानं स्वकांस्वकीयांसंहितां सोपिशिष्योपितांद्विधाविभज्य तदुक्तंवैष्णवे अथर्ववेदंसमुनिःसुमंतुरमितद्युतिः शिष्यमध्यापयामासकबंधंसोपितंद्विधा ॥ कृत्वातुवेददर्शायतथापथ्यायदत्तवानिति ॥१॥ तत्रवेददर्शःस्वसंहितांचतुर्धाविभज्यचतुरःशिष्यानध्यापयामास पथ्यश्चत्रिधाविभज्यत्रीनितिसार्द्धेनाह शौल्कायनिरिति ॥२॥ आंगिरसःशुनकस्यशिष्योबभ्रुः सैंधवायनश्च तदुक्तं शुनकस्तुद्विधाकृत्वाददावेकांतुबभ्रवे ॥ द्वितीयांसंहितांप्रादात्सैंधवायनसंज्ञिनइतिसावर्ण्याद्याःसैंधवायनादीनांशिष्याः ॥ ३ ॥

नक्षत्रकल्पः शांतिकल्पश्चेतिद्वौ तदुक्तं नक्षत्रकल्पोवेदानांसंहितानांतथैवच ॥ चतुर्थः स्यादांगिरसः शांतिकल्पश्चपंचमइति नक्षत्रक
ल्पादीनांकर्तारस्तन्नामभिरुच्यंते ॥ ४ ॥ ५ ॥ मत्पितुर्मुखादिति प्रथमंव्यासः षट्संहिताः कृत्वामत्पित्रेरोमहर्षणायप्रादात् तस्यचमुखा
देतेत्रय्यारुण्यादयः एकैकांसंहितामधीयंत एतेषांषण्णांशिष्यः अहंताः सर्वाः समधीतवान् ॥ ६ ॥ रामशिष्योयोऽकृतव्रणएवंचत्वारोवयं
मूलसंहिताइत्यनेनततः संहिताबाहुल्यंसूचितं ॥ ७ ॥ शुकपरीक्षित्संवादेनिरूपितमपिपुराणलक्षणंतद्भेदकथनायदर्शयति पुराणेति ॥
॥ ८ ॥ अस्यविश्वस्यअत्रसर्गोविसर्गश्चस्थानंपोषणमूतयः ॥ मन्वंतरेशानुकथानिरोधोमुक्तिराश्रयइत्यत्रोक्तेः स्थानपोषणेवृत्तिरक्षाशब्दा

नक्षत्रकल्पः शांतिश्चकश्यपांगिरसादयः ॥ एतेआथर्वणाचार्याः शृणुपौराणिकान्मुने ॥ ४ ॥ त्रय्यारुणिः
कश्यपश्चसावर्णिरकृतव्रणः ॥ वैशंपायनहारीतौषड्वैपौराणिकाइमे ॥ ५ ॥ अधीयंतव्यासशिष्यात्संहि
तांमत्पितुर्मुखात् ॥ एकैकामहमेतेषांशिष्यः सर्वाः समध्यगां ॥ ६ ॥ कश्यपोऽहंचसावर्णीरामशिष्योऽकृ
तव्रणः ॥ अधीमहिव्यासशिष्याच्चतस्रोमूलसंहिताः ॥ ७ ॥ पुराणलक्षणंब्रह्मन्ब्रह्मर्षिभिर्निरूपितं ॥
शृणुष्वबुद्धिमाश्रित्यवेदशास्त्रानुसारतः ॥ ८ ॥ सर्गोऽस्याथविसर्गश्चवृत्तिरक्षांतराणिच ॥ वंशोवंश्यानु
चरितंसंस्थाहेतुरपाश्रयः ॥ ९ ॥ दशभिर्लक्षणैर्युक्तंपुराणंतद्विदोविदुः ॥ केचित्पंचविधंब्रह्मन्महदल्पव्यव
स्थया ॥ १० ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोहमः ॥ भूतसूक्ष्मेंद्रियार्थानांसंभवः सर्गउच्यते ॥ ११ ॥

भ्यामुच्येतेअंतराणिमन्वंतराणि वंशोवंश्यानुचरितमितिईशानुकथाः संस्थानिरोधः अनेनैवात्यंतिकलयरूपामुक्तिरप्युक्ता हेतुशब्देनजी
वाश्रयवासनाशब्दवाच्याऊतयोगृहीताः ॥ ९ ॥ दशभिरेतैर्लक्षणैरर्थैर्युक्तंमहापुराणंविदुः केचित्पंचविधं सर्गश्चप्रतिसर्गश्चवंशोमन्वंतरा
णिच ॥ वंशानुचरितंचेतिपुराणंपंचलक्षणमिति महत्पुराणमल्पंचेतिव्यवस्थया यत्रदशापिलक्षणानिपृथक्पृथक्निरूप्यंतेतन्महापुराणं
यत्रत्वन्येषांपंचस्वेवांतर्भावस्यविवक्षातदल्पमितिव्यवस्थयेत्यर्थः ॥ १० ॥ सर्गादिलक्षणानिव्याचष्टे अव्याकृतेत्यादिना प्रधानस्यगुणा
नांक्षोभात् योमहांस्तस्माद्यस्त्रिवृदहंकारस्तस्माद्भूतमात्राणांसूक्ष्माणामिंद्रियाणांचतदर्थानांचस्थूलानांदेवतानांचसंभवः सर्गः कारणसृष्टि
सर्गइत्यर्थः उच्यतइतियथाऽपेक्षमुत्तरत्राप्यनुषंगः ॥ ११ ॥ ॥ ॥ ॥

विसर्गंव्याचष्टे पुरुषेणेश्वरेणानुगृहीतानामेतेषांमहदादीनां पूर्वकर्मवासनाप्रधानोऽयंसमाहारःकार्यभूतश्चराचरप्राणिरूपोबीजाद्बीजमि
वप्रवाहापन्नोविसर्गउच्यतइत्यर्थः ॥ १२ ॥ चराणांभूतानांसामान्यतोऽचराणिचकाराच्चराणिचकामात्‌वृत्तिः तत्रनृणांस्वेनभावेनकामा
च्चोदनयाऽपिवायानियता वृत्तिर्जीविकाकृतासावृत्तिरुच्यतइत्यर्थः ॥ १३ ॥ तिर्यङ्मर्त्यर्षिदेवेषुयेअच्युतावतारास्तेषामीहालीलासावि
श्वस्यरक्षोच्यतइत्यर्थः यैरवतारैरितिसमासान्निष्कृष्यकथंचित्संबंधःत्रयीद्विषोदैत्याः ॥ १४ ॥ षड्विधंमन्वंतरमुच्यते षड्विधत्वमेवाह म
नुरिति मन्वादयःषडेते वर्गाःस्वस्वाधिकारेणयदाप्रवर्त्ततेतन्मन्वंतरमित्यर्थः ॥ १५ ॥ वंशमाह राज्ञामिति ब्रह्मणःसकाशात्प्रसूतिर्येषां

पुरुषानुगृहीतानामेतेषांवासनामयः ॥ विसर्गोऽयंसमाहारोबीजाद्बीजंचराचरं ॥ १२ ॥ वृत्तिर्भूतानिभू
तानांचराणामचराणिच ॥ कृतास्वेननृणांतत्रकामाच्चोदनयाऽपिवा ॥ १३ ॥ रक्षाऽच्युतावतारेहाविश्व
स्यानुयुगेयुगे ॥ तिर्यङ्मर्त्यर्षिदेवेषुहन्यंतेयैस्त्रयीद्विषः ॥ १४ ॥ मन्वंतरंमनुर्देवामनुपुत्राःसुरेश्वरः ॥ ऋष
योंऽशावतारश्चहरेःषड्विधमुच्यते ॥ १५ ॥ राज्ञांब्रह्मप्रसूतानांवंशस्त्रैकालिकोऽन्वयः ॥ वंश्यानुचरितंतेषां
वृत्तंवंशधराश्चये ॥ १६ ॥ नैमित्तिकःप्राकृतिकोनित्यआत्यंतिकोलयः ॥ संस्थेतिकविभिःप्रोक्ताचतुर्धाऽस्य
स्वभावतः ॥ १७ ॥ हेतुर्जीवोस्यसर्गादेरविद्याकर्मकारकः ॥ यंवानुशयिनंप्राहुरव्याकृतमुतापरे ॥ १८ ॥ व्य
तिरेकान्वयोयस्यजाग्रत्स्वप्नसुषुप्तिषु ॥ मायामयेषुतद्ब्रह्मजीववृत्तिष्वपाश्रयः ॥ १९ ॥ ॥

शुद्धानामित्यर्थः तेषामन्वयोवंशस्तत्रभवावंश्यास्तेषांवृत्तं येचतद्वंशधरास्तेषांचवृत्तंवंश्यानुचरितमुच्यते ॥ १६ ॥ अस्याविश्वस्य स्वभा
वतोमायातोनिष्पन्नस्य यद्वामायातश्चतुर्विधोलयइति ॥ १७ ॥ अस्यजगतःसर्गादेर्हेतुर्निमित्तंजीवःसोऽत्रहेतुरुच्यतेइत्यर्थः तस्यनिमित्त
तामाह अविद्याकर्मकारकःकर्मकर्ताजीवादृष्टप्रयुक्तत्वाद्विश्वसर्गादेःसतुतत्रहेतुरित्यर्थः नन्वनुशयीननिमित्तमितिकेचित्‌अव्याकृतमित्यप
रेतत्राह यमिति चैतन्यप्राधान्येनानुशयिनमुपाधिप्राधान्याविवक्षयाअव्याकृतं ॥ १८ ॥ अपाश्रयमाह व्यतिरेकेति जाग्रदादिष्वव
स्थासुजीवतयावर्ततइतिजीववृत्तयोविश्वतैजसप्राज्ञास्तेषुमायामयेषुसाक्षितयाऽन्वयःसमाध्यादौचव्यतिरेकोयस्यतद्ब्रह्मसंसारप्रतीतिबाध
योरधिष्ठानावधिभूतमपाश्रयउच्यतइत्यर्थः ॥ १९ ॥ ॥ ॥ ॥

तदेवसदृष्टांतंप्रपंचयति पदार्थेषुघटादिषुद्रव्यंमृदादियथायुतमन्वितमयुतंचबहिरप्यवस्थानात् रूपनामसुचसन्मात्रंसत्तामात्रंयथा एवं बीजंगर्भाधानमादिर्यासांपंचतांऽतोयासांतासुदेहावस्थासुनवस्वपिअधिष्ठानत्वेनयुतमयुतंचयत्तदपाश्रयइति ॥ २० ॥ एवंदशापिलक्षणानिव्याख्यायवर्णयंति महात्मानइति यदुक्तंतदाह विरमेतेति यदासर्गादीनांमायामयत्वानुसंधानेनवामदेवादेरिवस्वयमेवचित्तंविरमेत इहैवानुष्ठितेनयोगेनवादेवहूत्यादिवत् तदाविक्षेपाभावादात्मानंवेद तदाचाविद्यानिवृत्तेरीहायाःसंसाररूपायानिवर्ततइत्यर्थः ॥ २१ ॥ पुराणविभागप्रस्तावेनतल्लक्षणादिप्रासंगिकमुक्त्वाप्रस्तुतमाह एवंविधैर्लक्षणैर्लक्ष्याणि ॥ २२ ॥ २३ ॥ त्रिषट्अष्टादश ॥ २४ ॥ उपसं

पदार्थेषुयथाद्रव्यंसन्मात्रंरूपनामसु ॥ बीजादिपंचतांतासुह्यवस्थासुयुतायुतं ॥२०॥ विरमेतयदाचित्तंहित्वावृत्तित्रयंस्वयं ॥ योगेनवातदात्मानंवेदेहायानिवर्तते॥२१॥एवंलक्षणलक्ष्याणिपुराणानिपुराविदः ॥ मुनयोऽष्टादशप्राहुःक्षुल्लकानिमहांतिच ॥ २२ ॥ ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंसगारुडं ॥ नारदीयंभागवतमाग्नेयंस्कांदसंज्ञितं ॥ २३ ॥ भविष्यंब्रह्मवैवर्तंमार्कंडेयंसवामनं ॥ वाराहंमात्स्यंकौर्मंचब्रह्मांडाख्यमितित्रिषट् ॥ २४ ॥ ब्रह्मन्निदंसमाख्यातंशाखाप्रणयनंमुनेः ॥ शिष्यशिष्यप्रशिष्याणांब्रह्मतेजोविवर्द्धनं ॥ २५ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ शौनकउवाच सूतजीवचिरंसाधोवदतांवर ॥ तमस्यपारेभ्रमतांनृणांत्वंपारदर्शनः ॥ १ ॥ आहुश्चिरायुषमृषिंमृकंडतनयंजनाः ॥ यःकल्पांतेउर्वरितोयेनग्रस्तमिदंजगत् ॥ २ ॥ सवाअस्मत्कुलोत्पन्नःकल्पेऽस्मिन्भार्गवर्षभः ॥ नैवाधुनाऽपिभूतानांसंप्लवःकोऽपिजायते ॥ ३ ॥ एकएवार्णवेभ्राम्यद्ददर्शपुरुषंकिल ॥ वटपत्रपुटेतोकंशयानंत्वेकमद्भुतं ॥ ४ ॥

हरति ब्रह्मन्निति मुनेर्व्यासस्याशिष्यादीनांचब्रह्मतेजोब्रह्मवर्चसंतद्विवर्द्धनं श्रोतॄणामितिशेषः ॥२५॥ इतिद्वादशेटीकायांसप्तमोऽध्यायः ७ अष्टमेतुतपश्चर्यामार्कंडेयस्यमोहकैः ॥ कामादिभिरसंमोहोनरनारायणस्तुतिः ॥ १ ॥ पुराणविभागप्रसंगेनपुराणकर्तुर्मार्कंडेयस्यचरितं प्रस्तुतमाह सूतेति त्वमेववक्तुंयोग्यइत्याह तमसिसंसारे भ्रमतांपारदर्शनस्तान्निवर्तकः ॥ १ ॥ वक्तव्यमाह आहुरिति उर्वरितःअवशिष्टः येनकल्पांतेनैतत्कथंघटतइत्येकःप्रश्नः ॥ २ ॥ प्रलयाभावादप्येतन्नघटतइत्याह सवाइति यतोभार्गवर्षभः कोऽपिप्राकृतिको नैमित्तिकोवा ॥ ३ ॥ अन्यदप्यघटितमेवेत्याह एकएवेति तोकंबालकं ॥ ४ ॥ ॥ ॥

कौतूहलमौत्सुक्यं तंसंशयं नकेवलंत्वंमहायोगीकिंतुपुराणेष्वपिज्ञातृत्वेनसंमत ॥ ५ ॥ प्रश्नमभिनंदाति हेमहर्षे अयंप्रश्नः तत्रहेतुःना
रायणेति यत्रप्रश्नविषये ॥ ६ ॥ तत्रमार्कंडेयस्तपसाभगवंतमाराध्यमायाप्रदर्शनंवव्रे ततश्चतेनैवभगवन्माययासप्तकल्पादृष्टानान्यौरित्यु
त्तरंवकुमादितआरभ्यतस्यचरितमाह प्राप्तइत्यादिना मार्कंडेयोमृत्युंजिग्येइतिपंचमश्लोकेनान्वयः मध्यमग्रंथेनतस्यधर्मः कथ्यते प्राप्तो
द्विजातिसंस्कारःउपनयनाख्योयेनसः पितुःसकाशाद्गर्भाधानादिक्रमात् छंदांसिवेदान् ॥ ७ ॥ बृहद्व्रतधरोनैष्ठिकोब्रह्मचारीसन् ॥ ८ ॥

एषनःसंशयोभूयान्सूतकौतूहलंयतः ॥ तंनश्छिंधिमहायोगिन्पुराणेष्वपिसंमतः ॥ ५ ॥ सूतउवाच प्रश्न
स्त्वयामहर्षेऽयंकृतोलोकभ्रमापहः ॥ नारायणकथायत्रगीताकलिमलापहा ॥ ६ ॥ प्राप्तद्विजातिसंस्कारो
मार्कंडेयःपितुःक्रमात् ॥ छंदांस्यधीत्यधर्मेणतपःस्वाध्यायसंयुतः ॥ ७ ॥ बृहद्व्रतधरःशांतोजटिलोवल्कलां
बरः ॥ बिभ्रत्कमंडलुंदंडमुपवीतंसमेखलं ॥८॥ कृष्णाजिनंसाक्षसूत्रंकुशांश्चनियमर्द्धये॥ अग्न्यर्कगुरुविप्रा
त्मस्वर्चयन्संध्ययोर्हरिं ॥ ९ ॥ सायंप्रातःसगुरवेभैक्ष्यमाहृत्यवाग्यतः ॥ बुभुजेगुर्वनुज्ञातःसकृन्नोचेदुपोषि
तः ॥ १० ॥ एवंतपःस्वाध्यायपरोवर्षाणामयुतायुतं ॥ आराधयन्हृषीकेशंजिग्येमृत्युंसुदुर्जयं ॥ ११॥ ब्रह्मा
भृगुर्भवोदक्षोब्रह्मपुत्राश्चयेपरे ॥ नृदेवपितृभूतानितेनासन्नतिविस्मिताः ॥ १२॥ इत्थंबृहद्व्रतधरस्तपःस्वा
ध्यायसंयमैः ॥ दध्यावधोक्षजंयोगीध्वस्तक्लेशांतरात्मना ॥ १३ ॥ तस्यैवंयुंजतश्चित्तंमहायोगेनयोगिनः ॥
व्यतीयायमहान्कालोमन्वंतरषडात्मकः ॥१४॥ एतत्पुरंदरोज्ञात्वासप्तमेऽस्मिन्किलांतरे ॥तपोविशंकितो
ब्रह्मन्नारेभेतद्विघातनं ॥ १५॥ गंधर्वाप्सरसःकामंवसंतमलयानिलौ ॥ मनुयेप्रेषयामासरजस्तोकमदौ
तदा ॥ १६ ॥ तेवैतदाश्रमंजग्मुर्हिमाद्रेःपार्श्वउत्तरे ॥ पुष्पभद्रानदीयत्रचित्राख्याचशिलाविभो ॥१७॥

नियमर्द्धयेधर्मवृद्धये अग्न्यादिषुपंचसुहरिमर्चयन् ॥ ९ ॥ भैक्ष्यंगुर्वर्थमाहृत्यतेनानुज्ञातश्चेत्तर्हिबुभुजेनोचेत्सकृत्कदापिउपोषितोभवति ॥
॥ १० ॥ ११ ॥ तेनमृत्युजयेन ॥ १२ ॥ ध्वस्ताःक्लेशारागादयोयस्यतेनांतरात्मनाप्रत्याहृतमनसा ॥ १३ ॥ १४ ॥ तस्यतपोनिष्ठामि
तिहासेनवर्णयति एतदित्यादिना अस्मिन्सप्तमेमन्वंतरे तपसामत्पदंग्रहीष्यतीतिविशंकितः ॥ १५ ॥ मुनयेमुनिंभ्रंशयितुं रजसस्तोक
मतिप्रियमपत्यंलोभःमदश्चतौ ॥ १६ ॥ १७ ॥ ॥ ॥ ॥

तदाश्रमपदंप्रविष्टोवायुर्वबावितितृतीयेनान्वयः पुण्यैर्द्रुमैर्लताभिश्चांचितंपूजितं पुण्यद्विजानामृषीणांकुलैराकीर्णं पुण्याअत्यमलाजला शयायस्मिन् ॥ १८ ॥ मत्तभ्रमराणांसंगीतंयस्मिन् मत्तकोकिलानांकूजितंयस्मिन् मत्तबर्हिणएवनटास्तेषामाटोपःसंभ्रमोयस्मिन् मत्तद्विजानांपक्षिणांकुलैराकुलंव्याप्तं ॥ १९ ॥ एवंभूतंतदाश्रमपदंप्रविष्टःसन्वायुर्मलयानिलोववौप्रससार उत्तंभयन्उद्दीपयन् तत्रवृक्षेषु प्रवेशान्माद्यंहिमानिर्झरकणानामादानाच्छैत्यंपुष्पपरिष्वंगात्सौगंध्यंचोक्तं ॥ २० ॥ किंच उद्यंश्चंद्रोयस्मिंस्तन्निशावक्त्रंरजनीमुखंयस्मिन्सः

तदाश्रमपदंपुण्यंपुण्यद्रुमलतांऽचितं ॥ पुण्यद्विजकुलाकीर्णपुण्यामलजलाशयं ॥ १८ ॥ मत्तभ्रमरसंगीतं मत्तकोकिलकूजितं ॥ मत्तबर्हिनटाटोपंमत्तद्विजकुलाकुलं ॥ १९ ॥ वायुःप्रविष्टआदायहिमनिर्झरशीकरान् ॥ सुमनोभिःपरिष्वक्तोववावुत्तंभयन्स्मरं ॥२०॥ उद्यच्चंद्रनिशावक्त्रःप्रवालस्तबकालिभिः॥गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः ॥२१॥ अन्वीयमानोगंधर्वैर्गीतवादित्रयूथकैः॥ अदृश्यतात्तचापेषुःस्वःस्त्रीयूथपतिःस्मरः ॥ २२ ॥ हुत्वाग्निंसमुपासीनंददृशुःशक्रकिंकराः॥मीलिताक्षंदुराधर्षंमूर्तिमंतमिवानलं ॥२३॥ ननृतुस्तस्यपुरतःस्त्रियोऽथोगायकाजगुः ॥ मृदंगवीणापणवैर्वाद्यंचक्रुर्मनोरमं ॥२४॥ संदधेऽस्त्रंस्वधनुषि कामःपंचमुखंतदा॥मधुर्मनोरजस्तोकइंद्रभृत्याव्यकंपयन् ॥२५॥क्रीडंत्याःपुंजिकस्थल्याःकंदुकैस्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाःकेशविस्रंसितस्रजः ॥ २६॥ इतस्ततोभ्रमद्दृष्टेश्चलंत्याअनुकंदुकं॥वायुर्जहारतद्वासःसूक्ष्मंत्रुटितमेखलं ॥२७॥ विससर्जतदाबाणंमत्वातंस्वजितंस्मरः॥ सर्वंतत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥

प्रवालस्तबकानामालयःश्रेणयोयेषुतैः गुप्यंतिविटपःसंश्लिष्यंतीतिगोपाद्रुमालताश्चतेषांजालैःसमूहैराविर्बभूव ॥ २१ ॥ किंच तदागीतवादित्रयूथकैः गायकादिसमुदायिभिर्गंधर्वैरन्वीयमानः तथास्वःस्त्रियोऽप्सरसस्तासां यूथपतिः आत्तंचापमिषुश्चयेनसस्मरश्चतत्रादृश्यत ॥ २२ ॥ दुराधर्षमभिभवितुमशक्यं ॥ २३ ॥ २४ ॥ शोषणदीपनसंमोहनतापनोन्मादनाख्यानिपंचमुखानियस्यतदस्त्रंसंदधे तदैवमधुर्वसंतः रजस्तोकश्च पुंस्त्वमार्षं अन्येचेंद्रभृत्यास्तस्यमनोव्यकंपयन् ॥ २५ ॥ २६ ॥ किंच वायुर्मलयानिलःपुंजिकस्थल्यास्तत्सूक्ष्मंवासोजहार ॥ २७ ॥ सर्वंतेषांकर्मतत्रतस्मिन्मोघंव्यर्थं अनीशस्यनिर्दैवस्य ॥ २८ ॥

मुनेरपकुर्वतःप्रतिकूलमाचरंतः हेमुने ॥ २९ ॥ अहमःअहंकारस्य भावंविकारं ॥ ३० ॥ निस्तेजसंम्लानवदनं स्वराडिंद्रः ॥ ३१ ॥ नरनारायणरूपोहरिः ॥ ३२ ॥ तावनुवर्णयतिद्वाभ्यां ताविति रौरवंकृष्णाजिनंवल्कलंचांबरंययोस्तौ पवित्रेपाण्योर्ययोस्तौ त्रिवृत्रिगुणं नवतंतुकमितिवा त्रिवृद्बहिःपवमानमित्यादौनवकेप्रयोगादितिनवतंत्वादिमयं ॥ ३३ ॥ वेदंचदर्भमुष्टिं किंच साक्षात्तपएवतौ तत्रहेतुः

तइत्थमपकुर्वंतोमुनेस्तत्तेजसामुने ॥ दह्यमानानिवव्रतुःप्रबोध्याहिमिवार्भकाः ॥२९॥ इतींद्रानुचरैर्ब्रह्मन् धर्षितोऽपिमहामुनिः ॥ यन्नागादहमोभावंनतच्चित्रंमहत्सुहि ॥३०॥ दृष्वानिस्तेजसंकामंसगणंभगवान्स्वराट् ॥ श्रुत्वानुभावंब्रह्मर्षेर्विस्मयंसमगात्परं ॥ ३१ ॥ तस्यैवंयुंजतश्चित्तंतपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरनारायणोहरिः ॥३२॥ तौशुक्लकृष्णौनवकंजलोचनौचतुर्भुजौरौरववल्कलांबरौ ॥ पवित्रपाणीउपवीतकंत्रिवृत्कमंडलुंदंडमृजुंचवैणवं ॥३३॥ पद्माक्षमालामुतजंतुमार्जनंवेदंचसाक्षात्तपएवरूपिणौ ॥ तपत्तडिद्वर्णपिशंगरोचिषाप्रांशूदधानौविबुधर्षभार्चितौ ॥ ३४॥ तेवैभगवतोरूपेनरनारायणावृषी ॥ दृष्वोत्थायादरेणोच्चैर्ननामांगेनदंडवत् ॥३५॥ सतत्संदर्शनानंदनिर्वृतात्मेंद्रियाशयः ॥ हृष्टरोमाश्रुपूर्णाक्षोनसेहेतावुदीक्षितुं ॥३६॥ उत्थायप्रांजलिःप्रह्वऔत्सुक्यादाश्लिषन्निव ॥ नमोनमइतीशानौबभाषेगद्गदाक्षरः ॥३७॥ तयोरासनमादायपादयोरवनिज्यच ॥ अर्हणेनानुलेपेनधूपमाल्यैरपूजयत् ॥३८॥ सुखमासनमासीनौप्रसादाभिमुखौमुनी ॥ पुनरानम्यपादाभ्यांगरिष्ठाविदमब्रवीत् ॥ ३९ ॥ ॥

तपत्तडिद्वर्णंदेदीप्यमानविद्युत्संकाशंयत्पिशंगंरोचिस्तेनरूपिणौमूर्तिमंतौ तादृक्तेजोयुक्तमूर्तिभ्यांतपोमयत्वेनप्रकाशमानावित्यर्थः प्रांशू उन्नतौ ॥ ३४ ॥ उच्चैर्महताआदरेण ॥ ३५ ॥ तयोःसंदर्शनेनयआनंदस्तेननिर्वृताउपशांताआत्मेंद्रियाशयादेहेंद्रियमनांसियस्यसःनसेहेनाशक्नोत् ॥ ३६ ॥ आश्लिषन्आलिंगयन्निव ॥ ३७ ॥ पादयोरवनिज्यपादौप्रक्षाल्य अर्हणेनअर्घ्येण ॥ ३८ ॥ पादाभ्यांपादौआनम्य गरिष्ठौपूज्यतमौतौप्रति ॥ ३९ ॥

अंतर्यामिणस्तस्यैवप्राणादिप्रवर्तकत्वादात्मनस्तत्स्तुतावस्वातंत्र्यंपश्यन्नाह किमिति तवत्वांकिमहंवर्णयेकथंस्तौमि यत्र्येनत्वयैवउदी
रितःप्रेरितोऽसुःप्राणःसंस्पंदतेप्रवर्ततेतमनुचवागादयःस्पंदंति अत्रहेतुः वैअन्वयव्यतिरेकाभ्यांश्रोत्रस्यश्रोत्रमित्यादिश्रुतिभिश्वतत्प्रसिद्ध
मित्यर्थः नकेवलंप्राकृतानांतनुभृतांकिंत्वजशर्वयोश्चातःस्वस्यममापितथैव एवंयद्यपिनकस्यापिस्वातंत्र्यंअथापिदारुयंत्रवत्त्वत्प्रवर्तितै
रपिवादिभिर्भजतांपुंसांभावबंधुरात्मबंधुरसिनतुपित्रादिवद्देहमात्रबंधुः अहोकृपालुतातवेत्यर्थः ॥ ४० ॥ ननुकथमावांप्राणादिप्रवर्त
कौधर्मपुत्रत्वादावयोरितिचेत्तत्राह मूर्तीइति हेभगवन्भगवतस्तवइमेमूर्तीत्रिलोक्याःक्षेमायपालनायतापविरमायचदुःखनिवृत्त्यैमृत्युजि
त्यैमोक्षाय नतुत्वंकस्यापिपुत्रइत्यर्थः अत्रदृष्टांतः यथेदंविश्वमवितुमन्यास्तनूर्मत्स्यकूर्मादिलक्षणाः नानाअनेकप्रकाराबिभर्षि

**मार्कंडेयउवाच किंवर्णयेतवविभोयदुदीरितोऽसुःसंस्पंदतेतमनुवाङ्मनइंद्रियाणि ॥ स्पंदंतिवैतनुभृता
मजशर्वयोश्चस्वस्याप्यथापिभजतामसिभावबंधुः ॥ ४० ॥ मूर्तीइमेभगवतोभगवंस्त्रिलोक्याःक्षेमायताप
विरमायचमृत्युजित्यै ॥ नानाबिभर्ष्यवितुमन्यतनूर्यथेदंसृष्ट्वापुनर्ग्रससिसर्वमिवोर्णनाभिः ॥ ४१ ॥ त
स्यावितुःस्थिरचरेशितुरंघ्रिमूलंयत्स्थंनकर्मगुणकालरजःस्पृशंति ॥ यद्वैस्तुवंतिनिनमंतियजंत्यभीक्ष्णं
ध्यायंतिवेदहृदयामुनयस्तदाप्त्यै ॥ ४२ ॥ नान्यंतवांघ्र्युपनयादपवर्गमूर्तेःक्षेमंजनस्यपरितोभियईशवि
द्मः ॥ ब्रह्माबिभेत्यलमतोद्विपरार्धधिष्ण्यःकालस्यतेकिमुततत्कृतभौतिकानां ॥ ४३ ॥ ॥**

तद्वत् नकेवलंपालनादिमात्रंतवकर्मकिंतुसृष्टिलयावपीत्याह सृष्ट्वेति तत्राप्यन्यनिरपेक्षत्वेदृष्टांतः ऊर्णनाभिरिवेति ॥ ४१ ॥ यस्मादेवंभूत
स्त्वंतस्मात्तवांघ्रिमूलंभजामीत्याह तस्येति तस्यावितुःपालकस्यस्थावरजंगमानामीश्वरस्यांघ्रिमूलंभजामीतितृतीयश्लोकस्यानुषंगःकथं
भूतमंघ्रिमूलं यत्स्थंयत्रस्थितं कर्मगुणकालानांरजोमलं अन्येचपूर्वोक्तास्तापादयोनस्पृशंति रुजइतिवापाठः यतःवेदोहृदयेयेषांतेवेदता
त्पर्यविदोमुनयःयदेवस्तुवंतिनितरांनमंतितत् तदाप्त्यैतत्प्राप्तयेएवंस्तवनादिकुर्वंति ॥ ४२ ॥ यतःअन्यः पुरुषार्थोनास्तीत्याह नान्यमिति
अंघ्र्युपनयात्श्रीमच्चरणंप्राप्तेःअन्यंक्षेमंनविद्मः परितःसर्वेष्वपिलोकेषुभीर्यस्यतस्यजनस्य तदेवाह द्विपरार्धधिष्ण्यंस्थानंयस्यसःब्रह्मा
ऽपितेकालस्यत्वद्भ्रूविजृंभरूपात्कालादलंबिभेति अतःकिमुतवक्तव्यंतेनब्रह्मणाकृतानांभौतिकानांप्राणिनांभयमिति ॥ ४३ ॥

यस्मादेवंतत्तस्मात्तवपादमूलंभजामि कथंभूतस्य ऋतधियःसत्यज्ञानस्वरूपस्य यद्वा सत्याधीर्यस्ययस्मिन्वातस्यआत्मगुरोर्जीवस्यनियं
तुःअतःकारणात्परस्य किंकृत्वा आत्मच्छदिस्वात्मावरकंअपार्थंचनिष्फलंअसच्चतुच्छंअंत्यंचनश्वरंइदंदेहादिहित्वादेहादिभजनंत्यक्त्वा
असच्चेत्कथंप्रतीयेतितत्राह अभिन्नमात्रं नह्यत्यंतमसत्किंत्वात्ममात्रं नततःपृथगस्तीत्यर्थः नन्वपवर्गायभवतुमद्भजनंफलांतरार्थंत्वन्यभज
नंकार्यमेवतत्राह तर्हीति यदित्वांभजतिपुरुषस्तर्हितेत्वत्तएवसर्वंमनीषितमर्थंविंदेतेति ॥४४॥ ननुब्रह्मरुद्रावपिममैवमूर्तीअतोमामेवकिं
मत्यंतमाद्रियसेतत्राह सत्वमिति यदपियद्यपितवैवमाययाकृताएतालीलास्त्वयैवधृतास्तथापियासत्वमयीसैवप्रशांत्यैमोक्षाय नकेवलम
स्यप्रशांत्यभावमात्रमन्यभजनेकिंत्वनिष्टंचभवेदित्याह व्यसनेति ॥ ४५ ॥ तदेवसदाचारेणद्रढयति तस्मादिति हेभगवन्तवशुक्लांतनुं

तद्वैभजाम्यृतधियस्तवपादमूलंहित्वेदमात्मच्छदिचात्मगुरोःपरस्य ॥ देहाद्यपार्थमसदंत्यमभिन्नमात्रंविं
देतितेतर्हिसर्वमनीषितार्थं ॥ ४४ ॥ सत्वंरजस्तमइतीशतवात्मबंधोमायामयाःस्थितिलयोदयहेतवोऽस्य॥
लीलाधृतायदपिसत्वमयीप्रशांत्यैनान्यैर्नृणांव्यसनमोहभियश्चयाभ्यां ॥ ४५ ॥ तस्मात्तवेहभगवन्नथ
तावकानांशुक्लांतनुंस्वदयितांकुशलाभजंति ॥ यत्सात्वताःपुरुषरूपमुशंतिसत्वंलोकोयतोऽभयमुतात्मसु
खंनचान्यत् ॥ ४६ ॥ तस्मैनमोभगवतेपुरुषायभूम्नेविश्वायविश्वगुरवेपरदैवताय ॥ नारायणायऋष
येचनरोत्तमायहंसायसंयतगिरेनिगमेश्वराय ॥४७॥ यंवैनवेदवितथाक्षपथैर्भ्रमद्धीःसंतंस्वखेष्वसुषुहृद्य
पिदृक्पथेषु ॥ तन्माययावृतमतिःसउएवसाक्षादाद्यश्वतेऽखिलगुरोरुपसाद्यवेदं ॥ ४८ ॥ ॥

श्रीनारायणाख्यां अथतावकानांचशुक्लांतनुंनराख्यां यद्यस्मात्सात्वताःसत्वमेवपुरुषस्येश्वरस्यरूपमुशंतिमन्यंतेनत्वन्यत्रजस्तमश्चेति
अत्रहेतुः यतःसत्वाल्लोकोवैकुंठाख्यः लोकस्त्वेसत्यप्यभयंचभोगेसत्यप्यात्मसुखंच ॥ ४६ ॥ अतस्तंप्रणमाति तस्मैनमइति हंसायशु
द्धाय संयतगिरेनियतवाचे अथचनिगमेश्वरायवेदमार्गप्रवर्तकाय ॥ ४७ ॥ वेदार्थसंप्रदायप्रवर्तनेहेतुत्वंवदन्स्तौति यमिति कपटेंद्रिय
मार्गैर्भ्रमद्धीर्विक्षिप्तबुद्धिःपुमान्स्वेंद्रियादिषुनियंतृत्वेनसंतमपियंत्वांनवेद दृक्पथेषुविषयेषुबुद्धिविक्षेपेहेतुः तन्माययातस्यतवैवमाययाआ
वृताआत्मनिष्ठामतिर्यस्यसउसोऽपिआद्यएवपूर्वमज्ञातैवआखिलगुरोस्तवत्वत्प्रवर्तितंवेदमुपसाद्यप्राप्यतंत्वांसाक्षाद्वेद ॥ ४८ ॥

वेदेनैवतज्ज्ञानमित्युपपादयन्प्रणमति तस्यतवदर्शनंनिगमेभवति कथंभूतं आत्मनस्तवरहोरहस्यप्रकाशकं अन्यथादुर्ज्ञेयतामाह अजपरा ब्रह्ममुख्याः कवयोपिसांख्ययोगादिभिर्यतमानायत्रत्वयिमुह्यंतिकुतइत्यतआह सर्वेषांसांख्यादिवादानांविषयाभेदादयस्तेषांप्रतिरूपंतत्तदनु सारिशीलंस्वभावोयस्यतं कुतःआत्मनादेहादिसंघातेननिगूढोबोधोयस्यतं एवंभूतंमहापुरुषंत्वांवंदे ॥ ४९ ॥ इतिद्वादशस्कंधेटीकाया मष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमेभगवन्मायादिदृक्षोर्दर्शनंमुहुः ॥ मायाशिशोर्लयाब्धौचमुनेर्निर्वेशनिर्गमैः ॥ १ ॥ भगवतःपरितोषपू र्वकंतदपेक्षितवरदानंकथयितुमाह संस्तुतइत्यादिना ॥ १ ॥ आत्मसमाधिनाचित्तैकाग्र्येण ॥ २ ॥ वयंतेपरितुष्टाःस्मेतिबहुवचनंसर्वदे

यद्दर्शनंनिगमआत्मरहःप्रकाशंमुह्यंतियत्रकवयोऽजपरायतंतः ॥ तंसर्ववादविषयप्रतिरूपशीलंवंदेमहा पुरुषमात्मनिगूढबोधं ॥४९॥ इतिश्रीभा०द्वादशस्कंधेअष्टमोऽध्यायः ॥८॥ ॥ सूतउवाच संस्तुतो भगवानित्थंमार्कंडेयेनधीमता ॥ नारायणोनरसखःप्रीतआहभृगूद्वहं ॥१॥ श्रीभगवानुवाच भोभोब्रह्म र्षिवर्याऽसिसिद्धआत्मसमाधिना ॥ मयिभक्त्याऽनपायिन्यातपःस्वाध्यायसंयमैः ॥२॥ वयंतेपरितुष्टाःस्म त्वद्बृहद्व्रतचर्यया॥वरंप्रतीच्छभद्रंतेवरदेशादभीप्सितं॥३॥ ऋषिरुउवाच जितंतेदेवदेवेशप्रपन्नार्तिहराच्यु त ॥ वरेणतावताऽलंनोयद्भवान्समदृश्यत ॥ ४ ॥ गृहीत्वाऽजादयोयस्यश्रीमत्पादाब्जदर्शनं ॥ मनसायो गपक्वेनसभवान्मेऽक्षगोचरः ॥ ५ ॥ यथाप्यंबुजपत्राक्षपुण्यश्लोकशिखामणे ॥ द्रक्ष्येमायांययालोकःस पालोवेदसद्भिदां॥ ६ ॥ सूतउवाच इतीडितोर्चितःकाममृषिणाभगवान्मुने ॥ तथेतिसस्मयन्प्रागाद्बदर्या श्रममीश्वरः ॥ ७ ॥ तमेवचिंतयन्नर्थमृषिःस्वाश्रमएवसः ॥ वसन्नग्न्यर्कसोमांबुभूवायुवियदात्मसु ॥ ८ ॥

वाभिप्रायेण वरदेशादित्येकवचनंद्वयोरैक्याभिप्रायेण प्रतीच्छगृहाण ॥ ३ ॥ वरेणछंदयतात्वयाजितमुत्कर्षोदर्शितः ममतुवराकांक्षाना स्तीत्याह वरेणेति ॥ ४ ॥ यस्यतवश्रीमत्पादाब्जदर्शनंमनसाऽपिगृहीत्वाप्राप्यकृतार्थाअजादयोभवंतिसभवान्मेऽक्षगोचरोजातोऽस्ति किमतःपरंवरेणेत्यर्थः ॥ ५ ॥ द्रक्ष्येद्रष्टुमिच्छामि लोकपालैर्ब्रह्मादिभिःसहितोऽयंलोकोजनः सद्भिदांसतिवस्तुनिभिदांययेति ॥ ६ ॥ तथेतिद्रक्ष्यसीति सईश्वरःस्मयन्प्रागात् पाठांतरेक्रियाविशेषणं ॥ ७ ॥ तमेवार्थंमायादर्शनरूपं अग्न्यादिमूर्तिषु ॥ ८ ॥

भावद्रव्यैर्मनोमयैर्द्रव्यैः क्वचित्कदाचित्प्रेमप्रसरसंप्लुतः प्रेमोद्रेकंप्राप्तः ॥ ९ ॥ मायादर्शनमाह तस्येत्यादिना ॥ १० ॥ तंवायुमनुबलाह कामेघाअभवन्आविर्बभूवुः तेचताडिद्भिःसहिताउच्चैःस्वनंतोगर्जंतःअक्षोरथांगंतद्वत्स्थविष्ठाःअभितोवर्षधारामुमुचुः ॥ ११ ॥ चतुर्दि क्षुवर्तमानाःसमुद्राःसमीरवेगेनोर्मयस्तैर्भूतलंग्रसंतः उग्रानक्रायेषुमहाभयाआवर्तायेषुगभीराघोषायेषुतेचतेचतेच ॥ १२ ॥ आत्मनास हजरायुजादिचतुर्विधंजगदंतर्बहिश्चोपतापितंवीक्ष्यक्ष्मांजलाप्लुतांवक्षियमुनिःसमत्रसत्भयंप्राप केनोपतापितं अद्भिः कथंभूताभिः अति

ध्यायन्सर्वत्रचहरिंभावद्रव्यैरपूजयत् ॥ क्वचित्पूजांविसस्मारप्रेमप्रसरसंप्लुतः ॥ ९ ॥ तस्यैकदाभृगुश्रेष्ठ पुष्पभद्रातटेमुने ॥ उपासीनस्यसंध्यायांब्रह्मन्वायुरभून्महान् ॥ १० ॥ तंचंडशब्दंसमुदीरयंतंबलाहका अन्वभवन्करालाः ॥ अक्षस्थविष्ठामुमुचुस्तडिद्भिःस्वनंतउच्चैरभिवर्षधाराः ॥ ११ ॥ ततोव्यदृश्यंतचतुः समुद्राःसमंततःक्ष्मातलमाग्रसंतः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥ १२ ॥ अंत र्बहिश्चाद्भिरतिद्युभिःखरैःशतह्रदाभीरुपतापितंजगत् ॥ चतुर्विधंवीक्ष्यसहात्मनामुनिर्जलाप्लुतांक्ष्मांवि मनाःसमत्रसत् ॥ १३ ॥ तस्यैवमुद्वीक्षतऊर्मिभीषणःप्रभंजनाघूर्णितवार्महार्णवः ॥ आपूर्यमाणोवरष द्भिरंबुदैःक्ष्मामप्यधाद्वीपवर्षाद्रिभिःसमं ॥ १४ ॥ सक्ष्मांऽतरिक्षंसदिवंसभागणंत्रैलोक्यमासीत्सहदि ग्भिराप्लुतं ॥ सएकएवोर्वरितोमहामुनिर्बभ्रामविक्षिप्यजटाजडांधवत् ॥ १५ ॥ क्षुत्तृट्परीतोमकरैस्ति मिंगिलैरुपद्रुतोवीचिनभस्वताहतः ॥ तमस्यपारेपतितोभ्रमन्दिशोनवेदखंगांचपरिश्रमेषितः ॥ १६ ॥ क्वचिद्गतोमहावर्तैतरलैस्ताडितःक्वचित् ॥ यादोभिर्भक्ष्यतेक्वापिस्वयमन्योन्यघातिभिः ॥ १७ ॥ क्वचि च्छोकंक्वचिन्मोहंक्वचिद्दुःखंसुखंभयं ॥ क्वचिन्मृत्युमवाप्नोतिव्याध्यादिभिरुतार्दितः ॥ १८ ॥

द्युभिःअतिक्रांताद्यौर्याभिः खरैश्चसूर्यरश्मिभिर्वायुभिर्वाइतिशेषः शतह्रदाभिश्चविद्युद्भिः दीर्घत्वमार्षंछंदोनुसारेण ॥ १३ ॥ प्रभंजनेन आघूर्णितंवाःउदकंयस्मिन्सः अप्यधाच्छादयामास समंसह ॥ १४ ॥ सक्ष्मांऽतरिक्षंभूम्यंतरिक्षस्थप्राणिसहितं सदिवंस्वर्गस्थदेवसहि तं भागणाज्योतिर्गणास्तैःसहितं जटाविक्षिप्यविकीर्य ॥ १५ ॥ परिश्रमेणइषितोगतःप्राप्तइत्यर्थः इषुसर्पणइत्यस्मात् ॥ १६ ॥ अ न्योन्यघातिभिस्तद्भक्षणायपरस्परंयुध्यद्भिः ॥ १७ ॥ १८ ॥ ॥ ॥ ॥

॥ २१ ॥

विष्णुमायावृतात्मनइति सतथादृष्टवानित्यर्थः ॥ १९ ॥ ककुदि उन्नतप्रदेशे न्यग्रोधपोतं कोमलंवटं ॥ २० ॥ तस्यईशानदिक्शाखायांशिशुमापि ॥ २१॥ श्रीमद्रम्यंवदनपंकजंयस्यतं कंबुवत्त्रिरेखावृताग्रीवायस्यतं महोरस्कंविशालवक्षसं सुनासंशोभनानासायस्यतं सुंदरेभ्रुवौयस्यतं ॥ २२ ॥ श्वासैरेजंतःकंपमानाअलकास्तैराभातंशोभितं कंबुवदंतर्वलयेनश्रीर्ययोस्तौकंबुश्रियौतयोःकर्णयोर्दाडिमेपुष्पेयस्यतं विद्रुमतुल्याधरभासाईषत्शोणायितं सुधातुल्यंस्मितंयस्यतं ॥ २३ ॥ पद्मगर्भवत्आईषत्अरुणौअपांगौनेत्रप्रांतौयस्यतं हृद्योहा

अयुतायुतवर्षाणांसहस्राणिशतानिच ॥ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः ॥ १९ ॥ सकदाचिद्भ्रमंस्तस्मिन्पृथिव्याःककुदिद्विजः ॥ न्यग्रोधपोतंददृशेफलपल्लवशोभितं ॥ २० ॥ प्रागुत्तरस्यांशाखायांतस्यापिददृशेशिशुं ॥ शयानंपर्णपुटकेग्रसंतंप्रभयातमः ॥ २१ ॥ महामरकतश्यामंश्रीमद्वदनपंकजं ॥ कंबुग्रीवंमहोरस्कंसुनासंसुंदरभ्रुवं ॥ २२ ॥ श्वासैजदलकाभातंकंबुश्रीकर्णदाडिमं ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितं ॥ २३ ॥ पद्मगर्भारुणापांगंहृद्यहासावलोकनं ॥ श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरं ॥ २४ ॥ चार्वंगुलिभ्यांपाणिभ्यामुन्नीयचरणांबुजं ॥ मुखेनिधायविप्रेंद्रोधयंतंवीक्ष्यविस्मितः ॥ २५ ॥ तद्दर्शनाद्वीतपरिश्रमोमुदाप्रोत्फुल्लहृत्पद्मविलोचनांबुजः ॥ प्रहृष्टरोमाऽद्भुतभावशंकितः प्रष्टुंपुरस्तंप्रससारबालकं ॥ २६ ॥ तावच्छिशोर्वैश्वसितेनभार्गवःसोंऽतःशरीरंमशकोयथाविशत् ॥ तत्राप्यदोन्यस्तमचष्टकृत्स्नशोयथापुरामुह्यदतीवविस्मितः ॥ २७ ॥ खंरोदसीभगणानद्रिसागरान्द्वीपान्सवर्षान्ककुभःसुरासुरान् ॥ वनानिदेशान्सरितःपुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥

सोयस्मिंस्तदवलोकनंयस्यतं श्वासैरेजंतश्चलंत्योवलयास्तिर्यक्निम्नरेखास्ताभिःसंविग्नाचंचलानिम्नागंभीरानाभिर्यस्मिंस्तत्दलवदश्वत्थपत्रसंकाशमुदरंयस्यतं ॥ २४ ॥ चारवः अंगुलयोययोस्ताभ्यामुन्नीयआकृष्यधयंतं ॥ २५ ॥ हृत्पद्मंचविलोचनांबुजेचप्रोत्फुल्लानितानियस्यसः अद्भुतभावंअत्याश्चर्यरूपंतेनशंकितःसन्नपितंप्रष्टुंपुरःप्रससारसमीपंगतः ॥ २६ ॥ अदःइदंजगद्यथापुराप्रलयात्पूर्वंन्यस्तंविन्यस्तंदृष्ट्वाचातीवविस्मितःसन्नमुह्यत् ॥ २७ ॥ कृत्स्नशोदर्शनंप्रपंचयाति खमित्यादिना ककुभोदिशः पुराणिआकरांश्च खेटान्कर्षकग्रामान् व्रजान्गोकुलानि आश्रमांश्चवर्णांश्चतेषांवृत्तीश्चेत्यर्थः ॥ २८ ॥ ॥ ॥ ॥

॥ २१ ॥

नानायुगानिकल्पांश्चकल्पयतितैर्वाकल्प्यतइतितथातंकालंच सादिवपरमार्थइवेत्यवभासितंतेनैवोति ॥ २९ ॥ ३० ॥ वटंचतोकंचवी
क्ष्यतस्यप्रेम्णासुधातुल्यस्मितयुक्तेनापांगनिरीक्षणेननिरीक्षितःसन् ॥ ३१ ॥ अथतंबालकमधोक्षजंपरिष्वक्तुमभ्ययादितिद्वयोरन्वयः कथं
भूतं नेत्राभ्यांहृदिधिष्ठितं ॥ ३२ ॥ तावत्परिष्वंगलाभात्पूर्वमेवऋषेस्तस्यांतर्हितोबभूव तदुद्यमवैफल्येदृष्टांतः अनीशोर्निर्दैवस्तेनानिर्मि
ताईहाक्रीडायथेति ॥ ३३ ॥ अंतर्हितंभगवंतमनुवटःसलिलंलोकसंप्लवश्चतिरोधायिअंतर्हितः सचस्वाश्रमएवयथापूर्वंस्थितइति ॥३४॥

महांतिभूतान्यथभौतिकान्यसौकालंचनानायुगकल्पकल्पनं ॥ यत्किंचिदन्यद्व्यवहारकारणंददर्शविश्वंस
दिवावभासितं ॥ २९ ॥ हिमालयंपुष्पवहांचतांनदींनिजाश्रमंतत्रऋषीनपश्यत् ॥ विश्वंविपश्यन्श्व
सिताच्छिशोर्वैबहिर्निरस्तोन्यपतल्लयाब्धौ ॥ ३० ॥ तस्मिन्पृथिव्याःककुदिप्ररूढंवटंचतत्पर्णपुटेशयानं॥
तोकंचतत्प्रेमसुधास्मितेननिरीक्षितोपांगनिरीक्षणेन ॥ ३१ ॥ अथतंबालकंवीक्ष्यनेत्राभ्यांधिष्ठितंहृदि ॥
अभ्ययादतिसंक्लिष्टःपरिष्वक्तुमधोक्षजं ॥ ३२ ॥ तावत्सभगवान्साक्षाद्योगाधीशोगुहाशयः ॥ अंतर्द
धऋषेःसद्योयथेहानीशनिर्मिता ॥ ३३ ॥ तमन्वथवटोब्रह्मन्सलिलंलोकसंप्लवः ॥ तिरोधायिक्षणादस्य
स्वाश्रमेपूर्ववत्स्थितः ॥ ३४ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेमायादर्शनंनामनवमोऽध्यायः ॥
॥ ९ ॥ सूतउवाच सएवमनुभूयेदंनारायणविनिर्मितं ॥ वैभवंयोगमायायास्तमेवशरणंययौ ॥ १ ॥
मार्कंडेयउवाच प्रपन्नोऽस्म्यंघ्रिमूलंतेप्रपन्नाभयदंहरे ॥ यन्माययाऽपिविबुधामुह्यंतिज्ञानकाशया ॥२॥
सूतउवाच तमेवंनिभृतात्मानंवृषेणदिविपर्यटन् ॥ रुद्राण्याभगवान्रुद्रोददर्शस्वगणैर्वृतः ॥ ३ ॥ अथो
मातमृषिंवीक्ष्यगिरिशंसमभाषत ॥ पश्येमंभगवन्विप्रंनिभृतात्मेंद्रियाशयं ॥ ४ ॥ ॥

इतिद्वादशेटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ ॥ दशमेशिवआगत्यमुनेस्तुष्टोवरानदात् ॥ तेनसाकमतिप्रीत्यासमाभाष्यस
भाजयत् ॥१॥१॥ ज्ञानकाशयाज्ञानवत्प्रकाशमानयामाययात्वद्भजनंविद्वांसोऽपिज्ञानिनोवयमित्यहंकारेणयस्यतवमाययाविमुह्यंतीत्यर्थः
॥ २ ॥ श्रीनारायणएवस्वमायादर्शनश्रांतंशिवरूपेणसांत्वयामासतदाह तमेवमित्यादिना निभृतात्मानंसमाहितचित्तं रुद्राण्याभवान्या
॥ ३ ॥ निभृतानिश्चलाआत्मेंद्रियाशयादेहेंद्रियमनांसियस्यतं ॥ ४ ॥ ॥ ॥ ॥

निभृतंनिश्चलमुदकंझषव्रातश्चयस्मिन्सः संसिद्धिफलंसाक्षात्कुरुप्रकटीकुरु यतोभवान्सिद्धिदः ॥ ५ ॥ यतआशिषःअभ्युदयलक्षणाःउ तस्वित् अत्रहेतुः भक्तिमिति ॥ ६ ॥ संवदिष्यामःसंवादंकरिष्यामः ॥ ७ ॥ सात्वतांसतां गतित्वेहेतुः ईशानइति ॥ ८ ॥ रुद्धाधियोऽतः करण वृत्तयोयेनसः ॥ ९ ॥ १० ॥ नकेवलंबहिरेवआत्मन्यपिप्राप्तंशिवंविचक्ष्यविस्मितः कथंप्राप्तं सहसाअकस्माद्देवहृदिभातं कथंभूतं तडिद्व

निभृतोदझषव्रातोवातापायेयथाऽर्णवः ॥ कुर्वस्यतपसःसाक्षात्संसिद्धिंसिद्धिदोभवान् ॥ ५ ॥ श्रीभगवानुवाच नैवेच्छत्याशिषःक्वापिब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिंपरांभगवतिलब्धवान्पुरुषेऽव्यये ॥ ६ ॥ अथाऽपिसंवदिष्यामोभवान्येतेनसाधुना ॥ अयंहिपरमोलाभोनृणांसाधुसमागमः ॥ ७ ॥ सूतउवाच इत्युक्त्वातमुपेयायभगवान्सात्वतांपतिः ॥ ईशानःसर्वविद्यानामीश्वरःसर्वदेहिनां ॥ ८ ॥ तयोरागमनंसाक्षादीशयोर्जगदात्मनोः ॥ नवेदरुद्धधीवृत्तिरात्मानंविश्वमेवच ॥ ९ ॥ भगवांस्तदभिज्ञायगिरीशोयोगमायया ॥ आविशत्तद्गुहाकाशंवायुश्छिद्रमिवेश्वरः ॥ १० ॥ आत्मन्यपिशिवंप्राप्तंतडित्पिंगजटाधरं ॥ त्र्यक्षंदशभुजंप्रांशुमुद्यंतमिवभास्करं ॥ ११ ॥ व्याघ्रचर्मांबरंशूलधनुरिष्वसिचर्मभिः ॥ अक्षमालाडमरुकंकपालपरशुंसह ॥ बिभ्राणंसहसाभातंविचक्ष्यहृदिविस्मितः ॥ १२ ॥ किमिदंकुतएवेतिसमाधेर्विरतोमुनिः ॥ नेत्रेउन्मील्यददृशेसगणंसोमयागतं ॥ १३ ॥ रुद्रंत्रिलोकैकगुरुंननामशिरसामुनिः ॥ तस्मैसपर्यांव्यदधात्सगणायसहोमया ॥ स्वागतासनपाद्यार्घ्यगंधस्रक्धूपदीपकैः ॥ १४ ॥ आहचात्मानुभावेनपूर्णकामस्यतेविभो ॥ करवामकिमीशानयेनेदंनिर्वृतंजगत् ॥ १५ ॥ नमःशिवायशांतायसत्वायप्रमृडायच ॥ रजोजुषेप्यघोरायनमस्तुभ्यंतमोजुषे ॥ १६ ॥ ॥ ॥

त्पिशंगाजटाधारयतीतितथातं त्रीण्यक्षीणियस्य ॥ ११ ॥ शूलादिभिःसहाक्षमालादीन्बिभ्राणमित्यन्वयः अक्षमालादीनांद्वंद्वैक्यं ॥ १२ ॥ विस्मयपूर्वकंबाहिर्दर्शनमाह किमिदमिति सोमयाउमयासहागतंरुद्रंददृशे ॥ १३ ॥ ततोननाम ॥ १४ ॥ पूर्णकामत्वंव्यनक्ति येनत्वयाजगन्निर्वृतंभवतीति ॥ १५ ॥ निर्गुणत्वेनत्रिगुणत्वेनचनमस्करोति नमःशिवायनिर्गुणाय सत्वायसत्वाधिष्ठात्रे अतएवमृडयतीतितथातस्मै ॥ १६ ॥

॥ १७ ॥ नोऽस्मत्तः त्रयःब्रह्मविष्णुमहेश्वराःयद्येभ्यः तेवयं ॥ १८ ॥ वरदानादिनाभवत्सेवैवास्माभिःक्रियतेनत्वनुग्रहोजगद्वंद्यत्वाद्भ
वतामितिब्राह्मणान्स्तौति ब्राह्मणाइत्यादि येसाधवःसदाचाराः शांतामत्सरादिरहिताः निःसंगानिष्कामाः ॥ १९ ॥ नकेवलंतएवाकिं
तुअंहचेत्यादि ॥ २० ॥ पूज्यतमत्वेहेत्वंतरमाह नेति अण्वपिअणुमात्रमपिनचक्षतेनपश्यंति तत्तस्मात्एवंभूतान्युष्मान्ईमहिभजेम ॥
॥ २१ ॥ २२ ॥ ब्राह्मणेभ्यःब्राह्मणान् आत्मसमाधानंचित्तैकाग्र्यं तपःआलोचनं स्वाध्यायःअध्ययनं संयमोमनसः तैः ॥ २३ ॥

सूतउवाच एवंस्तुतःसभगवानादिदेवःसतांगतिः॥परितुष्टःप्रसन्नात्माप्रहसंस्तमभाषत ॥१७॥ श्रीभग
वानुवाच वरंवृणीष्वनःकामंवरदेशावयंत्रयः ॥ अमोघंदर्शनंयेषांमर्त्योयद्विंदतेऽमृतं ॥ १८ ॥ ब्राह्मणाः
साधवःशांतानिःसंगाभूतवत्सलाः ॥ एकांतभक्ताअस्मासुनिर्वैराःसमदर्शिनः ॥ १९ ॥ सलोकालोकपा
लास्तान्वदंत्यर्चंत्युपासते ॥ अहंचभगवान्ब्रह्मास्वयंचहरिरीश्वरः ॥२०॥ नतेमय्यच्युतेऽजेचभिदामण्व
पिचक्षते ॥ नात्मनश्चजनस्यापितद्युष्मान्वयमीमहि ॥२१॥ नह्यम्मयानितीर्थानिनदेवाश्चेतनोज्झिताः॥
तेपुनंत्युरुकालेनयूयंदर्शनमात्रतः ॥२२ ॥ ब्राह्मणेभ्योनमस्यामोयेऽस्मद्रूपंत्रयीमयं ॥ बिभ्रत्यात्मसमा
धानतपःस्वाध्यायसंयमैः ॥ २३ ॥ श्रवणाद्दर्शनाद्वापिमहापातकिनोपिवः ॥ शुध्येरन्नंत्यजाश्चापिकि
मुसंभाषणादिभिः ॥२४॥ सूतउवाच इतिचंद्रललामस्यधर्मगुह्योपबृंहितं ॥ वचोऽमृतायनमृषिर्नातृप्य
त्कर्णयोःपिबन् ॥ २५ ॥ सचिरंमाययाविष्णोर्भ्रामितःकर्शितोभृशं ॥शिववागमृतध्वस्तक्लेशपुंजस्तमब्रवी
त् ॥ २६ ॥ ऋषिरुवाच अहोईश्वरचर्येयंदुर्विभाव्याशरीरिणां ॥ यन्नमंतीशितव्यानिस्तुवंतिजगदीश्व
राः । २७ ॥ धर्मंग्राहयितुंप्रायःप्रवक्तारश्चदेहिनां ॥ आचरंत्यनुमोदंतेक्रियमाणंस्तुवंतिच ॥ २८ ॥

किंचश्रवणादित्यादि ॥ २४ ॥ चंद्रोललामोभूषणंयस्यतस्यधर्मरहस्ययुक्तममृतास्पदंवचःकर्णाभ्यांपिबन्नातृप्यत्अलमितिनामन्यत क
र्णयोरमृतायनमितिवाऽन्वयः ॥ २५ ॥ शिवस्यवागेवामृतंतेनध्वस्तःक्लेशपुंजोयस्यसः ॥ २६ ॥ इयंलीलादुर्विभाव्याअवितर्क्या यत्य
याईशित यानिस्वनियम्यानियानिभूतानिजगदीश्वराःस्वयंनमंतिस्तुवंतिचेति॥२७॥अथवालोकसंग्रहमात्रमेतदित्याह धर्ममिति प्रवक्तारो
पियत्स्वयंदेहिनांधर्मंग्राहयितुमाचरंति ॥ २८ ॥ ॥ ॥ ॥ ॥

नन्वेतत्स्वप्रभावतिरस्कारकंकथंमयाक्रियतेतत्राह नैतावतेति एतावतालोकसंग्रहमात्रेण तैर्नमनादिभिः कथंभूतैः स्वमायामयीवृत्तिर्येषु तैःभगवतोमायिनस्तवानुभावोनदुष्येत यतःप्रसिद्धस्यमायिनःकुहकंकपटंयथातथाएतानिनमनादीनि अतस्तस्ययथाकुहकैरात्मानुभावोनदुष्यतइतितद्वत् प्रदुष्येतानुभावइतिपाठेनकारस्यदृष्टांतेऽनुषंगः ॥ २९ ॥ मायाचेष्टितंप्रपंचयति सृष्ट्वेति स्वप्नदृग्यथेत्यविद्याचेष्टिते दृष्टांतः ॥ ३० ॥ त्रिगुणत्वेऽपिनजीववत्तदभिभूतायकिंतुगुणानामात्मनेनियंत्रे ॥ ३१ ॥ वरंवृणीष्वेतियदुक्तंतत्राह कमिति वरंदर्शनंय



नैतावताभगवतःस्वमायामयवृत्तिभिः ॥ नदुष्येतानुभावस्तैर्मायिनःकुहकंयथा ॥ २९ ॥ सृष्ट्वेदंमनसा विश्वमात्मनानुप्रविश्ययः ॥ गुणैःकुर्वद्भिराभातिकर्तेवस्वप्नदृग्यथा ॥ ३० ॥ तस्मैनमोभगवतेत्रिगुणायगुणात्मने ॥ केवलायाद्वितीयायगुरवेब्रह्ममूर्तये ॥ ३१ ॥ कंवृणेनुपरंभूमन्वरंत्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामःसत्यकामःपुमान्भवेत् ॥ ३२ ॥ वरमेकंवृणेऽथापिपूर्णात्कामाभिवर्षणात् ॥ भगवत्यच्युतांभक्तिंतत्परेषुतथात्वयि ॥ ३३ ॥ सूतउवाच इत्यर्चितोऽभिष्टुतश्चमुनिनासूक्तयागिरा ॥ तमाहभगवान्शर्वःशर्वयाचाभिनंदितः ॥ ३४ ॥ कामस्तेऽयंमहर्षेऽस्तुभक्तिमांस्त्वमधोक्षजे ॥ आकल्पांताद्यशःपुण्यमजराममरतातथा ॥ ३५ ॥ ज्ञानंत्रैकालिकंब्रह्मन्विज्ञानंचविरक्तिमत् ॥ ब्रह्मवर्चस्विनोभूयात्पुराणाचार्यताऽस्तुते ॥ ३६ ॥ सूतउवाच एवंवरान्समुनयेदत्वाऽगात्त्र्यक्षईश्वरः ॥ देव्यैतत्कर्मकथयन्ननुभूतंपुरामुनेः ॥ ३७ ॥ सोप्यवाप्तमहायोगमहिमाभार्गवोत्तमः ॥ विचरत्यधुनाप्यद्धाहरावेकांततांगतः ॥ ३८ ॥ अनुवर्णितमेतत्तेमार्कंडेयस्यधीमतः ॥ अनुभूतंभगवतोमायावैभवमद्भुतं ॥ ३९ ॥ ॥ ॥

स्यतस्मात्त्वत्तःपरंकंनुवरंवृणे यस्यतवदर्शनादवलोकनात्पूर्णकामःसर्वानंदसंदोहरूपःसत्यकामोयथेच्छंप्राप्तसर्वानंदःपुमान्भवेत् ॥ ३२ ॥ ॥ ३३ ॥ वरदानायस्वयमेवप्रवृत्तःशर्वयाउमयाऽभिनंदितःअनुमोदितःसन्नाह ॥ ३४ ॥ कामोऽयंसर्वोऽपिअन्यच्चयत्पुण्यंयशइत्यादि ब्रह्मवर्चस्विनस्तेभूयादित्युत्तरेणान्वयः यतस्त्वमधोक्षजेभक्तिमान् ॥ ३५ ॥ ३६ ॥ तस्यकर्मतपआदि मुनेःपुराऽनुभूतंचभगवन्मायावैभवंतच्चकथयन् ॥ ३७ ॥ अवाप्तोमहायोगमहिमायेनसः ॥ ३८ ॥ एतन्मार्कंडेयस्यचरितंतेनानुभूतंचभगवन्मायावैभवंतेऽनुवर्णितं ॥ ३९ ॥

नन्वेवमप्यस्मत्कुलोत्पन्नस्यास्यसप्तकल्पायुष्यंवृद्धैरुच्यमानंविरुद्धमेवतत्राह एतन्मार्कंडेयेनानुभूतंभगवन्मायावैभवंनानाकल्परूपंक दाचित्कमीश्वरेच्छयातस्यैवाकस्मिकंनतुसर्वसाधारणं एतत्केचिदनादिबहुकालमावर्तितंतदैवयुगसहस्रद्वयमानेनपुनःपुनःपरिवार्तितंप्रच क्षते केते नृणांसंसृतिसर्गप्रलयादिलक्षणामात्मनोभगवतोमायेत्येवमविद्वांसः विद्वांसस्तुमायाशिशोःश्वासोच्छ्वासाभ्यांसप्तकृत्वस्तदुदर प्रवेशनिर्गमतःसप्तकल्पत्वंतत्क्षणमात्रेणेतिवदंत्यतोनविरोधइत्यर्थः ॥ ४० ॥ संशृणुयात् उइतिहर्षे संश्रावयेद्वा यौतावुभौ तयोःकर्म वासनाकृतांसृतिर्नभवेदिति ॥ ४१ ॥ इतिद्वादशेटीकायांदशमोऽध्यायः ॥ १० ॥ ॥ एकादशेतुपूजार्थंमहापुरुषवर्णनं ॥ रवेर्व्यूह स्यचाख्यानंप्रतिमासंपृथक्पृथक् ॥ १ ॥ येनामर्त्यत्वमापन्नोमर्त्योसौभार्गवोत्तमः ॥ तंपृच्छतिक्रियायोगंसांगोपांगादिकल्कितं ॥ २ ॥

एतत्केचिदविद्वांसोमायासंसृतिमात्मनः॥अनाद्यावार्तितंनृणांकदाचित्कंप्रचक्षते॥ ४० ॥यएवमेतद्भृगुवर्य वर्णितंरथांगपाणेरनुभावभावितं॥संश्रावयेत्संशृणुयादुतावुभौतयोर्नकर्माशयसंसृतिर्भवेत् ॥ ४१ ॥ इ ति भा० म० द्वा० दशमोऽध्यायः ॥ १० ॥ ॥ शौनकउवाच अथेममर्थंपृच्छामोभवंतंबहुवित्तमं ॥ स मस्ततंत्रराद्धांतेभवान्भागवततत्त्ववित् ॥ १ ॥ तांत्रिकाःपरिचर्यायांकेवलस्यश्रियःपतेः॥ अंगोपांगायुधा कल्पंकल्पयंतियथैवयैः ॥२॥ तन्नोवर्णयभद्रंतेक्रियायोगंबुभुत्सतां ॥ येनक्रियानैपुणेनमर्त्योयायादमर्त्य तां॥ ३॥ सूतउवाच नमस्कृत्वागुरून्वक्ष्येविभूतीर्वैष्णवीरपि॥ याःप्रोक्तावेदतंत्राभ्यामाचार्यैःपद्मजा दिभिः॥ ४॥ मायाद्यैर्नवभिस्तत्त्वैःसविकारमयोविराट् ॥ निर्मितोदृश्यतेयत्रसचित्केभुवनत्रयं ॥ ५ ॥

अथेति हेभगवन्हेभागवत यतोभवान्समस्ततंत्रराद्धांतेतत्त्ववित् ॥ १ ॥ प्रष्टव्यमाह तांत्रिकाइति परिचर्यायामुपासनायांविषये केव लस्यचैतन्यघनस्यांगानिपादादीनिउपांगानिगरुडादीनिआयुधानिसुदर्शनादीनिआकल्पाःकौस्तुभादयस्तेषांद्वंद्वैक्यं तद्यथाकल्पयंति यैश्वतत्त्वैःकल्पयंति ॥ २ ॥ तन्नोवर्णयेति ॥ ३ ॥ गुरूपदेशगम्यत्वादस्यार्थस्यतन्नमस्कारपूर्वकमाह नमस्कृत्वेति विभूतीःविराड्विग्र हाद्याः ॥ ४ ॥ अंगादिकल्पनांभूरादिभिर्दर्शयितुंप्रथमंतावद्यथाकल्पयंतीतिप्रश्नस्यवैराजरूपेणेत्युत्तरंवक्तुंविराड्विग्रहमाह मायाद्यैःप्र कृतिसूत्रमहदहंकारपंचतन्मात्रैर्नवभिस्तत्त्वैः विकाराएकादशेंद्रियाणिपंचमहाभूतानीतिषोडशतन्मयोविराट्सप्रसिद्धोनिर्मितः यत्रविरा जिसचित्केचेतनाधिष्ठितेभुवनत्रयंदृश्यते अनेनांगादिकल्पनासौलभ्यंदर्शितं ॥ ५ ॥ ॥ ॥ ॥

एतद्वैपौरुषंरूपं पुरुषस्यवैराजस्यरूपमेवेश्वरेणाधिष्ठितत्वात्तदभेदविवक्षयातस्यरूपमुच्यते अंगकल्पनामाह भूःपादावित्यादित्रिभिः भूराद्यनुवादेनभगवत्पादादिभावनाविधीयते ॥ ६ ॥ प्रजननंमेढ्रं अपानःपायुः ॥ ७ ॥ ८ ॥ अनुक्तमन्यदप्येवमूह्यमित्याह यावानयंव्य ष्टिःपुरुषःस्वमानतःसप्तवितस्तिसंस्थयाअवयवसन्निवेशेनमितः ॥ ९ ॥ भूषणादीन्याह कौस्तुभेत्यादिना स्वात्मज्योतिःशुद्धजीवचैतन्यं यातस्यकौस्तुभस्यप्रभातामेवबिभर्ति ॥ १० ॥ त्रिवृत्स्वरंत्रिमात्रंप्रणवं ॥ ११ ॥ पारमेष्ठ्यंपदंब्रह्मलोकं ॥ १२ ॥ अव्याकृतंप्रधानं

एतद्वैपौरुषंरूपंभूःपादौद्यौःशिरोनभः ॥ नाभिःसूर्योऽक्षिणीनासेवायुःकर्णौदिशःप्रभोः ॥६॥ प्रजापतिःप्र जननमपानोमृत्युरीशितुः ॥ तद्बाहवोलोकपालामनश्चंद्रोभ्रुवौयमः ॥७॥ लज्जोत्तरोऽधरोलोभोदंताज्यो त्स्नास्मयोभ्रमः ॥ रोमाणिभूरुहाभूम्नोमेघाःपुरुषमूर्द्धजाः ॥८॥ यावानयंवैपुरुषोयावत्यासंस्थयामितः ॥ ता वानसावपिमहापुरुषोलोकसंस्थया ॥९॥ कौस्तुभव्यपदेशेनस्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभाव्यापिनीसा क्षात्श्रीवत्समुरसाविभुः ॥१०॥ स्वमायांवनमालाख्यांनानागुणमयींदधत् ॥ वासश्छंदोमयंपीतंब्रह्मसूत्रं त्रिवृत्स्वरं ॥११॥ बिभर्तिसांख्यंयोगंचदेवोमकरकुंडले ॥ मौलिंपदंपारमेष्ठ्यंसर्वलोकाभयंकरं ॥१२॥ अ व्याकृतमनंताख्यमासनंयदधिष्ठितः ॥ धर्मज्ञानादिभिर्युक्तंसत्वंपद्ममिहोच्यते ॥१३॥ ओजःसहोबलयुतंमु ख्यतत्त्वंगदांदधत् ॥ अपांतत्त्वंदरवरंतेजस्तत्त्वंसुदर्शनं ॥१४॥ नभोनिभंनभस्तत्त्वमसिचर्मतमोमयं ॥ कालरू पंधनुःशार्ङ्गंतथाकर्ममयेषुधिं ॥१५॥ इंद्रियाणिशरानाहुराकूतीरस्यस्यंदनं ॥ तन्मात्राण्यस्याभिव्यक्तिंमुद्रया र्थक्रियात्मतां ॥१६॥ मंडलंदेवयजनंदीक्षासंस्कारआत्मनः ॥ परिचर्याभगवतआत्मनोदुरितक्षयः ॥१७॥

यदधिष्ठितःअधिष्ठायस्थितः तदासनभूतंपद्मं सत्वंसत्वगुणः ॥१३॥ मुख्यतत्त्वंप्राणतत्त्वं प्राणोवैमुख्यइतिश्रुतेः दरवरंशंखं ॥ १४ ॥ १५ ॥ आकूतीःक्रियाशक्तियुक्तंमनः अस्यरथस्याभिव्यक्तिंबहिरभिव्यक्तंरूपं मुद्रयाधृतयाअर्थक्रियात्मतांवरदाभयदादिरूपत्वंबिभर्ति तत्तन्मुद्रया तथातथाभावयेदित्यर्थः ॥ १६ ॥ मंडलंदेवयजनंदेवपूजाभूमिंसूर्यमंडलत्वेनभावयेदित्यर्थः अंतर्वन्हिमंडलंवा दीक्षासंस्कारंआत्मनःगुरुकृतां मंत्रदीक्षामेवात्मनस्तत्पूजायोग्यतांभावयेदित्यर्थः परिचर्येति भगवतस्तांपरिचर्यांस्वस्यसकलपापक्षयायएवंरूपांभावयेदित्यर्थः ॥ १७ ॥

पूर्वमासनपद्ममुक्तमिदानींकरस्थंपद्ममाह भगवानिति भगशब्दार्थमैश्वर्यादिषाड्गुण्यं ॥१८ ॥ हेद्विजाः एकवचनांतोवापाठः अकुतो भयंकैवल्यंधामगृहंसमभजत् यद्वावैकुंठस्याविशेषणमकुतोभयंयद्धामेति त्रिवृत्ऋग्यजुःसामरूपोवेदः सुपर्णोऽसिगरुत्मांस्त्रिवृत्तेशिरइत्या दिमंत्रलिंगात् यज्ञंयज्ञरूपंपुरुषं यज्ञोवैविष्णुरितिश्रुतेः ॥ १९ ॥ अनपायिनीहरेःशक्तिः तत्रहेतुः साक्षादात्मनःस्वरूपस्यचिद्रूपत्वात्त स्यास्तदभेदादित्यर्थः तंत्रमूर्तिःपंचरात्राद्यागमरूपः येऽणिमादयोऽष्टौगुणास्तेहरेर्द्वारपालानंदादयः ॥ २० ॥ तस्यैवचतुर्व्यूहोपासनामा ह वासुदेवादिशब्दैःपुरुषःश्रीनारायणएवस्वयंमूर्तिभेदैरुपास्यइत्यभिधीयते ॥ २१ ॥ तस्यैवाध्यात्मनिचतुर्धोपासनामाह सएवभगवा न्विश्वादिशब्दैर्वृत्तिभिर्जाग्रदाद्यवस्थाभिःपरिभाव्यते तद्वृत्त्युपाधीनाह अर्थाःबाह्याः इंद्रियंमनः आशयस्तदुभयसंस्कारयुक्तमज्ञानं ज्ञा

भगवान्भगशब्दार्थंलीलाकमलमुद्वहन् ॥ धर्मंयशश्चभगवांश्चामरव्यजनेऽभजत् ॥१८॥ आतपत्रंतुवैकुंठं द्विजाधामाकुतोभयं ॥ त्रिवृद्वेदःसुपर्णाख्योयज्ञंवहतिपूरुषं ॥ १९ ॥ अनपायिनीभगवतीश्रीःसाक्षादात्म नोहरेः ॥ विष्वक्सेनस्तंत्रमूर्तिर्विदितःपार्षदाधिपः ॥ नंदादयोष्टौद्वास्थाश्चतेऽणिमाद्याहरेर्गुणाः ॥२०॥ वा सुदेवःसंकर्षणःप्रद्युम्नःपुरुषःस्वयं ॥ अनिरुद्धइतिब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥२१॥ सविश्वस्तैजसःप्राज्ञ स्तुरीयइतिवृत्तिभिः ॥ अर्थेंद्रियाशयज्ञानैर्भगवान्परिभाव्यते ॥२२॥ अंगोपांगायुधाकल्पैर्भगवांस्तच्चतुष्ट यं ॥ बिभर्तिस्मचतुर्मूर्तिर्भगवान्हरिरीश्वरः ॥२३॥ द्विजऋषभसएषब्रह्मयोनिःस्वयंदृक्स्वमहिमपरिपूर्णो माययाचस्वयैतत् ॥ सृजतिहरतिपातीत्याख्ययाऽनावृताक्षोविवृतइवनिरुक्तस्तत्परैरात्मलभ्यः ॥ २४ ॥

नंत्रितयसाक्षितैः ॥ २२ ॥ उक्तचतुर्व्यूहद्वयोपासनेपिपूर्वोक्तमंगाद्युपासनमाह अंगेति अंगादिभिरुपलक्षितोभगवान्हरिर्वासुदेवादिच तुर्मूर्तिःसन्विश्वादिचतुष्टयंबिभर्तिस्म विश्वादिभावेपितान्नियंतुस्तस्यनजीवत्वमित्याह विश्वादिचतुष्टयंबिभ्रदपिभगवानीश्वरएवेति ॥ ॥ २३ ॥ तस्यैवब्रह्मादित्रिमूर्तितामाह द्विजऋषभेति सएषएवभगवान्ब्रह्मयोनिर्वेदस्यकारणमित्यादिहेतुत्रयं वस्तुतोभेदाभावेपिस्वग तमाययासृजतिहरतिपातीतिकृत्वाआख्ययाब्रह्मादिरूपयाअनावृताक्षःअनाच्छन्नज्ञानोऽपिविवृतइवाभिन्नइवनिरुक्तःशास्त्रेषुनतुभिन्नः अ त्रविद्वदनुभवंप्रमाणयति यतस्तत्परैरात्मत्वेनैवलभ्यतइति ॥ २४ ॥ ॥ ॥ ॥

यस्येदमुपासनमुक्तंश्रीकृष्णंप्रार्थयते कृष्णसखार्जुनस्यसखेवृष्णिश्रेष्ठ अवनिध्रुहोयेराजन्यास्तेषांवंशस्यदहन अनपवर्गमक्षीणंवीर्यंय
स्य गोपवनितानांव्रजाःसमूहाः भृत्यानारादादयस्तैर्गीतंतीर्थभूतंश्रवःकीर्तिर्यस्य श्रवणमेवमंगलंयस्य ॥ २५ ॥ एतज्जपमात्रस्यापिब्र
ह्मज्ञानंफलमित्याह यइति कल्पेउषःकालेयस्तच्चित्तःप्रयतःशुचिश्श्रसःजप्वागुहाशयंहृदिस्थंब्रह्मपश्यति ॥ २६ ॥ मंडलंदेवयजनमित्यु
क्त्याबुद्धिमागतः ॥ मूर्तिव्यूहप्रसंगेनरविव्यूहोत्रपृच्छ्यते ॥ शुकइति पंचमेयदाहतथाऽन्येचऋषयोगंधर्वाअप्सरसोनागाग्रामण्योयातुधा
नादेवाइत्येकैकशोगणाःसप्तेत्यादिना सौरःसूर्यसंबंधीसप्तानांगणः ॥ २७ ॥ तेषांसप्तानामधीश्वरैस्तत्पतिभिस्तत्तन्मासाधिकृतसूर्यैर्वा

**श्रीकृष्णकृष्णसखवृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंदगोपवनिताव्रजभृत्यगीततीर्थश्रवःश्रवणमंगलपाहिभृत्यान् ॥ २५ ॥ यइदंकल्पउत्थायमहापुरुषलक्षणं ॥ तच्चित्तःप्रयतोजप्त्वाब्रह्मवेदगुहाशयं ॥ २६ ॥ शौनकउवाच शुकोयदाहभगवान्विष्णुरातायशृण्वते ॥ सौरोगणोमासिमासिनानावसतिसप्तकः ॥ २७ ॥ तेषांनामानिकर्माणिसंयुक्तानामधीश्वरैः ॥ ब्रूहिनःश्रद्दधानानांव्यूहंसूर्यात्मनोहरेः ॥ २८ ॥ सूतउवाच अनाद्यविद्ययाविष्णोरात्मनःसर्वदेहिनां ॥ निर्मितोलोकतंत्रोयंलोकेषुपरिवर्तते ॥ २९ ॥ एकएवहिलोकानांसूर्यआत्मादिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ३० ॥ कालोदेशःक्रियाकर्ताकरणंकार्यमागमः ॥ द्रव्यंफलमितिब्रह्मन्नवधोक्तोऽजयाहरिः ॥ ३१ ॥ मध्वादिषुद्वादशसुभगवान्कालरूपधृक् ॥ लोकतंत्रायचरतिपृथग्द्वादशभिर्गणैः ॥ ३२ ॥**

व्यूहंविभागं ॥ २८ ॥ तत्रतात्रत्व्यूहंनिरूपयितुंप्रथमंसूर्यस्वरूपमाह अनाद्यविद्ययामाययाऽयंसूर्योलोकयात्राप्रवर्तकः ॥ २९ ॥ अतस्त
स्याक्रियाभेदोपाधिकमेवनानात्वंनस्वतइत्याह एकएवेति सूर्यआत्माजगतस्तस्थुषश्चेतिश्रुतेः जगदात्माआदिकृत्सृष्टिकर्ताहरिरेवसूर्यः
सचसर्वासांवेदोक्तक्रियाणांमूलंसत्तेनोपाधिनाबहुधोक्तः ॥ ३० ॥ कालरूपधारिणोहरेर्द्वादशादित्यरूपभेदंक्रियोपाधिकंदर्शयितुंप्रथमं
सर्वकर्मप्रवृत्तयेमायाकृतंनवधाभेदमाह कालइति कालःप्रातरादिःदेशःसमादिःक्रियाअनुष्ठानं कर्ताब्राह्मणादिःकरणंस्रुगादि कार्यंयागादि
आगमोमंत्रादिः द्रव्यंव्रीह्यादि फलंस्वर्गादि ॥ ३१ ॥ तत्रचकालस्वरूपधारीभगवान्पृथक्चरति मध्वादिषुचैत्रादिषु लोकतंत्रायलोकया
त्रानिर्वाहाय ॥ ३२ ॥ ॥ ॥ ॥ ॥

तानेवगणानाह धातेतिद्वादशभिः धातासूर्यः कृतस्थलीअप्सराः हेतीराक्षसः वासुकिर्नागः रथकृद्यक्षः पुलस्त्यऋषिः तुंबुरुर्गंधर्वः नयंति अनुवर्तयंति ॥३३॥ अथौजायक्षः प्रहेतीराक्षसः नारदोगंधर्वः कच्छनीरोनागः माधवंवैशाखं ॥ ३४ ॥ मित्रःसूर्यः पौरुषेयोराक्षसः रथस्वनो यक्षः शुक्रमासंज्येष्ठं ॥३५॥ वरुणःसूर्यः सहजन्योयक्षः शुक्रोनागः चित्रस्वनोराक्षसः शुचिमासमाषाढं ॥ ३६ ॥ इंद्रःसूर्यः विश्वावसुर्गंधर्वः श्रोतायक्षः एलापत्रोनागः वर्योराक्षसइतिस्वयमेवव्याख्यातं नभोमासंश्रावणं ॥३७॥ विवस्वान्सूर्यः उग्रसेनोगंधर्वः व्याघ्रोराक्षसः आसारणोयक्षः शंखपालोनागः नभस्याख्यंभाद्रपदं॥३८॥धनंजयोनागः वातोराक्षसः सुषेणोगंधर्वः सुरुचिर्यक्षः तपोमासंमाघं मासक्र

धाताकृतस्थलीहेतिर्वासुकीरथकृन्मुने॥पुलस्त्यस्तुंबुरुरितिमधुमासंनयंत्यमी॥३३॥अर्यमापुलहोऽथौजा प्रहेतिःपुंजिकस्थली ॥ नारदःकच्छनीरश्चनयंत्येतेस्ममाधवं ॥३४॥ मित्रोऽत्रिःपौरुषेयोऽथतक्षकोमेनका हाहाः ॥ रथस्वनइतिह्येतेशुक्रमासंनयंत्यमी॥३५॥वसिष्ठोवरुणोरंभासहजन्यस्तथाहुहूः॥शुक्रश्चित्रस्वन श्चैवशुचिमासंनयंत्यमी ॥३६ ॥ इंद्रोविश्वावसुःश्रोताएलापत्रस्तथांगिराः ॥ प्रम्लोचाराक्षसोवर्योनभोमा संनयंत्यमी ॥३७॥ विवस्वानुग्रसेनश्चव्याघ्रआसारणोभृगुः ॥अनुम्लोचाशंखपालोनभस्याख्यंनयंत्यमी ॥३८॥पूषाधनंजयोवातःसुषेणःसुरुचिस्तथा ॥घृताचीगौतमश्चेतितपोमासंनयंत्यमी ॥ ३९॥ ऋतुर्वर्चाभरद्वाजःपर्जन्यःसेनजित्तथा ॥ विश्वऐरावतश्चैवतपस्याख्यंनयंत्यमी॥४०॥अथांशुःकश्यपस्तार्क्ष्यऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखःसहोमासंनयंत्यमी ॥४१॥ भगःस्फूर्जोऽरिष्टनेमिरूर्णआयुश्चपंचमः ॥ कर्कोटकःपूर्वचित्तिःपुष्यमासंनयंत्यमी ॥ ४२ ॥ त्वष्टाऋचीकतनयःकंबलश्चतिलोत्तमा॥ब्रह्मापेतोऽथशतजिद्धृतराष्ट्रइषंभराः॥४३॥विष्णुरश्वतरोरंभासूर्यवर्चाश्चसत्याजित्॥विश्वामित्रोमखापेतऊर्जमासंनयंत्यमी ॥४४

मातिलंघनंकौर्मोक्तादिक्रमानुसारेण वैष्णवेतुमासक्रमेणोक्तिः क्वचिन्नामव्यत्ययस्तुकल्पभेदेनेतिज्ञेयं ॥ ३९ ॥ ऋतुर्यक्षः वर्चाराक्षसः पर्जन्यःसूर्यः सेनजित्अप्सराः विश्वोगंधर्वः ऐरावतोनागः तपस्याख्यंफाल्गुनं ॥ ४० ॥ अंशुःसूर्यः अंशइतिवापाठःतार्क्ष्योयक्षः ऋतसेनोगंधर्वः विद्युच्छत्रूराक्षसः महाशंखोनागः सहोमासंमार्गशीर्षं ॥ ४१ ॥ भगःसूर्यः स्फूर्जोराक्षसः अरिष्टनेमिर्गंधर्वः ऊर्णोयक्षः आयुर्ऋषिः कर्कोटकोनागः ॥४२॥ ऋचीकतनयोजमदग्निः कंबलोनागः ब्रह्मापेतोराक्षसः शतजिद्यक्षःधृतराष्ट्रोगंधर्वः इषंभराःआश्विनपालकाः ॥४३॥ विष्णुरादित्यः अश्वतरोनागः सूर्यवर्चागंधर्वः सत्यजिद्यक्षः मखापेतोराक्षसः ऊर्जमासंकार्तिकमासं ॥ ४४॥

एतेचादित्यादयः कौर्मेविभज्योक्ताः धातार्यमा चमित्रश्चवरुणश्चेंद्रएवच॥विवस्वानथपूषा चपर्जन्यश्चांशुरेवच ॥ भगस्त्वष्टा चाविष्णुश्चआदि त्याद्वादशस्मृताः॥पुलस्त्यःपुलहश्चात्रिर्वसिष्ठोऽथांगिराभृगुः॥गौतमोथभरद्वाजःकश्यपःक्रतुरेवच॥जमदग्निःकौशिकश्चमनुयो ब्रह्म वादिनः रथकूर्चोरिष्टनेमिर्ग्रामणीश्चरथस्वनः॥रथचित्रःस्वनःश्रोताअरुणःसेनजित्तथा॥तार्क्ष्यश्चारिष्टनेमिश्चशतजित्सत्यजित्तथा ॥ एतेयक्षाः अथहे तिःप्रहेतिश्चपौरुषेयोवधस्तथा ॥वर्योव्याघ्रस्तथायुश्चवायुर्विद्युद्दिवाकरः ॥ ब्रह्मापेतश्चविप्रेंद्रयज्ञापेतश्चराक्षसाः ॥ वासुकिःकच्छनीरश्चतक्ष कःसर्पपुंगवः॥एलापत्रःशंखपालस्तथैरावतसंज्ञितः॥धनंजयोमहापद्मस्तथाकर्कोटकोद्विजाः॥कंबलोऽश्वतरश्चैववहंत्येवंयथाक्रमं॥तुंबु रुर्नारदोहाहाहूहूर्विश्वावसुस्तथा॥उग्रसेनोवसुरुचिर्विश्वावसुरथापरः॥ चित्रसेनस्तथोर्णायुर्धृतराष्ट्रोद्विजोत्तमाः ॥ सूर्यवर्चाद्वादशेतिगंधर्वा गायतांवराः॥कृतस्थल्यप्सरोवर्यातथाऽन्यापुंजिकस्थली ॥मेनकासहजन्या चप्रम्लोचा चद्विजोत्तमाः ॥ अनुम्लोचाघृताची चविश्वाचीचो

एताभगवतोविष्णोरादित्यस्यविभूतयः ॥ स्मरतांसंध्ययोर्नृणांहरंत्यंहोदिनेदिने ॥४५॥ द्वादशस्वपिमासेषुदेवोऽसौषड्भिरस्यवै ॥ चरन्समंतात्तनुतेपरत्रेहचसन्मतिं॥४६॥सामर्ग्यजुर्भिस्तल्लिंगैर्ऋषयःसंस्तुवंत्यमुं॥ गंधर्वास्तंप्रगायंतिनृत्यंत्यप्सरसोऽग्रतः ॥४७॥ उन्नह्यंतिरथंनागाग्रामण्योरथयोजकाः॥ नोदयंतिरथंपृष्ठेनैर्ऋताबलशालिनः ॥४८॥ वालखिल्याःसहस्राणिषष्टिर्ब्रह्मर्षयोऽमलाः ॥ पुरतोभिमुखंयांतिस्तुवंतिस्तुतिभिर्विभुं ॥ ४९ ॥ एवंह्यनादिनिधनोभगवान्हरिरीश्वरः॥ कल्पेकल्पेस्वमात्मानंव्यूह्यलोकानवत्यजः ॥ ॥५०॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेआदित्यव्यूहविवरणंनामएकादशोध्यायः ॥ ११॥ ॥ छ ॥

सूतउवाच　नमोधर्मायमहतेनमःकृष्णायवेधसे ॥ ब्राह्मणेभ्योनमस्कृत्यधर्मान्वक्ष्येसनातनान् ॥ १ ॥

र्वशीतथा ॥ अन्याचपूर्वचित्तिःस्यादन्याचैवतिलोत्तमा ॥ रंभाचेतिद्विजश्रेष्ठास्तथैवाप्सरसःस्मृताइति ॥४५॥ एतेषांपृथक्कर्माणिनिरूप यतिद्वादशस्वपीतित्रिभिः असौदेवःसूर्यःषड्भिर्गंधर्वादिभिरस्यजनस्यसमंताच्चरन्शुभांमतिंतनुते गायत्र्यर्थोऽनेनसूचितः ॥ ४६ ॥ तल्लिं गैःसूर्यप्रकाशकैः ॥ ४७ ॥ उन्नह्यंतिदृढंबध्नंति ग्रामण्योयक्षाः नैर्ऋताराक्षसाः ॥ ४८ ॥ किंच वालखिल्याइति एवंप्रतिमासंतएवस्तु वंति विभुंसूर्यं ॥ ४९ ॥ व्यूह्यविभज्य ॥ ५० ॥ इतिद्वादशेटीकायामेकादशोऽध्यायः ॥ ११ ॥ ॥ द्वादशेतुपुराणोक्तसर्वार्थानुक्रमः कृतः ॥ प्रथमस्कंधमारभ्यप्राधान्येनसमासतः ॥ १ ॥ तदेवमस्मिन्पुराणोक्तानर्थान्संक्षेपतोवर्णयिष्यन्धर्मादीन्प्रणमति नमइति महतेहरिभक्तिलक्षणाय ब्राह्मणेभ्यःब्राह्मणान् सनातनान्धर्मानित्युपलक्षणंपुराणोक्तार्थानां ॥ १ ॥

पुरुषत्वेउचितंश्रवणादियोग्यं॥२॥ एतत्प्रपंचयति अत्रेति भगवान् ऐश्वर्यादिषड्गुणःसाक्षात्संकीर्तितइतिदेवताकांडार्थः॥३॥ ब्रह्मकांडा
र्थमाह अत्रब्रह्मेति गुह्यंनिर्गुणं प्रभावाप्ययं प्रभवंत्यस्मादितिप्रभवं अप्येत्यस्मिन्नित्यप्ययं तच्चतच्च अनेनाश्रयशब्दार्थोदर्शितः विज्ञानसं
युतमपरोक्षज्ञानपर्यंतंज्ञानंतदुपाख्यानंतज्ज्ञानमुपाख्यायतेप्रकाश्यतेयेनतज्ज्ञानसाधनमित्यर्थः ॥ ४ ॥ कर्मकांडार्थमाह भक्तियोगश्च
साध्यसाधनरूपः तदाश्रयंभक्तियोगेननिष्पादितं एवंसामान्यतोनिरूप्येदानींद्वादशस्कंधप्रकरणार्थाननुक्रामति पारीक्षितमुपाख्यानंप
रीक्षिज्जन्मादितत्प्रस्तावायनारदाख्यानंच ॥ ५ ॥ ब्रह्मर्षेर्ब्राह्मणोत्तमस्य इतिप्रथमस्कंधार्थः ॥ ६ ॥ उत्क्रांतिरार्चिरादिगतिःप्राधानिकःप्रधान

एतद्वःकथितंविप्राविष्णोश्चरितमद्भुतं॥भवद्भिर्यदहंपृष्टोनराणांपुरुषोचितं ॥२ ॥अत्रसंकीर्तितःसाक्षात्सर्व
पापहरोहरिः॥नारायणोहृषीकेशोभगवान्सात्वतांपतिः ॥३॥ अत्रब्रह्मपरंगुह्यंजगतःप्रभवाप्ययं ॥ ज्ञानंच
तदुपाख्यानंप्रोक्तंविज्ञानसंयुतं॥४॥भक्तियोगःसमाख्यातोवैराग्यंचतदाश्रयं ॥ पारीक्षितमुपाख्यानंनार
दाख्यानमेवच॥५॥प्रायोपवेशोराजर्षेर्विप्रशापात्परीक्षितः॥शुकस्यैवचब्रह्मर्षेःसंवादश्चपरीक्षितः॥ ६॥यो
गधारणयोत्क्रांतिःसंवादोनारदाजयोः ॥ अवतारानुगीतंचसर्गःप्राधानिकोऽग्रतः ॥७॥ विदुरोद्धवसंवादः
क्षत्तृमैत्रेययोस्ततः॥पुराणसंहिताप्रश्नोमहापुरुषसंस्थितिः॥८॥ततःप्राकृतिकःसर्गःसप्तवैकृतिकाश्चये॥त
तोब्रह्मांडसंभूतिर्वैराजःपुरुषोयतः ॥९॥ कालस्यस्थूलसूक्ष्मस्यगतिःपद्मसमुद्भवः ॥ भुवउद्धरणेऽम्भोधौहिर
ण्याक्षवधोयथा॥१०॥ऊर्ध्वतिर्यगवाक्सर्गोरुद्रसर्गस्तथैवच॥अर्धनारीनरस्याथयतःस्वायंभुवोमनुः॥११॥
शतरूपाचयास्त्रीणामाद्याप्रकृतिरुत्तमा ॥संतानोधर्मपत्नीनांकर्दमस्यप्रजापतेः ॥१२॥ अवतारोभगवतःक
पिलस्यमहात्मनः॥देवहूत्याश्चसंवादःकपिलेनचधीमता ॥१३॥ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनं ॥ ध्रुव
स्यचरितंपश्चात्पृथोःप्राचीनबर्हिषः॥१४॥ नारदस्यचसंवादस्ततःप्रैयव्रतंद्विजाः ॥नाभेस्ततोऽनुचरितमृष
भस्यभरतस्यच ॥१५॥ कार्यविराड्रूपःसर्गः अग्रतःआदितः महदादिक्रमेणेत्यर्थः इतिद्वितीयार्थः ॥ ७ ॥ महापुरुषस्यसंस्थि
तिःप्रलयेतूष्णीमवस्थानं ॥८॥ प्राकृतिकःप्रकृतिभवोगुणक्षोभरूपः वैकृतिकामहदादयः चकाराद्विकाराश्चयेतयोस्तेषांसर्गः ॥ ९॥ गतिःस्वरू
पं उद्धरणेउद्धारणे ॥ १० ॥ अर्धाभ्यांनारीचनरश्चतस्य ॥ ११ ॥ संतानोधर्मपत्नीनामितिनवब्रह्मसमुत्पत्तिरित्यस्यानंतरंद्रष्टव्यं ॥ १२ ॥
॥ १३ ॥ चतुर्थस्कंधार्थमाह नवब्रह्मणांमरीच्यादीनांसमुत्पत्तिःसंतानः ॥ १४ ॥ पंचमस्कंधार्थमाह ततःप्रैयव्रतंप्रियव्रतस्यचरितं ॥ १५ ॥

द्वीपाद्युपवर्णनंप्रथमंसंक्षेपतः ततोद्वीपादीनांयेगिरयोनद्यश्चतेषामुपवर्णनं पातालनरकादीनांचसंस्थितिः अनेनैवनरकानिवर्तकमजामि
लोपाख्यानंगृहीतंततःपराचीनं ॥ १६ ॥ षष्ठार्थमाह दक्षजन्मेति ॥ १७ ॥ सप्तमार्थमाह पुत्रयोश्चेति ॥१८॥ अष्टमार्थमाह मन्वंतरानुच



ततोद्वीपसमुद्राद्रिवर्षनद्युपवर्णनं॥ज्योतिश्चक्रस्यसंस्थानंपातालनरकस्थितिः॥१६॥ दक्षजन्मप्रचेतोभ्य
स्तत्पुत्रीणांचसंततिं॥यतोदेवासुरनरास्तिर्यङ्नगखगादयः॥१७॥त्वाष्ट्रस्यजन्मनिधनंपुत्रयोश्चदितेर्द्विजाः॥
दैत्येश्वरस्यचरितंप्रह्लादस्यमहात्मनः॥१८॥ मन्वंतरानुचरितंगजेंद्रस्यविमोक्षणं॥ मन्वंतरावताराश्चवि
ष्णोर्हयशिरादयः॥ १९ ॥ कौर्मंमात्स्यंनारसिंहंवामनंचजगत्पतेः॥ क्षीरोदमथनंतद्वदमृतार्थेदिवौकसां॥
॥ २०॥ देवासुरंमहायुद्धंराजवंशानुकीर्तनं॥इक्ष्वाकुजन्मतद्वंशःसुद्युम्नस्यमहात्मनः॥२१॥ इलोपाख्यानम
त्रोक्तंतारोपाख्यानमेवच॥ सूर्यवंशानुकथनंशशादाद्यान्नृपादयः॥ २२ ॥ सौकन्यंचाथशर्यातेःककुत्स्थस्य
चधीमतः॥ खट्वांगस्यचमांधातुःसौभरेःसगरस्यच॥ २३ ॥ रामस्यकोसलेंद्रस्यचरितंकिल्बिषापहं॥ निमे
रंगपरित्यागोजनकानांचसंभवः॥२४॥ रामस्यभार्गवेंद्रस्यनिःक्षत्रकरणंभुवः॥ ऐलस्यसोमवंशस्यययाते
र्नाहुषस्यच॥२५॥ दौष्यंतेर्भरतस्यापिशंतनोस्तत्सुतस्यच॥ ययातेर्ज्येष्ठपुत्रस्ययदोर्वंशोऽनुकीर्तितः॥२६॥
यत्रावतीर्णोभगवान्कृष्णाख्योजगदीश्वरः॥ वसुदेवगृहेजन्मततोवृद्धिश्चगोकुले॥२७॥ तस्यकर्माण्यपा
राणिकीर्तितान्यसुरद्विषः॥ पूतनाऽसुपयःपानंशकटोच्चाटनंशिशोः॥ २८॥ तृणावर्तस्यनिष्पेषस्तथैवबक
वत्सयोः॥धेनुकस्यसहभ्रातुःप्रलंबस्यचसंक्षयः॥ २९ ॥ गोपानांचपरित्राणंदावाग्नेःपरिसर्पतः॥ दमनंका
लियस्याहेर्महाहेर्नंदमोक्षणं॥ ३० ॥ व्रतचर्यानुकन्यानांयत्रतुष्टोऽच्युतोव्रतैः॥ प्रसादोयज्ञपत्नीभ्योवि
प्राणांचानुतापनं॥ ३१ ॥

रितमिति क्वचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्चभक्तिरसानुकूलत्वेनेतिद्रष्टव्यं ॥ १९ ॥ २० ॥
नवमार्थमाह राजवंशेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सोमवंशादिभूतस्यैलस्यचरितं ॥ २५ ॥ तत्सुतस्यभीष्मस्य ॥ २६ ॥
॥ २७ ॥ दशमार्थमाह तस्यकर्माणीति पूतनायाअसुसहितस्यस्तन्यपयसःपानं ॥ २८ ॥ सहभ्रातुःससखस्य ॥ २९ ॥ ३० ॥ ३१ ॥

यज्ञाभिषेकं यज्ञःपूजाअभिषेकश्चतयोर्द्वैक्यं ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ द्विषतःशत्रून्प्रमथ्य ॥ ३७ ॥ ३८ ॥ येचशंब रादयस्तेषांमाहात्म्यंप्रभावः ॥ ३९ ॥ ४० ॥ एकादशार्थमाह विप्रशापेति ॥ ४१ ॥ धर्मविनिर्णयोवर्णाश्रमधर्मविनिश्चयः मर्त्यपरि

गोवर्धनोद्धारणंचशक्रस्यसुरभेरथ ॥ यज्ञाभिषेकंकृष्णस्यस्त्रीभिःक्रीडाचरात्रिषु ॥ ३२ ॥ शंखचूडस्यदुर्बुद्धेर्वधोऽरिष्टस्यकेशिनः ॥ अक्रूरागमनंपश्चात्प्रस्थानंरामकृष्णयोः ॥ ३३ ॥ व्रजस्त्रीणांविलापश्चमथुरालोकनंततः ॥ गजमुष्टिकचाणूरकंसादीनांचयोवधः ॥ ३४ ॥ मृतस्यानयनंसूनोःपुनःसांदीपनेर्गुरोः ॥ मथुरायांनिवसतायदुचक्रस्ययत्प्रियं ॥ ३५ ॥ कृतमुद्धवरामाभ्यांयुतेनहरिणाद्विजाः ॥ जरासंधसमानीतसैन्यस्यबहुशोवधः ॥ घातनंयवनेंद्रस्यकुशस्थल्यानिवेशनं ॥ ३६ ॥ आदानंपारिजातस्यसुधर्मायाःसुरालयात् ॥ रुक्मिण्याहरणंयुद्धेप्रमथ्यद्विषतोहरेः ॥ ३७ ॥ हरस्यजृंभणंयुद्धेबाणस्यभुजकृंतनं ॥ प्राग्ज्योतिषपतिंहत्वाकन्यानांहरणंचयत् ॥ ३८ ॥ चैद्यपौंड्रकशाल्वानांदंतवक्रस्यदुर्मतेः ॥ शंबरोद्विविदःपीठोमुरःपंचजनादयः ॥ ॥ ३९ ॥ महात्म्यंचवधस्तेषांवाराणस्याश्चदाहनं ॥ भारावतरणंभूमेर्निमित्तीकृत्यपांडवान् ॥ ४० ॥ विप्रशापापदेशेनसंहारःस्वकुलस्यच ॥ उद्धवस्यचसंवादोवासुदेवस्यचाद्भुतः ॥ ४१ ॥ यत्रात्मविद्याह्यखिलाप्रोक्ताधर्मविनिर्णयः ॥ ततोमर्त्यपरित्यागआत्मयोगानुभावतः ॥ ४२ ॥ युगलक्षणवृत्तिश्चकलौनृणामुपप्लवः ॥ चतुर्विधश्चप्रलयउत्पत्तिस्त्रिविधातथा ॥ ४३ ॥ देहत्यागश्चराजर्षेर्विष्णुरातस्यधीमतः ॥ शाखाप्रणयनमृषेर्मार्कंडेयस्यसत्कथा ॥ महापुरुषविन्यासःसूर्यस्यजगदात्मनः ॥ ४४ ॥ इतिचोक्तंद्विजश्रेष्ठायत्पृष्टोहमिहास्मिवः ॥ लीलावतारकर्माणिकीर्तितानीहसर्वशः ॥ ४५ ॥ ॥ ॥

त्यागोमनुष्यत्वस्यांतर्धानं ॥ ४२ ॥ द्वादशार्थमाह युगेति युगलक्षणंतदनुरूपावृत्तिश्चेत्यर्थः त्रिविधाप्राकृतिकीनैमित्तिकीनित्याचेति ॥ ॥ ४३ ॥ ऋषेर्व्यासस्यसूर्यस्यचविन्यासइत्यर्थः ॥ ४४ ॥ इतिचोक्तमितिचकारादन्यदपिवःयुष्माभिरिहयत्पृष्टोऽस्मितदुक्तमिति किमेवं नानार्थकथनेनतत्राह लीलेति सर्वशः तदर्थकीर्तनद्वारेणेत्यर्थः ॥ ४५ ॥ ॥ ॥

तत्कीर्तनेनापिकिमित्यपेक्षायांतत्फलमाहद्वाभ्यां पतितःकूपादिषु स्खलितःसोपानादिषु आर्त्तोदुःखितः क्षुत्त्वाक्षुतंकृत्वाविवशोऽपि ॥
॥ ४६ ॥ संकीर्त्यमानः यद्वाश्रुतोऽनुभावोयस्यसःपुंसांचित्तंप्रविश्यनिःशेषंदुःखंविधुनोतिं हीतिसतामनुभवंप्रमाणयति अर्कोगिरिगुहादि
ध्वांतंननिवर्तयतीत्यपरितोषाद्दृष्टांतांतरमाह अतिवातोऽभ्रमिवेति ॥ ४७ ॥ हरिसंकीर्तनमेवमहाफलंतद्व्यतिरिक्तंसर्वंमिथ्यालापमात्रमि
तिप्रपंचयति मृषागिरइतिचतुर्भिः मृषागिरोमिथ्यावाचः असतीःअसत्यः असतांकथायासुताः यद्वासुउत्तमश्लोकस्ययशोऽनुगीयतइति
यत्तदेवसत्यंतदेवहिमंगलं हइतिहर्षे भगवद्गुणानामभ्युदयोयस्मात्तत् ॥ ४८ ॥ नवंनवंयथाभवतितथारुचिरंरुचिप्रदं महानुत्सवोयस्मात्

पतितःस्खलितश्चार्तःक्षुत्त्वावाविवशोऽब्रुवन् ॥ हरयेनमइत्युच्चैर्मुच्यतेसर्वपातकात् ॥ ४६ ॥ संकीर्त्यमा
नोभगवाननंतःश्रुतानुभावोव्यसनंहिपुंसां ॥ प्रविश्यचित्तंविधुनोत्यशेषंयथातमोऽर्कोऽभ्रमिवातिवातः ॥
॥४७॥ मृषागिरस्ताह्यसतीरसत्कथानकथ्यतेयद्भगवानधोक्षजः ॥ तदेवसत्यंतदुहैवमंगलंतदेवपुण्यंभग
वद्गुणोदयं ॥ ४८ ॥ देवस्यरम्यंरुचिरंनवंनवंतदेवशश्वन्मनसोमहोत्सवं ॥ तदेवशोकार्णवशोषणंनृणांयदु
त्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥ नयद्वचश्चित्रपदंहरेर्यशोजगत्पवित्रंप्रगृणीतकर्हिचित् ॥ तद्ध्वांक्षतीर्थं
नतुहंससेवितंयत्राच्युतस्तत्रहिसाधवोऽमलाः ॥५०॥ सवाग्विसर्गोजनताऽघसंप्लवोयस्मिन्प्रतिश्लोकम
बद्धवत्यपि ॥ नामान्यनंतस्ययशोंकितानियच्छृण्वंतिगायंतिगृणंतिसाधवः ॥ ५१ ॥ नैष्कर्म्यमप्यच्युतभा
ववर्जितंनशोभतेज्ञानमलंनिरंजनं ॥ कुतःपुनःशश्वदभद्रमीश्वरेनह्यर्पितंकर्मयदप्यनुत्तमं ॥ ५२ ॥

॥ ४९ ॥ चित्राणिपदानियास्मिन् तदपिजगत्पवित्रयतीतितथातद्धरेर्यशोनप्रगृणीतनवर्णयेत्तद्वचोध्वांक्षतीर्थंकाकतुल्यनराणांरतिस्थानंन
तुहंसैर्ज्ञानिभिःसेवितं तत्रहेतुः यत्रेति ॥ ५० ॥ सवाग्विसर्गःसएववाचःप्रयोगःजनताऽघसंप्लवःजनसमूहाघनाशकःयद्यस्मात्तान्येवा
न्यैःकीर्त्यमानानिशृण्वंतिश्रोतरिसतिगायंतिनोचेत्स्वयमेवगृणंति ॥ ५१ ॥ इदानींज्ञानकर्मादरादपिभगवत्कीर्तनादिष्वेवादरःकीर्तव्य
इत्याह नैष्कर्म्यंब्रह्मतत्प्रकाशकंयत्ज्ञानं यतोनिरंजनमुपाधिनिवर्तकंतदप्यच्युतभक्तिवर्जितंचेन्नशोभतेनापरोक्षपर्यंतंभवतीत्यर्थः ईश्व
रेनचेदर्पितंतर्हियदनुत्तमंसर्वोत्तमममपिकर्मतदपिपुनःकुतःशोभते यतःशश्वत्साधनकालेफलकालेचअभद्रंदुःखात्मकं ॥ ५२ ॥

किंच वर्णाश्रमाचारादिषुयःपरोमहान्परिश्रमःसयशोयुक्तायांश्रियामेव कीर्तिःसंपत्तिश्चकेवलंपरःपुरुषार्थइत्यर्थः गुणानुवादादिभिस्तुश्रीधरपादपद्मयोरविस्मृतिर्भवति ॥ ५३ ॥ ततः किमतआह अविस्मृतिरिति क्षिणोति नाशयति ॥ ५४ ॥ अथदानींश्रोतॄनात्मानंचाभिनंदन्नाह यूयमितिद्वाभ्यां हेद्विजाढ्याः यद्यस्मादात्मन्यंतःकरणेश्रीनारायणमाविवेश्यइत्रवङ्कजत संभावनायांल्लोट् अतोभूरिभागाः

यशःश्रियामेवपरिश्रमःपरोवर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिःश्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥ ५३ ॥ अविस्मृतिःकृष्णपदारविंदयोःक्षिणोत्यभद्राणिशमंतनोतिच ॥ सत्वस्यशुद्धिंपरमात्मभक्तिंज्ञानंचविज्ञानविरागयुक्तं ॥ ५४ ॥ यूयंद्विजाग्र्याबतभूरिभागायच्छश्वदात्मन्यखिलात्मभूतं ॥ नारायणंदेवमदेवमीशमजस्रभावाभजताविवेश्य॥५५॥अहंचसंस्मारितआत्मतत्त्वंश्रुतंपुरामेपरमर्षिवक्रात् ॥ प्रायोपवेशेनृपतेःपरीक्षितःसदस्यृषीणांमहतांचशृण्वतां ॥ ५६ ॥ एतद्वःकथितंविप्राःकथनीयोरुकर्मणः ॥ माहात्म्यंवासुदेवस्यसर्वाशुभविनाशनं ॥ ५७ ॥ यएवंश्रावयेन्नित्यंयामंक्षणमनन्यधीः ॥ श्रद्धावान्योऽनुशृणुयात्पुनात्यात्मानमेवसः ॥ ५८ ॥ द्वादश्यामेकादश्यांवाशृण्वन्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतस्ततोभवत्यपातकी ॥ ५९ ॥ पुष्करेमथुरायांचद्वारवत्यांयतात्मवान् ॥ उपोष्यसंहितामेतांपठित्वामुच्यतेभयात् ॥ ६० ॥ देवतामुनयःसिद्धाःपितरोमनवोनृपाः ॥ यच्छंतिकामान्गृणतःशृण्वतोयत्रकीर्तनात् ॥ ६१ ॥ ऋचोयजूंषिसामानिद्विजोधीत्यानुविंदते ॥ मधुकुल्याघृतकुल्याःपयःकुल्याश्चतत्फलं ॥ ६२ ॥ पुराणसंहितामेतामधीत्यप्रयताद्विजाः ॥ प्रोक्तंभगवतायत्तुतत्पदंपरमंव्रजेत् ॥ ६३ ॥ विप्रोऽधीत्याप्नुयात्प्रज्ञांराजन्योदधिमेखलाम् ॥ वैश्योनिधिपतित्वंचशूद्रःशुध्येतपातकात् ॥ ६४ ॥

बहुपुण्याः कथंभूतं अखिलात्मभूतं सर्वांतर्यामिणं अतएवदेवंसर्वोपास्यं अदेवंनदेवोऽन्योयस्यतं कुतःईशं यद्वा यस्माद्यूयंभूरिभागाः तपआदिसंपन्नाः ततोनारायणंभजतेतिविधिः ॥ ५५ ॥ मेमयाश्रुतं ॥ ५६ ॥ एतत्पुराणकीर्तनादिफलंप्रपंचयितुमाह एतदित्यष्टाभिः ॥ ५७ ॥ यामंक्षणंचेत्यर्थः आत्मानमेवसाक्षात्पुनातिनतुस्नानादिवद्देहमात्रं ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ऋगाद्यधीत्यद्विजोमधुकुल्यादियदनुविंदते तत्फलमेतांपठित्वाअनुविंदतइति ॥६२॥ किंचप्रोक्तमिति ॥ ६३ ॥ राजन्यउदधिमेखलांपृथ्वीं संधिरार्षः॥ ६४॥

अस्यपुराणस्यैवंप्रभावातिरेकेकारणमाह कलिमलानांसंहतिंसमूहंकालयतिविनाशयतीतितथा इतरत्रशास्त्रांतरे ॥ ६५ ॥ शास्त्रप्रतिपा
दितंभगवंतंनमस्करोति तमितिद्वाभ्यां जगदुदयस्थितिसंयमात्मनोरजआदयःशक्तयोयस्यतं द्युपतिभिर्देवैरपिदुरवासितः अज्ञातःस्तवः
स्तोत्रंयस्यतं ॥ ६६ ॥ उपचिताभिःउद्रिक्ताभिर्नवशक्तिभिःप्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिःस्वआत्मन्येवोपरचितं स्थिरंजंगमंच
आलयोयस्यतस्मैभगवते ॥ ६७ ॥ श्रीगुरुंनमस्करोति स्वसुखेनैवनिभृतंपूर्णंचेतोयस्य तेनैवव्युदस्तोऽन्यस्मिन्भावोयस्यतथाभूतोऽपि
अजितस्यरुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतंस्थैर्यंयस्यसः तत्त्वदीपंपरमार्थप्रकाशकंश्रीभागवतंयोव्यतनुत तंनतोऽस्मीति

कलिमलसंहतिकालनोऽखिलेशोहरिरितरत्रनगीयतेह्यभीक्ष्णं ॥ इहतुपुनर्भगवानशेषमूर्तिःपरिपठितोऽ
नुपदंकथाप्रसंगैः ॥ ६५ ॥ तमहमजमनंतमात्मतत्त्वंजगदुदयस्थितिसंयमात्मशक्ति ॥ द्युपतिभिरजशक्र
शंकराद्यैर्दुरवसितस्तवमच्युतंनतोऽस्मि ॥ ६६ ॥ उपचितनवशक्तिभिःस्वआत्मन्युपरचितस्थिरजंगमाल
याय ॥ भगवतउपलब्धिमात्रधाम्नेसुरऋषभायनमःसनातनाय ॥ ६७ ॥ स्वसुखनिभृतचेतास्तद्व्युदस्ता
न्यभावोप्यजितरुचिरलीलाकृष्टसारस्तदीयं ॥ व्यतनुतकृपयायस्तत्त्वदीपंपुराणंतमखिलवृजिनघ्नंव्यास
सूनुंनतोऽस्मि ॥ ६८ ॥ इ० भा० द्वादशस्कंधार्थनिरूपणंनामद्वादशोध्यायः ॥ १२ ॥ ॥ सूतउवाच
यंब्रह्मावरुणेंद्ररुद्रमरुतःस्तुन्वंतिदिव्यैस्तवैर्वेदैःसांगपदक्रमोपनिषदैर्गायंतियंसामगाः ॥ ध्यानावस्थित
तद्गतेनमनसापश्यंतियंयोगिनोयस्यांतंनविदुःसुरासुरगणादेवायतस्मैनमः ॥ १ ॥ पृष्ठेभ्राम्यदमंदमंदर
गिरिग्रावाग्रकंडूयनान्निद्रालोःकमठाकृतेर्भगवतःश्वासानिलाःपांतुवः ॥ यत्संस्कारकलानवर्तनवशाद्वे
लानिभेनांभसांयातायातमतंद्रितंजलनिधेर्नाद्यापिविश्राम्यति ॥ २ ॥

॥ ६८ ॥ इतिद्वादशेटीकायांद्वादशोध्यायः ॥ १२ ॥ ॥ सर्वपुराणसंख्यादीनुपवर्णयिष्यन्तत्प्रतिपाद्यंदेवंप्रणमति यमिति स्तवैर्वे
दैश्चस्तुन्वंतिस्तुवंति उपनिषच्छब्दस्याकारांतत्वंछंदोऽनुरोधेन ध्यानेनावस्थितंनिश्चलंतद्गतंयन्मनस्तेनयस्यांतंनविदुःसुरासुरगणाः॥ १॥
क्षीरोदमथनादौदुर्ज्ञेयत्वमेवप्रदर्शयितुंकूर्मावतारमनुस्मारयन्नाशिषःप्रार्थयते पृष्ठेभ्राम्यत्अमंदोमंदरगिरिःगरिष्ठोमंदराचलस्तस्यग्रावाणस्ते
षामग्राणितैः कंडूयनात्तेनसुखेनर्नानिद्रालोःनिद्राशीलस्य येषांश्वासानिलानांसंस्कारास्तेषांकलाश्लेशाः तदनुवर्तनवशाज्जलनिधेरंभ
सांयातायातंनविश्राम्यति ननुसमुद्रक्षोभादेवतन्नसंस्कारवशात्तत्राह वेलाक्षोभस्तस्यनिभेनमिषेण ॥ २ ॥

पुराणसंख्यास्तासांसंभूतिंसमाहारंचास्यतुश्रीभागवतस्यवाच्यंविषयः प्रयोजनंचदानंचतस्यपाठादेश्चमाहात्म्यंनिबोधत ॥ ३ ॥ त्रयोविंश त्रयोविंशतिर्वैष्णवं चतुर्विंशतिसहस्राणिशैवकंशिवपुराणं ॥ ४ ॥ वाह्नंतुअग्निपुराणंतुदशपंचसहस्राणिचत्वारिशतानि ॥ ५ ॥ ६ ॥ स्कांदंशताधिकैकाशीतिसहस्रं ॥ ७ ॥ सौपर्णंगरुडपुराणमेकोनविंशं एकोनविंशतिः ॥ ८ ॥ महाभारतंत्वितिहासः रामायणंचऋषि

पुराणसंख्यासंभूतिमस्यवाच्यप्रयोजने ॥ दानंदानस्यमाहात्म्यंपाठादेश्चनिबोधत ॥ ३॥ ब्राह्मंदशसहस्राणिपाद्मंपंचोनषष्टिच ॥ श्रीवैष्णवंत्रयोविंशच्चतुर्विंशतिशैवकं ॥४॥ दशाष्टौश्रीभागवतंनारदंपंचविंशतिः ॥ मार्कंडेयंनववान्हंतुदशपंचचतुःशतं ॥ ५॥ चतुर्दशभविष्यंस्यात्तथापंचशतानिच ॥ दशाष्टौब्रह्मवैवर्तंलिंगमेकादशैवतु ॥ ६॥ चतुर्विंशतिवाराहमेकाशीतिसहस्रकं ॥ स्कांदंशतंतथाचैकंवामनंदशकीर्तितं ॥ ७॥ कौर्मंसप्तदशाख्यातंमात्स्यंतत्तुचतुर्दश ॥एकोनविंशत्सौपर्णंब्रह्मांडंद्वादशैवतु ॥ ८॥ एवंपुराणसंदोहश्चतुर्लक्षउदाहृतः ॥ तत्राष्टादशसाहस्रंश्रीभागवतमिष्यते ॥९॥ इदंभगवतापूर्वंब्रह्मणेनाभिपंकजे॥ स्थितायभवभीतायकारुण्यात्संप्रकाशितं ॥ १० ॥ आदिमध्यावसानेषुवैराग्याख्यानसंयुतं ॥ हरिलीलाकथाव्रातामृतानंदितसत्सुरं ॥ ११ ॥ सर्ववेदांतसारंयद्ब्रह्मात्मैकत्वलक्षणं ॥ वस्त्वद्वितीयंतन्निष्ठंकैवल्यैकप्रयोजनं ॥१२॥ प्रौष्ठपद्यांपौर्णमास्यांहेमसिंहसमन्वितं ॥ ददातियोभागवतंसयातिपरमांगतिं ॥ १३ ॥ राजंतेतावदन्यानिपुराणानिसतांगणे ॥ यावद्भागवतंनैवश्रूयतेऽमृतसागरं ॥ १४ ॥ सर्ववेदांतसारंहिश्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्यनान्यत्रस्याद्रतिःक्वचित् ॥ १५ ॥ निम्नगानांयथागंगादेवानामच्युतोयथा ॥ वैष्णवानांयथाशंभुःपुराणानामिदंतथा ॥ १६ ॥ क्षेत्राणांचैवसर्वेषांयथाकाशीह्यनुत्तमा ॥ तथापुराणव्रातानांश्रीमद्भागवतंद्विजाः ॥ १७ ॥ ॥ ॥ ॥

प्रोक्तंकाव्यं अतःपुराणानांसंदोहःसमूहश्चतुर्लक्षसंख्याकएव इदानीमस्यवाच्यप्रयोजनादीन्दर्शयितुमाह तत्रेत्यादिना ॥ ९ ॥ १० ॥ हरिलीलाकथानांव्रातःसमूहःसएवामृतंतेनानंदिताःसंतः सुराश्चयेनतत् ॥ ११ ॥ तन्निष्ठंतद्विषयं ॥ १२ ॥ प्रौष्ठपद्यांभाद्रपद्यां हेमसिंहसमन्वितंसुवर्णसिंहासनारूढं ॥ १३ ॥ १४ ॥ तद्रसएवामृतंतेनतृप्तस्यनिर्वृतस्य ॥ १५ ॥ १६ ॥ १७ ॥

पारमहंस्यंपरमहंसैः प्राप्यं नैष्कर्म्यंसर्वकर्मोपरमः भक्त्यातच्छ्रवणादिपरोविमुच्येत् ॥ १८ ॥ श्रीभागवतसंप्रदायप्रवर्तकरूपेणभगवत्ध्यानलक्षणंमंगलमाचरति कस्मैब्रह्मणे अतुलः असमः अयंश्रीभागवतरूपः पुराकल्पादौतद्रूपेणब्रह्मरूपेणनारदाय तद्रूपिणानारदरूपिणाकृष्णायव्यासायतद्रूपिणायोगींद्रायशुकायतदात्मनाशुकरूपेण तत्परंसत्यंश्रीनारायणाख्यंतत्त्वंधीमहि ॥ १९ ॥ इतिगायत्र्यैवयथोपक्रममुपसंहरन्गायत्र्याख्यब्रह्मविद्येयमितिदर्शयति तमेवदेवतारूपेणगुरुरूपेणचप्रणमाति नमइतिद्वाभ्यां व्याचचक्षेव्याख्यातवान् ॥ २० ॥

श्रीमद्भागवतंपुराणममलंयद्वैष्णवानांप्रियंयस्मिन्पारमहंस्यमेकममलंज्ञानंपरंगीयते ॥ तत्रज्ञानविरागभक्तिसहितंनैष्कर्म्यमाविष्कृतंतच्छृण्वन्विपठन्विचारणपरोभक्त्याविमुच्येन्नरः ॥१८॥ कस्मैयेनविभासितोयमतुलोज्ञानप्रदीपः पुरातद्रूपेणचनारदायमुनयेकृष्णायतद्रूपिणा ॥ योगींद्रायतदात्मनाऽथभगवद्राताय कारुण्यतस्तच्छुद्धंविमलंविशोकममृतंसत्यंपरंधीमहि ॥ १९॥ नमस्तस्मैभगवतेवासुदेवायसाक्षिणे ॥ यइदंकृपयाकस्मैव्याचचक्षेमुमुक्षवे ॥२०॥ योगींद्रायनमस्तस्मैशुकायब्रह्मरूपिणे॥संसारसर्पदष्टंयोविष्णुरातममूमुचत् ॥ २१॥ भवेभवेयथाभक्तिःपादयोस्तवजायते ॥ तथाकुरुष्वदेवेशनाथस्त्वंनोयतःप्रभो ॥ २२ ॥ नामसंकीर्तनंयस्यसर्वपापप्रणाशनं ॥ प्रणामोदुःखशमनस्तंनमामिहरिंपरं ॥ २३ ॥ इतिश्रीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांवैयासिक्यांद्वादशस्कंधेत्रयोदशोध्यायः ॥ १३ ॥ समाप्तोयंग्रंथः ॥ ॥

॥ २१॥२२॥२३॥ भावार्थदीपिकामेतांभगवद्भक्तिवत्सलां॥परमानंदपादाब्जभृंगश्रीःश्रीधरोऽकरोत्॥१॥स्वबालचपलालापैःस्वलीलापरिनर्तितैः॥प्रीयतांपरमानंदनृहरिःसद्गुरुःस्वयं॥२॥श्रीपरानंदसंप्रीत्यैगुह्यंभागवतंमया॥तन्मतेनेदमाख्यातंनतुमन्मातिवैभवात् ॥ ३ ॥ इति श्रीभागवतेमहापुराणेश्रीभागवतभावार्थदीपिकायांश्रीधरस्वामिविरचितायांद्वादशस्कंधेत्रयोदशोऽध्यायः ॥१३॥ समाप्तोयंग्रंथः ॥

इदं श्रीमद्भागवतस्य पुस्तकं मुंबय्याख्यां राजधान्यां एशियाटक
मुद्रायंत्रालये मारवाड रामगडस्थ कृष्णनाम्ना वसुग्रह
ऋषिभूसंज्ञकेब्दे प्रथमावृत्तिकं मुद्रितं
मासो माघशुद्धः पौर्णिमातिथिः
इंदुवारः